# THE
# BRAHMASÛTRA S'ÂNKARA BHÂSHYA

with the Commentaries

**BHÂMATÎ, KALPATARÛ AND PARÎMALA**

AND WITH

**INDEX Etc.**

---


EDITED WITH NOTES Etc.

BY

PANDIT VEDANTA VIS'ARADA

**NURANI ANANTHA KRISHNA S'ASTRI,**

PROFESSOR OF MIMAMSA, AT TIRUPATI SANSKRIT COLLEGE

AND

**VÂSUDEV LAXMAṆ SHÂSTRÎ PAṆSÎKAR.**



PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

Bombay.

---

1917.

---

*Price 10 Rupees.*



# ब्रह्मसूत्रशाङ्करभाष्यम् ।



श्रीमदप्पय्यदीक्षितविरचितपरिमलोपबृंहितश्रीमदमलानन्दसरस्वतीप्रणीत-
कल्पतरुव्याख्यायुतश्रीमद्वाचस्पतिमिश्रकृतभामतीविलसितम् ।

साग्रो ग्रन्थः । अद्वैतमेवौपनिषदमितिनिरूपणभूमिकासनाथः ।

## ब्रह्मसूत्रवर्णक्रमकोशादिसंहितः ।


तिरुपतिश्रीवेङ्कटेश्वरसंस्कृतकलाशालापूर्वमीमांसाध्यापकेन-मद्रपुरसंस्कृतकलाशालातोऽधिगत-
वेदान्तविशारदबिरुदेन नूरणिग्रामाभिजन-विद्वद्वरसुब्रह्मण्यात्मजेन
अनन्तकृष्णशास्त्रिणा


टिप्पणादिभिरुपस्कृतम् ।


पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणाच
संस्कृतम् ।





मुम्बय्याम्

तुकाराम जावजीश्रेष्ठिभिः

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये स्वायसाक्षरै-
रङ्कयित्वा प्राकाश्यं नीतम् ।

शाकः १८३९, सन १९१७.

1939

मूल्यं १० रूप्यकः

# भूमिका.

श्रीरस्तु—

अथ लौकायतिकवैशेषिकनैयायिकसांख्यपातञ्जलद्वैतिविशिष्टाद्वैत्यद्वैतिमतानां परस्पराविरोधेनैकत्र मते पर्यवसानमुत नेति, यदि पर्यवसानं कुत्र तदिति च विषयमधिकृत्य किंचिदिवात्र प्रस्तावयामः ॥

**(१) तत्रैवं लोकायतिका मन्यन्ते।** भूतचतुष्टयसंघातात्मकं चेतनं शरीरमेवात्मा, नतु शरीरातिरिक्ते आत्मनि किंचित्प्रमाणमुपलभ्यते। प्रत्यक्षमेकमेव खलु प्रमाणम्। अनुमानाद्यधीनोत्पत्तिकं तु ज्ञानं पुनःपुनर्विभाव्यमानं प्रत्यक्षात्मकतां प्राप्नुवदेव प्रमाणं, नतु स्वयमिति तत्रापि प्रत्यक्षप्रामाण्येनैव निर्वाह इत्यसन्निकृष्टं वस्त्वस्माकमपि परमार्थसदेवाभिमतमिति न कामप्यनुपपत्तिं वयं संभावयामः। शरीरपोषणं तत्सुखसाधनार्थकामावेव पुरुषार्थौ नतु धर्मे मोक्षे वाऽतिरिक्ते पुरुषार्थे वयं प्रमाणमुपलभामहे। वेदस्तु पौरुषेयः केनापि प्रतारकेण प्रतारयितुं कल्पितो न प्रमाणतामर्हति। एतदभिप्रायमेव—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्डनम्। बुद्धिपौरुषहीनस्य जीविकेति बृहस्पतिः ॥

इति वचनमिति मन्महे। नहि लोकान्तरं जीवातिरिक्तमीश्वरं वा वयमङ्गीकुर्मः, येनेश्वरप्रणीतत्वादिना वेदप्रामाण्यमाशङ्क्येत—**इति** ॥

त इमे लोकायतिका वस्तुसन्तमपि परलोकं ईश्वरं चावस्तुसत्त्वमापादयन्तो नास्तिकपदेन व्यपदिश्यन्ते ॥

**(२) सौगतास्तु चतुर्विधा अपि**—वस्तुतत्त्वविनिर्णये स्वाप्निकमेवानुभवं प्रमाणयन्तः सर्वस्य क्षणिकविज्ञानात्मकतां शून्यात्मकतां वा व्यवस्थापयन्तः तदात्मताभावनाधीनतदात्मभावापत्तिरूपं मोक्षमेव पुरुषार्थमुपयन्तश्च वस्तुस्थिरत्वसाधकप्रत्यभिज्ञादिविरोधादिना सामुदायिकाधिकरणादिषु भाष्यभामतीकल्पतरुपरिमलेषु सहस्रधा दूषिता इति न तन्मतं वयमनुवदाम इति वैशेषिकप्रक्रियायां प्रसरामः ॥

(३) तत्र शरीरमेव नात्मा। तत्र ह्यवयवसमुदायो वा चेतयेत्। प्रत्येकं वाऽवयवाः। एकस्मिन्नवयवे वृक्णेऽवयवी समुदायोऽपि वृक्ण इति जीवत एव सतः प्रेतत्वापत्त्या नाद्यः कल्पोऽत्रावसरं लभते। बहूनां चेतनानामेकस्मिन् कार्ये विरोधेन विरुद्धदिक्क्रियतया शरीरमुन्मथ्येताक्रियं वा प्रसज्येतेति द्वितीयकल्पमपि पराहतं पश्यामः। अहमिच्छामि पश्यामि जिघ्रामि रसयामि स्पृशामि शृणोमीत्येकात्मगोचरानुभवाप्रामाण्यापत्तिस्तु प्रत्येकचेतनत्वेऽधिकं दूषणम्। नहीच्छतः पश्यतो जिघ्रतो रसयतः स्पृशतः शृण्वतश्चैक्यं प्रत्येकचैतन्यपक्षे युज्यते। तदयमर्थः सर्वोऽध्यासभाष्ये "एक आत्मनः शरीरे भावादि"त्यधिकरणे च भामत्यां विस्तरेण प्रत्यपीपदन् वाचस्पतिमिश्रा इति विस्तरभयादुपरमामः। शरीरातिरिक्ते चात्मनि प्रत्यक्षमनुमानमुभयमपि प्रमाणम्। प्रत्यक्षमेकमेव प्रमाणं नानुमानमपीति वादस्तु न क्षोदक्षमोऽप्रमाणमिति जानीमः। नहि तदा वादिविप्रतिपत्त्यादिकं तन्निरासार्था लोकायतिकप्रवृत्तिश्च संभवति। नहि परकीयं ज्ञानं परस्य प्रत्यक्षम्, नापिवाऽनधिगतत्वाबाधितत्वादि प्रत्यक्षगतं परस्य प्रत्यक्षम्, अनुमानगतो वा तदभावः। प्रत्यक्षमात्रप्रामाण्यनिर्वाहोऽपि परस्यानुमानेनैव भवतीत्ययत्नसिद्धमिदमनुमानप्रामाण्यम्। अनुमानेन तु प्रमाणेन देहातिरिक्तमात्मानमिवेश्वरमपि वस्तुसन्तं विनिर्णयामः। नहि क्षित्यङ्कुरादिकं कार्यजातमन्तरेणेश्वरमवकल्पते स्वात्मानमधिगन्तुम्। आत्मनश्चास्य पदार्थतत्त्वज्ञानं एकविंशतिदुःखध्वंसात्मने मोक्षाय कल्पते। वेदप्रामाण्यं तु नास्माकमपि संमतम्। नह्यनुमानातिरिक्तं शब्दं नाम प्रमाणं वयमुररीकुर्मः। एवंचार्थकाममोक्षाः त्रयः पुरुषार्थाः, नतु द्वावेवेति वैशेषिका अभिप्रयन्ति ॥

ईश्वरसत्वं स्वीकुर्वन्तोऽपीमे वेदप्रामाण्याद्यनङ्गीकाराद् नास्तिका एव ॥

**(४) नैयायिकास्तु**—वैशेषिकवदेव परमाणुकारणतावादं पदार्थतत्त्वज्ञानाधीनैकविंशतिदुःखध्वंसमोक्षतावादं चोपयन्तोऽप्यनुमानातिरिक्तं शब्दमपि प्रमाणमुपगच्छन्तः ईश्वररचितत्वेन वेदप्रामाण्यमनुमन्वानाः धर्मार्थकाममोक्षान् चतुरः पुरुषार्थानङ्गीकुर्वाणाः परलोकादिवस्तुसत्त्वस्वीकारादास्तिकव्यपदेशमर्हन्त्येव। नहि शब्दं प्रमाणमन्तरा मूकाद्वाग्मिनो विशेषयितुं पारयामः। वाग्मिनामपि मूकत्वमापादयन्तो लोकायतिका आत्मानमेव न जानन्तीति लोकामहे। अयमेव मम पितेति विनिर्णये हि मातृवाक्यमेकमेव प्रमाणं, नतु प्रत्यक्षमनुमानमन्यद्वा। अनुमाने हि व्याप्तिज्ञानं करणमनुमिनोमीत्यनुव्यवसायः, शब्देतु तात्पर्यज्ञानं करणं शाब्दयामीत्यनुव्यवसाय इति करणानुव्यवसायादिभेदादप्यनुमानातिरिक्तं शब्दं प्रमाणमवगच्छामः—**इति वर्णयन्ति।** मतद्वयमपीदं महद्दीर्घवद्वेत्यादिषु भाष्यभामत्यादिषु विशेषतो निरस्तमित्यन्यत्रैवास्य पर्यवसानमध्यवस्यामः ॥

(५) **सांख्यास्तु—**सुखदुःखमोहान्वितं समं वस्तु साम्यावस्थापन्नसत्त्वरजस्तमोगुणात्मकप्रधानकार्यमेव युक्तम्, अचेतनमपि प्रधानं वत्सविवृद्ध्यर्थं क्षीरमिव प्रपञ्चसृष्ट्यर्थं स्वयमेव प्रवर्तते । तस्य जीवेन विवेकाग्रह एव दुःखजनक इति तद्विशेषग्रह एव दुःखध्वंसात्मने मोक्षाय पारयति । ईश्वरस्तु तदधिष्ठानतया निमित्तत्वेनोपादानत्वेन वा न कथमपि सिध्यतीति कार्यत्वहेतुकानुमानं प्रधाने एवोपक्षीणं नेश्वरसत्त्वमपि गोचरयतीतीश्वरसत्त्वं नानुमन्यन्ते । वेदस्त्वनाप्तप्रणीतत्वेन प्रमाणमेव धर्माधर्मादौ । धर्माणां तु वैदिकानामपि दृष्टवदानुश्रविक इति वचनानुसारेणानात्यन्तिकपुरुषार्थे एव विनियोगो नत्वात्यन्तिकपुरुषार्थे, तत्र तु व्यक्ताव्यक्तज्ञविज्ञानमेवेति—**निरूपयन्ति** । ईश्वरमप्रमाणयन्तोऽपि ते वेदपरलोकादिप्रामाण्याङ्गीकारात्कर्ममीमांसका इवास्तिका एवेत्यधिगच्छामः ॥

इदमपि मतं न विलक्षणत्वादित्यारभ्य विशेषतः खण्डितमित्यन्यत्रैव पर्यवसेयम् ॥

(६) प्रधानमुपादानकारणमपि मृदाद्यधिष्ठातृतया कुलालादय इव प्रधानाधिष्ठातृतया निमित्तकारणमीश्वरोऽप्युररीकरणीय इति तत्प्रणिधानमेव मोक्षाय पर्याप्तम्, प्रकृतिपुरुषविवेकज्ञानं संप्रज्ञातासंप्रज्ञातसमाधियोगश्च विभूतिसाधनद्वारेश्वरप्रणिधाने एवोपकरोतीति निरूपयन्तो योगिनोऽप्यास्तिका एव ॥

(७) पाशुपतद्वैतिनोऽपि योगिन एवेश्वरनिमित्तकारणत्वमात्रं तत्प्रणिधानान्नारायणप्रणिधानाद्वा मोक्षं जीवेश्वरभेदादिकं चाभिप्रयन्तः प्रधानस्थानीयेश्वरशक्तिपरिणामत्वं प्रपञ्चस्याददानाः तरतमभावापन्नमोक्षस्वरूपे तत्र कर्मणामुपयोगे च अन्नमयादिव्यूहपरमात्मत्वे योगिनो विविक्ता अपि ईश्वरवेदपरलोकादिप्रामाण्योरीकरणादास्तिका एव ॥

(८) **विशिष्टाद्वैतिनस्तु** जीवेश्वरभेदादौ कर्मणां मोक्षोपयोगे ईश्वरप्रणिधानादेव तद्भक्त्यपरपर्यायात् मोक्षसिद्धौ च द्वैतिभिः समाना अपि ईश्वराभिन्ननिमित्तोपादानत्वमोक्षातारतम्यजीवादिभगवच्छरीरत्वान्नमयादिव्यूहापरमात्मत्वादौ ततो विषमा आस्तिकपदप्रवृत्तिनिमित्तभाज एवेत्यत्र न विवादलेशोऽपि ॥

(९) ये तु पुनरद्वैतिनः ब्रह्मव्यतिरिक्तं सर्वमपि वस्तु मिथ्यापयन्तो जीवेश्वरवेदधर्मादिकं सर्वमपि नास्तीति वदन्ति, तेऽपि परमार्थत एव तदसत्त्वमाशेरते नतु शशशृङ्गादिवदत्यन्ततोऽभावमित्यप्रामाण्यज्ञानाद्यनास्कन्दितपटुतमसंस्कारसहिताखण्डाकारसाक्षात्कारपूर्वक्षणपर्यन्तं वेदेश्वरधर्मादिसर्वप्रामाण्याङ्गीकारादास्तिकव्यपदेशमर्हन्त आस्तिका एव संवृत्ता इति निश्चिनुमः ॥

तत्र लोकायतिकमतं तावत् आस्तिकवर्यबृहस्पत्यादिभिः केनापि कार्यवशेन प्रवर्तितं तैत्तिरीयगतान्नमयात्मत्वव्यवस्थापनद्वारा ब्रह्मपुच्छमिति वाक्यप्रतिपादितजीवाभिन्नब्रह्मस्वरूपसमर्पणे एव परंपरयोपकरोतीति नात्यन्तमेवावहेयमिति मन्महे ॥

सौगतमतंतु चतुर्विधमपि प्रपञ्चस्य ज्ञानात्मके ब्रह्मणि कल्पितत्वस्य स्वाधिकरणे स्वात्यन्ताभावस्य च मिथ्यात्वस्य व्यवस्थापकं ज्ञानक्षणिकत्वादौ विरुद्धमप्यद्वैतसिद्धान्तस्यात्यन्तमेव प्रत्यासन्नमिति तस्याप्यद्वैतमतानुगुण्यम् । उक्तंहि वार्तिके बौद्धादिकृतान्तानामपि यथाकथंचिच्छ्रौतपदार्थनिर्णयादिद्वारा श्रौतसिद्धान्तोपयोग इति ॥

वैशेषिकनैयायिकमतयोस्तु सपरिकरं सप्रपञ्चं चानुमानस्वरूपविवेचनार्थं प्रवृत्तयोरात्मतत्त्वविनिर्णये श्रावणाङ्गतया विहितमननस्वरूपोपपादकतयाऽद्वैतमतोपयोग इति न तेनाप्यद्वैतसिद्धान्तस्य विरोधः ॥

सांख्यमतंतु जीवासंगत्वनिर्णयद्वाराऽद्वैतस्यातिप्रत्यासन्नमिति तदपि नास्माकं प्रतिकूलम् ॥

**एतेन—**योगिपाशुपतद्वैतिनां मतमपि—**व्याख्यातम्**; जीवेश्वरभेदनिषेधार्थं प्रसक्त्यपेक्षस्य तस्य निरूपणेनाद्वैतसिद्धान्तेनैकवाक्यतासंभवात् । उपयन्ति ह्यद्वैतिनोऽपि सगुणवाक्यानां सृष्टिवाक्यानां जीवेश्वरभेदश्रुतीनां च कर्मकाण्डस्येव व्यावहारिकं प्रामाण्यमिति विशदमिदं निखिलानाम् । विशिष्टाद्वैतसिद्धान्तोऽप्यत एव व्याख्यात इति सर्वेषामपि पूर्वाचार्यसिद्धान्तानामद्वैत एव पर्यवसानमिति निश्चिनुमः । भवेदपि कथंचिदन्नमयादिवाक्यानां तदनुसारिसिद्धान्तानामन्येषां च द्वैतपाशुपतविशिष्टाद्वैतेष्वन्यतमे उपयोगेन पर्यवसानम्, अद्वैतश्रुतीनामद्वैतसिद्धान्तस्य च द्वैते विशिष्टाद्वैते पाशुपते वा न कथंचिदप्युपयोगसंभव इति सर्वाबाधेनोपपत्तिरद्वैतसिद्धान्तपारमार्थ्य एव युज्यते, न मतान्तरपारमार्थ्ये इति अद्वैतसिद्धान्त एवौपनिषदः । एतदभिप्रायेणैवाद्वैतदर्शनं दर्शनेषु सर्वेषु दर्शनीयतमं दर्शनीयमिति न्यायरत्नावल्यां ब्रह्मानन्दसरस्वत्यो विशिंषन्ति ।

प्रवर्तकाचार्यगौरवेणाप्यद्वैतपारमार्थ्यमेव सम्यगवगच्छामः, नतु द्वैतकृतान्तं विशिष्टाद्वैतराद्धान्तं वा । द्वैतसिद्धान्तप्रवर्तका ह्याचार्याः श्रीमन्तो भगवन्त आनन्दतीर्था वाय्ववतारपुरुषाः, विशिष्टाद्वैतसिद्धान्तप्रवर्तकास्तु श्रीमन्तो भगवद्रामानुजाचार्याः अनन्तावतारपुरुषाः । अद्वैतराद्धान्तप्रवर्तकास्तु शङ्करभगवत्पादाः त्रिमूर्त्यन्तर्गतभगवच्छङ्करावतारपुरुषाः इति तत्तन्मताभिमानिनामभिमानः । तत्र वाय्वनन्तयोरुत्कर्षतारतम्ये विप्रतिपत्तिसंभवेऽपि उभयापेक्षया शङ्करोत्कर्षे न कस्यापि विप्रतिपत्तिरिति तदवताराणां पूज्यपादानां शङ्करभगवत्पादानां गौरवमवचनसिद्धमेव । भगवद्विष्ण्ववतारपुरुषस्य बादरा-

यणस्याशयं तत्समकक्ष्यो भगवान् शङ्कर एव यथावदवगन्तुं पारयति नान्य इति ब्रह्मसूत्राणामप्युपनिषदामिवाद्वैत एव परमतात्पर्यं न द्वैते नवा विशिष्टाद्वैते इति पश्यामः ॥

अथात्रावसरप्राप्तमुपनिषदां ब्रह्मसूत्राणां च किं द्वैतमर्थः, उत विशिष्टाद्वैतमाहो अद्वैतमिति विषयमधिकृत्य किंचिदिव लेखिनीं व्यापारयामः ।

तत्र केचिद्द्वैतमेव तासां तेषांचाभिधेयमिति वर्णयन्ति । **तेषामयमाशयः**—"अथातो ब्रह्मजिज्ञासे"ति जिज्ञास्यत्वेन प्रतिज्ञातं हि ब्रह्म "जन्माद्यस्य यत" इति जगत्कारणत्वेन लक्ष्यते । तत्रच कारणत्वं निमित्तत्वमात्रम्, नतूपादानत्वमपि; ब्रह्मणोऽविकारस्यापरिणामित्वेन विवर्तोपादानत्वस्यान्यत्रादर्शनेन च तदयोगात् । एतेन वाचारम्भणश्रुतिरपि व्याख्याता; तत्र मृत्तिकेति पदं संस्कृतशब्दाभिप्रायं सत् व्यापकात्संस्कृतशब्दज्ञानादपभ्रंशज्ञानमिव व्यापकब्रह्मस्वरूपज्ञानेन व्याप्यप्रपञ्चज्ञानं संभवतीत्येवंपरं एकविज्ञानेन सर्वविज्ञानोपपादकं भवतीति न दोषः । **एतेन**—तदनन्यत्वसूत्रतद्विषयवाचारम्भणश्रुतिविरोधान्न द्वैततात्पर्यमुपनिषदामिति पाराशर्यविजयोक्तम्—**पराहतम्**; तदनन्यत्वसूत्रं हि न शरीरशरीरिभावसिद्धं कार्यकारणभावसिद्धं वा प्रपञ्चब्रह्मतादात्म्यं गोचरयति, किंतु स्वतन्त्रसाधनान्तरानपेक्षं ब्रह्मकारणत्वम्; शरीरशरीरिभावस्याभेदोपपादकोपादानोपादेयभावस्य वा तयोरसंभवात् । "यतो वा इमानि" इति श्रुतावपि पञ्चम्या हेतुत्वमात्रमर्थः, नतूपादानत्वम्, संमतं चैतत्परेषामप्यभिन्ननिमित्तोपादानत्वसिद्धान्तपराणां नोपपादनमपेक्षते । आरम्भणशब्दघटिते वाक्ये हि न शरीरशरीरिभावः उपादानोपादेयभावो वाऽभेदसाधकः प्रत्यपादि । ब्रह्मोपादानत्वस्य प्रपञ्चमिथ्यात्वसिद्ध्यधीनत्वादुपादानोपादेयभावस्य कारणस्वरूपातिरिक्तकार्यस्वरूपासत्यत्वस्यैव बोधने तत्र न तात्पर्यम् । वाचोपपदपरित्यागेन 'आरम्भणादिभ्य' इति सूत्रयन्तो हि बादरायणाचार्याः "किंस्विदासीदधिष्ठानमारम्भणमि"ति वाक्यमेव तदनन्यत्वाधिकरणविषयमाशयानाः स्वतन्त्रसाधनान्तरानपेक्षब्रह्मकारणत्वमेवात्र सिषाधयिषन्तीति वयं निर्णयामः । **एतेन**—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति सूत्रमपि—**व्याख्यातम्**; इदंहि सूत्रं समन्वयाध्यायगतं प्रकृतिशब्दमपि ब्रह्मणि संगमयितुमेव प्रावीवृतन्नाचार्याः, नत्वभिन्ननिमित्तोपादानत्वमपूर्वं स्थापयितुम् । नह्यत्रावसरस्तन्निरूपणस्येति मन्तव्यम् । लक्षणान्तरेषु सत्स्वपि "जन्माद्यस्य यत" इति जगत्कारणत्वमेव लक्षणं परामृशतां पाराशर्याणां द्वैत एव परमं तात्पर्यम् । "भेदव्यपदेशाच्चान्य" इति स्पष्टमेव जीवेश्वरभेदं सूत्रयतां परमाचार्याणामभेदतात्पर्यकल्पना निरालम्बनैवेति मन्यामहे । "द्वा सुपर्णौ सयुजौ सखायौ समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" पृथगात्मानं प्रेरितारंच मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्यादिश्रुतीरप्यत्र प्रमाणयामः ॥ यद्यपि "द्वासुपर्णे"ति वाक्ये सयुजौ सखायाविति परस्पराविनाभाव एव जीवपरमात्मनोरवगम्यते इति विशिष्टाद्वैत एव स्वारस्यम्, यद्यपिच तयोरन्य इत्यन्यपदस्यैकतरार्थकत्वेन भेदस्यापदार्थतयाऽवाक्यार्थत्वात् द्वित्वस्य स्वाश्रयप्रतियोगिकभेदनियमानुपपत्तिगम्यत्वेऽपि भेदश्रुतेः प्रत्यक्षसिद्धभेदानुवादित्वेन हीनबलतया षड्विधतात्पर्यलिङ्गोपेताद्वैतश्रुतेरेव प्राबल्येन तद्विरुद्धेऽर्थे प्रामाण्यायोगाच्चाद्वैतमत एव तात्पर्यमिति च भवति संभावना; तथापि मुक्त्यवस्थायां जीवपरमात्मसहभावस्यैव "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति श्रुतिसिद्धस्य "सयुजौ सखायावि"त्यनेनानुवादेनाविभागावगमाभावात्, अनुपपत्तिगम्यस्यापि भेदस्य श्रौतत्वेन श्रुतेश्चापूर्वविषयकत्वनियमेन कल्पितस्य व्यावहारिकस्यवा भेदस्य तया गोचरणे तज्ज्ञानस्य मोक्षसाधनत्वायोगेन "जुष्टं यदा पश्यत्यन्यमीशं" इति वाक्यवैयर्थ्यापत्त्याऽसंजातविरोधप्रत्यक्षसंवादान्निरवकाशत्वाच्च भेदश्रुतेरेव "स्वाद्वत्ति" "अनश्नन्" "पूर्णः परो जीवसंघो ब्रह्मपूर्णः" इत्याद्युपपत्तिः "सत्यं भिदा सत्यं भिदे"त्यभ्यासादितात्पर्यलिङ्गोपेतायाः प्रबलत्वेन द्वैतमते एवोक्तश्रुतितात्पर्यं निश्चिनुमः। अत एव (१) "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति" इति कठवल्लीचतुर्थखण्डवचनम्, (२) "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यापापे विधूय निरञ्जनः परमं साम्यमुपैति" इति मुण्डकपञ्चमखण्डवचनम्, (३) "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति दहरविद्यावचनम्, (४) "यथा सैन्धवखिल्य उदके प्रास्ते उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात् यतो यतस्त्वाददीत लवणमेव, एवं वा अरे इदं महद्भूतमनन्तरमपारं विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति बृहदारण्यकचतुर्थाध्यायचतुर्थब्राह्मणवचनम्, (५) "तस्मिन्नेव यजमानाः सैन्धवघन इव लीयन्त्येषा वै ब्रह्मैकता नाम अत्रहि सर्वे कामाः समवहिता" इति मैत्रायणीयोपनिषद्वचनं च संगतं भवति । **प्रथमश्रुतौ द्वितीयश्रुतौ** च हि ब्रह्म प्राप्नुवतः तत्साम्यमेव "तादृगेव भवति" "परमं साम्यमुपैति" इति बोध्यमानमवगच्छामः । **तृतीयश्रुतिस्तु स्वेन रूपेण** स्वयोग्येन गुणेनाभिनिष्पत्तिं ज्ञापयन्ती सारूप्यपरेति निगदव्याख्याता । **चतुर्थश्रुतेस्तु** परमसाम्यापत्त्याऽत्यन्तवैधर्म्याग्रहणेऽपि कतिपयधर्मग्रहणे दृष्टान्तबलेन तात्पर्यमध्यवस्यामः। तदिदं सिद्धम्—यन्मुक्त्यवस्थायामपि प्रतीयमानो जीवेश्वरभेदो नापारमार्थिक इति सांप्रतमिति । "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रापि इववद्वैवेति निघण्टुमनुसृत्य सादृश्यमेवैवकारार्थं मन्यामहे, नत्ववधारणार्थमिति "परमं साम्यम्" इति

पारम्यविशेषणमपि धर्मेऽतिशयसंपादनार्थं सन्न दुष्यतीति जीवेश्वराभेदसिद्धान्तं खपुष्पमिति जानीमः ॥ "यमेवैष वृणुते तेन लभ्यः" "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति प्रत्यक्षानुमाने अपि भगवत्साक्षात्काराधीनभक्तिप्रभवभगवत्प्रसादसाध्यमेव मोक्षमवगमयतो नतु ज्ञानसाध्यं ब्रह्मभावापत्तिलक्षणं तमिति स्फुटतरमिदं सर्वेषाम्। एवं सति सर्वेषामपि वेदविभागानां साक्षादेव मोक्षोपयोगोऽपि सिद्धो भवति। कर्मणां चित्तशुद्धौ उपासनायाः साक्षात्कारे साक्षात्कारस्य मोक्षे विनियोगकल्पनायां विशदं वैषम्यं समापतति। तमेव विदित्वाऽतिमृत्युमेतीत्यादिज्ञानसाध्यमोक्षपराणि तु वचनानि भूयोऽनुग्रहन्यायाविरोधार्थं उपचरितार्थानीति पश्यामः। अतएवोपासनापराण्येव वाक्यानि व्यचीचरन् बादरायणाचार्याः, न निर्विशेषवाक्यानि। निर्विशेषवाक्यपरतयापि आनन्दमयेन्द्रप्रतर्दनभूमाद्दहरत्वाद्यधिकरणानामद्वैतविद्याचार्यैर्योजनं तु तैरपि बहूनामधिकरणानां सगुणविषयतया योजनात् **सार्थादपि तस्करा बहव इति न्यायेनानादरणीयमेवेति** सविशेषमेव परमार्थं बादरायणाचार्या आशेरते। सविशेषमाशयाना अपि ते न विशिष्टाद्वैतमनुमन्वते। जीवेश्वरशरीरशरीरिभावस्य ब्रह्माभिन्ननिमित्तोपादानत्वस्य मुक्तितारतम्याभावस्यवा श्रुतिसूत्राभ्यामनवगमात्। "अथातो ब्रह्मजिज्ञासे"ति पूर्ववृत्तकर्मावबोधानन्तर्यबोधकोऽथशब्दस्तु शाङ्करमतावलम्बिनां प्रतिकूल एव। नहि साधनचतुष्टयसंपत्तिः पूर्ववृत्ता, येन तदानन्तर्यमथशब्दार्थः स्यात्। रामानुजीयानां तु अथशब्देनैव कर्मावबोधहेतुताया अधिकारित्वलाभसंभवस्य वा लाभादतःशब्दवैयर्थ्यमवैयासिकत्वं विशदयति। ईश्वरप्रसादसिद्ध्यर्थमित्यतःशब्दं व्याचक्षाणास्तं सार्थयन्तो वैयासिका एवेत्यत्र नावसरः संशयलेशस्यापि। ब्रह्मजिज्ञासेति ब्रह्मपदश्रवणमपि "बृहन्तोऽस्मिन् गुणा" इति वचनसिद्धसगुणब्रह्मपरं आत्मजिज्ञासां समर्थयतामद्वैतिनां विरोधि। आत्मजिज्ञासेतिहि तदाऽसूत्रयिष्यत्, यदि अद्वैतमाशेष्यत। जिज्ञासेति ज्ञानस्येष्यमाणत्वनिरूपणमपि ज्ञानस्य स्वतोऽपुरुषार्थस्य सन्निहितेश्वरप्रसादसाधनत्वेनैव युज्यते, नत्वसन्निहितमोक्षसाधनत्वेनेति तदप्यस्मानेवानुकूलयति नत्वद्वैतिन इति अद्वैतसिद्धान्तं सूत्राननुगुणमिति मन्यामहे। जिज्ञासाधिकरणशरीरमप्यस्मदभिमतमेव समीचीनम् नेतराभिमतम्॥

( अधिकरणशरीरं चैषामद्वैतसिद्धिभूमिकायां प्राचीकशामेति नात्र पिष्टं पेषयामः ॥ )

तत्राद्वैतमते यद्यपि पूर्वपक्षेऽविशेषः; तथापि सिद्धान्ते जीवस्यैवान्तःकरणाद्युपाधिविगलितस्य परमात्मभावापन्नस्य विचार्यत्वव्यवस्थापनाद् ब्रह्मशब्दप्रयोगानुपपत्त्या दुरपह्नवमस्वारस्यं समापद्यते। विशिष्टाद्वैतमतेतु पूर्वपक्षेऽस्वारस्यम्॥

इत्थं तदभिमतमधिकरणशरीरं—ब्रह्ममीमांसाशास्त्रं सिद्धे व्युत्पत्त्यसंभवात् कर्मास्थिरफलत्वनिर्णयसहितसिद्धब्रह्मतात्पर्यसंभावनाविशिष्टब्रह्मज्ञानानन्तस्थिरफलत्वापातप्रतीतिविशिष्टाधिकार्यलाभान्नारम्भणीयमिति प्राभाकरमतानुसारेण पूर्वपक्षे सिद्धेऽपि व्युत्पत्तिसंभवात् सद्विद्यादीनामकार्यपरत्वात् कार्यार्थत्वेन प्रतिपन्नेष्वर्थवादेष्विवार्थसत्वनिर्बन्धाभावाभावेन जीवविलक्षणब्रह्मसिद्ध्या विचारः कर्तव्य एवेति सिद्धान्तः—इति ॥

तत्रासन्दिग्धत्वाप्रयोजनत्वाभ्यां विचारकर्तव्यतापूर्वकल्प एव स्वरसः, सन्दिग्धत्वसप्रयोजनत्वयोरेव विचारव्यापकत्वेन व्यापकविरहप्रतिपादनस्यैवावसरप्राप्तत्वात्। सिद्धे व्युत्पत्त्यसंभवेन प्रवर्तमानोहि विकल्पः पूर्वमीमांसयैव गतार्थत्वादिदं शास्त्रमनर्थकमित्यत्रैव पर्यवस्यति। तच्च न युक्तम्; पूर्वमीमांसायां सविशेषब्रह्मवाक्यानामविचारितत्वेनार्थवादसमानत्वेन पूर्वपक्ष्यभिमतानामपि न्यायेनार्थविशेषतात्पर्यनिर्णयार्थमुत्तरांशसार्थक्यात्। दृष्टंहि अर्थवादत्वाविशेषेऽपि "औदुम्बरो यूपो भवति" "यस्य पर्णमयी जुहूर्भवति" "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इति वाक्यतात्पर्यनिर्णयार्थं न्यायविशेषाणां जैमिन्याचार्यैः प्रवर्तनम्। एवमुपनिषदामपि विषये भविष्यतीति कथं वा गतार्थत्वमिति भवन्त एव विवेचयन्तु। तत्रापि यदि सिद्धे व्युत्पत्तिग्रहसंभवः अथातो ब्रह्मजिज्ञासेत्यत्र शब्दतः सूच्येत, कथमपि तर्हि भवतां पूर्वपक्षोऽपि स्वरसः संपद्येत, नैतदस्ति। **एतेन**—अथातो धर्मजिज्ञासेत्यनन्तरं चोदनालक्षणोऽर्थो धर्म इतिवत् अथातो ब्रह्मजिज्ञासेत्यनन्तरं "जन्मादिकारणं ब्रह्म" इत्यसूत्रणात् शास्त्रयोनित्वादित्यत्रापि साध्यानिर्देशात् चतुर्थसूत्रस्यापि तृतीयशेषत्वात् शास्त्रारम्भार्था चतुःसूत्रीति सिद्धान्तोऽपि—**पराहतः**; "जन्माद्यस्य यतः" इति यच्छब्दमहिम्नाऽध्याहरणीयस्य तच्छब्दस्य ब्रह्मजिज्ञासापदघटकाप्रधानब्रह्मपदेन किमन्वयः, उताध्याहृतप्रथमान्तब्रह्मशब्देनेति विचिकित्सायां यत इति पञ्चम्यन्तघटितसृष्टिवाक्ये तद्ब्रह्मेतिवाक्यशेषश्रवणादेकदेशान्वयेऽसामर्थ्याच्चोपस्थितेन तद्ब्रह्मेतिवाक्यशेषेणैवात्रापि वाक्यार्थपरिसमाप्तिरिति प्रथमद्वितीययोः सूत्रयोरेकवाक्यताऽसंभवात्। **एतेन**—जन्मादिकारणं ब्रह्मेत्यसूत्रणेऽपि निमित्तम्—**सूचितम्**; यतः—"यतो वे"ति श्रुतिमूलमेव जगत्कारणत्वमत्र लक्षणत्वेन विवक्षितं, नत्वानुमानिकमित्ययमर्थो नान्यथा स्वरूपं लभते। एतेन शास्त्रयोनित्वादिति सूत्रमपि व्याख्यातम्। तृतीयसूत्रस्य चतुर्थसूत्रं शेष इति तु तत्तुपदवैयर्थ्यान्न संगच्छते। एवंच शास्त्रयोनित्वाधिकरणेन शास्त्रप्रमाणकत्वे ब्रह्मणि साधिते शास्त्रस्य प्रवृत्तिनिवृत्त्यन्यतरपरत्वनियमेन कार्यपराणामेव सतां वाक्यानां प्रामाण्यात्

वेदान्तानां सिद्धवस्तुप्रमाणत्वासंभवपूर्वपक्षनिराकरणार्थमेवोक्तसूत्रप्रवृत्तिरिति प्रथमसूत्र एवोक्तभारकल्पनं निरालम्बनमिति पश्यामः ॥ **अयमाशयः**—यथाहि "तपसा ब्रह्म विजिज्ञासस्वे"ति वाक्यमेव विचारविधिपरम्, नतु "यतो वे"ति वाक्यम्, तत्तु विचार्यत्वेन प्रतिज्ञातब्रह्मस्वरूपलक्षणपरमेव; अन्यथा सर्वेषामपि वेदान्तानां विचारविधित्वापत्त्या विचार्यभागस्यैवासिद्ध्या महाननाश्वासः समापद्येत। लक्षणाभावाद्ब्रह्म न विचार्यमित्याक्षेपाभिप्राय इति प्रथमसूत्रेण द्वितीयसूत्रस्याक्षेपलक्षणां संगतिमाहेति च भामतीकल्पतरुवचने अपि शास्त्रसंगत्यभावेन ब्रह्मणः शास्त्रविषयत्वाभावपरे इति सूत्रचतुष्टयस्याप्यारम्भार्थत्ववर्णनमसंगतमेव। नायमर्थोऽद्वैतिनामप्यसंमत इति श्रुतिपर्यालोचनया जिज्ञासाधिकरणपर्यालोचनया च द्वैतमेव वैयासिकम्, नतु विशिष्टाद्वैतमद्वैतं वेति।

**तदेतद्विशिष्टाद्वैतिनो नानुमन्यन्ते। तथाहि**—यद्यपि पूर्वोदाहृतश्रुतिभिर्मोक्षदशायामपि भेदः परमार्थः; तथापि जीवेश्वरयोः शरीरशरीरिभावनिबन्धनोऽविनाभावोऽप्यपृथक्सिद्धिरूपोऽङ्गीकरणीयः। एवमपि हि भेदपारमार्थिकता युज्यत एव। दृष्टो हि द्रव्यगुणयोरप्यपृथक्सिद्धिसंबन्धवतोः पारमार्थिको भेदः। एवंच भेदस्याविनाभावस्य चाविरोधाद्भेदश्रुतयो न विशिष्टाद्वैतिनां प्रतिकूला इत्यवेमः। जीवेश्वरयोः शरीरशरीरिभावे तु अन्तर्यामिब्राह्मणं प्रमाणयामः। भूयोऽनुग्रहन्यायविदोऽभ्यासादितात्पर्यग्राहकप्रमाणदर्शिनश्च प्रामाणिका अन्तर्यामिब्राह्मणमुपचरितार्थं न सहेरन्। **एतेन**—तत्त्वमसीत्यादिश्रुतयोऽपि **व्याख्याताः**; शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्य देवदत्तो जानातीत्यादिस्थलेषु क्लृप्ततया त्वंपदस्यापि परमात्मपरत्वेन सामानाधिकरण्यमुपपद्यते। युष्मदर्थस्य पुरोवर्तिनोऽत्राविवक्षणेऽपि युष्मदुपपदत्वाविघातान्मध्यमपुरुषप्रयोगोपपत्तिः। जीवशरीरकः परमात्मास्तीति प्रयोक्तव्ये तत्त्वमसीति निर्देशस्तूपस्थितत्वेन श्वेतकेतुमेव दृष्टान्तयितुमिति न किंचिदनुपपन्नं प्रतीमः। एवंच "सदेव सोम्येद"मित्युपक्रमोऽपि सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचित्प्रहाणद्वारा स्थूलचिदचिद्विशिष्टाभेदगोचर उपपद्यते। **एतेन**—विशिष्टाद्वैतपदमपि—**व्याख्यातम्**। स्थूलचितं प्रति सूक्ष्मचितः स्थूलाचितं प्रति सूक्ष्माचितश्चैव कारणत्वेऽपि सूक्ष्मचिदचितोर्भगवच्छरीरत्वात् तयोश्चास्मच्छरीरवत्पारतन्त्र्यात् स्वतन्त्रस्य भगवत एव कारणत्वव्यपदेशः, अचेतनोपादानकानामपि केशलोमादीनाम्—"यथा सतः पुरुषात् केशलोमानी"ति व्यपदेशवदिति "यतो वा इमानि भूतानि जायन्ते" इति श्रौतव्यवहारोऽप्युपपन्न एव भवति। ब्रह्मकारणत्वं चेदं अभिन्ननिमित्तोपादानत्वम्। एतदभिप्रायैव "ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुरि"ति श्रुतिः। तत्तेजोऽसृजतेत्यादिवाक्यं विहाय यतो वा इमानीति वाक्यमेव ब्रह्मलक्षणसमर्पणार्थं संगृह्णाना बादरायणाचार्या अपि अभिन्ननिमित्तोपादानत्वमेवाभिप्रयन्ति। यत इति हि उपादानपञ्चमी॥

द्वैतिनामेतत्सूत्रविवरणम् तन्निरसनमद्वैत्यभिमततद्विवरणप्रकारंचाद्वैतसिद्धिभूमिकायां न्यरूरुपामेति न पुनरुक्तिं संपादयामः॥

तत्राद्वैत्यभिमते विवरणे किंचिदिवेदानीं विचारयामः। किमिदं लक्षणं सविशेषस्यैव जिज्ञास्यत्वाभिप्रायेण, आहो निर्विशेषस्य। **आद्ये** शास्त्रस्य सविशेषविषयत्वप्रसंगः, लक्षणासंभवपूर्वपक्षानुत्थानं च। **द्वितीये** कृत्स्नस्यापि मिथ्यात्वेन व्यावर्त्यासिद्ध्या न लक्षणमाकाङ्क्षितम्। मिथ्यावस्तुनो व्यावर्त्यत्वे व्यावृत्तिप्रयोजकं लक्ष्यवृत्तित्वं लक्षणे स्यादिति लक्षणाक्षेपो न संभवी; कृतकत्वस्य नित्यासंबन्धेनालक्षणत्वेऽपि कारणत्वस्य ब्रह्मसंबन्धेन लक्षणत्वसंभवात्। जगत्कारणत्वस्य मिथ्यात्वे ब्रह्ममिथ्यात्वापत्त्या सत्यत्वे निर्विशेषस्वरूपासिद्ध्या स्वरूपलक्षणत्वासंभवेऽपि तटस्थलक्षणत्वं युज्यत एवेति न सांप्रतम्; व्यावृत्तिसमानाधिकरणव्यावर्तकधर्माणां स्वेतरधर्माश्रययावद्धर्मिभेदकत्वस्यौत्सर्गिकतया जन्मादिकारणत्वस्यैकधर्मिस्वरूपलक्षणत्वमिव ज्ञातज्ञाप्यताकारोपलक्षणानां त्रयाणामभावेन तटस्थलक्षणत्वमपि न संभवतीति जन्मादिकारणधर्मिभेदोऽवर्जनीय इति पूर्वपक्षेण उक्तनियमस्याप्रामाणिकत्वेन सविशेषब्रह्मण एव जिज्ञास्यत्वेन तत्र ज्ञातताद्याकारोपलक्षणानां संभवात् लक्षणतः ब्रह्म प्रतिपत्तुं शक्यते इति सिद्धान्त एव युक्त इति विशिष्टाद्वैतमत एव सूत्रस्वारस्यम्। अभिन्ननिमित्तोपादानत्वं सविशेष एव श्रुतितात्पर्यंच हि पूर्वमेवासीसधाम। **एतेन**—"तदनन्यत्वमारम्भणशब्दादिभ्य" इति सूत्रमपि—**व्याख्यातम्**; तस्य सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टोपादानत्वेन तदभेदे एव तात्पर्यात्। "असदिति चेन्न प्रतिषेधमात्रत्वात्" इति पूर्वाधिकरणेऽसत्वनिषेधेन कार्यसामान्योपादानत्वस्य ब्रह्मणि समर्थनेनोपादानोपादेययोर्विप्रतिपन्नानन्यत्वसाधनार्थत्वस्यैव युक्तत्वेन स्वतन्त्रकारणान्तरविरहसमर्थनार्थत्वस्य तद्व्यतिरेकेण प्रपञ्चाभावरूपप्रपञ्चमिथ्यात्वस्य वा तदनन्यत्वशब्दतः स्वरसतोऽप्रतीतेः। एवंच कार्यावस्थाया अनित्यत्वेऽपि स्वरूपस्य कारणस्य सत्यत्वेनोपादानत्वेन च तद्विज्ञानेन कार्यस्वरूपविज्ञानसंभवादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमप्युपपद्यते इति वाचारम्भणश्रुतिरपि व्याख्याता। संस्कृतशब्दानां व्यापकत्वासंभवात् व्यापकत्वेऽपि व्यापकस्वरूपविज्ञानेन व्याप्यस्वरूपविज्ञानासंभवात् द्वैतिनां व्याख्यानम्, यथा सौम्यैकया रज्ज्वा सर्पजलधारादिविज्ञानमित्यदृष्टान्तयित्वा मृत्स्वरूपविज्ञानमेव निदर्शयन्ती भगवती श्रुतिर्द्वैतमिथ्यात्वं प्रतिरुणद्धीत्यद्वैतिनां—वाचैव केवलमारभ्य-

माणं घटादिविषयजातं नाममात्रमेव, मृत्तिकैव स्वरूपतो विद्यमाना यथा सत्यम्, एवं ब्रह्मव्यतिरिक्तं सर्वमपि नाममात्रमेव मिथ्या ब्रह्मैव सत्यमिति—व्याख्यानं च न संगतमिति सूचयामः। यदिहि उक्तश्रुतेर्द्वैतमिथ्यात्व एव तात्पर्यं, तर्हि मृत्तिकेत्येव सत्यमिति वाक्यमनर्थकं संपद्येत; वाचारम्भणवाक्येनैव तत्सिद्धेः। **वस्तुतस्तु**—विकारो नामधेयं मृत्तिकेत्येव सत्यमिति वाक्यं ह्यद्वैतिनामत्यन्तमेव प्रतिकूलम्। नहि तन्मते घटो मिथ्या मृत्तिका सत्येति संभवति; उभयोरपि व्यावहारिकत्वात्। सत्यपदेनाविनश्यदवस्थात्वविवक्षणे तु नामधेयपदवैयर्थ्यम्। एवंच **वाचा** व्यवहारार्थं आद्रियमाणनाममात्रमेव घटादिविकारः, न मृत्स्वरूपव्यतिरेकेण घटादिस्वरूपं किमप्यस्ति; अवस्थाविशेषापन्नाया मृद एव घटशब्दत्वादिति नामधेयभेदप्रयुक्तभेदोऽपि न संभवतीत्यस्मदीयव्याख्याने एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपादयामः। यथा च—कारणस्वरूपव्यतिरेकेण कार्यस्वरूपान्तराभाव इति शब्दैक्येऽपि न मिथ्यात्वेऽस्माकमाशयस्तथाऽवस्थाविशेषापन्नाया मृद एव घटशब्दत्वादित्यनेनानुपदमेव प्रत्यपीपदाम। नह्यद्वैतिनः अवस्थाविशेषापन्ना मृत् यथा घटशब्द एवं तादृशं ब्रह्म प्रपञ्चशब्दमिति मन्यन्ते। मृत्तिकेति परिणाम्युपादानकारणनिदर्शनमप्यस्मानेवानुगृह्णाति। **एतेन**—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति सूत्रमपि—**व्याख्यातम्**; अस्पष्टस्पष्टस्पष्टतरलिङ्गकवाक्यावगतजगत्कारणत्वसमन्वयार्थमेवहि प्रथमेतरपादानां प्रवृत्तिः, नत्वन्यत्रोभयत्र च प्रसिद्धसर्वविधपदसमन्वयार्थमित्यभिन्ननिमित्तोपादानत्वसमन्वयमेवात्र समितं पश्यामः। अनुक्तसमुच्चयार्थः प्रकृतिश्चेति चशब्दोऽपि भवतां विरुणद्धि। भेदव्यपदेशाच्चेत्यादिसूत्राण्यद्वैतप्रतिकूलान्यपि नास्माकं प्रतिकूलानीति पूर्वमेवासूसुचाम। एवंच पूर्वोक्तप्रकारैः परमात्मचिदचिच्छरीरकत्वस्य तादृशभगवदुपासनमोक्षसाधनत्वस्य, भूयोऽनुग्रहन्यायेन सर्वेषामपि वेदान्तानां सगुणस्वरूपतात्पर्यस्य, सोऽश्नुते सर्वान् कामानिति श्रुतिबोधितब्रह्मसाहित्यान्यथानुपपत्तिसिद्धस्य परमसाम्यमुपैतीति श्रुतिसिद्धस्य च मोक्षतारतम्याभावस्य चैव प्रामाणिकत्वात् द्वैतमतं प्राप्यप्रापकभावविरोधेनाद्वैतमतं चाप्रामाणिकमनौपनिषदं चेति पश्यामः। (अथातो ब्रह्मजिज्ञासेति सूत्रविवरणमानन्दतीर्थीयं न क्षोदक्षममित्यद्वैतसिद्धिभूमिकायां बहुशः क्षुण्णमित्युत्तरतः प्रचरामः।) **एतेन**—श्रीकण्ठाचार्यसंमता जिज्ञासाधिकरणयोजनापि—**पराहता**। अद्वैतमते तु यद्यपि निर्विशेषजीवपरत्वस्य सिद्धान्त्यभिमतत्वात्तस्यचासिद्धिशङ्कया न्यायविशेषापेक्षयैव पूर्वपक्षसंभवात् शास्त्रापेक्षाभावेन व्याघाताद्यभावात् श्रवणविधिमूलकत्वमेव विचारस्य न मननविधिमूलकत्वमित्यङ्गीकारेण मतान्तरसिद्धप्रत्यक्षप्राबल्यानुवादस्यापि संभवाच्च पूर्वपक्षप्रकार उपपद्यते; तथापि अपरमार्थे प्रत्यग्ब्रह्मैक्ये नोपनिषदामाचार्याणां च तात्पर्यकल्पनं युक्तिसहमिति मन्महे। अथात आत्मजिज्ञासेत्येव सूत्रयितव्ये ब्रह्मजिज्ञासेति सूत्रयतामयमेवाभिप्राय इति पूर्वमेवोपपादितम्। ईक्षत्यधिकरणादिभिः कारणविषयां चिन्तामुपक्रममाणा अपि कारणत्वविशिष्टमेव ब्रह्मपदेन विवक्षन्तीति विश्वसिमः। निर्विकारस्यापि ब्रह्मणो घटस्येव रूपं प्रत्युपादानत्वमुपपद्यते। **एतेन**—जीवब्रह्माभेदोऽपि—**पराहतः**; नह्यशनायाद्यतीतस्य ब्रह्मणस्तत्परवशेनैक्यमिति युक्तम्। अशनायादिमिथ्यात्वमेव यदि जिज्ञासाधिकरणे प्रतिपिपादयिषितं, तर्हि अथातो मिथ्यात्वजिज्ञासेत्येवासूत्रयिष्यन्। एतेन प्रपञ्चमिथ्यात्वमप्यपास्तम्; नहि भ्रमात्मकं बाधितविषयकं ज्ञानमस्ति वस्तुतः। यथार्थं सर्वविज्ञानमिति वेदविदां मतमिति हि प्रामाणिका उद्घुष्यन्ति। सर्वविज्ञानयथार्थतावादश्चायं प्राभाकरसंमतोऽख्यातिवादेन व्यपदिश्यमानः—"यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रमः" इति शङ्करभगवत्पादवाक्यविवरणावसरे भामत्यां परिमले च विस्तरतः प्रचकास्त इति ग्रन्थविस्तरभयादुपरमामः। यथाच भ्रमज्ञानाङ्गीकारेऽपि अन्तःकरणादिमिथ्यात्वासंभवः, तथाऽद्वैतसिद्धिभूमिकायां विशदमिति प्रकृतं विषयमुपसंहरामः। एवंच सर्वथा विशिष्टाद्वैत एव सूत्रस्वारस्यं न द्वैत इति सिद्धमिति।

**तदेतदद्वैतिनः प्रतिक्षिपन्ति। तथाहि**—पूर्वोदाहृता हि श्रुतयः "निरञ्जनः परमं साम्य"मिति पारम्यविशेषणेन "ब्रह्मैव भवति" इत्यवधारणाम्नानेन तत्त्वमसीति सामानाधिकरण्योपपत्त्या "उदरमन्तरं कुरुते अथ तस्य भयं भवति" "द्वितीयाद्वै भयं भवति" "अतोऽन्यदार्तम्" "विद्वान्नामरूपाद्विमुक्तः" इत्यादिभेदनिन्दाश्रवणेन च भेदविरहितस्यैव मोक्षपदार्थस्यावगमान्न पारमार्थिकं भेदं गोचरयितुमीशते इति प्रत्यक्षादिप्रमाणप्राप्तकाल्पनिकभेदविषयिण्योऽग्निर्हिमस्य भेषजमित्यादिवाक्यानीवाऽन्यशेषत्वेनैव प्रामाण्यमश्नुवते इत्यद्वैतपरमार्थतायामेव सूत्रोपनिषदां तात्पर्यम्। सौसादृश्यविवक्षया पारम्यावधारणयोरुपपत्तिस्तु ज्ञानाधीनत्वानुपपत्त्या मोक्षस्य नित्यप्राप्तस्वरूपस्यैवाङ्गीकार्यत्वान्नात्रावकाशं विन्दते। यद्यदुपासनादिक्रियाव्याप्यं तत्तदप्राप्तमेवेति मोक्षस्योपासनाधीनत्वे कार्यत्वापत्त्याऽनित्यत्वमापद्यते, ज्ञानसाध्यत्वे तु कण्ठचामीकरन्यायेन प्राप्तस्यैव प्राप्तिरिति युज्यते। कण्ठचामीकरादिस्थले हि अज्ञानतदधीनभ्रमनिरसनेन प्राप्तस्यैवाप्राप्तत्वेन ज्ञायमानस्य प्राप्तिव्यपदेशः सर्वेषामपि संमतः। एवंच दशमस्त्वमसीत्यादिस्थल इव प्रापकस्यैव प्राप्तत्वप्रतीतिरपि वाक्यजन्यज्ञानेनोपपद्यत इत्यपरोक्षयामः। यानि पुनर्मोक्षदशायां भेदं बोधयन्ति, तान्यवान्तरमुक्तिमेव प्रतिपादयन्ति, नतु परमां मुक्तिम्; तत्र भेदविरहात्। "द्वा सुपर्णौ सयुजौ" इति वाक्यं हि अन्तःकरणकर्तृत्वादिप्रतिपादनद्वाराऽकर्तृ निर्लेपं परमात्मभावापन्नं जीवस्वरूपमेव प्रतिपादयतीति पैङ्गिरहस्यब्राह्मणव्याख्यानमनुसृत्य व्याख्यायि भगवद्भिराचार्यैरिति तयोरन्यः पिप्पलं स्वाद्वत्तीत्यन्तोऽनुवादः अनश्नन्नन्य इत्यंश एव स्वार्थपर इति न भेदपारमार्थिकतायां प्रमाणम्।

"कस्मिन्नु खलु विज्ञाते सर्वमिदं विज्ञातं भवति" इति शौनकप्रश्नानन्तरं "द्वे विद्ये वेदितव्ये" इति विद्याद्वयमवतार्य "अथ परा यया तदक्षरमधिगम्यते" इत्यभेदेनोपक्रमात् "पुरुष एवेदं विश्वं ब्रह्मैवेदमिदं विश्वं वरिष्ठ"मिति मध्यपरामर्शात् "परेऽव्यये सर्वे एकीभवन्ति स यो ह वैतत् परमं ब्रह्म वेद ब्रह्मैव भवति" इत्युपसंहाराच्च मुण्डकत्रयात्मिकाया उपनिषदोऽभेदतात्पर्ये निर्णीते मध्यगतं द्वासुपर्णवाक्यमपि सन्दंशन्यायेन तदनुकूलतयैव नेयमिति काल्पनिकभेदपरमेवेति निश्चिनुमः। यथाच जुष्टं यदा पश्यत्यन्यमीशमित्यादीनामपि अद्वैतानुगुण्यम्, तथाऽद्वैतसिद्धौ द्वितीयपरिच्छेदे व्यक्तमिति तत एवावगन्तव्यं विस्तरभयान्नात्रोल्लिख्यते। **एतेन**—शरीरशरीरिभावसाधकमन्तर्यामिब्राह्मणमपि—**व्याख्यातम्**। "आत्मेत्येवोपासीते"ति सूत्रितब्रह्मविद्यावतरणरूपायां चतुरध्याय्यां "अनेन ह्येतत्सर्वं वेद" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं "ब्रह्म ह वा इदमग्र आसीन्नान्यत्किंचन मिषत्" इत्यभेदेनोपक्रम्य षष्ठाध्यायान्ते मैत्रेयीब्राह्मणे निगमनरूपे "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादिनाऽभेदेनैवोपसंहारादध्यायचतुष्टयस्याप्यभेदपरत्वे निर्णीते सन्दंशन्यायेनान्तर्यामिब्राह्मणस्य सूत्रात्मपरत्वस्यैवोपगमात्। **एतेन**—वेत्थ नु त्वं गार्ग्येत्युपक्रमात् एष त आत्मान्तर्याम्यमृत इत्युपसंहारात्, एष त आत्मेत्येकविंशतिकृत्वोऽभ्यासात्, अन्तर्यामित्वस्यापूर्वत्वात्, स वै ब्रह्मविदिति फलश्रवणात्, तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तमन्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते शतधा पतिष्यतीति निन्दार्थवादात्, यस्य पृथिवी शरीरमित्युपपत्तेश्च पृथिव्यादिशरीरकेऽन्तर्यामिण्येव सर्वेषां वेदान्तानां पर्यवसानमिति शङ्कापि—**पराहता**। एवंच भेदज्ञानस्य मोक्षानुपयोगात्प्रत्युतानर्थप्रयोजकत्वात् जुष्टं यदा पश्यतीत्यादीनां भेदपारमार्थिकतायामतत्परत्वात् नेह नानास्तीत्यादिश्रुत्यनुसारेण तदपारमार्थिकतैव शास्त्रार्थः। तत्त्वमसीति श्रुतिस्तु सम्यगेव विमृश्यमाना जीवपरमात्मनोरभेदमेवात्यन्तिकं बोधयतीति भेदाविरोधेन तद्व्याख्यानप्रकाराः सर्वेऽपि निरालम्बना एवेति जानीमः।

**इयं हि श्रुतिर्द्वैतिभिरेवं व्याख्यायते**। प्रत्यक्षेण ब्रह्मभिन्नं जीवं श्रुत्या जीवभिन्नं ब्रह्म च वयमधिगच्छाम इति जीवोद्देशेन ब्रह्माभेदं ब्रह्मोद्देशेन जीवाभेदं उभयोद्देशेनोभयाभेदं वा बोधयितुं नेदं वाक्यं पारयति। अनुमानोपस्थापितमपि ब्रह्म सर्वज्ञत्वादिविशिष्टमेवेत्युपजीव्यविरोधेन न स्वरूपमात्रपरं तत्पदम्। सुषुप्त्यसंप्रज्ञातसमाध्यादौ गृहीतस्वरूपमात्रस्योपस्थानेऽपि पदद्वये लक्षणाकल्पनाभिया तत्पदमात्रे "वसन्तादिभ्य" इत्यत्र वसन्तपद इव तत्सहचरिते, "सन्मूला" इति श्रुत्यनुसारेण "समर्थः पदविधिरि"त्यत्र समर्थपदे इव तदाश्रिते, "इग्यण" इत्यत्र संप्रसारणपदे इव तज्जाते धान्यमसीत्यत्र धान्यशब्दे इव तदधीने, "आदित्यो यूप" इत्यत्रादित्यपदे इव तत्सदृशे वा लक्षणाकल्पनमेव युक्तमुत्पश्यामः। यदितु सुपां सुलुगिति लुप्ततृतीयाद्यन्तत्वमाश्रित्य 'तेन त्वं' 'तस्मै त्वम्' 'तस्मात्त्वम्', 'तस्य त्वम्' 'तस्मिँस्त्वम्' इतीदं वाक्यं विग्रियते, तदा लक्षणाश्रयणप्रयुक्तो दोषोऽपि नात्रावकाशं लभते इति जीवब्रह्माभेदवादो न संभवदुक्तिकः—**इति**॥

**विशिष्टाद्वैतिनस्तु**—शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्य देवदत्तो जानातीत्यादिस्थलेषु क्लृप्ततया त्वंपदमपि परमात्मपरमेवेति शरीरशरीरिभावबोधकत्वेन सामानाधिकरण्यमिति विवृण्वन्ति। तत्र षड्विधतात्पर्यलिङ्गैस्त्वमसिवाक्यस्याभेदपरत्वे निर्णीते तात्पर्यनिर्वाहार्थं पदद्वयलक्षणाश्रयणमपि न दोषाय। तात्पर्यानुपपत्तिर्हि लक्षणाबीजम्। जीवस्य परमात्मसाहचर्यबोधकप्रमाणाभावात्तदेकवाक्यतया तत्परत्वमपि न संभवति। द्वासुपर्णेति श्रुतिस्तु जीवस्यान्तःकरणसाहचर्यमेव बोधयति, नतु जीवस्य परमात्मसाहचार्यमिति पैङ्गिरहस्यब्राह्मणविदां विशदमेव। सन्मूला इत्यादीनामपि जीवोपाधिपरत्वात् न तदाश्रितत्वादिलक्षणापि युज्यते। **एतेन**—तृतीयान्तत्वादिपक्षोऽपि—**पराहतः**। समस्तपदत्वपक्षस्त्वेकप्रसरताभङ्गापत्त्या न संभवति। शरीरवाचकानां पदानां शरीरिपर्यन्तत्वं न लोकसिद्धम्। तद्धि शक्त्या वा, लक्षणया वा। **आद्ये** अन्यायश्चानेकार्थत्वमिति न्यायविरोधः। **किंचो**भयोरपि परमात्मपरत्वे त्वंपदस्य पुरोवर्तिवस्तुपरत्वाभावेन युष्मदुपपदत्वाभावात् न मध्यमपुरुषप्रयोगोपपत्तिः। नहि युष्मदुपपदकत्वमात्रं मध्यमपुरुषप्रयोगप्रयोजकम्, किंतु समानाधिकरणतदुपपदकत्वम्। सामानाधिकरण्यघटकश्चाभेदः एकप्रवृत्तिनिमित्ताश्रयप्रतियोगिकः तदनुयोगिकश्च। शरीरशरीरिभावनिबन्धनाभेदस्तु प्रवृत्तिनिमित्ताश्रयाश्रयिप्रतियोगिकः इति नात्र तद्विवक्षा युज्यते। शरीरत्वमनुगतं न प्रवृत्तिनिमित्ततामर्हति। देवदत्तो जानातीति तु अध्यासे सामानाधिकरण्यं, नाभेदे इति पश्यामः। **एतेन**—"सदेव सोम्येदमग्र आसीत्" इति श्रुतिरपि न स्थूलचिदचिद्विशिष्टस्य स्थूलचिदचिदंशप्रहाणेन सूक्ष्मचिदचिद्विशिष्टस्याभेदं गोचरयति, इदंपदस्य शरीरिपर्यन्तत्वाभावादिति—**व्याख्याता**। अतएव एकमेवाद्वितीयमिति सजातीयविजातीयस्वगतभेदविरहमामनन्ति प्रामाणिकाः। इदंतादात्म्यापन्ने ब्रह्मणि द्वैताभावस्य द्वैतकालावच्छिन्नत्वात् द्वैतमिथ्यात्वोपक्रमोऽप्यस्यानेव कटाक्षयति। **एतेन**—सदेव सोम्येदमग्र आसीत् इति सन्दर्भो न प्रपञ्चमिथ्यात्वानुगुणः; तेनेदानीं सत्वेनानुभवसिद्धस्याग्रेऽपि सत्वप्रतिपादनेन सत्वस्यैवावधारणात्। सत्पदेन ब्रह्मविवक्षा तु इदानीमपि तादात्म्यस्य विद्यमानेनेदानीमेव विद्यमानत्वेन वाऽग्रे इति निर्देशानुपपत्त्याऽधिष्ठानारोप्यभावनिबन्धनाभेदस्यासंभवान्नात्रावसरं लभते। **किंचात्र** सदुद्देशेनाद्वितीयत्वम्, उताद्वितीयसदुद्देशेन प्रपञ्चाभेदः। **आद्ये** इदंपदार्थानन्वयप्रसङ्गः। **द्वितीये** प्रपञ्चस्य विद्यमानतादशा-

यामेव ब्रह्माभेदेनाग्रे तदभेदाभावः इति पाराशर्यविजयोक्तं—**पराहतम्**। इदानीमिवाग्रेऽपि सूक्ष्मरूपापन्नप्रपञ्चतादात्म्यस्य ब्रह्मणि संभवेन तादृशप्रपञ्चतादात्म्यवद्ब्रह्मानुवादेनाग्रकालसत्त्वमनूद्य तादृशब्रह्मणोऽद्वितीयत्वबोधनार्थमेवोक्तवाक्यप्रवृत्तेः। प्रपञ्चब्रह्मणोस्तादात्म्यं च न तयोः परिणाम्युपादानोपादेयभावनिबन्धनम्; निर्विकारस्य ब्रह्मणः परिणामासंभवात्। शरीरनिष्ठमेव कारणत्वं शरीरिणि गौणमिति तु न शङ्कनीयम्; प्रमाणाभावात्। यथा सतः पुरुषात् इत्यादिकं तु आत्मविवर्तोपादानतापक्षेऽप्यनुगुणमेव न भवतामनुकूलम्। अविकार्योऽयमुच्यते इत्यादिवचनानामप्येवंसत्येवोपपत्तिः। स्वरूपाभिप्रायमिदं वचनमिति चेत्, किं तत् स्वरूपम्; किं शरीरविशिष्टं, उत शुद्धम्। **आद्ये** दुरपह्नव एतद्वचनविरोधः। नहि परिणामिन एवाविकार्यत्वम्। द्वितीये त्वायातं सन्मार्गेणाऽस्मन्मत एव प्रवेशात्। अद्वारकावस्थैव विकारः, न तु सद्वारकावस्थेत्यादिकल्पनायां तु रज्जुसर्पादिस्थलक्लृप्तविवर्तोपादानोपादेयभावेनैव कारणाविकार्यादिवाक्यानामुपपन्नत्वान्न प्रमाणमुत्पश्यामः। यथा च रज्जुसर्पादिस्थलेऽसत इव सतोऽपि सर्पादेर्न भानं, तथाऽध्यासभाष्ये भामतीकल्पतरुपरिमलेषु विस्तरत उपपादीति तत एवावगन्तव्यं ज्ञापयामः। **एतेन**—रूपं प्रतीव घटस्यावस्थापरिणामाभावेऽप्युपादानत्वसंभव इति शङ्कापि—**पराहता**; नहि नैयायिका इवागुणं द्रव्यं वयमुपगच्छामः, किंतु सगुणमेव द्रव्यं परिणामिकार्यमुपेमः। तत्र च रूपं प्रति घटो नोपादानतया व्यवहारमर्हतीत्यसिद्धमिदं निदर्शनमिति बोधयामः। अतश्च सिद्धमिदं यत्सदेवेत्याद्युपक्रमोऽद्वैतस्यैवानुगुण इति। यतो वा इमानि भूतानि जायन्ते इति लक्षणवाक्यमप्यत एवोपपद्यते। इदं हि लक्षणं अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते इत्यादिनाऽन्नादिष्वपि समन्वीयमानमपि स्थूलारुन्धतीन्यायेन आनन्दो ब्रह्मेति व्यजानादिति श्रुतिसिद्धानन्दात्मके ब्रह्मण्येव पर्यवस्यतीति विशिष्टाद्वैतिनामपि संमतम्। तत्र च आनन्दशब्देन आनन्दमयो वा विवक्षितः, उत ब्रह्मपुच्छमिति विचिकित्सायां पुच्छब्रह्मैवेति आनन्दमयाधिकरणविषयविमर्शनावसरे विशदं निरूपयिष्याम इति नेह वितायते इति नित्यशुद्धबुद्धमुक्तानन्दस्वभावनिर्गुणब्रह्मलक्षणमेवेति निगदव्याख्यातमिदम्। सैषा भार्गवी वारुणी विद्येत्याद्युत्तरसन्दर्भोऽपि ज्ञानमोक्षसाधनतापक्ष एवोपपद्यते इत्यद्वितीयपरात्मस्वरूपबोधने एव तैत्तिरीयोपनिषदस्तात्पर्यं न सद्वितीयतद्बोधने। विस्तरतश्चैतं विषयमधिकृत्यावसरान्तरे विचारयिष्यामः इति विस्तरभयादुपरमामः। वस्तुतोऽगुणस्यापि ब्रह्मणः जगत्कारणत्वं काल्पनिको धर्म इति न जगत्कारणत्वस्यालक्षणत्वसंभवः। दृष्टं हि शाखायाः वस्तुतः चन्द्रासंबद्धाया अपि कल्पनया तत्संबद्धायाश्चन्द्रलक्षणत्वमिति तटस्थलक्षणमेवेदमिति न दोष इति जानीमः। यथा च—कल्पितो धर्मधर्मिभावो नाद्वैतसिद्धान्तविरोधी, तथा—

अक्षमा भवतः केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥

इत्यादिवार्तिकेषु व्यक्तं भाष्यभामत्यादिष्वपि विस्तरतः तत्र तत्र प्रतिपादितम्, ग्रन्थविस्तरभयात्तदत्रोपेक्षामहे। योऽयं सर्पोऽभात् सा रज्जुरिति असत्येनापि सत्यावगमो दृष्ट इति न कृतकनित्यत्वानुमानसाम्यापादनमत्र द्वारमाप्नोति। यत इति पञ्चमीनिर्देशस्तु जन्मादेर्ब्रह्मासंबन्धबोधनार्थं सन् निर्गुणब्रह्मवादमेव द्रढयति। "इदं सर्वमसृजत" इत्यादिवाक्यान्यप्येतदनुगुणतयैव नेयानीति मन्तव्यम्। जीवस्य शरीराधिष्ठानस्यापि केशलोमादिकं प्रति निमित्तकारणत्वमेव नतूपादानत्वमिति शरीराधिष्ठानस्य परात्मनोऽपि निमित्तत्वमात्रमेव परिणामवादे स्यात्, नतूपादानत्वमपीत्यभिन्ननिमित्तोपादानत्वं विशिष्टाद्वैतिनां न कथंचिदपि सिध्यति, विवर्तोपादानत्वपक्षे तु चेतनस्य चेतनान्तरापेक्षया प्रवृत्तिसंभवात् निमित्तान्तरानपेक्षेत्यभिन्ननिमित्तोपादानत्वमुपपद्यते। **एतेन**—जगत्कारणत्वस्यैकब्रह्मलक्षकत्वासंभवपूर्वपक्षेण तत्संभवसिद्धान्तेन च जन्माधिकरणयोजनाप्रकारोऽपि—**परास्तः**; यतो वा येन यत् इति यच्छब्दत्रयोपात्तस्वरूपस्य तद्ब्रह्मेत्येकवचनैकतच्छब्दघटितवाक्यशेषेणैकस्मिन्नेव पर्यवसानावधारणेनोक्तपूर्वपक्षानवतारात्। निर्विशेषासंबन्धेन संबन्धेऽपि तस्य मिथ्यात्वेन सत्यब्रह्मलक्षकत्वायोगेन ब्रह्मलक्षणत्वायोगात् जीवलक्षणत्वपूर्वपक्षेण तद्योगाद्ब्रह्मलक्षणत्वसिद्धान्तेनचाद्वैत्यभिमताधिकरणशरीरे तु न काचिदनुपपत्तिः। यथा च तटस्थलक्षणे सत्यपि स्वरूपविशेषप्रतिपत्त्यर्थं प्रकृष्टप्रकाशश्चन्द्र इति स्वरूपलक्षणमपेक्षामहे, एवमत्रापि स्वरूपलक्षणमाकाङ्क्षामहे। एवं सामान्यतः चन्द्रस्वरूपावगमं विना विशेषतस्तज्जिज्ञासानुदयात्तदर्थं तत्र यथा तटस्थलक्षणमाद्रियामहे, तथाऽत्रापि तटस्थलक्षणमाहरामः। तटस्थलक्षणलक्ष्यत्वं सामान्यरूपस्य स्वरूपलक्षणलक्ष्यत्वं तु विशेषरूपस्येति विवेकोऽप्येतेन सिद्ध इत्यद्वैतमत एव सूत्रं स्वरसयामः। एतेन "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रमपि विवृतं भवति। प्रकृतिशब्दार्थश्चात्र प्रतिज्ञादृष्टान्तानुपरोधात् इति वाक्यशेषोपपत्त्यर्थं विवर्तोपादानमिति प्रतिजानीमः। भगवच्छरीरसूक्ष्मचिदचिदभिन्नत्वात् स्थूलचिदचितां सूक्ष्मचिदचिद्विशिष्टभगवत्स्वरूपज्ञानेन सर्वविज्ञानमपि सिद्धमेवेति तत्त्वत्रयविज्ञानं विशिष्टाद्वैतिनोऽभिमन्यन्ते। तदेतन्न संगतम्; गुणादिकं गुण्यादिना भिन्नाभिन्नमिति न्यायेन विशिष्टशुद्धातिरेकस्य विशिष्टान्तरात् विशिष्टान्तरातिरेकस्य च सिद्ध्या सूक्ष्मचिदचिद्विशिष्टभगवत्स्वरूपविज्ञानेन स्थूलचिदचिद्विशिष्टस्वरूपकेवलचिदचित्स्वरूपस्य च विज्ञानोपपादनासंभवात्। विशिष्टशुद्धाद्यनतिरेकेऽपि विशिष्टविज्ञानेन

किं सर्वविज्ञानम्, उत विशेष्यविज्ञानेन, आहो विशेषणविज्ञानेन। **आद्ये** स्थूलचिदचितां सूक्ष्मचिदचिद्विशिष्टस्वरूपानन्तर्गमेन सर्वविज्ञानोपपादनासंभवः। कार्यकारणयोर्हि नात्यन्तिकाभेदः; कार्यकारणभावव्याहतेः, किंतु भेदघटितोऽभेदः। नहि वस्तुतः कटकसुवर्णादीनामभेदेऽपि सुवर्णविज्ञानेन कटकविज्ञानमिति संभवति। अनुभवामो हि वयं सुवर्णविदोऽपि कटकादिस्वरूपमविजानतो बहून् जनानिति न विशिष्टविज्ञानेन सर्वविज्ञानसंभवः। विशेषणविशेष्यविज्ञानेन विशिष्टविज्ञानासंभवेन सर्वविज्ञानासंभवात् द्वितीयतृतीयकल्पौ नात्र कल्पेते। विशिष्टस्य विशेषणविशेष्योभयरूपत्वे तूभयविज्ञानेन सर्वविज्ञानं, नतु एकविज्ञानेनेति मन्तव्यम्। **एतेन**—वाचारम्भणश्रुतिरपि—**व्याख्याता**; अवस्थाविशेषणापन्नमृद इव तादृशस्य ब्रह्मण एव सत्यत्वमिति योजनं हि अवस्थाविशेषस्यासत्यत्व एवोपपद्यते। एवंच विकारो नामधेयमिति वाक्यं बाधितार्थत्वादनादरणीयमेव संपद्यते। समस्तस्य कार्यजातस्य व्यावहारिकत्वस्य कारणरूपातिरेकेणाभावरूपमिथ्यात्वरूपस्य च प्रतिपादने तु नेयमनुपपत्तिरायाति। एतदभिप्रायेणैव तदनन्यत्वमिति कारणातिरेकेण कार्याभावरूपोऽर्थः प्रतिपादित इति न किंचिदनुपपन्नं पश्यामः। रज्जुविलक्षणसर्पस्याज्ञानविषयरज्जुकार्यत्ववत् स्वरूपविलक्षणसर्वप्रपञ्चस्यापि मायाविषयतत्कार्यत्वमुपपद्यते इति स्वरूपकारणत्वे न कोऽपि दोषः। मृत्तिकेत्येव सत्यमिति सत्यपदप्रयोगो हि मृत्तिकाशब्दलक्षितकारणस्वरूपसत्यत्वे तदितरमिथ्यात्वे चाञ्जसो नतु कारणाविकार्यत्वकार्यविकार्यत्वयोः। परिणामवादोऽपि विवर्तवादानुगुण एवेति संक्षेपशारीरकादौ प्रतिपादितत्वेन मृत्तिकेत्येव सत्यमिति निदर्शनमपि नास्माकं प्रतिकूलम्। कार्यसत्यत्ववादप्रतिक्षेपार्थं वाचारम्भणवाक्यमिव कारणस्वरूपशून्यतावादनिरासार्थं मृत्तिकेत्येव सत्यमिति वाक्यमाम्नातमिति नैकस्यापि वर्णस्यास्मन्मते वैयर्थ्यम्। यथाहि मृत्स्वरूपस्य कार्येष्वनुगमात् कार्यमपि मृद्रूपमिति प्रत्यक्षतोऽवगन्तुं शक्यते न तथा रज्जुविज्ञानेन सर्पविज्ञानमुपपादयितुं शक्यते इति मृदादिदृष्टान्तादरणं नतु रज्ज्वादिदृष्टान्तादरणम्। **युक्तं चैतत्**—एकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते एकस्य कारणत्वं सर्वस्य कार्यत्वं च निमित्तमिति यत्र कार्यानुभवदशायामेव कारणस्वरूपावगमोऽपि तादृशमेवोदाहरणमन्वेषणीयम्। रज्जुसर्पस्थले न सर्पानुभवदशायां रज्ज्वाद्यनुभवः इति मृदादिनिदर्शनादरणस्यैव युक्तत्वात्। नामधेयपदं तु मिथ्यात्वानुकूलत्वादस्माकमेवानुगुणं, नतु भवताम्। "भेदनिर्देशाच्चान्यः" इत्यादिसूत्राण्यप्यौपाधिकभेदगोचराणि नास्माकमननुगुणानि। यथाहि स्थूलचिदचित्प्रहाणेन स्थूलचिदचिद्विशिष्टस्य सूक्ष्मचिदचिद्विशिष्टस्यचाभेदो भवतामभिमतः, तथोपाधिद्वयप्रहाणेन जीवपरमात्मनोरभेदोऽस्माकमभिप्रेत इत्युपाधिसत्तादशायां भेदव्यवहारं हि नानुपपन्नं पश्यामः॥ एवंच चिदचिच्छरीरकत्वेन भगवतः प्रमाणसिद्धत्वात् तन्नित्यशुद्धबुद्धमुक्तस्वभावत्वस्यैव प्रामाणिकत्वात् समप्रधानभावेन गुणप्रधानभावेन वा ज्ञानकर्मसमुच्चयासंभवात् "ब्रह्मविदाप्नोति परं" इति ब्रह्मणो ज्ञेयत्वेन तत्प्राप्तेस्तद्भावापत्तिरूपाया ज्ञानसाध्यत्वेन चावगमेनापास्यसगुणस्वरूपादितात्पर्यवादस्यायुक्तत्वात् "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति वचनस्यापि वाक्यान्तरगतस्य सहशब्दस्य वाक्यान्तरगततृतीयान्तेनान्वये ऋग्वाक्यत्वव्याघातेन यौगपद्येन सर्वकामावाप्तिरूपब्रह्मभावापत्तिपरत्वस्यैव युक्तत्वाच्चाद्वैत एवोपनिषदां तात्पर्यमित्यवधारयामः। अथातो ब्रह्मजिज्ञासेति सूत्रयोजनप्रकारोऽपि शङ्करभगवत्पादानामेवाऽञ्जस इति वदामः। अथशब्दो हि आनन्तर्याभिधेयवचनः स्वघटितसूत्रविषयविचारविधिपूर्ववृत्तवाक्यबोधिताधिकारसंपत्तिमेवानन्तर्यप्रतियोगिनीं प्रत्यासत्त्या बोधयतीति कर्मविचारानन्तर्याभिधेयतावादं निरालम्बनं मन्यामहे। जिज्ञासाधिकरणस्य हि विषयवाक्यं आत्मन्येवात्मानं पश्येदिति वाक्यम्, सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति वाक्यम्, समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति वाक्यम्, तद्विजिज्ञासस्वेति वाक्यं वा। तत्र यद्यपि एकैकत्रैकैकस्य शमदमादेः इहामुत्रार्थफलभोगविरागस्य नित्यानित्यवस्तुविवेकस्यचैवाम्नानमुपलभामहे, एवमपि सर्वशाखाप्रत्ययन्यायेन मिलितानामेव तेषामधिकारिविशेषणत्वमिति साधनचतुष्टयसंपत्त्यानन्तर्यार्थशब्दार्थतावाद एव युज्यते। **एतेन**—परीक्ष्य लोकानिति वाक्यमात्रसिद्धकर्मास्थिरफलत्वनिर्णयसाधककर्मविचारस्य पूर्ववृत्तस्य अथशब्देन सिद्धब्रह्मतात्पर्यसमर्थनेनाधिकारित्वाभस्यातःशब्देनच सूचनात् कर्मास्थिरफलत्वनिर्णयसहितसिद्धब्रह्मतात्पर्यसंभावनासहितब्रह्मज्ञानानन्तस्थिरफलताप्रतीतिरूपाधिकारसमर्थनेन शास्त्रारम्भसमर्थनार्थं प्रथमसूत्रमिति विवरणम्—**अपास्तम्**; परीक्ष्य लोकानिति वाक्यसिद्धकर्मास्थिरफलत्वनिर्णयस्यैवेहामुत्रार्थफलभोगविरागपर्यवसन्नस्य पूर्ववृत्तत्वसंभवे तत्साधनकर्मविचारस्य तत्त्वविवक्षाया अप्रामाणिकत्वाच्च॥

**वस्तुतस्तु**—कर्मविचारस्य तदनुष्ठान एवोपयोगो नतु तदस्थिरफलत्वे इति न तस्य तत्साधनत्वमपीति निर्धारयामः। नहि साधनतारतम्येन कल्प्यमानं फलतारतम्यं तस्यानित्यतां गमयति; नित्येष्वपि कस्यचन तारतम्यस्य कल्पयितुं शक्यत्वात्। **किंच** शास्त्रीयस्य विधेः शास्त्रीयमेवाधिकारिनिमित्तं प्रत्यासत्त्या समाश्रयणीयं नत्वशास्त्रीयम्। कर्मविचारश्च भवतां न शास्त्रीयः, किंतु रागप्राप्तः। तत्र पुरुषः स्वयमेव प्रवर्तते इति श्रीभाष्यवचनात्। **इत्थं हि तदाशयः**—स्वविधिप्रयुक्तमप्यध्ययनमक्षरावाप्तिफलम्, नत्वर्थावबोधफलम्; अन्यथा हि कर्मकाण्डानामिवोपनिषदामपि कर्माङ्गकर्तृस्तावकत्वादिना कर्मशेषत्वापत्त्याऽर्थविवक्षाऽसंभवेन शास्त्रानारम्भप्रसंगः। अक्षरावाप्तिफलत्वे तु कर्मशेषत्वानापत्त्या विवक्षितार्थत्वसिद्ध्या शास्त्रारम्भोपपत्तिः। एवंचाधीत्य स्नायादिति अध्ययनानन्तरं स्नाने

कृतेऽपि श्रावयितुरिव श्रोतुरप्यवसरलाभाद्रागतो विचारे प्रवृत्तिः—**इति**। ब्रह्मविचारस्तु भवतामपि परीक्ष्य लोकानिति विधिमूलको न रागप्राप्त इति युक्तमाश्रयितुम्। मोक्षानित्यत्वापत्त्या कर्मब्रह्मज्ञानयोरेकफलत्वासंभवस्तु भामत्यां "धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति भाष्याशयविवरणावसरे सप्रपञ्चं न्यरूपीति तत एवावगन्तव्यम्। यथाच पूर्वोत्तरमीमांसयोर्नाभेदस्तथा निर्णयसागरमुद्रापितशास्त्रदीपिकाभूमिकायामस्मदीयायां व्यक्तमिति न तदनुसारेणापि कर्मविचारपूर्ववृत्तत्वसंभवः। यथाच कर्मब्रह्मावबोधयोः क्रमविषये श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिप्रमाणानां कस्यापि नावसरस्तथा ब्रह्मविद्याभरणे सपरिकरमुपापादीति तदपि तत एवावगन्तव्यम्। एवंचाथशब्दार्थपर्यालोचनयाऽद्वैतमतमेव परमार्थमवलोकामहे। **अतःशब्दार्थस्तु**—अथातो धर्मजिज्ञासेत्यत्रेव अथशब्दार्थानन्तर्यप्रतियोगिसंभवप्रदर्शनद्वारा तस्यैव जिज्ञासासाधनत्वप्रदर्शनार्थोऽद्वैतिनामेवानुकूलः, न विशिष्टाद्वैतिनाम्, अधिकारिलाभादित्यस्यार्थस्य धर्मजिज्ञासासूत्रेऽदर्शनात्। जीवो हि विशिष्टरूपो न ब्रह्मणाऽभेदमर्हति; विगलितबन्धजातस्यैवात्मनोऽत्र विचार्यत्वविवक्षणात्। तत्रच ब्रह्मात्मशब्दयोः तस्माद्वा एतस्मादात्मन इत्यादिस्थले ब्रह्मण्यप्यात्मशब्दप्रयोगेण पर्यायत्वावगमात् न ब्रह्मशब्दप्रयोगे आत्मपदप्रयोगे च कोऽपि विशेष इति अथात आत्मजिज्ञासेति सूत्ररचनापादनं दुराग्रहमूलमेवेति मन्यामहे। निर्गुणेऽपि परमात्मनि ब्रह्मपुच्छमित्यादौ प्रयोगदर्शनात् न तस्य सगुणपरत्वनियमः। नित्यशुद्धत्वादिकं बृहधात्वर्थ इति तु पञ्चपादिकायां प्रत्यपीपदन्नाचार्यपद्मपादाः। यथाच ब्रह्मपुच्छमिति वाक्यं ज्ञेयनिर्गुणपरमात्मपरं तथानन्दमयाधिकरणे व्यक्तमिति नेह प्रपञ्चयामः। एवंचोपासनाविधिसमभिव्याहारे ब्रह्मशब्दः सगुणपरः, ज्ञाधातुसमभिव्याहारे निर्गुणपर इति ज्ञानार्थविदिधातुसमभिव्याहृतब्रह्मविदाप्नोतिवाक्यघटको ब्रह्मशब्द इव तद्विजिज्ञासस्व तद्ब्रह्मेत्यत्रत्यो ब्रह्मशब्द इव चाथातो ब्रह्मजिज्ञासेत्यत्रापि ब्रह्मशब्दो निर्गुणपर्यवसाय्येवेति सूचयामः। उपासनाया अपि ज्ञानरूपत्वेऽपि तस्य ज्ञाधातुबोधितस्य च पुरुषकृतिसाध्यत्वतदभावकृतं वैलक्षण्यं विद्यत एवेति समन्वयसूत्रे भाष्यभामत्योर्विस्तर इति स्मारयामः। एतेन विशिष्टाद्वैतिनां अथातो ब्रह्मोपासिसिषेति सूत्ररचनापत्तिरपि सूच्यते। पूर्वं काकवति पश्चात्तद्विरहवति च गृहे काकवद्गृहमिति प्रयोग इव व्यवहारदशायां कल्पनया गुणवति पश्चात्तदा च वस्तुतस्तद्विरहवतिच ब्रह्मशब्दप्रयोग उपपद्यते एव। **किंचा**त्मशब्दस्योपाधिपरवश एव बहुलप्रयोगेण तदपरवत्वेनैव तस्य जिज्ञास्यत्वप्रतिज्ञानार्थं ब्रह्मशब्दप्रयोगः। अतएव पूर्वोत्तरकल्पयोरुभयोरपि सूत्रारोहोऽपि सिध्यति। द्वैतिनां विशिष्टाद्वैतिनां पूर्वोत्तरकल्पयोरुभयोरपि सूत्रासंबन्धोऽप्यनेन सूच्यते। **अयमाशयः**—येषां प्रत्यगभिन्नं ब्रह्म शास्त्रार्थः, तेषां पद्मपादाचार्याणां मतेऽविद्याश्रयविषयभूतं बिम्बचैतन्यं ब्रह्म तत्प्रतिबिम्बचैतन्यं जीवः। नीरूपस्यापि चैतन्यस्याकाशस्येव प्रतिबिम्बो न न युज्यते। तत्रच बिम्बप्रतिबिम्बयोरौपाधिकभेदवतोरपि स्वरूपैक्यस्यैव सर्वसंप्रतिपन्नत्वाज्जीवब्रह्माभेदवादेन ब्रह्मपदप्रयोग एव साधीयान्। वाचस्पतिमिश्रमते तु अविद्याश्रयचैतन्यं जीवः, तद्विषयचैतन्यं ब्रह्म। आविद्यकस्तयोर्भेद इत्यविद्याविलयेनोभयोरभेदे भाविनि अविद्याविषयसाक्षात्कार एवोपकरोति नतु तदाश्रयसाक्षात्कार इति सूचयितुं ब्रह्मपदप्रयोग इति न किंचिदनुपपन्नमध्यक्षयामः। उपक्रमोपसंहारादिभिः षड्भिस्तात्पर्यलिङ्गैः प्रत्यग्ब्रह्मैक्यमेव परमार्थमित्यवगम्यते इति कारणवाक्यानां सर्वेषामपि नेहनानास्ति नात्र काचन भिदास्ति एकमेवाद्वितीयमित्यादिनिषेधापेक्षितप्रतियोगिप्रसक्तिसमर्पकतयोपयोग इति यस्मिन्नधिकरणे निषेधस्तत्रैव प्रतियोगिप्रसक्तेरपेक्षणादीक्षत्यधिकरणादीनामपि न वैयर्थ्यमिति जानीमः। **अयमभिप्रायः**—यथाहि "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्याद्यौपाधिकजीवस्वरूपपराणां वचनानां निरुपाधिकजीवस्वरूपवचनशेषाणामौपाधिकजीवस्वरूपबोधने न तात्पर्यम्, एवमत्रापि औपाधिकेश्वरस्वरूपपराणां तत्पारमार्थिकताऽगोचरत्वमिति ध्येयम्। निरुपाधिकजीवस्वरूपविज्ञानेनैव बन्धनिवृत्तिसंभवेऽपि निरुपाधिकेश्वरस्य ततोऽतिरिक्तत्वशङ्कानिराकरणार्थमभेदवाक्यान्याम्नायन्ते इति तत्वमसीत्यादीनां शरीरशरीरिभावापन्नजीवपरमात्मगोचरत्वमिति शङ्का नात्र प्रसरति। द्वैतमिथ्यात्वस्यापि ब्रह्मशब्देन सूचनेन तस्याद्वितीयब्रह्मसिद्ध्युपयोगितया गुणत्वेन च द्वैतमिथ्यात्वस्यैव सूत्रणीयत्वेऽपि ब्रह्मजिज्ञासेति सूत्रयामासुरिति न कोऽपि पर्यनुयोगोऽवकाशमश्नुते। "तदनन्यत्वमारम्भणशब्दादिभ्यः तद्गुणसारत्वा"दित्यादिसूत्रयन्तः वेदव्यासाचार्या अपि अद्वैतमेवाशेरते। स्पष्टमवसरान्तरे निरूपयिष्यामः। संक्षेपेण तु तदनन्यत्वसूत्रस्याद्वैतपर्यवसानमुपापीपदाम॥

तद्गुणसारत्वाधिकरणस्य तत्किंचिदिवात्र तत्सूचयामः॥

तद्धि सूत्रं द्वैतिनः एवं व्याचक्षते। वेदान्तानां नारायणे न समन्वयः परस्परविरोधात्। काश्चित् जीवपरमात्मनोरभेदमपराश्च तयोर्भेदंचावगमयन्ति। नच वस्तु विकल्पमर्हतीति शङ्कानिराकरणार्थं पृथगुपदेशादिति सूत्रम्। तद्गुणसूत्रमिदं तद्गुणसारत्वादिति। परमात्मगुणानन्दादिसमानगुणत्वाज्जीवानामपि परमात्मव्यपदेशान्न परस्परविरोध इति समन्वयोपपत्तिरिति तदाशयः॥

**विशिष्टाद्वैतिनस्तु**—"नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वे"ति गुणसूत्रप्रसंजितसर्वगतत्वागन्तुकज्ञानत्व-

पक्षद्वयसाधारणदोषनिराकरणार्थं सिद्धान्तसूत्रप्रवृत्तिरिति ज्ञोऽत एवेत्यारभ्यैतदन्तस्यैकाधिकरणत्वमभिमन्यन्ते । ते तु इदं सूत्रं ज्ञानगुणसारत्वात् जीवस्य ज्ञानत्वव्यपदेश इति विवृण्वन्ति । **अयमाशयः**—ज्ञानाभास्योऽपि जीवो ज्ञानव्यपदेशमर्हत्येवेति धर्मभूतज्ञानेन यावच्छरीरव्यापित्वं जीवस्योपपद्यते इति जीवाणुत्वमुपपन्नं जानीमः ।

तत्रापि विषयद्वयनिर्णयस्य भिन्नाधिकरणसाध्यत्वादेकाधिकरणत्ववादो न क्षोदक्षमः, तद्गुणसारत्वात्तु इति सूत्रस्यैव तुशब्दावगतसिद्धान्तसूत्रत्वविरोधः, धर्मभूतज्ञानानित्यत्वे तदविनाभूतजीवानित्यत्वप्रसंगः नित्यत्वे संकोचविकासानुपपत्तिश्चेति जीवाणुत्वनिरासमेवैतत्सूत्रस्यापि विषयमवधारयन्ति शङ्करभगवत्पादमतानुसारिणः । तच्छब्दो बुद्ध्याद्युपाधिपरामर्शी; बुद्धिगुणस्यैव जीवेऽप्यारोपादणुत्वव्यपदेश इति धर्मारोपस्य धर्म्यारोपपूर्वकत्वनियमात् बुद्ध्यादीनामप्यात्मनि कल्पितत्वमेतत्सूत्रविषयमवगच्छामः । **एतेन**—द्वैतमिथ्यात्वस्य सूत्रानारूढत्वशङ्कापि **पराहता** । "एकमेवाद्वितीयं" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते" "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" "इदं सर्वं यदयमात्मा" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" "अद्वयो ह्ययमात्मा" "न ह्यस्ति द्वैतसिद्धिरात्मैवास्य द्वितीयः" "मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः" "विकल्पो विनिवर्तेत कल्पितो येन केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते" इत्यादिवचनान्यपीदमभिप्रायाण्येव दृश्यन्ते । ब्रह्मजिज्ञासेति ज्ञानस्येष्यमाणत्वसूत्रमपि साक्षात्फलत्वेन तत्साधनत्वेन वाऽद्वैतिनामेवाञ्जसं न विशिष्टाद्वैतिनामित्यादि पूर्वमेव सूचितम् । एवंच जिज्ञासाधिकरणशरीरपर्यालोचनयाऽद्वैत एवोपनिषदां सूत्राणां च तात्पर्यमिति सिद्धम् ॥

जन्माद्यस्य यत इति सूत्रस्याप्यद्वैत एव स्वरसतां पूर्वमेव प्रत्यपीपदामेति शास्त्रयोनित्वाधिकरणं किंचिदिव कटाक्षयामः । कर्मावबोधोऽनुष्ठानापेक्ष एव फलोपयोगी, ब्रह्मावबोधस्तु तन्निरपेक्ष इति तत्र शास्त्रयोनित्वमवश्यसमर्थनीयमित्यद्वैतसिद्धान्तमेव युक्तमनुमोदामहे ॥

यत्त्वत्र वर्णकान्तरं तदप्यद्वैतिनामावश्यकमेवेति समन्वयाधिकरणार्थमवलोकयामः । तद्धि शास्त्रयोनित्वाक्षेपनिरासेन सर्वेषां वेदान्तानां ब्रह्मणि पर्यवसानं प्रदर्शयितुं प्रवृत्तम् । येषां तु मते शास्त्रयोनित्वाधिकरणेनैव सिद्धपरवाक्यप्रामाण्यमपि व्यवस्थाप्यते तेषां द्वैतिविशिष्टाद्वैतिप्रभृतीनामिदमधिकरणं वितथमेव संपद्यते ॥

एतेनेक्षत्यधिकरणमपि व्याख्यातम्; महावाक्यशेषाणां सगुणवाक्यानां निर्णयार्थमेव तत्प्रवृत्तेः । **वस्तुतस्तु**—जगत्कारणत्वं न शुद्धब्रह्मतटस्थलक्षणम्, तत्र तदसंबन्धात् प्रधानभूताकाशादावेव तत्संभवादिति निर्विशेषवाक्यविनिर्णय एव सर्वेषामप्यधिकरणानां परंपरयोपयोगो भवतीति न कोऽपि विरोधः । ईक्षत्यधिकरणस्वारस्यमद्वैत एवेति अद्वैतसिद्धिभूमिकायां विस्तर इति तत एवावगन्तव्यम् ।

आनन्दमयाधिकरणं तैत्तिरीयानन्दवल्ल्युपनिषत्तात्पर्यनिर्णयार्थं प्रवृत्तं न द्वैतिनां विशिष्टाद्वैतिनां वाऽनुगुणमिति विषयं किंचिदिव विस्तरत उपपादयामः ।

**द्वैतिनो हि** प्रद्युम्नानिरुद्धवासुदेवसंकर्षणनारायणव्यूहरूपं परमात्मानमानन्दवल्लीप्रतिपाद्यमिति वर्णयन्तस्तदनुगुणं सूत्राणि योजयन्ति । **तेषामयमाशयः**—"ब्रह्मविदाप्नोति परम्" इति सूत्रितार्थविवरणसत्यादिवाक्यगतसत्यत्वादिस्वरूपविवेचनमुखेन परमात्मस्वरूपनिरूपणं अन्नमयादिपर्यायपञ्चकविषयः । अन्नात्पुरुष इति वाक्यं पुरुषपदबोध्यशरीरतदभिमानिदेवतातद्विग्रहतदन्तर्यामिणां चतुर्णामप्युपजनं प्रतिपादयतीति न "स वा एष पुरुषोऽन्नरसमय" इति वाक्यमनुपपन्नं पश्यामः । अन्नं ब्रह्मेति व्यजानादिति पर्यायपञ्चकश्लोकेऽपि ब्रह्मशब्दश्रवणात्पर्यायपञ्चकमपि ब्रह्मस्वरूपसमर्पणार्थमेव युज्यते । अन्यथा "आनन्दमयोऽभ्यासात्" इति अभ्यासहेतुत्वनिर्देशो नोपपद्यते । अभ्यासपदेन हि ब्रह्मपदाभ्यास एव विवक्षणीयः, नत्वानन्दपदाभ्याससहितवाक्यप्रतिपाद्यनिरतिशयानन्दयोगः; अन्याभ्यासेनान्यनिर्णयस्य पृष्ठताडनेन दन्तपतनन्यायविषयत्वात् । सचाभ्यासो यथा आनन्दमयस्य ब्रह्मत्वं ज्ञापयति, एवमन्नमयादीनामपि; न्यायसाम्यात् । प्रतिपर्यायं ब्रह्मशब्दाम्नानमेवाभ्यासपदार्थ इति अन्नमयादिपर्याये प्रत्येकं ब्रह्मपदानभ्यासो न किंचित्कर इति मन्महे । ब्रह्मशब्दादित्येव सूत्रयितव्येऽभ्यासादिति हेतुनिर्देशस्तु पर्यायपञ्चकविषयत्वस्फोरणायेत्यानन्दमयपदमन्नमयादीनामप्युपलक्षणमिति जानीमः । येषां तु विशिष्टाद्वैतिनां पूर्वोक्त आनन्दयोगोऽभ्यासपदार्थः तेषां आनन्दादित्येव सूत्ररचनाप्रसंगो दुर्निवार एव ।

**एतेन**—द्वितीयसूत्रमपि—**व्याख्यातम्**; यत्र हि स्वरसतो विकारार्थमयटः प्रसङ्गः, तस्यापि पूर्वसूत्रविषयत्वे एवोक्तशङ्का निरर्गलमवकाशते, नान्यथेत्यन्नरसमयादिष्वेव स्वरसतस्तत्प्रतीतेरानन्दमयवाक्यविषयत्वं न युज्यते ।

हेत्वसिद्धिवारणार्थत्वापेक्षया साध्यासिद्धिवारणार्थत्वमेव बहुस्थलेषूपलभ्यमानं युक्तमिति गौणश्चेत्यादिसूत्राणामपि यथायथमुपयोगः ।

"मान्त्रवर्णिकमेव च गीयते" इति सूत्रं त्वस्माकमेवानुकूलम् । तद्धि सूत्रं आनन्दवल्लीमन्त्रप्रस्तुतः परमात्मैव, स एवार्थो विवक्षणीय इति बोधयदन्नमयादीनपि परमात्मनोऽवगमयति । "तस्येदमेव शिर" इति प्रत्यक्ष एवास्मदादिशिरसि तत्त्वबोधनं निरर्थकमिति परमात्मन एवाप्रत्यक्षस्यापि शिरसः वस्त्रप्रावृतवत् प्रत्यक्षतया बोधनपूर्वकं सशिरस्कपरमात्मस्वरूपबोधनेन सफलं सदस्मन्मत एव न दुष्यति । अन्नमयमात्मानमुपसंक्रामतीति ब्रह्मविदाप्नोतीत्युपक्रान्तप्राप्यत्वव्यपदेशोऽप्युपपद्यते—इति ॥

**विशिष्टाद्वैतिनस्तु**—ब्रह्मविदाप्नोति परमिति ब्रह्मविज्ञानात्परमित्युक्त्वा तद्विवरणेन सत्यादिवाक्येन ब्रह्मतद्ज्ञानतत्प्राप्तिस्वरूपाणि विविच्य "तस्माद्वा एतस्मादि"त्यादिना "अन्नात्पुरुष" इत्यन्तेन ब्रह्मपरत्वं विपश्चितेति पदविवृतं पुनरपि व्याख्याय स वा एष पुरुष इत्यादिवाक्यं स्थूलारुन्धतीन्यायेनेदन्तया तद्ब्रह्म निर्देष्टुं प्रावर्तत । तत्र ह्यन्नमयब्रह्मतावादो न विचारसहः । नहि व्यूहाभिन्नतया परमात्मा प्रथमं प्रास्तावि, न वा "अन्नात्पुरुष" इत्युत्पत्तिनिर्देशः परमात्मन उपपद्यते । नापि वाऽप्रत्यक्षे परमात्मशरीरे इदमिति प्रत्यक्षनिर्देश आञ्जसो भवतीति प्रसिद्धशरीरमेवान्नमयपदार्थो युज्यते । आकाशादिपदानां भूततदभिमानतद्विग्रहतदन्तर्यामिपराणामपि यथायोगं उत्पत्तिप्रादुर्भावादिना संभूतशब्दसामानाधिकरण्यमन्नात्पुरुष इति निर्देशः स वा एष पुरुषोऽन्नरसमय इति निर्देशश्चोपपद्यते इति शङ्का तु प्रवृत्तिनिमित्तभेदेन तदैक्येन वा सकृदुच्चरितन्यायविरोधेनैकस्य शब्दस्य युगपन्नानार्थबोधकत्वासंभवान्नात्रावसरति । तस्माद्वा एतस्मादिति अन्नमयादन्यस्यैव परमात्मत्वोपदेशस्तु द्वैतिनामत्यन्तमेव विरोधी । अन्नमयादिपदानामपि परमात्मपरत्वनिर्णये हि "अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्" इति वचनप्रवृत्तिः, नचात्र तन्निर्णय इत्यन्नमयब्रह्मता न युज्यते एव । "अन्वयं पुरुषविध" इति पुरुषसादृश्यनिरूपणमपि वस्तुसत्पुरुषत्वाभावं लिङ्गयतीत्यानन्दवल्ल्या आनन्दमयब्रह्मतायामेव तात्पर्यम् । अतएवानन्दवल्लीसमाख्यानम्, नत्वेवमन्नमयादिवल्लीति । "अन्नमयादयोऽभ्यासा"दित्यसूत्रयन्तः "आनन्दमयोऽभ्यासा"दित्येव सूत्रयन्तश्च बादरायणाचार्या अप्यत्र हस्तावलम्बयन्ति । ब्रह्मण एवावयवत्वासंभवान्नानन्दमयब्रह्मतेत्यधिकाशङ्का यथा आनन्दमयपर्याये, एवं "तस्येदमेव शिर" इति निर्देशानुपपत्तिशङ्काऽधिकाऽन्नमयपर्याय इत्यधिकाशङ्कानिराकरणार्थमन्नमयोऽभ्यासादित्यसूत्रणमिति न तत्र परिहारः संभवति । **एतेन**—अद्वैत्यभिमतः पुच्छब्रह्मतावादोऽपि—**परास्तः** । ब्रह्मपुच्छमभ्यासादिति हि तदाऽसूत्रयिष्यन् ।

**यदुक्तं न्यायरक्षामणौ**—ब्रह्म पुच्छमभ्यासादिति सूत्रयितव्ये आनन्दमयोऽभ्यासादिति सूत्रयतामयमाशयः—यत् आनन्दमयो न ब्रह्मेत्येकदेशिमतनिराकरणम्, तद्धेतुव्यपदेशाच्चेत्यत्रानन्दमयपरामर्शसिद्धिश्चेति, तदिदं न क्षोदक्षममिति मन्यामहे ॥

ब्रह्मपुच्छमभ्यासादिति सूत्रणेऽपि "नेतरोऽनुपपत्ते"रित्यत इतरपदानुषङ्गेण हि इतरो न ब्रह्म अभ्यस्यमानब्रह्मशब्दामुख्यार्थत्वादिति योजनसंभवेन प्रथमं प्रयोजनं आनन्दमयः प्रधानं ब्रह्म वेति संशयनिराकरणार्थं प्रवृत्ते तद्धेतुव्यपदेशाच्चेति सूत्रे प्रतिकोटितयोपस्थितजीवपरामर्शसिद्ध्या आनन्दमयशब्दानपेक्षणेन हि द्वितीयं प्रयोजनं च न संभवति । अतएव हि आनन्दमयपदे तत्पर्यायगतपुच्छवाक्यलक्षणा वृत्तवर्तिष्यमाणसूत्रानुपस्थितसाध्याध्याहारः द्रागुपस्थिताभ्यासपदार्थत्यागश्च "आनन्दमयपर्यायगतपुच्छवाक्यं, प्राधान्येन ब्रह्मसमर्पकम्, ब्रह्माभ्यासवन्निगमनश्लोकप्रतिपाद्यत्वात्" इति प्रथमयोजनायां दोषत्रयम्, द्वितीययोजनायां नत्वध्याहारः, वैदेशिकपदाध्याहारादि च दोषजातं नात्रापतति । यद्यपि सन्निहितोऽयं ब्रह्मशब्दाभ्यासः; तथापि आनन्दाभ्यासस्य भूयस्त्वात् सूत्रे आनन्दमय इत्यानन्दग्रहणात् मयडर्थोपपादकत्वाच्च स एवात्र विवक्ष्यते । नहि ब्रह्मशब्दाभ्यासवन्निगमनश्लोकप्रतिपाद्यत्वं पुच्छब्रह्मणः संभवतीत्यसिद्धश्चायं हेतुः । पूर्वतनेषु हि पर्यायेषु सावयवान्नमयादीनामेव निगमनश्लोकविषयताऽधिगतेति तदवैरूप्यार्थमानन्दमयपर्यायेष्ववयविनमानन्दमयमेव निगमनश्लोको गोचरयति न पुच्छं ब्रह्मेति निश्चिनुमः । अस्तु वा हेतुसिद्धिः, तथाप्यप्रयोजक इति प्रतिजानीमः । नहि निगमनश्लोकप्रतिपाद्यं प्रधानमिति नियमे किंचित्प्रमाणमुपलभामहे । प्रकरणं त्वानन्दमयप्राधान्य एवावकल्पते । अवयवावयविनोरवयवस्य गुणत्वमवयविनस्तु प्राधान्यमिति लौकिकन्यायोऽपीदानीमनुगृहीतो भवति। अन्योऽन्तर आत्मेति स्थूलारुन्धतीन्यायेन ब्रह्मस्वरूपनिरूपणस्यानन्दमये पर्यवसानमप्यानन्दमयप्राधान्यमवगमयति । नह्यानन्दमयादन्योऽन्तर आत्मेति पुच्छं ब्रह्म निरूप्यते । तदिदं सिद्धं यन्निगमनश्लोकप्रतिपाद्यत्वं न पुच्छब्रह्मणः, प्रतिपाद्यत्वेऽप्यप्रयोजको हेतुरिति च । यथाच तस्माद्वा एतस्मादित्यादिवाक्यानामपि निगमनश्लोकस्याप्यवयविप्राधान्यपक्ष एव स्वारस्यं सार्थक्यं च । अन्यथा वैयर्थ्यं तथान्यत्र विस्तरः ॥

एवं आनन्दमयोऽभ्यासादिति सूत्रं विशिष्टाद्वैततात्पर्य एवोपपद्यत इति सिद्धम्। **तदयं सूत्रार्थः**—आनन्दमयः, नेतरः, आनन्दपदाभ्यासचिह्नितवाक्यप्रतिपाद्यनिरतिशयानन्दयोगात्—**इति**।

ब्रह्मपदं हि चिदचिद्विलक्षणपरतया नेदानीमपि निर्णीतमिति ब्रह्मपदाभ्यासादिति योजनं न संभवतीति सर्वतादात्म्येन ब्रह्मबोधनार्थं नेदं प्रकरणम्, किंतु इतरनिषेधमुखेनेत्यभिप्रायेणैव नेतरोऽनुपपत्तेरिति सूत्रमिति गृह्णीमः। अभ्यासपदे-नोक्तार्थविवक्षणे सम्भापतद्गौरवं तु फलमुखत्वान्न दोषाय भवति॥

विकारशब्दान्नेति चेन्न प्राचुर्यादिति तु सूत्रमेवं व्याचक्षते। आनन्दमय इत्यत्र मयट् न स्वार्थिकः; वैयर्थ्यात्, नापि प्राचुर्यं तदभिधेयम्; प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वस्वाभाव्येन दुःखाल्पत्वापत्त्या जीवत्वप्रसंगात्, किंतु विकारस्तदर्थः। (यथाच द्व्यचश्छन्दसीति द्व्यच एव छन्दसि विकारे मयटो विधानेऽप्यन्नरसमयशब्द इवानन्दमयशब्देऽपि तत्संभवस्तथा ब्रह्मविद्याभरणे परिमले आनन्दमयाधिकरणगतास्मदीयायां टिप्पण्यां च विस्तर इति नेह प्रतनुमः।) एवंच आनन्दमयो नेतर इति न, किंतु इतर एवेति चेन्न; प्राचुर्यात्। प्राचुर्यमेवात्र मयडभिधेयमाश्रयामः॥

प्रचुरप्रकाशः सवितेति तमोविरहिण्यपि सवितरि प्रचुरप्रकाशप्रयोगदर्शनेन हि वयं जानीमोऽप्रामाणिकोऽयं नियमः प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमिति। अथतु मतं व्यधिकरणसजातीयाल्पतानिरूपकत्वं प्रकृते प्राचुर्यस्य विशेषणत्वात्, आनन्दमयस्थले तु तस्य विशेष्यत्वात्स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमेव ब्राह्मणप्रचुरो ग्राम इत्यादाविवेति, इदमप्याशामोदकमात्रमेव। घनापसरणसमये सवितृगतमपि तमोल्पत्वमपे-क्ष्यहि बहवः प्रयुञ्जते प्रचुरप्रकाशः सवितेति। तत्र प्रकाशप्रचुरः सवितेत्येव प्रयोगः साधुरिति कल्पनायामपि "सैवानन्दस्य मीमांसा भवती"त्यानन्दमीमांसाप्रकरणेन व्यधिकरणसजातीयाल्पतानिरूपकत्वमेव प्राचुर्यस्यावगच्छाम इति तदविरोधेन परमात्मविवक्षामेवात्रानुजानीमः। विज्ञानमयशब्दे तु अगत्या स्वसमानाधिकरणविजातीयाल्पतानिरूपकं प्राचुर्यं विवक्षितमिति न विरोधः। प्रक्रमापेक्षया च वाक्यशेषो बलवानिति तदविरोधार्थमानन्दमये नियमान्तरस्वीकरण-मेवोचितं पश्यामः॥

**परमार्थतस्तु**—प्रचुरशब्दोपात्तप्राचुर्यविशेष्यत्वविशेषणत्वयोरेवोक्तविधा व्युत्पत्तिभेदकल्पना नतु मयडर्थप्राचुर्य-त्वयोरपीति परमात्मानन्दशब्दतायां न कोऽपि विरोधः। अन्नरसमयादिशब्देष्वपि न विकारो मयडर्थः, किंतु प्राचुर्यमे-वेति प्रक्रमवैरूप्यमपि नावकाशमाप्नोति॥

**अयमाशयः**—"ब्रह्मविदाप्नोति परम्" इति ब्राह्मणं सत्यादिवाक्येन व्याख्याय सत्यत्वादीनां छान्दोग्यानुसारेण चेतनाचेतननियन्तृत्वानन्याधीनज्ञानत्वत्रिविधपरिच्छेदराहित्यरूपतया तस्य चिदचिद्विलक्षणस्वरूपप्रतिपादकत्वेऽपि व्या-ख्यानेन विना तदप्रतिपत्तेः नियन्तृत्वव्यञ्जकं कारणत्वं तस्माद्वा एतस्मादित्यादिवाक्यैरुपदिश्य तत्रात्मशब्देन किं जीवो विवक्ष्यते, उतान्यः, अन्नात्पुरुष इति कारणत्वेनोक्तस्यात्मन एव कथं कार्यत्वम्? कथं चात्मनो भूतो-पादानत्वमिति संशयं निरसितुं विशिष्टोपादानत्वं प्रकाशयितुं आत्मशब्दान्तर्यामिपरत्वं व्यवस्थापयितुं चान्नमयादिपर्यायाः प्रावर्तिषत। तत्राकाशादिशब्दानां पुरुषशब्दपर्यन्तानां वस्तुतः परमात्मपरत्वाच्छरीरमुखेन परमात्मानं प्रत्याययितुं पुरुषशब्देन विशेषणतया निर्दिष्टं शरीरं पृथक् निर्दिशति भगवानाम्नायः—स वा एष पुरुषोऽन्नरसमय इति। **सः** अन्नात्पुरुष इत्यत्रोपसर्जनतया निर्दिष्टः **एषः** प्रत्यक्षदृष्टः शरीराख्यः पुरुषोऽन्नरसमयः। तत्र च शरीरे अन्नरसप्राचुर्यस्यापि विद्यमानत्वाद्विकार एवार्थ इति न नियन्तुं पारयाम इति उत्तरप्रक्रमानुगुण्यात्प्राचुर्यमेव तदर्थ इति मन्यामहे। "अन्नमशितं त्रेधा भवती"ति श्रुत्यनुसारेण शरीरातिरिक्तान्नरसपदार्थावगमान्न मयट्प्रयोगवैयर्थ्यमिति तदवैयर्थ्याय विकारार्थकल्पना-प्येतेन पराहता। अन्नरसशब्दशरीरपरत्वेऽपि तदुत्तरमयड्विकारार्थत्वेऽपि च शरीरावच्छिन्नचैतन्यं न शरीरविकारः। शरीरपरिच्छेदेन तद्विकारत्वं तु आनन्दाकारवृत्तिपरिच्छिन्नस्य ब्रह्मणोऽप्यानन्दविकारत्वापत्त्या न संभवति॥

विकारशब्दान्नेति चेदिति सूत्रमप्यस्माकमेवानुकूलम्। इदं हि सूत्रं अभ्यासरूपहेत्वसिद्धिशङ्कावारणार्थमेवात्र सन्निवेशितमिति स्वरसतोऽवगमेनाभ्यासपदेन ब्रह्मशब्दाभ्यासविवक्षणासंभवात्। स्वतन्त्राक्षेपसमाधानार्थमत्र संनिवे-शेऽपि तदेतच्छब्दसमानाधिकरणं पुरुषपदं शरीरपरमेवेत्यन्नमयब्रह्मतावादो न संभवत्येव। **एतेन**—पुच्छब्रह्मवा-दोऽपि—**परास्तः**; पुच्छशब्दादित्येव सूत्ररचनाप्रसंगात्। अकर्तरिच कारके संज्ञायामिति कर्मणि घञन्तकारशब्द-समस्तो हि विकारशब्दो ह्यानर्थक्यरूपार्थान्तरपरः सन् प्रतिष्ठापदेनैवाधारत्वलाभात् पुच्छपदवैयर्थ्यं पुच्छवत्सापेक्षत्वा-पत्तिर्वेत्याशङ्कान्तरानुवादार्थः। एवं प्रायपाठादित्येव सूत्रयितव्ये प्राचुर्यादिति सूत्रणं प्रायपाठस्य शब्दैक्यमात्रेणोपपत्ति-रूपार्थान्तरसंग्रहेण पुच्छशब्दलक्षणायां प्रायपाठबाधशङ्कानिराकरणार्थं इत्यादिकल्पनमप्येतेन पराहतम्; आशङ्कान्तरा-

नुवादस्यावयवशब्दादितिसूत्रणेऽपि कथंचित्संग्रहसंभवात् । पञ्चाग्निविद्यायां समित् समित् धूमो धूम इति षष्ठपर्याये साम्पादिकसमिद्धूमादिविषयत्वेन मुख्यसमिद्धूमादिविषयत्वेन च भेदे सत्यपि अग्निसमिद्धूमादिबुद्धेः सर्वत्राविच्छिन्नत्वेन पर्यायपञ्चकेऽग्निसमिदादिशब्दप्रयोगैकरूप्येऽपि प्रकृते पुच्छपदार्थावयवत्वस्य ब्रह्मणि बुद्धेर्भवद्भिरनङ्गीकारात् प्रायपाठबाध-शङ्कानिराकरणस्याप्यसंभवाच्च ॥

**एतेन**—(१) शिरःपक्षाद्यवयवयोगात्, (२) पुच्छत्वेन निर्दिष्टाद्ब्रह्मण आनन्दमयस्य व्यतिरेकप्रतीतेः, (३) स्वपर्याय-गतश्लोकाविषयत्वात्, (४) आनन्दमयस्यापि तस्यैष एव शारीर आत्मेत्यात्मान्तराम्नानात् (५) अन्नमयादिवदानन्द-मयस्यापि शोध्यत्वनिर्देशाच्चानन्दमयो न ब्रह्मेति शङ्कापि—**पराहता;** ब्रह्मत्वानन्दत्वाद्युपाधिभेदेन ब्रह्मणोऽवयवित्वनिरू-पणस्य पुच्छत्वेन निर्दिष्टाद्ब्रह्मणो व्यतिरेकप्रतीतेश्चोपपत्त्या पूर्वतनपर्यायेष्विवावयविन आनन्दमयस्यैव श्लोकविषयत्वा-वश्यकत्वेन तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यस्य विज्ञानान्तरात्मत्वेनानन्दमयप्रतिपादन एव तात्पर्येणानन्दमयाति-रिक्ततदन्तरात्माऽनाम्नानेन, अनेकजीवापराधकलुषिते ब्रह्मण्यपि प्रसाद्यत्वरूपस्य शोध्यत्वस्य संभवेन चादोषात् ॥

एवंच पूर्वतनपर्यायेषु श्लोकानामवयविविषयत्वप्रक्रमस्य आनन्दमयमात्मानमुपसंक्रम्येत्यानन्दमयोपसंक्रम्यत्वाम्नानस्य अन्योऽन्तर आत्मेति स्थूलारुन्धतीन्यायेनानन्दमयपर्यवसानस्य चानन्दमयब्रह्मत्व एवोपपत्त्या अन्नरसमय इत्यमुख्यवि-कारार्थत्वाङ्गीकारस्य मयट्पञ्चकेऽप्यस्वरसार्थाङ्गीकारस्य वाक्यस्वरसतात्पर्यविरुद्धस्य प्रक्रान्तान्तरात्मोपदेशपरिसमाप्तेः पुच्छनिष्ठात्वाङ्गीकारस्य सोऽकामयतेति पुंलिङ्गस्य तच्छब्दस्य सन्निहितानन्दमयपरत्वे संभवति व्यवहितात्मपरत्वाङ्गीकारस्य भृगुवल्लीविरुद्धार्थाङ्गीकारस्य श्लोकानां स्वारसिकप्राकरणिकावयवविषयत्वनियमत्यागस्यचापत्त्या पुच्छब्रह्मतासिद्धान्तो न समीचीन इति पश्यामः—**इति वर्णयन्ति ।**

**तदेतदद्वैतिनो नानुमन्यन्ते । तेषामयमाशयः**—"ब्रह्मविदाप्नोति परम्" इति सूत्रितब्रह्मतद्ज्ञानतत्प्राप्तिस्वरू-पाणि सत्यादिवाक्येन सामान्यतो व्याख्याय तस्यैव विशेषरूपेण विवरणार्थं "तस्माद्वा एतस्मात्" इत्यादिवाक्यं प्रावर्तत । तत्र तच्छब्देन ब्रह्मविदाप्नोतीत्युपक्षिप्तं एतच्छब्देनच सत्यज्ञानानन्ततयोपपादितं ब्रह्मस्वरूपमनूद्य आत्मन इति तस्य जी-वाभेदमनुसंधाय "अन्नात् पुरुष" इत्यन्तेन सकलजगत्कारणत्वेन स वा एष पुरुष इत्यादि "ब्रह्मपुच्छं प्रतिष्ठा" इत्यन्तेन गुहानिहितत्वेन च तत्स्वरूपमुपपाद्यते इति विवेचयामः । एवंच अविद्याद्युपाधिवशेन यज्जगज्जन्मादिकारणं तदेव गुहानि-हितं जीवस्वरूपमपीति जीवेशभेदप्रतीतेरौपाधिकत्वात् ब्रह्मविदाप्नोति परमिति ज्ञातृज्ञेयप्राप्यप्रापकभावव्यवहारः सर्वोऽपि काल्पनिक एवेत्यध्यवस्यामः । सोऽश्नुते सर्वान् कामान् सहेति वाक्यमपि ब्रह्मभावापन्नस्य युगपत्सर्वानन्दानुभवमेव बोध-यति; नतु ब्रह्मसाहित्येन तत्प्राप्तस्य सर्वकामानुभवम् । ब्रह्मविदाप्नोतिपदचतुष्टयव्याख्यानरूपेण पादचतुष्टयेन पादान्तरा-नपेक्षया "ब्रह्मवित्, आप्नोति परम्" इति पदविवरणस्यैव युक्तत्वात् । गुहानिहितत्वाम्नानं हि गुहानिहितत्वेन ब्रह्मविज्ञान-मोक्षसाधनतार्थमिति यदि स्यात् तर्हि मूलव्याख्यानयोर्भिन्नार्थकत्वमापद्येतेति प्रत्यगभिन्नस्वरूपसमर्पणार्थमेवेति जानीमः । तेषां ऋक् यन्त्रार्थवशेन पादव्यवस्थेति सूत्रविरोधाद् सहपदं ब्रह्मणाविपश्चितेत्यनेन नान्वेति । ब्रह्मणेति तृतीयार्थस्तु इत्थं-भाव एवेति न दोषः । ब्रह्मणा विपश्चितेति तु परत्वविवरणार्थम् । एवंच आनन्दमयब्रह्मतावादे (१) गुहानिहितत्वोक्ति-वैयर्थ्यमेको दोषः । (२) मूलव्याख्यानयोर्भिन्नार्थकत्वापत्तिरपरो दोषः इति मन्तव्यम् । श्रुत्यन्तरेषु यज्जगत्कारणत्वेन प्रतिपादितं तदेव सत्यज्ञानत्वादिनापीह निरूप्यते इति तटस्थलक्षणमुखेन तन्निरूपणार्थं अनिरुक्तेऽनात्म्ये इत्यादिनिषेध्य-समर्पणार्थं च सृष्ट्यादिवाक्यप्रवृत्तिः । तथाच जगत्कारणस्य परमात्मन एव जीवादिकारणत्वमपि यद्युपपाद्यते, तदानी-मेव तद्व्यतिरेकेण सर्वमिथ्यात्वमुपपादयितुं शक्यते इति जीवपर्यन्तं सर्वमपि परमात्मकार्यमित्यन्नात्पुरुष इत्यन्तेन निरू-पितम् । तत्र यद्यपि पुरुषपदवाच्यस्य जीवस्य स्वरूपतो नोत्पत्तिः, तथापि औपाधिका सा भवत्येवेति न विरोधः । **एतेन**—स वा एष पुरुषोऽन्नरसमय इति वाक्यमपि प्रागाकाशादिकारणत्वेन प्रस्तुतमात्मानं तच्छब्देनानुपदमन्नकार्यत्वेन निरूपितं जीवं चाभिन्नत्वेनानूद्य तस्य शरीरात्मतादिदृष्टिविधानपूर्वकं सर्वान्तरसर्वाधिष्ठानब्रह्मरूपतापर्यवसानमद्वैतिनामेवा-नुकूलमिति—**सूचयामः** । अन्नरसमयादिशब्दश्च तदवच्छिन्नचैतन्यपर इति स इति पदार्थमात्मरूपमुद्दिश्य एष पुरुषो-ऽन्नरसमय इति प्रत्यक्षशरीरावच्छिन्नचैतन्यात्मताविधानं वाऽत्र वाक्यार्थमध्यवस्यामः ॥

अत्र शरीरादिभिस्तदविच्छिन्नचैतन्याविवक्षायां अन्योऽन्तर इत्यादिनिर्देशानुपपत्तिः, अन्नरसमयः प्राणमय इत्यादिमय-ट्प्रयोगवैयर्थ्यं च समापद्यते । नहि प्रसिद्धशरीरात् प्राणादिभेदः कस्यापि नापरोक्षः । शरीरावच्छिन्नचैतन्यस्यापि शरीरवि-कार्यत्वाद्विकारार्थो मयडिति युज्यत एव । अन्नरसशब्दस्य अन्नमय इत्यादाविव रसपदप्रयोगं विनाऽपि निर्वाहे रसशब्दवै-यर्थ्यापत्त्या शरीरपरत्वमेव युक्तम् । अन्नमयप्राणमय इत्यादौ तु अन्नशब्दस्यैव तत्कार्ये उपचारादेकवाक्यतामनुपश्यामः । शरीराद्यवच्छिन्नचैतन्यस्य गौणविकारत्वेऽपि फलमुखगौरवस्यादोषात्वान्नानुपपत्तिरिति मन्महे । प्राणमनआदिशब्दानां तत्तद्वृत्तिपरत्वेनात्र मयट्प्राचुर्यार्थनिर्वाहस्तु न संभवति; लक्षणाप्रसंगात् । एवंच प्रायपाठनिर्वाहार्थमानन्दमयपर्यायेऽपि

विकारार्थ एव मयडुररीकरणीयः । नहि स्थूलारुन्धतीन्यायेन परमात्मानं दर्शयितुं प्रवृत्ताया अन्योऽन्तर आत्मेति शैल्या आनन्दमय एव पर्यवसानम्, नवा असन्नेवेति श्लोकोऽवयव्यानन्दमयगोचरः, येनानन्दमयब्रह्मतायां शास्त्रसिद्धान्तः स्यात् । नहि तस्मादन्योऽन्तर आत्मेति आनन्दमयपर्यायानन्तरमपि नास्तीत्येतावता सर्वान्तरोपदेशस्य तत्रैव पर्यवसानं निश्चेतुं वयमीश्महे । नहि निर्विशेषं चैतन्यं शिरःपक्षाद्यवयवकत्वेन निरूपणमर्हतीत्यानन्दमयप्रतिष्ठात्वेन पुच्छब्रह्मनिरूपणेनैव वयमधिगच्छामो यत् पुच्छब्रह्मण्येव सर्वान्तरत्वोपदेशं पर्यवस्यतीति । नह्यवयवानामवयव्यनन्यत्वमिति नियमः; मनोमयपर्याये तदनवयवैरपि ऋगादिभिस्तदवयवित्वोपलम्भात् ॥

**किंच** यया शैल्या परमात्मनिरूपणं प्रक्रान्तं नहि तयैव शैल्या तत्पर्यवसातव्यमिति नियमः समस्ति । भूमविद्यायामात्मजिज्ञासयोपसेदुषे नारदाय नामादिषूत्तरोत्तरमर्थान्तरोपदेशस्य "अस्ति भगवो नाम्नो भूयसी"ति वाक् वाव नाम्नो भूयसीत्युपक्रान्तप्रश्नप्रतिवचनशैलीं विहायान्ततः एष तु वा अतिवदति यः सत्येनातिवदतीति शैल्यन्तरेणापि भूमोपदेशदर्शनात् । तत्र यथा प्राणस्योपादेयत्वद्योतनाय पूर्वानुक्तातिवादित्वोक्त्या शिष्येण तत्रैव परिसमाप्तिशङ्कया ततोऽधिकस्य प्रश्नेऽकृते शिष्यमनुजिघृक्षुराचार्य एव स्वयं शैल्यन्तरस्वीकारेण तदुपदेशं पर्यवसाययत्, तथा प्रकृतेऽपि निर्विशेषस्य शिरःपक्षाद्यवयवकत्वशैल्या प्रथमोपक्रान्तया दुर्निरूपतया शैल्यन्तरमाद्रियत भगवानाम्नाय इति न वैषम्यं किंचन विन्दामहे ॥

**एतेन**—असन्नेवेति श्लोकोऽपि पुच्छब्रह्मविषयतया—**व्याख्यातः**; पूर्वतनशैलीपरित्यागेन प्रक्रान्तशैल्यन्तरपतितवाक्ये प्रक्रमभङ्गापादनमुपहासास्पदमेव । यथाहि अन्नमयपर्यायेऽन्नसंकीर्तनेनान्नमयोपस्थितिः, यथावा प्राणमयपर्याये प्राणमिति प्राणशब्देन प्राणमयप्रत्यासत्तिः, यथावा मनोमयविज्ञानमयपर्याययोः "अप्राप्य मनसा" "विज्ञानं यज्ञमि"ति मनोविज्ञानशब्दाभ्यां मनोमयविज्ञानमययोः सन्निधानम्, नैवानन्दमयपर्याये असन्नेवेति श्लोक आनन्दपदाम्नानमिति न तद्विषयोऽयं श्लोकः, किंतु असद्ब्रह्मेति ब्रह्मशब्दाम्नानेन पुच्छब्रह्मविषय एवेति युक्तमुत्पश्याम इति शैल्यन्तरेणोपदेशपरिसमापनमपि सप्रमाणयामः ॥

एतेन सोऽकामयतेत्यादिसंदर्भोऽपि विवृत इति मन्तव्यम् । एष तु वेति तु शब्दनिवर्तिते शैल्यन्तराधिकारे एषशब्देन प्राणपरामर्शवत् प्रकृतेऽपि आनन्दमयपरामर्शासंभवात् पुंलिङ्गेनाप्यात्मशब्देन ब्रह्मपरामर्शो न दुष्यति । पुच्छब्रह्मण एवात्र सन्निधिर्नतु आनन्दमयस्येति सोऽकामयतेति तच्छब्देन व्यवहितपरामर्शदोषो भवतामेव नास्माकम् ॥

"बहु स्यां प्रजायेये"ति वचनसिद्धमभिन्ननिमित्तोपादानत्वं त्वद्वैतमेव सावलम्बयति । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे"ति आनन्दमीमांसाश्लोकोऽपि हिरण्यगर्भानन्दपर्यन्तं परिच्छिन्नं वाङ्मनसगोचरं ब्रह्मानन्दस्तु अपरिच्छिन्नः न वाङ्मनसगोचर इति बोधयन् स एको ब्रह्मण आनन्द इत्यत्र वान्यत्र वा तदुत्तरभागे आनन्दमयप्राधान्यविवक्षा न संभवतीति सूचयति । यथाच पुच्छब्रह्मतासिद्धान्तेऽपि प्राप्यपरस्वरूपविवेचनार्थं आनन्दमीमांसा प्रवृत्ता तथाऽन्यत्र विस्तरः ॥

एवंच (१) शिरःपक्षाद्यवयवयोगात्, (२) पुच्छत्वेन निर्दिष्टात् ब्रह्मणो व्यतिरेकप्रतीतेः, (३) विकारार्थकमयट्प्रवाहपठितत्वात्, (४) स्वपर्यायगतश्लोकाप्रतिपाद्यत्वात् (५) तस्यैष एव शरीर आत्मा यः पूर्वस्येत्यानन्दमयस्याप्यन्तरात्मोपदेशात् (६) शोध्यत्वलिङ्गाच्चानन्दमयो न ब्रह्मेति सिद्धम् । नहि निःसङ्गस्योदासीनस्य च परमात्मनः जीवापराधकालुष्यसंभवः । येन तन्निराकरणेन शोध्यत्वोपपत्तिराशङ्क्येत ॥

पुच्छब्रह्मतावादे उद्भावितान् सर्वानपि दोषान् पूर्वमेव सूचनया तत्तत्स्थलेषु अदूदुषामेति विस्तरभयादुपरमामः ॥

**वस्तुतस्तु**—आनन्दमयब्रह्मतासिद्धान्त एव दोषबहुलः । **यथा**—(१) मन्त्रब्राह्मणयोर्भिन्नार्थकत्वम्, (२) गुहानिहितत्वोक्तिवैयर्थ्यम्, (३) पादव्यवस्थाभङ्गः (४) तस्माद्वेति तच्छब्दनिर्देशवैतथ्यम्, (५) स वा एष पुरुष इत्यत्र व्यवहितपरामर्शकस्य तच्छब्दस्यान्नात्पुरुष इति सन्निहितोपसर्जनशरीरपरत्वम् (६) अन्नात्पुरुष इत्यात्मपर्यन्तस्य पुरुषपदस्य शरीरपरत्वम्, (७) अन्नरसमय इत्यादौ मयट्प्रयोगवैफल्यम्, (८) तत्रैव तस्यैष एव शारीर आत्मेति वाक्यशेषानन्वयापत्तिः, (९) तस्यैष वाक्ये पूर्वतनपर्यायेषु आनन्दमयपर्याये च वैरूप्यम्, (१०) अन्नमयादिषु मयटो विकारार्थत्वम्, आनन्दमये प्राचुर्यार्थत्वमिति वैषम्यम्, (११) शैल्यन्तरेण पुच्छब्रह्मणि समाप्तस्योपदेशस्यानन्दमयविषयत्वाङ्गीकारः, (१२) तस्यैव तदवयवत्वस्वीकारः, (१३) आनन्दादिशब्दाघटितस्यापि श्लोकस्य प्रक्रमविरुद्धानन्दमयविषयत्वाङ्गीकारः, (१४) सोऽकामयतेति तच्छब्देन व्यवहितपरामर्शः, (१५) शैल्यन्तरेण पुच्छब्रह्मविषतया निर्णीतस्य तदप्येष इति तच्छब्दस्य तद्विरुद्धानन्दमयविषयत्वाङ्गीकारश्चेत्यादयो दोषा अत्र प्रादुर्भवन्ति ॥

सर्वानुभवसिद्धे आनन्दमये असन्नेव स भवति असद्ब्रह्मेति वेद चेत्, इति वाक्यशेषानन्वयादयस्तु दोषा अनन्तेनाप्यगणनीया इति सूचयामः ॥

**एतेन**—आनन्दमयोऽभ्यासादिति सूत्रतात्पर्यमपि आनन्दमयब्रह्मतानिषेधपूर्वकपुच्छब्रह्मतासिद्धान्तसमर्थन एव स्वरसम्, नत्वानन्दमयब्रह्मतासिद्धान्तसमर्थने । नहि श्रुतिविरुद्धेऽर्थे वैदिकाग्रगण्यानां बादरायणानां तात्पर्यकल्पनं शोभावहं भवतीति—**सूचितम् । अयमाशयः**—उदरमन्तरं कुरुते अथ तस्य भयं भवतीति भेदनिन्दयाऽभेदपारमार्थिकतामवगमयन्ती श्रुतिरद्वैतमेवोपबृंहयति । पूर्वतनवाक्यगतप्रतिष्ठापदार्थध्यानविश्लेषभयहेतुताबोधन एवोक्तवाक्यतात्पर्यमिति कल्पना तु प्रतिष्ठापदस्य ध्यानाभिधेयत्वस्याप्रसिद्धत्वादुपेक्षणीया । सूत्रयोजनायां प्रसक्ता लक्षणाध्याहारादिक्लेशास्तु प्रयोजनान्तरसंग्रहार्थत्वात्सहनीया एवेति पश्यामः । तच्च प्रयोजनमानन्दमयब्रह्मतानिराकरणमेवेति पूर्वमेवासूसुचाम । ब्रह्म पुच्छमभ्यासादिति सूत्रणे हि ब्रह्मपुच्छमवयवः, अभ्यस्यमानानन्दमयपरश्लोकाविषयत्वादित्यपि योजनाप्रसङ्ग इत्यानन्दमयोऽभ्यासादिति सूत्रणमेव साधु जानीमः । हेतौ नञर्थनिवेशश्च नेतर इति सूत्रात्तदनुवृत्तिसाध्य इत्यादि स्वयमेवोहनीयम् । अथातो ब्रह्मजिज्ञासेत्यधिकृतब्रह्मण एव साध्यत्वेनान्वयान्न साध्याध्याहारनिबन्धनं क्लेशं वयमनुभवामः । स्थूलारुन्धतीन्यायेन ब्रह्मलिलक्षयिषया प्रवृत्तस्य सन्दर्भस्यान्तिमपर्यायेणैव प्राधान्येन ब्रह्मसमर्पणमिति निर्णयेन प्राधान्यादीनां साध्यकोटावनिवेशात् । अभ्यासादितिहेतुस्तु आनन्दमयाभ्यासचिह्नितवाक्यप्रतिपाद्यनिरतिशयानन्दयोगश्चेत् अकामहतश्रोत्रियेऽनेकान्त इति पुनरुच्चारणविषयब्रह्मशब्दवत्त्वरूप एव विवक्षणीय इत्यद्वैतमतमेवोपोद्बलयति ॥

विकारशब्दान्नेति चेन्न प्राचुर्यादिति सूत्रमप्यद्वैतिनामेव स्वरसम् । यदि हि अन्नमयादिषु आनन्दमये च मयटो विकारार्थत्वं निर्णीतं स्यात्, तदानीमेव सिद्धवद्विकारशब्दादिति हेतुनिर्देशः स्वरसः स्यात् । मयडर्थनिर्धारणार्थमेवोक्तसूत्रप्रवृत्तौ तु मयट्शब्दादिति सूत्ररचनापत्तेः । नच—प्रतिवादिसिद्धं विकारार्थकत्वमादाय विकारशब्दादिति मयडर्थनिर्धारणार्थमेवोक्तसूत्रप्रवृत्तिः, अन्यथा पुच्छशब्दस्याप्यवयवार्थकत्वस्यानिर्णयादद्वैतमतेऽपि तन्निर्देशानुपपत्तेरिति—वाच्यम्; पुच्छशब्दादित्येव सूत्रयितव्ये विकारशब्दादिति सूत्रणस्याद्वैतमते प्रयोजनान्तरसंग्रहवदानन्दमयब्रह्मतावादेऽसंभवेन वैषम्यात् । एवंचानन्दमय इत्यत्र मयटोऽर्थनिर्णयार्थं नोक्तसूत्रप्रवृत्तिरिति तस्य पूर्वतनपर्यायेष्विव विकारार्थकत्वमेव सूत्रकृदाशयविषय इति तद्ब्रह्मतावादोऽसंभवदुक्तिक एव । **एतेन** हेत्वाक्षेपसमाधानार्थत्वेन सूत्रयोजनम्—**परास्तम्;** सूत्रितहेतावसिद्धिवारणार्थं सूत्रान्तरप्रणयनस्य कुत्राप्यदर्शनात् । **किंच** किं सर्वेष्वपि पर्यायेषु मयटोऽर्थनिर्धारणार्थत्वमुक्तसूत्रप्रवृत्तिः, उतानन्दमयपर्यायमात्रे । प्रथमपक्षे प्राणमयादिषु प्राणशब्दस्य तद्व्यापारादिषु लक्षणाप्रसङ्गः । द्वितीये प्रायपाठबाधकमेव प्रमाणं निरूपयणीयम्, नतु प्राचुर्यार्थत्वसंभवः । यथा विकारार्थकत्वं पूर्वतनपर्यायेषु सूत्रकारैर्न सूत्रितम्, एवं प्राचुर्यार्थकत्वमपि न सूत्रणीयम्; पाणिनीयेनैव गतार्थत्वात् । एवं प्रकरणोपपदाद्यर्थविशेषनिर्णायकमेव प्रमाणमत्र सूत्रणीयमिति पाणिनीयसूत्रसूचनार्थत्वेनोक्तसूत्राशयवर्णनमनुचितमेवेति ज्ञापयामः । प्रायपाठविरोधशङ्कया प्रत्यवतिष्ठमानस्य तदुपपत्तिवर्णनार्थमुक्तसूत्रप्रवृत्तिरिति वाद एव रमणीयतमः ।

एवंच यथा पुच्छशब्दस्य पूर्वतनपर्यायेष्ववयवपरत्वमेवं प्रकृतेऽप्यवयवपरत्वमेव युक्तम्; प्रायपाठबाधस्यान्याय्यत्वादिति शङ्काभागार्थः । पुच्छशब्दप्रयोगमात्रेण पञ्चाग्निविद्यायामग्निसमिदादिप्रयोगमात्रेणेव प्रायपाठोपपत्तिः । पञ्चाग्निविद्यायां सर्वत्राग्निसमिदादिबुद्धेरविच्छेद इवात्रापि सर्वप्रतिष्ठात्वेन निरतिशयब्रह्मबोधनं प्रयोजनं विद्यते इति नानुपपत्तिः ।

आकाशवत् सर्वगतश्च नित्य इत्यादाविव दृष्टान्तधर्मस्य सापेक्षस्य दार्ष्टान्तिके बाधितस्यात्र विवक्षणासंभवात् प्रायपाठबाधेन पुच्छपदसार्थक्याच्च न सापेक्षाधारत्वपुच्छपदप्रयोगवैयर्थ्यं प्रसञ्जयामः । एतदर्थमेव प्रायपाठादित्यसूत्रणेन प्राचुर्यादिति सूत्रयामासुः । अवयवशब्दादिति सूत्रणे तु प्रयोजनान्तरसंग्रहार्थमपेक्षिताया आवृत्तेर्विकारशब्देनेवावयवशब्देनासूचनात् विकारशब्दादित्येव प्रयोजनान्तरसंग्रहार्थं सूत्रणीयमिति वदामः । प्राचुर्यार्थनिर्धारणार्थमेवोक्तसूत्रप्रवृत्तिरित्यङ्गीकारेऽपि प्राचुर्यस्य स्वाधिकरणेऽल्पस्वविजातीयसत्वनिरूपकत्वस्वाभाव्येन मात्रयापि दुःखासङ्गः परमात्मा नात्र विवक्षामर्हति । प्राचुर्यविशेष्यत्वे एवोक्तनियमाङ्गीकारान्न प्रचुरप्रकाशः सवितेति प्रयोगविरोधः । मेघच्छन्न एव तस्मिन् प्रकाशप्रचुरः सवितेति प्रयोग इति नानेकान्तोऽयं नियम इति पश्यामः । प्रचुरशब्दोपात्तप्राचुर्यस्य मयट्प्रत्ययोपात्तप्राचुर्यस्य च स्वरूपतो न कोऽपि विशेष इति प्रचुरशब्दोपात्तप्राचुर्यविषय एवायं नियम इति कल्पनामप्रमाणामधिगच्छामः । प्राचुर्यविशेषणत्वविशेष्यत्वकृतनियमस्याप्रामाणिकत्वेऽपि विज्ञानमयशब्दे स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वस्यैव मयडर्थे प्राचुर्ये विवक्षणात्प्रायपाठानुसारेणानन्दमयेऽपि स एव स्वभावोऽङ्गीकरणीयः । आनन्दमीमांसायाः प्राप्यस्वरूपनिरूपणार्थत्वेनानन्दमयस्वरूपविवेचनार्थत्वाभावान्न तदनुसारेणानन्दमये स्वव्यधिकरणविजातीयाल्पतानिरूपकत्वस्वभा-

वोऽत्र पार्यतेऽङ्गीकर्तुमित्यानन्दमयो न परमात्मेति सिद्धमिदमानन्दमयब्रह्मतावादो नौपनिषद इति शङ्करभगवत्पादसंमतः पुच्छब्रह्मतासिद्धान्त एव क्षोदक्षम औपनिषदश्चेति सुधीरसुद्घोषयामः ॥

यथाचान्येषामपि सूत्राणामद्वैत एव स्वारस्यम्, तथा सत्यवसरेऽवसरान्तरे विमर्शयिष्याम इति विस्तरभयादुपरमामः ॥

तानि चेमानि ब्रह्मस्वरूपनिरूपणार्थमेव प्रवृत्तत्वात् धर्मं प्रत्यशेषत्वाच्च ब्रह्मसूत्रनाम्ना व्यपदिश्यन्ते। यथा चेमानि तैस्तैराचार्यैर्यथा स्वाभिमतमन्यथा व्याख्यातानि न बादरायणाशयं स्पृशन्ति तथा पूर्वमेव न्यरूरुपाम।

तदिदं सिद्धं शङ्करभगवत्पादकृतमेव ब्रह्मसूत्रभाष्यं बादरायणाशयानुसारि नान्यदिति। शङ्करभगवत्पादबादरायणयोः सूत्रतात्पर्ये महान् विवादः अन्ततो बादरायणेनापि ब्रह्मसूत्राणामद्वैत एव तात्पर्यवर्णनं च शङ्करविजयगतमपीदानीमुपपन्नं पश्यामः।

शङ्करभगवत्पादाश्चेमे कदा वा भूमिमलंचक्रुरिति केचिदत्र पर्यनुयुञ्जते।

**तत्र केचन पाश्चात्याः तदनुसारिणश्च—आचार्यवागभेद्या** इति पदेन, १४३४१६० संख्यामभिदधानेनाचार्यपादानां अवस्थाने गतानि कलिदिनानि संगृह्णानाः द्वात्रिंशतामेव परंपराचार्याणां तिरोभावमपि विचारयन्तः नवमं शतकं ( A. d.) आचार्याणां समय इति—**निश्चिन्वते**।

**कस्तूरिरंगार्यास्तु**—मा किं सप्ततिसंख्याचार्यानिदानीमतीतान् अष्टत्रिंशतां पूर्वाचार्याणामसंख्यानंच ज्ञापयन्तः पञ्चमशतकं ( B. c. ) तेषां काल इति—**निरूपयन्ति**।

**परे तु**—बुद्धमतप्रचारस्यादिमैव दशा कुमारिलभट्टानां बुद्धान्तेवासिनां तत्परंपरान्तेवासिनां वेति युक्तम्। नह्यन्यथा द्रागित्येव तदस्तमयं क्षोदक्षमं जानीमः। बुद्धसमयश्च माकिं षष्ठं पञ्चमं ( B. c. ) वा शतकमिति पाश्चात्या आशेरते इति तृतीयं द्वितीयं वा शतकं कुमारिलपादानामवस्थानकाल इति सांप्रतम्। कुमारिलपादभगवत्पादयोश्च समानः समय इति प्रसिद्धमिदं सर्वेषाम्। पीठाधिपतीनामाचार्यपादानां द्वात्रिंशत्संख्यापरिगणनादिकं आचार्यकालनिर्णयोपयोगितयाऽभिप्रेतं **आचार्यवागभेद्या—इति पदं च** माकिं त्रिंशत्स्वाचार्येषु परमाचार्यवदेव भिक्षाचर्यादिनैव तिरोभूतेषु एकत्रैव निवासादिकमुपक्रान्तवतामाचार्याणामेवेति संभावनापि कस्तूरिरंगार्याणामिवान्येषामपि संभवतीति नाचार्यकालनिर्णये पर्याप्तं प्रमाणमिति पश्यामः। संभावनायां चास्यां मुख्यं निमित्तं श्रीमद्भगवत्पादभाष्यविवृतौ भामत्यामन्ततो निर्दिष्टं **श्रीमन्नृगे** इति पदमेवेति मन्तव्यम्। अनेन हि ३०५२ तमं कल्यब्दमपि संगृहीतं जानन्तः केवा विप्रतिपद्येरन् वाचस्पतिमिश्राणां प्रथमं शतकमेव (B. c.) समय इत्यत्रेति तेषामाचार्याणां च शतकद्वितयेन एकेन वा शतकेनान्तरेऽपि तृतीयं द्वितीयं वा शतकं शङ्करभगवत्पादानामित्येव युक्तमिति—**विवेचयन्ति**।

तदत्र विषये चरितविमर्शकानामेव स्वातन्त्र्यमित्यस्वतन्त्रप्रज्ञा वयं तन्निर्णयार्थं तेषामेव सविधे तदिदमुपहरामः।

तदिदं शङ्करभगवत्पादकृतं ब्रह्मसूत्रभाष्यं निरतिशयगाम्भीर्यमिति बहूनां तद्विवरणानां दर्शनमात्रेणैव श्रवणमात्रेणैव च विशदमिति न वयमल्पज्ञास्तद्वर्णने पारयामः।

तस्यचास्य चतुःसूत्रीपर्यन्ता पञ्चपादिका भामती रत्नप्रभा आनन्दगिरीयन्यायनिर्णयो ब्रह्मविद्याभरणमिति पञ्च व्याख्यानानि संप्रत्युपलभामहे।

तत्र यथा पञ्चपादिका विवरणेन, विवरणं तत्वदीपनेन अपरेणचाप्रकाशितेन व्याख्यानेनोपबृंहितम्, एवं भामत्यपि कल्पतरुणा, कल्पतरुः परिमलेनेतरेण च व्याख्यानेनाभोगाख्यव्याख्यानेनेति विशदमिदं सर्वेषाम्।

**तदत्रावसरप्राप्तमचिरेणैव कल्पतरुव्याख्यानस्याभोगाख्यानस्य ब्रह्मसूत्रभाष्यव्याख्यानस्य महनीयमहिम्नो ब्रह्मविद्याभरणस्य च प्रकाशमस्मदीयमपि भाविनं सप्रश्रयमेव विज्ञापयामः॥**

अतिप्रयत्नसाध्येऽपीदानीं मुद्रणव्यापारे एतादृशानां महनीयानां ग्रन्थानां प्रकाशने बद्धादराणां **निर्णयसागराधिपतीना**मायुरारोग्यादिसंपदे भगवन्तमुमारमणं रमारमणं च सविनयं **प्रार्थयामः**।

तदिदं **रत्नप्रभया भामत्या आनन्दगिरीयेन** च साकं प्राचीकशन् **निर्णयसागराधिपतयः तुकारामश्रेष्ठिनः**। संप्रति भामतीप्रस्थानमिदं प्रकाशयन्तीति महदिदमामोदस्थानमुपकारश्चाकिंचनस्य पण्डितकुलस्य।

तदत्रोपलभ्यमानेन पाठभेदेन विजयनगरमुद्रापितकल्पतरुपरिमलास्मत्संगृहीतादर्शाद्यनुसारिणाप्यपरितुष्यतां पुरोभा-

गिनां सविधे सविनयमिदं विज्ञापयामः—यत् द्वितीयस्मिन् संस्करणे तद्विषयमधिकृत्य टिप्पण्यां विमर्शयिष्याम इति। अध्यापकानां परिशोधकानां च महदिदमन्तरं यदध्यापकाः पारयन्ति यथेच्छमेव स्वातन्त्र्यविनियोगे परिशोधकास्तु न तथेति सप्रश्रयमिदमपि निवेदयामः।

पुस्तकसंस्करणे प्रथमं शिक्षमाणानां अशिक्षिततत्प्रकाराणां चास्माकं प्रामादिकानक्षरावापोद्वापादिनिबन्धनानपराधान् द्वितीयसंस्करणे यथाशक्ति मार्जयिष्याम इति सुहृद्भावनया सर्वेऽपि नोऽनुगृह्णीयुरिति प्रार्थयामः।

इति सुधीजनविधेयः—

**वेदान्तविशारदः सु- अनन्तकृष्णशास्त्री,**

**मीमांसोपाध्यायः, संस्कृतकलाशाला, तिरुपति.**



॥ श्रीः ॥

# सपरिमलकल्पतरूपबृंहितभामतीविलसितब्रह्मसूत्रशांकरभाष्यविषयानुक्रमणिका ।


| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अध्यासभाष्यविषयाः ।** | | |
| १ भामतीमङ्गलश्लोकाः (भा.) ... | १ | १ |
| २ कल्पतरुमङ्गलश्लोकाः (क.) ... | १ | १ |
| ३ कल्पतरुपरिमलमङ्गलश्लोकाः(प.)... | १ | १ |
| ४ कल्पतरुमङ्गलश्लोकानां तत्तद्दलप्रयोजननिरूपणपूर्वकं सर्वशास्त्रविषयसमर्पकतया विवरणम् । (प.) | १ | ५ |
| ५ अविद्याद्वितयस्वरूपतदाश्रयविषयब्रह्मानीश्वरत्वनिराकरणजीवसाधारणप्रपञ्चविवर्तत्वब्रह्मविषयत्वप्रयोजनत्वानामनिर्वाच्येति श्लोकेन समर्पणम् । (क.) ... ... ... | ३ | १५ |
| ६ ब्रह्मणोऽविद्याश्रयत्वविषयत्वयोर्विवरणभामतीप्रस्थानविवेकः (टि.) ... | ३ | १ |
| ७ ईश्वरवेदयोः षडङ्गाव्ययस्वरूपनिरूपणम् ॥ (क.) ... ... ... | ४ | ७ |
| ८ वेदव्यासस्य ज्ञानशक्त्यवतारत्वम् (क.) | ४ | १३ |
| ९ ज्ञानशक्त्यवतारायेत्यस्य ज्ञानशक्तेरवतारः प्राप्तिर्यस्मिन्निति विवरणम्(क.) | ४ | १३ |
| १० अवतारशब्देनाधिकरणघञन्तेन षष्ठीसमास एव युक्त इत्युक्तविवरणानुपपत्तिशङ्का (प.) ... ... | ४ | २ |
| ११ षष्ठीसमासप्रदर्शनार्थत्वमेवाचार्यग्रन्थस्येति तत्परिहारः । (प) ... | ५ | २ |
| १२ अध्यासभाष्यस्य तत्पुनरिति भाष्यस्य च इहाहमनुभवगोचर एवात्मेति तत्र तदतिरिक्त एवात्मेति च कृत्वा विचार इति विषयविवेकः । (क.) ... | ५ | २ |
| १३ अहमनुभवगोचरस्यात्मनोऽसन्दिग्धत्वेनाविचार्यत्वाक्षेपः । (भा.) ... | ५ | १ |
| १४ ब्रह्म मुमुक्षुणा न विचार्यं तं प्रत्यसंदिग्धत्वादित्युक्तार्थेऽनुमानप्रमाणम् । (क.) ... ... ... ... | ५ | ४ |
| १५ सर्वस्यापि मुमुक्ष्वमुमुक्षुसाधारण्येन केनचिद्रूपेण सन्दिग्धत्वेनोक्तानुमाने हेतुसाध्ययोर्मुमुक्षुविशेषणवैयर्थ्यशङ्का । (प.) ... ... ... | ५ | ७ |
| १६ मोक्षजनकत्वाभिमतज्ञानविषयेण रूपेणासन्दिग्धत्वलाभार्थत्वेन तत्सार्थक्यनिरूपणं तत्र सामान्याव्याप्तौ घटदृष्टान्तत्वसमर्थनं च (प.) ... | ५ | १४ |
| १७ अहंप्रत्ययस्याध्यस्तात्मपरत्वेन संदिग्धत्वशङ्कयाऽविचार्यत्वाक्षेपाक्षेपः । (भा.) ... ... ... ... | ५ | ५ |
| १८ योऽहं बाल्ये पितरावन्वभूवं स एवेदानीमिति प्रत्यभिज्ञाविरोधेन स्वप्नोत्थितस्य नाहं देवो मनुष्य इत्यनुभवविरोधेन योगव्याघ्रीयानेकशरीरैकात्मानुभवविरोधेन च निष्कृष्टशरीरात्मविषत्वमेवाहंप्रत्ययस्येति असन्दिग्धत्वोपपादनम्।(शां. भा.)... | ६ | १ |
| १९ योगव्याघ्रस्वरूपोपपादनम् । (प.) | ६ | ३ |
| २० भेदग्रहादिना विरुद्धस्वभावत्वादिना चात्मान्तःकरणयोः परस्पराध्यासासंभवोपपादनाम् (शां. भा.) ... | ६ | १ |
| २१ आत्मान्तःकरणयोरात्यन्तिकभेदोपलक्षणार्थं युष्मद्ग्रहणोपपादनम् ।(भा.) | ६ | १८ |
| २२ अयमहमिति प्रमित्यपेक्षया त्वमहमिति प्रतीतेर्वैषम्यनिरूपणम् । (क.) ... ... ... ... | ६ | ८ |
| २३ धर्मितादात्म्याध्यासं विनापि बिम्बप्रतिबिम्बभावेनान्तःकरणधर्माणामात्मनि प्रतिभासशङ्का । (भा.) ... | ७ | ४ |
| २३ रूपवत एव प्रतिबिम्ब इति नियमेनोक्तशङ्कापरिहारः । (भा.) ... | ७ | ८ |
| २५ गगनस्य सलिले प्रतिबिम्बितत्वभ्रममात्रमित्युक्तनियमाव्यभिचारः । (क.) ... ... ... ... | ७ | १० |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| २६ रूपवतोऽरूपवतो वा रूपोपहितस्यैव चाक्षुषत्ववत् तस्यैव तादृशस्य प्रतिबिम्ब इति गगनात्मादिप्रतिबिम्बसंभवाशङ्का (प.) ... ... ... | ७ | १२ |
| २७ रूपोपहितस्यैव चाक्षुषत्वमित्यगत्याऽङ्गीकारेऽपि तस्यैव प्रतिबिम्ब इति नाङ्गीक्रियत इति नोक्तनियमव्यभिचार इति परिहारः (प.) ... | ७ | २० |
| २८ गगने जलप्रतिबिम्बत्वभ्रमवत् आत्मनः अन्तःकरणप्रतिबिम्बत्वभ्रमस्याप्यनवसरः (प.) ... ... | ८ | ७ |
| २९ एवंचाध्यासकारणभेदाग्रहाभावान्नान्तःकरणशबलितस्यैवात्मनोऽहमनुभवे भानमिति असन्दिग्धत्वान्न विचार्यत्वमिति पूर्वपक्षसंक्षेपः ॥ (भा.) ... ... ... ... | ८ | ६ |
| ३० अहमनुभवे समस्तोपाध्यनवच्छिन्नश्रुतिस्मृत्यवगतात्मतत्वाप्रकाशेनात्मस्वरूपसन्दिग्धत्वम् । (भा.) | ८ | ७ |
| ३१ अहमनुभवविषय एव श्रुतावपि प्रतिपाद्यते इति शङ्कातत्परिहारौ । (भा.) | ८ | ८ |
| ३२ उपजीव्यप्रत्यक्षविरोधेन श्रुतीनामुपचरितार्थत्वशङ्का । (क.) ... | ९ | १ |
| ३३ आगमस्य स्वजन्यज्ञानप्रमितौ तदुत्पत्तौ वा प्रत्यक्षानुपजीव्यत्वोपपादनम् । (क.) ... ... ... | ९ | ३ |
| ३४ उपजीव्यत्वेऽपि तात्पर्यवद्वाक्येनोपजीवकेनौपदेशिकेन यो होता सोऽध्वर्युरिति वाक्येनोपजीव्यातिदेशस्यैव हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीति विनियोगेनोपजीव्यमन्त्रस्यैव चोपमर्दात् श्रुत्यनुपचरितार्थत्वोपपादनम् । (प.) ... ... | ९ | १० |
| ३५ न विधौ परः शब्दार्थ इति न्यायेनानुपचरितार्थत्वोपपादनम् । (भा.) | १० | २ |
| ३६ विधिवाक्यादेः तात्पर्यवतः प्रमाणान्तरानुग्रहणार्थमन्यार्थत्वनिरासे "न विधौ" इति शाबरभाष्याभिप्रायनिरूपणम् । (प.) ... ... | १० | ८ |
| ३७ मुख्यत्वेन प्रत्यक्षप्राबल्यशङ्कायास्तत एव दौर्बल्यनिरूपणेन परिहारः (भा.) | १० | ३ |
| ३८ उक्तार्थे अपच्छेदन्याययोजनम् । तन्न्यायस्वरूपं च । (प.) ... | १० | १९ |
| ३९ परेण पूर्वस्य बाधेऽपच्छेदन्यायाप्रवृत्तिशङ्कापरिहारौ (प.) ... ... | १० | २७ |
| ३९ प्रयोगान्तरे पूर्वनैमित्तिकस्येव प्रत्यक्षस्य व्यावहारिकप्रामाण्ये चारितार्थ्यसमर्थनम् (प.) ... ... | ११ | १७ |
| ४१ अहमनुभवस्य तद्विषयान्तःकरणादिविवेकाग्रहेणाध्यासत्वसमर्थनम् । (भा.) ... ... ... ... | ११ | २ |
| ४२ भेदप्रत्ययपुरःसरो गौणप्रत्यय इति कौण्डपायिनामग्निहोत्रदृष्टान्तेनोपपादनम् । (भा.) ... ... ... | ११ | ५ |
| ४३ अग्निहोत्रपदनामधेयत्वं कौण्डपायिगतस्याग्निहोत्रस्य क्रियान्तरत्वं तत्र तस्य गौणत्वमित्यादिनिरूपणम् । (क.) ... ... ... ... | ११ | ११ |
| ४४ अग्निहोत्रपदे व्यधिकरणबहुव्रीह्युपपादनम् । ... ... ... ... | १२ | ९ |
| ४५ अहमनुभवस्य गौणत्वनिरासः ।(भा.) | १३ | ४ |
| ४६ अहमनुभवे शरीराभेदग्रहनिबन्धनाध्यासनिबन्धनमेव प्रादेशिकत्वग्रहणम् (भा.) ... ... ... | १४ | ४ |
| ४७ अहमनुभवप्रामाण्यादात्मप्रादेशिकत्वशङ्काया अणुमध्यमपरिमाणत्वाद्यसंभवस्य प्रतीत्यनुसारेण समर्थनम् ॥ (भा.) ... ... ... ... | १४ | ५ |
| ४८ अन्धोऽहमित्यादीनां कृशोऽहमित्यादीनां चार्शआद्यजन्तत्वेन प्रमाणत्वशङ्का कुणिरहमित्यादाविव भ्रमत्वसमर्थनं च ॥ (प.) ... ... | १४ | २३ |
| ४९ अहंप्रत्ययस्यात्मन्यसामर्थ्येन श्रुतेरेव तत्र प्रामाण्येनात्मनः सन्दिग्धत्वोपसंहारः । (भा) ... ... | १५ | २ |
| ५० स्वरूपनिमित्तफलैरहमध्यासोपपादनम् । (शां. भा.) ... ... | १५ | १ |
| ५१ अध्यासस्य मिथ्याज्ञाननिमित्तकत्वस्य नैसर्गिकत्वस्य चोपपादनम् (क.) ... | १६ | २ |
| ५२ निर्विभागचितोऽनाश्रयत्वेनाध्यासक्रियाऽसंभवेनाध्यासस्य व्यवहारकारणत्वाक्षेपः । (क.) ... ... | १६ | ४ |
| ५३ पूर्वपूर्वाध्याससंस्कृताविद्यया संप्रतीतनाध्यासोपपत्त्या तत्समाधानम् । (क.) ... ... ... ... | १६ | ६ |
| ५४ नैसर्गिकपदेनैतद्धारणे स्वातन्त्र्येणाचा- | | |

| | विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| | र्थाणां परिहारकथनवैयर्थ्यशङ्का (प.) | १६ | १६ |
| ५५ | आध्यासिकेन बुद्धितादात्म्येनाध्यासान्तरोत्पत्तिनिरूपणपरनैसर्गिकविशेषणेन सर्गादौ प्रथमाध्यासात्पूर्वं आध्यासिकबुद्धितादात्म्याभावेन तादृशाध्यासाश्रयलाभः आचार्योक्तप्रकारेणैव संपादनीयः तदभिप्रायस्तु पूर्वपूर्वभ्रमसंस्कारसचिवाविद्योपहितचित आश्रयत्वादध्यासक्रियासंभव इति । (प.) ... ... ... | १६ | १ |
| ५६ | आरोप्यस्य वस्तुसत्तां विनाऽपि प्रतीतिमात्रेणारोपसंभवः । (भा.) | १७ | २ |
| ५७ | सत्यानृतमिथुनीकरणरूपाध्यासो न संभवति; प्रतीयमानस्य सर्वस्यापि देहेन्द्रियादेः सत्यत्वादिति प्रत्यवस्थानम् । (भा.) ... ... ... | १७ | ६ |
| ५८ | स्मृतिरूपः परत्र पूर्वदृष्टावभास इति पूर्वदृष्टपदेनोक्तशङ्कापरिहारः (क.) | १८ | ३ |
| ५९ | तत्रावभासपदेन यौगिकेन संक्षिप्तलक्षणस्य रूढेन विस्तृतलक्षणस्य च विवक्षणम् । (क.) ... ... | १८ | ३ |
| ६० | प्रत्यभिज्ञादावतिव्याप्तिनिरासार्थं स्मृतिरूपपदमिति विवक्षणम् (भा.) | १८ | ११ |
| ६१ | पूर्वदृष्टपदस्यानृतपरत्वस्योक्तत्वात् प्रत्यभिज्ञायाश्चानृताविषयकत्वादतिव्याप्तिशङ्कानुपपत्तिशङ्का, स्मृतिरूपपदसत्वे एव तेन तादृशार्थविवक्षणमिति स्मृतिरूपपदाभावपक्षेणातिव्याप्तिरिति परिहारश्च । (क.) ... | १९ | २ |
| ६२ | गोत्वादिप्रत्यभिज्ञाया अपि लक्ष्यत्वादतिव्याप्तिशङ्कानुपपत्तिः, प्रत्यभिज्ञाया इव प्रमात्वेनोपपत्त्यार्थान्तरमेवातिव्याप्तिशब्दार्थ इति तत्परिहारश्च । (प) ... ... ... ... | १८ | ३ |
| ६३ | असन्निहितविषयत्वं स्मृतिरूपमिति विवक्षणादुक्तातिव्याप्तिनिरासः (भा.) | १९ | १ |
| ६४ | परत्रपदं स्मृतावतिव्याप्तिवारणार्थमिति निरूपणम् । (क.) ... | १९ | ४ |
| ६५ | परशब्देन पूर्वदृष्टदेशान्यदेशस्य सत्यस्य अहंकाराध्यासजडाधिष्ठानकात्माध्यासयोरव्याप्त्या पूर्वदृष्टपदेन पूर्वदृष्टस्य तत्सजातीयत्वस्य वा रजताध्यासाव्याप्त्या सर्वत्र सर्वाध्यासप्रसंगेन च विवक्षणासंभवात्स्मृतिरूपपदेनाधिष्ठानविषमसत्ताकत्वविवक्षणेनैव सर्वदोषपरिहारात्परादिपदं निरर्थकमिति निरूपणम् ॥ (प) ... | १९ | ६ |
| ६६ | स्मृतिरूपावभासपदाभ्यां ख्यातिचतुष्टयनिरासः । (क.) ... ... | १९ | ७ |
| ६७ | स्वप्नेऽनुभूयमानपित्रादीनां अधिष्ठानाभावेनाव्याप्तिशङ्का, स्मर्यमाण एव पित्रादौ सन्निहितदेशकालत्वस्य समारोपेण तत्परिहारश्च ॥ (भा.) ... | २० | १ |
| ६८ | उक्तपरिहारो नैयायिकमतेनेति स्वमतेनात्माधिष्ठानकत्वेनाव्याप्तिपरिहारः तत्र प्रसक्तव्यावहारिकत्वनिरासश्च । (प.) ... ... ... ... | २० | १४ |
| ६९ | प्रकाशमानतामात्रस्य रज्ज्वादीनां सर्पादिभावापत्त्या सत्वनिराकरणेन सत्यानृतमिथुनीकरणसंभवोपपादनम् (भा.) ... ... ... ... | २१ | ८ |
| ७० | मरीचीनां भावात्मनोपाख्येयतया तोयरूपेणानुभवगोचरत्वेऽपि प्रपञ्चस्य न तत्वमिति सख्यातिवादिनः आशङ्का । (भा.) ... ... | २२ | ६ |
| ७१ | असत एव विषयस्य क्षणिकविज्ञानेन प्रकाश इत्यसत्ख्यातिवादिशङ्कातत्परिहाराभ्यां सत्ख्यातिसमर्थनपूर्वकानिर्वचनीयख्यात्यनुपपत्तिशङ्का।(भा.) | २२ | ९ |
| ७२ | सत्ख्यातिखण्डनेनानिर्वचनीयख्यातिसमर्थनम् ॥ ... ... ... | २३ | १ |
| ७३ | अनिर्वाच्येनापि तेन रजतप्रतीत्युपपत्तौ व्यर्थं देशान्तरस्थकल्पनम्। (क.) | २३ | ११ |
| ७४ | दोषवशादसन्निकृष्टस्यापि भानकल्पनात् अभिनवरजतकल्पनावैयर्थ्यशङ्का । (प.) ... ... ... | २३ | ८ |
| ७५ | प्रतारकवाक्याच्छशशृङ्गमरण्येऽस्ति तदेवंरूपं, तेनेदं प्रयोजनमिति रूपात् अवाप्तमोहस्य प्राप्तारण्यस्य काष्ठादौ प्राप्ते शशशृङ्गभ्रमे मनुष्यपशुपक्षिमृगाद्यनेकरूपैकवस्तुविषये स्वप्न इव चाभिनवरजतादिकल्पनमेवयुक्तमिति तत्परिहारः । (प) ... ... | २३ | १६ |
| ७६ | प्रातिभासिकचैत्रज्ञानाद् प्रसिद्धचैत्रोद्देश्यकप्रवृत्तेः चैत्रप्रकारत्वमात्रेणोपपत्त्या रजतान्तर इव प्राति- | | |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| भासिकरजतेऽपि दुष्टकरणसहकारिसंस्कारोपनीततत्ताविषयत्वोपपत्त्या चैत्रव्यक्तिविशेषभ्रमादेः तदेवेदमिति प्रत्यभिज्ञायाश्चानिर्वचनीयख्यातिवादे समर्थनम् ॥ (प.) ... ... | २४ | ४ |
| ७७ अनिर्वचनीयख्यातिपक्षे जलबुद्बुदादेरिव नाशाप्रतीत्युपपत्तिः (प.) | २४ | १० |
| ७८ शुक्तौ रजतभ्रमानन्तरं बाधानुत्पत्तौ जायमाने रजतभ्रमे पाकरक्ते घटे श्यामोऽयमिति भ्रमेचान्यथाख्यातिशङ्कानिरासः। (प.) ... ... | २४ | १३ |
| ७९ अबाधितस्वप्रकाशत्वं सत्वमिति सत्वनिर्वचनम्। (भा.) ... ... | २५ | ३ |
| ८० संसारस्य सत्यस्य श्रुतिप्रामाण्येन निवृत्तिसंभवादत एव जैवब्रह्मैक्यसंभवाच्च तदसत्यत्वव्यवस्थापनवैयर्थ्यशङ्का, सत्यस्यानिवृत्त्या सर्वोपपत्त्यर्थं तदावश्यकत्वसमर्थनं च ॥ (क.) | २५ | ५ |
| ८१ तार्क्ष्यध्यानादेः कल्पिताकल्पितसाधारणज्ञानत्वेन निवर्तकत्वं सेतुदर्शनादेस्तु चोदितक्रियात्वेनेति प्रमात्वेन ज्ञाननिवर्त्यस्य संसारस्य मिथ्यात्वमेवेति निरूपणम् ॥ (प.) ... | २५ | ४ |
| ८२ अनिर्वचनीयतां द्रढयितुं मतान्तरोपन्यासः। (भा.) ... ... | २५ | ५ |
| ८३ तं केचिदिति भाष्यस्य ज्ञानाकाररजतस्य वस्तुसति अलीके वा बाह्ये नेदं रजतमिति बाधस्य रजतगोचरताया एवौचित्येन समारोप इति आत्मख्यातिनिरूपणम् ॥ (भा.) ... | २६ | १ |
| ८४ इदं रजतमित्यनुभवेन नेदं रजतमिति बाधकप्रत्ययेन पुरोवर्तित्वप्रतिषेधेनानुमानेन वा रजतस्य ज्ञानाकारतायाः पुरोवर्तित्वेन कारणत्वेन वा शुक्त्या रजतालम्बत्वनस्य चासंभवेन स्वरूपतो विषयतश्चागृहीतभेदग्रहणस्मरणात्मकज्ञानद्वयमेव प्रवृत्तिबाधाद्भ्रमशब्देन व्यवह्रियते इत्यख्यातिनिरूपणम् ॥ (भा.) ... ... ... ... | २६ | ८ |
| ८५ इदंकाराभिमुखरजतार्थिप्रवृत्त्यनुपपत्त्येदं रजतमिति सामानाधिकरण्यव्यपदेशानुपपत्त्या सादृश्यनिबन्धनभेदाग्रहमात्रस्य प्रवर्तकत्वानुपपत्त्या द्रव्यमात्रस्य पुरोऽवस्थितस्यालम्बनत्वोपपत्त्या दुष्टैरिन्द्रियैर्भ्रमज्ञानोत्पत्त्युपपत्त्या च भ्रान्तिज्ञानसिद्ध्याऽनिर्वचनीयख्यातिसमर्थनम् ॥ (भा.) | २७ | १९ |
| ८६ विवादाध्यासितं रजतज्ञानं पुरोवर्तिवस्तुविषयकम्; रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वादित्यनुमानविरोधोऽख्यातिवादे। (भा.) ... ... | २८ | १९ |
| ८७ उक्तानुमाने पुरोवर्तिनि साधने प्रवर्तके फलज्ञाने स्मरणे वाय्वादौ च व्यभिचारवारणार्थं **नियमेन तत्रार्थिन** इति विशेषणानि ॥ (क.)... | २८ | ५ |
| ८८ रजतार्थिनः पुरोवर्तिनि उपायान्तरेणापि प्रवृत्तिसंभवात् असिद्धिः, व्यक्तिनियमेन हेतुसमर्थने फलज्ञानस्यापि प्रवृत्तिविशेषे नियमेन प्रवर्तकत्वाद्व्यभिचारतादवस्थ्यम्, एवं **तत्र** विशेषणं व्यर्थम्। एवं केवलप्रवर्तकत्वस्य कालादृष्टादिसाधारण्येन प्रवर्तकज्ञानत्वादिति विवक्षणीयतया तत एव वायुव्यावृत्त्या**ऽर्थिन** इति व्यर्थमिति शङ्का। (प.) ... ... | २८ | १ |
| ८९ विवादाध्यासितं रजतज्ञानमित्यनेन फलसाधनतानुमितिहेतुपरामर्शरूपरजतत्वहेतुविषयज्ञानं विवक्षितमिति तस्य नियमेन पुरोवर्तिविषयप्रवृत्तिजनकत्वात् नासिद्धिः, नापि व्यभिचारतादवस्थ्यम्, नियमविशेषणेन कालादिव्यावृत्त्या हेतौ ज्ञानत्वानिवेशेन वाय्वादिव्यावर्तनार्थनियमदलेनैव तद्व्यावर्तने प्रागभावव्यावृत्त्यर्थं **रजतार्थीति** विशेषणमित्याद्युपपादनम् ॥ (प.) ... ... ... | २८ | १० |
| ९० इष्टसाधनताज्ञानं न प्रवृत्तिप्रयोजकं किंतु इष्टसाधनभेदाग्रहमात्रमिति शङ्का अनुमितावपि पक्षे लिङ्गवह्न्योर्भेदाग्रह एव कारणमित्यापत्त्या विसंवादिप्रवृत्तिस्थलेऽपीष्टसाधनतानुमित्यादिना तत्परिहारश्च ॥ (प.) ... ... | २९ | १४ |
| ९१ प्रतियोग्यप्रसिद्ध्या सत्यरजतज्ञानेनाप्यप्रवृत्त्यापत्त्या भ्रमनिवृत्तेः नेदं रजतमिति ज्ञानादप्रवृत्तेश्चापत्त्या तत एव च केवलभेदाग्रहेण पुरोवर्तिनी- | | |

| | विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| | ष्ठभिन्नत्वप्रकारकज्ञानविषयत्वाभावेन, भेदप्रतियोगितयोपस्थित्व विषयेष्टत्वघटितेन तेन वा प्रवृत्त्युपपादनासंभवेन, इदं रजतं घटनिष्ठभेदप्रतियोगि इति ज्ञानादप्रवृत्त्यापत्त्या इदं नेति भेदविशिष्टपुरोवर्तिज्ञानं रजतस्मरणं चेति ज्ञानद्वयात्मकभ्रमस्थलेऽपि प्रवृत्त्यापत्त्या इदं रजतं इति भ्रमकाले यत्र घटनिष्ठभेदप्रतियोगीति स्मरणं तत्र इदं रजतमिति प्रसिद्धभ्रमस्थले च प्रवृत्त्यभावप्रसंगेन च भेदप्रतियोगितयोपस्थित्वविषयत्वरूपस्य पुरोवर्त्यग्रहीतासंसर्गतत्वरूपस्य तादृशभेदप्रतियोगित्वासंसर्गाग्रहाभाववत्त्वरूपस्य स्वातन्त्र्यस्यापि पृथक्कारणत्वासंभवेन चाख्यातिवादनिरसनम् (प.) ... ... | २९ | २४ |
| ९२ | मिथ्याप्रत्ययस्य व्यभिचारे सर्वप्रमाणेष्वनाश्वासनिरासः स्वतःप्रामाण्यसमर्थनं च । (क.) ... ... | ३० | २ |
| ९३ | ज्ञानप्रामाण्यनिश्चयोऽव्यभिचारनिश्चयादेवेति शङ्कायास्त्रेधा विकल्पेन निरासः । (प.)... ... ... | ३० | २१ |
| ९४ | ज्ञानस्वतःप्रामाण्यानुमानम्, तत्र प्रयोजनानि, तद्व्यवस्थापनं च । (प.) | ३१ | ३३ |
| ९५ | शुक्तिका हि रजतवदवभासते इत्यादिलोकानुभवेनानिर्वचनीयख्यातिसमर्थनम् (शां. भा.) ... ... | ३२ | १ |
| ९६ | रजतवदिति वतिप्रत्ययस्य मिथ्यात्वार्थपर्यवसानम् । (प.) ... ... | ३४ | १५ |
| ९७ | एकस्यानेकात्मतावभासे उदाहरणान्तरयोजनम् । (भा.) ... ... | ३४ | ४ |
| ९८ | प्रत्यगात्मन्यविषयेऽध्यासाक्षेपः । (शां. भा.)... ... ... ... | ३४ | १ |
| ९९ | आत्मस्वप्रकाशत्वोपपादनम् । (भा.) | ३४ | ९ |
| १०० | संविदाश्रयत्वेनात्मनो जडत्वशङ्का (भा.) ... ... ... ... | ३४ | १२ |
| १०१ | अथ प्रकाशरूपफलस्योपपत्त्या जन्मादिनिषेधेनात्मत्वोपपादनम् । (क.) ... ... ... ... | ३५ | १ |
| १०२ | संवित्स्वप्रकाशत्वस्यात्मजडत्ववादिनोऽपि संमतत्वेन संविदोऽर्थप्रकाशत्वासंभवस्यार्थानिर्वचनीयत्वव्यवस्थापनद्वाराऽऽत्मरूपत्वोपपादकतयैवोपयोगेन चार्थप्रकाशात्मकफलस्यात्माभेदबोधने एव संविद्वाचस्पत्यस्य सत्यादिश्रुतेश्च तात्पर्यमिति सोपपत्तिकनिरूपणम् । (प.) ... ... | ३५ | १ |
| १०३ | अर्थानां संविदश्चाध्यासिकसंबन्धातिरिक्तसंबन्धासंभवेन तेषां तदध्यस्तत्वनिरूपणम् । (भा.) ... | ३६ | १ |
| १०४ | आत्मस्वप्रकाशत्वे देवदत्तसुषुप्तिकालः, देवदत्तात्माऽस्तीति व्यवहारहेतुसाक्षात्कारवान्, कालत्वात्, इतरकालवदित्यनुमानम् प्रमाणम् । (क.) ... ... ... ... | ३७ | २ |
| १०५ | स्वप्रकाशे निरंशे चात्मन्यन्तःकरणाद्यध्यासासंभवशङ्कोपसंहारः । (भा.) | ३७ | ८ |
| १०६ | औपाधिकरूपेणात्मनः सांशत्वात् विषयत्वाच्चाध्याससंभवनिरूपणम् । (भा.) ... ... ... ... | ३८ | ३ |
| १०७ | आत्मनि बुद्ध्याद्यभेदस्येव तद्भेदस्याप्यध्यस्तत्वस्याशङ्कानिराकरणपूर्वकसमर्थनम् । (प.) ... ... | ३८ | १३ |
| १०८ | वीजाङ्कुरन्यायेनान्योन्याश्रयपरिहारः । (भा.) ... ... ... | ३९ | ६ |
| १०९ | आत्मनोऽहंप्रत्ययविषयत्वमौपाधिकरूपेण, तच्चौपचारिकमिति निरूपणम्, तत्र पूर्वापरविरोधपरिहाराश्च । (प.) | ३९ | ३ |
| ११० | परोक्षेऽप्यात्मनि नभोदृष्टान्तेनाध्याससमर्थनम् । (शां. भा.) ... | ३९ | १ |
| १११ | नभःपरोक्षत्वादिसमर्थनम् । (भा.) | ३९ | १७ |
| ११२ | श्रवणादिजन्यवृत्त्यभिव्यक्तचैतन्यस्याज्ञानेन विरोधोपपादनम् । (भा.) | ४० | ८ |
| ११३ | प्रमाणानामविद्यावद्विषयत्वाक्षेपः । (शां. भा.) ... ... ... | ४० | ४ |
| ११४ | प्रमातृत्वप्रमाद्यनुपपत्तिः अध्यासं साधयति । (शां. भा.) ... | ४१ | १ |
| ११५ | विद्यावतां आचरमसाक्षात्कारमविद्यानुवृत्तिसमर्थनम् । (शां. भा.) | ४२ | २ |
| ११६ | शास्त्रीयकर्मणामपि वेदान्तानामपि अविद्यावद्विषयत्वव्यवस्थापनम् । (भा.) ... ... ... ... | ४३ | १ |
| ११७ | वर्णाश्रमवयोवस्थाविशेषाध्यासाश्रयेण शास्त्रप्रवृत्तिः । ... ... | ४४ | ७ |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| ११८ सर्वानर्थप्रहाणार्थसर्वशास्त्रप्रवृत्त्यन्यथानुपपत्तिरपि सर्वाध्यासे प्रमाणम्। | ४५ | ९ |
| ११९ अध्यासभाष्यार्थनिष्कर्षः। ... | ४५ | २० |

इत्यध्यासभाष्यविषयाः।


## अथ जिज्ञासाधिकरणविषयाः।


| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| १ समस्तदुःखोपशमरूपानन्दैकरसपरमप्रयोजनत्वं ब्रह्मज्ञानस्य संशयो ब्रह्मणि च जिज्ञासया सूच्यते इति जिज्ञासासूत्रस्य शास्त्रादित्वस्थापनम्। (भा.) ... ... ... ... | ४६ | ११ |
| २ लघूनि सूचितार्थानीति सूत्रलक्षणविवरणम्। (प.) ... ... ... | ४७ | १ |
| ३ अथैष ज्योतिरित्यत्रेवानन्तर्यार्थोऽथशब्द इति निरूपणम्। (प.)... | ४७ | ३ |
| ४ विशेषणीभूतब्रह्मतत्प्रमाणाद्यारम्भार्थत्वमथशब्दस्य कार्यान्तरपरिसंख्याफलकप्रैषानुवचने विशेषणीभूतदण्डस्य अप्राप्तदण्डप्रैषवानिति वाक्ये विधिवन्न संभवतीत्यादिनिरूपणम्। (प.) ... ... ... ... | ४७ | ९ |
| ५ मीमांसाशब्दस्य पूजितविचारवचनत्वम्। (प.) ... ... ... | ४८ | १ |
| ६ जिज्ञासाया अमीमांसात्वात् योगानुशासनवदनधिकार्यत्वम्। (भा.) | ४८ | १ |
| ७ लक्षितविचाराधिकारार्थोऽथशब्द इति शङ्कातत्परिहारौ। ... ... | ४८ | २ |
| ८ मङ्गलस्यावाच्यस्यालक्ष्यस्य च ज्ञाप्यस्य न वाक्यार्थेऽन्वय इति नाथशब्दार्थत्वम्। (भा.) ... ... | ४८ | ६ |
| ९ ब्रह्मजिज्ञासाहेतुपूर्वप्रकृतापेक्षत्वेऽथशब्दस्येष्टापत्तिपक्षः, विकल्पाप्रतिभानेनाथशब्दस्य पूर्वप्रकृतापेक्षपरत्वनिरासश्च। (भा.) ... ... | ४९ | २ |
| १० अथैष ज्योतिरित्यत्र विकल्पाभावेऽपि पूर्वप्रकृतापेक्षोऽथशब्दः स्वीकृत इति वार्तिकविरोधशङ्कायाः तस्यानन्तर्यार्थपरत्वेन निरासः। (प.) ... | ४९ | २ |
| ११ वेदाध्ययनानन्तर्यमथशब्दार्थ इति पक्षेऽत्रत्याथशब्दवैयर्थ्यशङ्कापरिहारः। (प.) ... ... ... | ४९ | १२ |
| १२ धर्मशब्देन ब्रह्मणोऽपि ग्रहणेऽथातो ब्रह्मजिज्ञासेति पृथक्शास्त्रवैयर्थ्यशङ्काविलक्षणन्यायसंग्रथनेन तत्सार्थक्योपपादनं पूर्वोत्तरतन्त्रयोरैक्याभ्युपगमः तत्र प्रौढ्या सिद्धान्तिनामपि मतान्तरसूचनं च। (प.) ... | ४९ | १४ |
| १३ प्रौढ्यापि पूर्वोत्तरयोः तन्त्रयोरैक्याभ्युपगमोऽनुपपन्नः; ब्रह्मसन्यासापलपनतत्स्वीकारदेवताप्रत्याख्यानतदङ्गीकारविधिशेषतया तयाविनाच प्रामाण्यस्वीकारादिविरुद्धसिद्धान्तत्वाज्जैमिनिबादरायणयोरिति शङ्का। (प.) ... ... ... ... | ५० | ९ |
| १४ ब्रह्मसंन्यासदेवतापलापानां द्वादशलक्षण्यामसूत्रितत्वेन आधानपवमानेष्टिजन्यसंस्कारनिचयमाहवनीयशब्दार्थमभ्युपगच्छता तत्संस्काराधारदेवताया अप्यभ्युपगमेन तिर्यगधिकरणे स्पष्टमभ्युपगमेन च देवतायां विरोधाभावेन विधिशेषतया प्रामाण्यसिद्धान्तस्य जैमिनीयस्यार्थवादमात्रविषयत्वेन ब्रह्मवाक्याविषयत्वेन तत्रापि अविरोधेन चैकप्रबन्धतोपपादनम्॥ ... ... ... | ५० | २२ |
| १५ वेदाध्ययनानन्तर्यस्य वेदान्ताध्ययनानन्तर्यस्य वाथशब्दार्थत्वनिरासः। (भा.) ... ... ... ... | ५१ | २ |
| १६ धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वादिग्रन्थस्य वेदान्तभागाविवक्षितार्थत्वशङ्कानिरासार्थं अतःशब्देन वेदार्थस्य विवक्षितत्वादिति विवक्षणवत् एकदेशाध्ययनासंभवेन सर्ववेदाध्ययनानन्तर्यमेवाथशब्दार्थ इति सूचनार्थत्वोपपादनम्। (प.) ... | ५१ | २० |
| १७ विविदषन्तिवाक्यावगतस्य कर्मणां ब्रह्मज्ञाने विनियोगस्य वाक्यादेव न्यायादिसमवेतयोग्यतावगमपुरस्सरात्तदवगमसंभवेन ज्ञानोत्पत्तावनुपयोगेन कल्मषनिबर्हणद्वारा पुरुषसंस्कारद्वारा ऋणापाकरणद्वारा संयोगपृथक्त्वेन साक्षादेव वा ब्रह्मसाक्षात्कारफलाया ब्रह्मभावनायाः सर्वापेक्षासूत्रसिद्धत्वेन तदनुष्ठानार्थमपेक्षितकर्मविचारानन्तर्यमथशब्दार्थ इति शङ्का। (भा.) ... ... | ५१ | ४ |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अथ यथाश्रयभावाधिकरणविषयाः ।** | | |
| १ कर्माङ्गव्यपाश्रयप्रत्ययानां समुच्चितानामनुष्ठानम् । ... ... ... | ८६५ | १ |
| २ उपदेशसाम्यादपि । ... ... | ८६५ | ५ |
| ३ क्षतसंधानलिङ्गादपि समुच्चयः । ... | ८६५ | ८ |
| ४ ओंकारस्योपास्यस्य वेदत्रयसाधारण्यादुपासनानां समुच्चयः । ... | ८६६ | २ |
| ५ सिद्धान्तः—उपासनानां सहभावाश्रुतेर्न समुच्चयः । ... ... ... | ८६६ | ९ |
| ६ श्रुतिः प्रत्ययानामसहभावं दर्शयति । | ८६६ | २२ |
| इति तृतीयाध्यायस्य तृतीयः पादः । | | |

## तृतीयाध्याये चतुर्थः पादः ॥ ४ ॥

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अथ पुरुषार्थाधिकरणविषयाः ।** | | |
| १ वेदान्तविहितात्मज्ञानस्य क्रियानुप्रवेशमन्तरेणैव पुरुषार्थहेतुत्वम् । ... | ८६८ | ३ |
| २ पूर्वपक्षः—आत्मविज्ञानस्य कर्मशेषत्वादात्मज्ञाने या फलश्रुतिस्तस्या अर्थवादत्वम् । ... ... ... | ८७० | २ |
| ३ ब्रह्मविदां कर्माचरणदर्शनं विद्यायाः कर्मशेषत्वे लिङ्गम् । ... ... | ८७१ | १० |
| ४ श्रुतिर्विद्यायाः कर्मशेषत्वं दर्शयति । | ८७२ | ६ |
| ५ विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनम् । ... ... ... ... | ८७३ | २ |
| ६ समस्तवेदार्थविज्ञानवतः कर्मविधानादुपनिषदर्थविज्ञानस्य कर्माङ्गत्वम् । | ८७३ | ५ |
| ७ यावज्जीवं कर्मनियमोऽपि विज्ञानस्य कर्माङ्गत्वे लिङ्गम् । ... ... | ८७३ | ११ |
| ८ सिद्धान्तः—शारीरादीश्वरस्याधिकोपदेशाद्बादरिमतमुपनिषदात्मविज्ञानस्य स्वातन्त्र्येण पुरुषार्थहेतुत्वमेव सम्यक् । ... ... ... ... | ८७३ | १५ |
| ९ तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः । ... ... ... | ८७४ | १७ |
| १० विद्यायाः कर्मशेषत्वे प्रमाणतयोपन्यस्तश्रुतिरसार्वत्रिका । ... ... | ८७४ | २८ |
| ११ समन्वारम्भवचनस्य विभागेन व्यवस्था । भाष्यकारमतेन तद्व्याख्यानं च । | ८७४ | ३१ |
| १२ वेदार्थविज्ञानवतः कर्मविधानादित्यस्य खण्डनम् । ... ... ... | ८७५ | ९ |
| १३ यावज्जीवं कर्मनियमस्याविद्वद्विषयत्वम् । ... ... ... ... | ८७५ | १६ |
| १४ उक्तकर्मनियमस्य विद्यास्तुत्यर्थत्वम् । | ८७५ | १९ |
| १५ स्वेच्छातः कर्मसाधनप्रजादित्यागलिङ्गाद्विद्या स्वतन्त्रफला । ... ... | ८७५ | २४ |
| १६ कर्माधिकारोच्छेदकत्वादपि न विद्या कर्माङ्गम् । ... ... ... ... | ८७६ | २ |
| १७ ऊर्ध्वरेतःसु चाश्रमेषु विद्याश्रवणान्न विद्या कर्माङ्गम् । ... ... ... | ८७६ | ७ |
| **अथ परामर्शाधिकरणविषयाः ।** | | |
| १ ऊर्ध्वरेतसामाश्रमित्वे प्रमाणाभावः । | ८७७ | २ |
| २ गार्हस्थ्यवदाश्रमान्तरमपि प्रतिपत्तव्यम् । ... ... ... ... | ८७९ | २ |
| ३ स्कन्धश्रुतेरुपरिधारणवद्विधित्वम् । | ८७९ | १८ |
| ४ परामर्शपक्षेऽपि संस्तवसामर्थ्यात्पारिव्राज्यं विधेयम् । ... ... | ८८० | ७ |
| **अथ स्तुतिमात्राधिकरणविषयौ ।** | | |
| १ स एष रसानां रसतम इत्यादिश्रुतीनां स्तुत्यर्थत्वमिति पूर्वपक्षः । कल्प्यं विध्यर्थत्वमिति सिद्धान्तः । ... | ८९० | २ |
| २ विधिश्रुतेर्विध्यर्थत्वमुद्गीथादिश्रुतीनाम् । ... ... ... ... | ८९४ | ७ |
| **अथ पारिप्लवाधिकरणविषयौ ।** | | |
| १ उपनिषदाख्यानानां पारिप्लवार्थत्वमिति पूर्वपक्षः । पारिप्लवे कथानां विशिष्योक्तत्वान्नासां पारिप्लवार्थत्वम् । ... | ८९५ | २ |
| २ आख्यानश्रुतीनां विद्याशेषत्वम् । ... | ८९६ | ६ |
| **अथ अग्नीन्धनाद्यधिकरणविषयः ।** | | |
| १ विद्याया आश्रमकर्मणामनपेक्षा । | ८९७ | २ |
| **अथ सर्वापेक्षाधिकरणविषयौ ।** | | |
| १ आश्रमकर्मणां विद्याया उत्पत्तावपेक्षा स्वार्थसिद्धावनपेक्षा । ... ... | ८९८ | २ |
| २ यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्याश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । ... ... | ८९९ | ३ |
| **अथ सर्वान्नानुमत्यधिकरणविषयाः ।** | | |
| १ प्राणसंवादे 'न ह वा एवंविदि' इत्यनेन सर्वान्नाभ्यनुज्ञानं विद्याङ्गतया विधीयते इति पूर्वपक्षः । ... ... | ९०० | १२ |
| २ प्राणान्नविज्ञानप्रशंसार्थोऽर्थवादोऽयं नहवेति सिद्धान्तः । ... ... | ९०१ | ५ |
| ३ एवं सति भक्ष्याभक्ष्यशास्त्रमबाधितं भविष्यति । ... ... ... | ९०२ | ९ |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| ४ आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिः। आपद्यपि मद्यपाननिषेधः। | ९०२ | १२ |
| ५ उदाहृतस्मृतिमूलभूतकाठकश्रुतिप्रदर्शनम्। ... ... ... ... | ९०२ | १७ |
| **अथ आश्रमकर्माधिकरणविषयाः।** | | |
| १ आश्रममात्रनिष्ठेन मुमुक्षुणाप्याश्रमकर्माण्यनुष्ठेयानि। ... ... | ९०३ | २ |
| २ आश्रमकर्मणां विद्यासहकारित्वेऽपि न नित्यानित्यसंयोगविरोधः। ... | ९०४ | २ |
| ३ आश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे चाभिन्ना एवाग्निहोत्रादयः। | ९०५ | ८ |
| ४ ब्रह्मचर्यादीनामाश्रमकर्मणां क्लेशतनूकरणेन विद्योत्पत्तिहेतुत्वम्। ... | ९०६ | ७ |
| **अथ विधुराधिकरणविषयाः।** | | |
| १ अन्यतमाश्रमप्रतिपत्तिहीनानामपि विद्यायामधिकारः। ... ... | ९०७ | २ |
| २ संवर्तप्रभृतीनामनपेक्षिताश्रमकर्मणामपि महायोगित्वस्मरणम्। ... | ९०७ | ८ |
| ३ विधुरादीनां जपोपवासादिभिर्विद्यानुग्रहः। ... ... ... ... | ९०७ | ११ |
| ४ अनाश्रमित्वापेक्षयाश्रमवर्तित्वं ज्यायो विद्यासाधनम्। ... ... | ९०८ | ४ |
| **अथ तद्भूताधिकरणविषयः।** | | |
| १ ऊर्ध्वरेतसां प्रत्यवरोहाभावः। ... | ९०८ | १० |
| **अथ आधिकारिकाधिकरणविषयौ।** | | |
| १ नैष्ठिकब्रह्मचारिणां प्रमादात्प्रच्युतब्रह्मचर्याणां प्रायश्चित्ताभावः। ... | ९०९ | ८ |
| २ गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यविशरणमुपपातकं तस्मान्नैष्ठिकस्यापि ब्रह्मचारिणोऽस्ति प्रायश्चित्तम्। ... | ९०९ | १५ |
| **अथ बहिरधिकरणविषयः।** | | |
| १ कृतनिर्णेजना अपि नैष्ठिकाः शिष्टैर्बहिष्कर्तव्याः। ... ... ... | ९११ | २ |
| **अथ स्वाम्यधिकरणविषयाः।** | | |
| १ फलाङ्गव्यपाश्रयेषूपासनेषु यजमानस्य कर्तृत्वमित्यात्रेयः। ... ... | ९१२ | २ |
| २ ऋत्विक्कर्माण्युपासनानीति औडुलोमिः | ९१६ | ४ |
| ३ श्रुतिरपि ऋत्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति। ... | ९१६ | ११ |
| **अथ सहकार्यन्तरविध्यधिकरणविषयाः।** | | |
| १ 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इति बृहदारण्यकश्रुत्यां न मौनविधिरिति पूर्वपक्षः। ... ... ... ... | ९१७ | ३ |
| २ अपूर्वत्वादस्ति मौनविधिरिति सिद्धान्तः। ... ... ... ... | ९१८ | ७ |
| ३ बहुलायाससाध्यधर्मबाहुल्याद्गृहिणोपसंहारश्छान्दोग्ये। ... ... | ९२१ | ६ |
| ४ मौनगार्हस्थ्यवद्वानप्रस्थगुरुकुलवासयोरप्याश्रमयोः श्रुतिमत्त्वम्। ... | ९२१ | १० |
| **अथ अनाविष्काराधिकरणविषयः।** | | |
| १ संन्यासिनो विधीयमानं बाल्यं भावशुद्धिरूपमिहाश्रीयते। ... ... | ९२२ | ६ |
| **अथ ऐहिकाधिकरणविषयः।** | | |
| १ ऐहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षया। ... ... ... | ९२३ | १० |
| **अथ मुक्तिफलाधिकरणविषयः।** | | |
| १ मुक्तावुत्कर्षनिकर्षात्मकोऽतिशयो नोपपद्यते। ... ... ... | ९२५ | ९ |


इति तृतीयाध्यायस्य चतुर्थः पादः।

इति तृतीयाध्यायः॥

## अथ चतुर्थाऽध्याये प्रथमः पादः।


| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अथ आवृत्त्यधिकरणविषयाः।** | | |
| १ श्रवणादीनां यावदात्मदर्शनमावर्तनम्। ... ... ... ... | ९२८ | ४ |
| २ निर्विशेषे ब्रह्मणि प्रमोत्पत्तावावृत्त्यानर्थक्यम्। ... ... ... ... | ९३० | २ |
| ३ प्रतिबन्धनिरासेनावृत्तेरर्थवत्त्वम्।... | ९३२ | ५ |
| **अथात्मत्वोपासनाधिकरणविषयः।** | | |
| १ ध्यात्रा ब्रह्म स्वान्यत्वेन ग्रहीतव्यमिति पूर्वपक्षः। आत्मत्वेनेति सिद्धान्तः। ... ... ... ... | ९३७ | २ |
| **अथ प्रतीकाधिकरणविषयः।** | | |
| १ प्रतीकेष्वात्मदृष्टिर्न क्रियते। ... | ९३९ | ५ |
| **अथ ब्रह्मदृष्ट्यधिकरणविषयः।** | | |
| १ प्रतीकेष्वेव ब्रह्मदृष्ट्यध्यारोपणम्। | ९४१ | ८ |
| **अथ आदित्यादिमत्यधिकरणविषयः।** | | |
| १ उद्गीथादिष्वेवादित्यादिमतयः। ... | ९४४ | २ |
| **अथ आसीनाधिकरणविषयाः।** | | |
| १ उपासनायामासीनतानियमः। ... | ९४८ | ४ |
| २ आसीने एव ध्यायतेरुपचर्यमाणत्वम्। | ९४९ | ७ |
| ३ पृथिव्यादिष्वप्यचलत्वमपेक्ष्यैव ध्या- | | |

विषयः — पृष्ठं — पङ्क्तिः

यतिवाद उपासनस्यासीनकर्मत्वे लिङ्गम्। ... ... ... ... ९४९ ११
४ उपासनस्यासनाङ्गत्वे शिष्टस्मृतिः। ९४९ १४

अथैकाग्रताधिकरणविषयः।

१ अङ्गानाश्रितोपासनेषु नास्ति दिग्देशकालनियमः। यत्रैकाग्रता चित्तस्य तत्रैवोपासना। ... ... ... ९४९ १८

अथ आप्रायणाधिकरणविषयः।

१ अभ्युदयफलानामुपासनानामा प्रायणादभ्यासः। ... ... ... ९५० १०

अथ तदधिगमाधिकरणविषयः।

१ ब्रह्माधिगमे उत्तरपूर्वयोर्दुरितयोः क्षयः। ... ... ... ... ९५२ ५

अथ इतरासंश्लेषाधिकरणविषयः।

१ विदुषोऽविशेषेण पुण्यपापयोरश्लेषविनाशौ। ... ... ... ... ९५५ ४

अथानारब्धाधिकरणविषयः।

१ अनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षयः। ... ... ९५६ ११

अथाग्निहोत्राद्यधिकरणविषयौ।

१ अग्निहोत्रादीनां विद्योपयोगिनामविनाशः। ... ... ... ... ९५९ ७
२ अग्निहोत्रादिनित्यव्यतिरिक्तस्य फलाभिसंधानेन क्रियमाणस्य सुहृदः साधुकृत्यादिविनियोगः। ... ... ९६१ ७

अथ विद्याज्ञानसाधनत्वाधिकरणविषयः।

१ विद्यासंयुक्तं विद्याविहीनं चोभयविधमपि कर्म ब्रह्माधिगमहेतुः। ... ९६१ १३

अथ इतरक्षपणाधिकरणविषयः।

१ आरब्धकर्मक्षये विदुषः कैवल्यमवश्यं भावि। ... ... ... ९६४ २

इति चतुर्थाध्यायस्य प्रथमः पादः।

## चतुर्थाध्याये द्वितीयः पादः॥ २॥

अथ वागधिकरणविषयौ।

१ 'वाङ्मनसि संपद्यते' इत्यादौ वागादीनां वृत्त्युपशममात्रं विवक्षितम्। ९६६ २
२ वाच्युक्तन्यायस्य चक्षुरादावतिदेशः। ९६७ ९

अथ मनोधिकरणविषयः।

१ मनसः प्राणे वृत्त्यप्ययः। ... ९६५ १५





विषयः — पृष्ठं — पङ्क्तिः

अथाध्यक्षाधिकरणविषयाः।

१ प्राणस्य विज्ञानात्मनि वृत्तिप्रलयः। ९६८ १५
२ प्राणस्तेजसीति प्राणसंपृक्तस्य जीवस्य तेजःसहचरितेषु भूतेष्ववस्थानम्। ९७१ २
३ शरीरान्तरप्रेप्सावेलायां जीवो नैकस्मिन्नेव तेजस्यवतिष्ठते सूक्ष्मस्यापि शरीरस्यानेकात्मकत्वात्। ... ... ९७१ १०

अथ आसृत्युपक्रमाधिकरणविषयः।

१ विद्वदविदुषोः समानोत्क्रान्तिरर्चिरादिमार्गपर्यन्तम्। ... ... ९७२ ९

अथ संसारव्यपदेशाधिकरणविषयाः।

१ तेजःप्रभृतीनां परमात्मनि बीजभावावशेषा संपत्तिः। ... ... ९७४ २
२ अस्माच्छरीरात्प्रवसतो जीवस्याश्रयभूतं भूतान्तरसहितं तेजः स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति। ... ९७५ २
३ सूक्ष्मत्वादेवास्य शरीरस्य स्थूलशरीरदाहेऽप्यनुपमर्दः। ... ... ९७६ ४
४ स्थूलशरीरे विज्ञायमानस्योष्मणः सूक्ष्मशरीरव्यपाश्रयत्वम्। ... ... ९७६ ७

अथ प्रतिषेधाधिकरणविषयाः।

१ आत्यन्तिकेऽमृतत्वे यो गत्युत्क्रान्तिप्रतिषेध उक्तः स शरीरापादान इत्यस्ति ब्रह्मविदोऽपि देहादुत्क्रान्तिरिति पूर्वपक्षः। ... ... ... ९७७ २
२ एकेषां समाम्नातॄणामुत्क्रान्तेर्देहापादानत्वप्रतिषेधस्य स्पष्टोपलम्भादुक्तप्रतिषेधोऽपि देहापादानः। ... ९७७ १२
३ महाभारतादिष्वपि परब्रह्मविदो गत्युत्क्रान्त्यभावः स्मर्यते। ... ... ९७९ १२

अथ वागादिलयाधिकरणविषयः।

१ ब्रह्मविद इन्द्रियादीनि परस्मिन्ब्रह्मणि प्रलीयन्ते। ... ... ... ९८० २

अथाविभागाधिकरणविषयः।

१ विदुषः कलाप्रलयो निरवशेषो भवति। ... ... ... ... ९८१ २

अथ तदोकोधिकरणविषयः।

१ मूर्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्य इतरे। ... ... ९८१ ९

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अथ रश्म्यधिकरणविषयौ ।** | | |
| १ उपासकस्याविशेषेण रात्रावहनि च रश्म्यनुसारित्वम् । ... ... | ९८२ | ११ |
| २ रात्रौ प्रेतस्य नाडीरश्मिसंबन्धविश्लेषान्न रश्म्यनुसारित्वमित्याशङ्कानिरासः | ९८३ | ४ |
| **अथ दक्षिणायनाधिकरणविषयौ ।** | | |
| १ दक्षिणायने मृतोऽपि विद्वान्प्राप्नोत्येव विद्याफलम् । ... ... ... | ९८४ | २ |
| २ स्मृतौ श्रूयमाणस्य कालभेदविनियोगस्य स्मार्तोपासनासंबद्धत्वम् । ... | ९८४ | १२ |
| इति चतुर्थाध्यायस्य द्वितीयः पादः । | | |


## चतुर्थाध्याये तृतीयः पादः ॥ ३ ॥


| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अथार्चिराद्यधिकरणविषयः ।** | | |
| १ अर्चिरादयः परस्परं भिन्नाः सृतय इति पूर्वपक्षः । एकैवेयं सृतिरनेकविशेषणेति सिद्धान्तः । ... ... | ९८६ | ३ |
| **अथ वाय्वधिकरणविषयः ।** | | |
| १ अर्चिरादिपर्वसु संवत्सरादूर्ध्वं देवलोकस्य ततो वायोश्च निवेशः । ... | ९८८ | १ |
| **अथ तडिदधिकरणविषयः ।** | | |
| १ तडित उपरिष्टाद्वरुणलोकः । ... | ९९० | ३ |
| **अथ आतिवाहिकाधिकरणविषयाः ।** | | |
| १ अर्चिरादयो मार्गचिह्नानि भोगभूमयो वेति पूर्वपक्षः । गन्तॄणां नेतारो देवतात्मान इति सिद्धान्तः । ... | ९९१ | २ |
| २ अर्चिरादीनामचेतनत्वेऽनेतृत्वे चोभयोरपि अज्ञत्वादूर्ध्वगत्यनुपपत्तिः । | ९९२ | ५ |
| ३ विद्युदभिसंभवादूर्ध्वं वैद्युतेनैव पुरुषेणातिवाह्यमाना ब्रह्मलोकं गच्छन्ति। | ९९३ | ६ |
| **अथ कार्याधिकरणविषयाः ।** | | |
| १ आर्चिरादिमार्गेण सगुणमपरं ब्रह्म गमयत्यमानवः पुरुष इति बादरिः । | ९९४ | २ |
| २ बहुवचनलोकशब्दाधिकरणाधिकर्तृव्यनिर्देशैरप्यपरमेव ब्रह्म गमयतीति निर्णीयते । ... ... ... ... | ९९६ | २ |
| ३ परब्रह्मसामीप्यादपरस्मिन्नपि ब्रह्मणि ब्रह्मशब्दप्रयोगः । ... ... ... | ९९७ | २ |
| ४ कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने तत्रैवोत्पन्नसम्यग्दर्शना हिरण्यगर्भेण सह परंब्रह्म प्रतिपद्यन्ते ब्रह्मलोकगताः। | ९९७ | ९ |
| ५ स्मृतिरपि पूर्वोक्तमर्थमनुजानाति । | ९९७ | १३ |
| ६ पूर्वपक्षः—परमेव ब्रह्म गमयतीति जैमिनिराचार्यो मन्यते । ... ... | ९९७ | १८ |
| ७ श्रुतिरपि गतिपूर्वकममृतत्वं दर्शयति। | ९९७ | २२ |
| ८ प्रजापतिवेश्मप्रतिपत्तेः प्रकरणात्परविषयत्वम् । ... ... ... | ९९७ | २८ |
| ९ पूर्वाणि पूर्वपक्षसूत्राण्युत्तराणि सिद्धान्तसूत्राणीति मतखण्डनम् । ... | ९९८ | ५ |
| **अथ अप्रतीकालम्बनाधिकरणविषयौ ।** | | |
| १ प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान् विकारालम्बनान् ब्रह्मलोकं नयति । ... ... ... ... | १००२ | ८ |
| २ प्रतीकतारतम्येन फलतारतम्यश्रुतेर्न प्रतीकध्यायिनां ब्रह्मप्राप्तिः । ... | १००३ | ८ |
| इति चतुर्थाध्यायस्य तृतीयः पादः । | | |


## चतुर्थाध्याये चतुर्थः पादः ॥ ४ ॥


| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| **अथ संपद्याविर्भावाधिकरणविषयाः ।** | | |
| १ मोक्षस्वरूपं केनचिदागन्तुकविशेषेणाभिनिष्पद्यत इति पूर्वपक्षः । केवलेनात्मनाविर्भवतीति सिद्धान्तः । | १००५ | ३ |
| २ बन्धविगमपूर्वकं शुद्धेनात्मनावस्थानलक्षणः पूर्वावस्थातो मोक्षावस्थायां विशेषः । ... ... ... | १००६ | ५ |
| ३ परं ज्योतिरुपसंपद्येत्यत्र ज्योतिःशब्देनात्मावेद्यते । ... ... ... | १००६ | १६ |
| **अथाविभागेन दृष्टत्वाधिकरणविषयः ।** | | |
| १ मुक्तस्य ब्रह्माभिन्नत्वम् । ... ... | १००७ | २ |
| **अथ ब्राह्माधिकरणविषयाः ।** | | |
| १ जैमिनिः सत्यत्वादिधर्माणां सत्यत्वं मन्यते । ... ... ... ... | १००८ | २ |
| २ औडुलोमिस्तेषां धर्माणां शब्दविकल्पजत्वं मन्यते । ... ... ... | १००९ | २ |
| ३ व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तासन्त इति बादरायणः । ... ... ... ... | १००९ | १३ |
| **अथ संकल्पाधिकरणविषयौ ।** | | |
| १ अपरविद्याफलं यत्संकल्पात्पित्रादिसमुत्थानं तत्रास्ति निमित्तान्तरापेक्षेति पूर्वपक्षः । संकल्पमात्रात्पित्रादिसमुत्थानमिति सिद्धान्तः । ... | १०१० | २ |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| २ अवन्ध्यसंकल्पत्वादेव विद्वाननन्याधिपतिः । ... ... ... ... | १०११ | ८ |
| **अथाभावाधिकरणविषयाः ।** | | |
| १ प्राप्तैश्वर्यस्य विदुषः शरीराद्यभावं बादरिर्मन्यते । ... ... ... | १०११ | १३ |
| २ जैमिनिर्मनोवच्छरीरादिसद्भावं मन्यते।... ... ... ... ... | १०१२ | ७ |
| ३ बादरायण उभयविधत्वं मन्यते । | १०१३ | १ |
| ४ शरीराद्यभावे संध्यस्थानवदुपलब्धिमात्रा पित्रादिकामा उपपद्यन्ते । | १०१४ | ४ |
| ५ शरीरादिसद्भावे जाग्रद्वदुपपत्तिस्तेषाम् । ... ... ... ... | १०१४ | ७ |
| **अथ प्रदीपाधिकरणविषयौ ।** | | |
| १ संकल्पनिर्मितशरीराणि निरात्मकानीति पूर्वपक्षः । विदुषः प्रदीपवदनेकभावापत्त्या सात्मकानीति सिद्धान्तः । ... ... ... ... | १०१४ | १० |
| २ संज्ञाभाववचनस्य सुषुप्ति-कैवल्यान्यतरावस्थापेक्षत्वम् । ... ... | १०१६ | ९ |
| **अथ जगद्व्यापाराधिकरणविषयाः ।** | | |
| १ सगुणब्रह्मोपासनादीश्वरसायुज्यं गतानां निरवग्रहमैश्वर्यं भवतीति पूर्वपक्षः । जगद्व्यापारवर्जमन्यदैश्वर्यं भवतीति सिद्धान्तः । ... ... | १०१६ | १८ |
| २ आप्नोति स्वाराज्यमित्यादिप्रत्यक्षोपदेशाद्विदुषां निरवग्रहमैश्वर्यं भवतीत्यस्य निरासः । ... ... ... | १०१८ | ४ |
| ३ यथा द्विरूपे परमेश्वरे निर्गुणं रूपं नाप्नुवन्त्येवमेव निरवग्रहमैश्वर्यमपि नाप्नुवन्ति सगुणोपासकाः । ... | १०१८ | १२ |
| ४ परमेश्वरस्य विकारावर्तित्वं श्रुतिस्मृती दर्शयतः । ... ... ... | १०१९ | २ |
| ५ निर्गुणोपासकानामीश्वरेण भोगमात्रसाम्यश्रवणान्न निरवग्रहमैश्वर्यम् । | १०१९ | ७ |
| ६ देवयानेन पथा ब्रह्मलोकगतानां न पुनरावृत्तिः । ... ... ... | १०१९ | १३ |


इति चतुर्थाध्यायस्य चतुर्थः पादः ।

**इति चतुर्थाध्यायः ॥**

**समाप्तेयं सपरिमलकल्पतरूपबृंहितभामतीविलसितब्रह्मसूत्रशांकरभाष्यस्थविषयसूची ।**

ॐ तत्सत् ।

---



# आरम्भे मङ्गलपाठक्रमः—

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो महद्भ्यो नमो गुरुभ्यः ।
सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मि ॥ १ ॥
नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥ २ ॥
श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं त्रोटकं वार्तिककारमन्यानस्मद्गुरून्संततमानतोऽस्मि ॥ ३ ॥
श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ ४ ॥
शंकरं शंकराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥ ५ ॥
ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ ६ ॥
अशुभानि निराचष्टे तनोति शुभसंततिम् ।
स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं परम् ॥ ७ ॥
अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात् ।
स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः ॥ ८ ॥
ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ ९ ॥

॥ हरिः ॐ तत्सत् परब्रह्मणे नमः ॥



# ब्रह्मसूत्रशाङ्करभाष्यम्।



## भामती–वेदान्तकल्पतरु–कल्पतरुपरिमलोपबृंहितम्।

ॐ तत्सद्ब्रह्मणे नमः।

### भामती।

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽबवनयः।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम्॥ १॥

### वेदान्तकल्पतरुः।

यदज्ञातं जीवैर्बहुविधजगद्विभ्रमधरं वियद्यद्वद्बालैस्तलमलिनतायोगि कलितम्।
तदुन्मुद्रज्ञानप्रततसुखसद्ब्रह्म परमं नमस्यामः प्रत्यक्श्रुतिशतशिरोभिः प्रकटितम्॥ १॥

### कल्पतरुपरिमलः।

गुरुभिरुपदिष्टमर्थं विस्मृतमपि तत्र बोधितं प्राज्ञैः। अवलम्ब्य शिवमधीयन्यथामति व्याकरोमि कल्पतरुम्॥ १॥
कल्पकतरुमुपकुर्यां कमधिकमाकाङ्क्षितार्थमुपहृत्य। तद्दत्तैरेवार्थैर्मम मतिमीहे परिष्कर्तुम्॥ २॥
यावन्तो निविशन्ते विदुषां व्याख्यानचातुरीभेदाः। सर्वेषामपि तेषामयमवकाशं ददाति पुष्पकवत्॥ ३॥
इत्थमिहातिगभीरे कियदाशयवर्णनं मया क्रियते। तुष्यन्ति ततोऽपि बुधाः कतिपयरत्नग्रहादिवाम्बुनिधेः॥ ४॥

**यदिति। अत्र प्रत्यगिति** ब्रह्मविशेषणेन शास्त्रस्य विषयं प्रदर्श्य तत्र **सर्वेषां वेदान्तानां समन्वयः प्रथमाध्यायार्थः** श्रुतिशतेत्यादिविशेषणेन दर्शितः। शतशब्द आनन्त्यपरः; 'विश्वं शतं सहस्रं च सर्वमक्षयवाचक'मिति महाभारतवचनात्। ब्राह्मणशतं भोज्यतामित्यत्र भोजनस्येव शिरसां संख्योपसर्जनसंख्येयेनान्वयः। सकलप्रपञ्चाश्रयस्य ब्रह्मणः परिमितकर्तृत्वाद्याश्रयस्य जीवस्य चाभेदमविरोधेनोपपादयितुमुभयत्र विरुद्धधर्माणां मिथ्यात्वं **यदज्ञातमित्यादि-**विशेषणेन दर्शितम्। जीवैर्यदविज्ञानं **सद्बहुविधस्य** प्रतिजीवं व्यवस्थितकर्तृत्वादिरूपस्य साधारणस्य घटपटादिरूपस्य च प्रपञ्चविलासस्य **धरं** धारकम्। **कलितम्** अहं कर्ताहं भोक्ता सन् घटः सन् पट इत्यादिरूपेणावगतम्। यथा वियत् बालैरविज्ञाततत्त्वं सत् तलमलिनतायोगि कलितमित्यर्थः। एवमव्याख्यायामुपमानोपमेये वैरूप्येण निर्दिष्टे स्यातां, नेयार्थत्वदोषश्च प्रसज्यते। स्फुटं हि वैरूप्यं यद्ब्रह्मजीवैरज्ञातं सद्बहुविधानां जगद्विषयविभ्रमाणां धारकं, यथा वियद्बालैः तलमलिनतायोगित्वेन कलितं भ्रान्त्यानुभूतमिति। यथाश्रुतयोजनायां[illegible]त्र जीवास्तावदुपमेयब्रह्मविषयाज्ञानाश्रयत्वेन निर्दिष्टाः, बालास्तूपमानवियदध्यस्ततलमलिनताविषयविभ्रमाश्रयत्वेनेत्य**येकं वैरूप्यम्;** ब्रह्म प्रपञ्चविषयविभ्रमधरत्वेन निर्दिष्टं, वियत्तु तलमलिनतायोगित्वेन तद्विषयविभ्रमस्तु कलितमिति पश्चात्तदन्वयी निर्दिष्ट **इत्यन्यद्वैरूप्यम्;** ब्रह्म विभ्रमधरमिति क्रियायां कर्तृत्वेन निर्दिष्टं, वियत्तु कलितमिति तस्यां कर्मत्वे**नेत्यपरं वैरूप्यम्।** विभ्रमधरशब्दश्च विभ्रमविषये न शक्तः, अप्रसिद्धौ तादृशलक्षणा च नेयार्था। एवंविधमुपमानोपमेययोर्निर्देशवैरूप्यं नेयार्थलक्षणां च काव्यसरणिविदो नानुमन्यन्ते इत्येवमाशङ्कास्पदं दोषचतुष्टयमप्यज्ञातमित्यस्य वियत्यप्यन्वयेन कलितमित्यस्य ब्रह्मण्यप्यन्वयेन जगद्विभ्रमशब्दस्य जगद्रूपकार्यपरत्वेन च परिहृतं भवति। वियदुदाहरणेन विरुद्धधर्माणामध्यस्तत्वविभावनमनैन्द्रियके कथमपरोक्षाध्यास इति शङ्कानिराकरणं च कृतम्। यद्यप्यज्ञातमित्यस्य

## वेदान्तकल्पतरुः ।

बोधाभीषुशतैरबोधतिमिरं हृद्व्योमगं दारयन्प्रज्ञावारिधिमुन्नतिं च गमयन्सोमः सदोदेति यः ।
तं संसारसहस्ररश्मिजनितक्लेशापहं दक्षिणामूर्तिं निर्मलयोगिचिन्त्यचरणाम्भोजं भजे शंकरम् ॥ २ ॥
माद्यन्मोहमहेभकुम्भदलनप्रोद्भूतसन्मौक्तिकद्योतालंकृतसत्सुखाद्वयवपुः श्रीमान्नृकण्ठीरवः ।
प्रह्लादोक्तगिरः प्रमाणनविधौ दिव्याकृतिः स्तम्भतो निर्यातः प्रकटीभवेत्स हृदयाम्भोजे ममाखण्डितम् ॥ ३ ॥
ललितैः पदविन्यासैर्या नृत्यति विबुधवदनरङ्गेषु । सच्छास्त्रवेदवाद्यैः सरस्वतीं तां नमस्यामः ॥ ४ ॥

## कल्पतरुपरिमलः ।

'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्तमानार्थविहितक्तप्रत्ययान्तत्वे 'क्तस्य च वर्तमाने' ( पा. २।३।६७ ) इति षष्ठ्या भाव्यं; तथापि भूतार्थक्तप्रत्ययान्तत्वमिह ग्राह्यम् । नच—क्तस्य मत्याद्यर्थेभ्यो विशिष्य वर्तमानार्थे विधानात् तक्रकौण्डिन्यन्यायेन भूतार्थत्वबाधः स्यादिति–वाच्यम्; **तेनेत्य**धिकारे ( पा. ४।२।४७ ) 'दृष्टं साम' ( 'उपज्ञाते' इति ) सौत्रनिर्देशेन भाष्यादिषु 'कलिना दृष्टं साम कालेयं' ( पा. ४।३।११५ ) 'पाणिनिना उपज्ञातं पाणिनीय'मिति तदुदाहरणदर्शनेन च बुद्ध्यर्थेभ्यो भूतार्थेऽपि क्तप्रत्ययानुमत्यवगमात् । केनचिद्रूपेणावगते रूपान्तरेणानवगते शुक्त्यादावध्यासो दृष्टः, अतो निर्विशेषे स न संभवतीत्याशङ्कानिरासायोन्मुद्रेत्यादिविशेषणम् । न केवलं सदेव ब्रह्म किंतु चिदानन्दरूपमपि । यद्यपि तत्र चिदानन्दरूपत्वमपि बाह्याध्यात्मिकसकलविषयसाक्षित्वात् परमप्रेमास्पदत्वाच्च कर्तृत्वाद्यध्यासकालेऽपि भासतएव; तथापि ज्ञानं विषयविशेषानवच्छिन्नं सुखमपरिच्छिन्नं च सत् तदा न भासत इति दर्शयितुमुन्मुद्रत्वप्रततत्व**विशेषणे ॥ १ ॥ यद्यपि सकलप्रपञ्चकारणं मायाशबलं सविशेषमीश्वररूपं ब्रह्म नमस्कार्यं, नतु निर्विशेषं निरस्तकर्तृकर्मभावं; तथापि तत्र तत्त्वदृष्ट्या प्रत्यगभेदानुसंधानं युज्यते । अतएवाहंग्रहोपासनासु सर्वास्वभेदानुसंधानमिष्यते । चिदानन्दघनस्य ब्रह्मणः प्राप्तौ साधनं 'फलमत उपपत्तेः' ( ब्र. अ. ३ पा. २ सू. ३८ ) इति न्यायेनोपासनाप्रसादितं ब्रह्मैवेति दर्शयति—**बोधेति । अत्र शङ्करमित्यनेन** मुक्तिसुखप्रदत्वं, **संसारेत्यादिविशेषणेन** मुक्तिसुखाभिव्यक्त्युपपादकं तदावरकानर्थनिवृत्तिहेतुत्वं, **निर्मलेत्यादिवि**शेषणेनोक्तफलार्थं संसारोद्विग्नैर्भजनीयत्वं, **दक्षिणामूर्तिमित्यने**नोक्तार्थस्य 'अजात इत्येवं कश्चिद्भीरुः प्रपद्यते' 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्य'मिति श्वेताश्वतरोपनिषन्मन्त्रप्रमाणकत्वं च दर्शितम् । उक्तफलं न श्रवणादिकं विनेति तत्संपादकत्वं पूर्वार्धेन दर्शितम् । यथा खल्वमृतांशुस्तत्तद्गगनप्रदेशावच्छिन्नस्वांशरूपैरंशुभिर्गगनगतं तिमिरमपनयन् वारिधिं चोद्वेलयन् प्रतिदिनमुदेति, एवं बहुशोऽनेकवेदान्तवाक्यश्रवणजन्यान्तःकरणवृत्त्यवच्छेदककृतभेदस्वांशरूपचित्प्रतिबिम्बैरन्तःकरणगततत्तद्वाक्यार्थाज्ञानमपनयन् ऊहापोहकौशलसाध्यमननचित्तैकाग्र्यसाध्यनिदिध्यासनरूपां प्रज्ञां चाभिवर्धयन्नुमया 'तत्राकाशे स्त्रियमाजगाम उमां हैमवतीं बहु शोभमाना'मिति तलवकारिणामुपनिषदि ब्रह्मविद्याप्रदत्वेन प्रसिद्धया सहितः सन् यः सदोदेति नित्यमेव स्फुरतीति तदर्थः । **अत्र** सोम इति श्लेषोत्थापितो बोधाभीष्वित्यादिषु रूपकालंकारः ॥ २ ॥ अथ कृतश्रवणमनननिदिध्यासनस्य साक्षात्कारोदयेन प्राप्यं फलमपि ब्रह्मैवेति दर्शयति—**माद्यदिति ।** माद्यन् प्रपञ्चरूपेणोज्जृम्भमाणो मोह एव महेभः तस्य कुम्भ इव कुम्भः मूलाविद्याभागः; वक्ष्यमाणमौक्तिकद्योतालंकार्यकर्तृकदलनविषयत्वसाम्यात् । अतएव महेभत्वरूपणस्य मोहवत्कुम्भत्वरूपणस्याधिष्ठानरूपः कश्चित्तदंशो नोक्त इति न्यूनता न शङ्कनीया; 'मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्चलत्तरलतारकाकपटकीर्णमुक्तागण' इत्यत्र प्रत्यग्रोदितचन्द्रमयूखसंसृष्टतिमिरपुरोभागस्येवात्र ब्रह्मसाक्षात्कारदलनीयमूलाविद्याभागस्यातिशयोक्त्या कुम्भत्वेनाध्यवसानात् । तस्य **दलनं** निवर्तकम् प्रोद्भूतं जननं यस्य तथाभूतः सन्नुत्तमो, **मौक्तिको** मुक्तिप्रयोजनः, **द्योतः** प्रकाशो वृत्तिसाक्षात्कारः, **तेनालंकृतम**भिव्यक्तं सत्, सुखात्मकं वपुः स्वरूपमस्येति तथोक्तः । मुक्तिः प्रयोजनमस्येत्यर्थे 'प्रयोजनम्' ( पा. ५।१।१०९ ) इति सूत्रेण ठक्प्रत्ययान्तो मौक्तिकशब्दः । **यद्वा** माद्यन्मोहमहेभकुम्भस्य **दलनेन** निवर्तनेन, **प्रोद्भूतः** अभिव्यक्तः, **सन्मौक्तिकसदृशः** घर्षणनिर्मलीभूतमुक्ताफलसदृशः, **द्योतः** स्वरूपसाक्षात्कारः, **तेनालंकृतं** प्रकाशमानं, सत् सुखाद्वयं वपुरस्येति तथोक्तः । **सन्मौक्तिकद्योतेत्यत्र** शाकपार्थिवादिवन्मध्यमपदलोपिसमासः । द्योतस्य सुखाभेदेऽपि राहोः शिर इतिवद्भेदव्यपदेशः । **माद्यन्म**दशाली, मोहयति मदगन्धमात्रेण प्रतिगजादीनिति **मोहः ।** मोहयतेः पचाद्यच् । 'णेरनिटि' ( पा. ६।४।५१ ) इति णिलोपः । तथाभूतस्य महेभस्य कुम्भदलनेन प्रोद्भूतानां निर्गतानां शुद्धमौक्तिकानां नखाग्रलग्नानां प्रकाशेनालंकृतं सत् सुखं रिपुसंहरणेन जायमानानन्दम् अद्वयं शौर्ये द्वितीयरहितं वपुरस्येति तथोक्तः । पूर्ववदलंकारः । एवमेभिस्त्रिभिर्नमस्कारश्लोकैः सामान्यतः शास्त्रस्य विषयोऽध्यायानां चार्थः सूचितः ॥ ३ ॥ **ललितैरिति । अत्र** वदनरङ्गादिरूपणस्य शाब्दतया विशिष्य वाच्यत्वेन वर्तमानत्वात् सरस्वत्यां नर्तकीरूपणस्य तद्गम्यत्वाच्चैकदेशविवर्तिरूपकालंकारः ॥४॥

## वेदान्तकल्पतरुः ।

भजमानविघ्नभित्तिप्रभित्तिकुद्दालमिव करेण रदम् । दधतं महागणेशं प्रणौमि सकलेष्टसंपदं ददतम् ॥ ५ ॥
यन्न्यायसूत्रग्रथितात्मबोधसौरभ्यगर्भश्रुतिपद्ममाला । प्रसाधयत्यद्वयमात्मतत्त्वं तं व्यासमाद्यं गुरुमानतोस्मि ॥ ६ ॥
वेदान्तार्थतदाभासक्षीरनीरविवेकिनम् । ननामि भगवत्पादं परहंसधुरन्धरम् ॥ ७ ॥
स्वयंप्रभसुखं ब्रह्म दयारचितविग्रहम् । यथार्थानुभवानन्दपदगीतं गुरुं नुमः ॥ ८ ॥
विद्याप्रश्रयसंयमाः शुभफला यत्संनिधिस्थानतः पुंसां हस्तगता भवन्ति सहसा कारुण्यवीक्षावशात् ।
आनन्दात्मयतीश्वरं तमनिशं वन्दे गुरूणां गुरुं लब्धं यत्पदपद्मयुग्ममनघं पुण्यैरनन्तैर्मया ॥ ९ ॥
ग्रन्थग्रन्थ्यभिधाः स्फुटन्ति मुकुला यस्योदये कौमुदा व्याकुर्वत्यपि यत्र मोहतिमिरं लोकस्य संशाम्यति ।
प्रोद्यत्तारकदिव्यदीप्ति परमं व्योमापि नीराज्यते गोभिर्यस्य सुखप्रकाशशशिनं तं नौमि विद्यागुरुम् ॥ १० ॥
वैदिकमार्गवाचस्पतिरपि सम्यक्सुरक्षितं चक्रे । नयविजितवादिदैत्यः स जयति विबुधेश्वराचार्यः ॥ ११ ॥
रूढोऽयं वेदकाण्डान्नयमयविटपो भूरिशाखाविचारः सद्वर्णानन्तपर्णः समुदितपरमब्रह्मबोधप्रसूनः ।
साक्षाद्धस्तावचेयं ददद‌मृतफलं जीवविश्वेशवीन्द्रः संसारार्कोत्थतापप्रमथननिपुणस्तन्यते कल्पवृक्षः ॥ १२ ॥
कीर्त्या यादववंशमुन्नमयति श्रीजैत्रदेवात्मजे कृष्णे क्ष्माभृति भूतलं सह महादेवेन संबिभ्रति ।
भोगीन्द्रे परिमुञ्चति क्षितिभरप्रोद्भूतदीर्घश्रमं वेदान्तोपवनस्य मण्डनकरं प्रस्तौमि कल्पद्रुमम् ॥ १३ ॥

श्रीमच्छारीरकव्याख्यायाः प्रारिप्सिताया अविघ्नसमाप्त्यादिसिद्धये शास्त्रप्रतिपाद्यां परां देवतां प्रणमन् शास्त्रीयविषयादि दर्शयति—**अनिर्वाच्येति** । एका ह्यविद्या अनादिर्भावरूपा देवताधिकरणे ( ब्र. अ. १ पा. ३ सू. २६–३३ ) वक्ष्यते, अन्या पूर्वपूर्वविभ्रमसंस्कारः, तदविद्याद्वितयं, सत्त्वासत्त्वाभ्यामनिर्वाच्यं, सचिवं सहकारि यस्य तत्तथा । तत्सचिवता ब्रह्मणस्तद्विषयता, तदाश्रयास्तु जीवा एवेति वक्ष्यते । नचाविद्यासाचिव्ये ब्रह्मणोऽनीश्वरत्वमुपकर-

## कल्पतरुपरिमलः ।

**भजमानेति** । भजमानानां विघ्न एव भित्तिः तस्याः प्रभित्तिः नाशकरणं कुद्दालमिवेति स्वरूपोत्प्रेक्षा । दशभुजस्य महागणपतेर्वामाधःकरेण स्वविषाणधारणं शुण्डाग्रधृतकलशस्थितरत्नवर्षेण भक्तेभ्यः सकलसंपत्प्रदानं च मन्त्रशास्त्रप्रसिद्धम् । प्रभिद्यते नाश्यतेऽनेनेति प्रभित्तिशब्दोऽत्र नाशकरणवाची, नतु विदारणक्रियावाची । अतो विदारणे भिदान्यत्र भित्तिरिति शाब्दिकमर्यादाया न विरोधः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ **ग्रन्थेति** । ग्रन्थग्रन्थय इत्यभिधानमात्रेण भेदः । मुकुला एवैते इत्यनभिव्यक्तत्वसाम्यान्मुकुलत्वाध्यवसानरूपातिशयोक्तिः । यस्योदये स्फुटन्तीत्यनेनास्योदयात्पूर्वं शास्त्रेषु केचन कठिनप्रदेशाः, केनापि नोद्घाटिताः मुद्रिता एव स्थिता इति प्रतीतेरस्यान्येभ्यो व्याख्यातृभ्य उत्कर्षरूपो व्यतिरेकालंकारो व्यज्यते । **व्याकुर्वत्यपीति** । अनेनास्य शब्दश्रवणतोऽपि तिमिरं शाम्यति, नतु प्रादुर्भावमवेक्षते इति प्रसिद्धचन्द्रादुत्कर्षरूपो व्यतिरेकालंकारो व्यज्यते । **प्रोद्यदिति** । प्रोद्यन्ती प्रसर्पन्ती तारकेषु प्रणवेषु **दिव्यस्य** द्युसंबन्धिनः, 'यः पुनरेतं त्रिमात्रेणे'तिश्रुतौ ब्रह्मलोकाख्योक्तद्युलोकप्राप्तिफलकत्वेन श्रुतस्य त्रिमात्रप्रणवस्य, **दीप्तिः** प्रकाशनशक्तिर्यस्मिंस्तत्तथोक्तम् । **यद्वा** प्रोद्यन्ती तारकशब्दोपलक्षितानां 'न तत्र सूर्यो भाती'त्यादिश्रुत्युक्तानां सूर्यचन्द्रविद्युन्नक्षत्राणां दिव्या दिवि भवा गगने प्रसृता दीप्तिर्येन तत्तथोक्तम् । **यद्वा** प्रोद्यन्त्य उन्नमन्त्यस्तारका जनानामक्षिकनीनिका यया सा तथोक्ता तथाभूता दिव्या दिवि प्रसृता दीप्तिर्यस्य तत्तथोक्तम् । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रुतौ हि ब्रह्मणो दिवि प्रसृता दीप्तिरुक्ता, तद्विशिष्टब्रह्मोपासनस्य फलं श्रुतं 'चक्षुष्यः श्रुतो भवती'ति । अत इयं दीप्तिरुपासकस्य चक्षुष्यत्वफलप्रदानद्वारा तमवलोकयतां सुन्दरवस्तुदर्शनकौतुकेन चक्षुर्विस्फारणहेतुर्भवतीत्ययमर्थः प्रोद्यत्तारकेति दीप्तिविशेषणेनोक्तः । **परमं व्योम** 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते'ति श्रुतिप्रसिद्धं परं ब्रह्म । चन्द्रपक्षे प्रोद्यन्त्या नक्षत्राणां दिव्यया स्वर्लोकभवया दीप्त्या परा प्रकृष्टा मा शोभा यस्य तथाभूतं व्योमेति योज्यम् । नीराज्यते प्रकाश्यते ॥ १० ॥ **रूढ इति** । वेदस्यैकदेशः काण्डं ब्रह्मकाण्ड एव काण्डः समुद्रसलिलं तस्मात्प्रादुर्भूतः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इति निघण्टुः । वृक्षपक्षे भूरिः शाखासु वीनां पक्षिणां चारोऽस्येत्यर्थः । **वीन्द्र इति** । जीवेश्वरयोः प्रधानपक्षित्वोक्त्या वृक्षपक्षेतेन विशेषणेनापौनरुक्त्यम् । कल्पवृक्षः सर्वेषां विबुधानामिवायं ग्रन्थः सर्वेषां वेदान्तानां तात्पर्यविषयस्यार्थस्य प्रतिपादने

---

१ 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' इति श्रुत्या 'आश्रयित्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः' इति संक्षेपशारीरकवचनेन उपपत्त्या च स्वरूपचैतन्यमेवाज्ञानाश्रयः, न जीवः; तस्याज्ञानाश्रयत्वे प्रमाणाभावात् । यथाहि अहंकारादिकं जडत्वान्नाज्ञानाश्रयं, एवं जीवस्यापि विशिष्टस्य जडत्वान्नाज्ञानाश्रयत्वम् । जीवत्वस्य अज्ञानाश्रयतावच्छेदकत्वेऽन्योन्याश्रयाच्च । वृत्त्यवच्छिन्नचैतन्याश्रिताज्ञानं—

## भामती ।

निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि । स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥
षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥
मार्तण्डतिलकस्वामिमहागणपतीन्वयम् । विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥ ४ ॥
ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे । ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ ५ ॥
नत्वा विशुद्धविज्ञानं शंकरं करुणाकरम् । भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥
आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥

## वेदान्तकल्पतरुः ।

णस्य स्वातन्त्र्याविघातकत्वादित्याह—**प्रभवत इति** । अतत्त्वतोऽन्यथाभावो विवर्तः । न केवलं भूतानां ब्रह्मविवर्तत्वं, अपितु जीवानामपि चराचरशरीरोपाधिकानां तत्प्रतिविम्बत्वेन तद्विवर्ततेत्याह—**यतश्चेति** । **अथवा** भूतसृष्टिवद्भौतिकसृष्टेरपि हिरण्यगर्भद्वारा ब्रह्मैव कर्तृ इत्यनेनोक्तम् । एवमज्ञानविपर्यस्तत्वाभ्यां विषयत्वमुक्त्वा प्रयोजनतामाह—**अपरिमितेति** ॥ १ ॥ जगद्विवर्ताधिष्ठानत्वेन ब्रह्मणः सर्वकर्तृत्वमुक्त्वा सर्वज्ञत्वं ज्ञानपदसूचितं वेदकर्तृत्वादिना साधयति—**निःश्वसितमिति** । वीक्षणमात्रेण सृष्टत्वाद्भूतानि वीक्षितम् । हिरण्यगर्भद्वारा साध्यं चराचरं वीक्षणाधिकप्रयत्नसाध्यस्मितसाम्यात्स्मितम् । सर्वज्ञत्वसिद्ध्यर्थं चेतनधर्मसुप्तिमत्त्वेन चेतनतां संभावयति—**अस्य चेति** । **यद्वा** विनायासेन नामरूपसृष्टिप्रलयकर्तृत्वाद्ब्रह्मानेन स्तुतम् ॥ २ ॥ **षड्भिरिति । ईश्वरस्य षडङ्गानि पुराणोक्तानि**—'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥' इति । **अव्ययानि वायुपुराणे पठ्यन्ते**—'ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥' इति । वेदस्य षडङ्गानि निरुक्तादीनि । अव्ययानि चादयः ॥ ३ ॥ तिलकप्रियः स्वामी **तिलकस्वामी** । सर्वसिद्धिविधायित्वं स्मृतिसिद्धम् । 'आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा । महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥' ( याज्ञ० अ. १ श्लो. २९४ ) इति ॥ ४ ॥ **वेधसे** विधात्रे ईश्वराय । हरेः ज्ञानशक्तेरवतारः प्राप्तिर्यस्मिन्स तथा । तथाचाह श्रीपराशरः—'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । वेदमेकं सुबहुधा कुरुते जगतो हितम् ॥' इति ॥ ५ ॥ इह भगवता सूत्रकारेण साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मजिज्ञासामुपदिशता जिज्ञास्यस्य ब्रह्मणः संदिग्धत्वसप्रयोजनत्वे समसूचिषातां तदाक्षेपसमाधानपरताम् 'आह कोय'

## कल्पतरुपरिमलः ।

समर्थ इति कल्पवृक्षत्वाध्यवसानम् ॥ १२ ॥ **ईश्वरायेति** । सर्वज्ञायेत्यपि शक्यं व्याख्यातुम् । 'मेधावी तु विधाता स्याद्वेधाः सर्वज्ञ उच्यते' इति, 'वेधास्त्रिषु स्यात्सर्वज्ञे नरि विष्णुविरिञ्चयो'रिति च नैघण्टुकाः । **अवतारः प्राप्तिर्यस्मिन्निति । ननु** ज्ञानशक्त्यवतारायेत्यत्र अवतारशब्दस्य प्राप्त्यर्थत्वमाश्रित्य बहुव्रीहिसमासप्रदर्शनमयुक्तं; 'समानाधिकरणानां बहुव्रीहि'रिति वार्तिककारेण नियमितत्वात्, 'न धातुलोप आर्धधातुके' ( पा. १।१।४ ) इति पाणिनिसूत्रे धातुलोपशब्दे षष्ठीगर्भव्यधिकरणबहुव्रीह्याश्रयणात् तद्वदिह तदुपपादनेऽपि 'ऋदोरप्' ( पा. ३।३।५७ ) इत्यबन्तस्यावतरशब्दस्येव घञन्तस्यावतारशब्दस्य

---

—तु भ्रमतन्निवर्तकज्ञानसामानाधिकरण्योपपत्त्यर्थं विशिष्टमेवाश्रयतीत्युपपन्नम् । न चैवं; स्वरूपचैतन्यस्यैव ज्ञातृत्वात् । अहमज्ञ इत्यादिकं तु अहंकारादीनामविद्याधीनतया तदनाश्रयत्वेन पारिशेष्यात्स्वरूपचैतन्याश्रयत्व एव पर्यवसानादविद्यान्तःकरणयोः सामानाधिकरण्यमादायोपपद्यते । अतएव सुप्तोत्थितोक्तप्रतीत्युपपत्तिः । स्वप्रकाशचैतन्यरूपत्वेऽपि यथा न स्वरूपतो ज्ञानविरोधित्वं, किंतु वृत्त्यवच्छिन्नत्वेनैव तथान्यत्र विस्तरः । ज्ञाज्ञाविति श्रौतव्यपदेशोऽप्येतेन व्याख्यातः; अज्ञानकार्यसंबन्धमादायोपपत्तेः । यथाचाज्ञानाश्रयस्यापीश्वरस्य न तत्कार्यसंबन्धः; उपाधेः प्रतिविम्बपक्षपातित्वनियमात्, तथान्यत्र विस्तरः । एवंच जीवो नाज्ञानाश्रयः किंतु स्वरूपचैतन्यमेव । अतएव तस्य सर्वज्ञत्वव्यवहारोऽप्युपपद्यते । 'स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा भवेत् । तच्चोभयं विनाऽविद्यासंबन्धं नोपपद्यते' इति निरूपयन्ति । विवरणप्रस्थानम् ।

तत्र जीवत्वस्य अज्ञानाश्रयतावच्छेदकत्वेऽपि जीवाविद्ययोरनादित्वेन अज्ञानस्य चिद्भास्यत्वेऽपि चितोऽज्ञानाभास्यत्वेन अज्ञानस्य चिदाश्रयत्वचिदधीनस्थितिकत्वयोरपि चितोऽज्ञानाश्रयत्वाज्ञानाश्रयत्वस्थितिकत्वयोरभावेनान्योन्याश्रयाप्रसङ्गेन, अहमज्ञ इत्यादिप्रतीतेः ज्ञाज्ञा इत्यादिश्रुतेश्च जीवस्याज्ञानाश्रयत्वपक्ष एवोपपत्त्या च जीवएवाज्ञानाश्रयः, न त्वीश्वरः; तस्याज्ञानाश्रयत्वे अज्ञत्वप्रसङ्गात् । उपाधेः प्रतिविम्बपक्षपातित्वेन तु समाधानं न युक्तं, नीरूपस्य चैतन्यस्य प्रतिविम्बायोगेन विम्बप्रतिविम्बभावस्यैवायुक्तत्वात् । उपपादयिष्यते चैवेदं परिमले समन्वयसूत्रे ।

## भामती ।

**अथ**—यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः; यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ता वा, तथाचेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । **तथाहि**—'बृहत्त्वाद्बृंहणत्वाद्वात्मैव ब्रह्मेति गीयते', स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहं' इत्यसंदिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम् । नहि जातु कश्चिदत्र संदिग्धेऽहं वा नाहं वेति । नच विपर्यस्यति नाहमेवेति । नच—अहं कृशः स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद्देहाल-

## वेदान्तकल्पतरुः ।

मित्यतः प्राक्तनस्य भाष्यस्य दर्शयति—**अथेत्यादिपरिहरतीत्यन्तेन** । अथशब्दः प्रतिग्रन्थं व्याख्यानप्रारम्भार्थः । **इहाहं**- प्रत्ययगम्यमात्मानमुपनिषत्प्रतिपाद्यमापाद्य जिज्ञास्यत्वाक्षेपः, **तत्पुनर्ब्रह्मेत्यादौ तु** तदतिरिक्तं ब्रह्मोररीकृत्य तस्य वेदान्तेभ्य एव सिद्धेर्विचारविषयत्वाक्षेप इति भेदः । जिज्ञास्यत्वव्यापके संदिग्धत्वसप्रयोजनत्वे तद्विरुद्धे चासंदिग्धत्वनिष्प्रयोजनत्वे तयोरुपलब्धिस्ततश्च व्यापकाभावे व्याप्यजिज्ञास्यत्वाभाव इत्यर्थः । **अत्र** प्रयोगौ–मुमुक्षुणा ब्रह्म न विचार्यं, तं प्रत्यसंदिग्धत्वात्, तथाविधकुम्भवत्, तथा, अप्रयोजनत्वात्, काकदन्तवदिति । **आद्यं हेतुं विवृणोति—तथाहि** इत्यादिना । **बृंहणत्वात्** देहादीनां परिणमयितृत्वात् । **नन्वहं**प्रत्ययस्य देहादिमिश्रविषयत्वात्कथं विविक्तविषयत्वमत आह—**नचाहमिति । देहालम्बन इति** । आत्मैक्याध्यस्तदेहालम्बन इत्यर्थः । देहादात्मनोऽहंप्रत्ययगम्यस्य भेद-

## कल्पतरुपरिमलः ।

भावार्थत्वाभावात्, 'अवे तृस्त्रोर्घञि'ति सूत्रेणावपूर्वात्तरतेः करणाधिकरणयोरेव घञ्विधानात् । अतोऽवतारशब्दस्याधिकरणार्थत्वमाश्रित्य ज्ञानशक्तेरवतारायेति षष्ठीतत्पुरुषः प्रदर्शयितुं युक्त—**इति चेद्**, यद्येवं स एवात्राचार्यैः प्रदर्शित इति ब्रूमः । प्राप्तिर्यस्मिन्नित्युभयमप्यवतारपदव्याख्यानार्थं, नतु प्राप्तिपदमात्रं, प्राप्तिर्यस्मिन्सोऽवतार इत्यर्थः । **अथशब्द इति**। मङ्गलश्लोके शास्त्रीयविषयप्रयोजनप्रदर्शनेन तथाभूते ब्रह्मणि भाष्यस्य तात्पर्यमिति कृत्स्नं भाष्यं सामान्यतो व्याख्यातम्। इदानीं प्रतिग्रन्थं व्याख्यानं प्रारभ्यते इत्येतदर्थोऽथशब्द इत्यर्थः। यद्यपि प्रारभ्यत इत्यनुक्तेऽपि प्रारम्भादेवेदं प्रारभ्यत इत्यवगन्तुं शक्यं; तथापि श्रोतॄणां श्रद्धेयत्वप्रतिपत्त्यर्थं तदुक्तिः। दृश्यते हि तदर्थमेव लोकेऽप्याप्ताः किंचिदहं वक्ष्यामीत्युक्त्वा हितमुपदिशन्तीति। **मुमुक्षुणेति**। **ननु**—हेतुसाध्ययोर्मुमुक्षुविशेषणं किमर्थम् । नच–अमुमुक्षोः सर्वप्रपञ्चविषयो येनकेनचित्प्रकारेण संदेहस्तन्निवर्तनार्थं विचारश्च संभवतीति कुम्भाहमर्थयोरपि तद्विषयत्वावश्यंभावाद्दृष्टान्ते हेतुसाध्यवैकल्यं, पक्षे हेत्वसिद्धिबाधौ च स्यातामिति तद्वारणार्थं मुमुक्षुविशेषणमिति–वाच्यम्; मुमुक्षोरपि तथाविधसंदेहविचारयोः संभवेन तत उक्तदोषानिवारणात्, नच–यस्य मुमुक्षोस्तौ न स्तः सोऽत्र विशेषणमिति–वाच्यम्; ब्रह्मविचारार्थमिदं शास्त्रमारम्भणीयमिति वदतः सिद्धान्तिनो मते, प्रपञ्चः सत्यो मिथ्या वा, सन् असन्वा, जीवः स्वाभाविकचैतन्य आगन्तुकचैतन्यो वेत्यादिसंदेहस्य तत्तदधिकरणनिरूपितन्यायानुसंधाननिवर्तनीयस्यावश्यंभावेन प्रतिवादिनं प्रति पक्षदृष्टान्तयोर्हेत्वसिद्धेरनिवारणात्, **मुमुक्षु**ज्ञातव्येन रूपेणासंदिग्धत्वं हेतुर्विवक्षित इति चेत्, न; स्वाभाविकचैतन्यत्वादेरपि मुमुक्षुज्ञातव्यतायाः सिद्धान्तिना वाच्यत्वात्, अन्यथा तेन मोक्षार्थमारभ्यमाणेऽस्मिञ्शास्त्रे तद्विचारानुपपत्तेः–**इति चेत्, उच्यते**; मोक्षजनकत्वाभिमतज्ञानविषयेण रूपेणासंदिग्धत्वं हेतुः । नचाहंत्वादन्यन्मोक्षजनकत्वाभिमतज्ञानविषय इति सिद्धान्तिना वक्तुं शक्यम्; ब्रह्मज्ञानं मोक्षहेतुरिति वदतः सिद्धान्तिनो मते अहमिति ज्ञानमेव मुक्तिहेतुः स्यादित्यापाद्य पूर्वपक्षप्रवृत्तेः । पक्षदृष्टान्तयोर्बाधसाध्यवैकल्यपरिहारार्थं साध्येऽपि मुमुक्षुविशेषणम्; अन्यथा सर्वप्रपञ्चविषयसत्यत्वमिथ्यात्वारम्भपरिणामादिविचारं मुमुक्ष्वमुमुक्षुकृतं प्रतिपक्षदृष्टान्तीकृताहमर्थकुम्भव्यक्त्योरपि विषयत्वावश्यंभावाद्बाधसाध्यवैकल्ये स्याताम् । नच—मुमुक्षुविशेषणलभ्ये मोक्षजनकत्वाभिमतज्ञानविषयेण रूपेण विचार्यत्वाभावे विवक्षितेऽपि साध्ये दोषतादवस्थ्यम्, पक्षे अहंत्वस्य दृष्टान्ते तद्व्यतिरेकस्य च लोकसिद्धत्वेऽप्यनुमित्सया विचारसंभवादिति–वाच्यम्; मोक्षजनकज्ञानप्रकारप्रकारकसंदेहनिवृत्त्यर्थविचारविषयत्वाभावस्य साध्यार्थस्य विवक्षितत्वात् । एवंचाहमिति सदावभासमानं ब्रह्म नाहंत्वप्रकारकसंदेहनिवर्तकविचारविषयः; अहंत्वेन निश्चीयमानत्वाद्, यो यदा येन प्रकारेण निश्चीयते, स तदा न तत्प्रकारकसंदेहनिवर्तकविचारविषयः; यथा समनस्केन्द्रियसंनिकर्षे स्फीतालोकमध्यवर्तितादशायां घट इत्यनुमाननिष्कर्षः । नच प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिर्दोषः; साध्यविशेषप्रसिद्धिं विनापि घटे सामान्यव्याप्तिग्रहोपपत्तेः । विशिष्टवैशिष्ट्यज्ञानरूपायाः प्रतियोगिविशिष्टाभावरूपसाध्यविशिष्टानुमितेः अहंत्वप्रकारकत्वसंदेहनिवर्तकविचारविषयत्वयोर्विशकलितप्रसिद्ध्या विशेष्ये विशेषणं तत्र च विशेषणान्तरमित्युक्तरूपविशिष्टवैशिष्ट्यज्ञानसामग्र्योपपत्तेः[1] । नच प्रतियोग्यप्रसिद्धिरपि; देहेन्द्रियेषु तत्प्रसिद्धेः सुलभत्वात् । **देहादात्मन**

---

१ साम्यत्वोपपत्तेरितिपाठः.

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ

## भामती ।

स्वनोऽयमहंकार इति—सांप्रतम्; तदालम्बनत्वे हि योऽहं बाल्ये पितरावन्वभवं स एव स्थाविरे प्रणप्तॄननुभवामीति प्रतिसंधानं न भवेत् । नहि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत । तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम् । तथाच बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहंकारास्पदमनुवर्तमानं तेभ्यो भिद्यते । **अपिच** स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान्भोगान्भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन् नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । **अपिच** योगव्याघ्रः शरीरभेदेऽप्यात्मानमभिन्नमनुभवतीति नाहंकारालम्बनं देहः । **अतएव** नेन्द्रियाण्यप्यस्यालम्बनम्; इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात् । विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव । बुद्धिमनसोश्च करणयोरहमिति कर्तृप्रतिभासप्रख्यानालम्बनत्वायोगः; कृशोऽहमन्धोऽहमित्यादयश्च प्रयोगा असत्यप्यारोपे कथंचिन्मञ्चाः क्रोशन्तीत्यादिवदौपचारिका इति **युक्तमुत्पश्यामः** । तस्मादिदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः, स्फुटतराहमनुभवगम्य आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् । **अप्रयोजनत्वाच्च** । **तथाहि**—संसारनिवृत्तिरपवर्ग इह प्रयोजनं विवक्षितम् । संसारश्चात्मयाथात्म्याननुभवनिमित्त आत्मयाथात्म्यज्ञानेन निवर्तनीयः । स चेदयमनादिरनादिनात्मयाथात्म्यज्ञानेन सहानुवर्तते कुतोऽस्य निवृत्तिः; अविरोधात् । कुतश्चात्मयाथात्म्याननुभवः; नह्यहमित्यनुभवादन्यदात्मयाथात्म्यज्ञानमस्ति । नचाहमिति सर्वजनीनस्फुटतरानुभवसमर्थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम्; अनुभवविरोधात् । नह्यागमाः सहस्रमपि घटं पटयितुमीशते । तस्मादनुभवविरोधादुपचरितार्था एवोपनिषद इति युक्तमुत्पश्याम इत्याशयवानाशङ्क्य परिहरति—**युष्मदस्मत्प्रत्ययगोचरयोरिति** । **अत्र च युष्मदस्मदित्यादिर्मिथ्याभवितुं युक्तमित्यन्तः** शङ्काग्रन्थः । **तथापीत्यादिपरिहारग्रन्थः** । **तथापीत्यभिसंबन्धाच्छङ्कायां यद्यपीति पठितव्यम्** । इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये **युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम्** । यथा ह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकारः; एते वयमिमे वयमास्मह इति बहुलं प्रयोगदर्शनादिति । चित्स्वभाव आत्मा **विषयी**, जडस्व-

## वेदान्तकल्पतरुः ।

ग्रहान्नाध्यास इत्याह—**तदालम्बनत्वे हीति** । बालस्थविरदेहयोः परिमाणभेदान्न प्रत्यभिज्ञेत्युक्तम्, परिमाणभेदेऽपि देहैक्यं मन्वानं प्रत्याह—**स्वप्नान्त इति** । जाग्रत्यप्याह—**योगेति** । मनुष्यः सन् कृत्रिमं व्याघ्रशरीरमभिमन्यमानो योगव्याघ्रः । **नाहंकारालम्बनं देह इति** । अत्रापि देहशब्द आत्मैक्याध्यस्तदेहपरः, अन्यथा हि जिज्ञास्यत्ववादिनापि तन्मात्रालम्बनत्वानङ्गीकारादनुक्तोपालम्भः स्यादिति । **अथवा** लोकायतमतं प्रसङ्गादाशङ्क्य निरस्यते । **प्रख्यानं** शब्दः । **असत्यप्यारोपिते** अभेदे इत्यर्थः, वास्तवाभेदस्याध्यासवादिनोऽप्यनिष्टेः । लोकायतनिरासे तु यथाश्रुतोऽर्थः । द्वितीयं हेतुं विभजते—**अप्रयोजनत्वाच्चेत्यादिना** । **ननु** किमिति नास्त्यन्यदात्मयाथात्म्यज्ञानं ब्रह्मात्मभावस्योपनिषद्भिरवबोधनादत आह—**नचाहमितीति** । युक्तमिति निर्देशात्पूर्वस्यैव सिद्धान्तत्वं व्यावर्तयति—**अत्र चेति** । **ननु** पुरुषान्तरवचनो युष्मच्छब्दः कथमचेतने देहादौ प्रयुक्तोऽत आह—**इदमस्मदिति** । **नन्विदंकारप्रयोगेऽपि** प्रत्यक्पराग्भावेन भवति भेदप्रतीतिः; एते वयमिति तु सामानाधिकरण्यं गौणं, तथा त्वंकारप्रयोगेऽपीति न विशेषः कश्चित्, अत आह—**इति बहुलं प्रयोगदर्शनादिति** । यद्यप्युभयत्र गौणत्वमविशिष्टं; तथापि विरलप्रयोगत्वात्स्फुटं त्वमहमिति

## कल्पतरुपरिमलः ।

**इति** । मम देह इत्यभिज्ञारूपोऽपि भेदग्रहो विवक्षितः । **परिमाणभेदेऽपीति** । काष्ठपाषाणादिषु तक्षणादिना शरीरेषु कालभेदेन च परिमाणभेदेऽप्यभेदप्रत्यभिज्ञोदयस्तथाभिमानबीजम् । **कृत्रिमेति** । **योगमहिम्ना** 'ह्रस्वता स्थूलता बाल्यं वार्धकं यौवनं तथा । नानाजातिस्वरूपं च तथा सुरभिगन्धता ॥ पार्थिवांशं विना भूतैश्चतुर्भिर्देहधारणम् ।

१ **विवरणप्रस्थाने**—अनर्थनिवृत्तिफलकब्रह्मजिज्ञासासूत्रेण सूत्रितनिखिलप्रपञ्चाध्यासमूलाहंकाराध्यासनिरूपणार्थं 'युष्मदस्म'दित्यादिभाष्यस्य प्रवृत्तिः । तत्र **'युष्मदस्म'**दित्यादिसामान्यतोऽध्यासनिरूपणपरम् । **'आहकोय'**मित्यादिविशेषतस्तल्लक्षणस्वरूपसंभावनास्वरूपनिर्णयादिपरम् । शास्त्रारम्भसमर्थनं तु वर्णकान्तरेणेति विवेकः ॥ **भामतीप्रस्थाने तु—युष्मदस्मदित्याद्यारम्भन्ते** इत्यन्तमेवाध्याससमर्थनद्वारा शास्त्रारम्भसमर्थनपरम्, नतु तदर्थं वर्णकविशेषादरणम् । तत्रापि **युष्मदस्मदित्यादि** अध्यासनिमित्तसमर्थनेन, **आहकोयमित्यादि**आरोप्यस्वरूपसमर्थनेन, **कथं पुनः प्रत्यगात्मनीत्यादि** आत्माधिष्ठानत्वसमर्थनेन, **कथं पुनरविद्यावद्विषयाणी**त्यादिप्रमाणानामविद्यावद्विषयत्वसमर्थनेन, **सर्वे वेदान्ता आरभ्यन्त** इत्यनेन समर्थितशास्त्रारम्भमुपकुर्वन्तीति विवेकः ।

**सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदा-**

## भामती ।

भावा बुद्धीन्द्रियदेहविषया **विषयाः** । एते हि चिदात्मानं विसिन्वन्ति अवबध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्व-न्तीति यावत् । परस्परानध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्तः **तमःप्रकाशव'दिति** । नहि जातु कश्चित्समुदाचर-द्वृत्तिनी प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति, तदिदमुक्तम्—**इतरेतरभावानुपपत्ताविति** । **इतरेतर-भाव** इतरेतरत्वम्, तादात्म्यमिति यावत्, **तस्यानुपपत्ताविति** । **स्यादेतत्**—माभूद्धर्मिणोः परस्परभावः; तद्धर्माणां तु जाड्यचैतन्यनित्यत्वानित्यत्वादीनामितरेतराध्यासो भविष्यति, दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्मा-णामध्यासः, यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रम, इत्यत उक्तम्—**तद्धर्माणामपीति** । **इतरेतरत्र धर्मिणि धर्माणां भावो** विनिमयस्तस्यानुप-पत्तिः । **अयमभिसंधिः**—रूपवद्धि द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां

## वेदान्तकल्पतरुः ।

सामानाधिकरण्ये गौणत्वं, ततस्तन्न भेदं तिरोदधीतेत्यत्यन्तभेदसिद्धिः । इमे वयमिति तु बहुलप्रयोगत्वेन निरूढमिति तिरोदधीत भेदं, अतो नात्यन्तभेदसिद्धिः । दृश्यते च लाक्षणिकत्वाविशेषेऽपि प्रयोगबाहुल्याबाहुल्याभ्यां निरूढसांप्रति-कते–यथा पटः शुक्लो रथाङ्गनामा चक्रवाक इति । प्रयुञ्जते बहुलं वेदाश्च कवयश्च, 'अयमहमस्मीति' 'एते वयमिमे दाराः कन्येयं कुलजीवित'मित्यादि । न सहानवस्थानं दृष्टान्ते विवक्षितं दार्ष्टान्तिके तदभावात्, किंत्वन्योन्यात्मनाऽस्फु-रणमित्यभिप्रेत्याह—**परस्परेति** । **ननू**लूकादेः प्रकाशेऽप्यस्ति तमस्तत्त्वारोपस्तत्राह—**नहीति** । समुदाचरन्त्यौ भेदेन भासमाने वृत्ती वर्तने ययोस्ते तथा उलूकादेरविवेकादारोप इत्यर्थः । इतरेतरभावानुपपत्तिर्नामेतरेतरभावप्रतीत्यनुपपत्ति-र्विवक्षिता; तन्मात्रानुपपत्तिसाधनेऽध्यासवादिनं प्रति सिद्धसाधनत्वात्, इत्यभिप्रेत्य दृष्टान्ते स्थित्वा वक्ति—**परस्परा-त्मतया प्रतिपत्तुमिति** । इतरस्येतरत्र भाव इति योजने धर्मिणोरपि संसर्गाध्यासनिषेधः स्यात्, तथाच सिद्धसाधनं; तादात्म्याध्यासाभ्युपगमात्, तन्निवृत्त्यर्थमाह—**इतरेतरत्वमिति** । विनिमयो व्यत्यासः । **रूपवत इति** । गगनस्य तु स्वगतसवितृकरादिप्रतिबिम्बनद्वारा सलिले प्रतिबिम्बितत्वविभ्रमः; ततश्च रूपवत एव प्रतिबिम्बभाव इति व्याप्तेर्न

## कल्पतरुपरिमलः ।

गन्धतन्मात्रतत्त्वोत्थमेतदष्टगुणं महत् ॥' इत्युक्तरूपपार्थिवैश्वर्याष्टकलाभात्लीलार्थं व्याघ्रशरीरं कृत्वा तदभिमन्यमान इत्यर्थः । तद्व्याघ्रशरीरं योगिसंकल्पकरणेन कृत्रिमम् । **पटः शुक्ल इति** । गुणशब्दः तद्वति निरूढलक्षणया प्रयुज्यते । रथा-ङ्गशब्दश्चक्रवाकशब्दैकदेशपर्यायस्तद्वाच्ये सांप्रतिकलक्षणया प्रयुज्यते । एवंचाहमेव त्वमित्यत्रैव भाष्यकारीयेऽपि युष्मत्प्रयोगे सांप्रतिकी गौणी वृत्तिः । सा चात्यन्तभेदावभासद्योतनार्था । इदंकारस्याहंकाराविरोधशङ्कया स्फुष्टभेदानवभासादिति भावः । 'अयमहमस्मी'ति छन्दोगतैत्तिरीयाणां श्रुतिः । **अविवेकादिति** । येषां तु तमःप्रकाशयोर्विवेको भेदग्रहोऽस्ति तेषां तयोरन्योन्यात्मत्वेनास्फुरणं नियतमेवेति भावः । **नन्वि**तरेतरभावानुपपत्तिस्तत्प्रतीत्यनुपपत्तिरिति किमर्थमिदं क्लिष्ट-व्याख्यानम्, अधिष्ठानसामान्यांशाध्यस्यमानविशेषांशयोः क्वचिद्वास्तवतादात्म्ये सत्येव तत्प्रमितिजन्यसंस्कारापेक्ष इदं रजत-मित्याद्यध्यासो दृष्टः, तदसंभव इहाध्यासासंभवहेतुत्वेनोच्यत इत्यस्त्वित्याशङ्क्याह—**तन्मात्रानुपपत्तिसाधने इति** । आत्मानात्मनोर्वास्तवतादात्म्यासंभवस्य सिद्धान्तिनाप्यङ्गीकृतत्वाद्विरोधहेतुना तत्साधनं सिद्धसाधनदूषितमित्यर्थः । **ननु** बुद्धिपूर्विकायां गृहक्षेत्रादिपरिवर्तनायां प्रसिद्धस्य विनिमयशब्दस्य कथमत्र प्रयोग इत्याशङ्क्य व्यत्यासमात्रे लक्षणये-त्याह—**विनिमय इति** । **ननु** रूपवत एव प्रतिबिम्ब इति नास्ति नियमः, जानुदघ्ने कूपजले दूरविशालतलमलिनतादि-युक्तगगनप्रतिबिम्बदर्शनादित्याशङ्क्याह—**गगनस्येति** । **ननु**—रूपवत एव प्रतिबिम्ब इति नियममादृत्यालोकप्रतिबिम्बे गगनप्रतिबिम्बत्वविभ्रममात्रं, नतु गगनस्य प्रतिबिम्बोऽस्तीति कल्पने, रूपवत एव चाक्षुषत्वमिति नियममनुरुध्य गगनप्रसृ-तालोके एव तलमलिनताध्यासः, गगने तलमलिनताध्यास इति विभ्रममात्रमित्यपि कल्प्येत; तथा**चाप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्तीति** भाष्यविरोधः । यदि रूपवदेव चाक्षुषमिति न नियमः, किंतु रूपवद-रूपं वा रूपोपधानेन चाक्षुषमिति नियमः, अतो नीरूपस्यापि गगनस्याध्यस्यमानतलमलिनताद्युपधानेन चाक्षुषत्वमुपप-द्यत इत्युच्येत, तर्हीहापि रूपवतः प्रतिबिम्ब इति न नियमः, किंतु रूपोपधानेन प्रतिबिम्बविभ्रम इति; अतोऽध्यस्यमान-तलमलिनताद्युपधानेन गगनप्रतिबिम्बविभ्रम उपपादयितुं शक्यः; तथैव देहे चेतनप्रतिबिम्बविभ्रमोऽप्युपपादयितुं शक्यः; चेतनेऽपि देहगतरूपेणैव रूपोपधानसंभवान्मलिनदर्पणादिषूपाधिगतश्यामिकोपधानेनापि प्रतिबिम्बविभ्रमदर्शनात्, **इति चेत्, उच्यते**; जले गगनप्रतिबिम्बमभ्युपगच्छताप्यालोकप्रतिबिम्बोऽवश्यमभ्युपगन्तव्यः; अन्यथा कूपाधिकपरि-

### भामती ।

गृह्णीयात्; चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति, **यथाहुः**—'शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता' इति । तदिह पारिशेष्याद्विषयविषयिणोरन्योन्यात्मसंभेदेनैव तद्धर्माणामपि परस्परसंभेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ, असंभिन्नाः सुतरां तयोर्धर्माः; स्वाश्रयाभ्यां व्यवधानेन दूरापेतत्वात्, तदिदमुक्तं—**सुतरामिति । तद्विपर्ययेणेति** । विषयविपर्ययेणेत्यर्थः । **मिथ्याशब्दो**ऽपह्नववचनः **एतदुक्तं भवति**—अध्यासो भेदाग्रहेण व्याप्तः, तद्विरुद्धश्चेहास्ति भेदग्रहः, स भेदाग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयतीति ॥ मिथ्येति भवितुं युक्तं यद्यपि, तथापीति योजना ॥ **इदमत्राकूतम्**—भवेदेतदेवं यद्यहमित्यनुभवे आत्मतत्त्वं प्रकाशेत, नत्वेतदस्ति । **तथाहि**—समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते । नचैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम्; अभ्यासे हि भूयस्त्वमर्थस्य भवति; यथाहो दर्शनीयाहो दर्शनीयेति, न न्यूनत्वं, प्रागेवोपचरितत्वमिति । अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मान-

### वेदान्तकल्पतरुः ।

व्यभिचारः, आत्मनस्तु नास्ति प्रतिबिम्बितत्वभ्रमकरं किंचिदित्यर्थः । धर्माध्यासो हि धर्मिणोरैक्यारोपेण प्रतिबिम्बभावेन वा दृष्टः, इह प्रतिबिम्बभावे निरस्ते आरोपः शिष्यत इत्याह—**पारिशेष्यादिति** । अध्यासानुपपत्तिमुक्त्वा तदभावोपसंहारार्थमतोऽस्मत्प्रत्ययेत्यादिभाष्यम् । **अथवा**ऽहं मनुष्य इत्यादिप्रतीतावतस्मिंस्तत्प्रतीतित्वस्याध्यासलक्षणस्याभावे उक्ते लक्ष्याध्यासरूपत्वस्याभावप्रदर्शनार्थं **विषयविपर्ययेणेति** । विषयोऽचेतनः तस्य विपर्ययश्चैतन्यम् । इत्थंभावे तृतीया; चिदात्मन ऐक्यारोपे हि विषयस्य चेतनत्वमिव भवतीति । तथापीति भाष्यसूचितामध्यासाभावहेतोर्विवेकग्रहस्यासिद्धिमाह—**इदमत्राकूतमित्यादिना** । यथा श्रुत्यादिष्वात्मतत्त्वं गीयते तथाहमित्यनुभवे यदि प्रकाशेत, नत्वेतदस्तीति योजना । **परामर्शो** मध्ये निर्देशः । **क्रियासमभिहारः** पौनःपुन्यम् । **दर्शनीया** सुन्दरी । **नत्वेतदस्तीति यदुक्तं** तत्प्रपञ्चयति—**अहमनुभवस्त्विति । उपप्लवो** विपर्यासोऽस्य नास्तीत्यनुपप्लवो**ऽहमनुभवः** कथं विपर्यासशून्य इत्यर्थः ।

### कल्पतरुपरिमलः ।

माणरूपस्य प्रतिबिम्बगतविशालत्वस्याचाक्षुषत्वप्रसङ्गात्, यत्र रूपं भासते तत्रैव परिमाणस्य चाक्षुषत्वात् । एवंच गगनालोकयोरुभयोरपि प्रतिबिम्बावङ्गीकृत्यालोकप्रतिबिम्बे भासमानस्य विशालत्वस्य गगनप्रतिबिम्बगतत्वेन विभ्रम इति कल्पनाद्वरमालोकप्रतिबिम्बएवाधःप्रदेशे तलमलिनताद्यध्यासः । अन्यत्र तदीयरूपविशालताभ्यां सह स्फुरणं तत्रैव गगनप्रतिबिम्बत्वविभ्रम इति कल्पनम्, बहिस्तु नीलं नभः विशालं नभ इत्यादिप्रत्ययस्यालोकविषयत्वं न कल्पनीयम्; जलमध्ये नभःप्रतिबिम्बस्येव बहिर्नभसोऽसंप्रतिपत्त्यभावेन यथाव्यवहारं नभसि नीलिमाध्यासस्य तस्मिन्नेव तत्प्रसृतालोकगतरूपाध्यासेन तदीयविशालतानुभवस्य चाङ्गीकारे बाधकाभावात् । अतो रूपवत एव प्रतिबिम्ब इति नियमे व्यभिचाराभावान्नात्मनः प्रतिबिम्बो घटत इति भावः । गगनप्रतिबिम्बत्वविभ्रमविषयालोकप्रतिबिम्बवदात्मप्रतिबिम्बत्वभ्रमविषये देहादौ रूपवतः कस्यचित्प्रतिबिम्बोऽस्ति चेत्, तस्माच्च प्रतिबिम्बोपाधेर्देहस्य जपाकुसुमप्रतिबिम्बात्स्फटिकस्येव विवेकाग्रहोऽप्यस्ति चेत्, अध्यस्तगगनधर्मस्य नीलिम्नो जलमध्ये भासमानस्यालोकप्रतिबिम्बधर्मत्वेनेवाध्यस्तात्मधर्मस्य चैतन्यादेर्देहमध्ये भासमानस्यात्मप्रतिबिम्बत्वभ्रमविषयान्यप्रतिबिम्बधर्मत्वेन प्रतिभासः संभवेत् । एवंप्रतिभासतस्तद्धर्मस्य चैतन्यादेः प्रतिबिम्बग्राहिणि देहादावध्यासश्चोपपद्यते; जपाकुसुमप्रतिबिम्बारुणिम्न इव स्फटिके न त्वात्मप्रतिबिम्बत्वभ्रमविषयः कस्यचित्प्रतिबिम्बोऽस्ति देहादावित्याह—**आत्मनस्त्विति । नन्वितरेतरभावानुपपत्तिः**, इतरेतरभावाप्रतीत्यनुपपत्तिरिति व्याख्यातम्; अतः सैवाध्यासाभाव इति, तेनैव तत्साधने साध्यावैशिष्ट्यमित्याशङ्क्य हेतुसाध्ययोर्भेदं दर्शयति—**अध्यासानुपपत्तिमुक्त्वेति । अनुपपत्तिः** अन्योन्यानात्मतास्फुरणेन प्रतिबन्धादुत्पत्त्यनर्हत्वं, स हेतुः अध्यासाभावस्ततो भिन्नः साध्य इति भावः । **अथवा** अहं मनुष्य इत्यादिप्रतीतावतस्मिंस्तत्प्रतीतित्वस्याध्यासलक्षणस्याभावे उक्ते लक्ष्याध्यासरूपत्वस्याभावप्रदर्शनार्थमतोऽस्मत्प्रत्ययेत्यादिभाष्यमिति व्याख्यान्तरं केषु-

१ उपक्रमः प्रारम्भः, परामर्शो मध्ये निर्देश उपसंहारश्च सामान्येन कथितस्य विशेषनियमनम् । **अत्रायमभिप्रायः**—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इत्युपक्रम्य, अन्तरा च 'तेजसा शुङ्गेन सन्मूलमन्विच्छ अन्नेन शुंगेन सन्मूलमन्विच्छे'त्यादिनिर्दिश्य 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपसंहृतं वाक्यं, अखण्डसत्तात्पर्यकं, तदुपक्रमोपसंहारलिङ्गात्, अवान्तरपठितम् 'असद्वा इदमग्र आसीत्' इत्यादिकमेतदनुसंधानेन नेयम् । **ननु** तेजोबादिसृष्टिक्रममपि व्याचष्टे । **न**; एकमद्वितीयं ब्रह्मैवेह प्रतिपिपादयिषितम्, यत्परः शब्दः स एव तदर्थः, अन्यथातिप्रसङ्गात् । तस्मात् ब्रह्मणोऽवताराय यत्किंचिद्व्याहर्तव्यमिति तद्व्याहृतमिति सुवचमतो निष्प्रपञ्चात्मतत्त्वप्रतिपादकान्येवैतानीति दिक् ।

भामती ।

मादर्शयन्कथमात्मतत्त्वगोचरः कथं वानुपप्लवः । नच—ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्य-मुपचरितार्थत्वं चेति-युक्तम्; तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य, बोधकतया स्वतःसिद्धप्रमाणभावस्य, स्वकार्ये प्रमितावनपेक्षत्वात् । प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेत्, न; उत्पादकाप्रतिद्वन्द्वित्वात् । नह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति; येन कारणाभावान्न भवेत्, अपितु तात्त्विकम्; नच तत्तस्योत्पादकम्; अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्प-

वेदान्तकल्पतरुः ।

**कथमात्मतत्त्वगोचर** इत्यज्ञानं सूचितम् । प्रक्रमादिना तात्पर्यसिद्धावप्युपजीव्यविरोधादप्रामाण्यमाशङ्क्याह—**नचेत्यादिना** । ज्येष्ठस्यापि पौर्वापर्यन्यायेन ( जै० अ. ६ पा. ५ सू. ५४ ) बाधमाशङ्क्याह—**तदपेक्षस्येति** । आगमस्य किं स्वजन्यज्ञानगतप्रमितित्वे प्रत्यक्षापेक्षा, उत तदुत्पत्तौ । **आद्ये** किं विपर्यासशङ्कानिरासाय, संवादाय वा । **एतद्द्वयं** निरस्य, **द्वितीयं** शङ्कते—**प्रमितावित्ति** । आगमस्य किं प्रत्यक्षगतव्यावहारिकप्रामाण्येन विरोधः, उत तत्त्वावेदकत्वेन । **नाद्य** इत्याह—**नहीति** । **द्वितीयं** प्रत्याह—**नच तदिति** । एवमप्रामाण्यं निराकृत्योपचरितार्थत्वं निरस्यति—

कल्पतरुपरिमलः ।

चित्कोशेषु द्रष्टम् । अस्यां व्याख्यायामतोऽस्मत्प्रत्ययेत्यतः प्राचीनग्रन्थोऽहं मनुष्य इत्यादिप्रतीतावध्यासलक्षणाभावसमर्थने फलतः पर्यवसन्नो द्रष्टव्यः । **ज्येष्ठस्यापीति** । अपच्छेदन्यायेन ( जै० अ. ६ पा. ५ सू. ५४ ) पूर्वस्य परेण बाधमाशङ्क्य **तदपेक्षस्येति** विशेषितं । तेनोत्तरस्य पूर्वापेक्षायामुपक्रमाधिकरणन्याय एव प्रवर्तत इति सूचितमित्यर्थः । **आद्यद्वयं निरस्येति** । अपौरुषेयतयेत्यादिषष्ठ्यन्तविशेषणद्वयेनेति शेषः । **एवमप्रामाण्यं निराकृत्येति** । **ननू**-त्पादकाप्रतिद्वन्द्वित्वादित्यप्रामाण्यनिराकरणहेतुनैवोपचरितार्थत्वमपि निराकृतं, किमर्थं पुनस्तन्निराकरणाय प्रागुपपादित-मनन्यपरत्वं स्मार्यते, इत्याशङ्क्याह—**पूर्वमिति** । **ननु**—इह का पुनरप्युपजीव्यविरोधशङ्का, यन्निरासायानन्यपरत्वहेत्वन्वेषणम्; उत्पादकाप्रतिद्वन्द्विहेतुविवरणग्रन्थ एव हि यदुपजीव्यं न तेन विरोधः, येन विरोधः न तदुपजीव्यमित्युपजीव्य-विरोधशङ्का निरस्ता—**उच्यते;** उपजीव्योपजीवकविरोधोऽत्र द्वेधा समाधातुं शक्यते; उपजीव्यं प्रत्यक्षमौत्सर्गिकात् तत्त्वा-वेदकप्रमाणभावात् प्रच्याव्य तस्य सांव्यवहारिकविषयसमर्पणेन वा, उपजीवकं वाक्यजातमौत्सर्गिकान्मुख्यार्थात्प्रच्याव्य तस्यौपचारिकविषयसमर्पणेन वा । **तत्रोपजीव्योपमर्दादुपजीवकोपमर्दो वरमिति न्याय**मवलम्ब्य शङ्कायां तत्समाधानार्थमनन्यपरत्वस्य पुनरनुकीर्तनम् । इत्थं च तत्समाधानप्रकारो विवक्षितः; अस्त्युपजीव्यस्यापि बलवता उपजीवकेनोपमर्दः पूर्वतन्त्रे निर्णीतः । यथा–'**विप्रतिषेधे करणसमवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात्**' ( जै० अ. ३ पा. ८ सू. २१ ) **इत्यधिकरणे चिन्तितम्**—कुण्डपायिनामयने श्रूयते 'यो होता सोऽध्वर्यु'-रिति; तत्र होत्रध्वर्युशब्दयोर्भिन्नपुरुषवाचिनोर्मुख्यसामानाधिकरण्यायोगादन्यतरस्य लक्षकत्वे कल्पनीये प्रथमश्रुतस्य होतृशब्दस्य मुख्यवृत्त्या चरमश्रुतस्याध्वर्युशब्दस्याध्वर्युकर्मलक्षकत्वमिति तल्लक्षितेऽध्वर्युकर्मणि कर्तृत्वेन होतुर्विधिः । तेन प्रकृतितः प्राप्तयोरध्वर्युहोत्रोरध्वर्योर्निवृत्तिः, होत्रैवाध्वर्यवमपि कर्तव्यमिति व्यवस्था । **तत्र** यूपपरिव्याणकाले 'परिवीरसि' 'युवा सुवासा' इत्यनयोः परिव्याणे क्रियमाणानुवादिकरणमन्त्रयोरध्वर्युणा होत्रा च प्रयोज्ययोः परिव्याणासंकल्पप्रभृति तत्समाप्तिपर्यन्तमनुवर्तमानः क्रियमाणानुवादी तन्मध्यपाती परिव्याणारम्भसंनिपाती करणमन्त्र इति कालैक्यमापन्नयोस्तथैव कुण्डपायिनामयनेऽपि प्राप्तावेकेन होत्रा युगपदुभयोः प्रयोक्तुमशक्यतयावश्यमन्यतरबाधे वक्तव्ये, प्रत्यक्षश्रुतिविधीयमानाध्वर्युकर्मबाधायोगादानुमानिकप्रकृतिवच्छब्दप्राप्तहोतृकर्मबाध इति । **तत्र** होतुः प्रकृतिवच्छब्देन प्राप्तिः प्रत्यक्षवचनस्योपजीव्या; विकृतौ पदार्थप्राप्तिरुपकारमुखेनेति होतृकर्मप्राप्तिरपि होतृप्राप्त्यर्थत्वेनोपजीव्या; सा चोपजीव्यहोतृकर्मप्राप्तिरविशेषप्रवृत्ता 'युवा सुवासा' इति मन्त्रप्रयोगमपि स्पृशति । अध्वर्युशब्दश्चाध्वर्युकर्मणि लक्षयन् 'परिवीरसी'ति मन्त्रप्रयोगमपि स्पृशति; उभयोरप्युदाहृतमन्त्रद्वयप्रयोगातिरिक्तविषयत्वेन सावकाशताप्यस्ति; एवं सत्यप्युपजीवकस्य प्रत्यक्षवचनत्वेन प्राबल्यादुपजीव्यस्यैवोपमर्दः संश्रितः । **तथा–'हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात्'** ( जै. अ. १० पा. ३ सू. १३ ) **इत्यधिकरणे चिन्तितम्**—वायव्यपशौ श्रूयते, 'हिरण्यगर्भः समवर्तताग्रइत्याघारमाघारयती'ति तत्र किममन्त्रके प्रजापतिदेवताके प्रथमाघारे मन्त्रो विधीयते, उत मन्त्रवतीन्द्रदैवत्यद्वितीयाघारे प्राकृतमन्त्रापवादकं मन्त्रान्तरं विधीयत इति संशये, हिरण्यगर्भशब्दस्य प्रजापतिनामत्वप्रसिद्धेः 'प्रजापतिर्वै हिरण्यगर्भ' इति वाक्यशेषाच्च

१ अत्र तदपेक्षत्वं प्रत्यक्षप्रमाणसिद्धार्थानुवादकतया स्वप्रामाण्यसिद्धौ तत्प्रामाण्यमुखनिरीक्षकत्वरूपं बोध्यम् । २ पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्ध्यधीनानुपूर्वीमत्त्वं पौरुषेयत्वं, तद्रहिततयेत्यर्थः । ३ अनधिगताबाधितार्थबोधकत्वमेव हि प्रामाण्यं तच्चान्तराध्यक्षं सिद्धमित्यर्थः ।

त्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च

## भामती ।

त्तिदर्शनात् । तथाच वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः; **नहि लौकिका नाग इति वा नग इति वा पदात्कुञ्जरं वा तरुं वा प्रतिपाद्यमाना भवन्ति भ्रान्ताः** । नचानन्यपरं वाक्यं स्वार्थे उपचरितार्थं युक्तम्; उक्तंहि—'न विधौ परः शब्दार्थः' इति । ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुः, न बाधकत्वे; रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्, तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः । दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम् । **तथाच पारमर्षं सूत्रं—'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्'** ( जै० अ० ६ पा० ५ सू०

## वेदान्तकल्पतरुः ।

**नचानन्यपरमिति** । पूर्वं भेदाग्रहसिद्ध्यर्थमिदमुक्तम्; इदानीमुपजीव्यविरोधाभावाय । विधायके शब्दे परो लक्ष्यः शब्दार्थो न भवतीति शबरस्वामिनोक्तं, तत्तुल्यं वेदान्तेष्वपि; अनधिगतार्थबोधित्वेन तत्परत्वसाम्यादिति । एवं तावदुपजीव्यत्वं प्रत्यक्षस्य निराकृत्य मुख्यत्वमात्रस्य प्राबल्यहेतुतां निराकरोति—**ज्येष्ठत्वं चेति । पौर्वापर्य इति** । षष्ठे स्थितम् ( जै. अ. ६ पा. ५ सू. ५४ ) । ज्योतिष्टोमेऽन्योन्यं संबध्य यज्ञशालातो निर्गच्छतामृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते—**'यद्युद्गाता विच्छिन्द्याददक्षिणेन यजेत, यदि प्रतिहर्ता सर्वस्वदक्षिणेने'ति** । तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासंभवात्, किं पूर्वं कार्यमुत परमिति विशयेऽनुपजातविरोधित्वात्पूर्व-

## कल्पतरुपरिमलः ।

विनियोज्यमन्त्रस्वारस्यानुरोधेन प्रथमाघार इति पूर्वः पक्षः; द्वितीयाघारे मन्त्रकार्यनियमादृष्टस्य क्लृप्तत्वादक्लृप्तत्वाच्च प्रथमाघारे तदकल्पना लाघवानुसारेण द्वितीयाघारे मन्त्रविधिरिति सिद्धान्त इति ॥ **अत्रा**घारमन्त्रविधौ मन्त्र उपजीव्यः; प्रसिद्धं मन्त्रमादाय तद्विनियोगस्य कार्यत्वात्, आघारे तद्विधिरुपजीवकः । **तत्र** मन्त्रः कथंचिदिन्द्रे योगकल्पनया सावकाशः, तदुपजीवकविधिगताघारशब्दस्तु द्वितीयाघार इव प्रथमाघारेऽपि प्रसिद्धवृत्त्यैव सावकाशः; एवं सत्यपि लाघवानुगृहीतस्योपजीवकस्य प्राबल्येनोपजीव्यस्य क्लिष्टवृत्तिराश्रिता, एवमिहाप्यद्वैतवाक्यजातस्योपक्रमादितात्पर्यलिङ्गयुक्तत्वेन प्राबल्यात्तदुपजीव्यस्य प्रत्यक्षस्यैव व्यावहारिकविषयसमर्पणेनोपमर्दः कल्पयितुं युक्त इति । **एतेन**—उपजीव्यविरोधे तात्पर्यवत्त्वमेव न सिध्यतीत्यपि शङ्का—**निरस्ता;** तदुपजीव्यविरोधेऽपि तात्पर्यवता वाक्येनोपजीव्योपमर्दस्य दर्शितत्वात् । **विधायके इति । ननु**—एतदयुक्तम्; सोमेन यजेतेति विधिवाक्ये सोमवता यागेनेति मत्वर्थलक्षणाङ्गीकारात्, **तत्तुल्यमित्ये**दप्ययुक्तम्; तत्त्वमसिवाक्ये भागत्यागलक्षणाङ्गीकारादिति-**चेत्, उच्यते;** विधिवाक्यं तत्तुल्यं वा तात्पर्यवद्वाक्यं यत्किंचिदनुग्रहार्थम् अन्यमर्थं नेतुमयुक्तमिति तदभिप्रायः । एवंच विशिष्टविधिपरे सोमवाक्ये सोमद्रव्यतादात्म्यविशिष्टयागविध्यभ्युपगमे तस्य विशिष्टस्य विधेयस्य दध्यादिवल्लोकसिद्धत्वाभावेन विधिवाक्यादेव देवताधिकरणे ( ब्र. अ. १ पा. ३ सू. ३३ ) उदाहरिष्यमाणरेवत्याधारवारवन्तीयविशेषणस्येव विना तात्पर्यं सिद्धिरेष्टव्या । नच तात्पर्यरहितादागमाद्यागसोमलतामेदग्राहिप्रत्यक्षविरुद्धार्थः सिध्यतीति; तत्र तदविरोधाय मत्वर्थलक्षणाश्रयणम्; अद्वैतश्रुतेस्तु तात्पर्यविषयादन्यत्र नयनमेव नास्तीति न कश्चिद्दोषः । **ननु** प्रत्यक्षज्ञानप्रामाण्यं ज्ञानसमानवित्तिवेद्यतया ज्ञाने प्रकाशमाने विशिष्य नियमेन प्रतीतं नाद्वैतश्रुत्या बाधनमर्हतीत्याशङ्क्य विशिष्य नियमेन प्रतीतस्यापि पूर्वस्य परेण बाधे टीकायामपच्छेदन्यायो ( जै. अ. ६ पा. ५ सू. ५४ ) दाहारणं कृतम्; **तत्र** पूर्वस्य परोपजीव्यत्वं नास्तीति वैषम्याशङ्कानिराकरणपूर्वकं तदवतारयति—**एवं तावदिति** । किमद्वैतश्रुतेः प्रत्यक्षं प्रमाणं सदुपजीव्यमिति प्रामाण्यस्य प्राबल्यमुच्यते, उतानुपजीव्यत्वेऽपि प्रथमप्रतीतत्वमात्रेण । **आद्यपक्षो** न शङ्कार्ह इत्याह—**उपजीव्यत्वमिति । प्रत्यक्षस्य** प्रमाणस्य सत इति शेषः । **द्वितीयपक्ष**निराकरणार्थमुत्तरग्रन्थ इत्याह—**मुख्यत्वमात्रस्येति** । ज्योतिष्टोमे बहिष्पवमानार्थं हविर्धानान्निर्गच्छतां ऋत्विग्यजमानानामन्वारम्भणं, विहितम् । 'अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्ते'त्यादिना । तद्विच्छेदे प्रायश्चित्तमाम्नायते 'यद्युद्गाताऽपच्छिद्येतादक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत, तत्र तद्दद्यायत्पूर्वस्मिन्पास्यन्स्यात्, यदि प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्या'दिति । तत्र पूर्वनिमित्तकर्तव्यताबुद्धिः परनिमित्तकर्तव्यताबुद्ध्या यथा बाध्यते, तथा श्रुतिजन्याद्वैतबुद्ध्या परया पूर्वप्रत्यक्षजन्या कर्तृत्वादिबुद्धिर्बाध्यते । बाधितापि सा तदुचितविषयसमर्पणेन शुक्तिरूप्यादिबुद्धिवदनुग्राह्येति यावद्ब्रह्मज्ञानाऽबाध्यव्यावहारिकविषयाङ्गीकारात् तद्विषयं प्रत्यक्षादि व्यावहारिकप्रमाणमिति व्यपदिश्यते; व्यावहारिकमेव प्रत्यक्षादिसिद्धं तत्तत्कारणस्वरूपं प्रमित्युत्पत्तावपेक्षितमिति तदबाधात् । तद्गततात्त्विकांशबाधेऽपि शरशास्त्रस्य वेद्यास्तरणप्राप्त्यर्थं प्रकृतिवच्छब्दापेक्षस्य तत्प्राप्तकुशांशबाध इव अपरामृष्टप्रकृतिवच्छब्दजन्यबुद्धौ कुशांशप्रामाण्यबाधइव च नोपजीव्यविरोध इत्याशयः । **यत्तु**—एकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां तत्तन्नैमित्तिककर्तव्यतयोर्बदरफले श्यामरक्तरूपयोरिव क्रमेणोत्पादाद्रूपज्ञानद्वयवत् कर्तव्यताज्ञानद्वयमपि प्रमाणमेवेति न

भामती ।

५४ ) इति । तथा '**पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥**' इति । **अपिच** येऽप्यहंकारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम्; 'अहमिहैवास्मि सदने जानानः' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात्, उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत् । नच–इदं देहस्य प्रादेशिकत्वमनुभूयते नत्वात्मन इति सांप्रतम्; नहि तदैवं भवति—'अहम्' इति; गौणत्वे वा न 'जानानः' इति । **अपिच** परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तत इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः, स गौणः; स च भेदप्रत्ययपुरःसरः, तद्यथा नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः (जै० अ० १ पा० ४ सू० ४)

वेदान्तकल्पतरुः ।

मिति पूर्वपक्षे, राद्धान्तः—**पौर्वापर्ये सति** निमित्तयोः, **पूर्वस्य** नैमित्तिकस्य, दौर्बल्यं; उत्तरस्य निरपेक्षस्य तद्बाधकतयोदितत्वात्, पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगात् । **उक्तंहि**—'पूर्वं परमजातत्वादबाधित्वैव जायते । परस्यानन्यथोत्पादान्नत्वबाधेन संभवः ॥'—इति । **प्रकृतिवत्** यथाहि प्रकृतौ क्लृप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षिण्यां प्राप्ताः, कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते, तद्वदिदमिति । एवं तावच्छुक्त्यादिगम्यात्मतत्त्वस्याहंप्रत्ययेऽनवभासादविविक्तविषयत्वमुक्तं । **संप्रति** वादिनिरूपितस्यात्मनोऽनवभासादपि तदाह—**अपिचेति** । सर्वगतात्मवादिनं प्रत्याह—**अहमिहेति । नहि तदैवमिति** । तव मतेऽहंप्रत्ययस्य विविक्तात्मविषयत्वादित्यर्थः । **ननु** तत्रात्मवचनोऽहंशब्दो देहे उपचर्यते, अत आह—**गौणत्वे वेति** । भवतीत्यनुषङ्गः । उपचरितात्मभावस्य देहस्य ज्ञातृत्वानुपपत्तेः जानान इति प्रतीतिर्नहि भवतीत्यर्थः । नच–ज्ञातृत्वमपि देहे उपचर्यत इति–वाच्यम्; वक्तुः स्वज्ञानप्रकाशनपरे वाक्ये तद्विरोधात् । अथाहमालम्बने आत्मनि देहगतप्रादेशिकत्वमेवोपचर्यते, तर्हि देहात्मनोर्भेदो ग्रहीतव्यो; नच गृह्यते इत्याह—**अपिचेत्यादिना** । अत्र गौणवादी प्रष्टव्यः, किं सिंहशब्दस्येव माणवके सांप्रतिकं देहादावहंशब्दस्य गौणत्वम्, उत सार्षपरसादौ तैलशब्दस्येव निरूढम् । नाद्य इत्याह—**परेति । प्रमाणलक्षणे स्थितम्—'तत्प्रख्यं चान्यशास्त्रम्'** (जै. अ. १ पा. ४ सू. ४) । अग्निहोत्रं जुहोतीति श्रूयते तत्र संशयः, किमग्निहोत्रशब्दोऽग्निदेवतागुणविधिः, उत कर्मनामेति । तत्राग्नये होत्रं हविरस्मिन्निति समासान्तर्वर्तिन्या चतुर्थ्याऽग्नेर्होमदेवतात्वप्रतीतेर्गुणविधिरिति प्राप्ते, राद्धान्तः—'यदग्नये च प्रजापतये च सायं जुहोती'त्यग्नेर्होमे देवतात्वप्रख्यापनात्प्राप्ते च विधिवैयर्थ्या-

कल्पतरुपरिमलः ।

परेण पूर्वज्ञानबाधेऽपच्छेदन्याय उदाहरणं–**इति । तन्न;** अङ्गस्य सतः कर्तव्यत्वं, नच पश्चाद्भाविप्रतिहर्त्रपच्छेदवति पूर्ववृत्तोद्गात्रपच्छेदप्रायश्चित्तस्याङ्गत्वमस्ति; आहवनीयशास्त्रस्य पदहोमातिरिक्तहोमविषयत्ववत् तदङ्गत्वबोधकशास्त्रस्य पश्चाद्भाविप्रतिहर्त्रपच्छेदरहितक्रतुविषयतायाः सिद्धान्तितत्वात् । **उक्तंहि न्यायरत्नमालायाम्**—तत्रैवं सति शास्त्रार्थो भवति, पश्चाद्भाव्युद्गात्रपच्छेदविधुरप्रतिहर्त्रपच्छेदवतः क्रतोः सर्ववेदसदानमङ्गमेवमुद्गात्रपच्छेदेऽपि द्रष्टव्यमिति । नच मीमांसकमर्यादामतिक्रम्य परकर्तव्यतानिवर्त्यं पूर्वकर्तव्यत्वं निर्वक्तुमपि शक्यम्; नहि कृतिसाध्यत्वयोग्यत्वं तत्; तस्य पश्चादपि सत्त्वात् । नापि फलमुखकृतिसाध्यत्वम्; तस्य पूर्वमप्यजननात् । नाप्यङ्गत्वम्; तस्य संनिपत्योपकारकत्वफलोपकारकत्वान्यतररूपकारणताविशेषत्वेन तत्र योग्यत्वफलमुखत्वविकल्पे पूर्वोक्तदोषानतिवृत्तेः । नच कर्तव्यत्वं नाम धर्मान्तरमागमापायि कल्पनीयं; मानाभावात् । सत्यपि प्रत्यक्षे संनिहिते शराम्नाने कल्प्यातिदेशवाक्यप्रापणीयानां दूरस्थितानां कुशानां ततः प्रागेव ग्रहणे हेतुगर्भं विशेषणम्—**उपकाराकाङ्क्षिण्यामिति । अस्यार्थः**—फलजनकत्वेन कर्माणि बोधयतां प्रधानविधीनां कथमनेन फलं जननीयमित्यनिर्ज्ञातप्रकारतया प्रधानगतफलजननसामर्थ्योद्बोधकाङ्गजन्यदृष्टादृष्टकार्यसमुदायरूपे उपकारे एव प्रथममाकाङ्क्षा भवति, तन्मुखेनोपकारजनकपदार्थरूपेष्वङ्गेष्वाकाङ्क्षा । एवंच प्राकृतप्रधानविधिः प्रथमाकाङ्क्षितमप्युपकारं क्वचिदपि क्लृप्तमपश्यन्नगत्या प्रकरणाम्नातान्पदार्थान्गृहीत्वा तत्पदार्थशक्त्यनुसारेण दृष्टादृष्टकार्यविशेषकल्पनया तत्समुदायरूपमुपकारं लब्ध्वा निवृत्तो भवति । वैकृतविधयस्तु स्वसंनिधौ क्लृप्तमुपकारमपश्यन्तोऽपि प्रकृतौ क्लृप्तं तं पश्यन्तः स्वाकाङ्क्षया दूरस्थितमपि तमेव गृह्णन्तः तन्मुखेन तज्जननशक्तत्वेनावधृतं प्राकृतपदार्थजातमेव प्रथमं गृह्णन्ति। **यदाहुः**—'क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह । संबध्यन्ते समीपस्थं विकाराः प्रोज्झ्य चोदितम् ॥' इति । ततश्च वैकृतविधिसंनिध्याम्नातस्य शरादेर्वैशेषिकाङ्गजातस्य पश्चादन्वय इति । **निरपेक्षैरिति ।** प्रत्यक्षश्रुतत्वेन पुरुषबुद्धिमूलप्रापकप्रमाणकल्पनाऽनपेक्षैरित्यर्थः । **यद्वा** शरप्राप्तिनिरपेक्षैरित्यर्थः । **ननु** पूर्वनिमित्तवति प्रयोगे तन्निमित्तककर्तव्यताबुद्धेः परनैमित्तिककर्तव्यताबुद्ध्या भ्रमत्वापादनेऽपि पूर्वनैमित्तिकशास्त्रस्य नात्यन्तबाधः; पूर्वनि-

१ बधिरादिषु श्रोत्रधर्माध्यासादर्शनात्पृथक्धर्मग्रहणमिति पञ्चपादिका । लोहित्यस्य स्फटिके इव धर्ममात्रप्रतिबिम्बनिराकरणार्थं धर्मपदमिति तु भामती ।

## भामती ।

प्रकरणान्तरावधृतभेदे कौण्डपायिनामयनगते कर्मणि 'मासमग्निहोत्रं जुहोति' ( जै० अ० ७ पा० ३ सू० १ ) इत्यत्र

## वेदान्तकल्पतरुः ।

न्नामधेयम् । नचात्र चतुर्थीसमाससंभवः; तादर्थ्यप्रकृतिविकारयोरभावात्–इति । एवं नित्याग्निहोत्रवाचिनोऽग्निहोत्रशब्दस्य गुणादन्यत्र वृत्तिं वक्तुं मुख्यार्थाद्गृहीतभेदं कर्मोदाहरति—**प्रकरणान्तरेति । भेदलक्षणे स्थितम्–'प्रकरणान्तरे प्रयोजनान्यत्वम्'** ( जै. अ. २ पा. ३ सू. २४ )। कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति श्रूयते। **अत्र** किं नित्याग्निहोत्रे मासगुणो विधीयते, उत कर्मान्तरमिति। **तत्र** सत्यपि प्रदेशभेदे नाम्ना नित्याग्निहोत्रस्य बुद्धौ संनिधापनात्तत्समभिव्याहृतस्य जुहोतीत्याख्यातस्य तत्संनिधापितार्थपरत्वान्नित्याग्निहोत्रानुवादेन मासो विधीयते इति प्राप्ते, राद्धान्तः–**न तावदत्रा**ख्यातेन होमानुवादेन मासः शक्यो विधातुं; कालस्य पुरुषानिष्पाद्यत्वेनानुपादेयत्वात्। **नापि** मासोद्देशेन नित्याग्निहोत्रविधिः; तस्यासंनिधेः। नच नाम तत्संनिधापयति; अन्यत्र जुहोतीत्याख्यातेन पूर्वापरीभूततयोक्तस्य **सिद्धार्थबोधिना नाम्ना**नुपस्थापनात्।

## कल्पतरुपरिमलः ।

मित्तमात्रवति प्रयोगान्तरे चारितार्थ्यात्, अहंप्रत्ययस्य कर्तृत्वभोक्तृत्वादिविषयस्यात्मन्यद्वैतवाक्यजातेन बाधे तु तन्मूलस्य प्रमाणस्य न क्वचिदपि चारितार्थ्यम्। नच–व्यावहारिकविषयालम्बनतया तत्रैव चारितार्थ्यं स्यादिति–वाच्यम्; व्यावहारिकविषयस्य शुक्तिरूप्यादिवत्कदाचिद्बाध्यत्वाभ्युपगमाद्बाध्यविषये च व्यावहारिकं प्रामाण्यमिति व्यवहारस्याद्वैतपरिभाषामात्रसिद्धत्वादित्याशङ्क्य निर्दोषत्वेन क्लृप्तशास्त्रस्यैव विषयान्तरप्रदर्शनेन चारितार्थ्यमुपपादनीयं, नतु दोषमूलस्याहंप्रत्ययस्य तस्य पश्वाद्भाव्युद्गात्रपच्छेदवत्प्रयोगविषयतदपरामर्शदोषमूलसर्वस्वदानकर्तव्यताबुद्ध्यादिवद्भ्रान्तित्वोपपत्तेरिति विवेचनाय तस्य दोषमूलत्वं दर्शयितुं प्रवृत्तमुत्तरग्रन्थमवतारयति—**एवं तावदिति । तादर्थ्यप्रकृतिविकारयोरिति ।** तादर्थ्यप्रकृतिविकारभावयोरित्यर्थः । पूर्वमीमांसकमते हविषो देवतार्थत्वं हविर्देवतयोर्हिरण्यकुण्डलवत् प्रकृतिविकारभावश्चेत्युभयमपि नास्ति । **सिद्धान्ते** हविषो देवताभोज्यस्य तादर्थ्यसद्भावेऽपि हविर्देवतयोः प्रकृतिविकारभावो नास्तीत्यर्थः । **ननु**–अत्र पूर्वपक्षिणा अग्नये होत्रमस्मिन्निति बहुव्रीहिसमासः शङ्कितः, ननु बहुव्रीहौ तादर्थ्यप्रकृतिविकारापेक्षास्ति; तत्पुरुषाधिकारे एव 'चतुर्थी तदर्थार्थे'त्यादिसूत्रेण तदर्थसमासस्य विहितत्वात्, तस्यैव च तदर्थसमासस्य तस्मिन्सूत्रे बलिरक्षितग्रहणेन ज्ञापकेन प्रकृतेस्तादर्थ्यस्य स्फुटत्वेन वार्तिककृद्वचनेन च प्रकृतिविकृतिविषयत्वनियमसिद्धेः, **समानाधिकरणानां बहुव्रीहिरिति** शाब्दिकनियमादलाक्षणिकश्चतुर्थीगर्भव्यधिकरणबहुव्रीहिरिति **चेत्,** तर्हि स एव शङ्कितसमासासंभवे हेतुर्वक्तव्यो न तादर्थ्यप्रकृतिविकारभावाभावे—**इति चेत्, सत्यम्;** यदि पूर्वपक्षी चतुर्थीगर्भव्यधिकरणबहुव्रीहिमलाक्षणिकं मन्यमानः सन् प्रत्ययस्य भावार्थतामवलम्ब्याग्नये होत्रं हवनमिति चतुर्थीतत्पुरुषमाश्रयेत, तदा तदसंभवे हेतुराचार्यैरुपन्यस्त इति न विरोधः । **ननु**—सिद्धान्ते प्राप्तदेवतासंबन्धप्रवृत्तिनिमित्तकं यौगिकमग्निहोत्रनामेष्यते, बहुव्रीहिसमासश्च प्रदर्श्यते, स कथमुपपद्यत—**इति चेत्, उच्यते;** नात्यन्तं व्यधिकरणबहुव्रीहेरसंभवः; 'सप्तमीविशेषणे बहुव्रीहा'विति सप्तमीग्रहणेन ज्ञापकेन कण्ठेकाल इत्यादौ तस्याभ्युपगमात्, तदेव व्याप्तिन्यायेन विभक्त्यन्तरगर्भव्यधिकरणबहुव्रीहेरपि ज्ञापकमाश्रित्य वामनेनावृत्त्या 'बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद'इति 'सच्छास्त्रजन्मा हि विवेकलाभ' इत्यादिप्रामाणिकप्रयोगदृष्टस्य पञ्चम्यादिगर्भव्यधिकरणबहुव्रीहेः साधुत्वप्रतिपादनाच्च, किंत्वेवं ज्ञापकसिद्धो व्यधिकरणबहुव्रीहिः प्रामाणिकप्रयोगदर्शने सति समर्थनीयो न सर्वत्र; अन्यथा 'शेषो बहुव्रीहि'रिति सूत्रे शेषग्रहणेनाहत्य वार्तिकवचनेन च सिद्धस्य समानाधिकरणानां बहुव्रीहिरित्यौत्सर्गिकनियमस्य निर्हेतुकभङ्गापत्तेः । ततश्च सिद्धान्ते यदग्नये चेत्यादिवाक्यान्तरप्राप्ताग्निदेवतासंबन्धानुवादकं यौगिकमग्निहोत्रनामेति प्रतीतेः तदुपपादनार्थः प्रमाणमूलो युज्यते व्यधिकरणबहुव्रीहिः । गुणविधिरिति पूर्वपक्षे तु यदग्नये चेत्यादिशास्त्रमग्निप्रजापतिरूपानेकगुणविशिष्टहोमान्तरविधायकम्, अग्निर्ज्योतिरिति मन्त्रस्त्वस्यैव होमान्तरस्याङ्गमिति तयोर्विषयान्तरप्रदर्शनेन विधित्सितगुणप्रापकत्वाभावस्य समर्थनीयत्वादग्निदेवताया अप्रापकस्मादभ्युपगम्यमानो व्यधिकरणबहुव्रीहिर्न प्रमाणमूल इति स न युज्यते । तत्प्रख्यसूत्रे ( जै. अ. १ पा. ४ सू. ४ ) यस्मिन्गुणोपदेश ( जै. अ. १ पा. ४ सू. ३ ) इति पूर्वसूत्राद्यस्मिन्नित्यस्यापि वा, नामधेय ( जै. अ. १ पा. ४ सू. २ ) मिति तत्पूर्वसूत्रान्नामधेयमित्यस्य चानुषङ्गः; तथाच तस्य विधित्सितगुणस्य प्रख्यं प्रख्यापकमन्यत् शास्त्रं यस्मिंस्तदग्निहोत्रादिकं नामधेयमित्यर्थः । **कुण्डेति ।** कुण्डपायिनामयनाख्ये सत्रे श्रुतं 'यन्मासमग्निहोत्रं जुहोती'ति वाक्यं तत्रेत्यर्थः । अस्मिन्वाक्ये श्रुतगुणस्य विधेयत्वसंभवे विशिष्टविधिगौरवपरिहारार्थं विधिशक्तेर्गुणसंक्रान्त्या धात्वर्थाविधानात्तद्विधानापेक्षः कर्मभेदो न सिध्येदतो धात्वर्थविधानसिद्ध्यर्थं मासगुणस्य विध्यनर्हत्वमाह—**न तावदिति । ननु** कालस्याविधेयत्वेऽपि विहितमेव नित्याग्निहोत्रं कालसंबन्धसिद्ध्यर्थं तदुद्देशेन पुनर्विधीयतां, सायं प्रातश्च जुहोतीति वाक्य इवेत्याशङ्क्य तद्वैषम्यमाह—**नापीति । सिद्धार्थबोधिना नाम्नेति ।** 'यदा त्वाद्यपरिस्पन्दात्प्रभृत्या फललाभतः । क्रिया पूर्वापरीभूता

## भामती ।

**साध्यसादृश्येन गौणः, माणवके चानुभवसिद्धभेदे सिंहात्सिंहशब्दः, नत्वहंकारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नोऽनुभूयते, येन परशब्दः शरीरादौ गौणो भवेत् । नच—अत्यन्तनिरूढतया गौणेऽपि न गौणत्वाभिमानः सार्षपादिषु तैलशब्दवदिति—वेदितव्यम्; तत्रापि स्नेहात्तिलभवाद्भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वाभिमानो नत्वर्थयोस्तैलसार्षपयोरभेदाध्यवसायः । तत्सिद्धं गौणत्वमुभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तं; तदिह व्यापकं विवेकज्ञानं निवर्तमानं गौणतामपि निवर्तयतीति । नच—बालस्थविरशरीरभेदेऽपि सोऽहमित्येक-**

## वेदान्तकल्पतरुः ।

तस्मात्प्रयोजनान्यत्वं विधेय**भावनान्यत्वमिति । नन्व**ग्निहोत्रशब्दस्य कौण्डपायिने कर्मणि प्रयोगे किं प्रयोजनम्, न तावन्नित्याग्निहोत्रेण सह क्रियात्वादिसादृश्यबोधः; तस्य वैयर्थ्यादत आह**—साध्येति । सप्तमे स्थितम्–'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्'** ( जै. अ. ७ पा. ३ सू. १ ) । मासमग्निहोत्रमित्यत्रान्या चिन्ता, किमग्निहोत्रशब्दो नित्याग्निहोत्रधर्मानिहातिदिशेन्न वेति । तत्र यद्ययं गौणः स्यात्तदाग्निहोत्रवज्जुहोतीत्यतिदिशेत्तद्धर्मान्, न त्वयं गौणः; जुहोतिसामानाधिकरण्यस्यात्रापि तुल्यत्वेन नामधेयत्वादग्निदेवताविधानार्थत्वाद्वा, अतो नातिदिशेदिति प्राप्ते, सिद्धान्तः—न तावदत्राग्निदेवता विधातुं शक्या; चतुर्थीसमासासंभवस्योक्तत्वात् । तत्र सिद्धे कर्मभेदेऽनेकार्थत्वस्यान्याय्यत्वादेकत्राग्निहोत्रशब्दो मुख्योऽपरत्र गौणः; नित्याग्निहोत्रे च नामप्रवृत्तिनिमित्तस्याग्निदेवतासंबन्धस्य भावात्तत्रैव मुख्यता, अतः परशब्दः परत्र सादृश्यमुपादाय प्रवर्तते; तच्च सादृश्यं कर्तव्यार्थबोधकाख्यातसमभिव्याहृतनाम्नाग्निहोत्रवज्जुहोतीति साध्यत्वेन विधेयमिति तत्सिद्ध्यर्थं नित्यधर्मानतिदिशेदिति । अतश्च नित्याग्निहोत्रधर्माणां द्रव्यदेवतादीनामतिदेशो गौणप्रयोगफलमित्यर्थः । **क्रियाया** नित्याग्निहोत्रस्य, **अभिधानं** नामधेयमग्निहोत्र**पदमुक्तं** तत्प्रख्याधिकरणे (जै. अ. १ पा. ४ सू. ४) **तस्यान्यत्र श्रवणे, विधिप्रदेशः,** विधेयधर्मातिदेशः **स्यादिति** सूत्रार्थः । लोकसिद्धसादृश्यां गौणीं वृत्तिमाह—**माणवके इति ।** प्रकृते भेदग्रहाभावमाह—**नत्विति ।** निष्कृष्य लुठितः प्रतिभासितो गर्भोऽसाधारणाकारो यस्य स तथा, तत्तया नानुभूयते, अनुभवे वा वादिविवादो न स्यादित्यर्थः । एवं सांप्रतिकीं गौणतां निरस्य निरूढां निराचष्टे—**न चात्यन्तेति ।** निरूढत्वं नाम प्रयोगप्राचुर्यान्मुख्यवद्भानम् । निरूढेऽपि गौणप्रयोगे नार्थयोस्तादात्म्यं प्रतीयते, प्रतीयते तु प्रकृते इति वैषम्यमित्यर्थः । **तत्** तस्माद्गौणत्वव्यापकं विवेकज्ञानमिह व्यावर्तमानं गौणतामपि व्यावर्तयतीत्येतत्सिद्धमित्यन्वयः । अभिज्ञारूपाहंप्रत्ययाद्विवेकासिद्धावपि प्रत्यभिज्ञारूपात्तत्सिद्धिमाशङ्क्याह—**नच बालस्थविरेति** । आत्मैक्यं

## कल्पतरुपरिमलः ।

लक्ष्यते वर्तते तदा ॥' इत्युक्तरीत्या पूर्वापरीभूतेन क्रियारूपेण स्वार्थं धातुरुपस्थापयति, न तेन रूपेण नाम तदर्थमुपस्थापयितुं शक्नोतीति न नाम्ना धात्वर्थप्रत्यभिज्ञा संभवतीत्यर्थः । **उक्तंच वार्तिके**—'यादृशी भावनाख्याते धात्वर्थश्चापि यादृशः । नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥' इति । **भावनान्यत्वमिति ।** नित्याग्निहोत्रस्य मासाग्निहोत्रस्य च जुहोतिधात्वर्थस्य भेदो भेदलक्षणद्वितीयाध्यायार्थभावनाभेदोपपादकतया प्रसाधित इति तत्प्रयोजनभूतो भावनाभेदः प्रयोजनान्यत्वमिति सौत्रपदेन विवक्षित इत्यभिप्रेत्यैवं व्याख्यातम् । **यद्वा** नाम्ना यथाकथंचिन्नित्याग्निहोत्रप्रत्यभिज्ञया धात्वर्थाभेदोपपादनेऽप्यग्निहोत्रहोमस्य नित्यत्वेन प्राधान्ये कुण्डपायिनामयनाङ्गत्वे च भाव्यभेदेन भावनाप्रत्यभिज्ञापकाभावेन च भावनान्यत्वमनिवार्यमित्यभिप्रेत्यैवं व्याख्यातम् । **उक्तंच शास्त्रदीपिकायाम्—'ननु** नामधेयेन भवति पूर्वकर्मोपस्थापनम्, भवतु धात्वर्थस्य, भावना तु तेनानुपस्थानाद्भिद्यतएव । धात्वर्थोऽपि यादृशो धातुनाऽऽख्यातवर्तिना पूर्वापरीभूतो विधेरुपनीयते, न तादृशो नाम्नोपस्थाप्यत इति तस्यापि युक्तो भेदः । तदभेदेऽपि भावना तावद्भिन्नेति सिद्ध'मिति । धात्वर्थस्य नाम्ना प्रत्यभिज्ञानमाचार्यैरपि वेधाद्यधिकरणे ( ब्र. अ. ३ पा. ३ सू. २५ ) स्वीकृत्य व्यवहृतम् । तत्रैव तदुपपादनं करिष्यामः । **तत्र सिद्धे कर्मभेदे इति ।** यदि प्रकरणभेदेन भावनामात्रभेदः, तदा साप्तमिकाधिकरणे ( जै. अ. ७ पा. ३ सू. १ ) अग्निहोत्रशब्दस्य मासाग्निहोत्रे गौणत्वाभिधानमेव गौणमित्येतदपि वेधाद्यधिकरण एवोपपादयिष्यामः । **अभिज्ञारूपेति ।** मम देह इति देहत्वाकारेण विवेकग्रहः परिच्छिन्नत्वाकारेण देहभेदाध्यासेन विरोधी, चैत्रमैत्रयोः संनिहितयोरयमस्माद्भिन्न इति स्वरूपेण भेदग्रहे इव मैत्रचैत्रत्वाकारेण तदभेदाध्यासे । **अर्थः** विषयः । **भिन्नाभ्यामिति ।** बालस्थविरशरीरयोः परस्परभिन्नत्वं ताभ्याम् एकस्यात्मनो भेदश्चेत्युभयमप्यनुमानादित्यर्थः । परिमाणभेदे तस्यावयवापचयोपचयसाध्यत्वादवयवापचये समवायिकारणनाशात्पूर्वावयविनाशतः स्थितावयवैः सूक्ष्मावयव्यन्तरोत्पत्तिरवयवोपचये पश्चादापततामवयवानां पूर्वसिद्धेऽवयविनि कारणत्वायोगतः पूर्वसिद्धावयविसहितैरवयवान्तरैर्महावयव्यन्तरोत्पत्तिश्चावश्यंभाविनीति बालस्थविरशरीरयोर्भिन्नत्वं तावदानुमानिकं न प्रत्यक्षम्, प्रत्यक्षेण तु योऽयं मम देहो बाल्ये तथा पुष्ट आसीत् स एवेदानीं वार्धके कृश इत्यभेद एव तयोः प्रतीयते । ततश्च बाल्यस्थाविरदशयोर्भिन्नाभ्यां

### भामती।

स्यात्मनः प्रतिसंधानाद्देहादिभ्यो भेदेनास्त्यात्मानुभव इति-वाच्यम्; परीक्षकाणां खल्वियं कथा, न लौकिकानाम्, परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते; वक्ष्यत्यनन्तरमेव हि भगवान्भाष्यकारः—'पश्वादिभिश्चाविशेषात्' इति। बाह्या अप्याहुः—शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति, न प्रतिपत्तारः' इति। तत्पारिशेष्याचिदात्मगोचरमहंकारमहमिहास्मि सदन इति प्रयुञ्जानो लौकिकः शरीराद्यभेदग्रहादात्मनः प्रादेशिकत्वमभिमन्यते, नभस इव घटमणिकमल्लिकाद्युपाध्यवच्छेदादिति युक्तमुत्पश्यामः। नच-अहंकारप्रामाण्याय देहादिवदात्मापि प्रादेशिक इति-युक्तम्; तदा खल्वयमणुपरिमाणो वा स्याद्देहपरिमाणो वा। अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति च न स्यात्। देहपरिमाणत्वे तु सावयवतया देहवदनित्यत्वप्रसङ्गः। किंचास्मिन्पक्षेऽवयवसमुदायो वा चेतयेत्, प्रत्येकं वावयवाः। प्रत्येकं चेतनत्वपक्षे बहूनां चेतनानां स्वतन्त्राणामेकवाक्यताभावादपर्यायं विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत, अक्रियं वा प्रसज्येत। समुदायस्य तु चैतन्ययोगे व्रण एकस्मिन्नवयवे चिदात्मनोऽप्यवयवो व्रण इति न चेतयेत्। नच बहूनामवयवानामविनाभावनियमो दृष्टः; य एवावयवो विशीर्णस्तदा तदभावे न चेतयेत्।

### वेदान्तकल्पतरुः।

प्रत्यभिज्ञार्थः। भिन्नाभ्यामेकस्य भेदस्त्वनुमानात्तच्च शास्त्रादृते न ज्ञेयमित्यर्थः। तर्हि परीक्षकाणां देहादावहंशब्दो गौणः, नेत्याह—परीक्षका अपीति। अपरोक्षभ्रमो न यौक्तिकबाधादुच्छिद्यत इत्यर्थः। देहपरिमाणात्मपक्षे किमारब्ध आत्मा, उतावयवसमुदायः। नाद्य इत्याह—अनित्यत्वेति। द्वितीये आत्मावयवानां चैतन्यं, समुदायस्य वा। नाद्य इत्याह—प्रत्येकमिति। द्वितीयेऽपि समुदायापत्तिः, शरीरोपाधिकी वा, स्वत एव वा, काकतालीया वा। आद्यं निरस्य द्वितीयं निरस्यति—नच बाहूनामिति। न तृतीय इत्याह—य एवेति। यादृच्छिकसंश्लेष इव यादृच्छिकविश्लेषोऽपि

### कल्पतरुपरिमलः।

देहाभ्यां दशाद्वयाभिन्न आत्मा भिन्न इति विरुद्धधर्मलिङ्गकभेदज्ञानमप्यानुमानिकमिति भावः। ननु—देहयोः परस्परभेदस्यानुमानिकत्वेऽपि ताभ्यामात्मनो भेदकस्यैक्यस्य प्रत्यक्षत्वादात्मनि देहभेदः प्रत्यक्ष एव स्याद्; भेदकसाक्षात्कारस्य भेदसाक्षात्कारनियतत्वात्, अतो न तत्र परीक्षकत्वत्यानुमानापेक्षेति—चेद्, मैवम्; तथापि प्रथमानुमानापेक्षत्वेन परीक्षकत्वत्वानपायात्। वस्तुतस्त्वत्र प्रत्यभिज्ञामात्रेण निर्विचिकित्समैक्यं न सिध्यतीति न भेदकसाक्षात्कारशङ्कापीत्याह—तच्च शास्त्रादृते इति। तत्प्रत्यभिज्ञाविषयभूतमप्यात्मैक्यं शास्त्रं विना न सिध्यति; परिमाणभेदेन देहभेदे सत्यपि तदभेदप्रत्यभिज्ञादर्शनेन योऽहं बाल्ये पुष्टः पितरावन्वभूवं स एव स्थाविरे कृशः प्रणप्तृननुभवामीति परिमाणभेदभिन्नधर्मिगततयैव पितृप्रणप्त्रनुभवविषयाभेदप्रत्यभिज्ञादर्शनेन च तथाभूतप्रत्यभिज्ञामात्रादैक्यासिद्धेरिति भावः। ननु—तथापि योऽहं स्वप्ने व्याघ्रदेहः स एवेदानीं मनुष्यदेह इति प्रत्यभिज्ञया स्फुटतरभेदाभ्यां देहाभ्यां तदुभयानुवृत्तस्यात्मनो भेदः प्रत्यक्ष एव स्यात्, तत्र निर्विचिकित्सभेदकसाक्षात्कारसत्त्वादिति—चेद्, न; भेदकसाक्षात्कारस्य भेदसाक्षात्कारनियतत्वाभावात्। अपीतत्वव्याप्यशङ्खत्वदर्शनेऽपि तत्साक्षात्कारानुदयात्, स्वप्नदृष्टेषु लौकिकानां मिथ्यात्वसंप्रतिपत्त्या योऽयं स्थाणुः पुमानेष इतिवत्तत्र बाधायां सामानाधिकरण्यं न लभेद इति भेदकसाक्षात्कारासिद्धेश्च। काकतालीयेति। यद्यपि 'समासाच्च तद्विषया'दिति सूत्रेणेवार्थविषयात्समासादिवार्थेन छप्रत्ययेन निष्पादितः काकतालीयशब्द उपमाद्वयगर्भः; तथाच काकतालयोरिव यादृच्छिको दस्युदेवदत्तयोः समागम इत्येका समासार्थोपमा, तदानीमेव पतता तालेन काकस्येव दस्युना देवदत्तस्य वधः कृत इत्यन्या तद्धितार्थोपमा चेति, यत्रोपमाद्वयं तत्रैवास्य शब्दस्य संपूर्णार्थता; तथापि यादृच्छिकसमागममात्रेऽप्यस्य प्रचुरः प्रयोगो दृश्यत इत्ययमपि प्रयोगो यादृच्छिकसमागममात्रविषयः। ननु—'कृशोऽहमन्धोऽह'मित्यादीनामध्यासत्वोक्तिर्न युक्ता; परस्परभिन्नत्वेन निश्चितानां देहेन्द्रियाणां रङ्गरजतादीनां शुक्तिशकले इवैकस्मिन्नात्मन्यध्यासासंभवात्, अतस्तेषां गौणत्वमेव युक्तमित्याशङ्कां निवर्तयति—विवेकासिद्धाविति। गौणत्वे हि न देवदत्तः सिंह इतिवत्, कदाचिदपि नाहं कृशो नाहमन्ध इत्यादिरूपेण विवेको लौकिकसाधारणो दृश्येत, अतोऽध्यास इत्येवाभ्युपेयम्। भेदकसाक्षात्कारेऽपि दोषबलादभेदाध्यासः पीतशङ्खादिस्थले संप्रतिपन्नः। किंच येन रूपेण देहत्वचक्षुष्ट्वादिना देहेन्द्रियभेदनिश्चयः, तेन रूपेणात्मनि तदुभयाध्यासासंभवेऽपि कृशत्वान्धत्वादिरूपान्तरेण तदुभयाभेदाध्यासे न काचिदनुपपत्तिः। नहि कृशादन्धोऽन्य इत्यादिरूपोऽस्ति भेदप्रत्ययः; दृश्यते च देवदत्तसमीपगतयोरधीयानानधीयानयोः पुरुषत्वसामान्येन गृह्यमाणयोश्चैत्रमैत्रयोः परस्परभेदग्रहे ताभ्यां देवदत्ते दृश्यमानेन रूपेण भेदग्रहे च सत्यप्यधीयानोऽयं मैत्रस्तिष्ठतीत्यधीयानत्वमैत्रत्वाकारद्वयेन देवदत्ते तदुभयाध्यासः। ननु—तथाप्यन्धो बधिरः काणो मूक इत्यादीनामात्मनि तत्तदिन्द्रियाध्यासरूपत्वं न सिध्यति; अर्शआदिगणसंगृहीताद्विकलाङ्गवाचिनोऽन्धादिशब्दात् 'अर्शआदिभ्योऽजि'ति सूत्रेण मत्वर्थीयस्याचः प्रत्ययस्य विधानादहंशब्दसमानाधिकरणान्धादिव्यवहारस्य मत्वर्थीयप्रत्ययान्तान्धादिपदयुक्तत्वेन विकलचक्षुरादिवैशिष्ट्यप-

**विषयेऽध्यासो मिथ्येति भवितुं युक्तम्; तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये-**

### भामती।

**विज्ञानालम्बनत्वेप्यहंप्रत्ययस्य** भ्रान्तत्वं तदवस्थमेव; तस्य स्थिरवस्तुनिर्भासत्वादस्थिरत्वाच्च विज्ञानानाम्। **एतेन**—स्थूलोऽहमन्धोऽहं गच्छामीत्यादयोऽप्यध्यासतया **व्याख्याताः**। तदेवमुक्तक्रमेणाहंप्रत्यये पूतिकूष्माण्डीकृते भगवती श्रुतिरप्रत्यूहं कर्तृत्वभोक्तृत्वसुखदुःखशोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति॥ तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहंप्रत्ययस्य **स्वरूपनिमित्तफलैरुपव्याख्यानम्—अन्योन्यस्मिन्नित्यादि**। अत्र **चान्योन्यस्मिन्धर्मिण्यात्मशरीरादौ अन्योन्यात्मकताम्** अध्यस्याहमिदं शरीरादिति। **इदमिति च** वस्तुतः, न प्रतीतितः। **लोकव्यवहारो** लोकानां व्यवहारः, स चायमहमिति व्यपदेशः। **इति**शब्दसूचितश्च शरीराद्यनुकूलं प्रतिकूलं च प्रमेयजातं प्रमाणेन प्रमाय तदुपादानपरिवर्जनादिः। '**अन्योन्यधर्मांश्चाध्यस्य**' अन्योन्यस्मिन्धर्मिणि देहादिधर्माञ्जन्ममरणजराव्याध्यादीनात्मनि धर्मिणि अध्यस्तदेहादिभावे समारोप्य, तथा चैतन्यादीनात्मधर्मान्देहादावध्यस्तात्मभावे समारोप्य, **ममेदं** जरामरणपुत्रपशुस्वाम्यादीति **व्यवहारो** व्यप-

### वेदान्तकल्पतरुः।

स्यादिति स्वस्थानामेवाकस्मादचैतन्यापत्तिरित्यर्थः। **यत्**—गौणवादिना विवेकग्रहमुपपाद्य कृशोऽहमित्यादिप्रत्ययानां गौणत्व**मुक्तं,** तदविवेकसिद्धौ निरस्तमित्याह—**एतेनेति**। अहंप्रत्ययस्याविविक्तविषयत्वे शास्त्रीयविषयसिद्धिमभिधाय प्रयोजनसिद्धिमप्याह—**तदेवमुक्तेति**। **पूति** दुर्गन्धि कूष्माण्डफलमिव कृतस्तथोक्तः। तात्पर्यमुपवर्ण्य भाष्यं योजयति—**तदेवं सर्वप्रवादीत्यादिना**। **स्वरूपं** अन्योन्यात्मकतान्योन्यधर्माध्यासौ। **निमित्तं** इतरेतराविवेकः। **फलं** व्यवहारः। अहमिदं शरीरमिति प्रतीत्यभावाद्भाष्यायोगमाशङ्क्याह—**वस्तुत इति**। अहमिति प्रतीतेऽपि वास्तवमनात्मत्वमस्तीति इदंशब्दप्रयोग इत्यर्थः। धर्म्यध्यासाभावादुक्तं धर्माध्यासाभावं परिहरति—**अध्यस्तदेहादिभावे इति**। धर्मिणोस्तादात्म्याध्यासकार्यमहमिदमिति व्यवहारं प्रदर्श्य धर्माध्यासकार्यं प्रदर्शयति—**ममेदमिति**। **नन्वध्यस्त**

### कल्पतरुपरिमलः।

त्वोपपत्तेः, कृशोऽहमित्यादीनामप्यर्शआदेराकृतिगणत्वेन मत्वर्थीयप्रत्ययान्ततया कृशादिरूपदेहवैशिष्ट्यविषयत्वोपपत्तेर्नाध्यासरूपत्वं कल्पनीयमिति शङ्कानिवर्तनार्थं टीकायामुपन्यस्तं **गच्छामीत्येवमादिकमुदाहरणान्तरं** कृशोऽहमित्या**दीना**मित्यादिशब्देन संगृहीतम्। गच्छामि कृशयामीत्याद्याख्यातप्रयोगे गन्तृकृशादिरूपदेहाभेद एवार्थो वाच्यः; तथा कुणिरहमित्यादिव्यवहारे विकलेन्द्रियाभेद एवार्थो वाच्यः; तादृक्षु प्रयोगेषु मत्वर्थीयप्रत्ययाभावात्, तत्सामान्यादन्धोऽहमित्यादिप्रयोगाणामप्यध्यासमूलत्वमेव युक्तमित्यर्थः। अर्शआद्यज्विधानं 'चित' इत्यन्तोदात्तस्वरार्थं, नत्वात्मनि प्रयोगनिर्वा-

---

१ **विवरणप्रस्थानम्**—अध्यासव्यापकतादात्म्यविवेकाग्रहसादृश्यादिविरहप्रतिपादनार्थं युक्तमित्यन्तस्य ग्रन्थस्य प्रवृत्तिः। तत्र तादात्म्यस्यैक्यरूपत्वे तदयोग्यत्वप्रतिपादनार्थं **युष्मदस्मदोरिति,** रूपान्तरत्वे तदयोग्यत्वप्रतिपादनार्थं **विषयविषयिणोरिति**। शुक्तेरिव ब्रह्मणोंऽशाभावेनांशविशेषमादाय तादात्म्योपपादनासंभवात्। **विरुद्धस्वभावयोरिति** तु दृष्टान्तमात्रान्वयि। **एतेनेतरे**तरभावानुपपत्तिरिति **व्याख्याता**। इदमस्मदित्येव प्रयोक्तव्ये **युष्मत्**प्रयोगः, धर्मिपदे प्रयोक्तव्ये **विषयिपद**प्रयोगश्च विवेकाग्रहं सादृश्याभावं च व्यञ्जयतः–इति॥ **भामतीप्रस्थानं तु**—इतरेतरभावानुपपत्तिपदेनेतरेतरतादात्म्यायोग्यत्वविवक्षणं न युक्तमिति तादात्म्यप्रतीत्यनुपपत्तिपरत्वस्यैवाङ्गीकरणीयतया तत्र **युष्मदस्मदित्यादि**नोक्तायोग्यत्वादिविवक्षणे प्रयोजनाभावात् **विरुद्धस्वभावयो**रित्यस्य दृष्टान्तमात्रान्वयित्वस्यायुक्तत्वाच्च **युष्मदस्मदित्य**नेन विवेकग्रहः, सोपाधिकाध्यासे तस्याप्रतिबन्धकत्वेनोक्ताध्यासनिषेधोपयोगि निरंशत्वं **विषयविषयिणो**रित्यनेन, **विरुद्धस्वभावयो**रित्यनेन सादृश्याभावश्च संगृह्यन्त इति विवेकः–इति॥

२ **विवरणमतेऽयमाशयः**—'**अहमिदं ममेदमिति** नैसर्गिको लोकव्यवहारः। सचाहमर्थ इव नापलापमर्हति। तत्र चाध्यासो निमित्तं। सच सत्यानृतमिथुनीकरणनिबन्धनः इति हि परम्परा। तत्र व्यवहारोऽध्यासमध्यासः सत्यानृततादात्म्यं चाक्षिपतीति स्वरूपतो निरंशस्यापि ब्रह्मणोंऽशकल्पनावश्यक्येवेति नोक्तदोषप्रसङ्गः। **विषयविषयिणोरिति** पदपरित्यागेन **धर्मधर्मिणोरिति** पदनिवेशोऽपीदानीमेवानुकूलः–इति। **भामतीप्रस्थाने तु**—अध्यासरूपएवायं नैसर्गिको लोकव्यवहारः। सच मिथ्याज्ञाननिमित्तकः, सत्यानृतमिथुनीकरणात्मकश्च भेदग्रहश्च न कस्यापि विद्यते। नह्यात्मतत्त्वं कस्यापि विषयः। अहमनुभवस्तु कूटसाक्षितुल्यो नात्र प्रमाणतामश्नुते। **इतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोरिति** वाक्येन चायमर्थोऽवगम्यते। नह्यत्यन्तविविक्तयोर्विवेकाग्रहातिरिक्तः स्वरूपसद्विवेकः संभवदुक्तिकः। शुद्धरूपेणाविषयत्वेऽपि तत्राहंकाराध्यासस्यानभिमतत्वान्नोक्तदोषः। अत्र च **धर्मि**पदं अनुकूलमित्याशयः–इति॥

**तरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदं'**

## भामती।

देशः, इतिशब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः। अत्रचाध्यासव्यवहारक्रियाभ्यां यः कर्तोन्नीतः, स समान इति समानकर्तृकत्वेनाध्यस्य व्यवहार इत्युपपन्नम्। पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं सूचयति—**मिथ्याज्ञाननिमित्तः—व्यवहारः**। मिथ्याज्ञानमध्यासस्तन्निमित्तः। तद्भावाभावानुविधानाद्व्यवहारभावाभावयोरित्यर्थः। तदेवमध्यासस्वरूपं फलं च व्यवहारमुक्त्वा तस्य निमित्तमाह—**इतरेतराविवेकेन**। विवेकाग्रहेणेत्यर्थः। अथाविवेक एव कस्मान्न भवति; तथाच नाध्यास, इत्यत आह—**अत्यन्तविविक्तयोर्धर्मधर्मिणोः**। परमार्थतो धर्मिणोरतादात्म्यं विवेको, धर्माणां चासंकीर्णता विवेकः। **स्यादेतत्**—विविक्तयोर्वस्तुसतोर्भेदाग्रहनिबन्धनस्तादात्म्यविभ्रमो युज्यते, शुक्तेरिव रजताद्भेदाग्रहे रजततादात्म्यविभ्रमः, इहतु परमार्थसतश्चिदात्मनो न भिन्नं देहाद्यस्ति वस्तुसत्, तत्कुतश्चिदात्मनो भेदाग्रहः, कुतश्च तादात्म्यविभ्रम इत्यत आह—**सत्यानृते मिथुनीकृत्य**। विवेकाग्र-

## वेदान्तकल्पतरुः।

व्यवहार इत्यनुपपन्नं; भुक्त्वा व्रजतीतिवदेकस्य क्रियाद्वये कर्तृत्वानभिधानात्, अत आह—**अत्र चेति**। व्यवहारक्रियाक्षिप्तस्य कर्तुरध्यासेऽपि कर्तृत्वात्क्त्वाप्रत्ययः स्यादित्यर्थः॥ **ननु**—उपसंहारभाष्ये नैसर्गिकोऽध्यास इत्यभिधानाद्व्यवहारोऽपि नैसर्गिकत्वविशिष्टोऽध्यास एव तत्कथं क्रियाभेदः—**उच्यते**; इह कार्यभूतव्यवहारनैसर्गिकत्वेन सामर्थ्यसिद्धाध्यासनैसर्गिकत्वोपसंहारादविरोधः॥ अध्यासाभिधानक्रिययोः पूर्वापरीभावो न युक्तः; चितो बुद्ध्यादितादात्म्यं विना क्रियान्वयायोगात्, अध्यस्यव्यवहार इत्यनेनाध्यासस्य व्यवहारहेतुतोक्तौ मिथ्याज्ञाननिमित्त इत्यनेन पौनरुक्त्यं चेति—**केचित्**। **तन्न**; पूर्वपूर्वभ्रमसंस्कृताऽविद्यया चितः संप्रतितनाध्यासक्रियाश्रयत्वात्। पुनरुक्तिं परिहरति—**पूर्वकालत्वेति**। सुप्त्वोत्तिष्ठतीतिवदहेतुत्वभ्रमं व्यावर्त्य स्फुटयतीत्यर्थः। जातिव्यक्त्योरिवार्थगतं तादात्म्यमविवेक इति भ्रमं व्यावर्तयति—**विवेकाग्रहेणेति**। **भाष्ये**—मिथुनीकरणस्य व्यवहारहेतुत्वमानन्तर्याद्भाति, नतु मिथ्याभूतप्रतियोगिसंपादनेन विवेकाग्रहहेतुतेति शङ्कां व्युदस्यन्योजयति—**सत्यानृते इति**। मिथुनीकरणाद्विवेकाग्रहस्ततोऽध्यास इत्यर्थः। **युगलीकरणं** नामा-

## कल्पतरुपरिमलः।

हार्थमिति योज्यम्। दृश्यते च स्वरविशेषसिद्ध्यौपयिकतयैव तद्विधानार्थं गुणविशेषवाचिनां शुक्लादिशब्दानामप्यर्शआदिगणे संग्रहः। नहि शुक्लादिगुणवैशिष्ट्यप्रतीतिनिर्वाहार्थं तत्; गुणान्तरवाचिसाधारण्येन गुणवचनेभ्यो मतुपो लुग्विधानेनैव तन्निर्वाहात्। नच—शुक्लादिगुणशालिभिः प्रासादैर्विशिष्टे नगरे शुक्लं नगरमित्यादिप्रयोगनिर्वाहार्थं शुक्लादिशब्देभ्यो मतुब्लोपानन्तरमज्विधानमिति—वाच्यम्; संख्यासंनिवेशविशेषविशिष्टानां गृहाणामेव नगरशब्दवाच्यत्वे साक्षादेव नगरे शुक्लादिगुणवैशिष्ट्यसत्त्वेन, तथाभूतगृहाधिकरणस्थलस्य नगरत्वे तदभेदोपचारसंभवेन च तदर्थमज्विधानानपेक्षणात्। अन्यथा ह्यश्वेतन्नगरमपुष्प्यद्वनमित्याद्याख्यातप्रयोगे का गतिः। एवमहंप्रत्ययस्य केषुचिदंशेषु दृष्टविसंवादतया दृष्टकौटसाक्ष्यपुरुषवचनवदप्रामाण्यशङ्काकलुषितस्य परिमाणत्वग्रहणप्रतिबन्धक (जै. अ. ६ पा. ५ सू. ४४) दूरत्वदोषसद्भावसमुदिताऽप्रामामाण्यशङ्काकलङ्कितचन्द्रप्रादेशिकत्वज्ञानवदागमबाधनाक्षमत्वे सत्यागमेनैव तद्बाध्यते। आगमबाधितस्य च तस्य पूर्वापच्छेदशास्त्रस्येव (जै. अ. ६ पा. ५ सू. ५४) प्रामाण्यसंरक्षणाय न विषयान्तरं गवेषणीयम्; चन्द्रप्रादेशिकत्वज्ञानवद् दोषजन्यत्वेन सर्वथैवाप्रामाण्योपपत्तेरित्येतावदस्मिन्नधिकरणे शास्त्रारम्भोपयोगिविषयप्रयोजनसमर्थनार्थं सूत्रसूचितं व्युत्पाद्यम्। इत्थं तत्त्वावेदकप्रमाणभावात् प्रच्यावितस्य कर्तृत्वभोक्तृत्वादिप्रत्यक्षस्य प्रवृत्तिनिवृत्त्यादिव्यवहारोपयोगिसांव्यवहारिकं प्रामाण्यं सर्वप्रपञ्चसाधारण्येनारम्भणाधिकरणे (ब्र. अ. २ पा. १ सू. २४) व्युत्पादनीयम्; श्रोतृबुद्धिसौकर्यार्थं प्रागनूदितमित्यनुसंधेयम्। **अध्यासाभिधानक्रिययोरिति**। अध्यासक्रियैव तावन्न संभवति, दूरेऽध्यासाभिधानक्रिययोः पौर्वापर्यं; क्रियाया आश्रयाधीनात्मलाभत्वात्, शुद्धाया निर्विकारायाश्चितः क्रियाश्रयत्वायोगाद्, अध्यसनीयबुद्धितादात्म्यापन्नायाश्च चितोऽध्यासाधीनसिद्धिकत्वादिति प्रथमाशङ्कार्थः। इमां शङ्कां स्वयं परिहरति—**पूर्वपूर्वेति**। **ननु**—मिथ्याज्ञाननिमित्तविशेषणविवरणटीकया द्वितीयशङ्काया इव नैसर्गिकविशेषणविवरणटीकयाऽस्याः प्रथमशङ्कायाः परिहारो लभ्यते। यद्यपि '**अध्यासो वस्तुसतोर्भेदाग्रहाधीनः, नच देहेन्द्रियादिकं त्वया वस्तुसदिष्यत**'इत्यध्यासासंभवशङ्कायाम्, प्रातीतिकेनापि सत्त्वेनारोप्याधिष्ठानयुगलसंपादनमुपपद्यते इत्येवं **सत्यानृते मिथुनीकृत्येत्यनेन** परिहृतायां प्रातीतिकसत्त्वमप्यध्यासाधीनमिति पुनरन्योन्याश्रयशङ्का नैसर्गिकविशेषणेन परिहृतेति योजयता टीकाग्रन्थेन देहेन्द्रियबुद्ध्यादेः स्वरूपमात्रस्य पूर्वपूर्वाध्यासतः सिद्धिरुक्ता, न चितो बुद्धितादात्म्यापत्तेरपि; तथापि ततएव साध्यर्थासिद्ध्यति; प्रवाहानादित्वेनोच्यमानस्याध्यासस्य परत्र परतादात्म्यावभासरूपत्वादिति—चेत्,

**'ममेदमिति' नैसर्गिकोऽयं लोकव्यवहारः। आह—कोऽयमध्यासो नामेति। उच्यते—स्मृतिरूपः**

## भामती ।

हादध्यस्येति योजना । **सत्यं** चिदात्मा, **अनृतं** बुद्धीन्द्रियदेहादि, ते द्वे धर्मिणी **मिथुनीकृत्य** युगलीकृत्येत्यर्थः । **न च संवृतिपरमार्थसतोः** पारमार्थिकं मिथुनमस्तीत्यभूततद्भावार्थस्य च्वेः प्रयोगः। **एतदुक्तं भवति**—अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिरुपयुज्यते न वस्तुसत्तेति । **स्यादेतत्**—आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः, समारोपनिबन्धना च प्रतीतिरिति, दुर्वारं परस्पराश्रयत्वमित्यत आह—**नैसर्गिक इति** । स्वाभाविकोऽनादिरयं व्यवहारः । व्यवहारानादितया तत्कारणस्याध्यासस्यानादितोक्ता, ततश्च पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद्बीजाङ्कुरवन्न परस्पराश्रयत्वमित्यर्थः । **स्यादेतत्**—अद्धा पूर्वप्रतीतिमात्रमुपयुज्यत आरोपे, नतु प्रतीयमानस्य परमार्थसत्ता; प्रतीतिरेव त्वत्यन्तासतो गगनकमलिनीकल्पस्य देहेन्द्रियादेर्नो-

## वेदान्तकल्पतरुः ।

धिष्ठानारोप्ययोः स्वरूपेण बुद्धौ भानम् । **ननु** मिथुनं कृत्वेति किमिति नोक्तमत आह—**नच संवृतीति** । 'अभूततद्भावे कृभ्वस्तियोगे संपद्यमानकर्तरि च्विः'। यस्य यो भावी न भूतः स तद्भावं चेत्संपद्यते तस्मिन्नभूततद्भावे वर्तमानात्प्रातिपदिकात्कृभ्वस्तीनां धातूनां योगे च्विप्रत्ययो भवति । 'अस्य च्वौ' इतीकारः । ततश्च मिथुनभावोऽप्यवास्तव इत्यर्थः । समारोपप्रतीत्योरितरेतराश्रयत्वे शङ्किते व्यवहारानादित्वमसांप्रतमित्याशङ्क्याह—**व्यवहारानादितयेति । अनादितयेत्यत्रैके पर्यनुयुञ्जते**—न मिथ्याज्ञानतत्संस्कारव्यक्त्योरनादित्वम्, तज्जात्योस्तु न निमित्तनैमित्तिकभावः; नच प्रवाहो वस्त्वस्ति—**इति । तत्र ब्रूमः**—'तदाकृत्युपरक्तानां व्यक्तीनामेकया विना । अनादिकाला वृत्तिर्या सा कार्यानादिता मता ॥' मिथ्याज्ञानत्वतत्संस्कारत्वजात्यालिङ्गितव्यक्तीनां मध्येऽन्यतमव्यक्त्या विना यदनादिकालस्याऽवर्तनमन्यतमयोगनियम इति यावत् । तासामनादित्वम्। अत्र च निमित्तनैमित्तकयोरनादित्वमुक्तम्। भ्रमोपादानं तु वक्ष्यति देवताधिकरणे ( ब्रह्म. अ. १ पा. ३ सू. २४–३३ )। सत्यानृते मिथुनीकृत्येत्यत्र वस्तुसत्तावर्जमारोप्यस्य प्रतीतिमात्रमुपयोगीत्युक्तम्, इदानीं प्रतीतिरेवानृतस्यायुक्तेत्याक्षेपाभिप्रायमुत्तरभाष्यस्याह—**स्यादेतदित्यादिना** । युष्मदस्मदित्यादिस्तु विवेकाग्रहादाक्षेप इति भेदः । **प्रतीतिरेव त्विति** । अपरोक्षेत्यर्थः । प्रतीतिमात्रनिषेधे त्वसत्पदस्याबोधकत्वापत्तेरनुवादायोगः स्यादिति ॥

## कल्पतरुपरिमलः ।

**उच्यते;** नैसर्गिकत्वोक्त्या नोक्तशङ्कायाः परिहारो लभ्यते; सर्गादौ प्रथमाध्यासात् पूर्वमाध्यासिकस्य बुद्धितादात्म्यस्यासिद्धेः । नच—तदभावेऽपि पूर्वाध्याससंस्कारसत्त्वात्तदुपधानेन चितः प्रथमाध्यासक्रियाश्रयत्वं स्यादिति—वाच्यम्; प्रथमाध्यासेऽध्याससंस्कारोपधानं प्रयोजकं, द्वितीयाद्यध्यासेष्वध्यासपरिनिष्पन्नं बुद्धितादात्म्यं प्रयोजकमित्यननुगमापत्तेः, संस्कारस्य च निराश्रयस्य प्रलये स्थित्यसंभवात्, शुद्धचितस्तदाश्रयत्वायोगाद्, बुद्धीन्द्रियादीनां सर्गादावुत्पत्तिश्रवणेन प्रलयेऽध्याससन्तानविच्छेदेन च तदानीमाध्यासिकबुद्धितादात्म्यापन्नचितोऽपि तदाश्रयतया वक्तुमशक्यत्वादित्येतावत्पर्यन्तं प्रथमशङ्का धावेदित्यालोच्याचार्यैः स्वयं परिहारोऽभिहितः । **तत्रायमाशयः**—प्रलये संस्काराश्रयस्य तावन्नासंभवः, अविद्यायाः सत्त्वात्, सर्वोऽपि हि प्रपञ्चस्तदानीमविद्याचित्रभित्तौ संस्कारमात्रशेषं स्थित्वा पुनरुद्भवतीत्यङ्गीक्रियते । अतएव बीजाङ्कुरप्रवाहानादिताया अपि प्रलये तत्संस्कारसत्त्वेनैव निर्वाहः । नाप्यननुगमः; सर्वेष्वप्यध्यासेषु पूर्वपूर्वभ्रमसंस्कारसचिवाविद्योपधानमेव प्रयोजकं नतु बुद्धितादात्म्यापत्तिरपीत्यभ्युपगमे दोषाभावादिति । **प्रतीयमानतैव परमार्थसत्तेति** मन्यमानस्य शङ्कावादिनः प्रतीतिमात्रमारोपोपयोगि, न परमार्थसत्तेत्यभ्युपगमो विरुद्ध, इत्याशङ्क्य परमार्थसत्तेत्येतदन्तः सिद्धान्त्युक्तानुवादः, तत्राद्धेत्यनेन सूचितः प्रतीतिमात्रमारोपे उपयुज्यते इति युक्तं प्रतीयमानस्य सत्ता नोपयुज्यतइति तु न युक्तमित्येवंरूपोर्द्धाङ्गीकारः **प्रतीतिरेव त्वित्यादिना** स्फुटीकृत इति विभज्य तात्पर्यं प्रदर्शयन्नवतारयति—**सत्यानृते मिथुनीकृत्येत्यत्रेति । उक्तमिति** । तदिहाऽनूदितमिति शेषः । **विवेकाग्रहादिति**। अनृतस्य

१ कारणरूपेण नैसर्गिकत्वं कार्यरूपेण नैमित्तिकत्वम् । निमित्तं चाज्ञानमनुभावनार्थापत्तिश्रुतिसिद्ध इति ॥ २ निरधिष्ठानवादे उक्तलक्षणव्याप्तिपरिहारार्थं परत्रपदम् । स्मृतावतिव्याप्तिवारणार्थं स्मृतिरूपपदम् । स्पष्टप्रतिपत्त्यर्थं पूर्वदृष्टग्रहणमिति **पञ्चपादिका** । अवसन्नोऽवमतो वाभासोऽवभास इति संक्षिप्तलक्षणम् । स्मृतिरूपः परत्र पूर्वदृष्टावभास इति विस्तृतलक्षणम् । स्वाप्नादीनामपि पूर्वदर्शनसत्वान्नाव्याप्तिः । प्रत्यभिज्ञायां भ्रमत्वव्यवहारापत्तिवारणार्थं स्मृतिरूपपदम् । आरोपविषयसत्यतासूचनार्थं परत्रपदम् । पूर्वदर्शनस्यापि कारणतासूचनार्थं पूर्वदृष्टपदम् । तत्र स्मृतिरूपपदेन सर्वविधसत्ख्यातिनिराकरणं । परत्रपदेनासत्ख्यातिनिराकरणमिति तु पञ्चपादिकासिद्धान्तादविशेषः इति **भामती** । तत्र प्रत्यभिज्ञायां भ्रमत्वव्यवहारस्येष्टत्वात् अनिष्टत्वेऽपि स्वप्नभ्रमादावव्याप्त्या परत्र विशेषणत्यागस्यावश्यकत्वात् स्मृतिरूपपदेनाधिष्ठानविषमसत्ताकत्वस्यैव विवक्षणीयतया स्मृतिरूपत्वविशिष्टावभासत्वमेव लक्षणम् । अवभासपदेनात्रासत्ख्यातिनिराकरणमिति तु विशेष इति **कल्पतरुः** ।

**परत्र पूर्वदृष्टावभासः। तं केचित्-अन्यत्रान्यधर्माध्यास-इति वदन्ति। केचित्तु यत्र यदध्यासस्तद्वि-**

### भामती ।

पद्यते, प्रकाशमानत्वमेव हि चिदात्मनोऽपि सत्त्वं, ननु तदतिरिक्तं सत्तासामान्यसमवायः, अर्थक्रियाकारिता वा; द्वैतापत्तेः, सत्तायाश्चार्थक्रियाकारितायाश्च सत्तान्तरार्थक्रियाकारितान्तरकल्पनेऽनवस्थापातात्, प्रकाशमानतैव सत्ताभ्युपेतव्या। तथाच देहादयः, प्रकाशमानत्वान्नासन्तः, चिदात्मवत्; **असत्त्वे वा** न प्रकाशमानाः, तत्कथं सत्यानृतयोर्मिथुनीभावः, तदभावे वा कस्य कुतो भेदाग्रहः, तदसंभवे कुतोऽध्यास इत्याशयवान्—**आह** आक्षेप्ता—**कोऽयमध्यासो नाम**। क इत्याक्षेपः। **समाधाता**—लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति—**उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः**। अवसन्नोऽवमतो वा भासोऽवभासः। प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा। एतावता मिथ्याज्ञानमित्युक्तं भवति। तस्येदमुपव्याख्यानम् 'पूर्वदृष्ट—' इत्यादि। पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः। मिथ्याप्रत्ययश्चारोपविषयारोपणीयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयति। तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्तेति दृष्टग्रहणम्। तथापि वर्तमानं दृष्टं दर्शनं नारोपोपयोगीति **पूर्वेत्युक्तं**। तत्र पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयानिर्वाच्यमित्यनृतम्। आरोपविषयं सत्यमाह—**परत्रेति। परत्र** शुक्तिकादौ परमार्थसति, तदनेन सत्यानृतमिथुनमुक्तम्। **स्यादेतत्**—परत्र पूर्वदृष्टावभास इत्यलक्षणम्; अतिव्यापकत्वात्। अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासः, अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासः समीचीनः। अवभासपदं च समीचीनेऽपि प्रत्यये प्रसिद्धम्, यथा

### वेदान्तकल्पतरुः ।

**ननु** नात्यन्तासन् देहादिः, किंत्वनिर्वाच्यः; ततः प्रतीतिः किं न स्यात्, अत आह—**प्रकाशमानत्वमिति**। अतिरिक्तसत्तामभ्युपगच्छन्तं प्रत्याह—**द्वैतेति**। द्वैताभ्युपगमेऽप्याह—**सत्तायाश्चेति**। आत्मन्यध्यासे आक्षिप्तेऽध्याससामान्यलक्षणकथा वृथेत्याशङ्क्याह—**लोकसिद्धमिति**। पूर्वदृष्टग्रहणेनाक्षेपप्रतिक्षेपो भविष्यतीति भावः। अवभासपदस्यावयवार्थमादाय संक्षिप्तमध्यासलक्षणमाह—**अवसन्न इति**। अवसाद उच्छेदः। अवमानो यौक्तिकतिरस्कारः। अवभासपदस्य रूढमर्थमादाय विस्तृतं लक्षणं भाष्यवाक्यार्थत्वेनाह—**तस्येति**। परत्रेत्यादिपदैरसत्ख्यातिनिरासेन प्रपञ्चनमित्यर्थः। **स्वरूपेण सदपीति**। अपिशब्देन स्वरूपेणासत्त्वमपि मरुमरीचिकोदकग्रन्थे वक्ष्याम इति सूचितम्। स्मृतिरूपविशेषणव्यावर्त्यमाह—**स्यादेतदित्यादिना**। पूर्वदृष्टस्य परत्र तादात्म्यावभास इति धर्म्यध्यासमभिप्रेत्य लक्षणवाक्यार्थेऽतिव्याप्तिमाह—**स्वस्तिमत्यामिति**। परत्र आश्रये परधर्मावभास इति धर्माध्यासं विवक्षित्वाह—**पाटलिपुत्रे इति**। अवभासपदस्य रूढार्थग्रहणादतिव्याप्तिरुपपन्नेत्याह—**अवभासपदं चेति**। 'सकृच्छ्रुतपदस्यार्थ-

### कल्पतरुपरिमलः ।

प्रतीतिमङ्गीकृत्य भेदग्रहादध्यासाक्षेपः पूर्वं कृतः, इदानीं प्रतीतिविषयस्यानृतत्वमेव न युक्तमित्याक्षेप इति भेद इत्यर्थः। **प्रकाशमानत्वमितीति**। प्रतीतिविषयत्वमित्यर्थः। असतः प्रतीतिविषयत्वं पूर्वपक्षी न मन्यते। **अध्याससामान्यलक्षणकथेति। ननु**—सामान्यलक्षणत्वे गोत्वादिप्रत्यभिज्ञापि द्वैतवस्त्ववभासत्वेन व्यावहारिकाध्यासरूपा तेन संग्राह्येति कथमग्रे तत्रातिव्याप्तिशङ्का। नच—सामान्यलक्षणत्वोक्तिरियं संक्षिप्तलक्षणविषया, विस्तृतलक्षणं तु प्रतिभासिकाध्यासमात्रविषयमिति तदतिव्याप्तिकथनं युज्यत इति—वाच्यम्; तस्योपव्याख्यानमिति टीकाग्रन्थेन तद्व्याख्यानेन च संक्षिप्तविस्तृतलक्षणयोरेकविषयत्वावगमात्, सन् घट इत्याद्यवभासे सत्यानृततादात्म्यावभासत्वे पर्यवसन्नस्य विस्तृतलक्षणस्य सत्त्वेनातिव्याप्त्यापत्तेश्चेति—**चेत्, सत्यम्**; स्मृतिप्रत्यभिज्ञातिव्याप्तिकथनं तयोरधिष्ठानसद्रूपब्रह्मतादात्म्यापन्नानृतवस्तुविषयतयैवाध्यासरूपत्वं, ननु समानसत्ताकजातिव्यक्तितादात्म्यविषयतयेति तेन रूपेण तयोरलक्ष्यत्वाभिप्रायम्। यदि जातिव्यक्तितादात्म्यविषयत्वांशे सत्यानृतमिथुनीकरणाभावेऽपि बाध्यत्वरूपसंक्षिप्तलक्षणानुगतिसद्भावात्, तत्र विस्तृतलक्षणेनापि भाव्यं, तदा **पूर्वदृष्टस्य परत्रावभास** इत्येतल्लक्षणं परमते गोत्वादिप्रत्यभिज्ञाया इव प्रमात्वेनाप्युपपद्यत इति तेन स्वाभिमताध्यासरूपत्वसिद्ध्यभावाभिप्रायं योज्यम्। एवमपि हि लक्षणदूषणमाकरग्रन्थेषु दृश्यते। यथा स्वश्चासौ प्रकाशश्चेति स्वप्रकाशनिर्वचनं ज्ञानस्य वेद्यत्वेऽप्युपपद्यते; स्वशब्दार्थस्य ज्ञानस्य परवेद्यत्वेऽपि प्रकाशत्वाक्षतेः। ब्रह्मभिन्नत्वं मिथ्यात्वमिति लक्षणं सत्यत्वेऽप्युपपद्यते; वियदादेः सत्यत्वपक्षेऽपि ब्रह्मभिन्नत्वाक्षतेरित्यादि। अस्मिन् दूषणेऽतिव्याप्तित्वव्यवहारश्च तत्र तत्र दृश्यते। **उच्छेदो** बाधकज्ञानोदयानन्तरं भ्रमवृत्त्यन्तरोत्पत्तिप्रतिबन्धः, स पीतशङ्खविभ्रमादिष्वव्याप्त इति तत्साधारणं पक्षान्तरमुक्तं टीकायां अवमतो वेति। तत्रावमानशब्दार्थमाह—**यौक्तिकेति**। **तिरस्कारः** इच्छाप्रवृत्त्यादिकार्याक्षमत्वापादनम्। **ननु** संक्षिप्तलक्षणेनैवेतरव्यावृत्तलक्ष्यव्यवहारसिद्धेः किं विस्तृतलक्षणेनेत्याशङ्क्य तत्प्रयोजनमाह—**परत्रेत्यादिपदैरिति**। परत्रासंनिहितस्यावभास इति लक्षणवाक्यघटकपदैरित्यर्थः। **लक्षणवाक्यार्थेऽतिव्याप्तिमाहेति**। एवं लक्षणवाक्यार्थे वर्ण्यमाने प्रत्यभिज्ञायामतिव्याप्तिमाहेत्यर्थः। **तादात्म्यावभास इति**। धर्म्यध्यास-

## भामती ।

नीलस्यावभासः पीतस्यावभास इत्यत आह—**स्मृतिरूप इति**। स्मृते रूपमिव रूपमस्येति स्मृतिरूपः । असंनिहि-

## वेदान्तकल्पतरुः ।

द्वयक्लृप्तिर्न दुष्यति । संक्षिप्तविस्तृताध्यासलक्षणद्वयलाभतः ॥' एवंच मिथ्याज्ञानमध्यास इत्यवभासपदेन व्युत्पाद्य प्रत्यभिज्ञायामतिव्याप्त्यभिधानं शोभतेतरामित्युपहासानवसरः । **ननु**—पूर्वदृष्टमारोपणीयमनृतमित्युक्तं, कथं तत्पदाङ्कितलक्षणस्य प्रत्यभिज्ञायामतिव्याप्तिः—**उच्यते**; स्मृतिरूपपदाभिधास्यमानाऽसंनिधानसिद्धवत्कारेण तदभिधानं, नतु पूर्वदृष्टपदसामर्थ्येनेत्यदोषः । प्रत्यभिज्ञाया अपि संस्कारजत्वेनाव्यावृत्तिमाशङ्क्याह—**असंनिहितेति** । स्मृतिरूपपदेन चासंनिहितविषयत्वे विवक्षिते, तावति चोक्ते स्मृतावतिव्याप्तिस्तन्निवृत्तये परत्रेत्युक्तमित्यपि द्रष्टव्यम्। अनेनासंनिहितस्य परत्र प्रतीतिरध्यास इति लक्षणमुक्तम् । असंनिधानं चारोप्यस्याधिष्ठाने परमार्थतोऽसत्त्वं, न देशान्तरसत्त्वमिति नापराद्धान्तः । '**अथवाऽसंनि-**

## कल्पतरुपरिमलः ।

लक्षणवाक्यार्थमभिप्रेत्यातिव्याप्तिमाहेति पाठो दृष्टश्चेदृजुः स पाठः । **असंनिधानसिद्धवत्कारेणेति** । असंनिधानमधिष्ठाने परमार्थतोऽसत्त्वमिति वक्ष्यते, तेनानृतत्वलाभः । **एतेन**—टीकायां **परत्रेत्यस्य 'सत्ये'** इत्यर्थस्योक्तत्वात् स्मृतिरूपविशेषणरहितस्य **सत्ये पूर्वदृष्टस्यावभास इति लक्षणस्य** पूर्वं यस्यां गवि गोत्वं दृष्टं तस्यामेव गोत्वज्ञानेऽतिव्याप्तौ शङ्कितुं शक्यायामतिव्याप्त्यर्थं गोव्यक्त्यन्तरे गोत्वज्ञानस्यान्वेषणं व्यर्थमित्यपि शङ्का—**निरस्ता**; आरोप्यानृतत्वसमर्पकस्मृतिरूपपदसमभिव्याहारे हि परशब्दस्य तत्प्रतिद्वन्द्विसत्यार्थकत्वं लभ्यते, तदभावे तु पूर्वदृष्टपदसमभिव्याहारात् परशब्दः पूर्वदृष्टदेशादन्यदेशं बोधयेदित्यतिव्याप्त्यर्थं गोव्यक्त्यन्तरविषयगोत्वप्रत्यभिज्ञान्वेषणं युक्तमेवेति । **ननु**—स्मृतावतिव्याप्तिवारणार्थं परत्रेति विशेषणमित्ययुक्तम्; प्रत्यभिज्ञायामिव स्मृतावप्यतिव्याप्तेरतिव्याप्तिशब्दलक्षितायाः प्रमात्वेनान्यथासिद्धेर्वा स्मृतिरूपविशेषणेनैव वारणात्; तदर्थस्याधिष्ठाने परमार्थतोऽसत्त्वमिति निरुक्तस्याधिष्ठानसमसत्ताकत्वाभावरूपस्य प्रत्यभिज्ञाविषयगोत्व इव तत्तायामप्यभावाद्, उभयोरपि गोव्यक्त्यन्तरस्मर्यमाणधर्मिरूपाधिष्ठानसमसत्ताकत्वाद्, अधिष्ठानसत्यत्वार्थकेन परत्रेत्यनेन स्मृतिव्यावर्तनासंभवाच्च, तत्राधिष्ठानस्य स्मर्यमाणस्याप्यप्रातिभासिकतया शुक्तिकादेरिव सत्यशब्दार्थत्वादित्याशङ्क्याह—**स्मृतिरूपपदेन चेति** । यदि यथाश्रुतटीकानुसारात् स्मृतिरूपपदेनासंनिहितविषयत्वमात्रं विवक्षितं, नत्वाचार्यैर्निर्वक्तव्यमधिष्ठानसमसत्ताकत्वरहितविषयत्वं, तदेयं स्मृतावतिव्याप्तिशङ्का परत्रेत्यनेन तन्निरासोऽपि भवति । अनृतोपस्थापकपदसमभिव्याहाराभावेन परशब्दस्य पूर्वदृष्टदेशान्यदेशपरत्वस्यासंनिहितसमभिव्याहारात् संनिहितपरत्वस्य वा प्राप्तेरिति भावः । एवंचापसिद्धान्तपरिहारार्थमसंनिहितत्वमधिष्ठाने परमार्थतोऽसत्त्वमित्यवश्यं विवक्षणीयत्वात्, तत एव प्रत्यभिज्ञाया इव स्मृतेरपि व्यावृत्तिसिद्धेः, **परत्रेति** विशेषणानपेक्षणेन लक्षणे तदनिवेशनसूचनात्, शङ्कान्तरमपि व्यावर्तितं भवति । **तन्निवेशने हीत्थं शङ्का स्यात्—यदि** परशब्दः पूर्वदृष्टसमभिव्याहारात् पूर्वदृष्टदेशान्यदेशपरः, तदाहङ्काराध्यासाव्याप्तिः; तदधिष्ठानस्य साक्षिणः पूर्वदृष्टदेशत्वात्, रजताद्यध्यासाव्याप्तिश्च; तत्राध्यसनीयस्य पूर्वदृष्टत्वाभावात्। **पूर्वदृष्टसजातीयत्वविवक्षायां** यथा कथंचित्साजात्यस्य सर्वत्र सत्त्वेन पूर्वदृष्टविशेषणस्याव्यावर्तकत्वापत्तिः । **यद्धर्मावच्छेदेनावभासविषयत्वं तेन धर्मेण साजात्यविवक्षायां** गोव्यक्त्यन्तरे गोत्वस्य किंचिद्धर्मावच्छेदेनानवभासमानतया तत्प्रत्यभिज्ञायामतिव्याप्त्युक्तेरसामञ्जस्यापत्तिः । **यदि** त्वनृतोपस्थापकपदसमभिव्याहारात् परशब्दः सत्यार्थकः, तदा वियदादिविषयानुमितिशब्दज्ञानरूपव्यावहारिकाध्यासेष्वव्याप्तिः; तेषु प्रत्यक्षेष्वपि; सद्रूपाधिष्ठानब्रह्मस्फुरणाभावात् । देहादावनात्मन्यात्माध्यासे चाव्याप्तिः; तत्र स्वरूपतोऽप्यध्यस्तो देहादिः सत्यः, शबलितरूपमात्रेणाध्यस्त आत्मा त्वसत्य, इत्येवं सत्ये अनृतावभास इति लक्षणानुगमस्य कर्तुमयुक्तत्वात् । अध्याससंक्षिप्तलक्षणक्रोडीकृतेषु विस्तृतलक्षणानुगत्यवश्यंभावश्च–इति ॥ तस्मादधिष्ठानासमसत्ताकस्यावभासोऽध्यास इत्येवानुगतं लक्षणम्' । यद्गतमवभास्यं तदधिष्ठानम् । तथाच गोत्वादिषु गोव्यक्त्यादिरूपाधिष्ठानसमसत्ताकत्वसद्भावेऽपि ब्रह्मरूपाधिष्ठानसमसत्ताकत्वसद्भावो नास्तीति लक्षणस्य न क्वाप्यध्यासे अननुगतिः । **एवं** परत्रेति विशेषणरहितमसंनिहितस्यावभास इत्येतावदेव लक्षणमित्याचार्यैरसंनिहितपदस्याधिष्ठाने परमार्थतोऽसत्त्वमित्यर्थविवक्षायां परत्रेति विशेषणस्य फलं नास्तीति सूचनेन, **अथवाऽसंनिधानेनेति** श्लोके असंनिधानावभासाभ्यामेव **परत्रेति** विशेषणनिरसनीयत्वेन टीकोक्ताया असत्ख्यातेरनभिमतसकलख्यात्यन्तराणां च निरसनेन च सूचितं टीकाकाराभिमतं परत्रेति विशेषणसहितं लक्षणं प्राक् प्रदर्शितम्। **इदानीं** तद्रहितलक्षणं स्वाभिमतमभिप्रेत्य तदनुप्रविष्टाभ्यामसंनिधानावभासाभ्यामेवानभिमतसकलख्यात्यन्तरनिरसनं क्रियत इति टीकाकारमतात् स्वमतस्य भेदं सूचयितुम् अथ वेत्युक्तिः । **अथवा** असंनिहितस्यावभास इत्येतावदेव लक्षणम् । तत्रासंनिधानेनासत्ख्यातिव्यतिरिक्ताख्यात्यादिसकलसत्ख्यातिवारणम्, अवभासेनासत्ख्यातिवारणमिति श्लोकार्थः । भ्रमविषयरजतादिकं तादात्म्येन वा ताद्धर्म्येण वा यद्गतं तत् अधिष्ठानम् । तथाचाख्यात्यन्यथाख्यातिमतयोर्द-

## भामती ।

**तद्विषयत्वं च स्मृतिरूपत्वं, संनिहितविषयं च प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः । नाप्यव्याप्तिः; स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवंरूपत्वात् । तत्रापि हि स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसंनिधानापरामर्शी, तत्र तत्र**

## वेदान्तकल्पतरुः ।

धानेन सत्ख्यातिरिह वारिता । अवभासादसत्ख्यातिर्नृशृङ्गे तददर्शनात् ॥' इति । असंनिहितस्य परत्र प्रतीयमानस्य पूर्वदृष्टत्वेऽर्थसिद्धेऽपि पुनर्ग्रहणं पूर्वप्रमितत्वव्यावर्तनफलमित्युक्तमेव । स्वप्नज्ञाने प्रमाणयोग्यशुक्त्याद्यधिष्ठानाभावात्परत्रेति विशेषणाव्याप्तिमाशङ्क्याह—**नापीति** । स्मृतौ विभ्रमः स्मृतिविभ्रमः, स्मर्यमाणे स्मर्यमाणरूपान्तरारोप इति यावत् । अनुभूयमाने पित्रादौ यत्संनिहितत्वं पूर्वदृष्टं तदिहारोप्यम् । अन्यार्थं लक्षणविशेषणतयोक्तपूर्वदृष्टत्वस्य गृह्यमाणविषयत्वेन प्रसिद्धभ्रमेष्वव्या-

## कल्पतरुपरिमलः ।

शान्तरस्थमधिष्ठानम्, आत्मख्यातिमते ज्ञानम्, सत्ख्यातिमते पुरोवर्ति शुक्त्यादिकम्, अस्मिन्मतचतुष्टयेऽपि सदेव रजतादिकं तत्तदधिष्ठानसमसत्ताकमित्यसंनिधानविशेषणेन चतुर्विधाप्येषासत्ख्यातिर्वार्यत इत्यर्थः । **अवभासाद्** इत्यस्यापरोक्षावभासादित्यर्थः । अतएवाह—**नृशृङ्गे तददर्शनादिति** । नृशृङ्गेपि हि परोक्षावभासः प्रागाचार्यैरङ्गीकृतः । यद्यप्यापरोक्ष्यं न लक्षणानुप्रविष्टं; तथापि रजताध्यासे लक्षणानुगतौ क्रियमाणायां तत्र लक्षणस्थमवभासपदं वस्तुतोऽपरोक्षावभासे पर्यवस्यदापरोक्ष्यस्फुरणनियतमिति तल्लाभः । **इदं त्ववधेयम्**—शुक्तावसद्रजतं भासत इति सदुपरक्तासत्ख्यातेरपरोक्षावभासेन निरासः शून्यवाद्यभिमतनिरधिष्ठानासत्ख्यातेस्त्वसंनिधानेनापि निरासः; तदर्थस्य स्वाधिष्ठानेन समसत्ताकत्वाभावस्यासति स्वाधिष्ठानाप्रसिद्धौ निरूपयितुमशक्यत्वात्, एवंच सिद्धान्त्यभिमता शशशृङ्गादिशब्दजन्या असत्प्रतीतिः न शुक्तिरजतादिज्ञानवदध्यासो, नापि घटादिज्ञानवत्प्रमा, किंतूभयविलक्षणं ज्ञानमात्र**मिति** ॥ पूर्वदृष्टग्रहणं तु न ख्यात्यन्तरनिरासार्थं, पूर्वदृष्टिसद्भावप्रतिपादनार्थं वा; रजतविभ्रमादिषु पूर्वदृष्टयपेक्षायाः सर्वसंप्रतिपन्नत्वात्, किंतु टीकोक्तप्रयोजनमात्रार्थमित्याह—**असंनिहितस्येति** । पूर्वप्रमितत्वशब्देन पूर्वप्रमितत्वसहचरिता सत्ता लक्ष्यते, आक्षेपभाष्यटीकानुसारात् । **स्वप्नज्ञाने इति** । स्वप्नः प्रातिभासिकविभ्रम इति न तत्रात्माधिष्ठानं; पारमार्थिकाधिष्ठानत्वे वियदादिविभ्रमवद् व्यावहारिकाध्यासत्वापत्तेः, नच रजतविभ्रमादिषु शुक्तिकादिवत् तत्र व्यावहारिकमधिष्ठानमस्तीत्यव्याप्तिशङ्का । **अनुभूयमाने इति** । प्रागनुभूयमाने पित्रादौ यत्संनिहितत्वमनुभूतं, तत्स्वप्ने तात्कालिकत्वेनानुभूयते; अतः पाकरक्ते घटे इदानीं श्याम इति प्रत्ययवत् स्वप्नस्य विभ्रमत्वमिति भावः । नैयायिकमतेनायमव्याप्तिपरिहारः । स्वमते तु स्वप्नदृष्टः पित्रादिः स्वरूपत एव प्रातिभासिकः, तस्यात्माधिष्ठानम् । नच तावता व्यावहारिकत्वापत्तिः; अप्रयोजकत्वात्, साक्षिण्यध्यस्तानामविद्यान्तःकरणतद्धर्मादीनां यावत्सत्त्वं प्रतिभासमानानां प्रातिभासिकत्वाभ्युपगमाच्च । तदेतत्, **आत्मनि चैवं विचित्राश्च हीति** ( ब्र. २।१।२८ ) सूत्रव्याख्यानेन स्फुटं भविष्यतीत्यत्र नोद्घाटितं टीकायाम् । पीतशङ्खविभ्रमादिस्थले संनिकृष्टपित्तपीतिमादिविशिष्टशङ्खादिविषयम् अध्यासरूपमेव ज्ञानं जायते, न तत्रारोप्यस्य पीतिमादेः पूर्वदर्शनमस्ति । नच—तत्र कनकादिषु पीतिमानुभवरूपं पूर्वदर्शनमस्तीति—वाच्यम्; अननुभूतपीतवर्णस्य पित्तोपहतनयनस्य पुंसः प्रथमं पीतशङ्खविभ्रमात्मके एव जायमाने पीतिमानुभवे तदसंभवादित्याशङ्क्य तत्रापि पूर्वदर्शनसद्भावः समर्थ्यते । इदं किमर्थं तस्य लक्षणाननुप्रविष्टत्वेन तदभावेऽपि लक्षणाव्याप्त्यप्रसक्तेरित्याशङ्क्यावतारयति—**अन्यार्थमिति** । अध्यासेषु पूर्वदृष्टिमात्रमपेक्ष्यते, नतु सत्तेत्यध्यसनीयसत्तानिराकरणार्थं तेषु पूर्वदृष्टिः सार्वत्रिकी व्यवहृता; तत्सार्वत्रिकत्वाभ्युपगमो न युक्त इत्याशङ्क्य परिहरतीत्यर्थः । टीकायां पीतशङ्खविभ्रमस्थले तदानीन्तनं नयनरश्मिगतपित्तपीतिमानुभवरूपं प्राचीनं तपनीयपिण्डादिगतपीतिमानुभवरूपं च पूर्वदर्शनमस्तीति समर्थितम् । तत्राद्यपक्षो न युक्तः; नयनरश्मिभिर्निर्गत्य शङ्खमात्रंवतः पित्तद्रव्यस्य पीतिमानुभूयत इत्यङ्गीकारे कनकलिप्तशङ्ख इव अन्येषामपि पीतशङ्खविभ्रमप्रसङ्गात्, शङ्खनयनान्तरालवर्तिरश्मिगतपित्तपीतिमानुभूयत इत्यङ्गीकारेऽन्तरालदेशेऽन्येषामपि तद्ग्रहणप्रसङ्गात् । अतोऽतीन्द्रियनयनरश्मिगतपित्तपीतिम्नो नानुभवः संभवतीत्यस्वारस्यात्प्राचीनानुभवपक्ष उपन्यस्त इत्येतत्सूचयति—**गृह्यमाणविषयत्वेन प्रसिद्धभ्रमेष्विति** । गृह्यमाणविषयतया तार्किकप्रसिद्धिमात्रं, वस्तुतः पीतशङ्खविभ्रमो न तथेति भावः । नच—तस्य गृह्यमाणारोपत्वाभावे स्मर्यमाणारोपत्वं वक्तव्यं, नतु तद्युज्यते; स्मरणस्यानियततया कदाचित्पित्तोपहतनयनस्य पीतिमस्मृत्यनुदये श्वेतः शङ्ख इत्यनुभवप्रसङ्गाद्, इति—वाच्यम्; अतिधवलसिकतातलप्रवहदच्छनदीजलनैल्याध्यासे नीलिम्न इवात्रापि पीतिम्नः स्मृतिनियमकल्पनोपपत्तेः । पूर्वानुभवजन्यसंस्कारमात्रेण नैल्याध्याससमर्थनेत्विहापि तथास्तु । अननुभूतपीतवर्णस्य पीतशङ्खविभ्रमे तु जन्मान्तरानुभूतपीतिमस्मरणमुपासनीयम् । एतादृशेषु जन्मान्तरानुभूतस्मरणं गतिरिति व्युत्पादयितुमेव पञ्चपादिकायां शिशोः स्तन्ये तिक्तताध्यासो जन्मान्तरानुभूततिक्तरसस्मरणकृत इत्युक्तम् । इत्थं पीतशङ्खविभ्रमो नानुभूयमानारोप इति मतानुसारेण व्याख्यातम् । ये तु नयनरश्मिगतपित्तपीतिम्नोऽनुभवमङ्गीकृत्यानुभूयमानारोपः स इति

## भामती ।

पूर्वदृष्टस्यैव संनिहितदेशकालत्वस्य समारोपः । एवं पीतः शङ्खस्तिक्तो गुड इत्यत्राप्येतल्लक्षणं योजनीयम् । **तथाहि—** बहिर्विनिर्गच्छदत्यच्छनयनरश्मिसंपृक्तपित्तद्रव्यवर्तिनीं पीततां पित्तरहितामनुभवन्, शङ्खं च दोषाच्छादितशुक्लिमानमनुभवन्, पीततायाश्च शङ्खासंबन्धमननुभवन्, असंबन्धाग्रहणसारूप्येण पीतं तपनीयपिण्डं पीतं बिल्वफलमित्यादौ पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खयोरारोप्याह पीतः शङ्ख इति । **एतेन** तिक्तो गुड इति प्रत्ययो **व्याख्यातः ।** एवं विज्ञातृपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयत्, दोषवशात्तद्देशतामनभिमुखतां च मुखस्याग्राहयत्, पूर्वदृष्टाभिमुखादर्शोदकदेशताभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति । **एतेन** द्विचन्द्रदिङ्मोहालातचक्रगन्धर्वनगरवंशोरगादिविभ्रमेष्वपि यथासंभवं लक्षणं **योजनीयम् । एतदुक्तं भवति—**न प्रकाशमानतामात्रं सत्त्वं, येन देहेन्द्रियादेः प्रकाशमानतया सद्भावो भवेत् । नहि सर्पादिभावेन रज्ज्वादयो वा स्फटिकादयो वा रक्तादिगुणयोगिनो

## वेदान्तकल्पतरुः ।

प्तिमाशङ्क्याह—**एवमिति ।** अत्र पीतिमशङ्खयोरेकैकशोऽनुभवकाले दृष्टपीतिम्नः पश्चाच्छङ्खे समारोप इति वक्तव्ये, न रूपमारोप्यं, किंतु सामानाधिकरण्यमित्याशङ्क्य तस्यापि पूर्वदृष्टत्वमाह—**तथाहीति ।** पीतिमतपनीययोः संसर्गग्रहेणासंसर्गो न गृह्यते, तथा पीतत्वशङ्खयोरपीति सारूप्यम् । आदर्शादिष्वारोप्यमुखस्य स्वचक्षुषा पूर्वदृष्टत्वाभावादव्याप्तिमाशङ्क्याह—**एवमिति ।** पूर्वदृष्टयोरभिमुखयोरादर्शोदकयोर्देश एव देशो यस्य तस्य भावः तत्ता । तयोरेवाभिमुख्यं चेत्यर्थः ।

## कल्पतरुपरिमलः ।

मन्यन्ते, तन्मते तु पित्तपीतिम्नोऽनुभवोपन्यास आरोपार्थः । तपनीयपिण्डादिगतपीतिमप्राचीनानुभवोपन्यासस्तु पूर्वदृष्टपदयथाश्रुतार्थस्वारस्यलाभार्थ इति योज्यम् । टीकायां सामानाधिकरण्यं पीतिमतादात्म्यमेव, नतु पीतिमसामानाधिकरण्यम् । तदेतत् टीकायां नयनरश्मिगतपित्तपीतिममात्रानुभवस्य शङ्खे पीतिमाऽसंसर्गाग्रहस्य पीतः शङ्ख इति विभ्रमाकारस्य चोपन्यासेन स्पष्टमित्यभिप्रेत्य तथा न व्याख्यातम् । एवंच सति टीकायां पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खयोरारोप्याहेति युक्ततरः पाठः, नतु पीतत्वशङ्खत्वयोरारोप्याहेति पाठः । **यद्वा** पीतिमशङ्खत्वयोस्तादात्म्यसंबन्धेन शङ्खवर्तित्वे शङ्खगतैकत्वे च भासमाने तयोः सामानाधिकरण्यमपि संसर्गमर्यादया भासत इत्यभिप्रायः स पाठः । अतएव पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरनुमानफलमिति तार्किका अपि वदन्ति ॥ **पीतत्वशङ्खयोरिति ।** अत्र सारूप्यमित्यनेन पीतिमतादात्म्यप्रतीतावन्यत्र संप्रतिपन्नकारणसाम्यमुक्तं, नतु तचाकचक्यादिवद् भ्रमहेतुदोषरूपं सादृश्यम् । अयं चासंसर्गाग्रहरूपकारणसद्भावः प्रायिकतयोक्तः । अयं शङ्खः पीतो न भवति शङ्खत्वादितरशङ्खवदित्यानुमानिकपीतिमासंसर्गग्रहे सत्यपि पित्तोपहतिदोषप्राबल्यात् पीतशङ्खविभ्रमोऽवश्यं भवत्येव । **अव्याप्तिमाशङ्क्याहेति ।** अव्याप्तिरित्याशङ्क्याहेत्यर्थः । आदर्शादिकमधिष्ठानमिति हि पूर्वपक्षिशङ्कामात्रं, सिद्धान्ते तु मुखमेवाधिष्ठानमिति वक्ष्यते । **अत इत्थं व्याख्या—पूर्वदृष्टाभिमुखादर्शोदकदेशतामिति टीकायां—**पूर्वदृष्टत्वमादर्शोदकदेशताया न विशेषणम्; आदर्शे मुखमिति प्रतीतौ संसर्गविधया प्रतीयमानायास्तस्याः शुक्तिरजततादात्म्यस्येव पूर्वदृष्टयनपेक्षणात् । **पीतं बिल्वफलमित्यादौ पूर्वदृष्टं सामानाधिकरण्यम्, पीतत्वशङ्खयोरारोप्याहेति** टीकायां पीतिमतादात्म्यस्यापि पूर्वदर्शनं संभवमात्रेणोपन्यस्तम् । अतएव पित्तपीतिमानुभवरूपपूर्वदर्शनसमर्थने तन्नोक्तम् । तस्मादधिकरणत्वेन मुखविशेषणतयाऽऽरोप्ययोरादर्शोदकयोरेव तद्विशेषणमित्यभिप्रेत्य विगृह्णाति—**पूर्वदृष्टयोरिति । ननु** यत्र पूर्वमदृष्टयोरादर्शोदकयोः प्रतिबिम्बविभ्रमः, तत्र कथं पूर्वदृष्टविशेषणं, **तत्रापि** प्रथमसंनिकृष्टादर्शोदकदर्शने जाते पश्चात् परावर्तितेन चाक्षुषेण तेजसा मुखसंनिकृष्टेन मुखग्रहणे सति तस्मिन् प्रतिबिम्बविभ्रमो जायत इति तदुपपत्तिः । **ननु—**यदीन्द्रियसंनिकृष्टम् अनुभूयमानादर्शोदकमधिकरणत्वेन मुखे समारोप्यत इतीष्यते, तदान्यथाख्यात्यापत्तिः; रजतवदनिर्वचनीयस्यादर्शान्तरस्य मुखान्तरस्य वोत्पत्त्यनङ्गीकारात्—**इति चेद्, न;** तत्रादर्शमुखयोराधाराधेयभावस्यानिर्वचनीयस्योत्पत्त्यान्यथाख्यातिवैषम्यात् । अन्यथा अन्येष्वनुभूयमानारोपेषु का गतिः । यद्यपि रक्तः पट इत्याद्यनुभवो महारजनादिसंबन्धात् पटे वर्णान्तरोत्पत्त्यापि समर्थयितुं शक्यः; दृष्टा हि हरिद्रासंबन्धात् चूर्णे रक्तिम्नः सलिलसंबन्धाद् भूतले नीलिम्नश्चोत्पत्तिः, तत्र हरिद्रासलिलवर्णवैलक्षण्याद् वर्णान्तरोत्पत्तिरिष्यते **चेदि**हापि तुल्यो न्यायः; रञ्जकद्रव्यसंबन्धे सति तद्वर्णविलक्षणस्यैव रञ्जकद्रव्यबहुलपभावेनोत्कर्षापकर्षापन्नस्य वर्णस्य पटे दर्शनात्; तथापि चूर्णलिप्तशुक्लघटादिषु वर्णान्तरोत्पत्त्यभावात् तेषु शुक्लो घट इत्यादिरनुभूयमानचूर्णशुक्लिमाद्यारोपरूप एव वाच्यः । टीकायां देशतामनभिमुखतां च मुखस्याग्राहयदिति क्वचित्संभवमात्रेणोक्तम् । **वस्तुतः** प्रतिबिम्बविभ्रमे विरोध्यग्रहणं नापेक्षितम्; तटस्थत्वोर्ध्वाग्रत्वादिना दृश्यमानेऽपि तरौ तटाकजलस्थत्वाधोग्रत्वा-

## भामती।

न प्रतिभासन्ते, प्रतिभासमाना वा भवन्ति तदात्मानस्तद्धर्माणो वा। तथा सति मरुषु मरीचिचयं 'उच्चावचमुच्चलत्तुङ्गतरङ्गभङ्गमालेयमभ्यर्णमवतीर्णा मन्दाकिनी' इत्यभिसंधाय प्रवृत्तस्तत्तोयमापीयापि पिपासामुपशमयेत्। तस्मादकामेनाप्यारोपितस्य प्रकाशमानस्यापि न वस्तुसत्त्वमभ्युपगमनीयम्। नच—मरीचिरूपेण सलिलमवस्तुसत्, स्वरूपेण तु परमार्थसदेव, देहेन्द्रियादयस्तु स्वरूपेणाप्यसन्त इत्यनुभवागोचरत्वात्कथमारोप्यत इति—सांप्रतम्; यतो यद्यसन्तो नानुभवगोचराः, कथं तर्हि मरीच्यादीनामसतां तोयतयानुभवगोचरत्वम्, नच स्वरूपसत्त्वेन तोयात्मनापि सन्तो भवन्ति। यद्युच्येत नाभावो नाम भावादन्यः कश्चिदस्ति, अपितु भाव एव भावान्तरात्मनाऽभावः स्वरूपेण तु भावः, यथाहुः—'भावान्तरमभावो हि कयाचित्तु व्यपेक्षया' इति, ततश्च भावात्मनोपाख्येयतयास्य युज्येतानुभवगोचरता, प्रपञ्चस्य पुनरत्यन्तासतो निरस्तसमस्तसामर्थ्यस्य निस्तत्त्वस्य कुतोऽनुभवविषयभावः, कुतो वा चिदात्मन्यारोपः। नच—विषयस्य समस्तसामर्थ्यस्य विरहेऽपि ज्ञानमेव तत्तादृशं स्वप्रत्ययसामर्थ्यासादितादृष्टान्तसिद्धस्वभावभेदमुपजातमसतः प्रकाशनं, तस्मादसत्प्रकाशनशक्तिरेवाविद्येति—सांप्रतम्; यतो येयमसत्प्रकाशनशक्तिर्विज्ञानस्य किं पुनरस्याः शक्यं, असदिति चेत्, किं तत्कार्यमाहोस्विदस्या ज्ञाप्यम्। न तावत्कार्यम्; असतस्तत्त्वानुपपत्तेः। नापि ज्ञाप्यं; ज्ञानान्तरानुपलब्धेः, अनवस्थापाताच्च। विज्ञानस्वरूपमेवासतः प्रकाश इति चेत्, कः पुनरेष सदसतोः संबन्धः। असदधीननिरूपणत्वं सतो ज्ञानस्यासता संबन्ध इति चेत्, अहो बतायमतिनिर्वृतः प्रत्ययतपस्वी यस्यासत्यपि निरूपणमायतते, नच प्रत्ययस्तत्राधत्ते किंचित्, असत आधारत्वायोगात्। असदन्तरेण प्रत्ययो न प्रथत इति प्रत्ययस्यैवैष स्वभावो न त्वसदधीनमस्य किंचिदिति चेत्, अहो बतास्यासत्पक्षपातो यदयमतदुत्पत्तिरतदात्मा च तदविनाभावनियतः प्रत्यय इति। तस्मादत्यन्तासन्तः शरीरेन्द्रियादयो निस्तत्त्वा नानुभवविषया भवितुमर्ह-

## वेदान्तकल्पतरुः।

शीघ्रं भ्रमितालातज्वालासु पूर्वदृष्टचक्राकारताया आरोपः। **अभ्रेषु** ग्रहादेः। मण्डूकवसाक्ताक्षग्राह्यवंशेषु वसावर्णेषु च पूर्वदृष्टोरगतद्वर्णसामानाधिकरण्यारोप इत्यर्थः। **तथा सतीति**। रज्ज्वादीनां सर्पात्मत्वादेः सत्त्वे सतीत्यर्थः। उच्चलन्ती तुङ्गतरङ्गभङ्गानां तरङ्गावच्छेदानां माला यस्याः सा मन्दाकिनी तथा। **अभ्यर्णं** निकटम्। **मरीचीनां तोयात्मत्वं न सदित्युक्ते** यन्मरीचीनां तोयरूपेणासत्त्वं तन्मरीचय एवातो नाऽसत्ख्यातिरिति शङ्कते—**यद्युच्येतेति**। निरस्तसमस्तसामर्थ्यस्येत्यर्थक्रियाकारित्वसत्त्वायोग उक्तः। निस्तत्त्वस्येति स्वरूपसत्ताभावः। तद्द्वयमत्यन्तासत्त्वे हेतुः। अनिर्वचनीयमतं निरस्य शून्यमतं निरस्यति सद्वादी—**नच विषयस्येति**। **स्वप्रत्ययः** स्वसमानाकारः पूर्वप्रत्ययः। **अदृष्टान्तसिद्धः** असाधारणः। ज्ञानस्यापि पूर्वज्ञानाधीनत्वं सत्त्वमतो न क्वापि स्वरूपसत्त्वमित्यर्थः॥ **नन्व**विद्यया असत्प्रकाशनमिति बौद्धाः, तत्कथं विज्ञानमसत्प्रकाशनमत आह—**तस्मादिति**। **ज्ञानान्तरानुपलब्धेरिति**। शक्त्याश्रयत्वेनाभिमताज्ज्ञानाज्ज्ञानान्तरानुपलब्धेरित्यर्थः। उपलब्धौ वा तस्यापि ज्ञापकत्वेन ज्ञानान्तरापेक्षायामनवस्थापाताच्चेत्यर्थः। सति हि कस्मिंश्चित्कस्यचिदुपकारो भवति, प्रत्ययस्य निरूपणं त्वसत्यप्यायतते। नच स्वोपकारिण्यसति प्रत्युपकारं कंचित्करोति इत्यतोऽतिसुखी प्रत्यय इत्युपहासः। अनाधाने हेतुमाह—**असत इति**। असतः प्रत्ययप्रथनस्य चाविनाभावं संबन्धमाशङ्क्य निराचष्टे—**असदन्तरेणेति**। **अहो बतेति**। कार्यकारणभावः स्वभावश्च बौद्धाभिमतमविनाभावमूलमिह

## कल्पतरुपरिमलः।

ह्यारोपदर्शनात्। वंशेषु वंशवर्णेषु चेति पाठः। वसावर्णेष्विति पाठस्तु चक्षुस्तेजसा सह पित्तद्रव्यवद्वसावयवस्य निर्गमेन कथंचिदुपपादनीयः। पूर्वदृष्टोरगतद्वर्णारोप इति पाठः। तद्वर्णसामानाधिकरण्यारोप इति पाठे तु सामानाधिकरण्यं तादात्म्यम्। **नासत्ख्यातिरिति शङ्कते इति**। **ननु**—न प्रकाशमानता सत्ता; मरीचिषु तोयात्मत्वस्यासतः प्रकाशादित्युक्ते कथं तेषु तोयानात्मत्वस्य सद्रूपत्वप्रतिपादनेनासत्ख्यात्यभावशङ्का—**सत्यम्**; इदमेव दूषणम**त्र ब्रूम** इत्यादिटीकया प्रतिपादयिष्यते। **ननु** स्फुटे वैयधिकरण्यदूषणे कथमनालम्बना शङ्का, व्यधिकरणोत्तरेणैव सत्ख्यातिवादनिर्वाह इत्युपहासार्थं तदीयशङ्कोद्भाविता। **पूर्वज्ञानाधीनत्वं सत्त्वमिति**। शून्यवादिमते ज्ञानस्याप्यसत्त्वात् तस्य पूर्वज्ञानाधीनत्वं यदस्ति, तत् परं सत्त्वमिति व्यपदिश्यते; अतोऽग्रिमटीकाग्रन्थे तन्मते ज्ञानविषययोः सदसत्त्वव्यवहारो न विरुद्ध इति भावः। **सति हि कस्मिंश्चिदिति**। तेनेति शेषः। **असत्यप्यायतते**। असदधीनमपि भवति। असतीति विषयसप्तमी। क्वचिदायतत इत्येतदनन्तरमायातीति पदान्तरं दृष्टं तत्प्रामादिकम्। आयतत इत्यस्य आगमनार्थत्वाभावात्। असतः सकाशादायातीत्येतदर्थकं फलितार्थकथनपरं वा तद् द्रष्टव्यम्। **नच प्रत्यय** इति वाक्यस्यार्थमाह—**नच स्वोपकारिणीति**। **अतोऽतिसुखीति**। स्वयं कस्यचिदनुपकुर्वन्नेव तेनोपक्रियत इत्ययत्नलभ्योपकारोयमित्यतिसुखी-

## भामती।

न्तीति ॥ **अत्र ब्रूमः**—निस्तत्त्वं चेन्नानुभवगोचरः, तत्किमिदानीं मरीचयोऽपि तोयात्मना सतत्त्वाः, यदनुभवगोचराः स्युः। न सतत्त्वाः; तदात्मना मरीचीनामसत्त्वात्। द्विविधं च वस्तूनां तत्त्वं सत्त्वमसत्त्वं च। तत्र पूर्वं स्वतः, परं तु परतः। **यथाहुः**—'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके। वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ॥' इति। तत्किं मरीचिषु तोयनिर्भासप्रत्ययस्तत्त्वगोचरः, तथाच समीचीन इति न भ्रान्तो नापि बाध्येत। अद्धा न बाध्येत, यदि मरीचीनतोयात्मतत्त्वानतोयात्मना गृह्णीयात्, तोयात्मना तु गृह्णन्कथमभ्रान्तः कथं वाऽबाध्यः। हन्त तोयाभावात्मनां मरीचीनां तोयभावात्मत्वं तावन्न सत्; तेषां तोयाभावादभेदेन तोयभावात्मतानुपपत्तेः। **नाप्यसत्**; वस्त्वन्तरमेव हि वस्त्वन्तरस्यासत्त्वमास्थीयते 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इति वदद्भिः। नचारोपितं रूपं वस्त्वन्तरम्। तद्धि मरीचयो वा भवेत्, गङ्गादिगतं तोयं वा। **पूर्वस्मिन्कल्पे** मरीचय इति प्रत्ययः स्यान्न तोयमिति। **उत्तरस्मिंस्तु** गङ्गायां तोयमिति स्यात्, नपुनरिहेति। देशभेदास्मरणे तोयमिति स्यान्नपुनरिहेति। नच–इदमत्यन्तमसन्निरस्तसमस्तस्वरूपमलीकमेवास्त्विति—सांप्रतम्; तस्यानुभवगोचरत्वानुपपत्तेरित्युक्तमधस्तात्। तस्मान्न सत्; नापि सदसत्; परस्परविरोधादित्यनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयं, तदनेन क्रमेणाध्यस्तं तोयं परमार्थतोयमिव,

## वेदान्तकल्पतरुः।

नास्तीत्यर्थः। एवं सदेव भातीति पूर्ववादिनोक्ते सिद्धान्त्याह—**अत्र ब्रूम इति**। पूर्वपक्ष्याह—**न सतत्त्वा इति**। तोयात्मनेत्यनुषङ्गः। अत्र हेतुमाह—**तदात्मनेति**। तदात्मनाऽसत्त्वस्य मयापीष्टत्वादित्यर्थः। तर्हि असत्ख्यातिः स्वीकृता, नेत्याह—**द्विविधं चेति**। तोयमपेक्ष्य ज्ञातं मरीचिरूपमेव तोयरूपेणासत्, तच्च भावरूपमिति नासत्ख्यातिरित्यर्थः। तोयरूपेणासत्त्वं मरीचिरूपमेव; तच्चाबाध्यं, तच्चेद्भ्रमगोचरः, तर्हि न भ्रमबाधप्रसिद्धिः स्यादित्युक्ते पूर्ववाद्याह—**अद्धेति**। बाढम्। मरीचीनामतोयात्मत्वं स्वरूपं तत्तथा भ्रमो न गृह्णाति, किंतु भावान्तरतोयात्मना मरीचींस्तोयाभावरूपान् गृह्णातीति भ्रमत्वमित्यर्थः। तोयाभावात्मकमरीचिरूपे यदारोपितं तोयत्वं तत्तत्र **सदसद्वेति** विकल्प्याद्यं **निरस्यति—हन्तेति**। **द्वितीये** तु किं **तुच्छमसत्सदन्तरं वा**। **नाद्यो**ऽपराद्धान्तात्। **न द्वितीय** इत्याह—**वस्त्वन्तरमेव हीति**। अस्मिन् हि भ्रमे मरीचयस्तोयं चेति द्वे वस्तुनी भासेते। तत्र मरीचितोयतादात्म्यं यदि वस्तु, तर्हि तोयाद्वस्तुनो वस्त्वन्तरभूता मरीचयो वा स्युर्मरीचिभ्यो वस्त्वन्तरं तोयं वा स्यान्नान्यत्। अन्यस्यास्मिन् भ्रमेऽनवभासनादुभयत्र दूषणमाह—**पूर्वस्मिन्नित्यादिना**। एवं सत्ख्यातिं निरस्यासत्ख्यातिनिरासमप्युक्तं स्मारयति—**नचेदमिति**। फलितमाह—**तस्मादिति**। एवं मरीचितोयतादात्म्यमनिर्वाच्यं प्रसाध्य सदेव भातीति नियममभाङ्क्षीत्। तथाच स्वरूपेणानिर्वाच्यमपि तोयं भ्रमेऽवभासितुमर्हतीति मुधामुष्य देशान्तरादौ सत्त्वकल्पनेत्याह—**तदनेनेति**। **नन्व**भिनवतो-

## कल्पतरुपरिमलः।

त्युपहासः। तदात्मना न सतत्त्वा इति साध्ये हेतोः साध्याविशेषमाशङ्क्य, हेतुं विशिनष्टि–**तदात्मनाऽसत्त्वस्येति**। ममापीष्टत्वादिति सर्वसंप्रतिपत्त्यर्हः शुद्धः पाठः। **किं तुच्छमसत् सदन्तरं वेति**। असच्छब्दस्यालीकमर्थमभिप्रेत्या**द्यो विकल्पः**। अभावमर्थमभिप्रेत्य **द्वितीयो विकल्पः**। एवं हि टीकायां द्वितीयविकल्पविवरणे भावान्तरमभाव इति तन्मतप्रदर्शनं सङ्गच्छते। **असत्ख्यातिनिरासमिति**। **ननु** सत्ख्यातिवाद्युपन्यस्ताऽसत्ख्यातिवादनिरासो न सिद्धान्त्यनुमोदनार्हः—'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति ही'ति सिद्धान्ते शाब्दासत्प्रतीत्यङ्गीकारात्, अनिर्वाच्यत्वनिर्वचनप्रविष्टासद्वैलक्षण्य इव असंज्ञानेऽप्यसन्निरूपितत्वोपपत्तेश्च—**इति चेत्, सत्यम्**; शब्दस्यासत्प्रतिपादनक्षमत्वेऽपीन्द्रियस्यासंनिकृष्टग्राहकत्वाभावादसंनिहितस्येव असतोपि नापरोक्षत्वमुपपद्यत इति तात्पर्यम्। **मुधाऽमुष्येति**। **ननु**—देशान्तरस्थरजतस्य भ्रमविषयत्वोपपत्तौ मुधाभिनवरजतकल्पनमिति विपरीतमेव वक्तुं युक्तम्, नच—असंनिहितापरोक्ष्ये संनिकर्षकारणाभावो दोषः; **ज्ञानस्य संनिकर्षत्वे** वह्न्यनुमितिस्थले प्रत्यक्षोदयप्रसङ्गात्, समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात्, **अलौकिकप्रत्यक्षसामग्र्यपेक्षयाऽनुमितिसामग्र्या बलवत्त्वे** संशयोत्तरभ्रमरूपपुरुषप्रत्यक्षस्थले अनुमितिप्रसङ्गात्; **तस्य संनिकर्षत्वाभ्युपगमेऽपि** यत्र यत्पूर्वमवगतं तस्मिन्नेव पुनर्दृश्यमाने तज्ज्ञानस्य, यदवच्छेदेन यत्पूर्वमवगतं तद्वत्त्वेन दृश्यमाने तज्ज्ञानस्य वा, तदुपनायकत्वेन पूर्वरजतत्ववत्त्वेन रजतत्वावच्छेदकवत्त्वेन वा अनवगते शुक्तिशकले रजतज्ञानस्य संनिकर्षत्वायोगाच्चेति–वाच्यम्; रजतान्तरोत्पत्तावपि संप्रतिपन्नरजतकारणाभावस्य तुल्यत्वात्। **तदभावेऽपि** दोषवशात् प्रसिद्धव्यावहारिकरजतविलक्षणं प्रातिभासिकं रजतमुत्पद्यत इति कल्प्यते **चेत्**, संनिकर्षाभावेऽपि दोषवशादसंनिहितरजतविषयं प्रसिद्धप्रमारूपज्ञानविलक्षणं भ्रमरूपज्ञानमुत्पद्यत इत्येव कल्प्यताम्; लाघवात् **इति चेत्, उच्यते**; अस्ति तावत्प्रतारकवाक्यात् 'शशस्य शृङ्गमस्ति' 'तदेवंलक्षणमरण्ये पतितमन्विष्य लब्धुं शक्यं' 'तेन चेदं प्रयोजनं भवतीत्येवंरूपादवाप्तमोहस्य तथैवारण्यं गत्वा तदन्वेषमाणस्योक्तलक्षणकाष्ठशृङ्गान्त-

## भामती ।

**अतएव पूर्वदृष्टमिव, तत्त्वतस्तु न तोयं नच पूर्वदृष्टं, किंत्वनृतमनिर्वाच्यम् । एवंच देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्त इति उपपन्नम्; अध्यासलक्षणयोगात् । देहेन्द्रियादि-**

## वेदान्तकल्पतरुः ।

यावभासाभ्युपगमे पूर्वदृष्टत्वं भाष्योक्तं विरुध्येत, तत्राह—**अतएवेति** । अभिनवत्वेऽप्यारोप्यस्य पूर्वदृष्टग्रहणमुपयुज्यते, आरोपणीयसमानमिथ्यावस्त्वन्तरोपदर्शकस्य पूर्वदर्शनसंस्कारद्वारेणोपयोगादिति । 'स्वरूपेण मरीच्यम्भो मृषा वाचस्पतेर्मतम् । अन्यथाख्यातिरिष्टास्येत्यन्यथा जगृहुर्जनाः ॥' **एवं** तावद्देहादिः, सन्, भासमानत्वादात्मवदित्यनुमानस्य मरीचिकोदकादावनेकान्ततोपपादनेन देहादेरनिर्वाच्यत्वमुक्तं; **संप्रत्यबा**धितत्वेन सोपाधिकतामाह—**देहेन्द्रियादीति** । अबाध्यत्वमात्मनः सत्त्वे उपाधिर्न प्रतिभासमानत्वम् । नच साधनव्याप्तिः; देहादिबाधस्य तत्र तत्र वक्ष्यमाणत्वादित्यर्थः । विपक्षस्य मरीचितोयादेः सत्त्वान्न पक्षेतरता । **ननु** प्रत्यक्षादिप्रमाणार्पितदेहादिः यदि मिथ्या, तर्हि आत्मनि को

## कल्पतरुपरिमलः ।

राददर्शने शशशृङ्गमिदमित्यनुभवः, अस्ति च स्वप्ने मनुष्यपशुपक्षिवृक्षाद्यनेकरूपस्यैकस्यावयविनोऽनुभवः, नच तत्रासंनिहितविषयत्वं कल्पयितुं शक्यमित्यगत्या दोषवशात् प्रातिभासिकस्यैव तस्योत्पत्तिरङ्गीकरणीया; एवमन्यत्र भ्रमस्थले दोषस्य विषयोत्पत्तिकारणत्वक्लृप्तौ तथैव रजतभ्रमेऽपि संभवति । ज्ञानप्रत्यासत्त्याद्यजन्यरजतचाक्षुषप्रत्यक्षमात्रे क्लृप्तस्य रजतचक्षुःसंयोगस्य रजतालोकसंयोगस्य च कारणत्वं परित्यज्य तस्यासंनिहितरजतविषयत्वं न कल्पनीयम् । **ननु**—चैत्रादिव्यक्तिविशेषभ्रमस्य असंनिहितप्रसिद्धचैत्रादिविषयत्वम् अवश्यं कल्पनीयं; रजतसामान्यार्थिप्रवृत्तेः प्रातिभासिकरजतज्ञानादिव प्रसिद्धचैत्रोद्देश्यकप्रवृत्तेः प्रातिभासिकचैत्रज्ञानादुत्पत्त्यसंभवात्—**इति चेद्, न**; प्रातिभासिकरजतज्ञाने रजतत्वप्रकारत्वस्येव प्रातिभासिकचैत्रज्ञाने चैत्रत्वप्रकारकत्वस्य सत्त्वेनेष्टतावच्छेदकप्रकारकात्तत्तदुद्देश्यकप्रवृत्त्युपपत्तेः । **ननु**—तदेवेदं रजतमिति व्यक्तिविशेषविषयप्रत्यभिज्ञारूपभ्रमस्य व्यवहितपूर्वदृष्टरजतविषयत्वम् अवश्यं कल्पनीयं, तद्रजतमिह केनानीतमित्यपि व्यवहारदर्शनात्—**इति चेद्, न**; तस्य व्यावहारिकरजतान्तर इव प्रातिभासिकरजतेऽपि दुष्टकरणसहकारिसंस्कारोपनीततत्ताविषयत्वोपपत्तेः । नचाभिनवरजतोत्पत्त्यङ्गीकारे जलबुद्बुदादेरिव तस्योत्पत्तिनाशानुभवप्रसङ्गः; भ्रमकाले तस्य प्राक्सिद्धपुरोवर्तितादात्म्येनानुभूयमानतयोत्पत्त्यप्रतीत्युपपत्तेः, बाधावतारे त्रैकालिकनिषेधस्यानुभूयमानतया नाशाप्रतीत्युपपत्तेश्च । नच क्वचिदुत्पद्य कंचित्कालं स्थितस्य तत्र त्रैकालिकनिषेधानुपपत्तिः; फलबलात् समानसत्ताकयोरेव प्रतियोगितदत्यन्ताभावयोर्विरोधः, नतु प्रातिभासिकव्यावहारिकयोरिति कल्पनोपपत्तेः । **एतेन**—यस्य प्रथमं शुक्तिशकले रजतभ्रमानन्तरं बाधो नोत्पन्नः, तत्र शुक्तिसाधारणचाकचक्यावच्छेदेन रजतत्वानुभवस्यानपोदितत्वात् पुनः शुक्तिशकलान्तरे रजतभ्रमोदयेऽन्यथाख्यातिः संभवति; तत्र यदवच्छेदेनेत्याद्युक्तरूपोपनयभानसामग्रीसत्त्वात्, पाकरक्ते घटे श्यामोऽयमिति भ्रमोदये चान्यथाख्यातिः संभवति; यत्र यदनुभूतमित्याद्युक्तरूपोपनयसामग्रीसत्त्वादित्यपि शङ्का—**निरस्ता**; क्वचिद्विभ्रमे देशघटितसामग्रीबलादाविद्यकविषयोत्पत्तिक्लृप्तावन्यत्रापि तदुत्पत्तेरनिवारणात्; पाकरक्ते स्मृत्युपनीतश्यामवर्णप्रत्यक्षस्य पूर्वानुभूतसौरभे पश्चाद् निखननादिना गतसौरभे चन्दनखण्डे सुरभीदं चन्दनखण्डमिति स्मृत्युपनीतसौरभविषयचाक्षुषप्रत्यक्षस्येव प्रमात्वाद्, इदानीं श्याम इति प्रत्यक्षभ्रमस्य विरोधिनि रक्तरूपे स्फुरत्यसंभवात्, श्याममृल्लिप्ते रक्तघटे इदानीं श्याम इति प्रत्यक्षभ्रमस्यानुभूयमानमृद्वर्णारोपत्वसंभवेन स्मृत्युपनीतविषयत्वस्याकल्पनीयत्वात् । **देहादिः सन्निति** । टीकायां शङ्काग्रन्थलिखितेऽनुमाने नासन्त इति साध्यं निर्दिष्टम् । **तत्रासत्त्वमलीकत्वं चेत्**, तद्व्यतिरेकसाधनमनिर्वचनीयत्ववादिनः सिद्धसाधनम्; असतः प्रतीत्यविषयत्वस्य सत्ख्यातिवाद्यभिमतत्वात्, साध्याप्रसिद्धिश्च । **अनिर्वचनीयत्वं चेत्**, अत्रापि साध्याप्रसिद्धिः; तस्य तन्मते शशशृङ्गायमानत्वादित्यभिप्रेत्य सदिति साध्यं निर्दिष्टम् । **ननु**—किमिह सत्त्वं साध्यं; प्राक् सद्वाद्युक्तं **प्रकाशमानत्वं चेत्**, हेतोः साध्याविशेषः । **स्वरूपसत्त्वं, सत्ता जातिः, अर्थक्रियाकारित्वम्**, इत्येतानि सिद्धसाधनग्रस्तानि । **अबाध्यत्वं त्वा**त्मनि सत्त्वे प्रयोजकमित्युपाधित्वेन वक्ष्यते । प्रकाशमानत्वं च **भासमानत्वं चेत्**, असति प्रतिवादिगते न व्यभिचारः । **अपरोक्षतया भासमानत्वं चेत्**, आदिशब्दग्राह्येष्विन्द्रियेषु भागासिद्धिरिति—**चेत्, उच्यते**; प्रमाविषयत्वं ज्ञानानिवर्त्यत्वं वा सत्त्वमिह साध्यं; भासमानत्वसामान्यं हेतुः, सद्वादिना तस्यासति प्रत्याख्यातत्वात् प्रसाध्याङ्गको हेतुरिति नात्र व्यभिचारशङ्का । यद्यपि **सिद्धान्तिना कृतं मरीचिकोदकस्यानिर्वचनीयत्वोपपादनं**; प्रकाशमानतैव न सत्ता मरीचिकोदकस्य प्रकाशमानत्वेऽपि सत्त्वाभावादिति, तयोर्व्यतिरेकप्रदर्शनेनाभेदनिरासार्थं; **देहेन्द्रियादिबाध्यत्ववर्णनम्** 'प्रकाशमानत्वं सत्त्वं न भवति चेत्, किं तर्हि सत्त्वमित्याकाङ्क्षायामबाध्यत्वं सत्त्वमित्यभिप्रेत्य देहेन्द्रियादिषु तद्व्यतिरेकप्रदर्शनार्थं, देहेन्द्रियाद्यध्यासेष्वध्यासविस्तृतलक्षणानुगतिप्रदर्शनानन्तरं तत्संक्षिप्तलक्षणानुगतिप्रदर्शनार्थं चेति, व्याख्यातुं शक्यं;

## भामती ।

प्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्यत इति उपपन्नम्; अध्यासलक्षणयोगात्। देहेन्द्रियादिप्रपञ्चबाधनं चोपपादयिष्यते। चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरः तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्यः। अबाधिता स्वयंप्रकाशतैवास्य सत्ता, सा च स्वरूपमेव चिदात्मनः, नतु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वेति सर्वमवदातम्। स चायमेवंलक्षणकोऽध्यासोऽनिर्वचनीयः सर्वेषामेव संमतः परीक्षकाणां, तद्भेदे परं विप्रतिपत्तिरित्यनिर्वचनीयतां द्रढयितुमाह—**तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति ।**

## वेदान्तकल्पतरुः ।

विस्रम्भस्तत्राह—**चिदात्मा त्विति ।** तत्त्वावेदकप्रमाणप्रमितत्वादात्मनः सत्त्वं, न व्यावहारिकप्रमाणसिद्धदेहादेरिति वक्ष्याम इति भावः। **यदुक्त**माक्षेपवादिना प्रकाशमानत्वमेव चिदात्मनोऽपि सत्त्वमिति, तदपि विशेषाभ्युपगमेन परिहरति—**अबाधितेति ।** स्वयंप्रकाशत्वादबाधितमात्मनः सत्त्वं न दृश्यस्य देहादेः दृग्दृश्यसंबन्धानिरूपणादित्यर्थः। नच सत्तातद्वद्भेदाद्द्वैतहानिरित्याह—**सा चेति ।** **यत्तु**—सत्तासमवायादेः सत्तालक्षणत्वमखण्डि,तदनुमोदते—**न त्विति ।** **यत्तु—कश्चित्प्रललाप**—संसारस्यानृतत्ववचनं न तावद्ब्रह्मज्ञाननिबर्हणीयत्वाय; शास्त्रप्रामाण्यात् सत्यस्यापि ज्ञानान्निवृत्तेः, नच संसारिणोऽसंसारिब्रह्मैकत्वार्थम्; औपाधिकस्य संसारस्य सत्यस्याप्युपाधिनिवृत्त्या निवृत्तौ जीवस्य ब्रह्मैक्यसंभवात्—**इति । तन्न**; सत्यस्यात्मवदनिवृत्तेः। **यत्तु**—सामान्यतो दृष्टमनुमानं-ज्योतिष्टोमो, न स्वर्गफलः, क्रियात्वान्मर्दनवत्—**इति । तन्न**; तत्र स्वर्गोद्देशेन यागविधिना विरोधेन कालात्ययात्, अत्र तु सत्यः प्रपञ्चो ज्ञाननिवर्त्य इत्यागमाभावेन तदभावात्, प्रत्युत मिथ्यात्वस्य बन्धस्य ज्ञाननिवर्त्यत्वश्रुत्यर्थापत्तिसिद्धेः। **यदपि**—तार्क्ष्यध्यानादिना सत्यं विषादि नश्यति—**इति । तदपि न**; विषादेः सत्यत्वासिद्धेः, ध्यानस्य चाप्रमात्वेनादृष्टान्तत्वात्। सेतुदर्शनं च चोदितक्रियात्मनैवैनोनिबर्हकं, न प्रमित्यात्मना; पश्यतामपि सेतुं म्लेच्छानां श्रद्धाविरहिणां वा अघानुपघातात्, आत्मप्रमा तु दृष्टद्वारेण बन्धनिवर्तनी, न विधिद्वारा; तद्विधेः समन्वयसूत्रे (ब्रह्म. अ. १ पा. १ सू. ४) पराकरिष्यमाणत्वात्। **यत्तु**—उपाधिध्वंसात्संसारध्वंस—**इति । तन्न**; सत्योपाधेरारम्भणाद्यधिकरणे (ब्रह्म. अ. २ पा. १ सू. १४) वक्ष्यमाणनयेनासंभवात्, मिथ्योपाधिस्वीकारे चाविवादादिति। **नन्व**ध्यासलक्षणे मतान्तरोपन्यासो मतिसंवादाय, दूषणाय वा। **नाद्यः**; विप्रतिपत्तेः, **न द्वितीयः**; दूषणानभिधानादत आह—**स चायमिति ।** परत्र परावभास इत्युक्तलक्षणे सति संवाद एव क्रियते। एवंलक्षणकत्वं चाध्यासस्यानिर्वाच्यतयैवेति मरुमरीचिकोदकनिरूपणे दर्शितम्। विप्रतिपत्तिस्त्वधिष्ठानारोप्यविशेषविषयेत्यर्थः। **अन्यत्रान्यधर्माध्यास इति भाष्यं** धर्मग्रहणेन बुद्ध्याकारत्वसूचनादा-

## कल्पतरुपरिमलः ।

तथापि तद्व्याख्यानं स्पष्टमिति मत्वा पूर्वपक्ष्याशयस्थमनुमानमुद्भाव्य तत्र व्यभिचारोपाधिप्रदर्शनार्थत्वेन सैद्धान्तिकमिदं ग्रन्थद्वयं व्याख्यातम्। **स्वयंप्रकाशित्वादिति ।** स्वयंप्रकाशमात्मनः स्वरूपं केनापि बाधितुं न शक्यम्; अन्ततो बाधसाक्षिण एव स्वयंप्रकाशमानस्यात्मत्वपर्यवसानादिति भावः। **दृग्दृश्येति ।** दृश्यध्यस्तत्वं विना दृशा दृश्यस्य संबन्धान्तरानिरूपणादित्यर्थः। **सत्यस्यात्मवदिति । विषादेरिति । ननु** सर्वः प्रपञ्चो मिथ्येति त्वन्मते विषस्य सत्यत्वासिद्धिरस्तु नाम; तथापि विषस्य मिथ्यात्वं न तार्क्ष्यध्याननिवर्त्यत्वप्रयुक्तं त्वयेष्यते, किंतु प्रपञ्चमिथ्यात्वसाधकप्रमाणान्तरप्रयुक्तमिष्यते; तथाच तार्क्ष्यध्याननिवर्त्त्यत्वं विषस्येव ब्रह्मज्ञाननिवर्त्त्यत्वं संसारस्य मिथ्यात्वे प्रयोजकं न स्यादित्याशङ्क्याह—**ध्यानस्य चेति ।** ब्रह्मज्ञानं हि परीक्षितप्रमाणमूलकं प्रमारूपमेव संसारनिवर्तकम्; 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यादिश्रुतेः, ब्रह्मविद्योपक्रमाम्नातगुरुशिष्यनिबन्धवदुपाख्यानगतयावत्संशयनिवृत्तिप्रश्नोपदेशतत्तदुपपत्त्युपन्यासलिङ्गाच्च, तत्प्रमात्वस्थिरीकरणापेक्षिताऽसंभावनादिनिवृत्त्यर्थप्राप्तश्रवणमननध्यानानुवादलिङ्गाच्च। तार्क्ष्यध्यानस्य तु कल्पिताकल्पितसाधारणयथोपदिष्टार्थविषयस्य विषनिवर्तकत्वे प्रमात्वं नापेक्षितमित्यर्थः। **ननु** सेतुदर्शनं प्रमारूपमेवाघनिवर्तकम्; अन्यत्र सेतुभ्रमेण तदनिवृत्तेः, अतः प्रमात्वापेक्षमपि निवर्त्यत्वं न मिथ्यात्वप्रयोजकमित्याशङ्क्याह—**सेतुदर्शनं चेति ।** यद्विषयप्रमात्वमात्रं यन्निवर्तकताप्रयोजकं तत् तत्राध्यस्तमिति नियमस्य न व्यभिचार इत्यर्थः। यद्यपि शुक्तौ रजताध्यासस्य रङ्गाध्यासेनापि निवृत्तिरस्ति; तथापि समूलसकलाध्यासनिवृत्तिरधिष्ठानप्रमापेक्षा, तदन्यानपेक्षा च **दृष्टा; तन्न्याय** इहापि ग्राह्य इति भावः। **ननु** सेतुदर्शनवद् विध्यायत्तं ब्रह्मज्ञानस्य निवर्तकत्वं, न शुक्तिज्ञानवदधिष्ठानप्रमात्वायत्तम् इत्याशङ्क्याह—**आत्मप्रमात्विति ।** विरोधिविषयतया दृष्टद्वारेणाज्ञाननिवृत्तिर्ज्ञानोदयानन्तरमेव भवन्ती निवर्तकज्ञानसमानकाला भवतीति शुक्तिज्ञानजन्यरजतनिवृत्तौ दृष्टं, तद्वदिहापि 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतिषु ब्रह्मवेदननिवृत्तसंसारब्रह्मभावापत्त्योर्लडाख्याताभ्यां समानकालता प्रतिपाद्यते। नच 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यत्र सत्रानुष्ठानप्रतिष्ठाफलयौगपद्यप्रत्यायकलडाख्यातयोरिवान्यथानयने कारणं किंचिद्बाधकमस्ति। तस्माद्ब्रह्मज्ञानं

## भामती ।

**अन्यधर्मस्य**, ज्ञानधर्मस्य रजतस्य । ज्ञानाकारस्येति यावत् । **अध्यासोऽन्यत्र** बाह्ये । सौत्रान्तिकनये तावद्बाह्यमस्ति वस्तु सत्, तत्र ज्ञानाकारस्यारोपः । विज्ञानवादिनामपि यद्यपि न बाह्यं वस्तु सत्; तथाप्यनाद्यविद्यावासनारोपितमलीकं बाह्यम्, तत्र ज्ञानाकारस्यारोपः । उपपत्तिश्च यद्यादृशमनुभवसिद्धं रूपं तत्तादृशमेवाभ्युपेतव्यमित्युत्सर्गः; अन्यथात्वं पुनरस्य बलवद्बाधकप्रत्ययवशात्, नेदं रजतमिति च बाधस्येदन्तामात्रबाधेनोपपत्तौ न रजतगोचरतोचिता; रजतस्य धर्मिणो बाधे हि रजतं च तस्य च धर्म इदन्ता बाधिते भवेताम्, तद्वरमिदन्तैवास्य धर्मो बाध्यतां न पुना रजतमपि धर्मि । तथाच रजतं बहिर्बाधितमर्थादान्तरे ज्ञाने व्यवतिष्ठत इति ज्ञानाकारस्य बहिरध्यासः सिध्यति । **केचित्तु**—ज्ञानाकारख्यातावपरितुष्यन्तो वदन्ति—**यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति । अपरितोषकारणं चाहुः**—विज्ञानाकारता रजतादेरनुभवाद्वा व्यवस्थाप्येतानुमानाद्वा । तत्रानुमानमुपरिष्टान्निराकरिष्यते । अनुभवोऽपि रजतप्रत्ययो वा स्यात्, बाधकप्रत्ययो वा । **न तावद्रजतानुभवः**; स हीदंकारास्पदं रजतमावेदयति, न त्वान्तरम्, अहमिति हि तदा स्यात्, प्रतिपत्तुः प्रत्ययादव्यतिरेकात् । भ्रान्तं विज्ञानं स्वाकारमेव बाह्यतयाऽध्यवस्यति । तथाच नाहंकारास्पदमस्य गोचरः । ज्ञानाकारता पुनरस्य बाधकप्रत्ययप्रवेदनीयेति चेत्, हन्त बाधकप्रत्ययमालोचयत्वायुष्मान् । किं पुरोवर्ति द्रव्यं रजताद्विवेचयति, आहो ज्ञानाकारतामप्यस्य दर्शयति । तत्र ज्ञानाकारतोपदर्शनव्यापारं बाधकप्रत्ययस्य ब्रुवाणः श्लाघनीयप्रज्ञो देवानांप्रियः । **पुरोवर्तित्वप्रतिषेधादर्थादस्य ज्ञानाकारतेति** चेन्न; असंनिधानाग्रहनिषेधादसंनिहितो भवति प्रतिपत्तुः, अत्यन्तसंनिधानं त्वस्य प्रतिपत्त्रात्मकं कुतस्त्यम् । नचैष रजतस्य निषेधः, नचेदन्तायाः, किंतु विवेकाग्रहप्रसञ्जितस्य रजतमेव रजतव्यवहारस्य । नच रजतमेव शुक्तिकायां प्रसञ्जितं रजतज्ञानेन । नहि

## वेदान्तकल्पतरुः ।

त्वमख्यात्यनुवादार्थम् । तत्र बौद्धानां मतभेदेन भ्रमाधिष्ठानविशेषमाह—**सौत्रान्तिकनये इति** । यद्यपि सौत्रान्तिकस्य वैभाषिकवदर्थो न प्रत्यक्षः; तथापि ज्ञानगतार्थसारूप्येणानुनीयमानत्वादस्ति तावदधिष्ठानम्, आरोप्यं तु ज्ञानाकार एव; भ्रान्तिज्ञानाकारसदृशस्य बाह्यार्थस्याभावादित्यर्थः । सहोपलम्भनियमादित्याद्यनुमानमुपरिष्टाद्बौद्धाधिकरणे ( ब्रह्म. अ. २ पा. २ सू. २८ ) निराकरिष्यत इत्यर्थः । **प्रतिपत्तुः प्रत्ययादिति** । समानाधिकरणे पञ्चम्यौ । ज्ञानात्मकात्प्रतिपत्तुरित्यर्थः । **वस्तु**तस्त्वहमुल्लेखयोग्यरजतस्य भ्रमादिदन्तया प्रतीतिरिति शङ्कते—**भ्रान्तमिति** । भ्रान्तिरूपविकल्पस्य हि स्वरूपमविकल्पकं ग्राह्यं, तदेव बाह्यत्वेन सविकल्पकत्वेनाध्यवसेयमित्यर्थः । सिद्धे ज्ञानाकारत्वे एवं कल्पेत, तदेव कुतस्तत्राह—**ज्ञानाकारतेति** । प्रागुक्तन्यायात्प्रवेदनीयेत्यर्थः । बाधकप्रत्ययः किं साक्षाज्ज्ञानाकारतां दर्शयति, अर्थाद्वेति विकल्प्याद्यमनुभवविरोधेन निरस्य **द्वितीयं** शङ्कते—**पुरोवर्तित्वेति** । इदन्ताप्रतिषेधोऽनिदन्तां गमयेत्स च देशान्तरादिसत्त्वेऽपि स्यादित्यन्यथोपपत्तिमाह—**असंनिधानेति** । अख्यातिमते हि रजतस्यासंनिधानाग्रहः संनिहितत्वेन व्यवहारहेतुत्वाद्भ्रमः । तन्निषेधोऽसंनिधानग्रहरूपो बाधः; प्रागभावनिवृत्तिरूपत्वाद्भावस्य । तस्मादारोप्योऽर्थः प्रतिपत्तुरसंनिहितो भवतीत्यर्थः । **यदुक्तं** कल्पनागौरवमिति तत्राह—**नचैष इति** । सर्वसंमतस्य व्यवहारमात्रबाधस्य स्वीकारात्कस्यचिदप्यर्थस्याबाधादतिलाघवमित्यर्थः । **ननु** न व्यवहार एव निषेध्यः, किंतु शुक्तौ प्रतीतं रजतमित्यन्यथाख्यातिमाशङ्क्याह—**नच रजतमेवेत्यादिना** । **ननु** मा भातु रजतज्ञाने शुक्तिः, पुरोदेशसत्तामात्रेण त्वालम्बनं किं न स्यादत आह—

## कल्पतरुपरिमलः ।

दृष्टद्वारेणैव संसारं निवर्तयति शुक्तिज्ञानमिव रजताध्यासमित्यवसीयत इति भावः । **मतभेदेनेति** । बाह्यास्तित्ववादिनोर्वैभाषिकसौत्रान्तिकयोः सत् शुक्तिशकलादिकमधिष्ठानम्, तन्नास्तित्ववादिनो योगाचारस्य त्वविद्याकल्पितं तदधिष्ठानमित्येवं मतभेदेनाधिष्ठानभेदमाहेत्यर्थः । **ननु** प्रातिभासिकाध्यासेष्वधिष्ठानग्रहणं नियतं; तद्बाह्यप्रत्यक्षत्ववादिनो वैभाषिकस्य सुघटं, नतु तदतीन्द्रियत्ववादिनः सौत्रान्तिकस्येत्याशङ्क्य तस्यानुमानिकं तदस्तीत्याह—**वैभाषिकवदिति । अस्त्यधिष्ठानमिति** । स्फुरदधिष्ठानमस्तीत्यर्थः । **भ्रान्तिज्ञानाकारसदृशस्येति** । भ्रान्तिज्ञाने सविकल्पके य आकारो रजतादिः तस्य वस्तुतो बाह्यस्य शुक्तिगतस्याभावादित्यर्थः । **समानाधिकरणे पञ्चम्याविति । षष्ठीपञ्चम्यन्तत्वेन व्यधिकरणे चेत्**, रजतस्य विज्ञानाकारत्वे अहं रजतमिति स्यादित्यापादनस्यायुक्तत्वशङ्का विज्ञानाहमर्थभेदप्रयुक्तैव वारिता स्यात्; तथा विज्ञानाकारतया रजतस्य विज्ञानधर्मत्वादहं रजतवानित्यनुभवः स्यादित्यापादनीयमित्येतत्प्रयुक्ता तत उपरि संभवन्ती न वारिता स्यात्; **समानाधिकरणे चेत्** शङ्काद्वयमपि वारितं भवतीत्यभिप्रेत्यैवं व्याख्यातम् । **भ्रान्तिरूपविकल्पस्य हीति । विकल्पः** सविकल्पकं तस्य द्वौ विषयौ; ग्राह्याध्यवसेयभेदात् । तस्याकारेभ्यो निकृष्टं यदविकल्पं स्वरूपमस्ति; तद् ग्राह्यं स्वविषयत्वलक्षणस्वप्रकाशत्वाङ्गीकारात् । तस्य रजताकारस्योपर्यवसेयो बाह्यत्वशब्दोक्त इदंत्वाकारो विकल्परूपोऽध्यवसेय इति साकारवादिनां प्रक्रिया । तथाच पुरोवर्तिन्यधिष्ठाने ज्ञानाकाररूपं रजतमिद-

**वेकाग्रहनिबन्धनो भ्रम–इति॥ अन्ये तु–यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनां–आचक्षते;**

---

### भामती ।

रजतनिर्भासस्य शुक्तिकालम्बनं युक्तम्; अनुभवविरोधात् । न खलु सत्तामात्रेणालम्बनम्; अतिप्रसङ्गात्, सर्वेषामर्थानां सत्त्वाविशेषादालम्बनत्वप्रसङ्गात् । नापि कारणत्वेन; इन्द्रियादीनामपि कारणत्वात् । तथाच भासमानतैवालम्बनार्थः । नच रजतज्ञाने शुक्तिका भासते इति कथमालम्बनं, भासमानताभ्युपगमे वा कथं नानुभवविरोधः । अपिचेन्द्रियादीनां समीचीनज्ञानोपजनने सामर्थ्यमुपलब्धमिति कथमेभ्यो मिथ्याज्ञानसंभवः । दोषसहितानां तेषां मिथ्याप्रत्ययेऽपि सामर्थ्यमिति चेन्न, दोषाणां कार्योपजननसामर्थ्यविघातमात्रे हेतुत्वात्, अन्यथा दुष्टादपि कुटजबीजाद्वटाङ्कुरोत्पत्तिप्रसङ्गात् । अपिच स्वगोचरव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः । तस्मात्सर्वं ज्ञानं समीचीनमास्थेयम् । तथा च रजतं, इदमिति च द्वे विज्ञाने स्मृत्यनुभवरूपे, तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणं, दोषवशात्तद्गतशुक्तित्वसामान्यविशेषस्याग्रहात्, तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति । सा च गृहीतग्रहणस्वभावापि दोषवशाद्गृहीतत्वांशप्रमोषाद्ग्रहणमात्रमवतिष्ठते । तथाच रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात्, संनिहितरजतगोचरज्ञानसारूप्येण, इदं रजतमिति भिन्ने अपि स्मरणग्रहणे अभेदव्यवहारं च सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । क्वचित्पुनर्ग्रहणे एव मिथोऽगृहीतभेदे, यथा पीतः शङ्ख इति । अत्र हि विनिर्गच्छन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य काचस्येव स्वच्छस्य पीतत्वं गृह्यते पित्तं तु न गृह्यते । शङ्खोऽपि दोषवशाच्छुक्लगुणरहितः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरसंसर्गाग्रहसारूप्यात्पीततपनीयपिण्डप्रत्ययाविशेषणाभेदव्यवहारः समानाधिकरणव्यपदेशश्च । भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनाच्च नेदमिति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते, तदुपपत्तौ च प्राक्तनस्य प्रत्ययस्य भ्रान्तत्वमपि लोकसिद्धं सिद्धं भवति । तस्माद्यथार्थाः, सर्वे विप्रतिपन्नाः संदेहविभ्रमाः, प्रत्ययत्वात् घटादिप्रत्ययवत् । तदिदमुक्तम्—**यदध्यास इति** । यस्मिञ्शुक्तिकादौ यस्य रजतादेरध्यास इति लोकप्रसिद्धिः नासावन्यथाख्यातिनिबन्धना, किंतु गृहीतस्य रजतादेस्तत्स्मरणस्य च गृहीततांशप्रमोषेण, गृहीतमात्रस्य य इदमिति पुरोवस्थिताद्द्रव्यमात्रात्तत्प्रज्ञानाच्च विवेकः, तदग्रहणनिबन्धनो भ्रमः । भ्रान्तत्वं च ग्रहणस्मरणयोरितरेतरसामानाधिकरण्यव्यपदेशो रजतादिव्यवहारश्चेति । **अन्ये तु**—अत्राप्यपरितुष्यन्तः, **यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते** । अत्रेदमाकूतम्—अस्ति तावद्रजतार्थिनो रजतमिदमिति प्रत्यया-

### वेदान्तकल्पतरुः ।

**न खल्विति** । सर्वेषां पुरोवर्तिनां लोष्टादीनामित्यर्थः । **अथ** रजतसदृशशुक्तेः रजतज्ञानहेतुसंस्कारोद्बोधकत्वेनालम्बनत्वं, तत्राह—**नापीति** । एवमर्थमारोपितं प्रतिषिध्य, मिथ्याज्ञानमपि निह्नुते—**अपिचेति** । **ननु** मिथ्याव्यवहारसिद्ध्यर्थं विपर्ययो वाच्यस्तत्राह—**तथाचेत्यादिना** । शुक्तिस्वरूपस्य इदमात्मकसामान्यं प्रतिविशेषस्याग्रहादिदमिति द्रव्यमात्रग्रहणं भवतीत्यर्थः । **गृहीतग्रहणस्वभावेति** । गृहीतमिदमिति प्रकाशनस्वभावेत्यर्थः । **संनिहितरजतेति** । संनिहितरजतगोचरं हि ज्ञानमिदमिति रजतमित्याकारयोरसंसर्गं न गृह्णाति; तयोः संसृष्टत्वेनासंसर्गाभावात् । नच स्वगतं विवेकः; एकज्ञानत्वात्, एवमेते अपि ग्रहणस्मरणे परस्परं भिन्ने अपि स्वगतभेदं न गृह्णीतः, नाप्यसंसृष्टौ स्वगोचरौ तथैव निवेदयत इति सारूप्यम् । **काचो** हरितद्रव्यविशेषः । निषेध्यभ्रमाभावे निषेधानुपपत्तिमाशङ्क्याह—**भेदाग्रहेति** । इतरेतराभावबोधादितरेतराभावाग्रहनिवृत्तौ तद्धेतुकव्यवहारनिवृत्तिर्बाधफलमित्यर्थः । **तस्माद्यथार्था इति** । **सर्वे विप्रतिपन्ना** इत्येको धर्मिनिर्देशः । **संदेहविभ्रमा** इत्यपरः । अयथार्थव्यवहारहेतुत्वेन मतद्वयसंमताः प्रत्यया धर्मिण इति नाश्रयासिद्धिः । **अन्ये त्विति** । पुरोवर्तिनि रजतमिदमिति सामानाधिकरण्यव्यपदेशस्तथाविधप्रवृत्तिश्चास्तीति तावत्

### कल्पतरुपरिमलः ।

न्त्वेनारोप्यत इति नाहंत्वोल्लेखप्रसक्तिरिति भावः । **ननु** रजतज्ञाने शुक्तेः कारणत्वेन विषयत्वं नाख्यातिमते शङ्कार्हम्; अन्यथाख्यातिमत एव तस्य विशेष्यत्वेन कारणत्वादित्याशङ्क्याऽख्यातिमतेऽपि रजतज्ञाने शुक्तेः कारणत्वमुपपादयन्नवतारयति—**अथ रजतसदृशेति** । **मिथ्याज्ञानमपीति** । **ननु**—मिथ्याज्ञाननिह्नवो **नच रजतमेव शुक्तिकायां प्रसञ्जितम**्इत्यादिपूर्वग्रन्थेनापि कृतः, स ग्रन्थस्तथैवावतारितश्च—**सत्यम्**; स ग्रन्थोऽर्थाध्यासनिह्नवस्यापि साधारणः; यतः शुक्तेर्देशान्तरस्थरजतात्मनेव तद्देशोत्पन्नरजतात्मना भानाङ्गीकारेऽप्यन्यात्मना भानमन्यालम्बनमित्येतदनुभवविरुद्धमित्यर्थाध्यासनिह्नवोऽपि तेन लभ्यते । इन्द्रियसामर्थ्यरूपकारणाभावोपपादनं तु मिथ्याज्ञाननिह्नव एवासाधारणयुक्तिरिति तात्पर्येणैवमवतारितम् । **गृहीतमिदमिति** । पूर्वानुभवविषयत्वं तत्तेति भावः । **नाश्रयासिद्धिरिति** । **एतदुपलक्षणम्**, साध्यमपि सर्वविषयावच्छिन्नयाथार्थ्यं वा, विसंवादीच्छाप्रवृत्तिरूपव्यवहारप्रसिद्धायाथार्थ्यराहित्यं वेति धर्म्यंशया-

## भामती ।

त्पुरोवर्तिनि द्रव्ये प्रवृत्तिः, सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम् । तदेतन्न तावद्ग्रहणस्मरणयोस्तद्गोचरयोश्च मिथो भेदाग्रहमात्राद्भवितुमर्हति । ग्रहणनिबन्धनौ हि चेतनस्य व्यवहारव्यपदेशौ कथमग्रहणमात्राद्भवेताम् । **ननूक्तं** नाग्रहणमात्रात्, किंतु ग्रहणस्मरणे एव मिथः स्वरूपतो विषयतश्चागृहीतभेदे समीचीनपुरस्थितरजतविज्ञानसादृश्येनाभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । **अथ** समीचीनज्ञानसारूप्यमनयोर्गृह्यमाणं वा व्यवहारप्रवृत्तिहेतुः, अगृह्यमाणं वा सत्तामात्रेण । **गृह्यमाणेऽपि**, 'समीचीनज्ञानसारूप्यं अनयोरिदमिति रजतमिति च ज्ञानयोः' इति ग्रहणं, अथवा 'तयोरेव स्वरूपतो विषयतश्च मिथो भेदाग्रहः' इति ग्रहणम् । तत्र **न तावत्समीचीनज्ञानसदृशी इति ज्ञानं** समीचीनज्ञानवद्व्यवहारप्रवर्तकम्; नहि गोसदृशो गवय इति ज्ञानं गवार्थिनं गवये प्रवर्तयति । अनयोरेव भेदाग्रह इति तु ज्ञानं पराहतं, नहि भेदाग्रहेऽनयोरिति भवति; अनयोरिति ग्रहे भेदाग्रहणमिति च भवति । तस्मात्सत्तामात्रेण भेदाग्रहोऽगृहीत एव व्यवहारहेतुरिति वक्तव्यम् । तत्र किमयमारोपोत्पादक्रमेण व्यवहारहेतुः, आहोऽनुत्पादितारोप एव स्वत इति । **वयं तु पश्यामः**—चेतनव्यवहारस्याज्ञानपूर्वकत्वानुपपत्तेः, आरोपज्ञानोत्पादक्रमेणैवेति । **ननु** सत्यं चेतनव्यवहारो नाज्ञानपूर्वकः, किंत्वविदितविवेकग्रहणस्मरणपूर्वक **इति । मैवम्**—नहि रजतप्रातिपदिकार्थमात्रस्मरणं प्रवृत्तावुपयुज्यते । इदंकारास्पदाभिमुखी खलु रजतार्थिनां प्रवृत्तिरित्यविवादम् । कथं चायमिदंकारास्पदे प्रवर्तेत । यदि तु न तदिच्छेत् । अन्यदिच्छत्यन्यत्करोतीति व्याहतम् । नचेदिदंकारास्पदं रजतमिति जानीयात्कथं रजतार्थी तदिच्छेत् । यद्यतथात्वेनाग्रहणादिति ब्रूयात्स च प्रतिवक्तव्योऽथ तथात्वेनाग्रहणात्कस्मान्नोपेक्षेतेति । सोऽयमुपादानोपेक्षाभ्यामभिमत आकृष्यमाणश्चेतनोऽव्यवस्थित इदंकारास्पदे रजतसमारोपेणोपादान एव व्यवस्थाप्यत इति भेदाग्रहः समारोपोत्पादक्रमेण चेतनप्रवृत्तिहेतुः । **तथाहि**—भेदाग्रहादिदंकारास्पदे रजतत्वं समारोप्य, तज्जातीयस्योपकारहेतुभावमनुचिन्त्य, तज्जातीयतयेदंकारास्पदे रजते तमनुमाय, तदर्थी प्रवर्तत इत्यानुपूर्व्यं सिद्धम् । नच तटस्थरजतस्मृतिरिदंकारास्पदस्योपकारहेतुभावमनुमापयितुमर्हति; रजतत्वस्य हेतोरपक्षधर्मत्वात् । एकदेशदर्शनं खल्वनुमापकं नत्वनेकदेशदर्शनम् । **यथाहुः**—ज्ञातसंबन्धस्यैकदेशदर्शनादिति । समारोपे त्वेकदेशदर्शनमस्ति । तत्सिद्धमेतद्विवादाध्यासितं रजतादिज्ञानं, पुरोवर्तिवस्तुविषयं, रजताद्यर्थिनस्तत्र नियमेन प्रवर्तकत्वात्, यद्यदर्थिनं यत्र नियमेन प्रवर्तयति, तज्ज्ञानं तद्विषयं;

## वेदान्तकल्पतरुः ।

सर्वजनीनम् । तत् सामानाधिकरण्यप्रत्ययाद्रजतमिदमित्येवंरूपाद्भवति नान्यथेत्यर्थः । अन्यथासिद्धिमाशङ्क्याह—**तदेतदिति** । अगृहीतविवेकं स्मरणग्रहणद्वयमयथाव्यवहारहेतुः, एकैकं वा । **नाद्यः**; ज्ञानयोरयौगपद्यात् । **न द्वितीयः** इत्याह—**नहि रजतप्रातिपदिकार्थेति** । ग्रहणेऽपि तुल्यमिदं । यदि तदिच्छेत्तर्ह्येव प्रवर्तेतेत्यर्थः । ज्ञातसंबन्धस्य पुंसो लिङ्गविशिष्टधर्म्येकदेशदर्शनाद् लिङ्गे विशिष्टधर्म्येकदेशे बुद्धिरनुमानमिति शबरस्वामिन आहुः । समारोपे तु प्रमित्यभावेऽप्येकदेशदर्शनमस्तीत्यर्थः । पुरोवर्तिनि साधने प्रवर्तके फलज्ञानेऽनैकान्तिकतानिवृत्त्यर्थमाह—**नियमेनेति** । फलस्य

## कल्पतरुपरिमलः ।

थार्थ्यमादाय न सिद्धसाधनमित्यपि द्रष्टव्यम् । **पुरोवर्तिनि साधने इति । ननु**—फलज्ञानवदुपायज्ञानमपि न नियमेन प्रवर्तकं; फलस्य नानोपायसाध्यत्वादेवेति हेतोरसिद्धिः । व्यक्तिनियमेन हेतुसमर्थने व्यभिचारतादवस्थ्यम्; यत्पक्षीकृतं रजतज्ञानं पुरोवर्तिनि नियमेन प्रवर्तकमिष्यते तत्रत्यफलज्ञानस्यापि तस्मिन्नियमेन प्रवर्तकत्वात् । एवंच तत्रेति विशेषणेन न स्मृतेरपि व्यावृत्तिः; आरोपप्राचीनस्यारोप्यस्मरणस्यापि फलसाधनताज्ञानप्राचीनफलज्ञानतुल्यन्यायतया नियमेन पुरोवर्तिनि प्रवर्तकत्वात् । एवं **तावन्नियमेनेति तत्रेति च** विशेषणमयुक्तम् । **बाधादिव्यावृत्त्यर्थं रजतार्थिन इति विशेषण**मित्यप्ययुक्तम्; तृणपर्णजलादिकमिव स्ववेगबलात्पुरुषं नयता वाय्वादिना पुरुषे फलाख्यप्रवृत्तेरजननात्, **प्रवृत्तिफलस्य शरीरक्रियासाधारणव्यापारमात्रपरत्वेऽपि** शरीरात्मकालादृष्टादिव्यभिचारवारणाय प्रवर्तकज्ञानत्वादिति हेतोर्विवक्षणीयत्वेन टीकायामुदाहरणवाक्ये ज्ञानपदनिवेशनया तद्विवक्षायाः सूचितत्वेन च तत एव तन्निरासलाभाच्च, नियमविशेषणेनैव कालादृष्टादिव्यावृत्तौ तत एव वायोरपि व्यावृत्तिसिद्धेश्च—**इति चेत्, उच्यते;** टीकायां फलसाधनतानुमितिहेतुपरामर्शरूपं यद्रजतत्वहेतुविषयं ज्ञानमावश्यकमिति प्रतिपादितं तदत्र पक्षः । तस्य पुरोवर्तिविषयत्वं साध्यम् । स च परामर्शः पुरोवर्तिविषयामेव फलसाधनतानुमितिं तद्द्वारा प्रवृत्तिं च जनयति; फलस्य वस्तुतो नानोपायसाध्यत्वेऽपि तदन्यत्र तदुपायत्वानुसन्धानाभावात्, फलज्ञानं तु तटस्थं न नियमेन पुरोवर्तिनि प्रवर्तकं तस्योपायान्तरगतफलसाधनतानुमितिद्वारान्यत्रापि प्रवर्तकत्वसंभवात्, तथैवारोपप्राचीनरजतस्मरणमपि; सत्यपि तस्मिन्नन्यत्र फलसाधनतानुमित्या प्रवृत्तिसंभवात् । तत्रेति विशेषणं तु स्वयं गेहादिनिहितरजतार्थिप्रवृत्तिनियततद्रजतगतफलसाधनतादिस्मृतौ व्यभिचारनिरासार्थम् । **प्रवर्तकत्वं** शरीरव्यापारप्रयोजकत्वमेव विवक्षितमिति रजतार्थिन इति विशेषणं सफ-

## कल्पतरुपरिमलः ।

त्वम्, ( हेतौ ज्ञानत्वं न निवेश्यं; नियमविशेषणेन तत्प्रयोजनलाभात् । उदाहरणे ज्ञानमिति नियमविशेषणलब्धार्थानुवादः । साध्ये पुरोवर्तिपदं विसंवादिप्रवृत्तिविषयशुक्त्यादिव्यक्तिविशेषपरम् । अतएव रजतज्ञाने दृष्टान्ते साध्यवैकल्यं मा भूदिति यत्तच्छ्यां सामान्यव्याप्तिरुपन्यस्ता । यदि अर्थिन इत्येतावतैव बाधादिव्यावर्तनाद्रजतविशेषणं न निवेश्यते, तदा रजतभ्रमजन्यप्रवृत्तिविषये पुरोवर्तिनि शुक्त्यर्थिप्रवर्तकशुक्तित्वप्रकारकज्ञानं दृष्टान्तीकृत्य विशेषव्याप्तिरप्युपपादयितुं शक्या । ) ननु प्रयत्नप्रयोजकत्वम्; अख्यातिवादिना तत्रेच्छाप्रयत्नावपि न पुरोवर्तिविषयौ, किंतु तन्मूलरजतज्ञानवद्देशान्तरस्थविषयावित्यपलपितुं शक्यत्वेन हेतुत्वसिद्धिप्रसङ्गात् । अन्यथा तत्र नियमेन रजतेच्छाकारणत्वस्यैव हेतुत्वसंभवेन रजतार्थिप्रवर्तकत्वपर्यन्तहेतुत्वानपेक्षणात्, तदपेक्षणेऽपि तत्रत्यरजतेच्छायां विशेषव्याप्त्युदाहरणसंभवेन समीचीनरजतज्ञाने सामान्यव्याप्त्युदाहरणायोगाच्च । एवंच वायुकालादृष्टप्रागभावादिव्यावर्तनाय रजतार्थीति विशेषणम् । यद्यपि वाय्वादीनां पुरोवर्तिविषयप्रवृत्तिं प्रत्यसाधारणकारणत्वाभावाद् नियमविशेषणेनापि भवति व्यावृत्तिः; तथापि प्रागभावस्य न भवति । तस्य प्रतियोगिनि तत्तत्प्रागभावत्वेन कारणत्वाङ्गीकारात्, तद्व्यावृत्तिस्तु पुरोवर्तिविषयरजतार्थिप्रवृत्तित्वावच्छिन्नकार्यप्रयोजकत्वस्य हेतुत्वविवक्षयेति न किंचिदवद्यम् ॥ * टीकायामुदाहरणवाक्ये ज्ञानपदं रजतप्रमैव सामान्यव्याप्तौ दृष्टान्तः, नतु विसंवादिप्रवृत्तिस्थलेच्छा शङ्कितान्यविषयभावाविशेषव्याप्तौ दृष्टान्त इति सूचनाय । यत्र यद्यदर्थिनमित्यत्र यद्रजतार्थिनमित्यर्थो ग्राह्यः । इत्थमिष्टसाधनतानुमितिहेतुपरामर्शरूपस्य रजतत्वप्रकारकज्ञानस्य पक्षत्वम् इष्टसाधनत्वानुमितिहेतोरपक्षधर्मत्वप्रसङ्गमत्र विपक्षबाधकमुपन्यस्यता टीकाग्रन्थेन सूचितम् । **ननु**—अत्र हेतोरपक्षधर्मत्वं न दोषः, नह्यख्यातिवादिभिर्भ्रमस्थले प्रवृत्तिविषयविषयकेष्टसाधनतानुमितिरभ्युपगम्यते; अन्यथाख्यात्यापत्तेः, किंत्विष्टसाधनत्वव्याप्तरजतत्वाश्रयभेदाग्रहादुपस्थितेष्टसाधनभेदाग्रहमात्रं रजतभेदाग्रहवदावश्यकं, तत एव प्रवृत्तिरिति कल्प्यते; लाघवादिति—**चेत्**, यद्येवमनुमितावपि पक्षे लिङ्गवद्भेदाग्रह एव कारणं स्याद्; न्यायतौल्याद्, नतु लिङ्गविशिष्टपक्षज्ञानम् । तथाच विसंवादिप्रवृत्तिस्थले पक्षे इष्टसाधनत्वव्याप्तरजतत्वाश्रयभेदाग्रहादिष्टसाधनत्वानुमितिर्भवन्ती केन वार्यते । **तस्माद्भक्षितेऽपि लशुने न व्याधिशान्तिरिति** न्यायेनान्यथाख्यातिपरिजिहीर्षया भ्रमस्थले विशिष्टज्ञानमपलप्य प्रवृत्तौ भेदाग्रहं कारणमाश्रयतोऽनुमितावपि स एव कारणं स्यादित्यन्यथाख्यातिरूपानुमितेरशक्यप्रतिक्षेपत्वादभावरूपं भेदाग्रहं परित्यज्य भावतया लघु लिङ्गविशिष्टपक्षज्ञानमेवानुमितौ कारणमभ्युपेयमिति युक्तोऽत्र हेतोरपक्षधर्मत्वप्रसङ्गो विपक्षबाधकस्तर्कः । एवमिष्टसाधनत्वानुमितिहेतुपरामर्शरूपरजतज्ञानपक्षकवत् केवलरजतज्ञानपक्षकमपि निरुक्तहेतुसाध्यकमनुमानं युक्तमेव; तत्रापि विशिष्टज्ञानस्य प्रवृत्तिकारणत्वे संभवत्यभावरूपभेदाग्रहस्य तत्कारणत्वकल्पने गौरवमिति विपक्षबाधकसद्भावात् । **ननु**—अत्र विपरीतं गौरवम्; इष्टपुरोवर्तिज्ञानमात्रस्यावश्यकभेदाग्रहविशिष्टस्य प्रवर्तकत्वोपपत्तौ मिथ्याज्ञानतद्विषयकल्पनायोगात्, ततश्च प्रतिकूलतर्कपराहतमनुमानम्; नच मिथ्याज्ञानापलापे भ्रमस्थले भेदाग्रहसाहित्येन प्रवृत्तिवदभेदाग्रहसाहित्येन निवृत्तेरपि प्रसङ्गः; रजतस्मरणस्य रजताभेदविषयत्वेनाभेदाग्रहासिद्धेरिति—**चेद्, मैवम्;** मिथ्याज्ञानापलापे सत्यस्थले इष्टपुरोवर्तिभेदग्रहाप्रसिद्धितस्तदभावाप्रसिद्ध्या सत्यरजतज्ञानादप्रवृत्तिप्रसङ्गात् । भेदाग्रहशब्देन पुरोवर्तिनीष्टभिन्नत्वप्रकारकज्ञानविषयत्वाभावो विवक्षित इति **चेत्**, तर्हि तव भ्रमस्थले पुरोवर्तिनीष्टाभिन्नत्वप्रकारकज्ञानविषयत्वस्याप्यभावोऽस्तीति ततो निवृत्तिरपि स्यात् । **टीकायामिदमेव दूषणम्—'अथ तथात्वेनाग्रहणात्कस्मान्नोपेक्षेतेति** ग्रन्थेन दर्शितम् । **किंचैवं** सति रजते नेदं रजतमिति भ्राम्यतोऽपि रजतार्थिनस्तत्र प्रवृत्तिप्रसङ्गः; रजते रजतभेदग्रहे मिथ्याज्ञानप्रसङ्गेन तत्रापीदमिति न रजतमिति च ज्ञानद्वयस्य कल्पनीयत्वात् । **स्वातन्त्र्यमिष्टे विशेषणं;** तच्च भेदप्रतियोगितयोपस्थित्यविषयत्वमिति **चेत्**, तथा विशेषणे कृते स दोषो नितरां दृढीकृतः स्यात् । नेदं रजतमिति भ्रमस्थले पुरोवर्तिगतस्य विशिष्टभावस्येष्टभिन्नत्वप्रकारकज्ञानविषयत्वरूपविशेष्याभावमात्रादपि सिध्यतः स्वातन्त्र्यरूपविशेषणस्याप्यभावे सुतरां सिद्धेः । नेदं रजतमिति प्रमास्थलेऽपि रजतार्थिप्रवृत्तिः स्यादिति दोषश्चात्राधिकः;तत्र विशेषणाभावाद् विशिष्टाभावसिद्धेः । **वस्तुतस्तु**—स्वातन्त्र्यं उक्तविशिष्टाभावप्रतियोगिकोटाविष्टविशेषणं न युक्तम्; इष्टभिन्नत्वज्ञानदशायामिष्टस्य भेदप्रतियोगितोपस्थितिविषयत्वनियमेन तदभावविशिष्टेष्टविशेषितस्य प्रतियोगिनोऽप्रसिद्ध्या तदभावाप्रसिद्ध्यापत्तेः ॥ **ननु**—तर्हि स्वातन्त्र्यमपि प्रवृत्तौ पृथक्कारणान्तरमस्तु, अतस्तदभावाद् नेदं रजतमिति प्रमाभ्रमस्थलयोर्न प्रवृत्तिप्रसङ्गः; प्रतियोगिविशेषणत्वेनानिवेशनाच्च न विशिष्टाप्रसिद्ध्या तदभावाप्रसिद्ध्यापत्तिरिति—**चेद्, न;** तथा सतीदं रजतं घटनिष्ठभेदप्रतियोगीति ज्ञानादप्रवृत्त्यापत्तेः । यद्येतद्दोषपरिहाराय पुरोवर्तिनिष्ठभेदप्रतियोगित्वेनानुपस्थितत्वं स्वातन्त्र्यम् इति निरुच्येत, तदा नेदं रजतमिति भ्रमस्थले रजतार्थिप्रवृत्तिः स्यादिति दोषः पुनरुन्मज्जेत् । **ननु**—पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वेनानुपस्थितत्वं स्वातन्त्र्यम्, अतस्तदभावान्नेदं रजतमिति भ्रमेण न प्रवृत्तिप्रसङ्गः; तत्र पुरोवर्तिनि रजतभेदासंसर्गाग्रहसत्त्वेन तद्विशेषितभेदप्रतियोगितोपस्थितेर्विद्यमानतया तदभावाभावात्, नापीदं रजतं घटनिष्ठभेदप्र-

### भामती ।

यथोभयसिद्धसमीचीनरजतज्ञानं, तथाचेदं, तस्मात्तथेति । यच्चोक्तमनवभासमानतया न शुक्तिरालम्बनमिति, तत्र भवान्पृष्टो व्याचष्टां, किं शुक्तिकात्वस्य इदं रजतमिति ज्ञानं प्रत्यनालम्बनत्वं; आहोस्विद्द्रव्यमात्रस्य पुरःस्थितस्य सितभास्वरस्य। यदि **शुक्तिकात्वस्यानालम्बनत्वम्**, अद्धा। **उत्तरस्यानालम्बनत्वं** ब्रुवाणस्य तवैवानुभवविरोधः। **तथाहि**—रजतमिदमित्यनुभवन्ननुभविता पुरोवर्ति वस्त्वङ्गुल्यादिना निर्दिशति। दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरोपजननसामर्थ्यम्; यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम्, भस्मकदुष्टस्य चौदर्यस्य तेजसो बह्वन्नपचनमिति। प्रत्यक्षबाधापहृतविषयं च विभ्रमाणां यथार्थत्वानुमानमाभासः, हुतवहानुष्णत्वानुमानवत्। **यच्चोक्तं** मिथ्याप्रत्ययस्य व्यभिचारे सर्वप्रमाणेष्वनाश्वास **इति**; तत् बोधकत्वेन स्वतःप्रामाण्यं नाव्यभिचारेणेति व्युत्पादयद्भिरस्माभिः परिहृतं न्यायकणिकायामिति नेह प्रतन्यते। दिङ्मात्रं चास्य स्मृतिप्रमोषभङ्गस्योक्तम्। विस्तरस्तु ब्रह्मतत्त्वसमीक्षायामवगन्तव्य इति, **तदिदमुक्तम्—'अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति।'** यत्र शुक्तिकादौ यस्य रजतादेरध्यासस्तस्यैव शुक्तिकादेर्विपरीतधर्मकल्पनां रजतत्वधर्मकल्पनामिति योजना। **ननु** सन्तु नाम परीक्षकाणां विप्रतिपत्तयः, प्रकृते तु किमायतमित्यत

### वेदान्तकल्पतरुः ।

हि नानोपायसाध्यत्वान्न तज्ज्ञानमुपाये नियमेन प्रवर्तकम्। स्मरणे व्यभिचारनिवृत्त्यर्थमाह—**तत्रेति**। वाग्वादौ व्यभिचारमाशङ्क्याह—**अर्थिन इति**। वाग्वादिर्हि प्रसह्य प्रवर्तयति न त्वर्थितामनुरुन्धे। यच्चोक्तं समीचीनज्ञानहेतुभ्यो न मिथ्याज्ञानजन्मेति तत्राह—**दृष्टं चेति। परिहृतं न्यायकणिकायामिति। एवं हि तत्र व्युत्पादितम्**—किमव्यभिचारितैव प्रामाण्यं, उत तद्धेतुः, अथ तद्व्यापिका। येन क्वचिद्व्यभिचारदर्शनाज्ज्ञानानामप्रामाण्यमापतेत्। सर्वथाप्यसंभवः; व्यभिचारिणामपि सितनीलादिषु चक्षुरादीनां बोधकत्वेन प्रामाण्यादव्यभिचारिणामपि दहनादौ धूमादीनां कुतश्चिन्निमित्तादनुपज-

### कल्पतरुपरिमलः ।

तियोगीति ज्ञानेनाप्रवृत्तिप्रसङ्गः; तत्र पुरोवर्तिनि रजतभेदासंसर्गरूपरजताभेदग्रहसत्त्वेन तदभावविशेषितभेदप्रतियोगितोपस्थित्यभावसत्त्वादिति—**चेद्, न**; एवमपि यत्रेदं नेति भेदविशिष्टपुरोवर्तिज्ञानं रजतस्मरणं चेति ज्ञानद्वयरूपो नेदं रजतमिति भ्रमः, तत्र रजतार्थिप्रवृत्तिप्रसङ्गाद्, न रजतमित्यधिकरणविशेषानुल्लेखिन इव इदं नेति प्रतियोगिविशेषानुल्लेखिनोऽपि भेदज्ञानस्य संभवात्। **स्यादेतत्**—पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वासंसर्गाग्रहाभाववत्त्वं स्वातन्त्र्यम्। एवंच न कोऽपि दोषः। **तथाहि**—इदमिति न रजतमिति च ज्ञानद्वयात्मकस्य नेदं रजतमिति भ्रमस्योदये पुरोवर्तिनि रजतभेदस्यासंसर्गाग्रहोऽस्ति, इदं रजतमितिभ्रमोदये रजतस्येव। तथाच तत्र पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वेन रजतस्य ग्रहणात्तत्प्रतियोगित्वासंसर्गाग्रहोऽस्तीति तदभावाभावाद् न तत्र रजतार्थिप्रवृत्तिप्रसङ्गः। नापीदं नेति रजतमिति च ज्ञानद्वयात्मकस्य नेदं रजतमिति भ्रमस्योदये तत्प्रसङ्गः; तत्र पुरोवर्तिनि गृहीतसंसर्गत्वेनागृहीतासंसर्गो यो भेदस्तत्प्रतियोगित्वस्यासंसर्ग इष्टे यद्यपि विद्यते; तथापि तस्य नेदं रजतमिति भ्रमदशायामग्रहस्य सत्त्वेन तदभावाभावात्। इदं रजतं घटनिष्ठभेदप्रतियोगीति ज्ञानोदये च नाप्रवृत्तिप्रसङ्गः; तत्र रजते भेदप्रतियोगित्वसंसर्गाग्रहणेन तदसंसर्गाग्रहरूपविशेष्यसद्भावेऽपि पुरोवर्तिनि भेदासंसर्गरूपाभेदग्रहणेन विशेषणाभावात्तद्विशिष्टस्य भेदप्रतियोगित्वासंसर्गाग्रहस्याभावसद्भावादिति—**चेद्, मैवम्**; एवमपि यत्रेदं रजतमिति भ्रमकाले रजतं घटनिष्ठभेदप्रतियोगीत्यपि स्मरणं तत्राप्रवृत्तिप्रसङ्गः। तत्र पुरोवर्तिनि रजतभेदासंसर्गग्रहे मिथ्याज्ञानप्रसङ्गेन तदसंसर्गाग्रहोऽस्तीति पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वसंसर्गग्रहसत्त्वेन तदसंसर्गाग्रहस्य प्रतियोगिनो विद्यमानतया तदभावाभावात्। अरजतरजतयोरिमे रजतारजते इति भ्रमादरजते रजतार्थिप्रवृत्त्यभावप्रसङ्गश्च; तत्र पुरोवर्तिन्यरजते रजतभेदासंसर्गग्रहे मिथ्याज्ञानप्रसङ्गेन अरजतरूपपुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वेन रजतस्य गृह्यमाणतया तदसंसर्गाग्रहस्य प्रतियोगिनः सत्त्वेन तदभावाभावात्। **किं बहुना** इदं रजतमित्येतावन्मात्ररूपात् प्रसिद्धरजतभ्रमादपि प्रवृत्त्यभावप्रसङ्गः। तत्र हि रजतभेदः पुरोवर्त्यगृहीतासंसर्गो भवति; तत्र तदसंसर्गग्रहे मिथ्याज्ञानापत्तेः। रजते तथाभूतभेदप्रतियोगित्वासंसर्गाग्रहोऽप्यस्ति; तत्र रजते भेदप्रतियोगित्वं नास्तीति भेदप्रतियोगित्वासंसर्गग्रहोदयाभावात्। अतो विशिष्टस्य प्रतियोगिनः सत्त्वेन तदभावरूपस्वातन्त्र्याभावाद् न प्रवृत्तिर्घटते। तस्मान्मिथ्याज्ञानापलापेन भेदाग्रहात् प्रवृत्त्युपपादनमयुक्तमेव। **नन्वनाश्वासदोषे** परेणोद्भाविते निराकर्तव्ये सत्यव्यभिचारस्य प्रामाण्यरूपत्वादिविकल्पः क्वोपयुज्यत इत्याशङ्क्याह—**येन क्वचिदिति। अयमाशयः**—प्रामाण्यनिश्चयादेव प्रवृत्त्यादिकार्योपपत्तेरव्यभिचारनिश्चयस्य नास्त्युपयोग इति परोद्भावितानाश्वासदोषनिराकरणे कृते परेणैवं वाच्यम्। अव्यभिचारानिश्चयः प्रामाण्यनिश्चयपर्यवसायी, तत्पर्यवसानं च त्रेधा संभवति, प्रामाण्यस्याव्यभिचारितारूपत्वेन, तद्धेतुकत्वेन, तद्व्याप्यत्वेन वा। **तद्व्याप्यत्वेऽपि** हि व्यापकनिवृत्तौ व्याप्यं निवर्तेत। एवं प्रकृतोपयोगिनमन्वीक्ष्य त्रेधा विकल्पः कृत इति। **अव्यभिचारिणामपीति**। इदं व्यतिरेकव्यभिचारदूषणमिव न विकल्पत्रयसाधारणं; सहकारिविरहेण प्रतिब-

## वेदान्तकल्पतरुः ।

नितदहनादिज्ञानानामप्रामाण्यात् । भवतु ज्ञानकारणं व्यभिचारेऽपि बोधकं, ज्ञानेन त्वव्यभिचारोऽपेक्ष्यः स्वकार्ये इति चेत्, किं ज्ञेयावभासेऽपेक्ष्यः, उत प्रवृत्त्यादिकार्ये । **न प्रथमः**; जन्मनैव ज्ञानस्य ज्ञेयावभासात्मकत्वात् । **न चरमः**; अव्यभिचारग्राहिणोऽर्थक्रियासंवादादिज्ञानस्य ज्ञानान्तरादव्यभिचारनिश्चयेऽनवस्थापातात्, अनिश्चये वाऽनवधृतप्रामाण्यादस्मात्प्रथमज्ञानप्रामाण्यासिद्धेः, स्वतःप्रामाण्ये च प्रथमेऽपि तथात्वापातादिति । **ननु**— किं प्रामाण्यस्य स्वतस्त्वम्; ज्ञानसामग्रीमात्रजत्वं चेद्, न; प्रामाण्यस्य जातित्वे स्मृतित्वानधिकरणज्ञानगतबाधात्यन्ताभावरूपोपाधित्वे वा द्वयोरपि नित्यत्वेन

## कल्पतरुपरिमलः ।

न्धेन वा हेतोरपि कार्याजनिसंभवेन **द्वितीयविकल्पे** अन्वयव्यभिचारस्य **तृतीयविकल्पे** व्यापकव्यभिचारस्य चादोषत्वात् । अतः प्रथमविकल्पमात्रे द्वितीयदूषणमिदमिति द्रष्टव्यम् । **ननु**—'अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वासः किंनिबन्धनः ॥' इति परेण ज्ञानस्यैव व्यभिचारो दोषत्वेनोक्तः, स च करणव्यभिचारस्यादोषत्वोपपादनेन परिहृतो न भवतीत्याशङ्कते—**भवत्विति । अव्यभिचारोऽपेक्ष्य इति ।** अव्यभिचारश्च ज्ञानानां प्रामाण्यमेवेति भावः । यदि प्रामाण्यस्य परतस्त्वमिष्यते, तत्राह—**अव्यभिचारग्राहिण इति । अर्थक्रियासंवादादिज्ञानस्येति ।** अर्थक्रियासंवादो दूरे वह्निज्ञाने जाते समीपोपसर्पणानन्तरं दाहसामर्थ्यानुभवः । आदिशब्देन तद्वह्निज्ञानं, प्रमा, दाहसमर्थे तद्वह्नित्वप्रकारकत्वादित्यनुमाने यत् प्रवृत्तिसंवादरूपज्ञानघटनीयं लिङ्गज्ञानं, यच्च तज्जन्यानुमितिरूपं प्रामाण्यज्ञानं, तदुभयमपि गृह्यते । **नन्वनवधृत**प्रामाण्यमेव संवादिज्ञानं स्वविषयनिश्चयात्मकं भवत्वित्यत्राह—**अनिश्चये वेति । प्रामाण्यासिद्धेरिति ।** अनवधृतप्रामाण्यादपि ज्ञानाद्विषयसिद्धौ दूरत्वादिदोषेण शङ्किताप्रामाण्यात् चन्द्रप्रादेशिकत्वादिज्ञानादपि तत्सिद्धिः स्यात् । यदि प्रामाण्याग्रहणेऽपि अप्रामाण्यशङ्काविरहमात्रेण संवादादिज्ञानं स्वविषयनिश्चयात्मकं भवेत्, तदा तथैव प्रथमज्ञानमपि स्वविषयनिश्चयात्मकं सत् प्रवृत्त्यादिकार्योपयोगि भवेदिति भावः । **ननु**–अप्रामाण्यशङ्काविरहापेक्षया प्रामाण्यनिश्चयो लघीयान्, अतो निश्चितप्रामाण्यमेव संवादादिज्ञानं स्वविषयनिश्चयरूपमिति संवादादिज्ञानस्य तथात्वसिद्ध्यर्थं स्वतःप्रामाण्यमिष्यत—**इति चेत्**, तत्राह—**स्वतःप्रामाण्ये चेति ।** संवादादिज्ञाने स्वविषये स्फुरति तद्विषयविशेष्यप्रकारकतदुभयवैशिष्ट्यघटितं योग्यधर्मरूपं तत्प्रामाण्यं ज्ञानत्ववदुत्सर्गतः स्फुरति । यत्र तु क्वचिदनभ्यासदशादिदोषाद् विशेष्यप्रकारवैशिष्ट्यांशे ज्ञानस्य न सत्तानिश्चयरूपत्वं तत्र तद्घटितस्य प्रामाण्यस्य स्थाणुत्वादेरिव स्फुरणं नास्ति तत्र परं प्रामाण्यसंदेह इति खलु संवादादिज्ञाने प्रामाण्यस्य स्वतस्त्वं समर्थनीयं; **तन्न्यायः** प्रथमज्ञानेऽपि तुल्य इति भावः । **ननु** अयं प्रामाण्यस्य स्वतस्त्वाभ्युपगमो न युक्तः; **तथाहि**—सिद्धान्ते ज्ञानं स्वप्रकाशम् । अत इदं जलमिति इदं जलत्वेन जानामीति च व्यवहारहेतौ प्रथमज्ञाने एव तत्प्रामाण्यस्य स्फुरणं वाच्यम्; तत्र प्रामाण्यघटकसर्वोपाधिस्फुरणाभ्युपगमात्, ततश्च तत्र प्रामाण्यवद्विशेष्यकप्रामाण्यप्रकारकत्वरूपं प्रामाण्यान्तरमपि संपद्यत इति तदपि तत्र स्फुरेद्, न्यायतौल्यात्, नचेष्टापत्तिः; तथा सति द्वितीयप्रामाण्यघटितप्रामाण्यान्तरस्य तत्तत्प्रामाण्यघटितप्रामाण्यान्तराणां च स्वप्रकाशज्ञाने स्फुरणापत्त्या तस्यानुभवविरुद्धापर्यवसितानन्तविषयाभ्युपगमापत्तेः—**इति चेत्, उच्यते**; स्वप्रकाशज्ञाने प्रामण्यस्फुरणे सति प्रामाण्यवद्विशेष्यकप्रामाण्यप्रकारकत्वरूपप्रामाण्यान्तरं संपद्यते चेत्, संपद्यतां नाम, न तस्यापि तत्र स्फुरणमिष्यते, प्रामाण्यतदाश्रययोः तदुभयवैशिष्ट्यस्य च तत्र स्फुरणेऽपि तत्प्रकारकत्व–तद्विशेष्यकत्वयोस्तत्रास्फुरणात् । नहि जलज्ञानानन्तरम् 'इदं जल'मिति 'इदं जलत्वेन जाना'मीति च व्यवहारवदिदं ज्ञानं प्रमाणत्वेन जानामीत्यपि व्यवहारो दृश्यते; येन तयोरपि तत्र स्फुरणमिष्येत । न च स्वप्रकाशज्ञानगतत्वेन तत्स्फुरणावश्यंभावः; तद्गतगुणत्वद्रव्यत्वादिवदस्फुरणसंभवात् । **तथापि** प्रामाण्यस्य स्वाश्रयसहभाननियमरूपस्वतस्त्वाभ्युपगमात् स्फुरणावश्यंभाव इति **चेद्, न**; यत्र प्रामाण्यघटकसर्वोपाधिस्फुरणमस्ति, तत्र प्रामाण्यस्य स्फुरणमित्युत्सर्गरूपस्य नियमस्य यत्र तद्घटकस्य कस्यचिदस्फुरणं तत्रापवादाभ्युपगमात् । तस्मात् स्वप्रकाशज्ञाने प्रामाण्यस्फुरणौत्सर्गिकत्वाभ्युपगतौ न काचिदनुपपत्तिः । प्रसङ्गादुत्पत्तावपि स्वतस्त्वं निरूपयितुं पृच्छति—**ननु किमिति । यद्वा**—ज्ञानमुत्पद्यमानमुत्सर्गतः प्रमारूपमेवोत्पद्यते चेदेवं प्रमाप्रायिकत्वाधीनसमुत्कटतद्वासनावशादप्रामाण्यशङ्कानुदयः प्रामाण्यस्फुरणं चेत्युभयमौत्सर्गिकं भवति, अतः **स्वतःप्रामाण्ये चेति** पूर्ववाक्येनोपक्षिप्तमौत्सर्गिकत्वरूपं ज्ञप्तिस्वतस्त्वमुपपादयितुमुत्पत्तावपि स्वतस्त्वं निरूपयितुं पृच्छति—**ननु किमिति । इयं रूपप्रमेति । ननु**—स्वतस्त्वनिर्वचनप्रश्ने तदप्रदर्श्य किमिति प्रमाणमुपन्यस्यते; **अथ** ज्ञानसामग्रीमात्रजन्यत्वमेव स्वतस्त्वं, तत्तु प्रामाण्यस्य नेष्यते, किंतु तदधिकरणज्ञानव्यक्तेः, अतो नोक्तदोष इति प्रमापक्षीकरणेन सूचितमिति **चेत्, न**; उपन्यस्तनिर्वचनस्य परतस्त्वसाधारण्यात् । नहि परतस्त्वपक्षे प्रमा न ज्ञानं; येन सा ज्ञानसामग्रीमात्रजन्या न स्यात् । **अथ** ज्ञानसामान्यसामग्रीमात्रजन्यत्वं विवक्षितमिति **चेद्, न**; ज्ञानसामान्यसामग्र्यनुप्रविष्टात्ममनःसंयोगाद्यतिरिक्तेन्द्रि-

इति॥ **सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति। तथाच लोकेऽनुभवः—शुक्तिका हि**

### भामती ।

आह—**सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति।** अन्यस्यान्यधर्मकल्पनाऽनृतता, सा चानिर्वच-

### वेदान्तकल्पतरुः ।

जन्माभावादिति—**तदुच्यते**; इयं रूपप्रमा, अर्थसंप्रयोगत्वानधिकरणैतच्चक्षुर्गतगुणजन्या न भवति, प्रमात्वात्, श्रोत्रज-

### कल्पतरुपरिमलः ।

यलिङ्गपरामर्शादिजन्यासु प्रत्यक्षानुमित्यादिप्रमास्वसंभवापत्तेः—**इति चेद्, मैवम्;** ज्ञानसामग्रीशब्देन प्रमाभ्रमसाधारण-ज्ञानकारणकलापस्य विवक्षितत्वात्, इन्द्रियादीनां च प्रमावद् भ्रमेष्वपि कारणत्वात्, चक्षुषा रजतं पश्यामीति प्रातिभासि-कस्यापि चाक्षुषत्वानुभवात्। प्रमायाः प्रमाभ्रमसाधरणकारणातिरिक्तकारणजन्यत्वाभावरूपं स्वतस्त्वं यथा सिद्ध्यति तथा साध्यं दर्शयति—**अर्थेति। अत्र** साध्ये संयुक्तसमवायान्तर्गतसंयोगरूपचक्षुर्गुणजन्यत्वेन विषयभूतरूपगुणजन्यत्वेन च बाधवारणयाऽ**संप्रयोगत्वानधिकरणेति चक्षुर्गतेति** च गुणविशेषणम् । सामान्याभावविवक्षया चक्षुरन्तरगतगुण-जन्यत्वाभावेनार्थान्तरवारणायैतदिति चक्षुर्विशेषणं, तदविवक्षायां तु नोपादेयम्। न चैवमपि व्यञ्जकतेजोरूपत्वादालोकरूपव-च्चक्षूरूपमपि रूपप्रमाहेतुरिति बाधः; तेजोगतमुद्भूतरूपमेव रूपादिज्ञानहेतुः नतु ऊष्मरूपवदनुद्भूतं चक्षूरूपमिति मतानु-सरणात्। **मतान्तरे तु** रूपभिन्नेत्यपि विशेषणं देयम् । **ननूक्त**रूपं स्वतस्त्वं कथमनेन साध्यनिर्देशेन सिध्यति, नहि प्रमाभ्रमसाधारणज्ञानसामान्यकारणकलापाननुप्रविष्टप्रमायां विशेषकारणं संप्रयोगातिरिक्तचक्षुर्गुणरूपं परतस्त्ववादिभि-रिष्यते, येन तज्जन्यत्वाभावसाधनं स्वतस्त्वसाधनं भवेत्; परतस्त्ववादिभिर्हि स्थूलावयविप्रत्यक्षप्रमायां भूयोवयवेन्द्रिय-संनिकर्षो जन्यप्रत्यक्षप्रामाण्यं, यावद्विषयसंनिकर्षो जन्यप्रमामात्रे, ग्राह्ययथार्थज्ञानं च विशेषकारणमिष्यते; नच तद्व्या-वर्तनमुदाहृतसाध्यनिर्देशेन लभ्यते, **तत्रादिमस्य** विशेषकारणद्वयस्य व्यावर्तनं चक्षुर्गतविशेषणलभ्यं संप्रयोगातिरिक्त-

---

१ **अत्र विवरणप्रस्थानम्—केयमख्यातिरितिचेत्,** अविविक्तानेकपदार्थविषयकज्ञानं; स्वरूपतो विषयतश्चागृहीतभेदे ग्रहणस्मरणे इति यावत्। ग्रहणस्मरणार्थकत्वेऽपि दोषविशेषान्नार्थविवेक इत्येकत्वावभासो विभ्रमो भवति। प्रवृत्तिबाध एव नेदं रजतमिति ज्ञानविषयः न रजतज्ञानादिबाध इति निष्फलप्रवृत्तिप्रयोजकाविवेक एव भ्रमशब्देन व्यपदिश्यते। निरन्तरोत्पन्नत्वाच्च ज्ञानद्वयस्यापि प्रवर्तकत्वं **इति। तन्निराकरणप्रकारस्त्वयम्—**अविवेकस्याभावरूपस्य न प्रवृत्तिप्रयोजकत्वम्। अविविक्तानेकपदार्थविषयकज्ञानत्वं तु खण्डो गौरित्यादिप्रमासाधारणं। संसर्गाविषयकत्वं तु प्रत्यभिज्ञादाविव इदं रजतमिति ज्ञानस्यापि विद्यत इति तदविशिष्टोक्तरूपत्वमसं-भवग्रस्तम्। किंच ग्रहणमेव स्मर्यमाणात् स्वार्थं किं न विविंच्यात्; गृहीतमात्रस्य रजताद्भेदे सति धर्म्याकारभेदरूपविशेषदर्शनसत्वात्। एवं किमिति स्मृतिर्वा गृह्यमाणात्स्वार्थं न विविनक्ति। स्मरणाभिमानस्य पूर्वानुभवसंभेदरूपत्वं न वर्णयितुं शक्यते, स इत्याकारेणानु-विद्धत्वं तु यद्यपि स्मरणाभिमानः; तथापि तत्प्रमोषार्थाविवेको न विकल्पसहः। विद्यमानेऽपि तस्मिन् प्रत्यभिज्ञादौ अर्थाविवेकदर्श-नात्। नच स्वप्नेऽहं नीलमिति गृह्यमाणाविवेकः। स्मर्यमाणानामन्योन्याविवेके परोक्षमेव सर्वमवभासते। अतः न प्रमाणस्मृति-द्वैराश्यमेव ज्ञानस्य, किंतु तृतीयं भ्रान्तिज्ञानमपीत्यन्यथाख्यातिपक्ष एव समीचीनः। **तत्रहि—**दोषोपहितमिन्द्रियं रजतं देशान्तरस्थं गृह्णाति। तच्च शुक्तिकात्मना गृह्यते सादृश्यादिति रजतज्ञानमपि ग्रहणात्मकमेव। शुक्त्यात्मना तु ग्रहणाद्भ्रमत्वव्यपदेशः। नेदं रज-तमिति बाधोऽपि संसर्गमेव गोचरयति, इति न कोऽपि दोष इति नैयायिकाः। **तत्र—**ज्ञानान्यथाभावः किमन्यथाख्यातिः, उत स्फुरणान्यथाभावः, आहो विषयान्यथाभावः। **प्रथमे** अन्याकारं ज्ञानमन्यालम्बनं भ्रम इति भवति। तत्र आलम्बनशब्दार्थस्य तदाकारसमर्पकत्वरूपत्वे इदं रजतमिति ज्ञानस्य भ्रमत्वानापत्तिः शुक्तिज्ञानस्य रजताकारसमर्पकत्वाभावात्। संवित्प्रयुक्तव्यवहारयो-ग्यत्वं नालम्बनशब्दार्थः; व्याघ्रादिज्ञानालम्बनत्वस्य दण्डादावापत्तेः। तृतीयस्तु पक्षः वस्तुनो वस्त्वन्तरात्मनावभासः। अन्यथा-परिणतवस्तुविषयकज्ञानं वा अन्यथाख्यातिरिति। **तत्र प्रथमपक्षे** अन्यस्यान्यात्मकत्वं पारमार्थिकं वा उतापारमार्थिकं वेति विचा-रणायां बाधानुपपत्त्या अपारमार्थिकत्वे प्रतीत्यन्यथानुपपत्त्या अनसद्रूपत्वे च प्रातिभासिकत्वे पर्यवसानम्। तत्रैवंसति संसर्गस्येव संसर्गोपहितस्यापि प्रातिभासिकत्वमेव युक्तमिति नान्यथाख्यातिसिद्धिः। **द्वितीयपक्षे** क्षीरपरिणामस्येव दध्नो न बाधो युक्तः; निमि-त्तापगमेऽपि दध्यादीनामिव दोषापगमेऽपि रजताद्यवस्थानं च स्यात्। **द्वितीयस्तु पक्षः** दुष्टकरणजन्यप्रतीतिपरिणाम एव रजतमिति। तदपि न युक्तं; तद्विषयकत्वेन लब्धात्मना प्रत्ययेन तदुत्पत्तिवर्णनासंभवात्, इत्यन्यथाख्यातिवादोऽपि न समीचीनः। **आत्मख्या-तिवादोऽप्येवमेव निराकरणीयः।** एवंच संस्कारदुष्टकरणसंवलिताविद्याविलसितमेव भ्रमज्ञानमिति स्वविषयरजतादीनामनिर्वच-नीयत्वमुपपादयति। भिन्नजातीयज्ञानहेतुभ्यो लैङ्गिकज्ञानप्रत्यभिज्ञानचित्रज्ञानादिवदेकज्ञानमपि संभवत्येवेति मायामयमेव रजतम्। मायाविद्ययोस्तु भेदाभावात् मिथ्याज्ञाननिमित्तत्वं न विहन्यते। स्वप्नेपि निद्रादिदोषोपप्लुतमानसादृष्टादिसमुद्बोधितसंस्कारविशेषस-हकार्यनुरूपं तदवच्छिन्नचैतन्यस्थाविद्यापरिणामो ज्ञानमुत्पद्यते इति न कोऽपि दोषः। इति॥

वेदान्तकल्पतरुः ।

प्रमावत् । तथा एषा प्रमा, उक्तविधगुणज्ञानाधीनज्ञाना न भवति, तथाविधगुणज्ञानाधीनप्रवृत्तिकरी च न भवति, तत

कल्पतरुपरिमलः ।

विशेषणेन विरुद्धम्, संप्रयोगातिरिक्तविशेषणलभ्यं तृतीयस्य व्यावर्तनं चक्षुर्गतविशेषणेन विरुद्धम्; तस्माद् नानेनानुमाने स्वतस्त्वसिद्धिरिति—**चेत्, उच्यते;** चक्षुर्गतपित्तदोषाभावे शङ्खे श्वैत्यप्रमा तदभावे न, चक्षुर्गतमण्डूकवसाञ्जनाभावे वंशवर्णप्रमा तदभावे नेत्यन्वयव्यतिरेकाभ्यां रूपचाक्षुषप्रमायां विशेषकारणत्वेन शङ्काहस्तथैव परतस्त्ववादिभिरिष्यमाण-श्चक्षुर्दोषाभावरूपो यस्तद्धर्मस्तज्जन्यत्वाभाव इह साध्यः । अन्यत्तु प्रमायां विशेषकारणत्वेन शङ्काहमेव न भवति । नहि भूयोवयवेन्द्रियसंनिकर्षं विना स्थूलावयविप्रत्यक्षप्रमा नोत्पद्यते; तदभावेऽपि संनिकृष्टकिंचित्प्रदेशावच्छेदेन तदुत्पत्तिद-र्शनात् । अतस्तत्तत्प्रदेशप्रत्यक्षमात्रार्थं तत्तत्प्रदेशसंनिकर्षापेक्षेति न भूयोवयवेन्द्रियसंनिकर्षस्य स्थूलावयविप्रत्यक्षप्रमायां विशेषकारणत्वे मानमस्ति । **एतेन**—स्थूलावयवावच्छेदेन संनिकर्षस्तस्यां विशेषकारणमित्यपि—**निरस्तम्;** स्थूलावय-विनि परमाणुद्व्यणुकरूपसूक्ष्मावयवावच्छेदेन संनिकर्षे भ्रमस्याप्यनुदयाद्, यावद्विषयसंनिकर्षोऽपि न प्रमायां विशेषकार-णम्; असंनिकृष्टभाने अतिप्रसङ्गेन शुक्तिरजतादिष्वपि संस्कारस्य स्मृतेर्वा संनिकर्षत्वस्याभ्युपेयत्वात्, असंनिकृष्टमपि रजतादिकं दोषाद्भासत इति समर्थने तथैवासंनिकृष्टमपि निध्यादिकमञ्जनादिगुणाद् भासत इति समर्थयितुं शक्यत्वेन प्रमायामपि तस्यानुगतविशेषकारणत्वाभावप्रसङ्गात् । विशेष्यवृत्तिविशेषणसंनिकर्षोपि न जन्यप्रत्यक्षप्रमानुगतो गुणः; परंपरासंबन्धेन स्फटिकवृत्तेर्लौहित्यस्य तत्र साक्षात्संबन्धावगाहिनि भ्रमे तस्य साधारण्यात्, तत्तत्संबन्धविशेषेण वृत्तिविव-क्षायामननुगमात् । **एतेन**—विशेषणवद्विशेष्यसंनिकर्षस्तस्यां गुण इत्यपि—**निरस्तम्;** ग्राह्ययथार्थज्ञानस्य तु जन्यप्र-मामात्रे नान्वयव्यतिरेकाभ्यां विशेषकारणत्वं, व्यभिचारेण तदसिद्धेः । **लोके** शाब्दप्रमायां वक्तृवाक्यार्थयथार्थज्ञानस्य कारणत्वदर्शनात् यद्विशेषयोः कार्यकारणभावः बाधकं विना तत्सामान्ययोरपीति व्याप्त्या तत्र तस्य कारणत्वसिद्धिः । नच व्यभिचारः; यत्रास्मदादिगतग्राह्ययथार्थज्ञानं नास्ति, तत्र सर्वत्रोक्तव्याप्तिबलेन परमेश्वरज्ञानस्य तथात्वेनापि कारण-त्वकल्पनोपपत्तेरिति **चेद्, न;** अप्रयोजकत्वात् । नच जन्यप्रमात्वावच्छिन्नकार्यस्याकस्मिकत्वप्रसङ्गो विपक्षबाधकस्तर्कः; जन्यज्ञानत्वावच्छिन्नज्ञानसामान्यकारणकलापस्य सत्त्वात्, तत्र तद्वद्विशेष्यकतत्प्रकारकत्वस्याव्यवस्थितघटत्वपटत्वादिप्रवे-शेनाऽननुगतस्यावच्छेदककोटिप्रवेशायोगात् । अन्यथा वक्तृवाक्यार्थायथार्थज्ञानस्य शाब्दभ्रमे कारणत्वाद् 'यद्विशेषयो-' रित्युक्तव्याप्त्यैव भ्रममात्रे ग्राह्यभ्रमो हेतुः कल्पनीय इति परमेश्वरे नित्यप्रमावद् नित्यभ्रान्तिरप्यङ्गीकरणीया स्यात् । **यत्तु**—तदभाववति तत्प्रकारकज्ञानमपेक्ष्य लघु तदभाववज्ज्ञानमेव भ्रमेषु दोषोस्तु, तत्तु भ्रमे धर्मिज्ञानरूपं सर्वत्र सुलभमिति नेश्वरे भ्रान्तिकल्पना प्रसज्यते, नचैवं-प्रमायामपि लघु तद्वज्ज्ञानमेव गुणः स्यादिति—वाच्यम्; इष्टा-पत्तेः, तावतापि परतस्त्वसिद्धेस्तत्फलेश्वरसिद्धेश्चाप्रत्यूहत्वात्—**इति । तन्न;** तदभाववत्त्वेन ज्ञानस्य भ्रमविरोधिनस्तत्र कारणत्वायोगात्, वस्तुतो यत् तदभाववत् तज्ज्ञानस्य विशेषणज्ञानादिरूपस्य प्रमासाधारण्येन भ्रमासाधारणकारणत्वरूप-दोषत्वायोगात् । तदभाववद्विशेष्यकं ज्ञानं दोष इति चेद्, **न;** तदभाववद्विशेष्यकानामपि ज्ञानानां प्रमाकारणानां बहुलमु-पलम्भात् । तदभाववद्भ्रमविशेष्यविशेष्यकं ज्ञानं दोष इति **चेद्, न;** तदभाववत्त्वविशेषणवैयर्थ्यात्, भ्रमविशेष्यस्यारोप्या-भाववत्त्वनियमात् । अस्तु तर्हि भ्रमविशेष्यविशेष्यकमेव ज्ञानं दोष इति **चेद्, न;** एतदपेक्षया भ्रम एव भ्रमे दोष इति कल्पनाया लघीयस्त्वात् । तस्माद् भूयोवयवेन्द्रियसंनिकर्षादीनां शङ्कानर्हत्वात् प्रमान्वयव्यतिरेकशालितया तदर्हस्ये-न्द्रियदोषाभावस्यैवाधिककारणत्वनिराकरणमनेनानुमानेन कृतम् । चक्षुर्दोषाभावस्य तन्निराकरणमिदम् इन्द्रियान्तरदो-षाभावानामधिककारणत्वनिराकरणार्थानामप्येतच्छायापन्नानामनुमानान्तराणामुपलक्षणम् । का तर्हि दोषाभावान्वय-व्यतिरेकयोर्गतिः ? दोषस्य प्रमाप्रतिबन्धकत्वमेव । सत्यां सामग्र्यां कार्यविरोधि हि प्रतिबन्धकं लोके प्रसिद्धं, नतु नैया-यिककल्पितं कारणीभूताभावप्रतियोगि; तैरपि साक्षादविरोधिनो ज्ञानस्य जनकज्ञानविघटकस्यैव प्रतिबन्धकत्वम् इत्यादि वदद्भिः कारणीभूताभावप्रतियोगित्वेनानभ्युपगतमपि कार्यानुत्पत्तिव्याप्यमात्रं प्रतिबन्धकमिष्यत एवेत्यलं विस्तरेण ॥ ज्ञप्तिस्वतस्त्वमपि अनुमानारूढं करोति—**तथेति । उक्तविधेति ।** चक्षुर्गतगुणज्ञानाधीनप्रथमप्रामाण्यज्ञानं न भवती-त्यर्थः । स्वतस्त्ववादे प्रथमं प्रामाण्यस्य करणगुणज्ञानानपेक्षज्ञानत्वेऽपि पश्चात् करणगुणेनापि तदनुमानं संभवतीति बाधवारणाय **प्रथमविशेषणम् ।** परतस्त्ववादे प्रथममपि प्रमारूपधर्मिज्ञानं करणगुणज्ञानानधीनं संभवतीति सिद्धसा-धनवारणाय प्रामाण्यपदम् । **गुणपदं** पूर्वपद् निर्दोषत्वधर्मपरम् । **ननु**—परतस्त्ववादिभिः करणदोषाभावलिङ्गादिव समर्थप्रवृत्तिलिङ्गसंवादाभ्यामपि प्रथमं प्रामाण्यस्य ज्ञेयत्वमिष्यते, तदुभयज्ञेयत्वनिरासोऽनेनानुमानेन न सिध्यतीति—**चेत्, सत्यम्;** समर्थप्रवृत्तिसंवादौ तदयोग्यवैदिकार्थादिज्ञानप्रामाण्यावधारणे न संभवतः, करणदोषाभावज्ञानं तु सर्वत्र संभवतीति तदधीनप्रथमज्ञानत्वमनेनानुमानेन निरस्तम् । तथा च यस्यां प्रमायां करणदोषाभावलिङ्गकमेव परतस्त्ववाद-

**रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति । कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्ध-**

## भामती ।

नीयतेत्यधस्तादुपपादिम् । तेन सर्वेषामेव परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनानिर्वचनीयतावश्यंभाविनीत्यनिर्वचनीयता सर्वतन्त्राविरुद्धार्थः इत्यर्थः । आख्यातिवादिभिरकामैरपि सामानाधिकरण्यव्यपदेशप्रवृत्तिनियमस्नेहादिदमभ्युपेयमिति भावः । न केवलमियमनृतता परीक्षकाणां सिद्धा, अपितु लौकिकानामपीत्याह—**तथाच लोकेऽनुभवः—शुक्तिका हि रजतवदवभासत इति** । न पुना रजतमिदमिति शेषः । **स्यादेतत्**—अन्यस्यान्यात्मताविभ्रमो लोकसिद्धः, एकस्य त्वभिन्नस्य भेदभ्रमो न दृष्ट इति कुतश्चिदात्मनोऽभिन्नानां जीवानां भेदविभ्रम इत्यत आह—**एकश्चन्द्रः सद्वितीयवदिति** । पुनरपि चिदात्मन्यध्यासमाक्षिपति—**कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्** । **अयमर्थः**—चिदात्मा प्रकाशते, न वा । **न चेत्प्रकाशते**, कथमस्मिन्नध्यासो विषयतद्धर्माणाम् ? न खल्वप्रतिभासमाने पुरोवर्तिनि द्रव्ये रजतस्य वा तद्धर्माणां वा समारोपः संभवतीति । **प्रतिभासे वा** न तावदयमात्मा जडो घटादिवत्पराधीनप्रकाश इति युक्तम् । न खलु स एव कर्ता च कर्म च भवति; विरोधात् । परसमवेतक्रियाफलशालि हि कर्म, नच ज्ञानक्रिया परसमवायिनीति कथमस्यां कर्म । नच तदेव स्वं च परं च; विरोधात् । आत्मान्तरसमवायाभ्युपगमे तु ज्ञेयस्यात्मनोऽनात्मत्वप्रसङ्गः, एवं तस्य तस्येत्यनवस्थाप्रसङ्गः । **स्यादेतत्**—आत्मा जडोऽपि सर्वार्थज्ञानेषु भासमानोऽपि कर्तैव न कर्म, परसमवेतक्रियाफलशालित्वा-

## वेदान्तकल्पतरुः ।

एव, तद्वदेवेति ज्ञप्तिव्यवहारयोरपि स्वतस्त्वसिद्धिरिति । **भाष्ये**ऽन्यथाख्यातिः स्वीकृतेति भ्रमं व्यावर्तयन्व्याचष्टे—**अन्यस्यान्यधर्मकल्पनेति** । अवभासपदव्याख्यानं **कल्पनेति** । **सर्वतन्त्राविरुद्धोऽर्थः** सर्वतन्त्रसिद्धार्थः, यथाप्रमाणं प्रमेयमिति । रजतवदिति न सादृश्यविवक्षा, अपितु भासते परं रजतवत्, नहि वस्तुतो रजतमिति, मिथ्यात्वं विवक्षितमित्याह—**न पुनरिति** । एवमारोप्यसिद्ध्यसंभवप्रयुक्ते आक्षेपे परिहृते पुनरात्मनोऽधिष्ठानत्वानुपपत्त्याध्यास आक्षिप्यत इत्याह—**पुनरपीति** । आत्मनो ग्राह्यत्वे स्वग्राह्यत्वं, परग्राह्यत्वं वा । **नाद्य** इत्याह—**न खल्विति** । **न द्वितीय** इत्याह—**आत्मान्तरेति** । संविदाश्रयत्वेन सिद्धिमाशङ्कते—**स्यादेतदिति** ।

## कल्पतरुपरिमलः ।

भिमतं प्रामाण्यग्राहकं प्रवर्तते सैवात्र पक्षो, नतु समर्थप्रवृत्तिसंवादावसितप्रामाण्येति न सिद्धसाधनम् । **तदवसितप्रामाण्यायां तु प्रमायां स्वतस्त्वे** एतद्घटप्रमा, एतद्घटविषयसमर्थप्रवृत्तिसंवादाधीनप्रथमप्रामाण्यनिश्चया न भवति, प्रमात्वात्, पटप्रमावदित्यनयैव रीत्या तत्राप्यनुमानमुन्नेतुं शक्यमिति न प्रदर्शितम् । एवंच परतस्त्वनिषेधे प्रामाण्यस्य स्वाश्रयसहभाननियमरूपस्वतस्त्वसिद्धिः । **ननु**—एवं सति यस्यां रूपप्रमायां करणदोषशङ्कया प्रामाण्यसंशये सति तन्निर्दोषत्वनिश्चयेन प्रामाण्यनिश्चयः, तत्र साध्यस्य बाधः स्यादिति—**चेद्, न**; अतथाभूताया इह पक्षीकरणात्, तत्प्रतिपत्त्यर्थत्वादेवेति पक्षविशेषणस्य । **तथाविधेति** । **ननु**—इह साक्षात्प्रवृत्तेः करणगुणज्ञानाधीनत्वं **न** निषेध्यम्; परतस्त्ववादिभिरपि तस्याः साक्षात्समानविषयरजतादिज्ञानजन्यत्वस्यैवाभ्युपगतत्वात् । नापि प्रामाण्यनिश्चयद्वारा; प्रामाण्यनिश्चयो न प्रवृत्त्यर्थमपेक्षितः, अनवस्थाप्रसङ्गात्, किंत्वप्रामाण्यशङ्काशून्यं समानविषयज्ञानमेवेति तैरभ्युपगतत्वात् । नच वाच्यं—करणदोषसंशयेन प्रवर्तकज्ञानस्याप्रामाण्यशङ्कया प्रवृत्तिप्रतिबन्धे प्रसक्ते निर्दोषत्वरूपकरणगुणज्ञानजन्येन प्रामाण्यनिश्चयेन तच्छङ्कानिरासपूर्विका यत्र प्रवृत्तिः तत्र तस्याः करणगुणज्ञानाधीनत्वं परतस्त्ववाद्यभिमतं निषेध्यं—इति; स्वतस्त्ववादिभिरपि तस्याङ्गीकर्तव्यत्वेन तन्निषेधे बाधापत्तेरिति—**चेत्, सत्यम्**; प्रामाण्यनिश्चयवत् प्रवृत्तिरपि करणगुणज्ञानाधीनेति परतस्त्ववादिषु केषांचिन्मतमालक्ष्य तन्निषेधार्थमिदमनुमानम् । **सर्वतन्त्रसिद्धार्थ इति** । यद्यप्यख्यातिमते अन्यस्यान्यात्मतया भानमेव न सिद्धम्; अन्यथाख्यातिमते तत्सिद्धावप्यन्यात्मताऽनिर्वचनीयेत्येतदसिद्धम्; तथापि प्रागुक्तयुक्त्या तथाऽवश्याभ्युपगन्तव्यतामापाद्य सर्वतन्त्रसिद्धार्थत्वोक्तिः । **रजतवदिति न सादृश्यविवक्षेति** । **ननु**—'तेन तुल्यं क्रिया चेद्वति'रिति सूत्रेण क्रियया सदृशे वतिरनुशिष्टः, नतु मिथ्याभूते, **अथ** सदृशवाचिनो मिथ्याभूते लक्षणेत्युच्येत, **नैतद्युक्तम्**; यथा रजतं रजतात्मना भासते, तथा शुक्तिकापि रजतात्मना भासत इति वतिना रजततादात्म्यभानविषयत्वरूपे रजतसादृश्ये शुक्तिकायाः प्रतिपादिते सति असंनिहितस्य रजतस्य तत्तादात्म्यस्य चात्र प्रत्यक्षायोगेनार्थान्मिथ्याभूतरजततत्तादात्म्यसिद्धिसंभवादिति—**चेत्, सत्यम्**; अर्थतः सिध्यति, रजततत्तादात्म्यमिथ्यात्वे रजतवदवभासत इति व्यवहर्तुर्लोकस्य तात्पर्यं, न तु द्वारभूते शुक्तिकागतरजतसादृश्ये इत्याशये न सादृश्येन विवक्षा किंतु मिथ्यात्वे इत्युक्तम् । **यद्वा**—यथा सादृश्यवाचिन इवशब्दस्य वतेश्च दूरादागच्छन् देवदत्तवद्भातीत्यादिप्रयोगादुत्कटकोटिकसंशयरूपा तादात्म्यसंभावनाऽप्यर्थः । एवं शुक्तिका मिथ्यारजतात्मनावभासत इत्यर्थविवक्षावतां रजतवदवभासत-

## भामती ।

भावात्, चैत्रवत् । यथाहि चैत्रसमवेतक्रियया चैत्रनगरप्राप्त्युभयसमवेतायामपि क्रियमाणायां नगरस्यैव कर्मता; परसमवेतक्रियाफलशालित्वात्, न तु चैत्रस्य क्रियाफलशालिनोऽपि, चैत्रसमवायाद्गमनक्रियाया **इति**—तन्न; श्रुतिविरोधात् । **श्रूयते** हि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । **उपपद्यते** च । **तथाहि**—योऽयमर्थप्रकाशः फलं, यस्मिन्नर्थश्च आत्मा च प्रथेते, स किं जडः, स्वयंप्रकाशो वा । जडश्चेद्विषयात्मानावपि जडाविति कस्मिन्किं प्रकाशेताविशेषात्, इति॰प्राप्तमान्ध्यमशेषस्य जगतः । **तथाचाभाणकः**—'अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे' । नच—निलीनमेव विज्ञानमर्थात्मानौ ज्ञापयति—चक्षुरादिवदिति; वाच्यम् । ज्ञापनं हि ज्ञानजननम्, जनितं च ज्ञानं जडं सन्नोक्तदूषणमतिवर्तेतेति । एवमुत्तरोत्तराण्यपि ज्ञानानि जडानीत्यनवस्था । तस्मादपराधीनप्रकाशा संविदुपेतव्या । **तथापि**

## वेदान्तकल्पतरुः ।

स्वप्रकाशफलस्य जन्मादिनिषेधेनात्मत्वमुपपादयति—**तथाहीत्यादिना** । **नन्वभ्युपेयते** संविदपराधीनप्रकाशेति; आत्मा तु जडः किं न स्यादिति मन्वानं संविदाश्रयत्ववादिनंप्रति आत्मस्वप्रकाशत्ववाचाह—**तथापीति** । अर्थात्मसंब-

## कल्पतरुपरिमलः ।

इत्यादिव्यवहारदर्शनान्मिथ्यात्वमपि तदर्थं इत्याशयेन तथोक्तमिति सर्वमनवद्यम् । **स्वप्रकाशफलस्येति** । **ननु—तथा ही**त्यादिग्रन्थेन प्रथमं संविदः स्वप्रकाशत्वमेवोपपाद्यते, तत्कथं प्रतिपाद्यत्वेन नावतार्यते ? कथं च स्वप्रकाशत्वप्रतिपादनानन्तरं प्रतिपाद्यमानः परपक्षे संविदोऽर्थप्रकाशत्वासंभवः, स्वपक्षे एवार्थजातस्य संविद्विवर्ततया संविदभेदेन संविदः स्वाभिन्नार्थप्रकाशत्वसंभवश्च प्रतिपाद्यत्वेन नावतार्यते ? तदनन्तरं संविदो जन्मादिनिषेधेन प्रतिपाद्यमानम् आत्मत्वमेव केवलं प्रतिपाद्यत्वेनावतार्यते ?—**उच्यते;** संविदाश्रयत्वेनात्मसिद्धिं वदतां संविदः स्वप्रकाशत्वमभिमतमेवेति तदुपपादनमनुवादमात्रमित्याशयेन तत् स्वप्रकाशफलस्येत्यनुवाद्यकोटौ निवेशितम् । संविदः परपक्षे अर्थप्रकाशत्वासंभवप्रदर्शनपूर्वकम् अर्थजातस्यानिर्वचनीयत्वपक्ष एव तत्संभवोपपादनम् अर्थजातस्यानिर्वचनीयत्वव्यवस्थापनपर्यवसन्नं सत्स्वरूपतोऽननुभूयमानभेदायाः संविदो नार्थोपाधिको भेदस्तस्य मिथ्यात्वादिति संविदो नित्यात्मस्वरूपत्वोपपादकतयैव प्रकृतोपयोगीति । अन्यथा कथं 'सत्यं ज्ञानमिति' श्रुतेर्ज्ञानात्माभेदे तात्पर्यं द्रागेव निश्चेतुं शक्यम् ? इह हि ज्ञानपदमन्तोदात्तमधीयते । अन्तोदात्तस्वरश्च केवलं ल्युडन्तत्वायां नोपपद्यते । **तथाहि**—ल्युडादेशस्य अन इत्यस्य 'आद्युदात्तश्चे'ति प्रत्ययस्वरेण प्रथमाकारे उदात्ते 'लितीति' लित्स्वरेण प्रकृत्याकारे चोदात्ते 'अनुदात्तं पदमेकवर्ज'मिति शेषनिघातस्वरेण प्रत्ययस्थयोरकारयोरनुदात्तयोः 'एकादेश उदात्तेनोदात्त' इत्येकादेशस्वरेण प्रकृत्याकारप्रत्ययाद्याकारयोरेकादेशे चोदात्ते सति प्रत्यान्त्याकारस्यानुदात्तस्य विभक्त्यकारस्य च 'अनुदात्तौ सुप्पिता'विति सुप्स्वरेणानुदात्तस्य 'अमि पूर्व' इत्येकादेशो भवन् स्थानेऽन्तरतम इति परिभाषयाऽनुदात्तः स्यात् । तस्य चानुदात्तस्य 'उदात्तादनुदात्तस्य स्वरित' इति स्वरितादेशो भवेत् । अत एतद् ज्ञानमिति पदं केवलल्युडन्तत्वे स्वरितान्तं स्यात् । यथा काठके 'संज्ञानं विज्ञानं प्रज्ञानमिति' । तस्मादन्तोदात्तनिर्वाहार्थमिदं ज्ञानपदं ल्युडनन्तरं मत्वर्थीयाच्प्रत्ययान्तं वाच्यम्; अर्शआदेराकृतिगणत्वात् । तथा सत्यन्तोदात्तस्वर उपपद्यते । अर्शआद्यच्प्रत्यये 'यस्येति चेति' प्रकृतावन्त्यस्याकारस्य लोपे 'चित' इति चित्स्वरेण मत्वर्थीयप्रत्ययस्योदात्तत्वे च सति तस्य विभक्त्यकारस्य चैकादेशस्यापि 'एकादेश उदात्तेनोदात्त' इत्युदात्तस्यैव भावात् । एवमिह ज्ञानपदप्रक्रियाश्रयणे ज्ञानवत्त्वमेवात्मनः सिध्येद्; न ज्ञानरूपत्वं, किं त्वौणादिकनप्रत्ययान्तत्वेन तत्सिध्येत् । ज्ञाधातोराहत्य नप्रत्ययविधानाभावेऽप्युणादयो बहुलमिति बहुलग्रहणेन यतो विहितास्ततोऽन्यत्रापि ते भवन्तीति सिद्धेः । औणादिकप्रत्ययान्तत्वे भावार्थत्वमप्युपपद्यते, अर्त्यादिसूत्रविहितमन्प्रत्ययान्तस्य होमशब्दस्येव अन्तोदात्तस्वरश्च युज्यते;नप्रत्ययाकारस्य प्रत्ययस्वरेणोदात्तत्वे सति तस्य तद्विभक्त्यकारेण भवत एकादेशस्याप्युदात्तस्यैव भावात् । एवमुभयथेह ज्ञानपदप्रक्रियाश्रयणसंभवे कथमस्याः श्रुतेः संविदात्माभेदे तात्पर्यं निर्णीयत इत्याकाङ्क्षायां तत्र तत् तात्पर्यनिर्णयार्थामुपपत्तिम**ुपपद्यते चेति** प्रतिज्ञाय तामेवोपपत्तिं प्रदर्शयितुं टीकायां **तथा हीत्यादि**ग्रन्थः प्रवर्तितः । अतोऽत्र स्वप्रकाशत्वादिव्यवस्थापनस्य न साक्षादन्वयसंघटनेतीत्थमवतारिका—**नन्वभ्युपेयते इति** । **ननु**—चाभ्युपगमे को हेतुः; स्वयमभासमानमपि ज्ञानमर्थप्रकाशरूपमस्तु, **नच**—तथात्वे तस्य चक्षुरादिवदर्थप्रकाशकत्वमेव स्याद्, न तु तत्प्रकाशरूपत्वमित्यनवस्थेति—वाच्यम्; अप्रयोजकत्वेनोक्तनियमासिद्धेरिति—**चेद्, न**; तथा सति घटज्ञानादिषु सत्सु कदाचित्संदेहविपर्यासापत्तेः प्रकाशाव्यभिचारिण्येव सुखादौ संशयविपर्यासानुदयदर्शनात्, एतावन्तं कालं मनसा रुद्रानुवाकानावर्तयन्नासमिति परामर्शानुपपत्तेश्च । न हि तत्तद्वर्णस्मृतीनां स्वस्वकाले भानाभावे तासामग्रिमपरामर्शो भवितुमर्हति । न चेच्छाघटितसामग्रीजन्यनिरन्तरक्रमिकवर्णविषयस्मरणसन्तानोदयकाले मध्ये मध्ये प्रतिस्मरणमनुव्यवसायोत्पत्तिः संभवति । **आत्मस्वप्रकाशत्ववाचाहेति** । अभ्युपेतव्या इत्येतदन्तमुक्तवानात्मस्वप्रकाशवाचेव । आत्मनः प्रकाशमानत्वं स्वप्रकाशफलाभेदेनैव उपपादनीयं, नान्यथा तस्य

## भामती ।

**किमायातं विषयात्मनोः स्वभावजडयोः ? एतदायातं यत्तयोः संविदजडेति । तत्किं पुत्रः पण्डित इति पितापि पण्डितोऽस्तु । स्वभाव एष संविदः स्वयं प्रकाशाया यदर्थात्मसंबन्धितेति चेत्, हन्त पुत्रस्यापि पण्डितस्य स्वभाव एष यत्पितृसंबन्धितेति समानम् । सहार्थात्मप्रकाशेन संवित्प्रकाशो न त्वर्थात्मप्रकाशं विनेति तस्याः स्वभाव इति चेत्, तत्किं संविदो भिन्नौ संविदर्थात्मप्रकाशौ ? तथाच न स्वयंप्रकाशा संवित्, नच संविदर्थात्मप्रकाश इति । अथ संविदर्थात्मप्रकाशौ न संविदो भिद्येते, संविदेव तौ । एवं चेत् यावदुक्तं भवति संविदात्मार्थौ सहेति तावदुक्तं भवति संविदर्थात्मप्रकाशौ सहेति, तथाच न विवक्षितार्थसिद्धिः । नचातीतानागतार्थगोचरायाः संविदोऽर्थसहभावोऽपि । तद्विषयहानोपादानोपेक्षाबुद्धिजननादर्थसहभाव इति चेन्न; अर्थसंविद इव हानादिबुद्धीनामपि तद्विषयत्वानुपपत्तेः । हानादिजननाद्धानादिबुद्धीनामर्थविषयत्वम्; अर्थविषयहानादिबुद्धिजननाच्च अर्थसंविदस्तद्विषयत्वमिति चेत्, तत्किं देहस्य प्रयत्नवदात्मसंयोगो देहप्रवृत्तिनिवृत्तिहेतुरर्थ इत्यर्थप्रकाशोऽस्तु । जाड्याद्देहात्मसंयोगो नार्थप्रकाश इति चेत्, नन्वयं स्वयंप्रकाशोऽपि स्वात्मन्येव खद्योतवत्प्रकाशः, अर्थे तु जड इत्युपपादितम् । नच प्रकाशस्यात्मानो**

## वेदान्तकल्पतरुः ।

न्धिन्यां संविद्यजडायामपि नार्थात्मनोः प्रकाशमानतासिद्धिः; पण्डितेपि पुत्रे पितुरपाण्डित्यवदित्युक्ते वैषम्यं शङ्कते—**स्वभावेति** । आश्रयविषययोः पारतन्त्र्यनियमात्स्वभावसंबद्धा संवित्, न पुत्रः; पित्रभावेऽपि भावादित्यर्थः । पुत्रगतजन्यत्वमपि नित्यं पितृगतजनकत्वसापेक्षमिति साम्यमाह—**हन्तेति** । अर्थात्मनोः प्रकाशेन सह संवित्प्रकाश इत्युक्ते यः संविदः प्रकाशो यश्चार्थात्मनोस्तौ संविदः सकाशाद्भिन्नौ, अभिन्नौ वा । **नाद्य** इत्याह—**तत्किमिति** । संविदः प्रकाशव्यतिरेके संविदप्रकाशरूपा सती घटवदस्वप्रकाशा स्यात् । आत्मार्थप्रकाशयोः संविद्व्यतिरेके संविदर्थात्मप्रकाशरूपा न भवेत् किंतु ज्ञापिका स्यात् तथाचानवस्थेत्याशयः । अभेदमाशङ्कते—**अथेति** । संविदश्चार्थात्मनोश्च प्रकाशावित्यर्थः । कथंभूतौ तावित्यपेक्षायां स एवाह—**संविदेवेति** । दूषयति—**एवमिति** । संविदतिरिक्तप्रकाशानङ्गीकारे संविदर्थात्मनां साहित्यमुक्तं स्यात् । तथाच पुत्रपाण्डित्यतुल्यतेत्यर्थः । अर्थसंविदो सहभावमङ्गीकृत्याऽनुपयोग उक्तः, स एव क्वचिदसिद्ध इत्याह—**नचेति** । अतीतादिबुद्धिस्तत्सहिता तद्विषयहानादिबुद्धिजनकत्वाद्वर्तमानबुद्धिवदिति शङ्कते—**तद्विषयेति** । तद्विषयाश्च ताः हानादिबुद्धयश्च इति विग्रहः । तद्विषयहानादिबुद्धिजनकत्वादिति हेतौ तद्विषयत्वविशेषणस्यासिद्धिमाह—**नेति** । तां परिहरति—**हानादिजननादिति** । सिद्धे च हेतावतीतादिसंविदामर्थसहभावसिद्धेस्तद्विषयत्वसिद्धिरित्याह—**अर्थविषयेति** । अर्थविषयहानादिप्रवृत्तिजननाद्धानादिबुद्धेरर्थविषयप्रकाशत्वेऽतिप्रसङ्गं दर्शयन्विशेषणासिद्धिं द्रढयति—**तत्किमिति** । **अर्थ इति** सप्तमी । प्रयत्नवदात्मदेहसंयोगोऽर्थविषयप्रवृत्तिहेतुरपि जडत्वान्नार्थविषयप्रकाशश्चेत्संवित्प्रकाशोपि स्वप्रकाशत्वात् स्वमात्रे साक्षी अर्थे त्वप्रकाशनाद् जड एव; अर्थस्यापि स्वप्रकाशरूपान्तर्भावेन सिद्धिश्चेदर्थसंविद्भेदो न स्यादित्यभिप्रेत्याह—**नन्वयमिति** । मा भूद्भेद इति वदन्तं बौद्धगन्धिनमेकदेशिनं निराकरोत्याक्षेप्ता—**नच प्रकाशस्येति** । सिद्धान्त्यभिमतां संविद्विवर्ततया तदभेदेनार्थसिद्धिमध्यासासंभवं वक्ष्यामीति मन्वानोऽनुवदति—

## कल्पतरुपरिमलः ।

प्रकाशमानत्वं भवतीत्येवमुपपादयितुमाहेत्यर्थः । **अनुपयोग उक्त इति** । सहभावस्य प्रकाशमानतायामनुपयोग उक्तः । उपयोगमङ्गीकृत्य तस्याव्यापकत्वमाहेत्यर्थः । **विशेषणस्यासिद्धिमाहेति** । बाधदोषः स्फुट इति मत्वा दोषान्तरमाहेत्यर्थः । **तां परिहरतीति** । असिद्धिं परिहरन् पूर्ववादी शङ्कत इत्यर्थः । **जडत्वान्नार्थविषयप्रकाशश्चेदिति** । अर्थविषयहानादिजनकत्वमात्रं न ज्ञानस्यार्थविषयतानियामकं, किंतु तज्जनकप्रकाशत्वम्; तथाच जडे देहात्मसंयोगे न प्रसङ्ग इति शङ्कार्थः । **स्वप्रकाशत्वात् स्वमात्रे साक्षीति** । दृश्यवर्गस्य संविद्भिन्नताभ्युपगमे संविदः स्वात्मानं प्रति प्रकाशत्वं ह्यभेदसंबन्धेनैव क्लृप्तमिति तं प्रति सा जडरूपा देहात्मसंयोगतुल्या न प्रकाशरूपेति नोक्तनियामकेन तस्या दृश्यवर्गविषयत्वसिद्धिरित्यर्थः । **ननु**—यद्विषयत्वनियामकमन्विष्यते तं प्रति प्रकाशत्वं प्रकाशशब्देन न विवक्षितम्; तथा सति ह्यात्माश्रयः स्यात्, किंतु ज्ञानत्वसामान्यं विवक्षितम्, अतो नोक्तदोष इति—**चेद्, न**; एवमपि गगनादीनामतीतानागतयोश्च हानाद्यविषयत्वेन तद्विषयज्ञानाव्यापनात्, ताम्रादिज्ञाने तदुपष्टम्भककालिकादेरप्युपादानजनके कालिकादिविषयत्वस्याप्यापत्तेश्च । **एतेन**—परोक्षापरोक्षवृत्तीनामिच्छाद्वेषवृत्तीनां हानादिव्यापाराणां च तत्तद्भिन्नेऽपि तद्विषये विषयत्वनियमार्थं कस्यचिन्नियामकस्यावश्यान्वेष्यत्वेन तथाभूतं नियामकं संविद्भिन्नेऽपि संविदस्तत्तद्विषयत्वनियामकं भविष्यतीत्यपि शङ्का—**निरस्ता**; संविदः स्वप्रकाशतायामभेदस्य नियामकस्य क्लृप्तत्वेन दृश्यवर्गप्रकाशतायां नियामकान्तरस्याननुगमावहस्य कल्पयितुमयुक्तत्वात् । **ननु** संविदः स्वभिन्ने नास्ति प्रकाशरूपतेति ब्रूषे, संवित्प्रपञ्चयोरभेदं च तात्त्विकमपाकुरुषे, अध्यासप्रतिक्षेपार्थं प्रवृत्तश्च नाध्यासिकं तमङ्गीकुरुषे, किंनु जगदान्ध्यमेव वक्तुमध्यवसितोसीत्याशङ्क्याह—**सिद्धान्त्यभिमतामिति** ।

**र्माणाम्? सर्वो हि पुरोवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनो-**

## भामती ।

विषयाः; ते हि विच्छिन्नदीर्घस्थूलतयानुभूयन्ते, प्रकाशश्चायमान्तरोऽस्थूलोऽनणुरह्रस्वोऽदीर्घश्चेति प्रकाशते । तस्माच्चन्द्रेऽनुभूयमान इव द्वितीयश्चन्द्रमाः स्वप्रकाशादन्योऽर्थोऽनिर्वचनीय एवेति—**युक्तमुत्पश्यामः** । नचास्य प्रकाशस्याजानतः स्वलक्षणभेदोऽनुभूयते । नचानिर्वाच्यार्थभेदः प्रकाशं निर्वाच्यं भेत्तुमर्हति; अतिप्रसङ्गात् । नचार्थानामपि परस्परं भेदः समीचीनज्ञानपद्धतिमध्यास्ते इत्युपरिष्टादुपपादयिष्यते । तदयं प्रकाश एव स्वयंप्रकाश एकः कूटस्थनित्यो निरंशः **प्रत्यगात्मा** अशक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य आत्मानं प्रतीपं निर्वचनीयमञ्चति जानातीति प्रत्यङ्, स चात्मेति प्रत्यगात्मा, स चापराधीनप्रकाशत्वात्, अनंशत्वाच्च अविषयः, तस्मिन्नध्यासो विषयधर्माणां, देहेन्द्रियादिधर्माणां, कथम्, किमाक्षेपे । अयुक्तोऽयमध्यास इत्याक्षेपः । कस्मादयमयुक्त इत्यत आह—**सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति** । **एतदुक्तं भवति**—यत्पराधीनप्रकाशमंशवच्च तत्सामान्यांशग्रहे कारणदोषवशाच्च विशेषाग्रहेऽन्यथा प्रकाशते । प्रत्यगात्मा त्वपराधीनप्रकाशतया न स्वज्ञाने कारणान्यपेक्षते, येन तदाश्रयैर्दोषैर्दूष्येत । नचांशवान्; येन कश्चिदस्यांशो गृह्येत कश्चिन्न गृह्येत । नहि तदेव तदानीमेव तेनैव गृहीतमगृहीतं च संभवतीति न स्वयंप्रकाशपक्षेऽध्यासः । सदातनेऽप्यप्रकाशे पुरोऽवस्थितत्वस्यापरोक्षत्वस्याभावान्नाध्यासः । नहि शुक्तावपुरःस्थितायां रजतमध्यस्यतीदं रजतमिति । तस्मादत्यन्तग्रहेऽत्यन्ताग्रहे च नाध्यास इति सिद्धम् । **स्यादेतत्**—अविषयत्वे हि चिदात्मनो नाध्यासः, विषय एव तु चिदात्मास्मत्प्रत्ययस्य, तत्कथं नाध्यास इत्यत आह—**युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि** । विषयत्वे हि चिदात्मनोऽन्यो विषयी भवेत् । तथाच यो विषयी स एव

## वेदान्तकल्पतरुः ।

**तस्मादिति** । एवं संविदः स्वप्रकाशतां विषयस्य च तदध्यस्ततामुक्त्वा तस्या आत्मत्वसिद्ध्यर्थमद्वितीयतामाह—**नचास्येति** । **आजानतः** स्वभावतः । इत्थं तर्कितं आत्मस्वप्रकाशत्वे प्रयुज्यते—देवदत्तसुप्तिकालः, देवदत्तात्मास्तीति व्यवहारहेतुसाक्षात्कारवान्, कालत्वादितरकालवदिति । नच सुप्तावहंवृत्तिरस्ति; नच पुरुषान्तरं साक्षात्कर्तुमर्हति; ईश्वरमते योगिमते वाऽनैश्वरेत्ययोगजेति च विशेषणीयमिति स्वप्रकाशत्वसिद्धिरिति । तदेवं पक्षान्तरनिरासेन स्वप्रकाश आत्मेति स्थापितम् । अस्मिन् पक्षेऽध्यासाक्षेपकतया भाष्यं योजयति—**तदयमिति** । प्रत्यक्छब्दार्थमाह—**अशक्येति** । **प्रतीपं** प्रातिलोम्येन । तदेव दर्शयति—**निर्वचनीयमिति** । **कथमिति** थमुप्रत्ययान्तस्य किंशब्दस्य रूपम् । तत्र किंशब्द आक्षेपार्थ इत्यर्थः । अप्रथमानत्वपक्षे दूषणं **सर्वो हीति** । भाष्योक्तमाह—**सदातनेऽपीति** ।

## कल्पतरुपरिमलः ।

सर्वोऽयं सिद्धान्त्यभिमत एवार्थ आत्मनोऽधिष्ठानत्वासंभवोपपादनार्थमनूद्यते । **सिद्धान्ती खलु**—संवित् स्वप्रकाशेति तस्याः स्वाभिन्न एव प्रकाशरूपत्वस्य क्लृप्तत्वात् स्वभिन्ने दृश्यवर्गे तस्याः प्रकाशरूपता न संभवति, तात्त्विकश्च दृग्दृश्ययोरभेदो न युज्यते, अतो दृश्यवर्गस्य संविद्विवर्ततयाऽनिर्वचनीयेन तदभेदेन प्रकाशमानता । एवं चानुभवामीत्येकरूपप्रत्ययदर्शनेन संविदां स्वतो भेदाप्रतीतेरर्थानामनिर्वाच्यतया तद्भेदेन रङ्गरजतादिभ्रमविषयभेदेन भ्रमाधिष्ठानशुक्तिशकलस्येव भास्करमतरीत्यौपाधिकवस्तुकृतभेदासंभवाच्च नित्या संविदिति नित्यसंविदतिरेकेणात्मकल्पनायां प्रमाणाभावात् संवित्प्रकाश एव स्वयंप्रकाश एकः कूटस्थो निरंशः प्रत्यगात्मेति—**मन्यते** । तस्य मते प्रत्यगात्मरूपस्य प्रकाशस्य करणदोषाजन्यतया निरंशतया च सामान्यग्रहणविशेषाग्रहणासंभवात् कथमध्यासाधिष्ठानतेत्येवं सिद्धान्तिमतानुसारेणैवायम् अध्यासाक्षेपः क्रियत इत्याशयः । **आजानतः स्वभावत इति** । तथाच स्वाभाविकभेदो नानुभूयते, किंत्वनुभवामीत्येकरूपप्रत्ययेनाऽभेद एवावसीयते । नचानुगतप्रत्ययो जात्यैक्यविषयः; व्यक्तिभेदाप्रतीतौ लाघवेन तस्य व्यक्त्यैक्यविषयत्वकल्पनौचित्यात् । नचेच्छाया अपीच्छामीत्यनुगतप्रत्ययात् स्वतो भेदाप्रतीतेश्च नित्यत्वप्रसङ्गः; ममैतदिच्छा नष्टा एतदिच्छा उत्पन्नेति नाशोत्पत्त्यनुभवविरोधेनानुगतप्रत्ययस्य जातिविषयत्वकल्पनात् । नच ज्ञान इवेच्छायामपि नाशोत्पत्त्यनुभवस्यावच्छेदकवृत्तिविषयत्वं कल्पयितुं शक्यम्; इच्छायामवच्छेदकवृत्तिकल्पने प्रमाणाभावात् । ज्ञाने तत्कल्पने त्वस्ति प्रमाणम् । सर्वस्य हि प्रपञ्चस्य नित्यैकदृगध्यस्तत्वेन प्रकाशमानतोपयोग्यभेद उपपादनीयः, नतु तत्तद्विषयस्य तत्तद्दृगध्यस्तत्वेन; लब्धात्मन्यधिष्ठाने भासमाने पश्चादध्यासस्य वक्तव्यत्वेन विषयाध्यासात् पूर्वं चाक्षुषादिज्ञानानां विषयं विनापि भानप्रसङ्गात् । नच सर्वस्य प्रपञ्चस्यैकदृगध्यस्तत्वे तत्तज्ज्ञानानां विषयनियमासंभवः; अवच्छेदकवृत्तिकृतविषयनियमोपपत्तेरिति भावः । **नन्वहं**वृत्तिरूपसाक्षात्कारेणार्थान्तरदुष्टमनुमानं; सुखमहमस्वाप्समिति परामर्शानुपपत्त्या सुषुप्तावहंवृत्तेरवश्याभ्युपगन्तव्यत्वात् तथाभूतपरामर्शदर्शनस्यैवानुमानग्राहकतर्कतया तवाप्युपजीव्यत्वात्, इत्याशङ्क्याह—**नच सुप्ताविति** । सुषुप्तावन्तःकरणलयस्य श्रुतिसिद्धत्वेन तदानीमहंवृत्त्यसंभवात् स्वरूपतः सुषुप्तौ साक्षा-

ऽविषयत्वं ब्रवीषि। उच्यते-न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च

## भामती ।

चिदात्मा । विषयस्तु ततोऽन्यो युष्मत्प्रत्ययगोचरोऽभ्युपेयः । तस्मादनात्मत्वप्रसङ्गादनवस्थापरिहाराय युष्मत्प्रत्ययापेतत्वम्, अतएवाविषयत्वमात्मनो वक्तव्यम्, तथाच नाध्यास इत्यर्थः । परिहरति—**उच्यते—न तावदयमेकान्तेनाविषयः** । कुतः, **अस्मत्प्रत्ययविषयत्वात्** । **अयमर्थः**—सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादविषयोऽनंशश्च; तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव, अकर्तापि कर्तेव, अभोक्तापि भोक्तेव, अविषयोऽप्यस्मत्प्रत्ययविषय इव, जीवभावमापन्नोऽवभासते, नभ इव घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्मकमिवेति । नहि चिदेकरसस्यात्मनः चिदंशे गृहीते अगृहीतं किंचिदस्ति । न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन् । गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति । नचात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विकः, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेत्; बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याप्यनिर्वचनीयत्वात् । तस्माच्चिदात्मनः स्वयंप्रकाशस्यैव अनवच्छिन्नस्य अवच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात्, तदध्यासेन जीवभाव इति । तस्य

## वेदान्तकल्पतरुः ।

भाष्यकारेणात्मनोऽस्मत्प्रत्ययविषयत्वोपवर्णनेनाविषयत्वस्यासिद्धिरुक्ता, सा न युक्ता, स्वप्रकाशस्य विषयत्वायोगादित्याशङ्क्यौपाधिकरूपेण विषयतामाह—**सत्यमित्यादिना** । बुद्धिमनःप्राणेन्द्रियाणां परलोकगतौ आश्रयभूतानि भूतसूक्ष्माणि **सूक्ष्मं शरीरम्** । **इन्द्रियाणि** बाह्यानि । **ननु** स्वतोऽविषयत्वमौपाधिकरूपेण विषयत्वमिति किमिति व्यवस्थाप्यते, स्वत एव शुक्तिवद्ग्रहणाग्रहणे किं न स्यातामित्याशङ्क्य निरंशत्वान्नेत्याह—**नहि चिदेकरसस्येति** । **ननु** चिद्रूपे भात्यप्यानन्दादि न भातीति दृष्टम्, नेत्याह—**न खल्विति** । तर्हि साक्षिप्रतिभासे आनन्दाद्युल्लेखोपि स्यादित्याशङ्क्याह—**गृहीता एवेति** । यथा खल्वभिज्ञायां भासमानमपि देवदत्तैक्यं तत्तेदन्तोपाधिद्वारकसामानाधिकरण्यापरामर्शाद्विविक्तं नोल्लिख्यते, एवं चिद्रूपभानेऽपि दुःखप्रत्यनीकत्वादिरूपेणापरामृष्टा आनन्दादयोऽप्यगृहीता इव भान्तीत्यर्थः । **ननु** चित्प्रतिभासे तदात्मत्वादानन्दादयो भान्ति चेत्, तर्हि बुद्ध्यादिभ्यश्चैतन्यस्य भेदोऽपि प्रतीयेत; तत्र विद्यमानत्वात्, तथाच बुद्ध्याद्यध्यासायोग इत्याशङ्क्याह—**नचात्मन इति** । आनन्दादीनां वास्तवत्वाच्चैतन्यैकरसता न भेदस्यापीत्यभानमित्यर्थः । **यदुक्तं**—विषयत्वे युष्मत्प्रत्ययविषयत्वापत्तिः ततश्चानात्मत्वमिति, तत्राह—**तस्य चेति** । इदमात्मकत्वेन विषयत्वमनिदमात्मकत्वेनास्मदुल्लेखश्चोपपद्यते इत्यर्थः । इदमनिदमात्मकत्वं जीवस्य

## कल्पतरुपरिमलः ।

स्फुते प्रत्यगात्मनि सुप्तोत्थितपरामर्शस्तात्कालिकाहमर्थानुरागविषयो वक्तव्य इत्याशयः । **यथा खल्वभिज्ञायामिति** । **ननु**—देवदत्तोऽयमित्यभिज्ञायामिदमर्थे यद् देवदत्तैक्यं भासते, तद्विविक्तमुल्लिख्यत एव; यत्तु तत्र तत्ताविशिष्टैक्यं विविक्तं नोल्लिख्यते, तन्नभासत एव; अतो भासमानस्य विविक्तोल्लेखाभावे नेदमुदाहरणमिति—**चेद्, न;** एकस्मिन्निदमर्थे ऐक्यद्वयाभावेन भासमान एव देवदत्तैक्ये तत्तोपाधिपरामर्शाभावेन तत्तेदन्ताविशिष्टाभेदरूपतयोल्लेखाभावरूपस्य विविक्तानुल्लेखस्य विवक्षितस्य सत्त्वात्। **दुःखप्रत्यनीकत्वादिरूपेणेति** । **ननु**—दुःखप्रत्यनीकत्वं दुःखविरोधित्वं, दुःखव्यावर्तकसुखत्वं वा । **नाद्यः**; स्रक्चन्दनादिविषयभोगदशायां दुःखस्मरणरहितानां तज्जन्यानन्दे दुःखविरोधित्वपरामर्शासंभवात्, तदनुभवस्यासत्कल्पत्वेनापुरुषार्थत्वप्रसङ्गात्, मुक्तौ कथमपि दुःखस्मरणप्रसक्त्यभावेन मुक्त्यानन्दानुभवस्यापुरुषार्थत्वप्रसङ्गाच्च । **अतएव न द्वितीयोपि,** मुक्तौ सुखत्वादिप्रकारकानुभवाभावात्—**इति चेत्; उच्यते;** निरतिशये स्वरूपानन्दे संसारदशायामविद्यान्तःकरणोपधानदोषादस्त्यध्यस्तोऽपकर्षस्तं विनाऽनुभवाभावादिति विवक्षितम् । तथा चाध्यस्तापकर्षयुक्ततया गृहीतोऽप्यानन्दो मेघावरणकृतापकर्षसौरालोकवदगृहीत इव भातीति तात्पर्यम् । **यद्वा**—सकलसांसारिकदुःखविरोधि यत् स्वरूपानन्दे निरतिशयानन्दत्वं तदनुभवाभावादिति विवक्षितम् । तच्च स्वरूपाभिन्नमेव मुक्त्यानन्दानुभवे प्रकारो महावाक्यजन्यब्रह्माभिन्नस्वस्वरूपसाक्षात्कार इवाभेदप्रतियोगिब्रह्मरूपमिति न कश्चिद्दोषः । **आनन्दादय** इत्यादिशब्देन नित्यत्वादयो गृह्यन्ते । **आनन्दादीनामिति** । **ननु**—आनन्दादीनामिव बुद्ध्यादिभेदस्यापि वास्तवत्वेनाद्वितीयचैतन्यैकरसतावश्याभ्युपगन्तव्या; आत्मनि बुद्ध्याद्यभेदाध्यासवादिनस्तत्र तद्भेदोऽप्यध्यस्त इत्युक्त्ययोगात्, अभेदाभावे तदात्मकभेदप्रतिक्षेपासंभवात् । नच—बुद्ध्यादेः स्वरूपतोऽध्यस्तत्वादात्मनि वस्तुतो न तद्भेदो, नापि तदभेद इति—वाच्यम्; अध्यस्तादपि रजतात् शुक्तौ तज्ज्ञानाबाध्यबाधगोचरभेददर्शनात्—**इति चेद्, न;** शुक्त्यादिगतरजतादिभेदस्यापि सर्वप्रपञ्चनिवर्तकब्रह्मज्ञानबाध्यत्वाभ्युपगमेन तद्वत् संसारदशायामबाध्यस्यापि बुद्ध्यादिभेदस्य तद्बाध्यत्वोपपत्तेः । यदि च स वास्तव एवाद्वितीयचैतन्यैकरसस्य इष्यते, तथापि न दोषः; बुद्ध्यादिप्रतियोगिकत्वापरामर्शात् सो-

**प्रत्यगात्मप्रसिद्धेः । नचायमस्ति नियमः पुरोवस्थित एव विषये विषयान्तरमध्यसितव्यमिति; अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः।**

## भामती ।

त्वानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते । **तथाहि**—कर्ता भोक्ता चिदात्माऽहंप्रत्यये प्रत्यवभासते । न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा संभवति । यस्य च बुद्ध्यादेः कारणसंघातस्य क्रियाभोगशक्ती न तस्य चैतन्यम् । तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितो लब्धक्रियाभोगशक्तिः, स्वयंप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात्, कथंचिदस्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च, जन्तुरिति च, क्षेत्रज्ञ इति चाख्यायते । न खलु जीवश्चिदात्मनो भिद्यते । **तथाच श्रुतिः**—'अनेन जीवेनात्मना' इति । तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयंप्रकाशोऽप्यहंप्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते । नच—अध्यासे सति विषयत्वं विषयत्वे चाध्यास, इत्यन्योन्याश्रयत्वमिति—सांप्रतं; बीजाङ्कुरवदनादित्वात्, पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधादित्युक्तम्—'नैसर्गिकोऽयं लोकव्यवहारः' इति भाष्यग्रन्थेन। तस्मात् सुष्ठूक्तम्—**न तावदयमेकान्तेनाविषय इति।** जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः । **स्यादेतत्**—न वयमपराधीनप्रकाशतयाऽविषयत्वेनाध्यासमपाकुर्मः, किंतु प्रत्यगात्मा न स्वतो नापि परतः प्रथत इत्यविषय इति ब्रूमः । तथाच सर्वथाऽप्रथमाने प्रत्यगात्मनि कुतोऽध्यास इत्यत आह—**अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः ।** प्रतीच आत्मनः प्रसिद्धिः प्रथा; तस्या अपरोक्षत्वात् । यद्यपि प्रत्यगात्मनि नान्या प्रथास्ति, तथापि भेदोपचारः, यथा पुरुषस्य चैतन्यमिति । **एतदुक्तं भवति**—अवश्यं चिदात्माऽपरोक्षोऽभ्युपेतव्यः, तदप्रथायां सर्वस्याप्रथनेन जगदान्ध्यप्रसङ्गादित्युक्तम् । **श्रुतिश्चात्र भवति**—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । तदेवं परमार्थपरिहारमुक्त्वाऽभ्युपेत्यापि चिदात्मनः परोक्षतां प्रौढवादितया परिहारान्तरमाह—**नचायमस्ति नियमः पुरोऽवस्थित एव** अपरोक्ष एव **विषये विषयान्तरमध्यसितव्यम् ।** कस्मादयं न नियम इत्यत आह—**अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति ।** हिर्यस्मादर्थे । नभो हि द्रव्यं सत् रूपस्पर्शविरहान्न बाह्येन्द्रियप्रत्यक्षम् । नापि मानसम्; मनसोऽसहायस्य बाह्येऽप्रवृत्तेः । तस्मादप्रत्यक्षम् । अथ च तत्र बाला अविवेकिनः परदर्शितदर्शिनः कदाचित्पार्थिवच्छायां श्यामतामारोप्य कदाचित्तैजसं शुक्लत्वमारोप्य नीलोत्पलपलाशश्याममिति वा राजहंसमालाधवलमिति वा निर्वर्णयन्ति । तत्रापि पूर्वदृष्टस्य तैजसस्य वा तामसस्य रूपस्य परत्र नभसि स्मृतिरूपोऽवभास इति । एवं तदेव तलमध्यस्यन्ति अवाङ्मुखीभूतं महेन्द्रनील-

## वेदान्तकल्पतरुः ।

तद्धर्मान्वयप्रदर्शनेनोपपादयति—**तथाहीति** । **विच्छुरणात्** मिश्रणात् । **ननू**पाधिपरिच्छेदमन्तरेणान्य एव परमात्मनो जीवोऽहंप्रत्ययविषयोऽस्तु तत्राह—**न खल्विति** । अस्मत्प्रत्ययविषयत्वमपि जीवस्याहंप्रत्ययविशिष्टेऽन्तःकरणे व्यवहारयोग्यत्वापत्तिर्न कर्मत्वमतो न कर्मकर्तृत्वविरोध इत्युपसंहारव्याजेनाह—**तस्मादिति** । स्वप्रकाशे यावत्सत्त्वं प्रकाशनान्नारोप इति पक्षः पूर्वपूर्वाध्यासवशादप्रकाशसमर्थनेन निरस्तः । इदानीमप्रथमाने नास्त्यारोप इति पक्षमुपन्यस्यति—**स्यादेतदित्यादिना** । अपरोक्षत्वाभावश्चाप्रथमानता । अपरोक्षभ्रमाधिष्ठानत्वे ह्यपरोक्षेणात्मना भवितव्यम्, स चेन्नापरोक्षस्तस्मिन्नध्यासोपयोगिप्रथनाभावान्नाध्यास इत्यर्थः । रूपरहितद्रव्यत्वात् स्पर्शरहितद्रव्यत्वादिति द्वौ हेतू वक्ति—**नभो हीति** । वायुः स्पार्शनप्रत्यक्ष इति पक्षे द्वितीय एव हेतुः ।

## कल्पतरुपरिमलः ।

ऽप्यगृहीत इव भातीति वक्तुं शक्यत्वात् । अयमपि टीकाकाराणामाचार्याणां च संमतः पक्षः । अतएव सौत्राथशब्दविचारप्रस्तावेऽन्तःकरणाद्यभावस्य ब्रह्मस्वरूपानतिरिक्ततया वास्तवत्वेनैव शुद्धत्वाद्यवगाहिब्रह्मसाक्षात्कारविषयत्वं समर्थयिष्यते । **अस्मत्प्रत्ययविषयत्वमपीति । ननु**—चैतन्यस्याखण्डानन्दात्मकशुद्धस्वरूपेणाहंवृत्त्यविषयत्वेऽप्यौपाधिकरूपेण तद्विषयत्वं प्रागनुपदमेवोक्तं, वक्ष्यते च शब्दापरोक्षनिराकरणे, औपाधिकरूपापन्नश्च जीवः, तस्य कथमिह तद्विषयत्वम् औपचारिकमित्युच्यते, तस्य तद्विषयत्वाभावे च तस्यास्मदुल्लेखो न स्यादन्तःकरणमात्रविषयत्वादिदमुल्लेख एव स्यात्—**सत्यम्;** अहमर्थानुप्रविष्टानिदमंशरूपस्य सुखादिसाक्षिणः स्वप्रकाशस्याज्ञानोपाधिकस्य जीवस्याहंवृत्तिविषयत्वं प्रागुक्तं, वक्ष्यते च, इह तु तस्येदमंशस्यैव अहंवृत्त्यवच्छिन्नचैतन्यविषयत्वं मुख्यं नास्तीति तदौपचारिकमित्युच्यते । **एवंच न कर्मकर्तृत्वविरोध**—इति चैतन्यकर्मत्वप्रयुक्तस्य विरोधस्य परिहारः । वृत्तिकर्मत्वप्रयुक्तस्य तु पञ्चाग्निविद्यायामुपासनाकर्मत्वप्रयुक्तस्येव कथंचिद्रूपभेदेन परिहार आस्थेयः । अहं सुखीत्याद्यनुभवात्सुखादिविशिष्टरूपेण कर्मत्वम्, अन्तःकरणविशिष्टरूपेण कर्तृत्वमिति । **अप्रकाशसमर्थनेनेति** । निरतिशया-

**तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते; तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते । तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्र-**

### भामती ।

मणिमयमहाकटाहकल्पमित्यर्थः । उपसंहरति—**एवम्**—उक्तेन प्रकारेण सर्वाक्षेपपरिहारात्, **अविरुद्धः प्रत्यगात्मन्यप्यनात्मनाम्**—बुद्ध्यादीनाम् **अध्यासः । ननु** सन्ति च सहस्रमध्यासाः, तत्किमर्थमयमेवाध्यास आक्षेपसमाधानाभ्यां व्युत्पादितः, नाध्यासमात्रमित्यत आह—**तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते ।** अविद्या हि सर्वानर्थबीजमिति श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धम् । तदुच्छेदाय वेदान्ताः प्रवृत्ता इति वक्ष्यति । प्रत्यगात्मन्यनात्माध्यास एव सर्वानर्थहेतुः न पुना रजतादिविभ्रमा इति स एवाविद्या, तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुमिति तदेव व्युत्पाद्यं नाध्यासमात्रम् । अत्र च 'एवंलक्षणम्' इत्येवंरूपतयाऽनर्थहेतुतोक्ता । यस्मात्प्रत्यगात्मन्यशनायादिरहितेऽशनायाद्युपेतान्तःकरणाद्यहितारोपेण प्रत्यगात्मानमदुःखं दुःखाकरोति, तस्मादनर्थहेतुः । नचैवं पृथग्जना अपि मन्यन्तेऽध्यासं, येन न व्युत्पाद्येतेत्यत उक्तम्—**पण्डिता मन्यन्ते । न**न्वियमनादिरतिनिरूढनिबिडवासनानुबद्धाऽविद्या न शक्या निरोद्धुं; उपायाभावादिति यो मन्यते तं प्रति तन्निरोधोपायमाह—**तद्विवेकेन च वस्तुस्वरूपावधारणं**—निर्विचिकित्सं ज्ञानं **विद्यामाहुः**, पण्डिताः । प्रत्यगात्मनि खल्वत्यन्तविविक्ते बुद्ध्यादिभ्यः बुद्ध्यादिभेदाग्रहनिमित्तो बुद्ध्याद्यात्मत्वतद्धर्माध्यासः । तत्र श्रवणमननादिभिर्यद्विवेकविज्ञानं तेन विवेकाग्रहे निवर्तिते, अध्यासापबाधात्मकं वस्तुस्वरूपावधारणं विद्या चिदात्मरूपं स्वरूपे व्यवतिष्ठत इत्यर्थः । **स्यादेतत्**—अतिनिरूढनिबिडवासनानुविद्धाऽविद्या विद्ययापबाधितापि स्ववासनावशात्पुनरुद्भविष्यति, प्रवर्तयिष्यति च वासनादि कार्यं स्वोचितमित्यत आह—**तत्रैवं सति** एवंभूतवस्तुतत्त्वावधारणे सति, **यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते** अन्तःकरणादिदोषेणाशनायादिना चिदात्मा, चिदात्मनो गुणेन चैतन्यानन्दादिनान्तःकरणादि न संबध्यते । **एतदुक्तं भवति**—तत्त्वावधारणाभ्यासस्य हि स्वभाव एव स तादृशः, यदनादिमपि निरूढनिबिडवासनमपि मिथ्याप्रत्ययमपनयति । तत्त्वपक्षपातो हि स्वभावो धियाम् । **यथाहुर्बाह्या अपि**—'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः । न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥' इति । विशेषतस्तु चिदात्मस्वभावस्य तत्त्वज्ञानस्यात्यन्तान्तरङ्गस्य कुतोऽनिर्वाच्ययाऽविद्यया बाध इति । **यदुक्तं**—सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्याहमिदं ममेदमिति लोकव्यवहार–इति । तत्र व्यपदेशलक्षणो व्यवहारः कण्ठोक्तः । इतिशब्दसूचितं लोकव्यवहारमादर्शयति—**तमेतमविद्याख्यमिति** । निगदव्याख्यातम् । आक्षिपति—**कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि** । तत्त्वपरिच्छेदो हि प्रमा विद्या, तत्साधनानि प्रमाणानि कथमविद्यावद्विषयाणि । नाविद्यावन्तं प्रमाणान्याश्रयन्ति, तत्कार्यस्य विद्याया अविद्याविरोधित्वादिति भावः । सन्तु वा प्रत्यक्षादीनि संवृत्त्यापि यथा तथा,

### वेदान्तकल्पतरुः ।

**दुःखाकरोति** वस्तुवृत्तेनादुःखिनं दुःखिनं करोतीत्यर्थः । वस्तुस्वरूपं च तदवधारणं चेति कर्मधारयमभिप्रेत्याभिव्यक्तस्वरूपज्ञानमाह—**चिदात्मरूपमिति । निरुपद्रवभूतार्थेति** । भावनाप्रकर्षाद्विशदाभं सर्वविषयं ज्ञानमुत्पद्यते । तेन विषयीकृतस्य निरुपद्रवपरमार्थस्वभावस्य संस्कारबलादनुवर्तमानविपर्ययैर्न बाधः; कुतः ? बुद्धेः परमार्थभावनाजन्याया वस्तुपक्षपातित्वेन प्राबल्यात् । **ननु**—लङ्घनाभ्यासवन्नैरात्म्यादिभावनापि सातिशयमेव कार्यं जनयति, कथं सर्वविषयज्ञानलाभ ? इति शङ्कामपाकर्तुम**यत्नवत्त्वेऽपीत्युक्तम्** । लङ्घनाभ्यासे हि यो युगमात्रदेशलङ्घने प्रयत्नस्ततोऽधिको द्वियुगदेशलङ्घनेऽपेक्ष्यते । नैरात्म्यादितत्त्वविषयप्रत्ययाभ्यासे तु यादृशः प्रथमप्रत्ययोत्पादे प्रयत्नः तादृश एव द्वितीयादावपि वैशद्याधिक्यं च दृश्यते । तच्च निरतिशयं भवितुमर्हति । यत्र हि योऽभ्यासः कार्योत्कर्षकरः प्राचः प्रयत्नादधिकप्रयत्नानपेक्षश्च, स तत्र निरतिशयकार्योत्कर्षं करोति, पुटपाकाभ्यास इव सुवर्णस्य रक्तसारतामिति । **अयत्नवत्त्वे**ऽप्यधिकप्रयत्नानपेक्षत्वेऽपि बुद्धेस्तत्पक्षपातित्वेनोदयान्निरतिशयोत्कर्षसिद्धिश्चेत्यर्थः । 'तमेत'मित्यादिभाष्यस्या'ध्यस्य लोकव्यवहार' इति भाष्येण पौनरुक्त्यमाशङ्क्याह—**यदुक्तमिति** । प्रमाकरणानि प्रमाणानि नाविद्यावन्तं प्रेरकत्वेनाश्रयन्त्यनुपयोगादित्याक्षेपाभिप्रायमाह—**तत्त्वपरिच्छेदो हीति** । विरोधाभिप्रायमाह—**नाविद्यावन्तमिति** ।

### कल्पतरुपरिमलः ।

नन्दात्मकस्य शुद्धत्वरूपस्येति शेषः । **अभिव्यक्तं स्वरूपज्ञानमिति** । चरमसाक्षात्काररूपायां वृत्तावभिव्यक्तं स्वरूपज्ञानमेवाविद्यानिवर्तकम्; यथा सूर्यकान्तारूढं सौरं तेज एव तृणदाहकं तद्वत्, नतु वृत्तिरविद्यानिवर्तिका जडत्वादित्याशयेन

त्यक्षादीनि प्रमाणानि शास्त्राणि चेति। उच्यते—देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः। नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति। नचाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः संभवति। नचानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते। नचैतस्मिन्सर्वस्मिन्नसति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते। नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिर-

## भामती।

शास्त्राणि तु पुरुषहितानुशासनपराण्यविद्याप्रतिपक्षतया नाविद्यावद्विषयाणि भवितुमर्हन्तीत्याह—**शास्त्राणि चेति**। समाधत्ते—**उच्यते—देहेन्द्रियादिष्वहंममाभिमानहीनस्य** तादात्म्यतद्धर्माध्यासहीनस्य **प्रमातृत्वानुपपत्तौ सत्यां प्रमाणप्रवृत्त्यनुपपत्तेः। अयमर्थः**—प्रमातृत्वं हि प्रमां प्रति कर्तृत्वं, तच्च स्वातन्त्र्यम्। स्वातन्त्र्यं च प्रमातुरितरकारकाप्रयोज्यस्य समस्तकारकप्रयोक्तृत्वम्। तदनेन प्रमाकरणं प्रमाणं प्रयोजनीयम्। नच स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति। नच कूटस्थनित्यश्चिदात्माऽपरिणामी स्वतो व्यापारवान्। तस्माद्व्यापारवद्बुद्ध्यादितादात्म्याध्यासात् व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत्पुरुषाश्रयत्वं प्रमाणानामिति। **अथ** स्म प्रवर्तिषत प्रमाणानि, किं नश्छिन्नमित्यत आह—**नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति**। व्यवह्रियतेऽनेनेति व्यवहारः फलं, प्रत्यक्षादीनां प्रमाणानां फलमित्यर्थः। 'इन्द्रियाणि' इति, इन्द्रियलिङ्गादीनीति द्रष्टव्यम्, दण्डिनो गच्छन्तीतिवत्। एवं हि 'प्रत्यक्षादि' इत्युपपद्यते। व्यवहारक्रियया च व्यवहार्याक्षेपात्समानकर्तृकता। अनुपादाय यो व्यवहार इति योजना। किमिति पुनः प्रमातोपादत्ते प्रमाणानि? अथ स्वयमेव कस्मान्न प्रवर्तत इत्यत आह—**नचाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः**—प्रमाणानां व्यापारः **संभवति**। न जातु करणान्यनधिष्ठितानि कर्त्रा स्वकार्ये व्याप्रियन्ते, मा भूत्कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिरिति। अथ देह एवाधिष्ठाता कस्मान्न भवति, कृतमत्रात्माध्यासेनेत्यत आह—**नचानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते**। सुषुप्तेऽपि व्यापारप्रसङ्गादिति भावः। स्यादेतत्। यथानध्यस्तात्मभावं वेमादिकं कुविन्दो व्यापारयन्पटस्य कर्ता, एवमनध्यस्तात्मभावं देहेन्द्रियादि व्यापारयन्भविष्यति तदभिज्ञः प्रमातेत्यत आह—**नचैतस्मिन्सर्वस्मिन्**—इतरेतराध्यासे इतरेतरधर्माध्यासे च **असति, आत्मनोऽसङ्गस्य**—सर्वथा सर्वदा सर्वधर्मधर्मिवियुक्तस्य **प्रमातृत्वमुपपद्यते**। व्यापारवन्तो हि कुविन्दादयो वेमादीनधिष्ठाय व्यापारयन्ति, अनध्यस्तात्मभावस्य तु देहादिष्वात्मनो न व्यापार-

## वेदान्तकल्पतरुः।

अहमभिमानहीनस्येति भाष्यपदं व्याचष्टे—**तादात्म्येति**। तादात्म्याध्यासो देहादिधर्म्यैक्याध्यासः। ममाभिमानहीनस्येत्येतद्व्याकरोति—**तद्धर्मेति**। अध्यासहीनस्य प्रमातृत्वानुपपत्तिमुपपादयति—**प्रमातृत्वं हीति**। निर्व्यापारे चिदात्मनि प्रमाणप्रेरणं व्यापारः परोपाधिरध्यस्त इति प्रमाणानामविद्यावत्प्रेर्यत्वमित्यर्थः। **दण्डिन इति**। यथा दण्ड्यदण्डिसमुदायलक्षणद्वारेण समूहिपरो दण्डिशब्दः, एवमिन्द्रियशब्दोऽपि इन्द्रियाऽनिन्द्रियप्रमाणपर इति व्यवहार इति। क्रियामात्रोपादानात्समानकर्तृकक्रियापेक्षक्त्वाप्रत्ययायोगमाशङ्क्यार्थाक्षिप्तकर्तुरुपादानेन परिहरति—**व्यवहारक्रिययेति। व्यवहार्याक्षेपादिति**। व्यवहारिण आक्षेपादित्यर्थः। अनुपादाय व्यवहारो न संभवतीत्यनुपपन्नम्, अनुपादानस्य प्रमातृकर्तृकत्वेनासंभवनस्य व्यवहारकर्तृकत्वेन कर्तृभेदादित्याशङ्क्याह—**अनुपादायेति**। नैवमिह संबन्धोऽनुपादाय न संभवतीति, किं तर्हि? अनुपादाय यो व्यवहारः स न संभवतीति। **किमिति पुनरिति** साङ्ख्यस्य शङ्का। **अथ स्वयमेवेति** स्वभाववादिनः। **अथ देह एवेति** लौकायतिकस्य।

## कल्पतरुपरिमलः।

कर्मधारयोक्तिः। **स्वयमेवेति स्वभाववादिन इति**। वत्सविवृद्ध्यर्थं क्षीरमिव पुरुषभोगापवर्गार्थं प्रधानं स्वयमेव प्रवर्तते इति वदतः साङ्ख्यस्य शङ्कायाः विवरणार्थत्वेन योजयितुं शक्यत्वेऽपि साङ्ख्यमते पुरुषसन्निधानमात्रस्यापेक्षितत्वात्-

---

१ **अत्र विवरणप्रस्थानम्**—देहेन्द्रियादिष्विति संग्रहवाक्यस्य प्रपञ्चः नहीन्द्रियाण्यनुपादायेत्यादिवाक्यम्। तत्र **नहीन्द्रियाण्यनुपादायेति** वाक्यं इन्द्रियव्यापारः प्रत्यक्षप्रयोजक इति, **नचाधिष्ठानमिति वाक्यं** तस्य देहाधिष्ठितैरेवेन्द्रियैरुत्पत्तिरिति, **नचानध्यस्तात्मभावेन देहानासङ्गस्यात्मनः प्रमातृत्वमुपपद्यत इति** वाक्यं तु देहाधिष्ठितेन्द्रियजन्यप्रत्यक्षादिप्रमाश्रयत्वं देहात्मनोः परस्पराध्यासंविना न संभवतीति च बोधयति। तत्रात्मनोऽसङ्गस्येति विशेषणं अध्यासंविना न कथमपि देहात्मनोः संबन्ध इति बोधयितुम्, शुक्तिरजतादाविव केवलनिमित्तकारणत्वं प्रतिक्षेप्तुं चेति मन्तव्यम् इति। **अत्रपक्षे—नचानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते; नचैतस्मिन्सर्वस्मिन्नसतीत्यत्रान्तराद्दतपाठो विरुध्यते**। भामतीप्रस्थानेतु—**देहेन्द्रियादिष्विति** वाक्यं प्रमाकर्तृत्वरूपं प्रमातृत्वं देहाद्यध्यासाक्षेपकमिति। **नचेन्द्रियाण्यनुपादायेति** प्रत्यक्षादिप्रमाणव्यवहारानुपपत्तिर्विशिष्येन्द्रियाध्यासमाक्षिपतीति, **नचानध्यस्तेति** वाक्यं तु विशिष्यदेहादेरात्मन्यध्यासाक्षेपकमिति, **नचैतस्मिन्निति**तु प्रमाश्रयत्वानुपपत्तिरप्यध्यासाक्षेपकमिति बोधयतीत्युपरितनपाठ एवादृतः।

**स्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च । पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति, शब्दादिविज्ञाने प्रतिकूले**

## भामती ।

योगोऽसङ्गत्वादित्यर्थः । आतश्चाध्यासाश्रयाणि प्रमाणानीत्याह—**नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति ।** प्रमायां खलु फले स्वतन्त्रः प्रमाता भवति । अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्चित्स्वभावः प्रमा । कथं च जडस्यान्तःकरणस्य परिणामश्चिद्रूपो भवेत्, यदि चिदात्मा तत्र नाध्यस्येत । कथं चैष चिदात्मकर्तृको भवेत्, यद्यन्तःकरणं व्यापारवच्चिदात्मनि नाध्यस्येत् । तस्मादितरेतराध्यासाच्चिदात्मकर्तृस्थं प्रमाफलं सिध्यति । तत्सिद्धौ च प्रमातृत्वम्, तामेव च प्रमामुररीकृत्य प्रमाणस्य प्रवृत्तिः । प्रमातृत्वेन च प्रमोपलक्ष्यते । प्रमायाः फलस्याभावे प्रमाणं न प्रवर्तेत । तथाच प्रमाणमप्रमाणं स्यादित्यर्थः । उपसंहरति—**तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि । स्यादेतत्**—भवतु पृथग्जनानामेवम् । आगमोपपत्तिप्रतिपन्नप्रत्यगात्मतत्त्वानां व्युत्पन्नानामपि पुंसां प्रमाणप्रमेयव्यवहारा दृश्यन्त इति कथमविद्यावद्विषयाण्येव प्रमाणानीत्यत आह—**पश्वादिभिश्चाविशेषादिति ।** विदन्तु नामागमोपपत्तिभ्यां देहेन्द्रियादिभ्यो भिन्नं प्रत्यगात्मानम् । प्रमाणप्रमेयव्यवहारे तु प्राणभृन्मात्रधर्मान्नातिवर्तन्ते । यादृशो हि पशुशकुन्तादीनामविप्रतिपन्नमुग्धभावानां व्यवहारस्तादृशो व्युत्पन्नानामपि पुंसां दृश्यते । तेन तत्सामान्यात्तेषामपि व्यवहारसमयेऽविद्यावत्त्वमनुमेयम् । चशब्दः समुच्चये । उक्तशङ्कानिवर्तनसहितपूर्वोक्तोपपत्तिः अविद्यावत्पुरुषविषयत्वं प्रमाणानां साधयतीत्यर्थः । एतदेव विभजते—**यथा हि पश्वादय इति ।** अत्रच **शब्दादिभिः श्रोत्रादीनां संबन्धे सति** इति प्रत्यक्षं प्रमाणं दर्शितम् । **शब्दादिविज्ञाने** इति तत्फलमुक्तम् । **प्रतिकूले** इति चानुमानफलम् । **तथाहि**—शब्दादिस्वरूपमुपलभ्य तज्जातीयस्य प्रतिकूलतामनुस्मृत्य तज्जातीयतयोपलभ्यमा-

## वेदान्तकल्पतरुः ।

एवं प्रमाणप्रेरकत्वेनाध्यासं समर्थ्य प्रमाश्रयत्वेनापि समर्थयति—**आतश्चेति ।** अवश्यं चेत्यर्थः । मा भूत्प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिः, एतावता कथं प्रमाणानामध्यासाश्रितत्वमित्याशङ्क्य चिदचिद्रूपसंवलितप्रमाया आश्रयः प्रमातापि तत्स्वभावो भवितुमर्हति, नच चिदचित्संवलनमध्यासमन्तरेणेति संभवन्ति प्रमाणान्यध्यासाश्रयाणीत्याह—**प्रमायां खल्विति । परिणामविशेष** उद्भूतसत्त्वः । **प्रमेयप्रवण** इति सुखादेर्व्यवच्छिनत्ति । परिणामतया च जाड्यमुक्तम् । यदि चिदात्मा तत्रान्तःकरणेऽध्यस्येत, तर्ह्येव तत्परिणामश्चिद्रूपो भवेदित्यर्थः । **तत्सिद्धौ चेति ।** प्रमाश्रयत्वं हि प्रमातृत्वमित्यर्थः । अनेन **नाऽविद्यावन्तमिति** ग्रन्थस्याक्षेपः परिहृतः । **तत्त्वपरिच्छेदो हीति** ग्रन्थस्थं परिहरति—**तामेव चेति । प्रमातृत्वेन चेति ।** अनुपलक्षणे हि प्रमातृत्वशक्तिः स्वयमेव कल्प्या नाध्यासोपपादिका, प्रमा तु चिदचिद्रूपगर्भिणी कल्पयत्यध्यासमिति । **तथाच पारमर्षमिति । शेषलक्षणेऽभिहितम्**—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्' ( जै. अ. ३ पा. ७ सू. ४ ) । **दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते**त्यत्र संशयः; किं साङ्गे प्रधाने यजमान एव कर्ता, उतोद्देशत्यागात्मकप्रधाने एव यजमा-

## कल्पतरुपरिमलः ।

स्वापेक्षामवदतः स्वभाववादिनो मते स्वयमेवेत्येवकारस्य स्वारस्यमस्तीति स्वभाववादिमतपरतया योजितम् । **प्रमाश्रयत्वेनापि समर्थयतीति । नच प्रमातृत्वमन्तरेणेति** भाष्यं पूर्वभाष्यशेषत्वेन प्रतीयमानमपि **प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति** पूर्वभाष्यगतवाक्येन पौनरुक्त्यपरिहाराय युक्त्यन्तरपरत्वेन व्याख्यायत इति भावः । **प्रमाश्रयत्वं हीति । नहीन्द्रियाण्यनुपादायेत्या**दिभाष्ये प्रमातृत्वं प्रमाकरणादिप्रयोक्तृत्वरूपं प्रमाकर्तृत्वमिति प्रमाणप्रेरकत्वेनाध्याससमर्थनार्थमुक्तम्, इह तु चिद्रूपतया परिणामत्वेनाचिद्रूपतया च चिदचित्संवलनरूपा या प्रमा तदाश्रयत्वं केवलचितः केवलाचितश्च न संभवतीति प्रमाश्रयत्वेनाध्याससमर्थनार्थं प्रमातृत्वं प्रमाश्रयत्वमिति व्याख्यायते । यद्यप्युभयथाप्यध्याससमर्थनं प्रत्यगात्मनः कौटस्थ्यं सिद्धं कृत्वा प्रवृत्तं तत्कौटस्थ्ये विप्रतिपद्यमानं प्रति नोपन्यासार्हं; तथापि श्रुतिसिद्धं तत्कौटस्थ्यं प्रामाणिकानां न विप्रतिपत्त्यर्हमिति तात्पर्यम् । **अनेनेति ।** नाविद्यावन्तमिति शङ्काग्रन्थो हि विरोधाभिप्रायः । स तु विद्याया एवाचित्संवलितरूपत्वेनाविद्यागर्भत्वान्नास्ति विरोध इति परिहृत इत्यर्थः । अनुपयोगपरिहारार्थ**स्तामेवेति** ग्रन्थः । अध्यासमपेक्ष्य प्रमाणप्रवृत्तेस्तेन प्रमोपयोगकथनादित्यवतारयति—**तत्त्वेति ।** इह यदि प्रमातृत्वं प्रमाकरणादिप्रेरकत्वरूपं प्रमायां स्वातन्त्र्यं, तदा प्रमाणप्रेरकत्वेनाध्याससमर्थनमेवास्यापि भाष्यस्यार्थः स्यादिति पूर्वभाष्येण पौनरुक्त्यं भवेद्; यदि तु तत्प्रेरणानुकूला शक्तिरिह प्रमातृत्वं तत्राह—**प्रमातृत्वशक्तिरिति । नच**—प्रेरणव्यापारेण कल्पितया शक्त्याध्यास उपपाद्यतामिति–वाच्यम्; प्रथमोपस्थितेन तस्य कल्पकेनैव तदुपपादनसंभवात्, तस्य च कृतत्वादिति भावः । **प्रमा त्विति ।** तुशब्दः प्रमाणप्रेरणव्यापारोपस्थित्यनपेक्षोपस्थितिकत्वविशेषद्योतनार्थः । **उद्देशत्यागात्मकेति ।**

१ अत्र प्रमायाः प्रमातृत्वशक्तिः स्वयमेवोपकल्प्येति पाठान्तरं दृष्टं चेदपि प्रमायां प्रमातृत्वशक्तेः स्वयमक्लृप्तत्वेनानन्वयादसंगतमिति प्रतिभाति.

जाते, ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते; यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति; एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रति प्रवर्तन्ते, अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः। पश्वादीनां च प्रसिद्धोऽविवेकपुरःसरः प्रत्यक्षादिव्यवहारः, तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते। शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसंबन्धमधिक्रियते; तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते; अनुपयोगादधिकारविरोधाच्च।

---

**भामती।**

मस्य प्रतिकूलतामनुमिमीत इति। उदाहरति—**यथा दण्डेति**। शेषमतिरोहितार्थम्। **स्यादेतत्**—भवन्तु प्रत्यक्षादीन्यविद्यावद्विषयाणि, शास्त्रं तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि न देहात्माध्यासेन प्रवर्तितुमर्हति। अत्र खल्वामुष्मिकफलोपभोगयोग्योऽधिकारी प्रतीयते। **तथाच पारमर्षं सूत्रम्**—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात् स्वयं प्रयोगे स्यात्' (अ. ३ पा. ७ सू. १८) इति। नच देहादि भस्मीभूतं पारलौकिकाय फलाय कल्पत इति देहाद्यतिरिक्तं कंचिदधिकारिणमाक्षिपति शास्त्रं, तदवगमश्च विद्येति कथमविद्यावद्विषयं शास्त्रमित्याशङ्क्याह—**शास्त्रीये त्विति**। तुशब्दः प्रत्यक्षादिव्यवहाराद्भिनत्ति शास्त्रीयम्। अधिकारशास्त्रं हि स्वर्गकामस्य पुंसः परलोकसंबन्धं विना न निर्वहतीति तावन्मात्रमाक्षिपेत्, नत्वस्यासंसारित्वमपि, तस्याधिकारेऽनुपयोगात्। प्रत्युत औपनिषदस्य पुरुषस्याकर्तुरभोक्तुरधिकारविरोधात्। प्रयोक्ता हि कर्मणः कर्मजनितफलभोगभागी कर्मण्यधिकारी स्वामी भवति। तत्र कथमकर्ता प्रयोक्ता, कथं वाऽभोक्ता कर्मजनितफलभोगभागी। तस्मादनाद्यविद्यालब्धकर्तृत्वभोक्तृत्वब्राह्मणत्वाद्यभिमानिनं नरमधिकृत्य विधिनिषेधशास्त्रं प्रवर्तते। एवं वेदान्ता अप्यविद्यावत्पुरुषविषया एव। नहि प्रमात्रादिविभागादृते तदर्थाधिगमः। ते त्वविद्यावन्तमनुशासन्तो निर्मृष्टनिखिलाविद्यमनुशिष्टं स्वरूपे व्यवस्थापयन्तीत्येतावानेषां विशेषः। तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति सिद्धम्।

**वेदान्तकल्पतरुः।**

मस्य कर्तृत्वं अङ्गेषु यथायथमृत्विजामिति। **तत्रेदं पूर्वपक्षसूत्रम्**—साङ्गप्रधानस्य प्रयोगेऽनुष्ठाने स्वयं यजमानः कर्ता स्यात्, यतः **शास्त्रगम्यं** फलं **प्रयोक्तरि** प्रतीयते, कुतः,? **तल्लक्षणत्वाच्छन्दप्रमाणकत्वादर्थस्य**। स्वर्गकामो यजेतेति स्वर्गोद्देशेन भावनां विदधदाख्यातं भावनाक्षिप्तकर्तृसंबद्धं फलमवगमयति। आत्मनेपदेन च फलस्य कर्तृगामिता गीयते। साङ्गं प्रधानं फलसाधनमिति सर्वत्र याजमानत्वे **प्राप्ते, सिद्धान्तः—अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि** (जै. अ. ३ पा. ५ सू. २०)। यदि यजमान एव सर्वत्र कर्ता स्यात् तर्हि दक्षिणाभिः परिक्रयणमृत्विजामनर्थकं स्यात्। स्वस्मिंश्च परिक्रयो विप्रतिषिद्धः। अत आध्वर्यवादिकमृत्विग्भिरेव कार्यं, तस्मिंश्च परिक्रयद्वारा प्रयोजककर्तृत्वाद्यजमान एव साङ्गफलभागिति। अत्र च पूर्वपक्षसिद्धान्तयोः कर्तृगामिनि फले न विगानमिति पूर्वपक्षसूत्रमपि तावत्यंशे प्रमाणमित्युदाहृतम्। अशनायाद्यतीतपदसूचिताकर्तृत्ववैपरीत्यमाह—**प्रयोक्ता हीति**। असंसार्यात्मपदसूचिताभोक्तृत्ववैपरीत्यमाह—**कर्मजनितेति**। अपेतब्रह्मेत्याद्युक्तानधिकाररूपवैपरीत्यमाह—**अधिकारीति**। अधिकारित्वस्य व्याख्यानं **स्वामीति**। **अकर्ता** कर्तृत्वशक्तिरहितः। **ननु** ब्रह्मज्ञानेन कर्मविधयो यदि यदा कदापि

**कल्पतरुपरिमलः।**

यजमानद्रव्यस्वत्वत्यागोऽन्येन कर्तुमशक्य इति तस्मिन्प्रधाने यजमानस्यैव कर्तृत्वं, तथैव ऋत्विगानमनार्थे दक्षिणादानेपि। **उपलक्षणमेतत्**, फलप्रतिग्रहयोग्यतापादकतपःप्रभृतेश्च। एवकारस्तदितराङ्गकलापव्यवच्छेदार्थः। **भावनाक्षिप्तेति**। **ननु**—पचन्ति पाचका इत्यत्र भावनाक्षिप्तपाचकरूपकर्तृगामित्वं पाकफलस्य नास्तीति दृष्टमिति—**चेद्, न**; तत्राकर्तृगामिक्रियाफलार्थकपरस्मैपदबलात्पाकफलस्यान्यगामित्वेऽप्यत्र बाधकाभावेनौत्सर्गिककर्तृगामित्वत्यागायोगादिति भावः। न केवलं कर्तृगामित्वे बाधकाभावमात्रं, तत्र साधकान्तरमप्यस्तीत्याह—**आत्मनेपदेन चेति**। **अनर्थकं स्यादिति**। भृतिदानं हि स्वफलार्थं कर्म परैः कारयितुमित्येवं लोके दृष्टार्थमवगतम्; अतो दृष्टार्थपरिक्रयविधिबलात् परिक्रीतैः कर्म कारणीयमिति नियमोऽवसीयत इति भावः। **आध्वर्यवादिकमिति**। आध्वर्यवादिसमाख्यायुक्तकाण्डाम्नातमङ्गजातं समाख्यावशादध्वर्य्वादिभिः कर्तव्यमित्यधिकरणान्तरव्युत्पादनीयार्थस्य बुद्धिसौकर्यार्थमिहोपन्यासः। **प्रयोजककर्तृत्वादिति**। स्वतन्त्रप्रयोजकसाधारणकर्तृसामान्यपरं साङ्गप्रधानानुष्ठापकप्रयोगविधिगतमाख्यातमिति भावः। अप्रयोक्तृत्वेन पौनरुक्त्यपरिहारायाह—**अकर्ता कर्तृत्वशक्तिरहित इति**। **पातकं ब्रह्मवधादीति**। अत्र पातकशब्देन

प्राक्च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते । तथाहि—'ब्राह्मणो यजेत' इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा—पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति । तथा देहधर्मान्-स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि, लङ्घयामि चेति । तथेन्द्रियधर्मान्-मूकः, काणः, क्लीबः, बधिरः, अन्धोऽहमिति । तथाऽन्तःकरणधर्मान्-कामसंकल्पविचिकित्साध्यवसायादीन् । एवमहंप्रत्ययिन-

## भामती ।

**स्यादेतत्**—यद्यपि विरोधानुपयोगाभ्यामौपनिषदः पुरुषोऽधिकारे नापेक्ष्यते; तथाप्युपनिषद्भ्योऽवगम्यमानः शक्नोत्यधिकारं निरोद्धुम् । तथाच परस्परापहतार्थत्वेन कृत्स्न एव वेदः प्रामाण्यमपजह्यादित्यत आह—**प्राक् च तथाभूतात्मेति** । सत्यमौपनिषदपुरुषाधिगमोऽधिकारविरोधी, तस्मात्तु पुरस्तात्कर्मविधयः स्वोचितं व्यवहारं निर्वर्तयन्तो नानुपजातेन ब्रह्मज्ञानेन शक्या निरोद्धुम् । नच परस्परापहतिः; विद्याविद्यावत्पुरुषभेदेन व्यवस्थोपपत्तेः । यथा 'न हिंस्यात्सर्वा भूतानि' इति साध्यांशनिषेधेऽपि 'श्येनेनाभिचरन् यजेत' इति शास्त्रं प्रवर्तमानं न हिंस्यादित्यनेन न विरुध्यते, तत्कस्य हेतोः, पुरुषभेदादिति । अवजितक्रोधारातयः पुरुषा निषेधेऽधिक्रियन्ते, क्रोधारातिवशीकृतास्तु श्येनादिशास्त्र इति । अविद्यावत्पुरुषविषयत्वं नातिवर्तत इति यदुक्तं तदेव स्फोरयति—**तथाहीति** । **वर्णाध्यासः**—'राजा राजसूयेन यजेत' इत्यादिः । **आश्रमाध्यासः**—'गृहस्थः सदृशीं भार्यां विन्देत्' इत्यादिः । **वयोऽध्यासः**—'कृष्णकेशोऽग्नीनादधीत' इत्यादिः । **अवस्थाध्यासः**—'अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्यागः' इति । आदिग्रहणं महापातकोपपातकसंकरीकरणापात्रीकरणमलिनीकरणाद्यध्यासोपसंग्रहार्थम् । तदेवमात्मानात्मनोः परस्पराध्यासमाक्षेपसमाधानाभ्यामुपपाद्य प्रमाणप्रमेयव्यवहारप्रवर्तनेन च दृढीकृत्य तस्यानर्थहेतुतामुदाहरणप्रपञ्चेन प्रतिपादयितुं तत्स्वरूपमुक्तं स्मारयति—**अध्यासोनाम अतस्मिंस्तद्बुद्धिरित्यवोचाम** । 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इत्यस्य संक्षेपाभिधानमेतत् । तत्राहमिति धर्मितादात्म्याध्यासमात्रं ममेत्यनुत्पादितधर्माध्यासं नानर्थहेतुरिति धर्माध्यासमेव ममकारं साक्षादशेषानर्थसंसारकारणमुदाहरणप्रपञ्चेनाह—**तद्यथा पुत्रभार्यादिष्विति** । देहतादात्म्यमात्मन्यध्यस्य देहधर्मं पुत्रकलत्रादिस्वाम्यं च कृशत्वादिवदारोप्य आह—**अहमेव विकलः सकल इति** । स्वस्य खलु साकल्येन स्वाम्यसाकल्यात् स्वामीश्वरः सकलः संपूर्णो भवति । तथा स्वस्य वैकल्येन स्वाम्यवैकल्यात् स्वामीश्वरो विकलोऽसंपूर्णो भवति । बाह्यधर्मा ये वैकल्यादयः स्वाम्यप्रणालिकया संचारिताः शरीरे तानात्मन्यध्यस्यतीत्यर्थः । यदा च परोपाध्यपेक्षे देहधर्मे स्वाम्ये इयं गतिः, तदा कैव कथानौपाधिकेषु देहधर्मेषु कृशत्वादिष्वित्याशयवानाह—**तथा देहधर्मानिति** । देहादेरप्यन्तरङ्गाणामिन्द्रियाणामध्यस्तात्मभावानां धर्मान्मूकत्वादीन् ततोऽप्यन्तरङ्गस्यान्तःकरणस्य अध्यस्तात्मभावस्य धर्मान्कामसंकल्पादीन् आत्मन्यध्यस्यतीति योजना । तदनेन प्रपञ्चेन धर्माध्यासमुक्त्वा तस्य मूलं धर्म्यध्यासमाह—**एवमहंप्रत्ययिनम्**—अहंप्रत्ययो वृत्तिर्यस्मिन्नन्तःकारणादौ

## वेदान्तकल्पतरुः ।

बाधिष्यन्ते, तर्ह्यप्रमाणं स्युस्तत्राह-**नच परस्परेति** । **महापातकेति** । **महापातकं** ब्रह्मवधादि । **उपपातकं** गोवधादि । **संकरीकरणादीनि** च मनुनोक्तानि । 'खराश्वोष्ट्रवराहाणामजाविकवधस्तथा । संकरीकरणं ज्ञेयं मीनाऽहिमहिषस्य च ॥ निन्दितेभ्यो धनाऽऽदानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्याभिभाषाणम्' 'मनुस्मृतिः ( अ. ११ श्लो. ६८–६९ ) 'कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥' ( मनु-अ. ११ श्लो. ७० ) इति । आदिशब्दात्तदुक्तं जातिभ्रंशकरादि गृह्यते । 'ब्राह्मणस्य रुजः कृत्यं घ्रातिरघ्रेयमद्ययोः । जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं हि तत् ॥' ( मनु. अ. ११ श्लो. ६९ ) इति । अभ्यर्हितत्वाद्धर्म्यध्यासः प्रथमं वक्तव्य इत्याशङ्क्याह—**तत्राहमिति** । गृहीतविवेकत्वात्पुत्रादीनामात्मनि तद्धर्माध्यासासंभवमाशङ्क्याह—**देहतादात्म्यमिति** । देहगतस्वामित्वस्यारोपे कथं साकल्यवैकल्यारोपसिद्धिस्तत्राह—**स्वस्य खल्विति** । देहगतस्वामित्वस्य ये सकलत्वविकलत्वे ते चेदात्मन्यध्यस्ते, कथं बाह्यग्रहणं भाष्ये ? तत्राह—**बाह्येति** ।

## कल्पतरुपरिमलः ।

महापातकमतिपातकं समपातकं चेति त्रिविधं पातकं गृह्यते । **जातिभ्रंशकरादि** इत्यादिशब्देन प्रकीर्णकं गृह्यते । अनुक्रान्ताष्टविधपापानन्तर्भूतं पापं **प्रकीर्णकम्** । एवमेकैकसंज्ञया केषांचित्केषांचित्पापानां क्रोडीकारस्तेषु तेष्वेकरूपनरकादिफलप्रायश्चित्तोपदेशार्थः । **देहगतस्वामित्वस्येति** । **ननु**—पुत्रभार्यादिस्वामित्वं देहगतं न भवति; तस्य पुत्रभार्याद्युपचाराधीनभोगाभावात्, तदधीनभोगभाक्त्वव्यतिरेकेण तद्वैकल्यसाकल्यप्रयुक्तवैकल्यसाकल्यार्हस्य स्वामित्वस्याभावात्—

मशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां

## भामती ।

सोऽयमहंप्रत्ययी तम् । **स्वप्रचारसाक्षिणि**—अन्तःकरणप्रचारसाक्षिणि, चैतन्योदासीनताभ्यां, **प्रत्यगात्मन्यध्यस्य** । तदनेन कर्तृत्वभोक्तृत्वे उपपादिते । चैतन्यमुपपादयति—**तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण** अन्तःकरणादिविपर्ययेण, **अन्तःकरणा**द्यचेतनं तस्य **विपर्ययः** चैतन्यं तेन । इत्थंभूतलक्षणे तृतीया । **अन्तःकरणादिष्वध्यस्यति** । तदनेनान्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारोऽहंकारास्पदं संसारी सर्वानर्थसंभारभाजनं जीवात्मा इतरेतराध्यासोपादानः, तदुपादानश्चाध्यास इत्यनादित्वाद्बीजाङ्कुरवन्नेतरेतराश्रयत्वमित्युक्तं भवति । प्रमाणप्रमेयव्यवहारदृढीकृतमपि शिष्यहिताय स्वरूपाभिधानपूर्वकं सर्वलोकप्रत्यक्षतयाऽध्यासं सुदृढीकरोति—**एवमयमनादिरनन्तः**—तत्त्वज्ञानमन्तरेणाशक्यसमुच्छेदः । अनाद्यनन्तत्वे हेतुरुक्तः—**नैसर्गिक इति** । **मिथ्याप्रत्ययरूपः**—मिथ्याप्रत्ययानां रूपमनिर्वचनीयत्वं तदस्य स तथोक्तः । अनिर्वचनीय इत्यर्थः । प्रकृतमुपसंहरति—**अस्यानर्थहेतोः प्रहाणाय** । विरोधिप्रत्ययं विना कुतोऽस्य प्रहाणमित्यत उक्तम्—**आत्मैकत्वविद्याप्रतिपत्तये** । **प्रतिपत्तिः** प्राप्तिः तस्यै, नतु जपमात्राय, नापि कर्मसु प्रवृत्तये, **आत्मैकत्वं** विगलितनिखिलप्रपञ्चत्वं आनन्दरूपस्य सतः, तत्प्रतिपत्तिं निर्विचिकित्सां भावयन्तो वेदान्ताः समूलघातमध्यासमुपघ्नन्ति । **एतदुक्तं भवति**—अस्मत्प्रत्ययस्यात्मविषयस्य समीचीनत्वे सति ब्रह्मणो ज्ञातत्वान्निष्प्रयोजनत्वाच्च न जिज्ञासा स्यात् । तदभावे च न ब्रह्मज्ञानाय वेदान्ताः पठ्येरन् । अपित्वविवक्षितार्था जपमात्रे उपयुज्येरन् । नहि तदौपनिषदात्मप्रत्ययः प्रमाणतामश्नुते । न चासावप्रमाणमभ्यस्तोऽपि वास्तवं कर्तृत्वभोक्तृत्वाद्यात्मनोऽपनेतुमर्हति । आरोपितं हि रूपं तत्त्वज्ञानेनापोद्यते, नतु वास्तवमतत्त्वज्ञानेन । नहि रज्ज्वा रज्जुत्वं सहस्रमपि सर्पधाराप्रत्यया अपवदितुं समुत्सहन्ते । मिथ्याज्ञानप्रसञ्जितं च स्वरूपं शक्यं तत्त्वज्ञानेनापवदितुम् । मिथ्याज्ञानसंस्कारश्च सुदृढोऽपि तत्त्वज्ञानसंस्कारेणादरनैरन्तर्यदीर्घकालतत्त्वज्ञानाभ्यासजन्मनेति । **स्यादेतत्**—प्राणाद्युपासना अपि वेदान्तेषु बहुलमुपलभ्यन्ते, तत्कथं सर्वेषां वेदान्तानामात्मैकत्वप्रतिपादनमर्थ इत्यत आह—**यथाचायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः** । शरीरमेव शरीरकं तत्र निवासी शारीरको जीवात्मा, तस्य त्वंपदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपतामीमांसा या सा तथोक्ता । **एतावानत्रार्थसंक्षेपः**—**यद्यपि** च स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य

## वेदान्तकल्पतरुः ।

साक्षिशब्दार्थमाह—**चैतन्योदासीनताभ्यामिति** । सक्रियोपाधेरात्मन्यारोपादात्मनि कर्तृत्वभोक्तृत्वे उपपादिते इत्यर्थः । **चैतन्यमिति** । अन्तःकरणादिगतमित्यर्थः । साक्षिणि इति निर्देशात् शुद्धेऽध्यास इति भ्रममपनयति—**तदनेनेति** । **प्रकृतमिति** । उपोद्घातरूपेणाध्यासं वर्णयतो भाष्यकारस्य प्रथमं बुद्धिस्थत्वेन प्रकृतं विषयप्रयोजनमित्यर्थः । एवमध्यासे समर्थिते सति प्रसिद्धत्वादजिज्ञास्यत्वमाक्षेपावसरोक्तं निरस्तमित्याह—**एतदुक्तमिति** । **पठ्येरन्निति** भाष्यगतारभ्यन्त इतिपदस्य व्याख्या । अतत्परवेदान्तप्रत्ययो यद्यप्यप्रमा; तथाप्यभ्यस्तो वास्तवकर्तृत्वादिनिवर्तक इत्याशङ्क्याह—**नचासाविति** । अधिकरणमारचयति—**एतावानिति** । वेदान्तशास्त्रमनारभ्यमारभ्यं वेति विषयप्रयोजनासंभवसंभवाभ्यां संशयः । वेदान्तैरध्ययनविधिना सामान्यतः प्रयोजनवदर्थावबोधपरतां नीतैर्विशेषतश्च संदिह्यमानार्थतया विचाराकाङ्क्षैराक्षेपादस्याधिकरणस्य श्रुतिसङ्गतिः । समन्वयाद्यशेषविचारहेतुत्वाच्छास्त्रप्रथमाध्यायप्रथमपादसङ्गतयः । आशङ्कापनयनपूर्वकं पूर्वपक्षमाह—**यद्यपीत्यादिना** । अविवक्षितार्थत्वं वेदान्तानां शङ्कितुमशक्यम् ।

---

१ अभ्युदयार्थसगुणोपासनादीनामपि वेदान्तप्रतिपाद्यत्वेऽपि तत्पराणां वाक्यानामध्यारोपापवादन्यायेन निर्गुणस्वरूपप्रतिपत्त्यैव पर्यवसानात् पशुकामस्यापि गोदोहनादेः दर्शपूर्णमासाङ्गाप्प्रणयनश्रितत्वेन दर्शपूर्णमासेप्युपयोगवत्तेषामपि ज्ञानद्वारा मुक्तावप्युपयोगात्सर्वे वेदान्ता इत्युक्तमित्यवसेयम् । २ 'तद्गुणसारत्वात्, यथाच तक्षोभयथा, तदनन्यत्वमारम्भणशब्दादिभ्य' इत्याद्यधिकरणैः साधयिष्यमाणस्यापि प्रपञ्चमिथ्यात्वस्येह स्मरणं शास्त्रारम्भोपयोगितया नवमाध्यायसिद्धाध्ययनदृष्टार्थत्वस्याथातो धर्मजिज्ञासेत्यत्रेवात्र न परिदुष्यति । अथवा औदुम्बराधिकरणन्यायेन पर्णमय्यधिकरणन्यायेन च प्रकारभेदमादाय पौनरुक्त्यपरिहारः । यथाहि—"औदुम्बरो यूपो भवतीति" वाक्यशेषतया श्रूयमाणस्य "ऊर्ग्वा उदुम्बरः ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनामोत्यूर्जोवरुन्धे" इति वाक्यस्य फलसमर्पकत्वे गौरवापादकानुपपन्नगुणफलसंबन्धविधानं, एवमेव "यस्य पर्णमयी जुहूर्भवतीति" वाक्यशेषतया श्रूयमाणस्य "न स पापं श्लोकं शृणोतीति" वाक्यस्य फलसमर्पकत्वेऽपि तदित्यौदुम्बराधिकरणन्यायेनैव गतार्थत्वेऽपि यथा द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः स्यादित्यधिकरणप्रवृत्तिः, रात्रिसत्रन्यायावलम्बेनाशङ्कान्तरनिराकरणाद्विमुखभेदसत्वादेवम्—इति **न्यायरक्षामणिः** ।

**प्रदर्शयिष्यामः । वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्—**

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

### भामती ।

वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितं; **यद्यपि च 'अविशिष्टस्तु वाक्यार्थः'** इति न्यायात् मन्त्राणामिव वेदान्तानामर्थपरत्वमौत्सर्गिकं; **यद्यपिच** वेदान्तेभ्यश्चैतन्यानन्दघनः कर्तृत्वभोक्तृत्वरहितो निष्प्रपञ्च एकः प्रत्यगात्मावगम्यते; **तथापि** कर्तृत्वभोक्तृत्वदुःखशोकमोहमयमात्मानमवगाहमानेनाहंप्रत्ययेन संदेहबाधविरहिणा विरुध्यमाना वेदान्ताः स्वार्थात्प्रच्युता उपचरितार्था वा जपमात्रोपयोगिनो वेत्यविवक्षितस्वार्थाः । तथाच तदर्थविचारात्मिका चतुर्लक्षणी शारीरकमीमांसा नारब्धव्या। नच सर्वजनीनाहमनुभवसिद्ध आत्मा संदिग्धो वा सप्रयोजनो वा, येन जिज्ञास्यः सन् विचारं प्रयुञ्जीतेति **पूर्वः पक्षः । सिद्धान्तस्तु**—भवेदेतदेवं यद्यहंप्रत्ययः प्रमाणम् । तस्य तूक्तेन क्रमेण श्रुत्यादिबाधकत्वानुपपत्तेः, श्रुत्यादिभिश्च समस्ततीर्थकरैश्च प्रामाण्यानभ्युपगमादध्यासत्वम् । एवं वेदान्ता नाविवक्षितार्थाः, नाप्युपचरितार्थाः किंतूक्तलक्षणाः । प्रत्यगात्मैव तेषां मुख्योऽर्थः । तस्य च वक्ष्यमाणेन क्रमेण संदिग्धत्वात्, प्रयोजनवत्त्वाच्च युक्ता जिज्ञासा,—इत्याशयवान्सूत्रकारः तज्जिज्ञासामसूत्रयत्—

**अथातो ब्रह्मजिज्ञासेति** । जिज्ञासया संदेहप्रयोजने सूचयति । तत्र साक्षादिच्छाव्याप्यत्वाद्ब्रह्मज्ञानं कण्ठोक्तं प्रयोजनम् । नच कर्मज्ञानात्पराचीनमनुष्ठानमिव ब्रह्मज्ञानात्पराचीनं किंचिदस्ति, येनैतदवान्तरप्रयोजनं भवेत्, किंतु ब्रह्ममीमांसाख्यतर्केतिकर्तव्यतानुज्ञातविषयैर्वेदान्तैराहितं निर्विचिकित्सं ब्रह्मज्ञानमेव समस्तदुःखोपशमरूपमानन्दैकरसं परमं प्रयोजनम्। तमर्थमधिकृत्य हि प्रेक्षावन्तः प्रवर्तन्तेतराम्। तच्च प्राप्तमप्यनाद्यविद्यावशादप्राप्तमिवेति प्रेप्सितं भवति। यथा स्वग्रीवागतमपि ग्रैवेयकं कुतश्चिद्भ्रमान्नास्तीति मन्यमानः परेण प्रतिपादितमप्राप्तमिव प्राप्नोति। जिज्ञासा तु संशयस्य कार्यमिति स्वकारणं संशयं सूचयति। संशयश्च मीमांसारम्भं प्रयोजयति। तथाच शास्त्रे प्रेक्षावत्प्रवृत्तिहेतुसंशयप्रयोजनसूचनात् युक्तमस्य सूत्रस्य शास्त्रादित्वमित्याह भगवान्भाष्यकारः—**वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य** अस्माभिः **इदमादिमं सूत्रम्**। पूजितविचारवचनो मीमांसाशब्दः। परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलता विचारस्य पूजितता।

### वेदान्तकल्पतरुः ।

अध्ययनविधेर्दृष्टार्थत्वस्य तुल्यत्वात् । नच कार्यपरत्वात्सर्ववेदस्य सिद्धरूपे ब्रह्मणि वेदान्तानामप्रामाण्यशङ्का; लोकवेदयोर्वाक्यार्थस्याविशेषेण सिद्धरूपे ब्रह्मणि वेदान्तानां मन्त्राणामिव देवतादौ प्रामाण्यसंभवात् । नाप्यनुत्पत्तिलक्षणाप्रामाण्यं शक्यम्; ब्रह्मात्मैक्यबोधित्वाद्वेदान्तानाम्। अतो नानारभ्यं शास्त्रमित्यर्थः। परिहरति—**तथापीति**। प्रमाणस्वरूपपर्यालोचनेन मीमांसानारम्भमुक्त्वा प्रमेयस्वरूपालोचनयापि तमाह—**नचेति । वक्ष्यमाणेनेति**। तत्पुनर्ब्रह्मेत्यादावित्यर्थः ॥

**अथातो ब्रह्मजिज्ञासा** ॥ १ ॥ वृत्तिव्यक्तस्वरूपज्ञानमभिप्रेत्याह—**तत्र साक्षादिति** । इष्यमाणत्वेन ज्ञानस्य प्रयोजनसूचनमुपपाद्य संशयसूचनमुपपादयति—**जिज्ञासा त्विति । सा हीति** । सा न्यायात्मिका मीमांसा अनेन

### कल्पतरुपरिमलः ।

**इति चेद्, न;** तदुपचाराधीनयोषादिभाक्तत्वरूपस्य तथाभूतस्य स्वामित्वस्य देहेपि संभवात् । **प्रमेयस्वरूपालोचनयापि तमाहेति । नच**—अहंप्रत्ययसिद्धेन कर्तृत्वभोक्तृत्वादिना निश्चितस्यापि भोक्तृरूपस्य नित्यत्वविभुत्वादिना संदिग्धतया विषयत्वं स्यादिति—वाच्यम्; सिद्धान्ते तन्निर्णयस्य मोक्षफलत्वानङ्गीकारादिति भावः ॥

**अथातो ब्रह्मजिज्ञासा** ॥ १ ॥ **ननु** सूत्रे जिज्ञासापदप्रकृतिप्रतिपाद्यं किम् अखण्डानन्दरूपब्रह्मस्वरूपज्ञानं, किंवा विचारसाध्यं ब्रह्मनिर्णयरूपं वृत्तिज्ञानम् ? **नाद्यः;** संशयानाक्षेपेण विषयसूचनालाभप्रसङ्गात् । नहि बहुशो दृष्टेऽपि पुनः पुनरुदित्वरी विषयसौन्दर्यप्रयुक्ता जिज्ञासा संशयमूला । **न द्वितीयः;** प्रयोजनसूचनालाभप्रसङ्गादित्याशङ्क्योभयमपि विवक्षितं, सौत्रपदानाम् अनेकार्थत्वस्यालङ्कारत्वादित्याह—**वृत्तिव्यक्तेति** । वृत्तिश्च व्यक्तस्वरूपज्ञानं चेति द्वन्द्वैकवद्भावः ।

---

१ **अथातो ब्रह्मजिज्ञासा**—अत्र जिज्ञासापदं 'इदमतो जिज्ञासन्ते' 'इदं जिज्ञास्यम्' 'धर्मं जिज्ञासितुमिच्छेत्' इत्याद्यभियुक्तप्रयोगानुसारेणावयवार्थपरित्यागेन विचारे रूढमित्याशङ्क्य नायं जिज्ञासाशब्दः परित्यक्तावयवार्थः केवलविचारपर्यायः प्रयुज्यते, किंतु विचारसाध्यज्ञानविषयेच्छापरः, नह्युपदेशसाध्यज्ञानविषयेच्छायां जिज्ञासापदप्रयोगो दृश्यते इत्यन्तर्णीतविचारपरकमपि तत्पदं प्राधान्येनेच्छामेव बोधयतीति पञ्चपादिकादिषूपपादनात् भामतीप्रस्थान इव विवरणप्रस्थानेऽपि साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मजिज्ञासा भवतीत्येव शाब्दः सूत्रार्थः, नतु जिज्ञासापदेन विचारलक्षणया ब्रह्मविचारः कर्तव्य इति। सूचितश्चायमर्थः 'अधिक्रियायोग्यस्य ब्रह्मणस्तज्ज्ञानस्य वा प्राधान्येनानिर्देशात् प्रधानस्य चेच्छाया अनधिकार्यत्वात्' इति वर्णयता **पद्मपादाचार्येण** । तस्माद्ब्रह्म जिज्ञासितव्यमित्यादिकं तु अन्तर्णीतविचारविधेयत्वाभिप्रायं इत्युपसंहारभाष्यव्याख्यानमप्यतएवोपपद्यते । **यत्तु रामानन्दीये**—तस्माद्ब्रह्म जिज्ञासितव्यमिति भाष्यव्याख्यानावसरे 'अत्र सन्प्रत्ययस्य विचारलक्षकत्वं तव्यप्रत्ययेन सूच्यते' इत्युक्तम्, तत्तव्यप्रत्ययघटितपदाभिप्रायं, ज्ञाधातुना केवलज्ञानमेव विवक्ष्यत इति मताभिप्रायं **चेति द्रष्टव्यम्** ।

**तत्राथशब्द आनन्तर्यार्थः परिगृह्यते, नाधिकारार्थः; ब्रह्मजिज्ञासाया अनधिकार्यत्वात् । मङ्ग-**

## भामती ।

तस्या मीमांसायाः शास्त्रम्, सा ह्यनेन शिष्यते शिष्येभ्यो यथावत्प्रतिपाद्यत इति । सूत्रं च बह्वर्थसूचनात् भवति । **यथाहुः—** 'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः ॥' इति । तदेवं सूत्रतात्पर्यं व्याख्याय तस्य प्रथमपदमथेति व्याचष्टे—**तत्राथशब्द आनन्तर्यार्थः परिगृह्यते** । तेषु सूत्रपदेषु मध्ये योऽयमथशब्दः स आनन्तर्यार्थ इति योजना । **नन्वधिकारार्थो**ऽप्यथशब्दो दृश्यते, यथा 'अथैष ज्योतिः' इति वेदे, यथा वा लोके 'अथ शब्दानुशासनम्' 'अथ योगानुशासनम्' इति, तत्किमत्राधिकारार्थो न गृह्यत इत्यत आह—**नाधिकारार्थः**; कुतः ? **ब्रह्मजिज्ञासाया अनधिकार्यत्वात्** । जिज्ञासा तावदिह सूत्रे ब्रह्मणश्च तज्ज्ञानाच्च शब्दतः प्रधानं प्रतीयते । नच—यथा 'दण्डी प्रैषानन्वाह' इत्यत्राप्रधानमपि दण्डशब्दार्थो विवक्ष्यते, एवमिहापि ब्रह्मतज्ज्ञाने इति—युक्तम्; ब्रह्ममीमांसाशास्त्रप्रवृत्त्यङ्गसंशयप्रयोजनसूचनार्थत्वेन जिज्ञासाया एव विवक्षितत्वात् । तदविवक्षायां तदसूचनेन काकदन्तपरीक्षायामिव ब्रह्ममीमांसायां न प्रेक्षावन्तः प्रवर्तेरन् । नहि तदानीं ब्रह्म वा तज्ज्ञानं वाभिधेयप्रयोजने भवितुमर्हतः; अनध्यस्ताहंप्रत्ययविरोधेन वेदान्तानामेवंविधेऽर्थे प्रामाण्यानुपपत्तेः, कर्मप्रवृत्त्युपयोगितयोपचरितार्थानां वा जपोपयोगिनां वा 'हुम्' इत्येवमादीनामविवक्षितार्थानामपि स्वाध्यायाध्ययनविध्यधीनग्रहणत्वस्य संभवात् । तस्मात्संदेहप्रयोजनसूचनी जिज्ञासा इह पदतो वाक्यतश्च प्रधानं विवक्षितव्या । नच तस्या अधिकार्यत्वम्; अप्रस्तूयमान-

## वेदान्तकल्पतरुः ।

ग्रन्थेन शिष्यत इत्यर्थः । विषयप्रयोजनब्रह्मस्वरूपप्रमाणयुक्तिसाधनफलविचाराणां च प्रतिज्ञानाद्बह्वर्थसूचनता । **लघूनि** असंदिग्धार्थानि । सांशयिकं हि नानार्थस्फोरकत्वेन गुरु । सूचितार्थत्वे हि मुख्यार्थस्याप्यवश्यंभावित्वाद्बह्वर्थत्वसिद्धिः । बहूनामप्रकृतत्वात्तत्रेति निर्धारणायोगमाशङ्क्याह—**तेष्विति** । अथैष ज्योतिरित्यत्रापूर्वसंज्ञायोगिविधास्यमानकर्मप्रारंभार्थोऽथशब्दः । अधिकरणं तु ( जै. अ. २ पा. २ सू. २२ ) गुणोपसंहारेऽनुक्रमिष्यते । प्रधानस्य जिज्ञासायाः शास्त्रेणाप्रतिपाद्यमानत्वात्तत्प्रतिपादनप्रारंभार्थो मा भूत्, ब्रह्मतज्ज्ञानप्रारंभार्थो भवत्वित्याशङ्क्याह—**नचेति** । 'दण्डी प्रैषानि-' त्यत्र हि 'मैत्रावरुणः प्रेष्यति चान्वाहेति' मैत्रावरुणस्य प्रैषानुवचने प्राप्तत्वादविवक्षा, इह तु जिज्ञासाया नाविवक्षा कारणम्; प्रत्युत तदविवक्षायां विषयप्रयोजनसूचनं न स्यादित्यर्थः । **ननु** किं संशयसूचनेन ? निर्दिष्टे ब्रह्मतज्ज्ञाने एव विषयप्रयोजने सिध्यतस्तत्राह—**नहीति** । **अप्रस्तूयमानत्वात्** प्रत्यधिकरणमप्रतिपाद्यमानत्वात् । 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्ये'ति सूत्रे 'माङ्माने' इत्यस्य ङानुबन्धस्य धातोर्नान्तत्वं निपातितम् । अस्य च पूजितविचारार्थत्वं प्रसिद्धिबला-

## कल्पतरुपरिमलः ।

स्वरूपज्ञानविवक्षायां ब्रह्मणो यज्ज्ञानं तदिच्छेत्यर्थकथने राहोः शिर इतिवदुपचारो द्रष्टव्यः । **ब्रह्मतज्ज्ञानप्रारम्भार्थ इति** । ब्रह्म तावत् स्वरूपतो जन्मादिसूत्रेण ( ब्र. अ. १ पा. १ सू. २ ) प्रयोजनरूपतया फलाध्यायेन च प्रतिपाद्यते । तद्विषये प्रमाणयुक्ती ब्रह्मतज्ज्ञानेत्यत्र करणव्युत्पत्तिमता ज्ञानपदेन संगृहीते समन्वयाविरोधलक्षणाभ्यां प्रतिपाद्येते । मुक्तिसाधनब्रह्मज्ञानं भावव्युत्पत्तिमता तेनैव ज्ञानपदेन संगृहीतं सपरिकरं साधनाध्यायेन प्रतिपाद्यते । तस्मादिहाथशब्दस्य ब्रह्मतज्ज्ञानप्रतिपादनप्रारम्भार्थत्वं वक्तुं शक्यमिति शङ्कार्थः । **दण्डी प्रैषानिति** । इष्टिषु प्रैषस्याध्वर्युः कर्ता, अनुवचनस्य होता; तद्विकृतौ पशावुभयोरपि मैत्रावरुणः कर्ता विधीयते **मैत्रावरुणः प्रैष्यति चान्वाह चेति** । तेन प्राप्तत्वाद्दण्डिवाक्ये मैत्रावरुणकर्तृके प्रैषानुवचने विध्यन्वयित्वेन न विवक्षा, किंतु प्रैषानुवचनाङ्गे दण्डग्रहण इत्यर्थः । यद्यपि "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति" विहितस्य दण्डदानस्य मैत्रावरुणकार्यार्थत्वावगमात् तेन स्थित्वोच्चैः कर्तव्ये प्रैषानुवचने बलार्थमवष्टम्भतया दण्डग्रहणस्य सामर्थ्यादपि प्राप्तिर्भवेत्; तथापि सामर्थ्याद्भवन्ती प्राप्तिस्तेन कर्तव्ये रात्रिसंचारादावपि भवेत्, सा मा भूदिति कार्यान्तरपरिसंख्याफलकः प्रैषानुवचनरूपे कार्ये तस्य दण्डविधिरिति दण्ड एव विध्यन्वयित्वेन विवक्षित इति भावः । **प्रत्युत तदविवक्षायामिति** । **ननु**—विध्यन्वयित्वेनाविवक्षितमपि प्रैषानुवचनमनुवाद्यतया यथा विधेयदण्डान्वयि, एवमिच्छापि प्रारभ्यमाणब्रह्मज्ञानान्वयिनी सती ब्रह्मज्ञानस्य प्रयोजनत्वं ब्रह्मणः संदिग्धत्वं च गमयेत्; इच्छेष्यमाणसमभिव्याहारे चेष्यमाणप्राधान्यं 'यजेत स्वर्गकाम' इत्यादौ क्लृप्तम्, अत इहापीच्छाप्राधान्यं विहायेष्यमाणप्राधान्यमभ्युपगन्तुं युक्तम्; तस्मात्प्रारम्भार्थतायां न कश्चिद्दोष—**इति चेत्; उच्यते,** एवं सति वृत्त्यभिव्यक्तनिरतिशयानन्दरूपस्वरूपज्ञानस्येच्छाविषयत्वेनाग्रहणात्परमपुरुषार्थः सूत्रेण साक्षाद्दर्शितो न स्याद्, विविदिषन्तीत्यत्रेव मुक्तिसाधनज्ञानस्य गौणपुरुषार्थताज्ञापनार्थेनेच्छासमभिव्याहारेण निर्णिनीषोक्त्यैव संदेहानाक्षेपाद्विषयसूचनं च न सिध्येत्; अतः स्वरूपज्ञानप्रेप्साप्रतिपादनेन तस्य परमपुरुषार्थत्वब्रह्मविषयनिर्णयेच्छाप्रतिपादनेन ब्रह्मणः प्रागविज्ञाततया संधिग्धत्वेन विषयत्वं च सूचयितुं पूर्वोक्तरीत्या जिज्ञासापदस्य स्वरूप-

**लस्य च वाक्यार्थे समन्वयाभावात् । अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो**

## भामती ।

त्वात्, येन तत्समभिव्याहृतोऽथशब्दोऽधिकारार्थः स्यात्, जिज्ञासाविशेषणं तु ब्रह्मतज्ज्ञानमधिकार्यं भवेत् । नच तदप्यथशब्देन संबध्यते; प्राधान्याभावात् । नच जिज्ञासा मीमांसा, येन योगानुशासनवदधिक्रियेत; नान्तत्वं निपात्य 'माङ् माने' इत्यस्माद्वा 'मान पूजायाम्' इत्यस्माद्वा धातोः 'मान्बध—' इत्यादिनाऽनिच्छार्थे सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात् । ज्ञानेच्छावाचकत्वाजिज्ञासापदस्य, प्रवर्तिका हि मीमांसायां जिज्ञासा स्यात् नच प्रवर्त्यप्रवर्तकयोरैक्यम्; एकत्वे तद्भावानुपपत्तेः । नच स्वार्थपरत्वस्योपपत्तौ सत्यामन्यार्थपरत्वकल्पना युक्ता; अतिप्रसङ्गात् । तस्मात् सुष्ठूक्तं **'जिज्ञासाया अनधिकार्यत्वात्'** इति । अथ मङ्गलार्थोऽथशब्दः कस्मान्न भवति ॥ तथाच मङ्गलहेतुत्वात् प्रत्यहं ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः संपद्यत इत्यत आह—**मङ्गलस्य च वाक्यार्थे समन्वयाभावात्** । पदार्थ एव हि वाक्यार्थे समन्वीयते, स च वाच्यो वा लक्ष्यो वा । नचेह मङ्गलमथशब्दस्य वाच्यं वा, लक्ष्यं वा, किंतु मृदङ्गशङ्खध्वनिवदथशब्दश्रवणमात्रकार्यम् । नच कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट इत्यर्थः । तत्किमिदानीं मङ्गलार्थोऽथशब्दस्तेषु तेषु न प्रयोक्तव्यः—**तथाच** 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति स्मृतिव्याकोप इत्यत आह—**अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति** । अर्थान्तरेष्वानन्तर्यादिषु प्रयुक्तोऽथशब्दः श्रुत्या श्रवणमात्रेण वेणुवीणाध्वनिवन्मङ्गलं कुर्वन्, मङ्गलप्रयोजनो भवति, अन्यार्थमानीयमानोदकुम्भदर्शनवत्, तेन न स्मृतिव्याकोपः । नचेहानन्तर्यार्थस्य सतो न श्रवणमात्रेण मङ्गलार्थतेत्यर्थः । **स्यादेतत्**—पूर्वप्रकृतापेक्षोऽथशब्दो भविष्यति, विनैवानन्तर्यार्थत्वम् । तद्यथेममेवाथशब्दं प्रकृत्य विमृश्यते किमयमथशब्द आनन्तर्ये, अथ अधिकार इति । अत्र विमर्शवाक्येऽथशब्दः पूर्वप्रकृतमथशब्दमपेक्ष्य प्रथमपक्षोपन्यासपूर्वकं पक्षान्तरोपन्यासे । नचास्यानन्तर्यमर्थः; पूर्वप्रकृतस्य प्रथमपक्षोपन्यासेन व्यवायात्, नच प्रकृतानपेक्षा; तदनपेक्षस्य तद्विषयत्वाभावे-

## वेदान्तकल्पतरुः ।

त्स्वतो नान्तस्य तदर्थत्वम् । **स्मृतिसिद्धमिति** । मानिलादिधातुभ्यः सन् भवत्यभ्यासस्य च दीर्घ इत्यर्थः । धातोः कर्मण इत्युत्तरसूत्रे इच्छार्थे सन्विधानादयमनिच्छार्थ इति गम्यते । लक्षितविचारप्रारंभार्थोऽथशब्दोऽस्तु नेत्याह—**नच स्वार्थपरस्येति** वाच्याया जिज्ञासायाः संशयसूचनेन वाक्यार्थान्वयोपपत्तौ न लक्षणा, अधिगतविषयप्रयोजनस्तु स्वत एव विचारे प्रवर्त्स्यतीत्यर्थः । **अथा**धिकारार्थ इत्यत्राथशब्दस्यानन्तर्यार्थत्वं वदन् प्रष्टव्यः; किं पूर्वप्रकृतादथशब्दादानन्तर्यमुत निरन्तरादानन्तर्यपक्षात्, **नाद्य** इत्याह—**पूर्वप्रकृतस्येति** । **द्वितीये** पूर्वप्रकृतमथशब्दमपेक्ष्य किं निरन्तरानन्तर्यार्थत्वपक्षादानन्तर्यं ब्रूयाद् द्वितीयोऽथशब्दोऽधिकारार्थत्वपक्षस्य, उतानपेक्ष्यैव । **नाद्यः**; अवश्यापेक्षणीयत्वात्पूर्वप्रकृतापेक्षाया अथशब्दस्य तादर्थ्ये सत्यर्थान्तरकल्पनानवकाशात् । **न द्वितीय** इत्याह—**नच प्रकृतानपेक्षेति** । एकधर्म्यपेक्षणे हि तन्निरूपकयोः पक्षयोस्तुल्यार्थत्वेन विकल्पः कल्प्यत इत्यर्थः । नानेन भाष्येण पूर्वप्रकृतापेक्षाया आनन्तर्यरूपत्वमुच्यते; आनन्तर्यरूपत्वपक्षे विकल्पाप्रतिभानात्, किंतूभयत्रापि ब्रह्मजिज्ञासाहेतुभूतप्रकृतसिद्धिरस्ति प्रयोजनमतः फलद्वारेणाव्य-

## कल्पतरुपरिमलः ।

ज्ञाननिर्णयज्ञानेच्छाद्वयप्राधान्यमेवाभ्युपेयमिति भावः । **स्वतो नान्तस्य त्विति** । यद्यपि तस्य पूजितविचारवचनत्वं न व्याकरणस्मृतिसिद्धं; 'मान पूजाया'मिति धातोः पूजामात्रवाचित्वात्, 'मान विचारे' इति चुरादिपठितस्य धातोर्विचारमात्रवाचित्वात्; तथापि तयोरन्यतरस्य ग्रहणे धात्वर्थतया विशेषणविशेष्यान्यतरलाभोऽस्तीत्यभिप्रायेणैवमुक्तम् । **प्रवत्स्यतीति** प्रवर्तिष्यते । 'वृद्भ्यः स्यसनो'रिति वैकल्पिकं परस्मैपदम् । परस्मैपदे 'न वृद्भ्यश्चतुर्भ्यः' इति प्रतिषेधादिडागमाभवः । **किं पूर्वप्रकृतादिति** । किमयमथशब्द आनन्तर्यार्थ इति प्रथमविकल्पोपन्यासपरे पूर्ववाक्ये विकल्पधर्मित्वेन प्रकृतादित्यर्थः । **द्वितीये इति** । अथशब्दविशिष्टात्पूर्वोक्तकल्पादानन्तर्यं शुद्धकल्पाद्वेत्यर्थः । पूर्वप्रकृतस्याथशब्दस्यावश्यमपेक्षणे तमेवोपेक्ष्याथशब्दस्य तादर्थ्ये कल्पान्तरोपन्यासार्थकत्वे संभवत्यर्थान्तरस्य विशिष्टापेक्षयानन्तर्यस्य कल्पनानवकाशात् । **यद्वा**—पूर्वप्रकृतस्य प्रथमकल्पस्यापेक्षाया आवश्यकत्वे द्वितीयाथशब्दस्य तादर्थ्ये तन्मात्रापेक्षया आनन्तर्यार्थकत्वे संभवति अर्थान्तरस्य विशिष्टानन्तर्यस्य कल्पनानवकाशादित्यर्थः । **आनन्तर्यरूपत्वपक्षे विकल्पाप्र-**

१ मङ्गलस्याथशब्दावाच्यत्वे तदलक्ष्यत्वे च सिद्धे 'मङ्गलानन्तरारम्भे'ति कोशवचनमनादरणीयमेवेति मिश्राणामाशयः । विवरणाचार्याणां तु वाच्यत्वेऽपि मङ्गलस्य ब्रह्मजिज्ञासायां कर्तृकरणभावादिना, अर्थवादत्वप्रसङ्गेन सामानाधिकरण्येन वान्वयासंभवान्नात्र मङ्गलार्थोऽथशब्द इति ।

**भवति । पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् । सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षत एवं ब्रह्मजिज्ञासापि यत्पूर्ववृत्तं नियमेनापेक्षते,**

## भामती ।

नासमानविषयतया विकल्पानुपपत्तेः, नहि जातु भवति किं नित्य आत्मा, अथ अनित्या बुद्धिरिति; तस्मादानन्तर्यं विना पूर्वप्रकृतापेक्ष इहाथशब्दः कस्मान्न भवतीत्यत आह—**पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्** । **अस्यार्थः**—न वयमानन्तर्यार्थतां व्यसनितया रोचयामहे, किंतु ब्रह्मजिज्ञासाहेतुभूतपूर्वप्रकृतसिद्धये । सा च पूर्वप्रकृतार्थापेक्षत्वेऽप्यथशब्दस्य सिध्यतीति व्यर्थ आनन्तर्यार्थत्वावधारणाग्रहोऽस्माकमिति । **तदिदमुक्तं 'फलतः' इति** । **परमार्थतस्तु**—कल्पान्तरोपन्यासे पूर्वप्रकृतापेक्षा, नचेह कल्पान्तरोपन्यास इति पारिशेष्यादानन्तर्यार्थ एवेति युक्तम् । भवत्वानन्तर्यार्थः, किमेवं सतीत्यत आह—**सतिचानन्तर्यार्थत्व इति** । न तावदस्य कस्यचिदत्रानन्तर्यमिति वक्तव्यं; तस्याभिधानमन्तरेणापि प्राप्तत्वात्, अवश्यं हि पुरुषः किंचित्कृत्वा किंचित्करोति । नचानन्तर्यमात्रस्य दृष्टमदृष्टं वा प्रयोजनं पश्यामः । तस्मात्तस्यात्रानन्तर्यं वक्तव्यं यद्विना ब्रह्मजिज्ञासा न भवति, यस्मिन्सति तु भवन्ती भवत्येव, **तदिदमुक्तम्—यत्पूर्ववृत्तं नियमेनापेक्षत इति** । **स्यादेतत्**—। धर्मजिज्ञासाया इव ब्रह्मजिज्ञासाया अपि योग्यत्वात् स्वाध्यायानन्तर्यं; धर्मवद्ब्रह्मणोऽप्याम्नायैकप्रमाणगम्यत्वात्, तस्य चागृहीतस्य स्वविषये विज्ञानाजननात्, ग्रहणस्य च स्वाध्यायोऽध्येतव्य इत्यध्ययनेनैव नियतत्वात् । तस्माद्वेदा-

## वेदान्तकल्पतरुः ।

तिरेक इत्युच्यत इत्याह—**अस्यार्थ इति** । **ननु** उभयथा फलाभेदे किमित्यानन्तर्याग्रहस्तत्राह—**परमार्थतस्त्विति** । अन्यदप्यदृष्टादिकमपेक्ष्य भवन्ती जिज्ञासा यस्मिन्सति भवत्येवेत्यर्थः । **ब्रह्मेति** । स्वाध्यायाध्ययनानन्तरं ब्रह्मजिज्ञासाया भवितुं योग्यत्वात्तदानन्तर्यमथशब्देन वक्तुं युक्तमित्यर्थः । योग्यत्वे कारणमाह—**ब्रह्मणोऽपीति** । **अत्रचेति** । स्वाध्यायस्य नित्यत्वात्तदानन्तर्यमयुक्तमिति तद्विषयमध्ययनं लक्षयतीत्यर्थः । **ननु** धर्मजिज्ञासासूत्रे ब्रह्मानुपादानात्कथं

## कल्पतरुपरिमलः ।

**तिभानादिति** । यत्र विकल्पप्रतिभानं तत्रैव पूर्वं विकल्पप्रकृततद्धर्म्यपेक्षार्थको विकल्पान्तरसुखेऽथशब्दः प्रसिद्धो नान्यत्रेत्याशयः । **ननु**—'अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेते'त्यत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणगुणविधानं, नतु तद्विशिष्टकर्मान्तरविधानमिति पूर्वपक्षोपपादकत्वेन पूर्वप्रकृतापेक्षार्थत्वमथशब्दस्य वार्तिककृतोक्तम् । ( तन्त्रवार्तिके जै. अ. २ पा.२ सू. २२ ) अतो विकल्पाभावेऽपि तादर्थ्यप्रसिद्धिरस्तीति—**चेद्, न**; तत्रानन्तर्यार्थत्वमेव पूर्वपक्षेऽभिमतम् । आनन्तर्यमपि हि पूर्वप्रकृतमपेक्ष्य वर्ण्यते । **अतएव तृतीयाध्यायटीकायां संज्ञाधिकरणा** ( ब्र. अ. ३ पा. ३ सू. ६–८ ) नुक्रमणेऽथशब्दस्यानन्तर्यार्थस्यासंबन्धेऽनुपपत्तेरित्यानन्तर्यार्थमादायैव पूर्वपक्षसमर्थनं कृतम् । **आचार्यैश्च तद्व्याख्यानसमये वार्तिककारीयपूर्वप्रकृतापेक्षोक्तेरानन्तर्य एव पर्यवसानमुक्तिभङ्ग्या दर्शितम्**—आनन्तर्यं हि पूर्वप्रकृतापेक्षं, गुण विधिपरत्वे चाश्रयदानार्थमस्ति ज्योतिष्टोमापेक्षा, न कर्मान्तरत्वे; नहि क्रतुः क्रत्वन्तरमपेक्षत इत्यर्थ—इति । यस्मिन् सति भवन्ती भवत्येवेति ग्रन्थमध्याहारव्यवहितयोजनाभ्यां व्याचष्टे—**अन्यदपीति** । ब्रह्मजिज्ञासाया अपि योग्यत्वादिति ग्रन्थमपेक्षिताध्याहारेण व्याचष्टे—**स्वाध्यायाध्ययनानन्तरमिति** । इत्थं प्रतीकमनुपादाय व्याख्यानं व्याख्यानेनैव व्याख्येयमूलांशो ज्ञातुं शक्य इति ग्रन्थलाघवार्थम् । एवमुत्तरत्रापि तत्र तत्र दृश्यते । **नन्विति** । धर्मजिज्ञासासूत्रे ब्रह्म विचार्यत्वेन नोपात्तं, किंतु धर्ममात्रम्; अतस्तत्रत्याथशब्दस्य धर्मपरवेदाध्ययनानन्तर्यमर्थः, इह तु ब्रह्मविचारे वेदान्ताध्ययनमपेक्षितमिति तत्साधारणाध्ययनानन्तर्यं ब्रह्मविचारस्य प्रतिपादयितुमिदं सूत्रमारब्धव्यमिति शङ्कार्थः । **ननु**—धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वमङ्गीकृत्य तेन तत्रत्याथशब्दस्य सकलवेदाध्ययनानन्तर्यमर्थमुपपाद्यास्याथशब्दस्य तेन गतार्थत्वपरिहारार्थमर्थान्तरं वर्णनीयमित्युपपादनमयुक्तम्; तथा सति हि सकलवेदार्थविचारप्रतिज्ञानं तत्रैव कृतमिति स्यात्, एवंच कृत्स्नमेवेदं शास्त्रं गतार्थत्वेनानारभ्यं भवेदिति कुतोऽस्याथशब्दस्यार्थान्तर-

---

१ **फलतः**—कार्यात् यन्नियमेन पूर्वप्रकृतो हेतुः तदपेक्षाबलात् हेतोरर्थान्तरत्वमथशब्दार्थ इति वर्णनमपि न संभवति; अथशब्देनानन्तर्ये निर्दिष्टे पुष्कलकारणादर्थान्तरत्वस्याप्यर्थसिद्धत्वेन पृथक्तदपेक्षाभावात् । नह्यानन्तर्यमिव पूर्वप्रकृतादर्थान्तरत्वमथशब्दार्थ इति कोशादवगम्यते—**इति विवरणप्रस्थानम्** । 'अथैष ज्योति'रित्यत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणागुणविधानमिति पूर्वपक्षोपपादकतया पूर्वप्रकृतार्थापेक्षत्वमथशब्दस्य वार्तिककृतोक्तमिति तद्वदत्रापि भवत्विति शङ्कायां **न्यायसुधाकारादिभि**रानन्तर्यार्थत्वमादायैव पूर्वपक्षसमर्थनात्पूर्वप्रकृतात् कल्पात्कल्पान्तरोपन्यासस्थल एव पूर्वप्रकृतस्यार्थान्तरस्याथशब्देन बोधनेनात्र कल्पान्तरानुपन्यासात्पारिशेष्यात् आनन्तर्यार्थ एव पर्यवसानमिति **तु—भामतीप्रस्थानम्** ।

## कल्पतरुपरिमलः।

वर्णनप्रत्याशा, नहि कृत्स्नवेदार्थविचारं प्रतिज्ञाय तदेकदेशविचारस्त्यक्तो बुद्धिपूर्वमिति वक्तुं शक्यम्; न वा धर्मविचारार्थं द्वादशलक्षणीं कृत्वा तत्रासूत्रितान् कांश्चिन्न्यायानालक्ष्य तत्संग्रहार्थं द्वादशलक्षणीं शेषं संकर्षकाण्डमपि कृतवतो महर्षिवरस्य भगवतो जैमिनेर्ब्रह्मपरवेदभागविचारे विस्मरणं विघ्नजातं वोत्प्रेक्षितुं शक्यमिति—**चेत्, उच्यते**; धर्मजिज्ञासासूत्रस्य ( जै. अ. १ पा. १ सू. १ ) सकलवेदार्थविचारप्रतिज्ञापरत्वमात्रेणास्य शास्त्रस्य गतार्थत्वं नापद्यते; इह व्युत्पादयिष्यमाणानां सिद्धब्रह्मपरवाक्यार्थनिर्णायकन्यायानां पूर्वतन्त्रव्युत्पादितेभ्यः कर्मपरवाक्यार्थनिर्णायकन्यायेभ्यो विलक्षणत्वात्, किंतु शास्त्रारम्भप्रतिज्ञैक्येन वक्तृभेदेऽप्येकप्रबन्धतामात्रं तदानीमापद्यते; समयबन्धपूर्वकानेककविकर्तृकैककाव्यवत् । तदपि सिद्धान्ते प्रौढ्याभ्युपगम्य मतान्तरमिष्यत एव; तदाश्रित्य हि भाष्यटीकयो'रेक आत्मनः शरीरे भावात्' ( जै. ब्र. अ. ३ पा. २ सू. ५३ ) इत्यधिकरणे देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनादत्र तद्व्यवस्थापनं पुनरुक्तमिति शङ्कोद्घाटनं, भाष्यकृता शबरस्वामिना तत्र तत्कृतं न तत्सूत्रारूढमिति समाधानं च करिष्यते । **ननु**—प्रौढ्यापि कथमैकशास्त्र्यमभ्युपगतं; विरुद्धयोरेकप्रबन्धत्वायोगात्, अस्ति हि जैमिनिबादरायणमतयोर्विरोधः, बादरायणेन हि 'शेषत्वात्; पुरुषार्थवादो यथान्येष्विति जैमिनिः' ( ब्र. अ. ३ पा. ४ सू. २ ) 'परामर्शं जैमिनिः' ( ब्र. अ. ३ पा. ४ सू. १८ ) इति च सूत्रे ब्रह्मसंन्यासापलपनं जैमिन्यभिमतमनूद्य दूषितं, **नच**—जैमिनेरन्वारुह्यवादमात्रमनूद्य दूषितं, नतु तन्मतम्, 'परं जैमनिर्मुख्यत्वात्' ( ब्र. अ. ४ पा. ३ सू. १२ ) 'तद्भूतस्य तु नातद्भावो जैमिनेरपि' ( ब्र. अ. ३ पा.४ सू. ४० )इत्यादिसूत्रैः जैमिनेर्ब्रह्मसंन्यासाभ्युपगमस्य बादरायणेनैव प्रतिपादितत्वादिति—वाच्यम्; 'तस्य विप्रतिषेधाचासमञ्जसम्' ( ब्र. अ. २ पा. २ सू. १० ) इति साङ्ख्याधिकरणोक्तन्यायेन जैमिनिमतस्य परस्परविरुद्धतयानुपादेयत्वसूचनार्थत्वोपपत्तेः । **किंच** देवताधिकरणे ( ब्र. अ. १ पा. ३ सू. २६–३३ ) जैमिन्यभिमतं बहुशो देवताप्रत्याख्यानमनूद्य दूषितम्। 'आम्नायस्य क्रियार्थत्वात्' ( जै. सू. अ. १ पा.२ सू.१ ) इत्यादिसूत्रेण वेदस्य क्रियार्थत्वेनैव प्रामाण्यं वक्तव्यमित्यविशेषेणाक्रियार्थानामप्रामाण्यमाशङ्क्य 'विधिना त्वेकवाक्यत्वात्' ( जै. अ.१ पा.२ सू. ७ ) इति सूत्रेण केवलसिद्धार्थविषयत्वेन भासमानानां वाक्यानां विध्येकवाक्यतया क्रियार्थतामुपपाद्य जैमिनिना यत्प्रामाण्यसमर्थनं कृतं, तदपि बादरायणेन समन्वयसूत्रे ( ब्र. अ. १ पा. १ सू. ४ ) ब्रह्मविषयाणां वाक्यानामनपेक्ष्य विधिशेषतामक्रियार्थानामेव सतां प्रामाण्यसमर्थनेन प्रत्याख्यातम्; एवं विरुद्धयोरेकप्रबन्धत्वं प्रौढ्यापि कथमभ्युपगतमिति—**चेत्, उच्यते**; ब्रह्मसंन्यासदेवतापलापविषये विरोधस्तावद् नैकप्रबन्धत्वापवादकः; तस्य द्वादशलक्षण्यामसूत्रितत्वेन परस्परविरुद्धमताभिमान्यनेककविकृतरामायणादिवदेकप्रबन्धतोपपत्तेः । **किंच** जैमिनिना तिर्यगधिकरणे 'न देवता देवतान्तराभावादिति' सूत्रेण देवताः कर्मसु नाधिक्रियन्ते; इन्द्रादीनां हविस्त्यागोद्देश्यस्येन्द्रान्तरादेरभावात्, स्वात्मने संकल्प्यमानस्य द्रव्यस्य स्वत्यागासंभवेन यागाद्यनिर्वृत्तेः, इत्येवमुपपादयता देवताभ्युपगम एव स्पष्टीकृतः । देवतानां युगपदनेकयागदेशसंनिधानमप्याधानपवमानेष्टिजन्यसंस्कारनिचयम् आहवनीयादिशब्दार्थमभ्युपगच्छता तस्य संप्रतिपन्नमेव; आहवनीयाद्यभिमानिदेवतां विना निरुक्तसंस्काराधारस्य वक्तुमशक्यत्वात्, नहि प्रत्यक्षाग्निस्तदाधारः; आधानकाले निहितस्याहवनीयादेः पावमानेष्ट्यनन्तरं त्यागेन तद्गतस्य संस्कारस्य तन्नाशतो नाशादाहवनीयाद्यननुवृत्तिप्रसङ्गात्, अजस्रपक्षेऽप्यनुगतस्य मथनादिना पुनरुत्पादने तदनुवृत्त्यभावप्रसङ्गात् । **नच** प्रणयनमथनादिजन्यसंस्कारोऽप्याहवनीयादिशब्दस्यार्थः; अनेकार्थत्वप्रसाङ्गात्पश्चावौत्तरवेदिकप्रणयनानन्तरमाहवनीयगार्हपत्यताप्राप्त्या प्रणयनस्याहवनीयशब्दप्रवृत्तिनिमित्तत्वायोगाच्च । तस्मादाहवनीयाद्यभिमानिदेवता एव तत्तदायतनविशेषनिहितेषु संभारेषु मथिताग्निनिधानरूपेणाधानेन संस्क्रियन्ते । ताश्च संस्कृता देवता अजस्रपक्षे यजमानशरीरे अग्निदानपर्यन्तं मध्येऽग्निसंस्कारविच्छेदनिमित्तोपजने तत्पर्यन्तं च तेष्वग्निषु संनिदधते । अग्नीनामजस्रधारणाभावे तत्तत्कर्मावसानेष्वाहवनीयादिदेवता गार्हपत्यमनुप्रविशन्ति । पश्चावौत्तरवेदिकप्रणयने क्रियमाणे तम् आहवनीयोऽनुप्रविशति, तेन प्रागधिष्ठितमग्निं गार्हपत्य इत्येवमादिकमभ्युपगन्तुं युक्तम् । एवं सत्येव 'नान्तराग्निं संचरति यदि पूर्वोऽनुगतः संचर्य पश्चाद्धि स तर्हि गत' इति 'गार्हपत्याज् ज्वलन्तमाहवनीयमुद्धरती'ति च कल्पसूत्रकारवचनं सामञ्जस्यमश्नुते । नहि संस्कारमात्रस्य पश्चाद्गमनं संभवति । नाप्याहवनीयस्य गार्हपत्यानुप्रवेशाभावे गार्हपत्यात् तत्र सत आहवनीयस्योद्धरणं संभवति । **नच** तथा सत्यग्निद्वयसंसर्गनिमित्तकप्रायश्चित्तप्रसङ्गः; तस्य प्रत्यक्षाग्निसंसर्गनिमित्तकत्वात् । **नच** देवतानामाहवनीयादिशब्दार्थतायां "आहवनीये जुहोति" "गार्हपत्ये हवींषि श्रपयती"त्यादिवाक्यश्रुतं हविःप्रक्षेपश्रपणाद्याधारत्वमपि तासां भवेदित्ययं दोषः; इष्टापत्तेः, 'अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वेति' मन्त्रवर्णतः पाकेन हविषां सुरभीकरणस्योद्देश्यदेवतार्थं नयनस्य चैककर्तृकत्वावगतेश्च । **तत्रा**भिमान्यभिमानविषयाणामभेदाध्यवसायेन समानकर्तृकत्वव्यपदेश इति **चेद्**, इहापि तदभेदाध्यास एव गतिरस्तु । एवमग्निसंस्काराधारदेवतानामिव हविरुद्देश्यदेवतानामपि

**तद्वक्तव्यम् । स्वाध्यायानन्तर्यं तु समानम् । नन्विह कर्मावबोधानन्तर्यं विशेषः । न धर्मजिज्ञा-**

**भामती ।**

ध्ययनानन्तर्यमेव ब्रह्मजिज्ञासाया अप्यथशब्दार्थ इत्यत आह—**स्वाध्यायानन्तर्यं तु समानं** धर्मब्रह्मजिज्ञासयोः । अत्रच स्वाध्यायेन विषयेण तद्विषयमध्ययनं लक्षयति । तथाच 'अथातो धर्मजिज्ञासा' इत्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम् । धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद्ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादित्यर्थः । **चोदयति—नन्विह कर्मावबोधानन्तर्यं विशेषः,** धर्मजिज्ञासातो ब्रह्मजिज्ञासायाः । **अस्यार्थः**—'विविदिषन्ति यज्ञेन' इति तृतीयाश्रुत्या यज्ञादीनामङ्गत्वेन ब्रह्मज्ञाने विनियोगात्, ज्ञानस्यैव कर्मत्वयेच्छां

**वेदान्तकल्पतरुः ।**

तेन गतार्थता, तत्राह—**धर्मशब्दस्येति** । **नन्विच्छायां** विनियोगो न ज्ञाने इति, तत्राह—**ज्ञानस्यैवेति** ।

**कल्पतरुपरिमलः ।**

बहुषु यागदेशेषु संनिधानम् आवाहनादिमन्त्रार्थवादावगतं जैमिनिनाप्युक्तप्रायमेव; मानान्तरप्राप्तिबाधाभावे मन्त्रार्थवादादिप्रतिपन्नस्य देवतादेस्तेनाप्यभ्युपगतत्वात् । **नच** तथापि देवतानां कर्मसु गुणत्वप्राधान्याभ्यां विरोधः; बादरायणमतेऽपि फलकरणत्वेन प्रधानतया शब्दबोधितं यागादिकं प्रत्युद्देश्यतया तच्छरीरनिवर्तकत्वेन देवतानां संनिपात्यङ्गत्वरूपतद्गुणत्वसत्त्वात् । सिद्धार्थविषयवाक्यानां विधिशेषत्वं तु जैमिनिनोक्तं विधिसमभिव्याहृतवायुक्षेपिष्ठादिवाक्यमात्रविषयम् । **तथाहि**—धर्मजिज्ञासासूत्रे ( जै. अ. १ पा. १ सू. १ ) ब्रह्ममीमांसासाधारणी वेदार्थविचारप्रतिज्ञा धर्ममीमांसामात्रासाधारणी धर्मविचारप्रतिज्ञा चेति द्विविधा प्रतिज्ञा विवक्षिता; सूत्राणामावृत्त्यानेकार्थप्रतिपादकत्वस्यालंकारत्वात् । **अतएव—'अथातः शेषलक्षणम्'** ( जै. अ. ३ पा. १ सू. १ ) **इति तृतीयाध्यायाद्यसूत्रं वार्तिककृता**—'द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम् । तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम्' इत्यवशिष्टदशाध्यायार्थविचारप्रतिज्ञापरं व्याख्यायानन्तरं तृतीयाध्यायार्थशेषशेषिभावविचारप्रतिज्ञापरत्वेनापि—**व्याख्यातम्** । एवंच यथा शेषः परार्थत्वादिति द्वितीयसूत्रमारभ्य तृतीयाध्यायसूत्राणि शेषशेषिभावमात्रविषयाणि, एवं चोदनासूत्रं ( जै. अ. १ पा. १ सू. २ ) आरभ्य द्वादशलक्षणीसूत्राणि धर्ममात्रविषयाणि । अतएव चोदनासूत्रे धर्मस्यैव विधिगम्यत्वं लक्षणमुक्तं, नहि ब्रह्मणो विधिगम्यत्वमस्ति, अतः 'तस्य निमित्तपरीष्टिः' ( जै. अ. १ पा. १ सू. ३ )इति सूत्रे धर्मप्रमाणमेव परीक्ष्यत्वेन प्रतिज्ञातमिति तदनुसारेण 'आम्नायस्य क्रियार्थत्वात्' ( जै. अ. १ पा. २ सू. १ ) इति सूत्रं धर्मप्रमाणत्वेनाभिमतस्य क्रियार्थत्वेनैव तत्राप्रामाण्यं वक्तव्यमित्येतत्परम् । 'विधिना त्वेकवाक्यत्वा' ( जै. अ. १ पा. २ सू. ७ )दिति सूत्रमपि धर्मप्रमाणत्वाभिमतक्रियाविधिसमभिव्याहृतवायुक्षेपिष्ठादिवाक्यमात्रविषयमिति न कश्चिद्विरोधः । नचैवं—कर्मब्रह्मविचारशास्त्रयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगताथशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति—वाच्यम्; भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः । नहि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकग्रन्थत्वमात्रेण वा तच्चिकित्साप्रकरणं विचारयिष्यता ज्वरचिकित्सामारभ्य विचारणीयम् । तत्तद्विचाराधिकारिवैलक्षण्यमिहापि तुल्यम् । तस्मादनपेक्षितं हि वेदार्थविचारत्वोपाधिकल्प्यमैकशास्त्र्यं नातिविरुद्धमिति प्रौढ्या तदभ्युपगमे न कश्चिद्दोषः । **यद्वा**—धर्मशब्दस्येत्यादिटीकाग्रन्थेन जिज्ञास्यसमर्पणार्थस्य धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं नोक्तं; किंत्वतःशब्दोक्ते

१ धर्मविचारस्वाध्यायाध्ययनयोरेकविधिमूलकत्वात् स्वाध्यायाध्ययनमेव धर्मजिज्ञासासूत्रेऽथशब्दार्थ इति युक्तं, नैवं ब्रह्मजिज्ञासासूत्रे; ब्रह्मविचारवेदाध्ययनयोरेकविधिमूलकत्वाभावात् । ब्रह्मविचारो हि श्रोतव्य इति विधिमूलको न स्वाध्यायविधिमूलक इति तु प्रथमवर्णक एव निरूपितम् । एवंच स्वाध्यायविधिमूलके धर्मविचारे तद्विधिसिद्धं वेदाध्ययनमेव यथाधिकारिविशेषणं, एवं श्रोतव्यविधिमूलके ब्रह्मविचारे तद्विध्येकवाक्यतापन्नेन 'शान्तो दान्त' इत्यादिवाक्येन सिद्धा साधनचतुष्टयसंपत्तिरेवाधिकारिविशेषणम्; तस्या एव पुष्कलकारणत्वात्, नतु स्वाध्यायाध्ययनम्; तस्यातथात्वात्, **तत्रेत्थमक्षरयोजना**—वेदाध्ययनं तु **समानं**—अत्यन्तमनपेक्षितं न पुष्कलकारणमित्यर्थ—इति—**विवरणप्रस्थानम्** ।

अस्तु वा ब्रह्मविचारोऽपि 'स्वाध्यायोऽध्येतव्य' इति विधिमूलकः, भवतु वा च धर्मजिज्ञासासूत्रेणैव ब्रह्मविचारप्रतिज्ञापि, अभ्युपगम्यतां वा पूर्वोत्तरमीमांसयोरैकशास्त्र्यं च; तथापि न ब्रह्मजिज्ञासासूत्रे स्वाध्यायाध्ययनानन्तर्यमथशब्दार्थः, अथशब्दवैयर्थ्यप्रसङ्गात् । ऐकशास्त्र्याभ्युपगमेऽपि यथाकर्मविचारानन्तर्यं नाथशब्दार्थः, तथा भाष्य एव व्यक्तम्—**इत्येका योजना** । **वस्तुतस्तु**—न धर्मजिज्ञासासूत्रेण ब्रह्मविचारोऽपि प्रतिज्ञायते; नापि पूर्वोत्तरमीमांसयोरैकशास्त्र्यं, तथापि धर्मजिज्ञासासूत्रे अतःशब्देन वेदस्य विवक्षितार्थत्वमेव हेतुत्वेन बोध्यते, न धर्मपरभागस्य; अन्यथा वेदान्तभागस्येव तस्याप्यविवक्षितार्थत्वशङ्काप्रसरादिति तदुपपादकतया सकलवेदाध्ययनानन्तर्यमेवाथशब्देन विवक्षणीयमिति अथशब्दवैयर्थ्यप्रसङ्गान्न स्वाध्यायानन्तर्यमथशब्दार्थ इति **त्वपरा योजनेति** विवेक—**इति भामतीप्रस्थानम्** ।

## भामती।

प्रति प्राधान्यात्, प्रधानसंबन्धाच्चाप्रधानानां पदार्थान्तराणाम्। तत्रापि च न वाक्यार्थज्ञानोत्पत्तावङ्गभावो यज्ञादीनां; वाक्यार्थज्ञानस्य वाक्यादेवोत्पत्तेः। नच–वाक्यं सहकारितया कर्माण्यपेक्षत इति—युक्तम्; अकृतकर्मणामपि विदितपदतदर्थसंगतीनां समधिगतशाब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षासंनिधियोग्यतानुसंधानवतामप्रत्यूहं वाक्यार्थप्रत्ययोत्पत्तेः। अनुत्पत्तौ वा विधिनिषेधवाक्यार्थप्रत्ययाभावेन तदर्थानुष्ठानपरिवर्जनाभावप्रसङ्गः। तद्बोधतस्तु तदर्थानुष्ठानपरिवर्जने परस्पराश्रयः, तस्मिन्सति तदर्थानुष्ठानपरिवर्जनं ततश्च तद्बोध इति। नच—वेदान्तवाक्यानामेव स्वार्थप्रत्यायने कर्मापेक्षा न वाक्यान्तराणामिति— सांप्रतम्; विशेषहेतोरभावात्। **ननु**–'तत्त्वमसि' इतिवाक्यात् त्वंपदार्थस्य कर्तृभोक्तृरूपस्य जीवात्मनो नित्यशुद्धबुद्धोदासीनस्वभावेन तत्पदार्थेन परमात्मनैक्यमशक्यं द्रागित्येव प्रतिपत्तुम्; आपाततोऽशुद्धसत्त्वैर्योग्यताविरहनिश्चयात्। यज्ञतपोदानतनूकृतान्तर्मलास्तु विशुद्धसत्त्वाः श्रद्दधाना योग्यतावगमपुरःसरं तादात्म्यमवगमिष्यन्तीति–**चेत्**, तत्किमिदानीं प्रमाणकारणं योग्यतावधारणमप्रमाणात्कर्मणो वक्तुमध्यवसितोऽसि, प्रत्यक्षाद्यतिरिक्तं वा कर्मापि प्रमाणम्। वेदान्ताविरुद्धतन्मूलन्यायबलेन तु योग्यतावधारणे कृतं कर्मभिः। तस्मात् 'तत्त्वमसि' इत्यादेः श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा तन्मूलया चोपपत्त्या व्यवस्थाप्य तदुपासनायां भावनापराभिधानायां दीर्घकालनैरन्तर्यवत्यां ब्रह्मसाक्षात्कारफलायां यज्ञादीनामुपयोगः। **यथाहुः**—'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति। ब्रह्मचर्यतपःश्रद्धायज्ञादयश्च सत्कारः। **अतएव श्रुतिः**—'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति। **विज्ञाय** तर्कोपकरणेन शब्देन, **प्रज्ञां** भावनां कुर्वीतेत्यर्थः। अत्र च यज्ञादीनां श्रेयःपरिपन्थिकल्मषनिबर्हणद्वारेणोपयोग इति **केचित्**। **पुरुषसंस्कारद्वारेणेत्यन्ये**। यज्ञादिसंस्कृतो हि पुरुष आदरनैरन्तर्यदीर्घकालैरासेवमानो ब्रह्मभावनामनाद्यविद्यावासनां समूलकाषं कषति, ततोऽस्य प्रत्यगात्मा सुप्रसन्नः केवलो विशदीभवति। **अतएव स्मृतिः**—'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इति च। **अपरे तु**, ऋणत्रयापाकरणे ब्रह्मज्ञानोपयोगं **कर्मणामाहुः**। **अस्ति हि स्मृतिः**

## वेदान्तकल्पतरुः।

अर्थतः प्राधान्याद् ज्ञानस्य तत्रैव विनियोग इत्यर्थः। साक्षात्कारोपयोगं यज्ञादीनामाह—**तत्रापीत्यादिना**। विशेषहेत्वभावोऽसिद्ध इत्याह—**तत्त्वमसीति**। योग्यतावधारणे कर्म किमप्रमाणतयोपयुज्यते, उत प्रमाणतया। **नाद्यः**; अप्रमाणात्प्रमाणकार्योत्पादव्याघातादित्याह—**तत्किमिति**। प्रमाणं कारणं यस्य तत्तथा। **न द्वितीयः**; कर्मणः प्रमाणत्वप्रसिद्ध्यभावादित्याह—**प्रत्यक्षादीति**। पातञ्जलसूत्रे **स** इति चित्तवृत्तिनिरोध उक्तः। **दृढभूमिः** तत्त्वप्रतिपत्तौ दृढ उपाय इत्यर्थः। नित्यानामेव संस्कारद्वारा भावनाङ्गत्वमुक्त्वा सर्वकर्मणामुत्पत्तिविधिविहितरूपमुपादाय भावनाङ्गतां विनियोगवच-

## कल्पतरुपरिमलः।

वेदस्य विवक्षितार्थत्वरूपे धर्मविचारप्रतिज्ञाहेतौ धर्मरूपस्यैवार्थस्य विवक्षितत्वं न विशेषणं, किं तर्हि, कृत्स्नस्य वेदार्थस्य; अतो धर्मविचारप्रतिज्ञायां यागादिकार्यसमर्पकोऽपि धर्मशब्दो हेतुशरीरगतमथशब्दं समभिव्याहारवशात्तावन्मात्रपरं न कुर्याद्, अपितु वेदार्थसामान्यपरमेव कुर्यादित्येतावदुक्तम्। तदेतत्प्रथमसूत्रार्थव्याख्यानावसाने टीकावाक्यैराचार्यवाक्यैस्तद्व्याख्यानेन च स्पष्टीभविष्यति। **ननुच**—विवक्षितार्थत्वे हेतौ वेदार्थसामान्यस्य प्रवेशोपदर्शनेन कृत्स्नवेदाध्ययनानन्तर्यमथशब्दार्थ इति प्रकृते सिषाधयिषितोऽर्थः कथं सिध्येदिति—**चेत्**, इत्थम्; धर्मशब्दसमभिव्याहारे विद्यमानेऽपि यथा हेतावर्थशब्दो वेदार्थमात्रपरोऽङ्गीकृतः, विशिष्य धर्मपरवेदभागस्यार्थविवक्षोपन्यासे वेदान्तभागस्यार्थविवक्षानाङ्गीकृतेति तद्वद्धर्मपरभागोऽप्यविवक्षितार्थोऽस्त्विति शङ्कानिरासोपयोगात्; एवमध्ययनानन्तर्यमपि कृत्स्नवेदस्याध्ययनानन्तर्यरूपमङ्गीकर्तव्यम्; अध्ययनविधेरेकदेशाध्ययनानुष्ठापनेन पर्यवसानाभावादिति दृष्टान्तमुखेन सिद्ध्येदित्यलं विस्तरेण। **अर्थतः प्राधान्यादिति**। **प्रत्ययार्थः प्रधानमिति** सामान्यन्यायादिच्छेष्यमाणसमभिव्याहृताविष्यमाणं प्रधानमिति स्वर्गकामपदादिषु कृप्तो विशेषन्यायो बलवानिति भावः। **साक्षात्कारोपयोगमिति**। ब्रह्मोपासनाकालेऽपि तदङ्गतया कर्माण्यनुष्ठेयानीति समुच्चयवादी तदनुष्ठानापेक्षितकर्मावबोधानन्तर्यमथशब्दार्थमिच्छति; अतस्तस्य तादर्थ्यसिद्ध्यर्थं कर्मणामुपासनाङ्गत्वमुपपादयितुं तेषामुपासनाजन्यसाक्षात्कारोपयोगमाहेत्यर्थः। **असिद्ध इत्याहेति**। शङ्कावादीति शेषः। **प्रमाणत्वप्रसिद्ध्यभावादिति**। यद्यपि प्रमाणत्वाभावेऽप्यसंभावनादिमूलकल्मषनिर्हरणद्वारा योग्यतावधारणे तज्जन्यमहावाक्यार्थज्ञाने वा प्रमाणसहकारित्वेन कारणत्वमुपपद्यते, अन्यथा वक्ष्यमाणस्य कर्मणां साक्षात्कारोपयोगस्यापि निर्वोढुमशक्यत्वात्; तथापि विविदिषन्तीत्यत्र फलरूपवेदनमानन्दसाक्षात्कारतया मुख्यपुरुषार्थरूपमेव ग्राह्यं, मुख्यसंभवे गौणग्रहणस्यान्याय्यत्वादिति तात्पर्यम्। **संस्कारद्वारेति**। यद्यपि कल्मषनिबर्हणमृणत्रयापाकरणमिति संस्कारपक्षाद्भिन्नमपि पक्षद्वयमुक्तं; तथापि तदपि पक्षद्वयं सामान्यतः संस्कारपक्ष एवानुप्रविशति, प्रथमाधानवत्कल्मषनिबर्हणादेरपि

### भामती।

—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति। अन्ये तु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतिभ्यस्तत्तत्फलाय चोदितानामपि कर्मणां संयोगपृथक्त्वेन ब्रह्मभावनां प्रत्यङ्गभावमाचक्षते, क्रत्वर्थस्येव खादिरत्वस्य वीर्यार्थताम्, **'एकस्य तूभयत्वे संयोगपृथक्त्वम्'** इति **न्यायात्**। अतएव पारमर्षं सूत्रम्—'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र. अ. ३ पा. ४ सू. २६) इति। **यज्ञतपोदानादि सर्वं तदपेक्षा** ब्रह्मभावनेत्यर्थः। तस्माद्यदि श्रुत्यादयः प्रमाणं, यदि वा पारमर्षं सूत्रं, सर्वथा यज्ञादिकर्मसमुच्चिता ब्रह्मोपासना विशेषणत्रयवती अनाद्यविद्यातद्वासनासमुच्छेदक्रमेण ब्रह्मसाक्षात्काराय मोक्षापरनाम्ने कल्पत इति तदर्थं कर्माण्यनुष्ठेयानि। नचैतानि दृष्टादृष्टसामवायिकारादुपकारहेतुभूतौपदेशिकातिदेशिकक्रमपर्यन्ताङ्गग्रामसहितपरस्परविभिन्नकर्मस्वरूपतदधिका-

### वेदान्तकल्पतरुः।

नवशेनाह—**अन्ये त्विति।** **संयोगः** शेषत्वबोधनं **चतुर्थे चिन्तितम्।** **एकस्य त्विति।** 'खादिरे पशुं बध्नाति' 'खादिरं वीर्यकामस्य यूपं कुर्वीते'ति च श्रूयते। **तत्र संशयः,** किं काम्ये इव खादिरता नित्येऽपि स्यादुत नेति; तत्र फलार्थत्वेनानित्याया नित्यप्रयोगाङ्गता न युक्ता। यत्तु नित्येऽपि खादिरत्वश्रवणं, तत्काम्यस्यैव पशुबन्धनयुक्तयूपरूपाश्रयदानार्थं, ततो न नित्ये खादिरतेति प्राप्ते—राद्धान्तः; **एकस्य** खादिरत्वस्य **उभयत्वे** क्रत्वर्थपुरुषार्थत्वरूपोभयात्मकत्वे वचनद्वयेन क्रतुशेषत्वफलशेषत्वलक्षणसंयोगभेदावगमान्न नित्यानित्यसंयोगविधिविरोधः। नचाश्रयदानाय नित्यवाक्यम्; संनिधानादेवाश्रयलाभात्। तत उभयार्था खादिरतेति (जै. अ. ४ पा. ३ सू. ५)। **विशेषणत्रयवतीति।** आदरनैरन्तर्यदीर्घकालत्ववतीत्यर्थः। कर्मापेक्षत्वेन ब्रह्मभावनायास्तदवबोधापेक्षामुपपादयन् कर्मावबोधानन्तर्यमिति भाष्यं घटयति—**नचेति।** **दृष्ट उपकारः** तुषविमोकादिः, **अदृष्टः** प्रोक्षणादिजः प्रयाजादिजश्च। स चासौ यथायोगं **सामवायिकः** क्रतुस्वरूपसमवायी, **आराद्** दूरे फलापूर्वसिद्ध्युपकारश्च; तस्य **हेतुभूतानि औपदेशिकानि** प्रत्यक्षविहितानि **आतिदेशिकानि** प्रकृतेर्विकृतावतिदेशप्राप्तानि **क्रमपर्यन्तानि** क्रमेणाप्यवच्छिन्नान्यङ्गानि तेषां **ग्रामः** समूहस्तत्सहितं परस्परविभिन्नं कर्मस्वरूपं, तदपेक्षिताधिकारिविशेषश्च, तयोः परिज्ञानं विना कर्माणि न शक्यान्यनुष्ठातुमित्यन्वयः। **औपदेशिकातिदेशिकेति** शेषलक्षणादारभ्योपरितनतन्त्रस्यापेक्षोक्ता। **क्रमपर्यन्तेति** पञ्चमनयस्य। **अङ्गग्रामेति**

### कल्पतरुपरिमलः।

संस्कारत्वाऽविशेषादिति तात्पर्यम्। **किं काम्यैव खादिरता नित्येऽपि स्यादिति** सिद्धान्तकोटिः पूर्वपक्षाद्विशेषसिद्धये। काम्यैवेत्यवधारणम्। अन्यथा यदा क्वचित्प्रयोगे वीर्यकामनया काम्या खादिरतोपादीयते, तदा तया पशुनियोजनरूपस्य नित्योपकारस्यापि प्रसङ्गात्सिद्धेः काम्या क्वचिन्नित्येऽपि भवतीत्यस्मिन्नर्थे पूर्वपक्षिणोऽपि संप्रतिपत्त्या ततः सिद्धान्तकोटेर्विशेषो न सिध्येत्। किं केवलकाम्यैव खादिरतेत्यङ्गीकृत्य सा सर्वत्र नित्येऽपि स्यादित्युच्यते, अथवा यथा खादिरता वीर्यकामवाक्येन फलार्थतया काम्या, एवं खादिरे पशुमिति वाक्येन क्रत्वर्थतया नित्यापीत्यभ्युपेत्येति विकल्प्याद्यं नित्यानित्यसंयोगविरोधेन निराकृत्य **द्वितीयमाशङ्कते—यत्त्विति।** सिद्धरूपः खदिरतरुरननुष्ठीयमानो वीर्यफलाय न प्रभवेदिति तस्य पशुबन्धनयुक्तयूपरूपाश्रयानुरागेण साध्यतोपपादनीया। यद्यपि यूपप्रातिपदिकार्थोऽपि सिद्धरूपः; तथापि पशुबन्धनक्रियायुक्तत्वाकारेण भवति खदिरतरोरपि तदनुरागे सति साध्यता। एवंच खदिरस्य फलसंबन्धं बोधयद् वीर्यकामवाक्यं तस्याश्रयसंबन्धमपि बोधयितुं न शक्नोति, वाक्यभेदप्रसङ्गादित्याश्रयसंबन्धस्यान्यतः प्राप्त्यपेक्षायामपेक्षितसमर्पणेन फलवाक्यान्वयि खादिरे पशुमिति वाक्यं न खदिरस्य क्रत्वर्थतामपि बोधयितुं शक्नोतीति न ततः क्रत्वर्थत्वसिद्धिरित्यर्थः। **नच**—यथा 'अपः प्रणयन्ती'त्यस्य संनिधाने 'गोदोहनेन पशुकामस्येति' फलार्थं विधीयमानस्य सिद्धरूपस्य गोदोहनस्यापां प्रणयनं संनिधानादाश्रयो भवति, एवमिहापि संनिधानादेव यूप आश्रयो लभ्यत इति—वाच्यम्; अपां हि गार्हपत्यदेशे ग्राह्याणामाहवनीयदेशं प्रति नयनरूपं यत् प्रकृष्टनयनं प्रणयनशब्दवाच्यं तस्य गोदोहपात्रस्य चाधाराधेयभावो लोकसिद्ध इति युक्तस्तत्र योग्यतया संनिहितस्याश्रयत्वलाभः, इह त्वतीन्द्रियातिशयविशेषविशिष्टस्य यूपस्याहवनीयवदलौकिकत्वात् तं प्रति न लोकसिद्धः खदिरस्य प्रकृतिभाव इति खादिरे पशुमिति वाक्येनैव तस्याश्रयसंबन्धो बोधनीय इति भावः। अत्र खादिरे पशुमित्यस्य नित्यवाक्यत्वं सिद्धान्त्यभिमतमनूदितम्; पूर्वपक्षे फलवाक्यैकवाक्यतापन्नस्य तस्य नित्यवाक्यत्वाभावात्। **एकस्य खादिरत्वस्येत्यादिना** एकस्योभयात्मकत्वे नित्यानित्यसंयोगविरोधो नास्ति, विनियोजकप्रमाणभेदादिति सिद्धान्तयुक्ति'रेकस्य तूभयत्वे' (जै. अ. ४ पा. ३ सू. ५) इति सूत्रारूढा दर्शिता। **संनिधानादेवेति।** यूपशब्दार्थस्यालौकिकत्वेऽपि यस्मिन्नष्टाश्रित्वाद्याकृतिविशिष्टे काष्ठविशेषे यूपशब्दो वर्तते, तस्य खदिरतरोश्च प्रकृतिविकृतिभावो लोकसिद्ध इति तावतैव संनिधानात् पशुबन्धनार्थो यूप आश्रयत्वेनान्वेतुं योग्य इति भावः। **शेषलक्षणादिति।** **शेषलक्षणं** तृतीयाध्यायः। तत आरभ्य **चतुर्भिरध्यायैः** शेषत्वप्रयुक्तिकर्माधिकारनि-

## भामती।

रिभेदपरिज्ञानं विना शक्यान्यनुष्ठातुम्। नच धर्ममीमांसापरिशीलनं विना तत्परिज्ञानम्। तस्मात्साधूक्तं 'कर्मावबोधानन्तर्यं विशेषः' इति। कर्मावबोधेन हि कर्मानुष्ठानसाहित्यं भवति ब्रह्मोपासनाया इत्यर्थः। **तदेतन्निराकरोति—न।** कुतः, कर्मावबोधात् **प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। इदमत्राकूतम्**—ब्रह्मोपासनया भावनापराभिधानया कर्माण्यपेक्ष्यन्त इत्युक्तं, **तत्र ब्रूमः**—क पुनरस्याः कर्मापेक्षा, किं कार्ये, यथाग्नेयादीनां परमापूर्वे चरमभाविफलानुकूले जनयितव्ये समिदाद्यपेक्षा। स्वरूपे वा, यथा तेषामेव द्विरवत्तपुरोडाशादिद्रव्याग्निदेवताद्यपेक्षा। **न तावत्कार्ये**; तस्य विकल्पासहत्वात्। **तथाहि**—ब्रह्मोपासनाया ब्रह्मस्वरूपसाक्षात्कारः कार्यमभ्युपेयः, स चोत्पाद्यो वा स्यात्, यथा संयवनस्य पिण्डः। विकार्यो वा, यथावघातस्य व्रीहयः। संस्कार्यो वा, यथा प्रोक्षणस्योलूखलादयः। प्राप्यो वा, यथा दोहनस्य पयः। **न तावदुत्पाद्यः**; न खलु घटादिसाक्षात्कार इव जडस्वभावेभ्यो घटादिभ्यो भिन्न इन्द्रियाद्याधेयो ब्रह्मसाक्षात्कारो भावनाधेयः संभवति; ब्रह्मणोऽपराधीनप्रकाशतया तत्साक्षात्कारस्य तत्स्वाभाव्येन नित्यतयोत्पाद्यत्वानुपपत्तेः, ततो भिन्नस्य वा भावनाधेयस्य साक्षात्कारस्य प्रतिभाप्रत्ययवत्संशयाक्रान्ततया प्रामाण्यायोगात्, तद्विधस्य तत्सामग्रीकस्यैव बहुलं व्यभिचारोपलब्धेः। न खल्वनुमानविद्धं वह्निं भावयतः शीतातुरस्य शिशिरभरमन्थरतरकायकाण्डस्य स्फुरज्ज्वालाजटिलानलसाक्षात्कारः प्रमाणान्तरेण संवाद्यते; विसंवादस्य बहुलमुपलम्भात्। तस्मात् प्रामाणिकसाक्षात्कारलक्षणकार्याभावान्नोपासनाया उत्पाद्ये कर्मापेक्षा। नच कूटस्थनित्यस्य सर्वव्यापिनो ब्रह्मण उपासनातो **विकारसंस्कारप्राप्तयः संभवन्ति। स्यादेतत्—मा भूद्ब्रह्मसाक्षात्कार उत्पाद्यादिरूप उपासनायाः, संस्कार्यस्तु** अनिर्वचनीयानाद्यविद्याद्वयपिधानापनयनेन भविष्यति, प्रतिसीरापिहिता नर्तकीव प्रतिसीरापनयद्वारा रङ्गव्यापृतेन। तत्र च कर्मणामुपयोगः। **एतावांस्तु विशेषः**—प्रतिसीरापनये पारिषदानां नर्तकीविषयसाक्षात्कारो भवति, इह तु अविद्यापिधानापनयमात्रमेव नापरमुत्पाद्यमस्ति, ब्रह्मसाक्षात्कारस्य ब्रह्मस्वभावस्य नित्यत्वेन अनुत्पाद्यत्वात्। **अत्रोच्यते**—का पुनरियं ब्रह्मोपासना। किं शाब्दज्ञानमात्रसंततिः, आहो निर्विचिकित्सशाब्दज्ञानसंततिः। **यदि शाब्दज्ञानमात्रसंततिः,** किमियमभ्यस्यमानाप्यविद्यां समुच्छेत्तुमर्हति। तत्त्वविनिश्चयस्त-

## वेदान्तकल्पतरुः।

तार्तीयस्य। **सहितेति** चातुर्थिकस्य प्रयोज्यप्रयोजकविचारस्य। **परस्परविभिन्नस्येति** द्वितीयलक्षणार्थस्य। **तदधिकारीति** षष्ठाध्यायार्थस्य। **दृष्टादृष्टेति** संस्कारकर्मत्वगुणकर्मत्वप्रधानकर्मत्वादिचिन्तायाश्च द्वितीयाध्यायगताया अपेक्षेत्युक्तम्। **द्विरवत्तेति**। आग्नेययागः स्वोत्पत्तये 'द्व्यवदानं जुहोती'ति वचनाद् द्विर्हविषोऽवद्यतीति विहितं द्विरवत्तपुरोडाशमपेक्षत इति। भावनासाध्ये साक्षात्कारे यदि कर्मापेक्षा, तर्हि स ब्रह्मस्वरूपमन्यो वा। स्वरूपत्वे न कर्मापेक्षेत्याह**—स चेत्यादिना**। पिष्टं संयौतीति विहितमिश्रणस्य पिण्ड उत्पाद्यः, गां दोग्धीति विहितदोहनेन प्राप्यं पयः। साक्षात्कारस्य ब्रह्मस्वरूपाद्भेदे ब्रह्म जडं स्यात्तच्चेन्द्रियाद्यगोचरः शब्दश्च परोक्षप्रमा हेतुरिति केवलभावनाभूः साक्षात्कारोऽप्रमा स्यादित्याह—**ततो भिन्नस्य चेति। मन्थरः** स्तिमितः। स्फुरन्त्यो ज्वाला जटाकारा अस्य सन्तीति जटिलः। **नच कूटस्थेति।** कूटस्थनित्यतया पूर्वरूपापायलक्षणो विकारोऽभिनवगुणोदयरूपसंस्कारश्च न स्तः, सर्वव्यापितया न प्राप्तिः। कूटस्थनित्यत्वाविरुद्धं दोषविघातसंस्कारमाह—**अनिर्वचनीयेति। प्रतिसीरा** तिरस्करिणी। **रङ्गव्यापृतो** नटः। **आरोह**

## कल्पतरुपरिमलः।

रूपणार्थैरुपदेशविचारः। **सप्तमाद्यैश्चतुर्भिः** सामान्यातिदेशविशेषातिदेशोहबाधनिरूपणार्थैरतिदेशविचारः। **एकादशद्वादशाभ्यामु**पदेशातिदेशसाधारणतन्त्रप्रसङ्गविचारः। **चातुर्थिकेति**। यद् येन प्रयुज्यते अनुष्ठाप्यते, तत्तेन सहितमुपकार्योपकारकभावरूपसंबन्धवद्भवति; अनुपकार्येणानुपकारकस्याननुष्ठापनादिति साहित्योक्त्या **चातुर्थिकप्रयुक्तिसंग्रहः। संस्कारकर्मत्वेति**। संस्कारकर्मणस्तानि द्वैधाधिकरण ( जै. अ. २ पा. १ सू. ६-८ ) निरूपितगुणकर्मविशेषत्वेऽपि दृष्टप्रयोजनाभावेन त्रिविधगुणकर्मवैषम्यात्, धर्ममात्रे तु कर्म स्यात् ( जै. अ.२ पा. १ सू. ९ ) इत्यधिकरणान्तरविषयत्वाच्च पृथग् ग्रहणम्। **द्विरवत्तेति**। इदं भाष्यकारमतम्, यत्साक्षाद् द्व्यवदानसाधनको यागः पुरोडाशस्तत्प्रकृतितया यागसाधनमिति **आचार्यमते तु** कृत्स्नः पुरोडाशो यागसाधनं, द्विरवत्तस्याग्नौ प्रक्षेपरूपो होमस्तु हविष एकदेशद्वारा संस्कारकर्म। तथाच होमकाले कृत्स्नः पुरोडाशो देवतोद्देशेन मनसा त्यक्तव्यः; वचनबलादन्योद्देशेन त्यक्तैकदेशस्य स्विष्टकृति पुनर्देवतान्तरोद्देशेन त्याग इत्येवं विशेषः। **जडं स्यादिति**। दृग्भिन्नस्य प्रकाशमानत्वं दृगध्यस्ततया तदभेदेनोपपादनीयमिति प्राक् प्रसाधितत्वादध्यस्तस्य च जडत्वनियमादिति भावः। **ननु** टीकोक्तप्रामाण्यायोगयुक्तिरयुक्ता; इन्द्रियशब्दादिप्रमाकरणजन्यत्वेन प्रामाण्योपपत्तेरित्याशङ्क्य तामुपपादयति—**तच्चेन्द्रियाद्यगोचर इति**।

## भामती ।

दभ्यासो वा सवासनं विपर्यासमुन्मूलयेत्, न संशयाभ्यासः, सामान्यमात्रदर्शनाभ्यासो वा। नहि स्थाणुर्वा पुरुषो वेति वा आरोहपरिणाहवत् द्रव्यमिति वा शतशोऽपि ज्ञानमभ्यस्यमानं पुरुष एवेति निश्चयाय पर्याप्तं, ऋते विशेषदर्शनात् । **ननूक्तं** श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा युक्तिमयेन च व्यवस्थाप्यत इति । तस्मान्निर्विचिकित्स-शाब्दज्ञानसंततिरूपोपासना कर्मसहकारिण्यविद्याद्वयोच्छेदहेतुः ॥ नचासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता; साक्षात्काररूपो हि विपर्यासः साक्षात्काररूपेणैव तत्त्वज्ञानेनोच्छिद्यते, न तु परोक्षावभासेन; दिङ्मोहालातचक्रचलद्वृक्ष-मरुमरीचिसलिलादिविभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासिभिरेव दिगादितत्त्वप्रत्ययैर्निवृत्तिदर्शनात्, नो खल्वाप्त-वचनलिङ्गादिनिश्चितदिगादितत्त्वानां दिङ्मोहादयो निवर्तन्ते । तस्मात् त्वंपदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः । एतावता हि त्वंपदार्थस्य दुःखिशोकित्वादिसाक्षात्कारनिवृत्तिः नान्यथा । नचैष साक्षात्कारो मीमांसासहितस्यापि

## वेदान्तकल्पतरुः ।

उच्छ्रयः । विस्तारपरिमाणं **परिणाहः** । उपासना किमापातज्ञानाभ्यासो, निश्चयाभ्यासो वा । **आद्यं** भङ्क्त्वा **द्वितीयं** शङ्कते—**नन्विति । ननू**पासनैवाविद्यां निवर्तयतु, किं साक्षात्कारेण, तत्र कर्मोपयोगस्तत्राह—**नचेति । ननु** रज्जुस-र्पादिभ्रमा अपरोक्षा अप्याप्तवचनादिजनितपरोक्षज्ञानैर्निवर्तन्ते—**सत्यं**; ते निरुपाधिकाः, कर्तृत्वादिषु सोपाधिक इत्य-भिप्रेत्य तथाविधमुदाहरति—**दिङ्मोहेति** । नौस्थस्य तटगततरुषु चलद्वृक्षभ्रमः । अपरोक्षे ब्रह्मणि शब्द एवापरोक्षज्ञान-हेतुरन्यथा तु तत्र परोक्षज्ञानस्य भ्रमत्वापातादिति, तत्राह—**नचैष इति । अयमभिसंधिः**—स्वतोऽपरोक्षस्यापि ब्रह्मणः पारोक्ष्यं भ्रमगृहीतम् । तत्रापरोक्षप्रमाकरणादेव तत्साक्षात्कारः । अन्तःकरणं च सोपाधिके आत्मनि जनयत्यहंवृत्ति-मिति सिद्धमस्यात्मन्यपरोक्षधीहेतुत्वम् । तत्तु शब्दजनितब्रह्मात्मैक्यधीसन्ततिवासितं तत्पदलक्ष्यब्रह्मात्मतां जीवस्य साक्षात्कारयति, अक्षमिव पूर्वानुभवसंस्कारावसितं तत्तेदन्तोपलक्षितैक्यविषयप्रत्यभिज्ञाहेतुः, शब्दस्तु नापरोक्षप्रमाहेतुः

## कल्पतरुपरिमलः ।

'न चक्षुषा गृह्यते' 'यन्मनसा न मनुत' इत्यादिश्रुतेरिति भावः । **तथाविधमिति ।** दिङ्मोहेऽपि पुरुषविशेषस्यापरिशी-लितप्रदेशविशेषप्राप्तिरुपाधिः । शाब्दापरोक्षशङ्कामुपस्कुर्वन्नवतारयति—**अपरोक्षे ब्रह्मणीति । अयमर्थः**—अभिव्य-क्तचैतन्याभिन्नत्वमर्थस्यापरोक्ष्यं, तत्तु नित्याभिव्यक्तजीवचैतन्याभिन्ने ब्रह्मणि स्वाभाविकम् । अतएव 'यत्साक्षादपरोक्षा-द्ब्रह्मे'ति श्रुतिः । घटादीनामपरोक्षचैतन्याभेदाध्यासोपाधिकं तदेव प्रत्यक्षोऽयं घटः प्रत्यक्षं घटं पश्यामीत्यादिव्याहारालम्ब-नम् । ज्ञानस्यापरोक्ष्यमपरोक्षार्थव्यवहारानुकूलज्ञानत्वं तत्स्वस्य सुखादेश्च प्रकाशरूपे नित्याभिव्यक्तसाक्षिचैतन्ये वानुगतं स्वाभाविकं, चाक्षुषादिवृत्तिषु तत्तदभिव्यक्तचैतन्याभेदाध्यासोपाधिकं, नतु जातिरूपम् इन्द्रियजन्यत्वाद्युपाधिरूपं वा ज्ञाना-नामापरोक्ष्यम् । अपरोक्षज्ञानविषयत्वमर्थापरोक्ष्यमिति न युक्तम्; तत्तांशविषयप्रत्यभिज्ञायां तत्तांशे चातिप्रसक्तेः, साक्ष्यव्या-पनाच्च । एवंच तत्त्वमस्यादिशब्दजन्यम् अपरोक्षजीवाभिन्नब्रह्मज्ञानमपरोक्षमेव भवति । नचैवं सति—अनुमितेरप्यपरोक्ष-पर्वतादावापरोक्ष्यं स्यादिति—वाच्यम्; इष्टापत्तेरिति । **शब्द एवे**त्येवकारेण प्रथमं श्रवणजन्ये ब्रह्मज्ञाने क्लृप्तकरण-भावस्य शब्दस्यैवाविद्यानिवर्तके चरमसाक्षात्कारेऽपि करणत्वोपपत्तेर्न तत्र करणान्तरं कल्पनीयमिति सूचितम् । **नन्वप-**रोक्षजीवाभेदतः श्रुतेश्चापरोक्षेऽपि ब्रह्मणि परोक्षत्वावगाहि ज्ञानं लोकसिद्धमनुभूयते, अतएव निरतिशयानन्दरूपं ब्रह्म ममापरोक्षं न प्रकाशत इति व्यवहारः । एवं श्रुतितोऽपि ब्रह्मणि परोक्षत्वावगाहि परोक्षमेव ज्ञानं भवेदित्याशङ्क्याह—**अन्यथेति** । लोकत इव श्रुतितो नापरोक्षे ब्रह्मणि परोक्षत्वावगाहि भ्रमरूपं ज्ञानं युक्तमिति भावः । **स्वतोऽपरो-क्षस्यापीति ।** यदि ब्रह्म स्वतोऽपरोक्षमिति तद्विषयशब्दजन्यमपि ज्ञानमपरोक्षं भवेत्, तदा श्रवणजन्यज्ञानमप्य-परोक्षमिति श्रुतवेदान्तस्य पुंसः तस्मिन्पारोक्ष्यभ्रमानुवृत्तिर्न स्यात् । अनुवर्तते च तदनन्तरमपि भ्रमगृहीतं ब्रह्मणि पारो-क्ष्यमिति न शब्दादपरोक्षज्ञानम् । तस्मादपरोक्षज्ञानजननसमर्थादन्यत एव तदेष्टव्यम् । क्लृप्तं चान्तःकरणस्य तत्सामर्थ्यं; ब्राह्मलौकिकभोगानुभवे 'मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके मनोऽस्य दैवं चक्षु' रिति श्रुतेः । विशिष्य चाहंवृ-त्तिरूपे स्वात्मज्ञानेऽपि तस्य करणत्वं क्लृप्तम्; चरमसाक्षात्कारस्य शब्दजन्यत्वाभ्युपगमेऽपि तस्य व्यापारोऽवश्यमपेक्ष-णीयः । तस्मादावश्यकेनान्तःकरणेनैव तदुत्पत्त्युपपत्तौ तदर्थं तत्त्वमस्यादिवाक्यस्य तत्कालेऽपि पुनरनुसंधानकल्पन एव गौरवमिति भावः । **ननु** तर्हि तत्त्वमस्यादिवाक्यश्रवणनिरपेक्षमेवान्तःकरणं ब्रह्मात्मैक्यमपरोक्षयेदित्यत्राह—**तत्तु शब्दजनितेति । उक्तंच गीताविवरणे भाष्यकारैः**—शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करण-मिति । **नन्वप**रोक्षब्रह्मविषयस्य शब्दस्यापरोक्षप्रमाहेतुत्वं न शक्यं प्रत्याख्यातुम्, श्रवणजन्यापरोक्षज्ञाने सत्यपि पारो-क्ष्यभ्रमानुवृत्तिस्त्वसंभावनादिदोषप्रतिबद्धस्य भ्रमनिवर्तनकार्याक्षमतया भवेदित्याशङ्क्याह—**शब्दस्त्विति ।** अभिव्यक्त-चैतन्याभिन्नत्वमर्थापरोक्ष्यमिति तावन्न युक्तम्; **स्वरूपसदभेदमात्रविवक्षायां** चाक्षुषवृत्त्यभिव्यक्तपर्वतावच्छिन्न-

## वेदान्तकल्पतरुः ।

क्लृप्तः; प्रमेयापरोक्ष्ययोग्यत्वेन प्रमायाः साक्षात्कारत्वे देहात्मभेदविषयानुमितेरपि तदापत्तिः, दशमस्त्वमसीत्यत्रापि तत्सन्निवादक्षादेव साक्षात्कारः, अन्धादेस्तु परोक्षधीरेव । **अपिच**—'वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः । मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥' नच प्रामाण्यपरतस्त्वापातः; अपवादनिरासाय मूलशुद्ध्यनुरोधात् । दृश्यते त्वग्र्यया बुद्ध्येत्यादेर्नयबृंहितवचनादित्थमुररीकारः । साक्षादपरोक्षादित्येवमाकारैव धीः शब्दादुदेति, नतु परोक्षं ब्रह्मेति; सा तु करणस्वभावात्परोक्षावतिष्ठते न भ्रम इति सर्वमवदातम् ॥ स्वरूपप्रकाशस्याभिव्यक्तिसंस्कारमुपपाद्य व्यञ्जकान्तःकरणवृत्तेरुत्पाद्य-

## कल्पतरुपरिमलः ।

चैतन्येन व्यवहितवह्न्यवच्छिन्नचैतन्यस्य तेन व्यवहितवह्नेश्च स्वाभाविकाध्यासिकाभेदसत्त्वेन व्यवहितवह्नेरप्यपरोक्षत्वापत्तेः, **निरस्तभेदोपाधिकाभेदविवक्षायां** चरमसाक्षात्कारनिवर्त्याविद्योपाधेः चरमसाक्षात्कारोत्पत्तिदशायामपि सत्त्वेन ब्रह्मणस्तदानीमापरोक्ष्याभावापत्तेः, **स्फुरदभेदविवक्षायां** ताद्धर्म्याध्यासविषये दुःखशोकादौ तदानीं सद्रूपब्रह्माभेदास्फुरणादापरोक्ष्याभावापत्तेः, **स्वव्यवहारानुकूलं यदभिव्यक्तचैतन्यं तदभेदविवक्षाया**मनुमेयवह्न्यादिव्यवहारानुकूलेन जीवचैतन्येन प्रागुक्तरीत्यैवाभिन्नस्य वह्न्यादेरापरोक्ष्यापातात्, **स्वव्यवहारानुकूलो योऽभिव्यक्तचैतन्याभेदस्तद्वत्त्वविवक्षायां** तत्तदाकारधीवृत्तिसमुल्लासमात्रादपि भवति व्यवहारे चैतन्याभेदस्यानपेक्षितत्वेनासंभवापत्तेः, **स्वावरणनिवृत्त्यनुकूलचैतन्याभेदवत्त्वविवक्षायामा**वरणनिवर्तकत्वग्रहणाधीनमापरोक्ष्यग्रहणम् आपरोक्ष्यग्रहणाधीनमावरणनिवर्तकत्वग्रहणमिति परस्पराश्रयापत्तेः, एवमुक्तरूपार्थापरोक्ष्यनिर्वचनायोगात् तदपेक्षमपरोक्षार्थव्यवहारानुकूलज्ञानत्वं ज्ञानापरोक्ष्यमिति निर्वचनमप्ययुक्तम्; तस्मात्स्वाविषयविषयकज्ञानाजन्यज्ञानत्वं ज्ञानापरोक्ष्यमिति निर्वक्तव्यम् । तच्चाक्षुषादिवृत्त्यभिव्यक्तचैतन्येषु नित्याभिव्यक्तसाक्षिचैतन्येषु चानुगतम्, अनुमितिशाब्दज्ञानादिभ्यश्च तत्तदविषयलिङ्गशब्दादिज्ञानजन्येभ्यो व्यावृत्तम् । **नच** विशिष्टज्ञानं विशेषणज्ञानजन्यमित्यभ्युपगमे दण्डकुण्डलोभयस्मृतिजन्यदण्डिप्रत्यक्षाव्याप्तिः; वस्तुगत्या यः स्वाविषयः तद्विषयत्वं यस्य ज्ञानस्य जनकतायामवच्छेदककोटिप्रविष्टं तदजन्यत्वस्य विवक्षितत्वात्, उक्तस्मृतेर्दण्डिप्रत्यक्षे तदविषयकुण्डलविषयत्वेनाजनकतया तत्रापि लक्षणसत्त्वात् । यदीश्वरज्ञानमुपादानगोचरज्ञानतया 'बहु स्यां प्रजायेये'तिवदिदं ज्ञानमस्य स्यादिति संकल्परूपतया वा कारणमिष्यते, तदा तज्जन्येषूक्तज्ञानेष्वव्याप्तिवारणाय समानाधिकरणत्वं ज्ञाने विशेषणं देयम् । **नच** कोलाहले बुभुत्सितशब्दग्रहो बुभुत्साजन्यस्तन्मूलबोधेष्टसाधनताज्ञानेनापि जन्य इति तत्राव्याप्तिः; बुभुत्सयान्यथासिद्धस्य तस्य शब्दग्रहे कारणत्वाभावाद्, बुभुत्सयेतरशब्दग्रहप्रतिबन्धे सति क्लृप्तकारणादेव बुभुत्सितशब्दग्रह इति तत्र बुभुत्साया अप्यकारणत्वाच्च । **नच** व्याप्तिज्ञानत्वावच्छिन्नं सर्वमनुमितिजनकं व्याप्तिज्ञानत्वादित्यनुमितावतिव्याप्तिः; तत्रानुमितेः सामान्यतः सर्वव्याप्तिविषयायाः स्वकारणज्ञानविषयव्याप्तिविषयत्वसत्त्वेऽपि स्वकारणव्याप्तिज्ञानवत् प्रकृतहेतुसाध्यविशेषोपरक्ततया तद्विषयत्वाभावेन तस्याः स्वाविषयविषयकज्ञानजन्यत्वात् । **नचैव**मपि हेतुतावच्छेदकसाध्यतावच्छेदकविशेषावच्छिन्नहेतुसाध्योपरक्तव्याप्तिज्ञानत्वावच्छिन्नसर्वपक्षीकरणे सत्युक्तानुमितावतिव्याप्तिः; सामान्यधर्ममात्रानवच्छिन्नतया यः स्वविषयो न भवति तद्विषयत्वस्य विवक्षितत्वात्, तस्यामनुमितौ हेतुतावच्छेदकसाध्यतावच्छेदकयोः सामान्यधर्ममात्रावच्छिन्नत्वेन विषयतया सामान्यधर्ममात्रानवच्छिन्नतया तदविषयत्वस्य सत्त्वात् । **नचानु**पलब्धिप्रमाणजन्याभावज्ञानेऽतिव्याप्तिः; योग्यानुपलब्धेः प्रमाणत्वात्, योग्यतायाश्च यद्यत्राधिकरणे प्रतियोग्यभविष्यत्, तदा भूतलमिवाद्रक्ष्यतेति तर्करूपत्वेनानुपलब्धिज्ञानस्य स्वाविषयविषयकतर्करूपज्ञानजन्यत्वात्, स्मृतौ स्वसमानविषयपूर्वानुभवसंस्कारजन्यायामतिव्याप्तिवारणार्थमग्रिमज्ञानपदमनुभवपरं बोध्यम् । एवंच प्रत्यभिज्ञायास्तत्तांशेऽपि नातिव्याप्तिः; तस्यास्तदंशे स्मृतित्वाङ्गीकारात् । एवमपरोक्षज्ञानलक्षणव्यवस्थितौ तज्जन्यव्यवहारयोग्यत्वमर्थापरोक्ष्यमिति तन्निर्वचनं द्रष्टव्यम् । एवंच शब्दप्रमाणं स्वाविषयविषयकज्ञानजन्यां परोक्षप्रमामेव जनयतीति नापरोक्षप्रमाहेतुरिति भावः । **ननु** दशमस्त्वमसीत्यादौ शब्दस्याप्यपरोक्षज्ञानजनकत्वं सिद्धमस्तीत्याशङ्क्याह—**दशम इति** । एवमनुमितेरपि पर्वतायंशे नापरोक्ष्यं, तत्रापरोक्षभ्रमस्तु तदानीन्तनापरोक्षज्ञानभेदाग्रहादिति द्रष्टव्यम् । **अन्धादेस्त्विति** । अभ्युपेत्यायं परिहारः । दशमोऽहमस्मीत्यपरोक्षज्ञानम् अन्तःकरणे न संभवति; शरीरविषयं चेत्, स्पर्शनेन्द्रियेण वा ज्ञानान्तरोपनयसहितान्तःकरणेन वा संभवति । **ननु** भावनाजन्यसाक्षात्कारः कामिनीसाक्षात्कारवद्भ्रमः स्याद्, नचान्तःकरणसाहित्येन विशेषः; तत्रापि तत्सत्त्वादित्यत आह—**अपिचेति** । **ननु** ब्रह्मसाक्षात्कारस्य मनःकरणकत्वाभ्युपगमो 'यन्मनसा न मनुत' इति श्रुतिविरुद्ध इत्यत्राह—**दृश्यत इति** । प्रागुपन्यस्तन्यायोपबृंहितायां 'दृश्यत' इति श्रुतावग्र्यया सूक्ष्मयेति विशेषणाद्यन्मनसेति श्रुतिरनवहितमनोविषया, यथा 'तं त्वौपनिषद'मिति श्रुतावौपनिषदमिति विशेषणा'द्यद्वाचानभ्युदित'मिति श्रुतिर्विशिष्टशक्तिकशब्दविषयेति भावः । **साक्षादपरोक्षादिति** । यथा प्रत्यक्षस्पर्शाश्रयत्वादिलिङ्गजन्या वायोः प्रत्यक्षत्वानुमितिः स्वयं प्रत्यक्षत्वरहितेत्येतावदेव, नतु वायौ प्रत्यक्षत्वाभावमवगाहत इति न भ्रमत्वं प्रतिपद्यते, एवमिहापि योजनीयम् । **स्वरूपप्रकाशस्येति** । **आविर्भावयतीत्यन्तेन ग्रन्थेन** जीवस्वरूपप्रकाशस्य ब्रह्माभेदसाक्षात्कारेण तदभेदति-

## भामती ।

शब्दस्य प्रमाणस्य फलं, अपि तु प्रत्यक्षस्य; तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । नचायमनुभवो ब्रह्मस्वभावो, येन न जन्येत, अपि त्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः । नचैतावता ब्रह्मणोऽपराधीनप्रकाशता । नहि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति; सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते, न तूपहितमपि । **यथाह स्म भगवान् भाष्यकारः—'नायमेकान्तेनाविषयः' इति ।** नचान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः; तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् । अन्यथा चैतन्यच्छायापत्तिं विनाऽन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । नचानुमितभावितवह्निसाक्षात्कारवत् प्रतिभात्वेनास्याप्रामाण्यं, तत्र वह्नित्वलक्षणस्य परोक्षत्वात्, इह तु

## वेदान्तकल्पतरुः ।

तामाह—**नचेति** । वृत्तिविषयत्वे ब्रह्मणोऽस्वप्रकाशत्वमाशङ्क्यासमुच्चयमतेन कर्मोपयोगाय साम्यमाह—**न चैतावतेति** । स्वप्रकाशस्यैव शाब्दज्ञानविषयत्वं त्वयापीष्टमित्यर्थः । परिहारसाम्यमाह—**सर्वेति** । **ननु** निरुपाधिब्रह्मसाक्षात्कारगोचरे, कथमुपहिततेति, तत्राह—**नचान्तःकरणेति** । निरुपाधि ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते; स्वस्या अप्युपाधित्वाविशेषात् । ततः स्वसत्तायां विनाशहेतुसांनिध्याद्विनश्यदवस्थत्वम् । एवं च नानुपहितस्य विषयता, न चोपाधेर्निवर्तकान्तरापेक्षेति भावः । **ननु**—वृत्तिविशिष्टस्य शबलतया न तत्त्वसाक्षात्कारगोचरता; वृत्त्यवच्छिन्नात्मविषयत्वे च वृत्तेः स्वविषयत्वापातः, विशेषणाग्रहे विशिष्टाग्रहात्, उपलक्षितस्य तु न वृत्त्युपाधिकता—**इति । उच्यते**; वृत्त्युपरागोऽत्र सत्तयोपयुज्यते न प्रतिभास्यतयातो वृत्तिसंसर्गे सत्यात्मा विषयो भवति, न तु स्वत इति न दोषः । **ननू**पाधिसंबन्धाद्विषयत्वं, विषयत्वे चोपाधिसंबन्धो विषयविषयित्वलक्षण इतीतरेतराश्रयमत आह—**अन्यथेति** । न ब्रह्मसाक्षात्कारस्य ब्रह्मविषयत्वप्रयुक्तं चैतन्यप्रतिबिम्बितत्वं, किं तु स्वतः; घटादिवृत्तिष्वपि साम्यात् । चैतन्यं च ब्रह्मेति स्वाभाविको

## कल्पतरुपरिमलः ।

रोधायकाविद्यानिवृत्तिरूपाभिव्यक्तिसंस्कारमुपपाद्याभिव्यञ्जकस्य तस्य साक्षात्कारस्य **नचासावनुत्पादितब्रह्मानुभवेति टीकया** प्रागुपक्षिप्तामुत्पाद्यतामन्तःकरणवृत्तिरूपत्वप्रदर्शनेनोपपादयतीत्यर्थः । **असमुच्चयमते** कर्मोपासनयोः कालैक्येन समुच्चयो नास्तीति सिद्धान्ते । **परिहारसाम्यमाहेति** । वृत्तिविषयत्वं स्वप्रकाशत्वं च विरुद्धमित्याशङ्कायामुपहितानुपहितरूपभेदेन समाधानं मतद्वयेऽपि समानं दर्शयतीत्यर्थः । **नन्वेवं**—सत्यविद्योपहितो जीवः कथं स्वप्रकाशः स्यादिति—**चेत्, उच्यते**; उपहितमुपधानकाले स्वरूपेणापि न स्वप्रकाशमिति नार्थः, किंतूपहितरूपेण न स्वप्रकाशमिति, अतो न दोषः । **ननु निरुपाधि ब्रह्मेति** । उपहितं वृत्तिविषय इति न युक्तं; ब्रह्म शुद्धं निरुपाधिकमिति हि वृत्तिरूपसाक्षात्कारस्याकार इष्यते, नचोपाधौ विद्यमाने तदाकारः संभवितुमर्हतीति शङ्कार्थः । मिथ्याभूतेषूपाधिषु विद्यमानेष्वपि न वास्तवनिरुपाधिकत्वाकारसाक्षात्कारोदयो निरुच्यत इति समाधानाभिप्रायमाह—**निरुपाधीति । ननु** मिथ्याभूतानां तेषामुपाधीनां केन निवृत्तिः ? साक्षात्कारेणेति चेत्, तस्य केन निवृत्तिरित्याकाङ्क्षायामाह—**स्वस्वेतरेति** । अनेन चरमवृत्त्युदयकाले उपाध्यन्तराण्यपि सन्त्येव । **टीकायां**—वृत्तेरेवोपाधित्ववर्णनम् अन्ततो वृत्तिमात्रमस्तीत्यभ्युपेत्यवाद इति सूचितम् । **ननूपा**धीनां निवृत्तावनुपहितमेव साक्षात्कारविषय इति स्यादित्याशङ्क्य साक्षात्कारदशायां विनश्यदवस्थतामात्रं, नतु विनाशोदय इत्याह—**ततः स्वसत्तायामिति । वृत्त्युपहितं** वृत्त्या विशिष्टं, तदुपलक्षितं वा । **आद्यं** दूषयित्वा **द्वितीयं** दूषयति—**उपलक्षितस्य त्विति** । अविद्यमानेनाप्युपलक्षितत्वं भवति; यथोड्डीय गतेनापि काकेन गृहस्य; वृत्त्या तु विद्यमानयैवोपहितता विषयताघटनार्थमिष्यते; अतः प्रसिद्धोपलक्षणवैलक्षण्याद् न वृत्तिरुपलक्षणमिति विद्यमानव्यावर्तकत्वनियमाद्विशेषणमेव वाच्या, अतः पूर्वोक्तदोषद्वयं प्रादुःष्यादिति भावः । **वृत्त्युपरागोऽत्रेति । नन्वत्र**—विशेषणोपलक्षणपक्षयोः कं पक्षं परिगृह्य परिहारो वर्ण्यते, **उच्यते,** सत्तयोपयुज्यते इत्यविद्यमानव्यावर्तकत्वनिषेधान्नोपलक्षणं, न प्रतिभास्यतयेति कार्यान्वयनिषेधान्न विशेषणं, किंतु कार्यानन्वयी सत्त्वनियत उपाधिर्विशेषणोपलक्षणाभ्याम् अन्यस्तृतीयः प्रकार इति वाक्यान्वयाधिकरणे ( ब्र. अ. १ पा. ४ सू. १९ ) वक्ष्यमाणं तृतीयं प्रकारं परिगृह्य परिहारः । **विषयविषयित्वलक्षणः** विषयविषयित्वोपाधिकस्तत्प्रयोज्य इति यावत् । एवंहि इतरेतराश्रयं इति घटते । लक्षणशब्दस्य स्वरूपवाचित्वे तु विषयविषयिभाव एव तत्प्रयोजक उक्त इत्यात्माश्रय एव भवेत् । **चैतन्यप्रतिबिम्बितत्वमिति** । प्रतिबिम्बितचैतन्यकत्वमित्यर्थः । आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य पूर्वनिपातानियमः । संजातचैतन्यप्रतिबिम्बत्वमिति वार्थः; तारकादेराकृतिगणत्वात् तारकितं नभ इतिवदितच्प्रत्ययः । तथा च चैतन्यवृत्त्योः प्रतिबिम्बतदुपाधित्वलक्षणसं-

## भामती ।

ब्रह्मरूपस्योपाधिकलुषितस्य जीवस्य प्रागप्यपरोक्षत्वात् । नहि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते, जीव एव तु तत्तदुपाधिरहितः शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते । नच तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षमनुभवति, एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेनेति । अन्तःकरणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनायाः कर्मापेक्षेति चेत्, न; तस्याः कर्मानुष्ठानेन सहभावाभावेन तत्सहकारित्वानुपपत्तेः । न खलु 'तत्त्वमसि' इत्यादेर्वाक्यान्निर्विचिकित्सं शुद्धबुद्धोदासीनस्वभावं अकर्तृत्वाद्युपेतं अपेतब्राह्मणत्वादिजातिं देहाद्यतिरिक्तं एकमात्मानं प्रतिपद्यमानः कर्मस्वधिकारमवबोद्धुमर्हति । अनर्हश्च कथं कर्ता वाधिकृतो वा । यद्युच्येत—निश्चितेऽपि तत्त्वे विपर्यासनिवन्धनो व्यवहारोऽनुवर्तमानो दृश्यते, यथा गुडस्य माधुर्यविनिश्चयेऽपि पित्तोपहतेन्द्रियाणां तिक्तावभासानुवृत्तिः; आस्वाद्य थूत्कृत्य त्यागात्, तस्मादविद्यासंस्कारानुवृत्त्या कर्मानुष्ठानं, तेन च विद्यासहकारिणा तत्समुच्छेद उपपत्स्यते । नच—कर्माविद्यात्मकं कथमविद्यामुच्छिनत्ति, कर्मणो वा तदुच्छेदकस्य कुत उच्छेदक इति—वाच्यम्, सजातीयस्वपरविरोधिनां भावानां वहुलमुपलब्धेः । **यथा पयः पयोऽन्तरं जरयति, स्वयं च जीर्यति । यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति । यथा वा कतकरजो रजोऽन्तराविले पाथसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोति ।** एवं कर्माविद्यात्मकमपि अविद्यान्तराण्यपगमयत् स्वयमप्यपगच्छतीति । **अत्रोच्यते**—सत्यं, 'सदेव सोम्येदम्' इत्युपक्रमात् 'तत्त्वमसि' इत्यन्ताच्छब्दात्, ब्रह्ममीमांसोपकरणादसकृदभ्यस्तात्, निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासंस्कारानुवृत्तावनुवर्तन्ते सांसारिकाः प्रत्ययास्तद्व्यवहाराश्च; तथापि तानप्ययं व्यवहारप्रत्ययान्मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुडं थूत्कृत्य त्यजन्नपि तस्य तिक्तताम् । तथाचायं क्रियाकर्तृकर-

## वेदान्तकल्पतरुः ।

वृतेस्तत्संबन्ध इत्यर्थः । यच्च स्वरूपव्यतिरिक्तसाक्षात्कारस्य भ्रमत्वमिति तत्राह—**नचेति ।** विषयविसंवादाभावात् प्रमात्वमित्यर्थः । जीवचैतन्यमात्रापरोक्षेपि शुद्धानन्दात्मत्वादेः पारोक्ष्यान्न तदाकारसाक्षात्कारो यथार्थ इत्याशङ्क्याह—**नहीति ।** शुद्धादीनां स्वभावत्वेप्युपाधितिरोधानादविभावनम् । वेदान्तजज्ञानेन तत्तदुपाध्यपगमे यथावदभिव्यक्तो जीवो ब्रह्मेति गीयते, स चेदुपाध्यभावस्तर्हि तदतिरिक्तः परोक्षः कथं साक्षात्कारे भायादत आह—**नचेति ।** यथा परैरन्योन्याभावो न भवति घट इति व्यपदिश्यमानोपि घटतदन्योन्याभावव्यतिरिक्तो नाभाव उपेयते; नच घटतदन्योन्याभावयोरेकता, एवमस्माकं निरुपाधिकं ब्रह्म, न चोपाध्यभावस्ततोन्य इत्यर्थः । **ननु** चैतन्याभिन्नाश्चेदानन्दादयस्तद्वदविद्यादशायां विभायेरन्, उपाधिरुद्धाश्चेचैतन्येपि निरोधस्तुल्यस्तदभेदादिति शङ्कामुपसंहारव्याजेन परिहरति—**तस्मादिति ।** यथा षड्जादयो गान्धर्वशास्त्राभ्यासात् प्रागपि स्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते, व्यज्यन्ते तु शास्त्रवासितेन तेन; एवं वेदान्तवाक्यजन्यब्रह्मात्मैकताकारज्ञानवासितान्तःकरणेन तद्भावाभिव्यक्तिर्न प्रागिति । निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाः स्वराः । एषां समुदायो ग्रामः । **मूर्च्छना तु** तेषामारोहावरोहौ । समुच्चयपक्षमिदानीं निराकरोति—**नेति । तत्र** किमिह वा जन्मान्तरे वानुष्ठितं कर्म संस्कारद्वारा ज्ञानोत्पत्तावुपयुज्यते, उतेहैवावगते ब्रह्मणि कृतकर्मणां भावनया समुच्चय इति । **द्वितीये** किं भावनाफलसाक्षात्कारे कर्मोपयोगः, उत भावनास्वरूपे इति । **न तावत्कार्य** इत्याह—**तस्या इत्यादिना ।** तदुच्छेदकस्य कर्मण इति समानाधिकरणे षष्ठ्यौ । **सजातीयेति ।** सजातीयाश्च ते स्वयं च परे च तेषां विरोधिनस्तथोक्ताः । अवगते तत्त्वे विपर्यासदर्शनेन कर्मानुष्ठानसंभवात् समुच्चय इति प्रत्यवस्थानं दूषयति—**अत्रोच्यत इति । विदुष इति ।** क्रियाकर्त्रादिर्वास्तव इति निश्चयवत इत्यर्थः । **ननु** विदुषश्चेदधिकारस्तर्हि क्रियाक-

## कल्पतरुपरिमलः ।

बन्धो न विषयविषयिभावप्रयोज्यः, स्वयमेव तु तत्प्रयोजक इति नान्योन्याश्रय इत्यर्थः । **भ्रमत्वमिति ।** संसारदशायामप्रकाशमानं ब्रह्म परोक्षमिति तत्रापरोक्ष्यावगाहितया भ्रमत्वमभिप्रेतम् । **वेदान्तजज्ञानेन** वेदान्तजन्यज्ञानमूलभावनापरिपाकसहितान्तःकरणजन्यज्ञानेनेत्यर्थः । **तत्तद्रूपेण** षड्जत्वादिरूपेण । यद्यपि गान्धर्वशास्त्राभ्यासरहितैरपि सूक्ष्ममतिभिः श्रूयमाणाः स्वराः किंचित्परस्परवैलक्षण्येनानुभूयन्ते, तदेव षड्जत्वादिकमिति तैस्तदवगम्यत एव, षड्जादिशब्दविशेषवाच्यत्वं परं न ज्ञायते; तथापि ये स्थूलमतयः स्वरानाकर्णयन्तोऽपि समवर्णपरिमाणान् केशादीनिव परस्परविविक्ततयावगन्तुं न प्रभवन्ति, तेषामपि गान्धर्वशास्त्रपरिचये सति क्रमेण विविक्तोल्लेखो दृश्यते स इहोदाहरणम् । **निषादेति ।** वीणादिषु प्रथमश्रूयमाणश्रुत्याख्यशब्दावयवानुरणनात्मका घण्टानादानुरणनसदृशाः स्वराः सप्त । तेषां स्वराणां समुदायाः षड्जमध्यमगान्धारस्वरप्रभावा नन्द्यावर्तजीमूतसुभद्राख्यास्त्रिविधा ग्रामाः स्तेषु, ग्रामेषु क्रमेण

भामती ।

णेतिकर्तव्यताफलप्रपञ्चमतात्त्विकं विनिश्चिन्वन्कथमधिकृतो नाम, विदुषो ह्यधिकारः, अन्यथा पशुशूद्रादीनामप्यधिकारो दुर्वारः स्यात् । क्रियाकर्त्रादिस्वरूपविभागं च विद्वस्यमान इह विद्वानभिमतः कर्मकाण्डे । अतएव भगवानविद्वद्विषयत्वं शास्त्रस्य वर्णयांबभूव भाष्यकारः । तस्माद्यथा राजजातीयाभिमानकर्तृके राजसूये न विप्रवैश्यजातीयाभिमानिनोऽधिकारः । एवं द्विजातिकर्तृक्रियाकरणादिविभागाभिमानिकर्तृके कर्मणि न तदनभिमानिनोऽधिकारः । नचानधिकृतेन समर्थेनापि कृतं वैदिकं कर्म फलाय कल्पते; वैश्यस्तोम इव ब्राह्मणराजन्याभ्याम् । तेन दृष्टार्थेषु कर्मसु शक्तः प्रवर्तमानः प्राप्नोतु फलं; दृष्टत्वात्, अदृष्टार्थेषु तु शास्त्रैकसमधिगम्यं फलमनधिकारिणि न युज्यत इति नोपासनाकार्ये कर्मापेक्षा । **स्यादेतत्**—मनुष्याभिमानवदधिकारिके कर्मणि विहिते यथा तदभिमानरहितस्यानधिकारः, एवं निषेधविधयोऽपि मनुष्याधिकारा इति तदभिमानरहितस्तेष्वपि नाधिक्रियेत, पश्वादिवत् । तथाचायं निषिद्धमनुतिष्ठन् न प्रत्यवेयात्, तिर्यगादिवदिति भिन्नकर्मताषातः । **मैवम्**; न खल्वयं सर्वथा मनुष्याभिमानरहितः, किं त्वविद्यासंस्कारानुवृत्त्यास्य

वेदान्तकल्पतरुः ।

त्रादेर्वास्तवत्वमित्याशङ्क्याह—**क्रियाकर्त्रादीति । विद्वस्यमानः** अविद्वानेव विद्वान्भवन्विद्वदाभास इत्यर्थः । लोहितादिडाज्भ्यः क्यषिति क्यषन्तस्य रूपम् । अतएवाविद्वान्कर्मकाण्डेधिकार्यभिमत इति । **अविद्वद्विषयत्वं शास्त्रस्य वर्णयांबभूवेति** । प्राक् चेत्यादिभाष्येणेत्यर्थः । यदि प्रतीयमानाधिकारनिमित्तस्य ब्राह्मण्यादेः शास्त्रनिमित्तमिथ्यात्वप्रत्ययादश्रद्दधानो विध्यनधिकारी, तर्ह्यतिप्रसङ्ग इति शङ्कते—**स्यादेतदिति** । भिन्नमुल्लङ्घितं शास्त्रनिषिद्धं कर्म येन स तथा तस्य भावस्तत्ता अतिक्रान्तनिषेधतेत्यर्थः । अवगतमिथ्याभावस्याप्यधिकारनिमित्तस्य प्रतीयमानत्वान्निषेधाधिकारहेतुता । नच श्रद्दधानता; इहाधिकारहेतुरतत्त्वविदोऽपि नास्तिकत्वेनाश्रद्दधतो निषेधाधिकारात्, इतरथा निषेधलङ्घिनस्तस्य प्रत्यवायाभावापाताद्विधिषु तु श्रद्धाप्यधिकारहेतुरिति । ब्रह्मविदो नाधिकार इत्याह—**मैवमित्यादिना** । यद्यपि यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रद्धारहितमपि कर्म वीर्यवदिति स्यात्सति; तथापि सा श्रद्धा भक्तिरूपा,

कल्पतरुपरिमलः ।

स्वराणामारोहाऽवरोहाभ्यां निवेशाः प्रतिग्रामं सप्तधा भिन्ना एकविंशतिमूर्च्छनाः । **तदुक्तम्**—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥ श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥ श्रुतिभ्यः स्युः स्वराः षड्जर्षभा गान्धारमध्यमाः । पञ्चमो धैवतश्चापि निषाद इति सप्तमः ॥ यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां संदोहो ग्राम इत्यभिधीयते ॥ षड्जग्रामो भवेदादौ मध्यमग्राम एव च । गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम् ॥ नन्द्यावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः ॥ क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्च्छनेत्युच्यते ग्रामस्था एताः सप्त सप्त च ॥' इति । **क्यषन्तस्य रूपमिति** । लोहितादेराकृतिगणत्वादिति भावः । **ननु**—क्यषन्तत्वे विद्वदाभास इत्यर्थो न लभ्यते; यथा पूर्वमलोहितः पश्चाल्लोहितो भवन् लोहितायमानः, एवं पूर्वमविद्वान् पश्चाद्विद्वान् भवन् विद्वस्यमान इत्येतदर्थो लभ्यते, अभूततद्भावे क्यषो विधानात्, विद्वदाभास इत्यर्थस्तु क्यङन्तत्वे लभ्यते; कर्तुः क्यङ् सलोपश्चेति सूत्रेण हि उपमानात् कर्तुस्तद्वदाचरतीत्यर्थे क्यङ्प्रत्ययो विहितः, श्येनायते काक इत्यादि च तदुदाहरणं लिखितं, तथेह क्यङन्तत्वे विद्वानिवाचरन्नविद्वान् विद्वस्यमान इत्यस्य सोऽर्थो लभ्यते । **नच**—'ओजसोऽप्सरसो नित्यं पयसस्तु विभाषयेति' वृत्तावुक्तत्वाद् ओजोप्सरःपयोव्यतिरिक्तेभ्यः सकारान्तेभ्यः क्यङ् न भवतीति—शङ्कनीयम्; तेभ्यः सलोपो न भवतीत्येव ततः सिद्ध्या क्यङभावाप्रसक्तेर्वार्तिककृता सलोपो वेति सामान्यतः सलोपस्य विकल्पितत्वमुक्त्वा ओजसोऽप्सरसो नित्यमिति सकारान्तविशेषयोस्तन्नित्यत्वस्योक्ततया तदनुसारेण तत्र पयोग्रहणस्य ओजोप्सरोव्यतिरिक्तसकलसकारान्तोपलक्षणतया वक्तव्यत्वाच्चेति—**चेत्, उच्यते;** क्रियाकर्त्रादिस्वरूपविभागं च विद्वस्यमानः इह विद्वानभिमत इति टीकावाक्येऽस्मिन् विद्वस्यमान इत्यस्य क्यङ्प्रत्ययान्तता न संभवति; विद्वानिवाचरन्नित्युपमेयगतसादृश्योपसर्जनस्य प्रकृत्यर्थस्य विदुषः क्रियाकर्त्रादिस्वरूपविभागमिति निर्दिष्टकर्मसापेक्षत्वेनासामर्थ्यात्, सविशेषणानां वृत्तिर्नेति महाभाष्यवचनात् । अत एव महान्तं पुत्रमिच्छतीति वाक्यस्यार्थे महान्तं पुत्रीयतीति न वृत्तिः । **ननु**—क्यषन्तत्वेऽपि विद्वदाभास इत्यर्थालाभ उक्तः, **नैष दोषः**; शास्त्रसिद्धेन मिथ्यात्वेन क्रियाकर्त्रादिविभागमविद्वानेव सन् यः कर्मानुष्ठानोपयोगिनं तं सत्यत्वेन वेत्ति स विद्वस्यमान इत्युक्त्या विद्वदाभास इत्यर्थलाभात् । एवमेव ह्युक्तमाचार्यैरविद्वानेव विद्वान् भवन्नित्यनेन । नह्येकेनैव रूपेण क्वचिदर्थे कस्यचित्समानकाले विद्याऽविद्ये संभवतः । अतोऽस्य वाक्यस्य रूपमे-

एते श्लोकाः तदुक्तं रत्नाकरे इत्युक्त्वा रणद्भिराघट्टनयेति माघ १ सर्गदशमश्लोकव्याख्यावसरे मल्लिनाथेन प्रदर्शिता इति रत्नाकरनामकग्रन्थादुद्धृता इति स्फुटम् ।

## भामती ।

मात्रया तदभिमानोऽनुवर्तते । अनुवर्तमानं च मिथ्येति मन्यमानो न श्रद्धत्त इत्युक्तम् । किमतो यद्येवम्, एतदतो भवति—विधिषु श्राद्धोऽधिकारी नाश्राद्धः । ततश्च मनुष्याद्यभिमानेनाश्रद्दधानो न विधिशास्त्रेणाधिक्रियते । तथाच स्मृतिः—'अश्रद्धया हुतं दत्तम्' इत्यादिका । निषेधशास्त्रं तु न श्रद्धामपेक्षते, अपि तु निषिध्यमानक्रियोन्मुखो नर इत्येव प्रवर्तते । तथाच सांसारिक इव श्रद्धावगतब्रह्मतत्त्वोऽपि निषेधमतिक्रम्य प्रवर्तमानः प्रत्यवैतीति न भिन्नकर्मदर्शनाभ्युपगमः । तस्मान्नोपासनायाः कार्ये कर्मापेक्षा । अतएव नोपासनोत्पत्तावपि; निर्विचिकित्सशाब्दज्ञानोत्पत्त्युत्तरकालमनधिकारः कर्मणीत्युक्तम् । तथा च श्रुतिः—'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।'

## वेदान्तकल्पतरुः ।

इयं तु प्रमाणद्वारा विश्वासात्मिकैव तदभावेऽनधिकार एवेति । न श्रद्दधान इति । नकारोयं प्रतिषेधवाची । यत एवावगतब्रह्मभावो विधिषु नाधिकार्यत एव । ज्ञानानन्तरं कर्मानुष्ठानासंभवान्नोपासनोत्पत्तौ कर्मापेक्षेति द्वितीयकल्पानवकाश इत्याह—अतएवेति । एतद्विभजते—निर्विचिकित्सेति । पितृमनुष्यदेवलोकासिद्धिहेतुभिः कर्मप्रजाधनशब्दवाच्यापरविद्याभिर्नामृतत्वमाप्तवन्तः, किंतु त्यागसाध्यज्ञानेनेत्यर्थः । तथा हि श्रुत्यन्तरम्—'पुत्रेणैवायं लोको जय्यो विद्यया देवलोकः कर्मणा पितृलोक' इति । इह भवान्तरे वाऽनुष्ठितं कर्म सत्त्वशुद्धिद्वारेण ज्ञानोत्पत्तिहेतुरिति पक्षमङ्गीकर्तुं शङ्कते

## कल्पतरुपरिमलः ।

दाभिप्रायत्वसिद्धौ सत्यत्वमिथ्यात्वे एव विद्याविद्याऽविषयरूपे पर्यवस्यतः । विद्वदाभास इत्यर्थ इति वाक्यशेषात्, क्रियाकर्त्रादिविभागे सत्यत्वबुद्धेरेव कर्मानुष्ठानोपयोगित्वाच्च, तस्याश्चाभूततद्भावः कादाचित्कत्वेन प्रागभूततयोपपादनीयः । न चालोहितो लोहितो भवतीत्यत्रेव अभूततद्भावे सर्वत्र उपात्तपूर्वावस्थोपमर्दनियमः; मृदं घटीकरोति तपनो लोहितायतीत्याद्युदाहरणे घटाद्यवस्थासु मृत्त्वाद्युपमर्दाभावात् । तस्मादविद्वानेव विद्वान्भवन्निति क्यषन्तस्य रूपमिति च युक्तमेव । यदितु लोहितादिसूत्रे भाष्यकारैर्नायं हलन्ताद्विधीयत इति हलन्तात् क्यषोऽनङ्गीकृतत्वादिह न भवति क्यषित्यपरितोषः, तदा विदेः कर्मणि नित्यापेक्षासत्त्वान्नित्यसापेक्षेषु चासामर्थ्येऽपि तत्र तत्र भूयसा समासादिवृत्तिदर्शनात् 'सुडनपुंसकस्ये'ति सौत्रासमर्थसमासरूपज्ञापकाच्च विद्वस्समानशब्द आचारक्यङन्त इत्येव समर्थनीयम् । नकारोऽयं प्रतिषेधवाचीति । पर्युदासवाचित्वे समासनियमस्य वार्तिककारेणोक्तत्वादिह च नञः समासाभावात् प्रतिषेधवाच्येवायम् । ततश्च प्रतिषेध्यक्रियाया यत्तदोश्चाध्याहारेण यः श्रद्दधानो न भवति स नाधिक्रियत इति वाक्यं पूरणीयमित्याशयः । पर्युदासवाचित्वमपि शक्यमुपपादयितुम्; सूत्रकारपक्षे महाविभाषाधिकारेण तद्वाचित्वेऽपि नञः समासनियमाभावात्, मीमांसकैर्यजतिषु येयजामहं करोति नानूयाजेष्वित्यस्यानूयाजव्यतिरिक्तेषु यज्ञेषु येयजामहं करोतीत्यर्थनिर्णयेन दीक्षितो न जुहोतीत्यस्यादीक्षितो जुहोतीत्यर्थनिर्णयेन च नञः समासाभावेऽपि पर्युदासवृत्तित्वस्याङ्गीकृतत्वात्, वृत्तानुपूर्वे च नचातिदीर्घे इत्यादिमहाकविप्रयोगदर्शनाच्च, समासनियमेऽपि गमिकर्मीकृतनैकनीवृतेतिवन्नसमास इति कल्पनोपपत्तेश्च । अत एव ज्ञानानन्तरमिति । ननु—सगुणज्ञानानन्तरं तदुपासनानिष्ठस्य कर्मानुष्ठानं संभवति; फलभूयस्त्वार्थं सहकारित्वेन तदपेक्षितं च भवति, तथैव चाचार्यैः—'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शना'दित्यधिकरणे ( ब्र. अ. ४ पा. १ सू. १६ ) वक्ष्यते, सगुणतदुपासनातत्फलविचारश्चात्रैव शास्त्रे महता प्रबन्धेन करिष्यते, तद्विचारसाध्यं च तदनुष्ठानमतः सगुणोपासनासहकारिकर्मानुष्ठानापेक्षितः कर्मावबोध इति तदानन्तर्यमथशब्दार्थः कुतो न भवेत् ? सगुणविचारस्यानुषङ्गिकत्वात्प्रधाननिर्गुणविचारापेक्षितानन्तर्यमेव वक्तव्यमिति चेत्, तर्हि सगुणविद्यानुष्ठानं कस्यापि न सिध्येत्; एतच्छास्त्रविचारमन्तरेण हि तदनुष्ठानं न संभवति, एतच्छास्त्रविचारे च ब्रह्मलोकप्राप्त्यन्तसकलफलविरक्तस्य त्यक्तसमस्तकर्मणो निर्विशेषप्रेप्सया तज्जिज्ञासोरेवाधिकार इष्यते, तस्माद्विरुद्धमिदमापतितमिति—चेत्, उच्यते; सगुणविद्यापेक्षिणाम् अङ्गावबद्धोपासनापेक्षिणां केवलकर्मठानां च तदनुष्ठानप्रकाराद्यवगतिर्विचारितैतच्छास्त्रेभ्यो गुरुभ्योऽन्वेषणीया, गत्यन्तराभावात् । अभ्युपगम्यते हि कर्मविचारप्राचीनसंध्यावन्दनाध्ययननियमाद्यनुष्ठानार्थं निषादरथकारकर्तृकस्थपतीष्ट्याधानानुष्ठानार्थं च तत्तदवगतिः स्वयमविचारिततत्तद्वाक्यानामेव हितैषिवचनमात्रादिति । ननु श्रुतौ धनशब्दस्य देवलोकावाप्तिहेतुपरविद्या वाच्येति कुतोऽवगतमित्याकाङ्क्षायामाह—तथा हि श्रुत्यन्तरमिति । प्रधानेन प्रत्ययार्थेनेति । विविदिषन्तीत्यत्र पञ्चमलकारकल्पनया विध्यवरुद्धायां यज्ञदानादिकरणान्वितायां भावनायां धात्वर्थस्य भाव्याकाङ्क्षापूरकत्वेनान्वये वक्तव्ये प्राधान्यादिच्छाया एव तथान्वयो न वेदनस्येति भावः । ननु—'यजेत' 'दद्यात्' 'जुहुया' दित्यादौ सर्वत्र धात्वर्थस्य भावनायां कारणत्वेनान्वयस्य दृष्टत्वादिहापि वेदनेच्छायास्तथैवान्वयो युक्तः; यज्ञादिषु तृतीयाश्रवणं तु सोमेन यजेतेत्यादिष्विव धात्वर्थविशेषणतया भविष्यति । नच सोमपयोदध्यादीनां यागहोमनिर्वर्तकतया क्रियाकारकभावो लोकसिद्ध इति युक्तस्तत्र विशेष्यविशेषणभावः, इह वेदनेच्छाया यज्ञादीनां च स न लोकसिद्ध इति न युक्तो

## भामती ।

तत्किमिदानीमनुपयोग एव सर्वथेह कर्मणाम्, तथाच 'विविदिषन्ति यज्ञेन' इत्याद्याः श्रुतयो विरुध्येरन् । न; आरादुपकारकत्वात्कर्मणां यज्ञादीनाम् । **तथाहि—तमेतमात्मानं वेदानुवचनेन** नित्यस्वाध्यायेन ब्राह्मणा **विविदिषन्ति** वेदितुमिच्छन्ति, नतु विदन्ति । वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्, इच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्रधानेन च कार्यसंप्रत्ययात् । नहि राजपुरुषमानयेत्युक्ते वस्तुतः प्रधानोऽपि राजा पुरुषविशेषणतया शब्दत उपसर्जन आनीयतेऽपितु पुरुष एव, शब्दतस्तस्य प्राधान्यात् । एवं वेदानुवचनस्येव यज्ञस्यापीच्छासाधनतया विधानम् । एवं तपसोऽनाशकस्य । कामानशनमेव **तपः**, हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति, नतु सर्वथाऽनश्नतो मरणात् । नापि चान्द्रायणादितपःशीलस्य; धातुवैषम्यापत्तेः । एतानि च नित्यान्युपात्तदुरितनिबर्हणेन पुरुषं संस्कुर्वन्ति । **तथाच श्रुतिः**—'स ह वा आत्मयाजी यो वेद इदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इति । **अनेनेति** प्रकृतं यज्ञादि परामृशति । **स्मृतिश्च**—'यस्यैतेष्टाचत्वारिंशत्संस्काराः' इति । नित्यनैमित्तिकानुष्ठानप्रक्षीणकल्मषस्य च विशुद्धसत्त्वस्याविदुष एव उत्पन्नविविदिषस्य ज्ञानोत्पत्तिं दर्शयत्याथर्वणी **श्रुतिः**—'विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति । **स्मृतिश्च**—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य

## वेदान्तकल्पतरुः ।

**—तत्किमिति । आरात्** दूरे । इमं पक्षमुपपादयति—**तथाहीति** । प्रधानेन प्रत्ययार्थेनेच्छयाऽऽख्यातोपात्तभावनायाः कार्यस्य संप्रत्ययात्समन्वयादिति । **अनेन** कर्मणा **इदं** ममाङ्गमन्तःकरणं संस्क्रियते **पुण्येन चोपधीयत** उपचीयत इति यो विदित्वा चरति कर्म, स आत्मशुद्ध्यर्थं यजनादात्मयाजी, स च देवयाजिनः काम्यकर्तुः श्रेयानिति शातपथश्रुत्यर्थः । **स य**देव यजेतेत्यत्र प्रकृतं यज्ञादि । श्रुत्यन्तरमाह—**नित्येति** । नित्यानां संस्कारद्वारा ज्ञानोत्पादकतोक्ता, इदानीं यदुक्तं

## कल्पतरुपरिमलः ।

विशेषणविशेष्यभाव इति—वाच्यम्; देवताधिकरणे ( ब्र. अ. १ पा. ३ सू. २६–३२ ) वक्ष्यमाणेन न्यायेनैतस्यैव रेवतीषु वारवन्तीयमिति वाक्ये रेवतीनां वारवन्तीयस्य चाधाराधेयभावस्येव यज्ञादीनां विविदिषायाश्च क्रियाकारकभावस्यापि समभिव्याहारादेव सिद्ध्युपपत्तेः । एवंच भाव्याकाङ्क्षायामिच्छाविषयभूतं वेदनमेव भाव्यत्वेनान्वेति । **नच** वेदनतदिच्छयोः कार्यकारणभावस्य लोके सिद्धत्वाद्विधिवैयर्थ्यं शङ्कनीयम्; प्रतिबन्धकपापापनोदनद्वारा यज्ञादिभिः संपन्नया स्थिरविविदिषया वेदनं भावयेदित्येतदर्थकतया विधिसार्थक्यादिति—**चेत्, उच्यते;** भावनायाः प्रथमं भाव्याकाङ्क्षायां समानपदोपात्ता प्रधानभूता वेदनसाधनत्वेन निर्ज्ञातगौणपुरुषार्थभावा विविदिषा भाव्यत्वेनान्वेतीति युक्तं, यागादिस्तु समानपदोपात्तत्वेऽपि स्वयं क्लेशात्मकत्वात् फलसाधनत्वेनान्यतोऽनवगतत्वाच्च भाव्यत्वेनान्वेतुमयोग्य इति तमतिक्रम्य स्वर्गादेर्भाव्यत्वेन ग्रहणे सति तं केन भावयेदित्याकाङ्क्षायां फलशिरस्कभावनाकरणत्वेनान्वितो भवति । इह यदि भावनायां करणान्तरं श्रुतं न लभ्येत, तदा विविदिषामेव करणं गृहीत्वा तत्साध्यं वेदनं फलं कल्पयेद्, नत्वेतदस्ति; यज्ञादीनां तृतीयया करणत्वेन समर्पणात् । तेषां भावनाकरणत्वेनान्वये मत्वर्थलक्षणा च परिहृता भवति; अन्यथा तेषां करणविशेषणत्वे सोमवता यागेनेतिवद् यज्ञवत्या विविदिषयेत्यादिरूपेण यज्ञेनेत्यादिसर्वेषु तृतीयान्तेषु मत्वर्थलक्षणा प्रसज्येत । एवं क्लिष्टयोजनायामपि विविदिषा भाव्येति पक्षात् फलतो न विशेषः; दध्ना जुहोतीति दधिविशिष्टहोमविधेः प्राप्ताप्राप्तविवेकेन होमसाधनतया दधिविधान इव स्थिरविविदिषासाधनतया यज्ञादिविधान एवास्य पर्यवसानात् । तस्माद्यज्ञादिभिर्विविदिषां भावयेदिति वेदनेच्छायाः फलत्वेनान्वय इत्येव युक्तम् । **ननु**—इच्छायाः प्रधानत्वेऽपि फलत्वेन नान्वयः, किंत्विष्यमाणस्यैवेति स्वर्गकामादिवाक्येषु संप्रतिपन्नं; तत्कस्य हेतोः ? लिङादिभिर्विधिशब्दैः कर्मणामिष्टसाधनत्वे प्रतीते किं तत्कर्मसाध्यमिष्टमितीष्टविशेषाकाङ्क्षायां यदिच्छाविषयत्वेन निबद्धं विशिष्योपात्तं च तदेव फलत्वेनान्वेतुं योग्यमिति योग्यतावधारणाद्, योग्यतानुसारेणेच्छामुल्लङ्घ्य तद्विषये करणान्वयस्य अश्वेन जिगमिषतीत्यादौ क्लृप्तत्वाच्च; अयं हेतुरिहापि तुल्य इति—**चेत्, उच्यते;** यज्ञादीनां ज्ञाने विनियोगेऽपि जिज्ञासा यज्ञादिद्वारवर्गमध्ये अवश्यं निवेशनीया, निवेशिता च टीकायाम्; तथाच जिज्ञासाया यज्ञादिफलत्वेनावश्याभ्युपगन्तव्यत्वात् कामोपबन्धेषु यागादिवाक्येषु स्वर्गादेर्भाव्यत्वेनानन्वयेऽन्यतः स्वर्गादिसाधनानवगत्या कामनाया निर्ज्ञातस्वविषयसाधनप्रवर्तकत्वेन गौणपुरुषार्थत्वाप्रतीत्या तस्या भाव्यत्वेनान्वयाऽयोग्यत्वात्, नामोपात्तस्वर्गकामनावैलक्षण्येनेहाख्यातोपात्ताया इच्छायाः फलत्वान्वययोग्यत्वात्, हेतुसाध्यत्वप्रतीतिसद्भावाच्च प्रधानभूतां तामुल्लङ्घ्य ज्ञानस्य फलत्वाभ्युपगमो न युक्तः; तदभ्युपगमे शास्त्रान्तरसिद्धपापक्षयरूपद्वारातिरिक्तस्यापूर्वरूपस्य कर्मणां द्वारान्तरस्यापि कल्पनापत्तेर्वक्ष्यमाणत्वात् । **ननु**—जिज्ञासायाः फलत्वान्वययोग्यत्वमसिद्धम्, स्वतःफलत्वरहितायास्तस्याः फलत्वं हि ज्ञानरूपफलजनकत्वोपाधिकं वाच्यम्; तथाच जिज्ञासाफले ज्ञाने प्रागेवेच्छासत्त्वे सैव जिज्ञासेति तस्याः सिद्धत्वात्प्राक् तदसत्त्वे तस्याः फलजनकत्वोपाधिकपुरुषार्थत्वाऽप्रतीतेश्चेति न तस्याः फलत्वान्वययोग्यतेति—**चेत्,**

## भामती ।

कर्मणः' इत्यादिका । कृत्स्नेनैव च नित्यानां कर्मणां नित्येहितेनोपात्तदुरितनिबर्हणेन पुरुषसंस्कारेण ज्ञानोत्पत्तावङ्गभावोपपत्तौ न संयोगपृथक्त्वेन साक्षादङ्गभावो युक्तः; कल्पनागौरवापत्तेः । तथाहि—नित्यकर्मानुष्ठानाद्धर्मोत्पादः, ततः पाप्मा निवर्तते, स ह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्त्वं मलिनयति,

## वेदान्तकल्पतरुः ।

समुच्चयवादिना सर्वेषां कर्मणां ज्ञानकार्ये मोक्षे समुच्चय इति तत्राह—कृत्स्नेनैवेति । नित्यानां फलं पापक्षयं ज्ञानमाकाङ्क्षते, न स्वर्गादि । तत्र यथा प्रकृतौ कॢप्तोपकाराणाम् अङ्गानामतिदेशेन प्रकृतोपकारातिरिक्तोपकारकल्पनमेवं ज्ञाने विनियुक्तयज्ञादीनां कॢप्तनित्यफलपापक्षयातिरेकेण न नित्यकाम्यकर्मसाधारणमोक्षोपयोग्युपकारः कल्प्यः । पापक्षयस्य च ज्ञानोत्पत्तिद्वारत्वं ततस्तु तमित्यादिशास्त्रसिद्धम् । नच वाच्यं–नित्येभ्यः पापक्षयस्य तस्माच्च ज्ञानोत्पत्तेरन्यतः सिद्धौ किं यज्ञेनेत्यादिना—इति; नित्यानां ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिबर्हकत्वस्य विशेषतः शास्त्रान्तरादसिद्धेः । अस्मिंश्च विनियोगे सति ज्ञानोद्देशेन नित्यान्यनुतिष्ठतोऽवश्यं ज्ञानं भवति, इतरथा शुद्धिमात्रमनियता च ज्ञानोत्पत्तिरिति विनियोगोपयोगः । 'ज्ञान-

## कल्पतरुपरिमलः ।

उच्यते; द्विविधा ब्रह्मज्ञानेच्छारूपा जिज्ञासा; एका साङ्गाध्ययनादिप्रयुक्तब्रह्मज्ञानपुरुषार्थत्वावगतिमात्रमूला, साऽनित्यदुःखमये संसारे नित्यसुखमयत्वभ्रममुत्पाद्य चित्तसत्त्वं मलिनयता पाप्मना प्रतिबद्धा सती ज्ञानोद्देशेन तदुपायेषु प्रवृत्तिं जनयितुं न प्रभवति । यदा प्रवृत्तिपर्यन्तजिज्ञासादिप्रतिबन्धकपाप्मसद्भावं शास्त्रतः पुरुषोऽवगच्छति, तदा तथाभूतजिज्ञासोपायमन्विच्छन्विविदिषावाक्येन तदुपायं यज्ञादिकमुपलभ्य तथाभूतजिज्ञासोद्देशेन यज्ञादीननुष्ठाय ततः संसारसुखमयत्वप्रदर्शकपाप्मनिवृत्त्या तस्य वस्तुसद्दुःखैकरूपत्वं निश्चित्य तदसहमानस्तज्जिहासामूलामपि ब्रह्मजिज्ञासां लभते, सा द्वितीया । तया ब्रह्मज्ञानोपायेषु प्रवृत्तिः । यथा भोजने सत्येव देहस्थितिबलपुष्ट्यादिकं भवेदिति तादर्थ्यावगतिमात्रमूला धातुवैषम्यकृतरोगविशेषप्रतिबद्धा भोजनेच्छा भोजनार्थप्रवृत्तिं जनयितुं न प्रभवति; तत्प्रवृत्तिपर्यन्तबुभुक्षाप्रतिबन्धकरोगसद्भावं यदा वैद्यकादवगच्छति पुरुषः, तदा रोगनिवृत्तिपूर्वकबुभुक्षोत्पत्त्युपायमन्विच्छन् वैद्यकशास्त्रेणैव तथाभूतमौषधमुपलभ्य तत्सेवनेन रोगनिवृत्त्या क्षुधामुपलभ्य तामसहमानः तन्निवृत्त्यर्थमपि बुभुक्षां लभते, तया च भोजने प्रवर्तते । अतो नात्र काचिदनुपपत्तिः । पापक्षयं ज्ञानमाकाङ्क्षत इति । विविदिषाद्वारेति शेषः । ज्ञाने विनियुक्तेति । ज्ञानार्थविविदिषाविनियुक्तेत्यर्थः । ननु कॢप्तपापक्षयातिरेकेणोपकारान्तरस्याऽकल्प्यत्वेऽपि यानि पवित्रेष्ट्यग्निष्टुदश्वमेधादीनि कृष्णाजिनदानादीनि कृच्छ्रचान्द्रायणादीनि च सामान्यतः पापक्षयार्थत्वेन चोदितानि काम्यकर्माणि तत्साधारण्यमिह यज्ञादिशब्दानामवर्जनीयमित्याशङ्क्य नित्यफलपापक्षयातिरेकेणेति पापक्षयो नित्यफलत्वेन विशेषितः ॥ अवश्यकर्तव्यनित्यानुष्ठानजो हि पापक्षयः स्वतः प्राप्तः; अतः प्रयुक्तिलाघवात् तमेव विविदिषार्थयज्ञादिविधिर्द्वारं गृहीत्वा निर्वृणोति, न त्ववश्याननुष्ठेयपवित्रेष्ट्यादिफलभूतमपि पापक्षयं द्वारं गृहीत्वा तत्संपादनं प्रयोजयति; अतो नित्यफलस्यैव पापक्षयस्येह द्वारता, यथा ऋत्विगपेक्षः क्रतुविधिर्धनार्जने याजनं स्वकीयोपाय इति तादर्थ्येन स्वतः प्राप्तान्ब्राह्मणानेव गृहीत्वा निर्वृणोति, नतु क्षत्रियवैश्यानपि ऋत्विजो गृहीत्वा तानार्त्विज्ये प्रयोजयतीति ब्राह्मणानामेव क्रतावार्त्विज्यं तद्वत् । एवंच यस्य यदा यन्नित्यमनुष्ठेयं प्राप्तं, तेन तदा तदेव विविदिषितार्थतयानुष्ठितं फलार्थं भवति; काम्यानुष्ठानतः प्रसङ्गान्नित्यसिद्धेर्नित्यप्रयुक्तं पापक्षयद्वारमपि लभत इति प्रयुक्तिलाघवान्नित्यानामेव विनियोग इति भावः । ननु—प्राकृतोपकारदृष्टान्तेन पापक्षयस्येह द्वारत्वकल्पनं न युज्यते; वैषम्यात्, प्राकृतपदार्थानाम् उपकारमुखेनैव विकृतिष्वतिदेशः; नतु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न तत्र प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः, इहतु प्रत्यक्षश्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामुपदिष्टाङ्गानामिव पश्चात्कल्पनीय उपकारः प्रथमाऽवगतविनियोगनिर्वाहायाकॢप्तोऽपि सामान्यशब्दोपात्तसकलनित्यकाम्यसाधारणः कथं न कल्प्येतेत्याशङ्क्याह—पापक्षयस्य चेति । स्यादेतदेवं–यद्यत्र पदार्थशक्तिमालोच्योपकारः कल्प्यः स्याद्, नत्वेवम्; इह पापक्षय एवोपकार इत्यपि प्रत्यक्षशास्त्रेणैव सिद्धत्वादित्यर्थः । ननु ततस्तु तमिति शास्त्रेण पापक्षयस्य ज्ञानोत्पत्तौ द्वारत्वं सिद्धं, नतु विविदिषोत्पत्तौ । उच्यते; विविदिषावाक्यानुरोधेन विशुद्धसत्त्वस्ततो विविदिषाद्वारेण पश्यतीति तस्य शास्त्रस्यार्थ इति तात्पर्यम् । एवं ततस्तु तमित्यादिश्रुतौ विविदिषान्तर्भावस्तदवतारणार्थे टीकाग्रन्थे विशुद्धसत्त्वस्येत्येतदनन्तरमुत्पन्नविविदिषस्येति विशेषणेन स्फुट इत्याचार्यैरिह न विशेषितम् । अत्र केचित्—संस्कारपक्षमेव सिद्धान्तमभिमन्यमाना विविदिषन्तिवाक्ये विधिर्न कल्प्यः; नित्यकर्मभिः पापक्षयस्य तद्विधिभिः पापक्षयाज्ज्ञानोत्पत्तेस्ततस्तु तं ज्ञानमुत्पद्यत इति श्रुतिस्मृतिभ्यां च सिद्धेः, अतो विविदिषन्तिवाक्यं तत्सिद्धानुवादकं—इत्याहुः । तन्मतमनूद्य निराकरोति न च वाच्यमित्यादिना । विशेषतः शास्त्रान्तरादसिद्धेरिति । पापान्तरनिवर्तनेनापि चरितार्थान्नित्यानुष्ठानान्न ज्ञानोत्पत्तिप्रतिबन्धकपापव्यक्तिविशेषनिबर्हणनियमः सिध्यति; अतस्तत्सिद्धये विनियोगा-

**सायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । यथाच हृदयाद्यवदानानामानन्तर्यनियमः;**

## भामती ।

अतः पापनिवृत्तौ प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य अनित्याशुचिदुःखरूपतामप्रत्यूहमवबुध्यते, ततोऽस्य अस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते, ततस्तज्जिहासोपावर्तते, ततो हानोपायं पर्येषते, पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इत्युपश्रुत्य तज्जिज्ञासते, ततः श्रवणादिक्रमेण तज्जानातीत्यारादुपकारकत्वं तत्त्वज्ञानोत्पादं प्रति चित्तसत्त्वशुद्ध्या कर्मणां युक्तम् । **इममेवार्थमनुवदति भगवद्गीता**—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ॥' एवंचाननुष्ठितकर्मापि प्राग्भवीयकर्मवशाद्यो विशुद्धसत्वः संसारासारतादर्शनेन निष्पन्नवैराग्यः, कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना; प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः । **इममेव च पुरुषधौरेयमेदमधिकृत्य प्रववृते श्रुतिः**—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति । **तदिदमुक्तम्**—कर्मावबोधात्—**प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति** । अत एव न ब्रह्मचारिण ऋणानि सन्ति; येन तदपाकरणार्थं कर्मानुतिष्ठेत् । एतदनुरोधाच्च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते' इति, गृहस्थः संपद्यमान इति व्याख्येयम्; अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेव' इति श्रुतिर्विरुध्येत । गृहस्थस्यापि च ऋणापाकरणं सत्त्वशुद्ध्यर्थमेव । जरामर्यवादो भस्मान्ततावादोऽन्त्येष्टयश्च कर्मजडानविदुषः प्रति, न त्वात्मतत्त्वपण्डितान् । तस्मात्तस्यानन्तर्यमथशब्दार्थः, यद्विना ब्रह्मजिज्ञासा न भवति यस्मिंस्तु सति भवन्ती भवत्येव । नचेत्थं कर्मावबोधः । तस्मान्न

## वेदान्तकल्पतरुः ।

मुत्पद्यते पुंसां क्षयात्पापस्य कर्मण' इत्यादिस्मृतेरियं श्रुतिर्मूलम् । श्रुतिस्त्वेतादृशी तुल्यत्वे नैतामनुवादयति । **न संयोगपृथक्त्वेन साक्षादङ्गभाव** इत्यनेन साक्षादङ्गभावो निषिध्यते, न संयोगपृथक्त्वम्; सर्वापेक्षाधिकरणे ( ब्र. अ. ३ पा. ४ सू. २६ ) संयोगभेदस्याश्रयिष्यमाणत्वात् । **तस्मादयमर्थः**—संयोगपृथक्त्वमस्तीत्येतावता न साक्षादङ्गभावसिद्धिरारादङ्गभावेऽपि तदुपपत्ते**रिति** । नित्यानां दुरितक्षयफलत्वे नित्यकाम्यवैषम्यायोगमाशङ्क्य—**नित्यैहितेने**त्युक्तम् । **चित्तसत्त्वं** चित्तगतः सत्त्वगुणः । **प्रत्यक्षोपपत्तीति** । संसारस्यासारत्वं दृष्टविषये प्रत्यक्षग्राह्यमदृष्टे तूपपत्त्या । प्रत्यक्षोपपत्त्योश्च प्रवृत्तिद्वारं चित्तगतसत्त्वं, तस्य पापकपाटनिवृत्त्यपावरणे उद्घाटने सतीत्यर्थः । धर्मब्रह्मावबोध-

## कल्पतरुपरिमलः ।

न्तरमित्यर्थः । **अत्र** संस्कारपक्षावलम्बनैर्विविदिषावाक्यस्य विद्यार्थविनियोगानुपपत्त्यानुवादकत्वं शङ्कितमिति तद्दृष्ट्वा **ज्ञानोत्पत्तिप्रतिबन्धकेत्युक्तम्** । शङ्कासमाधानयोर्विविदिषार्थपक्षेऽपि तुल्यत्वात् स्वमते ज्ञानग्रहणं विविदिषोपलक्षणम् । तस्यामेव यज्ञादिविनियोगस्य प्राग्व्यवस्थापितत्वात्, सर्वापेक्षाधिकरणे ( ब्र. अ. ३ पा. ४ सू. २६ ) चोपपादयिष्यमाणत्वात्, भाष्यकृद्भिरपि विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि विविदिषासंयोगात्तु बाह्यान्तराणि यज्ञादीनि इति यज्ञादीनां विविदिषार्थत्वस्य वक्ष्यमाणत्वाच्च, तेषां ज्ञाने विनियोगे ज्ञानोत्पत्त्यपेक्षितसद्गुरुलाभश्रवणादिप्रवृत्तिग्रहणधारणपाटवादीनामपि ज्ञानार्थं यज्ञादिसम्पाद्यत्वापत्त्या तदर्थमपूर्वस्यापि द्वारान्तरस्य कल्प्यतापत्तेश्च । ज्ञानमुत्पद्यत इतिस्मृतेर्विविदिषन्तिवाक्यमूलकत्वोक्तिस्तु पापक्षयाद् विविदिषोदये सति क्रमाज्ज्ञानमप्युत्पद्यते इत्येवंपरा स्मृतिरित्याशयेन । **श्रुतिस्त्वेतादृशीति** । एषैव दृश्यत इत्येतादृशी । आपाततो विविदिषावाक्यवत् ततस्तु तमिति श्रुतिर्दृश्यते । **वस्तु-**

१ 'तमेतमित्या'दिवाक्यैः कर्मणां विविदिषाद्वारा ज्ञानार्थत्वस्य 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इत्यादिवचनैः संस्कारद्वारा ज्ञानार्थत्वस्य चावगमेऽपि जन्मान्तरानुष्ठितैः कर्मभिरेवोक्तद्वारविधया ज्ञानसिद्ध्युपपत्ताविह जन्मनि कर्मविचारं विनापि ब्रह्मविचारे प्रवृत्तिसंभवान्न धर्मविचारानन्तर्यमथशब्दार्थः । वेदान्ताध्ययनं तु साधारणं न जन्मान्तरसंपादितं ब्रह्मविचारहेतुरिति इहजन्मन्यपि तदावश्यकत्वेन न दोषः । **ननु**—कर्मावगमोऽपि इह जन्मनि संपादित एव ब्रह्मविचारहेतुः; एतज्जन्मप्रयुक्तत्वादृणसंबन्धस्य, **तथाचश्रुतिः**—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायत' इति अपाकृतर्णस्यैव मोक्षाधिकाराच्च । **तदुक्तम्**—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥' इति । नच—'ब्रह्मचर्यादेव प्रव्रजेदि'ति श्रुतिविरोधादुक्तस्मृतिरपस्मृतिरिति—युक्तम्; 'ब्रह्मचर्यं समाप्य गृही भवेत्' इत्यादिश्रुतिस्मृतिविरोधेन ब्रह्मचर्यादेव संन्यासविधानस्य गृहानधिकार्यन्धपङ्ग्वादिविषयत्वस्यैव युक्तत्वादिति कर्मावबोधानन्तर्यमेवाथशब्दार्थः इति—**चेन्न;** 'जायमानो ब्राह्मण' इतिवाक्यं हि 'हृदयस्याग्रेऽवद्यति' इत्यवदानविध्यर्थवाद इत्येव युक्तम्; ऋणशब्देन पुत्रयज्ञब्रह्मचर्याणां तद्विधीनां वा विवक्षणे जायमाने विधिप्रतिपत्तिसामर्थ्यविकले तत्संबन्धासंभवात्, गृहस्थो जायमान इति व्याख्याने 'गृहात्प्रव्रजेत्' इति श्रुतिविरोधात् । एतेन—'ऋणानि त्रीण्यपाकृत्ये'ति स्मृतिरप्यपस्मृतिरिति—**व्याख्याता;** 'ब्रह्मचर्यादेव प्रव्रजेत्' इति श्रुतिविरोधात् । 'ब्रह्मचर्यं समाप्य गृही भवेदिति'त्वविरक्तविषयं न विरक्तविषयं 'ब्रह्मचर्यादेवे'ति वचनं बाधितुं क्षमते । 'ब्रह्मचर्याद्वा गृहाद्वा वनाद्वे'ति अविशेषेण श्रवणान्नान्धपङ्ग्वादिविषयमपि तद्वचनमिति सर्वमनवद्यम्—**इति विवरणमतानुयायिनः ॥**

**क्रमस्य विवक्षितत्वान्न तथेह, क्रमो विवक्षितः शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावात्,**

### भामती ।

कर्मावबोधानन्तर्यमथशब्दार्थ इति सर्वमवदातम् । **स्यादेतत्**—। मा भूदग्निहोत्रयवागूपाकवदार्थः क्रमः, श्रौतस्तु भविष्यति; 'गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्' इति जाबालश्रुतिर्गार्हस्थ्येन हि यज्ञाद्यनुष्ठानं सूचयति । **स्मरन्ति च**—'अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥' **निन्दन्ति च**—'अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः' इत्यत आह—**यथा च हृदयाद्यवदानानामानन्तर्यनियमः** । कुतः, 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इत्यथाग्रशब्दाभ्यां क्रमस्य विवक्षितत्वात् । न तथेह क्रमो विवक्षितः; श्रुत्या तयैवानियमप्रदर्शनात्, 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' इति । एतावता हि वैराग्यमुपलक्षयति । अतएव 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतिः । निन्दावचनं चाविशुद्धसत्त्वपुरुषाभिप्रायम् । अविशुद्धसत्त्वो हि मोक्षमिच्छन्नालस्यात्तदुपायेऽप्रवर्तमानो गृहस्थधर्ममपि नित्यनैमित्तिकमनाचरन्प्रतिक्षणमुपचीयमानपाप्माधोगतिं गच्छतीत्यर्थः । **स्यादेतत्**—मा भूच्छ्रौत आर्थो वा क्रमः, पाठस्थानमुख्यप्रवृत्तिप्रमाणकस्तु कस्मान्न भवतीत्यत आह—**शेषशेषित्वे प्रमाणाभावात्** । शेषाणां समिदादीनां,

### वेदान्तकल्पतरुः ।

योर्हेतुहेतुमद्भावाभावेऽपि क्त्वाश्रुत्या पौर्वापर्यमाशङ्कते—**स्यादेतदिति । अग्निहोत्रयवागूपाकवदिति । पञ्चमे स्थितम्-'अर्थाच्च'** ( जै. अ. ५ पा. १ सू. २ ) अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र किं होमपाकयोर्यथापाठं क्रमः, उत पाक एव प्रथम इति संशये, नियामकश्रुत्यभावाद्धोमनिर्वृत्तेश्च द्रव्यान्तरेण संभवाद्यवागूपाकस्य चारादुपकारकत्वाद्धोम-प्राथम्ये **प्राप्ते—राद्धान्तः**; पदार्थः प्रयोजनापेक्षोऽनुष्ठानविधिरेव प्रयोजनोपयोगिनं क्रमविशेषं नियच्छतीति पक्त्वैव होतव्यम् । नच द्रव्यान्तरानयनं; श्रुतद्रव्यवैयर्थ्यप्रसङ्गात् । नच दृष्टार्थत्वे सत्यारादुपकारकत्वं पाकस्येति । **पाठस्थानेति।**

### कल्पतरुपरिमलः ।

**तस्तु**भयोरप्यान्तरालिकफलभेदोऽस्ति, पापक्षयरूपद्वारावगमस्ततस्तु तमिति श्रुत्यपेक्षः, पापक्षयाज्ज्ञानोत्पत्तौ विविदिषा-न्तर्भावो विविदिषन्तिवाक्यापेक्ष इति । अतः कथमपि नानुवादत्वशङ्केति भावः । **अथवा एतादृशी** एतत्समाना कल्प्य-विधिकत्वाविशेषात् तत्र यदि विधिः श्रूयेत, तदा विधिश्रवणरहितं विविदिषावाक्यं तदनुवादकं कल्प्येतापि, न त्वेतदस्तीति भावः । सर्वापेक्षाधिकरणे इत्युपलक्षणम् । सर्वथापि त एवोभयलिङ्गादित्यधिकरणे ( ब्र. अ. ३ पा. ४ सू. ३४ ) चेति द्रष्टव्यम् । **हेतुहेतुमद्भावाभावेऽपीति । ननु**—अनुष्ठानद्वारा हेतुहेतुमद्भावाभावेऽपि प्रामाण्यप्रतिपादनादिद्वारा सोऽस्ति; पूर्वतन्त्रे **प्रथमाध्यायप्रतिपादितं** वेदप्रामाण्यमिहाप्यपेक्षितं, **द्वितीयाध्यायनिरूपितं** शब्दान्तरादिषट्कं विद्याभेदाभेदचिन्तायां, **तृतीयाध्यायनिरूपितं** श्रुतिलिङ्गादिकं सर्वत्रापि तत्तदधिकरणविषयवाक्यार्थनिर्णये, **पञ्चमा-ध्यायनिरूपितं** श्रुत्यर्थादिकं वियदादिसृष्टचर्चिरादिपर्वक्रमचिन्तायां, **सप्तमाष्टमनिरूपितम**तिदेशप्रमाणं 'तस्यैतस्य तदेव रूपं यदमुष्य रूप'मित्याद्यर्थनिर्णये चापेक्षितम् । **'कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तं'** ( ब्र. अ. ३ पा.३ सू. २६ ) **'प्रदानवदेव तदुक्त'** ( ब्र. अ. ३ पा. ३ सू. ४३ ) मित्यादिषु च पूर्वतन्त्रसंमतिप्रदर्शने तत्तदधिकरणार्थज्ञान-मपेक्षितम् । आचार्यैः प्रथमसूत्रव्याख्यानावसाने वेदांतमीमांसा तदविरोधितर्कोपकरणेति भाष्यव्याख्यानावसरे तस्या अविरोधिनः श्रुतिलिङ्गादयस्तार्तीयाः पाञ्चमिकाः श्रुत्यादयो वेदप्रामाण्यपरिशोधकाः कर्ममीमांसायां विचारिता इति पूर्व-तन्त्रापेक्षा स्फुटीकृता, अतो हेतुहेतुमद्भावाभावोक्तिरयुक्तेति—**चेत्, उच्यते**; पूर्वतन्त्र इवात्रापि शास्त्रे वेदप्रामाण्यादीनि सूत्रितान्येव । **अत एव च नित्यत्व** ( ब्र. अ. १ पा. ३ सू. २९ ) **मिति हि** वेदप्रामाण्यं सूत्रितं,—**'नानाशब्दा-दिभेदादिति** ( ब्र. अ. ३ पा. ३ सू. ५८ ) शब्दान्तरादिकं, **'शब्दादेव प्रमितः'** ( ब्र. अ. १ पा. ३ सू. २४ ) **आकाशस्तल्लिङ्गात्** ( ब्र. अ. १ पा. १ सू. २२ ) **तथा चैकवाक्यतोपबन्धात्** ( ब्र. अ. ३ पा. ४ सू. २४ ) **प्रकरणा** (ब्र. अ. १ पा. ३ सू. ९ ) दित्यादिभिः श्रुतिलिङ्गादिकं, **'श्रुत्यादिबलीयस्त्वाच्च न बाध'** ( ब्र. अ. ३ पा. ३ सू. ४९ ) इत्यादौ श्रुतिलिङ्गादिबलाबलं, **'विपर्ययेण तु क्रम'** ( ब्र. अ. २ पा. ३ सू. १४ ) इत्यादिभिरपेक्षितं क्रमप्रमाणजातम्, **अतिदेशाच्चे** ( ब्र. अ. ३ पा. ३ सू. ४६ ) त्यतिदेशप्रमाणमित्येतत्सर्वं सूत्रितमेव । भाष्यकारा-दिभिः स्फुटीकर्तव्यता तु पूर्वतन्त्रसूत्रेष्वपि समाना । तदुक्तमित्येतदत्रैव व्याख्यानेनावगन्तुं शक्यं न कर्मविचारमपेक्षते; अन्यथा 'तद्धैके आहुरसदेवेदमग्र आसी'दिति वाक्यार्थावगत्यर्थमसद्वादिशास्त्रविचारानन्तर्यमप्यथशब्दार्थः स्यात् । आचा-र्यैस्तु श्रुतिलिङ्गादयः पूर्वतन्त्रे निरूपिता इत्येतावदुक्तं, नत्विह तदपेक्षाऽस्तीति; तत्र हि तदनन्तरं न्यायशास्त्र-स्यापेक्षा कण्ठत उक्ता इति न्यायशास्त्रस्योपयोग इति । अथापि तदानन्तर्यमथशब्दार्थो नेष्यते, तथाऽपेक्षो-क्तिरहितकर्मविचारानन्तर्यस्य क्वाथशब्दार्थत्वप्रसक्तिः । **आरादुपकारकत्वादिति** । तथात्वसंभवादित्यर्थः ।

## वेदान्तकल्पतरुः ।

**क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्** ( जै. अ. ५ पा. १ सू. ४ ) समिधो यजतीत्यादिषु क्रमपठितप्रयाजेषु चिन्ता—किं यथापाठमनुष्ठानक्रमः, उत न । **तत्र** वाक्यानां स्वार्थमात्रावसितत्वान्न क्रमपरतेत्यनियमप्राप्तौ—**सिद्धान्तः**; यथैतानि वाक्यानि स्वार्थविधायीनि, तथानुष्ठानापेक्षितस्मृत्युपयोगीन्यपि । तानि च क्रमवन्ति स्वाध्यायविध्यध्यापितानि क्रमवन्त्येव स्मरणानि जनयन्ति, स्मृतस्य चानुष्ठानमिति स्मरणक्रमेणानुष्ठानं नियम्यते, एवं क्रमपाठोऽपि दृष्टार्थो भविष्यति । तस्मात् पाठक्रमेण नियम इति । **सूत्रार्थस्तु** एकस्मिन् क्रतौ श्रूयमाणानां प्रयाजादीनां पाठक्रमेण प्रयोगक्रमो नियम्येत; तस्य पाठक्रमस्यानुष्ठाने लोके गुणत्वावगमात्, तद्यथा स्नायादनुलिम्पेत भुञ्जीतेति ॥ **'स्थानाच्चोत्पत्तिसंयोगात्'** ( जै. अ. ५ पा. १ सू. १३ ) । ज्योतिष्टोमविकारे साद्यस्कसंज्ञेऽतिदेशप्राप्तेष्वग्नीषोमीयादिपशुषु सहत्वगुणविधानार्थं वचनं श्रूयते 'सह पशूनालभत' इति । तद्विधानाच्च प्राकृतः प्रथममग्नीषोमीयस्ततः सवनीयः ततोऽनुबन्ध्य इत्येवंरूपः क्रमो निवर्तते । सहत्वं चेदं सवनीयस्थाने; तथा सति हीतरयोस्तुल्यवत् स्थानचलनं भवति । सवनीयश्चाश्विनग्रहग्रहणानन्तरकालः प्रकृतावाम्नायते; आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति । **तत्रै**ककालत्वलक्षणसहत्वासंभवादवश्यंभाविनि क्रमे कः प्रथमं प्रयुज्यतामित्यपेक्षायां किमनियमेनैषां प्राथम्यमुत सवनीयस्येति संशयः । तत्र नियामकश्रुत्याद्यभावादनियमे प्राप्ते—**राद्धान्तः; स्थानात्**सवनीयप्राथम्यं नियम्येत, कुतः ? **उत्पत्तिसंयोगात्**; प्रकृतौ सवनीयस्याश्विनग्रहणानन्तर्यमुत्पत्ताववगतं, विकृतौ च तेनैव कालेन स उपस्थापितः, अग्नीषोमीयस्तु सहत्ववचनेन स्वस्थानाच्चालितस्ततः प्रथमं सवनीयस्यैवोपाकरणादिप्रयोगः । इतरयोस्तु तत्साहित्यवचनात् तदानन्तर्यं, मिथस्त्वनियमः । **अथवा** प्रकृतिदृष्टपौर्वापर्यस्यासति बाधके त्यागायोगात् प्रथममग्नीषोमीयमुपाकृत्यानुबन्ध्य उपाकर्तव्य इति ॥ **'मुख्यक्रमेण चाङ्गानां तदर्थत्वात्'** ( जै. अ. ५ पा. १ सू. १४ ) 'सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वती सरस्वांश्चेति' सरस्वतीदैवतं सरस्वद्दैवतं च युगपत्कर्मद्वयं श्रूयते । तत्र च सरस्वतीदैवतस्य याज्यानुवाक्यायुगलं प्रथममाम्नायते, तदनन्तरं पुंदैवतस्य । **तत्र** मन्त्राणां प्रयोगशेषत्वाद्याज्यानुवाक्यापाठक्रमेण प्रधानक्रमोऽवगतः । अङ्गविशेषे निर्वापादौ संशयः; किमनियतोऽस्य क्रमः, उत प्रधानक्रमेण नियत इति । **तत्र** याज्यानुवाक्यापाठक्रमस्य प्रधानमात्रगोचरत्वादङ्गानामनुष्ठानक्रमे श्रुत्याद्यभावान्मुख्यक्रमस्य च प्रमेयत्वेन प्रमाणत्वानुपपत्तेरनियमे प्राप्ते—**सिद्धान्तः; मुख्यक्रमेणाङ्गानां** क्रमो **नियम्येत, तदर्थत्वात्**, प्रधानार्थत्वादङ्गानाम् । यद्यपि मुख्यक्रमस्य याज्यानुवाक्यापाठक्रमापेक्षया प्रमेयत्वं; तथापि प्रमितस्यास्य धूमादेरिवान्यत्र प्रमाणत्वमविरुद्धम् । प्रधानस्य हि प्रयोगविधिना साङ्गस्यैव प्रयोगश्चोदितः, स चावर्जनीयाद्व्यवधानादधिकव्यवधिमङ्गानां न सहते । यदि तु प्रधानान्तरसंनिधा-

## कल्पतरुपरिमलः ।

**अनुष्ठानापेक्षितेति । ननु**—अनुष्ठानापेक्षस्मृत्युपयोगिनो मन्त्रा एव, न विधिवाक्यानीति न तत्पाठक्रमेणानुष्ठानकाले क्रमिकपदार्थस्मृतयो भवन्तीति—**चेत्, सत्यम्**; मन्त्रपाठक्रमाभावे विधिपाठक्रमोऽप्यनुष्ठानकालपदार्थस्मृतिक्रमनियामकत्वेनाश्रीयते तस्य दृष्टार्थत्वायेत्याह—**एवं क्रमपाठोऽपीति । तद्यथेति ।** लोके स्नायादनुलिम्पेदित्यादौ पाठक्रमोऽनुष्ठानक्रमार्थ एव । अतएवानुलिम्पेत्स्नायादितिवदनभिज्ञेन मैवं वादीः, स्नायादनुलिम्पेदिति वद, तथैवानुष्ठानक्रमादिति व्युत्पाद्यते, तस्य तादर्थ्याभावे तथा व्युत्पादनं न क्रियेतेति भावः । **तद्विधानाच्चेति ।** सहत्वविधानादौपवसथ्येऽहन्यग्नीषोमीयस्ततः सौत्येऽहनि सवनत्रयव्यापिसवनीयपश्वनुष्ठाने सत्यवभृथानन्तरमनुबन्ध्य इत्येवंरूपः प्राकृतक्रमो निवर्तत इत्यर्थः । **अधिकव्यवधिमिति ।** साङ्गप्रयोगविधिबलादङ्गानां प्रधानसाहित्यमवगतं, तच्चैकक्षणानुष्ठेयत्वरूपं न संभवतीति संनिकर्षरूपं पर्यवस्यति । स च संनिकर्षः प्रधानाव्यवहितपूर्वापराङ्गवद्व्यवहिताङ्गानामात्यन्तिको न संभवतीति यस्याङ्गस्य यावद्भिः स्वप्रधानाङ्गैः प्रधानान्तराङ्गैर्वा व्यवधानमवर्जनीयं तत्तावद्भिर्व्यवधानं सहते, नान्यैः; ततश्च पश्चादनुष्ठेयस्य प्रधानस्याङ्गं निर्वापादि प्रथमानुष्ठेयप्रधानाङ्गान्निर्वापादितः पूर्वं यद्यनुष्ठीयेत, तदा तदङ्गमनुज्ञाताधिकेनापि पश्चादनुष्ठीयमानप्रथमप्रधानाङ्गेन स्वप्रधानाद्व्यवहितं स्यात्, तन्न सहते अङ्गप्रधानसाहित्यबोधकः प्रयोगविधिरित्यर्थः । मुख्यक्रमानादरे पाश्चात्यप्रधानाङ्गस्य पूर्वप्रधानाङ्गेन प्रयोगविध्यननुज्ञातं व्यवधानं भवेदित्यमुमेवार्थं विवृण्वन्नाह—**यदि त्विति ।** अस्मिन्नर्थेऽस्य वाक्यस्येत्थं योजना । यदि प्रधानान्तरस्य प्रथमप्रधानस्य संनिधौ तत्संनिकृष्टतया तदङ्गानुष्ठानं, द्वितीयप्रधानाङ्गानुष्ठानानन्तरं प्रथमप्रधानाङ्गानुष्ठानमिति यावत् । तथानुष्ठाने हि प्रथमप्रधानाङ्गानि द्वितीयप्रधानाङ्गव्यवधानाभावात्स्वप्रधानसंनिकृष्टानि भवन्ति, तद तथा मुख्यक्रमानादरेणानुष्ठाने अङ्गानि प्रथमानुष्ठीयमानद्वितीयप्रधानाङ्गनिर्वापादीनि तेनैव पश्चादनुष्ठीयमानप्रथमप्रधानाङ्गनिर्वापादिना स्वप्रधानाद्विप्रकृष्येरन्निति । यदितु प्रधानान्तरसंनिधावन्यप्रधानाङ्गानुष्ठानं, तदा तेनैव प्रधानान्तरेणान्यप्रधानाङ्गानि स्वप्रधानाद्विप्रकृष्येरन्नित्यापाततः प्रतीयमानोऽर्थस्तु न ग्राह्यः; मुख्यक्रमानादरे पाश्चात्यस्य पुंदैवतयागस्य किमङ्गं पूर्वेण स्त्रीदैवतयागेन व्यवहितं स्यादित्यापाद्यते, अवदानात्प्राचीनानां हि तदङ्गानां पूर्वप्रधानेन व्यवधानमातिदेशिकपाठक्रमा-

भामती ।

शेषिणां चाग्नेयादीनां एकफलवदुपकारोपनिबद्धानां एकफलावच्छिन्नानां एकप्रयोगवचनोपगृहीतानां एकाधिकारिकर्तृकाणां एकपौर्णमास्यमावस्याकालसंबद्धानां युगपदनुष्ठानाशक्तेः, सामर्थ्यात्क्रमप्राप्तौ, तद्विशेषापेक्षायां पाठादयस्तद्भेद-

वेदान्तकल्पतरुः ।

वन्याङ्गानुष्ठानं, तदा तेनैव स्वप्रधानादङ्गानि विप्रकृष्येरन्; अतो मुख्यक्रमादङ्गक्रमनियम इति ॥ **प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्** ( जै. अ. ५ पा. १ सू. ८ ) वाजपेये-'सप्तदश प्राजापत्यान्पशूनालभत' इति सप्तदश यागा अङ्गत्वेन श्रूयन्ते; तेषां च वैश्वदेवीं कृत्वा सह प्रचरन्तीति प्रयोगसाहित्यश्रवणादेकोपक्रमोपसंहार एक एवावान्तरप्रयोगः । तेनैषामतिदेशप्राप्ताः प्रोक्षणादिधर्मा न एकैकत्र समापनीयाः, किं तर्हि, सर्वेषु पशुष्वेक एव पदार्थः परिसमापनीयस्ततोऽन्यस्ततोऽन्यः; इतरथा ह्येकस्मिन्पशौ सर्वाङ्गानुष्ठाने प्रधानस्याङ्गैर्विप्रकर्षः स्यात् । **तत्र** प्रथममेकपदार्थानुष्ठाने विशेषतो वेदाभ्यनुज्ञाभावादिच्छैव नियामिका । तदेवं स्थिते द्वितीयादिपदार्थप्रयोगे संशयः; किं प्रथमइव द्वितीयादावपीच्छैव कारणमुत प्रथमप्रवृत्त्यैव नियम इति । **तत्र पूर्वपक्षः**—न तावत् श्रुत्याद्यस्ति नियामकम्; प्रथमाङ्गप्रवृत्तिश्च पौरुषेयी वेदेन नाभ्यनुज्ञायत इति न तद्वशादुत्तरनियमः । तेन प्रथमतराङ्गाश्रितपुरुषेच्छैव चरमतराङ्गनियामिका । प्रयोगसौकर्यं चैवं लभ्यते; इतरथा हि प्रथमं प्रयोगानुसंधानव्यग्रमनस उपरितनं च प्रयोगं तद्वशेन तन्वानस्य मतिक्लेशः स्यात् । तस्मादनियम इति **प्राप्ते—राद्धान्तः**; एकप्रयोगतया **तुल्यकालानां** प्रोक्षणाद्यङ्गानां **प्रवृत्त्या** क्रमनियमः; कुतः ? **तदुपक्रमात्** तेन प्रधानेनाङ्गानामुपक्रमात्, तदेकप्रयोगत्वादित्यर्थः । सप्तदश यागाङ्गानि सह प्रयोज्यानि प्रथमाङ्गानुष्ठाने सति द्वितीयादौ षोडशभिर्व्यवधानमभ्यनुजानन्ति न ततोऽधिकम्; प्रावृत्तिकक्रमाश्रयणे च सप्तदशसु प्रथमाङ्गानुष्ठाने द्वितीयो धर्मः प्रथमादिपशुषु क्रियमाणः षोडशभिरेव व्यवधीयते, क्रमान्तराश्रयणेऽधिकैरपि व्यवधानं स्यात्; अतः प्रयोगवचनकोपपरिहाराय प्रवृत्त्या नियम इति । शेषाणां शेषिणां च क्रमापेक्षायां हेतुमाह—**युगपदिति** । युगपदनुष्ठानप्राप्तौ क्रमः स्यात्तदेव कुतस्तत्राह—**एकपौर्णमासीति** । षण्णां मध्ये त्रयः पूर्णमास्या संबद्धास्त्रयोऽमावास्यया । कालैक्येऽपि यदि कर्तृभेदः स्यात्, तदा न क्रमोऽपेक्ष्येत तन्माभूदित्याह—**एकाधिकारीति** । स्वामित्वेनाधिकारित्वं तस्यैवानुष्ठातृत्वेन कर्तृत्वम् । एकाधिकारिकर्तृकत्वे हेतुमाह—**एकप्रयोगवचनेति** । यजेतेत्याख्याते कर्त्रैक्यस्य विवक्षितत्वात्प्रयोगवचने कर्त्रैक्यं सिद्धम् । एकप्रयोगवचनपरिग्रहे हेतुमाह—**एकफलवदिति** । एकश्चासौ फलवतः प्रधानस्य उपकारश्च तस्मिन् समुच्चित्य साधनत्वेन उपनिबद्धाः शेषाः, एकेन फलेनावच्छिन्नाः शेषिणोऽत एकप्रयोगवचनोपगृहीता

कल्पतरुपरिमलः ।

दिप्राप्तं सह्यमेव, अवदानादिमध्ये तु न कस्यापि तेन व्यवधानप्रसक्तिरस्ति; अवदानादिप्रदानान्तस्य पूर्वप्रधानानन्तरमेवानुष्ठानात् । अतः प्रधानान्तरव्यवधानापादनायोगात् पूर्वोक्त एवार्थो ग्राह्यः । **अतो मुख्यक्रमादिति** । यद्यपि वक्ष्यमाणप्रवृत्तिक्रमोऽप्यत्र संभवति, याज्यानुवाक्याप्रवृत्तिक्रमेण निर्वापादयः कार्याः; अन्यथा पुंदैवत्ययागाङ्गयोर्निर्वापानुवचनयोरननुज्ञातव्यवधानप्रसङ्गादिति, तथापि प्रवृत्तिक्रमवद् मुख्यक्रमस्यापि पदार्थक्रमनियमनसामर्थ्यमस्ति, अङ्गानामिव अङ्गप्रधानयोरपि परस्परं वर्जनीयव्यवधानस्य परिहरणीयत्वात्; अतस्तदपि प्रमाणमिह संभवतीत्युदाहृतम् । मन्त्रक्रमं विधाय 'सारस्वतौ भवतः एतद्वै दैव्यं मिथुनं यत् सरस्वती च सरस्वांश्चे'ति विधिवाक्यशेषगतपाठक्रममात्रेण मुख्यक्रमं निश्चित्य चेत्थमुदाहृतम् । मुख्यक्रमस्यासंकीर्णोदाहरणं त्विदं दर्शपूर्णमासयोर्दधिधर्माः पूर्वं पठिताः, तत आग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीतः पाठः । तत्र प्रवृत्तिद्वयं परस्परविरुद्धं प्रयाजशेषेण हवींष्यभिघारयतीति विहितप्रयाजशेषाभिघारणक्रमे न नियामकं, किंतु मुख्यक्रमादाग्नेयस्य प्रथममभिघारणमिति । **प्रधानस्याङ्गैर्विप्रकर्षः स्यादिति** । यत्र पशौ सर्वाण्यङ्गानि प्रथममनुष्ठितानि तत्पशुयागात् प्रकृतौ तत्संनिहितान्यप्यङ्गान्यत्यन्तं विकृतौ विप्रकृष्येरन्, अतः पदार्थानुसमय एव कार्यो न काण्डानुसमय इत्यर्थः । **'संनिपाते प्रधानानामेकैकस्य गुणानां सर्वधर्मः स्यात्'** ( जै. अ.५पा. २ सू. १ ) इत्यधिकरणार्थोऽयं प्रकृताधिकरणापेक्षितो वर्णितः । प्रकृताधिकरणार्थमाह—**द्वितीयादिपदार्थप्रयोग इति** । प्रवृत्तिक्रमानादरे तत्तत्पशुगतानामुपाकरणप्रोक्षणादिपदार्थानां परस्परप्रत्यासत्तिरेकरूपा न स्याद्, अतस्तद्वैषम्यपरिहाराय पङ्क्तिपरिवेषणन्यायेन प्रवृत्तिक्रम एष्टव्य इत्यर्थः । **त्रयः पूर्णमास्येति** । यदाग्नेयवाक्यस्यार्थभेदेन द्वेधा विभागे सति 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां चाच्युतो भवती'ति वाक्येन अमावास्यायामेक आग्नेयो विधीयते, 'यदाग्नेयोऽष्टाकपालः पौर्णमास्यां चाच्युतो भवती'ति वाक्येन पौर्णमास्यामपरः; ततश्च पौर्णमास्यामाग्नेयाग्नीषोमीयोपांशुयाजास्त्रयः, अमावास्यायामाग्नेयश्तदधियागास्त्रय इत्यर्थः । **एकश्चासाविति** । सर्वैरङ्गैः समुच्चितैः स्वस्वासाधारणदृष्टादृष्टोपकारद्वारकैरेकः प्रधानगतफलजननसामर्थ्योद्बोधनरूपाखण्डोपकारो जायत इत्येकादशे स्थिता मीमांसकमर्यादा । **ननु**—अध्ययनवदर्थावबोधार्थो विचारोऽपि वेदपाठक्रमेण स्यादिति कर्मब्रह्मकाण्डयोर्विचारे पाठक्रमो नियामकः स्याद्; मुख्यक्रमो वा

## भामती।

नियमाय प्रभवन्ति। यत्र तु न शेषशेषिभावः, नाप्येकाधिकारावच्छेदः, यथा सौर्यार्यमणप्राजापत्यादीनां; तत्र क्रमभेदापेक्षाभावान्न पाठादिः क्रमविशेषनियमे प्रमाणम्, अवर्जनीयतया तस्य तत्रागतत्वात्। नचेह धर्मब्रह्मजिज्ञासयोः शेषशेषिभावे श्रुत्यादीनामन्यतमं प्रमाणमस्तीति। **ननु** शेषशेषिभावाभावेऽपि क्रमनियमो दृष्टः, यथा गोदोहनस्य पुरुषार्थस्य दर्शपौर्णमासिकैरङ्गैः सह, यथावा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति दर्शपौर्णमाससोमयोरशेषशेषिणोरित्यत आह—**अधिकृताधिकारे वा प्रमाणाभावात्**। इति योजना। स्वर्गकामस्य हि दर्शपौर्णमासाधि-

## वेदान्तकल्पतरुः।

इति। **सौर्यार्यमणेति**। **एकादशे स्थितम्—'अङ्गवत्क्रतूनामानुपूर्व्यम्'** ( जै. अ. ५ पा. ३ सू. ३२ ) सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' 'आर्यमणं चरुं निर्वपेत्स्वर्गकामः' 'प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्यादिषु क्रमपठितक्रतुषु चिन्ता। किं पाठक्रमेण प्रयोज्या, उतानियमेनेति। **तत्र** यथाङ्गानां समिदादीनामेकेन युगपत्करणाशक्तेः क्रमाकाङ्क्षायां पाठात् क्रमनियमः, एवं क्रतूनामपीति **प्राप्ते—राद्धान्तः; 'न वाऽसंबन्धात्'** ( जै. अ. ५ पा. ३ सू. ३३ ) अङ्गेष्वेकप्रयोगवचनपरिग्रहादस्ति क्रमाकाङ्क्षा, क्रतुषु नानाफलेषु नैकः प्रयोगवचनोऽस्ति, नच सर्वे मिलित्वा प्रयोजयन्ति, तेनैषामेकप्रयोगवचनसंबन्धाभावान्नास्ति क्रमाकाङ्क्षा, किंतु पुरुषस्य। नच तदाकाङ्क्षितं विधिप्रतिपाद्यमिति तदिच्छयैव क्रमः; पाठक्रमस्त्वध्ययनार्थ इति। युगपत्पाठासंभवेनावर्जनीयतया पाठक्रमस्यागतत्वात्तन्नियमस्य चाध्ययनार्थत्वादित्यर्थः। **गोदोहनस्य पुरुषार्थत्वं चतुर्थे चिन्तितम्**—यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाऽविभक्तत्वात् ( जै. अ. ४ पा. १ सू. २ ) दर्शपूर्णमासयोर्गोदोहनेन पशुकामस्य प्रणयेदिति श्रूयते। तत्र गोदोहने क्रत्वर्थत्वपुरुषार्थत्वसंदेहे पशुकामस्येति समभिव्याहाराद्वाक्येन क्रतूपकारकत्वेन चोभयार्थमिति **प्राप्ते—सिद्धान्तः**; नोपकारकत्वं शेषत्वं, किंतु तादर्थ्यम्; तथाच गोदोहनस्य पशुशेषत्वान्न क्रत्वङ्गत्वम्, अङ्गापेक्षा च क्रतोरुपकाराय; अन्यार्थस्यापि

## कल्पतरुपरिमलः।

नियामकः स्यात्; स्वाध्यायाध्ययनेनार्थज्ञानं भावयेदित्यध्ययनविधिवाक्यविपरिणामे मुख्ययोः कर्मब्रह्मकाण्डाध्ययनयोः पौर्वापर्यस्य क्लृप्तत्वात्, प्रवृत्तिक्रमो वा स्याद्; अध्ययनगृहीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति तद्विधिविपरिणामपक्षे अध्ययनमीमांसारूपयोरङ्गयोर्मध्ये अध्ययने क्रमस्य प्रवृत्तत्वादित्याशङ्क्य एकप्रयोगावच्छिन्नतया एकपुरुषानुष्ठेयत्वेन क्रमाकाङ्क्षायां पाठक्रमादिर्नियामको भवति, नचात्र तदस्ति; कर्मब्रह्मविचारयोर्विलक्षणाधिकारिकत्वात्, एकाधिकारिकत्वेन क्रमाकाङ्क्षाकल्पने च वेदभाष्यवद्विचारस्याप्यादित आरभ्य प्रवृत्तिप्रसङ्गाचेति दर्शयितुं यत्र क्रमाकाङ्क्षा नास्ति तत्र पाठक्रमस्यानियामकतायामधिकरणमुदाहरति—**एकादशे स्थितमिति**। एकादश इति प्रामादिकः पाठः। **अङ्गवत्क्रतूनाम्** ( जै. अ. ५ पा. ३ सू. ३२ ) इत्याधिकरणं हि पाञ्चमिकम्। **अथवा** पञ्चमतृतीयपादगतमेकादशमिदमधिकरणमित्यभिप्रायमेकादश इत्येतद्योज्यम्। **अन्ते तूत्तरयोर्दध्यात्** ( जै. अ. ५ पा. ३ सू. १३ ) **इति** सूत्रं तत्पूर्वाधिकरणप्रत्युदाहरणतया तच्छेषभूतं, तस्याधिकरणान्तरत्वे त्वेकादश इत्यस्यातीते इति शेषोऽध्याहार्यः। **किंतु पुरुषस्येति**। वस्तुतः पुरुषस्यापि नास्ति काम्यनैमित्तिकेषु क्रतुषु क्रमाकाङ्क्षा; कामनानां निमित्तानां च क्रमनियमाभावात्, तदधीनत्वाच्च काम्यनैमित्तिकानुष्ठानस्य। **क्रत्वर्थत्वेति**। केवलं पुरुषशेषत्वम्, उत क्रतुशेषत्वमपीति संदेहे इत्यर्थः। **पशुकामस्येति। समभिव्याहाराद्वाक्येनेति**। **ननु**—गोदोहनेनेति तृतीया पशुकामस्येति षष्ठी च शेषशेषिभावे श्रुतिरेवास्ति, कथमिह पुरुषशेषत्वे वाक्यं प्रमाणमुपन्यस्तम्। **उच्यते**; गोदोहनेनेति तृतीयया फलभावना करणत्वं नोच्यते; किंतु संनिधिप्राप्तप्रणयनक्रियाकरणत्वं; सिद्धरूपस्य दध्नो यागादिवत्स्वरूपेण फलभावनाकरणत्वासंभवेन यत्किंचिद्धात्वर्थकारकतारूपक्रियानुरागेण साध्यत्वं संपाद्य तस्य फलभावनाकरणत्वस्योपपादनीयत्वात्, अतस्तृतीयार्थकारकविशिष्टं दधि दधिविशिष्टं वा कारकं फलाय विधेयमिति तृतीयया तावद्गोदोहनस्य न फलभावनाशेषत्वप्रतीतिः; नापि षष्ठीश्रुत्या पशुफलस्य शेषित्वप्रतीतिः; तस्याः संबन्धसामान्यवाचित्वेन शेषित्वविशेषपर्यवसानार्थं समभिव्याहृतपदार्थान्तरशेषित्वान्वययोग्यतावधारणसापेक्षत्वात्। अतः प्रथमोपस्थितं गोदोहनपशुफलसमभिव्याहारात्मकं वाक्यमेव स्वर्गकामो यजेतेति वाक्यमिव फलशेषत्वे प्रमाणमिति। क्वचित् कोशे पशुकामस्येत्येतदनन्तरं श्रुत्येत्यपि पदान्तरं दृष्टं, तत्प्रक्षिप्तमिव भाति; वाक्यात् पुरुषार्थमेवेत्युपसंहारे तददर्शनात्, समभिव्याहारापेक्षपर्यवसानलभ्यश्रुतित्वाभिप्रायं वा तद्योज्यम्। **नोपकारकत्वमिति**। तथात्वे प्रधानस्याप्यङ्गानुष्ठापनेन तदुपकारकस्य तच्छेषत्वप्रसङ्गादिति भावः। **तादर्थ्यं** तदुद्देश्यकक्लृप्तिसाध्यत्वम्। **ननु** गोदोहनस्य चमसस्थानापन्नस्य क्रत्वनङ्गत्वे तत्प्रयोगे चमसनिवृत्त्याऽङ्गविकलः क्रतुर्न फलदः स्यादित्याशङ्क्याह—**अङ्गापेक्षेति**। अङ्गं ह्युपकारायापेक्ष्यते, अङ्गसाध्योपकारस्यानङ्गेनापि सिद्धौ किमङ्गवैकल्येन हीयत इत्यर्थः। फलार्थस्य कथं क्रतावुपकारकत्वमित्याशङ्क्य प्रासादप्रकाशार्थस्य दीपस्य रथ्यासंचार इवेत्याह—**अन्यार्थस्यापीति**।

## भामती ।

कृतस्य पशुकामस्य सतो दर्शपौर्णमासक्रत्वर्थाप्प्रणयनाश्रिते गोदोहनेऽधिकारः । नो खलु गोदोहनद्रव्यमव्याप्रियमाणं साक्षात्पशून् भावयितुमर्हति । नच व्यापारान्तराविष्टं श्रूयते, यतस्तदङ्गक्रममतिपतेत्, अप्प्रणयनाश्रितं तु प्रतीयते; 'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इति समभिव्याहारत्, योग्यत्वाच्चास्यापां प्रणयनं प्रति । तस्मात्क्रत्वर्थाप्प्रणयनाश्रितत्वाद्गोदोहनस्य, तत्क्रमेण पुरुषार्थमपि गोदोहनं क्रमवदिति सिद्धम् । श्रुतिनिराकरणेनैव इष्टिसोमक्रमवदपि क्रमोऽप्यपास्तो वेदितव्यः । शेषशेषित्वाधिकृताधिकाराभावेऽपि क्रमो विवक्ष्येत, यद्येकफलावच्छेदो भवेत् । यथाग्नेयादीनां, षण्णामेकस्वर्गफलावच्छिन्नानां, यदि वा जिज्ञास्यब्रह्मणोंऽशो धर्मः स्यात्, यथा चतुर्लक्षणीव्युत्पाद्यं ब्रह्म केनचित्केनचिदंशेनैकेन लक्षणेन व्युत्पाद्यते, तत्र चतुर्णां लक्षणानां जिज्ञास्याभेदेन परस्परसंबन्धे सति क्रमो

## वेदान्तकल्पतरुः ।

क्रतूपकारकत्वमविरुद्धम्, तेन वाक्यात्पुरुषार्थमेवेति । **यस्मिन्निर्वृत्ते पुंसः प्रीतिः** फलं भवति, तस्य **लिप्सा**-फलप्रयुक्ता, न विधितः; कुतः? **तस्य** फलसाधनस्य प्रीत्या विभागाभावादिति सूत्रार्थः । अस्य चाप्प्रणयनाश्रितत्वात्तत्क्रम एव क्रम इति गोदोहनस्य प्रणयनाश्रितत्वमुपपादयति—**नो खल्विति** । कल्प्यतां तर्हि व्यापारान्तरावेशस्तत्राह—**अप्प्रणयनाश्रितमिति** । प्रणयनान्तरविशिष्टविधिमाशङ्क्य प्रतीयत इत्युक्तम् । संनिहितलाभे न विशिष्टविधिरित्यर्थः । सामर्थ्यरूपाद् लिङ्गाच्चाप्प्रणयनाश्रितत्वमाह—**योग्यत्वाच्चेति । यथा वा दर्शपूर्णमासाभ्यामिति । चतुर्थे चिन्तितम्—उत्पत्तिकालाङ्गविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात्** ( जै. अ. ४ पा. ३ सू. ३७ ) दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति श्रूयते । **तत्र** संदेहः; किमिदमङ्गस्य विधायकमुत कालस्येति । **तत्र** क्त्वाश्रुतेरङ्गस्य, तच्चाङ्गत्वं यजेतेति विधिप्रत्यासत्तेः सोमस्यैव । **ननु** द्रव्यद्वारेणान्यत्र विहितसोमयागस्य प्रत्यभिज्ञानात्कथं तद्विधिः । **उच्यते**; तत्कार्यस्येहाप्रत्यभिज्ञानाद्वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवत् । नह्यत्र ब्रह्मवर्चसं बृहस्पतिसवकार्यं प्रतीतम्, अतोऽङ्गं बृहस्पतिसवो वाजपेयस्य । एवंच सोमयागोऽपि दर्शपूर्णमासेष्टिं प्रत्यङ्गत्वेन विधीयत इति **प्राप्ते–उच्यते;** अस्मिन्कालाङ्गविधिसंशये कालो विधेयः स्यात् । कुतः, अस्य वाक्यस्य कालप्रधानत्वात् । यदि कर्मविधिरेव स्यात्, तर्हि रूपेण द्रव्यदेवतेन भाव्यम्; नचेह देवतारूपमस्ति । अथाव्यक्तत्वेनोद्भिदादिष्विव सौमिकी देवतातिदेशेन प्राप्येत, तर्हि सोमोऽपि प्राप्येतेति सोमेनेति व्यर्थं स्यादतः सोमयागप्रत्यभिज्ञार्थमेव तत् । प्रत्यभिज्ञाने च न विधिसंभवः; बृहस्पतिसवस्तु वाजपेयप्रकरणे श्रुतस्तत्र प्रकरणान्तरन्यायात्कर्मान्तरमेव विधीयते । नामधेयमपि यजिपरतन्त्रतया न प्रत्यभिज्ञापकं, किंतु तत्रैव धर्मलक्षणया वर्तते । अतो नाम्नैव प्रसिद्धबृहस्पतिसवधर्माणां प्रापितत्वाद्युक्तं कर्मविधानमिति । **यथाग्नेयादीनामिति । एकादशे चिन्तितम्–प्रयोजनाभिसंबन्धात् पृथक्त्वं ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात्** ( जै. अ. ११ पा. १ सू. १ ) । आग्नेयादिषु संशयः किं तन्त्रमेषां फलमुत भेदेनेति । तत्र परस्परनिरपेक्षैरुत्पत्तिविधिभिर्वि-

## कल्पतरुपरिमलः ।

**यथावा दर्शपूर्णमासाभ्यामितीति** । प्राचीनोऽप्ययं प्रतीको गोदोहनविषयाधिकरणानुबन्धिटीकाग्रन्थव्याख्यानान्तरमेव तदनुबन्ध्यधिकरणानुक्रमणार्थमिह गृहीतः । **ननु द्रव्यद्वारेणेति** । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र सोमपदमुत्पत्तिवाक्ये इव द्रव्यपरं तदुत्पत्तिवाक्ये विहितस्य सोमयागस्य प्रत्यभिज्ञानार्थमिति तस्येह न पुनर्विधिः; विहितस्य विधानायोगात्, अतः कालविधिर्युक्त इत्यर्थः । यथा वाजपेयेनेष्ट्वेति वाक्ये प्रसिद्धबृहस्पतिसवनामग्रहणे सत्यपि तत्कार्यब्रह्मवर्चसप्रत्यभिज्ञानाभावान्न तस्य कालविधिः, किंतु बृहस्पतिसवनामककर्मान्तरविधिः; एवमिहापि सोमद्रव्यग्रहणे सत्यपि प्रसिद्धसोमयागफलस्वर्गप्रत्यभिज्ञानाभावान्न तस्य कालविधिः, किंतु सोमद्रव्यककर्मान्तरविधिरित्याह—**उच्यते तत्कार्यस्येत्यादिना । दर्शपूर्णमासंप्रति** इत्यत्र दर्शपूर्णमाससोमयोरिति टीकायामिव द्वन्द्वैकवद्भावः । कर्मान्तरविधिश्चेत् तस्य देवतया भाव्यं, न चेह देवता निर्दिष्टा । यदि यागं प्रति संबन्धितया देवतोपादानराहित्यरूपम् अव्यक्तदेवताकत्वं प्रसिद्धसोमयागसादृश्यमिह वर्तेत इति तेनोद्भिदादियागेष्विवेहापि प्रसिद्धसोमयागादतिदेशतो देवताप्राप्तिरिष्यते, तदा तत एव सोमद्रव्यप्राप्तिरपि स्यात् । दर्शपूर्णमासाभ्यामिष्ट्वा यजेतेत्येतावतैव दर्शपूर्णमासाङ्गप्रसिद्धसोमयागप्रकृतिककर्मान्तरविधिः सिध्येदित्यतिरिच्यमानं सोमद्रव्यग्रहणं प्रसिद्धसोमयागप्रत्यभिज्ञापनेनैव सफलं वाच्यमिति तस्यात्र कालविधिरित्येव युक्तम् । विहितस्य पुनः स्वरूपतो विधानायोगादिति सिद्धान्तयति—**उच्यत इति** । बृहस्पतिसवनामग्रहणं तु नातिरिच्यते, येन तदपि प्रसिद्धबृहस्पतिसवप्रत्यभिज्ञापनार्थं कथंचित्कल्प्येत, तत्तु कर्मान्तरे तद्धर्मातिदेशार्थत्वेन सफलम् । अतस्तस्य प्रकरणान्तरन्यायप्राप्तकर्मान्तरविधित्वस्वारस्यव्याजि पारतन्त्र्यं न हातव्यमिति तद्वैषम्यमाह—**बृहस्पतिसवस्त्विति । उत भेदेनेति** । अस्मिन्पक्षे षडपि यागाः पृथक्पृथक् पूर्वोत्तराङ्गसहिताः प्रयोगभेदेन कर्तव्याः । फलं तन्त्रमिति सिद्धान्ते

**धर्मब्रह्मजिज्ञासयोः फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्मज्ञानं, तच्चानुष्ठानापेक्षम् । निःश्रेयसफलं तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम् । चोदनाप्रवृत्ति-**

**भामती ।**

विवक्षितः, तथेहाप्येकजिज्ञास्यतया धर्मब्रह्मजिज्ञासयोः क्रमो विवक्ष्येत, नचैतदुभयमप्यस्तीत्याह—**फलजिज्ञास्यभेदाच्च । फलभेदं विभजते—अभ्युदयफलं धर्मज्ञानमिति ।** जिज्ञासाया वस्तुतो ज्ञानतन्त्रत्वात् ज्ञानफलं जिज्ञासाफलमिति भावः । न केवलं स्वरूपतः फलभेदः, तदुत्पादनप्रकारभेदादपि तद्भेद इत्याह—**तच्चानुष्ठानापेक्षम् । ब्रह्मज्ञानं च नानुष्ठानान्तरापेक्षम् ।** शाब्दज्ञानाभ्यासान्नानुष्ठानान्तरमपेक्षते, नित्यनैमित्तिककर्मानुष्ठानसहभावस्यापास्तत्वादिति भावः । जिज्ञास्यभेदमात्यन्तिकमाह—**भव्यश्च धर्म इति ।** भविता भव्यः, कर्तरि कृत्यः । भविता च भावकव्यापारनिर्वर्त्यतया तत्तन्त्र इति ततः प्राग्ज्ञानकाले नास्तीत्यर्थः । भूतं सत्यम् । सदेकान्ततः न कदाचिदसदित्यर्थः । न केवलं स्वरूपतो जिज्ञास्ययोर्भेदः, ज्ञापकप्रमाणप्रवृत्तिभेदादपि भेद इत्याह—**चोदनाप्रवृ-**

**वेदान्तकल्पतरुः ।**

हितानां प्रधानानां पृथक्फलाकाङ्क्षत्वात्तत्संनिधौ श्रूयमाणं फलं भेदेनाभिसंबध्यते; ततः प्रतिप्रधानं फलभेद इति **प्राप्ते—राद्धान्तः ।** यद्यप्येषां पृथक्त्वं पृथगुत्पत्तिविहितता; तथा**प्यैककर्म्यम्**, क्रियत इति व्युत्पत्त्या फलं कर्म, ऐककर्म्यमेकफलत्वमित्यर्थः । **कुतः**, प्रयोजनेन समुच्चितानां संबन्धाद्धेतोः । स एव कुतः, एकशब्दाभिसंयोगात् । दर्शपूर्णमासशब्देन हि समुदायवाचिना निर्दिश्य फले विधीयन्ते आग्नेयादयः; यथा ग्रामेणोदपानः खेय इति समुदायशब्दनिर्देशात्समुदितैः पुंभिरुदपानः खन्यते, न प्रतिपुरुषं कूपभेदः एवमिहापि । **ननु** गणायानुलेपनमित्यादौ समुदायशब्दनिर्दिष्टमप्यनुलेपनादि प्रतिपुरुषमावर्तते तद्वत् किं न स्यात् । **नेति वदामः**; युक्तमनुलेपनादेः संस्कारत्वाद्दृष्टार्थत्वाच्च प्रतिसंस्कार्यमावृत्तिरिह फलमुद्दिश्य विधीयमानानामुपादीयमानानामेवाग्नेयादीनां विवक्षितं साहित्यमिति फलतन्त्रतेति । संग्रहे जिज्ञासयोः फलादिभेदं निर्दिश्य विभजने ज्ञानयोस्तत्कथनमयुक्तमित्याशङ्क्याह—**जिज्ञासाया इति ।** इच्छाया ज्ञानपराधीनतया ज्ञानफलमेव तत्फलमित्यर्थः । फलभेदे वक्तव्ये कारणभेदकथनं भाष्ये अनुपयोगीत्याशङ्क्याह—**न केवलमिति ।** विधेयाविधेयक्रियाज्ञानफलयोरुत्पाद्यता व्यङ्ग्यता च भेद इत्यर्थः । अनुष्ठानान्तरेत्यत्रान्तरशब्दार्थमाह—**शाब्दज्ञानेति ।** क्वचित् 'ब्रह्मविदाप्नोति पर'मित्यादौ ज्ञानफलं साध्यत्वेन प्रतीतमपि न्यायबलाद्वचनान्तरवशाच्चाभिव्यक्तिपरत्वेन व्याख्याय फलभेद उक्तः, जिज्ञास्यभेदस्तु प्रतीतिसमय एव स्फुट इत्याह—**जिज्ञास्यभेदमिति । ननु** भवतेरकर्मकत्वाद्भावार्थत्वे च नपुंसकत्वप्रसङ्गाद्भव्यशब्देन कथं जिज्ञास्यभेदसिद्धिरत आह—**भवितेति । ननु** 'तयोरेव कृत्यक्तखलर्थाः' इति कृत्यानां भावकर्मणोः स्मरणात् 'अचो यदि'ति सूत्रविहितयत्प्रत्ययान्तस्य भव्यशब्दस्य कर्तृवाचित्वमयुक्तमित्याशङ्क्याह—**कर्तरि कृत्य इति ।** 'भव्य-

**कल्पतरुपरिमलः ।**

त्वमावास्याः पौर्णमास्याश्च त्रयस्त्रयो यागाः स्वस्वकालयोरेकप्रयोगाः कर्तव्या इति फलभेदः । **भेदेनाभिसंबध्यत इति ।** एकशब्दोपात्तानामप्याग्नेयादीनां साहित्यमिह न विवक्षितम्; उत्पत्तिवाक्यविहितानां तेषामिह फलसंबन्धविधानार्थमुद्देश्यत्वाद्, उद्देश्येषु च साहित्यरूपस्य विशेषणस्य विवक्षणायोगादिति भावः । आग्नेयादीनां पृथक्त्वमैककर्म्यं च सूत्रोक्तं परस्परविरुद्धमित्याशङ्क्य तदर्थं कथयन्नेव सिद्धान्तमाह—**यद्यप्येषामिति । फले विधीयन्त इति ।** फलस्य प्राधान्यात्तु फलकाममुद्दिश्याग्नेयादय एव विधेयाः; स्वरूपेण विहितानामपि फलसंबन्धित्वेन पुनर्विधानसंभवात्, अतस्तेषां साहित्यविशेषणाविवक्षाकारणं नास्तीति भावः । **उपादीयमानानां** कामिनमुद्दिश्यानुष्ठेयत्वेन बोध्यमानानाम् । टीकायामात्यन्तिकविशेषणेन विवक्षितं फलभेदाज् जिज्ञास्यभेदस्य स्फुटत्वमुपपादयितुं फलभेदस्यास्फुटत्वमाह—**क्वचिद् ब्रह्मविदिति ।** कृतकत्वे मोक्षफलस्यानित्यत्वप्रसङ्गो **न्यायः ।** ब्रह्मैव सन् ब्रह्माप्येतीत्यादिवचनान्तरम् । **ननु भवते-**

१ 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' । 'तेनेति ब्रह्मवित्पुण्यकृच्च' 'सत्येन लभ्यस्तपसा ह्येष आत्मा'इत्यादिवचनानि न कर्मसमुच्चयविषयः, **प्रथमे** स्पष्टत एव फलभेदावगमात्, **द्वितीये** मार्गसमुच्चयस्यैवावगमात्, **तृतीये** ध्यानसमुच्चयस्यैवावगमाच्चेति फलभेदसिद्धेः । 'नान्यः पन्था विद्यतेऽयनाय' 'नास्त्यकृतः कृतेन' 'न कर्मणा न प्रजया धनेन नान्यैर्देवैस्तपसा कर्मणा वा । हित्वाऽविद्यां धियैवेयात्तद्विष्णोः परमं पदम्' इत्यादिवचनान्युपपद्यन्ते । ज्ञानाङ्गतया सर्वकर्मसंन्यासविधानमप्यतएवोपपन्नम् । अस्तु वा ज्ञानकर्मसमुच्चयसिद्धिः, एवमप्यग्निहोत्रादिव्यतिरिक्तसंन्यासधर्मैरेव मोक्षसिद्ध्या कर्मविचारस्याननुष्ठेयत्वेन न कर्मावबोधनानन्तर्यार्थत्वसिद्धिः । किंच ज्ञानकर्मसमुच्चयमते ज्ञानवतैवानुष्ठितानां कर्मणां मोक्षसाधनत्वेन ब्रह्मावबोधानान्तर्यमेव धर्मविचारे विवक्षितमिति वैपरीत्यमेव किं न स्यादिति न फलैक्यात्कर्मावबोधानन्तर्यनिर्वाह **इति विवरणाचार्याः ।**

**भेदाच्च । या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं, अवबोधस्य चोदनाऽजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते ।**

## भामती ।

**त्तिभेदाच्च ।** चोदनेति वैदिकं शब्दमाह; विशेषेण सामान्यस्य लक्षणात् । **प्रवृत्तिभेदं विभजते—या हि, चोदना धर्मस्येति ।** आज्ञादीनां पुरुषाभिप्रायभेदानामसंभवात् अपौरुषेये वेदे चोदनोपदेशः । **अतएवोक्तम्—** 'तस्य ज्ञानमुपदेशः' इति । सा च स्वसाध्ये पुरुषव्यापारे भावनायां, तद्विषये च यागादौ । स हि भावनाविषयः, तदधीननिरूपणत्वात् प्रयत्नस्य भावनायाः । 'षिञ् बन्धने' इत्यस्य धातोर्विषयपदव्युत्पत्तेः । भावनायास्तद्द्वारेण च यागादेरपेक्षितोपायतामवगमयन्ती तत्रेच्छोपहारमुखेन **पुरुषं नियुञ्जानैव** यागादिधर्ममवबोधयति नान्यथा, **ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं,** नतु प्रवर्तयन्त्यवबोधयति; कुतः ? **अवबोधस्य** प्रवृत्तिरहितस्य **चोदनाज-**

## वेन्दान्तकल्पतरुः ।

गेये'त्यादिना हि सूत्रेण भावकर्मवाचितानियममपोद्य कृत्यप्रत्ययान्ता एव भव्यादिशब्दा विकल्पेन कर्तरि निपात्यन्ते । अतो भवतीति व्युत्पत्त्या भव्यशब्दः कर्तृवाची । पक्षे च 'भावकर्मणोः' । अस्य च भवतेरनुपसर्गत्वात्प्राप्तिवाचित्वाभावाच्च कर्माप्राप्तिः । भावे तु भव्यमनेनेति स्याद् नेह सः; पुंलिङ्गनिर्देशात्, उत्पाद्यधर्मापेक्षणाच्च । अतः कर्तरि कृत्य इति । **ननु** भवितुः कथं ज्ञानकाले सत्त्वाभाव इत्याशङ्क्य ज्ञानोत्तरभाविप्रयोजकव्यापारापेक्षणादित्याह—**भविता चेति ।** भवतिर्ह्यसिद्धकर्तृकक्रियावाची न पच्यादिवत्सिद्धकर्तृकक्रियस्ततो भविता स्वतोऽसिद्धः सन्भावकव्यापारापेक्षनिष्पत्तिरर्थात्साध्यो भातीति । **अत एवाहुः—**'करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः । भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥' इति । **भाष्ये** भूतशब्दस्यातीतवाचित्वभ्रमं निरस्यति—**भूतमिति । नन्वा**ज्ञाभ्यर्थनानुज्ञानां लोके चोदनात्वात्कथं वेदे चोदना ? अत आह—**आज्ञादीनामिति ।** उत्कृष्टपुंसः स्वाभिलषितोपायकार्यत्वाभिधानमाज्ञा, यथा गामानयेति । एतदेव हीनस्या**भ्यर्थना,** यथा माणवकमध्यापयेति । प्रवृत्तस्य प्रयोज्यस्य तद्धितोपायो**क्तिरनुज्ञा,** तथा कुरु यथा हितमिति । नैतासां संभवो वेदे इत्युपदेशश्चोदना । उपदेशो ह्यप्रवृत्तनियोज्यस्य प्रयोजनोपायबोधको लोकेऽवगतो, यथा गोपालवचसि सुपथकथनपरेऽनेन पथा याहीति । नहीहाज्ञा; प्रयोक्तुर्निकर्षात् । नाभ्यर्थना; स्वप्रयोजनाभावात् । नाप्यनुज्ञा; प्रयोज्यस्याप्रवृत्तत्वात्तदिह नियोज्यस्याप्रवृत्तस्य हितोपायकर्तव्यतोक्तिरपौरुषेयेऽपि वेदे भवत्येवेति । **तस्य** धर्मस्य, ज्ञायतेऽनेनेति **ज्ञानं,** प्रमाण**मुपदेशो** विधिरिति जैमिनीयसूत्रावयवार्थः । स्वविषय इति भाष्ये स्वशब्देन चोदनाभिधीयत इति मत्वाह—**स्वसाध्ये इति ।** स्वस्याः प्रतिपाद्ये विषये भावनायामित्यर्थः । धर्मस्येत्युक्त्या भावनोपसर्जनभूतापि शब्दतोऽर्थतः प्राधान्यात् स्वशब्दार्थ इति गृहीत्वाह—**तद्विषये इति । ननु** भावनाधात्वर्थयोर्विधिशब्देन पुरुषप्रवर्तनमशक्यं; प्रमाणस्य वाय्वादिवत्प्रेरकत्वायोगादित्याशङ्क्याह—**भावनाया इति ।** साक्षाद्भावनायास्तदवच्छेदकत्वद्वारेण चार्थाद्धात्वर्थस्येष्टोपायतां बोधयति, विधिर्बोधयित्वा च तत्रेच्छामुपाहरति, इच्छँश्च पुरुषः प्रवर्तते, तदनेन क्रमेण नियुञ्जाना चोदना धर्ममवबोधयतीत्यर्थः । **ब्रह्मचोदना** ब्रह्मवाक्यम् । यथा धर्मचोदना प्रवृत्तिहेतुं बोधं जनयति, नैवं ब्रह्मचोदनेत्याह—**अवबोधस्येति ।** ब्रह्मचोदनया सिद्धवस्तुविषयस्य प्रवृत्त्यहेत्वर्थमात्रावबोधस्य जन्यत्वादिति भाष्यार्थः । **ननु**—मा नाम जनि-

## कल्पतरुपरिमलः ।

**रिति ।** अनपुंसकलिङ्गोऽयमकर्मकधातुनिष्पन्नकृत्यप्रत्ययान्तो भव्यशब्दो न भावकर्मार्थो, नापि तस्यार्थान्तरमस्तीति निरर्थकः; निरर्थकशब्देन कथं जिज्ञास्यविशेषलाभ इत्यर्थः । **अस्य च भवतेरिति ।** सुखमनुभवतीत्यादौ सोपसर्गत्वेन भवतिः सकर्मकः, 'प्रमाणभूत आचार्य' इत्यादौ प्रामाण्यं प्राप्त इति प्राप्त्यर्थत्वेन, तदुभयमिह नास्तीत्यर्थः । **उत्पाद्यधर्मापेक्षणादिति ।** उत्पत्तिमद्धर्मसामानाधिकरण्यादित्यर्थः । भावपरत्वे हि भव्यमनेनेति वैयधिकरण्यं भवेत् । **ननु** भावार्थभव्यशब्दार्थस्य भवनस्योत्पत्तिरूपत्वाद्धर्मशब्दसामानाधिकरण्यं घटत **इत्याशङ्क्योत्पाद्येति** विशेषितम् । उत्पत्तिमान् हि यागादिधर्म इह निर्दिष्टः, न धर्ममात्रम्; अतस्तस्य नोत्पत्तिवाचिशब्दसामानाधिकरण्यं घटत इति भावः । **यद्वा** नेह सः इत्यस्य नेह भावार्थ इत्यर्थमाश्रित्य तत्र पुंलिङ्गनिर्देशादिति हेतुयोजनानन्तरं तस्यावृत्त्या नेह प्राप्त्यर्थ इत्यर्थान्तरमाश्रित्य तत्र हेतुत्वेनोत्पाद्यधर्मसापेक्षत्वादित्येतद्योजनीयम् । वेदार्थविचारानन्तरमनुष्ठानेनोत्पादनीयं धर्ममपेक्ष्य हि तद्विशेषणतया भव्य इति निर्दिष्टं, नतु ग्रामपश्वादिवत् तटस्थतया प्रागेव सिद्धं किंचित्प्राप्यमपेक्ष्य, अतोऽत्र न प्राप्त्यर्थो घटत इति भावः । **भावकव्यापारो** भावयितृव्यापारः । तत्र वाक्यपदीयसंमतिमाह—**करोत्यर्थस्येति ।** घटं करोतीत्यस्यायमर्थः । घटं भवन्तं भावयतीति स भावयिता भवितुर्घटस्य प्रयोजकः । भविता घटस्तमपेक्ष्य प्रयोज्य इत्यर्थः । स्वस्या इति प्रामादिकः पाठः । स्वशब्दस्यात्मवाचित्वे नपुंसकलिङ्गत्वादिति । **धर्मस्येत्युक्त्येति ।** धर्मस्य चोदनेति भाष्ये चोदनोपसर्जनमपि भावना तत्प्रतिपाद्यत्वेनार्थतः प्राधान्यात् सापि स्वविषय इति भाष्ये स्वशब्देन गृह्यत इत्यर्थः ।

१ जैमिनीयप्रथमाध्यायप्रथमपादपञ्चमसूत्रैकदेशोऽयम्.

**यथाक्षार्थसंनिकर्षेणार्थावबोधे, तद्वत्। तस्मात्किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति। उच्यते—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्,**

## भामती।

**न्यत्वात्। ननु** 'आत्मा ज्ञातव्यः' इत्येतद्विधिपरैर्वेदान्तैः तदेकवाक्यतयावबोधे प्रवर्तयद्भिरेव पुरुषो ब्रह्मावबोध्यत इति समानत्वं धर्मचोदनाभिर्ब्रह्मचोदनानामित्यत आह—**न पुरुषोऽवबोधे नियुज्यते। अयमभिसंधिः—न तावद्ब्रह्मसाक्षात्कारे** पुरुषो नियोक्तव्यः; तस्य ब्रह्मस्वाभाव्येन नित्यत्वात्, अकार्यत्वात्। **नाप्युपासनायां**; तस्या अपि ज्ञानप्रकर्षे हेतुभावस्यान्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वात्। **नापि शाब्दबोधे**, तस्याप्यधीतवेदस्य पुरुषस्य विदितपदतदर्थस्य समधिगतशाब्दन्यायतत्त्वस्याप्रत्यूहमुत्पत्तेः। अत्रैव दृष्टान्तमाह—**यथाक्षार्थेति**। दार्ष्टान्तिके योजयति—**तद्वदिति**। अपिचात्मज्ञानविधिपरेषु वेदान्तेषु नात्मतत्त्वविनिश्चयः शाब्दः स्यात्। नहि तदात्मतत्त्वपरास्ते, किंतु तज्ज्ञानविधिपराः, यत्पराश्च ते त एव तेषामर्थाः। नच बोधस्य बोध्यनिष्ठत्वादपेक्षितत्वात्, अन्यपरेभ्योऽपि बोध्यतत्त्वविनिश्चयः; समारोपेणापि तदुपपत्तेः। तस्मान्न बोधविधिपरा वेदान्ता इति सिद्धम्। **प्रकृतमुपसंहरति—तस्मात्किमपि वक्तव्यमिति**। यस्मिन्नसति ब्रह्मजिज्ञासा न भवति सति तु भवन्ती भवत्येवेत्यर्थः। **तदाह—उच्यते—नित्यानित्यवस्तुविवेक इत्यादि**। **नित्यः** प्रत्यगात्मा, **अनित्या** देहेन्द्रियविषयादयः। तद्विषयश्चेद्विवेको निश्चयः, कृतमस्य ब्रह्मजिज्ञासया; ज्ञातत्वाद्ब्रह्मणः। **अथ विवेको** ज्ञानमात्रं, न निश्चयः; तथा सत्येष विपर्यासादन्यः संशयः स्यात्, तथाच न वैराग्यं भावयेत्; अभावयन्कथं ब्रह्मजिज्ञासाहेतुः, तस्मादेवं व्याख्येयम्। नित्यानित्ययोर्वसतीति **नित्यानित्यवस्तु** तद्धर्मः, नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च **विवेको** नित्यानित्यवस्तुविवेकः। **एतदुक्तं भवति**—मा भूदिदं तद्वत् नित्यं, इदं तदनृतमनित्यमिति धर्मिविशेषयोर्विवेकः, धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव। नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं, तथाचास्थागोचरः। अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतं, तथाचानास्थागोचरः। तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु

## वेदान्तकल्पतरुः।

धर्मबोधवद्ब्रह्मबोधाद्विषये प्रवृत्तिः, स एव तु विधितः किं न स्यादिति शङ्कते—**नन्विति**। विध्येकवाक्यत्वेन वस्तुबोधनाद्वेदान्तानां न सिद्धबोधमात्रपर्यवसानमित्यर्थः॥ **भाष्ये**ऽवबोधनिर्देश एव विध्यविषयत्वे हेतुगर्भ इति व्याचष्टे—**अयमभिसंधिरिति**। यथा विशिष्टविधौ विशेषणविधिरर्थात्, न विशेषणे तात्पर्यं, वाक्यभेदादेवं विषयविशिष्टप्रतिपत्तिविधिसामर्थ्याद्ब्रह्मनिश्चय इत्याशङ्क्याह—**नच बोधस्येति**। विशिष्टक्रियाविधानाद्युक्ता विशेषणस्य प्रमा; वैशिष्ट्यस्य वास्तवत्वात्, प्रतिपत्तिविधिस्तु न विशेषणसत्तामाक्षिपति; वाचं धेनुमुपासीतेत्यादावारोप्यस्यापि विधेयधीविषयत्वादित्यर्थः। एवं क्रमप्रमाणाभावसिद्धौ—'ब्रह्मधीर्न नियोगेन धर्मबुद्धेरनन्तरा। तत्क्रमे मानहीनत्वात्स्नानभुज्यादिधीरिव॥' नित्यानित्यवस्तुविवेक इति भाष्यमाक्षिपति—**तद्विषयश्चेदिति**। अनित्याद् ब्रह्मणो विवेकः किं निश्चयः, उत ज्ञानमात्रम्। **आद्यं** दूषयति—**कृतमिति**। **द्वितीये** विपर्ययः, संशयो वा। **नाद्यः**; ततः शास्त्रश्रवणे प्रवृत्त्ययोगात्। **न द्वितीयः**; प्रपञ्चानित्यत्वानिश्चये तद्वैराग्यायोगादित्याह—**तथाचेति**। समाधत्ते—**तस्मादिति**। निश्चय एव विवेकः। नचशास्त्रानारम्भः; इदं नित्यमिदमनित्यमित्यनिश्चयात्। आत्मानात्मसमुदाये नित्यत्वमनित्यत्वं च स्तो धर्मौ तयोश्च धर्मिभ्यां भवितव्यमित्येतावन्मात्रं निश्चितम्। यद्यपि घटादेरनित्यतावधारिता; तथापि सकलानात्मसु नावधारितेति। नित्यत्वस्य व्याख्या—**ऋतमिति**। उक्तविवेकस्य प्रयोजनमाह—**तथाचेति**। सत्यासत्ययोरुपादेयानुपादेयत्वे हेतुमाह—**तदेतेष्विति**। सुखत्वान्नित्यमुपादेयं दुःखत्वादनित्यं त्याज्यमित्यर्थः। दृष्टेऽनुभवः, उपपत्तिस्त्व**दृष्टे**।

## कल्पतरुपरिमलः।

**स एव त्विति**। ब्रह्मबोध एव विधितः प्रवृत्तिविषयः किं न स्यादित्यर्थः। **यथा विशिष्टविधाविति**। यथा खलु'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधौ रेवत्याधारवारवन्तीयसामरूपविशेषणस्य दधिसोमादिविशेषणवदन्यतः प्रसिद्धिरहितस्य तत एव सिद्धिरेवमिहापीत्यर्थः। श्लोकेऽपेक्षितपूरणार्थम् एवमित्यादि। स्नानेत्यादिव्यतिरेके दृष्टान्तः। **यद्यपि घटादेरिति**। वल्मीकादिषु भ्रमविषयस्य घटादेरित्यर्थः। अतो नित्यत्वं सत्यत्वमनित्यत्वमसत्यत्वमिति व्याख्यानेन न विरोधः। **सुखत्वान्नित्यमिति**। सत्यं हि 'यो वै भूमा तत्सुख'मिति सुखरूपमुक्तम्। अथ यदल्पं तन्मर्त्यं नाल्पं सुखमस्तीति सत्यरूपस्य भूम्नः प्रतिद्वन्द्व्यल्पम् असत्यं दुःखरूपमुक्तम्, अतः साङ्गाध्ययनवतः शुद्धान्तःकरणस्य सत्यासत्ययोः सुखदुःखत्वनिश्चयो भवतीत्यर्थः। स्वप्नप्रपञ्चवत्सर्वमसत्यं चेत्, सत्यत्वासत्यत्वयोर्धर्मिभ्यां भाव्यमित्युक्तरूपो नित्यानित्यविवेको न सिध्येदित्याशङ्क्य सत्यसिद्ध्यर्थमनुभवोपपत्ती टीकायामुपन्यस्ते, ते विभजते—**दृष्टे इति**। शुक्तिरजतादौ सदधिष्ठानत्वानुभवः, तथात्वेनास्फुटे

## भामती ।

विषयविषयिषु यदतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति, यत्त्वनित्यमनृतं भविष्यति तापत्रयपरीतं तत्त्यक्ष्यत इति । सोऽयं नित्यानित्यवस्तुविवेकः प्रागभवीयादैहिकाद्वा कर्मणो विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम् । न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्; तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः, शून्यवादिनामपि शून्यताया एव सत्यत्वात् । अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं निरूपयतः, आ च सत्यलोकात् आ चावीचेः 'जायस्व म्रियस्व' इति विपरिवर्तमानं, क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसागरोर्मिभिरनिशमुह्यमानं, तापत्रयपरीतमात्मानं च जीव-

## वेदान्तकल्पतरुः ।

**विगीतं**, सदधिष्ठानम्, असत्यत्वाद्गन्धर्वपुरीवदित्यादिः । व्याप्त्यसिद्धिमाशङ्क्याह—**न खल्विति** । न चेयतो विवेकस्य खरसत उदये शास्त्रविफलता; सगुणनिर्गुणविवेकाखण्डसमन्वयादेरसिद्धेरिति । न नित्यादिविवेकमात्रं वैराग्यहेतुः, किंतु तदभ्यास इत्याह—**अथास्येति** । अस्य पुरुषश्रेष्ठस्य संसारसमूहेऽनित्यत्वादिविषयं प्रसंख्यानं धीसन्ततिरुपावर्तते इत्यन्वयः । **अवीचिः** नरकविशेषः । **जायस्व म्रियस्वेति** । पुनः पुनर्जायते म्रियते चेत्यर्थः । क्रियासमभिहारे लोडिति पौनःपुन्ये सर्वलकारापवादेन लोटः स्वादेशस्य च विधानात् । आरभ्य ब्रह्मलोकमवीचिपर्यन्तं जननमरणाभ्यामावर्तमानं क्षणाद्यवान्तरसर्गपर्यन्तैः कालैः संसारसागरस्योर्मिभूतैरनिशमुह्यमानमितस्ततो नीयमानमात्मानमन्यं च जीवसमूहमवलोक्येति

## कल्पतरुपरिमलः ।

स्वप्नादावुपपत्तिः । तामेवोपपत्तिमाह—**विगीतमिति । गन्धर्वपुरीवदिति** । तत्र सौरालोकादिकं सदधिष्ठानमिति भावः । व्याप्त्यसिद्धिशङ्का शून्यवादे वस्तुतः शून्यतैवेति मतेऽपि सैव सत्यास्तीति परिहारार्थः । **'इयतो विवेकस्येति** । स्वप्नवत्सर्वस्य प्रपञ्चस्यासत्त्वं यदि स्यात्तदानीमप्यधिष्ठानपरिशेषोऽवश्यंभावी, तच्च सत्यं सुखरूपमित्येतावतो निर्धारणस्येत्यर्थः । **सगुणनिर्गुणेति** । परिशिष्यमाणं सत् सगुणं भवेन्निर्गुणं वा, निर्गुणत्वे कथमखण्डे तत्र समन्वय इत्यादिविचारार्थत्वेन शास्त्रारम्भः सफल इत्यर्थः । **ननु**—एवं सति नित्यानित्यविवेकः प्रसिद्धनित्यानित्यविषय एवास्तु, किमर्थं सत्यानृतविषयत्वेन क्लिष्टव्याख्यानं? शास्त्रानारम्भशङ्कापरिहारस्योक्तस्य तत्रापि तुल्यत्वात्, **नच** ब्रह्मानन्द एक एव नित्यः कर्मफलादिकमन्यत्सर्वमनित्यमिति शास्त्रारम्भात्प्रागेव निश्चये सति **असंभवस्तु सतोऽनुपपत्तेः** ( ब्र. अ. २ पा. ३ सू. ९ ) **इति** ब्रह्मनित्यत्वव्यवस्थापनस्य वैराग्यपादादिषु ( ब्र. अ. ३ पा. १ ) कर्मफलाद्यनित्यत्वव्यवस्थापनस्य च वैफल्यप्रसङ्गः; प्रागेव संसारबन्धानृतत्वनिश्चये सति तत्समर्थनार्थस्य **'तद्गुणसारत्वात्तु तद्व्यपदेशः'** ( ब्र. अ. २ पा. ३ सू. २९ ) **'यथाच तक्षोभयथा** ( ब्र. अ. २ पा. ३ सू. ४० ) इत्यादिसूत्रजातस्य वैफल्यप्रसङ्ग इति दूषणस्य तत्रापि तुल्यत्वात् । प्राङ्निश्चिते एव बन्धमिथ्यात्वे श्रुतिविरोधादिशङ्कान्तरनिरासाय तद्गुणसारत्वादिसूत्रजातमिति परिहाररीतिस्तु पक्षान्तरेऽपि तुल्या । **किंच** नित्यानित्यवस्तुविवेकस्वरूपासिद्धिशङ्कापरिहारार्थातःशब्दव्याख्यानावसरे कर्मफलनित्यत्वप्रतिपादकवाक्येभ्यः तदनित्यत्वप्रतिपादकवाक्यानां प्राबल्यमेवोपपत्तितया दर्शितं, नतु बन्धसत्यत्वप्रतिपादकवाक्येभ्यस्तन्मिथ्यात्वप्रतिपादकवाक्यानाम्; अतोऽपि हेतोः प्रसिद्धनित्यानित्यविवेक एवात्र विवक्षित इति ज्ञायते, तस्मात्सामान्यतः सत्यानृतसद्भावनिर्धारणं प्रसंख्यानलभ्यबन्धमिथ्यात्वनिर्धारणपर्यन्तं नित्यानित्यवस्तुविवेक इत्युक्तमयुक्तमिति—**चेत्, उच्यते;** भाष्ये नित्यानित्यवस्तुविवेकानन्तरं नित्यफलप्रेप्सामनपेक्ष्य तद्विवेकमात्रेण सकलकर्मफलविराग उक्तः, नित्यवस्तुप्रेप्सया तत्प्राप्त्युपायान्वेषणं पश्चादुक्तम्; अयं क्रमोऽनित्यत्वमसत्यत्वमिति व्याख्याने युज्यते, नत्वस्थायित्वमिति व्याख्याने । अस्थायिनं भोगं भुञ्जानस्तत्परित्यागे स्थायिभोगलाभमालक्ष्य हि ततो विरज्यते, नान्यथा; अनृतासक्तस्तु तदनृतत्वनिश्चये सति तत्परित्यागे तथाभूतसत्यवस्तुलाभप्रतिसंधानाभावेऽपि ततो विरज्यते । नहि रजतार्थी क्वचन रजतभ्रमेण प्रवृत्तस्तन्मिथ्यात्वनिश्चये सति तत्परित्यागेन सत्यरजतस्य स्वलभ्यत्वप्रतिसंधानाभावे ततो न निवर्तते, किंतु ततो निवृत्तः सत्यरजतप्राप्त्युपायं किंचित्पश्यति चेत् तत्र प्रवर्तते । तस्मान्नित्यानित्यवस्तुविवेकादिक्रमेण साधनचतुष्टयं ब्रह्मजिज्ञासाहेतुं वर्णयतो भगवतो भाष्यकारस्य सत्यमिदं सुखरूपमिति विशेषनिर्धारणमनपेक्ष्य कर्मफलानृतत्वनिर्धारणमेव वैराग्यादिक्रमेण साधनान्तराणां प्रवर्तकमित्याशयमालोच्य टीकाकारैराचार्यैश्च सामान्यतः सत्यमस्तीति विशिष्य बन्धमात्रमनृतमिति च विवेकः प्रथमसाधनत्वेन परिगृहीतः । तदनन्तरमक्षय्यादिवाक्यात्कर्मफलनित्यत्वसिद्धेस्तदनृतत्वमसिद्धम् अनृतस्य तत्त्वज्ञाननिवर्त्यत्वनियमादिति शङ्कायां तदनृतत्वसिद्ध्यर्थमेव न्यायतस्तदनित्यत्वमतःशब्देन सूत्रितमिति न किंचिदवद्यम् । **तदभ्यास इति** । जननमरणपरिवृत्त्यादिरूपसंसारबन्धासत्यत्वदृढनिश्चयपर्यन्त इति शेषः । **क्रियासमभिहारे इति** । 'क्रियासमभिहारे लोट् लोटो हिस्वा'विति पाणिनिसूत्रेण क्रियापौनःपुन्यविवक्षायां सर्वलकारापवादेन लोड्विहितः । तस्य परस्मैपदात्मनेपदयोर्यथाक्रमं हिस्वावादेशौ च विहितौ । **ननु**—क्रियासमभिहारे लुनीहि लुनीहीत्येवायं लुनातीत्याद्युदाह-

**मुमुक्षुत्वं च। तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये । तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यमुपदिश्यते। अतःशब्दो हेत्वर्थः।**

## भामती।

लोकं चावलोक्य अस्मिन्संसारमण्डले अनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते; ततोऽस्यैतादृशान्नित्यानित्यवस्तुविवेकलक्षणात्प्रसंख्यानात्—**इहामुत्रार्थभोगविरागो** भवति । अर्थ्यते प्रार्थ्यत **इत्यर्थः** । फलमिति यावत् । तस्मिन्विरागोऽनाभोगात्मिकोपेक्षाबुद्धिः । ततः **शमदमादिसाधनसंपत्** । रागादिकषायमदिरामत्तं हि मनस्तेषु तेषु विषयेषूच्चावचमिन्द्रियाणि प्रवर्तयत्, विविधाश्च प्रवृत्तीः पुण्यापुण्यफला भावयत्, पुरुषमतिघोरे विविधदुःखज्वालाजटिले संसारहुतभुजि जुहोति । प्रसंख्यानाभ्यासलब्धवैराग्यपरिपाकभग्नरागादिकषायमदिरामदं तु मनः पुरुषेणावजीयते वशीक्रियते, सोऽयमस्य वैराग्यहेतुको मनोविजयः **शम इति** वशीकारसंज्ञ इति चाख्यायते। विजितं च मनस्तत्त्वविषयविनियोगयोग्यतां नीयते, सेयमस्य योग्यता **दमः** । यथा दान्तोऽयं वृषभयुवा हलशकटादिवहनयोग्यः कृत इति गम्यते । **आदिग्रहणेन च** विषयतितिक्षातदुपरमतत्त्वश्रद्धाः संगृह्यन्ते । **अतएव श्रुतिः**—'तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत् सर्वमात्मनि पश्यति' इति । तदेतस्य शमदमादिरूपस्य साधनस्य **संपत्प्रकर्षः शमदमादिसाधनसंपत्** । ततोऽस्य संसारबन्धनान्मुमुक्षा भवतीत्याह—**मुमुक्षुत्वं च** । तस्य च नित्यशुद्धबुद्धमुक्तसत्यस्वभावब्रह्मज्ञानं मोक्षस्य कारणमित्युपश्रुत्य तज्जिज्ञासा भवति धर्मजिज्ञासायाः प्रागूर्ध्वं च, तस्मात्तेषामेवानन्तर्यं न धर्मजिज्ञासाया इत्याह—**तेषु हीति** । न केवलं जिज्ञासामात्रमपि तु ज्ञानमपीत्याह—**ज्ञातुं च** । उपसंहरति—**तस्मादिति** । क्रमप्राप्तमतःशब्दं व्याचष्टे—**अतःशब्दो हेत्वर्थः** ।

## वेदान्तकल्पतरुः ।

योजना । उक्तपरिभावनाया इहामुत्रार्थभोगविरागहेतुतामाह—**ततोऽस्येति** । अनित्यसंसारस्य किंचिदधिष्ठानमस्तीति इयान् विवेको न तु ब्रह्मेति । **तदुक्तम्—ईदृशादिति** आभोगो मनस्कारः । आदर इति यावत् । अतदात्मिका । वैराग्यस्य शमादिहेतुतामाह—**तत इति** । ज्वाला जटा अस्य सन्तीति तथोक्तः । श्रद्धैव तत्त्वविषया वित्तमस्य न गवादीति तथाऽभिहितः । मोक्षेच्छा भवतु, कुतस्तावता ब्रह्मजिज्ञासा ? अत आह—**तस्य चेति** । नित्याऽनित्यविवेकादिहेतुत्वस्याथशब्दादवगतेः किमतःशब्देनेत्याशङ्क्य नानेन जिज्ञासां प्रति साधनकलापस्य हेतुतोच्यते, किंतु तत्स्वरूपाऽसिद्धिपरिहारहेतुरभिधीयते इत्याह—**अत्रैवमित्यादिना** । **शल्कं** शकलम् । **शुचि** नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खवदित्यस्य 'नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशे'दित्यागमविरोधः । कृतकत्वानुमानानुगृहीतात्तद्यथेति वाक्याद् न्यायहीनम्

१ 'सोऽन्वेष्टव्यः' 'श्रोतव्यो मन्तव्यः' 'आत्मन्येवात्मानं पश्येत्' 'तद्विजिज्ञासस्वे'ति च भिन्नशाखास्थानामपि विधीनां सर्वशाखाप्रत्ययन्यायेनैकवाक्यत्वाद्गुणोपसंहारेण 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्' इति 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वे'ति 'वरुणं पितरमुपससारे'ति च नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमदमादिसाधनानां एकैकस्मिन्प्रकरणे एकैकस्यैव समाम्नानेऽपि साधनचतुष्टसंपत्त्यानन्तर्यमथशब्दार्थ इति विवक्षितम् । मुमुक्षुत्वं तु सर्वत्रापि प्रकरणेषु फलवाक्यैरधिकारिविशेषणमिति सिद्धमेव । **एतेन**—विचारकर्तव्यतां प्रतिपद्यमानस्य सूत्रकारस्य बुद्ध्यनारूढत्वाच्छमदमादयो नाधिकारिविशेषणं, किंतु कर्मावबोध एवेति शङ्कापि—**पराहता;** विचारं प्रतिपद्यमानस्य सूत्रकारस्य तत्प्रकरणपठिततदङ्गशमदमादीनामपि बुद्धिस्थत्वादिति सर्वमनवद्यम् । ब्रह्मनित्यमितरदनित्यमिति विवेको नित्यानित्यवस्तुविवेक इति **विवरणाचार्याः** । **मिश्रास्तु**—नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तस्य विवेकः नित्यानित्यवस्तुविवेकः तदभ्यास इत्यभिप्रयन्ति ॥

२ **अतःशब्दो हेत्वर्थ इति**—आनन्तर्यमात्रावबोधने वैफल्यात् हेतुबोधन एव तात्पर्यात् यत्परःशब्दः स शब्दार्थ इति न्यायेनाथशब्देनैव हेतुलाभादतःशब्दो व्यर्थ **इति चेत्**—अत्र **विवरणाचार्याः**—अथशब्दपरिगृहीतस्य हेतुत्वस्य हेत्वन्तरेणापवादशङ्कायां तन्निरसनेन हेतुत्वव्यवस्थापनार्थमतःशब्दः । **अपवादशङ्का च**—परमाणुषु पाकजलोहितस्य कृतकस्य परिच्छिन्नानां तेषां च नित्यत्वदर्शनात् अक्षय्यादिवाक्यैः पुण्यफलस्यापि नित्यत्वावगमात् कृतकत्वपरिच्छेदे नानित्यतां गमयतः, नापि वा कूटस्थब्रह्मावलम्बेन मुमुक्षुत्वसंभवः—**इति** नित्यानित्यविवेकस्य विरागद्वारा ब्रह्मविचारहेतुत्वं न संभवति—**इति** । **परिहारप्रकारस्तु**—परमाणूनां तद्गुणस्य चानित्यत्वात् वस्तुबलप्रवृत्तानुमानविरोधेऽक्षय्यादिवाक्यस्य नित्यत्वप्रतिपादनासामर्थ्याच्च कृतकत्वपरिच्छेदाभ्यां कर्मफलाद्यनित्यत्वनिश्चयात् नित्यब्रह्मावलम्बेन मुमुक्षुत्वसंभवाच्च साधनचतुष्टयहेतुत्वमुपपद्यत इति—**वदन्ति** ॥ **वाचस्पतिमिश्रास्तु**—क्षयितालक्षणेन दुःखेनाघ्रातत्वात् वैषयिकसुखपरित्यागसंभवेऽपि अक्षय्यादिवाक्यैर्नित्यत्वेनावगतस्वर्गादिपरित्यागो न संभवतीति नित्यानित्यवस्तुविवेकाभ्यासे सत्यपि इहामुत्रार्थफलभोगविरागस्यासंभवात् न साधनचतुष्टयसंपत्त्यानन्तर्यार्थत्वमुपपद्यत इत्यधिकाराशङ्कानिराकरणेन हेतुत्वदृढीकरणार्थमतःशब्द इति—**वर्णयन्ति** ॥

**यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति—'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छान्दो० ८।१।६) इत्यादिः। तथा ब्रह्मविज्ञानादपि**

## भामती।

तमेवातःशब्दस्य हेतुरूपमर्थमाह—**यस्माद्वेद एवेति**। **अत्रैवं परिचोद्यते**—सत्यं यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा भवति, सैव त्वनुपपन्ना; इहामुत्रफलोपभोगविरागस्यानुपपत्तेः। अनुकूलवेदनीयं हि फलम्, इष्टलक्षणत्वात्फलस्य। नचानुरागहेतावस्य वैराग्यं भवितुमर्हति; दुःखानुषङ्गदर्शनात्सुखेऽपि वैराग्यमिति चेत्, हन्त भोः सुखानुषङ्गाद्दुःखेऽप्यनुरागो न कस्माद्भवति। तस्मात्सुख उपादीयमाने दुःखपरिहारे प्रयतितव्यम्। अवर्जनीयतया दुःखमागतमपि परिहृत्य सुखमात्रं भोक्ष्यते। तद्यथा **मत्स्यार्थी सशल्कान्सकण्टकान्मत्स्यानुपादत्ते, स यावदादेयं तावदादाय विनिवर्तते। यथावा धान्यार्थी सपलालानि धान्यान्याहरति, स यावदादेयं तावदुपादाय निवर्तते,** तस्माद्दुःखभयान्नानुकूलवेदनीयमैहिकं वामुष्मिकं वा सुखं परित्यक्तुमुचितम्। **नहि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते**। अपिच दृष्टं सुखं चन्दनवनितादिसङ्गजन्म क्षयितालक्षणेन दुःखेनाघ्रातत्वात् अतिभीरुणा त्यज्येतापि, न त्वामुष्मिकं स्वर्गादि; तस्याविनाशित्वात्। **श्रूयते हि**—'अपाम सोमममृता अभूम' इति। **तथाच** 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति। नच कृतकत्वहेतुकं विनाशित्वानुमानमत्र संभवति; नरशिरःकपालशौचानुमानवत् आगमबाधितविषयत्वात्। तस्माद्यथोक्तसाधनसंपत्त्यभावान्न ब्रह्मजिज्ञासेति प्राप्तम्। एवं प्राप्ते आह भगवान्सूत्रकारः—**अत इति**। तस्यार्थं व्याचष्टे भाष्यकारः—**यस्माद्वेद एवेति**। **अयमभिसंधिः**—सत्यं मृगभिक्षुकादयः शक्याः परिहर्तुं पाचककृषीवलादिभिः, दुःखं त्वनेकविधानेककारणसंपातजमशक्यपरिहारं; अन्ततः साधनपारतन्त्र्यक्षयितालक्षणयोर्दुःखयोः समस्तकृतकसुखाविनाभावनियमात्। नहि मधुविषसंपृक्तमन्नं विषं परित्यज्य समधु शक्यं शिल्पिवरेणापि भोक्तुम्। क्षयितानुमानोपोद्बलितं च 'तद्यथेह कर्मचितः' इत्यादि वचनं क्षयिताप्रतिपादकम् 'अपाम सोमम्' इत्यादिकं वचनं मुख्यासंभवे जघन्यवृत्तितामापादयति। **यथाहुः पौराणिकाः**—'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति। अत्र च ब्रह्मपदेन तत्प्रमाणं वेद उपस्थापितः। स च योग्यत्वात् 'तद्यथेह कर्मचितः' इत्यादिरत इति सर्वनाम्ना परामृश्य, हेतुपञ्चम्या निर्दिश्यते। **स्यादेतत्**—यथा स्वर्गादेः कृतकस्य सुखस्य दुःखानुषङ्गस्तथा ब्रह्मणोऽपीत्यत आह—**तथा ब्रह्मविज्ञानादपीति**। **तेनायमर्थः**—अतः स्वर्गादीनां क्षयिताप्रतिपादकात्, ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकात् आगमात्, यथोक्तसाधनसंपत् ततश्च जिज्ञासेति सिद्धम्। ब्रह्मजिज्ञासापदव्याख्यानमाह—**ब्रह्मण इति**। षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः। 'तादर्थ्यसमासे

## वेदान्तकल्पतरुः।

अपामेत्यादिवाक्यमापेक्षिकामृतत्वादिपरं न्याय्येयमित्याह—**क्षयितेति**। यत्त्वभिहितं भास्करेण नित्यानित्यविवेकादेरप्रकृतत्वान्न तदानन्तर्यमथशब्दार्थोऽत एव कर्मणां क्षयिष्णुफलत्वं ब्रह्मज्ञानस्य च मोक्षहेतुत्वमतःशब्देन न परामृष्टुं युक्तमिति तं भाष्यभावव्याख्ययाऽनुकम्पते **अत्र चेति**। तर्हि सकला वेदान्ताः परामृश्येरन् नेत्याह—**योग्यत्वादिति**। अथशब्दोक्तहेतुत्वसमर्थनयोग्यत्वादित्यर्थः। हेतुमद्ब्रह्मजिज्ञासया हेतूनां नित्यानित्यविवेकादीनां सूत्रकारस्य बुद्धिस्थत्वात्तदानन्तर्यार्थत्वमथशब्दस्य युक्तमेव। चतुर्थीसमासाभावे हेतुमाह—**तादर्थ्येति**। पाणिनिः किल चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरिति तादर्थ्यसमासं सस्मार। चतुर्थ्यन्तः शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते। चतुर्थ्यन्तशब्दार्थस्तच्छब्देन परामृश्यते। तस्मै इदं तदर्थम्। यथा कुण्डलाय हिरण्यमित्यत्र कुण्डलं चतुर्थ्यन्तशब्दार्थस्तच्छेषो हिरण्यं, तत्र कुण्डलशब्दश्चतुर्थ्यन्तः, कुण्डलशेषवाचिना हिरण्यशब्देन समस्यते, कुण्डलहिरण्यमिति। तथाऽर्थशब्दादिनापि ब्राह्मणार्थं पयः इत्यादि द्रष्टव्यम्। कात्यायनेन त्वयं समासः प्रकृतिविकृत्योर्नियमतः, चतुर्थी तदर्थमात्रेणेति **चेत्तर्हि** सर्वत्र प्रसङ्गो-

## कल्पतरुपरिमलः।

रणेष्विव जायस्व जायस्वेत्येवेमानि जायन्ते, म्रियस्व म्रियस्वेत्येवं म्रियन्त इति, द्विर्भावस्तस्य तस्य धातोरनुप्रयोगश्च प्राप्नोति; तत्सूत्रवार्तिके द्विर्भावानुशासनाद्, **यथाविध्यनुप्रयोगः पूर्वस्मिन्निति** सूत्रेण क्रियासमभिहारे तस्यैव धातोरनुप्रयोगनियमनाच्च। **नैष दोषः**; क्रियासमभिहारवज् जननमरणरूपक्रियाद्वयसमुच्चयस्याप्यत्र विवक्षितत्वात्, समुच्चयेऽन्यतरस्यामिति सूत्रेण समुच्चयेऽपि लोण्मध्यमपुरुषैकवचनविधानात्। तत्र हि न द्विर्भाववार्तिकमस्ति; नापि यथाविध्यनुप्रयोगविधानमस्ति, किंतु **समुच्चये सामान्यवचनस्येति** सूत्रेण तावत् क्रियाविशेषानुगतसामान्यवचनस्यानुप्रयोगो विहितः। ओदनं भुङ्क्ष्व क्षीरं पिब धानाः खादेत्येवायमभ्यवहरतीत्यादि तदुदाहरणम्। इहापि जननमरणानुगतसामान्यरूपविपरिवृत्तिवाचिनोऽनुप्रयोगोऽस्ति। असकृदावर्तीनि भूतानि भवन्तीति क्रियासमभिहारसमुच्चयोभयविवक्षायां च समुच्चयविवक्षाप्रयुक्तमेव कार्यं भवति; विप्रतिषेधे परं कार्यमिति स्मरणात्। **कात्यायनेन त्विति**। **'चतुर्थी**

**परं पुरुषार्थं दर्शयति—'ब्रह्मविदाप्नोति परम्' इत्यादिः (तैत्ति० २।१।) तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः' इति । अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् । ब्रह्मण इति**

## भामती ।

प्रकृतिविकृतिग्रहणं कर्तव्यम्' इति कात्यायनीयवचनेन यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृतिविकारभूत इत्येवमादौ तन्निषेधात्, 'अश्वघासादयः षष्ठीसमासा भविष्यन्ति' इत्यश्वघासादिषु षष्ठीसमासप्रतिविधानात्, षष्ठीसमासेऽपि च ब्रह्मणो वास्तवप्राधान्योपपत्तेरिति । **स्यादेतत्**—ब्रह्मणो जिज्ञासेत्युक्ते तत्रानेकार्थत्वाद्ब्रह्मशब्दस्य संशयः, कस्य ब्रह्मणो जिज्ञासेति । अस्ति ब्रह्मशब्दो विप्रत्वजातौ, यथा ब्रह्महत्येति । अस्ति च वेदे, यथा ब्रह्मोज्झमिति । अस्ति च परमात्मनि, 'यथा ब्रह्म वेद ब्रह्मैव भवति' इति, तमिमं संशयमपाकरोति—**ब्रह्म च वक्ष्यमाणलक्षणमिति** । यतो ब्रह्मजिज्ञासां प्रतिज्ञाय तज्ज्ञापनाय परमात्मलक्षणं प्रणयति ततोऽवगच्छामः परमात्मजिज्ञासैवेयं न विप्रत्वजात्यादिजिज्ञासेत्यर्थः । षष्ठीसमासपरिग्रहेऽपि नेयं कर्मषष्ठी, किंतु शेषलक्षणा, संबन्धमात्रं च शेष इति ब्रह्मणो जिज्ञासेत्युक्ते ब्रह्मसंबन्धिनी जिज्ञासेत्युक्तं भवति । तथा च ब्रह्मस्वरूपप्रमाणयुक्तिसाधनप्रयोजनजिज्ञासाः सर्वा ब्रह्मजिज्ञासार्था ब्रह्मजिज्ञासयावरुद्धा भवन्ति; साक्षात्पारंपर्येण च ब्रह्मसंबन्धात्, कर्मषष्ठ्यां तु ब्रह्मशब्दार्थः कर्म, स च स्वरूपमेवेति तत्प्रमाणादयो नावरुध्येरन्, तथा चाप्रतिज्ञातार्थचिन्ता प्रमाणादिषु भवेदिति ये मन्यन्ते तान्प्रत्याह—**ब्रह्मण इति** । **कर्मणीति** । अत्र हेतुमाह—**जिज्ञास्येति** । इच्छायाः प्रतिपत्त्यनुबन्धो ज्ञानं, ज्ञानस्य

## वेदान्तकल्पतरुः ।

ऽविशेषात्, प्रकृतिविकृत्योरिति **चेद**श्वघासादीनामुपसंख्यानम् इति । एवं चार्थात्प्रसुते तन्निषेधसिद्धिरित्याह—**प्रकृतीति । इत्येवमादौ** ब्रह्मजिज्ञासेत्येवमादावित्यर्थः । **नन्व**श्वार्थो घासोऽश्वघास इत्यादावप्रकृतिविकारेऽपि तादर्थ्यसमासो दृष्ट इत्याशङ्क्य कात्यायनेनैव समासान्तरमुपसंख्यातमित्याह—**अश्वघासादय इति । ननु** षष्ठीसमासाभ्युपगमे ब्रह्मणो जिज्ञासाव्यावर्तकत्वेन गुणत्वात्प्रधानपरिग्रह इति भाष्यस्थप्राधान्यभङ्गस्तत्राह—**षष्ठीसमासेऽपीति । ब्रह्मोज्झं** वेदत्यागः । प्रतिपत्तौ विशेषणत्वेनानुबध्यत इत्यनुबन्धः । स्वरूपेण निरूपितायां जिज्ञासायां पश्चात्संबन्धिन्यपेक्षा, ब्रह्म च ज्ञानद्वारा जिज्ञासारूपनिरूपकमिति प्रथमोदिताकाङ्क्षावशेन ब्रह्म जिज्ञासायाः कर्मत्वेन संबध्यते, नतु संबन्धिमात्रतयेत्यर्थः ।

## कल्पतरुपरिमलः ।

**तदर्थमात्रेणेति चेत्, सर्वप्रसङ्गोऽविशेषादिति,** यथाश्रुतसूत्रार्थे अनुपपत्तिप्रदर्शकमेकं वार्तिकं । **सर्वप्रसङ्गः** सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः, रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि समासः प्रसज्येतेत्यर्थः । विकृतिः प्रकृत्येति चेद् 'अश्वघासादीनामुपसंख्यान' मिति वार्तिकान्तरं । यदि विकृतिवाची चतुर्थ्यन्तशब्दः प्रकृतिवाचिना समस्यत इति विशेष्यते, तदा सर्वप्रसङ्गः परिहृतो भवति, किंतु अश्वाय घासोऽश्वघास इति समासो न प्राप्नोति; प्रकृतिविकारभावाभावात् । अतस्तत्संग्रहा**र्थमुपसंख्यानं** यत्नान्तरं, कर्तव्यमित्यर्थः । एवमश्वघासादिषु चतुर्थीसमास इति वार्तिककारमतम् । एतदवलम्बनेनैव धर्माय जिज्ञासा धर्मजिज्ञासेति शबरस्वामिभिश्चतुर्थीसमासः समाश्रितः । **कात्यायनेनैवेति** । कात्यायनग्रहणमनादरेण शब्दाभियुक्तमात्रोपलक्षणं भाष्यकाराभिप्रायम् । भाष्यकारैः खलु तत्र वार्तिकमुल्लङ्घ्य यथाश्रुतसूत्रं समर्थयमानैः षष्ठीसमासः समाश्रितः । **अत्रेदं भाष्यकारीयं वार्तिकप्रत्याख्यानम्**—प्रकृतिविकृतिग्रहणाय यत्नस्तावन्न कर्तव्यः; सूत्रे बलिरक्षितग्रहणेन ज्ञापकेन तदर्थसिद्धेः । यदिहि तदर्थसमासस्तदर्थमात्रविषयः स्यात्, तदा कुबेराय बलिः कुबेरार्थो भवति, अश्वाय रक्षितम् अश्वार्थं भवतीति कुबेरबलिः अश्वरक्षितमिति समासयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं न कर्तव्यं स्यात्; तत्कृतं ज्ञापयति तदर्थसमासः प्रकृतिविकृतिमात्रविषय इति । तथाऽश्वघासाद्युपसंख्यानयत्नोऽपि न कर्तव्यः; तेषु षष्ठीचतुर्थीसमासयोः स्वरवैषम्याभावेन षष्ठीसमासोपपत्तेः—**इति** ॥ एवं सूत्रानुसारिभाष्यकारमतप्राबल्याद् वार्तिककारमतमनादृत्य चतुर्थीसमासासंभव उक्तः । इदमेव भाष्यकारमतमनुसृत्य भट्टपादैर्धर्माय जिज्ञासेति शबरस्वामिवचनं षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरं, नतु विग्रहप्रदर्शनपरम्; तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविभावनादिति व्याख्यातम् । आत्मनेपदपरस्मैपदशब्दयोः प्रकृतिविकारभावाभावेऽपि तादर्थ्यसमासस्तु 'वैयाकरणाख्यायां चतुर्थ्याः' इत्यलुग्विधानसामर्थ्यात् । नच तस्मादेव ज्ञापकात् सर्वत्रापि तादर्थ्यसमासः शङ्कनीयः; तथासति बलिरक्षितग्रहणवैयर्थ्यापत्तेरुक्तत्वात् । **समासान्तरमुपसंख्यातमिति** । षष्ठीसूत्रविहितं समासान्तरं भाष्यकारैरङ्गीकृतमित्यर्थः । **ननु** 'ज्ञातं ब्रह्म विषयो' 'ज्ञातं ब्रह्म प्रयोजन'मिति ब्रह्म विषयप्रयोजनोभयरूपमिष्यते, तत्र प्रयोजनत्वप्रतिपत्त्युपयोगी चतुर्थीसमास इहासाधुरिति त्यक्तः, एवमेवात्र विषयत्वप्रतिपत्त्युपयोगी षष्ठीसमासोऽप्यसाधुरेव । **तथाहि**—केन सूत्रेणेह षष्ठी; 'षष्ठी शेषे' इति सूत्रेण वा, 'कर्तृकर्मणोः

**कर्मणि षष्ठी, न शेषे; जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च । ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते; संबन्धसामान्यस्य विशेषनिष्ठत्वात् । एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात् ।**

## भामती ।

च ज्ञेयं ब्रह्म । न खलु ज्ञानं ज्ञेयं विना निरूप्यते, न च जिज्ञासा ज्ञानं विनेति प्रतिपत्त्यनुबन्धत्वात्प्रथमं जिज्ञासा कर्मैवापेक्षते, न तु संबन्धिमात्रम्; तदन्तरेणापि सति कर्मणि तन्निरूपणात् । नहि चन्द्रमसमादित्यं चोपलभ्य कस्यायमिति संबन्ध्यन्वेषणा भवति । भवति तु ज्ञानमित्युक्ते विषयान्वेषणा किंविषयमिति । तस्मात्प्रथममपेक्षितत्वात् कर्मतयैव ब्रह्म संबध्यते, न संबन्धितामात्रेण, तस्य जघन्यत्वात् । तथा च कर्मणि षष्ठीत्यर्थः । **ननु** सत्यं न जिज्ञास्यमन्तरेण जिज्ञासा निरूप्यते, जिज्ञास्यान्तरं त्वस्या भविष्यति, ब्रह्म तु शेषतया संभन्त्स्यत इत्यत आह—**जिज्ञास्यान्तरेति** । निगूढाभिप्रायश्चोदयति—**ननु शेषषष्ठीपरिग्रहेऽपीति** । सामान्यसंबन्धस्य विशेषसंबन्धाविरोधेन कर्मताया अविघातेन जिज्ञासानिरूपणोपपत्तेरित्यर्थः । निगूढाभिप्राय एव दूषयति—**एवमपि प्रत्यक्षं ब्रह्मण इति** । वाच्यस्य कर्मत्वस्य जिज्ञासया प्रथममपेक्षितस्य प्रथमसंबन्धार्हस्य चान्वयपरित्यागेन पश्चात्कथंचिदपे-

## वेदान्तकल्पतरुः ।

जिज्ञासाज्ञानयोर्विषयाधीननिरूपणं वैधर्म्यदृष्टान्तेन प्रपञ्चयति—**नहीति** । **ननु**—प्रमाणयुक्त्यादि जिज्ञासायाः कर्म भविष्यति, ब्रह्म तु संबन्धित्वेन निर्दिश्यताम् । **न;** निर्दिष्टकर्मलाभे कल्पनानुपपत्तेरित्याह—**नन्वित्यादिना** । **संभन्त्स्यते** संबद्धं भविष्यति । **ननु** श्रुतकर्मत्यागायोगे स्थिते कथं शेषषष्ठी शङ्क्यत इत्यत आह—**निगूढाभिप्राय इति** । प्रमाणादिबहुप्रतिज्ञानां श्रौतत्वसिद्धिरित्यभिप्रायस्य निगूढता । **ननु** ब्रह्मसंबन्धिनी जिज्ञासेत्युक्ते कर्मानिर्देशादनिरूपितरूपा जिज्ञासा स्याद्, नेत्याह—**सामान्येति** । बहुप्रतिज्ञानां श्रौतत्वलाभात्कथं प्रयासवैयर्थ्येन परिहारस्तत्राह—**निगूढेति** । एकस्यापि प्रधानस्य श्रौतत्वं वरं, नतु गुणानां बहूनामपीति । **वाच्यस्येति** । शब्दोपात्तत्वेन साक्षात्संनिधिः । **प्रथमापेक्षितस्ये**त्याकाङ्क्षा । **प्रथमसंबन्धार्हस्येति** योग्यता । एतैर्युक्तस्य कर्मत्वस्य संबन्धः प्रथमः सन्नपि जघन्यः । एतैः रहितस्य संबन्धिमात्रस्य संबन्धो जघन्यः सन् प्रथम इति कल्पनं व्याहतमित्यर्थः । 'कर्तृकर्मणोः कृती'ति कृद्योगे कर्मणि षष्ठीस्मरणाद्वाच्यं कर्मत्वम् । जिज्ञासापदस्य चाकारप्रत्ययान्तत्वात् कृद्योगः । यस्तु 'कर्मणि चे'ति कर्मणि षष्ठ्या समासप्रतिषेधः, स च 'उभयप्राप्तौ कर्मणी'ति या कर्तृकर्मणोरुभयोरपि सामर्थ्यादुपादानप्राप्तौ कर्मण्येवेति नियमिता षष्ठी तद्विषयः ।

## कल्पतरुपरिमलः ।

कृती'ति सूत्रेण वा । **नाद्यः**; कर्मत्वं वाच्यं परिग्राह्यमिति शेषषष्ठ्यास्त्वया त्यक्तत्वात् । **न द्वितीयः**; 'प्रतिपदविधाना च षष्ठी न समस्यत' इति वार्तिकेन वैशेषिकसूत्रविहितषष्ठ्याः समासप्रतिषेधात् । अतएव सर्पिषो ज्ञानमित्यत्र सर्पिषा करणेन प्रवृत्तिरित्यर्थके 'ज्ञोऽविदर्थस्य करणे' इति सूत्रेण वित्तिव्यतिरिक्तप्रवृत्तिरूपार्थान्तरमुक्तम् । जानातिकरणत्वनिमित्ता प्रतिपदविहिता षष्ठीति न समास इतिचेत्याशङ्क्याह—**कर्तृकर्मणोः कृतीति** । कर्मत्वस्य वाच्यत्वसिद्ध्यर्थं द्वितीयपक्ष एवात्र परिगृह्यते । अस्ति ह्यत्र कृद्योगः; जिज्ञासापदस्य 'अ प्रत्यया'दिति प्रत्ययान्तधातोरुपरि विहिताकारप्रत्ययान्तत्वाद्, अकारप्रत्ययस्य च 'कृदतिङि'ति सूत्रेण कृत्संज्ञकत्वात् । नच समासासंभवः; 'कृद्योगलक्षणा च षष्ठी समस्यत' इति प्रतिपदविधानत्वेऽपि कृद्योगनिमित्तषष्ठ्याः समासाभ्यनुज्ञानादिति भावः । **ननु** कृद्योगलक्षणषष्ठीष्वपि कर्मणि या षष्ठी तस्याः समासः 'कर्मणि चे'ति सूत्रेण प्रतिषिद्ध इत्याशङ्क्याह—**यस्तु कर्मणीति** । 'कर्मणि चे'ति सूत्रेण कर्मषष्ठीमात्रस्य समासप्रतिषेधो न भवति; तथा सति 'कर्तरि चे'ति सूत्रवैयर्थ्यप्रसङ्गात् । तेन हि सूत्रेण कर्तरि यौ तृजकौ ताभ्यां सह कर्मणि षष्ठ्याः समासो निषिध्यते, अपां स्रष्टा ओदनस्य भोजक इत्यादौ । नच कर्मषष्ठीमात्रस्यात्र समासनिषेधे तत्सफलं भवेद्; अतः 'कर्मणि चे'ति सूत्रे चकार इतिकारार्थः कर्मणीति शब्दमुच्चार्य या षष्ठी नियमिता, सा न समस्यत इति तदर्थः । ततश्च 'उभयप्राप्तौ कर्मणी'ति सूत्रेण कर्मणीति शब्दमुच्चार्य नियमिता षष्ठी तस्य समासप्रतिषेधस्य विषयो, नतु 'कर्तृकर्मणोः कृती'ति सूत्रविहिता कर्मणि षष्ठीत्यर्थः । **नन्विहाप्युभयप्राप्तिसूत्रनियमितैव कर्मणि षष्ठी** । तस्य हि सूत्रस्यैवमर्थः । कर्तृकर्मणोरुभयोः षष्ठीप्राप्तिर्यत्रैकस्मिन्कृति भवति तस्मिन् कृति सति कर्मण्येव षष्ठी न कर्तरीति । तथाचात्र साधनचतुष्टयसंपन्नः कर्ता यदि श्रूयेत, तदा तस्मिन्नपि कर्मणीव 'कर्तृकर्मणोः कृती'ति सूत्रेण षष्ठ्याः प्राप्तौ निमित्तं भवति जिज्ञासेति कृत्प्रत्ययः, अतोऽत्र 'कर्मणि चे'ति समासप्रतिषेधः स्यादेवेत्याशङ्क्याह—**सामर्थ्यादुपादानप्राप्ताविति** । 'कृत्वोर्थप्रयोगे कालेऽधिकरणे' इति व्यवहितपूर्वसूत्रात् प्रयोग इत्यनुवर्तते । तच्च कर्तृगतकिंचिदतिशयविवक्षासामर्थ्यात् कर्तृकर्मोभयप्रयोगावश्यंभावपरम् । एवंचाश्चर्यो गवां दोह इत्यादिरेवोभयप्राप्तिसूत्रविषयः । तत्रह्याश्चर्यशब्दसूचितकर्तृगतातिशयोपपादनोपयोगितया दुर्दोहत्वरूपाजादिवैलक्षण्यसूचनाय गोत्वेन दोहकर्मणां तद्दोहासामर्थ्यसंभावनासूच-

**न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेन्न; प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात् । ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम् । तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक्सूत्रयितव्यानि । यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत् । श्रुत्यनुगमाच्च । 'यतो वा इमानि भूतानि जायन्ते' (तैत्ति० ३।१) इत्याद्याः श्रुतयः 'तद्विजिज्ञासस्व तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति । तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति । तस्माद्ब्रह्मण इति कर्मणि षष्ठी । ज्ञातुमिच्छा जिज्ञासा । अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म; फलविषयत्वादिच्छायाः । ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि**

---

## भामती ।

क्षितस्य संबन्धिमात्रस्य संबन्धो जघन्यः प्रथमः प्रथमश्च जघन्य इति सुव्याहृतं न्यायतत्त्वम् । प्रत्यक्षपरोक्षाभिधानं च प्राथम्याप्राथम्यस्फुटत्वास्फुटत्वाभिप्रायम् । चोदकः स्वाभिप्रायमुद्घाटयति—**न व्यर्थः, ब्रह्माश्रिताशेषेति** । व्याख्यातमेतदधस्तात् । समाधाता स्वाभिसंधिमुद्घाटयति—**न प्रधानपरिग्रह इति** । वास्तवं प्राधान्यं ब्रह्मणः । शेषं सनिदर्शनमतिरोहितार्थं, श्रुत्यनुगमश्चातिरोहितः । तदेवमभिमतं समासं व्यवस्थाप्य जिज्ञासापदार्थमाह—**ज्ञातुमिति** । **स्यादेतत्**—न ज्ञानमिच्छाविषयः । सुखदुःखावाप्तिपरिहारौ वा तदुपायौ वा तद्द्वारेणेच्छागोचरः । नचैवं ब्रह्मविज्ञानम्; न खल्वेतदनुकूलमिति वा प्रतिकूलनिवृत्तिरिति वानुभूयते । नापि तयोरुपायः; तस्मिन्सत्यपि सुखभेदस्यादर्शनात्, अनुवर्तमानस्य च दुःखस्यानिवृत्तेः, तस्मान्न सूत्रकारवचनमात्रादिपिकर्मता ज्ञानस्येत्यत आह—**अवगतिपर्यन्तमिति** । न केवलं ज्ञानमिष्यते किंत्ववगतिं साक्षात्कारं कुर्वदवगतिपर्यन्तं सन्वाच्याया इच्छायाः कर्म । कस्मात् ? फलविषयत्वादिच्छायाः, तदुपायं फलपर्यन्तं गोचरयतीच्छेति शेषः । **ननु** भवत्ववगतिपर्यन्तं ज्ञानं, किमेतावतापीष्टं भवति; नह्यनपेक्षणीयविषयमवगतिपर्यन्तमपि ज्ञानमिष्यत इत्यत आह—**ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म** । भवतु ब्रह्मविषयावगतिः, एवमपि कथमिष्टेत्यत आह—**ब्रह्मावगतिर्हि पुरुषार्थः** । किमभ्युदयः,

## वेदान्तकल्पतरुः ।

यथाश्चर्यो गवां दोहोऽगोपालकेनेति । एवं ह्यत्राश्चर्यं व्यज्येत यदि दुर्दोहानां गवां दोहे कर्मत्वमकुशलस्य चागोपालस्य कर्तृत्वम्, प्रस्तुते तु ब्रह्मकर्मत्वमेवोपादीयते, न कर्तृगतोऽतिशय इत्युभयप्राप्त्यभावात् 'कर्तृकर्मणोः कृती'त्येव षष्ठी; तेन ब्रह्मजिज्ञासेत्युपपन्नः समास इति । भाष्ये प्रत्यक्षनिर्देशो न युक्त; शाब्दत्वात्कर्मत्वस्य, तत्राह—**प्रत्यक्षेति** । अविरुद्धमपि परोक्षत्वं व्याख्येयप्रत्यक्षत्वस्य प्रतियोगित्वाद्याख्यातम् । परमते कर्मत्वस्य लाक्षणिकत्वं चरमान्वयप्रसञ्जनार्थम् । **नन्वयुक्त**मपि ज्ञानस्येच्छाविषयत्वं सौत्रजिज्ञासापदात्प्रमीयताम् ? **न**; न्यायसूत्रे उपदेशमात्रेणाऽविश्वासादित्याह—**नेति** । साक्षात्कारसाधनं ज्ञानमिच्छाविषय इति प्रतिज्ञाय फलविषयत्वादिच्छाया इति हेतुरयुक्तो व्यधिकरणत्वात्तत्राह—**तदुपायमिति** । फलेच्छाया एवोपायपर्यन्तं प्रसरादविरोध इत्यर्थः । **भवतु ब्रह्मविषयावगतिरिति** । स्वरूपावगतिः स्वविषयव्यवहारहेतुत्वेन तद्विषयोक्ता । ब्रह्मणोऽपि धर्मवदसुखत्वान्न तदवगतिः पुमर्थ इत्याह—**एवमपीति** । श्रुतिस्वानुभवावगतनिर्दुःखानन्दमभिप्रेत्य परिहारो—**ब्रह्मावगतिर्हीति** । **प्रतिभान्** प्रतिभासमानः । **अर्थ्यमान-**

## कल्पतरुपरिमलः ।

न्नायाशिक्षितत्वादिना दोहकर्तुश्चोपादानमपेक्षितं कृतं, नेह तथा किंचिदतिशयविवक्षया कर्तुरुपादानं कृतमस्तीति नात्रोभयप्राप्तिसूत्रेण कर्मणिषष्ठीनियमनमित्यर्थः । **ननु**—यत्र कर्तृकर्मोभयप्रयोगो नास्ति, तत्र गम्यमानेऽपि कर्मण्युभयप्राप्तिसूत्रेण कर्तरि षष्ठ्याः प्रतिषेधमभिप्रेत्य तृतीयाप्रयोगः सूत्रकारेणैव कृतो दृश्यते 'अन्तर्धौ येनादर्शनमिच्छती'ति; अन्तर्धिनिमित्तं यत्कर्तृकदर्शनाभावं स्वात्मनः कर्मणोऽन्तरङ्गप्रत्यासत्त्या गम्यमानस्येच्छति तस्यापादानसंज्ञा अनेन सूत्रेण विधीयते, तथाचोपाध्यायादन्तर्धत्त इत्यत्र पञ्चमी भवति । नच कर्मणि गम्यमाने एवोभयप्राप्तिसूत्रप्रवृत्तिः न कर्तरि गम्यमान इति विशेषः शङ्कनीयः; कर्तृकर्मोभयोपादाननियमभङ्गे सत्यस्य विशेषस्याप्रयोजकत्वात्, इहापरितोष इति **चेद्, एवं परिहारो द्रष्टव्यः**; अकाकारयोः प्रतिषेधो नेति वक्तव्यं; 'शेषे विभाषे'ति भाष्यकारै'रुभयप्राप्तौ कर्मणी'ति कर्तरि षष्ठीप्रतिषेधस्य अके अकारे च कृति नित्यमप्रवृत्तिः, स्त्रीप्रत्ययरूपे कृति, तद्व्यतिरिक्तमात्रे वा विकल्पेनाप्रवृत्तिश्चोक्ता, उदाहृतं च भेदिका देवदत्तस्य काष्ठानां; चिकीर्षा विष्णुमित्रस्य कटस्येति, शोभना खलु पाणिनेः सूत्रस्य कृतिः, शोभना खलु पाणिनिना सूत्रस्य कृतिरिति च । तस्मादिह जिज्ञासेत्यकारप्रत्यययोगाद् नोभयप्राप्तिसूत्रविषयत्वशङ्कावकाश इति । अयमपि परिहारो जिज्ञासापदस्याकारप्रत्ययान्तत्वं दर्शयद्भिराचार्यैः सूचितः । **व्याख्यातमिति** । चरमत्वात्स्फुटत्वपरतयेति शेषः । परमाप्तस्य सूत्रकारस्योपदेशमात्रेणापि विश्वासः स्यादित्याशङ्क्य न्यायसूत्र इति विशेषितम् । **फलेच्छाया**

**पुरुषार्थः; निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् । तस्माद्ब्रह्म विजिज्ञासितव्यम् । तत्पुन-**

## भामती ।

न, किंतु निःश्रेयसं, विगलितनिखिलदुःखानुषङ्गपरमानन्दघनब्रह्मावगतिर्ब्रह्मणः स्वभाव इति सैव निश्रेयसं पुरुषार्थ इति । **स्यादेतत्**—न ब्रह्मावगतिः पुरुषार्थः पुरुषव्यापारव्याप्यो हि पुरुषार्थः । नचास्या ब्रह्मस्वभावभूताया उत्पत्तिविकारसंस्कारप्राप्तयः संभवन्ति; तथा सत्यनित्यत्वेन तत्स्वाभाव्यानुपपत्तेः । नचोत्पत्त्याद्यभावे व्यापारव्याप्यता; तस्मान्न ब्रह्मावगतिः पुरुषार्थ इत्यत आह—**निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्** । ब्रह्मावगतौ ब्रह्मस्वभावे नोत्पत्त्यादयः संभवन्ति, तथाप्यनिर्वचनीयानाद्यविद्यावशाद्ब्रह्मस्वभावोऽपराधीनप्रकाशोऽपि प्रतिभानपि न प्रतिभातीव पराधीनप्रकाश इव देहेन्द्रियादिभ्यो भिन्नोऽप्यभिन्न इव भासत इति संसारबीजाविद्याद्यनर्थनिबर्हणात्प्रागप्राप्त इव तस्मिन्सति प्राप्त इव भवतीति पुरुषेणार्थ्यमानत्वात्पुरुषार्थ इति युक्तम् । अविद्यादीत्यादिग्रहणेन तत्संस्कारोऽवरुध्यते । अविद्यादिनिवृत्तिस्तूपासनाकार्यादन्तःकरणवृत्तिभेदात् साक्षात्कारादिति द्रष्टव्यम् । उपसंहरति—**तस्माद्ब्रह्म जिज्ञासितव्यम्** । उक्तलक्षणेन मुमुक्षुणा । न खलु तज्ज्ञानं विना सवासनविविधदुःखनिदानमविद्योच्छिद्यते । नच तदुच्छेदमन्तरेण विगलितनिखिलदुःखानुषङ्गानन्दघनब्रह्मात्मतासाक्षात्काराविर्भावो जीवस्य । तस्मादानन्दघनब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम् । तच्च न केवलेभ्यो वेदान्तेभ्योऽपि तु ब्रह्ममीमांसोपकरणेभ्य इति इच्छानिसेन ब्रह्ममीमांसायां प्रवर्त्यते, न तु वेदान्तेषु तदर्थविवक्षायां वा । तत्र फलवदर्थावबोधपरतां स्वाध्यायाध्ययनविधेः सूत्रयता 'अथातो धर्मजिज्ञासा' इत्यनेनैव प्रवर्तितत्वात्, धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेनाधर्मवद्ब्रह्मणोऽप्युपलक्षणाच्च यद्यपि धर्ममीमांसावत् वेदार्थमीमांसया ब्रह्ममीमांसाप्याक्षेप्तुं शक्यते; तथापि प्राच्या मीमांसया न तद्व्युत्पाद्यते, नापि ब्रह्ममीमांसाया अध्ययनमात्रानन्तर्यमिति ब्रह्ममीमांसारम्भाय नित्यानित्यविवेकाद्यानन्तर्यप्रदर्शनाय चेदं सूत्रमारम्भणीयमित्यपौनरुक्त्यम् । **स्यादेतत्**—एतेन सूत्रेण

## वेदान्तकल्पतरुः ।

**त्वात्** प्रार्थ्यमानत्वात् । अविद्यानिवृत्तिर्न स्वरूपावगत्या; नित्यनिवृत्त्यापातात्, अपितु वृत्तित इत्याह—**अविद्येति** । **विगलित दुःखेति** वृत्तिव्यक्तस्वरूपाभिप्रायम् । पदार्थान्व्याख्याय सूत्रतात्पर्यमाह—**तस्मादित्यादिना** । सूत्रस्यानुवादत्वव्यावृत्तये तव्यप्रत्ययमध्याहरति—**एषितव्यमिति** । किमिति ज्ञानमेषितव्यं वेदान्तेभ्य एव तत्सिद्धेरिति । **न**; संदेहादिना प्रतिबन्धादित्याह—**तच्चेति** । **नन्विच्छाया** विषयसौन्दर्यलभ्यत्वात्किं तत्कर्तव्यतोपदेशेन ? तत्राह—**इच्छानिसेनेति** । ज्ञातुमिच्छा हि संदिग्धे विषये निर्णयाय भवति, निर्णयश्च विचारसाध्य इति तत्कर्तव्यतार्थाद्गम्यत इत्यर्थः । आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहारः । श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्ता इत्येष एव । तथा चाधिकारार्थत्वमथशब्दस्य निषेद्धुं ज्ञानेच्छा जिज्ञासाशब्दार्थ इत्युपपादनेन न विरोध इति । **ननु** धर्मग्रहणाद्विधीनामर्थविवक्षा तत्र कृता, न वेदान्तानाम्, **नेत्याह—धर्मग्रहणस्येति** । उपलक्षणतया वेदान्तानामर्थविवक्षाप्रतिज्ञावद्विचारप्रतिज्ञापि तत्रैवास्त्वित्याशङ्क्योपरि प्रतिपादनादर्शनान्नेत्याह—**यद्यपीति** । ब्रह्मविचारप्रतिज्ञायास्तत्र संभवमङ्गीकृत्य परिहार उक्तः, इदानीं संभव एव नास्तीत्याह—**नापीति** । अविरक्तस्य ब्रह्मविचारे प्रवृत्त्ययोगादित्यर्थः । ब्रह्ममीमांसारम्भायेति प्राचा तन्त्रेणागततोक्ता । **नित्यादिविवेकानन्तर्यायेति** । तन्त्रत्वप्रथमसूत्रेणेहत्यप्रथमसूत्रस्य । युष्मदस

## कल्पतरुपरिमलः ।

**एवेति** । फलेच्छैव हि स्वसाधनत्वोपाधिना उपायेच्छामादधाति, अत उपायेच्छा फलविषयापि भवतीत्येतद् युज्यत इति भावः । **आर्थिके चास्मिन्निति** । टीकायामेषितव्यमित्युक्त्या सूत्रे जिज्ञासा कर्तव्येति कर्तव्यपदाध्याहारः सूचितः, स तु जिज्ञासापदस्य कृतियोग्यविचारार्थकत्वाभिप्रायो न भवति; ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्ये जिज्ञासाशब्दस्यानधिकार्यज्ञानेच्छापरत्वस्याङ्गीकृतत्वात्, किंत्वार्थिकविचारकर्तव्यत्वाभिप्राय इत्यर्थः । **अर्थविवक्षाप्रतिज्ञावदिति** । **ननु**—अर्थविवक्षाप्रतिज्ञा विचारप्रतिज्ञेति नास्ति प्रतिज्ञाद्वयं धर्मजिज्ञासासूत्रे, ( जै. सू. अ. १ पा० १ सू. १ ) येनाद्यप्रतिज्ञायां धर्मग्रहणं वेदार्थमात्रोपलक्षणं, न द्वितीयप्रतिज्ञायामिति विभज्येत, किं त्वेकैव तत्र विचारप्रतिज्ञा वेदस्य; विवक्षितार्थत्वं त्वतःशब्देन तत्र हेतुतयोच्यते, तद्धेतूकरणसामर्थ्याच्च वेदस्याध्ययनविनियोगशेषत्वेन विषनिर्हरणादिमन्त्रवदविवक्षितार्थत्वशङ्का निरस्यत इति—**चेत्, सत्यम्**; धर्ममात्रस्य तत्र विचार्यत्वप्रतिज्ञायामपि विशिष्य धर्मपरवेदभागमात्रस्य विवक्षितार्थत्वं न हेतुः; तथासति वेदान्तभागस्य अविवक्षितार्थत्वशङ्कायां न्यायतौल्येन पूर्वभागस्यापि तद्वदविवक्षितार्थत्वमस्त्विति शङ्कायाः स्थिरीकरणापत्तेः, किंतु कृत्स्नवेदाध्ययनानन्तर्यस्याथशब्दार्थत्वादधीतस्य कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतुतयोच्यते इत्यत्र तात्पर्यम् । एवंच धर्मग्रहणस्य वेदार्थमात्रोपलक्षणत्वादिति टीकायां धर्मस्य यद्ग्रहणम् अतःशब्दोक्तविवक्षितार्थत्वे हेतावर्थशब्देनोपादानं तस्य वेदार्थमात्रोपलक्षणत्वादित्यर्थो दर्शितो भवति । टीकायामपि स एवार्थः प्रकृतोपयोगी ।

[१]ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं, न जिज्ञासितव्यम्। अथाप्रसिद्धं, नैव शक्यं जिज्ञासितुमिति। उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं, सर्वज्ञं, सर्वशक्तिसम-

## भामती।

ब्रह्मज्ञानं प्रत्युपायतया मीमांसायाः प्रतिपाद्यत इत्युक्तं–तदयुक्तं; विकल्पासहत्वादिति चोदयति—**तत्पुनर्ब्रह्मेति।** वेदान्तेभ्योऽपौरुषेयतया स्वतःसिद्धप्रामाण्येभ्यः प्रसिद्धमप्रसिद्धं वा स्यात्। **यदि प्रसिद्धं** वेदान्तवाक्यसमुत्थेन निश्चयज्ञानेन विषयीकृतं, ततो न जिज्ञासितव्यं; निष्पादितक्रिये कर्मणि अविशेषाधायिनः साधनस्य साधनन्यायातिपातात्। **अथाप्रसिद्धं** वेदान्तेभ्यः, तर्हि न तद्वेदान्ताः प्रतिपादयन्तीति सर्वथाऽप्रसिद्धं नैव शक्यं जिज्ञासितुम्; अनुभूते हि प्रिये भवतीच्छा, न तु सर्वथाऽननुभूतपूर्वे। न चेष्यमाणमपि शक्यं ज्ञातुं; प्रमाणाभावात्। शब्दो हि तस्य प्रमाणं वक्तव्यम्। **यथा वक्ष्यति**—'शास्त्रयोनित्वात्' इति। स चेत्तन्नावबोधयति, कुतस्तस्य तत्र प्रामाण्यम्। नच प्रमाणान्तरं ब्रह्मणि प्रक्रमते। तस्मादप्रसिद्धस्य ज्ञातुं शक्यस्याप्यजिज्ञासनात्, अप्रसिद्धस्येच्छाया अविषयत्वात्, अशक्यज्ञानत्वाच्च न ब्रह्म जिज्ञास्यमित्याक्षेपः। परिहरति—**उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावम्। अयमर्थः**—प्रागपि ब्रह्ममीमांसाया अधीतवेदस्य निगमनिरुक्तव्याकरणादिपरिशीलनविदितपदतदर्थसंबन्धस्य 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमात्, 'तत्त्वमसि' इत्यन्तात्संदर्भात् नित्यत्वाद्युपेतब्रह्मस्वरूपावगमस्तावदापाततो विचाराद्विनाप्यस्ति। अत्रच ब्रह्मेत्यादिनावगम्येन तद्विषयमवगमं लक्षयति, तदस्तित्वस्य सति विमर्शे

## वेदान्तकल्पतरुः।

दित्यादिना ह्यहंप्रत्यये जीवस्य प्रसिद्धेरसंसारिब्रह्मात्मत्वस्य चाभावाद् विषयमाचिक्षिपे। अत्रतूपेत्य ब्रह्मात्मभावं वेदान्तेभ्यस्तत्सिद्ध्यसिद्धिभ्यामाक्षेप इति विभागमाह—**वेदान्तेभ्य इति।** संदिग्धप्रसिद्धस्य जिज्ञास्यत्वसंभवादाक्षेपायोगमाशङ्क्याह—**निश्चयज्ञानेनेति।** अनिश्चायकत्वं तु वेदान्तानामयुक्तं निर्दोषत्वादित्याह—**अपौरुषेयतेति।** निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणो विषयस्य स इह तथोक्तः। यद्यपि निर्दोषो वेदः; तथापि सामान्यतो दृष्टनिबन्धनवचनव्यक्त्याभासप्रतिबद्धः संदिग्धार्थः स्यादतो विचारात्प्रागापातप्रसिद्धिं दर्शयन्नप्रसिद्धत्वपक्षोक्तं दोषमुद्धरति—**प्रागपि ब्रह्ममीमांसाया इति।** भाष्ये ब्रह्मास्तित्वप्रतिज्ञा भाति, कथं प्रतीतिपरत्वव्याख्येत्याशङ्क्य प्रत्याख्येन प्रत्ययलक्षणामाह—

## कल्पतरुपरिमलः।

तत्रहि ब्रह्मजिज्ञासासूत्रं ब्रह्मज्ञानेच्छोपदर्शनमुखेन तदर्थायां ब्रह्ममीमांसायां प्रवर्तनार्थं, नतु वेदान्ताध्ययने प्रवर्तनार्थं वेदान्तानां विवक्षितार्थत्वोपपादनार्थं वेत्युक्त्वा वेदान्ताध्ययने प्रवृत्तेरध्ययनविधिना सिद्धत्वादिति हेतुं स्पष्टत्वादप्रदर्श्य वेदान्तानां विवक्षितार्थत्वस्य फलवदर्थावबोधपरतामध्ययनविधेः सूत्रयता धर्मजिज्ञासासूत्रेणैव (जै.अ.१ पा.१सू.१) सिद्धत्वादिति हेतुः प्रागुक्तः। तदुपादानार्थं विवक्षितार्थत्वादिति हेतावर्थग्रहणस्य वेदान्तार्थसाधारण्यमेव वक्तव्यं, नतु धर्मजिज्ञासेत्यत्र धर्मग्रहणस्य। अत इह टीकाकारैर्धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं वदद्भिः धर्मजिज्ञासासूत्रं वेदार्थविचारप्रतिज्ञापरं विंशतिलक्षणीसाधारणमङ्गीकृतमिति न मन्तव्यम्। **सामान्यतो दृष्टनिबन्धनवचनव्यक्त्याभासप्रतिबद्धः संदिग्धार्थः स्यादिति।** यद्यपि तत्त्वमसीत्यादिर्वेदान्तः स्वारस्येन ब्रह्मात्मैक्यं बोधयति; तथाप्यन्यत्र क्वचिद् दृष्टमित्येतावन्मात्रमवलम्ब्य प्रवृत्तान् वचनव्यक्त्याभासान् वाक्ययोजनाभासान् वादिभिरुत्प्रेक्षितान् पश्यतस्तैः प्रतिबद्धः सन् वेदान्तः संदिग्धार्थः स्यात्। **तथाहि**—'अनृक्षरा ऋजवः सन्तु पन्था' इत्यत्र पन्थान इति बहुवचनस्य 'सुपां सुलुगि' त्यादिसूत्रेण स्वादेशो दृष्टः, उत 'यत्सुन्वन्ति सामिधेनीस्तदन्वाहे' त्यत्र यत्तच्छ्यां सप्तम्यास्तेनैव सूत्रेणालुग् दृष्टः, 'गायत्रीं छन्दसां माते'त्यत्र द्वितीया प्रथमार्थ इति विभ-

---

१ **तत्पुनर्ब्रह्मप्रसिद्धं इति**—अनुबन्धचतुष्टयसंभवेन साधितेऽपि विचारे पुनः प्रकारान्तरेणानुबन्धत्रयसंभवासंभवशङ्कापरिहारेण श्रोतव्यादिवाक्यस्य विचारविधित्वोपपादनार्थं वर्णकान्तरप्रारम्भः। तत्र वेदान्तशास्त्रं विषयः, प्रतिपाद्यप्रयोजनसंबन्धसंभवासंभवाभ्यां संशयः। प्रमाणभूतं हि शास्त्रं अनधिगतस्वरूपप्रतिपादनेनैव सार्थकं भवति। तत्र ब्रह्म यदि प्रागेव जिज्ञासायाः प्रपन्नं, तर्हि न वेदान्तशास्त्रं तत्प्रतिपादनपरमिति प्रतिपाद्यासिद्धिः। **एतेन**—प्रयोजनाद्यसिद्धिरपि—**व्याख्याता।** यदि न प्रपन्नं, तर्हि सर्वथा बुद्ध्यनारूढस्य शास्त्रप्रतिपाद्यत्वं दुरुपपादमेवेत्युभयतःपाशरज्जुः इति पूर्वपक्षे ब्रह्मशब्दश्रवणादिभिः सामान्यतः प्रसिद्धस्य विशेषेण विचारस्योपपन्नत्वात् विषयादिसंभवात् विचारविध्युपपत्तिरिति सिद्धान्तः। **ननु**—वेदान्तानामेव ब्रह्मविषयो, न शास्त्रस्य; ब्रह्मोपपादनोपकारिन्यायानामेव तद्विषयत्वात्। वेदान्तानामर्थावबोधे मीमांसायां उपकारकत्वेन शास्त्रस्यापि तद्विषयत्वमिति तु—**नाशङ्कनीयम्;** मीमांसां विनाप्यर्थावबोधनसंभवेन तस्यास्तदनुपकारकत्वात्। एवंच ब्रह्मरूपविषयासंभवस्य तदवस्थत्वात् विचारविधिरनुपपन्न एवेति—**चेत्, न;** सामान्यतो दृष्टनिबन्धनवाक्याभासादिना विरोधेन प्रसक्तसंशयनिरसनद्वारा निर्णयहेतुना शास्त्रेण निर्णेयस्य वस्तुनोऽपि विषयीकरणस्यावश्यकत्वादिति सर्वमनवद्यम्॥

न्वितम्, ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते; बृहतेर्धातोरर्थानु-

## भामती ।

विचाराक्प्रागनिर्णयात् । **नित्येति** क्षयितालक्षणं दुःखमुपक्षिपति । **शुद्धेति** देहाद्युपाधिकमपि दुःखमपाकरोति । बुद्धेत्यपराधीनप्रकाशमानन्दात्मानं दर्शयति; आनन्दप्रकाशयोरभेदात् । **स्यादेतत्**— । मुक्तौ सत्यामस्यैते शुद्धत्वादयः प्रथन्ते, ततस्तु प्राक् देहाद्यभेदेन तद्धर्मजन्मजरामरणादिदुःखयोगादित्यत उक्तम्—**मुक्तेति** । सदैव मुक्तः सदैव केवलोऽनाद्यविद्यावशात्तु भ्रान्त्या तथावभासत इत्यर्थः । तदेवमनौपाधिकं ब्रह्मणो रूपं दर्शयित्वाऽविद्योपाधिकं रूपमाह—**सर्वज्ञं सर्वशक्तिसमन्वितम्** । तदनेन जगत्कारणत्वमस्य दर्शितं, शक्तिज्ञानभावाभावानुविधानात्कारणत्वभावाभावयोः । कुतः पुनरेवंभूतब्रह्मस्वरूपावगतिरित्यत आह—**ब्रह्मशब्दस्य हीति** । **न** केवलं 'सदेव सोम्येदम्' इत्यादीनां वाक्यानां पौर्वापर्यालोचनया इत्थंभूतब्रह्मावगतिः, अपितु ब्रह्मपदमपि निर्वचनसामर्थ्यादिममेवार्थं स्वहस्तयति, निर्वचनमाह—**बृहतेर्धातोरर्थानुगमात्** । बृद्धिकर्मा हि बृहतिरतिशायने वर्तते । तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वाद्यस्याभ्यनुजानातीत्यर्थः । तदेवं तत्पदार्थस्य शुद्धत्वादेः प्रसिद्धिमभिधाय

## वेदान्तकल्पतरुः ।

**अत्रचेति** । मुख्यार्थपरिग्रहे बाधमाह—**तदस्तित्वस्येति** । **विमर्शो** संशये । **देहाद्यभेदेनेति** भेदाभेदमतेन शङ्का । तत्त्वमसिवाक्यनिर्दिष्टतत्पदलक्ष्यप्रसिद्धिमुक्त्वा वाच्यप्रसिद्धिमाह—**अविद्योपाधिकमिति** । अविद्याविषयीकृतमित्यर्थः । **शक्तीति** । शक्तिज्ञानाभ्यां कारणं लक्ष्यते। यो हि जानाति शक्नोति च स करोति, नेतर इत्यनुविधानादित्यर्थः । सदेवेत्यादिवाक्यात्प्रसिद्धिमुक्त्वा पदादपि सोच्यत इति वक्तुं पृच्छति—**कुतः पुनरिति** । वाक्यात्प्रसिद्धस्यैव पुनरपि कुतो हेत्वन्तरात्प्रसिद्धिरित्यर्थः । **ननु** बृहतिधातुरतिशायने वर्ततामापेक्षिकं तु तद्, बृहत् कुम्भ इतिवद्, **नेत्याह—अनवच्छिन्नमिति** । प्रकरणादिसङ्कोचकाभावादित्यर्थः । **पदान्तरं** साक्षान्नित्यत्वादिबोधकं नित्यादिपदम् । उक्तविशेषणानामन्यतमेनापि रहितस्य न महत्त्वसिद्धिरतो ब्रह्मपदादुक्तवस्तुसिद्धिरिति । **तत्पदार्थस्य शुद्धत्वादेरिति** समानाधिकरणे षष्ठ्यौ । जीवस्य हि

## कल्पतरुपरिमलः ।

क्तिव्यत्ययो दृष्टः, एवं तत्त्वमसीत्यत्र तदित्यस्माच्चतुर्थ्याः स्वादेशो लुग्, विभक्तिव्यत्ययो वेति **तस्मै** जगत्कारणाय ब्रह्मणे **त्वं** त्वदात्मा समर्पणीय इत्यर्थः; 'ब्रह्मणे त्वा महस ॐ इत्यात्मानं युञ्जीते'ति श्रुत्यन्तरात् । **अथवा**—पञ्चम्याः स्वादेशादिभि**स्तस्मात्त्वं** तस्माज्जातस्त्वमित्यर्थः; 'यतो वा इमानि भूतानि जायन्त' इति श्रुत्यन्तरात् । **अथवा**—षष्ठ्याः स्वादेशादिभि**स्तस्य त्वं** तत्स्वामिकस्त्वमित्यर्थः; 'सकारणं करणाधिप' इति श्रुत्यन्तरात् । **अथवा**—सप्तम्याः स्वादेशादिभि**स्तस्मिंस्त्वं** तदाश्रितस्त्वमित्यर्थः; 'प्राणबन्धनं हि सोम्य मन' इति तत्रैव श्रवणात् । **अथवा**—ब्राह्मणस्त्वं मनुष्यस्त्वमित्यादिवत् शरीरशरीरिभावनिबन्धनं **तत्त्वमिति** सामानाधिकरण्यं; 'यस्यात्मा शरीरमि'ति श्रुत्यन्तरात् । **अथवा**—'अघोराऽपापकाशिनी'त्यत्रेवाऽकारप्रश्लेषात् **अतत्त्वमसीति** च्छेदः; 'द्वा सुपर्णे' त्यादिभेदश्रुत्यनुरोधादिति । **एवं** 'मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति । लोकदृष्टीः प्रतिघ्नन्ति वचनव्यक्तिपांसुभिः ॥' इति ग्रहाधिकरण ( जै.अ.३ पा.३ सू.१४ ) वार्तिकोक्तरीत्या तत्तदुत्प्रेक्षितवचनव्यक्त्याभासापादितसंदेहाक्रान्ता तत्त्वमस्यादिवाक्यजन्या ब्रह्मात्मैक्यधीरापाततः प्रसिद्धिरित्यर्थः । **वचनयुक्त्याभासेति** पाठे द्वा सुपर्णेत्यादयो भेदप्रतिपादनच्छायापत्त्या वचनाभासाः तदुपोद्बलकयुक्तयो युक्त्याभासाः । **सामान्यतो दृष्टवचनव्यक्त्याऽऽपाततः प्रसिद्धेः संदिग्धार्थः स्यादिति** पाठः प्रागुक्त एवार्थे योजनीयः; सामान्यतो दृष्टेन या वचनव्यक्तिस्तयार्थान्तराणामप्यापाततः प्रतीतेः संदिग्धार्थः स्यादिति । ब्रह्मात्मस्वरूपनिर्णायकवाक्येष्वर्थसंदेहेऽपि नित्यानित्यवस्तुविवेकान्तर्गतबन्धमिथ्यात्वसद्रूपतदधिष्ठानावश्यंभावनिश्चयो मोक्षार्थप्रवृत्त्युपयोग्यन्तःकरणशुद्ध्यापादककर्मानुष्ठानमहिम्नेति प्रागेवोक्तम् । ततस्तु प्राग् देहाद्यभेदेनेति टीकाग्रन्थो न चार्वाकमताभिप्रायः; तन्मते मुक्तौ देहात्मनोर्भेद इत्यस्याभावात् । नापि भ्रान्तिकृताऽभेदाभिप्रायः; तस्य सिद्धान्त्यभिमतत्वेनानिराकार्यत्वादित्याशङ्क्य तत्तात्पर्यमाह—**भेदाभेदमतेन शङ्केति** । षष्ठ्योः सामानाधिकरण्ये हेतुमाह—**जीवस्य हीति** । तत्पदार्थस्य धर्मिणो जीवात्पदार्थान्तरत्वे हि धर्म्यपि तत्पदेनापूर्वतया बोधनीयः, नतु स जीवात्पदार्थान्तरमिति तद्गतं शुद्धत्वाद्येव संसारदशायामविद्यातिरोहितत्वेनाप्रसिद्धं तेन ज्ञापनीयं; अतस्तत्पदार्थस्य शुद्धत्वादेश्चेति न वैयधिकरण्यमित्यर्थः । यद्यपि तत्पदार्थस्य यत् शुद्धत्वादीत्येव वैयधिकरण्यं वक्तुं शक्यं; तथापि त्वं पदार्थ एव तत्पदार्थ इत्यभेददृढीकरणाय तदपि परित्यक्तमित्यर्थः । सर्वस्य ब्रह्मास्तित्वप्रसिद्धिरिति साध्यं, सर्वो हि तत्प्रत्येतीति हेतुरिति तयोरविशेषशङ्का । **तत्पदार्थमात्रस्य प्रसिद्धि-**

१ निरवग्रहमहत्त्वसंपन्नं वस्तु ब्रह्मपदार्थः । ततश्च कालकृतावच्छेदनिमित्तात्पत्वस्य रूपविशेषावच्छेदकृतात्पत्वस्य देशकृतावच्छेदनिमित्तात्पत्वस्य वस्तुपरिच्छेदनिमित्तात्पत्वस्येतरशेषत्वप्रयुक्तस्याविद्याकामकर्मपारतन्त्र्यप्रयुक्तस्य वा निष्कर्षस्य चाभावबोधनेन नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति सिद्ध्यतीति—पञ्चपादिकाकाराः ॥

**गमात्। सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति। यदि हि नात्मास्तित्वप्रसिद्धिः स्यात्, सर्वो लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्म। यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति, ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम्। न; तद्विशेषं प्रति विप्रतिपत्तेः। देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रति-**

## भामती।

त्वंपदार्थस्याप्याह—**सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः**। **सर्वस्य** पांसुलपादकस्य हालिकस्यापि ब्रह्मास्तित्वप्रसिद्धिः, कुतः? आत्मत्वात्। एतदेव स्फुटयति—**सर्वो हीति**। प्रतीतिमेवाप्रतीतिनिराकरणेन द्रढयति—**न नेति**। न न प्रत्येत्यहमस्मीति, किंतु प्रत्येत्येवेति योजना। **नन्वहमस्मीति** च ज्ञास्यति मा च ज्ञासीदात्मानमित्यत आह—**यदीति**। **अहमस्मीति न प्रतीयात्**। अहंकारास्पदं हि जीवात्मानं चेन्न प्रतीयात्, अहमिति न प्रतीयादित्यर्थः। **ननु** प्रत्येतु सर्वो जन आत्मानमहंकारास्पदं, ब्रह्मणि तु किमायातमित्यत आह—**आत्मा च ब्रह्म**। तदस्त्वमा सामानाधिकरण्यात्। तस्मात्तत्पदार्थस्य शुद्धबुद्धत्वादेः शब्दतः, त्वंपदार्थस्य च जीवात्मनः प्रत्यक्षतः प्रसिद्धेः, पदार्थज्ञानपूर्वकत्वाच्च वाक्यार्थज्ञानस्य, त्वंपदार्थस्य ब्रह्मभावावगमः 'तत्त्वमसि' इति वाक्यादुपपद्यत इति भावः॥ आक्षेप्ता प्रथमकल्पाश्रयं दोषमाह—**यदि तर्हि लोक इति**। अध्यापकाध्येतृपरंपरा लोकः। तत्र 'तत्त्वमसि' इति वाक्याद्यदि ब्रह्मात्मत्वेन प्रसिद्धमस्ति। आत्मा ब्रह्मत्वेनेति वक्तव्ये ब्रह्मात्मत्वेनेत्यभेदविवक्षया गमयितव्यम्। परिहरति—**न**। कुतः? **तद्विशेषं प्रति विप्रतिपत्तेः**। तदनेन विप्रतिपत्तिः साधकबाधकप्रमाणाभावे सति

## वेदान्तकल्पतरुः।

विशुद्धत्वाद्येव तत्पदेन समर्प्यते, न पदार्थान्तरमिति। प्रसिद्धिर्हि ज्ञानं ज्ञातारमाकाङ्क्षति, तेन व्यवहितमपि सर्वस्येत्येतदस्तित्वप्रसिद्धिरित्यनेन संबन्धनीयम्। तथा सति प्रतिज्ञाविशेषणं सत्कैमुतिकन्यायं द्योतयिष्यति, नतु सर्वस्यात्मत्वादिति हेतुविशेषणं, वैयर्थ्यादित्यभिप्रेत्याह—**सर्वस्येति**। पांसुमन्तौ पादौ यस्य स तथा। हलं वहतीति हालिकः। सर्वस्य ब्रह्मास्तित्वप्रसिद्धिः, सर्वो हि तत्प्रत्येतीति साध्यहेत्वोरविशेषमाशङ्क्याह—**प्रतीतिमेवेति**। अहं न नास्मीति प्रत्येतीति योजनायाम् अस्तित्वं न सिध्येत्; असत्त्वनिषेधेऽप्यनिर्वाच्यत्वस्यानिवारणात्, अतोऽहमस्मीति न प्रत्येतीति योजनैव साध्वीति। अहमिति प्रतीतेरहंकारमात्रविषयत्वान्नात्मप्रसिद्धिः सिध्येदिति शङ्कते—**नन्वहमिति**। ऋजुयोजनायां ह्यव्याप्यादव्यापकप्रसञ्जनं स्यात्, नहि प्रसिद्ध्यभावो नास्तित्वप्रतीत्या व्याप्तः; सुषुप्तौ विश्वाभावप्रतीतिप्रसङ्गात्, तन्मा भूदिति व्यवहितेन संबन्धयति—**अहमस्मीति न प्रतीयादिति**। शङ्कितुरनुशयमपाकरोति—**अहंकारास्पदमिति**। अहमिति प्रतिभासस्य चिदचित्संवलितविषयत्वमध्यासभाष्ये समर्थितम्। तथाचाहमिति प्रतीतिरात्मविषयापि, अत आत्मप्रसिद्ध्यभावेऽहमिति प्रतीतिर्न स्यादित्यर्थः। **तदस्त्वमेति**। 'तत्त्वमसि'वाक्ये तत्पदस्य प्रकृतसच्छब्दवाच्यब्रह्मपरामर्शिनस्त्वंपदेन सामानाधिकरण्यादित्यर्थः। **ननु** ब्रह्मात्मैकत्वस्य वाक्यार्थस्याप्रसिद्धत्वेनाप्रतिपाद्यत्वाक्षेपे पदार्थप्रसिद्धिप्रदर्शनमनुपयोगीत्याशङ्क्याह—**तस्मादिति**। पदार्थयोरवधृतयोस्ताभ्यां गृहीतसंबन्धपदद्वयसमभिव्याहारादपूर्वो वाक्यार्थः सुज्ञान इत्यर्थः। एवं तावदापाततो वाक्यात्पदतश्च प्रसिद्धेर्ब्रह्मणः शास्त्रेण शक्यप्रतिपादनत्वसंबन्धं सामर्थ्यासाधारणरूपविषयत्वं समाधातुमाक्षिपतीत्याह—**आक्षेप्तेति**। ब्रह्मण आत्मत्वेन लोकप्रसिद्ध्यभावाद्वाक्यीयप्रसिद्धिरनूद्यत इत्याह—**तत्त्वमसीति**। **ननु** तृतीयाया इत्थंभावार्थत्वं विहायात्मत्वेन हेतुना ब्रह्म यदि लोके प्रसिद्धमात्मा च ब्रह्मेति त्वयैवोक्तत्वादिति व्याख्यायतां, तदा हि लोकशब्दो रूढार्थः स्यात्, **उच्यते**; तत्पदार्थमात्रस्य प्रसिद्धिस्तदानूदिता स्यात्, तस्याश्चाजिज्ञास्यत्वं प्रति न हेतुत्वम्; ज्ञातेऽपि पदार्थे वाक्यार्थस्य जिज्ञासोपपत्तेरिति। **स्यादेतद्यदि** ब्रह्मात्मत्वेन प्रसिद्धमिति भाष्यमनुपपन्नम्; नहि महावाक्ये ब्रह्मानुवादेनात्मत्वं विधीयते, किंतु लोकसिद्धजीवानुवादेनागममात्रसिद्धब्रह्मत्वम्, अत आह—**अभेदविवक्षयेति**। अन्यत्र हि वाक्यार्थबोधोत्तरकालं पदार्थानामुद्देश्योपादेयभावो न व्यावर्तते, अत्र त्वखण्डवाक्यार्थसाक्षात्कारे स बाध्यत इति द्योतयितुमात्मपदे प्रयोज्ये ब्रह्मपदं ब्रह्मपदे चात्मपदं प्रयुक्तमित्यर्थः। **ननु** विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः, सा च वस्त्वभावसाधिकेति कथं विषयलाभः, तत्राह—**तदनेनेति**। न विरुद्धप्रतिपत्तिमात्रेणाभावावगमः, किंतु प्रमाणमूलतया; अतः साधकबाधकप्रमाणभावे विप्रतिपत्तिः संशयबीजमित्यर्थः। **ननु** साधारणाकारदृष्टौ संशयो, नत्विह क्षणिकविज्ञानस्थिरभोक्त्रादावस्ति; साधारणो धर्मी इत्याशङ्क्य विप्रतिपत्त्यन्यथानुप-

## कल्पतरुपरिमलः।

**रिति**। तत्पदबोध्यस्य धर्मिण इत्यर्थः, नतु प्राचीनटीकाग्रन्थइव तद्बोध्यस्य शुद्धत्वादेरित्यर्थः; तस्य प्रसिद्ध्यभावेनानुवादायोगात्। **वस्त्वभावसाधिकेति**। रजताभावप्रतिपत्तिर्हि रजतबाधिका दृष्टा, तथेहापि स्यादित्यर्थः। **साधारणाकारदृष्टाविति**। साधारणधर्मिदृष्टावित्यर्थः; विप्रतिपत्तिजन्यसंशये समानधर्मदर्शनस्यानपेक्षितत्वाद्, अग्रे विरुद्धप्रतिपत्त्योः

**पन्नाः। इन्द्रियाण्येव चेतनान्यात्मेत्यपरे। मन इत्यन्ये। विज्ञानमात्रं क्षणिकमित्येके। शून्यमित्यपरे। अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे। भोक्तैव केवलं न कर्तेत्येके। अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित्। आत्मा स भोक्तुरित्यपरे। एवं**

## भामती।

संशयबीजमुक्तम्। ततश्च संशयाज्जिज्ञासोपपद्यत इति भावः। विवादाधिकरणं धर्मी सर्वतन्त्रसिद्धान्तसिद्धोऽभ्युपेयः। अन्यथा अनाश्रया भिन्नाश्रया वा विप्रतिपत्तयो न स्युः। विरुद्धा हि प्रतिपत्तयो विप्रतिपत्तयः। नचानाश्रयाः प्रतिपत्तयो भवन्ति; अनालम्बनत्वापत्तेः। नच भिन्नाश्रया विरुद्धाः। नह्यनित्या बुद्धिः नित्य आत्मेति प्रतिपत्तिविप्रतिपत्ती। तस्मात्तत्पदार्थस्य शुद्धत्वादेर्वेदान्तेभ्यः प्रतीतिः, त्वंपदार्थस्य च जीवात्मनो लोकतः सिद्धिः सर्वतन्त्रसिद्धान्तः। तदाभासत्वानाभासत्वतत्तद्विशेषेषु परमत्र विप्रतिपत्तयः। तस्मात्सामान्यतः प्रसिद्धे धर्मिणि विशेषतो विप्रतिपत्तौ युक्तस्तद्विशेषेषु संशयः। तत्र त्वंपदार्थे तावद्विप्रतिपत्तीर्दर्शयति—**देहमात्रम्** इत्यादिना, **भोक्तैव केवलं न कर्ता** इत्यन्तेन। अत्र **देहेन्द्रियमनःक्षणिकविज्ञानचैतन्यपक्षे** न तत्पदार्थनित्यत्वादयः त्वंपदार्थेन संबध्यन्ते; योग्यताविरहात्। **शून्यपक्षेऽपि** सर्वोपाख्यारहितमपदार्थः कथं तत्त्वमोर्गोचरः। **कर्तृभोक्तृस्वभावस्यापि परिणामितया** तत्पदार्थनित्यत्वाद्यसंगतिरेव। **अकर्तृत्वेऽपि भोक्तृत्वपक्षे** परिणामितया नित्यत्वाद्यसंगतिः। **अभोक्तृत्वेऽपि** नानात्वेनावच्छिन्नत्वादनित्यत्वादिप्रसक्तावद्वैतहानाच्च तत्पदार्थासंगतिस्तदवस्थैव। त्वंपदार्थविप्रतिपत्त्या च तत्पदार्थेऽपि विप्रतिपत्तिर्दर्शिता। वेदाप्रामाण्यवादिनो हि लौकायतिकादयस्तत्पदार्थप्रत्ययं मिथ्येति मन्यन्ते। वेदप्रामाण्यवादिनोऽप्यौपचारिकं तत्पदार्थमविवक्षितं वा मन्यन्त इति। तदेवं त्वंपदार्थविप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिं सूचयित्वा साक्षात्तत्पदार्थे विप्रतिपत्तिमाह—**अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित्**। तदिति जीवात्मनः परामृशति। न केवलं शरीरादिभ्यः, जीवात्मभ्योऽपि व्यतिरिक्तः। स च सर्वस्यैव जगत ईष्टे। ऐश्वर्यसिद्ध्यर्थं स्वाभाविकमस्य रूपद्वयमुक्तम्—**सर्वज्ञः सर्वशक्तिरिति**। तस्यापि जीवात्मभ्योऽपि व्यतिरेकात्, न त्वंपदार्थेन सामानाधिकरण्यमिति स्वमतमाह—**आत्मा स भोक्तुरित्यपरे**। भोक्तुर्जीवात्मनोऽविद्योपाधिकस्य स ईश्वरस्तत्पदार्थ आत्मा, तत ईश्वरादभिन्नो जीवात्मा। परमाकाशादिव घटाकाशादय इत्यर्थः।

## वेदान्तकल्पतरुः।

पत्त्या तं साधयति—**विवादाधिकरणमिति**। देह आत्मा इत्यादिविवादाश्रयो धर्मी पराग्व्यावृत्तोऽहमासदं सर्वतन्त्रेष्वभ्युपगत इति मन्तव्यम्। तत्र हेतुमाह—**अन्यथेति**। आश्रयशब्दो विषयवाची। भिन्नविषया विप्रतिपत्तयो न स्युरतो विवदमानानामप्येकमालम्बनमविगीतम्। अत्रोपपत्तिमाह—**विरुद्धा हीति**। विप्रतिपत्तिशब्दावयवप्रतिपत्तिशब्दार्थस्य ज्ञानस्य सालम्बनत्वात् यत्किंचिदालम्बनं सिद्धम्; वीत्युपसर्गप्रतीतविरोधवशाच्च तदेकमिति सिद्ध्यति। एकार्थोपनिपाते हि धियां विरोधः; अत्र वैधर्म्योदाहरणमाह—**नहीति**। साधारणधर्मिस्फुरणेऽपि न शास्त्रार्थस्य बुद्धिसमारोहः, नहि साधारणः शास्त्रार्थस्तत्राह—**तस्मादिति**। यस्माद्विप्रतिपत्तिरेकालम्बना, यतश्चैकस्मिन्नालम्बने पूर्वधीविषयनिषेधेन विरुद्धधीरुदेति; तस्मात्प्रतियोगितया विप्रतिपत्त्येकस्कन्धत्वेन तत्त्वंपदार्थतदेकत्वप्रतीतिर्लोकशास्त्राभ्यां सर्वैरेष्टव्येति। तर्हि क्व विगानमत आह—**तदाभासत्वेति**। लौकायतिकादीनां सा प्रतीतिराभासः। आस्तिकानां तत्पदार्थप्रतीतेस्तत्त्वमर्थैकत्वप्रतीतेश्च गौणतायां तथा त्वंपदार्थधियोऽसङ्गसाक्ष्यालम्बनत्वे च विगानमिति। त्वंपदार्थविप्रतिपत्तिप्रदर्शनस्य वाक्यार्थविप्रतिपत्तौ पर्यवसानमाह—**अत्रेति**। देहादिक्षणिकविज्ञानपर्यन्तानाम्। **चैतन्यं** चेतनत्वमात्मत्वमित्यर्थः। **भोक्तैवात्मेति**—पक्षे भोक्तृत्वं किं विक्रिया, उत चिदात्मत्वम्। **नाद्यः** कर्तृत्वपक्षादविशेषादित्याह—**कर्तृत्वेऽपीति**। **द्वितीयं** प्रत्याह—**अभोक्तृत्वेऽपीति**। सक्रियत्वरूपभोक्तृत्वाभावेऽपीत्यर्थः। सांख्या हि जननमरणादिनियमान्निर्विशेषा अपि चेतनाः प्रतिदेहं भिन्ना इति मेनिरे। भिन्नानां च कुम्भवद्विनाशजाड्यापत्तिरतो न नित्यतत्पदार्थैकतेति। **अथवा** मैवानुमायि भेदादनित्यता, आत्मभेदाभ्युपगम एव ब्रह्मात्मैकत्वविरोधीत्याह—**अद्वैतेति**। लौकायतिकादिनिरीश्वरमतानुभाषणेनैव तत्पदार्थ ईश्वरेऽपि विप्रतिपत्तिः सूचिता, अतस्तादृशब्रह्मात्मैक्यवाक्यार्थेऽपि विप्रतिपत्तिरर्थाद्युक्तेत्याह—**त्वंपदार्थेति**। **वेदप्रामाण्यवादिनो** मीमांसकादयः। **शरीरादिभ्य इति** शरीरादिशून्यपर्यन्तेभ्य इति। **जीवात्मभ्य इति**। कर्तृभोक्तृभ्यः। केवलभोक्तृभ्य इति **स्वाभाविकमस्येति** नैयायिकादिमतेनेत्यर्थः।

## कल्पतरुपरिमलः।

साधारणालम्बनस्य धर्मिण एवात्र सद्भावोपपादनदर्शनाच्च। एवंच न त्विहेत्याद्यग्रिमवाक्येऽपि साधारणो धर्मीत्येव पाठो युक्तः। अतएव साधारणधर्मिस्फुरणेऽपीत्यग्रिमग्रन्थे सकलकोशेषु धर्मिशब्दस्यैव पाठः। **नहि साधारणः शास्त्रार्थ इति**। संदेहविषयकोटिद्वयसाधारणो धर्मी न शास्त्रप्रतिपाद्यः, संप्रतिपन्नत्वादित्यर्थः। **तत्पदार्थप्रतीतेरिति**। आस्तिकमे-

**बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः। तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येतानर्थं चेयात्। तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते॥ इति जिज्ञासाधिकरणम्॥ १॥**

**ब्रह्म जिज्ञासितव्यमित्युक्तम्। किंलक्षणं पुनस्तद्ब्रह्मेत्यत आह भगवान्सूत्रकारः—**

(२ अधिकरणम्) **जन्माद्यस्य यतः॥ २॥**

## भामती।

विप्रतिपत्तीरुपसंहरन् विप्रतिपत्तिबीजमाह—**एवं बहव इति**। युक्तियुक्त्याभासवाक्यवाक्याभाससमाश्रयाः सन्त इति योजना। **ननु** सन्तु विप्रतिपत्तयः, तन्निमित्तश्च संशयः, तथापि किमर्थं ब्रह्ममीमांसारभ्यत इत्यत आह—**तत्राविचार्येति**। तत्त्वज्ञानाच्च निःश्रेयसाधिगमो नातत्त्वज्ञानाद्भवितुमर्हति। अपिच अतत्त्वज्ञानान्नास्तिक्ये सत्यनर्थप्राप्तिरित्यर्थः। सूत्रतात्पर्यमुपसंहरति—**तस्मादिति**। वेदान्तमीमांसा तावत्तर्क एव, तदविरोधिनश्च येऽन्येऽपि तर्का अध्वरमीमांसायां न्याये च वेदप्रत्यक्षादिप्रामाण्यपरिशोधनादिषूक्तास्त उपकरणं यस्याः सा तथोक्ता। तस्मात्परमनिःश्रेयससाधनब्रह्मज्ञानप्रयोजना ब्रह्ममीमांसारब्धव्येति **सिद्धम्॥ इति जिज्ञासाधिकरणम्॥ १॥**

### जन्माद्यस्य यतः॥ २॥

तदेवमिति तदेवं प्रथमेन सूत्रेण मीमांसारम्भमुपपाद्य ब्रह्ममीमांसामारभते—**जन्माद्यस्य यतः**। एतस्य सूत्रस्य पातनिकामाह भाष्यकारः—**ब्रह्म जिज्ञासितव्यमित्युक्तम्। किंलक्षणं पुनस्तद्ब्रह्म**। अत्र यद्यपि ब्रह्मस्वरूपज्ञानस्य प्रधा-

## वेदान्तकल्पतरुः।

**युक्तिवाक्येति** भाष्यस्थतच्छब्दस्य प्रत्येकं युक्तिवाक्याभ्यां संबन्धं करोति—**युक्तीति**। आत्मा स भोक्तुरिति पक्षे मूलं युक्तिवाक्ये, अन्यत्र तदाभासाविति। अनर्थं चेयादिति भाष्यार्थमाह—**अपिचेति**। भाष्ये तर्कस्य पृथगुक्तेर्वेदान्तमीमांसा किं न तर्कः, नेत्याह—**वेदान्तमीमांसेति**। अर्थापत्तिरनुमानं चात्र तर्कोऽभिमतः, तद्रूपा वेदान्तमीमांसा, तस्या अविरोधिनः श्रुतिलिङ्गादयस्तार्तीयाः पाञ्चमिकाश्च श्रुत्यर्थादयो वेदप्रामाण्यपरिशोधकाः कर्ममीमांसायां विचारिताः। वेदस्य प्रत्यक्षादीनां तदर्थादीनां च लक्षणादीनि न्यायशास्त्रैर्विचारितानि। स्मृत्यादिभिश्च वेदानुमानेऽनुमानचिन्तोपयोगः। तेन विहितजातिव्यक्तिपदार्थविवेके वेदस्वरूपग्रहणे च न्यायशास्त्रस्योपयोगः। सर्वे चैते प्रमाणानुग्राहकत्वेन तर्का उच्यन्त **इति॥**

**इति जिज्ञासाधिकरणम्॥ १॥**

### जन्माद्यस्य यतः॥ २॥

अनन्तराधिकरणेन प्रारिप्सितसमस्तविचारस्य संबन्धमाह—**तदेवमिति**। सकलशास्त्रं प्रतीकेन संगृहीतम्। विषयादिसद्भावात् समर्थिते विचारारम्भे तमुपजीव्योत्तरविचारप्रवृत्तेर्हेतुहेतुमल्लक्षणः संबन्ध इत्यर्थः। प्रथमसूत्रेण द्वितीयसूत्रस्याक्षेपलक्षणां सङ्गतिमाह—**एतस्येति**। मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति प्रतिज्ञायां ब्रह्मस्वरूपविचारवत्प्रमाणयुक्तिसाधनफलविचाराणामर्थात् प्रतिभाने कथं प्रथमं ब्रह्मैव विचार्यतेऽत आह—**अत्रेति**। अत्र यतो वेत्यादिवाक्यं

## कल्पतरुपरिमलः।

दवादिषु निरीश्वरवादिनां तत्पदार्थप्रतीतेर्गौणतायां सेश्वरवादिनां तत्त्वमर्थैकत्वप्रतीतेः गौणतायामिति विगानमित्यभ्रेतनेनान्वितम्। सांख्या निरीश्वरा अपि चेतनाः प्रतिदेहं भिन्ना इति मेनिरे इति संबन्धः। तत्र हेतुमाह—**जननेति। स्मृत्यादिभिश्चेति**। स्मरन्ति च (ब्र. अ. २ पा. ३ सू. ७४) अपि च सप्त (ब्र. अ. ३ पा. १ सू. १५) बहिस्तूभयथापि स्मृतेराचाराच्च (ब्र. अ. ३ पा. ४ सू. ४३) आचारदर्शना (ब्र. अ. ३ पा. ४ सू. ३) दित्यादिसूत्रैर्नरकयातनासद्भावारूढपतितबहिष्करणादौ प्रमाणत्वेनोपनिबद्धानां स्मृत्याचाराणां प्रामाण्यं वेदमूलत्वेनेति तैर्वेदानुमाने अनुमानस्वरूपनिर्णयस्योपयोग इत्यर्थः। **तेन विहितेति**। यस्मान्न्यायशास्त्रे लक्षणमुखेन प्रमाणप्रमेयादिविवेचनं कृतं, तेन हेतुना समाननामरूपत्वादित्यादिसूत्र (ब्र. अ. १ पा. ३ सू. ३०) निबद्धे वैदिकानां यागदेवतासमर्पकेन्द्रादिशब्दानां जातिरर्थ इति विवेके जानश्रुतौ शूद्रशब्दस्य न शूद्रत्वजातिरर्थः, किंतु यौगिकत्वेन व्यक्तिरिति विवेके च जातिव्यक्तिपदार्थविवेचनद्वारा आनुमानिकवेदस्वरूपग्रहणेऽनुमाननिर्णयद्वारा च न्यायशास्त्रस्योपयोग इत्यर्थः॥

**इति जिज्ञासाधिकरणम्॥ १॥**

### जन्माद्यस्य यतः॥ २॥

**यतो वेति। ननु**—'यतो वे'त्यादिवाक्यस्य ब्रह्मलक्षकत्वालक्षकत्वसंशयो न तदुक्तलक्षणस्य जगज्जन्मादेः प्रसि-

१ अत्र एकं सूत्रं—अथातो ब्रह्मजिज्ञासेति।

## भामती ।

नस्य प्रतिज्ञया तदङ्गान्यपि प्रमाणादीनि प्रतिज्ञातानि; तथापि स्वरूपस्य प्राधान्यात्तदेवाक्षिप्य प्रथमं समर्थ्यते । तत्र यद्याव-दनुभूयते तत्सर्वं परिमितं अविशुद्धमबुद्धं विध्वंसि न तेनोपलब्धेन तद्विरुद्धस्य नित्यशुद्धबुद्धस्वभावस्य ब्रह्मणः स्वरूपं शक्यं लक्षयितुम् । नहि जातु कश्चित्कृतकत्वेन नित्यं लक्षयति । नच तद्धर्मेण नित्यत्वादिना तल्लक्ष्यते; तस्यानुपलब्धचरत्वात् । प्रसिद्धं हि लक्षणं भवति, नात्यन्ताप्रसिद्धम् । एवंच न शब्दोऽप्यत्र प्रक्रमते; अत्यन्ताप्रसिद्धतया ब्रह्मणोऽपदार्थस्यावाक्या-र्थत्वात् । तस्माल्लक्षणाभावान्न ब्रह्म जिज्ञासितव्यमित्याक्षेपाभिप्रायः । **तमिममाक्षेपं भगवान्सूत्रकारः परिहरति— 'जन्माद्यस्य यतः' इति ।** माभूदनुभूयमानं जगत्तद्धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं, तदुत्पत्त्या तु भविष्यति,

## वेदान्तकल्पतरुः ।

ब्रह्म लक्षयति, उत नेति लक्षणस्य लोकप्रसिद्ध्यप्रसिद्धिभ्यां विशये पूर्वपक्षमाह—**तत्र यद्यावदिति** । पूर्वाधिकरणाक्षेप-परिहारत्वादस्य तत्रत्यत्रब्रह्मलक्षणनिरूपकत्वाच्च तदीयमेव मुमुक्ष्वभिलषितमोक्षलाभः प्रयोजनमिति न पृथग्वक्तव्यम् । **यदा-हाचार्यः शबरस्वामी**—आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि । प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ॥' इति । यत्र पूर्वाधिकरणसिद्धान्ताक्षेपेण पूर्वः पक्षः तत्राक्षेपिकी, यत्र तु पूर्वाधिकरणसिद्धान्तेन पूर्वपक्षः तत्रापवादिकी सङ्गतिः । **प्राप्तिः** तदर्थचिन्ता । **कृत्वा प्रवर्तनं** कृत्वाचिन्ता, सा चाभ्युपगमवाद इति । सजातीयविजातीयव्यावृत्तिप्रयोजनो धर्मो लक्षणं नाम । तदिह परिदृश्यमानं जगदेव लक्षणं ब्रह्मणः, उत नित्यशुद्धत्वादिस्वरूपमिति विकल्प्य **नाद्य** इत्युक्ते **द्वितीयमाशङ्क्याह—नचेति । ननु** लोकासिद्धमपि वेदेन ज्ञाप्यतामत आह—**एवंचेति** । न जगद् ब्रह्मलक्षणं, किंतु तत्प्रति कारणत्वं, तच्च जीवाविद्याविषयीकृतस्य धर्म इत्युपलक्षणमुपपादयति—**माभूदिति । तादात्म्येनेति ।** ऐक्येन । ततो भेदेन—**तद्धर्मतयेति । तदुत्पत्त्यात्विति ।** तदुत्पन्नत्वेन जगत् स्वकारणं **लक्षयति** ज्ञापयति,

## कल्पतरुपरिमलः ।

ध्यप्रसिद्धिभ्यां, किंतु विरोधाविरोधाभ्याम्, 'आनन्दाध्येति' वाक्यस्यैव संशयस्तदुक्तस्वरूपलक्षणस्य प्रसिद्ध्यप्रसि-द्धिभ्याम्, अतः कथमेवमुक्तमिति—**चेत्, उच्यते;** स्वरूपलक्षणमपि यतो वेत्यादिवाक्यमूलम् । **तदुक्तं**—जग-त्कारणमनूद्य हि तस्यानन्दत्वविधायकमानन्दवाक्यम्—इति । अत इत्थमुक्तौ नानुपपत्तिः । **ननु**—जन्माद्यस्य यत इति सूत्रोपात्तस्य पूर्वपक्षसिद्धान्ताभ्यां प्रथमं समर्थ्यमानस्य तटस्थलक्षणस्य विरोधाविरोधाभ्यां 'यतो वे'-त्यादिवाक्यस्य ब्रह्मलक्षकत्वालक्षकत्वसंशय एवाधिकरणाङ्गत्वेन दर्शयितुं युक्तः, नत्वतथाभूतस्य स्वरूपलक्षणस्य प्रसि-द्ध्यप्रसिद्धिभ्याम् यतो वेत्यादिवाक्यस्यानन्दवाक्यद्वारा ब्रह्मलक्षकत्वालक्षकत्वसंशय इति—**चेत्, उच्यते;** सक-लेतरव्यावृत्तलक्ष्यबोधनसमर्थमिह लक्षणं निर्धारणीयं, जगज्जन्मादिकं तु न तथा, किंतु शाखाग्रे चन्द्र इति-वत्तटस्थलक्षणम् । यथा दिगन्तरस्थिततारकादिभ्य एव व्यावर्तकं, नतु शाखोर्ध्वदेशगतचन्द्रसमीपवर्तितारकादिभ्यः, एवं जगज्जन्मादिकमसंभावितकारणभावेभ्य एव व्यावर्तकं, नतु संभावितकारणभावेभ्यः प्रधानपुरुषादिभ्यः । अतः प्रकृष्ट-प्रकाशवत्सकलेतरव्यावृत्तलक्ष्यबोधनसमर्थं स्वरूपलक्षणमेवेह तटस्थलक्षणद्वारा सूत्रकृता निर्दिधारयिषितं, नतु तटस्थल-क्षणमेव । **अतएवाचार्यैस्तस्य च निर्णयवाक्यमित्यदिभाष्यस्य तात्पर्यं वक्ष्यते**—'स्वरूपलक्षणपरत्वं सूत्रस्य दर्शयितुं तस्य चेति भाष्य'मिति । तस्मात्प्रसिद्ध्यप्रसिद्धिमूलकसंशयस्याधिकरणाङ्गत्वेन प्रदर्शनं युक्तमेव ॥ **आक्षेपे इति । आक्षेपाधिकरणमा**क्षेप्याधिकरणसिद्धान्तफलेनैव फलवद्, यथा औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः ( जै. अ. १ पा. १ सू. ५ ) इत्यधिकरणे शब्दार्थसंबन्धस्य नित्यत्वेन वेदस्य निरपेक्षबोधकत्वरूपप्रामाण्ये समर्थिते शब्दार्थसंबन्धस्य नित्यत्वमयुक्तं शब्दानामेवानित्यत्वादिति तदाक्षेपसमाधानार्थं प्रवृत्तं शब्दाधिकरणम् ( ब्र. अ. १ पा. ३ सू. २८ ) । **अप-वादाधिकरण**मपवादाधिकरणपूर्वपक्षफलेन फलवत्, यथा स्मृत्यधिकरणे ( जै. अ. १ पा. ३ सू. १–२ ) स्मृतीनां वेदमूलत्वेन प्रामाण्ये समर्थिते प्रत्यक्षश्रुतिविरुद्धस्मृतिषु वेदमूलत्वापवदनार्थं प्रवृत्तं विरोधाधिकरणम् ( जै. अ. १ पा. ३ सू. ३ ) । **तदर्थचिन्ता** यदर्था सा तत्फलेन फलवती, यथा दर्शपूर्णमासादिप्रकरणाम्नातान्यङ्गानि प्राकरणिकेष्वेव व्यव-तिष्ठन्ते, नतु सौर्यादिष्वप्युपदेशविधया पारिप्लवानि भवन्तीति, सप्तमाद्यचिन्ता सौर्यादिषु प्रयाजादीनामतिदेशेन प्राप्तिरि-त्यग्रिमचिन्ताफलेन फलवती । लक्षणनिरूपणं लक्ष्यपरिच्छेदेन फलवत्, इत्येतेषु नियतैकरूपफलविशेषावगतेः फलं न वक्तव्यं । **कृत्वाचिन्तायाम**न्यत्रैव फलमिति तत्र फलव्यतिरेकनिश्चयात् फलं न वक्तव्यमित्यर्थः। **कारणत्वं त्विति ।** यद्यपि जन्यजनकभावसंबन्धेन जगद् ब्रह्म लक्षयतीति जगत एव ब्रह्मलक्षणत्वमनुपदमुक्तं; तथापि व्यावृत्तिव्यवहारानुमा-नयोर्हेतूभवतो लक्षणस्य पक्षनिष्ठत्वेन भाव्यमिति ये मन्यन्ते तानुरुध्यैवमुक्तम् । **जन्म आदिर्ययोरिति । ननु**— भाष्यानभिमतमतद्गुणसंविज्ञानमाश्रित्य विशेषविवक्षायां तस्मिन्नेव पक्षे यत्सूत्रगौरवमुच्यते तदनुपपन्नम् । **तथाहि—अत्र** कोवा विवक्षाविषयो न भवतीति प्रत्याख्येयो विशेषः, किं वा तद्विषयो भवतीत्युपादेयं सामान्यम् । जन्मादित्रयमध्येऽतद्गु-णसंविज्ञानबहुव्रीहिलभ्यं स्थितिभङ्गद्वयं विशेषः, तद्गुणसंविज्ञानबहुव्रीहिलभ्यं जन्मादित्रयं सामान्यमिति चेत्, कथमाद्यपक्षे

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। जन्मस्थितिभङ्गं समासार्थः। जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च। श्रुतिनिर्देशस्तावत् 'यतो वा इमानि भूतानि जायन्ते' ( तैत्ति० ३।१ ) इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्। वस्तुवृत्तमपि जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात्। अस्येति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः। षष्ठी जन्मादिधर्मसंबन्धार्था। यत इति कारणनिर्देशः। अस्य जगतो नामरूपाभ्यां

## भामती।

देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति तात्पर्यार्थः। **सूत्रावयवान्विभजते—जन्मोत्पत्तिरादिरस्येति**। लाघवाय सूत्रकृता जन्मादीति नपुंसकप्रयोगः कृतः, तदुपपादनाय समाहारमाह—**जन्मस्थितिभङ्गमिति**। **जन्मनश्च** इत्यादिः **कारणनिर्देशः** इत्यन्तः संदर्भो निगदव्याख्यातः। **स्यादेतत्**—प्रधानकालग्रहलोकपालक्रियायदृच्छास्वभावाभावेषूपप्लवमानेषु सत्सु सर्वज्ञं सर्वशक्तिस्वभावं ब्रह्म जगज्जन्मादिकारणमिति कुतः संभावनेत्यत आह—**अस्य जगत इति**। अत्र **नामरूपाभ्यां व्याकृतस्य** इति चेतनभावकर्तृकत्वसंभावनया प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति। यत्खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं, यथा घटादि। विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं संभाव्यते। चेतनो हि बुद्धावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं

## वेदान्तकल्पतरुः।

कारणत्वं तु ब्रह्म लक्षणमित्यर्थः। **व्रज्याया गतेः**। जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी इत्यन्यपदार्थौ यदि विशेषरूपेण विवक्ष्येते, तर्हि **जन्मादी अस्येति** निर्देशे गौरवं स्यात्तन्मा भूदिति सामान्यविवक्षया नपुंसकप्रयोगः सूत्रे कृतः। तत्र नपुंसकैकवचनप्रयोगार्हं समाहारमाहेत्याह—**लाघवायेति**। श्रुतीरविशदाः काश्चिद्भाष्याणि विषमाणि च वाचस्पत्युक्तभावानि पदशो विभजामहे॥ **तद्गुणसंविज्ञान इति**। तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते। तस्य गुणत्वेन संविज्ञानं यस्मिन्समासे स तथोक्तः। सर्वस्य विशेषणत्वे समासाऽसंभवात् समासार्थैकदेशो विशेषणमिति लभ्यते। अनादौ संसारे कथं जन्मादिस्तत्राह—**जन्मन इति**। श्रुत्या वा कथमयुक्तं निर्दिष्टमत आह—**वस्त्विति**। नानादेः संसारस्यादिर्जन्मोच्यते, किं तर्हि प्रतिवस्तु। घटस्य हि जन्मैवादिरिति। इदमः संनिहितवचनत्वात्प्रत्यक्षमात्रपरामर्शित्वमाशङ्क्य प्रतीतिमात्रं संनिधिरित्याह—**अस्येतीति**। सर्वस्य जगतो न जन्म; आकाशादेरनादित्वात्, तत्राह—**षष्ठीति**। वियदधिकरण ( ब्र. अ. २ पा. ३ सू. १ )न्यायात्तस्याप्यस्ति जन्मादिसंबन्ध इत्यर्थः। जगतो जन्मादेर्वा ब्रह्मासंबन्धान्न लक्षणत्वमित्याशङ्क्याह—**यत इति**। व्याख्यातमेतदधस्तात्। एवं सूत्रपदानि व्याख्याय प्रथमसूत्राद् ब्रह्मपदानुषङ्गेण तच्छब्दाध्याहारेण च वाक्यार्थमाह—**अस्य जगत इत्यादिना भाष्येण**। तद्गतैर्विशेषणैर्लक्षणेऽतिव्याप्तिः परिहियत इत्याह—**स्यादेतदित्यादिना**। स्वभाव एव नियन्तेति स्वभावपक्षः, यदृच्छापक्षस्तु न किंचिन्नियामकमस्तीति।

## कल्पतरुपरिमलः।

गौरवं, द्वितीयपक्षे तत्परिहारश्च। जन्मादिपदविग्रहवाक्यगतयत्पदविवरणार्थं जन्मस्थितिभङ्गानामितीतरेतरयोगद्वन्द्वाश्रयणे हि जन्म आदिर्येषामिति विग्रहलाभाज् **जन्मादयोऽस्य यत** इति सूत्ररचनापत्त्या जन्मस्थितिभङ्गरूपसामान्यविवक्षायामेवातिगौरवं स्यात्, समाहारद्वन्द्वाश्रयणे तु स्थितिभङ्गद्वयरूपविशेषविवक्षायामपि न गौरवम्; जन्म आदिर्यस्य स्थितिभङ्गस्येति विग्रहाश्रयणेन जन्माद्यस्य यत इत्येव सूत्ररचनोपपत्तेः। नहि त्रयविवक्षायामेव समाहारद्वन्द्वाश्रयणं, न द्वयविवक्षायामित्यस्ति नियमः। **एतेन**—स्त्रीलिङ्गपुंलिङ्गे लिङ्गविशेषौ नपुंसकलिङ्गं तदुभयानुगतं सामान्यं, नतु तृतीयं लिङ्गान्तरमिति शाब्दिकमर्यादाश्रयणेन विशेषसामान्यशब्दार्थग्रहणशङ्कापि—**निरस्ता**; स्थितिभङ्गद्वयग्रहणेऽपि लिङ्गसामान्यविवक्षायां जन्मादिषु त्रिष्वपि लिङ्गविशेषविवक्षायाश्च कर्तुं शक्यत्वेन गौरवलाघवस्थित्यभावात्। नहि लिङ्गविशेषलिङ्गसामान्यविवक्षे द्वित्रिग्रहणयोर्नियते—**उच्यते**; लिङ्गविशेषविवक्षायां गौरवं लिङ्गसामान्यविवक्षायां लाघवमित्येवात्र विवक्षितं। मूलश्रुत्यनुसारेण जन्मादित्रयकारणत्वं लक्षणमिति तल्लाभार्थं तद्गुणसंविज्ञानबहुव्रीहिरेवात्राभिमतः। तदाश्रयणे च लिङ्गविशेषविवक्षायां **जन्मादयोऽस्य यत इति** सूत्ररचनापत्त्या गौरवं स्पष्टमेव। तत्र यद्याशङ्क्येत तर्हि अतद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन लिङ्गविशेषविवक्षाऽस्त्विति, तत्रापि '**जन्मादी अस्य यत**' इति सूत्ररचनापत्त्या गौरवमस्तीति विभावयितुं जन्म आदिर्ययोरित्यादिग्रन्थप्रवृत्तिरिति न कश्चिद्दोषः। **ननु** लिङ्गसामान्यविवक्षायामपि 'जन्मादीन्यस्य यत' इति सूत्ररचनापत्त्या गौरवं स्यादित्याशङ्कानिराकरणार्थमुत्तरटीकाग्रन्थमवतारयति—**तत्र नपुंसकैकवचनेति**। इतरेतरयोगद्वन्द्वसमाश्रयणे लिङ्गसामान्यविवक्षाभ्यनुज्ञानाभावाज् जन्मादीनि इति सूत्ररचनापत्त्या गौरवं स्यात्, इह तु सर्वो द्वन्द्वो विभाषैकवद्भवतीति परिभाषासिद्धः समाहारद्वन्द्वः समाश्रीयते। तत्र 'स नपुंसकमि'ति सूत्रेण लिङ्गसामान्यविवक्षाभ्यनुज्ञातेति नपुंसकैकवचनेन सूत्रलाघवं लभ्यत इत्यर्थः। **स्वभाव एव नियन्तेति**। "कालः स्वभावो नियतिर्यदृच्छा

**व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः ।**

## भामती ।

घटं निष्पादयति । अतएव घटस्य निर्वर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति । **यथाहुः**— 'बुद्धिसिद्धं तु न तदसत्' इति । तथाचाचेतनो बुद्धावनालिखितं करोतीति न शक्यं संभावयितुमिति भावः । **स्यादेतत्**—चेतना ग्रहा लोकपाला वा नामरूपे बुद्धावालिख्य जगज्जनयिष्यन्ति, कृतमुक्तस्वभावेन ब्रह्मणेत्यत आह—**अनेककर्तृभोक्तृसंयुक्तस्येति** । केचित्कर्तारो भवन्ति, यथा सूदर्त्विगादयः, न भोक्तारः । केचित्तु भोक्तारः, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः, न कर्तारः । तस्मादुभयग्रहणम् । देशकालनिमित्तक्रियाफलानि इतीतरेतरद्वन्द्वः । देशादीनि च प्रतिनियतानि चेति विग्रहः । तदाश्रयो जगत्तस्य । **केचित्खलु** प्रतिनियतदेशोत्पादाः, यथा कृष्णमृगादयः । **केचित्प्रतिनियतकालोत्पादाः**, यथा कोकिलारवादयः । **केचित्प्रतिनियतनिमित्ताः**, यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः । **केचित्प्रतिनियतक्रियाः**, यथा ब्राह्मणानां याजनादयो नेतरेषाम् । एवं प्रतिनियतफलाः । **यथा केचित्सुखिनः, केचिद्दुःखिनः**, एवं य एव सुखिनस्त एव कदाचिद्दुःखिनः । सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते; परिमितज्ञानशक्तिभिर्ग्रहलोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात् । तदिदमुक्तम्—**मनसाप्यचिन्त्यरचनारूपस्येति** । एकस्या अपि हि शरीररचनाया रूपं मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः, किमङ्ग पुनः कर्तुमित्यर्थः । सूत्रवाक्यं पूरयति— **तद्ब्रह्मेति वाक्यशेषः । स्यादेतत्**—कस्मात् पुनर्जन्मस्थितिभङ्गमात्रमिहादिग्रहणेन गृह्यते, ननु वृद्धिपरिणा-

## वेदान्तकल्पतरुः ।

**व्यासेधति** प्रतिषेधति । उत्पत्तेः प्रागसतः कथं बुद्धावालेखनमत आह—**अत एवेति** । यदसदिति प्रसिद्धं तद्, बुद्ध्यारूढरूपेण सदेव; अन्यथा तुरङ्गशृङ्गवत्कर्मत्वनिर्देशायोगादिति सत्कार्यवादिनश्चाहुः । **वैश्वानरीयेष्ट्यादिष्विति । चतुर्थे स्थितम्—फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वात्** ( जै. अ. ४ पा. ३ सू. ३८ ) "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इत्युपक्रम्य "यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती"ति श्रूयते । तत्र किं पूतत्वादि पितुः फलं, उत पुत्रस्येति संदेहे, फलस्य कर्तृगामित्वनियमादितरथा प्रेरणानुपपत्तेः पितुरिति प्राप्ते—राद्धान्तः; यस्मिन् जाते एतामिष्टिं निर्वपति स पूत इति जातगामित्वेन फलाम्नानात् फलभोक्तृत्वेनाचोदिते पितरि फलसंयोगो न स्याद्वचनस्य तं प्रत्यशेषभूतत्वात् । **यत्त्व**फलभागिनो न प्रेरणेति । **तन्न**; पूतत्वादिगुणवत्पुत्रवत्तयैव पितुः प्रीत्युत्पत्तेः प्रेरणावकल्पनात् । अतः पुत्रगामि फलमिति । **अत्रानेककर्तृभोक्तृजीवानां** सृज्यत्वेन निर्देशाज्जगत्कर्तृत्वायोग्यतोक्ता । **मनसापीति** जगतस्तान्प्रति कार्यत्वायोग्यतेति विशेषणद्वयेन जीवकर्तृकत्वनिषेधः । **व्याकृतस्य**

## कल्पतरुपरिमलः ।

भूतानि योनिः पुरुष इति चिन्त्य"मिति श्वेताश्वतरोपनिषन्मन्त्रेण कालकारणत्वादिवादाः प्रत्याख्याताः । "कथमसतः सज्जायेते"ति श्रुत्या त्वसत्कारणत्ववादः । तैरिह पूर्वपक्षः कृतः । मन्त्रे पुरुषशब्दस्य विवरणं टीकायां–ग्रहलोकपालशब्देन कृतम् । इदं हिरण्यगर्भादीनामप्युपलक्षणम् । क्रियाशब्देन नियतिशब्दस्य प्रधानशब्देन योनिशब्दस्येति विवेकः । अतिव्याप्तिशब्देन कालादीनामेव कारणत्वोपपत्तौ ब्रह्म कारणं नाभ्युपगन्तव्यमित्यसम्भवो विवक्षितः । तत्र पुरुषपूर्वपक्षः श्रुत्यन्तरावलम्बनः । **प्रश्नोपनिषदि हि** "षोडशकलं पुरुषं" प्रस्तुत्य 'तं त्वा पृच्छामि क्वासौ पुरुष इति' भारद्वाजप्रश्ने "तस्मै स होवाच इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्ति, स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति, स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीमिन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम चेति" जीवस्यैव प्राणादिनामान्तषोडशकलास्रष्टृत्वं श्रूयते । अयं च जीवपूर्वपक्ष इहैवाधिकरणे निराकार्यो न प्रधानादिपूर्वपक्षवदधिकरणान्तरे निराकृतः । "कस्मिन्नहमुत्क्रान्त" इत्यादिप्रश्नोपनिषद्वाक्यमपि परब्रह्मविषयमेव; "तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति" तदुपसंहारे पिप्पलादवचनात्, सकलोपनिषत्प्रसिद्धस्य जीवाधिकस्य परब्रह्मणश्चापलपितुमशक्यत्वात्, प्राणोत्क्रान्तिप्रतिष्ठाभ्यां परब्रह्मणः स्वोत्क्रान्तिप्रतिष्ठावत्त्वम्, ईक्षणं तु स्वस्य तथाभूतजीवाभेदाभिप्रायेणेति तन्निराकरणं द्रष्टव्यम् । **यदसदिति प्रसिद्धमिति ।** यद्यपि स्रष्टव्यसजातीयगतानुभूताकारानुसन्धानेनापि सृष्टिः सम्भवति; तथापि यत्रानुभूतादप्यतिशयितेन वैलक्षण्येन स्रष्टव्यमिति स्रष्टव्याकारानुसन्धानं, तत्र तस्याकारस्य तदानीमसत्त्वप्रसिद्धिरस्तीति तात्पर्यम् । **इतरथा प्रेरणानुपपत्तेरिति ।** तथाच प्रबलन्यायविरुद्धतया यथाश्रुतार्थप्रतिपादनाक्षमेण "यस्मिन् जात" इत्याद्यर्थवादेन कथंचिल्लक्षणोन्नीतेन पितृगाम्येव फलं प्रतिपाद्यत इति कल्पनीयमिति भावः । **पितुः प्रीत्युत्पत्तेरिति ।** पुत्रगतमपि पूतत्वादिकं पशुहिरण्या-

**अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानां तु 'जायतेऽस्ति' इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वान्मूल-**

भामती ।

सापक्षया अपीत्यत आह—**अन्येषामपि भावविकाराणां**—वृद्ध्यादीनां **त्रिष्वेवान्तर्भाव इति । वृद्धिस्ताव**-द्वयवोपचयः । तेनाल्पावयवादवयविनो द्वितन्तुकादेरन्य एव महान्पटो जायत इति जन्मैव वृद्धिः । परिणामोऽपि त्रिविधो धर्म-लक्षणा-वस्थालक्षणः उत्पत्तिरेव । धर्मिणो हि हाटकादेर्धर्मलक्षणः परिणामः कटकमुकुटादिस्तस्योत्पत्तिः । एवं कटकादेरपि प्रत्युत्पन्नत्वादिलक्षणः परिणाम उत्पत्तिः । एवमवस्थापरिणामो नवपुराणत्वाद्युत्पत्तिः । **अपक्षयस्त्ववयवह्रासो नाश एव** । तस्माज्जन्मादिषु यथास्वमन्तर्भावाद्वृद्ध्यादयः पृथङ्नोक्ता इत्यर्थः । अथैते वृद्ध्यादयो न जन्मादिष्वन्तर्भवन्ति, तथाप्युत्पत्तिस्थितिभङ्गमेवोपादातव्यम्; तथा सति हि तत्प्रतिपादके 'यतो वा इमानि भूतानि' इति वेदवाक्ये बुद्धिस्थीकृते जगन्मूलकारणं ब्रह्म लक्षितं भवति, अन्यथा तु जायतेऽस्ति वर्धत इत्यादीनां ग्रहणे तत्प्रतिपादकं नैरुक्तवाक्यं बुद्धौ भवेत्, तच्च न मूलकारणप्रतिपादनपरम्, महासर्गादूर्ध्वं स्थितिकालेऽपि तद्वाक्योदितानां जन्मादीनां भावविकाराणामुपपत्तेः, इति शङ्कानिराकरणार्थं वेदोक्तोत्पत्तिस्थितिभङ्गग्रहणमित्याह—**यास्कपरिपठितानां त्विति** । नन्वेवमप्युत्पत्तिमात्रं सूच्यतां, तन्नान्तरीयकतया तु स्थितिभङ्गं गम्यत इत्यत

वेदान्तकल्पतरुः ।

इत्यनेनानभिव्यक्तबीजावस्थजगतोभिव्यक्त्यभिधानादणवः प्रागसद् द्व्यणुकाद्यारभन्त इति मतव्युदासः । शेषं विशदं टीकायाम् । तदेव लिलक्षयिषितजगद्योनिब्रह्मसजातीयया परप्रमपरिकल्पितप्रधानादेरुक्तविधजगत्प्रकृतित्वं ब्रह्म व्यवच्छिनत्ति । विजातीयात्पुनः कार्यात्कारणत्वमेव । तथा च सजातीयविजातीयव्यवच्छेदकत्वेन जगत्प्रकृतित्वस्य सिद्धं लक्षणत्वम् । **धर्मलक्षणेति** । धर्म इति लक्षणमिति अवस्थेति त्रीणि लक्षणानि यस्य परिणामस्य स तथोक्तः । स चोत्पत्तावन्तर्भवतीति । धर्मपरिणामं विवृणोति—**धर्मिणोहीति** । कनकादेर्धर्मिणो धर्मरूपपरिमाणो नाम मुकुटकटकादिरिति सांख्यप्रक्रिया । तत्र निरूप्यमाणे परिणामशब्दालम्बने तस्य कटकादेर्हेमादित उत्पत्तिरित्यर्थः । लक्षणपरिणाममुदाहरति—**एवमिति** । **प्रत्युत्पन्नत्वं** वर्तमानत्वं कटकादिकार्यस्य वर्तमानत्वातीतत्वभविष्यत्वरूपो लक्षणपरिणामः सोऽप्युत्पत्तिरित्यर्थः । अवस्थापरिणाममुदाहरति—**एवमवस्थेति** । अतीतादेरेवातीतत्वातीततरत्वातीततमत्वादिरूपो नवपुराणत्वाद्यापत्तिरवस्थापरिणामो नाम, स चोत्पत्तिरेवेत्यर्थः । अपक्षयस्य विनाशान्तर्भावमाह—**अपक्षयस्त्विति । तच्च न मूलकारणेति** । पुरुषाणां श्रुतिमन्तरेणातीन्द्रियार्थे दर्शनसामर्थ्याभावादित्यर्थः । **नच** वृद्ध्यादिविकारकथनादेव मूलकारणे द्रष्टृत्वमनुमेयं अन्यथाप्युपपत्तेरित्याह—**महासर्गादिति** । परमकारणादुत्पत्त्यादयो न गृहीता इति शङ्कापनुत्तये **योत्पत्तिर्ब्रह्मणो** 'यतो वेति' वाक्ये जायन्त इत्युत्पत्तिरभिहिता **या च तत्रैव** स्थितिर्जीवन्तीत्युक्ता, **यश्च तत्रैव प्रलयो**ऽभिसंविशन्तीत्युक्तस्त उत्पत्त्यादयः सूत्रे गृह्यन्त इति भाष्यार्थः । तत्रोत्पत्तिमात्रादेव लक्षणस्यालक्ष्यव्यावृत्तिसिद्धौ स्थितिलयोपादानमाशङ्कानिवृत्त्यर्थमित्याह—**उत्पत्तिमात्रमिति** । उत्पादकत्वं निमित्तेऽपि दृष्टमित्युपादानत्वसिद्ध्यर्थं लयाश्रयत्वमुक्तमित्यर्थः । **नन्वेवमपि**—लयाधारत्वादेवोपादानत्वं लभ्यते, नहि दण्डादिषु कुम्भादयो लीयन्तेऽत इतरवैयर्थ्यम्—**इतिचेत्, मैवम्**; उपादानत्वमेव न कुलधर्मतयोक्तं, किंतु प्रकृतिविकाराभेदन्यायेनाद्वैतसिद्धये । एवं च भवतु ब्रह्म जगत उपादानमधिष्ठाता तु उत्पत्तिस्थित्योरन्यः स्यात् कुम्भकार इव कुम्भस्योत्पत्तौ राजेव च राजस्थेम्नीति मा शङ्कीत्युत्पत्तिस्थितिग्रहणमिति । लक्षणाख्यकेवलव्यतिरेक्यनुमानादेव प्रतिज्ञातब्रह्मप्रमितेः शास्त्रयोनित्व( ब्र. अ. १ पा. १ सू. ३ ) समन्वयाधिकरण ( ब्र. अ. १ पा. १ सू. ४ ) योर्वैयर्थ्य-

कल्पतरुपरिमलः ।

यभिवृद्धिवत्पितुः प्रीत्युत्पादनद्वारा गौणपुरुषार्थो भवतीत्यर्थः । कारणत्वमेवेति पाठे ब्रह्म व्यवच्छिनत्तीत्यनुषङ्गः । कारणत्वादेवेति पाठे ब्रह्मव्यवच्छिन्नमित्यध्याहारः । **सांख्यप्रक्रियेति** । धर्मलक्षणावस्थापरिणामभेदान् पातञ्जला व्यवहरन्ति । पातञ्जले हि योगशास्त्रे परिणामत्रयसंयमादतीतानागतज्ञान ( योगसूत्र. पा. ३ सू. १६ )मिति परिणामत्रयविषयं धारणाध्यानसमाधिरूपं संयमं फलाय विधातुं चित्तस्य परिणामत्रयलक्षणानन्तरं सूत्रितम् "एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः" ( योगसूत्र. पा.३ सू. १३ ) इति । त इह सेश्वरसांख्यानतिभिन्नत्वात् सांख्यशब्देनोक्ताः । **सोप्युत्पत्तिरिति** । वर्तमानत्वादिरपि तत्तत्कालोपाधिविशेषोत्पत्तिरित्यर्थः । **पुरुषाणामिति** । पुरुषवाक्यं हि मूलप्रमाणसापेक्षम् । तदिह न तावच्छ्रुतिः; श्रुतेर्जन्मादित्रितयविषयत्वात् । नापि तदीयं प्रत्यक्षं; मूलकारणाधीनमहाभूतजन्मादिषु प्रत्यक्षाप्रवृत्तेरित्यर्थः । अतीन्द्रियार्थद्रष्टृत्वमपि पुरुषगौरवादनुमेयमित्याशङ्क्याह—**नचेति** । **अन्यथाप्युपपत्तेरिति** । यास्कादयः स्वकाले हेमादीनां विकारषट्कं दृष्ट्वा पठितवन्त इत्यप्युपपत्तेर्नातीन्द्रियार्थे प्रत्यक्षं कल्पनीयमि-

**कारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशङ्क्येत, तन्मा शङ्कीति योत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते। न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वान्यतः प्रधानादचेतनादणुभ्योऽभावात्संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम्। नच स्वभाववतः; विशिष्टदेशकालनिमित्तानामिहोपादानात्। एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्त ईश्वरकारणिनः। नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे, न; वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते।**

## भामती।

आह—**योत्पत्तिर्ब्रह्मणः** कारणादिति। त्रिभिरस्योपादानत्वं सूच्यते। उत्पत्तिमात्रं तु निमित्तकारणसाधारणमिति नोपादानं सूचयेत्। तदिदमुक्तम्—**तत्रैवेति**। पूर्वोक्तानां कार्यकारणविशेषणानां प्रयोजनमाह—**न यथोक्तेति**। तदनेन प्रबन्धेन प्रतिज्ञाविषयस्य ब्रह्मस्वरूपस्य लक्षणद्वारेण संभावनोक्ता। तत्र प्रमाणं वक्तव्यम्। **यथाहुर्नैयायिकाः**—'संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना। न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः॥ यथा च वन्ध्या जननी' इत्यादिरिति। इत्थं नाम जन्मादिसंभावनाहेतुः, यदन्ये वैशेषिकादय इत एवानुमानादीश्वरविनिश्चयमिच्छन्तीति संभावनाहेतुतां द्रढयितुमाह—**एतदेवेति**। चोदयति—**नन्विहापीति**। एतावतैवाधिकरणार्थे समासे वक्ष्यमाणाधिकरणार्थमनुवदन्सुहृद्भावेन परिहरति—**न। वेदान्तेति**। वेदान्तवाक्यकुसुमग्रथनार्थतामेव दर्शयति—

## वेदान्तकल्पतरुः।

त्याशङ्क्याह—**तदनेनेति**। ब्रह्मज्ञानाय वेदान्तविचार आरभ्य इति प्रतिज्ञायां विशेषणत्वेन ब्रह्मविषय इति प्रतिज्ञाविषयस्येत्युक्तम्। लक्षणं हि सिद्धस्य वस्तुनो भेदमवगमयति, ईदृशं तदिति तत्स्वरूपं वा, न सत्ताम्। कार्येण च कारणं किंचिदस्तीति मितम्। तत्त्वेकमनेकं वेति संदिग्धम्। तस्य यदैकत्वं सेत्स्यति, तदा भवति तत्सर्वज्ञं सर्वशक्ति च, नेतरथा। अयमेव संशयः कल्पनालाघवसंज्ञकतर्केणोत्कटैककोटिकतां नीतः संभावना समभवन्न निर्णयः। विचित्रप्रासादादीनां बहुकर्तृकत्वस्य प्रायेण दृष्टत्वात्तदिदमुक्तं—**संभावनोक्तेति**। एवंच वक्ष्यमाणाधिकरणद्वयेन प्रमाणं वाच्यमित्यर्थः। एतदेवेति भाष्येण युक्तीनामासां संभावनाहेतुत्वं दृढीक्रियत इत्याह—**इत्थं नामेति**। नैयायिकैरपि प्रमाणादमूषां भेदो नाज्ञायि युक्तीनाम्। ततः स्तोकैवासां प्रमाणादूनतैवं च संभावयन्तितरामित्यर्थः। **सुहृद्भावेनेति**। उत्तराधिकरणारंभात्प्राक् क्षणमपि शिष्याणामनुपपत्तिशङ्का मा भूदिति कृपयेत्यर्थः। अत्र "नावेदविन्मनुते तं बृहन्तं" "नैषा तर्केण मतिरापनेये"त्यादिशास्त्रात्प्रागुक्तयुक्त्या च वेदैकगम्यं ब्रह्मेति समाधत्त इत्याह—**परिहरतीति**। वाक्या-

## कल्पतरुपरिमलः।

त्यर्थः। **एतेन**—यास्कवचनस्य स्मृतित्वान्मूलश्रुत्यनुमानमपि—**निरस्तम्**; दृष्टमूलाभावे एव तदनुमानादिति भावः। **वेदान्तेति**। वेदान्तविचारः कर्तव्य इत्यार्थिकप्रतिज्ञायामित्यर्थः। **ननु** चोदनासूत्रवज्जन्मादिसूत्रं लक्षणप्रमाणोभयपरमस्तु; जन्यजनकभावेन लक्षणीभवतो जगतः सकर्तृकत्वानुमाने हेतुभावस्याप्युपपत्तेः, अत उत्तराधिकरणवैयर्थ्यमेवेत्याशङ्क्य कार्येण कारणमनुमीयतां नाम, तदेकत्वादिसिद्धौ तु श्रुतिरेव शरणीकरणीयेत्युत्तराधिकरणं सार्थकमित्याह—**कार्येण चेति। ननु**—कार्यत्वलिङ्गेन जगतः कारणानुमानानन्तरं प्रवृत्तैस्तदेकत्वानेकत्वसंशयो लाघवतर्कवशादुत्कटकोटिकसंशयरूपा संभावना संपद्यत इत्येतदयुक्तम्; नहि तर्कः किंचित्कोटिसहचरितानेकधर्मोपलम्भवत्किंचित्कोटिभूयोदृष्टसहचारैकधर्मोपलम्भवच्च कोट्युत्कटत्वनियामकत्वेन क्लृप्तः, किंतु प्रमाणानुग्राहकत्वेन; तथा च कार्यत्वलिङ्गकानुमानाद्भवन्ती सकर्तृकत्वानुमितिरेव लाघवतर्कोपनीतकर्त्रेकत्वमपि विषयीकुर्वाणा सत्ये कर्तृकत्वानुमितिः संपद्यत इत्येव युक्तम्, गोपुरप्राकारादिषु बहुकर्तृकत्वेन निश्चितेषु लाघवावतारासंभवेऽपि तथात्वेनानिश्चितेषु वियदादिषु तदवतारे बाधकाभावादिति—**चेत्, मैवम्;** लाघवतर्केणानुमितेर्विषयगौरवापादनस्य विरुद्धत्वात्। एककर्तृकत्वं हि अनेककर्तृकत्वाभावविशिष्टसकर्तृकत्वं, न त्वेकत्वसंख्याविशिष्टकर्तृकत्वमात्रमपि; बहुष्वपि प्रत्येकमेकत्ववैशिष्ट्यसत्वेन तद्विषयत्वस्य बहुकर्तृकत्वाविरोधित्वात्। एवमतिगुरुविषयापादकः कथं लाघवतर्कव्यपदेशं लभेत। नह्येवंभूतं लाघवं प्रमाणानुग्राहकं संप्रतिपन्नमस्ति, यदग्रे वस्तुलाघवसिद्ध्यर्थं स्वानुग्राह्यप्रमाणस्य विषयगौरवमापादयेत्। तथा सति हीष्टपुरोवर्तिज्ञानं प्रवृत्तिकारणं गृह्णतः प्रमाणस्यानुग्राहको लाघवतर्को विसंवादिप्रवृत्तिस्थले व्यधिकरणप्रकारकज्ञानाकल्पनया वस्तुलाघवसिद्ध्यर्थं भेदाग्रहं कारणतावच्छेदकत्वेनोपनयेद्, ननु ज्ञानवित्तिवेद्यतयोपस्थितमिष्टं पुरोवर्तिवैशिष्ट्यम्। तस्मात्सकर्तृकत्वानुमानानुग्राहकभावात् प्रच्युतोऽयं लाघवतर्कः स्वयमप्रमाणत्वात् स्वातन्त्र्येण कर्त्रेकत्वनिश्चयमुत्पादयितुमक्षमः कर्त्रेकत्वानेकत्वसंशयस्यैकत्वकोट्युत्कटत्वमात्रं संपादयन्नुपकरोतीति कल्पनं युक्तम्, ननु प्राकारगोपुरादिषु दृष्टिमवलम्ब्य प्रवृत्तां तदनेकत्वकोटिं सर्वथा निवर्तयतीति। एककोटिनिर्धारणाक्षमस्य सर्वथा कोट्यन्तरनिवर्तकत्वायोगात्, तस्य संभावनाजननमात्रेणाप्यनुपकारकत्वे लाघवात्, कर्त्रेकत्वसर्वज्ञत्वादिसिद्धिम-

**वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्तु तु वेदान्तवाक्येषु जगतः जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधिप्रमाणं भवन्न निवार्यते; श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात् । तथाहि—'श्रोतव्यो मन्तव्यः' (बृह० २।४।५) इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषो वेद' (छान्दो० ६।१४।२) इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्, किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं; अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य । कर्तव्ये हि विषये**

## भामती ।

**वेदान्तेति** । विचारस्याध्यवसानं सवासनाविद्याद्वयोच्छेदः । ततो हि ब्रह्मावगतेर्निर्वृत्तिराविर्भावः । तत्किं ब्रह्मणि शब्दादृते न मानान्तरमनुसरणीयम् ? तथा च कुतो मननं? कुतश्च तदनुभवः साक्षात्कारः ? इत्यत आह—**सत्तु तु वेदान्तवाक्येष्विति** । अनुमानं वेदान्ताविरोधि तदुपजीवि चेत्यपि द्रष्टव्यम् । शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं मननम् । युक्तिश्चार्थापत्तिरनुमानं वा । **स्यादेतत्**—यथा धर्मे न पुरुषबुद्धिसाहाय्यम्, एवं ब्रह्मण्यपि कस्मान्न भवतीत्यत आह—**न धर्मजिज्ञासायामिवेति** । **श्रुत्यादय इति** । श्रुतीतिहासपुराणस्मृतयः प्रमाणम् । अनुभवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारस्तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलम् । तच्च फलमिव फलमिति गमयितव्यम् । यद्यपि धर्मजिज्ञासायामपि सामग्र्यां प्रत्यक्षादीनां व्यापारः; तथापि साक्षान्नास्ति, ब्रह्मजिज्ञासायां तु साक्षादनुभवादीनां संभवोऽनुभवार्था च ब्रह्मजिज्ञासेत्याह—**अनुभवावसानत्वात्** । ब्रह्मानुभवो ब्रह्मसाक्षात्कारः परमपुरुषार्थः; निर्मृष्टनिखिलदुःखपरमानन्दरूपत्वादिति । **ननु** भवतु ब्रह्मानुभवार्था जिज्ञासा, तदनुभव एव त्वशक्यः, ब्रह्मणस्तद्विषयत्वायोग्यत्वादित्यत आह—**भूतवस्तुविषयत्वाच्च ब्रह्मविज्ञा-**

## वेदान्तकल्पतरुः ।

र्थविचारणाशब्देन शाब्दबोध उपासनासहित उक्तः, परस्तादवगतिरेवेति मध्येऽध्यवसानशब्दो न युक्त इत्याशङ्क्य नायं ज्ञानवचनः, किंतु संस्कारसहितलयविक्षेपाविद्यासमाप्तिवचन इत्याह—**सवासनेति** । वृत्तिरूपसाक्षात्कारस्याविद्याध्वंसिनो मध्ये विद्यमानत्वेऽपि नसोऽध्यवसानशब्देन गृहीतः; अविद्यानिवृत्त्या स्वरूपाभिव्यक्ति प्रतिव्यवधानादिति । विमतं, चेतनपूर्वकं, कार्यत्वादित्यादियुक्तिः शब्दाविरोधिनी वस्तुविशेषनिर्धारणे तदुपजीविनीति वक्तव्यम्, ब्रह्मात्मत्वस्य केवलयुक्त्यगोचरत्वस्वाभाव्यादित्याह—**तदुपजीवि चेत्यपीति** । यथाहि किल गन्धारदेशेभ्य आनीय चौरैररण्ये कश्चिद्बद्धचक्षुः निहित आप्तोपदेशतस्तदुपदिष्टस्य साकल्येन न गृहीतत्वात्पण्डितः स्वयमूहापोहक्षमतया च मेधावी गन्धारान्प्राप्नोत्येवं परब्रह्मणा आच्छिद्य विवेकदृष्टिं निरुध्याविद्यादिभिः संसारारण्ये निहितो जन्तुः परसकारुणिकगुरूपदेशतः स्वस्वभावं प्रतिपद्यत इति भाष्यस्थश्रुत्यर्थः । **यदुक्तं** ब्रह्मणो मानान्तराविषयत्वे कुतो मननमिति, तत्राह—**शब्दाविरोधिन्येति** कारणस्य सर्वज्ञत्वादिसिद्धौ युक्तिः शब्दमुपजीवति, न स्वतन्त्रा; कारणमात्रं तु संभावयन्तीतिकर्तव्यता, न मानान्तरमित्यर्थः । भाष्यस्थानुभवशब्दार्थमाह—**अन्तःकरणेति** । **ननु** कथं वृत्तिः प्रमाणमिति भाष्ये उक्तं ? निष्फलत्वादित्याशङ्क्य तत्कृताविद्यानिवृत्तिद्वारा स्वरूपाभिव्यक्तिः, उपचारात्फलमस्तीत्याह—**तस्येति** । धर्मजिज्ञासायां श्रुत्यादय एव प्रमाणमित्ययुक्तं, वेदविषयश्रोत्रप्रत्यक्षाद्यपेक्षणादित्याशङ्क्य ज्ञातव्ये धर्मे न साक्षात्कारतदुपयोगियुक्त्यादीनां संभवो, ब्रह्मजिज्ञासा तु साक्षात्कारपर्यन्तेत्याह—**यद्यपीत्यादिना** । **न** केवलं ब्रह्मजिज्ञासायामनुभवादीनां संभवः, किंतु तत्त्वसाक्षात्कारमन्तरेणापरोक्षसंसारभ्रमनिवृत्त्ययोगात्तेन विना न पर्यवसानं चेत्याह—**अनुभवार्थेति** ।

## कल्पतरुपरिमलः ।

भिमन्यमानानां भ्रान्तेर्निरालम्बनत्वापत्तेश्च । **वस्तुतस्तु**—लाघवतर्कोऽपि स्वतो दुर्बलः; अतिविचित्ररचनस्यापि प्रपञ्चस्य बहुविधापरिमितगोपुरप्रासादमण्डपमहातडागादियुक्तस्य महतो नगरस्येव क्रमसंभूतासर्वज्ञासर्वशक्तिकसंप्रतिपन्नानेकसंसारिकर्तृकत्वेनापि सिद्ध्युपपत्तौ सर्वज्ञसर्वशक्तिकैककर्त्रन्तरकल्पन एव गौरवात्, किंतु तथाभूतैककर्तृप्रतिपादकवेदान्तवाक्यनिकुरुम्बसमाश्रयणेनैव लब्धबलस्तस्याप्यनुग्राहको भवति । सोयं **वनसिंहहृदनक्रादिन्यायः** । किरातैर्हन्तुं शक्योपि सिंहो महद्वनं शरणं प्रविश्य दुराधर्षस्तेभ्यो न बिभेति, वनं च तत् सिंहाधिष्ठानानुगृहीतं तैर्दुष्प्रवेशं भवति । तदिदं सर्वं तदुपजीवि चेत्यपि द्रष्टव्यमिति टीकाग्रन्थेनैव विभावयिष्यते । **उपासनासहित इति** । उपासनाशब्दो मननस्यापि संग्राहकः । **परस्तादवगतिरेवेति** वृत्तिरूपावगत्यभिप्रायेण शङ्का । **समाप्तिवचन इति** । अवसानशब्दः समाप्तिवाचीत्यध्युपसृष्टोऽपि समाप्तिरूपनिवृत्तिपर इति भावः । एवंऽच्चाविद्यानिवृत्तिनिर्वर्त्यत्वोक्तेरवगतिशब्दः स्वरूपावगतिपर इत्यर्थादुक्तं भवति । **व्यवधानादिति** । अव्यवहितकारण एव निर्वर्तकत्वप्रसिद्धेर्व्यवहिता वृत्तिस्तथा-

**नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथाश्वेन गच्छति पद्भ्यामन्यथा वा, न वा गच्छतीति । तथा 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति' 'उदिते जुहोत्यनुदिते जुहोति' इति । विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च । न तु**

## भामती ।

नस्य । व्यतिरेकसाक्षात्कारस्य विकल्परूपो विषयविषयिभावः, नत्वेवं धर्मज्ञानमनुभवावसानं; तदनुभवस्य स्वयमपुरुषार्थत्वात्, तदनुष्ठानसाध्यत्वात् पुरुषार्थस्य, अनुष्ठानस्य च विनाप्यनुभवं शाब्दज्ञानमात्रादेव सिद्धेरित्याह—**कर्तव्ये हीत्यादिना** । न चायं साक्षात्कारविषयतायोग्योऽप्यवर्तमानत्वात्, अवर्तमानश्चानवस्थितत्वादित्याह—**पुरुषाधीनेति** । पुरुषाधीनत्वमेव लौकिकवैदिककार्याणामाह—**कर्तुमकर्तुमिति** । लौकिकं कार्यमनवस्थितमुदाहरति—**यथाश्वेनेति** । लौकिकेनोदाहरणेन सह वैदिकमुदाहरणं समुच्चिनोति—**तथातिरात्र इति** । कर्तुमकर्तुमित्यस्येदमुदाहरणमुक्तम् । कर्तुमन्यथा वा कर्तुमित्यस्योदाहरणमाह—**उदित इति** । **स्यादेतत्**—पुरुषस्वातन्त्र्यात् कर्तव्ये विधिप्रतिषेधानामानर्थक्यम्, अतदधीनत्वात् पुरुषप्रवृत्तिनिवृत्त्योरित्यत आह—**विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः** । गृह्णातीति **विधिः** । न गृह्णातीति **प्रतिषेधः** । उदितानुदितहोमयोर्विधी । एवं नारास्थिस्पर्शननिषेधो ब्रह्मघ्नश्च तद्धारणविधिरित्येवंजातीयका विधिप्रतिषेधा **अर्थवन्तः** । कुत इत्यत आह—**विकल्पोत्सर्गापवादाश्च** । **चो** हेतौ । यस्माद्ग्रहणाग्रहणयोरुदितानुदितहोमयोश्च विरोधात्समुच्चयासंभवे तुल्यबलतया च बाध्यबाधकभावाभावे सत्यगत्या विकल्पः । नारास्थिस्पर्शननिषेधतद्धारणयोश्च विरुद्धयोरतुल्यबलतया न विकल्पः । किंतु सामान्यशास्त्रस्य स्पर्शननिषेधस्य धारणविधिविषयेण विशेषशास्त्रेण बाधः । **एतदुक्तं भवति**—विधिप्रतिषेधैरेव स तादृशो विषयोऽनागतोत्पाद्यरूप उपनीतः, येन पुरुषस्य विधिनिषेधाधीनप्रवृत्तिनिवृत्त्योरपि स्वातन्त्र्यं भवतीति, भूते वस्तुनि तु

## वेदान्तकल्पतरुः ।

ब्रह्मजिज्ञासायामिति सप्तम्यन्तं पदं षष्ठ्यन्तत्वेन विपरिणमय्यानुभवावसानत्वाद्ब्रह्मजिज्ञासाया इति भाष्यं योज्यम् । अनुभवोऽवसाने समाप्तौ फलत्वेन यस्याः सा तथोक्ता । धर्मजिज्ञासायां त्वनुभवः कारणत्वेनोपक्रमे उपयुक्त इत्यर्थः । इहानुभवः स्वरूपाभिव्यक्तिर्न वृत्तिः, तत्र हेतुमाह—**परेति** । न वृत्तिरनित्यत्वाद्विचारस्य पुष्कलं फलमित्यर्थः । तदनुभव एव त्वित्यत्र वृत्तिरुक्ता, एवकारेण तु तत्कृताविद्यानिवृत्तिद्वारेण स्वरूपाभिव्यक्तिरशक्यतरेति सूचितम् । **भाष्ये—भूतशब्दः**, परमार्थवचनः, **चशब्दः** शङ्कानिवृत्त्यर्थः, **व्यतिरेकः** प्रपञ्चाभावोपलक्षितस्वरूपं, तद्विषयसाक्षात्कारस्य विकल्परूपो ब्रह्मणा सह विषयविषयिभावरूपः संबन्धोऽस्ति, नतु तत्त्वतः । **उक्तं हीदं प्रथमसूत्रे**—वृत्तिविषयत्वमपि तयैवोपहितस्य न निरुपाधेरिति, तन्न प्रस्मर्तव्यमित्यर्थः । अन्यथाकर्तुमित्यत्र कर्तुमित्यस्यानुषङ्गो भाष्ये कार्यः; करणापेक्षत्वादन्यथाकरणस्य । उदितहोमः कर्तुं शक्योऽनुदिते त्वन्यथेति तदाह—**कर्तुमिति** । भाष्यस्थविध्यादिशब्दानुदाहृतवाक्येषु योजयति—**गृह्णातीत्यादिना** । "नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेदि"ति नारास्थिस्पर्शनिषेधः । "शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्" ( याज्ञ० अ. ३ श्लो. २४३ ) इति ब्रह्मघ्नः शवशिरसो नारास्थ्नो ध्वजत्वेन धारणविधिः ॥ **भाष्ये** प्रतिज्ञैव भाति, न हेतुरत आह—**एतदुक्तमिति** । स्वातन्त्र्येण कर्तुं समर्थोऽपि हिताहितोपायत्वमजानन्, तद्बोधकविधिनि-

## कल्पतरुपरिमलः ।

त्वेन न ग्राह्येति भावः । न चैवं—विचारणाशब्दोक्तश्रवणमननोपासनानां साक्षात्कारैकसाध्यायामविद्यानिवृत्तौ करणत्वाभावात्कथं विचारणाध्यवसानेति शब्दसंगतिरिति—शङ्कनीयम्; नहि तत्र विचारणयाध्यवसानमिति 'कर्तृकरणे कृता बहुलमिति' सूत्रेण तृतीयासमासः समाश्रीयते, येन करणत्वप्रतीतिः स्यात् । टीकायां हि षष्ठीसमासो हि दर्शितः, स तु साक्षात्कारद्वारकपरम्परासंबन्धेऽप्युपपद्यते । **अन्यथा कर्तुमित्यत्रेति** । अकरणप्रतिकोटिनिर्देशकतयोपात्तस्यान्यथाकरणप्रतिकोटिनिर्देशार्थमप्यपेक्षितत्वादनुषङ्गः कर्तव्य इत्यर्थः । **ननु—'भाष्ये प्रतिज्ञैवाभाति न हेतुरिति'** न युक्तं; टीकायां **विधिप्रतिषेधाश्चार्थवन्त इति** प्रतिज्ञायां **विकल्पोत्सर्गापवादाश्चे**त्युक्त-

१ विमतं ब्रह्मवाक्यं, अनुभवनिरपेक्षकफलपर्यन्तज्ञानजनकं, प्रमाणभूतवेदवाक्यत्वादित्यनुमाने अनुभवायोग्यविषयत्वस्योपाधितायां; **कर्तुमकर्तुमित्यादिवाक्येन** साध्याव्यापकत्वस्येव साधनाव्यापकत्वस्यापि समर्थनार्थं **विधिप्रतिषेधाश्चेति** वाक्यस्य प्रवृत्तिः । साध्यविषयमेवानुभवायोग्यविषयं नतु सिद्धवस्तुविषयं, ब्रह्मवाक्यं तु सिद्धविषयं नतु साध्यविषयं, अन्यथा ब्रह्मणोऽपि विषये विधिप्रतिषेधविकल्पसमुच्चयादीनां प्रसरणादिति **विवरणानुयायिनः** ।

**वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते, विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः । न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम् । किं तर्हि?वस्तुतन्त्रमेव तत् । नहि स्थाणावेकस्मिन्स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति । तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् । स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात् । एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव; भूतवस्तुविषयत्वात् । ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणानर्थिकैव प्राप्ता, न; इन्द्रियाविषयत्वेन संबन्धाग्रहणात् । स्वभावतो विषयविषयाणीन्द्रियाणि, न ब्रह्मविषयाणि । सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा**

## भामती ।

नेयमस्ति विधेत्याह—**न तु वस्त्वेवं नैवमिति** । तदनेन प्रकारविकल्पो निरस्तः । प्रकारिविकल्पं निषेधति—**अस्ति नास्तीति । स्यादेतत्** । भूतेऽपि वस्तुनि विकल्पो दृष्टः, यथा स्थाणुर्वा पुरुषो वेति, तत्कथं न वस्तु विकल्प्यत इत्यत आह—**विकल्पनास्त्विति** । पुरुषबुद्धिः—अन्तःकरणं, तदपेक्षा विकल्पनाः—संशयविपर्यासाः । सवासनमनोमात्रयोनयो वा, यथा स्वप्ने । सवासनेन्द्रियमनोयोनयो वा, यथा स्थाणुर्वा पुरुषो वेति स्थाणौ संशयः, पुरुष एवेति वा विपर्यासः; अन्यशब्देन वस्तुतः स्थाणोरन्यस्य पुरुषस्याभिधानात्, न तु पुरुषतत्त्वं वा स्थाणुतत्त्वं वापेक्षन्ते; समानधर्मधर्मिदर्शनमात्राधीनजन्मत्वात् । तस्मादयथावस्तवो विकल्पना न वस्तु विकल्पयन्ति वान्यथयन्ति वेत्यर्थः । तत्त्वज्ञानं तु न बुद्धितन्त्रं, किंतु वस्तुतन्त्रम्, अतस्ततो वस्तुविनिश्चयो युक्तः, न तु विकल्पनाभ्य इत्याह—**न वस्तुयाथात्म्येति** । एवमुक्तेन प्रकारेण भूतवस्तुविषयाणां ज्ञानानां प्रामाण्यस्य वस्तुतन्त्रतां प्रसाध्य ब्रह्मज्ञानस्य वस्तुतन्त्रतामाह—**तत्रैवं सतीति** । अत्र चोदयति—**ननु भूतेति** । यत् किल भूतार्थं वाक्यं तत्प्रमाणान्तरगोचरार्थतयानुवादकं दृष्टम् । यथा नद्यास्तीरे फलानि सन्तीति । तथा च वेदान्ताः । तस्मात् भूतार्थतया प्रमाणान्तरदृष्टमेवार्थमनुवदेयुः । उक्तं च ब्रह्मणि जगज्जन्मादिहेतुकमनुमानं प्रमाणान्तरम् । एवं च मौलिकं तदेव परीक्षणीयं, न तु वेदान्तवाक्यानि तदधीनसत्यत्वानीति कथं वेदान्तवाक्यग्रथनार्थता सूत्राणामित्यर्थः । परिहरति—**न इन्द्रियाविषयत्वेति** । कस्मात् पुनर्नेन्द्रियविषयत्वं प्रतीच इत्यत आह—**स्वभावत इति । अत एव श्रुतिः**—'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' इति । **सति हीन्द्रियेति** । प्रत्यगात्मनस्त्वविषयत्वमुपपादितम् । यथा च सामान्यतोदृष्टमप्यनुमानं ब्रह्मणि न प्रवर्तते तथोपरिष्टान्निपुणतरमुपपादयिष्यामः । उपपादितं चैतदस्माभिर्विस्तरेण न्यायकणिकायाम् । न च भूतार्थतामात्रेणानुवादतेत्युपरिष्टादुपपादयिष्यामः । तस्मा-

## वेदान्तकल्पतरुः ।

षेधापेक्ष इत्यर्थः । अन्तःकरणजकल्पनाद्वैविध्यमाह—**सवासनेति** । जाग्रद्वासनावासितं मन एव स्वप्नकारणं, जाग्रत्संशयविपर्यया: संस्कारसहितान्तर्बहिःकरणजा इत्यर्थः । यथावस्तुत्वं वस्त्वनुसारित्वं यासां नास्ति तास्तथोक्ताः । **न वस्त्विति** । संशया न विकल्पयन्ति, विपर्यया नान्यथयन्तीत्यर्थः । **खानि** इन्द्रियाणि, **व्यतृण**द्धिंसितवान्, **पराङ् पश्यति** लोकः । **प्रत्यगात्मनस्त्वविषयत्वमिति**—अपरोक्षत्वात् प्रत्यगात्मप्रसिद्धिरित्यत्रेति । **उपरिष्टात्** तर्कपादे ( अ. २ पा. २ ) **उपपादितं चेति** । विमतं, धीमत्कृतं, कार्यत्वादित्यनुमानान्नेश्वरसिद्धिः; जीवजत्वेन सिद्धसाधनत्वात्,

## कल्पतरुपरिमलः ।

रभाष्यस्य हेतुपरत्वेन योजितत्वादिति—**चेत्, उच्यते**; पुरुषस्य स्वातन्त्र्येण स्वत एव प्रवृत्त्युपपत्तेर्विधिप्रतिषेधानर्थक्यमित्याशङ्कापरिहारार्थत्वेन खल्विदं प्रतिज्ञाभाष्यमवतारितम् । **तत्रैतदुक्तं भवती**त्यादिटीकाग्रन्थेन वर्ण्यमानम् इष्टोपायतादिप्रतिपादनमेव विधिप्रतिषेधार्थवत्त्वे हेतुर्न तु विकल्पादिकमित्यभिप्रायेण हेत्वाकाङ्क्षायामेतदुक्तमित्यादिकमित्यवतारितम् । विकल्पादिप्रतिपादनं तु विरुद्धयोर्विधिप्रतिषेधयोर्विध्योर्वा कथमिष्टोपायताप्रतिपादकत्वमित्याशङ्कायां विकल्पेनोत्सर्गापवादरूपेण वेति हेतूपपादनार्थमित्यभिप्रेत्य टीकायां तदपि हेतुपरत्वेन योजितम् । **प्रत्यगात्मनस्त्वविषयत्वमिति । ननु** 'पराञ्चि खानीति' मन्त्रमुदाहृत्य प्रत्यगात्मन इन्द्रियाविषयत्वोक्तिरयुक्ता; 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छ'न्निति तन्मन्त्रोत्तरार्ध एव तस्य विद्वदिन्द्रियग्राह्यताया उक्तत्वादिति—**चेत्, सत्यम्**; तत्र श्रवणादिवासितेन्द्रियग्राह्यत्वोक्तावपि शब्दमनपेक्ष्य स्वातन्त्र्येणेन्द्रियग्राह्यत्वस्य प्रत्याख्याने विरोधाभावात् । **अपरोक्षत्वादिति । प्रदेशोपलक्षणमेतत् । अस्मत्प्रत्ययविषयत्वादिति** भाष्यव्याख्यानावसरे जीवभावोपाध्युपहितरूपेण विषयत्वोक्त्या स्वरूपेणाविषयत्वमुपपादितमित्यर्थः । **जीवजत्वेन सिद्धसाधनत्वादिति** । अतिविचित्ररचनस्यापि प्रपञ्चस्य बहुविधापरिमितगोपुरप्रासादमण्डपमहातटाकादियुक्तस्य महतो नगरस्येव क्रमेण युगपद्वा संभूतैरसर्वज्ञासर्वशक्तिकैरपि विश्वामित्रादिवदुपचितपुण्यवशलब्धतत्तदेकदेशसृष्टिसामर्थ्यशालिभिर्बहुभिर्जीवैर्निर्मितत्वमुपपद्यते; **धर्मिकल्पनातो वरं धर्मकल्पनेति**

**संबद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केनचिद्वा संबद्धमिति न शक्यं निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं किं तर्हि वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व । तद्ब्रह्मेति' (तैत्ति० ३।१) तस्य च निर्णयवाक्यम्—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ।**

---

## भामती ।

त्सर्वमवदातम् । **श्रुतिश्च**—'यतो वा' इति जन्म दर्शयति, 'येन जातानि जीवन्ति' इति जीवनं स्थितिं, 'यत्प्रयन्ति' इति तत्रैव लयम् । **तस्य च निर्णयवाक्यम्** । अत्र च प्रधानादिसंशये निर्णयवाक्यम्—'आनन्दाद्ध्येव' इति ।

## वेदान्तकल्पतरुः ।

उपकरणाद्यभिज्ञकर्तृकत्वसाधने कतिपयतदभिज्ञतायां सर्वज्ञासिद्धेः, सर्वतदभिज्ञकर्तृकत्वे सपक्षस्य साध्यहीनत्वात्, कुम्भं निर्मितवतः कुम्भकारस्य चैत्रकृप्योयमित्यनवबोधात्, साधरणेऽपि सिद्धसाधनत्वात्, मनःसंयोगहीनस्य चोपलब्धेरभावादमनस्कस्याप्यैश्वर्यादुपलब्धिसंभवे तत एव विनैवोपलब्ध्या जगन्निर्माणसंभवेनोपलब्धिमत्कर्तृकत्वस्यैव विलोपेन वृद्धिं गृह्णतो मूलच्छेदादित्यादि न्यायकणिकायां व्युदपादीति । **उपरिष्टात्** समन्वयसूत्रे । जन्मादिसूत्रेण यतो वेत्यादिवाक्यं लक्ष्यमिति भाष्ये उक्तं, तदर्थं श्रुतिसूत्रयोरर्थप्रत्यभिज्ञां दर्शयति—**श्रुतिरिति** । अत्र स्वरूपलक्षणपरत्वं सूत्रस्य दर्शयितुं तस्य चेति भाष्यं । तद्याचष्टे—**अत्र चेति**। जगद्विशेषणैः पूर्वनिर्णयेऽपि श्रुतित इह निर्णीयते । कारणं ब्रह्माऽनूद्य वाक्ये-

## कल्पतरुपरिमलः ।

न्यायात् । अतोऽनुमानस्य तद्विषयत्वोपपत्तेर्न क्लृप्तजीवातिरिक्तसर्वज्ञसर्वशक्तिकैककर्त्रन्तरसिद्धिरित्यर्थः । **ननू**पकरणाद्यभिज्ञकर्तृकत्वं साध्यत इति नार्थान्तरमित्याशङ्क्य यत्किंचिद्यावद्विकल्पेन प्रागुक्तमर्थान्तरं दृष्टान्तस्य साध्यवैकल्यं वा स्याद्, यावदिति यत्किंचिदिति वा विशेषाविवक्षायामप्यर्थान्तरं स्यादित्याह—**उपकरणेत्यादिना** । अनुमानस्यातिरिक्तेश्वराऽसाधकत्वमुक्त्वा तत्साधकत्वे बाधकमप्याह—**मनःसंयोगेति** । धीमत्कर्तृकत्वसाध्यसिद्ध्या सिद्ध्यन्ती धीर्नित्याऽभ्युपगम्यते, अनित्या वा । **नाद्यः**; त्वन्मते कार्यत्वे धीमत्कर्तृकत्वव्याप्तिवज् ज्ञानत्वे जन्यत्वव्याप्तेरप्यप्रतिक्षेप्यतया तद्विरोधेन ज्ञाननित्यत्वासिद्धेः । **न द्वितीयः**; क्लृप्तकारणं मनः संयोगादिकं विना ज्ञानोत्पत्त्यसंभवात्, तद्विनाप्यैश्वर्यवशाज् ज्ञानोत्पत्त्यभ्युपगमे तत एव ज्ञानं विनापि स्रष्टृत्वसंभवेन त्वदभिमतसाध्यासिद्धिप्रसङ्गादित्यर्थः । **ननु—'कार्येण कारणं किंचिदस्तीत्यनुमितमिति'** पूर्वग्रन्थे युक्त्या कर्तृमात्रनिश्चयः, तदेकत्वसार्वज्ञ्यादिषु संभावनेत्युक्तं, तदनन्तरं **कारणस्य सर्वज्ञत्वादिसिद्धौ युक्तिः शब्दमुपजीवति, न स्वतन्त्रा, कारणमात्रं तु संभावयन्तीतिकर्तव्यतेति** ग्रन्थेनानुमानं कर्तृसंभावनामेव जनयति,न निश्चयं; तदेकत्वसार्वज्ञ्यादौ संभावनामपि न जनयति, किंतु तदंशे शब्दोपजीवनमेवेत्युक्तम् । इदानीमीश्वरानुमानस्यार्थान्तरबाधकयोरुद्भावनेन संभावनामपि यथा नोत्पादयेत्तथोपपादितम्, सर्वमिदं पूर्वापरविरुद्धमिति—**चेत्, उच्यते**; विमतं धीमत्कर्तृपूर्वकमित्याद्यनुमानं सर्वथा कर्तृसाधकं न भवतीति नेह प्रतिक्षिप्तं, किंतु संप्रतिपन्नजीवातिरिक्तकर्तृसाधकं न भवतीति । एवमिह सर्वथैवाप्रतिक्षिप्तमनुमानं न कर्तृनिश्चायकं, किंतु तत्संभावनामात्रजनकमिति **'कारणमात्रं तु संभावयन्तीति'** ग्रन्थेनोक्तम् । **तस्यायमाशयः**—कार्यत्वलिङ्गकानुमानं कर्तृसामान्यमपि न निर्धारयितुमीष्टे; यथा दानपतनयोः संप्रदानापादानकारकापेक्षत्वेऽपि न कार्यान्तराणां तदपेक्षा, एवं घटादीनां कर्त्रपेक्षत्वेऽपि अङ्कुरादीनां मा भूत्तदपेक्षेत्यप्रयोजकत्वशङ्कया घटतृणादिषु कृताकृतव्यवहारोपोद्बलिततया व्याप्तिशैथिल्यात्, किंतु तन्मात्रं संभावयति; संप्रदानापादानयोरिव च कर्तुः कार्यान्तरेषु दृष्टव्यभिचाराभावाद्, घटपटादिषु भूयः सकर्तृकत्वदर्शनाच्च । कर्त्रैकत्वादौ तु युक्तिः संभावनामात्रमपि न जनयति, क्लृप्तानेकजीवकर्तृकत्वोपपत्तेरिति । अतो नानयोर्ग्रन्थयोः परस्परविरोधः । **कार्येण च कारणं किंचिदस्त्यनुमितमित्यादिग्रन्थस्तु** प्रौढिवादेन प्रवृत्त इति न किंचिदवद्यम् । **ननु** 'प्रधानादिसंशये निर्णयवाक्यमिति' टीकाग्रन्थो न युक्तः; **भाष्ये—अस्य जगतो नामरूपाभ्यां व्याकृतस्ये**त्यादिना जगतः कानिचिद्विशेषणान्युक्त्वा **नच यथोक्तविशेषणस्य जगत इत्या**द्युत्तरग्रन्थेन जगत्कारणस्य प्रधानादिविलक्षणेश्वररूपत्वसमर्थनेन संशयाभावादित्याशङ्क्याह—**जगद्विशेषणैरिति** । निर्णयेऽपीत्यपिशब्देन ब्रह्मनिर्णये श्रुत्येकशरणानामस्माकं युक्त्या वस्तुतो निर्णयो न भवति, अतः प्रधानादिसंशय इति । **ननु** प्रसिद्धस्यैवानुवाद्यतया लोकप्रसिद्धं लौकिकानन्दमनूद्य तस्य जगज्जन्मादिकारणत्वविधायकम् आनन्दाद्ध्येवेति वाक्यमिति प्रतिभाति, तथा सति लौकिकानन्दस्यैव जगज्जन्मादिष्वदृष्टादिवत् कारणान्तरत्वमुक्तं स्याद्, न तेनानन्दरूपता ब्रह्मणः स्वरूपलक्षणं सिद्ध्येदित्याशङ्क्याह—**कारणं ब्रह्मेति** । कल्पनीयोपस्थितिकालौकिकानन्दप्रसिद्ध्यपेक्षया क्लृप्तोपस्थितिकपूर्वप्रस्तुतजन्मादिकारणप्रसिद्धिः शीघ्रतरेति तया जगज्जन्मा-

## वेदान्तकल्पतरुः ।

नानन्दत्वविधानात्स्वरूपलक्षणसिद्धिः । आनन्दः सत्यादेरुपलक्षणम् । **ननु**—आनन्दादेर्भेदे न ब्रह्मलक्षणत्वम्, अभेदे वाक्यार्थासिद्धिः, गुणभूतपदार्थविशिष्टः प्रधानपदार्थो हि वाक्यार्थः—**अत्रोच्यते;** यत्र पदार्थः प्रमितः तत्र स एवेतरपदार्थविशिष्टः प्रतिपाद्यः । यस्त्वज्ञातः स नान्यैः शक्यो विशेष्टुमिति स एव वाक्येन प्रमेयः । प्रमिते चैतस्मिन् वाक्यस्य समासेन विशिष्टपरत्वम् । यथा प्रकृष्टप्रकाशश्चन्द्र इति प्रकर्षप्रकाशद्वारा चन्द्रलक्षणान्न तद्वैशिष्ट्यं; मानान्तरादेव तत्सिद्धेः, उपायस्तु वैशिष्ट्यम् अखण्डचन्द्रसिद्धौ । तच्चाविरोधाच्चन्द्रेऽनुज्ञायते, सत्यादिवाक्ये त्वनन्तादिपदैर्बाध्यते वैशिष्ट्यम् । **एवंच—अविशिष्टमपर्यायानेकशब्दप्रकाशितम् । एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥ ननु**—चन्द्रलक्षणमिदं; ततश्चन्द्रः, इतरस्माद्भिद्यते, चन्द्रशब्देन व्यवहर्तव्यो वा, प्रकृष्टप्रकाशत्वात्, व्यतिरेकेण तमोवदिति व्यावृत्तिविशिष्टस्य वाच्यत्वविशिष्टस्य च वाक्येन प्रतिपाद्यत्वं—**इति । तन्न;** अप्रमिते चन्द्रे व्यावृत्तेरनवबोधात्, प्रमितेऽपि प्रमाणान्तरात् प्रमितिर्लक्षणवाक्याद्वा । **प्रथमे** सामान्यत; प्रमितिर्विशेषतो वा । **नाग्रिमः;** सामान्यस्यैव व्यावृत्तिसिद्धौ चन्द्रस्य तदसिद्धिप्रसङ्गात्, **न चरमः;** विशेषग्राहिप्रमाणादेव व्यावृत्तिसिद्धौ लक्षणवैफल्यात् । **न द्वितीयः;** लक्षणवाक्याच्चन्द्रप्रमितौ तस्य तत्रैव

## कल्पतरुपरिमलः ।

दिकारणं ब्रह्मानूद्य तस्यानन्दरूपत्वविधायकमिदं वाक्यमिति भावः । **सत्यादेरपीति ।** आनन्दादयः प्रधानस्ये ( ब्र. अ. ३ पा. ३ सू. ११)त्यधिकरणसिद्धं 'सत्यं ज्ञानमनन्तं ब्रह्मेति' प्रदेशान्तराम्नातलक्षणगतसत्यज्ञानाद्युपसंहारमभिप्रेत्योपलक्षणत्वोक्तिः । **नन्विति ।** सत्यज्ञानादीनां ब्रह्मस्वरूपाच्च परस्परस्माच्च भेदे सच्चिदानन्दरूपत्वं ब्रह्मलक्षणं न सिध्येत्, अभेदे वाक्यार्थो न सिध्येत्, तस्यानेकपदार्थवैशिष्ट्यरूपत्वनियमादित्यर्थः । अभेदपक्षमालम्ब्योक्तनियमासिध्द्या परिहरति—**अत्रोच्यत इति । यस्त्वज्ञात इति ।** तथा चाज्ञाते ब्रह्मपदार्थे एव वाक्यस्य पर्यवसानात् पुनर्न विशिष्टपरत्वमित्यर्थः । **ननु**—अज्ञातत्वं ब्रह्मणोऽसिद्धं; स्वरूपलक्षणवाक्ये ब्रह्मानूद्य तस्यानन्दत्वविधानमित्यनुपदमेवोक्तत्वात्, नह्यज्ञातमनुवाद्यम्, अत एव न विशिष्टपरत्वमित्येतदप्यसिद्धं, विधेयानुवाद्यविभागे सति तत्संसर्गविषयत्वावश्यम्भावादिति—**चेत्, उच्यते;** 'अधीहि भगवो ब्रह्मेति' प्रश्नसमये ब्रह्मप्रातिपदिकार्थतया 'यतो वे'त्यादिवाक्यश्रवणानन्तरं जगज्जन्मादिकारणतया च भृगुणा ज्ञातमपि ब्रह्म प्रधानपरमाण्वादिव्यावृत्तेन स्वरूपेण न निर्धारितमित्यज्ञातम् । जगत्कारणत्वेन तदनुवादेऽपि नानुवाद्यसंसर्गस्य वाक्यार्थानुप्रवेशः, किंतु वायुक्षेपिष्ठत्वादेरर्थवादानूदितस्य तत्समर्पकार्थवादिकपदसंघातलक्षणीयविधिवाक्यार्थान्वयिस्तुतिद्वारतयेव 'यत इमानि भूतानि जायन्त' इत्यादिपदसंघातलक्षणीयकारणत्वाश्रयवस्तूपस्थितिद्वारतया प्रथमावगतिमात्रम् । नच—अनुवाद्यस्य जगत्कारणत्वस्य वाक्यान्वयसंभवे तत्समर्पकार्थपदसंघातस्य 'पुरोडाशकपालेन तुषानुपवपती-'त्यत्र पुरोडाशकपालशब्दस्येवाधिष्ठानलक्षणा न युक्तेति—वाच्यम्; ब्रह्मप्रातिपदिकार्थमात्रस्य बुभुत्सितत्वेनाबुभुत्सितस्य कारणत्वस्यापि वाक्यार्थानुप्रवेशे कल्पकाभावात् । तदेतदनुपदमेव प्रकृष्टप्रकाशदृष्टान्तविवरणे स्फुटीकरिष्यते । **यथा प्रकृष्टप्रकाश इति ।** 'कश्चन्द्र' इति प्रश्नोत्तरे 'प्रकृष्टप्रकाशश्चन्द्र इति' वाक्ये प्रकृष्टप्रकाशशब्दौ प्रकर्षप्रकाशत्वरूपस्वार्थबोधनद्वारा तदाश्रयं बुभुत्सितं वस्तुतश्चन्द्ररूपं व्यक्तिविशेषं लक्षयत इति तत्र प्रकर्षप्रकाशत्ववैशिष्ट्यं न वाक्यार्थज्ञानानुप्रविष्टमित्यर्थः । **ननु** प्रश्नोत्तरे बुभुत्सितं वक्तव्यमित्येव नियमः, न त्वबुभुत्सितं न वक्तव्यमित्यपि; अबुभुत्सितस्यापि बुभुत्सितग्रहणोपायस्य सहवचनोपपत्तेः, काञ्च्याः को मार्ग इति प्रश्ने मार्गग्रहणोपायतया तत्तत्प्रदेशस्थितगिरिनदीकाननादिसद्भावस्यापि सहवचनदर्शनादित्याशङ्क्याह—**मानान्तरादिति ।** मानान्तरासिद्धो गिरिनद्यादिमार्गग्रहणोपायो वाक्यार्थेऽनुप्रविशतु नाम, मानान्तरसिद्धस्य तु न तदनुप्रवेशः कल्पनीय इत्यर्थः । **नन्वेवं सति** मानान्तरोपस्थितस्यैव प्रकर्षस्य प्रकाशत्वस्य च बुभुत्सितचन्द्रव्यक्तिग्रहणोपायत्वसंभवात् तदुपादानं व्यर्थमित्याशङ्क्याह—**उपायस्त्विति ।** उपात्तमेव प्रकृष्टत्वं प्रकाशत्वं च व्यक्तिविशेषनिर्धारणोपायो भवति, नानुपात्तम् । नहि चन्द्र इत्येवोत्तरेण प्रकृष्टप्रकाशत्वाश्रयव्यक्तिविशेषश्चन्द्र इति निर्द्धारणं निष्पद्यते । **नन्वेवं सति**—प्रकृष्टप्रकाशत्ववैशिष्ट्यमपि वाक्येन बोधनीयमापतति, न हि तदबोधने तदाश्रयव्यक्तिविशेषश्चन्द्र इति निर्धारणा भवतीति—**चेत्, उच्यते;** कुत्र घोष इति प्रश्नोत्तरे घोषवासयोग्यनिबिडाधारप्रतिपादनार्थं प्रवृत्ते गङ्गायां घोष इति वाक्ये गङ्गापदं स्वार्थोपस्थापनद्वारा वस्तुतः स्वार्थसंबन्धिबुभुत्सितनिबिडाधाररूपं तीरं लक्षयतीति न तीरे प्रवाहविशेषसंबन्धित्वमपि वाक्ये बोध्यम् । **नच**—तदपि वाक्येन बोध्यमेव, तीरत्वमात्रेण बोधने तीरव्यक्तिविशेषनिर्धारणासिद्धेरिति—वाच्यम्; गङ्गापदलक्ष्यत्वमतदर्थसंबन्धिनस्तीरान्तरस्य न संभवतीति तल्लक्ष्यत्वानुपपत्त्याऽर्थात् तीरविशेषलाभोपपत्त्या तल्लाभार्थं मुख्यार्थसंबन्धित्वस्य लक्षणीयकोव्यनुप्रवेशकल्पनायोगाद्, **यद्धार्थो दर्थो न स चोदनार्थ' इति न्यायात् ।** एवमिहापि द्रष्टव्यम् । **अनुज्ञायत इति ।** न प्रतिक्षिप्यत इत्यर्थः, नतु वाक्यार्थानुप्रवेशित्वेनानुज्ञायत इति; तदननुप्रवेशस्य समर्थितत्वात् । एवमुक्तां प्रक्रियामाश्रित्य स्वाभिमतं लौकिकवैदिकानां लक्षणवाक्यानामभेदपरवाक्यानां चाखण्डार्थत्वं निर्धारयितुमर्थगतमखण्डत्वं लक्षयति—**एवं चेति । अविशिष्टमिति ।** समभिव्याहृतपदान्तरार्थासंसृष्टमित्यर्थः । अतः प्रकृष्टप्रकाशश्चन्द्र इत्यत्र बोध्यस्य चन्द्रस्य पदार्थैकदेशेन चन्द्रत्वेन

## वेदान्तकल्पतरुः ।

पर्यवसाने व्यावृत्तिपरत्वानुपपत्तेः । **नच** चन्द्रशब्दवाच्यत्वं साध्यते; अचन्द्रे चन्द्रशब्दवाच्यत्वसाधने व्याघातात् । अथ चन्द्रत्वमप्यभिप्रेत्य चन्द्रशब्दवाच्यत्वं साध्यते, तर्हि चन्द्रत्वमेव साध्यतामवश्यापेक्षितत्वात्कृतमश्रुतवाच्यत्वकल्पनया । तस्मात्प्रकृष्टत्वे सति प्रकाशत्वमज्ञातचन्द्रज्ञापकम्; अर्थाद्व्यावृत्त्यादिसिद्धिः । **एवंचैतदपास्तम्**—एकेन पदेन यावदुक्तं तावतोऽपरेणाभिधाने पर्यायत्वम्, अधिकाभिधाने विशिष्टवाक्यार्थत्वापत्तिः—**इति;** वाच्यार्थनानात्वेऽपि लक्ष्यस्य चैकत्वात् । नहि चन्द्रद्वयमस्ति, नच लक्षणस्य विशिष्टत्वाल्लक्ष्यं विशिष्टं स्यात् । मा भूत् सामान्यवत्त्वे सत्यस्मद्वाह्येन्द्रियग्राह्यत्वं विशिष्टमित्यनित्यत्वमपि विशिष्टं, तर्हि अनित्यत्वस्येव लक्षणानात्मकत्वाल्लक्ष्यस्य ब्रह्मणः सत्याद्यात्मकत्वं न स्यादिति **चेत्, नैतदस्ति; यतः; 'सत्तादीनां हि जातीनां व्यक्तितादात्म्यदर्शनात् । लक्ष्यव्यक्तिरपि ब्रह्म सत्त्वादि न जहाति नः ॥'** इह हि कल्पितभेदव्यक्त्याश्रितैः सामान्यैर्या व्यक्तयो लक्ष्यन्ते, तास्तद्रूपत्वं न जहति; तरङ्गचन्द्रानुगतचन्द्रत्वेन लक्ष्यचन्द्रव्यक्तिरिव चन्द्रात्मत्वम्, एवं ब्रह्मापि मायाकार्यकुम्भादिकल्पितव्यक्त्यनुगतं सत्तया लक्ष्यमाणं सत्त्वं न हास्यति । तथा ज्ञानत्वानन्दत्वाभ्यामप्यन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगताभ्यां लक्ष्यमाणचिदानन्दव्यक्त्योरपि योज्यम् ।

## कल्पतरुपरिमलः ।

वैशिष्ट्येऽपि नासंभवः । **नच** तत्त्वमस्यादिवाक्यार्थेष्वभेदरूपः संसर्गोऽस्तीत्यसंभवः शङ्कनीयः; संबन्धस्य द्विष्ठत्वनियमेनाभेदस्य संसर्गत्वाभावात् । कोकिलः पिक इत्यादिपर्यायानेकशब्दप्रकाशिते वाक्यर्थत्वाभावादलक्ष्येऽतिव्याप्तिवारणार्थम् **अपर्यायेति** विशेषणम् । अविशिष्टमित्यनेनार्थलब्धस्यैक्यस्य स्पष्टीकरणार्थम् **एकमिति** । पदार्थभेदे तदुभयसंसर्गस्य वाक्यार्थत्वावश्यम्भावेनाविशिष्टत्वासंभवात् । एवमपर्यायानेकशब्दप्रकाशितमविशिष्टमखण्डमित्यखण्डलक्षणोक्त्या समभिव्याहृतपदान्तरार्थसंसर्गागोचरप्रमितिजनकं वाक्यमखण्डार्थमित्यखण्डार्थलक्षणं सूचितं भवतीति द्रष्टव्यम् । दृष्टान्तासिद्धिमाशङ्कते **नन्विति** । व्यावृत्तिर्व्यवहारो वा लक्षणार्थ इति नैयायिकाः । तथा च प्रकृष्टप्रकाशं इति हेतुगर्भं विशेषणं, चन्द्र इति च हेत्वाश्रयभूतायाश्चन्द्रव्यक्तेरितरव्यावृत्तचन्द्रशब्दवाच्यत्वान्यतरसाध्यवैशिष्ट्यपरमिति नाखण्डार्थतेत्यर्थः । **स्यादेतत्**—मा भूत् चन्द्रव्यक्तौ तदितरव्यावृत्तेः साध्यता; ज्योतिर्मण्डलमध्ये प्रकृष्टप्रकाशरूपेण तां गृह्णता प्रत्यक्षेण तस्या नक्षत्रादिव्यावृत्तेरपि ग्रहणात्, चन्द्रशब्दवाच्यत्वस्य तु स्यात्, इयं व्यक्तिश्चन्द्रशब्दवाच्येति प्रागनवगतत्वादवगतौ वा लक्षणे वाक्यानपेक्षणादित्याशङ्क्याह—**नचेति** । चन्द्रत्वजातिरहिते तत्साध्यते, तद्वति वा । **नाद्य** इत्याह—**अचन्द्रे इति । व्याघातादिति** । शब्दप्रवृत्तिनिमित्तरहितस्य तद्वाच्यत्वायोगादित्यर्थः । **द्वितीये** अयं चन्द्र इति चन्द्रत्वेन निश्चितायां व्यक्तौ तत्साध्यते, उतानेनैव वाक्येन चन्द्रत्वावगमनपूर्वकं तत्साध्यते । **नाद्यः**, चन्द्रत्वविशिष्टः चन्द्रशब्दवाच्यः, अयं चन्द्रत्वविशिष्ट इत्यवगच्छतस्तत्र चन्द्रशब्दवाच्यत्वनिर्णयार्थमुपदेशानपेक्षणात् । नहि गोसदृशो गवयः अयं च गोसदृश इति जानतस्तत्र गवयशब्दवाच्यत्वनिश्चयार्थमुपदेशापेक्षा दृश्यते । **न द्वितीय इत्याह—अथ चन्द्रत्वमिति । अज्ञातचन्द्रज्ञापकमिति** । यद्यपि प्रकृष्टप्रकाशव्यक्तिरेव चन्द्रः, स च ज्ञात एव, नच चन्द्रत्वेनाज्ञानं विवक्षितं, व्यक्तिसमानवित्तिवेद्यस्य तस्यापि सप्रकारके व्यक्तिज्ञाने प्रकारत्वेन विषयतावश्यंभावात्; तथापि चन्द्रत्ववैशिष्ट्यांशे सत्तानिश्चयरूपज्ञानाभावो विवक्षितः, अनभ्यासदशापन्नजलादिज्ञानवद्, यतो न तदंशे सत्तानिश्चयरूपम् । अत एवोपदेशानन्तरमेव तन्निश्चयः, अन्यथोपदेशवैयर्थ्यं स्याद्; विषयान्तरासंभवात् । **यद्वा**—जातेर्नास्ति व्यक्तिसमानवित्तिवेद्यत्वनियमः; स्वर्णकरकादिषु गृह्यमाणेष्वपि तेजस्त्वजलत्वपृथिवीत्वादिसंशयदर्शनात्, किंतु यद्व्यञ्जकतया यदवगतं तस्यास्तत्समानवित्तिवेद्यत्वनियमः । नच ज्योतिर्मण्डलमध्यवर्तिप्रकर्षविशेषयुक्तप्रकाशत्वं चन्द्रत्वव्यञ्जकमिति प्रागुपदेशाज् ज्ञातम्, अतो युज्यत एवाज्ञातचन्द्रत्वज्ञापकत्वं प्रकृष्टप्रकाशवाक्यस्य । **अर्थादिति** । अप्रकृष्टप्रकाशनक्षत्रादिव्यावृत्तेः प्रत्यक्षतः सिद्धावप्यचन्द्रव्यावृत्तेश्चन्द्रशब्दवाच्यत्वस्य चार्थात्सिद्धिरित्यर्थः । **ननु** वाच्यनानात्वे लक्ष्यस्यापि नानात्वं स्यादित्याशङ्क्याह—**नहि चन्द्रद्वयमस्तीति** । प्रकृष्टप्रकाशशब्दवाच्यनानात्वेऽपि तल्लक्ष्यचन्द्रव्यक्तिनानात्वं नास्तीत्यर्थः । **मा भूदिति** । यद्यपि ध्वंसप्रागभावान्यतरप्रतियोगित्वरूपमनित्यत्वं ध्वंसेन प्रागभावेन वा विशिष्टमेव; तथाप्यस्मदादिबाह्येन्द्रियग्राह्यत्वं सामान्यवत्वेनेव समानाधिकरणविशेषणेन विशिष्टं न भवतीत्यत्र तात्पर्यम् । सुवर्णे, तेजः, जलपृथिव्यन्यत्वे सति रूपवत्वादित्याद्युदाहरणान्तरमिह द्रष्टव्यम् । अनित्यत्वतज्ज्ञापकदृष्टान्तेनैव दोषान्तरमाशङ्कते—**तर्हीति । सत्याद्यात्मकत्वं न स्यादिति** । सत्ताजात्यादितादात्म्यापन्नं हि घटादिकं सदाद्यात्मकमिष्यत इति भावः । **सत्त्वादि न जहातीति** । सदाद्यात्मकं भवतीत्यर्थः । **ननु** घटादिविषयेषु सत्तादिजातीनां व्यक्तितादात्म्यदर्शनमस्तु, ततः किमायातं ब्रह्मणः सदात्मकत्वादिसिद्धावित्याशङ्क्य श्लोकं व्याचष्टे—**इह कल्पितभेदेति** । प्रतिज्ञातमर्थं क्वचिदुदाहरणे प्रदर्शयन्नेव तन्न्यायं प्रकृते योजयति—**तरङ्गेति** । वस्तुतश्चन्द्रस्यैकत्वेपि तरङ्गोपाधिकल्पितभेदा बहवश्चन्द्राः सन्तीति तावदनुगतं चन्द्रत्वसामान्यम् । तद्वाचिनश्चन्द्रशब्दस्य यदा भेदकल्पनाधिष्ठाने बिम्बचन्द्रे प्रयोगस्तदा तद्वाच्यचन्द्रत्वसामान्यलक्ष्या भवति या चन्द्रव्यक्तिः, सा चन्द्रात्मत्वं न जहातीति दृष्टं; तथेहापि मायाकल्पितभेदघटपटाद्यनुगतसत्तासामान्यवाचिनः सच्छब्दस्य सद्भेदकल्पनाधिष्ठाने ब्रह्मणि प्रयोगे सति तद्वाच्येन सत्तासामान्येन लक्ष्यं ब्रह्म सदात्मत्वं न जहातीत्यर्थः । **ननु**

**आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति' ( तैत्ति० ३।६ )। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ॥ २॥**
**इति द्वितीयं जन्माद्यधिकरणम् ॥**

**जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं, तदेव द्रढयन्नाह—**

( ३ अधिकरणम् ) **शास्त्रयोनित्वात् ॥ ३ ॥**

### भामती ।

**एतदुक्तं भवति**—यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा रज्ज्वां सत्यामस्ति रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगत् ब्रह्मण्येवास्ति तत्रैव च लीयत इति सिद्धम् ॥ २ ॥ **इति द्वितीयं जन्माद्यधिकरणम् ॥**

सूत्रान्तरमवतारयितुं पूर्वसूत्रसंगतिमाह—**जगत्कारणत्वप्रदर्शनेनेति ॥**

**शास्त्रयोनित्वात् ॥ ३ ॥**

### वेदान्तकल्पतरुः ।

यथा च सद्भेद औपाधिकः, एवं सज्ज्ञानानन्दभेदोऽपि; सत्त्वरहितज्ञानानन्दयोः शून्यत्वप्रसङ्गात्, बोधात्मत्वरहितसतश्च भानाभावप्रसङ्गाद्, दृश्यत्वे कल्पितत्वेन सत्त्वायोगात्सद्बोधात्मकसाक्षिणश्च परप्रेमास्पदत्वेनानन्दस्वाभाव्यावगमादिति । तथाच कल्पितभेदसामान्यतदपेक्षव्यक्त्याकारबाधेन सत्यज्ञानानन्दात्मकं ब्रह्म निश्चीयते । **प्रयोगोपि**, सत्यादिवाक्यं, विशिष्टार्थपरत्वरहितं, लक्षणवाक्यत्वात्प्रकृष्टप्रकाशादिवाक्यवदिति । **तथा—उपाधिभेदभिन्नोऽर्थो येनैकः प्रतिपाद्यते । तदपि स्यादखण्डार्थं महत्त्वं कुम्भकं यथा ॥** निरंशस्य हि जीवस्याणुत्वमनन्तत्वं वा स्यात् । तत्र नाणुत्वं; सकलदेहव्यापि ह्लादानुपलम्भप्रसङ्गाद्, विभोश्च न नभोवद् द्रव्यत्वावान्तरजात्यनाधारस्येश्वराद्भेदायोगात् । तस्मादनन्तब्रह्मात्मनोऽस्य परिच्छेद औपाधिकः । श्रूयते च जीवस्य परस्मादौपाधिको भेदः—यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ इति । **नन्वेवं भूत**-ब्रह्मणः कथं जगद्योनित्वमत आह—**एतदिति ॥ इति द्वितीयं जन्माद्यधिकरणम् ॥**

**शास्त्रयोनित्वात् ॥ ३ ॥**

अत्र हेतुमात्रं प्रतिभाति, नैतज्जगद्योनित्वे, साध्याविशेषादित्यसङ्गतिमाशङ्क्यार्थिकप्रतिज्ञया सङ्गतिमाहेत्याह—**सूत्रान्तरमिति । अथ वा वेदनित्यत्वाद् ब्रह्मणो विश्वयोनिता । नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते ॥**

### कल्पतरुपरिमलः ।

सच्चिदानन्दशब्दवाच्यसत्तादिसामान्यलक्ष्यव्यक्तीनां भेदादपर्यायानेकशब्दपर्यवसानास्पदं ब्रह्म न सिध्येदत आह—**यथा चेति । व्यक्त्याकारो** व्यक्तिभेदः । **विशिष्टार्थपरत्वरहितमिति** । पदान्तरार्थसंसृष्टार्थपरत्वरहितमित्यर्थः । एवं तत्पदार्थविषयावान्तरवाक्यानामखण्डार्थत्वं प्रसाध्य तत्त्वमस्यादिमहावाक्यानामपि तत्साधयति—**तथेति** । तत्त्वमस्यादिवाक्यम्, अखण्डार्थम्, उपाधिभेदभिन्नार्थैक्यप्रतिपादकत्वाद्, महाकाशो घटाकाश इति वाक्यवदिति श्लोकसंहितेऽनुमानेहेत्वसिद्धिपरिहाराय जीवेश्वरयोः स्वाभाविकभेदाभावं जीवस्य विभुत्वेन साधयिष्यन् परिमाणान्तरनिरासेन तस्य विभुत्वमुपपादयति—**निरंशस्येति** । आत्मा, द्रव्यत्वावान्तरजातिरहितः, विभुत्वादाकाशवदित्यनुमाने जातौ धर्मिसमानसत्ताकत्वं विशेषणं देयं, तेन तरङ्गचन्द्रानुगतचन्द्रत्वन्यायेन जीवे ईश्वरे च कल्पिताया आत्मत्वजातेरभ्युपगमेऽपि न बाधः । जीवेश्वरभेदस्य स्वाभाविकत्वे तद्गतात्मत्वजातेर्धर्मिसमानसत्ताकत्वावश्यंभावात् तदभावसाधनेन स्वाभाविकभेदनिराससिद्धिः । उक्तानुमानानुग्राह्यां जीवानामीश्वरात् परस्परस्माच्च भेदस्यौपाधिकत्वप्रतिपादिनीं श्रुतिमुदाहरति—**यथा ह्ययमिति । इति द्वितीयं जन्माद्यधिकरणम् ॥**

**शास्त्रयोनित्वात् ॥ ३ ॥**

**साध्याविशेषादिति** । हेतुः सिद्धश्चेत् साध्यमपि सिद्धमेव । "अस्य महतो भूतस्य" इत्यादिश्रुत्या खलु हेतुसिद्धिरेष्टव्या, तया यतो वेत्यादिश्रुत्यन्तरैश्च साध्यस्यापि सिद्धिरविशिष्टा। अथ श्रुतिप्रच्छादनेन साध्यासिद्धिरुच्यते, तर्हि हेतोरप्यसिद्धिः स्यादित्येवं साध्याविशेष इत्यर्थः । **आर्थिकप्रतिज्ञयेति** । आर्थिकी सर्वज्ञत्वप्रतिज्ञा । **ननु** निर्विशेषब्रह्मविचारं प्रतिज्ञातवतः सूत्रकारस्य सविशेषब्रह्मगतसर्वज्ञत्वदृढीकरणं क्वोपयुज्यते ? **पूर्वसूत्रे** विवक्षितस्य जीवो जगत्कारणमिति शङ्काव्यावर्तनस्य स्थिरीकरणे । **ननु** पूर्वसूत्रे ब्रह्मणः सर्वज्ञत्ववत्सर्वशक्तिकत्वमप्यर्थलब्धं तत्किमिति केनचिद्धेतुना न दृढीकृतं ? तदपि ह्युक्तशङ्कानिवर्तनक्षमम्; **सत्यं**—तदपि निःश्वसितश्रुत्युदाहरणेन दृढीकृतमेव; 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद' इत्युपक्रम्या'यं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानी'ति नामरूपात्मकस्य सर्वस्यापि प्रपञ्चस्य निःश्वसितवदप्रयत्नसाध्यब्रह्मकार्यत्वोक्तेः । **अथ वेति । ननु**—वेदानित्यत्वप्रसाधनं वियत्पादे ( व्या. सू.

---

१ अत्रैकं सूत्रं—जन्माद्यस्य यतः ॥

**महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति। यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति, यथा व्याकरणादि पाणिन्या-**

## भामती।

न केवलं जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनित्वादपि बोद्धव्या । शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं समर्थयते—**महत ऋग्वेदादेः शास्त्रस्येति** । चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मत्वे च शिष्याणां शासनात् शास्त्रमृग्वेदादि, अतएव महाविषयत्वान्महत् । न केवलं महाविषयत्वेनास्य महत्त्वम्, अपित्वनेकाङ्गोपाङ्गोपकरणतयापीत्याह—**अनेकविद्यास्थानोपबृंहितस्य** । पुराणन्यायमीमांसादयो दश विद्यास्थानानि तैस्तया तया द्वारोपकृतस्य । तदनेन समस्तशिष्टजनपरिग्रहेणाप्रामाण्यशङ्काप्यपाकृता । पुराणादिप्रणेतारो हि महर्षयः शिष्टास्तैस्तया तया द्वारा वेदान्व्याचक्षाणैस्तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेद इति । न चायमनवबोधको नाप्यस्पष्टबोधको येनाप्रमाणं स्यादित्याह—**प्रदीपवत्सर्वार्थावद्योतिनः** । सर्वमर्थजातं सर्वथावबोधयन् नानवबोधको नाप्यस्पष्टबोधक इत्यर्थः । अत एव **सर्वज्ञकल्पस्य** सर्वज्ञसदृशस्य । सर्वज्ञस्य हि ज्ञानं सर्वविषयं, शास्त्रस्याप्यभिधानं सर्वविषयमिति सादृश्यम् । तदेवमन्वयमुक्त्वा व्यतिरेकमाह—**नहीदृशस्येति** । सर्वज्ञस्य गुणः सर्वविषयता तदन्वितं शास्त्रं, अस्यापि सर्वविषत्वात् । उक्तमर्थं प्रमाणयति—**यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुष-**

## वेदान्तकल्पतरुः।

अस्मिन्पक्षे श्रौतप्रतिज्ञयैव सङ्गतिः । अभ्युच्चयार्थत्वेन हेतुपौनरुक्त्यं परिहरति—**न केवलमिति** । हेत्वन्तरसमर्थनाच्चाधिकरणान्तरत्वम्। 'अस्य महत' इत्यादिवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयत्युत साधयतीति वेदस्य सापेक्षत्वप्रसङ्गाप्रसङ्गाभ्यां संशये पूर्वपक्षमाशङ्क्य निराकरिष्यते। सिद्धान्तोपक्रमभाष्यं व्याचष्टे—**चातुर्वर्ण्येत्यादिना**। पुराणन्यायमीमांसा धर्मशास्त्रं षडङ्गानि **दश विद्यास्थानानि। तया तया द्वारेति**। सृष्टिवाक्यापेक्षितसर्गादिप्रपञ्चनद्वारा पुराणमद्वैतपरं, जातिव्यक्तिलक्षणनिरूपणेन न्यायो वैदिकपदार्थशुद्ध्यर्थः, शेषोपयोगस्तु व्यक्तः । **उक्तमर्थं प्रमाणयतीति । अत्रायं भाष्यविभागः—महत इत्यारभ्य ब्रह्मेत्यन्तेन** निःश्वसितश्रुत्या विभक्तत्वहेतूपकृतया ब्रह्मकार्यं वेद इत्युक्तम् । **नहीदृशस्येत्यारभ्यास्तीत्यन्तेन** व्यतिरेकमुखेन सर्वज्ञत्वप्रतिज्ञा। **यदित्यादिना लोके इत्यन्तेन** व्याप्तिरुक्तेति । विस्तरत्वं शास्त्रविशेषणं व्याप्त्यनुपयोगाद् व्यर्थमित्याशङ्क्य महाविषयत्वाद्वेदस्य ब्रह्मज्ञानेन तुल्यविषयत्वभ्रमनिवृत्तिः प्रयोजनमित्याह—

## कल्पतरुपरिमलः।

अ. २ पा. ३ ) सङ्गतं, न त्वत्रेति—**चेत्, सत्यम्**; पूर्वसूत्रार्थाक्षिप्तसर्वज्ञत्वदृढीकरणार्थतयेह वेदकर्तृत्वं व्यवस्थापनीयमासीत्, तेनार्थाद् ब्रह्मणः सर्वकारणत्वमनुपपन्नं वेदस्य नित्यत्वादिति शङ्कानिराकरणमपि लभ्यत इत्यानुषङ्गिकार्थकथनपरोऽयं श्लोकः । आनुषङ्गिके चार्थे न पृथक् सङ्गत्यपेक्षा । अथ वेत्यस्मिन् पक्ष इति च हेतोरार्थप्रतिज्ञान्वयमनपेक्ष्य श्रौतप्रतिज्ञयैव तदन्वय इत्यभिप्रायं न भवति; येन स्वतन्त्रमिदं पक्षान्तरमित्यानुषङ्गिकत्वं न स्यात्, किं स्वार्थप्रतिज्ञयैवान्वय इति यथाश्रुतभाष्यटीकानुसारेण प्रथमः। आनुषङ्गिकार्थविषयश्रौतप्रतिज्ञयाऽप्यन्वयो भाष्यटीकयोर्विवक्षित इति द्वितीयोऽयं पक्षः। प्रतिज्ञयैवेत्येवकारो भिन्नक्रमः, श्रौतप्रतिज्ञयाऽप्यन्वयोऽस्त्येवेत्यर्थः। **ननु** जगद्योनित्वसिद्धे सार्वज्ञ्ये शास्त्रयोनित्वम् अभ्युच्चयार्थं हेत्वन्तरं चेदधिकरणान्तरत्वं न स्यादित्यत आह—**हेत्वन्तरेति** । सिद्धहेत्वन्तराभिधाने ह्यैकाधिकरण्यम्, इह शास्त्रयोनित्वहेतुः प्रसाधनीय इति तदर्थमधिकरणान्तरमित्यर्थः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति **षडङ्गानि । जातिव्यक्तीति** । उपलक्षणमेतदपेक्षितप्रमाणादिनिरूपणस्यापि । **उक्तमर्थं प्रमाणयतीति** । यद्यदित्यादिभाष्यात् प्राचीनेन सन्दर्भेण हेतुनिर्देशपूर्वकं प्रतिज्ञातं सार्वज्ञ्यरूपमर्थं प्रमाणवन्तं करोतीत्यर्थः । यद्यपि हेतुनिर्देशमारभ्य प्रमाणोपन्यासः प्रवृत्तः; तथापि व्याप्त्यैव हेतुः प्रामाण्यमश्नुत इति यद्यदित्यादिव्याप्तिप्रदर्शकग्रन्थ एव प्रमाणोपन्यासार्थत्वेनावतारितः । **अथवा**—"त्रीनुदाहरणान्तान्वा यद्वोदाहरणादिका"निति मीमांसकमर्यादया यद्यदित्यादिरुदाहरणोपनयनिगमनोपन्यास एव प्रमाणोपन्यासः । **भाष्ये**—ततः प्रागन्वयमुखेन हेतोर्व्यतिरेकमुखेन प्रतिज्ञायाश्च निर्देशस्तस्य स्फुटीकरणार्थः, स त्वनुमानावयवरूप इत्यभिप्रायेणोदाहरणप्रभृतिरेवोक्तार्थे प्रमाणप्रदर्शनपरत्वेनावतारितः । प्रामाण्यवच्छब्दात् तत्करोतीत्यर्थे णिचि णाविष्ठवद्भावाद् 'विन्मतोर्लुगिति' मतुपो लुकि च सति प्रामाण्यवन्तं करोतीत्यर्थे प्रमाणयतीति शब्दः । **यद्वा**—उक्तमर्थं वेदकर्तृत्वं हेतुं व्याप्त्याद्युपन्यासेन प्रमाणं करोतीत्यर्थः । अस्मिन् पक्षे प्रमाणशब्दादेव णिच् । विभक्तत्वं भिन्नत्वं कार्यत्वे हेतुरिति वियदधिकरणे 'यावद्विकारं त्विति' ( व्यास. अ. २ पा. ३ सू. ७ ) सूत्रेण प्रदर्शयिष्यते । **तुल्यविषयत्वेति** । विस्तरार्थमित्यत्र विस्तरशब्दः शब्दप्रपञ्चपरः; 'प्रथने वावशब्दे' इति शब्दातिरिक्तस्यार्थस्य

**देशैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखा-**

## भामती ।

**विशेषात्संभवति स** पुरुषविशेषः **ततोऽपि** शास्त्रात् **अधिकतरविज्ञानः** इति योजना । अद्यत्वेऽप्यसदादिभिर्यत्समीचीनार्थविषयं शास्त्रं विरच्यते तत्रास्माकं वक्तॄणां वाक्याज्ज्ञानमधिकविषयम् । नहि ते तेऽसाधारणधर्मा अनुभूयमाना अपि शक्या वक्तुम् । न खल्विक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्याप्याख्यातुम् । विस्तरार्थमपि वाक्यं न वक्तृज्ञानेन तुल्यविषयमिति कथयितुं विस्तरग्रहणम् । **सोपनयं** निगमनमाह—**किमु वक्तव्यमिति ।** वेदस्य यस्मात् महतो भूतात् योनेः संभवः, तस्य महतो भूतस्य ब्रह्मणो निरतिशयं सर्वज्ञत्वं सर्वशक्तित्वं च किमु वक्तव्यमिति योजना । **अनेकशाखेति** । अत्र चानेकशाखाभेदभिन्नस्येत्यादिः संभव इत्यन्त उपनयः । तस्येत्यादि

## वेदान्तकल्पतरुः ।

**विस्तरार्थमिति** । यस्मादित्यस्य तस्येत्यनेन व्यवहितेन संबन्धमाह—**वेदस्येति । इदमिहानुमानम्,** ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृत्वात्, यो यद्वाक्यप्रमाणकर्ता स तद्विषयादधिकविषयज्ञः, यथा पाणिनिरिति । सर्वावभासकवेद-

## कल्पतरुपरिमलः ।

प्रपञ्चे घञो विधानेन शब्दप्रपञ्चएव 'ऋदोरबि'त्यपा विस्तरशब्दनिष्पत्तेः । विस्तररूपोऽर्थो धर्मो यस्य तद्विस्तरार्थम् । वस्तुमात्रवाचिनोऽर्थशब्दस्येह धर्मरूपे वस्तुनि पर्यवसानम् । एवंच ऋग्वेदादिरूपे शास्त्रेऽर्थवादादिबहुले शब्दमात्रस्यैव प्रपञ्चो नार्थस्येति विस्तरार्थविशेषणेन ज्ञापनाद् वेदस्य ब्रह्मज्ञानस्य च तुल्यविषयत्वभ्रान्तिर्निवर्तिता भवति । अतोऽधिकविषयज्ञानवत्त्वसाध्यस्य न बाध इति भावः । **ब्रह्मेति । ननु**—वेदविषयाधिकविषयज्ञानवत्त्वमात्रं साध्यं चेत्, सर्वावभासकवेदकर्तृत्वेन पक्षधर्मताबलात् सर्वज्ञतासिद्धिरित्येतन्न घटते; वेदविषयतदधिकोभयविषयज्ञानवत्त्वं साध्यं चेद्, वैदिकासदर्थोपाख्यानाद्यर्थविषयभ्रान्तिज्ञानवत्त्वमपि ब्रह्मणः सिध्येत्, किंच हेतूकृतं वेदकर्तृत्वं वेदवक्तृत्वमात्रं चेत्, अर्थानभिज्ञाध्यापके व्यभिचारः; पूर्वानुपूर्वीमनपेक्ष्य तद्वक्तृत्वं चेत्, असिद्धिः; सामान्यव्याप्त्युपन्यासे च वाक्यप्रमाणस्येति प्रमाणपदं व्यर्थम्; अप्रमाणवाक्यकर्तुरपि भ्रान्तस्य प्रतारकस्य च तदर्थतदधिकोभयविषयज्ञानसत्त्वात्, तस्मात्सर्वमिदमयुक्तमिति—**चेत्, उच्यते;** ईश्वरस्य वैदिकासदर्थोपाख्यानाद्यर्थविषयज्ञानवत्त्वेऽपि तस्य ज्ञानस्य प्रमित्युपयोग्याहार्यज्ञानत्वाद् न तेन भ्रान्तिमत्त्वप्रसक्तिः । नह्यभावप्रमित्युपयोग्यधिकरणगोचरप्रतियोगितदवच्छेदकारोपवन्तः पुरुषाः धर्माधर्मप्रमित्युपयोगिकपोताख्यायिकाहंसकाकोपाख्यानादिरचनामूलारोपवन्तो वाल्मीकिकृष्णद्वैपायनादयो बालारोग्यसाधनौषधपानकर्तव्यताप्रमित्युपयोगिबालप्ररोचनार्थतदभिमतफलान्तरोपन्यासमूलारोपवन्तः पित्रादयश्च भ्रान्ता इति व्यपदिश्यन्ते । किंच यत्सत्तानिश्चयरूपं न भवति, न तेनान्यत्रान्यवैशिष्ट्यावगाहिनापि भ्रान्त इति व्यपदिश्यते । नहि शुक्तौ रजतत्ववैशिष्ट्यज्ञानवानिवास्य पुरोवर्तिनि रजतत्ववैशिष्ट्यावगाहिज्ञानमप्रमाणमिति तदीयभ्रान्तिविषयतया पुरोवर्तिनि रजतत्ववैशिष्ट्यं गृह्णन् भ्रान्तिज्ञोऽपि भ्रान्त उच्यते । वेदकर्तृत्वं च वक्त्रन्तराधीनानुपूर्वीमनपेक्ष्य वेदकर्तृत्वमिति नार्थानभिज्ञाध्यापके व्यभिचारः । नचैवमपि घुणाक्षरन्यायेन वेदसमानानुपूर्वीकस्य वाक्यस्यार्थान्तरविवक्षया प्रयोक्तरि व्यभिचारः; सकलवेदवक्तृत्वस्य विवक्षितत्वात् । तावच्च सर्गादौ सर्वान्वेदानध्यापितेष्वीश्वरवत्सार्वज्ञ्यरहितेषु मन्वादिषु व्यभिचारीति तद्वारणेन पूर्वोक्तविशेषणमप्यर्थवत् । उदाहरणवाक्ये प्रमाणपदं यो यस्य वाक्यस्यार्थविवक्षया प्रयोक्तेति विवक्षारूपविशेषणलाभार्थम् । तच्च विशेषणमर्थानभिज्ञाध्यापकेषु निरभिप्रायवाक्यप्रयोक्तृप्रून्मादग्रस्तादिषु च व्यभिचारवारणार्थं । सर्गादौ वेदान्प्रवर्तयत ईश्वरस्यापि तत्तदर्थविवक्षास्तीति सामान्यव्याप्तावुपात्तस्य व्याप्यस्य पक्षानुगतिः । **उक्तं हि ब्रह्माधिकरणवार्तिके** ( जै. अ. ३. पा १ सू. १३–१५ ) 'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥ तथर्ग्वेदादयो वेदाः प्रोक्ता येऽपि पृथक्पृथक् । भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा ॥ तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादनी । विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः ॥' इति । **ननु**—सकलवेदकर्तृत्वहेतूकरणबलात्सकलवेदार्थविषयत्वमीश्वरज्ञानस्य सिध्यतीति तावतैव तस्य सार्वज्ञ्यसिद्धेरधिकविषयत्वं विशेषणान्तरं किमर्थम्, नच—तावता तस्य सार्वज्ञ्यं न सिध्यति, अवेदप्रतिपादिताद्यतनपुरुषपाणिगतवराटकसंख्यादिज्ञानवत्त्वस्य तेनासिद्धेरिति—वाच्यम्; अधिकविषयत्वविशेषणेनापि तदसिद्धेः । टीकायां हीक्षुक्षीरादिमाधुर्यविशेषवद्भेदेनापि यदाहत्य बोधयितुं न शक्यं तादृग्विशेषविषयज्ञानवत्त्वस्याप्यधिकविशेषणेन सिद्धिरिति तत्प्रयोजनमुक्तम् । **युक्तं चैतत्**—यथेक्ष्वादिमाधुर्यं स्वयमनुभूय शब्दं प्रयुञ्जानस्य यादृशं तद्विशेषज्ञानं तादृशं स शब्दो नान्यस्य जनयितुमीष्टे । तथा मानुषादिब्रह्मपर्यन्त आनन्द उत्तरोत्तरमुत्कृष्यते, ब्रह्मानन्दस्तु निरतिशय इति वैदिकशब्दः शतकृत्वः श्रुतोऽपि तमानन्दं साक्षात्कुर्वत ईश्वरस्यानुभवेन सदृशं तन्निरतिशयत्वादिरूपविशेषानुभवमन्यस्य जनयितुं न शक्नोत्येव । एवंविधश्रुत्यबोध्यविशेषविषयत्वेन वेदरचनामूलवेदार्थाधिकवर्णावल्यादिविषयत्वेन चार्थान्तरादिति—**चेत्; उच्यते;** सकल-

**भेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' ( बृह० २।४।१० ) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं**

## भामती ।

सर्वशक्तित्वं चेत्यन्तं निगमनम् । **अप्रयत्नेनैवेति** । ईषत्प्रयत्नेन, यथाऽलवणा यवागूरिति । देवर्षयो हि महापरिश्रमेणापि यत्राशक्तास्तदयमीषत्प्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्तित्वं चोक्तं भवति । **अप्रयत्नेनास्य वेदकर्तृत्वे श्रुतिरुक्ता**—'अस्य महतो भूतस्य' इति । येऽपि तावत् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम् । आनुपूर्वीभेदवन्तो हि वर्णाः पदम् । पदानि चानुपूर्वीभेदवन्ति वाक्यम् । व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः, वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात् । व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या । पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता । तस्माद्वृत्तानुकरणवत् पदाद्यनुकरणम् । यथाहि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणानुकरोति नर्तकी, नतु तदेव व्यनक्ति । एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवकः, नतु तामेवोच्चारयति, आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात् । तस्मान्नित्यानित्यवर्णवादिनां लौकिक-

## वेदान्तकल्पतरुः ।

कर्तृत्वेन पक्षधर्मताबलात्सर्वज्ञत्वसिद्धिरिति । **यद्वा**—अयं घटः, एतदन्यासर्वविरकर्तृकत्वानधिकरणैतदन्यावेदत्वानधिकरणसकर्तृकान्यः, घटत्वाद्, घटान्तरवदिति । ईक्षणादिप्रयत्नापेक्षणादप्रयत्नशब्दः सौकर्यापेक्ष इत्याह—**ईषदिति** । अधुना पूर्वपक्षमाशङ्क्य निराक्रियते । कर्तृमत्त्वेन वेदस्य सापेक्षत्वं वदन् प्रष्टव्यः—सापेक्षता किं पुरुषनिर्वर्त्यत्वमात्रात्, अभिनवानुपूर्वीविरचनाद्वा, मानान्तरोपलब्धार्थविषयवचनरचनाद्वा, कतिपयकालविरचितसर्वसंप्रदायस्य वेदस्यैकपुरुषान्निःसरणाद्वा । **नाद्यः**, तत्रापि संमतत्वादित्याह—**येऽपि तावदिति** । व्यक्तिरभिव्यक्तिः । **द्वितीये** क्रमान्यत्वमात्रमभिनवत्वं, विसदृशक्रमत्वं वा । **आद्यो** भवद्भिरप्यङ्गीकृतः । **चरमस्तु** नास्माभिरपि स्वीकृत इत्याह—**तस्माद्वृत्तेति** ।

## कल्पतरुपरिमलः ।

वेदार्थाभिज्ञत्वमेवेह साध्यं, पक्षधर्मताबलात्सार्वज्ञ्यसिद्ध्युक्तिरपि तन्मात्राभिप्राया । नच—तन्मात्रं साध्यते चेद् व्याप्तिबलादेव तत्सिद्ध्यतीति पक्षधर्मताबलोक्तिरधिकसार्वज्ञ्यसिद्ध्यर्था स्यादिति—वाच्यम्; सामान्यव्याप्तिबलात् स्वप्रयुक्तवाक्यार्थाभिज्ञत्वमात्रस्यैव सिद्धिरिति विशिष्य सकलवेदार्थाभिज्ञत्वसिद्धेः सकलवेदकर्तृत्वहेतुपक्षधर्मतालभ्यत्वात् । वेदार्थाधिकाद्यतनवृत्तान्ताद्यभिज्ञत्वसिद्धिस्तु स्वतः सर्ववेदार्थगोचरमीश्वरज्ञानमन्यदपि सर्वं गोचरयेदिति न्यायसाम्यात् । अधिकविषयत्वस्य साध्यानुप्रवेशनं तु पाणिनीयादिदृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति, किमुत पदार्थविषयत्वमिति कैमुतिकन्यायेन सिषाधयिषितसाध्यसिद्धिदार्ढ्यार्थम्, अनुमानप्रवृत्त्यनन्तरभाविन्यायलभ्यार्थानुवादरूपं वा । एवं सूत्रभाष्यसूचितं सर्वज्ञत्वपर्यवसाय्यनुमानं प्रदर्श्य स्वयं साक्षात्तत्साधकमनुमानं दर्शयति—**अयं घट इति** । एतत्पदद्वयं पक्षीकृतघटपरम् । एतदन्यश्चासावसर्ववित्कर्तृकश्च, तस्य भावस्तत्त्वं तदनधिकरणमित्येकं सकर्तृकस्य विशेषणम् । एतदन्यश्चासाववेदश्च, तस्य भावस्तत्त्वं तदनधिकरणमिति द्वितीयं तस्य विशेषणम् । एवंभूतात्सकर्तृकादन्यत्वस्य साध्यस्य दृष्टान्ते प्रसिद्धिः पक्षादन्यत्वविषया । पक्षीकृतो हि घटः सकर्तृकः एतदन्यावेदत्वानधिकरणं च; तत्रावेदत्वसत्त्वेऽप्येतदन्यत्वविशिष्टावेदत्वाभावात् । एतदन्यासर्ववित्कर्तृकत्वानधिकरणं च; तत्रासर्ववित्कुलालकर्तृकत्वसत्त्वेऽप्येतदन्यत्वविशिष्टासर्ववित्कर्तृकत्वाभावात् । पक्षे तु वेदादन्यत्वमादाय साध्यं सिद्ध्येद्वेदस्य सर्ववित्कर्तृकत्वमन्तर्भाव्य पर्यवस्यति । पक्षस्य यस्मात्सकर्तृकादन्यत्वं वाच्यं तस्यैतदन्यावेदत्वानधिकरणत्वं ह्यवेदत्वरूपविशेष्याभावेनोपपादनीयं, नत्वेतदन्यत्वरूपविशेषणाभावेन; पक्षगतान्योन्याभावप्रतियोगिनि पक्षान्यत्वसत्त्वेन तदभावासंभवात् । एवमेतदन्यासर्ववित्कर्तृकत्वानधिकरणत्वमप्यसर्ववित्कर्तृकरूपस्य विशेष्यस्याभावेनोपपादनीयम्; पूर्ववत्तत्र विशेषणाभावासंभवात् । एवंच यद्यपि द्वितीयविशेषणलभ्ये वेदपक्षनिष्ठान्योन्याभावप्रतियोगिनि प्रथमविशेषणलभ्यमसर्ववित्कर्तृकत्वानाधिकरणत्वम् अकर्तृकत्वेनापि सेद्धुमर्हति; तथापि सकर्तृकविशेष्यविरोधेन तथासिद्धेर्निरोधाद् वेदस्य सर्ववित्कर्तृकत्वसिद्धिः । अत्र सकर्तृकाद्वेदादन्यत्वेन सिद्धसाधनवारणाय **द्वितीयं विशेषणम्** । तेन वेदादेव सकर्तृकादन्यत्वसिद्धावपि वेदस्यासर्ववित्कर्तृकत्वेनार्थान्तरं स्यादिति तद्वारणाय **प्रथमविशेषणम्** । अकर्तृकत्वेनार्थान्तरवारणाय **विशेष्यम्** । विशेषणद्वयेऽप्येतदन्यत्वं प्रतियोगिविशेषणं दृष्टान्ते साध्यप्रसिद्ध्यर्थम्; अन्यथा पक्षीकृतघटस्य असर्ववित्कर्तृकत्वाधिकरणत्वादवेदत्वाधिकरणत्वाच्च ततोऽन्यत्वमादाय दृष्टान्ते साध्यप्रसिद्धिर्न स्यात् । नच वेदान्यत्वमादायैव तत्र साध्यप्रसिद्धिः शङ्कनीया; पक्षे साध्यसिद्धेः प्राग्वेदे असर्ववित्कर्तृकत्वानधिकरणसकर्तृकत्वसंप्रतिपत्त्यभावात् । **सापेक्षत्वं वदन्निति** । एवंच सापेक्षत्वेन कृत्स्नवेदाप्रामा-

**सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति। इति प्रथमवर्णकम्॥ अथवा—यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं**

## भामती।

वैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः। **यथाहुः**—'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'। तत्र सृष्टिप्रलयमनिच्छन्तो जैमनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपरंपराम-विच्छिन्नामनादिमाचक्षते। वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योप-धानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यं; पूर्वपूर्वसर्गानुसारेण तादृशता-दृशानुपूर्वीविरचनात्। **तथाहि**—यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते। नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति। अग्निर्वा क्लेदयति। आपो वा दहन्ति, तद्वत्। यथात्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयानर्थहेतुः, एवं सर्गान्तरेष्वपीति तदनु-रोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूवपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि। तच्चास्माकमपि समानमन्यत्राभिनिवेशात्। नचैकस्य प्रतिभानेऽनाश्वास इति युक्तम्। नहि बहूनामप्यज्ञानां विज्ञानां वाशयदोषवतां प्रतिभाने युक्त आश्वासः। तत्त्वज्ञानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः। सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसंपन्नानामुपपद्यते तत्स्वरूपावधारणं, तत्प्रत्ययेन चार्वाचीनानामपि तत्र संप्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वं, शास्त्रस्य चापौरुषेयत्वं, प्रामाण्यं चेति॥ इति प्रथमवर्णकम्॥ वर्णकान्तरमारभते—**अथवेति**। पूर्वेणाधिकरणेन ब्रह्मस्वरूपलक्षणासंभवशङ्कां व्युदस्य लक्षण-

## वेदान्तकल्पतरुः।

**तृतीय**स्त्वनभ्युपगमनिरस्त इत्याह—**वैयासिकं त्विति**। अनुवर्तमाना आचक्षत इत्यनुषङ्गः। **ननु** विवर्तत्वे वेदान्तानां यादृच्छिकत्वापातान्न क्रमनियमः स्यात्तत्राह—**यथाहीति**। सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो नोपाध्यायवत्क्रमानुरोधो युक्त इति, तत्राह—**यथात्रेति**। 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्र-शत्रुः स्वरतोऽपराधात् (पाणि० शिक्षा०)॥' इति श्रूयते। **चतुर्थं** निराकरोति—**नचैकस्येति**। सर्वदासंप्रदायाविच्छे-दमिच्छद्भिरपि संप्रदायप्रवर्तकेष्वाश्वास आस्थेयः, स वरमेकस्मिन्नेव ब्रह्मण्यवगतसार्वज्ञ्ये कृत इति भावः। **ननु** न वयमी-श्वरं पश्यामः, कथं तत्कर्तृके वेदे विश्वासस्तत्राह—**सर्गादिभुवामिति। इति तृतीयं शास्त्रयोनित्वाधिकरणम्॥**

## कल्पतरुपरिमलः।

प्याद्दूरं निःश्वसितादिश्रुतिमात्रस्योपचरितार्थत्वम्। तथा सति 'वाचा विरूपनित्यये'त्यादिश्रुतिरप्यनुग्रहीष्यत इति पूर्वपक्षपर्य-वसाने सति सर्वज्ञत्वहेत्वन्तराक्षेपतत्समाधानार्थं प्रवृत्तमेवेदमधिकरणं जगत्तत्कारणत्वाक्षेपतत्समाधानपर्यन्तमपि फलतो भवतीत्यथ वा वेदनित्यत्वादित्युपन्यस्तद्वितीयपयपर्यन्तमेव भाष्यटीकयोरपि विवक्षितं सिध्यतीति द्रष्टव्यम्। **स वाग्वज्र इति। स** स्वरवर्णहीनः। **प्रयुक्तो** मन्त्रः वज्रवद्धिंसको **यजमानं हिनस्ति**, तत्र पुराकल्पसिद्धमुदाहरणम्—**यथेन्द्र-शत्रुरिति**। त्वष्टुः पुत्रो विश्वरूपः शक्रेण हतः। स त्वष्टेन्द्रस्य हन्तारं पुत्रं लिप्सुः तदर्थं सोमयागमनुतिष्ठन् भागलि-प्सुमपि इन्द्रं नाजुहाव। इन्द्रः स्वयमेवागत्य प्रसह्य सोमरसं पपौ। त्वष्टा सोमपात्रे अवशिष्टं सोमरसमिन्द्रस्य शातयिता पुत्रो भूयादित्याशंसमानः 'स्वाहेन्द्रशत्रुर्वर्धस्वे'ति मन्त्रेण जुहाव। तदेन्द्रशत्रुरिति शब्दस्तत्पुरुषस्वरं विहाय बहुव्रीहिस्वरेण प्रयुक्तः। तेन स्वरापराधेन तत्रोत्पन्नस्य वृत्रासुरस्य शक्र एव शातयिताभूदिति त्वष्टा हतपुत्र इत्यादितैत्तिरीयश्रुत्यर्थोऽत्र निबद्धः। **अवगतसार्वज्ञ्ये इति। ननु** सार्वज्ञ्यसाधकवेदकर्तृत्वहेतुसिद्धिपरिपन्थिसापेक्षत्वशङ्कानिराकरणप्रस्तावे तदु-पयोगितया सार्वज्ञ्यावगतिः कथं सिद्धवदुपन्यस्यते, अन्योन्याश्रयो हि तदा स्यात्। **नैष दोषः**; सार्वज्ञ्याभ्युपगमहेतु-

---

१ शब्दोपादानभावध्वनिगतविषयद्योतनाशक्तयोऽन्तर्ब्रह्मण्येव स्युरग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः। द्रष्टुश्च ज्ञानशक्तिर्नतु करणगता किंतु दीपप्रभावत् संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते सर्ववित्त्वम्॥ **अयमभिप्रायः**—विमतं ब्रह्म; वेदगतसर्वविषय-प्रकाशनशक्त्याधारः, वेदोपादानत्वात्, दीपगतप्रकाशनशक्त्याधारदीपोपादानाग्निवत्, कर्तुश्चेतनस्य करणशक्तेरभावात् ज्ञानश-क्तिरेवानुमीयते। नचोपादानोपादेययोः सर्वशक्त्या भाव्यमिति नियमः; अग्निकार्यप्रभायां दाहशक्तेरननुगतत्वात्। नच वेदेनावि-षयीकृतं किंचिद्धियत इति सर्वज्ञत्वसिद्धिः। ब्रह्म वेदोपादानं न भवति, वेदोक्ताखिलाभिज्ञत्वात्, ऋष्यादिवदिति प्रयोगस्तु न संभवति; वेदोक्तमात्राभिज्ञत्वेन सोपाधिकत्वात्, वेदः स्वविषयज्ञानाधिकविषयविज्ञानवत्प्रणीतः, वाक्यप्रमाणत्वात्, पाणिन्यादिकृतव्याकरणा-दिवदित्यनुमानेन ब्रह्मणो वेदोक्ताधिकज्ञानवत्त्वस्य सिद्ध्या तत्र साधनाव्यापकत्वात्—**इति विवरणानुयायिनः।**

२ जन्माद्यस्य यतः शास्त्रयोनित्वादिति विशिष्टमेकाधिकरणमित्यभिप्रेत्य अथवेति वर्णकान्तरप्रारम्भः। योगविभागस्तु वेदकार्य-त्वप्रसाधनेन सर्वज्ञत्वदृढीकरणार्थत्वेन व्याख्यनान्तरमपि कर्तुं शक्यत इति सूचनार्थमिति **विवरणानुयायिनः।**

प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं ? यावता पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते—तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते, शास्त्रयोनित्वादिति ॥ ३ ॥ इति तृतीयं शास्त्रयोनित्वाधिकरणम् ॥

## तत्तु समन्वयात् ॥ ४ ॥

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( जै० सू० १।२।१ ) इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यं; अक्रियार्थत्वात् । कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वं, उपासनादिक्रियान्तरविधानार्थत्वं वा। नहि परिनिष्ठितवस्तुप्रतिपादनं संभवति; प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः,तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अतएव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं माभूदिति 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' ( जै० सू० १।२।७ ) इति स्तावकत्वेनार्थवत्त्वमुक्तम् । मन्त्राणां च 'इषे त्वा' इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् । न

### भामती ।

संभव उक्तः । तस्यैव तु लक्षणस्यानेनानुमानत्वाशङ्कामपाकृत्यागमोपदर्शनेन ब्रह्मणि शास्त्रं प्रमाणमुक्तम् । अक्षरार्थस्त्वतिरोहितः ॥ ३ ॥ इति तृतीयं शास्त्रयोनित्वाधिकरणम् ॥

## तत्तु समन्वयात् ॥ ४ ॥

शास्त्रप्रमाणकत्वमुक्तं ब्रह्मणः प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयमित्युत्सूत्रं पूर्वपक्षमारचयति भाष्यकारः—**कथं पुनरिति** । **किमा**क्षेपे । शुद्धबुद्धोदासीनस्वभावतयोपेक्षणीयं ब्रह्म, भूतमभिदधतां वेदान्तानामपुरुषार्थोपदेशिनामप्रयोजनत्वापत्तेः, भूतार्थत्वेन च प्रत्यक्षादिभिः समानविषयतया लौकिकवाक्यवत्तदर्थानुवादकत्वेनाप्रामाण्यप्रसङ्गात् । न खलु लौकिकानि वाक्यानि प्रमाणान्तरविषयमर्थमवबोधयन्ति स्वतःप्रमाणम्, एवं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषां व्याहन्येत । नच तैरप्रमाणैर्भवितुं युक्तम्, नचाप्रयोजनैः; स्वाध्यायाध्ययनविध्यापादितप्रयोजनवत्त्वनियमात् । तस्मात्तत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वम् । यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते, ततः संनिहितोपासनादिक्रियापरत्वं वेदान्तानाम् । एवंहि प्रत्यक्षाद्यनधिगतगोचरत्वेनानपेक्षतया प्रामाण्यं च प्रयोजनवत्त्वं च सिध्यतीति तात्पर्यार्थः । पारमर्षसूत्रोपन्यासस्तु पूर्वपक्षदार्ढ्याय । **आनर्थक्यं** चाप्रयोजनवत्त्वं, **सापेक्षतया प्रमानुत्पादकत्वं** चानुवादकत्वादिति । **अतः** इत्यादि **वा**ऽन्तं ग्रहणकवाक्यम् । अस्य विभागभाष्यं **नहि** इत्यादि **उपपन्ना वा** इत्यन्तम् । **स्यादेतत्**—अक्रियार्थत्वेऽपि ब्रह्मस्वरूपविधिपरा वेदान्ता भविष्यन्ति, तथाच 'विधिना त्वेकवाक्यत्वात्—' इति राद्धान्तसूत्रमनुग्रहीष्यते । न खल्वप्रवृत्तप्रवर्तनमेव

### वेदान्तकल्पतरुः ।

## तत्तु समन्वयात् ॥ ४ ॥

वेदान्ता ब्रह्मणि प्रमाणं न वेति सिद्धवस्तुबोधात्फलभावाभावाभ्यां सिद्धं रूपादिहीनं वस्तु बोधयतो वाक्यस्य मानान्तरसापेक्षत्वानपेक्षत्वाभ्यां वा संशये पूर्वाधिकरणद्वितीयवर्णकेनाक्षेपिकीं सङ्गतिमुक्त्वा पूर्वपक्षभाष्यं व्याचष्टे—**किमाक्षेप इत्यादिना** । कथमिति थमुप्रत्ययान्तः किंशब्द आक्षेपे । जैमिनिसूत्रोपन्यासो न व्युत्थितसिद्धान्तिविश्रम्भायापितु दृढपूर्वपक्षनिरासार्थं सिद्धान्तावश्यारम्भायेत्याह—**पारमर्षेति** । अभिधेयाभावोऽनुभवविरोधान्न युक्तो वक्तुमित्याह—**आनर्थक्यं चेति** । भाष्ये पौनरुक्त्यमाशङ्क्य संग्रहविवरणत्वमाह—**अत इत्यादीति** । **वाऽन्तमिति** । उपासनादिक्रियान्तरविधानार्थत्वं वेत्येतदन्तमित्यर्थः । **ननु** किमिति वेदान्तानामर्थवादवद्विधिपदैकवाक्यता ? मन्त्रवत्पार्थगर्थ्यमस्त्वित्याशङ्क्य तर्हि तद्वद्विधिभिर्वाक्यैकवाक्यता स्यादित्याह भाष्यकारो—**मन्त्राणां चेति** । इषे त्वेत्यत्र छिनद्मी-

### कल्पतरुपरिमलः ।

महिमविशेषावगतेर्विवक्षितत्वात् । **ननु** तथाभूतमहिमविशेषावगतिर्वा कुतः ? नहि वयमीश्वरं पश्याम इत्याशङ्कोत्तरत्वेनोत्तरग्रन्थमवतारयति—**नन्विति** ॥ **इति तृतीयं शास्त्रयोनित्वाधिकरणम्** ॥

## तत्तु समन्वयात् ॥ ४ ॥

**जैमिनीति** । जैमिनिना हि 'आम्नायस्य क्रियार्थत्वात्' ( जै. अ. १ पा. २ सू. १ )इत्यादिसूत्रेण **कृत्स्नस्याप्याम्ना-**

१ अत्रैकं सूत्रं—शास्त्रयोनित्वात् ॥ ३ ॥

**क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा। नच परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति; क्रियाविषयत्वाद्विधेः। तस्मात्कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रिया-विधिशेषत्वं वेदान्तानाम्। अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतो-**

## भामती।

विधिः; उत्पत्तिविधेरज्ञातज्ञापनार्थत्वात्, वेदान्तानां चाज्ञातं ब्रह्म ज्ञापयतां तथाभावादित्यत आह—**नच परिनिष्ठित इति**। अनागतोत्पाद्यभावविषय एव हि सर्वो विधिरुपेयः; अधिकारविनियोगप्रयोगोत्पत्तिरूपाणां परस्पराविना-भावात् सिद्धे च तेषामसंभवात्। तद्वाक्यानां त्वैदंपर्यं भिद्यते। यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिभ्यो-ऽधिकारविनियोगप्रयोगाणां प्रतिलम्भात् 'अग्निहोत्रं जुहोति' इत्युत्पत्तिमात्रपरं वाक्यम्, नत्वत्र विनियोगादयो न सन्ति; सन्तोऽप्यन्यतो लब्धत्वात्केवलमविवक्षिताः। तस्मात् भावनाविषयो विधिर्न सिद्धे वस्तुनि भवितुमर्हतीति। उपसंहरति—**तस्मादिति**। अत्रारुचिकारणमुक्त्वा पक्षान्तरमुपसंक्रामति—**अथेति**। एवंच सत्युक्तरूपे ब्रह्मणि शब्दस्यातात्पर्यात् प्रमाणान्तरेण यादृशमस्य रूपं व्यवस्थाप्यते न तच्छब्देन विरुध्यते; तस्योपासनापरत्वात्, समारो-

## वेदान्तकल्पतरुः।

त्यध्याहराच्छाखाच्छेदः क्रिया भाति, क्वचिच्चाग्निर्मूर्धेत्यादौ तत्साधनं देवतादीति। मन्त्राश्च श्रुत्यादिभिः क्रतौ विनियुक्ताः। ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तः क्रतावुपकुर्वन्त्युत दृष्टेनैवार्थप्रकाशनेनेति संदेहः। तत्र न तावद् दृष्टार्थत्वमेव मन्त्राणां शक्यं वक्तुम्; उपायान्तरेणापि मन्त्रार्थस्य स्वाध्यायकालावगतस्य चिन्तादिना प्रयोगसमये स्मृतिसंभवात्तावन्मात्रार्थत्वे मन्त्राणां नित्यवदाम्नानवैयर्थ्यात्। अथ तु मन्त्रैरेवार्थप्रत्यायननियमाददृष्टं कल्प्येत, तदुच्चारणादेव कल्प्यताम्; तस्य पुंव्या-पारगोचरत्वात्स्वव्यापारे च पुरुषस्य नियोगात्तत्र च फलाकाङ्क्षणादिति प्राप्य प्रमाणलक्षणे राद्धान्तितम्—'यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पना। लभ्यतेऽर्थस्मृतिर्दृष्टा मन्त्रोच्चारणतस्त्विह॥ अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलोदयः। इति दृष्टार्थसंपत्तौ नादृष्टमिह कल्प्यते॥' यस्तु मन्त्रैरेव स्मर्तव्यमिति नियमस्तस्य न किंचिद्दृष्टमस्तीत्यदृष्टं कल्प्यते। तस्माद्दृष्टा-दृष्टार्था मन्त्रा इति। **उत्पत्तिविधेरिति**। अधिकारविधितः प्रवृत्तिलाभादुत्पत्तिविधिरज्ञातकर्मस्वरूपबोधपर इत्यर्थः। **अनागतेति**। **भावो** भावना, तद्विषयः सर्वो विधिः। यतः स उत्पाद्यः, उत्पाद्यत्वे हेतुरनागतत्वम्। **अधिकारः** फलसंबन्धबोधनम्। **विनियोगो**ऽत्र क्रियायाः फलशेषत्वज्ञापनम्। **प्रयोगः** अनुष्ठापनम्। कर्मस्वरूपज्ञान**मुत्पत्तिः**। फलसंबन्धः क्रियाया न शेषत्वमन्तरेण, तच्च नानुष्ठानं विना, अनुष्ठानं च नाज्ञाते इत्यविनाभावः। सिद्धं चेत्पुंव्यापारान-पेक्षं फलमारभेत, सदारभेतेति नाधिकारादिसंभव इत्यर्थः। सर्वेषामविनाभावे सर्वत्र चातूरूप्यमस्तीति कथमवान्तरभेद-स्तत्राह—**तद्वाक्यानां त्विति**। उदाहरति—**यथेति**। सर्वविधिषूत्पत्त्यादयः प्रतीयन्ते, अग्निहोत्रं जुहुयादित्यत्राप्यग्नि-होत्रेणेष्टं भावयेदित्यर्थः, नत्वग्निहोत्रस्य भाव्यत्वम्; अफलत्वात्। नचाग्निहोत्रस्वरूपसत्ता बोध्या; अभूद्भवति भविष्यतीत्या-पत्तौ विध्युत्खातापातात्। तस्मादधिकारविधितः प्राप्तविनियोगाद्यनुवादेनोत्पत्तिविधिः स्वरूपपरो भवति, ब्रह्मणि तु भाव-नाभावादनुवाद्यस्यापि विनियोगादेरभावान्नोत्पत्तिविधिरित्याह—**तस्मादिति**। विधिपरत्वे वेदान्तानां न केवलमनुवाद-त्वाभावः, अपितु विपरीतार्थत्वं च न स्यात्, पक्षान्तरे तु स्यादित्याह—**एवंचेति**। **यादृशमिति**। जीवाद्भिन्नमित्यर्थः।

## कल्पतरुपरिमलः।

**यस्य** प्रयोजनपर्यवसानाय **क्रियार्थत्वावश्यं**भावादक्रियार्थाना**मानर्थ**क्यं निष्प्रयोजनत्वं, तस्मादक्रियार्थमर्थवादजा-तमनित्यमप्रमाणमुच्यत इति पूर्वपक्षं कृत्वा 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' ( जै. अ.१पा.२ सू. २ )इति सूत्रेण विधिवाक्येनैकवाक्यत्वादर्थवादाः विधीनां स्तुतिरूपेणार्थेन सप्रयोजनाः स्युरिति अक्रियार्थानामानर्थक्यं पूर्वपक्ष्यु-क्तमङ्गीकृत्यैवार्थवादानां विध्येकवाक्यतया प्रामाण्यमुपपादितम्। इदं तु जैमिन्यभिमतम् अक्रियार्थानामानर्थक्यं न्याय-विरुद्धमप्रामाणिकमिति सिद्धान्ते दूष्यमेव। अतो दूष्यसूत्रोपन्यासः सिद्धान्तिनस्तस्मिन्नर्थे विश्वासार्हो न भवतीत्यर्थः। **ननू**पायान्तरेणापि प्रयोगसमये स्मृतिर्भवतु, मन्त्रेणापि कदाचित् स्मृतिरुपपद्यत इति तदर्थं मन्त्राम्नानं स्यादित्याश-ङ्क्याह—**तावन्मात्रार्थत्वे इति**। **भाव इति**। भावयतेर्घञि 'णेरनिटी'ति णिलोपे भावशब्दो भावनावाची स्याद् भवते-र्घञि तु भावशब्दो भवनवाची स्यात्। **फलसंबधबोधनमिति**। फलपुरुषसंबन्धबोधनमित्यर्थः। अन्यगामिनि फले प्रेरणायोगात् प्रवर्तकस्वभावो विधिः फलस्य पुरुषसंबन्धं गमयतीत्येवमधिकारो विध्यधीनः। **विनियोगोऽत्रेति**। क्रियायाः फलशेषत्वस्येवाङ्गानां प्रधानशेषत्वस्यापि बोधनं विनियोग एव, स्थालीपुलाकन्यायेन त्वेकोपादानम्। **फलसं-बन्ध इति**। फलस्य कर्तृपुरुषगामित्वं तेनानुष्ठेयायाः क्रियायाः फलकरणत्वरूपं विनियोगमन्तरेण न भवतीत्यर्थः। उत्पत्तिविधिनाधिकारादिप्रतीतिमुदाहरति—**अग्निहोत्रमिति**। उत्पत्तिविधेः अग्निहोत्रस्वरूपज्ञानमात्रपरत्वे किमग्निहोत्रं कर्तव्यमिति तदर्थः, उताग्निहोत्रमभूदित्यादिः। **नाद्यः**, क्लेशात्मके कर्मणि स्वतः प्रेरणानुपपत्तेः। **न द्वितीयः**, विधिविरो-धात्। कालत्रयानवमृष्टे विधिप्रवृत्तेरित्यर्थः। **तस्मादधिकारविधित इति**। 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यधिकार-विधिरग्निहोत्रनामकेन होमेन स्वर्गं भावयेदित्येवमर्थकः। फलस्यान्यगामित्वे तदर्थं प्रेरणानुपपत्तेस्तस्य कर्तृसंबन्धं

**पासनादिकर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते—तत्तु समन्वयात् ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम्, समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि । 'सदेव[2] सोम्येदमग्र आसीत्' । 'एकमेवाद्वितीयम्' (छा० ६।२।१)**

## भामती ।

पेण चोपासनाया उपपत्तेरिति । प्रकृतमुपसंहरति—**तस्मान्नेति** । सूत्रेण सिद्धान्तयति—**एवं प्राप्त उच्यते—तत्तु समन्वयात्** ॥ तदेतत् व्याचष्टे—**तुशब्द इति** । तदित्युत्तरपक्षप्रतिज्ञां विभजते—**तद्ब्रह्मेति** । पूर्वपक्षी कर्कशाशयः पृच्छति—**कथम्** । कुतःप्रकारादित्यर्थः । सिद्धान्ती स्वपक्षे हेतुं प्रकारभेदमाह—**समन्वयात्** । सम्यगन्वयः समन्वयस्तस्मात् । एतदेव विभजते—**सर्वेषु हि वेदान्तेष्विति** । वेदान्तानामैकान्तिकीं ब्रह्मपरतामाचिख्यासुर्बहूनि वाक्यान्युदाहरति—**सदेवेति** । 'यतो वा इमानि भूतानि' इति तु वाक्यं पूर्वमुदाहृतं जगदुत्पत्तिस्थिति-

## वेदान्तकल्पतरुः ।

जीवे ब्रह्मदृष्ट्यारोपान्न भेदग्राहिप्रमाणविरोध इत्यर्थः । **तदिति** । सूत्रपदोक्तां सिद्धान्तपक्षप्रतिज्ञामित्यर्थः । **सम्यगन्वय इति** । तात्पर्यं सम्यक्त्वम्[1] । **ननु** शास्त्रयोनित्वद्वितीयवर्णकाक्षेपसमाधानरूपमिदमधिकरणं, तत्र च 'यतो वेति' वाक्यमुदाहृतमिह किमिति तदुपेक्षितमत आह—**यतो वेति** । तद्ब्रह्म सर्वज्ञमित्यादिभाष्ये यत इत्यादिवाक्यप्रमेयकीर्त-

## कल्पतरुपरिमलः ।

बोधयन्नेव तेनानुष्ठातुं शक्याया होमक्रियायाः फलशेषत्वरूपं विनियोगमपि बोधयतीत्येवमधिकारविधिसिद्धविनियोगांशे अनुवादरूपोऽयमुत्पत्तिविधिः कर्मस्वरूपज्ञापनमात्रप्रयोजनो भवतीत्यर्थः । **अपित्विति** । प्रत्यक्षविरुद्धार्थत्वरूपविपरीता-

---

१ अन्वये सम्यक्त्वं चेतरवैलक्षण्येनार्थप्रतिपादकत्वम्, इतरत्र हि गामानयेत्यादिशब्दाः क्रियाकारकसंसर्गं प्रतिपादयन्ति । उद्भिदायजेतेत्यत्रोद्भिद्यागयोरेकार्थत्वेऽपि नियोगाकाङ्क्षा विद्यते । नीलमुत्पलमित्यादौ तु गुणगुणिनोर्भेदाभेदौ प्रतिपाद्यौ । एकार्थप्रतिपादकेष्वन्येषु शब्देषु लिङ्गसंख्ये अवर्जनीये । वेदान्तास्तु न तथा संसर्गं साकाङ्क्षार्थं भेदाभेदौ लिङ्गसंख्याविशिष्टं वा प्रतिपादयन्ति, किंतु अभिधावृत्त्या लक्षणया वाऽखण्डैकरसमेव जगत्कारणसामान्यानुवादेन प्रतिपादयन्तीति—**विवरणप्रमेयसंग्रहे । ब्रह्मविद्याभरणकारास्तु**—तत्प्रतीत्युद्देश्यकत्वं सम्यक्त्वं, तथाच तत्प्रतीत्युद्देशेन प्रतिपादकत्वादिति वाक्यार्थ—**इति वर्णयन्ति** । तत्र तात्पर्यं उपक्रमोपसंहारादिलिङ्गैरद्वितीये परमात्मन्येवावगम्यते ॥

२ "सदेव सोम्येदमग्र आसी" दिति प्रतीकोद्धृतायाः सद्विद्याया अद्वितीये ब्रह्मणि तात्पर्यं निर्धारयितुं न शक्यते; "उत तमादेशमप्राक्ष्यः" "सन्मूला सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी"त्युपक्रमपरामर्शोपसंहाराणां सविशेषब्रह्मपरत्वात् । नहि जगन्नियमनानुकूलव्यापाररूपशासनकर्तृत्वं निर्विशेषे ब्रह्मणि संभवति । नवा प्रजाशब्दोदितानां जीवानां निर्विशेषब्रह्मणश्च मूलमूलिभावः संभवति । नापि वा तत्सत्यं इति प्रपञ्चसत्यत्वावधारणं संबोध्यसंबोधकभावेन श्वेतकेतूद्दालकयोर्भेदप्रतिपादनावगतजीवनानात्वं च निर्विशेषात्मवादे उपपद्यते इति 'तत्त्वमसि' इति वाक्यं 'ब्रह्मणे त्वा महसे आत्मानं युञ्जीत' इति श्रुत्यनुसारेण 'तस्मै त्वं' इति वा, 'यतो वे'ति श्रुत्यनुसारेण 'तस्मात्त्वं' इति वा , 'स कारणं करणाधिपाधिपः' इति श्रुत्यनुसारेण 'तस्य त्वमि'ति वा, 'सन्मूलाः सौम्येति'श्रुत्यनुसारेण 'तस्मिंस्त्वं' इति वा, 'यस्यात्मा शरीरमि'ति श्रुतिसिद्धशरीरशरीरिभावानुसारेण मनुष्योऽहमितिवत्सामानाधिकरण्येन तत् त्वं असीति वा व्याख्येयम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा यद्यपि कार्यस्वरूपविशेषाकारमादाय न शक्यते वक्तुं, ज्ञातेऽपि ब्रह्मणि विशेषाकारेण कार्यविज्ञानाभावात्; तथापि तत्तदवस्थाविशेषविशिष्टं कारणस्वरूपमेव कार्यमित्यारम्भाधिकरणे निरूपयिष्यमाणं कार्यकारणानन्यत्वं स्वीकृत्य ब्रह्मणि विदिते उपादानतया कार्यानुप्रविष्टो ब्रह्मा कारो विदितो भवतीति सद्ब्रह्मण उपादानतापरं तद्वाक्यमिति मन्तव्यम् । विवर्तवादमाश्रित्य तु ब्रह्मण उपादानत्वं न युक्तम्; 'यथा सौम्यैकेन मृत्पिण्डेने'ति दृष्टान्ते परिणाम्युपादानग्रहणे वा तस्य परिणाम्युपादानत्वस्यैवावगमात् । एवंच सप्रपञ्चमेव ब्रह्म वेदान्तशास्त्रविषय इति कथं सद्विद्याया अद्वितीयपरमात्ममात्रपरत्वमिति—**चेत्, अत्र ब्रह्मविद्याभरणकाराः**—सद्विद्याया अद्वितीयपरमात्मन्येव तात्पर्यं; "उत तमादेश" इत्यत्र आदेशशब्दस्योपदेशपरत्वस्यैव युक्तत्वेनोपदेशमात्रगम्यत्वरूपोपदेशत्वस्य निर्विशेष एवोपपत्तेः । 'आचार्यवान् पुरुषो वेद' इत्युपसंहारोप्यत एवोपपद्यते । 'सदेव सोम्येदमग्र आसीत्' इत्यत्रापि निष्प्रपञ्चात्मत्वमेवोपक्षिप्यते । अत्र हि सच्छब्दो न सत्ताश्रयतया इदंपदार्थे पर्यवसितः, किंतु ब्रह्मणि । 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति स्मृतेः । सन्मूलाः सौम्येति सच्छब्देन ब्रह्मण एव परामर्शाच्च । नच—अयं सच्छब्दः सविशेषपर इति—शङ्क्यम्; सदेवेदमिति वाक्योपक्रमे एकमेवाद्वितीयमिति विशेषणेन निर्विशेषत्वावगमात् । 'आत्मा वा इदमग्र आसी'दिति श्रुत्यन्तरे सत्पदस्थाने आत्मपदमाम्नायमानमप्यत एवोपपद्यते । एवंच सदेवेत्यनेनैवकारार्थप्रधानेन 'नेति नेति' श्रुतिसिद्धार्थकथनपूर्वकं प्रलयनिरूपणं प्रलयकालस्य तदाधेयसूक्ष्मप्रपञ्चस्य च वस्तुसत्तां निराकर्तुं, प्रलयोपक्षेपश्च सृष्ट्युपक्षेपवत्प्रपञ्चः कदाचित्सूक्ष्मावस्थः कदाचित्स्थूलावस्थ इत्यनेक-

## भामती ।

**नाशकारणमिति चेह स्मारितमिति न पठितम् । येन हि वाक्यमुपक्रम्यते येन चोपसंह्रियते तदेव वाक्यार्थ इति शाब्दाः । यथोपांशुयाजवाक्येऽनूचोः पुरोडाशयोर्जामितादोषसंकीर्तनपूर्वकोपांशुयाजविधाने तत्प्रतिसमाधानोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरता एकवाक्यताबलादाश्रिता, एवमत्रापि 'सदेव सोम्येदम्' इति ब्रह्मोपक्रमात् 'तत्त्वमसि'**

## वेदान्तकल्पतरुः ।

नात्तत्प्रमाणं बुद्धिस्थं भवतीति नोदाहृतमित्यर्थः । वेदान्तानां ब्रह्मात्मैकत्वे उपक्रमोपसंहारैक्यं तात्पर्यलिङ्गं सदृष्टान्तमाह— **येनेति । भेदलक्षणे चिन्तितम्**—"पौर्णमासीवदुपांशुयाजः स्यात्" । "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वायेति" श्रूयते । तत्रोपांशुयाजमन्तरा यजतीति किं समुदायानुवादः, उतापूर्वयागविधिरिति विशये यथाग्नेयादियागानां 'य एवं विद्वान्पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजत' इति समुदायानुवादौ । एवमिदमपि विष्ण्वादिवाक्यविहितयागानां समुदायानुवादः । तत्र हि विष्ण्वाद्या देवताः श्रूयन्ते । "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्य"मिति ध्रौवाज्यद्रव्यसिद्धिः । तव्यप्रत्ययाश्च विधायकाः श्रूयन्ते । नत्वन्तरावाक्येऽस्ति द्रव्यदैवतं रूपम् । यजतीति च वर्तमानापदेशः । तदुक्तम्—'यागान्विष्ण्वादिसंयुक्तान्विहितान्रूपवत्तया । अरूपमन्तरावाक्यमगत्यैवावलम्बते ॥' इति पूर्वपक्षः । एतदधिकरणसिद्धान्तमाह—**अनूचोरिति ।** निरन्तरयोराग्नेयाग्नीषोमीययोः पुरोडाशयोः करणे

## कल्पतरुपरिमलः ।

र्थत्वदोषोऽपि परिहृतो भवतीत्यर्थः । **नत्वन्तरावाक्य इति ।** यद्यपि यागविधौ स्थिते ध्रौवाज्यं द्रव्यं लभ्यते; तथापि देवताया अलाभाद् वर्तमानापदेशाच्च यागविध्यसंभवे द्रव्यलाभो दूरापास्त इति भावः । **आलस्यमिति । दशमाध्याये "अजामिकरणार्थत्वाच्चेति"** ( जै. अ. १० पा. ८ सू. ९३ ) **सूत्रभाष्ये जामिता—** सादृश्यमिति **व्याख्यातम् । तत्रैव नयविवेके—जामिता** सादृश्यमेकरूपा हि द्विःक्रियेति तेन कृताकृताननुसंधिदोष इति सादृश्यस्य दोषपर्यवसायित**्वमुपपादितम् ।** इह त्वेकरूपायाः क्रियायाः पुनः पुनरनुष्ठाने तन्द्रा स्यादिति भाष्योक्तस्यैव सादृश्यस्य दोषत्वपर्यवसानमात्रे प्रकारान्तरेणोक्तमिति न भाष्यविरोधः । **न्यायसुधायामप्येवमेवोक्तम्—** 'सादृश्यस्य नैरन्तर्यानुष्ठाने सत्यालस्यापादकत्वेन दोषत्वा'दिति । किंतु तत्र सौन्दर्यवाची जामिशब्दः, तस्य सादृश्ये लक्षणे-

---

विकारात्मको वाचारम्भणश्रुतिप्रतिपादितन्यायेनानृत इति ज्ञापनार्थः । **यदाहुः**—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा । उपायः सोऽवताराय नास्ति भेदः कथंचन' इति ॥ **एतेन**—वाचारम्भणश्रुतिरपि विवर्ताभिप्राया—**इति व्याख्याता । अतएव हि—** "वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तस्य कुतो हि तत्त्वम् ॥ मही घटत्वं घटतः कपालं कापालिकाचूर्णरजस्ततोऽणुः । जनैः स्वकर्मस्तिमितात्मबोधैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्' । इत्यादिविष्णुपुराणवचनान्युपपद्यन्ते । मृदादिदृष्टान्तास्तु उपादानस्वरूपे ज्ञाते तदात्मनोपादेयं ज्ञातं भवतीत्येवमभिप्रायाः नतु परिमाणाभिप्रायाः । एवंचोपक्रमे तावदुपदेशैकगम्यं निष्प्रपञ्चात्मतत्त्वं प्रतिपादितमिति सिद्धम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अन्यथानुपपत्तेः । मध्येऽपि जीवपरमात्मनोरभेद एव परामृश्यते । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति । सगुणवाक्यानि त्वध्यारोपापवादाभ्यां निष्प्रपञ्चात्मपराणि व्याख्येयानि । **एतेन—** 'सन्मूला' इति वचनमपि—**व्याख्यातम्;** तस्य व्यावहारिकभेदेनोपपत्तेः । 'ऐतदात्म्यमिदं सर्व'मिति वाक्येऽपि तत्सत्यमिति प्रपञ्चब्रह्मणोर्बाधायामेव सामानाधिकरण्यमित्युपक्रमोपसंहारादिभिः सद्विद्याया अद्वितीयपरमात्मपरत्वमेवाङ्गीकरणीयमिति 'तत्त्वमसी'ति वाक्यं जीवब्रह्माभेदपरतयैव व्याख्येयम्; तदित्यस्य 'सुपांसुलु'गित्यादिना चतुर्थ्यन्तत्वाद्याश्रयणे प्रमाणाभावात् । शरीरशरीरिभावेन सामानाधिकरण्यव्याख्यानमपि न युक्तम्; शरीरवाचकानां पदानां शरीरिपर्यन्तत्वासिद्धेः । अस्तु वा शरीरवाचकानां शरीरिपर्यन्तत्वं, एवमपि तत्त्वमसीत्यत्र न तदभिप्रायं सामानाधिकरण्यम् । अयं हि नियमः—शरीरवाचकानां शरीरिविशेषणत्वे, नतु विशेष्यत्वेऽपि; शरीरं नष्टमिति वाक्येऽपि शरीरिणो ग्रहणापत्तेरित्युभयवादिसंमतम् । तत्त्वमसीत्यत्र च शरीरवाचकं त्वंपदं न विशेषणम्; आख्यातसामानाधिकरण्यासंभवेनासीति मध्यमपुरुषैकवचनासाधुत्वप्रसङ्गात्; किंतु विशेष्यमिति न शरीरशरीरिभावेन सामानाधिकरण्यसंभवः । एवंच जीवब्रह्माभेदपरत्वमेवोक्तवाक्यस्याङ्गीकरणीयम् । शुद्धचैतन्यपरत्वेऽपि त्वंपदस्य मध्यमपुरुषप्रयोगोपपत्तिस्तु वाच्यार्थान्वयमादायोपपादनीयेति सर्वमनवद्यम् ॥ मोक्षधर्मे श्वेतकेतुसुवर्चलोपाख्यानेनाद्वैतपरतया सद्विद्योपबृंहणमप्यत एवोपपद्यते ॥ **इति शम् ॥**

## भामती ।

इति च जीवस्य ब्रह्मात्मनोपसंहारात् तत्परतैव वाक्यस्य । एवं वाक्यान्तराणामपि पौर्वापर्यालोचनया ब्रह्मपरत्वमवगन्तव्यम् । नच तत्परत्वस्य दृष्टस्य सति संभवेऽन्यपरताऽदृष्टा युक्ता कल्पयितुं; अतिप्रसङ्गात् । न केवलं कर्तृपरता

## वेदान्तकल्पतरुः ।

आलस्यं स्यादिति दोषं संकीर्त्य तदपनयार्थमुपांशुयाजमाज्यद्रव्यकं विधायानन्तरमजामित्वायेति तद्विधानलब्धं जामितादोषसमाधानमुपसंहरति । अतः सार्थवादोपक्रमोपसंहारैकरूप्यादेकमिदं वाक्यम् । एकवाक्यता चोपांशुयाजविधौ लभ्यते नेतरत्रानेकयागविधाविति । **ननु** तव्यविहितयागानां समुदायानुवादोऽयमिति, तत्राह—**अपूर्वेति । तथाहि—** यष्टव्य इति कर्मप्राधान्यं विष्ण्वादिवाक्ये प्रतीयते, यागस्तूपसर्जनम् । तत्र कर्मत्वमप्रधानीकृत्य यागप्राधान्यं लक्षणीयं, कर्मतया च देवतात्वं ततो गुरुतरा कल्पना । अन्तरावाक्ये तु श्रुतं यागप्राधान्यं विधिश्च पञ्चमलकाररूपः । **यत्तु** रूपाभाव इति **तन्न;** ध्रौवाज्यलाभात् । आग्नेयादीन्यागान्क्रमेणाम्नाय मन्त्रकाण्डे तत्क्रमेणैव याज्यानुवाक्या आम्नाताः, तत्रोपांशुयाजस्थाने वैष्णवप्राजापत्याग्नीषोमीयास्तिस्र ऋचः पठ्यन्ते; ताभिस्तुल्यार्थत्वेन विकल्प्यमानाभिर्विष्ण्वादिदैवतानां समर्पितत्वात् । तस्मादपूर्व उपांशुयाजो विधेयः । विष्ण्वादिवाक्यानि त्वर्थवादाः । इत्थं महीयानुपांशुयाजो यदस्मिन्विष्ण्वादयो यष्टव्या इति । **एवं वाक्यान्तराणामिति । ऐतरेयके—**"आत्मा वा इदमेक एवे"त्युपक्रम्य "स एतमेव पुरुषं ब्रह्म ततमपश्य"दिति "तमेव ब्रह्मात्मान"मभिधाय समाप्तौ "प्रज्ञानं ब्रह्मे"त्युपसंहृतम् । **वाजसनेयकेऽपि—**"अहं ब्रह्मास्मीत्युपक्रम्य""अयमात्मा ब्रह्मे"त्युपसंहृतम् । **आथर्वणे—**"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति" सर्वात्मकं ब्रह्मोपक्रम्य "ब्रह्मैवेदममृतं पुरस्तादिति" तदेव निगमितम् ॥ वेदान्ता यदि सिद्धवस्तुपरास्तर्हि मानान्तरसा-

## कल्पतरुपरिमलः ।

त्युक्तमिति विशेषः । **उपांशुयाजमाज्यद्रव्यकं विधायेति ।** अत्रान्तरावाक्यविष्ण्वादिवाक्यसाधारण्येनोपांशुगुणकयागविधानमात्रं विवक्षितं, नत्वन्तरावाक्येनोपांशुयाजविधानम्; अन्तरावाक्यमेव यागविधायकं न विष्ण्वादिवाक्यत्रयमित्यस्यार्थस्य प्रसाधयिष्यमाणैकवाक्यतासिद्ध्यधीनत्वात्ततः प्राक् अन्तरावाक्यं विष्ण्वादिवाक्यत्रयं वा यत्किंचिद्ध्रौवाज्यप्राप्तिमदुपांशुधर्मकयागविधायकमस्तीत्येतावत्येवांशे संप्रतिपत्तेः । **ननु** जामितादोषोपक्रमतत्प्रतीकारोपसंहाराभ्यामेकवाक्यता नावसीयते, येन तत्संरक्षणार्थमन्तरावाक्यं विधायकमिति निर्णीयेत, किंतु विष्ण्वादिवाक्येषु प्रत्येकं जामिताप्रतीकारनिबन्धनाद् वाक्यभेद एवावसीयते; तदनुसारेणोपक्रमे जामितादोषोक्तिरपि विष्ण्वादिवाक्यविधेययागत्रयस्तुत्यर्थत्वावगमात् । न खलु 'अस्मिन् जले स्नानेन प्रतिश्यायो भवति' 'नयनयोरञ्जनं कुर्यात्प्रतिश्यायपरिहाराय' 'पिप्पलीचूर्णयुक्तं नारिकेलोदकं सेवेत प्रतिश्यायपरिहाराय' 'मरीचचूर्णयुक्तं क्षीरं पिबेत्प्रतिश्यायपरिहारायेति' प्रत्येकं प्रतिश्यायप्रतीकारार्थतयाञ्जनादिविधाने प्रतिश्यायदोषोपक्रमतत्प्रतीकारोपसंहारमात्रेणैकवाक्यता भवतीत्याशङ्क्याह—**तथाहीति ।** विष्ण्वादिवाक्येषु यागविधाने कर्मप्रधानतव्यप्रत्ययबलाद्विष्ण्वादिदेवतासंस्कारार्थयागविधानं झटिति प्रतीतं स्यात्, अतः संस्कृतदेवताविनियोगादर्शनेन ततः परावृत्य यागानामर्थकर्मभावेन प्राधान्यं लक्षणीयमिति तेषु विलम्बिताः प्रधानभूतयागविधयः । अन्तरावाक्ये तु यागस्य अन्योपसर्जनत्वं न श्रुतमिति प्रधानभूतस्य तस्य पञ्चमलकारकल्पनेन विधिः शीघ्रतरः, जामितादोषपरिहारोपयुक्तान्तरालकालयुक्तश्च; पुरोडाशद्वयनैरन्तर्यात् जामितादोषोपन्यासेन ह्युपक्रमएवैतदवगतमुपन्यस्तदोषसमाधानार्थमन्तराले किंचिद्विधित्सितमिति । तद्यन्तरावाक्यं विहाय विष्ण्वादिवाक्येषु विधिराश्रीयेत, तदोपक्रमानुगुण्यं न स्यात् । नहि नैरन्तर्यप्रयुक्तदोषस्यान्तराले कर्मान्तरविधानेनेव विष्ण्वादियजनविधानेन समाधानं प्रतीयते । प्रतिश्यायादिवाक्येषु तु नैवं कर्मप्राधान्यप्रतीतिः । नचोपक्रान्तदोषसमाधानसामर्थ्यावगतिविषययुक्तविध्यन्तरश्रवणमस्तीति तत्र वाक्यभेदेऽपि नात्र तद्भेदः समाश्रयणीयः । तस्मान्मन्त्रवर्णप्राप्तविष्ण्वादियागेन प्रशंसार्थेऽर्थवादत्रये प्रत्येकमाम्नातमप्यजामिकरणं तदन्वयद्वारा विधायकेऽन्तरावाक्य एवान्वेति । अतएव तैत्तिरीयशाखायामुपांशुयाजमन्तरा यजतीत्यन्तरावाक्य एवाजामिकरणमाम्नातम्, इह त्वर्थवादत्रये अजामिकरणाभ्यासस्तद्दृढीकरणाय भविष्यतीति न तदनुरोधेन वाक्यभेदशङ्कावकाशः । **कर्मतया च देवतात्वमिति ।** लक्षणीयमित्यनुषङ्गः । **तस्मादिति ।** अपूर्वत्वाद् यागे एव विध्यपेक्षा, न विष्ण्वादिदेवतास्वपि मन्त्रवर्णतः प्राप्तिसंभवादिति भावः ॥ सामवेदे सार्वात्म्यविषयावुपक्रमोपसंहारौ दर्शितौ । ऋग्वेदादिष्वपि तौ दर्शयति—**ऐतरेयके इति ।** ऐतरेये इति तु न पाठः; इतराया अपत्यमैतरेयस्तेन प्रोक्तां शाखामधीयतइत्यैतरेयिणः । 'तेन प्रोक्त' मित्यर्थे "पुराणप्रोक्तेषु ब्राह्मणकल्पेष्वि"ति सूत्रेण णिनिप्रत्यये सति तदधीत इत्यर्थे विहितस्य प्रत्ययस्य 'प्रोक्ताल्लुगि'ति सूत्रेण प्रोक्तप्रत्ययान्तस्य लुग्विधायकेन लोपे सति निष्पत्तेः ॥ ततश्चैतरेयिणामाम्नाय इत्यर्थे "गोत्रचरणाद्वुञि"ति वुञ्प्रत्यये सति ह्यैतरेयके इति भाष्यम् । **स एतमेवेति ।** अनेन वाक्येन प्रत्यगात्मैव ब्रह्मेत्युपक्रान्तं । तदुपसंहारे च प्रज्ञानशब्दो जीवपरः; सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानीति प्राक् प्रज्ञानशब्देन जीवस्य निर्दिष्टत्वात् । **वेदान्ता यदीति ।** वेदान्तानां सापेक्षत्वप्रसञ्जकस्य भूतार्थत्वहेतोः पौरुषेयत्वेन सोपाधिकत्वम्—

**'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐत० २।१।१।१ ) तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म सर्वानुभूः' । ( बृह० २।५।१९ ) 'ब्रह्मैवेदममृतं पुरस्तात्' (मुण्ड० २।२।११ ) इत्यादीनि । नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता; श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते; 'तत्केन कं पश्येत्' (बृह० २।४।१३) इत्यादि क्रियाकारकफलनिराकरणश्रुतेः । नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः; 'तत्त्वमसि' ( छान्दो० ६।८।७ )**

## भामती ।

तेषामदृष्टा, अनुपपन्ना चेत्याह—**नच तेषामिति** । सापेक्षत्वेनाप्रामाण्यं पूर्वपक्षबीजं दूषयति—**नच परिनिष्ठितवस्तुस्वरूपत्वेऽपीति** । **अयमभिसंधिः**—पुंवाक्यनिदर्शनेन हि भूतार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते । तत्रैवं भवान् पृष्टो व्याचष्टाम्, किं पुंवाक्यानां सापेक्षता भूतार्थत्वेनाहो पौरुषेयत्वेन । यदि भूतार्थत्वेन ततः प्रत्यक्षादीनामपि परस्परापेक्षत्वेनाप्रामाण्यप्रसङ्गः । तान्यपि हि भूतार्थान्येव । अथ पुरुषबुद्धिप्रभवतया पुंवाक्यं सापेक्षं, एवं तर्हि तदपूर्वकाणां वेदान्तानां भूतार्थानामपि नाप्रामाण्यं; प्रत्यक्षादीनामिव नियतेन्द्रियलिङ्गादिजन्मनाम् । यद्युच्येत सिद्धे किलापौरुषेयत्वे वेदान्तानामनपेक्षतया प्रामाण्यं सिध्येत्, तदेव तु भूतार्थत्वेन न सिध्यति; भूतार्थस्य शब्दानपेक्षेण पुरुषेण मानान्तरतः शक्यज्ञानत्वाद्बुद्धिपूर्वं विरचनोपपत्तेः, वाक्यत्वादिलिङ्गकस्य वेदपौरुषेयत्वानुमानस्याप्रत्यूहमुत्पत्तेः । तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारं, नतु भूतार्थत्वेन । कार्यार्थत्वे तु कार्यस्यापूर्वस्य मानान्तरा-

## वेदान्तकल्पतरुः ।

पेक्षाः स्युः, पुंवाक्यवदिति पूर्ववाद्यभिमतस्य प्रसङ्गे हेतोः पौरुषेयत्वेन सोपाधिकत्वं भाष्यगतापिशब्देन द्योत्यत इत्याह—**अयमभिसंधिरिति** । तस्यैवानैकान्तिकत्वमाह—**प्रत्यक्षादीनामपीति** । वाक्यस्य सतः सिद्धवस्तुपरत्वे पौरुषेयत्वापत्तिरिति साधनव्याप्तिमुपाधेः शङ्कते—**यद्युच्येतेति** । वाक्यत्वादि लिङ्गं यस्य स तथा । कार्यपरतायां हि वेदान्तानां न वाक्यत्वादिना सापेक्षत्वमनुमेयं, पौरुषेयत्वस्योपाधित्वात्, एवं नच साधनव्याप्तिरित्याह—**कार्यार्थत्व इति । तत्त्वेन**

## कल्पतरुपरिमलः ।

**अयमभिसंधिरित्यारभ्य** प्रवृत्तेन टीकाग्रन्थेनोच्यमानं, **परिनिष्ठितवस्तुविषयत्वेऽपीति** भाष्यगतापिशब्देन भूतार्थत्वस्य सापेक्षत्वव्यभिचारं दर्शयतोक्तसाध्यप्रयोजकान्तरसद्भावसूचनेन द्योत्यत इत्येतदभिसंधिशब्देनाहेत्यर्थः । **ननु—अयमभिसंधिरित्यादि**टीकाग्रन्थस्योक्तरीत्योपाध्युद्भावनपरत्वेनावतारणमयुक्तम्; तस्य ग्रन्थस्य सापेक्षत्वापादने भूतार्थत्वं प्रयोजकं प्रसङ्गहेतुः पौरुषेयत्वं वेति विकल्प्य, प्रथमपक्षं व्यभिचारेण निरस्या**थेत्यादिग्रन्थेन** द्वितीयपक्षमुद्भाव्य, तं पक्षं वेदान्तानां पौरुषेयत्वं नास्तीति प्रसङ्गहेत्वसंमत्या दूषयित्वा, भूतार्थत्वे मानान्तरेण शक्यग्रहत्वात्पौरुषेयत्वमपि स्यादिति प्रसङ्गहेतोरप्यापादनशङ्कां यद्युच्येतेत्यादिग्रन्थेनोद्भाव्य, **तर्हि कार्यार्थत्वेऽपि** तत एव हेतोस्तत्स्यादित्येतदर्थप्रतिपादकतयैव तस्य ग्रन्थस्य प्रवृत्तेः, तस्य पौरुषेयत्वोपाध्युद्भावनपरत्वे तमुपाधिमसहमानस्य पूर्वपक्षिणः सापेक्षत्वे पौरुषेयत्वं प्रयोजकमित्युक्त्यसंभवेनाथेत्यादिशङ्काग्रन्थस्यानन्वयप्रसङ्गाच्च, यद्युच्येतेत्यादिशङ्काग्रन्थोपसंहारे—**तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारम्' नतु भूतार्थत्वेनेति** भूतार्थत्वं हेतुं परित्यज्य पौरुषेयत्वस्य हेतुतयैवोपादानस्य स्पष्टीकरणाच्चेति—**चेत्, उच्यते;** टीकायां **भूतार्थतया खलु सापेक्षत्वमाशङ्क्यते** इत्यनुवादानन्तरं भूतार्थतया वेदान्तानां सापेक्षत्वम्, उत पौरुषेयतयेति विकल्पो न प्रसरति । भूतार्थत्वहेतौ व्यभिचारेण दूषिते तत्रैव वाक्यत्वविशेषणाशङ्कां विहाय वाक्यत्वविशेषितभूतार्थत्वहेतुना प्रसाधनीयस्य पौरुषेयत्वस्य हेत्वन्तरस्य शङ्का च न सामाञ्जस्यमश्नुते । तस्मात् पौरुषेयत्वमुपाधिमुद्भावयिष्यतो गूढाभिसंधेः सिद्धान्तिनोऽयं विकल्पः । दृष्टान्तीकृतेषु पुंवाक्येषु सापेक्षत्वे त्वदीयसाधनं भूतार्थत्वं प्रयोजकं, मदुद्भावनीयोपाधिरूपं पौरुषेयत्वं वेति । अतएव पक्षे हेतुविकल्पोऽयं न भवति, किंतु दृष्टान्ते साध्यप्रयोजकधर्मविकल्प इति दर्शयितुमेव टीकायां **'पुंवाक्यनिदर्शनेन हीति' 'पुंवाक्यानामिति' च** विशेषितम् । ततः प्रथमपक्षे व्यभिचारेण दूषिते तत्र वाक्यत्वविशेषणे कृतेऽपि सिद्धान्ती पौरुषेयत्वमुपाधिं ब्रूयादिति तं पक्षं परित्यज्य तदभिमतमुपाधिं साधनव्यापकत्वेनानुपाधिं व्यवस्थापयिष्याम इति मन्यमानस्य पूर्वपक्षिणः पक्षान्तरपरिग्रहाशङ्का—**अथ पुरुषबुद्धिप्रभवतयेति** । पौरुषेयत्वस्य सापेक्षत्वप्रयोजकत्वमङ्गीकृत्य तस्य वेदान्तेष्वभावेन साधनाव्यापकतयोपाधित्वोद्घाटनम्—**एवं तर्हीति** । वेदान्तानां भूतार्थवाक्यत्वहेतुना पौरुषेयत्वापादनेन साधनव्यापकतयाऽनुपाधित्वशङ्का—**यद्युच्येतेति । तस्मात्पौरुषेयत्वेनेति** तदुपसंहारवाक्येनाप्यनुपाधित्वशङ्काया एव तत्फलेन सहोपसंहारः । वेदान्तानां पौरुषेयत्वमापाद्योपाधेः साधनव्यापकत्वान्निरुपाधिकेन भूतार्थत्वेन सापेक्षत्वमापाद्यते, नतु तदनापाद्य सोपाधिकेन भूतार्थत्वेति ॥ ततः प्रतिबन्दिग्रहणेन वेदान्तानां भूतार्थत्वेऽप्यपौरुषेयत्वोपपत्त्योपाधेः साधनाव्याप-

इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु-हेयोपादेयरहितत्वादुपदेशानर्थ-

## भामती ।

गोचरतयात्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्वं सिध्यतीति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामहे । अत्र ब्रूमः—किं पुनरिदं कार्यमभिमतमायुष्मतः, यदशक्यं पुरुषेण ज्ञातुम् । अपूर्वमिति चेत्, हन्त कुतस्त्यमस्य लिङाद्यर्थत्वं; तेनालौकिकेन संगतिसंवेदनविरहात्, लोकानुसारतः क्रियाया एव लौकिक्याः कार्याया लिङादेरवगमात् । 'स्वर्गकामो यजेत' इति साध्यस्वर्गविशिष्टो नियोज्योऽवगम्यते, स च तदेव कार्यमवगच्छति यत्स्वर्गानुकूलम् । नच क्रिया क्षणभङ्गुरामुष्मिकाय स्वर्गाय कल्पत इति परिशेष्याद्वेदत एवापूर्वे कार्ये लिङादीनां संबन्धग्रह इति चेत्, हन्त चैत्यवन्दनादिवाक्येष्वपि स्वर्गकामादिपदसंबन्धादपूर्वकार्यत्वप्रसङ्गः । तथाच तेषामप्यशक्यरचनत्वेनापौरुषेयत्वापातः । स्पष्टदृष्टेन पौरुषेयत्वेन वा तेषामपूर्वार्थत्वप्रतिषेधे वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितमित्यपूर्वार्थता न स्यात् । अन्यतस्तु वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतमपूर्वार्थत्वेनात्र तदुपपादकेन । उपपादितं चापौरुषेयत्वमस्माभिर्न्यायकणिकायां, इह तु विस्तरभयान्नोक्तम् । तेन पौरुषेयत्वेऽसिद्धे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघातः । नचानधिगतगन्तृता नास्ति, येन प्रामाण्यं न स्यात्; जीवस्य ब्रह्मताया अन्यतोऽनधिगमात् । तदिदमुक्तम्—'नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि' इति । **द्वितीयं पूर्वपक्षबीजं स्मारयित्वा दूषयति—यत्तु हेयोपादेयरहितत्वा-**

## वेदान्तकल्पतरुः ।

याथात्म्येन । कार्ये मानान्तरायोग्यत्वस्यासिद्धत्वात्तत्परत्वेऽपि वेदान्तानां पौरुषेयत्वं संभवतीति समा साधनव्याप्तिः, ततश्च दुरपवादं वाक्यत्वादिलिङ्गकं पौरुषेयत्वमित्याशयेनाह—**अत्र ब्रूम इत्यादिना । किं पुनरिति ।** कृतियोग्यस्य कार्यत्वे भावार्थस्यापि तत्त्वेन मानान्तरयोग्यत्वमित्यर्थः । तर्ह्यलौकिकं कार्यमिति शङ्कते—**अपूर्वमिति ।** तर्हि मानान्तरानवगते संगतिग्रहायोगाल्लिङादीनामबोधकत्वापात इत्याह—**हन्तेति । ननु** यजेतेति श्रुतेः कार्यता भात्यतोऽपूर्वसिद्धिरिति, तत्राह—**लोकानुसारत इति ।** स्वर्गकामपदसमभिव्याहारसंज्ञकतर्कानुगृहीतवेदादेव क्रियाविलक्षणापूर्वे लिङादीनां संबन्धग्रह इति शङ्कते—**स्वर्गकाम इति ।** अयं तर्कोऽतिप्रसङ्गीत्याह—**चैत्येति ।** कर्तृस्मरणात्स्पष्टदृष्टपौरुषेयत्वेन बुद्धादेव चैषामकार्यार्थत्वे वेदानामपि पौरुषेयत्वस्य वाक्यत्वादिनानुमितत्वादकार्यार्थत्वं समानमित्यर्थः । स्मर्यमाणकर्तृकत्वेन वाक्यत्वादि सोपाधिकमित्याशङ्क्य सिद्धार्थवेदान्तेष्वपि तत्सममतः कार्यार्थत्वमनपेक्षतायामप्रयोजकमित्याह—**अन्यतस्त्विति ।** वर्तमानसंप्रयोगजप्रत्यक्षस्य कार्यरूपधर्मगोचरत्वानुपपत्तेर्योगसामर्थ्यस्यापीन्द्रियविषयेष्वेवाति-

## कल्पतरुपरिमलः ।

कत्वव्यवस्थापनेन भूतार्थत्वहेतुकसापेक्षत्वप्रसञ्जनानुमानस्य सोपाधिकत्वप्रदर्शनपरोऽत्रब्रूम इत्यादिग्रन्थः । **अतएव—तदुपसंहारवाक्यं तेनासिद्धे पौरुषेयत्वे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघात इति ।** तस्मादुपाध्युद्भावनपरतया व्याख्यानं युक्तमेव । प्रमाणान्तरसिद्धार्थानुवादकतया स्वप्रामाण्यसिद्धौ तत्प्रामाण्यमुखनिरीक्षकत्वं सापेक्षत्वं पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्ध्यधीनानुपूर्वीमत्त्वं पौरुषेयत्वमिति साध्योपाध्योर्भेदः । **तस्यैवेति ।** यस्य हेतोरुपाधिरुद्भावनीयः तस्यैव व्यभिचारं तावदाहेत्यर्थः । यद्यपि दृष्टान्तीकृतेषु पुंवाक्येषु भूतार्थत्वं सापेक्षत्वप्रयोजकं न भवतीत्येतदुपपादकः प्रत्यक्षादिषु सत्यपि भूतार्थत्वे सापेक्षत्वाभावः उपाध्युद्भावनोपयोगिप्रयोजकान्तरशङ्कावसरदानार्थमिहोच्यते; तथापि स एव हेतोः पक्षे साध्यासाधकत्वसिद्ध्युपयोगी व्यभिचारोऽपीत्यभेदहक्ष्यानैकान्तिकतामाहेत्युक्तं—**कार्ये मानान्तरायोग्यत्वस्यासिद्धत्वादिति । ननु** वेदान्तानां कार्यपरत्वेऽपि पौरुषेयत्वानुमानं प्रसरति; कार्यस्यापि मानान्तरयोग्यत्वाविशेषादिति पौरुषेयत्वानुमानमुक्त्वा तत्फलमुपाधेः साधनव्यापकत्वमप्यभिधाय ततश्चेत्यादिग्रन्थेन पुनरपि पौरुषेयत्वानुमानप्रसर एवोपसंह्रियते; उपाधिविधूनने निरुपाधिकेन वाक्यत्वेन सापेक्षत्वानुमानमेव खल्पसंहर्तव्यम् । **सत्यम्**; वाक्यत्वादिलिङ्गकं पौरुषेयत्वशब्देन पुरुषबुद्धिप्रभवत्वपरेण सापेक्षत्वमेवोक्तम् । **अथवा—पौरुषेयत्वं संभवतीति** पूर्ववाक्येन पौरुषेयत्वानुमानस्य बाधाभावमात्रमुक्तं, **ततश्चेत्यादिग्रन्थेन** तत्फलतया पौरुषेयत्वानुमानप्रवृत्तिरुक्ता, प्रागेव साधनव्याप्त्युक्तिस्तु वक्ष्यमाणानुमानफलत्वाभिप्रायेणेति नेतव्यम् । **अकार्यार्थत्वं समानमिति ।** निष्प्रत्यूहेन वाक्यत्वादिहेतुना पौरुषेयत्वेऽनुमिते सति मानान्तरागोचराऽपूर्वत्वकल्पनैव न प्रवर्तते चैत्यवन्दनादिवाक्येषु । अतस्तत्कल्पनापत्त्या पौरुषेयत्वाप्रत्याख्यानप्रत्याशा दुराशेति भावः । **स्मर्यमाणकर्तृकत्वेनेति ।** चैत्यवन्दनादिवाक्येष्वपि पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुकृतं दुष्कृतं चेति तदागमकर्तृबुद्धवचसैव कर्तृप्रतीतिरस्तीति भावः । **सिद्धार्थवेदान्तेष्वपीति ।** यथा वेदान्तानां कार्यार्थत्वपक्षे तेषां पौरुषेयत्वानुमानं कर्तृस्मरणोपाधिना निरस्यते, तथा तेषां सिद्धार्थत्वपक्षेऽपि तन्निरसितुं शक्यमित्यप्रयोजकं कार्यार्थत्वकल्पनमित्यर्थः । **कार्यरूपेति ।**

**क्य इति, नैष दोषः; हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः, नतु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति; एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । नह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति । येनोपासनाविधिशेषत्वं ब्रह्मणः**

## भामती ।

**दिति ।** विध्यर्थावगमात् खलु पारंपर्येण पुरुषार्थप्रतिलम्भः । इह तु 'तत्त्वमसि' इत्यवगतिपर्यन्ताद्वाक्यार्थज्ञानात् बाह्यानुष्ठानायासानपेक्षात्साक्षादेव पुरुषार्थप्रतिलम्भो नायं सर्पो रज्जुरियमिति ज्ञानादिवेति । सोऽयमस्य विध्यर्थज्ञानात्प्रकर्षः । **एतदुक्तं भवति**—द्विविधं हीप्सितं पुरुषस्य । किंचिदप्राप्तं ग्रामादि, किंचित्पुनः प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतं, यथा स्वग्रीवावनद्धं ग्रैवेयकम् । एवं जिहासितमपि द्विविधं, किंचिदहीनं जिहासति, यथा वलयितचरणं फणिनं, किंचित्पुनर्हीनमेव जिहासति, यथा चरणाभरणे नूपुरे फणिनमारोपितम् । **तत्राप्राप्तप्राप्तौ चात्यक्तत्यागे च** बाह्योपायानुष्ठानसाध्यत्वात् तदुपायतत्त्वज्ञानादस्ति पराचीनानुष्ठानापेक्षा । न जातु ज्ञानमात्रं वस्त्वपनयति । नहि सहस्रमपि रज्जुप्रत्यया वस्तुसन्तं फणिनमन्यथयितुमीशते, समारोपिते तु प्रेप्सितजिहासिते तत्त्वसाक्षात्कारमात्रेण बाह्यानुष्ठानानपेक्षेण शक्येते प्राप्तुमिव हातुमिव । समारोपमात्रजीविते हि ते, समारोपितं च तत्त्वसाक्षात्कारः समूलघातमुपहन्तीति । तथेहाप्यविद्यासमारोपितजीवभावे ब्रह्मण्यानन्दे वस्तुतः शोकदुःखादिरहिते समारोपितनिबन्धनस्तद्भावः 'तत्त्वमसि' इतिवाक्यार्थतत्त्वज्ञानादवगतिपर्यन्तान्निवर्तते । तन्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति, त्यक्तमपि शोकदुःखाद्यत्यक्तमिव त्यक्तं भवति, तदिदमुक्तम्—**ब्रह्मात्मावगमादेव** जीवस्य **सर्वक्लेशस्य** सवासनस्य विपर्यासस्य । स हि क्लिश्नाति जन्तूनतः क्लेशः, तस्य प्रकर्षेण हानात् पुरुषार्थस्य दुःखनिवृत्ति–सुखाप्तिलक्षणस्य सिद्धेरिति । **यत्तु**–'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' इत्युपासनावाक्यगतदेवतादिप्रतिपादनेनोपासनापरत्वं वेदान्तानामुक्तं, तद्दूषयति—**देवतादिप्रतिपादनस्य तु** आत्मेत्येतावन्मात्रस्य **स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः** । यदि न विरोधः, सन्तु तर्हि वेदान्ता देवताप्रतिपादनद्वारेणोपासनाविधिपरा एवेत्यत आह—**नतु तथा ब्रह्मण इति** । उपास्योपासकोपासनादिभेदसिद्ध्यधीनोपासना न निरस्तसमस्तभेदप्रपञ्चे वेदान्तवेद्ये ब्रह्मणि संभवतीति नोपासनाविधिशेषत्वं वेदान्तानां तद्विरोधित्वादित्यर्थः । **स्यादेतत्**—यदि विधिविरहेऽपि वेदान्तानां प्रामाण्यं, हन्त तर्हि 'सोऽरोदीत्' इत्यादीनामप्यस्तु स्वतन्त्राणामेवोपेक्षणीयार्थानां प्रामाण्यम् । नहि हानोपादानबुद्धी एव प्रमाणस्य फले, उपेक्षाबुद्धेरपि तत्फलत्वेन प्रामाणिकैरभ्युपेतत्वादिति कृतं 'बर्हिषि रजतं

## वेदान्तकल्पतरुः ।

शयकारित्वान्न धर्मस्य प्रत्यक्षता, लिङ्गाद्यभावाच्च नानुमेयत्वादि, नचाज्ञाते पुंसां वचनरचना संभविनीति वैदिकी रचना न पौरुषेयीति न्यायकणिकायां व्युत्पादितम् । **नन्व**पौरुषेयतयानपेक्षत्वेप्यग्निर्हिमस्य भेषजमितिवन्मानान्तरगृहीतग्राहित्वमित्याशङ्क्य **तत्त्वमसीति ब्रह्मात्मभावस्येति** भाष्यशेषेण परिहृतमित्याह—**नचानधिगतेति** । सर्वस्मिन्नुपपादितेऽर्थे भाष्यं संवादयति—**तदिदमिति** । सिद्धार्थत्वे सत्यपुरुषार्थनिष्ठत्वं स्यादिति द्वितीयपूर्वपक्षबीजम् । **सर्वक्लेशप्रहाणादिति भाष्यस्थ**प्रशब्दार्थमाह—**सोऽयमस्येति** । बाह्यानुष्ठानानपेक्षमज्ञाननिवृत्त्यानन्दाविर्भावफलमन्वयव्यतिरेकिनिदर्शनयुगलद्वयप्रदर्शनपुरःसरं ब्रह्मज्ञानस्य दर्शयति—**एतदुक्तमित्यादिना** । **ग्रैवेयकं** ग्रीवालङ्कारः । **समूलघातमिति** । कषादित्वादनुप्रयोगः । सह मूलेनोपहन्तीत्यर्थः । **समारोपितनिबन्धन इति** । समारोपिताविद्या निबन्धनं यस्य जीवभावस्य स तथोक्तः । **आत्मानमेव लोकं** चैतन्यम् । **देवता** सगुणं ब्रह्म । आदिशब्दात् प्राणविद्युदादि गृह्यते । उपासनावाक्यैकदेशमुपास्यसमर्थकं विविनक्ति—**आत्मेतीति** । यदवादि पूर्वपक्षिणा न क्वचिदपि वेदवाक्यानां विधिमन्तरेणार्थवत्तेति, **तत्र** किं यदि वेदान्ता विधिमन्तरेण प्रमाणं, तर्ह्यर्थवादाः किं न स्युरिति प्रतिबन्दी मता, अथवा वेदवाक्यस्य सिद्धपरस्यान्यत्रादर्शनाद्व्याप्त्यभावेन न वेदान्तानां सिद्धवस्तुपरत्वमिति । **आद्य**मर्थवादाधिकरणपूर्वपक्षं संगृह्णन्नाशङ्कते—**स्यादेतदित्यादिना** । रुदतो यदश्रु अशीर्यत तद्रजतमभवत्तस्माद्रजतमदक्षिण्यमिति निन्दा । **बर्हिषि** बर्हिःसाध्ये यागे, रजतं न देयमिति निषेधशेष इति सिद्धान्तं दर्शयन्नर्थवादानां नोपेक्षाफलत्वमिति तावदाह—

## कल्पतरुपरिमलः ।

**कार्यं रूपयति,** अनुष्ठेयं ज्ञापयति कार्यरूपः, यागाद्यनुष्ठानप्रयोजकः तद्गतस्वर्गादिश्रेयःसाधनत्वाकारस्तेन रूपेण यागादिर्धर्मः । अतो यागादेः स्वरूपतः प्रत्यक्षत्वेऽपि धर्मत्वाकारेणातीन्द्रियता । **यथाहुः**—''श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रमीयते । ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥' इति । **व्याप्त्यभावेनेति** । वेदान्तानां सिद्धव-

**प्रतिपद्येत। यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं दृष्टं; तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् । नचानुमानगम्यं शास्त्रप्रमाण्यं, येनान्यत्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् । अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म; तथापि प्रतिपत्तिविधिविषयतयैव**

## भामती ।

न देयम्' इत्यादिनिषेधविधिपरत्वेनैतेषामित्यत आह—**यद्यपीति** । स्वाध्यायविध्यधीनग्रहणतया हि सर्वो वेदराशिः पुरुषार्थतन्त्र इत्यवगतम् । तत्रैकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तं, किं पुनरियता 'सोऽरोदीत्' इत्यादिना पदप्रबन्धेन । नच वेदान्तेभ्य इव तदर्थावगममात्रादेव कश्चित्पुरुषार्थ उपलभ्यते । तेनैष पदसंदर्भः साकाङ्क्ष एवास्ते पुरुषार्थमुदीक्षमाणः । 'बर्हिषि रजतं न देयम्' इत्ययमपि निषेधविधिः स्वनिषेध्यस्य निन्दामपेक्षते । नह्यन्यथा ततश्चेतनः शक्यो निवर्तयितुम् । तद्यदि दूरतोऽपि न निन्दामवाप्स्यत्ततो निषेधविधिरेव रजतनिषेधे च निन्दायां च दर्विहोमवत् सामर्थ्यद्वयमकल्पयिष्यत् । तदेवमुत्तप्तयोः 'सोऽरोदीत्' इति च 'बर्हिषि रजतं न देयम्' इति च पदसंदर्भयोर्लक्ष्यमाणनिन्दाद्वारेण नष्टाश्वदग्धरथवत् परस्परं समन्वयः, नत्वेवं वेदान्तेषु पुरुषार्थापेक्षा, तदर्थावगमादेवानपेक्षात्परमपुरुषार्थलाभादित्युक्तम् । **ननु** विध्यसंस्पर्शिनो वेदस्यान्यस्य न प्रामाण्यं दृष्टमिति कथं वेदान्तानां तदस्पृशां तद्भविष्यतीत्यत आह—**नचानुमानगम्यमिति** । अबाधितानधिगतासंदिग्धबोधजनकत्वं हि प्रमाणत्वं प्रमाणानां, तच्च स्वत इत्युपपादितम् । यद्यपि चैषामीदृग्बोधजनकत्वं कार्यार्थापत्तिसमधिगम्यं; तथापि तद्बोधोपजनने मानान्तरं नापेक्षन्ते । नापीमामेवार्थापत्तिं, परस्पराश्रयप्रसङ्गादिति स्वत इत्युक्तम् । ईदृग्बोधजनकत्वं च कार्ये इव विधीनां वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्धं भवति; अन्यथा नेन्द्रियान्तराणां रूपप्रकाशनं दृष्टमिति चक्षुरपि न रूपं प्रकाशयेदिति । प्रकृतमुपसंहरति—**तस्मादिति** । आचार्यदेशीयानां मतमुत्थापयति—**अत्रापरे प्रत्यवतिष्ठन्त इति** । तथाहि—**'अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया । मननादिप्रतीत्या च कार्यार्था-**

## वेदान्तकल्पतरुः ।

**स्वाध्यायेति** । प्रयोजनपर्यवसायिबोधजनकत्वतदभावाभ्यां विशेषं दर्शयन्प्रतिबन्दीं परिहरति—**नच वेदान्तेभ्य इति** । **ननु** निषेध एव स्वनिषेध्यस्यानर्थहेतुत्वान्यथानुपपत्त्या निन्दां कल्पयिष्यति, नेत्याह—**तद्यदीति** । अर्थवादादेव निन्दालाभे निषेधकस्य निषेधे निन्दायां च तात्पर्यं न कल्प्यमित्यर्थः । **ननु** 'सोऽरोदीदिति' वाक्ये निन्दा न भाति, किंतु भूतानुवाद इत्याशङ्क्य मुख्यार्थे प्रयोजनाभावान्निन्दा लक्ष्यत इत्याह—**लक्ष्यमाणेति** । **द्वितीयमुद्भाव्य** निषेधति—**ननु विध्यसंस्पर्शिन इत्यादिना** । तच्च स्वत इत्युपपादितं न्यायकणिकायामित्यर्थः । **ननु** प्रमायाः कार्येण प्रमाणानां तज्जनकत्वमनुमेयं, कथं नानुमानगम्यमिति भाष्यमित्याशङ्क्याह—**यद्यपीति** । कार्यार्थापत्त्यपरपर्यायानुमानेन मानान्तरेण वा प्रमा नोत्पद्यते, किंतूदितायां तस्यामनुमानं प्रवर्तत इत्यर्थः । प्रमाणान्तरं तावदपेक्ष्यमाणं न दृश्यते । एतदर्थापत्त्यपेक्षणे दूषणमाह—**नापीति** । अपेक्षत इत्यनुषङ्गः । उत्पन्नायां प्रमायां प्रमाणानां प्रमाजनकत्वस्यानुमानं, ततश्च प्रमोत्पत्तिरिति परस्पराश्रयप्रसङ्गः । शास्त्रप्रामाण्यमनुमानगम्यत्वेन न भवतीति च भाष्यार्थो न पुनरनुमानेन ज्ञेयमिति । कार्यविरहिवेदान्तेभ्यः प्रमा यद्युत्पद्यते, तदा स्वतः परतो वेति चिन्ता, नतूत्पद्यत इत्यत आह—**ईदृगिति** । सिद्धे ब्रह्मणि वेदान्तेभ्यः प्रमोत्पत्तिरनुभवसिद्धेत्यर्थः । यद्यनुभवसिद्धाप्यन्यत्र सिद्धार्थार्थवादादावदर्शनादपह्नूयेत, तदातिप्रसङ्ग इत्याह—**अन्यथेति** । एवं तावत्सिद्धेर्थेऽपि प्रमाणान्तरपरतन्त्राणां पौरुषेयवाक्यानामङ्गीकृत्य प्रामाण्यं वेदान्तेषु क्रियाविषयतामन्तरेण नैरपेक्ष्यपुरुषार्थपर्यवसाने न लभ्येते इति मतं ब्रह्मात्मैक्यस्य प्रमाणान्तरागम्यत्वेन तदवगममात्रायत्तप्रयोजनलाभेन च पराणुदत् । इदानीं कार्यान्वित एवार्थे पदसङ्गतिग्रहेण सिद्धं वस्तु न शब्दप्रमेयमिति वेदान्तानुपासननियोगपरान् ये मन्यन्ते, तन्मतेन पूर्वपक्षमाह—**अज्ञातेति** । **अथवा** आरोपितब्रह्मभावस्य जीवस्योपास्तिपरा वेदान्ता न ब्रह्मात्मत्वे प्रमाणमिति पूर्वः पक्षः । **'अयं तु—सन्तु वेदान्ता मानं ब्रह्मात्मवस्तुनि । किंतु ज्ञानविधिद्वारेत्येष भेदः प्रतीयताम् ॥'** अतएव भाष्यं यद्यपि शास्त्रप्रमाणकं ब्रह्मेति । अतः कार्यविषयाद्वाक्याद् ब्रह्मनिश्चय इति प्रतिज्ञासामर्थ्यादेव न सिद्धार्थादिति लभ्यते । तत्र हेतुः सिद्धे **वस्तुन्यज्ञातसङ्गतित्वेति** । यत्र वृद्धप्रयुक्तशब्दविषयत्वं तत्र सङ्गतिः

## कल्पतरुपरिमलः ।

स्तुपरत्वमनुमातुं न शक्यम्; वेदवाक्यत्वस्य तेन व्याप्त्यभावादित्यर्थः । **निन्दा न भातीति** । **ननु**—'अश्रुजं हि यो बर्हिषि ददाति, 'पुरास्य संवत्सराद्गृहे रुदन्तीति' वाक्यशेषेण यागे रजतदानस्य बलवदनिष्टानुबन्धित्वरूपा निन्दा भातीति —**चेद्** , **न**; संवत्सरात्प्राग् रोदनस्य क्वचित्क्वचिददर्शनेन वाक्यशेषस्य पारलौकिकानिष्टानुबन्धित्वलक्षकतायाः समाश्रयणीयत्वात् ॥ सिद्धार्थव्युत्पत्त्यनुपमर्दोपमर्दाभ्यां वर्णकयोः पूर्वपक्षभेदमुक्त्वा ब्रह्मणः शास्त्रप्रमाणकत्वप्रतिक्षेपाप्र-

## भामती ।

ब्रह्मनिश्चयः ॥' न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति; तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते, तत्र न तेषां संगतिग्रहः । नचाहेयमनुपादेयं रूपमात्रं कश्चिद्विवक्षति प्रेक्षावान्; तस्याबुभुत्सितत्वात्, अबुभुत्सितावबोधने च प्रेक्षावत्ताविघातात् । तस्मात् प्रतिपित्सितं प्रतिपिपादयिषन्नयं लोकः प्रवृत्तिनिवृत्तिहेतुभूतमेवार्थं प्रतिपादयेत् । कार्यं चावगतं तद्धेतुरिति तदेव बोधयेत् । एवंच वृद्धव्यवहारप्रयोगात् पदानां कार्यपरतामवगच्छति । तत्र किंचित्साक्षात्कार्याभिधायकं, किंचित्तु कार्यार्थस्वार्थाभिधायकं, नतु भूतार्थपरता पदानाम् । अपिच नरान्तरस्य व्युत्पन्नस्यार्थप्रत्ययमनुमाय तस्य च शब्दभावाभावानुविधानमवगम्य शब्दस्य तद्विषयबोधकत्वं निश्चेतव्यम् । नच भूतार्थरूपमात्रप्रत्यये परनरवर्तिनि किंचिल्लिङ्गमस्ति, कार्यप्रत्यये तु नरान्तरवर्तिनि प्रवृत्तिनिवृत्ती स्तो हेतू इत्यज्ञातसंगतित्वान्न ब्रह्मरूपपरा वेदान्ताः । अपिच वेदान्तानां वेदत्वाच्छास्त्रत्वप्रसिद्धिरस्ति । प्रवृत्तिनिवृत्तिपराणां च संदर्भाणां शास्त्रत्वम् । यथाहुः—'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥' इति ॥ तस्माच्छास्त्रत्वप्रसिद्ध्या व्याहतमेषां स्वरूपपरत्वम् । अपिच न ब्रह्मरूपप्रतिपादनपराणामेषामर्थवत्त्वं पश्यामः । नच रज्जुरियं न भुजङ्ग इति यथाकथंचिल्लक्षणया वाक्यार्थतत्त्वनिश्चये यथा भयकम्पादिनिवृत्तिः, एवं 'तत्त्वमसि' इतिवाक्यार्थावगमान्निवृत्तिर्भवति सांसारिकाणां धर्माणाम्; श्रुतवाक्यार्थस्यापि पुंसस्तेषां तादवस्थ्यात् । अपिच यदि श्रुतब्रह्मणो भवति सांसारिकधर्मनिवृत्तिः, कस्मात् पुनः श्रवणस्योपरि मननादयः श्रूयन्ते । तस्मात्तेषां वैयर्थ्यप्रसङ्गादपि न ब्रह्मस्वरूपपरा वेदान्ताः, किंत्वात्मप्रतिपत्तिविषयकार्यपराः । तच्च कार्यं स्वात्मनि नियोज्यं नियुञ्जानं नियोग इति च मानान्तरापूर्वतयाऽपूर्वमिति चाख्यायते । नच विषयानुष्ठानं विना तत्सिद्धिरिति स्वसिद्ध्यर्थं

## वेदान्तकल्पतरुः ।

शब्दस्य गृह्यते, सिद्धेतु तद्व्यावर्तमानं स्वव्याप्यं सङ्गतिग्रहं व्यावर्तयतीत्यभिप्रेत्याह—**यत्र हीति । लोकेनेति । वृद्धैः ।** प्रयोगव्यापकवक्तृविवक्षाश्रोतृप्रतिपत्तीच्छयोरभावात्सिद्धे प्रयोगाभावमाह—**नचेति । रूपमात्रं** वस्तुमात्रम् । सर्वपदानां कार्यार्थत्वे सति पर्यायत्वमाशङ्क्याह—**तत्र किंचिदिति । कार्यार्थः** कार्यशेषः । **अत्र प्रयोगः**—गोपदं न कार्यानन्विते गोत्वे गृहीतसंबन्धं, तत्र वृद्धैरप्रयुक्तत्वात्, तुरगपदवदिति । एवं सर्वत्र सिद्धे वस्तुन्युत्तमवृद्धस्य शब्दप्रयोगाभावमुक्त्वा मध्यमवृद्धप्रवृत्तेर्व्युत्पत्तिलिङ्गभूतायास्तत्राभावाच्च तत्र न व्युत्पत्तिरित्याह—**अपिचेति ।** शास्त्रत्वेनेत्यादिहेतून्व्याचष्टे—**अपिचेत्यादिना । नच रज्जुरिति ।** नकारोऽयं सांसारिकधर्माणां **नच** निवृत्तिरिति उपरि संबन्धनीयः । **यथाकथंचिदिति ।** सिद्धपदार्थसंसर्गस्य नियोगाविनाभावादिहापि मा भैषीरिति नियोगं कल्पयित्वान्यपरादेव वाक्यात्सिद्धरूपार्थनिश्चय इत्यर्थः । **किंत्विति ।** आत्मप्रतिपत्तिर्विषयोऽवच्छेदको यस्य तत्तथा । **ननु** नियोगोऽपूर्वमिति प्राभाकरैर्वाक्यार्थो वर्ण्यते, स किमन्य एव कार्यो नेत्याह—**तच्चेति ।** कार्यपरेभ्यो वेदान्तेभ्यः कथं वस्तुसिद्धिरित्याशङ्क्य विध्याक्षेपलक्षणोपादानप्रमाणादित्याह—**नचेति ।** स्वप्रतीत्युपाधित्वेन विषयस्य स्वनिर्वर्तकत्वेन करणस्य कार्यं स्वाव-

## कल्पतरुपरिमलः ।

तिक्षेपाभ्यां तद्भेदं यद्यपीत्यादिभाष्यसिद्धं दर्शयति—**अथवेति । लोकेन न प्रयुज्यन्ते** इत्ययुक्तम् । पामरजने निरर्थकसिद्धार्थपदसंघातप्रयोगस्य संभावितत्वादित्याशङ्क्य लोकेनेति पदं व्याचष्टे—**वृद्धैरिति । प्रेक्षावता** उत्तमवृद्धजनेनेत्यर्थः । **पर्यायत्वमाशङ्क्येति ।** न च कार्यान्विततदर्थविशेषपरत्वेनापर्यायत्वमुपपादयितुं शक्यम्; कार्यवाचिनि लिङादिपदे कार्यान्विताार्थान्तराभावेन कार्यान्विते पदानां शक्तिरित्युक्त्यसंभवादिति शङ्काभिप्रायः । कार्ये शक्तिरिति नियमः । तस्य नियमस्य कार्यवाचिपदानां तन्मात्रशक्त्या तदितरपदानां तदन्वितस्वस्वार्थशक्त्या च निर्वाह इति परिहाराभिप्रायः । **नियोगाविनाभावादिति ।** मध्यमवृद्धप्रवृत्तिलिङ्गापेक्षप्राथमिककार्यव्युत्पत्तिग्रहोपजीविनां पाश्चात्यव्यवहाराणाम् उपजीव्यानुसारेण कार्याविनाभावादित्यर्थः । **एतेन**—व्याकरणकोशाप्तवाक्यप्रसिद्धपदसमभिव्याहारैः सिद्धार्थेऽपि व्युत्पत्तिग्रहः संभवतीत्यपि शङ्का—**निरस्ता;** तेष्वपि प्राथमिकव्युत्पत्तिग्रहानुसारेण कार्यवाचिपदाध्याहारावश्यंभावात् । **ननु 'नच रज्जुरि**यमित्यादिर्निवृत्तिर्भवतीत्यन्तः सिद्धान्तिशङ्कानुवादग्रन्थः । तन्मध्ये कथं तदनभिमतनियोगाविनाभावोक्तिः । **नैष दोषः;** पूर्वपक्षिणापि संमतो हि दृष्टान्तीकर्तव्यः । **नच** तत्केवलसिद्धार्थपरमर्थवदिति पूर्वपक्षिणः संमतिरस्ति । तत्रापि कार्यवाचिपदाद्यध्याहाराभ्युपगमादिति पूर्वपक्ष्याशयानुसारेण **यथाकथंचिल्लक्षणयेति** टीकातद्व्याख्यानयोरवतारणाद्, रज्जुवाक्यस्य परमते कार्यपरत्वेऽपि रज्जुरियं न भुजङ्ग इति सिद्धार्थांश एव भयादिनिवृत्त्युपयोगि, नतु कुलधर्मतया परकल्पितः कार्यांश इति सिद्धार्थपरतत्त्वमस्यादिवाक्यदृष्टान्तत्वसङ्गतिः । **टीकायां**—स्वविषयस्य करणस्येत्यत्र स्वविषयस्येति पदं व्याचष्टे—**स्वप्रतीत्युपाधित्वेन विषयस्येति ।** लिङापूर्वं कार्यत्वेनाभिधेयं, कार्यत्वं च कृतिसाध्यत्वं, नचापूर्वस्य साक्षात्कृतिसाध्यत्वं संभवति, अतो यद्द्वारा तस्य कृतिसा-

**शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण सम-**

## भामती ।

तदेव कार्यं स्वविषयस्य करणस्यात्मज्ञानस्यानुष्ठानमाक्षिपति । यथाच कार्यं स्वविषयाधीननिरूपणमिति ज्ञानेन विषयेण निरूप्यते, एवं ज्ञानमपि स्वविषयमात्मानमन्तरेणाशक्यनिरूपणमिति तन्निरूपणाय तादृशमात्मानमाक्षिपति, तदेव कार्यम् । **यथाहुः**—'यत्तु तत्सिद्ध्यर्थमुपादीयते आक्षिप्यते तदपि विधेयमिति तत्रे व्यवहारः' इति । विधेयता च नियोगविषयस्य ज्ञानस्य भावार्थतयानुष्ठेयता, तद्विषयस्य त्वात्मनः स्वरूपसत्ताविनिश्चितिः । आरोपिततद्भावस्य त्वन्यस्य निरूपकत्वे तेन तन्निरूपितं न स्यात् । तस्मात्तादृगात्मप्रतिपत्तिविधिपरेभ्यो वेदान्तेभ्यस्तादृगात्मविनिश्चयः । तदेतत्सर्वमाह—**यद्यपीति** । विधिपरेभ्योऽपि वस्तुतत्त्वविनिश्चय इत्यत्र निदर्शनमुक्तं—**यथा यूपेति** । 'यूपे पशुं बध्नाति' इति बन्धनाय विनियुक्ते यूपे तस्यालौकिकत्वात्कोऽसौ यूप इत्यपेक्षिते 'खादिरो यूपो भवति यूपं तक्षति यूपमष्टाश्रीकरोति' इत्यादिभिर्वाक्यैस्तक्षणादिविधिपरैरपि संस्काराविष्टं विशिष्टसंस्थानं दारू यूप

## वेदान्तकल्पतरुः ।

च्छेदकज्ञाननिरूपणाय ज्ञायमानमात्मानमपेक्षते चेत्तर्हि न श्रौतत्वमात्मन इत्याशङ्क्य विध्याक्षिप्तस्य श्रौतत्वे गुरुसंमतिमाह—**यथाहुरिति । तत्सिद्ध्यर्थं** विधेयसिद्ध्यर्थम् । **उपादीयते** इत्यस्य व्याख्यानम्—**आक्षिप्यते इति** । ज्ञानस्य प्रमात्वात्प्रत्यक्षवन्न विधेयता, आत्मनश्च नित्यत्वात्तदयोग इत्याशङ्क्याह—**विधेयता चेति** । ज्ञानमिहोपासनं तच्च क्रियेत्यनुष्ठेयम् । आत्मनस्तु स्वरूपसत्ताविनिश्चितिरज्ञातज्ञप्तिर्विधेयतेति न विरोध इत्यर्थः । **ननु** वाग्धेनूपास्त्यादाविवारोप्यस्य विधेयधीविषयत्वं किं न स्यादत आह—**आरोपितेति** । ब्रह्मास्मीति ज्ञाने यादृगर्थो भाति तद्भाव आरोपितो यस्य स तथा । तस्यान्यस्य ज्ञाननिरूपकत्वे तेन प्रतिभासमानार्थेन तज्ज्ञानं निरूपितं न स्यात् । नच सत्यां गतौ युक्त आरोप इति । इयंच **प्रतिपत्तिविधिविषयतयेति** भाष्यस्य व्याख्या । प्रतिपत्तिविधेर्नियोगस्य विषयभूतप्रतिपत्तिं प्रत्यवच्छेद-

## कल्पतरुपरिमलः ।

ध्यत्वं घटनीयं स धात्वर्थो यागदानहोमादिरनुबन्धोऽवच्छेदको विषय इति प्राभाकरैर्व्यवह्रियते । करणस्येति पदं व्याचष्टे—**स्वनिर्वर्तकत्वेन करणस्येति** । तदाहुः—'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्ये संघटिताकारे करणत्वेन संमतः ॥' इति । **न श्रौतत्वमात्मन इति । ननु** आत्मानमुपासीतेति श्रुतकर्मकारकविशिष्टा खल्पास्तिक्रिया विधिविषयत्वेनान्वेति, कथं तर्हि श्रुतस्यात्मनः कर्मकारकस्याश्रौतत्वशङ्का ? कथं च तस्य विध्याक्षिप्ततया श्रौतत्वनिर्वहणेन तत्समाधानम् ? नहि गामानयेत्यत्र श्रुतस्य गोः कर्मकारकस्य पिधेहीति प्रयोगे द्वारस्येवाक्षेप्यतास्ति । **उच्यते;** आत्ममात्रस्य विधिविषयक्रियाकर्मतयान्वयः श्रौतः, नतु भाष्योदाहृतसर्ववेदान्तसमाहृतविज्ञानानन्दादिस्वभावस्यात्मनः । तथाभूतात्मस्वरूपाभिप्राये शङ्कासमाधाने । **अतएव टीकायां**—तादृशमात्मानमाक्षिपतीति तादृगात्मप्रतिपत्तिविधिपरेभ्यो वेदान्तेभ्य इति चोक्तम् । **ननु** तादृक्स्वभावोऽपि विज्ञानमानन्दं ब्रह्मेत्यादिपदबोध्यः, **मैवम्**; कार्यान्विते पदानां व्युत्पत्तेः । कार्यान्वितार्थ एव पदसंघातोऽर्थवान् अन्यस्त्वनर्थक एव । एवंच ग्राहकग्रहणदशायां विज्ञानानन्दादिस्वभावस्योपास्तिनियोगेन सह प्रारब्धमन्विताभिधानं निर्वहति; आत्ममात्ररूपकर्मकारकावच्छिन्नोपास्तिक्रियाविषयविधौ पर्यवसिते पश्चात्पदान्तरैस्तद्विशेषणतया श्रवणस्यानुवादमात्ररूपत्वेन केवलं तत्तत्पदार्थस्मृतिमात्रहेतुत्वप्रसक्तेः । तस्मादुपास्तिनियोग एव प्रथमारब्धग्राहकग्रहणनिर्वाहार्थं पूर्वं ज्ञानानन्दादि स्वभावावच्छिन्नत्वमात्मकारकस्यापाद्य पश्चात्तद्विशिष्टोपास्तिक्रियाविषयो भवतीत्येवं विध्याक्षेपरूपोपादानप्रमाणप्रसादलभ्यैव ज्ञानानन्दादिरूपब्रह्मैक्यस्य प्रत्यगात्मनि तात्पर्येणाविश्चेयतारूपा विधेयता । एवमेव **'तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात्'** ( जै. सू. अ. २ पा. २ सू. २५ )'इति पूर्वतन्त्राधिकरणे "सोमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणा" मित्यत्र पृथक्पदाभ्यां विशेषणतया श्रुतयोर्व्रीहिद्रव्यशुक्लगुणयोरविवक्षामाशङ्क्य ग्राहकविध्याक्षेपबलात् तद्विवक्षा प्राभाकरैः समर्थिता । **श्रौतत्वे इति** । एवंच तद्विधेयमिति गुरुग्रन्थस्य प्रथमारब्धग्राहकग्रहणनिर्वाहाय यत्किंचिदद्वारेण विध्यन्वयितया शब्दबोध्यमित्यर्थ इति तात्पर्यम् । एवंहि विध्याक्षिप्तस्य श्रौतत्वे संमतिर्दर्शिता भवति । विध्याक्षेपरूपविधिव्यापारात्मकमुपादानं शब्दप्रमाणान्तर्भूतं, नतु पीनो देवदत्तो दिवा न भुङ्क्त इति लौकिकवाक्यार्थज्ञानमूलश्रुतार्थापत्तिवत् शाब्दप्रमोपजीवि तदनन्तरं प्रवर्तमानं प्रमाणान्तरमिति गुरुमतमर्यादा । **नन्वा**रोपितस्यापि विषयतया निरूपकत्वमस्त्येवेत्याशङ्क्याह—**नच सत्यां गताविति** । गगनस्य तत्तत्कर्णपुटावच्छेदेन प्रतिपुरुषव्यवस्थितश्रोतृभाववदेकस्यैव व्यापकस्य ब्रह्मचैतन्यस्य तत्तदविद्योपाध्यवच्छेदेन प्रतिशरीरं व्यवस्थितप्रत्यगात्मभाव उपपद्यत इत्येवं गतौ सत्यां वाग्धेनुत्वादिवदारोपो न युक्त इत्यर्थः । **अपूर्वदेवतेति** । सौर्यादावुदीच्याङ्गजन्योपकारसाहित्यायाधिकारविध्याक्षेप्यमौपादानिकं यदुत्पत्त्यपूर्वं तद्विषयमिहापूर्वपदं, नत्वधिकारापूर्वविषयम्; प्रस्तुते

र्यन्ते, तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य। तथाहि शास्त्रतात्पर्यविद आहुः—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति। 'चोदनेति क्रियायाः प्रवर्तकं वचनम्'। 'तस्य ज्ञानमुपदेशः—' (जै० सू० १।१।५) 'तद्भूतानां क्रियार्थेन समाम्नायः—' (जै० सू० १।१।२५) 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्—' (जै० सू० १।२।१) इतिच। अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्। तच्छेषतया चान्यदुपयुक्तम्। तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा

## भामती।

इति गम्यते। एवमाहवनीयादयोऽप्यवगन्तव्याः। प्रवृत्तिनिवृत्तिपरस्य शास्त्रत्वं न स्वरूपपरस्य, कार्य एव च संबन्धो न स्वरूपे, इति हेतुद्वयं भाष्यवाक्येनोपपादितम्—**प्रवृत्तिनिवृत्तिप्रयोजनत्वात्** इत्यादिना **तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्** इत्यन्तेन। नच स्वतन्त्रं कार्यं नियोज्यमधिकारिणमनुष्ठातारमन्तरेणेति नियोज्यभेदमाह—**सति च विधिपरत्व इति**। 'ब्रह्म वेद ब्रह्मैव भवति' इति सिद्धवदर्थवादादवगतस्यापि ब्रह्मभवनस्य नियोज्यविशेषाकाङ्क्षायां ब्रह्मबुभूषोर्नियोज्यविशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भः।

## वेदान्तकल्पतरुः।

कत्वेन विषयतयेति भाष्यार्थः। **एवमाहवनीयादयोऽपीति**। 'यदाहवनीये जुहुती'ति विहिते क आहवनीय इति वीक्षायां 'वसन्ते ब्राह्मणोऽग्नीनादधीते' त्यादिविधिभिः संस्कारविशिष्टोऽग्निराहवनीयो गम्यते, तथाऽपूर्वदेवतास्वर्गादिकं विधिपरेणैव शास्त्रेण समर्थ्यते। श्लोकोक्तहेतुद्वयं भाष्येण सङ्गमयति—**प्रवृत्तिनिवृत्तिपरस्येति**। **'तद्भूतानाम्'** (जै. अ. १ पा. १ सू. २५) इति सूत्रोदाहरणेन कार्यान्वितेऽर्थे शब्दसङ्गतिर्न सिद्ध इत्युक्तम्। **'आम्नायस्य'** (जै. अ. १ पा. १ सू. २५) इत्येतद्विहायेतरवाक्यैः प्रवृत्त्यादिपरस्य शास्त्रत्वमुक्तम्। तेन तु सिद्धरूपपरस्य न शास्त्रत्वमुक्तत्। **तस्य** वेदस्य, कर्मावबोधो नियोगज्ञानं दृष्टं प्रयोजनं। चोदनासूत्रे (जै. अ. १ पा. १ सू. २) **चोदनेति** शब्देन **क्रियाया** नियोगस्यानुष्ठापकं वचनमाहुरिति। **तत्त्वेषु** पदार्थेषु **भूतानां** वर्तमानानां **क्रिया** कार्यं, तदर्थत्वेन **समाम्नायः** समुच्चारणमित्यर्थः। **नचेति**। नियोगस्य स्वकीयत्वेन बोद्धारं **नियोज्यम् अधिकारिणं** कर्मणि स्वामिनं, तत्रैव कर्तारम् **अनुष्ठातारम्** इति। **नियोज्यभेदो** नियोज्यविशेषः। अमृतत्वकाम इति अश्रवणान्नियोज्यसिद्धिमाशङ्क्याह—**ब्रह्म वेदेति**। भवतिना सिद्धरूपेणावगतस्य फलस्य साध्यत्वाभिव्यक्त्यर्थमेवंकामशब्दवाच्यनियोज्यविशेषाकाङ्क्षायां विपरिणामेन ब्रह्म बुभूषुर्विद्यादिति वाक्यार्थः स्यादित्यर्थः। **रात्रिसत्रेति। चतुर्थे चिन्तितम्—'क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः'** (जै. अ. ४ पा. ३ सू. १७)। 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'ति श्रूयते। तत्र रात्रिशब्देनायुर्ज्योतिरित्यादिवाक्यविहिताः सोमयागविशेषा उच्यन्ते। किमत्र स्वर्ग एवाधिकारिविशेषणमुत प्रतिष्ठेति संशयः। तत्रैवंकाम इत्यश्रवणाद्विधिशक्तिलभ्यः स्वर्ग एव विशेषणं, संदेहे हि वाक्यशेषस्वीकारः, न निश्चये। निश्चितश्चेह सर्वाभिलषितः स्वर्गो विधिसामर्थ्यान्नियोज्यविशेषणम्। या तु प्रतिष्ठाविषया श्रुतिः सापि लक्षणया स्वर्गपरैव कल्प्यत इति प्राप्तं। **क्रतौ** रात्रिसत्रादौ न प्रतिष्ठादि विवक्षितमित्येतावन्मात्रेणाङ्गवदिति सूत्रे प्रयाजाद्यङ्गफलार्थवादोदाहरणं, नतु तद्वत्पदार्थत्वमस्ति रात्रिसत्राणाम्। एवं प्राप्ते—उच्यते; **'फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्'** (जै. अ. ४ पा. ३ सू. १८) प्रतिष्ठाफलस्य निर्देशात्तदेवाधिकारिविशेषणम्। **यत्तु** विधिशक्त्या स्वर्ग **इति**। **तन्न**; मुख्यार्थश्रुतिपदानुगुण्येन विधिशक्तौ पर्यवसितायामानुमानिकस्वर्गकल्पनानवकाशात्। तस्माद्वाक्यशेषस्थमेव फलमिति। विश्वजिन्न्यायेनेति वक्तव्ये विश्वजिति

## कल्पतरुपरिमलः।

गुरुमते तस्यैव लिङर्थस्य विधितयान्यविधिपरेण शास्त्रेण सिद्ध्यभावात्। **एवंकाम इत्यश्रवणादिति**। वर्तमानापदेशात् सिद्धरूपैव प्रतिष्ठा प्रतीयते, न साध्यरूपेति तस्या अपि फलत्वं कल्प्यं, ततो वरं विश्वजिन्न्यायेन (जै. अ. ४ पा. ३ सू. १५–१६) विधिशक्त्यवगतस्वर्गफलकल्पनमिति भावः। **प्रतिष्ठाफलस्य निर्देशादिति**। अत्यन्ताश्रुतफलकल्पनाद्वरं श्रुताया एव प्रतिष्ठाया विपरिणामेन फलत्वकल्पनम्। तथाच यत्तदोर्व्यत्यासेन योजनया प्रतितिष्ठन्तीत्यत्र सनर्थान्तर्भावनेन च ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति वाक्यविपरिणामः कार्य इति भावः। **नैमित्तिकाधिकारे इति**। "यः सत्रायावगुरते स विश्वजिता यजेतेति" विहितो विश्वजिन्नैमित्तिकाधिकारः। **ननु 'पितृयज्ञः स्वकालत्वादनङ्गं स्या'** (जै. अ. ४ पा. ४ सू. १९) **"दर्शाङ्गं वा समभिव्याहारादिति"** याज्ञिकाभिमतद्वितीयपक्षानुसारेण पितृयज्ञो यदि दर्शाङ्गमिष्यते, तदा सोऽपि नियोज्याकाङ्क्षाराहित्यात् स्थिरोदाहरणं न स्यादित्याशङ्कापरिहाराय तदनङ्गत्वव्यवस्थापकाधिकरणानुक्रमणं। दर्शप्रकरणपठितत्वे प्रकरणात्तदङ्गत्वमेव स्यादित्य**नारभ्याधीतत्वोक्तिः**। **ननु** "पूर्वेद्युरमावास्यायां वेदिं करोती"ति कर्मणीव ऐन्द्रं पयोऽमावास्यायामिति कालेऽप्यमावास्या-

**स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते, एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम्। नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्, कर्मकाण्डे भव्यो धर्मो जिज्ञास्य इह तु भूतं नित्यनिवृत्तं ब्रह्म जिज्ञास्यमिति; तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुम्; कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात्। 'आत्मा वा अरे द्रष्टव्यः' (बृह० २।४।५) इति। 'य आत्माऽपहतपाप्मा – सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छान्दो० ८।७।१)। आत्मेत्येवोपासीत' (बृ० १।४।७) 'आत्मानमेव लोकमुपासीत'। (बृ० १।४।१५) 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड० ३।२।९)। इत्यादिविधानेषु सत्सु कोऽसावात्मा किं तद्ब्रह्म इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः—नित्यः सर्वज्ञः सर्व-**

## भामती ।

पिण्डपितृयज्ञन्यायेन तु स्वर्गकामस्य नियोज्यस्य कल्पनायामर्थवादस्यासमवेतार्थतयात्यन्तपरोक्षा वृत्तिः स्यादिति । ब्रह्मभावश्चामृतत्वमिति अमृतत्वकामस्य इत्युक्तम्। अमृतत्वं चामृतत्वादेव, न कृतकत्वेन शक्यमनित्यमनुमातुम्, आगमविरोधादिति भावः । उक्तेन धर्मब्रह्मज्ञानयोर्वैलक्षण्येन विध्यविषयत्वं चोदयति—**नन्विति**। परिहरति—**नार्हत्येवमिति**। अत्र चात्मदर्शनं न विधेयम्। तद्धि दृशेरुपलब्धिवचनत्वात् श्रावणं वा स्यात् प्रत्यक्षं वा। प्रत्यक्षमपि लौकिकमहंप्रत्ययो वा, भावनाप्रकर्षपर्यन्तजं वा। **तत्र श्रावणं न विधेयं**; स्वाध्यायविधिनैवास्या प्रापितत्वात्, कर्मश्रावणवत्। **नापि लौकिकं प्रत्यक्षं** तस्य नैसर्गिकत्वात् । **नचौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयं**; तस्योपासनाविधानादेव वाजिनवदनुनिष्पादितत्वात्। तस्मादौपनिषदात्मोपासनामृतत्वकामं नियोज्यं प्रति विधीयते। 'द्रष्टव्यः'

## वेदान्तकल्पतरुः ।

नैमित्तिकाधिकारे फलकल्पना कृत्वाचिन्तयेति पिण्डपितृयज्ञः स्थिरोदाहरणत्वेनोदाहृतः । **असमवेतार्थतयेति**। अश्रूयमाणत्वेन ब्रह्मभवनशब्देनासमवेतः स्वर्गोऽर्थस्तत्परतयेत्यर्थः । यद्यपि ब्रह्मभवनस्य फलत्वेऽप्येवंकाम इति लक्षणास्तीति परोक्षवृत्तिता तुल्या; तथापि श्रुतं ब्रह्मभवनं न हीयते, हीयते तु पूर्वपक्षे । तदिदमुक्तम्—**अत्यन्तेति**। **पिण्डपितृयज्ञन्यायोऽनुक्रम्यते**। **चतुर्थे एवं निरणायि–'पितृयज्ञः स्वकालत्वादनङ्गं स्यात्'**। ( जै. अ. ४ पा. ४ सू. १९ ) 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती' त्यत्रानारभ्याधीतवाक्ये श्रुतः पिण्डपितृयज्ञः क्रत्वर्थः पुरुषार्थो वेति संशये कर्मवाच्यमावास्याशब्दसमभिव्याहारात्तदङ्गत्वम् । यद्यपि कालस्यापि साधारणोऽयं शब्दः; तथापि फलकल्पनापरिहाराय कर्मवाच्येव । अतः क्रत्वर्थ इति प्राप्ते—सिद्धान्तः; कालकर्मसाधारणोऽप्यमावास्याशब्दोऽपराह्णशब्दसमानाधिकृत इह कालपर एव । **नच** साधारण्यम्; काले रूढत्वात्कर्मणि च तत्संबन्धेन लाक्षणिकत्वात् । तस्मात्कर्मसमभिव्याहाराभावाद्विश्वजिन्न्यायेन ( जै. अ. ४ पा. ३ सू. १५ ) स्वर्गकामिनियोज्यकल्पनया स्वर्गफलः पिण्डपितृयज्ञ इति । **ननु** ज्ञानविधिर्यदि ब्रह्मभावफलः, कथं तर्हि भाष्येऽमृतत्वकामस्येत्युक्तं ? तत्राह—**ब्रह्मभावश्चेति**। अमृतत्वशब्देन ब्रह्मभावनिर्देशस्य प्रयोजनमाह—**अमृतत्वं चेति**। अत्र भाष्यकारेण ब्रह्मज्ञानं विधेयमिति निर्देशाद् द्रष्टव्य इति विध्युदाहृतेश्च प्रमाणज्ञानविध्यङ्गीकारेण पूर्वपक्ष इति भ्रमः स्यात्, तन्निवर्तयति—**अत्रचेत्यादिना**। **दृशेरिति**। द्रष्टव्य इति वाक्योपात्तदृशिधातोरुपलब्धिवचनत्वेनोपासनानभिधायकत्वादित्यर्थः । स्वाध्यायविधेरर्थावबोधपर्यन्तत्वात्तेनैव श्रवणजन्यज्ञानस्य प्रापितत्वादित्यर्थः । भावनया **विधेयं** जन्यं वैशद्यं यस्य तत्प्रत्यक्षं तथा । **वाजिनवदिति**। यथामिक्षार्थविहितदध्यानयनाद्वाजिनमप्रयोजकमानुषङ्गिकतया जायते, एवमदृष्टरूपामृतत्वाय विहितादुपासनात्साक्षात्कारो नान्तरीयकतया जायत इति तदुत्पादनं न विधेयमित्यर्थः । **चतुर्थे स्थितम्—'एकनिष्पत्तेः सर्वं समं स्यात्'** ( जै. अ. ४ पा. १ सू. २२ ) । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति" श्रूयते । तत्र संशयः । किमामिक्षैव दध्यानयनं प्रयुङ्क्ते उत वाजिनमपीति । तत्रैकस्माद्दध्यानयनात्पयसः सकाशादामिक्षावाजिनयोर्निष्पत्तेः सर्वमामिक्षादि प्रयोजकं स्यादिति प्राप्ते—सिद्धान्तः; **'संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात्'** (जै. अ. ४पा. १ सू. २३) । अत्र हि दधिसंसृष्टं पय एव प्रकृतं देवतासंबन्धि निर्दिश्यते सा वैश्वदेवीति, न पुनस्ततो निष्पन्नं किंचित्, तत्र नयतेर्द्विकर्मत्वाद्यत्प्रति दध्यानीयते तत्पयआनयनस्य संस्कार्यम्। संस्कार्यमेव प्रयोजकम्। संस्कृतस्य च पयस

## कल्पतरुपरिमलः ।

शब्दो दृश्यत इत्याशङ्क्याह—**यद्यपीति**। **ननु** यदि प्रकृतं सा वैश्वदेवीति तत्पदेन परामर्शनीयं, तर्हि दध्यपि प्रकृतमिति तत्परामर्शनीयं कुतो न स्यात् ? तस्माद्विनिगमनाविरहादुभयं विहायामिक्षां दधिपयोभ्यां निष्पन्नं द्रव्यान्तरमङ्गीकृत्य तत्परामर्शित्वकल्पनं युक्तम्; सर्वनाम्नः प्रकृतपरामर्शित्वासंभवेन प्रकरिष्यमाणपरामर्शित्वस्याथैष ज्योतिरित्यादौ दृष्टत्वादित्याशङ्क्याह—**तत्र नयतेरिति**। द्विकर्मकधात्वर्थान्वयि पयोऽपि कर्मैव तत्र कस्यानयनेन किं संस्कार्यमिति संदेहे दध्या-

गतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति । कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासंभवात् सप्तद्वीपा वसुमती राजासौ गच्छतीत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात् । ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं, तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात् । स्यादेतदेवं, यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत, नतु निवर्तते; श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृह० २।४।५ ) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात् । तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति । अत्राभिधीयते—न, कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात् । शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृति-

## भामती ।

इत्यादयस्तु विधिसरूपा न विधय इति । तदिदमुक्तम्—**तदुपासनाच्चेति** । अर्थवत्तया मननादिप्रतीत्या चेत्यस्य शेषः प्रपञ्चो निगदव्याख्यातः । तदेकदेशिमतं दूषयति—**अत्राभिधीयते—न** एकदेशिमतम् । कुतः ? **कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्** । पुण्यापुण्यकर्मफले सुखदुःखे । तत्र मनुष्यलोकमारभ्याब्रह्मलोकात्सुखस्य तारतम्यमधिकाधिकोत्कर्षः । एवं मनुष्यलोकमारभ्य दुःखतारतम्यमाचावीचिलोकात् । तच्च सर्वं कार्यं च विनाशि च ।

## वेदान्तकल्पतरुः ।

आमिक्षात्वात् तस्याश्च स्त्रीत्वात्स्त्रीलिङ्गमविरुद्धम् । **ननु** यदि दधिसंस्कृतं पय एव रूपभेदेऽप्यामिक्षा भूत्वा दध्यानयनं प्रयुञ्जीत, तर्हि वाजिनमपि दधिसंयुक्तं पय एवेति किं न प्रयुञ्जीत । **नेत्युच्यते संसर्गरसनिष्पत्तेः**; दधिसंसृष्टस्य पयसो यो रसः तस्यामिक्षायामुपलम्भात्, रूपभेदेऽपि तस्यामस्ति संसृष्टं पय इत्यनुमीयते; रूपाभेदेऽपि तक्रपयसोरिव रसभेदोपलम्भात् वाजिनेन; तस्य कटुतिक्तरसत्वादिति । हेतुद्वयविवरणेन पूर्वकृतेनोत्तरग्रन्थस्य व्याख्यातत्वमाह—**अर्थवत्तयेति 'वेदान्ता यद्युपासां विदधति, विधिसंशोधिमीमांसयैव प्राच्या तर्हीरितार्था इति विफलमिदं ब्रह्मजिज्ञासनं स्यात् । अप्यत्युच्चातिनीचो जनिमृतिभयभाग्वैधधीसाध्यमोक्षः कर्मोत्थैः स्वर्गपश्वाद्यतिमधुरफलैः कोऽपराधः कृतो नः ॥' वेदान्ता** यद्युपासनाविधिपराः, तर्हि विहितोपासनायाः पक्षमासादिकालमिततया तत्साध्यफलमपि सातिशयमनित्यं च स्यादतो न विधिपरत्वं वेदान्तानामिति तात्पर्यम् **अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त** इत्यन्तस्य भाष्यस्य दर्शयति—**पुण्यापुण्येत्यादिना** । भाष्ये यद्विषया जिज्ञासेति धर्मस्य प्राचि तन्त्रे विचारितत्वोक्तिरुपास्तेरपि विहिताया धर्मत्वेन पुनरविचार्यत्वाय । अधर्मोपीत्यधर्मोक्तिः पुण्यफलभोगावसान इवोपास्तिफलभोगसमाप्तावधर्मफलं भोक्तव्यमिति दर्शनाय । चोदनालक्षणत्वोक्तिर्यागवद्विहितोपास्तेर्धर्मत्वार्थम् । एवं शरीरवागित्यादिविशेषणानि कर्मफलवदुपास्तिफलस्य शरीरोपभोग्यत्वादि प्रसञ्जयितुम् । संपतत्यनेनास्माल्लोकादमुं लोकमिति संपातः कर्म । **इष्टं** श्रौतम् । **पूर्तं** स्मार्तं वाप्यादि । **दत्तं** दानमिति ।

## कल्पतरुपरिमलः ।

नयनेन पयः संस्कार्यमिति पयसः प्रधानकर्मत्वद्योतनाय कर्मण्यपि तस्मिन् सप्तमीप्रयोगः । यच्च प्रधानं तदेव सर्वनाम्ना परामर्शनीयम् । अतः पयःपरामर्शितच्छब्दसामानाधिकरण्यादामिक्षाशब्दो दध्यानयनेन संस्कृतस्य पयस एव वाचको, न तदुत्पन्नस्य द्रव्यान्तरस्येत्यवसीयत इत्याशयः । **रूपभेदेऽपि** द्रवत्वकठिनत्वधर्मभेदेऽपि । **तर्हि वाजिनमपीति** । दधिसंस्कृतं पय एवामिक्षावाजिनात्मतया रूपद्वयं प्राप्तमित्यपि कल्पनोपपत्तेरामिक्षावद् वाजिनमपि पयस्त्वाविशेषाद् दध्यानयनस्य प्रयोजकं भवेदेव । ततश्च वाजिनापचारे पयोन्तरमानीय दध्यानयनेन संस्कृत्य वाजिनं निष्पादनीयमिति शङ्कार्थः । **तस्यामस्तीति** । तादात्म्येनेति शेषः । **रूपाभेदेऽपि** द्रवत्वधर्माभेदेऽपि । एतदुपलक्षणम् विनापि दध्यानयनम् अतिपाकेन पिण्डीभूतस्य पयसो रूपभेदेऽपि भेदाभावादित्यपि द्रष्टव्यम् । एवं रसानुवृत्तेरेवाभेदप्रयोजकत्वादामिक्षायामेव पयःपरामर्शितत्पदसामानाधिकरण्यं दृश्यते न वाजिने इति भावः । यद्विषया जिज्ञासेत्यादिभाष्यगतविशेषणैः प्रतीयमानवेदान्तानामुपास्तिविधिपरत्वे प्राचीनतन्त्रे विचारितत्वेनात्र विचारो विफलः स्यादित्युक्तिर्**वेदान्ता यद्युपासामिति** श्लोकपूर्वार्धेन संगृहीता, सा न क्षोदक्षमा; वैधफलविषयतया स्वर्गदेवतावद् विधिशेषैः ब्रह्मस्वरूपमात्रस्य प्राचीनतन्त्रन्यायैः कथंचित्सिद्धिसंभवेऽपि तन्निर्गुणत्वादौ विद्याभेदाभेदोपसंहाराभ्यामुपसंहारस्य विशेषस्य चैतत्तन्त्रव्युत्पादयिष्यमाणन्यायैकनिर्णेयस्य ततो निर्णयालाभात्, अतोऽभ्युच्चयमात्रं सा युक्तिः, मूलयुक्तिस्तु श्लोकोत्तरार्धसंगृहीता मोक्षस्य सातिशयत्वानित्यत्वापत्तिरित्येतत् सूचयितुं तत्रैव भाष्यस्य तात्पर्यं दर्शयति टीकाकार इत्यवतारयति—**वेदान्ता यद्युपासनाविधिपरा इति । अधर्मफलं भोक्तव्यमिति** । "तद्य इह कपूयचरणा" इत्यादिश्रुत्या धर्मफलभोगानन्तरं कदाचिद्-

## भामती ।

आत्यन्तिकं त्वशरीरत्वमनतिशयं स्वभावसिद्धतया नित्यमकार्यमात्मज्ञानस्य फलम् । तद्धि फलमिव फलं; अविद्यापनयमात्रेणाविर्भावात् । **एतदुक्तं भवति**—त्वयाप्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मात्मता जीवस्य स्वाभाविकी वेदान्तगम्यास्थीयते । सा चोपासनाविषयस्य विधेर्न फलं; नित्यत्वादकार्यत्वात् । नाप्यनाद्यविद्यापिधानापनयः ; तस्य स्वविरोधिविद्योदयादेव भावात् । नापि विद्योदयः; तस्यापि श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात् । उपासनासंस्कारवदुपासनाऽपूर्वमपि चेतःसहकारीति चेत्, दृष्टं च खलु नैयोगिकं फलमैहिकमपि, यथा चित्राकारीर्यादिनियोगानामनियतनियतफलानाम् । न; गान्धर्वशास्त्रोपासनावासनाया इवापूर्वानपेक्षायाः षड्जादिसाक्षात्कारे वेदान्तार्थोपासनावासनाया जीवब्रह्मभावसाक्षात्कारेऽनपेक्षाया एव सामर्थ्यात् । तथाचामृतीभावं प्रत्यहेतुत्वादुपासनापूर्वस्य, नामृतत्वकामस्तत्कार्यमवबोद्धुमर्हति । अन्यदिच्छत्यन्यत्करोतीति

## वेदान्तकल्पतरुः ।

**आत्यन्तिकमिति** । देवदत्तस्यात्यन्तिकमशरीरत्वं देवदत्तशरीरप्रागभावासमानकालीनो देवदत्तशरीरध्वंसः, सर्वोपाधिप्रत्यस्तमयोपलक्षितं स्वरूपमिति यावत् । विधेयोपास्तिवादिनं प्रति तत्फलस्य मोक्षस्यानित्यत्वादिप्रसञ्जनमिष्टप्रसङ्ग इत्याशङ्क्याह—**एतदुक्तमिति** । उपास्तिविधेः फलं ब्रह्मात्मत्वमुताविद्यानिवृत्तिर्विद्योदयो वेति विकल्प्य क्रमेण निराकरोति—**त्वयापीत्यादिना** । उपासनापूर्वमपि चेतःसहकार्यतश्च विध्यवकाश इत्यर्थः । ऐहिकस्य मर्दनसुखवन्न विधिफलत्वमित्याशङ्क्याह—**दृष्टं चेति** । कारीर्यादिनियोगा इह जन्मनि नियतसस्यर्द्ध्यादिफलाः, चित्रादिनियोगफलं पश्वादि भुवि भोग्यमपीह वा जन्मान्तरे वा भवति। **तत्कार्यमिति** । तदपूर्वं कर्तव्यत्वेनावबोद्धुं नार्हतीत्यर्थः । अपूर्वं चेन्न साक्षात्कारोपयोगि, तर्ह्युपासनक्रियैव

## कल्पतरुपरिमलः ।

धर्मफलभोगस्याप्युक्तत्वादिति भावः । इदमभ्युच्चयमात्रम्; अहंग्रहोपासनाभिस्तत्फलप्राप्तेः प्रागेव सर्वपापक्षयस्याङ्गीकृतत्वात् । **देवदत्तशरीरेति** । देवदत्तशरीरासमानकालीनत्वं प्रलयकालोत्पन्ने तदीयशरीरध्वंसेऽप्यस्तीति तद्वारणाय **प्रागभावविशेषणम्** । शरीरप्रागभावासमानकालीनत्वं चरममुक्तशरीरध्वंसादन्यत्र न संभवतीत्यव्याप्तिवारणाय**आद्यदेवदत्तविशेषणम्** । देवदत्तमुक्तिकाले तदन्यस्यापि कस्यचित्संसारिणः संभवति देवदत्तशरीरप्रागभावासमानकालीनः शरीरध्वंस आत्यन्तिको माभूदिति **द्वितीयदेवदत्तविशेषणम्** । एवमपि देवदत्तस्योपान्त्यशरीरध्वंसो यद्यन्त्यशरीरोत्पत्तिकाले तदुत्पत्त्यनन्तरं वा स्यात्, तदा सोऽप्यात्यन्तिको भवेदिति तद्वारणाय **शरीरतत्प्रागभावासमानकालीनत्वं** विवक्षितम् । **ननु**—न आत्यन्तिकमशरीरत्वम् इत्थं ध्वंसरूपतया निर्वक्तुमयुक्तम्; तस्य साध्यत्वेन वैधोपासनाफलत्वप्रसङ्गात्, किंतु भाष्यटीकोक्तप्रकारेण तत्फलत्वासंभवनिर्वाहाय शरीरावभासकालेऽप्यनुवर्तमानस्तन्मिथ्यात्वशरीरघटको यस्तदत्यन्ताभावस्तद्रूपो वाच्यः, अन्यथा भाष्यटीकाविरोधः स्यादिति—**चेत्, उच्यते**; यद्यात्यन्तिकाशरीरत्वस्य वैधफलत्वनिर्वाहायात्यन्ताभावत्वं परित्यज्य विद्योदयसमनन्तरभाविध्वंसरूपत्वं पूर्वपक्षी शङ्केत, तदापि तस्य न वैधफलत्वप्रत्याशा । शरीरध्वंसमात्रस्यापुरुषार्थत्वेन शरीरस्यान्येषां चोपाधीनां ध्वंसेनोपलक्षितस्य ब्रह्मानन्दस्यैव पुरुषार्थत्वात्तस्य च नित्यत्वादिति दर्शयितुं ध्वंसपक्षोऽप्युपन्यस्तः । तथैव च तात्पर्यं **सर्वोपाधी**त्याद्यग्रिमवाक्येन स्फुटीकृतम् । **ननु**—ब्रह्मानन्दस्य नित्यप्राप्तत्वेऽपि कर्णगतरुचकवदभ्रान्त्याऽनवाप्तकल्पस्यावाप्त्याऽमुख्यफलत्वमभ्यधायि टीकायां, तस्य मुख्यफलत्वमप्युपपादयितुं शक्यम् 'यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं तत्तज्जन्यमिति' लक्षणानुसारेण । अस्ति हि विद्योदयात्प्राङ् मम निरतिशयानन्दो नास्ति न प्रकाशत इति व्यवहारालम्बनं रजते रजतत्वाभाववद् भ्रान्तिसिद्धं विद्यानिवर्त्यं निरतिशयानन्दाभावरूपं तदसत्त्वम् । नच प्रतियोगिव्यधिकरणं प्राक् तदसत्त्वं यस्यास्ति तथाभूतमेव जन्यं वैधफलमिति नियमः; अतथाभूतस्यापि दुःखप्रागभावपरिपालनादेः प्रायश्चित्तादिफलत्वसंप्रतिपत्तेः, तस्माद् ब्रह्मानन्दस्य नित्यत्वेऽपि वैधोपासनाफलत्वमुपपद्यत इति तन्नित्यत्वेन तत्फलत्वाभावोपपादनं नोपपद्यत इति—**चेत्, उच्यते**; प्राक्सिद्धस्य फलत्वं द्वेधा, निवृत्तिप्रसक्तौ परिपाल्यत्वेन वा, असत्त्वभ्रान्तौ तदपनयेन वा । **तत्राद्यमेव** लौकिकेन वैदिकेन वा कर्मणा भवति, **द्वितीयं तु** विद्ययैव । सा च विद्यात्राविहितोपासनया षड्जादिसाक्षात्कारवत्स्वयमेव भवतीति विध्यनपेक्षा टीकायामेवोपपादिता । तस्माद्युक्तमेव भ्रान्त्यानवाप्तकल्पस्य ब्रह्मानन्दस्य नोपासनाविधिफलत्वमिति । **कारीर्यादिनियोगा इति** । "यदि वर्षेत्तावत्येव होतव्यं, 'यदि न वर्षेत् श्वोभूते हविर्निर्वपेत्' इत्यादिलिङ्गात् कारीरी तात्कालिकसस्यार्थवृष्टिहेतुत्वादैहिकफला । आदिशब्देन आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा एतस्य शरीरं गच्छति सोमं रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येवे"त्यादिश्रुतिविहितानि तच्छरीरगतव्याधिनिवृत्त्याद्यर्थानि कर्माणि गृह्यन्ते । **ज्योगामयावी** दीर्घरोगी । **चित्रादिनियोगफलमिति** । इदं चतुर्थे योगसिद्ध्यधिक-

## भामती ।

हि विप्रतिषिद्धम् । नच तत्कामः क्रियामेव कार्यमवगमिष्यति नापूर्वमिति—सांप्रतम्; तस्या मानान्तरादेव तत्साधनत्वप्रतीतेर्विधेर्वैयर्थ्यात् । नचावघातादिविधितुल्यता; तत्रापि नियमापूर्वस्यान्यतोऽनवगतेः । नच ब्रह्मभूयादन्यदमृतत्वमार्थवादिकं किंचिदस्ति, येन तत्काम उपासनायामधिक्रियेत, विश्वजिन्न्यायेन तु स्वर्गकल्पनायां तस्य सातिशयत्वं क्षयित्वं चेति न नित्यफलत्वमुपासनायाः । तस्माद्ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावात्, अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव संभवात्, उपासनायाः संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनःसाचिव्यस्य च मानान्तरसिद्धत्वात्, 'आत्मेत्येवोपासीत' इति न विधिः, अपितु विधिसरूपोऽयम् । यथोपांशुयाजवाक्ये 'विष्णुरुपांशु यष्टव्यः' इत्यादयो विधिसरूपा न विधय इति तात्पर्यार्थः । श्रुतिस्मृतिन्यायसिद्धमित्युक्तं, तत्र श्रुतिं

## वेदान्तकल्पतरुः ।

तदर्थं विधीयतां, नेत्याह—**नच तत्काम इति** । **नन्व**वघातवदुपास्तावप्यस्तु नियमापूर्वं, नेत्याह—**नच ब्रह्मभूयादिति** । नेह परमापूर्ववन्नियमापूर्वसाध्यमस्ति; ब्रह्मभावस्य नित्यत्वादित्यर्थः । **विश्वजिन्न्यायेनेति** । 'विश्वजिता यजेते'त्याद्यश्रुताधिकारं लिङ्गप्रकरणालब्धाधिकारं चोदाहरणम् । निषेधे हि सामर्थ्यात्प्रवृत्तक्रियोऽधिकारी लभ्यते, अङ्गविधिषु तु प्रकरणादिति न चिन्त्योऽधिकारः । एवं सतीह संदेहः किं नियोज्योऽध्याहियतां न वेति । तत्र लोके द्वारं द्वारमित्यादौ क्रियया विना कारकाभिधानापर्यवसानाद्युक्तोऽध्याहारः । इह तु विषयेण कार्यस्यान्विताभिधानपर्यवसानादनध्याहारे प्राप्ते, उच्यते; अत्राप्यभिधेयापर्यवसानद्वाराभिधानापर्यवसानमेव । कार्यं हि साध्यत्वेन कृतिनिरूप्यम् । नरव्यापाररूपा च कृतिः, सा च यथा स्वसाध्यधात्वर्थनिरूप्यैवं स्वाश्रयनरनिरूप्या । तदेवं कृतेः कर्तापि कार्ये कृतिद्वारा संबन्धित्वेन निरूपक इति तमन्तर्भाव्यैव नियोगधीः । नचासावबुद्धात्मनः कार्येण संबन्धं

## कल्पतरुपरिमलः

**रणस्य द्वितीयवर्णके चिन्तितम्**—तदेवं "चित्रया यजेत पशुकाम" इत्यादिविहितानां मनुष्यशरीरोपभोगयोग्यफलकानां कर्मणां किं नियमेन देहान्तरे फलम्, उत तस्मिन्देहे देहान्तरे वेत्यनियम इति संशये पूर्वपक्षः—वर्तमानदेहारम्भककर्मणां यत्फलं तद्भोगार्थत्वाद्वर्तमानदेहस्य तत्फलभोगावसाने तन्नाशावश्यंभावात्, अन्त्येष्टौ दक्षिणे हस्ते जुहूं सादयतीत्यादिवाक्यैर्यज्ञपात्राणां प्रतिपत्तिविधानेन तदपेक्षचित्राद्यदृष्टोत्पत्तिसमनन्तरभाविफलस्य वर्तमानदेहभोग्यत्वासंभवाच्च स्वर्गजनकादृष्टवच्चित्राद्यदृष्टस्यापि स्वफलभोगप्रदानार्थं तद्योग्यदेहारम्भकत्वनियमाच्च नियमेन देहान्तरएव चित्रादिफलमिति । **सिद्धान्तस्तु**—ऐहिकमपि चित्रादिफलं भवत्येव; चित्राद्यनुष्ठानानन्तरं पश्वादिफलदर्शने तदर्थं तदतिरिक्तादृष्टकल्पनाहेत्वभावात् अनन्तरमेव फलादर्शने देशकालादिसहकार्यपेक्षया विलम्बः कल्प्यः । तस्मिन् देहे फलादर्शने तत्फलभोगविरोधिप्रबलप्रारब्धकर्मणा प्रतिबन्धः कल्प्यः । प्रतिबन्धेन च तेन देहान्तरारम्भपूर्वकं तत्र फलं दातव्यमिति कल्प्यम् । वर्तमानदेहारम्भककर्मणो देशकालाद्यपेक्षया यदा न फलप्रदत्वं, तदा तस्मिन् देहे तज्जन्मकृतचित्राद्यदृष्टस्यापि फलप्रदत्वमुपपद्यते । पात्रप्रतिपत्तिस्तु सकलकर्मानुष्ठानसमाप्त्यनन्तरभावित्वात् पुरुषार्था । क्रत्वर्थत्वेऽप्यदत्तफलक्रतुमात्रार्था ॥ "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति" श्रुतेर्दहने विनियोक्ष्यमाणानां यज्ञपात्राणां संस्कारार्था वा; अन्यथा कारीर्यादीनामैहिकफलत्वाभावप्रसङ्गात् । **एतेन**—कर्मणां फलप्रदानार्थं देहारम्भकत्वनियमोऽपि—**निरस्तः**; तस्मादामुष्मिकत्वानियमश्चित्रादिफलस्येति । **नेह परमापूर्ववदिति** । यद्यप्याचार्यमते अवघातादिनियमः प्रत्यासन्नाग्नेयाद्यवान्तरापूर्वप्रयुक्तः; तथापि गुरुमते फलवत्परमापूर्वप्रयुक्त इति तन्मतमनुसृत्य परमापूर्वेत्युक्तम् । नचावघातनियमस्य परमापूर्वप्रयुक्तत्वे तत्साधनत्वाविशेषादाज्यसान्नाय्ययोरवघातप्रसङ्गः; तुषविमोकादिदृष्टप्रयोजनव्यवस्थया व्रीह्यादिषु तद्व्यवस्थोपपत्तेः, अन्यथाग्नेयाद्यपूर्वप्रयुक्तत्वेपि तत्साधनस्रुगादिसाधारण्यप्रसङ्गानिवारणादिति भावः । विश्वजिन्न्यायं गुरुमतेनोपन्यस्यति—**विश्वजितेति** । **प्रवृत्तक्रियः** प्रवृत्तचिकीर्षः । 'न कलञ्जं भक्षयेदित्या'दिनिषेधवाक्यान्यपि फलतो विधिवाक्यानि । तत्र भक्षयत्यादिधातुसमभिव्याहृतनञ्प्रतिपाद्यं भक्षणादिनिवृत्तिरूपमौदासीन्यं विषयः । तद्यद्यप्यभावार्थत्वात्स्वतः साध्यं न भवति; तथापि निषेध्योन्मुखतया प्रचलितावस्थेऽनुत्पन्नतदनुकूलस्पन्दव्यापारे पुरुषे निषेध्यचिकीर्षापनयद्वारा परिपाल्यत्वेन तत् साध्यं भवतीति तस्य नियोगविषयत्वोपपत्तिः । तत्रचार्थान्निषेध्यचिकीर्षुर्नियोज्य इति गुरुमतम् । **इह तु विषयेणेति** । नियोगगतकृतिसाध्यतारूपकार्यताघटकत्वेन विषय एव तत्प्रतीत्यनुबन्धो, नतु नियोज्यः; तदभावेऽप्यध्ययननियोगस्य प्रयाजादिनियोगानां च प्रतीतेरिति भावः । **उच्यत इति । अयमाशयः**—कार्यत्वेन प्रतीयमानो नियोगः स्वस्य कार्यताघटके विषये प्रवर्तकस्वभावस्तत्र प्रवर्तनीयं पुरुषमपेक्षते; अन्यथा प्रवर्तकत्वव्याघातात्, अन्यतः प्रवृत्तिसिद्धौ तु न तमपेक्षते । तथाच आचार्यकनियोगेन अध्ययने माणवकस्य दर्शपूर्णमासनियोगेन तन्नियोज्यस्य तदङ्गेषु प्रयाजादिषु च प्रवृत्तिसिद्ध्या तन्नियोगानां कर्तृपुरुषविशेषानपेक्षायामपि विश्वजिदादावन्यतः प्रवृत्त्यलाभात्तदपेक्षास्तीति

सिद्धं धर्माख्यं, यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा' ( जै० सू० १।१।१ ) इति सूत्रिता; अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय। तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे। मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते। ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते। धर्मतारतम्यादधिकारितारतम्यम्। प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम्। तथाच यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनं, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनं, तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' (छान्दो०५।१०।५) इत्यस्माद्गम्यते। तथा मनुष्यादिषु नारकस्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः। तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते। एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथाच श्रुतिः—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छान्दो०८।१२।१) इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते। अशरीरत्वमेव धर्मकार्यमितिचेन्न, तस्य स्वाभाविकत्वात्। 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (काठ० १।२।२१)। 'अप्राणो ह्यमनाः शुभ्रः' (मुण्ड० २।१।२) 'असङ्गो ह्ययं पुरुषः' (बृह० ४।३।१५) इत्यादिश्रुतिभ्यः। अतएवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यम-

## भामती।

दर्शयति—**तथाच श्रुतिरिति**। न्यायमाह—**अतएवेति**। यत्किल स्वाभाविकं तन्नित्यं, यथा चैतन्यम्। स्वाभा-

## वेदान्तकल्पतरुः।

स्वतस्तेन संबध्यते। स्वसंबन्धिकार्यबोद्धा च नियोज्य इति सोऽध्याहार्य इति स्थिते चिन्ता—किं सर्वेषामध्याहारः, उत एकस्येति। तत्राविशेषात्सर्वेषामिति प्राप्ते—**उच्यते**; एकेनाकाङ्क्षाशान्तेरेकस्येति। एवं स्थिते विचारः किं यस्य कस्यचिन्नियोज्यस्याध्याहारः, उत स्वर्गकामस्येति। तत्राविशेषादनियम इति प्राप्ते—उच्यते; **'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्** ( जै. अ. ४ पा. ३ सू. १५ )' स्वर्गकाम एवाध्याहार्यः। विशेषो हि गम्यते पुरुषाणां सुखाभिलाषित्वात्। दुःखनिवृत्तेरपि तत्रैवान्तर्भावात्। दुःखनिवृत्तिस्तु न सुखाविनाभूता सुषुप्ते सत्यामपि तस्यां सुखजन्मादर्शनात्, अनवच्छिन्नस्य सुखस्य स्वर्गत्वात्तस्य च सर्वसुखविशेषात्प्रत्यविशिष्टत्वाद्विशेषे च मानाभावात्स्वर्ग एव नियोज्यविशेषणं स्यादिति कृत्वाचिन्तेयम्। यः सत्रायावगुरेत्स विश्वजिता यजेतेति सत्रप्रवृत्तस्यावगुरणोपरमे निमित्ते प्रायश्चित्ततया विहितत्वेन साधिकारत्वादिति। **यत्किलेति**। स्वाभाविकनित्यचैतन्यात्मकस्य ब्रह्मात्मत्वस्य साध्यत्वं व्याहतमित्यर्थः।

## कल्पतरुपरिमलः।

अतस्तदध्याहारो युक्त इति। स च फलकामोऽध्याहार्यः, पुरुषाणां कामप्रवणतया तत्र प्रयुक्तिलाघवात्, निषेधवाक्येषु तु न कामी नियोज्योऽध्याहार्यः; औदासीन्यस्य परिपाल्यत्वसिद्धये तत्प्रच्युतिप्रसक्त्यर्थं सामर्थ्याद् निषेध्योन्मुखस्य नियोज्यस्यावश्यं प्राप्त्या तत एवाकाङ्क्षाशान्तेः। **किं सर्वेषामिति**। किं सर्वफलकामानामध्याहारः, उतैकफलकामस्येत्यर्थः। **अन्तर्भावादिति**। यस्य यदा यदवच्छेदेन सुखं, तस्य तदा तदवच्छेदेन न दुःखमित्यविनाभावादित्यर्थः। **एतदुपलक्षणं**—सुखस्य भावरूपत्वेन लघूपस्थितिकत्वाच्चेत्यपि द्रष्टव्यम्। **अनवच्छिन्नस्येति**। पुत्रपश्वाद्येकैकविषयविशेषमात्रानवच्छिन्नस्य देशविशेषदेहविशेषभोग्यस्य संकल्पोपनतसर्वविषयप्रयुक्तस्य स्वर्गसुखस्य पुत्रपश्वादिसुखविशेषान्प्रति सामान्यरूपत्वादित्यर्थः। **विशेषे मानाभावादिति**। सर्वसुखविशेषानुगतसामान्यमुल्लङ्घ्य किंचिद्विषयविशेषावच्छिन्नसुखग्रहणे मानाभावादित्यर्थः। इत्थं गुरुणा निबन्धने व्याख्यातम्। प्रायः सर्वपुरुषान्प्रति स्पृहणीयत्वेनाविशिष्टत्वादिति भाष्यकारादिव्याख्या। **नन्वत्र** विश्वजिदधिकरणे भाष्यकारैः 'तस्मात्पितृभ्यः पूर्वेद्युः क्रियत' इति पितृयज्ञवाक्यं 'यः सत्रायावगुरत' इति विश्वजिद्वाक्यं च विषयवाक्यत्वेनोदाहृतम्। तत्र द्वितीयोदाहरणमयुक्तं, विश्वजितो नैमित्तिकाधिकारत्वादित्याशङ्क्याह—**कृत्वाचिन्तेति**। **अवगुरणोपरमे इति**। उद्यमनिवृत्तावित्यर्थः। 'गुरी उद्यमने' इति धातोः कुटादित्वेन ङित्त्वाद्गुणाभावः। **ननूद्यमनिवृत्तौ** विश्वजिदित्ययुक्तम्, 'यः सत्रायेति' वाक्यात् सत्रं संकल्प्य तदप्रयुञ्जानस्य विश्वजिदिति

**शरीरत्वं नित्यमिति सिद्धम् । तत्र किंचित्परिणामिनित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते; यथा पृथिव्यादिजगन्नित्यत्ववादिनाम्, यथाच सांख्यानां गुणाः, इदं तु**

भामती ।

विकं चेदं, तस्मान्नित्यम् । **परे हि द्वयीं नित्यतामाहुः**—कूटस्थनित्यतां परिणामिनित्यतां च । तत्र नित्यमित्युक्ते मा भूदस्य परिणामिनित्यतेत्यत आह—**तत्र किंचिदिति** । परिणामिनित्यता हि न पारमार्थिकी, तथाहि—तत्सर्वात्मना वा परिणमेदेकदेशेन वा । **सर्वात्मना परिणामे** कथं न तत्त्वव्याहतिः । **एकदेशपरिणामे वा** स एकदेशस्ततो भिन्नो वाऽभिन्नो वा । **भिन्नश्चेत्** कथं तस्य परिणामः; नह्यन्यस्मिन्परिणममानेऽन्यः परिणमतेऽतिप्रसङ्गात् । **अभेदे वा** कथं न सर्वात्मना परिणामः । **भिन्नाभिन्नं तदिति** चेत्, तथाहि; तदेव कारणात्मनाऽभिन्नं भिन्नं च कार्यात्मना । कटकादय इवाभिन्ना हाटकात्मना—। भिन्नाश्च कटकाद्यात्मना । नच—भेदाभेदयोर्विरोधान्नैकत्र समवाय इति; युक्तम् विरुद्धमिति नः क्व संप्रत्ययो यत्प्रमाणविपर्ययेण वर्तते, यत्तु यथा प्रमाणेनावगम्यते तस्य तथाभाव एव । कुण्डलमिदं सुवर्णमिति सामानाधिकरण्यप्रत्यये व्यक्तं भेदाभेदौ चकास्तः । तथाह्यात्यन्तिकेऽभेदेऽन्यतरस्य द्विरवभासप्रसङ्गः । भेदे वात्यन्तिके न सामानाधिकरण्यं, गवाश्ववत् । आधाराधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं, नहि भवति कुण्डं बदरमिति । नाप्येकासनस्थयोश्चैत्रमैत्रयोश्चैत्रो मैत्र इति । सोऽयमबाधि-

वेदान्तकल्पतरुः ।

भाष्ये कूटस्थनित्यमिति विशेषणं न परिणामिव्यवच्छेदाय, सिद्धान्ते तन्नित्यत्वासंमतेः; अतो वैयर्थ्यमित्याशङ्क्याह—**परे हीति** । परभ्रान्तिर्व्यवच्छेद्येत्यर्थः । इदं तु पारमार्थिकमिति भाष्ये कूटस्थनित्यत्वे पारमार्थिकत्वं हेतूक्तं, तत्तदा घटेत, यदि यत्पारमार्थिकं तदविकृतमिति व्याप्तिः स्यात्, तदर्थं परिणामिनित्यस्य भ्रमसिद्धत्वमाह—**परिणामीति** । परिणामो हि पूर्वरूपत्यागेन रूपान्तरापत्तिः । तत्र पूर्वरूपस्य सर्वात्मना त्यागेन रूपान्तरोत्पत्तौ जातस्य प्राक्तनरूपत्वं व्याहतमतोऽनित्यत्वमित्युक्ते शङ्कते—**एकदेशेति** । य एकदेशो नश्यति स धर्मिणः सकाशाद्भिन्न इति पक्षे न धर्मिणः परिणामः, किंत्वेकदेशस्य स चानित्य इति न परिणामिनित्यत्वसिद्धिरित्याह—**भिन्नश्चेदिति** । नश्यतश्चैकदेशस्य धर्म्यभेदे सर्वात्मना वस्त्वपगमान्न नित्यत्वमित्याह—**अभेदे इति** । पक्षद्वयोक्तदोषपरिहारायैकमेव कार्यकारणात्मकं वस्तु तस्य कार्याकारेण परिणामित्वं, तानि च कार्याणि भिन्नानि, कारणाकारेण च नित्यत्वं तच्चाभिन्नमिति शङ्कते—**भिन्नाभिन्नमिति** । यत्प्रामाणविपर्ययेण विरोधेन वर्तते तत्र विरुद्धमिति संप्रत्यय इत्यनुषङ्गः । एकस्य कार्यकारणरूपेण द्व्यात्मकत्वे प्रमाणमाह—**कुण्डलमिति । द्विरवभासेति** । हेम हेमेति वा कुण्डलं कुण्डलमिति वेत्यर्थः । अपर्यायानेकशब्दवाच्यत्वेन हेमकुण्डलयोर्भेदः सामानाधिकरण्याच्चाभेद इत्युक्ते हेमत्वस्य कुण्डलव्यक्त्याश्रितत्वाद्वा कुण्डलाकारसंस्थानस्य कनकत्वस्य चैकद्रव्याश्रितत्वेन वा सामानाधिकरण्यं नाभेदादित्याशङ्क्य व्यभिचारयति—**आधारेति** । आधारेति दृष्टान्ते

कल्पतरुपरिमलः ।

प्रतीतिरित्याशङ्क्याह—**प्रायश्चित्ततयेति । एवं हि श्रूयते**—"यः सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यश्छन्दोभ्य आत्मानमागुरते यः सत्रायागुरते स विश्वजितातिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत सर्वाभ्य एव देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यश्छन्दोभ्य आत्मानं निष्क्रीणीत" इति । एवं निष्क्रयद्वारेण संस्तवसत्रप्रवृत्तौ न युज्यते, अतः सत्रं संकल्प्य दैवान्मानुषाद्वा प्रतिबन्धात् ततो निवृत्तस्य प्रायश्चित्ततयेदं विश्वजिद्विधानमित्यर्थः । **व्यभिचारयतीति । ननु**—ययोः कयोश्चिदाधाराधेयत्वेनैकाश्रितत्वेन वा सामानाधिकरण्यमिति नात्र शङ्का, येन कुण्डबदरयोश्चैत्रमैत्रयोश्च व्यभिचार उच्यते, किंत्वेकप्रवृत्तिनिमित्तस्यापरप्रवृत्तिनिमित्ताधाराश्रितत्वेन वा प्रवृत्तिःनिमित्तद्वयस्याप्येकाश्रितत्वेन वा सामानाधिकरण्यमिति; तथैव ह्याचार्यैरवतारिकाग्रन्थे शङ्काभिप्रायो लिखितः, तथैव च तदभिप्रायो वर्णयितुं युक्तः; भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति प्रसिद्ध्यनुरोधात् । **नच**—हेमकुण्डलयोरवयवावयविनोर्भेदपक्षे हेमत्वस्य कुण्डलाश्रितत्वं हेमत्वकुण्डलत्वयोरेकाश्रितत्वं च नास्तीति—वाच्यम्; हेमत्वस्यावयवावयविवृत्तिजातित्वेन तत्सत्त्वादिति—**चेत्, उच्यते;** हेमावयवातिरिक्तं कुण्डलरूपम् अवयवि द्रव्यान्तरमभ्युपगम्यते चेत् तत्पीतरूपगुरुत्वकठिनत्वरहितमेव वाय्वादिसदृशमभ्युपगन्तव्यम्; अवयवावयविगतस्य पीतरूपद्वयस्य गुरुत्वद्वैगुण्यस्य चानुपलम्भात्, घटकुड्ययोरिव कठिनद्रव्ययोरवयवावयविनोरेकत्र भूतलादौ समावेशासंभवाच्च, अवयवावयविभावानापन्नयोरेवासमावेश इति सविशेषणनियमकल्पनस्य गौरवपराहतस्याप्रामाणिकत्वात् । एवंच कुण्डले पीतरूपाद्यभावेन तदभिव्यङ्ग्यस्य हेमत्वस्य तत्रासंभवेनैकप्रवृत्तिनिमित्तस्येत्यादेः सामानाधिकरण्यप्रयोजकत्वाभ्युपगमे तेन 'सुवर्णं कुण्डलमिति' सामानाधिकरण्यानिर्वाहात्तन्निर्वाहाय हेमकुण्डलानामाधाराधेयभावमात्रमेकाश्रितत्वमात्रं वा तत्प्रयोजकमास्थेयमित्यभिप्रेत्य टीकायां कुण्डबदरयोश्चैत्रमैत्रयोश्च व्यभिचार उक्त इति तात्पर्यम् । भेदो रूपादिवद् भावरूप इति पक्षे स किमभेदविरुद्धस्तदविरुद्धो वा । **आद्ये** भावाभावरूपत्वपक्षे वक्ष्यमाणं दूषणं भविष्यतीत्यभिप्रेत्य

## भामती।

तोऽसंदिग्धः सर्वजनीनः सामानाधिकरण्यप्रत्यय एव कार्यकारणयोर्भेदाभेदौ व्यवस्थापयति । तथाच कार्याणां कारणात्मत्वात्, कारणस्य च सद्रूपस्य सर्वत्रानुगमात्, सद्रूपेणाभेदः कार्यस्य जगतः, भेदः कार्यरूपेण गोघटादिनेति । **यथाहुः**—'कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥' इति । **अत्रोच्यते**—कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत् । परस्पराभाव इति चेत्, किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा । न चेत्, एकत्वमेवास्ति, नच भेदः । अस्ति चेद्भेद एव नाभेदः । नच भावाभावयोरविरोधः; सहावस्थानासंभवात् । संभवे वा कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः; भेदस्याभेदाविरोधात् । **अपिच** कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते एवं कटकात्मनापि न भिद्येरन्; कटकस्य हाटकादभेदात् । तथाच हाटकमेव वस्तुसन्न कटकादयः; भेदस्याप्रतिभासनात् । अथ हाटकत्वेनैवाभेदो न कटकत्वेन,

## वेदान्तकल्पतरुः।

सिद्धौ भेदाभेदौ दार्ष्टान्तिके योजयति—**तथाचेति**। लोके कार्यस्य कुण्डलादेः कारणात्मकत्वात्परमकारणस्य च सतः सर्वत्र हेमवदनुगमात् सन् घट इत्यादिसामानाधिकरण्यवशेन जगतः कार्यस्य सत्ता कारणरूपेणाभेदो व्यावृत्तकार्यरूपेण च भेद इत्यर्थः। **भेद इति**। किं रूपादिवद्भावरूपो धर्मः, उतैक्याभावः। **नाद्यः**; ऐकान्तिकाभेदानिषेधात्। **द्वितीयमाशङ्क्याह—किमयं कार्येति**। **तत्त्वेनेति**। कटकत्ववर्धमानकत्वरूपेण तयोरितरेतराभेदप्रसङ्ग इत्यर्थः। कार्यस्य कारणाभेदे च सर्वकार्याणामेककार्यात्मकत्वप्रसङ्गः, एककार्यस्य सर्वकार्याभिन्नेन कारणेनाभेदादित्याह—**अपिचेति**। एवमेककार्यात्मकत्वादितरकार्याणां तस्य च कारणादभेदाद्भेदासिद्धावैकान्तिकाद्वैतापात इत्याह—**तथाच हाटकत्वमेवेति**। कटकस्य हि द्वे रूपे स्तो हाटकत्वं कटकत्वं च। तत्र हाटकरूपेणास्य कुण्डलादिभिरभेद इष्ट एव, न कटकरूपेण; व्यावृत्तत्वात्तस्येति प्रस्मृतपराभिसंधिः स्वप्रक्रियया शङ्कते—**अथेति**। सिद्धान्ती तु कटकहाटकयोरभेदाद्धटकस्य कुण्डलादिष्व-

## कल्पतरुपरिमलः।

**द्वितीये** दूषणमाह—**ऐकान्तिकेति**। तथाच भेदे सत्येवात्यन्ताभेदोऽपि स्यादित्यर्थः। **द्वितीयमाशङ्क्याहेति**। परस्पराभाव इति चेदिति पूर्वग्रन्थेनाशङ्क्येत्यर्थः। **तत्त्वेनाभेदप्रसङ्ग** इत्यस्य तात्त्विकाभेदप्रसङ्ग इत्यर्थो भाति, स तु नानिष्टः; कारणात्मना कटकवर्धमानयोरभेदाङ्गीकाराद् इत्याशङ्क्य तत्त्वेनेति पदं व्याचष्टे—**कटकत्वेति**। **ननु**—भावाभावयोरुभयोरपि भेदाभेदयोर्हाटकत्वकटकत्वावच्छेदभेदेन वृत्तिरभ्युपगम्यते, अतस्तयोर्न सहावस्थानासंभवः; **नच** भेदावच्छेदककटकत्वावच्छेदेन कटके वर्धमानभेदप्रसङ्गः, नापि कटकाभिन्नमुकुटे कटकत्वेनापि कटकाभेदप्रसङ्गः, नाप्यनुवृत्तिव्यावृत्तिव्यवस्थाभावप्रसङ्गः, नापि हाटकत्वेनावगते कटकत्वादिना जिज्ञासाद्यनुपपत्तिः, भेदाभेदमनङ्गीकुर्वद्भिरपि ह्येकस्मिन्धर्मिणि केनचित्प्रकारेण निश्चिते तदन्यप्रकारेण जिज्ञासासंशयादिकं समर्थ्यते, अभेदवद् भेदस्याप्यभ्युपगमे का जिज्ञासानुपपत्तिः। **यत्तु** हेमनिर्णयेन कटकादीनां निर्णये तदभेदः कारणमित्यादि। **तत्र** वैपरीत्यमपि वक्तुं शक्यम्। हेमनिर्णयेन कटकादीनामनिर्णये तदभेदः कारणं तदभावादभेदादनिर्णयकार्याभाव औत्सर्गिकः प्राप्तः, स कारणस्य भेदस्य सद्भावादपोद्यत इति; अस्ति ह्यनिर्णयस्यापि निर्णयप्रतिबन्धकसद्भावाधीनं परिपाल्यत्वरूपं कार्यत्वम्, तस्मात्सर्वमिदं भेदाभेददूषणजातमयुक्तम्। युक्तत्वे वा स्वमतेप्येतत्प्रसज्येत; स्वमतेऽपि हि भेदाभेदाभ्यामेव सामानाधिकरण्योपपादनम्; अभेदः सत्यो भेदस्तत्राध्यस्त इति परं स्वमते विशेष उक्तः। तत्र भेदप्रतीतावभेदोपि सह प्रतीयत इत्युपगन्तव्यम्; भेदप्रतीतिमात्रेण सामानाधिकरण्योपपादनासंभवात्। तयोर्विरुद्धयोरेकत्र प्रतीतिः कथं? कथं च मुकुटे कुण्डलाभिन्नहाटकाभिन्ने कुण्डलत्वेनापि कुण्डलाभेदो न स्यात्? कथंच हाटके प्रतीते कुण्डलादिजिज्ञासा स्यात्? अपिच अभेदः सत्यः भेदोऽध्यस्त इत्यर्धजरतीयमप्ययुक्तम्; सह प्रतीत्यभ्युपगमे अन्यतरबाधावश्यम्भावकल्पकाभावात्, सत्यानृतयोर्ब्रह्मतदध्यस्तप्रपञ्चयोः सिद्धान्ते तात्त्विकाभेदानङ्गीकाराच्च, तथैवारम्भणाधिकरणे ( ब्र. अ. २ पा. १ सू. १४ ) टीकाकारैरपि वक्ष्यमाणत्वात्, इहानुपदमेव पूर्वग्रन्थे तस्मात्तेऽपि हाटकाद् भिन्ना एवेति तस्मात् ते हेम्नो भिद्यन्त इति च हाटककटकाभेदप्रतिक्षेपाच्च, तस्मात् सर्वमिदमनुपपन्नमिति—**चेत्; अत्र ब्रूमः**—हाटकत्वं कटकत्वं च किमेकस्मिन्वर्तते, न वा; **न चेद्** एकस्मिन्नवच्छेदभेदेन भेदाभेदयोर्विरुद्धयोर्वृत्तिसमर्थनं न लभ्यते। **वर्तते चेत्** किं कटकत्वं हाटकत्वादन्यदुत तदेव; **अन्यच्चेत्** प्रवृत्तिनिमित्तभेदेनैव सामानाधिकरण्योपपादनलाभान्नैकस्मिन्धर्मिणि अभेदवद्भेदोऽप्यङ्गीकार्यः। अतः सामानाधिकरण्योपपादनार्थं भेदाभेदमभ्युपगच्छता प्रवृत्तिनिमित्तभेदेनान्यथोपपत्तिपरिहाराय हाटकत्वमेव कटकत्वं न ततोऽन्यदित्येष्टव्यमित्यभिप्रेत्य सहावस्थानासंभवादि सर्वमिदं दूषणमुक्तम्। इममेवाभिप्रायं सहावस्थानासंभवादिदूषणोक्तौ गर्भितं विस्मृत्याथ हाटकत्वेनैवाभेद इत्यादिशङ्काग्रन्थः प्रवृत्त इत्याचार्यैरवतारितम् **प्रस्मृतपराभिसंधिः स्वप्रक्रियया शङ्कत इति**। एवं चाभेदसत्तया कुण्डलादेर्ज्ञातत्वापादनेऽपि न वैपरीत्यशङ्का-

**पारमार्थिकं, कूटस्थनित्यं, व्योमवत्सर्वव्यापि, सर्वविक्रियारहितं, नित्यतृप्तं, निरवयवं, स्वयं-**

## भामती ।

तेन तु भेद एव कुण्डलादेः । यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्तते ? नानुवर्तते चेत्कथं हाटकादभिन्नः कटकः ? ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव, यथा सूत्रात्कुसुमभेदाः । नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः, तस्मात्तेऽपि हाटकाद्भिन्ना एवेति । सत्तानुवृत्त्या च सर्ववस्त्वनुगमे इदमिह नेदम्, इदमस्मान्नेदम् , इदमिदानीं नेदम्, इदमेवं नेदमिति विभागो न स्यात् । कस्यचित् क्वचित् कदाचित् कथंचिद्विवेकहेतोरभावात् । **अपिच** दूरात्कनकमित्यवगते न तस्य कुण्डलादयो विशेषा जिज्ञास्येरन्; कनकादभेदात्तेषां, तस्य च ज्ञातत्वात् । अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते । **नन्वभेदोऽप्यस्तीति** किं न ज्ञाताः, प्रत्युत ज्ञानमेव तेषां युक्तं, कारणाभावे हि कार्याभाव औत्सर्गिकः, स च कारणसत्तयाऽपोद्यते । अस्ति चाभेदे कारणसत्तेति कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थकानि स्युः । तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत्ततो भिद्यते, यथा करभे गृह्यमाणेऽगृह्यमाणो रासभः करभात् । गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः, तस्मात्ते हेम्नो भिद्यन्ते । कथं तर्हि हेम कुण्डलमिति सामानाधिकरण्यम् ? इति चेत्, नह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम् । अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम् ? न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते इत्युक्तम् । तस्माद्भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति युक्तम् । भिद्यमानतन्त्रत्वाद्भेदस्य, भिद्यमानानां च प्रत्येकमेकत्वात्, एकाभावे चानाश्रयस्य भेदस्यायोगात्, एकस्य च भेदानधीनत्वात्, नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्, एकत्वग्रहस्य चान्यानपेक्षत्वात्, अभेदोपादानैवानिर्वचनीयभेदकल्पनेति सांप्रतम् । तथाच श्रुतिः—'मृत्तिकेत्येव सत्यम्' इति । तस्मात् कूटस्थनित्यतैव पारमार्थिकी न परिणामिनित्यतेति सिद्धम् । **व्योमवत्** इति च दृष्टान्तः परसिद्धः; अस्मन्मते तस्यापि कार्यत्वेनानित्यत्वात् । अत्रच **कूटस्थनित्यम्** इति निर्वर्त्यकर्मतामपाकरोति । **सर्वव्यापि** इति प्राप्यकर्मताम् । **सर्वविक्रियारहितम्**

## वेदान्तकल्पतरुः ।

नुवृत्तेरभेदे कटकस्यापि तैरभेदः स्यादिति पूर्वोक्तमेव परिहारं स्मारयति—**यदि हाटकादिति** । कटकस्य कुण्डलादिष्वनुवृत्त्यनभ्युपगमे तेष्वनुवृत्तहाटकादभेदाभावः स्यादिति प्रतिजानीते—**नानुवर्तते चेदिति** । अनुवृत्ताद्व्यावृत्तस्य भेदे व्याप्तिमाह—**येहीति** । उपनयमाह—**नानुवर्तन्ते इति** । अर्थाद्धेतुसिद्धिर्द्रष्टव्या । निगमयति—**तस्मादिति** । कुण्डलादिषु हेमानुवृत्त्या यदि तदभेदात्कटकादीनामनुगमः, तदा सत्तानुवृत्त्या सर्ववस्तूनामितरेतराभेदापत्तेर्व्यवहारपरिप्लव इत्याह—**सत्तेति** । **इति विभागो न स्याद्** इत्यस्य प्रत्येकं संबन्धः । **इह** क्षीरे **इदं** दधि **नेदं** तैलमिति संसर्गतदभावव्यवस्था न स्यात् । **इदं** पटादिकमस्मात्कुड्याद्भिद्यते **इदं** कुड्यमस्मात्कुड्यान्न भिद्यते इत्यसंकरो न स्यात् । **इदानीं** वसन्ते काले **इदं** कोकिलरुतमस्ति इदमम्बुदध्वानं **नेति** व्यवस्था न स्यात् । **इदं** कुम्भादि **एवं** कम्बुग्रीवत्वादिप्रकार**मिदं** पटादि **नैवमि**ति प्रकारासङ्करो न स्यादित्यर्थः । उक्तास्ववस्थासु हेतुमाह—**कस्यचिदिति** । कुतश्चिदित्यपि द्रष्टव्यम् । इतश्च कार्यस्य कारणेन न वास्तवमैक्यमित्याह—**अपिचेति** । निश्चितकनकादभेदान्न कुण्डलादिषु संशय इत्युक्ते संशयसंभवं भेदप्रयुक्त्या शङ्कते—**अथेति** । सिद्धान्त्यविनिगममाह—**नन्विति** । हेमनिर्णयेन कटकादीनां निर्णये तदभेदः कारणं, तदभावाद्भेदरूपान्निर्णयकार्याभाव औत्सर्गिकः प्राप्तः, स कारणस्याभेदस्य भावादपोद्यते, घटसामग्रीत इव तत्प्रागभावस्ततः कनकनिश्चये कटकादिनिश्चयादविनिगम एव न, किंतु वैपरीत्यनिश्चय इत्याह—**प्रत्युतेति** । तेषां कुण्डलादीनां जिज्ञासा तद्विषयज्ञानानि चेत्यर्थः । वस्तुतः कार्यकारणयोरभेदाभावं सप्रमाणकमुपसंहरति—**तेनेति** । यदि हेमकुण्डलयोर्न भेदाभेदौ, तर्हि सामानाधिकरण्यं न स्यात्, नह्यत्यन्तभेदे तद्भवति; कुण्डलकटकयोरदर्शनात् । नाप्यत्यन्ताभेदे; हेम हेमेत्यनुपलंभादिति पूर्ववाद्युक्तमनुवदति—**कथं तर्हीति** । यदि हेम्नः सकाशात् कुण्डलादीनां भेदाभेदौ, तर्हि तेषामनुवृत्तहेम्नः सकाशाद् अभेदादितरेतरव्यावृत्तिर्न स्यान्न स्याच्च हेम्नि निर्णीते संशय इति प्रतितर्केण मिथो विरोधाख्येन सामानाधिकरण्यानुपपत्तितर्कं दूषयति—**अथेति** । अत्यन्ताभेदे मा नामोपपादि हेमादेरनुवृत्तिव्यावृत्तिव्यवस्था, माच घटिष्ट हेम्नि ज्ञाते कुण्डलादिजिज्ञासा, भेदाभेदमते ते किं न स्याताम्, इत्याशङ्क्य पूर्वोक्तमविनिगममुत्सर्गापवादं च स्मारयति—**अनैकान्तिके चेति** । एवं निरुद्धेऽनेकान्तवादिनि स्वमतेन सामानाधिकरण्यमुपपादयति—**तस्मादिति** । विरोधादन्यतरबाधेऽप्यभेदो बाध्य इति सौगतमतमाशङ्क्याह—**अभेदोपादानेति** । भेदः किं धर्मिप्रतियोगिनोर्व्यासज्य वर्तते, उत प्रतियोगिनमपेक्ष्य धर्मिण्येव । **आद्ये** धर्मिप्रतियोगिनोः प्रत्येकवर्त्यैकत्वापेक्षेत्युक्त्वा **द्वितीये** धर्म्यैक्यापेक्षेत्याह—**एकाभावे चेति** । ततः स्वसत्तायामभेदापेक्षत्वाद्भेदस्य स एवाभेदेऽध्यस्त इत्यर्थः । प्रतीतावपि भेदस्यैवाभेदापेक्षेत्याह—**नायमिति** । 'मृत्तिकेति' श्रुतिः, कारणमेव सत्यमित्याह, अतः—**अत्यन्ता-**

## भामती ।

इति विकार्यकर्मताम् । **निरवयवम्** इति संस्कार्यकर्मताम् । व्रीहीणां खलु प्रोक्षणेन संस्काराख्योंऽशो यथा जन्यते, नैवं ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्ति; अनवयवत्वात्, अनंशत्वादित्यर्थः । पुरुषार्थतामाह—**नित्यतृप्त-**

## वेदान्तकल्पतरुः ।

**भेदपरेति । अनंशत्व**माकारभेदराहित्यम् । नित्यतृप्तत्वादीनि श्रुत्युक्तान्येव भाष्येऽनूदितानीति नासिद्धानि; कार्यविलक्षणानधिगतविषयलाभात् स्वमते शास्त्रपृथक्त्वसिद्धिः **अतस्तद्ब्रह्मेति** भाष्ये उक्ता । प्राग्विमोक्षनित्यत्वान्नियोगायोग उक्तः,

## कल्पतरुपरिमलः ।

वकाशः; अभेदे सत्यवच्छेदकभेदाभावेन भेद एव न संभवतीति तात्पर्येण प्रत्युतेत्यादिटीकातद्व्याख्यानयोः प्रवृत्तेः, स्वमतेनाभेदव्यवस्थापनं तु व्यावहारिकाभेदविषयं न तात्त्विकाभेदविषयमिति नारम्भणाधिकरण-( ब्र. अ. २ पा. १ सू. १४ ) विरोधः । नाप्यभेदप्रतिक्षेपकपूर्वग्रन्थविरोधः; अतएवाभेदप्रतिक्षेपको यस्मिन् गृह्यमाणे यत्र गृह्यत इत्यादिटीकाग्रन्थो वस्तुतः कार्यकारणयोरभेदाभावं सप्रमाणकमुपसंहरतीति भेदाभेदवाद्यभिमतवास्तवाभेदप्रतिक्षेपपरतयावतारितः । भेदस्याप्यस्तत्वोक्तिस्तु प्रतिभासमात्रकल्पितत्वाभिप्राया । अतएवारम्भणाधिकरणटीकायां वाचा केवलमारभ्यते विकारजातं, नतु तत्त्वतोऽस्ति, यतो नामधेयमात्रमेतद् यथा पुरुषस्य चैतन्यं, राहोः शिर इति विकल्पनामात्रमित्यारम्भणश्रुतेरर्थ उक्तः । भेदबाधावश्यम्भावोऽप्यारम्भणश्रुतिप्राप्तः, तदनुकूलन्यायमात्रमिह विरोधादन्यतरबाधादिप्रक्रियया दर्शितम् । **ननु** यद्युपादानहेमाद्यतिरिक्तकटकमुकुटादिविकारभेदः कल्पनामात्रसिद्ध इति मतं, कथं तर्हि **वाक्यान्वयाधिकरण-**( ब्र. अ. १ पा. ४ सू. १९ ) **टीकायां**—"नतु मृद्विकारः शरावादिः शतशोऽपि मृन्मृदिति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्यो निवर्तयितुं; तत्कस्य हेतोः; तस्यापि मृदो भिन्नस्य तात्त्विकत्वाद्, वस्तुनश्च ज्ञानेनोच्छेत्तुमशक्यत्वादि" त्युक्तम्; **उच्यते;** शरावादिसंस्थानविशेषस्य व्यावहारिकसत्त्वाभिप्रायं तद्वाक्यम्, इह तूपादानएव पूर्वावस्थोपमर्देन तदवस्थान्तरं जायते, नतूपादानभिन्नं तदारब्धं तदागन्तुकावस्थाविशेषवदवयवि द्रव्यान्तरमस्तीत्युपादानविकारयोः सत्येवाभेदकल्पनामात्रमित्यारम्भणाधिकरणे वक्ष्यमाणं स्मारितम् । तत्स्मारणं च भेदाभेदाभ्यां सामानाधिकरण्यमुपपादयितुं; तस्य हेमत्वकुण्डलत्वयोरुपादानरूपैकद्रव्याश्रिततत्वेनोपपत्तेः, तथैवात्र तदुपपादनस्य विवक्षितत्वात् । अतएवाचार्यैर्वाक्यान्वयाधिकरणे (ब्र. अ. १ पा. ४ सू. १९) वक्ष्यते—"**सामानाधिकरण्यं यद्धेमकुण्डलयोर्न तत् । भेदाभेदावगाहीति प्राग्वाचस्पतिनेरितम्॥**" किंतु सुवर्णकुण्डलाभेदे कथं स्वर्णेन कुण्डलं कृतं सौवर्णं कुण्डलमित्यादिभेदव्यवहार इत्याकाङ्क्षायां पुरुषस्य चैतन्यमितिवत् कल्पनामात्रसिद्धभेदालम्बनः स व्यवहार इति भेदव्यवहारमात्रोपपादनार्थं कृतमिति" इति सर्वमनवद्यम् । अस्मिन्संदर्भे 'कथं तर्हीति' टीकावतारिकाग्रन्थे 'न ह्यत्यन्तभेदे तद्भवति; कुण्डलकटकयोरदर्शनादिति' कुण्डलकटकयोरत्यन्तभेदः सिद्धवत्कृत्योपन्यस्तः; तदुपन्यासो लोकदृष्ट्यनुसारेण वा भेदवादिमतानुसारेण वा कटकत्वकुण्डलत्वाद्यवच्छेदेन भेद एव नाभेदोऽपीत्यभिप्रायेण वा नेतव्यः; भेदाभेदवादिमते हाटकात्मना तयोरभेदात्, **यथा हाटकात्मना कठकमुकुटकुण्डलादयो न भिद्यन्त इति** टीकायामपि तथैव तन्मतस्थितिप्रदर्शनाच्च ।' **सौगतमताशङ्क्ये**त्यत्र गौतममतमिति पाठश्चेत्सनिर्विशङ्कः । **न्यायसूत्रकृता गौतमेन प्रत्यक्षपरीक्षायां**—"**नचैकदेशोपलब्धिरवयविसद्भावात्**" (न्यायसूत्र. अ. २ पा. आ. १ सू. ३०) इति घटाद्येकदेशसंनिकर्षे सति न तदुपलब्धिमात्रं, तद्भिन्नस्यावयविनः सद्भावात् तस्याप्युपलब्धिरस्तीति प्रतिज्ञाय **साध्यत्वादवयविनि संदेहः ( न्यायसू. अ. २ आ. १ सू. ३१)** इत्यवयवभिन्नोऽवयवी सिद्धो नास्तीति तत्र संदेहमुपन्यस्य, **'सर्वाग्रहणमवयव्यसिद्धेः' (न्यायसू. अ. २ आ. १ सू. ३२) 'धारणाकर्षणोपपत्तेश्चेति' (न्यायसू. अ. २ आ. १ सू. ३३)** सूत्राभ्यामवयवभिन्नावयव्यभावे परमाणूनामन्त्यावयवानामतीन्द्रियत्वात्तदाश्रितस्य गुणकर्मसामान्यादेः सर्वस्याप्यग्रहणं स्यात् । अतो गुणकर्मादिग्रहणाद् अस्ति तदाश्रयः पटादिरवयवी । तथा एकदेशधारणे कृत्स्नधारणादेकदेशाकर्षणे कृत्स्नाकर्षणाच्च सोऽस्ति; अन्यथाऽवयवानां भिन्नत्वात्कस्यचिदवयवस्य धारणाकर्षणाभ्यामन्यस्य धारणाकर्षणानुपपत्तेरित्यवयवभिन्नावयविप्रसाधनेन अवयवाभेदनिराकरणात् । सौगतमिति पाठस्तु सौगतैरवयविस्थाने अवयवसंघातस्याभिषिक्तत्वात् संघातस्यावयवभेदाभिप्रायो योज्यः । **नन्वनं**शेपि संस्कारः कर्मजन्यातिशयोऽस्त्वित्याशङ्क्याह—**अनंशत्वमिति । आकारभेदो** धर्मभेदः । 'तद् ब्रह्मेति वाक्ये यस्येयं जिज्ञासा प्रस्तुतेति विशेषणस्य तात्पर्यमाह—**कार्यविलक्षणेति । स्वमते इति ।** पूर्वपक्षिमते तु न शास्त्रपृथक्त्वासिद्धिः; उभयोरपि तन्त्रयोः कार्यविषयत्वाविशेषादिति भावः । शास्त्रपृथक्त्वसिद्धिस्तद्ब्रह्मेति भाष्ये उक्तेति पाठः । अतस्तद्ब्रह्मेत्यतः शब्दः संपातायातः । **टीकायां**—तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य क्रियानिष्पाद्यस्य तु मोक्षस्यानित्यत्वं प्रसंजयति—**यद्यदीति ।** नचागमबाधः; आगमस्योक्तेन प्रकारेणोपपत्तेः । **अपिच ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवारिका इत्याहेति** केषुचित्कोशेषु

ज्योतिःस्वभावम् । यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । तदेतदशरीरत्वं मोक्षाख्यम् । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च' (क० २।१४) इत्यादिश्रुतिभ्यः । अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता, तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपिच 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड० ३।२।९) 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मुण्ड० २।२।८) । 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन' (तैत्ति० २।९) 'अभयं वै जनक प्राप्तोऽसि' (बृह० ४।२।४) । 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' (वाजसनेयिब्राह्मणोप० १।४।१०) 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ईशा० ७) इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' (बृह० १।४।१०) इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम् । यथा तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्र० ६।८) 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' (छान्दो० ७।१।३) 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनात्कुमारः' (छान्दो० ७।२६।२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथाचाचार्यप्रणीतं

## भामती ।

मिति । तृप्त्या दुःखरहितं सुखमुपलक्षयति । क्षुद्दुःखनिवृत्तिसहितं हि सुखं तृप्तिः । सुखं चाप्रतीयमानं न पुरुषार्थ इत्यत आह—**स्वयंज्योतिरिति** । तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य (क्रियानिष्पाद्यस्य तु मोक्षस्यानित्यत्वं प्रसञ्जयति—**तद्यदीति** । नचागमबाधः; आगमस्योक्तेन प्रकारेणोपपत्तेः । **अपिच**) ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवारिका इत्याह—**अपिच ब्रह्म वेदेति** । अविद्याद्वयप्रतिबन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वं न स्वतोऽपूर्वोत्पादेन चेत्यत्रापि श्रुतीरुदाहरति—**त्वं हि नः पितेति** । न केवलमस्मिन्नर्थे श्रुत्यादयः, अपित्वक्षपादाचार्यसूत्रमपि न्यायमूलमस्तीत्याह—**तथाचाचार्यप्रणीतमिति** । **आचार्यश्चोक्तलक्षणः पुराणे**—'आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥' इति । **तेन हि प्रणीतं सूत्रम्**—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति । पाठापेक्षया कारणमुत्तरं, कार्यं च पूर्वं, कारणापाये कार्यापायः, कफापाय इव कफोद्भवस्य ज्वरस्यापायः । जन्मापाये दुःखापायः, प्रवृत्त्यपाये जन्मापायः, दोषापाये प्रवृत्त्यपायः । मिथ्याज्ञानापाये दोषापायः । मिथ्याज्ञानं चाविद्या, रागाद्युपजनितक्रमेण दृष्टेनैव संसारस्य परमं निदानम् । सा च तत्त्वज्ञानेन ब्रह्मात्मैकत्वविज्ञानेनावगतिपर्यन्तेन विरोधिना निवर्त्यते । ततोऽविद्यानिवृत्त्या ब्रह्मरूपाविर्भावो मोक्षः, नतु विद्याकार्यस्तज्जनितापूर्वकार्यो वेति सूत्रार्थः । तत्त्वज्ञानान्मिथ्याज्ञानापाय इत्येतावन्मात्रेण सूत्रोपन्यासः, नत्वक्षपादसंमतं तत्त्वज्ञानमिह संमतम् ।

## वेदान्तकल्पतरुः ।

इदानीं तत्साधनज्ञानस्य केवलदृष्टार्थत्वाच्च स उच्यत इत्याह—**तदेवमित्यादिना** । **उपपाद्य इत्यस्य निवारिका इत्याह** इत्यनेन संबन्धः । एवं फलस्वभावेन नियोगाभावमुक्त्वा फलिज्ञानस्वभावेनाप्युच्यत इत्याह—**अविद्याद्वयेति** । **स्वत**

## कल्पतरुपरिमलः ।

पाठः । कोशान्तरेषु तु तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवारिका इति पाठः । अस्मिन्पाठे उपपाद्येत्यस्य निवारिका इत्यव्यवहितनिवारणक्रिययान्वयः प्रतिभाति, तदन्वयो न युक्तः; नैयोगिकत्वनिवारणार्थाभिः श्रुतिभिः श्रुत्यन्तरोदाहरणपूर्वकं मोक्षफलनित्यत्वस्याप्रतिपादितत्वादित्याशङ्क्य उपपाद्येत्यस्याहेत्यनेन संबन्धमाह—**उपपाद्येत्यस्येति** । **एवं फलस्वभावेनेति** । तदेवमिति टीकावतारिकाग्रन्थे मोक्षस्य नित्यत्वेन नैयोगिकत्वासंभवस्य प्रागुपपादितस्यानुवादपूर्वकं मोक्षसाधनज्ञानस्य तात्कालिकब्रह्मप्राप्तिसाधनत्वाद् नैयोगिकत्वासंभव उच्यत इति तस्य टीकाग्रन्थस्य तात्पर्यमुक्तम्, इदानीं तु ब्रह्मभावप्राप्तिफलस्य प्राप्तप्राप्तिरूपस्य तात्कालिकफलत्वस्वाभाव्येन नियोगासंभवं तदेवमित्यादिग्रन्थोक्तमनूद्य फलसाधनस्य तत्त्वज्ञानस्याविद्योच्छेदद्वारकत्वस्वाभाव्येन नियोगद्वारकत्वासंभव उच्यत इत्येवमविद्याद्वयेत्यादिटीकावतार्यते । अतो न पूर्वटीकावतारिकाग्रन्थे-

## भामती ।

तदनेनाचार्यान्तरसंवादेनायमर्थो दृढीकृतः । **स्यादेतत्**—नैकत्वविज्ञानं स्थितवस्तुविषयं, येन मिथ्याज्ञानं भेदावभासं निवर्तयन्न विधिविषयो भवेत्, अपितु संपदादिरूपम् । तथाच विधेः प्रागप्राप्तं पुरुषेच्छया कर्तव्यं सत् विधिगोचरो भविष्यति । यथा वृत्त्यनन्तत्वेन मनसो विश्वेदेवसाम्याद्विश्वान्देवान्मनसि संपाद्य मन आलम्बनमविद्यमानसमं कृत्वा प्राधान्येन संपाद्यानां विश्वेषामेव देवानामनुचिन्तनं तेन चानन्तलोकप्राप्तिः । एवं चिद्रूपसाम्याज्जीवस्य ब्रह्मरूपतां संपाद्य जीवमालम्बनमविद्यमानसमं कृत्वा प्राधान्येन ब्रह्मानुचिन्तनं तेन चामृतत्वफलप्राप्तिः । अध्यासे त्वालम्बनस्यैव प्राधान्येनारोपिततद्भावस्यानुचिन्तनं, यथा 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' । एवं जीवमब्रह्म 'ब्रह्मेत्युपासीत' इति । क्रियाविशेषयोगाद्वा, यथा 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' । बाह्या खलु वायुदेवता वह्न्यादीन् संवृङ्क्ते । महाप्रलयसमये हि वायुर्वह्न्यादीन्संवृज्य संहृत्यात्मनि स्थापयति । **यथाह द्रविडाचार्यः**—'संहरणाद्वा संवरणाद्वा स्वात्मीभावाद्वायुः संवर्गः' इति । अध्यात्मं च प्राणः संवर्ग इति । स हि सर्वाणि वागादीनि संवृङ्क्ते । प्रायणकाले हि स एव सर्वाणीन्द्रियाणि संगृह्योत्क्रामतीति । सेयं संवर्गदृष्टिर्वायौ प्राणे च दशाशागतं जगद्दर्शयति यथा, एवं जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरमृतत्वाय फलाय कल्पत इति । तदेतेषु त्रिष्वपि पक्षेष्वात्मदर्शनोपासनादयः प्रधानकर्माण्यपूर्वविषयत्वात्, स्तुतशस्त्रवत् । आत्मा तु द्रव्यं कर्मणि गुण इति संस्कारो वात्मनो

## वेदान्तकल्पतरुः ।

**इति** । विहितक्रियारूपेणेत्यर्थः । **न्यायसूत्रे—दोषो** रागादिः । **प्रवृत्तिः** कर्म । आरोप्यत्वसाम्येऽप्यध्यासात्सम्पदो भेदमाह—**मन इति** । आरोप्यप्रधाना संपदधिष्ठानप्रधानोऽध्यासः । अरोपितस्तद्भावो ब्रह्मादिभावो यस्य तन्मनआदि तथा । **वह्न्यादीनि** इत्यादिशब्दात्सूर्यचन्द्रादयो गृह्यन्ते । **वागादीनिति** । चक्षुःश्रोत्रमनांसि संवृज्य उद्यम्य लयं गमयितुं चालयित्वेत्यर्थः । **संवरणादिति** । उद्यमनादित्यर्थः । यो हि यदुद्यच्छति तत्स्ववशतया संवृणोतीति । **स्वात्मीभावादिति** । साम्येन कारणात्मत्वोपगमनादित्यर्थः । यद्यपि श्रुतौ स्वापे प्राणः संवर्ग उक्तः; तथापि न्यायसाम्यात्स्वस्य चात्र प्रकटत्वात्प्रायणमुदाहृतम् । अग्न्यादेरुपलक्षणत्वात्सर्वाश्रयत्वं वायुप्राणयोरुपास्यमित्याह—**सेयमिति** । **दशाशागतं** दशदिग्गतम् । संवर्गदृष्टान्तं निगमयति—**यथेति** । दार्ष्टान्तिकमाह—**एवमिति** । **बृंहणक्रियया** देहादिपरिणमनक्रियया । **आत्मदर्शनोपासनादय इति** । **दर्शनं** प्रमितिः । एतच्च प्रमाणज्ञानं विधेयमिति मतमवलम्ब्योक्तम् । आदिशब्दो दृष्टान्तभूतमनआद्युपास्त्यर्थः । **स्तुतशस्त्रवदिति । भेदलक्षणेऽभिदधे—स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्** ( जै. अ. २ पा. १ सू. १३ ) 'आज्यैः स्तुवते' 'प्रउगं शंसतीति' स्तुतशस्त्रे समाम्नाते

## कल्पतरुपरिमलः ।

नार्थैक्यशङ्का । न स्वत इत्युक्तं; स्वत एव हि विद्याया मोक्षसाधनत्वं, नान्यायत्तमित्याशङ्क्य व्याचष्टे—**विहितक्रियारूपेणेति । आरोप्यप्रधानेति** । यद्यपि **बृहदारण्यकोपनिष**'**द्थ संपद**' **इति संपदुपासनानामुपक्रमे**—अल्पेषु कर्मसु महतां कर्मणां तत्फलाय बुद्ध्या संपादनं संपद्, अश्वमेधादीनि महान्ति कर्माणि कात्स्न्र्येनानुष्ठातुमशक्तानां संभवदङ्गमात्रसाहित्येन तान्यनुतिष्ठतां तदङ्गाश्रयोपासनाविशेषैस्तत्फलसंपादनं वा संपदिति द्वेधा भाष्यकारैर्व्याख्यातम् । **वार्तिककारैरपि**—'फलवत्कर्मणां क्वापि किंचित्सामान्यसंश्रयात् । संपत्तिर्महतां संपदल्पीयःकर्मसूच्यते ॥ यदि वा तत्फलस्यैव किंचित्सामान्यवर्त्मना । संपादनं भवेत्संपदग्निहोत्रादिकर्मणि ॥ नातिभारोस्ति नो बुद्धेः शास्त्रं चेत्तत्परं भवेत् । विदुषां श्रेयसेऽतोऽध्वा न क्वचित्प्रतिहन्यते ॥' इति । अनन्तं वै मन इति विहितविश्वेदेवोपासनाया इष्ट्यादिषु सर्वकर्मानुसंधातुर्ब्रह्मणः तदनुसंधानकरणं मनोधिष्ठानमिति 'कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायती'त्याद्युपक्रमवशादवगतम् । अतस्तस्यापि कर्मसंबन्धः; तथापि तमर्थं सिद्धं कृत्वा संपदुपासनानामारोप्यप्राधान्यं प्रतीकोपासनानामधिष्ठानप्राधान्यं चानादिवृद्धव्यवहारसंप्रदायसिद्धमिह लिखितम् । **ननु संवरणम्** उद्यमनमिति व्याख्यानमयुक्तम्, तयोर्भेदादित्याशङ्क्य लक्षणाबीजं संबन्धमाह—**योहीति । ननु**—टीकायां संवृङ्क्त इत्यस्य संवृज्य संहृत्यात्मनि स्थापयतीत्यर्थमुक्त्वा तत्र संमतिरप्युदाहृता संवरणाद्वा स्वात्मीभावाद्वा वायुः संवर्ग इति । तत्र संवृङ्क्ते इत्यस्य संहरणार्थत्वं तावदुपपद्यते; 'वृजि वर्जने' इति लुग्विकरणपठितादितो धातोरात्मनेपदिनः सिद्धस्य संवृङ्क्त इत्यस्य वर्जयतीत्यर्थकस्य संवरणे पर्यवसानोपपत्तेः, तथैव संवरणार्थकत्वमप्युपपद्यते; 'वृजि वरणे' इति रुधादिगणपठितात् परस्मैपदिनो धातोः छान्दसेन पदव्यत्ययेन संवृङ्क्त इति रूपसिद्धेः । अस्ति च संवरणं संहृतस्योपादानेन स्वात्मभावापादने । किमर्थं संवरणेनोद्यमनं लक्षणीयं, मुख्यार्थान्वयानुपपत्त्यभावात्—**सत्यम्**; वायुस्वभावाच्चालनमपि संभवतीति द्योतनाय तात्पर्यतस्तथा व्याख्यतम् । **अग्न्यादेरुपलक्षणत्वादिति । ननु**—'वायुरग्निसूर्यचन्द्रापः संहृत्य स्वात्मभावमापादयति' 'प्राणो वाक्चक्षुःश्रोत्रमनांसीत्युक्त्वा 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतमिति' तेऽग्न्यादयो वागादयश्च वायुप्राणाभ्यां सह दशेति वाक्य-

न्यायोपबृंहितं सूत्रम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (न्या० सू० १।१।२) इति । मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति । नचेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम्, यथा 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति' (बृह० ३।१।९) इति । नचाध्यासरूपम्, यथा 'मनो ब्रह्मेत्युपासीत' (छान्दो० ३।१८।१) 'आदित्यो ब्रह्मेत्यादेशः' (छान्दो० ३।१९।१) इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः । नापि विशिष्टक्रियायोगनिमित्तं, 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' (छान्दो० ४।३।१,३) इतिवत् । नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम् । संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' (छान्दो० ६।८।७) 'अहं ब्रह्मास्मि' (बृह० १।४।१०) 'अयमात्मा ब्रह्म' (बृह० २।५।१९) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' (मुण्ड० २।२।८) इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन् । 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड० ३।२।९) इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिपक्षे न सामञ्जस्येनोपपद्येरन् । तस्मान्न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम् ।

---

## भामती ।

दर्शनं विधीयते । यथा दर्शपूर्णमासप्रकरणे 'पत्न्यवेक्षितमाज्यं भवति' इति समाम्नातं, प्रकरणिना च गृहीतमुपांशुयागाङ्गभूताज्यद्रव्यसंस्कारतयावेक्षणं गुणकर्म विधीयते, एवं कर्तृत्वेन क्रत्वङ्गभूते आत्मनि 'आत्मा वा अरे द्रष्टव्यः' इति दर्शनं गुणकर्म विधीयते । 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत' (जै. अ.२पा.१ सू. ८) इति न्यायादत आह—**नचेदं ब्रह्मात्मैकत्वविज्ञानमिति** । कुतः **संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञान इति** । दर्शपूर्णमासप्रकरणे हि समाम्नातमाज्यावेक्षणं तदङ्गभूताज्यसंस्कार इति युज्यते । नच 'आत्मा वा अरे द्रष्टव्यः' इत्यादि कस्यचित्प्रकरणे समाम्नातम् । नचानारभ्याधीतमपि 'यस्य पर्णमयी जुहूर्भवति' इत्यव्यभिचरितक्रतुसंबन्धजुहूद्वारेण जुहूपदं क्रतुं स्मारयद्वाक्येन

## वेदान्तकल्पतरुः ।

आज्यप्रउगशब्दौ स्तोत्रशस्त्रविशेषनामनी । प्रगीतमन्त्रसाध्यं देवतादिगुणसंबन्धाभिधानं स्तोत्रम् । शस्त्रमप्रगीतमन्त्रसाध्यम् । ते किं देवताप्रकाशनाख्यसंस्कारार्थत्वेन गुणकर्मणी, उतापूर्वार्थत्वेन प्रधानकर्मणी इति संदेहे, गुणसंबन्धाभिधानाद्गुणिन्या देवताया अभिधानेन याज्यावर्क्ष्यमाणोपयोगिदेवतास्मरणस्य दृष्टत्वाद्गुणकर्मत्वे प्राप्ते—सिद्धान्तः; '**अपि वा स्तुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम्**।' (जै. अ. २पा.१सू.२४) स्तुतिरिह विहिता श्रूयते 'स्तौति' 'शंसतीति' । स्तुतिश्च गुणाभिधानेन स्वरूपप्रकाशनम् । यथा विशालवक्षाः क्षत्रिययुवेति । यत्राभिधानविवक्षा न तत्र स्तुतिं प्रतीमो, यथा यो विशालवक्षास्तमानयेति । तस्मात् स्तौतिशंसती श्रौतार्थलाभाय प्रकरणे अपूर्वोत्पत्तिं प्रति स्तोत्रशस्त्रे विदध्यातामिति । एवमिहात्मोपासनं प्रधानकर्म आत्मा भूतो भव्यशेष इति । अवेक्षितमिति निष्ठया आज्ये कर्मण्यवेक्षणं गुणीकृतम् । भाव्युपयोगमाज्यस्याह—**दर्शपूर्णमासेति** । पूषानुमन्त्रणमन्त्रवदुत्कर्षं वारयति—**प्रकरणिना चेति** । ग्रहणे हेतुमाह—**उपांश्विति** । 'सर्वस्मै वेति' वाक्यात्सर्वार्थमप्याज्यमुत्पत्तावविहितद्रव्यकोपांशुयागाङ्गम्; आग्नेयादीनामुत्पत्तिशिष्टपुरोडाशाद्यवरोधात् । सत्यप्यत्राज्यभागाद्यङ्गेष्वाज्यनिवेशे न प्रधानहविष्ट्वमिति । द्रव्यसंस्कारकस्य गुणकर्मत्वे जैमिनीयसूत्रमुदाहरति—**यैस्त्विति** । (जै. अ. २ पा. १ सू. ८) **यै**रवघातादि**भिर्द्रव्यं चिकीर्ष्यते,** संस्कर्तुमिष्यते **गुणस्तत्र प्रतीयेत,** द्रव्ये गुणभूतं कर्मप्रतीयेतेत्यर्थः । आत्मोपास्त्यादेः संस्कारकर्मत्वं प्रकरणाद्वाक्याद्वा भवद्भवेत्, **नाद्य** इत्याह दृष्टान्तवैषम्यपूर्वकं—**दर्शपूर्णमासेति** । **न द्वितीय** इत्याह—**न चानारभ्येति** ।

## कल्पतरुपरिमलः ।

शेषे परिगणिताः, कथमग्न्यादिग्रहणं सर्वोपलक्षणं स्याद्, व्यवस्थिताग्न्यादिविषयदशसंख्योक्तिविरोधादिति—**चेत, उच्यते**; 'दश सन्तस्तत्कृत' मिति दशसंख्यावत्त्वं कृतायसादृश्येन ताद्रूप्यं चोक्तमुपजीव्यदशसंख्यावत्त्वेन 'दशाक्षरा विराडन्नं विराडि'त्यर्थवादान्तरोक्तप्रक्रियया सर्वाशागतसकलान्नरूपत्वं कृतत्वेन, 'कृतायो यथा दशसंख्यान्तर्भाववत्त्वेन तामत्तीव, एवं वायुप्राणरूपैषा दशात्मिका देवता दशसंख्यासंस्तुतं सर्वमन्नमत्तीवेति' । सर्वान्नात्तृत्वं चोक्तं वाक्यशेषे—'तस्मात्सर्वासु दिक्ष्वन्नमेव सैषा विराडन्नादीति' । एवंचेहाग्न्यादेरुपलक्षणत्वोक्तिर्वाक्यशेषतः सर्वाशागतभोग्यभोक्तृरूपसकलजगदाश्रयत्वप्राप्तेरुपलक्षणार्था । अतएव ज्योतिरधिकरणे ( अ. १ पा. १ सू. २४. ) सकलान्नात्रादिरूपमिदं सार्वात्म्यं वाक्यशेषार्थमेवाचार्या वर्णयिष्यन्तीति । 'पूष्णोऽहं देवयज्ययेति' पूषानुमन्त्रणमन्त्रस्य पूषदेवताकेष्टिपूत्कर्षः । **सर्वस्मै वेति** । "सर्वस्मै वा एतद्यज्ञाय गृह्यते यज्जुह्वामाज्यमिति" वाक्याज्जौवाज्यमविहितद्रव्यकसर्वयागाङ्गं सदुपांशुयाजस्याप्यङ्गं भवतीत्यर्थः । **सत्यप्यत्राज्यभागाद्यङ्गेष्वाज्यनिवेशे न प्रधानहविष्ट्वमिति । ननु**—उपांशुयाजाज्यस्यैव प्रधानह-

अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या । किं तर्हि? प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रा । एवंभूतस्य ब्रह्मणस्तज्ज्ञानस्य च न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम् । नच विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः; 'अन्यदेव तद्विदितादथो अविदितादधि' (केन० १।३) इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृह० २।४।१३) इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति—'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' ( केन० १।४ ) इति । अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरितिचेत्, न; अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । नहि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि ? प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति । तथाच शास्त्रम्—'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्' (केन०

## भामती ।

यथा पर्णतायाः क्रतुशेषभावमापादयति, एवमात्माऽव्यभिचरितक्रतुसंबन्धः, येन तद्दर्शनं क्रत्वङ्गं सदात्मानं क्रत्वर्थं संस्कुर्यात् । तेन यद्ययं विधिस्तथापि 'सुवर्णं भार्यम्' इति वत् विनियोगभङ्गेन प्रधानकर्मैवापूर्वविषयत्वान्न गुणकर्मेति स्ववीयस्त्वैतद्दूषणमनभिधाय सर्वपक्षसाधारणं दूषणमुक्तम्, तदतिरोहितार्थतया न व्याख्यातम् । किंच ज्ञानक्रियाविषयत्वविधानमस्य बहुश्रुतिविरुद्धमित्याह—**नच विदिक्रियेति** । शङ्कते—**अविषयत्व इति** । ततश्च शान्तिकर्मणि वेतालोदय इति भावः । **निराकरोति—न** । कुतः **अविद्याकल्पितभेदनिवृत्तिविषयत्वादिति** । सर्वमेव

## वेदान्तकल्पतरुः ।

**यद्ययमिति** विधिलाभावो हि पूर्वपक्षोपन्यासे वर्णित इति । **सुवर्णं भार्यमितिवदिति । शेषलक्षणेऽभिहितम्—'अद्रव्यत्वात्तु शेषः स्यात्'**( जै. अ.३पा.४सू.२७) 'तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवती'त्यनारभ्याधीते संशयः—किं शोभनवर्णहिरण्यधारणं क्रत्वङ्गमुत पुरुषधर्मः इति । तत्र फलकल्पनाभयात्क्रतुनिवेशः; दुर्वर्णं इत्यादि त्वेवंकामशब्दविरहान्न फलपरम् । नच सत्रवद्विपरिणामः; क्रत्वङ्गत्वेन गतिसंभवात् ॥ तथाच वैदिककर्मत्वसाम्यादग्निहोत्रादिप्रकरणनिवेश इति प्राप्ते—**अद्रव्यत्वाद्** द्रव्यदेवतासंबन्धराहित्यान्न स्वतन्त्रं कर्म, किंतु क्रतुशेष इति सूत्रार्थः ।

## कल्पतरुपरिमलः ।

विष्टेऽप्याज्यभागादीनामप्याज्यं हविरिति तद्वारेणाज्यसंस्काराणामाज्यभागाद्यर्थत्वमप्यस्त्येव; **'द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम्'** ( जै. अ.३पा.८सू.३०)इति जैमिनिना तथा सूत्रितत्वात्, द्रव्यसंस्काराः न केवलं प्रधानार्थाः किंत्वङ्गप्रधानार्था इति निर्णयार्थं प्रवृत्तस्य **'प्रकरणविशेषादसंयुक्तं प्रधानस्य'**( जै. सू.अ. ३ पा.७ सू.१ ) इत्यधिकरणस्य **'लिङ्गदर्शनाच्च'** ( जै. अ. ३ पा. ७ सू. ४ ) तिगुणसूत्रेणाज्यसंस्काराणामाज्यभागप्रभृत्यङ्गार्थत्वमप्यस्तीत्यत्र 'ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथममाज्यभागौ यक्ष्यन् भवती'ति ध्रौवाज्याभिघारणप्राथम्ये तद्धविष्काज्यभागप्राथम्यहेतूकरणस्य लिङ्गतयोपन्यासाच्च, तस्मादवेक्षणस्याज्यसंस्कारस्य प्रधानमात्रार्थत्वोक्तिरयुक्तेति—**चेत्, उच्यते**; नात्र तस्य प्रधानमात्रार्थत्वमुक्तं, किंतु टीकायामुपांशुयाजग्रहणमन्येषामप्याज्यहविष्कयागानामुपलक्षणमभिप्रेत्य । उपांशुयाजः किमित्याज्यहविष्कयागसामान्योपलक्षकतया निर्दिष्टः ? प्राथमिकत्वादाज्यभागावेव तथा निर्देशार्हावित्याशङ्कायां, प्राधान्यादुपांशुयाजस्तथा निर्दिष्ट इत्ययमर्थः **सत्यप्यत्रेत्यादि**ग्रन्थेन दर्शितः, अतो न दोषः । **फलकल्पनाभयादिति** । उपलक्षणमेतत् । पुरुषार्थत्वे हिरण्यरूपसाधनविशिष्टस्य धारणस्य विधायकं वाच्यमिति कृत्यप्रत्ययोक्तकर्मप्राधान्यभङ्गभयादित्यपि द्रष्टव्यम् । **क्रतुनिवेश इति** । धारणसंस्कृतस्य हिरण्यस्य विनियोगाकाङ्क्षया कल्प्य इति भावः । **सत्रवद्विपरिणाम** इति स्थाने सक्तुवद्विपरिणाम इति क्वचित्पाठः । हिरण्यसाधनकेन धारणेनेष्टं भावयेदिति सक्तुन्यायाद्विपरिणामे सत्यनारभ्याधीतस्य तस्य क्रतुनिवेशकल्पकाभावात् फलविशेषाकाङ्क्षायामार्थवादिकफलविपरिणामोऽपि कल्प्य इति भावः । क्रत्वङ्गत्वेन गतौ सत्यां कृत्यप्रत्ययावगतकर्मप्राधान्यभङ्गः फलविपरिणामः फलाय हिरण्यविशिष्टधारणविधिरिति त्रयमपि नाश्रयणीयमिति परिहारार्थः । **नन्वनारभ्याधीतस्य** कुतः क्रतुनिवेशसिद्धिः ? संस्कृतविनियोगनियमाच्चेत्, कुतः क्रतुसंबन्धावगतेः प्राक् संस्कारविधित्वनिर्णयः ? तन्निर्णयेऽपि लौकिककर्मसु वा निवेशः कुतो न स्यात् ? तत्राह—**वैदिककर्मत्वसाम्यादिति** । 'तप्ते पयसि दध्यानयती'त्यत्र पयसः क्रतुसंबन्धात्प्रागेव दध्यानयनसंस्कार्यत्वेऽवगते पश्चात् सा वैश्वदेवीति वाक्येन संस्कृतविनियोगाकाङ्क्षापूरणं दृष्टम्, एवमिहापि धारणसंस्कार्यत्वेनावगते हिरण्ये तद्विनियोगाकाङ्क्षप्रसूतार्थापत्त्या वैदिककर्मत्वसादृश्योपस्थितेष्वग्निहोत्रादिषु विनियोगकल्पनया तत्पूरणमिति भावः । **द्रव्यदेवतेति । ननु**—द्रव्यदेवतासंबन्धराहित्येन धारणस्य यागत्वाभाव एव सिद्ध्येत्, नतु धारणरूपतयैव स्वतन्त्रकर्मत्वस्याभावोऽपि—

२।३) 'नदृष्टेर्द्रष्टारं पश्येः' 'न विज्ञातेर्विज्ञातारं विजानीयाः' ( बृह० ३।४।२) इति चैवमादि । अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । यस्य तूत्पाद्यो मोक्षस्तस्य मानसं, वाचिकं, कायिकं वा कार्यमपेक्षत इति युक्तम् । तथा विका-

## भामती ।

हि वाक्यं नेदंतया वस्तुभेदं बोधयितुमर्हति । नहीक्षुक्षीरगुडादीनां मधुररसभेदः शक्य आख्यातुम् । एवमन्यत्रापि सर्वत्र द्रष्टव्यम् । तेन प्रमाणान्तरसिद्धे लौकिक एवार्थे यदा गतिरीदृशी शब्दस्य, तदा कैव कथा प्रत्यगात्मन्यलौकिके । अदूरविप्रकर्षेण तु कथंचित्प्रतिपादनमिहापि समानम् । त्वंपदार्थो हि प्रमाता प्रमाणाधीनया प्रमित्या प्रमेयं घटादि व्याप्नोतीत्यविद्याविलसितम् । तदस्या विषयीभूतोदासीनतत्पदार्थप्रत्यगात्मसामानाधिकरण्येन प्रमातृत्वाभावात् तन्निवृत्तौ प्रमाणादयस्तिस्रो विधा निवर्तन्ते । नहि पक्तुरवस्तुत्वे पाक्यपाकपचनानि वस्तुसन्ति भवितुमर्हन्तीति । **तथाहि**—'विगलितपराग्वृत्त्यर्थत्वं पदस्य तदस्तदा त्वमिति हि पदेनैकार्थत्वे त्वमित्यपि यत्पदम् । तदपि च तदा गत्वैकार्थ्यं विशुद्धचिदात्मतां त्यजति सकलान्कर्तृत्वादीन्पदार्थमलान्निजान् ॥' इत्यान्तरश्लोकः । अत्रैवार्थे श्रुतीरुदाहरति—**तथाच शास्त्रम्—यस्यामतमिति** । प्रकृतमुपसंहरति—**अतोऽविद्याकल्पितेति** । परपक्षे मोक्षस्यानित्यता-

## वेदान्तकल्पतरुः ।

**सिद्धान्तस्तु—'अप्रकरणे तु तद्धर्मस्ततो विशेषात्'** (जै.अ.३पा.४सू.२६) । **तद्धर्मः** पुरुषधर्म एवं जातीयकः । यतोऽप्रकरणेऽयमाम्नातः प्रकरणाधीताद्धर्माद्विशिष्यते । नचाहवनीये जुहुतीति होमानुवादेनाहवनीयविधानवत्क्रत्वनुवादेन धारणं विहितं, येन साक्षाद्वाक्येन क्रतुसंबन्धि भवेत् । नाप्यव्यभिचारिक्रतुसंवन्धाश्रयद्वारा वाक्यात्पर्णमयीवत्क्रतुमुपनिपतेत्; सुवर्णधारणस्य लोकेऽपि विद्यमानत्वेन क्रत्वव्यभिचाराभावात् । तस्माद्विनियोगभङ्गेन हिरण्यसाधनकं धारणं वाक्यशेषगतफलाय विधीयते इति पुरुषधर्म इति । एवमिहाप्यात्मसाधनकदर्शनेनामृतत्वं भावयेदिति विधानात् प्रधानकर्मतैवेति । अपूर्वं विषयो जन्यमस्येत्यपूर्वविषयम् । न केवलम् इक्षुक्षीरादिरसविशेष एवानभिधेयः प्रतीयते, अपितु सर्ववाक्यार्थोपि । तथा सति ब्रह्माप्यनभिधेयमेव वेदान्ततात्पर्यगम्यमित्याह—**एवमन्यत्रापीति** । गामानयेति हि वाक्ये गवानयनकर्तव्यतार्थः, सोऽपि साधारण इति न विवक्षितगवानयनं वक्ति वाक्यं, प्रकरणादिवशेन त्वर्थात्तत्सिद्धिरिति । **अदूरविप्रकर्षेणेति** । साक्षादनभिधानादस्ति विप्रकर्षः । स चादूरे वस्तुगतधर्मपरामर्शद्वारा वस्तुविशेषस्य लक्षणया प्रतिपादनादिति प्रत्यगात्मत्वेनाविषयतया प्रतिपादयति । भाष्यं व्याचक्षाणो वेदान्तानामदूरविप्रकर्षेण वस्तुबोधकत्वमुपपादयति—**त्वंपदार्थोहीति । व्याप्नोतीति** । यत्तदविद्याविलसितमित्यर्थः । **तत्** तत्र सतीत्यर्थः । अविषयीभूतोदासीनतत्पदार्थस्य प्रत्यगात्मनश्च तत्त्वमसीति सामानाधिकरण्येनास्य संसारिणः प्रमातृत्वाभावात्तन्निवृत्तौ प्रमित्या प्रमेयं व्याप्नोतीत्येवंभावस्य निवृत्तौ त्रयः प्रकारा निवर्तन्त इत्यर्थः । **विगलितेति** । विगलिता पराक्त्वेन वृत्तिर्वर्तनं यस्य स विगलितपराग्वृत्तिस्तादृशः प्रत्यक्त्वमापन्नोऽर्थो यस्य तद्विगलितपराग्वृत्त्यर्थं तस्य भावस्तत्त्वमेतत् । **तदः** तत्पदस्य । **तदा** काले भवति । कदेत्यत आह—**त्वमिति हीति । तदा** तत्पदेन । एकार्थस्यैव व्याख्या **विशुद्धेति । आन्तरश्लोकः** मध्यश्लोकः । **परपक्षे इति** । साध्यश्चेन्मोक्षोऽभ्युपगम्येतानित्य एव स्यादिति भाष्येणापादितैवानित्यतानूद्यते, नित्येऽपि

## कल्पतरुपरिमलः ।

**सत्यम्;** धारणस्य स्वतन्त्रकर्मत्वं लक्षितयागरूपतया मुख्यधारणरूपतया वेति विकल्पं मनसि निधायाद्यपक्षनिराकरणार्थत्वेनेदमद्रव्यसूत्रं ( जै. अ. ३ पा. ४ सू. २७ ) योजितम् । द्वितीयपक्षनिराकरणं तु **द्रव्यपरत्वाच्चेति** ( जै. अ.३ पा. ४सू. २९। (**द्रव्यसंयोगाच्चेति सौत्रः पाठः**) तदनन्तरसूत्रेण धारणस्य स्वातन्त्र्ये कृत्यप्रत्ययावगतद्रव्यप्राधान्यविरोधं दर्शयता कृतमित्यभिप्रायः । **ननु**—अद्रव्यसूत्रस्य द्रव्यदेवतासंबन्धराहित्येन यागत्वनिराकरणार्थतायां **अद्रव्यदेवतात्वात्तु शेषः स्यादिति** शबरस्वामिलिखितसूत्रस्य पाठो लिखितुं युक्तः, नत्वद्रव्यत्वादिति वार्तिककारलिखितः पाठः; तस्मिन् पाठे **ह्यद्रव्यत्वाद्** विधेयद्रव्याभावाद्, धारणमात्रविधानसंभवेन द्रव्यस्यापि तद्विशेषणतया विधानाभावाद्, न हिरण्यसाधनकधारणरूपस्वतन्त्रकर्मविधिरित्येव सूत्रार्थो वर्णयितुं युक्तः—**सत्यम्;** देवतापदयुक्तो भाष्यकारलिखितसूत्रपाठः सांप्रदायिको न भवतीति वार्तिककारैस्त्यक्तत्वात् । यथावार्तिकं सूत्रं पठित्वा तत्रैव भाष्यकारदर्शितोऽप्यर्थो योजितः । अस्मिन्नर्थे द्रव्यशब्दः संप्रदानत्वार्हदेवतारूपद्रव्यवाचीति तदभावेन द्रव्यदेवतासंयोगराहित्यरूपहेतुसिद्धिरित्यभिप्रायः । **सिद्धान्तस्त्विति** । नच—आधानसंस्कृताहवनीयवद्ध्यानयनसंस्कृतपयोवच्च साक्षाद्वाक्येन क्रतुसंबन्धानवगमेऽपि पर्णतावदव्यभिचरितक्रतुसंबन्धाभावेऽपि हिरण्यस्य श्रुतधारणकर्मत्वान्यथानुपपत्त्याग्निहोत्रादिषु निवेशः कल्प्यः स्यादिति—वाच्यम्; तेषु हिरण्यस्येदृशो विनियोग इति तद्विशेषकल्पनायां विनिगमकाभावेन विनियोगविशेषं विना तेषु निवेशस्यानिर्वाहात् । नच—येषु क्रतुषु हिरण्यविनियोगः संप्रतिपन्नः तेषु तद्वारा धारणस्य निवेशः कल्प्यतामिति—वाच्यम्;

र्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । नहि दध्यादिविकार्यं उत्पाद्यं वा घटादि नित्यं दृष्टं लोके । नचाप्यत्वेनापि कार्यापेक्षा; स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं; सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मणः, आकाशस्येव । नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा । न तावद्गुणाधानेन संभवति; अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन; नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते, यथादर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेन्न, क्रियाश्रयत्वानुपपत्तेरात्मनः । यदाश्रया क्रिया, तमविकुर्वती नैवात्मानं लभते । यद्यात्मा

## भामती ।

मापादयति—**यस्य त्विति** । कार्यमपूर्वं यागादिव्यापारजन्यं तमपेक्षते मोक्षः स्वोत्पत्ताविति । **तयोः पक्षयोरिति** । निर्वर्त्यविकार्ययोः । क्षणिकं ज्ञानमात्मेति बौद्धाः । तथाच विशुद्धविज्ञानोत्पादो मोक्ष इति निर्वर्त्यो मोक्षः, अन्येषां तु संसाररूपावस्थामपहाय या कैवल्यावस्थावाप्तिरात्मनः स मोक्ष इति विकार्यो मोक्षः । यथा पयसः पूर्वावस्थापहानेनावस्थान्तरप्राप्तिर्विकारो दधीति । तदेतयोः पक्षयोरनित्यता मोक्षस्य; कार्यत्वात्, दधिघटादिवत् । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रुतेर्ब्रह्मणो विकृताविकृतदेशभेदावगमादविकृतदेशब्रह्मप्राप्तिरुपासनादिविधिकार्या भविष्यति, तथाच प्राप्यकर्मता ब्रह्मण इत्यत आह—**नचाप्यत्वेनापीति** । अन्यदन्येन विकृतदेशपरिहाण्याऽविकृतदेशं प्राप्यते । तद्यथोपवेलं जलधिरतिबहलचपलकल्लोलमालापरस्परास्फालनसमुल्लसत्फेनपुञ्जस्तबकतया विकृतः, मध्ये तु प्रशान्तसकलकल्लोलोपसर्गः स्वस्थः स्थिरतयाऽविकृतस्तस्य मध्यमविकृतं पौतिकः पोतेन प्राप्नोति । जीवस्तु ब्रह्मैवेति किं केन प्राप्यतां, भेदाश्रयत्वात्प्राप्तेरित्यर्थः । **अथ** जीवो ब्रह्मणो भिन्नस्तथापि न तेन ब्रह्माप्यते, ब्रह्मणो विभुत्वेन-नित्यप्राप्तत्वादित्याह—**स्वरूपव्यतिरिक्तत्वेऽपीति** । संस्कार्यकर्मतामपाकरोति—**नापि संस्कार्य इति** । द्वयी हि संस्कार्यता, गुणाधानेन वा, यथा बीजपूरकुसुमस्य लाक्षारसावसेकः, तेन हि तत्कुसुमं संस्कृतं लाक्षासवर्णं फलं प्रसूते । दोषापनयेन वा, यथा मलिनमादर्शतलं निघृष्टमिष्टकाचूर्णेनोद्भासितभास्वरत्वं संस्कृतं भवति । तत्र न तावद्ब्रह्मणि गुणाधानं संभवति । गुणो हि ब्रह्मणः स्वभावो वा भिन्नो वा । स्वभावश्चेत् कथमाधेयः ? तस्य नित्यत्वात् । भिन्नत्वे तु कार्यत्वेन मोक्षस्यानित्यत्वप्रसङ्गः । नच भेदे धर्मधर्मिभावः, गवाश्ववत् । भेदाभेदश्च व्युदस्तः; विरोधात् । तदनेनाभिसंधिनोक्तम्—**अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य** । द्वितीयं पक्षमपक्षिपति—**नापि दोषापनयनेनेति** । अशुद्धिः सती दर्पणे निवर्तते, नतु ब्रह्मणि असती निवर्तनीया; नित्यनिवृत्तत्वादित्यर्थः । शङ्कते—**स्वात्मधर्म एवेति** । ब्रह्मस्वभाव एव सोक्षोऽनाद्यविद्यामलावृत उपासनादिक्रिययात्मनि संस्क्रियमाणेऽभिव्यजते, नतु क्रियते । **एतदुक्तं भवति**—नित्यशुद्धत्वमात्मनोऽसिद्धं, संसारावस्थायामविद्यामलिनत्वादिति; शङ्कां निराकरोति—**न** । कुतः **क्रियाश्रयत्वानुपपत्तेः** । नाविद्या ब्रह्माश्रया, किंतु जीवे, सा त्वनिर्वचनीयेत्युक्तं, तेन नित्यशुद्धमेव ब्रह्म । अभ्युपेत्य त्वशुद्धिं क्रियासंस्कार्यत्वं दूष्यते । क्रिया हि ब्रह्मसमवेता वा ब्रह्म संस्कुर्यात्, यथा निघर्षणमिष्टकाचूर्णसंयोगविभागप्रचयो निरन्तर आदर्शतलसमवेतः । अन्यसमवेतो वा । न तावद्ब्रह्मधर्मः क्रिया; तस्याः स्वाश्रय-

## वेदान्तकल्पतरुः ।

मोक्षेऽविद्यानिवृत्तिसंस्कारः कर्मसाध्य इति पक्षप्रतिक्षेपेणानित्यत्वं स्थापयितुमित्यर्थः । **उपवेलं** वेलायाः समीपे । **विकृतः** । तत्र हेतुः—**अतिबहुलेति** । समुल्लसन्तः फेनपुञ्जस्तबका यस्य तस्य भावस्तत्ता । पोतेन दीव्यति व्यवहरतीति **पौतिकः** । अशुद्धिर्ब्रह्मणि सत्युतासती । **प्रथमस्तु** भिन्नाभिन्नविकल्पनाभ्यां निरसनीयः । **चरमं निरस्यति**—**नन्विति** । **अनाद्यविद्यामलेति** । शङ्कितुर्वास्तव्यविद्याभिमतेति । **ननु** नित्यशुद्धत्वादात्मनि न हेयत्वसंभव इत्युक्ते कथं शङ्कात आह—**एतदुक्तमिति** । ब्रह्मणि नाविद्या, किंतु जीवे; सा चानिर्वाच्येत्युक्तमध्यासभाष्ये । तथाविधा च ज्ञाननिरस्येत्युपास्तिर्विफलेत्यर्थः । निघर्षणव्याख्यानम्—**इष्टकेति** । एतच्च धात्वर्थः संयोगविभागावेवेति मतमाश्रित्य ।

## कल्पतरुपरिमलः ।

'हिरण्यं हस्ते भवति,' 'हिरण्येन षोडशिनः स्तोत्रमुपाकरोति' 'हिरण्यस्रज ऋत्विजो भवन्ती'त्यादिहिरण्यविनियोगवत्सु क्रतुषु तद्धारणस्यापि प्राप्तेः, दक्षिणारूपहिरण्यवत्स्वपि दीयमानस्य प्रतिगृह्यमाणस्य च तस्य धारणप्राप्तेः, हिरण्यार्थतया धारणविधाने सुवर्णश्रुतिवैफल्यापत्तेश्च । तस्माच्छोभनवर्णहिरण्यसाधनकधारणविधिः पुरुषार्थ इत्येव युक्तम् । एवं सतीयमेव श्रुतिः 'दाक्षायणी ब्रह्मसूत्री कमण्डलुधरो द्विजः' इत्यादिपुरुषार्थहिरण्यधारणस्मृतेर्मूलं भविष्यतीति तस्या मूलान्तरकल्पनागौरवमपि परिहृतं भवतीति । **इत्युक्तमध्यासभाष्य इति** । अन्तःकरणावच्छिन्नप्रत्यगात्मा

**क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत।अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन्। तच्चानिष्टम्। तस्मान्न स्वाश्रया क्रियात्मनः संभवति। अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते। ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः। न; देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात्। प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम्। तया देहाश्रयया तत्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम्। यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलं, अहमरोग इति यत्र बुद्धिरुत्पद्यते, एवं स्नानाचमनयज्ञोपवीतादिना अहं शुद्धः संस्कृत इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते। स च देहेन संहत एव। तेनैव ह्यहंकर्त्राहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते। तत्फलं च स एवा-**

## भामती।

विकारहेतुत्वेन ब्रह्मणो नित्यत्वव्याघातात्। अन्याश्रया तु कथमन्यस्योपकरोति; अतिप्रसङ्गात्। नहि दर्पणे निघृष्यमाणे मणिर्विशुद्धो दृष्टः। **तच्चानिष्टमिति**। तदा बाधनं परामृशति। अत्र व्यभिचारं चोदयति—**ननु देहाश्रययेति**। परिहरति—**न**। **देहसंहतस्येति**। अनाद्यनिर्वाच्याविद्योपधानमेव ब्रह्मणो जीव इति च क्षेत्रज्ञ इति चाचक्षते। स च स्थूल सूक्ष्मशरीरेन्द्रियादिसंहतस्तत्संघातमध्यपतितस्तदभेदेनाहमितिप्रत्ययविषयीभूतः, अतः शरीरादिसंस्कारः शरीरादिधर्मोऽप्यात्मनो भवति; तदभेदाध्यवसायात्। यथाङ्गरागधर्मः सुगन्धिता कामिनीनां व्यपदिश्यते। तेनात्रापि यदाश्रिता क्रिया सांव्यवहारिकप्रमाणविषयीकृता तस्यैव संस्कारो नान्यस्येति न व्यभिचारः।

## वेदान्तकल्पतरुः।

**अन्याश्रयात्विति**। यद्यपि स्पन्दरूपा भावना चैत्राश्रिता दर्पणस्योपकरोति; तथापि संयोगविभागाख्यधात्वर्थद्वारा तौ च नात्मनीत्यर्थः। संयोगविभागातिरिक्तधात्वर्थपक्षेऽपि समानं; धात्वर्थस्य संयोगविभागद्वारातिशयजनकत्वात्। नचात्मनि क्रियाजन्यातिशयसंभव इति। **तदा** तच्छब्देन, बाध्येरन्नित्युक्तं **बाधनं** परामृशति, तद् अव्यवहितम्। **अनित्यत्वमात्मनः प्रसज्येतेत्युक्तं** त्वनित्यत्वं व्यवहितमिति। **ननु** देहादावहंविभ्रमवत इव संस्कार्यत्वमिति कथम्? स्वत एव किं न स्यादत आह—**अनाद्यनिर्वाच्येति**। **ननु** नाविद्यामात्रोपहिते सुषुप्तवद्व्यवहारसिद्धिरत आह—**स्थूलेति**। स्थूलसूक्ष्माणि च तानि यथाक्रमं शरीरेन्द्रियाणि। आदिशब्दात्प्राणादयः। संहतत्वमपि न तटस्थत्वेन तत्संयोगित्वं, किंतु तत्र प्रविष्टत्वमित्याह—**तत्संघातेति**। प्रवेशोऽपि न भेदेन प्रतिभासमानत्वेन, किंतु ऐक्याध्यासेनेत्याह—**तदभेदेनेति**। **अङ्गराग**श्चन्दनादिः। फलितमाह—**तेनेति**। देहादावैक्येनाध्यस्ते आत्मनि क्रियारोप्यते, तज्जन्यसंस्कारश्च, अतो नान्याश्रितक्रियाफलभाक्त्वमन्यस्येति न व्यभिचार इत्यर्थः। आरोपितसंस्कारान्न फलभाक्त्वमिति शङ्कामहंप्रत्ययस्य रूप्याद्यध्यासवैलक्षण्येन परिहरति—**सांव्यवहारिकेति**। ष्णु प्रस्रवणे इति धातुमभिप्रेत्याह—

## कल्पतरुपरिमलः।

इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधार इत्यध्यासभाष्यटीकायामुक्तमित्यर्थः। **ननु** घर्षणस्यादर्शगतेष्टकाचूर्णसंयोगविभागप्रचयतया व्याख्यानमयुक्तं, फलं हि तत्प्रचयः पुरुषव्यापाररूपाया घर्षणक्रियायाः, यथा तण्डुलविक्लित्तिः पचिक्रियाया इत्याशङ्क्याह—**एतच्चेति**। सर्वत्र फलमेव धात्वर्थः, नतु तदनुकूलव्यापारः; त्यजिगमिधात्वोः पर्यायतापत्तेः। एक एव हि पूर्वदेशविभागोत्तरदेशसंयोगरूपफलद्वयस्याप्यनुकूलो व्यापारः पुरुषस्पन्दः। यद्युच्येत फलविशेषावच्छिन्नो व्यापारो धात्वर्थः, ततः पूर्वदेशं त्यजति उत्तरदेशं गच्छतीत्यर्थभेदस्तयोरिति, तर्ह्यावश्यकत्वाल्लाघवाच्च तत्तत्फलमेव धात्वर्थोऽस्तु। नचैवं—सति पचेर्विक्लित्त्यर्थतायां विक्लित्त्युदयात्प्राक् पचतीति वर्तमानप्रयोगो न स्यात्, न स्याच्च तण्डुलान् पचतीति तण्डुलानां कर्मतया निर्देशः, धात्वर्थरूपविक्लित्तिक्रियाजन्यस्य तण्डुलेषु फलान्तरस्याभावात् परसमवेतत्वाभावाच्चेति—वाच्यम्; धात्वर्थरूपफलानुकूलव्यापारस्याख्यातार्थत्वाङ्गीकारेण पचतीति लडर्थस्य वर्तमानत्वस्यैकप्रत्ययोपात्ते तस्मिन्नन्वयोपपत्तेः। तज्जन्यविक्लित्तिरूपफलभागित्वेन तण्डुलानां कर्मतया निर्देशोपपत्तेश्चेति मण्डनाचार्याणां मतमनुसृत्य संयोगविभागरूपस्य फलस्य घर्षतिधात्वर्थत्वमुक्तमिति भावः। **ननु** फलस्य धात्वर्थत्वे विक्लित्त्युदयात् प्राक् पाको वर्तत इति प्रयोगो न स्यात्; तत्र पचिधातोरुपरि तदर्थविक्लित्त्यनुकूलव्यापारवाचकस्याख्यातस्याभावात्, तत्तत्फलानुकूलव्यापारसामान्यरूपेणाख्यातार्थत्वे च पचति यजतीत्यादावधःसंतापनद्रव्यत्यागादिव्यापारविशेषप्रतीतिर्न स्यात्; तत्र तत्राधःसंतापनादिव्यापारविशेषस्यापि तदर्थतायामाख्यातस्य नानार्थत्वं स्यात्; तस्मात् तत्तद्व्यापारविशेष एव धात्वर्थः, त्यजिगम्योरपर्यायता तु फलस्योपलक्षणतयाप्युपपद्यत इति मन्यमानानामन्येषां मते कथमिहोपपत्तिरित्याशङ्क्याह—**संयोगविभागातिरिक्तेति**। दर्पणेष्टकाचूर्णसंयोगविभागफलकः पुरुषव्यापारो

श्नाति; 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्ड० ३।१।१) इति मन्त्रवर्णात्। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (काठ० १।३।४) इति च। तथाच 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वेता० ६।११) इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' (ईशा० ८) इति चैतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः। ब्रह्मभावश्च मोक्षः। तस्मान्न संस्कार्योऽपि मोक्षः। अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम्। तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते। ननु ज्ञानं नाम मानसी क्रिया। न; वैलक्षण्यात्। क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च। यथा यस्यै देवतायै हविर्गृहीतं

## भामती।

तत्त्वतस्तु न क्रिया न संस्कार इति। सनिदर्शनं तु शेषमध्यासभाष्य एव कृतव्याख्यानमिति नेह व्याख्यातम्। **तयोरन्यः पिप्पलमिति**। अन्यो जीवात्मा। **पिप्पलं** कर्मफलम्। **अनश्नन्नन्य इति**। परमात्मा। संहतस्यैव भोक्तृत्वमाह मन्त्रवर्णः—**आत्मेन्द्रिय इति**। अनुपहितशुद्धस्वभावब्रह्मप्रदर्शनपरौ मन्त्रौ पठति—**एको देव इति**। **शुक्रं** दीप्तिमत्। **अव्रणं** दुःखरहितम्। **अस्नाविरं** अविगलितम्, अविनाशीति यावत्। उपसंहरति—**तस्मादिति**। **ननु** मा भून्निर्वर्त्यादिकर्मताचतुष्टयी, पञ्चमी तु काचित् विधा भविष्यति, यया मोक्षस्य कर्मता घटिष्यत इत्यत आह—**अतोऽन्यदिति**। एभ्यः प्रकारेभ्यो न प्रकारान्तरमन्यदस्ति, यतो मोक्षस्य क्रियानुप्रवेशो भविष्यति। **एतदुक्तं भवति**—चतसृणां विधानां मध्येऽन्यतमतया क्रियाफलत्वं व्याप्तं, सा च मोक्षाद्व्यावर्तमाना व्यापकानुपलब्ध्या मोक्षस्य क्रियाफलत्वं व्यावर्तयतीति। तत्किं मोक्षे क्रियैव नास्ति, तथाच तदर्थानि शास्त्राणि तदर्थाश्च प्रवृत्तयोऽनर्थकानीत्यत उपसंहारव्याजेनाह—**तस्माज्ज्ञानमेकमिति**। अथ ज्ञानं क्रिया मानसी कस्मान्न विधिगोचरः? कस्माच्च तस्याः फलं निर्वर्त्यादिष्वन्यतमं न मोक्षः? इति चोदयति—**ननु ज्ञानमिति**। परिहरति—**न**। कुतः? **वैलक्षण्यात्**। **अयमर्थः**—**सत्यं**, ज्ञानं मानसी क्रिया, नत्वियं ब्रह्मणि फलं जनयितुमर्हति; तस्य स्वयंप्रकाशतया विदिक्रियाकर्मभावानुपपत्तेरित्युक्तम्। तदेतस्मिन्वैलक्षण्ये स्थित एव वैलक्षण्यान्तरमाह—**क्रिया हि नाम सेति**। **यत्र** विषये **वस्तुस्वरूपनिरपेक्षैव चोद्यते**। यथा देवतासंप्रदानकहविर्ग्रहणे देवतावस्तुस्वरूपानपेक्षा देवताध्यानक्रिया। यथावा योषिति अग्निवस्त्वनपेक्षाग्निबुद्धिर्या सा क्रिया हि नामेति योजना। नहि 'यस्यै देवतायै हविर्गृहीतं

## वेदान्तकल्पतरुः।

**अविगलितमिति**। क्रियानुप्रवेशद्वारान्तरं मोक्षे भवत्विति शङ्कायां भाष्ये तदभावप्रतिज्ञैव भाति, न हेतुरित्याशङ्क्याह—**एतदुक्तमिति**। **नच विदिक्रियाविषयत्वेनेति** भाष्ये ज्ञानाविषयत्वस्योक्तत्वात्पुनः शङ्कोत्तरे व्यर्थे इत्याशङ्क्य परिहारान्तराभिप्रायतामाह—**अयमर्थ इत्यादिना**। यदवादि पूर्वपक्षे ज्ञानस्य भावार्थत्वाद् विधेयत्वमिति तत्र क्रियात्वमभ्युपेत्य विधेयत्वं निराक्रियत इत्याह—**सत्यमिति**। वस्तुतो विदिक्रियायाः कर्मभावानुपपत्तेरित्यर्थः। औपाधिकं तु कर्मत्वमनिष्टं नियोगवादिनाम्। यदा तु ज्ञानं क्रियैव न भवतीत्येवंपरतया भाष्यं व्याख्यायते, तदा पचतीतिवज्जानातीति पूर्वापरीभावप्रसिद्धिर्दुश्चिकित्सा स्यादिति। **वैलक्षण्यान्तरमिति**। ज्ञेयवैलक्षण्यं प्रागुक्तमिदानीं ज्ञानस्याविधेयत्वं वैलक्षण्यमुच्यत इति। यत्र विषये या वस्त्वनपेक्षा चोद्यते तत्र सा क्रियेति तच्छब्दाध्याहारेण योजयितुं यत्रशब्दार्थमाह—**यत्र विषये इति**। ध्यानस्य वस्त्वनपेक्षामुक्त्वा पुरुषेच्छाधीनत्वमुपपादयति—**नहि यस्यै इति**। **वषट्करिष्यन्** होता। विध्यर्थो-

## कल्पतरुपरिमलः।

थर्षेतिधात्वर्थं इति पक्षेऽपीत्यर्थः। वस्तुतो विदिक्रियाकर्मभावेत्यादिव्याख्याने बीजमाह—**औपाधिकं त्विति**। वृत्त्युपरागोपाधिकं कर्मत्वमित्यर्थः। इदं तु परानानुगुण्यात्नेति भावः। **तच्छब्दाध्याहारेण योजयितुमिति**। यत्रेत्यस्य प्रतिनिर्देशार्थं तत्रेति शब्दाध्याहारेण योजयितुमित्यर्थः। एवंच टीकायां तत्रशब्दाश्रवणेऽपि तदध्याहारोऽभिप्रेत इति सूचितं भवति। यच्छब्दाध्याहारेण योजयितुमिति पाठे सेति शब्दस्य प्राङ्निर्देशार्थं येति शब्दस्याध्याहारेण योजयितुमित्यर्थः। अनेनोभयमप्यध्याहार्यमिति सिद्धम्। अतएवाचार्यैस्तत्रेति येति चोभयमप्यध्याहृत्य वाक्यं पूरितम्। **ननु** तां ध्यायेदिति विधितः प्राग् देवताध्यानमप्राप्तमित्यसिद्धं, तं विधिमनपेक्ष्यापि तत्तदर्थवादावगमितदेवतारूपाणां स्वेच्छया कदाचिदनुचिन्तनसंभवादित्यत आह—**विध्यर्थेति**। वषट् कुर्यादिति विध्यर्थवषट्कारानुष्ठानात्प्राक्काले नियमेन ध्यानं तद्विधिं विना न प्राप्तमित्यर्थः। **ननु**—अधीतवेदस्य विचारपूर्वकार्थज्ञानमपि विधिं विना न प्राप्नोतीति—**चेद्, न;** तस्याध्ययनविधिना फलवदर्थावबोधपरतां नीतैर्विशेषतः संदिह्यमानार्थैर्वेदान्तैराक्षिप्ततया मुमुक्षूणां प्राप्तिसत्त्वादिति

स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'संध्यां मनसा ध्यायेत्' (ऐ० ब्रा० ३।८।१) इति चैवमादिषु । ध्यानं चिन्तनं यद्यपि मानसं; तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं, पुरुषतन्त्रत्वात्, ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयम् । अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम् । केवलं वस्तुतन्त्रमेव तत् । न चोदनातन्त्रम् । नापि पुरुषतन्त्रम् । तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथाच 'पुरुषो वाव गौतमाग्निः' 'योषा वाव गौतमाग्निः' (छान्दो० ५।७,८।१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति । केवलचोदनाजन्यत्वात्क्रियैव सा पुरुषतन्त्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा । नापि पुरुषतन्त्रा । किं तर्हि ? प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् । तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम् । तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्; अहेयानुपादेयवस्तुविषयत्वात् । किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि

## भामती ।

स्यात्तां ध्यायेद्वषट्करिष्यन्' इत्यस्माद्विधेः प्राग्देवताध्यानं प्राप्तं, प्राप्तं त्वधीतवेदान्तस्य विदितपदतदर्थसंबन्धस्याधिगतशब्दन्यायतत्त्वस्य 'सदेव सौम्येदम्' इत्यादेः 'तत्त्वमसि' इत्यन्तात्संदर्भात् ब्रह्मात्मभावज्ञानं शब्दप्रमाणसामर्थ्यात् । इन्द्रियार्थसन्निकर्षसामर्थ्यादिव प्रणिहितमनसः स्फीतालोकमध्यवर्तिकुम्भानुभवः । नह्यसौ स्वसामग्रीबललब्धजन्मा सन् मनुजेच्छयान्यथाकर्तुमकर्तुं वा शक्यः, देवताध्यानवत्, येनार्थवानत्र विधिः स्यात् । नचोपासना वानुभवपर्यन्तता वास्य विधेर्गोचरः; तयोरन्वयव्यतिरेकावधृतसामर्थ्ययोः साक्षात्कारे वानाद्यविद्यापनये वा विधिमन्तरेण प्राप्तत्वेन पुरुषेच्छयान्यथाकर्तुमकर्तुं वा अशक्यत्वात् । तस्माद्ब्रह्मज्ञानं मानसी क्रियापि न विधिगोचरः, पुरुषचित्तव्यापाराधीनायास्तु क्रियाया वस्तुस्वरूपनिरपेक्षिता क्वचिदविरोधिनी, यथा देवताध्यानक्रियायाः, नह्यत्र वस्तुस्वरूपेण कश्चिद्विरोधः । क्वचिद्वस्तुस्वरूपविरोधिनी, यथा योषित्पुरुषयोरग्निबुद्धिरित्येतावता भेदेन निदर्शनमिथुनद्वयोपन्यासः । क्रियैवेत्येवकारेण वस्तुतन्त्रत्वमपाकरोति । ननु 'आत्मेत्येवोपासीत' इत्यादयो विधयः श्रूयन्ते । नच प्रमत्तगीताः, तुल्यं हि सांप्रदायिकं, तस्माद्विधेयेनात्र भवितव्यमित्यत आह—**तद्विषया लिङादय इति** । सत्यं श्रूयन्ते लिङादयः, नत्वमी विधिविषयाः, तद्विषयत्वेऽप्रामाण्यप्रसङ्गात् । हेयोपादेयविषयो हि विधिः । स एवच हेय उपादेयो वा, यं पुरुषः कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति । तत्रैव च समर्थः कर्ताधिकृतो नियोज्यो भवति । नचैवंभूतान्यात्मश्रवणमननोपासनदर्शनानीति विषयतदनुष्ठात्रोर्विधिव्यापकयोरभावाद्विधेरभाव इति प्रयुक्ता अपि लिङादयः प्रवर्तनायामसमर्था उपल इव क्षुरतैक्ष्ण्यं कुण्ठमप्रमाणीभवन्तीति । **अनियोज्यविषयत्वादिति** । समर्थो हि कर्ताधिकारी नियोज्यः । असामर्थ्ये तु न कर्तृता ततो नाधिकृतोऽतो न नियोज्य इत्यर्थः । यदि विधेरभावान्न विधिवचनानि, किमर्थानि तर्हि वचनान्येतानि विधिच्छायानीति पृच्छति—**किमर्थानीति** । नचानर्थकानि युक्तानि; स्वाध्यायविध्यधीनग्रहणत्वादनु-

## वेदान्तकल्पतरुः ।

नुष्ठानात्प्राक् प्रमाणवशाद्ध्यानं न सिध्यति, ततः पुरुषेच्छावशवर्तीति । शब्दज्ञानाभ्यासो वा तस्यैव साक्षात्कारपर्यन्तता पुरुषेच्छाधीनेत्याशङ्क्याह—**नचेति** । उपासनायाः साक्षात्कारेऽनुभवपर्यन्ततताशब्दोक्तसाक्षात्कारस्याविद्यापनये प्राप्तत्वादित्यर्थः । क्रियायाः क्वचिद्वस्तुस्वरूपविरोधित्वं प्रमाणज्ञानाद्वैलक्षण्यमाह—**क्वचिद्वस्तुस्वरूपविरोधिनीति । वस्तुतन्त्रत्वमपाकरोतीति** । अनेन ज्ञानमेव तन्न क्रियेति भाष्ये क्रियाशब्देन क्रियागतमवस्तुतन्त्रत्वं लक्षयित्वा प्रतिषिध्यत इति व्याख्यातम् । अतएव हि भाष्यकारो ब्रह्मज्ञानं न चोदनातन्त्रमिति दार्ष्टान्तिके चोदनातन्त्रत्वं प्रतिषेधति, न ब्रवीति न क्रियेति । अतः क्रियात्वमभ्युपेत्य ज्ञाने विधेयत्वं न मृष्यत इति गम्यते । **सांप्रदायिकं** गुरुमुखाध्ययनादि । **विधिः** कार्यं विषयो येषां ते विधिविषयाः । यः समर्थः शक्तः स कर्ता यः कर्ता स कर्म-

---

१ **कुण्ठीभवन्तीति**—'द्रष्टव्यः' 'आत्मेत्येवोपासीते'त्यादिविधयः कुण्ठीभवन्ति, नतु 'श्रोतव्यो मन्तव्य' इत्यादयः; प्रमाणजन्यज्ञानस्य दर्शनादिरूपस्येव तात्पर्यावधारणरूपस्य पुरुषप्रकृतिसाध्यस्य श्रवणादेर्वस्तुतन्त्रत्वाभावेन विधिविषयत्वोपपत्तेः । साक्षात्कारसाधनत्वेन श्रवणस्य लोकत एव प्राप्तत्वेऽपि पक्षेऽप्राप्तप्रत्यक्षादिप्रमाणनिवर्तनेन नियमविधित्वम्; सविशेषस्वरूप एव प्रत्यक्षादिप्रमाणप्रवृत्तिः नतु निर्विशेषरूपे इति विशेषस्त्वकिंचित्करः; आत्मस्वरूपसाक्षात्कारे साधनद्वयप्रसङ्गमात्रेणैव नियमविधित्वोपपत्तेः । अन्यथा अपूर्वसाधनीभूतव्रीहिषु नखविदलनादेर्लोकतोऽप्राप्त्या 'व्रीहीनवहन्ती'त्यत्रापि नियमविधित्वाभावप्रसङ्गात्—**इति विवरणानुयायिनः** ।

विधिच्छायानि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः इष्टं मे भूयादनिष्टं मा भूदिति, नच तत्रात्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि। तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते। 'इदं सर्वं यदयमात्मा' (बृह० २।४।६) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात्' विज्ञातारमरे केन विजानीयात्, (बृह० ४।५।१५) 'अयमात्मा ब्रह्म' (बृह० २।५।१९) इत्यादिभिः। यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलंकारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। तथाच श्रुतिः–'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्॥' (बृह० ४।४।१२) इति। 'एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' (भ० गी० १५।२०) इति स्मृतिः। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम्। यदपि केचिदाहुः—प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवल-

---

## भामती।

पपत्तेरिति भावः। उत्तरम्—**स्वाभाविकेति**। अन्यतः प्राप्ता एव हि श्रवणादयो विधिस्वरूपैर्वाक्यैरनूद्यन्ते। नचानुवादोऽप्यप्रयोजनः; प्रवृत्तिविशेषकरत्वात्। **तथाहि**—तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति। आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यत इति प्रवृत्तिविशेषकरतानुवादानामस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यत इति। यच्च चोदितमात्मज्ञानमनुष्ठानानङ्गत्वादपुरुषार्थमिति, तदयुक्तम्; स्वतोऽस्य पुरुषार्थत्वे सिद्धे यदनुष्ठानानङ्गत्वं तद्भूषणं न दूषणमित्याह—**यदपीति**। **अनुसंज्वरेत्** शरीरं परितप्यमानमनुतप्येत। सुगममन्यत्। प्रकृतमुपसंहरति—**तस्मान्न प्रतिपत्तीति**। प्रकृतसिद्ध्यर्थमेकदेशिमतं दूषयितुमनुभाषते—**यदपि केचिदाहुरिति**। दूषयति—

## वेदान्तकल्पतरुः।

ण्यधिकृतः स्वामी, योऽधिकृतः स नियोगं स्वकीयतया बुध्यमानो नियोज्यः, स च तत्रैव वर्णितरूपे विषये भवति तस्मिन्नसति न भवतीत्यर्थः। उक्तविषयत्वस्य श्रवणादावभावमाह—**नचैवमिति**। श्रवणं हि ब्रह्मात्मनि तत्त्वमसिवाक्यस्य तच्छब्दश्रुत्यादिपर्यालोचनया तात्पर्यावगमः; अस्य च विषयविशेषावच्छिन्नप्रत्ययस्यानवगमे तत्कर्तव्यत्वबोधायोगात्, अवगमे च श्रवणस्यैव जातत्वात्पुनः कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वात्। एवं मननस्यापि विषयविशेषनियतयुक्त्यालोचनस्यावगतस्य कर्तुमशक्यत्वादिति। उपासनस्यापि यथाश्रवणमननं प्रत्ययावृत्तेरवगमे द्वित्रिवारावृत्तेरवश्यंभावाद्विधित्सितार्थस्य ज्ञातस्य न पुनः कर्तव्यत्वं, दर्शनस्य त्वशक्यत्वं स्फुटमिति। **अन्यतः प्राप्ता इति**। दर्शनार्थं कर्तव्यत्वेनान्वय-

## कल्पतरुपरिमलः।

भावः। टीकाकारैः सर्वापेक्षाधिकरणे (ब्र. अ. ३ पा. ४ सू. २६) चतस्रः प्रतिपत्तयो ब्रह्मणि। **प्रथमा** तावदुपनिषद्वाक्यश्रवणमात्राद् भवति, यां किलाचक्षते श्रवणमिति। **द्वितीया** मीमांसासहितात् तस्मादेवोपनिषद्वाक्याद्, यामाचक्षते मननमिति। **तृतीया** चिन्तासन्ततिमयी, यामाचक्षते निदिध्यासनमिति। **चतुर्थी तु** साक्षात्कारवती वृत्तिरूपेति। श्रवणादिरूपतयोक्तानां चतुर्णामपि ज्ञानानां प्राप्तत्वेन विधातुमशक्यत्वमुपपादितमेव। इदानीं न्यायतस्तत्तात्पर्यावधारणं श्रवणं तदनुग्राहकानुमानादिरूपयुक्त्यनुचिन्तनं मननमिति पक्षे विधान्तरेणापि तयोर्निदिध्यासनस्य च विधानासंभवमाह—**श्रवणं हीति**। **विषयविशेषावच्छिन्नस्येति**। **ननु** सामान्यतस्तात्पर्यावगमो विधेयोऽस्त्वित्याशङ्क्य **विशेषग्रहणं** कृतम्। तथाच सर्वेषां वेदानामर्थपरत्वमापादयतार्थज्ञानफलकाध्ययनविधिनैव च वेदान्तानामपि कर्मकाण्डवत् सामान्यतोऽर्थतात्पर्यावगमसिद्धेर्न तदवगमार्थं श्रवणविधिरभ्युपेयः, किंतु तेषामखण्डे ब्रह्मणि न्यायतस्तत्तात्पर्यमवगच्छेदिति विषयविशेषावच्छिन्नतात्पर्यावगतिविषयः सोऽभ्युपेतव्यः। तथाच प्राक् तदवगमानवगमयोरुक्तदूषणद्वयमापततीति भावः। **ननु**—साङ्गाध्ययनवतो वेदान्तानां सगुणनिर्गुणरूपेषु नानाविधेष्वर्थेषु कैषां तात्पर्यमिति संदेहे च सति बुद्ध्यारूढनिर्गुणरूपविषयविशेषावच्छिन्नं तात्पर्यं न्यायतो निश्चिनुयादिति विधातुं शक्यत इति—**चेन्न**; वेदार्थनिश्चयात् फलविशेषप्रतीतौ तदर्थतात्पर्यनिर्णयाय स्वत एव न्यायविचारे प्रवृत्त्युपपत्त्या कर्मकाण्डार्थविचार इव विध्यनपेक्षणात्। **युक्त्यालोचनस्येति**। युक्तिविशेषालोचनविधाने प्राक् तदवगमानवगमाभ्यां प्राप्तिर्विधानाशक्तिश्च। सामान्यतो युक्त्यालोचनं तु न विधेयम्; असंभावनादिनिरासरूपदृष्टार्थत्वेन स्वत एव प्राप्तेरिति भावः। **उपासनस्यापीति**। उपासनं हि प्रत्ययावृत्तिः, सा श्रवणमननकालयोरेकैकप्रत्ययोत्पत्तावपि प्रत्ययद्वयरूपा सिद्धैव; विधेयनिदिध्यास-

**वस्तुवादी वेदभागो नास्ति' इति, तन्न; औपनिषदस्य पुरुषस्यानन्यशेषत्वात्। योऽसावुपनिष-**

## भामती।

**तन्नेति।** इदमत्राकूतम्—'**कार्यबोधे यथा चेष्टालिङ्गहर्षादयस्तथा। सिद्धबोधेऽर्थवत्तैवं शास्त्रत्वं हित-शासनात्॥**' यदिहि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा नियमेन वृद्धव्यवहारे सामर्थ्यमवधृतं भवेत्, न भवे-दहेयोपादेयभूतब्रह्मात्मतापरत्वमुपनिषदाम्; तत्राविदितसामर्थ्यत्वात्पदानां, लोके तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः। अथतु भूतेऽप्यर्थे पदानां लोके शक्यः संगतिग्रहस्तत उपनिषदां तत्परत्वं पौर्वापर्यपर्यालोचनयावगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुं; श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। तत्र तावदेवमकार्येऽर्थे न संगतिग्रहः यदि तत्परः प्रयोगो न लोके दृश्येत। तत्प्रत्ययो वा व्युत्पन्नस्योन्नेतुं न शक्येत। न तावत्तत्परः प्रयोगो न दृश्यते लोके; कुतूहलभयादि-निवृत्त्यर्थानामकार्यपराणां पदसंदर्भाणां प्रयोगस्य लोके बहुलमुपलब्धेः। तद्यथा'खण्डलादिलोकपालचक्रवालादिवसतिः सिद्धविद्याधरगन्धर्वाप्सरःपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयःप्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमद-वनविहारिमणिमयशकुन्तकमनीयनिनदमनोहरः पर्वतराजः सुमेरुरिति' 'नैष भुजङ्गो रज्जु'रियमित्यादि। नापि भूतार्थबु-द्धिर्व्युत्पन्नपुरुषवर्तिनी न शक्या समुन्नेतुं; हर्षादेरुन्नयनहेतोः संभवात्। तथाह्यविदितार्थजनभाषार्थो द्रविडो नगरगम-नोद्यतो राजमार्गाभ्यर्णं देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मा वार्ताहारेण सह नगरस्थदेवदत्ता-भ्याशमागतः पटवासोपायनार्पणपुरःसरं 'दिष्ट्या वर्धसे पुत्रस्ते जात' इति वार्ताहारव्याहारश्रवणसमनन्तरमुपजातरो-माञ्चकञ्चुकं विकसितनयनोत्पलमतिस्मेरमुखमहोत्पलमवलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते, प्रमोदस्य च प्रागभूतस्य तद्व्याहारश्रवणसमनन्तरं भवतस्तद्धेतुताम्। नचायमप्रतिपादयन् हर्षहेतुमर्थं हर्षाय कल्पत इत्यनेन हर्षहेतुरर्थ उक्त इति प्रतिपद्यते। हर्षहेत्वन्तरस्य चाप्रतीतेः पुत्रजन्मनश्च तद्धेतोरवगमात्तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति। एवं भयशोकादयोऽप्युदाहार्याः। तथाच प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः। एवंच ब्रह्मस्व-रूपज्ञानस्य परमपुरुषार्थहेतुभावादनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितानुशासनाच्छास्त्रत्वं सिद्धं भवति। तत्सिद्धमेतत्, विवादाध्यासितानि वचनानि, भूतार्थविषयाणि, भूतार्थविषयप्रमाजनकत्वात्। यद्यद्वि-षयप्रमाजनकं तत्तद्विषयं, यथा रूपादिविषयं चक्षुरादि, तथा चैतानि, तस्मात्तथेति। तस्मात्सुष्ठूक्तम्—**तन्न, औपनि-षदस्य पुरुषस्यानन्यशेषत्वादिति।** उपनिपूर्वात्सदेर्विशरणार्थात्क्विप्युपनिषत्पदं व्युत्पादितं उपनीयाद्वयं ब्रह्म

## वेदान्तकल्पतरुः।

व्यतिरेकावगतान् श्रवणादीननुवदन्ति वचांसि तद्गतप्राशस्त्यलक्षणया तेषु रुचिमुत्पाद्यानात्मचिन्तायामरुचिं कुर्वन्ति, प्रवृ-त्त्यतिशयं जनयन्तीत्यर्थः। **प्रकृतसिद्ध्यर्थं** सिद्धे वस्तुनि वेदान्तप्रामाण्यसिद्ध्यर्थं। सिद्धे वस्तुनि सङ्गतिविग्रहविरहादि दूषयितुमित्यर्थः। उपनिषदां सिद्धबोधकत्वे आक्षिप्ते पुरुषस्योपनिषद्गम्यत्वसिद्धवत्कारो भाष्येऽनुपपन्न इत्याशङ्क्य तदुपयो-गिन्यायः सामर्थ्याद्द्योतित इत्याह—**इदमत्रेति।** परनरवर्तिशब्दार्थावबोधलिङ्गस्य प्रवृत्तेः सिद्धवस्तुन्यसंभवान्न व्युत्प-त्तिरित्युक्तम्—**अज्ञातसङ्गतित्वेनेति। तत्राह—कार्यबोधे इति। यदुक्तमर्थवत्तयेति** तत्सिद्धपुत्रजन्मादि-बोधेऽपि हर्षादिप्रयोजनलाभान्न शब्दानां कार्यपरत्वं नियच्छतीत्याह—**अर्थवत्तैवमिति। आखण्डलादीनाम्** इन्द्रादीनाम्। **चक्रवालं** समूहः। **धौतानि** शोधितानि। **कलधौतमयानि** सौवर्णानि शिलातलानि यस्य स तथा। **प्रमदवनानि** प्रमदाभिः सह नृपाणां क्रीडावनानि, तेषु **विहारिणां** संचरणशीलानां। **मणिमयशकुन्तानां** रत्नमय-पक्षिणां। **निनदः** शब्दः। **अभ्यर्णं** निकटम्। प्रतिपन्नं जनकस्य पितुरानन्दनिबन्धनं पुत्रजन्म येन स तथोक्तः। सिन्दूररञ्जितपुत्रपदाङ्कितः पटः **पटवासः** स एवोपायनमुपहारो लाटानां प्रसिद्धः। **महोत्पलं** पद्मम्। **अर्थवत्तैव-मिति** श्लोकभागं व्याचष्टे—**तथाचेति।** अनेन सिद्धस्याप्यप्रतिपित्सितत्वाप्रतिपिपादयिषितत्वे प्रत्युक्ते। **शास्त्रत्वं हितशासनाद्** इत्येतद्व्याचष्टे—**एवंचेति।** प्रवृत्तिनिवृत्त्याश्रयणं हि शास्त्रे पुरुषार्थाय, तं तु वेदान्ता अन्तरेणाप्या-यासं ज्ञानादेवानयन्तीति भवन्तितरां शास्त्राणीत्यर्थः। **तत्सिद्धमिति।** तच्छब्देन तस्मादर्थेन सिद्धशब्दव्युत्पत्त्यादि परामृशता वक्ष्यमाणहेतोरसिद्धिरुद्धृता। ज्योतिष्टोमादिवाक्ये बाधं परिहरति—**विवादेति। भूतार्थविषयाणीति।**

## कल्पतरुपरिमलः

नावगमकाले विधेयावृत्त्यवगमस्य ब्रह्मात्मैक्यविषयत्वस्यापि सद्भावात्, तमादाय प्रत्ययत्रयरूपापि सा सिद्धा, आवृत्ति-मात्रं हि ध्यानशब्दार्थो, नतु शतसहस्रादिसंख्याविशेषनियतावृत्तिः। तथाच द्वित्रप्रत्ययोत्पत्तावपि आवृत्तिशास्त्रार्थो लब्धएव-भवति। यथा सकृन्मुसलपातनेऽपि 'सर्वौषधस्य पूरयित्वाऽवहन्ती'त्यत्रावघातशास्त्रार्थः। यदि ध्यानस्य साक्षात्काररूपदृष्ट-फलकत्वमिष्यते, तदा परं दार्शपूर्णमासिकावघातस्येव यावद्दृष्टफलोदयमावृत्तिर्लभ्यते। तथा दृष्टफलकत्वे तु न विध्य-पेक्षा। उपायान्तरप्राप्त्यभावाद् नियमस्यापि नावकाशः। नच—अविच्छिन्नप्रत्ययावृत्तिर्ध्यानशब्दार्थः, सा न सिद्धेति—

## वेदान्तकल्पतरुः ।

न कार्यविषयाणीत्यर्थः; इतरथा भूतार्थप्रतीतिमात्रजनकत्वसाधने सिद्धसाधनात्, प्रमितिजनकत्वस्य साधने हेतोः साध्यसमतापातात् । यत्तच्छब्दावपि प्रस्तुतभूतार्थं परामृशतः । उपोपसर्गः सामीप्यार्थमाह । नीत्ययं निश्चयार्थः । सदेरर्थमाह—

## कल्पतरुपरिमलः ।

वाच्यम्; यथाश्रवणमननं प्रत्ययावृत्तिरूपं ध्यानं कर्तव्यमिति विध्यर्थावगमकाले श्रवणे यथाभूतः प्रत्ययः मनने च यथाभूतः तयोरपि क्रमेणानुसंधेयत्वेन नैरन्तर्यस्यापि प्राप्तेरिति भावः । **आखण्डलादीनामित्यादि । ननु**—कुतूहलभयनिवृत्त्यादिप्रयोजनसत्त्वेऽप्याद्यव्युत्पत्तिग्रहानुसारेण कार्याध्याहारः स्यादिति—**चेत्,** किमाद्यव्युत्पत्तिग्रहकाले गामानयेत्यादिवाक्यगतानां सर्वेषां पदानां कार्यवाचित्वमध्यवसितमिति तदनुसारेण द्वितीयादिप्रयोगेषु श्रुतैरपि सर्वैः पदैः कार्यसामान्ये बोधिते तद्विशेषजिज्ञासया कार्यविशेषवाचिक्रियापदाध्याहारः ? उताद्यव्यवहारस्य क्रियापदघटितत्वं दृष्टमिति तदनुरोधेन । **नाद्यः,** क्रियापदसमभिव्याहारात् कार्यस्येव गोपदसमभिव्याहारात्कर्मकारकस्य प्रतीत्युपपत्त्या पदान्तराणां कर्मकारकइव कार्येपि शक्तेरकल्पनीयत्वात्, यथा प्रवृत्तिः कार्यावगतिपूर्विका तथा कार्यावगतिरपि प्रवृत्तिविषयशुद्धपदार्थगोचरज्ञानपूर्विकेति नियमस्य प्रत्यक्षाधीनस्वप्रवृत्तिस्थले दृष्टत्वेन प्रयोज्यस्य प्रवृत्त्या कार्यावगतेरिव कार्यावगत्या तदनन्वितशुद्धपदार्थज्ञानस्याप्यनुमितेरनिवार्यतया तस्मिन् उत्तमवृद्धवाक्यं विनाकारणान्तराभावेनाद्यव्युत्पत्तिग्रहसमयएव शुद्धे गवादिपदार्थे शब्दसामर्थ्यग्रहणावश्यंभावाच्च । साक्षात्प्रवृत्तिजनकज्ञानएव शब्दस्य सामर्थ्यं कल्पनीयमिति चेत्, तर्हि ममेदं कार्यमिति ज्ञानएव तस्य सामर्थ्यं कल्प्येत, तस्यैव गामानयेति वाक्यजन्यमदंशरहितज्ञानानन्तरभाविनः साक्षात्प्रवर्तकत्वात् । **नापि द्वितीयः;** दण्डेन गामानयेत्यत्राद्यव्युत्पत्तिग्रहे करणश्रवणेऽप्यग्रे घटं पश्येत्यादौ करणानध्याहारवत् कार्यानध्याहारस्याप्युपपत्तेः, आद्यव्युत्पत्तिग्राहकवाक्यस्यानयनकार्यघटितत्वे द्वितीयादिप्रयोगेष्वपि तदध्याहारापत्तेः । आनयनं विनाग्रे कार्यान्तरघटितवाक्यश्रवणादानयननियमस्त्यज्यत इति चेत्, तर्हि कार्यवाचिपदरहितानां सिद्धार्थवर्णनपराणां काव्यादीनां बहुलमुपलम्भात् कार्यनियमोऽपि त्यक्तव्य इति तुल्यम् । एवमाद्यव्युत्पत्तिग्रहानुरोधेनाग्रे सिद्धार्थप्रयोगेषु कार्यमध्याहर्तव्यमित्यभिमाने भग्ने हर्षलिङ्गोपजीविसिद्धार्थव्युत्पत्तिग्रहोपपादनमपि निरवद्यम् । अन्यथा ह्यविदितार्यजनभाषार्थ इत्यादिटीकाग्रन्थेन प्राक् स्वभाषायां शब्दार्थव्युत्पत्तिमतः प्रबुद्धस्य हर्षलिङ्गोपजीवि 'पुत्रस्तेजातः' इत्यत्र व्युत्पत्तिग्रहणमुपपादितमयुक्तम्; आद्यव्युत्पत्तिग्रहानुसारेण तत्र स्नानदानादिकं कुर्विति कार्यपरत्वस्फुरणादिति शङ्कावकाशः स्यात्, नच—'पुत्रस्ते जातः' इत्यत्राद्यव्युत्पत्तिग्रहोऽप्युक्तरीत्या संभवतीति—शङ्कनीयम्; स्तनन्धयस्यातिबालस्याद्यव्युत्पत्तिग्रहसमये 'जातः शिशुः' 'चैत्रस्य पुत्रजन्म हर्षकारण'मिति च बोधाभावात् । **ननु**—तद्बोधवतः प्रबुद्धस्यापि 'पुत्रस्ते जातः' इति शब्दस्य पुत्रजननरूपार्थपरत्वग्रहणं न संभवति; मुखविकासानुमितहर्षकारणं पुत्रजन्मज्ञानं पुत्रपदाङ्कितपटवासप्रदर्शनलिङ्गजन्यमनुमितिरूपम्, 'पुत्रस्ते जातः' इति वाक्यं तु स्नानदानादिकर्तव्यतार्थकमिति चैत्रस्य हर्षजन्मजातं स्नानदानादिप्रवृत्तिं च पश्यतस्तद्भाषानभिज्ञस्य विपरीतार्थप्रतीतेरेव प्राप्तेरिति—**चेत्, उच्यते;** लाढदेशे पटवासप्रदर्शनपुरःसरं पुत्रजननवार्तां वाचैव स्फुटं वदन्ति वार्ताहारा इति तद्देशप्रसिद्धिं जानन् वार्ताहारवाक्यस्य पुत्रजननमेवार्थं इति प्रत्येतीति न तस्यार्थान्तरप्रतीतिप्रसङ्गः । एवंच प्राग्भवीयसंस्कारोद्बोधेन पटवासप्रदर्शनकृतेन तद्देशप्रक्रियास्मरणमाश्रित्याद्यव्युत्पत्तिग्रहोऽपि पुत्रस्ते जात इत्यत्रोपपादयितुं शक्यः । अवश्यं च मातापित्रादिभिश्चन्द्रः गौरित्यादिशब्देषु चन्द्राद्यभिमुखाङ्गुलीनिर्देशपूर्वकमुच्चार्यमाणेष्वाद्यव्युत्पत्तिग्रहे बालस्य जायमाने सर्वसिद्धे शब्दविशेषोच्चारणसहितार्थविशेषाभिमुखाङ्गुलीनिर्देशस्य तस्मिन्नर्थे तस्य शब्दस्य शक्तिग्रहार्थत्वं जन्मान्तरे प्रबुद्धेन तदाऽवगतं बालेन स्मर्यत इत्येवोपपादनीयम्; तत्र गत्यन्तराभावात्, तथेहापि भविष्यति । एवं जन्मान्तरानुभवसंभवमभिप्रेत्य **लाटानां प्रसिद्ध** इत्युक्तम् । **प्रसिद्धः** प्रकर्षेण सिद्धः । अनादिकालप्रवृत्त इत्यर्थः । **न कार्यविषयाणीत्यर्थ इति । नन्वेवं सति** कार्यविशेषणतया स्वर्गदेवतादिभूतार्थप्रमितिजनके सार्थवादविधिवाक्ये व्यभिचारः स्यात्, **नैष दोषः;** भूतार्थप्रमितिशब्देन स्वातन्त्र्येण भूतार्थप्रतीतेर्विवक्षितत्वात्, प्रतीतौ याथार्थ्यविशेषणस्यानपेक्षितत्वात् । अतएव हेत्वसिद्धिपरिहारार्थं सिद्धव्युत्पत्तिप्रसाधनापेक्षा पूर्ववाक्ये दर्शिता । यथाश्रुतहेतोर्हि न तदपेक्षास्ति; वेदान्तानां ज्ञानविधिशेषतया ब्रह्मप्रमितिजनकत्वस्य परेणाप्यङ्गीकृतत्वात् । **प्रतीतिजनकत्वसाधन इति ।** कारणानां हि तत्तदर्थविषयत्वं फलद्वारकमुपपादनीयं, न साक्षात्तत्तदर्थविषयत्वमस्ति । एवंच फलरूपायां प्रतीतावनन्यशेषत्वरूपभूतार्थविशेषणाविवक्षायां सिद्धसाधनम्, सिद्धसाधनपरिहाराय तद्विवक्षायां हेतुसाध्याभेद इत्यर्थः । **ननु** यदनन्यशेषभूतार्थविषयप्रतीतिजनकं तत् कार्यविषयं न भवतीति विशेषव्याप्तिरेव संभवति; चक्षुरादीनामनन्यशेषभूतार्थविषयाणामानयनादिकार्यविषयत्वाभावात्, किमर्थं सामान्यव्याप्तिप्रत्यायनार्थं यत्तच्छब्दावुपन्यस्तावित्याशङ्क्याह—**यत्तच्छब्दावपीति ।** यद्विषयेत्यत्र तद्विषयेत्यत्र च समस्तौ यत्तच्छब्दौ न समभिव्याहृतपरौ, किंतु प्रकृतभूतार्थपरामर्शिनौ । तथाच

**त्वेवाधिगतः पुरुषोऽसंसारी ब्रह्म, उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' ( बृह० ३।९।२६ )**

### भामती ।

सवासनामविद्यां हिनस्तीति ब्रह्मविद्यामाह । तद्धेतुत्वाद्वेदान्ता अप्युपनिषदः । ततो विदित औपनिषदः पुरुषः । एतदेव विभजते—**योऽसावुपनिषत्स्वेवेति** । अहंप्रत्ययविषयाद्भिनत्ति—**असंसारीति** । अतएव क्रियारहितत्वाच्चतुर्विधद्रव्यविलक्षणः । अतश्च चतुर्विधद्रव्यविलक्षणो यदनन्यशेषः । अन्यशेषं हि भूतं द्रव्यं चिकीर्षितं सदुत्पत्त्याद्याप्यं संभवति । यथा 'यूपं तक्षति' इत्यादि । यत्पुनरनन्यशेषं भूतभाव्युपयोगरहितं, यथा 'सुवर्णं भार्यम्' 'सक्तून् जुहोति' इत्यादि, न तस्योत्पत्त्याद्याप्यता । कस्मात्पुनरस्यानन्यशेषतेत्यत आह—यतः **स्वप्रकरणस्थः** । उपनिषदामनारभ्याधीतानां पौर्वापर्यपर्यालोचनया पुरुषप्रतिपादनपरत्वेन पुरुषस्यैव प्राधान्येनेदं प्रकरणम् । नच जुह्वादिवदव्यभिचरितक्रतुसंबन्धः पुरुष इत्युपपादितम् । अतः स्वप्रकरणस्थः सोऽयं तथाविध उपनिषद्भ्यः प्रतीयमानो न नास्तीति शक्यो वक्तुमित्यर्थः । **स्यादेतत्**—मानान्तरागोचरत्वेनागृहीतसंगतितयाऽपदार्थस्य ब्रह्मणो वाक्यार्थत्वानुपपत्तेः कथमुपनिषदर्थतेत्यत आह **—स एष नेति नेत्यात्मेत्यात्मशब्दात्** । यद्यपि गवादिवन्मानान्तरगोचरत्वमात्मनो नास्ति; तथापि प्रकाशात्मन एव सतस्तत्तदुपाधिपरिहाण्या शक्यं वाक्यार्थत्वेन निरूपणं, हाटकस्येव कटककुण्डलादिपरिहाण्या । नहि प्रकाशः स्वसंवेदनो न भासते, नापि तदवच्छेदकः कार्यकरणसंघातः । तेन 'स एष नेति नेत्यात्मा' इति तत्तदवच्छेदपरिहाण्या बृहत्त्वादापनाच्च स्वयंप्रकाशः शक्यो वाक्यात् ब्रह्मेति चात्मेति च निरूपयितुमित्यर्थः । अथोपाधिनिरासवद्-

### वेदान्तकल्पतरुः ।

**सवासनामिति** । वस्त्वक्रियाशेषं वेदान्तविषयं दर्शयितुं भाष्ये विशेषणानि प्रयुक्तानि व्याचष्टे—**अहंप्रत्ययेत्यादिना** । भाष्ये **असंसारि** इति त्वंपदलक्ष्यनिर्देशः, **ब्रह्मेति** तस्य ब्रह्मत्वमुक्तम् । क्रियारहितत्वमसंसारित्वं । व्यवहितमप्यनन्यशेषत्वमुत्पाद्याद्यभावे हेतुत्वेन संबन्धयति—**अतश्चेति** । उत्पत्त्यादिभिराप्यं साध्यम् । सक्तवो हि प्राङ् न विनियुक्ताः । नच होमेन भस्मशेषा उपयोक्ष्यन्ते, अतो न संस्कार्या इति विनियोगभङ्गेन होमप्राधान्यमिति । अनन्यशेषत्वे स्वप्रकरणस्थत्वं हेतुत्वेन योजयति—**कस्मादिति** । एवं सिद्धार्थव्युत्पत्तिसमर्थनेनोपनिषदां ब्रह्मात्मैक्ये प्रामाण्यमुक्तम्, इदानीं भवत्वन्यत्र सिद्धे पुत्रजन्मादौ सङ्गतिग्रहः, न ब्रह्मणि; अविषयत्वात्; अतो न तत्रोपनिषत्प्रामाण्यमित्याशङ्क्य तत्परिहारपरत्वेन भाष्यमवतारयति—**स्यादेतदित्यादिना** । स्वयंप्रकाशत्वेन स्फुरत्यात्मनि समारोपितद्वयनिषेधेन लक्षणया शक्यं शास्त्रेण निरूपणमिति भाष्याभिप्रायमाह—**यद्यपीत्यादिना** । **ननु** प्रमाणान्तरमिते तथाविधस्य निषेधात्कथमात्मन्युपाधिनिषेधद्वारा लक्षणाऽत आह—**नहि प्रकाश इति** । भासमाने भासमानं निषेध्यमित्येतावत्, नतु मानेन भासमाने इति,वैयर्थ्यात्, इह स्वतो भात्यात्मनि तत्साक्षिक उपाधिः शक्यनिषेध इति तदवच्छेदकोऽपि न न भासत इत्यन्वयः । न केवलं निषेधमुखेनैवाविषयनिरूपणमपि त्वात्मादिपदैरपि व्याप्त्याद्यभिधानमुखेन परिच्छेदाभावोपलक्षितस्वप्रभ आत्मा लक्षणीयः, स चात्मपदयुक्तात् "नेति" वाक्यादात्मेति निरूप्यते, ब्रह्मपदयुक्ताच्चायमात्मा ब्रह्मेत्यादेर्ब्रह्मेति निरूप्यत इत्याह—**तेनेति** । इतिरिदमर्थे, य आत्मा इदं न इदं नेति चतुर्थे व्याख्यातः । स एष पञ्चमाध्याये

### कल्पतरुपरिमलः ।

तद्विषयमित्यस्य भूतार्थविषयमित्यर्थलाभे सति तेन लक्षणया कार्यविषयत्वाभावरूपमभिमतसाध्यं बोधनीयमिति भावः । **उपोपसर्ग इत्यादि** । तथाचाद्वितीयं ब्रह्माहमर्थनिष्कृष्टसाक्षिरूपत्वेनाहमर्थनिर्दिष्टं निश्चयरूपतया विषयीकृत्य सवासनामविद्यां शृणाति हिनस्तीत्युपनिषदिति निर्वचनं कृतं भवति; सदेरिह विशरणार्थत्वस्य टीकायामुक्तत्वात् । **व्यवहितमपीति** । **ननु** क्रियातच्छेषव्यतिरिक्तकेवलसिद्धवस्तुबोधको वेदभागो नास्तीति पूर्वपक्षिमतस्य निरासे तन्नेति प्रतिज्ञाते हेतुत्वेनोपन्यस्तमनन्यशेषत्वं संग्रहवाक्ये; तदुपपादनार्थं च योऽसावुपनिषत्स्वित्यादिवाक्यं, तत्र प्रयाजादिवत् प्रकरणेन जुह्वादिवद्वाक्येन वा विनियोगाभावेनोपपाद्यमानमनन्यशेषत्वं किमर्थं व्यवहितान्वयमाश्रित्य चतुर्विधद्रव्यविलक्षणत्वे हेतुत्वेन योजितं ? किमर्थं च भाष्ये संग्रहवाक्यमुपन्यस्तं तत्रोपन्यस्तयोरौपनिषदत्वानन्यशेषत्वयोरनुपपादकं चतुर्विधद्रव्यविलक्षणत्वं विवरणवाक्येऽस्मिन्नुपन्यस्तम् ? **उच्यते;** यदि प्रकरणादिविनियोजकाभावेन क्रियाशेषतयान्वयो नास्ति, तर्हि कर्मकारकत्वेन तच्छेषतयान्वयोऽस्तु, एवमपि क्रियान्वयनियमस्य न भङ्ग इत्याशङ्कान्तरनिराकरणार्थं चतुर्विधद्रव्यविलक्षणत्वमुपन्यस्तम् । तत्राप्यनन्यशेषत्वं हेतुभवनक्षममिति व्यवहितान्वयः समाश्रितः । 'स एष नेत्यात्मेति' बृहदारण्यकपञ्चमाध्यायाम्नातवाक्ये विधेयानुवाद्यविभागमनुवादस्य "अथात आदेशो नेति नेती'ति तच्चतुर्थाध्यायाम्नातवाक्यतः प्राप्तिं च दर्शयति—**य आत्मेति** । 'स एष' इत्यस्य 'कस्मिन्नु प्राणः प्रतिष्ठित इत्यपाने इती'त्यादिनाप्रस्तुते प्राणादिपञ्चके

**इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात् । नन्वात्माहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् । न; तत्साक्षित्वेन प्रत्युक्तत्वात् । नह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधि-**

## भामती ।

पहितमप्यात्मरूपं कस्मान्न निरस्यत इत्यत आह—**आत्मनश्च प्रत्याख्यातुमशक्यत्वात्** प्रकाशो हि सर्वस्यात्मा तदधिष्ठानत्वाच्च प्रपञ्चविभ्रमस्य । नचाधिष्ठानाभावे विभ्रमो भवितुमर्हति । नहि जातु रज्ज्वभावे रज्ज्वां भुजङ्ग इति वा धारेति वा विभ्रमो दृष्टपूर्वः । **अपिचात्मनः** प्रकाशस्य भासा प्रपञ्चस्य प्रथा । **तथाच श्रुतिः**—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । नचात्मनः प्रकाशस्य प्रत्याख्याने प्रपञ्चप्रथा युक्ता । तस्मादात्मनः प्रत्याख्यानायोगाद्वेदान्तेभ्यः प्रमाणान्तरागोचरसर्वोपाधिरहितब्रह्मस्वरूपावगतिसिद्धिरित्यर्थः । उपनिषत्स्वेवावगत इत्यवधारणममृष्यमाण आक्षिपति—**नन्वात्मेति** । सर्वजनीनाहंप्रत्ययविषयो ह्यात्मा कर्ता भोक्ता च संसारी; तत्रैव च लौकिकपरीक्षकाणामात्मपदप्रयोगात् । य एव लौकिकाः शब्दास्त एव वैदिकास्त एव च तेषामर्था इत्यौपनिषदमप्यात्मपदं तत्रैव प्रवर्तितुमर्हति, नार्थान्तरे तद्विपरीत इत्यर्थः । समाधत्ते—**न** अहंप्रत्ययविषय औपनिषदः पुरुषः । कुतः **तत्साक्षित्वेन** । अहंप्रत्ययविषयो यः कर्ता कार्यकरणसंघातोपहितो जीवात्मा तत्साक्षित्वेन परमात्मनोऽहंप्रत्ययविषयत्वस्य **प्रत्युक्तत्वात्** । **एतदुक्तं भवति**—यद्यपि 'अनेन जीवेनात्मना' इति जीवपरमात्मनोः पारमार्थिकमैक्यं; तथापि तस्योपहितं रूपं जीवः, शुद्धं तु रूपं तस्य साक्षि, तच्च मानान्तरानधिगतमुपनिषद्गोचर इति । एतदेव प्रपञ्चयति—**नह्यहंप्रत्ययविषयेति** । **विधिशेषत्वं वा नेतुं न शक्यः** । कुतः **आत्मत्वादेव** । नह्यात्माऽन्यार्थोऽन्यत्तु सर्वमात्मार्थं । **तथाच श्रुतिः**—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' इति । अपिचातः सर्वेषामात्मत्वादेव न हेयो नाप्युपादेयः; सर्वस्य हि प्रपञ्चजातस्य ब्रह्मैव तत्त्वमात्मा । नच स्वभावो हेयो-

## वेदान्तकल्पतरुः ।

निरूप्यत इत्यर्थः । न केवलमधिष्ठानत्वेन प्रपञ्चसत्ताप्रदत्वादात्मसत्यता, अपितु तत्स्फुरणप्रदत्वाच्चेत्याह—**अपिचेति** । संस्कार्यत्वनिरासप्रस्तावे 'साक्षी चेता' इति मन्त्रोदाहरणेन प्रत्युक्तत्वादिति भाष्यार्थः । नह्यहंप्रत्ययविषयेत्यादिभाष्यमात्मनोऽनधिगतत्वेनौपनिषदत्वोपपादनार्थं, तदवतारयति—**एतदेवेति** । भाष्ये तत्साक्षीति विधिकाण्डानधिगतत्वमुक्तम् । सर्वभूतस्थत्वेन बौद्धसमयानधिगतिः । विनश्यत्सु सर्वेषु भूतेषु स्थितो न विनश्यतीत्यर्थः । सावयव आत्मेति विवसनसमयानधिगतिः । समत्वेन जीवोत्पत्तिवादिपञ्चरात्रतन्त्रानधिगतिः । कूटस्थनित्यत्वेन काणादादितर्कानधिगतिरेकः सर्वस्यात्मेति वर्णितम् । अन्यतोऽनधिगतिमुक्त्वा बाधाभाव उक्तः । अत इति । अधिगते हि बाधो नानधिगत इत्यर्थः । **अथवा-सर्वस्यात्मत्वेन प्रत्याख्यातुं न शक्यं, औपनिषदस्य पुरुषस्यानन्यशेषत्वादिति भाष्यं** 'तयोस्तावुपनिषत्स्वि-त्यादिना विवृतं । पुनरभिहितविशेषणस्यात्मनोऽहंप्रत्ययविरोधमाशङ्क्य तन्मिथ्यात्वेनौपनिषदत्वं विवृतम् । अनन्यशेषत्वविवरणाय विधिशेषत्वं वेति भाष्यं तदनुषङ्गेण व्याचष्टे—**न शक्य इति** । विध्यशेषत्वे आत्मत्वादिति हेतुं व्याचष्टे—**कुत इत्यादिना** । मा भूद्विधेयकर्मशेषत्वेन विधिविषयत्वमात्मनः, स्वत एव विधीयतां निषिध्यतां चेत्याशङ्कामपनेतुं न हेय इति भाष्यम्, तत्रापि हेतुत्वेनात्मत्वादित्येतद्योजयति—**अपिचेति** । अनन्यशेषत्वे स्वतो विधेयत्वाभावे चात्मत्वं हेतुरित्यपि चशब्दार्थः । **अत इति** । भाष्योक्तादेव हेतोरित्यर्थः । तमेवाह—**सर्वेषामिति** । **ननु** घटादिविनाशस्य

## कल्पतरुपरिमलः ।

वृत्त्यसंभवाद् 'अगृह्यो नहि गृह्यत' इत्यादिना प्रस्तोष्यमाणे वृत्तिं प्रकटयितुमपेक्षितमध्याहरति—**निरूप्यत इति** । **विनश्यत्स्विति** । "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तमिति" स्मृतौ सर्वभूतस्थत्वस्य तथा विवरणादिति भावः । अवधानस्वारस्यादात्मत्वादेवेत्यग्रिमवाक्यगतैवकारस्वारस्याच्च—**अथवेति** पक्षः । **नन्वनन्यशेषत्वं** प्रागुपपादितमेव, इहापि 'विधिशेषत्वं वा नेतु'मिति भाष्येण, किमर्थं पुनरुपपाद्यते ? इत्याशङ्क्य तदपौनरुक्त्याय पूर्वोक्तमनुवदति—**औपनिषदस्येति** । प्रागनन्यशेषत्वमुपनिषत्प्रतिपाद्यत्वं च संग्रहवाक्ये यदुपन्यस्तं तत्रानन्यशेषत्वं प्रकरणादिविनियोजकाभावेनोपपादितम् । औपनिषदत्वं कार्यएव व्युत्पत्तिग्रह इति शङ्कानिरासेनाविषये ब्रह्मणि व्युत्पत्तिग्रहासंभवशङ्कानिरासेन कर्तृत्वाद्यवगाह्यहंप्रत्ययविरोधशङ्कानिरासेन चोपपादितम् । इदानीं तदनन्यशेषत्वं विधिशेषत्वाभावरूपतया विवरीतुमात्मत्वरूपहेत्वन्तरेण चोपपादयितुमिदं भाष्यमित्यर्थः । **अनुषङ्गेणेति** । न शक्य इत्यनुषङ्गेणेत्यर्थः, नत्वतःशब्दस्याप्यनुषङ्गेणेत्यर्थः । अतःशब्दोक्तहेतोः पुनर्निर्देशरूपस्यात्मत्वादेवेत्यग्रिमभाष्यगतहेतोः पूर्वत्राप्यन्वयस्य टीकायां वक्ष्यमाणत्वात् । **अपिच** सर्वेषामात्मत्वादेव न हेयो नाप्युपादेय इति टीकापाठो न व्याख्यानापेक्षः । अपिचातएवेति पाठेऽप्यतःशब्दः सर्वात्मत्वादिति भाष्योक्तहेतुपरामर्शीति व्याचष्टे—**भाष्योक्तादेव हेतोरित्यर्थ**

**काण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा। अतः स न केनचित्प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुम्। आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः। सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति। पुरुषो विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अतएव नित्यशुद्धबुद्धमुक्तस्वभावः। तस्मात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' (काठ० १।३।११) 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृह० ३।९।२६) इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्व उपपद्यते। अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम्। यदपि शास्त्रतात्पर्यविदामनुक्रमणम्—'दृष्टो हि**

## भामती ।

ऽशक्यहानत्वात्। नचोपादेयः; उपात्तत्वात्। तस्माद्धेयोपादेयविषयौ विधिनिषेधौ न तद्विपरीतमात्मतत्त्वं विषयीकुरुत इति सर्वस्य प्रपञ्चजातस्यात्मैव तत्त्वमिति। एतदुपपादयति—**सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति। अयमर्थः**—पुरुषो हि श्रुतिस्मृतीतिहासपुराणतदविरुद्धन्यायव्यवस्थापितत्वात्परमार्थसन्, प्रपञ्चस्त्वनाद्यविद्योपदर्शितोऽपरमार्थसन्; यश्च परमार्थसन्नसौ प्रकृती रज्जुतत्त्वमिव सर्पविभ्रमस्य विकारस्य। अतएवास्यानिर्वाच्यत्वेनादृढस्वभावस्य विनाशः, पुरुषस्तु परमार्थसन् नासौ कारणसहस्रेणाप्यसन् शक्यः कर्तुम्। नहि सहस्रमपि शिल्पिनो घटं पटयितुमीशत इत्युक्तम्। तस्मादविनाशिपुरुषान्तो विकारविनाशः शुक्तिरज्जुतत्त्वान्त इव रजतभुजङ्गविनाशः। पुरुष एव हि सर्वस्य प्रपञ्चविकारजातस्य तत्त्वम्। नच पुरुषस्यास्ति विनाशो यतोऽनन्तो विनाशः स्यादित्यत आह—**पुरुषो विनाशहेत्वभावादिति**। नहि कारणानि सहस्रमप्यन्यदन्यथयितुमीशत इत्युक्तम्। **अथ** मा भूत्स्वरूपेण पुरुषो हेय उपादेयो वा, तदीयस्तु कश्चिद्धर्मो हास्यते, कश्चिच्चोपादास्यत इत्यत आह—**विक्रियाहेत्वभावाच्च कूटस्थनित्यः**। त्रिविधोऽपि धर्मलक्षणावस्थापरिणामलक्षणो विकारो नास्तीत्युक्तम्। **अपिचात्मनः** परमार्थसतो धर्मोऽपि परमार्थसन्निति न तस्यात्मवदन्यथात्वं कारणैः शक्यं कर्तुम्, नच धर्मान्यथात्वादन्यो विकारः; **तदिदमुक्तम्**—विक्रियाहेत्वभावादिति। सुगममन्यत्। यत्पुनरेकदेशिना शास्त्रविद्वचनं साक्षित्वेनानुक्रान्तं तदन्यथोपपादयति—**यदपि शास्त्रतात्पर्यविदामनुक्रमणमिति**। 'दृष्टो हि तस्यार्थः प्रयोजनवदर्थावबोधनम्' इति वक्तव्ये धर्मजिज्ञासायाः प्रकृतत्वाद्धर्मस्य च कर्मत्वात् 'कर्मावबोधनम्' इत्युक्तम्, नतु सिद्धरूपब्रह्मावबोधनं व्यापारं वेदस्य वारयति। नहि सोमशर्मणि प्रकृते तद्गुणाभिधानं परिसंचष्टे विष्णुशर्मणो गुणवत्ताम्। विधिशास्त्रं विधीयमानकर्मविषयं, प्रतिषेधशास्त्रं च प्रतिषिध्यमानकर्मविषयमित्युभयमपि कर्मावबोधनपरम्। **अपिच** 'आम्नायस्य क्रियार्थत्वात्' इति शास्त्रकृद्वचनम्। तत्रार्थग्रहणं यद्यभिधेयवाचि, ततो भूतार्थानां द्रव्यगुणकर्मणामानर्थक्यमनभिधेयत्वं प्रसज्येत, नहि ते

## वेदान्तकल्पतरुः ।

मृदादौ दर्शनात्कथं पुरुषावधिः सर्वस्य लयोऽत आह—**पुरुषो हीति**। कल्पितस्याधिष्ठानत्वायोगादात्मतत्त्वमेव तत्तदवच्छिन्नमनिर्वाच्यविश्वोदयाप्ययहेतुरित्यर्थः। **ननु** पुरुषोऽप्यनिर्वाच्य इति नेत्याह—**पुरुषस्त्विति**। **अनन्तो**ऽनवधिः। विकारो नास्तीत्युक्तं भेदाभेदविचारे। धर्मान्यथात्वविक्रियाया अभावमुक्त्वा तद्धेत्वभावमप्याह—**अपिचेति। भाष्ये**—यत एव धर्मान्यथात्वाभावोऽतएव नित्यशुद्धादिस्वभावः। पुरुषावधिः सर्वस्य लय इत्यत्र श्रुतिमाह—**तस्मात्पुरुषादिति**। कल्पितस्याकल्पितमधिष्ठानमित्युक्तयुक्तिपरामर्शी तस्माच्छब्दः। निरतिशयस्वतन्त्रतया विधिशेषत्वाभावे श्रुतिमुदाहृत्य मानान्तरागम्यतया वेदान्तैकवेद्यत्वे श्रुतिमुदाहरति—तं त्वेति। **तस्य** वेदस्येत्यर्थः। **ननु** तर्हि धर्मावबोधनमिति वक्तव्यं, तत्राह—**धर्मस्य चेति**। **ननु** प्रतिषेधानामनुष्ठेयाबोधकत्वात्कथं कर्मावबोधप्रयोजनतात आह—**प्रतिषिध्यमानेति**। शाबरवचनवदाम्नायस्येति (जै. अ. १ पा. २ सू. १) सूत्रे आम्नायशब्दो विधिनिषेधपर इति सिध्यति। विकल्पमुखेन परिहारान्तरं चाह—**अपिचेति। द्रव्यगुणकर्मणां** तच्छब्दानामित्यर्थः। क्रियार्थत्वादि-

## कल्पतरुपरिमलः ।

**इति**। भाष्ये अत इत्युक्तादेव हेतोरित्यर्थ इति पाठेऽप्ययमेवार्थो भाष्ये उक्तादेव हेतोरित्यर्थ इति व्यवहितयोजनया ग्राह्यः। **तस्मात्पुरुषादिति** प्रतीकग्रहणे **पुरुषादित्यादि** श्रुतिवाक्यं, **तस्मादिति** भाष्यं, तस्यार्थमाह—**कल्पितस्येति**। दृष्टो हि तस्यार्थ इति शाबरवचने तस्यशब्दार्थमाह **वेदस्येति**। **प्रतिषिध्यमानेतीति**। **अथातो धर्मजिज्ञासेत्यत्र** अकारप्रक्षेपेणाधर्मविचारोपि प्रतिज्ञात इत्यधर्मरूपं प्रतिषिध्यमानमपि भाष्ये कर्मशब्देन संगृहीतम्। तत्संग्रहार्थमेव धर्मशब्दमपहाय कर्मशब्दग्रहणमिति भावः। आम्नायस्येति सूत्रे (जै. अ. १ पा. २ सू. १) कस्यचित्परिहारस्यानुक्तत्वादपिचेत्ययुक्तमित्याशङ्क्य शाबरवचने कृतः परिहारस्तत्रापि साम्येन प्राक् सिद्ध इत्याह—**शाबरेति**। **ननु** विशिष्टे पदशक्तिर्नास्ति चेत्, कथमन्वितपदार्थप्रतीतिः, नहि

तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम्। अपिच 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः। प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थ-

## भामती।

क्रियार्था इत्यत आह—**अपि चाम्नायस्येति**। यद्युच्येत नहि क्रियार्थत्वं क्रियाभिधेयत्वं, अपितु क्रियाप्रयोजनत्वम्; द्रव्यगुणशब्दानां च क्रियार्थत्वेनैव भूतद्रव्यगुणाभिधानं न स्वनिष्ठतया, **यथाहुः शास्त्रविदः**—'चोदना हि भूतं भवन्तम्' इत्यादि। **एतदुक्तं भवति**—कार्यमर्थमवगमयन्ती चोदना तदर्थं भूतादिकमप्यर्थं गमयतीति, तत्राह—**प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतं चेदिति**। **अयमभिसंधिः**—न तावत्कार्यार्थ एव स्वार्थे पदानां संगतिग्रहो नान्यार्थ इत्युपपादितं भूतेऽप्यर्थे व्युत्पत्तिं दर्शयद्भिः। नापि स्वार्थमात्रपरतैव पदानाम्। तथा सति न वाक्यार्थप्रत्ययः स्यात्। नहि प्रत्येकं स्वप्रधानतया गुणप्रधानभावरहितानामेकवाक्यता दृष्टा। तस्मात्पदानां स्वार्थमभिदधतामेकप्रयो-

## वेदान्तकल्पतरुः।

त्यत्रानर्थक्यमित्यत्र चार्थशब्दोऽभिधेयपरः, प्रयोजनपरो वेति विकल्प्याद्यं निरस्य **द्वितीयं** निरस्यति—**यद्युच्येतेत्यादिना**। **ननु** चोदना हि भूतं भवन्तं भविष्यन्तमित्येवंजातीयकं शक्नोत्यवगमयितुमिति शाबरवचसि विधिवाक्यस्य भूतादिबोधिता भाति, न द्रव्यादिशब्दानां क्रियाप्रयोजनतात आह—**कार्यमर्थमिति**। कार्यान्वितभूतबोधित्वे विधिवाक्यस्य कथं तन्न्यायेन ब्रह्मवाक्येष्वक्रियाशेषभूतवस्तुबोधित्वसिद्धिरत आह—**अयमभिसंधिरिति**। कार्यान्वितबोधित्वनियमः शब्दानां किं व्युत्पत्तिबलादुत प्रयोजनार्थम्। तत्र केवलभूतवस्त्ववगमादपि प्रयोजनसिद्धिमुत्तरत्र वक्ष्यति। न तावद्व्युत्पत्तिबलादित्याह—**न तावदिति**। **कार्यार्थे** कार्यशेषे। **ननु** कार्यान्वितपरत्वनियमाभावे पदानामतिलाघवायान्वितपरत्वमपि त्यज्यतामत आह—**नापीति**। तत्किमिदानीं विशिष्टे पदशक्तिर्नेत्याह—**स्वार्थमिति**। **अयमभिसंधिः**—पदैः पदार्था एवाभिधीयन्ते अर्थान्तरान्विततया उपलक्ष्यन्ते; अन्यथा स्वरूपमात्रातिरेकिविशिष्टाभिधाने गौरवं स्यात्। **ननु**—अभिहितार्थस्वरूपाणां विशिष्टैरनविनाभावात्कथं लक्षणा? नहि गवार्थस्यानयत्यन्वयाविनाभावः; चारयतिनाप्यन्वयात्, नचार्थान्तरमात्रान्वयो लक्ष्यः; तस्य व्यवहारानुपयोगात् इति—**चेन्न;** अनविनाभाविभिरपि मञ्चैः पुरुपलक्षणात्। **ननु**—मा भूदनविनाभावनियमः, तथापि वाच्यस्य लक्ष्येण संबन्धो वाक्यार्थे चानन्वयो वाच्यः, मञ्चा हि संबद्धाः पुंभिर्न च वाक्यार्थेऽन्वीयन्ते, **यथाह शालिकनाथः**—'वाच्यार्थस्य च वाक्यार्थे संसर्गानुपपत्तितः। तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते॥' इति। तदिह गामानयेत्यादौ न श्रौतार्थस्य वाक्यार्थेनानन्वयः; नाप्यन्वितस्य लक्ष्यस्यास्त्यभिधेयेन संबन्धः अन्वितस्यान्वयान्तराभावात्, तत इह न लक्षणा **इति। अत्रोच्यते**; मुख्यार्थपरिग्रहेऽनुपपत्तिस्तावल्लक्षणाया निदानं, तत्र यथा पदेन पदार्थलक्षणायां वाच्यार्थस्य वाक्यार्थे संबन्धानुपपत्तिः, एवं वाक्यार्थप्रत्ययोद्देशेन प्रयुक्तस्य पदवृन्दस्य येऽभिधेया अनन्वितपदार्थास्तेषां वाक्यार्थभावानुपपत्तिरेवान्वितलक्षणाया निदानम्। नचान्वितरूपस्याभिधेयस्वरूपेण संबन्धानुपपत्तिः; विशिष्टस्वरूपयोस्तादात्म्यस्य कस्यापि स्वीकारात्। **नन्वेमपि**—अभिहितार्थैरर्थान्तरान्वितलक्षणायां कथं नियमः? अर्थान्तराणामानन्त्यात्, **तदुच्यते—'आकाङ्क्षासत्तियोग्यत्वसहितार्थान्तरा-**

## कल्पतरुपरिमलः।

वृत्त्यविषये शाब्दबोधो भवतीत्यत आह—**अयमभिसंधिरिति**। **अनविनाभाविभिरपीति**। मञ्चाः क्रोशन्तीत्यत्र हि मञ्चशब्देन मञ्चेषु शयानाः शिशवो लक्ष्यन्ते। **अत्रोच्यत इति**। **ननु**—लक्षकशब्दवाच्यस्य वाक्यार्थेनाऽनन्वयनियमशङ्कायाः किमुत्तरमिहोक्तम्। नच—अन्वितं लक्ष्यमेव वाक्यार्थेनान्वितं भवति, नत्वविशिष्टं वाच्यस्वरूपमित्युक्तनियमाविरोधो विशिष्टस्वरूपयोस्तादात्म्यस्य कस्यापि स्वीकारादिति वाच्यलक्ष्यसंबन्धप्रतिपादनेन द्योतित इति—वाच्यम्, विशिष्टस्य विशेष्यघटितमूर्तेर्वाक्यार्थान्वये तद्घटकस्य विशेष्यस्यापि तदन्वयानिवारणात्। नच—विशिष्टस्वरूपयोः संबन्धोक्त्या स्वरूपभिन्नं तदघटितं विशिष्टमङ्गीकृतमिति—शङ्कनीयम्; तादात्म्यसंबन्धस्य विशिष्टे विशेष्यानुप्रवेशाविरोधित्वेन 'संबन्धः स्वीकृत' इत्येतावता तदनुप्रवेशविरोधिभेदाप्रसक्तेः। **अतएवाचार्यैरिहैव वक्ष्यते**—"भवतु कार्यान्विते भूते सङ्गतिग्रहः, तथापि स्वरूपं तत्र प्रतीयतएव; विशिष्टेऽपि स्वरूपसंभवादिति" तस्माद्वाच्यार्थानन्वयनियमाशङ्कायाः परिहारो न लब्ध इति—**चेत्**, लब्ध एव; 'वाक्यार्थभावानुपपत्तिरेवान्वितलक्षणाया निदान'मित्यन्वयानुपपत्तिमनपेक्ष्यानुपपत्त्यन्तरस्य लक्षणाबीजत्वप्रदर्शनेन लक्ष्यार्थग्रहणसमाधेयानुपपत्तिमात्रं लक्षणाबीजं, नतु वाच्यार्थस्य वाक्यार्थेऽन्वयानुपपत्तिरेव, येन वाच्यार्थानन्वयनियमः स्यात्; काकेभ्यो दधि रक्ष्यतामित्याद्यजहल्लक्षणास्थले मुख्यार्थान्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्तेर्लक्षणाबीजत्वाङ्गीकारादिति। **आकाङ्क्षासत्तीति**। **ननु**—एवं सत्यवश्यापेक्षिताकाङ्क्षादिवशादेव वाक्यार्थरूपान्वयप्रतीत्युपपत्तेर्न तत्र लक्षणा कल्पनीया, **नच**—प्रमाकरणप्रत्यासत्तिमन्तरेण संसर्गरूपस्यापि प्रमेयस्य

त्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः। नहि भूतमुपदिश्यमानं क्रिया भवति। अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः; क्रियार्थत्वे-

## भामती।

जनवत्पदार्थपरतयैकवाक्यता। तथाच तत्तदर्थान्तरविशिष्टैकवाक्यार्थप्रत्यय उपपन्नो भवति। **यथाहुः शास्त्रविदः**—'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥' इति। तथाचार्थान्तरसंसर्गपरतामात्रेण वाक्यार्थप्रत्ययोपपत्तौ न कार्यसंसर्गपरत्वनियमः पदानाम्। एवंच सति कूटस्थनित्यब्रह्मरूपपरत्वेऽप्यदोष इति। **भव्यं कार्यम्। ननु** यद्भव्यार्थं भूतमुपदिश्यते, न तद्भूतं, भव्यसंसर्गिणा रूपेण तस्यापि भव्यत्वादित्यत आह—**नहि भूतमुपदिश्यमानमिति**। न तादात्म्यलक्षणः संसर्गः, किंतु कार्येण सह प्रयोजनप्रयोजनिलक्षणोऽन्वयः, तद्विपयेण तु भावार्थेन भूतार्थानां क्रियाकारकलक्षण इति न भूतार्थानां क्रियार्थत्वमित्यर्थः। शङ्कते—**अक्रियात्वेपीति**। एवंचाक्रियार्थकूटस्थनित्यब्रह्मोपदेशानुपपत्तिरिति भावः। परिहरति—**नैष दोषः। क्रियार्थत्वेऽपीति**। नहि क्रियार्थं भूतमुपदिश्य-

## वेदान्तकल्पतरुः।

न्वितान्। पदानि लक्षयन्त्यर्थानिति नातिप्रसङ्गिता॥' प्रयोगस्तु गोपदं, गामानयेति वाक्येनानयत्यन्वितगोत्ववाचकम्, पदत्वात्, तुरगपदवदिति। एतत्सर्वमाह—**एकेति**। एकप्रयोजनसिद्ध्युपयोगित्वं हि पदार्थानामितरेतरवैशिष्ट्यमन्तरेण न घटतेऽतः प्रयोजनवत्त्वायैकवाक्यत्वाय च लक्षणयान्वितपरत्वं पदानां वाच्यमित्यर्थः। **ननु** विशिष्टानामप्यर्थानां भेदात्कथमेकवाक्यता? अत आह—**तथाचेति**। गुणभूतनानापदार्थविशिष्टप्रधानार्थस्यैक्यादेकवाक्यत्वमित्यर्थः। पदानामनन्वितार्थापर्यवसानेऽन्वितपर्यवसाने च भट्टसंमतिमाह—**यथाहुरिति**। यदा लक्षणया योग्येतरान्वितपरत्वं पदानां, पदार्थानां च लक्षणायां द्वारत्वेन तत्परत्वं, तदा वेदान्तानां कार्यानन्वितब्रह्मपरत्वोपपत्तिरित्याह—**एवंच सतीति**। **भाव्यार्थत्वेनेति** भाष्ये भव्यशब्दो भवनकर्तृवचनत्वादुत्पाद्यमात्रपरो मा भूदित्याह—**भव्यमिति**। भाष्ये भूतस्य क्रियात्वप्रतिषेधस्य प्रसक्तिमाह—**नन्विति**। भव्यसंसर्गिणा रूपेण भूतमपि भव्यमित्यत्र किं कार्यं भव्यं? उत क्रिया? उभाभ्यामपि भूतार्थस्य नैक्यमित्याह—**न तादात्म्येति**। कार्यं हि साध्यतया प्रयोजनं भूतं साधकतया प्रयोजयतीति। **प्रवृत्तिनिवृत्तिव्यतिरेकेणे**त्यादिभाष्येण कार्यान्वयनियमभङ्गेन कूटस्थनित्यवस्तूपदेशस्य समर्थितत्वेऽपि कार्यान्विते व्युत्पत्तिनियममभ्युपेत्यापि परिहारान्तरं वक्तुमुक्तशङ्कामनुवदतीत्याह—**शङ्कत इति**। अङ्गीकृते कार्यान्वितव्युत्पत्तिनियमे कूटस्थनित्योपदेशानुपपत्तिरित्याह—**एवंचेति**। भवतु कार्यान्विते भूते सङ्गतिग्रहः, तथापि स्वरूपं तत्र प्रतीयतएव; विशिष्टेऽपि स्वरूपसद्भावात्, ततः किमत

## कल्पतरुपरिमलः।

भानं न संभवति, प्रत्यक्षे प्रकारविशेष्ययोरिव संसर्गांशेपि सन्निकर्षापेक्षादर्शनादिति—वाच्यम्; तथा नियमाभावात्, अनुमितिकरणे धूमे वह्निव्याप्तिसत्त्वमात्रेण पर्वतसंबन्धिवह्न्यनुमितिदर्शनात्, पक्षधर्मताबलात् साध्यस्य पक्षसंबन्धभानमिति चेत्, इहाप्याकाङ्क्षादिबलात् प्रधानपदार्थे समभिव्याहृतगुणान्वयप्रतीतिरस्त्विति **चेद्, मैवम्**; एवमपि शब्दबोध्यस्य वृत्तिविषयत्वनियमाप्रत्याख्यानात्, करणप्रत्यासत्तिमनपेक्ष्यानुमितौ भासमानस्यापि पक्षसाध्यसंबन्धस्य शब्देन बोधने कर्तव्ये पर्वतो वह्निमानिति तदभिधायकमतुप्प्रत्ययापेक्षादर्शनात्। घटः पटो नेत्यत्रान्योन्याभावे घटे पटो नेत्यत्र संसर्गाभावे च प्रतियोगिसंबन्धस्य शब्दवृत्तिविषयत्वं विनैव शाब्दबोधविषयत्वं दृष्टमिति चेद्, न; तदन्यवाचिनो नञः शक्तावधिकरणसंबन्धस्येव तदन्यवाचिनस्तदभाववाचिनश्च नञः शक्तौ प्रतियोगिसंबन्धस्यापि शक्यत्वेनानुप्रवेशकल्पनात्, अन्याभावशब्दयोः शक्तौ तदननुप्रवेशात् तदर्थवाचित्वेनाङ्गीकृतस्य नञः शक्तावपि न तदनुप्रवेश इत्यभ्युपगमे तयोः प्रयोगे इव नञः प्रयोगेऽपि प्रतियोगिनि पञ्चमीषष्ठ्योर्नञः प्रयोग इव तयोः प्रयोगेऽपि प्रतियोगिनि प्रथमाया वा निवारयितुमशक्यत्वात्। तस्मादन्वयांशेऽपि वृत्तिकल्पनं युक्तमेव। नच—तथापि प्राक् शक्यसंबन्धित्वेनाज्ञातस्यापूर्वस्य वाक्यार्थस्य लक्ष्यत्वं न युज्यत इति—वाच्यम्; प्रागविज्ञातहरिद्रानामकनदीविशेषेण हरिद्रायां नद्यां घोषविशेष इति श्रुते वाक्ये नदीपदसमभिव्याहारेण तदानीमेव हरिद्राशब्दस्य नदीविशेषशक्तिग्रहणेन नदीलिङ्गात्तत्संबन्धित्वेनानुमितस्य तीरस्येव आकाङ्क्षाद्युपस्थापितस्य वाक्यार्थस्यान्वयस्य वृत्त्युपस्थापितत्वसिद्ध्यर्थं लक्ष्यत्वोपपत्तेः। एकवाक्यान्तर्गतानां सर्वेषां पदानां इतरपदार्थान्वितस्वस्वार्थलक्षकतायां वाक्यार्थान्वयभेदेन वाक्यभेदमाशङ्क्य समभिव्याहृतयावद्गुणान्वितप्रधानपदार्थरूप एक एव लक्षणीयो वाक्यार्थ इति परिहरति—**नन्वित्यादिना**। इयं च वाक्यार्थलक्षणा समभिव्याहृतसकलपदवृत्तिः प्रधानपदमात्रवृत्तिर्वेत्यन्यदेतत्। **व्युत्पत्तिनियममिति**। प्रथमं

ऽपि क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव, क्रियार्थत्वं तु प्रयोजनं तस्य । नचैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति । उच्यते—अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति । तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यवि-

## भामती ।

मानमभूतं भवति, अपितु क्रियानिर्वर्तनयोग्यं भूतमेव तत् । तथाच भूतेऽर्थेवव्युत्पन्नशक्तयः शब्दाः क्वचित्स्वनिष्ठभूतविषया दृश्यमाना मृत्वा शीर्त्वा वा न कथंचित्क्रियानिष्ठतां गमयितुमुचिताः । नह्युपहितं शतशो दृष्टमप्यनुपहितं क्वचिद्दृष्टमदृष्टं भवति । तथाच वर्तमानापदेशा अस्तिक्रियोपहिता अकार्यार्था अप्यटवीवर्णकादयो लोके बहुलमुपलभ्यन्ते । एवं क्रियाऽनिष्ठा अपि संबन्धमात्रपर्यवसायिनः, यथा कस्यैष पुरुष इति प्रश्नोत्तरं राज्ञ इति । तथा प्रातिपदिकार्थमात्रनिष्ठाः, यथा कीदृशास्तरव इति प्रश्नोत्तरं फलिन इति । नहि पृच्छता पुरुषस्य वा तरूणां वास्तित्वनास्तित्वे प्रतिपित्सिते, किंतु पुरुषस्य स्वामिभेदस्तरूणां च प्रकारभेदः । प्रष्टुरपेक्षितं चाचक्षाणः स्वामिभेदमेव प्रकारभेदमेव च प्रतिवक्ति, न पुनरस्तित्वं तस्य तेनाप्रतिपित्सितत्वात् । उपपादिता च भूतेऽप्यर्थे व्युत्पत्तिः प्रयोजनवति पदानाम् । चोदयति—**यदि नामोपदिष्टं भूतं किं तव**—उपदेष्टुः श्रोतुर्वा प्रयोजनं **स्यात्** । तस्माद्भूतमपि प्रयोजनवदेवोपदेष्टव्यं नाप्रयोजनम् । अप्रयोजनं च ब्रह्म, तस्योदासीनस्य सर्वक्रियारहितत्वेनानुपकारकत्वादिति भावः । परिहरति—**अनवगतात्मोपदेशश्च तथैव** —प्रयोजनवानेव—**भवितुमर्हति** । अप्यर्थश्चकारः । **एतदुक्तं भवति**—यद्यपि ब्रह्मोदासीनं; तथापि तद्विषयं शाब्दज्ञानमवगतिपर्यन्तं विद्या स्वविरोधिनीं संसारमूलनिदानमविद्यामुच्छिन्दत्प्रयोजनवदित्यर्थः । **अपिच** येऽपि कार्यपरत्वं सर्वेषां पदानामास्थिषत, तैरपि 'ब्राह्मणो न हन्तव्यः' 'न सुरा पातव्या' इत्यादीनां न कार्यपरता शक्यास्थातुम् । कृत्युपहितमर्यादं हि कार्यं कृत्या व्याप्तं तन्निवृत्तौ निवर्तते, शिंश-

## वेदान्तकल्पतरुः ।

आह—**तथाचेति । स्वनिष्ठभूतविषया इति** । कार्याननिन्वतभूतविषया इत्यर्थः, नत्वनन्वितविषयत्वमेव; अन्विते पदतात्पर्यस्य समर्थितत्वात् । ते च वक्ष्यमाणोदाहरणेषु दृश्यमाना नाध्याहारादिभिः क्लेशेनान्यथयितव्या इत्यर्थः । **स्यादेतत्**—कार्यान्विते गृहीतसङ्गतेः पदस्य कथं शुद्धसिद्धाभिधायिता ? नहि गोत्वे गृहीतशक्ति गोपदमभिदधाति तुरगत्वमत आह—**नहीति** । एवं मन्यते कार्यान्वयो न शब्दार्थः, किंतूपाधिः । **तथाहि**—कर्तव्यतातदभावावगमाधीनत्वात् प्रवृत्तिनिवृत्त्योः, प्रवृत्तिनिवृत्तिसाध्यत्वात्प्रयोजनस्य, तदधीनत्वाच्च विवक्षाप्रयोगयोः, प्रयोगाधीनत्वाच्च वाक्यार्थप्रतिपत्तिव्युत्पत्त्योः, विवक्षादिवत्कार्यान्वयस्यापि शब्दार्थावगत्युपायतावगम्यते, अतो विरहय्यापि कार्यान्वयं प्रयोगभेदे भवति भूतं वस्तु पदवाच्यम्; कथमपरथा भवतां प्रमाणान्तरगृहीतकार्यान्वितगृहीतसङ्गतिकपदवृन्दस्य वेदेऽपूर्वान्विताभिधायिता ? **तदिदमुक्तं**—"उपहितं शतशो दृष्टमपि तदेव क्वचिदनुपहितं यदि दृष्टं भवति, तदा तददृष्टं नहि भवति, किंतु दृष्टमेव भवतीति" । **अटवीवर्णकादय इति** । तद्यथा अस्ति किल ब्रह्मगिरिनामा गिरिवरः । 'त्रैयम्बकजटाजूटकलनाय विनिर्मिता । पाण्डुरेव पटी भाति यत्र गोदावरी नदी ॥' यस्य च—'सकुसुमफलचूतरुद्धघर्मद्युतिकरपातवनालिषूपजाते । तमसि हरकिरीटचन्द्रनुन्ने धवलनिशा इव भान्ति वासराणि ॥' इत्यादय इति । **क्रियानिष्ठा इति** अकारप्रश्लेषः । अभ्युपेत्य कार्यान्वयनियमं पर्यहार्षीत्, इदानीमभ्युपगमं त्यजति—**उपपादिता चेति** । एवं तावद्व्युत्पत्तिविरोधं परिहृत्य निष्प्रयोजनत्वचोद्यमुद्भाव्य परिहरति—**यदि नामेत्यादिना** । समुच्चयासंभवादप्यर्थश्चकारः शङ्काद्योती, तामेवाह—**यद्यपीति** । एवं तावद्द्रव्यगुणादिशब्दानां विधिवाक्यगतानां केवलभूतार्थतामापाद्य तद्वद्ब्रह्मापि शब्दगोचर इत्युक्तं, इदानीं तु निषेधवाक्यवद्वेदान्ताः सिद्धपरा इत्याह—**अपिचेत्यादिना** । यत्र कृतिस्तत्रैव कार्यम्, निषेधेषु कृतिनिवृत्तौ तद्व्याप्तं कार्यं निवर्तत इत्युक्त्वा कृतेरपि तद्व्यापकधात्वर्थनिवृत्त्या निवृत्तिमाह—**कृतिर्हीत्यादिना** । न घटवत्प्रतिक्षणं समाप्तः, किंतु पचतीतिवत्पूर्वापरीभूतः । सच भवत्यादाविव नात्मलाभः, किंतु कर्तुरन्यस्योत्पाद्यस्यो-

## कल्पतरुपरिमलः ।

कार्यान्वितप्रयोगएव शक्तिग्रह इति नियममभ्युपेत्येत्यर्थः । एतदेव विवृणोति—**तथाहीति । कथमपरथेति** । प्राथमिकव्युत्पत्तिग्रहे कार्यान्वयनियमवत् कार्यस्य प्रमाणान्तरगृहीतत्वनियमोऽप्यस्ति; व्युत्पित्सोः गवानयनबन्धनादर्शने व्युत्पत्तिग्रहासंभवात्, तदन्वयो यथा व्युत्पत्तिग्रहोपायमात्रतयान्यथासिद्धस्तत्र न शब्दार्थकोटावनुप्रविशति, एवं कार्यान्वयोऽपीत्यर्थः । **अस्ति किलेति** । नासिकात्र्यम्बकस्थाने निवसद्भिराचार्यैरयं ग्रन्थः कृत इति प्रसिद्धिः । अतस्तत्रत्यगिरिनदीवनवर्णनं कृतम् । **जटाजूटकलनाय** जटाकलापबन्धाय । **पाण्डुरा पटी** उष्णीषरूपा । **रहस्तत्र** नित्यसंनिहितः त्र्यम्बकदेवः । **पचतीति** । पाको हि पूर्वापरीभूताधःसन्तापनादितण्डुलविक्लित्तिफलपर्यन्तक्रियासन्तानरूपो

भामती ।

पात्वमिव वृक्षत्वनिवृत्तौ । कृतिर्हि पुरुषप्रयत्नः स च विषयाधीननिरूपणः । विषयश्चास्य साध्यस्वभावतया भावार्थ एव पूर्वापरीभूतोऽन्योत्पादानुकूलो भवितुमर्हति, न द्रव्यगुणौ । साक्षात्कृतिव्याप्यो हि कृतेर्विषयः । नच द्रव्यगुणयोः सिद्धयोरस्ति कृतिव्याप्यता । अतएव शास्त्रकृद्वचः—'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' इति । द्रव्यगुणशब्दानां नैमित्तिकावस्थायां कार्यावमर्शेऽपि भावस्य स्वतः द्रव्यगुणशब्दानां तु भावयोगात्कार्यावमर्श इति भावार्थेभ्य

वेदान्तकल्पतरुः ।

दनादेरुत्पादनायामनुकूलः प्रयत्नविषयः । तत्र हेतुमाह—**साध्येति** । न द्रव्यगुणौ कृतिविषयावित्यत्र हेतुः—**साक्षादिति** । तत्रापि तदुत्पादनानुकूलो व्यापारः कृतिविषय इत्यर्थः । **भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते** ( जै. अ. २ पा. १ सू. १ ) इति द्वितीयगतमधिकरणम् । अत्र गुरुमतेनार्थं संकलयति—**द्रव्येति** । अत्रावमर्शेपीत्यन्तः पूर्वः पक्षः । **अयमर्थः**—पदस्मारितानन्वितार्थेषु निमित्तेषु भवान्वितावस्था नैमित्तिकी, तस्यामस्ति सिद्धयोरपि द्रव्यगुणयोः क्रियान्वयेन साध्यता, अतो द्रव्यगुणभावार्थवाचकशब्दानामविशेषेण साध्यार्थवाचकत्वात्साध्यार्थविषयत्वाच्च नियोगस्याविशेषेण नियोगविषयसमर्पकत्वमिति ॥ राद्धान्तमाह—**भावस्येति** । भावशब्दस्येत्यर्थः । कार्यावमर्श इत्यनुषङ्गः । भावशब्दो हि स्वत एव साध्यरूपां क्रियामवमृशति, द्रव्यादिशब्दास्तु क्रियायोगद्वारा द्रव्यादीन्साध्यतयावमृशन्ति । किमित्यत आह—**भावार्थेभ्य इति** । नियोगो हि साक्षात्कृतेरविषयः संस्तद्विषयत्वाय स्वावच्छेदकत्वेन साक्षात्साध्यस्वभावं भावार्थमाकाङ्क्षति । तल्लाभे च न क्रियायोगद्वारा साध्यस्य द्रव्यादेस्तद्विषयता युक्ता । अतो भावार्थशब्देभ्य एव यजतीत्यादिभ्यो विषयविशिष्टा पूर्वाधिगतिरिति । भावनावाचिभ्योऽपि भावो भावनेत्यादिभ्यो नापूर्वाधिगति-

कल्पतरुपरिमलः ।

नैकक्रियात्मकः, अतो घटादिवत्प्रतिक्षणं पर्याप्तवृत्तिर्न भवतीत्यर्थः । **उत्पादनायामिति** । उत्पत्तावित्यर्थः । ओदनोत्पत्त्यनुकूलपुरुषव्यापारस्य पाकस्यैवोदनोत्पादनत्वेन तस्य तदनुकूलत्वाभावात् । **यद्वा**—प्रज्वलनादिरूपोऽग्न्यादिव्यापारोऽपि भवत्योदनोत्पादना, तदनुकूलश्च पुरुषव्यापार इति तदभिप्रायो णिचः प्रयोगः । **प्रयत्नविषय इति** । साध्यतयेति शेषः । उद्देश्यतया प्रयत्नविषयत्वस्य घटभवनादौ फलेऽपि सत्त्वेन तद्व्यावृत्तत्वाभावात् । **तत्र हेतुमाहेति** । हेतुभूतं साध्यत्वमिह चिकीर्षाविषयत्वं, नतु प्रयत्ननिर्वर्त्यत्वं; साध्याविशेषात् । **ननु** द्रव्यगुणयोरपि घटरूपादिकयोः कृत्यपेक्षोत्पत्तिकत्वादस्ति साध्यतया कृतिविषयत्वमित्याशङ्क्य तत्रापि तदुत्पत्त्यनुकूलस्य तदुत्पादनारूपदण्डचक्रादिव्यापारानुकूलस्य च पुरुषव्यापारस्यैव तथात्वमित्याह—**तत्रापीति** । **पदस्मारितेति** । **ननु** गुरुमतेऽन्विताभिधानाङ्गीकारात् कथं कार्यान्विते गृहीतशक्तिकैः पदैरनन्वितार्थानां स्मारणं कथ्यते ? **उच्यते**; शक्तिग्रहात् पूर्वं तदर्थायानन्वितार्थोपस्थितिः सात्र निमित्तत्वेन विवक्षिता । **उक्तं हि निबन्धनपञ्चिकायामृजुविमलायां**—अनन्वितावस्था हि संबन्धग्रहणोपायतां गच्छन्ती वाक्यार्थप्रतिपत्तौ निमित्तं; एवं हि संबन्धग्रहणं अयमर्थोऽनेन शब्देनाकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितः सन्नभिधीयत इतीति । **अत्रायमर्थ** इत्यनन्वितावस्थस्य गवादेरुपस्थितिरुक्ता । एवंच **पदस्मारितेत्यनेन** शक्तिग्रहणार्थं पदश्रवणसमये कारणान्तरप्रत्यायितत्वं विवक्षितमिति न विरोधः । **यद्वा**—कार्यसामान्ये गृहीतशक्तिकैः पदैः स्मारितास्तस्यामवस्थायां समभिव्याहृतकार्यविशेषानन्वितार्था विवक्षिता इति न विरोधः । **अविशेषेणेति** । **नन्व**विशेषेण द्रव्यगुणभावार्थवाचकाः सर्वेऽपि नियोगविषयसमर्पका इत्ययं प्रतिपदाधिकरण ( जै. अ. २ पा. १ सू. १ ) पूर्वपक्षः, तं वाक्यभेदतः प्रतीयमानक्रियाकारकभावरूपविनियोगविरोधेनानेकापूर्वाभ्युपगमगौरवप्रसङ्गेन च निराकृत्य तेषु कश्चिदेव नियोगविषयसमर्पक इति निर्धारणेन तस्मिन्नधिकरणे स्थिते, तेषु भावार्थवाचकशब्द एव नियोगविषयसमर्पक इति निर्धारणार्थं हि भावार्थाधिकरणम् ( जै. अ. २ पा. १ सू. १–४ ) । **सत्यम्**; इहाऽविशेषेणेत्यनेन द्रव्यगुणभावार्थानां त्रयाणामपि कार्यत्वमविशिष्टमित्यनध्यवसायेन पूर्वपक्षो विवक्षितः । अनध्यवसायपूर्वपक्ष एव निबन्धनटीकायां दर्शितः । भाष्यगतस्याविशेषेणेति पूर्वपक्षे हेतूपन्यासस्य च अनध्यवसायएव तात्पर्यं वर्णितम् । **यद्वा**—विवरणटीकानुसारेण प्रतिपदाधिकरणशरीरमत्र लिखितम् । तन्मते हि प्रतिपदाधिकरणे कर्मैव विषयो न द्रव्यगुणाविति निर्धारणम् । भावार्थाधिकरणं तु किं कर्म नाम्ना विषयतया समर्प्यते, उत आख्यातेनेति विशेषविचारार्थं; प्रतिपदाधिकरणस्य भावार्थसूत्र ( जै. अ. २ पा. १ सू. १ ) व्यतिरेकेण सूत्रान्तराभावात्, तदेव सूत्रमिह लिखितमिति न कश्चिद्दोषः । **भावार्थशब्देभ्य एवेति** । **भावार्थशब्दाः** यजत्यादिधातवः । तेभ्यो यद्यपि विषयमात्रस्याधिगतिः; तथापि विषयाधीनप्रतिपत्तिकत्वादपूर्वस्य कार्यस्य विषयवाचकेभ्य एव तस्याप्यधिगतिरुक्ता । **एवमेवोक्तमृजुविमलायां** "विध्यर्थो लिङादिभिः प्रत्याय्यते, तस्य च तत्प्रतिपाद्यमानस्य विषयाधीनप्रतिपत्तित्वाद् भावार्थानां च विषयबोधकत्वात् ततोऽपूर्वं प्रतीयत इत्युच्यते, न पुनरपूर्वस्यामी भावार्था वाचकाः" इतीति ॥ **भावो भावनेत्यादिभ्य इति** । भवतेर्णिजन्तात् 'एरजि'ति सूत्रेण भाववाचिन्यच्प्रत्यये 'णेरनिटी'ति सूत्रेण णिलोपे च

## भामती ।

एवापूर्वावगतिर्न द्रव्यगुणशब्देभ्य इति । नच 'दध्ना जुहोति' 'संततमाघारयति' इत्यादिषु द्रव्यादीनां कार्यविषयता । तत्रापि हि होमाघारभावार्थविषयमेव कार्यम् । नचैतावता 'सोमेन यजेत' इतिवत् दधिसंततादिविशिष्टहोमाघारविधानात्

## वेदान्तकल्पतरुः ।

रिति **कर्मशब्दा** इत्युक्तम् । क्रत्वर्थवाचिभ्यः कर्मशब्देभ्योऽपि याग इत्यादिभ्यो नैवापूर्वाधिगतिरिति **भावार्था** इत्युक्तम् । अतो धात्वर्थोपरक्तभावना येषु भाति यजेतेत्यादिषु तेभ्योऽपूर्वं प्रतीयेतैष हि भावनासाध्योऽपूर्वलक्षणोऽर्थो विधीयत इति सूत्रार्थः । **ननु** द्रव्यगुणौ विधीयेते दधिसान्तत्ये, तत्र तयोरेव कार्यावच्छेदकता, अत आह—**नच दध्नेति । आघारः** क्षारणम् । **सान्तत्यम**विच्छिन्नत्वम् । यदि दध्यादावपि भावार्थो विधेयः, तर्हि न्यायविरोध इत्याशङ्क्याह—**नचैतावतेति । ज्योतिष्टोमे श्रूयते**—'सोमेन यजेते'ति । तथा 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, 'आश्विनं गृह्णाती'ति । तत्र संशयः—किमैन्द्रवायवादिवाक्ये विहितानां सोमरसानां यागानां च यथाक्रमं सोमेन यजेतेति सोमयागशब्दावनुवदितारौ, उत द्रव्ययुक्तस्य कर्मणो विधाताराविति ॥ तत्रैन्द्रवायवादिवाक्येषु द्रव्यदेवताख्यरूपप्रतीतेर्यागानुमानादितरत्र रूपाप्रतीतेः समुदायानुवाद **इति प्राप्ते—द्वितीये** ( जै. अ. २ पा. २ सू. १७–२० ) **राद्धान्तितम्**, नानुवादत्वं अप्रत्यभिज्ञानात् । लतावचनो हि सोमशब्दो न रसवचनः, ऐन्द्रवायवादिशब्दास्तु रसानभिदधतीति न तदनुवादी सोमशब्दः । नच यजेतेति प्रत्यक्षे यागे तदनुमा, अतः प्राप्त्यभावान्न यजिरप्यनुवादी । तस्मात्सोमवाक्ये यागविधिरितरत्र रसानामिन्द्रादिदेवताभ्यो ग्रहणान्युपकल्पनानि विधीयन्त इति ॥ एवं यथा सोमेनेति वाक्ये विशिष्टविधिः, एवं दधिसान्तत्यादिवाक्यानि यदि द्रव्यगुणविशिष्टहोमाघारविधायीनि, तर्हि अग्निहोत्राघारवाक्ये तद्विहितहोमानामाघाराणां च समुदायावनुवदेतां, तथाचाधिकरणान्तरविरोध इति शङ्का ॥ **तथाहि द्वितीये स्थितम्—आघाराग्निहोत्रमरूपत्वात्** ( जै. अ. २ पा. २ सू. १३ ) । 'आघारमाघारयत्यूर्ध्वमाघारयति' 'संततमाघारयति' । तथा 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' 'पयसा जुहोतीति' श्रूयते । तत्र संशयः—किं संततदध्यादिवाक्यविहितानामाघारहो-

## कल्पतरुपरिमलः ।

कृते निष्पन्नो भावशब्दो भावनाशब्दपर्यायः । **ननु** गुरुमते भावार्थशब्दस्य पूर्वापरीभाववैशिष्ट्यमर्थः । **उक्तं हि निबन्धनटीकायां**—पूर्वापरभावे हि भावार्थत्वं भवति, भावशब्दस्य पूर्वापरीभाववाचित्वादिति । **सत्यम्**; ण्यन्ताद्भवतेरजन्तस्य भावशब्दस्य भावनावाचित्वमप्युपपद्यते । नच भावनाया धात्वर्थत्वासंभवः; कृतिसाध्यत्वेन नियोगवाचिनां लिङादीनामिव तत्संघटनार्थं तथात्वेन यागादिविषयसमर्पकाणां धातूनां विशेषणभूतकृतिरूपभावनार्थत्वस्यापि सत्त्वात् । **कर्मशब्दा इत्युक्तमिति** । कर्मशब्दः क्रियत इत्यर्थे कृञ्धातोरौणादिके मनिन्प्रत्यये सति निष्पन्नः कृतिविषयवाची, न च कृतिः कृतिविषय इति तद्व्यावृत्तिः । **याग इत्येवमादिभ्य इति** । यागादिशब्दा भवन्ति वस्तुतः कृतिविषयाणां वाचका इति न कर्मशब्दाः; तेभ्यो यागादीनां कृतिसाध्यत्वेन प्रतीत्यभावादिति तद्व्यावृत्तिः । **तेभ्योऽपूर्वं प्रतीयतइति** । अनेन सूत्रे क्रियाशब्दः क्रियतेऽनेनेति व्युत्पत्त्या फलकरणत्वेन रूपेणापूर्वपर इति दर्शितम् । **एष हीति । ननु**—'एष ह्यर्थो विधीयत'' इति सूत्रशेषस्येत्थं गुरुमते व्याख्यानं कथम्—अपूर्वस्य कृतिसाध्यतया प्राधान्येन प्रतिपाद्यस्य फलकरणतया तच्छेषत्वमित्याशङ्कानिराकारणार्थ**मेषहीत्यादि**सूत्रशेषः; यजेत स्वर्गकाम इत्यादिभिर्वाक्यैः यागेन स्वर्गकामः स्वकामनाविषयं स्वर्गं साधयेदित्येषोऽर्थो यस्माद्विधीयते तस्मात् तेनापूर्वं कृत्वेत्यपूर्वस्यापि फलकरणत्वेन सिद्धिर्भवति । स्वसिद्ध्यर्थं फलं साधयतश्चापूर्वस्य न प्राधान्यभङ्गः । 'आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ॥ कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥' इति न्यायात्—**इति । सत्यम्**; इहापि स एवार्थ उपन्यस्तः । **अपूर्वलक्षणोऽर्थो विधीयत** इत्यत्र करणत्वेनेति शेषाध्याहारेण सोऽर्थः स्पष्टीभवति । पशुसोमाधिकरणसूत्रस्य **द्रव्यसंयोगाच्चोदना पशुसोमयोः**( जै. अ. २ पा. २ सू. १७ ) इत्यादेर्महत्त्वादुदाहृतसोमवाक्यमात्रविषयत्वाभावाच्च तन्न लिखितम् । **द्रव्यदेवताख्येति** । ऐन्द्रवायवादिवाक्येषु गृह्णातेः सोममभिषुणोति सोमं पावयतीत्यादिसंनिहितवाक्यान्तरप्रकृतसोमरसविषयत्वाद् द्रव्यप्रतीतिः । **इतरत्रेति** । सोमवाक्ये देवताख्यरूपाप्रतीतेरित्यर्थः । **समुदायानुवाद इति** । यजिर्यागसमुदायस्य सोमशब्दस्तद्द्रव्यसोमरससमुदायस्य चानुवाद इत्यर्थः । अनुवादस्य च प्रयोजनं—सोमशब्दस्य तत्प्रख्यन्यायेन ( जै. अ. १ पा. ४ सू. ४ ) कर्मनामधेयत्वप्राप्त्या स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्यादौ सोमशब्देनापि क्रतुव्यवहारसिद्धिरिति नानुवादवैयर्थ्यम् । **प्रत्यक्षे यागे इति** । ऐन्द्रवायवादिवाक्यैर्देवताविशिष्टेषु ग्रहणेषु चोदितेषु यागं विना ग्रहणमात्रेण द्रव्यस्य देवतासंबन्धासिद्धेर्यागापेक्षायां सोमेन यजेतेत्येतत्सर्वानेतान् द्रव्यदेवतासंबन्धानुपपादयद् यागान्तरानुमानं निरुन्ध्यादित्यर्थः । एवंचोत्पत्तिवाक्यविहितस्य लताद्रव्यस्याभिषवादिवाक्यपर्यालोचनेन रसद्वारा

## भामती।

'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति तदनुवादः। यद्यप्यत्रापि भावार्थविषयमेव कार्यं; तथापि भावार्थानुबन्धतया द्रव्यगुणावविषयावपि विधीयेते। भावार्थो हि कारकव्यापारमात्रतयाऽविशिष्टः कारकविशेषेण द्रव्यादिना विशेष्यत इति द्रव्यादिस्तदनुबन्धः। तथाच भावार्थे विधीयमाने स एव सानुबन्धो विधीयत इति द्रव्यगुणावविषयावपि तदनुबन्धतया विहितौ भवतः। एवंच भावार्थप्रणालिकया द्रव्यादिसंक्रान्तो विधिर्गौरवाद्बिभ्यत्स्वविषयस्य चान्यतः प्राप्ततया तदनु-

## वेदान्तकल्पतरुः।

मानामाघाराग्निहोत्रवाक्ये समुदायानुवादिनी, उतापूर्वयोराघारहोमयोर्विधातृणी इति ॥ तत्रानुवादिनी; अरूपत्वात्, नह्यत्र दधिसान्तत्यादिवाक्यविहितहोमाघारेभ्यो विशिष्टं रूपमस्ति, होमाघारमात्रं तु प्रकृतमुपलभ्यते, अतोऽनुवादत्वे **प्राप्ते राद्धान्तः**; विधी इमौ स्याताम्; आघारयतिजुहोतिशब्दाभ्यामनुष्ठेयार्थप्रतीतेः, तत्संनिधौ श्रुतस्य सांतत्यवाक्यस्य दध्यादिवाक्यस्य च विशिष्टविधित्वे गौरवप्रसङ्गेन तद्विहितभावार्थानुवादेन गुणविधानार्थत्वादिति ॥ हन्त नैतेन विरुध्येत सांतत्यदध्यादिवाक्ये भावार्थविषयं कार्यमित्यभ्युपगमः। तत्र हेतुमाह—**यद्यपीति**। यद्यपि सन्ततादिवाक्ये साक्षात्कृतिविषयत्वाद्भावार्थस्य तदवच्छिन्नमेव कार्यं; यद्यपि च कार्यं प्रति साक्षादविषयावनवच्छेदकौ द्रव्यगुणौ; तथापि भावार्थं प्रत्यनुबन्धतयावच्छेदकतया विधीयेते। तत्र हेतुमाह—**भावार्थो हीति**। तत्किं भावार्थो द्रव्यादिश्च विधेयः, तर्हि वाक्यभेदः, नेत्याह—**तथाचेति**। तर्हि संततादिवाक्यानि विशिष्टविधयः स्युः, स्याच्चाग्निहोत्रादिवाक्यमनुवादः, तत्राह—**एवंचेति**। यद्यप्यत्र विशिष्टविषयो विधिः प्रतीयते; तथापि भावार्थद्वारा द्रव्यादिकमपि विषयीकरोति। तत्र संक्रान्तो यदि भावार्थमन्यतो विहितं न लभेत, तर्हि गौरवमप्युररीकृत्य विशिष्टं विदधीत; अथ लभेत, तत उपपदाकृष्टशक्तिर्द्रव्यादिपरो भवत्यनुवदति तु भावार्थम्। **तदाहुः**—'सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता ॥' इति। तदिहाग्निहोत्रादिवाक्यत एव भावार्थलाभाद्द्रव्यादिपरता। मीमांसकैकदेशिनः आग्नेय

## कल्पतरुपरिमलः।

साधनत्वमित्यवगतेस्तस्य रसस्येन्द्रवाय्वाद्युद्देश्यकग्रहणसंस्कारविधिसामर्थ्यादुत्पत्तिवाक्यविधेये यागे देवता लभ्यते। तत्तद्देवतोद्देशेन गृहीतस्य रसस्य तत्तद्देवतायै त्यागाभावे ग्रहणे देवतोद्देशांशस्यादृष्टार्थत्वापत्तेः। अतो न तत्र देवताख्यरूपाऽलाभदोषः। **अरूपत्वादिति**। रूपशब्दो न द्रव्यदेवतामात्रपरः, किंतु सान्तत्यादिसाधारण्यार्थं गुणसामान्यपरः। **नह्यत्रेति**। '**दध्ना** जुहोति' 'पयसा जुहोति' 'तण्डुलैर्जुहोती'त्यादिवाक्यविहितानां होमानां, 'सन्ततमाघारयति' 'ऊर्ध्वमाघारयति' 'ऋजुमाघारयती'त्यादिवाक्यविहितानामाघाराणां च यानि रूपाणि दध्यादीनि सांतत्यादीनि च तेभ्योऽन्यदुपदिष्टमतिदिष्टं वा रूपं नास्ति; तेषां च कर्मान्तरगुणानां नान्यत्रान्वयः संभवतीत्यर्थः। **ननु** सान्तत्यादिवाक्यानि होमाघारविधायकानीति सिद्धान्ती न मन्यते, किंत्वग्निहोत्राघारवाक्यविहितहोमाघारानुवादेन गुणविधायकानीत्येव मन्यते, तं प्रति कथं तद्विहितहोमाघारेभ्य इति सिद्धवत्कृत्य कथनम्? **उच्यते**; अग्निहोत्राघारवाक्याभ्यां होमाघारयोर्विधानमेव न संभवति; होमक्षरणसामान्ययोर्होमान्तरक्षारणान्तरविधिसिद्धत्वेन विशेषोपस्थितिं विना अननुष्ठेयत्वेन च विधानायोगात्, तद्विशेषयोश्च विशेषकरूपाश्रवणेनाप्रतीतेः। **नच**—नामनी विशेषके स्यातामिति—वाच्यम्; विशेषकान्तरानुपस्थितौ कयोर्होमक्षारणविशेषयोरेते नामनी इति बोद्धुमशक्यत्वात्। नच—'उद्भिदा यजेत पशुकाम' इत्यत्र नामैव विशेषकं दृष्टमिति—शङ्कनीयम्, पशुफलेन प्रकृतिवच्छब्दसन्निधापितसौमिकाङ्गजातेन च लब्धविशेष एवोद्भिन्नामप्रवृत्तेः। नच दधिसान्तत्यादिगुणैरेव विशेषलाभः; तथा सति गुणविधिप्रवृत्त्यनन्तरं होमाघारविशेषविधी तयोर्विधाने सति तदनुवादेन गुणविधानमिति परस्पराश्रयापत्तेः, तस्माद् विशेषकसद्भावाद् दधिसांतत्यादिसगुणवाक्येष्वेव होमविशेषाणामाघारविशेषाणां च विधानम्। निर्गुणवाक्ये तदनुवादकेऽनुवादप्रयोजनमग्निहोत्राघारनाम्नोः संनिहितसर्वहोमाघारनामत्वसिद्ध्याग्निहोत्रं जुहुयात् स्वर्गकाम इति फलवाक्येन सर्वेषां होमानां फलसंबन्धसिद्धिः। इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयतीति गुणवाक्येन सर्वेषामाघाराणां मन्त्रसंबन्धसिद्धिश्चेति पूर्वपक्षाशयः। **अनुष्ठेयार्थप्रतीतेरिति**। विशेषकाश्रवणेऽप्यनुष्ठापकविधिसामर्थ्यादेवानुष्ठेयः कश्चन होमविशेष आघारणविशेषश्चात्र विवक्षित इति ज्ञायते। अतस्तयोर्विधानं नामविशेषोपबन्धश्चेत्युभयमुपपद्यते। समुदायानुवादश्च निष्फलः; राजसूयनाम्न इव फलवाक्यगतस्यैवाग्निहोत्रनाम्नो गुणवाक्यगतस्यैव चाघारनाम्नः संनिहितसर्वधात्वर्थपरत्वोपपत्तेरिति भावः। **गुणविधानार्थत्वादिति**। गुणविशिष्टकर्मविधाने च दध्यादिवाक्यविहितहोमानां न देवतालाभः; 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत् सूर्याय प्रजापतये च प्रातर्जुहोती'ति वाक्यविहितहोमयोर्न द्रव्यलाभः, तयोरपि दध्यादिवाक्याविशेषेण पूर्वपक्षे होमान्तरविधायकत्वस्य वक्तव्यत्वादित्याद्यपि दूषणं द्रष्टव्यम् ॥ **पदान्तरे** गुणवाचिनि, नतु नामधेयरूपेऽपि। अत्र विधिशक्तेर्गुणसंक्रमणेन धातोरनुवादतोक्तिस्तात्पर्यपर्यवसानविषयार्थाभिप्राया, नतु शब्दवृत्तिबोध्याभिप्राया; द्रव्यगुणयोः स्वतःसिद्धतया धात्वर्थानुवादेन तन्मात्रविधानासंभवात्।

## भामती ।

वादेन तदनुबन्धीभूतद्रव्यादिपरो भवतीति सर्वत्र भावार्थविषय एव विधिः । **एतेन**—'यदाग्नेयोऽष्टाकपालो भवति' इत्यत्र संबन्धविषयो विधिरिति **परास्तम्**;—**ननु** न भवत्यर्थो विधेयः, सिद्धे भवितरि लब्धरूपस्य भवनं प्रत्यकर्तृत्वात् । न खलु गगनं भवति । नाप्यसिद्धे; असिद्धस्यानियोज्यत्वात्, गगनकुसुमवत् । तस्माद्भवनेन प्रयोज्यव्यापारेणाक्षिप्तः प्रयोजकस्य भावयितुर्व्यापारो विधेयः । स च व्यपारो भावना, कृतिः, प्रयत्न इति निर्विषयश्चासावशक्यप्रतिपत्तिरतो विषयापेक्षायामाग्नेयशब्दोपस्थापितो द्रव्यदेवतासंबन्ध एवास्य विषयः । **ननु** व्यापारविषयः पुरुषप्रयत्नः कथमव्यापाररूपं संबन्धं गोचरयेत्? नहि घटं कुर्वित्यत्रापि साक्षान्नामार्थं घटं पुरुषप्रयत्नो गोचरयत्यपि तु दण्डादि हस्तादिना व्यापारयति । तस्माद्घटार्थां कृतिं व्यपारविषयामेव प्रतिपद्यते, नतु रूपतो घटविषयाम्, उद्देश्यतया त्वस्यामस्ति घटो नतु विषयतया । विषयतया तु हस्तादिव्यापार एव । अतएवाग्नेय इत्यत्रापि द्रव्यदेवतासंबन्धाक्षिप्तो यजिरेव कार्यविषयो विधेयः । किमुक्तं भवति, आग्नेयो भवतीति, आग्नेयेन यागेन भावयेदिति । अतएव 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते'

## वेदान्तकल्पतरुः ।

इत्यादौ द्रव्यदेवतासंबन्धो विधेय इत्याहुः । तत्रापि सिद्धस्य न विधेयत्वमित्युक्तमतिदिशति—**एतेनेति** । एकदेशी संबन्धस्य भावनावच्छेदकत्वेन विधेयत्वं शङ्कते—**नन्वित्यादिना** । **ननु** यथाश्रुतभवत्यर्थ एव विधीयतां, किं संबन्धविधिनेत्याशङ्क्य भवत्यर्थस्य कर्ता सिद्धोऽसिद्धो वा । **प्रथमे** विधिवैयर्थ्यं, **चरमे** नियोज्याभावाद्विध्यभाव इत्युक्त्वा किं तर्हि विधेयमिति वीक्षायामाह—**तस्मादिति** । **प्रयोज्यः** उत्पाद्यः । तद्व्यापारो हि भवनम् । तस्य हि व्यापारं भवतिधातुर्विशिनष्टि **भवतीति** । भवनं च नोत्पादकव्यापारमन्तरेणेति भवनाविनाभूतो भावकव्यापारो विधेय इत्यर्थः । **नन्वित्यादिना** चोद्यच्छलेन सिद्धान्ती मीमांसकैकदेशिनं दूषयति । भवतु लक्षितभावनाया विधानं, तस्यास्तु न संबन्धो विषयः; तस्य दध्यादिवत्साक्षात्कृतिविषयत्वायोगादित्यर्थः । **नन्वव्यापारोऽपि** घटादिः करोत्यर्थरूपभावनाविषयो दृश्यते, अत आह—**नहीति** । यदि दण्डादिविषयो हस्तादिव्यापारः कृतिविषयः, तर्हि कथं घटं कुर्विति घटस्य कृतिकर्मता भात्यत आह—**घटार्थामिति** । घटविषयव्यापार एव कृतिसाध्यो घटस्तूद्देश्यतया प्रयोजनमिति कर्मत्वनिर्देश इत्यर्थः । यदि संबन्धो न विधेयस्तर्ह्याग्नेयवाक्ये किं विधेयमत आह सिद्धान्त्येव—**अतएवेति** । अत्यक्तस्य हविषो देवतासंबन्धासंभवाद्यागः संबन्धाक्षिप्तः । **ननु** यजेरप्यपुमर्थत्वात्कथं विधेयतात आह—**आग्नेयेनेति** । यागेनेत्याग्नेयपदस्य लक्ष्यनिर्देशो भावयेदिति भवतिपदस्य । यत एवाग्नेयवाक्ये यागविधिरत एवानुवादे यजेतेति श्रुतम्; अन्यथा संबन्ध एव श्रूयेतेत्यर्थः । **उक्तं द्वितीये—प्रकरणं तु पौर्णमास्यां रूपावचनात्** (जै. अ. २ पा. २ सू. ३) । **एवं समामनन्ति** "यदाग्नेयोऽष्टाकपालोऽमावस्यायां पौर्णमास्यां चाच्युतो भवति" "उपांशुयाजमन्तरा भवति" "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्" "ऐन्द्रं दध्यमावास्याया" "मैन्द्रं पयोऽमावास्यायामि"ति । तथा "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजत"इति । तत्र संदेहः—किमिमौ यजती कर्मणोरपूर्वयोर्विधातारावुत प्रकृताग्नेयादियागानां समुदायस्यानुवदिताराविति ॥ तत्राभ्यासात्कर्मान्तरविधी । नच द्रव्यदेवते न स्तः; ध्रौवाज्यस्य साधारण्यान्मान्त्रवर्णिकदेवतालाभाच्च । आज्यभागक्रमे हि चतस्रोऽनुवाक्याः सन्ति । द्वे आग्नेय्यौ, द्वे सौम्ये । ते च क्रमाद्बलीयसा वाक्येनाज्यभागाभ्यामपच्छिद्यानयोः कर्मणोर्विधास्येते । एवंहि समामनन्ति । "वार्त्रघ्नी पौर्णमास्यामनूच्येते"

## कल्पतरुपरिमलः ।

उक्तंहि **आघाराग्निहोत्राधिकरण** ( जै. अ. २ पा. २ सू. १३–१६ ) **वार्तिके**—सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किमप्राप्तमित्यन्वेषणायामप्राप्तमात्रविषयोपसंहाराद्विधेर्भावनाधात्वर्थयोरनुवाद इत्यभिधीयते, नत्वादित एव तावनूद्य द्रव्यं गुणो वा विधीयते; तत्र पश्चात्तने व्यापारे मन्दबुद्धिप्रतिपत्त्यर्थं स्थूलेन न्यायेन कथ्यमाने शास्त्रकृता एवैता वचनव्यक्तय इति भ्रान्तिरिति ॥ इहापि टीकायां तथैवोक्तम् । नचैवं—गुणमात्रविधानफलकवाक्येष्वपि विशिष्टविध्यभ्युपगमे प्राप्ते कर्मण्यनेकगुणविधानप्रयुक्तो वाक्यभेदो न स्यात्, प्रत्येकं गुणेषु विध्यनवतारादिति—वाच्यम्; शब्दबोध्यस्यार्थस्य विशिष्टरूपेणैक्येऽपि तत्र तात्पर्यविषयार्थभेदसद्भावेन तदभिप्रायत्वादनेकगुणविधानप्रयुक्तवाक्यभेदवर्णनस्य । **तदप्युक्तं वार्तिके**—'विधित्वे भावनास्थेपि तादर्थ्यं प्रविभज्यते । विशेषणफले चास्मिन् वाक्यभेदो भविष्यति ॥' इति । शब्दबोध्यार्थभेद इव तात्पर्यविषयार्थभेदेपि ह्यविशिष्टं गौरवम् । **मीमांसकैकदेशिनः** गुरुमते निबन्धनप्रस्थानानुवर्तिनः । **नन्वव्यापारोपीति** । होमसाधनस्य दध्यादेर्होमद्वारापि साध्यत्वासंभवान्मा भूद्विषयत्वं, द्रव्यदेवतासंबन्धस्य तु स्यात्; तस्य यागद्वारा साध्यत्वात्, किंचिद्द्वारा साध्यमपि हि साध्यमेव; अतएव हस्तादिव्यापारद्वारा घटस्य कृतिसाध्यत्वाद् घटं करोतीति द्वितीयानिर्देश इति भावः । **उद्देश्यतयेति** । घटोत्पत्तिमुद्दिश्य हस्तादिव्यापारं कुर्वन् घटं करोतीत्युच्यते, घटस्याप्युद्देश्यतया कृतिविषयत्वादित्यर्थः । **लक्ष्यनिर्देश इति** । आक्षेप्यस्यापि शाब्दत्वसिद्ध्यर्थं लक्ष्यतोक्तिः ।

## भामती।

इत्यनुवादो भवति 'यदाग्नेयः' इत्यादिविहितस्य यागषट्कस्य। अतएव च विहितानूदितस्य तस्यैव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारसंबन्धः। तस्मात्सर्वत्र कृतिप्रणालिकया भावार्थविषय एव विधिरित्येकान्तः। तथाच 'न हन्यात्' 'न पिबेत्' इत्यादिषु यदि कार्यमभ्युपेयेत, ततस्तद्व्यापिका कृतिरभ्युपेतव्या। तद्व्यापकश्च भावार्थो विषयः। एवंच

## वेदान्तकल्पतरुः।

"वृधन्वती अमावास्यायामिति"। वृत्रघ्नपदवत्यौ **वार्त्रघ्नी**। वृधन्वत्पदवत्यौ **वृधन्वती**। तस्मात्कर्मान्तरविधिः; इत्येवं प्राप्ते—**अभिधीयते**। प्रक्रियतइति **प्रकरणं** प्रकृतानि कर्माणि पौर्णमास्यमावास्यासंयुक्तवाक्ययोरालम्बनम्। कुतः? रूपावचनात्। ध्रौवाज्यलाभेऽपि देवता न लभ्यते। नच मन्त्रवर्णेभ्यस्तल्लाभः; तेषां क्रमादाज्यभागशेषत्वात्। **यत्तु** वाक्यं बलीय **इति, सत्यं**; बलवदपि न क्रमस्य बाधकमविरोधात्। क्रमावगताज्यभागाङ्गभावस्यानुवाक्यायुगलद्वयस्य पौर्णमास्यमावास्याकालयोर्विभागेन प्रयोगव्यवस्थापकत्वात्। काले हीमौ शब्दौ रूढौ, न कर्मणि। कालद्वयोपहितकर्मसमुदायद्वयानुवादस्य च प्रयोजनं दर्शपूर्णमासाभ्यामित्यधिकारवाक्यगतद्वित्वोपपादनम्। तस्मात्समुदायानुवादाविति। उत्पत्त्यधिकारयोरविसंवादार्थमप्याग्नेयादिवाक्ये यागविधिरभ्युपेय इत्याह—**अतएवेति**। अत्राप्यधिकारविधौ यजेत इति दर्शनात्प्रागपि यागविधिरित्यर्थः। कृतिनिर्वर्त्यस्य धात्वर्थस्यैव नियोगावच्छेदकतेत्युपसंहरति—**तस्मादिति**। **विधिः**-र्नियोगः। एवं नियोगकृतिभावार्थानां व्याप्यव्यापकतामुक्त्वा व्यापकनिवृत्त्या व्याप्यनिवृत्तिं निषेधेष्वाह—**तथाचेत्यादिना**। निषेधेषु भावार्थापादनमिष्टप्रसङ्ग इत्याशङ्क्याभ्युपगमे बाधकमाह—**एवंचेति**। नामधात्वर्थयोगे हि नञः

## कल्पतरुपरिमलः।

**ध्रौवाज्यस्य** "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमित्युत्सर्गतः सर्वयज्ञार्थत्वेन विहितस्य। **वृत्रघ्नपदवत्याविति**। वृत्रहननप्रकाशकपदवत्यावित्यर्थः। "अग्निर्वृत्राणि जङ्घनत्" "त्वं राजोत वृत्रहे" त्यग्नेः। सोमस्य च मन्त्रयोर्वृत्रघ्नपदाभावात्—**वृधन्वत्पदवत्याविति**। वृद्धिप्रकाशकपदवत्यावित्यर्थः; "कविर्विप्रेण वावृधे" "वर्धयामो वचोविदः" इति मन्त्रयोर्वृधन्वत्पदाभावात्। **प्रक्रियत इति**। **सूत्रे** प्रकरणशब्दः कर्मणि व्युत्पन्नः, तत्रैकवचनमविवक्षितं। पौर्णमासीशब्दो विद्वद्वाक्यद्वयोपलक्षणम्। आलम्बनशब्दस्याध्याहार इति दर्शितम्। **अविरोधादिति**। पौर्णमास्यमावास्याशब्दयोः कालवाचित्वमादाय क्रमाविरोधे शक्योपपादने न तद्विरोधिकर्मविशेषपरत्वमङ्गीकार्यम्। तदङ्गीकारेऽत्र विद्वद्वाक्यविधेयत्वेनाभ्युपगतयोः पौर्णमास्यमावास्यासंज्ञकयोः कर्मणोः पृथक्पृथगग्निप्रकाशकसोमप्रकाशकमन्त्रद्वयमनूच्येतेत्यनुवाक्यत्वेन विहितं स्यादिति मन्त्रविकल्पस्तत्प्रकाश्यदेवताविकल्पश्च भवेत्, आज्यभागयोः पुरोनुवाक्यान्तरकल्पनागौरवं च भवेदिति भावः। **बलवदपी**त्यपिशब्देनाभ्युपगमवादं सूचयता क्रम एव लिङ्गसाहित्येनात्र वाक्याद् बलीयान्। अग्नेः सोमस्य च प्रागेवाज्यभागयोर्देवतात्वेन क्लृप्तया तदुभयप्रकाशिकानां वार्त्रघ्नीवृधन्वतीनां तयोर्विनियोजकस्य लिङ्गस्यापि सद्भावादित्यपि व्यञ्जितम्। **काले हीति**। विद्वद्वाक्यविधेयपौर्णमास्यमावास्यासंज्ञककर्मद्वयाभ्युपगमे तयोः संज्ञयोः कालयोगेन निमित्तेन लक्षणैव वाच्या, नत्वपूर्वा रूढिः कल्पनीया; "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेतेति" वाक्ययोरपि तत्रैव कर्मद्वये कालविधायकत्वप्राप्तेः। एवंच वार्त्रघ्नीवृधन्वतीवाक्यद्वयश्रुतयोः पौर्णमास्यमावास्याशब्दयोर्मुख्यवृत्तिसंभवे लक्षणा नाश्रयणीयेति भावः। यद्युच्यते आज्यभागयोः कालयोगाश्रवणात्प्रधानद्वारा कालयोगाश्रवणे विकृतिषु "यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां पौर्णमास्यां वा यजेते"ति कालविकल्पविधानात् पौर्णमासीकालोपांशुयाजाग्नीषोमीयविकारो यदाऽमावास्यायां क्रियते, आमावास्याकालसांनाय्यैन्द्राग्नविकारो वा पौर्णमास्यां, तदा पौर्णमासीकालप्रधानाङ्गयोराज्यभागयोर्वृधन्वतीप्राप्तेरमावास्याकालप्रधानाङ्गयोर्वार्त्रघ्नीप्राप्तेः प्रकृतिवद्भावबाधः स्यात्। अतस्तदबाधाय पौर्णमास्याख्यकर्माङ्गयोर्वार्त्रघ्न्यौ अमावास्याख्यकर्माङ्गयोर्वृधन्वत्याविति वार्त्रघ्न्यादिवाक्यद्वयस्य आज्यभागविषयत्वेऽपि कर्मलक्षणाश्रयणीयेति; तथापि क्रमाविरोधादिपूर्वोक्तन्यायैराज्यभागविषयतयैवावतिष्ठत इति द्रष्टव्यम्। **द्वित्वोपपादनमिति**। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति" फलवाक्यगताग्नेयादित्रिकद्वयरूपसमुदायद्वयोपपादनं विद्वद्वाक्यद्वयेन समुदायद्वयकरणस्य प्रयोजनं; तदुपपादनाभावे आग्नेयादीनां षण्णामिव प्रयाजादीनामपि फलसंबन्धेनाङ्गप्रधानव्यवस्था न सिध्येत्। **तथाहि**—अप्रसिद्धार्थं नामाख्यातपरतन्त्रमाख्यातं स्वरसतो यावद् गृह्णाति तावति वर्तते; यथा बहूनामिष्टिपशुसोमयागानां सन्निधौ पठिते "राजा स्वाराज्यकामो राजसूयेन यजेते"ति वाक्ये श्रुतमाख्यातं विशेषकाभावात्संनिधिपठितसर्वयागग्राहीति तत्समभिव्याहृतमप्रसिद्धार्थं राजसूयनामापि तावद्यागवृत्ति। अत एवेष्टिपशुसोमात्मकाः सर्वे यागा राजसूये समप्रधानभूताः, प्रसिद्धार्थं तु नाम नाख्यातपरतन्त्रं, किं त्वाख्यातमेव तत्परतन्त्रमित्याख्यातमपि स्वगृहीतार्थमात्रे व्यवस्थापयति। यथा "ज्योतिष्टोमेन स्वर्गकामो यजेतेति" वाक्ये श्रुतं नाम "त्रिवृत्पञ्चदशः सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इत्यर्थवादोपदर्शितज्योतिर्नामकत्रिवृदा-

## भामती ।

प्रजापतिव्रतन्यायेन पर्युदासवृत्त्याऽहननापानसंकल्पलक्षणया तद्विषयो विधिः स्यात् । तथाच प्रसज्यप्रतिषेधो दत्त-जलाञ्जलिः प्रसज्येत । नच सति संभवे लक्षणा न्याय्या । 'नेक्षेतोद्यन्तम्' इत्यादौ तु 'तस्य व्रतम्' इत्यधिकाराद्प्रस-

## वेदान्तकल्पतरुः ।

र्युदासकता, न हन्यादित्यादौ त्वाख्यातयोगात्प्रतिषेधो भाति । तत्रानीक्षणवल्लक्ष्यः पर्युदास इत्येको दोषोऽपरश्च विधिनिषेधविभागलोप इत्यर्थः । प्रजापतिव्रतन्यायं ( जै. अ. ४ पा. १ सू. ३-९ ) विभजते निषेधेषु तदभावाय—**नेक्षेतेति । तत्र हि तस्य** ब्रह्मचारिणो **व्रत**मित्यनुष्ठेयवाचिव्रतशब्दोपक्रमादेकस्मिंश्च वाक्ये प्रक्रमाधीनत्वादुपसंहारस्था-ख्यातयोगिना नञा प्रतीतोऽपि प्रतिषेधोऽननुष्ठेयत्वादुपेक्ष्यते । धात्वर्थयोगेन च पर्युदासो लक्षणीयः । तथा चेक्षणविरोधिनी क्रिया सामान्येन प्राप्ता तद्विशेषबुभुत्सायां च सर्वक्रियाप्रत्यासन्नः संकल्प इत्यवगतम् । ईक्षइति तु संकल्पः ईक्षणापर्युदा-सेन नाद्रियते; ततोऽनीक्षणसङ्कल्पलक्षणा युक्ता, नैवं निषेधेषु संकोचकमस्तीत्यर्थः । एवं निषेधेषु भावार्थाभावमभि-

## कल्पतरुपरिमलः ।

दिस्तोमचतुष्टयसंबन्धनिमित्तकं, "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति" वाक्येन तत्संबन्धितया प्रसिद्धे सोमयागे वर्तते इत्याख्यातमपि तन्मात्रे वर्तयति । अतएव सोमयाग एव प्रधानभूतः, तत्सन्निधिपठिता इष्टिपशवस्तदङ्गानि । एवं स्थिते यद्याग्नेयादिषु षट्सु समुदायद्वयं प्रागेव प्रसिद्धं न स्यात्, तदा फलवाक्यगतं दर्शपूर्णमासाभ्यामिति पदम-प्रसिद्धार्थमाख्यातपरतन्त्रं सत् संनिहितसर्वयागानुवचनस्वरसप्रवृत्ताख्यातानुसारेण राजसूयनामवत् संनिहितसर्वया-गनाम स्याद्, द्विवचनं छान्दसेन वचनव्यत्ययेनोपपद्येत, द्विवचनान्तप्रतिरूपकमव्ययमिति वा कल्प्येत । नहि कालयोगिषु प्राक्सिद्धसमुदायद्वयाभावे दर्शपूर्णमासनाम द्विवचनान्तं प्रसिद्धार्थं भवेत्; येषामाग्नेयादीनामुत्पत्तिवा-क्यावगतः कालयोगोऽस्ति तेषां द्वित्वप्रसिद्ध्यभावात्, ययोराज्यभागयोर्द्वित्वप्रसिद्धिरस्ति तयोः कालयोगावगत्यभावात् । तस्मादवगतकालयोगेष्वाग्नेयादिषु द्वित्वाप्रसिद्ध्यर्थं समुदायद्वयकरणं सप्रयोजनम् । तथा सति ह्याग्नेयादीनामेव प्रसिद्धार्थेन नाम्नोपात्तानां फलसंबन्धेन प्राधान्यं, प्रयाजादीनां तदङ्गतेति व्यवस्था सिध्यति । **ननु**—फलवाक्यस्थस्य द्विवचनान्तनाम्नः षट्स्विव विद्वद्वाक्यस्थयोरेकवचनान्तनाम्नोः त्रिषु त्रिष्वनन्वितार्थत्वेन अप्रसिद्धार्थतया यजतिपारत-न्त्र्याऽविशेषादनयोरपि संनिहितसर्वयागानुवदनस्वरसयजत्यनुरोधेन तावन्नामत्वप्रसक्तिरपरिहार्या; यद्युच्येत तथा सति पौर्णमासीत्यमावास्येति च विद्वद्वाक्ययोर्नामपृथक्त्वं नोपपद्यते; अतस्तदेव परस्परव्यावृत्तनामिव्यवस्थां गमयतीति तद्व्य-वस्थासिद्धये तत्तत्कालयोगिष्वेव यागेषु तयोः प्रवृत्तिः कल्पनीयेति, एवं तर्हीयं युक्तिर्विद्वद्वाक्यद्वयेन समुदायद्वयसंपा-दनमनपेक्ष्य दर्शपूर्णमासाभ्यामिति शब्दएव योजयितुं शक्यते । तत्रैव चेयं युक्तिः—**दर्शपूर्णमासयोरिज्याप्राधान्य-मविशेषा** ( जै. अ. ४ पा. ४ सू. २९ ) दिति चतुर्थोपान्त्याधिकरणे **पृथक्त्वेन त्वभिधानयोर्निवेशः** ( जै. अ. ४ पा. ४ सू. ३४ ) इति सिद्धान्तसूत्रावयवेन केषु चिदित्यध्याहारवता दर्शिता । **तस्य ह्ययमर्थः**—दर्शपूर्णमासाभ्यामिति द्विवच-नश्रुत्या दर्शाभिधानस्य पूर्णमासशब्दस्य च दर्शाभिधानवाच्यात् पृथक्त्वेन निवेशः प्रतीयते, अतः प्रकृतयागमात्रवाचित्वे पृथक्त्वायोगात् केषुचिदेव यागेषु निवेशो युक्त इति । एवं तर्हि समुदायद्वयप्रसिद्ध्यर्थं विद्वद्वाक्यानुसरणेऽप्युक्तयुक्त्य-न्वेषणे यथासूत्रं फलवाक्य एवेयमन्विष्यताम् । अथोच्येत द्विवचनश्रवणं छान्दसत्वादिना नेतुं शक्यमिति तुल्यमिति—**चेत्, उच्यते**; तैत्तिरीयशाखायां "य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति" "य एवं विद्वा-नमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोती"ति विद्वद्वाक्याम्नातयोः पौर्णमास्यमावास्ययोर्व्यवस्थितफला-र्थवादः श्रूयते, स तन्नाम्नोर्नामिभेदाभावे नोपपद्यत इति स्पष्टं नामिभेदः प्रतीयते, अतो विद्वद्वाक्याभ्यां समुदायद्वयसिद्धि-राश्रिता । एवंच फलवाक्ये एव समुदायद्वयसंपादनं ततः समुदायान्तर्गतानां समुदायिनां फलसंबन्धबोधनं चेति प्रति-पत्तिगौरवमपि परिहृतं भवति । तस्माद्युक्तं विद्वद्वाक्ययोः प्रयोजनकथनम् । **अविसंवादार्थमिति** । उत्पत्तिवाक्येन यस्येष्टसामान्ये करणत्वं बोधितं, तस्यैवाधिकारवाक्येनाकाङ्क्षितेष्टविशेषकरणत्वबोधनायां संवादो भवति । उत्पत्तिवाक्येन यत्र फले द्रव्यदेवतासंबन्धस्य करणत्वं बोधितं, तत्रैव फले परित्यज्य तदाक्षिप्तस्य यागस्य करणबोधने तु तयोर्विसंवादः स्यादित्यर्थः । **नामधात्वर्थेति** । नामयोगे पर्युदासतायां तदन्यतद्विरोध्यन्यतरत्वरूपायामब्राह्मणाऽधर्माद्युदाहरणम्, धात्वर्थयोगे तु नेक्षेतेति प्रदर्शयिष्यमाणमुदाहरणम् । **तत्राप्रतीतोऽपीति** । प्रधानभूताख्यातान्वयिना नञा प्रतीतोऽ-प्याख्यातार्थस्य कर्तव्यत्वस्याभावोऽननुष्ठेयत्वात् त्यजत इत्यर्थः । **लक्षणीय इति** । नञीक्षतिधातुभ्यामिति शेषः । **सर्वक्रि-येति** । सर्वा हि पुरुषस्य क्रिया संकल्पपूर्वकेति तस्य तत्प्रत्यासत्तिः । **ननु** धातुर्लक्षकश्चेद् धात्वर्थसंकल्प एव किमिति न लक्ष्यत इत्याशङ्क्य नञा योगादित्याह—**ईक्षतीति । संकोचकमिति** । हन्यादिति प्रकृतिविशिष्टप्रत्ययान्वयस्वरसस्य

**शिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन। अपिच 'ब्राह्मणो न हन्तव्यः' इत्येवमाद्या निवृत्तिरुपदिश्यते। नच सा क्रिया। नापि क्रियासाधनम्। अक्रियार्थानामुपदेशोऽनर्थकश्चेत् ब्राह्मणो न हन्तव्य इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम्। तच्चानिष्टम्। नच स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं, हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष**

## भामती।

ज्यप्रतिषेधासंभवेन पर्युदासवृत्त्याऽनीक्षणसंकल्पलक्षणा युक्ता। तस्मात् 'न हन्यात्' 'न पिबेत्' इत्यादिषु प्रसज्यप्रतिषेधेषु भावार्थाभावात्तद्व्याप्तायाः कृतेरभावः, तदभावे च तद्व्याप्तस्य कार्यस्याभाव इति न कार्यपरत्वनियमः सर्वत्र वाक्य इत्याह—**ब्राह्मणो न हन्तव्य इत्येवमाद्या इति**। **ननु** कस्मान्निवृत्तिरेव कार्यं न भवति, तत्साधनं चेत्यत आह—**नच सा क्रियेति**। क्रियाशब्दः कार्यवचनः। एतदेव विभजते—**अक्रियार्थानामिति**। **स्यादेतत्**—विधिविभक्तिश्रवणात्कार्यं तावदत्र प्रतीयते, तच्च न भावार्थमन्तरेण। नच रागतः प्रवृत्तस्य हननपानादावकस्मादौदासीन्यमुपपद्यते विना विधारकप्रयत्नम्। तस्मात्स एव प्रवृत्त्युन्मुखानां मनोवाग्देहानां विधारकः प्रयत्नो निषेधविधिगोचरः क्रियेति नाक्रियापरमस्ति वाक्यं किंचिदपीत्याह—**नच हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम्**। केन हेतुना न शक्यमित्यत आह—**स्वभावप्राप्तहन्त्यर्थानुरागेण** नञः। **अयमर्थः**—हननपानपरो हि विधिप्रत्ययः प्रतीयमानस्ते एव विधत्त इत्युत्सर्गः। नचैते शक्ये विधातुं; रागतः प्राप्तत्वात्। नच नञः प्रसज्यप्रतिषेधो विधेयः; तस्याप्यौदासीन्यरूपस्य सिद्धतया प्राप्तत्वात्। नच विधारकः प्रयत्नः; तस्याश्रुतत्वेन लक्ष्यमाणत्वात्, सति संभवे च लक्षणाया अन्याय्यत्वात्, विधिविभक्तेश्च रागतः प्राप्तप्रवृत्त्यनुवादकत्वेन विधि-

## वेदान्तकल्पतरुः।

धाय तद्व्याप्तकृतिनियोगयोरभावमाह—**तस्मादिति**। **तदयं प्रयोगः**—विमतं न नियोगावच्छेदकं, अभावत्वात्संमतवदिति। **क्रियाशब्द इति**। विभागभाष्येऽक्रियार्थानामानर्थक्याभिधानादिह क्रियाशब्दः कार्यवचनः। अकार्यार्थानां ह्यानर्थक्यं नियोगवादिनो मतं, न भावार्थाविषयाणाम्; नियोगस्याप्यभावार्थत्वादिति। निषेधेषु भावार्थाभावान्न कार्यमित्युक्तं, तत्र हेत्वसिद्धिं शङ्कते—**स्यादेतदिति**। विधिश्रुतिसिद्धो नियोगो विषयं भावार्थमाक्षिपतु, स एव कः ? न तावद्धननादिः; तस्य रागप्राप्तेः, अनुपातक्रियाविधौ च लक्षणाप्रसङ्गात्, अत आह—**नच रागत इति**। लक्षणया हननविरोधी यत्नो विधेयः, प्रयोजनलाभे च लक्षणा न दोषायेत्यर्थः। **इत्याहेति**। अस्यां शङ्कायामाहेत्यर्थः। व्यवहितान्वयेन व्याकुर्वन् भाष्यमुदाहरति—**नचेति**। भाष्ये नञ इति पदम् अनुरागेणेत्यधस्तनेनाप्राप्तक्रियार्थत्वमित्युपरितनेन च संबध्यते। **स्वभावप्राप्तहन्त्यर्थानुरागेणेति** नेदमनुवादस्थं; तथा सति हि सर्वमेव भाष्यं प्रतिज्ञापरं स्यात्—'स्वभावप्राप्तहन्त्यर्थानुरागेण यन्नञोऽप्राप्तक्रियार्थत्वं तन्नेति'। तच्च न युक्तम्; नञश्चेत्युत्तरभाष्यस्य चशब्दयोगेन शङ्कानिरासित्वाद्धेतुत्वदर्शनात्, तन्मा भूदिति पृथक्कृत्य हेतुभागमाकाङ्क्षापूर्वकं योजयति—**केनेति**। किमिह विधेयं हननादि वा नञर्थो वा विधारकप्रयत्नो वेति विकल्प्य क्रमेण दूषयति—**हननेत्यादिना**। अत्र विधारकप्रयत्नविधिराशङ्कितः, स एव च निराकर्तव्यः, इतरत्तु पक्षद्वयं परस्य शाखाचंक्रमनिरासार्थं दूषि-

## कल्पतरुपरिमलः।

नञः प्रधानं प्रत्ययं परित्यज्य प्रकृतिमात्रान्वयरूपं संकोचापादकं नास्तीत्यर्थः। **शाखाचंक्रमनिरासार्थमिति**। विधारकप्रयत्नविधिपक्षे स्थिरशङ्कायोग्ये लक्षणाप्रसङ्गेन दूषिते तदपहाय तर्हि न हन्यादित्यत्र श्रुतधातुनञर्थमध्यएव किंचिद्विधेयमस्त्वित्युत्तानधीः शङ्केत, तन्मा भूदित्येतदर्थं तदपि पक्षद्वयं विकल्पमुखेनोद्भाव्य दूषितमित्यर्थः। **ननु** नञर्थविधिपक्षो विधारकप्रयत्नविधिपक्षादपि स्थिरशङ्कायोग्यः। **तथाहि**—न हन्यादित्यत्र नञः संनिधानाद्धात्वर्थेन हननेनान्वय इति तस्य हननाभावोऽर्थः, स च प्रागभावरूपोऽनादिरपि हननचिकीर्षापनयद्वारा परिपाल्यत्वेन साध्यः, अतः स एव नियोगविषयोऽस्त्विति स्थिरैव शङ्का। नचैषा हननाभावस्य स्वतःसिद्धत्वहेतुना निराकर्तुमपि शक्या; स्वतःसिद्धस्यापि तस्य परिपाल्यत्वेन साध्यताया भाष्यटीकयोरनुपदमेव वर्णयिष्यमाणत्वात्। **किंच** गुरुमते न हन्यादित्यादिनिषेधवाक्येषु हननाद्यभावो नियोगविषय इत्येव सिद्धान्तः। तन्मते हि **प्रतिषेधेष्वकर्मत्वात्** ( **जै. अ. ६ पा. २ सू. १९** ) इति षष्ठाध्यायगताधिकरणे 'न कलञ्जं भक्षयेदित्यादिषु चतुर्थगतप्रजापतिव्रताधिकरण ( जै. अ. ४ पा. १ सू. ३-६ ) न्यायेन अभक्षणसंकल्पो विधिविषय इति पूर्वपक्षे प्राप्ते,-श्रुतभक्षणाद्यभावात्मकस्यौदासीन्यस्यैव स्वतःसिद्धस्यापि प्रसक्तचिकीर्षापनयद्वारा साध्यत्वेन नियोगविषयत्वसंभवान्न लक्षणया भक्षणादिसंकल्पस्य तथात्वमङ्गीकर्तुं युक्तमिति सिद्धान्तः। इत्थंभूतः पक्षः कथं शङ्कायोग्यत्वेनापि नेक्षितः, **उच्यते**; हन्याद्भक्षयेदित्यादिपदं परिपूर्णं हि नञा संबध्यते, न पदैकदेशभूतं धातुमात्रम्। अतो धात्वर्थविशिष्टस्य प्रत्य

**स्वभावो यत्स्वसंबन्धिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्यकारणम् । सा च**

भामती ।

विषयत्वायोगात् । तस्माद्यत्पिबेद्धन्याद्वेत्यनूद्य तन्नेति निषिध्यते, तदभावो ज्ञाप्यते, नतु नञर्थो विधीयते । अभावश्च स्वविरोधिभावनिरूपणतया भावच्छायानुपातीति सिद्धे सिद्धवत्, साध्ये च साध्यवद्भासत इति साध्यविषयो नञर्थः साध्यवद्भासत इति नञर्थः कार्यं इति भ्रमः । तदिदमाह—**नञश्चैष स्वभाव इति** । **ननु** बोधयतु संबन्धिनोऽभावं नञ्, प्रवृत्त्युन्मुखानां तु मनोवाग्देहानां कुतोऽकस्मान्निवृत्तिरित्यत आह—**अभावबुद्धिश्चौदासीन्यपालनकारणम्** । **अयमभिप्रायः**—'ज्वरितः पथ्यमश्नीयात्' 'न सर्पायाङ्गुलिं दद्यात्' इत्यादिवचनश्रवणसमनन्तरं प्रयोज्यवृद्धस्य पथ्याशने प्रवृत्तिं भुजङ्गाङ्गुलिदानोन्मुखस्य च ततो निवृत्तिमुपलभ्य बालो व्युत्पित्सुः प्रयोज्यवृद्धस्य प्रवृत्तिनिवृत्तिहेतू इच्छाद्वेषावनुमिमीते । **तथाहि**—इच्छाद्वेषहेतुके, वृद्धस्य प्रवृत्तिनिवृत्ती, स्वतन्त्रप्रवृत्तिनिवृत्तित्वात्, मदीयस्वतन्त्रप्रवृत्तिनिवृत्तिवत् । कर्तव्यतैकार्थसमवेतेष्टानिष्टसाधनभावावगमपूर्वकौ च, अस्येच्छाद्वेषौ, प्रवृत्तिनिवृत्ति-

वेदान्तकल्पतरुः ।

तम् । **ननु** नञर्थश्चेन्न विधीयते, तर्हि हननं नास्तीत्यादाविव सिद्धतया प्रतीयेतेत्याशङ्क्याह—**अभावश्चेति** । रागप्राप्तकर्तव्यताकहननलक्षणप्रतियोगिगतं साध्यत्वमभावे समारोप्यत इत्यर्थः । कर्तव्यत्वाभावबोधस्य निवर्तकत्वमयुक्तं; सत्यपि तस्मिन्हननगतदृष्टेष्टसाधनत्वप्रयुक्तकर्तव्यताया अनपायादित्युत्तरभाष्यस्य शङ्कामाह—**ननु बोधयत्विति** । औदासीन्यस्य प्रागभावतया कारणानपेक्षत्वादध्याहरति—**पालनेति** । निषेधेषु नञ्समभिव्याहृतविधिप्रत्ययेन प्रकृत्यर्थभूतहननादिगतक्षुद्रेष्टोपायतामनपबाध्य तद्गतगुरुतरादृष्टानिष्टोपायता ज्ञाप्यतेऽतो निवृत्त्युपपत्तिरिति वक्तुं लोके विधिनिषेधयोरिष्टानिष्टोपायत्वबोधकत्वं व्युत्पत्तिबलेन दर्शयति—**अयमभिप्राय इत्यादिना—प्रवर्तकेषु वाक्येषु** इत्यतः प्राक्तनेन ग्रन्थेन । इन्दूदयगतहितसाधनतायां न प्रवृत्तिहेतुता, प्राकृतभुजगाङ्गुलिदाने च नाधुना निवृत्तिहेतुत्वं, ततो विशिनष्टि—**कर्तव्यतेति** । कर्तव्यतया सहैकस्मिन् धात्वर्थे समवेताविष्टानिष्टसाधनभावौ तौ तथोक्तौ । फलेच्छाद्वेषयोरुक्तविधसाधनभावावगमपूर्वकत्वाभावादनैकान्तिकत्वमाशङ्क्याह—**प्रवृत्तिनिवृत्तिहेतुभूतेति** । दृष्टान्ते साध्यविकलतामाश-

कल्पतरुपरिमलः ।

यार्थस्याभावो लभ्यते, नोपसर्जनस्य धात्वर्थस्याभावः । एवंच नञर्थस्य प्रधानसंबन्धोऽपि भवति । गुणसंबन्धो हि **गुणानां च पदार्थत्वादसंबन्धः समत्वात्स्या** ( जै. अ. ३ पा. १ सू. २२ ) दिति न्यायविरुद्धः । एवंच प्रत्ययार्थस्याभावएव वाक्यार्थे स्थिते कोत्र विधिरस्तीति तं प्रत्यप्रतीतो हननाद्यभावो विषय इत्युपपाद्यते । यद्युच्येत व्युत्पत्त्या न्यायेन च प्राप्तोऽपि नञ आख्यातान्वयो न संभवति; रागप्राप्तहननादिविषयस्य नियोगस्याप्रसक्त्या तदभावबोधनासंभवात् , अत स्तस्य विशेष्यमतिलङ्घ्य तद्विशेषणधात्वर्थान्वय इष्यत इति, एवमपि हननाद्यभावो विषयो न लभ्यते; नामार्थान्वयिन इव धात्वर्थान्वयिनोऽपि नञः पर्युदासार्थत्वनियमेन प्रतिषेधार्थत्वासंभवात् । **यथाहुः**—'नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः । वदत्यब्राह्मणाऽधर्मावन्यमात्रविरोधिनौ ॥' इति । एवंच धात्वर्थान्वयेन नञः पर्युदासार्थकत्वे सति हननादिविरोधी विधारकप्रयत्नो विषयो भवेदिति तृतीयपक्ष एवान्तर्भवेत् । यथाकथंचिद् नञो हननाभावाद्यर्थत्वसमर्थनेऽपि तस्य साक्षात्कृतिसाध्यत्वाभावात् तदवस्थितिमुद्दिश्य कर्तव्यस्तदाक्षेप्यो विधारकप्रयत्न एव यदाग्नेयवाक्ये श्रुतद्रव्यदेवतासंबन्धाक्षेप्यो याग इव विधेयः स्यादिति तृतीयपक्षान्तर्भावदोषो नातिवर्तते । एवं हननाद्यभावस्य विधेयत्वासंभव आचार्यैर्नामधात्वर्थयोगे हि नञः पर्युदासतेत्युक्त्या यदाग्नेयवाक्ये श्रुतद्रव्यदेवतासंबन्धाक्षेप्यस्य यागस्यैव विधिरिति समर्थनेन च सिद्धः । अतो नञर्थविधिविकल्पोत्र आख्यातार्थाभावविषयः पर्यवस्यतीति तस्यापुरुषतन्त्रस्य स्वतःसिद्धतया प्राप्तत्वादिति टीकायां दोष उक्तः । तत्र चौदासीन्यरूपस्येत्येतदभावरूपत्वाभिप्रायम् । **यद्वा**—यथा पुरुषस्यानीप्सितेष्वौदासीन्यं स्वतःसिद्धमेवमयमपि नञर्थ इत्यौदासीन्यसादृश्याभिप्रायमिति सर्वमनवद्यम् । **ननु—नञर्थश्चेदित्यादिना** अभावश्चेत्यादिटीकावतारिकाग्रन्थेन स्वमते हननाभावमर्थमङ्गीकृत्य तथात्वे न हन्यादित्यस्य हननं नास्तीत्यतो विशेषो न स्यादिति शङ्का तदवतारितव्याख्याग्रन्थेन न हन्यादित्यत्र प्रतियोगिनो लिङा कर्तव्यतया प्रतीतेस्तदभावेऽपि प्रतियोगिच्छायानुपातिनि कर्तव्यताभ्रमाविशेष इति परिहाराभिप्रायकथनं च न युक्तम्, नहि स्वमते न हन्यादित्यत्र हननाभावो वाक्यार्थः, किंतु हननकर्तव्यत्वाभावः, स च हननस्य बलवदनिष्टानुबन्धित्वपर्यवसायी; तथाऽनुपदमेव टीकाकारैराचार्यैश्च वक्ष्यमाणत्वात्, किंतु टीकाग्रन्थ इत्थमवतारयितुं युक्तः—'**ननु** हननाभावो न विधेयश्चेत् कथं न हन्यादित्यत्र हननाभावः कर्तव्यतयोच्यत' इति प्रतिभातीति, परिहाराभिप्रायश्चेत्थं वर्णनीयः—न हन्यादित्यव्यवधानाद् नञो धात्वर्थान्वयेन हननाभावोऽर्थ इति कश्चन भ्रमः, ततः प्रतियोगिच्छायानुपातिनि तस्मिन् कर्तव्यतयोच्यत इति कश्चन भ्रमः, एवं भ्रमद्वयावलम्बन एव केषांचिद् हननाभावस्य विधेयत्वेन व्यवहार—**इति** । **सत्यम्**; टीकाग्रन्थस्यैवमर्थः स्पष्ट इति प्रौढ्यार्थान्तरमपि दर्शितम् । **कर्तव्यत्वाभावबोधस्येति** । कर्तव्यत्वविशिष्टेष्टसाधनत्वाभावबोधस्येत्यर्थः । इष्टसाधनत्वाभाव एव हि नञर्थ इति

## भामती ।

हेतुभूतेच्छाद्वेषत्वात्, मत्प्रवृत्तिनिवृत्तिहेतुभूतेच्छाद्वेषवत् । न जातु मम शब्दतद्व्यापारपुरुषाशयत्रैकाल्यानवच्छिन्नभावनापूर्वप्रत्ययपूर्वाविच्छाद्वेषावभूताम्, अपितु भूयोभूयः स्वगतमालोचयत उक्तकारणपूर्वावेव प्रत्यवभासेते । तस्माद्वृद्धस्य स्वतन्त्रप्रवृत्तिनिवृत्ती इच्छाद्वेषभेदौ च कर्तव्यतैकार्थसमवेतेष्टानिष्टसाधनभावावगमपूर्वावित्यानुपूर्व्या सिद्धः कार्यकारणभाव इतीष्टानिष्टसाधनतावगमात्प्रयोज्यवृद्धप्रवृत्तिनिवृत्ती इति सिद्धम् । स चावगमः प्रागभूतः शब्दश्रवणानन्तरमुपजायमानः शब्दश्रवणहेतुक इति प्रवर्तकेषु वाक्येषु 'यजेत' इत्यादिषु शब्द एव कर्तव्यमिष्टसाधनं व्यापारमवगमयंस्तस्येष्टसाधनतां कर्तव्यतां चावगमयति, अनन्यलभ्यत्वादुभयोः, अनन्यलभ्यस्य च शब्दार्थत्वात् । यत्र तु कर्तव्यतान्यत एव लभ्यते, यथा 'न हन्यात्' 'न पिबेत्' इत्यादिषु हननपानप्रवृत्त्यो रागतः प्रतिलम्भात्, तत्र तदनुवादेन नञ्समभिव्याहृता लिङादिविभक्तिरन्यतोऽप्राप्तमनयोरनर्थहेतुभावमात्रमवगमयति । प्रत्यक्षं हि तयोरिष्टसाधनभावोऽवगम्यते; अन्यथा रागविषयत्वायोगात् । तस्माद्रागादिप्राप्तकर्तव्यतानुवादेनानर्थसाधनता ज्ञापनपरं 'न हन्यात्' 'न पिबेत्' इत्यादिवाक्यं, नतु कर्तव्यतापरमिति सुष्ठूक्तमकार्यनिष्ठत्वं निषेधानाम् । निषेध्यानां चानर्थसाधनताबुद्धिरेव

## वेदान्तकल्पतरुः ।

आह—**न जात्विति** । शब्दादीनामपूर्वपर्यन्तानां ये प्रत्ययास्तत्पूर्वाविच्छाद्वेषौ बालस्य मा भूतां, प्रत्यक्षव्यवहारे सर्वेषामभावादित्यर्थः । पचतीत्यादौ प्रतीतापि भावना न प्रवर्तिकेति त्रैकाल्यानवच्छिन्नेत्युक्तम् । **इत्यानुपूर्व्या सिद्धः कार्यकारणभाव** इत्यन्वयव्यतिरेकप्रदर्शनपरम् । **इष्टेत्यादिसिद्धमित्यन्त**मिष्टानिष्टोपायतावगमस्य प्रवृत्तिनिवृत्ती प्रति हेतुत्वप्रदर्शनपरम् इति विवेक्तव्यम् । **ननु** कर्तव्यतेष्टसाधनत्वविशिष्टव्यापारपरः शब्दोऽस्तु, किं धर्ममात्रपरत्वेनात आह—**अनन्यलभ्यत्वादिति** । व्यापारो लोकसिद्ध इति न शब्दार्थ इत्यर्थः । **ननु** हननादिषु प्रत्यक्षदृष्टेष्टसाधनत्वकर्तव्यत्वयोर्निषेद्धुमशक्यत्वात्कथमभावबुद्धिरिति भाष्यमत आह—**निषेध्यानां चेति** । दृश्यमानमपीष्टं बहुदृष्टानि-

## कल्पतरुपरिमलः ।

वक्ष्यते । **इष्टसाधनत्वप्रयुक्तकर्तव्यताया इति** । इष्टसाधनत्वावगतिकार्यप्रवृत्तेरित्यर्थः । **शब्दादीनामिति** । विधिनिषेधात्मकः शब्द एव पुरुषस्य प्रवृत्तिं निवृत्तिं च भावयन् शब्दभावनेत्युच्यत इति लिङादियुक्तेषु वाक्येषु द्वे भावने अवगम्येते शब्दात्मिका चार्थात्मिका चेति यथा श्रुतवार्तिकग्रन्थानुसारी कश्चित्पक्षः । स मीमांसकैरेव 'तत्र शब्दः स्वरूपेण वायुवच्चेत्प्रवर्तकः । प्रमाणत्वं विहन्येत नियमाच्च प्रवर्तयेत्, (जै. अ. १ पा. २ सू. ७) इत्यादिन्यायैर्निराकृतः ॥ लिङादिभिर्नञ्समभिव्याहृतलिङादिभिश्च बोधितः प्रवर्तनानिवर्तनात्मकशब्दस्य व्यापारः शब्दभावना । लोके हि प्रैषाध्येषणादिः प्रवर्तकस्य पुरुषस्य व्यापारो गामानयेत्यादिवाक्येषु प्रवृत्तिनिवृत्तिहेतुत्वेनावगतः । अपौरुषेये वेदे वक्तृपुरुषव्यापारासंभवाच्छब्दस्यैव स व्यापार **इत्यन्यः पक्षः** ॥ वेदस्येश्वरकर्तृकत्वात् तदभिप्राय एवाज्ञारूपः प्रवर्तको निवर्तकश्च लिङादीनां नञ्युक्तलिङादीनां चार्थ **इत्युदयनादितार्किकपक्षः** ॥ त्रैकाल्यानवच्छिन्नरूपेण लिङादिनञ्युक्तलिङाद्यसाधारणार्थभूतार्थभावनैव प्रवर्तिका निवर्तिका चेति शब्दभावनामनङ्गीकुर्वतां **मीमांसकैकदेशिनां पक्षः** ॥ विधिनिषेधलिङादिबोध्यापूर्वरूपो नियोगः प्रवर्तको निवर्तकश्चेति **प्राभाकरपक्षः** । **प्रत्यक्षव्यवहारे इति** । नच—स्वेच्छाधीने प्रत्यक्षव्यवहारे प्रवर्तनाद्यभावेऽपि परप्रेरितव्यवहारे प्रेरयितृपुरुषप्रेरणात्मकं प्रवर्तनादिकमस्तीति—शङ्कनीयम्; तत्रापि स्वेष्टानिष्टसाधनताज्ञानं विना चेतनस्य प्रवृत्तिनिवृत्त्यसंभवेन आवश्यकस्य तस्यैव प्रवृत्तिनिवृत्तिहेतुत्वे प्रेरयितृव्यापारस्य तेनान्यथासिद्धेः । **नच** यागस्य स्वर्गकारणत्वनिर्वाहार्थम् अपूर्वमिव प्रेरयितृपुरुषव्यापारस्य प्रवृत्त्यादिकारणत्वनिर्वाहार्थम् इष्टसाधनतादिज्ञानं द्वारत्वेन कल्प्यते; यतस्तेनान्यथासिद्धिर्न स्यात्, क्लृप्तमेव हि तस्य स्वेच्छाधीनव्यवहारस्थले प्रवृत्त्यादिकारणत्वम् । **अन्वयव्यतिरेकेति** । टीकायां कार्यकारणभावशब्दस्तद्ग्राहकान्वयव्यतिरेकपर इति भावः । **व्यापारो लोकसिद्ध इति** । साध्यत्वेष्टसाधनत्वयोर्धर्मी व्यापारो ह्यत्र यागादिकः, स च यज्यादिधात्वर्थत्वेन लोकप्रसिद्ध इति यज्यादिधातुसमभिव्याहारादेव तयोर्धर्मिसंबन्धसिद्धेः न धर्म्यपि लिङादिशब्दार्थ इत्यर्थः । **यद्वा**—कृतिसाध्यत्वेष्टसाधनत्वविशिष्टयागस्वर्गयोर्व्यापारेऽपूर्वे शक्तिरिति शङ्का । व्यवहितयोः कार्यकारणभावद्वारापेक्षाया लोकसिद्धत्वेन आक्षेपादेव तत्सिद्धेर्नापूर्वरूपो व्यापारः शब्दार्थः । अतो न तत्र शाब्दयोः कृतिसाध्यत्वेष्टसाधनत्वयोरन्वयः, किंतु यज्यादिधात्वर्थ एवान्वय इति भावः । **ननु**—यदि यागादिः समभिव्याहारलभ्यत्वाद् अपूर्वव्यापारो लौकिकन्यायालभ्यत्वाच्च न लिङाद्यर्थः, तर्हि कर्तव्यत्वमपि तदर्थो न भवेत्, तदपि हि कृतिसाध्यत्वरूपं लोकत एवावगन्तुं शक्यं, यागादिः कृत्वा साधयितुं शक्यो नतु चन्द्रमण्डलहरणादिवदशक्य इति ॥ **स्यादेतत्**—यः स्वर्गादिफलकामादिरधिकारी तत्कृत्यैव साधनीयत्वं न लोकतः सिद्धमित्यन्यकृत्या साधितानामपि तेषामन्यफलार्थत्वं प्रसज्येत, तन्माभूदिति कर्तव्यत्वस्यापि लिङाद्यर्थानुप्रवेशः कल्प्यः; तथा सति हि समभिव्याहृतस्य स्वर्गका-

### भामती ।

**निषेध्याभावबुद्धिः । तया खल्वयं चेतन आपाततो रमणीयतां पश्यन्नप्यायतिमालोच्य प्रवृत्त्यभावं निवृत्तिमवबुध्य**

### वेदान्तकल्पतरुः ।

ष्टोदयावहत्वादनिष्टमित्यनर्थहेतुत्वज्ञापनपरं वाक्यम् । एवंच पर्युदासपक्षादस्य न विशेष इति न शङ्क्यं; श्रुतेष्टसाधनत्वा-भावोपपत्तयेऽनिष्टसाधनत्वकल्पनात्, त्वन्मते श्रुतं परित्यज्याश्रुतविधारकप्रयत्नविधिकल्पनादिति । **आयति**र्भाविफलम् । प्रवृत्त्यभावमित्यस्य व्याख्या—**निवृत्तिमिति** । उद्यतउद्यमक्रियाया मयोपरन्तव्यमिति बुद्ध्या निवर्तते, नतु प्रवृत्तिप्राग-

### कल्पतरुपरिमलः ।

मादेर्यदिष्टं तत्साधनत्ववत् तत्कृतिसाध्यत्वमपि सिध्यति । **नच**—यजेतेत्यादिकर्त्रभिप्रायार्थकात्मनेपदवत्त्वात् तत्सिद्धिः स्यादिति—वाच्यम्; आत्मनेपदस्यासार्वत्रिकत्वात्, आग्नेयमष्टाकपालं निर्वपेद् रुक्काम इत्यादौ तदभावात् । **नच**—तत्रा-ग्नीनादधीतेत्याधानवाक्यगतात्मनेपदबलात्तत्सिद्धिः स्यात्, तत्र साक्षादाधानफलस्याग्निसंस्कारस्याहवनीयादिगतत्वेनाग्नि-साध्यक्रतुफलानां परम्परयाधानसाध्यानां कर्तृगामित्वमपेक्ष्यैव तत्रत्यात्मनेपदस्य निर्वाह्यत्वादिति—वाच्यम्; अग्निनिरपे-क्षजपादिविधिश्रुतफलानां कर्तृगामित्वस्य ततो निर्वाहाभावात्, येनाधानं कृतं तस्याग्निषु तेन स्वफलकामनया क्षेत्रजपुत्रो-त्पादनन्यायादन्येन यागानुष्ठापनप्रसङ्गस्यैवमप्यपरिहाराच्च । तस्मात्फलकामकर्तव्यत्वं न लोकसिद्धमिति तल्लाभाय कर्त-व्यत्वं लिङाद्यर्थ इत्यभ्युपेयमिति—**चेत्, न**; कर्तव्यत्वस्य तदर्थत्वाभ्युपगमेऽपि तच्छङ्कानपायात्, यः पुत्रगतपूतत्वादि-वत्पित्रादिगतं स्वर्गं कामयते सोऽपि स्वर्गकाम इति तत्कृत्या साधितस्य यागस्य पित्रादिगतस्वर्गजनकत्वशङ्का हि तथैवानु-वर्तेत । यद्युच्येत प्रवर्तको विधिः कर्तृगतफलपर्यवसायिन्येव पुरुषं प्रवर्तयतीति नियमः । पुत्रगतपूतत्वादिकमपि सत्पु-त्रेण भाविफलमालोचयतः स्वगतफलपर्यवसायीति परम्परया स्वफलोपयोगि । इह स्वर्गकाम इत्यादौ पूतत्वादाविव पर-म्पराश्रयणे प्रमाणभावादौत्सर्गिकं साक्षात्त्वं न त्यक्तव्यमिति स्वकीयस्वर्गकामादिरेव तदर्थः । अतो नातिप्रसङ्गो भवतीति, एवं तर्हि कर्तव्यत्वस्य लिङाद्यर्थत्वाभावेऽपि स्वर्गकामो यजेतेति सामानाधिकरण्येन स्वकीयस्वर्गकामस्यैव यागकर्तृत्वप्रतीते-स्तस्य न तदर्थत्वमभ्युपगन्तव्यम् । यजेतेत्यत्र ह्याख्यातसामान्यार्थकृत्याक्षिप्तस्तदाश्रयः कर्ता प्रतीयतएव यत्रैकवचनाद्य-र्थसंख्यान्वयः । तस्मात्कर्तव्यत्वं लिङाद्यर्थ इति नाभ्युपेयमिति—**चेत्, सत्यम्**; यद्यपि सूक्ष्मदृष्ट्यान्यलभ्यमपि कर्त-व्यत्वं प्रवर्तकज्ञानविषयत्वात्प्रवृत्तिप्रयोजकस्य लिङादेरर्थोऽभ्युपेयते; तथापि कर्तव्यत्वेष्टसाधनत्वयोर्धर्मी यागादिस्तदर्थो नाभ्युपेयः; धातुसमभिव्याहारादेव तयोस्तद्धर्म्यसिद्धेः स्पष्टत्वादित्यत्र तात्पर्यम् । **श्रुतेष्टसाधनत्वाभावोपपत्तये इति** । **ननु**—इष्टसाधनत्वाभावः श्रुत इत्ययुक्तम्; तस्य न हन्यादित्येतदर्थत्वाभावात्, सांदृष्टिकेष्टोपायत्वे विद्यमाने तदभावस्य बाधितत्वात्, हननेष्टसाधनतामनपबाध्य तद्गुरुतरादृष्टानिष्टोपायता ज्ञायत इति पूर्ववाक्ये तदबाधनस्योक्तत्वाच्च । एवंच श्रुतेष्ट-साधनत्वाभावोपपत्तये गुरुतरानिष्टसाधनत्वं कल्प्यत इत्यप्ययुक्तम्; गुरुतरानिष्टसाधनत्वे कल्पितेऽपि सांदृष्टिकेष्टोपायत्वस्य प्रत्यक्षसिद्धस्यापनेतुमशक्यत्वेन तदभावोपपादनायोगादिति—**चेत्, उच्यते**; गुरुतरानिष्टसाधनत्वे कल्पिते तत्प्रतिसंधा-नेन सांदृष्टिकफलादिच्छा निवर्तेत, तन्निवृत्तौ च तस्येष्टत्वं नास्तीति इष्टसाधनत्वाभावस्य न हन्यादित्येतदर्थतायां न का-चिदनुपपत्तिः । गुरुतरानिष्टसाधनत्वकल्पनायाश्च न तदुपपादकत्वासंभवः । पूर्ववाक्ये तात्कालिकक्षुद्रेष्टसाधनत्वानपबाध-नोक्तिस्तु तात्कालिकफलत्वाभिमतसाधनत्वयोग्यतायाः स्वरूपतो बाधनाभावपरा, नतु तस्य फलस्येच्छाविषयत्वबाधना-भावपरापीति न विरोधः । **ननु**—आस्तिककामुकस्य रागान्धस्य सत्यपि भाविनरकदुःखावश्यंभावावगमे तात्कालिकफ-लेच्छा नापैतीति तं प्रतीष्टसाधनत्वाभावबोधकस्य निषेधवाक्यस्याप्रामाण्यं स्यात्, सर्वान्प्रति प्रमाणभूतस्य च वेदवाक्यस्य पुरुषभेदेन प्रामाण्याप्रामाण्यवैलक्षण्यं न युक्तमिति—**चेत्**, यद्येवमत्रापरितोषः तदैवमुपपादनीयम् । इष्टोपायत्वमात्रं न लिङाद्यर्थः, किंतु बलवदनिष्टाननुबन्धित्वविशेषितम् । तथाच निषेधवाक्यैर्विशिष्टाभावबोधने नास्ति बाधः । विशेष्यवति विशिष्टाभावो विशेषणाभावेनोपपादनीय इति तदुपपादनार्थं विशेषणाभावात्मकबलवदनिष्टानुबन्धित्वकल्पनेति श्रुतेष्टसाध-नत्वाभावोपपत्तय इत्यादिग्रन्थस्य तात्पर्यम् । सत्यपि तात्कालिकेष्टाद्वस्तुतो भाविनरकानिष्टस्याधिक्ये रागान्धस्य तात्का-लिकसुखमेव ततोऽधिकमिति मोहान्निषिद्धाचरणं निषेधवाक्यप्रामाण्यं चोपपद्यते । ग्रन्थे गुरुतरादृष्टानिष्टसाधनत्वकल्पनो-क्तिः निन्दार्थवादरहितेषु निषेधवाक्येषु, निन्दार्थवादसत्त्वे तु ततएव तल्लाभः । हननादिषु निषेध्येषु तात्कालिकेष्टापे-क्षया भाव्यनिष्टस्य गुरुतरत्ववचनं निन्दार्थवादः, यागादिषु तात्कालिकक्लेशापेक्षया भाविन इष्टस्य गुरुतरत्ववचनं स्तुत्यर्थ-वाद इति हि वृद्धाः । **नच**—यागादीनां विधेयानां लिङादिना बलवदनिष्टाननुबन्धित्वबोधने स्तुत्यर्थवादवैयर्थ्यमिति—शङ्कनीयम्; तद्बोधनेऽपि इष्टानिष्टयोः साम्येन तुल्यायव्ययत्वशङ्कापरिहारेण स्तुत्यर्थवादसाफल्यादित्येषा दिक् । **ननु** निवृत्तिशब्देन प्रवृत्त्यभावः केन प्रकारेण व्याख्यातो भवतीत्याकाङ्क्षायां तेन लभ्यं विशेषमाह—**उद्यमक्रियाया इति** । प्रवृत्त्यभावमवबुध्येत्येतावताऽनादिसिद्धप्रवृत्तिप्रागभावबोधमात्रमुक्तं स्यात्, न तद्बोधमात्रान्निवर्तते, किंतु स्वज्ञोद्यमनादिरूपा

**दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति। तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः। तस्मात्पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम्। यदप्युक्तम्—कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात्, सप्तद्वीपा वसुमतीत्यादिवदिति, तत्परिहृतम्; रज्जुरियं नायं**

## भामती।

निवर्तते। औदासीन्यमात्मनोऽवस्थापयतीति यावत्। **स्यादेतत्**—अभावबुद्धिश्चेदौदासीन्यस्थापनकारणं यावदौदासीन्यमनुवर्तेत, नचानुवर्तते; नह्युदासीनोऽपि विषयान्तरव्यासक्तचित्तस्तदभावबुद्धिमान्। नचावस्थापककारणाभावे कार्यावस्थानं दृष्टम्। नहि स्तम्भावपाते प्रासादोऽवतिष्ठतेऽत आह—**सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति**। तावदेव खल्वयं प्रवृत्त्युन्मुखो न यावदस्यानर्थहेतुभावमधिगच्छति। अनर्थहेतुत्वाधिगमोऽस्य समूलोद्धारं प्रवृत्तिमुद्धृत्य दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति। **एतदुक्तं भवति**—यथा प्रासादावस्थानकारणं स्तम्भो नैवमौदासीन्यावस्थानकारणमभावबुद्धिः, अपित्वागन्तुकाद्विनाशहेतोस्त्राणेनावस्थानकारणम्। यथा कमठपृष्ठनिष्ठुरः कवचः शस्त्रप्रहारत्राणेन राजन्यजीवावस्थानहेतुः। नच कवचापगमे चासति च शस्त्रप्रहारे राजन्यजीवनाश इति। उपसंहरति—**तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेवेति**। औदासीन्यमजानतोऽप्यस्तीति प्रसक्तक्रियानिवृत्त्योपलक्ष्य विशिनष्टि। तत्किमक्रियार्थत्वेनानर्थक्यमाशङ्क्य क्रियार्थत्वोपवर्णनं जैमनीयमसमञ्जसमेवेत्युपसंहारव्याजेन परिहरति—**तस्मात्पुरुषार्थेति**। पुरुषार्थानुपयोग्युपाख्यानादिविषयावक्रियार्थतया क्रियार्थतया च पूर्वोत्तरपक्षौ, नतूपनिषद्विषयौ; उपनिषदां स्वयंपुरुषार्थब्रह्मरूपावगमपर्यवसानादित्यर्थः। यदप्यौपनिषदात्मज्ञानमपुरुषार्थं मन्यमानेनोक्तम्—**कर्तव्यविध्यनुप्रवेशमन्तरेणेति**। अत्र निगूढाभिसंधिः पूर्वोक्तं परिहारं स्मारयति—**तत्परिहृतमिति**। अत्राक्षेप्ता स्वो-

## वेदान्तकल्पतरुः।

भावमात्रमित्यर्थः। यथोक्ताभावबुद्धेरौदासीन्यस्थापकत्वेऽपि क्षणिकत्वात्तद्ध्वंसे हननोद्यमः स्याच्छश्वत्तत्संततौ च विषयान्तरज्ञानानुदयप्रसङ्ग इति शङ्कते—**स्यादेतदिति**। यथाग्निः पुनर्ज्वालोपजनननिदानमिन्धनं दहन्नुपशान्तोऽपि भवति भाविनीनां ज्वालानामुदयविरोधी, एवमभावबुद्धिः क्षणिकतया स्वयमेव शाम्यन्त्यपि हननाद्यहितोपायतानवबोधं दग्ध्वा तन्निदाना उपरितनीः प्रवृत्ती रुणद्धीति। भाष्यार्थमाह—**तावदेवेति**। नह्यभावबुद्धिरौदासीन्यस्यानादिनः स्थापनकारणं, येन तदभावे कारणाभावादिदं न भवेत्, अपित्वपवादनिरासिकेत्याह—**एतदुक्तमिति**। अनादित्वादौत्सर्गिकमौदासीन्यं। तत्रापवादनिवर्तकासन्निधावप्यौत्सर्गिकस्थेम्नि दृष्टान्तमाह—**यथेति**। **कमठः** कूर्मः। यदौदासीन्यं तत्प्रागभावरूपत्वादुक्तमपि न निवृत्तिहेतुः, ततः कर्तव्यत्वेन प्रसक्तक्रियाप्रतियोगिकनिवृत्तिरूपेण विशिष्टं निवृत्त्युपयोगि, यद्धन्यात्तन्नेति प्रसक्तक्रियानिवृत्तिरूपता चौदासीन्यस्य न; सर्वदा क्रियाप्रसङ्गाभावात्। अतः काकवदुपलक्षणम्। तादृश्या निवृत्त्योपलक्ष्यौदासीन्यं विशिनष्टि भाष्यकार इत्याह—**औदासीन्यमिति**। **ननु** केयं प्रसक्तक्रियानिवृत्तिः? न तावद्धननादिप्रागभावः; अनादित्वादेव तद्बोधनस्यानुपयोगात्। नापि तद्ध्वंसः; प्रसक्तक्रियाया अनुदयेन ध्वंसायोगात्, **उच्यते; 'हननोद्यतखड्गादेः परावर्तनमुच्यते। निवृत्तिरिति तस्मिन्हि हननं नभविष्यति'**॥ एषा च निवृत्तिः नञर्थबोधफला, नञर्थस्तु हननगतेष्टसाधनत्वाभाव एवेति। भाष्ये जैमिनीयमानर्थक्याभिधानं क्रियासंनिधिस्यार्थवादादिविषयमित्युक्तम्, तदाम्नायस्य क्रियार्थत्वादिति हेतोस्तद्बलेनाक्रियार्थानामप्रामाण्यपूर्वपक्षस्य विध्येकवाक्यत्वेन प्रामाण्यमिति सिद्धान्तस्य च तद्विषयत्वोपलक्षणार्थमित्याह—**पुरुषार्थानुपयोगीति**। स्वयं पुमर्थब्रह्मावगमपरत्वमुपनिषदामसिद्धमित्याशङ्क्य भाष्यव्या-

## कल्पतरुपरिमलः।

या हननोद्यमक्रिया तस्या उपरन्तव्यमिति कर्तव्यत्वेनानुसंधीयमाना या खड्गादिपरावर्तनक्रिया तदुपलक्षितत्वेन निवृत्तिरूपा। तत्र प्रवृत्त्यभावमवबुध्य निवर्तते निवृत्तिरूपापन्नप्रवृत्त्यभाववान्भवतीत्यर्थः। **यद्धन्यात्तन्नेतीति**। इदं वाक्यं प्रसक्तक्रियानिवृत्तिप्रतिपादकतया नोपात्तं; खड्गादिपरावर्तनरूपतया वक्ष्यमाणायाः प्रसक्तक्रियानिवृत्तेर्न हन्यादित्येतदर्थत्वाभावात्, किंतु निवृत्तिरूपा खड्गादिपरावर्त्यताबुद्धिः केन भवतीत्याकाङ्क्षायां न हन्यादित्येतदर्थभूतानिष्टसाधनत्वज्ञानेन भवतीत्येतदर्थप्रतिपादकतयोपात्तम्। **एषा चेति**। न हन्यादित्यनेन हननगतबलवदनिष्टानुबन्धित्वविशिष्टेष्ट-

१ न हन्यादित्यत्र हननाभावविषयकं कार्यमिति वा हननप्रागभावपरिपालनविषयकं कार्यमिति वा अभावकार्यत्वानुपपत्त्या लक्षणाप्रसङ्गेन च बोधासंभवेन लोकसिद्धेष्टसाधनत्वाबाधेन हनननिष्ठबलवदनिष्टाननुबन्धित्वाभावबोधस्यैवाङ्गीकरणीयतया कार्यपराणामेव वाक्यानां प्रामाण्यमिति नियमो न संभवदुक्तिकः। 'नातिरात्रे षोडशिनं गृह्णाती'त्यादिवाक्येषु तु इष्टसाधनत्वघटकनियमांशमात्रबाधान्निषेधवाक्यत्वोपपत्तिः। यथा व्रीहियवादिवाक्ये. **इति तु ब्रह्मविद्याभरणकाराः**।

सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्। ननु—श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम्, अत्रोच्यते—नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं, वेदप्रमाणजनितब्रह्मात्मभावविरोधात्। नहि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम्। नहि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति। नच कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति। तदुक्तं श्रुत्या—'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छान्दो० ८।१२।१) इति। शरीरे पतितेऽशरीरत्वं स्यात् न जीवत इति चेन्न; सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्। नह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वान्यतः सशरीरत्वं शक्यं कल्पयितुम्। नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम। तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेन्न; शरीरसंबन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः। शरीरसंबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य

## भामती।

क्रमर्थं स्मारयति—**ननु श्रुतब्रह्मणोऽपीति**। निगूढमभिसंधिं समाधातोद्घाटयति—**अत्रोच्यते—नावगतब्रह्मात्मभावस्येति**। **सत्यं**, न ब्रह्मज्ञानमात्रं सांसारिकधर्मनिवृत्तिकारणमपि तु साक्षात्कारपर्यन्तम्। ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः श्रवणमननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाभ्याससंस्कृतमनोयोनिः। स च निखिलप्रपञ्चमहेन्द्रजालसाक्षात्कारं समूलमुन्मूलयन्नात्मानमपि प्रपञ्चत्वाविशेषादुन्मूलयतीत्युपपादितमधस्तात्। तस्माद्रज्जुस्वरूपकथनतुल्यतैवात्रेति सिद्धम्। अत्रच वेदप्रमाणमूलतया वेदप्रमाणजनितेत्युक्तम्। अत्रैव सुखदुःखानुत्पादभेदेन निदर्शनद्वयमाह—**नहि धनिन इति**। श्रुतिमत्रोदाहरति—**तदुक्तमिति**। चोदयति—**शरीरे पतित इति**। परिहरति—**न**। **सशरीरत्वस्येति**। यदि वास्तवं सशरीरत्वं भवेन्न जीवतस्तन्निवर्तेत, मिथ्याज्ञाननिमित्तं तु तत्। तच्चोत्पन्नतत्त्वज्ञानेन जीवतापि शक्यं निवर्तयितुम्। यत्पुनरशरीरत्वं तदस्य स्वभाव इति न शक्यं निवर्तयितुं, स्वभावहानेन भावविनाशप्रसङ्गादित्याह—**नित्यमशरीरत्वमिति**। **स्यादेतत्**—न मिथ्याज्ञाननिमित्तं सशरीरत्वमपि तु धर्माधर्मनिमित्तं, तच्च स्वकारणधर्माधर्मनिवृत्तिमन्तरेण न निवर्तते, तन्निवृत्तौ च प्रयाणमेवेति न जीवतोऽशरीरत्वमिति शङ्कते—**तत्कृतेति**। तदित्यात्मानं परामृशति। निराकरोति—**न शरीरसंबन्धस्येति**। न तावदात्मा साक्षाद्धर्माधर्मौ कर्तुमर्हति, वाग्बुद्धिशरीरारम्भजनितौ हि तौ नासति शरीरसंबन्धे भवतः, ताभ्यां तु शरीरसंबन्धं रोचयमानो व्यक्तं परस्पराश्रयं दोषमावहति। तदिदमाह—**शरीरसंबन्धस्येति**। यद्युच्येत

## वेदान्तकल्पतरुः।

त्वयया परिहरति—**यदपीत्यादिना**। अवगतब्रह्मात्मभावस्येति भाष्येऽवगतिशब्दाभिप्रायमाह—**सत्यमिति**। साक्षात्कारस्य स्वरूपत्वान्न निवर्तकतेति, तत्राह—**ब्रह्मसाक्षात्कारश्चेति**। **आत्मानमपि** स्वसाक्षात्कारमपि **इतीति**। श्रवणादिसंस्कृतमनोजन्यश्चेत्साक्षात्कारः कथं तर्हि वेदप्रमाणजनितेति भाष्यमत आह—**अत्रचेति**। अशरीरत्वं देहपातोत्तरकालमिति शङ्कायां सशरीरत्वस्य निमित्तवर्णनमयुक्तमित्याशङ्क्याह—**यदीति**। यदि सशरीरत्वं मिथ्यात्वाज्जीवत एव ज्ञानेन निवर्त्यं, तर्ह्यशरीरत्वमप्यभावत्वात्तथेत्याशङ्क्य न तत्त्वतः शरीरसंबन्धोऽभावोपलक्षितस्यातथात्वादित्याह—**यत्पुनरिति**। भाष्ये तच्छब्देन नह्यात्मन इति प्रस्तुतात्मपरामर्श इत्याह—**तदितीति**। शरीरसंबन्धस्येत्यायसिद्धेरित्यन्तं भाष्यं व्याचष्टे—**न तावदिति**। 'शरीरसंबन्धस्य धर्माधर्मयोरि'त्यादि 'प्रसङ्गा'दित्यन्तं भाष्यं विवृणोति—**ताभ्यां त्विति**। आत्मनि स्वतोऽसिद्धाभ्यां धर्माधर्माभ्यां जन्यशरीरसंबन्धं प्रति प्रीयमाणे वादिनि सिद्धे शरीरसंबन्धे धर्मादिसंबन्धः तत्सिद्धौ शरीरादिसंबन्ध इति परस्पराश्रयं स्वपक्षे प्रापयतीत्यर्थः। धर्माधर्मव्यक्त्योः शरीरसंबन्धव्यक्तेश्चेतरेतरहेतुकत्वे यद्यपीतरेतराश्रयः; तथापि न दोषोऽनादित्वादिति सत्कार्यवादी शङ्कते—**यद्युच्येतेति**। तत्र

## कल्पतरुपरिमलः।

साधनलाभावावगतिः, ततो बलवदनिष्टानुबन्धित्वकल्पनं तेनोद्यतं खड्गादिकं परावर्तनीयमिति बुद्धिः, ततस्तत्परावर्तनवैशिष्ट्येन लब्धपरिपालनतया निवृत्तिरूपापन्नौदासीन्यप्राप्तिरिति क्रमः॥ **अभावत्वात्तथेति**। अभावो हि ब्रह्मस्वरूपे नान्तर्भवति; अतः प्रपञ्चान्तःपातित्वान्मिथ्येत्यर्थः। **अतथात्वात्** अशरीरत्वरूपत्वात्। **अनादित्वादिति**। **सत्कार्यवादी शङ्कत इति**। उभयोः सादित्वे खलु परस्परहेतुहेतुमद्भावाधीनः परस्पराश्रयः प्रसज्यते, उभयोरनादित्वे तदभावाद्

चेतरेतराश्रयत्वप्रसङ्गादन्धपरंपरैषानादित्वकल्पना । क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः । संनिधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न; धनदानाद्युपार्जितभृत्यसंबन्धित्वात्तेषां कर्तृत्वोपपत्तेः, नत्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिसंबन्धनिमित्तं किंचिच्छक्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षः संबन्धहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् । अत्राहुः—देहादिव्यतिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति चेन्न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य । तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्माद्रजतमिदमिति निश्चितौ शब्दप्रत्ययौ तद्वद्देहादिसंघातेऽहमिति निरुपचारेण शब्दप्रत्यया-

## भामती ।

सत्यमस्ति परस्पराश्रयः, नत्वेष दोषोऽनादित्वाद्बीजाङ्कुरवदित्यत आह—**अन्धपरंपरैषानादित्वकल्पना** । यस्तु मन्यते नेयमन्धपरंपरातुल्यानादिता । नहि यतो धर्माधर्मभेदादात्मशरीरसंबन्धभेदस्तत एव स धर्माधर्मभेदः किंत्वेष पूर्वस्मादात्मशरीरसंबन्धात्पूर्वधर्माधर्मभेदजन्मनः, एष त्वात्मशरीरसंबन्धोऽस्माद्धर्माधर्मभेदादिति, तं प्रत्याह—**क्रियासमवायाभावादिति** । शङ्कते—**संनिधानमात्रेणेति** । परिहरति—**नेति** । **उपार्जनं** स्वीकरणम् । न त्वियं विधात्मनीत्याह—**नत्वात्मन इति** । ये तु देहादावात्माभिमानो न मिथ्या, अपितु गौणः, माणवकादाविव सिंहाभिमान इति मन्यन्ते, तन्मतमुपन्यस्य दूषयति—**अत्राहुरिति** । **प्रसिद्धो वस्तुभेदो यस्य** पुरुषस्य स तथोक्तः । उपपादितं चैतदस्माभिरध्यासभाष्य इति नेहोपपाद्यते । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे वस्तुनि पुरुषात् सांशयिकौ पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, तत्र हि पुरुषत्वमनियतमपि समारोपितमेव । एवं संशये समारोपितमनिश्चितमुदाहृत्य विपर्ययज्ञाने निश्चितमुदाहरति—**यथावा शुक्तिकायामिति** । **शुक्लभास्वरस्य** द्रव्यस्य पुरःस्थितस्य सति शुक्तिकारजतसाधारण्ये यावदत्र रजतविनिश्चयो भवति तावत्कस्माच्छुक्तिविनिश्चय

## वेदान्तकल्पतरुः ।

नित्यसत्योर्व्यक्त्योर्न हेतुहेतुमत्ता, अभिव्यक्त्योस्तु कादाचित्क्योरितरेतराधीनत्वे एकस्य अप्रसिद्धेरन्धपरंपरातुल्यानादित्वकल्पना स्यादित्याह—**अन्धपरम्परेति** । सत्कार्यवादी व्यक्तिभेदेनेतरेतराश्रयं परिहरतीत्याह—**यस्त्विति** । **किं त्वेष इति** । इदानीन्तनशरीरसंबन्धहेतुरित्यर्थः । पूर्वं एवात्मशरीरसंबन्धो विशेष्यते—**पूर्वधर्माधर्मभेदजन्मन इति** । पूर्वाभ्यां धर्माधर्मविशेषाभ्यां जन्म यस्य स तथोक्तः । **एष त्विति** । वर्तमान इत्यर्थः । आत्मन्यध्यासप्रस्तावोक्तयुक्तिभिर्नैकोपि क्रियासंबन्धः, कथमनन्तव्यक्तिसंभव इति परिहरतीत्याह—**तं प्रत्याहेति** । देहात्मसंबन्धहेतुर्मिथ्याभिमानः प्रत्यक्ष इत्युक्तम्, तदाक्षिप्य समाधत्ते—**ये त्विति** । अप्रसिद्धवस्तुभेदस्यान्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्ताविति प्रतिज्ञाय संशयनिमित्तशब्दप्रत्ययोदाहरणं भाष्येऽनुपपन्नमित्याशङ्क्य भ्रान्तिशब्देन समारोप उक्तः । अस्ति च संशयस्यापि समारोपत्वमित्याह—**तत्रहि पुरुषत्वमिति** । भ्रान्तेरप्युचितनिमित्तापेक्षणादकस्मादित्ययुक्तमित्याशङ्क्याह—**शुक्लभास्वरस्येति** । साधारणधर्मिणी दृष्टे किं तन्मात्रं विपर्ययकारणमुत सादृश्यादिदोषमिलितम् । **नाद्यः**; धवलभास्वररूपस्य शुक्तिरजतसाधारण्ये सति व्यवहितरजतनिश्चयात् प्रागेव संनिहितशुक्तिनिश्चयप्रसङ्गादित्यभिधाय **द्वितीयं** दूषयति

## कल्पतरुपरिमलः ।

न परस्पराश्रयप्रसक्तिरित्यर्थः । **टीकायां**—यस्तु मन्यत इत्यग्रिमग्रन्थेनासत्कार्यवादमवलम्ब्य प्रवाहानादित्वशङ्कायाः करिष्यमाणत्वात् इयं शङ्का सत्कार्यवादावलम्बस्वरूपाऽनादित्वविषया योजिता । **अन्धपरम्परेति** । स्वरूपनित्यत्वपक्षेऽपि अभिव्यक्त्योरनित्ययोः परस्परहेतुहेतुमद्भावेन तत्कृतपरस्पराश्रयानपायाद् उत्पत्तिस्थानीयां कादाचित्कीमभिव्यक्तिमङ्गीकृत्यापि स्वरूपनित्यत्वकल्पनेयमन्धपरम्पराऽप्राप्तपटशौक्ल्योपदेशवदप्रामाणिकीत्यर्थः । **संशयनिमित्तेति** । संशयशब्देन विशेषादर्शनादिसंशयकारणकलापो विवक्षितः; संशयस्य प्रत्ययशब्देन तत्कार्यतया ग्रहणात्, संशयशब्दस्य मुख्यार्थत्वे तु संशयमूलकशब्दप्रयोगजन्यप्रत्ययान्तरपरः प्रत्ययशब्दो योज्यः । **उचितनिमित्तापेक्षणादिति** । करणदोषादिबहुनिमित्तापेक्षणादित्यर्थः । **साधारणधर्मिणि दृष्टे इति** । धवलभास्वरवर्णरूपसादृश्यविशिष्टे धर्मिणि दृष्टे । किं सादृश्यविशिष्टधर्मिज्ञानमात्रं विपर्ययकारणम् ? उत सादृश्येनेव अन्यैश्च दोषैर्मिलितमित्यर्थः । **द्वितीयं दूषयतीति** । सादृश्यवद्दोषस्यापि प्रवेशितत्वात् । यद्यपि शुक्तिप्रमा न भवति, दोषस्य प्रमाप्रतिबन्धकत्वात्; तथापि संशयः किं न स्यात् ? तस्यापि

वात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम् । आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः । तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः । तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य, सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथाच ब्रह्मविद्विषया श्रुतिः—'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' ( बृह० ४।४।७ ) इति । 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च—'स्थितप्रज्ञस्य का भाषा' ( भ० गी० २।५४ ) इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्म-

## भामती ।

एव न भवति । संशयो वा द्वेधा युक्तः; समानधर्मधर्मिणोर्दर्शनात् उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषद्वयस्मृतेश्च । संस्कारोन्मेषहेतोः सादृश्यस्य द्विष्ठत्वेनोभयत्र तुल्यमेतदित्यत उक्तम्—**अकस्मादिति** । अनेन दृष्टस्य हेतोः समानत्वेऽप्यदृष्टं हेतुरुक्तः । तच्च कार्यदर्शनोन्नेयत्वेनासाधारणमिति भावः । **आत्मानात्मविवेकिनामिति** । श्रवणमननकुशलतामात्रेण पण्डितानाम्; अनुत्पन्नतत्त्वसाक्षात्काराणामिति यावत् । **तदुक्तम्**—'पश्वादिभिश्चाविशेषात्' इति । शेषमतिरोहितार्थम् । जीवतो विदुषोऽशरीरत्वे च श्रुतिस्मृती उदाहरति—**तथाचेति** । सुबोधम् । प्रकृतमुपसंहरति—**तस्मान्नावगतब्रह्मात्मभावस्येति** । **ननूक्तं** यदि जीवस्य ब्रह्मात्मत्वावगतिरेव सांसारिकधर्मनिवृत्तिहेतुः, हन्त

## वेदान्तकल्पतरुः ।

—**संशयो वेति** । समानो धर्मोऽस्य स तथोक्तः । दृष्टेऽपि साधारणे धर्मिणि निश्चयः स्याद्यद्यन्यतरकोटिनिर्णायकं प्रमाणं स्यात्, स्थाणुत्वइव शाखादिदर्शनं, बाधकं वा प्रमाणं कोट्यन्तरमुपलभ्येत, यथा तत्रैव पुरुषत्वविपरीते निश्चेष्टत्वादि, नैवमिहेत्याह—**उपलब्धीति** । उपलब्धिः साधकं प्रमाणम्, अनुपलब्धिर्बाधकं तयोरभावोऽत्राव्यवस्था । ततः संशयो वा युक्त इत्यधस्तनेनान्वयः । **ननु** विशेषद्वयस्मृतौ संशयः, इह तु रजतमेव स्मृतमिति विपर्यय एवेति, तत्राह—**विशेषद्वयेति** । अत्र हेतुमाह—**संस्कारेति** । इतिशब्दो हेतौ । उद्बुद्धः संस्कारो हि स्मृतिहेतुः तदुद्बोधहेतुश्च सादृश्यम्, तस्य द्विष्ठत्वेन शुक्तिरजतोभयनिष्ठत्वेन हेतुनोभयत्रैतत्सादृश्यं तुल्यमिति यतोऽतः संशय एव युक्तः । नच रागाद्विपर्ययः; विरक्तस्यापि शुक्तौ रजतभ्रमादिति । **एषात्र संशयसामग्र्यक्षपादेन वर्णिता— "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय"** इति । **समानधर्मः** साधारणधर्मः । अनेकस्माद्व्यावृत्तो साधारणोऽनेकधर्मः । एवमिह विपर्ययनियामकं दृष्टं नास्तीत्युपपाद्याकस्माच्छब्द एवमभिप्राय इत्याह—**अत इति** । कथं तर्हि दृश्यमानविपर्ययनियमः ? तत्राह—**अनेनेति** । दृष्टं हेतुं प्रतिषिध्य कार्यनियमं प्रतिजानता भाष्यकारेणादृष्टं कर्म हेतुत्वेनार्थादुक्तमिति । **ननु** तदपि समं किं न स्यात् ? तत्राह—**तच्चेति** । **श्रुतिस्मृतीरिति** । श्रुतिं स्मृतिं चेत्यर्थः । साक्षात्कारो हि दृष्टं फलं तादर्थ्यं मननादेर्वदन्भाष्यकारो विधिं न मृष्यत

## कल्पतरुपरिमलः ।

भ्रान्तिवद्दोषजन्यत्वादिति दूषयतीत्यर्थः । समानधर्मधर्मिण इति विशेषणं व्याचष्टे—**समानो धर्मो यस्येति** । **नच रागादिति** । रागः संशयव्यावृत्तो भ्रान्त्येकपक्षपाती दोष इति भावः । **समानानेकधर्मेति** । अत्राव्यवस्थात इत्येतदन्तेन सूत्रांशेन त्रिविधा संशयसामग्री वर्णिता । विशेषापेक्ष इत्यनेनान्यतरविशेषावधारणात्मकत्वमुक्तम् । तेन **विशेषापेक्षो विमर्श** ( गौतमसू. अ. १ आ.१ सू. २३ ) इति सूत्रांशेनानवधारणज्ञानं संशय इति तल्लक्षणं दर्शितम् । **अनेकस्माद्व्यावृत्त इति** । अनेकशब्दस्य धर्मपदेन समासे शाकपार्थिवादिवन्मध्यमपदलोपेनानेकस्मात् सजातीयविजातीयाद्व्यावृत्तोऽसाधारणो धर्म इत्यर्थेनैकधर्मलाभ इति भावः । **कार्यनियमं प्रतिजानानेनेति** पाठः साधुः; "संप्रतिभ्यामनाध्याने" इत्युत्कण्ठापूर्वकस्मरणरूपाध्यानव्यतिरिक्तार्थे संप्रतिपूर्वाद् जानातेरात्मनेपदविधानात् । **प्रतिजानतेति** पाठस्तु कथंचिदाध्यानार्थविवक्षया समर्थनीयः । **तत्रेति** । **ननु**—अनुष्ठितस्य फलादर्शनं जन्मान्तरकृतकर्मणः फलजनकत्वं च तद्विधिव्याप्तमिति शङ्कितुर्नाभिप्रायः, येन तद्व्याप्तिभञ्जनतः परिह्रियेत, किंत्वन्वयव्यतिरेकव्यभिचाराल्लोकतः कारणत्वं ग्रहीतुं न शक्यम्; अतो विधिबोध्यकारणत्वमङ्गीकृत्य तन्निर्वाहार्थं फलप्रतिबन्धकदुरितनिवृत्त्यादिवैकल्यकल्पनयान्वयव्यभिचारो जन्मान्तरकृतश्रवणादिकल्पनया व्यतिरेकव्यभिचारश्च परिहरणीय इत्यभिप्रायः । नच विध्यभावे केवलमुदाहृतदृष्टान्तद्वयेनायं व्यभिचारः परिहृतो भवति; श्रुतवैशेषिकादिशास्त्राणां केषांचिदवबोधानुत्पत्तौ हि मतिमान्द्यालस्यानभ्यासादिरूपकारणवैकल्यं स्पष्टं दृष्टमस्ति, शब्दमात्रस्य शाब्दप्रमाजनकत्वं चान्यत्र सामान्यतः सिद्धमस्ति,

**भाव इत्यनवद्यम् । यत्पुनरुक्तं श्रवणात्पराचीनयोर्मननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति । न; अवगत्यर्थत्वान्मनननिदिध्यासनयोः । यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम् । नतु तदस्ति; मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव**

## भामती ।

मननादिविधानानर्थक्यं, तस्मात्प्रतिपत्तिविधिपरा वेदान्ता इति, तदनुभाष्य दूषयति—**यत्पुनरुक्तं श्रवणात्पराचीनयोरिति** । मनननिदिध्यासनयोरपि न विधिः, तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोर्विधिसरूपैर्वचनैरनुवादात् । **तदिदमुक्तम्—अवगत्यर्थत्वादिति** । ब्रह्मसाक्षात्कारोऽवगतिस्तदर्थत्वं मनननिदिध्यासनयोरन्वयव्यतिरेकसिद्धमित्यर्थः । अथ कस्मान्मननादिविधिरेव न भवतीत्यत आह—**यदि ह्यवगतमिति** । न तावन्मनननिदिध्यासने प्रधानकर्मणि अपूर्वविषये अमृतत्वफले इत्युक्तमधस्तात् । अतो गुणकर्मत्वमनयोरवघातप्रोक्षणादिवत्परिशिष्यते, तदप्ययुक्तं; अन्यत्रोपयुक्तोपयोक्ष्यमाणत्वाभावादात्मनः, विशेषतस्त्वौपनिषदस्य कर्मानुष्ठानविरोधादित्यर्थः । प्रकृतमुपसंहरति—**तस्मादिति** । एवं सिद्धरूपब्रह्मपरत्वमुपनिषदाम् । ब्रह्मणः शास्त्रार्थस्य धर्मादन्यत्वाद्भिन्नविषयत्वेन शास्त्रभेदात्

## वेदान्तकल्पतरुः ।

इत्याह—**तदिदमिति । अत्रैके वदन्ति**—नह्यष्टाश्रवणादेरवगत्युपायता; कृतश्रवणादीनामपि केषांचिदिह साक्षात्कारासमुन्मेषात्, तात्कालिकश्रवणादिविधुरवामदेवादेरप्यपरोक्षज्ञानसमुदयाच्च । जन्मान्तरकृतस्य च विधिमन्तरेण साधनभावानवकल्पनात्, श्रवणादिविध्यनभ्युपगमे च तद्विध्युररीकारप्रवृत्तप्रथमसूत्रतद्भाष्यकदर्थनादयुक्तस्तदनभ्युपगमः—**इति ॥ तत्र न** तावदनुष्ठितसाधनस्येह फलादर्शनं तद्विधिव्याप्तम्; अनवरतं वैशेषिकाद्यसच्छास्त्रश्राविणामप्यपटुमतीनां केषांचित्तच्छास्त्रार्थानवबोधदर्शनेऽपि तच्छ्रवणविध्यभावात् । नापि भवान्तरकृतकर्मण इह फलजनकता तद्विधिव्याप्ता; जातिस्मरस्य प्राचि भवे धनमुपार्ज्य भुवि निखन्य प्रमीतस्येह जन्मनि तदादाय भोगान्भुञ्जानस्यापि प्राग्भवीयधनोपार्जनायाः संप्रतितनफलार्थमविहिताया अपि हेतुभावोपलम्भात् । प्रथमसूत्रं तु शास्त्रीयविषयफलनिरूपकं न विधिविचारपरमिति । **किंच प्राधान्यं श्रवणादेर्न भवतामपि संमतम् । गुणकर्मत्वमत्रैव भाष्यकृद्भिर्निजुह्नुवे ॥ 'यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येतेत्यादिनेति' । इत्युक्तमधस्तादिति** । गान्धर्वशास्त्राभ्यासवदपूर्वानपेक्षया साक्षात्कारहेतुतोक्तेत्यर्थः । **गुणकर्म** ह्युपयोक्ष्यमाणशेषः; यथाऽवघातादि, उपयुक्तशेषो वा; यथा कृतप्रयोजनप्रयाजशेषाज्यस्य हविष्षु क्षारणं 'प्रयाजशेषेण हवींष्यभिघारयेदिति' विहितम् । तदिहात्मन उपयुक्तोपयोक्ष्यमाणत्वाभावान्न तद्विषयं मननादि गुणकर्मेत्याह—**तदपीति** । नच श्रवणादिसंस्कृतस्यात्मनः साक्षात्कारजन्मन्यस्तूपयोग इति श्रवणादिगुणकर्मत्वसिद्धिः;

## कल्पतरुपरिमलः ।

अतस्तत्रान्वयव्यभिचारस्य प्राक्सिद्धकारणत्वाविरोधित्वेऽप्यत्र बहुशः कृतश्रवणमनननानां सम्यक्सकलवेदान्तार्थनिर्णयवतां साक्षात्कारानुदयः किंचिद्दृष्टकारणवैकल्यप्रयुक्तत्वेनादृश्यमानः कथं प्रागसिद्धस्य साक्षात्कारे शब्दप्रमाणकारणत्वस्य ग्रहणे विरोधी न स्यात् ? जन्मान्तरोपार्जितनिधिखननेनोपभोगे च पूर्वानुभूतस्मरणं दृष्टं कारणं सिद्धमस्ति; अतस्तत्र व्यतिरेकव्यभिचारसमाधानसंभवेऽप्यत्र जन्मान्तरकृतश्रवणादेरन्यतः सिद्ध्यभावेन तत्कल्पकस्य विधेरप्यभावे जाग्रद्व्यतिरेकव्यभिचारश्च कथं कारणत्वग्रहविरोधी न स्यात् ? तस्माद्विधिव्यभिचारोद्भावनं कृतशङ्कापरिहारानुपयुक्तमयुक्तम् । **तथा प्राधान्यं श्रवणादेर्न भवतामपि संमत**मित्येतदप्ययुक्तम्; अर्थज्ञानफलकाध्ययनविधेरिव साक्षात्कारफलश्रवणविधेरपि प्रधानकर्मत्वस्यैव प्राप्तेरिति—**चेद्**, उभयतो व्यभिचारेण श्रवणस्य साक्षात्कारकारणत्वं लोकत इव बाधेन विधितोऽपि ग्रहीतुं न शक्यमिति प्रागेव शब्दापरोक्षनिराकरणेनोक्तप्रायम् । अतो विधिना कारणत्वं निश्चित्य व्यभिचारः परिहरणीय इति शङ्कितुरभिप्रायो न संभवतीत्यभिप्रेत्य यद्यनयोक्तिभङ्ग्या विधिव्याप्तिराशङ्किता तदेदमपि दूषणान्तरमिति विधिव्याप्तौ व्यभिचार उपन्यस्तः । अथ यदि श्रवणस्य प्रधानकर्मत्वेऽर्थबाधात् तत्परित्यज्य श्रवणादिनिर्णीतमात्मतत्त्वमैन्द्रियकस्वसाक्षात्कारोत्पादनसमर्थं भवति; 'लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् । मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम् ॥ घृष्टं सदात्मनः स्वच्छां छायां यन्निकषोपले । स्फुटं प्रदर्शयेदेतद्वैडूर्यं जात्यमुच्यते ॥' इत्यादिशास्त्रोक्तपरीक्षाप्रकारनिर्णीतमिव रत्नतत्त्वम् इत्युपयोक्ष्यमाणसंस्कारतया गुणकर्मत्वमिष्यते, तदा न चेत्यादिना दूषणमुक्तमिति न किंचिदनुपपन्नम् । **ननु** प्रयाजशेषवाक्यस्य 'प्रयाजशेषं हविष्षु क्षारये'दि त्यर्थकल्पनं न युक्तम्; क्षारणेन प्रतिपाद्यतया प्रयाजशेषस्य शेषितायाः क्षारणदेशतया हविषां शेषतायाश्च प्रसङ्गात्, नैतद्युक्तम्; तथासति हि चात्वाले कृष्णविषाणं प्रास्यतीतिवद् हविष्षु प्रयाजशेषे च सप्तमीद्वितीये स्याताम्, इह तु द्वितीयया हविषां संस्कार्यत्वेन प्राधान्यं, तृतीयया प्रयाजशेषस्य तत्संस्कारार्थद्रव्यत्वेन शेषत्वं च प्रतीयत इत्याशङ्क्य विशेषयति—**कृतप्रयोजनेति** । निर्वृत्तप्रयोजनस्य हि शेषः प्रतिपत्तिमपेक्षते, करि-

ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवंच सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत— अथातः परिशिष्टधर्मजिज्ञासेति, 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' ( जै० ४।१।१ ) इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः—'अथातो ब्रह्मजिज्ञासा' इति । तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । नह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपिचाहुः—'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् । सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥ अन्वेष्टव्यात्मविज्ञानात्प्राक्प्र-

## भामती ।

'अथातोब्रह्मजिज्ञासा' इत्यस्य शास्त्रारम्भत्वमुपपद्यत इत्याह—**एवंच सतीति**। इतरथा तु धर्मजिज्ञासैवेति न शास्त्रान्तरमिति न शास्त्रारम्भत्वं स्यादित्यत आह—**प्रतिपत्तिविधिपरत्व इति** । न केवलं सिद्धरूपत्वाद्ब्रह्मात्मैक्यस्य धर्मादन्यत्वमपितु तद्विरोधादपीत्युपसंहारव्याजेनाह—**तस्मादहं ब्रह्मास्मीति** । इतिकरणेन ज्ञानं परामृशति । विधयो हि धर्मे प्रमाणम् । ते च साध्यसाधनेतिकर्तव्यताभेदाधिष्ठाना धर्मोत्पादिनश्च तदधिष्ठाना न ब्रह्मात्मैक्ये सति प्रभवन्ति, विरोधादित्यर्थः । **न** केवलं धर्मप्रमाणस्य शास्त्रस्येयं गतिः, अपितु सर्वेषां प्रमाणानामित्याह—**सर्वाणि चेतराणि प्रमाणानीति** । कुतः? **नहि** । अद्वैते हि विषयविषयिभावो नास्ति । नच कर्तृत्वं; कार्याभावात् । नच करणत्वं अतएव । **तदिदमुक्तम्—अप्रमातृकाणि च** । इति चकारेण । अत्रैव ब्रह्मविदां गाथामुदाहरति—**अपिचाहुरिति** । पुत्रदारादिष्वात्माभिमानो गौणः । यथा स्वदुःखेन दुःखी यथा स्वसुखेन सुखी तथा पुत्रादिगतेनापीति सोऽयं गुणः । नत्वेकत्वाभिमानः, भेदस्यानुभवसिद्धत्वात् । तस्माद्गौर्वाहीक इतिवद्गौणः । देहेन्द्रियादिषु त्वभेदानुभवान्न गौण आत्माभिमानः, किंतु शुक्तौ रजतज्ञानवन्मिथ्या । तदेवं द्विविधोऽयमात्माभिमानो लोकयात्रां वहति । तदसत्त्वे तु न लोकयात्रा नापि ब्रह्मात्मैकत्वानुभवः, तदुपायस्य श्रवणमननादेरभावात् । तदिदमाह—**पुत्रदेहादिबाधनात्** । गौणात्मनोऽसत्त्वे पुत्रकलत्रादिबाधनम् । ममकाराभाव इति यावत् । मिथ्यात्मनोऽसत्त्वे देहेन्द्रियादिबाधनं श्रवणादिबाधनं च । ततश्च न केवलं लोकयात्रासमुच्छेदः सद्ब्रह्माहमित्येवंबोधशीलं यत्कार्यम् । अद्वैतसाक्षात्कार इति यावत् । तदपि **कथं भवेत्** । कुतस्तदसंभव इत्यत आह—**अन्वेष्टव्यात्मविज्ञानात्प्रा-**

## वेदान्तकल्पतरुः ।

अपूर्वोपयोगिन एव गुणकर्मत्वाद्, दृष्टे तु साक्षात्कारेऽपूर्वाभावेन तदयोगादिति । **ननु** बाह्यक्रियाविधिः प्रथमकाण्डे गतो मानसज्ञानविधिविचाराय पृथगारंभ इति शङ्कापोहार्थ**मारभ्यमाणं चेति भाष्यम्** ॥ अहं ब्रह्मास्मीति वाक्यस्य तदर्थस्य चेतरप्रमाणावसानत्वमयुक्तं; नित्यनिवृत्तिप्रसङ्गादित्याशङ्क्य ज्ञानपर इतिशब्द इत्याह—**इतिकरणेनेति** । विधीनामद्वैतज्ञानविरोधं दर्शयति—**विधयो हीति** । त्र्यंशा भावना हि धर्मः । तद्विषया विधयः साध्यादिभेदाधिष्ठानास्तद्विषयाः । अपि चैतेऽनुष्ठेयं धर्ममुपदिशन्तस्तदुत्पादिनः पुरुषेण तमनुष्ठापयन्तीति साध्यधर्माधिष्ठानास्ततप्रमाणानीति यावत्, अतो नित्यसिद्धाद्वैतब्रह्मावगमे तेषां विरोध इत्याह—**धर्मोत्पादिन इति** । **नहीति** । हेतुभाष्यस्य प्रतीकोपादानम् । नहीत्यादिनिर्विषयाणीत्यन्तं भाष्यं व्याख्याति—**अद्वैते हीति** । विषयनिषेधो वाक्यार्थभेदः साध्यसाधनादिपदार्थभेदस्तम्भावर्थभेदश्चाद्वैतावगतौ न भवतीति भाष्यार्थः । अप्रमातृकाणीत्येतद्व्याचष्टे—**नच कर्तृत्वमिति** । ज्ञानकर्तृत्वमित्यर्थः । निर्विषयाण्यप्रमातृकाणीति बहुव्रीही विशेषणपरौ । तथा सति हि विषयप्रमातृनिषेधयोर्हेतुत्वसिद्धिः । भाष्ये चकारः करणनिषेधार्थ इत्याह—**तदिदमिति** । भाष्यस्थप्रमाणशब्दो भावसाधनत्वेन ज्ञानवाची ततश्चकारेण करणनिषेधः । पुत्रादावहमित्यभिमानो गौणात्मा चेत्तर्हि मुख्यात्मना किं गुणसाम्यमत आह—**यथेति** । वाहीको नाम देशविशेषस्तन्निवासी तच्छब्दोक्तः । पुत्रादेरुपकारकत्वारोपाय आत्माभिमानस्तस्मिन्निवृत्ते ममत्वबाधनेत्याह —**गौणात्मन इति** । श्रवणादिप्रमाणबाधमुक्त्वा प्रमित्यभावमाह—**न केवलमिति** । बोधीतीनन्तपाठो व्याख्यातः । सप्तम्यन्तस्तु निगदव्याख्यातः ।

## कल्पतरुपरिमलः ।

ध्यमाणाज्यभागार्थग्राह्यमाज्यं प्रयाजशेषाज्येनासंसर्गसिद्धौ तस्य क्वचित् क्षारणमपेक्षते । तस्मादपेक्षितप्रतिपत्त्यर्थत्वमेव युक्तं, नत्वनपेक्षितहविःसंस्कारार्थत्वम् । एवंच क्षारणस्य दृष्टार्थत्वमपहायाऽदृष्टार्थत्वस्वीकारश्च परिहृतो भवति । प्रयाजेषु विनियुक्तस्य पुनः क्षारणे विनियोग इति विनियुक्तविनियोगविरोधोपि परिहृतो भवति । तस्माद् द्वितीयातृतीययोः सप्तमीद्वितीयार्थतैव युक्तेति भावः ॥ **अपूर्वेति** । अदृष्टपर्यवसायिन एव गुणकर्मणो विध्यपेक्षणात् श्रवणादेस्तु दृष्टद्वारेणैव साक्षात्कारोपयोगित्वाद् नादृष्टानुप्रवेशोऽस्तीति न तत्राप्राप्तार्थविषयविध्यपेक्षेत्यर्थः । **त्र्यंशा भावना हि धर्म इति** । कौमा-

**मातृत्वमात्मनः । अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥ देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्' इति ॥४॥ इति भाष्ये चतुःसूत्री समाप्ता ॥**

### भामती ।

**कप्रमातृत्वमात्मनः** । उपलक्षणं चैतत् । प्रमाप्रमेयप्रमाणविभाग इत्यपि द्रष्टव्यम् । **एतदुक्तं भवति**—एष हि विभागोऽद्वैतसाक्षात्कारकारणं, ततो नियमेन प्रागभावात् । तेन तदभावे कार्यं नोत्पद्यत इति । नच प्रमातुरात्मनोऽन्वेष्टव्य आत्मान्य इत्याह—**अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः** । उक्तं ग्रीवास्थग्रैवेयकनिदर्शनम् । **स्यादेतत्**—अप्रमाणात्कथं पारमार्थिकाद्वैतानुभवोत्पत्तिरित्यत आह—**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं तु** । अस्यावधिमाह—**आऽऽत्मनिश्चयात्** । आ ब्रह्मस्वरूपसाक्षात्कारादित्यर्थः । **एतदुक्तं भवति**—पारमार्थिकप्रपञ्चवादिभिरपि देहादिष्वात्माभिमानो मिथ्येति वक्तव्यं; प्रमाणबाधितत्वात्, तस्य च समस्तप्रमाणकारणत्वं भाविकलोकयात्रावाहित्वं चाभ्युपेयम् । सेयमस्माकमप्यद्वैतसाक्षात्कारे विधा भविष्यति । नचायमद्वैतसाक्षात्कारोऽप्यन्तःकरणवृत्तिभेद एकान्ततः परमार्थः । यस्तु साक्षात्कारो भाविकः, नासौ कार्यः; तस्य ब्रह्मस्वरूपत्वात् । अविद्या तु यद्यविद्यामुच्छिद्याजनयेद्वा, न तत्र काचिदनुपपत्तिः । **तथाच श्रुतिः**—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥' इति । **तस्मात्सर्वमवदातम्** ॥ ४ ॥

**इति भामत्यां चतुःसूत्री समाप्ता ॥**

### वेदान्तकल्पतरुः ।

नियतप्राक्सत्त्वं हि कारणत्वं, प्रमात्रादिश्च ज्ञानकरणं तस्मिन् सकृदुदिततत्त्वसाक्षात्कारान्निवृत्ते नोर्ध्वं ज्ञानानुवृत्तिरित्यर्थपरत्वेन प्रथमार्धं व्याख्याय प्रमातृलये फलिनोऽभावाद् मोक्षस्यापुमर्थतेति शङ्कां द्वितीयार्धव्याख्यया निरस्यति—**नच प्रमातुरिति** । अन्वेष्टव्यः परमात्माऽन्वेष्टुः प्रमातृत्वोपलक्षिताच्चिदेकरसान्न भिन्नस्ततोऽध्यस्तप्रमातृत्वबाधेऽप्युपलक्षित आत्मैव पापदोषादिरहितोऽन्विष्टो विदितः स्यादतो नोक्तदोष इत्यर्थः । **ननु** यद्यन्वेष्टुरात्मभूतं ब्रह्म, किमिति तर्हि संसारे न चकास्ति ? तत्राह—**उक्तमिति** । प्रमात्रादेस्तत्त्वज्ञानहेतुतां सिद्धवत्कृत्य ज्ञानात्तन्निवृत्तौ हेत्वभावात्फलाभाव उक्तः । स न बाध्यस्य प्रमात्रादेः प्रमानुत्पादकत्वापाताद् इति शङ्कोत्तरत्वेन तृतीयश्लोकं व्याख्याति—**स्यादेतदिति** । यदलीकं तन्न प्रमाहेतुरिति व्याप्तिं प्रशिथिलयति—**एतदुक्तमिति** । य उत्पद्यतेऽनुभवो न स पारमार्थिको यः पारमार्थिको न स उत्पद्यतेऽतश्चाप्रमाणात्कथं पारमार्थिकानुभवोत्पत्तिरित्ययमिष्टप्रसङ्ग इत्याह—**नचायमिति** । वृत्तावपि प्रतिबिम्बितचिदंशः सत्योऽस्ति, तत उक्तम्—**एकान्तत इति** । **ननु** वृत्तिरूपसाक्षात्कारोऽलीकत्वादविद्यात्मकः कथमविद्यामुच्छिन्द्यादविद्या वा कथं स्वविरोधिनं तं जनयेदत आह—**अविद्या त्विति** । अलीकस्यापि सत्यविषयत्वादविद्यानिवर्तकत्वोपपत्तिः । दृष्टं च स्वप्नोपलब्धव्याघ्रादीनां स्वोपादानाविद्यानिवर्तकत्वमिति भावः । अविद्यामयी वृत्तिर्यद्यविद्यामुच्छिन्द्यात्तामेव स्वनिवर्तिकामविद्यां जनयेद्वोभयथाप्युक्तमार्गेण न काचिदनुपपत्तिरित्यर्थः । विद्यां वृत्तिमविद्यां च कार्यकारणभावेन सहिते यो वेद सोऽविद्योपादानत्वेन तन्मय्या वृत्त्या तदुपादानं मृत्युमविद्यां तीर्त्वा स्वरूपभूतविद्योपलक्षितममृतमश्नुत इति श्रुतेरर्थः ॥

भाष्योदाहृतश्रुतयो व्याख्यायन्ते । उत्तरत्रापि तत्तदधिकरणसमाप्तौ श्रुतयो व्याख्यास्यन्ते । **सदेवेति** । सदित्यस्तितामात्रमुक्तम् । एवशब्दोऽवधारणार्थः । किं तदवध्रियत इत्यत आह—**इदमिति** । यदिदं व्याकृतं जगदुपलभ्यते तत्, अग्रे प्रागुत्पत्तेः विकृतरूपपरित्यागेन **सदेवासीत्, हे सौम्य** प्रियदर्शनेति श्वेतकेतुः पित्रा संबोध्यते । मा भूत्स्थूलं पृथिवीगोलकादीदम्बुद्धिग्राह्यं प्रागुत्पत्तेः, अन्यत्तु महदादिकं किमासीन्नेत्याह—**एकमेवेति** । स्वकार्यपतितमन्यन्नासी-

### कल्पतरुपरिमलः ।

रित्यमतानुसारेण साध्यसाधनेतिकर्तव्यताभेदो मतान्तरेष्वप्यविशिष्टः । **स्वप्नोपलब्धेति** । स्वप्नेषु पर्यापतन्तो दृष्टा व्याघ्रादय आकुलतामुत्पाद्य स्वप्नद्रष्टारमुत्थापयन्तो भवन्ति स्वोपादानाविद्यानिवर्तकाः । **इह** श्रुतिव्याख्याने**ऽस्नाविरं** सिरारहितमिति व्याख्यातं, तत् स्नावाः सिरा अस्य सन्तीति स्नाविरं न स्नाविरम् अस्नाविरम् इतीशावास्योपनिषद्विवरणानुसारेण । प्राक्तु स्नाविरमविगलितमिति टीकानुसारेणान्यथा व्याख्यातम् । एवमन्यत्रापि मतभेदेनाविरोधो द्रष्टव्यः ॥ टीकायां विद्याऽविद्ययोः कार्यकारणभावं निवर्त्यनिवर्तकभावं चोपपाद्य तदर्थविषयत्वेन विद्यां चाविद्यां चेति मन्त्रस्योदाहृतत्वात् तदनुसारेण मन्त्रं योजयति—**अविद्यामिति** ।

**अत्रेदं सकलमूलपूर्वापरग्रन्थगतजीवविषयप्रतिबिम्बावच्छेदव्यवहारद्वयतात्पर्यावधारणाय चिन्तनीयम्**—अनयोः पक्षयोराचार्याणां कतरः पक्षः सिद्धान्त इति ?। द्वितीय एव; आद्यस्याचार्यैर्दूषितत्वादिति चेत्, न;

## वेदान्तकल्पतरुः ।

दित्यर्थः । मृदो घटाकारेण परिणमयितृकुम्भकारवत् किं सतोऽन्यन्निमित्तकारणमासीद् नेत्याह—**अद्वितीयमिति** ॥ आप्नोतीत्या**त्मा** परमकारणं, **वै इति** जगतः प्रागवस्थां स्मारयति । इदमित्यादिपदव्याख्या पूर्ववत् । **तदिति** प्रकृत आत्मा परामृश्यते, य इन्द्रो मायाभिः पुरुरूप ईयत इत्युक्तः । नपुंसकप्रयोगस्तु विधेयब्रह्मापेक्षः । तदेतदेव यद्ब्रह्म तद्वा किंलक्षणमित्यत आह—**अपूर्वमिति** । नास्य पूर्वं कारणं विद्यत **इत्यपूर्वम्**, अकार्यमित्यर्थः । तथा नास्यापरं कार्यं वास्तवं विद्यत **इत्यनपरम्**, अकारणमिति यावत् । नास्यान्तरं जात्यन्तरम् अन्तराले विद्यत **इत्यनन्तरम्**, दाडिमादिवत्स्वगतरसान्तरविधुरमित्यर्थः । एवंविधमन्यदपि कूटस्थमेतदनात्मकतया बाह्यमस्य न विद्यत **इत्यबाह्यमिति** । यत्पुरस्ताद् दृश्यमविद्यादृष्टीनामब्रह्मेव प्रतिभासते, तत्सर्वमिदममृतं ब्रह्मैव वस्तुत इत्यर्थः । तथा पश्चाद्दक्षिणतः इत्यादिमन्त्रशेषेण सर्वात्मत्वमवगन्तव्यम् ॥ संपतत्यस्मादमुं लोकं फलभोगायेति **संपातः** कर्म, तद्यावत्तावदुषित्वा आवर्तत इति । **इष्टं** श्रौतम् । **पूर्तं** स्मार्तम् । **दत्तं** दानम् ॥ परमार्थतः शरीरसंबन्धरहितं **वाव एव सन्तं** भवन्तम् । तमात्मानं वैषयिके प्रियाप्रिये न स्पृशतः ॥ एवं परमार्थतोऽशरीरं शरीरे**ष्वनवस्थेष्व**नित्ये**ष्ववस्थितं** नित्यं, **महान्तम्** । महत्त्वमापेक्षिकमित्याशङ्क्याह—**विभुम्** ॥ मन्तृमन्तव्यभेदनिषेधार्थमाह—**आत्मानमिति** । ईदृशमात्मानं **मत्वा धीरो** धीमान्न शोचति ॥ प्राणः क्रियाशक्तिः परमार्थतो न विद्यते यस्य **सोऽप्राणः** । तथा ज्ञानशक्तिमन्मनो यस्य नास्ति **सोऽमनाः** । क्रियाशक्तिमत्प्राणनिषेधेन तत्प्रधानानि कर्मेन्द्रियाणि, ज्ञानशक्तिमन्मनोनिषेधेन तत्प्रधानानि ज्ञानेन्द्रियाणि च सविषयाणि निषिद्धानि । यस्मादेवं तस्माच्छुभ्रः शुद्ध इति । स्वप्नाद्यवस्थाकृतकर्मस्वकर्तात्मेत्युक्तं स यत्तत्र चित्पश्यत्यनन्वागतस्तेन भवतीति पूर्ववाक्ये । तत्र हेतुरुच्यते—**असङ्गो हीति** । मूर्तं हि मूर्तान्तरेण संसृज्यमानं सृज्यते । आत्मा स्वयं पुरुषो न मूर्तः । अतो न केनचित्सृज्यत इत्यसङ्गः । अतो न **कर्तेति** ॥ **धर्मादधर्मात्तत्फ**लसुखदुःखाच्च **कृतात्** कार्यप्रपञ्चाद् **अकृतात्**कारणाद् **अन्यत्र** पृथक् भूतं **भूतादेः** काला**दन्यत्र** तेनानवच्छेद्यं, चेत्पश्यसि तद्वदेति मृत्युं प्रति नचिकेतसः प्रश्नः ॥ **अस्य** विदुषोऽप्रवृत्तफलानि **कर्माणि, तस्मिन्** परावरे ब्रह्मणि आत्मत्वेन दृष्टे **क्षीयन्ते** । **परं** कारणम् । **अवरं** कार्यम् । **तद्रूपे** तदधिष्ठाने ॥ ब्रह्मणः स्वभावमानन्दं विद्वान् । यदस्मिन्देहे जलसूर्यवत् प्रविष्टं ब्रह्म जीवाभिधं तदाचार्येण बोध्यमानमात्मानमेव विधूतकल्पनमवेद् विदितवत् । किं साङ्ख्यमत इव द्वैतमध्ये ? न, अपि-

## कल्पतरुपरिमलः ।

अध्यासपूर्वपक्षे हि तद्दूषणं कृतम् । सिद्धान्ते तस्यासमाहितत्वात् सिद्धान्ताभिमतमेव तद् दूषणमिति चेद्, न; असारं तद्दूषणमित्यनादरेणापि तदनुद्धारोपपत्तेः । **तथाहि**—रूपवत एव प्रतिबिम्ब इति नास्ति नियमः; रूपसंख्यापरिमाणसंयोगविभागपरत्वापरत्वचलनसुखत्वादिजातीनां प्रतिबिम्बदर्शनात् । द्रव्यस्य सत इति विशेष्यत इति चेद्, न; पृथिव्यादिनवकानुगतस्य द्रव्यत्वस्यासिद्धेः, द्रव्यं द्रव्यमिति तत्र तत्र लौकिकानामनुगतप्रत्ययाभावात्, तार्किकपरिभाषाया निष्प्रमाणकत्वात् । गुणाश्रयस्य सत इति विशेष्यत इति चेद्, न; संख्याया एव संख्यारूपगुणाश्रयभूताया नीरूपायाः प्रतिबिम्बदर्शनात् । अस्ति हि संख्यायामपि संख्या; एकत्वं प्रथमसंख्या द्वित्वं द्वितीयसंख्या बहुत्वेषु त्रित्वं प्रथमसंख्या चतुष्ट्वं द्वितीयसंख्येत्यादिव्यवहारात् । अतएव वसन्ताय कपिञ्जलानालभेतेत्यत्र त्रित्वमेव बहुवचनार्थो, नतु चतुष्ट्वादिकं, प्रथमातिक्रमे कारणाभावादिति न्यायविदः । अतएव च द्वावेकत्वसंख्यारूपावयवावस्या द्वित्वसंख्याया इत्याद्यर्थे ब्राह्मणद्वितयं ब्राह्मणद्वयमित्यादिशब्दनिष्पत्त्यर्थं "संख्याया अवयवे तयप्"इत्यादिसूत्रैस्तयप्प्रत्ययादयो विहिताः । अतएव च 'रक्षसां निहतान्यासन् सहस्राणि चतुर्दश'त्याद्यभियुक्तव्यवहाराः । **ननु**—संख्यासु वस्तुतो नास्ति संख्यान्तरं, किंतु द्वित्वसंख्या द्वितीयेत्यादिसजातीयसंख्याव्यवहाराः सत्ता सतीति व्यवहारवदभेदेऽपि धर्मधर्मिभावकल्पनया, सहस्राणि चतुर्दशेत्यादिविजातीयसंख्याव्यवहाराः सहस्रादिसंख्याश्रयगतचतुर्दशसंख्यादिसामानाधिकरण्येन तत्कल्पनया, अतो न संख्याया मुख्यं गुणाश्रयत्वमिति—**चेत्, उच्यते**—तुल्यमेतदात्मनोपि । आनन्दादिधर्मास्तदभिन्ना इति । तस्यापि हि न मुख्यं गुणाश्रयत्वं; तस्माद्रूपवत एव प्रतिबिम्ब इति नियममवलम्ब्यात्मप्रतिबिम्बनिराकरणं तावदयुक्तम् ॥ तथा रूपवत्येव प्रतिबिम्ब इति नियममवलम्ब्यापि निराकरणमयुक्तम् । किं प्रतिबिम्बोपाधेर्वस्तुतो रूपवत्त्वं प्रतिबिम्बने प्रयोजकमिष्यते, उत रूपवत्त्वेन ग्रहणम् । **आद्ये** नात्मनोऽन्तःकरणे प्रतिबिम्बनानुपपत्तिः; अन्तःकरणस्य त्रिवृत्करणेन पञ्चीकरणेन वा रूपवत्त्वात् । **न द्वितीयः**; निजरूपवत्त्वेनागृह्यमाणेऽपि स्फटिके सन्निहितजपाकुसुमप्रतिबिम्बनेन अरुणः स्फटिक इति व्यवहारदर्शनात् । तस्माद् निरवद्यः प्रतिबिम्बपक्षः । प्रतिबिम्बपक्षे एव च जीवतदन्तर्यामिभावेनान्तःकरणे द्विगुणीकृत्य वृत्तिरुपपद्यते । **ननु**—प्रतिबिम्बपक्षे केन दृष्टान्तेन द्विगुणीकृत्य वृत्त्युपपत्तिः? अम्भस्याकाशस्य प्रतिबिम्बो नाभ्युपगतः, आलोकस्य तु प्रतिबिम्ब एव नावच्छेदोऽपि । नच—जलान्तर्गतसिकतादिप्र-

## वेदान्तकल्पतरुः ।

तु अहं ब्रह्माद्वितीयमस्मीति । **तस्मादेव** विज्ञानादविद्याकृतासर्वत्वनिवृत्त्या **तद् ब्रह्म सर्व**मभवत् ॥ यस्मिन् **सर्वाणि भूतानि आत्मैवाभूद्विजानत इति । यः** सर्वात्मभावो विद्याभिव्यक्त उक्तः, तत्रात्मनि तत्र चाज्ञानकाले आत्मैकत्वं पश्यतः को मोहः । तत्पदलक्ष्यं ब्रह्म एतदात्मभावेनावस्थितमहमस्मीति पश्यन्नेतस्मादेव दर्शनादृषिः वामदेवाख्यः परं ब्रह्म अविद्यानिवृत्तिद्वारा प्रतिपन्नवान् किलेति । हशब्दो व्यवधानेन संबन्धनीयः । स एतस्मिन्दर्शने स्थितः सर्वात्मभाव-प्रकाशकानहं मनुरित्यादीन्मन्त्रांश्च ददर्श ॥ भारद्वाजादयः षडृषयः परं विद्याप्रदं पिप्पलादं गुरुं विद्यानिष्क्रयार्थमनुरूपम-न्यदपश्यन्तः पादयोः प्रणम्य प्रोचुः । त्वं ह्यस्माकं पिता ब्रह्मशरीरस्याजरामरस्य विद्याया जनयितृत्वाद्, इतरौ तु शरी-रमेव जनयतः । जनयितृत्वमपि सिद्धस्यैवाविद्यानिवृत्तिमुखेनेत्याह—**यस्त्वं नः** अस्मानविद्यामहोदधेः **परम**पुनरावृत्ति-लक्षणं **पारं तारयसि** विद्याबलेनेति प्रश्नोपनिषत् ॥ **श्रुतं ह्येव मे इत्यादिच्छन्दोगश्रुतिः** सनत्कुमारनारदसंवा-दरूपा । तत्रापि तारयत्वित्यन्तमुपक्रमस्थं वाक्यं शेषमाख्यायिकोपसंहारस्थं वाक्यान्तरम् । **मम भगवद्दृशेभ्यो** भग-वत्सदृशेभ्यः । **इदं** श्रुतम् । यत्तरति शोकं मनस्तापमकृतार्थबुद्धिमात्मविदिति । सोऽहमनात्मवित्त्वाच्छोचामि अतस्त्वं **मां शोकसागरस्य परमन्तं भगवांस्तारयतु** आत्मज्ञानोडुपेनेति । वल्कलादिवच्चित्तरञ्जको रागादिकषायो मृदितः क्षालितो विनाशितो यस्य ज्ञानवैराग्याभ्यासक्षारजलेन **तस्मै नारदाय तमसो**ऽविद्यालक्षणस्य **पारं** परमार्थतत्त्वं दर्शितवान् ॥ संवर्गविद्यायां श्रूयते । **वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति** उपशाम्यति **वायुमेवाप्येति** प्रलीयते **यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति । यदाऽऽप उच्छु-ष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्ते इत्यधिदैवतम् । अथाध्यात्मम्—प्राणोवाव संवर्गो यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मन इति ।** तद् ब्रह्मविदि

## कल्पतरुपरिमलः ।

हणार्थं तदन्तरालोकप्रवेशस्य अवश्यंभावात् तेन तस्या अवच्छेदोऽप्यङ्गीकरणीय इति—वाच्यम्; आलोकप्रतिबिम्बेनैव सिकतादिप्रकाशोपपत्तेः । नच—समारोपितस्य प्रतिबिम्बालोकस्य सिकतादिभिः संयोगो नास्तीति—वाच्यम्; सद्योऽपवर-कप्रविष्टस्य समारोपितेन तमसा तत्रत्यघटादिप्रकाशप्रतिबन्धवत्समारोपितेनालोकेन सिकतादिप्रकाशजननोपपत्तेरिति—**चेत्, मैवम्**; जलेनाकाशस्यावच्छेद एव तत्रालोकस्य प्रतिबिम्ब एवेति कल्पने दृष्टान्तसंप्रतिपत्त्यभावेपि प्रतिबिम्बाश्रया-न्तःकरणेन सर्वगतस्यात्मनोऽवच्छेदस्याप्यवश्यंभावेन स्वत एव द्विगुणीकृत्य वृत्तिसिद्धेः ॥ प्रतिबिम्बपक्ष एव च सूत्रका-रादिसंमतः । अंशो नानाव्यपदेशादित्यधिकरणे ( ब्र. अ. २ पा. ३ सू. ४२ ) ह्यैकात्म्यवादे कर्मतत्फलव्यतिकरशङ्कापरि-हारार्थं प्रवृत्तेन **आभास एवंच** ( ब्र. अ. २ पा. ३ सू. ५० ) इति सूत्रेण जीवस्य ब्रह्मप्रतिबिम्बत्वमुक्तं । **तथैव च भाष्य-कारैर्व्याख्यातम्**—आभास एवैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः, न सएव साक्षाद्, नापि वस्त्वन्तरम् । अतश्च यथा नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिन्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्सं-बन्धः; एवमव्यतिकर एव कर्मफलयोः—इति" । टीकाकारैरपि तस्मिन्नधिकरणे जीवब्रह्माभेदे सकलजीवगतदुःखभाक्त्वं ब्रह्मणः स्यादिति शङ्कापरिहार एतत्सूत्रसिद्धं प्रतिबिम्बत्वमाश्रित्यैव समर्थितः । नच मोक्षस्यानर्थबहुलता यतः प्रतिबिम्बा-नामेव श्यामतावदातते, न बिम्बस्य, एवं जीवानामेव नानावेदनाभिः संबन्धः, ब्रह्मणस्तु बिम्बस्येव न तदभिसंबन्ध" इति । आचार्यैरप्येतदभिप्रायः स्पष्टीकृतः 'बिम्बप्रतिबिम्बयोरवदातत्वश्यामत्वादिव्यवस्थानान्न धर्मसांकर्यमित्यर्थ' इति । तस्मा-त्प्रतिबिम्बपक्ष एवाचार्याणामभिमतः । अतएवानिर्वाच्याविद्याद्वितयसचिवस्येति प्रथमश्लोकगतचराचरपदव्याख्यानसमये एव जीवस्य प्रतिबिम्बत्वमुक्तं 'जीवानामपि चराचरोपाधिकानां तत्प्रतिबिम्बत्वेन तद्विवर्तत्वेत्याहे' ति । अवच्छेदपक्षस्तु भाष्यटीकागतघटाकाशादिदृष्टान्तस्वरसप्राप्तो न दूषितः परं, नतु स्वतन्त्रेषु स्ववाक्येषु जीवोऽवच्छेद इति क्वचिदप्युक्तम् । तस्मात् प्रतिबिम्बपक्ष एवाचार्याणां सिद्धान्त इति । एवं प्रतिबिम्बपक्षः श्रेयानिति मन्यमानानां मतानुसारेणाचार्याणां तात्पर्यं योजितम् ॥ **अथा**वच्छेदपक्षमभ्युपगच्छतां मतमनुसृत्योच्यते । प्रतिबिम्बपक्षो भाष्यकारैरेव न स्थानतोपि ( ब्र. अ. ३ पा. २ सू. ११ ) इत्यधिकरणे निराकृतः । तत्र **ह्यतएव चोपमा सूर्यकादिव** ( ब्र. अ. ३ पा. २ सू. १८ )दिति सूत्रेण सूर्यादिप्रतिबिम्बदृष्टान्ते श्रुत्युदाहृते दर्शिते सूर्यादिवदात्मनः प्रतिबिम्बो न युज्यत इति तदाक्षेपकत्वे**नाम्बुवदग्रहणात्तु न तथात्वम्** ( ब्र. अ. ३ पा. २ सू. १९ ) इति सूत्रं व्याख्यातम् । "यथाम्बु सूर्यादिभ्यो मूर्तेभ्यो विप्रकृष्टदेशं गृह्यते न तथात्मनो विप्रकृष्टदेशं प्रतिबिम्बनयोग्यं वस्तु गृह्यते । अतो न क्वाप्यात्मनः सर्वगतस्य प्रतिबिम्बो युक्त" इति । ततो **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** ( ब्र. अ. ३ पा. २ सू. २० )इति सूत्रमुक्तानुपपत्त्या सूर्यादिवदात्मनः प्रतिबिम्बनमनुपपन्नमित्यङ्गीकृत्यैव श्रुतिषु सूर्यादिप्रतिबिम्बोपादानस्य तात्पर्यान्तरवर्णनपरतया व्याख्यातम् । "यथा सूर्या-

## वेदान्तकल्पतरुः ।

तत्कार्यादन्यदेव । अथो अपि अविदितात्कारणात् अधि उपरि अन्यदित्यर्थः । येन प्रमात्रा इदं सर्वं वस्तु विजानाति लोकः, तं **केन** करणेन विजानीयात् ? करणस्य ज्ञेयविषयत्वात्प्रमातरि वृत्त्यनुपपत्तेः । तस्मात्प्रमातापि न ज्ञेयः किंतु तत्साक्षीत्यर्थः । **यद्वाचा** शब्देना**नभ्युदितम्** अप्रकाशितम् । **येन** ब्रह्मणा **सा** वाग**भ्युद्यते** प्रकाश्यते इत्यविषयत्वम् उपन्यस्याह—तदेवात्मभूतम् प्रमातृत्वादिकल्पना अपोह्येत्येवकारार्थः । **ब्रह्म** महत्तममिति **त्वं** विद्धि, हे शिष्य यदुपाधिविशिष्टं देवतादीदमित्युपासते जनाः इदं त्वं ब्रह्म न विद्धीति तस्य ब्रह्मामतमविषय इति निश्चयः, तस्य **तद्** ब्रह्म **मतं** सम्यग् ज्ञातं **यस्य पुनर्म**तं विषयतया मतं ब्रह्मेति मतिर्न, स वेद ब्रह्मभेदबुद्धित्वात् । एतौ विद्वदविद्वत्पक्षावनुवदत्येवमेवेति नियमार्थम् । **अविज्ञातमिति** । विषयत्वेनाविज्ञातमेव ब्रह्म सम्यग्विजानतां विज्ञातमेव विषयतया भवति । यथावदविजानतां दृष्टेश्चक्षुर्जन्यायाः कर्मभूताया द्रष्टारं स्वभावभूतया नित्यदृष्ट्या व्याप्तारं दृश्ययाऽनया न पश्येः । **विज्ञाते**र्बुद्धिधर्मस्य निश्चयस्य विज्ञातारमिति पूर्ववत् । **तयो**र्जीवपरयोर्मध्ये **एको** जीवः **पिप्पलं** कर्मफलम् **अन्यः** परमात्मा**ऽभिचाकशीति** पश्यत्येव नात्ति । **आत्मीयं** शरीरम् आत्मा शरीरादिसंयुक्तमात्मानमित्यर्थः । **एको देवो गूढः ।** छन्नः । सर्वव्यापित्वं न गगनवत्, किंतु **सर्वभूतान्तरात्मा, कर्माध्यक्षः** कर्मफलप्रदाता, सर्वभूतानामधिवासोऽधिष्ठानम् । साक्षित्वे हेतु**श्चेतेति** । चैतन्यस्वभाव इत्यर्थः । **केवलो** दृश्यवर्जितः, **निर्गुणो** ज्ञानादिगुणवान् न भवति । ॥ **स** आत्मा, **परितः** समन्तात् **अगा**त्सर्वगतः । **शुक्रमित्या**दयः शब्दाः पुँल्लिङ्गत्वेन परिणेयाः; स इत्युपक्रमात् । **अकायो** लिङ्गशरीरवर्जितः । **अव्रणो**ऽक्षतः । **अस्नाविरः** शिरारहितः । अव्रणास्नाविरत्वाभ्यां स्थूलदेहराहित्यमुक्तम् । **शुक्र इति** । बाह्याशुद्धिविरहउक्तः । **शुद्ध** इत्यान्तररागाद्यभावः । **अपापविद्धो** धर्माऽधर्मरहितः ।

## कल्पतरुपरिमलः ।

दिप्रतिबिम्बस्य जलाद्युपाधिगतवृद्धिह्रासाद्यधीनवृद्धिह्रासादिभाक्त्वमेवमात्मनोऽप्यन्तःकरणादिगतवृद्धिह्रासाद्यधीनवृद्धिह्रासादिभाक्त्वमित्येतावता जलसूर्यादिदृष्टान्तीकरणं, नतु प्रतिबिम्बनेन; दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यस्यानपेक्षितत्वादिति" । **बृहदारण्यकभाष्येऽपि**—"स एष इह प्रविष्ट आ नखाग्रेभ्य" इति वाक्यव्याख्यानावसरे सर्वगतस्यात्मनः कः प्रवेशो नामेति विमृश्य प्रतिबिम्बप्रवेश इति पक्षमम्बुवदग्रहणात्त्विति सूत्रोक्तेन विप्रकृष्टदेशोपाध्यभावेनैव दूषयित्वा देहादावात्मन उपलभ्यमानत्वं प्रवेशः । नहि पाषाणादाविव देहादावात्मनोऽनुपलब्धिरस्तीति प्रवेशपदार्थस्यान्यथोपपादनेन प्रतिबिम्बपक्षदूषणं स्थिरीकृतम् । नहि लोकेपि जलाद्विप्रकृष्टदेशस्यैव चैत्रादेस्तदन्तर्निमग्नत्वेन विप्रकृष्टदेशस्यापि जले प्रतिबिम्बो दृश्यते । नच सावयवस्य चैत्रस्य जलान्तर्निमग्नाधरकायस्य ऊर्ध्वकायप्रतिबिम्बवदन्तःकरणादिगस्यात्मनस्तदभिमुखप्रदेशान्तरप्रतिबिम्ब उपपादयितुंशक्यः; निरवयवत्वशब्दकोपापत्तेः । तस्माद्बहुषु जलपात्रेषु चन्द्रस्य यावत एकत्र प्रतिबिम्बस्तावतोऽप्यन्येष्विव कृत्स्नस्यैवात्मन एकत्रान्तःकरणे प्रतिबिम्बितस्यान्येष्वपि प्रतिबिम्बो वक्तव्यः । **ननु** बहूनां दर्पणानां पुरतस्तिर्यक्प्रसारितस्य वंशदण्डस्य दर्पणेषु भिन्नभिन्नप्रदेशानामिवान्तःकारणेष्वात्मनस्तत्तदन्तःकरणाभिमुखभिन्नभिन्नप्रदेशानां प्रतिबिम्बो वाच्यः । सावयवत्वे हि तथा वक्तुं शक्यम् । नच निदाघार्त्तस्य जाह्नवीजलनिमग्नसर्वकायस्य सर्वाङ्गीणसुखोत्पत्त्यर्थमा केशादा नखाग्रादन्तःकरणव्याप्तौ सत्यां व्यवधानरहितस्तदभिमुखात्मप्रदेशो लभ्यते यस्य तत्र प्रतिबिम्बो वर्ण्येत । एवमविप्रकृष्टदेशरूपं दूषणं भाष्ये व्यक्तमिति दूषणान्तरमाचार्यैः पूर्वपक्षिमुखेनोद्घाटितम् । रूपवत एव रूपवत्येव प्रतिबिम्ब इत्यस्य चाक्षुषस्यैव चाक्षुषएव प्रतिबिम्ब इत्यर्थः । नह्यस्य नियमस्य क्वचिद्भङ्गोऽस्ति; सुखादिप्रतिबिम्बे तदीयचाक्षुषसर्वगुणानुभवात्, कस्तूरिकादिप्रतिबिम्बे तदाघ्राणेऽपि सौरभाननुभवाच्च । गुहादिषु प्रतिध्वनिर्ध्वनेः प्रतिबिम्ब इति **केचित् । तन्न;** स एव हि गगनगुणः शब्दः; दुन्दुभिसमुद्रदावानलझञ्झामारुतादिध्वनीनां पृथिव्यादिशब्दत्वात् । एवंच यद्यप्याभास ( ब्र. अ. २ पा. ३ सू. ५० ) इति सूत्रेण प्रतिबिम्बपक्ष उक्त इति प्रतिभाति; तथापि एकत्र जीवस्य प्रतिबिम्बत्वाभ्युपगमोऽन्यत्र तद्दूषणंच परमाप्तस्य सूत्रकारस्य न संभवतीति किंचिदनुसारेण कस्मिंश्चिन्नेतव्ये प्रतिबिम्बदूषणस्याविप्रकृष्टदेशत्वादियुक्तिपूर्वकं कृतत्वाद् **आभास एव चेति** सूत्रे भाष्यकारैरपि श्रुत्योपपत्त्या वा प्रतिबिम्बत्वस्य समर्थितत्वात्तदेव सूत्रं वृद्धिह्रासभाक्त्व- ( ब्र. अ. ३ पा. २ सू. २० ) मिति सूत्रोक्तन्यायात्प्रतिबिम्बसादृश्यप्रतिपादनपरं योज्यं; तावताप्यव्यतिकरसिद्धेः । तदधिकरणटीकायां बिम्बप्रतिबिम्बयोर्ब्रह्मजीवदृष्टान्तत्वेनोपादानाच्च । वस्तुतस्त्वाभास एव चेति सूत्रं प्रतिबिम्बत्वरूपस्य प्रतिबिम्बसादृश्यरूपस्य वाभासत्वस्य प्रतिपादनपरमेव न भवति; षड्विंशतिरित्येव ब्रूयादितिवदेवकारोपहतविधिशक्तिकत्वेन यथाप्राप्तानुवादत्वात् ॥ **तथा हि**—प्रकृतावग्नीषोमीयपशावध्रिगुप्रैषे "षड्विंशतिरस्य वङ्क्रय" इति श्रुतम् । अस्य च्छागस्य पशोरेकैकस्मिन्पार्श्वे त्रयोदश त्रयोदशास्थीनीति षड्विंशतिर्वङ्क्रिशब्दोक्तानि पार्श्वास्थीनीत्यर्थः । अश्वमेधे

## वेदान्तकल्पतरुः।

भाष्येऽनाधेयातिशयत्वनित्यशुद्धत्वयोः पूर्वसिद्धवदुक्तहेत्वोः सिद्धिमेतौ मन्त्रौ दर्शयत इति बोद्धव्यम्। **आत्मानं** साक्षिण**मयं** परमात्माऽस्मीत्यपरोक्षतया **जानीया**चेत्, कश्चित्पुरुषः चेच्छब्दः आत्मसाक्षात्कारस्य दुर्लभत्वप्रदर्शनार्थः। स स्वव्यतिरिक्तमात्मनः **किं फलमिच्छुः कस्य वा** पुत्रादेः **कामाय** प्रयोजनाय, तदलाभनिमित्ततया **शरीरं** संतप्यमान**मनु** तदुपाधिः सन् **संज्वरेत्** संतप्येत। निरुपाध्यात्मदर्शिनो नान्यदस्ति प्रयोजनं नाप्यन्यः पुत्रादिरित्याक्षेपः। य आत्मा चतुर्थेऽथात आदेशो नेति नेतीति वाक्येन विश्वदृश्यनिषेधेन व्याख्यातः स एष पञ्चमेऽध्याये निरूप्यत इत्यर्थः। यथेन्द्रियादिभ्यः परं परमासीनैवं पुरुषादस्ति किंचित्परं सा पुरुषलक्षणा काष्ठावधिः सूक्ष्मत्वमहत्वादेः सैव गतिः परः पुरुषार्थः। **यस्योदा**हृतसविशेषब्रह्मणो **पृथिव्येव**। यस्यायतनमित्युपक्रम्योपन्यस्तानामधिष्ठानं तमौपनिषदमुपनिषद्भिरेव विज्ञेयम्। विशेषणस्य व्यावर्तकत्वादयमर्थो लभ्यते। पुरुषं त्वा त्वां पृच्छामि हे शाकल्येति याज्ञवल्क्यस्य प्रश्नः। 'अत्र ब्रह्म समश्नुत' इति पूर्ववाक्ये जीवन्मुक्तिरुक्ता। तत्र देहे वर्तमानोऽपि पूर्ववन्न संसारीत्यत्र दृष्टान्तः। तत्तत्र **यथाऽहिनिर्ल्वयिनी** अहित्वग् वल्मीकादौ **प्रत्यस्ता** प्रक्षिप्ता **मृता** प्रागवदहिनात्मत्वेनानभिमता **शयीत** वर्तेत एवमेवेदं विद्वच्छरीरं मुक्तेन पूर्ववदात्मत्वेनानभिमतं शेते। अथायं सूर्यस्थानीयो जीवन्मुक्तः शरीरे वर्तमानोऽप्यशरीरः। अहिरपि हि त्यक्तत्वचा संयुक्तोऽपि तामहमिति नाभिमन्यते। अशरीरत्वादेवामृतः प्राणिति जीवतीति प्राणः निरुपाधिः सन्नित्यर्थः। एवंच ब्रह्मैव तच्च ब्रह्मतेज एव विज्ञानज्योतिः परमार्थविवेकतोऽचक्षुरपि बाधितानुवृत्त्या सचक्षुरिवेत्यादिश्रुत्यन्तरयोजना॥

**इति वेदान्तकल्पतरौ चतुस्सूत्री समाप्ता॥**

## कल्पतरुपरिमलः।

त्वश्वस्य पशोरेकैकस्मिन् पार्श्वे सप्तदश सप्तदशास्थीनीति चतुस्त्रिंशद्वङ्क्रयः। तत्प्रकाशको वैशेषिको मन्त्रः पठ्यते "चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेतीति"। तेनोपदिष्टेन षड्विंशतिमन्त्रस्य सर्वथा निवृत्तौ प्रसक्तायां पुनरपि तत्र पठ्यते षड्विंशतिरित्येव ब्रूयाद् न चतुस्त्रिंशति। तेन प्राकृतमन्त्रः प्राप्यमाणः किं षड्विंशतिपदयुक्त एव प्राप्नोति, उताश्ववङ्क्रिसंख्यानुसारेण षड्विंशतिरिति पदस्थाने चतुस्त्रिंशत्पदोहयुक्त इति संशये 'षड्विंशतिरित्येव ब्रूयादिति" वचना**न्नास्ति वचनस्यातिभार इति न्यायात्** षड्विंशतिपदयुक्त एवेति प्राप्य, **राद्धान्तितं नवमे** ( जै. अ.९ पा. ४ सू. १–२१ ) "षड्विंशतिरित्येव ब्रूया"दिति वाक्यं न षड्विंशतिपदयोगेन प्राकृतमन्त्रविधायकम्; एवकारोपहतविधिशक्तिकत्वेन तस्य चतुस्त्रिंशन्मन्त्रनिषेधएव तात्पर्यात्। ततश्च निषेधेन वैशेषिकमन्त्रनिवृत्तौ प्राकृतमन्त्रोऽतिदेशेनैव प्राप्नोतीति षड्विंशतिरितीत्येतत्प्राप्तानुवादकम्। यथाप्राप्ति चानुवादो भवति प्राप्तिश्च चतुस्त्रिंशत्पदोहेनैव, यथा द्विपशुके पशुबन्धे द्विपञ्चाशत्पदोहेनैव। तस्मादश्वमेधे चतुस्त्रिंशत्पदोहयुक्त एव षड्विंशतिमन्त्रः प्रयोक्तव्य इति। एवमाभास एवेति सूत्रस्याप्येवकारोपहतविधिशक्तित्वेन जीवः साक्षाद् ब्रह्मैव न भवतीति भाष्यदर्शिते निषेधएव तात्पर्यम्, आभास इति तु यथाप्राप्तानुवादकम्। प्राप्तिश्च वृद्धिह्रासभाक्त्वमिति सूत्रोक्तन्यायात् प्रतिबिम्बसादृश्यस्येति तस्यैवानुवादकं, नतु कस्यचिदर्थस्य विधायकम्। तस्मादवच्छेदपक्षे न सूत्रादिविरोधशङ्का॥ तत्र तत्र प्रतिबिम्बत्वव्यवहारस्तु वृद्धिह्रासभाक्त्वसूत्रक्लृप्तसादृश्यमूलो गौणः। नहि ज्वलनाद्भिन्नत्वेनावगते माणवकेऽग्निरधीतेऽग्निरागच्छतीत्यादिप्रयोगसहस्रसत्त्वेऽप्यग्निशब्दो माणवके मुख्यत्वमश्नुवीत, अन्तःकरणकृतस्यैवात्मनो जीवान्तर्यामिभावेन भेदस्त्वविद्याश्रयत्वतद्विषयत्वान्तःकरणसंवलितत्वतदसंवलितत्वाद्युपाधिभेदादुपपद्यते; अन्यथा 'षडस्माकमनादय' इति सिद्धान्ते जीवेश्वरभिन्नत्वेनाभ्युपगतस्य जीवेश्वरतद्भेदादि सकलप्रपञ्चविवर्ताधिष्ठानत्वेन सर्वगतस्य शुद्धचैतन्यस्याप्यन्तःकरणे सत्वमवर्जनीयं, तत्तु प्रतिबिम्बपक्षमाश्रित्य द्विगुणीकृत्य वृत्त्युपपादनेनापि न निर्वहतीति त्रिगुणीकृत्य वृत्तिरुपपादनीया भवेत्; प्रतिब्रह्मोपासनमुपास्य धर्मिभेदस्याचार्यैरानन्दमयाधिकरणारम्भे ( ब्र. अ. १ पा. १ सू. १२ ) वक्ष्यमाणत्वात्। दहरशाण्डिल्यविद्याद्युपास्यभिन्नभिन्नसगुणब्रह्मसत्वमपि तस्मिन्नभ्युपगन्तव्यमिति तदर्थं चतुःपञ्चगुणादिवृत्तिरप्युपपादनीया भवेत्। नच तदुपपादनं शक्यम्; दृष्टान्ताभावात्। तस्माज्जीवेश्वरोपाधिभ्यां वास्तवतदुभयाभावेन तत्तद्गुणोपाधिभेदेन चावच्छेदकभेदेन जीवेश्वरशुद्धचैतन्यादीनां भेद आस्थेयः। एवं जीवेश्वरयोरप्यवच्छेदकभेदेन भेदो भविष्यतीति नानुपपन्नमत्र किंचिदिति॥

**इत्थं सत्संप्रदायाध्वप्राप्तयोः पक्षयोर्द्वयोः। समर्थनं यथाबुद्धि कृतं प्रीत्यै विपश्चिताम्॥**

**इति कल्पतरुपरिमले चतुस्सूत्री समाप्ता॥**

---

१ अत्र समन्वयाधिकरणं चतुर्थं संपूर्णम्। अत्र–**तत्तु समन्वयात्** ४ इत्येकं सूत्रम्॥

एवं तावद्वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तम्। ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तम्। सांख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानास्तत्परतयैव वेदान्तवाक्यानि योजयन्ति। सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषितम्। प्रधानपुरुषसंयोगा नित्यानुमेया इति सांख्या

## भामती।

एवं—कार्यान्वयं विना सिद्धरूपे ब्रह्मणि मानता। पुरुषार्थे स्वयं तावद्वेदान्तानां प्रसाधिता॥ ब्रह्मजिज्ञासां प्रतिज्ञाय 'जन्माद्यस्य यतः' इत्यादिना 'तत्तु समन्वयात्' इत्यन्तेन सूत्रसंदर्भेण सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिविनाशकारणे प्रामाण्यं वेदान्तानामुपपादितम्। तच्च ब्रह्मणीति परमार्थतः, नत्वद्यापि ब्रह्मण्येवेति व्युत्पादितम्, तदत्र संदिह्यते—तज्जगदुपादानकारणं किं चेतनमुताचेतनमिति। अत्रच विप्रतिपत्तेः प्रतिवादिनां विशेषानुपलम्भे सति संशयः। तत्रच प्रधानमचेतनं जगदुपादानकारणमनुमानसिद्धमनुवदन्त्युपनिषद इति सांख्याः। जीवाणुव्यति-

## वेदान्तकल्पतरुः।

परमा परमानन्दबोधसल्लक्षणाञ्चितम्। यमाश्लिष्यति सर्वज्ञं तं वन्दे पुरुषोत्तमम्॥

कार्यान्वयमिति। श्लोकपूरणार्थ एवंकारः। स्वयं पुरुषार्थे इति संबन्धः। यदि सर्वज्ञे वेदान्तप्रामाण्यं सिद्धं, किमधिकरणान्तरेण? अत आह—तच्चेति। सर्वज्ञे जगत्कारणे समन्वयप्रदर्शनेन चेतनं तदित्युपक्षिप्तम्। तदाक्षिप्य समर्थ्यत इति सङ्गतिः। प्रयोजनं तु 'तत्त्वमसीति' तच्छब्दवाच्यप्रधानैक्यसंपत्तिः पूर्वपक्षे। सिद्धान्ते तु चेतनस्य ब्रह्मैक्यमिति। जीवाणुव्यतिरिक्तेति कारणस्य जीवव्यतिरेकेण जीवा एव स्वकर्मद्वारा कर्तार इति मतं निरस्तम्। अणुव्य-

## कल्पतरुपरिमलः।

परमेति। परं सर्वपूर्वभाविजगत्कारणं वस्तु, तद्विषया या मा प्रमा, 'सदेव सोम्येद'मित्यादिकारणवाक्यजन्या सा निरतिशयानन्दादिस्वरूपलक्षणाञ्चितं सर्वज्ञं यं विषयीकरोति, नत्वतथाभूतं प्रधानादिकं; प्रस्तोष्यमाणाधिकरणन्यायात्, तं पुरुषोत्तमं वन्द इत्यर्थः। परा उत्कृष्टा मा श्रीर्महालक्ष्मीर्यमालिङ्गतीत्यर्थान्तरमप्यनेन क्रोडीकृतम्। यद्यपि तदन्या काचिदपरा लक्ष्मीर्नास्ति; तथापि तस्या एव सन्ति रूपभेदा देवमनुष्याद्यनुग्रहार्थं तत्र तत्र तारतम्येनाविर्भूतास्तदंशकलाविशेषरूपाः "सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरित"मित्यादिपुराणवचनप्रसिद्धाः। तदपेक्षया परत्वमिह भगवद्दिव्यमहिषीरूपे विवक्षितमिति। परशब्दस्य व्यावर्तकत्वाद्विशेषणसमासोपपत्तिः।

यदि सर्वज्ञे इति। सर्वज्ञत्वं चेतनस्य ब्रह्मण एव संभवति, नाचेतनस्य प्रधानादेरिति कारणवाक्यानां ब्रह्मपरत्वं तत एव सिध्यतीति भावः। सर्वज्ञे जगत्कारण इति। ननु—सर्वज्ञे समन्वयप्रदर्शनेन चेतनत्वं नोपक्षिप्तं, किंतु प्रथमसूत्रमारभ्यैव प्राप्तम्; प्रथमसूत्रे विचार्यत्वेन प्रतिज्ञातस्य नित्यशुद्धबुद्धमुक्तत्वरूपप्रवृत्तिनिमित्तानुसारेण चेतनत्वेनाभिमतस्य ब्रह्मण एव लक्षणप्रमाणाकाङ्क्षाक्रमेण जन्मादिसूत्रत्रयप्रवृत्तेः, अतः सर्वज्ञत्वोपक्षिप्तं चेतनत्वमाक्षिप्य समर्थ्यत इत्ययुक्तम्; एवंच तच्च ब्रह्मणीत्यादिव्याख्येयटीकाग्रन्थोऽप्ययुक्त इति—चेत्, उच्यते; नित्यशुद्धबुद्धमुक्तस्वभावे जन्मादिसूत्रोदाहृतनिर्णयवाक्यानुसारेण समन्वयसूत्रव्यवस्थापितपरमपुरुषार्थतानुसारेण च निरतिशयानन्दरूपे ब्रह्मण्येव समन्वय इहाक्षिप्यते। अतएवाव्यवहितेन समन्वयाधिकरणेनाक्षेप्याक्षेपिकी संगतिः। सा च तदधिकरणार्थानुवादकेन टीकाश्लोकेनैव व्यञ्जितेत्याचार्यैर्नोद्घाटिता। टीकायां सर्वज्ञं सर्वशक्ति यज्जगत्कारणं तद्ब्रह्मेति नाद्यापि सिद्धमित्युक्तिः सर्वज्ञत्वसर्वशक्तिकत्वयोः प्रधाने पूर्वपक्षिणाङ्गीकृतत्वाज्जगत्कारणं ब्रह्मेत्यत्रैव विवाद इति प्रागुक्तमपि तदेतदधिकरणपूर्वपक्षनिराकरणपर्यन्तमनुक्तप्रायमित्येतदभिप्राया, न तु ब्रह्मेति प्राङ्नोक्तमित्यभिप्राया; प्रथमसूत्रमारभ्य सूत्रभाष्ययोस्तदुक्तेः स्पष्टत्वात्, सर्वज्ञत्वेन चेतनत्वोपक्षेपोक्तिस्तु तद्दृढीकरणाभिप्राया योज्या। जीवाणुव्यतिरिक्तेत्यादिटीकायां यथा जगदुपादानकारणाधिष्ठातुर्जीवव्यतिरिक्तत्वविशेषणमपेक्षितं जीवा एव कर्मद्वारा तदधिष्ठातार इति मताद्भेदप्रदर्शनार्थं, न तथाऽणुव्यतिरिक्तत्वविशेषणं प्रधानव्यावर्तनार्थं चेतनत्वविशेषणं च तस्यापेक्षितम्। अणवो जगदुपादानभूतान् परमाणूनधितिष्ठन्तीति वा प्रधानं तानधितिष्ठतीति वा मतस्य कस्यचिद् निरसनीयस्याभावात्। तथाप्यर्थगत्या तद्विशेषणद्वयं कणादमतस्याणुसङ्घातवादात् प्रधानवादाच्च भेदप्रदर्शनार्थत्वेन योजनीयमित्यभिप्रेत्य व्याचष्टे—अणुव्यतिरेकेणेति। पर-

## भामती ।

रिक्तचेतनेश्वरनिमित्ताधिष्ठिताश्चतुर्विधाः परमाणवो जगदुपादानकारणमनुमितमनुवदन्तीति **काणादाः** । आदिग्रहणे-नाभावोपादानत्वादि ग्रहीतव्यम् । अनिर्वचनीयानाद्यविद्याशक्तिमचेतनोपादानं जगदागमिकमिति **ब्रह्मविदः** । एतासां च विप्रतिपत्तीनामनुमानवाक्यानुमानवाक्याभासा बीजम् । तदेवं विप्रतिपत्तेः संशये किं तावत्प्राप्तम् ? तत्र **ज्ञान-क्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः । न सर्वशक्तिविज्ञाने प्रधाने त्वस्ति संभवः** ॥ ज्ञानक्रियाशक्ती खलु ज्ञानक्रियाकार्यदर्शनोन्नेयसद्भावे । नच ज्ञानक्रिये चिदात्मनि स्तः, तस्यापरिणामित्वादेकत्वाच्च । त्रिगुणे च प्रधाने परिणामिनि संभवतः । यद्यपि च साम्यावस्थायां प्रधाने समुदाचरद्वृत्तिनी क्रियाज्ञाने न स्तः; तथाप्यव्यक्तेन शक्त्या-त्मना रूपेण संभवत एव । तथाच प्रधानमेव सर्वज्ञं च सर्वशक्ति च, नतु ब्रह्म । स्वरूपचैतन्यं त्वस्यावृत्तिकमनु-पयोगि जीवात्मनामिवास्माकम् । नच स्वरूपचैतन्ये कर्तृत्वम्; अकार्यत्वात्तस्य । कार्यत्वे वा न सर्वदा सर्वज्ञता ।

## वेदान्तकल्पतरुः ।

**तिरेकेणाणुसङ्घातवादः । चेतन**ग्रहणेन प्रधानवादः । **परमाणव इति** । सिद्धान्ताद्भेद इति ॥ **आदिग्रहणेनेति** । सांख्यादय इति । भाष्ये इति । **अनुमानवाक्येति** । सिद्धान्ते अनुमानानि वाक्यानि च बीजम्, अन्यत्र तु तदाभासा इति । **ज्ञानेति** । सर्वजननशक्तिसर्वविषयज्ञाने ब्रह्मणो न स्तः; कुतः ? तस्य ज्ञानक्रियाशक्त्यभावात्, ज्ञानक्रिययोः शक्ती ज्ञानक्रियाशक्ती तयोरभावादित्यर्थः । यस्य हि किंचिन्मात्रजननशक्तिः किंचिन्मात्रज्ञानशक्तिर्वा न संभवति, कुतस्तस्य सर्वविषयजननशक्तिः सर्वविषयज्ञानं च भवेताम्? शक्तिद्वयाभावे हेतुमाह—**अपरिणामिन इति** । कार्योन्नेये हि शक्ती, कार्ये च ज्ञानक्रिये नास्य स्तोऽपरिणामित्वादित्यर्थः । प्रधाने तु परिणामित्वादस्ति संभव इत्यर्थः । **नन्व**परिणामिन्यपि ज्ञान-गुणः प्रयत्नगुणश्च किं न स्यातामत आह—**एकत्वाच्चेति** । एकरूपत्वान्निर्गुणत्वादित्यर्थः । अथवाऽपरिणामित्वं साधय-ति निरवयवत्वादिति यावत् । **ननु** चेतनत्वादपरिणाम्यपि सर्वज्ञमत आह—**स्वरूपेति । अवृत्तिकं** सर्वविषयपरिणाम-रहितम् । **नन्वा**वृतज्ञाना जीवाः, ब्रह्म तु अनावृतं किं न सर्वज्ञमत आह—**नच स्वरूपेति** । ज्ञानकर्तृत्वं हि ज्ञातृत्वमि-त्यर्थः । अङ्गीकृत्यापि स्वरूपस्य कार्यतामाह—**कार्यत्वे चेति । स्यादेतत्**—कथमचेतनं चेतनानधिष्ठितं प्रवर्तेतात

## कल्पतरुपरिमलः ।

**माणव इति । सिद्धान्ताद्भेद इति** । सिद्धान्तेऽपि जीवव्यतिरिक्तेश्वरनिमित्ताधिष्ठिताः सन्ति परिणाम्युपादानभूता जीवानामविद्या इति ततो भेदप्रदर्शनार्थं परमाणव इति विशेष्यभाग इत्यर्थः ॥ **ज्ञानक्रियाशक्ती खल्वित्यादिश्लोक-व्याख्यानटीकाग्रन्थेन** स्पष्टीकृतमपि ज्ञानक्रियाशक्त्यभावादित्यत्राभिमतं समासं तत्र टीकाग्रन्थे ज्ञानाभावसाधितेन ज्ञानशक्त्यभावेन ज्ञानाभावसाधने अन्योन्याश्रयः, शक्त्यभावेन शक्त्यभावसाधने आत्माश्रय इति शङ्कावकाशदानाय स्मारयति—**ज्ञानक्रिययोः शक्ती इति** । दत्तावकाशशङ्कासमाधानार्थमाह—**यस्य हीति** । सामान्याभावसिद्ध्यपेक्षं विशेषाभावसाधनमिति न दोष इति समाधानाभिप्रायः । **नन्वपरिणामिन्यपीति** । सर्वज्ञ इत्यादिषु कर्त्रर्थप्रत्ययः सर्व-विषयज्ञानाश्रयत्वमात्रेणोपपद्यते; सविता प्रकाशते चैत्रः पश्यतीक्षते करोति स्वपितीत्यादिप्रयोगेषु धात्वर्थाश्रयत्वस्यापि तदभिधेयत्वदर्शनादिति भावः ॥ **नन्वेक**मपि ज्ञानक्रिययोराश्रयत्वमर्हति, तयोर्व्यासज्यवृत्तित्वाभावादित्याशङ्क्य व्याचष्टे—**एकरूपत्वादिति** । अनेन **प्रथमव्याख्याने** गुणापेक्षानेकरूपत्वनिषेधो, **द्वितीयव्याख्याने** अवयवापेक्षस्तन्निषेधश्च कृतो भवति । **प्रथमव्याख्याने** निर्गुणत्वहेतोः श्लोकव्याख्याने संगृहीतस्य श्लोकेनासंग्रहो वैकल्यमापादयेद्, **द्वितीय-व्याख्याने तु** निरवयवत्वहेतुरपि चेत्यादिपूर्वपक्षान्तभाष्येण दर्शितोऽत्राकृष्ट इति श्लोके तदसंग्रहो न वैकल्यापादक इति विशेषः । निरवयवत्वहेतुः कृत्स्नप्रसक्त्याधिकरण ( ब्र. अ. १ पा. १ सू. २६ ) पूर्वपक्षन्यायेनापरिणामित्वसाधकः । **ननु** निरवयवत्वं श्रुतिसिद्धत्वेन सिद्धान्त्यभिमतमपरिणामित्वे हेतूकर्तव्यम्, हेतुवत्साध्यमपि तथात्वेन सिद्धान्त्यभिमत-मेव, किमर्थं तत्र हेतुगवेषणं ? किमर्थं चापरिणामित्वक्रियाज्ञानाभावतदुभयशक्त्यभावप्रणाडिकया सर्वज्ञानसर्वशक्त्यभाव-प्रसाधनम् ? अपरिणामित्वमेव ब्रह्मणि जगदुपादानप्रतिपादकवाक्यसमन्वयप्रत्याशां त्याजयति, ज्ञानक्रियाभावो जगत्कर्तृ-प्रतिपादकत्वाभिमतवाक्यसमन्वयप्रत्याशामपि, जगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं सर्वशक्तिकत्वं च ब्रह्मणो न संभवतीति प्राक्सिद्धार्थाक्षेपार्थं तस्य सर्वविज्ञानसर्वशक्त्यसंभवप्रसाधनमिति चेन्न; तथापि **प्रधाने त्वस्ति संभव** इत्यस्य वैयर्थ्या-पत्तेः, प्रधानस्योपादानत्वसिद्ध्यर्थं सर्वशक्तिकत्वोपपादनापेक्षायामपि कर्तृत्वोपयोगिसर्वज्ञत्वोपपादनवैयर्थ्यानिवारणात्, प्रधानस्य कर्तृत्वमपीष्यत इति चेन्न; कर्तृत्वस्याभिव्यक्तसार्वज्ञ्यापेक्षत्वेन शक्तिरूपसार्वज्ञ्योपपादनस्यानुपयोगित्वापत्तेः, **उच्यते**; 'यः सर्वज्ञः सर्ववित्' 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुतीनां प्रधाने समन्वयार्थं तत्र तदुभयोपपादनं, भाष्यानुसाराद्ब्रह्मणि तत्समन्वयनिरासार्थं च तत्र तदुभयानुपपत्तिप्रदर्शनं, ब्रह्मणो जगत्कारणत्वाङ्गीकारे तदुपपादनार्थम-नेकत्वाद्यभ्युपगमावश्यंभावात्तदेकत्वापरिणामित्वनिर्गुणत्वनिष्क्रियत्वनिर्धर्मकत्वश्रुतिसमन्वयोऽपि ब्रह्मणि त्वदभिमतो न

मन्यन्ते । काणादास्त्वेतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमते अणूंश्च समवायिकारणम् । एवमन्येऽपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठन्ते । तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते । तत्र सांख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमाना आहुः—यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं दर्शयन्तीत्यवोचस्तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते । सर्वशक्तित्वं

## भामती ।

भोगापवर्गलक्षणपुरुषार्थद्वयप्रयुक्तानादिप्रधानपुरुषसंयोगनिमित्तस्तु महदहंकारादिक्रमेणाचेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य परिणामः सर्गः । दृष्टं चाचेतनं चेतनानधिष्ठितं पुरुषार्थे प्रवर्तमानम् । यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्तते । 'तदैक्षत बहु स्यां प्रजायेयेति' इत्याद्याश्च श्रुतयोऽचेतनेऽपि चेतनवदुपचारात्स्वकार्योन्मुखत्वमादर्शयन्ति, यथा कूलं पिपतिषतीति । **यत्प्राये श्रूयते यच्च तत्तादृगवगम्यते । भाक्तप्राये श्रुतमिदमतो भाक्तं प्रतीयते ॥ अपिचाहुर्वृद्धाः**—'यथाग्र्यप्राये लिखितं दृष्ट्वा वदन्ति भवेदयमग्र्यः' इति, तथेदमपि 'ता आप ऐक्षन्त' 'तत्तेज ऐक्षत' इत्याद्युपचारप्राये श्रुतम् 'तदैक्षत' इत्यौपचारिकमेव विज्ञेयम् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च प्रधानस्य जीवात्मत्वं जीवार्थकारितयाह । यथा हि भद्रसेनो राजार्थकारी राज्ञा भद्रसेनो ममात्मेत्युपचर्यते, एवं 'तत्त्वमसि' इत्याद्याः श्रुतयो भाक्ताः संपत्त्यर्था वा द्रष्टव्याः । 'स्वमपीतो भवति' इति च निरुक्तं जीवस्य प्रधाने स्वकीयेऽप्ययं सुषुप्तावस्थायां ब्रूते । प्रधानांशतमःसमुद्रेके हि जीवो निद्राणस्तमसीव मग्नो भवति । **यथाहुः**—'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति । वृत्तीनामन्यासां प्रमाणादीनामभावस्तस्य प्रत्ययकारणं तमस्तदालम्बना निद्रा जीवस्य वृत्तिरित्यर्थः । तथा **सर्वज्ञं प्रस्तुत्य श्वेताश्वतरमन्त्रोऽपि**—'सकारणं करणाधिपः' इति प्रधानाभिप्रायः । प्रधानस्यैव सर्वज्ञत्वं प्रतिपादितमधस्तात् । तस्मादचेतनं प्रधानं जगदुपादानमनुवदन्ति श्रुतय इति पूर्वः पक्षः । एवं काणादादिमतेऽपि कथंचिद्योजनीयाः श्रुतयः । अक्षरार्थस्तु **प्रधानकारणपक्षे-**

## वेदान्तकल्पतरुः ।

आह—**भोगेति । पुरुषार्थेन प्रयुक्त** आक्षिप्तश्चासा**वनादिः प्रधानपुरुषसंयोगः** प्रधानस्य पुरुषं प्रति पारार्थ्यलक्षणः संबन्धस्तन्निमित्तः सर्ग इति ॥ गौणश्चेत् ( ब्र. अ. १ पा. १ सू. ६. ) इत्यादिसूत्रनिरस्याः शङ्काः सौकर्यार्थमेकत्र लिखति—**तदैक्षतेत्यादिना । वृद्धाः** शबरस्वामिनः । यज्ञपुरुषस्य "शिरो ह वा आग्नेयो हृदयमुपांशुयाज" इति प्रधानाग्नेयप्रायवचनात् प्रधानकर्मोपांशुयाज इत्युक्त्वा लोकेऽप्युदाहरति—**यथाग्र्येत्यादि । अग्र्यः** श्रेष्ठः । कथं नित्यस्य जीवस्य प्रधाने लयोऽत आह—**प्रधानांशेति ।** प्रधानस्यांशस्तमोगुणस्तस्योद्रेके जीवो निद्रां कुर्वंस्तत्र मग्न इव भवत्यतश्च विवेकाभावाल्लयोपचारः । प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ( पतं. यो. अ. १ पा. १ सू. ६ ) इति सूत्रोक्ता **निद्रा**ऽतोऽन्या वृत्तयोऽभावं प्रत्ययन्ते प्रतिगच्छन्त्यस्मिन्नित्यभावप्रत्ययस्तमस्तदालम्बना जीवस्य या वृत्तिः सा निद्रेति पातञ्जलसूत्रार्थः । **सर्वज्ञं प्रस्तुत्येति ।** 'ज्ञः कालकालो गुणी सर्वविद्य इतीति' प्रधानकारणपक्षेऽपि योजयितुं शक्यत इति ।

## कल्पतरुपरिमलः ।

सिद्ध्येदिति दर्शयितुमित्थं प्रणाडिकाश्रयणम् ॥ **प्रयुक्त आक्षिप्त इति ।** अत्राक्षिप्तत्वं तादर्थ्येन । 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ॥ पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥' ( सां.का. २१ ) इति सांख्यवचनात्, पुरुषस्य विकारावस्थापन्नप्रधानप्रदर्शनरूपभोगार्थं तस्य कैवल्यार्थं च प्रधानपुरुषयोर्जडचेतनयोः क्रियाज्ञानशक्तियुक्तयोरुभयोरप्येकफलसंपादनार्थं प्रवृत्तयोः पङ्ग्वन्धयोरिव संयोगस्तत्कृतश्च महदादिसर्ग इत्येतदर्थपरत्वेनास्य वचनस्य तत्त्वकौमुद्यां व्याख्यातत्वाच्च । प्रायपाठस्येक्षतिश्रुतिस्वारस्यभञ्जकत्वं विधिश्रुतिस्वारस्यभञ्जकत्ववद्युक्तमिति विभावयितुमभ्यप्रायन्यायोत्पत्तिस्थलमुदाहरति—**यज्ञेति । प्रधानाग्नेयप्रायवचनादिति ।** "शिरो ह वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय" इति प्रधानाग्नेयाग्नीषोमीयप्रायपाठादिति यावत् । **ननु**—आग्नेयाग्नीषोमीययोर्येन "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति" फलवचनेन प्राधान्यमवगम्यते, तेनैवोपांशुयाजस्यापि तदवगम्यत एव, पूर्णमासपदप्रवृत्तिनिमित्तस्य पौर्णमासीकालसंबन्धस्य त्रिष्वप्यविशेषादतस्तदुभयप्रायपाठेनोपांशुयाजस्य प्राधान्यसिद्ध्युक्तिरयुक्तेति—**चेत्, उच्यते;** उपांशुयाजाधिकरणसिद्धान्ते प्रायवचनाच्चेति ( जै. अ. २ पा. २ सू. १२ ) गुणसूत्रस्येदं व्याख्यानम् । यदाग्नेयादिप्रायपाठादुपांशुयाजस्य प्राधान्यमभ्युपगन्तव्यमिति । **तच्चाधिकरणं**—"जामि वा एतद्यज्ञस्य क्रियत"इत्यादिसंदर्भे "विष्णुरुपांशु यष्टव्य" इत्यादिवाक्यत्रयं विध्यर्थोचिततव्यप्रत्यययोगाद् यागत्रयविधायकम्, अदेवतमन्तरावाक्यं यागत्र-

**तावत्प्रधानस्यापि स्वविकारविषयमुपपद्यते । एवं सर्वज्ञत्वमप्युपपद्यते । कथम्? यत्तु ज्ञानं मन्यसे स सत्त्वधर्मः; 'सत्त्वात्संजायते ज्ञानम्' ( गी० १४।१७ ) इति स्मृतेः । तेन च सत्त्वधर्मेण ज्ञानेन कार्यकरणवन्तः पुरुषाः सर्वज्ञा योगिनः प्रसिद्धाः । सत्त्वस्य हि निरतिशयोत्कर्षे सर्वज्ञत्वं प्रसिद्धम् । न केवलस्याकार्यकरणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किंचिज्ज्ञत्वं वा**

## भामती ।

**ऽपीति प्रधानस्यापीति** । अपिकारावेवकारार्थौ । **स्यादेतत्**—सत्त्वसंपत्त्या चेदस्य सर्वज्ञताथ तमःसंपत्त्याऽसर्वज्ञतैवास्य कस्मान्न भवतीत्यत आह—**तेन च सत्त्वधर्मेण ज्ञानेनेति** । सत्त्वं हि प्रकाशशीलं निरतिशयोत्कर्षं सर्वज्ञताबीजम् । **यथाहुः**—'निरतिशयं सर्वज्ञताबीजम्' इति । यत्खलु सातिशयं-तत्कचिन्निरतिशयं दृष्टं, यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वं व्योम्नि परममहति निरतिशयम् । एवं ज्ञानमप्येकद्विबहुविषयतया सातिशयमित्यनेनापि क्वचिन्निरतिशयेन भवितव्यम् । इदमेव चास्य निरतिशयत्वं यद्विदितसमस्तवेदितव्यत्वम् । तदिदं सर्वज्ञत्वं सत्त्वस्य निरतिशयोत्कर्षत्वे संभवति । **एतदुक्तं भवति**—यद्यपि रजस्तमसी अपि स्तः; तथापि पुरुषार्थप्रयुक्तगुणवैषम्यातिशयात्सत्त्वस्य निरतिशयोत्कर्षे सार्वज्ञ्यं कार्यमुत्पद्यत इति प्रधानावस्थायामपि तन्मात्रं विवक्षित्वाऽविवक्षित्वा च तमःकार्यं प्रधानं सर्वज्ञमुपचर्यत इति । अपिभ्यामवधारणस्य व्यवच्छेद्यमाह—**न केवलस्येति** । नहि किंचिदेकं

## वेदान्तकल्पतरुः ।

सर्वशक्तित्वं तावत्प्रधानस्याप्युपपद्यते इति च भाष्येऽपिकारदर्शनादनवधारणेनात्र पूर्वपक्ष इति केचिद्व्याचक्षते, तद्व्यावर्तयति—**अपिकाराविति** । इह हि 'गौणश्चे' दितीक्षणे गौणत्वशङ्का मुख्येक्षणवतो ब्रह्मणः कारणत्वासंभवनिश्चयवत एव । तथाच नानवधारणम् । तत्परतयैव वेदान्तवाक्यानि योजयतीति च भाष्यं विपर्ययेण पूर्वपक्षं द्योतयति । यदा योगैश्वर्यात् सत्त्वं निरतिशयोत्कर्षं भवति, तदा तत्सर्वज्ञत्वे बीजं भवतीति सूत्रार्थः । निरतिशयतां सत्त्वस्य तत्कार्यज्ञानस्य निरतिशयसाधनेनोपपादयति—**यत्खल्विति** । **कुवलं** वदरम् । ज्ञानत्वं, निरतिशयकिंचिदाश्रितं, सातिशयवृत्तिजातित्वात्, परिमाणत्ववदिति समुदायार्थः । निरतिशयत्वे कथं सर्वविषयता ? न हि नभःपरिमाणं सर्वविषयमत आह—**इदमेवेति** ।

## कल्पतरुपरिमलः ।

यसमुदायानुवादकमिति पूर्वपक्षप्राप्तौ, जामितादोषोपक्रमतन्निर्हरणोपसंहारैकरूप्यावगतैकवाक्यत्वनिर्वाहार्थं पुरोडाशद्वयनैरन्तर्यप्रयुक्तजामितादोषनिर्हरणोपयुक्तपुरोडाशद्वयान्तरालकालविशिष्टयागविधिनिर्वाहार्थं चान्तरावाक्ये एकस्यैव यागस्य विधिः । तत्र त्रिविधयाज्यानुवाक्यायुगलरूपमन्त्रवर्णप्राप्तविकल्पितदेवतात्रयान्वयानुवादेन स्तुत्यर्थं विष्ण्वादिवाक्यत्रयमिति सिद्धान्तव्युत्पादनाय । तत्र सिद्धान्ते ( प्रायवचनाचेति ) सूत्रेण युक्त्यन्तरमुच्यते । तदित्थम्—न केवलमन्तरालविधिसामर्थ्यलब्धेन पौर्णमासीकालसंबन्धेन उपांशुयाजस्य फलवचनगतपौर्णमासपदग्राह्यतया फलान्वयः सिध्यति; उत्पत्तिवाक्यश्रुतपौर्णमासीकालसंबन्धयोराग्नेयाग्नीषोमीययोर्झटिति प्रवृत्तिनिमित्तावगत्या पूर्णमासपदगृहीतयोः फलान्वयबोधने फलवचनस्य चरितार्थतयान्तरालविधिसामर्थ्याक्षेप्यपौर्णमासीकालसंबन्धित्वेन विलम्बितप्रवृत्तिनिमित्तावगमस्योपांशुयाजस्य पश्चात् पौर्णमासपदग्राह्यतया फलवचनस्यार्थान्तरबोधकत्वासंभवात्, शब्दानां विरम्य व्यापारासंभवात्, किंतु "तावन्नूतामग्नीषोमीयाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्नि"ति प्रक्रम्याम्नातेनान्तरावाक्येन बोध्यमानान्तरालकालः प्रक्रान्तः पौर्णमासीरूपः पर्यवस्यतीत्येवमुत्पत्तिवाक्यबोध्यपौर्णमासीकालत्वाविशेषेणाग्नेयादितौल्यादुपांशुयाजस्य फलवचनगतपौर्णमासपदग्राह्यतया स सिध्यति । एवंच यदि विष्ण्वादिदेवत्यास्त्रय उपांशुयाजाः स्युः, तदा प्रक्रान्ताग्नीषोमवत्कृकवाक्यानुसारेण तद्देवत्यस्यैवोपांशुयाजस्य स्फुटपौर्णमासीकालसंबन्धतया फलवचनगतपौर्णमासीपदगृहीतस्य फलान्वयेन प्राधान्यं सिध्येद्, नतु विष्णुप्रजापतिदेवत्ययोरुपांशुयाजयोः, नचेष्टापत्तिः; प्रायपाठेनोपांशुयाजमात्रस्य प्राधान्यावगमात्, अतस्तन्निर्वाहार्थमन्तरावाक्यविधेयो विकल्पितविष्ण्वादिदेवतात्रययुक्त एक एवोपांशुयाजः स्वीकर्तव्यः । नच—तथाप्यग्नीषोमवत्कृकवाक्यानुसारेणाग्नीषोमदेवत्यप्रयोग एवोपांशुयाजस्य प्राधान्यं सिध्येद्, नतु विष्णुप्रजापतिदेवत्ययोः प्रयोगयोरिति दोषतौल्यं—शङ्कनीयम्; यागैक्ये विष्णुप्रजापतिदेवत्यप्रयोगयोरप्युपलक्षणतया तद्देवताभूताग्नीषोमान्वयावैकल्यात् । अत एवा सोमयाजिनामग्नीषोमीयपुरोडाशाभावादेकपुरोडाशे पूर्णमासयागे अन्तरालकालाभावेनोपांशुयाजाप्राप्तिमाशङ्क्य अनपायो हि कालस्य लक्षणं हि पुरोडाशौ ( जै. अ. १० पा. ८ सू. ६९ ) इति दशमाध्यायसूत्रेणाग्नीषोमीयपुरोडाशाभावेऽपि तदुपलक्षितकालावैकल्यात् तत्प्राप्तिः समर्थितेति । एवं सत्यपि फलवचने उपांशुयाजमात्रस्य प्राधान्यं मा भूदिति शङ्कायामविशेषेण तन्मात्रप्राधान्यसमर्पकप्रायपाठप्रदर्शनं युक्तमेव । एवंच तत्र यथा प्रधानाग्नेयादिप्रायपाठस्य सैद्धान्तिकमूलयुक्तिसहकृतस्य तव्यप्रत्ययत्रयगतविधित्वारम्भभञ्जकत्वमेवमिह गौणेक्षणप्रायपाठस्य सर्वज्ञत्वाद्यनुपपत्तिसहकृतस्येक्षति-

कल्पयितुं शक्यम् । त्रिगुणत्वात्तु प्रधानस्य सर्वज्ञानकारणभूतं सत्त्वं प्रधानावस्थायामपि विद्यत इति प्रधानस्याचेतनस्यैव सतः सर्वज्ञत्वमुपचर्यते । वेदान्तवाक्येष्ववश्यं च त्वयापि सर्वज्ञं ब्रह्माभ्युपगच्छता सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमभ्युपगन्तव्यम् । नहि सर्वदा सर्वविषयं ज्ञानं कुर्वदेव ब्रह्म वर्तते । तथाहि—ज्ञानस्य नित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयेत । अथानित्यं तदिति ज्ञानक्रियाया उपरमेतापि ब्रह्म । तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति । अपिच प्रागुत्पत्तेः सर्वकारकशून्यं ब्रह्मेष्यते त्वया । नच ज्ञानसाधनानां शरीरेन्द्रियादीनामभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना । अपिच प्रधानस्यानेकात्मकस्य परिणामसंभवात्कारणत्वोपपत्तिर्मृदादिवत्, नासंहतस्यैकात्मकस्य ब्रह्मण इत्येवं प्राप्त इदं सूत्रमारभ्यते—

( ५ पंचमाधिकरणम् ) **ईक्षतेर्नाशब्दम् ॥ ५ ॥**

## भामती ।

कार्यं जनयेदपितु बहूनि । चिदात्मा चैकः, प्रधानं तु त्रिगुणमिति तत एव कार्यमुत्पत्तुमर्हति, न चिदात्मन इत्यर्थः । तत्रापि च योग्यतामात्रेणैव चिदात्मनः सर्वज्ञताभ्युपगमो न कार्ययोगादित्याह—**त्वयापीति** । न केवलस्याकार्यकरणस्येत्येतत्सिंहावलोकितेन प्रपञ्चयति—**प्रागुत्पत्तेरिति । अपिच प्रधानस्येति** । चस्त्वर्थः । एवं प्राप्त उच्यते—

**ईक्षतेर्नाशब्दम् ॥ ५ ॥**

नामरूपप्रपञ्चलक्षणकार्यदर्शनादेतत्कारणमात्रवदिति सामान्यकल्पनायामस्ति प्रमाणं, नतु तदचेतनं चेतनमिति वा विशेषकल्पनायामस्त्यनुमानमित्युपरिष्टात्प्रवेदयिष्यते । तस्मान्नामरूपप्रपञ्चकारणभेदप्रमायामाम्नाय एव भगवानुपासनीयः । तदेवमाम्नायैकसमधिगमनीये जगत्कारणे—**पौर्वापर्यपरामर्शाद्यदाम्नायोऽञ्जसा वदेत् । जगद्बीजं तदेवेष्टं चेतने च स आञ्जसः ॥** तेषु तेषु खल्वाम्नायप्रदेशेषु 'तदैक्षत' इत्येवंजातीयकैर्वाक्यैरीक्षितुः कारणाज्जगज्जन्माख्यायत इति । नच प्रधानपरमाण्वादेरचेतनस्येक्षितृत्वमाञ्जसम् । सत्त्वांशेनेक्षितृ प्रधानं, तस्य प्रकाशकत्वादिति चेन्न; तस्य जाड्येन तत्त्वानुपपत्तेः । कस्तर्हि रजस्तमोभ्यां सत्त्वस्य विशेषः ? स्वच्छता । स्वच्छं हि सत्त्वम् । अस्वच्छे च रजस्तमसी । स्वच्छस्य च चैतन्यबिम्बोद्ग्राहितया प्रकाशकव्यपदेशो नेतरयोः; अस्वच्छतया तद्ग्राहित्वाभावात् । पार्थिवत्वे तुल्य इव मणेर्बिम्बोद्ग्राहिता न लोष्टादीनाम् । ब्रह्मणस्त्वीक्षितृत्वमाञ्जसं; तस्याम्नायतो नित्यज्ञानस्वभावत्वविनिश्चयात् । **ननु**—अतएवास्य नेक्षितृत्वं; नित्यस्य ज्ञानस्वभावभूतस्येक्षणस्याक्रियात्वेन ब्रह्मणस्तत्प्रति निमित्तभावाभावात्, अक्रियानिमित्तस्य च कारकत्वनिवृत्तौ तद्व्याप्तस्य तद्विशेषस्य कर्तृत्वस्य निवृत्तेः । **सत्यं**; ब्रह्मस्वभावश्चैतन्यं नित्यतया न क्रिया, तस्य त्वनवच्छिन्नस्य तत्तद्विषयोपधानभेदावच्छेदेन कल्पितभेदस्यानित्यत्वं कार्यत्वं चोपपद्यते । तथाचैवंलक्षण ईक्षणे सर्वविषये ब्रह्मणः स्वातन्त्र्यलक्षणं कर्तृत्वमुपपन्नम् । यद्यपिच कूटस्थनित्यस्यापरिणामिन औदासीन्यमस्य वास्तवम्; तथाप्यनाद्यनिर्वचनीयाविद्यावच्छिन्नस्य व्यापारवत्त्वमवभासत इति कर्तृत्वोपपत्तिः । **परैरपि** च चिच्छक्तेः कूटस्थनित्याया वृत्तीः प्रति कर्तृत्वमीदृशमेवाभ्युपेयं; चैतन्यसामानाधिकरण्येन ज्ञातृत्वोपलब्धेः । नहि

## वेदान्तकल्पतरुः ।

ज्ञेयभूम्ना हि ज्ञानभूमा, ततो निरतिशयत्वं, सर्वविषयत्वमानयतीत्यर्थः । **अपिभ्याम्** एवकारार्थत्वेन व्याख्याताभ्याम् । **सिंहावलोकितेनेति** पुनरुक्तिपरिहारः । चकारो विशेषवाची तुशब्दसमानार्थः ॥ **नन्वनुमानसिद्धानुवादिषु** वेदान्तेषु कथमीक्षतिश्रवणाद् ब्रह्मनिर्णयस्तत्राह—**नामरूपेति । प्रवेदयिष्यते** तर्कपादे ( ब्र. अ. २ पा. २ ) । **पौर्वापर्येति । पौर्वापर्य**मुपक्रमोपसंहारौ । **परामर्शो** मध्ये निर्देशः । एभिर्यदाम्नायो मुख्यवृत्त्या वदेत्तदेव जगद्बीजं, स चाम्नायश्चेतने मुख्यो न प्रधान इति । भवतु ब्रह्मणि प्रकृतिर्मुख्या, प्रत्ययः कथं मुख्य इति शङ्कते—**नन्विति । अतएव** नित्यज्ञानत्वादेव । यदवाद्यपरिणामित्वान्न ज्ञानं ब्रह्मण इति, तत्राह—**यद्यपि चेति** । उपाध्यपेक्षं ज्ञातृत्वं गौणमित्याशङ्क्य पारमार्थिकेक्षितृत्वासंभवादिदमेव मुख्यमित्याह—**परैरपीति । चैतन्यसामानाधिकरण्येनेति** । यत्रात्मनि स्वरूपभूतं चैतन्यं तत्रैव ज्ञातृत्वोपलब्धेस्तस्य च परिणामानभ्युपगमात्परैरित्यर्थः । **ननु** किं चितिशक्तेर्ज्ञातृत्वेन प्रधानविकारा एव ज्ञास्यन्ति ? नेत्याह—**नहीति** । भवतु कापिले मतेऽलीकं ज्ञातृत्वं, भाट्टे तु तात्विकं तदनभ्युपगच्छतस्तव गौणं स्यादत

## कल्पतरुपरिमलः ।

श्रुतिस्वारस्यभञ्जकत्वमुपपद्यत इति भावः ॥ **चकारो विशेषवाची तुशब्दसमानार्थ इति** । यस्य प्रपञ्चनार्थोऽयमपिच प्रागुत्पत्तेरित्यादिग्रन्थः तस्मिन्न केवलस्याकार्यकारणस्येत्यादिपूर्वग्रन्थे पुरुषस्य सार्वज्ञ्यानुपपत्तिप्रदर्शनपूर्वकं त्रिगुणत्वात्तु प्रधानस्येत्यादिना प्रधानस्य सर्वज्ञत्वाद्युपपादनमेकग्रन्थतया तुशब्दयोगेन दृष्टमितीहापि चकारस्तत्रार्थो ग्राह्यो, नतु स्वतन्त्रयुक्त्यन्तरप्रदर्शनार्थतया योजनीय इति भावः ॥ **तदनभ्युपगच्छतस्तव गौणं स्यादिति** । ज्ञानोत्पत्तिप्रक्रियायां

## भामती ।

प्राधानिकान्यन्तर्बहिःकरणानि त्रयोदशसत्त्वप्रधानान्यपि स्वयमेवाचेतनानि, तद्वृत्तयश्च स्वं वा परं वा वेदितुमुत्सहन्ते । नो खल्वन्धाः सहस्रमपि पान्थाः पन्थानं विदन्ति । चक्षुष्मता चैकेन चेद्वेद्यते, स एव तर्हि मार्गदर्शी स्वतन्त्रः कर्ता नेता तेषाम् । एवं बुद्धिसत्त्वस्य स्वयमचेतनस्य चितिबिम्बसंक्रान्त्या चेदापन्नं चैतन्यस्य ज्ञातृत्वं, चितिरेव ज्ञात्री स्वतन्त्रा, नान्तर्बहिष्करणान्यन्धसहस्रप्रतिमान्यस्वतन्त्राणि । नचास्याश्चितेः कूटस्थनित्याया अस्ति व्यापारयोगः । नच तदयोगेऽप्यज्ञातृत्वं; व्यापारवतामपि जडानामज्ञत्वात् । तस्मादन्तःकरणवर्तिनं व्यापारमारोप्य चितिशक्तौ कर्तृत्वाभिमानः । अन्तःकरणे वा चैतन्यमारोप्य तस्य ज्ञातृत्वाभिमानः । सर्वथा भवन्मतेऽपि नेदं स्वाभाविकं क्वचिदपि ज्ञातृत्वं, अपितु सांव्यवहारिकमेवेति परमार्थः । नित्यस्यात्मनो ज्ञानं परिणाम इति च भेदाभेदपक्षमपाकुर्वद्भिरपास्तम् । कूटस्थस्य नित्यस्यात्मनोऽव्यापारवत एव भिन्नं ज्ञानं धर्म इति चोपरिष्टादपाकरिष्यते । तस्माद्वस्तुतोऽनवच्छिन्नं चैतन्यं तत्त्वान्यत्वानिर्वचनीयाव्याकृतव्याचिकीर्षितनामरूपविषयावच्छिन्नं सज्ज्ञानं कार्यं, तस्य कर्ता ईश्वरो ज्ञाता सर्वज्ञः सर्वशक्तिरिति सिद्धम् । **तथाच श्रुतिः**—"तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥" "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥" इति । **तपसा**ज्ञानेन अव्याकृतनामरूपविषयेण । **चीयते** तद्व्याचिकीर्षावद्भवति, यथा कुविन्दादिरव्याकृतं पटादि बुद्धावालिख्य चिकीर्षति । एकधर्मवान् द्वितीयधर्मोपजननेन उपचित उच्यते । व्याचिकीर्षायां चोपचये सति ततो नामरूपमन्नमदनीयं साधारणं संसारिणां व्याचिकीर्षितमभिजायते । तस्मादव्याकृताद्व्याचिकीर्षितादन्नात्**प्राणो** हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठानं जगत्सूत्रात्मा साधारणो जायते, यथाऽव्याकृतात् व्याचिकीर्षितात्पटादवान्तरकार्यं द्वितन्तुकादि । तस्माच्च प्राणान्मनआख्यं संकल्पविकल्पादिव्याकरणात्मकं जायते । ततो व्याकरणात्मकान्मनसः सत्यशब्दवाच्यान्याकाशादीनि जायन्ते । तेभ्यश्च सत्याख्येभ्योऽनुक्रमेण **लोका** भूरादयः तेषु मनुष्यादिप्राणिनो वर्णाश्रम-

## वेदान्तकल्पतरुः ।

आह—**नित्यस्येति** । अस्तु तर्हि न्यायमते वास्तवमत आह—**कूटस्थेति** । अव्यापारवत इति च्छेदः । **धर्मो** गुणः । **उपरिष्टात्** ज्ञोऽत एवं (ब्र. अ.२ पा.३ सू.१८)इत्यादौ । औपाधिकमीक्षणकर्तृत्वमित्यत्र श्रुती दर्शयति—**तथा चेति** । ज्ञानं साधनेनोपलक्षितं तद्विषयनानारूपव्याचिकीर्षावद्भवति । अयं धर्मद्वययोग उपचयः । ततोऽन्नमभिजायत इत्येतद्व्याचष्टे—**व्याचिकीर्षायां चेति** । उत्पन्नव्याचिकीर्षया नामरूपप्रपञ्चस्थव्यक्तिरभिजायत इत्युक्त्वाऽन्नशब्देन नामरूपमुच्यते, तत्र निमित्तं प्रसिद्धान्नगुणयोगमाह—**साधारणमिति** । अन्नादिति क्रमार्था पञ्चमी । व्याचिकीर्षितत्वानन्तरमित्यर्थः । हिरण्यगर्भसृष्टिः सूक्ष्मभूतसृष्ट्यनन्तरमिति द्रष्टव्यम् । मणीनामिव सूत्रं जगतो विधारकः सूत्रात्मा । समुदाये सिसृक्षिते प्रथममेकदेशोत्पत्तौ निदर्शनमाह—**यथेति** । मन इत्यादावपि पूर्वपूर्वसर्गानन्तरमिति द्रष्टव्यमित्याह—**तस्माच्चेति** । **मनआख्यमिति** । व्यष्टि मन इत्यर्थः । सङ्कल्पादिवृत्तिव्यक्तीकरणात्मकं तत्कारणमिति यावत् । सत्यमित्यस्यार्थमाह—**आकाशादीनीति** । स्थूलानीत्यर्थः । तेषु हि पृथिव्यादिभूतत्रयम् अपरोक्षत्वात्सद्वाय्वाकाशौ परोक्षत्वात्सत्यमिति सत्त्वशब्दप्रयोगः । कर्मसृष्टिं सिद्धवत्कृत्य श्रुत्या कर्मसु चेत्युक्तं, तामाह—**तेष्विति** । सप्तमी निमित्तार्था । **ज्ञानमयम्** इत्यौपाधिकमीक्षण-

## कल्पतरुपरिमलः ।

भाट्टमतमनभ्युपगच्छतस्ते ज्ञानकर्तृत्वं गौणं स्यादित्यर्थः । तदभ्युपगच्छतस्तव न गौणं स्यादिति क्वचित्पाठः । तस्मिन्पाठे तद् भाट्टमतमभ्युपगम्यते चेद्, ज्ञानकर्तृत्वमगौणमुपपादयितुं शक्यमित्यर्थः ॥ **ज्ञानं साधनेनोपलक्षितमिति** । तपःशब्दार्थेन ज्ञानसाधनेन कर्मणा तत्साध्यं ज्ञानं लक्षितम्; ईक्षणवृत्तिरूपस्येश्वरज्ञानस्यास्मदाद्यदृष्टजन्यत्वादित्यर्थः । ज्ञानेन साधनेनोपलक्षितमिति पाठे **तपसा** ज्ञानेन कारणेन **चीयते** व्याचिकीर्षारूपोपचयवद्भवतीति श्रुत्यर्थ उक्तो भवति । उपलक्षितमिति त्वीक्षणव्याचिकीर्षारूपधर्मद्वययोगस्पष्टीकरणार्थम् । ज्ञानेनोपलक्षितमिति पाठे तु तपसेत्युपलक्षणतृतीया । व्याचिकीर्षयेत्यध्याहार्यम् । तथाच तपसा केनचिद् धर्मेण युक्तं सद् व्याचिकीर्षाद्वयधर्मान्तरजननेनोपचीयत इति श्रुत्यर्थ उक्तो भवति । **ननु तपसे**त्युपलक्षणतृतीया, **चीयत** इत्येतदध्याहृतव्याचिकीर्षयोपचयपरम्, **ततोऽन्नमिति वाक्यं** नामरूपप्रपञ्चगतव्याचिकीर्षाविषयीभवनार्थकम्, **अन्नादित्ये**तद्व्याचिकीर्षितान्नानन्तरमित्येतदर्थकं सदन्नव्याचिकीर्षानन्तरमित्यर्थपर्यवसितम्, प्राणादिसृष्टेः प्राग् भूतसूक्ष्मसृष्ट्यध्याहार इति क्लिष्टयोजनाश्रयणं किमर्थं ? तपसा ब्रह्मोपचीयते तदुपचिताद् ब्रह्मणोऽन्नं भूतसूक्ष्मपञ्चकं जायते तस्मादन्नात्प्राणादि जायत इति योजना किमिति नाश्रिता ? इत्याशङ्कापरिहारार्थत्वेन साधारणमिति विशेषणमवतारयति—**तत्र निमित्तमिति** । भोग्यत्वेन सर्वप्राणिसाधारण्यरूपप्रसिद्धान्नगुणयोगो नामरूपे व्याकरवाणीति व्याचिकीर्षाविषयत्वेनाम्नाते स्थूलप्रपञ्च इव भूतसूक्ष्मेषु नास्तीत्यतस्तत्स्वारस्यानुसारेणैवं योजनाश्रितेति भावः । **सप्तमी निमित्तार्थेति** । तेषु कर्मसु निमित्तेषु सत्स्वित्यर्थे 'यस्य च भावेन भावलक्षण'मिति

भामती ।

क्रमेण **कर्माणि** धर्माधर्मरूपाणि जायन्ते । कर्मसु चामृतं फलं स्वर्गनरकादि । तच्च स्वनिमित्तयोर्धर्माधर्मयोः सतोर्न विनश्यतीत्यमृतम्, यावद्धर्माधर्मभावीति यावत् । **यः सर्वज्ञः** सामान्यतः, **सर्वविद्**विशेषतः । **यस्य** भगवतो **ज्ञानमयं तपो** धर्मो नायासमयम्, **तस्मा**द्ब्रह्मणः पूर्वस्मादेतत्परं कार्यं ब्रह्म । **किंच नामरूपमन्नं** च व्रीहियवादि जायत इति । तस्मात्प्रधानस्य साम्यावस्थायामनीक्षितृत्वात्, क्षेत्रज्ञानां च सत्यपि चैतन्ये सर्गादौ विषयानीक्षणात्, मुख्यसंभवे चोपचारस्यान्याय्यत्वात्, मुमुक्षोश्चायथार्थोपदेशानुपपत्तेः, मुक्तिविरोधित्वात्, तेजःप्रभृतीनां च मुख्यासंभवेनोपचाराश्रयणस्य युक्तिसिद्धत्वात्, संशये च तत्प्रायपाठस्य निश्चायकत्वात्, इह तु मुख्यस्यौत्सर्गिकत्वेन निश्चये सति संशयभावात्, अन्यथा किरातशतसंकीर्णदेशनिवासिनो ब्राह्मणायनस्यापि किरातत्वापत्तेः, ब्रह्मैवेक्षित्रनाद्यनिर्वाच्याविद्यासचिवं जगदुपादानं; शुक्तिरिव समारोपितस्य रजतस्य मरीचय इव जलस्य, एकश्चन्द्रमा इव द्वितीयस्य-

वेदान्तकल्पतरुः ।

मुक्तम् । अन्नात्प्राण इत्यत्र पञ्चम्याः क्रमार्थत्वस्वीकारादिहापि तत्प्रसङ्गमाशङ्क्याह—**पूर्वस्मादिति** । नियतपूर्वकालवर्तित्वं कारणत्वं तच्छब्दार्थ इत्यर्थः । नियतपूर्वसतः सर्वज्ञाज्जायमानस्य हिरण्यगर्भब्रह्मणः परकालवर्तित्वेन कार्यत्वमेतच्छब्दार्थ इत्याह—**एतदिति । नाम** देवदत्त इत्यादि । **रूपं** शुक्लादि । **मुमुक्षोश्चेति** । तन्निष्ठस्य ( ब्र. अ.१ पा.१ सू. ७ ) इति सूत्रार्थानुकर्षः । अयथाभूतप्रधानात्मत्वोपदेशश्च मुक्तिविरोधी। यदवादि "यत्प्राये श्रूयत" इति, तत्राह—**संशये चेति । द्वितीये स्थितम्**—विशये प्रायदर्शनात् ( जै. अ.१ पा.३ सू. १६) । "वत्समालभेत वत्सनिकान्ता हि पशव" इत्यत्र किमालभतिर्यजिमत्कर्माभिधानः, उत स्पर्शमात्रवचन इति संशये 'वायव्यं श्वेतमालभेते'त्यादावालभतिः प्राणिद्रव्यसंयुक्तो यजिमत्कर्माभिधानो दृष्ट इतीहापि तथात्वे प्राप्ते—राद्धान्तः; वायव्यादौ द्रव्यदेवतासंबन्धाद्यागप्रतीतेर्यजिमत्संज्ञपनाभिधाय्यालभतिः, इह तु न द्रव्यदेवतासंबन्धाभावात्, किंतु गोदोहनादिसंस्कारकर्मसंनिधौ श्रवणात् स्पर्शमात्रसंस्कारकर्मवचन इति ॥ प्रकृते वैषम्यमाह—**इहत्विति** । ब्राह्मणः अयनमाश्रयो यस्य स्वयं त्वाभास इति । आरोपे सादृश्यनियमभङ्गाय

कल्पतरुपरिमलः ।

सूत्रेण सप्तमीत्यर्थः । **ज्ञानमयमित्यौपाधिकमीक्षणमुक्तमिति** । ज्ञानं तप इत्येतावति वक्तव्ये मयटोऽधिकस्य वचनाद्व्याख्येयस्य तपःशब्दनिर्दिष्टेक्षणस्य ज्ञानविकारत्वमवगम्यते, न वृत्तिज्ञानं कस्यचिद्वृत्तिज्ञानस्य विकार इति ज्ञानशब्दस्य स्वरूपज्ञानार्थत्वस्थितौ निर्विकारस्यात्मनः स्वरूपज्ञानस्यौपाधिक एव विकार उक्तो भवतीति भावः ॥ **नियतपूर्वकालवर्तित्वरूपं कारणत्वमिति** । **ननु** कारणत्वं पञ्चम्यर्थः, कार्यत्वं जनिधात्वर्थः, कथमनयोस्तदेतच्छब्दार्थत्वं वर्ण्यते ? **उच्यते;** तत्पदनिर्दिष्टब्रह्मकार्यत्वं जायत इत्यनेनोक्तं, ब्रह्मादिपदनिर्दिष्टकार्यप्रकृतित्वं तस्मादिति पञ्चम्योक्तं, तदुभयं तदेतत्पदाभ्यां न स्पृश्यते, किं त्वेतत्पदेन संनिहितवाचिना कालतः संनिधानरूपं कारणब्रह्मव्यावर्तकत्वेन 'कार्यं बादरि' (ब्र.अ. ४.पा.३स्.७)रित्यादिषु प्रसिद्धं कार्यत्वसामान्यमुच्यते,तत्पदेन कार्यब्रह्मव्यावर्तकं कारणत्वसामान्यमुच्यते; कारणं ब्रह्म कार्यं ब्रह्म परं ब्रह्मापरं ब्रह्मेत्यादिव्यवहारेषु परस्परव्यावर्तककारणकार्यपरापरविशेषणदर्शनेनात्रापि हिरण्यगर्भे कार्यत्वनिर्देशदर्शनेन च परब्रह्मणि कारणत्वनिर्देशापेक्षणात् । यद्यपि तत्पदस्य तत्पदघटितपूर्ववाक्याकाङ्क्षानुसारेण पूर्ववाक्यप्रकृतसर्वज्ञत्वादिवैशिष्ट्यपरत्वमावश्यकं; तथापि तद्वदेव वक्ष्यमाणकार्यब्रह्मव्यावर्तककारणपरत्वमप्यावश्यकमित्युभयपरत्वे न कश्चिद्दोषः ॥ प्रायपाठो न स्वयं श्रुत्यादिप्रमाणविरोधेन कस्यचिदर्थस्य प्रापणे प्रभवति, किंतु संशयनिवर्तनमात्र इत्यत्र साक्षित्वेनाधिकरणमुदाहरति—**द्वितीये स्थितमिति । वत्सनिकान्ताः** वत्सप्रियाः । दार्शपूर्णमासिके ईषामालभेतेत्यालभतिश्रवणेऽपि व्यभिचारवारणार्थं **प्राणिद्रव्यसंयुक्त इति** विशेषणम् । एवंचात्र यजेस्तदनुमापकद्रव्यदेवतासंबन्धस्य चाश्रवणेऽपि प्राणिद्रव्यसंयुक्तालभतिलिङ्गेनानुमिते यागे सोमयागविकृतिष्विव मासाग्निहोत्रादिविकृतिष्विव च प्रकृतितो देवताप्राप्तिर्भविष्यति; प्राणिद्रव्यसंयुक्तालभतिसादृश्येन दैक्षपशोः प्रकृतित्वप्राप्तेः । नच—संस्कारप्रायपाठात् संस्कारविधिरत्र—शङ्क्यः; अन्यार्थदर्शनरूपस्य प्रायपाठलिङ्गस्य स्वातन्त्र्येण किञ्चिदर्थप्रापकत्वाभावादिति भावः । **संज्ञपनाभिधायीति** । यद्यपि वायव्यादिवाक्येष्वपि चोदकादर्थाद्वा प्राप्तस्य स्पर्शस्याभिधानं संभवति, दृष्टं च पशुयागविधिवाक्येष्वपि 'त्वाष्ट्रं पात्नीवतमालभेत' 'ईशानाय परस्वत आलभेत' इत्यादिष्वालभतेः स्पर्शमात्राभिधायकत्वं, 'पर्यग्निकृतं पात्नीवतमुत्सृजती'ति 'तान् पर्यग्निकृतानुत्सृजती'ति तत्र पर्यग्निकरणान्तोत्सर्गविधानेन संज्ञपनाभावात्; तथापि वाजपेये प्राजापत्यपशूनां प्रातःसवने पर्यग्निकरणान्ताङ्गकलापं कृत्वा विरम्य माध्यन्दिनसवने ब्रह्मसामस्तोत्रकाले तेषां संज्ञपनं कार्यमिति संज्ञपनोत्कर्षविधानार्थे "तान्पर्यग्निकृतानुत्सृजति" "ब्रह्मसाम्न्यालभत" इति वाक्ये संज्ञपनेऽप्यालभतेर्दृष्टत्वाद्वायव्यादिवाक्येषूभयथाप्युपपत्तेः संज्ञपनाभिधायित्वमुक्तम् । **द्रव्यदेवतासंबन्धाभावादिति** । द्रव्यदेवतासंबन्धो ह्यनन्यथासिद्धं यागानुमाने

**न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वं? ईक्षतेः—ईक्षितृत्वश्रवणात्कारणस्य । कथम्? एवं हि श्रूयते—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छान्दो० ६।२।१) इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छान्दो० ६।२।३) इति । तत्रेदंशब्दवाच्यं नामरूपव्याकृतं जगत्प्रागुत्पत्तेः सदात्मना-**

## भामती ।

चन्द्रमसः, न त्वचेतनं प्रधानपरमाण्वादि । अशब्दं हि तत् । नच—प्रधानं परमाणवो वा तदतिरिक्तसर्वज्ञेश्वराधिष्ठिता जगदुपादानमिति—सांप्रतम्, तेषां भेदेन कार्यत्वात् । कारणात्कार्याणां भेदाभावात्, कारणज्ञानेन समस्तकार्यपरिज्ञानस्य मृदादिनिदर्शनेनागमेन प्रसाधितत्वात्, भेदे च तदनुपपत्तेः । साक्षाच्च 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन' 'मृत्योः स मृत्युमाप्नोति' इत्यादिभिर्बहुभिर्वचोभिर्ब्रह्मातिरिक्तस्य प्रपञ्चस्य प्रतिषेधाच्चेतनोपादानमेव जगत्, भुजङ्ग इवारोपितो रज्जूपादान इति सिद्धान्तः । सदुपादानत्वे हि सिद्धे जगतस्तदुपादानं चेतनमचेतनं वेति संशय्य मीमांस्येत, अद्यापि तु सदुपादानत्वमसिद्धमित्यत आह—**तत्रेदंशब्दवाच्यम्** इत्यादि **दर्शयति** इत्यन्तेन । तथापीक्षिता पारमार्थिकप्रधानक्षेत्रज्ञातिरिक्त ईश्वरो भविष्यति, यथाहुर्हैरण्यगर्भा इत्यतः श्रुतिः पठिता—'एकमेवाद्वितीयम्' इति । 'बहु स्याम्' इति च चेतनं कारणमात्मन एव बहुभावमाह । तेनापि कारणाच्चेतनादभिन्नं कार्यमवगम्यते । यद्यप्याकाशाद्या भूतसृष्टिः, तथापि तेजोबन्नानामेव त्रिवृत्करणस्य विवक्षितत्वात्तत्र तेजसः प्राथम्यात्तेजः प्रथममुक्तम् ।

## वेदान्तकल्पतरुः ।

मरीच्युदाहरणम् । चेतनभेदारोपे चन्द्रभेदः । पातञ्जलादिमतेऽप्याह—**नचेति** । तन्मते कार्याणामधिष्ठातुरुपादानाच्च भेदात् श्रुतौ च तदभावादित्यर्थः । चेतनं कारणमिति प्रतिपाद्ये तत्सत्त्वोक्तिरनर्थिकेत्याशङ्क्याह—**सदिति** । अधिकरणानुक्रमणे उक्तोऽर्थो भाष्यारूढः क्रियते—**तथापीक्षितेति** । सिद्धान्तेऽप्यनिर्वाच्या त्रिगुणास्ति माया, तत उक्तं—**पारमार्थिकेति** । **तेनापीति** । चेतनकारणेनात्मन एव बहुभवनकथनेनेत्यर्थः । आकाशोपक्रमसृष्टिश्रुत्या तेजःप्राथम्यश्रुतेर्वियदधिकरण ( ब्र. अ. २ पा. ३ सू. १ ) सिद्धान्तो नास्तीति कृत्वाचिन्तयैव विरोधमाह—**यद्यपीति** । **छान्दोग्ये हि**—"तासां त्रिवृतं त्रिवृतमेकैकामकरोदि"ति तिसृणां देवतानां तेजोबन्नानामेव त्रिवृत्करणमनन्तरं वक्ष्यति, न गगनपवनयोः, तत्र च तेजः प्रथममिति स्वरूपोत्पत्तावपि तदुपचार इति ॥ **संप्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम् । तथापि युक्तियुक्तत्वाद्वाचस्पतिमतं शुभम् ॥ पृथिव्यबनलात्मत्वं गगने पवने च चेत् । रूपवत्त्वमहत्त्वाभ्यां चाक्षुषत्वं प्रसज्यते ॥ अर्धभूयस्त्वतः क्षित्याद्यविभावनकल्पने । व्यवहारपथा प्राप्ता मुधा पञ्चीकृतिर्भवेत् ॥ अनपेक्ष्य फलं वेदसिद्धेत्येषेष्यते यदि । त्रिवृत्कृतिः श्रुता पञ्चीकृतिर्न क्वचन श्रुता ॥** तस्मात्सुष्ठूच्यते **तेजोऽबन्नानामेव त्रिवृत्करणस्य**

## कल्पतरुपरिमलः ।

लिङ्गं; कार्यकारणभावमूलकानुकूलतर्कसद्भावाद्, न तथेदमालभतिलिङ्गम् । तदिहैतल्लिङ्गानुमेययागविधिर्भवतु, उत गुणकर्मप्रायपाठलभ्यगुणकर्मविधिरिति संशये, अन्यार्थदर्शनरूपमपि वैदिकं लिङ्गं सहचारदर्शनमात्रकल्प्यव्याप्तिमूलकाल्लौकिकानुमानाद् बलवदतः प्रायपाठेन गुणकर्मत्वसिद्धिरित्याशयः । किंचैवं सति विधेर्दृष्टार्थत्वं लभ्यते, वत्सस्य स्पर्शेन लालनं हि वत्सलां गां प्रस्नावयद्दोहनोपयोगीति सार्थवादविषयवाक्यलेखनेनाविष्कृतम् ॥ **तन्मते कार्याणामिति** । कार्याणां महदहंकारादीनामधिष्ठातुरीश्वरादधिष्ठातुरीश्वरस्योपादानात्प्रधानाच्च भेदादित्यर्थः, नतु कार्याणामीश्वरादुपादानाच्च भेदादित्यर्थः । सांख्यमत इव पातञ्जलमतेऽपि सत्कार्यवादेन कार्योपादानाभेदाभ्युपगमात् । एवंचाधिष्ठातुरिति पञ्चम्यन्तषष्ठ्यन्तयोस्तन्त्रेणोच्चारणमिति द्रष्टव्यम् । एतदनुरोधेन टीकायां **तेषां भेदेन कार्यत्वादित्यस्या**धिष्ठातुरीश्वराद् भेदेन कार्यत्वादित्यर्थः । कार्याणां कारणेनाभेदादित्यत्र कारणेनेत्यस्याधिष्ठात्रेत्यर्थश्चेति द्रष्टव्यम् । **यद्यपीत्यादिटीकाग्रन्थेन** छान्दोग्ये वियत्सृष्टिरस्त्यक्तेति सिद्धवत्कृत्य वक्ष्यमाणत्रिवृत्करणानुपयोगात्तत्त्याग इत्युपपाद्यते । इदमयुक्तम्; वियदधिकरणे ( ब्र. अ. २ पा. ३ सू. १ ) श्रुत्यन्तरश्रुतवियत्सृष्ट्युपसंहारस्य व्युत्पादितत्वेन तत्र तत्त्यागाभावादित्याशङ्क्य तदुपसंहारव्युत्पादकं वियदधिकरणं यदि न स्यात्, तदा छान्दोग्ये तत्त्यागः सन्नपि न दोषः; वक्ष्यमाणत्रिवृत्करणानुपयोगेन तत्त्यागस्यान्यथासिद्धेः । तावता वियत्सृष्ट्यनभिमत्यप्रसङ्गादित्येवं न्यायान्तरव्युत्पादनार्थो यद्यपीत्यादिग्रन्थ इत्यवतारयति—**आकाशोपक्रमेति** ।

१ **ईक्षितृत्वश्रवणात्करणस्येति**—प्रधानं, अशब्दं, ईक्षतिधातुघटितकारणवाक्याविषयत्वात् इति वा कारणपरं तदैक्षतेत्यादिवाक्यम्, न प्रधानपरं, ईक्षतिमत्त्वात् इति वाऽनुमानप्रयोगो बोध्यः । द्वितीयानुमानं तु तुल्यवित्तिवेद्यतयाऽशब्दत्वसाधनं भवतीति मन्तव्यम् ।

वधार्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्येक्षणपूर्वकं तेजःप्रभृतेः स्रष्टृत्वं दर्शयति । तथान्यत्र—'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत' (ऐत० १।१।१) इतीक्षापूर्विकामेव सृष्टिमाचष्टे । क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह—'स ईक्षांचक्रे । स प्राणमसृजत' (प्रश्न० ६।३) इति । ईक्षतेरिति च धात्वर्थनिर्देशोऽभिप्रेतः, यजतेरितिवत्, न धातुनिर्देशः । तेन 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मुण्ड० १।१।९) इत्येवमादीन्यपि सर्वज्ञेश्वरकारणपराणि वाक्यान्युदाहर्तव्यानि । यत्तूक्तं सत्त्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यतीति, तन्नोपपद्यते । नहि प्रधानावस्थायां गुणसाम्यात्सत्त्वधर्मो ज्ञानं संभवति । ननूक्तं सर्वज्ञानशक्तिमत्त्वेन सर्वज्ञं भविष्यतीति । तदपि नोपपद्यते । यदि गुणसाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्वज्ञं प्रधानमुच्येत, कामं रजस्तमोव्यपाश्रयामपि ज्ञानप्रतिबन्धकशक्तिमाश्रित्य किंचिज्ज्ञमुच्येत । अपिच नासाक्षिका सत्त्ववृत्तिर्जानातिनाभिधीयते । नचाचेतनस्य प्रधानस्य साक्षित्वमस्ति ।

## भामती ।

एकमद्वितीयं जगदुपादानमित्यत्र श्रुत्यन्तरमपि पठति—**तथान्यत्रेति** । ब्रह्म चतुष्पादष्टाशफं षोडशकलम् । **तद्यथा**—प्राची प्रतीची दक्षिणोदीचीति चतस्रः कलाः, ब्रह्मणः प्रकाशवान्नाम प्रथमः पादः । तदर्धं शफः । तथा पृथिव्यन्तरिक्षं द्यौः समुद्र इत्यपराश्चतस्रः कलाः, द्वितीयः पादोऽनन्तवान्नाम । तथाग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः, स ज्योतिष्मान्नाम तृतीयः पादः । प्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाः, स चतुर्थ आयतनवान्नाम ब्रह्मणः पादः । तदेवं षोडशकलं षोडशावयवं ब्रह्मोपास्यमिति सिद्धम् । **स्यादेतत्**—ईक्षतेरिति श्तिपा धातुस्वरूपमुच्यते । न चाविवक्षितार्थस्य धातुस्वरूपस्य चेतनोपादानसाधनत्वसंभव इत्यत आह—**ईक्षतेरिति** । धात्वर्थनिर्देशोऽभिमतः; विषयिणा विषयलक्षणात् । प्रसिद्धा चेयं लक्षणेत्याह—**यजतेरितिवदिति** । **'यः सर्वज्ञः'** इति सामान्यतः, **'सर्ववित्'** इति विशेषतः । सांख्यीयं स्वमतसमाधानमुपन्यस्य दूषयति—**यत्तूक्तं सत्त्वधर्मेणेति** । पुनः सांख्यमुत्थापयति—**ननूक्तमिति** । परिहरति—**तदपीति** । समुदाचरद्वृत्ति तावन्न भवति सत्त्वं, गुणवैषम्यप्रसङ्गेन साम्यानुपपत्तेः । नचाव्यक्तेन रूपेण ज्ञानमुपयुज्यते; रजस्तमसोस्तत्प्रतिबन्धस्यापि सूक्ष्मेण रूपेण सद्भावादित्यर्थः । **अपिच** चैतन्यप्रधानवृत्तिवचनो जानातिर्न चाचेतने वृत्तिमात्रे दृष्टचरप्रयोग इत्याह—**अपिच नासाक्षिकेति** ।

## वेदान्तकल्पतरुः ।

**विवक्षितत्वादिति । पञ्चीकरणमेवम्**—पञ्चभूतानि प्रथमं प्रत्येकं द्विधा विभज्यन्ते । तत एकैकमर्धं चतुर्धा क्रियते । ते च चत्वारो भागा इतरभूतेषु चतुर्षु निक्षिप्यन्ते । तत्राकाशस्य स्वार्धेन भूतान्तरागतपादचतुष्केण च पञ्चीकरणम् । एवं भूतान्तरेषु योजना । त्रिवृत्करणे तु त्रीणि भूतानि द्विधा विदार्य प्रतिभूतमेकैकमर्धं द्विधा प्रस्फोट्येतरभूतद्वये योजनमिति । अभ्युच्चयाय श्रुत्यन्तरोदाहरणमित्याह—**एकमिति । ब्रह्म चतुष्पादिति** । क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्येत्यस्य भाष्यस्य व्याख्यानम् । पशोः पादेषु हि पुरतः खुरौ पृष्ठतश्च द्वौ पार्ष्णिस्थानीयावयवौ दृश्येते । तद्वत्परमात्मन्यपि चतुष्पात्त्वेन षोडशकलत्वेन च पशुरूपकल्पनयोपासनम् ॥ इदमुदाहरणमत्र न संगच्छते; **प्रश्नोपनिषदि** हि—"इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्तीति" प्रस्तुत्य "स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतप्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीमिन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम चेति" पठ्यते । **छान्दोग्येतु**—दिगाद्यवयवः षोडशकल उपास्यो, नच तत्र स ईक्षांचक्रे इति श्रवणमस्ति । तस्माद् न्यायनिष्ठं शास्त्रमिति द्योतयितुमनुदाहरणमप्युदाहृतम् । **अथवा**—एवं कथंचित्समर्थनीयम् । **परब्रह्मप्रमित्यर्थो सृष्टिमाश्रित्य शासति । उपासनानि वेदान्तास्तत एतदुदाहृतम् ॥** या हि कलाः प्रश्ने परमात्मप्रमितिप्रयोजनास्तत उत्पन्ना इत्युक्तास्ताभिर्विशिष्टः छान्दोग्ये स एवोपास्य उक्तः । तत्र यद्यपि श्रद्धादयश्छान्दोग्ये न पठिताः नापि दिगादयः प्रश्ने, नच गुणोपसंहारः, सगुणनिर्गुणत्वेन विद्याभेदादुपसंहारे चाधिकसंख्यापत्तौ षोडशकलत्वभङ्गात्; तथापि पृथिवीन्द्रियमनःप्राणादयः कियन्तः समा उभयत्रापि, दिगादयस्तु लोकेष्वन्तर्भवन्ति, नच यावत्सृष्टावुक्तं तावत्सर्वमुपास्तावुपसंह्रियते; येन संख्यातिरिच्यते, उपयोगि तु । तस्मात्प्रश्नच्छान्दोग्ययोरेकत्वात् षोडशकलस्य शक्यते वक्तुं दिगाद्यवयवं षोडशकलं प्रस्तुत्य स ईक्षांचक्रे इति श्रूयत इति । एवंच निर्गुणप्रकरणे कलाशब्दप्रयोगोऽन्यत्रोपास्यत्वाभिप्रायः सन् सोपयोग इति । **कलाः षोडश भूतानि प्राणोऽक्षं नाम कर्म च । श्रद्धा लोकास्तपो मन्त्रा मनो वीर्यं शरीरकम् ॥ सिद्धेति** । लक्षणाया एव निरूढत्वार्थं प्रयोगानुगमो न वाचकत्वायेत्यर्थः ।

## कल्पतरुपरिमलः ।

**प्रयोगानुगम इति** । भाष्यकारीयं प्रयोगोदाहरणमित्यर्थः । **न वाचकत्वायेति** । अनेकार्थत्वस्यान्याय्यत्वादिति भावः ॥

तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम् । योगिनां तु चेतनत्वात्सत्त्वोत्कर्षनिमित्तं सर्वज्ञत्वमुपपन्नमित्यनुदाहरणम् । अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्प्येत, यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वम्; तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तम् । यत्पुनरुक्तं—ब्रह्मणोऽपि न मुख्यं सर्वज्ञत्वमुपपद्यते, नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासंभवादिति । अत्रोच्यते—इदं तावद्भवान्प्रष्टव्यः, कथं नित्यज्ञानक्रियत्वे सर्वज्ञत्वहानिरिति? यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम् । अनित्यत्वे हि ज्ञानस्य कदाचिज्जानाति कदाचिन्न जानातीत्यसर्वज्ञत्वमपि स्यात् । नासौ ज्ञाननित्यत्वे दोषोऽस्ति । ज्ञाननित्यत्वे ज्ञानविषयः स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेन्न; प्रततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात् । ननु सवितुर्दाह्यप्रकाश्यसं-

## भामती ।

कथं तर्हि योगिनां सत्त्वांशोत्कर्षहेतुकं सर्वज्ञत्वमित्यत आह—**योगिनां त्विति** । सत्त्वांशोत्कर्षो हि योगिनां चैतन्यचक्षुष्मतामुपकरोति, नान्धस्य प्रधानस्येत्यर्थः । यदि तु कापिलमतमपहाय हैरण्यगर्भमास्थीयेत, तत्राप्याह—**अथ पुनः साक्षिनिमित्तमिति** । तेषामपि हि प्रकृष्टसत्त्वोपादानं पुरुषविशेषस्यैव क्लेशकर्मविपाकाशयापरामृष्टस्य सर्वज्ञत्वं, न तु प्रधानस्याचेतनस्य; तदपि चाद्वैतश्रुतिभिरपास्तमिति भावः । पूर्वपक्षबीजमनुभाषते—**यत्पुनरुक्तं ब्रह्मणोऽपीति** । चैतन्यस्य शुद्धस्य नित्यत्वेऽप्युपहितं सदनित्यं कार्यं, आकाशमिव घटावच्छिन्नमित्यभिसंधाय परिहरति—**इदं तावद्भवानिति** । **प्रततौष्ण्यप्रकाशे सवितरि** इत्येतदपि विषयावच्छिन्नप्रकाशः कार्यमित्येतदभिप्रायम् । वैषम्यं चोदयति—**ननु सवितुरिति** । किं वास्तवं कर्माभावमभिप्रेत्य वैषम्यमाह भवान्, उत तद्विव-

## वेदान्तकल्पतरुः ।

**सप्तमे स्थितम्**—इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ( जै. अ. ७ पा. ४ सू. १ ) । सौर्यादिष्वनाम्नानादनितिकर्तव्यताकत्वे प्राप्ते—उच्यते; यथा लोके शाकादिषु सिद्धेषु वदत्योदनं पचेति, तथेह सिद्धवत्कृत्य सामान्येनेतिकर्तव्यतां करणं विहितम् । तस्याश्च विकृतिष्वविधेः सौर्यादीनां विकृतियागानां दर्शादिप्रकृतिविहितपूर्वेतिकर्तव्यतावत्त्वमिति ॥ **समुदाचरणं** व्यक्तिः । **तेषामपि** हैरण्यगर्भाणां मते क्लेशैरविद्याऽस्मितारागद्वेषाभिनिवेशैर्धर्माधर्मकर्मणां विपाकेन तत्फलेन आशयेन फलभोगवासनया अस्पृष्टस्य पुरुषस्यैव प्रकृष्टसत्त्वोपादानं सर्वज्ञत्वं, नाचेतनस्येत्यर्थः । नचैतदपि भेदमतं श्रद्धेयमित्याह—**तदपि चेति** । इदं तावदित्यादिदोषोस्तीत्यन्तं भाष्यं ब्रह्मणि प्रकृत्यर्थस्येक्षणस्याज्ञस्य प्रदर्शनपरम् । ज्ञाननित्यत्व इत्यादिना प्रत्ययार्थानुपपत्तिमाशङ्क्य परिह्रियते, तदभिप्रायमाह—**एतदपीति** । अनुपहितनित्यचैतन्ये

## कल्पतरुपरिमलः ।

**ननु** यजतेरिति कुत्रत्यः प्रयोगः ? तत्र वा धातुपरत्वं किं न स्यात् ? इति शङ्काद्वयं परिहर्तुं यजतेरिति प्रयोगयुक्तं जैमिनिसूत्रं लिखित्वाऽधिकरणमुपन्यस्यति—**सप्तमे स्थितमिति** । **शाकादिषु सिद्धेष्विति** । शाकादिपाकेषु सिद्धवत्कृतेष्वित्यर्थः । **यद्वा**—यथा शाकादिषु प्राक्सिद्धेषु विद्यमानेषु तेषां प्राप्तिं सिद्धवत्कृत्यौदनपाकमात्रं विधीयते, तथेत्यर्थः । यद्यपि शाकानामोदनपाकस्वरूपे तत्फलओदने च नेतिकर्तव्यतारूपेणाकाङ्क्षा; तथाप्योदनस्य फलं भोजनमिति तत्राकाङ्क्षासत्त्वादाकाङ्क्षामात्रे दृष्टान्तोयम् । **ननु**—तत्र शाकादिषु यथा कथंचिदाकाङ्क्षामात्रं वास्ति, इह त्वितिकर्तव्यताकाङ्क्षैव नास्ति, यथाश्रुति सौर्यचरुयागमात्रेण ब्रह्मवर्चसाऽपूर्वोत्पत्त्युपपत्तेरिति—**चेत्, उच्यते;** सौर्ययागेन ब्रह्मवर्चसं कुर्यादिति विधौ न ज्ञायते केन प्रकारेण तेन ब्रह्मवर्चसापूर्वं कर्तव्यमिति । अतस्तेन कथं कर्तव्यमिति भवत्याकाङ्क्षा । नहि पाकेनौदनं कुर्वित्यत्र निर्ज्ञातप्रकारे ओदनपाक इव पाकेन धात्वन्तरं कुर्वित्यत्रानिर्ज्ञातप्रकारेऽप्याकाङ्क्षा न भवति । तदिहाकाङ्क्षापूरणार्थमित्थं कर्तव्यमितीति कर्तव्यताविधानमपेक्ष्यते । तच्च दर्शपूर्णमासादिष्वग्न्यन्वाधानबर्हिराहरणादिवत् प्रकरणाम्नातं नास्ति । अथापि करणविधानं दृश्यते, तेन ज्ञायते नूनमन्यतः संभवत्प्राप्तिकेतिकर्तव्यताऽत्र विवक्षिताऽस्तीति । अतो यजतेः सौर्यादियागस्याकाङ्क्षानुसारेण सेतिकर्तव्यताकत्वं युक्तमेव । एवंच यद्यपि सौर्यादीनामनितिकर्तव्यताकत्वपूर्वपक्षनिराकरणार्थेन सिद्धान्तेन तेषां सेतिकर्तव्यताकत्वमात्रं सिद्धं; तथाप्याष्टमिकैः इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः ( जै. अ.८ पा.१ सू. ११ ) इत्याद्यधिकरणैः सेत्यस्य दर्शपूर्णमासादिप्रकृतिकत्वं सिद्धवत्कृत्य दर्शादिप्रकृतिविहितेत्युक्तम् । **ननु**—अत्र यजतिपदस्य सौर्यादियागपरत्वं वक्तव्यमिति लक्षणास्तु, ईक्षतिपदस्य तु धातुपरत्वमपि युज्यते; यत्रेक्षणं मुख्यं नास्ति ततो मुख्यार्थस्येक्षतिधातोरपि व्यावृत्तेरर्थवद्धातोरपि लिङ्गत्वसंभवादिति—**चेन्न;** अर्थस्याचेतनाद्व्यावृत्त्यवगमं विना तद्वाचकस्य ततो व्यावृत्तेरवगन्तुमशक्यतया प्रथमोपस्थितस्यार्थस्यैवात्र लिङ्गतौचित्यात् । तदेतन्न चाविवक्षितार्थधातुस्वरूपस्य चेतनोपादानसाधनत्वसंभव इति टीकाग्रन्थेन स्पष्टत्वान्नोक्तम् ॥ **अस्पृष्टस्य पुरुषस्यैवेति** । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषवि-

योगे सति दहति प्रकाशयतीति व्यपदेशः स्यात्, नतु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः । न; असत्यपि कर्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनात् । एवमसत्यपि ज्ञानकर्मणि ब्रह्मणः 'तदैक्षत' इति कर्तृत्वव्यपदेशोपपत्तेर्न वैषम्यम् । कर्मापेक्षायां तु ब्रह्मणीक्षितृत्वश्रुतयः सुतरामुपपन्नाः । किं पुनस्तत्कर्म? यत्प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति । तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः । यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः, किमु वक्तव्यं तस्य नित्यसिद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति । यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसंबन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति, न तच्चोद्यमवतरति; सवितृप्रकाशवद्ब्रह्मणो ज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्तेः । अपिचाविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य । मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः—'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वेता० ६।८) इति । 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' (श्वेता० ३।१९) इति च । ननु—नास्ति तावज्ज्ञानप्रतिबन्धकारणवानीश्वरादन्यः संसारी; 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता' ( बृह० ३।७।२३ ) इति श्रुतेः । तत्र किमिदमुच्यते संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येति । अत्रोच्यते—

## भामती ।

क्षाभावम् । **तत्र यदि तद्विवक्षाभावं,** तदा प्रकाशयतीत्यनेन मा भूत्साम्यं, प्रकाशत इत्यनेन त्वस्ति, नह्यत्र कर्म विवक्षितम्; अथच प्रकाशस्वभावं प्रत्यस्ति स्वातन्त्र्यं सवितुरिति परिहरति—**न । असत्यपि कर्मणीति ।** असत्यपीत्यविवक्षितेऽपीत्यर्थः । अथ वास्तवं कर्माभावमभिसंधाय वैषम्यमुच्येत, तन्न; असिद्धत्वात्कर्माभावस्य, विवक्षितत्वाच्चात्र कर्मण इति परिहरति—**कर्मापेक्षायां त्विति ।** यासां सति कर्मण्यविवक्षिते श्रुतीनामुपपत्तिस्तासां सति कर्मणि विवक्षिते सुतरामित्यर्थः । **यत्प्रसादादिति । यस्य** भगवत ईश्वरस्य प्रसादात् तस्य नित्यसिद्धस्येश्वरस्य नित्यं ज्ञानं भवतीति किमु वक्तव्यमिति योजना । **यथाहुर्योगशास्त्रकाराः**—'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च इति । **तद्भाष्यकाराश्च**–'भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति ज्ञानवैराग्यादिना' इति । **सवितृप्रकाशवदिति ।** वस्तुतो नित्यस्य करणानपेक्षां स्वरूपेणोक्त्वा व्यतिरेकमुखेनाप्याह—**अपिचाविद्यादिमत इत्यादि ।** आदिग्रहणेन कामकर्मादयः संगृह्यन्ते । **न ज्ञानप्रतिबन्धकारणरहितस्येति ।** संसारिणां वस्तुतो नित्यज्ञानत्वेऽप्य-

## वेदान्तकल्पतरुः ।

कर्तृत्वाभावादित्यर्थः । सवितृप्रकाश्यस्य रूपादेर्भावादसत्यपीति भाष्यायोगमाशङ्क्य विकल्पमुखेनावतारयति **किमिति ।** सवितरि कर्मास्ति, इह तु नेति वस्तुत एव कर्माभाव उदाहरणाद्वैषम्यमभिमतम्, उत दृष्टान्ते कर्म विद्यते विवक्षितं च, दार्ष्टान्तिके तु यद्यपि विद्यते, तथाप्यविवक्षितं; तव मतेऽध्यस्तत्वाद्दृश्यस्येति मतम् । **तत्र द्वितीये विकल्पे** किं सविता प्रकाशयतीत्यस्मादैक्षतेत्यस्य दार्ष्टान्तिकस्य वैषम्यमुत प्रकाशत इत्यस्मात् । **आद्यम**भ्युपगमेन परिहरति—**तदा प्रकाशयतीत्यनेनेति । न द्वितीय** इत्याह—**प्रकाशत इत्यनेनेति । नह्यत्रेति ।** अकर्मकत्वात्प्रकाशतेरित्यर्थः । एवंच सत्यैक्षतेत्येतदपीक्षणं करोतीत्येवंपरं, नत्वालोचयतीत्येवमर्थमिति । प्रकाशत इति कर्तृत्वव्यपदेशदर्शनादित्ययमेव भाष्यपाठः साधुर्न णिजन्तः । **आद्यविकल्प**योर्मध्ये **प्रथमं** प्रत्याह—**अथेति ।** ऐक्षतेत्यत्र कर्माविवक्षामुपेत्य प्रकाशत इतिवत्कर्तृत्वनिर्देश उपपादितः, इदानीमविवक्षाप्यसिद्धेत्याह—**विवक्षितत्वाच्चेति ।** न खल्वस्माकं क्वचिद्वास्तवं दृश्यमस्त्यतोऽध्यस्ततयैव कर्मत्वस्य विवक्षेत्यर्थः । या तु प्रधानस्य सर्वज्ञत्वे साक्षिणी सत्त्वोत्कर्षे योगिसार्वज्ञ्यप्रसिद्धिरुक्ता, सा समा ब्रह्मण्यपि; चेतनेश्वरप्रसादायत्तयोगिसर्वज्ञत्वस्य पातञ्जलतन्त्रे प्रसिद्धत्वाद्, इत्येवमर्थं यत्प्रसादादित्यादिभाष्यं, तद्याचष्टे—**यस्येति । तत** ईश्वरप्रणिधानात्प्रत्यगात्माधिगमोऽन्तरायस्य रागादेरप्यभाव इति सूत्रार्थः । **वस्तुतो नित्यस्येति ।** औपाधिकत्वेनानित्यत्वस्योक्तत्वादिति । **कारणानपेक्षामिति ।** कर्ममात्रमुपाधिमीक्षणमपेक्षते, न शरीरादीति

## कल्पतरुपरिमलः ।

शेष ईश्वरः ( योगसू. पा. १ सू. २४ ) इति पातञ्जलसूत्रलक्षितस्येश्वरस्येत्यर्थः ॥ **ईक्षणं करोतीत्येवंपरं न त्वालोचयतीत्येवमर्थमिति ।** ईक्षणं ब्रह्मप्रकाशमात्रं सवितृप्रकाशवदकर्मकत्वेनाप्युपपद्यते, आलोचयतिस्तु कर्मापेक्ष एवेति

सत्यं नेश्वरादन्यः संसारी; तथापि देहादिसंघातोपाधिसंबन्ध इष्यत एव, घटकरकगिरिगुहाद्युपाधिसंबन्ध इव व्योम्नः । तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टो घटच्छिद्रं करकादिच्छिद्रमित्यादिराकाशाव्यतिरेकेऽपि । तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा । तथेहापि देहादिसंघातोपाधिसंबन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः । दृश्यते चात्मन एव सतो देहादिसंघातेऽनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्वेण । सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः । यदप्युक्तं प्रधानस्यानेकात्मकत्वान्मृदादिवत्कारणत्वोपपत्तिर्नासंहतस्य ब्रह्मण इति, तत्प्रधानस्याशब्दत्वेनैव प्रत्युक्तम् । यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्वोढुं शक्यते, न प्रधानादीनां, तथा प्रपञ्चयिष्यति—'न विलक्षणत्वादस्य-' (ब्र० २।१।४) इत्येवमादिना ॥ ५ ॥ अत्राह—यदुक्तं नाचेतनं प्रधानं जगत्कारणम्, ईक्षितृत्वश्रवणादिति, तदन्यथाप्युपपद्यते; अचेतनेऽपि चेतनवदुपचारदर्शनात् । यथा प्रत्यासन्नपतनतां नद्याः कूलस्यालक्ष्य कूलं पिपतिषतीत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टः, तद्वदचेतनेऽपि प्रधाने प्रत्यासन्नसर्गे चेतनवदुपचारो भविष्यति 'तदैक्षत' इति । यथा लोके कश्चिच्चेतनः स्नात्वा भुक्त्वा चापराह्णे ग्रामं रथेन गमिष्यामीतीक्षित्वानन्तरं तथैव नियमेन प्रवर्तते, तथा प्रधानमपि महदाद्याकारेण नियमेन प्रवर्तते; तस्माच्चेतनवदुपचर्यते । कस्मात्पुनः कारणाद्विहाय मुख्यमीक्षितृत्वमौपचारिकं कल्प्यते ? 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' (छान्दो० ६।२।३,४) इति चाचेतनयोरप्यप्तेजसोश्चेतनवदुपचारदर्शनात्, तस्मात्सत्कर्तृकमपीक्षणमौपचारिकमिति गम्यते; उपचारप्राये वचनात्, इत्येवं प्राप्त इदं सूत्रमारभ्यते—

## गौणश्चेन्नात्मशब्दात्[२] ॥ ६ ॥

यदुक्तं प्रधानमचेतनं सच्छब्दवाच्यं, तस्मिन्नौपचारिक ईक्षतिः, अप्तेजसोरिवेति । तदसत्; कस्मात्? आत्मशब्दात् । 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रम्य 'तदैक्षत तत्तेजोऽसृजत' (छान्दो० ६।२।१,३) इति च तेजोऽबन्नानां सृष्टिमुक्त्वा तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जी-

भामती ।

विद्यादयः प्रतिबन्धकारणानि सन्ति, नतु ईश्वरस्याविद्यारहितस्य ज्ञानप्रतिबन्धकारणसंभव इति भावः । न तस्य कार्यमावरणाद्यपगमो विद्यते; अनावृतत्वादिति भावः । ज्ञानबलेन क्रिया । प्रधानस्य त्वचेतनस्य ज्ञानबलाभावाज्जगतो न क्रियेत्यर्थः । अपाणिर्ग्रहीता, अपादो जवनो वेगवान् विहरणवान् । अतिरोहितार्थमन्यत् । **स्यादेतत्**-अनात्मनि व्योम्नि घटाद्युपाधिकृतो भवत्ववच्छेदविभ्रमः, नतु आत्मनि स्वभावसिद्धप्रकाशे स घटते, इत्यत आह—**दृश्यते चात्मन एव सत इति**। **अभिनिवेशः** मिथ्याभिमानः। **मिथ्याबुद्धिमात्रेण पूर्वेणेति**। अनेनानादिता दर्शिता।

वेदान्तकल्पतरुः ।

भावः । **स्वरूपेणेति** । अन्वयेनेत्यर्थः । ज्ञानाभिव्यक्तये कर्तव्यं नास्तीत्याह—**आवरणादीति** । ज्ञानमेव बलं सामर्थ्यमुपाध्यवच्छिन्नफलोत्पत्तौ, तेन बलेन फलभूतानुभवस्य कारणं क्रिया, सा च न प्रधानस्येत्याह—**प्रधानस्य त्विति** । अभिनिवेशस्यैव मिथ्याबुद्धित्वात्कथं तस्यैव तं प्रति हेतुत्वमत आह—**पूर्वेणेति** । **ननु** लयलक्षणाऽविद्योपादानमस्ति-कथं मात्रशब्दोऽत आह—**मात्रेति** । ५ । ६ । गौणश्चेदिति ( ब्र. अ. १ पा. १ सू. ६ ) सूत्रसंबन्धिभाष्यमनुक्रमणि-

कल्पतरुपरिमलः ।

तात्पर्यम् ॥ ५ ॥ ६ ॥ **गौणश्चेदिति सूत्रासंबन्धिभाष्यमिति** । भाष्यग्रहणेन सूत्रे किंचिद्व्याख्यातव्यमस्तीति सूचितम् । तत्प्रदर्श्यते । पूर्वसूत्रेण ब्रह्मणि ईक्षतिलिङ्गसमन्वये सिद्धे सार्वज्ञ्याद्यनुपपत्तिसहकृतत्वाभावाद् गौणप्रायपाठमात्रं यद्यपि श्रुतेर्बाधकं न भवति; तथापीक्षणं प्रधाने गौणं, कर्तृत्वं ब्रह्मणि वेति विशये प्रायपाठमात्रमपि नियामकं भवितुमर्ह-

१ **ईक्षतेर्नाशब्दम्**—अत्र अशब्दपदेन आनुमानिकमित्यर्थविवक्षया प्रधानरूपपक्षसमर्पणं तु न युक्तम्; ब्रह्मणोऽप्यानुमानिकत्वेनाशब्दपदस्योभयसाधारण्यात् । एवंच प्रधानं न जगत्कारणं, अशब्दत्वात्, कथमशब्दत्वं, ईक्षितेरिति सौत्रपदादिविभागः ।

२ आत्मशब्दादित्यस्य स्वरूपत्वप्रतिपादकशब्दादित्यर्थः । तेन च सच्छब्दवाच्यं प्रति जीवस्य स्वरूपत्वप्रतिपादकः, जीवंप्रति सच्छब्दवाच्यस्य स्वरूपत्वप्रतिपादकशब्दश्चेत्युभयमपि संगृहीतं भवति । तत्र प्राथमिकस्यार्थस्योपपादानं भाष्ये 'सदेवेत्या'दिना जीवविषय आत्मशब्दप्रयोग उपपद्यते इत्यन्तेन ग्रन्थेन । द्वितीयस्य **तथेत्यादिना श्वेतकेतोरात्मत्वेनोप**दिशतीत्यन्तेन विवरणमिति विवेकः । आत्मेत्यात्मशब्दादित्यपरोऽप्यर्थः भाष्ये स आत्मेति प्रकृतसदणिमानं आत्मानं आत्मशब्देनेत्यादिनिर्देशेन संगृहीतः ।

वेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छान्दो० ६।३।२) इति । तत्र यदि प्रधानमचेतनं गुणवृत्त्येक्षितृ कल्प्येत, तदेव प्रकृतत्वात्सेयं देवतेति परामृश्येत । न तदा देवता जीवमात्मशब्देनाभिदध्यात् । जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता; तत्प्रसिद्धेर्निर्वचनाच्च । स कथमचेतनस्य प्रधानस्यात्मा भवेत् । आत्मा हि नाम स्वरूपम् । नाचेतनस्य प्रधानस्य चेतनो जीवः स्वरूपं भवितुमर्हति । अथ तु चेतनं ब्रह्म मुख्यमीक्षितृ परिगृह्यते, तस्य जीवविषय आत्मशब्दप्रयोग उपपद्यते । तथा 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छान्दो० ६।१४।३) इत्यत्र 'स आत्मा' इति प्रकृतं सदणिमानमात्मानमात्मशब्देनोपदिश्य 'तत्त्वमसि श्वेतकेतो' इति चेतनस्य श्वेतकेतोरात्मत्वेनोपदिशति । अप्तेजसोस्तु विषयत्वादचेतनत्वं; नामरूपव्याकरणादौ च प्रयोज्यत्वेनैव निर्देशात्, न चात्मशब्दवत्किंचिन्मुख्यत्वे कारणमस्तीति युक्तं कूलवद्गौणत्वमीक्षितृत्वस्य । तयोरपि च सदधिष्ठितत्वापेक्षमेवेक्षितृत्वम्, सतस्त्वात्मशब्दान्न गौणमीक्षितृत्वमित्युक्तम् ॥ ६ ॥ अथोच्येताचेतनेऽपि प्रधाने भवत्यात्मशब्दः; आत्मनः सर्वार्थकारित्वात्, यथा राज्ञः सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममात्मा भद्रसेन इति । प्रधानं हि पुरुषस्यात्मनो भोगापवर्गौ कुर्वदुपकरोति, राज्ञ इव भृत्यः संधिविग्रहादिषु वर्तमानः । अथवैक एवात्मशब्दश्चेतनाचेतनविषयो भविष्यति; भूतात्मेन्द्रियात्मेति च प्रयोगदर्शनात्, यथैक एव ज्योतिःशब्दः क्रतुज्वलनविषयः । तत्र कुत एतदात्मशब्दादीक्षतेरगौणत्वमित्यत उत्तरं पठति—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

न प्रधानमचेतनमात्मशब्दालम्बनं भवितुमर्हति; 'स आत्मा' इति प्रकृतं सदणिमानमादाय 'तत्त्वमसि श्वेतकेतो' इति चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य तन्निष्ठामुपदिश्य 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छान्दो० ६।१४।२) इति मोक्षोपदेशात् । यदि ह्यचेतनं प्रधानं सच्छब्दवाच्यं तदसीति ग्राहयेन्मुमुक्षुं चेतनं सन्तमचेतनोऽसीति, तदा विपरीतवादि शास्त्रं पुरुषस्यानर्थायेत्यप्रमाणं स्यात्, नतु निर्दोषं शास्त्रमप्रमाणं कल्पयितुं युक्तम् । यदि चाज्ञस्य सतो मुमुक्षोरचेतनमनात्मानमात्मेत्युपदिशेत्प्रमाणभूतं शास्त्रं, स श्रद्दधानतयान्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत्, तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत, तथासति पुरुषार्थाद्विहन्येतानर्थं च ऋच्छेत् । तस्माद्यथा स्वर्गाद्यर्थिनोऽग्निहोत्रादिसाधनं यथाभूतमुपदिशति, तथा मुमुक्षोरपि 'स आत्मा तत्त्वमसि श्वेतकेतो' इति यथाभूतमेवात्मानमुपदिशतीति युक्तम् । एवंच सति तप्तपरशुग्रहणमोक्षदृष्टान्तेन सत्याभिसंधस्य मोक्षोपदेश उपपद्यते । अन्यथा ह्यमुख्ये सदात्मतत्त्वोपदेशे 'अहमुक्थमस्मीति विद्यात्' (ऐ० आर० २।१।२।६) इतिवत्संपन्मात्रमिदमनित्यफलं स्यात् । तत्र मोक्षोपदेशो नोपपद्येत । तस्मान्न सदणिमन्यात्मशब्दस्य गौणत्वम् । भृत्ये तु स्वामिभृत्यभेदस्य प्रत्यक्षत्वादुपपन्नो गौण आत्मशब्दो ममात्मा भद्रसेन इति । अपिच क्वचिद्गौणः शब्दो दृष्ट इति नैतावता शब्दप्रमाणकेऽर्थे गौणी कल्पना न्याय्या;सर्वत्रानाश्वासप्रसङ्गात्—यत्तूक्तं-चेतनाचेतनयोः साधारण आत्मशब्दः क्रतुज्वलनयोरिव ज्योतिःशब्दः-इति, तन्न; अनेकार्थत्वस्यान्याय्यत्वात् । तस्माच्चेतनविषय एव मुख्य आत्मश-

---

### भामती ।

मात्रग्रहणेन विचारासहत्वेन निर्वचनीयता निरस्ता । परिशिष्टं निगदव्याख्यातम् ॥ ५ ॥ ६ ॥ **तन्निष्ठस्य मोक्षोपदेशादिति** । शङ्कोत्तरत्वेन वा स्वातन्त्र्येण वा प्रधाननिराकरणार्थं सूत्रम् । शङ्का च भाष्ये उक्ता ॥ ७ ॥ **स्यादेतत्**—

### वेदान्तकल्पतरुः ।

कायां व्याख्यातमित्युपरितनभाष्यं व्याचष्टे—**शङ्कोत्तरत्वेनेत्यादिना** ॥ यः सदाख्यः एषोऽणिमाऽणोर्भावः । भावभवित्रोरभेदादणुः ॥ एतस्यात्मनो भाव ऐतदात्म्यम् । अयमपि प्रयोगो भवितृपरः । एतदात्मकं जगत् ॥ सत्येन तप्तपरशुं

व्दश्चेतनत्वोपचाराद्भूतादिषु प्रयुज्यते भूतात्मेन्द्रियात्मेति च । साधारणत्वेऽप्यात्मशब्दस्य न प्रकरणमुपपदं वा किंचिन्निश्चायकमन्तरेणान्यतरवृत्तिता निर्धारयितुं शक्यते । नचात्राचेतनस्य निश्चायकं किंचित्कारणमस्ति । प्रकृतं तु सदीक्षितृ, संनिहितश्चेतनः श्वेतकेतुः, नहि चेतनस्य श्वेतकेतोरचेतन आत्मा संभवतीत्यवोचाम । तस्माच्चेतनविषय इहात्मशब्द इति निश्चीयते । ज्योतिःशब्दोऽपि लौकिकेन प्रयोगेण ज्वलन एव रूढोऽर्थवादकल्पितेन तु ज्वलनसादृश्येन क्रतौ प्रवृत्त इत्यदृष्टान्तः । अथवा—पूर्वसूत्र एवात्मशब्दं निरस्तसमस्तगौणत्वसाधारणत्वशङ्कया व्याख्याय ततः स्वतन्त्र एव प्रधानकारणनिराकरणहेतुर्व्याख्येयः—'तन्निष्ठस्य मोक्षोपदेशात्' इति । तस्मान्नाचेतनं प्रधानं सच्छब्दवाच्यम् ॥ ७ ॥ कुतश्च न प्रधानं सच्छब्दवाच्यम् ?—

## हेयत्वावचनाच्च ॥ ८ ॥

यद्यनात्मैव प्रधानं सच्छब्दवाच्यं 'स आत्मा तत्त्वमसि' इतीहोपदिष्टं स्यात्, स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षुस्तस्य हेयत्वं ब्रूयात्, यथारुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां ताराममुख्यां प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति तद्वन्नायमात्मेति ब्रूयात् । नचैवमवोचत् । सन्मात्रात्मावगतिनिष्ठैव हि षष्ठप्रपाठकपरिसमाप्तिर्दृश्यते । चशब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः । सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत । कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातम्; 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । एवं सोम्य स आदेशो भवति' ( छां० ६।१।१,३ ) इति वाक्योपक्रमे श्रवणात् । नच सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति; अप्रधानविकारत्वाद्भोक्तृवर्गस्य । तस्मान्न प्रधानं सच्छब्दवाच्यम् ॥ ८ ॥ कुतश्च न प्रधानं सच्छब्दवाच्यम्—

### भामती ।

ब्रह्मैव जीप्सितं, तच्च न प्रथमं सूक्ष्मतया शक्यं श्वेतकेतुं ग्राहयितुमिति तत्संबद्धं प्रधानमेव स्थूलतयात्मत्वेन ग्राह्यते श्वेतकेतुः, अरुन्धतीमिवातीव सूक्ष्मां दर्शयितुं तत्संनिहितां स्थूलतारकां दर्शयतीयमसावरुन्धतीति । अस्यां शङ्कायामुत्तरम्—**हेयत्वावचनाच्च** इति सूत्रम् । चकारोऽनुक्तसमुच्चयार्थः । तच्चानुक्तं भाष्य उक्तम् ॥ ८ ॥ अपिच जगत्कारणं प्रकृत्य स्वपितीत्यस्य निरुक्तं कुर्वती श्रुतिश्चेतनमेव जगत्कारणं ब्रूते । यदि स्वशब्द आत्मवचनः, तथापि चेतनस्य पुरुषस्याचेतनप्रधानत्वानुपपत्तिः । अथात्मीयवचनः, तथाप्यचेतने पुरुषार्थतयात्मीयेऽपि चेतनस्य प्रलयानुपपत्तिः । नहि

### वेदान्तकल्पतरुः ।

गृह्णतो मोक्षवत्सत्यब्रह्मज्ञस्य मोक्ष उक्तः 'तप्तं परशुं गृह्णाती'त्यत्र ॥ **उक्थं** प्राणः । **अर्थवादप्रकल्पितेनेति** । "एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इति प्रकाशकत्वात् ज्योतिष्ट्वेन रूपितत्रिवृदादिस्तुतिसमुदायवत्त्वात्क्रतौ ज्योतिःशब्दः ॥ ७ ॥ **हे श्वेतकेतो पुत्र तमप्यादेशम्** ॥ आदिश्यते इति शास्त्राचार्योपदेशगम्यं **वस्त्वप्राक्षीः** पृष्टवानसि, त्वमाचार्यं । येन श्रुतेन शास्त्रतोऽश्रुतमप्यन्यच्छ्रुतं भवति, अमतमन्यन्मतं तर्कतो येन मतेन, अविज्ञातमनिदिध्यासितं

### कल्पतरुपरिमलः ।

तीति शङ्कितुस्तात्पर्यं, प्रथमश्रुतनिरपेक्षप्रकृत्यर्थगौणत्वायोगादिति परिहारान्तरं नेत्यनेन सूच्यते ॥ **प्रकाशकत्वाद् ज्योतिष्ट्वेन रूपितेति** । ज्योतिष्टोमनामधेयस्य 'ज्योतींषि स्तोमा अस्येति' 'निर्वचनार्थे त्रिवृत्पञ्चदशस्सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इत्यर्थवादे स्तोत्रीयानवकादिरूपेषु त्रिवृदादिस्तोमेषु ज्योतिःशब्दः प्रयुक्तः । ज्वलने रूढस्य तस्य तेषु प्रयोगे प्रकाशकत्वसादृश्यं निमित्तमिति । यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशः स तं, यः सप्तदशः स तं, य एकविंशः स तमिति" वाक्यशेषेण दर्शितम् । प्रथमयज्ञे ज्योतिष्टोमेऽनुष्ठितास्त्रिवृदादिस्तोमाः पश्चादनुष्ठेयानन्यान्क्रतून्प्राप्तांस्तान् **दीपयन्ति** प्रकाशयन्ति । पूर्वमनुष्ठिताः पुनः प्रयोगे अभ्यासपाटवात्सम्यगनुष्ठीयमानाः स्वाश्रयान् क्रतून् उज्ज्वलान् कुर्वन्तीति तस्यार्थः ॥ **स्तुतिसमुदायवत्त्वादिति** । स्तुतिशब्देन स्तोत्रीयऋक्साध्यगुणिनिष्ठगुणाभिधानवाचिना स्तोत्रीयऋक्संख्यारूपाः स्तोमा लक्षणीयाः; त्रिवृदादिशब्दानां स्तोमविशेषवाचित्वात्

## स्वाप्ययात् ॥ ९॥

तदेव सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते—'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति' (छा०६।८।१) इति। एषा श्रुतिः स्वपितीत्येतत्पुरुषस्य लोकप्रसिद्धं नाम निर्वक्ति। स्वशब्देनेहात्मोच्यते। यः प्रकृतः सच्छब्दवाच्यस्तमपीतो भवत्यपिगतो भवतीत्यर्थः। अपिपूर्वस्यैतेर्लयार्थत्वं प्रसिद्धं; प्रभवाप्ययावित्युत्पत्तिप्रलययोः प्रयोगदर्शनात्। मनःप्रचारोपाधिविशेषसंबन्धादिन्द्रियार्थान्गृह्णंस्तद्विशेषापन्नो जीवो जागर्ति। तद्वासनाविशिष्टः स्वप्नान्पश्यन्मनःशब्दवाच्यो भवति। स उपाधिद्वयोपरमे सुषुप्तावस्थायामुपाधिकृतविशेषाभावात्स्वात्मनि प्रलीन इवेति 'स्वं ह्यपीतो भवति' इत्युच्यते। यथा हृदयशब्दनिर्वचनं श्रुत्या दर्शितम्-'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति' (छा० ८।३।३) इति। यथा वाशनायोदन्याशब्दप्रवृत्तिमूलं दर्शयति श्रुतिः—'आप एव तदशितं नयन्ते, तेज एव तत्पीतं नयते' (छा० ६।८।३,५) इति च। एवं स्वमात्मानं सच्छब्दवाच्यमपीतो भवतीतीममर्थं स्वपितिनामनिर्वचनेन दर्शयति। नच चेतन आत्माऽचेतनं प्रधानं स्वरूपत्वेन प्रतिपद्येत। यदि पुनः प्रधानमेवात्मीयत्वात्स्वशब्देनैवोच्येत, एवमपि चेतनोचेतनमप्येतीति विरुद्धमापद्येत। श्रुत्यन्तरं च —'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृह० ४।३।२१) इति सुषुप्तावस्थायां चेतनेऽप्ययं दर्शयति। अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणं न प्रधानम् ॥ ९॥ कुतश्च न प्रधानं जगतः कारणम्—

## गतिसामान्यात् ॥ १०॥

यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत्क्वचिच्चेतनं ब्रह्म जगतः कारणं क्वचिदचेतनं प्रधानं क्वचिदन्यदेवेति, ततः कदाचित्प्रधानकारणवादानुरोधेनापीक्षत्यादिश्रवणमकल्पयिष्यत्। नत्वेतदस्ति; समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिः। 'यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ० ३।३) इति। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इति। 'आत्मन एवेदं सर्वम्' (छा० ७।२६।१) इति। 'आत्मन एष प्राणो जायते' (प्र० ३।३) इति चात्मनः कारणत्वं दर्शयन्ति सर्वे वेदान्ताः। आत्मशब्दश्च चेतनवचन इत्यवोचाम। महच्च प्रामाण्यकारणमेतद्यद्वेदान्तवाक्यानां चेतनकारणत्वे समानगतित्वं, चक्षुरादीनामिव रूपादिषु। अतो गतिसामान्यात्सर्वज्ञं ब्रह्म जगतः कारणम् ॥ १०॥ कुतश्च सर्वज्ञं ब्रह्म जगतः कारणम्—

---

### भामती।

भृदात्मा घट आत्मीयेऽपि पाथसि प्रलीयतेऽपि त्वात्मभूतायां मृद्येव। नच रजतमनात्मभूते हस्तिनि प्रलीयते, किंत्वात्मभूतायां शुक्तावेवेत्याह—**स्वाप्ययात्** ॥ ९॥ **गतिसामान्यात्**। गतिरवगतिः। **तार्किकसमय इवेति**। यथाहि तार्किकाणां समयभेदेषु परस्परपराहतार्थता, नैवं वेदान्तेषु परस्परपराहतिः, अपितु तेषु सर्वत्र जगत्कारणचैतन्यावगतिः समानेति। **चक्षुरादीनामिव रूपादिष्विति**। यथाहि सर्वेषां चक्षू रूपमेव ग्राहयति, न

### वेदान्तकल्पतरुः।

विज्ञातं भवति येन विज्ञातेनेति। अन्यज्ञानादन्यन्न ज्ञेयमिति पुत्रप्रश्नः—**कथं न्विति**। नान्यत्वं कार्यस्य कारणादित्याह—यथा सोम्येति। यो विकारः स **वाचारम्भणं** वागालम्बनम्, उच्यते परम्। **नामधेयं** नाममात्रं, नार्थ इति ॥८॥ **मनःशब्दवाच्यो भवतीति**। लक्ष्यो भवति। "एवमेव खलु सोम्य तन्मन" इति स्वप्नोपन्यासवाक्ये अर्थवादस्यापि स्वपितिनामनिर्वचनस्य यथार्थत्वाय हृदयादिनिरुक्त्युदाहरणम्। **तस्य** हृदयशब्दस्य। **एतन्निरुक्तं** निर्वचनम्। "अशनायापिपासे सोम्य विजानीहि" इत्युपक्रम्याशितस्यान्नस्य द्रवीकरणेन नयनाज्जरणादापोऽशनाया। एकवचनं छान्दसम्। द्रावकोदकापनय-

### कल्पतरुपरिमलः।

॥ ७ ॥ ८ ॥ **एकवचनं छान्दसमिति**। इदमुपलक्षणम्। गोनायादिशब्दसाम्येन श्रुतावशनायाशब्दस्य व्युत्पादितत्वात्

**श्रुतत्वाच्च ॥ ११ ॥**

स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते श्वेताश्वतराणां–मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य—'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे० ६।९) इति । तस्मात्सर्वज्ञं ब्रह्म जगतः कारणं, नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥ ११ ॥ इति पञ्चमं ईक्षत्यधिकरणम् ॥

'जन्माद्यस्य यतः' इत्यारभ्य 'श्रुतत्वाच्च' इत्येवमन्तैः सूत्रैर्यान्युदाहृतानि वेदान्तवाक्यानि तेषां सर्वज्ञः सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वं न्यायपूर्वकं प्रतिपादितम् । गतिसामान्योपन्यासेन च सर्वे वेदान्ताश्चेतनकारणवादिन इति व्याख्यातम् । अतः परस्य ग्रन्थस्य किमुत्थानमिति । उच्यते—द्विरूपं हि ब्रह्मावगम्यते, नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम् । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृह० ४।५।१५ ) 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्' ( छान्दो० ७।२४।१ ) 'सर्वाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' (तै० आ० ३।१२।७) 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्' (श्वे० ६।१९) 'नेति नेति' (बृ० २।३।६) इति 'अस्थूलमनणु' ( बृ० ३।८।८ ) 'न्यूनमन्यत्स्थानं संपूर्णमन्यत्' इति चैवं सहस्रशो विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि । तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः । तत्र कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित्क्रममु-

### भामती ।

पुना रसादिकं कस्यचिद्दर्शयति कस्यचिद्रूपम् । एवं रसनादिष्वपि गतिसामान्यं दर्शनीयम् । ॥ १० ॥ **श्रुतत्वाच्च ।** 'तदैक्षत' इत्यत्र ईक्षणमात्रं जगत्कारणस्य श्रुतं, न तु सर्वविषयम् । जगत्कारणसंबन्धितया तु तदर्थात्सर्वविषयमवगतं, श्वेताश्वतराणां तूपनिषदि सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमिति विशेषः ॥ ११ ॥ **इति पंचमं ईक्षत्यधिकरणम् ॥**

उत्तरसूत्रसंदर्भमाक्षिपति—**जन्माद्यस्य यत इत्यारभ्येति ।** ब्रह्म जिज्ञासितव्यमिति हि प्रतिज्ञातं, तच्च शास्त्रैकसमधिगम्यं, शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम् । नचास्ति कश्चिद्वेदान्तभागो, यस्तद्विपरीतमपि बोधयेदिति च 'गतिसामान्यात्' इत्युक्तम् । तत्किमपरमवशिष्यते? यदर्थमुत्तरसूत्रसंदर्भस्यावतारः स्यादिति । **किमुत्थानमिति ।** किमाक्षेपे । समाधत्ते—**उच्यते—द्विरूपं हीति ।** यद्यपि तत्त्वतो निरस्तसमस्तोपाधिरूपं ब्रह्म; तथापि न तेन रूपेण शक्यमुपदेष्टुमित्युपहितेन रूपेणोपदेष्टव्यमिति । तत्र च क्वचिदुपाधिर्विवक्षितः । तदुपासनानि **कानिचित् अभ्युदयार्थानि** मनोमात्रसाधन-

### वेदान्तकल्पतरुः ।

नाच्छोषणादुदन्यं तेजः ॥९॥ **प्राणाः** चक्षुरादयः । **यथायतनं** यथागोलकम् । प्राणेभ्योऽनन्तरमादित्याद्या अनुग्राहका देवाः । लोक्यन्त इति **लोकाः** विषयाः ॥१०॥ करणाधिपानां जीवानामधिपः ॥११॥ **इति पञ्चममीक्षत्यधिकरणम् ॥**

भाष्ये जन्मादिसूत्रमारभ्य वृत्तानुवादः प्रतिज्ञासूत्रसिद्धवत्कारेणेत्याह—**ब्रह्म जिज्ञासितव्यमिति हीति ।** वेदान्तानां ब्रह्मपरत्वे सिद्धेऽपि प्रमाणान्तरैरविरोधार्थमुत्तरसूत्रारम्भमाशङ्क्य तेषां ब्रह्मण्यप्रवेशमाह—**तच्चेति । अत्र भाष्यं**—'द्विरूपं ही'ति, तदयुक्तं; निरुपाधिन एव जिज्ञास्यत्वादित्याशङ्क्याह— **यद्यपीति ।** यदि सोपाधिकरूपस्य निरुपाधिकी देशशेषता, कथं तर्हि उपास्तिरिति ? तत्राह—**क्वचिदिति ।** अवान्तरवाक्यभेदेनोपाधिविवक्षयोपासनविधिरित्यर्थः । उपास्तीनामपि मोक्षसाधनत्वव्यावृत्तये फलान्तराण्याह—**तदुपासनानीति ।** अभ्युदयार्थानि प्रतीकोपासनानि ।

### कल्पतरुपरिमलः ।

कर्मण्यनन्तत्वेन प्राप्तस्य ङीपोऽभावोऽपि छान्दस इति द्रष्टव्यम् । एकवचनाकारयोः छान्दसत्वोक्तिश्च अशनायोदन्याशब्दयोरप्सु तेजसि च संज्ञारूपेण वृत्तिमनाश्रित्य ॥ ९ ॥ **आदित्याद्या अनुग्राहका देवा इति ।** आदित्यादयश्चक्षुरादीनामनुग्राहका इत्यर्थः ॥१०॥११॥ **पञ्चमं ईक्षत्यधिकरणं संपूर्णम् ॥**

---

१ अत्र सूत्राणि ७ ॥ ईक्षतेर्नाशब्दम् । ५ । गौणश्चेन्नात्मशब्दात् । ६ । तन्निष्ठस्य मोक्षोपदेशात् । ७ ॥ हेयत्वावचनाच्च । ८ । स्वाप्ययात् । ९ । गतिसामान्यात् । १० । श्रुतत्वाच्च । ११ ॥

क्त्यर्थानि' कानिचित्कर्मसमृद्ध्यर्थानि। तेषां गुणविशेषोपाधिभेदेन भेदः । एक एव तु परमात्मेश्वरस्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति तथापि यथागुणोपासनमेव फलानि भिद्यन्ते। 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः, 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' ( छा० ३।१४।१ ) इति च। स्मृतेश्च—'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥' (गी० ८।६ ) इति । यद्यप्येक आत्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढः, तथापि चित्तोपाधिविशेषतारतम्यादात्मनः कूटस्थनित्यस्यैकरूपस्याप्युत्तरोत्तरमाविष्कृतस्य तारतम्यमैश्वर्यशक्तिविशेषैः श्रूयते—'तस्य य आत्मानमाविस्तरां वेद' ( ऐ० आ० २।३।२;१ इत्यत्र । स्मृतावपि—'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥' (गी० १०।४१) इति। यत्र यत्र विभूत्याद्यतिशयः स स ईश्वर इत्युपास्यतया चोद्यते। एवमिहाप्यादित्यमण्डले हिरण्मयः पुरुषः सर्वपाप्मोदयलिङ्गात्पर एवेति वक्ष्यति। एवं 'आकाशस्तल्लिङ्गात्' (ब्र० १।१।२२) इत्यादिषु द्रष्टव्यम्। एवं सद्योमुक्तिकारणमप्यात्मज्ञानमुपाधिविशेषद्वारेणोपदिश्यमानमप्यविवक्षितोपाधिसंबन्धविशेषं परापरविषयत्वेन संदिह्यमानं वाक्यगतिपर्यालोचनया निर्णतव्यं भवति । यथैहैव तावत् 'आनन्दमयोऽभ्यासात्' इति। एवमेकमपि ब्रह्मापेक्षितोपाधिसंबन्धं निरस्तोपाधिसंबन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यत इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते । यच्च 'गतिसामान्यात्' इत्यचेतनकारणनिराकरणमुक्तं, तदपि वाक्यान्तराणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्मविपरीतकारणनिषेधेन प्रपञ्चयते—

## भामती ।

यात्र पाठितानि । **कानिचित्क्रममुक्त्यर्थानि, कानिचित्कर्मसमृद्ध्यर्थानि** । क्वचित्पुनरुक्तोऽप्युपाधिरविवक्षितः, यथात्रैवान्नमयादय आनन्दमयान्ताः पञ्च कोशाः । तदत्र कस्मिन्नुपाधिर्विवक्षितः कस्मिन्नेति नाद्यापि विवेचितम्। तथा गतिसामान्यमपि सिद्धवदुक्तं, नत्वद्यापि साधितमिति तदर्थमुत्तरग्रन्थसंदर्भारम्भ इत्यर्थः । **स्यादेतत्**—परस्यात्मनस्तत्तदुपाधिभेदविशिष्टस्याप्यभेदात्कथमुपासनाभेदः, कथं च फलभेद इत्यत आह—**एक एव त्विति** । रूपाभेदेऽप्युपाधिभेदादुपहितभेदादुपासनाभेदः । तथाच फलभेद इत्यर्थः । **क्रतुः** संकल्पः । **ननु** यद्येक आत्मा कूटस्थनित्यो निरतिशयः सर्वभूतेषु गूढः, कथमेतस्मिन् भूताश्रये तारतम्यश्रुतयः ? इत्यत आह—**यद्यप्येक आत्मेति** । यद्यपि निरतिशयमेकमेव रूपमात्मन ऐश्वर्यं च ज्ञानं चानन्दश्च; तथाप्यनाद्यविद्यातमःसमावृतं तेषु प्राणभृद्देहेषु क्वचिदसदिव, क्वचिदत्यन्तापकृष्टमिव, क्वचिदपकृष्टमिव, क्वचित्सत्, क्वचित्प्रकर्षवत्, क्वचिदत्यन्तप्रकर्षवदिव भासते। तत्कस्य हेतोः? अविद्यातमसः प्रकर्षनिकर्षतारतम्यादिति । यथोत्तमप्रकाशः सविता दिङ्मण्डलमेकरूपेणैव प्रकाशेनापूरयन्नपि वर्षासु निकृष्टप्रकाश इव शरदि तु प्रकृष्टप्रकाश इव प्रथते, तथेदमपीति । **अपेक्षितोपाधिसंबन्धं** उपास्यत्वेन । **निरस्तो-**

## वेदान्तकल्पतरुः ।

क्रममुक्त्यर्थानि दहरादीनि । कर्मसमृद्ध्यर्थान्युद्गीथादीनि । एतानि विधेयत्वाद्यद्यपि कर्मकाण्डे वक्तव्यानि; तथापि मानसत्वेन विद्यासाम्यादिहाधीतानीत्यर्थः । गुणभेदेऽपि गुणिन एकत्वादुपासनातत्फलभेदाभाव इति शङ्कते—**स्यादेतदिति** । न विशेषणमात्रमुपाधयः, किंत्वप्पात्रमिव सवितुरवच्छेदकाः । तत्रोपहितभेद इति भाष्याभिप्रायमाह—**रूपाभेदे इति** । यद्यपीत्युत्तरभाष्यं पूर्वेण पुनरुक्तमिव भाति, तदपौनरुक्त्याय तन्निरस्यां शङ्कामाह—**नन्विति** । स्थितेऽप्युपहितभेदे नोपासनविधिरर्थवान्निरतिशयेश्वरस्य प्रत्युपाध्यवस्थानेनोपासकस्यापि स्वत एवैश्वर्यादत औपाधिकानां मध्ये एक उपासकोऽपकृष्टोऽपरमुपास्यमुत्कृष्टमिति तारतम्यं सूचयन्त्य उपासनविधिश्रुतयः कथमित्यर्थः । **वस्तुतः** स्वतःसिद्धैश्वर्योऽप्युपासक उपाधिनिकर्षादनभिव्यक्तैश्वर्यस्तं प्रत्याविर्भूतैश्वर्यं विशुद्धोपाधिमद्ब्रह्मोपास्यमिति परिहाराभिप्रायमाह—**यद्यपीति** । स्थावरादिष्वसदिव ज्ञानादि तिर्यगादिषु सत्तत्रैवात्यन्तापकृष्टं मनुष्येष्वपकृष्टमात्रम्, गन्धर्वादिषु प्रकर्षवद्देवादिष्वत्यन्तप्रकर्षवदिति । अविशेषेण वेदान्तानां निर्विशेषे ब्रह्मणि समन्वयः साधितः, तस्य **क्वचिद्धिरण्मय**वाक्यादावपवादः, **क्वचिदानन्द**मयवाक्यादावपवादाभासप्राप्तौ तदपवादश्च प्रतिपाद्य इत्यध्यायशेष आरभ्यते । **ननु** "ता आप ऐक्षन्त" त्याद्यब्रह्मसंनिधिमपबाध्य मुख्येक्षितृ ब्रह्म निर्णीतम्, इह कथमन्नमयाद्यब्रह्मसंनिधिपाठादानन्दमयस्याब्रह्मत्वशङ्का ? अत

## कल्पतरुपरिमलः ।

वृत्तानुवादटीकायां तच्च शास्त्रैकसमधिगम्यमिति ब्रह्मणः शास्त्रयोनित्वसूत्रसिद्धमानान्तरागम्यत्वानुवादः करिष्यमाणाक्षेपानुपयोगान्न कार्य इत्याशङ्क्य तद्व्यावर्त्यां शङ्कां दर्शयति—**वेदान्तानामिति** । विचार्यत्वेन प्रतिज्ञातं ब्रह्म प्रमाणमुखेन विचारणीयं, ब्रह्मणि यदि वेदान्तवन्मानान्तरमपि प्रमाणं भवेत्, तदा वेदान्तानां ब्रह्मणि प्रामाण्यस्य प्रतिष्ठापितत्वेऽपि मानान्तरविचारार्थमुत्तरसंदर्भारम्भः स्यादिति शङ्कार्थः । मानान्तरैरविधेयार्थमिति पाठश्चेदयं परिहाराभिप्रायः । यत्प्रमाणं

( ६ आनन्दमयाधिकरणम् )

तैत्तिरीयकेऽन्नमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्याम्नायते—'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः' (तै० २।५) इति । तत्र संशयः—किमिहानन्दमयशब्देन परमेव ब्रह्मोच्यते यत्प्रकृतम् 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।० ) इति, किंवाऽन्नमयादिवद्ब्रह्मणोऽर्थान्तरमिति । किं तावत्प्राप्तं ? ब्रह्मणोऽर्थान्तरममुख्य आत्मानन्दमयः स्यात् । कस्मात् ? अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात् । अथापि स्यात्सर्वान्तरत्वादानन्दमयो मुख्य एवात्मेति, न स्यात्; प्रियाद्यवयवयोगाच्छारीरत्वश्रवणाच्च । मुख्यश्चेदात्मानन्दमयः स्यात्, तस्य प्रियादिसंस्पर्शः स्यात् । इह तु 'तस्य प्रियमेव शिरः' इत्यादि श्रूयते । शारीरत्वं च श्रूयते—'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' इति । तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इत्यर्थः । नच सशरीरस्य सतः प्रियाप्रियसंस्पर्शो वारयितुं शक्यः । तस्मात्संसार्येवानन्दमय आत्मेत्येवं प्राप्त इदमुच्यते—

भामती ।

पाधिसंबन्धं ज्ञेयत्वेनेति ॥ तत्र तावत्प्रथममेकदेशिमतेनाधिकरणमारचयति—तैत्तिरीयकेऽन्नमयमित्यादि । गौणप्रवाहपातेऽपि युज्यते मुख्यमीक्षणम् । मुख्यत्वे तूभयोस्तुल्ये प्रायदृष्टिर्विशेषिका ॥ आनन्दमय इति हि विकारे प्राचुर्ये च मयटस्तुल्यं मुख्यार्थत्वमिति विकारार्थान्नमयादिपदप्रायपाठादानन्दमयपदमपि विकारार्थमेवेति युक्तम् । नच—प्राणमयादिषु विकारार्थत्वायोगात्स्वार्थिको मयडिति—युक्तम्; प्राणाद्यु-

वेदान्तकल्पतरुः ।

आह—गौणेति । अनादिगौणेक्षणप्रवाहपातेऽपि जगत्कारणे मुख्यमीक्षणमिति युज्यते; मुख्यसंभवे गौणस्यानवकाशत्वात् । अतस्तत्र विशयानुदये प्रायपाठोऽकिंचित्करः । अत्र तु मयटो विकारप्राचुर्ययोर्मुख्यत्वे सति विकारार्थग्रहणे प्रायदृष्टिर्विशेषिका प्राचुर्यार्थत्वाद्व्यावर्तिकेत्यर्थः । एवंच पूर्वाधिकरणसिद्धान्ताभावेन पूर्वपक्षोत्थानात् प्रत्युदाहरणलक्षणसंगतिरपि सूचिता । संशयबीजं च मयटो विकारप्राचुर्यसाधारण्यमुक्तम् । प्रयोजनं च तत्तदुपास्तिः प्रमितिर्वेति सर्वत्र द्रष्टव्यम् ॥ भास्करोक्तमाशङ्क्याह—नचेति । विकारो हि द्विप्रकारः कश्चिच्छुक्तिरूप्यादिः स्वरूपेणाध्यस्तः, कश्चित्तु प्रतिबिम्बघटाकाशादिरुपाधितो विभक्तः, तत्र प्राणाद्युपाधिविभक्त आत्मा तद्विकारः । अथवा—भृगुवल्ल्युक्ताधिदैविका-

कल्पतरुपरिमलः ।

यत्साधनक्षमं तदेव तदभावबोधनेऽपि प्रभवति । न खलु रूपबोधनाक्षमं श्रोत्रं रूपाभावं बोधयितुं शक्नोति । अतः परब्रह्मणि प्रवर्तितुमक्षमं मानान्तरं वेदान्तबोध्यतत्स्वरूपापहारेऽपि न प्रभवतीति । तमिममर्थं 'श्रुतेस्तु शब्दमूलत्वात्' (ब्र. अ.२ पा.१ सू.२७) इति द्वितीयाध्याये सूत्रकृदेव वक्ष्यति ॥ न विशेषणमात्रमुपाश्रय इति । यद्यपि विशेषणमात्रत्वेऽपि विषयभेदादुपासनाभेदस्तद्भेदात्फलभेदश्च सिध्यति; तथापि संभवाद्धर्मिभेदपर्यन्तः परिहार आश्रितः । ननु भाष्यटीकयोर्वेदान्तेषूपाधिविवक्षाऽविवक्षास्थलविभजनार्थमुत्तरसूत्रारम्भ इत्युक्तमयुक्तम्, नहि वेदान्तत्वोपाधिना अत्र ते विचारणीयाः; येनात्र विवक्षितोपाधयोऽपि विचारणीयाः स्युः, किंतु जिज्ञास्यनिर्विशेषब्रह्मप्रमाणत्वोपाधिना । तत्र चेदविवक्षितोपाधय एव प्रमाणं, तर्हि ते जगत्कारणत्वाद्युपलक्षणमुखेन यथा निर्विशेषपर्यन्तास्तत्रैव प्रमाणं भवन्ति नान्यत्र, तथा प्रतिष्ठापितमेव । अत उत्तरसूत्रप्रपञ्चानारम्भशङ्का तदवस्थेत्याशङ्क्यापवादसङ्गत्या सविशेषवाक्यानां तदपवादसङ्गत्या निर्विशेषवाक्यानां च केषांचिद्विचारार्थं तदारम्भ इत्यत्र तयोस्तात्पर्यमाह—अविशेषेणेति । यद्यपि हिरण्मयादिवाक्यानामपि महातात्पर्येण निर्विशेषे पर्यवसानमस्ति; तथाप्युपाधिविवक्षा नास्तीत्यस्मिन्नंशे अपवाद इति भावः ॥

प्राणाद्युपाध्यवच्छिन्नो ह्यात्मेत्यादिटीकानुसारेण व्याख्यायाऽन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्येत्यादिभाष्यानुसारेण व्याचष्टे—अथवा भृगुवल्ल्युक्तेति । 'आत्मन आकाश' इत्यादिभ्यः प्रकृतिविकारोपदेशकेभ्यः

---

१ 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्' इति मन्त्रोपक्षिप्तस्य सर्वान्तरत्वस्यानन्दमये एव पर्यवसानस्य कृतत्वात् तस्य च लिङ्गस्य प्रायपाठेन बाधायोगात् प्राचुर्यार्थे एव मयडङ्गीकरणीयः; लिङ्गस्यानयोः शेषशेषिभाव इवार्थनिर्णायकतायामपि प्राबल्यदौर्बल्ययोरङ्गीकरणीयत्वात्, इति शङ्काभिप्रायः ।

२ प्रियाद्यवयवयोगादिति—परिहाराशयस्तु जीवत्वे लिङ्गमस्तीति भूयोनुग्रहन्यायेन सर्वान्तरत्वलिङ्गबाध एव युक्त इति ॥

३ तस्मादिति—सशरीरस्यापीश्वरस्य दिव्यशरीराभ्युपगमेनाप्रियासंबन्धोपपत्तिरिति तु न शङ्कनीयम्; ईश्वरत्वनिर्णयात् पूर्वं दिव्यशरीरसिद्ध्यसंभवात् । उपक्रमेऽपि सर्वान्तरत्वं नोपक्षिप्तम्; किंतु गुहानिहितत्वं; तच्च जीवेऽपि संभवतीत्यानन्दमयो जीव एवेति पूर्वपक्षोपसंहाराभिप्रायः ।

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

**पर एवात्मानन्दमयो भवितुमर्हति । कुतः ? अभ्यासात् । परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते[१] । आनन्दमयं प्रस्तुत्य—'रसो वै सः' इति तस्यैव रसत्वमुक्त्वोच्यते—'रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति' इति 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति' ( तै० २।७ ) 'सैषानन्दस्य**

### भामती ।

पाध्यवच्छिन्नो ह्यात्मा भवति प्राणादिविकारः, घटाकाशमिव घटविकारः । नच सत्यर्थे स्वार्थिकत्वमुचितम् । **चतुष्कोशान्तरत्वे तु न सर्वान्तरतोच्यते । प्रियादिभागी शारीरो जीवो न ब्रह्म युज्यते ॥** नच—सर्वान्तरतया ब्रह्मैवानन्दमयं, न जीव इति—सांप्रतम्; नहीयं श्रुतिरानन्दमयस्य सर्वान्तरतां ब्रूते, अपित्वन्नमयादिकोशचतुष्टयान्तरतामानन्दमयकोशस्य । नच—अस्मादन्यस्यान्तरस्याश्रवणादयमेव सर्वान्तर इति—युक्तम्; यदपेक्षं यस्यान्तरत्वं श्रुतं तत्तस्मादेवान्तरं भवति । नहि देवदत्तो बलवानित्युक्ते सर्वान्सिंहशार्दूलादीनपि प्रति बलवान्प्रतीयतेऽपितु समानजातीयनरान्तरमपेक्ष्य । एवमानन्दमयोऽप्यन्नमयादिभ्योऽन्तरो, नतु सर्वस्मात् । नच निष्कलस्य ब्रह्मणः प्रियाद्यवयवयोगः, नापि शारीरत्वं युज्यत इति संसार्येवानन्दमयः । तस्मादुपहितमेवात्रोपास्यत्वेन विवक्षितं, नतु ब्रह्मरूपं ज्ञेयत्वेनेति पूर्वः पक्षः । अपिच यदि प्राचुर्यार्थोऽपि मयट्, तथापि संसार्येवानन्दमयः; नतु ब्रह्म । आनन्दप्राचुर्यं हि तद्विपरीतदुःखलवसंभवे भवति, नतु तदत्यन्तासंभवे । नच परमात्मनो मनागपि दुःखलवसंभवः, आनन्दैकरसत्वादित्याह—**नच सशरीरस्य सत इति** । अशरीरस्य पुनरप्रियसंबन्धो मनागपि नास्तीति प्राचुर्या-

### वेदान्तकल्पतरुः ।

न्नादीन्प्रत्याध्यात्मिका अन्नमयादयः कोशा विकारा इति । विकारसंनिधेः सर्वान्तरत्वलिङ्गेन बाधमाशङ्क्याह—**चतुष्कोशेति** । आनन्दमयस्य सर्वान्तरत्वमन्नमयाद्यान्तरत्वेनोक्तं, तस्मादन्यस्यान्तरस्याश्रवणात् । **प्रथमं** निरस्य **द्वितीयं** निराचष्टे—**नचास्मादिति** । यथा 'बलवान्देवदत्त' इत्युक्ते यज्ञदत्ताद्यपेक्षमेव बलवत्त्वं, सिंहादीनां ततोऽपि बलवत्त्वमनुक्तमपि गम्यते; तथानन्दमयस्येतरकोशापेक्षमान्तरत्वं ब्रह्म तु ततोऽप्यान्तरमनुक्तमपि गम्यत इत्यर्थः । ब्रह्मत्वे लिङ्गाभासं निरस्य जीवत्वे लिङ्गमाह—**नच निष्कलस्येति** । श्रुतिमप्याह—**नापीति** । सशरीरस्य प्रियादि दुर्वारमित्येतावता कथं मयटः प्राचुर्यार्थत्वे ब्रह्मत्वानुपपत्तिरुक्ता ? तत्राह—**अशरीरस्येति** । एवमुक्ते ह्यशरीरे ब्रह्मणि नाप्रियमि-

### कल्पतरुपरिमलः ।

पूर्ववाक्येभ्यो विकारार्थस्य बुद्धिसंनिहितत्वाद् भृगुवल्ल्युक्ताधिदैविकान्नादियथासंख्याम्नातेनाध्यात्मिकेषु देवतादिषु तद्विकारत्वोक्तिः प्रतीयत इति भावः । **विकारसन्निधेरिति** । मीमांसाभाष्यकारैरनुष्ठेयानामङ्गाङ्गिभावे प्रमाणानि श्रुत्यादीनि निरूपितवद्भिः **विशये प्रायदर्शना** ( जै. अ.२ पा.३ सू.१६)**दिति** सूत्रे गोदोहनादिसंस्काराणां वत्सालम्भस्य चाङ्गाङ्गिभावाभावात् तत्रत्यप्रायप्राठः सान्निध्याम्नानरूपं स्थानप्रमाणं न भवतीत्यभिप्रेत्यान्यार्थदर्शनरूपलिङ्गत्वेन व्यवहृतः । इह शास्त्रे सिद्धार्थबोधनोपयुक्तान्यपि श्रुत्यादीनि गृह्यन्त इति विकारप्रायपाठः संनिधिलक्षणस्थानप्रमाणत्वेन व्यवह्रियत इति न विरोधः । **ब्रह्म तु ततोऽप्यान्तरमिति** । यथा देवदत्तात्सिंहादीनां बलवत्तरत्वं प्रमाणान्तरसिद्धमित्यनुक्तमिति गम्यते, तथा ब्रह्मण आनन्दमयप्रतिष्ठात्वोक्त्या ततोऽप्यान्तरत्वमनुक्तमपि गम्यत इति भावः । **श्रुतिमपीति** । जीवत्व इत्यनुषङ्गः । **अनुपपत्तेस्तु न शारीर** ( ब्र. अ. १ पा.२ सू.३ ) इत्यादिप्रयोगात् शारीरशब्दो जीवस्याभिधानश्रुतिरिति भावः । **नच सशरीरस्य सत इत्यादिभाष्यं** शारीरश्रुतौ शरीरे भव इति यौगिकार्थस्यापि सत्त्वात् शरीरवतो दुःखमनिवार्यमित्यानन्दमयशरीरसंबन्धानुमितदुःखभागित्वादपि न ब्रह्मेत्येवमर्थं प्रतीयते, तदयुक्तम्; उत्तराधिकरणे (ब्र.अ.१ पा.३ सू.१९)परमेश्वरस्य शरीरवत्त्वेनाथापि सर्वपापोदितत्वेन च व्यवस्थापयिष्यमाणस्य दुःखाप्रसक्तेरित्याशङ्क्य टीकाकृता मयटः प्राचुर्यार्थत्वेऽपि ब्रह्मपरत्वमनुपपन्नमित्येतदर्थतात्पर्यकतया भाष्यमवतार्याऽशरीरस्येत्यादिना तदर्थो वर्णितः । तत्तात्पर्यं विवृणोति—**एवमुक्ते हीति** । सशरीरत्वेऽप्यैच्छिकशरीरस्य सविशेषस्य दुःखास्पर्शे सर्वथैवाशरीरस्य निर्विशेषस्य तदस्पर्शोऽनुक्तसिद्ध

१ **अभ्यस्यते इति**—'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति वाक्यस्य प्राणमयपर्यायमारभ्याम्नातस्य प्राणमये तस्य पूर्वस्य अन्नमयस्य 'एष एव शारीर आत्मा य एष प्राणमय' इत्येवं प्रकारेणार्थवर्णनवत् अनन्तरसर्वपर्यायेष्वपि तस्य पूर्वस्य प्राणमयस्य 'एष एव शारीर आत्मा य एष विज्ञानमयः' तस्य पूर्वस्य विज्ञानमयस्य 'एष एव शारीर आत्मा य एष आनन्दमय' इत्येवार्थस्य वर्णनीयतया 'तस्यैष एवे'त्यानन्दमयपर्यायगतवाक्यप्रतिपाद्यस्यैव 'सोऽकामयते'ति जगत्कारणत्वव्युत्पादनेन जगत्कारणत्वविशिष्टानन्दमयत्वेन अभ्यस्यमान आनन्दमयो ब्रह्मैव । **एतेन**—आनन्दाभ्यासेऽपि आनन्दमयाभ्यासो नास्तीति शङ्कापि—**पराहता** ।

**मीमांसा भवति' 'एतमानन्दमयमात्मानमुपसंक्रामति' । 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' ( तै० २।८,९ ) इति । 'आनन्दो ब्रह्मेति व्यजानात्' ( तैत्ति० ३।६ ) इति च । श्रुत्यन्तरे च—'विज्ञानमानन्दं ब्रह्म' ( बृ० ३।९।२८ ) इति ब्रह्मण्येवानन्दशब्दो दृष्टः । एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासादानन्दमय आत्मा ब्रह्मेति गम्यते । यत्तूक्तमन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्यमुख्यत्वमिति, नासौ दोषः; आनन्दमयस्य सर्वा-**

## भामती ।

र्थोऽपि मयड् नोपपद्यत इत्यर्थः । **उच्यते**—आनन्दमयावयवस्य तावद्ब्रह्मणः पुच्छस्याङ्गतया न प्राधान्यं, अपित्वङ्गिन आनन्दमयस्यैव ब्रह्मणः प्राधान्यम् । तथाच तदधिकारे पठितमभ्यस्यमानमानन्दपदं तद्बुद्धिमाधत्त इति तस्यैवानन्दमयस्याभ्यास इति युक्तम् । **ज्योतिष्टोमाधिकारे**—'वसन्ते वसन्ते ज्योतिषा' इति ज्योतिष्पदमिव ज्योतिष्टोमाभ्यासः कालविशेषविधिपरः । **अपिच साक्षादानन्दमयात्माभ्यासः श्रूयते**—'एतमानन्दमयमात्मानमुपसंक्रामति' इति । पूर्वपक्षबीजमनुभाष्य दूषयति—**यत्तूक्तमन्नमयादीति** । नहि मुख्यारुन्धतीदर्शनं तत्तदमुख्यारुन्धतीदर्शनप्रायपठितमप्यमुख्यारुन्धतीदर्शनं भवति । तादर्थ्यात्पूर्वदर्शनानामन्त्यदर्शनानुगुण्यं नतु तद्विरोधितेति चेत्, इहाप्यानन्दमयादान्तरस्यान्यस्याश्रवणात्, तस्य त्वन्नमयादिसर्वान्तरत्वश्रुतेस्तत्पर्यवसानात्तादर्थ्यं तुल्यम् । प्रियाद्यवयवयोगशारीरत्वे च

## वेदान्तकल्पतरुः ।

त्युक्तं भवति । तथाच दुःखगन्धद्योती प्राचुर्यार्थो मयड् न संभवतीत्युक्तं स्यादित्यर्थः । आनन्दप्रातिपदिकाभ्यासलिङ्गात्कथमानन्दमयस्य ब्रह्मत्वं ? वैयधिकरण्यादिति शङ्कानिराकरणार्थं भाष्यं—**आनन्दमयं प्रस्तुत्येति** । तदिदमनुपपन्नं पुच्छब्रह्मणः प्राकरणिकत्वादत आह—**आनन्दमयावयवस्येति । ननु** ज्योतिषेति कर्मान्तरविधिर्नाभ्यासोऽत आह—**कालेति** । वसन्तकालगुणसंक्रान्तत्वान्न कर्मान्तरविधिरित्यर्थः । देवदत्तादेरपि बलवत्त्वं सिंहादेर्मानान्तरसिद्धम् । आनन्दमयादान्तरे वस्तुनि न मानान्तरं, नापि श्रुतिरित्यभिप्रेत्याह—**नहीति** । दृष्टान्तवैषम्यं शङ्कते—**तादर्थ्यादिति** । मुख्यारुन्धतीदर्शनाविरोधेनानुगुण्यं चेदत्रापि तुल्यमित्यर्थः । योऽपि पूर्वपक्षे प्राचुर्यार्थत्वमुपेत्य दुःखलवयोग आपादितः सोऽप्युपाधिवशादित्यर्थात्परिहृत इत्याह—**प्रियादीति** ॥ १२ ॥ एवंच विकारशब्दात् ( ब्र. अ. १ पा. १ सू. १३ ) इति सूत्रं व्याख्यातम् । 'तत्प्रकृतवचने मयट्' तदिति प्रथमासमर्थात्प्राचुर्यविशिष्टप्रस्तुतवचनाभिधाने गम्यमाने मय-

## कल्पतरुपरिमलः ।

इति भावः । **सोऽप्युपाधिवशादिति** । प्रियादियोगवद् दुःखलवयोगोऽप्यतीतानन्तरविज्ञानमयकोशोपाधिक उपपद्यत इति नासौ मुख्यात्मत्वबाधक इत्यर्थः । **'तत्प्रकृतवचने मयडि'ति प्रचुरतायामपि मयटः स्मरणात् । यथा 'अन्नमयो यज्ञ' इत्यन्नप्रचुर उच्यत इति** भाष्योपात्तं व्याकरणसूत्रमुपादाय व्याचष्टे—**तत्प्रकृतेति ॥ इदं सूत्रं वैयाकरणैरित्थं व्याख्यातम्**—तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात्स्वार्थे मयट्प्रत्ययो भवतीत्येको**ऽर्थः** । अस्यान्नमयं यवागूमयीत्याद्युदाहरणम् ॥ प्राचुर्येण प्रस्तुता यवागूरित्यादिस्तदर्थः । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रवाची, न क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाची; तथापि प्रकृत इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि लोके यादृशस्य प्रकृतस्य मयटा वचनं प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धमिति । **अपरस्त्वर्थः**—प्रकृतं प्रस्तुतमुच्यतेऽस्मिन्निति प्रकृतवचनम् । तदिति प्रथमासमर्थात्प्रकृतवचनेऽर्थे मयट्प्रत्ययो भवतीति । अस्यन्नमयो यज्ञ इत्याद्युदाहरणम् । प्रकृतमन्नमस्मिन् यज्ञ इत्यादिस्तदर्थः । अस्मिन्नर्थे प्रकृत्यर्थादर्थान्तरे प्रत्ययः । प्रकृतशब्देन च प्रस्तुतमात्रमुच्यते, नतु प्राचुर्यविशिष्टमिति पूर्वस्मादर्थाद्विशेष इति ॥ **वृत्तिकारमते** व्याख्यानद्वयमपि नोपयोगि; **प्रथमव्याख्यानस्य** प्राचुर्यविशिष्टप्रकृत्यर्थमात्रपर्यवसितमयड्विधिरूपत्वेन ततोऽन्नमयो यज्ञ इत्यन्नप्रचुरो यज्ञ उच्यत इति तदीयोदाहरणानुसारेण विवक्षिततयाऽवगतस्यानन्दप्रचुरधर्मिपर्यन्तत्वस्यालाभात्, **द्वितीयव्याख्याने** प्राचुर्यप्रतीत्युपायाभावात्, शब्दार्थनिर्णयाभियुक्तवैयाकरणव्यवहारविरोधिनोऽनादित्वनिर्णायकप्रमाणरहितस्यान्नप्रचुर इत्यर्थेऽन्नमय इति व्यवहारस्य लोके क्वचित् क्वचित्सतोऽप्युपादेयत्वाभावात्, अतो वृत्तिकारमतं द्विविधेनापि वैयाकरणकृततत्सूत्रव्याख्यानेन निर्वोढुं न शक्यमिति तन्निर्वाहमुपेक्ष्य धर्मिपर्यन्तत्वम्भकत्वाभावेऽपि 'विकारशब्दादिति' सूत्रोप्राप्तप्राचुर्यप्रतीत्युपयोगिप्रथमव्याख्यानं दर्शयति—**तदिति प्रथमासमर्थादिति ॥ अविशदत्वादिति** । व्याख्यानव्याख्येयभावः स्पष्टो न भवति, किंतु सूक्ष्मेक्षिकयाऽवसेय इत्यर्थः ।

१ **आनन्दमयस्य सर्वान्तरत्वादिति**—उपक्रान्तं गुहानिहितत्वमपि ब्रह्मधर्म एव; सत्यं ज्ञानमिति पूर्वार्धप्रतिपादितब्रह्मण एव तत्र विशेष्यतयान्वयात्, तच्च जीवरूपेण वान्तर्यामिरूपेण वेति विशये आनन्दमयस्य सर्वात्मकत्वान्मानादिनाऽन्तर्यामिरूपेणैवेति निर्णीयते इति सर्वान्तरत्वं ब्रह्मलिङ्गमेवेति मन्तव्यमिति भावः ।

न्तरत्वात् । मुख्यमेव ह्यात्मानमुपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरत् अन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत्ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मेति ग्राहयत् प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरम् । यथारुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु यान्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहाप्यानन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वम् । यत्तु ब्रूषे—प्रियादीनां शिरस्त्वादिकल्पनानुपपन्ना मुख्यस्यात्मन—इति, अतीतानन्तरोपाधिजनिता सा न स्वाभाविकीत्यदोषः । शारीरत्वमप्यानन्दमयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात्, न पुनः साक्षादेव शारीरत्वं संसारिवत् । तस्मादानन्दमयः पर एवात्मा ॥ १२ ॥

## विकारशब्दान्नेतिचेत् न प्राचुर्यात् ॥ १३ ॥

अत्राह—नानन्दमयः पर आत्मा भवितुमर्हति । कस्मात्? विकारशब्दात् । प्रकृतिवचनादयमन्यः शब्दो विकारवचनः समधिगतः; आनन्दमय इति मयटो विकारार्थत्वात् । तस्मादन्नमयादिशब्दवद्विकारविषय एवानन्दमयशब्द इति चेत्[1], न; प्राचुर्यार्थेऽपि मयटः स्मरणात् । 'तत्प्रकृतवचने मयट्' ( पा० ५।४।२१ ) इति हि प्रचुरतायामपि मयट् स्मर्यते । यथा 'अन्नमयो यज्ञः' इत्यन्नप्रचुर उच्यते, एवमानन्दप्रचुरं ब्रह्मानन्दमय उच्यते; आनन्दप्रचुरत्वं च ब्रह्मणो मनुष्यत्वादारभ्योत्तरस्मिन्नुत्तरस्मिन्स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात् । तस्मात्प्राचुर्यार्थे मयट् ॥ १३ ॥

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

इतश्च प्राचुर्यार्थे मयट् । यस्मादानन्दहेतुत्वं ब्रह्मणो व्यपदिशति श्रुतिः—'एष ह्येवानन्दयाति' इति । आनन्दयतीत्यर्थः । यो ह्यन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति । यथा लोके योऽन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते, तद्वत्[2] । तस्मात्प्राचुर्यार्थेऽपि मयटः संभवादानन्दमयः पर एवात्मा ॥ १४ ॥

### भामती ।

निगदव्याख्यातेन भाष्येण समाहिते । प्रियाद्यवयवयोगाच्च दुःखलवयोगोऽपि परमात्मन औपाधिक उपपादितः । तथानन्दमय इति प्राचुर्यार्थता मयट उपपादितेति ॥ १२ ॥ १३ ॥ १४ ॥ अपिच मन्त्रब्राह्मणयोरुपेयोपायभूतयोः संप्र-

### वेदान्तकल्पतरुः ।

डिति सूत्रार्थः । वचनग्रहणात्प्राचुर्यवैशिष्ट्यसिद्धिः । तादृशस्यैव लोके मयटाभिधानादिति ॥ १३ ॥ १४ ॥ **मान्त्रवर्णिकम्** ( ब्र. अ. १ पा. १ सू. १६) **इति सूत्रं**—भाष्यकृद्भिः सत्यं ज्ञानमनन्तमिति मन्त्रप्रस्तुतं ब्रह्म, आनन्दमयवाक्ये निर्दिश्यते, प्रकृतत्वादसंबद्धपदव्यवायाभावाच्चेति विवृतं । तत्रैतरेतरत्रार्थप्रत्यभिज्ञानाभावाद् मन्त्रब्राह्मणयोर्व्याख्यानव्याख्येयभावस्याविशदत्वात्प्रकारान्तरेण सूत्रं व्याचष्टे—**अपिच मन्त्रेति** । यथा मन्त्रः प्रयोगोपायः, एवं कोशचतुष्कवाक्यमानन्दमयब्रह्मप्रतिपत्त्युपायस्य देहादिव्यतिरेकस्य समर्पकत्वाद्गौण्या वृत्त्या मन्त्र उच्यते । आनन्दमयवाक्यमुपेयप्रयोग-

---

१ **विकारविषय एवानन्दमयशब्द इति । ननु**—'द्व्यचश्छन्दसी'ति द्व्यच एव विकारार्थे मयड्विधानात् अन्नरसविज्ञानशब्दाभ्यां विकारार्थे मयटः प्रसक्तिरेव नास्ति इति कथमन्नमयादिवदित्याद्युक्तमिति—**चेत्**; **न**; पुनर्विधानसामर्थ्येनैव नित्यत्वे सिद्धेऽतिरिच्यमानेन 'नित्यं वृद्धशरादिभ्य' इति सूत्रीयनित्यग्रहणेन योगविभागमाश्रित्य भाषायां नित्यमेव, च्छन्दसि तूदाहरणानुसारेण यथासंभवं विकल्पेन मयट् भवतीत्यङ्गीकारात् । एवमेव पूर्वपक्षिणाप्यन्नरसमयशब्दे उपपत्तिर्वर्णनीया; नच—तत्रापि प्राचुर्यार्थ एवास्माकं विवक्षित इति—शङ्कनीयम्; अन्नात्पुरुष इति वाक्यशेषविरोधादिति ॥

२ यथाहि प्रचुरधनोऽन्यान्धनवतः करोति, एवं निर्धनोऽपि तपस्वी अनुग्रहेणान्यान्धनवतः करोति इति प्रकारद्वये लोकसंप्रतिपन्नेऽपि आनन्दमयशब्देन प्राचुर्यकोटेरवगमात्, तत्र निर्णयापेक्षायामुत्तरवाक्यप्रवृत्तेर्निर्धनपुरुषदृष्टान्तेनानुपस्थितार्थकल्पनस्यान्याय्यत्वात् 'को ह्येवान्या'दिति व्यापकानन्दस्यैव पूर्वं निर्देशाच्च धनिकदृष्टान्त आदृत इति ब्रह्मविद्याभरणकाराः ॥

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

इतश्चानन्दमयः पर एवात्मा । यस्मात् 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१) इत्यस्मिन्मन्त्रे यत्प्रकृतं ब्रह्म सत्यज्ञानानन्तविशेषणैर्निर्धारितं, यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितं, सर्वान्तरं, यस्य विज्ञानाय 'अन्योऽन्तर आत्मान्योऽन्तर आत्मा' इति प्रक्रान्तं, तन्मान्त्रवर्णिकमेव ब्रह्मेह

### भामती ।

तिपत्तेर्ब्रह्मैवानन्दमयपदार्थः । मन्त्रे हि पुनःपुनः 'अन्योऽन्तर आत्मा' इति परब्रह्मण्यान्तरत्वश्रवणात्, तस्यैव च 'अन्योऽन्तर आत्मानन्दमयः' इति ब्राह्मणे प्रत्यभिज्ञानात्, परब्रह्मैवानन्दमयमित्याह सूत्रकारः—**मान्त्रवर्णिकमेव च गीयते** । **मान्त्रवर्णिकमेव परं ब्रह्म** ब्राह्मणेऽप्यानन्दमय इति गीयत इति ॥ १५ ॥ अपिचानन्दमयं प्रकृत्य

### वेदान्तकल्पतरुः ।

विधायिब्राह्मणवदुपेयब्रह्मप्रत्यायकत्वाद्ब्राह्मणं विवक्षितम् । तयोश्चेतरेतरत्रार्थप्रत्यभिज्ञामाह—**मन्त्रे हीति** । **परब्रह्मणीति** । विज्ञानमयादिशब्दैरपि ब्रह्मैव तत्तदुपाधिभ्यः प्रविविच्य निर्दिष्टमित्यर्थः । नचैवं प्राणमयाद्यन्तरात्मनो विज्ञानमयस्यात्मत्वापत्तिः; तस्मादान्तरोपदेशादिति भावः । **सूत्रकार**ग्रहणं व्याख्येयभाष्यानपेक्षत्वसूचनार्थम् । भाष्येऽपि महाप्रकरणोपन्यासः सूत्रार्थो, न मन्त्रब्राह्मणतया व्याख्यानव्याख्येयभावः । अतएवाह—**अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्यातामिति** । मन्त्रब्राह्मणयोश्चेत्यपि भाष्यं प्रकरणप्रदर्शनपरमेवेत्यविरुद्धम् । सौत्रं तु मान्त्रवर्णिकपदं विवक्षितं कृतं टीकाकृता । **ननु** सर्वस्रष्टृत्वाद्यनेकहेतूपदेशे वाक्यभेदः स्यादत आह—**सूत्रमिति** । सूत्रस्य विश्वतोमुख-

### कल्पतरुपरिमलः ।

**तथाहि**—ब्रह्मविदाप्नोति परमित्यानन्दवल्ल्यां प्रतिपाद्यस्य कृत्स्नस्याप्यर्थस्य संग्राहकं सूत्रं । **तत्र** किं तद् ब्रह्म ? कथं च तद्वेदनं ? किंच तद्वेदनप्राप्यं परमुत्कृष्टं फलं ? इत्याकाङ्क्षायां तत्त्रितयं स्पष्टीकर्तुं 'तदेषाभ्युक्तेति' ब्राह्मणोक्तार्थप्रतिपादकत्वेनावतारणपुरस्सरं तदनुव्याख्यानरूपः 'सत्यं ज्ञान'मित्यादिमन्त्र आम्नातः । तत्राप्येवमाकाङ्क्षोदेति कथं ब्रह्मणस्त्रिविधपरिच्छेदराहित्यरूपमानन्त्यम् ? अपरिच्छिन्नं ब्रह्म च कस्यां गुहायां निहितं वेद्यं ? कथं तद्वेदनेन ब्रह्मादिस्तम्बपर्यन्तप्राणिनिकायव्यवस्थितसकलकामरूपोत्कृष्टफलावाप्तिरिति ? । अतस्तदानन्त्याद्युपपादनार्थमन्त्रव्याख्यानरूपोऽनुवाकशेषः । तत्रानन्त्यनिरूपणार्थं "तस्माद्वा एतस्मा"दित्यादिकारणवाक्यम् । अत्र तदेतच्छब्दौ व्यवहिताव्यवहितब्राह्मणतद्व्याख्यानमन्त्रप्रकृतब्रह्मपरामर्शिनौ । तस्य गुहानिहितत्वविवरणार्थं चतुष्कोशान्तरत्वनिरूपणम् । एवंच यद् ब्राह्मणोपक्षिप्तं मन्त्रवाक्येन विवृतं कारणवाक्यगतेन तदेतत्पदसमानाधिकरणेनात्मपदेन परामृष्टं ब्रह्म, तदेव गुहानिहितत्वविवरणार्थानन्दमयवाक्यगतेनान्तरत्वेनात्मशब्देन च प्रत्यभिज्ञायत इति सूक्ष्मदृष्ट्या तत्प्रत्यभिज्ञानमात्रेणावगन्तव्यो मन्त्रब्राह्मणयोर्व्याख्यानव्याख्येयभावः स्पष्टो न भवति । कोशवाक्यानामानन्दमयवाक्यस्य च व्याख्यानव्याख्येयभावः स्पष्टः । अन्योऽन्तर आत्मेत्येतावत्प्रत्यभिज्ञानसत्त्वादित्यभिप्रेत्य मान्त्रवर्णिकसूत्रं कोशवाक्यविषयत्वेन नीतमिति तात्पर्यम् ॥ **ननू**दाहृतप्रत्यभिज्ञानेनानन्दमयस्य विज्ञानमयाद्यैक्यसिद्धावपि न तस्य ब्रह्मत्वं सिध्यति; तेषामपि ब्रह्मत्वासंप्रतिपत्तेः, तत्संप्रतिपत्तावपि न सिध्यति विज्ञानमयादन्य इति; तत्र विज्ञानमयप्रतियोगिकभेदनिर्देशादित्याशङ्कानिराकरणार्थस्य मन्त्रे हीत्यादिटीकावाक्यस्य तात्पर्यमाह—**विज्ञानमयादिशब्दैरपीति** । "विज्ञानं देवाः सर्वे" "ब्रह्म ज्येष्ठमुपासते" "विज्ञानं ब्रह्म चेद्वेद" "आनन्दं ब्रह्मणो विद्वान्" "ये प्राणं ब्रह्मोपासते" "येऽन्नं ब्रह्मोपासते" इति विज्ञानमयादिपर्यायावगताभिर्ब्रह्मश्रुतिभिर्ब्रह्मैव स्थूलारुन्धतीन्यायेनान्नमयादिकोशरूपतया प्रथममुपदिश्योत्तरोत्तरपर्यायगतैरन्यशब्दैस्तत्तदुपाधिभ्यः प्रविविच्य निर्दिष्टमित्यर्थः । विज्ञानमयादिशब्दैरित्यस्यापि विज्ञानमयादिपर्यायगतैरन्यशब्दैरित्यर्थो ग्राह्यः । एवंच **कश्चित्तु प्रतिबिम्बितघटाकाशादिरित्यादिना** प्राणमयादीनां प्राणाद्युपाध्यवच्छिन्नजीवरूपत्वं यदुक्तं तत्पूर्वपक्षिदृष्ट्येति न विरोधः ॥ **ननु** यद्यन्नमयादिपर्याया अपि ब्रह्मश्रुत्या ब्रह्मविषयास्तर्हि विज्ञानमये एव ब्रह्मोपदेशपर्यवसानं स्याद्, "विज्ञानं देवाः सर्वे" "ब्रह्म ज्येष्ठमुपासते" "विज्ञानं ब्रह्म चेद्वेदे"ति मन्त्राम्नाताभ्यां "विज्ञानं ब्रह्म चेदिति" मन्त्रे सर्वकामावाप्तिफलकीर्तनेन तत्प्रत्यभिज्ञोपबृंहिताभ्यां ब्रह्मश्रुतिभ्यां विज्ञानमयस्य ब्रह्मत्वप्रतिपादने तात्पर्यातिशयप्रतीतेरित्याशङ्क्याह—**नचैवमिति** । **ननु** टीकाभिमते सूत्रार्थे मन्त्रग्रहणमविवक्षितस्वार्थं स्यादित्याशङ्क्य भाष्याभिमतेऽपि सूत्रार्थे सा शङ्का भवतीत्याह—**भाष्येऽपीति** । भाष्ये सौत्रमन्त्रपदार्थतया 'सत्यं ज्ञानमिति' मन्त्रमात्रं नोपन्यस्तं, किंतु 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्येत्यादिसन्दर्भेण महाप्रकरणं तदर्थतयोपन्यस्तम् । अतः प्रकरणानुरोधेनानन्दमयस्य ब्रह्मत्वनिर्धारणं सूत्रार्थतया भाष्याभिमतमित्यवसीयते । अतएव भाष्ये प्रकृतहानं विपक्षबाधकत्वेनोक्तम्; अतो मन्त्रपदस्य स्वार्थप्रच्यावनं भाष्यपक्षेऽपि तुल्यमित्यर्थः ॥ **ननु** भाष्यकारपक्षे प्रकरणे मन्त्रगर्भत्वमप्युपचारबीजं, नतु टीकाकारपक्षे कोशवाक्येषु तदस्ति; अतस्तत्पक्षे मान्त्रवर्णिकपदमविवक्षितार्थं स्यादित्याशङ्क्य उपायोपेययोरिति टीकोक्तं तत्स्मारयति—**विवक्षितं कृतमिति** । अविवक्षितार्थं कृत-

गीयते 'अन्योऽन्तर आत्मानन्दमयः' (तै० २।५) इति । मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तं; अविरोधात् । अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम् । नचान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माभिधीयते । एतन्निष्ठैव च 'सैषा भार्गवी वारुणी विद्या' (तै० ३।६) । तस्मादानन्दमयः पर एवात्मा ॥ १५ ॥

## नेतरोऽनुपपत्तेः ॥ १६ ॥

इतश्चानन्दमयः पर एवात्मा । नेतरः । इतरः ईश्वरादन्यः संसारी जीव इत्यर्थः । न जीव आनन्दमयशब्देनाभिधीयते । कस्मात्? अनुपपत्तेः । आनन्दमयं हि प्रकृत्य श्रूयते—'सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳसर्वमसृजत । यदिदं किंच' (तै० २।६) इति । तत्र प्राक्शरीराद्युत्पत्तेरभिध्यानं, सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः, सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ॥ १६ ॥

## भेदव्यपदेशाच्च ॥ १७ ॥

इतश्च नानन्दमयः संसारी । यस्मादानन्दमयाधिकारे—'रसो वै सः । रसꣳह्येवायं लब्ध्वाऽनन्दी भवति' (तै० २।७) इति जीवानन्दमयौ भेदेन व्यपदिशति । नहि लब्धैव लब्धव्यो भवति । कथं तर्हि 'आत्मान्वेष्टव्यः' 'आत्मलाभान्न परं विद्यते' इति श्रुतिस्मृती? यावता न लब्धैव लब्धव्यो भवतीत्युक्तम् । बाढम् । तथाप्यात्मनोऽप्रच्युतात्मभावस्यैव सतस्तत्त्वानवबोधनिमित्तो मिथ्यैव देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः । तेन देहादिभूतस्यात्मनोऽप्यात्मानन्विष्टोऽन्वेष्टव्योऽलब्धो लब्धव्योऽश्रुतः श्रोतव्योऽमतो मन्तव्योऽविज्ञातो विज्ञातव्य इत्यादिभेदव्यपदेश उपपद्यते । प्रतिषिध्यत एव तु परमार्थतः सर्वज्ञात्परमेश्वरादन्यो द्रष्टा श्रोता वा

### भामती ।

शरीराद्युत्पत्तेः प्राक्स्रष्टृत्वश्रवणात्, 'बहु स्याम्' इतिच सृज्यमानानां स्रष्टुरानन्दमयादभेदश्रवणात्, आनन्दमयः पर एवेत्याह । सूत्रम्—**नेतरोऽनुपपत्तेः** । **नेतरो** जीव आनन्दमयः, तस्यानुपपत्तेरिति ॥ १६ ॥ **भेदव्यपदेशाच्च** । **रसः** सारो ह्ययमानन्दमय आत्मा । 'रसꣳह्येवायं लब्ध्वाऽनन्दी भवति' इति । सोऽयं जीवात्मनो लब्धृभावः, आनन्दमयस्य च लभ्यता नाभेद उपपद्यते । तस्मादानन्दमयस्य जीवात्मनो भेदे परब्रह्मत्वं सिद्धं भवति । चोदयति—**कथं तर्हीति** । यदि लब्धा न लब्धव्यः, कथं तर्हि परमात्मनो वस्तुतोऽभिन्नेन जीवात्मना परमात्मा लभ्यत इत्यर्थः । परिहरति—**बाढम् । तथापीति** । सत्यम्, परमार्थतोऽभेदेऽप्यविद्यारोपितं भेदमुपाश्रित्य लब्धृलब्धव्यभाव उपपद्यते । जीवो ह्यविद्यया परब्रह्मणो भिन्नो दर्शितः, नतु जीवादपि । तथाचानन्दमयश्चेज्जीवः, न जीवस्याविद्ययापि स्वतो भेदो दर्शित इति न लब्धृलब्धव्यभाव इत्यर्थः । भेदाभेदौ च न जीवपरब्रह्मणोरित्युक्तमधस्तात् । **स्यादेतत्**—यथा परमेश्वराद्भिन्नो जीवात्मा द्रष्टा न भवत्येवं जीवात्मनोऽपि द्रष्टुर्न भिन्नः परमेश्वर इति जीवस्यानिर्वाच्यत्वे परमेश्वरोऽप्यनिर्वाच्यः स्यात् ।

### वेदान्तकल्पतरुः ।

लमलङ्कार इत्यर्थः ॥ **ननु** जीवादन्यत्वान्नानन्दमयस्य ब्रह्मत्वं; घटादिष्वदर्शनात्, अत आह—**तस्मादिति** । आनन्दमयो ह्यात्मशब्दाच्चेतनस्तस्य च जीवत्वराहित्ये ब्रह्मत्वं सिद्धमित्यर्थः । एकत्वेऽपि परजीवयोरौपाधिकभेदाल्लब्धृलब्धव्यभावे जीवस्यापि स्वं प्रति स्यात्; तस्यापि स्थूलसूक्ष्माद्युपाधिभेदात्, अत आह—**नन्विति** । स्वतन्त्रोपाधिभेदे चेतनभेदः, परब्रह्मणस्तु जीवोऽविद्यायां विभक्तः, स त्वविद्यावच्छिन्न एव स्थूलसूक्ष्मोपाधिभ्यामवच्छिद्यत इति न स्वस्मादौपाधिकोऽपि

१ **ननु**—सूत्रे सत्यं ज्ञानमिति मन्त्रनिर्दिष्टो गुहानिहित एवात्मा आनन्दमय इत्युक्तं, तद्व्याख्यानावसरे स एवोदाहर्तव्य इति ब्रह्मविदाप्नोतीति परमोपक्रमोपन्यासः, तदन्तराम्नातस्तस्माद्वा एतस्मादिति वाक्यार्थसृष्टिसंग्रहः, सोऽकामयत इत्यौपसंहारिकार्थग्रहणं कोशवाक्यार्थसंग्रहो वा किमर्थमिति—**चेत्**, न; परमोपक्रमस्यार्थान्तरपरत्वे 'तदेषाभ्युक्ते'ति तस्मिन्नर्थे उदाहृतस्य मन्त्रस्याप्यर्थान्तरपरत्वापत्तिरिति शङ्कानिराकरणार्थत्वेन परमोपक्रमोपन्यासस्य, सृष्टिवाक्यैर्भूयोभिर्व्यवधानेनानन्दमयवाक्ये मन्त्राम्नातार्थग्रहणासंभवशङ्काव्यावर्तनार्थत्वेन सृष्टिवाक्यानामपि मन्त्रगतानन्तपदव्याख्यानार्थत्वेनासंबन्धिपदव्यवधानस्यानुवृत्तिविघातकस्याभावनिरूपणार्थं सृष्टिवाक्यार्थसंग्रहस्य, प्रागनुपक्रान्तमेव यथा सोऽकामयतेत्यादिना प्रतिपाद्यते एवमानन्दमयवाक्येन प्रतिपाद्यतामिति शङ्कानिराकरणार्थं प्राक्संगृहीतैव सृष्टिः सोऽकामयतेत्यादिनापि निरूप्यते इति बोधनार्थं 'सोऽकामयते'ति वाक्यार्थसंग्रहस्य, गुहानिहितत्वव्युत्पादनेन संबन्धनिरूपणार्थं कोशवाक्यार्थसंग्रहस्य चावश्यकत्वात्—**इति** ॥

'नान्योऽतोऽस्ति द्रष्टा' (बृ० ३।७।२३) इत्यादिना। परमेश्वरस्त्वविद्याकल्पिताच्छारीरात्कर्तुर्भोक्तुर्विज्ञानात्माख्यादन्यः। यथा मायाविनश्चर्मखड्गधरात्सूत्रेणाकाशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः। यथावा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिपरिच्छिन्न आकाशोऽन्यः। ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्च' इत्युक्तम्॥ १७॥

## कामाच्च नानुमानापेक्षा॥ १८॥

आनन्दमयाधिकारे च 'सोऽकामयत बहुस्यां प्रजायेय' (तै० २।६) इति कामयितृत्वनिर्देशान्नानुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानमानन्दमयत्वेन कारणत्वेन वापेक्षितव्यम्। 'ईक्षतेर्नाशब्दम्' (ब्र० १।१।५) इति निराकृतमपि प्रधानं पूर्वसूत्रोदाहृतां कामयितृत्वश्रुतिमाश्रित्य प्रसङ्गात्पुनर्निराक्रियते गतिसामान्यप्रपञ्चनाय॥ १८॥

## अस्मिन्नस्य च तद्योगं शास्ति॥ १९॥

इतश्च न प्रधाने जीवे वानन्दमयशब्दः। यस्मादस्मिन्नानन्दमये प्रकृत आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति। तदात्मना योगस्तद्योगः तद्भावापत्तिः, मुक्तिरित्यर्थः। तद्योगं शास्ति शास्त्रम्—'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति' (तै० २।७) इति। एतदुक्तं भवति—यदैतस्मिन्नानन्दमयेऽल्पमप्यन्तरमतादात्म्यरूपं पश्यति, तदा संसारभयान्न निवर्तते। यदा त्वेतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रतितिष्ठति, तदा संसारभयान्निवर्तते इति। तच्च परमात्मपरिग्रहे घटते, न प्रधानपरिग्रहे जीवपरिग्रहे वा। तस्मादानन्दमयः परमात्मेति स्थितम्॥

इदं त्विह वक्तव्यम्—'स वा एष पुरुषोऽन्नरसमयः' 'तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः' तस्मात् 'अन्योऽन्तर आत्मा मनोमयः' तस्मात् 'अन्योन्तर आत्मा विज्ञानमयः' (तै० २।१,२,३,४) इति च विकारार्थे मयट्प्रवाहे सत्यानन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं चाश्रीयत इति? मान्त्रवर्णिकब्रह्माधिकारादिति चेत्, न; अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः। अत्राह—युक्तमन्नमयादीनामब्रह्मत्वं; तस्मात्तस्मादान्तरस्यान्तरस्यान्यस्यात्मन उच्यमानत्वात्, आनन्दमयात्तु न कश्चिदन्य आन्तर आत्मोच्यते, तेनानन्दमयस्य ब्रह्मत्वम्; अन्यथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गादिति। अत्रोच्यते—यद्यप्यन्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्मेति न श्रूयते; तथापि नानन्दमयस्य ब्रह्मत्वं, यत आनन्दमयं प्रकृत्य श्रूयते—'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा' (तै० २।५) इति। तत्र यद्ब्रह्म मन्त्रवर्णे प्रकृतम्—'सत्यं ज्ञानमनन्तं ब्रह्म' इति, तदिह 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युच्यते। 'तद्विजि-

---

### भामती।

तथाच न वस्तुसन्नित्यत आह—**परमेश्वरस्त्वविद्याकल्पितादिति**। रजतं हि समारोपितं न शुक्तितो भिद्यते। नहि तद्भेदेनाभेदेन वा शक्यं निर्वक्तुम्। शुक्तिस्तु परमार्थसती निर्वचनीया अनिर्वचनीयाद्रजताद्भिद्यत एव। अत्रैव सरूपमात्रं दृष्टान्तमाह—**यथा मायाविन इति**। एतदपरितोषेणात्यन्तसरूपं दृष्टान्तमाह—**यथावा घटाकाशादिति**। शेषमतिरोहितार्थम्॥ १७॥ १८॥ १९॥

**स्वमतपरिग्रहार्थमे**कदेशिमतं दूषयति—**इदं त्विह वक्तव्यमिति**। एष तावदुत्सर्गो यत्—'**ब्रह्म पुच्छं प्र**-

### वेदान्तकल्पतरुः।

भेद इत्यर्थः। सूत्रारूढो हि स्वरूपेणापि मिथ्या, जीवे तु भेदमात्रं कल्पितं, न स्वरूपमतः कल्पितत्वमात्रे दृष्टान्त इत्याह—**अत्रैवेति**॥

ब्रह्मानन्दमयं प्रत्यवयवः, उत प्रधानमिति पुच्छब्रह्मशब्दाभ्यां संशये मुख्येक्षणाद् ब्रह्मनिर्णयेन गौणप्रायपाठो बाधितः, इह तु पुच्छशब्दस्यावयवमात्रत्वे आधारमात्रत्वे च लाक्षणिकत्वसाम्ये सत्यवयवप्रायदर्शनादवयव इति सङ्गतिः। **यदुक्तं**—आनन्दमयस्याङ्गं ब्रह्म—**इति, तन्न**; श्रुतिबाधप्रसङ्गादिति वदन् सिद्धान्तस्य बीजमावपति—**ब्रह्मपुच्छमिति**। बलाबल-

ज्ञापयिषयैवान्नमयादय आनन्दमयपर्यन्ताः पञ्च कोशाः कल्प्यन्ते । तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः । नन्वानन्दमयस्यावयवत्वेन 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युच्यते, अन्नमयादीनामिव 'इदं पुच्छं प्रतिष्ठा' इत्यादि । तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुम् ? प्रकृतत्वादिति ब्रूमः । ननु—आनन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते, आनन्दमयस्य ब्रह्मत्वादिति । अत्रोच्यते—तथा सति तदेव ब्रह्मानन्दमय आत्मावयवी, तदेव च ब्रह्म-पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यात्, अन्यतरपरिग्रहे तु युक्तं 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्रैव ब्रह्मनिर्देश आश्रयितुं; ब्रह्मशब्दसंयोगात्, नानन्दमयवाक्ये; ब्रह्मशब्दसंयोगाभावादिति । अपिच 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वेदमुच्यते—'तदप्येष श्लोको भवति । असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति' (तै० २।६) । अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति । नचानन्दमयस्यात्मनो भावाभावशङ्का युक्ता; प्रियमोदादिविशेषस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात् । कथं पुनः स्वप्रधानं सद्ब्रह्म आनन्दमयस्य पुच्छत्वेन निर्दिश्यते—'ब्रह्म पुच्छं प्रतिष्ठा' इति ? नैष दोषः; पुच्छवत्पुच्छं[1], प्रतिष्ठा परायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते, नावयवत्वं; 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' ( बृह० ४।३।३२) इति श्रुत्यन्तरात् । अपिच आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यम्, निर्विशेषं तु ब्रह्म वाक्यशेषे श्रूयते; वाङ्मनसयोरगोचरत्वाभिधानात्—'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति' (तै० २।९।) । अपिच आनन्दप्रचुर इत्युक्तेऽपि दुःखास्तित्वमपि गम्यते; प्राचुर्यस्य[2] लोके प्रतियोग्यल्पत्वापेक्षत्वात् । तथाच सति 'यत्र नान्यत्पश्यन्ति नान्यच्छृणोति नान्यद्विजानाति स भूमा' ( छा० ७।२४।१ ) इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुध्येत । प्रतिशरीरं च प्रियादिभेदादानन्दमयस्यापि भिन्नत्वम्, ब्रह्म तु न प्रतिशरीरं भिद्यते; 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तैत्ति० २।१। ) इत्यानन्त्यश्रुतेः, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' ( श्वे० ६।११ ) इति च श्रुत्यन्तरात् । नचानन्दमयस्याभ्यासः श्रूयते; प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते—'रसो वै सः, रसꣳह्येवायं लब्ध्वाऽनन्दी भवति, को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' । 'सैषानन्दस्य मीमाꣳसा भवति' । 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति' ( तै० २।७,८,९ ) 'आनन्दो ब्रह्मेति व्यजानात्' ( तै० ३।६) इति च । यदिच आनन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत्, तत उत्तरेष्वानन्दमात्रप्रयोगेष्वप्यानन्दमयाभ्यासः कल्प्येत, नत्वानन्दमयस्य ब्रह्मत्वमस्ति प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम । तस्माच्छ्रुत्यन्तरे 'विज्ञानमानन्दं ब्रह्म' ( बृ० ३।९।२८ ) इत्यानन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात्, 'यदेष आकाश आनन्दो न स्यात्' इत्यादिर्ब्रह्मविषयः प्रयोगो नत्वानन्दमयाभ्यास इत्यवगन्तव्यम् । यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यासः–'एतमानन्दमयमात्मानमुपसंक्रामति' ( तै० २।८ ) इति, न तस्य ब्रह्मविषयत्वमस्ति; विकारात्मनामेवान्नमयादीनामनात्मनामुपसंक्रमितव्यानां प्रवाहे पठितत्वात् । नन्वा-

---

१ पुच्छवत्पुच्छमिति । ननु—प्रतिष्ठापदेनैवाधारत्वलाभात्पुच्छपदेन नाधारत्वलक्षणा संभवति; कान्तिमन्मुखं चन्द्र इत्यत्र स्वशब्देनैव कान्तिमत्त्वे लब्धेऽपि चन्द्रकान्तितुल्यकान्तिसंग्रहार्थं चन्द्रपदमपि गौणमिति युक्तं, नैवमत्र; ब्रह्मप्रतिष्ठात्वसंकोचकमानान्तराभावेन प्रत्युत तस्य निरपेक्षप्रतिष्ठात्वप्रमापकश्रुतिसत्वेन प्रतिष्ठापदेनैवेष्टसिद्धेः, एवंचानन्दमयावयवत्वेन ब्रह्मनिर्देश इत्यत उक्तम्—प्राचुर्यादिति । एवंच यथा पक्षिणां पुच्छमाधारः एवमानन्दमयस्य ब्रह्म आधार इति दृष्टान्तमुखेन श्रोतृबुद्ध्यवतरणार्थं पुच्छवद्भावविशेषिततयाऽधारत्वसामान्यलक्षणार्थं च पुच्छपदप्रयोगः सार्थक इति न दोषः ॥

२ ब्राह्मणप्रचुरो ग्राम इत्यत्र प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वस्य दर्शनादानन्दमयशब्देनानन्दप्रचुरविवक्षणेऽपि न ब्रह्मपरत्वम् । प्रचुरप्रकाशः सवितेत्यादौ तु प्राचुर्यस्य विशेषणत्वान्न प्राचुर्यविशेष्यत्वस्थलीयोक्तनियमभङ्गः । यदितु तात्पर्यानुसारेण प्राचुर्यविशेषणत्वस्थलेऽपि प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वं एवं तद्विशेष्यत्वेऽपि स्वव्यधिकरणविजातीयाल्पतानिरूपकत्वं च प्रामाणिकसंमतमित्युच्यते, तावताऽपि विज्ञानमयप्रायपाठगतस्यानन्दमयशब्देऽपि विज्ञानमयशब्दे इव प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमेवाङ्गीकरणीयमिति सर्वमनवद्यम्' इति ॥

## भामती ।

**तिष्ठेति ब्रह्मशब्दात्प्रतीयते । विशुद्धं ब्रह्म विकृतं त्वानन्दमयशब्दतः ॥** तत्र किं पुच्छपदसमभिव्याहारात् अन्नमयादिषु चास्यावयवपरत्वेन प्रयोगात्, इहाप्यवयवपरत्वात्पुच्छपदस्य, तत्समानाधिकरणं ब्रह्मपदमपि स्वार्थत्यागेन कथंचिदवयवपरं व्याख्यायताम् ? आनन्दमयपदं चान्नमयादिविकारवाचिप्रायपठितं विकारवाचि वा, कथंचित्प्रचुरानन्दवाचि वा, ब्रह्मण्यप्रसिद्धं कयाचिद्वृत्त्या ब्रह्मणि व्याख्यायताम् ? आनन्दपदाभ्यासेन च ज्योतिष्पदेनेव ज्योतिष्टोम आनन्दमयो लक्ष्यतां, उतानन्दमयपदं विकारार्थमस्तु, ब्रह्मपदं च ब्रह्मण्येव स्वार्थेऽस्तु, आनन्दपदाभ्यासश्च स्वार्थे,

## वेदान्तकल्पतरुः ।

विवेकाय पूर्वोत्तरपक्षयुक्तीर्विभजते—**तत्र किमिति ।** उपेक्ष्यापि प्रायपाठं कथंचित्प्रचुरानन्दवाचि चानन्दमयपदं कल्पितमपि ब्रह्मण्यप्रसिद्धं; स्तोकदुःखानुवृत्त्यापत्तेरित्यर्थः । **कया चिद्वृत्त्येति ।** अल्पत्वनिवृत्तिलक्षणयेत्यर्थः । **ननु** प्रचुरप्रकाशः सवितेतिवदल्पत्वनिवृत्तिपरः किं न स्याद्, **उच्यते;** यत्र प्राचुर्यविशिष्टपदार्थप्रतीतिस्तत्रैवं भवति । यत्र पुनः प्राचुर्यमेव पदार्थेन विशेष्यते तत्र विरोधिन ईषदनुवृत्तिः प्रतीयते ब्राह्मणप्रचुरोऽयं ग्राम इत्यादौ । तथाच आनन्दमयपदेऽपि प्रधानं प्रत्ययार्थं प्राचुर्यं प्रति आनन्दस्य विशेषणत्वाद् दुर्निवारा दुःखानुवृत्तिरिति ॥ तत्रापिशब्दबलाद्विरोध्यनुवृत्तिः प्रतीयते, मानान्तरेण तु तदभावावगमे प्राचुर्यमल्पत्वनिवृत्तिपरं कल्प्यते । तस्मान्मयडर्थस्य मुख्यस्य त्यागः । **कृतबुद्धयः** शिक्षितबुद्धयः । **विदाङ्कुर्वन्तु** विवेचयन्तु । विभागमात्रेणैव सिद्धान्तप्राबल्यमुन्मीलयन्त्वित्यर्थः । उक्तमि-

## कल्पतरुपरिमलः ।

मिति पाठे मुख्यार्थविवक्षारहितं कृतमित्यर्थः । तद्राहित्यं तु भाष्यकाराभिमते प्रकरणे लक्षणापक्षेऽपि समानमिति भावः । **वस्तुतस्तु—**भाष्यकारपक्षे मन्त्रपदं न प्रकरणपरम्; यतो भाष्ये 'ब्रह्मविदाप्नोतीति' परमोपक्रमोपन्यासस्तस्यान्यपरत्वे प्रकरणान्य एवानन्दमयः स्यादिति शङ्कावारणार्थः, कारणवाक्याद्यर्थोपन्यासो मन्त्रस्यासंबन्धिपदनिचयव्यवधानशङ्कावारणार्थः । **'यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ । तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ॥'** इति तैत्तिरीयवार्तिकोक्तरीत्या मान्त्रवर्णिकब्रह्मानुवृत्तिसूचनार्थश्च । **अन्यथा हि प्रकृतहानेत्या**दिग्रन्थः प्रतिपिपादयिषितमान्त्रवर्णिकब्रह्मविषयत्वाभावे बाधकोद्घाटनार्थः । एवं कृत्स्नस्यास्य भाष्यवाक्यस्य सौत्रमन्त्रपदमुख्यार्थानुरोध्यर्थपरत्वं **'मान्त्रवर्णिकमिति सूत्रं भाष्यकृद्भिरित्यादिना विवृतमित्यन्तेन** ग्रन्थेनाचार्यैर्दर्शितमेव । टीकाग्रन्थेतु सौत्रं मन्त्रपदं मुख्यार्थे भाष्योक्ततदर्थे वा केनचिदस्वारस्येन न प्रवृत्तम्, किंतु मन्त्रवर्णस्येव कोशवाक्यजातस्य पर्यालोचनायामप्यानन्दमयस्य ब्रह्मत्वं निश्चेतुं शक्यम्; अतः साऽपि युक्तिरथेन सूत्रेण मन्त्रशब्दस्य गौणीं वृत्तिमाश्रित्य विवक्षितेति सूत्रयितुमर्थान्तरमाश्रितम् । अतएव सूत्राणामनेकार्थत्वमलङ्कार इत्यर्थद्वयपरत्वमित्येतदुपपादयितुमित्याह सूत्रकार इत्यवतारयामास । अनुपदमेवोत्तरसूत्रावतारिकागतं सूत्रपदमेवमाशयं व्याचक्षाणानामाचार्याणामेतत्सूत्रावतारिकागतस्यापि सूत्रपदस्यायमेवाशय इत्यभिप्रायोऽस्त्येव, किंतु भाष्यानुक्तत्वात् टीकोक्तार्थो न श्रद्धेय इति मन्दशङ्कानिराकरणार्थं टीकोक्त एवार्थ उपपन्नतर इति तत्प्रौढिः प्रदर्शिता । **केषुचिट्टीकाकोशेषु—मन्त्रे हि पुनः पुनरन्योन्तर आत्मेति परब्रह्मण्यान्तरत्वश्रवणादिति** पाठं दृष्ट्वा तत्परिष्करणमित्थमाचार्यैः कृतम् । कोशान्तरेषु तु—**मन्त्रे हि यो वेद निहितं गुहायामिति** परब्रह्मण्यान्तरत्वश्रवणादिति पाठो दृश्यते । तस्मिन्पाठे मन्त्रोक्तं ब्रह्मणो गुहासंनिहितत्वमन्तरशब्देन प्रत्यभिज्ञायत इत्येतत् स्पष्टमेवेत्यभिप्रेत्य पाठान्तरमेव व्याख्यातम् ॥

**यत्र पुनः प्राचुर्यमेवेति ।** प्राचुर्यस्य धर्मिविशेषणत्वेन निर्देश एव व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वं दृष्टम् । यथा 'प्रचुरब्राह्मणो ग्राम' इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वं निरूपकं दृष्टमिति । तस्य स्वधर्मिविशेष्यत्वे तु समानाधिकरणविजातीयाल्पत्वमेव निरूपकम् । अतएव 'ब्राह्मणप्रचुरो ग्राम' इति प्रयोगे तद्ग्रामगतशूद्राल्पत्वापेक्षं प्राचुर्यं प्रतीयते । नच—'प्रचुरप्रकाशः सविते'ति'तप्रकाशप्रचुरः सवितेति' प्रयोगेऽपि नक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते, नतु सवितृगततमोल्पत्वापेक्षं; तत्र तमसो बाधितत्वात्, तथेहापि स्यादिति—शङ्कनीयम्; तत्रापि घनतुहिनसैंहिकेयाच्छादनारोपिततमोऽल्पत्वमपेक्ष्य घनाद्यपसरणसमये तथा प्रयोगात्, तदभावे व्युत्पन्नानां तथा प्रयोगाभावात् । **ननु—**'बलवत्तरश्चैत्र' इत्यादौ तरबाद्यर्थस्य प्राचुर्यस्य विशेष्यत्वेऽपि मैत्रादिगतबलाद्यल्पत्वापेक्षत्वं दृष्टमिति—**चेद्, न;** तत्र 'द्विवचनविभज्योपपदे तरबीयसुना'विति द्विवचनविभज्योपपदविशेषणवशादातिशायनिकप्रत्ययेषु व्युत्पत्त्यन्तरकल्पनेऽपि मयटि तत्कल्पकाभावेनौत्सर्गिकव्युत्पत्तिलङ्घनायोगादिति भावः ॥ **प्रधानं प्रत्ययार्थं प्राचुर्यं प्रतीति ।** यद्यपि मयड्विधायकसूत्रस्य **प्रथमव्याख्याने** प्राचुर्यं प्रकृत्यर्थस्य विशेषणं, मयट् च स्वार्थिकः; **द्वितीयव्याख्याने** मयट् प्रस्तुतान्नादिविशिष्टयज्ञाद्यर्थः प्राचुर्यस्य प्रत्यायनमेव नास्तीति शाब्दिकानां मर्यादा; तथा'प्यन्नमयो यज्ञ इत्यन्नप्रचुर उच्यत' इति वृत्तिकारदर्शितोदाहरणार्थानुसारेण द्वितीयव्याख्याने प्रकृत्यर्थप्राचुर्यविशिष्ट एवान्यपदार्थो मयडर्थ इति वृत्तिका-

## भामती ।

पुच्छपदमात्रमवयवप्रायलिखितमधिकरणपरतया व्याक्रियतामिति कृतबुद्धय एव विदांकुर्वन्तु । **तत्र प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् । पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम् ॥** पुच्छपदं हि वालधौ मुख्यं सदानन्दमयावयवे गौणमेवेति मुख्यशब्दार्थलङ्घनमवयवपरतायामधिकरणपरतायां च तुल्यम् । अवयवप्रायलेखबाधश्च विकारप्रायलेखबाधेन तुल्यः । ब्रह्मपदमानन्दमयपदमानन्दपदमिति त्रितयलङ्घनं त्वधिकम् । तस्मान्मुख्यत्रितयलङ्घनादसाधीयान्पूर्वः पक्षः । मुख्यत्रयानुगुण्येन तूत्तर एव पक्षो युक्तः । **अपिचानन्दमयपदस्य ब्रह्मार्थत्वे, 'ब्रह्म पुच्छम्' इति न समञ्जसम् ।** नहि तदेवावयव्यवयवश्चेति युक्तम् । आधारपरत्वे च पुच्छशब्दस्य प्रतिष्ठेत्येतदप्युपपन्नतरं भवति । आनन्दम-

## वेदान्तकल्पतरुः ।

वेकं स्फोरयति—**प्रायेति** । मयड्विकारे मुख्यः ब्रह्मशब्दः परब्रह्मणि मुख्यः अभ्यस्यमानानन्दशब्दश्च प्रकृत्यर्थएव मुख्यो न मयडर्थे । पूर्वपक्षे एतत्रितयलङ्घनम्, आनन्दमयपदस्यान्नमयादिविकारप्रायपाठपरित्यागश्च स्यात् । उत्तरे तु पक्षे पुच्छशब्दस्यावयवप्रायपाठस्यैव बाधनम्, अनुगुणं तु मुख्यत्रितयमित्यर्थः । **ननु** यथा पूर्वपक्षे मयट्श्रुतिबाध एवं सिद्धान्ते पुच्छश्रुतिबाधस्तत्राह—**पुच्छपदं हीति** । लाङ्गूले मुख्यं पुच्छपदं, न करचरणाद्यवयवमात्रे; आनन्दमयस्य चात्मनो न मुख्यलाङ्गूलसंभव इति । **अपिच** पुच्छशब्देनाधारलक्षणाप्रतिष्ठेत्युपपदसामर्थ्याच्छ्रुत्यनुमता, नावयवलक्षणेत्याह—**आधारपरत्वे चेति** । आनन्दमयस्य कोशस्यैवेतरकोशापेक्षयाऽऽन्तरत्वं चेत्, तर्हि ततोऽभ्यन्तरं ब्रह्म किमिति

## कल्पतरुपरिमलः ।

रमतमालोच्यैवमुक्तम् ॥ **मयड्विकारे मुख्य इत्यादि । ननु**—आनन्दशब्दाद्विकारार्थो मयडेव न प्राप्नोति; 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः'' ''नित्यं वृद्धशरादिभ्यः'' इति विकारावयवार्थमयड्विधायकसूत्रयोर्भाषाविषयत्वात्, तयोरर्थयोश्छन्दस्यप्राप्तस्य मयटो विधायकस्य 'द्व्यचश्छन्दसीति' सूत्रस्य द्व्यज्भ्य एव शरपर्णादिप्रातिपदिकेभ्यः तद्विधायकत्वादतो मयड्विकारे मुख्य इत्युक्तमयुक्तम् । एवंच विकारप्रायपाठपरित्यागोक्तिरप्ययुक्ता; अन्नरसमयविज्ञानमयशब्दयोरपि मयटो विकारार्थत्वायोगादिति—**चेन्न**; वृद्धशरादिसूत्रगतेन नित्यग्रहणेन तत्प्राप्तिसंभवात् । नच वृद्धशरादिभ्यो मयटो नित्यत्वसिद्ध्यर्थं तत्; पूर्वसूत्रेण सर्वप्रातिपदिकेभ्यो विकल्पेन मयड्विधानानन्तरं वृद्धशरादिसूत्रारम्भसामर्थ्यादेव तेभ्यस्तस्य नित्यत्वसिद्धेः । नच—वाङ्मयस्वङ्मयादिरूपसिद्ध्यर्थं प्रवृत्तस्य नित्यमेकाच इति व्याकरणान्तरसूत्रस्यैकदेशभूतनित्यग्रहणमेकदेशद्वारा तत्सूत्रस्मारणायेति योगविभागार्थं तदिति—शङ्क्यम्; शरादिगणे मृद्ग्रहणवैयर्थ्यापत्तेः । अतस्तदेव मृद्ग्रहणमेकाजुदाहरणैकदेशत्वात्सर्वेषामेकाचां स्मारकमाश्रयितुं शक्यमिति नित्यग्रहणमतिरिच्यमानं भाषायामेव वृद्धशरादिभ्यो नित्यमित्येतदर्थकं तच्छन्दसि वृद्धशरादिभ्योऽन्येभ्यश्च प्रातिपदिकेभ्यो यथादर्शनं व्यवस्थितविकल्पार्थमित्यङ्गीकर्तुं युक्तमिति ॥ **ननु**—तथापि प्राचुर्यार्थमयड्विधायकसूत्रप्रथमव्याख्यानुसारेणात्रत्यानन्दमयपदस्य प्रचुरानन्दार्थत्वपरिग्रहे माण्डूक्यश्रुतिगतानन्दमयशब्दस्य सुषुप्तजीवे इव ब्रह्मणि मुख्यत्वमुपपद्यते, ब्रह्मणो मनआदिरूपतयेवान्यावयवत्वेनोपास्यतया निर्देशेपि ब्रह्मश्रुतेर्मुख्यता नापैति । प्रचुर आनन्दोऽप्यानन्द एवेत्यभ्यस्यमानानन्दपदानामानन्दमयविषयत्वेऽपि लक्षणा न प्रसज्यते । अतः पूर्वपक्षे मुख्यत्रितयलङ्घनोक्तिरयुक्ता । एवमुत्तरपक्षे प्रायपाठमात्रबाधनोक्तिरप्ययुक्ता; पुच्छश्रुतिबाधस्यापि सत्त्वात् । नच—पक्ष्यवयवपरत्वेऽपि तद्बाधस्तुल्यः, तस्या वालधावेव मुख्यत्वादिति—वाच्यम्; तस्याः पशुपश्चाद्भागावयवइव पक्षिपश्चाद्भागावयवेऽपि मुख्यत्वात् । ''बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं तस्मात्सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छ''मित्यादिश्रुतिषु तत्रापि तस्याः प्रयोगसत्त्वेन विनिगमनाविरहादिति—**चेत्, अत्रेदं समाधानं विवक्षितम्**—आनन्दमय इत्यस्यानन्दप्रचुर इत्यर्थपरिग्रह इव प्रचुर आनन्द इत्यर्थपरिग्रहेऽपि मुख्यार्थबाधः स्यादेव; ब्रह्मस्वरूपानन्दे संख्याधिक्यरूपस्य मुख्यस्य प्राचुर्यस्याभावात् । नहि संख्याधिक्यवत् परिमाणाधिक्यमुत्कर्षो वा प्रचुरशब्दस्य मुख्योऽर्थः; अयं पटोऽस्मात् पटात् प्रचुर इति वाऽयं गकारोऽस्माद्गकारात्प्रचुर इति वा प्रयोगाभावात् । सुषुप्तजीवे दृष्टोऽप्यानन्दमयशब्दो देहद्वयोपाधिविगमप्रयुक्ताभिव्यक्तिविशेषरूपोत्कर्षलक्षको न मुख्यः । नचेह तथा लक्षणाबीजमस्ति; प्रायपाठानुरोधिविकारार्थपरिग्रहोपपत्तेः । ब्रह्मशब्दोपि ज्ञेये परब्रह्मणीवोपास्ये केनचिद्रूपेण परिच्छिन्ने सविशेषब्रह्मण्यवयवार्थपौष्कल्याभावाद् नात्यन्तं मुख्यभावमश्नुते । यद्यपि प्रचुरानन्देऽप्यानन्दशब्दो मुख्यः; तथाप्यानन्दमयस्य ब्रह्मत्वे जीवसाधारणानन्दाभ्यासमात्रं न लिङ्गं, किंतु प्रचुरानन्दाभ्यास इति तल्लाभार्थमभ्यस्यमानानन्दमयशब्दोक्ते प्रचुरानन्दे लक्षणा वाच्या । पुच्छशब्दस्य पक्ष्यवयवपरत्वेऽपि मुख्यार्थत्यागस्तुल्यः । 'पुच्छोऽस्त्री लूम लाङ्गूल'मित्यभिधानकोशप्रयोगबाहुल्यनिश्चितलाङ्गूलशक्तिकस्य तस्य पक्ष्यवयवे पश्चाद् लम्बमानत्वसादृश्येना'कच्छः पुच्छकच्छश्चेति' पश्चाल्लम्बमानवस्त्रावयव इव प्रयोगोपपत्तावनेकशक्तिकल्पनायोगात् । तस्मादिह न कश्चन शङ्कावकाश इति ॥ **ततोऽभ्यन्तरं ब्रह्म किमिति नोक्तमिति** । ब्रह्मणः सर्वान्तरत्वप्रदर्शनार्थं खल्वन्नमयाद्युत्तरोत्तरान्तरनिरूपणं प्रवृत्तं, तच्चेदानन्दमये पर्यवसितं

नन्दमयस्योपसंक्रमितयस्यान्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिफलं निर्दिष्टं भवेत् । नैष दोषः; आनन्दमयोपसंक्रमणनिर्देशेनैव पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात् । 'तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते' इत्यादिना च प्रपञ्च्यमानत्वात् । या त्वानन्दमयसंनिधाने 'सोऽकामयत बहु स्यां प्रजायेयेति' इयं श्रुतिरुदाहृता सा 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यनेन संनिहिततरेण ब्रह्मणा संबध्यमाना नानन्दमयस्य ब्रह्मतां प्रतिबोधयति । तदपेक्षत्वाच्चोत्तरस्य ग्रन्थस्य 'रसो वै सः' इत्यादेर्नानन्दमयविषयता । ननु 'सोऽकामयत' इति ब्रह्मणि पुंलिङ्गनिर्देशो नोपपद्यते । नायं दोषः; 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यत्र पुंलिङ्गेनाप्यात्मशब्देन ब्रह्मणः प्रकृतत्वात् । या तु भार्गवी वारुणी विद्या 'आनन्दो ब्रह्मेति व्यजानात्' इति, तस्यां मयडश्रवणात्, प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम् । तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते । नचेह सविशेषं ब्रह्म प्रतिपादयिषितं, वाङ्मनसगोचरातिक्रमश्रुतेः । तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयड्विज्ञेयो न प्राचुर्यार्थः । सूत्राणि त्वेवं व्याख्येयानि—'ब्रह्म पुच्छं

## भामती ।

यस्य चान्तरत्वमन्नमयादिकोशापेक्षया । ब्रह्मणस्त्वान्तरत्वमानन्दमयादर्थाद्गम्यत इति न श्रुत्योक्तम् । एवंचान्नमयादिवदानन्दमयस्य प्रियाद्यवयवयोगो युक्तः । वाङ्मनसागोचरे तु परब्रह्मण्युपाधिमन्तर्भाव्य प्रियाद्यवयवयोगः, प्राचुर्यं च, क्लेशेन व्याख्यायेयाताम् । तथाच मान्त्रवर्णिकस्य ब्रह्मण एव 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्रधानस्याभिधानात् तस्यैवाधिकारो नानन्दमयस्येति । 'सोऽकामयत' इत्याद्या अपि श्रुतयो ब्रह्मविषया नानन्दमयविषया इत्यर्थसंक्षेपः । सुगममन्यत् । **सूत्राणि त्वेवं व्याख्येयानीति** । वेदसूत्रयोर्विरोधे **'गुणे त्वन्याय्यकल्पना'** इति सूत्राण्यन्यथा नेतव्यानि ।

## वेदान्तकल्पतरुः ।

नोक्तमत आह—**ब्रह्मणस्त्विति** । अर्थात्प्रतिष्ठात्वसामर्थ्यादित्यर्थः । यदुक्तमुपाधिवशात्प्रियादियोगः प्राचुर्यप्रयुक्तदुःखलेशान्वयश्चेति, तत्राह—**वाङ्मनसेति ॥ गुणे त्विति** । यथा ह्यग्नीषोमीये पशावेकपाशके "अदितिः पाशान् प्रमुमोक्त्वेतान्—" इति, "अदितिः पाशं प्रमुमोक्त्वेत"मिति च मन्त्रौ श्रुतौ । तत्र बहुवचनवान्मन्त्रः किं प्रकरणादुत्कष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीये समवेतार्थत्वात् तदनुरोधेन बहु-

## कल्पतरुपरिमलः ।

स एव ब्रह्मेति युक्तं; ततोऽप्यान्तरं ब्रह्म विवक्षितं चेत्, तथा किमिति नोच्येत । नहि ब्रह्मणः सर्वान्तरत्वप्रदर्शनार्थं प्रक्रान्तं तदब्रह्मणि परिसमापितमिति युज्यत इति भावः ॥ **प्रतिष्ठात्वसामर्थ्यादिति** । "ब्रह्म पुच्छं प्रतिष्ठे"त्यानन्दमयप्रतिष्ठितिहेतुत्वतदाधारत्वसामर्थ्यादित्यर्थः । अतः 'कस्मिन्नहमुत्क्रान्त'इत्यादिश्रुत्यन्तरे प्राणस्य जीवप्रतिष्ठाहेतुत्वश्रवणेऽपि न तत्र व्यभिचारः । यथा भूमविद्यायाम"स्ति भगवो नाम्नो भूय" इत्यादिप्रश्नप्रतिवचनपरम्परायाः प्राणे समापनेऽ"प्येष तु वातिवदती"त्यादेस्तुशब्दश्रुत्या "आत्मनः प्राण" इति ततः प्राणोत्पत्तिलिङ्गेन च प्राणादर्थान्तरोपदेशपरत्वमिति तत्रैव "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदि"ति शिष्यजिज्ञासितात्मोपदेशपर्यवसानमभ्युपगम्यते, नतु प्राचीने प्राणे; एवमिहापि योजनीयमिति भावः ॥ अन्नमयाद्युत्तरोत्तरान्तरनिरूपणं ब्रह्मणि कारणवाक्यश्रुतस्यात्मत्वस्य ब्रह्मण्येव श्रुतस्य गुहासन्निहितत्वस्य विवरणार्थम् । अतस्तदवश्यं ब्रह्मणि पर्यवसितं वक्तव्यमित्यभिप्रेत्यैवं परिहार आश्रितः । यदितु 'सत्यं ज्ञानमिति' मन्त्रे सत्यादिलक्षणं ब्रह्म गुहायां निहितं जीवरूपेण गुहायामीश्वरेण निवेशितं जीवाभिन्नं वेदेति जीवस्य गुहानिहितत्वमुक्तमिति तद्विवरणार्थं तत्प्रवृत्तं भवेत्, तदा तत्पर्यवसानमानन्दमय एव युक्तमिति न काचिदनुपपत्तिः ॥ **विशेष्यप्रधानभूतेति** । मयडर्थं प्रति प्रातिपदिकार्थस्य विशेषणत्वेनाप्राधान्येऽपि विभक्त्यर्थसंख्यां प्रति विशेष्यत्वेन तस्य प्राधान्यमिति सूचयितुं विशेष्यग्रहणम् । संख्या समानप्रत्ययोपात्तकारकान्वयिनी तद्गुणभूता । प्रातिपदिकार्थोऽपि तद्गुणभूतः । **अतो गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्** (जै. अ.२ पा.१ सू.२२) **इति** न्यायात् संख्याप्रातिपदिकार्थयोर्न परस्परगुणप्रधानभाव इति कौमारिलमतानुसरणे तु पार्ष्ठिकान्वयवेलायां प्रातिपदिकार्थस्य संख्यां प्रति विशेष्यत्वमस्तीति तदभिप्रायं विशेष्यपदम् । एवंच शाब्दबोधवेलायां तस्य संख्यां प्रति प्राधान्यास्फुरणेऽपि प्रथमश्रुतस्य तस्य संख्याविशेष्यस्य विभक्त्यर्थस्य च प्रकृतौ समवेतत्वादनुत्कर्ष इति सिद्धान्तन्यायो द्रष्टव्यः । **अतएव—प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः । उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्यावकल्पते ॥'** इति शास्त्रदीपिकायां तदुभयमनुत्कर्षहेतुत्वेन दर्शितम् ॥ **ननु—आम्नायस्यार्थं वक्तुं प्रभवामो नाम्नायं पर्यनुयोक्तुमिति न्यायाद्**पर्यनुयोज्ये वेदे पाशैक्येऽपि बहुवचनं कथंचिदवयवबहुत्वाभिप्रायं योज्यते, पौरुषेयेषु सूत्रेषु स्वायत्ते शब्दप्रयोगे सर्वज्ञेन सूत्रकृता किमर्थं श्रुतिविरोधभ्रान्ति-

वेदान्तकल्पतरुः ।

वचनं पाशगुणत्वेन तद्विशेषणभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयवाँल्लक्षयतीति नवमे निर्धारितम्—**विप्रतिपत्तौ विकल्पः स्यात्समत्वाद् गुणे त्वन्याय्यकल्पनैकदेशत्वात्** ( जै. अ.९ पा.३ सू. १५ ) **इति** । उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात्; पाशप्रातिपदिकस्योभयत्र समत्वात् **गुणे** प्रत्ययार्थे **त्वन्याय्यकल्पना** न तद्बलान्मन्त्रोत्कर्षः; प्रत्ययस्य पदैकदेशत्वात्प्रातिपदिकपारतन्त्र्येणोत्कर्षकत्वायोगादिति सूत्रार्थः । एवमिहापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यध्याहारादिभिर्नेयानीति । **तथाचाचार्यशबरस्वामी वर्णयांबभूव**—लोके येष्वर्थेषु

कल्पतरुपरिमलः ।

करसूत्रप्रणयनं कृतम् ? इत्याशङ्क्याध्याहाराद्यपेक्षानेकार्थप्रत्यायनार्थमित्याह—**अध्याहारादिभिर्नेयानीति** । आदिशब्देन लक्षणानुषङ्गो योगवृत्तिश्च गृह्यते । तत्र सौत्रानन्दमयशब्दस्यानन्दमयपर्यायाम्राते पुच्छब्रह्मणि लक्षणा । स्वप्राधान्येन प्रतिपाद्यमित्यध्याहारः । असन्नेव स भवतीति निगमनश्लोकस्थब्रह्मशब्दाभ्यासविषयत्वादिति हेतुः । यत्र ब्रह्मत्वं साध्यं तत्र तद्विषयश्रुत्यादिमात्रं हेतूकर्तव्यम् । इह तु ब्रह्मणः पुच्छवाक्यविषयत्वे स्थिते तात्पर्येण प्रधानतया तत्प्रतिपाद्यत्वं साध्यमिति तात्पर्यसिद्धये तल्लिङ्गतयाभ्यासपर्यन्तहेतूक्तिः । **नन्व**सिद्धोऽयं हेतुः । यत आनन्दमयो निगमनश्लोकविषयः, न पुच्छं ब्रह्म; पूर्वपर्यायेषु निगमनश्लोकानां पुच्छविषयत्वादृष्टेरिति शङ्कायामपि सूत्रमेवोत्तरम् । तत्रानन्दमय एव पक्षः, न निगमनश्लोकप्रतिपाद्य इति साध्यम्, ईक्षतिसूत्रान्नञानुवर्तमानेन निषेध्याध्याहारेण च साध्यपूरणम्, ब्रह्मशब्दाभ्यासादित्येव हेतुः । अभ्यस्यमानं ब्रह्मशब्दं प्रति जीवस्यानन्दमयस्य मुख्यार्थत्वाभावादेकं पुच्छपदमनुरुध्यानेकस्य ब्रह्मशब्दस्यानन्दमये जघन्यवृत्तिकल्पनायोगादित्यभिप्रायेणाभ्यासपर्यन्तोक्तिः । **किंच** न निगमनश्लोकप्रतिपाद्य **इत्यस्मिन्** साध्ये निगमनश्लोकप्रतिपाद्यब्रह्मसत्त्वासत्त्ववेदितृत्वेन प्रकृतपरामर्शिभ्यां स एनमिति सर्वनामभ्यामभ्यस्यमानत्वादिति हेत्वन्तरमप्यनेन विवक्षितम् । अत्रापि पुच्छपदाद् बलवत्त्वसिद्ध्यर्थमभ्यासपर्यन्तहेतूक्तिः ॥ १२ ॥ **द्वितीयसूत्रे** विकारपदेनावयवो लक्ष्यते । तद्वाचिशब्दः पुच्छशब्दः । स एव शब्दो विकारो विगतकार्योऽनर्थकः शब्दः । कारशब्दः कर्मणि घञन्तः कार्यवाची । तथाचावयववाचिशब्दात्तस्य स्वार्थत्यागे लक्षणीयाभावेनानर्थक्यप्रसङ्गाच्च ब्रह्म न स्वप्राधान्येन प्रतिपाद्यमिति शङ्कार्थः । नच पुच्छपदेनाधारत्वं लक्षणीयं; प्रतिष्ठापदेन पौनरुक्त्यप्रसङ्गादिति शङ्कितुर्हृदयम् । नैवं शङ्कितव्यम्; ब्रह्मश्रुत्यभ्यासानुरोधात् । ब्रह्म स्वप्राधान्येन प्रतिपाद्यमेव, पुच्छपदं तु तत्राधारत्वलक्षकम् । नच प्रतिष्ठापदेन पौनरुक्त्यम् । पुच्छपदसमभिव्याहृतेन तेन पुच्छवत्प्रतिष्ठितिक्रियासाधनत्वमुच्यते । पक्षिणो हि पुच्छेन प्रतितिष्ठन्तीति लोकतः श्रुतितश्चावगतम् । यथा पुच्छेन प्रतिष्ठितौ तदुपरितनावयवावच्छिन्नं पक्षिणं प्रति पुच्छमाधारस्तथा ब्रह्मणा प्रतिष्ठितौ प्रियादिमध्यभागरूपात्मतावयवयुक्तमानन्दमयं प्रति ब्रह्माधार इति तदाधारत्वं पुच्छपदेन लक्ष्यत इत्येवं वैवक्षिककरणत्वाधिकरणत्वरूपार्थभेदसत्त्वात् । तथापि मुख्यमाधारवाचकं हित्वा प्रहीणावयववाचिना पुच्छपदेन तल्लक्षणा केन हेतुनेति चेत्, पूर्वपर्यायेषु पुच्छशब्दानां प्राचुर्यादिहापि पर्याये तत्साम्यार्थं पुच्छशब्दे प्रयोक्तव्ये तेनैवाधारत्वप्रतीतिर्लभ्यत इति तात्पर्येण । **ननु** पूर्वपर्यायसाम्यार्थं पुच्छपदप्रयोगमात्रं नापेक्षितं, किंत्ववयविगतपुच्छावयवान्वयबोधनोपयोगितया तेन पुच्छावयवप्रतिपादनम् । नचाधारलक्षकेण तत्प्रतिपादनं संभवति । अतोनाधारलक्षणा युक्तेत्यस्यामपि शङ्कायां प्राचुर्यादित्येवोत्तरम् । इत्थमपि शङ्का नावतरति; अर्थान्तरलक्षकतया स्वार्थमनभिदधानस्यापि शब्दस्य स्वार्थाभिधानफलार्थतादृष्टेः । तद्यथा । "उत्तरं बर्हिषः प्रस्तरं सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवाऽयजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तर" इति श्रुतौ प्रस्तरसमानाधिकरणस्य यजमानशब्दस्य प्रस्तरे यज्ञनिर्वर्तकत्वादियजमानगुणमुखेन वृत्तिस्तत्सिद्धिपेटिकायामुपपादिता । अथापि प्रस्तरे मुख्ययजमानत्वबोधनस्य यत्फलं यजमानमेवाऽयजमानादित्यादिवाक्यशेषार्थोपपादनं तादर्थ्यमपि दृश्यते । यथा वा'ग्निर्वै ब्राह्मण' इति श्रुतावग्निशब्दस्य मुखप्रभवत्वरूपाग्निगुणमुखेन ब्राह्मणे वृत्तिस्तत्र समर्थिता, तत्तुल्यन्यायतयाग्निर्वै दीक्षित इत्यत्राग्निशब्दस्य दीक्षिते वृत्तिरपि किंचिदग्निगुणमुखेनेति सिध्यति । अथापि दीक्षितेऽग्नितादात्म्यबोधनस्य यत्फलं "मदन्तीभिर्मार्जयत" इति विधिशेषस्य नहि 'अर्च्यग्निः शीतेन बाधती'-त्यर्थवादस्यार्थोपपादनं तादर्थ्यमपि दृश्यते । एवं "यजमानो वा आहवनीयो" 'यजमानं वा एतद्विकर्षते' यदाहवनीयात्पशुश्रपणं हरतीत्यादीनि प्रचुराण्यत्रोदाहरणानि ॥ **ननु** सानन्दमयसकलविकारजातकारणत्वमानन्दमयेनान्वेति चेत्, तत्पुच्छत्वेन निर्दिष्टे ब्रह्मण्येव 'तस्यैष एव शारीर आत्मेति' पुँल्लिङ्गेन प्रकृते सोऽकामयतेत्यादेरन्वयोऽस्तु; पुच्छमहिमवर्णनेन पुच्छवतः प्रधानस्याधिकस्तुतिलाभात् । नच—किंचिद्विकारैकदेशस्य परिच्छिन्नस्य सकलविकारकारणत्वमनुपपन्नमिति—शङ्क्यम्; नहि मुख्यवृत्त्यायमवयव उपदिश्यते, किंत्वनवयवेऽवयवत्वदृष्टिमात्रमुपदिश्यते । प्राणमयमनोमयपर्याययोराकाशपृथिवीयजुरादीनां वस्तुतस्तत्तदनवयवानामेवावयवत्वकल्पनादर्शनात् । नच विकारं प्रत्यवयवत्वदृष्टिविधानमात्रेण कारणत्वान्वयानुपपत्तिरायाति; तथा सत्याकाशदृष्टिविशिष्टोद्गीथोपासनायामाकाशे सर्वभूतकारणत्वाद्यन्वयायोगेनाकाशस्य कार-

प्रतिष्ठा' इत्यत्र किमानन्दमयावयवत्वेन ब्रह्म विवक्ष्यत उत स्वप्रधानत्वेनेति । पुच्छशब्दादवयवत्वेनेति प्राप्त उच्यते—'आनन्दमयोऽभ्यासात्' । आनन्दमय आत्मेत्यत्र 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्रधानमेव ब्रह्मोपदिश्यते, अभ्यासात्³ । 'असन्नेव स भवति' इत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वात् ॥ १२ ॥ 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' । विकारशब्देनावयवशब्दोऽभिप्रेतः । पुच्छमित्यवयवशब्दान्न स्वप्रधानत्वं ब्रह्मण इति यदुक्तं, तस्य परिहारो वक्तव्यः । अत्रोच्यते—नायं दोषः, प्राचुर्यादप्यवयवशब्दोपपत्तेः । प्राचुर्यं प्रायापत्तिः, अवयवप्राये वचनमित्यर्थः । अन्नमयादीनां हि शिरआदिषु पुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वावयवप्रायापत्त्या 'ब्रह्म पुच्छं प्रतिष्ठा' इत्याह, नावयवविवक्षया । यत्कारणमभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितम् ॥ १३ ॥ 'तद्धेतुव्यपदेशाच्च' । सर्वस्य विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते—'इदꣳसर्वमसृजत । यदिदं

## भामती ।

आनन्दमयशब्देन तद्वाक्यस्थ 'ब्रह्म पुच्छं प्रतिष्ठा' इत्येतद्गतं ब्रह्मपदमुपलक्ष्यते । **एतदुक्तं भवति**—आनन्दमय इत्यादिवाक्ये यत् 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मपदं तत्स्वप्रधानमेवेति । यत्तु ब्रह्माधिकरणमिति वक्तव्ये 'ब्रह्म पुच्छम्' इत्याह श्रुतिः, तत्कस्य हेतोः, पूर्वमवयवप्रधानप्रयोगात्तत्प्रयोगस्यैव बुद्धौ संनिधानात् तेनापि चाधिकरणलक्षणोपपत्तेरिति ॥ १२ ॥ १३ ॥ १४ ॥ **मान्त्रवर्णिकमेव च गीयते** ॥ १५ ॥ यत् 'सत्यं ज्ञानम्' इत्यादिना मन्त्रवर्णेन ब्रह्मोक्तं तदेतदुपायभूतेन ब्राह्मणेन स्वप्राधान्येन गीयते—'ब्रह्म पुच्छं प्रतिष्ठा' इति । अवयववचनत्वे त्वस्य मन्त्रे प्राधान्यं, ब्राह्मणे त्वप्राधान्यमित्युपायोपेययोर्मन्त्रब्राह्मणयोर्विप्रतिपत्तिः स्यादिति । **नेतरोऽनुपपत्तेः** ॥१६॥ अत्र 'इतश्चानन्दमयः' इति भाष्यस्य स्थाने 'इतश्च ब्रह्म पुच्छं प्रतिष्ठा' इति पठितव्यम् । **³भेदव्यपदेशाच्च** ॥१७॥ अत्रापि 'इतश्चानन्दमयः' इत्यस्य च 'आनन्दमयाधिकारे' इत्यस्य च भाष्यस्य स्थाने 'ब्रह्म पुच्छं प्रतिष्ठा' इति 'ब्रह्मपुच्छाधिकारे' इति च पठितव्यम् । **कामाच्च नानुमानापेक्षा** ॥ १८ ॥ **अस्मिन्नस्य च तद्योगं शास्ति** ॥१९॥ इत्यनयोरपि सूत्रयोर्भाष्ये आनन्दमयस्थाने 'ब्रह्म पुच्छं प्रतिष्ठा' इति पाठो द्रष्टव्यः । **तद्धेतुव्यपदेशाच्च** ॥१४॥ विकारस्यानन्दमयस्य ब्रह्म पुच्छमवयवश्चेत्कथं सर्वस्यास्य विकारजातस्य सानन्दमयस्य ब्रह्म पुच्छं कारणमुच्येत 'इदं सर्वमसृजत, यदिदं किंच' इति श्रुत्या । नह्यानन्दमयविकारावयवो ब्रह्म विकारः सन् सर्वस्य कारणमुपपद्यते ।

## वेदान्तकल्पतरुः ।

प्रसिद्धानि पदानि तानि सति वेदाविरोधसंभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यमिति ॥ **अपराण्यपीति** भाष्ये येषु सूत्रेषु व्याख्यातिदिष्टा तान्यल्पवक्तव्यत्वात्प्रथमं योजयति—**यत्सत्यमिति** । **तद्धेतुव्यपदेशाच्चेति** ( ब्र.अ.१ पा.१ सू.१४) सूत्रव्याख्यानपरमधिकरणसमाप्तिभाष्यं व्याख्याति—**विकारजातस्येति** । अवयवश्चेत् कथं कारणमुच्येत, तत्र हेतुमाह—**नहीति** । आनन्दमयस्तावद्विकारस्तदवयवो, ब्रह्मापि विकारः स्यात्परिच्छिन्नत्वात् तथाभूतं सन्न विश्वहेतुरित्यर्थः ।

## कल्पतरुपरिमलः ।

णत्वादिब्रह्मलिङ्गेन ब्रह्मत्वनिर्णयविरोधापत्तेः । नच—मुख्यावयवत्वमेवात्र विवक्षितमिति—वाच्यम्; प्राणमयमनोमयपर्याययोराकाशपृथिवीयजुरादीनां मुख्यावयवत्वासंभवेन तद्वदिहापि दृष्टिमात्रविधानौचित्यादित्याशङ्क्याह—**तदवयवो ब्रह्मापि विकारः स्यादिति** । पूर्वपर्यायेष्वि'दमेव शिर' इत्यादिनोक्तानां शिरःप्रभृतीनां तत्तन्मुख्यैकदेशत्वान्मुख्यैकदेशेष्वेव च शिरस्त्वादिकल्पनस्योचितत्वादाकाशपृथिवीशब्दाभ्यामाकाशपृथिवीसंबन्धवतोः समानोदानयोर्यजुरादिशब्दैस्तत्तद्विषयमनोवृत्तीनां च ग्रहणम्; तेषां शिरस्त्वादिकल्पनाङ्गीकारात् । ब्रह्मणि पुच्छत्वकल्पनायां तस्यानन्दमयमुख्यावयवत्वमेवाङ्गी-

---

१ अन्नमयादिपर्याये इदमादेरिवानन्दमयपर्यायेऽपि ब्रह्मणोऽप्राधान्यं वा उत उपक्रमोपसंहारैकरूप्यावधृतप्राधान्यकस्य तस्य स्वप्राधान्यं वेति तु संशयाशयः ॥

२ तल्लिङ्गादित्येव सूत्रयितव्येऽभ्यासादित्यभ्यासपर्यन्तधावनस्य यत्किंचित्प्राधान्यसमर्थकत्वेनैवोपपत्तेर्वर्णनीयत्वेनानन्दमयस्य च प्राधान्यरूपे साध्येऽनन्वयेनानन्दमयपदेन तद्घटितवाक्यसमुदायगतं ब्रह्मपुच्छमिति वाक्यं विवक्ष्यते । ब्रह्मपुच्छमभ्यासादित्येव सूत्रयितव्ये आनन्दमय इति सूत्रणं तु आनन्दमयो न प्रधानं अभ्यस्यमानब्रह्मपदार्थत्वाभावादिति प्रतिषेधादिसंग्रहणार्थमित्यादिन्यायरक्षामणितोऽवगन्तव्यम्—इति ॥

३ भेदः—वैलक्षण्यं, पूर्वत्रान्नमयादिपर्यायेषु फलनिर्देशोऽत्रतु नेति । एवंच फलनिर्देशान्यथानुपपत्त्या पूर्वत्रोपासनाविवक्षायामपि आनन्दमयस्य फलनिर्देशं विनैव निर्देशान्नेहोपासनाविवक्षेति भावः ॥

**किंच' ( तै० २।६ ) इति नच कारणं सत् ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्यावयव उपपद्यते ॥ १४ ॥ अपराण्यपि सूत्राणि यथासंभवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ इति षष्ठमानन्दमयाधिकरणम् ॥**

---

### भामती ।

**तस्मादानन्दमयविकारावयवो ब्रह्मेति तदवयवयोग्यानन्दमयो विकार इह नोपास्यत्वेन विवक्षितः, किंतु स्वप्रधानमिह ब्रह्म पुच्छं ज्ञेयत्वेनेति सिद्धम् ॥ इति षष्ठमानन्दमयाधिकरणम् ॥**

### वेदान्तकल्पतरुः ।

चिन्ताप्रयोजनमाह—**तस्मादिति** । आनन्दमयविकारस्यावयवो ब्रह्मेति कृत्वेत्यर्थः । तेन ब्रह्मणाऽवयवेन योगो यस्य स तथोक्तः ॥ **इति षष्ठं आनन्दमयाधिकरणम्**[2] ॥

### कल्पतरुपरिमलः ।

कर्तव्यं स्यादिति विकारावयवस्य तस्य मुख्यविकारत्वापत्त्या कारणत्वश्रवणमुपरुध्येतेति भावः ॥ **इति षष्ठं आनन्दमयाधिकरणम् ॥**

---

१ **तदयं संग्रहः** अन्नमये मयटो विकारार्थत्वेऽपि प्राणमयमनोमयविज्ञानमयेषु प्राणनादिवृत्तिप्राचुर्येणैव पञ्चवृत्तिवाय्वादीनां विवक्षणीयतया तत्र विकारार्थत्वस्य परित्यागादानन्दमयशब्दे विकारार्थत्वावगमोऽसिद्ध इति प्रचुरप्रकाशः ·सवितेतिवत्स्वव्यधिकरण-विजातीयाल्पत्वविवक्षया ब्रह्मण्यपि आनन्दप्राचुर्योपपादनसंभवेनानन्दमयशब्दो ब्रह्मपर इत्येव युक्तम् ॥ १ ॥ शिरःपक्षादिरूपेण कल्पितमवयवित्वं तु न ब्रह्मत्वविरोधि; अन्यथा ब्रह्मणोऽवयवत्वस्याप्यसंभवेन पुच्छब्रह्मणोऽप्यब्रह्मत्वप्रसङ्गात् ॥ २ ॥ आनन्दमयं प्रति ब्रह्मणः पुच्छत्वनिर्देशोऽपि अन्नमयं प्रति तदनतिरिक्तैः स्वावयवैरेव शिरःपक्षादिकल्पनादर्शनान्नानुपपन्नः ॥ ३ ॥ एतेन—असन्नेवेति निगमनश्लोकोऽपि—व्याख्यातः; ब्रह्मानन्दमयशब्दयोरैकार्थ्येन प्रियमोदादिवत्तया लोके जीवस्य प्रसिद्धत्वेऽपि ब्रह्मणोऽप्रसिद्धत्वेन सत्वासत्वशङ्काया आनन्दमयब्रह्मण्यपि संभवेन चान्नमयादिपर्यायश्लोकानामिव पुच्छवद्विषयत्वस्यैव युक्तत्वात् ॥ ४ ॥ तस्यैष एव शारीर आत्मेति वाक्यमपि आनन्दमयस्य सर्वान्तरत्वबोधने एव समर्थ, नतु आनन्दमयं प्रत्यात्मान्तरबोधनेऽपि । 'तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा यत एष आनन्दमय' इति ॥ ५ ॥ अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां इति श्रुतं शोध्यत्वमपि न ब्रह्मत्वविरोधि; अनादिभवसंचितानेकजीवापराधकलुषिते ब्रह्मण्यपि प्रसाद्यत्वरूपस्य तस्य संभवादित्यानन्दमय-पदमेव ब्रह्मस्वरूपसमर्पकं निर्गुणस्यापि ब्रह्मण उपास्यत्वमपि न विरुद्धमिति पुच्छब्रह्मवादो न युक्त इति **वृत्तिकृन्मतम्** । वृत्तिकाराश्चे-मे न द्वैतिनः, नवा विशिष्टाद्वैतिनः, किंत्वद्वैत्येकदेशिन इति **भेदव्यपदेशाच्चेति** सूत्रभाष्यस्थशङ्कासमाधानादिग्रन्थपरिशीलिनां स्फुटं भवेदिति नाधिकं व्याप्रियते । येषां तु पुनर्भाष्यकाराणां निर्गुणोपासनं नाभिमतं तेषामाशयस्तु पुच्छब्रह्मवादे । **तत्रच युक्तिः—** आनन्दमयो ब्रह्मेति न युज्यते; प्राणाद्यवच्छिन्नतया तद्विकारभूतस्य जीवस्यैव प्राणमयादिपदार्थतया प्राणमयादिशब्देष्वपि मयटो विकार एवार्थः, न प्राचुर्यम्, अस्तु वा प्राचुर्यं मयडर्थः, एवमपि आनन्दमयशब्दो न ब्रह्मपरः; आनन्दप्राचुर्यस्य प्रतियोगिदुःखा-ल्पतानिरूपकत्वावश्यकत्वेन दुःखलवासंपृक्तस्य ब्रह्मण आनन्दमयशब्देनानुपस्थापनात् । स्वव्यधिकरणविजातीयाल्पतानिरूपकत्व-स्वभावस्तु प्राचुर्यविशेषणत्व एवेति न दोषः । प्रज्ञानघन एवानन्दमय इति वाक्ये तु अगत्योक्तनियमः परित्यक्तः, तस्य जीवत्वे प्रायपाठादीनामभावात् इत्यानन्दमयो ब्रह्मेति न युज्यते ॥ १ ॥ निर्विशेषब्रह्मपरेऽस्मिन्प्रकरणेऽवयवत्वादिरूपेण ब्रह्मप्रतिपादनस्याप्य-संभवेनास्मदनभिमतत्वेन शिरःपक्षादिरूपेण कल्पितस्यावयवित्वस्यापि तत्रासंभवात् ॥ २ ॥ शिरःप्रभृतीनामन्नमयादिशब्दोदितचे-तनातिरेकेणान्नमयशब्देन चेतनाविवक्षणेऽपि ऋक्सामयजुरथर्वाङ्गिरसां मनोमयातिरेकेण सर्वत्राप्यवयवावयविभावकृतभेदसद्भावेन च स्वरसतः प्रतीयमानस्यानन्दमयपुच्छब्रह्मभेदस्य त्यागायोगाच्च ॥ ३ ॥ **एतेन**—निगमनश्लोकोऽपि—**व्याख्यातः**; श्लोकानां पुच्छव-द्विषयत्वानियमात्, 'यतो वाचो निवर्तन्ते' इति मनोमयपर्यायश्लोकस्य तदविषयत्वात्, यथाकथंचित्पुच्छवद्विषयत्वस्यानन्दमयपर्यायेऽपि संभवेऽप्यदोषाच्च ॥ ४ ॥ तस्यैष एव शारीर आत्मा यः पूर्वस्येति वाक्यमपि आनन्दमयातिरिक्तब्रह्मतायामेवोपपद्यते; भिन्नभिन्नवा-क्यगतयोः **तस्य पूर्वस्य** शब्दयोः सामानाधिकरण्येनान्वयायोगेन तस्यानन्दमयस्य एष एव शारीर आत्मा यः पूर्वस्य विज्ञानमय-स्येत्यर्थवर्णनस्यैव युक्तत्वात् ॥ ५ ॥ अप्रसादस्याशुद्धिशब्दानर्हत्वेन शोध्यत्वश्रवणमप्यानन्दमयाब्रह्मतायामेवोपपद्यते इति पुच्छब्रह्म-वाद एव युक्तः । इति ॥

२ **तत्र सूत्राणि—आनन्दमयोऽभ्यासात् ॥ १२ ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ नेतरोऽनुपपत्तेः ॥ १५ ॥ मान्त्रवर्णिकमेव गीयते ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नानुमानापेक्षा ॥ १८ ॥ तस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥**

( ७ अन्तरधिकरणम् ) **अन्तस्तद्धर्मोपदेशात् ॥ २० ॥**

**इदमाम्नायते—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' 'इत्यधिदैवतम्' ( छा० १।६।६,७,८) । 'अथाध्यात्मम्' 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा० १।७।१,५) इत्यादि । तत्र संशयः—किं विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चित्संसारी सूर्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते, किंवा नित्यसिद्धः परमेश्वर इति । किं तावत्प्राप्तं, संसारीति । कुतः ? रूपवत्त्वश्रवणात् । आदित्यपुरुषे तावत् 'हिरण्यश्मश्रुः' इत्यादि रूपमुदाहृतम् । अक्षिपुरुषेऽपि तदेवातिदेशेन प्राप्यते—'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इति । नच परमेश्वरस्य रूपवत्त्वं युक्तम्; 'अशब्दमस्पर्शमरूपमव्ययम्' ( का० १।३।१५ ) इति श्रुतेः, आधारश्रवणाच्च—'य एषोऽन्तरा-**

भामती ।

**अन्तस्तद्धर्मोपदेशात् ॥ २० ॥**

पूर्वस्मिन्नधिकरणेऽपास्तसमस्तविशेषब्रह्मप्रतिपत्त्यर्थमुपायतामात्रेण पञ्च कोशा उपाधयः स्थिताः, नतु विवक्षिताः । ब्रह्मैव तु प्रधानं 'ब्रह्म पुच्छं प्रतिष्ठा' इति ज्ञेयत्वेनोपक्षिप्तमिति निर्णीतम् । संप्रति तु ब्रह्म विवक्षितोपाधिभेदमुपास्यत्वेनोपक्षिप्यते, नतु विद्याकर्मातिशयलब्धोत्कर्षो जीवात्मादित्यपदवेदनीय इति निर्णीयते । तत्र—**मर्यादाधाररूपाणि संसारिणि परे न तु । तस्मादुपास्यः संसारी कर्मानधिकृतो-**

वेदान्तकल्पतरुः ।

**अन्तस्तद्धर्मोपदेशात् ॥ २० ॥**

**निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ १ ॥**
**वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ २ ॥**

समन्वयस्य सविशेषपरत्वमपोद्यानन्दमयाधिकरण उत्सर्गः स्थापितः ॥ इदानीमपवादचिन्तार्थत्वेनाधिकरणमवतारयन् प्रघट्टकसङ्गतिमाह—**पूर्वस्मिन्निति** । यद्यप्यपवादापवादत्वात् पुच्छब्रह्मचिन्ता प्रातर्दनविचारसंनिधौ कर्तुं युक्ता; तथा-

कल्पतरुपरिमलः ।

**अन्तस्तद्धर्मोपदेशात् ॥ २० ॥**

अपवादचिन्तायाः शास्त्रसङ्गत्यर्थं प्रस्तुतशास्त्रोपयोगि फलमाह—**निर्विशेषमिति । न तूपक्षिप्यत इति** । श्रुत्येति

१ 'अदृश्यत्वादिगुणको धर्मोक्ते'रितिवद्धर्मोपदेशादित्येव सूत्रयितव्ये 'तद्धर्मोपदेशा'दिति तद्ग्रहणं सर्वपापविरहरूपतया पर्यवसितस्य सर्वपापोदितत्वस्य संभवाभावरूपमनन्यथासिद्धत्वं तद्विचारद्वारा तत्प्रतिभटस्य रूपवत्त्वादेर्ब्रह्मण्यपि संभवरूपमन्यथासिद्धत्वं च ज्ञापयितुम् । **आकाशस्तल्लिङ्गादितिव**त्तद्धर्मादित्येव सूत्रयितव्ये उपदेशग्रहणम्—फलवचनावगतेन तात्पर्येण प्रतिपादनादित्यर्थकतया सफलत्वरूपतात्पर्यलिङ्गवत्त्वं तत्प्रतिभटतया रूपवत्त्वतद्गतादित्यमण्डलस्थत्वयोर्दर्शनविषयतयाऽनुवाद्यत्वेन ऐश्वर्यमर्यादायाः श्रुत्यन्तरसिद्धे सर्वैश्वर्ये उपास्यतयाऽवयुत्यानुवाद्यत्वेन च पूर्वपक्ष्यापादितरूपादिवचनाप्रामाण्यपरिहारं च ज्ञापयितुम् । तेन रूपवत्त्वाधारवत्त्वाभ्यां प्राबल्यमस्य लभ्यते ।

२ कपेर्मर्कटस्य आसः पश्चाद्भागः तत्सदृशं रक्तवर्णमिति पर्यवसितार्थः । एवमेव छान्दोग्यविवरणे भगवत्पादैर्व्याख्यानात् । **यत्तु—कं** जलं पिबतीति कपिः तेनासितं विकसितं कप्यासं, कं पिबतीति कपिः पद्मनालः तत्रास्ते इति कप्यासं, कं पिबतीति कपाः तस्मिन् कपि, तस्य सप्तम्यन्तस्यासशब्देनालुक्समासे कप्यासं, केप्यास्ते इति लुप्ताकाराप्युपसृष्टासशब्देन कप्यासमिति बहुविधं वृत्तिकृतां **व्याख्यानं—तत्रा**दित्यकिरणानां जलादर्शनप्रयोजकत्वसामान्येन तत्कर्तृके शोषणे ग्रहणत्वमारोप्य तत्र च पानत्वमारोप्य किरणनिष्ठं तत्कर्तृत्वं आदित्ये आरोप्य कपिशब्देन सूर्योपस्थापनस्यातिक्लेशसाध्यत्वात् रूढ्यर्थग्रहणमेव तत्राङ्गीकरणीयम् ॥ **एतेन**—व्याख्यान्तराण्यपि—**प्रयुक्तानि;** सर्वत्रापि कशब्देनाप्रसिद्धार्थग्रहणे निहतार्थत्वदोषापत्तेश्च हीनोपमानं तु वर्ण्यमत एव कविभिर्दोषत्वेनाङ्गीक्रियते । अतएव—महामहानीलशिलारुचःपुरो निषेदिवान्कंसकृपस्स विष्टरे । श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरूपतामितीन्दूदयाश्रयाचलाभिमुखः सायंकालो वर्ण्यमानस्य श्रीकृष्णस्योपमानत्वेन निबद्धः । पुण्डरीकशब्दार्थस्तु **शाबरे**—'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति वाक्यविहितायामिष्टौ पौण्डरीकाणि बर्हींषि भवन्तीति बर्हिःस्थाने पुण्डरीकानां विधानेन तत्र प्रकृतितः प्राप्ते 'दर्भैः स्तृणीत हरितैः' इति मन्त्रे दर्भपदस्थाने पुण्डरीकपदवत् रक्तपदोहः करणीय इत्युक्तत्वात्, ''पुण्डरीकं सिताम्भोज'मिति कोशवचनस्याप्रमाणत्वाच्च रक्ताम्भोजपर एवेति मन्तव्यमिति ॥

## भामती ।

**रविः** ॥ 'हिरण्यश्मश्रुः' इत्यादिरूपश्रवणात्, 'य एषोऽन्तरादित्ये' 'य एषोऽन्तरक्षिणि' इति चाधारभेदश्रवणात् । 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' इत्यैश्वर्यमर्यादाश्रुतेश्च संसार्येव कार्यकारणसंघातात्मको रूपादिसंपन्न इहोपास्यः, नतु परमात्मा 'अशब्दमस्पर्शम्' इत्यादिश्रुतिभिः अपास्तसमस्तरूपश्च, 'स्वे महिम्नि' इत्यादिश्रुतिभिरपाकृताधारश्च, 'एष सर्वेश्वरः' इत्यादिश्रुतिभिरधिगतनिर्मर्यादैश्वर्यश्च शक्य उपास्यत्वेनेह प्रतिपत्तुम् । सर्वपाप्मविरहश्चादित्यपुरुषे संभवति; शास्त्रस्य मनुष्याधिकारतया देवतायाः पुण्यपापयोरनधिकारात् । रूपादिमत्त्वान्यथानुपपत्त्या च कार्यकारणात्मके जीवे उपास्यत्वेन विवक्षिते यत्तावदृगाद्यात्मकतयास्य सर्वात्मकत्वं श्रूयते तत्कथंचिदादित्यपुरु-

## वेदान्तकल्पतरुः ।

प्ययवान्तरसङ्गतिमालोच्य **कामाच्च नानुमानापेक्षे** ( ब्र. अ. १ पा. १ सू. १८ ) **ति** प्रधाननिरासस्येक्षत्यधिकरणा-( ब्र. अ. १ पा. १ सू. ५ ) नन्तरं बुद्धिस्थतां चापेक्ष्य प्रथमं कृता । आदित्यपदवेदनीयो जीव उपास्यत्वेन न तूपक्षिप्यत इत्यनुषङ्गः । इह रूपवत्त्वसर्वपापविरहाभ्यां संशये पूर्वत्र मुख्यत्रितयाख्यबहुप्रमाणानुसारान्निर्विशेषनिर्णयवद् रूपवत्त्वादिबहुप्रमाणवशात्संसारी हिरण्मयः पुरुष इत्यवान्तरसङ्गतिमभिप्रेत्य पूर्वपक्षं सङ्कलयति—**मर्यादेति** । सर्वपाप्मविरहस्यान्यथासिद्धिमाह—**कर्मेति** । इन्द्रस्य वृत्रवधेन ब्रह्महत्याश्रवणादस्ति देवानां कर्माधिकार इति भारतीविलासः । तन्न; गवां सत्रासनश्रवणात् ( तासां ) तेषामप्यधिकारप्रसङ्गात् । असंभवस्तूभयत्र तुल्यः । नह्यैन्द्रे दधनि इन्द्रस्याधिकारसंभवः । नच निषेधाधिकारः; "न ह वै देवा न्यायं गच्छन्ती"ति श्रुतेः । अथ प्राकृतस्यैव पापस्य फलानारम्भकत्वमेतच्छ्रुत्यर्थः, तर्हि तदेव पाप्मोदयस्यालम्बनमस्तु, कर्मानधिकृतत्वोक्तेः तत्प्रदर्शनार्थत्वादिति । **अमुष्मादा-**

## कल्पतरुपरिमलः ।

शेषः । तासामप्यधिकारप्रसङ्गादिति पाठः साधुः; श्रुतौ गाव इत्यस्याशङ्काः सतीः इत्यादिवाक्यशेषतः स्त्रीलिङ्गत्वात् । **यद्वा—** तेषामपि पाठ इत्थं योज्यः, श्रुतौ गाव इत्यनेन स्त्रीगव्य इव पुङ्गवा अपि संगृहीताः; 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री'त्यनुशासनात् तत्र स्त्रीलिङ्गशेषता, इह तु ग्रन्थे तेषामित्यनेन निष्कृष्य पुङ्गवानामेव परामर्शः मनुष्येषु जायापत्यो"र्दिवि ज्योतिरजरमारभेता"मित्यादिलिङ्गात्कर्मसु सहाधिकारेऽपि "युक्ता मे यज्ञमन्वासाता"मित्यादिलिङ्गात् पत्युर्मुख्याधिकारो दृष्ट इति तदनुरोधेन पुङ्गवानां तत्र मुख्याधिकारापादनार्थं इति । **ननु** "न ह वै देवा"नित्यादिश्रुतेरागामिपापाप्राप्तिर्नार्थः, किंतु विद्यमानपापफलाप्राप्तिः; इत्थं पापशब्दस्य फललक्षणा त्वयाप्येष्टव्या, अन्यथा पुण्यमेवामुं गच्छतीति तदनन्तरवाक्यस्य विध्यधिकारपरत्वं स्यात्, तच्च तव नेष्टमित्याशङ्क्य तथा तदर्थाभ्युपगमे सर्वपाप्मोदयवाक्यस्यापि स एवार्थो भविष्यतीत्याह—**अथेत्यादिना** । पूर्वस्मिन्नप्यर्थे नास्माकमनुपपत्तिः; पुण्यमेवामुमिति वाक्यस्य देवतान्तरोद्देश्यकत्वरहितपरमेश्वरपूजातदुद्देश्यकतपश्चर्यादिविषयत्वोपपत्तेः, प्रत्युत भारतीविलासस्यैवास्मिन्नप्यर्थेऽनुपपत्तिस्तुल्या; "पुण्यः पुण्येन कर्मणा भवति पापः पापेने"ति श्रुतेर्ब्रह्महत्याया एव पापफलत्वात्, "तस्याञ्जलिना ब्रह्महत्यामुपागृह्णा"दित्यर्थवादश्रद्धावतस्तस्य "तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति" तदनन्तरवाक्यश्रुतस्य लोकगर्हणस्य "तस्मादिन्द्रोऽबिभेदि"ति तत्पूर्वसंदर्भे श्रुतस्य भयस्य चाङ्गीकृतत्वेन तयोरपि पापफलत्वात् । **तत्प्रदर्शनार्थत्वादिति** । सर्वपाप्मोदयवाक्यस्य या या गतिर्वक्तुं शक्यते, तस्याः सर्वस्या अप्युपलक्षणत्वेन कर्मानधिकारत्वोक्तेरित्यर्थः । तत्र रविरिति विशेष्यपदेन गत्यन्तरमपि सूचितम् । रविः खलूत्पन्नसाक्षात्कारो जीवन्मुक्तः स्वाधिकारावसाने मुक्तो भविष्यतीति **यावदधिकारमित्यधिकरणे** ( ब्र. अ. ३ पा. ३ सू. ३२ ) भाष्यकृद्विवक्ष्यते । ततश्चोत्पन्नब्रह्मसाक्षात्कारस्य तस्य **तदधिगम उत्तरपूर्वाघयोरित्यधिकरणे** ( ब्र. अ. ४ पा. १ सू. १३ ) वक्ष्यमाणेन न्यायेन सर्वस्य पूर्वाघस्य नाशः उत्तराघस्याऽश्लेषश्चास्तीति तदन्यतरविषयं सर्वपाप्मोदयवाक्यमिति तस्य यथेदं प्रदर्शनार्थं, तथा पूर्वपापानां देवतासु फलानारम्भकत्वरूपस्याप्यर्थस्य प्रदर्शनार्थमिदं भविष्य-

१ यदि तु तदानीं कर्मानधिकारेण पापानामजननेऽपि अनादिभवसंचितानां पापानां प्रसुप्तानां संभवात् असंभवेऽपि 'न सुकृतं न दुष्कृतमि'त्युपक्रम्य 'सर्वे पाप्मानो निवर्तन्ते' इत्युभयत्रापि पाप्मपदप्रयोगेण मोक्षशास्त्रे पुण्यस्यापि पाप्मत्वेन अप्रसुप्तानामपि पाप्मनां पुण्यरूपाणां संभवाच्च सर्वपाप्मोदितत्वमादित्यपुरुषे न संभवतीति पर्यालोच्यते, तर्हि, पापाल्पत्वाभिप्रायं सर्वपापोदितत्वं योजनीयम् । **वस्तुतस्तु**—सर्वपाप्मोदितत्वं परमेश्वर एव न संगच्छते ( श्लो० ) सर्वपापोदितत्वं हि प्राक् तदाच्छादिते भवेत् । कदाचिदपि न ब्रह्म पापाच्छादितमिष्यते ॥ १ ॥ अतो ब्रह्मापरोक्ष्येण ध्वस्तसर्वाघपञ्जरे । आदित्य एव तस्यापि स्वारस्यं कलयामहे ॥ २ ॥ अस्तु वा परमेश्वर एव स्वारस्यं, तथापि तदिह नादरणीयम् । ( श्लो. ) नामैव किल नान्वेति कूटस्थे परमात्मनि । तत्र नामनिरुक्त्यर्थस्वारस्यं किं करिष्यति ॥ १ ॥ न हि यस्यार्थवादस्य विधिना येन नान्वयः । स्वारस्यं तत्स्तुतौ तस्य सदप्याद्रियते बुधैः ॥ २ ॥ इति पापाल्पत्वाभिप्रायमेव सर्वपाप्मोदितत्वश्रवणमिति मन्तव्यमिति न्यायरक्षामणिः ॥

दित्ये' 'य एषोऽन्तरक्षिणि' इति। नह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्याधार उपदिश्येत। 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' (छा० ७।२४।१) इति, 'आकाशवत्सर्वगतश्च नित्यः' इति च श्रुती भवतः। ऐश्वर्यमर्यादाश्रुतेश्च। 'स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' ( छा० १।६।८ ) इत्यादित्यपुरुषस्यैश्वर्यमर्यादा। 'स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' (छा० १।७।६) इत्यक्षिपुरुषस्य। नच परमेश्वरस्य मर्यादावदैश्वर्यं युक्तम्; 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' (बृ० ४।४।२२) इत्यविशेषश्रुतेः। तस्मान्नाक्ष्यादित्ययोरन्तः परमेश्वर इत्येवं प्राप्ते ब्रूमः—'अन्तस्तद्धर्मोपदेशात्' इति 'य एषोऽन्तरादित्ये' 'य एषोऽन्तरक्षिणि'

## भामती।

पस्यैव स्तुतिरिति आदित्यपुरुष एवोपास्यो न परमात्मेत्येवं प्राप्तम्। अनाधारत्वे च नित्यत्वं सर्वगतत्वं च हेतुः अनित्यं हि कार्यं कारणाधारमिति नानाधारं, नित्यमप्यसर्वगतं यत्तस्मादधरभावेनास्थितं तदेव तस्योत्तरस्याधार इति नानाधारं, तस्मादुभयमुक्तम्। एवं प्राप्तेभिधीयते—**'अन्तस्तद्धर्मोपदेशात्'**। **'सार्वात्म्यसर्वदुरितविरहाभ्यामिहोच्यते। ब्रह्मैवाव्यभिचारिभ्यां सर्वेहेतुर्विकारवत्॥'** नामनिरुक्तेन हि सर्वपाप्मापादानतयास्योदय

## वेदान्तकल्पतरुः।

दित्यात्पराञ्चः। नह्यनाधारस्येति भाष्यं व्याचष्टे—**अनाधारत्वे चेति**। **नित्यत्वमिति** स्वमहिमप्रतिष्ठितत्वस्य व्याख्या। कथं नित्यत्वेनाऽनाधारत्वसिद्धिस्तत्राह—**अनित्यं हीति**। तर्हि तत एवानाधारत्वसिद्धौ किं सर्वगतत्वेनात आह—**नित्यमपीति**। नित्यमपि असर्वगतं चेत्तन्न भवत्याधाररहितं, यतो यद्वस्तु तस्मान्नित्यादधरभावेनावस्थितं, तदेव तस्य नित्यस्योपरिस्थितस्याधारो भवति। तस्मात्सर्वगतत्वमपि नित्यत्वविशेषणत्वेनानाधारत्वे हेतुर्वक्तव्य इत्यर्थः। सर्वात्मत्वसर्वदुरितविरहयोः रूपवत्त्वादिभ्यः किं बलमतआह—**अव्यभिचारिभ्यामिति**। न ब्रह्मणोऽन्यत्र तयोः संभव इत्यर्थः। ब्रह्मणि सर्वात्मत्वसंभवमाह—**सर्वेति**। रूपवत्त्वादेर्ब्रह्मण्यपि संभवाद्यभिचारमाह—**विकारवदिति**। कार्योपहितमित्यर्थः। सर्वदुरितविरहमुदाहृतवाक्येनापि प्रमिमीते—**नामेति**। पाप्मभ्य इति अपादाने पञ्चमी। ततः सर्वे पाप्मानोऽपादानं यस्योदयस्य तस्य भावस्तत्ता तद्रूपेणोदय उद्गम उच्यत इति। रूपवत्त्वं तादृशेन रूपविशेषेणोपदिश्यत

## कल्पतरुपरिमलः।

तीति भावः॥ **ननु** नह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्याधार उपदिश्येतेति भाष्ययोजनार्था अनाधारत्वे च नित्यत्वं सर्वगतत्वं च हेतुरिति टीका न युक्ता, भाष्ये नित्यत्वाविशेषणादित्याशङ्क्याह—**नित्यत्वमिति स्वमहिमप्रतिष्ठत्वस्य व्याख्येति**। अनित्यस्य स्वकारणप्रतिष्ठत्वावश्यंभावेन स्वमहिमप्रतिष्ठत्वायोगात् तेन नित्यत्वमाक्षिप्यत इत्याक्षेप्यनित्यत्वतात्पर्यकं तत्, नत्वनाधारत्वतात्पर्यकम्; अनाधारपदेन पौनरुक्त्यापत्तेरिति भावः॥ **नित्यमपीति**। नित्यमसर्वगतं वस्तुतः सिद्धान्ते नास्तीति तर्कितमभिप्रेत्य चेच्छब्दः। सर्वगतत्वं सकलवस्त्वन्वयित्वं, तन्मायायामप्यस्ति साधारणम्, अतो नित्यत्वविशेषणमिति स्पष्टत्वान्नोक्तम्। यदि सर्वगतत्वं ब्रह्मासाधारणं परिपूर्णत्वं, तदा तावदेव हेतूभवनक्षममिति न नित्यत्वविशेषणमपेक्षितम्। स्वमहिमप्रतिष्ठस्येत्येतच्च न नित्यपरतया व्याख्येयं, किंत्वनाधारस्येत्येतद्व्याख्येयपरतया योजनीयम्। तेन भाष्ये स्वे महिम्नीत्युदाहरिष्यमाणा श्रुतिरनाधारत्वपरतया भाष्ये एव विवृता भवति; अन्यथा तया स्वकीये महिमशब्दोक्ते क्वचिद्वस्तुनि प्रतिष्ठितत्वमुच्यत इति प्रकृतविरोधः शङ्क्येत। एवंच स्वमहिमप्रतिष्ठपदप्रतिपादितेनानाधारत्वेनाक्षिप्तं नित्यत्वं कथमनाधारत्वे हेतुरित्यपि शङ्का निरवकाशा भवति। सर्वगतत्वं सकलवस्त्वन्वयित्वमित्येव निरुच्य नित्यत्वविशेषणापेक्षणे तु तत्स्वमहिमप्रतिष्ठपदेन कथंचिल्लक्ष्यं, न प्रागुक्तक्रमेणाक्षेप्यमित्यन्योन्याश्रयपरिहारो द्रष्टव्यः। टीकायां नित्यत्वस्याकाशवदिति भाष्योदाहृतश्रुत्युक्तस्य हेतुता विवक्षितेति व्याख्याने तु तस्य नाक्षेपो न लक्षणेति न कथंचिदप्यन्योन्याश्रयशङ्का॥ **ब्रह्मणि सर्वात्मत्वसंभवमाहेति**। अनेनादित्यपुरुषे अक्षिपुरुषे च तत्संभवशङ्का निरस्ता। सा चैवम्—आदित्यपुरुषे पृथिव्यग्न्यादिदृष्टिविशिष्टऋक्सामगेष्णत्वं मण्डलतदर्चिस्तदभिमानिपुरुषाणा"मादित्यो वा एष एतन्मण्डल"मित्यादिश्रुतौ ऋक्सामयजुरात्मतया वर्णितत्वादुपपन्नम्। आदित्यपुरुषस्यैवाक्षण्यपि संनिहितत्वात्तत्रापि सैव ऋक्सामेत्यादिनोक्तऋक्सामाद्यात्मत्वं तत एवोपपन्नमिति। तत्रायं परिहारो विवक्षितः। ऋक्सामादिरूपत्वं मण्डलादीनां स्तुत्यर्थमुपासनार्थं वोक्तं, ब्रह्मणि तु सर्वोपादाने 'सन् घट' इत्यादिव्यवहारालम्बनं व्यावहारिकप्रमाणगम्यमस्ति सर्वप्रपञ्चतादात्म्यमिति। **तद्रूपेणोदय इति**। आदित्यपुरुषस्य सर्वपाप्मापादानतयोपलक्षितः उदय उद्गमनमुच्यत इत्यर्थः। **ननु—**

१ तद्धर्मयोरुपदेशः तद्धर्मोपदेश इति द्विवचनान्तसमासेन धर्मद्वयस्यापि सूत्रे विवक्षितत्वात् सार्वात्म्यसर्वदुरितविरहाभ्यामित्युक्तम्॥

इति च श्रूयमाणः पुरुषः परमेश्वर एव, न संसारी । कुतः ? तद्धर्मोपदेशात् । तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टाः । तद्यथा—'तस्योदिति नाम' इति श्रावयित्वा अस्यादित्यपुरुषस्य नाम 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति सर्वपाप्मापगमेन निर्वक्ति । तदेव च कृतनिर्वचनं नामाक्षिपुरुषस्याप्यतिदिशति—'यन्नाम तन्नाम' इति । सर्वपाप्मापगमश्च परमात्मन एव श्रूयते—'य आत्माऽपहतपाप्मा' (छा० ८।७।१) इत्यादौ । तथा चाक्षुषे पुरुषे 'सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म' इत्यृक्सामाद्यात्मकतां निर्धारयति । सा च परमेश्वरस्योपपद्यते, सर्वकारणत्वात्सर्वात्मकत्वोपपत्तेः । पृथिव्यग्न्याद्यात्मके चाधिदैवतं ऋक्सामे, वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याह-'तस्यर्क्च साम च गेष्णौ' इत्यधिदैवतम् । तथाध्यात्ममपि—'यावमुष्य गेष्णौ तौ गेष्णौ' इति । तच्च सर्वात्मन एवोपपद्यते । 'तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः' (छा० १।७।६) इति च लौकिकेष्वपि गानेष्वस्यैव गीयमानत्वं दर्शयति । तच्च परमेश्वरपरिग्रहे घटते; 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम

## भामती ।

उच्यते । न चादित्यस्य देवतायाः कर्मानधिकारेऽपि सर्वपाप्मविरहः प्राग्भवीयधर्माधर्मरूपपाप्मसंभवे सति । नच—एतेषां प्राग्भवीयो धर्म एवास्ति न पाप्मेति—सांप्रतम्; विद्याकर्मातिशयसमुदाचारेऽप्यनादिभवपरंपरोपार्जितानां पाप्मनामपि प्रसुप्तानां संभवात् । नच—श्रुतिप्रामाण्यादादित्यशरीराभिमानिनः सर्वपाप्मविरह इति—युक्तं; ब्रह्मविषयत्वेनाप्यस्याः प्रामाण्योपपत्तेः । नच विनिगमनाहेत्वभावः; तत्र तत्र सर्वपाप्मविरहस्य भूयोभूयो ब्रह्मण्येव श्रवणात्, तस्यैव चेह प्रत्यभिज्ञायमानस्य विनिगमनाहेतोर्विद्यमानत्वात् । **अपिच** सार्वात्म्यं जगत्कारणस्य ब्रह्मण एवोपपद्यते; कारणादभेदात्कार्यजातस्य, ब्रह्मणश्च जगत्कारणत्वात् । आदित्यशरीराभिमानिनस्तु जीवात्मनो न जगत्कारणत्वम् । नच मुख्यार्थसंभवे प्राशस्त्यलक्षणया स्तुत्यर्थता युक्ता । रूपवत्त्वं चास्य परानुग्रहाय कायनिर्माणेन वा, तद्विकारतया वा सर्वस्य कार्यजातस्य, विकारस्य च विकारवतोऽनन्यत्वात्तादृशरूपभेदेनोपदिश्यते, यथा 'सर्वगन्धः सर्वरसः' इति । नच ब्रह्मनिर्मितं मायारूपमनुवदच्छास्त्रमशास्त्रं भवति, अपितु तां कुर्वत्, इति नाशास्त्रत्वप्रसङ्गः । यत्र तु ब्रह्म निरस्तसमस्तोपाधिभेदं ज्ञेयत्वेनोपक्षिप्यते, तत्र शास्त्रम्-'अशब्दमस्पर्शमरूपमव्ययम्' इति प्रवर्तते । तस्माद्रूपवत्त्वमपि परमात्मन्युपपद्यते । एतेनैव मर्यादाधारभेदावपि व्याख्यातौ । **अपिचादित्यदेहाभिमानिनः** संसारिणोऽन्तर्यामी भेदेनोक्तः, स एवान्तरादित्य इत्यन्तःश्रुतिसाम्येन प्रत्यभिज्ञायमानो भवितुमर्हति ॥ **तस्मात्ते धनसनय इति** । धनवन्तो विभूतिमन्त इति यावत् । कस्मात्पुनर्विभूतिमत्त्वं परमेश्वरपरिग्रहे घटत इत्यत आह—**यद्यद्विभूतिमदिति** । सर्वात्मकत्वेऽपि विभूतिमत्स्वेव परमेश्वरस्वरूपाभिव्यक्तिः, नत्वविद्यातमःपिहितपरमेश्वरस्वरूपे-

## वेदान्तकल्पतरुः ।

इत्यन्वयः । **ननु** हिरण्मयत्वं कथं ? तद्धि शरीरस्यात आह—**विकारस्य चेति** । **नन्व**विकारिब्रह्मणो मायामयं रूपं वक्तव्यं, ततश्च मिथ्यार्थप्रकाशकतया शास्त्राप्रामाण्यमत आह—**नचेति** । यथा लोके मायाविदर्शितमायानुवादिवाक्यं प्रमाणमेवं शास्त्रमपि । अप्रामाण्यं तर्हि कदा स्यादत आह—**अपित्विति** । मायां मिथ्याबुद्धिं कुर्वदशास्त्रं स्याद्, न-तु तां करोति; तस्याः प्रागेव सिद्धत्वादित्यर्थः । विभूतिमत्स्वेवेश्वरावस्थाने सार्वात्म्यविरोधमाशङ्क्याभिव्यक्तिमात्रं तत्र, सत्ता तु सर्वत्रेत्याह—**सर्वेति** । लोककामेशितृत्वश्रवणादेव मनुष्यैरीश्वरराज्ञां विनाऽशितुमपि न शक्यमित्यन्तः पारार्थ्य-

## कल्पतरुपरिमलः ।

पाप्मापादानकमुद्गमनं प्राक्पाप्मसंबन्धिनो जीवस्यैव संभवतीति नेदं ब्रह्मलिङ्गमिति—**चेत्, न;** जीवस्यापि नीडात् शकुन्तस्येव पापाद् मुख्यस्योद्गमनस्यासंभवेन नीडादुद्गतः शकुन्तो यथा सर्वात्मना नीडसंबन्धरहितः, एवमयं सर्वात्मना पापसंबन्धरहित इत्येतदर्थलक्षकत्वात् । ततश्चासङ्कुचितसर्वपापराहित्यं क्वचिदपि जीवे न संभवति; "न ह वै सशरीरस्य सत" इति श्रुत्युक्तरीत्या शरीरे सति कियतोऽपि दुःखस्यावश्यंभावेन तद्धेतुपापसद्भावनियमात् । **ननु** 'तां कुर्वदि'त्युक्तं, नहि शब्दः स्वयं मायां करोतीत्याशङ्क्य तां कुर्वदित्यनेनानुवादत्वं विहाय स्वातन्त्र्येण मिथ्याबुद्ध्युत्पादकत्वं विवक्षितमिति व्याचष्टे—**मायां मिथ्याबुद्धिं कुर्वदिति । गेष्णौ पर्वणी इति** । गानक्रियासाधनपर्वणी इत्यर्थः । **एतदुक्तं भवति**—'तस्योदिति नामे'त्यादिभिर्वाक्यैरुन्नामविधानतन्निर्वचनतद्वेदनफलसङ्कीर्तनानन्तरं "तस्यर्क् साम च गेष्णौ"विति ऋक्सामयोः प्रकृतोन्नामकपुरुषगेष्णत्वमभिधाय "तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गातेति" वाक्याभ्यां ऋक्सामयोरुद्गेष्णात्वादेव सामभक्तिविशेषस्योत्कर्मकगानसाधनवाच्युद्गीथशब्दवाच्यत्वं तस्मादेव च हेतोरुद्गीथभक्तिगातुरुत्कर्मकगानकर्तृवाच्युद्गातृशब्दवाच्यत्वं चेति श्रूयते । तत्रोन्नामकपुरुषस्य गानकर्मत्वं सामरूपगीतिक्रियाभिव्यञ्जय ऋक्साध्य-

तेजोंशसंभवम्' ( १०।४१ ) इति भगवद्गीतादर्शनात् । लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति । यदुक्तं हिरण्यश्मश्रुत्वादिरूपश्रवणं परमेश्वरे नोपपद्यत इति, अत्र ब्रूमः—स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्; 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि' इति स्मरणात् । अपिच यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते, भवति तत्र शास्त्रम्—'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादि । सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते—'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' ( छा० ३।१४।२ ) इत्यादिना । तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति । यदप्याधारश्रवणान्न परमेश्वर इति । अत्रोच्यते—स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेश उपासनार्थो भविष्यति; सर्वगतत्वाद्ब्रह्मणो व्योमवत्सर्वान्तरत्वोपपत्तेः । ऐश्वर्यमर्यादाश्रवणमप्यध्यात्माधिदैवतविभागापेक्षमुपासनार्थमेव । तस्मात्परमेश्वर एवाक्ष्यादित्ययोरन्तरुपदिश्यते ॥ २० ॥

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

अस्ति चादित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी; 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' ( बृ० ३।७।९ ) इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र हि 'आदित्यादन्तरो यमादित्यो न वेद' इति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामी स्पष्टं निर्दिश्यते; स एवेहाप्यन्तरादित्ये पुरुषो भवितुमर्हति श्रुतिसामान्यात् । तस्मात्परमेश्वर एवेहोपदिश्यत इति सिद्धम् ॥ २१ ॥

( ८ अधिकरणम् )

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

### भामती ।

स्वविभूतिमखिलस्यर्थः । **लोककामेशितृत्वमपीति** । अतोऽत्यन्तापारार्थ्यन्यायेन निरङ्कुशमैश्वर्यमित्यर्थः ॥२०॥२१॥
**आकाशस्तल्लिङ्गात्** । पूर्वस्मिन्नधिकरणे ब्रह्मणोऽसाधारणधर्मदर्शनाद्विवक्षितोपाधिनोऽस्यैवोपासना, नत्वादि-

### वेदान्तकल्पतरुः ।

न्यायः । सैवर्क् तत् सामेति तच्छब्दैश्चाक्षुषपुरुषपरामर्शः । ऋगादिविधेयापेक्षया स्त्रीलिङ्गनिर्देशः । **उक्थं** शस्त्रविशेषः । तत्साहचर्यात्सामस्तोत्रं ऋगुक्थादन्यच्छस्त्रं ब्रह्म त्रयो वेदाः पृथिव्यग्न्याद्यात्मके चेत्यादिभाष्यम् । तत्र ऋगधिदैवं पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपा साम चाग्निवाय्वादित्यचन्द्रमआदित्यगतपर कृष्णाख्यमतिकृष्णरूपात्मकमाम्नातमियमेवर्गग्निः सामेत्यादिना । अध्यात्मं च ऋग्वाक्चक्षुः श्रोत्रादिगतशुक्लभालक्षणा तावदुक्ता । साम च प्राणच्छायात्ममनोक्षिस्थकृष्णभारूपमाम्नातम् वागेवर्क् प्राणः सामेत्यादिना । एवमात्मके ऋक्सामे तस्य गेष्णौ पर्वणी ॥ **इति सप्तममन्तरधिकरणम्** ॥

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

लिङ्गाद् ब्रह्मनिर्णयस्य तुल्यत्वात्पुनरुक्तिमाशङ्क्याह—**पूर्वस्मिन्निति** । श्रुतिप्राप्तनभसो लिङ्गेन बाधार्थो न्यायोऽधिक

### कल्पतरुपरिमलः ।

स्तुतिकर्मत्वं, यथा "तद्यइमे वीणायां गायन्त्येतं गायन्ती"त्यत्र लौकिकपुरुषस्य लौकिकगानकर्मत्वं वैणिकगीयमानलौकिकशब्दसाध्यस्तुतिकर्मत्वम् । एवंचोन्नामकपुरुषस्य स्तुतावृक्साक्षात्साधनं, साम ऋक्सामाभिव्यक्तिद्वारा; 'साम्ना स्तुवीतेति' साम्नोऽपि स्तुतिसाधनत्वश्रवणात् । अतः स्तुतौ स्वाध्यायां सामद्वयं सोपानपर्वद्वयवत् क्रमिकमास्त इति गानपर्वत्वमृक्सामयोरिति । ततश्च लौकिकगानविषयराजादिरूपतयेवादित्यपुरुषस्याक्षिपुरुषस्य च ऋक्सामसाध्यस्तुतिविषयाग्नीन्द्रसोमादिरूपतया

१ 'सूत्रे तच्छब्दः अनन्तत्वरूपलिङ्गस्यानन्यथासिद्धत्वज्ञापनार्थः, यत्रोपक्रमे यं कंचन दोषमुपवर्ण्य तद्दोषसमाधानेनोपसंह्रियते तत्र तन्मध्यगतेषु वाक्येषु यथाभ्युपगमेन तत्समाधानं लभ्यते तथाऽभ्युपगमे यतितव्यम् । एतदभिप्रायमेवोपांशुयाजाधिकरणम् । यत्रतु मध्ये प्रतिपादनस्यान्यप्रतिपादनशेषत्वं न तत्रायं निर्बन्धः; यथा जर्तिलादिवाक्ये इति अन्तवत्त्वदोषमुपवर्ण्य तत्समाधानेनोपसंहाररूपे आकाशवाक्येऽपि त्रिविधपरिच्छेदशून्यं अनन्तं वस्त्वेव निर्देष्टव्यं नत्वापेक्षिकान्तवद्भूताकाशम् । दाल्भ्याभिमतस्वर्गलोकोद्भावितात्प्रतिष्ठितत्वदोषापनिनीषया प्रवृत्तं पृथिवीलोकप्रतिष्ठात्ववर्णनं तु अनन्तवस्तूपदेशशेषभूतत्वादापेक्षिकप्रतिष्ठात्वपरं चेदपि न दोष इत्यनन्तत्वमनन्यथासिद्धम् । अनन्यथासिद्धेन च लिङ्गेन श्रुत्यन्यथाकरण'**माख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी**' इति न्यायसिद्धमेवेति मन्तव्यम्—इति ॥

भामती ।

त्वशरीराभिमानिनो जीवात्मन इति निरूपितम् । इदानीं त्वसाधारणधर्मदर्शनात्तदेवोद्गीथे संपाद्योपास्यत्वेनोपदिश्यते, न भूताकाश इति निरूप्यते । तत्र 'आकाश इति होवाच' इति किं मुख्याकाशपदानुरोधेन 'अस्य लोकस्य का गतिः' इति 'सर्वाणि ह वा इमानि भूतानि' इतिच 'ज्यायान्' इतिच 'परायणम्' इति च कथंचिद्व्याख्यायतां, उतैतदनुरोधेनाकाशशब्दो भक्त्या परात्मनि व्याख्यायतामिति । **तत्र—प्रथमत्वात्प्रधानत्वादाकाशं मुख्यमेव नः । तदानुगुण्येनान्यानि व्याख्येयानीति निश्चयः ॥** 'अस्य लोकस्य का गतिः' इति प्रश्नोत्तरे 'आकाश इति होवाच' इत्याकाशस्य गतित्वेन प्रतिपाद्यतया प्राधान्यात्, 'सर्वाणि ह वा' इत्यादीनां तु तद्विशेषणतया गुणत्वात्, **गुणे त्वन्याय्यकल्पना' इति** बहून्यप्यप्रधानानि प्रधानानुरोधेन नेतव्यानि । **अपिच** 'आकाश' इति होवाच इत्युत्तरे प्रथमावगतमाकाशमनुपजातविरोधि, तेन तदनुरक्तायां बुद्धौ यद्यदेव तदेकवाक्यगतमुपनिपतति तत्तज्जघन्यतया उपसंजातविरोधि तदानुगुण्यैनैव व्यवस्थानमर्हति । नच क्वचिदाकाशशब्दो भक्त्या ब्रह्मणि प्रयुक्त इति सर्वत्र तेन तत्परेण भवितव्यम् । नहि गङ्गायां घोष इत्यत्र गङ्गापदमनुपपत्त्या तीरपरमिति यादांसि गङ्गायामित्यत्राप्यनेन

वेदान्तकल्पतरुः ।

इत्यर्थः । इदमुक्तं—**न भूताकाश उपास्यत्वेनेति** । यद्यप्यस्मिन्ग्रन्थे पूर्वत्र सोपाधिकब्रह्मण उपास्तिचिन्ता, अत्र तु तस्योद्गीथे संपत्तिचिन्तेति विशेषप्रदर्शनं भाति; तथापि न तथार्थो ग्राह्यः, हिरण्मयवाक्येऽपि तस्मादुद्गीथ इत्युद्गीथसंपत्तेस्तुल्यत्वात् । तस्मादेतदपि असाधारणधर्मवतः तुल्यमेवानूदितम् । आकाशशब्दो नभःपरः, उत ब्रह्मपर इति रूढिनिरूढप्रयोगाभ्यां विशये पूर्वत्राव्यभिचारिलिङ्गादन्यथासिद्धरूपवत्त्वादि नीतम्, इयं तु श्रुतिर्लिङ्गान्नान्यथयितव्येति प्रत्युदाहरणलक्षणसंगतिः । प्रधानत्वहेतुं व्याचष्टे—**अस्येति** । तदानुगुण्येनेत्येतद्विवृणोति —**सर्वाणीति** । प्रथमत्वे हेतुं व्याख्याति—**अपिचेति । ननु** परबलीयस्त्वन्यायेन प्रथममाकाशं बाध्यताम्, अत आह—**एकवाक्यगतमिति** । निरपेक्षं परं पूर्वं बाधते, एकवाक्यनिविष्टशब्दानां तु पूर्वानुरोधेनोत्तरार्थप्रतिपत्तिः, तद्विरुद्धार्थसमर्पणे वाक्यभेदापत्तेरित्यर्थः । "यदेष आकाश आनन्द" इत्यादौ ब्रह्मण्याकाशशब्दो गौणो दृष्टः, तद्वदिहापि स्यादित्याशङ्क्याह—**नच क्वचिदिति । यादांसि**

कल्पतरुपरिमलः ।

सार्वात्म्यसिद्धिः । यद्यपि प्रस्तावादिसामभक्त्यवयवरूपे सामगानां पर्वेत्येव प्रसिद्धे साम्नामवच्छेदे गेष्ण्याख्या तेषां प्रसिद्धा, औक्थिक्याख्ये सामपर्वलक्षणग्रन्थेऽपि तथैव व्यवहारः; तथापि स्तोत्रसाधनक्रमिकपर्वद्वयत्वसादृश्याद् ऋक्सामयोर्गेष्ण्यद्वयत्वारोपः । गेष्ण्यौ शरीरावयवपर्वणी इत्यप्याचक्षते ॥ **इति सप्तममन्तरधिकरणम् ।**

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

**तस्मादुद्गीथ इत्युद्गीथसंपत्तेस्तुल्यत्वादिति । यद्यपि** तस्मादुद्गीथ इत्येतत् पूर्वप्रकृतोन्नामकत्वेन ऋक्सामगेष्ण्यत्वेन च हेतुनाऽऽदित्यपुरुषस्योद्गीथ इति नामान्तरविधानार्थं, न तूद्गीथसंपत्त्यर्थं; तत्र 'तस्मादिति' हेतोरनन्वयात्, 'उद्गेष्ण' इति नाम्नि विधातव्ये 'उद्गीथ' इति तद्विधानं देवानां परोक्षप्रियत्वात्, तथैव च छान्दोग्यविवरणे व्याख्यातम् । यन्नाम तन्नामेति नामातिदेशकवाक्यस्योदित्युद्गीथ इति च नामद्वयातिदेशकतया व्याख्यानेन चास्य नामान्तरविधानार्थत्वं स्थिरीकृतम् । पूर्वाधिकरणप्रदर्शितया रीत्योद्गानकर्तुरुद्गातृनामवदुद्गीथभक्तेरुद्गीथनामापि ऋक्सामयोरुन्नामकदेवविषयगानपर्वत्वे प्रमाणपरतया नीयते चेदपि नेदमुद्गीथं संपत्तिपरम्; आदित्यपुरुषस्योद्गीथे सम्पत्तिस्तु प्राक्'ओमित्येतदक्षरमुद्गीथमुपासीत' तस्योपव्याख्यान'मित्यादिनोद्गीथोपासनाप्रपञ्चनप्रतिज्ञानात्, उत्तरत्राकाशवाक्येऽपि "स एष परोवरीयानुद्गीथ" इत्युद्गीथसंपत्त्यनुवृत्तेः, हिरण्मयवाक्येऽपि "तस्मादेवंविदुद्गाता ब्रूयात् कं ते काममागायानी"त्यक्षण्यादित्यपुरुषोपासनस्योद्गातृकर्तृकत्वलिङ्गदर्शनाच्च लभ्यते । तल्लभ्यैव चोद्गीथसंपत्तिः छान्दोग्यविवरणे "य एवं विद्वान् साम गायती"त्यत्र **य एवं विद्वानित्यस्य एवमुक्तरूपं** देवमुद्गीथं विद्वानिति व्याख्यानेन दर्शिता । इह शारीरकेपि **'सैव हि सत्यादय** (ब्र. अ. ३ पा. ३ सू. ३८ ) इत्यधिकरणे । छान्दोग्ये हि कर्मसंबन्धिन्युद्गीथव्यपाश्रया विद्या विधीयत इति वाक्येऽस्या अन्तरादित्यविद्यायाः स्वतन्त्रविद्यात्वशङ्कानिराकरणाय कर्माङ्गाश्रितत्वव्यवस्थापनार्थं **उद्गीथव्यपाश्रयेत्यनेन** सा दर्शिता । तत्र तदनन्तरम् "इयमेवर्गग्निः सामे"त्यन्तरादित्यविद्योपक्रमवाक्यवद् "य एवं विद्वान् साम गायती"ति तदुपसंहारवाक्यवच्च "तस्यर्क् साम च गेष्ण्यौ तस्मादुद्गीथ इति" तन्मध्यपातिवाक्यमपि ऋक्सामसंबन्धरूपकर्माङ्गाश्रितत्वचिह्नमात्रप्रदर्शकतयोपन्यस्तं, न तूद्गीथसंपत्त्यर्थत्वेन, अतस्तस्मादुद्गीथ इत्यस्योद्गीथसंपत्त्यर्थत्वोक्तिरयुक्तेति प्रतिभाति; **तथापि** "तस्मादुद्गीथ" इत्युद्गीथनामविधानादुद्गीथभक्तेरादित्यपुरुषस्य चोद्गीथनामकत्वरूपसाम्यसिद्धौ पूर्वापरसंदर्भपर्यालोचनया चोद्गीथसंपत्तौ हृदि विपरिवर्तमानायां "तस्य भूरिति शिरः एकं हि शिरः एकमेतदक्षर"मित्यादिश्रुतिषु प्रायेणारोप्याधिष्ठानयोर्यत्किंचित्साम्यावलम्बनमभेददृष्टिविधानमिति श्रुतिशैलीविदामिहाप्युद्गीथनामकत्वसाम्यावलम्बनाभेददृष्टिपर्यन्तार्थिकार्थेऽस्य वाक्यस्य तात्पर्य

इदमामनन्ति—'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' ( छान्दो० १।९।१ ) इति । तत्र संशयः—किमाकाशशब्देन परं ब्रह्माभिधीयत उत भूताकाशमिति । कुतः संशयः; उभयत्र प्रयोगदर्शनात् । भूतविशेषे तावत्सुप्रसिद्धो लोकवेदयोराकाशशब्दः । ब्रह्मण्यपि क्वचित्प्रयुज्यमानो दृश्यते । यत्र वाक्यशेषवशादसाधारणगुणश्रवणाद्वा निर्धारितं ब्रह्म भवति, यथा—'यदेष आकाश आनन्दो न स्यात्' ( तै० २।७ ) इति । 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा० ८।१४।१ ) इति चैवमादौ । अतः संशयः । किं पुनरत्र युक्तं, भूताकाशमिति । कुतः, तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति । नचायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुं; अनेकार्थत्वप्रसङ्गात् । तस्माद्ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति । विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति । नच मुख्यसंभवे गौणोऽर्थो ग्रहणमर्हति । संभवति चेह मुख्यस्यैवाकाशस्य ग्रहणम् । ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिः । नैष दोषः; भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः । विज्ञायते हि—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः' (तै० २।१) इत्यादि । ज्यायस्त्वपरायणत्वे अपि भूतान्तरापेक्षयोपपद्येते भूताकाशस्यापि । तस्मादाकाशशब्देन भूताकाशस्य ग्रहणमित्येवं प्राप्ते ब्रूमः—'आकाशस्तल्लिङ्गात्' । आकाशशब्देनेह ब्रह्मणो ग्रहणं युक्तम् । कुतः, तल्लिङ्गात् । परस्य हि ब्रह्मण इदं लिङ्गम्—'सर्वाणि ह वा इमानि भूतान्या

## भामती ।

तत्परेण भवितव्यम् । संभवश्चोभयत्र तुल्यः । नच ब्रह्मण्यप्याकाशशब्दो मुख्यः; अनेकार्थत्वस्यान्याय्यत्वात्, भक्त्या च ब्रह्मणि प्रयोगदर्शनोपपत्तेः, लोके चास्य नभसि निरूढतरत्वात्, तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेर्वैपरीत्यानुपपत्तेः । तदानुगुण्येन च 'सर्वाणि ह वा' इत्यादीनि भाष्यकृता स्वयमेव नीतानि । तस्माद्भूताकाशमेवात्रोपास्यत्वेनोपदिश्यते, न परमात्मेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—**आकाशशब्देन ब्रह्मणो ग्रहणम्** । **कुतः, तल्लिङ्गात्** । **तथाहि— सामानाधिकरण्येन प्रश्नतत्प्रतिवाक्ययोः । पौर्वापर्यपरामर्शात्प्रधानत्वेऽपि गौणता ॥** यद्यप्याकाश-

## वेदान्तकल्पतरुः ।

जलचराः । यादांसीति प्रयोगे गङ्गापदाभिधेयस्य वाक्यार्थान्वयसंभवान्मुख्यत्वं, न त्विह नभसो वाक्यार्थान्वयः, अनन्त्याद्ययोगादत आह—**संभवश्चेति** । मुख्यानुगुण्येन गुणानां नयनस्योक्तत्वादित्यर्थः । अस्तु तर्हि ब्रह्मणि मुख्यः, तत्र वक्तव्यं किं ब्रह्मनभसोर्मुख्यम्, उत ब्रह्मण्येवेति । **नाद्य** इत्याह—**अनेकार्थत्वस्येति** । **नहि द्वितीय** इत्याह—**भक्त्या चेति** । **ननु** नभसि गौणः, ब्रह्मणि रूढः किं न स्यात्तत्राह—**तत्पूर्वकत्वाच्चेति** । प्रश्नोत्तरयोरेकार्थपर्यवसानसामर्थ्यलक्षणं सूत्रगतलिङ्गशब्दार्थमभिप्रेत्य सिद्धान्तयति—**सामानाधिकरण्येनेति** । **नन्वै**कार्थ्येऽपि प्रश्नोत्तरयोः प्रतिवचनस्थाकाशशब्दानुरोधात्प्रश्नोपि मुख्याकाशपरोस्तु, तत्राह—**पौर्वापर्येति** । प्रश्नोत्तरयोरर्थतः शब्दतश्च पूर्वापरत्वेनानुसंधानादसंजातविरोधप्रश्नानुसारेण चरममुत्तरं नेयमित्यर्थः । अनेन प्रथमत्वहेतोरसिद्धिरुक्ता, प्राधान्यं तूपक्रमविरोधे सत्यकिंचित्करमित्युक्तं—**प्रधानत्वेऽपीति** । आकाशपदस्य प्रधानार्थत्वेऽपि गौणता, अपिशब्दान्न नभसः प्रधानत्वमपि

## कल्पतरुपरिमलः ।

मस्तीति प्रतीयत एवेत्यभिप्रेत्येदं वाक्यमुद्गीथसंपत्तौ प्रमाणतयोपन्यस्तम् । एवमनया प्रणालिकयोद्गीथनामविधानस्यार्थादुद्गीथसंपत्तौ पर्यवसानमभिप्रेत्यैव छान्दोग्यविवरणे "तस्यर्क् साम च गेष्णौ तस्मादुद्गीथ" इति वाक्यमवतारितम्—**तस्योद्गीथत्वं देवस्यादित्यादीनामिव विवक्षित्वाऽऽहेति** । पूर्वं य एवासौ तपति तमुद्गीथमुपासीतेत्यादिष्वादित्यादीनामिवेत्यर्थः ॥ **आनन्त्याद्ययोगादिति** । शालावत्यपक्षोद्भावितान्तवत्त्वदोषापनिनीषयोपन्यस्तमनन्तत्वं चरमश्रुतमपि सकृत् श्रुतमपि लिङ्गं सदपि प्रथमश्रुताभ्यस्ताकाशश्रुत्यपेक्षया बलवत् । तथाभूताया अप्याकाशश्रुतेर्लक्षणासहिष्णुत्वेनान्यथासिद्धत्वादनन्तत्वलिङ्गस्यान्तवति तपने प्रागुद्भावितदोषापनयनालाभादित्यनन्तत्वलिङ्गस्यानन्यथासिद्धत्वम्, सर्वकारणत्वादिलिङ्गान्तरापेक्षया प्रथमापेक्षितत्वं च । प्राबल्यातिशयमभिप्रेत्य विषयवाक्ये तेभ्यश्चरमश्रुतस्यापि तस्य प्रथममुपन्यासः । **मुख्यानुगुण्येति** । यथा दाल्भ्यपक्षोद्भाविताऽप्रतिष्ठितत्वदोषापनिनीषया शालावत्येनोपन्यस्तं प्रतिष्ठात्वलिङ्गं स्वर्गलोकवत् प्रतिष्ठान्तरापेक्षायां पृथिव्यां निरपेक्षमुख्यमसंभवदपि स्वर्गलोकापेक्षया पृथिव्याः कथं चित्प्रतिष्ठात्वातिशयमपेक्ष्य मुख्यपृथिवीश्रुत्यानुगुण्येन पृथिव्यां संभवत्प्रतिष्ठात्वरूपतया नीतम्, एवमानन्त्यमपि मुख्याकाशश्रुत्यानुगुण्येन भूता-

### भामती ।

पदं प्रधानार्थं तथापि यत्पृष्टं तदेव प्रतिवक्तव्यम् । न खल्वनुन्मत्त आम्रान्पृष्टः कोविदारानाचष्टे । तदिह, 'अस्य लोकस्य का गतिः' इति प्रश्नो दृश्यमाननामरूपप्रपञ्चमात्रगतिविषय इति तदनुरोधाद्य एव सर्वस्य लोकस्य गतिः स एवाकाशशब्देन प्रतिवक्तव्यः । नच भूताकाशः सर्वस्य लोकस्य गतिः; तस्यापि लोकमध्यपातित्वात्, तदेव तस्य गतिरित्यनुपपत्तेः । नच—उत्तरे भूताकाशश्रवणाद्भूताकाशकार्यमेव पृष्टमिति—युक्तं; प्रश्नस्य प्रथमावगतस्यानुपजातविरोधिनो लोकसामान्यविषयस्योपजातविरोधिनोत्तरेण संकोचानुपपत्तेस्तदनुरोधेनोत्तरव्याख्यानात् । नच—प्रश्नेन पूर्वपक्षरूपेणानवस्थितार्थेनोत्तरं व्यवस्थितार्थं न शक्यं नियन्तुमिति—युक्तम्; तन्निमित्तानामज्ञानसंशयविपर्यासानामनवस्थानेऽपि तस्य स्वविषये व्यवस्थानात्, अन्यथोत्तरस्यानालम्बनत्वापत्तेर्वैयधिकरण्यापत्तेर्वा । **अपि** चोत्तरेऽपि बह्वसमञ्जसम् । **तथाहि**—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति सर्वशब्दः कथंचिदल्पविषयो व्या-

### वेदान्तकल्पतरुः ।

तु पृष्टस्य सर्वकारणस्यैवेत्यर्थः । प्रधानत्वेऽपीत्येतद्व्याचष्टे—**यद्यपीति** । सामानाधिकरण्येनेत्येतद्विभजते—**यत्पृष्टमिति** । अस्तु प्रश्नोत्तरयोरेकविषयत्वं, प्रश्नविषयस्तु नभ इति नेत्याह—**तदिहेति** ॥ **यत्तु कश्चिदाह**—दाल्भ्येन स्वर्गलोकः सामप्रतिष्ठेत्युक्ते शालावत्योऽप्रतिष्ठत्वेन तद्दूषयित्वा पृथिवीलोकः सामाश्रय इत्यूचे । प्रवाहणस्तु तमन्तवत्त्वेनादूदुषत् । तर्ह्यस्य लोकस्य का गतिरिति शालावत्योऽपृच्छत् । तत्र पृथिवीकारणमात्रं पृष्टं, न सर्वलोकगतिः; तस्मात्—**पूर्वापरपरामर्शरहितैः प्राज्ञमानिभिः । कल्पितेयं गतिर्नैषा विदुषामनुरञ्जिका** ॥—इति ॥ तच्छ्रुतिभावानवबोधविजृम्भितम् । **तथा हि**—पृथिवीमात्रकारणस्यापां प्रसिद्धत्वेन प्रश्नवैयर्थ्यात्, अस्येति च सर्वनामश्रुतेः प्रकरणाद्बलीयस्याः सर्वकार्यविषयत्वोपपत्तेः । **यस्तु प्रथमप्रश्ने** दाल्भ्यकृतेऽस्यशब्दः, स पृथिवीपरोऽस्तु; न प्रतिष्ठां लोकमतिनयेदिति पृथिव्या एव तदुत्तरेऽभिधानात् । **द्वितीये तु** शालावत्यकृते न तथा किंचिदस्ति संकोचकम् । किंचाभिधत्तामयमप्यस्यशब्दः पृथिवीमेव; तथाप्यन्तवत्त्वदोषापनिनीषया प्रश्नप्रवृत्तेः पृथिवीमात्रकारणनिरूपणे तदसिद्धेः काकेभ्यो रक्ष्यतामन्नमितिवदयमस्यशब्दः सर्वकार्यपरः । तथाच पूर्वापरेत्यादिरुपालम्भ उष्ट्रलकुटन्यायमनुसरतीति ॥ पौर्वापर्येत्येतच्छङ्कोत्तरत्वेन विवृणोति—**न चोत्तरे इति** । यद्यपि कारणविषयप्रश्नः; तथापि तत्र विशेषणतया कार्यमप्युपात्तमिति कार्यमेव पृष्टमित्युक्तम् । कथं न युक्तमत आह—**प्रश्नस्येति** । यथा हि "उच्चैर्ऋचा क्रियत"इत्यत्र विध्युद्देशगता अप्यृगादिशब्दाः "त्रयो वेदा अजायन्त"-त्युपक्रमगतमर्थवादस्थमपि वेदशब्दमेकवाक्यत्वसिद्ध्यर्थमनुरुन्धाना ऋगादिजातिवचनतां मुञ्चन्तो वेदलक्षणार्था इति निर्णीतं **वेदो वा प्रायदर्शना** ( जै. अ. ३ पा. ३ सू. २ ) दित्यत्र, एवमत्राप्येकस्मिन्वाक्ये "अस्य लोकस्य का गतिरिति" सर्वकारणत्वाविरुद्धायां बुद्धौ तद्विरुद्धार्थस्य वाक्यैक्यविनाशिनो निवेशायोगादाकाशपदं परमकारणे गौणमित्यर्थः । **ननु** निर्णीतार्थ उपक्रम उपसंहारमन्यथयेत्, न प्रश्नोपक्रमः; संदिग्धार्थत्वादिति, तत्राह—**नचेति** । प्रश्नः स्वविषयव्यवस्थित एव न चेत् तत्र वक्तव्यं स निर्विषयः, पृष्टादन्यविषयो वा । **नाद्य** इत्याह—**अनालम्बनत्वेति** । **न द्वितीय** इत्याह—

### कल्पतरुपरिमलः ।

काशे पृथिव्यपेक्षया बहुकालवर्तित्वरूपतया नेतव्यमित्याशयः । **तथाहि पृथिवीमात्रकारणस्येति** । **नन्वपां** कारणस्य तेजसः प्रसिद्धत्वेऽ'प्यपां का गतिरि'ति प्रश्नो दृश्यते 'अस्य लोकस्य का गति'रिति, दाल्भ्यकृतस्य प्रश्नस्य पृथिवीमात्रकारणविषयत्वं चाभ्युपगम्यते तद्वच्छालावत्यकृतस्यापि तस्य तन्मात्रविषयत्वं किं न स्यादित्यस्वरसादाह—**अस्येति च सर्वनामश्रुतेरिति** । **ननु** सर्वनाम्नः प्रकृतपरामर्शित्वस्वाभाव्यादसौ लोकः अयं लोक इत्यनयोः समभिव्याहारे अदइदंशब्दयोः स्वर्गलोकपृथिवीलोकपरत्वस्यैव श्रुतिषु सर्वत्र दृष्टत्वाच्चात्रास्येति सर्वनामश्रुतेः पृथिवीमात्रपरत्वेन संकोचो न दोष इत्यस्वरसादाह—**किंचेति** ॥ **ननु**—अस्यशब्दः पृथिवीपर इत्येतावता तन्मात्रकारणं पृष्टं न भवति; येन तन्निरूपणे अन्तवत्त्वदोषो नापनीतः स्यात्, किं तु पृथिवीकारणं पृष्टं भवति तत्कारणत्वं चानन्ते सर्वकारणेऽप्यस्तीति पृथिवीकारणप्रश्नेऽपि तन्निरूपणेनान्तवत्त्वदोषापनयः स्यादेवेत्यनुपपत्त्यभावादस्य लोकस्येत्यस्य दाल्भ्यकृतस्येव शालावत्यकृतस्यापि प्रश्नस्य न सर्वलोकविषयत्वं कल्पनीयमिति—**चेत्, नः** यथा शालावत्यप्रश्नैकरूपस्य दाल्भ्यप्रश्नस्यानन्तवस्तुपरत्वाभावेऽप्यन्तवत्त्वदोषमुद्भावितवान् जैवलिरनन्तं वस्तु पृथिवीकारणं विवक्षतीति निश्चयवतः शालावत्यस्य प्रश्नोयमनन्तवस्तुपर इति कल्प्यते, तथा सर्वकारणत्वाभावे त्रिविधपरिच्छेदराहित्यरूपतदानन्त्यं न स्यादतोऽनन्तं वस्तूपक्षिपता जैवलिना सर्वकारणमेव तदुपक्षिप्तं भवतीत्यपि शालावत्यस्य निश्चयसम्भवेन तदीयप्रश्नोयं तत्किं सर्वकारणमनन्तं वस्त्विति सर्वलोकगतिविषय इत्यपि कल्पयितुमुचितत्वादिति भावः ॥ **यथाह्युच्चैरिति** । "उच्चैर्ऋचा क्रियते" "उपांशु यजुषा" 'उच्चैः साम्ने'त्यत्र विधेयमुच्चैष्ट्वादिकं किमृगादिधर्मो वेदधर्मो वेति संशयः । ऋगादिधर्मत्वे यजुर्वेदगता अपि सपादबन्धमन्त्ररूपा ऋच उच्चैष्ट्वधर्माणो भवन्ति, सामवेदगतान्यप्यपादबन्धमन्त्ररूपाणि यजूंष्युपांशुत्वधर्माणि भवन्ति, वेदधर्मत्वे तु

काशादेव समुत्पद्यन्ते' इति । परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा । ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितम् । सत्यं, दर्शितम् । तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारणं, सर्वाणीति च भूतविशेषणं नानुकूलं स्यात् । तथा 'आकाशं प्रत्यस्तं यन्ति' इति ब्रह्मलिङ्गं 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' इतिच ज्यायस्त्वपरायणत्वे । ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन्नाम्नातम्—'ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' ( छा० ३।१४।३ ) इति । तथा परायणत्वमपि परमकारणत्वात्परमात्मन्येवोपपन्नतरम् । श्रुतिश्च भवति—'विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्' (बृ० ३।९।२८) इति । अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वा, अनन्तं

## भामती ।

ख्येयः । एवमेवकारोऽप्यसमञ्जसः । न खल्वपामाकाश एव कारणमपि तु तेजोऽपि । एवमन्नस्यापि नाकाशमेव कारणमपि तु पावकपाथसी अपि । मूलकारणविवक्षायां तु ब्रह्मण्येवावधारणं समञ्जसम् । असमञ्जसं तु भूताकाशे । एवं सर्वेषां भूतानां लयो ब्रह्मण्येव । एवं सर्वेभ्यो ज्यायस्त्वं ब्रह्मण एव । परमयनं ब्रह्मैव । तस्मात्सर्वेषां लोकानामिति प्रश्नेनोपक्रमात्, उत्तरे च तत्तदसाधारणब्रह्मगुणपरामर्शात् पृष्टायाश्च गतेः परमयनमित्यसाधारणब्रह्मगुणोपसंहारात्, भूयसीनां श्रुतीनामनुग्रहाय **'त्यजेदेकं कुलस्यार्थे'** इतिवद्वरमाकाशपदमात्रमसमञ्जसमस्तु । एतावता हि बहु समञ्जसं स्यात् । नचाकाशस्य प्राधान्यमुत्तरे, किंतु पृष्टार्थत्वादुत्तरस्य, लोकसामान्यगतेश्च पृष्टत्वात्, 'परायणम्' इति च तस्यैवोपसंहाराद्ब्रह्मैव प्रधानम् । तथाच तदर्थं सत् आकाशपदं प्रधानार्थं भवति, नान्यथा । तस्माद्ब्रह्मैव प्रधानमाकाशपदेनेहोपास्यत्वेनोपक्षिप्तं, न भूताकाशमिति सिद्धम् । **अपिच** अस्यैवोपक्रमे 'अन्तवत्किल ते साम' इति **अन्तवत्त्वदोषेण शालावत्यस्येति** । न चाकाशशब्दो गौणोऽपि विलम्बितप्रतिपत्तिः; तत्र तत्र ब्रह्मण्याकाशशब्दस्य तत्पर्यायस्य च प्रयोगप्राचुर्यादत्यन्ताभ्यासेनास्यापि मुख्यवत्प्रतिपत्तेरविलम्बनादिति दर्शनार्थं ब्रह्मणि प्रयोगप्राचुर्यं

## वेदान्तकल्पतरुः ।

**वैयधिकरण्येति** । एवं तावत्प्रश्नप्रतिवचनवाक्यसामर्थ्यं **तल्लिङ्गादिति** सौत्रहेतुवचनार्थं इति व्याख्याय वाक्यशेषस्थलिङ्गपरतया व्याख्यान्तरमाह—**अपिचेत्यादिना** ॥ **सर्वेषां लोकानामिति** । **प्रश्नोपक्रमादिति** । उत्तरे **सर्वाणीति** दर्शनात् प्रश्नस्थः षष्ठ्यन्तलोकशब्दोऽस्येति सर्वनामसहपठितो व्याख्याय निर्दिष्ट इति । इदंच प्रश्नस्य सर्वकारणविषयत्वे लिङ्गम्, इतरथा ह्युत्तरे पृथिव्याकाशात् समुत्पद्यत इति स्यात्तन्मात्रकारणस्य पृष्ठत्वादिति । **ननु** साम्ये विरोधिनां भूयसां न्यायः, इह तु प्रधानमाकाशशब्दार्थो नाप्रधानैर्भूयोभिरपि बाध्येत । **यदाह कश्चित्—त्यजेदेकं कुलस्यार्थे इति राद्धान्तयन्ति ये । शेषिबाधे न तैर्दृष्टमात्मार्थे पृथिवीमिति** ॥ **इति**, तत्राह—**नचाकाशस्य प्राधान्यमिति** । **ननु** शेष्यर्थत्वादाकाशपदं प्रधानार्थमत आह—**तथाचेति** । उपक्रान्तं प्रधानं ब्रह्म विशिंषन्नाकाशशब्दः प्रधानार्थो **ननु** गगनमभिदधदित्यर्थः । अपि चेति भाष्योक्तान्तवत्वप्रतिपादिकां श्रुतिमाह—**अन्तवदिति** । आस्तां

## कल्पतरुपरिमलः ।

ऋग्वेदेन यत् **क्रियते** विधीयते कर्म, तदुचैष्ट्वधर्मकमित्येवमादिप्रकारेणोच्चैष्ट्वादिकं तत्तद्वेदविधेयकर्मधर्मतां प्राप्य तदङ्गेषु मन्त्रेष्ववतरतीति । विशेषसूत्रे प्रायपदं प्राथम्यपरम् । अपि चास्यैवोपक्रम इत्यादिः शालावत्यस्येतीत्यन्तष्टीकाग्रन्थोऽनन्वित इव भातीत्याशङ्क्यान्तवत्त्वदोषप्रदर्शनार्थश्रुतिनिवेशनपूर्वकं भाष्यप्रतीकग्रहणं तदित्याह—**अपिचेति भाष्योक्तेति** । अस्यैवोपक्रम इत्येतदपि भाष्य एव विवक्षितांशनिवेशनार्थम् । यद्यप्यनन्तत्वमाम्नानतश्चरमश्रुतं; तथापि शालावत्यपक्षे अन्तवत्त्वदोषोद्भावनेन जैवलिः स्वयमनन्तं किंचिद्विवक्षतीत्येवमुपक्रम एवावगतमिति तात्पर्यम् । **यत्तु—**प्रतिष्ठात्ववदनन्तत्वमपि यथाकथंचिन्नेतव्यम्—इति । **तन्न**; प्रतिष्ठात्वस्यापि यथाकथञ्चिन्नयनाभावात् । प्रतिष्ठात्वं ह्यत्र नोपजीव्यत्वम्; "इतः प्रदानं देवा उपजीवन्ती"तिव"दमुतः प्रदानं मनुष्या उपजीवन्ती"त्यपि श्रवणेन स्वर्गपृथिव्योः परस्परमुपजीव्योपजीवकभावस्य तुल्यतया स्वर्गो न प्रतिष्ठा पृथिवी प्रतिष्ठेति व्यवस्थितोक्त्ययोगात् किं तु निश्चलत्वमिह प्रतिष्ठाशब्दार्थः । तत्तु ज्योतिश्चक्रान्तर्गतत्वेन भ्रमति स्वर्गे नास्ति, अस्ति तु पृथिव्यां पृथिवी प्रतिष्ठितेति श्रुत्यन्तरात्, आर्यभटाद्यभिमतभूभ्रमणादिवादानां श्रुतिन्यायविरोधेन हेयत्वात् । **किंच** आनन्त्यादिगुणकाकाशप्रतिपादनार्थं प्रवृत्तेऽस्मिन् महावाक्ये मध्यगतं पृथिवीप्रतिष्ठात्ववर्णनं यथाकथं चिन्नीयतां नाम, न तावता तद्वदानन्त्यमपि नयनमर्हति; न ह्यग्निहोत्रद्रव्यत्वेन पयसो विधानार्थे महावाक्ये मध्ये श्रुतं जर्तिलगवीधुकयवागूविधानं सार्थवादं विधिसरूपार्थवादत्वेन नीतमिति

किंचिद्धकुकामेन जैवलिना आकाशः परिगृहीतः, तं चाकाशमुद्गीथे संपाद्योपसंहरति—'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा० १।९।२ इति ।) तच्चानन्त्यं ब्रह्मलिङ्गम् । यत्पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं प्रतीयत इति, अत्र ब्रूमः—प्रथमतरं प्रतीतमपि सत् वाक्यशेषगतान्ब्रह्मगुणान्दृष्ट्वा न परिगृह्यते । दर्शितश्च ब्रह्मण्यप्याकाशशब्दः—'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्यादौ । तथाकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते—'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः' (ऋ० सं० १।१६४।३९) 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता' (तै० ३।६) 'ॐ कं ब्रह्म खं ब्रह्म (छा० ४।१०।५) 'खं पुराणम्' (बृ०५।१) इति चैवमादौ । वाक्योपक्रमेऽपि वर्तमानस्याकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा । 'अग्निरधीतेऽनुवाकम्' इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते । तस्मादाकाशशब्दं ब्रह्मेति सिद्धम् ॥ २२ ॥ इत्यष्टममाकाशाधिकरणम् ॥

(९ अधिकरणम्) **अत एव प्राणः ॥ २३ ॥**

उद्गीथे—'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' इत्युपक्रम्य श्रूयते—'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' (छा० १।११।४,५) इति । तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ ।

---

### भामती ।

वैदिकं निदर्शितं भाष्यकृता । तत्रैव च प्रथमावगतानुगुण्येनोत्तरं नीयते, यत्र तदन्यथा कर्तुं शक्यम् । यत्र तु न शक्यं तत्रोत्तरानुगुण्येनैव प्रथमं नीयत इत्याह—**वाक्योपक्रमेपीति** ॥ २२ ॥ **इत्यष्टममाकाशाधिकरणम्** ॥

**अत एव प्राणः ॥ २३ ॥** उद्गीथे—'या देवता प्रस्तावमन्वायत्ता' इत्युपक्रम्य श्रूयते—'कतमा सा देवतेति प्राण इति होवाच' उषस्तिश्चाक्रायणः । उद्गीथोपासनप्रसङ्गेन प्रस्तावोपासनमप्युद्गीथ इत्युक्तं भाष्यकृता । प्रस्ताव इति साम्नो भक्तिविशेषस्तमन्वायत्ता अनुगता प्राणो देवता । अत्र प्राणशब्दस्य ब्रह्मणि वायुविकारे

### वेदान्तकल्पतरुः ।

प्रश्नोपक्रमानुरोधः, प्रतिवचनेऽपि वाक्यशेषगताऽनन्यथासिद्धब्रह्मलिङ्गादाकाशपदं गौणमिति भाष्यार्थमाह—**तत्रैव चेति** "उद्गीथे कुशलास्त्रयः शालावत्यदाल्भ्यजैवलयः कथामारेभिरे । शालावत्यो दाल्भ्यं प्रपच्छ का साम्नो गतिः कारणमिति इतर आह स्वर इति । स्वरस्य प्राणः प्राणस्यान्नम् अन्नस्यापः अपां स्वर्गः वृष्टेस्तत आगतेरिति" दाल्भ्ये प्रत्युक्तवति स्वर्गस्यापि मनुष्यकृतयज्ञाद्यधीनस्थितिकत्वादप्रतिष्ठितं वै किल ते दाल्भ्य सामेत्युक्त्वा अयं लोकः स्वर्गस्य गतिरिति शालावत्यः प्रतिजज्ञौ । तं राजा जैवलिराह"अन्तवद्वै किल ते शालावत्य साम कारणमिति' 'तर्ह्यस्य लोकस्य का गतिरिति' पृष्टो राजा 'आकाश' इति होवाच । **ज्यायान्महत्तरः,** परमयनमाश्रयः **परायणं परोवरेभ्यः** स्वरादिभ्योऽतिशयेन वरः परोवरीयान् । स चाकाश उद्गीथे संपाद्योपास्यत्वादुद्गीथः ॥ **इति अष्टममाकाशाधिकरणम्** ॥

## अत एव प्राणः ॥ २३ ॥

अतिदेशत्वात्सैव सङ्गतिः । **अथ वा** अनन्तवस्तुपरत्वादुपक्रमोपसंहारयोरस्त्वाकाशवाक्यं ब्रह्मपरम्, अत्र तु ब्रह्मासाधारणधर्मपरोपक्रमोपसंहारादर्शनान्न ब्रह्मपरतेति सङ्गतिः । **अथवा** आकाशवाक्यानन्तर्यात्प्राणवाक्यस्येति सङ्गतयः । विषयप्रदर्शकभाष्य उद्गीथ इत्युक्तं तदुद्गीथप्रकरणे प्रासङ्गिकं प्रस्तावोपासनमिति कथयितुमित्याह—**उद्गीथेति** । पुरस्ताद्धि "परोवरीयांसमुद्गीथमुपास्त" इत्युक्तं, "परस्ताचाथातः शौक्र उद्गीथ" इति, अतः प्रस्तावाक्यं यद्यपि विषयः; तथापि प्रक-

### कल्पतरुपरिमलः ।

पयोविधानमपि तथा नीयते ॥ **अनन्यथासिद्धब्रह्मलिङ्गादिति** अनन्तत्वस्यानन्यथासिद्धिर्दर्शिता । सर्वाणि ह वेत्यादिवाक्येनाकाशः परायणमाकाशं प्रत्यस्तं यन्तीति वाक्याभ्यां च प्रदर्शितम् । सकलकार्योत्पत्तिस्थितिलयाधारत्वं मूलकारणान्तरव्यवच्छेदकेनावधारणेन लम्भितमुपादानातिरिक्तकर्तृराहित्यं चानन्त्यान्तर्गतवस्तुपरिच्छेदराहित्योपपादकत्वेनानन्यथा सिद्धम् । परोवरीयस्त्वमपि परोवरीयसो ह लोकान् जयतीत्यादिवाक्योक्तत्वानुगुणफलवत्त्वादनन्यथासिद्धम् ॥ **इत्यष्टममाकाशाधिकरणम्** ॥

## अत एव प्राणः ॥ २३ ॥

---

१ तत्र सूत्रम्—आकाशस्तल्लिङ्गात् ॥ २२ ॥

## भामती ।

च दर्शनात्संशयः—किमयं ब्रह्मवचनः, उत वायुविकारवचन इति । तत्र **अतएव** ब्रह्मलिङ्गादेव **प्राणोऽपि** ब्रह्मैव, न वायुविकार इति युक्तम् । यद्येवं तेनैव गतार्थमेतदिति कोऽधिकरणान्तरस्यारम्भार्थः । **तत्रोच्यते—अर्थे श्रुत्यैकगम्ये हि श्रुतिमेवाद्रियामहे । मानान्तरावगम्ये तु तद्वशात्तद्व्यवस्थितिः॥** ब्रह्मणो वा सर्वभूतकारणत्वं, आकाशस्य वा वाय्वादिभूतकारणत्वं प्रति नागमादृते मानान्तरं प्रभवति । तत्र पौर्वापर्यपर्यालोचनया यत्रार्थे समञ्जस आगमः स एवार्थस्तस्य गृह्यते, त्यज्यते चेतरः । इह तु संवेशनोद्गमने भूतानां प्राणं प्रत्युच्यमाने किं ब्रह्म प्रत्युच्येते, आहो वायुविकारं प्रतीति विशये 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति' इत्यादिकायाः श्रुतेः सर्वभूतसारेन्द्रियसंवेशनोद्गमनप्रतिपादनद्वारा सर्वभूतसंवेशनोद्गमनप्रतिपादिकाया मानान्तरानुग्रहलब्धसामर्थ्याया बलात्संवेशनोद्गमने वायुविकारस्यैव प्राणस्य, न ब्रह्मणः । अपिचात्रोद्गीथप्रतिहारयोः सामभक्त्योर्ब्रह्मणोऽन्ये आदित्यश्चान्नं च देवते अभिहिते कार्यकारणसंघातरूपे, तत्साहचर्यात्प्राणोऽपि

## वेदान्तकल्पतरुः ।

रणशुद्ध्यर्थमुद्गीथग्रहणमित्यर्थः । श्लोकस्य पूर्वार्धं व्याचष्टे—**ब्रह्मणो वेति** । नह्याकाशाद्वायूदयः प्रत्यक्षादियोग्यः, अतो वाक्यशेषाद्यक्तो ब्रह्मनिर्णयः । उत्तरार्धं विवृणोति—**इहत्वित्यादिना** । **इह** सर्वाणि ह वेति वाक्ये इत्यर्थः । भोगप्रत्यासत्तेरिन्द्रियाणां भूतसारत्वं ततः प्रधानेन सर्वभूतलक्षणया भूतोत्पत्तिलयौ वायाविति प्रत्यक्षानुगृहीतया श्रुत्योक्तं तस्याः संवादलब्धबलाया बलात्सर्वाणीति वाक्यं वायुविकारपरं व्याख्येयमिति । "**कतमा** देवतोद्गीथमन्वायत्तेत्यादित्य इति होवाच कतमा प्रतिहारमित्यन्नमिति" देवते अभिहिते । **कार्यकारणसंघातरूपे इति** । शरीरिण्याविति अर्थः । अन्नमपि तदभिमानिदेवता । स्वत एव निश्चायकत्वात्स्वविषयज्ञानोत्पादे मानान्तरं नापेक्षेत, निश्चयपूर्वकत्वाद्व्यवहारस्य स्वविषयव्यवहारे नापेक्षते, असंवादिनो वाक्यस्य स्वविषये नादार्ढ्यं रूप इव चक्षुषः, त्वगिन्द्रियसंवादिनो न दार्ढ्यं चक्षुष इव द्रव्ये इति । येन प्रमाणानां संवादविसंवादावप्रयोजकौ **तेन** । यदा वै पुरुष इति वाक्यादिन्द्रियमात्रस्य सुप्तिसमये वायुविकारे संवेशनोद्गमने भवेताम्, नत्वेतावता सर्वभूतोत्पत्तिलयौ तदाश्रयौ योजयितुं शक्यौ; **तयोस्तत्र** वाक्ये प्रतीत्यभावात् ।

## कल्पतरुपरिमलः ।

**सर्वाणीति वाक्यमिति । ननु—**प्रत्यक्षानुग्रहनियमितार्थश्रुत्यन्तरसंवादेनेदं वाक्यं वायुविकारपरमित्येतदयुक्तम्; प्रत्युदाहरणसंगत्ययोगात्, वायुविकारस्य सर्वभूतसंवेशनोद्गमनहेतुत्वसंभवे हि तद्द्वारा तत्कारणस्य भूताकाशस्यापि तत्संभवतीति पूर्वाधिकरणोक्तस्तत्र तदसंभवः प्रत्युद्धृतः स्यात्; अवधारणोपबृंहितं तत्तत्र न संभवतीति चेद्, वायुविकारेऽपि तुल्यम्; इहापि प्राणादेवेत्यवधारणश्रवणात्**—इति चेत्, उच्यते;** इह सर्वाणि भूतानीति शब्दः प्राणिवर्गपरः । भूतशब्दस्य महाभूतेषु प्राणिषु च रूढ्यविशेषेऽप्यत्र केषां ग्रहणं कार्यमिति विशये आदित्यान्नवाक्ययोः सर्वाणि भूतानीत्यस्य गातृत्वाभ्यवहर्तृत्वलिङ्गेन प्राणिपरतया तत्प्रायपाठस्य निर्णायकस्य सत्त्वात् । तेषां च सर्वेषामपि प्राणे स्वापप्रबोधयोरुत्पत्तिलयौ दैनंदिनौ श्रुत्यन्तरे तद्भोगसाधनेन्द्रियलयोत्पत्तिकथनद्वारोपलक्षिताविहाप्यर्थतया स्वीकार्यौ । अवधारणं त्वाकाशवाक्ये मूलकारणान्तरस्येवात्रावान्तरकारणान्तरस्य व्यवच्छेदकं स्यात्, प्राणवायुं विनान्यस्य कस्यचिदिन्द्रियसंवेशनोद्गमनाधारापादानभूतस्य ब्रह्मव्यतिरिक्तस्याभावात् । अयोगव्यवच्छेदकं वा; सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्तीत्यन्नवाक्यशेषगतायोगव्यवच्छेदकावधारणप्रायपाठात् । नह्योदनमेवाभ्यवहरन्तः प्राणिनो जीवन्ति; व्यञ्जनादीनामप्यभ्यवहारात् । इहान्नशब्दो ह्योदनपरो, नतु अदनीयमात्रवाची; योगतो रूढेः प्राबल्यात्, "भिस्सा स्त्री भक्तमन्धोऽन्नमिति" कोशकारवचनेन "अन्नेन व्यञ्जन"मिति पाणिनिव्यवहारेण चान्नशब्दस्यौदने रूढ्यवगमात् । नच—सर्वप्राणिनामोदनाभ्यवहारायोगव्यवच्छेदोऽपि नास्ति, वृक्षादिष्वभावादिति—वाच्यम्; अत्र सर्वाणि भूतानीत्यस्यौदनाभ्यवहारयोग्यप्राणिपरत्वेन संकोचोपपत्तेः, 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैःसन्तं गायन्ती'ति पूर्ववाक्ये तस्य गातृत्वयोग्यप्राणिषु संकोचदर्शनात्, आकाशवाक्ये त्वेवंभूतप्रायपाठाभावाद् भूतशब्दः कार्यसामान्यपरो बालाक्यधिकरणन्यायात् । अवधारणं चान्ययोगव्यवच्छेदकम्; तस्य तत्रैव स्वारस्यादिति विशेष इति पूर्वपक्ष्याशयः । **अन्नमपि तदभिमानिदेवतेति । ननु—**इहान्नमोदन एव, नतु तदभिमानिदेवता; प्राणिभक्ष्यत्वोक्तेः, भाष्यविरुद्धं चान्नशब्दस्य देवतापरत्वमङ्गीकृत्यान्नादित्यदेवताप्रायपाठात् प्राणशब्दस्य देवतापरत्वसमर्थनम् । **भाष्ये हि—**प्रसिद्ध्यतिशयप्रत्यक्षानुग्रहाभ्यां पूर्वपक्षः कृतः । नच प्राणशब्दस्य ब्रह्मापेक्षया देवतायां प्रसिद्ध्यतिशयोऽस्ति; तस्यां रूढेरभावाद्, निरूढेर्ब्रह्मण्यपि तुल्यत्वात्, नच तस्यामचेतने वायुविकार इव सर्वभूतसंवेशनोद्गमनसमर्थने प्रत्यक्षानुग्रहोऽस्ति; तस्या एव शास्त्रैकगम्यत्वात्, तस्माद्यथाभाष्यम् अन्नादित्यरूपाऽब्रह्मप्रायपाठात् प्राणोऽप्यब्रह्मेत्येव पूर्वपक्षः कर्तुं युक्तः । तथासति निरस्तोऽप्ययमर्थ

## भामती।

कार्यकारणसंघातरूप एव देवता भवितुमर्हति। निरस्तोऽप्ययमर्थ ईक्षत्यधिकरणे पूर्वोक्तपूर्वपक्षहेतूपोद्वलनाय पुनरुपन्यस्तः। तस्माद्वायुविकार एवात्र प्राणशब्दार्थ इति प्राप्तम्। एवं प्राप्तेऽभिधीयते—**पुंवाक्यस्य बलीयस्त्वं मानान्तरसमागमात्। अपौरुषेये वाक्ये तत्संगतिः किं करिष्यति॥** नो खलु स्वतःसिद्धप्रमाणभावमपौरुषेयं वचः स्वविषयज्ञानोत्पादे वा तद्व्यवहारे वा मानान्तरमपेक्षते; तस्यापौरुषेयस्य निरस्तसमस्तदोषाशङ्कस्य स्वत एव निश्चायकत्वात्, निश्चयपूर्वकत्वाद्व्यवहारप्रवृत्तेः। तस्मादसंवादिनो वा चक्षुष इव रूपे त्वगिन्द्रियसंवादिनो वा तस्यैव द्रव्ये नादार्ढ्यं दार्ढ्यं वा। तेन स्वामिन्द्रियमात्रसंवेशनोद्गमने वायुविकारे प्राणे, सर्वभूतसंवेशनोद्गमने तु न ततो वाक्यात्प्रतीयेते। प्रतीतौ वा तत्रापि प्राणो ब्रह्मैव भवेन्न वायुविकारः। 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्यत्र वाक्ये यथा प्राणशब्दो ब्रह्मवचनः। नचास्मिन्वायुविकारे सर्वेषां भूतानां संवेशनोद्गमने मानान्तरेण दृश्येते। नच मानान्तरसिद्धसंवादेन्द्रियसंवेशनोद्गमनवाक्यदार्ढ्यात्सर्वभूतसंवेशनोद्गमनवाक्यं कथंचिदिन्द्रियविषयतया व्याख्यानमर्हति; स्वतःसिद्धप्रमाणभावस्य स्वभावदृढस्य मानान्तरानुपयोगात्। नचास्य तेनैकवाक्यता; एकवाक्यतायां च तदपि ब्रह्मपरमेव स्यादित्युक्तम्। इन्द्रियसंवेशनोद्गमनं त्ववयुत्यवादेनापि घटिष्यते, एकं

## वेदान्तकल्पतरुः।

अथ पुनरिन्द्रियसारत्वात्सर्वभूतलक्षणा, तत्राह **प्रतीतौ वेति। ननु** कथं ब्रह्मैव भवेद्यावता सुप्तौ वायुविकारे लयः प्रमाणान्तरसिद्धः, तत्राह—**नचेति।** इन्द्रियमात्रलयः प्रमाणान्तरदृष्टो, न भूतलयस्तेनाकाशवाक्यवद् 'यदा वै' इति वाक्येऽपि यदि सर्वभूतलयः प्रतीयेत, तर्हि वाक्यशेषाद् ब्रह्मनिर्णय इत्यर्थः। एवं तावत्स्वापवाक्यस्य भूतलयत्वमाश्रित्य तदनुसारेण सर्वाणि ह वेति वाक्यं वायुविकारे सर्वभूतलयं वक्तीति शङ्का निरस्ता। इदानीं तस्य यथाश्रुतेन्द्रियलयमात्रपरत्वमाश्रित्य तदनुरोधेनेदमपीन्द्रियलयपरं व्याख्यायते, तथाच न ब्रह्मलिङ्गसिद्धिरित्याशङ्क्याह—**नच मानान्तरेति।** सर्वभूतसंवेशनस्य वाय्वाश्रयत्वयोजनायामुक्तं दूषणमिन्द्रियमात्रलयपरत्वयोजनायामपि संचारयति—**स्वतःसिद्धेति। ननु** वाक्यभेदमभ्युपेत्य संवादिवाक्यबलादितरसङ्कोचं न वदामोऽपि त्वेकवाक्यतामत आह—**नचास्येति।** 'यदा वै पुरुष' इत्यस्य संवर्गविद्यागतत्वात् सर्वाणि ह वेत्यस्योद्गीथविद्यागतत्वादित्यर्थः। अभ्युपेत्याह—**एकवाक्यतायां चेति। नन्वेक**वाक्यत्वे कुतो विनिगमना यतस्तद् ब्रह्मपरं, न पुनरिन्द्रियमात्रलयपरमित्यत आह—**इन्द्रियेति। अवयुत्यवादः**—एकदेशस्य विभज्य कथनम्। सर्वोत्पत्तिलयौ हि सर्वाणि ह वेत्यत्र प्रतीतौ। तत्रत्यसर्वशब्दानुरोधेन इन्द्रियमात्रोत्पत्तिलयकथनमेकदेशानुवादत्वेन घटिष्यते॥ एकं वृणीत इत्यादावार्षेयवरणे सर्वत्रापूर्वत्वाद्विधिमाशङ्क्य वर्तमानापदेशत्वा-

## कल्पतरुपरिमलः।

इत्यादिटीकोक्तप्रकारेण प्रायपाठस्य मूलयुक्त्युपोद्वलनमात्रार्थत्वं न वक्तव्यम्। ईक्षत्यधिकरणे (ब्र. सू. अ. १. पा. १. सू. ५) गौणतापादकः प्रायपाठो निरस्तः। अयं तु प्राणशब्दस्य मुख्यार्थत्वोपपादकः प्रबलः। आनन्दमयमुख्यार्थत्वोपपादकान्नमयाद्यब्रह्मप्रायपाठवदित्यधिकशङ्कावकाशसत्त्वादिति—**चेत्, सत्यम्;** टीकाकाराणामाचार्याणां च प्राणो वायुविकार इत्येव पूर्वपक्षोऽभिमतः। अतएव तेषां सन्देहटीकादिषु वायुविकारशब्देनैव व्यवहारः। तत्र यद्याकाशवाक्य इव ब्रह्मासाधारणधर्मोपक्रमोपसंहाराभावेऽपि प्राणवायुव्यावर्तकदेवताशब्दोक्तचेतनोपक्रमोपसंहारौ स्तः, तदनुसारेणान्नशब्दोऽपि तदभिमानिदेवतापर इति कश्चित् शङ्केत, तदाऽन्नादित्यदेवताप्रायपाठात् प्राणशब्दोऽपि प्राणदेवतापरोऽस्तु; प्रत्यक्षानुगृहीतश्रुत्यन्तरसंवादलब्धसर्वभूतसंवेशनोद्गमनहेतुभावस्य प्राणवायुधर्मस्य तदभेदोपचारेण तदभेदाध्यासेन वा तदभिमानिदेवतायां व्यपदेश इत्युपपत्तेः, अन्नधर्मस्यापि तदभिमानिदेवतायां तथैवोपपादनीयत्वादिति टीकाकारैः कक्ष्यान्तरं दर्शितमिति तत्रत्यशङ्कापरिहारोभयोपपादनार्थमियम् अन्नशब्दस्य देवतापरत्वोक्तिः॥ **इन्द्रियमात्रलयः प्रमाणान्तरदृष्टो न भूतलय इति।** भूतशब्दः प्रायपाठात् 'विशये प्रायदर्शनात् (जै. सू. अ. २ पा. ३ सू. १६) इति प्राणिवर्गपर इति भाष्ये यदा तु भूतश्रुतिर्महाभूतविषयेत्यतः प्राचीनग्रन्थेन दर्शितम्। यदा त्वित्यादिना तु प्राणशब्देन मुख्यार्थतया स्मारितो वायुस्तद्वर्ग्यमहाभूतरूढिमुन्मेषयति, तेन महाभूतपर इति दर्शितम्। द्वितीयपक्षे स्पष्टोऽर्थः। प्रथमपक्षे त्वयमर्थः। शरीरेन्द्रियसंपिण्डितश्चेतनो हि प्राणी, तत्रेन्द्रियाणां चेतनस्य च व्यापाराभावेन स्वापकाले तल्लयसद्भावेपि शरीरलयाभावान्न सर्वात्मना भूतलय इति। एवंचात्र सर्वशब्दः 'सर्वः पटो रक्तः' 'सर्वं वनं पुष्पितं' 'सर्वा पृथिवी वित्तस्य पूर्णा स्या'दित्यादाविवावयवकार्त्स्न्यपरः। **सर्वत्राप्यपूर्वत्वादिति। ननु**—'आर्षेयं वृणीत'इत्युत्पत्तिवाक्यावगतमेकत्वम्। तच्च 'चमसाध्वर्यून् वृणीत' इत्युत्पत्तिवाक्यावगतं बहुत्वमिवोपाद्यगतत्वाद्विवक्षितम्, अतस्तदपूर्वं न भवति। द्वित्वत्रित्वे त्वपूर्वत्वेऽपि विधातुमशक्ये; उत्पत्तिशिष्टैकत्वविरोधादिति—**चेन्न;** अपूर्वार्थविषयत्वात् "न चतुरो वृणीते"-इत्यादिलाघवमूलस्तुतिसमभिव्याहाराच्च वाक्यवैयर्थ्यपरिहारार्थमुत्पत्तिशिष्टमपि विभक्तितः प्रतीतं संख्याविशेषाविवक्षायामेक-

'प्राणबन्धनं हि सोम्य मनः' ( छा० ६।८।२ ) 'प्राणस्य प्राणम्' ( बृ० ४।४।१८ ) इति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते, वायुविकारे तु प्रसिद्धतरो लोकवेदयोः, अत इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवति संशयः । किं पुनरत्र युक्तम् ? वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तम् । तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम । ननु पूर्ववदिहापि तल्लिङ्गाद्ब्रह्मण एव ग्रहणं युक्तम् । इहापि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं कर्म प्रतीयते । न; मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात् । एवं ह्याम्नायते—'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते' (श० ब्रा० १०।३।३।६) इति । प्रत्यक्षं चैतत्स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते प्रबोधकाले च प्रादुर्भवन्तीति । इन्द्रियसारत्वाच्च भूतानामविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः । अपिचादित्योऽन्नं चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवतायाः प्राणस्यानन्तरं निर्दिश्येते । नच तयोर्ब्रह्मत्वमस्ति, तत्सामान्याच्च प्राणस्यापि न ब्रह्मत्वमित्येवं प्राप्ते सूत्रकार आह—'अत एव प्राणः' इति । 'तल्लिङ्गात्' इति पूर्वसूत्रे निर्दिष्टम् । अतएव तल्लिङ्गात्प्राणशब्दमपि परं ब्रह्म भवितुमर्हति । प्राणस्यापि हि ब्रह्मलिङ्गसंबन्धः श्रूयते—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते ( छा० १।११।५ ) इति प्राणनिमित्तौ सर्वेषां भूतानामुत्पत्तिप्रलयावुच्यमानौ प्राणस्य ब्रह्मतां गमयतः । ननूक्तं—मुख्यप्राणपरिग्रहेऽपि संवेशनोद्गमनदर्शनमविरुद्धं, स्वापप्रबोधयोर्दर्शनादिति । अत्रोच्यते—स्वापबोधयोरिन्द्रियाणामेव केवलानां प्राणाश्रयं संवेशनोद्गमनं दृश्यते, न सर्वेषां भूतानाम् । इहतु सेन्द्रियाणां सशरीराणां च जीवाविष्टानां भूतानां; 'सर्वाणि ह वा इमानि भूतानि' इति श्रुतेः । यदापि भूतश्रुतिर्महाभूतविषया परिगृह्यते, तदापि ब्रह्मलिङ्गत्वमविरुद्धम् । ननु सहापि विषयैरिन्द्रियाणां स्वापप्रबोधयोः प्राणेऽप्ययं प्राणाच्च प्रभवं शृणुमः—"यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति" ( कौ० ३।३ ) इति । तत्रापि तल्लिङ्गात्प्राणशब्दं ब्रह्मैव । यत्पुनरन्नादित्यसंनिधानात्प्राणस्याब्रह्मत्वमिति, तदयुक्तम्; वाक्यशेषबलेन प्राणशब्दस्य ब्रह्मविषयतायां प्रतीयमानायां संनिधानस्याकिंचित्करत्वात् । यत्पुनः प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वं, तदाकाश-

## भामती ।

वृणीते द्वौ वृणीते इतिवत्, नतु सर्वशब्दार्थः संकोचमर्हति । तस्मात्प्रस्तावभक्तिं प्राणशब्दाभिधेयब्रह्मदृष्ट्योपासीत, न वायुविकारदृष्ट्येति सिद्धम् । तथा चोपासकस्य प्राणप्राप्तिः कर्मसमृद्धिर्वा फलं भवतीति । **वाक्यशेषबलेनेति ।**

## वेदान्तकल्पतरुः ।

द्विधिः कल्प्यः । सर्वत्र च तत्कल्पने सकृच्छ्रुतस्य 'न चतुरो वृणीत' इत्याद्यर्थवादस्य प्रतिविध्यावृत्तिः स्यात्, सा मा भूदित्येकत्र विधिकल्पना । तत्रापि त्रीन् वृणीत इत्यत्रैव । तथा सति हि शते पञ्चाशदितिवद् द्वौ वृणीत इत्याद्यन्तर्भावादनुवादः स्यादिति षष्ठे ( जै. सू. अ. ६ पा. १ सू. ४३ ) राद्धान्तितमेवमत्रापीत्यर्थः । चिन्ताप्रयोजनमाह—**तस्मादिति । भाष्ये**—वाक्यशेषशब्दः एकवाक्यत्वपरः । इहहि स्ववाक्ये ब्रह्मलिङ्गं दृश्यते, अन्नादित्यसंनिधानं वाक्यान्तरसापेक्षमतः स्ववाक्यस्थलिङ्गं प्रबलमिति भाष्यार्थमाह—**वाक्यादिति ।** वाक्यस्य संनिधानादत्र प्राबल्यं निरूप्यत इति न भ्रमितव्यम्;

## कल्पतरुपरिमलः ।

वचनमुत्सर्गत इति शाब्दिकमर्यादयैकवचनप्रतीतत्वेनाविवक्षिततया नेतुं शक्यम् । एकत्वमुपमृद्य प्रातिपदिकार्थयोर्विधाने सति ताभ्यां बाधितस्यैकत्वस्याप्राप्त्या तत्प्राप्त्यर्थमेकत्वस्यापि विधानमित्युपपत्तेः । **प्रतिविध्यावृत्तिः स्यादिति ।** आद्ययोर्विध्योः स्तुत्याकाङ्क्षायां "या तेऽग्ने अयाशया रजाशयेति मन्त्रयो"र्विशेष्याद्याकाङ्क्षया "तनूर्वर्षिष्ठेत्यादे"रिव चतुरादिसंख्यानिवृत्तिप्रयुक्तलाघवमूलस्तुतेः अच्छिद्रेणेत्यादिवाक्यशेषस्य पवनक्रियान्वयाविशेषेणेव न्यूनसंख्याविध्यन्वयाविशेषेण चावृत्तिः स्यात् । सा चैकत्र विधिकल्पनेनानावृत्तिसंभवे न युक्तेति भावः । **इदमुपलक्षणम्**—एकवाक्यत्वसंभवे वाक्यभेदो न युक्त इत्यस्यापि ॥ **भाष्ये**—वाक्यशेषेणेत्यस्य ब्रह्मलिङ्गाम्नानस्थलनिर्देशमात्रार्थत्वेन प्रतीयमानस्य स्ववाक्यगतत्वेन लिङ्गप्राबल्यार्थतया किमिति टीकाकृता व्याख्यानं कृतं ? लिङ्गस्य सन्निधानतः स्वत एव प्राबल्यसत्त्वादित्याशङ्क्याह—**अन्नादित्यसन्निधानमिति ।** अन्नादित्यरूपाऽब्रह्मप्रायपाठः प्राणश्रुतिमुख्यतोपपादकतया श्रुत्यनुग्राहकत्वात् सदीक्षणगौणतापादकगौणेक्षणप्रायपाठतो मुख्यत्रितयलङ्घनापादकपुच्छशब्दोक्तावयवप्रायपाठतश्च प्रबलः । ततश्च प्रायपाठादब्रह्म-

शब्दस्यैव प्रतिविधेयम् । तस्मात्सिद्धं प्रस्तावदेवतायाः प्राणस्य ब्रह्मत्वम् । अत्र केचिदुदाहरन्ति—'प्राणस्य प्राणम्' 'प्राणबन्धनं हि सोम्य मनः' इति च । तदयुक्तम्; शब्दभेदात्प्रकरणाच्च संशयानुपपत्तेः । यथा पितुः पितेति प्रयोगेऽन्यः पिता षष्ठीनिर्दिष्टोऽन्यः प्रथमानिर्दिष्टः पितुः पितेति गम्यते, तद्वत् 'प्राणस्य प्राणम्' इति शब्दभेदात्प्रसिद्धात्प्राणादन्यः प्राणस्य प्राण इति निश्चीयते । नहि स एव तस्येति भेदनिर्देशार्हो भवति । यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि स एव तत्र प्रकरणी निर्दिष्ट इति गम्यते । यथा ज्योतिष्टोमाधिकारे—'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवति, तथा परस्य ब्रह्मणः प्रकरणे 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतः प्राणशब्दो वायुविकारमात्रं कथमवगमयेत् । अतः संशयाविषयत्वान्नैतदुदाहरणं युक्तम् । प्रस्तावदेवतायां तु प्राणे संशयपूर्वपक्षनिर्णया उपपादिताः ॥ २३ ॥ इति नवमं प्राणाधिकरणम्[1] ।

( १० अधिकरणम् ) **ज्योतिश्चरणाभिधानात् ॥ २४ ॥**

### भामती ।

वाक्यात्संनिधानं दुर्बलमित्यर्थः । उदाहरणान्तरं तु निगदव्याख्यानेन भाष्येण दूषितम् ॥ २३ ॥ **इति नवमं प्राणाधिकरणम् ॥**

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

### वेदान्तकल्पतरुः ।

अत्र ब्रह्मवाचिपदाभावेन वाक्यत्वाभावात् । 'कतमा सा देवतेति' चेतनवाचिदेवताशब्दोपक्रमात् सैषा देवतेत्युपसंहाराच्च चेतनपरं वाक्यं न वायुविकारपरम् । अथ प्राणाभिमानिनी देवता लक्ष्येत, तर्हि तवापि समः श्रुतित्यागः, मम तु वाक्यशेषः साक्षीत्यभ्युच्चयः ॥ चाक्रायणः किल ऋषिर्धनाय राज्ञो यज्ञमभिगम्य ज्ञानवैभवमात्मनः प्रकटयितुकामः प्रस्तोतारमुवाच हे प्रस्तोतः या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् मम विदुषः संनिधौ प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । स भीतः पप्रच्छ कतमा सेति, प्रत्युक्तिः प्राण इति । **प्राणमभिलक्ष्यसंविशन्ति** लयकाले उत्पत्तिकाले **उज्जिहते** उद्गच्छन्ति ॥ **इति नवमं प्राणाधिकरणम्[2] ॥**

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

### कल्पतरुपरिमलः ।

रूपः प्राणो वायुविकार इति निश्चये सति तदधिकरणकसंवेशनतदपादानकोद्गमनरूपसमभिव्याहृतक्रियान्वययोग्येन्द्रियावस्थापन्नभूतपरतया सङ्कोचः स्यात् । अन्नादित्यवाक्यगतभूतशब्दयोः समभिव्याहृतगानाभ्यवहारक्रियान्वययोग्यभूतपरतया सङ्कोचदर्शनेन तत्प्रायपाठादन्नादित्यवाक्यगतसन्निधानद्वयावलम्बनशङ्कानिराकरणार्थतया स्ववाक्यगतत्वेन शीघ्रोपस्थितिकस्य सर्वभूतोत्पत्तिलयकारणत्वस्य विलम्बितोपस्थितिकवाक्यान्तरगतसन्निधानानुसारेण सङ्कोचकल्पनं न युक्तम् । अतएवाकाशवाक्येऽपि स्वरप्राणाद्यब्रह्मप्रायपाठेन तस्य न सङ्कोचकल्पनमिति परिहारवाचोयुक्तेर्भाष्यारूढत्वप्रदर्शनार्थमेवं व्याख्यातमिति भावः । यद्यप्यत्र भूतशब्दस्यान्नादित्यवाक्यगतभूतशब्दसन्निधानात्प्राणिपरत्वेऽपि वाक्यशेषार्थस्य ब्रह्मलिङ्गत्वमविरुद्धं; तथापि भूतशब्दशक्तिपर्यालोचनायां रूढ्योः परस्परकलहेन योगोन्मेषात् कार्यसामान्यमेवार्थो भवतीत्याकाशवाक्यशेषवदस्यापि वाक्यशेषस्य सकलकार्यकारणत्वमेव ब्रह्मलिङ्गमर्थ इति द्रष्टव्यम् ॥ **ब्रह्मवाचिपदाभावेनेति । ननु** ब्रह्मवाचिपदसत्त्वे श्रुतिः स्याद्, न वाक्यम् । **उच्यते**; विषयवाक्ये विशेष्यपदं चेद् ब्रह्मवाचि, तदा श्रुतिः । विशेषणपदं चेत्, तदा ब्रह्मपरत्वेन निर्णिनीषितस्य विशेष्यपदस्य च समभिव्याहाररूपं वाक्यं प्रमाणमिति व्यवस्था । अत एवाग्रिमाधिकरणन्यायनिर्णये गायत्रीपदस्य ब्रह्मपरत्वनिर्णायकं यद्वै तद्ब्रह्मेत्येतद्वाक्यं प्रमाणत्वेन व्यवहृतम् । **ननु** मा भूदादित्यसन्निधानाद् अब्रह्म सन्प्राणो वायुविकारः, भूतानि च तत्संवेशनोद्गमनयोग्यानीन्द्रियाणीति निर्णयः, प्राणश्रुतित एव स्यात्;

---

१ **ज्योतिश्चरणाभिधानात्**—यच्छब्दस्य समानाधिकृतशब्दस्वारस्यमतिलंघ्य प्रकृतपरामर्शित्वस्यैव युक्तत्वात्, यच्छब्दयोगादनुवाद्यस्य द्युसंबन्धिनः प्राप्त्यपेक्षत्वाच्च, यदतःपर इत्यस्य त्रिपाद्ब्रह्मपरत्वमवलम्ब्य ज्योतिःशब्दस्य तत्परत्वोपपादनमेव युक्तमिति सिद्धान्ताशयः । तत्र चरणाभिधानादित्यनेन पादत्रयरूपस्य ब्रह्मणो यच्छब्देनाभिधानादित्यर्थविवक्षणेन प्रथमयुक्तिः, पादत्रयरूपस्य द्युसंबन्धिनोभिधानादित्यर्थविवक्षणेन द्वितीययुक्तिः, ज्योतिश्शब्देन त्रिपाद्ब्रह्माभिधानादित्यर्थविवक्षणेन तृतीययुक्तिश्च संगृहीता । व्यपदेशपदे प्रयोक्तव्येऽभिधानपदं तृतीययोजनायांगमकमिति मन्तव्यम्' इति **न्यायरक्षामणिः ॥**

२ तत्र सूत्रम् १-अत एव प्राणः ॥ २३ ॥

इदमामनन्ति—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' (छा० ३।१३।७) इति। तत्र संशयः—किमिह ज्योतिःशब्देनादित्यादि ज्योतिरभिधीयते, किंवा परमात्मेति। अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम्, इह तु तल्लिङ्गमेवास्ति नास्तीति विचार्यते। किं तावत्प्राप्तम्? आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यत इति। कुतः? प्रसिद्धेः। तमो ज्योति-

## भामती।

**इदमामनन्ति**—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इति। यज्ज्योतिरतो दिवो द्युलोकात्परं दीप्यते प्रकाशते विश्वतःपृष्ठेषु विश्वेषामुपरि। असंकुचद्वृत्तिरयं विश्वशब्दोऽनवयवत्वेन संसारमण्डलं ब्रूत इति दर्शयितुमाह—**सर्वतःपृष्ठेषूत्तमेषु**। नचेदमुत्तममात्रं अपितु सर्वोत्तममित्याह—**अनुत्तमेषु**। नास्त्येभ्योऽन्य उत्तम इत्यर्थः। 'इदं वाव तद्यदिदमस्मिन्पुरुषेऽन्तर्ज्योतिः' त्वग्ग्राह्येण शारीरेणोष्मणा, श्रोत्रग्राह्येण च पिहितकर्णेन पुंसा घोषेण लिङ्गेनानुमीयते। तत्र शारीरस्योष्मणस्त्वचा दर्शनं दृष्टिः, घोषस्य च श्रवणं श्रुतिः, तयोश्च दृष्टिश्रुती ज्योतिष एव, तल्लिङ्गेन तदनुमानादिति। **अत्रसंशयः**—किं ज्योतिःशब्दः तेजः, उत ब्रह्मेति। किं तावत्प्राप्तं, तेज इति। कुतः? गौणमुख्यग्रहणविषये मुख्यग्रहणस्य **औत्सर्गिकत्वाद्वाक्यस्थतेजोलिङ्गोपलम्भनात्। वाक्यान्तरेणानियमात्तदर्थाप्रतिसंधितः॥** बलवद्बाधकोपनिपातेन खल्वाकाशप्राणशब्दौ मुख्यार्थत्वात्प्रच्याव्यान्यत्र प्रतिष्ठापितौ। तदिह ज्योतिष्पदस्य मुख्यतेजोवचनत्वे बाधकस्तावत्स्ववाक्यशेषो नास्ति। प्रत्युत तेजोलिङ्गमेव 'दीप्यते' इति कौक्षेयज्योतिःसारूप्यं च चक्षुष्यो रूपवान् श्रुतो विश्रुतो भवतीत्यल्पफलत्वं च स्ववाक्ये श्रूयते। न जातु ज्वलनापरनामा दीप्तिर्विना तेजो ब्रह्मणि संभवति। न कौक्षेयज्योतिःसारूप्यमृते बाह्यात्तेजसो ब्रह्मण्यस्ति। नचौष्ण्यघोषलिङ्गदर्शनश्रवणमुदर्यात्तेजसोऽन्यत्र ब्रह्मण्युपपद्यते। नच महाफलं ब्रह्मोपासनमणीयसे फलाय कल्पते। उदर्ये तु तेजस्यध्यस्य बाह्यं तेज उपासनमेतत् फलानुरूपं युज्यते। तदेतत्तेजोलिङ्गम्। एतदुपोद्बलनाय च निरस्तमपि मर्यादाधारवत्त्वमुपन्यस्तं; इह तन्निरासकारणाभावात्।

## वेदान्तकल्पतरुः।

यदिदमित्यनुभूयमानत्वमुक्तं तद्व्याचष्टे—**त्वग्ग्राह्येणेति**। तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे स्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिधाय निनदमिव शृणोतीति वाक्यं व्याचष्टे—**तत्र शारीरस्येति**। **नन्वौ**ष्ण्यघोषोपलब्ध्योः कथं तस्येति ज्योतिःसंबन्धनिर्देशोऽत आह—**तल्लिङ्गेनेति**। औष्ण्यघोषलिङ्गेनेत्यर्थः। गमकसंबन्धिनोर्गम्यसंबन्धोपचार इत्यर्थः। श्लोकं पूरयति—**गौणेति**। **नन्वौ**त्सर्गिकोऽपि मुख्यसंप्रत्यय आकाशप्राणशब्दवदपोद्यतामत आह—**वाक्यस्थेति**। तत्रहि वाक्यशेषस्थब्रह्मलिङ्गाद्गौणता, अत्र तु वाक्ये ब्रह्मलिङ्गं नोपलभ्यते, प्रत्युत तेजोलिङ्गमेवोपलभ्यते, अत उत्सर्गोऽनपोदित इत्यर्थः। अनेन सङ्गतिरुक्ता। **ननु** पूर्वत्र गायत्रीवाक्ये तावानस्येति ब्रह्मलिङ्गमस्त्यत आह—**वाक्यान्तरेणेति**। नहि वाक्यान्तरस्थाल्लिङ्गात्स्ववाक्यस्था श्रुतिर्मुख्यार्थात्प्रच्यावयितुं शक्येत्यर्थः। अभ्युपेत्य वाक्यान्तरेण नियममाह—**तदर्थेति**। दिवि दिव इति च सप्तमीपञ्चमीभ्यां प्रत्यभिज्ञानविच्छेदान्न वाक्यान्तरार्थ इह ग्राह्य इत्यर्थः। वाक्यस्थेत्येतद्व्याचष्टे—**बलवदिति**। तेजोलिङ्गमेव दर्शयति—**दीप्यत इत्यादिना**। किमुपोद्बलनाय निरासार्थं वोपन्यस्तमत आह—**इह तन्निरासेति**। **निरासकारणं** हि प्राप्तिः। नचान्तस्तद्धर्मोपदेशात् (ब्र. अ. १ पा. १ सू. २०) इति निरस्तस्यात्र प्राप्तिरित्यर्थः। भवत्वेकदेशस्य मर्यादा न समस्तस्येत्याशङ्क्याह—

## कल्पतरुपरिमलः।

आकाशवाक्यगतानन्तत्ववदुपक्रमोपसंहाराभ्यां तात्पर्यविषयत्वेन निश्चितस्य प्राणश्रुतिमुख्यार्थप्रच्यावकस्य लिङ्गस्याभावादित्याशङ्क्य तथाभूतं लिङ्गमाह—**कतमेति**। टीकोपन्यस्तमुक्तम्। लिङ्गोपपादकं पूर्वपक्षिणः कक्षान्तरमुद्भाव्य दूषयति—**अथेति॥ इति नवमं प्राणाधिकरणम्॥**

# ज्योतिश्चरणाभिधानात्॥ २४॥

तन्निरासकारणाभावादित्येतदयुक्तम्; सार्वात्म्यादिवदिह ब्रह्मलिङ्गाश्रवणेऽप्युपासनावाक्यत्वेनाधारमर्यादाकल्पनोपपत्तेस्तन्निरासकहेतोस्तत्र व्युत्पादितस्यात्राप्यविशिष्टत्वादित्याशङ्क्य तद्वाक्यमन्यथा व्याख्यातुं तदानुगुण्येनावतारयति—**किमुपोद्बलनायेति। भवत्वेकदेशस्येति**। समस्तं ते जगदुपास्यं, तस्य द्युमर्यादा न सिद्ध्येति शङ्कितुर्हृदयम्। एकैकामित्यादिप्रतीकग्रहणं तेजःप्रभृतीत्यादि तद्व्याख्यानमिति प्रतिभाति तदयुक्तम्; भाष्ये श्रुतौ वा तथाभूतप्रतीकाभावादुत्तरग्रन्थस्य तद्व्याख्यानत्वासंभवाच्चेत्याशङ्क्य भाष्योदाहृतश्रुतिगतपदयोजनार्थत्वेनैकैकामित्यादिकं भिन्नवाक्यतया व्याचष्टे—

रिति हीमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ । चक्षुर्वृत्तेर्निरोधकं शार्वरादिकं तम उच्यते । तस्या एवानुग्राहकमादित्यादिकं ज्योतिः । तथा 'दीप्यते' इतीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा । नहि रूपादिहीनं ब्रह्म 'दीप्यते' इति मुख्यां श्रुतिमर्हति । द्युमर्यादत्वश्रुतेश्च। नहि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता, कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात् । 'परोदिवो ज्योतिः' इति च ब्राह्मणम् । ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वाद्द्युमर्यादावत्त्वमसमञ्जसम् । अस्तु तर्ह्यत्रिवृत्कृतं तेजः प्रथमजम् । न; अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति । इदमेव प्रयोजनं यदुपास्यत्वमिति चेत्, न; प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात्, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा० ६।३।३) इति चाविशेषश्रुतेः । नचात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम् । अस्तु तर्हि त्रिवृत्कृतमेव तत्तेजो ज्योतिःशब्दम् । ननूक्तमर्वागपि दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति । नैष दोषः; सर्वत्रापि गम्यमानस्य ज्योतिषः 'परो दिवः' इत्युपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते, नतु निष्प्रदेशस्यापि ब्रह्मणः प्रदेशविशेषकल्पना भागिनी । 'सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु' इति चाधारबहुत्वश्रुतिः कार्ये ज्योतिष्युपपद्यतेतराम् । 'इदं वाव तद्यदिदमस्मि-

## भामती ।

नच मर्यादावत्त्वं तेजोराशेर्न संभवति; तस्य सौर्यादेः सावयवत्वेन तदेकदेशमर्यादासंभवात्, तस्य चोपास्यत्वेन विधानात्, ब्रह्मणस्त्वनवयवस्यावयवोपासनानुपपत्तेः, अवयवकल्पनायाश्च सत्यां गतावनवकल्पनात् । नच—'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति ब्रह्मप्रतिपादकं वाक्यान्तरं 'यदतः परो दिवो ज्योतिः' इति ज्योतिःशब्दं ब्रह्मणि व्यवस्थापयतीति—युक्तम्; नहि संनिधानमात्राद्वाक्यान्तरेण वाक्यान्तरगता श्रुतिः शक्या मुख्यार्थाच्च्यावयितुम् । नच वाक्यान्तरेऽधिकरणत्वेन द्यौः श्रुता दिव इति मर्यादाश्रुतौ शक्या प्रत्यभिज्ञातुम् । अपिच वाक्यान्तरस्यापि ब्रह्मार्थत्वं प्रसाध्यमेव, नाद्यापि सिध्यति, तत्कथं तेन नियन्तुं ब्रह्मपरतया 'यदतः परः' इति वाक्यं शक्यम् । तस्मात्तेज एव ज्योतिर्न ब्रह्मेति प्राप्तम् । तेजःकथनप्रस्तावे तमःकथनं प्रतिपक्षोपन्यासेन प्रतिपक्षान्तरे दृढा प्रतीतिर्भवतीत्येतदर्थम् । **चक्षुर्वृत्तेर्निरोधकमिति** । अर्थावरकत्वेन । आक्षेप्ताह—**ननु कार्यस्यापीति** । समाधातैकदेशी ब्रूते—**अस्तु तर्हीति** । यत्तेजोऽबन्नाभ्यामसंपृक्तं तदत्रिवृत्कृतमुच्यते । आक्षेप्ता दूषयति—**नेति** । नहि तत्कचिदप्युपयुज्यते; सर्वास्वर्थक्रियासु त्रिवृत्कृतस्यैवोपयोगादित्यर्थः । एकदेशिनः शङ्कामाह—**इदमेवेति** । आक्षेप्ता निराकरोति— **न प्रयोजनान्तरेति** । 'एकैकां त्रिवृतं करवाणि' इति तेजःप्रभृत्युपासनामात्रविषया श्रुतिर्न संकोचयितुं युक्तेत्यर्थः । एवमेकदेशिनि दूषिते परमसमाधाता पूर्वपक्षी ब्रूते—**अस्तु तर्हि त्रिवृत्कृतमेवेति** । **भागिनी** युक्ता । यद्यप्याधारबहुत्वश्रुतिर्ब्रह्मण्यपि कल्पितोपाधिनिबन्धना कथंचिदुपपद्यते; तथापि यथा कार्ये ज्योतिष्यतिशयेनोपपद्यते न तथात्रेत्यत उक्तम्—**उपपद्यतेतरामिति** । **प्राकृतं** प्रकृतेर्जातं, कार्यमिति यावत् । एवं प्राप्त उच्यते—**सर्वनामप्रसिद्धार्थं प्रसाध्यार्थविघातकृत् । प्रसिद्ध्यपेक्षि सत्पूर्ववाक्यस्थमपकर्षति ॥ तद्बलात्तेन नेयानि तेजोलिङ्गान्यपि ध्रुवम् । ब्रह्मण्येव प्रधानं हि ब्रह्मच्छन्दो न तत्र तु ॥** औत्सर्गिकं तावद्यत्प्रसिद्धार्थानुवादकत्वं यद्विधिविभक्तिमप्यपूर्वार्थावबोधनस्वभावात्प्रच्यावयति । यथा 'यस्याहिताग्नेरग्निर्गृहान्दहेत्' 'यस्योभयं हविरार्तिमार्च्छेत्'

## वेदान्तकल्पतरुः ।

**तस्यचेति** । न समस्तं तेज उपास्यं, किं त्ववयव इत्यर्थः । वाक्यान्तरेणेत्येतद्व्याख्याति—**नच पादोऽस्येति** । तदर्थाप्रतिसन्धित इत्येतद्व्याचष्टे—**नच वाक्यान्तरे इति** । अस्यैव व्याख्यानान्तरमाह—**अपिचेति** । गायत्र्याश्छन्दोवचनत्वेन सन्देहाद्वाक्यान्तरस्य ब्रह्मार्थत्वं साध्यं न सिद्धम् । अप्रतिसन्धित इत्यस्याप्यनिश्चयादित्यर्थः । तेन वाक्यान्तरेण यदतः पर इति वाक्यं ब्रह्मपरतया नियन्तुं कथं शक्यमिति योजना । तमो ज्योतिरिति भाष्ये तमोग्रहणप्रयोजनमाह—**तेज इति । अर्थावरकत्वेनेति** । अनुद्भूतस्पर्शत्वेन तमसो नयनरश्मिनिर्गमनप्रतिबन्धकत्वायोगादर्थप्रकाशनप्रतिबन्धकत्वेन निरोधकत्वं तमस इत्यर्थः । सिद्धान्त्येव पूर्वपक्षाक्षेपक **आक्षेप्ता । एकदेशी** पूर्वपक्ष्येकदेशी । न प्रयोजनान्तरेति भाष्यस्यायमर्थः । प्राणिकर्मनिमित्ता सृष्टिः सप्रयोजना तत्रात्रिवृत्कृतं तेज उपास्त्यर्थं सृष्टमिति न शक्यं वक्तुं; प्रयोजनान्तरप्रयुक्तस्यैवादित्यादिवदुपास्यत्वसंभवे तस्य सृष्टिं प्रत्यप्रयोजकत्वाद्वाजिनस्येव दध्यानयनं प्रतीति । तासां त्रिवृतं त्रिवृतमिति भाष्यं व्याचष्टे—**एकैकामिति** । तेजआदि भूतं प्रति सामान्यप्रवृत्ता त्रिवृत्करणश्रुतिरुपास्यमानतेजोविषयत्वेन संकोचयितुं न युक्ता; ततोन्यत्र नेतुमयुक्तेत्यर्थः । तेजआदीनि परोक्षत्वसाम्याद्देवताः । **त्रिवृतं** त्रिवलितम् ।

## भामती ।

इति । यत्र पुनस्तत्प्रसिद्धमन्यतो न कथंचिदाप्यते, तत्र वचनानि त्वपूर्वत्वादिति सर्वनाम्नः प्रसिद्धार्थत्वं बलादपनीयते । यथा 'यदाग्नेयोऽष्टाकपालो भवति' इति । तदिह 'यदतः परो दिवो ज्योतिः' इति यच्छब्दसामर्थ्यात् द्युमर्यादेनापि ज्योतिषा प्रसिद्धेन भवितव्यम् । नच तस्य प्रमाणान्तरतः प्रसिद्धिरस्ति । पूर्ववाक्ये च द्युसंबन्धि त्रिपाद्ब्रह्मप्रसिद्धमिति प्रसिद्ध्यपेक्षायां तदेव संबध्यते । नच प्रधानस्य प्रातिपदिकार्थस्य तत्त्वेन प्रत्यभिज्ञाने तद्विशेषणस्य विभक्त्यर्थस्यान्यतामात्रेणान्यता युक्ता । एवंच तद्वाक्यस्थानि तेजोलिङ्गान्यसमञ्जसानीति ब्रह्मण्येव गमयितव्यानि, गमितानि च

## वेदान्तकल्पतरुः ।

न वयं वाक्यान्तरस्थलिङ्गात्तेजःश्रुतिं बाधामहे, अपितु तदुपबृंहितश्रुत्येत्याह—**सर्वनामेति । प्रसिद्धं** प्रज्ञातम् । **प्रसाध्यं** नाद्यापि ज्ञातम् । यदा यच्छब्दः प्रज्ञातवचनस्तदा गायत्रीवाक्यनिर्दिष्टं ब्रह्म परामृशतीत्याह—**प्रसिद्धीति । तद्बलादिति ।** यच्छब्दश्रुतिबलादित्यर्थः । **तेनेति ।** येन पूर्ववाक्यस्थमपकर्षति तेनेत्यर्थः । **ननु** दिवि दिव इति च रूपभेदान्न पूर्ववाक्यस्थब्रह्मण इह प्रत्यभिज्ञा अतः सर्वनाम तं न परामृशेदत आह—**प्रधानं हीति ।** प्रातिपदिकार्थ इत्यध्याहार्यम् । प्रातिपदिकार्थो द्यौस्तावदुभयत्र समा, साहि प्रधानं, गुणस्तु विभक्त्यर्थः । तस्माद्गुणे त्वन्याय्यकल्पनेति विभक्तिवैरूप्यं नेयमित्यर्थः । यदवादि छन्दोभिधानात्सन्दिग्धं प्राचि वाक्ये ब्रह्मेति तत्राह—**ब्रह्मेति ।** तत्र गायत्रीवाक्ये त्रिपाद् ब्रह्म नतु च्छन्द इत्यर्थः । "यस्याहिताग्नेरग्निर्गृहान् दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदि"त्यत्र दहेदिति विधिविभक्तिः प्रसिद्धार्थयच्छब्दोपहता गृहदाहलक्षणनिमित्तपरा । आच्छैदिति च विधिविभक्तिः स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदिति विधास्यमाननिर्वापनिमित्तं हविरार्तिमनुवदति । **उभयं** दधिपयसी । **वचनानि त्विति ।** ज्योतिष्टोमगतसोमेषु शेषभक्षो विध्यभावान्न विद्यत इति प्राप्ते सर्वतः परिहारमाश्विनं भक्षयति तस्मात्सर्वा दिशः शृणोतीत्याद्यर्थवादा अप्राप्तत्वाद्भक्षानुवादायोगाद्विधायकानि वचनानीत्युक्तं तृतीये । एवं प्राप्त्यभावे प्रसिद्धार्थत्वं सर्वनाम्नोऽपनीयत इति यदाग्नेय इति तुल्यन्यायत्वादुदाहृतम् । कार्यज्योतिरुपलक्षित इति भाष्योक्तलक्षणायां संबन्धमाह—**ब्रह्मविकार इति । ननु** वाक्यस्थज्योतिर्लाभे प्रकृतहानं न दोषोत आह—**प्रसिध्यपेक्षायामिति ।** यच्छ्रुतेर्विषयगवेषणे प्रकरणाप्राप्तमपि प्रसिद्धं ग्राह्यं, न स्ववाक्यगतमपि प्रस्तोष्यमाणमपूर्वम्, असिद्धेरित्यर्थः । शास्त्रवशादन्यदप्यालम्बनं प्रतीकम् ।

## कल्पतरुपरिमलः ।

**तासामिति । गुणस्तु विभक्त्यर्थ इति ।** प्रत्ययार्थप्राधान्यप्रसिद्धिः कृत्तद्धितार्थविषयेति भावः । **न स्ववाक्यगतमपि प्रस्तोष्यमाणमिति ।** स्ववाक्यगतत्वरूपप्रत्यासत्त्यपेक्षयापि सर्वनाम्नामौत्सर्गिकी प्रसिद्धार्थपरत्वव्युत्पत्तिर्बलवती । अतएव "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति" श्रुतावामिक्षापदवाच्यं पयसोऽर्थान्तरं दधिपयःसंसर्गजन्यं मधुराम्लत्वेन तदुभयविलक्षणं द्रव्यमभ्युपेयं; पयो दध्यामिक्षेति व्यपदेशभेदादिति तस्यैव द्रव्यान्तरस्य वैश्वदेवयागद्रव्यत्वे आमिक्षापदसमानाधिकृततत्पदस्यापि तद्द्रव्यपरत्वे च प्राप्ते सर्वनाम्नः प्रकृतपरत्वस्वाभाव्यात्तत्पदं द्विकर्मिकामानयनक्रियां प्रति प्रधानकर्मतया दध्यानयनाधिकरणत्वेन निर्दिष्टं पयः परामृशतीति पय एव यागद्रव्यम् । तत्पदे स्त्रीलिङ्गमामिक्षापदसामानाधिकरण्यकृतम् । आमिक्षापदमस्मादेव वैदिकव्यवहारादम्लद्रव्यघनीभूतपयोवाचकम् । अम्लरसो न यागद्रव्यगतः, किंतु तत्संस्कारकद्रव्यगत इति पयोरूपामिक्षाप्रयुक्तमेव दध्यानयनं न वाजिनप्रयुक्तमपीति निर्णीतं चतुर्थे ( जै. अ. ४ पा. १ सू. २२–२४ )। दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति चित्रायागविधौ दध्यादिसप्तद्रव्यमेलनरूपसंसृष्टैकद्रव्यक एको यागस्तत्पदं च संसृष्टद्रव्यपरमिति प्राप्ते तत्पदं प्रकृतपरामर्शित्वस्वाभाव्यादसंसृष्टदध्यादिसप्तद्रव्यपरमिति दध्यादिद्रव्यकाः सप्त यागाः । संसृष्टपदं यागभेदेप्येकदेवत्यतया सान्नाय्यवद्दध्यादीनां सह प्रक्षेपे संसर्गसत्त्वादनुवादकम् । नपुंसकैकवचनं "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या"मिति व्याकरणानुशिष्टमुपपाद्यमिति निर्णीतं टुप्टीकायाम् अष्टमे द्वादशे च । **ननु**—यत्र सर्वनाम्नः प्रस्तुतपरत्वं न संभवति, तत्र प्रस्तोष्यमाणपरत्वमपि द्वितीये संज्ञाधिकरणे ( जै. अ. २ पा. २ सू. २२ ) व्युत्पादितम् । तत्र हि"अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेत" इत्यत्र सर्वनाम्नः प्रकृतज्योतिष्टोमपरत्वं न संभवति; ज्योतिर्ज्योतिष्टोम इति नामभेदस्यार्थान्तरपरत्वस्वारस्यात्, अथेत्यनेनाधिकारार्थेन प्रकरणविच्छेदावगमात्, प्रकृते ज्योतिष्टोमे एवास्य वाक्यस्य सहस्रदक्षिणालक्षणगुणविधानार्थतायामेतेनेत्यादिमात्रस्य पर्याप्ततया अथैष ज्योतिरित्यनुवादवैयर्थ्याच्च । तस्माद् ज्योतिर्नामके सहस्रदक्षिणे प्रस्तोष्यमाणे यागान्तर एव सर्वनाम्नो वृत्तिरभ्युपेयेति निरूपितम्, तदिहापि ज्योतिः पुरुषः इति संज्ञाभेदः । अथशब्देन प्रकरणविच्छेदावगमः । अस्य वाक्यस्य प्रकृतमेव त्रिपाद् ब्रह्मानूद्य तस्य कौक्षेयज्योतिष्युपासनाविधानार्थतायां "इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योति"रित्येतावत एव पर्याप्ततया "अथ यदतः परो दिवः" इत्याद्यनुवादवैयर्थ्यप्रसङ्गश्चेति समान एव

## कल्पतरुपरिमलः ।

संज्ञाधिकरणन्यायः । **किंच** "अथ यदतः परः" इत्यादियदुपबन्धयुक्तं वाक्यं न केवलं यत्पदनिर्दिष्टस्य द्युसंबन्धमात्रं कीर्तयति, येन द्युसंबन्धिप्रकृतसद्भावमात्रोपपदने चारितार्थ्यं स्यात्, किंतु दिवः परेषु लोकविशेषेषु दीप्यमानत्वमपि कीर्तयति । नच तदपि तावानस्येति ऋचा प्राप्तम्; अतो यदुपबन्धयुक्तवाक्यनिर्दिष्टयावद्विशेषविशिष्टप्रसिद्धेर्यत्पदेनानुवदितुमपेक्षितत्वात्तस्याश्चासंभवादत्र यत्पदस्य प्रस्तोष्यमाणपरत्वमेव युक्तमिति—**चेत्, उच्यते;** दिवः पर इत्यत्र द्युशब्दः स्वर्लोकपर्यायः स्वर्लोकश्चात्र भूर्भुवःस्वरिति लोकत्रयपक्षानुसारेण भूमिसूर्यान्तररूपाद् भुवर्लोकादुपरितनसत्यलोकान्तो विवक्षितः, तस्योपरिभागरूपाः सत्यलोकान्तर्गतहिरण्यगर्भादिभोगभूमिभेदाः । तेषु ब्रह्मलोकेषु परा य एव ते वसन्तीत्यादिश्रुतिप्रसिद्धाः । तेषु सर्वस्मादपि लोकादुपरि स्थितेषु सर्वोत्तमेषु लोकेषु हिरण्यगर्भादिमूर्त्यभिव्यक्तं ब्रह्म दिवः परमित्यनुत्तमेषूत्तमेषु लोकेषु स्थितमिति चानूद्यते । हिरण्यगर्भादिमूर्तिप्रभावच्छेदेन दीप्यत इत्यप्यनूद्यते । एतावद्यद्यपि त्रिपादस्यामृतं दिवीत्यतो न प्राप्तं; तथापि तस्य दिवमनूद्य तत्र स्थितिविधानाय द्युस्वरूपावगत्यर्थं वचनान्तरमुखनिरीक्षणावश्यंभावेन ततः सूर्यादिसत्यलोकोपरि भूम्यन्तद्युस्वरूपादिप्राप्तिः । **अथवा**—मा भूत्पुरोवादान्तरं, त्रिपादस्यामृतं दिवीत्ययमेव द्युरूपाधिकरणविशेषविशिष्टत्रिपाद्ब्रह्मप्रतिपादको यदतः पर इत्यादेः पुरोवादोऽस्तु । तत्र किं द्युशब्द आकाशपरः स्वर्लोकपरो वा । **द्वितीयेऽपि** ध्रुवलोकान्तपरः सत्यलोकान्तपरो वा । दिवीति सप्तमी यत्किंचिद्भागावच्छेदेनाधिकरणत्वपरा उपरिभागावच्छेदेन वेति संभवदनेकतात्पर्यस्य पुरोवादस्यास्मादेवानुवादादर्थविशेषव्यवस्थितिरस्तु । अस्ति हि पुरोवादस्यानुवादवशादर्थविशेषव्यवस्थितिः । **तथा हि**—"यज्ञायज्ञीयेन स्तुवीते"ति प्रकृत्य "न गिरा गिरेति ब्रूयाद् यद्गिरा गिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेदैरं कृत्वोद्गेय"मिति यज्ञायज्ञीयसाम्नः ऋचि "गिरा गिरा च दक्षसे" इत्यत्र गिरापदप्रतिषेध इरापदविधिश्च श्रूयते । तत्र गिरापदप्रतिषेधोऽनुवादः[1]; तस्यापि विधाने वाक्यभेदापत्तेः । इरापदस्य प्रकरणेन यज्ञायज्ञीयसंबन्धे दृष्टार्थस्य तस्य यज्ञायज्ञीयगतकिंचित्पदकार्यावगत्यवश्यंभावे चावगतेः कस्य पदस्य स्थाने तदित्याकाङ्क्षायां गिरापदप्रतिषेधानुवादसामर्थ्यात् तस्य स्थाने इत्यवसीयत इति नवमे निर्णीतम् ( जै. अ. १ पा. १ सू. ५० ) । तथेहापि भविष्यति । एवमुपासनोपयुक्तार्थविशेषनिर्णयोपयोगित्वान्नानुवादवैफल्यशङ्कापि । संज्ञाभेदेनार्थभेदशङ्का तु न प्रवर्तते; ज्योतिःशब्दस्य प्रकाशवाचिनस्त्रिपाद्रूपेण प्रकृते ब्रह्मणि वाचकतयैव वृत्तिसंभवात्, श्रुत्यन्तरेषु ब्रह्मणि प्राचुर्येण दृष्टप्रयोगत्वाच्च । अथशब्देन प्रकरणविच्छेदशङ्कापि नास्ति; तस्य पूर्वप्रकृतापेक्षवाचित्वोपपत्तेः । तेन पूर्वोपासनान्वितब्रह्मगुणानां ज्योतिरुपासनायामप्यन्वयसिद्ध्या तद्वाचित्वस्यात्र सफलत्वात्, प्रकृतं ब्रह्माऽविहायैव तस्योपासनान्तरारम्भार्थत्वसंभवेनाधिकारार्थत्वेऽप्यविरोधाच्च ॥ **शेषभक्षो विध्यभावान्न विद्यत इति । ननु** "सर्वतः परिहारमाश्विन"मित्यादिषु सार्थवादेषु प्रत्यक्षवचनेषु जाग्रत्सु कथं विध्यभावपूर्वपक्षोत्थानम् । इत्थम् । 'आश्विनं गृह्णाती'त्यादिविधिभिस्तत्तद्देवतोद्देशेन गृहीतः सोमरसः कृत्स्नोऽप्युपांशुयाज्यावद्धोतव्य इति तत्र शेषाभावाद्धुतशेषस्येदं न भक्षणविधानं, किं त्वाश्विनग्रहादिधर्मैकसोमगुणविशिष्टार्थकर्मरूपभक्षणविधानं, कथंचिच्छेषसद्भावसमर्थनेऽपि रागप्राप्तभक्षणानुवादेन गुणमात्रस्य विधानं, न भक्षणस्यापि; विशिष्टविधिगौरवापत्तेरिति पूर्वपक्षी मन्यते । अल्पं जुहोतीति वचनसामर्थ्यादस्ति तावच्छेषः । न चास्य विधायकत्वे संभवति पात्राल्पत्वप्रयुक्ताल्पत्वानुवादकतया वैयर्थ्याश्रयणं युक्तं; तद्भक्षणस्याप्राप्तस्य गुणविशेषविशिष्टस्य विधानेन वचनानां चारितार्थ्ये संभवति नाश्विनादिधर्मैकसोमगुणविशिष्टार्थकर्मरूपभक्षणविधिगौरवसमाश्रयणं युक्तम् । नचात्यन्तलाघवार्थं गुणमात्रविधानमपि युक्तम्; भक्षणस्याप्राप्तत्वाद्, रागतः पक्षप्राप्तस्य नित्यवदाम्नातगुणाश्रयत्वायोगादिति सिद्धान्तः ॥ "सर्वतः परिहारमाश्विनं भक्षयति तस्मात् सर्वतः श्रोत्रेण शृणोती"त्यस्यायमर्थः । आश्विनं **सर्वतःपरिहारं** शिरः परितो भ्रमयित्वा **भक्षयति** तस्मा**त्सर्वतः** सर्वासु दिक्षु स्थितं शब्दं शृणोतीति । "उपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वे"ति मन्त्रे ह्यश्विनोः श्रोत्रसंरक्षकत्वमाम्नातम् । तदीयसोमशेषस्य च 'श्रोत्राय मे वर्चोदा वर्चसे पवस्वेति' श्रोत्रवर्चःप्रदत्वमाम्नातं । तदीयसोमशेषस्य सर्वतो भ्रमणे सति सर्वदिगभियुक्तशब्दश्रवणं भवतीति तात्पर्यम् ।

१ 'न गिरा गिरेति ब्रूया'दिति प्रतिषेधस्यानुवादत्वाङ्गीकारोऽपि नैकवाक्यत्वनिर्वाहाय, किंतु विकल्पपरिहाराय; अन्यथा निषेधस्य प्राप्तिपूर्वकत्वात् गिरापदप्राप्तये गिरापदविधेरपि कल्पनापत्त्या शास्त्रप्राप्तस्य सर्वथा निरासे प्रापकवचनाप्रामाण्यपरिहारार्थं नतौ पशौ करोतीत्यत्रेव विकल्पापत्तेः । यथाचानुवादत्वाङ्गीकारेऽपि गिरापदकार्ये इरापदविधिः, न पदान्तरकार्ये इत्याद्यर्थबोधनेन साफल्यं तथान्यत्र विस्तरः । **एतेन**—तत्प्रतिषिध्यप्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वादित्यधिकरणमपि—**व्याख्यातं भवति;** तत्रापि "षड्विंशतिरित्येव ब्रूयादि"ति विधिश्रुतेरनुवादत्वाङ्गीकारस्यैकवाक्यत्वनिर्वाहार्थत्वाभावात्, एवकारेण विधिशक्तिप्रतिबन्धादेव तत्रानुवादत्वाङ्गीकारात् । जर्तिलगवीधुकवाक्ययोः पयोविधिस्तावकत्वाङ्गीकारोऽपि नैकवाक्यत्वानुरोधात्, किंतु जर्तिलगवीधुकयोरपि विधिस्वीकारे तयोः पयसश्च त्रयाणामपि अष्टदोषदुष्टो विकल्पः स्यादिति तत्परिहारार्थम् । एवंच न कुत्राप्येकवाक्यत्वनिर्वाहार्थविधायकत्वं परित्यक्तमिति मन्तव्यम्—इति ॥

न्तः पुरुषे ज्योतिः' (छा० ३।१३।७) इति च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते । सारूप्यनिमित्ताश्चाध्यासा भवन्ति । यथा—'तस्य भूरिति शिर एकं शिर एकमेतदक्षरम्' ( बृ० ५।५।३ ) इति । कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वम्, तस्यैषा दृष्टिः' ( छा० ३।१३।७ ) 'तस्यैषा श्रुतिः' इति चौष्ण्यघोषविशिष्टत्वस्य श्रवणात् । तदेतद्दृष्टं च श्रुतं चेत्युपासीत' इति च श्रुतेः । 'चक्षुष्यः श्रुतो भवति य एवं वेद' ( छा० ३।१३।८ ) इति चाल्पफलश्रवणादब्रह्मत्वम् । महते हि फलाय ब्रह्मोपासनमिष्यते । नचान्यदपि किंचित्स्ववाक्ये प्राणाकाशवज्ज्योतिषोऽस्ति ब्रह्मलिङ्गम् । नच पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति; 'गायत्री वा इदꣳ सर्वं भूतम्' इति छन्दोनिर्देशात् । अथापि कथंचित्पूर्वस्मिन्वाक्ये ब्रह्म निर्दिष्टं स्यात्, एवमपि न तस्येह प्रत्यभिज्ञानमस्ति । तत्र हि 'त्रिपादस्यामृतं दिवि' ( ३।१२।६ ) इति द्यौरधिकरणत्वेन श्रूयते, अत्र पुनः 'परो दिवो ज्योतिः' इति द्यौर्मर्यादात्वेन । तस्मात्प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः—ज्योतिरिह ब्रह्म ग्राह्यम् । कुतः ? चरणाभिधानात् पादाभिधानादित्यर्थः । पूर्वस्मिन्हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम् 'तावानस्य महिमा ततो ज्यायाꣳश्चपूरुषः । पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' ( छा० ३।१२।६ ) इत्यनेन मन्त्रेण । तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसंबन्धिरूपं निर्दिष्टं, तदेवेह द्युसंबन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते । तत्परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः, परस्यामपि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् । यत्तूक्तम्—'ज्योतिर्दीप्यते' इति चैतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति । नायं दोषः; प्रकरणाद्ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात्, दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसंभवात्, 'येन सूर्यस्तपति तेजसेद्धः' ( तै० ब्रा० ३।१२।९।७ ) इति च मन्त्रवर्णात् । यद्वा—नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्तते; अन्यत्रापि प्रयोगदर्शनात्, 'वाचैवायं ज्योतिषास्ते' ( बृ० ४।३।५ ) 'मनो ज्योतिर्जुषताम्' ( तै० ब्रा० १।६।३।३ ) इति च । तस्माद्यद्यत्कस्यचिदवभासकं तत्तज्ज्योतिःशब्देनाभिधीयते । तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ( कौ० २।५।१५ ) 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' ( बृ० ४।४।१६ ) इत्यादिश्रुतिभ्यश्च । यदप्युक्तं—द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यत इति । अत्रोच्यते—सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते । ननूक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति । नायं दोष; निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसंबन्धात्प्रदेशविशेषकल्पनोपपत्तेः । तथाहि—आदित्ये चक्षुषि हृदय इति प्रदेशविशेषसंबन्धीनि ब्रह्मण उपसनानि श्रूयन्ते । एतेन 'विश्वतः पृष्ठेषु' इत्याधारबहुत्वमुपपादितम् । यदप्येतदुक्तं—औष्ण्यघोषानुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात्परमपि दिवः कार्यं ज्योतिरेव—इति । तदप्ययुक्तम्; परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत्कौक्षेयज्योतिःप्रतीक-

### भामती ।

भाष्यकृता । तत्र ज्योतिर्ब्रह्मविकार इति ज्योतिषा ब्रह्मैवोपलक्ष्यते । **अथवा**—प्रकाशमात्रवचनो ज्योतिःशब्दः प्रकाशश्च ब्रह्मेति ब्रह्मणि मुख्य इति ज्योतिर्ब्रह्मेति सिद्धम् । **प्रकृतहानाप्रकृतप्रक्रिये इति** । प्रसिद्ध्यपेक्षायां पूर्ववाक्यगतं प्रकृतं संनिहितं, अप्रसिद्धं तु कल्प्यं न प्रकृतम् । अतएवोक्तम्—**कल्पयत इति** । संदंशन्यायमाह—**न केवलमिति** । **परस्यापि ब्रह्मणो नामादिप्रतीकत्ववदिति** । कौक्षेयं हि ज्योतिर्जीवभावेनानुप्रविष्टस्य परमात्मनो विकारः, जीवा-

### वेदान्तकल्पतरुः ।

कौक्षेयज्योतिषो ब्रह्मप्रतीकत्वे ब्रह्मसंबन्धमाह—**कौक्षेयं हीति** ॥ २४ ॥ **नच भूतपृथिवीति । एवं हि श्रूयते ।**

### कल्पतरुपरिमलः ।

सर्वतःपरिहारमिति णमुलन्तः शब्दः । **अर्थवादा इति** । भक्षणवचनानां तस्मात्सर्वत इत्यादिभिः स्वयमर्थवादैर्युक्ततया स्वतन्त्रत्वेन प्रतीयमानानामन्यार्थवादत्वप्रतीत्यभावेऽपि तत्प्रतीतिमभ्युपेत्य तथाप्युपरिधारणवाक्यवदपूर्वत्वाद्विधायकत्वमङ्गीकर्तव्यमित्यभिप्रेत्यार्थवादत्वोक्तिः ॥ २४ ॥

( २ ) **न च भूतपृथिवीति । ननु**—भूतपृथिवीशरीरहृदयानि निर्दिश्य सैषा चतुष्पदेति ऋगनुशिष्टावन्तचतु-

त्वोपपत्तेः । 'दृष्टं च श्रुतं चेत्युपासीत' इति तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वं च भविष्यति । यदप्यल्पफलश्रवणान्न ब्रह्मेति, तदप्यनुपपन्नम्; न हि इयते फलाय ब्रह्माश्रयणीयं इयते नेति नियमहेतुरस्ति । यत्र हि निरस्तसर्वविशेषसंबन्धं परं ब्रह्मात्मत्वेनोपदिश्यते, तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते । यत्र तु गुणविशेषसंबन्धं प्रतीकविशेषसंबन्धं वा ब्रह्मोपदिश्यते, तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते—'अन्नादो वसुदानो विन्दते वसु य एवं वेद' (बृह० ४।४।२४) इत्याद्यासु श्रुतिषु । यद्यपि न स्ववाक्ये किंचिज्ज्योतिषो ब्रह्मलिङ्गमस्ति; तथापि पूर्वस्मिन्वाक्ये दृश्यमानं ग्रहीतव्यं भवति । तदुक्तं सूत्रकारेण—'ज्योतिश्चरणाभिधानात्' इति । कथं पुनर्वाक्यान्तरगतेन ब्रह्मसंनिधानेन ज्योतिःश्रुतिः स्वविषयाच्छक्या प्रच्यावयितुम् । नैष दोषः; 'यदतः परो दिवो ज्योतिः' इति प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसंबन्धात्प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थाज्ज्योतिःशब्दस्यापि ब्रह्मविषयत्वोपपत्तेः । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् ॥ २४ ॥

## छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥

अथ यदुक्तं पूर्वस्मिन्नपि वाक्ये न ब्रह्माभिहितमस्ति, 'गायत्री वा इदं सर्वं भूतं यदिदं किंच' (छा० ३।१२।१) इति गायत्र्याख्यस्य छन्दसोऽभिहितत्वादिति, तत्परिहर्तव्यम् । कथं पुनश्छन्दोभिधानान्न ब्रह्माभिहितमिति शक्यते वक्तुं? यावता 'तावानस्य महिमा' इत्येतस्यामृचि चतुष्पाद्ब्रह्म दर्शितम् । नैतदस्ति; 'गायत्री वा इदं सर्वम्' इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयवाक्प्राणप्रभेदैर्व्याख्याय 'सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तं तावानस्य महिमा' इति तस्यामेव व्याख्यातरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद्ब्रह्म चतुष्पादभिदध्यात् । योऽपि तत्र 'यद्वै तद्ब्रह्म' (छा० ३।१२।५,६) इति ब्रह्मशब्दः सोऽपि छन्दसः प्रकृतत्वाच्छब्दोविषय एव । 'य एतामेवं ब्रह्मोपनिषदं वेद' (छा० ३।११।३) इत्यत्र हि वेदोपनिषदमिति व्याचक्षते, तस्माच्छन्दोभिधानान्न ब्रह्मणः प्रकृतत्वमितिचेत्, नैष दोषः; 'तथा चेतोर्पणनिगदात्' तथा गायत्र्याख्यच्छन्दोद्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते—'गायत्री वा इदं सर्वम्' इति । नह्यक्षरसंनिवे-

---

### भामती ।

भावे देहस्य शैत्यात्, जीवतश्चौष्ण्याज्ज्ञायते । तस्मात्तत्प्रतीकस्योपासनमुपपन्नम् । शेषं निगदव्याख्यातं भाष्यम् ॥२४॥
**छन्दोभिधानान्नेतिचेत् न तथा चेतोर्पणनिगदात्तथाहि दर्शनम्।** पूर्ववाक्यस्य हि ब्रह्मार्थत्वे सिद्धे स्यादेतदेवं, नतु तद्ब्रह्मार्थं, अपितु गायत्र्यर्थम् । 'गायत्री वा इदं सर्वं भूतं यदिदं किंच' इति गायत्रीं प्रकृत्येदं श्रूयते—'त्रिपादस्यामृतं दिवि' इति । ननु—'आकाशस्तल्लिङ्गात्' इत्यनेनैव गतार्थमेतत् । तथाहि—'तावानस्य महिमा' इत्यस्यामृचि ब्रह्म चतुष्पादुक्तम् । सैव च 'तदेतदृचाभ्यनूक्तम्' इत्यनेन संगमिता ब्रह्मलिङ्गम् । एवं 'गायत्री वा इदं सर्वम्' इत्यक्षरसंनिवेशमात्रस्य गायत्र्या न सर्वत्वमुपपद्यते । नच भूतपृथिवीशरीरहृदयवाक्प्राणात्मत्वं गायत्र्याः स्वरूपेण संभवति । नच ब्रह्मपुरुषसंबन्धित्वमस्ति गायत्र्याः । तस्माद्गायत्रीद्वारा ब्रह्मण एवोपासना न गायत्र्या इति पूर्वेणैव गतार्थत्वादनारम्भणीयमेतत् । नच पूर्वन्यायस्मारणे सूत्रसंदर्भ एतावान्युक्तः । **अत्रोच्यते**—अस्त्यधिका शङ्का । **तथाहि**—गायत्रीद्वारा ब्रह्मोपासनेति कोऽर्थः, गायत्रीविकारोपाधिनो ब्रह्मण उपासनेति । नच तदुपाधिनस्तदवच्छिन्नस्य सर्वात्मत्वं; उपाधेरवच्छेदात् । नहि घटावच्छिन्नं नभोऽनवच्छिन्नं भवति । तस्मादस्य सर्वात्मत्वादिकं स्तुत्यर्थं, तद्वरं गायत्र्या एवास्तु स्तुतिः कयाचित्प्रणाड्या । 'वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च' इत्यादिश्रुतिभ्यः । तथाच 'गायत्री वा इदं सर्वम्' इत्युपक्रमे गायत्र्या एव हृदयादिभिर्व्याख्या । व्याख्याय च 'सैषा चतुष्पदा षड्विधा गायत्री' इत्युपसंहारो गायत्र्यामेव समञ्जसो भवति । ब्रह्मणि तु सर्वमेतदसमञ्जसमिति । 'यद्वै तद्ब्रह्म' इति च ब्रह्मशब्दश्छन्दोविषय एव, यथा 'एतां ब्रह्मोपनिषदम्' इत्यत्र वेदोपनिषदुच्यते । तस्माद्गायत्रीछन्दोऽभिधानान्न ब्रह्मविषयमेतदिति प्राप्तम् । **एवं प्राप्तेऽभिधीयते—न कुतः ? तथा चेतोर्पणनिगदात् ।** गायत्र्याख्यच्छन्दोद्वारेण गायत्रीरूपविकारानुगते ब्रह्मणि चेतोर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते । **एतदुक्तं भवति**—न गायत्री ब्रह्मणोऽवच्छेदिका, उत्पलस्येव नीलत्वं, येन तदवच्छिन्नत्वमन्यत्र न स्यादवच्छेदकविरहात् । किंतु यदेतद्ब्रह्म

## भामती ।

**सर्वात्मकं सर्वकारणं** तत्स्वरूपेणाशक्योपदेशमिति तद्विकारगायत्रीद्वारेणोपलक्ष्यते; गायत्र्याः सर्वच्छन्दोव्याप्त्या च सवनत्रयव्याप्त्या च द्विजातिद्वितीयजन्मजननीतया च श्रुतेर्विकारेषु मध्ये प्राधान्येन द्वारत्वोपपत्तेः । नचान्यत्रोपलक्षणाभावेन नोपलक्ष्यं प्रतीयते । नहि कुण्डलेनोपलक्षितं कण्ठरूपं कुण्डलवियोगेऽपि पश्चात्प्रतीयमानमप्रतीयमानं भवति । तद्रूपप्रत्यायनमात्रोपयोगित्वादुपलक्षणानामनवच्छेदकत्वात् । तदेवं गायत्रीशब्दस्य मुख्यार्थत्वे गायत्र्या ब्रह्मोपलक्ष्यत इत्युक्तम् ॥ संप्रति तु गायत्रीशब्दः संख्यासामान्याद्गौण्या वृत्त्या ब्रह्मण्येव वर्तत इति दर्शयति—**अपर आहेति । तथाहि—**षडक्षरैः पादैर्यथा गायत्री चतुष्पदा, एवं ब्रह्मापि चतुष्पात् । सर्वाणि हि भूतानि स्थावरजङ्गमान्यस्यैकः पादः । **दिवि** द्योतनवति चैतन्यरूपे । स्वात्मनीति यावत् । **त्रयः** पादाः । **अथवा—**दिव्याकाशे त्रयः पादाः । **तथाहि श्रुतिः—**'इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः' तद्धि तस्य जागरितस्थानम् । जाग्रत्खल्वयं बाह्यान्पदार्थान्वेद । **तथा—**'अयं वाव स योऽयमन्तःपुरुष आकाशः' । शरीरमध्य इत्यर्थः । तद्धि तस्य स्वप्नस्थानम् । **तथा—**'अयं वाव स योऽयमन्तर्हृदय आकाशः' । हृदयपुण्डरीक इत्यर्थः । तद्धि तस्य सुषुप्तिस्थानम् । तदेतत्

## वेदान्तकल्पतरुः ।

"गायत्री वा इदं सर्वं भूतं यदिदं किं च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च या वै सा गायत्रीयं वाव सा येयं पृथिवी, या वै सा पृथिवीयं वाव सा यदिदं शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिताः, यद्वै शरीरम् इदं तद्धृदयमस्मिन् हि प्राणः प्रतिष्ठिता" इति । पृथिव्या भूताधारत्वात्सर्वभूतमयगायत्रीत्वं शरीरहृदययोर्भूतात्मकप्राणाश्रयत्वाद्गायत्रीत्वम्, एवमन्यार्थोक्तवाक्प्राणसहितैर्भूतादिभिः षड्विधा गायत्रीति ॥ **गायत्र्याः सर्वच्छन्द इति । एवं हि श्रूयते—**चतुरक्षराणि छन्दांस्यग्रे समभवन् तेषु जगती सोमाहरणाय गता त्रीण्यक्षराणि हित्वा आगच्छत् । एकं हित्वा त्रिष्टुबागता । गायत्री तु गत्वा तानि गलितानि चत्वार्यक्षराणि सोमं चाहृतवती । ततः साष्टाक्षराभवत्तयैव सवनत्रयमतन्वत याज्ञिकाः । माध्यन्दिने सवने त्रिष्टुभा प्रार्थिता गायत्री तामुपाह्वयत् । सा च गायत्र्यक्षरैरष्टभिः स्वीयैरेव शिष्टैस्त्रिभिरक्षरैरेकादशाक्षराभवत् । ततो जगत्या प्रार्थिता गायत्री तां तृतीयसवने उपाह्वयत् । सा च स्वीयेनैकेन प्राचीनैश्चैकादशभिरक्षरैर्द्वादशाक्षराभवदित्युक्त्वोपसंहृतं । तस्मादाहुर्गायत्राणि वै सर्वाणि सवनानीति । द्विजातीनां द्वितीयजन्मजननीत्वं श्रुतं गायत्र्या ब्राह्मणमसृजदिति त्रिष्टुभा राजन्यं, जगत्या वैश्यम् इति ॥ **केनचिदत्र** प्रसिद्धा त्रिपदा गायत्री न प्रत्यभिज्ञायते; अस्याश्चतुष्पात्त्वादित्युक्तम् । **तन्न;** षडक्षरैश्चतुष्पदोप्यष्टाक्षरैस्त्रिपात्त्वोपपत्तेरिति । **स्वात्मनीति । यावत् । त्रयः पादा इति ।** अल्पं प्रपञ्चं पादमपेक्ष्य स्वरूपमपरिच्छिन्नत्वात् त्रयः पादा इति । दिवीति वाक्यशेषवशात् त्रिपादिति मन्त्रपदस्य व्याख्यान्तरमाह—**अथ वेति ।** पद्यते ज्ञायते एभिस्तुरीयमिति विश्वतैजसप्राज्ञास्त्रयः पादाः एते यस्य तत्त्रिपात्तुरीयं स्वपादद्वारा गगनेऽवस्थितमिति मन्त्रार्थः । **ननु** त्रिपाद् ब्रह्मणः "अयं वाव स" इति कथं भूताकाशैक्योपदेशोऽत आह—**तद्धीति ।** उपलब्धिस्थानस्तुत्यर्थं ब्रह्मत्वोक्तिरित्यर्थः । **बाह्यानिति ।** शरीराद्बहिष्ठानिति ।

## कल्पतरुपरिमलः ।

ष्पाच्छब्दप्रयोगाद् गायत्र्यामृच्येव स्तावकतया भूतादिपादत्वं तत्समभिव्याहृतं षाड्विध्यं च योजनीयमिति—**चेद्, न;** गायत्र्यनुगतब्रह्मलक्षणायां गायत्रीसदृशे ब्रह्मणि गौणवृत्तौ च प्रथमं गायत्र्युपस्थितिसत्त्वेन तद्विषयतया टाबन्तत्वोपपत्तेः । गायत्री वा इदं सर्वमित्यादिश्रुतिवाक्यलेखने येयं पृथिवीत्यायनन्तरमाम्नातस्य "अस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीय"त इत्यादेरलेखनं प्रकृतानुपयोगात् । प्रसिद्धा त्रिपदा गायत्रीत्यादिपाठः साधुः, नतु त्रिपाद्गायत्रीत्यादिपाठः । **षडक्षरैरिति ।** पादैरिति शेषः । **दिवीति वाक्यशेषवशादिति ।** दिवीति सप्तमीस्वारस्यादित्यर्थः । प्राग्विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वित्यस्य टीकाकारकृतव्याख्यानानुसारेण तत्पुरोवादस्य दिवीत्यस्य सत्यलोकान्तर्गतब्रह्मविष्णुशिवभोगभूमिपरत्वं त्रिपादित्यस्य ब्रह्मादिमूर्तित्रयाभिव्यक्तिपरत्वं चार्थं इत्यर्थात् स्थितमेव । वैभवादिदं व्याख्यानद्वयम् । **ननु—**व्याख्यानत्रयेऽपि सैषा चतुष्पदा षड्विधा गायत्रीत्येतदनन्तरं तदेतदृचाभ्यनुक्तमिति ऋगवतारिकायाः कथं संगतिरिति—**चेत्,** गायत्र्याख्यस्य ब्रह्मणः सर्वभूतात्मत्वादिरूपो यो महिमा वर्णितः स सर्वोऽपि तावानस्य महिमेति प्रथमपादेन कीर्त्यत इति संगतिः । **ननु** पुरुषसूक्तपठितोऽयं मन्त्रः तत्र प्रकृतं महिमानं कीर्तयेत्, तस्यैतत्प्रकरणगतमहिमकीर्तने कः प्रसङ्गः । **नैष दोषः;** उभयत्रापि महिमवर्णनस्यार्थत एकत्वात् । पुरुषसूक्तेऽपि "स भूमिं सर्वतो वृत्वा" "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्य"मित्याम्नानात् । एवं प्रथमपादस्य प्रकृतार्थविषयत्वे स्थिते द्वितीयपादेन ततो ज्यायस्त्वं ब्रह्मणः प्रतिज्ञायोत्तरार्धेन यत्तदुपपादनं कृतं तस्य पादचतुष्टयवत्त्वेन सादृश्येन गायत्रीपदस्य ब्रह्मणि प्रवृत्त्युपपादकतया प्रकृतसङ्गतिः । ब्रह्मपरत्वाद-

शमात्राया गायत्र्याः सर्वात्मकत्वं संभवति। तस्माद्यद्गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म तदिह सर्वमित्युच्यते। यथा 'सर्वं खल्विदं ब्रह्म' (छा० ३।१४।१) इति। कार्यं च कारणाद्व्यतिरिक्तमिति वक्ष्यामः—'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र० २।१।१४) इत्यत्र। तथान्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते—'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' (ऐ० आ० ३।२।३।१२) इति। तस्मादस्ति छन्दोभिधानेऽपि पूर्वस्मिन्वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम्। तदेव ज्योतिर्वाक्येऽपि परामृश्यत उपासनान्तरविधानाय। अपर आह—साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते; संख्यासामान्यात्। यथा गायत्री चतुष्पदा षडक्षरैः पादैस्तथा ब्रह्म चतुष्पात्। तथान्यत्रापि छन्दोभिधायी शब्दोऽर्थान्तरे संख्यासामान्यात्प्रयुज्यमानो दृश्यते। तद्यथा—'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' इत्युपक्रम्याह 'सैषा विराडन्नादी' (छा० ४।३।८) इति। अस्मिन्पक्षे ब्रह्मैवाभिहितमिति न छन्दोभिधानम्। सर्वथाप्यस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्म ॥ २५ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

इतश्चैवमभ्युपगन्तव्यमस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्मेति। यतो भूतादीन्पादान्व्यपदिशति। भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह—'सैषा चतुष्पदा षड्विधा गायत्री' इति। नहि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते। अपिच ब्रह्मानाश्रयणे नेयमृक्संबध्येत—'तावानस्य महिमा' इति। अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते, 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा० ३।१२।५) इति सर्वात्मत्वोपपत्तेः। पुरुषसूक्तेऽपीयमृग्ब्रह्मपरतयैव समाम्नायते। स्मृतिश्च ब्रह्मण एवंरूपतां दर्शयति—'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भग० १०।४२) इति। 'यद्वै तद्ब्रह्म' (छा० ३।१२।७) इति च निर्देश एवं सति मुख्यार्थ उपपद्यते। 'पञ्च ब्रह्मपुरुषाः' (छा० ३।१३।६) इति च हृदयसुषिषु ब्रह्मपुरुषश्रुतिर्ब्रह्मसंबन्धितायां विवक्षितायां संभवति। तस्मादस्ति पूर्वस्मिन्वाक्ये ब्रह्म प्रकृतम्।

### भामती।

'त्रिपादस्यामृतं दिवि' इत्युक्तम्। तदेवं चतुष्पात्त्वसामान्याद्गायत्रीशब्देन ब्रह्मोच्यत इति। **अस्मिन्पक्षे ब्रह्मैवाभिहितमिति।** ब्रह्मपरत्वादभिहितमित्युक्तम् ॥ २५ ॥ **षड्विधेति।** भूतपृथिवीशरीरहृदयवाक्प्राणा इति षट् प्रकारा गायत्र्याख्यस्य ब्रह्मणः श्रूयन्ते। **पञ्च ब्रह्मपुरुषा इति च हृदयसुषिषु ब्रह्मपुरुषश्रुतिर्ब्रह्मसंबन्धितायां विवक्षितायां संभवति। अस्यार्थः**—हृदयस्यास्य खलु पञ्च सुषयः पञ्च छिद्राणि तानि च देवैः प्राणादिभी रक्ष्य-

### वेदान्तकल्पतरुः।

**ननु** चतुष्पात्त्वगुणयोगाद्गायत्रीशब्दो ब्रह्म गमयति, कथमभिहितमिति भाष्यनिर्देशोऽत आह—**ब्रह्मपरत्वादिति। ननु** पूर्वत्रापि विकारानुगतं ब्रह्म गायत्रीपदेन लक्षणया तात्पर्येण गमितमतः को विशेषः। **उच्यते;** गौणे प्रयोगेऽभिधेयगतो गुणस्तात्पर्याल्लभ्यते, लक्षणायां तु संबन्धं निमित्तीकृत्यार्थान्तरे तात्पर्यमिति। गायत्र्याख्यस्य ब्रह्मणो हृदि स्थितस्योपासनाङ्गत्वेन द्वारपालादिगुणविध्यर्थं तस्य हेत्यादि वाक्यं, तदर्थतोऽनुक्रामति—**हृदयस्येत्यादिना।** प्रागादिदि-

### कल्पतरुपरिमलः।

भिहितमित्युक्तमिति टीका न युक्ता; लक्षणापक्षेऽपि ब्रह्मपरत्वस्याविशिष्टत्वादित्याशङ्कते—**नन्विति । गौणे प्रयोगे**

१ **अपरआहेत्युपक्रमादनभिमतमित्युन्नीयते**—अनभिमतिबीजं तु साक्षात्संबन्धेन गायत्रीपदस्य ब्रह्मणि लक्षणासंभवे सादृश्यरूपपरंपरासंबन्धेन गौणवृत्त्याश्रयणमयुक्तम्। **किंच** चतुष्पात्त्वं गायत्र्या न प्रसिद्धम्; तेषां ऋग्यत्रार्थवशेन पादव्यवस्थेति अर्थवशेन नियमितायाः पादव्यवस्थामपहाय षट्सुषट्सु अक्षरेष्वेकैकपादत्वकल्पनाया असंभवात्, "षष्टिस्त्रिष्टुभो माध्यंदिने सवने" इति व्यपदेशस्यापि पादकल्पनां विनैव माध्यंदिनसवनगतनानाच्छन्दोऽक्षराणां षष्टित्रिष्टुबक्षराणां च संख्यासाम्यमात्रेण गौणत्वेनोपपत्तेः, अन्यथा बृहस्पतिसवे-"गायत्रमेतदहर्भवति" इति वचनस्य प्राकृतेष्वेव नानाच्छन्दस्सु अक्षरगणनयाऽक्षरलोपेन वा गायत्रीत्वसंपादनार्थतया प्राकृतीनामृचां बाधः संभवतीति तत्र वचनबलान्नानाच्छन्दांस्यपहाय मुख्यगायत्र्यो ग्राह्या इति निर्णयार्थेन "गायत्रीषु प्राकृतनामवच्छेद इत्यधिकरणेन विरोधापत्तेः।

"इन्द्रशचीपतिर्बलेन पीडितः, दुश्च्यवनो वृषा समुत्सु सासहिः" इति चतुष्पदाऽपि कचिद्गायत्री दृष्टेति तत्सादृश्येन गौणत्वोपपादनं तु यववराहाधिकरणविरोधान्नसंभवतीति लक्षणापक्ष एवादरणीयो न गौणीपक्ष इति सर्वमनवद्यम् ॥

तदेव ब्रह्म ज्योतिर्वाक्ये द्युसंबन्धात्प्रत्यभिज्ञायमानं परामृश्यत इति स्थितम् ॥ २६ ॥

**उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥**

यदप्येतदुक्तं—पूर्वत्र 'त्रिपादस्यामृतं दिवि' इति सप्तम्या द्यौराधारत्वेनोपदिष्टा इति, पुनः 'अथ यदतः परो दिवः' इति पञ्चम्या मर्यादात्वेन, तस्मादुपदेशभेदान्न तस्येह प्रत्यभिज्ञानमस्तीति, तत्परिहर्तव्यम् । अत्रोच्यते—नायं दोषः; उभयस्मिन्नप्यविरोधात् । उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञानं विरुध्यते । यथा लोके वृक्षाग्रसंबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च । एवं दिव्येव सद्ब्रह्म

### भामती ।

माणानि स्वर्गप्राप्तिद्वाराणीति देवसुषयः । **तथाहि**—हृदयस्य यत्प्राङ्मुखं छिद्रं तत्स्थो यो वायुः स प्राणः, तेन हि प्रायणकाले संचरते स्वर्गलोकं, स एव चक्षुः, स एवादित्य इत्यर्थः; 'आदित्यो ह वै बाह्यः प्राणः' इति श्रुतेः । अथ योऽस्य दक्षिणः सुषिस्तत्स्थो वायुविशेषो व्यानः । तत्संबद्धं श्रोत्रं तच्चन्द्रमाः; 'श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्च' इति श्रुतेः । अथ योऽस्य प्रत्यङ्मुखः सुषिस्तत्स्थो वायुविशेषोऽपानः स च वाक्संबन्धाद्वाक्; 'वाग्वा अग्निः' इति श्रुतेः । अथ योऽस्योदङ्मुखः सुषिस्तत्स्थो वायुविशेषः स समानः, तत्संबद्धं मनः, तत्पर्जन्यो देवता अथ योऽस्योर्ध्वः सुषिस्तत्स्थो वायुविशेषः स उदानः; पादतलादारभ्योर्ध्वं नयनात् । स वायुस्तदाधारश्चाकाशो देवता । ते वा एते पञ्च सुषयः । तत्संबद्धाः पञ्चहार्दस्य ब्रह्मणः पुरुषा न गायत्र्यामक्षरसंनिवेशमात्रे संभवन्ति, किंतु ब्रह्मण्येवेति ॥ २६ ॥ **यथा लोक इति** । यदाधारत्वं मुख्यं दिवः, तदा कथंचिन्मर्यादा व्याख्येया । यो हि श्येनो वृक्षाग्रे वस्तुतोऽस्ति, स च ततः परोऽप्यस्त्येव; अर्वाग्भागातिरिक्तमध्यपरभागस्थस्य तस्यैव वृक्षात्परतोऽवस्थानात् । एवंच बाह्यद्युभागातिरिक्तशरीर-

### वेदान्तकल्पतरुः ।

ग्गता हृदयकमलसुषयो द्वाराणि तत्स्थाः प्राणादिवायवो द्वारपालास्ते च चक्षुरादिकरणयुक्ता आदित्यादिदेवैरधिष्ठिता इति समुदायार्थः । प्राणशब्दं निर्वक्ति—**प्रायणकाले इति** । स आदित्य इत्यनन्तरनिर्दिष्टचक्षुष आदित्यत्वं नोच्यते किंतु प्राणस्येत्याह—**स एवेति** । कारणमाह—**आदित्य इति** । अधिष्ठात्रधिष्ठेययोरैक्योपचारः । श्रोत्रद्वारा चन्द्रमा व्यानस्याधिष्ठाता । एवमुत्तरत्रापि करणद्वारा वाय्वधिष्ठातृत्वं देवतानां द्रष्टव्यम् । अधःश्वासस्याऽपानस्य मुखे वाक्संबन्धाद्वाक्त्वमित्यर्थः । सोऽग्निरिति श्रुतौ वाचोऽग्नित्वमुक्तं, तत्र हेतुमाह—**वाग्वा इति** । **तत्पर्जन्य इति** । पर्जन्यो वृष्ट्यात्मको देवस्तन्निमित्ता आपः, तथा मनोनिमित्ताश्च; "मनसा सृष्टा आपश्च वरुणश्चे"ति श्रुतेः, अतो मनसः पर्जन्योऽधिष्ठाता । उदानवायुः; सामान्यात्मकः सहायकत्वे वर्तते, तस्य च वाय्वाधार आकाशः परमेश्वरो देवतेत्यर्थः । हार्दस्य ब्रह्मणः पुरुषाः प्राणादयः । यदादावुक्तं प्रधानप्रकृत्यर्थप्रत्यभिज्ञानुरोधेन प्रत्ययार्थवैषम्यं नेयमिति, तदुपदर्शकं भाष्यं व्याचष्टे—**यदाधारत्वमिति** । **अर्वाग्भागेति** । यदा मुख्यमाधारत्वं वृक्षाग्रस्य विवक्षितं, तदा वृक्षाग्रात्परतः श्येन

### कल्पतरुपरिमलः ।

**इति** । **ननु**—गौण्यां तात्पर्याधीनो गुणलाभः लक्षणायां संबन्धाधीनस्तात्पर्यलाभ इति नायं नियमः; मुखमिदं कमलमिति कविसमयप्रसिद्धायां कर्णोऽयं राजेत्यादिलोकव्यवहारसिद्धायां च गौण्यां मुख्यार्थप्रसिद्धकान्तिमत्त्वदातृत्वगुणलाभस्य तात्पर्यावेक्षणानपेक्षत्वाद्, यष्टीः प्रवेशयेत्यादौ तात्पर्यानुपपत्तिमूलकलक्षणायास्तात्पर्यान्वेषणापेक्षत्वाच्च, तत्रापि प्रकरणाद्यवगतभोजनप्रवेशनान्वयानुपपत्तिर्लक्षणाबीजं न तात्पर्यानुपपत्तिरिति चेन्न; गङ्गायां घोष इत्यत्र सामीपिकाधिकरणविवक्षायां मुख्यार्थान्वयसंभवेऽप्यौपश्लेषिकाधिकरणे तात्पर्यमिति तात्पर्यानुपपत्तिरेव लक्षणाबीजं नान्वयानुपपत्तिरिति वैपरीत्यस्यापि वक्तुं शक्यत्वादिति—**चेत्, उच्यते;** प्रकृताभिप्रायमिदं विशेषकथनम् । प्रकृते सार्वात्म्याद्यन्वययोग्ये ब्रह्मणि गायत्रीपदस्य तात्पर्येऽवधृते तन्निर्वाहार्थं तत्र तस्य गौणवृत्तिमूले गुणे वाच्ये ब्रह्मगायत्र्योः सादृश्यरूपस्य गुणविशेषणस्याप्रसिद्धत्वात्तदन्वेषणे ब्रह्म चतुष्पादिह निर्दिष्टम् । प्रसिद्धाया गायत्र्या"स्तेषामृग्यत्रार्थवशेन पादव्यवस्थेति" प्रकारेण त्रिपात्वेऽपि यथा "षष्टिस्त्रिष्टुभो माध्यन्दिने सवने" इत्यर्थवादोक्तरीत्या माध्यन्दिनसवनगताः गायत्रीबृहत्यादयोऽक्षरसंख्यामात्रेण त्रिष्टुभः, एवमिह गायत्री षङ्क्तिः षङ्क्तिरक्षरैश्चतुष्पदेति पादचतुष्टयवत्त्वरूपो गुणो लम्भनीयः । लक्षणायां तु प्राथमिकत्वादभ्यर्हितत्वाचोपादानोपादेयभावसंबन्धः शीघ्रं स्फुरतीति संबन्धनिमित्तकं तात्पर्यमिति ॥ **आकाशः परमेश्वर इति** । तस्यान्ते सुषिरं सूक्ष्ममित्यादिश्रुतावूर्ध्वसुषिरवर्तित्वेनाम्नातो दहराकाशरूपः परमेश्वर ऊर्ध्वद्वारपालस्याधिष्ठातृदेवतेत्यर्थः । उपास्यस्य द्वारपालाधिष्ठातुश्च परमेश्वरस्य हृदयकमलमध्यतदूर्ध्वसुषिररूपावच्छेदकभेदेन भेदः । आकाशपदस्य तदभिमानिदेवतापरत्वे वक्तुं शक्येऽपि दहरकमलोर्ध्वसुषिरे तदभिव्यक्तिरप्रसिद्धा कल्पनीया, परमेश्वरस्य तु प्रसिद्धा क्लृप्तास्तीत्येवं व्याख्यातम् । **यदा मुख्यमाधारत्वमित्यादि** । इयं क्लिष्टयोजना परत इत्येतदपि पञ्चम्यन्तमित्यभ्युपेत्य । यदि तु

## वेदान्तकल्पतरुः ।

इति प्रयोगे श्येनशब्दो वृक्षाग्रलग्नश्येनावयवादुपरितनावयवावच्छिन्नावयविलक्षक इत्यर्थः । अस्मिन्पक्षे दार्ष्टान्तिके ब्रह्मणः श्येनवदवयवाभावाद्दिव इति श्रुतिं लक्षणया व्याचष्टे—**एवमिति** । शक्यते च दृष्टान्तेऽपि वृक्षाग्रादित्यवधिश्रुतिर्लक्षणया नेतुम्, अग्रभागादीषदर्वाग्भागपरत्वे, तदा दार्ष्टान्तिकेन साम्यमिति । यदा त्वनौपाधिकं ब्रह्माकाशास्पृष्टं विवक्षित्वा पञ्चम्येव मुख्या, तदा सप्तमी सामीप्यसंबन्धं लक्षयतीत्याह—**यदा त्विति । अतएवेति** । यतः सर्वमर्यादा मुख्या, अत एवेत्यर्थः । या तु दिवि द्योतनवतीति व्याख्या, तस्यां नामी व्याख्या विकल्पाः । अतएव तदपरितोषादथवेत्युक्तमिति ॥

**तावानस्य महिमेति** । गायत्री वा इदं सर्वं भूतमित्यादिना भूतपृथिवीशरीरहृदयवाक्प्राणमयी षड्विधा चतुष्पदा गायत्रीत्युक्तम् । अस्य गायत्र्यनुगतस्य ब्रह्मणस्तावान्महिमा विभूतिः परमार्थस्त्वयं पुरुषस्ततो ज्यायान्महत्तरः, तदेवाह-सर्वाणि भूतान्यस्य पादः । अस्य त्रिपादमृतं दिवि द्योतनवति स्वात्मन्येव स्थितम् । यथा कार्षापणश्चतुर्धा विभक्त एकस्मात् पादात्पादत्रयीकृतो महान्, एवं पुरुषः पुरुषार्थरूपः प्रपञ्चान्महानित्यर्थः ॥ **ते वा एते इति** । संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्रांभांसि वायौ लीयन्ते । अध्यात्मं च वाक्चक्षुःश्रोत्रमनांसि प्राणे संह्रियन्त इत्युक्तम् । ते वायुना सह पञ्च आध्यात्मिकेभ्योऽन्ये । प्राणेन च सहाधिदैविकेभ्योऽन्ये पञ्च । एवं दशसन्तस्तत्कृतम् । अत्रापि चतुरयकद्यूतगतचतुरङ्कव-

## कल्पतरुपरिमलः ।

दिवः पर इति श्रुत्यनुसारेण दिव्येव सद्ब्रह्म दिवः परमित्युपदिश्यत इति भाष्यानुसारेण च प्रथमार्थस्तसिल्प्रत्यय आश्रीयते तदा दिव उपरिभागे स्थितं ब्रह्म दिवः परमेव भवतीति न काचिदनुपपत्तिरिति विस्पष्टत्वान्नोक्तम् ॥ **ननु** दश सन्तस्तत्कृतमिति प्रकृतेषु दशसु कथं कृतशब्द इत्याशङ्क्य तदुपपादयितुमाह—**अत्रापि चतुरयकेति** । लोकेऽक्षनिपातनरूपं द्यूतं द्विविधम्—एकाक्षनिपातनं बह्वक्षनिपातनं च । तत्र बह्वक्षनिपातनं द्विविधं—नियतसंख्यबह्वक्षनिपातनं अनियतसंख्यबह्वक्षनिपातनं च । एकाक्षनिपातनरूपस्यानियतसंख्यबह्वक्षनिपातनरूपस्य च द्यूतस्यायसंज्ञकाः सन्ति प्रकारविशेषाः । ते चतुर्विधाः—कृतत्रेताद्वापरकलिभेदात् । कृतायरूपेऽक्षनिपातने जय इति द्यूतशास्त्रमर्यादा । तत्रैकाक्षनिपातनरूपे द्यूते य एकोऽक्षश्चतुरश्रः तस्याश्रिद्वयमश्रिद्वयमन्तरा चत्वारि स्थानानि क्रमाच्चतुस्त्रिद्व्येकसंख्यबिन्दुरूपाङ्कयुक्तानि भवन्ति । तेषु यच्चतुरङ्कस्थानं तस्योपरिभवेनाक्षनिपातनं कृतायः । त्रिद्व्येकाङ्कयुक्तस्थानानामुपरिभावेन पतनानि तु त्रेताद्ययाः । अनियतसंख्यबह्वक्षनिपातनरूपे तु द्यूते न्युप्तेष्वक्षेषु चतुष्कशो विभज्यमानेष्ववसाने चत्वारोऽवशिष्यन्ते चेत्, तदक्षनिपातनं कृतायः । त्रिद्व्येकाक्षावशेषे तु त्रेताद्ययाः । अमुमर्थं श्रुतिरप्यनुवदति । ये वै चत्वारः स्तोमाः कृतं तत् । अथ ये पञ्च कलिः स इति । एवं लौकिकस्य द्यूतस्य प्रकारः । वैदिकं तु नियतसंख्यबह्वक्षनिपातनरूपं नियमेन कृतायरूपमत एव व्यवस्थितजयफलकम् । एवंचाग्न्याधाने राजन्यस्य कर्तव्यमापस्तम्बसूत्रे शतमक्षान्यजमानाय प्रयच्छन्नाहेत्युपक्रम्य दर्शितं कृतं यजमानो विजिनातीति । न्युप्तेषु शतसंख्येष्वक्षेषु चतुष्कशो विभज्यमानेष्ववसाने यः पञ्चविंशो भागः सोऽपि चतुरक्ष एव । अतस्तदक्षनिपातनं कृतमिति यजमानो विजिनाति जयतीत्यर्थः । अत्र चतुरयकेति विशेषणं लौकिकग्रहणाय । अयेति ह्रस्वयुक्तपाठः साधुः, नतु चतुरायकेति दीर्घयुक्तपाठः । इह जानश्रुत्युपाख्यान एव यथाकृतायविजितायाधरेऽयाः संयन्तीति प्रयोगात् । यजुर्वेदे कृतायानां त्रेतायानां द्वापरायानामास्कन्दीयानामित्यादिप्रयोगात् "अयः शुभावहे दैवे गतौ द्यूताक्षपातने" इत्यादिनैघण्टुकव्यवहाराच्च ह्रस्वादेरेव द्यूतप्रकारवाचित्वावसायात् । यद्यप्याधानगतवैदिकमपि द्यूतं कृतं भवतीति दश सन्तस्तत्कृतमित्यत्रत्यकृतशब्दव्याख्यानाय विशिष्य लौकिकद्यूतं नान्वेषणीयम्; तथापि यत्र त्रिबिन्दूपरिभावादियुक्ताः अक्षावशेषादियुक्ता वा त्रेतादयोऽपि सन्ति तत्र चतुर्बिन्दूपरिभावयुक्ते चतुरक्षावशेषयुक्ते वा द्यूते कृतशब्दो धर्मपादचतुष्टययुक्तयुगवाची समुचित इति ज्ञायते । यथा कृतायविजितायेत्यत्रत्यविजयवचनं च विजयनिमित्तकृतप्रतिद्वन्द्विपराजयनिमित्तत्रेतादिविमिश्रितलौकिकोदाहरण एव स्पष्टं भवतीत्याशयेन छान्दोग्यविवरणे भगवत्पादैर्लौकिकमुदाहृतम् । अतस्तदनुसारेणाचार्यैरपि लौकिकग्रहणेन वैदिकं व्यावर्तयितुं चतुरयकत्वेन द्यूतं विशेषितम् । अनेनैव यत्र लौकिके ऽपि नियतसंख्यपञ्चाक्षपातनादिरूपे सर्वेषामुत्तानतया पातने जयः अन्यथा पराजय इति व्यवस्थावति द्यूतशास्त्रप्रसिद्धे द्यूतान्तरे कृतत्रेतादिकं नास्ति तस्यापि व्यावृत्तिः । एवंचायं वाक्यार्थः । चतुरयके लौकिके द्यूते यथा चत्वारोऽङ्काः सन्ति, तद्वत्प्राणादिदशके चत्वारोऽपि पदार्थाः सन्ति, तदन्तर्गता यथा त्र्यङ्करूपा अवयवाः तद्वत् त्रयोऽपि सन्ति, यथा च द्व्यङ्करूपावयवौ तद्वद् द्वावपि स्तः, यथैकाङ्करूपोऽवयवः तद्वदकोऽप्यस्तीति । अङ्कायवद् एकाङ्कयवदिति केषु चित्कोशेषु पाठो दृश्यते । तस्मिन्पाठे सप्तमीसमर्थात् 'तत्र तस्येवेति' सूत्रेण वतिर्वाच्यः, नतु 'तेन तुल्यं क्रिया चेद्वति'रिति सूत्रेण । तथाच अङ्कस्थानो परिभावयुक्ते त्रेताये यथा त्रयोऽङ्काः सन्ति, तद्वत् त्रयोऽपि सन्तीत्यादिरर्थो लभ्यत इति तेन प्राणादिदशके त्रेतादिशब्दप्रवृत्तिनिमित्तं प्रस्तुतानुपयोग्येवोक्तं स्याद्, नतु श्रुतिगतकृतशब्दप्रवृत्तिनिमित्तम् । तस्मादयुक्तः स पाठः । चतुरङ्कवदिति

दिवः परमित्युपदिश्यते । अपर आह—यथा लोके वृक्षाग्रेणासंबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च । एवंच दिवः परमपि सद्ब्रह्म दिवीत्युपदिश्यते । तस्मादस्ति पूर्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानम् । अतः परमेव ब्रह्म ज्योतिःशब्दमिति सिद्धम् ॥ २७ ॥ इति दशमं ज्योतिरधिकरणम् ॥

( ११ अधिकरणम् ) **प्राणस्तथानुगमात् ॥ २८ ॥**

अस्ति कौषीतकिब्राह्मणोपनिषदीन्द्रप्रतर्दनाख्यायिका—'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं

---

**भामती ।**

हार्दद्युभागस्थस्य ब्रह्मणो बाह्यात् द्युभागात्परतोऽवस्थानमुपपन्नम् । यदा तु मर्यादैव मुख्यतया प्राधान्येन विवक्षिता, तदा लक्षणयाधारत्वं व्याख्येयम् । यथा गङ्गायां घोष इत्यत्र सामीप्यादिति । तदिदमुक्तम्—**अपर आहेति** । अत एव दिवः परमपीत्युक्तम् ॥ २७ ॥ **इति दशमं ज्योतिरधिकरणम् ।**

**प्राणस्तथानुगमात् ॥ २८ ॥**

**अनेकलिङ्गसंदोहे बलवत्कस्य किं भवेत् । लिङ्गिनो लिङ्गमित्यत्र चिन्त्यते प्रागचिन्तितम् ॥** मुख्यप्रा-

**वेदान्तकल्पतरुः ।**

त्सन्ति चत्वारः पदार्थाः त्र्यङ्कायवत् त्रयः द्व्यङ्कायवद्वौ एकायवदेकः । द्यूते च चतुरङ्कः कृतसंज्ञः स च दशात्मकः । चतुर्ष्वङ्केषु त्रयोऽन्तर्भवन्ति; एवं सप्त त्रिषु द्वौ, तथा सति नव, द्वयोरेकः इति दश । वाय्वादयोपि दशसंख्यत्वादेवं कृतम् । **सैषेति** विधेयाभिप्रायः स्त्रीलिङ्गनिर्देशः । दशसंख्यत्वाद्विराड् अन्नम् । दशाक्षरा विराडन्नमिति हि श्रुतिः । कृतत्वादन्नादिनी, कृते ह्यन्नभूता दशसंख्यान्तर्भूता । अतस्तामत्तीव, अतोऽन्नादत्वेनापि गुणेन वाय्वादय उपास्या इत्यर्थः । **इति दशमं ज्योतिरधिकरणम् ॥**

**प्राणस्तथानुगमात् ॥ २८ ॥**

**अनेकेति ।** अनेकेषां लिङ्गान्यनेकानि च तानि लिङ्गानि वा प्रतिपदार्थमनेकानीत्यर्थः । तेषामेकत्वेन प्रतिभासमानवाक्ये समावेशे किं बलवत् किममूनि सर्वाणि समबलानि, उतैकमेव बलवत् यदा चैकमेव बलवत्तदा कस्य लिङ्गिनो लिङ्गं

**कल्पतरुपरिमलः ।**

पूर्ववाक्यस्थेन यथा चत्वारोऽङ्काः सन्तीतयेवमर्थकेनार्थसारूप्यालाभाच्च स पाठो न युक्तः । अत्र सर्वेऽप्यङ्कशब्दाश्चिह्नवाचिनः एकाक्षनिपातने बिन्दूनां बह्वक्षनिपातने अवशिष्टाक्षाणां च साधारणाः; उभयेषामपि चतुस्त्रिद्व्येकसंख्यत्वेन कृतायादिचिह्नत्वाविशेषात् ॥ **ननु** सन्तु प्राणादिदशके चतुरङ्काय इव चतुस्त्रिद्व्येकरूपाः पदार्थाः, प्रकृते किमायातमित्याशङ्क्य दशस्वेतेषु कृतशब्दप्रवृत्तिं प्रकृतार्थं कृतशब्दप्रसिद्धार्थसादृश्येनोपपादयितुं तस्य प्रसिद्धमर्थमाह—**द्यूत इति । ननु—** कृतसंज्ञेन चतुरङ्कायेन वायुप्राणादीनां किं सादृश्यम्? प्रागुक्तं चतुस्त्रिद्व्येकसंख्यासंख्येयत्वमिति चेद्, न तत्सादृश्यं श्रुतौ विवक्षितं; दश सन्तस्तत् कृतमितिश्रुतौ दशशब्दसंकीर्तनेन दशसंख्यया सादृश्यविवक्षोन्नयनादित्याशङ्क्य चतुःसंख्यायास्तदन्तर्गतत्रिद्व्येकसंख्यानां च संयोजनेन तस्मिन् दशसंख्यां संपादयति—**स च दशात्मक इत्यादिना । ननु—** दशसंख्ययैव सादृश्यविवक्षायां द्यूते चतुरङ्कायःकृतसंज्ञ इत्यादिग्रन्थ एव पर्याप्तः, किमर्थस्तत्प्राचीनः प्रकृतेषु दशसु चतुस्त्रिद्व्येकसंख्यपदार्थवत्त्वरूपचतुरङ्कायसादृश्यकथनपरग्रन्थ इति-**चेत्, उच्यते;** चतुरङ्काये दशसंख्यावत्त्वमवयवसंख्यासंयोजनेनौपचारिकं, नतु संख्येयव्यक्तितावत्त्वप्रयुक्तं मुख्यं, कथममुख्यगुणवद् मुख्यगुणवत उपमानं स्यादित्याकाङ्क्षायां गुणगतमुख्याऽमुख्यविवेकोऽत्र न विवक्षितः, किंतु चतुस्त्रिद्व्येकसंख्याघटनीयत्वमात्रं, तत्तु मुख्यामुख्यसाधारणमिति दर्शयितुं प्राचीनग्रन्थः । एवं दशसंख्यावत्त्वादेव तेषु दशाक्षरच्छन्दोविशेषवाचको विराट्शब्दश्च, स प्रकृते दृष्टान्तः ॥ **इति दशमं ज्योतिरधिकरणम् ।**

**प्राणस्तथानुगमात् ॥ २८ ॥**

**उतैकमेव बलवदिति । ननु—**किममूनि सर्वाणि समबलानि, उतैतेषु ब्रह्मलिङ्गं बलवदित्येक एव संशयः

---

तत्र सूत्राणि ४–ज्योतिश्चरणाभिधानात् २४ छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् २५ भूतादिपादव्यपदेशोपपत्तेश्चैवम् २६ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् २७ ।

## भामती ।

णजीवदेवताब्रह्मणामनेकेषां लिङ्गानि बहूनि संभवन्ते, तत्कतमदत्र लिङ्गं, लिङ्गाभासं च कतमदित्यत्र विचार्यते । न चायमर्थ 'अतएव प्राणः' इत्यत्र विचारितः । **स्यादेतत्**—हिततमपुरुषार्थसिद्धिश्च निखिलभ्रूणहत्यादिपापापरामर्शश्च प्रज्ञात्मत्वं चानन्दादिश्च न मुख्ये प्राणे संभवन्ति । तथा 'एष साधु कर्म कारयति' 'एष लोकाधिपतिः' इत्याद्यपि । जीवे तु प्रज्ञात्मत्वं कथंचिद्भवेदितरेषां त्वसंभवः, वक्तृत्वं च वाक्करणव्यापारवत्त्वं यद्यपि परमात्मनि स्वरूपेण न संभवति; तथाप्यनन्यथासिद्धबहुब्रह्मलिङ्गविरोधपरिहाराय जीवद्वारेण ब्रह्मण्येव कथंचिद्व्याख्येयम्, जीवस्य ब्रह्मणोऽभेदात्। **तथाच श्रुतिः**—'यद्वाचानभ्युदितं येन वागभ्युद्यते, तदेव ब्रह्म त्वं विद्धि' इति वाग्वदनस्य ब्रह्म कारणमित्याह । शरीरधारणमपि यद्यपि मुख्यप्राणस्यैव; तथापि प्राणव्यापारस्य परमात्मायत्तत्वात्परमात्मन एव । यद्यपि चात्रेन्द्रदेवताया विग्र-

## वेदान्तकल्पतरुः ।

बलवत्, किं ब्रह्मणः, उत प्राणादेरित्येतदत्र चिन्त्यते । एतच्च **प्राक् अतएव प्राणः** ( ब्र. अ. १ पा.१सू.८ ) इत्यत्र न चिन्तितम् । तत्र हि ब्रह्मलिङ्गात् प्राणश्रुतिर्नीता, नतु ब्रह्माब्रह्मलिङ्गानां बलाबलमित्यर्थः । ज्योतिर्वाक्येऽपि यच्छब्देन समाकृष्टे ब्रह्मणि तल्लिङ्गं तेजोलिङ्गाद्बलवदित्युक्तम्। न तथेह किंचिन्निर्णयकारणमिति तेनाप्यगता चिन्ता, अतएव सङ्गतिः। **अथवा**—दिवि दिव इत्यत्र प्रधानप्रकृत्यर्थमनुरुध्य प्रत्ययार्थो नीतः, एवमिहापि स्वतन्त्रप्राणादिपदार्थभेदप्रतीतौ तत्सापेक्षत्वेन गुणभूतवाक्यार्थप्रतीतेर्युक्तमन्यथानयनमिति भिन्नोपासनविध्युपगमेन पूर्वपक्षोत्थानस्य वक्ष्यमाणत्वात्सङ्गतिः। **बहूनीति ।** बहुग्रहणमनेकानि च लिङ्गानीति संग्रहे समासप्रदर्शनार्थम् । एवंच प्राणादिषु प्रत्येकमपि बहुलिङ्गदर्शनाद् भूयसां न्यायेनाप्यनिर्णयात्, **आकाशस्तल्लिङ्गात्**—(ब्र. अ. १पा.१ सू.२२) इत्यनेनाप्यगतार्थत्वमुक्तम् । अनन्यथासिद्धब्रह्मलिङ्गानुसारेणेतरेषामन्यथासिद्धिवदन्तस्तद्धर्मोपदेशात् ( ब्र. अ. १ पा. १ सू. २० ) इत्यनेन पुनरुक्तिं शङ्कते—**स्यादेतदित्यादिना ।** देवतालिङ्गस्यान्यथासिद्धिमाह—**तथापीति ।** शास्त्रदृष्ट्या तूपदेशः (ब्र. अ.१ पा.१ सू.३०) इति

## कल्पतरुपरिमलः ।

प्रदर्शयितुं युक्तः; तथैव टीकायां पूर्वोत्तरपक्षप्रवृत्तेः नतु प्रथमसंशयस्यैकमेव बलवदिति कोऽन्यन्तरं प्रदर्श्य यदैकमेव बलवत्तदा किं प्राणस्य जीवस्य वा लिङ्गं बलवद्, उत ब्रह्मण इति संशयान्तरमपि प्रदर्शयितुं युक्तम्; टीकायामेकवाक्यत्वनिर्वाहार्थम् एकस्यैव लिङ्गं बलवदित्यनिर्धारणेन सिद्धान्तं प्रदर्श्य तदनन्तरं विशिष्य ब्रह्मलिङ्गबलवत्त्वनिर्धारणार्थं विचारान्तरप्रवर्तनस्याभावात् तत्सत्त्वे हि संशयान्तरं प्रदर्शनीयम् । **यथा पूर्वतन्त्रे भावार्थाः कर्मशब्दाः** (जै. अ. २ पा. १ सू. १ ।) इति सूत्रार्थकथने सोमेन यजेतेत्यादिषु किं द्रव्यगुणभावशब्दाः सर्वेपि भावनाकरणसमर्पकाः, उतैक एवेति संशयप्रदर्शनपूर्वकमेक एवेति सिद्धान्तमुपपाद्य तदनन्तरं यदैक एव तदा किं द्रव्यगुणशब्दः, उत भावशब्दः इति सन्देहान्तरप्रदर्शनपूर्वकं भावशब्द एव फलभावनाकरणसमर्पक इति निर्णीतं, न तथेह विचारद्वयं कृतमग्रे दृश्यते । तस्मात्प्रागुक्तरीत्यैक एव संशयः प्रदर्शयितुं युक्त इति—**चेत् उच्यते**; इह यद्येक एव बलवल्लिङ्गः प्रतिपाद्यः, तर्हि प्राणो जीवो वा बलवल्लिङ्ग इति तयोरन्यतरः प्रतिपाद्योस्तु, एवमप्येकवाक्यतासंरक्षणसिद्धेरित्याशङ्कान्तरं तन्निराकरणं चेत्युभयमप्यत्र विवक्षितम् । तदित्थम् । प्राणोस्मि प्रज्ञात्मेत्युपक्रमात् प्राण एव प्रज्ञात्मेत्युपसंहाराच्च वायुर्जीवो वाऽत्रोपास्यत्वेन प्रतिपाद्यः । मामेव विजानीहीति प्रथममिन्द्रवचनसत्वेऽपि नेन्द्रस्योपास्यत्वशङ्का; तेन वाक्येन स्वस्यैवोपास्यत्वमुक्तमिति शङ्कावारणाय प्राणोऽस्मि प्रज्ञात्मेति पुनस्तद्विवरणात् । तथाच शास्त्रदृष्ट्या वामदेवस्य मन्वादिभावोक्तिवदिन्द्रस्य स्वोपास्यप्राणजीवसामान्यभावोक्तिः । तत्र प्राणपूर्वपक्षे यावद्ध्यस्मिन् शरीर इत्यादिकं प्राणश्रुत्युपोद्बलकं लिङ्गम् । तस्मिन् जीवधर्मोक्तिस्तु यो वै प्राणः सा प्रज्ञेति तस्य जीवाभेदोपचरणाद्, औपसंहारिकाजरामृतत्वोक्तिरपि तत एव जीवस्याजरत्वादमृतत्वाच्चेति । जीवपूर्वपक्षस्त्वेतद्वैपरीत्येनोपक्रमोपसंहारगतजीवपरप्रज्ञात्मशब्दादिसत्त्वात् । हिततममित्युपक्रमगतातिशायनिकप्रत्ययमात्रं तु प्राणजीवान्यतरोपासनाफलं सकलपापक्षयादिकमिति तन्मात्रविषयत्वेन योजनीयम् । एतच्छङ्कानिराकरणं त्वन्यथासिद्ध्यनन्यथासिद्धिभ्याम् एकवाक्यतानिर्वाहार्थमेकस्मिन्नेव प्राणजीवब्रह्मलिङ्गेषु योजनीयेषु कार्ययोर्लिङ्गं कारणे ब्रह्मणि योजयितुं शक्यम् । कारणस्य सर्वेषु कार्येष्वनुगमादित्यन्यथासिद्धानि तयोर्लिङ्गानि । कार्यान्तरेष्वप्यनुवृत्तस्य ब्रह्मणो लिङ्गानि तु न तयोर्व्यावृत्तयोर्योजयितुं शक्यन्त इत्यनन्यथासिद्धानीति । एवमनन्यथासिद्धैतच्छङ्कानिराकरणम् **नच ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्यमिति भाष्ये, तस्मादनन्यथासिद्धब्रह्मलिङ्गानुसारत इति** टीकायां च सूचितम् । सूत्रेऽप्यनुगमादित्यस्योपक्रमोपसंहारानुगमवत्कारणस्य कार्येष्वनुगमरूपमर्थान्तरमपि विवक्षितमिति तेनैव सूचितम् । एवं सूत्रभाष्यटीकापर्यालोचनया स्पष्टोऽयमर्थ इत्याचार्यैरिह कण्ठतो न प्रदर्शितः । दर्पणे त्वाचार्यैरेव शङ्कामनुद्राव्य ब्रह्माऽब्रह्मलिङ्गानां तयोरनुगमव्यावृत्तिभ्यां विशेषो वर्णितः ॥—**अनन्यथासिद्धेति ।**

धामोपजगाम युद्धेन च पौरुषेण च' इत्यारभ्याम्नाता। तस्यां श्रूयते—'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति। तथोत्तरत्रापि 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' ( कौ० ३।१,२,३ ) इति। तथा 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि। अन्ते च 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' ( कौ० ३।८ ) इत्यादि। तत्र संशयः—किमिह प्राणशब्देन वायुमात्रमभिधीयते, उत देवतात्मेति, जीवोऽथवा परं ब्रह्मेति। ननु 'अतएव प्राणः' इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वम्। इहापि च ब्रह्मलिङ्गमस्ति—'आनन्दोऽजरोऽमृतः' इत्यादि। कथमिह पुनः संशयः संभवति। अनेकलिङ्गदर्शनादिति ब्रूमः। न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते। सन्ति हीतरलिङ्गान्यपि। 'मामेव विजानीहि' ( कौ० ३।१ ) इतीन्द्रस्य वचनं देवतात्मलिङ्गम्। इदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गम्। 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि जीवलिङ्गम्। अत उपपन्नः संशयः। तत्र प्रसिद्धेर्वायुः प्राण इति प्राप्ते, उच्यते—प्राणशब्दं ब्रह्म विज्ञेयम्। कुतः ? तथानुगमात्। तथाहि—पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते

## भामती।

हवत्या लिङ्गमस्ति, **तथाहि**—इन्द्रधामगतं प्रतर्दनं प्रति 'इन्द्र उवाच मामेव विजानीहि' इत्युपक्रम्य, 'प्राणोऽस्मि प्राज्ञात्मा' इत्यात्मनि प्राणशब्दमुच्चचार। प्राज्ञात्मत्वं चास्योपपद्यते; देवतानामप्रतिहतज्ञानशक्तित्वात्, सामर्थ्यातिशयाच्चेन्द्रस्य हिततमपुरुषार्थहेतुत्वमपि। मनुष्याधिकारत्वाच्छास्त्रस्य देवान्प्रत्यप्रवृत्तेर्भ्रूणहत्यादिपापापरामर्शस्योपपत्तेः, लोकाधिपत्यं चेन्द्रस्य लोकपालत्वात्, आनन्दादिरूपत्वं च स्वर्गस्यैवानन्दत्वात्, 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति स्मृतेश्चामृतत्वमिन्द्रस्य। 'त्वाष्ट्रमहनम्' इत्याद्या च विग्रहवत्त्वेन स्तुतिस्तत्रैवोपपद्यते, तथापि परमपुरुषार्थस्यापवर्गस्य परब्रह्मज्ञानादन्यतोऽनवाप्तेः, परमानन्दरूपस्य मुख्यस्यामृतत्वस्याजरत्वस्य च ब्रह्मरूपाव्यभिचारात्, अध्यात्मसंबन्धभूम्नश्च पराचीन्द्रेऽनुपपत्तेः, इन्द्रस्य देवताया आत्मनि प्रतिबुद्धस्य चरमदेहस्य वामदेवस्येव प्रारब्धवि-

## वेदान्तकल्पतरुः।

सूत्रार्थं मनसि निधायाह—**इन्द्रस्य देवताया इति**। ध्यानजसाक्षात्काराभ्युपगमो वाचस्पतेरेतत्सूत्रार्थाबोधादिति कैश्चिदयुक्तमुक्तम्। यतः—**अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा। शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परम्**॥ वसतः इति द्विवचनश्रुत्या सहोत्क्रमणादिलिङ्गानुगृहीतयोपास्यभेदप्रतीतेर्न वाक्यस्य ब्रह्ममात्रपरत्वनिर्णय इति वदन्

## कल्पतरुपरिमलः।

**ननु**—यद्यनन्यथासिद्धब्रह्मलिङ्गानुसारेणान्यथासिद्धनयनं गतार्थं, तर्हि—**तस्मादनन्यथासिद्धब्रह्मलिङ्गानुसारत** इत्येतदपि गतार्थं स्यादिति—**चेत्, अस्तु** अतएव त्रीण्युपासनानीति प्रथमविचार एवागतार्थ इति टीकायां कण्ठतः कृतः। द्वितीयविचारस्तु प्राचीनन्यायसिद्ध इति तत्संचारणार्थमनन्यथासिद्धपदमात्रेण सूचितः। **अथवा** अनुगमव्यावृत्तिरूपानन्यथासिद्ध्यन्यथासिद्धिप्रकारभेदव्युत्पादनेनागतार्थता द्रष्टव्या॥ **वसत इति द्विवचनश्रुत्येति। ननु**—सहवासादिलिङ्गानुगृहीतद्विवचनश्रुत्या प्राणप्रज्ञाशब्दोक्तयोर्भेदावगमाद् ब्रह्मवद्यथा तयोरुपास्यत्वमेवमिन्द्रस्यापि बहुलिङ्गप्राप्तस्योपास्यत्वमङ्गीकृत्य चत्वार्युपासनानीति पूर्वपक्षयितुं शक्यम्; अध्यात्मसंबन्धिलिङ्गानां यथार्हं जीवाद्यन्वयोपपत्तेः, मध्ये प्राणप्रज्ञाशब्दयोर्मुख्यप्राणजीवपरत्वेऽपि प्राण एव प्रज्ञात्मेत्युपसंहारे ब्रह्मपरत्ववत्प्राणोऽस्मि प्रज्ञात्मेत्युपक्रमे शक्रपरत्वस्यापि संभवात्, तं मामायुरमृतमुपास्वेत्युपक्रमे शक्रस्य, स मआत्मेति विद्यादित्युपसंहारे ब्रह्मणः, तस्मादेतदेवोक्थमुपासीतेति वक्तारं विद्यादिति च मध्ये प्राणस्य जीवस्य चोपासना विधीयत इति स्पष्टमेवोपासनाचतुष्टयप्रतीतेश्चेति—**चेत्, उच्यते**; "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे" त्येतदनन्तरम् "आयुः प्राणः प्राणो वा आयुः यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरित्युपास्यत्वेन निर्दिष्टस्य प्राणस्यायुःप्रदानस्वातन्त्र्यं श्रुतम्, समनन्तरखण्डे चास्तित्वे च प्राणानां निःश्रेयसमिति प्रस्तुतस्य प्राणस्य सत्वएवेन्द्रियाणां निःश्रेयसमुक्त्वा जीवति वागपेतो मूका हि पश्यामो जीवति चक्षुरपेतो अन्धा हि पश्याम इत्यादिना प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीत्यन्तेन संदर्भेण तस्यैव पूर्वोक्तमायुःप्रदानस्वातन्त्र्यमन्वयव्यतिरेकाभ्यां विवृतम्। एवं प्राणधर्मकीर्तनानन्तरं "अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामो" इति यथा **प्रज्ञाया** जीवस्य **सर्वाणि भूतानि संबन्धीनि** भूत्वा तद्दृश्यत्वेन कल्पितानि वस्तुत **एकं भवन्ति** तथा व्याख्यानमुपक्रम्य वक्तृत्वघ्रातृत्वादिप्रज्ञाधर्मकीर्तनं प्रस्तुतप्रज्ञात्मविषयमवतिष्ठते। एवमिहोपास्यत्वेन निर्दिष्टयोः प्राणप्रज्ञात्मनोः क्रमेण व्यवस्थितं धर्मकीर्तनमिव तदुपासनयोः फलकीर्तनमपि दृश्यते "प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोती"ति "प्रज्ञया सत्यसंकल्पमिति" च। एवं प्राणप्रज्ञात्मसंबन्धिलिङ्गानां प्राणोऽस्मि प्रज्ञात्मेत्यतोऽन्यत्र

उपक्रमे तावत् "वरं वृणीष्व" इतीन्द्रेणोक्तः प्रतर्दनः परमं पुरुषार्थं वरमुपचिक्षेप—'त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। नह्यन्यत्र परमात्मज्ञानाद्धिततमप्राप्तिरस्ति। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वेता० ३।८) इत्यादिश्रुतिभ्यः। तथा 'स यो मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया' (कौ० ३।१) इत्यादि च ब्रह्मपरिग्रहे घटते। ब्रह्मविज्ञानेन हि सर्वकर्मक्षयः प्रसिद्धः—"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु० २।२।८) इत्याद्यासु श्रुतिषु। प्रज्ञात्मत्वं च ब्रह्मपक्ष एवोपपद्यते। नह्यचेतनस्य वायोः प्रज्ञात्मत्वं संभवति। तथोपसंहारेऽपि—"आनन्दोऽजरोऽमृतः" इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् संभवन्ति। "स न साधुना कर्मणा भूयान्भवति नो एवासाधुना कर्मणा कनीयानेष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म

## भामती।

पाककर्माशयमात्रं भोगेन क्षपयतो ब्रह्मण एव सर्वमेतत्कल्पत इति विग्रहवदिन्द्रजीवप्राणवायुपरित्यागेन ब्रह्मैवात्र प्राणशब्दं प्रतीयत इति पूर्वपक्षाभावादनारभ्यमेतदिति। **अत्रोच्यते**—"यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति यस्यैव प्राणस्य प्रज्ञात्मन उपस्यत्वमुक्तं तस्यैवप्राणस्य प्रज्ञात्मना सहोत्क्रमणमुच्यते। नच ब्रह्मण्यभेदे द्विवचनं, न सहभावः, नचोत्क्रमणम्। तस्माद्वायुरेव प्राणः। जीवश्च प्रज्ञात्मा। सह प्रवृत्तिनिवृत्त्या भक्त्यैकत्वमनयोरुपचरितं 'यो वै प्राणः' इत्यादिना। आनन्दामराजरापहतपाप्मत्वादयश्च ब्रह्मणि प्राणे भविष्यन्ति। तस्माद्यथायोगं त्रय एवात्रोपास्याः। न चैष वाक्यभेदो दोषमावहति; वाक्यार्थावगमस्य पदार्थावगमपूर्वकत्वात्, पदार्थानां चोक्तेन मार्गेण स्वातन्त्र्यात्, तस्मादुपास्यभेदादुपासात्रैविध्यमिति पूर्वः पक्षः। **सिद्धान्तस्तु**—सत्यं पदार्थावगमोपायो वाक्यार्थावगमः, नतु पदार्थावगमपराण्येव पदानि, अपि त्वेकवाक्यार्थावगमपराणि। तमेव त्वेकं वाक्यार्थं पदार्थावगममन्तरेण न शक्नुवन्ति कर्तुमित्यन्तरा तदर्थमेव तमप्यवगमयन्ति, तेन पदानि विशिष्टैकार्थावबोधनस्वरसान्येव बलवद्बाधकोपनिपातान्नानार्थबोधपरतां नीयन्ते। यथाहुः—'संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति। तेन यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे चैकवाक्यत्वाय 'प्रजापतिरुपांशु यष्टव्यः' इत्यादयो न पृथग्विधयः, किंत्वर्थवादा इति निर्णीतं, तथेहापि 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्युक्त्वान्ते 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' इत्युपसंहाराद्ब्रह्मण्येकवाक्यत्वावगतौ सत्यां जीवमुख्यप्राणलिङ्गे अपि तदनुगुणतया नेतव्ये; अन्यथा वाक्यभेदप्रसङ्गात् यत्पुनर्भेददर्शनं 'सह ह्येतौ' इति, तज्ज्ञानक्रियाशक्तिभेदेन बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्निर्देशः प्रत्यगात्मानमेवोपलक्षयितुम्। अतएवोपलक्ष्यस्य प्रत्य-

## वेदान्तकल्पतरुः।

पूर्वपक्षसंभवमाह—**अत्रोच्यत इति**। तस्य प्राणस्य प्रज्ञात्मना जीवेन सहोपास्यत्वमुक्तमित्यर्थः। **ब्रह्मणि प्राण इति**। स एष प्राण आनन्दोऽजर इत्यत्र प्राणशब्दो ब्रह्मवाचीत्यर्थः। भवतु पदार्थावगमपूर्वको वाक्यार्थावगमः, तथापि गामानयेत्यादाविवैकवाक्यता किं न स्यादत आह—**पदार्थानां चेति**। गुणप्रधानयोग्यपदार्थावगमे भवत्वेकवाक्यता, इहतु सहोत्क्रामत इत्यादिभिः स्वातन्त्र्यावगतेर्वाक्यभेद इत्यर्थः। हेतुः पदार्थावबोधो हि वाक्यार्थबोधे, अतएव स गुणः। उद्देशस्तु वाक्यार्थप्रत्ययः प्रधानम्, अतो न प्रतीतैकवाक्यत्वभङ्ग इति सिद्धान्तयति—**सत्यमित्यादिना**। ज्ञानशक्तिमती बुद्धिः, क्रियाशक्तिमांश्च प्राणः। यदि प्रत्यगात्मोपाधी भेदेन निर्दिष्टौ, नतु जीवप्राणौ स्वातन्त्र्येण, कथं तर्हि प्राण एव प्रज्ञात्मेत्युपक्रम्योपास्वेति तयोरुपास्यत्वनिर्देशः, भेदेनोक्तयोर्वा कथमभेदनिर्देशः, अत आह—**अतएवेति**। **ननु** जीवप्राण-

## कल्पतरुपरिमलः।

नेतुमशक्यत्वादयमुपदेशो वामदेवस्य मनुसूर्यादिभाववद्ब्रह्मभूतस्येन्द्रस्य प्राणादिभावोऽप्यस्तीति मुख्यप्राणजीवविषयः। एवमुपास्वेति च पृथक् पृथक् तदुभयोपासनाविधानम्। एतदेवोक्थमुपासीतेत्यत्र वक्तारं विद्यादित्यादिषु च प्राणोपासनं प्रज्ञोपासनं चानूद्य शरीरोत्थापकत्ववक्तृत्वादिगुणविधानमिति न तेषामपि वैयर्थ्यमतः "प्राणोऽस्मि प्रज्ञात्मे" त्यादिवाक्ये तावन्नेन्द्रोपासनाविधिः। नापि "मामेव विजानीहीत्यत्र;" तस्य हिततमत्वसर्वपापासंस्पर्शहेतुत्वलिङ्गेन प्रकरणावसाननिरूपणीयब्रह्मोपासनाविध्यर्थत्वात्। तस्मात् त्रीण्युपास्यानीत्येव युक्तं पूर्वपक्षयितुम्॥ **हेतुः पदार्थावबोध इत्यादि**। **ननु**—द्विवचनश्रुतिसहवासादिलिङ्गप्राप्तस्य प्राणप्रज्ञात्मभेदस्य विधिश्रुतिप्राप्तानां तत्तदुपासनाविधीनां च वाक्यार्थविरोधेन त्यागे श्रुतिलिङ्गवाक्यादिबलाबलवैपरीत्यप्रसङ्गात् 'स्योनं ते' इति मन्त्रे पूर्वोत्तरभागव्यवस्थितसदनकरणप्रतिष्ठापनप्रकाशनसामर्थ्यलक्षणवाक्यभेदावहलिङ्गविरोधेन तस्मिन्सीदेति पूर्वोक्तसापेक्षत्वेनावगम्यमानस्य वाक्यैक्यस्य बाधव्यवस्थापनं

कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते'' इति, 'एष लोकाधिपतिरेष लोकेशः' (कौ० ३।८) इति च। सर्वमेतत्परस्मिन्ब्रह्मण्याश्रीयमाणेऽनुगन्तुं शक्यते, न मुख्ये प्राणे । तस्मात्प्राणो ब्रह्म ॥ २८ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

यदुक्तं प्राणो ब्रह्मेति, तदाक्षिप्यते । न परं ब्रह्म प्राणशब्दम् । कस्मात् ? वक्तुरात्मोपदेशात्, वक्ताहीन्द्रो नाम कश्चिद्विग्रहवान्देवताविशेषः स्वमात्मानं प्रतर्दनायाचचक्षे—'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्यहंकारवादेन । स एष वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् । नहि ब्रह्मणो वक्तृत्वं संभवति, 'अवागमनाः' ( बृह० ३।८।८ ) इत्यादिश्रुतिभ्यः । तथा विग्रहसंबन्धिभिरेव ब्रह्मण्यसंभवद्भिर्धर्मैरात्मानं तुष्टाव—'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीञ्शालावृकेभ्यः प्रायच्छम्' इत्येवमादिभिः। प्राणत्वं चेन्द्रस्य बलवत्त्वादुपपद्यते। 'प्राणो वै बलम्' इति हि विज्ञायते । बलस्य चेन्द्रो देवता प्रसिद्धा । या च काचिद्बलकृतिरिन्द्रकर्मैव तदिति हि वदन्ति । प्रज्ञात्मत्वमप्यप्रतिहतज्ञानत्वाद्देवतात्मनः संभवति । अप्रतिहतज्ञाना देवता इति हि वदन्ति । निश्चिते चैवं देवतात्मोपदेशे हिततमत्वादिवचनानि यथासंभवं तद्विषयाण्येव योजयितव्यानि । तस्माद्वक्तुरिन्द्रस्यात्मोपदेशान्न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते—'अध्यात्मसंबन्धभूमा ह्यस्मिन्' इति । अध्यात्मसंबन्धः प्रत्यगात्मसंबन्धस्तस्य भूमा बाहुल्यमस्मिन्नध्याय उपलभ्यते—'यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः' इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्यायुष्प्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति, न देवताविशेषस्य पराचीनस्य । तथास्तित्वे च प्राणानां निःश्रेयसमित्यध्यात्ममेवेन्द्रियाश्रयं प्राणं दर्शयति । तथा 'प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' (कौ० ३।३) इति, 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इति चोपक्रम्य 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' इति विषयेन्द्रियव्यवहारानभिभूतं प्रत्यगात्मानमेवोपसंहरति । 'स म आत्मेति विद्यात्' इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुर्न पराचीनपरिग्रहे । 'अयमात्मा ब्रह्म सर्वानुभूः' ( बृह० २।५।१९ ) इति च श्रुत्यन्तरम् । तस्मादध्यात्मसंबन्धबाहुल्याद्ब्रह्मोपदेश एवायं न देवतात्मोपदेशः ॥ २९ ॥ कथं तर्हि वक्तुरात्मोपदेशः—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म—'मामेव विजानीहि' इति । यथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति तद्वत् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' ( बृ० १।४।१० ) इति श्रुतेः । यत्पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत्परिहर्तव्यम् । अत्रोच्यते—न त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासो, यस्मादेवंकर्माहं तस्मान्मां विजानीहीति। कथं तर्हि ? विज्ञानस्तुत्यर्थत्वेन । यत्कारणं त्वाष्ट्रवधादीनि साहसान्युपन्यस्य परेण विज्ञानस्तुतिमनुसंदधाति—'तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते' इत्यादिना । एतदुक्तं भवति—यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते, स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्यत इति । विज्ञेयं तु ब्रह्मैव 'प्राणोऽस्मि प्रज्ञात्मा' इति वक्ष्यमाणम् । तस्माद्ब्रह्मवाक्यमेतत् ॥ ३० ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३१॥

यद्यप्यध्यात्मसंबन्धभूमदर्शनान्न पराचीनस्य देवतात्मन उपदेशः; तथापि न ब्रह्मवाक्यं भवितुमर्हति । कुतः ? जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च । जीवस्य तावदस्मिन्वाक्ये विस्पष्टं लिङ्गमुप-

भामती ।

गात्मस्वरूपस्याभेदमुपलक्षणं भेदेनोपलक्षयति—'प्राण एव प्रज्ञात्मा' इति । 'तस्मादनन्यथासिद्धब्रह्मलिङ्गानुसारतः । एकवाक्यबलात्प्राण जीवलिङ्गोपपादनम्' इति संग्रहः ॥२८॥२९॥३०॥ न ब्रह्मवाक्यं भवितुमर्ह-

लभ्यते 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि । अत्र हि वागादिभिः करणैर्व्यापृतस्य कार्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । तथा मुख्यप्राणलिङ्गमपि—'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति। शरीरधारणं च मुख्यप्राणस्य धर्मः; प्राणसंवादे वागादीन्प्राणान्प्रकृत्य—'तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' ( प्र० २।३ ) इति श्रवणात् । ये तु 'इमं शरीरं परिगृह्य' इति पठन्ति, तेषामिमं जीवमिन्द्रियग्रामं वा परिगृह्य शरीरमुत्थापयतीति व्याख्येयम् । प्रज्ञात्मत्वमपि जीवे तावच्चेतनत्वादुपपन्नम् । मुख्येऽपि प्राणे प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपन्नमेव । जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सहवृत्तित्वेनाभेदनिर्देशः स्वरूपेण च भेदनिर्देश इत्युभयथा निर्देश उपपद्यते—'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः' इति। ब्रह्मपरिग्रहे तु किं कस्माद्भिद्येत । तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां न ब्रह्मेति चेत्, नैतदेवं; उपासात्रैविध्यात् । एवं सति त्रिविधमुपासनं प्रसज्येत, जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । नचैतदेकस्मिन्वाक्येऽभ्युपगन्तुं युक्तम् । उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते। 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इत्युक्त्वान्ते 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' इत्येकरूपावुपक्रमोपसंहारौ दृश्येते । तत्रार्थैकत्वं युक्तमाश्रयितुम् । नच ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्यम्; दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्रार्पणानुपपत्तेः । आश्रितत्वाच्चान्यत्रापि ब्रह्मलिङ्गवशात्प्राणशब्दस्य ब्रह्मणि वृत्तेः । इहापि च हिततमोपन्यासादिब्रह्मलिङ्गयोगाद्ब्रह्मोपदेश एवायमिति गम्यते । यत्तु मुख्यप्राणलिङ्गं दर्शि-

---

## भामती ।

**तीति** । नैष संदर्भो ब्रह्मवाक्यमेव भवितुमर्हतीति, किंतु तथायोगं किंचिदत्र जीववाक्यं, किंचिन्मुख्यप्राणवाक्यं किंचिद्ब्रह्मवाक्यमित्यर्थः । **प्रज्ञासाधनप्राणान्तराश्रयत्वादिति** । प्राणान्तराणीन्द्रियाणि, तानि हि मुख्ये प्राणे प्रतिष्ठितानि । **जीवमुख्यप्राणयोरन्यतर** इत्युपक्रममात्रम् । **उभाविति तु** पूर्वपक्षतत्त्वम्, ब्रह्म तु ध्रुवम् । **न ब्रह्मेति** । न ब्रह्मैवेत्यर्थः । **दशानां भूतमात्राणामिति** । पञ्च शब्दादयः, पञ्च पृथिव्यादय इति दश भूतमात्राः । पञ्च बुद्धीन्द्रियाणि पञ्च बुद्धय इति दश प्रज्ञामात्राः । तदेवं स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे—**अथवेति** । पूर्वं प्राणस्यैकमुपासनमपरं जीवस्यापरं ब्रह्मण इत्युपासनात्रैविध्येन वाक्यभेदप्रसङ्गो दूषणमुक्तम् । इह तु ब्रह्मण एकस्यैवोपासात्रयविशिष्टस्य विधानान्न वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम् । तदेतदालोचनीयं कथं न वाक्यभेद इति । युक्तं 'सोमेन यजेत' इत्यादौ सोमादिगुणविशिष्टयागविधानं; तद्गुणविशिष्टस्यापूर्वस्य कर्मणोऽप्राप्तस्य विधिविषयत्वात्, इह तु सिद्धरूपं ब्रह्म न विधिविषयो भवितुमर्हति; अभावार्थत्वात् । भावार्थस्य विधिविषयत्वनिय-

## वेदान्तकल्पतरुः ।

ब्रह्मणामुपास्यत्वेन यदि पूर्वपक्षः, कथं तर्हि जीवमुख्यप्राणलिङ्गसूत्रावतारकपूर्वपक्षभाष्ये ब्रह्मपरत्वनिषेधोऽत आह—**ब्रह्मवाक्यमेवेति** । ब्रह्मपरत्वनियमो निषिध्यत इत्यर्थः । एतत्सूत्रपूर्वपक्षभाष्य एव प्राणस्य प्रज्ञात्मत्वमुपपादयितुं प्रज्ञेत्यादिभाष्यम् । तत्र प्राणान्तरशब्दार्थमाह—**प्राणान्तराणीति** । न मुख्यप्राणस्थितौ स्थितेस्तदुत्क्रान्तावुत्क्रान्तेस्तत्प्रतिष्ठानीन्द्रियाणि । एतत्सूत्रपूर्वपक्षोपसंहारभाष्यं—**तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां** न ब्रह्मेति, तदप्युपासनात्रयपरतया नियमयति—**जीवेति** । **अन्यतरत्वपक्ष उपक्रममात्रम्** अस्थिर इत्यर्थः । **ननु** त्रयाणमुपासने कथमुभाविति निर्देशोऽत आह—**ब्रह्म त्विति** । उभयोः प्राप्त्यर्थोऽयं निर्देशो न ब्रह्मव्यावृत्त्यर्थः । तर्हि न ब्रह्मेति कथमत आह—**न ब्रह्मैवेति** । एवमेता भूतमात्रा इति वाक्यस्यार्थत उपादानेन ब्रह्मलिङ्गस्यान्यथासिद्धिप्रदर्शकं जीवमुख्यप्राणलिङ्गसूत्र ( ब्र. अ. १ पा. ४ सू. १७ ) सिद्धान्तभाष्यं दशानामित्यादि, तद्व्याचष्टे—**पञ्चेति** । श्रुतौ भूतमात्राशब्दे द्वन्द्वसमासः, भूतानि च मात्राश्चेति । भूतानि पृथिव्यादीनि पञ्च, मात्राः शब्दादयः सूक्ष्मभूतानि च पञ्चेति दशेत्यर्थः । प्रज्ञामात्राणां चेति भाष्ये दशानामित्यनुषञ्जनीयं, चशब्दादित्यभिप्रेत्य व्याचष्टे—**पञ्च बुद्धीन्द्रियाणीति** । **पञ्चबुद्धय इति** । पञ्चेन्द्रियजनिता बुद्धय इत्यर्थः । अत्रापि द्वन्द्व एव । **प्रज्ञाः** बुद्धयः । मीयन्ते शब्दादय आभिरिति मात्रा इन्द्रियाणि । पूर्वोत्तरव्याख्ययोः सूत्रार्थं विभजते—**पूर्वमिति** । उपासनात्रैविध्यप्रसङ्गादिति पूर्वत्र व्याख्या, अत्र त्वेकस्या उपासनायास्त्रिविधत्वाद् न वाक्यभेद इति व्याख्येत्यर्थः । किमुपासनात्रयविशिष्टं ब्रह्म विधीयते, उत ब्रह्मविशिष्टमुपासनात्रयं, किं वा तदनुवादेन तदाश्रित्योपासनात्रयमिति । **नाद्य**

तम्—'इदं शरीरं परिगृह्योत्थापयति' इति। तदसत्; प्राणव्यापारस्यापि परमात्मायत्तत्वात्परमात्मन्युपचरितुं शक्यत्वात्, 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (काठ० २।५।५) इति श्रुतेः। यदपि 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि जीवलिङ्गं दर्शितं, तदपि न ब्रह्मपक्षं निवारयति। नहि जीवो नामात्यन्तभिन्नो ब्रह्मणः; 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुतिभ्यः। बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सञ्जीवः कर्ता भोक्ता चेत्युच्यते। तस्योपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते। 'यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥' (के० १।४) इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति। यत्पुनरेतदुक्तम्—'सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः' इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादे नोपपद्यत इति। नैष दोषः; ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः। उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमविरुद्धम्। अथवा—'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्यस्यायमन्योऽर्थः—न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते। कथम्? उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मोपासनं विवक्षितं, प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेणच। तत्र 'आयुरमृतमुपास्स्वायुः प्राणः' इति, 'इदं शरीरं परिगृह्योत्थापयति' इति, 'तस्मादेतदेवोक्थमुपासीत' इति च प्राणधर्मः। 'अथ

## भामती।

मात्। वाक्यान्तरेभ्यश्च ब्रह्मावगतेः प्राप्तत्वात्तदनूद्याप्राप्तोपासा भावार्थो विधेयस्तस्य च भेदाद्विध्यावृत्तिलक्षणो वाक्य-

## वेदान्तकल्पतरुः।

इत्याह—**युक्तमिति। न द्वितीय** इत्याह—**वाक्यान्तरेभ्यश्चेति।** विशेषेणब्रह्मणः संनिधौ प्राप्तत्वाद् न तद्विशिष्टोपास्तिविधिरित्यर्थः। **ततस्तृतीयपक्षः** परिशिष्यत इत्याह—**तदनूद्येति।** तं दूषयति—**तस्य चेति।** ब्रह्मानुवादेनोपासनविधावेकविशेष्यावशीकारादुपासनानां च परस्परमसङ्गात्प्रत्युपास्तिविध्यावृत्त्यापात इत्यर्थः।—**अत्र केचित्**—प्रकरणित्वेऽपि ब्रह्मणोऽवान्तरवाक्यभेदेन श्रवणादिवद्यज्ञादिवच्चोपासनात्रयं विधेयम्, अतएकवाक्यत्वेऽपि नानावाक्यत्वमविरुद्धम्। अपिच नैव वाक्यभेदः; प्राणादित्रितयधर्मविशिष्टैकोपासनविधेः—**इत्याहुः। तन्न;**—यतः **अगत्या कल्प्योऽपूर्वत्वाद्वाक्यभेदो हि धारणे। इह ब्रह्मातिरेकेण नापूर्वार्थावधारणा॥** उपक्रमोपसंहारैक्यादपगते एकवाक्यत्वे सर्वात्मत्वविवक्षया प्राणजीवधर्मा ब्रह्मणि स्तुत्यर्थं निर्दिष्टा इति शक्यते योजयितुम्। सर्वात्मत्वं च सृष्टिवाक्यसिद्धं शक्यमनुवदितुं, नत्वेवमुपरिधारणमन्यतः प्राप्तमित्यशक्यानुवादत्वाद्वाक्यभेदस्तत्र कल्पितः। श्रवणादिविधिस्त्वनिष्टः, यज्ञादिविधिरपूर्वत्वाद्विषमः॥ **यच्च** त्रितयधर्मविशिष्टमेकमुपासनमिति, **तदपि न;** इह हि किं जीवप्राणौ स्वधर्मैर्विशिष्य पुनस्ताभ्यां

## कल्पतरुपरिमलः।

प्रत्युद्धृतं स्यात्, यदि कामयेत वर्षुकः पर्जन्यः स्यादिति सामानाधिकरण्यरूपस्य वाक्यस्य यदि कामयेत यजमान इत्यध्याहारेण बाधव्यवस्थापनं च प्रत्युद्धृतं स्यात्, नच समभिव्याहारावगताद्वाक्यादुपक्रमोपसंहारावगते वाक्ये कश्चिदस्ति विशेषः; उपांशुयाजवाक्ये जामितादोषपरिहारार्थमन्तरावाक्ये विधावश्यमभ्युपगन्तव्ये तत्रैव शाखाभेदेनाग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलमध्ये पठितानां वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां क्रमप्रमाणेनान्वये सति तत्तन्मन्त्रोदितानां विष्ण्वादीनां तत्र यागे देवतात्वस्य प्राप्तत्वाद्विष्ण्वादिवाक्येषु विधेयालाभाद्विधित्यागो नतूपक्रमोपसंहारावगतवाक्यविरोधात्, पुत्रेष्टिवाक्ये त्वष्टाकपालादिषु विध्यश्रवणाद् विधियोग्यपुरुषव्यापारमात्रस्याप्यश्रवणाद् यच्छब्दोपबन्धेनानुवादत्वप्रतीतेः यस्मिन् जातइति वाक्ये पूतत्वादीनां समुच्चयावगमाच्चाष्टाकपालादिषु विध्यनङ्गीकारो नोपक्रमोपसंहारावगतैकवाक्यत्वविरोधादिति—**चेत्, उच्यते;** श्रुत्यादिषु परमपि तात्पर्यलिङ्गवत्प्रबलं पूर्वमपि तात्पर्यलिङ्गरहितं दुर्बलमिति हि स्थितिः। तदिहोपक्रमोपसंहारावगमिततात्पर्येण ब्रह्मवाक्येनातथाभूतद्विवचनश्रुत्यादि बाध्यते यथाऽन्तवत्त्वादिलिङ्गेनाकाशश्रुत्यादिकमिति न किंचिदवद्यम्॥ **यज्ञादिविधिरपूर्वत्वाद्विषम इति। ननु** यथा सर्वात्मत्वविवक्षया प्राणजीवधर्माः स्तुत्यर्थं निर्दिष्टा इति यथा शक्यते योजयितुं, यथाच सर्वात्मत्वं सृष्टिवाक्यसिद्धं शक्यमनुवदितुं, तथा यज्ञादिभिरपि सिषाधयिषितत्वेन ब्रह्मवेदनस्तुत्यर्थं यज्ञादयो निर्दिष्टा इति शक्यं योजयितुं, कर्मकाण्डगतवाक्यजातसिद्धं च यज्ञादिकं शक्यमनुवदितुम्; अथापि तत्र फलविशेषसाधनत्वस्यापूर्वत्वाद्विधिश्चेत्, इहापि स्यादविशेषात्। तस्माद्यज्ञादिविधिवदुपकोसलविद्यायां "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" "एतदमृतमभयमेतद् ब्रह्म"त्युपक्रमोपसंहारावगतब्रह्मवाक्यमध्ये

**यथास्यै प्रज्ञायै सर्वाणि भूतान्येकीभवन्ति तद्याख्यास्यामः' इत्युपक्रम्य 'वागेवास्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति' इत्यादिः प्रज्ञाधर्मः। 'ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दशप्रज्ञामात्रा अधिभूतम्। यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः। यद्धि प्रज्ञामात्रा न स्युर्न भूतमात्रा स्युः। नह्यन्यतरतो रूपं किंचन सिद्ध्येत्। नो एतन्नाना। तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राणएव प्रज्ञात्मा' इत्यादिर्ब्रह्मधर्मः। तस्माद्ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम्। अन्यत्रापि 'मनोमयः प्राणशरीरः' ( छा० ३।१४।२ ) इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितम्। इहापि तद्युज्यते; वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात्प्राणप्रज्ञाब्रह्मलिङ्गाव-**

## वेदान्तकल्पतरुः।

विशिष्टं ब्रह्मोपास्यमिष्यते, उतारुणैकहायनीवत्सर्वविशेषणविशिष्टब्रह्मोपासनं विधाय पार्ष्ठिको जीवप्राणयोस्तद्धर्माणां च विशेषणविशेष्यभावो विशिष्टविधिसामर्थ्यात्प्रमीयते इति। **नाद्यः**; जीवप्राणयोः स्वधर्मान् प्रति विशेष्यत्वं ब्रह्म प्रति विशेषणत्वम् इति वैरूप्यात्। **न चरमः**; प्राणादीनां विप्रकीर्णत्वादेकविशिष्टप्रतीत्ययोगादिति॥ दिवोदासस्यापत्यं **दैवोदासिः। धाम** गृहम्। **अरुन्मुखानिति।** रौति यथार्थं शब्दयति इति रुद् वेदान्तवाक्यं तत्र मुखं येषां ते रुन्मुखाः तेभ्योऽन्ये अरुन्मुखाः **शालावृकेभ्यः** आरण्यश्वभ्यः। **अस्तित्वे चेति।** प्राणशब्दवाच्यस्य परमात्मनोऽस्तित्वे, **प्राणानां** इन्द्रियाणां। **निःश्रेयसं** जीवनादिपुरुषार्थसिद्धिः। **एवमेवैता इति।** पृथिव्यादीनि शब्दादयश्चेन्द्रियेषु तज्जन्यज्ञानेषु

## कल्पतरुपरिमलः।

अग्निविद्याविधिवद्, भूमविद्यायां "तरति शोकमात्मवित्" "आत्मैवेदं सर्व"मित्युपक्रमोपसंहारावगतब्रह्मवाक्यमध्ये नामाद्युपासनाविधिवच्च प्राणजीवोपासनविधिरप्यङ्गीकर्तुं युक्त एव। **उच्यते**; त्रिविधोपासनविधिमभ्युपगच्छता मामेव विजानीहीत्यत्र तावद् ब्रह्मोपासनविधिर्वक्तुं न शक्यते; "त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" "एतदेव मनुष्याय हिततमं मन्ये यन्मां विजानीयादिति" प्रश्नोत्तरावगततात्पर्यहिततमत्वलिङ्गविरोधात्। हिततमत्वं हि विज्ञानस्योच्यमानं निरतिशयपुरुषार्थत्वं निरतिशयपुरुषार्थसाधनत्वं वा स्यात्, उभयथापि तदखण्डानन्दविषयस्य निखिलानर्थनिवृत्तिपूर्वकब्रह्मावाप्तिसाधनस्य च विशुद्धब्रह्मसाक्षात्कारस्यैव युज्यते। अतस्तल्लिङ्गं विजानीहीत्युक्तस्य विज्ञानस्याविधेयब्रह्मसाक्षात्कारतां तत्राख्यातस्य गोसदृशं गवयं विद्धि आत्मानं रथिनं विद्धीत्यादिलौकिकवैदिकवाक्यरीत्या प्रतिपाद्यपुरुषाभिमुखीकरणार्थविधिसरूपतां च व्यवस्थापयति। अतो विजानीहीत्यत्र तावन्न ब्रह्मोपासनाविधिशङ्कावकाशः। नापि प्राणोऽस्मीत्यादौ तत्रापि मामिति प्रयोगस्य पूर्वप्रयोगसाम्येन निर्विशेषब्रह्मपरत्वावसायात्, तत्रत्यप्राणशब्दस्य चेन्द्रविश्वामित्रसंवादगतप्राणशब्दसाम्येन तत्परत्वावसायाच्च। ऐतरेयकोपनिषदि हीन्द्रविश्वामित्रसंवादोऽस्यामुपनिषदीन्द्रप्रतर्दनसंवादवत् प्रवृत्तः। तत्र हि विश्वामित्रं प्रकृत्य "इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः वरं ते ददामी" त्युपक्रमः। इन्द्रगततेजोविशेषेणेन्द्रं ब्रह्मसाक्षात्कारेण ब्रह्मभूयं गतमालक्ष्य "त्वामेव विजानीया"मिति ऋषेः प्रश्नः। "प्राणो वा अहमस्मि ऋषे"इतीन्द्रस्योत्तरम्। तत्र प्राणशब्दः परब्रह्मपरः; "प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मी"ति वाक्यशेषप्रतिपादितसार्वात्म्यलिङ्गात्। एवंच साक्षात्काररूपे प्रकृतविज्ञाने प्रयुक्तस्योपास्वेत्यस्यापि तत्र साक्षात्कारे फलरूपतया स्वतःप्राप्तावृत्त्यनुवादकत्वमेव कल्पनीयम्। एवंच "स मआत्मेति विद्यादि"त्युपसंहारेऽपि प्रक्रान्तब्रह्मविज्ञानपरे विधिसारूप्यमात्रमिति तत्रापि न ब्रह्मोपासनाविधिशङ्कावकाशः। निर्विशेषप्रकरणमध्ये प्राणजीवोपासनाविधिरिति शङ्कावशिष्यते, सापि न प्राणोऽस्मि प्रज्ञात्मेत्यत्र कर्तुं युक्ता; तस्य वाक्यस्य निर्विशेषब्रह्मसाक्षात्कारपरतायाः प्रतिपादितत्वात्, वाक्यशेषे तद्गुणतत्फलकीर्तनानां च सार्वात्म्यादिना तत्स्तावकत्वस्यैवोचितत्वाच्च। "एतदेवोक्थं" "वक्तारं विद्यादिति" वाक्ययोश्च न तद्द्वयविधिशङ्का कर्तुं युक्ता; तयोः फलाश्रवणेन नामाद्युपासनाविधिवत्फलार्थत्वायोगात्, निर्विशेषब्रह्मविद्यायाममिविद्यावदङ्गत्वाभावाच्च। तस्मात्तयोरपि वाक्ययोर्विधिसरूपार्थवादतैव युक्ता। अथापि प्राणाद्यात्मत्वं स्वरूपतोऽप्राप्तं चेदुपरिधारणवत्स्यात्तदा कथंचिद्विधीयेतापि, तदपि नास्ति; सार्वात्म्यवाक्यैः प्राप्तत्वादतोऽपूर्वत्वाभावात् स्तुत्यर्थमनुवाद्यं सार्वात्म्यमित्याशयः॥ **ब्रह्म प्रति विशेषणत्वमिति वैरूप्यादिति।** यद्यपि वैरूप्यं नासंभवित्वरूपोऽर्थदोषः, नापि तद्बोधनाशक्तिरूपः शब्ददोषः, अर्थानां किंचिद्विशेष्यत्वेऽप्यन्यविशेषणतायाः शब्दानां विशिष्टोपस्थापनपूर्वकमन्यत्रतदन्वयबोधकतायाश्च **'विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः'**

## वेदान्तकल्पतरुः ।

च विषयत्वेनार्पिताः । **प्रज्ञाः** बुद्धयः । **मात्राः** इन्द्रियाणि । **प्राणे** परमात्मनि । अर्पितानि । **नेमि**वद्विषयाः । **अरवदि**न्द्रियबुद्धयः । **नाभि**वदात्मा । **तान्वरिष्ठ इति ।** प्राणाः किलास्मासु कः श्रेष्ठ इति निर्दिधारयिषवः प्रजापतिं जग्मुः, स आह यस्मिन् उत्क्रान्ते इदं शरीरं पापिष्ठमिव भवति स श्रेष्ठ इति । तथेति वागादय उच्चक्रमुः । तथापि शरीरमव्यग्रमवर्तत प्राणोच्चिक्रमिषायां शरीरकरणेष्वनवस्थामाप्नुवत्सु यान् श्रेष्ठंमन्यान् चक्षुरादीन् श्रेष्ठः प्राण उवाच । प्राणापानादिभिः पञ्चधात्मानं स्वं विभज्यैतदिति क्रियाविशेषणमित्थमित्यर्थः । वाति गच्छतीति वानं वानमेव वाणम् । वा गतिगन्धनयोः । अस्थिरं शरीरमित्यर्थः । **तस्मादेतदेवेति ।** उत्थापयति शरीरादिकमित्युक्थम् । **अथ यथेति । अस्या** जीवलक्षणायाः प्रज्ञायाः संबन्धीनि भूत्वा **सर्वा** सर्वाणि भूतानि तादृशत्वेन कल्पितानि, वस्तुत एकं भवन्ति । **अस्या एकमङ्गं** फलरूपं चैतन्यं स्वविषयोपाधिनाऽदूदुहद्रेचितवती । तस्या दुग्धायाः प्रज्ञाया उपरि विषयत्वेन नामलक्षणं भूतमात्रा भूतसूक्ष्मं प्रतिविहितम् । उपहितचैतन्यद्वारा स्वरूपे द्रष्टृत्वाध्यासमाह—

## कल्पतरुपरिमलः ।

"सत्यकामः सत्यसङ्कल्पः" "अग्नये दात्रे पुरोडाश" मित्यादिषु लौकिकवैदिकव्यवहारेषु दृष्टत्वात्, एतस्यैव रेवतीषु वारवन्तीयमिति वाक्ये अत्यन्ताप्रसिद्धविशिष्टोपस्थापनपूर्वकं वाक्यस्य तदन्वितवाक्यार्थबोधकतायाः स्वयमेवाचार्यैः प्रदर्शयिष्यमाणत्वाच्च; तथापि तत्र तत्र विप्रकीर्णतया वर्णितानां प्राणजीवब्रह्मगुणानामेकत्र समाहृत्य विधानं न संभवतीत्यत्र वक्ष्यमाणयुक्तौ तात्पर्यम् । **ननु**—नानास्थलविप्रकीर्णसर्वगुणविशिष्टविधानासंभवेऽपि प्राणोऽस्मि प्रज्ञात्मेति वाक्ये प्राणजीवस्वधर्मविशेषितब्रह्मोपासनाविधानमुपपद्यते; अमृतत्वस्य ब्रह्मधर्मत्वादिति—**चेन्न**; प्राणो वा आयुः प्राण उत वा अमृतमिति वाक्यशेषाभ्यामायुष्ट्वामृतत्वयोः प्राणधर्मत्वेन कीर्तनात्, प्राणोऽस्मीत्यादेरुपक्रमानुसारेण निर्विशेषब्रह्मसाक्षात्कारार्थत्वाच्चेति भावः ॥ **नेमिवद्विषया इति ।** 'स्त्री नेमिर्ना प्रधिश्चक्रप्रान्ते तुम्बा तु नाभिका । अरास्तयोः स्थिता मध्ये' इति नैघण्टुकवचनाद् । नेमिश्चक्रपरितः स्थितस्तत्प्रान्तभागः । **नाभि**र्मध्यावयवः । **अरा** नाभिनेमिमध्यगतावयवाः । **श्रेष्ठंमन्यानिति ।** स्वस्वात्मानं श्रेष्ठं मन्यमानानित्यर्थः । **क्रियाविशेषणमिति ।** एतदिति पदमित्यर्थकं सदनेन परिदृश्यमानेन प्राणादिप्रकारेणात्मानं पञ्चधाविभज्येत्येवं विभागक्रियाविशेषणमित्यर्थः ॥ **अस्या जीवलक्षणायाः प्रज्ञाया इति । ननु**—अत्र प्रज्ञाशब्दो बुद्धिपर इति युक्तं; यो वै प्राणः सा प्रज्ञेत्युपक्रान्तप्राणबुद्धिसहवाससहोत्क्रमणप्रतिपादकाऽव्यवहितपूर्ववाक्यसन्निधापितबुद्धिपरामर्शिसर्वनामसमभिव्याहृतत्वात्, नहि प्रज्ञापेता वाग् नाम किंचन प्रज्ञायते, अन्यत्र मे मनोऽभूदित्यादिषु । अथ यथाऽस्यै प्रज्ञाया इति प्रतिज्ञावाक्यानुबन्धिष्वग्रिमवाक्येषु प्रज्ञोपेतशब्दस्य मनोव्यासज्ञार्थतया विवरणाच्च; एवमिह प्रज्ञाशब्दस्य बुद्धिपरत्वे प्रज्ञादोहवाक्यानि वागादीनां स्वस्वव्यापारोत्पादनापेक्षितबुद्ध्येकदेशपराणि सङ्गच्छन्ते; युगपज् ज्ञानकर्मेन्द्रियव्यापारेषु वागादीनां कृत्स्नान्तःकरणसंबन्धायोगात् । प्रज्ञया वाचं समारुह्येत्यादिवाक्यान्यपि जीवस्य बुद्धिद्वारकवागादिकरणसंबन्धपूर्वकवक्तृत्वादिप्रतिपादकतया सङ्गच्छन्ते; न वाचं विजिज्ञासीत वक्तारं विद्यादित्याद्यग्रिमवाक्येषु जीवस्यैव वक्तृत्वादिप्रतिपादनात्, तस्मादिह संदर्भे प्रज्ञाशब्दस्य जीवपरतया व्याख्यानं न युक्तमिति—**चेत्, उच्यते**; वागेवास्या एकमङ्गमदूदुहदित्यादिपर्यायेषु वाक्प्राणचक्षुःश्रोत्रादिकर्तृकइव मन एवास्या एकमङ्गमदूदुहदिति पर्याये मनःकर्तृकोऽपि प्रज्ञादोह उक्तः, स तु मनःप्रज्ञयोर्भेदं गमयतीति तदनुसारेणैवं व्याख्यातम् । एवं चान्यत्रमना इत्यादिवाक्येषु मनःशब्दः प्राणबन्धनं हि सोम्य मन इत्यत्रेव मनउपाधिकजीवपर इति तात्पर्यम् । **रेचितवतीति ।** दुह प्रपूरणे इति धात्वर्थनिर्देशकं प्रपूरणपदं रिक्तीकरणार्थकं, रिक्तीकरणं चात्र फलचैतन्यरूपेण स्वल्पतया विभाजनमेव । **तस्या दुग्धाया इति ।** गोस्थानीयं जीवचैतन्यं पयःस्थाने फलचैतन्यं च । **ननु**—तस्या वाच इति व्याख्यातुं युक्तम्; "प्राण एवास्या एकमङ्गमदूदुहत् तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमदूदुहत् तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रे"त्यादिपर्यायेष्वस्त्रीलिङ्गतच्छब्देन प्राणादीनां "हस्तावेवास्या एकमङ्गमदूदुहतां तयोः कर्म परस्तात् प्रतिहिता भूतमात्रा पादावेवास्या एकमङ्गमदूदुहतां तयोरित्या परस्तात्प्रतिविहिता भूतमात्रेति" पर्याययोर्द्विवचनान्ततच्छब्देन हस्तपादद्वययोश्च परामर्शदर्शनेनात्र तच्छब्दानां तत्तदिन्द्रियपरत्वावसायादिति—**चेत्, सत्यम्**; वाक्पर्याये तस्या इत्यस्य प्रज्ञापरत्वमपि वक्तुं शक्यम्, लिङ्गविरोधाभावात्, वागादिषु क्रियाकरणभावेनेव प्रज्ञायामपि विषयविषयिभावसंबन्धेन नामादिप्रतिविधानसद्भावाच्चेति तथाव्याख्यातम् ॥ **नन्विह** संदर्भे प्रज्ञाशब्दो जीवपरश्चेत् प्रज्ञया वाचं समारुह्येत्यादिवाक्येषु जीवद्वारकवागादिसंबन्धो वागादिकरणैर्नामाद्याप्तिश्च कस्योच्यत इत्याकाङ्क्षायामनुपहितस्य शुद्धचैतन्यस्येत्यवतारयति—**उपहितचैतन्यद्वारेति । द्रष्टृत्वाध्यासमाहेति ।** कर्मेन्द्रियव्यापारेषु यत्कर्तृत्वं ज्ञानेन्द्रियव्यापारेषु

**सिद्धम् ॥ ३१ ॥ इति एकादशं प्रतर्दनाधिकरणम् ॥ श्रीमच्छारीरकमीमांसाभाष्ये श्रीशंकरभगवत्पादकृतौ प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥**

## भामती।

**तिस्फुट इति** भाष्यकृता नोद्घाटितः, स्वव्याख्यानेनैवोक्तप्रायत्वादिति सर्वमवदातम् ॥ ३१ ॥ **इति एकादशं प्रतर्दनाधिकरणम् । इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥**

## वेदान्तकल्पतरुः।

प्रज्ञया द्वारा वाचं समारुह्य वाचं करणं प्रति कर्तृत्वाध्यासमनुभूय तया करणेन सर्वाणि नामान्याप्नोतीति । वक्तृत्वेन कर्मेन्द्रियप्रवृत्तिरपि चैतन्याधीनेति प्रज्ञादोह उक्तः । **ता वा इति** । भूतानि शब्दादयश्चाधिप्रज्ञम् । प्रज्ञाशब्द इन्द्रियाण्यप्युपलक्षयति ॥ इन्द्रियेषु तज्ज्ञानेषु च **दश प्रज्ञामात्राः** इन्द्रियतज्जप्रज्ञाः, **अधिभूतेषु** ग्राह्यग्राहकयोरन्योन्यापेक्षत्वात् कल्पितत्वमतोऽद्वैतं तत्त्वमित्यर्थः ॥ **इति एकादशं प्रतर्दनाधिकरणम् ।**

**इति श्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ प्रथमाध्यायस्य प्रथमः पादः ॥**

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ११ | ११ |
| सूत्राणि | ३१ | ३१ |

## कल्पतरुपरिमलः।

यद् घ्रातृत्वद्रष्टृत्वश्रोतृत्वादि तत्सर्वं छत्रिन्यायाद् द्रष्टृत्वशब्देन संगृहीतम् । **ननु** फलचैतन्यरूपेण प्रज्ञादोग्धृत्वं ज्ञानेन्द्रियाणामेव, न कर्मेन्द्रियाणाम्, अतो वाचि तदुक्तिर्न युक्तेत्याशङ्क्याह—**कर्मेन्द्रियप्रवृत्तिरपीति** । कर्मेन्द्रियाणामपि व्यापारः चैतन्यसंबन्धाधीनः । अतश्चैतन्यावच्छेदमात्रं वाक्फलरूपं चैतन्यमदूदुहदित्यनेनोक्तमिति भावः । **भूतानि शब्दादयश्चेति । ननु**—वागादिपर्यायेषु नामादयो दश भूतमात्राशब्दैर्निर्दिष्टाः; तादर्थ्यमेवात्रापि भूतमात्राशब्दस्य युक्तम्, ता वा एता इति सन्निहितपरामर्शिसर्वनामसमभिव्याहाराद् दशसंख्याश्रवणाच्चेति—**चेत्, उच्यते**; अथ यथास्यै प्रज्ञाया इति प्रतिज्ञावाक्ये सर्वभूतैक्योपक्रमादित्थं व्याख्या । दशसंख्याश्रवणं तु भूतमात्राशब्दयोरर्थभेदेन टीकायामुपपादितम् ॥ **ननु** प्रतिज्ञातं सर्वभूतैक्यं कुत्रोक्तमित्याकाङ्क्षायामाह—**भूतेष्विति** । दशैव भूतमात्रा अधिप्रज्ञमित्यादिना ग्राह्यग्राहकाणामन्योन्यसापेक्षसिद्धित्वोक्त्यनन्तरं नो एतन्नानेति तदैक्योपसंहारादद्वैतं तत्त्वं दर्शितमिति भावः ॥ नचैवं सति—"ता वा एता इत्यादिवाक्यमेव सर्वभूतैक्योपपादने पर्याप्तं किं प्रज्ञादोहप्रतिविधानवाक्यैरिति—शङ्कनीयम्; विषयाणां सिद्धिरिन्द्रियाधीना तेषामपि करणतया तत्तद्विषयित्वेन सिद्धिर्विषयाधीनेत्यन्योन्यसापेक्षत्वप्रदर्शनस्य तथाभूतानां जीवे कल्पितत्वप्रदर्शनस्य च तदधीनत्वात् प्रतिविधानवाक्याद् वागादिपरतच्छब्दानां प्रज्ञादोहवाक्यलब्धजीवविशिष्टवागादिपरतया जीवेऽपि प्रतिविधानसिद्धेः । ततः प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोतीत्यादयः वागादिसमारोहणनामाद्याप्तिपर्यायास्तु प्रतिज्ञातप्रज्ञादोहादिवाक्यसिद्धस्य ग्राह्यग्राहकाणां जीवे कल्पितत्वस्य प्रकरणिनि शुद्धे पर्यवसानलाभार्थाः, ननु प्रज्ञयेत्यादिपर्यायाव्यतिरेकमुद्रया वागादीनां स्वव्यापारेषु जीवसंबन्धावश्यंभावप्रतिपादनेन जीवविशिष्टेषु वागादिषु नामादिप्रतिविधानोक्तेर्नामादीनां जीवे कल्पितत्वपर्यवसानदृढीकरणार्थाः । 'न वाचं विजिज्ञासीत वक्तारं विद्याद् न प्राणंविजिज्ञासीत घ्रातारं विद्याद्' इत्यादयो

---

१ तत्र सूत्राणि ४ । प्राणस्तथानुगमात् २८ न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् २९ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ३० जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ३१ ॥

नामादीनां विज्ञेयत्वप्रत्याख्यानपर्याया अपि तेषां कल्पितत्वदृढीकरणार्था इति 'ता वा एता' इत्यतः प्राक् सर्वेपि पर्यायाः प्रतिज्ञातसर्वभूतैक्योपपादनार्थत्वेन सफलाः ॥ इति एकादशं प्रतर्दनाधिकरणम् ।

कणभक्षपदक्षकपक्षपरिष्करणक्षणतक्षणदक्षगिरम् ।
अतिकर्कशतर्कशतक्षुभितक्षपितक्षपणक्षणभङ्गपदम् ॥ १ ॥
कपिलोक्तिनिराकरणप्रवणं कृतपन्नगसूक्तिपरिष्करणम् ।
नयमौक्तिकभूषितभट्टमतं विमलाद्वयचित्सुखमग्र्यधियम् ॥ २ ॥
महतामपि मान्यतमं विदुषां विनिवेश्य गुरुं हृदि वैश्वजितम् ।
नयसंहतिशालिनि कल्पतरौ विवृतश्चरणः प्रथमः प्रथितः ॥ ३ ॥
श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीरङ्गराजाख्यमखितनयनिर्मिते ॥
वेदान्तकल्पद्रुवरपरिमलेऽनघे पूर्णोऽजनिष्टाद्यचरण इह सत्प्रिये ॥ ४ ॥

इति वेदान्तकल्पतरुपरिमले प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥

॥ इति प्रथमस्याध्यायस्य स्पष्टब्रह्मलिङ्गश्रुतिसमन्वयाख्यः प्रथमः पादः ॥



## प्रथमाध्याये द्वितीयः पादः ।

प्रथमे पादे 'जन्माद्यस्य यतः' इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तम् । तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं, नित्यत्वं, सर्वज्ञत्वं, सर्वशक्तित्वं, सर्वात्मत्वमित्येवंजातीयका धर्मा उक्ता एव भवन्ति । अर्थान्तरप्रसिद्धानां च केषांचिच्छब्दानां ब्रह्मविषयत्वहेतुप्रतिपादनेन कानिचिद्वाक्यानि स्पष्टब्रह्मलिङ्गानि संदिह्यमानानि ब्रह्मपरतया निर्णीतानि । पुनरप्यन्यानि वाक्यान्यस्पष्टब्रह्मलिङ्गानि संदिह्यन्ते—किं परं ब्रह्म प्रतिपादयन्त्याहोस्विदर्थान्तरं किंचिदिति । तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते ।

( १ अधिकरणम् ) **सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥**

इदमाम्नायते—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत' 'मनोमयः प्राणशरीरो

### भामती ।

**अथ** द्वितीयं पादमारिप्सुः पूर्वोक्तमर्थं स्मारयति वक्ष्यमाणोपयोगितया—**प्रथमे पाद** इति । उत्तरत्र हि ब्रह्मणो व्यापित्वनित्यत्वादयः सिद्धवद्धेतुतयोपदेक्ष्यन्ते । नचैते साक्षात्पूर्वमुपपादिता इति कथं हेतुभावेन शक्या उपदेष्टुमित्यत उक्तम्—**समस्तजगत्कारणस्येति**। यद्यप्येते न पूर्वं कण्ठत उक्ताः; तथापि ब्रह्मणो जगज्जन्मादिकारणत्वोपपादनेनाधिकरणसिद्धान्तन्यायेनोपक्षिप्ता इत्युपपन्नस्तेषामुत्तरत्र हेतुभावेनोपन्यास इत्यर्थः । **अर्थान्तरप्रसिद्धानां चेति** । यत्रार्थान्तरप्रसिद्धा एवाकाशप्राणज्योतिरादयो ब्रह्मणि व्याख्यायन्ते तदव्यभिचारिलिङ्गश्रवणात्, तत्र कैव कथा मनोमयादीनामर्थान्तरे प्रसिद्धानां पदानां ब्रह्मगोचरत्वनिर्णयं प्रतीत्यभिप्रायः । पूर्वपक्षाभिप्रायं त्वग्रे दर्शयिष्यामः ॥ १ ॥

—

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

**इदमाम्नायते 'सर्वं खल्विदं ब्रह्म'** । कुतः, तज्जलानिति । यतस्तस्माद्ब्रह्मणो जायत इति तज्जं, तस्मिंश्च लीयत इति तल्लं, तस्मिंश्चानिति स्थितिकाले चेष्टत इति तदनं जगत्, तस्मात्सर्वं खल्विदं जगद्ब्रह्म । अतः कः कस्मिन्रज्यते कश्च कं द्वेष्टीति रागद्वेषरहितः शान्तः सन्नुपासीत । **अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर इत्यादि ।**

### वेदान्तकल्पतरुः ।

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

प्रथमपादे स्पष्टब्रह्मलिङ्गवाक्यान्युदाहरणम् । द्वितीयतृतीययोस्त्वस्पष्टब्रह्मलिङ्गानि । तयोस्तु प्रायशः सविशेषनिर्विशेषब्रह्मलिङ्गवाक्यविषयतया वा योगरूढिविषयतया वाऽवान्तरभेदः । **अधिकरणसिद्धान्तेति** । यत्सिद्धावर्थादन्यसिद्धिः सोऽधिकरणसिद्धान्तः । यद्यर्थान्तररूढा अपि शब्दा ब्रह्मलिङ्गाद्ब्रह्मपरतया व्याख्याताः, तर्हि कैव कथा मनोमयत्वादिलिङ्गेषु । अपिचेह ब्रह्मशब्द एवास्ति, सर्वं खल्विदं ब्रह्मेति, अस्ति च वाक्यशेषे सर्वकर्मत्वादि ब्रह्मलिङ्गं, तत्कथं जीवपरत्वशङ्का वाक्यस्यात आह—**पूर्वपक्षाभिप्रायं त्विति** । क्रतुमित्यादिवाक्येनेत्यारभ्येत्यर्थः । **तल्लमिति** । तल्लय-

### कल्पतरुपरिमलः ।

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

**यत्सिद्धाविति** । जगत्कर्तृत्वसिद्धौ सार्वज्ञ्यादिसिद्धिरेव तार्किकाणामप्युदाहरणम् । प्रथमे पादे इत्याद्युक्त एव भवतीत्यन्तं वृत्तानुवादभाष्यं प्रथमपादार्थस्योपजीव्यत्वप्रदर्शनेन संगतावुपयुज्यते । अर्थान्तरप्रसिद्धानामित्यादि तु वृत्तानुवादभाष्यान्तरं न तत्रोपयुज्यते । प्रत्युत कैमुतिकन्यायावलम्बेनोत्तरपादारम्भाक्षेपगमकतया तदारम्भप्रतिकूलमित्याशङ्क्य तद्भाष्यमाक्षेपपरतयैव योजयित्वा तत्समाधानमस्पष्टब्रह्मलिङ्गानीति विशेषणेन भाष्यगतेन सूचितम्, पूर्वपक्षाभिप्रायं त्विति टीकायां दर्शितं । तच्छङ्कान्तरस्यापि समाधानार्थमित्यवतारयति—**यद्यर्थान्तरेति । कैव कथेति** । श्रुतिबाधकस्य लिङ्गबाधनक्षमत्वं कैमुतिकन्यायसिद्धमित्यर्थः ॥ अपिचेत्यादिना शङ्कान्तरं दर्शितम् । **तल्लयमित्यर्थ इति** । उप्र-

भारूपः' ( छा० ३।१४।१,२ ) इत्यादि । तत्र संशयः—किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते, आहोस्वित्परं ब्रह्मेति । किं तावत्प्राप्तम् । शारीर इति । कुतः ? तस्य हि कार्यकरणाधिपतेः प्रसिद्धो मनआदिभिः संबन्धो न परस्य ब्रह्मणः; 'अप्राणो ह्यमनाः शुभ्रः' (मु० २।१।२ ) इत्यादिश्रुतिभ्यः । ननु 'सर्वं खल्विदं ब्रह्म' इति स्वशब्देनैव ब्रह्मोपात्तं, कथमिह शारीर आत्मोपास्य आशङ्क्यते ? नैष दोषः; नेदं वाक्यं ब्रह्मोपासनाविधिपरं, किं तर्हि ? शमविधिपरम् । यत्कारणं 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्याह । एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्मैव, तज्जत्वात्तल्लत्वात्तदनत्वाच्च । नच सर्वस्यैकात्मत्वेन रागादयः संभवन्ति, तस्माच्छान्त उपासीतेति । नच शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते । उपासनं तु 'स क्रतुं कुर्वीत' इत्यनेन विधीयते । क्रतुः संकल्पो ध्यानमित्यर्थः । तस्य च विषयत्वेन श्रूयते—'मनोमयः प्राणशरीरः' इति जीवलिङ्गम् । अतो ब्रूमो जीवविषयमेतदुपासनमिति । 'सर्वकर्मा सर्वकामः' इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते । 'एष म आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा' इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते नापरिच्छिन्नस्य ब्रह्मणः । ननु ज्यायान्पृथिव्या इत्याद्यपि न परिच्छिन्नेऽवकल्पत इति ।

## भामती ।

**तत्र संशयः**—किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते, आहोस्विद्ब्रह्मेति । किं तावत्प्राप्तम् ? शारीरो जीव इति । कुतः ? 'क्रतुम्' इत्यादिवाक्येन विहितां क्रतुभावनामनूद्य 'सर्वम्' इत्यादिवाक्यं शमगुणे विधिः । तथाच 'सर्वं खल्विदं ब्रह्म' इति वाक्यं प्रथमपठितमप्यर्थालोचनया परमेव; तदर्थोपजीवित्वात् । एवंच संकल्पविधिः प्रथमो निर्विषयः सन्नपर्यवस्यन्विषयापेक्षः स्वयमनिर्वृत्तो न विध्यन्तरेणोपजीवितुं शक्यः; अनुपपादकत्वात् । तस्माच्छान्ततागुणविधानात्पूर्वमेव 'मनोमयः प्राणशरीरः' इत्यादिभिर्विषयोपनायकैः संबध्यते । मनोमयत्वादि च कार्यकारणसंघातात्मनो जीवात्मन एव निरूढमिति जीवात्मनोपास्येनोपरक्तोपासना न पश्चाद्ब्रह्मणा संबद्धुमर्हति; उत्पत्तिशिष्टगुणावरोधात् । नच 'सर्वं खल्विदम्' इति वाक्यं ब्रह्मपरम्; अपि तु शमहेतुवन्निगदार्थवादः शान्तताविधिपरः, 'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते' इतिवत् । **नच**—अन्यपरादपि ब्रह्मापेक्षिततया स्वीक्रियत इति—युक्तम्; मनोमयत्वादिभिर्धर्मैर्जीवे सुप्रसिद्धैर्जीवविषयसमर्पणेनानपेक्षितत्वात्, सर्वकर्मत्वादि तु जीवस्य पर्यायेण भविष्यति । एवं चाणीयस्त्वमप्युपपन्नम् । परमात्मनस्त्वपरिमेयस्य तदनुपपत्तिः । प्रथमावगतेन चाणीयस्त्वेन ज्यायस्त्वं तदनुगुणतया व्याख्येयम् । व्याख्यातं च भाष्यकृता । एवं कर्मकर्तृव्यपदेशः सप्तमीप्रथमान्तता चाभेदेऽपि जीवात्मनि कथंचिद्भेदोप-

## वेदान्तकल्पतरुः ।

मित्यर्थः । तस्मिन्ननितीति **तदन्** । क्रतुर्ध्यानं तत्प्रधानस्तन्मयः । मनोमयत्वादीनां प्रकृतब्रह्मनैरपेक्ष्यसापेक्षत्वाभ्यां संशयमाह—**तत्रेति** । पादान्तरत्वादेव नावान्तरसङ्गतिः । स्ववाक्योपात्तधर्मविशिष्टजीवोपासनानुवादेन शमविधिपरत्वान्न सर्वं खल्विति वाक्यमुपास्यसमर्पकमित्याह—**क्रतुमिति** । प्रागप्रतीतायाः क्रतुप्रवृत्तेः कथमुपासीतेत्यनुवादस्तत्राह—**तथा चेति** । **ननु** सङ्कल्पविधेरुपास्यसापेक्षत्वाद्ब्रह्मण उपास्यत्वम्, अत आह—**एवंचेति** । सापेक्षस्य गुणविध्यर्थमाश्रयदानायोगान्मनोमयत्वादिभिरेवापेक्षापूरणमित्यर्थः । **स्यादेतत्**—मनोमयत्वादिमद्ब्रह्मैवास्त्वित्यत आह—**मनोमयत्वादि चेति** । उत्पत्तिशिष्टत्वं कर्मस्वरूपप्रतीतिसमयावगतत्वम् । यदि न ब्रह्मोपास्यं, किमर्थं तर्हि ब्रह्माभिधानमित्यत आह—**नचेति** । हेतुवन्निगद्यत इति तथोक्तः ॥ शूर्पेण जुहोतीत्याम्नाय तेन हीति श्रुतम् । तत्र हिशब्दश्रुतेः स्रुतौ च लक्षणाप्रसङ्गादन्नकरणत्वं शूर्पहोमे हेतुरुपदिष्टः । तथाच यद्यदन्नकरणं दर्व्यादि तेन तेन होतव्यमिति प्रापय्य राद्धान्तितं प्रमाण-

## कल्पतरुपरिमलः ।

त्वयान्तत्वेन टिलोप इति भावः । तस्मिन्ननितीति टीकोपवर्णितस्यैव विग्रहस्य प्रदर्शनं येन जातानि जीवन्तीत्यादिश्रुत्यनुसारेण तृतीयान्तं तत्पदं व्याख्येयमिति शङ्कावारणार्थं । जन्मस्थितिलयान्वयिनि तत्पदे विभक्त्यैक्यायैवं व्याख्यानमिति भावः । एवंच तस्माद्ब्रह्मणो जायत इति तज्जमिति टीकाग्रन्थे सप्तम्यर्थ एवापादानपञ्चमी अपादानस्पष्टीकरणायेति तात्पर्यम् । श्रुतावनिति क्विबन्तस्य अनमित्यर्थतः पचाद्यजन्तेन ग्रहणम् । **क्रतुर्ध्यानमिति** । क्रतू अध्वरसंकल्पाविति निघण्टुः । **तत्प्रधानस्तन्मय इति** । मयड् विकारप्राचुर्यप्राधान्यादिष्विति केचन वैयाकरणाः पठन्ति ॥ **सापेक्षस्य गुणविध्यर्थमिति** । यद्यपि अग्निहोत्रं जुहोतीति केवलकर्मविधिवत्केवलोपासनाविधिरप्युपपद्यते, तस्य च "दध्ना जुहोति" "दध्नेन्द्रियकामस्य जुहुयात्" "चतस्रो गार्हपत्ये जुहोती"त्यादिगुणविधिं प्रत्यग्निहोत्रविधेरिव शमविधिं प्रत्याश्रयदातृत्वमपि युज्यते; तथापि स्ववाक्योपात्तधर्मविशिष्टजीवविषय एवोपासनाविधिर्लब्धात्मा शमविधेराश्रयदाता भवतीत्युत्पत्ति-

## भामती ।

चारेण राहोः शिर इतिवद्रष्टव्या । 'एतद्ब्रह्म' इति च जीवविषयम्; जीवस्यापि देहादिबृंहणत्वेन ब्रह्मत्वात् । एवं सत्यसंकल्पत्वादयोऽपि परमात्मवर्तिनो जीवेऽपि संभवन्ति; तदव्यतिरेकात् । तस्माज्जीव एवोपास्यत्वेनात्र विवक्षितः, न परमात्मेति प्राप्तम् । **एवं प्राप्तेऽभिधीयते—समासः सर्वनामार्थः संनिकृष्टमपेक्षते । तद्धितार्थोऽपि सामान्यं नापेक्षाया निवर्तकः ॥ तस्मादपेक्षितं ब्रह्म ग्राह्यमन्यपरादपि । तथाच सत्यसंकल्पप्रभृतीनां यथार्थता ॥** भवेदेतदेवं यदि प्राणशरीर इत्यादीनां साक्षाज्जीववाचकत्वं भवेत्, न त्वेतदस्ति । **तथाहि**—प्राणः

## वेदान्तकल्पतरुः ।

लक्षणे । शूर्पे हि होमकरणं तृतीयाश्रुत्या गम्यते, विध्यर्थस्य च न हेत्वपेक्षा । तस्मात् शूर्पस्तुतिः । **यत्तु** हेतौ हिशब्दश्रुतिरिति । **तन्न**; नहि साक्षाद्दर्व्यादिना शक्यमन्नं कर्तुम् । अथ शक्यं प्रणाड्या, कथं तर्हि श्रुतिवृत्तिता हेतुवचनस्य । **ननु** शूर्पस्तुतावपि लक्षणा स्यात्, नहि तेनापि साक्षादन्नं क्रियते । **अद्धा**; स्तुतिर्ह्यनुवादत्वाद्यथाप्राप्ति लक्षणां सहेत न विधिरपूर्वार्थत्वादिति ( जै. अ. १ पा. २ सू. २६–३० ) अत्रायं विशेषो द्रष्टव्यः । **समास इति** । प्राणः शरीरमस्येति बहुव्रीहिर्विग्रहवशादन्तर्गर्भितसर्वनामार्थवान्, सर्वनाम च संनिहितावलम्बीति समासः संनिकृष्टमपेक्षते, तेन सर्वनामश्रुतिर्ब्रह्मोपास्यत्वे मानमुक्ता । **ननु** न ज्योतिर्वाक्यवदिह वाक्यान्तरोक्तब्रह्मणोऽस्ति संनिधापिका प्रत्यभिज्ञा, यतः सर्वनाम परामृश्येत, अतः स्ववाक्यस्थेन मनोमय इति मयडर्थेनाकाङ्क्षाशान्तिरत आह—**तद्धितार्थोऽपीति** । सोऽपि विकारप्राचुर्यसाधारणत्वेन सामान्यम्, अतो नाकाङ्क्षाशमकः; संदिग्धत्वात् । फलितमाह—**तस्मादिति । अन्यपरादपि** शमविधिस्तुति-

## कल्पतरुपरिमलः ।

शिष्टगुणावरोध एव तात्पर्यम् । **ननु** शूर्पविधेर्हेत्वपेक्षाभावेऽपि दर्व्यादीनामपि होमकरणत्वस्य लाभार्थो हेतुः स्याद्, दृष्टो ह्यातिथ्यायां "चतुर्गृहीतान्याज्यानि भवन्ती"त्यौपभृताष्टगृहीतव्यवच्छेदार्थस्य विधेर्हेत्वनपेक्षत्वेऽपि "न ह्यत्रानूयाजा इज्यन्त"इति तदनन्तराम्नातो हेतुरौपभृतमाज्यं चतुर्गृहीतं प्रयाजार्थम्, उपरितनमनूयाजार्थमिति विभागज्ञापनद्वाराऽन्यत्रापि यत्रेष्टिविकृतावनूयाजानामभावस्तत्र सर्वत्राप्यौपभृतोपरितनं चतुर्गृहीतं न कार्यमित्यधिकार्थस्य प्रकृतौ "यदुपभृति" "प्रयाजानूयाजेभ्यस्तदिति" वचनस्यातिहायेडोबर्हिः प्रति समानयते जुह्वामौपभृतमिति वचनस्य च पर्यालोचनया उपरितनप्रयाजद्वयानूयाजत्रयार्थतयाऽवगतादौपभृताष्टगृहीतात्प्रयाजद्वयार्थमर्धं समानेतव्यमित्यधिकार्थस्य च लाभार्थं इत्यभिप्रायां शङ्कामनुवदति—**यत्त्विति** । अनुयाजानामभावो हेतुर्मुख्यो लभ्यते इति तत्र तथा भवतु नाम, इह तु दर्व्यादिषु मुख्यमन्नकरणत्वं न लभ्यत इति विशेषमभिप्रेत्य परिहरति—**नहि साक्षादिति । हेतुवचनस्येति** । हिशब्दबोध्यहेतुत्वाधिष्ठानान्नकरणत्ववाचिन्यास्तृतीयाविभक्तेरित्यर्थः ॥ **अनुवादत्वादिति । ननु** स्तुतिपक्षे इव हेतुपक्षेऽप्यन्नकरणत्वस्यानुवादस्तुल्यः । तेनेत्यनेन प्रातिपदिकपरामृष्टशूर्पगतमन्नकरणत्वं यथासिद्धमनूद्य तस्य हिशब्दश्रुत्या हेतुत्वं प्रतिपाद्यते, नत्वपूर्वमन्नकरणत्वं विधीयते; तस्य हेतुत्वनिर्देशान्यथानुपपत्त्या यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्त्याक्षेपेण दर्व्यादीनामपि शूर्पसाधारणान्नकरणत्वसद्भावेन होमसाधनत्वं प्राप्यते । **सत्यम्**; तुल्येऽप्यनुवादत्वे स्तुतिपक्ष एवाश्रयणीयः, अन्यथा श्रुतस्य शूर्पस्याऽश्रुतानां दर्व्यादीनां च विकल्पापत्तेः, विषमशिष्टविकल्पस्य चात्यन्तान्याय्यत्वात् । हिशब्दस्तु निपातत्वात् प्रसिद्ध्याद्यर्थान्तरमालम्ब्य चरितार्थः । हेत्वर्थत्वेऽपि स्तुतावेव हेतुभावं ब्रूयात्; "तस्माद्यजमानोऽयजमानादुत्तरः" "तस्माद् दक्षिणोऽर्ध्य आत्मनो वीर्यवत्तरः" इत्याद्यर्थवादेषु हेतुवचनात् । **अतः स्ववाक्यस्थेनेति** । मयडर्थो मनोवच्छिन्नतया तद्विकारो जीव इति स एव सर्वनामार्थो भवेदिति भावः । अस्तु तर्हीति क्वचित्पाठः सोपि कथंचिदुक्ताभिप्रायो योज्यः । **विकारप्राचुर्येति** । प्राधान्यादेरप्युपलक्षणमेतत् । एवंच प्रकृतेन ब्रह्मणैवाकाङ्क्षाशान्तिः । व्युत्पत्तिसिद्धस्य सर्वनाम्नां प्रकृतपरामर्शित्वस्य प्रत्यभिज्ञापकानपेक्षत्वात्, तदभावेपि सा वैश्वदेव्यामिक्षेत्यादिषु प्रकृतपरामर्शदर्शनादिति भावः । **ननु** मा भूद्विकारादिरूपतया संदिग्धेन मयडर्थेनाकाङ्क्षापूरणं, स क्रतुं कुर्वीतेत्यत्र श्रुतेन तत्पदार्थेन स्यात्, नच तथा सति मनोमयत्वादीनां सर्वेषामुपासकविशेषणत्वापत्त्योपास्यगुणत्वालाभः; कस्य क्रतुमिति प्रति संबन्ध्याकाङ्क्षायामन्तर्धौ येनादर्शनमिच्छतीत्यत्रेवान्तरङ्गत्वात् स्वात्मन इति लब्धे स्वात्मन इह मनोमयत्वादिगुणविशिष्टतया बुद्धिसन्निहितत्वात्तावद्गुणाम्नानवैयर्थ्यानुरोधाच्च तेषामर्थादुपास्यगुणत्वलाभात्, एवं मनोमयत्वादीनां समानाधिकरणसमानलिङ्गतत्पदोपात्तविषयत्वे संभवति न विप्रकृष्टवाक्यान्तरश्रुतभिन्नलिङ्गोपात्तब्रह्मविषयत्वकल्पनं युक्तम्; तत्कल्पने स क्रतुमिति तत्पदस्य वैयर्थ्यं च स्यात्, क्रियया कर्तुराक्षेपतो लभ्यत्वात्, तेषां तत्पदोपात्तविषयत्वाङ्गीकारे वक्ष्यमाणगुणाश्रयदानार्थतया तस्यावैयर्थ्यं शक्यं वक्तुम्; उमां स पश्यन् ऋजुनैव चक्षुषेत्यत्र चक्षुषः पश्यतिक्रियाकरणत्वेनाक्षेपतो लभ्यत्वेऽपि ऋजुत्वगुणाश्रयदानार्थतयैव चक्षुषेत्यस्य । तस्मादिहान्यपरवाक्यान्तरश्रुतब्रह्मोपादानकथनं न

## भामती ।

शरीरमस्येति सर्वनामार्थो बहुव्रीहिः, संनिहितं च सर्वनामार्थं संप्राप्य तदभिधानं पर्यवस्येत् । तत्र मनोमयपदं पर्यवसिताभिधानं तदभिधानपर्यवसानायालं, तदेवतु मनोविकारो वा मनःप्रचुरं वा किमर्थमित्यद्यापि न विज्ञायते। तद्यत्रैष शब्दः समवेतार्थो भवति स समासार्थः । **नच**—एष जीव एव समवेतार्थो न ब्रह्मणि, तस्य 'अप्राणो ह्यमनाः' इत्यादिभिस्तद्विरहप्रतिपादनादिति—**युक्तम्**; तस्यापि सर्वविकारकारणतया, विकाराणां च स्वकारणादभेदात्तेषां च मनोमयतया ब्रह्मणस्तत्कारणस्य मनोमयत्वोपपत्तेः । **स्यादेतत्**—जीवस्य साक्षान्मनोमयत्वादयः, ब्रह्मणस्तु तद्द्वारा । तत्र प्रथमं द्वारस्य बुद्धिस्थत्वात्तदेवोपास्यमस्तु, न पुनर्जघन्यं ब्रह्म । ब्रह्मलिङ्गानि च जीवस्य ब्रह्मणोऽभेदाज्जीवेऽप्युपपत्स्यन्ते । तदत्र संप्रधार्यम्—किं ब्रह्मलिङ्गैर्जीवानां तदभिन्नानामस्तु तद्वत्ता, तथाच जीवस्य मनोमयत्वादिभिः

## वेन्दान्तकल्पतरुः ।

परादपि इति । ब्रह्मोपादाने वाक्यशेषस्थलिङ्गसामञ्जस्यमाह—**तथाचेति । तदभिधानं** समासाभिधानम् । तद्धितार्थः इत्येतद्याचष्टे—**तत्र मनोमयपदमिति ।** एष मनोमयशब्दो जीवे एव निविष्टावयवार्थः, नतु ब्रह्मणि; तस्य मनआदिविरहप्रतिपादनादित्येतच्च न युक्तम्; कुतो न युक्तमत आह—**तस्यापीति । विकाराणां चेति ।** विकारविशेषाणां जीवानामित्यर्थः । विकारत्वं जीवानामवच्छेदापेक्षं । यदि जीवद्वारा ब्रह्मणो मनोमयत्वं, तर्हि जीवे एव मनोमयपदं मुख्यमिति तदेव समासाकाङ्क्षायाः परिपूरकमिति शङ्कते—**स्यादेतदिति ।** बलाबलविवेकाय पक्षविभागं करोति—**तदेतदिति ।** अधिष्ठानलिङ्गैः सर्वकर्मत्वादिभिस्तदभिन्नजीवानां तद्वत्त्वपक्षे फलितमाह—**तथाच जीवस्येति ।** वस्तुतो

## कल्पतरुपरिमलः ।

युक्तमित्याशङ्कानिराकरणार्थत्वेन तथा चेत्येतदर्थमवतारयति—**ब्रह्मोपादान इति । अयमाशयः**—मनोमयः प्राणशरीर इत्यादीनां प्रथमान्तानां न तत्पदोपात्तजीवविशेषणसमर्पकतयान्वयः, किंतु स क्रतुं कुर्वीतेति विधीयमानोपासनाप्रकारसमर्पकतया; एतमितः प्रेत्याभिसंभवितास्मीत्येतदनन्तरमितिकरणादनेन प्रकारेण क्रतुं कुर्वीतेत्यन्वयप्रतीतेः, तथान्वये सत्येव एष मे आत्मान्तर्हृदय इति वाक्यसामञ्जस्याच्च, तस्योपासनाप्रकाराभिनयपरत्वं विना स्वतन्त्रश्रुतिवाक्यत्वे मे इत्यस्यान्वयसामञ्जस्याभावात्, तथा सत्येव च "एष मआत्मान्तर्हृदय" इति वाक्यानां त्रिः पाठस्य "सर्वकर्मा सर्वकामः" इत्यादिवाक्यानां द्विः पाठस्य च तत्र तत्र स्थाने हृदयान्तवर्तित्वाद्यनुसन्धानाभ्यासार्थत्वेन सार्थकत्वात् । दृष्टो हि "प्रायणीयं प्रथममहश्चतुर्विंशं द्वितीयं चत्वारोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः समासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडह इत्यादौ गवामयनिकाहःक्लृप्तिवाक्ये अभिप्लवषडहादिशब्दानामसकृत्पाठस्तत्र तत्र स्थाने षडहाद्यनुष्ठानाभ्यासार्थः । एवमितिशब्दोक्तः प्रकारश्च मनोमयत्वाद्यनुसंधेयगुणजातरूपस्तत्क्रमरूपो वा द्वितीयपक्षे मनोमयत्वादीनामुपास्यगुणानां विधानं तत्क्रमविधानादाक्षेपतो लभ्यते, पृष्ठगतसर्वताविधानादिव पृष्ठानाम् । एवंच मनोमयइत्यारभ्यान्वयिनेतिकरणेन मनोमयत्वादेरेतं मनोमयत्वादिविशिष्टं प्राप्तास्मीत्येतदन्तस्य सर्वस्याप्यर्थजातस्य क्रतुं कुर्वीतेति विधीयमानायामुपासनायां प्रकारतापादनान्मनोमयत्वादिप्रकारेण मनोमयत्वादिक्रमेण वा क्रतुं कुर्वीतेत्युपासनावाक्यार्थपर्यवसाने स्थिते तेन प्रकारेण तत्क्रमेण वा कस्य क्रतुः कार्य इत्याकाङ्क्षितं विशेष्यमन्यतः प्राप्तुवदपेक्षणीयम् । तत्र शमविधिवाक्ये अन्यार्थसन्निधानाद्ब्रह्म विशेष्यतया प्राप्नोति स्ववाक्ये स इत्यन्यार्थसन्निधानाज्जीवः तत्र कतरस्य ग्रहणं न्याय्यमिति विशये वाक्यशेषगतानां प्रथमान्वितानां बहूनां लिङ्गानां ब्रह्मश्रुतेश्च सामञ्जस्यानुरोधाद्ब्रह्मण एव ग्रहणं न्याय्यमिति निश्चीयते; ब्रह्मण उपास्यत्वेऽप्येष मआत्मेति समभिव्याहृतात्मशब्दानुसारेण मनोमयादिशब्देषु पुंलिङ्गोपपत्तेः ॥ **यत्तु**—मनोमयत्वादीनां "स क्रतुं कुर्वीते"त्यत्र तत्पदोपात्तजीवान्वयित्वाभावे तस्य वैयर्थ्यं स्यात् —**इति । तन्न**; तस्य वाक्यान्तरसन्निधापितमपि ब्रह्मैवोपास्यत्वेन ग्राह्यमित्येतज्ज्ञापनार्थत्वेनैव चारितार्थ्यात् । **तथाहि**—तत्र तत्पदं जीवं परामृशत् संकल्पानुसारिफलप्राप्तियोग्यत्वेन परामृशति; तेन रूपेण कृतत्वात्, तथा तत्परामर्शश्च 'मनोमयः प्राणशरीर' इति जीवलिङ्गे ऐहिकामुष्मिकपरिश्रमणखेदसंपादकमनःप्राणसंबन्धिरूपस्वतःसिद्धहेयगुणपरतया न व्याख्येये; तत्क्रतुन्यायविरोधात्, किंतूपादेयगुणपरतया व्याख्येये इति सूचनार्थः । तेन मनोमय इत्येतत्सगुणब्रह्मोपासनासिद्धस्य ब्रह्मलोके भोग्यभोगोपकरणानि यानि प्राक्सिद्धान्यर्णवादीनि यानि च स्वसंकल्पसाध्यानि स्त्र्यन्नपानादीनि तानि सर्वाणि स्वाप्नपदार्थवन्मानसप्रत्ययरूपाणीति छान्दोग्यभाष्ये दहरविद्याप्रकरणे ये वर्णिता मनोविकारा भोग्यादयः तदुपादानतया तत्तादात्म्यपरम् । प्राणशरीर इत्येतत्प्राणा इन्द्रियाणि वायवो वा शरीराणि शरीरवन्नियम्यान्यस्येति सर्वात्मना यद्वश्येन्द्रियत्वं वश्यप्राणवायुत्वं वा हिरण्यगर्भेण सह मोक्ष्यमाणानाम् अहंग्रहोपासकानामपेक्षितपरब्रह्मसाक्षात्कारादिसंपादनार्थचित्तवशीकरणोपयोगि तत्परमिति सिध्यति । तेनैवंभूतगुणानुसंधानानुसारिफलोपयोगितया वाक्यान्तरसंनिधापि-

अत्र ब्रूमः—न तावदणीयस्त्वं ज्यायस्त्वं चोभयमेकस्मिन्समाश्रयितुं शक्यं; विरोधात् । अन्यतराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुं, ज्यायस्त्वं तु ब्रह्मभावापेक्षया भविष्यतीति । निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्तनम्—'एतद्ब्रह्म' ( छा० ३।१४।४ ) इति, तदपि प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव । तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इत्येवं प्राप्ते ब्रूमः । परमेव ब्रह्म मनोमयत्वादिभिर्धर्मैरुपास्यम् । कुतः'? 'सर्वत्र प्रसिद्धोपदेशात् । यत्सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणं, इह च 'सर्वं खल्विदं ब्रह्म' इति वाक्योपक्रमे श्रुतं, तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम् । एवंच प्रकृतहानाप्रकृतप्रक्रिये न भविष्यतः । ननु—वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्वविवक्षयेत्युक्तम् । अत्रोच्यते—यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्टम्; तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म संनिहितं भवति, जीवस्तु न संनिहितो नच स्वशब्देनोपात्त इति वैषम्यम् ॥ १ ॥

## भामती ।

प्रथममवगमात्तस्यैवोपास्यत्वं, उत न जीवस्य ब्रह्मलिङ्गवत्ता तदभिन्नस्यापि, जीवलिङ्गैस्तु ब्रह्म तद्वत्, तथाच ब्रह्मलिङ्गानां दर्शनात्, तेषां च जीवेऽनुपपत्तेर्ब्रह्मैवोपास्यमिति । **वयं तु पश्यामः—समारोप्यस्य रूपेण विषयो रूपवान्भवेत् । विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥** समारोपितस्य हि रूपेण भुजङ्गस्य भीषणत्वादिना रज्जू रूपवती नतु रज्जुरूपेणाभिगम्यत्वादिना भुजङ्गो रूपवान् । तदा भुजङ्गस्यैवाभावात्किं रूपवत् । भुजङ्गदशायां तु न नास्ति वास्तवी रज्जुः । तदिह समारोपितजीवरूपेण वस्तुसद्ब्रह्म रूपवद्युज्यते, नतु ब्रह्मरूपैर्नित्यत्वादिभिर्जीवस्तद्वान्भवितुम-

## वेदान्तकल्पतरुः ।

ब्रह्माऽभिन्नस्यापि जीवस्यावच्छिन्नतया न ब्रह्मधर्मवत्ता, ब्रह्म तु सर्वात्मत्वाज्जीवलिङ्गैः**स्तद्वद्** जीवलिङ्गवदिति पक्षे लाभमाह—**तथाच ब्रह्मलिङ्गानामिति ।** ज्ञायमानेन समारोप्यरूपेणाधिष्ठानं **विषयो** रूपवान् भवेत्, तस्याज्ञायमानत्वेन समारोपकालेऽपि सत्त्वात्, विषयस्य तु रूपेणासाधारणेन ज्ञायमानेन समारोप्यं न रूपवदधिष्ठानासाधारणरूपज्ञाने सति समा-

## कल्पतरुपरिमलः ।

तमपि ब्रह्मैवोपास्यत्वेन ग्राह्यमिति च सिध्यति । नचैतद्यथाक्रतुरित्युपन्यस्तात्तत्क्रतुन्यायमात्रात्सिध्यति; यथा सत्यपि तत्क्रतुन्याये वचनबलाज्जीवविषययापि पञ्चाग्निविद्यया ब्रह्मप्राप्तिः, तथा क्रतुं कुर्वीतेत्यत्र विहितयान्तरङ्गत्वादाख्यातार्थाक्षिप्तत्वेन बुद्धिसन्निहितत्वाच्च जीवमुपास्य परिगृहीतवत्योपासनयापि ब्रह्मप्राप्तिरस्त्विति शङ्कावकाशसद्भावात् । तस्मात्स इत्येतदपि ब्रह्मोपादानहेतुवाक्यशेषोपष्टम्भकमिति न तद्वैयर्थ्यमिति । एवंचात्र ब्रह्मणि जीवलिङ्गयोजना कार्या जीवे वा ब्रह्मलिङ्गयोजनेत्यग्रिमविचारस्य नास्त्यवकाशः; मनोमयत्वप्राणशरीरत्वरूपपर्यालोचनायां तयोः स्वत एव ब्रह्मपर्यवसानात्, ब्रह्मलिङ्गानां बाहुल्यात्तदनुरोधेनापि तयोर्ब्रह्मपर्यवसायित्वाच्च । बहूनि ह्यत्र ब्रह्मलिङ्गानि । **सर्वकर्मत्वं** बालाक्यधिकरणन्यायेन ( ब्र. अ. १ पा. ४ सू. १६ ) कर्मशब्दस्य कार्यपरतया सकलकार्यकर्तृत्वं **सर्वकामत्वं** तदुपयोगिसकलसृज्यविषयसृष्टिकामनावत्त्वं **सर्वगन्धत्वं सर्वरसत्वं च** सकलदेशकालवर्तिवस्तुजातगतसर्वगन्धरसाश्रयत्वम् सर्वमिदमभ्यात्तमित्यनेनोक्तं सर्वव्यापित्वमित्यादीनि । नचैतानि जीव उपपद्यन्ते । **ननु**—एषां जीवेऽनुपपत्तौ पुनः स एव तत्क्रतुन्यायविरोधः; मनःप्राणोपकरणत्वयोर्हेयत्वनित्यप्राप्तत्वाभ्यामिव तेषामपि प्राप्तुमशक्यत्वेनोपासकप्रेप्सितत्वासंभवादिति—**चेत्, उच्यते;** तत्क्रतुन्यायो न सर्वगुणविषयः किंतूपासकप्राप्त्यर्हगुणविषयः । तथाचोद्गीथोपास्याकाशादिश्रुतसर्वभूतकारणत्वादिवन्नोपासकेनोपासनाफलानुभवदशायां सर्वकर्मत्वादयः प्राप्तुं योग्या इति न तद्विषयः । नचैतावता मनोमयत्वादिकमपि तदप्रेप्सितगुणतया व्याख्याय तत्रापि तत्संकोचः कल्पनीयः; तदसंकोचव्याख्यानसंभवेऽन्यथा व्याख्याय तत्संकोचकल्पनानौचित्यात् । **अथवा**—सर्वगतत्वादिकमप्यहंग्रहोपासकानां क्रममुक्तिफलकत्वादाविर्भूतस्वरूपैरुपासकैः क्रमेण प्राप्तुं योग्यमिति न तत्रापि तत्क्रतुन्यायसंकोचः कल्प्यः । अन्यथा हिरण्मयपुरुषोपासनाफले सर्वदुरितविरहे का गतिः; उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेति तत्र सफलवाक्ये सर्वशब्दस्य संकोचकल्पने तथैव स एष सर्वेभ्यः पाप्मभ्य इति तत्पूर्ववाक्येऽपि तत्संकोचः प्रसज्येतेति सर्वदुरितविरहो ब्रह्मलिङ्गं न स्यात् । एवं सत्यपि यदि मनोमयत्वं जीवस्य मनोवच्छेदकृतमनोविकारत्वं, प्राणशरीरत्वं च प्राणोपकरणत्वम्, यदिच ब्रह्मजीवलिङ्गानां नाल्पत्वबहुत्वकृतं वैषम्यं, तथापि जीवलिङ्गानामेव ब्रह्मणि योजनं कार्यमिति न्यायान्तरव्युत्पत्त्यर्थमुपरितनटीकाकल्पतरुग्रन्थयोः प्रवृत्तिरिति

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्तुमिष्टा विवक्षिताः। यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः संभवति; तथाप्युपादानेन फलेनोपचर्यते। लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति। तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवति, इतरदविवक्षितम्।

### भामती।

र्हेति; तस्य तदानीमसंभवात्। तस्माद्ब्रह्मलिङ्गदर्शनाज्जीवे च तदसंभवाद्ब्रह्मैवोपास्यं न जीव इति सिद्धम्। एतदुपलक्षणाय च 'सर्वं खल्विदं ब्रह्म' इति वाक्यमुपन्यस्तमिति ॥ १ ॥ **यद्यप्यपौरुषेय इति।** शास्त्रयोनित्वेऽपीश्वरस्य पूर्वपूर्वसृष्टिरचितसंदर्भापेक्षरचनत्वेनास्वातन्त्र्यादपौरुषेयत्वाभिधानम्। तथाच स्वातन्त्र्येण विवक्षा नास्तीत्युक्तम्। परिग्रहपरित्यागौ चोपादानानुपादाने उक्ते, न तूपादेयत्वमेव। अन्यथोद्देश्यतयानुपादेयस्य ग्रहादेरविवक्षितत्वेन

### वेदान्तकल्पतरुः।

रोप्याभावादित्यर्थः। प्रस्तुतेऽधिष्ठानासाधारणरूपज्ञानमस्तीत्याह—**तस्मादिति। ननु** यद्युक्तरीत्या मनोमयवाक्येऽपि ब्रह्मलिङ्गात्तत्प्रतीतिः, तर्हि कथं भाष्यकारः सूत्रविवरणावसरे "इह च सर्वं खल्विदं ब्रह्मे"ति वाक्योपक्रमे श्रुतमित्येवाह, न पुनर्वाक्यशेषेऽपि सर्वकाम इत्यादिधर्मवत्तया श्रुतमिति, अतआह—**एतदुपलक्षणायेति**॥१॥ भाष्ये त्वपौरुषेयशब्देन

### कल्पतरुपरिमलः।

द्रष्टव्यम् ॥ **प्रस्तुते इति। ननु**—यदि प्रस्तुते अधिष्ठानासाधारणरूपज्ञानमस्ति, कथं तर्हि समारोपितो जीवभावो न निवर्तते? यदि तदानीं सदपि समारोपितनिवर्तनाक्षमं; किमिति जीवस्तेन रूपेण रूपवान्न स्याद्? रज्ज्वसाधारणरूपज्ञाननिवर्तनीयभुजगविलक्षणत्वादिति—**चेत्, अत्रायमाचार्याणामाशयः**—जीवधर्माणां ब्रह्मणि योजनायां हि तस्मिन्ननवच्छिन्नब्रह्मत्वबुद्धिर्न हातव्या, तरङ्गधर्माणां समुद्रे योजनायां तस्मिन्व्यापित्वबुद्धिरिव। ब्रह्मधर्माणां जीवे योजनायां तु तस्मिन्परिच्छिन्नजीवत्वबुद्धिर्हातव्या, दर्पणमुखेऽवदातत्वयोजनायां ग्रीवास्थमुखभिन्नत्वबुद्धिरिव। नच क्वचित्स्वरूपमनुपमृद्य वाक्यशेषगतलिङ्गयोजनायां कर्तुं शक्यायामन्यत्र तदुपमृद्य सा कार्येति। आचार्यैर्वस्तुतो ब्रह्मभिन्नस्यापि जीवस्येत्यादिपूर्वग्रन्थेनायमाशयः स्पष्टीकृतः। अधिष्ठानासाधारणरूपज्ञाने सति समारोप्याभावोक्त्याप्ययेष एवार्थो विवक्षितः॥ **ननु**—एतदुपलक्षणायेति टीका न युक्ता; वाक्योपक्रमान्निर्णयस्यापि युक्ततया तेन वाक्यशेषान्निर्णयस्यानुपलक्षणीयत्वात्, नच—अन्यार्थसन्निधानान्निर्णयो न दृढ इति तदुपलक्षणत्वोक्तिरिति—वाच्यम्; बुद्धिस्थपरामर्शिना सर्वनाम्नाऽन्यार्थसन्निहितस्यापि परामर्शोपपत्तेः, ज्योतिरधिकरणे ( ब्र. अ. १ पा. १ सू. २४–२७ ) तथाभूतपरामर्शादेव निर्णयस्य कृतत्वाच्च, **नच**—तेन गतार्थः स न्याय इति न्यायान्तरोपलक्षणत्वोक्तिरिति—वाच्यम्; ब्रह्माब्रह्मलिङ्गसमवाये ब्रह्मलिङ्गादेव निर्णयो युक्त इति न्यायस्यापि प्रतर्दनाधिकरणे ( ब्र. अ. १ पा. १ सू. २८–३१ ) प्रदर्शितत्वात्, नच—जीवेऽपि जीवबुद्ध्युपमर्देन ब्रह्मबुद्ध्या तल्लिङ्गानि योजयितुं न शक्यन्त इत्यधिकशङ्कापरिहारप्रदर्शनाय प्रतर्दनाधिकरणसिद्धन्यायस्य पुनरुद्भावनमिति—वाच्यम्; ज्योतिरधिकरणन्यायपुनरुद्भावनमपि वस्तुतोऽन्यार्थमपि न भवति ब्रह्मणः सन्निधानमित्यधिकार्थप्रदर्शनायेति वक्तुं शक्यत्वात्। "सर्वं खल्विति" वाक्ये इदमिति न सर्वस्य विशेषणं; वैयर्थ्यात्, किंतु ब्रह्मणः, तस्य च फलं प्रकृतत्रिपाद्ब्रह्माधिकारलाभः। स च प्रकृतस्य प्रयत्नेनाधिकारः स्वानर्थक्यपरिहाराय क्रतौ वाक्यशेषगतलिङ्गं बाधित्वोपास्यत्वेन ब्रह्मसमर्पणार्थं इत्येवमनन्यार्थं ब्रह्मणः संनिधानम्। ब्रह्मणः सर्वात्मत्वोक्त्या सर्वस्य ब्रह्मात्मताप्यर्थात् सिध्यतीति तदवलम्बना प्रासङ्गिकोपकाराभिप्राया भाष्ये शमविध्यर्थवादतोक्तिः, नतु शमविधिशेषत्वाभिप्राया। **यद्यपि शमविधिविवक्षयेति भाष्ये**—यद्यपीत्यनेनाभ्युपेत्यवादत्वद्योतनाद्, ज्योतिरधिकरणे न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः, परत्रापि शाण्डिल्यविद्यायाम् अनुवर्तिष्यते ब्रह्मेति ज्योतिर्वाक्ये त्रिपाद्ब्रह्मानुवृत्तौ विवदमानं पूर्वपक्षिणं प्रति शाण्डिल्यविद्यायां तदनुवृत्तिः कथं हेतुभावं प्रतिपद्येत? यदि तदनुकर्षणैकप्रयोजनेदं विशेषणसामर्थ्यं नाश्रीयेतेत्यधिकार्थप्रदर्शनपरत्वं हि शक्यं वक्तुम्। तस्मादेतदुपलक्षणायेति ग्रन्थो न युक्त इत्याशङ्कापनयार्थमेतस्यैवोपलक्षणायेति न तदर्थः, किंत्वेतस्याप्युपलक्षणायेति तदर्थ इति दर्शयितुम्॥ झटिति प्रतीयमानमाद्यार्थमादाय शङ्कते—**ननु यद्युक्तरीत्येति। ननु**—अधिकशङ्कापरिहारस्यास्मिन्नेव सूत्रे विवक्षितत्वे द्वितीयतृतीयसूत्रे पुनरुक्ते स्याताम्, ताभ्यां खलु ब्रह्मजीवयोर्जीवब्रह्मधर्मोपपत्त्यनुपपत्ती वर्णयिष्येते इति। नच—ताभ्यामनुगमादिति प्रतर्दनाधिकरणसूत्रावयवेनास्पष्टं दर्शिता युक्तिः स्पष्टमनूदिताऽधिकशङ्कापरिहारस्त्वाद्यसूत्र एवेति—वाच्यम्; उपन्यस्ताधिकशङ्कापरिहारार्थत्वेनैव तृतीयसूत्रस्य टीकायामवतारितत्वात्—**यदवोचाम समारोप्यधर्माः समारोपविषये संभवन्ति, नतु विषयधर्माः समारोप्ये इति, तस्यैतदुत्थानमिति,** तत्र सूत्रे टीकायामेवोक्तत्वाच्चेति **चेत्—सत्यम्**; द्वितीयतृतीयसूत्रयोरनु-

**उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते। तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसंकल्पप्रभृतयस्ते परस्मिन्ब्रह्मण्युपपद्यन्ते। सत्यसंकल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रतिबद्धशक्तित्वात्परमात्मन एवावकल्पते। परमात्मगुणत्वेन च 'य आत्मापहतपाप्मा' ( छा० ८।७।१ ) इत्यत्र सत्यकामः सत्यसंकल्प इति श्रुतम्। आकाशात्मेत्यादिनाकाशवदात्माऽस्येत्यर्थः। सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः। 'ज्यायान्पृथिव्याः' इत्यादिना चैतदेव दर्शयति। यदाप्याकाश आत्मा यस्येति व्याख्यायते, तदापि संभवति सर्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम्। अतएव 'सर्वकर्मा' इत्यादि। एवमिहोपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते। यच्चूक्तं 'मनोमयः प्राणशरीरः' इति जीवलिङ्गं न तद्ब्रह्मण्युपपद्यत इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः। सर्वात्मत्वाद्धि ब्रह्मणो जीवसंबन्धीनि मनोमयत्वादीनि ब्रह्मसंबन्धीनि भवन्ति। तथाच ब्रह्मविषये श्रुतिस्मृती भवतः—'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' ( श्वे० ४।३ ) इति। 'सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' ( गी० १३।१३ ) इति च। 'अप्राणो ह्यमना: शुभ्रः' इतिश्रुतिः।**

---

### भामती।

चमसादावपि संमार्गप्रसङ्गात्। तस्मादनुपादेयत्वेऽपि ग्रह उद्देश्यतया परिगृहीतो विवक्षितः। तद्गतं त्वेकत्वमवच्छेदकत्वेन वर्जितमविवक्षितम् इच्छानिच्छे च भक्तितः। तदिदमुक्तम्—**वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते**

### वेदान्तकल्पतरुः।

न कर्त्रभाव उक्तः, **किंतु** पुंस्वातन्त्र्याभावः। विवक्षाभावाभिधानमपि स्वातन्त्र्यनिषेधार्थमित्याह—**तथाचेति**। उपादानेन फलेनेति भाष्ये उपादानं नाम परिग्रहो नतूपादेयत्वमुद्देश्यत्वप्रतियोगि। विपक्षे दण्डमाह—**अन्यथेति**। किंचिद्विधातुं सिद्धवन्निर्देश्यत्वमुद्देश्यत्वम्। अनुष्ठेयत्वेन निर्देश्यत्वमुपादेयत्वम्। उद्देश्याविवक्षायां ग्रहं संमार्ष्टीत्यत्रोद्देश्यग्रहस्याविवक्षा स्यात्। तथा च चमसादेरपि संमार्गप्रसङ्गः स चायुक्तः। चमसाधिकरणे ( जै. अ. ३. पा. १. सू. १६–१७ ) हि प्रकृतयागसंबन्धिसोमाधारत्वाविशेषेण ग्रहपदस्य चोपलक्षणार्थत्वेन चमसानामपि संमार्गमाशङ्क्य सिद्धान्तितम्। केवलं संमार्गविध्ययोगादुद्देश्येन भाव्यं, तच्च ग्रहशब्देन समर्पितम्। नच चमसलक्षणार्थो ग्रहशब्दः; ग्रहयागावान्तरापूर्वसाधनत्वस्यान्तरङ्गस्य तेन लक्ष्यमाणत्वात्। व्रीहियवयोस्त्ववान्तरापूर्वभेदाभावाद्व्रीहीन् प्रोक्षतीत्यत्र व्रीहिशब्दो यवोपलक्षणार्थ इति युक्तम्। ततश्च ग्रहेष्वेव संमार्ग इति॥ **ननु परिग्रहो** यदि उद्देश्यत्वेन विधिपरिगृहीतस्तर्हि तदेकत्वमपि पश्वेकत्ववद्विवक्षितं स्यादत आह—**तद्गतं त्विति**। ग्रहगतं त्वेकत्वं ग्रहान्प्रत्यवच्छेदकत्वेन रूपेण न विवक्षितम्। युक्ता हि पशुना यजेते-

### कल्पतरुपरिमलः।

वृत्तिव्यावृत्तिभ्यां ब्रह्मजीवयोर्जीवब्रह्मधर्माणामुपपत्त्यनुपपत्ती दर्शिते, इहतु तयोरारोप्याधिष्ठानत्वारोपविषयत्वाभ्यामिति टीकाकारैः स्वोल्लिखितप्रकारमवलम्ब्येह सूत्रे एतदुपलक्षणायेत्युक्तम्॥ तस्यैतदुत्थानमिति तु ब्रह्मजीवयोर्जीवब्रह्मधर्मोपपत्त्यनुपपत्तिप्रतिपादनसाम्यमात्रेणोक्तम्, नतु एतदुपपादकप्रकारैक्येनापि। अतो न पुनरुक्त्यादिप्रसङ्गः॥ **ननु**—भाष्ये विवक्षाभावाभिधानमनुपपन्नम्; पारतन्त्र्येऽपि विवक्षासंभवात्—'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥ तथर्ग्वेदादयो वेदाः प्रोक्ता येऽपि पृथक् पृथक्। भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा॥ तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादने। विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः॥' इति 'न्यायेन संप्रदायाद्या ये मीमांसकयाज्ञिकाः। वेदं व्याचक्षते तेषामभिप्रायोऽयमिष्यते॥' इति च पूर्वमीमांसकैरपि वेदे विवक्षायाः समर्थितत्वादित्याशङ्क्य तदपि भाष्यं स्वातन्त्र्याभावाभिप्रायमिति व्याख्यातमित्यवतारयति—**विवक्षाभावाभिधानमपीति**॥ **उद्देश्याविवक्षायामिति**। यद्यपि विवक्षितशब्देन स्वार्थं परित्यज्योपादेयत्वलक्षणायां न विवक्षितत्वस्य वाक्यार्थानुप्रवेशः; तथापि लक्ष्यस्य मुख्यार्थसंबन्धोऽपेक्षणीय इत्युद्देश्योपादेययोर्मध्ये विशिष्योपादेयस्य विवक्षासंबन्धविवक्षायां तत्प्रतिद्वन्द्विन उद्देशस्य विवक्षाभावः पर्यवस्येदिति तात्पर्यम्। **सोमाधारत्वाविशेषेणेति**। तथाच सोमावसेकनिर्हरणादिदृष्टप्रयोजनं ग्रहेष्विव चमसेष्वप्यपेक्षितमिति ग्रहैकत्ववद्ग्रहत्वमपि न विवक्षणीयमिति भावः॥ **ननु** यथा व्रीहीन्प्रोक्षतीत्यत्र द्वितीययोच्यमानं प्रोक्षणसाध्यत्वं पूर्वसिद्धानां व्रीहीणां स्वरूपेण न सम्भवतीत्यपूर्वसाधनत्वाकारेण साध्यत्वनिर्वाहार्थम्, अपूर्वसाधनत्वलक्षणायां व्रीहिपदस्य यथा यवसाधारण्यं, तथेहापि ग्रहपदस्योद्देश्यसमर्पकस्य चमससाधारण्यं स्यादित्याशङ्क्याह—**ग्रहयागावान्तरेति**। **ननु** सोमावसेकनिर्हरणादिदृष्टप्रयोजनाविशेषेऽपि ग्रहयागाभ्यां स्वावान्तरापूर्वसाधनवि-

शुद्धब्रह्मविषया, इयं तु 'मनोमयः प्राणशरीरः' इति सगुणब्रह्मविषयेति विशेषः। अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते ॥ २॥

## अनुपपत्तेस्तु न शारीरः ॥ ३॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता। अनेन तु शारीरे तेषामनुपपत्तिरुच्यते। तुशब्दोऽवधारणार्थः। ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं, नतु शारीरो जीवो मनोमयत्वादिगुणः। यत्कारणं सत्यसंकल्पः, आकाशात्मा, अवाकी, अनादरः, ज्यायान्पृथिव्या इति चैवंजातीयका गुणा न शारीर आञ्जस्येनोपपद्यन्ते। शारीर इति शरीरे भव इत्यर्थः। नन्वीश्वरोऽपि शरीरे भवति। सत्यम्। शरीरे भवति नतु शरीर एव भवति; 'ज्यायान्पृथिव्या ज्यायानन्तरिक्षात्' 'आकाशवत्सर्वगतश्च नित्यः' इति च व्यापित्वश्रवणात्। जीवस्तु शरीर एव भवति; तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात् ॥ ३॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात्कर्मकर्तृव्यपदेशो भवति 'एतमितः प्रेत्याभिसंभवितास्मि' (छा० ३।१४।४) इति। एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति अभिसंभवितास्मीति, शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन अभिसंभवितास्मीति, प्राप्तास्मीत्यर्थः। नच सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः। तत्रोपास्योपासकभावोऽपि भेदाधिष्ठान एव। तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः ॥ ४॥

## शब्दविशेषात् ॥ ५॥

इतश्च शारीरादन्यो मनोमयत्वादिगुणः, यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यन्तरे—'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः' (शत० ब्रा० १०।६।३।२) इति। शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः। तस्मात्तयोर्भेदोऽधिगम्यते ॥ ५॥

## स्मृतेश्च ॥ ६॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' (गी० १८।६१) इत्याद्या। अत्राह—कः पुनरयं शारीरो नाम परमात्मनोऽन्यः, यः प्रतिषिध्यते 'अनुपपत्तेस्तु न शारीरः' इत्यादिना। श्रुतिस्तु—'ना-

---

### भामती।

इति। यत्परं वेदवाक्यं तत्तेनोपात्तं विवक्षितम्, अतत्परेण चानुपात्तमविवक्षितमित्यर्थः ॥ २॥ **स्यादेतत्**—यथा सत्यसंकल्पत्वादयो ब्रह्मण्युपपद्यन्ते, एवं शारीरेऽप्युपपत्स्यन्ते; शारीरस्य ब्रह्मणोऽभेदात्। शारीरगुणा इव मनोमयत्वादयो ब्रह्मणीत्यत आह सूत्रकारः—**अनुपपत्तेस्तु न शारीरः** ॥ ३ ॥ ४ ॥ ५ ॥ यत्तदवोचाम समारोप्यधर्माः समारोपविषये संभवन्ति, नतु विषयधर्माः समारोप्य इति, तस्यैत उत्थानम्। अत्राह चोदकः—**कः पुनरयं शारीरो नामेति**। न तावद्भेदप्रतिषेधाद्भेदव्यपदेशाच्च भेदाभेदावेकत्र तात्त्विकौ भवितुमर्हतः, विरोधा-

### वेदान्तकल्पतरुः।

त्वत्रोपादेयविशेषणत्वादेकत्वविवक्षा; एकप्रसरतया एकपशुविशिष्टयागविधिसंवात्, अत्रतु ग्रहत्वैकत्वोद्देशेन संमार्गविधावुद्दिश्यमानयोः परस्परमसंबन्धाद्ग्रहे एवोद्देश्यत्वेन पर्यवसानाच्च प्रत्युद्देश्यं वाक्यपरिसमाप्तिः स्याद्, ग्रहं संमार्ष्टि तं चैकमिति, ततश्च वाक्यभेद इत्यर्थः। वेदेऽप्युपादेयत्वेनाभिमतं विवक्षितमित्यादिभाष्ये विवक्षिताविवक्षितशब्दनिर्दिष्टेच्छानिच्छे गौण्या वृत्त्या इत्याह—**इच्छानिच्छे चेति**। **को गुणः** ? स भाष्योक्त इत्याह—**तदिदमिति**। जीवस्य ब्रह्मणो भेदाभेदाभ्यामुभयश्रुत्युपपत्तेराक्षेपायोगमाशङ्क्याह—**न तावदिति**। भेदाभेदयोरन्यतरबाधे स्थिते

### कल्पतरुपरिमलः।

वक्ष्यैकस्मिन्नेव ग्रहे संमार्गो व्यवतिष्ठतामित्याशङ्कते—**नन्विति**। **उपादेयविशेषणत्वादिति**। उपादानाय संख्याविशेषस्यापेक्षितत्वात्तदपेक्षितविभक्त्युपनीतसंख्याविशिष्ट एव प्रातिपदिकार्थो यागविशेषणं स्यादित्यर्थः। **अत्र त्विति**।

न्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' ( बृह० ३।७।२३ ) इत्येवंजातीयका परमात्मनोऽन्यमात्मानं वारयति। तथा स्मृतिरपि—'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' ( गी० १३।२ ) इत्येवंजातीयकेति। अत्रोच्यते—सत्यमेवैतत्। पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत्। तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक् 'तत्त्वमसि' इत्यात्मैकत्वोपदेशग्रहणात्। गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात्॥ ६॥

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च॥ ७॥**

अर्भकमल्पमोको नीडं 'एष म आत्मान्तर्हृदये' इति परिच्छिन्नायतनत्वात्, स्वशब्देन च 'अणीयान्व्रीहेर्वा यवाद्वा' इत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते, न सर्वगतः परमात्मेति यदुक्तं तत्परिहर्तव्यम्। अत्रोच्यते—नायं दोषः। न तावत्परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेशः कथमप्युपपद्यते, सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात्परिच्छिन्नदेशव्यपदेशोऽपि कयाचिदपेक्षया संभवति। यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधिपतिरिति व्यपदिश्यते। कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत इति। निचाय्यत्वादेवमिति ब्रूमः। एवमणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुण्डरीके निचाय्यो द्रष्टव्य उपदिश्यते। यथा शालग्रामे हरिः। तत्रास्य बुद्धिविज्ञानं ग्राहकम्। सर्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति। व्योमवच्चैतद्द्रष्टव्यम्। यथा सर्वगतमपि सद्व्योम सूचीपाशाद्यपेक्षयार्भकौकोऽणीयश्च व्यपदिश्यते, एवं ब्रह्मापि। तदेवं निचाय्यत्वापेक्षं ब्रह्मणोऽर्भकौकस्त्वमणीयस्त्वं च न पारमार्थिकम्। तत्र यदाशङ्क्यते, हृदयायतनत्वाद्ब्रह्मणो हृदयायतनानां

### भामती।

दित्युक्तम्। तस्मादेकमिह तात्त्विकमतात्त्विकं चेतरत्, तत्र पौर्वापर्येणाद्वैतप्रतिपादनपरत्वाद्वेदान्तानां द्वैतग्राहिणश्च मानान्तरस्याभावात्तद्बाधनाच्च तेनाद्वैतमेव परमार्थः। तथाच 'अनुपपत्तेस्तु' इत्याद्यसंगतार्थमित्यर्थः। परिहरति—**सत्यमेवैतत्। पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिर्विच्छिद्यमानो बालैः शारीर इत्युपचर्यते।** अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते। तादृशानां च जीवानामविद्या, नतु निरुपाधिनो ब्रह्मणः। नच—अविद्यायां सत्यां जीवात्मविभागः; सति च जीवात्मविभागे तदाश्रयाऽविद्येत्यन्योन्याश्रयमिति—सांप्रतम्; अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवक्लृप्तेरयोगात्। नच—सर्वज्ञस्य सर्वशक्तेश्च सतः कुतोऽकस्मात्संसा-

### वेदान्तकल्पतरुः।

विनिगममाह—**तत्रेति।** वेदान्ततात्पर्यादद्वैतं तत्त्वमिति कुतः? प्रत्यक्षादिविरोधाद्, अत आह—**द्वैतग्राहिणश्चेति।** विदिमात्रव्यापारत्वात्प्रत्यक्षस्य तत्पूर्वकत्वाच्चान्येषामित्यर्थः॥ **तद्बाधनात्** तैर्वेदान्तैर्बाधनात्। तस्माज्जीवभेदानुपपत्तेः सूत्रानुपपत्तिरित्याह—**तथाचेति।** औपाधिकभेदानुवादित्वेन भेदश्रुतीनां सूत्रस्य चोपपत्तिमाह—**अनाद्यविद्येति। तादृशानां चेति।** अविद्यावच्छिन्नानामित्यर्थः॥ **अनादित्वेनेति।** जीवाविद्ययोर्बीजाङ्कुरवद्धेतुमत्त्वे जीवानित्यत्वं

### कल्पतरुपरिमलः।

उद्देश्ययोः परस्परसंबन्ध एकक्रियावशीकारप्रयुक्तः तयोरेवान्योन्याकाङ्क्षाप्रयुक्तो वा वाच्यः। द्विविधोऽप्यत्र न संभवति; उद्देश्ययोः क्रियां प्रति प्रधानयोरुपादेयक्रियावश्यत्वाभावात्, सोमावसेकनिर्हरणप्रयोजनस्य संमार्गस्य सर्वेषु प्राकरणिकेषु ग्रहेष्वपेक्षितत्वेन तेषु केषांचिद्व्यावर्तकस्य संख्याविशेषस्यानाकाङ्क्षितत्वाच्चेति भावः॥ **ननु** तथापि प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वनियमेन शब्दस्वाभाव्यादेकत्वविशिष्टस्य ग्रहस्योद्देश्यत्वमनिवार्यमित्याशङ्क्याह—**ग्रहएवेति।** एकत्वविशेषणेऽपि सोमावसेकनिर्हरणप्रयोजनस्य सर्वैर्ग्रहैरपेक्षितत्वादुपादेयविशेषणस्येवोद्देश्यविशेषणस्य क्रियाङ्गत्वाभावेन तद्वैकल्यप्रयुक्तक्रियावैकल्याप्रसक्तेश्च ग्रहाणां प्रत्येकमेकत्वमवलम्ब्य ग्रहमात्र एवोद्देश्यत्वपर्यवसानं स्यात्। अथाप्येकवचनसार्थकत्वाय तदुपनीतमेकत्वं प्रत्येकमुद्देश्यं कृत्वा ग्रहं संमृज्यात्तं चैकमेवेति वाक्यार्थः कल्प्येत, तदा वाक्यभेदः स्यादित्यर्थः। **इदमुपलक्षणं**—त्रिदोषदुष्टपरिसंख्यादोषापत्तेरपि। **विदिमात्रेति।** ज्ञानमात्रफलकत्वात्तत्त्वावेदकप्रमाणवत्प्रमितिफलकत्वाभावादित्यर्थः। विधिमात्रेति पाठेऽपि विधिपदं ज्ञापनमात्रपरम्। कुतः प्रमितत्वाभाव इत्याकाङ्क्षायां तद्बाधनादित्यनेनोक्तं हेतुं व्याचष्टे—**तैर्वेदान्तैरिति। जीवाभिव्यक्तीनामिति।** आध्यासिकजीवरूपाभिव्यक्तीनामित्यर्थः। पूर्वपूर्वभ्रमनिमित्तक-

च प्रतिशरीरं भिन्नत्वाद्भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वानित्यत्वादिदोषदर्शना-ब्रह्मणोऽपि तत्प्रसङ्ग इति, तदपि परिहृतं भवति ॥ ७॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८॥

व्योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबन्धात्, चिद्रूपतया च शारीरादविशिष्टत्वात्, सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत। एकत्वाच्च। नहि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते, 'नान्योऽतोऽस्ति विज्ञाता' (बृ० ३।७।२३) इत्यादिश्रुतिभ्यः। तस्मात्परस्यैव संसारसंभोगप्राप्तिरिति चेत्, न, वैशेष्यात्। न तावत्सर्वप्राणिहृदयसंबन्धाच्छारीरवद्ब्रह्मणः संभोगप्रसङ्गः; वैशेष्यात्। विशेषो हि भवति शारीरपरमेश्वरयोः। एकः कर्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च। एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः। एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य। यदि च संनिधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसंबन्धोऽभ्युपगम्येत, आकाशादीनामपि दाहादिप्रसङ्गः। सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ। यदप्येकत्वाद्ब्रह्मण आत्मान्तराभावाच्छारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति। अत्र वदामः—इदं तावद्देवानांप्रियः प्रष्टव्यः। कथमयं त्वयात्मान्तराभावोऽध्यवसीयत इति? 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'नान्योऽतोऽस्ति विज्ञाता' इत्यादिशास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो न तत्रार्धजरतीयं लभ्यम्। शास्त्रं च 'तत्त्वमसि'इत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिशच्छारीरस्यैव तावदुपभोक्तृत्वं वारयति।

---

### भामती।

रिता, यो हि परतन्त्रः सोऽन्येन बन्धनागारे प्रवेश्यते, नतु स्वतन्त्र इति—वाच्यम्; नहि तद्भावस्य जीवस्य संप्रतितनी बन्धनागारप्रवेशिता, येनानुयुज्येत, किंत्वियमनादिः पूर्वपूर्वकर्माविद्यासंस्कारनिबन्धना नानुयोगमर्हति। नचैतावता ईश्वरस्यानीशता नह्युपकरणाद्यपेक्षिता कर्तुः स्वातन्त्र्यं विहन्ति। तस्माद्यत्किंचिदेतदपीति ॥ ६ ॥ ७ ॥ विशेषादिति

### वेदान्तकल्पतरुः।

स्यात्, तस्मादुत्तरोत्तरजीवाभिव्यक्तीनां पूर्वपूर्वभ्रमनिमित्तत्वमत्रोक्तम्। अनादिस्त्वविद्या जीवोपाधिर्देवताधिकरणे वक्ष्यते॥ अनादिजीवाविद्ययोश्चेतरेतरतन्त्रत्वमविद्यातत्संबन्धयोरिवाविरुद्धम्। स्वाश्रिताविद्याश्रितत्वे जीवस्यात्माश्रयमिति चेत्, किमतः? उत्पत्तिज्ञप्तिप्रतिबन्धेन ह्यात्माश्रयस्य दोषता। नचानयोरुत्पत्तिः, अनादित्वात्, प्रतीतिस्तु जीवस्य स्वतस्तद्बलादविद्यायाः; तथापि स्वस्कन्धारूढारोहवत्स्वाश्रिताश्रितत्वं विरुद्धमिति चेन्न; स्वाश्रिताश्रितत्वस्य क्वचित्प्रमितावविरोधादप्रमितावव्याप्यादस्मादव्यापकस्य विरोधस्य दुष्प्रसंजनत्वात्। **अपिच** नैव कुण्डबदरवदधरोत्तरीभावः; जीवाविद्ययोरमूर्तत्वात्, अवच्छेद्यावच्छेदकत्वं तु तत्रेतरेतरापेक्षं प्रमाणप्रमेयादिषु सुलभोदाहरणम्॥ **अधिष्ठानं विवर्तानामाश्रयो ब्रह्म शुक्तिवत्। जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम्॥ न वैशेष्यादिति।** सूत्रे प्रकृतिप्रयोगादेवेष्टसिद्धौ

### कल्पतरुपरिमलः।

त्वमित्यनेन बीजाङ्कुरन्यायसाम्यार्थं टीकायामविद्यापदं भ्रमपरमिति व्याख्यातम्। तर्हि किं प्रवाहानादिभ्रमसन्तानव्यतिरेकेण स्वरूपानादिरविद्या नास्ति, साऽप्यस्ति वक्ष्यमाणेत्याह—**अनादिस्त्विति। ननु** "तादृशानां च जीवानामविद्या, नतु निरुपाधिनो ब्रह्मणः" इति टीकायां साप्यविद्या जीवाश्रिताभ्युपगता, तत्प्रसङ्गाद् भ्रमरूपाविद्यायामन्योन्याश्रयः परिहृतः, तथा चाविद्याधीनो जीवब्रह्मविभागस्तद्विभागे च सति जीवाश्रितत्वसिद्धिरविद्याया इत्यन्योन्याश्रयमाशङ्क्याह—**अनादिजीवाविद्ययोरिति।** अविद्यासंबन्धस्तन्निरूपकाविद्याधीनः, अविद्यापि तत्संबन्धाधीना; अविद्यासंबन्धाधीनत्वात्सर्वविवर्तानाम्। तत्र यथेतरेतरतन्त्रत्वमनादित्वान्न दोषावहम् एवमिहापीत्यर्थः। **क्वचित्** प्रमेयत्वाभिधेयत्वादौ। **ननु** स्वाश्रयाश्रितत्वास्याप्रसिद्धौ तेन विरोधप्रसञ्जनं नैवोपपादि, जीवो यद्याश्रितः स्यादविद्याश्रयो न स्यात्तदुपादानकप्रपञ्चवदिति प्रसञ्जनमुपपद्यते इत्यस्वरसादाह—**अपिचेति। नन्वमूर्तत्वेऽपि** नभःशब्दवदाश्रयाश्रयिभावः संभवतीत्याशङ्क्याह—**अवच्छेद्येति।** अन्यत्र यथा तथा वास्तु, प्रकृते जीवाविद्ययोरवच्छेद्यावच्छेदकभावमात्रमिष्यते, अविद्यावच्छेदकोपाधिकं जीवत्वमिति। जीवोऽविद्ययावच्छिद्यते, अविद्या च चैतन्याश्रिता, वृक्षाश्रितः कपिसंयोगो मूलेनेव जीवत्वेनावच्छिद्यत इति। **नन्विदमप्यन्योन्याश्रयदुष्टमित्याशङ्क्याह—तत्रेति।** प्रमेयत्वाकारावगाहि प्रमाणं निरूपकप्रमेयावच्छेद्यं, प्रमेयं च स्वविशेषणीभूतप्रमाणावच्छेद्यमित्येवमादिष्ववच्छेद्यावच्छेदकत्वस्येतरेतरतन्त्रत्वं दृष्टमित्यर्थः॥ जीवाविद्ययोराश्रयाश्रयिभावाभावे कस्तयोराश्रय इत्याकाङ्क्षायां सर्वप्रपञ्चविवर्ताधिष्ठानं चैतन्यरूपं ब्रह्मैव केवलमित्यवच्छेदकतोक्त्या गर्भितमर्थं विवृणोति—**अधिष्ठानमिति। वैशेष्यादिति** ष्यञ्प्रत्ययस्य चातुर्वर्ण्यादिवत्स्वार्थिकत्वे वक्तुं शक्येऽप्यधिकार्थ-

कुतस्तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः । अथागृहीतं शारीरस्य ब्रह्मणैकत्वं, तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगः, न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः । नहि बालैस्तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव परमार्थतो व्योम भवति । तदाह—न वैशेष्यादिति । नैकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गः, वैशेष्यात् । विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः । मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वम् । नच मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते । तस्मान्नोपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुम् ॥ ८ ॥ इति प्रथमं सर्वत्रप्रसिद्धाधिकरणम् ।

( २ अधिकरणम् ) **अत्ता चराचरग्रहणात् ॥ ९ ॥**

कठवल्लीषु पठ्यते—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' ( १।२।२४ ) इति । अत्र कश्चिदोदनोपसेचनसूचितोऽत्ता प्रतीयते । तत्र किमग्निरत्ता स्यात्, उत जीवः, अथवा परमात्मेति संशयः । विशेषानवधारणात्, त्रयाणां चाग्निजीवपरमात्मनामस्मिन्ग्रन्थे प्रश्नोपन्यासोपलब्धेः । किं तावत्प्राप्तम्; अग्निरत्तेति । कुतः ? 'अग्निरन्नादः' ( बृ० १।४।६ ) इति श्रुतिप्रसिद्धिभ्याम् । जीवो वात्ता स्यात्; 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति दर्शनात्, न परमात्मा; 'अनश्नन्नन्योऽभिचाकशीति' ( मुण्ड० ३।१।१ ) इति दर्शनादित्येवं प्राप्ते ब्रूमः—अत्तात्र परमात्मा भवितुमर्हति । कुतः ? चराचरग्रहणात् । चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते, तादृशस्य चाद्यस्य न परमात्मनोऽन्यः कार्त्स्न्येनात्ता संभवति । परमात्मा तु विकारजातं संहरन्सर्वमत्तीत्युपपद्यते । नन्विह चरा-

**भामती ।**

वक्तव्ये वैशेष्याभिधानमात्यन्तिकं विशेषं प्रतिपादयितुम् । तथाह्यविद्याकल्पितः सुखादिसंभोगोऽविद्यात्मन एव जीवस्य युज्यते, नतु निर्मृष्टनिखिलाविद्यातद्वासनस्य शुद्धबुद्धमुक्तस्वभावस्य परमात्मन इत्यर्थः । शेषमतिरोहितार्थम् ॥ ८ ॥ इति प्रथमं सर्वत्र प्रसिद्धाधिकरणम् ॥

**अत्ता चराचरग्रहणात् ॥ ९ ॥**

कठवल्लीषु पठ्यते—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था

**वेदान्तकल्पतरुः ।**

प्रत्ययप्रयोगोऽतिशयद्योतनाय । तमेवाह—**तथाहीति** । अतिशयस्य भावः प्रत्ययार्थो, नतु विशेषस्वरूपभाव इत्यर्थः ॥ इति प्रथमं सर्वत्र प्रसिद्धाधिकरणम् ॥

**अत्ता चराचरग्रहणात् ॥ ९ ॥**

यस्य मृत्युरुपसेचनमोदनमिश्रघृतवत् । तं नाविरतो दुश्चरितादिति पूर्वमन्त्रप्रकाशितोपायवान्यथा वेद इत्थमन्यस्तद्रहितः

**कल्पतरुपरिमलः ।**

लाभाय भावार्थत्वमाश्रितं भावोऽप्यत्रातिशयो विवक्षितः, नतु विशेषशब्दप्रवृत्तिनिमित्तरूपो धर्म इति टीकातात्पर्यमाह—**न वैशेष्यादिति सूत्र इत्यादिना । अत्र**—मनोमयत्वप्राणशरीरत्वयोर्जीवलिङ्गयोस्तत्क्रतुन्यायेन समारोप्यस्य रूपेण विषयो रूपवान् भवेदिति न्यायेन चापतद् ब्रह्मणि पर्यवसानमस्पष्टं ताभ्यामुपगताभ्यां स्पष्टमपि सत्यसंकल्पत्वादिब्रह्मलिङ्गमभिभूतम् । किंच हृदयायतनत्वं हृदये पर्याप्तवृत्तित्वं, नतु हृदये कथनमात्रमित्यणीयस्त्वोपपत्त्युपन्यासेनावगम्यत इत्युपपत्तिरूपतात्पर्यलिङ्गावगतं हृदयायतनत्वं तदुपपत्तिरूपमणीयस्त्वं च प्रबलं जीवलिङ्गमिति ताभ्यामपि सत्यसंकल्पत्वादिकमभिभूतमित्यस्पष्टब्रह्मलिङ्गतया पादसंगतिः । तर्हि दिवि दिव इति विभक्तिभेदेन प्रत्यभिज्ञाविच्छेदसंदेहादस्पष्टगायत्रीब्रह्मानुवृत्तिकं ज्योतिर्वाक्यं विषयीकृत्य प्रवृत्तं ज्योतिरधिकरणमप्यत्रैव पादे कर्तव्यं स्यादिति चेन्न; तत्र स्पष्टब्रह्मलिङ्गस्य गायत्रीवाक्यस्यापि निर्णतव्यत्वेन तस्य प्रथमपादेऽपि संगतिसत्त्वात् ॥ **इति प्रथमं सर्वत्रप्रसिद्धाधिकरणम् ॥**

**अत्ता चराचरग्रहणात् ॥ ९ ॥**

---

१ तत्र सूत्राणि ८—सर्वत्र प्रसिद्धोपदेशात् १ विवक्षितगुणोपपत्तेश्च २ अनुपपत्तेस्तु न शारीरः ३ कर्मकर्तृव्यपदेशाच्च ४ शब्दविशेषात् ५ स्मृतेश्च ६ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ७ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ८ इति ॥

### भामती ।

**वेद यत्र स इति** । अत्र चादनीयौदनोपसेचनेन सूचितः कश्चिदत्ता प्रतीयते । अत्तृत्वं च भोक्तृता वा संहर्तृता वा स्यात् । नच प्रस्तुतस्य परमात्मनो भोक्तृतास्ति; 'अनश्नन्नन्योऽभिचाकशीति' इति श्रुत्या भोक्तृताप्रतिषेधात्, जीवात्मनश्च भोक्तृताविधानात्—'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति । तद्यदि भोक्तृत्वमत्तृत्वं, ततो मुक्तसंशयं जीवात्मैव प्रतिपत्तव्यः । ब्रह्मक्षत्रादि चास्य कार्यकारणसंघातो भोगायतनतया वा साक्षाद्वा संभवति भोग्यम् । अथ तु संहर्तृता भोक्तृता; ततस्त्रयाणामग्निजीवपरमात्मनां प्रश्नोपन्यासोपलब्धेः संहर्तृत्वस्याविशेषाद्भवति संशयः—किमत्ता अग्निराहो जीवः उताहो परमात्मेति । तत्रौदनस्य भोग्यत्वेन लोके प्रसिद्धेर्भोक्तृत्वमेव प्रथमं बुद्धौ विपरिवर्तते, चरमं तु संहर्तृत्वमिति भोक्तैवात्ता । सर्वथा स जीव एव । 'न जायते म्रियते' इति च तस्यैव स्तुतिः; संहारकालेऽपि संस्कारमात्रेण तस्यावस्थानात् । दुर्ज्ञानत्वं च तस्य सूक्ष्मत्वात् । तस्माज्जीव एवात्तेहोपास्यत इति प्राप्तम् । यदि तु संहर्तृत्वमत्तृत्वं तथाप्यग्निरत्ता; 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्याम् । **एवं प्राप्तेऽभिधीयते**—अत्तात्र परमात्मा, कुतः, चराचरग्रहणात् । उभे यस्यौदनः, इति 'मृत्युर्यस्योपसेच-

### वेदान्तकल्पतरुः ।

को वेद । यत्र सोऽत्ताकारणरूपो वर्तते तं निर्विशेषमात्मानं को वेदेत्यर्थः । पूर्वाधिकरणान्ते परमेश्वरस्याभोक्तृतोक्तेरिह न सोऽत्तेति सङ्गतिः विषयवाक्ये अत्तुरश्रवणादत्तेति सूत्रायोगमाशङ्क्याह—**अत्रचेति** । भोक्तृत्वलक्षणमत्तृत्वं नाग्निपरमात्मसाधारणम्, कथं संशय इत्याशङ्क्याह—**अत्तृत्वं चेति** । यदा भोक्तृत्वमत्तृत्वम्, तदा न परमात्मशङ्केत्याह—**नच प्रस्तुतस्येति** । **तयोरन्य इति** । जीवात्मनो भोक्तृत्वप्रतिपादनाच्च न परमात्मशङ्केत्यर्थः । फलितमाह—**तद्यदीति** । ब्रह्मक्षत्रादिनिर्देशाद्भोक्तृत्वमत्तुरिह न निश्चितमपि तु जीवपूर्वपक्षवादिना प्रसाध्यमित्यर्थो यदिकारः । **ननु** जीवस्य कथं ब्रह्मक्षत्रादिभोक्तृत्वं पूर्वपक्षिणा साध्यमत आह—**ब्रह्मक्षत्रादी चेति** । **स्वशरीरं** भोगायतनम् । **छागादि** कस्य चिद्भोग्यम् । यदि न भोक्तृत्वात्संशयः ? कुतस्तर्ह्यत आह—**अथत्विति** । अतएव पूर्वं मुक्तसंशयमित्युक्तम् । अत्र च भवति संशय इति उक्तम् । **भोक्तृतेति** । अत्तृतेत्यर्थः; वनितादिषु भोक्तृत्वेऽपि संहर्तृत्वाभावात्, अत्तृत्वस्य भोक्तृत्वात्मत्वप्रसाधनेन पूर्वपक्षमुपपादयति—**अत्रौदनस्येत्यादिना** ॥ **ओदनस्य भोग्यत्वात्प्रथमं भोक्तृत्वप्रतीतिरित्यत्र संवभ्राम भारतीविलासः**—न हि मुख्य ओदनो ब्रह्मक्षत्रे, न चोपचरितौदनाद्भोक्तृत्वप्रतीतिः । **यदाह—उपमैव तिरोभूतभेदा रूपकमिष्यते । अलङ्कारो रूपकाख्यः कठवल्लीकवेरयम्** ॥ **इति** ॥ **अत्रोच्यते**—ओदनभोक्तर्यनोदनयोर्ब्रह्मक्षत्रयोरोदनत्वेन रूपकमवकल्पते । यथा "यस्य मृगयाविनोदे मृगाः परनरपतय" इत्युक्ते क्षत्रिय एव प्रतीयते, न श्रोत्रियः कश्चिद् ब्राह्मण एवमिहेति । **ननु** प्रलये जीवनाशात्कथमजत्वमत आह—**संहारेति** । संस्कार उपलक्षणमविद्यायाः । अविक्रियस्य परमात्मनः संहर्तृत्वायोगात् अग्निरेव संहर्तेत्याह—**यदित्विति** । तत्रापि भाक्त ओदनशब्दः, स ममापी-

### कल्पतरुपरिमलः ।

**यत्र च सोत्तेऽति** । एवं क इत्था वेदेत्यस्यावृत्तिरुक्ता । **यदि न भोक्तृत्वात्संशय इति** । यद्यप्यत्तृत्वस्य भोक्तृत्वसंहर्तृत्वान्यतररूपाऽनिर्धारणाद् जीवाग्निपरमात्मसंशय इति भोक्तृत्वस्य तदर्थसंशयैककोटितया फलसंशयहेतुत्वं संभवति; तथापि कोटित्रयसाधारणधर्मतया संहर्तृत्ववत्संशयहेतुत्वं न संभवतीत्यत्र तात्पर्यम् ॥ **मृगयाविनोदे** युद्धमृगयाविनोदे । मृगयाविनोदिन इति पाठः साधुः । मृगयाविन इति पाठस्त्वक्षरद्वयभ्रंशेन प्रामादिकः । **अथवा**—युद्धरूपया मृगयया अवति परनृपतिदुष्टमृगोपद्रुतं स्वदेशमिति वा हिनस्ति तानिति वा मृगयावी । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति धातोराभीक्ष्ण्ये ताच्छील्ये वा णिनिः । **क्षत्रिय एवेति** । वस्तुतो मृगयासु मृगहन्ता क्षत्रिय एव प्रतीयत इत्यर्थः । यद्यपि "त्वत्कृपाणभुजङ्गस्य क्षीरं विद्विषतां यशः" इत्यत्रोपचरितक्षीरप्रतिसंबन्धिनि कृपाणे मुख्यतत्पातृत्वादर्शनान्नायं नियमः; तथाप्युभयथा दर्शने सत्यत्र बाधकाभावेनानारोपितमेव भोक्तृत्वं ग्राह्यमिति भावः ॥ **ननु**—ओदनशब्देन प्रसिद्धौदनगतं भोग्यत्वं लक्ष्यते चेत्तत्प्रतिसंबन्धिन्यत्तृत्वं भोक्तृत्वमिति प्रतीतावपि, तेन विनाश्यत्वं लक्ष्यते चेदत्तृत्वं विनाशकत्वरूपं संहर्तृत्वं पर्यवस्येत् तत्परस्मिन् संभवतीति—**चेन्न**; गौणवृत्तावसाधारणगुणग्रहणसंभवे साधारणगुणग्रहणायोगात् । नह्यग्निर्माणवक इत्यत्र पैङ्गल्यादेरिव द्रव्यत्वादेर्ग्रहणमस्ति । मृत्यूपसेचनसन्निधानादत्तृत्वं संहर्तृत्वमित्यभ्युपगमेऽप्यग्निरेवात्तेति पूर्वपक्षान्तरं यदि त्विति टीकायां दर्शितं, तदनुपपन्नं; परमात्मनोऽपि संहर्तृत्वसंभवादित्याशङ्क्याह—**अविक्रियस्येति** । **नन्वत्ता** निर्विशेषः परमात्मेति नोच्यते; यत्र स इति तस्य पृथग्ग्रहणात्, सविशेषस्य तु स्रष्टृत्वादिविकारवत् संहर्तृत्वविकारोऽप्युपपद्यते । **नैष दोषः**; अविक्रियस्येत्यनेन रागद्वेषादिप्राणिसंहारहेतुविकाराभावस्य विवक्षितत्वात् । नच—प्राणिकर्मानुसारेण संहर्तृता स्यादिति—वाच्यम्; समृत्युकस्य सकलस्य युगपन्नाशहेतुत्वदृष्टपरिपाकमेलनासंभवात् । नच—क इत्था वेदेति दुर्ज्ञानत्वलिङ्गादत्ता परमात्मा स्यादिति—वाच्यम्; तस्य सोत्ता यत्र प्रतिष्ठितस्तन्मात्रविषयत्वे संभवत्या-

## भामती ।

नम्' इति च श्रूयते । तत्र यदि जीवस्य भोगायतनतया तत्साधनतया च कार्यकारणसंघातः स्थितः, न तह्योंदनः । नह्योदनो भोगायतनं; नापि भोगसाधनं, अपितु भोग्यः । नच भोगायतनस्य भोगसाधनस्य वा भोग्यत्वं मुख्यम् । नचात्र मृत्युरुपसेचनयता कल्प्यते । नच जीवस्य कार्यकरणसंघातो ब्रह्मक्षत्रादिरूपो भक्ष्यः; कस्यचित्क्रूरसत्त्वस्य व्याघ्रादेः कश्चिद्भवेत्, नतु सर्वथा सर्वजीवस्य । तेन ब्रह्मक्षत्रविषयमपि सर्वजीवस्यात्तृत्वं न व्याप्नोति, किमङ्ग पुनर्मृत्यूपसेचनव्याप्तं चराचरम् । नच ओदनपदात्प्रथमावगतभोग्यत्वानुरोधेन यथासंभवमत्तृत्वं योज्यत इति युक्तम्, नह्योदनपदं श्रुत्वा भोग्यत्वमाह, किंतु लक्षणया । नच लाक्षणिकभोग्यत्वानुरोधेन 'मृत्युर्यस्योपसेचनम्' इति 'ब्रह्म च क्षत्रं च' इति च श्रुतिः संकोचमर्हतः । नच ब्रह्मक्षत्रे एवात्र विवक्षिते; मृत्यूपसेचनेन प्राणभृन्मात्रोपस्थापनात्,

## वेदान्तकल्पतरुः ।

त्याह—**न तर्हीति** । कस्तर्ह्योदनस्तत्राह—**अपित्विति** । ओदन इत्यनुषङ्गः । अपिचौदनशब्दस्य लाक्षणिकस्य संनिहितमृत्यूपसेचनपदानुसारेणौदनगतविनाशित्वधर्मलक्षणार्थत्वाद् ब्रह्मक्षत्रोपलक्षितजगद्विनाशकर्तेश्वरः प्रतीयते, न जीव इत्याह—**नचेत्यादिना** । यदवाद्योदनपदात् प्रथमं भोक्ता भातीति, अत्राह—**न चौदनपदादित्यादिना** । ओदनपदस्य भक्तवाचिनो भोग्यमात्रपरत्वेन तवापि जघन्यवृत्त्याश्रयणात्तद्वलाद् ब्रह्मक्षत्रमृत्युश्रुतीनां न सङ्कोच इत्यर्थः । यदि मृत्युपदाद्विनाशिवस्तुविवक्षा, कथं तर्हि ब्रह्मक्षत्रग्रहणमत आह—**प्राणिष्विति** । ननु ब्रह्मक्षत्राभ्यामितरव्यावृत्त्यर्थत्वं

## कल्पतरुपरिमलः ।

वृत्त्याऽत्तृविषयत्वस्याकल्पनीयत्वादिति भावः ॥ सिद्धान्तटीकायां ब्रह्मक्षत्रशरीरयोर्भोगायतनभोगसाधनरूपयोरोदनवद्भोग्यत्वगुणस्य गौणवृत्तिनिमित्तत्वं निराकृत्य स्वाभिमतं विनाश्यत्वगुणस्य तन्निमित्तत्वमुपपादयितुं प्रवृत्तस्य **नचात्र मृत्युरिति** टीकाग्रन्थस्य तात्पर्यमाह—**अपिचेति** । ब्रह्मक्षत्रयोर्मृत्योश्च तावदोदनोपसेचनभावरूपणादन्नदधिरीत्या संबन्धः प्रतीयते । तथा च विनाशकमृत्युसंसृष्टत्वप्रतीत्यनुसारादोदनशब्देन विनाश्यत्वं लक्षणीयम्; स्वबुद्ध्युपस्थापितवैशेषिकगुणग्रहणादप्येकवाक्यतापन्नपदान्तरार्थोपस्थापितगुणग्रहणस्य बुद्धिलाघवेनैकवाक्यतासामर्थ्येन च न्याय्यत्वात्, चरमश्रुतेनाप्येकवाक्यान्तर्गतपदान्तरार्थेनानुपस्थित एवापेक्षिते तस्य पुरुषबुद्ध्या कल्पनीयत्वात् । अतएव ह्यक्ताः शर्करा इति विधेयस्याञ्जनस्य साधनापेक्षायां वाक्यशेषस्तुतं घृतमेव गृह्यते, न तु पुरुषकल्पनीयं तैलवसादिसाधारणं द्रव्यमात्रम् । एवंचोपसेचनत्वरूपणेऽपि स्वयमद्यमानत्वे सत्यन्यादनहेतुत्वरूपमुख्यगुण एवासाधारणतया स्वारस्यावगतो निमित्तमवतिष्ठते । अतस्तस्य निमित्तत्वमदनं ब्रह्मकर्तृकसंहार इति पक्ष एव घटते; तेन मृत्योरपि संहार्यत्वाद्, भूतवर्गसंहारे मृत्योर्द्वारत्वेनान्यसंहारहेतुत्वाच्च, नत्वदनं जीवकर्तृको भोग इति पक्षे; मृत्योरभोग्यत्वादन्यभोगाहेतुत्वाच्च । एवं मृत्योरुपसेचनत्वरूपणान्मृत्युना संहार्यं यावच्चराचरात्मकं भूतजातं तत्सर्वं ब्रह्मक्षत्रशब्दाभ्यामुपलक्षणीयमित्यपि सिध्यति । तेन सकलचराचरसंहारकर्ता परमेश्वर इहात्ता प्रतीयत इति भावः ॥ **ओदनपदात्प्रथममिति** । ब्रह्मक्षत्रयोः स्वशरीरभृत्यशरीरादिरूपेण भोगायतनभोगसाधनत्वेऽपि स्त्र्यादिरूपतया भोग्यत्वमपि संभवति । व्याघ्रादिजीवविशेषं प्रति तयोर्भक्ष्यतया अत्यन्तान्तरङ्गं भोज्यत्वमपि संभवतीति भावः । **ब्रह्मक्षत्रमृत्युश्रुतीनामिति** । न तावत्सर्वं ब्रह्म क्षत्रं च कस्यचिज्जीवविशेषस्य भोग्यं भोज्यं वा संभवति, नतरां ब्रह्मक्षत्रोपलक्षितचराचरम्; ततो यावद्ब्रह्म क्षत्रं च कस्यचिज्जीवविशेषस्य भोग्यं भोज्यं वा तत्परतया ब्रह्मक्षत्रपदयोः संकोचो वर्णनीयः । मृत्युशब्दश्चाविशेषेण संहारकं प्रत्याययन् किंचिद् व्याघ्रादिभक्षणीयब्रह्मक्षत्रसंहारकपरतया संकोचनीयः । नच किंचित्पदगतस्वायत्तलक्षणीयगुणग्रहणानुसारेणैतेषां संकोचो युक्त इत्यर्थः ॥ **यदि मृत्युपदादिति** । **अत्रायमाशयः**—मृत्युपदसन्निधानात्तद्विनाश्यं सर्ववस्तु ग्राह्यमित्येतदयुक्तम्; तथा सति ब्रह्मक्षत्रपदयोर्लक्षणापत्तेः, नचेष्टापत्तिः; ब्रह्मक्षत्रयोर्मृत्युमिश्रणसत्त्वेन मुख्यार्थे अन्वयानुपपत्त्यभावात् । नच—तदभावेऽपि समभिव्याहृतस्य मृत्युमिश्रणस्यान्यसाधारण्यमात्रेण लक्षणा—वाच्या; अन्नकरणत्वस्य दर्व्यादिसाधारण्येऽपि तेषु शूर्पशब्दस्य लक्षणानभ्युपगमादिति । **प्राणिष्विति परिहारवाक्यस्यायमाशयः**—अत्तृत्वं भोक्तृत्वं संहर्तृत्वमिति पक्षद्वयेऽप्योदनपदवद् ब्रह्मक्षत्रपदयोरपि लक्षकत्वमवश्यंभावि, नहि स्त्र्यादिरूपतया भक्ष्यतया वा ब्रह्मक्षत्रयोरेव भोक्ता कश्चिद् जीवोऽस्ति । न वा परमेश्वरस्तदुभयमात्रसंहर्ता, न चाधिकभोक्तृत्वेऽप्यधिकसंहर्तृत्वेऽपि तन्मात्रग्रहणे प्रयोजनमस्तीति ॥ **नन्विदमेव** प्रयोजनं, यत् पञ्चनखादिष्विवान्यनिवृत्तिरित्याशङ्कते—**नन्विति** । पञ्चनखादिवाक्येषु मनुष्यादिनिवृत्तिः प्रत्यवायपरिहारेण फलवती । इह तु प्रयोजनं न पश्यामः; स्वरूपेणान्यनिवृत्तेर्बाधितत्वात्, उपासनाप्रकरणाभावेनाक्ष्यादित्यपुरुषयोर्व्यवस्थितलोककामविशेषेशितृत्वश्रवणवद्विशिष्य ब्रह्मक्षत्रसंहर्तृत्ववर्णनमुपासनार्थमिति कल्पयितुमशक्यत्वाच्च । तथाच यथा "यस्मिन् पञ्चपञ्चजना" इति मन्त्रे विशिष्य पञ्चानां मनुष्याणामाधार इति कीर्तने प्रयोजनं न किंचिदस्तीति तल्लक्षणीयाकाङ्क्षायां वाक्यशेषात् प्राणादयस्तल्लक्षणीया निश्चीयन्ते, एवं विशिष्य ब्रह्मक्षत्रग्रहणं

चरग्रहणं नोपलभ्यते, कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते । नैष दोषः; मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वात्, ब्रह्मक्षत्रयोश्च प्राधान्यात्प्रदर्शनार्थत्वोपपत्तेः । यत्तु—परमात्मनोऽपि नात्तृत्वं संभवति; 'अनश्नन्नन्योऽअभिचाकशीति' इति दर्शनादिति, अत्रोच्यते—कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनं; तस्य संनिहितत्वात्, न विकारसंहारस्य प्रतिषेधकं; सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात् । तस्मात्परमात्मैवेहात्ता भवितुमर्हतीति ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥

इतश्च परमात्मैवेहात्ता भवितुमर्हति, यत्कारणं प्रकरणमिदं परमात्मनः 'न जायते म्रियते वा विपश्चित्' ( काठ० १।२।१८ ) इत्यादि । प्रकृतग्रहणं च न्याय्यम् । 'क इत्था वेद यत्र सः' इति च दुर्विज्ञानत्वं परमात्मलिङ्गम् ॥ १० ॥ इति द्वितीयमत्राधिकरणम् ।

## ( ३ अधिकरणम् ) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

कठवल्लीष्वेव पठ्यते—'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' ( काठ० १।३।१ ) इति । तत्र संशयः । किमिह बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति । यदि बुद्धिजीवौ, ततो बुद्धिप्रधानात्कार्यकरणसंघाताद्विलक्षणो जीवः प्रतिपादितो भवति । तदपीह प्रतिपादयितव्यं; 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' ( काठ० १।१।२० ) इति पृष्टत्वात् । अथ जीवपरमात्मानौ, ततो जीवाद्विलक्षणः

### भामती ।

प्राणिषु प्रधानत्वेन च ब्रह्मक्षत्रोपन्यासस्योपपत्तेः, अन्यनिवृत्तेरशाब्दत्वात्, अनर्थत्वाच्च । तथाच चराचरसंहर्तृत्वं परमात्मन एव । नाग्नेः । नापि जीवस्य । तथाच 'न जायते म्रियते वा विपश्चित्' इति ब्रह्मणः प्रकृतस्य न हानं भविष्यति । 'क इत्था वेद यत्र सः' इति च दुर्ज्ञानतोपपत्स्यते । जीवस्य तु सर्वलोकप्रसिद्धस्य न दुर्ज्ञानता । तस्मादत्ता परमात्मैवेति सिद्धम् ॥ ९ ॥ १० ॥ इति द्वितीयमत्राधिकरणम् ।

#### गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

संशयमाह—**तत्रेति** । पूर्वपक्षे प्रयोजनमाह—**यदि बुद्धिजीवाविति** । सिद्धान्ते प्रयोजनमाह—**अथ जीवप-**

### वेदान्तकल्पतरुः ।

वाक्यस्य किं न स्यादत आह—**अन्यनिवृत्तेरिति** । पञ्चपञ्चनखादौ हि मनुष्यादिनिवृत्तिः परिसंख्याफलम् । तया चानर्थनिवृत्तिः । इहान्यनिवृत्तिरनर्थिका; पुरुषार्थविशेषानवगमादित्यर्थः । मायोपाधेः परस्यास्ति संहर्तृत्वमित्याह—**तथाचेति** ॥ इति द्वितीयमत्राधिकरणम् ॥

#### गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

**ननु**—लक्षणया पिबदपिबतोः पिबन्ताविति निर्देशोपपत्तेः पूर्वपक्षसिद्धान्तपक्षाक्षेपे च वाक्यस्य निर्विषयत्वप्रसङ्गाद्

### कल्पतरुपरिमलः ।

निष्प्रयोजनं सदितरेषामपि केषांचिदुपलक्षणमित्युपलक्षणीयविशेषाकाङ्क्षायां पश्चात्तनमृत्यूपसेचनकीर्तनात् तदुपसिच्यमानं सर्वमुपलक्षणीयं निश्चीयत इति परिहाराद्यभिप्रायमाह—**पञ्चपञ्चनखादौ हीति** । अग्नेर्व्याघ्रादिजीवस्य च यत्किंचित्संहर्तृत्वसंभवेऽपि सकलचराचरसंहर्तृत्वं परमात्मन एवेति टीकोक्तमयुक्तम्; अविकारस्य तस्य संहर्तृत्वस्यैवायोगादिति शङ्कां निराकरोति—**मायोपाधेरिति** । मायिनं तु महेश्वरमिति मायोपाधिकपरमेश्वरप्रकरणे "यस्मिन् क्षेत्रे संहरत्येष देवः" इति तस्य संहर्तृत्वं श्रूयते । तच्च संसारपरिभ्रमणखिन्नान्प्राणिनः कंचित्कालं महासुषुप्त्या विश्रान्तिं प्रापयितुमिति न तत्तस्य दोषावहम् । प्रायः प्राणिनां दैनन्दिनशर्वरीषु युगपत् सुषुप्तिप्रापकादृष्टोन्मेषवन्महाशर्वरीषु सर्वप्राणिनां युगपन्महासुषुप्तिप्रापकादृष्टोन्मेषोपि नानुपपन्न इति भावः । अत्र प्रथमप्रतीतभोग्यत्वलक्षणापवादेन विनाश्यत्वलक्षणां व्युत्पाद्य ब्रह्मलिङ्गस्योन्मेषणीयत्वादस्पष्टब्रह्मलिङ्गता ॥ इति द्वितीयमत्राधिकरणम् ॥

#### गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

**पूर्वसिद्धान्तपक्षाक्षेप इति** । बुद्धिजीवाविति पूर्वपक्षस्य जीवपरमात्मानाविति सिद्धान्तपक्षस्य चाक्षेप इत्यर्थः । **प्राकृ-**

तत्र सूत्रे २ । अत्ता चराचरग्रहणात् ९ प्रकरणाच्च १० ॥

**परमात्मा प्रतिपादितो भवति । तदपीह प्रतिपादयितव्यं; 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' ( काठ० १।२।१४ ) इति पृष्टत्वात् । अत्राहाक्षेप्ता—उभावप्येतौ पक्षौ न संभवतः; कस्मात् ? ऋतपानं कर्मफलोपभोगः; 'सुकृतस्य लोके' इति लिङ्गात् । तच्चेतनस्य क्षेत्रज्ञस्य संभवति, नाचेतनाया बुद्धेः । 'पिबन्तौ' इति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः । अतो बुद्धिक्षेत्रज्ञपक्षस्तावन्न संभवति । अतएव क्षेत्रज्ञपरमात्मपक्षोऽपि न संभवति; चेतनेऽपि परमात्मनि ऋतपानासंभवात्, 'अनश्नन्नन्योऽअभिचाकशीति' इति मन्त्रवर्णादिति । अत्रोच्यते—नैष दोषः; छत्रिणो गच्छन्तीत्येकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनात् । एवमेकेनापि पिबता द्वौ पिबन्तावुच्येते । यद्वा—जीवस्तावत्पिबति, ईश्वरस्तु पाययति । पाययन्नपि पिबतीत्युच्यते; पाचयितर्यपि पक्तृत्वप्र-**

---

## भामती ।

**रमात्मानाविति** । औत्सर्गिकस्य मुख्यताबलात्पूर्वसिद्धान्तपक्षासंभवेन पक्षान्तरं कल्पयिष्यत इति मन्वानः संशयमाक्षिपति—**अत्राहाक्षेप्तेति** । **ऋतं** सत्यम्, अवश्यंभावीति यावत् । समाधत्ते—**अत्रोच्यत इति** । अध्यात्माधिकारादन्यौ तावत्पातारावशक्यौ कल्पयितुम् । तदिह बुद्धेरचैतन्येन परमात्मनश्च भोक्तृत्वनिषेधेन जीवात्मैवैकपाता परिशिष्यत इति 'सृष्टीरुपदधाति' इतिवद्द्विवचनानुरोधादपिबत्संसृष्टतां स्वार्थस्य पिबच्छब्दो लक्षयन्स्वार्थमजह-

## वेदान्तकल्पतरुः ।

आक्षेपायोगमाशङ्क्याह—**औत्सर्गिकस्येति** । अयं हि आक्षेप्ता पिबन्तावित्यस्य मुख्यमर्थम् औत्सर्गिकमबाध्यं मन्यते, प्राकृतसुपर्णविषयत्वं च वाक्यस्य पक्षान्तरं कल्पयिष्यत इति मन्यते, अत आक्षेप इत्यर्थः । लक्षणां वक्तुं मुख्यार्थायोगमाह—**अध्यात्मेत्यादिना** । अन्यौ पातारौ पक्षिणौ न शक्यौ कल्पयितुं चेत्, तर्हि बुद्धिजीवौ जीवपरौ स्तो नेत्याह—**बुद्धेरित्यादिना** । सृष्टीरुपदधातीति समाम्नाय "एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृजते"त्यादयः सृष्ट्यसृष्टिमन्त्रा आम्नाताः, तत्र सृष्टीरुपदधातीति यदि सृष्टिमन्त्रकेष्टकानामुपधाने विधानं, तर्हीष्टकासु

## कल्पतरुपरिमलः ।

**तसुपर्णेति** । द्वासुपर्णेति मन्त्रान्तरे द्वित्वस्य सुपर्णविषयत्वादिहापि तद्विषयत्वशङ्केत्यर्थः । **यदि सृष्टिमन्त्रकेष्टकानामिति** । 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतो'रित्यनुशासनात्सृष्टिशब्दः सृष्टिमन्त्रोपधेयेष्टकावाची ॥ **ननु**—इष्टकानामुपधाने विधानमित्ययुक्तम्; मन्त्रविशेषोपधेयत्वेन सृष्टिशब्देनानूद्यमानानामिष्टकानामुपधानस्य प्रागेव प्राप्तेर्वक्तव्यत्वात्, अन्यथा सृष्टिशब्देनानुवादस्योपधानविधानस्य चान्योन्यापेक्षत्वेन परस्पराश्रयापत्तेः, सृष्ट्यसृष्टिमन्त्रकत्वविशेषस्येत्याद्यप्ययुक्तम्; सृष्ट्यसृष्टिमन्त्रोपधेयत्वविशेषावगमोपायाभावे सर्वासामिष्टकानां सृष्टिमन्त्रोपधेयत्वावगमेऽपि तुल्यन्यायतयोपायाभावेनास्याप्यनवगमप्रसङ्गात्, सृष्टिमन्त्राम्नानचारितार्थ्याय तदुपधेयत्वावगमे तथैवासृष्टिमन्त्राम्नानचारितार्थ्याय सृष्टिमन्त्रैश्चतुर्दशभिरुपधेयाश्चतुर्दशेष्टकास्तत्संवलितैस्त्रिभिरसृष्टिमन्त्रैरुपधेयास्तिस्र इष्टका इति विशेषावगमोपपत्तेः । कथंचित्सृष्टिमन्त्रोपधेयत्वावगम एवोपायोऽस्ति नासृष्टिमन्त्रोपधेयत्वावगम इति विशेषसमर्थनेऽपि सर्वा एवेष्टकाः सृष्टिमन्त्रकाः स्युरित्यापादनमयुक्तम्; 'प्राणभृत उपदधाति चित्रिणीरुपदधाति वज्रिणीरुपदधाती'त्यादिविध्यन्तरबलात् प्राणभृदादिमन्त्रान्तरोपधेयेष्टकानामप्यङ्गीकार्यत्वात्, सर्वेष्टकोपधानस्य सृष्टिमन्त्रकत्वेऽप्यसृष्टिमन्त्रानर्थक्योक्तिरयुक्ता; उपधानाविनियुक्तानामपि तेषामिष्टकाग्रहणादिषु विनियोगेनाग्निप्रकरणाम्नानचारितार्थ्योपपत्तेः, अतएव तदानर्थक्यपरिहारायाजहल्लक्षणोक्तिरप्ययुक्ता । तस्मात्सर्वमिदमसमञ्जसमिति—**चेत्, उच्यते अयमिहाचार्याणामभिप्रायः**—सृष्टिशब्दोक्तमन्त्रविशेषोपधेयत्वेनानुवादान्यथानुपपत्त्येष्टकाङ्गे उपधाने तत्र सृष्टिमन्त्राणां विनियोगे च विधिः कल्प्यते । कल्प्यश्रुतिसिद्धमपीष्टकोपधानं प्रत्यक्षविधिस्पृष्टं भवत्विति एतदर्थं तस्य पुनर्विधानम् । प्रत्यक्षविधानस्य च फलं सृष्टिमन्त्रोदितानामिष्टकानां मध्यमचितावुपधानं, न त्वप्राप्तप्राप्तिः । असति तस्मिन्विधौ मध्यमचितिप्रकरणानाम्नातानां तासां तस्यामुपधानं न लभ्यते, सति तु तस्मिन् लभ्यते । मध्यमायां तु–"वचनाद् ब्राह्मणवत्त्व" (जै. सू.अ.५ पा.३ सू.१९) इति पञ्चमाध्यायाधिकरणे "यां वै कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्या"दिति वचनेन प्रत्यक्षज्ञानवाच्यभिपूर्वजानातिवशाद् वचनेन प्रत्यक्षब्राह्मणोदितानामिष्टकानां मध्यमचितावुपधानं, नतु "अन्ते तु वादरायण"(जै.सू.अ.५पा.३सू.१९)इति न्यायाच्चित्यन्तर इति निर्णीतत्वात् । एवं च सृष्टिशब्दस्य सृष्टिलिङ्गकमन्त्रवाचित्वेनैतद्विध्युपात्तास्विष्टकासु सृष्ट्यसृष्टिमन्त्रकत्वरूपावान्तरविशेषानवगमात् सर्वा एवैतद्विध्युपात्ता इष्टकाः सृष्टिमन्त्रकाः स्युः । तथा चासृष्टिलिङ्गकमन्त्रोपधेयेष्टकानां मध्यमचित्यलाभान्मध्यमचित्युपधे-

सिद्धिदर्शनात्। बुद्धिक्षेत्रज्ञपरिग्रहोऽपि संभवति; करणे कर्तृत्वोपचारात्, एधांसि पचन्तीति प्रयोगदर्शनात्। न चाध्यात्माधिकारेऽन्यौ कौचिदृतं पिबन्तौ संभवतः। तस्माद्बुद्धिजीवौ स्यातां, जीवपरमात्मानौ वेति संशयः। किं तावत्प्राप्तं, बुद्धिक्षेत्रज्ञाविति। कुतः? 'गुहां प्रविष्टौ' इति विशेषणात्। यदि शरीरं गुहा, यदि वा हृदयं, उभयथापि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टावुपपद्येते। नच सति संभवे सर्वगतस्य ब्रह्मणो विशिष्टदेशत्वं युक्तं कल्पयितुम्। 'सुकृतस्य लोके' इति च कर्मगोचरानतिक्रमं दर्शयति। परमात्मा तु न सुकृतस्य वा दुष्कृतस्य वा गोचरे वर्तते; 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः। 'छायातपौ' इति च चेतनाचेतनयोर्निर्देश उपपद्यते, छायातपवत्परस्परविलक्षणत्वात्। तस्माद्बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येवं प्राप्ते ब्रूमः—विज्ञानात्मपरमात्मानाविहोच्येयाताम्। कस्मात्? आत्मानौ हि तावुभावपि चेतनौ समानस्वभावौ, संख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते। अस्य गोर्द्वि-

## भामती।

त्वितरेतरयुक्तपिबदपिबत्परो भवतीत्यर्थः। अस्तु वा मुख्य एव, तथापि न दोष इत्याह—**यद्वेति**। स्वातन्त्र्यलक्षणं हि कर्तृत्वं तच्च पातुरिव पाययितुरप्यस्तीति सोऽपि कर्ता। **अतएव चाहुः**—"यः कारयति स करोत्येव" इति। एवं करणस्यापि स्वातन्त्र्यविवक्षया कथंचित्कर्तृत्वं यथा काष्ठानि पचन्तीति। तस्मान्मुख्यत्वेऽप्यविरोध इति। तदेवं संशयं समाधाय पूर्वपक्षं गृह्णाति—**बुद्धिक्षेत्रज्ञाविति**। **नियताधारता बुद्धिजीवसंभविनी नहि। क्लेशात्कल्पयितुं युक्ता सर्वगे परमात्मनि**॥ नच पिबन्ताविति वत्प्रविष्टपदमपि लाक्षणिकं युक्तं; सति मुख्यार्थत्वे लाक्षणिकार्थत्वायोगात्, बुद्धिजीवयोश्च गुहाप्रवेशोपपत्तेः। **अपिच** 'सुकृतस्य लोके' इति सुकृतलोकव्यवस्थानेन कर्मगोचरानतिक्रम उक्तः। बुद्धिजीवौ च कर्मगोचरमनतिक्रान्तौ। जीवो हि भोक्तृतया बुद्धिश्च भोगसाधनतया धर्मस्य गोचरे स्थितौ, नतु ब्रह्म; तस्यातदायत्तत्वात्। **किंच** छायातपाविति तमःप्रकाशावुक्तौ। नच जीवः परमात्मनोऽभिन्नस्तमः; प्रकाशरूपत्वात्, बुद्धिस्तु जडतया तम इति शक्योपदेष्टुम्। तस्माद्बुद्धिजीवावत्र कथ्येते। तत्रापि

## वेदान्तकल्पतरुः।

सृष्ट्यसृष्टिमन्त्रकत्वविशेषस्याद्याप्यनवगमात्सर्वा एव सृष्टिमन्त्रकाः, तत्र सृष्टिपदरहितमन्त्राणामानर्थक्यं स्यात्, तन्मा भूदिति सृष्टिशब्दः सृष्ट्यसृष्टिसमुदायं लक्षयित्वा तत्समुदायिनः सर्वान्मन्त्रान् लक्षयति। एवमत्रापि पिबच्छब्दः स्वार्थस्यापिबत्संसृष्टतां पिबदपिबत्समुदायमिति यावन्तं लक्षयन्स्वार्थं पिबन्तमजहदितरेतरयोगलक्षणं समुदायं प्रति समुदायीभूतपिबदपिबत्परो भवति, न पिबत्येव वर्तते, नापि लक्षयन् गङ्गाशब्दवत्स्वार्थं त्यजेदित्यर्थः॥ **अस्तु वेति**। प्रत्ययस्य मुख्यत्वं प्रकृतिस्तु पिबतिः सृष्टिन्यायेन पायनं लक्षयतीत्यर्थः। बुद्धिक्षेत्रज्ञपक्षे तु बुद्धौ प्रकृतिर्मुख्या प्रत्ययस्तु बुद्धिजीवगतं कर्तृकरणसाधारणकारकत्वमात्रं लक्षयतीत्याह—**एवमिति**। अत्र पूर्वोत्तरपक्षयोर्लक्षणासाम्यात् संशयः। पूर्वत्र ब्रह्मक्षत्रशब्दस्य संनिहितमृत्युपदानुसारेणानित्यवस्तुपरत्ववदिहापि पिबच्छब्दस्य संनिहितगुहाप्रविष्टादिपदानुसाराद्बुद्धिक्षेत्रज्ञपरत्व-

## कल्पतरुपरिमलः।

येष्टकामन्त्रसंवलिततयैकस्मिन्ननुवाके समाम्नानमनर्थकं स्यात्, सृष्टीरुपदधातीति विधानानन्तरमेकयाऽस्तुवतेत्यादिमन्त्रोपधेयानां सप्तदशानामिष्टकानां प्रत्येकस्तुतिपूर्वकमाम्नातो "यत्सप्तदशेष्टका उपदधातीति" वाक्यशेषश्चानर्थकः स्यात्, तन्मा भूदित्येतदर्थं सृष्ट्यसृष्टिमन्त्राणां सप्तदशानामप्येकसमुदायवर्तित्वेनाजहल्लक्षणाऽऽश्रितेति। यद्यप्यस्तु वेत्यादिटीकायां जीवपरमात्मपक्षे बुद्धिजीवपक्षे च प्रकृतिप्रत्ययावुभावपि मुख्यावेव; हेतुकर्तृसाधारणकर्तृत्वसामान्यस्य कृदर्थत्वात्, हेतुकर्तृत्वरूपकर्तृत्वविशेषविवक्षायां णिजर्थान्तर्भावे कर्तव्येऽपि कर्तृत्वसामान्यविवक्षायां तदन्तर्भावानपेक्षणात्, करणस्यापि बुद्धेः "कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रोक्तरीत्या कर्मण इव कर्तृत्वसंभवाच्चेति तयोर्मुख्यत्वैवोपपादितेति योजयितुं शक्यम्; शतुः स्वतन्त्रकर्तर्येव शक्तिः करणे च न मुख्यं कर्तृत्वमित्यङ्गीकारेऽपि बुद्धिजीवपक्षे कारकत्वसामान्य इव जीवपरमात्मपक्षे कर्तृत्वसामान्ये प्रत्ययस्यैव लक्षणोक्तेति योजयितुं शक्यम्; तथाप्येवमपि योजयितुं शक्यमिति वैभवादित्थं व्याख्यातम्॥ **गुहाप्रविष्टादिपदानुसारेणेति**। सर्वगतस्य ब्रह्मणो गुहावर्तित्वसंभवेऽपि गुहाप्रवेशो न संभवति; अस्मिन्प्रकरणे प्रकरणान्तरेषु च ब्रह्मणः प्रवेशश्रवणम् अनेन जीवेनात्मनाऽनुप्रविश्येति श्रुताविव जीवभावाभिप्रायम्। न चेह तथा योजयितुं शक्यम्; गुहां प्रविष्टाविति जीववद् द्वितीयस्यापि पृथक्प्रवेशश्रवणात्। न हि जीवभावेन संसारित्वमभिप्रेत्य ब्रह्मैव संसरतीति व्यवहारवद् ब्रह्मणी संसरत इत्यपि व्यवहारः संगच्छते। तथा अनुत्तमेषूत्तमेषु लोकेष्वित्यादिश्रुत्यन्तरेषु ब्रह्मणो लोकवर्तित्वप्रसिद्धावपि सुकृतस्येति विशेषणादिह प्रतीयमानं सुकृतफलभोगार्थ-

तीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते, नाश्वः पुरुषो वा। तदिह ऋतपानेन लिङ्गेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रतीयते। ननूक्तं गुहाहितत्वदर्शनान्न परमात्मा प्रत्येतव्य इति। गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः। गुहाहितत्वं तु श्रुतिस्मृतिष्वसकृत्परमात्मन एव दृश्यते—'गुहाहितं गह्वरेष्ठं पुराणम्' (काठ० १।२।१२) 'यो वेद निहितं गुहायां परमे व्योमन्' (तै० २।१) 'आत्मानमन्विच्छ गुहां प्रविष्टम्' इत्याद्यासु। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव। सुकृतलोकवर्तित्वं तु छत्रित्ववदेकस्मिन्नपि वर्तमानमुभयोरविरुद्धम्। छायातपावित्यप्यविरुद्धम्। छायातपवत्परस्परविलक्षणत्वात्संसारित्वासंसारित्वयोः।

## भामती।

प्रेते विचिकित्सापनुत्तये बुद्धेर्भेदेन परलोकी जीवो दर्शनीय इति बुद्धिरुच्यते। एवंप्राप्तेऽभिधीयते—**ऋतपानेन जीवात्मा निश्चितोऽस्य द्वितीयता। ब्रह्मणैव सरूपेण नतु बुद्ध्या विरूपया॥ १॥ प्रथमं सद्वितीयत्वे ब्रह्मणावगते सति। गुहाश्रयत्वं चरमं व्याख्येयमविरोधतः॥ २॥** गौः सद्वितीयेत्युक्ते सजातीयेनैव गवान्तरेणावगम्यते, नतु विजातीयेनाश्वादिना। तदिह चेतनो जीवः सरूपेण चेतनान्तरेणैव ब्रह्मणा सद्वितीयः प्रतीयते, नत्वचेतनया विरूपया बुद्ध्या। तदेवम् 'ऋतं पिबन्तौ' इत्यत्र प्रथममवगते ब्रह्मणि तदनुरोधेन चरमं गुहाश्रयत्वं शालग्रामे हरिरितिवद्व्याख्येयम्। बहुलं हि गुहाश्रयत्वं ब्रह्मणः श्रुतय आहुः। तदिदमुक्तम्—**तद्दर्शनादिति।** तस्य ब्रह्मणो गुहाश्रयत्वस्य श्रुतिषु दर्शनादिति। एवंच प्रथमावगतब्रह्मानुरोधेन सुकृतलोकवर्तित्वमपि तस्य

## वेदान्तकल्पतरुः।

मित्याह—**नियतेति। अस्य** जीवस्य या **द्वितीयता** द्वित्वाधारता सा ब्रह्मणैव, तद्धि चेतनत्वात्सरूपं, न तु बुद्ध्याः; तस्या अचेतनत्वेन विसदृशत्वादित्याह—**ऋतपानेनेति। ननु** संनिहितगुहाप्रविष्टपदाद्बुद्धिर्द्वितीया किं न स्यादत आह—**प्रथममिति। वचनविरोधे इति।** अत्तीत्यस्य मुख्यकर्तृत्वसंभवे करणे कर्तृत्वोपचारो न युक्त इति न्यायस्य बुद्धिजीवपरत्वेन मन्त्रव्याख्यायकब्राह्मणविरोधे आभासत्वमित्यर्थः॥ **आध्वंसते** आगच्छति। चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां वक्ष्यामीति श्रुतिः प्रवृत्तेति भाष्यमुपपादयन्मन्त्रार्थमाह—**अनश्नन्निति।** बुद्धेरन्यो यो जीवः सोऽनश्नन्नभोक्तृ ब्रह्म सन्नभिपश्यतीत्यर्थः। अस्मिन्श्लोकेऽर्थे स्वयमेव श्रुतिरनुपपत्तिं शङ्कते, तामाह—**यदीति।** चितेः छाया चित्प्रतिबिम्बं तदापत्त्येति॥ **सुकृतस्य** कर्मणः, **ऋतं** सत्यमवश्यंभावित्वात्फलं, पिबन्ताविति संबन्धः। **लोके** शरीरे। **गुहां** गुहायां बुद्धौ। **परमे** बाह्याकाशापेक्षया प्रकृष्टे हार्दे नभसि परस्य ब्रह्मणोऽर्धे स्थाने, त्रिर्णाचिकेतोऽग्निश्चितो यैस्ते तथोक्ताः। **तं दुर्दर्शमिति। गूढं** छन्नं यथा भवति तथानुप्रविष्टम्। **क्वेत्यत आह—गुहाहितं** बुद्धौ स्थितं, **गह्वरे** अनेकानर्थसंकटे तिष्ठतीति तथोक्तः। पुराणं चिरन्तनं विषयाद्व्यावर्त्यात्मनि मनसो योजन**मध्यात्मयोगः,**

## कल्पतरुपरिमलः।

लोकावस्थानं ब्रह्मणो न संभवति। नच—ब्रह्मविद्वचनविषयत्वं ब्रह्मलिङ्गमपि श्रूयत—इति शङ्कनीयम्; तस्य पञ्चाग्न्यादिवचनविषयत्वरूपप्रबलजीवलिङ्गप्रतिहतस्य ब्रह्मविदोऽपि ब्रह्मैक्यबोधनाय बुद्धिविविक्तजीवमन्विच्छन्तीत्येतत्परतया कथंचिद्योज्यत्वात्। न हि पञ्चाग्न्यादयः कर्मठाः संसारिजीवविविक्तमसंसार्यात्मस्वरूपं वदन्ति; तदवगमस्य कर्मानुष्ठानविरोधित्वादिति भावः। **अस्य द्वितीयतेति** श्लोकभागं व्याकुर्वन्नेव श्लोकमवतारयति—**अस्येति।** द्वितीयशब्दः पूरणप्रत्ययान्तोऽप्यत्र जीवस्य ब्रह्मणा सह द्वित्वाधारत्वं लक्षयतीति भावः। द्वितीयवान् द्वितीय इति मत्वर्थीयाच्प्रत्ययान्ततयापि द्वितीयशब्दो योजयितुं शक्यते; अर्शआदेराकृतिगणत्वात्, प्रथमं सद्वितीयत्व इत्युत्तरश्लोकानुरोधाच्च॥ **प्रथममितीति।** जीवस्यापि स्वतो गुहाप्रवेशो न संभवति; तस्य स्वोपाध्यन्तःकरणोपाधिकः संभवति चेत्, परस्यापि स्वनियम्यान्तःकरणोपाधिकः संभवतीति तुल्यम्। प्रत्युत बुद्धिजीवपक्ष एव स्वतःप्रवेशवत्या बुद्ध्या सह तदुपाधिकप्रवेशस्य जीवस्य प्रवेशवर्णनं न संभवति, न ह्युपष्टम्भकौपाधिकगुरुत्वशालिनि सुवर्णे गुरु सुवर्णमिति व्यवहारवदुपष्टम्भकसुवर्णे गुरुणी इत्यपि व्यवहारो दृश्यते। सुकृतलोकवर्तित्वं कर्मफलभोक्तुर्जीवस्येव तदन्तर्यामिणोऽप्यस्ति। छायातपत्वनिर्देशोऽपि जीवपरयोरेव प्रकृतार्थोपयोगितया श्लिष्यते; समाने चेतनत्वे कथमृतपाने जीवस्य पारतन्त्र्यं परस्य स्वातन्त्र्यं चेति शङ्कानिवर्तनाय तयोरज्ञानतमोभिभवतदभावरूपविशेषप्रदर्शनार्थत्वात्। पञ्चाग्नय इत्यादिब्रह्मविदां विशेषणं, ये प्राक्पञ्चाग्निशुश्रूषया ये वा नाचिकेतादिचयनैरन्तःकरणशुद्धिं प्राप्ताः तएव तत्प्रसादाद् लब्धनिर्विचिकित्सब्रह्मविद्याः इत्थं वदन्तीति विशेषप्रतिपत्त्यर्थमिति प्रथमावगतब्रह्मद्वितीयत्वानुसारेण सर्वं सुयोजम्। न च—सरूपद्वितीयान्वेषणे परतन्त्रत्वादिना तस्य बुद्धिरपि सरूपेति—शङ्कनीयम्; स्वाभाविकधर्मस्य चेतनत्वस्यान्तरङ्गत्वात्, सुखाद्यनुभवितृपरपिबच्छब्दसंस्पृष्टत्वाच्चेति भावः॥

अविद्याकृतत्वात्संसारित्वस्य, पारमार्थिकत्वाचासंसारित्वस्य । तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते ॥ ११ ॥ कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते—

## विशेषणाच्च ॥ १२ ॥

विशेषणं च विज्ञानात्मपरमात्मनोरेव भवति । 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' (का० १।३।३) इत्यादिना परेण ग्रन्थेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (का० १।३।९) इति च परमात्मानं गन्तव्यम् । तथा 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (का० १।२।१२) इति पूर्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेनैतावेव विशेषितौ । प्रकरणं चेदं परमात्मनः । 'ब्रह्मविदो वदन्ति' इति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते । तस्मादिह जीवपरमात्मानावुच्येयाताम् । एष एव न्यायः । 'द्वा सुपर्णा सयुजा सखाया' (मुण्ड० ३।१।१) इत्येवमादिष्वपि । तत्रापि ह्यध्यात्माधिकारान्न प्राकृतौ सुपर्णावुच्येते । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यदनलिङ्गाद्विज्ञानात्मा भवति । 'अनश्नन्नन्योऽभिचाकशीति' इत्यनशनचेतनत्वाभ्यां परमात्मा । अनन्तरे च मन्त्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मुण्ड० ३।१।२) इति । अपर आह— 'द्वा सुपर्णा' इति नेयमृगस्याधिकरणस्य सिद्धान्तं भजते; पैङ्गिरहस्यब्राह्मणेनान्यथा व्याख्यातत्वात् । 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इति । सत्त्वशब्दो जीवः क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते तन्न; सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात् । तत्रैव च व्याख्यातत्वात्—'तदेतत्सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इति । नाप्यस्याधिकरणस्य पूर्वपक्षं भजते । नह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिना संसारधर्मेणोपेतो विवक्ष्यते । कथं तर्हि ? सर्वसंसारधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्रस्वरूपः; 'अनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञः' इति वचनात्, 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' (गी०

---

### भामती ।

लक्षणया छत्रिन्यायेन गमयितव्यम् । छायातपत्वमपि जीवस्याविद्याश्रयतया ब्रह्मणश्च शुद्धप्रकाशस्वभावस्य तदनाश्रयतया मन्तव्यम् ॥ ११ ॥ इममेव न्यायं 'द्वा सुपर्णा' इत्यत्राप्युदाहरणे कृत्वाचिन्तया योजयति—**एष एव न्याय इति** । अत्रापि किं बुद्धिजीवौ, उत जीवपरमात्मानाविति संशय्य करणरूपाया अपि बुद्धेरेधांसि पचन्तीतिवत्कर्तृत्वोपचाराद्बुद्धिजीवाविह पूर्वपक्षयित्वा सिद्धान्तयितव्यम् । सिद्धान्तश्च भाष्यकृता स्फोरितः । तद्दर्शनादिति च 'समाने वृक्षे पुरुषो निमग्नः' इत्यत्र मन्त्रे । न खलु मुख्ये कर्तृत्वे संभवति करणे कर्तृत्वोपचारो युक्त इति कृत्वाचिन्तामुद्घाटयति—**अपर आह** । **सत्त्वं** बुद्धिः । शङ्कते—**सत्त्वशब्द इति** । सिद्धान्तार्थं ब्राह्मणं व्याचष्ट इत्यर्थः । निराकरोति—**तन्नेति** । **येन स्वप्नं पश्यतीति** । **येनेति** करणमुपदिशति । ततश्च भिन्नं कर्तारं क्षेत्रज्ञम् । **योऽयं शारीर उपद्रष्टेति** । अस्तु तर्ह्यस्याधिकरणस्य पूर्वपक्ष एव ब्राह्मणार्थः; वचनविरोधे न्यायस्याभ्यासत्वादित्यत आह—**नाप्यस्याधिकरणस्य पूर्वपक्षं भजत इति** । एवं हि पूर्वपक्षमस्य भजेत, यदि हि क्षेत्रज्ञे संसा-

### वेदान्तकल्पतरुः ।

तस्याधिगमेन **प्राप्त्या,** **मत्वा** साक्षात्कृत्य । **मुण्डके—द्वा सुपर्णेति** । द्वौ सुपर्णसाम्यात्सुपर्णौ, **सयुजौ** सर्वदा सहयुक्तौ, **सखायौ** समानाख्यानौ, स्वप्रकाशरूपत्वात्, **समानमे**कम्, उच्छेद्यत्वाद् **वृक्षं** शरीरं परिष्वक्तवन्तौ । **अन्यः** एकः, **पिप्पलं** कर्मफलं; संसारस्याश्वत्थत्वेन रूपितत्वात् । **समाने वृक्ष इति**—न कस्यचित्समर्थोऽहं दीन इति

### कल्पतरुपरिमलः ।

**आध्वंसते आगच्छतीति** । ध्वंसु गतौ चेति धातुः । **उच्छेद्यत्वाद्वृक्षमिति** । ओ व्रश्चू च्छेदन इति धातोर्वृक्षशब्दः । **ननु** पिप्पलशब्दोऽश्वत्थवाची फले लुगिति विकारार्थतद्धितलुकि तत्फलं ब्रूयात्, फले सस्यं च पिप्पलमित्यनुशासनाद्वृक्षवल्ल्यादिफलसामान्यं वा ब्रूयाद्, न तु कर्मफलमित्यत आह—**संसारस्येति** । ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातन इति श्रुतिः । "अस्य महिमानमिति वीतशोक इति" श्रुतिगतमितिशब्दं भिन्नक्रमतया योजयति—

१।३।२) इत्यादिश्रुतिस्मृतिभ्यश्च । तावता च विद्योपसंहारदर्शनमेवमेवावकल्पते, 'तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रज आध्वंसते' इत्यादि । कथं पुनरस्मिन्पक्षे 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इत्यचेतने सत्त्वे भोक्तृत्ववचनमिति । उच्यते—नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता । किं तर्हि ? चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां च वक्ष्यामीति । तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति । इदं हि कर्तृत्वं भोक्तृत्वं च सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं कल्प्यते । परमार्थतस्तु नान्यतरस्यापि संभवति; अचेतनत्वात्सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य । अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न संभवति । तथाच श्रुतिः—'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिना च विवेकिनः कर्तृत्वादिव्यवहाराभावं दर्शयति ॥ १२ ॥ इति तृतीयं गुहाधिकरणम् ॥

( ४ अधिकरणम् ) **अन्तर उपपत्तेः ॥ १३ ॥**

'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । तद्यद्यप्यस्मि-

भामती ।

रिणि पर्यवस्येत । तस्य तु ब्रह्मरूपतायां पर्यवस्यन्न पूर्वपक्षमपि स्वीकरोतीत्यर्थः । **अपिच तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रज आध्वंसत इति** । रजोऽविद्या नाध्वंसनं संश्लेषमेवंविदि करोतीति । एतावतैव विद्योपसंहाराज्जीवस्य ब्रह्मात्मतापरतास्य लक्ष्यत इत्याह—**तावता चेति** । चोदयति—**कथं पुनरिति** । निराकरोति । **उच्यते—नेयं श्रुतिरिति** । अनश्नन् जीवो ब्रह्माभिचाकशीतीत्युक्ते शङ्केत, यदि जीवो ब्रह्मात्मा नाश्नाति, कथं तर्ह्यस्मिन्भोक्तृत्वावगमः, चैतन्यसमानाधिकरणं हि भोक्तृत्वमवभासत इति । तन्निरासायाह श्रुतिः—'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति । **एतदुक्तं भवति**—नेदं भोक्तृत्वं जीवस्य तत्त्वतः, अपितु बुद्धिसत्त्वं सुखादिरूपपरिणतं चितिच्छायापत्त्योपपन्नचैतन्यमिव भुङ्क्ते, नतु तत्त्वतो जीवः परमात्मा भुङ्क्ते । तदेतदध्यासभाष्ये कृतव्याख्यानम् । तदनेन कृत्वाचिन्तोद्घाटिता ॥ १२ ॥ इति **तृतीयं गुहाधिकरणम्** ।

**अन्तर उपपत्तेः ॥ १३ ॥**

**ननु**—'अन्तस्तद्धर्मोपदेशात्' इत्यनेनैवैतद्गतार्थम् । सन्ति खल्वत्राप्यमृतत्वाभयत्वादयो ब्रह्मधर्माः प्रतिबिम्बजीवदेवतास्वसंभविनः, तस्माद्ब्रह्मधर्मोपदेशाद्ब्रह्मैवात्र विवक्षितम्, साक्षाच्च ब्रह्मशब्दोपादानात् । **उच्यते—एष दृश्यत**

वेदान्तकल्पतरुः ।

संभावनाऽनीशा, **जुष्टम्** अनेकैर्योगमार्गैः सेवितम् । **अन्यं** प्रपञ्चविलक्षणम् । **ईशं यदा पश्यति** प्रपञ्चं **च महिमानं** विभूतिं मायामयीम्, अस्यैवेति यदा पश्यति तदा वीतशोको भवति ॥ **इति तृतीयं गुहाधिकरणम्** ॥

**अन्तर उपपत्तेः ॥ १३ ॥**

अत्र च दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयः । इयं च सुखविशिष्टब्रह्मप्रकरणं नास्तीति कृत्वाचिन्ता । अतश्च वक्ष्यमाणः सर्वनामार्थः । स च मनोमयतद्धितार्थवद् न संदिग्धः; दृश्यत इत्यस्य प्रतिबिंबनिश्चायकत्वादित्याह—**एष इति** ।

कल्पतरुपरिमलः ।

**अस्यैवेति यदा पश्यतीति** । क्रियाश्रवणाभावाद्वीतशोक इत्यस्यापेक्षिता भवतीति क्रियाऽध्याहृता । वीतशोकः सन्नस्य महिमानमिति एति प्राप्नोतीत्यपि योजयितुं शक्यम् । गुणाभावश्छान्दसत्वेन स्वयंभुवे इत्यादाविव संज्ञापूर्वकविधेरनित्यत्वेन वोपपादयितुं शक्यः ॥ **इति तृतीयं गुहाधिकरणम्** ॥

**अन्तर उपपत्तेः ॥ १३ ॥**

**ननु** 'य' 'एष' इति सर्वनाम्नोः प्रकृतपरामर्शित्वसंभवे तत्त्यागायोगादव्यवहितप्रकृतपरामर्शासंभवे व्यवहितप्रकृतपरामर्शस्य तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यादिषु संप्रतिपन्नत्वेन अग्निविद्याव्यवधानस्याप्रतिबन्धकत्वाद् वक्तृभेदेऽप्युग्न्युपदिष्टार्थस्याचार्यबुद्धिस्थत्वाच्च कं ब्रह्मेति वाक्ये प्रकृतब्रह्मपरामार्शित्वं तयोर्वक्तुं युक्तमिति तदनुसारेणाक्षिवाक्यस्य ब्रह्मपरत्वनिर्णयः स्यादित्याशङ्क्याह—**इयं चेति । प्रतिबिम्बनिश्चायकत्वादिति । नच**—अन्तरादित्यवाक्य इव अन्तरक्षिवाक्य-

तत्र सूत्रे २—गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ११ विशेषणाच्च १२ ॥

**न्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' ( छा० ४।१५।१ ) इत्यादि श्रूयते । तत्र संशयः । किमयंप्रतिबिम्बात्माक्ष्यधिकरणो निर्दिश्यते, अथवा विज्ञानात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाता, अथवेश्वर इति । किं तावत्प्राप्तं,? छायात्मा पुरुषप्रतिरूप इति । कुतः ? तस्य दृश्यमानत्वप्रसिद्धेः, 'य एषोऽक्षिणि पुरुषो दृश्यते' इति च प्रसिद्धवदुपदेशात् । विज्ञानात्मनो वायं निर्देश इति युक्तम् । स हि चक्षुषा रूपं पश्यंश्चक्षुषि संनिहितो भवति । आत्मशब्दश्चास्मिन्पक्षेऽनुकूलो भवति । आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते; रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' ( बृ० ५।५।२ ) इति श्रुतेः, अमृतत्वादीनां च देवतात्मन्यपि कथंचित्संभवात्, नेश्वरः; स्थानविशेष-**

## भामती ।

**इत्येतत्प्रत्यक्षेऽर्थे प्रयुज्यते । परोक्षं ब्रह्म न तथा प्रतिबिम्बे तु युज्यते ॥१॥ उपक्रमवशात्पूर्वमितरेषां हि वर्णनम् । कृतं न्यायेन येनैव स खल्वत्रानुषज्यते ॥ २ ॥** 'ऋतं पिबन्तौ' इत्यत्र हि जीवपरमात्मानौ प्रथममवगताविति तदनुरोधेन गुहाप्रदेशादयः पश्चादवगता व्याख्याताः, तद्वदिहापि 'य एषोऽक्षिणि पुरुषो दृश्यते' इति प्रत्यक्षाभिधानात्प्रथममवगते छायापुरुषे तदनुरोधेनामृतत्वाभयत्वादयः स्तुत्या कथंचिद्व्याख्येयाः । तत्र चामृतत्वं कतिपयक्षणावस्थानात्, अभयत्वमचेतनत्वात्, पुरुषत्वं पुरुषाकारत्वात्, आत्मत्वं कनीनिकायतनत्वात्, ब्रह्मरूपत्वमुक्तरूपामृतत्वादियोगात् । एवं वामनीत्वादयोऽप्यस्य स्तुत्यैव कथंचिन्नेतव्याः । कं च खं चेत्यादि तु वाक्यमग्नीनां नाचार्यवाक्यं नियन्तुमर्हति । 'आचार्यस्तु ते गतिं वक्ता' इति च गत्यन्तराभिप्रायं, न तूक्तपरिशिष्टाभिप्रायम् । तस्माच्छायापुरुष एवात्रोपास्य इति पूर्वः पक्षः । संभवमात्रेण तु जीवदेवते उपन्यस्ते, बाधकान्तरोपदर्शनाय च एष दृश्यत इत्यस्यात्राभावात्, अन्तस्तद्धर्मोपदेशादित्यनेन निराकृतत्वात् । एवं प्राप्त उच्यते—**य एषइति । 'अनिष्पन्नाभिधाने द्वे सर्वनामपदे सती । प्राप्य संनिहितस्यार्थं भवेतामभिधातृणी'** ॥ संनिहिताश्च पुरुषात्मादिशब्दास्ते च न यावत्स्वार्थमभिदधति तावत्सर्वनामभ्यां नार्थतुपोऽप्यभिधीयत इति कुतस्तदर्थस्यापरोक्षता । पुरुषात्मशब्दौ च सर्वनामनिरपेक्षौ स्वरसतो जीवे वा परमात्मनि वा वर्तेते इति । नच तयोश्चक्षुषि प्रत्यक्षदर्शनमिति निरपेक्षपुरुषपदप्रत्यायितार्थानुरोधेन य एष

## वेदान्तकल्पतरुः ।

उपक्रमवशादित्यनेन सङ्गतिश्चोक्ता । एतं श्लोकं विभजते **ऋतमिति । कनीनिका** अक्षितारकम् । भिन्नवक्तृत्वेन वाक्ययोर्न नियम्यनियामकत्वं चेत्कथं तर्ह्यग्निभिर्गतिं वक्ष्यतीति शेषोद्धारः कृतोऽत आह—**आचार्यस्त्विति । बाधकान्तरेति ।** अनवस्थितेरसंभवाच्चेति सूचितबाधकान्तरदर्शनाय चेत्यर्थः । **नन्वक्षणी**त्याधारनिर्देशाद् जीवदेवते किं न स्तामत आह—**अन्तस्तद्धर्मेति ।** य एष इत्यादेः प्रथमश्रुतस्यापि सापेक्षत्वान्न चाक्षुषत्वसमर्पकत्वमित्याह—**अनिष्पन्नेति ।** य एष इति श्लोकः पूरितः । य इत्येष इति च सर्वनामनी विशेष्यापेक्षत्वात्स्वतोऽनिष्पन्नाभिधाने । अनिष्पन्नमपर्यवसितमभिधानं ययोस्ते तथा । ततश्च संनिहितपुरुषादिपदस्यार्थं विशेष्यं प्राप्याभिधातृणी वाचके भवेताम् । किमतोऽत आह—**संनिहिताश्चेति ।** कुतस्तदर्थस्य अपरोक्षता चाक्षुषतेत्यर्थः । **स्वरसत इति ।** अनेन छायात्मनि योजनाक्लेशो वारितः ।

## कल्पतरुपरिमलः ।

इव च दृश्यत इत्येतत् शास्त्रीयदर्शनपरं किं न स्यादिति—शङ्कनीयम्; यत आदित्ये प्रतिबिम्बादर्शनेन अन्तरादित्यवाक्ये प्रतिबिम्बपूर्वपक्षो न संभवति । अन्तरक्षिवाक्येऽपि तत्स्वरूपे स न संभवतीति तयोर्देवतापूर्वपक्षः कृतः । अतस्तत्र पूर्वपक्षेऽपि शास्त्रीयमेव दर्शनमन्वेष्यं जातम्, इह तु प्रतिबिम्बपक्षः संभवति; प्रतिबिम्बे सुप्रसिद्धलौकिकदर्शनसत्त्वान्न शास्त्रीयपूर्वपक्षेऽपि शास्त्रीयमेव दर्शनमन्वेष्यमिति वैषम्यात् ॥ **अनेन सङ्गतिश्चोक्तेति । ननु**—एकेनोपक्रमगतेन पाश्चात्यानां बहूनां बाधनमयुक्तम्; **भूयसां स्यात्सधर्मत्वमिति** न्यायविरोधात्, भूतादिपादव्यपदेशाद्यैर्बहुभिरुपक्रमश्रुतस्यापि गायत्रीपदस्य ब्रह्मणि नीतत्वाच्च । पूर्वाधिकरणे तु गुहाप्रवेशादीनामुपक्रमानुसारेण न बाधनं कृतं, किंतु तेषामपि जीवपरमात्मपक्षे स्वारस्यमेवास्तीत्युपपादितम्, इह तु प्रतिबिम्बपूर्वपक्षवादिना ब्रह्मात्मश्रुत्यमृतत्वाभयत्वसंयद्वामत्ववामनीत्वभामनीत्वपुष्करपलाशवाक्यावगतार्चिरादिवाक्यावगतफललिङ्गानि बहूनि बाध्यानीति—**चेत्, नैष दोषः;** आत्मश्रुत्यादीनामितिशब्दशिरस्कत्वेन मनो ब्रह्मेतीत्यादिवदतस्मिंस्तद्रूपप्रत्ययपरत्वावगमाद् वचनबलाद्वैवाहिकवधूदर्शनेनाभ्युदयवत्पुष्करपलाशवाक्यावगतफलस्य पञ्चाग्निविद्ययेवा ब्रह्मविषययाऽपि प्रतिबिम्बोपासनयाऽर्चिरादिवाक्यावगतफलस्य चोपपत्तेरिति भावः । **अत आहेति,** गतिवचनं विद्यान्तराभिप्रायम्; गतेरवल्यर्थत्वात्, न तूक्तपरिशिष्टाभिप्रायम्; "एषा सोम्य त" इत्यादिनाऽग्निविद्यावदात्मविद्याया अपि निरवशेषोपदिष्टत्वेनोपसंहारात्, अन्यथा देवयानगतिवचनस्यात्मविद्यायामिवाग्निविद्यायामप्यन्वयप्रसङ्गादित्याहेत्यर्थः ॥ **सापेक्षत्वादिति ।** प्रकृताभावेन प्राग-

निर्देशादित्येवं प्राप्ते ब्रूमः—परमेश्वर एवाक्षिण्यभ्यन्तरः पुरुष इहोपदिष्ट इति। कस्मात्? उपपत्तेः। उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम्। आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते; 'स आत्मा तत्त्वमसि' इति श्रुतेः। अमृतत्वाभयत्वे च तस्मिन्नसकृच्छ्रुतौ श्रूयेते। तथा परमेश्वरानुरूपमेतदक्षिस्थानम्। यथाहि परमेश्वरः सर्वदोषैरलिप्तः; अपहतपाप्मत्वादिश्रवणात्, तथाक्षिस्थानं सर्वलेपरहितमुपदिष्टं; 'तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' इति श्रुतेः। संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते। 'एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति'। 'एष उ एव वामनीरेष हि सर्वाणि वामानि नयति'। 'एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' ( छा० ४।१५।२,३,४ ) इति च। अत उपपत्तेरन्तरः परमेश्वरः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

कथं पुनराकाशवत्सर्वगतस्य ब्रह्मणोऽक्ष्यल्पस्थानमुपपद्यत इति। अत्रोच्यते—भवेदेषाऽनव-

### भामती।

इति दृश्यत इति च यथासंभवं व्याख्येयम्। व्याख्यातं च। प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थम्। विदुषः विषयः शास्त्रत उपलब्धिरेव दृढतया प्रत्यक्षवदुपचर्यते प्रशंसार्थमित्यर्थः। अपिच्च तदेव चरमं प्रथमानुगुणतया नीयते यन्नेतुं शक्यम्, अल्पं च। इह त्वमृतत्वादयो बहवश्चाशक्याश्च नेतुम्। नहि स्वसत्ताक्षणावस्थानमात्रममृतत्वं भवति। तथा सति किं नाम नामृतं स्यादिति व्यर्थममृतपदम्। भयाभये अपि चेतनधर्मौ नाचेतने संभवतः। एवं वामनीत्वादयोऽप्यन्यत्र ब्रह्मणो नेतुमशक्याः। प्रत्यक्षव्यपदेशश्चोपपादितः। तदिदमुक्तम्—**उपपत्तेरिति**। 'एतदमृतमभयमेतद्ब्रह्म' इत्युक्ते स्यादाशङ्का—**ननु** सर्वगतस्येश्वरस्य कस्माद्विशेषेण चक्षुरेव स्थानमुपदिश्यत—इति, तत्परिहरति श्रुतिः—**'तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' इति**। वर्त्मनी पक्ष्मस्थाने। **एतदुक्तं भवति**—निर्लेपस्येश्वरस्य निर्लेपं चक्षुरेव स्थानमनुरूपमिति। तदिदमुक्तं—**तथा परमेश्वरानुरूपमिति। संयद्वामादिगुणोपदेशश्च तस्मिन्** ब्रह्मणि **कल्पते** घटते; समवेतार्थत्वात्। प्रतिबिम्बादिषु त्वसमवेतार्थः। वननीयानि संभजनीयानि शोभनीयानि पुण्यफलानि वामानि। संयन्ति संगच्छमानानि वामान्यनेनेति संयद्वामः परमात्मा। तत्कारणत्वात्पुण्यफलोत्पत्तेस्तेन पुण्यफलानि संगच्छन्ते। स एव पुण्यफलानि वामानि नयति लोकमिति वामनीः। एष एव भामनीः। भामानि भानानि नयति लोकमिति भामनीः। **तदुक्तं श्रुत्या**—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥ १३ ॥ **स्थानादिव्यपदेशाच्च**। आशङ्कोत्तरमिदं सूत्रम्। आशङ्कामाह—**कथं पुनरिति**। स्थानिनो हि स्थानं महद्दृष्टं, यथा यादसामब्धिः। तत्कथमत्यल्पं चक्षुरधिष्ठानं परमात्मनः परममहत इति शङ्कार्थः। परिहरति—**अत्रोच्यत इति**। स्थानान्यादयो येषां ते स्थानादयो नामरूपप्रकारा-

### वेदान्तकल्पतरुः।

**व्याख्यातं चेति**। अधिकरणावसानभाष्येणेत्यर्थः। तदुपादत्ते—**सिद्धवदिति**। तद्व्याख्याति—**विदुष इति**। विदुषो विषयस्तेन निष्पाद्या शास्त्राद् योपलब्धिः सा परोक्षापि प्रत्यक्षेति स्तूयत इत्यर्थः। उपचारे निमित्तमाह—**दृढतयेति**। एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्तीति श्रुतिमीश्वरस्य फलभोक्तृत्वभ्रमव्यावर्तनेन व्याचष्टे—**वननीयानीति**। जीवान्प्रति सङ्गच्छमानानि यानि वामानि तानि येन हेतुना सङ्गच्छन्ते स संयद्वामः। एतं हीत्यस्यैतं निमित्तीकृत्येत्यर्थः। एष उ एव वामनीरित्यस्यार्थमाह—**स एवेति**। संयद्वामत्वं फलोत्पादकत्वमात्रं वामनीत्वं फलप्रापकत्व-

### कल्पतरुपरिमलः।

पर्यवसिताभिधानयोः सर्वनाम्नोः पुरुषपदादिविशेष्यान्वयापेक्षत्वादित्यर्थः। **छायात्मनीति**। इतिशब्दस्तत्रार्थविवक्षां वारयति यत्र प्रत्ययो विवक्ष्यते, न तु यत्रोक्तार्थावच्छेदेनाप्तवचनसंबन्धस्तत्रापि; यथा इति ह स्मोपाध्यायः कथयतीति इह चोवाचेति। अस्येतिशब्दयुक्तेभ्यूत्तरेष्वपि वाक्येष्वनुषङ्ग इति न ब्रह्मश्रुत्यादिष्वप्यविवक्षाप्रसङ्गः। अतः छायात्मनि तेषां क्लेशेन योजना कार्येति भावः ॥ **तद् व्याख्यातीति**। प्रसिद्धवदित्यादि विद्वद्विषयं प्ररोचनार्थमित्यन्तमुपात्तं भाष्यं विदुषो विषयः शास्त्रत उपलब्धिरित्यादिग्रन्थेन व्याख्यातीत्यर्थः। केषुचित् टीकाग्रन्थकोशेषु विदुषः शास्त्रत उपलब्धिरित्यादिर्विषयशब्दरहितः पाठो दृश्यते, स तु सुगम इति न व्याख्यातः ॥ **वननीयानीति**। वन सम्भक्ताविति धातोरौणादिकप्रत्ययान्ततया निष्पन्नो वामशब्दः सम्भजनीयवाची शोभनेषु पुण्यफलेषु स्वर्गादिभोग्यवस्तुषु पर्यवस्यतीति भावः। निमित्तीकृत्येत्यपेक्षितोऽध्याहारः, तदनध्याहारे परमेश्वरस्यैव फलभोक्तृत्वप्रतिपादकत्वापत्तेरिति भावः।

क्तिः, यद्येतदेवैकं स्थानमस्य निर्दिष्टं भवेत् । सन्ति ह्यन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि—'यः पृथिव्यां तिष्ठन्' ( बृ० ३।७।३ ) इत्यादिना । तेषु हि चक्षुरपि निर्दिष्टम्—'यश्चक्षुषि तिष्ठन्' इति । 'स्थानादिव्यपदेशात्' इत्यादिग्रहणेनैतद्दर्शयति—नकेवलं स्थानमेवैकमनुचितं ब्रह्मणो निर्दिश्यमानं दृश्यते । किं तर्हि नामरूपमित्येवंजातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते—'तस्योदिति नाम' 'हिरण्यश्मश्रुः' (छा० १।६।७,६ ) इत्यादि । निर्गुणमपि सद्ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्र तत्रोपदिश्यत इत्येतदप्युक्तमेव । सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते, शालग्राम इव विष्णोरित्येतदप्युक्तमेव ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

अपिच नैवात्र विवदितव्यं, किं ब्रह्मास्मिन्वाक्येऽभिधीयते न वेति । सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम् । सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तं 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति, तदेवेहाभिहितं; प्रकृतपरिग्रहस्य न्याय्यत्वात्, आचार्यस्तु ते गतिं वक्ता' ( छा०४।१४।१) इति च गतिमात्राभिधानप्रतिज्ञानात् । कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति ? उच्यते—'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्येतदग्नीनां वचनं श्रुत्वोपकोसल उवाच—'विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि' इति । तत्रेदं प्रतिवचनम्'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति (छा० ४।१०।५) । तत्र खंशब्दो भूताकाशे निरूढो लोके । यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत । तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात् । तथा कंशब्दस्य विषयेन्द्रियसंपर्कजनिते सामये सुखे प्रसिद्धत्वात्, यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत, लौकिकं सुखं

### भामती ।

स्तेषां व्यपदेशात्सर्वगतस्यैकस्थाननियमो नावकल्पते, नतु नानास्थानत्वं, नभस इव नानासूचीपाशादिस्थानत्वम् । विशेषतस्तु ब्रह्मणस्तानि तान्युपासनास्थानानीति तैरस्य युक्तो व्यपदेशः ॥ १४ ॥ अपिच प्रकृतानुसारादपि ब्रह्मैवात्र प्रत्येतव्यं, नतु प्रतिबिम्बजीवदेवता इत्याह सूत्रकारः—**सुखविशिष्टाभिधानादेव च** । एवं खलूपाख्यायते—उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्याचार्यस्य द्वादश वर्षाण्यग्नीनुपचचार । स चाचार्योऽन्यान्ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयामास । तमेवैकमुपकोसलं न समावर्तयति स्म । जायया च तत्समावर्तनायार्थितोऽपि तद्वचनमवधीर्याचार्यः प्रोषितवान् । ततोऽतिदूनमानसमग्निपरिचरणकुशलमुपकोसलमुपेत्य त्रयोऽग्नयः करुणापराधीनचेतसः श्रद्दधानायास्मै दृढभक्तये समेत्य ब्रह्मविद्यामूचिरे—'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति । अथोपकोसल उवाच, विजानाम्यहं प्राणो ब्रह्मेति, स हि सूत्रात्मा विभूतिमत्तया ब्रह्मरूपाविर्भावाद्ब्रह्मेति । किंतु कं च खं च ब्रह्मेत्येतन्न विजानामि । नहि विषयेन्द्रियसंपर्कजं सुखमनित्यं लोकसिद्धं खं च भूताकाशमचेतनं ब्रह्म भवितुमर्हति । अथैनमग्नयः प्रत्यूचुः—'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति । एवं संभूयोक्त्वा प्रत्येकं च स्वविषयां विद्यामूचुः—'पृथिव्यग्निरन्नमादित्यः' इत्यादिना । पुनस्त एनं संभूयोचुः, एषा सोम्य तेऽस्मद्विद्या प्रत्येकमुक्ता स्वविषया विद्या, आत्मविद्या चास्माभिः संभूय पूर्वमुक्ता प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति, आचार्यस्तु ते गतिं वक्ता, ब्रह्मविद्येयमुक्तास्माभिर्गतिमात्रं त्ववशिष्टं नोक्तं, तत्तु विद्याफलप्राप्तये जाबालस्तवाचार्यो वक्ष्यतीत्युक्त्वाग्नय उपरेमिरे । एवं व्यवस्थिते 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इत्येतद्व्याचष्टे भाष्यकारः—**तत्र खंशब्द इति** । **प्रतीकाभिप्रायेणेति** । आश्रयान्तरप्रत्ययस्याश्रयान्तरे क्षेपः प्रतीकः । यथा ब्रह्मशब्दः परमात्मविषयो नामादिषु क्षिप्यते । इदमेव तद्ब्रह्म ज्ञेय

### वेदान्तकल्पतरुः ।

मिति भेदः । **एकस्थाननियमः** स्थानान्तराव्यापकत्वम् । कमलस्य गोत्रं कामलस्तस्यापत्यं कामलायनः । **दूनमानसं** परितप्तमानसम् । **पृथिव्यग्निरिति** । उपकोसलं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति इमाश्चिश्वतस्रस्तनवो य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीति । तथाऽन्वाहार्यपचनोऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति मम तनवो य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि तथाऽऽहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति मम तनवो य एष

ब्रह्मेति प्रतीतिः स्यात् । इतरेतरविशेषितौ तु कंखंशब्दौ सुखात्मकं ब्रह्म गमयतः । तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने कं खं ब्रह्मेत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्तत्वात्सुखस्य गुणस्याध्येयत्वं स्यात्, तन्मा भूदित्युभयोः कंखंशब्दयोर्ब्रह्मशब्दशिरस्त्वं 'कं ब्रह्म खं ब्रह्म' इति । इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वम् । तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्मोपदिष्टम् । प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्य 'एषा सोम्य तेऽस्मद्विद्यात्मविद्या च' इत्युपसंहरन्तः पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञापयन्ति । 'आचार्यस्तु ते गतिं वक्ता' इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति । यथा 'पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' ( छा० ४।१४।३ ) इति चाक्षिस्थानं पुरुषं विजानतः पापेनानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति । तस्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां

## भामती ।

यन्नामेति । तथेदमेव तद्ब्रह्म यद्भूताकाशमिति प्रतीतिः स्यात् । नचैतदिष्टम् । लौकिकस्य सुखस्य साधनपारतन्त्र्यं क्षयिष्णुता चामयस्तेन सह वर्तत इति सामयं सुखम् । तदेवं व्यतिरेके दोषमुक्त्वोभयान्वये गुणमाह—**इतरेतरविशेषितौ त्विति** । तदर्थयोर्विशेषितत्वाच्छब्दावपि विशेषितावुच्येते । सुखशब्दसमानाधिकरणो हि खंशब्दो भूताकाशमर्थं परित्यज्य ब्रह्मणि गुणयोगेन वर्तते । तादृशा च खेन सुखं विशिष्यमाणं सामयाद्व्यावृत्तं निरामयं भवति । तस्मादुपपन्नमुभयोपादानम् । ब्रह्मशब्दाभ्यासस्य प्रयोजनमाह—**तत्र द्वितीय इति** । ब्रह्मपदं कंपदस्योपरि प्रयुज्यमानं शिरः, एवं खंपदस्यापि ब्रह्मपदं शिरो ययोः कंखंपदयोस्ते ब्रह्मशिरसी, तयोर्भावो ब्रह्मशिरस्त्वम् । अस्तु, प्रस्तुते किमायातमित्यत आह—**तदेवं वाक्योपक्रम इति** । नन्वग्निभिः पूर्वं निर्दिश्यतां ब्रह्म, 'य एषोऽक्षिणि' इत्याचार्यवाक्येऽपि तदेवानुवर्तनीयमिति तु कुत इत्याह—**आचार्यस्तु ते गतिं वक्तेति च गतिमात्राभिधानमिति** । यद्यप्येते भिन्नवक्तृणी वाक्ये; तथापि पूर्वेण वक्त्रा एकवाक्यतां गमिते, गतिमात्राभिधानात् । किमुक्तं भवति, तुभ्यं ब्रह्मविद्यास्माभिरुपदिष्टा, तद्विदस्तु गतिर्नोक्ता, तां च किंचिदधिकमाध्येयं पूरयित्वाचार्यो वक्ष्यतीति

## वेदान्तकल्पतरुः ।

विद्युति पुरुषो दृश्यते सोऽहमस्मीति । **नचैतत्प्रतीकत्वमिष्टमिति** । एषा सोम्य आत्मविद्येत्यग्निभिः कं खं ब्रह्मेति विद्याया विद्यात्वेन परामर्शादित्यर्थः ॥ भाष्यगतसामयशब्दार्थमाह—**लौकिकस्येति** । विशेषणविशेष्यभावोऽर्थयोः शब्दयोस्तु सामानाधिकरण्यम् । तथाच भाष्यायोगमाशङ्क्याह—**तदर्थयोरिति** । सुखस्य वाचकः शब्दः **सुखशब्दः** । **किंचिदधिकमिति** । अक्षिस्थानसंयद्वामादिगुणं च पूरयित्वेत्यर्थः । **ह्रीणो** लज्जावान् । **अपज्ञाया**ऽपह्नुत्य । **आवर्त-**

## कल्पतरुपरिमलः ।

नचैतदिष्टमिति टीकायामेतच्छब्दार्थमाह—**नचैतत्प्रतीकत्वमिष्टमिति** । **ननु**—एष्टव्यमेव प्रतीकत्वं प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति निर्देशस्य; नाम ब्रह्म मनो ब्रह्मेत्यादिनिर्देशसाम्यात् । प्राणं च हास्मै तदाकाशं चोचुरिति प्राणादिशब्दैर्निगमनदर्शनाच्च, ब्रह्मप्रधानत्वे हि ब्रह्मशब्देन निगमनं स्यादित्यत आह—**एषा सोम्येति** । **इदमुपलक्षणं**—प्रतीकत्वे कं च खं च न विजानामीति पृष्टवन्तं प्रति यद्वाव कमित्याद्युत्तरमप्यसमञ्जसं स्यात्, नच—इदमपि वैषयिकसुखे भूताकाशदृष्टिपरं भूताकाशे वैषयिकसुखदृष्टिपरं च किं न स्यादिति—शङ्क्यम्; कं ब्रह्म खं ब्रह्मेत्यस्यार्थाज्ञानेन पृष्टवन्तं प्रति दृष्टिविध्यन्तरकथनस्योत्तरत्वायोगात् । अतो निगमनवाक्यमुपक्रमानुरोधात् प्राणं हिरण्यगर्भाख्यं कार्यं ब्रह्म तदाकाशं परंब्रह्मरूपं सुखविशिष्टाकाशं चोचुरित्येतदर्थकमिति न तद्विरोध इत्यपि द्रष्टव्यम् ॥ **पूरयित्वेति** । **ननु**—आचार्यस्तु ते गतिं वक्तेति वदतामग्नीनां स्थानगुणविशेषान् पूरयित्वेत्यभिप्रायः कुतोऽवगतः? आचार्यवाक्ये स्थानगुणकीर्तनादर्शनादिति चेन्न; तत्कीर्तनस्य प्रतिबिम्बोपासनाविषयत्ववादिनं पूर्वपक्षिणं प्रति सुखत्वविशिष्टब्रह्मोपासनाविधिशेषत्वासिद्धेः । य एष इति सर्वनाम्नोः प्रकृतपरामर्शित्वस्वाभाव्यात् सुखविशिष्टब्रह्मप्रकरणसद्भावेऽक्षिपुरुषस्तदेव प्रकृतं ब्रह्म भवेदिति स्थानगुणकीर्तनस्य तेन तद्विषयत्वसिद्ध्या ततः पूरयित्वेत्यभिप्रायोऽवगत इति चेद्, न; अत्रैव य एष आदित्य इत्यादिष्वग्निविद्योपदेशवाक्येषु तयोः प्रकृतब्रह्मपरामर्शित्वाभावेन तद्वदिहाप्युपपत्तेः, यद्यग्निभिः स्वविद्यानामात्मविद्यायाश्च भेदेन कीर्तितत्वात् तत्र तयोः प्रकृतपरत्वं त्यक्तं, तर्ह्यत्रापि निरवशेषोपदिष्टत्वेनात्मविद्याया उपसंहृतत्वात् तयोस्तत्त्यक्तमिति समानम् । नच—आचार्येणाक्षिपुरुषोपदेशानन्तरं पराञ्चं वेदेत्यक्षिपुरुषविदमुपक्षिप्य अथ यदु चैवास्मिन्नित्यादिना तस्यार्चिरादिगतेरुपदिष्टत्वादक्षिपुरुषः प्रकृतं ब्रह्मैव भवेदन्यथा गत्युपदेशस्य तद्विषयत्वाभावेन गतिवचनविरोधप्रसङ्गादिति—वाच्यम्; गतिवचनस्य विद्यान्तरोपदेशविषयत्वोपपत्तेः, तस्य प्रकृतब्रह्मविद्यान्वयिदेवयानगतिविषयत्वेऽप्याचार्यः स्वयमपि विद्यान्तरमुपदिश्य तदन्वितदेवयानगतिमुपदेक्ष्यतीत्येतदग्नयो निश्चित्याचार्यो यां गतिमुपदेक्ष्यति सा प्रकृतब्रह्मविदोऽपीत्यभिप्रायेणाचार्यस्तु त इत्याद्यवोच-

संयद्वामत्वादिगुणतां चोक्त्वाऽर्चिरादिकां तद्विदो गतिं वक्ष्यामीत्युपक्रमते—'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' ( छा० ४।१५।१ ) इति ॥ १५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः, यस्माच्छ्रुतोपनिषत्कस्य श्रुतिरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ—'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनराव-

### भामती ।

तदनेन पूर्वासंबद्धार्थान्तरविवक्षा वारितेति । अथैवमग्निभिरुपदिष्टे प्रोषित आचार्यः कालेनाजगाम, आगतश्च वीक्ष्योपकोसलमुवाच, ब्रह्मविद इव ते सोम्य मुखं प्रसन्नं भाति, कोऽनु त्वामनुशशासेति । उपकोसलस्तु ह्रीणो भीतश्च को नु मामनुशिष्यात् भगवन् प्रोषिते त्वयीत्यापाततोऽपज्ञाय निर्बध्यमानो यथावदग्नीनामनुशासनमवोचत् । तदुपश्रुत्य चाचार्यः सुचिरं क्लिष्टे उपकोसले समुपजातदयार्द्रहृदयः प्रत्युवाच, सोम्य किल तुभ्यमग्नयो न ब्रह्म साकल्येनावोचन्, तदहं तुभ्यं साकल्येन वक्ष्यामि, यदनुभवमाहात्म्यात् 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इत्येवमुक्तवत्याचार्य आहोपकोसलः, ब्रवीतु मे भगवानिति, तस्मै होवाचाचार्योऽर्चिरादिकां गतिं वक्तुमनाः, यदुक्तमग्निभिः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति तत्पूरणाय 'एषोऽक्षिणि पुरुषो दृश्यते' इत्यादि । **एतदुक्तं भवति**—आचार्येण ये सुखं ब्रह्माक्षिस्थानं संयद्वामं वामनीभामनीत्येवंगुणकं प्राणसहितमुपासते ते सर्वेऽपहतपाप्मानोऽन्यत्कर्म कुर्वन्तु मा वाकार्षुः, अर्चिषमर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते, अर्चिषोऽहरहर्देवतां, अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतां, ततः षण्मासान्, येषु मासेषूत्तरां दिशमेति सविता ते षण्मासा उत्तरायणं तद्देवतां प्रतिपद्यन्ते, तेभ्यो मासेभ्यः संवत्सरदेवतां, तत आदित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्र स्थितानेतान्पुरुषः कश्चिद्ब्रह्मलोकादवतीर्यामानवोऽमानव्यां सृष्टौ भवः । ब्रह्मलोकभव इति यावत् । स तादृशः पुरुष एतान्सत्यलोकस्थं कार्यं ब्रह्म गमयति, स एव देवपथो देवैरर्चिरादिभिर्नेतृभिरुपलक्षित इति देवपथः, स च ब्रह्मणा गन्तव्येनोपलक्षित इति ब्रह्मपथः, एतेन पथा प्रतिपद्यमानाः सत्यलोकस्थं ब्रह्म इमं मानवं मनोः सर्गं किं भूतमावर्तं जन्मजरामरणपौनःपुन्यमावृत्तिस्तत्कर्तावर्तो मानवो लोकस्तं नावर्तन्ते। **तथाच स्मृतिः**—'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' ॥ १५ ॥ तदनेनोपाख्यानव्याख्यानेन **श्रुतोपनिषत्कगत्यभिधानाच्च**

### वेदान्तकल्पतरुः ।

**मिति** । जन्माद्यावृत्तिं पुंसां करोति इत्यावर्तो मनुष्यलोक उच्यत इत्यर्थः । **अथोत्तरेणेति** । आत्मानं जगतः सूर्यं तप-

### कल्पतरुपरिमलः ।

निति तदुपपादनोपपत्तेः, गतिमात्रवचनप्रतिज्ञानस्य स्थानगुणवचनयोः प्रकृतब्रह्मान्वयित्वाकल्पनाविरुद्धत्वाच्च, तस्मात्पूरयित्वेति शेषाध्याहारो न युक्त इति—**चेत्,—उच्यते**; गतिवचनप्रतिज्ञानं देवयानगतिवचनप्रतिज्ञानमेव; शुक्लकृष्णे गती ह्येते श्रुतोपनिषत्कगत्यभिधानाच्चेत्यादिवेदार्थाभिज्ञव्यवहारेषु गतिशब्दस्य देवयानविषयंनिरूढप्रयोगदर्शनात् । तत्र च पूरयित्वेति न शेषाध्याहारः, किंत्वाचार्यस्तु ते इति श्रुततुशब्दार्थकथनं, तथाचान्यैश्च कैश्चन विशेषैः सहाचार्यो गतिमुपदेक्ष्यतीति गतिवाक्यस्यार्थः । तच्च गतिवाक्यं ब्रह्मप्राप्तिलिङ्गात्प्रकृतब्रह्मविद्यामात्रविषयं नाग्निविद्याविषयमपीति ते विशेषा आचार्यवाक्ये वक्ष्यमाणस्थानगुणादिरूपाः पर्यवस्यन्तीति । नच वाच्यमथ यदु चैवास्मिन्नित्यादिना पञ्चाग्निविद्यादिप्रसिद्धायां देवयानगताविह विद्यायां दहनादिशवकर्माभावेऽप्यर्चिरादिप्राप्तिर्भवतीति विशेषोऽभिधीयते अतः स एव विशेषस्तुशब्दार्थः स्यादिति; सङ्कोचे कारणाभावेनाऽऽचार्यवाक्ये ये ये विशेषा दृष्टास्तेषां सर्वेषामपि तुशब्दार्थत्वोपपत्तेः । गतिमात्राभिधानप्रतिज्ञानमिति भाष्ये गतिमात्राभिधानप्रतिज्ञानादिति टीकायां च मात्रशब्दो धर्म्यन्तरव्यवच्छेदक इति न विरोधः । **अथवा**—श्रुतिसूत्रयोर्गतिशब्दः कर्मव्युत्पत्त्या फलवाची; देशानां प्राप्यफलोक्तावेव तत्प्रापकमार्गाकाङ्क्षोत्पादात् । आचार्यवाक्यं च सर्वं सोपपादकविद्याफलपरमेव । पुष्करपलाशवाक्यं तावत्फलपरमिति स्पष्टम् । सर्पिरुदकवाक्यं निर्लेपस्य ब्रह्मणस्तदुचितमक्षि स्थानमिति स्थानगुणकीर्तनद्वारा तत्क्रतुन्यायलभ्यपापाश्लेषपरम् । संयद्वामादिवाक्यान्यपि तत्क्रतुन्यायाश्रयेणैवोपास्यगुणानुसारिफलप्रतिपादकानि । स एतानिति वाक्यमनावृत्तिवाक्यं च पुनरावृत्तिक्लेशरहितब्रह्मलोकप्राप्तिफलकम् । अर्चिरादिवाक्यानि तत्प्रापकमार्गोपदेशेन फलप्राप्त्युपपादकानीति सर्वमिदमाचार्यवाक्यं गतिमात्राभिधानपर्यवसायीति न भाष्यटीकाविरोधः । **आत्मानं जगतः सूर्यमिति** सूर्यान्तर्याम्यभिप्रायम्; सूर्य आत्मा जगतस्तस्थुषश्चेति

र्तन्ते' ( प्रश्न० १।१० ) इति । स्मृतावपि—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' ( गी० ८।२४) इति । सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते । 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति' इत्युपक्रम्य आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' ( छा० ४।१५।५ ) इति । तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्याक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥ १६ ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

यत्पुनरुक्तं छायात्मा विज्ञानात्मा देवतात्मा वा स्यादक्षिस्थान इति । अत्रोच्यते—न छायात्मादिरितर इह ग्रहणमर्हति । कस्मात्, अनवस्थितेः, न तावच्छायात्मनश्चक्षुषि नित्यमवस्थानं संभवति । यदैव हि कश्चित्पुरुषश्चक्षुरासीदति, तदा चक्षुषि पुरुषच्छाया दृश्यते, अपगते तस्मिन्न दृश्यते । 'य एषोऽक्षिणि पुरुषः' इति च श्रुतिः संनिधानात्स्वचक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति । नचोपासनाकाले छायाकरं कंचित्पुरुषं चक्षुःसमीपे संनिधाप्योपास्त इति युक्तं कल्पयितुम् । 'अस्यैव शरीरस्य नाशमन्वेष नश्यति' ( छा० ८।९।१ ) इति श्रुतिश्छायात्मनोऽप्यनवस्थितत्वं दर्शयति । असंभवाच्च तस्मिन्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः । तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसंबन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं न शक्यम्, ब्रह्मणस्तु व्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसंबन्धः । समानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानामसंबन्धः । यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव; तथाप्यविद्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभयत्वे नोपपद्येते । संयद्वामत्वादयश्चैतस्मिन्ननैश्वर्यादनुपपन्ना एव । देवतात्मनस्तु 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' इति श्रुतेर्यद्यपि चक्षुष्यवस्थानं स्यात्; तथाप्यात्मत्वं तावन्न संभवति, पराग्रूपत्वात् । अमृतत्वादयोऽपि न संभवन्ति; उत्पत्तिप्रलयश्रवणात् । अमरत्वमपि देवानां चिरकालावस्थनापेक्षम् । ऐश्वर्यमपि परमेश्वरायत्तं न स्वाभाविकम्; 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' ( तै० २।८ ) इति मन्त्रवर्णात् । तस्मात्परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः । अस्मिंश्च पक्षे दृश्यत इति प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयम् ॥ १७ ॥ इति चतुर्थमन्तराधिकरणम् ॥

### भामती ।

इत्यपि सूत्रं व्याख्यातम् ॥ १६ ॥ **अनवस्थितेरसंभवाच्च नेतरः** ।'य एषोऽक्षिणि' इति नित्यवच्छ्रुतमनित्ये छायापुरुषे नावकल्पते । कल्पनागौरवं चास्मिन्पक्षे प्रसज्यते इत्याह—**नचोपासनकाल इति** । **तथा विज्ञानात्मनोऽपीति** । विज्ञानात्मनो हि न प्रदेशे उपासनाऽन्यत्र दृष्टचरी, ब्रह्मणस्तु तत्र श्रुतिपूर्वेत्यर्थः । **भीषा** भिया । **अस्मात्** ब्रह्मणः । शेषमतिरोहितार्थम् ॥ १७ ॥ इति चतुर्थम् अन्तराधिकरणम् ॥

### वेदान्तकल्पतरुः ।

आदिना सह । अन्विष्याहमस्मीति विदित्वा तमभिजायन्ते प्राप्नुवन्ति । एतत्सूर्याख्यं ब्रह्म प्राणानां व्यष्टिभूतानां हिरण्यगर्भभूतं सद् आयतनम् । अग्निरर्चिर्देवता ज्योतिः सूर्यः । अहरादयोऽपि देवताः ॥ १५ ॥ १६ ॥ १७ ॥ **इति चतुर्थं अन्तराधिकरणम्** ॥

### कल्पतरुपरिमलः ।

श्रुतेः । तस्माद्युक्तं पूरयित्वेति ॥ **हिरण्यगर्भभूतमिति** । आदित्यस्य ब्रह्माण्डोदरजातहिरण्यगर्भरूपत्वमसदेवेदमग्रआसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्ततेत्यादिच्छन्दोगोपनिषद्वचनजातेन मृते द्विधाभवनादार्ते ब्रह्माण्डे जातो मार्तण्ड इत्यादितद्वाचिनो मार्तण्डशब्दस्य पौराणिकव्युत्पादनेन 'विद्यासहायो भगवान् यस्यासौ मण्डलान्तरे । हिरण्यगर्भः पुत्रोऽसावीश्वरो दृश्यते परः' ॥ इत्यादिपुराणवचनेन चावगतम् । **केचित्तु**—आत्मपदं केवलपरमात्मपरं परमात्मानमुपास्य सत्यलोके हिरण्यगर्भमादित्यं प्राप्नुवन्ति; आत्मशब्दमात्रस्य सूर्यान्तर्यामिपरत्वकल्पकाभावादिति—**व्याचक्षते** । **ज्योतिः सूर्य इति** । अग्निर्ज्योतिरिति स्मृतौ क्रमो न विवक्षित इति भावः ॥१५॥१६॥१७॥ **इति चतुर्थं अन्तरधिकरणम्** ।

---

१ तत्र सूत्राणि ५—अन्तर उपपत्तेः १३ स्थानादिव्यपदेशाच्च १४ सुखविशिष्टाभिधानादेव च १५ श्रुतोपनिषत्कगत्यभिधानाच्च १६ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

( ५ अधिकरणम् ) **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योन्तरो यमयति' इत्युपक्रम्य श्रूयते—'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' (बृह० ३।७।१,२) इत्यादि । अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते । स किमधिदैवाद्यभिमानी देवतात्मा कश्चित्, किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किंवा परमात्मा, किंवार्थान्तरं किंचिदित्यपूर्वसंज्ञादर्शनात्संशयः । किं तावन्नः प्रतिभाति, संज्ञाया अप्रसिद्धत्वात्संज्ञिनाप्यप्रसिद्धेनार्थान्तरेण केनचिद्भवितव्यमिति । अथवा—नानिरूपितरूपमर्थान्तरं शक्यमस्तीत्यभ्युपगन्तुम् । अन्तर्यामिशब्दश्चान्तर्यमनयोगेन प्रवृत्तो नात्यन्तमप्रसिद्धः । तस्मात्पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् । तथाच श्रूयते—'पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः' ( बृ० ३।९।१० ) इत्यादि । स च कार्यकारणवत्त्वात्पृथिव्यादीनन्तस्तिष्ठन्यमयतीति युक्तं देवतात्मनो यमयितृत्वम् । योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयितृत्वं स्यात्, नतु परमात्मा प्रतीयेत, आकार्यकरणत्वादित्येवं प्राप्त इदमुच्यते—योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्य इति । कुतः? तद्धर्मव्यपदेशात् । तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन्यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते; सर्वविकारकारणत्वे सति सर्व-

भामती ।

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

**स्वकर्मोपार्जितं देहं तेनान्यच्च नियच्छति । तक्षादिरशरीरस्तु नात्मान्तर्यामितां भजेत् ॥ १ ॥**

प्रवृत्तिनियमलक्षणं हि कार्यं चेतनस्य शरीरिणः स्वशरीरेन्द्रियादौ वा शरीरेण वा वास्यादौ दृष्टं नाशरीरस्य ब्रह्मणो भवितुमर्हति । नहि जातु वटाङ्कुरः कुटजबीजाज्जायते । तदनेन 'जन्माद्यस्य यतः' इत्येतदप्याक्षिप्तं वेदितव्यम् । तस्मात्परमात्मनः शरीरेन्द्रियादिरहितस्यान्तर्यामित्वाभावात्, प्रधानस्य वा पृथिव्याद्यभिमानवत्या

वेदान्तकल्पतरुः ।

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

अशरीरस्य नियन्तृत्वासंभवसंभवाभ्यां संशयः । पूर्वत्र स्थाननिर्देशोपपादनाय पृथिव्यादिस्थाननिर्देशो दृष्टः, तस्याक्षेपात्सङ्गतिः । अशरीरः परमात्मा नान्तर्यामी घटवत् । **ननु**–स्वशरीरनियन्तरि शरीरान्तररहिते तक्षणि अनैकान्तिकताऽत आह—**स्वकर्मेति** । न नियम्यातिरिक्तशरीरराहित्यं हेतुः किं तु शरीरेण भोक्तृत्वेनानन्वयः । तक्षा तु स्वकर्मजदेहेन तादृक्संबन्धवानेवतं देहं तेन द्वारेणान्यच्च वास्यादि नियच्छतीति न व्यभिचार इत्यर्थः । अचेतनत्वमुपाधिमाशङ्क्य मुक्ते चेतने साध्यवत्यप्युपाध्यभावात्साध्याव्याप्तिमभिप्रेत्याह—**प्रवृत्तीति** । नियमनं शरीरिणो, न चेतनमात्रस्य; मुक्ते तदभावादित्यर्थः । विपक्षे दण्डमाह—**नहीति** । **ननु** जन्मादिसूत्रे उभयकारणत्वप्रतिपादनान्नियन्तृत्वं सिद्धमत आह—**तदनेनेति** । **पारिशेष्याज्जीव एवेति** । अन्तर्यामीति वक्ष्यमाणेन संबन्धः । पूर्वपक्षमुपसंहरति—**तस्मादिति** । किमिदमशरीरत्वं यतो नियन्तृत्वाभावः । नियम्यातिरिक्तदेहरहितत्वं वा, देहसंबन्धाभावो वा, देहे

कल्पतरुपरिमलः ।

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

श्लोकनिरसनीयव्यभिचारशङ्कास्पदमनुमानं दर्शयति—**अशरीर इति** । **इदं हेतुगर्भं विशेषणं परमेश्वरस्यापि** नियम्येन पृथिव्यादिना शरीरवत्त्वमस्ति; यस्य पृथिवी शरीरमित्यादिश्रुतेः, अतो हेत्वसिद्धिपरिहारार्थं नियम्यातिरिक्तशरीरराहित्यं हेतुरिति वक्तव्यमित्यापाद्य तत्र व्यभिचारमाशङ्कते—**नन्विति** । **पारिशेष्यादिति** । सोऽपि नान्तर्यामीति पूर्ववाक्यादन्तर्यामीत्यनुषङ्गः । तस्य पारिशेष्याज्जीव एवेति समनन्तरं वक्ष्यमाणेन संबन्ध इत्यर्थः, नतु पारिशेष्याज्जीव एवेत्यस्य, तस्माज्जीवात्मैवान्तर्यामीत्युपसंहारवाक्ये वक्ष्यमाणेनान्तर्यामिपदेन संबन्ध इत्यर्थः; तत्रापि जीवात्मपदश्रवणात्तेन पौनरुक्त्यापत्तेः, अमृतत्वाद्युपपादकैरन्यथेत्यादिवाक्यैर्व्यवहितस्यास्य तत्रान्वयासंभवाच्च ॥ **ननु** तस्माज्जीवात्मैवेत्युपसंहारो न युक्तः; पृथिव्यादिशरीरकाणां तत्तदधिदेवतात्मनां श्रोतुर्गौतमस्यात्मनश्चैकत्वाभावेन पृथिव्यादिपर्यायेष्वेष त आत्मेत्यस्यानन्वयात्, अतः पूर्वपक्षाभासोऽयमित्याशङ्क्यावतारयति—**पूर्वपक्षमिति** । अदृष्टो द्रष्टेत्यादौ दर्शनश्रवणम-

शक्त्युपपत्तेः । 'एष त आत्माऽन्तर्याम्यमृतः' इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते । 'यं पृथिवी न वेद' इति च पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन्देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति । 'पृथिवी देवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात्' । 'तथा अदृष्टोऽश्रुतः' इत्यादिव्यपदेशो रूपादिविहीनत्वात्परमात्मन उपपद्यत इति । यत्त्वकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्यत इति । नैष दोषः; यान्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणत्वोपपत्तेः । तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न संभवति; भेदाभावात् । भेदे हि सत्यनवस्थादोषोपपत्तिः । तस्मात्परमात्मैवान्तर्यामी ॥ १८ ॥

## नच स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्यादेतत्—। अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते; रूपादिहीनतया तस्य तैरभ्युपगमात् । 'अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' (मनु० १।५) इति हि स्मरन्ति । तस्यापि नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते । तस्मात्प्रधानमन्तर्यामिशब्दं स्यात् । 'ईक्षतेर्नाशब्दम्' (ब्र० १।१।५) इत्यत्र निराकृतमपि सत्प्रधानमिहादृष्टत्वादिव्यपदेशसंभवेन पुनराशङ्क्यते । अत उत्तरमुच्यते—नच स्मार्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति । कस्मात्? अतद्धर्माभिलापात् । यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति; तथापि न द्रष्टृत्वादिव्यपदेशः संभवति; प्रधानस्याचेतनत्वेन तैरभ्युपगमात् । 'अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता' (बृह० ३।७।२३) इति हि वाक्यशेष इह भवति । आत्मत्वमपि न प्रधानस्योपपद्यते ॥ १९ ॥ यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसंभवान्नान्तर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु । शारीरो हि चेतनत्वाद्द्रष्टा श्रोता मन्ता विज्ञाता च भवति; आत्मा च प्रत्यक्त्वात् । अमृतश्च धर्माधर्मफलोपभोगोपपत्तेः । अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः;

### भामती ।

देवताया वाणिमाद्यैश्वर्ययोगिनो योगिनो वा जीवात्मनो वान्तर्यामिता स्यात् । तत्र यद्यपि प्रधानस्यादृष्टत्वामतत्वाविज्ञातत्वानि सन्ति; तथापि तस्याचेतनस्य द्रष्टृत्वश्रोतृत्वमन्तृत्वविज्ञातृत्वानां श्रुतानामभावात् अनात्मत्वाच्च 'एष त आत्मा' इति श्रुतेरनुपपत्तेर्न प्रधानस्यान्तर्यामिता । यद्यपि पृथिव्याद्यभिमानिनो देवस्यात्मत्वमस्ति, अदृष्टत्वादयश्च सह द्रष्टृत्वादिभिरुपपद्यन्ते, शरीरेन्द्रियादियोगश्च; 'पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः' इत्यादिश्रुतेः, तथापि तस्य प्रतिनियतनियमनात् 'यः सर्वांल्लोकानन्तरो यमयति यः सर्वाणि भूतान्यन्तरो यमयति' इति श्रुतिविरोधादनुपपत्तिः, योगी तु यद्यपि लोकभूतवशितया सर्वांल्लोकान्सर्वाणि च भूतानि नियन्तुमर्हति, तत्र तत्रानेकविधदेहेन्द्रियादिनिर्माणेन 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः; तथापि 'जगद्व्यापारवर्जं प्रकरणात्' इति वक्ष्यमाणेन न्यायेन विकारविषये विद्यासिद्धानां व्यापाराभावात्सोऽपि नान्तर्यामी । तस्मात्पारिशेष्याज्जीव एव चेतनो देहेन्द्रियादिमान् द्रष्टृत्वादिसंपन्नः स्वयमदृश्यादिः, स्वात्मनि वृत्तिविरोधात्, अमृतश्च; देहेन्द्रियादिनाशेऽप्यनाशात्, अन्यथामुष्मिकफलोपभोगाभावेन कृतविप्रणाशाकृताभ्यागमप्रसङ्गात्, 'य आत्मनि तिष्ठन्' इति चाभेदेऽपि कथंचिद्भेदोपचारात्, 'स भगवः कस्मिन्प्रतिष्ठितः' 'स्वे महिम्नि' इतिवत् । 'यमात्मा न वेद' इति च स्वात्मनि वृत्तिविरोधाभिप्रायम् । 'यस्यात्मा शरीरम्' इत्यादि च सर्वं 'स्वे महिम्नि' इतिवद्योजनीयम् । यदि पुनरात्मनोऽपि नियन्तुरन्यो नियन्ता भवेत्, वेदिता वा ततस्तस्याप्यन्य इत्यनवस्था स्यात् । सर्वलोकभूतनियन्तृत्वं च जीवस्यादृष्टद्वारा । तदुपार्जितौ हि धर्माधर्मौ नियच्छत इत्यनया द्वारा जीवो नियच्छति । एकवचनं च जात्यभिप्रायत् । तस्माज्जीवात्मैवान्तर्यामी, न परमात्मेति । **एवं प्राप्तेऽभिधीयते—देहेन्द्रियादिनियमे नास्य देहेन्द्रियान्तरम् । तत्कर्मोपार्जितं तच्चेत्तदविद्यार्जितं जगत् ॥** श्रुतिस्मृतीतिहासपुराणेषु तावदत्रभवतः सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्य जगद्योनित्वमवगम्यते । न तत्पृथग्जनसाधारण्यानुमानाभासेनागमविरोधिना शक्यमपह्नोतुम् । तथाच सर्वं विकारजातं तदविद्याशक्तिपरिणामस्तस्य शरीरेन्द्रियस्थाने वर्तते इति यथायथं पृथिव्यादि-

### वेदान्तकल्पतरुः ।

भोक्तृत्वाभावो वा । **नाद्य** इत्याह—**देहेति** । देहादौ निर्दिष्टे तत्स्वामी तक्षादिर्बुद्धिस्थोऽस्येत्युक्तः । **अथवा** तस्माज्जीवात्मैवेत्युपसंहारस्थो जीवात्मा परामृष्टः । **अस्य** स्वदेहादिनियमे न देहाद्यन्तरमतोऽनैकान्तिकतेत्यर्थः । **द्वितीयं** शङ्कते—**तदिति** । परस्यापि देहादिसंबन्धाभावोऽसिद्ध इत्याह—**तदविद्येति** । तद्विषयत्वादविद्यायास्तदविद्यात्वम् । तृ-

दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात्, 'न दृष्टेर्द्रष्टारं पश्येः' ( बृ० ३।४।२ ) इत्यादिश्रुतिभ्यश्च । तस्य च कार्यकारणसंघातमन्तर्यमयितुं शीलं; भोक्तृत्वात् । तस्माच्छारीरोऽन्तर्यामीत्यत उत्तरं पठति—

### शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

नेति पूर्वसूत्रादनुवर्तते । शारीरश्च नान्तर्यामीष्यते । कस्मात्? यद्यपि द्रष्टृत्वादयो धर्मास्तस्य संभवन्ति; तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान्न कात्स्न्र्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति । अपि चोभयेऽपि हि शाखिनः काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते—'यो विज्ञाने तिष्ठन्' ( बृ० ३।७।२२ ) इति काण्वाः । 'य आत्मनि तिष्ठन्' इति माध्यंदिनाः । 'य आत्मनि तिष्ठन्' इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः । 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते । विज्ञानमयो हि शारीरः । तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम् । कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते, यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः । का पुनरिहानुपपत्तिः । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिवचनं विरुध्येत । अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं, मन्तारं, विज्ञातारं चात्मानं प्रतिषेधति । नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमितिचेत्, न; नियन्त्रन्तराप्रसङ्गादविशेषश्रवणाच्च । अत्रोच्यते—अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः । एको हि

---

#### भामती ।

देवतादिकार्यकरणैस्तानेव पृथिव्यादिदेवतादीञ्छक्नोति नियन्तुम् । नचानवस्था । नहि नियन्त्रन्तरं तेन नियम्यते, किंतु यो जीवो नियन्ता लोकसिद्धः स परमात्मैवोपाध्यवच्छेदकल्पितभेदस्तथा व्याख्यायत इत्यसकृदावेदितं, तत्कुतो नियन्त्रन्तरं, कुतश्चानवस्था । तथाच 'नान्योऽतोऽस्ति द्रष्टा' इत्याद्या अपि श्रुतय उपपन्नार्थाः । परमार्थतोऽन्तर्यामिणोऽन्यस्य जीवात्मनो द्रष्टुरभावात् । अविद्याकल्पितजीवपरमात्मभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतयः, प्रत्यक्षादीनि प्रमाणानि, संसारानुभवः, विधिनिषेधशास्त्राणि च । एवंचाधिदैवादिष्वेकस्यैवान्तर्यामिणः प्रत्यभिज्ञानं समञ्जसं भवति, 'यः सर्वांल्लोकान्' 'यः सर्वाणि भूतानि' इत्यत्र य इत्येकवचनमुपपद्यते । अमृतत्वं च परमात्मनि समञ्जसं नान्यत्र । 'य आत्मनि तिष्ठन्' इत्यादौ चाभेदेऽपि भेदोपचारक्लेशो न भविष्यति । तस्मात्परमात्मान्तर्यामी न जीवादिरिति सिद्धम् । पृथिव्यादि स्तनयित्न्वन्तमधिदैवम् । 'यः सर्वेषु लोकेषु' इत्यधिलोकम् । 'यः सर्वेषु वेदेषु' इत्यधिवेदम् । 'यः सर्वेषु यज्ञेषु' इत्यधियज्ञम्, 'यः सर्वेषु भूतेषु' इत्यधिभूतम् । प्राणाद्यात्मान्तमध्यात्मम् । संज्ञाया अप्रसिद्धत्वादित्युपक्रममात्रं पूर्वः पक्षः ॥ १८ ॥ १९ ॥ **दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् ।**

#### वेदान्तकल्पतरुः ।

**तीये तु** सोपाधिकतैव; मुक्तस्य परामेदेन पक्षत्वान्न साध्याव्याप्तिः । अतीतकालतां चाह—**श्रुतीति** । यदवादि जीवस्य नियन्त्रन्तराभ्युपगमेऽनवस्थेति, तत्राह—**नचेति** । औपाधिकस्य ह्यनौपाधिकेश्वरनियम्यत्वमभ्युपेतं नानुपहितेश्वरस्य नियन्त्रन्तरापादकमित्यर्थः । जीवपरमेदाभावे कथं लौकिकवैदिकव्यवहारोऽत आह—**अविद्याकल्पितेति** । **एवंचेति** । बहुत्वाज्जीवानां नियम्याधिदेवादिषु प्रत्यभिज्ञा न स्यादित्यर्थः । एकत्वेऽन्तर्यामिण एकवचनश्रुतिमाह—**एकवचनमिति** । **अभेदेपीति** । औपाधिकमेदाभावेऽपीत्यर्थः । अधिकरणोपक्रमे विषयविवेचकमधिलोकमित्यादि भाष्यं तद्विभजते—**पृथिव्यादीति** । यः पृथिव्यां तिष्ठन्नित्युपक्रम्य माध्यन्दिनपाठे यः स्तनयित्नौ तिष्ठन्नित्यन्तम् ॥ १८ ॥ १९ ॥ शारीरश्चोभयेपीति

#### कल्पतरुपरिमलः ।

ननविज्ञानानि यद्यात्मनो वाऽरे दर्शनेन श्रवणेन आत्मनि खल्वरे दृष्टे श्रुते मते इत्यादिश्रुत्यन्तरप्रत्यभिज्ञानादात्मविषयसाक्षात्कारश्रवणमनननिदिध्यासनानि, यदि वा चक्षुःश्रोत्रमनोबुद्धिकरणकज्ञानानि, उभयथापि तद्वत्त्वं तदविषयत्वं च जीवे एवोपपद्यते, न परमात्मन्यतद्वति तद्विषये च । अत एव त आत्मेति स त आत्मेति च सर्वनाम्नोस्तज्जातीयविषयत्वं कल्पयितुं युक्तम्; पूर्वस्मिन्वत्सरे ये भुक्तास्त एव शालयो भुज्यन्ते तदेवौषधं सेव्यत इत्यादिषु व्यवहारेषु सर्वनाम्नस्तज्जातीयविषयत्वस्यापि दर्शनादित्याशयः ॥ **ननु** नियन्तुरपि जीवस्य नियन्त्रन्तरनियम्यत्वे तस्यापि नियन्त्रन्तरनियम्यत्वं स्याद्, नियन्तृत्वाविशेषादित्यनवस्थापादने जीवपरयोस्तात्त्विकाभेदोपन्यासमात्रेण परिहारो न लभ्यते; सत्यपि तात्त्विकाऽभेदे जीवपरयोरिव परतन्नियन्त्रोरपि कल्पितभेदेन नियम्यनियामकतोपपत्तेरित्याशङ्क्याह—**औपाधिकस्य हीति** । जीवनि-

प्रत्यगात्मा भवति । न द्वौ प्रत्यगात्मानौ संभवतः । एकस्यैव तु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाश इति । ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते । तथाच श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहारं वारयति ॥ २० ॥ इति पञ्चममन्तर्याम्यधिकरणम् ।

## ( ६ अधिकरणम् ) अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

'अथ परा यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' ( मुण्ड० १।१।५,६ ) इति श्रूयते । तत्र संशयः—किमयमद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्यात्, उत शारीरः, आहोस्वित्परमेश्वर इति । तत्र प्रधानमचेतनं भूतयोनिरिति युक्तं; अचेतनानामेव तद्दृष्टान्तत्वेनोपादानात् । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा

### भामती ।

**कर्तरि** आत्मनि प्रवृत्तिविरोधादित्यर्थः ॥ २० ॥ **इति पञ्चममन्तर्याम्यधिकरणम् ॥**

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

**अथ परा यया तदक्षरमधिगम्यते** । **यत्तदद्रेश्यं** बुद्धीन्द्रियाविषयः । **अग्राह्यं** कर्मेन्द्रियागोचरः । **अगोत्रं** कारणरहितम् । **अवर्णं** ब्राह्मणत्वादिहीनम् । न केवलमिन्द्रियाणामविषयः, इन्द्रियाण्यप्यस्य न सन्तीत्याह—**अचक्षुःश्रोत्रमिति** । बुद्धीन्द्रियाण्युपलक्षयति—**अपाणिपादमिति** । कर्मेन्द्रियाणि **नित्यं विभुं प्रभुं** सर्वगतं, सुसूक्ष्मं दुर्विज्ञानत्वात् । **स्यादेतत्**—नित्यं सत्किं परिणामि नित्यं, नेत्याह—**अव्ययम्** । कूटस्थनित्यमित्यर्थः । **परिमाणो विवर्तो वा सरूपस्योपलभ्यते । चिदात्मना तु सारूप्यं जडानां नोपपद्यते ॥ १ ॥ जडं प्रधानमेवातो जगद्योनिः प्रतीयताम् । योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया ॥ २ ॥** परिणममानसरूपा एव हि परिणामा दृष्टाः । यथोर्णनाभिलाला परिणामा लूतातन्तवस्तत्सरूपाः, तथा विवर्ता अपि विवर्तमानसरूपा एव न विरूपाः । यथा रज्जुविवर्ता धारोरगादयो रज्जुसरूपाः । न जातु रज्ज्वां कुञ्जर इति विपर्यस्यन्ति । नच हेमपिण्डपरिणामो भवति लूतातन्तुः । तत्कस्य

### वेदान्तकल्पतरुः ।

सूत्रपातनिका भाष्ये कर्तरीति । आत्मनीत्यर्थः । लौकिके कर्तरि डित्थे कार्यकरणसंघाते दर्शनादिवृत्त्यविरोधादित्याह **—आत्मनीति** । पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते पृथिव्यवयवस्थावयविनोऽन्तर्यामित्वं स्यात्तन्निवृत्तयेऽ**न्तर इति** । पृथिवीक्षेत्रज्ञवारणाय **न वेदेति** । सह्यहमस्मि पृथिवीति वेद नियम्यदेह एवान्तर्यामिणो देहो नान्य इत्याह—**यस्येति** । **अप्रतर्क्यः** तर्काविषयः । **अविज्ञेयं** प्रमाणाविषयः । सर्वासु दिक्षु प्रसुप्तमिव ॥ २० ॥ **इति पञ्चममन्तर्याम्यधिकरणम् ।**

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

अदृश्यत्वादिसाधारणधर्मदर्शनात्संशयः । पूर्वत्र द्रष्टृत्वादिश्रवणान्न प्रधानमन्तर्यामीत्युक्तमिह तदश्रवणादक्षरं प्रधानमिति भाष्योक्तैव सङ्गतिः । पूर्वपक्षमाह—**परिणाम इति योनिशब्दो निमित्तं चेदिति** । ब्रूयादित्यध्याहारः । न विलक्ष-

### कल्पतरुपरिमलः ।

यन्ता परो यद्यौपाधिकः परतन्त्रः स्यात्, तदा भृत्यनियन्तुरमात्यस्य राजेव जीवनियन्तुः परस्याप्यन्यो नियन्ताऽऽपद्येत-न त्वेवम्, यतः परमेश्वरोऽनौपाधिकः उपाध्यायत्तपारतन्त्र्यवान्न भवति । तथाऽश्रवणादित्याशयः । **नन्वभेदेऽपि** जीवपरयोर्भेदव्यवहारो दृष्ट इत्याशङ्क्य व्याचष्टे—**औपाधिकभेदाभावेऽपीति** । जीवस्य स्वस्मादौपाधिकभेदोऽपि नास्तीत्यर्थः ॥ ॥ १८ ॥ १९ ॥ **लौकिके कर्त्तरि** । डित्थ इति पुरुषान्तराभिप्रायम् ॥ २० ॥ **इति पंचममन्तर्याम्यधिकरणम् ॥**

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

तत्त्वतोऽन्यथाभावः **परिणामः** अतत्त्वतोऽन्यथाभावो **विवर्त** इति वा, धर्मिसमसत्ताकोऽन्यथाभावः **परिणाम**स्तद-

---

१ तत्र सूत्राणि ३–अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् १८ न च स्मार्तमतद्धर्माभिलापात् १९ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते २० ॥

सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्' ( मु० १।१।७ ) इति । ननूर्णनाभिः पुरुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ । नेति ब्रूमः । नहि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वं चास्ति । चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः, पुरुषशरीरं च केशलोम्नामिति प्रसिद्धम् । अपिच पूर्वत्राद्दष्टत्वाद्यभिलापसंभवेऽपि द्रष्टृत्वाद्यभिलापासंभवान्न प्रधानमभ्युपगतम् । इह त्वदृश्यत्वादयो धर्माः प्रधाने संभवन्ति । नचात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते । ननु—'यः सर्वज्ञः सर्ववित्' ( मुण्ड० १।१।९ ) इत्ययं वाक्यशेषोऽचेतने प्रधाने न संभवति, कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति । अत्रोच्यते—'यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यम्' इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनरन्ते श्रावयिष्यति—'अक्षरात्परतः परः' ( मु० २।१।२ ) इति । तत्र यः परोऽक्षराच्छ्रुतः स सर्वज्ञः

## भामती ।

हेतोः ? अत्यन्तवैरूप्यात् । तस्मात्प्रधानमेव जडं जडस्य जगतो योनिरिति युज्यते । स्वविकारानश्नुत इति तदक्षरम् । 'यः सर्वज्ञः सर्ववित्' इति चाक्षरात्परात्परस्याख्यानं; 'अक्षरात्परतः परः' इति श्रुतेः । नहि परस्मादात्मनोऽर्वाग्विकारजातस्य च परस्तात्प्रधानादृतेऽन्यदक्षरं संभवति । अतो यः प्रधानात्परः परमात्मा स सर्ववित् । भूतयोनिस्त्वक्षरं प्रधानमेव,तच्च सांख्याभिमतमेवास्तु । अथ तस्याप्रामाणिकत्वान्न तत्र परितुष्यति, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्मं, प्रधीयते हि तेन विकारजातमिति प्रधानं, तत्खलु जडमनिर्वाच्यमनिर्वाच्यस्य जडस्य प्रपञ्चस्योपादानं युज्यते; सारूप्यात्, ननु चिदात्मानिर्वाच्यः, विरूपो हि सः । अचेतनानामिति भाष्यं सारूप्यप्रतिपादनपरम् । **स्यादेतत्**—स्मार्तप्रधाननिराकरणेनैवैतदपि निराकृतप्रायं, तत्कुतोऽस्य शङ्केत्यत आह—**अपिच पूर्वत्राद्दष्टत्वादीति** । सति बाधकेऽस्यानाश्रयणं इह तु बाधकं नास्तीत्यर्थः । तेन 'तदैक्षत', इत्यादावुपचर्यतां ब्रह्मणो जगद्योनिताऽविद्याशक्त्याश्रयत्वेन, इह त्वविद्याशक्तेरेव जगद्योनित्वसंभवेन न द्वारद्वारिभावो युक्त इति प्रधानमेवात्र वाक्ये जगद्योनिरुच्यत इति—**पूर्वः पक्षः** । अथ योनिशब्दो निमित्तकारणपरः, तथापि, ब्रह्मैव निमित्तं, नतु जीवात्मेति विनिगमनायां न हेतुरस्तीति संशयेन—**पूर्वः पक्षः** । **अत्रोच्यते—अक्षरस्य जगद्योनिभावमुक्त्वा ह्यनन्तरम् । यः सर्वज्ञ इति श्रुत्या सर्वज्ञस्य स उच्यते ॥ १ ॥ तेन निर्देशसामान्यात्प्रत्यभिज्ञानतः स्फुटम् । अक्षरं सर्वविद्विश्वयोनिर्नाचेतनं भवेत् ॥ २ ॥ अक्षरात्परत इति श्रुतिस्त्वव्याकृते मता । अश्नुते यत्स्वकार्याणि**

## वेदान्तकल्पतरुः ।

णत्वादित्यत्र परिणाममतं कृत्वाचिन्तया परिणामसारूप्ययोर्व्याप्तिर्निराकरिष्यते अत्र तु विवर्तसादृश्ययोः । परिणामस्तु तत्रत्य इहानूदितः । भूतयोनिर्जडः परिणममानत्वाद्विवर्तमानत्वाद्वा संमतवदित्यर्थः । **ननु** परिणामिनः कथमक्षरशब्दवाच्यत्वमत आह—**स्वविकारानिति** । अनुमानयोर्बाधमाशङ्क्याह—**य इति** । अक्षरात्पर इति सामानाधिकरण्यम् । **नामरूपेति** । शब्दार्थयोर्बीजमधिष्ठानमात्मा तद्विषयतया तस्याधिष्ठानत्वे सहकारित्वेन शक्तिभूतं भूतानां सूक्ष्मं कारणं, तस्मिन् संदेहभाष्यस्थप्रधानशब्दं वर्तयति—**प्रधीयत इति** । क्रियत इत्यर्थः । अचेतनानामिति भाष्यं न प्रायदर्शनमात्रपरमित्याह—**सारूप्यादिति** । **ननु** नच स्मार्तमिति प्राच्यधिकरणे प्रधानं दूषितं, द्रष्टृत्वाद्यसंभवन्यायसाम्यादचेतनमव्याकृतं दूषितप्रायमिति तच्छङ्का न युक्ता; प्रधाने त्वप्रामाणिकत्वमधिकमिति शङ्कते—**स्यादेतदिति** । **बाधकं** द्रष्टृत्वादि । ईक्षत्यादिचिन्तयाप्यपुनरुक्तिमाह—**तेनेति** । उपचर्यतां ब्रह्मणो जगद्योनित्वमित्युक्तम् । उपचारे निमित्तमाह—**अविद्येति** । अविद्याशक्त्या विषयीकृतत्वेन तदाश्रय इति तथोक्तम् । द्वितीयश्लोकस्य द्वितीयार्धं व्याचष्टे—**अथेति** । सति चेतनपरत्वे वाक्यस्य ब्रह्मपरत्वं दुर्निवारमिति पूर्वपक्षाभावमाशङ्क्याह—**ब्रह्मैवेति** । यदुक्तम् अक्षरात्परस्य सर्वज्ञत्वमक्षरं तु प्रधानमिति, तन्नेत्याह—**अक्षरस्येति** । "यद्भूतयोनिमित्यक्षरस्य जगद्योनिभावमुक्त्वा यः सर्वज्ञ इत्युपक्रम्य

## कल्पतरुपरिमलः ।

समसत्ताको विवर्त इति वा परिणामविवर्तयोर्भेदे स्थिते यदि विश्वस्य भूतयोनिपरिणामत्वमभ्युपगम्यते, यदि वा तद्विवर्तत्वम्, उभयथापि भूतयोनिर्जडाङ्गीकार्या कनकरुचकस्रग्भुजङ्गादिलोकदृष्टोर्णनाभ्यादिश्रुत्युपात्तदृष्टान्तानुसारेण । यथा सुदीप्तादिति मन्त्रोपात्तसरूपविशेषणानुसारेण च विकारसारूप्यावश्यंभावादित्यभिप्रेत्यानुमानमाह—**भूतयोनिर्जडेति** । **द्वितीयार्धमिति** । योनिशब्दो निमित्तं चेदित्यर्धमित्यर्थः । **ब्रह्मपरत्वं दुर्निवारमिति** । ब्रह्मण एव जगत्कर्तृत्वादित्याशयः । निमित्तवाचिनो योनिशब्दस्यादृष्टद्वारा निमित्ते जीवेऽपि वृत्तिः संभवति; अतो भूतयोनिर्ब्रह्मैवेति निर्णयहेतुर्नास्तीत्यविनिगमेन पूर्वपक्षसंभव उपपादितः । "अक्षरात् परतः परः" इति श्रुतब्रह्मगतपरत्वावधित्वलिङ्गेन भूतयोन्यक्षरं ब्रह्म न भवति, किंतु जीव एवेति निर्णयेनापि पूर्वपक्षः संभवतीति द्रष्टव्यम् । उपादानत्वप्रत्यभिज्ञालिङ्गावगमितैकवाक्यभावम-

सर्वविस्त्वं संभविष्यति । प्रधानमेव त्वक्षरशब्दनिर्दिष्टं भूतयोनिः । यदा तु योनिशब्दो निमित्तवाची, तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां भूतजातस्योपार्जनादिति । एवं प्राप्तेऽभिधीयते—योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यान्नान्य इति । कथमेतदवगम्यते ? धर्मोक्तेः, परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते—'यः सर्वज्ञः सर्ववित्' इति । न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्वविस्त्वं वा संभवति । नन्वक्षरशब्दनिर्दिष्टाद्भूतयोनेः परस्यैव तत्सर्वज्ञत्वं सर्वविस्त्वं च न भूतयोनिविषयमित्युक्तम् । अत्रोच्यते—नैवं संभवति । यत्कारणं 'अक्षरात्संभवतीह विश्वम्' इति प्रकृतं भूतयोनिमिह जायमानप्रकृतित्वेन निर्दिश्यानन्तरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति । तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्वविस्त्वं च धर्म उच्यत इति गम्यते । 'अक्षरात्परतः परः' इत्यत्रापि न प्रकृताद्भूतयोनेरक्षरात्परः कश्चिदभिधीयते । कथमेतदवगम्यते? 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' ( मु० १।२।१३ ) इति प्रकृत्य तस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात् । कथं तर्हि 'अक्षरात्परतः परः' इति व्यपदिश्यत इति उत्तरसूत्रे तद्वक्ष्यामः । अपि चात्र द्वे विद्ये वेदितव्ये उक्ते—'परा चैवापरा च' इति । तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति—'अथ परा यया तदक्षरमधिगम्यते' इत्यादि । तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतम् । यदि पुनः परमेश्वरादन्यददृश्यत्वादिगुणकमक्षरं परिकल्प्येत नेयं परा विद्या स्यात् । परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते । नच प्रधानविद्या

## भामती ।

ततोऽव्याकृतमक्षरम् ॥ ३ ॥ नेह तिरोहितमिवास्ति किंचित् । यत्तु—सारूप्याभावान्न चिदात्मनः परिणामः प्रपञ्च—इति । अद्धा, विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः । अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ १ ॥ न खलु बाह्यसारूप्यनिबन्धन एव सर्वो विभ्रम इति नियमनिमित्तमस्ति; आन्तरादपि कामक्रोधभयोन्मादस्वप्नादेर्मानसादपराधात्सारूप्यानपेक्षात्तस्य तस्य विभ्रमस्य दर्शनात् । अपिच हेतुमति विभ्रमे तदभावादनुयोगो युज्यते । अनाद्यविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हति । तस्मात् परमात्मविवर्ततया प्रपञ्चस्तद्योनिः, भुजङ्ग इव रज्जुविवर्ततया तद्योनिः, न तु तत्परिणामतया । तस्मात्तद्धर्मसर्वविस्त्वोक्तेर्लिङ्गात् 'यत्तदद्रेश्यम्' इत्यत्र ब्रह्मैवोपदिश्यते ज्ञेयत्वेन, नतु प्रधानं जीवात्मा वोपास्यत्वेनेति सिद्धम् । न केवलं लिङ्गादपि तु 'परा विद्या' इति समाख्यानादप्येत-

## वेदान्तकल्पतरुः ।

तस्मान्नामरूपादि जायते इति जगद्योनिभाव उच्यते । उपादानप्रायपाठाच्च पञ्चम्या न निमित्तार्थत्वं तत्र उपादानत्वप्रत्यभिज्ञालिङ्गैनैकवाक्यत्वे सति वाक्यप्रमाणात् सर्वज्ञ एव भूतयोनिरित्यर्थः । विश्वयोनिर्यदक्षरं तत्सर्वविद्भवेदिति विधीयते । यद्यक्षरशब्दवाच्यभूतयोनेः सर्वज्ञत्वं, कथं तर्हि सर्वज्ञस्याक्षरात्परत्वमुक्तं ? तत्राह—**अक्षरादिति** । **यद्** यस्मादर्थे । न च—अक्षरशब्दप्रत्यभिज्ञानाद् भूतयोनिरेवाक्षरादिति निर्दिष्टेति—वाच्यम्; प्रथमश्रुते यः सर्वज्ञ इति वाक्ये सर्वज्ञस्य जगदुपादानत्वप्रत्यभिज्ञयाऽस्य बाध्यत्वात्, येनाक्षरं पुरुषं वेद सत्यमिति पुरुषस्याक्षरशब्देन निर्देक्ष्यमाणत्वाच्च । विवर्तस्त्विति श्लोकस्य द्वितीयार्धं व्याचष्टे—**अपिचेति** । प्रयोजनमाह—**ज्ञेयत्वेनेति** । भोगव्यतिरिक्त इति भाष्यस्य व्याख्या—

## कल्पतरुपरिमलः ।

त्वप्रतिपन्नः सर्वज्ञ एव भूतयोनिरिति वाक्यार्थानुसारेणाक्षरं सर्वविदित्यर्थे सर्वविस्त्वान्वयो विधेयत्वेन विवक्षित इति दर्शयितुं भवेदित्यस्यैव भिन्नक्रमेण योजनां दर्शयति—**विश्वयोनिरिति** । एवं च नाचेतनमिति शेषस्य सर्वविस्त्वलिङ्गविरोधान्नाचेतनं प्रधानं विश्वयोन्यक्षरं, किं तु परमात्मैवेत्यर्थ इत्याशयः । **न चाक्षरशब्देति** । अक्षरात्परत इत्यत्र प्रत्यभिज्ञानं श्रुतिप्रत्यभिज्ञानत्वात् तथाऽक्षरात्संभवतीह विश्वं तथाऽक्षराद्विविधाः सोम्य भावा इत्यतः प्रत्ययकृतस्यापि विशेषस्याभावेन तदैकरूप्यप्रत्यभिज्ञानत्वाच्च सर्वोपादानत्वलिङ्गप्रत्यभिज्ञानाद् बलवदित्याशयः । **प्रथमश्रुते यः सर्वज्ञ इति वाक्ये इति** । लिङ्गप्रत्यभिज्ञानमेव प्राथमिकत्वात्पुंलिङ्गनिर्दिष्टभूतयोनिपरामर्शियच्छब्दरूपसर्वनामश्रुत्यौपसंहारिकाक्षरश्रुतिप्रत्यभिज्ञानुगृहीतत्वात्तस्मादित्युपादानपञ्चमीश्रुतिप्रत्यभिज्ञानुगृहीतत्वाच्च ततो बलवदित्याशयः । **एतेन**—प्राथम्यादरणे ऊर्णनाभ्याद्यचेतनपरिणामिदृष्टान्तीकरणं प्रधानलिङ्गमुपादानत्वलिङ्गप्रत्यभिज्ञापेक्षयाऽपि बलवत्स्यात्तस्य ततोऽपि प्राथमिकत्वादिति शङ्का—**निरस्ता** । **द्वितीयार्धमिति** । द्वितीयार्धं अनादिवासनोद्भूत इत्यंशमित्यर्थः । **ननु** नात्र प्रधानं नामेत्या-

निःश्रेयसफला केनचिदभ्युपगम्यते । तिस्रश्च विद्याः प्रतिज्ञायेरन्; त्वत्पक्षेऽक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात् । द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मु० १।१।३ ) इति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्प्यते, नाचेतनमात्रैकायतने प्रधाने भोग्यव्यतिरिक्ते वा भोक्तरि । अपिच 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' ( मु० १।१।१ ) इति ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षराधिगमनीं दर्शयंस्तस्या ब्रह्मविद्यात्वं दर्शयति । सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यात् । अपरर्ग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रम उपन्यस्यते ब्रह्मविद्याप्रशंसार्थे; 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' ( मु० १।२।७ ) इत्येवमादिनिन्दावचनात् । निन्दित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति—'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ( मु० १।२।१२ ) इति । यत्तूक्तमचेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानाद्दार्ष्टान्तिकेनाप्यचेतनेन भूतयोनिना भवितव्यमिति । तदयुक्तम् । नहि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति । अपिच स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते । तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव ॥ २१ ॥

## विशेषणभेदव्यपदेशाभ्यां नेतरौ ॥ २१ ॥

इतश्च परमेश्वर एव भूतयोनिर्नेतरौ शारीरः प्रधानं वा । कस्मात् ? विशेषणभेदव्यपदेशाभ्याम् । विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन—'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः' ( मु० २।१।२ ) इति । न ह्येतद्दिव्यत्वादिविशेषणमविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनस्तद्धर्मान्स्वात्मनि कल्पयतः शारीरस्योपपद्यते । तस्मात्साक्षादौपनिषदः पुरुष इहोच्यते । तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदि-

### भामती ।

देव प्रतिपत्तव्यमित्याह—**अपिच द्वे विद्ये इति** । लिङ्गान्तरमाह—**कस्मिन्नु भगव इति** । भोगा भोग्यास्तेभ्यो व्यतिरिक्ते भोक्तरि । अवच्छिन्नो हि जीवात्मा भोग्येभ्यो व्यतिरिक्त इति तज्ज्ञानेन न सर्वं ज्ञातं भवति । समाख्यान्तरमाह—**अपिच स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामिति** । **प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशेति** । प्लवन्ते गच्छन्ति अस्थायिन इति **प्लवाः** । अत एवादृढाः । के ते यज्ञरूपाः । रूप्यन्तेऽनेनेति रूपं, यज्ञो रूपमुपाधिर्येषां ते यज्ञरूपाः । ते तु षोडशर्त्विजः । ऋतुयजनेनोपाधिना ऋत्विक्शब्दः प्रवृत्त इति यज्ञोपाधय ऋत्विजः । एवं यजमानोऽपि यज्ञोपाधिरेव । एवं पत्नी; '**पत्युर्नो यज्ञसंयोगे**' इति स्मरणात् । त एतेऽष्टादश यज्ञरूपाः, येष्वृत्विगादिपूक्तं कर्म यज्ञः । यदाश्रयो यज्ञ इत्यर्थः । तच्च कर्मावरं; स्वर्गाद्यवरफलत्वात् । **अपियन्ति** प्राप्नुवन्ति । **नहि दृष्टान्तदार्ष्टान्तिकयोः** इत्युक्ताभिप्रायम् ॥२१॥ **विशेषणभेदव्यपदेशाभ्यां च नेतरौ** । विशेषणं हेतुं व्याचष्टे—**विशिनष्टि हीति** । शारीरादित्युपलक्षणम् । प्रधानादित्यपि द्रष्टव्यम् । भेदव्यपदेशं व्याचष्टे—**तथा प्रधानाद-**

### वेदान्तकल्पतरुः ।

**भोगा इति । ननु** ऋतुषु यजन्तीति कर्तरि क्विपि संप्रसारणे ऋत्विक्शब्दः । यज्ञसंयोगे गम्यमाने पतिशब्दप्रातिपदिकस्य नकारादेशः, स इकारस्यान्त्यस्य, ततो ङीपि कृते पत्नी । **उक्ताभिप्रायमिति** । विवर्तत्वेन सारूप्यानपेक्षेत्युक्तोऽभिप्रायः ॥ २१ ॥ **प्रधानादित्यपीति** । यद्यपि भाष्ये शारीरप्रधाननिराकरणतया हेतुद्वयं क्रमेण व्याख्यातं; तथापि पुरुषशब्दस्य प्रधानव्यावर्तकत्वादाद्यहेतुरपि प्रधानवारणार्थ इति ॥ अक्षरमव्याकृतमित्यादिभाष्यस्यायमर्थः । शब्दार्थयोर्बीजमधिष्ठानं तस्य शक्तिः सहकारित्वात् । सा चेश्वरमाश्रयते विषयीकरोतीति ईश्वराश्रया । तस्याधिष्ठानत्वे उपाधिभूतावच्छेदिका, शुक्तेरिव तद्विषयमज्ञानम् । अविकार इति च्छेदः । तस्माद्वाचस्पतिमतं भाष्यविरुद्धमिति कैश्चिदयुक्तमुक्तम् । **किंच—अज्ञत्वभ्रान्ततादोषादरक्षत्परमेश्वरम् । एतद्भाष्यार्थतत्त्वज्ञो वाचस्पतिरगाधधीः** ॥ प्रधानस्यागमिकत्वे प्रकृतिविकार-

### कल्पतरुपरिमलः ।

दिभाष्येण सांख्यैरनुमानकल्प्यत्वेनोक्तं स्वतन्त्रं प्रधानं नाभ्युपगम्यत इत्युक्तं, तत्र को हेतुरित्याकाङ्क्षायामाह—**प्रधानस्यागमिकत्वेनेति** । कल्पनाया दृष्टानुसारित्वात् प्रकृतिविकारसारूप्यकृत्स्नप्रसक्त्यादिदोषो दुष्परिहरः स्यादित्यर्थः ॥

शति—'अक्षरात्परतः परः' इति । अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात्परो योऽविकारस्तस्मात्परतः पर इति भेदेन व्यपदेशात्परमात्मानमिह विवक्षितं दर्शयति । नात्र प्रधानं नाम किंचित्स्वतन्त्रं तत्त्वमभ्युपगम्य तस्माद्भेदव्यपदेश उच्यते । किं तर्हि ? यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत परिकल्प्यताम् । तस्माद्भेदव्यपदेशात्परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते ॥ २२ ॥ कुतश्च परमेश्वरो भूतयोनिः—

## रूपोपन्यासाच्च ॥ २३ ॥

अपिच 'अक्षरात्परतः परः' इत्यस्यानन्तरम् 'एतस्माज्जायते प्राणः' इति प्राणप्रभृतीनां पृथिवीपर्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः—'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' (मु० २।१।४) इति तच्च परमेश्वरस्यैवोचितं; सर्वविकाराकारणत्वात् । न शारीरस्य तनुमहिम्नः । नापि प्रधानस्यायं रूपोपन्यासः संभवति; सर्वभूतान्तरात्मत्वासंभवात् । तस्मात्परमेश्वर एव भूतयोनिर्नेतराविति गम्यते । कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते? प्रकरणात्, 'एषः' इति च प्रकृतानुकर्षणात् । भूतयोनिं हि प्रकृत्य 'एतस्माज्जायते प्राणः' 'एष सर्वभूतान्तरात्मा' इति वचनं भूतयोनिविषयमेव भवति । यथोपाध्यायं प्रकृत्यैतस्मादधीष्वैष वेदवेदाङ्गपारग इति वचनमुपाध्यायविषयं भवति, तद्वत् । कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं संभवति? सर्वात्मत्वविवक्षयेदमुच्यते, नतु विग्रहवत्त्वविवक्षयेत्यदोषः । 'अहमन्नमहमन्नादः' (तै० ३।१०।६) इत्यादिवत् । अन्ये पुनर्मन्यन्ते—नायं भूतयोने रूपोपन्यासः; जायमानत्वेनोपन्यासात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति हि पूर्वत्र प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत् । उत्तरत्रापि च 'तस्मादग्निः समिधो यस्य सूर्यः' इत्येवमादि 'अतश्च सर्वा ओषधयो रसाश्च' इत्येवमन्तं जायमानत्वेनैव निर्देक्ष्यति । इहैव कथमकस्मादन्तराले भूतयोने रूपमुपन्यसेत् । सर्वात्मत्वमपि सृष्टिं परिसमाप्योपदेक्ष्यति—'पुरुष एवेदं विश्वं कर्म' (मु० २।१।१०) इत्यादिना । श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्मादि निर्दिश्यमानमुपलभामहे—'हिरण्यगर्भः समवर्तताग्रे भूतस्य

---

### भामती ।

पीति । स्यादेतत्—किमागमिकं सांख्याभिमतं प्रधानं, तथाच बहुसमञ्जसं स्यादित्यत आह—**नात्र प्रधानं नाम किंचिदिति** ॥ २२ ॥ **रूपोपन्यासाच्च** । तदेतत्परमतेनाक्षेपसमाधानाभ्यां व्याख्याय स्वमतेन व्याचष्टे—**अन्ये पुनर्मन्यन्त इति** । पुनःशब्दोऽपि पूर्वस्माद्विशेषं द्योतयन्नस्येष्टतां सूचयति । जायमानवर्गमध्यपतितस्याग्निमूर्धादिरूपवतः सति जायमानत्वसंभवे नाकस्माज्जनकत्वकल्पनं युक्तम् । प्रकरणं खल्वेतद्विश्वयोनेः, संनिधिश्च जायमानानाम् । संनिधेश्च प्रकरणं बलीय इति जायमानपरित्यागेन विश्वयोनेरेव प्रकरणिनो रूपाभिधानमितिचेत्, न; प्रकरणिनः शरीरेन्द्रियादिरहितस्य विग्रहवत्त्वविरोधात् । न च—एतावता मूर्धादिश्रुतयः प्रकरणविरोधात्स्वार्थत्यागेन

### वेदान्तकल्पतरुः ।

सारूप्यादि बहु समञ्जसं स्यादित्यर्थः । असमञ्जसमिति पाठे चेतनस्य जगदुपादानत्वादि असमंजसं स्यादित्यर्थः ॥ २२ ॥ **रूपोपन्यासाच्च** । नेतरावित्यनुषङ्गः । भाष्ये अदृश्यत्वादिधर्मकस्य न विग्रह इत्याक्षेपः । सर्वात्मत्वविवक्षयेति समाधानम् । जायमानसंनिधिलक्षणस्थानस्य प्रकरणेन बाधमाशङ्क्य विग्रहवत्त्वलिङ्गेन प्रकरणबाधमाह—**नेति** । ईश्वरस्यापि हिरण्यश्मश्रुत्वादिवद् मूर्धादिसंभव इति कश्चित् । **तन्न**; अपाणिपादमिति निर्विशेषस्य ज्ञेयत्वेन प्रक्रमाद्धिरण्मयस्योपास्यत्वेन विग्रहाद्यविरोधात् । प्राकृतपाण्यादिनिषेध एष इति चेन्न; प्रथमस्य चरमेणासंकोचादिति । लिङ्गं सार्वात्म्यपरं न शरीरादिमत्त्वपरमित्याशङ्क्य तथा सति मूर्धादिबहुश्रुतीनां बाधः स्यात्, तासु प्रकरणाद्बलीयस्य इत्याह—**न चैतावतेति** । प्रकरणमा-

### कल्पतरुपरिमलः ।

**मूर्धादिबहुश्रुतीनामिति** । **ननु**—मूर्धादिश्रुतिविरोधो हिरण्यगर्भपक्षेऽपि तुल्यः, न हि तं प्रत्यपि द्युप्रभृतयः संस्थानविशेषाभिव्यङ्ग्यमूर्धत्वादिजातियुक्ता भवितुमर्हन्ति; सर्वात्मत्वविवक्षायां तथात्वकल्पनं तु परमात्मानं प्रत्यपि समानं,

जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम' ( ऋ० सं० १०।१२१।१ ) इति । समवर्ततेत्यजायतेत्यर्थः । तथा 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति च । विकारपुरुषस्यापि सर्वभूतान्तरात्मत्वं संभवति; प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात् । अस्मिन्पक्षे 'पुरुष एवेदं

## भामती ।

सर्वात्मतामात्रपरा इति—युक्तम्; श्रुतेरत्यन्तविप्रकृष्टार्थात्प्रकरणाद्बलीयस्त्वात् । सिद्धे च प्रकरणिनाऽसंबन्धे जायमानमध्यपातित्वं जायमानग्रहणे कारणमुपन्यस्तं भाष्यकृता । तस्माद्धिरण्यगर्भ एव भगवान् प्राणात्मना सर्वभूतान्तरः कार्यो निर्दिश्यत इति सांप्रतम् । तत्किमिदानीं सूत्रमनवधेयमेव, नेत्याह—अस्मिन्पक्ष इति । प्रकरणात्

## वेदान्तकल्पतरुः ।

त्रेणेत्यर्थः । एवंच हृदयं विश्वमस्य एष सर्वभूतान्तरात्मेति चात्रत्ये सर्वनामनी संनिहिततरं विग्रहवन्तं गृह्णीतो न भूतयोनिमिति । लिङ्गनिरुद्धे प्रकरणे संनिधिर्विजयते इत्याह—सिद्धे चेति । पुरुष एवेदमित्यादिसर्वरूपत्वोपन्यासोऽपि द्युमूर्धादिकस्यैवास्तु तस्य संनिहिततरत्वादत आह—प्रकरणादिति । संनिधेः प्रकरणस्य बलीयस्त्वात्पूर्ववद्बाधकलिङ्गाभावाच्चेत्यर्थः ॥ ऊर्णनाभिर्लूताकीटस्तन्तून् सृजते संहरति च । सतो जीवतः । येन ज्ञानेन अक्षरं पुरुषं वेद तां ब्रह्मविद्यामुपसन्नाय प्रोवाच प्रब्रूयात् । सर्वविद्यावेद्यवस्त्वधिष्ठानविषयत्वात्सर्वविद्याप्रतिष्ठा । कर्मनिर्मितान्परीक्ष्य ब्राह्मणो निर्वेदमायात्कुर्यादित्यर्थः । गच्छेदिति वाक्यशेषाद्वैराग्यहेतुमाह—इह संसारेऽकृतो लोको नास्ति किं कृतेन कर्मणेत्यध्याहारः ।

## कल्पतरुपरिमलः ।

प्रत्युत परमात्मनो मुख्यं सार्वात्म्यं, हिरण्यगर्भस्य तु सर्वप्राणाधिष्ठानत्वादधिष्ठात्रधिष्ठेययोरभेदोपचारात् प्राणात्मना सर्वभूतानुगतत्वरूपं सार्वात्म्यं कथंचिदमुख्यं कल्पनीयत्; अतो मुख्यसार्वात्म्यावलम्बनं मूर्धादिकल्पनं परमात्मन्येव समञ्जसं न ततोऽन्यत्र । अत एवाग्रिमाधिकरणे देवतापक्षनिराकरणार्थं भाष्यं—देवतायाः सत्यप्यैश्वर्ये न द्युमूर्धत्वादिकल्पनं संभवति; अकारणत्वादिति । न च—कल्पनमपि श्रुतापाणिपादत्वादिविरुद्धस्य रूपवत्त्वस्य न युज्यत इति—वाच्यम्; शाण्डिल्यविद्यायामुपासनार्थं श्रुतज्यायस्त्वविरुद्धाणीयस्त्वकल्पनादर्शनात्, न च—तथा कल्पनमप्युपासनार्थे सगुणे एव युज्यते न निर्गुणे इति—वाच्यम्; निर्गुणेऽपि सार्वात्म्यप्रतिपत्त्यर्थं तत्कल्पनोपपत्तेः, तस्मिन्नपि प्रतिपत्त्युपायतया प्रियशिरस्त्वरथरथिभावादिकल्पनादर्शनात्, सगुणे संभवतस्तस्य निर्गुणप्रकरणेऽपि स्तुत्यर्थं तदुपन्यासोपपत्तेश्च, निर्विशेषब्रह्मप्राप्तिफलभूमविद्याप्रकरणे स एकधा भवतीत्यादिना सविशेषणसगुणविद्याफलेन स्तुतिदर्शनादिति—चेत्, सत्यम्; अन्ये पुनरित्यादिभाष्येण येषां मतमुपन्यस्तं तेषामित्थमाशय इत्याचार्यैस्तदाशयः परं वर्णितः । स्वाभिमतं तु द्युमूर्धत्वादिकल्पनमेव । अत एवाचार्यैर्हृदयं विश्वमित्यत्र हृदयं मन इति व्याख्याय विश्वस्य मनस्त्वकल्पनायां हेतुः संबन्धो दर्शितस्तन्मनसा सृष्टत्वादिति । न चाग्निर्मूर्धेति मन्त्रस्य परमात्मपरतायां यस्याग्निरास्यमित्यादिस्मृतीनामेतन्मूलत्वसंभवेन स्मर्यमाणमनुमानं स्यादित्यग्रिमाधिकरणसूत्रविरोधः शङ्कनीयः; अस्य हिरण्यगर्भपरतायामपि तासां पुरुषसूक्तमूलत्वशङ्कानपायेन "तस्य हवा एतस्य"त्यादिवैश्वानरविद्यागतवाक्यमूलत्वासिद्ध्या तद्विरोधतादवस्थ्यात् । नच—पुरुषसूक्ते द्युप्रभृतीनां शीर्षादिभ्यो जननश्रवणं स्मृतिषु तत्तादात्म्यस्मरणमिति न तासां पुरुषसूक्तमूलत्वशङ्कावकाश इति—वाच्यम्; अग्निर्मूर्धेति मन्त्रेऽपि पद्भ्यां पृथ्वीति श्रवणात् तत्र चैतस्माज्जायते प्राण इति पूर्वमन्त्रगतस्य जायत इत्यस्य तस्मादग्निः समिधो यस्य सूर्य इत्युत्तरमन्त्रेऽप्यनुवर्तिष्यमाणस्यानुवृत्त्यौचित्येन पद्भ्यां पृथ्वी जायत इत्यर्थलाभात् । यद्युच्येत अग्निर्मूर्धेत्यादिसामानाधिकरण्यं पद्भ्यां पृथ्वीति वैयधिकरण्यं चेत्युभयमुभयत्राप्युपलक्षणम् । तथाच द्युप्रभृतिकं सर्वमूर्धाद्यवयवतादात्म्येन मूर्धाद्यवयवजातत्वेन चोपासनीयमिति तादात्म्योपासनांशमपेक्ष्य स्मृतिमूलत्वं प्रामुयादिति, तथोपलक्षणत्वकल्पनं पुरुषसूक्तेऽपि तुल्यम्; तत्रापि ब्राह्मणोऽस्य मुखमासीदित्यादिसामानाधिकरण्यश्रवणात् । तस्मात्पुरुषसूक्तस्य स्मृतिमूलत्वसंभवेऽपि विनिगमनाविरहाद् वैश्वानरवाक्यमपि तन्मूलं भवेदित्याशयमेव स्मर्यमाण ( व्या. सू. अ. १ पा. २ सू. २५ ) सूत्रमुपपादनीयम् । तथोपपादनमग्निर्मूर्धेति मन्त्रस्य तन्मूलत्वेऽपि तुल्यम् । किंचास्यापि मन्त्रस्य स्मृतिमूलत्वमवश्यं वाच्यम्; चन्द्रसूर्यौ च नेत्रे इति स्मृत्यंशार्थस्य पुरुषसूक्तवैश्वानरविद्याभ्यामलाभात् । तस्मादयं मन्त्रः परमात्मपर इत्येव भाष्यकारमतम् । स्वमतमुपन्यस्यतीति भाष्यकारमतत्वेन टीकायामवतारणं तु ज्ञेये परब्रह्मणि रूपोपन्यासाङ्गीकारे रूपवत्त्वं पारमार्थिकं स्यादिति बिभ्यतां परितुष्ट्यर्थम् । वस्तुतस्तु—सुतलं चरणद्वन्द्वं पृथ्वी जघनमण्डली । यत्कीर्तेर्मध्यमाकाशं सुमनोवासभूः शिरः ॥ इति लोके कीर्तेः सर्वगतत्वप्रतिपत्त्यर्थं पातालचरणत्वादीनामिव ब्रह्मणः सर्वात्मत्वप्रतिपत्त्यर्थं द्युमूर्धत्वादीनां कल्पनेत्येवं टीकाकाराणामप्यभिमतमित्यनुसंधेयम् ॥ आयादित्यत्र लङो लिङर्थत्वकल्पनायां प्रमाणमाह—गच्छेदिति वाक्यशेषादिति । अध्याहार इति । किंशब्दाध्याहार इत्यर्थः । कृतेन

विश्वं कर्म' इत्यादिसर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम् ॥ २३ ॥ इति षष्ठमदृश्यत्वाधिकरणम् ॥

( ७ अधिकरणम् ) **वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥**

**'को न आत्मा किं ब्रह्म' इति, 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' ( छा० ५।११।१,६ ) इति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैको-**

भामती ।

॥ २३ ॥ **इति षष्ठमदृश्यत्वाधिकरणम् ॥**

**वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥**

प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः समेत्य मीमांसां चक्रुः—**को न आत्मा किं ब्रह्मेति** । आत्मेत्युक्ते जीवात्मनि प्रत्ययो मा भूदत उक्तं किं ब्रह्मेति । ते च मीमांसमाना निश्चयमनधिगच्छन्तः कैकेयराजं वैश्वानरविद्याविदमुपसेदुः । उपसद्य चोचुः—**आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि** स्मरसि **तमेव नो ब्रूहीत्युपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनामिति । अयमर्थः**—वैश्वानरस्य भगवतो द्यौर्मूर्धा सुतेजाः । चक्षुश्च विश्वरूपः सूर्यः । **प्राणो वायुः । पृथग्वर्त्मात्मा** पृथक् वर्त्म यस्य वायोः स पृथग्वर्त्मा स एवात्मा स्वभावो यस्य स पृथग्वर्त्मात्मा । **संदेहो** देहस्य मध्यभागः । स आकाशो बहुलः; सर्वगतत्वात् । बस्तिरेव **रयिः** आपः, यतोऽद्भ्योऽन्नमन्नाच्च रयिर्धनं तस्मादापो रयिरुक्तास्तासां च मूत्रीभूतानां बस्तिः स्थानमिति बस्तिरेव रयिरित्युक्तम् । पादौ पृथिवी, तत्र प्रतिष्ठानात् । तदेवं वैश्वानरावयवेषु द्युसूर्यानिलाकाशजलावनिषु मूर्धचक्षुःप्राणसंदेहबस्तिपादेष्वेकैकस्मिन् वैश्वानरबुद्ध्या विपरीततयोपासकानां

वेदान्तकल्पतरुः ।

अतोऽकृतज्ञानार्थं दिवि स्वात्मनि प्रकाशरूपे भवो दिव्यः बाह्याभ्यन्तरसहितः सर्वात्मेति यावत् । क्रियाविज्ञानशक्तिमन्मनः प्राणरहितः । बाह्येन्द्रियनिषेधोऽप्युपलक्षितः । अत एव शुभ्रः शुद्धः; अग्निर्वौः असौ वाव लोको गोतमाग्निरिति श्रुतेः, स मूर्धा अस्येति सर्वत्र संबन्धः । यस्येत्यर्थे अस्यशब्दः । **विवृता** उद्घाटिताः प्रसिद्धाः वेदाः यस्य, वाक् वायुर्यस्य प्राणः विश्वं यस्य, हृदयं मनस्तन्मनसा सृष्टत्वाद् विश्वस्य, पादरूपेण पृथिवी यस्य जाता, एष सर्वभूतगतप्राणानां समष्टितया सर्वभूतान्तरात्मा । एतस्माज्जायते इत्यनुषङ्गः । तस्मात्परमात्मनोऽग्निर्द्युलोको जायते यस्य सूर्यः समिधः; असौ वाव लोकोऽग्निस्तस्यादित्य एव समिदिति श्रुतेः । स **दाधार** दधार । **कस्मै** ब्रह्मणे ॥ **इति षष्ठमदृश्यत्वाधिकरणम् ॥**

**वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥**

अत्र वैश्वानरः किमनात्मा, किं वा आत्मा, अनात्मत्वे जाठरोऽन्यो वा, आत्मत्वेऽपि जीवः परो वेति संदेहः । **सार्वात्म्यरूपोपन्यासादक्षरं ब्रह्म वर्णितम् । जाठरादावनैकान्त्यशङ्का तस्य निरस्यते ॥** को न आत्मेत्युदाहरणभाष्यं छान्दोग्याख्यायिकार्थानुसन्धानेन व्याचष्टे—**प्राचीनशालेत्यादिना** । उद्दालकोऽप्युपलक्ष्यते । जन इति ऋषिनामैव । **आत्मेत्युक्ते इति** । ब्रह्मेत्युक्ते तत्पारोक्ष्यनिवृत्त्यर्थमात्मपदमित्यपि द्रष्टव्यम् । इक् स्मरण इत्यस्य

कल्पतरुपरिमलः ।

कर्मणा अकृतो लोको नास्तीति योजनायां लोकत्वावच्छिन्नः सर्वोऽपि कृतक इति परीक्षास्वरूपालाभाच्च नास्त्यकृत इति भिन्नवाक्यं कृत्वा वाक्यद्वयस्यापेक्षितलोककिंशब्दाध्याहारेण पूरणं कृतम् । **अतोऽकृतज्ञानार्थमिति । अकृतं** ब्रह्म । **यस्येत्यर्थे इति ।** अस्यशब्दस्य हिरण्यगर्भपक्षे प्रकृतपरामर्शित्वाभावाद् एष सर्वभूतान्तरात्मेति प्रकरिष्यमाणपरामर्शसामञ्जस्यार्थं यस्येत्यर्थे वृत्तिरुक्ता । **कस्मै** । एकस्मा इत्यर्थः । एको देवोऽत्र ब्रह्मैवेत्यर्थतो ब्रह्मण इति व्याख्यातम् । **इति षष्ठमदृश्यत्वाधिकरणम् ॥**

**वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥**

**जाठरोऽन्यो वेति** । अन्यशब्देन भूतदेवतापक्षौ संगृहीतौ । **ननु**—अत्रादित्यो वैश्वानर इत्यपि पूर्वपक्षः संभवति; प्रश्नोपनिषदि स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत इत्यादित्येऽप्यग्निवैश्वानरश्रुतिदर्शनात्, तदनन्तरं "तदेतदृचाऽभ्युक्त"मित्युपक्रम्य सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्य इति सौरमन्त्रस्य वैश्वानरविषयत्वेनोदाहरणात्, तत्र स एष इति सर्वनाम्नोरादित्यो ह प्राण इति प्रकृतादित्यपरत्वाच्चेति—**चेद्, उच्यते,** यत्र परमात्मनोऽन्यस्मिन्नग्निवै-

१ तत्र सूत्राणि ३—अदृश्यत्वादिगुणको धर्मोक्तेः २१ विशेषणभेदव्यपदेशाभ्यां च नेतरौ २२ रूपोपन्यासाच्च २३ ॥

पासननिन्दया च वैश्वानरं प्रत्येषां मूर्धादिभावमुपदिश्याम्नायते—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा० ५।१८।२) इत्यादि। तत्र संशयः—किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यते, उत भूताग्निरथ तदभिमानिनी देवता, अथवा शारीरः, आहोस्वित्परमेश्वर इति। किं पुनरत्र संशयकारणम्। वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयोः। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः। किं तावत्प्राप्तं? जाठरोऽग्निरिति। कुतः? तत्र हि विशेषेण क्वचित्प्रयोगो दृश्यते—'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते' (बृ० ५।९) इत्यादौ। अग्निमात्रं वा स्यात्; सामान्येनापि प्रयोगदर्शनात्, 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' (ऋ० सं० १०।८८।१२) इत्यादौ। अग्निशरीरा वा देवता स्यात्; तस्यामपि प्रयोगदर्शनात्। 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' (ऋ० सं० १।९८।१) इत्येवमाद्यायाः श्रुतेर्देवतायामैश्वर्याद्युपेतायां संभवात्। अथात्मशब्दसामानाधिकरण्यादुपक्रमे च 'को न आत्मा किं ब्रह्म' इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन च वैश्वानरशब्दः परिणेय इत्युच्यते, तथापि शारीर आत्मा स्यात्; तस्य भोक्तृत्वेन वैश्वानरसंनिकर्षात्, प्रादेशमात्रमिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात्, तस्मान्नेश्वरो वैश्वानर इत्येवं प्राप्ते तत इदमुच्यते—वैश्वानरः परमात्मा भवितुमर्हतीति। कुतः? साधारणशब्दविशेषात्। साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः। यद्यप्येता-

## भामती।

प्राचीनशालादीनां मूर्धपातान्धत्वप्राणोत्क्रमणदेहशीर्णताबस्तिभेदपादश्लथीभावदूषणैरुपासनानां निन्दया मूर्धादिसमस्तभावमुपदिश्याम्नायते—'**यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्**' इति। स **सर्वेषु लोकेषु** द्युप्रभृतिषु **सर्वेषु भूतेषु** स्थावरजङ्गमेषु, **सर्वेष्वात्मसु** देहेन्द्रियमनोबुद्धिजीवेष्वन्नमत्ति। सर्वसंबन्धिफलमाप्नोतीत्यर्थः। अथास्य वैश्वानरस्य भोक्तुर्भोजनस्याग्निहोत्रतासंपिपादयिषयाह श्रुतिः—**उर एव वेदिः**; वेदिसारूप्यात्। **लोमानि बर्हिः**;

## वेदान्तकल्पतरुः।

रूपमध्येषीति। द्युसूर्येत्यादिभाष्यमादाय व्याचष्टे—**वैश्वानरस्येत्यादिना**। सुतेजस्त्वगुणा द्यौर्वैश्वानरस्य मूर्धा विश्वरूपत्वगुणः सूर्यः; एष शुक्ल एष नील इत्यादिश्रुतेः। स वैश्वानरस्य चक्षुः। पृथग्गतिमत्त्वगुणो वायुः प्राणः। बहुलत्वगुण आकाशो देहमध्यम्। **रयिर्धनम्**। तद्गुणा आपो बस्तिस्थम् उदकम्; तत्र पृथिव्यां वैश्वानरस्य प्रतिष्ठानात्। **मूर्धपातादिदूषणैरुपासनानां निन्दयेति**। मूर्धा ते व्यपतिष्यदित्यादिनैकैकोपासननिन्दया तस्य हवा एतस्येत्यादिना वैश्वानरस्य द्युलोकादयो मूर्धादय इति कथनेनावयविनः समस्तभावमुपदिश्येत्यर्थः। उपासक एव वैश्वानरोऽहमिति मन्यत इति—

## कल्पतरुपरिमलः।

श्वानरशब्दौ पूर्वपक्षिणः सिद्धान्तिनश्च संप्रतिपन्नौ स पूर्वपक्षीकर्तव्यः। न च तत्रादित्ये सिद्धान्तिनस्तौ संप्रतिपन्नौ; वैश्वानरविद्यायामिव तत्राप्यग्निसंदर्भानुसारेण तयोः परमात्मपरत्वात्, "अथेतरेण तपसा श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजायते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तत" इति अग्रे श्रवणात्। अनेन संदर्भेण सर्वप्राणसमष्टिभूतत्रैलोक्यशरीरहिरण्यगर्भरूपापन्नादित्यन्तर्यामिणं परमात्मानमुपासीनस्य तत्प्राप्तिरपुनरावृत्तिफलोच्यत इत्येतत् "अन्तर उपपत्ते (व्यास सू. अ. १ पा. २ सू. १४) रित्यधिकरणावसानकृतेनाचार्यव्याख्यानेन स्पष्टम्। अतो यद्यपि वैश्वानरविद्यायामिव तत्राप्यग्निवैश्वानरशब्दावन्यपराविति पूर्वपक्षी मन्येत, तथापि सिद्धान्तिनो न तत्संप्रतिपत्तिरस्तीति तथा पूर्वपक्षो भाष्यटीकयोर्न कृतः। यदि तु "वैश्वानरं केतुमह्नामकृण्वन् यो भानुना पृथिवीं द्यामुतेमा"मित्यादिमन्त्रानुसारेण अग्निरेवादित्य इति अग्निवाचकावेव सन्तावग्निवैश्वानरशब्दावादित्येऽपि प्रवृत्ताविति पूर्वपक्षी मन्येत, तदाऽग्निपूर्वपक्षेणैवादित्यपूर्वपक्षोऽपि लब्ध इति तस्य पृथगप्रदर्शनम्। तस्यापि पृथक्प्रदर्शनीयत्वे भाष्यटीकयोर्जाठरादिपक्षप्रदर्शनं तस्याप्युपलक्षणार्थम्। अत एवाचार्यैरन्यो वेति सामान्येन पक्षान्तराणां निर्देशः कृतः॥ **देहमध्यमिति**। सम्यगुपचितो देह इति व्युत्पत्त्या संदेहशब्दो नाभिकण्ठमध्यवाची। **वैश्वानरोहमिति मन्यत इतीति**। अहंग्रहोपास-

वुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ, वैश्वानरशब्दस्तु त्रयस्य साधारणः, आत्मशब्दश्च द्वयस्य; तथापि विशेषो दृश्यते, येन परमेश्वरपरत्वं तयोरभ्युपगम्यते, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिः। अत्र हि परमेश्वर एव द्युमूर्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते; कारणत्वात्। कारणस्य हि सर्वाभिः कार्यगताभिरवस्थाभिरवस्थावत्त्वाद्द्युलोकाद्यवयवत्वमुपपद्यते। 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे संभवति। 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा० ५।२४।३) इति च तद्विदः सर्वपाप्मप्रदाहश्रवणम्, 'को न आत्मा किं ब्रह्म' इति चात्मब्रह्मशब्दाभ्यामुपक्रम इत्येवमेतानि लिङ्गानि परमेश्वरमेवावगमयन्ति। तस्मात्परमेश्वर एव वैश्वानरः॥ २४॥

## स्मर्यमाणमनुमानं स्यादिति॥ २५॥

इतश्च परमेश्वर एव वैश्वानरः, यस्मात्परमेश्वरस्यैवाग्निरास्यं द्यौर्मूर्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते—'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः। सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः॥' इति। एतत्स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेऽनुमानं लिङ्गं गमकं स्यादित्यर्थः। इतिशब्दो हेत्वर्थः। यस्मादिदं गमकं तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः। यद्यपि स्तुतिरियं 'तस्मै लोकात्मने नमः' इति। स्तुतित्वमपि नासति मूलभूते वेदवाक्ये सम्यगीदृशेन रूपेण संभवति। 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता॥' इत्येवंजातीयका च स्मृतिरिहोदाहर्तव्या॥ २५॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते॥ २६॥

अत्राह—न परमेश्वरो वैश्वानरो भवितुमर्हति। कुतः? शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च।

### भामती।

आस्तीर्णबर्हिःसारूप्यात्। **हृदयं गार्हपत्यः**। हृदयानन्तरं **मनोऽन्वाहार्यपचनः। आस्यमाहवनीयः**। तत्र हि तदन्नं हूयते॥२४॥ **ननु** 'को न आत्मा किं ब्रह्म' इत्युपक्रमे आत्मब्रह्मशब्दयोः परमात्मनि रूढत्वेन तदुपरक्तायां बुद्धौ वैश्वानराग्न्यादयः शब्दास्तदनुरोधेन परमात्मन्येव कथंचिन्नेतुं युज्यन्ते, नतु प्रथमावगतौ ब्रह्मात्मशब्दौ चरमावगतवैश्वानरादिपदानुरोधेनान्यथयितुं युज्येते। यद्यपि च वाजसनेयिनां वैश्वानरविद्योपक्रमे 'वैश्वानरं ह वै भगवान् संप्रति वेद तं नो ब्रूहि' इत्यत्र नात्मब्रह्मशब्दौ स्तः; तथापि तत्समानार्थं छान्दोग्यवाक्यं तदुपक्रममिति तेन निश्चितार्थेन तदविरोधेन वाजसनेयिवाक्यार्थो निश्चीयते। निश्चितार्थेन ह्यनिश्चितार्थं व्यवस्थाप्यते, नानिश्चितार्थेन निश्चितार्थम्। कर्मवच्च ब्रह्मापि सर्वशाखाप्रत्ययमेकमेव। नच द्युमूर्धत्वादिकं जाठरभूताग्निदेवताजीवात्मनामन्यतमस्यापि संभवति। नच सर्वलोकाश्रयफलभागिता। नच सर्वपाप्मप्रदाह इति पारिशेष्यात्परमात्मैव वैश्वानर इति निश्चिते कुतः पुनरियमाशङ्का—**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेदिति। उच्यते**—तदेवोपक्रमानुरोधेनान्यथा नीयते, यन्नेतुं

### वेदान्तकल्पतरुः।

**वैश्वानरस्य भोक्तुरि**त्युक्तम्। हृदयाद्धि मनः प्रणीतमिव। इतः प्रणयनावधित्वाद् हृदयं गार्हपत्यः, अतएव तदनन्तरत्वान्मनोऽन्वाहार्यपचन इत्याह—**हृदयानन्तरमिति**॥२४॥ पूर्वपक्षमाक्षिपति—**नन्वित्यादिना**। निश्चितार्थच्छान्दोग्यवाक्येन तदेकार्थं वाजसनेयिवाक्यं निर्णीयते, न विपर्यय इत्यत्र न्यायमाह—**निश्चितार्थेन हीति**। यथा हि तं चतुर्धा कृत्वा बर्हिषदं करोतीति पुरोडाशमात्रचतुर्धाकरणवाक्यमेकार्थसंबन्धिना शाखान्तरीयेणाग्नेयं चतुर्धा करोतीति विशेषविषयत्वेन निश्चितार्थेनाग्नेय एव पुरोडाशो व्यवस्थाप्यते, एवमत्रापीत्यर्थः। **अथ** दर्शपूर्णमासकर्मणः शाखाभेदेऽप्यभेदात्तत्र तथा, तद्ब्रह्मत्रापि सममित्याह—**कर्मवदिति**। न केवलमुपक्रमाद्ब्रह्मनिर्णयः, उपसंहारादपीत्याह—**न च द्युमूर्धत्वादि**-

### कल्पतरुपरिमलः।

कत्वात् को न आत्मेत्युपक्रमाच्चेति भावः॥ **हृदयाद्धीति**। सुषुप्तौ हृदये निलीनं मनः प्रबोधे ततो निष्क्रामत् प्रणीतमिव भवतीत्यर्थः॥ **यथा हीति**। यद्यप्यपूपविशेषरूपव्यवस्थितैकार्थवाचिपुरोडाशशब्दो निश्चितार्थ एव, न त्वनेकार्थसा-

शब्दस्तावद्वैश्वानरशब्दो न परमेश्वरे संभवति, अर्थान्तरे रूढत्वात्। तथाग्निशब्दः 'स एषोऽग्निर्वैश्वानरः' इति। आदिशब्दात् 'हृदयं गार्हपत्यः' (छा० ५।१८।२) इत्याद्यग्नित्रेताप्रकल्पनम्। 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' (छा० ५।१९।१) इत्यादिना च प्राणाहुत्यधिकरणतासंकीर्तनम्। एतेभ्यो जाठरो वैश्वानरः प्रत्येतव्यः। तथान्तःप्रतिष्ठानमपि श्रूयते—'पुरुषेऽन्तःप्रतिष्ठितं वेद' इति। तच्च जाठरे संभवति। यदप्युक्तं, मूर्धैव सुतेजा इत्यादेर्विशेषात्कारणात्परमात्मा वैश्वानर इति, अत्र ब्रूमः—कुतो ह्येष निर्णयः, यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति। अथवा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यैष निर्देशो भविष्यति। तस्यापि हि द्युलोकादिसंबन्धो मन्त्रवर्णादवगम्यते —'यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्' (ऋ० सं० १०।८८।३) इत्यादौ। अथवा तच्छरीराया देवताया ऐश्वर्ययोगाद्द्युलोकाद्यवयवत्वं भविष्यति। तस्मान्न परमेश्वरो वैश्वानर इति। अत्रोच्यते—न तथादृष्ट्युपदेशादिति। न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम्। कुतः? तथा जाठरापरित्यागेन दृष्ट्युपदेशात्। परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यते, 'मनो ब्रह्मेत्युपासीत' (छा० ३।१८।१) इत्यादिवत्। अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते, 'मनोमयः प्राणशरीरो भारूपः' (छा० ३।१४।२) इत्यादिवत्। यदि चेह परमेश्वरो न विवक्ष्येत केवल एव जाठरोऽग्निर्विवक्ष्येत ततो मूर्धैव सुतेजा इत्यादेर्विशेषस्यासंभव एव स्यात्। यथा तु देवताभूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते, तथोत्तरसूत्रे वक्ष्यामः। यदि च केवल एव जाठरो विवक्ष्येत, पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यान्न तु पुरुषत्वम्। पुरुषमपि चैनमधीयते वाजसनेयिनः —'स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' (श० ब्रा० १०।६।१।११) इति। परमेश्वरस्य तु सर्वात्मत्वात्पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं चोभयमुपपद्यते। ये तु 'पुरुषविधमपि चैनमधीयते' इति सूत्रावयवं पठन्ति, तेषामेषोऽर्थः— केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं स्यान्न पुरुषविधत्वम्। पुरुषविधमपि चैनमधीयते वाजसनेयिनः—'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति पुरुषविधत्वं च प्रकरणा-

## भामती।

शक्यम्। अशक्यौ च वैश्वानराग्निशब्दावन्यथा नेतुमिति शङ्कितुरभिमानः। **अपिचान्तःप्रतिष्ठितत्वं** च प्रादेशमात्रत्वं च न सर्वव्यापिनोऽपरिमाणस्य च परब्रह्मणः संभवतः। नच प्राणाहुत्यधिकरणताऽन्यत्र जाठराग्नेर्युज्यते। नच गार्हपत्यादिहृदयादिता ब्रह्मणः संभविनी। तस्माद्यथायोगं जाठरभूताग्निदेवताजीवानामन्यतमो वैश्वानरः, नतु ब्रह्म। तथा च ब्रह्मात्मशब्दावुपक्रमगतावप्यन्यथा नेतव्यौ। द्युमूर्धत्वादयश्च स्तुतिमात्रम्। **अथवा**—अग्निशरीराया देवताया ऐश्वर्ययोगात् द्युमूर्धत्वादय उपपद्यन्त इति शङ्कितुरभिसंधिः। अत्रोत्तरम्—**न**। कुतः? **तथा दृष्ट्युपदेशात्**। अद्धा चरममनन्यथासिद्धं प्रथमावगतमन्यथयति, न त्वत्र चरमस्यानन्यथासिद्धिः, प्रतीकोपदेशेन वा मनो ब्रह्मेतिवत्, तदुपाध्युपदेशेन वा मनोमयः प्राणशरीरो भारूप इतिवदुपपत्तेः। व्युत्पत्त्या वा वैश्वानराग्निशब्दयोर्ब्रह्मवचनत्वान्नान्यथासिद्धिः। तथाच ब्रह्माश्रयस्य प्रत्ययस्याश्रयान्तरे जाठरवैश्वानराह्वये क्षेपेण वा जाठरवैश्वानरोपाधिनि वा ब्रह्मण्युपास्ये वैश्वानरधर्माणां ब्रह्मधर्माणां च समावेश उपपद्यते। असंभवादिति सूत्रावयवं व्याचष्टे—**यदि चेह परमेश्वरो न विवक्ष्येतेति**। पुरुषमपि चैनमधीयत इति सूत्रावयवं व्याचष्टे—**यदि च केवल एवेति**। न ब्रह्मोपाधितया नापि प्रतीकतयेत्यर्थः। न केवलमन्तःप्रतिष्ठितं पुरुषमपीत्यपेरर्थः। अत एव यत्पुरुष इति पुरुषमनूद्य न वैश्वानरो विधीयते। तथासति पुरुषे वैश्वानरदृष्टिरुपदिश्येत। एवं च परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यत इति भाष्यं विरुध्येत। श्रुतिविरोधश्च। 'स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति वैश्वानरस्य हि पुरुषत्ववेदन-

## वेदान्तकल्पतरुः।

**कमित्यादिना**। प्रतीकोपदेशमुपाध्यवच्छिन्नस्योपास्त्युपदेशं च प्रपञ्चयति—**तथाचेति**। पञ्चपादीकृतस्तु वाजसनेयिवाक्यस्याप्यात्मोपक्रमत्वलाभे किं शाखान्तरालोचनयेति पश्यन्तः पुरुषमनूद्य वैश्वानरत्वविधेयमिति व्याचक्षते, तद्दूषयति— **अत एवेति**। यत एवान्तःप्रतिष्ठितत्वेन सह समुच्चयः सूत्रगतापिशब्दार्थोऽत एवान्तःप्रतिष्ठितत्ववत्पुरुषत्वमपि वैश्वानरमुद्दिश्य विधेयं न विपर्यय इत्यर्थः। यदि पुरुषमनूद्य वैश्वानरो विधीयते, तदा पुरुषस्य दृष्ट्याश्रयत्वं स्यादित्याह— **तथासतीति**। किमतस्तत्राह—**एवमिति**। न केवलं सूत्रविरोधोऽपि तु भाष्यविरोधोऽपीत्यर्थः। स यो हैतमिति

**यदधिदैवतं द्युमूर्धत्वादि पृथिवीप्रतिष्ठितत्वान्तं यच्चाध्यात्मं प्रसिद्धं मूर्धत्वादि चुबुकप्रतिष्ठितत्वान्तं तत्परिगृह्यते ॥ २६ ॥**

## अत एव न देवता भूतं च ॥ २७ ॥

**यत्पुनरुक्तं भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसंबन्धदर्शनान्मूर्धैव सुतेजा इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति, तच्छरीराया देवताया वैश्वर्ययोगादिति, तत्परिहर्तव्यम् । अत्रोच्यते—अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः । तथाभूताग्निरपि न वैश्वानरः । न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते; विकारस्य विकारान्तरात्मत्वासंभवात् । तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना संभवति; अकारणत्वात्परमेश्वराधीनैश्वर्यत्वाच्च । आत्मशब्दासंभवश्च सर्वेष्वेषु पक्षेषु स्थित एव ॥ २७ ॥**

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

**पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन, इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न**

### भामती ।

मन्त्रानूद्यते, नतु पुरुषस्य वैश्वानरत्ववेदनम् । तस्मात् 'स एषोऽग्निर्वैश्वानरो यत्' इति यदः पूर्वेण संबन्धः, पुरुष इति तत्र पुरुषदृष्टेरुपदेश इति युक्तम् ॥ २४ ॥ २५ ॥ २६ ॥ **अत एव न देवता भूतं च** । अत एवैतेभ्य श्रुतिस्मृत्यवगतद्युमूर्धत्वादिसंबन्धसर्वलोकाश्रयफलभागित्वसर्वपाप्मप्रदाहात्मब्रह्मपदोपक्रमेभ्यो हेतुभ्य इत्यर्थः । 'यो भानुना पृथिवी द्यामुतेमाम्' इति मन्त्रवर्णोऽपि न केवलौष्ण्यप्रकाशविभवमात्रस्य भूताग्नेरियमीदृशं महिमानमाह, अपि तु ब्रह्मविकारतया ताद्रूप्येणेति भावः ॥ २७ ॥ **साक्षादप्यविरोधं जैमिनिः** । यदेतत्प्रकृतं मूर्धादिषु चुबुकान्तेषु पुरुषावयवेषु द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवान् संपाद्य पुरुषविधत्वं कल्पितं तदभिप्रायेणेद-

### वेदान्तकल्पतरुः ।

वाक्ये प्रथमनिर्दिष्टाग्न्युद्देशेन पुरुषत्ववेदनं स एषोऽग्निरिति वाक्यस्यार्थत्वेनानूद्यते। तथाच तस्यायमेवार्थः स्थित इति श्रुतिविरोध इत्यर्थः । पुरुषस्य विधेयत्वे यच्छब्दायोगमाशङ्क्याह—**तस्मादिति** । पञ्चपाद्यां तु जाठरे ईश्वरदृष्टिपक्षमुक्त्वा योगादग्निवैश्वानरशब्दयोरीश्वरे वृत्तिरिति पक्षान्तरं वक्तुमयम् उद्देश्यविधेयभावव्यत्यय आश्रित इति चिन्त्यमिदं दूषणमिति ॥२४॥२५॥२६॥ ॥२७॥ मूर्धादिचिबुकान्तावयवेषु संपादितस्य कथं पुरुषविधत्वं ? तेषां पुरुषैकदेशत्वादित्याशङ्क्य वैश्वानरपुरुषस्य पादादिमूर्धा-

### कल्पतरुपरिमलः ।

धारण्येन वैश्वानरशब्दवदनिश्चितार्थः । नच—एकार्थत्वेऽप्याकाङ्क्षितविशेषाऽनिश्चयोऽस्तीति—वाच्यम्; पुरोडाशं पर्यग्नि करोतीति वचनेन पर्यग्निकरणस्येवानेन चतुर्धाकरणस्यापि सर्वपुरोडाश-विषयत्वोपपत्त्या स्वतो विशेषाकाङ्क्षाविरहादिति—**चेत्, सत्यम्**; एकयाऽनेकया वा शक्त्या साधारणस्य शब्दस्य व्यवस्थितैकार्थसमर्पकशाखान्तरवाक्यानुसारेण विशेषपर्यवसानमात्रे दृष्टान्तोऽयम्, निश्चितार्थेनेत्येतदप्याग्नेयरूपव्यवस्थितैकार्थनिश्चयाभिप्रायम् । **ननु**—आग्नेयशब्दो यथा निश्चितविशेषार्थः, एवं पुरोडाशशब्दोऽपि निश्चितसामान्यार्थ इत्येतदनुसारेण विशेषशब्द एवैन्द्राग्नाग्नीषोमीयपुरोडाशसाधारणः किं न स्यात् ? अविशिष्टो हि तयोरप्यग्निसंबन्धः; अग्नेर्ढगिति प्रतिपदविहितस्य देवतातद्धितस्य बलीयस्त्वेऽपि पुरोडाशशब्दस्य सङ्कोचरूपैकदेशबाधनपरिहाराय "सर्वत्राग्निकलिभ्यां ढगिति" स्मृतसंबन्धसामान्यतद्धिताश्रयणोपपत्तेः । यद्यपि "चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्ये"त्यत्र हि पाशुकहविर्विशेषवाचिनो वपाशब्दस्य "एकादश पशोरवदानानि" "तानि द्विरवद्यती"ति पाशुकहविर्मात्रपञ्चावदानगमकप्रकृतिप्राप्तव्यवदानपुनर्विध्यनुसारेण पाशुकहविःसामान्ये लक्षणा समाश्रिता, इह तु पुरोडाशसामान्यचतुर्धाकरणप्रतिपादकप्रत्यक्षवचनानुसारेण संबन्धसामान्यवाचित्वसमाश्रयणं कथं न स्यात् ? यत्र ह्युपादानाय विशेषाकाङ्क्षा, तत्रैव सामान्यशब्दस्यान्यत्र श्रुतविशेषे पर्यवसानं यथा पशुशब्दस्य च्छागे । एवमेव मीमांसकप्रवादोऽपि । सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्य तु विधेर्नैवमुपसंहार इष्यते ॥ इति । अस्पष्टत्वमनुष्ठानाय विशेषाकाङ्क्षं, तदनाकाङ्क्षायामपि विशेषपर्यवसाने "न ब्राह्मणं हन्यादि"ति निषेधस्यापि "नात्रेयं हन्यादि"ति श्रुतविशेषनिषेधे पर्यवसानं स्यादिति—**चेत्, उच्यते**; "तं बर्हिषदं कृत्वा पुरोडाशं चतुर्धाकरोती"ति शतपथवाक्यं न चतुर्धाकरणविधिपरं, किं तु शाखान्तरश्रुताग्नेयवाक्यप्राप्तं तदनूद्य तं बर्हिषदं कृत्वेत्येतद्विधिपरं, तदपि वा शाखान्तरप्राप्तमनूद्योभयोरपि क्रमविधिपरम् । अतो यथाप्राप्त्यनुवाद इति पुरोडाशशब्द आग्नेयपर इति भवतीदं वाक्यान्तरश्रुतविशेषपर्यवसानोदाहरणम् ॥ **स एषोऽग्निरिति वाक्यस्येति** । प्रथमाम्नातस्य स एषोग्निरिति वाक्यस्यार्थत्वेनाग्न्युद्देश्यकपुरुषत्ववेदनमनन्तराम्नाते

कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते । ननु—जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुध्येरन्निति । अत्रोच्यते—अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते । न हीह 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति जाठराग्न्यभिप्रायेणेदमुच्यते; तस्याप्रकृतत्वादसंशब्दितत्वाच्च । कथं तर्हि ? यत्प्रकृतं मूर्धादिचुबुकान्तेन पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते—'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वत् । अथवा यः प्रकृतः परमात्माध्यात्ममधिदैवतं च पुरुषविधत्वोपाधिस्तस्य यत्केवलं साक्षिरूपं तदभिप्रायेणेदमुच्यते—'पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन वर्तिष्यते । विश्वश्चायं नरश्चेति, विश्वेषां वायं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा, सर्वात्मत्वात् । विश्वानर एव वैश्वानरः । तद्धितोऽनन्यार्थः, राक्षसवायसादिवत् । अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति । गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वं च परमात्मनोऽपि सर्वात्मत्वादुपपद्यते ॥ २८ ॥ कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यत इति तां व्याख्यातुमारभते—

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् । अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते । प्रदेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते । अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

## अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृदयप्रतिष्ठेन वायं मनसानुस्मर्यते तेन प्रादेशमात्र इत्युच्यते । यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत् । यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसंबन्धाद्व्यज्यते ।

### भामती ।

मुच्यते 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । अत्रावयवसंपत्त्या पुरुषविधत्वं कार्यकरणसमुदायरूपपुरुषावयवमूर्धादिचुबुकान्तःप्रतिष्ठानाच्च पुरुषेऽन्तःप्रतिष्ठितत्वम्; समुदायमध्यपतितत्वात्तदवयवानां समुदायिनाम् । अत्रैव निदर्शनामाह—**यथा वृक्षे शाखामिति** । शाखाकाण्डमूलस्कन्धसमुदाये प्रतिष्ठिता शाखा तन्मध्यपतिता भवतीत्यर्थः । समाधानान्तरमाह—**अथवेति** । अन्तःप्रतिष्ठितत्वं माध्यस्थ्यं तेन साक्षित्वं लक्षयति । **एतदुक्तं भवति**—वैश्वानरः परमात्मा चराचरसाक्षीति । पूर्वपक्षिणोऽनुशयमुन्मूलयति—**निश्चिते चेति** । विश्वात्मकत्वात् वैश्वानरः प्रत्यगात्मा विश्वेषां वायं नरः, तद्विकारत्वाद्विश्वप्रपञ्चस्य । विश्वे नरा जीवा वात्मानोऽस्य तादात्म्येनेति ॥२८॥ **अभिव्यक्तेरित्याश्मरथ्यः** । साकल्येनोपलम्भासंभवादुपासकानामनुग्रहायानन्तोऽपि परमेश्वरः प्रादेशमात्रमात्मानमभिव्यनक्तीत्याह—**अतिमात्रस्यापीति** । अतिक्रान्तो मात्रां परिमाणमतिमात्रः । **उपासकानां कृते** उपासकार्थमिति यावत् ।

### वेदान्तकल्पतरुः ।

न्तावयवानामेषु संपादनात्पुरुषसादृश्यमित्याह—**अत्रावयवसंपत्त्येति** । मूर्धचिबुकान्तरालस्थस्य पुरुषावयवस्थत्वात्कथं पुरुषेऽन्तःप्रतिष्ठितत्वमित्याशङ्क्याह—**कार्यकारणेति** । कार्यकरणसमुदाय एव पुरुषस्तस्यावयवा मूर्धादिचिबुकान्तास्तेष्वन्तःप्रतिष्ठानात्पुरुषेऽन्तःप्रतिष्ठितत्वम् । अत्र हेतुः—**समुदायेति** । अवयविन्यवयवस्यान्तर्भावादवयवस्थोऽप्यवयव्याश्रितः, गृहस्थ इव ग्रामस्थ इत्यर्थः । **ननु**—अवयवाश्रितस्यावयव्याश्रितत्वव्यपदेशे दृष्टान्तो वक्तव्यो भाष्यकारस्त्ववयवस्यावयविनिष्ठताव्यपदेशमुदाहरति, ततो न निदर्शनतेत्याशङ्क्याह—**अत्रैवेति** । शाखादीनां समुदाये प्रतिष्ठिता शाखा समुदायमध्यपातिनी भवेत्, तावदेषां च मूर्धादिचिबुकान्तावयवानां कार्यकरणसमुदायान्तर्भावे निदर्शनम् । अवयवस्थस्य तु वैश्वानरस्यावयविपुरुषान्तःस्थत्वमर्थादेव सिद्ध्यतीत्यर्थः । **विश्वेषां वाऽयं नरो** नेता कारणम् ॥२८॥२९॥३०॥३१॥ **भाष्ये**—वरणानासीति । **निरुच्येति** । इमामेव प्रसिद्धां भ्रूसहितां नासिकां वारयति नाशयतीति वरणासहिता नाशीति निरुच्येत्यर्थः ।

### कल्पतरुपरिमलः ।

स यो हैतमिति वाक्येऽनूद्यत इत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ **विश्वेषां वा अयं नर इति** । योगाद्रूढेः प्राबल्येऽपि

नचेह परमेश्वरगतं किंचित्परिमाणमस्ति यद्धृदयसंबन्धाद्व्यज्यते। तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः संभवति यथाकथंचिदनुसरणमालम्बनमित्युच्यते। प्रादेशमात्रत्वेन वायमप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै। एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्यो मन्यते ॥ ३० ॥

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

संपत्तिनिमित्ता वा स्यात्प्रादेशमात्रश्रुतिः। कुतः। तथाहि—समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति—'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा नु व एतान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति। स होवाच मूर्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति। चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति। नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मात्मा वैश्वानर इति। मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति। मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति। चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति'। चुबुकमित्यधरं मुखफलकमुच्यते। यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायत आदित्यश्च सुतेजस्त्वगुणः। छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समाम्नायत आदित्यश्च विश्वरूपत्वगुणः; तथापि नैतावता विशेषेण किंचिद्धीयते, प्रादेशमात्रश्रुतेरविशेषात्, सर्वशाखाप्रत्ययत्वाच्च। संपत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते ॥ ३१ ॥

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

आमनन्ति चैनं परमेश्वरमस्मिन्मूर्धचुबुकान्तराले जाबालाः—'यएषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति। सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति। वरणायां नास्यां च मध्ये प्रतिष्ठित इति। का वै वरणा का च नासीति'। तत्र चेमामेव नासिकां वरणा नासीति निरुच्य या सर्वाणीन्द्रियकृतानि पापानि वारयतीति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि नाशयतीति सा नासीति पुनरामनन्ति—'कतमच्चास्य स्थानं भवतीति। भ्रुवोर्घ्राणस्य च यः संधिः

---

### भामती।

व्याख्यान्तरमाह—**प्रदेशेषु वेति** ॥ २९ ॥ ३० ॥ **संपत्तेरिति जैमिनिः**। मूर्धानमुपक्रम्य चुबुकान्तो हि कायप्रदेशः प्रादेशमात्रः। तत्रैव त्रैलोक्यात्मनो वैश्वानरस्यावयवान्संपादयन्प्रादेशमात्रं वैश्वानरं दर्शयति ॥ ३१ ॥ अत्रैव जाबालश्रुतिसंवादमाह सूत्रकारः—**आमनन्ति चैनमस्मिन्** अविमुक्ते अविद्योपाधिकल्पितावच्छेदे जीवात्मनि स

### वेदान्तकल्पतरुः।

वरणाशब्दार्थमाह—**भ्रूरिति** ॥ ३२ ॥

अत्रिः किल याज्ञवल्क्यं पप्रच्छ य एषोऽनन्तोऽव्यक्त आत्मा तं कथं विजानीयामिति। प्रत्युवाचेतरः सोऽविमुक्ते प्रतिष्ठित इति। अविमुक्तस्य स्थानभूता का वै वरणा का च नाशीति प्रश्नस्य प्रत्युक्तिः सर्वानिन्द्रियकृतान्दोपान्वारयति तेन वरणेति। सर्वानिन्द्रियकृतान्पाप्मनो नाशयति तेन नाशीति। नियम्य—जीवाधिष्ठानत्वद्वारेण नियन्तुरीश्वरस्याधिष्ठानत्वान्नासाभ्रुवोः पाप्मवारकत्वाद्युपपत्तिः। नासाभ्रुवोर्मध्येऽपि स्थानविशेषजिज्ञासया प्रश्नः **कतमं चेति**। भ्रूमध्यमाहेतरो भ्रुवोरिति। **प्राणस्य** नासिकयस्य। स च संधिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य संधित्वेनोपास्यः ॥ **केचित्तु**—उपासनाबुद्धिर्वारकत्वेन नाशकत्वेन च वरणा नाशी। सा हि प्रकृता, न भ्रूः; भ्रुवोरिति द्विवचनेन वक्ष्यमाणाया एकवचनायोगाच्च। अतः श्रुत्यनभिज्ञो वाचस्पतिः—**इति वदन्ति**। **तन्न**; अत्र ह्युपासना स्वशब्देन न प्रकृता। तं कथं विजानीयामित्युपसर्जनं विज्ञानं प्रकृतमपि न स्त्रीलिङ्गनिर्देशार्हम्। ततः शब्दोपात्तभ्रूप्रातिपदिकार्थ

### कल्पतरुपरिमलः।

विश्वस्य वसुराटोरित्यनुवृत्तौ "नरे संज्ञायामिति" सूत्रेण विश्वशब्दस्य नरे उत्तरपदे संज्ञायामेव दीर्घविधानेऽपि ब्रह्मैकस्वारस्यवन्नैरुक्तनिर्वचनसार्थकत्वाय योगं समाश्रित्यान्येषामपीति केशाकेशीत्यादाविव दीर्घत्वमुपपादनीयमिति भावः ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

**शब्दोपात्तेति**। भ्रुवो घ्राणस्य च यः संधिरित्यत्र भ्रूघ्राणशब्दौ नामनिर्वचनमुखेन दर्शितयोर्वरणानाश्योरिदंतया विवरणार्थमिति संख्याविशेषाऽविवक्षया विवरणीयप्रातिपदिकार्थमात्रविवक्षायामौत्सर्गिकमेकवचनं युज्यते; संख्याविशेषाऽविवक्षायामेकवचनमुत्सर्ग इति शाब्दिकन्यायात्। अतोऽत्र द्वयोरेकवचनमुपपद्यते, स्त्रीलिङ्गेनाऽप्रकृते तूपासनाविज्ञाने न स्त्रीलिङ्गमुपपा-

## वेदान्तकल्पतरुः ।

वक्ति वरणाशब्द इति श्रुत्यर्थज्ञो वाचस्पतिरेव । वैश्वानरमहां केतुं सूर्यं वैश्वानरस्य शोभनमतौ विषया भवेम । स च कं सुखम् । अभिमुखा श्रीश्च । यो भानुरूपेण रोदसी द्यावापृथिव्यौ अन्तरिक्षं चाततान व्याप्तवान् । रोदसी एव दर्शयति—इमां पृथिवीं द्यामिति । **प्रादेशमात्रमिव । देवाः** सूर्यादयः । **अभिसंपन्नाः** प्राप्ता उपासनया यदा ते सुविदिता भवन्ति । अहं कैकेयराजो युष्मभ्यम् औपमन्यवादिभ्यः एतान् देवांस्तथा वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामि ।

## कल्पतरुपरिमलः ।

दयितुं शक्यम् । न चोपासनाविज्ञाने एकस्मिन्नेव वरणाया नास्याश्च मध्य इति चकारार्थः समुच्चयो मध्यशब्दार्थश्चोपपादयितुं शक्य इति भावः ॥ **देवाः सूर्योदय इति ।** चक्षुर्विश्वरूप इत्यादिनोक्ता वैश्वानरावयवभूताः सूर्यादयो यथा प्रादेशमात्रमिव प्राप्ता भवन्त्युपासनया तथोपासिता भवन्तीति यावत्, तदा सुष्ठु सम्यगुपासनीयेन प्रकारेण विदिता भवन्तीत्यर्थः ॥

**अत्र**—द्युमूर्धत्वादीनां द्युलोकादिव्यापिनि ब्रह्मणीव जाठरे कल्पनामात्रस्याप्यालम्बनाभावेन तेषां जाठरव्यावृत्तब्रह्मलिङ्गत्वेऽपि प्रादेशमात्रत्वश्रवणेन तेषामुपासकमूर्धादिषु कल्पनीयत्वप्रतीतेः तथा कल्पनायाश्च स्वोष्मणा देहव्यापिनि जाठरेऽपि सम्भवाद् वेदिबर्हिर्गार्हपत्यादिकल्पनाप्रतिरुद्धत्वाच्चास्पष्टता । "को न आत्मा" "किं ब्रह्मेति" विमृशतां प्राचीनशालादीनामग्रे द्युप्रभृतिषु वैश्वानरात्मदृष्टिर्वर्णितेति तदनुसारेण तदीयवचनगतयोरात्मब्रह्मश्रुत्योरात्मब्रह्मदृष्टिविषयत्वाकारेणान्यत्र गौणत्वं वाच्यमित्युक्तशङ्काभिभूतत्वात्तथाभूतशङ्कानास्पदाग्निवैश्वानरश्रुतिप्रतिरुद्धत्वाच्चास्पष्टता । तस्य च च्छान्दोग्यगतात्मब्रह्मोपक्रमस्य वाजसनेयकगतवैश्वानरोपक्रमप्रतिरुद्धत्वादस्पष्टता । पुरुषश्रुतेर्मूर्धादिपादान्तावयवत्वात्मकसादृश्यरूपपुरुषविधाम्नानात्पुरुषस्य सतः पुरुषविधत्वासम्भवेन गौणत्वशङ्काभिभूतत्वादस्पष्टता । सार्वत्रिकान्नलाभफलस्याग्निरहस्योक्तपूर्णायुःप्राप्तिफलस्य चावेष्ट्यायुष्कामेष्ट्यदिफलवदन्यतोऽपि संभवाशङ्कास्पदत्वात् सर्वपाप्मप्रदाहफलस्य प्राणाग्निहोत्रमात्रफलत्वशङ्कास्पदत्वाच्चास्पष्टतेति—**पादसङ्गतिः ॥ एवमेषामस्पष्टानां ब्रह्मलिङ्गादीनामुमेन्षणमित्थम्**—"एष वा प्रतिष्ठा वैश्वानर" इत्यादिवाक्यैर्न केवलमुपासकमूर्धादिषु वैश्वानरमूर्धादिकल्पनं क्रियते, नापि केवलं द्युलोकादिदृष्टिर्विधीयते, किं तु ये वैश्वानरस्य मूर्धाद्यवयवरूपा प्रतिष्ठादिशब्दोक्तगुणविशेषविशिष्टा द्युलोकादयस्तद्दृष्टिर्विधीयते । ततश्चाध्यात्मिकस्य द्युमूर्धत्वादेर्जाठरे संभवेऽप्याधिदैविकस्य तस्य न तत्र संभवोस्ति; भूतदेवतयोः कथंचिद् द्युलोकादिव्याप्तिसंभवेऽपि न तन्मूर्धत्वादिकल्पनं समञ्जसं; नियन्तारं प्रति नियम्यस्यैव मूर्धत्वादिकल्पनौचित्यात्, भूतस्य तन्नियन्तृत्वाऽसंभवाद्, देवताया अपि तन्नियन्तृत्वस्य क्लृप्तस्याभावात्, सर्वनियन्तृत्वेन क्लृप्तमीश्वरं प्रत्येव मूर्द्धत्वादिव्यपदेशसंभवे अग्निदेवतायामपूर्वस्य द्युलोकादिनियन्तृत्वस्य कल्पनाऽयोगात् । "को न आत्मा किं ब्रह्मेति" विमर्शोऽस्माभिरन्योन्यविरोधेनात्मब्रह्मबुद्ध्योपास्यमानेषु द्युप्रभृतिषु वस्तुतः किं तथाभूतं ब्रह्म किमेतेषामन्यतममन्यद्वेति वस्तुतत्त्वविषयो, न तु तेषु किं तथाभूतब्रह्मदृष्टिमारोप्योपास्यमित्यारोपितरूपविशिष्टविषयः; "अन्नं ब्रह्म" "मनो ब्रह्मे"त्यादिवदनेकत्र प्रतीके ब्रह्मदृष्ट्यारोपसंभवाद्विरोधाभावेनास्मदुपास्यानां द्युप्रभृतीनां मध्ये किं तथाभूतब्रह्मदृष्ट्योपास्यमिति निर्धारणाऽनपेक्षणात् । अत एव दिवमेव भगवो राजन्नित्यादिवाक्यैः स्वस्वभ्रम एवोद्घाटितः । संभवति ह्यद्यापि शक्रसूर्यादिषु केषांचिद् ब्रह्मत्वभ्रमवद् द्युप्रभृतिषु तेषां तद्भ्रमः । अतस्तत्र नात्मब्रह्मश्रुती गौण्यौ तदुपक्रमस्य च न वैश्वानरोपक्रमेण प्रतिरोधः; इदन्तया निर्णेतुमशक्यस्याद्यापि बहुधा संदिह्यमानस्य ब्रह्मण इव जठरादिरूपस्याग्नेर्द्युसूर्यवायुगगनजलपृथिवीषु तादात्म्यभ्रमाऽसंभवेन पृथिव्यादितादात्म्यभ्रमविषयपरस्य प्राचीनशालादिवाक्यगतवैश्वानरशब्दस्यैव तद्वाक्यगतात्मब्रह्मशब्दानुवर्तिताया वाच्यत्वात् । पुरुषशब्दस्य पुरुषविधशब्दोक्तशरीरवत्त्वसादृश्यपरतया गौणत्वे तेन पौनरुक्त्यापत्तेश्चेतनवाचित्वेन तस्यापि जाठरव्यावृत्तश्रुतित्वमुपपद्यते । सर्वलोकाद्याश्रयं फलं केवलान्नाद्यफलविलक्षणमिति सर्वेषु लोकेषु कामचारो भवतीति निर्दिष्टदहरविद्याफलवत्तदपि ब्रह्मविद्यासाध्यं ब्रह्मलिङ्गमेव । तथा सर्वपापप्रदाहोऽपि; ब्रह्मलिङ्गप्रश्नोत्तराभ्यां प्राधान्येन प्रतिपिपादयिषिततयोपक्रान्तस्योपासनस्य फलाकाङ्क्षया रात्रिसत्रन्यायेना( जै· सू. अ. ४ पा. ३ सू. १७–१९ )र्थवादिकफलविपरिणामे कर्तव्ये प्रधानार्थवादइवाङ्गार्थवादे श्रुतस्यापि फलस्य ग्रहणौचित्यात्, इहोपासनाराध्यस्य वैश्वानरस्यैव प्राणाग्निहोत्रेणाराध्यत्वाच्च । तस्य ह वा एतस्यात्मनो वैश्वानरस्येति षष्ठ्या हृदयं गार्हपत्य इत्यादिवाक्येष्वप्यन्वयान्न वैश्वानरमग्निमभिप्रेत्य हृदयादीनां तदायतनत्वं विवक्षितं, किं तु तं वक्ष्यमाणाग्निहोत्रहोमोद्देश्यमभिप्रेत्य तेषां होमाधिकरणाग्नित्वकल्पनमेव विवक्षितम्; गार्हपत्यादिशब्दानामग्निष्वेव मुख्यार्थलाभेन स्वारस्याद्, हृदयाद्धि मनः प्रणीतमिवेति प्राचीनाचार्यवाक्येनाचार्याणामप्ययमर्थत्वाभिप्रायोन्नयनाच्च । "एवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि ह वास्य तद्वैश्वानरे हुतं स्यादि"ति सप्तमी तु "सममब्राह्मणे दान"मितिवत् चतुर्थ्यर्था; चण्डालायेति चतुर्थ्योपक्रमात् । "य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवती"ति सप्तमीनां "स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यती"त्यादिप्राचीनखण्डेषु प्राणाद्याहुतिभिस्तृप्तिभाक्त्वेनोक्तलोकभूतात्मविषयतया चतु-

स एष द्युलोकस्य परस्य च संधिर्भवतीति (जाबा० १)। तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः। अभिविमानश्रुतिः। प्रत्यगात्मत्वाभिप्राया। प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इत्यभिविमानः। अभिगतो वायं प्रत्यगात्मत्वाद्विमानश्च मानवियोगादित्यभिविमानः। अभिविमिमीते वा सर्वं जगत्कारणत्वादित्यभिविमानः। तस्मात्परमेश्वरो वैश्वानर इति सिद्धम् ॥ ३२ ॥ इति सप्तमं वैश्वानराधिकरणम् ॥

इति श्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

भामती।

खल्वविमुक्तः। तस्मिन्प्रतिष्ठितः परमात्मा, तादात्म्यात्। अत एव हि श्रुतिः—'अनेन जीवेनात्मना' इति। अविद्याकल्पितत्वेन भेदमाश्रित्याधाराधेयभावः। वरणा भ्रूः। शेषमतिरोहितार्थम् ॥ ३२ ॥ इति सप्तमं वैश्वानराधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकमीमांसाभाष्यविभागे भामत्यां
प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

वेदान्तकल्पतरुः।

अधोलोकानतीत्य स्थिताऽतिष्ठा द्यौर्मूर्ध्यध्यात्ममारोप्या, एवं सुतेजस्त्वादिगुणवन्तो वैश्वानरावयवा आदित्यादयश्चक्षुरादिष्वारोप्याः ॥ इति सप्तमं वैश्वानराधिकरणम् ॥

इति श्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकभगवदमलानन्दकृते
वेदान्तकल्पतरौ प्रथमाध्यायस्य द्वितीयः पादः ॥

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ७ | १८ |
| सूत्राणि | ३२ | ६३ |

कल्पतरुपरिमलः।

र्थ्यर्थस्य क्लृप्तत्वाच्च। न च प्राणाय स्वाहेत्यादिमन्त्रवर्णविरोधाद्वैश्वानरस्य देवतात्वाऽसंभवः; प्रश्नोपनिषद्वाक्यानुसारेण सर्वप्राणसमष्ट्यात्मकहिरण्यगर्भावच्छिन्नस्य त्रैलोक्यशरीरस्य वैश्वानरस्य परमात्मनोऽत्र होमोद्देश्यतायां मन्त्रवर्णविरोधाभावाद्, नैरुक्तनिर्वचनानुसारेणोदाहृतप्रश्नोपनिषद्वाक्ये दृष्टत्वेन चाग्निवैश्वानरशब्दयोरिहापि यौगिकत्वस्यैव न्यायतः प्राप्त्या तथा दृष्ट्युपदेशादिति रूढ्यपरित्यागेन निर्वाहस्य प्रौढिवादत्वात्, वैश्वानरएव चिताग्नित्वकल्पनप्राणाहुत्याधारत्वकीर्तनयोस्तत्पक्षावलम्बनेनोपन्यस्ततया तद्विरोधाभावाच्चेति ॥ इति सप्तमं वैश्वानराधिकरणम् ॥ ७ ॥

कल्पतरुकठिनवाक्यप्रकरविमर्दोत्थिते परिमलेऽस्मिन्।
पूर्णोऽजनि सविशेषप्रायः पादो मनोहरो विदुषाम् ॥

इति श्रीवेदान्तकल्पतरुपरिमले प्रथमाध्यायस्य द्वितीयः पादः ॥

---

१ तत्र सूत्राणि ९—वैश्वानरः साधारणशब्दविशेषात् २४ स्मर्यमाणमनुमानं स्यात् २५ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते २६ अत एव न देवता भूतं च २७ साक्षादप्यविरोधं जैमिनिः २८ अभिव्यक्तेरित्याश्मरथ्यः २९ अनुस्मृतेर्बादरिः ३० संपत्तेरिति जैमिनिस्तथा हि दर्शयति ३१ आमनन्ति चैनमस्मिन् ३२ ॥

श्रीः ।

# प्रथमाध्याये तृतीयः पादः ।

( १ अधिकरणम् ) **द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥**

**इदं श्रूयते—'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' ( मु० २।२।५ ) इति । अत्र यदेतद्द्युप्रभृतीनामोतत्ववचनादायतनं किंचिदवगम्यते, तत्किं परं ब्रह्म स्यादाहोस्विदर्थान्तरमिति संदिह्यते ।**

---

## भामती ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

इह ज्ञेयत्वेन ब्रह्मोपक्षिप्यते । तत्र—**पारवत्त्वेन सेतुत्वाद्भेदे षष्ठ्याः प्रयोगतः । द्युभ्वाद्यायतनं युक्तं नामृतं ब्रह्म कर्हिचित् ॥** पारावारमध्यपाती हि सेतुः ताभ्यामवच्छिद्यमानो जलविधारको लोके दृष्टः, नतु बन्धनहेतुमात्रम्; हडिनिगडादिष्वपि प्रयोगप्रसङ्गात् । न चानवच्छिन्नं ब्रह्म सेतुभावमनुभवति । न चामृतं सद्ब्रह्मामृतस्य सेतुरिति युज्यते । नच ब्रह्मणोऽन्यदमृतमस्ति, यस्य तत्सेतुः स्यात् । न चाभेदे षष्ठ्याः प्रयोगो

## वेदान्तकल्पतरुः ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

निर्विशेषब्रह्मलिङ्गनिरूपणं पादार्थमाह—**इहेति** । आद्याधिकरणमवतारयति—**तत्रेति** । आयतनत्वसाधारणधर्मात् संदेहे पूर्वपक्षं संगृह्णाति—**पारवत्त्वेनेति** । अमृतं यद्ब्रह्म तद् द्युभ्वाद्यायतनं कर्हिचित्कदाचिदपि न युक्तम् । आयतनस्य ब्रह्मत्वाभावे हेतुमाह—**पारवत्त्वेनेति** । सेतुत्वस्य पारवत्त्वेन व्याप्तेर्ब्रह्मणश्चापारत्वादित्यर्थः । अमृतत्वाभावे हेतुमाह—**भेद इति** । भेदे हि सति संबन्धार्था षष्ठी प्रयुज्यते, ब्रह्म चामृतमिति नामृतस्येति षष्ठी युक्तेत्यर्थः । **पारं** परकूलम् । **अवारम**र्वाक्कूलम् । **ननु** षिञो बन्धनार्थात्सेतुशब्दव्युत्पत्तेर्जगन्मर्यादाया बन्धरि ब्रह्मणि प्रयोगः किं न स्यादत आह—**नत्विति** । यत्र दारुणि च्छिद्रिते निग्राह्याणां पादप्रोतनं तत् **हडिः** । **निगडः** शृङ्खला । **नन्व**मृतमपि ब्रह्मामृतान्तरसंबन्धि, नेत्याह—**न च ब्रह्मण इति** । अतोऽन्यदार्त्तमिति श्रुतेरित्यर्थः । पुरुषं प्रति यावत्तादात्म्यं तावदगच्छद्-

## कल्पतरुपरिमलः ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

**निर्विशेषेति** । पूर्वस्मिन् पादे मनोमयोऽत्ता पाययिताऽक्षिपुरुषोऽन्तर्यामी वैश्वानर इत्येषां सविशेषत्वेऽपि यथाऽक्षरं निर्विशेषम्, एवमस्मिन् पादे द्युभ्वाद्यायतनभूमाक्षरेक्षतिकर्मादीनां निर्विशेषत्वेऽपि दहरः सविशेष इति प्रायिकत्वमत्रापि विशेषणं द्रष्टव्यम् ॥ **अमृतत्वाभावे हेतुमाहेति** । यद्यपि पूर्वपक्षिणा साधनीये ब्रह्मत्वाभाव एव द्वितीयहेतुरपि योजयितुं युक्तः; तथापि संग्रहश्लोके नामृतं न ब्रह्मेति साध्यद्वयमभिप्रेत्य तत्र यथासंख्यं हेतुद्वयं योजितम् । इयांस्तु विशेषः—टीकायां कल्पतरौ चामृतब्रह्माभेदोक्तिर्द्वितीयहेतोरमृतत्वाभावसाधकत्वे तत्साधनस्य साक्षात्साधनीयब्रह्मत्वाभावसिद्धावुपयोगप्रदर्शनार्था, तस्य ब्रह्मत्वाभावसाधकत्वेऽमृताद्भेदस्य कथं ब्रह्मत्वाभावसाधकत्वमित्याकाङ्क्षायां तस्य तत्साधकतोपपादनार्थेति । **न त्वितीति** । **ननु** तथापि जलबन्धनहेतुस्तदर्थः स्यात् । न च घटोदरनिस्सरज्जलबन्धनहेतुमधूच्छिष्टादावतिप्रसङ्गः; पारावारमध्यवर्त्तित्वेनापि विशेषणात् । नच—तथा सति तदेवालमिति—वाच्यम्; नद्यामतिप्रसङ्गात्, अतो विशिष्टवाचकस्य तदेकदेशबन्धकत्वलक्षणया ब्रह्मणि वृत्तिः संभवतीति—**चेत्, मैवम्**; सेतुशब्दस्य आजानसिद्धाऽविनाभूतपारवत्त्वेन गौणत्वे संभवति कादाचित्केन बन्धनहेतुत्वेन तदयोगादिति भावः । **अमृतान्तरसंबन्धीति** । "क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः" इति मन्त्रे जीवेऽपि अमृतशब्दप्रयोगादिति भावः ॥ **अतोऽन्यदार्तमिति श्रुतेरिति** । निरुपाधिकामृतत्वं न ब्रह्मणोऽन्यत्रेति भावः ॥ **नन्वेवं**सत्यमृतस्य सेतुरित्यनन्वितं स्याद्, न ह्यमृतस्य पारवानित्यन्वयः संगच्छते । **नैष दोषः**; अमृतस्यैष इत्यन्वयाभ्युपगमात्तावन्मात्रेण च तस्येदमिति सूत्रे इव षष्ठ्यन्तपदवाच्यसंबन्धित्वनिर्वाहात् । सेतुशब्देन त्वमृतपदानन्वितेनैव पारवत्त्वं लक्ष्यते । **पुरुषं यावदगच्छदित्यस्य** पुरुषपर्यन्तं व्याप्नुवदिति देशपरिच्छेदार्थकत्वं न युक्तम्; अवध्यर्थकयावच्छब्दयोगे द्वितीयानुशासनाभावाद्, नदीप्रवाहो वृक्षवाटपर्यन्तं न व्याप्नोतीत्युक्त्या वृक्षवाटस्येव तेन पुरुषस्यापि देशपरिच्छेदप्रतीतिप्रसङ्गाच्चेत्यभिप्रेत्य तं ग्रन्थं साध्याहारं वस्तुपरिच्छेदार्थकतया व्याचष्टे—**पुरुषं प्रति यावत्तादात्म्यं तावदगच्छदिति** । याव-

तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तम्। कस्मात्? 'अमृतस्यैष सेतुः' इति श्रवणात्। पारवान्हि लोके सेतुः प्रख्यातः। नच परस्य ब्रह्मणः पारवत्त्वं शक्यमभ्युपगन्तुम्; 'अनन्तमपारम्' (बृ० २।४।१२) इति श्रवणात्। अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं परिग्रहीतव्यं; तस्य कारणत्वादायतनत्वोपपत्तेः। श्रुतिप्रसिद्धो वा वायुः स्यात्; वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' (बृ० ३।७।२) इति वायोरपि विधारणत्वश्रवणात्। शारीरो वा स्यात्; तस्यापि भोक्तृत्वाद्भोग्यं प्रपञ्चं प्रत्यायतनत्वोपपत्तेरित्येवं प्राप्त इदमाह—द्युभ्वाद्यायतनमिति। द्यौश्च भूश्च द्युभुवौ द्युभुवावादी यस्य तदिदं द्युभ्वादि। यदेतदस्मिन्वाक्ये द्यौः पृथिव्यन्तरिक्षं मनः प्राणा इत्येवमात्मकं जगदोतत्वेन निर्दिष्टं तस्यायतनं परं ब्रह्म भवितुमर्हति। कुतः? स्वशब्दादात्मशब्दादित्यर्थः। आत्मशब्दो हीह भवति—'तमेवैकं जानथ आत्मानम्' इति। आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते, नार्थान्तरपरिग्रहे। क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते—'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा०६।८।

## भामती।

दृष्टपूर्वः। तदिदमुक्तम्—**अमृतस्यैष सेतुरिति श्रवणादिति**। अमृतस्येति श्रवणात्, सेतुरिति श्रवणात्, इति योजना। तत्रामृतस्येति श्रवणादिति विशदतया न व्याख्यातम्। सेतुरिति श्रवणादिति व्याचष्टे—**पारवानिति**। तथाच पारवत्त्वममृतव्यतिरिक्ते सेतावनुश्रीयमाणे प्रधानं वा सांख्यपरिकल्पितं भवेत्। तत् खलु स्वकार्योपहितमर्यादतया पुरुषं यावदगच्छद्भवतीति पारवत्, भवति च द्युभ्वाद्यायतनं; तत्प्रकृतित्वात्, प्रकृत्यायतनत्वाच्च विकाराणां, भवति चात्मा; आत्मशब्दस्य स्वभाववचनत्वात्, प्रकाशात्मा प्रदीप इतिवत्। भवति चास्य ज्ञानमपवर्गोपयोगि; तदभावे प्रधानाद्विवेकेन पुरुषस्यानवधारणादपवर्गानुपपत्तेः। यदि त्वस्मिन्प्रमाणाभावेन न परितुष्यसि, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्मं द्युभ्वाद्यायतनं; तस्मिन् प्रामाणिके सर्वस्योक्तस्योपपत्तेः। एतदपि प्रधानोपन्यासेन सूचितम्। अथ तु साक्षाच्छ्रुत्युक्तं द्युभ्वाद्यायतनमाद्रियसे, ततो वायुरेवास्तु; 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' इति श्रुतेः। यदि त्वात्मशब्दाभिधेयत्वं न विद्यत इति न परितुष्यसि, भवतु तर्हि शारीरः, तस्य भोक्तुर्भोग्यान् द्युप्रभृतीन्प्रत्यायतनत्वात्। यदि पुनरस्य द्युभ्वाद्यायतनस्य सार्वज्ञ्यश्रुतेरत्रापि न परितुष्यसि, भवतु ततो हिरण्यगर्भ एव भगवान् सर्वज्ञः सूत्रात्मा द्युभ्वाद्यायतनम्। तस्य हि कार्यत्वेन पारवत्त्वं चामृतात्परब्रह्मणो भेदश्चेत्यादि सर्वमुपपद्यते। अयमपि 'वायुना वै गौतम सूत्रेण' इति श्रुतिमुप-

## वेदान्तकल्पतरुः।

स्तुतः परिच्छिन्नं भवति पारवत्। **अथ त्विति**। साक्षादायतनत्वेन श्रुत्युक्तमिति योजना। अव्याकृतं हि कारणब्रह्मोपाधित्वेन प्रतिपाद्यते न प्राधान्येनेति। **तस्य हि कार्यत्वेनेति**। देहाद्यवच्छिन्नरूपेणेत्यर्थः। **धारणाद्वेति**। अस्य द्युभ्वाद्यायतनस्यास्य वा तज्ज्ञानस्य यथाक्रममममृतत्वस्य धारणात्साधनाद्वा सेतुता। यद्यपि ब्रह्मैवामृतम्; तथापि तदज्ञातं

## कल्पतरुपरिमलः।

च्छब्द इह नावध्यर्थः, किं तु परिमाणार्थः। तस्य परिमेयविशेषाकाङ्क्षया तादात्म्यशब्दस्तत्प्रतिनिर्देशाकाङ्क्षया तावच्छब्दश्च द्वितीयोपपत्त्यर्थं प्रतिशब्दश्चाध्याहार्यः। प्रतियोगे च बुभुक्षितं न प्रतिभाति किं चिदित्यत्रेव पुरुषस्येति षष्ठ्यर्थो लभ्यते। तेन पुरुषस्य यावत्तादात्म्यं तावदप्राप्नुवदित्यर्थलाभाद् वस्तुपरिच्छेद उक्तो भवतीत्याशयः। यद्यप्युक्तार्थविवक्षायां पुरुषतादात्म्यमगच्छदित्येतावद्वक्तव्यं; तथापि सर्वस्य प्रपञ्चस्याधिष्ठानसदात्मना पुरुषतादात्म्यसत्त्वादसिद्धिः स्यादिति यावत्तावच्छब्दावुक्तौ। ततश्च चिदात्मनाऽऽनन्दात्मना च पुरुषतादात्म्याभावाद्वस्तुपरिच्छेदो लभ्यत इति तात्पर्यम्। यावत्पदस्य साकल्यार्थकत्वे तु कार्त्स्न्येन पुरुषमव्याप्नुवदित्यर्थलाभाद् विनैवाध्याहारं देशपरिच्छेदार्थकत्वमपि टीकायां वक्तुं शक्यम्। अस्मिन्नर्थे स्वकार्योपहितमर्यादतयेत्यस्य स्वकार्यमात्रव्याप्तिमत्तयेत्यर्थः। पूर्वस्मिन्नर्थे अस्य स्वकार्यमात्रतादात्म्यवत्तयेत्यर्थ इति विशेषः॥ **ननु** साक्षात् श्रुत्युक्तत्वमव्यक्तात् पुरुषः पर इत्यव्याकृतस्याप्यस्ति, आयतनत्वेन श्रुत्युक्तत्वमपि तस्याकाश एव तदोतं च प्रोतं चेत्यस्तीत्याशङ्क्य व्याचष्टे—**साक्षादिति**। साक्षात्त्वमन्योपाधित्वाभावरूपं प्राधान्यमिह विवक्षितमिति भावः। **ननु**—भावप्राधान्यविवक्षणं किमर्थम्? सेतुशब्दलक्षणीयधारकत्वनिर्वाहार्थमिति चेत्, न; तद्विवक्षणेन लभ्यममृतत्वमपि हि निरतिशयानन्दरूपो मोक्ष एव, स च ब्रह्मणो न भिद्यते, ब्रह्म चामृतशब्देनैवोक्तम्। तथा च भावप्राधान्यविवक्षणेऽप्यवर्जनीये ब्रह्मणि पर्यवसाने व्यर्थोऽयं बकबन्धविधिप्रयास इत्याशङ्क्य निराकरोति—**यद्यपीति**। ब्रह्मैवामृतमित्येतदनन्तरं तदेव चामृतत्वमिति शेषोऽध्याहर्तव्यः। ज्ञायमानदशामभिप्रेत्य तममृतत्वशब्दार्थं कृत्वा धारयितृत्वं

४ ) इति । स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म संकीर्त्यते—'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' इति । 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण' ( मु० २।२।११ ) इति च । तत्र त्वायतनायतनवद्भावश्रवणात् । सर्वं ब्रह्मेति च सामानाधिकरण्यात् । यथानेकात्मको वृक्षः शाखा स्कन्धो मूलं चेत्येवं नानारसो विचित्र आत्मेत्याशङ्का संभवति, तां निवर्तयितुं सावधारणमाह—'तमेवैकं जानथ आत्मानम्' इति । एतदुक्तं भवति—न कार्य-

## भामती ।

न्यस्यता सूचितः । तस्मादयं द्युप्रभृतीनामायतनमित्येवं **प्राप्तेऽभिधीयते**—। द्युभ्वाद्यायतनं परं ब्रह्मैव, न प्रधानाव्याकृतवायुशारीरहिरण्यगर्भाः । कुतः ? स्वशब्दात् । **धारणाद्वाऽमृतत्वस्य सेतुता । पूर्वपक्षेऽपि मुख्यार्थः सेतुशब्दो हि नेष्यते ॥** नहि मृद्दारुमयो मूर्तः पारावारमध्यवर्ती पाथसां विधारको लोकसिद्धः सेतुः प्रधानं वाव्याकृतं वा वायुर्वा जीवो वा सूत्रात्मा वाभ्युपेयते, किंतु पारवत्तामात्रपरो लाक्षणिकः सेतुशब्दोऽभ्युपेयः । सोऽस्माकं पारवत्तावर्जं विधरणत्वमात्रेण योगमात्राद्रूढिं परित्यज्य प्रवर्त्स्यति । जीवानाममृतत्वपदप्राप्तिसाधनत्वं त्वात्मज्ञानस्य पारवत एव लक्षयिष्यति । अमृतशब्दश्च भावप्रधानः । यथा 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र द्वित्वैकत्वे द्व्येकशब्दार्थौ; अन्यथा द्व्येकेष्विति स्यात् । तदिदमुक्तं भाष्यकृता—**अमृतत्वसाधनत्वादिति** । तथा चामृतस्येति च सेतुरिति च ब्रह्मणि द्युभ्वाद्यायतने उपपत्स्येते । अत्र च स्वशब्दादिति तत्रोच्चरितमात्मशब्दादिति च सदायतना इति सच्छब्दादिति च ब्रह्मशब्दादिति च सूचयति । सर्वे ह्येतेऽस्य स्वशब्दा : । **स्यादेतत्**—आयतनायतनवद्भावः सर्वं ब्रह्मेति च सामानाधिकरण्यं हिरण्यगर्भेऽप्युपपद्यते, तथाच स एवात्रास्त्वमृतत्वस्य सेतुरित्याशङ्क्य श्रुतिवाक्येन सावधारणेनोत्तरमाह—**तत्रायतनायतनवद्भावश्रवणादिति** । विकाररूपेऽनृतेऽनिर्वाच्येऽभिसंधानं यस्य स तथोक्तः । भेदप्रपञ्चं सत्यमभिमन्यमान इति यावत् । तस्यापवादो दोषः श्रूयते—**मृत्योरिति** । **सर्वं ब्रह्मेति**

## वेदान्तकल्पतरुः ।

न मोक्ष इति ज्ञायमानत्वदशामभिप्रेत्य धारयितृत्वम् । अत एव षष्ठी । **नन्वेवं** रूढिर्गतेत्याशङ्क्य साम्यमाह—**पूर्वपक्षेऽपीति । पारवत्तावर्जं** पारवत्तां वर्जयित्वा । **योगमात्रादिति** । षिञ्धात्वर्थयोगादित्यर्थः ॥ विधारकत्वमेव सेतुगुणोऽपि स्यात्, तथा च पारवत्तया गौणी वृत्ती रूढ्यत्यागेन प्रवृत्ता योगाद्बलिनीति च न शङ्क्यमिति । अमृतस्य ब्रह्मणो हेत्वभावात्साधनत्वं ज्ञानस्यायुक्तमित्याशङ्क्याविद्यानिवृत्तिरमृतत्वशब्दार्थ इत्याह—**अमृतशब्दश्चेति** । द्वयोरेकस्य च संख्येयानामुपादाने तेषां बहुत्वाद् द्व्येकेष्विति स्यात् । । नानार्थसाधारण्येन सकृदुच्चारणमिह तन्त्रम्, एवं चावृत्तिलक्षणवाक्यभेदो व्युदस्तः । **अस्य** ब्रह्मणः । **स्वीयाः शब्दा** एते इत्यर्थः । **तत्र त्वायतनवद्भावश्रवणादिति** भाष्यं

## कल्पतरुपरिमलः ।

निर्वाह्यमित्यध्याहारेण वाक्यं पूरणीयम् । **नन्वेवमपि**—भावप्राधान्यविवक्षणं व्यर्थं; सेतुर्यथा परपारस्य प्रापकः, एवमयं द्युभ्वाद्यायनमात्माऽमृतस्य ब्रह्मणः प्रापक इति प्रापकत्वलक्षणया निर्वाहादिति—**चेत्, उच्यते**; द्युभ्वाद्यायतनममृतस्य सेतुरित्युक्त्या राजाऽयं धर्मस्य सेतुरित्युक्त्या राजधर्मयोरिव द्युभ्वाद्यायतनामृतयोर्भेदप्रतीतेरमृतशब्दोक्ताद् ब्रह्मणोऽन्यद् द्युभ्वाद्यायतनं ग्राह्यमिति शङ्का स्याद्, नच—एतच्छङ्कावारणार्थममृतत्वशब्दविवक्षणीयमोक्षपर एवायममृतशब्दोऽस्तु मोक्षेऽपि तत्प्रयोगसत्त्वादिति वक्तुं—शक्यम्; इह तदेतत्सत्यममृतमानन्दरूपममृतं यद्विभातीति पूर्वापरमन्त्रगतप्रयोगाभ्याममृतशब्दस्य ब्रह्मवाचित्वावश्यम्भावात् । **षिञ्धात्वर्थयोगादित्यर्थ इति** । धारणमपि बन्धनविशेष इत्यभिप्रेत्यैवमुक्तम् । यदि तु बन्धनं प्रवहतो जलस्यगतिनिरोधनं, निरुद्धगतिके जले प्रभूते साधिते तद्धारणं बन्धनस्य फलं, न तु बन्धनमेव धारणमित्याश्रीयते, तदा तस्य शब्दार्थैकदेशत्वाभावेऽपि सहजत्वाभावेऽपि तदवलम्बनैव गौणी वृत्तिर्युक्ता, न पारवत्त्वावलम्बना; अत्रधिकरणन्यायेना ( व्या. सू. अ. १ पा. २ सू. ९ ) न्तरङ्गसादृश्यग्रहणादपि समभिव्याहृतपदान्तरस्वारस्यानुरोधिसादृश्यग्रहणस्य प्रबलत्वात्, इह च पारवत्त्वलक्षणायामात्मश्रुत्यादीनाममृतशब्दस्य सेतुपर्यन्तान्वितताया॑श्च स्वारस्यहानेः सष्टत्वादिति समाधेयम् । **योगाद् बलिनीति** । अत एव "प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातृणा"मिति मन्त्रे बहुवचनानुरोधाद् उद्गातृशब्दस्य बहुषु ऋत्विक्षु वृत्तौ वक्तव्यायामुच्चैर्गायन्तीति योगं परित्यज्य प्रथमप्रतीतरूढ्यपरित्यागार्थं ( सुब्रह्मण्ये ) ससुब्रह्मण्ये वोद्गातृगणे रूढिपूर्वकलक्षणाऽभ्युपगता । **ननु**—साधनत्वलक्षणा न युक्ता; अमृतशब्दोक्तस्य ब्रह्मणो हेत्वभावाद्, भावप्राधान्यविवक्षणेऽपि तस्य ज्ञायमानदशापर्यवसायित्वाद्, ज्ञायमानत्वस्य च चरमवृत्तिविषयत्वरूपतायां मोक्षस्याऽस्थिरपुरुषार्थत्वापत्त्या प्रकाशमानत्वरूपतया वक्तव्यत्वात्, स्वतःसिद्धस्य च ब्रह्मप्रकाशस्य हेत्वनपेक्षत्वादित्याशङ्कानिवारणार्थं स्वतःसिद्धप्रकाशावरणनिवृत्तिरमृतत्वशब्दार्थ इतितात्पर्यकत्वेनामृतशब्दश्च भावप्रधान इति टीकां व्याचष्टे—**अमृतस्येति** । **ननु**—सैवावरणाविद्यानिवृत्तिर्धारयितृत्वलक्षणायामप्यमृतत्वशब्दार्थः किं न

प्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः। किंतर्हि? अविद्याकृतं कार्यप्रपञ्चं विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानथैकरसमिति। यथा यस्मिन्नास्ते देवदत्तस्तदानयेत्युक्त आसनमेवानयति न देवदत्तम्, तद्वदायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते। विकारानृताभिसंधस्य चापवादः श्रूयते—'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (का० २।४।११) इति। सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपञ्चप्रविलापनार्थं, नानेकरसताप्रतिपादनार्थम्; 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ० ४।५।१३) इत्येकरसताश्रवणात्। तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म। यत्तूक्तं—सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति। अत्रोच्यते—विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते, न पारवत्त्वादि। नहि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते। सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव न पारवत्त्वादि; षिञोबन्धनकर्मणः सेतुशब्दव्युत्पत्तेः। अपर आह—'तमेवैकं जानथ आत्मानम्' इति यदेतत्संकीर्तितमात्मज्ञानं, यच्चैतत् 'अन्या वाचो विमुञ्चथ' इति वाग्विमोचनं, तदत्रामृतत्वसाधनत्वात् 'अमृतस्यैष सेतुः' इति सेतुश्रुत्या संकीर्त्यते, न तु द्युभ्वाद्यायतनम्। तत्र यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भाव्यमित्येतदयुक्तम्॥ १॥

## मुक्तोपसृप्यव्यपदेशात्॥ २॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम्। यस्मान्मुक्तोपसृप्यतास्य व्यपदिश्यमाना दृश्यते। मुक्ति-

### भामती।

**त्विति**। यत्सर्वमविद्यारोपितं तत्सर्वं परमार्थतो ब्रह्म, न तु यद्ब्रह्म तत्सर्वमित्यर्थः। **अपर आहेति**। नात्र द्युभ्वाद्यायतनस्य सेतुता येन पारवत्ता स्यात्; किंतु 'जानथ' इति यज्ज्ञानं कीर्तितं, यश्च 'वाचो विमुञ्चथ' इति वाग्विमोकः, तस्यामृतत्वसाधनत्वेन सेतुतोच्यते। तच्चोभयमपि पारवदेव। नच—प्राधान्यादेष इति सर्वनाम्ना द्युभ्वाद्यायतनमात्मैव परामृश्यते, न तु तज्ज्ञानवाग्विमोचने इति—सांप्रतम्; वाग्विमोचनात्मज्ञानभावनयोरेव विधेयत्वेन प्राधान्यात्, आत्मनस्तु द्रव्यस्याव्यापारतयाऽविधेयत्वात्, विधेयस्य व्यापारस्यैव व्यापारवतोऽमृतत्वसाधनत्वात्। न चेदमैकान्तिकं यत्प्रधानमेव सर्वनाम्ना परामृश्यते; क्वचिदयोग्यतया प्रधानमुत्सृज्य योग्यतया गुणोऽपि परामृश्यते॥ १॥ द्युभ्वाद्यायतनं प्रकृत्याविद्यादिदोषमुक्तैरुपसृप्यं व्यपदिश्यते—'भिद्यते हृदयग्रन्थिः' इत्यादिना। तेन तत् द्युभ्वाद्यायतनविषयमेव। ब्रह्मणश्च मुक्तोपसृप्यत्वं 'यदा सर्वे प्रमुच्यन्ते' इत्यादौ श्रुत्यन्तरे प्रसिद्धम्। तस्मान्मुक्तोपसृप्यत्वात् द्युभ्वाद्यायतनं ब्रह्मेति निश्चीयते। हृदयग्रन्थिश्चाविद्यारागद्वेषभयमोहाः।

### वेदान्तकल्पतरुः।

द्युभ्वाद्यायतनस्य ब्रह्मत्वे सिद्धे तस्य सविशेषत्वनिरासार्थं; तत्प्रधानवादनिरासानुपयोगित्वात्प्रकृतासङ्गतमित्याशङ्क्य हिरण्यगर्भपूर्वपक्षनिरासार्थत्वेन प्रकृतेन सङ्गमयति—**स्यादेतदित्यादिना**। अप्रधानं ज्ञानं न सर्वनामपरामर्शार्हमिति कश्चित्तं प्रत्याह **न चेति। यत्तु**—केनचिदुक्तं, 'तं जानथेति ज्ञेयं प्रत्युपसर्जनं ज्ञानमेष' इति पुंलिङ्गनिर्देशानर्हं च—**इति। तन्न**; सत्यपि ज्ञेयप्राधान्यनिर्देशे ज्ञानस्य फलसाधनत्वेन गुणकर्मत्वाभावात्प्राधान्यात्। पुंलिङ्गं तु विधेयसापेक्षमिति न किंचिदेतत्। ''तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे''त्यादौ शब्दतोऽप्रधानस्यापि पयआदेः सर्वनामनिर्देशादनियतं सर्वनाम्नः प्रधानपरामर्शित्वमित्याह—**न चेति**॥ १॥ अविद्यारागद्वेषादीति भाष्ये आदिग्रहणेन प्राङ्निर्दिष्टभयमोहावुक्तौ। एतेऽविद्यादयः। श्रुतौ हृदयग्रन्थिशब्दार्थ इत्याह—**हृदयग्रन्थिश्चेति**। अज्ञानस्याविद्याशब्देन निर्दिष्टत्वान्मोहश्च विषादः,

### कल्पतरुपरिमलः।

स्यात्। नच—अविद्याया जीवत्वोपहितचैतन्याश्रयत्वात्तन्निवृत्तिरपि तदाश्रयैव, न तु शुद्धब्रह्माश्रितेति—**शङ्क्यम्**; अविद्यायां निवर्तमानायां जीवत्वोपाधेरपि सह निवृत्त्या पटनाशसमकालतद्रूपनाशस्य पटावस्थापन्नतन्त्वाद्याश्रितत्ववदविद्यानिवृत्तेर्जीवत्वाऽनुपहितशुद्धचैतन्याश्रितत्वोपपत्तेरिति—**चेत्, सत्यम्**; तथापि निवृत्तिवदविद्यापि जीवत्वानुपहिततदाश्रिताऽस्त्विति मन्दशङ्कावारणार्थमविद्यानिवृत्तिर्द्वारणपक्षे न स्पृष्टा॥ **गुणकर्मत्वाभावादिति**। ''अपोऽश्नाति तन्नैवाशितं तन्नैवाऽनशित''मित्यत्र द्वितीयासंयोगेऽपि गुणकर्मत्वाभावादशनस्य सर्वनाम्ना परामर्शः प्राधान्याद् दृश्यत इति भावः॥ **तप्तइति**। यथा ''तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे''त्यत्र पयसः सप्तमीनिर्देशाद् ''बर्हिषि हवींष्यासादयती'' त्यत्र बर्हिष इव क्रियोपसर्जनत्वप्रतीतावपि क्रियाया हविर्वाच्याऽऽमिक्षापदसमानाधिकरणतत्पदपरामर्शनीयत्वायो-

रुपसृप्यं मुक्तोपसृप्यम् । देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागस्तत्परिभवादौ द्वेषस्तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातः संततः सर्वेषां नः प्रत्यक्षः । तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यं गम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति । कथम्? 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मु० २।२।८) इत्युक्त्वा ब्रवीति—'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु० ३।२।८) इति । ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे—'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (बृ० ४।४।७)

## भामती ।

मोहश्च विषादः, शोकः । परं हिरण्यगर्भाद्यवरं यस्य तद्ब्रह्म तथोक्तम् । तस्मिन्ब्रह्मणि यद्दृष्टं दर्शनं तस्मिंस्तदर्थमिति यावत् । यथा 'चर्मणि द्वीपिनं हन्ति' इति चर्मार्थमिति गम्यते । नामरूपादित्यप्यविद्याभिप्रायम् । **कामा येऽस्य**

## वेदान्तकल्पतरुः ।

शोक इति च विषादव्याख्या । परावर इति श्रुतिपदं व्याचष्टे—**परमिति** । भाष्ये सूत्रोपात्तमुक्तपदव्याख्यानाय भिद्यते हृदयग्रन्थिरिति मन्त्रमुदाहृत्य ज्ञानादज्ञाननिवृत्तौ ब्रह्मणः प्राप्यत्वमुपसृप्यपदार्थ इति च वक्तुं "तथा विद्वानिति" मन्त्र उदाहृतस्तत्रश्चोत्तरमन्त्रे विद्वानित्यभिधास्यमानं ज्ञानं पूर्वमन्त्रे भिद्यत इत्यादिकर्मसंयोगे निमित्तार्थया दृष्टे इति सप्तम्या निर्दिष्टम् । निष्ठा च भावे । दर्शनार्थश्चाविद्यादेः परोक्षज्ञानाच्छिथिलीभावो भिद्यत इत्यादिनोक्त इत्यभिप्रेत्येत्याह—**तस्मिन्ब्रह्मणीति** । उत्तरमन्त्रस्थनामरूपशब्दार्थमाह—**नामेति** ॥२॥ **यत्तु**—कश्चिदाह सूत्रेणाऽनिरस्तत्वान्न वाय्वादिपूर्वपक्ष इति, तत्राह—

## कल्पतरुपरिमलः ।

गौणुपसर्जनस्यापि पयसस्तत्पदेन परामर्शः । तत्र च स्त्रीलिङ्गमामिक्षापदसामानाधिकरण्यप्रयुक्तम् । आमिक्षापदं च संस्कारकदधिसंपर्कघनीभूतस्य पयसो वाचकं, न तज्जन्यस्य द्रव्यान्तरस्य न दध्नो नापि संसृष्टयोर्दधिपयसोर्वाचकम् । अतो दध्यानयनं पयोरूपामिक्षाप्रयुक्तमित्यामिक्षापचार इव वाजिनापचारे न पुनस्तदर्थं पयोन्तरे दध्यानयनं कार्यं, वाजिनस्यानुनिष्पादितत्वाद्, आमिक्षायाः पयस्त्वात्तस्यां पयस एव धर्माः, न दध्नो नापि दधिपयसोरित्यङ्गीक्रियते, एवमिहापि योग्यतया ज्ञानस्यैष इत्यनेन परामर्शोऽङ्गीकार्य इति भावः । **ननु**—क्रियाया अयोग्यत्वेऽपि दध्नोऽस्ति योग्यत्वं, तच्च क्रियां प्रति कर्मतया प्रधानमिति दध्नस्तत्पदेन परामर्शः किं न स्यात् ? यद्युच्येत नयतेर्द्विकर्मकत्वेन कर्मान्तरापेक्षायां पयः कर्मान्तरं, तत्र च सप्तमीनिर्देशः प्रधानकर्मत्वज्ञापनार्थः; अन्यथा दधिपयसोरुभयोरपि द्वितीयायां पयसि दध्यानयनं कार्यं दध्नि वा पयआनयनमिति संदेहः स्यादतः प्रधानं पयः सर्वनाम्ना परामृश्यत इति, एवं तर्ह्यप्रधानस्य सर्वनाम्ना परामर्शे नेदमुदाहरणं स्यादित्याशङ्क्य **शब्दत** इति विशेषितम् । अर्थतः प्रधानस्यापि शब्दतोऽप्रधानस्य सर्वनाम्ना परामर्शे इदमुदाहरणं कृतम् । एवं च ज्ञानस्य विधेयत्वेनार्थगत्या प्राधान्येऽपि शब्दगत्या ज्ञेयोपसर्जनत्वाद्राजपुरुषादावर्थप्राधान्यतः शब्दप्राधान्यस्यैव बलवत्त्वदर्शनात् शब्दतोऽप्रधानसर्वनामपरामर्शनीयतेति शङ्कायां गुणकर्मत्वाभावादपोऽश्नातीतिवत्तं जानथेत्यत्राऽनीप्सितकर्मणि द्वितीयेति शब्दतोऽपि प्राधान्ये समर्थयितुं शक्येऽपि शब्दतोऽप्राधान्यमभ्युपेत्य न चेदमैकान्तिकमित्यादिटीकाग्रन्थः प्रवृत्त इति दर्शितं भवति । एवमिह ज्ञेयस्य शाब्दप्राधान्योक्तिरभ्युपेत्यवाद इत्येतदसत्यपि ज्ञेयप्राधान्यनिर्देश इति प्राचीनग्रन्थगतापिशब्देन ध्वनितम् । **एतेन**—"स एषोऽन्तश्चरते बहुधा जायमानः दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः" इत्याद्यनन्तरमन्त्राम्नातैतच्छब्दानामात्मपरत्वदर्शनादस्यापि तत्परत्वं युक्तमिति शङ्कापि—**निरस्ता**; तेषां ज्ञानपरत्वासंभवेन तद्विषयात्मपरत्वकल्पनेऽप्यस्य तस्मिन्नेव मन्त्रे विधेयत्वेन प्रधाने समभिव्याहृतसेतुपदपर्यन्तस्वारसिकान्वययोग्ये ज्ञाने वृत्तिसंभवे तदुल्लङ्घनेन तद्विषयपरत्वकल्पनाऽयोगात् ॥ १ ॥ **ननु** "भिद्यते हृदयग्रन्थि"रिति मन्त्रस्य टीकाकृतं व्याख्यानमयुक्तम्; तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभातीति पूर्वमन्त्रेणानन्दरूपब्रह्मदर्शने वर्णिते तद्दर्शनेन हृदयग्रन्थिभेदादिरूपाऽनर्थनिवृत्तिरपि भवतीति वर्णयितुं तदनन्तरस्य मन्त्रस्य प्रवृत्तिरिति प्रतीतेस्तदनुसारेण तस्मिन् ब्रह्मणि दृष्टे सति हृदयग्रन्थिः स्वयमेव भिद्यत इत्याद्यर्थवर्णनौचित्यात्, इत्याशङ्क्याह—**भाष्ये सूत्रोपात्तेति** । भाष्ये सौत्रयोर्मुक्तोपसृप्यपदयोर्विवरणार्थमित्युक्त्वा ब्रवीतीति क्त्वाप्रत्ययेनास्य मन्त्रस्य तथा विद्वानिति मन्त्रेण संबन्धस्योक्ततया तं संबन्धं हृदयग्रन्थिभेदनादिरूपमहाप्रयत्नसाध्यं तद्विज्ञानेन परिपश्यन्तीति पूर्वमन्त्रप्रस्तुतं ब्रह्मदर्शनं तत्फलमविद्यानिवृत्तिपूर्वकब्रह्मप्राप्तिरित्येवंरूपं दर्शयितुं तस्मिन् दृष्ट इति व्यधिकरणसप्तम्यौ, दृष्ट इति निमित्तसप्तमी, भिद्यन्त इत्यादयः कर्मणि लकारा इति टीकाकृतं व्याख्यानं युक्तमेवेत्याशयः । **कर्मसंयोग इति** । निमित्तात्कर्मणः संयोगे सप्तमी वक्तव्येति वार्तिकान्निमित्तार्था सप्तमी । **दर्शनार्थश्चेति** । एवं च हृदयग्रन्थिभेदनादिकं फलमेवात्र निमित्ततया विवक्षितम् । फलस्याप्यनुसंधीयमानस्य स्वोद्देश्यकपुरुषव्यापारप्रयोजकतया वैवक्षिकं निमित्तत्वम् । चर्मणि द्वीपिनमित्युदाहरणेऽप्येवमेव । **नामरूपशब्दार्थमिति** । कारणे कार्यवाचकशब्दप्रयोगः कार्यसहितकारणमुक्त-

इत्येवमादौ। प्रधानादीनां तु न कचिन्मुक्तोपसृप्यत्वमस्ति प्रसिद्धम्। अपि च 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति वाग्विमोकपूर्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते। तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम्—'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' (बृ ४।४।२१) इति। तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म ॥ २॥

## नानुमानमतच्छब्दात् ॥ ३॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह। नानुमानिकं सांख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम्। कस्मात्? अतच्छब्दात्। तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दः, न तच्छब्दोऽतच्छब्दः। न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति, येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वावगम्येत। तद्विपरीतस्य चेतनस्य प्रतिपादकशब्दोऽत्रास्ति—'यः सर्वज्ञः सर्ववित्' (मु० १।१।९) इत्यादिः। अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥ ३॥

## प्राणभृच्च ॥ ४॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च संभवति; तथाप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसंभवे सत्यस्मादेवातच्छब्दात्प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः। न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक्संभवति। पृथग्योगकरणमुत्तरार्थम् ॥ ४॥ कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## भेदव्यपदेशात् ॥ ५॥

भेदव्यपदेशश्चेह भवति—'तमेवैकं जानथ आत्मानम्' इति ज्ञेयज्ञातृभावेन। तत्र प्राणभृत्तावन्मुमुक्षुत्वाज्ज्ञाता, परिशेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत् ॥ ५॥ कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## प्रकरणात् ॥ ६॥

प्रकरणं चेदं परमात्मनः, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु० १।१।३) इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात्। परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यान्न केवले प्राणभृति ॥ ६॥ कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## स्थित्यदनाभ्यां च ॥ ७॥

द्युभ्वाद्यायतनं च प्रकृत्य 'द्वा सुपर्णा सयुजा सखाया' (मु० ३।१।१) इत्यत्र स्थित्यदने

---

### भामती।

**हृदि श्रिता इति**। कामा इत्यविद्यामुपलक्षयति ॥ २॥ नानुमानमित्युपलक्षणम्। नाव्याकृतमित्यपि द्रष्टव्यं हेतोरुभयत्रापि साम्यात् ॥ ३॥ चेनातच्छब्दत्वं हेतुरनुकृष्यते। स्वयं च भाष्यकृदत्र हेतुमाह—**न चोपाधिपरिच्छिन्नस्येति**। **न सम्यक् संभवति**। नाञ्जसमित्यर्थः। भोग्यत्वेन हि आयतनत्वमिति क्लिष्टम्। **स्यादेतत्**—यद्यतच्छब्दत्वादित्यत्रापि हेतुरनुकृष्टव्यः, हन्त कस्मात्पृथग्योगकरणं, यावता 'न प्राणभृदनुमाने' इत्येक एव योगः कस्मान्न कृत इत्यत आह—**पृथगिति**। **'भेदव्यपदेशात्'** इत्यादिना हि प्राणभृदेव निषिध्यते, न प्रधानं, तच्चैकयोगकरणे दुर्विज्ञानं स्यादिति ॥ ४॥ ५॥ न खलु हिरण्यगर्भादिषु ज्ञातेषु सर्वं ज्ञातं भवति किंतु ब्रह्मण्येवेति ॥ ६॥ यदि जीवो हिरण्यगर्भो वा

### वेदान्तकल्पतरुः।

**नाव्याकृतमित्यपीति**। साधारणहेतुनिर्देशाद् अव्याकृतवादाद्यपि पूर्वपक्षत्वेन सूचितमित्यर्थः ॥३॥४॥५॥६॥ न चोपा-

### कल्पतरुपरिमलः।

त्वप्रत्यायनार्थ इति भावः ॥ अव्याकृतग्रहणं वाय्वादीनामप्युपलक्षणमित्याह—**आव्याकृतेति** ॥३॥४॥५॥६॥ (यावतेत्येतत्पदं यत इत्याशङ्क्येत्यनेन विवृतम्)। **ननु**—जीवात्मनः प्रसिद्धत्वे तदधिगमाय ब्रह्मावबोध्यत इत्ययुक्तं प्रसिद्धस्याऽन-

निर्दिश्येते । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति कर्मफलाशनं अनश्नन्नन्योऽअभिचाकशीति' इत्यौदासीन्येनावस्थानं च । ताभ्यां च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते । यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितस्ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते । अन्यथा ह्यप्रकृतवचनमाकस्मिकमसंबद्धं स्यात् । ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत । न; तस्याविवक्षितत्वात् । क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसंबद्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते । ईश्वरस्तु लोकतोऽप्रसिद्धत्वाच्छ्रुत्या तात्पर्येण विवक्ष्यत इति न तस्याकस्मिकं वचनं युक्तम् । 'गुहां प्रविष्टावात्मानौ हि' इत्यत्राप्येतद्दर्शितम्—'द्वा सुपर्णा' इत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते इति । यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदापि न विरोधः कश्चित् । कथम्, प्राणभृद्धीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति निषिध्यते । यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते परमात्मैव स भवति । यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति । तद्वत्प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते । तस्मात्सत्त्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः । तस्मात्परमेव ब्रह्म द्युभ्वाद्यायतनम् । तदेतत् 'अदृश्यत्वादिगुणको

---

### भामती ।

द्युभ्वाद्यायतनं भवेत्, ततस्तत्प्रकृत्या 'अनश्नन्नन्योऽअभिचाकशीति' इति परमात्माभिधानमाकस्मिकं प्रसज्येत । नच हिरण्यगर्भ उदासीनः; तस्यापि भोक्तृत्वात् । नच—जीवात्मैव द्युभ्वाद्यायनं, तथा सति स एवात्र कथ्यते, तत्कथनाय च ब्रह्मापि कथ्यते, अन्यथा सिद्धान्तेऽपि जीवात्मकथनमाकस्मिकं स्यादिति—वाच्यम्; यतोऽनधिगतार्थावबोधनस्वरसेनाम्नायेन प्राणभृन्मात्रप्रसिद्धजीवात्माधिगमायात्यन्तानवगतमलौकिकं ब्रह्मावबोध्यत इति सुभाषितम् । **यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनेति** । तत्र हि 'अनश्नन्नन्योऽअभिचाकशीति' इति जीव उपाधिरहितेन रूपेण ब्रह्मस्वभाव उदासीनोऽभोक्ता दर्शितः । तदर्थमेवाचेतनस्य बुद्धिसत्त्वस्यापारमार्थिकं भोक्तृत्वमुक्तम् । तथा चेत्थंभूतं जीवं कथयतानेन मन्त्रवर्णेन द्युभ्वाद्यायतनं ब्रह्मैव कथितं भवति, उपाध्यवच्छिन्नश्च जीवः प्रतिषिद्धो

### वेदान्तकल्पतरुः ।

धिपरिच्छिन्नस्येति भाष्ये चकारप्रयोगात्सौत्रचशब्दव्याख्यात्वभ्रममपाकरोति—**नचेति** । जीवात्मैव द्युभ्वाद्यायतनमिति न वाच्यमित्यन्वयः । **जीवात्माधिगमायेति** । प्रसिद्धं जीवस्वरूपमनूद्याज्ञस्य पारमार्थिकस्वरूपाधिगमायेत्यर्थः । प्रकरणे न पठितमिति कृत्वा चिन्ता न युक्ता; **प्रकरणादिति** सूत्रादिति केनचिदयुक्तमुक्तं; कृत्वा चिन्तोद्घाटनार्थत्वात्सूत्रस्य । इदं

### कल्पतरुपरिमलः ।

धिगमनीयत्वादित्याशङ्क्य व्याचष्टे—**प्रसिद्धमिति** ॥ **कृत्वाचिन्तोद्घाटनार्थत्वादिति** । यद्यपि लिङ्गेन प्रकरणमुपमृद्य पूर्वपक्षः कर्तुं शक्यः; अन्यविषयत्वेऽपि प्रकरणाविरोधित्वमपि श्वेताश्वतरपठिताजामन्त्रवदत्रैव मुण्डके तयोरन्यः पिप्पलं स्वाद्वत्ति, समाने वृक्षे पुरुषो निमग्न इत्यादिवच्च समर्थयितुं शक्यं; तथाप्यत्रान्यविषयत्वोपपादकं बलवल्लिङ्गमेव नास्ति निश्चितब्रह्मतात्पर्येऽन्यविषयत्वपूर्वपक्षशङ्कानास्पदे "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥" इति श्वेताश्वतरमन्त्रे ब्रह्मण्यमृतसेतुत्वव्यपदेशदर्शनेन तस्य ब्रह्मधर्मताया एव प्रतीतेः, ब्रह्मण्यमृतसेतुत्वश्रवणेनैव अमृतस्यैष सेतुरित्येतदर्थत्वेन कल्पितयोः ब्रह्मभिन्नत्वपारवत्त्वयोरलिङ्गत्वमभिप्रेत्य नानुमान ( व्या. सू.अ. १ पा. ३ सू. ३ ) मिति सूत्रे प्रधानजीवादिपूर्वपक्षगमकशब्दाभावोक्तेश्च, तथात्वेऽपि न्यायतः श्वेताश्वतरसाधारणतद्व्यपदेशगतिप्रदर्शनार्थमिह तद्व्यपदेशस्य ज्ञानान्वयोपि संभवतीति न्यायान्तरप्रदर्शनार्थं चाधिकरणारम्भात् । अतः प्रकरणानुसन्धानेन बलवतानन्यथासिद्धेन प्रकरणेन प्राकरणिकब्रह्मपरामर्शियच्छब्दरूपसर्वनामश्रुत्या च मन्त्रस्य ब्रह्मपरत्वं स्पष्टं भवेदिति कृत्वाचिन्तारूपत्वमधिकरणस्योक्तम् । **ननु**—अस्य मन्त्रस्य प्रकरणे पाठो नास्तीति कृत्वाचिन्ता चेत् "कथं ब्रह्मैवेदममृतं पुरस्तात्" "तथा विद्वान् नामरूपाद्विमुक्तः" "यः सर्वज्ञः सर्ववि"दिति प्राकरणिकश्रुतिलिङ्गोपन्यासः । **उच्यते**; पूर्वसूत्रेऽप्यात्मश्रुतिर्वाग्विमुक्तैर्ज्ञेयत्वं प्रधानादिपक्षगमकशब्दाभावश्चेत्येतन्मन्त्रपर्यालोचनामात्रलभ्या एवार्थाः सूत्रिताः । प्राकरणिकश्रुतिलिङ्गान्तरपरतया स्वशब्दादिव्याख्यानान्तरं तु प्रकरणोद्घाटनानन्तरं प्राकरणिकान्यपि श्रुतिलिङ्गान्यत्र प्रवर्तिष्यन्त इति हृदयेन प्रागेव सूत्रार्थतयोपन्यस्तानि । स्थित्यदनसूत्रस्य ( व्या. सू. अ. १ पा. ३ सू. ७ ) प्रकरणोद्घाटनानपेक्षो नास्त्यर्थ इति मत्वा तत्सूत्रमेकं प्रकरणसूत्रानन्तरं कृतम् ॥ पुरुष एवेति निर्दिष्टं पुरुषं यस्मिन् द्यौरित्यादिमन्त्रोक्तेन विशेषणेन विशिंषन्नोतशब्द-

धर्मोक्तेः' इत्यनेनैव सिद्धम् । तस्यैव हि भूतयोनिवाक्यस्य मध्य इदं पठितम्—'यस्मिन्द्यौः पृथिवी चान्तरिक्षम्' इति, प्रपञ्चार्थं तु पुनरुपन्यस्तम् ॥ ७ ॥ इति प्रथमं द्युभ्वाद्यधिकरणम् ॥

( २ अधिकरणम् ) **भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥**

इदं समामनन्ति—'भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' ( छा० ७।२३,२४ ) इत्यादि । तत्र संशयः—किं प्राणो भूमा स्यात्, आहोस्वित्परमात्मेति । कुतः संशयः? भूमेति तावद्बहुत्वमभिधीयते; 'बहोर्लोपो भू च बहोः' ( पा० ६।४।१५८ ) इति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात् । किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकाङ्क्षायां 'प्राणो वा आशाया भूयान्' ( छा० ७।१५।१ ) इति संनिधानात्प्राणो भूमेति प्रति-

### भामती ।

भवतीति न पैङ्गिब्राह्मणविरोध इत्यर्थः । **प्रपञ्चार्थमिति** । तन्मध्ये न पठितमिति कृत्वाचिन्तयेदमधिकरणं प्रवृत्तमित्यर्थः ॥ ७ ॥ **इति प्रथमं द्युभ्वाद्यधिकरणम् ॥**

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

नारदः खलु देवर्षिः कर्मविदनात्मवित्तया शोच्यमात्मानं मन्यमानो भगवन्तमात्मज्ञमाजानसिद्धं महायोगिनं सनत्कुमारमुपससाद । उपसद्य चोवाच, भगवन्, अनात्मज्ञताजनितशोकसागरपारमुत्तारयतु मां भगवानिति । तदुपश्रुत्य सनत्कुमारेण 'नाम ब्रह्मेत्युपास्स्व' इत्युक्ते नारदेन पृष्टं किं नाम्नोऽस्ति भूय इति । तत्र सनत्कुमारस्य प्रतिवचनम्—'वाग्वाव नाम्नो भूयसी' इति । तदेवं नारदसनत्कुमारयोर्भूयसी प्रश्नोत्तरे वागिन्द्रियमुपक्रम्य मनःसंकल्पचित्तध्यानविज्ञानबलान्नतोयवायुसहिततेजोनभःस्मराशाप्राणेषु पर्यवसिते । कर्तव्याकर्तव्यविवेकः **संकल्पः** तस्य कारणं पूर्वापरवि-

### वेदान्तकल्पतरुः ।

विश्वं पुरुष एव यस्मिन्पृथिव्याद्योतं समाश्रितं किं तदिति ॥ अत आह—**कर्मा**ग्निहोत्रादि । तपो ज्ञानम् अर्थात्तत्फलं च । स च पुरुषः परामृतं ब्रह्म ॥ ७ ॥ **इति प्रथमं द्युभ्वाद्यधिकरणम् ॥**

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

आत्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तत्रात्मशब्दः प्राणेऽनेकान्तः । तरति शोकमात्मविदित्यत्राब्रह्मणि प्राणे प्रयोगादित्याक्षेपिकी सङ्गतिः । आख्यायिकामर्थतोऽनुक्रामन् विषयं विविनक्ति—**नारद इत्यादिना । आजानसिद्धं** स्वभावसिद्धम् । भगवन्तमुपसद्य यदुवाच तदाह—**अनात्मज्ञतेति** । प्राणेषु पर्यवसिते भूयसि बहुतरे प्रश्नोत्तरे इत्यन्वयः । तेजो वा अद्भ्यो भूय इत्यत्र वायुरपि ग्राह्य इत्याह—**वायुसहितेति** । संकल्पादिपदार्थान् व्याचष्टे—**कर्त्तव्येत्यादिना ॥ पूर्वापरेति** । पूर्वे चापरे च विषया निमित्तं यस्य प्रयोजनस्य तन्निरूपणमित्यर्थः । वर्णनिष्पादिनी वाङ् नाम्नो भूयसी ।

### कल्पतरुपरिमलः ।

स्वार्थमाह—**यस्मिन्निति । किं तदिति** । किं तदिदं विश्वमित्यनेनोक्तमित्यर्थः । **ननु**—कर्मतपोभ्यामन्यदपि विश्वशब्दकोडीकार्यमस्तीत्याशङ्क्याह—**अर्थात्तत्फलं चेति** । अत्रात्मश्रुतिस्तावदस्पष्टा; आत्मा जीवे धृतौ देहे स्वभावे परमात्मनीत्यभिधानकोशानुसारेण य आत्मनि तिष्ठन्नित्यादिप्रयोगानुसारेण चानेकसाधारण्यात्, तस्य ब्रह्मपरतायामाप्लृ व्याप्ताविति धातोर्मनिन्प्रत्यये बाहुलके तकारे च सति तन्निष्पत्तेर्योगरूढ्युभयानुग्रहो भवतीति युक्त्या सोन्मेषणीया । द्युभ्वाद्यायतनत्वं चानेकसाधारणं सदायतनाः सत्प्रतिष्ठा इति श्रुत्यन्तरपर्यालोचनयोन्मेषणीयम् । वाग्विमुक्तज्ञेयत्वं च ब्रह्मधर्मत्वेनाप्रसिद्धं तमेव धीर इत्यादिश्रुत्यन्तरपर्यालोचनयोन्मेषणीयम् । कर्मकर्तृभेदव्यपदेशस्त्वभ्युच्चयमात्रं; मनःप्राणाद्याश्रयमेव युष्माकं स्वभावं स्वरूपं जानीध्वं, न तु मनःप्राणादिकमित्युपदेशोपपत्तेः, एवंविधोपदेशानां बहुलमुपलम्भात् । यद्यत्र विवक्षितं मुमुक्षुज्ञेयत्वं सांसारिके जीवस्वरूपे न संभवतीति ततो भेदव्यपदेशः समर्थ्येत, तर्हि तदप्यस्पष्टमित्यस्पष्टब्रह्मलिङ्गता ॥७॥ **इति प्रथमं द्युभ्वाद्यधिकरणम् ॥**

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

**वायुरपि ग्राह्य इति** । अप्तेजोवाय्वाकाशानां क्रमेणोत्तरोत्तरकारणत्वादिति भावः । अपां तेज इति पाठः । अपां

---

१ तत्र सूत्राणि ७—द्युभ्वाद्यायतनं स्वशब्दात् १ मुक्तोपसृप्यव्यपदेशात् २ नानुमानमतच्छब्दात् ३ प्राणभृच्च ४ भेदव्यपदेशात् ५ प्रकरणात् ६ स्थित्यदनाभ्यां च ७ ॥

**भाति । तथा 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽयं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु' ( छा० ७।१।३ ) इति प्रकरणोत्थानात्परमात्मा भूमेत्यपि प्रतिभाति । तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः । किं तावत्प्राप्तम्? प्राणो भूमेति । कस्मात्? भूयःप्रश्नप्रतिवचनपरंपरादर्शनात् । यथा हि 'अस्ति भगवो नाम्नो**

## भामती ।

पयनिमित्तप्रयोजननिरूपणं **चित्तम्** । **स्मरः** स्मरणम् । प्राणस्य च समस्तक्रियाकारकफलभेदेन पित्राद्यात्मत्वेन च रथारनाभिदृष्टान्तेन सर्वप्रतिष्ठत्वेन च प्राणभूयस्त्वदर्शिनोऽतिवादित्वेन च नामादिप्रपञ्चादाशान्ताद्भूयस्त्वमुक्त्वाऽपृष्ट एव नारदेन सनत्कुमार एकग्रन्थेन 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यादीन्कृतिपर्यन्तानुक्त्वोपदिदेश— 'सुखं त्वेव विजिज्ञासितव्यम्' इति । तदुपश्रुत्य नारदेन 'सुखं त्वेव भगवो विजिज्ञासे' इत्युक्ते सनत्कुमारः 'यो वै भूमा तत्सुखम्' इत्युपक्रम्य भूमानं व्युत्पादयांबभूव—'यत्र नान्यत्पश्यति' इत्यादिना । तदीदृशे विषये विचार आरभ्यते । तत्र संशयः—किं प्राणो भूमा स्यादाहो परमात्मेति । भावभवित्रोस्तादात्म्यविवक्षया सामानाधिकरण्यं संशयस्य बीजमुक्तं भाष्यकृता । **तत्र—एतस्मिन् ग्रन्थसंदर्भे यदुक्ताद्भूयसोऽन्यतः । उच्यमानं तु तद्भूय उच्यते प्रश्नपूर्वकम् ॥** नच प्राणात् किं भूय इति पृष्टम् । नापि भूमा वाऽस्माद्भूयानिति प्रत्युक्तम् । तस्मात्प्राणभूयस्त्वाभिधानानन्तरमपृष्टेन भूमोच्यमानः प्राणस्यैव भवितुमर्हति । **अपिच** भूमेति भावो न भवितारमन्तरेण शक्यो निरूपयितुमिति भवितारमपेक्षमाणः प्राणस्यानन्तर्येण बुद्धिसंनिधानात्तमेव भवितारं प्राप्य निर्वृणोति । यस्योभयं हविरार्तिमार्छेत्' इत्यत्रार्तिरिवार्तं हविः । **यथाहुः**—'मृष्यामहे हविषा विशेषणम्' इति । न च—आत्मनः प्रकरणादात्मैव बुद्धिस्थ इति तस्यैव भूमा स्यादिति—युक्तम्; सनत्कुमारस्य 'नाम ब्रह्मेत्युपास्स्व' इति प्रतीकोपदेशरूपेणोत्तरेण नारदप्रश्नस्यापि तद्विषयत्वेन परमात्मोपदेशप्रकरणस्यानुत्थानात्, अतद्विषयत्वे चोत्तरस्य प्रश्नोत्तरयोर्वैयधिकरण्येन

## वेदान्तकल्पतरुः ।

वाक्प्रेरकत्वाद्वाचो मनो भूयः । कुर्यामिति निश्चयस्य मनसः कर्तव्यादिविवेकः संकल्पः कारणम् । तस्य चातीतादिविषयसाध्यप्रयोजनज्ञानं चित्तम् । तस्मादपि लौकिकविषयाच्छास्त्रीयदेवताद्यैकाग्र्यं ध्यानं फलतो भूयः । ध्यानस्य विज्ञानं शास्त्रीयं कारणं तस्य मनोगतं बलं प्रतिभानसामर्थ्यं कारणम् । तस्याद्यमानमन्नम् । तस्यापः । एवमाकाशपर्यन्तं ज्ञेयम् । आकाशस्य भोग्यत्वे स्मरः स्मरणम् । तस्याशा तया हीष्टं तात्पर्येण स्मरति । प्राणो नामाद्याशान्तसर्वहेतुतया भूयानित्युत्तरोत्तरभूयस्त्वं द्रष्टव्यम् । भवतु प्राणे प्रश्नप्रत्युक्तिपर्यवसानं; तथापि न तस्य भूमत्वशङ्का, एष त्विति तुशब्देन ग्रन्थं विच्छिद्य भूमोपदेशादित्याशङ्क्य विषयप्रदर्शनावसर एव संशयोपयोगितया पूर्वपक्षसम्भावानामाह—**प्राणस्येति** । सर्वात्मत्वलिङ्गात् प्राण एव भूमा, तुशब्दस्तु सत्यप्राणवेदिन एव नामाद्यतिवादित्वाद्विशेषार्थ इति संभवः पूर्वपक्षस्येत्यर्थः ॥ प्राणस्य भूमत्वे लिङ्गान्तरमाह—**अपृष्ट एवेति** । यदि प्राणादन्यो भूमा, तर्हि प्राग्वत् प्रश्नेन भाव्यमित्यर्थः । भूमशब्दस्य निष्कृष्टवहुत्ववचनत्वात् किं प्राणो भूमेति भाष्ये सामानाधिकरण्यायोगमाशङ्क्याह—**भावभवित्रोरिति** । भाष्यकारेण प्राणसंनिधिरात्मप्रकरणं च संशयवीजमुक्तमयुक्तम्, प्रबलदुर्बलाभ्यां संशयायोगादित्याशङ्क्याह—**संशयस्येति** । इदं हि विशुद्धविज्ञानेन भाष्यकृतोक्तमतो यथाश्रुतालोचिभिर्नावज्ञेयम् । उपपत्तिं त्वनन्तरमेव वक्ष्याम इति भावः । पूर्वपक्षमाह—**एतस्मिन्निति** । यो वै भूमेत्युक्तो भूमा, न प्राणादन्यस्य, अस्ति भगव आशाया भूय इति प्रश्नातिरिक्तप्रश्नाविषयत्वे सत्येतद्ग्रन्थस्थभूमरूपत्वाद्, आशापेक्षप्राणभूमवदित्यनुमानं सूचितम् । आर्तिमात्रस्योद्देश्यत्वाऽपर्यवसानाद्धविषा विशेषणं सहामहे, पर्यवसितस्य ह्युद्देश्यस्य विशेषणं वाक्यभेदावहं ग्रहस्यैवैकत्वमिति शबरस्वामिन आहुः । संशयबीजोपपत्तिमनन्तरमेव वक्ष्याम इत्यवादिष्म, तामिदानीमाह—**न चात्मन इत्यादिना** ॥ निर्णीतार्थप्रतीकविषयोत्तरवशात्प्रश्नोऽपि प्रतीकपरः, आत्मशब्दश्च नामादिष्वारोप्यमाणब्रह्मविषयः । प्रश्नस्यारोप्याविषयत्वे दूषणमाह—**अतदिति** । प्रश्नो यद्यात्मविषयः स्यात्तदोत्तरस्य प्रतीकविषयस्यातद्विषयत्वमपृष्टविषयत्वं स्यात्तदा च प्रश्नोत्तरयोर्वैयधिकरण्यमित्यर्थः । प्रश्नस्येति

## कल्पतरुपरिमलः ।

नभ इति तु प्रामादिकः पाठः । केषुचिद्ग्रन्थेष्वपामिति वाक्यमेव नास्ति । **एवमाकाशपर्यन्तमिति** । तेजसो वायुर्वायोराकाश इति क्रमेणेति यावत् । **आकाशस्य भोग्यत्व इति** । संमर्दावस्थानक्लिष्टस्यासंबाधावस्थानसौख्यहेतुत्वकाशात्मना अन्यैरप्येतादृशैः प्रकारैराकाशस्य भोग्यता । **भावभवित्रोरितीति** । स य एषोऽणिमा धातुः प्रसादान्महिमानमीशमित्यादाविवेति भावः । **न प्राणादन्यस्येति** । न प्राणान्यधर्मिक इत्यर्थः । **आर्तिमात्रस्येति** । यस्योभयं हविरार्तिमार्च्छेत्यैन्द्रं पञ्चशरावमोदनं निर्वपेदिति वाक्य इति शेषः ॥ **आत्मशब्दश्चेति** । **ननु**—प्राक् सङ्गतिग्रन्थे प्राण एवेहात्मा विवक्षित इति भाष्यानुसारेणात्मशब्दः प्राणपरतया व्याख्यातः, कथमिह स यो नाम ब्रह्मेत्युपास्त इत्यादिवाक्य-

भूयः' इति, 'वाग्वाव नाम्नो भूयसी' इति। तथा 'अस्ति भगवो वाचो भूयः' इति, 'मनो वाव वाचो भूयः' इति च नामादिभ्यो ह्या प्राणाद्भूयःप्रश्नप्रतिवचनप्रवाहः प्रवृत्तः। नैवं प्राणात्परं भूयःप्रश्नप्रतिवचनं दृश्यतेऽस्ति भगवः प्राणाद्भूय इत्यदो वाव प्राणाद्भूय इति। प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसं 'प्राणो वा आशाया भूयान्' इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वम्—'अतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' इत्यभ्यनुज्ञाय 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्या-

## भामती।

विप्रतिपत्तेरप्रामाण्यप्रसङ्गात्। तस्मादसति प्रकरणे प्राणस्यानन्तर्यात्तस्यैव भूमेति युक्तम्। तदेतत्संशयबीजं दर्शयता भाष्यकारेण सूचितं पूर्वपक्षसाधनमिति न पुनरुक्तम्। नच—भूयोभूयः प्रश्नात्परमात्मैव नारदेन जिज्ञासित इति—युक्तम्; प्राणोपदेशानन्तरं तस्योपरमात्। तदेवं प्राण एव भूमेति स्थिते यद्यत्तद्विरोधितया वचः प्रतिभाति तत्तदनुगुणतया नेयम्। नीतं च भाष्यकृता। **स्यादेतत्**—'एष तु वा अतिवदति' इति तुशब्देन प्राणदर्शिनोऽतिवादिनो व्यवच्छिद्य सत्येनातिवादित्वं वदन् कथं प्राणस्य भूमानमभिदधीतेत्यत आह—**प्राणमेव त्विति। प्राणदर्शिनश्चातिवादित्वमिति।** नामाद्याशान्तमतीत्य वदनशीलत्वमित्यर्थः। **एतदुक्तं भवति**—नायं तुशब्दः प्राणातिवादित्वाद्व्यवच्छिनत्ति, अपितु तदतिवादित्वमपरित्यज्य प्रत्युत तदनुकृष्य तस्यैव प्राणस्य सत्यस्य श्रवणमनन-श्रद्धानिष्ठाकृतिभिर्विज्ञानाय निश्चयाय सत्येनातिवदतीति प्राणव्रतमेवातिवादित्वमुच्यते। तुशब्दो नामाद्यतिवादित्वाद्व्यवच्छिनत्ति। न नामाद्याशान्तवाद्यतिवादी, अपितु सत्यप्राणवाद्यतिवादीत्यर्थः। अत्र चागमाचार्योपदेशाभ्यां सत्यस्य श्रवणम्। अथागमाविरोधिन्यायनिवेशनं मननं, मत्वा च गुरुशिष्यसब्रह्मचारिभिरनसूयुभिः सह संवाद्य तत्त्वं श्रद्धत्ते। श्रद्धानन्तरं च विषयान्तरदर्शी विरक्तस्ततो व्यावृत्तस्तत्त्वज्ञानाभ्यासं करोति, सेयमस्य कृतिः प्रयत्नः। अथ तत्त्वज्ञानाभ्यासनिष्ठा भवति, यदनन्तरमेव तत्त्वविज्ञानमनुभवः प्रादुर्भवति। **तदेतद्बाह्या अप्याहुः**—'भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम्' इति भावनाप्रकर्षपर्यन्तो निष्ठा तस्माज्जायते तत्त्वानुभव इति। तस्मात्प्राण

## वेदान्तकल्पतरुः।

यदि पाठो लभ्यते तदा सुगममिति॥ **तदेतदिति।** प्रकरणानुत्थानम्। प्रकरणमेव प्राणसंनिधिसमकक्षत्वेन संशयबीजं दर्शयता भाष्यकारेण प्रकरणत्वमस्य न निश्चितं, संनिधिमात्रमात्मशब्दस्येति सूचितम्। अत एव पूर्वपक्षावसरे पुनर्नोक्तमित्यर्थः। पूर्वपक्षस्तु प्राणस्यात्मशब्दादप्यतिसंनिधानादुत्थित इत्युक्तमपि च भूमेति भाव इत्यत्र। **अपितु** इत्यस्य **नामाद्यतिवादित्वाद्व्यवच्छिनत्तीति** वक्ष्यमाणेनान्वयः। फलितमाह—**तदिति।** वाक्येन प्राणव्रतस्य पुनरुक्तौ प्रयोजनमाह—**न नामेति।** सत्यादिपरम्परयेति भाष्योक्तं सत्यादि दर्शयति—**अत्र चेति।** यदवादि प्रतीकविषयो-

## कल्पतरुपरिमलः।

प्रतिपन्ननामादिप्रतीकारोप्यब्रह्मपरतया व्याख्यायते? **नैष दोषः**; तत्र ब्रह्मशब्दोऽपि सर्वात्मत्वसर्वप्रतिष्ठात्वरूपब्रह्मलिङ्गवत्तया वर्णिते प्राणएव पर्यवस्यतीति तात्पर्यात्। यद्यपि नामादिषु परब्रह्मदृष्टिविध्यङ्गीकारेऽपि दृष्टिविशेषणतयोपसर्जनस्य तस्य न प्राकरणिकत्वं, किं तु तद्दृष्ट्योपासनीयतया प्रधानभूतानां नामादीनामेव, सन्निधानमात्रं तु तस्येति सिध्यति; तथाप्यग्रे ब्रह्मगुणसर्वात्मत्वादिविशिष्टत्वेन प्राणसंकीर्तनस्यावैयर्थ्यार्थं ब्रह्मगुणविशिष्टप्राणदृष्टिविधानार्थं नामादिषु ब्रह्मसंकीर्तनमिति कल्प्यते। अन्यथा नामादिष्विव प्राणे उपासनातत्फलयोरनुक्त्या तद्वैयर्थ्यप्रसङ्गादित्यभिप्रायः। **ननु**—आत्मविषयोपक्रमोपसंहारानुसारेण शोकरूपसंसारतरणोपायप्रार्थनोपक्रमतदुपायकीर्तनोपसंहारानुसारेण च परं ब्रह्मैव महाप्रकरणीत्यङ्गीकृत्य दुर्बलेनापि सन्निधानेन भूयः प्रश्नप्रतिवचनाभावातिवादित्वाख्यप्राणव्रतानुकर्षणरूपलिङ्गद्वयानुगृहीतेन बाधो वक्तुं शक्यः; **दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा। तदापि विपरीतत्वं शिष्टाकोपे यथोदितम्॥ इति** न्यायसाम्यात्। **अथवा**—प्राणो वा आशाया भूयानित्यारभ्य अथातोऽहंकारादेश इत्येतत्पर्यन्तं प्राणस्यावान्तरप्रकरणमङ्गीकृत्य तेन महाप्रकरणस्य बाधो वक्तुं शक्यः। अत एव दार्शपौर्णमासिके महाप्रकरणेऽनुवर्तमानेऽपि अभिक्रामं जुहोत्यभिजित्या इति विधीयमानस्याभिक्रमणस्य प्रयाजावान्तरप्रकरणेन प्रयाजहोमाङ्गता। यद्यपि—**येनाभिक्रमणादूर्ध्वं पुरस्ताच्च गुणोऽपरः। विधीयते प्रयाजानां तस्मात् प्रकरणास्तिता॥** इत्युक्तरीत्या अभिक्रमणविधानात् पश्चादपि प्रयाजानिष्ट्वा हवींष्यभिघारयतीति प्रयाजकीर्तनयुक्तगुणविधानेनेवात्र भूमनिरूपणानन्तरं प्राणकीर्तनयुक्ततद्गुणविधानेन संदंशन्यायो नास्ति; तथापि संदंशवत् प्राणव्रतानुकर्षणादिलिङ्गमपि तदवान्तरप्रकरणानुवृत्तिगमकमिति वक्तुं शक्यमिति—**चेत्, उच्यते;** अनेन प्रकारेण पूर्वपक्षान्तरं प्रकरणान्ते परमात्मविवक्षा भविष्यति भूमा तु प्राण एवेति चेदिति भाष्यगतशङ्काग्रन्थेन दर्शयिष्यत इतीह नोद्घाटितम्॥ **सन्निधिमात्रमात्मशब्दस्येति।** आत्मशब्दः पूर्वपक्षे प्राणपर

दिपरम्परया भूमानमवतारयन्प्राणमेव भूमानं मन्यत इति गम्यते। कथं पुनः प्राणे भूमनि व्याख्यायमाने 'यत्र नान्यत्पश्यति' इत्येतद्भूम्नो लक्षणपरं वचनं व्याख्यायेतेति? उच्यते—सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्तिदर्शनात्संभवति प्राणस्यापि 'यत्र नान्यत्पश्यति' इत्येतल्लक्षणम्। तथाच श्रुतिः—'न शृणोति न पश्यति' इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' (प्र० ४।२।३) इति तस्यामेवावस्थायां प्रश्नवृत्तेः प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति। यच्चैतद्भूम्नः सुखत्वं श्रुतम्—'यो वै भूमा तत्सुखम्' (छा०७।२३) इति, तदप्यविरुद्धम्; 'अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिञ्शरीरे सुखं भवति' (प्र० ४।६) इति सुषुप्त्यवस्थायामेव सुखश्रवणात्। यच्च 'यो वै भूमा तदमृतम्' (छा० ७।२४।१) इति तदपि प्राणस्याविरुद्धं; 'प्राणो वा अमृतम्' (कौ० ३।२) इति श्रुतेः। कथं पुनः प्राणं भूमानं मन्यमानस्य 'तरति शोकमात्मवित्' इत्यात्मविविदिषया प्रकरणस्योत्थानमुपपद्यते? प्राण एवेहात्मा विवक्षित इति ब्रूमः। तथाहि—'प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः' (छा०७।१५।१) इति प्राणमेव सर्वात्मानं करोति। 'यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितम्' इति च सर्वात्मत्वारनाभिनिदर्शनाभ्यां च संभवति वैपुल्यात्मिका भूमरूपता प्राणस्य। तस्मात्प्राणो भूमेत्येवं प्राप्तम्। तत इदमुच्यते—परमात्मैवेह भूमा भवितुमर्हति न प्राणः। कस्मात्? संप्रसादादध्युपदेशात्। संप्रसाद इति सुषुप्तं स्थानमुच्यते; सम्यक्प्रसीदत्यस्मिन्निति निर्वचनात्, बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात्, तस्यां च संप्रसादावस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभिप्रेयते। प्राणादूर्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः। प्राण एव चेद्भूमा स्यात्स एव तस्मादूर्ध्वमुपदिश्येतेत्यश्लिष्टमेवैतत्स्यात्। न हि नामैव नाम्नो भूय इति नाम्न ऊर्ध्वमुपदिष्टम्। किं तर्हि? नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यम्—'वाग्वाव नाम्नो भूयसी' इति। तथा वागादिभ्योऽप्या प्राणादर्थान्तरमेव तत्र तत्रोर्ध्वमुपदिष्टम्। तद्वत्प्राणादूर्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति। ननु—इह नास्ति प्रश्नोऽस्ति भगवः प्राणाद्भूय इति, नापि प्रतिवचनमस्ति प्राणाद्वाव भूयोऽस्तीति, कथं प्राणादधि भूमोपदिश्यत इत्युच्यते? प्राणविषयमेव चातिवादित्वमुत्तरत्रानुकृष्यमाणं पश्यामः—'एष तु वा अतिवदति यः सत्येनातिवदति' इति। तस्मान्नास्ति प्राणादध्युपदेश इति। अत्रोच्यते—न तावत्प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं; विशेषवादात् 'यः सत्येनातिवदति' इति। ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति। कथम्? यथैषोऽग्निहोत्री यः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहोत्रित्वं, केन तर्ह्यग्निहोत्रेणैव सत्यवदनं

### भामती।

एव भूमेति प्राप्तेऽभिधीयते—'एष तु वा अतिवदति यः सत्येनातिवदति' इत्युक्त्वा भूमोच्यते। तत्र सत्यशब्दः परमार्थे निरूढवृत्तिः श्रुत्या परमार्थमाह। परमार्थश्च परमात्मैव। ततो ह्यन्यद्विकारजातमनृतं कयाचिदपेक्षया कथंचित्सत्यमुच्यते। तथाच 'एष तु वा अतिवदति यः सत्येनातिवदति' इति ब्रह्मणोऽतिवादित्वं श्रुत्याऽन्यनिरपेक्षया लिङ्गादिभ्यो बलीयस्यावगमितं कथमिव संनिधानमात्रात् श्रुत्याद्यपेक्षादतिदुर्बलात्कथंचित्प्राणविषयत्वेन शक्यं व्याख्यातुम्। एवं च प्राणादूर्ध्वं ब्रह्मणि भूमावगम्यमानो न प्राणविषयो भवितुमर्हति, किंतु सत्यस्य परमात्मन एव। एवं चानात्मविद आत्मानं विविदिषोर्नारदस्य प्रश्ने परमात्मानमेवास्मै व्याख्यास्यामीत्यभिसंधिमान्सनत्कुमारः सोपानारोहणन्यायेन स्थूलादारभ्य तत्तद्भूमव्युत्पादनक्रमेण भूमानमतिदुर्ज्ञानतया परमसूक्ष्मं व्युत्पादयामास। नच प्रश्नपूर्वताप्रवाहपतितेनोत्तरेण सर्वेण प्रश्नपूर्वेणैव भवितव्यमिति नियमोऽस्तीत्यादिसुगमेन भाष्येण व्युत्पादितम्।

### वेन्दान्तकल्पतरुः।

त्तरवशात् प्रश्नोऽपि तद्विषय इति तत्राह—**एवं चानात्मविद इति**। तत्त्वे बुद्धिनिवेशाय नामाद्युपन्यासः। उपास्तिस्त्वाश्रित्य विहितेत्यर्थः। योपि प्राणात्परं प्रश्नाभाव उक्तस्तत्राह—**नच प्रश्नेति**। अनुमानं तु प्राणसमानाधिकृतत्वेन

### कल्पतरुपरिमलः।

इत्याशयेनात्मनोऽर्थस्य सन्निधानमनुक्त्वा शब्दमात्रस्य तदुक्तम्। **तत्त्व इति**। नामाद्युत्तरोत्तरोत्कृष्टवस्तूपदेशः परमोत्कृष्टब्रह्मप्रतीत्यर्थ इत्यर्थः। सत्यश्रुत्या प्राणातिवादिनोऽन्यत्वेन प्रतीयमानः सत्यातिवादी तत उत्कृष्टः प्रतीयते, तत एतस्यो-

त्वग्निहोत्रिणो विशेष उच्यते । तथा 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्युक्ते न सत्यवदनेनातिवादित्वम् । केन तर्हि? प्रकृतेन प्राणविज्ञानेनैव । सत्यवदनं तु प्राणविदो विशेषो विवक्ष्यते' इति । नेति ब्रूमः; श्रुत्यर्थपरित्यागप्रसङ्गात् । श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते—'यः सत्येनातिवदति सोऽतिवदति' इति । नात्र प्राणविज्ञानस्य संकीर्तनमस्ति । प्रकरणात्तु प्राणविज्ञानं संबध्येत तत्र प्रकरणानुरोधेन श्रुतिः परित्यक्ता स्यात् । प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न संगच्छते—'एष तु वा अतिवदति' इति । 'सत्यं त्वेव विजिज्ञासितव्यम्' ( छा० ७।१६ ) इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्माद्यथैकवेदप्रशंसायां प्रकृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीत इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद्द्रष्टव्यम् । नच प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति; प्रकृतसंबन्धासंभवकारितत्वादर्थान्तरविवक्षायाः । तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति । यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तत् 'एष तु वा अतिवदति यः सत्येनातिवदति' इति । तत्र सत्यमिति परं ब्रह्मोच्यते; परमार्थरूपत्वात्, 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१ ) इति च श्रुत्यन्तरात् । यथा व्युत्पादिताय नारदाय 'सोऽहं भगवः सत्येनातिवदानि' इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति । तत्र यत्प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते । तस्मादस्तिप्राणादधि भूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति । एवं चेहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति । प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते । नहि प्राणस्य मुख्यया वृत्त्यात्मत्वमस्ति । नचान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति; 'नान्यः पन्था विद्यतेऽयनाय' ( श्वे० ६।१५ ) इति श्रुत्यन्तरात् । 'तं मा भगवाञ्शोकस्य पारं तारयतु' ( छा० ७।१।३ ) चोपक्रम्योपसंहरति—'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' ( छा० ७।२६।२ ) इति । तम इति शोकादिकारणमविद्योच्यते । प्राणान्ते चानुशासने न प्राणस्यान्यायत्ततोच्येत । 'आत्मतः प्राणः' ( छा० ७।२६।१ ) इति च ब्राह्मणम् । प्रकरणान्ते परमात्मविवक्षा भविष्यति, भूमा तु प्राण एवेति चेत्, न; 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' ( छा० ७।२४।१ ) इत्यादिना भूम्न एवा

## भामती ।

विज्ञानादिसाधनपरम्परा मननश्रद्धादिः, प्राणान्ते चानुशासने तावन्मात्रेणैव प्रकरणसमाप्तेर्न प्राणस्यान्यायत्ततोच्येत । तदभिधाने हि सापेक्षत्वेन न प्रकरणं समाप्येत । तस्मान्नेदं प्राणस्य प्रकरणमपि तु यदायत्तः प्राणस्तस्य, स चात्मेत्यात्मन एव प्रकरणम् । शङ्कते—**प्रकरणान्त इति** । प्राणप्रकरणसमाप्ताविलर्थः । निराकरोति—**न** । **स भगव इति** । संदंशन्यायेन हि भूम्न एतत्प्रकरणं, स चेद्भूमा प्राणः, प्राणस्यैतत्प्रकरणं भवेत् । तच्चायुक्तमित्युक्तम् ॥ ८ ॥ न

## वेदान्तकल्पतरुः ।

सोपाधिकम् । सर्वप्रकरणसमाप्तौ कस्यापि वचनाऽयोगाद्याचष्टे—**प्राणेति** । **ननु** भूम्न आ प्रकरणसमाप्तेरनुकर्षोऽस्तु स एव प्राणः किं न स्यादत आह—**संदंशेति** । पुरस्तादुपरिष्टाच्च निर्देश इह संदंशः । प्राणस्यान्यायत्ततोक्त्या सत्यशब्दश्रुत्या च तच्चायुक्तमित्युक्तम् ॥ ८ ॥

## कल्पतरुपरिमलः ।

त्कर्षश्च तदतिवदननिमित्तात्प्राणादेतदतिवदननिमित्तस्य सत्यस्योत्कर्षमादाय पर्यवस्यतीति भावः । **सर्वप्रकरणसमाप्ताविति** । कृत्स्नेयं भूमविद्या प्राणस्यैव प्रकरणं नामादिष्वारोप्योपास्यस्यापि प्राणस्योद्गीथादिषु समारोप्योपास्यानां हिरण्मयपुरुषाकाशप्राणादीनामिव प्राधान्येन प्रतिपाद्यत्वोपपत्तेरिति प्राणस्य सन्निधिस्थाने महाप्रकरणं निवेश्य पूर्वपक्षान्तरमात्मतः प्राण इति लिङ्गविरोधेन निराकृत्यात्मन एव महाप्रकरणे अहंकारादेशपर्यन्तं प्राणस्यावान्तरप्रकरणमिति पूर्वपक्षान्तरमाशङ्क्यत इति भावः । **आ प्रकरणसमाप्तेरिति** । अवान्तरप्रकरणसमाप्तिपर्यन्तमित्यर्थः । **स एव प्राणः किं न स्यादिति** । भूमा प्राण एवेति हि पूर्वपक्ष इति भावः । **पुरस्तादिति** । यः सत्येनातिवदतीति पुरस्तान्निर्देशः । तत्र निर्दिष्टस्यैव हि सत्यस्य विज्ञानादिसाधनपरंपरोपदेशक्रमेण भूमरूपतयोपदेशः कृतः । स भगव इत्युपरिष्टान्निर्देशः । **ननु**—प्राणस्यान्यायत्ततोक्तिः प्राणावान्तरप्रकरणबलात् तन्मध्यपतितो भूमा प्राण इति शङ्काया न निवर्तिकेत्याशङ्क्याह—**सत्यशब्दश्रुत्या चेति** । तुशब्दश्रुतेरप्युपलक्षणमेतत् । तथा च तुशब्दसत्यशब्दश्रुतिविरोधात्तत एव प्राणातिवादित्वा-

प्रकरणसमाप्तेरनुकर्षणात् । वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते ॥ ८ ॥

**धर्मोपपत्तेश्च ॥ ९ ॥**

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति दर्शनादिव्यवहाराभावं भूमन्यवगमयति । परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० ४।५।१५ ) इत्यादिश्रुत्यन्तरात् । योऽप्यसौ सुषुप्तावस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षयोक्तो न प्राणस्वभावविवक्षया; परमात्मप्रकरणात् । यदपि तस्यामवस्थायां सुखमुक्तं, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम् । यत आह—'एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ० ४।३।३२) इति । इहापि 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति । 'यो वै भूमा तदमृतम्' इत्यमृतत्वमपीह श्रूयमाणं परमकारणं गमयति; विकाराणाममृतत्वस्यापेक्षिकत्वात्, 'अतोऽन्यदार्तम्' (बृ० ३।४।२) इति च श्रुत्यन्तरात् । तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते नान्यत्र । तस्माद्भूमा परमात्मेति सिद्धम् ॥ ९ ॥ इति द्वितीयं भूमाधिकरणम् ॥

( ३ अधिकरणम् ) **अक्षरमम्बरान्तधृतेः ॥ १० ॥**

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य-

## भामती ।

केवलं श्रुतेर्भूमात्मता परमात्मनः, लिङ्गादपीत्याह सूत्रकारः—**धर्मोपपत्तेश्च** । यदपि पूर्वपक्षिणा कथंचिन्नीतं तदनुभाष्य भाष्यकारो दूषयति—**योऽप्यसौ सुषुप्तावस्थायामिति** । सुषुप्तावस्थायामिन्द्रियाद्यसङ्गयात्मैव । न प्राणः परमात्मप्रकरणात् । **अन्यदार्तम्** विनश्वरमित्यर्थः । अतिरोहितार्थमन्यत् ॥ ९ ॥ **इति द्वितीयं भूमाधिकरणम् ॥**

**अक्षरमम्बरान्तधृतेः ॥ १० ॥**

अक्षरशब्दः समुदायप्रसिद्ध्या वर्णेषु रूढः । परमात्मनि चावयवप्रसिद्ध्या यौगिकः । अवयवप्रसिद्धेश्च समुदाय-

## वेदान्तकल्पतरुः ।

बहोर्भाव इति विग्रहे 'पृथ्वादिभ्य इमनिज्वा'इतीमनिच्प्रत्यये बहुशब्दोपरि कृते बहोर्लोपो भू च बहोरिति सूत्रेण बहोरुत्तरेषामिमनादीनामिकारस्य लोपे बहोः स्थाने भूआदेशे च भूमेति रूपम् । गार्हपत्यो ह वा एषोऽपान इत्यादिना अग्नित्वेन निरूपितत्वात्प्राणाग्नयः । **पुरे** शरीरे **देवो** मन उपाधिको जीवः । अथ तदा यत्सुखं तदस्मिन् शरीरे भवति स वा एव एतस्मिन्संप्रसादे स्वप्रान्ते बुद्धान्ते इति स्वप्नजाग्रद्भ्यां सह सुषुप्ते संप्रसादशब्दः पठितः । उपक्रमोपसंहारयोः शोकतमसोरभिधानाद्विसंवाद इति शङ्कायाम् उत्तरं भष्यं—तम इति । शोकादिकारणमिति ॥९॥ **इति द्वितीयं भूमाधिकरणम् ॥**

**अक्षरमम्बरान्तधृतेः ॥ १० ॥**

अक्षरशब्दस्य वर्णब्रह्मणोः रूढिनिरूढिभ्यां संशये प्रणवसार्वात्म्यं न गौणं प्राणसार्वात्म्यवदिति प्रत्यवस्थाननिरा-

## कल्पतरुपरिमलः ।

वृत्तिलिङ्गस्यासिद्धेः प्रश्नप्रतिवचनान्तराभावलिङ्गस्यान्यथासिद्धेश्च न प्राणसन्निधेर्बलवत्त्वं, नाप्यवान्तरप्रकरणलाभ इत्याशयः । सौषुप्तिकसुखभवनं न विधेयं; सुखमहमस्वाप्समित्यनुभवसिद्धत्वात्, किं तु तस्य सुषुप्तशरीरावच्छेदेन तदभिव्यक्तिरेव विधेया; तेन प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीत्यवधारणाद् जीवस्य मृताविव सुप्तावपि शरीरान्निष्क्रमणमस्तीति शङ्काव्यावृत्तिर्लभ्यत इत्यभिप्रेत्य तथा श्रुतिं योजयति—**तदस्मिन् शरीरे इति** । प्राणो भूमेति पूर्वपक्षे शोकतरणादीनां भूमाऽनन्वयात्, संप्रसादादध्युपदेशस्य सौत्रहेतोः प्राणव्रतानुकर्षणप्रश्नोत्तराभावलिङ्गाभिभूतत्वादसद्ब्रह्मलिंगता ॥ ९ ॥ **इति द्वितीयं भूमाधिकरणम् ॥**

**अक्षरमम्बरान्तधृतेः ॥ १० ॥**

**रूढिनिरूढिभ्यामिति** । **ननु**—"अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षर"मिति महाभाष्ये वर्णेऽपि योगप्रदर्शना-

१ तत्र सूत्रे २—भूमा संप्रसादादध्युपदेशात् ८ धर्मोपपत्तेश्च ९ ॥

## भामती।

प्रसिद्धिर्बलीयसीति वर्णा एवाक्षरम्। नच वर्णेष्वाकाशस्योतत्वप्रोतत्वे नोपपद्येते; सर्वस्यैव रूपधेयस्य नामधेयात्मकत्वात्। सर्वं हि रूपधेयं नामधेयसंभिन्नमनुभूयते, गौरयं वृक्षोऽयमिति। न चोपायत्वात्तत्संभेदसंभवः। नहि धूमोपाया वह्निधीर्धूमसंभिन्नं वह्निमवगाहते धूमोऽयं वह्निरिति, किंतु वैयधिकरण्येन धूमाद्वह्निरिति, भवति तु नामधेयसंभिन्नो रूपधेयप्रत्ययो डित्थोऽयमिति। **अपिच** शब्दानुपायेऽपि रूपधेयप्रत्यये लिङ्गेन्द्रियजन्मनि नामसंभेदो दृष्टः। तस्मान्नामसंभिन्ना पृथिव्यादयोऽम्बरान्ता नाम्ना ग्रथिताश्च विद्धाश्च; नामानि च ॐकारात्मकानि; तद्व्याप्तत्वात्, 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्' इति श्रुतेः। अत ॐकारात्मकः पृथिव्यादयोऽम्बरान्ता इति वर्णा एवाक्षरं न परमात्मेति प्राप्तम्। **एवं प्राप्तेऽभिधीयते**—अक्षरं परमात्मैव, न तु वर्णाः। कुतः? अम्बरान्तधृतेः। न खल्वम्बरान्तानि पृथिव्यादीनि वर्णा धारयितुमर्हन्ति, किंतु परमात्मैव; तेषां परमात्मविकार-

## वेदान्तकल्पतरुः।

सात्सङ्गतिः। पूर्वपक्षमाह—**अक्षरशब्द इत्यादिना**। रूप्यते निरूप्यते इति रूपमभिधेयं स्वार्थे धेयप्रत्ययः। अर्थे शब्दात्मकत्वानुभवो न तद्रम्यत्वकृतः। धूमगम्यवह्नेस्तादात्म्यानवभासादिति। शब्दबोधेऽभिधया मानान्तरगम्यार्थबोधे यः शब्दबोधस्तत्रोपायत्वप्रयुक्तशङ्काऽपि नेत्याह—**अपि चेति। ग्रथिताः** संबद्धाः। **विद्धास्**तादात्म्येन। **शङ्कुना** पर्णनालेन। **पर्णानि** पर्णावयवाः **संतृण्णानि** विद्धानि। **किं तु परमात्मैवेति।** धारयितुमर्हतीत्यनुषङ्गः। स्वरूपप्रमाणार्थक्रियाभिर्भे-

## कल्पतरुपरिमलः।

निरूढिरेवेति—**चेन्न;** वर्णानां नित्यविभुत्वपक्षे तत्प्रदर्शनात्। तत्पक्षेऽप्योमित्येतदक्षरमित्यादिष्वक्षरशब्दनिर्दिष्टे द्वित्रादिक्रमिकवर्णसमुदाये समारोपितक्रमविशेषविशिष्टत्वेनाऽनित्ये परिच्छिन्ने च तस्य रूढेराश्रयणीयत्वादिति भावः॥ **ननु**—लिपिषु ककारोऽयमित्यादिः शब्दात्मत्वानुभवस्तद्रम्यत्वकृतो दृष्ट इत्याशङ्कानिवारकमपि चेति ग्रन्थमवतारयति—**अर्थे शब्दात्मकत्वानुभव इति। ननु**—गौरयमित्यादिशब्दानुविद्धप्रत्ययाः शब्देष्वर्थानां तादात्म्येनोतप्रोतत्वालम्बनाश्चेद् ब्रह्मविषया अपि शब्दानुविद्धप्रत्ययाः तथा स्युरिति—**चेत्**, कस्तत्र संदेहः? यदूर्ध्वं गार्गि दिव इत्यादिना सकललोकवर्तिवस्तुजाताश्रयत्वेन भूतभविष्यद्वर्तमानाकारपरिणामिमूलप्रकृत्यव्याकृताश्रयत्वेन च प्रतिपाद्यमान आकाशो ब्रह्मैव; ब्रह्मातिरिक्तस्य तावदाश्रयत्वाभावात्। पूर्वं गार्गिब्राह्मणे पृथिव्यादिब्रह्मलोकान्तसकललोकाधारे पृष्टे प्रश्नोऽयं ब्रह्मविषयः पर्यवसन्नः, ब्रह्म च गुरुशिष्यमर्यादामतिक्रम्यान्यायेन जल्पकथायां न प्रष्टुमुचितमित्याशयवता याज्ञवल्क्येन "गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपतदनतिप्रश्न्यां वै देवतामतिपृच्छसी"ति सक्रोधं निवारितस्यैव प्रश्नस्य गार्ग्या सर्वथैव पराजयो मा भूदिति ब्राह्मणानामनुज्ञां लब्ध्वा पुनरवतारणे कृते याज्ञवल्क्येनाकाश एव तदोतं च प्रोतं चेत्युक्तस्य तदुत्तरस्य ब्रह्मविषयत्वावश्यंभावाच्च तदप्यक्षराश्रितत्वेन प्रतिपादितं "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"ति प्रश्नोत्तराभ्याम्। **एवं च**—प्रशासितृत्वद्रष्टृत्वश्रोतृत्वादिबहुलिङ्गविरोधादक्षरश्रुतिर्दुर्बलेति शङ्कापि—**निरस्ता;** ब्रह्माश्रयस्य ब्रह्मत्वायोगेन ब्रह्मणि जीवधर्माणामिवाक्षरे ब्रह्मधर्माणां तादात्म्याद् व्यपदेश इति कल्पनोपपत्तेः॥ **धारयितुमर्हतीत्यनुषङ्ग इति। ननु**—परमात्मा वा कथमाकाशान्तानि धारयितुमर्हति? परमात्मैव ह्यत्राकाशशब्देन निर्दिष्टः, न च स एव तद्धारयितुमर्हतीति—**चेत्, उच्यते;** यदि यदूर्ध्वं गार्गि दिव इत्यादिनाऽनुक्रान्तस्य सर्वस्य प्रपञ्चस्य परमात्मनोऽन्यदाधारीभवितुं नार्हतीत्याकाशोऽत्र स एवेष्यते, तर्हि सकलप्रपञ्चविशिष्टस्य तस्याधारभूतं किंचिदन्यद्वस्तु भवितुमर्हतीति का प्रत्याशा। न ह्येतावद्धान्यं वोढुमिह कुसूलादन्यद् भाजनं नास्तीति निश्चयवतः तेन धान्येन विशिष्टं कुसूलं वोढुमन्यद् भाजनमस्तीति संभावनाऽपि हृदयमधिरोहति। नामधेयसंभिन्नं सर्वं शब्दवाच्यमिति प्रक्रिया तु टीकायामनुपदमेव स्वरूपप्रमाणार्थक्रियाभेदैर्निराकरिष्यते। तत्र घटमृत्पिण्डपटतन्त्वादिवत्स्वरूपार्थसंभेदस्योपपादनसंभवेऽपि प्रमाणसंभेदो न शक्योपपादनः; श्रोत्रग्राह्यस्य शब्दस्य गौरयमिति चक्षुर्ग्राह्यत्वासंभवात्, ब्राह्मणोऽयं गौरो दण्डी कुण्डली कमण्डलुमानित्यादिषु सर्वेषां पदानां स्वस्वरूपसमर्पणमात्रार्थत्वेन जातिगुणविशेषाद्यनवगत्या तत्संदेहाऽनिवृत्तिप्रसङ्गात्, सर्वस्यापि शब्दवाच्यस्य स्वस्वनामधेयद्वाराकाराश्रितत्वाभ्युपगमे तस्यापि प्रणवोंकारादिशब्दवाच्यस्य तदाश्रितत्वस्य वक्तव्यत्वेनाक्षरशब्दस्य व्यवस्थितार्थालाभप्रसङ्गाच्च। तस्माद्यद्भूतं भवच्चेत्यादिवाक्ये यद्भूतं यद्भवद् यच्च भविष्यत्तावदाधारत्वं विवक्षितं न तु भूतभवद्भविष्यदात्मकाव्याकृताधारत्वम्। गार्गिब्राह्मणे सकललोकाधारप्रश्ननिवारणं साक्षात्तदुत्तरस्यान्यविषयत्वेऽपि पुनस्तदाधारस्य प्रश्नः परमात्मविषयो भविष्यतीति स मा भूदिति दूरदृष्ट्या कृतमित्याशयं वर्णयित्वा अवकाशात्मना सकलप्रपञ्चाधारस्य भूताकाशस्योपादानात्मना तदाधारस्याव्याकृतस्य वाऽत्राकाशशब्देन ग्रहणमिति योजनीयम्। अतोम्बरान्तधृतेः परमात्मन्येव संभव इत्युक्तं युक्तमेव।

---

१ विषयवाक्यगताकाशशब्दपरित्यागेनाम्बरशब्दं प्रयुञ्जानेन च सूत्रकृताऽयमर्थः सूचितः॥

## भामती।

त्वात्। नच नामधेयात्मकं रूपधेयमिति युक्तं; स्वरूपभेदात्, उपायभेदात्, अर्थक्रियाभेदाच्च। **तथाहि**—शब्दत्वसामान्यात्मकानि श्रोत्रग्राह्याण्यभिधेयप्रत्ययार्थक्रियाणि नामधेयान्यनुभूयन्ते, रूपधेयानि तु घटपटादीनि घटत्वपटत्वादिसामान्यात्मकानि चक्षुरादीन्द्रियग्राह्याणि मधुधारणप्रावरणाद्यर्थक्रियाणि च भेदेनानुभूयन्ते इति कुतो नामसंभेदः। नच डित्थोऽयमिति शब्दसामानाधिकरण्यप्रत्ययः। न खलु शब्दात्मकोऽयं पिण्ड इत्यनुभवः, किंतु यो नानादेशकालसंप्लुतः पिण्डः सोऽयं संनिहितदेशकाल इत्यर्थः। संज्ञातु गृहीतसंबन्धैरत्यन्ताभ्यासात्पिण्डाभिनिवेशिन्येव संस्कारोद्बोधसंपातायाता स्मर्यते। **यथाहुः—यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्। पिण्ड एव हि दृष्टः सन्संज्ञां स्मारयितुं क्षमः॥ १॥ संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते। संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा॥ २॥** इति। नच वर्णातिरिक्ते स्फोटात्मनि अलौकिकेऽक्षरपदप्रसिद्धिरस्ति लोके। न चैष प्रामाणिक इत्युपरिष्टात्प्रवेदयिष्यते। निवेदितं चास्माभिस्तत्त्वबिन्दौ। तस्माच्छ्रोत्रग्राह्याणां वर्णानामम्बरान्तधृतेरनुपपत्तेः समुदायप्रसिद्धिबाधनादवयवप्रसिद्ध्या परमात्मैवाक्षरमिति[1] सिद्धम्। ये तु प्रधानं पूर्वपक्षयित्वानेन सूत्रेण परमात्मैवाक्षरमिति सिद्धान्तयन्ति, तैरम्बरान्तधृतेरित्यनेन कथं प्रधानं निराक्रियत इति वाच्यम्। अथ नाधिकरणत्वमात्रं धृतिः, अपि तु प्रशासनाधिकरणता। **तथाच श्रुतिः**—'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति। तथाप्यम्बरान्तधृतेरित्यनर्थकम्। एतावद्वक्तव्यम्—अक्षरं प्रशासनादिति। एतावतैव प्रधाननिराकरणसिद्धेः। तस्माद्वर्णाक्षरतानिराक्रियैवास्यार्थः। नच—स्थूलादीनां वर्णेष्वप्राप्तेरस्थूलमित्यादिनिषेधानुपपत्ते-

## वेदान्तकल्पतरुः।

दमाह—**तथा हीति। ननु** डित्थोऽयमिति नामसंभेदोऽनुभूयते, तत आह—**न च डित्थ इति**। यद्यर्थो न शब्दात्मा, तर्हि कथमर्थप्रत्यये शब्दः प्रतिभाति, न हि स तदा स्वेन परेण वोच्चार्यतेऽत आह—**संज्ञात्विति**। संस्कारोद्बोधस्य संपात उत्पादस्तेनायाता प्राप्ता गृहीतसंबन्धैः पुंभिः। **यत्संज्ञास्मरणमिति। अन्यहेतुकम्** अर्थात्मत्वहेतुकम्। **ननु** स्मर्यमाणसंज्ञायाः परोक्षत्वात्तद्विशिष्टोऽर्थः कथं प्रत्यक्षः स्यादत आह—**संज्ञा हीति**। संज्ञिनः प्रत्यक्षत्वं स्मर्यमाणाऽपि संज्ञा न बाधते। सा हि तटस्था अर्थानिविष्टाऽतो नार्थस्वरूपाच्छादनक्षमेति॥ भास्करस्त्वस्थूलमित्यादेर्वर्णेष्वप्राप्तनिषेधत्वानुपपत्तेरधिकरणमन्यथयामास, तदनूद्य दूषयति—**ये त्वित्यादिना**। अम्बरान्तधृतेः प्रधानं न निराकर्तुं शक्यं; साधारणत्वादित्यर्थः। **यत्तु कश्चिदाह**—भूतभविष्यदाद्याधारत्वादव्याकृतमाकाशं, तथा च प्रधाननिराक्रिया—**इति**। **तन्न**; तथा सत्युत्तरसूत्रवैयर्थ्यात्। अत्र स एवाह आकाशशब्दस्य रूढिभङ्गः फलं, नभआश्रयस्याव्याकृतस्य प्रशासितृत्वायोगादव्याकृताश्रयस्य तदुपपत्तेरिति। तच्च न; आत्मन आकाश इति भूताकाशाश्रयस्यात्मत्वावगमात्। **अपिच** प्रधानस्यापि नभआश्रयत्वसाधारण्यात्तद्व्युदासाय रूढिभङ्ग इति वाच्यम्। तच्चायुक्तम्; अभग्नायामपि रूढौ वाक्यशेषस्थप्रशास्तेर्निर्णयलाभादिति।

## कल्पतरुपरिमलः।

**ननु**—अम्बरान्तधृतिरिह न श्रुता; ओतप्रोतत्ववचनस्याधेयत्वपरत्वाभावात्। पूर्वमन्तरिक्षलोकाः कस्मिन्नोताश्च प्रोताश्च गन्धर्वलोकेषु गार्गीत्यादिप्रश्नोत्तरेष्वन्तरिक्षलोकगन्धर्वलोकादीनां ब्रह्मलोकान्तानां पूर्वपूर्वस्य तत्तदूर्ध्वदेशवर्तिन्युत्तरोत्तरस्मिन्नोतप्रोतत्ववचनानां यथा पटे दीर्घतिर्यक्तन्तव ओतप्रोतास्तदेकदेशा एवं गन्धर्वलोकानां विभूतौ दृश्यमानायामन्तरिक्षलोकास्तदेकदेशप्राया इत्युत्तरो ज्यायान् भवत्येवमेव हीमे लोका इति श्रुत्यन्तरसिद्धात् सादृश्याद् गौणताया वक्तव्यत्वेन तत्प्रायपाठात्तदुपरितनप्रश्नोत्तरसंदर्भरूपाक्षरब्राह्मणगतोतप्रोतत्ववचनस्यापि तथैवार्थप्रतीतेरिति—**चेत्, मैवम्**; "ओतं मनः सह प्राणैश्च सर्वैः" "मयि सर्वमिदं प्रोत"मित्यादिश्रुतिस्मृतिष्वाधेये दृष्टप्रयोगाभ्यामोतप्रोतशब्दाभ्यामिहापि प्रकरणे धृतेरेव[2] प्रतिपादयितुमुचितत्वाद् वचनबलादूर्ध्ववर्तिनामपि गन्धर्वलोकादीनामन्तरिक्षलोकादिधारकत्वस्य पर्वतानां क्षितिधारकत्वस्येव ध्रुवस्य ज्योतिश्चक्रधारकत्वस्येव कल्पनीयत्वात्। आध्यानाधिकरणो( व्या. सू. अ. ३ पा. ३ सू. १४ )क्तरीत्येन्द्रियेभ्यः परा ह्यर्था इत्यादिश्रुताविन्द्रियादिशरीरान्तानामुत्तरोत्तरपरत्ववचनजातस्य पुरुषः सर्वतः पर इत्यत्रैवान्तरिक्षलोकाद्योतप्रोतत्ववचनजातस्याऽक्षरे सर्वं जगदोतप्रोतमित्यत्रैव तात्पर्यस्यैकवाक्यतानुरोधात्[3]कल्पनीयत्वेन तात्पर्याविषयोतप्रोतत्ववचनानां तथाभूतपरत्ववचनानामिव यथाकथंचिन्नयनेऽपि प्रतिपिपादयिषितोतप्रोतत्ववचनस्य श्रुत्यन्तरप्रसिद्धार्थताया एव युक्तत्वाच्च॥ अव्याकृतस्य प्रशासितृत्वायोगादिति युक्तः पाठः; शासेः सेट्त्वाद् प्रसितस्कभितेत्यादिसूत्रे शास्तृनिपातनस्य छन्दोविषयत्वात्। **अभग्नायामपि रूढाविति**। प्रधाननिराकरणार्थमम्बरान्तधृतिहेतुमुक्त्वा तस्य

१ एवंचाक्षरमिति धर्मिनिर्देशः स्फोटपरिग्रहं निरुणद्धीति मन्तव्यम्। २ एतदर्थमेवसूत्रे ओतशब्दं परित्यज्यधृतिशब्दप्रयोगः इति न्यायरक्षामणौ व्यक्तम्॥ ३ अयं चार्थः सूत्रकारेणान्तशब्दप्रयोगात् सूचित इति॥

स्थूलमनणु' (बृ० ३।८।७,८) इत्यादि श्रूयते। तत्र संशयः—किमक्षरशब्देन वर्ण उच्यते, किंवा परमेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात् 'ॐकार एवेदं सर्वम्' (छा० २।२३।३) इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मकत्वावधारणात् वर्ण एवाक्षरशब्द इति, एवं प्राप्त उच्यते—पर एवात्माक्षरशब्दवाच्यः। कस्मात्? अम्बरान्तधृतेः—पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तविकारजातस्य कालत्रयविभक्तस्य 'आकाश एव तदोतं च प्रोतं च' इत्याकाशे प्रतिष्ठितत्वमुक्त्वा 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यनेन प्रश्नेनेदमक्षरमवतारितम्। तथाचोपसंहृतम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति। नचेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र संभवति। यदपि 'ॐकार एवेदं सर्वम्' इति, तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम्। तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म ॥ १० ॥ स्यादेतत्—कार्यस्य चेत्कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनोऽपीयमुपपद्यते। कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिः। अत उत्तरं पठति—

## सा च प्रशासनात् ॥ ११ ॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म। कस्मात्? प्रशासनात्। प्रशासनं हीह श्रूयते—'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ० ३।८।९) इत्यादि। प्रशासनं च पारमेश्वरं कर्म। नाचेतनस्य प्रधानस्य प्रशासनं भवति। न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति ॥ ११ ॥

### भामती।

वर्णेषु शङ्कैव नास्तीति—वाच्यम्; नह्यवश्यं प्राप्तिपूर्वका एव प्रतिषेधा भवन्ति, अप्राप्तेष्वपि नित्यानुवादानां दर्शनात् । यथा नान्तरिक्षे न दिवीत्यग्निचयननिषेधानुवादः । तस्मात् यत्किंचिदेतत् ॥ १० ॥ प्रशासन-

### वेदान्तकल्पतरुः।

**न ह्यवश्यमिति।** प्रौढ्यैष वादः, संभवति तु प्राप्तिरभिधानानुरक्ताभिधेयस्य तत्प्रकृतिकत्वे प्रकृतिविकारानन्यत्वेन। प्रलयावस्थवर्णेषु स्थौल्यादिप्राप्तेरिति ॥ प्रपञ्चाधिष्ठानत्वमात्राभ्युपगमाद् ब्रह्मणः प्रशासनाश्रयत्वाऽयोगाद्वाचस्पतिमते—**सा च प्रशासनादिति** (व्या. सू. अ. १ पा. ३ सू. ११) सूत्रमसंगतमिति केचित् । तन्न; रज्ज्वां भुजगवत् प्रशासनव्यापारस्याप्यारोपात्। हन्त प्रधानेऽपि तमारोप्य तदपि प्रशासितृ किं न स्यादिति चेत्, नैतत्; चेतने दृष्टस्य

### कल्पतरुपरिमलः।

पुनः प्रधानसाधारण्यनिरासार्थमाकाशशब्दस्य रूढिभङ्गेनाव्याकृतपरत्वोपपादकतया प्रशासितृत्वहेतुः किमर्थं वक्तव्यः; प्रथममेवाक्षरं प्रशासनादिति हेतुना प्रधानपूर्वपक्षनिरासोपपत्त्या तदर्थं रूढिभङ्गस्याकर्तव्यत्वादिति भावः। इदं च भास्कराद्युक्तरीत्या नाकाशपदस्याऽव्याकृतपरत्वं रूढ्यभङ्गेनापि तन्निर्वाहादित्येतदभिप्रायं, न त्वत्राकाशपदं भूताकाशपरमेवेत्येतदभिप्रायम्; सकलकल्पानुयायिसमस्तविकारजाताधारत्वस्य प्रतिकल्पं भिन्ने भूताकाशेऽनुपपन्नत्वेनात्राकाशशब्दस्याव्याकृतपरत्वावश्यंभावात्। अत एवाऽऽनुमानिकाधिकरणे (व्या. अ. १ पा. ४ सू. १) भाष्यकारैरस्याकाशशब्दस्याव्याकृतपरत्वं वक्ष्यते ॥ **प्रौढ्यैष वाद इति।** हिरण्यं निधायाग्निश्चेतव्य इति विधिस्तुत्यर्थेन पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यर्थवाद इवेहाप्यप्राप्तनिषेधः संभवतीत्ययमप्राप्तिमभ्युपेत्य वाद इत्यर्थः। **प्रकृतिविकारानन्यत्वेनेति।** अभिधानाभिधेयानां प्रकृतिविकारभावः स्फोटवाद्यभिमतः। स्फोटस्तु सोपपादनं देवताधिकरणे प्रदर्श्य निराकरिष्यते। प्रकृतिविकारानन्यत्वेनार्थधर्माः स्थौल्यादयः शब्देष्वेष्टव्या एवेति कथं तत्प्रतिषेध इत्याशङ्क्य प्रधान इव कार्यावस्थानापत्तिदशायामपि तेषु तत्प्रसक्त्या प्रतिषेध इत्याह—**प्रलयावस्थेति। प्रपञ्चाधिष्ठानेति।** कृत्स्नस्यापि कार्यस्य मिथ्यात्वेनाऽविद्यापरिणामतया तदभिन्नत्वेन प्रशासितृत्वस्यापि तथात्वात् तद्वाचस्पतिमते जीवाश्रितमेव स्याद्, न ब्रह्माश्रितम्; अविद्यायास्तन्मते जीवाश्रितत्वात्। न च तथापि तन्मते ब्रह्मणः सर्वप्रपञ्चाधिष्ठानत्वमस्तीत्येतावता तस्य ताद्धर्म्यलाभः; जीवाश्रयदुःखद्वेषादिसाधारणेनाधिष्ठानतामात्रेण तदलाभादिति भावः। **रज्ज्वामिति।** जीवाज्ञातब्रह्मविवर्तरूपं प्रशासितृत्वं ब्रह्मधर्मतयैवारोप्यते, रज्ज्विदमंशतादात्म्येनेव भुजङ्ग इति ब्रह्मणः प्रशासितृत्वमुपपद्यत इति भावः। आरोपितं प्रशासितृत्वं प्रधानेऽपि वक्तुं शक्यमिति शङ्कामनूद्य श्रुतिवशात्कल्पनीय आरोपः सदृश एव कल्पयितुमुचितः, तत्र लोकदृष्टव्यतिक्रमे कारणाभावादिति परिहरति—**हन्तेत्यादिना।** प्रधानेऽपि तदारोपे तदपि प्रशासितृ किं न स्यादिति पाठः। तमारोप्येति पाठश्चेत् पूर्वका-

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावव्यावृत्तेश्च कारणाद्ब्रह्मैवाक्षरशब्दवाच्यम् । तस्यैवाम्बरान्तधृतिः कर्म नान्यस्य कस्यचित् । किमिदमन्यभावव्यावृत्तेरिति ? अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभावव्यावृत्तिरिति । एतदुक्तं भवति—यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ' ( बृ० ३।८।११) इति । तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि संभवति, द्रष्टृत्वादिव्यपदेशस्तु न संभवति; अचेतनत्वात् । तथा 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ' इत्यात्मभेदप्रतिषेधात् न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम्; 'अचक्षुष्कमश्रोत्रमवागमनः' (बृ० ३।८।८) इति चोपाधिमत्ताप्रतिषेधात् । नहि निरुपाधिकः शारीरो नाम भवति । तस्मात्परमेव ब्रह्माक्षरमिति निश्चयः ॥ १२ ॥ इति तृतीयमक्षराधिकरणम् ॥

( ४ अधिकरणम् ) **ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥**

'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इति

---

### भामती ।

माज्ञा चेतनधर्मो नाचेतने प्रधाने वाऽव्याकृते वा संभवति । नच मुख्यार्थसंभवे कूलं पिपतिषतीतिवद्भाक्तत्वमुचितमिति भावः ॥ ११ ॥ अम्बरान्तविधरणस्याक्षरस्येश्वराद्यदन्यद्वर्णा वा प्रधानं वाऽव्याकृतं वा तेषामन्येषां भावोऽन्यभावस्तमत्यन्तं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्गि' इत्यादिका । अनेनैव सूत्रेण जीवस्याप्यक्षरता निषिद्धेत्याह—**तथेति** । 'नान्यत्' इत्यादिकया हि श्रुत्यात्मभेदः प्रतिषिध्यते तथा चोपाधिभेदाद्भिन्ना जीवा निषिद्धा भवन्त्यभेदाभिधानादित्यर्थः । इतोऽपि न शारीरस्याक्षरशब्दतेत्याह—**अचक्षुष्कमिति** । अक्षरस्य चक्षुराद्युपाधिं वारयन्ती श्रुतिरौपाधिकस्य जीवस्याक्षरतां निषेधतीत्यर्थः । तस्माद्वर्णप्रधानाव्याकृतजीवानामसंभवात्, संभवाच्च परमात्मनः, परमात्मैवाक्षरमिति सिद्धम् ॥ १२ ॥ इति तृतीयमक्षराधिकरणम् ॥

**ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥**

**कार्यब्रह्मजनप्राप्तिफलत्वादर्थभेदतः । दर्शनध्यानयोर्ध्येयमपरं ब्रह्म गम्यते ॥** 'ब्रह्म वेद ब्रह्मैव भवति'

### वेदान्तकल्पतरुः ।

नियन्तृत्वस्य जगदैश्वर्यरूपेण चेतन एव समारोपसंभवात् । न हि गजतुरगपत्तिपरिवृते राजामात्ये राजत्वमारोपितमिति कुब्जादावारोप्यते । आरोपितमपि नियन्तृत्वं ब्रह्मणि मुख्यमेव प्रपञ्चस्थित्यर्थक्रियाकारित्वादकारगतह्रस्वादिवत् । प्रधाने तु गौणम् । तदिदमाह—**न च मुख्यार्थसंभवे इति** ॥ १२ ॥ इति तृतीयमक्षराधिकरणम् ॥

**ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥**

**अम्बरावधिकाधारात्प्रणवः पर्युदासितः । तद्ध्येयमपरं किं वा परमित्यत्र चिन्त्यते ॥** एषां बुद्धिसन्निधिसंगतिः । **कार्येति** । कार्यब्रह्म हिरण्यगर्भ एव जनो जीवो यस्मिन् स ब्रह्मलोकस्तथा तत्प्राप्तिः फलं यस्य ध्यानस्य तत्तथा तस्य भावस्तत्त्वं ततो हेतोरपरं ब्रह्म ध्येयमिति गम्यते । **ननु** परं पुरुषमभिध्यायीत परात् परं पुरुषमीक्षत इतीक्षणध्यानयोरेकविषयत्वावगमादीक्षणस्य च यथार्थत्वात् परमार्थं ब्रह्मैव ध्येयं, न त्वपरमित्यत आह— **अर्थभेदत इति** ।

### कल्पतरुपरिमलः ।

त्वमेव क्त्वार्थः न समानकर्तृकत्वमपि । सेतुं दृष्ट्वा समुद्रस्य मुच्यते ब्रह्महत्ययेत्यादिदर्शनादिति पक्षमाश्रित्य निर्वाह्यः । अम्बरान्तधृतिः सौत्रो हेतुरम्बरं ब्रह्मेति धृतिर्न श्रुतेति च शङ्काभिभूतत्वादस्पष्ट इत्यस्पष्टब्रह्मलिङ्गता ॥ १२ ॥ इति तृतीयं अक्षराधिकरणम् ॥

**ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥**

**पर्युदासित इति** णिजर्थो न विवक्षितः, पर्युदस्त इत्यर्थः तारकादेराकृतिगणत्वे संजातपर्युदास इति वा तदर्थो वर्णनीयः । **ततो हेतोरपरं ब्रह्म ध्येयमिति** । यद्यपि परविषयाणामहंग्रहोपासनानामप्यर्चिरादिप्राप्यापरलोकप्राप्ति-

---

१ तत्र सूत्राणि ३—अक्षरमम्बरान्तधृतेः १० सा च प्रशासनात् ११ अन्यभावव्यावृत्तेश्च १२ ॥

**प्रकृत्य श्रूयते—'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र० ५।२,५) इति । किमस्मिन्वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यते, आहोस्विदपरमिति । एतेनैवायतनेन परमपरं चैकतरमन्वेतीति प्रकृतत्वात्संशयः । तत्रापरमिदं ब्रह्मेति प्राप्तम् । कस्मात्? 'स तेजसि सूर्ये संपन्नः' 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात् । नहि परब्रह्मविद्देशपरिच्छिन्नं फलमश्नुवीतेति युक्तम्; सर्वगतत्वात्परस्य ब्रह्मणः । नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते । नैष दोषः; पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः । इत्येवं प्राप्तेऽभिधीयते—परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते कस्मात्? ईक्षतिकर्मव्यपदेशात् । ईक्षतिर्दर्शनम् । दर्शनव्याप्यमीक्षतिकर्म । ईक्षतिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति—'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति । तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति; मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात् ।**

## भामती ।

इति श्रुतेः । सर्वगतपरब्रह्मवेदने तद्भावापत्तौ 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति न देशविशेषप्राप्तिरुपपद्यते । तस्मादपरमेव ब्रह्मेह ध्येयत्वेन चोद्यते । न च—ईक्षणस्य लोके तत्त्वविषयत्वेन प्रसिद्धेः परस्यैव ब्रह्मणस्तथाभावात् ध्यायतेश्च तेन समानविषयत्वात् परब्रह्मविषयमेव ध्यानमिति—सांप्रतम्; समानविषयत्वस्यैवासिद्धेः । परो हि पुरुषो ध्यानविषयः, परात्परस्तु दर्शनविषयः । नच तत्त्वविषयमेव सर्वं दर्शनम्; अनृतविषयस्यापि तस्य दर्शनात् । नच—मननं दर्शनम् तच्च तत्त्वविषयमेवेति—सांप्रतम्; मननाद्भेदेन तत्र तत्र दर्शनस्य निर्देशात् । नच मननमपि तर्कापरनामावश्यं तत्त्वविषयम् । यथाहुः—'तर्कोऽप्रतिष्ठः' इति । तस्मादपरमेव ब्रह्मेह ध्येयम् । तस्य च परत्वं शरीरापेक्षयेति । **एवं प्राप्त उच्यते—ईक्षणध्यानयोरेकः कार्यकारणभूतयोः । अर्थ औत्सर्गिकं तत्त्वविषयत्वं यथेक्षतेः ॥** ध्यानस्य हि साक्षात्कारः फलम् । साक्षात्कारश्चोत्सर्गतस्तत्त्वविषयः । क्वचित्तु बाधकोपनिपाते समारो-

## वेदान्तकल्पतरुः ।

ध्यानस्य परविषयत्वादीक्षणस्य परात्परो यस्तद्विषयत्वादेकविषयत्वमसिद्धमित्यर्थः । प्रथमहेतुं व्याचष्टे—**ब्रह्म वेदेति । अर्थभेदत** इत्येतच्छङ्कोत्तरत्वेन व्याचष्टे—**न चेति ।** अङ्गीकृत्य दर्शनस्य तत्त्वविषयत्वमीक्षणध्यानयोर्विषयभेद उक्तस्तदेवासिद्धमित्याह—**न चेति । ननु** युक्त्या पर्यालोचनमिहेक्षणं, तच्च तत्त्वविषयमित्याशङ्क्याह—**न च मननमिति ।** किं मननदर्शनयोरैक्यमुतात्र मननविवक्षा । **नाद्य** इत्याह—**मननादिति । न द्वितीय** इत्याह—**नचेति ।** ईक्षणध्यानयोरर्थभेदं निराकरोति—**ईक्षणेति ।** एकोऽर्थ इत्यन्वयः । यदवादि न सर्वं दर्शनं तत्त्वविषयमिति तत्राह—**औत्सर्गिकमिति ।** ईक्षतेरीक्षणस्य तत्त्वविषयत्वमौत्सर्गिकं, नचेहापवादः कश्चित्, तथा ध्यानस्यापि तत्कारणस्य स्यादन्यथाऽन्यद्

## कल्पतरुपरिमलः ।

फलकत्वमविशिष्टं; तथाप्येतद्वै सत्यकामेत्याद्युपक्रमे परवेदनात् परप्राप्तिरपरवेदनादपरप्राप्तिरिति विभज्य कथनादिहापरप्राप्तिरपरं ध्यातव्यमित्यत्र लिङ्गं भवेदेव । न चैवं—सत्युपक्रमप्रतिज्ञातपरवेदनफलं न प्रदर्शितं स्यादिति—शङ्कनीयम्; ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्कवयो वेदयन्ते तमोंकारेणान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति तदनन्तरमन्त्रे स सामभिरुन्नीयते ब्रह्मलोकमित्युक्तमपरवेदनफलमुपसंहृत्य परवेदनस्य शान्तत्वादिविशिष्टपरब्रह्मप्राप्तिः फलमिति प्रदर्शयिष्यमाणत्वात् । **अङ्गीकृत्येति ।** "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढा"मित्यत्र ध्यानं ब्रह्मविषयम् ईक्षणमविद्याशक्तिविषयमतस्तत्रेक्षणं तत्त्वविषयमिति नियमस्य ध्यानेक्षणयोरेकविषयत्वनियमस्य च भङ्ग इति भावः ॥ **ईक्षणध्यानयोरिति ।** अदृष्टाद्वारकस्तयोः कार्यकारणभाव एकविषयत्वनियत इति भावः । **तत्त्वविषयत्वमौत्सर्गिकमिति ।** यद्यपि प्राथिकत्वमौत्सर्गिकत्वमिति विवक्षायामीक्षणस्यातत्त्वविषयत्वमेवौत्सर्गिकम्; परब्रह्मसाक्षात्कारमेकं विना प्रपञ्चान्तर्गतवस्तुजातविषयस्य सर्वस्येक्षणस्यातत्त्वविषयत्वात्, तथाप्यपवादाभावे अत्यन्ताबाध्यविषयत्वं ग्राह्यं मुख्यत्वादित्येवंरूपमौत्सर्गिकत्वमिह विवक्षितम् । किं चात्रेक्षणं परब्रह्मविषयमित्यवश्यं वाच्यम्; हिरण्यगर्भविषयत्वे वाक्यवैयर्थ्यात्, तल्लोकं प्राप्तस्तदुपासकस्तमीक्षत इत्यस्यार्थसिद्धत्वात् । न च—परब्रह्मविषयत्वेऽपि वाक्यवैयर्थ्यं तुल्यं हिरण्यगर्भप्राप्तेरपुनरावृत्तिश्रुत्या क्रममुक्तिफलनियतत्वेन तल्लोकप्राप्तौ परब्रह्मसाक्षात्कारस्यार्थतः सिद्धत्वादिति—वाच्यम्; इमं मानवमावर्तमिति श्रुताविममिति विशेषणेनावर्तान्तरे पुनरावृत्तेरप्यभ्यनुज्ञानेन तत्प्राप्तेः क्रममुक्तिनियतत्वाभावात् । **ननु**—ईक्षणध्यानयोरेकविषयत्वमीक्षणस्य तत्त्वविषयत्वमित्युभयं परस्परविरुद्धं; निर्विशेषस्य त्रिकालाबाध्यस्य समन्वयसूत्रभाष्ये "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति श्रुत्यनुरोधेन ध्येयत्वस्य निषिद्धतया ध्यानं सर्वत्र कल्पितगुणविशिष्टविषयमिति वक्तव्यत्वाद्, विशिष्य चात्र ब्रह्माभेददृष्टिविशिष्टप्रणवोपासनस्य कल्पितविषयत्वानिवारणादिति—**चेत्, उच्यते;**

**ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते । स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते । ननु—अभिध्याने परः पुरुष उक्तः, ईक्षणे तु परात्परः, कथमितर इतरत्र प्रत्यभिज्ञायत इति । अत्रोच्यते—परपुरुषशब्दौ तावदुभयत्र साधारणौ । नचात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, येन तस्मात्परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात् । कस्तर्हि जीवघन इति ? उच्यते—घनो मूर्तिः । जीवलक्षणो घनो जीवघनः । सैन्धवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति । अपर आह—'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः**

## भामती ।

पितगोचरो भवेत् । न चास्यापवादे शक्य उत्सर्गस्त्यक्तुम् । तथा चास्य तत्त्वविषयत्वात्तत्कारणस्य ध्यानस्यापि तत्त्वविषयत्वम् । **अपिच** वाक्यशेषेणैकवाक्यत्वसंभवे न वाक्यभेदो युज्यते । संभवति च परपुरुषविषयत्वेनार्थप्रत्यभिज्ञानात् समभिव्याहाराच्चैकवाक्यता । तदनुरोधेन च परात्पर इत्यत्र परादिति जीवघनविषयं द्रष्टव्यम् । तस्मात्तु

## वेदान्तकल्पतरुः ।

ध्यायत्यन्यत्पश्यतीति हेतुहेतुमत्त्वासिद्धेरित्यर्थः । प्रकारान्तरेणार्थभेदं निराकरोति—**अपि चेति । समभिव्याहारादिति** । स ईक्षत इति प्रकृतापेक्षनिर्देशादित्यर्थः । **तदनुरोधेनेति** । प्रमाणद्वयानुरोधेनेत्यर्थः ॥

हे सत्यकाम **परं** निर्विशेषम् **अपरं** हिरण्यगर्भाख्यं च यद् ब्रह्म तदेतदेव । एतच्छब्दार्थमाह—यदोंकारः स हि तस्य प्रतीकः प्रतिमेव विष्णोः, तस्मात्प्रणवं ब्रह्मात्मना विद्वा**नेतेनों**कारध्याने**नायतनेन** प्राप्तिसाधनेन परापरयोरेकतरं यथो-

## कल्पतरुपरिमलः ।

भावनाप्रचयस्य साक्षात्कारजनकत्वे तद्विषयविषयत्वं तन्त्रं, न तु तदन्याविषयत्वमपि; गौरवात् । अस्ति चात्र विधेयस्य ध्यानस्य प्रणवरूपकल्पितवस्तुविषयत्वेऽपीक्षणीयब्रह्मविषयत्वमपि । अतो न दोषः । यद्यप्येवं सति ध्यानस्य हिरण्यगर्भरूपजीवविषयत्वेऽपि तत्त्वविषयत्वं नापैति, तत्र जीवत्वोपाधेः कल्पितत्वेऽपि स्वरूपस्याबाध्यत्वात्; तथापि ध्यानेक्षणयोरवश्यकल्पनीयं विषयैक्यं निर्दोषब्रह्मविषयत्वेनैव कल्पयितुमुचितं, न तु सदोषनिर्दोषजीवब्रह्मविषयत्वेनेति तात्पर्यम् ॥ **स्यादेतत्**—ईक्षणध्यानयोर्नात्र कार्यकारणभावो विवक्षितः; यतः परापरवेदनयोस्तत्प्राप्तिफलकत्वेनोपक्रमप्रतिज्ञातयोरपरवेदनमोंकारप्रतीकविषयापरध्यानरूपं तल्लोकप्राप्तिफलं ब्रह्मलोकमित्यन्तेनोक्तं, स एतस्मादित्यादिना तु परवेदनमोंकारसाधनं साक्षात्काररूपतत्प्राप्तिफलमुक्तमित्यवश्यं व्याख्येयम्, ऋग्भिरेतमिति मन्त्रश्लोक्तार्थद्वयसंमतित्वेनोदाहृत इति योजनीयम्; ध्यानतत्फलकथनयोरपरविषयत्वाभावे प्रतिज्ञातार्थानिर्वाहात् । एवं च स एतस्मादिति वाक्ये तत्पदं तस्माद्विद्वानिति व्यवहितप्रस्तुतपरवेदितृपरम् । तच्च वाक्यमपरध्यानविषयपूर्ववाक्यानन्वयि ततो भिन्नम्; सर्वनाम्नामव्यवहितपरत्वासम्भवे व्यवहितपरत्वस्यैकवाक्यत्वासम्भवे वाक्यभेदस्य च न्याय्यत्वादिति शङ्कानिराकरणार्थमपि चेति ग्रन्थमवतारयति— **प्रकारान्तरेणेति ॥ प्रमाणद्वयानुरोधेनेति** । स एतस्मादित्यत्र तत्पदस्य पूर्वतत्पदयोरिवाव्यवहितप्रस्तुतध्यातृपरत्वं परपुरुषप्रत्यभिज्ञानं च ध्यानेक्षणवाक्ययोरेकवाक्यत्वापादकमिह प्रमाणद्वयं, प्रतिज्ञातमपरब्रह्मवेदनतत्फलकथनं तु टीकोक्तप्रकारेणैकमात्रद्विमात्रोपासनतत्फलकथनमेवेति नेतव्यम् । यद्यप्येकमात्रप्रणवोपासनस्य तत्प्रथममात्रात्मकऋग्वेदप्रापणीयमनुष्यलोकप्राप्तिः द्विमात्रप्रणवोपासनस्य तद्द्वितीयमात्रात्मकान्तरिक्षलोकप्राप्तिश्च फलम्, पृथिव्यन्तरिक्षलोकप्राप्तिश्च न हिरण्यगर्भरूपापरब्रह्मप्राप्तिः; तथापि तयोरुपासनयोन्यूनप्रणवविषययोर्न्यूनमपरं ब्रह्मैवैचित्यात् प्रणवारोप्यम् अपरं ब्रह्म पर्यवस्यतीति तयोः फलमेव । तस्माद्विद्वानेकतरमन्वेतीति प्रतिज्ञातापरब्रह्मप्राप्तितया विवक्षितं भवति । न चातथाभूतस्य तथात्वविवक्षयाऽत्र कश्चिद्दोषः; "स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयती"ति सत्यकामप्रश्नोत्तरस्य कृत्स्नस्या "प्येतद्वै सत्यकामे"त्यारभ्य प्रवृत्तस्य प्रकरणस्य परब्रह्माभेददृष्टिविशिष्टत्रिमात्रोपासनाविध्यर्थत्वेनैकार्थपरतया तदन्तर्गतयोरेकमात्रद्विमात्रोपासनातत्फलवचनयोरोंकारस्यायं महिमा यन्मात्रावैगुण्येनापरब्रह्मदृष्ट्योपास्यमानोऽपि कस्मैचित्फलाय भवति, तस्मादेवंभूतमहिमायमोंकारो हेयमल्पफलमपरं ब्रह्म विहाय परब्रह्मदृष्ट्या त्रिमात्र एवोपासनीय इत्येवं त्रिमात्रोपासनास्तुत्यर्थत्वात्, स्तुतेश्च यथाकथंचिदालम्बनमात्रेण चारितार्थ्यात्, सत्यकामेनोंकारालम्बनध्यानफलस्यैव पृष्टत्वेनेक्षणवाक्यस्य ध्यानाकार्योंकारसाधनकब्रह्मवेदनफलपरतायामपृष्टोत्तरत्वापत्त्या परध्यानफलसमर्पकतया तद्ध्यानवाक्यैकवाक्यताया वक्तव्यत्वेन परिशेषादेकमात्रद्विमात्रोपासनातत्फलवचनयोरेवापरोपासनातत्फलवचनतयाऽवश्यं व्याख्येयत्वाच्च । नच—एवमपीक्षणवाक्यस्यापृष्टोत्तरत्वमनिवार्यं ध्यानप्राप्यस्य लोकस्यैव पृष्टत्वादिति—

परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते जीवानां हि सर्वेषां करणपरिवृतानां सर्वैकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघनः। तस्मात्परो यः परमात्मेक्षणकर्मभूतः। स एवाभिध्यानेऽपि कर्मभूत इति गम्यते। परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्पते। परो हि पुरुषः परमात्मैव भवति; यस्मात्परं किंचिदन्यन्नास्ति, 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति च श्रुत्यन्तरात्। 'परं चापरं च ब्रह्म यदोंकारः' इति च विभज्यानन्तरमोंकारेण परं पुरुषमभिध्यातव्यं ब्रुवन्परमेव ब्रह्म परं पुरुषं गमयति। 'यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुच्यते' इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति। अथ यदुक्तं—परमात्माभिध्यायिनो न देशपरिच्छिन्नफलं युज्यत इति। अत्रोच्यते—त्रिमात्रेणोंकारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥ १३ ॥ इति चतुर्थमीक्षतिकर्माधिकरणम् ॥

(५ अधिकरणम्) **दहर उत्तरेभ्यः ॥ १४ ॥**

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वे-

### भामती।

परः पुरुषो ध्यातव्यश्च द्रष्टव्यश्च भवति। तदिदमुक्तम्—न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, किंतु जीवघनात् परात् परो यो ध्यातव्यो द्रष्टव्यश्च तमेव कथयितुं जीवघनो जीवः खिल्यभावमुपाधिवशादापन्नः स उच्यते। 'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यनन्तरवाक्यनिर्दिष्टो ब्रह्मलोको वा जीवघनः। स हि समस्तकरणात्मनः सूत्रात्मनो हिरण्यगर्भस्य भगवतो निवासभूमितया करणपरिवृतानां जीवानां संघात इति भवति जीवघनः। तदेवं त्रिमात्रोंकारायतनं परमेव ब्रह्मोपास्यम्। अत एव चास्य देशविशेषाधिगतिः फलमुपाधिमत्त्वात्, क्रमेण च सम्यग्दर्शनोत्पत्तौ मुक्तिः। 'ब्रह्म वेद ब्रह्मैव भवति' इति तु निरुपाधिब्रह्मवेदनविषया श्रुतिः। अपरं तु ब्रह्मैकैकमात्रायतनमुपास्यमिति मन्तव्यम् ॥ १३ ॥ इति चतुर्थमीक्षतिकर्माधिकरणम् ॥

## दहर उत्तरेभ्यः ॥ १४ ॥

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरम्' सूक्ष्मं गुहाप्रायं पुण्डरीकसंनिवेशं वेश्म 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्त-

### वेदान्तकल्पतरुः।

पासनमनुगच्छतीति प्रकृत्यैकमात्रद्विमात्रोपास्ती उक्त्वा वक्ति पिप्पलादः-**यः पुनरोमित्येतदक्षरं त्रिमात्रमिति।** तृतीया द्वितीयात्वेन परिणेया; ब्रह्मोंकाराभेदोपक्रमात्। तथाविधमक्षरं सूर्यप्रतिमं परं पुरुषमभिध्यायीत स सूर्यं प्राप्तः सामभिर्ब्रह्मलोकं प्राप्यते ॥ १३ ॥ **इति चतुर्थमीक्षतिकर्माधिकरणम् ॥**

## दहर उत्तरेभ्यः ॥ १४ ॥

प्रागुदाहृतपरपुरुषशब्दस्य दहरवाक्यशेषगतोत्तमपुरुषशब्दवदब्रह्मविषयत्वशङ्कायामस्यापि ब्रह्मविषयत्वोपपादनात्सं-

### कल्पतरुपरिमलः।

वाच्यम्; प्राप्यलोकानुबन्धित्वेन तत्प्रशंसार्थं पाप्मनिर्मोकसूर्यसंपत्तिवदीक्षणस्यापि वर्णनोपपत्तेः ॥ **ब्रह्मोंकाराभेदोपक्रमादिति। नन्वेवं** प्रतीकोपासनेयं कथं ब्रह्मलोकप्राप्तिफला। वचनबलादि**ति ब्रूमः।** अत एवात्र ब्रह्मलोकप्राप्तिवचनमर्थवत्; अहंग्रहोपासनत्वे तद्य इत्थं विदुरित्यादिसामान्यवचनादेव तत्प्राप्तिफलसिद्धेः। सूर्यान्तःस्थमिति सूर्यसंपत्तिवचनानुरोधादित्थं व्याख्यातस्य वचनस्य प्रशंसार्थमर्चिरादिमार्गभाविसूर्यप्राप्त्यनुवादत्वे ध्येयः सूर्यान्तःस्थत्वगुणो न सिध्यति, किं त्वीक्षणवाक्यश्रुतः पुरिशयत्वगुण एव तदेकवाक्यतयात्र ध्यानविध्यपेक्षितत्वेन ध्येयगुणः सिध्यति सोऽपि वा न ध्येयगुणः; आचार्यैः परं निर्विशेषमिति प्राक् प्रणवे ध्येयस्य परस्य निर्विशेषतोक्तेः, किं तु पुरिशयमित्येतल्लक्षणीयमहावाक्यार्थजीवाभेदसमर्पणार्थम्। प्राप्यते इति प्रापयतेः कर्मणि लकारः। णेरनिटीति णिलोपः। प्रापयत इति पाठस्तु लेखकप्रमादायातः। ईक्षतिकर्मत्वहेतोर्ब्रह्मैकान्त्यमस्पष्टब्रह्मलिङ्गता ॥ १३ ॥ **इति चतुर्थमीक्षत्यधिकरणम् ॥**

## दहर उत्तरेभ्यः ॥ १४॥

**दहरवाक्यशेषगतेति। ननू**त्तमपुरुषशब्दः प्रजापतिवाक्यशेषे न तु दहरवाक्यशेषे। **सत्यम्**; सिद्धान्ते सगुण-

१ अत्र सूत्रं—ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

ष्टव्यं तद्वाव विजिज्ञासितव्यम्' ( छा० ८।१।१ ) इत्यादिवाक्यं समाम्नायते । तत्र योऽयं दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः, स किं भूताकाशोऽथवा विज्ञानात्माऽथवा परमात्मेति संशय्यते । कुतः संशयः? आकाशब्रह्मपुरशब्दाभ्याम् । आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च प्रयुज्यमानो दृश्यते । तत्र किं भूताकाश एव दहरः स्यात्किंवा पर इति संशयः । तथा ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरमथवा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति । तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः । तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भूताकाश एव च दहरशब्द इति प्राप्तम् । तस्य च दहरायतनापेक्षया दहरत्वम् । 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति च बाह्याभ्यन्तरभावकृतभेदस्योपमानोपमेयभावः । द्यावापृथिव्यादि च तस्मिन्नन्तःसमाहितं; अवकाशात्मनाकाशस्यैकत्वात् । अथवा—जीवो दहर इति प्राप्तम्; ब्रह्मपुरशब्दात् । जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते; तस्य स्वकर्मणोपार्जितत्वात् । भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम् । नहि

---

## भामती ।

स्तदन्वेष्टव्यम्' । आगमाचार्योपदेशाभ्यां श्रवणं च तदविरोधिना तर्केण मननं च तदन्वेषणम् । तत्पूर्वकेण चादरनैरन्तर्यदीर्घकालासेवितेन ध्यानाभ्यासपरिपाकेन साक्षात्कारो विज्ञानम् । विशिष्टं हि तज्ज्ञानं पूर्वेभ्यः । तदिच्छा विजिज्ञासनम् ॥ अत्र संशयमाह—**तत्रेति** । तत्र प्रथमं तावदेवं संशयः—किं दहराकाशादन्यदेव किंचिदन्वेष्टव्यं विजिज्ञासितव्यं च उत दहराकाश इति । यदापि दहराकाशोऽन्वेष्टव्यस्तदापि किं भूताकाशः, आहो शारीर आत्मा, किं वा परमात्मेति । संशयहेतुं पृच्छति—**कुत इति** । तद्धेतुमाह—**आकाशब्रह्मपुरशब्दाभ्यामिति** । तत्र प्रथमं तावद्भूताकाश एव दहर इति पूर्वपक्षयति—**तत्राकाशशब्दस्य भूताकाशे रूढत्वादिति** । एष तु बहुतरोत्तरसंदर्भविरोधात्तुच्छः पूर्वपक्ष इत्यपरितोषेण पक्षान्तरमालम्बते पूर्वपक्षी—**अथवा जीवो दहर इति प्राप्तम्** । युक्तमित्यर्थः । **तत्र—आधेयत्वाद्विशेषाच्च पुरं जीवस्य युज्यते । देहो न ब्रह्मणो युक्तो हेतुद्वयवियोगतः ॥** असाधारण्येन हि व्यपदेशा भवन्ति । तद्यथा क्षितिजलपवनबीजादिसामग्रीसमवधानजन्माप्यङ्कुरः शालिबीजेन व्यपदिश्यते शाल्यङ्कुर इति, नतु क्षित्यादिभिः; तेषां कार्यान्तरेष्वपि साधारण्यात् । तदिह शरीरं ब्रह्मविकारोऽपि न ब्रह्मणः व्यपदेष्टव्यम्; ब्रह्मणः सर्वविकारकारणत्वेनातिसाधारण्यात् । जीवभेदधर्माधर्मोपार्जितं तदित्यसाधारणकारणत्वाजीवेन व्यपदिश्यत इति युक्तम् । **अपिच** ब्रह्मपुर इति सप्तम्यधिकरणे स्मर्यते, तेनाधेयेनानेन संबद्धव्यम् । नच

## वेदान्तकल्पतरुः ।

गतिः ॥ **पूर्वेभ्य इति** । श्रवणमनननिदिध्यासनेभ्य इत्यर्थः । **आधेयत्वादिति** । ब्रह्मपुरशब्दोक्तं देहलक्षणं पुरं जीवस्य युज्यते । तस्य परिच्छिन्नत्वेनाधेयत्वात् स्वकर्मोपार्जितशरीरेण संबन्धविशेषाच्च ब्रह्मणः पुरमिति षष्ठीसमाससंभवात् । ब्रह्मणस्तु न युक्तं पुरम्; उक्तहेतुद्वयाभावादित्यर्थः । विशेषादित्येतद्व्याख्याति—**असाधारणेनेत्यादिना । जीवभेदो** जीवविशेषः । आधेयत्वहेतुं व्याचष्टे—**अपि चेत्यादिना** । तेनाधिकरणेन सहानेन ब्रह्मशब्दार्थेनाधेयेन संबन्धव्यम्;

## कल्पतरुपरिमलः ।

निर्गुणब्रह्मविषयतया भिन्नयोरपि दहरप्रजापतिविद्ययोरपहतपाप्मत्वादिगुणकजीवैकविषयत्वं वदन् पूर्वपक्षी पौर्वापर्येणाम्नातयोस्तयोरेकविद्यात्वं मन्यत इति तदीये पूर्वाधिकरणाक्षेपवाक्ये तदभिमानानुसारेण दहरवाक्यशेषगतेत्युक्तम् । अत एव टीकायामप्युत्तराच्चे ( व्या. सू. अ. १ पा. ३ सू. १९ ) दिति सूत्रोपन्यस्तपूर्वपक्षविवरणारम्भे दहराकाशमेव प्रकृत्य श्रूयत इति दहरविद्यैकप्रकरणतया प्रजापतिविद्याऽवतारयिष्यते । **ननु**—तथाप्युक्तविधया पूर्वाधिकरणाक्षेपो न युज्यते; उत्तमपुरुषशब्दवत् परपुरुषशब्दस्य जीवविषयत्वसम्भवेऽपि ततः परपुरुषशब्दप्रत्यभिज्ञया ध्यानेक्षणवाक्ययोरेकविषयत्वसिद्धावीक्षणस्य तत्त्वविषयत्वनियमाद्, ध्यानमपि तात्त्विकपरब्रह्मविषयमिति सिद्धान्तसिद्धेश्चलनाभावादिति—**चेत्, उच्यते**; "एष संप्रसाद" इत्याद्युत्तमपुरुषशब्दघटितवाक्योपात्ताभिनिष्पत्तिशब्दोक्तमीक्षणं पूर्वपक्षे जीवविषयमिति तद्वत् "स एतस्मा"दिति वाक्योक्तमपीक्षणं हिरण्यगर्भजीवविषयं भविष्यतीति प्रथममिहाक्षेपो विवक्षितः । ततश्च तदेकविषयस्य ध्यानस्यापि तद्विषयत्वसिद्धौ कथं ध्यानेक्षणवाक्ययोरपरब्रह्मणि परपुरुषशब्द इत्याकाङ्क्षायामिह जीवमात्रेऽप्युत्तमपुरुषशब्दो दृश्यते, हिरण्यगर्भे परपुरुषशब्दस्य काऽनुपपत्तिरित्येवमाशयेयमाचार्योक्तिः । इयमाक्षेपसङ्गत्युक्तिरुपलक्षणम् । तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोक इति दहरोपासनस्य ब्रह्मलोकफलश्रवणं त्रिमात्रप्रणवप्रतीकालम्बनोपासनस्यैव वचनबलादुपपद्यत इति दृष्टान्तसङ्गतिरपि द्रष्टव्या । **श्रवणमननध्यानेभ्य इति** । यद्यपि टीकायां श्रवणं

परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः संबन्धोऽस्ति । तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः । मनउपाधिकश्च जीवः, मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयेऽन्तरवस्थानं स्यात् । दहरत्वमपि तस्यैव आराग्रोपमितत्वादवकल्पते । आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति । नचात्र दहरस्याकाशस्यान्वेष्यत्वं विजिज्ञासितव्यत्वं च श्रूयते; 'तस्मिन्यदन्तः' इति परविशेषणत्वेनोपादानादिति । अत उत्तरं ब्रूमः—परमेश्वर एवात्र दहराकाशो भवितुमर्हति, न भूताकाशो जीवो वा । कस्मात्? उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथाहि—अन्वेष्टव्यतयाभिहितस्य दहरस्याकाशस्य 'तं चेद्ब्रूयुः' इत्युपक्रम्य 'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति । 'स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी

## भामती ।

ब्रह्मणः स्वे महिम्नि व्यवस्थितस्यानाधेयस्याधारसंबन्धः कल्पते । जीवस्त्वाराग्रमात्र इत्याधेयो भवति । तस्माद्ब्रह्मशब्दो रूढिं परित्यज्य देहादिबृंहणतया जीवे यौगिको वा भाक्तो वा व्याख्येयः । चैतन्यं च भक्तिः । उपधानानुपधाने तु विशेषः । **वाच्यत्वं** गम्यत्वम् । **स्यादेतत्**— जीवस्य पुरं भवतु शरीरं, पुण्डरीकदहरगोचरता त्वन्यस्य भविष्यति, वत्सराजस्य पुर इवोज्जयिन्यां मैत्रस्य सद्मेत्यत आह—**तत्र पुरस्वामिन इति** । **अयमर्थः**—वेश्म खल्वधिकरणमनिर्दिष्टाधेयमाधेयविशेषापेक्षायां पुरस्वामिनः प्रकृतत्वात्तेनैवाधेयेन संबद्धं सदनपेक्षं नाधेयान्तरेण संबन्धं कल्पयति । **ननु** तथापि शरीरमेवास्य भोगायतनमिति को हृदयपुण्डरीकस्य विशेषो यत्तदेवास्य सद्मेत्यत आह—**मन उपाधिकश्च जीव इति** । **ननु** मनोऽपि चलतया सकलदेहवृत्तिपर्यायेणेत्यत आह—**मनश्च प्रायेणेति** । आकाशशब्दश्चारूपत्वादिना सामान्येन जीवे भाक्तः । अस्तु वा भूताकाश एवायमाकाशशब्दो 'दहरोऽस्मिन्नन्तराकाशः' इति, तथाप्यदोष इत्याह—**न चात्र दहरस्याकाशस्यान्वेष्यत्वमिति** । एवं प्राप्त उच्यते—भूताकाशस्य तावन्न दहरत्वं;

## वेदान्तकल्पतरुः ।

समासाभिहितसंबन्धसामान्यस्याधाराधेयभाव एव विश्रमादित्यर्थः । भक्तिर्गुणस्तेन हि शब्दो मुख्यार्थाद्भज्यते । यदि चेतनत्वं समं जीवब्रह्मणोस्तर्हि को विशेषस्तत्राह—**उपधानेति** । भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वमिति भाष्ये वाच्यत्वं तात्पर्यगम्यत्वं; भाक्तत्वे सत्यभिधेयत्वविरोधादित्यर्थः । **अन्यस्य**-ब्रह्मण इत्यर्थः । **अनिर्दिष्टाधेयमिति** । वेश्माधेयतया निर्दिष्टस्याप्याकाशस्य संदिग्धत्वादनिश्चय इत्यर्थः । उपमानोक्तिरन्यथासिद्धिमाशङ्क्याह—**तेनेति** । ह्रस्वतनायतनत्वादिना

## कल्पतरुपरिमलः ।

मननं चान्वेषणमिति व्याख्यातत्वाद्विज्ञानं ध्यानं, तस्य वैशिष्ट्यं श्रुत्युपात्तश्रवणमननापेक्षमिति वक्तुं शक्यम्; "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेने"त्यादिश्रुतिषु विज्ञानशब्दस्य ध्याने बहुशः प्रयोगदर्शनात्, उपासनारूपं ध्यानमेव चात्रानुष्ठानाय विधातव्यं, न तु तत्फलरूपः सगुणसाक्षात्कारः; तथापि सन्प्रत्यययोगात्फलरूपतया निरुपाधीच्छाविषयः साक्षात्कार एव ग्राह्य इत्यभिप्रायेण टीकाकृता स्वयं साक्षात्कारहेतुतया ध्यानमुपन्यस्य त्रिभ्योऽपि वैशिष्ट्यं साक्षात्कारस्य विवक्षितमिति पूर्वेभ्य इत्यनेन दर्शितत्वात् श्रवणमननध्यानेभ्य इत्युक्तम् । एवं च फलसाक्षात्कारे विधिसरूपोऽयमर्थवादः; उपासनाविधिस्त्व"थ य इहात्मान"मित्यादिफलवाक्येष्वेवेति तात्पर्यम् । यद्यपि दहरविद्याफलब्रह्मलोकावाप्त्यर्थिनः स्वयमेतच्छास्त्रविचाराधीने श्रवणमनने न सम्भवतः, सर्वतो विरक्तस्य मुमुक्षोरेवैतच्छास्त्राधिकारात्; तथापि विचारितैतच्छास्त्राचार्योपदेशाधीने दहरोपासनापेक्षितवाक्यार्थमात्रविषये ते विवक्षिते इति द्रष्टव्यम् । **ननु** पुरेणाधिकरणेन सहाधेयेन सता ब्रह्मणा सम्बद्धव्यमिति टीकोक्तमयुक्तम्; षष्ठ्या अधिकरणवाचित्वाभावात्, सप्तम्या वेश्माधिकरणवाचित्वात्, नच—पुरमध्यगतवेश्माधेयस्य जीवस्य पुराधेयत्वमर्थतः सिध्यति, प्रासादमध्यगते पर्यङ्के शयानस्यैव प्रासादे शयनं, तदर्थतः सिध्यदुदाहृतटीकयोक्तमिति—वाच्यम्; वेश्माधेयो जीव इतीदानीमसिद्धेः । आधेयत्वविशेषहेतुभ्यां ब्रह्मात्र जीव इति निश्चयमुपजीव्य खलु अनिर्दिष्टाधेयस्य वेश्मनः संनिहितः स एवाधेयतयाऽन्वेतीत्यग्रे टीकाकृद्वक्ष्यतीत्याशङ्क्य तत्तात्पर्यमाह—**समासेति** । समासे षष्ठ्यभिधेयं सम्बन्धसामान्यं सप्तम्यर्थतया बुद्धिसन्निहिते आधाराधेयभावे पर्यवस्यतीत्यर्थः । यद्यपि यथाभाष्यं स्वस्वामिभावं षष्ठ्यर्थमङ्गीकृत्याधेयत्वहेतुमनपेक्ष्य विशेषहेतुनैव लभ्यं पुरस्वामिभूतं ब्रह्म जीव इति निश्चयमुपजीव्य सन्निहितस्य तस्य वेश्माधेयत्वेनान्वय उपपादयितुं शक्यः, षष्ठ्याः स्वस्वामिभावार्थकत्वं च विशेषहेतूपपादनार्थं टीकाकृतोऽप्यपेक्षणीयमेव; तथाप्याधेयत्वहेतुरपि टीकायामुपन्यस्त इति तदुपपादनप्रकारोऽयं दर्शितः । एवं च विकल्पमुखेन षष्ठ्या अर्थद्वयमवतार्य आधेयत्वविशेषहेत्वोर्योजनं कार्यम् ॥ **आकाशस्य संदिग्धत्वादिति । ननु** महदिदं साहसवचनं, यत् स्वनामश्रुतिसमर्पितो भूताकाशः संदिग्धो निरू-

**अन्तरेव समाहिते' ( छा० ८।१।३ ) इत्यादि । तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन्भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते । यद्यप्याकाशशब्दो भूताकाशे रूढः; तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति । नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावः संभवतीत्युक्तम् । नैवं संभवति; अगतिका हीयं गतिः, यत्काल्पनिकभेदाश्रयणम् । अपिच कल्पयित्वापि भेदमुपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत । ननु परमेश्वरस्यापि 'ज्यायानाकाशात्' ( शत० ब्रा० १०।६।३।२ ) इति श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्यते । नैष दोषः; पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न तावत्त्वप्रतिपादनपरत्वम् । उभयप्रतिपादने हि वाक्यं भिद्येत । नच कल्पितभेदे पुण्डरीकवेष्टित आकाशैकदेशे द्यावापृथिव्यादीनामन्तः समाधानमुपपद्यते । 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे संभवन्ति । यद्यप्यात्मशब्दो जीवे संभवति; तथापी-**

## भामती ।

'यावान्वाऽयमाकाशस्तावानेषोन्तर्हृदय आकाशः' इत्युपमानविरोधात् । **तथाहि—तेन तस्योपमेयत्वं रामरावणयुद्धवत् । अगत्या भेदमारोप्य गतौ सत्यां न युज्यते ॥** अस्ति तु दहराकाशस्य ब्रह्मत्वेन भूताकाशाद्भेदेनोपमानस्य गतिः । न चानवच्छिन्नपरिमाणमवच्छिन्नं भवति; तथा सत्यवच्छेदानुपपत्तेः । न भूताकाशमानत्वं ब्रह्मणोऽत्र विधीयते, येन 'ज्यायानाकाशात्' इति श्रुतिविरोधः स्यात्, अपि तु भूताकाशोपमानेन पुण्डरीकोपाधिप्राप्तं दहरत्वं निवर्त्यते । **अपिच** सर्व एवोत्तरे हेतवो दहराकाशस्य भूताकाशत्वं व्यासेधन्तीत्याह—**नच कल्पितभेद इति ।** नापि दहराकाशो जीव इत्याह—**यद्यप्यात्मशब्द इति । उपलब्धेरधिष्ठानं ब्रह्मणो देह इष्यते । तेनासाधारणत्वेन देहो ब्रह्मपुरं भवेत् ॥** देहे हि ब्रह्मोपलभ्यत इत्यसाधारणतया देहो ब्रह्मपुरमिति व्यपदिश्यते, न तु ब्रह्मविकारतया । तथाच ब्रह्मशब्दार्थो मुख्यो भवति । अस्तु वा ब्रह्मपुरं जीवपुरं, तथापि यथा वत्सराजस्य पुरे उज्जयिन्यां

## वेदान्तकल्पतरुः ।

युद्धे भेदारोपः क्रियते—**गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥ इत्यत्र ।** अस्तु वोपाध्यपेक्षयाऽऽकाशे भेदारोपः, तथापि न बाह्याकाशतुल्यत्वं हार्दाकाशस्येत्याह—**न चेति ।** यदिन्यूनत्वाद्धार्दनभसो न बाह्येनोपमेयता, हन्ताधिकत्वाद् ब्रह्मणोऽपि न स्यादत आह—**न भूताकाशेति ।** आधेयत्वादित्येतत्प्रत्याह—**उपलब्धेरिति ।** विशेषाच्चेत्येतन्निराकरोति—**तेनेति ।** मुख्याधेयत्वत्यागे हेतुमाह—**तथा चेति ।** नन्वनिर्णी-

## कल्पतरुपरिमलः ।

द्विविषयः परमात्मा च संदिग्धः, षष्ठीस्वरसोपनेयवैशेषिकसम्बन्धिलिङ्गवशाद् ब्रह्मशब्देन लक्षणीयो जीवो निश्चितः, स च भिन्नवाक्योपात्तः समानवाक्योपात्तभूताकाशं परमात्मानं च निरस्य स्वयं वेश्माधेयतयाऽन्वेतीति । **नैष दोषः;** दहरोऽस्मिन्नन्तराकाश इत्यत्र वेश्मावच्छेदोपाधिकस्य दहरत्वस्यार्थलभ्यत्वेऽपि साक्षाद् दहरत्ववचनमर्थवत्त्वार्थमाजानसिद्धं दहरत्वमुपस्थापयति, आकाशश्रुतिर्भूताकाशं परमात्मानं वा, तयोः कतरस्य ग्रहणं कार्यमित्यनिर्णये सन्निधिवशाद् जीवस्य ग्रहणं नियम्यते । **युद्धे इति** गगनसागरयोरप्युपलक्षणं । तदभिप्रायेणारोपग्रहणमप्यर्थवत् । गगनं गगनाकारमित्यत्रोपमालंकार इति मतमनुरुध्येत्थमुक्तम् । यदि तु गगनं गगनाकारमिति श्लोके नोपमालंकारः, किं तु भेदकल्पनमनपेक्ष्य अत्यन्ताभेदे निबध्यमानमौपम्यं नान्वेतीत्यन्वर्थनामाऽनन्वयालङ्कारः; अनन्वयिनोऽप्यौपम्यस्य निबन्धनमनुपमत्वद्योतनाय, यथा स्वमहिमप्रतिष्ठितत्ववचनमनाधारत्वद्योतनाय, यथा वा स्वयंदासत्ववचनं दासरहितत्वद्योतनायेति मतमनुरुध्यते, तदापि नात्रानन्वयेन निर्वाहप्रत्याशा; अयमित्येषोऽन्तर्हृदय इति चोपमानोपमेयरूपयोः परस्परव्यावर्तकविशेषणनिवेशनेन—उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् । स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ इत्यत्रेव कल्पितभेदोपाधिकोपमाप्रभेदस्यैव वक्तव्यत्वात् । न च सोऽपि प्रकारोऽत्र वक्तुं शक्य इत्याह—**अस्तु वेति । मुख्याधेयत्याग इति । ननु**—ब्रह्मशब्दमुख्यार्थलाभो न मुख्याधेयत्वत्यागहेतुः; वक्ष्यमाणवत्सराजपुरदृष्टान्तेन ब्रह्मपुरे जीवस्य वेश्मसम्भवात्, वेश्मस्थस्य च मुख्यपुराधेयत्वोपपत्तेः, नच—ब्रह्मपुर इत्यत्र जीवसन्निध्यभावे जीवो वेश्माधेयो न सिध्येदिति—वाच्यम्; अनन्यथासिद्धस्वाभाविकदहरत्वलिङ्गेन ब्रह्मपुरत्वपक्षेऽप्यवश्यकल्पनीयवृत्त्यन्तरतयाऽन्यथासिद्धाया आकाशश्रुतेः प्रबलेन तस्य वेश्माधेयत्वसिद्धेरिति—**चेत्, मैवम्**; जीवस्वामिकत्वेन प्रसिद्धजीवसंबन्धस्य अप्रसिद्धपरब्रह्मपुरत्वोक्तेः तदुपासनाविधित्साभावे वैयर्थ्यप्रसङ्गात् । न हि मैत्रः क्व देशे वर्तत इति मैत्रान्वेषिणं

तरेभ्यः कारणेभ्यो जीवाशङ्कापि निवर्तिता भवति । न ह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुम् । ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्येतेति चेत्, यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्येत तस्यैव ब्रह्मणः साक्षात्सर्वगतत्वादि विवक्ष्यतामिति युक्तम् । यदप्युक्तं—ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वाद्राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्तित्वमस्त्विवति । अत्र ब्रूमः—परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते; ब्रह्मशब्दस्य तस्मिन्मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन संबन्धः उपलब्ध्यधिष्ठानत्वात् । 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' ( प्र० ५।५ ) 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः' ( बृ० २।५।१८ ) इत्यादिश्रुतिभ्यः । अथवा—जीवपुर एवास्मिन्ब्रह्म संनिहितमुपलक्ष्यते । यथा शालग्रामे विष्णुः संनिहित इति तद्वत् । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' ( छा० ८।१।६ ) इति च कर्मणामन्तवत्फलत्वमुक्त्वा 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन्परमात्मत्वमस्य सूचयति । यदप्येतदुक्तं—न दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रुतं; परविशेषणत्वेनोपादानादिति । अत्र ब्रूमः—यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्यात्, यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्याद्याकाशस्वरूपप्रदर्शनं नोपयुज्येत । नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव प्रदर्श्यते 'तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्म पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम् इत्याक्षिप्य परिहारावसर आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्तःसमाहितत्वदर्शनात् । नैतदेवम् । एवं हि सति यदन्तःसमाहितं द्यावापृथिव्यादि तदन्वेष्टव्यं विजिज्ञासितव्यं चोक्तं

## भामती ।

मैत्रस्य सद्म भवति, एवं जीवस्य पुरे हृत्पुण्डरीकं ब्रह्मसदनं भविष्यति, उत्तरेभ्यो ब्रह्मलिङ्गेभ्यो ब्रह्मणोऽवधारणात् । ब्रह्मणो हि बाधके प्रमाणे बलीयसि जीवस्य च साधके प्रमाणे सति ब्रह्मलिङ्गानि कथंचिदभेदविवक्षया जीवे व्याख्यायन्ते। न चेह ब्रह्मणो बाधकं प्रमाणं साधकं वास्ति जीवस्य । ब्रह्मपुरव्यपदेशश्चोपपादितो ब्रह्मोपलब्धिस्थानतया । अर्भकौकस्त्वं चोक्तम् । तस्मात् सति संभवे ब्रह्मणि तल्लिङ्गानां नाब्रह्मणि व्याख्यानमुचितमिति ब्रह्मैव दहराकाशो न जीवभूताकाशाविति । **श्रवणमननमनुविद्य** ब्रह्मानुभूय **चरणं** चारस्तेषां कामेषु चरणं भवतीत्यर्थः । **स्यादेतत्**—दहराकाशस्यान्वेष्यत्वे सिद्धे तत्र विचारो युज्यते, नतु तदन्वेष्टव्यम्, अपितु तदाधारमन्यदेव किंचिदित्युक्तमित्यनुभाषते—**यदप्येतदिति** । अनुभाषितं दूषयति—**अत्र ब्रूम इति** । यद्याकाशाधारमन्यदन्वेष्टव्यं भवेत्, तदेवोपरि व्युत्पादनीयं, आकाशव्युत्पादनं तु क्वोपयुज्यत इत्यर्थः । चोदयति—**नन्वेतदपीति** । आकाशकथनमपि तदन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव । अथाकाशपरमेव कस्मान्न भवतीत्यत आह—**तं चेद्ब्रूयुरिति** । आचार्येण हि 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्युपदिष्टेऽन्तेवासिनाक्षिप्तम्—'किं तदत्र विद्यते यदन्वेष्टव्यम्' । पुण्डरीकमेव तावत्सूक्ष्मतरं, तदवरुद्धमाकाशं सूक्ष्मतमम् । तस्मिन्सूक्ष्मतमे किमपरमस्ति । नास्त्येवेत्यर्थः । तत् किमन्वेष्टव्यमिति । तदस्मिन्नाक्षेपे परिसमाप्ते समाधानावसर आचार्यस्याकाशोपमानोपक्रमं वचः—'उभे अस्मिन्द्यावापृथिवी समाहिते' इति । तस्मात्पुण्डरीकावरुद्धाकाशाश्रये द्यावापृथिव्यावेवान्वेष्टव्ये उपदिष्टे, नाकाश इत्यर्थः । परिहरति—**नैतदेवम् । एवं हीति** । **स्यादेतत्**—एवमेवैतत् । नो खल्वभ्युपगमा एव दोषत्वेन चोद्यन्त इत्यत आह

## वेदान्तकल्पतरुः ।

ताधेयं वेश्म संनिहितपुरस्वामिना संबध्यत इत्युक्तत्वात्कथं जीवपुरे ब्रह्मसदनलाभोऽत आह—**उत्तरेभ्य इति** । संनिधिर्लिङ्गैर्बाध्यत इत्यर्थः । **ननु** लिङ्गानि ब्रह्माभेदपराणि, नेत्याह—**ब्रह्मणो हीति** । ब्रह्मणि बाधकं जीवे च साधकं प्रमाणं नास्ति; ब्रह्मबाधकत्वेन जीवसाधकत्वेन चेष्टस्य संनिधेर्लिङ्गैर्बाधादित्यर्थः । **अपि** चासिद्धो जीवसंनिधिः, पुरस्य ब्रह्मसंबन्धोपपादनाद् ब्रह्मशब्देन जीवाऽनभिधानादित्याह—**ब्रह्मपुरव्यपदेशश्चेति** । अथ य इहात्मानमिति भाष्यस्थश्रुतावनुशब्दार्थमाह—**श्रवणेति** । विदेरर्थमाह—**अनुभूयेति** । साक्षात्कृत्येत्यर्थः । काम्यन्त इति कामा विषयाः । **चारः** उपलब्धिः । आद्यसंशयस्थपूर्वपक्षमनूद्य सिद्धान्तयति—**स्यादेतदित्यादिना** । भाष्ये द्यावापृथिव्याद्यन्वेष्यत्वापत्तिरिष्टा-

**स्यात् । तत्र वाक्यशेषो नोपपद्येत । 'अस्मिन्कामाः समाहिताः' 'एष आत्माऽपहतपाप्मा' इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति समुच्चयार्थेन चशब्देनात्मानं कामाधारमाश्रितांश्च कामान्विज्ञेयान्वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तःस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च कामैर्विज्ञेय उक्त इति गम्यते । स चोक्तेभ्यो हेतुभ्यः परमेश्वर इति ॥ १४ ॥**

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

### भामती ।

**—तत्र वाक्यशेष इति** । वाक्यशेषो हि दहराकाशात्मवेदनस्य फलवत्त्वं ब्रूते, यच्च फलवत् तत्कर्तव्यतया चोद्यते, यच्च कर्तव्यं तदिच्छतीति 'तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति तद्दहराकाशविषयमवतिष्ठते । **स्यादेतत्**—द्यावापृथिव्यावेवात्मानौ भविष्यतः, ताभ्यामेवात्मा लक्षयिष्यते, आकाशशब्दवत् । ततश्चाकाशाधारौ तावेव परामृश्येते इत्यत आह—**अस्मिन्कामाः समाहिताः** प्रतिष्ठिताः । **एष आत्मापहतपाप्मेति** । अनेन हि **प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य** द्यावापृथिव्यभिधानव्यवहितमपीति शेषः । **ननु** सत्यकामज्ञानस्यैतत्फलं, तदनन्तरं निर्देशात्, न तु दहराकाशवेदनस्येत्यत आह—**समुच्चयार्थेन चशब्देनेति** । 'अस्मिन्कामाः' इति च 'एषः' इति चैकवचनान्तं न द्वे द्यावापृथिव्यौ परामृष्टुमर्हतीति दहराकाश एव परामृष्टव्य इति समुदायार्थः । तदनेन क्रमेण 'तस्मिन्यदन्तः' इत्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलङ्घ्य हृत्पुण्डरीकं परामृशतीत्युक्तं भवति । तस्मिन् हृत्पुण्डरीके यदान्तराकाशं तदन्वेष्टव्यमित्यर्थः ॥ १४ ॥ **गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च** । उत्तरेभ्य इत्यस्य प्रपञ्चः । एतमेव दहराकाशं प्रक्रम्य बताहो कष्टमिदं वर्तते जन्तूनां तत्त्वावबोधविकलानां, यदेभिः स्वाधीनमपि ब्रह्म न प्राप्यते । तद्यथा चिरंतननिरूढनिबिडमलपिहितानां कलधौतशकलानां पथि पतितानामुपर्युपरि संचरद्भिरपि पान्थैर्धनायद्भिर्ग्रावखण्डनिवहविभ्रमेणैतानि नोपादीयन्त इत्यभिसंधिमती साद्भुतमिव सखेदमिव श्रुतिः प्रवर्तते—'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति । स्वापकाले हि सर्व एवायं विद्वानविद्वांश्च जीवलोको हृत्पुण्डरीकाश्रयं दहराकाशाख्यं ब्रह्मलोकं प्राप्तोऽप्यनाद्यविद्यातमःपटलपिहितदृष्टितया ब्रह्मभूयमापन्नोऽहमस्मीति न वेद । सोऽयं ब्रह्मलोकशब्दस्तद्गतिश्च प्रत्यहं जीवलोकस्य दहराकाशस्यैव ब्रह्मलोकतामाहतुः । तदेतदाह भाष्यकारः

### वेदान्तकल्पतरुः ।

पादनमिति शङ्कते—**स्यादेतदिति** । तर्हि "थ य इहात्मान"मित्यात्मशब्दः कथमत आह—**ताभ्यामिति** । तथा च भूताकाशस्य दहरत्वसिद्धिरित्यर्थः । अस्मिन्कामा इत्यस्मिन्शब्देन द्यावापृथिव्याधार आकाश एव परामृश्यते समानाधारत्वप्रत्यभिज्ञानाद्, न द्यावापृथिव्यौ, तथा चैष इत्यात्मेति तदुपरितनशब्दाभ्यामप्याकाश एव निर्दिष्ट इत्याह—**अनेन हीति** । आकृष्येति भाष्ये व्यवधानं सूचितम् । व्यवहितस्य ह्याकर्षणं तत्कथयति—**द्यावापृथिव्यादीति** । "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते" इति पूर्ववाक्ये आकाशनिर्देशानन्तरं द्यावापृथिव्यादिनिर्देशाद् व्यवधानम् । एतांश्चसत्यान्कामान् इत्यात्मशब्दानन्तरं कामनिर्देशात्सर्वेषु लोकेषु कामचारो भवतीति फलश्रवणं गुणविज्ञानस्यैवेति शङ्कते—**नन्विति** । चकाराद्गुणगुणिनोर्ज्ञेयत्वे समुच्चयावगमात्समुच्चितोपास्तिफलं कामचार इति परिहारार्थः । पूर्वत्राव्यवहितद्यावापृथिव्याद्युपेक्ष्यास्मिन्शब्देन प्रत्यभिज्ञानादाकाशमेव परामृश्यत इत्युक्तं, तत्रैव हेत्वन्तरमाह—**अस्मिन्कामा इति चेति** । लक्षितात्मन ऐक्येऽपि पूर्वं शब्दतोऽनुपात्ते नैकवचनपरामृश्यतेत्यर्थः । यदि दहराकाशस्य विज्ञेयत्वं, कथं तर्हि तदाधेयस्य

### कल्पतरुपरिमलः ।

प्रति वत्सराजपुरे वसतीति वाक्ये वत्सराजपुरत्वोक्तिः पुरान्तरव्यावर्तनेनेवात्र ब्रह्मपुरत्वोक्तिः प्रकारान्तरेण साफल्यमश्नुवीत, दहरत्ववचनं तु जीवगतस्वाभाविकदहरत्वविषयत्वाभावेऽपि दहरपुण्डरीकावच्छेदेन ब्रह्मणो यावद्दहरत्वं भवति तावदपेक्षयाऽधिकं "तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठित"मिति श्रुत्यन्तराम्नातहृदयपुण्डरीकाग्रसुषिरावच्छेदोपाधिकमत्यन्तसौक्ष्म्यं लम्भयितुमिति साफल्यं नेतुं शक्यम् । तस्मायुक्तमुक्तं ब्रह्मशब्दमुख्यार्थानुसरणं मुख्याधेयत्वत्यागहेतुरिति ॥ **नैकवचनपरामृश्यतेति । ननु**—मा भूद् द्यावापृथिवीशब्दो ब्रह्मलक्षकः । "उभे अस्मिन् द्यावापृथिवी" इत्यादिके "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित"मित्यन्ते द्यावापृथिव्यादिसमाधानवाक्ये उक्तानुक्तसकलवस्तुसंग्रहार्थो यः सर्वशब्दः स सर्वात्मकब्रह्मप्रतिपादकोऽस्तु; तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितमिति तैत्तिरीयके सर्वशब्देनैव दहरपुण्डरीकोर्ध्वसुषिरवर्त्युपास्यप्रतिपादनदर्शनात्, ततश्चैकवचनान्तेन सर्वशब्देन प्रकृतं दहराकाशान्तवर्त्युपास्यमिहैकवचनान्तेन परामृष्टुं योग्यमिति—**चेत्**, तथा सति तदनन्तरं "तं चेद् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम् । त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते । इतश्च परमेश्वर एव दहरः, यस्माद्दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः—'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' ( छा० ८।३।२ ) इति । तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानामभिधीयमाना दहरस्य ब्रह्मतां गमयति । तथा ह्यहरहर्जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे—'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इत्येवमादौ । लोकेऽपि किल गाढं सुषुप्तमाचक्षते ब्रह्मीभूतो ब्रह्मतां गत इति । तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीव-

## भामती ।

**इतश्च परमेश्वर एव दहरो यस्माद्दहरवाक्यशेष इति ।** तदनेन गतिशब्दौ व्याख्यातौ । 'तथाहि दृष्टम्' इति सूत्रावयवं व्याचष्टे—**तथाह्यहरहर्जीवानामिति ।** वेदे च लोके च दृष्टम् । यद्यपि सुषुप्तस्य ब्रह्मभावे लौकिकं न प्रमाणान्तरमस्ति; तथापि वैदिकीमेव प्रसिद्धिं स्थापयितुमुच्यते, ईदृशी नामेयं वैदिकी प्रसिद्धिर्यल्लोकेऽपि गीयते इति । यथा श्रुत्यन्तरे यथा च लोके तथेह ब्रह्मलोकशब्दोऽपीति योजना । 'लिङ्गं च' इति सूत्रावयवव्याख्यानं चोद्य-

## वेदान्तकल्पतरुः ।

विज्ञेयत्वोपदेशोऽत आह—**तदनेनेति ।** एतमेव दहराकाशं प्रक्रम्य श्रुतिः प्रवृत्त इत्यन्वयः । **धनायद्भिः** धनेच्छावद्भिः । यद्यपि सुषुप्तौ ब्रह्मप्राप्तिर्न लोकसिद्धा; तथापि वेदसंस्कृतजनप्रसिद्ध्या वेदस्य तत्र तात्पर्यं गम्यत इत्याह—**तथा**

## कल्पतरुपरिमलः ।

भूतानि सर्वे चैव कामा यदैतदेवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यते" इति वर्णिते शिष्याणामाक्षेपे "स ब्रूयात् न तस्य जरयैतद् जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः" इत्याचार्यकर्तव्यपरिहारोक्तौ कामादिसर्वसमाधानाधारस्य सत्यब्रह्माख्यपुरतया देहरूपवितथब्रह्मपुरजराप्रध्वंसानुविधायिनो जराप्रध्वंसौ न स्त इत्युक्तिर्न सङ्गच्छते; समाधानाधारस्य त्वया भूताकाशतया एव वक्तव्यत्वात् तस्य च सत्यत्वब्रह्मत्वाधारान्तरनिरपेक्षधारकत्वोक्त्ययोगादिति भावः । **यदि दहराकाशस्य विज्ञेयत्वमिति । ननु**—"तस्मिन्यदन्त"रित्यादौ नास्त्युपास्यत्वरूपविज्ञेयत्वोपदेशो येन दहरस्य विज्ञेयत्वोपदेशालाभदोषः शङ्क्येत, किं त्वविधेयश्रवणमननसाक्षात्कारेच्छाविषयत्वानुवादमात्रं; तथैव टीकायां व्याख्यातत्वात्, तदनुवादश्च फलवाक्यविधित्सितगुणगुणिविषयोपासनास्तुत्यर्थः पर्यवस्यति, स्तुतिवाक्यस्य नास्ति यावदुपास्तविषयत्वनियमः; दहरगुणजातमपि श्रवणमननाभ्यामन्वेष्टव्यं साक्षात्कर्तुमेष्टव्यं चेति उपास्यैकदेशप्रशंसया गुणगुण्युभयविषयोपासनास्तुतिलाभात्, द्रव्यदेवताविशिष्टयागविधीनां यदष्टाकपालो भवतीत्यादिषु द्रव्यमात्रविषयया वायुर्वै क्षेपिष्ठा देवतेत्यादिषु देवतामात्रविषयया च प्रशंसया स्तुतिदर्शनात्, अतो दहराधेयविषयान्वेष्टव्यत्वादिकथनस्य न काचिदनुपपत्तिः । छान्दोग्यविवरणे च भाष्यकारैरिदं वाक्यं दहराधेयविषयतयैव व्याख्यातम्—'तस्मिन्नाकाशाख्ये ब्रह्मणि यदन्तर्मध्ये तद्वाव तदेव विशेषेण जिज्ञासितव्यं ज्ञातुमेष्टव्यं गुर्वाश्रयश्रवणाद्युपायैरन्विष्य साक्षात्करणीयमित्यर्थः' इति । तस्मादस्थान इयमाशङ्का । परिहारोऽप्ययुक्तः; तस्मिन्नित्यस्याव्यवहिते दहराकाशे स्थिते व्यवहितपुण्डरीकपरामर्शित्वकल्पनाऽयोगात्, "तस्मिन्य"दित्यादिनपुंसकलिङ्गानां प्राक् पुंलिङ्गनिर्दिष्टदहराकाशेनान्वयाच्च, दहराकाशस्य हृत्पुण्डरीकस्थतायाः दहरोऽस्मिन्नन्तराकाश इत्युक्ततया पुनस्तत्कीर्तनवैयर्थ्याच्च, "तं चेत् ब्रूयु"रित्यादिशिष्यप्रश्नवाक्ये "दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्य"मित्याद्युक्त्या पूर्वमाचार्येण दहराकाशान्तर्वर्तिन एवान्वेष्टव्यत्वादिकमुक्तमिति स्पष्टं प्रतीयमानतया तद्विरोधाच्चेति—**चेत्, उच्यते;** विजिज्ञासितव्यमित्यत्रैवोपासनाविधिरित्यपि टीकायां व्याख्यानान्तरं दर्शितम् । वाक्यशेषो हि दहराकाशात्मवेदनस्य फलवत्त्वं ब्रूते । यच्च फलवत्तत्कर्तव्यतया चोद्यते यत्कर्तव्यं तदिच्छतीति तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति दहराकाशविषयमेवावतिष्ठत इति । एवं चात्र विधेयस्योपासनस्य साधनत्वप्राप्तेच्छानुवाद इत्युक्तं भवति । अयमेव पक्षो भाष्याभिमत इत्यनुपदमेव दर्शयिष्यते, तदवलम्बनेनात्र शङ्केयम् । परिहारोऽपि नायुक्तः; यतः "तस्मिन् यदन्त"रित्यत्र यत्पदं वक्ष्यमाणद्यावापृथिव्यादिसकलविशेषणविशिष्टदहराकाशपरम्; अन्यथा फलवाक्ये एतांश्च सत्यान्कामानिति केषांचिद्गुणानां विशिष्य ग्रहणस्येतरपरिसंख्यार्थत्वादितराणि द्यावापृथिव्यादीन्यपहतपाप्मत्वादीनि च केवलं स्तुत्यर्थं वर्णितानि न तूपास्यकोटिप्रविष्टानीति शङ्कया तेषामुपासना न सिध्येत् । न च वाच्यम् "एतांश्च सत्यान् कामा"निति संकल्पजाः पित्रादयो गृहीताः; संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादि प्रकृत्य त इमे सत्याः कामा इति निर्दिष्टत्वात्, तेषां च फलरूपाणामुपास्यगुणत्वाभावादुपासनस्याप्राप्तौ तत्प्राप्त्यर्थं तत्तत्कीर्तनं स्यादिति; अस्मिन्कामाः समाहिता इत्यादिवाक्ये फलानामप्युपास्यगुणत्वस्य प्रतिपादितत्वेन तत एव तेषामप्युपास्यत्वप्राप्तेः । अतः सकलविशेषणविशिष्टस्य दहराकाशस्योपासनानुप्रवेशसिद्धये "तस्मिन्यदन्त"रिति पुनः कीर्तनमिति न तद्वैयर्थ्यम् ।

## वेदान्तकल्पतरुः।

**पीति।** कर्मधारयस्य षष्ठीसमासाद्वलीयस्त्वाल्लिङ्गोपन्यासवैयर्थ्यमाशङ्क्याभ्युच्चयार्थत्वेन परिहरति—**अत्र तावदित्यादिना। षष्ठे स्थितम्**—स्थपतिर्निषादः स्यात् शब्दसामर्थ्यात्। ( जै. सू. अ. ६ पा. १ सू. ५१ ) रौद्रीमिष्टिं विधायाम्नायते एतया निषादस्थपतिं याजयेदिति। तत्र निषादस्थपतिस्त्रैवर्णिकानामन्यतमः, उतान्यः इति संदेहेऽग्निविद्यावत्त्वेन समर्थत्वादनिषादेऽपि निषादानां स्थपतिः स्वामीति शब्दप्रवृत्तिसंभवादन्यतम इति प्राप्तेऽभिधीयते । निषाद एव स्थपतिः स्यात्कर्मधारयश्च समासः, निषादशब्दस्य श्रौतार्थलाभेन शब्दसामर्थ्यात्, षष्ठीसमासे तु संबन्धो लक्ष्येत षष्ठ्यश्रवणात् समासस्थषष्ठीलोपोऽपि शब्दाभावत्वान्नैव षष्ठ्यर्थबोधी द्वितीयायाश्च प्रत्येकं निषादस्थपतिशब्दाभ्यां संबन्धसंभवे सति नाश्रुतषष्ठी कल्प्या। तस्मान्निषाद एव स्थपतिरिति। तदप्याधिक्यमुक्तं सूत्रकारेण चकारं प्रयुञ्जानेनेत्यर्थः। सूत्रा-

## कल्पतरुपरिमलः।

अत एव "किं तदत्र विद्यते" इत्येतदप्युपपद्यते; तस्य दहराकाशे किं विशेषणजातं वर्तत इत्येतत्परत्वात्। अव्यवहितपरामर्शासंभवे तस्य द्वादशशतं दक्षिणे" त्यादाविव व्यवहितपरामर्शः, "शक्यमञ्जलिभिः पातुं वाताः केतकगन्धयः" इत्यत्रेव लिङ्गसामान्यविवक्षया नपुंसकलिङ्गं चोपपद्यते। एवं "तस्मिन् यदन्त" रित्यस्य सकलविशेषणविशिष्टोपासनासिद्धये तावद्विशिष्टपरामर्शित्वं भाष्यकारैः स्पष्टं प्रतिपादितम्। तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तः—समाहितैः पृथिव्यादिभिः सत्यैश्च कामैर्विज्ञेय इति गम्यत इति। तस्मादाशङ्का परिहारश्चेत्युभयमप्युपपद्यत एव। एवमुत्पत्तिवाक्यत एव सर्वेषां दहरगुणानामुपास्यत्वे सिद्धे फलवाक्ये सत्यकामशब्देन केषांचिद् गुणानां प्रशंसार्थोऽवयुत्याऽनुवादः—"तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषु सर्वेषु लोकेषु कामचारो भवती" ति वाक्ये ब्रह्मलोकगतार्णवयोरिवेति तात्पर्यम्। छान्दोग्यविवरणे "तस्मिन् यदन्त" रित्यादेर्व्याख्यानं त्वेवमपि व्याख्यातुं शक्यमिति वैभवाभिप्रायम्। तदनुसृत्य च टीकायां साक्षात्कारेच्छाविषयतया व्याख्यानान्तरमिति न विरोधः॥ **अभ्युच्चयार्थत्वेनेति।** नरपतिराजकुमारादिशब्द इव ब्रह्मलोकशब्दे लोकवेदयोः सत्यलोकपरतया षष्ठीसमासः प्रसिद्धतरः। शीघ्रोपस्थितिकप्रसिद्धतरसमासग्रहणे च न निषादस्थपतिन्याया ( जै. सू. अ. ६ पा१ सू. ५१ ) वतार इति अधिकशङ्कानिराकरणार्थमभ्युच्चयापेक्षेति भावः। **अग्निविद्यावत्त्वेन समर्थत्वादिति। ननु**—अनयोक्तिभङ्ग्या निषादस्याग्निविद्याराहित्येनासामर्थ्यमुक्तं भवति, नैतदुपपद्यते; ब्राह्मणकर्तृकाधाननिष्पाद्यस्याहवनीयादेर्निषादेन संपादयितुमशक्यतया पावमानेष्टावग्निहोत्रहवणीवन्निषादकर्तृकायामिष्टावतिदेशाभावेन तदुपसंहारसामर्थ्यानपेक्षणात्, विद्यावत्त्वेन सामर्थ्यं तु विद्याप्रयुक्तिकल्पनयोपपद्यते; त्रैवर्णिकानामपि स्वस्वशाखाध्ययनस्यैव विहितत्वेन शाखान्तरवेदान्तराम्नाताङ्गमन्त्रोपसंहारार्थं विद्याप्रयुक्तिकल्पनावश्यंभावेन तत्कल्पनागौरवाविशेषादिति—**चेत्, उच्यते**; षष्ठीसमासाश्रयणेनाग्न्यतिदेशाबाधसंभवे तद्बाधकः कर्मधारयो नाश्रयणीयः, त्रैवर्णिकानां तु शाखान्तराद्याम्नातविद्याप्रयुक्तिर्नानयेष्ट्याऽपेक्षणीया किंत्वावश्यकनित्यनैमित्तिककर्मानुष्ठानतदुपयोगिक्रत्वन्यायविचारार्थत्वेनाक्षिप्तैवास्तीति तात्पर्यम् ॥ **निषाद एव स्थपतिः स्यादिति। ननु**—अत्र कर्मधारयबलीयस्त्वे का युक्तिः? यतः षष्ठीसमासे लक्षणा न प्रसज्यते; ऐक्यस्य कर्मधारय इव संबन्धस्य षष्ठीसमासे संसर्गमर्यादया प्रतीतिसंभवात्, नच—विग्रहवाक्ये विभक्त्यर्थस्य संबन्धस्य समासेऽपि प्रकारत्वनियमात्तन्निर्वाहार्थं तत्र लक्षणापेक्षास्तीति—शङ्कनीयम्; पर्वतो वह्निमानित्यत्र मतुबर्थस्य पक्षसाध्यसंबन्धस्येव विभक्त्यर्थसंबन्धस्यापि संसर्गमर्यादया प्रतीत्युपपत्तेः, तस्माल्लक्षणादोषोक्तिरयुक्ता। द्वितीयायाः प्रत्येकसंबन्धोक्तिरप्ययुक्ता; समासान्तवर्तिन्या विभक्तेः "सुपो धातुप्रातिपदिकयो" रिति लोपानुशासनेन समासोत्तरविभक्तेरुपसर्जनान्वयानङ्गीकारात्। न च षष्ठ्या द्वितीयाया वा लोपोऽङ्गीकार्य इति विशये बुद्धिसन्निहिताया द्वितीयाया एवाङ्गीकार्य इत्यत्र तात्पर्यं वर्णनीयं; तथापि निषादस्थपतेरित्यादिषष्ठीप्रयोगे बुद्धिसन्निहितषष्ठीलोपाङ्गीकारेऽपि नियमतः सामानाधिकरण्यालाभेन सर्वत्र षष्ठीसमासतः कर्मधारयबलीयस्त्वस्य ततः सिद्ध्यभावादिति—**चेत्, उच्यते**; ऐक्ये लाघवं संबन्धे भेदकल्पनागौरवमिति सार्वत्रिकः कर्मधारयबलीयस्त्वे हेतुर्विवक्षितः। राज्ञः पुरुष इत्यादौ भेदनियतसम्बन्धाद्यर्थकविभक्तिविरोधादैक्यत्यागः। घटो न पट इत्यादौ विरुद्धविभक्त्यभावेऽपि घटपटतद्भेदानामैक्यासंभवात्तत्त्यागः। यत्र तु शब्दतोऽर्थतो वा नास्ति विरोधस्तत्र लाघवादैक्यं ग्राह्यमित्ययमौत्सर्गिको न्यायः । लक्षणादोषस्तु षष्ठ्यर्थो लक्षणीय इति मतानुसारेणोद्घाटितः। सन्निहिता द्वितीयैव लुप्ताऽङ्गीकार्येति युक्तिस्तु प्रकृताभिप्रायेणोक्तेति न कश्चिद्दोषः। सौत्रं शब्दसामर्थ्यादिति पदमौत्सर्गिकन्यायपरतायां निषादस्थपतिशब्दयोरेकार्थपर्यवसानसामर्थ्यादिति व्याख्येयम्। **तदप्युक्तं सूत्रकारेणेति** वाक्यस्य अपिशब्दात्कर्मधारयबलीयस्त्वमुक्तमेव, लिङ्गमप्युक्तमित्यर्थः। प्रतिभासमानो न युक्तः; कर्मधारयबलीयस्त्वस्य सूत्रानुक्तत्वादित्याशङ्क्य सौत्रेण चकारेण लिङ्गस्य हृदयस्थितात्कर्मधारयबलीयस्त्वादाधिक्यमतिरिक्तत्वं द्योतितमित्येतत्परतया तद्वाक्यं व्याचष्टे—**तदप्याधिक्यमिति।** विपक्षादसम्भवादिति पञ्चम्योः

भूताकाशशङ्कां निवर्तयन्ब्रह्मतामस्य गमयति । ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् । गमयेद्यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत, सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति । एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम् । नह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम् ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः । कथम् । 'दहरोऽस्मिन्नन्तराकाशः' इति हि प्रकृत्याकाशौपम्यपूर्वकं तस्मिन्सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगं चोपदिश्य तमेवानतिवृत्तप्रकरणं निर्दिशति—'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' ( छा० ८।४।१ ) इति । तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारयितोच्यते, क्तिचः कर्तरि स्मरणात् । यथोदकसंतानस्य विधारयिता लोके सेतुः क्षेत्रसंपदामसंभेदाय, एवमयमात्मैषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुरसंभेदायासंकरायेति । एवमिह प्रकृते दहरे विधारणलक्षणं महिमानं दर्शयति । अयं च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादेः । तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते—'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति । एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

इतश्च परमेश्वर एव 'दहरोऽस्मिन्नन्तराकाशः' इत्युच्यते । यत्कारणमाकाशशब्दः परमेश्वरे

---

### भामती ।

मुखेनावतारयति—**ननु कमलासनलोकमपीति** । परिहरति—**गमयेद्यदि ब्रह्मणो लोक इति** । अत्र तावन्निषादस्थपतिन्यायेन षष्ठीसमासात्कर्मधारयो बलीयानिति स्थितमेव; तथापीह षष्ठीसमासनिराकरणेन कर्मधारयसमास्थापनाय लिङ्गमप्यधिकमस्तीति तदप्युक्तं सूत्रकारेण । **तथाहि**—लोकवेदप्रसिद्धाहरहर्ब्रह्मलोकप्राप्त्यभिधानमेव लिङ्गं कमलासनलोकप्राप्तेर्विपक्षादसंभवाद्व्यावर्तमानं षष्ठीसमासाशङ्कां व्यावर्तयद्दहराकाशप्राप्तावेवावतिष्ठते, नच दहराकाशो ब्रह्मणो लोकः, किंतु तद्ब्रह्मेति ब्रह्म च तल्लोकश्चेति कर्मधारयः सिद्धो भवति । लोक्यत इति लोकः । हृत्पुण्डरीकस्थः खल्वयं लोक्यते । यत्खलु पुण्डरीकस्थमन्तःकरणं तस्मिन्विशुद्धे प्रत्याहृतेतरकरणानां योगिनां निर्मल इवोदके चन्द्रमसो बिम्बमतिस्वच्छं चैतन्यं ज्योतिःस्वरूपं ब्रह्मावलोक्यत इति ॥ १५ ॥ सौत्रो धृतिशब्दो भाववचनः । धृतेश्च परमेश्वर एव दहराकाशः । कुतः । अस्य धारणलक्षणस्य महिम्नोऽस्मिन्नेश्वर एव श्रुत्यन्तरेषूपलब्धेः । निगदव्याख्यानमस्य भाष्यम् ॥ १६ ॥ नचेयमाकाशशब्दस्य ब्रह्मणि लक्ष-

### वेदान्तकल्पतरुः ।

र्थमाह—**तथाहीत्यादिना** । विपक्षाद्व्यावृत्तौ हेतुमाह—**असंभवादिति** ॥१५॥ सेतुर्विधृतिरिति श्रुतौ धृतिशब्द आत्मशब्दसामानाधिकरण्याद्यद्यपि कर्तृवाची क्तिजन्तोपि सूत्रगतधृतिशब्दो महिमशब्दसामानाधिकरण्यात् क्तिन्नन्तः, तथात्वेन भाववचन इत्याह—**सौत्र इति** ॥१६॥ प्रसिद्धिशब्दस्य रूढिवाचिलभ्रममपनयति—**नचेति** । रथाङ्गमिति नाम चक्रवाके लक्षणया संप्रत्येव प्रयुज्यते; रथाङ्गशब्दपर्यायस्य चक्रप्रातिपदिकस्य चक्रवाकशब्दावयवत्वेन निवेशात्, आकाशशब्दस्य

### कल्पतरुपरिमलः ।

सामानाधिकरण्यभ्रान्तिं वारयति—**विपक्षादिति** । असंभवादितीति मूलप्रतीकग्रहणानन्तरं केषुचित्कोशेषु षष्ठीसमासो विपक्ष इति वाक्यं दृश्यते । तदनन्वितं प्रक्षिप्तमिव भाति; टीकायां विपक्षादित्यस्य कमलासनलोकप्राप्तिविशेषणत्वेन षष्ठीसमासविषयत्वाभावात् । यदि तत्प्रक्षिप्तं न भवति तदानीमेवं तस्यार्थो वाच्यः । अहरहर्ब्रह्मलोकप्राप्त्यभिधानं विपक्षात्कमलासनलोकप्राप्तेर्व्यावर्ततां, दहराकाशे च व्यवतिष्ठताम्, तथापि षष्ठीसमासस्तेन व्यावर्तनीयः । यतो लोक्यत इति लोको विद्वदनुभवविषयो ब्रह्मानन्दः तस्यानन्दं ब्रह्मणो विद्वानिति श्रुताविव भेदव्यपदेश औपचारिक इति कल्पयितुं शक्यमित्याशङ्क्य षष्ठीसमासपरिग्रहे तन्मुख्यत्वानुरोधेन षष्ठीसमासवतः सत्यलोके प्रसिद्ध्यतिशयानुसारेण च ब्रह्मलोकप्रत्यायकतया तस्य निर्दिष्टलिङ्गविरुद्धत्वमनेन वाक्येनोच्यत इति ॥ १५ ॥ १६ ॥ योगाद्रूढिपूर्वकलक्षणायाः प्रथमप्रतीतमुख्या-

## भामती ।

**माणविभुत्वादिगुणयोगाद्वृत्तिः सांप्रतिकी, यथा रथाङ्गनामा चक्रवाक इति लक्षणा, किंत्वत्यन्तनिरूढेति सूत्रार्थः । ये त्वाकाशशब्दो ब्रह्मण्यपि मुख्य एव नभोवदित्याचक्षते, तैः 'अन्यायश्चानेकार्थत्वम्' इति च 'अनन्यलभ्यः शब्दार्थः' इति च मीमांसकानां मुद्राभेदः कृतः । लभ्यते ह्याकाशशब्दाद्विभुत्वादिगुणयोगेनापि ब्रह्म । नच—ब्रह्मण्येव मुख्यो नभसि तु तेनैव गुणयोगेन वर्त्स्यति—इति वाच्यम्; लोकाधीनावधारणत्वेन शब्दार्थसंबन्धस्य वैदिकपदार्थप्रत्ययस्य तत्पूर्वकत्वात् । ननु 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति व्यतिरेकनिर्देशान्न लक्षणा युक्ता । नहि भवति गङ्गायाः कूलमिति विवक्षिते गङ्गाया गङ्गेति प्रयोगः । तत्किमिदानीं 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्याया-**

## वेदान्तकल्पतरुः ।

तु ब्रह्मण्यनादिकाले बहुकृत्वः प्रयोगान्निरूढलक्षणेत्यर्थः ॥ पञ्चपाद्यां तु रूढिरुक्ता, तां दूषयति—**येत्विति** । नभसि ब्रह्मणि च रूढ्यभ्युपगमेऽनेकार्थत्वं, नाभसगुणयोगाद् ब्रह्मणि वृत्तिसंभवे च शक्तिकल्पनायां गौरवमित्यर्थः । **अत्र केचित्**—आसमन्तात्काशत इति आकाशशब्दस्यावयववृत्तिसंभवे सेतुशब्दस्येव तद्बहिर्भूतगुणवृत्तिरयुक्ता—**इत्याहुः । तन्न**; अपहृत्य योगं रूढ्यर्थे प्रत्यायिते रूढिं पुरस्कृत्य क्लृप्तादेव गुणयोगादन्यत्र वृत्तिलाभेऽनपेक्ष्य रूढिमवयवव्युत्पत्तिक्लेशस्यायुक्तत्वात् । सेतुशब्दोऽपि सेतुगुणाद्विधरणादेर्ब्रह्मणि वर्तते । भाष्यकृद्भिस्तु सेतुशब्दव्युत्पत्तिरभ्युच्चयार्थमाश्रिता । अस्तु तर्ह्यनेकार्थत्वपरिहाराय ब्रह्मण्येव मुख्यत्वमत आह—**नचेति । तेनैव** विभुत्वादिगुणयोगेन । **वर्त्स्यति** वृत्तो भविष्यत्याकाशशब्द इति न वाच्यम् । तत्र हेतुः वैदिकपदार्थप्रत्ययस्य लोकपूर्वकत्वाद्वेदे रूढ्यप्रतीतेरिति । एतत्सिद्ध्यर्थमाह—**लोकाधीनेति स्यान्तेन** । रूढिवादी तु प्रसिद्धगुणवृत्तिवैषम्यं शङ्कते—**नन्विति । व्यतिरेकेण निर्देशादिति ।** अन्तर्हृदयआकाश इति ब्रह्मण्याकाशशब्दप्रयोगादेवाकाशगुणयोगस्य लक्ष्यस्य सिद्धौ लभ्यायामपि तद्व्यतिरेकेण यावान्वा अयमाकाशस्तावानित्याकाशसादृश्यस्य निर्देशाल्लक्षणा न युक्तेत्यर्थः । यत्र लक्षणया शब्दः प्रयुज्यते तत्र लक्ष्यांशस्य पृथग् न निर्देश इत्यत्र दृष्टान्तमाह—**नहि भवतीति** । गङ्गायाः कूलमित्यर्थे विवक्षिते गङ्गापदमेव प्रयुज्यते, नतु गङ्गाया इति लक्ष्यसंबन्धं पृथगुक्त्वा गङ्गेति प्रयुज्यत इत्यर्थः । परिहरति—**तत्किमिति** । आग्नेयादौ पौर्णमास्यमावास्याशब्दप्रयोगादेव लक्ष्यस्य कालसंबन्धस्य सिद्धावपि तद्व्यतिरेकेण पौर्णमास्याममावास्यायामिति च कालसंबन्धनिर्देशादुक्तन्यायोऽनेकान्त

## कल्पतरुपरिमलः ।

र्थात्यागेन बलीयस्त्वमाह—**तन्नेति । वृत्तो भविष्यतीति ।** वर्तत इत्यात्मनेपदिधातो'र्वृद्भ्यः स्यसनो'रिति सूत्रेण स्ये परतः परस्मैपदे सति वर्त्स्यतीति रूपम् । **स्यान्तेन** सम्बन्धस्येत्यन्तेन ॥ **नतु गङ्गाया इति लक्ष्यसंबन्धं पृथगुक्त्वेति ।** अनेन नहि भवति गङ्गायाः कूलमिति विवक्षिते गङ्गाया गङ्गेति प्रयोग इति टीकापाठः साधुः, नतु गङ्गाकूलयोः गङ्गेति टीकापाठ इति दर्शितं भवति । एवमाकाशशब्दस्य गौणतायामाकाशवत्सर्वगत इति श्रुत्यन्तरप्रसिद्धं व्यापकत्वरूपं भूताकाशसादृश्यं निमित्ततयाऽवतिष्ठते । तथा चोपमेयनिर्देशकेनाकाशशब्देनैव भूताकाशसादृश्ये प्रतिपादिते वाक्येन प्रतिपाद्यमानं तत्सादृश्यं नान्वेति यद्भूताकाशवद्व्यापकं ब्रह्म तद्भूताकाशवद्व्यापकमिति वाक्यस्य गङ्गायां गङ्गायाः कूले घोष इति वाक्यस्येवासामञ्जस्यादिति शङ्किते, यद्यपि व्यापकत्वमपहाय नित्यनिर्लेपत्वादिना भूताकाशसादृश्येनात्र गौणता, कुतः ? छान्दोग्ये षष्ठाध्याये नवस्वपि तत्त्वमसिखण्डेषु स एषोऽणिमेत्यणुत्वेन सप्तमाध्याये स एवाधस्तादित्यादिना व्यापकत्वेन च वर्णिते ब्रह्मणि कथमणुत्वव्यापकत्वयोरविरोधनमित्याकाङ्क्षायां दहरपुण्डरीकाग्रसुषिरावच्छेदोपाधिकमणुत्वं स्वाभाविकं व्यापकत्वमित्यविरोधं तत्प्रसङ्गादौपाधिकब्रह्मोपासनं च विधातुमष्टमोऽध्याय आरब्धः । तत्र प्रथमं ब्रह्मणो दहरशब्देनाणुत्वमुक्त्वा तस्यौपाधिकमणुत्वं स्वाभाविकं तु व्यापकत्वमिति निरूपणाय तत्र शिष्याणामाकाङ्क्षामुद्भावयितुं वक्ष्यमाणद्यावापृथिव्यादिसकलवस्तुविशिष्टस्य तस्यैवाकाशस्य दहरपुण्डरीकान्तर्वर्तित्वं पुनः प्रतिपाद्य तत्प्रसङ्गात् तदुपासनं विधाय तदन्तर्वर्तिवस्त्वसंभवे शिष्यैः शङ्किते सूक्ष्मोपाध्यवच्छेदकृताणुभावस्य स्वाभाविकं व्यापकत्वं नानुपपन्नं, सूचिपाशाद्यवच्छेदकृताणुभावस्य भूताकाशस्येवेत्येवमभिप्रायेण यावान्वा इत्यादिवाक्यं प्रवृत्तम् । तत्र ब्रह्मणः स्वाभाविकं व्यापकत्वमिति निर्धारणमिहेत्येतद्वाक्यार्थज्ञानकारणीभूतपदार्थज्ञानकालेऽनिर्धारितस्य व्यापकत्वस्य गौणवृत्तिनिमित्तत्वायोगादिति परिहर्तुं शक्यम्; तथापि व्यापकत्वमेव तन्निमित्तमभ्युपेत्य दृष्टान्तमुखेन समाधत्त इत्याह—**परिहरतीति ।** दृष्टान्ते तावदित्थमनन्वयः समाधेयः । आग्नेयादीनां षण्णां यागानां स्वरूपेण पौर्णमास्यमावास्याकालत्वे तत्तदुत्पत्तिवाक्यविहिते तेषु गौणाभ्यां पौर्णमास्यमावास्यापदाभ्यां बोध्यमानेऽपि तेषां त्रिशस्त्रिशः प्राच्योदीच्यसकलाङ्गसाहित्येन तत्तत्कालकर्तव्यत्वं प्रतिपादयितुं तद्वाक्यम् । तद्वाक्यद्वयाभावे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येकफलसाधनत्वेन बोधितानां षण्णां यागानां प्रयोगैक्यस्यौत्सर्गिकत्वात् । पौर्णमास्यां प्राच्याङ्गानुष्ठानपूर्वकं पौर्णमासत्रिकमनुष्ठायामावास्यायां प्राप्तायाममावास्यात्रिकमनुष्ठायोदीच्याङ्गसमापनं कर्तव्यमिति वा यागषट्कमपि स्वस्व काले क्रमेण पृथक् प्राच्योदीच्याङ्गसहितं

## भामती।

मभावास्यया' इत्यसाधुर्वैदिकः प्रयोगः ? नच पौर्णमास्यमावास्याशब्दावाग्नेयादिषु मुख्यौ। यच्चोक्तं यत्र शब्दादर्थप्रती-

## वेदान्तकल्पतरुः।

इत्यर्थः। दृष्टान्तासिद्धिमाशङ्क्याह—**नचेति**। मुख्यत्वे ह्यमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यत्रापि अमावास्याशब्दस्य कर्मणि रूढिः स्यात्, तथाच **पितृयज्ञः स्वकालत्वादनङ्गं स्या**( जै. सू. अ. ४ पा.४ सू. १९ )दित्यधिकरणबाध इति। अपरं रूढिकारणमाशङ्कते—**यच्चेति**। अन्यत्र मुख्यत्वेन निश्चितस्य शब्दस्यान्यत्रार्थे प्रयोगेऽर्थश्चेदन्य-

## कल्पतरुपरिमलः।

कर्तव्यमिति वा प्रसज्येतेति। दार्ष्टान्तिके तु कथमनन्वयः समाधेय इति चेद्, उच्यते; उपमेयपरेणाकाशशब्देन गौणेन स्वरूपेण व्यापकत्वे लब्धेऽपि हृदयपुण्डरीकावच्छेदेन स्थितस्य तस्य तेनापि स्वरूपेण भूताकाशवद्व्यापकत्वं प्रतिपादयितुमिदं वाक्यं हृदयपुण्डरीकावच्छिन्न एव दहराकाशे वक्ष्यमाणद्यावापृथिव्यादिसकलसमाधानसिद्धये। अत एवोभे अस्मिन्निति वाक्ये दहरपुण्डरीकस्यान्तरेवेत्येतदभिप्रायमन्तरेवेति वचनं दृश्यते, अतएव च "यच्चास्येहास्ति यच्च नास्ति सर्वं तस्मिन् समाहित"मित्युक्त्यनन्तरं प्राग् ब्रह्मपुरशब्दोक्ते देह एव सर्वस्य समाधानमुक्तं सिद्धं कृत्वा देहे जीर्णे नष्टे वा कुसूलादौ जीर्णे धारणाक्षमे तदन्तर्निहितं व्रीह्यादिकमिव नष्टे घटे तदन्तर्निहितं दध्यादिकमिव च तत्किमपि नावतिष्ठेतेत्यन्तेवासिनामाक्षेपवचनं निबद्धं दृश्यते—"तं चेद् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरा वाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यते" इति। **ननु**—श्रूयमाणमपि दहराकाशस्य दहरपुण्डरीकवेष्टितस्य तेन रूपेण व्यापकत्वं तत्र सर्वसमाधानं चासंभावितं कथं श्रद्धेयमिति—**चेत्, उच्यते**; दहरोपासकस्य ब्रह्मलोकप्राप्त्यनन्तरमुपयोगिभोगस्थानभोगोपकरणभोग्यजातमुभे अस्मिन्नित्यादिनोच्यते। तच्च ब्राह्मलौकिकं द्विविधम्। उपासकस्य ब्रह्मलोकं प्राप्तस्य शरीरविरहावस्थायां स्वप्नपदार्थजाततुल्यमेकं तस्य शरीरवत्त्वावस्थायां जाग्रत्पदार्थतुल्यमपरम्। तदुभयं सूत्रकार एव विवेचयिष्यति "तन्वभावे सन्ध्यवदुपपत्तेः" ( ब्र. अ. ४ पा. ४ सू. १३ ) "भावे जाग्रद्( ब्र. अ. ४ पा. ४ सू. १४ )दिति"। तत्रायं स्वाप्नपदार्थजातवदेव मानसं सूक्ष्मेऽपि मातुमर्हति। स्वाप्ने ह्यपवरकेऽनुभूयमाने तदन्तर्गिरिनदीसमुद्रादिकमप्यनुभूयते। भाष्यकारैस्तु छान्दोग्यविवरणे "मनोमयानि ब्रह्मलोके शरीरादीनी"ति पुराणवचनं "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति मनोमात्रभोग्यत्वश्रुतिं चावलम्ब्य ब्राह्मलौकिकं विदेहसदेहावस्थोपयोगि सकलं सङ्कल्पजपित्रादिभोग्यजातं स्वप्नदृष्टस्त्रीपुरुषादिवन्मनोविकारात्मकमेव, नतु स्थूलपार्थिवाप्यादिरूपमिति विमर्शपूर्वं व्यवस्थापितम्। एवंच यद्यपि स्वाप्नवन्मानसं द्यावापृथिव्यादिकं सूक्ष्मेऽपि वर्तितुमर्हतीति दहराकाशस्य व्यापकत्वं न वक्तव्यम्, अतएव "तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठित"मिति सूक्ष्म एव दहराकाशे सर्वसमाधानमुक्तं; तथाप्यत्रात्यल्पीयसो दहराकाशस्यान्तः सूक्ष्ममपि वस्तूपास्यं न संभवतीत्याक्षिप्तवतां शिष्याणां हृद्यतिविपुलं द्यावापृथिव्यादिकं तदन्तः समाहितमित्युत्तरं न प्रविशेदिति मत्वा यक्षानुरूपबलिन्यायेन मनोविकाररूपद्यावापृथिव्यादिसमाधानोचितं मनोविकाररूपमेव स्वापवरकान्तः स्वप्नदृष्टगिरिनदीसमुद्रादिसमाधानोचितस्वप्नापवरकवैपुल्यसमानं दर्शितमित्युपपद्यते। **ननु**—ब्रह्मलोकप्राप्त्यनन्तरभाविभोगोपयोगिसङ्कल्पजपित्रादिकमुपासनाकालेऽपि दहराकाशवर्ति किमर्थं कल्पनीयमिति—**चेत्**, उपास्यदहराकाशान्तर्वर्तित्वेन तदनुचिन्तनस्यालम्बनसिद्ध्यर्थं तत्सर्वमुपासनाकालेऽपि दहराकाशवर्त्यभ्युपगन्तव्यमिति श्रुतेरभिप्रायः। अतएव सङ्कल्पजपित्रादीन् प्रकृत्य "त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानामनृतमभिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते अथ ये वाऽस्य जीवा ये च प्रेताः यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते" इति प्राचीनानन्तजन्मसंबन्धिदिदृक्षितपितृमातृभ्रातृपुत्रकलत्रादिकमन्यच्च दुर्लभं भोग्यजातं दहराकाश एवोपास्यमाने क्रमेण पश्यतीत्युक्त्वा कथं तावद्विशिष्टो दहराकाशः तथा सर्वैर्नोपलभ्यत इत्याकाङ्क्षायां यद्यपि हिरण्यनिधिं निहितमित्यादिर्दृष्टान्त उक्तः। यद्युपमेयपराकाशशब्दो निर्लेपत्वादिना लक्षकस्वरूपेण व्यापकत्वं दृष्टान्तमुखेन प्रतिपाद्यमिति जीवे व्यापकत्वासम्भवप्रतिपादकभाष्यानुसारेणेष्यते, तदा द्यावापृथिव्यादीनां मानसत्वेन संकोचो न कल्प्यः; बाह्यानामपि तेषामनवच्छिन्ने ब्रह्मणि वृत्तेः। अन्तरेवेत्यन्तःशब्दो यस्यान्तस्थानि भूतानीतिवदवधारणमाधारान्तरव्यवच्छेदार्थं, शिष्याणामाक्षेपस्त्वन्तराकाश एव समाधानमुक्तमिति भ्रान्त्येत्युपपादनीयमित्यलं प्रपञ्चेन। **अधिकरणबाध इति**। नच—आग्नेयादिषु मुख्यार्थत्वेऽप्यपराह्णशब्दसमभिव्याहारात् पितृयज्ञवाक्ये कालपरत्वं स्यादिति—वाच्यम्; आग्नेयादिषु मुख्यत्वे हि काले तत्सम्बन्धाल्लक्षणाङ्गीकार्या, तत्रापि शक्तिकल्पने गौरवात्। ततश्च कालवाच्यपराह्णशब्दसन्निधाने सत्यपि नामावास्याश्रुतेः कर्मवाचिन्याः सन्निधिवशाद्भङ्गो युक्तः। कर्माङ्गत्वेनापराह्णकाले पितृयज्ञविधिर्भविष्यति; समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोतीत्यादिवाक्येषु कर्माङ्गत्वेन कालविशेषे स्तोत्रविशेषोपाकरणादिविधानदर्शनादिति भावः। **अपरं रूढिकारणमिति**। अप्रयोजकमेव वैषम्यं प्रयोजकत्वेन तदुक्तम-

प्रसिद्धः; 'आकाशो वै नाम नामरूपयोर्निर्वहिता' ( छा० ८।१४ ) 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' ( छा० १।९।१ ) इत्यादिप्रयोगदर्शनात्; जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते। भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धावुपमानोपमेयभावाद्यसंभवान्न ग्रहीतव्य इत्युक्तम् ॥ १७ ॥

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥

यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येतास्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः—'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' ( छा० ८।३।४ ) इति। अत्र हि संप्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वात्तदवस्थावन्तं जीवं शक्नोत्युपस्थापयितुं नार्थान्तरम्। तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं संभवति। यथाकाशव्यपाश्रयाणां वाय्वादीनामाकाशात्समुत्थानं तद्वत्। यथाचादृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारात् 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्येवमादौ परमेश्वरविषयोऽभ्युपगतः। एवं जीवविषयोऽपि भविष्यति। तस्मादितरपरामर्शाद्दहरोऽस्मिन्नन्तराकाश इत्यत्र स एव जीव उच्यत इति चेत्। नैतदेवं स्यात्। कस्मात्? असंभवात्। नहि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन्नाकाशेनोपमीयेत। नचोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्माः संभवन्ति। प्रपञ्चितं चैतत्प्रथमसूत्रे। अतिरेकाशङ्कापरिहारायात्र तु पुनरुपन्यस्तम्। पठिष्यति चोपरिष्टात्—'अन्यार्थश्च परामर्शः' (ब्र० १।३।२० ) इति ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

इतरपरामर्शाद्या जीवाशङ्का जाता साऽसंभवान्निराकृता। अथेदानीं मृतस्येवामृतसेकात्पुनः

### भामती।

तिस्तत्र लक्षणा, यत्र पुनरन्याऽर्थे निश्चिते शब्दप्रयोगस्तत्र वाचकत्वमेवेति, तदयुक्तम्; उभयस्यापि व्यभिचारात्। 'सोमेन यजेत' इति शब्दादर्थः प्रतीयते। नचात्र कस्यचिल्लाक्षणिकत्वमृते वाक्यार्थात्। नच 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्याम्' इत्यत्र पौर्णमास्यमावास्याशब्दौ न लाक्षणिकौ। तस्माद्यत्किंचिदेतदिति ॥ १७ ॥ सम्यक् प्रसीदत्यस्मिन् जीवो विषयेन्द्रियसंयोगजनितं कालुष्यं जहातीति सुषुप्तिः संप्रसादो जीवस्यावस्थाभेदः न ब्रह्मणः। तथा शरीरात्समुत्थानमपि शरीराश्रयस्य जीवस्य, नत्वनाश्रयस्य ब्रह्मणः। तस्माद्यथा पूर्वोक्तैर्वाक्यशेषगतैर्लिङ्गैर्ब्रह्मावगम्यते दहराकाशः, एवं वाक्यशेषगताभ्यामेव संप्रसादसमुत्थानाभ्यां दहराकाशो जीवः कस्मान्नावगम्यते। तस्मान्नास्ति विनिगमनेति शङ्कार्थः। **नासंभवात्** संप्रसादसमुत्थानाभ्यां हि जीवपरामर्शो न जीवपरः, किंतु तदीयतात्त्विकरूपब्रह्मभावपरः। तथाचैष परामर्शो ब्रह्मण एवेति न संप्रसादसमुत्थाने जीवलिङ्गम्, अपितु ब्रह्मण एव तादर्थ्यादित्यग्रे वक्ष्यते। आकाशोपमानादयस्तु ब्रह्माव्यभिचारिणश्च ब्रह्मपराश्चेत्यस्ति विनिगमनेत्यर्थः ॥ १८ ॥ दहराकाशमेव प्रकृत्योपाख्यायते—यमात्मानमन्विष्य

### वेदान्तकल्पतरुः।

तोऽधिगतः तर्हि मुख्यत्वं, नचेदमुख्यत्वं; गङ्गायां घोष इत्यत्र हि गङ्गापदादेव गङ्गासंबन्धितीरमनुपपत्त्या श्रोता जानाति ततस्तत्र लक्षणा, आकाशशब्दस्तु यदेष आकाश आनन्दो न स्यादित्यत्र सत्यं ज्ञानमनन्तमिति वाक्यनिश्चिते ब्रह्मणि प्रयुक्त इति वाचकः। तथाच दहरवाक्येऽपि ब्रह्मवाचक इत्यर्थः। शब्दादनधिगतार्थप्रतीतौ लक्षणेत्येतद्व्यभिचारयति—**सोमेनेति**। सोमशब्दो हि लताचन्द्रमसोर्मुख्यः एतद्वाक्यार्थान्वयित्वेन सोमपदादन्यतोऽनधिगतायां लतायामत्र वाक्ये प्रयुक्त इत्यर्थः। अन्यतो निश्चिते शब्दस्य मुख्यत्वमित्येतदनेकान्तयति—**नचेति**। अत्र हि समुदा-

### कल्पतरुपरिमलः।

नैकान्त्येन दूषयितुमाशङ्कत इत्यर्थः। अप्रयोजकत्वं च तस्माद्यत्किंचिदेतदिति टीकाग्रन्थेन विभावितम्। **ननु** नचात्र कस्यचिल्लाक्षणिकत्वमिति टीकाग्रन्थो न युक्तः; सोमद्रव्यविशिष्टयागविधिसिद्ध्यर्थं सोमवता यागेनेष्टं भावयेदिति सोमपदे मत्वर्थलक्षणाङ्गीकारादित्याशङ्क्य तस्य द्रव्यविषये लक्षणा नास्तीत्येतदर्थत्वेन व्याचष्टे—**सोमशब्दो हीति**। यद्यपि सोमलतायाः शुक्लप्रतिपदमारभ्यैकैकं पत्रं वर्धते कृष्णप्रतिपदमारभ्यैकैकं पत्रं क्षीयत इति प्रसिद्धेः पक्षद्वयनियतवृद्धिक्ष-

## भामती ।

सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्, तमात्मानं विविदिषन्तौ सुरासुरराजाविन्द्रविरोचनौ समित्पाणी प्रजापतिं वरिवसितुमाजग्मतुः । आगत्य च द्वात्रिंशतं वर्षाणि तत्परिचरणपरौ ब्रह्मचर्यमूषतुः । अथैतौ प्रजापतिरुवाच, किंकामाविहस्थौ युवामिति । तावूचतुः, य आत्माऽपहतपाप्मा तमावां विविदिषाव इति । ततः प्रजापतिरुवाच, य एषोऽक्षिणि पुरुषो दृश्यते एष आत्माऽपहतपाप्मत्वादिगुणः, यद्विज्ञानात्सर्वलोककामावाप्तिः । एतदमृतमभयम् । अथैतच्छ्रुत्वैतावप्रक्षीणकल्मषावरणतया छायापुरुषं जगृहतुः । प्रजापतिं च पप्रच्छतुः, अथ योऽयं भगवोऽप्सु दृश्यते, यश्चादर्शे, यश्च खड्गादौ कतम एतेष्वसौ अथवैक एव सर्वेष्विति । तमेतयोः श्रुत्वा प्रश्नं प्रजापतिर्वताहो सुदूरमुद्भ्रान्तावेतौ, अस्माभिरक्षिस्थान आत्मोपदिष्टः, एतौ च छायापुरुषं प्रतिपन्नौ, तद्यदि वयं भ्रान्तौ स्थ इति ब्रूमस्ततः स्वात्मनि समारोपितपाण्डित्यबहुमानौ विमानितौ सन्तौ दौर्मनस्येन यथावदुपदेशं न गृह्णीयाताम्, इत्यनयोराशयमनुरुध्य यथार्थं ग्राहयिष्याम इत्यभिसंधिमान्प्रत्युवाच, उदशराव आत्मानमवेक्षेथामस्मिन्यत्पश्यथस्तद्ब्रूतमिति । तौ च दृष्ट्वा संतुष्टहृदयौ नाब्रूताम् । अथ प्रजापतिरेतौ विपरीतग्राहिणौ मा भूतामित्याशयवान्पप्रच्छ, किमत्रापश्यतमिति । तौ होचतुः, यथैवावामतिचिरब्रह्मचर्यचरणसमुपजातायतनखलोमादिमन्तावेवमावयोः प्रतिरूपकं नखलोमादिमदुदशरावेऽपश्यावेति । पुनरेतयोश्छायात्मविभ्रममपनिनीषुर्यथैव हि छायापुरुष उपजनापायधर्माभेदेनावगम्यमान आत्मलक्षणविरहान्नात्मैवेवमेवेदं शरीरं नात्मा, किंतु ततो भिन्नमित्यन्वयव्यतिरेकाभ्यामेतौ जानीयातामित्याशयवान् प्रजापतिरुवाच, साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा पुनरुदशरावे पश्यतमात्मानं, यच्चात्र पश्यथस्तद्ब्रूतमिति । तौ च साध्वलंकृतौ सुवसनौ छिन्ननखलोमानौ भूत्वा तथैव चक्रतुः । पुनश्च प्रजापतिना पृष्टौ तामेव छायामात्मानमूचतुः । तदुपश्रुत्य प्रजापतिरहो बताद्यापि न प्रशान्त एनयोर्विभ्रमः, तद्यथाभिमतमेवात्मतत्त्वं कथयामि तावत् । कालेन कल्मषे क्षीणेऽस्मद्वचनसंदर्भपौर्वापर्यपर्यालोचनयात्मतत्त्वं प्रतिपत्स्येते स्वयमेवेति मत्वोवाच, एष आत्मैतदमृतमभयमेतद्ब्रह्मेति । तयोर्विरोचनो देहानुपातित्वाच्छायाया देह एवात्मतत्त्वमिति मत्वा निजसदनमागत्य तथैवासुरानुपदिदेश । देवेन्द्रस्त्वप्राप्तनिजसदनोऽध्वन्येव किंचिद्विरलकल्मषतया छायात्मनि शरीरगुणदोषानुविधायिनि तं तं दोषं परिभावयन् नाहमत्र छायात्मदर्शने भोग्यं[1] पश्यामीति प्रजापतिसमीपं समित्पाणिः पुनरेवेयाय । आगतश्च प्रजापतिनागमनकारणं पृष्टः पथि परिभावितं जगाद । प्रजापतिस्तु सुव्याख्यातमप्यात्मतत्त्वमक्षीणकल्मषावरणतया नाग्रहीः, तत्पुनरपि तत्प्रक्षयाय चरापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं, अथ प्रक्षीणकल्मषाय ते अहमेतमेवात्मानं भूयोऽनुव्याख्यास्यामीत्यवोचत् । स च तथा चरितब्रह्मचर्यः सुरेन्द्रः प्रजापतिमुपससाद । उपसन्नाय चास्मै प्रजापतिर्व्याचष्टे, य आत्मापहतपाप्मादिलक्षणोऽक्षिणि दर्शितः सोऽयं य एष स्वप्ने महीयमानो वनितादिभिरनेकधा स्वप्नोपभोगान् भुञ्जानो विहरतीति । अस्मिन्नपि देवेन्द्रो भयं ददर्श । यद्यप्ययं छायापुरुषवन्न शरीरधर्माननुपतति, तथापि शोकभयादिविविधबाधानुभवान्न तत्राप्यस्ति स्वस्तिप्राप्तिरित्युक्तवति मघवति पुनरपराणि चर द्वात्रिंशतं वर्षाणि स्वच्छं ब्रह्मचर्यमिदानीमप्यक्षीणकल्मषोऽसीत्यूचे प्रजापतिः । अथास्मिन्नेवंकारमुपसन्ने मघवति प्रजापतिरुवाच, य एष आत्मापहतपाप्मादिगुणो दर्शितोऽक्षिणि च स्वप्ने च स एष

## वेदान्तकल्पतरुः ।

यानुवादिवाक्यद्वये पौर्णमास्यमावास्याशब्दौ लाक्षणिकौ न भवतः, यागषट्कश्च प्रकृतादाग्नेयादिवाक्याद् ज्ञात इति ज्ञातार्थविषयत्वं मुख्यत्वेऽनेकान्तमित्यर्थः ॥ १७ ॥ १८ ॥ **वरिवसितुं** शुश्रूषितुम् । **अपनिनीषु**रपनेतुमिच्छन्प्रजापतिरुवाचेत्यन्वयः । यथा प्राक्प्रतिबिम्बात्मत्वेन दृष्टनखलोम्नां छेदनादूर्ध्वमभावादनात्मत्वमेवं सर्वस्य प्रतिबिम्बस्य विवक्षितम् । **साधु** अलंकाराद्युपन्यासेन । **एष आत्मेति** । देहाद्यागमापायसाक्षीत्यर्थः । **देहानुपातित्वाच्छायाया इति** । यथा खलु नीलानीलपट्योरादर्शे दृश्यमानयोर्नीलं तन्महार्हमित्युक्ते न च्छायाया महार्हत्वमेवं छायाकारदेहस्यैवात्मत्वमिति विरोचनो मेने । इन्द्रस्त्वल्पपापत्वाच्छ्रद्दधानतया न प्रतिबिम्बमेवात्मेति प्रतिपेदे । **एवंकार**मेवं कृत्वा ।

## कल्पतरुपरिमलः ।

यस्मादृश्यात् चन्द्रवाचिन एव सोमशब्दस्य लतायां लक्षणा वक्तुं शक्या, एवं च पवमानायेन्दव इत्यादौ चन्द्रवाचित्वे इन्दुशब्दस्य "ताः सोमाय राज्ञे ददाती"ति "राजानं यक्ष्म आर"दिति च सोमोपपदत्वेन स्वतन्त्रत्वेन च चन्द्रप्रयुक्तस्य राजशब्दस्य तथैव लतायामपि "यत्ते ग्राव्णा चिच्छिदुः सोम राजन् अरिष्ट राजन्नगदः परे ही"ति प्रयोगदर्शनं चोपपद्यते, अन्यथा बहूनां चन्द्रवाचिशब्दानां लतायां शक्तिकल्पनागौरवप्रसङ्गात्; तथापि प्रसिद्ध्यतिशयाद् लतायामसाधारणवाचकान्तराप्रसिद्धेश्च तस्यामपि मुख्यत्वमुक्तम् ॥ **यागषट्क इति** । यागानां षड्वान्तरसंख्यायुक्तसमुदाय इत्यर्थः । तदस्य परिमाणमित्यस्मिन्नर्थे कन्प्रत्ययः ॥१७॥१८॥ **देहाद्यागमापायसाक्षीत्यर्थ इति** । आचार्याभिप्रायतोऽर्थ उक्तः, ननु

[1] भोग्यं कल्याणम् ।

समुत्थानं जीवाशङ्कायाः क्रियते उत्तरस्मात्प्राजापत्याद्वाक्यात् । तत्रहि 'य आत्मापहतपाप्मा' इत्यपहतपाप्मत्वादिगुणकमात्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा' ( छा० ८।७।४ ) इति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३ ) इति च तमेव पुनः पुनः परामृश्य 'य एष स्वप्ने महीयमानश्चरत्येष आत्मा' ( छा० ८।१०।१ ) इति 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा' इति च जीवमेवावस्थान्तरगतं व्याचष्टे। तस्यैव चापहतपाप्मत्वादि दर्शयति—'एतदमृतमभयमेतद्ब्रह्म' इति । 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' ( छा० ८।११।१,२ ) इति च सुषुप्तावस्थायां दोषमुपलभ्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इति चोपक्रम्य शरीरसंबन्धनिन्दापूर्वकं 'एष संप्रासादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति जीवमेव शरीरात्समुत्थितमुत्तमपुरुषं दर्शयति । तस्मादस्ति संभवो जीवे पारमेश्वराणां धर्माणाम् । अतः 'दहरोऽस्मिन्नन्तराकाशः' इति जीव एवोक्त इति चेत्कश्चिद्ब्रूयात्, तं प्रति ब्रूयात्—'आविर्भूतस्वरूपस्तु' इति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । नोत्तरस्मादपि वा-

## भामती ।

यो विषयेन्द्रियसंयोगविरहात्प्रसन्नः सुषुप्तावस्थायामिति । अत्रापि नेन्द्रो निर्ववार । यथा हि जाग्रद्वा स्वप्नगतो वाऽयमहमस्मीति इमानि भूतानि चेति विजानाति नैवं सुषुप्तः किंचिदपि वेदयते, तदा खल्वयमचेतयमानोऽभावं प्राप्त इव भवति तदिह का निर्वृतिरिति । एवमुक्तवति मघवति बताद्यापि न ते कल्मषक्षयोऽभूत् । तत्पुनरपराणि चर पञ्च वर्षाणि ब्रह्मचर्यमित्यवोचत्प्रजापतिः । तदेवमस्य मघोनस्त्रिभिः पर्यायैर्व्यतीयुः षण्णवतिवर्षाणि । चतुर्थे च पर्याये पञ्च वर्षाणीत्येकोत्तरं शतं वर्षाणि ब्रह्मचर्यं चरतः सहस्राक्षस्य संपेदिरे । अथास्मै ब्रह्मचर्यसंपदुन्मृदितकल्मषाय मघवते य एषोऽक्षिणि यश्च स्वप्ने यश्च सुषुप्ते अनुस्यूत एष आत्मापहतपाप्मादिगुणो दर्शितः, तमेव 'मघवन् मर्त्यं वै शरीरम्' इत्यादिना विस्पष्टं व्याचष्टे प्रजापतिः । **अयमस्याभिसंधिः**—यावत्किंचित् सुखं दुःखमागमापायि तत्सर्वं शरीरेन्द्रियान्तःकरणसंबन्धि, न त्वात्मनः । स पुनरेतानेव शरीरादीन् अनाद्यविद्यावासनावशादात्मत्वेनाभिप्रतीतस्तद्गतेन सुखदुःखेन तद्वन्तमात्मानमनुमन्यमानोऽनुतप्यते । यदा त्वयमपहतपाप्मत्वादिलक्षणमुदासीनमात्मानं देहादिभ्यो विविक्तमनुभवति, अथास्य शरीरवतोऽप्यशरीरस्य न देहादिधर्मसुखदुःखप्रसङ्गोऽस्तीति नानुतप्यते, केवलमयं निजे चैतन्यानन्दघने रूपे व्यवस्थितः समस्तलोककामान् प्राप्तो भवति । एतस्यैव हि परमानन्दस्य मात्राः सर्वे कामाः । दुःखं त्वविद्यानिर्माणमिति न विद्वानाप्नोति । **अशीलितोपनिषदां व्यामोह इह जायते । तेषामनुग्राहायेदमुपाख्यानमवर्तयम्** ॥ एवं व्यवस्थित उत्तराद्वाक्यसंदर्भात्प्राजापत्यात् अक्षणि च स्वप्ने च सुषुप्ते च चतुर्थे च पर्याये 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय' इति जीवात्मैवापहतपाप्मादिगुणः श्रुत्योच्यते । नो खलु परस्याक्षिस्थानं संभवति । नापि स्वप्नाद्यवस्थायोगः । नापि शरीरात्समुत्थानम् । तस्माद्यस्यैतत् सर्वं सोऽपहतपाप्मादिगुणः श्रुत्योक्तः । जीवस्य चैतत् सर्वमिति स एवापहतपाप्मादिगुणः श्रुत्योक्त इति नापहतपाप्मादिभिः परं ब्रह्म गम्यते । **ननु** जीवस्यापहतपाप्मत्वादयो न संभवन्तीत्युक्तम् । वचनाद्भविष्यन्ति । **किमिव वचनं न कुर्यात् नास्ति वचनस्यातिभारः** । नच मानान्तरविरोधः । नहि जीवः पाप्मादिस्वभावः, किंतु वाग्बुद्धिशरीरारम्भसंभवोऽस्य पाप्मादिः शरीराद्यभावे न भवति धूम इव धूमध्वजाभाव इति शङ्कार्थः । निराकरोति—**तं प्रतिब्रूयात् आविर्भूतस्वरूपस्तु** । **अयमभि-**

## वेदान्तकल्पतरुः ।

**न निर्ववार** निर्वृतिं सुखं नानुबभूव । **अक्षणि** अक्ष्युपलक्षिते जाग्रति । **अभिप्रतीतो**ऽभिप्रतीतिवान् । चतुर्थपर्यायं प्रतीकत आदत्ते—**एष संप्रसाद इति** । वाग्बुद्धिशरीराणां कार्यभूतो य आरम्भः क्रिया ततः संभवो यस्य

## कल्पतरुपरिमलः ।

शिष्याद्यवगतः; तयोस्ततः परमपि भ्रमानुवृत्तेः । **अक्ष्युपलक्षित इति** । नेत्रस्थं जाग्रतं विद्यादिति श्रुत्यन्तरात् । **जाग्रति** जागरे । **अभिप्रतीतवानिति** । गत्यर्थाकर्मकेत्यादिसूत्रेण कर्तरि क्त इति भावः । **चतुर्थपर्यायं प्रतीकत आदत्त इति** । शङ्काविशेषनिवारणार्थमिति भावः । शङ्का चैवं यदुक्तमक्षिस्थानादिकं परस्य न संभवतीति तदयुक्तम्; उपकोसलविद्योपास्यवत्सगुणोपास्यस्याक्षिस्थानसंभवात् । "स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तानभिचाकशीती"ति ब्रह्मणः स्वप्नसंबन्धश्रवणात्, सुप्तिवाक्यस्य "यत्र यस्मिन्नाधारे समस्तोऽपि जन्तुः सुषुप्तो भवती"ति सुषुप्ताधारब्रह्मपरत्वोपपत्तेश्च । नच—एवं सति स्वप्नावस्थस्य भयशोकादिदर्शनं सुषुप्तावस्थस्य विनष्टप्रायत्वदर्शनं चेदमनुपपन्नं स्यादिति—वाच्यम्;

क्यदिह जीवस्याशङ्का संभवतीत्यर्थः। कस्मात्? यतस्तत्राप्याविर्भूतस्वरूपो जीवो विवक्ष्यते। आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः। भूतपूर्वगत्या जीववचनम्। एतदुक्तं भवति—'य एषोऽक्षिणि' इत्यक्षिलक्षितं द्रष्टारं निर्दिश्योदशरावब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्य 'एतं त्वेव ते' इति पुनः पुनस्तमेव व्याख्येयत्वेनाकृष्य स्वप्नसुषुप्तोपन्यासक्रमेण 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्टे, न जैवेन रूपेण। यत्परं ज्योतिरुपसंपत्तव्यं श्रुतं तत्परं ब्रह्म। तच्चापहतपाप्मत्वादिधर्मकं, तदेव च जीवस्य पारमार्थिकं स्वरूपं 'तत्त्वमसि' इत्यादिशास्त्रेभ्यः, नेतरदुपाधिकल्पितम्। यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निवर्तयन्कूटस्थनित्यदृक्स्वरूपमात्मानमहं ब्रह्मास्मीति न प्रतिपद्यते तावज्जीवस्यजीवत्वम्। यदा तु देहेन्द्रियमनोबुद्धिसंघाताद्व्युत्थाप्य श्रुत्या प्रतिबोध्यते, नासि त्वं देहेन्द्रियमनोबुद्धिसंघातः, नासि संसारी, किं तर्हि तद्यत्सत्यं स आत्मा चैतन्यमात्रस्वरूपस्तत्त्वमसीति, तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुध्यास्माच्छरीराद्यभिमानात्समुत्तिष्ठन्स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति; 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मुण्ड० ३।२।९ ) इत्यादिश्रुतिभ्यः। तदेव चास्य पारमार्थिकं स्वरूपं येन शरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यते। कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति संभवति कूटस्थनित्यस्य। सुवर्णादीनां तु द्रव्यान्तरसंपर्कादभिभूतस्वरूपाणामनभिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात्। तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात्, नतु तथात्मचैतन्यज्योतिषो नित्यस्य केनचिदभिभवः संभवत्यसंसर्गित्वाद्व्योम्न इव, दृष्टविरोधाच्च।

## भामती।

**संधिः**—पौर्वापर्यालोचनया तावदुपनिषदां शुद्धबुद्धमुक्तमेकमप्रपञ्चं ब्रह्म तदतिरिक्तं च सर्वं तद्विवर्तो रज्जोरिव भुजङ्ग इत्यत्र तात्पर्यमवगम्यते। तथाच जीवोऽप्यविद्याकल्पितदेहेन्द्रियाद्युपहितं रूपं ब्रह्मणो न तु स्वाभाविकः। एवंच नापहतपाप्मत्वादयस्तस्मिन्नविद्योपाधौ संभविनः। आविर्भूतब्रह्मरूपे तु निरुपाधौ संभवन्तो ब्रह्मण एव न जीवस्य। एवंच ब्रह्मैवापहतपाप्मादिगुणं श्रुत्युक्तमिति तदेव दहराकाशो न जीव इति। **स्यादेतत्**—स्वरूपाविर्भावश्चेद्ब्रह्मैव न जीवः, तर्हि विप्रतिषिद्धमिदमभिधीयते जीव आविर्भूतस्वरूप इति, अत आह—**भूतपूर्वगत्येति**। **उदशरावब्राह्मणेनेति**। यथैव हि मघोनः प्रतिबिम्बान्युदशराव उपजनापायधर्मकाण्यात्मलक्षणविरहान्नात्मा, एवं देहेन्द्रियाद्यप्युपजनापायधर्मकं नात्मेत्युदशरावदृष्टान्तेन शरीरात्मताया व्युत्थानं बाध इति। चोदयति—**कथं पुनः स्वं च**

## वेदान्तकल्पतरुः।

पाप्मादेरपूर्वस्य स तथा। जीववादी प्रष्टव्यः किमीश्वरमेव मन्यते उत तस्य जीवप्रत्यगात्मत्वमथ वाऽभ्युपेत्येश्वरस्य जीवप्रत्यक्त्वमत्र वाक्ये ईश्वरप्रतिपादनं न मन्यत इति। नाद्य इत्याह—**पौर्वापर्येति**। न द्वितीय इत्याह—**तदतिरिक्तं चेति**। रज्ज्वां भुजङ्गवज्जगत्परमात्मनि विकल्पितं जीवोऽपि द्वितीयचन्द्रवद्भेदेनाध्यस्त इत्याह—**तथाचेति**। तृतीयं प्रत्याह—**एवंच ब्रह्मैवेति**। श्रुत्या प्रजापतिवाक्ये उक्तमित्यर्थः। भाष्येऽन्यासंसर्गिण आत्मनोऽभिव्यक्तिसम्भवेऽन्यसं-

## कल्पतरुपरिमलः।

यथाऽक्षिपर्याये छायापुरुष उपदिष्ट इति इन्द्रविरोचनयोर्भ्रान्तिः, यथा च प्रतिबिम्बावेक्षणे विरोचनस्य देह उपदिष्ट इति भ्रान्तिः, तथा स्वप्नसुषुप्तिपर्याययोर्जीव उपदिष्ट इतीन्द्रस्य भ्रान्त्युपपत्तेरिति। एतच्छङ्कावारणं च समुत्थानवाक्योपन्यासेनेत्थं कृतम्। यदि स्वप्नसुषुप्तिपर्याययोर्ब्रह्मैवोपदिष्टम्, जीव उपदिष्ट इतीन्द्रस्य भ्रान्तिमात्रमिति कल्प्येत, तदा पर्यायद्वये भयशोकविनष्टप्रायत्वदोषयुक्तो जीव उपदिष्ट इतीन्द्रस्य भ्रान्तिरेव वारणीया स्याद्, न तु जीवस्यैव भयशोकादीनां शरीरसम्बन्धोपाधिकाध्यासिकत्ववर्णनपूर्वकं शरीरात्समुत्थितस्य निर्दोषस्वरूपावस्थानवर्णनम्। अतः सर्वमिदं प्रकरणं जीवविषयमेव, न तु ब्रह्मविषयमिति ॥ **पाप्मादेरपूर्वस्येति**। **अपूर्वं** पूर्वशब्दोदितकारणप्रतिद्वन्द्वि कार्यं, तेनादिशब्दगृहीतस्य जरादेरप्यपूर्वत्वम्। **यद्वा**—पाप्मादिशब्दः समानाधिकरणबहुव्रीहिसमासरूपो द्विविधस्तन्त्रेणोच्चारितः। तत्राद्येनापूर्वस्येत्यस्यान्वयः। टीकायां निष्प्रपञ्चस्य ब्रह्मणः सकलोपनिषत्तात्पर्यविषयत्ववर्णनं प्रकृतानुपयुक्तमस्थानविजृम्भितमित्याशङ्क्य विकल्पोत्तरत्वेनावतारयति—**जीववादी प्रष्टव्य इति**। **श्रुत्या प्रजापतिवाक्य उक्तमिति**। **ननु** श्रुत्यापि निरुपाधौ कथं कामसंकल्पावुक्तौ? **उच्यते**; मुक्तौ यावत्सर्वमुक्तिबिम्बभूतेश्वरभावमापद्यते, बहुषु दर्पणेषु मुखप्रतिबिम्बे सत्येकदर्पणापाये तत्प्रतिबिम्ब इव यावत्सकलदर्पणापायं बिम्बमुखभावं तावत्पर्यन्तं दर्पणान्तरगतप्रतिबिम्बप्रतियोगित्वरू-

दृष्टिश्रुतिमतिविज्ञातयो हि जीवस्य स्वरूपम् । तच्च शरीरादसमुत्थितस्यापि जीवस्य सदा निष्पन्नमेव दृश्यते । सर्वो हि जीवः पश्यञ्शृण्वन्मन्वानो विजानन्व्यवहरत्यन्यथा व्यवहारानुपपत्तेः । तच्चेच्छरीरात्समुत्थितस्य निष्पद्येत प्राक्समुत्थानाद्दृष्टो व्यवहारो विरुध्येत । अतः किमात्मकमिदं शरीरात्समुत्थानं, किमात्मिका वा स्वरूपेणाभिनिष्पत्तिरिति । अत्रोच्यते— प्राग्विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिव जीवस्य दृष्ट्यादिज्योतिःस्वरूपं भवति । यथा शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यं च स्वरूपं प्राग्विवेकग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति । प्रमाणजनितविवेकग्रहणात्तु पराचीनः स्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन् । तथा देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकविज्ञानं शरीरात्समुत्थानं, विवेकविज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः । तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्वं सशरीरत्वं च, मन्त्रवर्णात् 'अशरीरं शरीरेषु' ( का० १।२।२२ ) इति । 'शरीरस्थोऽपि कौन्तेय

---

## भामती ।

**रूपमिति** । द्रव्यान्तरसंसृष्टं हि तेनाभिभूतं तस्माद्विविच्यमानं व्यज्यते हेमतारकादि । कूटस्थनित्यस्य पुनरन्येनासंसृष्टस्य कुतो विवेचनादभिव्यक्तिः । नच संसारावस्थायां जीवोऽनभिव्यक्तः । दृष्ट्यादयो ह्यस्य स्वरूपं, ते च संसारावस्थायां भासन्त इति कथं जीवरूपं न भासत इत्यर्थः । परिहरति—**प्राग्विवेकज्ञानोत्पत्तेरिति** । अयमर्थः—यद्यप्यस्य कूटस्थनित्यस्यान्यसंसर्गो न वस्तुतोऽस्ति, यद्यपि च संसारावस्थायामस्य दृष्ट्यादिरूपं चकास्ति; तथाप्यनिर्वाच्यानाद्यविद्यावशादविद्याकल्पितैरेव देहेन्द्रियादिभिरसंसृष्टमपि संसृष्टमिव विविक्तमप्यविविक्तमिव दृष्ट्यादिरूपमस्य प्रथते । तथाच देहेन्द्रियादिगतैस्तापादिभिस्तापादिमदिव भवतीति । उपपादितं चैतद्विस्तरेणाध्यासभाष्य इति नेहोपपाद्यते । यद्यपि स्फटिकादयो जपाकुसुमादिसंनिहिताः, संनिधानं च संयुक्तसंयोगात्मकम्, तथाच संयुक्ताः; तथापि न साक्षाज्जपादिकुसुमसंयोगिन इत्येतावता दृष्टान्तिता इति । वेदना हर्षभयशोकादयः । दार्ष्टान्तिके योजयति—**तथा देहादिति** । 'संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्येतद्विभजते—**श्रुतिकृतं विवेकविज्ञानमिति** । तदनेन श्रवणमननध्यानाभ्यासाद्विवेकविज्ञानमुक्त्वा तस्य विवेकविज्ञानस्य फलं केवलात्मरूपसाक्षात्कारः स्वरूपेणाभिनिष्पत्तिः, स च साक्षात्कारो वृत्तिरूपः प्रपञ्चमात्रं प्रविलापयन् स्वयमपि प्रपञ्चरूपत्वात्कतकफलवत्प्रलीयते । तथाच निर्मृष्टनिखिलप्रपञ्चजालमनुपसर्गमपराधीनप्रकाशमात्मज्योतिः सिद्धं भवति । तदिदमुक्तम् **—परं ज्योतिरुपसंपद्येति** । अत्र चोपसंपत्तावुत्तरकालायामपि क्त्वाप्रयोगो मुखं व्यादाय स्वपितीतिवन्मन्तव्यः । यदा च विवेकसाक्षात्कारः शरीरात्समुत्थानं, नतु शरीरापादानकं गमनम्, तदा तत्सशरीरस्यापि संभवति प्रारब्धकार्यकर्मक्षयस्य पुरस्तादित्याह—**तथा विवेकाविवेकमात्रेणेति** । न केवलं 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिभ्यो जीवस्य परमात्मनोऽभेदः, प्राजापत्यवाक्यसंदर्भपर्यालोचनयाप्येवमेव प्रतिपत्तव्यमित्याह—

## वेदान्तकल्पतरुः ।

सर्गिस्फटिकदृष्टान्तवर्णनमयुक्तमित्याशङ्क्याह—**यद्यपि स्फटिकादय इति** । जपाकुसुमादिना संयुक्तं भूतलं तेन निकट एव संयोगो येषां स्फटिकादीनां ते संयुक्तसंयोगास्तद्रूपत्वं तदात्मत्वम् । तथाच व्यवधानेन संयुक्ता इत्यर्थः । प्राग्विवेकविज्ञानोत्पत्तेरिति भाष्ये वेदनाशब्दार्थमाह—**वेदना इति** । अनावृतस्वरूपस्फुरणमुपसम्पत्तिशब्दार्थमाह—**तथा चेति** । **ननु** स्वरूपाभिनिष्पत्तिर्वृत्तिः तयाऽपसारिते आवरणे पश्चाज्ज्योतिरुपसंपत्तिः तत्कथं व्युत्क्रमेण निर्देशोऽत आह—**अत्र चेति** । **यदा च विवेकसाक्षात्कार इति** । पूर्वं परोक्षज्ञानं शरीरात्समुत्थानमुक्तम् । इदानीं तस्य फलपर्यन्त-

## कल्पतरुपरिमलः ।

प्रतिबिम्बभावाऽनिवृत्तेः, ततश्च मुक्तस्य परमेश्वरभावापत्त्या तद्रूपेण कामसंकल्पौ स्वतो निरुपाधिकस्यापि बद्धपुरुषदृष्ट्या संभवत एव । तदभिप्रायेणोक्तं भाष्येऽपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यत इति । सूत्रकारोऽपि ब्राह्मेण जैमिनि ( ब्र. अ. ४ पा. ४ सू. ५ )रिति चतुर्थाध्यायाधिकरणे मुक्तस्य परमेश्वरभावापत्त्याशयेनैव वर्णितगुणाष्टकमुपपादयिष्यति । तस्मादुपपन्नौ कामसंकल्पौ परमेश्वराभेदेन मुक्तस्य प्रत्युत तद्भेद एव जीवस्य शरीरावस्थायामपि तौ न सम्भवतः । न हि तदानीममनस्कस्य तावुपपद्येते । **कथं व्युत्क्रमेणेति** । **ननूपसंपत्तिः** साक्षात्कारः अभिनिष्पत्तिप्राप्तिरित्यर्थः क्रमाविरोधाय किमिति नादृतः; यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन स्वेन रूपेणाभिनिष्पद्यन्त इति दृष्टान्तसङ्गत्यनुरोधात् । दृष्टान्तवाक्यस्य ह्ययमर्थः यथा पूर्वप्रकृतानि वायुरभ्रं विद्युत् स्तनयित्नुरित्ये-

न करोति न लिप्यते' (गी० १३।३१) इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात् । तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन्विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते । नत्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य संभवतः स्वरूपत्वादेव । एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदो न वस्तुकृतः, व्योमवदसङ्गत्वाविशेषात् । कुतश्चैतदेवं प्रतिपत्तव्यम् ? यतो 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्युपदिश्य 'एतदमृतमभयमेतद्ब्रह्म' इत्युपदिशति । योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते सोऽमृताभयलक्षणाद्ब्रह्मणोऽन्यश्चेत्स्यात्ततोऽमृताभयब्रह्मसामानाधिकरण्यं न स्यात् । नापि प्रतिच्छायात्मायमक्षिलक्षितो निर्दिश्यते; प्रजापतेर्मृषावादित्वप्रसङ्गात् । तथा द्वितीयेऽपि पर्याये 'य एष स्वप्ने महीयमानश्चरति' इति न प्रथमपर्यायनिर्दिष्टादक्षिपुरुषाद्द्रष्टुरन्यो निर्दिष्टः, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रमात् । किंचाहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं पश्यामीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे, द्रष्टारं तु तमेव प्रत्यभिजानाति 'य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्यामी'ति । तथा तृतीयेऽपि पर्याये नहि खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' इति सुषुप्तावस्थायां विशेषविज्ञानाभावमेव दर्शयति न विज्ञातारं प्रतिषेधति । यत्तु तत्र 'विनाशमेवापीतो भवति' इति, तदपि विशेषविज्ञानविनाशाभिप्रायमेव न विज्ञातृविनाशाभिप्रायम्; 'न हि विज्ञातुर्वि-

## भामती ।

**कुतश्चैतदेवं प्रतिपत्तव्यमिति ।** **स्यादेतत्**—प्रतिच्छायात्मवज्जीवं परमात्मनो वस्तुतो भिन्नमप्यमृताभयात्मत्वेन ग्राहयित्वा पश्चात्परमात्मानममृताभयादिमन्तं प्रजापतिर्ग्राहयति, नत्वयं जीवस्य परमात्मभावमाचष्टे छायात्मन इवेत्यत आह—**नापि प्रतिच्छायात्मायमक्षिलक्षित इति ।** अक्षिलक्षितोऽप्यात्मैवोपदिश्यते न छायात्मा । तस्मादसिद्धो दृष्टान्त इत्यर्थः । किंच द्वितीयादिष्वपि पर्यायेषु 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रमात्प्रथमपर्यायनिर्दिष्टो न छायापुरुषः, अपितु ततोऽन्यो द्रष्टात्मेति दर्शयति, अन्यथा प्रजापतेः प्रतारकत्वप्रसङ्गादित्यत आह—**तथा द्वितीयेऽपीति ।** अथ छायापुरुष एव जीवः कस्मान्न भवति । तथाच छायापुरुष एवैतमिति परामृश्यतइत्यत आह—**किंचाहमद्य स्वप्ने हस्तिनमिति ।** किंचेति समुच्चयाभिधानं पूर्वोपपत्तिसाहित्यं ब्रूते, तच्च शङ्कानिराकरणद्वारेण । छायापुरुषोऽस्थायी, स्थायी चायमात्मा चकास्ति, प्रत्यभिज्ञानादित्यर्थः । **नहि खल्वयमेवमिति । अयं** सुषुप्तः । **संप्रति** सुषुप्तावस्थायाम् । **अहमात्मानम**हंकारास्पदमात्मानम् । न जानाति । केन प्रकारेण न जानातीत्यत आह—**अयमहमस्मीमानि भूतानि चेति ।** यथा जागृतौ स्वप्ने चेति । 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इत्यनेनाविनाशित्वं सिद्धवद्धेतूकुर्वता सुप्तोत्थितस्यात्मप्रत्यभिज्ञानमुक्तम्, य एवाहं जागरित्वा

## वेदान्तकल्पतरुः ।

स्वात्तत्फलं साक्षात्कारोऽपि शरीरात् समुत्थानत्वेनानूदित इति न विरोधः । नापि प्रतिच्छायात्मायमिति भाष्यं प्रतिबिम्बस्याक्षिपुरुषत्वेन निर्देशवारकमप्रासङ्गिकमिव प्रतिभाति, तत्पूर्वपक्षितजीवदृष्टान्तनिराकरणपरत्वेन प्रकृते सङ्गमयति—**स्यादेतदिति ।** अक्षिपर्याये छायात्मा निर्दिष्टः स्वप्नसुषुप्तिपर्याययोर्जीवोऽतः छायात्मदृष्टान्तेन जीवशङ्का । अहेत्यत्र बिन्दुमध्याहृत्य व्याचष्टे—**अहमात्मानमिति ।** अहमिति शब्दगोचरमित्यर्थः । यथाश्रुतपाठेऽहेत्यवधारणार्थो निपातः । नैव जानातीत्यर्थः । सुप्ते चैतन्यस्य स्फुरणात्सर्वथाऽऽत्मभाननिषेधो न युक्तोऽत औपाधिकस्फूर्तिनिषेधाय निपातस्यावधारणार्थत्वं जानतैव बिन्दुरध्याहृतः । अविनाशित्वादिति हेतोः साध्याविशेषमाशङ्क्याह—**अनेनेति ।** असिद्धस्यापि हेतोः सिद्धिनिर्देशेन सिद्धिहेतुभूतं प्रमाणं सूचितमित्यर्थः । तदेव प्रमाणं दर्शयति—**य एवाहमिति । आचार्यदे-**

## कल्पतरुपरिमलः ।

तानि प्रावृषि वर्षणादिप्रयोजनानन्तरं स्थूलरूपं विहाय सूक्ष्मरूपेणाकाशे तदविविक्ततया स्थितानि पुनः प्रावृडारम्भे किंचिदुच्छ्वसितानि भूत्वा ततो विविक्तानि सन्ति परं ग्रीष्मप्रवृत्तं सौरं ज्योतिः सहकारि प्राप्य स्वेन स्वेन पुरोवातादिरूपेणाभिव्यज्यन्त इति । एवंच दार्ष्टान्तिकेऽप्युपसम्पत्तिः प्राप्तिरेव वाच्येति । **तत्फलं साक्षात्कार इति ।** अस्मिन्पक्षे उपसम्पत्तिरेवाभिनिष्पत्तिर्वाच्या । तथैवाचार्यैः सम्पद्याविर्भाव (ब्र. अ. ४ पा. ४ सू. १) इत्यधिकरणे परं ज्योतिरुपसम्पत्तिविवरणरूपतया स्वरूपाभिनिष्पत्तिवाक्यं व्याख्यास्यते । **अहंशब्दगोचर**मित्यहंकारास्पदमित्यस्य व्याख्या । **ननु** प्राजापत्यवाक्यालोचनया जीवपराभेदसिद्धेः समनन्तरपूर्वग्रन्थप्रतिपादितायाः प्रतिद्वन्द्वितया जीवब्रह्मभेदाविरोध्यर्थान्तरप्रदर्शकमाचार्यदेशीयमतमुपन्यस्यत इति भाष्यार्जवेन प्रतिभाति, तत्तात्पर्यप्रदर्शके यदि ह्येतमित्यादिटीकाग्रन्थे अक्षिस्थानस्य छायापुरुषत्वासम्भवनिरासोऽनुपयोगीत्याशङ्क्य तदुपयोगसिद्धये दहरो जीव इति पूर्वपक्षिण एवाचार्यदेशीयकञ्चुक-

**ज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' ( बृ० ४।३।३० ) इति श्रुत्यन्तरात् । तथा चतुर्थेऽपि पर्याये 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इत्युपक्रम्य 'मघवन् मर्त्यं वा इदं शरीरम्' इत्यादिना प्रपञ्चेन शरीराद्युपाधिसंबन्धप्रत्याख्यानेन संप्रसादशब्दोदितं जीवं 'स्वेन रूपेणाभिनिष्पद्यते' इति ब्रह्मस्वरूपापन्नं दर्शयन्न परस्माद्ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयति। केचित्तु—परमात्मविवक्षायां 'एतं त्वेव ते' इति जीवाकर्षणमन्याय्यं मन्यमाना एतमेव वाक्योपक्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं ते भूयोऽनुव्याख्यास्यामीति—कल्पयन्ति ।**

## भामती ।

**सुप्तः** स एवैतर्हि जागर्मीति । आचार्यदेशीयमतमाह—**केचित्त्विति** । यदि ह्येतमित्यनेनान्तरोक्तं चक्षुरधिष्ठानं पुरुषं

## वेदान्तकल्पतरुः ।

**शीया** आचार्यकल्पाः न तु सम्यगाचार्यास्तन्मतमित्यर्थः । एकदेशिप्रत्यवस्थानं जीवो दहर इति पूर्वपक्षेऽन्तर्भावयति—**यदीति** । उक्तं हि पूर्वपक्षिणा छायावद्वा आरोपेण स्वत एव वा देहादिवियोगमपेक्ष्यामृताभयत्वादि जीवस्यैवेति एतं त्वेव त इत्यक्षिस्थपुरुषानुकर्षणमङ्गीकृत्य, इदानीं तु परामर्शस्यान्यविषयत्वेन स एवैकदेशी भूत्वा प्रत्यवतिष्ठत इत्यर्थः । **नन्वेवं** परमात्मा चेदिह निर्दिष्टः स एवेह दहरः किं न स्यात् । अस्तु जीवोऽपि किं न भवेत् ? अतएव अविनिगमेन पूर्वपक्ष इत्यतीतानन्तरसूत्रोपक्रमे वर्णितं तदिहापि सूत्रेऽनुसंधेयम् । **नन्वेतं** व्याख्यास्यामीति परमात्मानं प्रतिज्ञाय कथं स्वप्नसुषुप्तिपर्याययोर्जीवो व्याख्यायते । **उच्यते—सूक्ष्मे चतुर्थपर्याये वक्ष्यमाणे परात्मनि । धीनिवेशाय जीवस्याप्युपास्तिरिह वर्ण्यते** ॥ अत एव व्याख्यास्यामीति भविष्यत्ताऽवगमः । **ननु** परमात्मपरामर्शे जीवः परामृष्ट

## कल्पतरुपरिमलः ।

मवलम्ब्य विधान्तरेण प्रत्यवस्थानपरमिदं भाष्यमिति योजनार्थतया यदीत्यादिग्रन्थमवतारयति—**एकदेशीति** । यदि केचिदित्यादिभाष्यं पूर्वभाष्यप्रतिपादितप्राजापत्यवाक्यार्थप्रतिद्वन्द्विजीवब्रह्मभेदाविरोधितदर्थान्तरप्रदर्शकमतान्तरोपन्यासमात्रपरं भवेत्, तदा तदाशयवर्णनार्थे यदि ह्येतमित्यादिटीकाग्रन्थे 'ततो न भवेत् छायापुरुषः' इति स्थाने ततो न भवेज्जीवब्रह्मभेद इति वक्तव्यं स्याद्, न तथोक्तम्; तस्मादक्षिस्थानस्य छायात्मत्वमङ्गीकृत्य पूर्वपक्षान्तरप्रवर्तने टीकायास्तात्पर्यं गम्यत इति भावः । प्राचीनपूर्वपक्षादस्य पूर्वपक्षस्य विशेषं वक्तुं साधारणांशं दर्शयति—**उक्तंहीति** । तस्यैवापहतपाप्मत्वादि दर्शयत्येतदमृतमभयमेतद् ब्रह्मेति पूर्वपक्षभाष्ये वाग्बुद्धिशरीरारम्भसम्भवोऽस्य पाप्मादिः शरीराभावे न भवतीति तट्टीकायां चेति शेषः । यद्यपि छायावदारोपेणेति पक्षो नोक्तः, प्रथमपूर्वपक्षे चाक्षिस्थानो न छायापुरुष उक्तः, तथा तदभिप्रायकल्पने त्वेतमित्यक्षिस्थपुरुषानुकर्षणाङ्गीकारोक्तिविरोधः; तथापि स छायापुरुषश्चेदमृतत्वाद्यारोपो वाच्यः । तदारोपो जीवत्वपक्षेऽपि वक्तुं शक्य इत्युपकोसलविद्यागताक्षिवाक्यविषयपूर्वपक्षच्छाययोक्तप्रायमिति भावः । **नन्वेतमिति । ननु—**तत्प्रथमपूर्वपक्षवचनमेतं त्वेवेत्यत्राक्षिस्थानपुरुषानुकर्षणमङ्गीकृत्येति इदानीं द्वितीयपूर्वपक्षे एतमिति परामर्शस्यान्यविषयत्वमङ्गीकृत्येति च विशेषोऽस्तु नाम, तेन प्रथमपूर्वपक्षनिराकरणयुक्तिमनादृत्य द्वितीयपूर्वपक्षोत्थानहेतुः को विशेषो दर्शितः स्यादिति—**चेत्, उच्यते**; अक्षिस्थानपुरुषाननुकर्षविशेष एव प्रदर्शयिष्यमाणाविनिगमनपूर्वपक्षोत्थानहेतुः । एतमित्यनेनाक्षिस्थानाननुकर्षे ह्यक्षिस्थानश्छायापुरुषो भवेदिति तद्वचनं स्वातन्त्र्येणोपास्यत्वपरमतोऽनन्तरपर्यायद्वये जीववचनमपि तद्वदेव स्वातन्त्र्येणोपास्यत्वपरं, नतु चतुर्थपर्यायवक्ष्यमाणब्रह्माऽभेदबोधनार्थमित्यन्यार्थश्च परामर्श ( ब्र. अ. १ पा. ३ सू. २० ) इति प्रदर्शयिष्यमाणन्यायविषयत्वाभावादुत्तरत्र प्रजापतिविद्यायामपहतपाप्मत्वादियुक्तत्वेनोपास्यत्वेन च स्वतन्त्रतया निर्दिष्टयोर्ब्रह्मजीवयोर्मध्ये दहरो ब्रह्मैवेति नियन्तुं न शक्यते; अपहतपाप्मत्वादिगुणवचनेन ब्रह्मपक्षस्येव सुषुप्त्यवस्थापन्नस्वतन्त्रजीवोपन्यासेन जीवपक्षस्याप्युत्थानात्, प्रजापतिविद्यायां सुषुप्तजीवोपन्यासस्य स्वातन्त्र्ये दहरविद्यायामथ एष संप्रसाद इति तदुपन्यासस्यापि तद्वदेव स्वातन्त्र्यापत्त्या तत्रान्यार्थश्च परामर्श इति वक्ष्यमाणन्यायाप्रसरात् । **तदिहापि सूत्रेऽनुसन्धेयमिति** । इतरपरामर्शात्स इति चे ( ब्र. अ. १ पा. ३ सू. १८ ) दिति शङ्काभागरूपपूर्वसूत्रोपक्रमे जीवलिङ्गमात्रोपन्यासात् तत्पूर्वसूत्रप्रदर्शितब्रह्मलिङ्गानाम् अन्यथासिद्धवचनादविनिगमेन पूर्वपक्ष इति भाष्यटीकयोर्वर्णितं, तदुत्तराचे ( ब्र. अ. १ पा. ३ सू. १९ )दिति सूत्रेऽप्याचार्यदेशीयमतोपन्यासव्याजेन प्रवर्तमानेऽस्मिन् पूर्वपक्षे समानमित्यर्थः ॥ प्रथमपूर्वपक्षस्तु नाविनिगमेन प्रवृत्तः । प्रजापतिविद्यायामपहतपाप्मत्वादिर्जीवस्यैव धर्म इति निश्चयेन तत एव लिङ्गाद्दहरो जीव इति निश्चित्य तत्प्रवृत्तेः । **यद्वा**—प्रथमपूर्वपक्षोऽप्यविनिगमेन प्रवृत्त इति तात्पर्यम् । अत्रापि बाह्याकाशोपमानगतिशब्दधृतीनामन्यथासिद्ध्युक्तेः । **ननु** वाक्योपक्रमगतस्य परमात्मनः परामर्शादित्येतदनन्तरवाक्योपक्रमगतस्य परामर्शः किं न स्यादिति शङ्कानिराकरणार्थत्वेन न खलु जीवात्मन इत्यादिटीकाग्रन्थः प्रवृत्त इति प्रतिभाति, तस्य च तादर्थ्यं न संभवति; अक्षिस्थानो जीव इति पक्षं विहाय छायापुरुष इत्यङ्गीकृत्य पूर्वपक्षान्तरप्र-

तेषामेतमिति संनिहितावलम्बिनी सर्वनामश्रुतिर्विप्रकृष्येत । भूयःश्रुतिश्चोपरुध्येत, पर्यायान्तराभिहितस्य पर्यायान्तरेऽनभिधीयमानत्वात् । 'एतं त्वेव ते' इति च प्रतिज्ञाय प्राक्चतुर्थात्पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत । तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते, सर्पादिविलयनेनेव रज्ज्वादीन् । अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्तेऽस्मदीयाश्च केचित् । तेषां सर्वेषामात्मैकत्वसम्यग्दर्शनप्रतिपक्षभूतानां प्रतिबोधायेदं शारीरकमारब्धम् । एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया मायाविवदनेकधा विभाव्यते नान्यो विज्ञानधातुरस्तीति । यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः—'नासंभवात्' ( ब्र० १।३।१८ ) इत्यादिना । तत्रायमभिप्रायः—नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादि परिकल्पितम् । तदात्मैकत्वप्रतिपादनपरैर्वाक्यैर्न्यायोपेतैर्द्वैतवादप्रतिषेधैश्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति । जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति किंत्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदम् । एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते । प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति—'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' ( ब्र० १।१।३० ) इत्यादिना । वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ॥ १९ ॥

## भामती ।

परामृश्य तस्यात्मत्वमुच्येत ततो न भवेच्छायापुरुषः । नत्वेनदस्ति; वाक्योपक्रमसूचितस्य परमात्मनः परामर्शात् । न खलु जीवात्मनोऽपहतपाप्मत्वादिगुणसंभव इत्यर्थः । तदेतद्दूषयति—**तेषामेतमिति** । सुबोधम् । मतान्तरमाह—**अपरे तु वादिन इति** । यदि न जीवः कर्ता भोक्ता च वस्तुतो भवेत्, ततस्तदाश्रयाः कर्मविधय उपरुध्येरन् । सूत्रकारवचनं च 'नासंभवात्' इति कुप्येत । तत्खलु ब्रह्मणो गुणानां जीवेऽसंभवमाह । न चाभेदे ब्रह्मणो जीवानां ब्रह्मगुणानामसंभवो जीवेष्विति तेषामभिप्रायः । तेषां वादिनां शारीरकेणैवोत्तरं दत्तम् । **तथाहि**—पौर्वापर्यपर्यालोचनया वेदान्तानामेकमद्वयमात्मतत्त्वं, जीवास्त्वविद्योपधानकल्पिता इत्यत्र तात्पर्यमवगम्यते । न च वस्तुसतो ब्रह्मणो गुणाः समारोपितेषु जीवेषु संभवन्ति । नो खलु वस्तुसत्या रज्ज्वा धर्माः सेव्यत्वादयः समारोपिते भुजङ्गे संभविनः । नच समारोपितो भुजङ्गो रज्ज्वा भिन्नः । तस्मान्न सूत्रव्याकोपः । अविद्याकल्पितं च कर्तृत्वभोक्तृत्वं यथा लोकसिद्धमुपाश्रित्य कर्मविधयः प्रवृत्ताः, श्येनादिविधय इव निषिद्धेऽपि 'न हिंस्यात्सर्वा भूतानि' इति साध्यांशेऽभिचारेतिकान्तनिषेधं पुरुषमाश्रित्याविद्यावत्पुरुषाश्रयत्वाच्छास्त्रस्येत्युक्तम् । तदिदमाह—**तेषां सर्वेषामिति** ॥ १९ ॥ **ननु ब्रह्म-**

## वेदान्तकल्पतरुः ।

एव तदभेदादत आह—**न खल्विति** । दृष्टे संभवत्यदृष्टकल्पनानुपपत्तेर्जीवानुवादेन ब्रह्मता बोध्यते नोपास्तिविधिः । इन्द्रब्रह्मचर्यावसानानन्तर्यार्था भविष्योक्तिरिति परिहाराशयः । अस्य चौपाधिको जीवोऽवच्छिन्ने च नापहतपाप्मत्वादिसंभव इति मतम् । पारमार्थिकजीवब्रह्मविभागमतमाह—**मतान्तरमिति** । शारीरकार्थमाह—**तथा हीति** । सूत्रव्याकोपं परिहरति—**नच वस्तुत इति** । औपाधिकभेदेन गुणसंकर इत्यर्थः । कर्मविध्युपरोधं वारयति—**अविद्याकल्पितमिति** । अविद्याकल्पितं कर्तृत्वाद्याश्रित्य कर्मविधयः प्रवृत्ता इत्यत्र हेतुमाह—**अविद्यावदिति** । इत्युक्तमध्यासभाष्ये ॥१९॥ अविनिगमपरिहारार्थं जीवपरामर्शस्यान्यथासिद्धिप्रतिपादकं सूत्रमवतार्य व्याचष्टे—**नन्वित्यादिना** ॥२०॥२१॥ **स वा अयमिति । स वै** ईश्वरस्तत्त्वतो**ऽयं** जीव एव । औपाधिकस्तु भेद इत्याह—**पुरुष इति** । पुरुषशब्दार्थमाह—**पुरिशय इति । पूः** उपाधिः । किमेकस्यामेव पुरि शेते, न अपितु सर्वासु पूर्षु । तमाचार्यं शिष्याश्चेद् ब्रूयुः । **तद्यत्रेति । तत्त्र**

## कल्पतरुपरिमलः ।

वर्तनार्थत्वेन यदीत्यादिटीकाग्रन्थस्यावतारणादित्याशङ्क्य परमात्मनः परामर्शादिति वाक्योपक्रमे जीवपरामर्शप्रत्याख्यानमयुक्तं तयोरभेदादिति शङ्कानिराकरणार्थत्वेन न खल्विति ग्रन्थमवतारयति—**नन्विति । दृष्टे संभवतीति । ननु** परमात्मनि धीनिवेशायोपास्त्यर्थत्वेऽपि दृष्टार्थत्वं न हीयत इति—**चेत्, नः** उपास्तिविध्यङ्गीकारे परमात्मनि चित्तैकाग्र्यमनयैवोपासनया सम्पादनीयमिति नियमविधित्वस्याङ्गीकर्तव्यत्वेन नियमादृष्टकल्पनागौरवसत्त्वादिति भावः । **ननु** मतान्तरमाहेत्ययुक्तं; मतद्वयेऽपि जीवब्रह्मभेदाविशेषाद् विशेषकान्तरानुक्तेश्चेत्याशङ्क्याह—**अस्य चेति । औपाधिकस्ता-**

## अन्यार्थश्च परामर्शः ॥ २० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः—'अथ य एष संप्रसादः' ( छा० ८।३।४ ) इत्यादिः, स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीति । अत आह—अन्यार्थोऽयं जीवपरामर्शो न जीवस्वरूपपर्यवसायी । किं तर्हि ? परमेश्वरस्वरूपपर्यवसायी । कथम् ? संप्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात्समुत्थाय सुषुप्तावस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसंपद्य विशेषविज्ञानत्वं च परित्यज्य स्वेन रूपेणाभिनिष्पद्यते । यदस्योपसंपत्तव्यं परं ज्योतिर्येन स्वेन रूपेणायमभिनिष्पद्यते स एष आत्माऽपहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

यदप्युक्तम्, 'दहरोऽस्मिन्नन्तराकाशः' इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते, जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पत इति, तस्य परिहारो वक्तव्यः । उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इति 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' ( ब्र० १।२।७ ) इत्यत्र । स एवेह परिहारोऽनुसंधातव्य इति सूचयति । श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति ॥ २१ ॥ इति पञ्चमं दहराधिकरणम् ।

( ६ अधिकरणम् )

## अनुकृतेस्तस्य च ॥ २२ ॥

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु-

---

### भामती ।

चेदत्र वक्तव्यं कृतं जीवपरामर्शेनेत्युक्तमित्यत आह—**अन्यार्थश्च परामर्शः** । जीवस्योपाधिकल्पितस्य ब्रह्मभाव उपदेष्टव्यः, नचासौ जीवमपरामृश्य शक्य उपदेष्टुमिति तिसृष्ववस्थासु जीवः परामृष्टः । तद्भावप्रविलयनं तस्य पारमार्थिकं ब्रह्मभावं दर्शयितुमित्यर्थः ॥ २० ॥ निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ २१ ॥ **इति पञ्चमं दहराधिकरणम्** ॥

## अनुकृतेस्तस्य च ॥ २२ ॥

### वेदान्तकल्पतरुः ।

अवस्थाद्वयप्रापककर्मोपरमे सति यत्र यस्मिन्काले । एतदिति क्रियाविशेषणम् । एतत्स्वप्नम् । सुप्तः स्वापस्य द्विप्रकारत्वात् । स्वप्नव्यावृत्त्यर्थमाह—**समस्त इति** । उपसंहृतसर्वकरण इत्यर्थः । **अतएव** विषयासंपर्कात् संप्रसन्नः । स्वप्ने महीयमानः पूज्यमानः चरति पश्यति भोगान् ॥ **इति पञ्चमं दहराधिकरणम्** ॥

## अनुकृतेस्तस्य च ॥ २२ ॥

सप्तम्याः सति विषये च साधारण्यात्संशयः । पूर्वमेतं त्वेव त इत्येतच्छब्दस्य प्रकृतार्थत्वाद् दहरस्य जीवता निरास्ति,

### कल्पतरुपरिमलः ।

त्विकोपाध्यवच्छिन्नः ॥ १९ ॥ २० ॥ २१ ॥ एतदिति क्रियाविशेषणमित्यस्य विवरणम्—**एतत्स्वप्नमिति** । स्वप्नं यथा भवति तथा स्वपितीत्यभेदेऽपि क्रियाविशेषणतया कर्मता पाकं पचतीतिवत् । अत्र ब्रह्मलिङ्गानां प्रजापतिविद्यानुसारेण जीवलिङ्गत्वशङ्काकलुषितत्वाद् ब्रह्मलिङ्गत्वमस्पष्टं, तस्य स्पष्टत्वेऽपि अन्तर्वर्त्यन्वयावभासाद्दहराकाशान्वयित्वं न स्पष्टमित्यस्पष्टब्रह्मलिङ्गता ॥ **इति पञ्चमं दहराधिकरणम्** ॥

## अनुकृतेस्तस्य च ॥ २२ ॥

**सति विषये च साधारण्यादिति ।** ननु—साधारण्यमसिद्धं वैषयिकाधिकरणकारकविभक्तेः 'यस्य च भावेन भाव-

---

१ तत्र सूत्राणि ८—दहर उत्तरेभ्यः १४ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च १५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १६ प्रसिद्धेश्च १७ इतरपरामर्शात् स इति चेन्नासंभवात् १८ उत्तराच्चेदाविर्भूतस्वरूपस्तु १९ अन्यार्थश्च परामर्शः २० अल्पश्रुतेरिति चेत्तदुक्तम् २१ ॥

## भामती ।

**अभानं तेजसो दृष्टं सति तेजोऽन्तरे यतः । तेजोधात्वन्तरं तस्मादनुकाराच्च गम्यते ॥** बलीयसा हि सौर्येण तेजसा मन्दं तेजश्चन्द्रतारकाद्यभिभूयमानं दृष्टं, न तु तेजसोऽन्येन । येऽपि पिधायकाः प्रदीपस्य गृहघटा-

## वेदान्तकल्पतरुः ।

तदसाधु; तत्रेत्यादौ सर्वनाम्नः प्रकृतार्थत्वानियमादिति शङ्कानिरासात्संगतिः । तत्रेति विषयसप्तमीस्वीकारे तद्भासयतीति णिजध्याहारप्रसङ्गात्सतिसप्तमीमादाय पूर्वपक्षमाह—**अभानमिति** । तस्मात्तेजःप्रत्यभिभावकत्वलिङ्गादनुभानलक्षणादनु-काराच्च तत्र शब्देन तेजोरूपं पदार्थान्तरं गम्यत इति द्वितीयार्धस्यार्थः । प्रथमार्धं व्याचष्टे—**बलीयसेति** । विमतं, तेजः, तदभिभावकत्वात्, सूर्यवदित्यनुमानमसूचि । तस्यानैकान्तिकत्वमाशङ्क्याह—**येऽपीति** । भासकत्वे सति तेजो-

## कल्पतरुपरिमलः ।

लक्षण'नित्युपपदविभक्तितो बलीयस्त्वादिति—**चेत्, मैवम्**; णिजर्थाध्याहारसापेक्षकारकविभक्तेरुपपदविभक्तेश्च बलाब-लानिर्धारणाशयेन साधारण्योक्तेः, पूर्वपक्षावतारिकया तथा तदाशयविवरणात् । **पूर्वमिति । ननु** प्रथमपूर्वपक्षे तावदे-तमित्यस्य प्रकृतार्थत्वं दहरो जीव इति शङ्कानिरासे न हेतुः; तत्र तस्य प्रकृतार्थत्वहेतुनैव तथा शङ्कोत्थानात्, नच तस्याप्रकृतार्थत्वसंभवस्तथाशङ्कानिरासासंभवे हेतुः; ततो जीवेऽपहतपाप्मत्वादिसद्भावमूलशङ्कानिरासस्यैव सिद्धेः, द्विती-यपूर्वपक्षेऽपि तदुक्तशङ्कानिरासे न हेतुः; तत्राप्येतमित्यस्य वाक्योपक्रमप्रकृतापहतपाप्मत्वादिगुणकात्मार्थत्वावलम्बनेनैव तथा शङ्कोत्थानात्, तत्रापि तस्याप्रकृतार्थत्वसंभवस्तथाशङ्कानिरसनासंभवे न हेतुः; स्वप्नादिपर्यायेष्वेतमित्यस्य प्रकृतम-संस्पृश्य स्वस्ववक्ष्यमाणार्थमात्रपरामर्शित्वेऽक्षिस्थच्छायात्मा स्वप्नसुषुप्तिपर्याययोरुक्तो जीवश्च तथा तथोपास्यश्चतुर्थपर्या-योक्तं ब्रह्म ज्ञेयमिति कल्पने प्रकृतस्यापहतपाप्मत्वादिगुणकस्येन्द्रविरोचनाभ्यां पृष्टस्यात्मनः क्वचिदप्युक्तिर्न लभ्येतेति दोषापत्त्या तत्परिहारार्थमक्षिपर्यायस्तद्विषय इति तत्रापहतपाप्मत्वाद्यसंभवेनापरितोषात्, पुनः पुनरागतमिन्द्रं प्रति स एवोपदिष्ट इति च वक्तव्यत्वेन स्वतन्त्रजीवोपास्तिविधानरूपदृष्टान्ताऽसंप्रतिपत्त्या तन्मूलाया जीवो दहर इति शङ्कायाः सर्वनाम्नः प्रकृतार्थत्वनियमाभावेन हेतुना प्रतिष्ठापनालाभात्, अक्षिपर्यायस्य छायात्मोपास्तिपरत्वे हि तत्रापरितोषादाग-तमिन्द्रं प्रति ततोऽन्यस्य जीवस्योपास्त्युपदेश इति वक्तुं शक्यम् । तस्य प्रकृतात्मोपदेशपरत्वे तु छायापुरुषस्यापहतपाप्म-त्वादिकं न संभवतीत्यपरितोषादागतं प्रति तदीयभ्रान्त्यपनयनेन प्रकृत एवात्मा प्रकारान्तरेणोपदेष्टव्यः । अतः प्रकृतार्थत्वा-दिति शङ्कानिरासे प्रकृतार्थत्वनियमाभावादिति शङ्कानिरासासंभवे च हेतुत्वेनोक्तिर्न युक्तेति—**चेत्, उच्यते**; प्रथमपूर्वपक्षे तावद् एतमित्यस्य प्रकृतार्थत्वहेतुनोत्थिता जीवो दहर इति शङ्का तस्य पूर्वपक्ष्यभिमतं प्रकृतार्थत्वमेव जीवब्रह्माभेदसिद्धि-प्रत्याशया समाश्रित्य जीवस्यावस्थात्रयोत्तीर्णस्य तुर्यपर्याये ब्रह्मभावोक्तेरपेतजीवभावं ब्रह्मैवापहतपाप्मत्वादिगुणकं न जीव इत्युपपादनेन निरासि । तदसाधु; तस्याप्रकृतार्थत्वसंभवे ततो जीवब्रह्माभेदासिद्धेरित्याक्षेपः । तत्र प्रकृतार्थत्वा-दिति शङ्कान्वये हेतुपञ्चमी शङ्कानिरासान्वये ल्यब्लोपे कर्मण्युपसंख्यानमिति पञ्चमीति भेदः । तथा द्वितीयपूर्वपक्षे द्विती-यादिपर्यायगतस्य एतमित्यस्य वाक्योपक्रमप्रकृतापहतपाप्मत्वादिगुणकात्मार्थत्वाद्दहरो जीव इति शङ्का तस्य प्रकृतार्थत्वा-त्सन्निहिताक्षिस्थार्थत्वाद् निरासि । तदसाधु; द्वितीयादिपर्यायगतस्यैतमित्यस्याप्रकृतार्थत्वसंभवेनाक्षिस्थपरामर्शित्वासिद्ध्या तन्मूलकजीवब्रह्माभेदासिद्धेरित्याक्षेपः । अस्यां योजनायां प्रकृतार्थत्वादिति शङ्कान्वये तन्निरासान्वये च हेतुपञ्चम्येव, शङ्कानिरासान्वये सन्निहितार्थत्वादिति तदर्थ इति विशेषः । यद्यपि सन्निधिः प्रकरणाद्दुर्बलः; तथापि वाक्योपक्रमप्रकृत एवात्माऽक्षण्युपदेश्य इति प्रकरणानुगुणसन्निधिर्न तेन बाध्यः । **ननु**—सर्वनाम्नः प्रकृतार्थत्वनियमाभावेऽपि भूय इति नो एवान्यत्रेत्येताभ्याम् एतमित्यस्य प्रकृतार्थत्वं भवेदिति नाक्षेपसिद्धिरिति—**चेत्, मैवम्**; तथा नियमाभावे भूय इत्यस्य पुनरपि किंचिदन्यद्वक्ष्यामीत्याशयोपपत्तेः, नो एवान्यदित्यस्य इतोऽन्यत्किंचित्पञ्चमपर्यायमुपक्रम्य न वक्ष्यामि अस्मिन् चतुर्थपर्याये वक्ष्यमाणेनैव समापयिष्यामीत्यर्थोपपत्तेः । **भासकत्वे सतीति** । तेजोभासकत्वे सतीत्यर्थः । तथैवोत्तरत्र शङ्कापरिहाराभ्यां तदर्थं स्पष्टीकरिष्यति । इदं च तेजोविशेषणं घनकुड्यादौ विषयतया स्वभानहेतौ व्यभिचा-रतादवस्थ्यमिति शङ्कापरिहारार्थम् । यद्यपि घनकुड्यादेः सूर्यदीपाद्यभिभावकत्वं नास्ति घनकुड्याद्यावरणे सति चक्षुः-सन्निकर्षाभावात् सूर्यदीपाद्यग्रहणोपपत्तेः; तथापि सुवर्णं तेजः तदुपष्टम्भकपार्थिवभागाभिभूतं सह स्वकीयेन शुक्लभास्वर-रूपेण न स्पष्टमुपलभ्यत इति मतानुसारेण तत्र व्यभिचारवारणार्थं तद्विशेषणम् । सूर्यादिकं न भातीत्यस्यापि बलवता तेजसाऽभिभूतं न स्पष्टं भातीत्येवार्थो न तु सर्वथैव न भातीति; प्रत्यक्षविरोधात्पूर्वापरविरोधाच्च । नहि यस्मिन्सति यत्स-र्वथैव न भाति तत्तमनुभातीति युक्तम् । न खलु यस्मिन् गच्छति यो न गच्छति स तमनुगच्छति । अतो हेतौ विशेष्य-भागस्य स्पष्टतेजोभानविरोधित्वमेवार्थ इति युक्तमुपष्टम्भकपार्थिवभागे व्यभिचारवारणार्थं **विशेषणमिति** । यदि तेजोन्त-राद्दृष्टमपि सूर्यादिप्रकाशकत्वं क्वचित्तेजसि कल्प्यते, तर्ह्येतेजसैव ब्रह्मणा सूर्यादीनामभिभवस्तदनुकरणं च कल्प्यतां

## भामती ।

दयो न ते स्वभासा प्रदीपं भासयितुमीशते । श्रूयते च—'तस्य भासा सर्वमिदं विभाति' इति । सर्वशब्दः प्रकृतसूर्याद्यपेक्षः । नचातुल्यरूपेऽनुभानमित्यनुकारः संभवति । नहि गावो वराहमनुधावन्तीति कृष्णविहङ्गानुधावनमुपपद्यते गवाम्, अपितु तादृशसूकारानुधावनम् । तस्माद्यद्यपि 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' इति ब्रह्म प्रकृतम्; तथाप्यभिभवानुकारसामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाधया तेजोधातुरवगम्यते, नतु ब्रह्म; लिङ्गानुपपत्तेः । तत्र तं तस्येति च सर्वनामपदानि प्रदर्शनीयमेवावमृक्ष्यन्ति । नच तच्छब्दः पूर्वोक्तपरामर्शीति नियमः समस्ति । नहि 'तेन रक्तं रागात्' 'तस्यापत्यम्' इत्यादौ पूर्वोक्तं किंचिदस्ति । तस्मादप्रमाणान्तरप्रतीतमपि तेजोऽन्तरमलौकिकं शब्दादुपास्यत्वेन गम्यत इति प्राप्ते उच्यते—**ब्रह्मण्येव हि तल्लिङ्गं नतु तेजस्यलौकिके । तस्माच्च तदुपास्यत्वं ब्रह्म ज्ञेयं तु गम्यते** ॥ 'तमेव भान्तम्' इत्यत्र किमलौकिकं तेजः कल्पयित्वा सूर्यादीनामनुभानमुपपाद्यताम्, किंवा 'भारूपः सत्यसंकल्पः' इति श्रुत्यन्तरप्रसिद्धेन ब्रह्मणो भानेन सूर्यादीनां भानमुपपाद्यतामिति विशये न श्रुतसंभवेऽश्रुतस्य कल्पना युज्यत इत्यप्रसिद्धं नालौकिकमुपास्यं तेजो युज्यते, अपितु श्रुतिप्रसिद्धं ब्रह्मैव ज्ञेयमिति । तदेतदाह

## वेदान्तकल्पतरुः ।

ऽभिभावकत्वं हेतुरित्यर्थः । **नन्विन्द्रियातिरिक्तस्य** तेजसः कथं तेजःप्रकाशकत्वमत आह—**श्रूयते चेति** । अस्य तेजसोऽयं विशेषः श्रुतित आश्रित इत्यर्थः । अभिभवानुकारयोरतेजसि ब्रह्मणि श्रुतिवशादाश्रयणे तु गौरवमिति पूर्ववाद्याशयः । **ननु** तस्य भासेति सर्वज्ञत्वे ब्रह्मलिङ्गे कथं तेजःशङ्का, अत आह—**सर्वशब्द इति** । द्वितीयार्धं व्याख्याति—**नचेति** । **ननु** मन्त्रस्थतच्छब्दैः प्रकृतं ब्रह्म परामृश्यतेऽत आह—**तत्रेति** । **उपरिष्टात्प्रदर्शनीयं** वक्ष्यमाणमेव **अवमृक्ष्यन्ति** तस्य परामर्शं करिष्यन्ति । रागवाचिनः शब्दात्तेनेति तृतीयसमर्थाद्रक्तम् इत्यर्थेऽणप्रत्ययो भवति । यथा काषायः पट इति । तस्येति षष्ठीसमर्थादपत्येऽण्प्रत्ययो भवति यथौपगव इति । अनयोः सूत्रयोस्तच्छब्दौ न प्रकृतार्थौ; तददर्शनात् । **ब्रह्मण्येवेति** । यदनुभानं मन्त्रे तद् ब्रह्मण्येव लिङ्गम् । तस्य भारूप इत्यादिश्रुतौ चैतन्यप्रकाशत्वसिद्धेस्तदध्यस्तसूर्यादेस्तदनुभानसंभवात् । न तेजस्येवंभूते तस्यालौकिकत्वादनिश्चितत्वाच्च वेदे । **अपिच** तेजःपक्षे

## कल्पतरुपरिमलः ।

मन्त्रस्य प्रकरणाद् ब्रह्मपरत्वावश्यंभावेन श्रुतिवशात्किंचिदसिद्धार्थाश्रयणे प्रकरणानुरोध्यर्थाश्रयणस्यैवोचितत्वादित्याशङ्क्याह—**अभिभवानुकारयोरिति** । **ननु** ब्रह्मपक्षे द्वयमप्रसिद्धं कल्पनीयं, तेजःपक्षे त्वेकमेवेति, नायं विशेषः, तेजःपक्षे तथाभूतस्य धर्मिणः तेजसोऽप्यप्रसिद्धस्य कल्पनीयत्वादित्याशङ्क्याह—**इति पूर्ववाद्याशय इति** । अयमिह तस्याशयो विवक्षितः । तेजसस्तेजःप्रकाशकत्वं नादृष्टचरं; लाघवेन तेजोविरोधिभिन्नचाक्षुषत्वावच्छिन्ने तेजोऽपेक्षाङ्गीकारात्, दीपे तत्संयुक्तस्यालोकस्यालोके परस्परसंयुक्तानेककिरणात्मके तत्तत्संयुक्तकिरणस्य च तेजसः सत्त्वाद्, अन्ततः सर्वत्र तत्तदवयवावयवसत्त्वाच्च, तद्रहितस्य त्रसरेणोर्जालान्तरागतालोक एव भानात् । एवं चाभिभवानुकारलिङ्गद्वयबलात् तेजसस्तेजःप्रकाशकत्वाविरोधाच्च तेज एव किंचिन्मन्त्रप्रतिपाद्यमिति निश्चये सति भूतयोनिब्रह्मप्रकरणं नादरणीयं; लिङ्गाभ्यां तस्य बाधादिति । **तस्य सर्वज्ञत्व इति** । **ननु**—सर्वज्ञत्वं तस्य भासेत्यस्यार्थो मा भूत्, कल्पनीयस्य तेजसः सर्वप्रकाशकत्वं तदर्थोऽस्तु, श्रुतिवशात्तस्य तथात्वाङ्गीकारोपपत्तेरिति—**चेन्न**; तथा सति तेजोन्तरस्य चाक्षुषाचाक्षुषसाधारण्येन तस्य सर्वप्रकाशकतया च कल्पनीयत्वेन सिद्धान्ते समारोपितस्य गौरवस्य पूर्वपक्षे प्रसरापत्तेरिति भावः । प्रस्तुतसूर्यादिपरामर्शिदं शब्दसमभिव्याहारात् सर्वशब्दः सङ्कुचितवृत्तिरिति परिहाराभिप्रायः । **उपरिष्टादिति** । अग्रे स्वेन स्वेन बोधयिष्यमाण एवार्थे वर्तिष्यन्त इत्यर्थेन लग्निमवाक्यान्तरेण तत्तद्वाक्यगतपदान्तरेण वा बोधयिष्यमाणे एवार्थे वर्तिष्यन्त इति । तत्र तं तस्येति तत्पदघटितवाक्यत्रयव्यतिरेकेण तत्परामर्शनीयालौकिकतेजोविषयस्य वाक्यान्तरस्य पदान्तरस्य चादर्शनात् प्रदर्शनीयमेवेति टीकाया अपि स्वस्वप्रदर्शनीय एव स्वारस्याच्च । **ननु** तच्छब्दस्य प्रकृते प्रकरिष्यमाणे प्रत्यक्षादिसन्निधापिते प्रसिद्धे चार्थे वृत्तिर्व्युत्पत्तिसिद्धा न क्वचिदपि स्वपरामर्शनीय एवार्थे पर्यवसानं दृष्टमित्याशङ्क्य तदपि दृष्टमिति दर्शयितुमुदाहृतं पाणिनिसूत्रद्वयं व्याचष्टे—**रागवाचिन इति** । **न प्रकृतार्थावित्युपलक्षणं** नापि प्रकरिष्यमाणार्थौ न मानान्तरसन्निधापितार्थौ नच प्रसिद्धार्थावित्यपि द्रष्टव्यम् । **नन्वनुभानं** ब्रह्मण्येव लिङ्गम् । ब्रह्मणि भासमाने तदध्यस्तसूर्यादेस्तदनुभानसंभवादित्येतदयुक्तम्; सूर्यादिषु ब्रह्मभानान्यभानाभावात्, गच्छन्तमनुगच्छतीत्यत्र गमनभेदे सत्येव ह्यनुशब्दो दृष्टः । **उच्यते**; गच्छन्तमनुगच्छतीत्यत्र तद्गमनानुकारिगमनान्तरमिवात्र तद्भानानुकारि भानान्तरं नोक्तं; तमेव भान्तमिति तस्यैव भानवत्त्वोक्तेः, नहि यत्र क्रियाभेदोऽस्ति तत्रैवमवधारणं युज्यते । युज्यते तु क्रियाभेदाभावस्थले वह्निमेव दहन्तं तप्तायःपिण्डोऽनुदहतीति । तथाच भारूपे ब्रह्मणि अध्यस्तानां सूर्यादीनां तत्सत्तयैव सत्त्ववत्तद्भानेनैव भानवत्त्वेऽप्याश्रयभेदेन क्रियाभेदं कल्पयित्वा अनुभातीति व्यपदेशः । **अपिच तेजःपक्ष इति** ।

भाति सर्वं तस्य भासा सर्वमिदं विभाति' ( मु० २।२।१० ) इति समामनन्ति। यत्र यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति स किं तेजोधातुः कश्चिदुत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत्प्राप्तम्। कुतः? तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात्। तेजःस्वभावकं हि चन्द्रतारकादि तेजःस्वभावक एव सूर्ये भासमानेऽहनि न भासत इति प्रसिद्धम्। तथा सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते सोऽपि तेजःस्वभाव एव कश्चिदित्यवगम्यते। अनुभानमपि तेजःस्वभावक एवोपपद्यते; समानस्वभावकेष्वनुकारदर्शनात्, गच्छन्तमनुगच्छतीतिवत्। तस्मात्तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः—प्राज्ञ एवात्मा भवितुमर्हति। कस्मात्? अनुकृतेः। अनुकरणमनुकृतिः। यदेतत् 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभानं, तत्प्राज्ञपरिग्रहेऽवकल्पते। 'भारूपः सत्यसंकल्पः' ( छा० ३।१४।२ ) इति हि प्राज्ञमात्मानमामनन्ति, न तु तेजोधातुं कंचित्सूर्याद्योऽनुभान्तीति प्रसिद्धम्। समत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षास्ति यं भान्तमनुभायुः। नहि प्रदीपः प्रदीपान्तरमनुभाति। यदप्युक्तं, समानस्वभावकेष्वनुकारो दृश्यत इति। नायमेकान्तो नियमः। भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते। यथा सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति, भौमं वा रजो वायुं वहन्तमनुवहतीति। अनुकृतेरित्यनुभानमसूसुचत्। तस्य चेति चतुर्थं पादमस्य श्लोकस्य सूचयति। 'तस्य भासा सर्वमिदं विभाति' इति तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति। 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' ( बृ० ४।४।१६ ) इति हि प्राज्ञमात्मानमामनन्ति। तेजोन्तरेण सूर्यादितेजो विभातीत्यप्रसिद्धं विरुद्धं च, तेजोन्तरेण तेजोन्तरस्य प्रतिघातात्। अथवा—न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते। किं तर्हि? 'सर्वमिदम्' इत्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याभिव्यक्तिः सा ब्रह्मज्योतिःसत्तानिमित्ता यथा सूर्यादिज्योतिः-

## भामती।

—**प्राज्ञ एवात्मा भवितुमर्हति**। विरोधमाह—**समत्वाच्चेति**। ननु स्वप्रतिभाने सूर्यादयश्चाक्षुषं तेजोऽपेक्षन्ते। नह्यन्धेनैते दृश्यन्ते। तथा तदेव चाक्षुषं तेजो बाह्यसौर्यादितेजआप्यायितं रूपादि प्रकाशयति नानाप्यायितम्, अन्धकारेऽपि रूपदर्शनप्रसङ्गादित्यत आह—**यं भान्तमनुभायुरिति**। नहि तेजोऽन्तरस्य तेजोऽन्तरापेक्षां व्यासेधामः, किंतु तद्भानमनुभानम्। नच लोचनभानमनुभान्ति सूर्यादयः। तदिदमुक्तम्—**नहि प्रदीप इति**। पूर्वपक्षमनुभाष्य व्यभिचारमाह—**यदप्युक्तमिति**। **एतदुक्तं भवति**—यदि स्वरूपसाम्याभावमभिप्रेत्यानुकारो निराक्रियते, तदा व्यभिचारः। अथ क्रियासाम्याभावं, सोऽसिद्धः। अस्ति हि वायुरजसोः स्वरूपविसदृशयोरपि नियतदिग्देशवहनक्रियासाम्यम्। वह्न्ययःपिण्डयोस्तु यद्यपि दहनक्रिया न भिद्यते; तथापि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासादृश्यं व्याख्येयम्। तदेवमनुकृतेरिति विभज्य तस्य चेति सूत्रावयवं विभजते—**तस्य चेति चतुर्थमिति**।

## वेदान्तकल्पतरुः।

उपास्तिकल्पनाददृष्टार्थं वाक्यं स्याद्, ब्रह्मपक्षे तु प्रस्तुतस्य ज्योतिषः समर्पणाद्दृष्टार्थत्वमित्याह—**तस्मादिति**। **विरोधमाहेति**। अनपेक्षद्वारकं भास्यभासकत्वविरोधमाहेत्यर्थः। किं भानेऽनपेक्षा तेजसः, उत भासकत्वे इति विकल्प्य क्रमेण दूषयित्वा समाधत्ते—**नहीति**। भासमानतेजसा न तेजो भातीति नियमाद्विरोध इत्यर्थः। आदित्यादेर्ब्रह्मानुकाराभावः किं स्वतो विसदृशत्वादुत तदीयक्रियया समानक्रियानाश्रयत्वात्। **आद्यमनूद्य** प्रत्याह—**यदीति**। धूलिपवनयोरयोदहनयोश्च व्यभिचार इत्यर्थः। **द्वितीयमनूद्य** दूषयति—**अथेति**। ब्रह्मणः सूर्यादेश्च क्रियासाम्याभावो हेतुना साध्यः, तत्र यदि स्वरूपसाम्याभावो हेतुत्वेनोच्येत, तदा यत्र स्वरूपसाम्याभावस्तत्र क्रियासाम्याभावोऽसिद्ध इत्यर्थः। **नन्वयसि** न दहनक्रिया कथं वह्नितुल्यत्वमत आह—**वह्नीति**। एकैव दहनक्रिया वह्नौ स्वतः, सैव तत्संश्लेषादयसि

## कल्पतरुपरिमलः।

तस्मिन् पक्षे प्रसिद्धविलक्षणं किंचित्तेजस्त्वावत्कल्पनीयम्। तत्प्रतिपादनवैयर्थ्याय तदुपासनविधिस्तत्फलं च कल्पनीयमित्यतिगौरवं ब्रह्मप्रकरणबाधश्चेत्येते दोषाः स्युरित्यर्थः। **भासमानतेजसेति**। प्रभान्तर्गतकिरणानां तत्संवलितकिरणान्तरसंयोगेन भानं चेत्, यत्र संयोगस्तत्रैव भानं स्याद्; घटादिष्वालोकसंयुक्तप्रदेश एव भानदर्शनात्, न चैतदस्ति; आलोकावयवान्तरासंयुक्तस्य तमःसंनिकृष्टस्य दीपालोकावध्यवयवभागस्यापि भानात्, तस्माद् भासमानतेजसा न सूर्यादितेजो भाति, किंतु स्वत एवेति भावः। **क्रियासाम्याभावोऽसिद्ध इति**। वराहं गावोऽनुधावन्तीत्यत्र लघु-

**सत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिस्तद्वत् । 'न तत्र सूर्यो भाति' इति च तत्रशब्दमाहरन्प्रकृतग्रहणं दर्शयति । प्रकृतं च ब्रह्म 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्' ( मु० २।२।५ ) इत्यादिना । अनन्तरं च 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः' इति । कथं तज्ज्योतिषां ज्योतिरित्यत इदमुत्थितम्—'न तत्र सूर्यो भाति' इति । यदप्युक्तं सूर्यादीनां तेजसां भानप्रतिषेधस्तेजोधातावेवान्यस्मिन्नवकल्पते सूर्य इवेतरेषामिति । तत्र तु स एव तेजोधातुरन्यो न संभवतीत्युपपादितम् । ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पते । यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते, ब्रह्म तु**

## भामती ।

ज्योतिषां सूर्यादीनां ब्रह्म ज्योतिः प्रकाशकमित्यर्थः । तेजोऽन्तरेणानिन्द्रियभावमापन्नेन सूर्यादितेजो विभातीत्यप्रसिद्धम् ॥ सर्वशब्दस्य हि स्वरसतो निःशेषाभिधानं वृत्तिः । सा तेजोधातावलौकिके रूपमात्रप्रकाशके संकुचेत्, ब्रह्मणि तु निःशेषजगदवभासके न सर्वशब्दस्य वृत्तिः संकुचतीति—**तत्र शब्दमाहरन्निति** । सर्वत्र खल्वयं तत्रशब्दः पूर्वोक्तपरामर्शी । 'तेन रक्तं रागात्' इत्यादावपि प्रकृतेः परस्मिन्प्रत्ययेऽर्थभेदेऽन्वाख्यायमाने प्रातिपदिकप्रकृत्यर्थस्य पूर्ववृत्तत्वमस्तीति तेनेति तत्परामर्शान्न व्यभिचारः । तथाच सर्वनामश्रुतिरेव ब्रह्मोपस्थापयति । तेन भवतु नाम प्रकरणाल्लिङ्गं बलीयः, श्रुतिस्तु लिङ्गाद्बलीयसीति श्रौतमिह ब्रह्मैव गम्यत इति । **अपिचापेक्षितानपेक्षिताभिधानयोरपेक्षिताभिधानं युक्तं**, दृष्टार्थत्वादित्याह—**अनन्तरं च हिरण्मये परे कोश इति** । अस्मिन्वाक्ये ज्योतिषां ज्योतिरित्युक्तं तत्र कथं तज्ज्योतिषां ज्योतिरित्यपेक्षायामिदमुपतिष्ठते—**न तत्र सूर्य इति** । स्वातन्त्र्येण तूच्यमानेऽनपेक्षितं स्याददृष्टार्थमिति । **ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पत इति** । **अयमभिप्रायः**—'न तत्र सूर्यो भाति'

## वेदान्तकल्पतरुः ।

समारोपिता अतः क्रियासाम्यमित्यर्थः । ज्योतिषां ज्योतिरिति भाष्योदाहृतश्रुतिं व्याचष्टे—**ज्योतिषामिति** । तेजोन्तरेण तु सूर्यादितेजो विभातीत्यप्रसिद्धमिति भाष्ये इन्द्रियत्वमनापन्नेनेति विशेषणीयम्, इन्द्रियेण सूर्यादिभानादित्याह—**अनिन्द्रियभावमिति** । अथवा न सूर्यादीनामिति भाष्यं व्याचष्टे—**सर्वशब्दस्य हीति** । अलौकिके तेजोधातौ स्वीकृते सति भाष्यवाचिसर्वशब्दस्य वृत्ती रूपरूपिरूपैकार्थसमवायिषु संकुचेदलौकिकतेजसो रूपादिषु मध्ये रूपमात्रप्रकाशकत्वादित्यर्थः । **तेन रक्तमिति** । प्रकृतेः परो यः प्रत्ययस्तस्मिन्योऽर्थविशेषस्तस्मिन्नन्वाख्यायमाने प्रत्ययाधस्तनप्रकृत्यर्थस्याखि प्रस्तुतत्वमित्यर्थः । एवमनुकारलिङ्गब्रह्मणि सामर्थ्यभानप्रतिषेधं समर्थयते—**न तत्रेति** । णिजध्याहारप्रसङ्गं परिहरति—

## कल्पतरुपरिमलः ।

धावन्तीत्यनेन बाधितस्वार्थेन मुखं चन्द्रमनुकरोतीत्यत्रानुकरोतीत्यनेनेव स्वरूपसाम्यमुक्तमिति सूकरार्थग्रहणम् । इहानुभातीति क्रियासाम्योक्तौ तन्निर्वाहायानपेक्षितं स्वरूपसाम्यं नादरणीयमिति भावः । **रूपैकार्थसमवायिनः** चक्षुर्योग्याः संख्यादयः । **संकुचेदिति** । सिद्धान्ते तु न संकोचः; इदंशब्दस्याप्यसंकोचेन प्रत्यक्षादिसन्निधापितसकलवस्तुपरत्वोपपत्तेरिति भावः । **रूपादिष्विति** । पञ्चस्विति शेषः । **प्रकृतेः पर इति** । **ननु** सूत्रव्याख्यानस्य पाश्चात्यत्वेन **ततः** प्रकृत्यर्थविशेषलाभस्य नास्ति पूर्वप्रवृत्तत्वं, तथात्वे वाऽभिभवादिलिङ्गमालोच्य सूर्याद्यभिभावकमलौकिकं तेजोन्तरमस्य मन्त्रस्य प्रतिपाद्यमिति व्याख्याने तेजसः प्रकृतत्वमस्तीति स्यात् । **मैवम्**; 'तेन रक्तं रागा'दित्यादिसूत्रैः सिद्धशब्दान्वाख्यानं कुर्वतः पाणिनेः कौसुम्भमौपमन्यव इत्यादिसिद्धशब्दरूपाण्युदाहरणानि, तद्व्याख्यानरूपाणि विग्रहवाक्यानि च मनसि विपरिवर्तन्त इति विग्रहवाक्यस्थैः कुसुम्भादिशब्दैस्तत्तदर्थस्य प्रस्तुतत्वमस्तीति तात्पर्यात् । **यद्वा**—तेन रक्तमिति सूत्रे रञ्जकद्रव्यवाचिना प्रकृतिसमर्पकेण रागशब्देन रञ्जकद्रव्यविशेषवाचकाः कुसुम्भहरिद्रादिशब्दा लक्षणीया इति तैः प्रकृत्यर्थविशेषलाभः । 'तस्यापत्य'मिति सूत्रे 'ङ्याप्प्रातिपदिका'दिति सूत्रानुवृत्तस्य प्रकृतिसमर्पकस्य प्रातिपदिकशब्दस्यापत्यार्थप्रत्ययप्रकृतित्वयोग्योपमन्व्वादिप्रातिपदिकविशेषपर्यवसानात् तैः प्रकृत्यर्थलाभः । रागप्रातिपदिकशब्दयोः समानवाक्योपात्तत्वेऽप्यर्थगत्या पूर्ववृत्तत्वं विवक्षितम् । **वस्तुतस्तु**—द्विविधाः सर्वनामशब्दाः समभिव्याहृतपराः व्यवस्थितैकार्थपराश्च । 'यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमेव वशं नयेत्' ॥ तद्वति तत्प्रकारकज्ञानं प्रमेत्यादिषु । ये व्यवस्थितैकार्थशून्यास्ते तत्तदभिमतार्थपरव्याख्यानशब्दसमर्पितानर्थविशेषानासाद्य निर्वृण्वन्ति । तेन रक्तमित्यादिशब्दा अपि तथाभूता इति न तेषां पूर्वप्रकृताद्यपेक्षा । इह तु मन्त्रे तच्छब्दाः स तेषां प्रतिशुश्रावेत्यादिश्लोकगता इव व्यवस्थितैकार्थपरा इति तेषां प्रकृताद्यपेक्षाऽवश्यंभाविनीति तात्पर्यम् । **ननु** दहरविद्यायां 'तं चेद् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुर' इत्यादिवाक्ये तमित्यस्याचार्यरूपव्यवस्थितैकार्थपरस्यापि प्रकृताद्यपेक्षा न दृष्टा । **नैष दोषः**; तत्राथ य एषसंप्रसाद इत्यादिवाक्ये एष आत्मेति होवाचेत्यत्रोवाचेत्यस्य कर्तृविशेषाकाङ्क्षायामौचित्यादाचार्य इत्यध्याहरणीयम् । तस्य चोवाचेत्यस्य

नान्येन ज्योतिषोपलभ्यते; स्वयंज्योतिःस्वरूपत्वात्, येन सूर्यादयस्तस्मिन्भायुः । ब्रह्म ह्यन्यद्व्यनक्ति, न तु ब्रह्मान्येन व्यज्यते; 'आत्मनैवायं ज्योतिषास्ते' ( बृ० ४।३।६ ) 'अगृह्यो नहि गृह्यते' ( बृ० ४।२।४ ) इत्यादिश्रुतिभ्यः ॥ २२ ॥

**अपिच स्मर्यते ॥ २३ ॥**

अपिचेदृग्रूपत्वं प्राज्ञस्यैवात्मनः स्मर्यते भगवद्गीतासु—'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' इति, 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' ( १५।६।१२ ) इति च ॥ २३ ॥ इति षष्ठं अनुकृत्यधिकरणम् ॥

( ७ अधिकरणम् ) **शब्दादेव प्रमितः ॥ २४ ॥**

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति श्रूयते । तथा 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत्' (का० २।४।१३) इति च तत्र

## भामती ।

इति नेयं सतिसप्तमी, यतः सूर्यादीनां तस्मिन् सत्यभिभवः प्रतीयेत, अपितु विषयसप्तमी । तेन न तत्र ब्रह्मणि प्रकाशयितव्ये सूर्यादयः प्रकाशकतया भान्ति, किंतु ब्रह्मैव सूर्यादिषु प्रकाशयितव्येषु प्रकाशकत्वेन भाति । तच्च स्वयंप्रकाशम्, **अगृह्यो नहि गृह्यत इत्यादिश्रुतिभ्य इति** ॥ २२ ॥ **न तद्भासयत इति** ब्रह्मणोऽग्राह्यत्वमुक्तम् । **यदादित्यगतम्** इत्यनेन तस्यैव ग्राहकत्वमुक्तमिति ॥ २३ ॥ **इति षष्ठमनुकृत्यधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

**तेनेति । तत्रेति ।** विषये निर्दिष्टे सूर्यादेर्भानं प्रकाशकतयैव प्राप्नोति ततः प्रकाशकतयेति नाध्याहाराभिप्रायमपि तु व्याख्या । **अगृह्य** इति प्रतिज्ञाय नहि गृह्यत इति हि शब्देनाग्राह्यत्वहेतुसाधकं दृग्रूपत्वं श्रुत्या सूचितम् । **न तत्रेति ।** न तस्मिन् ब्रह्मणि भास्ये सूर्यादयो भासकत्वेन न भान्ति । कुतोऽयमस्मद्गोचरोऽग्निर्भाति, किं बहुना ? सर्वं जगत्तमेव परमेश्वरं स्वतो भान्तमनुभाति । किं ब्रह्मभानादन्यज्जडभानं यथा दीपप्रकाशादन्यद् घटज्ञानं नेत्याह—**तस्य भासेति ।** यथाग्निसंश्लेषादयो दहतीत्युच्यते, एवमधिष्ठानब्रह्मभासैव जगद्विभाति, नान्यज्जगद्भानमित्यर्थः ॥ २३ ॥ २४ ॥ **इति षष्ठमनुकृत्यधिकरणम् ॥**

## कल्पतरुपरिमलः ।

ब्रूयादित्यर्थो वाच्यः । यथा 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्याद्याथर्वणमन्त्रसंदर्भे तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ॥ येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥' इत्यत्र । ततश्च तंचेद्ब्रूयुरित्याक्षेपवाक्योपक्रमे स ब्रूयादिति समाधानवाक्योपक्रमे च स एवाचार्यः परामर्शनीयो भविष्यति । णिजध्याहारं परिजिहीर्षता कथं प्रकाशकत्वेनेत्यध्याहृतमिति शङ्कां वारयति—**विषये इति ।** विषयनिर्देशसामर्थ्याद्विषयित्वेन न भातीति लभ्यत इत्यर्थः । **ननु** विषयित्वेन न भातीति विशिष्टनिषेधस्य शाब्दत्वसिद्ध्यर्थं विषयित्वेनेति शब्दोऽध्याहर्तव्यः । **सत्यम्;** विशेष्यमात्रनिषेधे प्रत्यक्षविरोधः स्यादिति किंचिद्विशेषणाध्याहारावश्यम्भावे कारकसप्तम्यर्थविषयत्वाक्षिप्ततया विषयित्वस्य बुद्धिस्थत्वात् तद्वाचक एवाध्याहर्तुमुचितो न स्पष्टत्वादिवाचकः । नचाप्रसक्तप्रतिषेधदोषः; रूपादिमत्त्वभ्रान्त्या प्रसक्तस्य सूर्यादिप्रकाश्यत्वस्य "न चक्षुषा पश्यति कश्चिदेन"मिति चाक्षुषत्वस्येव निषेधोपपत्तेः । **ननु** "कुतोऽयमग्नि"रिति कैमुतिकन्यायानन्वयः, **यदतिसूक्ष्मं** वस्तु सूर्यादयोऽपि प्रकाशयितुं नेशते तद्दीपः प्रकाशयिष्यतीति का प्रत्याशेत्येवं सौक्ष्म्यातिशयस्तुत्यर्थतयाऽन्वयोपपत्तेः, प्रत्युताभिभावकत्वपक्ष एव तस्य भासेत्यादेरनन्वयः स्यात्; अभिभावकस्य प्रकाशकत्वायोगात् । तदलौकिकं सर्वप्रकाशनसमर्थं तेजोन्तरं सर्वदा सर्वत्र स्थितं चेत्, चन्द्रसूर्यदीपादीनामभावेऽपि घटादिस्फुरणं स्यात् । तस्य चन्द्रादिप्रभानुविधायित्वाङ्गीकारे चन्द्रसूर्यदीपादिप्रभासु घटादीनां तुल्यरूपः स्पष्टः प्रकाशः स्यात् । तस्य चन्द्रप्रभाद्यनुविधायिप्रकाशतारतम्यस्याप्यङ्गीकारे चन्द्रप्रभाद्यतिरेकेणानुपलभ्यमानस्य तस्य पर्यायान्तरेणाभाव एवोक्तः स्यादिति दोषाः स्युरिति द्रष्टव्यम् । अत्रानुभानस्य तेजोलिङ्गत्वं निरस्य ब्रह्मलिङ्गत्वं समर्थनीयमासीदित्यस्पष्टता ॥ **इति षष्ठमनुकृत्यधिकरणम् ॥**

१ अत्र सूत्रे २—अनुकृतेस्तस्य च २२ अपि च स्मर्यते २३ ॥

## भामती ।

### शब्दादेव प्रमितः ॥ २४ ॥

**नाञ्जसा मानभेदोऽस्ति परस्मिन्मानवर्जिते । भूतभव्येशिता जीवे नाञ्जसी तेन संशयः ॥** किमङ्गुष्ठमात्रश्रुत्यनुग्रहाय जीवोपासनापरमेतद्वाक्यमस्तु, तदनुरोधेन चेशानश्रुतिः कथंचिद्व्याख्यायताम्, आहोस्विदीशानश्रुत्यनुग्रहाय ब्रह्मपरमेतदस्तु, तदनुरोधेनाङ्गुष्ठमात्रश्रुतिः कथंचिन्नीयताम् । तत्रान्यतरस्यान्यतरानुरोधविषये प्रथमानुरोधो न्याय्य इत्यङ्गुष्ठश्रुत्यनुरोधेनेशानश्रुतिर्नेतव्या । अपिच युक्तं हृत्पुण्डरीकदहरस्थानत्वं परमात्मनः, स्थानभेदनिर्देशात् ।

## वेदान्तकल्पतरुः ।

### शब्दादेव प्रमितः ॥ २४ ॥

अत्र जीवपरयोः समानधर्मादर्शनेऽपि श्रुत्योर्विप्रतिपत्तिः संशयबीजमित्याह—**नाञ्जसेति** । परिमाणविशेषवन्मात्रवाच्यङ्गुष्ठमात्रशब्दः तद्विशेषे श्रुतिरेव । यद्यत्र परमात्मा प्रतिपाद्यः, तर्हि परिमाणविशेषो न मुख्यः स्याज्जीवपक्षे ईशानश्रुतिर्न मुख्या; अत एकत्र गौणता, सा च क्वेत्यज्ञानात्संशय इत्यर्थः । प्राक् सति विषये च साधारणसप्तमी न तद्भासयत इति विषयत्वनिषेधकस्मृत्या विषये व्यवस्थापिता, तद्वत्परिमाणमपि जैवमैश्वरं वेति संशयेऽङ्गुष्ठमात्रं निश्चकर्षेति निर्णीतार्थस्मृत्या जैवमिति प्रत्यवस्थानात्संगतिः । पूर्वपक्षमाह—**प्रथमेति** । दहरविचारेणापुनरुक्तिमाह—**अपिचेति** । शङ्कानिरासः समुच्चयार्थः । परमात्मनोऽल्पत्वे हृत्पुण्डरीकस्थानत्वं कारणं युक्तं, स्थानविशेषस्य दहरं पुण्डरीकं वेश्मेति निर्देशादिति योजना । उपाधिं संकीर्त्याल्पत्वोक्तेरौपाधिकं तत्स्वतस्त्वनन्तः पर इति सिध्यत्वित्यर्थः । स्वो यो भविता स

## कल्पतरुपरिमलः ।

### शब्दादेव प्रमितः ॥ २४ ॥

**परिमाणविशेषवन्मात्रवाचीति** । परिमाणविशेषवानङ्गुष्ठपरिमाणवान् । अङ्गुष्ठमात्र इत्यत्र मात्रशब्दः प्रमाणवाची प्रत्ययः "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति सूत्रेणानुशिष्टः । **तन्मात्रवाची** तत्सामान्यवाची । **तद्विशेषे श्रुतिरेवेति** । **ननु** दहरशब्दवदङ्गुष्ठमात्रशब्दोऽल्पपरिमाणरूपे जीवलिङ्ग एव श्रुतः, नतु तद्वति जीवरूपे धर्मिविशेषे । यद्येवं भूतभव्यशब्दसमभिव्याहृत ईशानशब्दोऽपि भूतभव्येशितृत्वरूपब्रह्मलिङ्ग एव श्रुतिर्न ब्रह्मणीति तुल्यम्, योगरूढिमतः शब्दस्य यौगिकार्थसंबन्धिनिर्देशे रूढ्यनुन्मेषस्य पद्मानि यस्याग्रसरोरुहाणीत्यादिषु दर्शनादिति भावः । यदि त्वीशानशब्दः श्रुतिरेवाङ्गुष्ठमात्र इति लिङ्गं, तदा प्राथमिकलिङ्गस्य पाश्चात्यश्रुतेश्च बलाबलानवधारणात्संशय इत्याशयेनाह—**यद्यत्रेति** । **शङ्कानिरास इति** । अङ्गुष्ठमात्रश्रुत्या सह जीवग्रहणे युक्त्यन्तरमपि चेत्यनेन समुच्चेयं न भवति; तत्र युक्त्यन्तराकथनात्, किं त्वङ्गुष्ठमात्रश्रुतेरेव ब्रह्मणि संभवशङ्कानिरासः समुच्चेय इत्यर्थः । परमात्मनो हृत्पुण्डरीकस्थानत्वस्य युक्तत्वोपन्यासः प्रकृतानुपयोगीत्याशङ्क्य तत्परमात्मनोऽल्पत्वे कारणमित्येतद्युक्तमित्यध्याहृत्य व्याचष्टे—**परमात्मन इति** । हृत्पुण्डरीकोपाध्यवच्छेदकारणकमल्पत्वं ब्रह्मणो युक्तं चेत्तदेवेहाप्यङ्गुष्ठमात्रशब्देनोच्यतामित्याशङ्क्याह—**उपाधिं संकीर्त्येति** । उपाधिसंकीर्तनपूर्वकमुच्यमानमल्पत्वं स्वाभाविकानन्तत्वापारत्वाविरोधि भवति, इह तु तत्कीर्तनं विनैवाल्पत्वमुच्यत इत्यस्य ब्रह्मविषयतायामिदं स्वाभाविकानन्तत्वादिना विरुध्येतेति भावः । **नन्व**प्रयोजकमिदं यदुपाधिसंकीर्तन एवौपाधिकं सिध्यतीति; तदभावेऽप्यन्तवत्त्वादिश्रुत्यनुसारेणौपाधिकत्वसिद्ध्युपपत्तेः, अन्यथा अणोरणीयान्महतो महीयानित्यादिश्रुतिषु का गतिः ? **किंचैवं** सत्यनियतपरिमाणान्तःकरणोपाधिकजीवविषयत्वमप्यस्याङ्गुष्ठमात्रत्वश्रवणस्य न सिद्ध्येद्, हृदयोपाधिसंकीर्तनाभावात्, यदि तस्य स्वोपाध्यन्तःकरणद्वारा प्रायिकं हृदयस्थत्वं प्रसिद्धं न वक्तव्यं, तर्हीश्वरस्य नियतहृदयस्थत्वं श्रौतहृदयशब्दनिरुक्त्या "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती"ति स्मृत्या च प्रतिपादितं प्रसिद्धतरमिति सुतरां न वक्तव्यम् । न च वाच्यं ब्रह्मणो हृदये अतिसूक्ष्मत्वस्य दहरशाण्डिल्यविद्ययोरुक्तत्वात्तस्य तदुपाधिकमङ्गुष्ठमात्रत्वं न संभवतीति; तर्हि जीवस्याप्याराग्रमात्रत्वेन वालाग्रशतभागशतांशमितत्वेन च श्रुतस्य तन्न संभवति । अथोच्येत श्वेताश्वतरे "प्राणाधिपः संचरते स्वकर्मभि"रिति जीवं प्रकृत्य "अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो य इत्याहत्य तस्याङ्गुष्ठमात्रत्वं श्रुतं भारतेऽपि दृष्टम् । अतस्तस्याराग्रमात्रत्वादिश्रवणं सूक्ष्मसूक्ष्मतरनाडीसंचाराद्युपाधिकं कल्प्यमिति, तर्हीश्वरस्यापि "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु"गिति तैत्तिरीयमन्त्रे "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदि संनिविष्टः । हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ती"ति श्वेताश्वतरमन्त्रे चाङ्गुष्ठमात्रत्वमाहत्य श्रुतमिति दहरशाण्डिल्यविद्ययोरुक्तमिति सौक्ष्म्यं हृदयाग्रसुषिरोपाधिकं कल्प्यमिति तुल्यम् । तस्माद्वक्तव्यमिदं केन विशेषेणाङ्गुष्ठमात्रत्वश्रवणस्य ब्रह्मविषयत्वे सति उपाधिसंकीर्तना-

योऽयमङ्गुष्ठमात्रः पुरुषः श्रूयते स किं विज्ञानात्मा किंवा परमात्मेति संशयः। तत्र परिमाणोपदेशात्तावद्विज्ञानात्मेति प्राप्तम् । नह्यनन्तायामविस्तारस्य परमात्मनोऽङ्गुष्ठपरिमाणमुपपद्यते। विज्ञानात्मनस्तूपाधिमत्त्वात्संभवति कयाचित्कल्पनयाङ्गुष्ठमात्रत्वम्। स्मृतेश्च—'अथ सत्यवतः कायात्पाशबद्धं वशं गतम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्॥' ( म० भा० ३।२९७।१७ ) इति। नहि परमेश्वरो बलाद्यमेन निष्क्रष्टुं शक्यः। तेन तत्र संसार्यङ्गुष्ठमात्रो निश्चितः स एवेहापीत्येवं प्राप्ते ब्रूमः—परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति। कस्मात् ? शब्दात्, 'ईशानो भूतभव्यस्य' इति। नह्यन्यः परमेश्वराद्भूतभव्यस्य निरङ्कुशमीशिता। 'एतद्वै तत्' इति च प्रकृतं पृष्टमिहानुसंदधाति। एतद्वै तद्यत्पृष्टं ब्रह्मेत्यर्थः। पृष्टं चेह ब्रह्म 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' ( का० १।२।१४ ) इति। शब्दादेवेत्यभिधानश्रुतेरेवेशान इति परमेश्वरोऽयं गम्यत इत्यर्थः॥ २४॥ कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इति? अत्र ब्रूमः—

---

## भामती।

तद्धि तस्योपलब्धिस्थानं, शालग्राम इव कमलनाभस्य भगवतः। नच तथेहाङ्गुष्ठमात्रश्रुत्या स्थानभेदो निर्दिष्टः; परिमाणमात्रनिर्देशात्। नच 'मध्य आत्मनि' इत्यत्र स्थानभेदोऽवगम्यते। आत्मशब्दो ह्ययं 'स्वभाववचनो वा जीववचनो वा ब्रह्मवचनो वा स्यात्। तत्र स्वभावस्य स्वभवित्रधीननिरूपणतया स्वस्य च भवितुरनिर्देशान्न ज्ञायते कस्य मध्य इति। नच जीवपरयोरस्ति मध्यमञ्जसेति नैष स्थाननिर्देशो विस्पष्टः। स्पष्टस्तु परिमाणनिर्देशः। परिमाणभेदश्च परस्मिन्न संभवतीति जीवात्मैवाङ्गुष्ठमात्रः। स खल्वन्तःकरणाद्युपाधिकल्पितो भागः परमात्मनः। अन्तःकरणं च प्रायेण हृत्कमलकोशस्थानं, हृत्कमलकोशश्च मनुष्याणामङ्गुष्ठमात्र इति तदवच्छिन्नो जीवात्माप्यङ्गुष्ठमात्रः, नभ इव वंशपर्वावच्छिन्नमरत्निमात्रम्। **अपिच** जीवात्मनः स्पष्टमङ्गुष्ठमात्रत्वं स्मर्यते—'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति। नहि सर्वेशस्य ब्रह्मणो यमेन बलान्निष्कर्षः कल्पते। यमो हि जगौ—'हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः' इति। तेनाङ्गुष्ठमात्रत्वस्य जीवे निश्चयादापेक्षिकं किंचिद्भूतभव्यं प्रति जीवस्येशानत्वं व्याख्येयम्। **'एतद्वै तत्'** इति च प्रत्यक्षजीवरूपं परामृशति। तस्माज्जीवात्मैवात्रोपास्य इति प्राप्तम्। एवं प्राप्तेऽभिधीयते—**प्रश्नोत्तरत्वादीशानश्रवणस्याविशेषतः। जीवस्य ब्रह्मरूपत्वप्रत्यायनपरं वचः॥** इह हि भूतभव्यमात्रं प्रति निरङ्कुशमीशानत्वं प्रतीयते। प्राक् पृष्टं चात्र ब्रह्म 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादिना। तदनन्तरस्य संदर्भस्य तत्प्रतिवचनतोचितेति 'एतद्वै तत्' इति ब्रह्माभिधानं युक्तम्। तथा चाङ्गुष्ठमात्रतया यद्यपि जीवोऽवगम्यते; तथापि न तत्परमेतद्वाक्यं, किंत्वङ्गुष्ठमात्रस्य जीवस्य ब्रह्मरूपताप्रतिपादनपरम्। एवं निरङ्कुशमीशानत्वं न संकोचयितव्यम्। नच ब्रह्मप्रश्नोत्तरता हातव्या। तेन यथा 'तत्त्वमसि' इति विज्ञानात्मनस्त्वंपदार्थस्य तदिति परमात्मनैकत्वं प्रतिपाद्यते, तथेहाप्यङ्गुष्ठपरिमितस्य विज्ञानात्मन ईशानश्रुत्या ब्रह्मभावः प्रति-

## वेदान्तकल्पतरुः।

स्वभविता तदनिर्णयात्स्वभावानिर्णयः। जीवपरयोर्निरंशत्वान्मध्याभावः। पूर्वपक्षे तु मध्ये उदासीने स्वरूप इति मध्यात्मशब्दौ नेयौ। समुष्टिः सकनिष्ठिकः करः **अरत्निः। एतद्वै तदिति।** येयं प्रेत इति जीवस्यापि प्रकृतत्वात्तच्छब्दोपपत्तिरपि द्रष्टव्या। यदवाद्यङ्गुष्ठवाक्ये जीवोपक्रमादस्य तत्परत्वमिति। तन्न; ततोऽपि प्राक् परस्य प्रस्तुतत्वात्तत्सापेक्षत्वाच्चास्य वाक्यस्येत्याह—**प्रश्नेति।** अङ्गुष्ठवाक्यस्यान्यत्र धर्मादिति प्रस्तुतपरमात्मप्रश्नोत्तरत्वात्प्राथम्यमसिद्धमित्यर्थः। ब्रह्मणः कथं तर्हि परिमाणनिर्देशोऽत आह—**जीवस्येति।** उपहितपरिमितजीवानुवादेन विरुद्धांशमपहाय तस्येश्वरैक्यपरं वाक्य-

## कल्पतरुपरिमलः।

पेक्षा ? न जीवविषयत्व इत्यभ्युपगतमिति, **उच्यते;** ब्रह्मविषयमङ्गुष्ठमात्रत्वश्रवणमुपाधिसंकीर्तननियतं दृष्टम्, जीवविषयं तु तत्संकीर्तनरहितमपि। अत उपाधिसंकीर्तनरहितमिदं जीवविषयमेव भवितुमर्हतीत्यभ्युपगतम्। स्वस्य भवितुरनिर्देशे तदनिर्णयस्य स्वभावानिर्णयपर्यवसानेन प्रकृतोपयोगमाह—**स्वो यो भवितेति। उदासीने स्वरूपे इति।** उदासीनस्वभावो भवतीत्यर्थः। **सकनिष्ठिक इति।** मुक्तकनिष्ठिक इत्यर्थः। **नन्वे**तद्वै तदिति तच्छब्दो"ऽन्यत्र धर्मा"दिति प्रकृतं ब्रह्म परामृशेदित्याशङ्क्य पूर्वपक्षे तत्संगमयति—**एतदिति। अन्यत्र धर्मादिति। प्रस्तुतेति।** येयं प्रेते इति प्रश्नस्य अन्यत्र धर्मादिति पुनः प्रवर्तने परमात्मविषयतया विवृतत्वात्तदुत्तरगतस्याङ्गुष्ठवाक्यस्य प्रतिपिपादयिषितजीवाभिन्नपरमात्मविषयत्वे संभवति केवलजीवपर्यवसानकल्पनं न युक्तमिति भावः॥ २४॥ **ननु** सर्वगतस्यापि ब्रह्मण इत्यादिभाष्यवाक्यं

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते । आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वम् । नह्यञ्जसातिमात्रस्य परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यते । नचान्यः परमात्मनः इह ग्रहणमर्हतीशानशब्दादिभ्य इत्युक्तम् । ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यङ्गुष्ठमात्रत्वं नोपपद्यत इत्यत उत्तरमुच्यते—मनुष्याधिकारत्वादिति । शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति, शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनादिशास्त्राच्चेति वर्णितमेतदधिकारलक्षणे ( जै० ६।१ ) । मनुष्याणां च नियतपरिमाणः कायः । औचित्येन नियतपरिमाणमेव चैषामङ्गुष्ठमात्रं हृदयम् । अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः । यदप्युक्तं—परिमाणोपदेशात्स्मृतेश्च संसार्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति, तत्प्रत्युच्यते—'स आत्मा तत्त्वमसि' इत्यादिवत्संसा-

### भामती ।

पाद्य इति युक्तम् ॥ २४ ॥ **सर्वगतस्यापि परब्रह्मणो हृदयेऽवस्थानमपेक्ष्येति** जीवाभिप्रायम् । **नचान्यः परमात्मन इह ग्रहणमर्हतीति** न जीवपरमेतद्वाक्यमित्यर्थः । **मनुष्यानेवेति** । त्रैवर्णिकानेव । **अर्थित्वादिति** अन्तःसंज्ञानां मोक्षमाणानां च काम्येषु कर्मस्वधिकारं निषेधति । **शक्तत्वादिति** तिर्यग्देवर्षीणामशक्तानामधिकारं निवर्तयति । **उपनयनादिशास्त्राच्चेति** शूद्राणामनधिकारितां दर्शयति । **यदप्युक्तं परिमाणोपदेशात्स्मृतेश्चेति** । यद्येतत्परमात्मपरं, किमिति तर्हि जीव इहोच्यते ? **ननु** परमात्मैवोच्यताम् । उच्यते च जीवः, तस्माज्जीवपरमेवेति भावः । परिहरति—**तत्प्रत्युच्यत इति** । जीवस्य हि

### वेदान्तकल्पतरुः ।

मित्यर्थः ॥ २४ ॥ ब्रह्मणः परिमाणोपपादनमफलमुपाधिपरिमितजीवस्य ब्रह्मत्वबोधित्वाद्वाक्यस्येत्याशङ्क्याह—**जीवाभिप्रायमिति** । जीवभावापन्नब्रह्माभिप्रायमित्यर्थः । जीवनिर्देशवारणमिह वाक्ये न क्रियते, तथा सत्यनुवादाभावप्रसङ्गादित्याह—**न जीवपरमिति** । मनुष्यग्रहणं शूद्रादौ मातिप्रसाङ्क्षीदिति संकोचयति—**त्रैवर्णिकानिति** । अन्तःसंज्ञानां स्थावराणां मोक्षमिच्छतां चानर्थित्वात्कर्मण्यनधिकारः । काम्यग्रहणेन शुद्ध्यर्थं नित्येषु कस्यचिन्मुमुक्षोरस्त्यधिकार इति सूचयति । तिरश्चां वेदार्थज्ञानादिसामग्र्यभावेनाशक्तत्वम् । देवानां स्वदेवत्ये कर्मणि आत्मोद्देशेन स्वकीयस्य त्यागायोगादशक्तिः । ऋषीणाम् आर्षेयवरणे ऋष्यन्तराभावादसामर्थ्यम् । षष्ठे हि फलार्थे कर्मणि सुखकामस्य ( जै. अ. ६ पा. १ सू. ४–५ । २५–३८ )तिर्यगादेरप्यधिकारः स्वर्गकामश्रुतेरविशेषाच्चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्राप्ते सिद्धान्तितम् । त्रयाणामेवाधिकारः । वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति तेषामेवाग्निसंबन्धश्रवणादिति । सिद्धान्तिनाप्यङ्गुष्ठमात्रसंसार्यनुवादाभ्युपगमात्संसार्येवायमङ्गुष्ठमात्र इति भाष्ये इष्टप्रसङ्गतामाशङ्क्याह—**यद्येतदिति** ।

### कल्पतरुपरिमलः ।

यदि जीवाभिप्रायं, तर्हि भाष्यगतस्य ब्रह्मशब्दस्य किं जीवे लक्षणा ? नेत्याह—**जीवभावापन्नेति** । ब्रह्मैव जीवभावेन वर्तत इत्यभिप्रायो भाष्ये ब्रह्मशब्द इत्यर्थः । **कस्यचिन्मुमुक्षोः** असंन्यासिनः । **एतेन**–काम्यग्रहणं मोक्षमाणमात्रान्वयीति–**दर्शितम्** । **स्वकीयस्येति** । आत्मनो दीयमानस्य स्वत्वनिवृत्त्यसंभवादिति भावः । **ऋष्यन्तराभावादिति** । वसिष्ठादीनामार्षेयवरणे वरणीयवसिष्ठान्तराद्यभावादित्यर्थः । अत्र ऋषिदेवताधिकारविचारे वक्तव्यं देवताधिकरणे वक्ष्यते । **सिद्धान्तिनापीति** । **ननु** यदि सिद्धान्तिनाऽप्यङ्गुष्ठमात्रः पुरुषः, इत्येतदनुवाद्यजीवविषयमभ्युपगम्यते, कथं तर्हि संशयप्रदर्शनग्रन्थे मन्त्रस्य परमात्मपरत्वपक्षे परिमाणविशेषो न मुख्य इत्युक्तं ? कथं च परिमाणं जैवं पारमेश्वरं वेति संशय इत्युक्तम् ? **उच्यते**; अस्य मन्त्रस्याङ्गुष्ठमात्रः पुरुषोऽन्तरात्मेत्यनन्तरमन्त्रवदङ्गुष्ठमात्रजीवानुवादेन तस्य ब्रह्माभेदबोधनपरत्वे श्रुतस्याङ्गुष्ठपरिमाणस्योपमर्दो भवति योऽयमन्तःकरणोपाधिकोऽङ्गुष्ठमात्रः प्राप्तो जीवः स न तथा मन्तव्यः, किं त्वसंकुचितसकलभूतभविष्यद्वर्तमानवस्तुनियन्तृत्वप्राप्तसकलान्तरावस्थानतया व्यापकः परमात्मैव मन्तव्य इति । एवंच यथाप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य इति राजन्यनिमित्तषोडशिग्रहयागाभ्यासविधौ राजन्यस्योक्थसंस्थोऽग्निष्टोमसंस्थो वा यः क्रतुः प्राप्तः स न तथा कर्तव्यः, किं तु षोडशिसंस्थः कर्तव्य इति विधीयमानया षोडशिसंस्थयोक्थाग्निष्टोमसंस्थोपमर्दः, एवमिह भूतभव्यनियन्तृपरमेश्वराभेदबोधनेन जीवस्याङ्गुष्ठपरिमाणोपमर्द एव तस्या मुख्यता विवक्षिता । **एवं** तर्हि मन्त्रस्य परमात्माभेदपरत्वपक्षे भूतभव्यनियन्तृत्वस्याप्युपमर्दोऽस्तीति तस्मिन् पक्षे कथं विशिष्य परिमाणविशेषस्यामुख्यतोक्तिः ? **सत्यम्**; तदुपमर्दो न जीवलिङ्गकृतः, किं तु ब्रह्माभेदरूपवाक्यार्थविरोधकृतः, जीवलिङ्गोपमर्दस्तु

रिण एव सतोऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति । द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः, क्वचित्परमात्मस्वरूपनिरूपणपरा क्वचिद्विज्ञानात्मनः परमात्मैकत्वोपदेशपरा । तदत्र विज्ञानात्मनः परमात्मनैकत्वमुपदिश्यते नाङ्गुष्ठमात्रत्वं कस्यचित् । एतमेवार्थं परेण स्फुटीकरिष्यति —'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषिकां धैर्येण । तं विद्याच्छुक्रममृतम्' ( का० २।६।१७ ) इति ॥ २५ ॥ इति सप्तमं प्रमिताधिकरणम् ॥

( ८ अधिकरणम् ) **तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥**

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षया मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तं, तत्प्रसङ्गेनेदमुच्यते । बाढं मनुष्यानधिकरोति शास्त्रम्, नतु मनुष्यानेवेतीह ब्रह्मज्ञाने नियमोऽस्ति । तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते । कस्मात्? संभवात् । संभवति हि तेषामप्यर्थित्वाद्यधिकारकारणम् । तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम् । तथा सामर्थ्यमपि तेषां संभवति; मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात् । नच तेषां कश्चि-

### भामती ।

तत्त्वं परमात्मभावः, तद्वक्तव्यम्, नच तज्जीवमनभिधाय शक्यं वक्तुमिति जीव उच्यत इत्यर्थः ॥ २५ ॥ इति सप्तमं प्रमिताधिकरणम् ॥

**तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥**

देवर्षीणां ब्रह्मविज्ञानाधिकारचिन्ता समन्वयलक्षणेऽसंगतेत्यस्याः प्रासङ्गिकीं संगतिं दर्शयितुं प्रसङ्गमाह—**अङ्गुष्ठमात्रश्रुतिरिति** । **स्यादेतत्**—देवादीनां विविधविचित्रानन्दभोगभोगिनां वैराग्याभावान्नार्थित्वं ब्रह्मविद्यायामित्यत आह—**तत्रार्थित्वं तावन्मोक्षविषयमिति** । क्षयातिशययोगस्य स्वर्गाद्युपभोगेऽपि भावादस्ति वैराग्यमित्यर्थः । **ननु** देवादीनां विग्रहाद्यभावेनेन्द्रियार्थसंनिकर्षजायाः प्रमाणादिवृत्तेरनुपपत्तेरविद्वत्तया सामर्थ्याभावेन नाधिकार इत्यत आह—**तथा सामर्थ्यमपि तेषामिति** । यथा च मन्त्रादिभ्यस्तदवगमस्तथोपरिष्टादुपपादयिष्यते । **ननु** शूद्रवदुपनय-

### वेदान्तकल्पतरुः ।

**अङ्गुष्ठमात्र इति** । **धैर्येण**प्रमादेन । **प्रवृहेत्**उद्यच्छेत् पृथक् कुर्यात् मुञ्जान्तःस्थेषीकामिव । तं च विवेचितं शुक्रं शुद्धममृतं ब्रह्म विद्यात् ॥ २५ ॥ **इति सप्तमं प्रमिताधिकरणम्** ॥

**तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥**

अधिकारिचिन्तेयं यद्यपि न देवादिप्रवृत्त्यर्था; तथापि क्रममुक्तिफलोपास्तिषु भोगद्वारा मोक्षकाममनुष्यप्रवृत्त्यर्था ।

### कल्पतरुपरिमलः ।

ब्रह्मलिङ्गादिकृतः; ब्रह्मश्रुतिलिङ्गप्रकरणपरामर्शेनैव कृत्स्नस्य मन्त्रस्य जीवपरत्वमपोद्य जीवानुवादेन ब्रह्माभेदपरत्वपक्षस्योन्मेषणीयत्वात् । अनेन विशेषेण सिद्धान्तपक्षे परिमाणविशेषस्यैवामुख्यत्वमुक्तं, पारमेश्वरं वेत्येतत्तु श्रुत्याद्यापादितपरमेश्वरपर्यवसानाभिप्रायम् । श्रुतिरिहेशानशब्दरूपा; परमेश्वराभिधानश्रुतियोगेन लिङ्गसमर्पकस्यापि तस्य रूढ्या परमेश्वरबोधकत्वाऽनिवारणात्, काव्येषु तु व्यङ्ग्यार्थप्रधानेषु यस्य शब्दस्य यौगिकोऽर्थो व्यञ्जनव्यापारानुकूलस्तं शब्दं यौगिकार्थ एवोपक्षीणं कृत्वा तदीयरूढ्यर्थसमर्पणार्थं क्वचित्क्वचित्पदान्तरमप्युपाददते तत्पदान्तरोपादानं न यौगिकार्थसंबन्ध्युपादानस्य रूढ्युन्मेषविरोधित्वप्रयुक्तम्; तदनुपादानेऽपि "कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये" इत्यत्र तद्दर्शनात् । अत्र सिद्धान्तेऽप्यप्रत्याख्येयेन जीवलिङ्गेनाभिभूतं ब्रह्मलिङ्गं ब्रह्मलिङ्गनिर्वाहकमहावाक्यतारूपोपायकथनात् प्राङ् नोन्मिषतीत्यस्पष्टब्रह्मलिङ्गता ॥ २५ ॥ **इति सप्तमं प्रमिताधिकरणम्** ॥

**तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥**

**ननु** देवाधिकारचिन्ता नास्मदादीनां प्रवृत्तावुपयुक्ता, नापि देवानां; तेषां स्वकीयविग्रहवत्त्वे तत्प्रयुक्तसामर्थ्यादिमत्त्वे च सिद्धान्तन्यायनिरपेक्षावगतिसद्भावादित्याशङ्क्याह—**अधिकारेति** । क्रममुक्तिफला देवतापदप्राप्तिद्वारा मुक्तिपर्यन्ता

१ अत्र सूत्रे २—शब्दादेव प्रमितः २४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् २५ ।

त्प्रतिषेधोऽस्ति । नचोपनयनशास्त्रेणैषामधिकारो निवर्त्येत; उपनयनस्य वेदाध्ययनार्थत्वात् । तेषां च स्वयंप्रतिभातवेदत्वात् । अपिचैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति—'एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास' ( छा० ८।११।३ ) 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म' ( तै० ३।१ ) इत्यादि । यदपि कर्मस्वनधिकारकारणमुक्तम्—'न देवानां देवतान्तराभावात्' इति, 'न ऋषीणामार्षेयान्तराभावात्' ( जै० ६।१।६,७) इति । न तद्विद्यास्वस्ति । नहीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति । नच भृग्वादीनां भृग्वादिसगोत्रतया । तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते ? देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते ॥ २६ ॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

स्यादेतत्—यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत, विग्रवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसंनिधानेन कर्माङ्गभावोऽभ्युपगम्येत । तदा च विरोधः कर्मणि स्यात्, नहीन्द्रादीनां स्वरूपसंनिधानेन यागेऽङ्गभावो दृश्यते । नच संभवति; बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसंनिधानतानुपपत्तेरिति—चेत्, नायमस्ति विरोधः । कस्मात्? अनेकप्रतिपत्तेः । एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति ।

### भामती ।

नासंभवेनाध्ययनाभावात्तेषामनधिकार इत्यत आह—**नचोपनयनशास्त्रेणेति** । न खलु विधिवत् गुरुमुखाद्गृह्यमाणो वेदः फलवत्कर्मब्रह्मावबोधहेतुः, अपि त्वध्ययनोत्तरकालं निगमनिरुक्तव्याकरणादिविदितपदतदर्थसंगतिरधिगतशाब्दन्यायतत्त्वस्य पुंसः स्मर्यमाणः । स च मनुष्याणामिह जन्मनीव देवादीनां प्राचि भवे विधिवदधीत आम्नाय इह जन्मनि स्मर्यमाणः । अतएव स्वयं प्रतिभातो वेदः संभवतीत्यर्थः । नच कर्मानधिकारे ब्रह्मविद्यानधिकारो भवतीत्याह—**यदपि कर्मस्वनधिकारकारणमुक्तमिति** । वस्वादीनां हि न वस्वाद्यन्तरमस्ति । नापि भृग्वादीनां भृग्वाद्यन्तरमस्ति । प्राचां वसुभृगुप्रभृतीनां क्षीणाधिकारत्वेनेदानीं देवर्षित्वाभावादित्यर्थः ॥ २६ ॥ मन्त्रादिपदसमन्वयात्प्रतीयमानोऽर्थः प्रमाणान्तराविरोधे सत्युपेयः, नतु विरोधे । प्रमाणान्तरविरुद्धं चेदं विग्रहवत्त्वादि देवतायाः । तस्मात् 'यजमानः प्रस्तरः' इत्यादिवदुपचरितार्थो मन्त्रादिर्व्याख्येयः । तथाच विग्रहाद्यभावाच्छब्दोपहितार्थोऽर्थोपहितो वा शब्दो देवतेत्यचेतनत्वान्न तस्याः क्वचिदप्यधिकार इति शङ्कार्थः । निराकरोति—**न । कस्मात् ? अनेकरूपप्रतिपत्तेः** । सैव कुत इत्यत आह—**दर्शनात्** श्रुतिषु स्मृतिषु च । **तथाहि**—एकस्यानेककायनिर्माणमदर्शनाद्वा न युज्यते, बाधदर्शनाद्वा । तत्रादर्शनमसिद्धं; श्रुतिस्मृतिभ्यां दर्शनात् । नहि लौकिकेन प्रमाणेनादृष्टत्वादागमेन दृष्टमदृष्टं भवति, मा भूद्यागादीनामपि स्वर्गादिसाधनत्वमदृष्टमिति । मनुष्यशरीरस्य मातापितृसंयोगजत्वनियमादसति पित्रोः संयोगे कुतः संभवः ? संभवे वानग्नितोऽपि धूमः स्यादिति बाधदर्शनमिति चेत् । हन्त किं शरीरत्वेन हेतुना देवादिशरीरमपि मातापितृसंयोगजं सिषाधयिषसि ? तथा चानेकान्तो हेत्वाभासः;

### वेदान्तकल्पतरुः ।

**इन्द्रियार्थेति** आगमादेरुपलक्षणम् । **ननु** स्वयं प्रतिभानावसरे गुरुमुखाद्वेदग्रहणाभावादपुरुषार्थत्वं ज्ञानस्यात आह—**न खल्विति । स्मर्यमाणः** फलवद्ब्रह्मावबोधहेतुरित्यनुषङ्गः ॥ २६ ॥ चतुर्थ्यन्तशब्दप्रतीतमात्रं शब्दोपहितं तादृगर्थनियमितः शब्दो वा देवता । स्वर्गादिसाधनत्वं यागादीनां लोकेऽदृष्टत्वाद्वेदेऽप्यदृष्टमिति प्रसज्येत तन्मा भूदित्यर्थः । अदर्शनाद्बाधाद्वेति विकल्पयोराद्यं निरस्य **द्वितीयं** शङ्कते—**मनुष्येति** । देवादयो न शरीरिणः मातापितृरहितत्वाद्घटवत् । विपक्षे दण्डमाह—**संभवे चेति** । यूकादावनेकान्तत्वमाह—**हन्तेति** । **ननु** यूकादेः स्वेदाद्यस्ति देहहेतुः,

### कल्पतरुपरिमलः ।

उपास्त्यः । **एतदुपलक्षणं**—देवतानां सिद्धावन्तरादित्यविद्यादिष्वादित्यदेवताद्यन्तर्वर्तित्वेन ब्रह्मोपासनं, नतु ज्योतिर्मण्डलाद्यन्तर्वर्तित्वेन, उपकोसलपञ्चाग्निविद्ययोरर्चिराद्यभिमानिदेवतानां मार्गपर्वत्वेन चिन्तनं, न त्वर्चिरादीनामचेतनानामित्युपासनायां विशेषसिद्धिः, तं देवा भक्षयन्तीत्यादिश्रवणेन वैराग्यसिद्धिः, मन्त्रार्थवादाः प्राप्तिविरोधयोरसतोः प्रतीयमानेऽर्थे प्रामाण्यं न जहति, देवताविग्रहप्रसाधनोपयोगिन्यायव्युत्पन्नस्य "त्वा ह्येते अद्धा यज्ञरूपाः, जायस्व म्रियस्वेत्येतत्तृतीयं स्थान"मित्यादिवाक्यश्रवणेन विवेकवैराग्यादिसिद्धिरित्यादिकमपि देवताधिकरणप्रवर्तनस्य फलं द्रष्टव्यम् । विद्वत्तोपयोगादाह—**आगमादेरिति** । आदिशब्देन आगमार्थनिर्णायकन्यायग्रहणम् । **स्मर्यमाण इति** । यद्यपि देवानामुपनीता-

**कथमेतदवगम्यते ? दर्शनात् । तथाहि—'कति देवाः' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च**

### भामती ।

**स्वेदजोद्भिज्जानां** शरीराणामतद्धेतुत्वात् । इच्छामात्रनिर्माणत्वं देहादीनामदृष्टचरमिति चेत्, न; भूतोपादानत्वेनेच्छामात्रनिर्माणसिद्धेः भूतवशिनां हि देवादीनां नानाकायचिकीर्षावशाद्भूतक्रियोत्पत्तौ भूतानां परस्परसंयोगेन नानाकायसमुत्पादात् । दृष्टा च वशिन इच्छावशाद्वश्ये क्रिया, यथा विषविद्याविद इच्छामात्रेण विषशकलप्रेरणम् । नच—विषविद्याविदो दर्शनेनाधिष्ठानदर्शनाव्यवहितविप्रकृष्टभूतादर्शनाद्देवादीनां कथमधिष्ठानमिति—वाच्यम्; काचाभ्रपटलपिहितस्य विप्रकृष्टस्य च भौमशनैश्चरादेर्दर्शनेन व्यभिचारात् । असक्ताश्च दृष्टयो देवादीनां काचाभ्रपटलादिवन्महीमहीधरादिभिर्न व्यवधीयन्ते । नच—अस्मदादिवत्तेषां शरीरित्वेन व्यवहितविप्रकृष्टादिदर्शनासंभवोऽनुमीयत इति—वाच्यम्; आगमविरोधिनोऽनुमानस्योत्पादायोगात् । अन्तर्धानं चाञ्जनादिना मनुजानामिव तेषां प्रभवतामुपपद्यते, तेन संनिहितानामपि न क्रतुदेशे दर्शनं भविष्यति । तस्मात्सूक्तम्—अनेकप्रतिपत्तेरिति । **तथाहि कति देवा इत्युपक्रम्येति** । वैश्वदेवशस्त्रस्य हि निविदि 'कति देवाः' इत्युपक्रम्य निविदैवोत्तरं दत्तं शाकल्याय याज्ञवल्क्येन—**त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति** । निविन्नाम शस्यमानदेवतासंख्यावाचकानि मन्त्रपदानि । **एतदुक्तं भवति**—वैश्वदेवस्य निविदि कतिदेवाः शस्यमानाः प्रसंख्याता इति शाकल्येन पृष्टे याज्ञवल्क्यस्योत्तरं—'त्रयश्च त्री च शता' इत्यादि । यावत्संख्याका वैश्वदेवनिविदि संख्याता देवास्त एतावन्त इति । पुनश्च शाकल्येन 'कतमे ते'

### वेदान्तकल्पतरुः ।

न तु देवानां; तथा चेच्छामात्रं हेतुर्वाच्यः, स चायुक्त इत्याह—**इच्छामात्रेति** । भूतानामधिष्ठात्रभावादनारम्भकत्वमाशङ्क्याह—**भूतवशिनां हीति** । पर्वतादिव्यवहितानां दूरस्थत्वेन विप्रकृष्टानां च भूतानामदर्शनाद्देवादीनामनधिष्ठातृत्वमिति न वाच्यम्; काचाख्यधातुना मेघसमूहेन च च्छन्नस्य दूरस्थस्यापि दर्शनादित्यर्थः । **ननु** स्वच्छत्वात्काचादीनामस्मदादिदृग्व्यवधायकत्वं, शैलभूम्यादयस्तु देवादीनां व्यवधायका इत्याशङ्क्य प्रभाववशान्नेत्याह—**असक्ताश्चेति** । अप्रतिबद्धा इत्यर्थः । **प्रभवताम्** ईश्वराणाम् । कति देवा याज्ञवल्क्येत्येतावान्प्रश्नः शाकल्यस्य । स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शतेत्याद्युत्तरे एवकारदर्शनान् प्रश्नेऽपि निविदि कतीति विवक्षितमित्याह—**वैश्वदेवेति** । श्रुतिगतवैश्वदेवपदस्य व्याख्या—**शस्त्रस्येति** । त्री त्रीणि सहस्राणि निवेद्यते ज्ञाप्यते संख्याऽनयेति निवित् । **एतावन्त इति** । त्र्यधिकत्रिशतानि त्र्यधिकत्रिसहस्राणि चेत्यर्थः । **महिमानो** विस्ताराः । इन्द्रियेषु

### कल्पतरुपरिमलः ।

धिकारिकवैधाध्ययनासंभवेऽपि काव्यानामिव लैकिकमध्ययनं वक्तुं शक्यं; वैधाध्ययननियमस्य स्वशाखाविषयत्वात्, देवानां शाखानियमाभावात्; तथापि स्वयंभातवेदतदर्थानां तेषामध्ययनं न कल्पनीयमिति तात्पर्यम् । **ननू**पनयनं न केवलमध्ययनाधिकारार्थं, किंतु सर्वकर्माधिकारार्थम् । अतएव समर्थस्यापि संध्यावन्दनादिकमुपनयनादूर्ध्वमिष्यते । मूकबधिरादीनामध्ययनाभावेऽपि शक्यनित्यकर्मानुष्ठानार्थमुपनयनमिष्यते । तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्निति ( जै. अ. ६ पा. २ सू. २१ । ) पूर्वतन्त्राधिकरणेऽपि तथैव निर्णीतम् । **सत्यम्**; त्रैवर्णिकानामेव तत्कर्माधिकारहेतुत्वान्प्रति विहितत्वादत एव शूद्राणामुपनयनाभावेऽपि स्वधर्मेषु सामान्यधर्मेषु वाऽधिकारः ॥ २६ ॥ **चतुर्थ्यन्तशब्दप्रतीतमात्रमिति** । आखण्डलादिः प्रसिद्धार्थ इत्यर्थः । **ननु** देवताया विग्रहवत्त्वे दर्शिते क्रतुदेशेषु सन्निधानाभावेन कर्मविरोध इहापि तुल्यः, असंभवत्परिहारश्चेति विशेषः । नहि विग्रहवत्या देवताया इवाचेतनदेवताया विग्रहभेदैरनेकत्र क्रतुदेशे सन्निधानमुपपादयितुं शक्यम् । नच विग्रहवतोऽङ्गस्य सन्निधाननियमः; विग्रहरहितस्यापि स्रुवादेः सन्निधाननियमदर्शनेन विशेषणवैयर्थ्यात्, उक्तनियमस्य प्रवसद्यजमाने व्यभिचारेण विग्रहरहितस्यैवाङ्गस्य सन्निधाननियमदर्शनाच्च । नच प्रवसद्यजमानकर्तृकविष्णुक्रमादौ व्यभिचारः; मूर्तस्येति विशेषयितुं शक्यत्वादिति शङ्कानिवारणाय गृहीतमर्थोपहितपक्षं व्याचष्टे—**तादृगिति** । **नन्वेवम्**—अर्थस्याङ्गभूतशब्दोपलक्षणताया विग्रहवत्त्वपक्षेऽपि वक्तुं शक्यत्वान्न तस्मिन् पक्षे कर्मणि विरोधो दूषणमिति—**चेत्, सत्यम्**; असारमपीदं दूषणं देवताविग्रहद्वेषान्धैरुद्भावितमिति पूर्वपक्ष्युपहसनार्थमिन्द्रादीनां वस्तुतः क्रतुदेशे सन्निधानमस्तीति तात्त्विकार्थप्रदर्शनार्थं चानूदितम् । **इच्छामात्रमिति** । इन्द्रागच्छेत्याद्याह्वानलिङ्गादिन्द्रादीनामागमनं स्वेच्छाधीनं वाच्यमित्यनेकक्रतुदेशागमननिर्वाहार्थमनेकशरीरसृष्टिरपि तदिच्छाधीना पर्यवस्येदित्येवं तदिच्छायाः शरीरसृष्टिकारणत्वसिद्धौ तदतिरिक्तकारणमेलनाभावाच्छरीरसृष्ट्याक्षेप इति भावः । **अधिष्ठात्रभावादिति** । ईश्वरस्याधिष्ठातुः सत्त्वेऽपीन्द्रादीनामिच्छया सृष्टौ तेषामप्यधिष्ठातृत्वं वाच्यं, तन्न संभवतीत्याशयः । **एवकारदर्शनादिति** । एतयैव निविदेत्येवकारेण यस्यां निविदि देवतासंख्या पृष्टा तयैव निविदोत्तरमाहेत्यर्थलाभादि-

त्री च सहस्रा' इति निरुच्य 'कतमे ते' इत्यस्यां पृच्छायाम् 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' ( बृ० ३।९।१,२ ) इति निर्ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति । तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण 'कतम एको देव इति प्राणः' इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति । तथा स्मृतिरपि—'आत्मनो वै शरीराणि बहूनि भरतर्षभ । योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् । संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥' इत्येवंजातीयका प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति । किमु वक्तव्यमाजानसिद्धानां देवानाम् । अनेकरूपप्रतिपत्तिसंभवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति । परैश्च न दृश्यतेऽन्तर्धानादिक्रियायोगादित्युपपद्यते । अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या— विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते । क्वचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं न गच्छति, यथा बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते । क्वचिच्चैकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं गच्छति, यथा

---

## भामती ।

इति संख्येयेषु पृष्टेषु याज्ञवल्क्यस्योत्तरम्—**महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति** । अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्च प्रजापतिश्चेति त्रयस्त्रिंशद्देवाः । तत्राग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चेति **वसवः** । एते हि प्राणिनां कर्मफलाश्रयेण कार्यकारणसंघातरूपेण परिणमन्तो जगदिदं सर्वं वासयन्ति, तस्माद्वसवः । कतमे रुद्रा इति दशेमे पुरुषे प्राणाः । बुद्धिकर्मेन्द्रियाणि दश, एकादशं च मन इति । तदेतानि प्राणाः; तद्वृत्तित्वात् । ते हि प्रायणकाल उत्क्रामन्तः पुरुषं रोदयन्तीति रुद्राः । कतम आदित्या इति द्वादशमासाः संवत्सरस्यावयवाः पुनःपुनः परिवर्तमानाः प्राणभृतामायूंषि च कर्मफलोपभोगं चादापयन्तीत्यादित्याः । अशनिरिन्द्रः, सा हि बलं सा हीन्द्रस्य परमा ईशता, तया हि सर्वान्प्राणिनः प्रमापयति, तेन स्तनयित्नुरशनिरिन्द्रः । यज्ञः प्रजापतिरिति, यज्ञसाधनं च यज्ञरूपं च पशवः प्रजापतिः । एत एव त्रयस्त्रिंशद्देवाः षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानो न ततो भिद्यन्ते । षडेव तु देवाः । ते तु षडग्निं पृथिवीं चैकीकृत्यान्तरिक्षं वायुं चैकीकृत्य दिवं चादित्यं चैकीकृत्य त्रयो लोकास्त्रय एव देवा भवन्ति । एत एव च त्रयोऽन्नप्राणयोरन्तर्भवन्तोऽन्नप्राणौ द्वौ देवौ भवतः । तावप्यध्यर्धो देव एकः । कतमोऽध्यर्धः, योऽयं वायुः पवते । कथमयमेक एवाध्यर्धः, यदस्मिन्सति सर्वमिदमध्यर्धं वृद्धिं प्राप्नोति तेनाध्यर्ध इति । कतम एक इति, स एवाध्यर्धः प्राण एको ब्रह्म सर्वदेवात्मत्वेन बृहत्त्वाद्ब्रह्म तदेव त्यदित्याचक्षते परोक्षाभिधायकेन शब्देन । तस्मादेकस्यैव देवस्य महिमवशाद्युगपदनेकदेवरूपतामाह श्रुतिः । स्मृतिश्च निगदव्याख्याता । अपिच पृथग्जनानामप्युपायानुष्ठानवशात्प्राप्ताणिमाद्यैश्वर्याणां युगपन्नानाकायनिर्माणं श्रूयते, तत्र कैव कथा देवानां स्वभावसिद्धानामित्याह—**प्राप्ताणिमाद्यैश्वर्याणां योगिनामिति** । अणिमा लघिमा महिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्र कामावसायितेत्यैश्वर्याणि । **अपरा व्याख्येति** । अनेकत्र कर्मणि युगपदङ्गभावप्रतिपत्तिरङ्गभावगमनं; तस्य दर्शनात् । तदेव परिस्फुटं व्यतिरेकं तावदाह—**क्वचिदेक इति** । न खलु बहुषु श्राद्धेष्वेको ब्राह्मणो युगपदङ्गभावं गन्तुमर्हति । एकस्यानेकत्र युगपदङ्गभावमाह—**क्वचिच्चैक इति** । यथैकं ब्राह्मणमुद्दिश्य युगपन्नमस्कारः क्रियते बहुभिस्तथा स्वस्थानस्थितामेकां देवतामुद्दिश्य बहुभिर्यजमानैर्नानादेशावस्थितैर्युगपद्धविस्त्यज्यते, तस्याश्च तत्रासंनिहिताया अप्यङ्गभावो भवति । अस्ति हि तस्या युगपद्विप्रकृष्टानेकार्थोपलम्भसाम-

## वेदान्तकल्पतरुः ।

प्राणशब्दस्य प्रवृत्तौ निमित्तमाह—**तद्वृत्तित्वादिति** । तस्मात्प्राणाद्वृत्तिर्वर्तनं येषां ते तथा । श्रुतौ त्रयस्त्रिंशतां पूरणाविन्द्रप्रजापती उक्तौ, तौ च स्तनयित्नुयज्ञत्वेन व्याख्यातौ, पुनः कतमः स्तनयित्नुः कतमो यज्ञ इति पृष्ट्वा यथाक्रममशनिरिति पशव इति च प्रयुक्तं तदुपपादयति—**अशनिरिन्द्र इत्यादिना** । सा ह्यशनिरिन्द्रस्य परमेशता परमैश्वर्यम् । अरूपं यज्ञं द्रव्यतया रूपयन्तो यज्ञस्य रूपं पशवस्ते प्रजापतिरित्यर्थः । षडाद्यन्तर्भावक्रमेणेति भाष्यं व्याचष्टे—**एतएवेति** । **पवते** पुनाति जगत् । अध्यर्धशब्द एकस्मिन्नपि यौगिकः । स ब्रह्म त्यद् इत्याचक्षत इति वाक्यं व्याचष्टे—**स एवेति** । **प्राप्तिः** रङ्गुल्यग्रेण चन्द्रादिस्पर्शः । **प्राकाम्यम्** इच्छानभिघातः यथा भूमावुदक इवोन्मज्जनादि । **ईशित्वं** भूतभौतिकानामुत्पत्तिलयादावैश्वर्यम् । **वशित्वं** तेषां नियन्तृत्वम् । **यत्र कामावसायिता नाम** संकल्पादेव सकलविजयलाभः । अनेकेषां शरीराणां प्राप्तिरिति प्रथमा व्याख्या । द्वितीयां विविनक्ति—**अनेकत्रेति** ॥ २७ ॥

बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते। तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवतानां न किंचित्कर्मणि विरुध्यते॥ २७॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्॥ २८॥

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः प्रसञ्जि। शब्दे तु विरोधः प्रसज्येत। कथम्? औत्पत्तिकं हि शब्दस्यार्थेन संबन्धमाश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्यं स्थापितम्? इदानीं तु विग्रहवती देवताभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसंबन्धीनि हवींषि भुञ्जीत; तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्ये संबन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेत्। नायमप्यस्ति विरोधः। कस्मात्? अतः प्रभवात्। अतएव हि वैदिकाच्छब्दाद्देवादिकं जगत्प्रभवति। ननु 'जन्माद्यस्य यतः' (ब्र० १।१।२) इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवधारितं, कथमिह शब्दप्रभवत्वमुच्यते? अपिच यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथमेतावता विरोधः शब्दे परिहृतः? यावता वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्येतेऽर्था अनित्या एवोत्पत्तिमत्त्वात्। तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते? प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति। तस्माद्विरोध एव शब्द इति चेत्, न; गवादिशब्दार्थसंबन्धनित्यत्वदर्शनात्। नहि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः। आकृतिभिश्च शब्दानां संबन्धो न व्यक्तिभिः। व्यक्तीनामानन्त्यात्संबन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते। तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽप्याकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम्। आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्य-

---

### भामती।

र्थ्यमित्युपपादितम्॥ २७॥ गोत्वादिवत्पूर्वावमर्शाभावादुपाधेरप्येकस्याप्रतीतेः पाचकादिवदाकाशादिशब्दवद्व्यक्तिवचना एव वस्वादिशब्दाः तस्याश्च नित्यत्वात्तया सह संबन्धो नित्यो भवेत्। विग्रहादियोगे तु सावयवत्वेन वस्वादीनामनित्यत्वात्ततः पूर्वं वस्वादिशब्दो न स्वार्थेन संबद्ध आसीत्; स्वार्थस्यैवाभावात्। ततश्चोत्पन्ने वस्वादौ वस्वादिशब्दसंबन्धः प्रादुर्भवन्देवदत्तादिशब्दसंबन्धवत्पुरुषबुद्धिप्रभव इति तत्पूर्वको वाक्यार्थप्रत्ययोऽपि पुरुषबुद्ध्यधीनः स्यात्। पुरुषबुद्धिश्च मानान्तराधीनजन्मेति मानान्तरापेक्षया प्रामाण्यं वेदस्य व्याहन्येतेति शङ्कार्थः। उत्तरम्—**न। अतः प्रभवात्।** वसुत्वादिजातिवाचकाच्छब्दात्तज्जातीयां व्यक्तिं चिकीर्षितां बुद्धावालिख्य तस्याः प्रभवनम्। तदिदं तत्प्रभवत्वम्। **एतदुक्तं भवति**—यद्यपि न शब्द उपादानकारणम्, वस्वादीनां ब्रह्मोपादानत्वात्; तथापि निमित्तकारणमुक्तेन क्रमेण। न चैतावता शब्दार्थसंबन्धस्यानित्यत्वं, वसुत्वादिजातेर्वा तदुपाधेर्वा यया कयाचिदाकृत्यावच्छिन्नस्य नित्यत्वादिति। इममेवार्थमाक्षेपसमाधानाभ्यां विभजते—**ननु जन्माद्यस्य यत इति।** ते निगदव्याख्याते। तत्किमिदानीं स्वयंभुवा वाङ्निर्मिता कालिदासादिभिरिव

### वेदान्तकल्पतरुः।

**गोत्वादिवदिति।** प्रत्यभिज्ञा हि पूर्वावमर्शः, स हि न वस्वादावदृष्टे संभवी, अत एवोपाध्यभावः। मन्त्रादिसिद्धे 'वस्वादावसौ वसुरसावपि वसुरिति परामर्शसंभवः। त्रिदिवत्वादिजात्यवच्छिन्नैश्वर्येषु पाकत्वावच्छिन्नपाकयोगेष्विवौपाधिकत्वेऽपि

### कल्पतरुपरिमलः।

त्यर्थः। **द्वितीयामिति।** देवतानामङ्गत्वेऽपि नमस्कार्यत्ववत्केवलमुद्देश्यत्वे कर्तृकरणकर्माधिकरणादिवन्न संनिधानापेक्षेत्युपपादनार्था द्वितीया व्याख्या॥ २७॥ **अत एवोपाध्यभाव इति।** उपाधेरपि नरपतित्वादिवत् किंचिद्घटकपदार्थगतजात्यवच्छेदेनानुगतीकर्तव्यत्वाद्घटकपदार्थेष्वप्यलौकिकेषु प्रत्यभिज्ञाभावेनानुगतजात्यसिद्धिरित्यर्थः। **मन्त्रसिद्ध इति।** आदित्यादिशब्दानामचेतनमण्डलादिवाचित्वपक्षेऽपि तत्प्रवृत्तिनिमित्तभूता जातिः लौकिकप्रत्यभिज्ञानेन न सिद्ध्यति; इदानींतनमण्डलादेर्दृश्यमानत्वेऽपि प्राचीनमण्डलादेरतीतस्यैतद्दृष्टृदृष्ट्यगोचरत्वात्। अतः "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयद्" इत्यादिमन्त्रसिद्धे प्राचीने इदानींतने च प्रत्यभिज्ञानमपेक्ष्यते चेद् वेदाधीनमेव तदन्वेष्यं, तदिहापि सुलभमिति भावः।

वगमादवगन्तव्यः । स्थानविशेषसंबन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत् । ततश्च यो यस्तत्तत्स्थानमधिरोहति स स इन्द्रादिशब्दैरभिधीयत इति न दोषो भवति । न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणाभिप्रायेणोच्यते । कथं तर्हि? स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसंबन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिरतः प्रभव इत्युच्यते । कथं पुनरवगम्यते शब्दात्प्रभवति जगदिति? प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात् । ते हि शब्दपूर्वां सृष्टिं दर्शयतः । 'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄँस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानिति शस्त्रमभिसौभगेत्यन्याः प्रजाः' इति श्रुतिः । तथान्यत्रापि 'स मनसा वाचं मिथुनं समभवत्' ( बृ० १।२।४ ) इत्यादिना तत्र तत्र शब्दपूर्विका सृष्टिः श्राव्यते । स्मृतिरपि—'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥' इति । उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः, अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासंभवात्, तथा 'नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥' ( मनु० १।२१ ) इति । 'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' इति च । अपिच चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् । तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः, पश्चात्तदनुगतानर्थान्ससर्जेति गम्यते । तथा च श्रुतिः—'स भूरिति व्याहरत्स भूमिमसृजत' (तै० ब्रा० २।२।४।२) इत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादिलोकान्सृष्टान्दर्शयति । किमा-

## भामती ।

कुमारसंभवादि, तथाच तदेव प्रमाणान्तरापेक्षवाक्यत्वादप्रामाण्यमापतितमित्यत आह—**उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मक इति** । संप्रदायो गुरुशिष्यपरम्परयाध्ययनम् । **एतदुक्तं भवति**—स्वयंभुवो वेदकर्तृत्वेऽपि न कालिदासादिवत्स्वतन्त्रत्वमपि तु पूर्वसृष्ट्यनुसारेण । एतच्चास्माभिरुपपादितम् । उपपादयिष्यति चाग्रे भाष्यकारः । अपि चाद्यत्वेऽप्येतद्दृश्यते । तद्दर्शनादाद्यानामपि कर्तॄणां तथाभावोऽनुमीयत इत्याह—**अपिच चिकीर्षितमिति** । आक्षिपति—**किमात्मकं पुनरिति** । **अयमभिसंधिः**—वाचकशब्दप्रभवत्वं हि देवानामभ्युपेतव्यं, अवाचकेन

## वेदान्तकल्पतरुः ।

शक्यः सङ्गतिग्रह इत्युत्तरार्थः । आक्षेपसमाधाने निगदव्याख्याते इत्यर्थः । **प्रमाणान्तरापेक्षवाक्यत्वादिति** । प्रमाणान्तरापेक्षत्वमेव हेतुः शब्दं प्रति । संदेहात्प्रश्ने स्फोट इति पूर्वपक्षो वर्णत्वेन सिद्धान्त इति न भ्रमितव्यम्; स्फोटवादिनापि नित्यशब्दाद्देवाद्युत्पत्त्यभ्युपगमेन सूत्रव्याख्यानात् । तस्माद्वर्णात्स्फोटाच्च देवाद्युत्पत्त्याक्षेपः क्रियते; वर्णानामनित्यत्वात्स्फोटस्य चाप्रामाणिकत्वादिति । स्फोटपक्षस्त्वेकदेशिन इत्यभिप्रेत्याह—**आक्षिपतीति** । **नन्वनित्यत्वेऽपि** वर्णानां

## कल्पतरुपरिमलः ।

इन्द्रादीनां पूर्वोत्तरविग्रहयोः संस्थानविशेषैक्ये जातिपक्षस्तदभावे स्वर्गाधिपत्याद्युपाधिपक्षः ॥ **शब्दं प्रतीति** । शब्दप्रभवत्वहेतुं प्रसञ्जकं कृत्वा शब्दस्वरूपनिर्णिनीषया नायं प्रश्नः; तथा सति स्फोटवादिना देवादीनां वर्णप्रभवत्वानुपपत्तेः स्फोटप्रभवत्वोपपत्तेश्चावक्तव्यत्वात् । तस्मादुक्तप्रकारेणाक्षेपोऽयमित्यर्थः । **नन्विन्द्रादिशब्दानां** लौकिकपितृकृतपुत्रनामवद् व्यक्तिशब्दत्वे तेषां व्यक्तिवाचित्वं तत्तत्संकेतयितृपुरुषबुद्ध्यधीनं भवेदितीन्द्रादिपदघटितानां विधिवाक्यानां संकेतयितृस्वतन्त्रपुरुषबुद्ध्यधीनार्थप्रतिपादकत्वेन तत्सापेक्षत्वलक्षणाप्रामाण्यापत्त्या तच्चोदितकर्मणामननुष्ठानं स्यादिति कर्मणि विरोधापादने तेषां जातिशब्दत्वेन परिहर्तव्ये शब्दप्रभवत्वादिति हेतुः क्वोपयुज्यते ? शब्देनार्थस्मृतिसापेक्षा सृष्टिः स्रष्टव्यार्थस्य सर्यमाणार्थसमानजातीयत्व एव लोके घटादिषु दृष्टेति शब्दप्रभवत्वं जातिवाचित्वहेतुसिद्ध्यर्थो हेतुरिति चेद्, न; लोके दृष्टान्ताऽसंप्रतिपत्तेः, घटादिसृष्ट्यर्थमपेक्षितस्य घटत्वादिजात्यभिव्यञ्जकाकृतिविशेषानुसन्धानस्य प्राक्तनतदनुभवादेव संभवेन घटादिशब्दानपेक्षणादनुष्ठेयार्थस्मृतावुपायान्तरसंभवेऽपि मन्त्रेणैव संस्मर्तव्य इतिवत् स्रष्टव्यो घटादिर्वाचकशब्देनैव स्मर्तव्य इति नियमहेत्वभावात् । अत एव कैश्चिदुपकरणैः कंचिदर्थं निर्मिमाणं दृष्ट्वा तद्वाचकानभिज्ञा अपि नानाशिल्पनिपुणास्तैरुपकरणैस्तथाभूतं व्यक्त्यन्तरं निर्मिमाणा दृश्यन्ते । **उच्यते;** शिल्पी शिल्पशास्त्रेभ्यो देवादीनां नामरूपाणि विज्ञाय प्रतिमादिकं निर्मिनोतीति लोके दृष्टं, तथैव हिरण्यगर्भो वेदेभ्यस्तानि विज्ञाय देवादीन् सृजति; तस्य देवसृष्ट्युपयोगिनामरूपज्ञानार्थमेव हि सृष्टाय तस्मै वेदप्रदानमपि श्रूयते "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । भाष्योदाहृतश्रुतिस्मृ-

त्मकं पुनः शब्दमभिप्रेत्येदं शब्दप्रभवत्वमुच्यते ? स्फोटमित्याह । वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वान्नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्यात् । उत्पन्नध्वंसिनश्च वर्णाः; प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमानत्वात् । तथाहि—अदृश्यमानोऽपि पुरुषविशेषो-

## भामती ।

तेषां बुद्धावनालेखनात्, तत्र न तावद्ध्रस्वादीनां वकारादयो वर्णा वाचकाः; तेषां प्रत्युच्चारणमन्यत्वेनाशक्यसंगतिग्रहत्वात्, अगृहीतसंगतेश्च वाचकत्वेऽतिप्रसङ्गात् । अपिचैते प्रत्येकं वा वाक्यार्थमभिदधीरन्, मिलिता वा । **न तावत्प्रत्येकम्**; एकवर्णोच्चारणानन्तरमर्थप्रत्ययादर्शनात्, वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च । **नापि मिलिताः**; तेषामेकवक्तृप्रयुज्यमानानां रूपतो व्यक्तितो वा प्रतिक्षणमपवर्गिणां मिथः साहित्यसंभवाभावात् । नच प्रत्येकसमुदायाभ्यामन्यः प्रकारः संभवति । नच—स्वरूपसाहित्याभावेऽपि वर्णानामाग्नेयादीनामिव संस्कारद्वारकमस्ति साहित्यमिति—सांप्रतं; विकल्पासहत्वात् । को नु खल्वयं संस्कारोऽभिमतः ? किमपूर्वमाग्नेयादिजन्यमिव ? किंवा भावनापरनामा स्मृतिप्रसवबीजम् । **न तावत्प्रथमः कल्पः**; नहि शब्दः स्वरूपतोऽज्ञातो वाऽविदितोऽविदितसंगतिरर्थधीहेतुरिन्द्रियवत् । उच्चरितस्य बधिरेणागृहीतस्य गृहीतस्य वाऽगृहीतसंगतेरप्रत्यायकत्वात् । तस्माद्विदितो विदितसंगतिर्विदितसमस्तज्ञापनाङ्गश्च शब्दो धूमवत्प्रत्यायकोऽभ्युपेयः । तथाचापूर्वाभिधानोऽस्य संस्कारः प्रत्यायनाङ्गमित्यर्थप्रत्ययात्प्रागवगन्तव्यः । नच तदा तस्यावगमोपायोऽस्ति । अर्थप्रत्ययात्तु तदवगमं समर्थयमानो दुरुत्तरमितरेतराश्रयमाविशति, संस्कारावसायादर्थप्रत्ययः, ततश्च तदवसाय इति । भावनाभिधानस्तु संस्कारः स्मृतिप्रसवसामर्थ्यमात्मनः । नच तदेवार्थप्रत्ययप्रसवसामर्थ्यमपि भवितुमर्हति । नापि तस्यैव सामर्थ्यस्य सामर्थ्यान्तरम् । नहि यैव वह्नेर्दहनशक्तिः सैव तस्य प्रकाशनशक्तिः । नापि दहनशक्तेः प्रकाशनशक्तिः । **अपिच** व्युत्क्रमेणोच्चरितेभ्यो वर्णेभ्यः सैवास्ति स्मृतिबीजं वासनेत्यर्थप्रत्ययः प्रसज्येत । न चास्ति । तस्मान्न कथंचिदपि वर्णा अर्थधीहेतवः । नापि तदतिरिक्तः स्फोटात्मा; तस्यानुभवानारोहात्, अर्थधियस्तु कार्यात्तदवगमे परस्पराश्रयप्रसङ्ग इत्युक्तप्रायम् । सत्तामात्रेण तु तस्य नित्यस्यार्थधीहेतुभावे सर्वदार्थप्रत्ययोत्पादप्रसङ्गः; निरपेक्षस्य हेतोः सदातनत्वात् । तस्माद्वाचकाच्छब्दाद्वाच्योत्पाद इत्यनुपपन्नमिति । अत्राचार्यदेशीय आह—**स्फोटमित्याहेति** । मृष्यामहे न वर्णाः प्रत्यायका इति, न स्फोट इति तु न मृष्यामः; तदनुभवान-

## वेदान्तकल्पतरुः ।

महाभूतवद्देवादिहेतुतेत्याशङ्क्याह—**अयमिति** । यथाऽऽग्नेयादीनां फलकरणत्वान्यथानुपपत्त्यवसेयमपूर्वमेवं वर्णानामर्थधीहेतुत्वान्यथानुपपत्तिसिद्धः संस्कारः, स चार्थापत्तेः प्रागज्ञातत्वादपूर्वमुत वर्णोपलम्भजो वर्णे स्मृतिकर इति विकल्प्य क्रमेण दूषयति—**न तावदित्यादिना** । अर्थधीप्रसवावसेयसंस्कारः किमज्ञातः शब्दसहकार्युत ज्ञातः । **नाद्य** इत्याह—**न हीति** । स्वरूपेणाविदितस्यार्थधीहेतुत्वनिषेधो दृष्टान्तार्थः । यथा स्वरूपेण विदितस्यार्थबुद्ध्या हेतुत्वमेवमज्ञतोऽपीत्यर्थः । अविदितसङ्गतिरिति हेत्वर्थः । शब्दः सहाङ्गेन ज्ञातोऽर्थधीहेतुः संबन्धग्रहणमपेक्ष्य बोधकत्वाद् धूमवदित्यर्थः । **इन्द्रियवदिति** । वैधर्म्योपमा । अबधिरेण गृहीतस्य चेत्यर्थः । अपूर्वसंस्कारो यदा ज्ञातव्यः, तदाऽर्थधियः प्रागेव ज्ञेयः, कारणस्य तज्ज्ञानस्य कार्यात्प्राग्भावनियमात्, अथ जातायामर्थबुद्धौ तदवगमस्तदेतरेतराश्रयमाह—**अर्थप्रत्ययादिति** । आग्नेयादीनां त्वनारब्धफलानामेव वेदेन फलकरणभावावगमाच्छक्यमर्थापत्त्याऽपूर्वावधारणं, वर्णानां तु नार्थधीहेतुत्वे मानमस्तीति भावः । भावनाख्यस्तु यः संस्कारः स आत्मनो वर्णस्य स्वस्यैव विषयस्य स्मृतिप्रसवसामर्थ्यम् । तथा चास्माद्वर्णविषया स्मृतिरेव स्यात्, यदि पुनस्ततोऽर्थधीः स्यात्, तदा वक्तव्यं किं तदेवार्थधीजननशक्तिरुत ततोऽर्थधीशक्तिरुदेति । न द्वावपीत्याह—**न च तदेवेति** । उभयत्र क्रमेण निदर्शनमाह—**न हीति** । अपूर्वसंस्कारपक्षे उक्तः परस्पराश्रयः स्फोटेऽप्युक्ततुल्यम्, स्फोटे ज्ञातेऽर्थधीस्ततश्च स्फोटधीरित्यर्थः । सत्तया हेतुत्वेनेतरेतराश्रय इत्याशङ्क्याह—**सत्तेति** ।

## कल्पतरुपरिमलः ।

तयोऽप्यत्र प्रमाणम् । गृहीतस्येत्यस्य बधिरेणानन्वयादध्याहरति—**अबधिरेणेति** । तथा च बधिरेणागृहीतस्य गृहीतस्य वेति टीकायां बधिरेणेति श्रुतस्यागृहीतेनान्वयः अबधिरेणेत्यध्याहृतस्य गृहीतेनान्वयः इति विभागः । टीकायामज्ञत इत्यनेनैव संगतेरपि संग्रहादविदितसंगतिरिति पृथङ्न वक्तव्यमित्याशङ्कायां हेतुनिर्देशार्थत्वेन तदुक्तिसाफल्यमुक्त्वा तदपेक्षहेतुकमनुमानं दर्शयति—**शब्द इति** । अङ्गेनेत्येतद्यावदङ्गपरं, तेन योग्यतादिमत्किंचिदङ्गज्ञानसाहित्यसंप्रतिपत्त्या न सिद्धसाधनम् । अङ्गत्वं मानविभाजकोपाध्यवच्छिन्नं प्रति सहकारित्वं तेनादृष्टरूपाज्ञातस्य सहकारित्वेऽपि पक्षदृष्टान्तयोर्न बाधसाध्यवैकल्ये । सिद्ध्यभावादेरज्ञातस्यानुमानमात्रे सहकारित्वाभ्युपगमे तु दृष्टान्ते साध्यलाभाय भावरूपसहकारित्वं विवक्षणीयम् । हेतौ मानविभाजकोपाध्यवच्छेदेन संबन्धग्रहणापेक्षा विवक्षिता, तेन कपिसंयुक्तो वृक्ष इति ज्ञानजनके चक्षुषि न व्यभिचारः । **नार्थधीहेतुत्व इति** । अपूर्वावधारणात् प्रागर्थधियो जननासंभवादर्थधीहेतुत्वम् अमानकमिति तदन्यथा-

ऽध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्यते, देवदत्तोऽयमधीते यज्ञदत्तोऽयमधीते इति। न चायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानम्; बाधकप्रत्ययाभावात्। नच वर्णेभ्योऽर्थावगतिर्युक्ता। न ह्येकैको वर्णोऽर्थं प्रत्याययेत्, व्यभिचारात्। नच वर्णसमुदायप्रत्ययोऽस्ति; अक्रमवत्त्वाद्वर्णानाम्। पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति यद्युच्येत। तन्न; संबन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेद्धूमादिवत्। नच पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति; अप्रत्यक्षत्वात्संस्काराणाम्। कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति चेत्, न; संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात्। तस्मात्स्फोट एव शब्दः। स चैकैकवर्णप्रत्ययाहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते। न चायमेकप्रत्ययो वर्णविषया स्मृतिः; वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः, तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वम्, भेदप्रत्ययस्य वर्णविषयत्वात्। तस्मान्नित्याच्छब्दात्स्फोटरूपादभिधायकात्क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति। 'वर्णा एव तु

## भामती।

न्तरं विदितसंगतेरर्थधीसमुत्पादात्। नच वर्णातिरिक्तस्य तस्यानुभवो नास्ति; गौरित्येकं पदं गामानय शुक्लामित्येकं वाक्यमिति नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीनत्वात्। न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम्। नाप्यौपाधिकः। उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा। न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति। तथा सति धवखदिरपलाशा इति न जातु स्यात्। नाप्येकार्थधीहेतुता; तद्धेतुत्वस्य वर्णेषु व्यासेधात्, तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः। साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच साहित्यमिति। तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते स स्फोट इति। तं च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति, येन द्रागर्थधीः स्यात्, अपि तु रत्नतत्त्वज्ञानवद्यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कारपरिपाकसचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम्। नापि प्राचाम्; तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात्, अन्त्यस्य चेतसः केवलस्याजनकत्वात्, नच—पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरामिति—युक्तम्; व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वात्। अर्थधियस्त्वप्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवोपजनो न वा स्यान्न पुनरस्फुट इति न समः समाधिः। तस्मान्नित्यः स्फोट एव वाचको न वर्णा इति। तदेतदाचार्यदेशीयमतं स्वमतमुपपादयन्नपाकरोति—**वर्णा एव तु शब्द इति**। एवं हि वर्णातिरिक्तः स्फोटोऽभ्युपेयेत, यदि वर्णानां

## वेदान्तकल्पतरुः।

**नानेति**। नानावर्णातिरिक्तैकपदावगतेर्नानापदातिरिक्तैकवाक्यावगतेश्चेत्यर्थः। **साहित्य**मेकत्वम्। **नन्वज्ञा**तेषु वर्णेषु पदवाक्याप्रतीतेर्न शब्दान्तरकल्पनावकाशः। **नैतत्**; स्फोटस्य वर्णाव्यङ्ग्यतोपपत्तेः। **स्यादेतत्**—स किमेकैकवर्णात्स्फुटति, किं वा मिलितेभ्यः। **नाद्यः**; एकवर्णादेव स्फोटव्यक्तौ तत एवार्थधीसिद्धेरितरवैयर्थ्यात्। **न चरमः**; वर्णसाहित्यस्य भवतैव व्यासेधाद् अत आह—**तं चेति**। समुदितव्यञ्जकत्वमनभ्युपेतं प्रत्येकपक्षेऽपि न परवैयर्थ्यम्। यथा रत्नस्य प्रतीन्द्रियसन्निकर्षमभिव्यक्तावपि द्वाभ्यां तिसृभिः चतसृभिः पञ्चभिः षड्भिर्वाऽभिव्यक्तिभिर्जनितसंस्कारकृतपरिपाकरूपसहकारिसंपन्नान्तःकरणेन जनिते चरमप्रत्यये विशदं चकास्ति रत्नतत्त्वं, न प्राक्षु प्रत्ययेषु, नापि तैर्विरहिते चरमचेतसि, एवं स्फोटः प्रत्येकं ध्वनिभिर्व्यक्तोऽपि ध्वन्यन्तरजनिताभिरभिव्यक्तिभिर्ये संस्कारा जायन्ते तत्तत्परिपाकवन्मनःपरिणामे चरमे चकास्ति तदनन्तरं चार्थधीर्न प्रागित्यर्थः। यदि प्राचीनध्वनिजन्याभिव्यक्तिजसंस्कारसहितचरमप्रत्ययः स्फुटस्फोटदर्शको हन्त तर्ह्यर्थोऽपि प्रत्येकं ध्वनिभिर्व्यज्यतां पूर्वार्थव्यक्तिसंस्कारसहितमन्त्यं चेतस्तत्त्वमर्थस्य व्यनक्तु तत्राह—न च **पदप्रत्ययवदिति**। अभिहितश्चेदर्थो नाव्यक्तः, संदिग्धस्तु नाभिहितः स्यात्, प्रत्यक्षे तु प्रतिसन्निकर्षं विशदाविशदनिश्चयसंभव इत्यर्थः। स्फोटे प्रमाणं विकल्पयति—**एवं हीति**। वर्णेषु वाचकत्वाऽनुपपत्तौ वाचकशब्दप्रसिद्ध्यन्यथानुपपत्तिः स्फोटे प्रमाणमुत

## कल्पतरुपरिमलः।

नुपपत्तिर्नोदेतीत्याशयः। **नानावर्णेति**। यथा खलु संध्यक्षरान्तर्गताकारेकाराद्यतिरिक्तैकसंध्यक्षरावगतेस्तदतिरिक्त एकारादिः यथा वैकत्वसमुदायातिरिक्तशतादिसंख्यावगतेस्तदतिरिक्ता शतादिसंख्या तथेति भावः। तद्धेतुत्वेन साहित्यकल्पनायामित्यनुक्तोपालम्भः। एकार्थधीहेतुत्वस्यैकत्वोपाधिताया एवोक्तत्वादित्याशङ्क्य व्याचष्टे—**साहित्यमेकत्वमिति**। तथा च

शब्दः' इति भगवानुपवर्षः । ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तं, तन्न; त एवेति प्रत्यभिज्ञानात् । सादृश्यात्प्रत्यभिज्ञानं केशादिष्विवेति चेत्, न; प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः । प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत्, न; व्यक्तिप्रत्यभिज्ञानात् । यदि हि प्रत्युच्चारणं गवादिव्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरंस्तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात्, नत्वेतदस्ति; वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते । द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिर्न तु द्वौ गोशब्दाविति । ननु—वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तम् । अत्राभिधीयते—सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यङ्ग्यत्वाद्वर्णानामभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्णविषयो विचित्रः प्रत्ययो न स्वरूपनिमित्तः । अपिच वर्णव्यक्तिभेदवादिनापि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः । तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यम् । तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम् । एष एव च

## भामती ।

वाचकत्वं न संभवेत्, स चानुभवपद्धतिमध्यासीत । द्विधा चावाचकत्वं वर्णानां, क्षणिकत्वेनाशक्यसंगतिग्रहत्वाद्वा व्यस्तसमस्तप्रकारद्वयाभावाद्वा । **न तावत्प्रथमः कल्पः**; वर्णानां क्षणिकत्वे मानाभावात् । **ननु** वर्णानां प्रत्युच्चारणमन्यत्वं सर्वजनप्रसिद्धम्, न; प्रत्यभिज्ञायमानत्वात् । न च—असत्यप्येकत्वे ज्वालादिवत्सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति—सांप्रतम्; सादृश्यनिबन्धनत्वमस्य बलवद्बाधकोपनिपाताद्वास्थीयेत, क्वचिज्ज्वालादौ व्यभिचारदर्शनाद्वा । तत्र क्वचिद्व्यभिचारदर्शनेन तदुत्प्रेक्षायामुच्यते वृद्धैः स्वतःप्रामाण्यवादिभिः—'उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधनम् । स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥' इति । प्रपञ्चितं चैतदस्माभिर्न्यायकणिकायाम् । न च—इदं प्रत्यभिज्ञानं गत्वादिजातिविषयं न गादिव्यक्तिविषयं, तासां प्रतिनरं भेदोपलम्भादत एव शब्दभेदोपलम्भाद्वक्तृभेद उन्नीयते 'सोमशर्माधीते न विष्णुशर्मा' इति—युक्तम्; यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम् । यथा कालाक्षीं च स्वस्तिमतीं चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति, किंवा यथा गोत्वमाजानत एकं भिन्नदेशपरिमाणसंस्थानव्यक्त्युपधानभेदाद्भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव तथा गव्यक्तिराजानत एकापि व्यञ्जकभेदात्त-

## वेदान्तकल्पतरुः ।

प्रत्यक्षमित्यर्थः । वर्णेषु वाचकत्वानुपपत्तिमपि विकल्पयति—**द्विधेति** । व्यस्तानामेकैकवर्णानां समस्तानां वा वाचकत्वमिति यत्प्रकारद्वयं तस्याभावाद्वेत्यर्थः । **प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेरिति** भाष्यं, तत्र बाधकप्रमाणाभावादेव बाधानुपपत्तेरित्यर्थः । तत्र सामान्यतो दृष्टस्यातिप्रसङ्गादप्रामाण्यमभिधाय वर्णभेदग्राहकं प्रत्यक्षं बाधकमाशङ्क्याह—**न चेदमिति** । इदं प्रत्यभिज्ञानं गत्वादिजातिविषयं न गादिव्यक्तिविषयमित्येतच्च न युक्तमित्यन्वयः । तासां व्यक्तीनां प्रतिनरं भेदोपलम्भादिति शङ्काया एव हेतुस्तस्य च समर्थनम्—**अत एवेति** । अयुक्तत्वे हेतुमाह—**यत इति** । बहुषु गकारमुच्चारयत्सु योऽनुभवो जायते स किं व्यक्तिभेदावमर्शपुरःसरं जातिविषयः, उतौपाधिकभेदवदेकव्यक्तिविषय इति निपुणं निरूप्यताम् । तन्निरूपणे च ध्वन्युपाधिकृतभेदमन्तरेण स्वाभाविकव्यक्तिभेदो न

## कल्पतरुपरिमलः ।

बहुषु क्रमिकेषु वर्णेषु तद्धेतुत्वेऽप्यसिद्धे यदि तद्धेतुत्वाधीनं तेष्वेकत्वं संपाद्यते न तद्धेतुत्वं समर्थ्यते तदानीमन्योन्याश्रय इति भावः ॥ **ननु** तं च ध्वनय इति प्रत्येकव्यञ्जकत्वपक्षोपपादनमस्थाने; ध्वनीनां स्फोटव्यञ्जकत्वस्य प्रागुक्ततया तत्र प्रत्येकसमुदायविकल्पानुत्थानादित्याशङ्क्य ततः प्राक् टीकायां विवक्षितौ शङ्कापरिहारौ दर्शयति—**नन्वज्ञातेष्विति** । **ननु** वर्णव्यङ्ग्यत्वोपपत्तेरिति कथम्? स्फोटस्य ध्वनिव्यङ्ग्यत्वं हि टीकायामुक्तम् । **सत्यम्**; नित्यवर्णवादिमते वर्णाभिव्यञ्जकत्वाभिमता उदात्तानुदात्तह्रस्वदीर्घसानुनासिकनिरनुनासिकत्वादिधर्माश्रया ये ध्वनयस्त एव स्फोटवादिमते स्फोटाभिव्यञ्जकाः कत्वाद्याश्रया वर्णाः; ध्वनिस्फोटमध्ये नित्यानामनित्यानां वा वर्णानामङ्गीकारे गौरवात्, वर्णवादिमतेऽखण्डेष्वेकारादिषु वास्तवाकाराद्यवयवाभावेन तदभिव्यञ्जकक्रमिकध्वनिविशेषाणामेवाकारेकारादिरूपताया वक्तव्यत्वाच्च । सोऽयं गकारः सोऽयमुदात्तः सोऽयं ह्रस्व इत्यादिप्रत्यभिज्ञानाङ्गत्वाद्यधिकरणध्वन्यभिव्यक्तेषु दर्पणमुखवदभिव्यञ्जकधर्मरूपिततया प्रतीयमानेषु वर्णस्फोटेष्विव तदेवेदं घटपदं तदेवेदं घटमानयेति वाक्यमित्यादिप्रत्यभिज्ञानां पदवाक्यस्फोटेष्वेव विश्रान्तेरिति स्फोटवादिमतम् । अतो न विरोधः । ज्वालादिप्रत्यभिज्ञानबाधोपलम्भाद्भाष्यानुपपत्तिमाशङ्क्य व्याचष्टे—**प्रत्यभिज्ञानस्येति** । **योऽनुभव इति** । गकारेषु परस्परभेदानुभव इत्यर्थः । उरस्ताडनोक्त्या गकारादिभेदोपलम्भस्य शङ्काबीजस्यालाभमाशङ्क्य अतितारत्वं तेन

**वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत्प्रत्यभिज्ञानम् । कथं ह्येकस्मिन्काले बहूनामुच्चारयतामेक एव सन्गकारो युगपदनेकरूपः स्यात्? उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च**

## भामती ।

द्धर्मानुपातिनीव प्रथत इति भवन्त एव विदांकुर्वन्तु । तत्र गव्यक्तिभेदमङ्गीकृत्यापि यो गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः स वरं गव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाभ्युपेतेन । यथाहुः—'तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते । व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा ॥' नच स्वस्तिमत्यादिवत् गव्यक्तिभेदप्रत्ययः स्फुटः प्रत्युच्चारणमस्ति । तथा सति दश गकारानुदचारयच्चैत्र इति हि प्रत्ययः स्यात्, न स्याद्दशकृत्व उदचारयद्गकारमिति । न चैष जात्यभिप्रायोऽभ्यासो यथा शतकृत्वस्तित्तिरीनुपायुङ्क्त देवदत्त इति । अत्र हि सोरस्ताडं क्रन्दतोऽपि गकारादिव्यक्तौ लोकस्योच्चारणाभ्यासप्रत्ययस्य विनिर्वृत्तिः । चोदकः प्रत्यभिज्ञानबाधकमुत्थापयति—**कथं ह्येकस्मिन्काले बहूनामुच्चारयतामिति** । यत् युगपद्विरुद्धधर्मसंसर्गवत् तत् नाना, यथा गवाश्वादिर्द्विशफैकशफकेशरगलकम्बलादिमान् । युगपदुदात्तानुदात्तादिविरुद्धधर्मसंसर्गवांश्चायं वर्णः । तस्मान्नाना भवितुमर्हति । नच—उदात्तादयो व्यञ्जकधर्माः, न वर्णधर्मा इति—सांप्रतम्; व्यञ्जका ह्यस्य वायवः । तेषामश्रावणत्वे कथं तद्धर्माः श्रावणाः स्युः ? इदं तावदत्र वक्तव्यम् । नहि गुणगोचरमिन्द्रियं गुणिनमपि गोचरयति, मा भूवन् घ्राणरसनश्रोत्राणां गन्धरसशब्दगोचराणां तद्वन्तः पृथिव्युदकाकाशा गोचराः । एवं च मा नाम भूद्वायुगोचरं श्रोत्रम्, तद्गुणांस्तूदात्तादीन् गोचरयिष्यति । ते च शब्दासंसर्गाग्रहात् शब्दधर्मत्वेनाध्यवसीयन्ते । नच शब्दस्य प्रत्यभिज्ञानावधृतैकत्वस्य स्वरूपत उदात्तादयो धर्माः परस्परविरोधिनोऽपर्यायेण संभवन्ति । तस्माद्यथा मुखस्यैकस्य मणिकृपाणदर्पणाद्युपधानवशान्नानादेशपरिमाणसंस्थानभेदविभ्रमः, एवमेकस्यापि वर्णस्य व्यञ्जकध्वनिनिबन्धनोऽयं विरुद्धनानाधर्मसंसर्गविभ्रमः, न तु स्वाभाविको नानाधर्मसंसर्ग

## वेदान्तकल्पतरुः ।

भासत इत्यर्थः । व्यक्तिभेदपक्षे च कल्पनागौरवमाह—**तत्रेति** । येन वर्णेषु व्यक्तिभेदो न स्फुटस्तेनेत्यर्थः । यत्प्रत्यभिज्ञानं जातेः प्रार्थ्यत इत्यर्थः । व्यक्तिलभ्यं भेदज्ञानमित्यर्थः । व्यक्त्या जातिबुद्ध्युपपादने गत्वाद्युच्छेदमाशङ्क्याह—**न चेति** । दशवारमुच्चारितवानित्येकस्यैव गकारस्योच्चारणेष्वावृत्तिप्रतीतेः । उक्तैक्यस्यान्यथासिद्धिमाशङ्क्याह—**न चैष इति** । **सोरस्ताडं** साविष्कारम् । एवं तावन्त एवेति प्रत्यभिज्ञानादित्यारभ्य यत्प्रत्यभिज्ञानमित्यन्तं भाष्यं व्याख्यातम् । अनन्तरं कथं हीति भाष्यं तत् हि शब्दसंयुक्तमपि न पूर्वहेत्वर्थम् । प्रत्यभिज्ञाया हि भेदप्रत्ययबाधकत्वं प्रस्तुतं, तद्धेतुत्वे च भेद एव निषेध्यः, नैकस्यानेकरूपत्वम्; एकत्वस्य स्फोटवादिनाऽनङ्गीकारात् । यत्तु केचिद्व्याख्यातारो वर्णेषु भेदाभेदनिषेधोऽयमिति वदन्ति । तत्प्रकृतासङ्गतेरयुक्तम् । तत इदं भाष्यं प्रकृते सङ्गमयति—**चोदक इति** । उक्तमपि बाधकं गतिनिरूपणाय पुनरुत्थापयतीत्यर्थः । **गलकम्बलः** सास्ना । उपक्रमे उक्तकण्ठादिस्थानघटिता वायवोऽश्रावणा इति तद्धर्मा वर्णेष्वारोपिता न श्रावणाः स्युः, अत उदात्तादयो वर्णधर्मा इति मतं ग्रन्थाद् बहिरेव दूषयति—**इदं तावदिति** । भवन्त्वश्रावणवायुधर्माः श्रावणाः कथं तेषां शब्दधर्मत्वप्रतीतिरत आह—**ते चेति** । **ननु** किमित्यारोपेण ? स्वत उदात्तादयः शब्दस्य सन्तु, नेत्याह—**न चेति** । अनेन आवृत्त्या कथं हीत्येतदेव भाष्यं परिहारपरतया योज्यते । **व्यञ्जकध्वनीति** । ध्वनयन्ति व्यञ्जयन्तीति वायव एव ध्वनयः । अशब्दात्मकः श्रावणो ध्वनिः पदार्थान्तरम्;

## कल्पतरुपरिमलः ।

लक्ष्यमित्याह—**सोर इति । न पूर्वहेत्वर्थमिति** । न पूर्वप्रस्तुते हेतुसमर्पकमित्यर्थः । **तद्धेतुत्वे चेति** । पूर्वप्रस्तुतार्थहेतुत्वे केनचिदुभयसिद्धेन हेतुना भेद एव निषेध्यो न त्वेकत्वं सिद्धं कृत्वा तेन हेतुनाऽनेकरूपत्वं निषेध्यं; वर्णानां ध्वनिरूपाणामेकत्वस्य प्रतिवाद्यनङ्गीकृतत्वादित्यर्थः । **प्रकृतासंगतेरिति** । यद्यपि भेदाभेदयोरेकत्र वास्तवत्वेनोभयप्रामाण्योपपत्तौ किमिति भेदज्ञानप्रत्यभिज्ञानयोर्बाध्यबाधकत्वकल्पनमित्याशङ्कानिराकरणार्थत्वेन प्रकृते कथंचित्सङ्गमयितुं शक्यम्; तथापि भेदाभेदपक्षस्य स्फोटवाद्यनङ्गीकृतत्वात् प्रकृतासंगतिरुक्ता । **उक्तमपि बाधकमिति** । ननु वर्णा अपीत्यादिभाष्येणोक्तमप्यभेदबाधकमित्यर्थः । **अनेनावृत्त्येति** । शङ्काग्रन्थत्वे एक एव सन्नित्यस्य एकश्चेदित्यर्थः । परिहारग्रन्थत्वे प्रत्यभिज्ञावधृतैकभाव इत्यर्थ इति अर्थभेदो विवक्षितः । **अशब्दात्मक इति । ननु**—अशब्दात्मकः श्रावणो ध्वनिः पदार्थान्तरमिति भाष्यानुक्तानुवादः, गगनादिपञ्चभूतगुणः शब्दो ध्वनिरिति सिद्धान्तविरुद्धश्च, वर्णविशेषाप्रतीतौ प्रतीतेरवर्णात्मक इत्यनुवादस्तु वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरतीति भाष्यानुवादो भवति, किं त्वयुक्तानुवादः; दूरे जनसंघकोलाहलप्रत्ययस्य दूरत्वदोषागृहीतकत्वादिकवर्णविषयत्वोपपत्तेः, तत्र वर्णातिरिक्तस्य ध्वनेः कल्पनेऽपि समीपे तदग्रहणस्य सामीप्यदोषप्रयुक्ततायाः वक्तव्यत्वात्, एवं च तस्य वर्णत्वजातिविषयत्वकल्पनानिराकरणमप्यस्थानविजृम्भितम्; शब्दत्वादिसामान्यालिङ्गितवर्णव्यक्तिविषयत्वोपपत्तेः, न च—तथाभूतवर्णविषयत्वाशङ्कापि ध्वनेर्भिन्नत्वाद् न प्रत्यभिज्ञानमस्तीति प्रत्यभि-

निरनुनासिकश्चेति। अथवा—ध्वनिकृतोऽयं प्रत्ययभेदो न वर्णकृत इत्यदोषः। कः पुनरयं ध्वनिर्नाम? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति। प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयति। तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः; वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात्। एवंच सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति। इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात्संयोगविभागकृता उदात्तादिविशेषाः कल्प्येरन्। संयोगविभागानां चाप्रत्यक्षत्वान्न तदाश्रया विशेषा वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैत उदात्तादिप्रत्ययाः स्युः। अपिच नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति। नह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति। नहि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते। वर्णेभ्यश्चार्थप्रतीतेः संभवात्स्फोटकल्पनाऽनर्थिका। न कल्पयाम्यहं स्फोटम्, प्रत्यक्षमेव त्वेनमवगच्छामि; एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासनादिति चेत्, न; अस्या अपि बुद्धेर्वर्णविषयत्वात्। एकैकवर्णग्रहणोत्तरकाला हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया नार्थान्तरविषया। कथमेतदवगम्यते? यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्तन्ते न तु दकारादयः। यदि ह्यस्या बुद्धेर्गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात्ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्तेरन्, न तु तथास्ति। तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः। नन्वनेकत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तं, तत्प्रतिब्रूमः—संभवत्यनेकस्याप्येकबुद्धिविषयत्वम्; पङ्क्तिर्वनं सेना दशत्[1] शतं सहस्रमित्यादिदर्शनात्। या तु गौरित्ययेकोऽयं शब्द इति बुद्धिः; सा बहुष्वेव वर्णेष्वेकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव। अत्राह—यदि वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युस्ततो जारा राजा कपिः पिक इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात्। त एव हि वर्णा इतरत्र चेतरत्र च प्रत्यवभासन्त इति। अत्र वदामः—सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारो-

भामती।

इति स्थितेऽभ्युपेत्य परिहारमाह भाष्यकारः—**अथवा ध्वनिकृत इति**। अथवेति पूर्वपक्षं व्यावर्तयति। भवेतां नाम गुणगुणिनावेकेन्द्रियग्राह्यौ, तथाप्यदोषः; ध्वनीनामपि शब्दवच्छ्रावणत्वात्। ध्वनिस्वरूपं प्रश्नपूर्वकं वर्णेभ्यो निष्कर्षयति—**कः पुनरयमिति**। नच—अयमनिर्धारितविशेषवर्णत्वसामान्यमात्रप्रत्ययो न तु वर्णातिरिक्ततदभिव्यञ्जकध्वनिप्रत्यय इति—सांप्रतम्; तस्यानुनासिकत्वादिभेदभिन्नस्य गादिव्यक्तिवत्प्रत्यभिज्ञानाभावात्, अप्रत्यभिज्ञायमानस्य चैकत्वाभावेन सामान्यभावानुपपत्तेः। तस्मादवर्णात्मको वैष शब्दः, शब्दातिरिक्तो वा ध्वनिः, शब्दव्यञ्जकः श्रावणोऽभ्युपेयः। उभयथापि चाक्षु व्यञ्जनेषु च तत्तद्ध्वनिभेदोपधानेनानुनासिकत्वादयोऽवगम्यमानास्तद्धर्मा एव शब्दे प्रतीयन्ते, नतु स्वतः शब्दस्य धर्माः। तथा च येषामनुनासिकत्वादयो धर्माः परस्परविरुद्धा भासन्ते भवतु तेषां ध्वनीनामनित्यता। नहि तेषु प्रत्यभिज्ञानमस्ति। येषु तु वर्णेषु प्रत्यभिज्ञानं न तेषामनुनासिकत्वादयो धर्मा इति नानित्याः। **एवंच सति सालम्बना इति**। यद्येष परस्याग्रहो धर्मिण्यगृह्यमाणे तद्धर्मा न शक्या ग्रहीतुमिति, एवं नामास्तु तथा तुष्यतु परः, तथाप्यदोष इत्यर्थः। तदनेन प्रबन्धेन क्षणिकत्वेन वर्णानामशक्यसंगतिग्रहतया यदवाचकत्वमापादितं वर्णानां तदपाकृतम्। व्यस्तसमस्तप्रकारद्वयासंभवेन तु यदासञ्जितं तन्निराचिकीर्षुराह—**वर्णेभ्यश्चार्थप्रतीतेरिति**। कल्पनामसृष्यमाण एकदेश्याह—**न कल्पयामीति**। निराकरोति—**न अस्या अपि बुद्धेरिति**। निरूपयतु तावद्गौरित्येकं पदमिति धियमायुष्मान्। किमियं पूर्वानुभूतान्गकारादीनेव सामस्त्येनावगाहते, किंवा गकाराद्यतिरिक्तं, गवयमिव वराहादिभ्यो विलक्षणम्। यदि गकारादिविलक्षणमवभासयेत्, गकारादिरूषितः प्रत्ययो न स्यात्। नहि वराहधीर्महिषरूषितं वराहमवगाहते। पदतत्त्वमेकं प्रत्येकमभिव्यञ्जयन्तो

वेदान्तकल्पतरुः।

वर्णविशेषाप्रतीतौ प्रतीतेरित्युक्तं भाष्ये। सा जातिविषयत्वेनाऽन्यथासिद्धेत्याशङ्क्य परिहरति—**न चायमिति**। तस्य ध्वनेर्भिन्नत्वान्न प्रत्यभिज्ञानमस्ति। अतो ध्वन्युल्लेखिप्रत्ययस्य न जातिविषयत्वमित्यर्थः। **अक्षु स्वरेषु**। **एवं च सतीति** दूषणाङ्गीकरणवादः; दूषणाप्राप्तेरुक्तत्वादित्यर्थः। पदबुद्धौ वर्णोल्लेखस्यान्यथासिद्धिं शङ्कते—**पदतत्त्वमिति**। एकमभाग-

१ अत्र प्रायेण पुस्तकेषु मुद्रितेष्वमुद्रितेषु च दशशतमित्येव पाठो दृश्यते तथापि समुदायवाचिनां पङ्क्तिवनशतसहस्रादिशब्दानां मध्ये समुदायवाचिन एव निर्देशो युक्तः नत्ववयवाचिनः, दशपदं च न समुदायवाची, किंतु अवयववाचि, अतः 'पंचदशतौ वर्गे वा' इति वचनानुसारेण समुदायवाचिनो दशत् शब्दस्यैव तत्र निवेशः कृतः तकारलोपं संभावयद्भिः।

## भामती ।

ध्वनयः प्रयत्नभेदभिन्नास्तुल्यस्थानकरणनिष्पाद्यतयान्योन्यविसदृशतत्तत्पदव्यञ्जकध्वनिसादृश्येन स्वव्यञ्जनीयस्यैकस्य पदतत्त्वस्य मिथो विसदृशानेकपदसादृश्यान्यापादयन्तः सादृश्योपधानभेदादेकमप्यभागमपि नानेव भागवदिव भासयन्ति, मुखमिवैकं नियतवर्णपरिमाणस्थानसंस्थानभेदमपि मणिकृपाणदर्पणादयोऽनेकमनेकवर्णपरिमाणसंस्थान-

## वेदान्तकल्पतरुः ।

मभिव्यञ्जयन्तो **नानेव** भागवदिव भासयन्तील्यन्वयः । नानेवेल्यवयविभेदभानाभिप्रायम् । भागवदिल्यवयवप्रतील्यभिप्रायम् । विभागारोपे हेतुमाह—**सादृश्योपधानेति** । सादृश्यमेवोपधानमुपाधिः । सादृश्ये भेदमुपपादयति—**अन्योन्येति** । ये हि गकारौकारविसर्जनीया गङ्गा औष्ण्यं वृक्षः इति च विसदृशपदव्यञ्जकास्तैः सदृशा अपरे गकारादयो ध्वनयो गौरित्येकं पदं व्यञ्जयन्ति । ध्वनीनां सादृश्ये हेतुः—**तुल्यस्थानेति** । भिन्नपदव्यञ्जकध्वनिसदृशध्वनिव्यक्ते एकस्मिन्नपि पदे सन्ति भिन्नपदसादृश्यानीति भेदभ्रम इत्यर्थः । **ननु** पदान्तरेषु कियतां ध्वनीनां विसदृशत्वात्कथं व्यञ्जकसादृश्यमत उक्तं—**प्रत्येकमिति** । गकारादीनामुभयत्र प्रत्येकं पदव्यञ्जकत्वाद् गौरित्यत्र गकारादीनामस्ति भिन्नपदव्यञ्जकगकारादिसादृश्यमित्यर्थः । एकविधप्रयत्नजन्यध्वनीनां न पदे भेदारोपहेतुतेति—**प्रयत्नभेदेत्युक्तम्** । विभागारोपेऽपि कथं वर्णरूपितपदप्रतिभानमत आह—**कल्पिता एवेति** । व्यञ्जकवर्णात्मत्वं व्यङ्ग्यभागेष्वारोप्यत इत्यर्थः ।

## कल्पतरुपरिमलः ।

ज्ञाभावोक्त्यैव निराकृतेति—वाच्यम्; वर्णेषु सोऽयं गकार इत्यादिवत्त्वया ध्वनित्वेनाभ्युपगते कोलाहलेऽपि स एव कोलाहलः पुनरुत्थित इति प्रत्यभिज्ञानसत्त्वाविशेषात्, ध्वनौ प्रत्यभिज्ञानं तज्जातीयविषयमिति तत्र वर्ण इव व्यक्त्यैक्यप्रत्यभिज्ञानाभाव उक्त इति चेद्, न; तुल्यरूपयोः प्रत्यभिज्ञानयोरेकं तज्जातीयविषयं अन्यद् व्यक्त्यैक्याविषयमिति कल्पनायां विनिगमनाविरहात्, प्रत्यभिज्ञानावगतव्यक्त्यैक्येन जात्यसंप्रतिपत्तेर्वर्ण इव ध्वनावपि वक्तुं शक्यत्वात्, तस्मात्सर्वमिदमनुपपन्नमिति चेत्—**उच्यते, अशब्दात्मक** इति वर्णव्यतिरिक्तत्वमुक्तं, **पदार्थान्तरमिति** प्राक्प्रस्तुतवायुव्यतिरिक्तत्वं, **न प्रत्यभिज्ञानमस्तीत्येतद्** व्यक्त्यैक्यप्रत्यभिज्ञानाभावपरम् । यद्यपि ध्वनौ वर्णे च प्रत्यभिज्ञानस्य व्यक्त्यैक्यविषयत्वमौत्सर्गिकम्; तथापि भेर्यादिध्वन्युत्थितौ वर्णोत्पत्त्यभावात् क्वचिद्द्वैदिकवाक्याद्यनुकारिवीणावेण्वादिध्वन्युत्पत्तौ कोलाहलवचनवदस्फुटवर्णाकारप्रतीतिसत्त्वेऽपि वर्णोत्पत्तिकारणस्थानकरणाभावेन तेषां वर्णच्छायानुकारिध्वनिमात्रतया वर्णत्वाभावात् तदसार्वत्रिकत्वाच्च भेर्यादिध्वनिषु श्रूयमाणतारत्वमन्दत्वादिभेदकधर्माणां वर्णाश्रयत्वस्य कल्पयितुमशक्यत्वादनन्यथासिद्धभेदप्रत्ययानुरोधेन ध्वनौ प्रत्यभिज्ञानं तज्जातीयविषयं पर्यवस्यति, वर्णोच्चारणे तु हसितरुदितपशुपक्षिरुतानुकरणशङ्खध्मानादिस्थले ध्वनिकारणत्वेन क्लृप्तस्य कण्ठादिवाय्वभिघातविशेषस्य सत्त्वात् तारत्वप्राच्यत्वप्रतीच्यत्वादिश्रूयमाणधर्माणां ध्वनिधर्मत्वस्य क्लृप्तत्वात् कोलाहलप्रत्ययस्य हसितरुदितादिकोलाहलस्थले ध्वनिविषयत्वस्य क्लृप्तत्वेन जनसंघालापकोलाहलप्रत्ययस्यापि ध्वनिविषयत्वकल्पनौचित्याच्च वर्णाभिव्यक्तिकारणैर्ध्वन्युत्पत्तेरपि कल्पनोपपत्तेर्वर्णेषु तत्प्रतीतिस्तदुपाधिकेति बाधकाभावात् तत्र प्रत्यभिज्ञानमप्यौत्सर्गिकव्यक्त्यैक्यविषयभावमवतिष्ठते । एवंच भिन्नत्वहेतुसाधितेन प्रत्यभिज्ञानाभावेन शब्दत्वादिसामान्यालिङ्गितवर्णाविषयत्वमिह साध्यते, नतु शब्दत्वादिसामान्याविषयत्वमेव । श्रावणत्वाद्वायुव्यतिरिक्तो ध्वनिरवर्णात्मकः गत्वादिवर्णविशेषाप्रतीतौ प्रतीयमानत्वादिति । पूर्वमुक्तो वर्णविशेषाप्रतीतावपि कोलाहलप्रत्ययः सामान्यधर्मालिङ्गितवर्णविषयोऽस्त्विति शङ्काया एवावसरप्राप्ताया निराकर्तुमुचितत्वात् । **नानेवेत्यवयवीति** । स्फोटे वर्णभेदभानमवयवित्वभेदभानम् । एकाराद्येकैकवर्णावयवेकाराकारादिमानमवयवभानम् । **विसदृशपदव्यञ्जका इति** । पदानि स्फोटाः । **एकविधेति** । यद्यपि नानापापालालाहाहादिशब्देष्वेकविधप्रयत्नजन्यानेकाक्षररूपध्वनीनां तत्तत्स्फोटे अनेकाक्षररूपत्वावगाहिभेदभ्रमहेतुता दृष्टा; तथापि प्रायोभिप्रायेणैतदुक्तम् । **ननु—** पदतत्त्वमेकमित्यादिटीकाग्रन्थं पदबुद्धावित्यादिना गकारादिसादृश्यमित्यर्थ इत्यन्तेन ग्रन्थेन गङ्गौष्ण्यादिवर्णसमुदायान्तर्गतगकारौकारादिसदृशगकारौकारादिव्यङ्ग्ये गोपदस्फोटे परस्परभिन्नगङ्गौष्ण्यादिपदस्फोटसादृश्येन भेदभ्रमोपपादकं व्याख्याय तथा भिन्नत्वेन भ्रमकल्पितेषु व्यङ्ग्यभागेषु व्यञ्जकवर्णात्मकतारोपोपपादकतयैवं चेत्यादिटीकाग्रन्थः किमर्थं व्याख्यातः । नहि स्फोटे संनिहितवर्णसमुदायरूपत्वभ्रमस्तद्वर्णारोपाधिष्ठानतया भागभेदभ्रममपेक्षते; तदभावेऽप्येकस्मिन् दर्पणे व्याप्तानेकमुखादिप्रतिबिम्बयुक्ते तावन्मुखादिसमुदायरूपताभ्रमवैव्यञ्जकानेकसमुदायरूपताभ्रमस्योपपत्तेः, विविधमणिकृतहारप्रतिबिम्बव्याप्ते तनुदीर्घकाचफलकादौ क्रमिकसजातीयविजातीयानेकमणिरूपताभ्रमवत्क्रमिकानेकसजातीयविजातीयानेकवर्णरूपताभ्रमस्योपपत्तेश्च, पदतत्त्वमेकमित्यादिटीकाग्रन्थस्त्वित्थं व्याख्यातुं शक्यः । यावन्तो गवादिपर्यायास्तैः सर्वैरप्येक एव स्फोटोऽभिव्यज्यते, एकार्थप्रत्ययहेतोस्तस्य प्रतिपर्यायं भेदकल्पने गौरवात् प्रमाणाभावाच्चेति स्फोटवादिमतम् । एवं सत्येव लोकवेदश्रुतानेकपर्यायाणां घटादीनां देवादीनां च केन वाचकेनोत्पत्तिमाश्रित्य शब्दप्रभवत्वं समर्थनी-

### भामती।

भेदम्। एवंच कल्पिता एवास्य भागा वर्णा इति चेत्, तत्किमिदानीं वर्णभेदानसत्यपि बाधके सिध्येति वक्तुमध्यवसितोऽसि? एकधीरेव नानात्वस्य बाधिकेति चेत्, हन्तास्यां नाना वर्णाः प्रथन्त इति नानात्वावभास एवैकत्वं कस्मान्न बाधते। अथवा वनसेनादिबुद्धिवदेकत्वनानात्वे न विरुद्धे। नो खलु सेनावनबुद्धी गजपदातितुरगादीनां चम्पकाशोककिंशुकादीनां च भेदमपबाधमाने उदीयेते, अपितु भिन्नानामेव सतां केनचिदेकेनोपाधिनावच्छिन्नानामेकत्वमापादयतः। नच परोपाधिकेनैकत्वेन स्वाभाविकं नानात्वं विरुध्यते। नह्यौपचारिकमग्नित्वं माणवकस्य स्वाभाविकनरत्वविरोधि। तस्मात्प्रत्येकवर्णानुभवजनितभावनानिचयलब्धजन्मनि निखिलवर्णावगाहिनि स्मृतिज्ञान एकस्मि-

### वेदान्तकल्पतरुः।

एतदपाकरोति—**तत्किमिति**। औपाधिकत्वस्वाभाविकत्वाभ्यामेकत्वनानात्वे व्यवस्थापयति—**अथवेति**। **नन्वत्रो**-पाध्यभाव उक्तस्तत्राह—**तस्मादिति**। एकप्रत्यक्षानारोहेऽप्येकस्मृतिविषयत्वं वर्णानामुपाधिरित्यर्थः। उपचारे हि सति

### कल्पतरुपरिमलः।

यमित्यत्राविनिगमाव्यवस्थयोरपि परिहारो भवति। एवंच गवादिपर्याया एकमेव स्फोटमभिव्यञ्जयन्तोऽन्योन्यविसदृशघटकुड्यादिपदस्फोटव्यञ्जकघटकुड्यादिवर्णसमुदायसादृश्येन परस्परवैलक्षण्येन स्वव्यञ्ज्यस्य स्फोटस्य मिथो विसदृशघटकुड्यादिपदस्फोटसादृश्यमापादयन्तस्तेन सादृश्येन हेतुनैकमपि स्फोटं नानेवावभासयन्तीति। अस्मिन् व्याख्याने प्रत्येकमभिव्यञ्जयन्त इत्येतद्गोशृङ्गिण्यादिवर्णसमुदायरूपध्वनयः प्रत्येकं स्फोटमभिव्यञ्जयन्तीत्येतत्परम्। तुल्यस्थानकरणनिष्पाद्यतयेत्यादि च तुल्यस्थानकरणनिष्पाद्यतया येऽन्योन्यसदृशास्तेभ्यो विलक्षणास्तत्तत्पदव्यञ्जका घटकुड्यादिध्वनयः तत्सादृश्येनेत्येतत्परम्। अभागमपि भागवदिति दृष्टान्तार्थम्। यथा संध्यक्षरमेकारादिकमखण्डमकारादिभागवदिव भाति एवमेकमपि स्फोटं पर्यायभेदा नानेवावभासयन्तीति। **एवं** व्याख्यानसंभवेऽप्येकत्र स्फोटे गकारादिवर्णसमुदायरूपताप्रतीतेरेवोपपादनीयत्वेन प्रकृतत्वात् तदनुसारेण व्याख्यातम्। अनेकवर्णरूपत्वकल्पनायां भागकल्पनानपेक्षणेऽपि तदपेक्षामङ्गीकृत्य तत्संभवोऽप्युपपादितः॥ **औपाधिकत्वस्वाभाविकत्वाभ्यामिति**। अन्यतरस्यौपाधिकत्वेऽवश्यकल्पनीये एकत्वस्यैवौपाधिकत्वं कल्प्यम्; अन्यथा स्फोटरूपधर्म्यन्तरकल्पनागौरवप्रसङ्गादिति भावः। **ननु**—विपरीतं गौरवं; स्फोटपक्षे पर्यायेऽपि तदभिव्यङ्ग्यस्फोटैक्यादेकत्रैव स्फोटे घटादिशक्तेः कल्प्यत्वाद्, वर्णपक्षे प्रतिपर्यायं शक्तिभेदकल्पनापत्तेरिति—**चेद्, मैवम्**; धर्म्यन्तरतद्गतशक्तिकल्पनापेक्षया क्लृप्तेषु वर्णेषु भेदेनापि शक्तिकल्पनस्य लघुत्वात्। अन्यथा घटकलशादिपर्यायाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसोऽप्रसिद्धपर्यायश्रवणेऽपि प्राग्गृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यक्त्याऽर्थप्रतीत्यापत्तेः। नच—तत्पर्यायाभिव्यक्ते स्फोटे शक्तिग्रहस्तत्तत्पर्यायश्रवणे अर्थधीहेतुरिति—वाच्यम्; एवं प्रतिपर्यायं शक्तिग्रहावश्यम्भावे तत्तत्पर्यायगतशक्तिग्रहोऽर्थधीहेतुरिति कल्पनस्यैव लघुत्वात्। तदा हि शक्तिग्रहत्वेनैव कारणता नतु तत्तत्पर्यायाभिव्यक्तिगतशक्तिग्रहत्वेनेत्यवच्छेदकलाघवं लभ्यते। अवच्छेदकलाघवे च तन्निर्वाहाय तत्तत्पर्यायगतशक्तिभेदकल्पनागौरवं फलमुखत्वान्न दोषः। न चैवं वर्णसमुदायस्यैवैकत्वप्रत्ययविषयत्वे संध्यक्षराणामप्यकारादिवर्णसमुदायत्वापत्तिः; इष्टत्वात्। अतएव मीमांसकैः ऋक्षु संध्यक्षराणां सतां गीतिकाले वृद्धत्वं प्राप्तानां ये आईभावा आऊभावा न ते स्तोभवद्वर्णान्तरागमरूपाः, किंतु वृद्धेषु संध्यक्षरेषु संश्लिष्टतया स्थितानामवर्णेवर्णोवर्णानां गानकाले विश्लेषमात्रम् अगीतसंध्यक्षराभिव्यञ्जकमित्युक्तम्। आश्वलायनेनापि विविच्य संध्यक्षराणामकारमिति याज्यान्ते श्रुतानां संध्यक्षराणामकारं विश्लेष्य तं श्रावयेदिति विहितम्। पाणिनिनापि 'प्लुतावैच इदुतौ'विति सूत्रेण ऐतिकायन औपगवेत्याद्युदाहरणेषु 'गुरोरनृतोऽनन्त्यस्य'त्यादिसूत्रैरैचः प्लुतप्रसङ्गे तस्यान्त्यावयवाविकारोकारौ प्लवेते नतु तदाद्यावयवोऽकारोऽपीति नियमितम्। श्रुतावपि 'तानेकधा समभरत्तदेतदो'मिति प्रणवस्य मात्रात्रयरूपत्वमुक्तम्। एवं संध्यक्षराणां वर्णसमुदायरूपत्वेऽपि तेषां मातृकासु पृथक् परिगणनं क्षकारपृथक्परिगणनवत्प्रत्याहारसूत्रेषु हकारस्य द्विरुपादानवत्कार्यविशेषार्थतयोपपद्यते। **एतेन**—शतादिसंख्या एकत्वादिसमुदायातिरिक्ता एवं सति न सिध्येदित्यपि शङ्का—**निरस्ता**; इष्टापत्तेरेव। अतएव भाष्यं संभवत्यनेकस्यापि एकबुद्धिविषयत्वम् पङ्क्तिर्वनं सेना शतं सहस्रमित्यादिदर्शनादिति। यदि त्वेकत्वसमुदायातिरिक्तशतादिसंख्यानङ्गीकारे कियतामेकत्वानां समुदायः शतसंख्या कियतां च सहस्रसंख्येत्याद्यनवधारणादव्यवस्था स्यात्। शतस्यैकत्वानां समुदायः शतसंख्येत्यादिव्यवस्थाकल्पने संख्यागततया शतादिसंख्याकल्पनं वक्तव्यम्। अत एकत्वादिसमुदायातिरिक्तशतादिसंख्याङ्गीकरणमनिवार्यम्। शतं सहस्रमिति भाष्यं तु घटादिरूपसंख्येयाभिप्रायमिति समर्थ्येत, तर्ह्युपन्यस्तकल्पकप्रमाणवशादतिरिक्तशतादिसंख्याकल्पनेऽपि वर्णसमुदायातिरिक्तस्फोटो न कल्पनीयः; कल्पकप्रमाणाभावादिति द्रष्टव्यम्। **नन्वे**कस्मृतिविषयत्वमेकत्वोपाधिश्चेत् तथाभूतेषु भिन्नदेशस्थेषु वृक्षादिष्वतिप्रसङ्ग इत्याशङ्क्याह—**उपचारे हीति**। नह्येकदेशावस्थितेषु वृक्षेषु वनमित्येकत्वोपचारनिमि-

हन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति । तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते । वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसंबन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना, स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च । वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात् । अथापि नाम प्रत्युच्चारणमन्येऽन्ये वर्णाः स्युः, तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्यत्वाद्या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु संचारयितव्या । ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम् ॥ २८ ॥

## भामती ।

न्भासमानानां वर्णानां तदेकविज्ञानविषयतया वैकार्थधीहेतुतया वैकत्वमौपचारिकमवगन्तव्यम् । नचैकार्थधीहेतुत्वेनैकत्वमेकत्वेन चैकार्थधीहेतुभाव इति परस्पराश्रयम्; नह्यर्थप्रत्ययात्पूर्वमेतावन्तो वर्णा एकस्मृतिसमारोहिणो न प्रथन्ते । नच तत्प्रथानन्तरं वृद्धस्यार्थधीर्नोन्नीयते, तदुन्नयनाच्च तेषामेकार्थधियं प्रति कारकत्वमेकमवगम्यैकपदत्वाध्यवसानमिति नान्योन्याश्रयम् । न च—एकस्मृतिसमारोहिणां क्रमाक्रमविपरीतक्रमप्रयुक्तानामभेदो वर्णानामिति यथाकथंचित्प्रयुक्तेभ्य एतेभ्योऽर्थप्रत्ययप्रसङ्ग इति—वाच्यम्; उक्तं हि—'यावन्तो यादृशा ये च पदार्थप्रतिपादने । वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥' इति । **ननु**—पङ्क्तिबुद्धावेकस्यामक्रमायामपि वास्तवी शालादीनामस्ति पङ्क्तिरिति तथैव प्रथा युक्ता, नच तथेह वर्णानां नित्यानां विभूनां चास्ति वास्तवः क्रमः, प्रत्ययोपाधिस्तु भवेत्, स चैक इति, कुतस्त्यः क्रम एषामिति—**चेत्, न;** एकस्यामपि स्मृतौ वर्णरूपवत्क्रमवत्पूर्वानुभूततत्परामर्शात् । **तथाहि**—जाराराजेति पदयोः प्रथयन्त्योः स्मृतिधियोस्तत्त्वेऽपि वर्णानां क्रमभेदात्पदभेदः स्फुटतरं चकास्ति । तथाच नाक्रमविपरीतक्रमप्रयुक्तानामविशेषः स्मृतिबुद्धावेकस्यां वर्णानां क्रमप्रयुक्तानाम् । **यथाहुः**—पदावधारणोपायान्बहून्निच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥' इति । शेषमतिरोहितार्थम् । दिङ्मात्रमत्र सूचितं, विस्तरस्तु तत्त्वबिन्दावगन्तव्य इति । अलं वा नैयायिकैर्विवादेन । सन्त्वनित्या एव वर्णास्तथापि गत्वाद्यवच्छेदेनैव संगतिग्रहोऽनादिश्च व्यवहारः सेत्स्यतीत्याह—**अथापि नामेति** ॥ २८ ॥ **ननु** प्राच्यामेव मीमांसायां वेदस्य

## वेदान्तकल्पतरुः ।

निमित्तानुसरणं, नतु निमित्तानुसारेणोपचार इति न धवखदिरादिष्वतिप्रसङ्गः । एतेन समुदितानां वर्णानामर्थधीहेतुत्वमुपपादितम् । बालेन स्वस्यैकस्मृत्यारूढवर्णानां मध्यमवृद्धं प्रत्येकार्थधीहेतुतामनुमायैकपदत्वाध्यवसायान्नेतरेतराश्रयमित्याह **—नहीति** । राजेति क्रमप्रयोगो जारेति विपरीतक्रमः । बहुभ्यो युगपदक्रमः प्रयोगः । **यावन्तो** यत्संख्याकाः । **यादृशाः** यत्क्रमादिमन्तः । **ये च** यत्स्वरूपाः । भाष्ये पङ्क्तिबुद्धौ पिपीलिकाक्रमवत् स्मृतौ वर्णक्रमसिद्धिरित्युक्तं, तदाक्षिप्य समाधत्ते—**नन्वित्यादिना** । नित्यानां न कालतो विभूनां वा न देशतः क्रमः । **पदावधारणेति** । राजा जारेत्यत्र **क्रम उपायः** । गौर्गोमानित्यत्र **न्यूनातिरिक्तत्वे** । **स्वरो भाषिकादिः** पञ्चजनाः इत्यादौ । **वाक्यं** पदान्तरसमभिव्याहारः, यथाऽश्वो गच्छतीति न लुङन्तमाख्यातम्; क्रियान्तरोपादानात् । **श्रुतिः** उद्भिदो यागनामपरत्वं समानाधिकरणश्रुतिगम्यम् । स्मृतिर्युगपत्सर्ववर्णविषया । वृद्धव्यवहारे चेत्यादिकल्पना स्यादित्यन्तं भाष्यमतिरोहितार्थम् ।

## कल्पतरुपरिमलः ।

त्तासंभवमात्रेण घटादिष्वपि तस्यास्तन्निमित्तता प्रसज्यत इति भावः । **एतेन समुदितानामिति** व्यस्तसमस्तप्रकारद्वयासंभवे स्फोटवादिनोक्ते समस्तपक्ष आश्रितः; एकस्मृतिविषयत्वेन समुदितत्वोक्तेरित्यर्थः । **एकार्थधीहेतुतामिति** । एकार्थधीहेतुत्वरूपवाचकत्वावगत्यैव स्फोटवादिनाप्येकपदाध्यवसानं वक्तव्यम्; अन्यथा काव्यश्लोकादिश्रवणे तदन्तर्गतपदानां तत्तदर्थेष्वगृहीतशक्तिकस्यापि पुंस इदमेकं पदमिदमेकं पदमित्यादिक्रमेणैतावन्त्यत्र श्लोके पदानीत्यवधारणापत्तेः, प्रजापतेर्हृदयादिशब्दानां सामविशेषादिषु रूढिमजानतोऽप्येतदेकं पदमित्यवधारणापत्तेश्च । अतः स्फोटवादिनाऽपि गकारादिवर्णसमुदाये एकस्मृत्यारूढे तत्तदर्थवाचकत्वेनानुसंगृहीते सति तेन स्फोटरूपस्य पदस्याभिव्यक्तिरङ्गीकरणीया एकस्फोटव्यञ्जकतयानुसंहितेन वा तदभिव्यक्तिरङ्गीकरणीयेति तेनाप्युक्तरीत्या अन्योन्याश्रयपरिहार उपपादनीय एव ॥ **समानाधिकरणश्रुतिगम्यमिति** । उद्भिदा यागेन पशून् भावयेदिति करणभूतयागसामानाधिकरण्यम् । यदि सामानाधिकरण्यं समभिव्याहाररूपं वाक्यमिष्यते, तदा 'सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिन' इत्यादिषु बहुयाजिशब्दार्थादिनिर्णयोपायभूता 'यो

## अत एव च नित्यत्वम् ॥ २९ ॥

**स्वतन्त्रस्य कर्तुरस्मरणादिभिः** स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवात्' इति परिहृत्येदानीं तदेव वेदनित्यत्वं स्थितं द्रढयति—अत एव च नित्यत्वमिति । अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दे नित्यत्वमपि प्रत्येतव्यम् । तथाच मन्त्रवर्णः—'यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्' ( ऋ० सं० १०।७१।३ ) इति स्थितामेव वाचमनुविन्नां दर्शयति । वेदव्यासश्चैवमेव स्मरति—'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा' इति ॥ २९ ॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥

अथापि स्यात्—यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि संतत्यैवोत्पद्येरन्निरुध्येरंश्च, ततो-

### भामती ।

नित्यत्वं सिद्धं तत्किं पुनः साध्यत इत्यत आह—**स्वतन्त्रस्य कर्तुरस्मरणादेव हि स्थिते वेदस्य नित्यत्व इति ।** नह्यनित्याज्जगदुत्पत्तुमर्हति, तस्याप्युत्पत्तिमत्त्वेन सापेक्षत्वात् । तस्मान्नित्यो वेदः, जगदुत्पत्तिहेतुत्वात्, ईश्वरवदिति सिद्धमेव नित्यत्वमनेन दृढीकृतम् । शेषमतिरोहितार्थम् ॥ २९ ॥ शङ्कापदोत्तरत्वात्सूत्रस्य शङ्कापदानि पठति—**अथापि स्यादिति ।** अभिधानाभिधेयाविच्छेदे हि संबन्धनित्यत्वं भवेत् । एवमध्यापकाध्येतृपरंपराविच्छेदे वेदस्य नित्यत्वं स्यात् । निरन्वयस्य तु जगतः प्रविलयेऽत्यन्तासतश्चापूर्वस्योत्पादेऽभिधानाभिधेयावत्यन्तमुच्छिन्नाविति किमाश्रयः

### वेदान्तकल्पतरुः ।

त्यर्थः ॥ २८ ॥ शास्त्रयोनित्वाविरोधायाह—**स्वतन्त्रस्येति । नित्यो वेद इति ।** अवान्तरप्रलयस्थत्वं नित्यत्वमतो दृष्टेन व्यभिचारो भारतीविलासोक्तोऽनवकाशः । अतएव न ह्यनित्यादिति वर्णितानुकूलतर्केऽप्यनित्यात्प्रलयावस्थायामविद्यमानान्न जगदुत्पत्तुमर्हति । तदानीमसतो नियतप्राक्सत्त्वरूपकारणत्वायोगादन्यत उत्पत्तौ तस्यापि तदैवोत्पाद्यत्वेनापर्यव-

### कल्पतरुपरिमलः ।

ब्राह्मणो बहुयाजी तस्य कुम्भ्या नाम गृह्णीयात् स हि गृहीतवसतीवरीक' इत्यादिश्रुतिरुदाहर्तव्या । अत्र हि बहुयाजी सोमयाजी, न तु बहुभिर्यागैरिष्टवानिति निर्णयोपायभूता तस्य गृहीतवसतीवरीकत्वप्रतिपादिनी श्रुतिरिति निरूपितं संकर्षे । युगपत्क्रमिकसर्ववर्णविषया स्मृतिर्न पृथक् पदावधारणोपायत्वेन परिगणिता, किं तु, सर्वोपायानुग्राहकत्वेन साधारण्युक्ता । असाधारण्यपि राजशब्दार्थादिनिर्णयोपायभूता पाणिन्यादिस्मृतिर्द्रष्टव्या । न च—नित्यविभुषु वर्णेषु स्वतः क्रमाभावादुच्चारणक्रमो वाच्यः, स च नास्ति मौनिश्लोके अनुसंधानक्रमोऽपि मौनिलिखितलिप्यक्षरैर्युगपद्वर्णानुमितिस्थले नास्तीति—वाच्यम्; तत्रापि क्रमिकलिपिभिर्लेखकानुसंधानक्रमविशेषितवर्णानुमित्युपपत्तेः । अवश्यंचैवं क्रमिकवर्णानुसंधानं स्फोटवादिनाऽप्युपपादनीयम् । शब्दानामर्थविशेषवाचकत्वस्यैकस्फोटव्यञ्जकत्वस्य वाऽनुसंधानाभावे स्फोटाभिव्यञ्जकत्वासंभवस्योक्तत्वात्, तदनुसंधानस्य च वर्णक्रमविशेषावगतिसापेक्षत्वात् । **एतेन**—गकारादयः प्रत्येकं स्फोटमभिव्यञ्जयन्तीति मतान्तरं—**निरस्तम्**; क्रमिकतावद्वर्णानुसंधानेऽपि तदीयमर्थविशेषवाचकत्वमेकस्फोटव्यञ्जकत्वं वा अजानता स्फोटव्यक्तेरेकैकवर्णसाध्यत्वस्य शङ्कितुमप्यशक्यत्वात् । रत्नतत्त्वदृष्टान्तोऽप्ययुक्तः; प्रतिसन्निकर्षं रत्नप्रत्यक्षवत्प्रतिवर्णं स्फोटप्रत्यक्षस्यानुभवसिद्धत्वाभावात्, रत्नतत्त्वप्रत्यक्षेषु स्पष्टस्पष्टविशेषस्य रत्नजातिव्यञ्जकतल्लक्षणरूपसूक्ष्मविशेषविषयत्वाविषयत्वरूपस्यैवानुभवसिद्धत्वेन तद्वदत्र स्फोटे पूर्वपूर्वाभिव्यक्त्यविषयाणामुत्तरोत्तराभिव्यक्तिविषयाणां च विशेषाणामभावाच्च । तस्मात् क्रमविशेषविशिष्टवर्णसमुदायानुसंधानस्य स्फोटवादिनाप्युपपादनीयत्वात् तदुपपादने च तत एव पदैक्यानुभवस्यार्थप्रतीतेश्चोपपत्तेर्व्यर्था स्फोटकल्पना । तदेतत्सर्वं—**वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यादिति** भाष्येण दर्शितं स्पष्टमेवेति टीकाकल्पतरुग्रन्थयोर्न विवृतम् । **ननु** प्रत्यभिज्ञया वर्णानां नित्यविभुत्वाभ्युपगमे ध्वनीनामपि तथा तदुभयमभ्युपगन्तव्यं स्यात्; तारत्वादयस्तदुभयव्यञ्जकवायुधर्मा इत्यपि कल्पयितुं शक्यत्वात्, **किंच** वर्णा नित्यविभवस्तदभिव्यञ्जकध्वनयस्तारत्वाद्याश्रया इति कल्पने ध्वनय एव कत्वगत्वादीनामप्याश्रया इत्यपि कल्पनासंभवाद्वर्णा एवात्मानं न लभेरन्, तैर्ध्वनिभिः पर्यायभेदेनाभिन्नस्यैकस्यैव स्फोटस्याभिव्यक्त्या ततोऽर्थप्रतीत्युपपत्तेरित्याशङ्कमानानां तुष्ट्यर्थं भाष्यटीकयोर्वर्णानित्यत्वपक्षोऽपि समाश्रितः स स्फुटत्वान्न व्याख्यातः ॥ २८ ॥ **अवान्तरप्रलयस्थत्वमिति ।** यत्किंचित्प्रलयस्थत्व-

## भामती।

संबन्धः स्यात्? अध्यापकाध्येतृसंतानविच्छेदे च किमाश्रयो वेदः स्यात्। नच—जीवास्तद्वासनावासिताः सन्तीति—वाच्यम्; अन्तःकरणाद्युपाधिकल्पिता हि ते तद्विच्छेदे न स्थातुमर्हन्ति। नच ब्रह्मणस्तद्वासना; तस्य विद्यात्मनः शुद्धस्वभावस्य तदयोगात्। ब्रह्मणश्च सृष्ट्यादावन्तःकरणानि तदवच्छिन्नाश्च जीवाः प्रादुर्भवन्तो न पूर्वकर्माविद्यावासनावन्तो भवितुमर्हन्ति; अपूर्वत्वात्। तस्माद्विरुद्धमिदं शब्दार्थसंबन्धवेदनित्यत्वं सृष्टिप्रलयाभ्युपगमेनेति।

## वेदान्तकल्पतरुः।

सानादित्यर्थः। कर्तुरस्मरणात्सिद्धमेव नित्यत्वमनेनानुमानेन दृढीकृतमित्यर्थः॥ २९॥ समाननामेति सूत्रं (ब्र. सू. अ. १ पा. ३ सू. ३०) महाप्रलये जातेरभावाच्छब्दार्थसंबन्धानित्यत्वमाशङ्क्य परिहारार्थम्। वेदस्य वाक्यरूपस्येत्यर्थः। **ननु** जीवानवस्थानेऽपि ब्रह्म अभिधानादिवासितमस्त्वत आह—**नच ब्रह्मण इति**। निरविद्यस्याविद्यासिद्धप्रमाणानाश्रयत्वान्न तज्जवासनाश्रयत्वमित्यर्थः। अथानपेक्ष्य वासनाः ब्रह्म जगत्सृजेत्, तत्राह—**ब्रह्मणश्चेति**। अध्यापकाध्येत्रो-

## कल्पतरुपरिमलः।

साधने सौषुप्तिकप्रलयस्थत्वेनार्थान्तरं यावत्प्रलयस्थत्वसाधने महाप्रलयस्थत्वाभावेन बाध इत्यतोऽवान्तरेति विशेषितम्॥ **दृढीकृतमिति**। मन्त्रार्थवादानां प्रतीयमानेऽर्थे प्रामाण्यमङ्गीकृत्य हीन्द्रादीनां विग्रहः समर्थ्यते। तथा सति मन्त्रकृतो वृणीते संहिताकारपदकारसूत्रकारब्राह्मणकाराणां विश्वामित्रस्य सूक्तं भवतीत्यादिप्रामाण्याद्वेदस्य पौरुषेयत्वमङ्गीकार्यमित्याशङ्कानिराकरणेन दृढीकृतमित्यर्थः। तन्निराकरणमपि देवर्षिप्रभृतीनां वेदशब्दप्रभवत्वहेतोरत एवेति परामर्शादेव। चतुर्मुखो हि वैदिकाच्छब्दात्तेषामसाधारणनामरूपकृत्यविशेषाननुसंधाय तथैव सृजति। ततश्च विश्वामित्रादीनामपि वेदशब्देभ्यः पूर्वकल्पस्थितविश्वामित्रादिनामरूपकृत्यविशेषाननुसंधाय तथैव स्रष्टृत्वलाभे सत्यतीतवर्तमानकल्पगताः सर्वेऽपि विश्वामित्रादयो विश्वामित्रादिपदप्रापकपूर्वकल्पानुष्ठितपुण्यवशाद्विश्वामित्रसूत्रादीननधीत्यैव पश्यन्तीति तत्तत्सूक्तादिद्रष्टृत्वमेव तत्तत्कर्तृत्वम्, नतु सूक्तान्तरादिकर्तृत्वमिति पर्यवस्यति; विश्वामित्रस्य सूक्तमित्यादिवाक्यैर्विशिष्य विश्वामित्रादिसूक्तत्वेन यद्यन्निर्दिष्टं तत्तदेव सूक्तं तैस्तैर्वाक्यैर्विश्वामित्रादिसूक्तत्वेनानुसंधाय तत्तत्सूक्तकर्तृत्वेन कल्पान्तरे विश्वामित्रादयः स्वयंभुवा सृज्यन्त इति वक्तव्यत्वात्। अन्यथा वेदशब्देभ्यस्तत्तत्कृत्यविशेषाननुसंधाय तेषामृषीणां स्रष्टृत्वानुपपत्तेरिति॥२९॥ **महाप्रलये इति**। **नन्विन्द्रादीनां** विग्रहवत्त्वप्रयुक्ता शङ्काऽत्र निराकार्या। नचेयं शङ्का तत्प्रयुक्ता; तेषां विग्रहानङ्गीकरेऽपि यः कश्चिदिन्द्रादिप्रातिपदिकार्थः कल्प्यते यश्च गवादिशब्दार्थस्तस्य सर्वस्यापि महाप्रलये विनाशेन निराश्रयजात्यवस्थानायोगशङ्कायास्तुल्यत्वात्। **उच्यते**; पूर्वसूत्रदृढीकृतस्य वेदनित्यत्वस्य प्रकृतिमात्रावशेषे महाप्रलये वेदविच्छेदावश्यम्भावेन शैथिल्यशङ्कायां तन्निराकरणार्थमिदं सूत्रम्। तेन तदा जात्यभावप्रयुक्तशब्दविरोधशङ्कानिराकरणमप्यानुषङ्गिकतया लभ्यते। महाप्रलयावृत्तावपीन्द्रादीनां समानरूपनामत्वात् तथात्वे च पूर्वकल्पे यैर्वेदवाक्यैरिन्द्रादिरूपं ज्ञात्वा तद्भावप्रेप्सया कैश्चित्कर्माण्यनुष्ठितानि तैरेव तत्कल्पितेन्द्रादिनामरूपाणि स्मृत्वा पुनः सृष्टौ तत्समाननामरूपैन्द्रादिभावेन तेषां सृष्टेर्वाच्यत्वाद् वेदनित्यत्वसिद्धिः। तत्सृष्ट्यर्थं पूर्वकल्पवेदानुसंधानावश्यंभावेन पुनः शब्दार्थानुपूर्वीभिन्न वेदान्तरसृष्टिकल्पकादिभावादिति समाननामरूपत्वेन वेदनित्यत्वे साध्यमाने तत एव पूर्वोक्तरेन्द्राद्यनुगतजातेरपि सिद्धिरिति देवताविग्रहाभावपक्षसाधारण्येऽपि सा शङ्का कण्ठत उपन्यस्ता। भाष्यटीकयोर्जात्यभावशङ्कासमाधानमस्फुटमपि सूक्ष्मावस्थासत्त्वोक्त्या सूचितमिति प्रदर्शनार्थम्। मुख्यतया तत्र निराकरणीया तु शङ्का पूर्वसूत्रलिखिताऽनुमानसाध्यस्य विशिष्यावान्तरप्रलयस्थत्वरूपतया विवरणेनैवोन्मिषन्ती स्पष्टेति नोपन्यस्ता। शङ्काद्वयोपन्यासस्तु टीकायां स्पष्ट एव। **नन्वाधुनिककृत**काव्याद्यध्यापकपरम्पराविच्छेदेऽपि तदन्तर्गतवर्णानां नित्यत्वं दृष्टं, तथा वेदस्यापि स्यादित्याशङ्क्य व्याचष्टे—**वाक्यरूपस्येति**। **प्रमाणानाश्रयत्वादिति**। प्रमाणापेक्षज्ञानानामविद्यावतामेव प्रमाणाश्रयत्वं, निरविद्यस्य तु सर्वप्रपञ्चाधिष्ठानतया प्रमाणाधिष्ठानत्वेऽपि न प्रमाणवत्त्वरूपं तदाश्रयत्वम्। नहि कालस्य सर्वाधारस्य रूपाधारत्वेऽपि घटादिवद् रूपवत्त्वमिति भावः। **ननु** सृष्टिसहकारिभूतवासनानपेक्षत्वं ब्रह्मणो न युज्यत इति तस्यैव यथा कथंचिद्वासनाश्रयत्वं प्रशासितृत्वाद्याश्रयत्ववदङ्गीकार्यम्, वासनामात्रावशेषतया जीवानां वा स्थितिरङ्गीकार्या। अन्यथा पूर्ववासनानुवृत्त्यभावे महासर्गादिकालसृष्टानां तत्प्रसूतानां च मनुष्यपशुपक्षिसरीसृपादीनां हिंसत्वादिविशेषतत्तज्जात्यन्तरविषयविरोधादिप्रतिपत्तेः स्तनपानादिप्रवृत्तेश्चासंभवादिति शङ्कानिराकरणार्थत्वेन ब्रह्मणश्चेति ग्रन्थमवतारयति—**अथानपेक्ष्येति**। नकाररहितः पाठश्चेत् सृजेदित्येतत्काका योजनीयम्। सृजेत्किं न सृजेदित्यर्थः। यस्मात्सकलकार्यप्रपञ्चविलयकाले अन्तःकरणोपहितानां जीवानां तद्वासनानां व्यवस्थानमुपपादयितुमशक्यम्, तस्मात्स्वप्नदृष्टमनुष्यादिष्विव प्राग्वासनारहितेषु नवनवेष्वेव जीवेषु

**भिधानाभिधेयाभिधातृव्यवहाराविच्छेदात्संबन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत । यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति, तदा कथमविरोध इति ? तत्रेदमभिधीयते—समाननामरूपत्वादिति । तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम् । प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम्—**

---

## भामती ।

अभिधातृग्रहणेनाध्यापकाध्येतारावुक्तौ । शङ्कां निराकर्तुं सूत्रमवतारयति—**तत्रेदमभिधीयते समाननामरूपत्वादिति** । यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयः सन्ति; तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिः सहावतिष्ठन्त एव । तथाच स्मृतिः—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥' इति । ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिता यथा

## वेदान्तकल्पतरुः ।

रुच्चारयितृत्वाद्भाष्येऽभिधातृग्रहणेनोक्तिरित्यर्थः । सूक्ष्मेणेत्यस्य व्याख्या **शक्तिरूपेणेति** । कर्मविक्षेपिकाविद्याः भ्रान्तयस्तासां वासनाभिरित्यर्थः । **भ्रमात्संस्कारतश्चान्या मण्डूकमृदुदाहृतेः । भावरूपा मताऽविद्या स्फुटं वाचस्पतेरिह ॥ अप्रज्ञातं** प्रत्यक्षतः । अलक्षणमननुमेयम् । **अप्रतर्क्यं** तर्कागोचरः । **अविज्ञेयम**ागमतः । साक्षिसिद्धस्य ह्यज्ञानस्यागमादिभिरसत्त्वनिवृत्तिः क्रियते । **ननु**—किं भावरूपयाऽविद्यया प्रयोजनम् ? अज्ञातशुक्तिब्रह्मविवर्तत्वेन रजतजगद्भ्रमसिद्धेः, अज्ञातत्वस्य च ज्ञानाभावादुपपत्तेः । **तन्न**; स्वयंप्रभप्रत्यग्ब्रह्मणः स्वविषयप्रमाणानुदयेऽपि यथावत्प्रकाशापत्तौ जगद्भ्रमाभावप्रसङ्गात् । नहि स्वयंप्रभं संवेदनं स्वविषयप्रमाणानुदयान्न भाति । यद्यपि शुक्तिं स्वत एव जडामविद्या नावृणोति; तथापि तत्स्थानिर्वाच्यभावरूपरजतोपादानत्वेनेष्टव्येति भावरूपाविद्या सप्रयोजना । प्रमाणं तु डित्थप्रमा, डित्थगतत्वे सति यः प्रमाभावस्तत्त्वानधिकरणानादिस्वप्रागभावनिवर्तिका, प्रमात्वाद्, डपित्थप्रमावत् । ये तु प्रमा स्वप्रागभावनिवृत्तिरेव, नतु निवर्तिकेति मन्यन्ते, तान् प्रति निवर्तिकेत्यस्य स्थाने निवृत्तिरिति पठितव्यम् । न चैतदसमवेतत्वमेतदन्यसमवेतत्वं चोपाधिः; एतत्सुखादीनामेतन्निष्ठप्रमाभावत्वरहितानादिस्वप्रागभावनिवर्तकत्वेन साध्ये विद्यमानेऽपि उपाध्यभावेन साध्याव्याप्तेरिति । त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिश्च मानम् । नच प्रमाणतो न जानामि किंतु जाने इति व्यपदेशार्थः, तथा सति को मदुक्तोऽर्थ इत्युक्तेऽनुवदेन्न च शक्नोति । नच सामान्येन ज्ञाते विशेषतोऽज्ञानम्; सामान्यस्य ज्ञातत्वात्, विशेषस्य चाबुद्धस्याज्ञानव्यावर्तकत्वेन प्रतिभासायोगात्, प्रमितत्वे चाज्ञातत्वव्याघातात्,

## कल्पतरुपरिमलः ।

हिंसाहिंसादिरूपा सर्वाऽपि व्यवस्थोपपादनीया महाप्रलयादिभिरिति शङ्काभिप्रायः । **तासां वासनाभिरिति** । पूर्ववासनाभावे हिंसाहिंसत्वादिव्यवस्थानुपपत्तेरवश्यं वासनावशेषः स्वीकार्यः । स्वप्नदृष्टमनुष्यादीनां प्रचीनवासनाभावेऽपि स्वप्नद्रष्टुर्व्यवस्थितत्वात्तज्जातिस्वभावानुभवजन्यवासनया तथा तथाऽध्यास उपपद्यते । अत्र सर्वेषां जीवानां विलीनानां वासनाश्रयत्वाभावे कस्य वासनया व्यवस्थोपपद्येत ब्रह्मणः पूर्ववासनातत्प्रयुक्तभ्रमवत्त्वाभावादिति भावः । **साक्षिसिद्धस्येति** । सदा साक्षिण्यध्यस्ततया भासमानेऽज्ञाने नागमस्य प्रामाण्यम्; तस्य अप्राप्तार्थविषयत्वात् । नानुमानस्य; सिद्धसाधनात् । चक्षुराद्यप्रवृत्तिः स्पष्टा । तत्रागमानुमानार्थापत्त्युपन्यासस्तु साक्षिसिद्धस्य तस्याभावरूपत्वशङ्कानिवृत्तये इत्यर्थापत्तिरूपप्रमाणपर्यवसायी भवति । तथापि जीवब्रह्मभेदं प्रपञ्चसत्यत्वं च मन्यमानं परं प्रत्यन्यत्प्रमाणमुपन्यसनीयमित्याकाङ्क्षायामाह—**प्रमाणं त्विति** । डित्थगतत्वविशेषितप्रमाभावत्वानधिकरणत्वमनादेर्विशेषणानधिकरणरूपतया पर्यवस्यतीति दृष्टान्तसिद्धिः, पक्षे प्रमाभावत्वरूपविशेष्यानधिकरणत्वरूपतया पर्यवस्यतीति डित्थप्रमानिवर्त्यानादिभावरूपाज्ञानसिद्धिः । अन्यगतप्रमाभावस्य डित्थगतसुखाद्यभावस्य च डित्थप्रमाविरोधित्वाभावेन तन्निवर्तकतया पक्षे साध्यपर्यवसानासंभवात् **एतत् सुखादीनामिति** । नच—साध्ये प्रमाविशेषणं व्यर्थं न देयम् । अतः साध्यमेतत्सुखादिषु नास्तीति नोपाधेः साध्यव्यापकत्वभङ्ग—इति वाच्यम्; एवं सोपाधिकत्वनिवारणेन व्याप्तिग्रहौपयिकतयैव प्रमाविशेषणस्य सप्रयोजनत्वात् । **नन्वेवं** डित्थगतत्वविशेषितप्रमाविरोधित्वानधिकरणानादिनिवर्तकत्वमप्युक्तहेतुना साधयितुं शक्यं तेन डित्थप्रमायाः स्वभावस्वसमानविषयातिरिक्तानादिनिवर्तकत्वमपि सिध्येदित्याभाससमानयोगक्षेमत्वपरिहारार्थमनुमानानुग्राहिकामर्थापत्तिमुपन्यस्यति—**त्वदुक्तमिति** । यद्यपि त्वदुक्तमर्थं न जानामीति प्रत्यक्षमप्यज्ञानेऽस्ति; तथापि तस्य स्वमते साक्षिरूपत्वेन प्रमाणत्वाभावात् साक्षिसिद्धाज्ञानेऽभावत्वशङ्काव्यावृत्त्यर्थं प्रमाणोपन्यासस्य प्रस्तुतत्वाद् विवदमानस्य परस्य प्रत्यक्षेण तुष्ट्यभावाच्च तथाभूतव्यवहारान्यथानुपपत्तिरूपमर्थापत्तिप्रमाणमुदाहृतम् । संभाविताभावविषयत्वशङ्कानिरासप्रकारस्तु

## भामती।

कूर्मदेहे निलीनान्यङ्गानि ततो निःसरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनासारसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति, तथा पूर्ववासनावशात्पूर्वसमाननामरूपाण्युत्पद्यन्ते। **एतदुक्तं भवति**—यद्यपीश्वरात्प्रभवः संसारमण्डलस्य; तथापीश्वरः प्राणभृत्कर्माविद्यासहकारी तदनुरूपमेव सृजति। नच सर्गप्रलयप्रवाहस्यानादितामन्तरेणैतदुपपद्यत इति सर्गप्रलयाभ्युपगमेऽपि संसारानादिता न विरुध्यत इति। तदिद-

## वेदान्तकल्पतरुः।

स्मृतत्वे चानुवादापातात्। मम तु भावरूपाज्ञानस्य सविषयस्य साक्षिण्यध्यासात्प्रतिभासो न मानत इत्यविरोधः। नच—मानाभाव एव तस्मिन्नध्यस्तो भासत इति—वाच्यम्; स्वप्रभे भावरूपाविद्यातिरोधानमन्तरेणाध्यासायोगस्योक्तत्वात्। पराक्रान्तं चात्र सूरिभिरिति। ते चावधिमुचितकालं प्राप्य पूर्वसमाननामरूपाणि भूत्वोत्पद्यन्त इत्यन्वयः। परमेश्वरेच्छा-ईक्षणम्। **ईक्षितुः परमेशस्य वाचस्पतिमुखोद्गतेः। निजुह्नुवे परेशानमसावित्यतिसाहसम्॥** ईक्षणं च जीवाज्ञातस्येश्वरस्य विवर्त आकाशादिवदिति न प्रमातृत्वेनाविद्यावत्त्वप्रसङ्गः। कूर्माङ्गानां दर्शनादर्शनमात्रं नोत्पत्तिरित्युदाहरणान्तरमाह—**यथा वेति। घनाघनाः** निबिडा मेघाः। **तत्कृतासारेण** सन्ततधारावर्षेण **सुहितानि** बृंहितानि इत्यर्थः। अविद्यायाः पूर्ववासनाश्रयत्वेन जगत्कारणत्वे ब्रह्मणो जगत्कारणत्वविरोधमाशङ्क्योपकरणस्य स्वातन्त्र्याविघातकत्वेन परिहरति—**एतदुक्तमिति।** ततश्चानादित्वं संसारस्येत्याह—**नच सर्गेति।** उपपद्यते चोक्तन्यायेनानादित्वमि-

## कल्पतरुपरिमलः।

प्रत्यक्षार्थापत्त्योरुभयोरपि समानः। **सविषयस्येति। ननु**—अज्ञानविषयस्य साक्षिणावभासेऽपि को मदुक्तोऽर्थ इति पृष्टस्त्वमनुवदेदिति दूषणं समानम्; अज्ञानसुखदुःखादिवत्साक्षिभास्यस्य व्यवहारयोग्यत्वात्। नच—सामान्याकार एवाज्ञानविषयः साक्षिभास्यश्च न विशेषाकार इति—सांप्रतम्; अवगतानवगताकारयोरज्ञातविषयाविषयत्वोक्तेर्विरुद्धत्वात्। प्रमाणावगतो हि सामान्याकारः तदनवगतश्च विशेषाकारः। अस्ति कश्चिद्वक्तृवाक्यस्यार्थ इति सामान्याकारस्यानवगमेऽपि त्वदुक्तमर्थं न जानामीत्यनुभवव्यवहाराङ्गीकारे वक्तृवाक्यमश्रुतवतः श्रुतवतोऽपि तदर्थवत्तामजानतश्च तत्प्रसङ्गाद् विशेषाकारस्य प्रमाणतोऽवगते चोपन्यस्ताज्ञानानुभवव्यवहारानुदयात्। तस्मात्प्रमाणानवगतविशेषाकारविषयमेवाज्ञानं तदवगतसामान्याकारावच्छेदेनानुभूयते व्यवह्रियते च। नचान्यविषयाज्ञानस्यान्यावच्छेदेनानुभवेऽतिप्रसङ्गः; सामान्यविशेषभावस्य नियामकत्वादित्यनुभवसिद्धं प्रकारमास्थायोपपादनीयं, तज् ज्ञानाभावाज्ञानवादेपि तुल्यम्। शास्त्रार्थजिज्ञासेति सकलानुभवसिद्धजिज्ञासानुभवोऽप्येवमेवोपपादनीयः। अस्ति कश्चित्फलवान्वेदान्तशास्त्रस्यार्थ इति सामान्यनिश्चयरहितस्यायमेव तदर्थ इति विशेषनिश्चयवतश्च तज्जिज्ञासानुदयेनानवगतविशेषाकारजिज्ञासैवावगतसामान्याकारावच्छेदेनानुभूयते व्यवह्रियते चेति निर्वाहमन्तरेण गत्यन्तराभावात्। अतस्त्वदुक्तमर्थं न जानामीत्यनुभवस्य क्लृप्ताभावविषयत्वोपपत्तेर्न वस्त्वन्तरकल्पनं युक्तमिति—**चेत्, उच्यते;** अभावत्वप्रकारकाधिकरणविशेषवृत्त्यभावज्ञाने तदधिकरणवृत्त्यवृत्तिधर्मावच्छिन्नप्रतियोगिज्ञानापेक्षानियमोस्ति, घटवति भूतले स घटो नास्तीति घटान्तराभावप्रतीतेरिव घटो नास्तीति तत्प्रतीतेः कदाप्यनुदयात्। तथाभूतप्रतियोगिज्ञानं तु ज्ञानाभावज्ञानापेक्षितं तदा संभावयितुं न शक्यम्; शास्त्रार्थज्ञानत्वस्य तदानीं तस्मिन्सति समान्यज्ञाने सत्त्वात् तस्मिन्नसतस्तद्विशेषज्ञानत्वस्य प्राग्विशेषानवगत्या ज्ञातुमशक्यत्वात्। अतः कारणाभावान्न तस्याभावज्ञानत्वमुपपादयितुं शक्यम्। विषयिज्ञाने तु न विषयतावच्छेदकावच्छिन्नविषयज्ञानापेक्षानियमोऽस्ति; जिज्ञासाज्ञानेन व्यभिचारादनवगतशास्त्रार्थविशेषज्ञानेच्छाया शास्त्रार्थे जिज्ञासा इत्यवगतसामान्याकारावच्छेदेनानुभवदर्शनादतः कारणसंभवादज्ञानविषयमेव तदङ्गीकर्तुं युक्तम्। एतदभिप्रेत्य सविषयस्येति विशेषितम्। एवंच मम शास्त्रार्थज्ञानं नास्तीति ज्ञानमप्यज्ञानविषयमेव, ज्ञानाभावस्य तु विशेषज्ञानानन्तरमेतावन्तं कालमित्थमिमं विशेषं नाज्ञासिषमित्यनुभव इति द्रष्टव्यम्। **नच मानाभाव एवेति** स्वयूथ्याशङ्का। **इच्छा ईक्षणमिति।** तदैक्षतेति स्थाने सोऽकामयतेति श्रुत्यन्तरदर्शनादिति भावः। वाचस्पतिना प्रपञ्चाकारपरिणाम्यविद्याश्रयत्वं जीवस्याभ्युपगतमिति तत्परिणामभूतज्ञानेच्छादिमत्त्वमपि जीवस्यैव युज्यते, नेश्वरस्य; अत ईश्वरसद्भावं व्यवहरन्नपि तत्र सर्वज्ञत्वाद्यनुपपत्तिहेतुमाश्रयन्वाचस्पतिः पर्यायेण परमेश्वरमपललापेति केषांचिद् दूषणं प्रत्याचष्टे—**ईक्षितुरिति।** जीवाज्ञाते परमेश्वरे शुक्तिशकले रजतस्येवारोप उपपद्यत इति परिहाराभिप्रायः। **घनाघना निबिडा मेघा इति।** 'वर्षुकाब्दा घनाघना' इति कोशकारः। घनशब्दस्य चलाचलपतापतादिवद् द्विर्वचनमागागमश्च। वर्षुकाब्दाः प्रायेण निबिडा भवन्तीत्यर्थतो निबिडा इति व्याख्यातम्। केषुचित्कोशेषु घना निबिडा घना मेघा इति पाठो दृश्यते, स पाठो घनघनेति दीर्घरहितं मूलपाठमाश्रित्य। **ननु**—आसारसुहितानीत्ययुक्तो निर्देशः, 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'ति समासनिषेधादित्याशङ्क्य व्याचष्टे—**बृंहितानीत्यर्थ इति।** तृप्त्यर्थानां सुहितादिशब्दानां षष्ठीसमासप्राप्तौ तन्निषेधपरं तत्र सुहितार्थग्रहणम्। इह तु बृंहितार्थोऽन्य एव सुहितशब्द इति तस्याऽऽसार-

'उपपद्यते चाप्युपलभ्यते च' ( ब्र० २।१।३६ ) इति अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम् । स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते—'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' ( कौ० ३।३ ) इति । स्यादेतत्—स्वापे पुरुषान्तरव्यवहाराविच्छेदात्स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धम् । महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसंधातुमशक्यत्वाद्वैषम्यमिति; नैष दोषः, सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति; तथापि न प्राकृतवदीश्वराणां भवितव्यम् । तथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान्भवन्दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नास्तीति वदितुम् । ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत्कल्पान्तरव्यवहारानुसंधानोपपत्तिः । तथाच श्रुतिः—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' ( श्वे० ६।१८ ) इति । स्मरन्ति च 'शौनकादयः मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टाः' इति । प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते । श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते' इत्युपक्रम्य 'तस्मादेतानि

भामती ।

मुक्तम्—उपपद्यते चाप्युपलभ्यते चागमत इति । स्यादेतत्—भवत्वनादिता संसारस्य, तथापि महाप्रलयान्तरिते कुतः स्मरणं वेदानामित्यत आह—अनादौ च संसारे यथा स्वापप्रबोधयोरिति । यद्यपि प्राणमात्रावशेषतातन्निःशेषते सुषुप्तप्रलयावस्थयोर्विशेषः; तथापि कर्मविक्षेपसंस्कारसहितलयलक्षणाविद्यावशेषतासाम्येन स्वापप्रलयावस्थयोरभेद इति द्रष्टव्यम् । ननु नापर्यायेण सर्वेषां सुषुप्तावस्था, केषांचित्तदा प्रबोधात्, तेभ्यश्च सुप्तोत्थितानां ग्रहणसंभवात्, प्रायणकालविप्रकर्षयोश्च वासनोच्छेदकारणयोरभावेन सत्यां वासनायां स्मरणोपपत्तेः शब्दार्थसंबन्धवेदव्यवहारानुच्छेदो युज्यते । महाप्रलयस्त्वपर्यायेण प्राणभृन्मात्रवर्ती, प्रायणकालविप्रकर्षौ च तत्र संस्कारमात्रोच्छेदहेतू स्त इति कुतः सुषुप्तवत्पूर्वप्रबोधव्यवहारवदुत्तरप्रबोधव्यवहार इति चोदयति—स्यादेतत्—स्वाप इति । परिहरति—नैष दोषः । सत्यपि व्यवहारोच्छेदिनीति । अयमभिसंधिः—न तावत्प्रायणकालविप्रकर्षौ सर्वसंस्कारोच्छेदकौ; पूर्वाभ्यस्तस्मृत्यनुबंधाज्जातस्य हर्षभयशोकसंप्रतिपत्तेरनुपपत्तेः, मनुष्यजन्मवासनानां चानेकजात्यन्तरसहस्रव्यवहितानां पुनर्मनुष्यजातिसंवर्तकेन कर्मणाऽभिव्यक्त्यभावप्रसङ्गात् । तस्मान्निकृष्टधियामपि यत्र सत्यपि प्रायणकालविप्रकर्षादौ पूर्ववासनानुवृत्तिः, तत्र कैव कथा परमेश्वरानुग्रहेण धर्मज्ञानवैराग्यैश्वर्यातिशयसंपन्नानां हिरण्यगर्भप्रभृतीनां महाधियाम् । यथा वा आ च मनुष्येभ्य आ च कृमिभ्यो ज्ञानादीनामनुभूयते निकर्षः, एवमामनुष्येभ्य एव आ च भगवतो हिरण्यगर्भाज्ज्ञानादीनां प्रकर्षोऽपि संभाव्यते । तथाच तदभिवदन्तो वेदस्मृतिवादाः प्रामाण्यमप्रत्यूहमश्नुवते । एवं चात्रभवतां हिरण्यगर्भादीनां परमेश्वरानुगृहीतानामुपपद्यते कल्पान्तरसंबन्धिनिखिलव्यवहारानुसंधानमिति । सुगममन्यत् । स्यादेतत्—अस्तु कल्पान्तरव्यवहारानुसंधानं तेषाम् । अस्यां तु सृष्टावन्य एव वेदाः, अन्य एव चैषामर्थाः, अन्य एव वर्णाश्रमाः, धर्माच्चानर्थोऽर्थश्चाधर्मात् , अनर्थश्चेप्सितोऽर्थश्चानीप्सितः, अपूर्वत्वात्सर्गस्य । तस्मात्कृतमत्र कल्पान्तरव्यवहारानुसंधानेन, अकिंचित्करत्वात् । तथाच पूर्वव्यवहारोच्छेदाच्छब्दार्थसंबन्धश्च वेदश्चा-

वेदान्तकल्पतरुः ।

त्यर्थः । एवं पदपदार्थसंबन्धे विरोधं परिहृत्य संप्रदायविच्छेदाद्वाक्यनित्यत्वविरोधमुक्तमनुवदति—स्यादेतदिति । भाष्यस्थसुषुप्तिदृष्टान्तस्य वैषम्यमाशङ्क्याह—यद्यपीति । लीयतेऽस्यां सर्वकार्यमिति लयलक्षणाऽविद्या । श्लोके उक्तो यो विरोधः । यजमानो भाविन्या वृत्त्या यदाऽग्निरिदानीमग्नये निर्वपति, तदा भविष्यदद्यतनाग्न्योस्तुल्यनामता । ननु

मन्त्रे मन्त्रे विद्यात्' इति। प्राणिनां च सुखप्राप्तये धर्मो विधीयते। दुःखपरिहाराय चाधर्मः प्रतिषिध्यते। दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतः, न विलक्षणविषयावित्यतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते। स्मृतिश्च भवति—'तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे। तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते॥' इति। प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते। शक्तिमूलमेव च प्रभवति। इतरथाकस्मिकत्वप्रसङ्गात्। नचानेकाकाराः शक्तयः शक्याः कल्पयितुम्। ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां, देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणां, वर्णाश्रमधर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिन्द्रियविषयसंबन्धनियतत्ववत्प्रत्येतव्यम्। नहीन्द्रियविषयसंबन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुम्। अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात्कल्पान्तरव्यवहारानुसंधानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति। समाननामरूपत्वाच्चावृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः। समाननामरूपतां च श्रुतिस्मृती दर्शयतः—'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः' ( ऋ० सं० १०।१९०।३ ) इति। यथा पूर्वस्मिन्कल्पे सूर्याचन्द्रमःप्रभृतिजगत्क्लृप्तम्, तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः। तथा 'अग्निर्वा अकामयत। अन्नादो देवानां स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' ( तै० ब्रा० ३।१।४।१ ) इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपद्यस्मै वाग्नये निरवपत्तयोः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या। स्मृतिरपि—'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः॥ यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥ यथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह। देवा देवैरतीतैर्हि रूपैर्नामभिरेव च॥' इत्येवंजातीयका द्रष्टव्या॥ ३०॥

### मध्वादिष्वसंभवादनधिकारं जैमिनिः॥ ३१॥

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्यावर्त्यते। देवादीनामनधिकारं जैमिनिराचार्यो मन्यते। कस्मात्? मध्वादिष्वसंभवात्। ब्रह्मविद्यायामधिकारा-

#### भामती।

नित्यौ प्रसज्येयातामित्यत आह—**प्राणिनां च सुखप्राप्तय इति**। यथावस्तुस्वभावसामर्थ्यं हि सर्गः प्रवर्तते, नतु स्वभावसामर्थ्यमन्यथयितुमर्हति। नहि जातु सुखं तत्त्वेन जिहास्यते, दुःखं चोपादित्स्यते। नच जातु धर्माधर्मयोः सामर्थ्यविपर्ययो भवति। नहि मृत्पिण्डात्पटः, घटश्च तन्तुभ्यो जायते। तथा सति वस्तुसामर्थ्यनियमाभावात्सर्वं सर्वस्माद्भवेदिति पिपासुरपि दहनमाहृत्य पिपासामुपशमयेत्, शीतार्तो वा तोयमाहृत्य शीतार्तिमिति। तेन सृष्ट्यन्तरेऽपि ब्रह्महत्यादिरनर्थहेतुरेवार्थहेतुश्च यागादिरित्यानुपूर्व्यं सिद्धम्। एवं य एव वेदा अस्मिन्कल्पे त एव कल्पान्तरे, त एव चैषामर्थाः, त एव च वर्णाश्रमाः। दृष्टसाधर्म्यसंभवे तद्वैधर्म्यकल्पनमनुमानागमविरुद्धम्। **आगमाश्चेह भूयांसो भाष्यकारेण दर्शिताः। श्रुतिस्मृतिपुराणाख्यास्तद्व्याकोपोऽन्यथा भवेत्**॥ तस्मात्सूक्तम्—**समाननामरूपत्वाच्चावृत्तावप्यविरोध इति**। 'अग्निर्वा अकामयत' इति भाविनीं वृत्तिमाश्रित्य यजमान एवाग्निरुच्यते।

#### वेदान्तकल्पतरुः।

किमिति भाविन्या वृत्त्या यजमानोऽग्निरुच्यतेऽग्निदेवतैवाग्नये निर्वपतु, नेत्याह—**नहीति**। सत्त्वे वा स एवास्माभिरुद्देष्टुं शक्यते यागकाले इति प्राचीनो वृथा स्यादित्यर्थः। देवादीनां स्वमिश्रविद्यास्वनधिकारेऽपि ब्रह्मविद्याधिकारसंभवादाक्षेपा-

#### कल्पतरुपरिमलः।

शब्देन तृतीयासमासो युक्त इति भावः। नह्यग्नेर्देवतान्तरमग्निरस्तीति टीकाग्रन्थोऽनुपपन्नः; अतीतकल्पाग्निसत्त्वात्, तस्येदानीमग्निपदतन्नामनिवृत्तावपि पित्रादीनां श्राद्धे इव पूर्वनाम्नोद्देशसंभवाद् यष्टरीव भाविनी वृत्तिः यष्टव्ये वा भूता वृत्तिरित्यत्र नियामकाभावादित्याशङ्क्याह—**सत्त्वेवेति**। अतीतानन्तकल्पाग्निषु को यष्टव्य इत्यत्र श्राद्धे तज्जन्मपित्रादयस्तद्व-

भ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत, नचैवं संभवति । कथम्? 'असौ आ आदित्यो देवमधु' ( छा० ३।१।१ ) इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन् । देवादिषु ह्युपासकेष्वभ्युपगम्यमानेष्वादित्यः कमन्यमादित्यमुपासीत । पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृतान्युपक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति । वस्वादयस्तु कानन्यान्वस्वादीनमृतोपजीविनो विजानीयुः ? कं

## भामती ।

नह्यग्नेर्देवतान्तरमग्निरस्ति ॥ ३० ॥ ब्रह्मविद्यास्वधिकारं देवर्षीणां ब्रुवाणः प्रष्टव्यो जायते, किं सर्वासु ब्रह्मविद्यास्वविशेषेण सर्वेषां ? किंवा कासुचिदेव केषांचित् ? । यद्यविशेषेण सर्वासु, ततो मध्वादिविद्यास्वसंभवः । कथम् ? **असौ वा आदित्यो देवमध्वित्यत्र** हि **मनुष्या आदित्यं मध्वध्यासेनोपासीरन्** । उपास्योपासकभावो हि भेदाधिष्ठानो न स्वात्मन्यादित्यस्य देवतायाः संभवति । नचादित्यान्तरमस्ति; प्राचामादित्यानामस्मिन्कल्पे क्षीणाधिकारत्वात् । **पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्युपक्रम्येति** । **अयमर्थः**—'असौ वा आदित्यो देवमधु' इति । देवानां मोदहेतुत्वान्मध्विव मधु । भ्रामरमधुसारूप्यमाहास्य श्रुतिः—'तस्य मधुनो द्यौरेव तिरश्चीनवंशः । अन्तरिक्षं मध्वपूपः । आदित्यस्य हि मधुनोऽपूपः पटलमन्तरिक्षमाकाशं, तत्रावस्थानात् । यानि च सोमाज्यपयःप्रभृतीन्यग्नौ हूयन्ते तान्यादित्यरश्मिभिरग्निसंवलितैरुत्पन्नपाकान्यमृतीभावमापन्नान्यादित्यमण्डलमृङ्मन्त्रमधुपैर्नीयन्ते । यथा हि भ्रमराः पुष्पेभ्य आहृत्य मकरन्दं स्वस्थानमानयन्त्येवमृङ्मन्त्रभ्रमराः प्रयोगसमवेतार्थस्मारणादिभिर्ऋग्वेदविहि-

## वेदान्तकल्पतरुः ।

योगमाशङ्क्य विकल्पमुखेन सूत्रमवतारयति—**ब्रह्मविद्यास्विति** । मधुविद्यावाक्यं प्रतीकत आदत्ते—**असाविति** । तद्व्याचष्टे—**देवानामित्यादिना** । भ्रमरैर्निर्वृत्तं भ्रामरम् । द्यौः स्वर्गस्तिर्यग्गतवंश इवादित्यं मधु हि तत्र लग्नमित्यर्थः । अन्तरिक्षमपूप इति श्रुतिं व्याचष्टे—**आदित्यस्य हीति** । अपूपव्याख्या—**पटलमिति** । प्रसिद्धं मध्वपूपसाम्यमाह—**तत्रेति** । श्रुतिनिर्दिष्टपञ्चामृतान्याह—**यानि चेति** । एवं ह्याम्नन्ति "तस्यादित्यस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः ऋच एव मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः एतमृग्वेदमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितं रूप"मित्यादि । **मधुनाड्यो** मध्वाधारच्छिद्राणीत्यर्थः । **व्यक्षरद्**विशेषेणागमद्गत्वा चादित्यस्य पूर्वभागमाश्रितवदित्यर्थः । ता अमृता आप इत्येतद्व्याचष्टे—**यानि चेति** । यादृङ् मधुकरैर्निर्वर्त्यते मधु तदापः । ताश्चामृतसाधनत्व दमृता इति श्रुत्यक्षरार्थः । ऋच एव मधुकृत इत्येतद्व्याचष्टे—**यथा हि भ्रमरा इति** । मन्त्रैः प्रयुक्तं कर्मफलात्मकं रसं स्रवतीत्यृचां मधुपसाम्यम् । अथ

## कल्पतरुपरिमलः ।

पेण वसुरुद्रादयश्च यष्टव्या इत्यत्रैव व्यवस्थितनियामकाभावादविनिगमपरिहारार्थं यष्टव्यदेवतावाहनलिङ्गानुरोधार्थं वाग्निना यष्टव्यस्याग्नेस्तदिष्टिकाले सत्त्वमभ्युपेयम् । तथाचास्माभिरेकोऽग्निर्यष्टव्यस्तेनान्योऽग्निरिति व्यवस्थायां प्रमाणाभावात्स एवाग्निरस्माभिरपि यष्टव्यः स एवाग्न्यधिकारिकसर्वकर्मनिर्वहणक्षम इति प्राचीनवैयर्थ्यमित्याशयः । तस्य ये प्राञ्चो रश्मय इति श्रुतौ तस्येत्यस्य व्याख्यानम्—**आदित्यस्येति** । पुष्पाश्रया अपः समादाय मधुकरैर्मधु निर्वर्त्यते । अत्र कास्ता आपः ? याः समादाय मन्त्रभ्रमरैर्मधु निर्वर्त्यते इत्याकाङ्क्षायां श्रुतावुक्तम्—**ता अमृता आप इति** । अत्र का आपः श्रुत्युक्ता इति न ज्ञायते, तच्छब्दश्च कथं प्रकृतपरामर्शी, अपां च कथममृतत्वमित्याकाङ्क्षायां तत्सर्वं विशदयितुं व्याचष्टे इत्याह—**ता अमृता इति** । **यादृङ् मधुकरैरिति** । ऋच एव मधुकृत इत्यत्र मधुकरैर्निर्वर्त्यं मधु तदुपसर्जनतया प्रस्तुतं तच्छब्देन परामृश्यते, तच्छब्दस्य च स्त्रीलिङ्गबहुवचनान्तत्वम् अप्शब्दसामानाधिकरण्यात् । अप्शब्दश्च पुष्पानुप्रविष्टद्रवांशतुल्यकर्मानुप्रविष्टसोमादिद्रव्यपर इत्यौचित्यादेव लभ्यत इति भावः । **टीकायां तु**—यानि चेत्यादिना सोमाद्याहुतिद्रव्यपरामर्शित्वमप्शब्दस्योक्तं, तत्तु ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपा इति छान्दोग्यविवरणानुसारि । तस्मिन् पक्षे श्रुतौ यद्वसूनां प्रातःसवनमित्यादिपूर्वाध्यायावसानखण्डे सवनद्वारा सोमादीनां बुद्धिस्थत्वात् तत्परामर्शित्वमुपपादनीयम् ॥ **अमृतसाधनत्वादिति** । पाकद्वारेणामृतीभावसाधनत्वादित्यर्थः । **ऋङ्मन्त्रैः प्रयुक्तमिति** । **ननु** यथा हि भ्रमरा इत्यादिटीकावाक्येन कर्मपुष्पेभ्यो रसस्यादित्यमधुरूपस्वस्थानानयनं भ्रमरसाम्यमुक्तं, कथं तस्य तस्य वाक्यस्य तात्पर्यं वक्तुमुपक्रम्य कर्मपुष्पेभ्यः फलरसस्रावणं तत्साम्यमित्युच्यते; **नैष दोषः**; टीकोक्तं साम्यं स्पष्टं मत्वा ता वा एता ऋच इत्यादिश्रुत्युक्तसाम्येऽपि टीकाग्रन्थस्य तात्पर्यमिति दर्शयितुं तथोक्तेः । तस्याः श्रुतेरयमर्थः । **ता** एताः कर्मसु प्रयु-

## भामती ।

तेभ्यः कर्मकुसुमेभ्यः आहृत्य तन्निष्पन्नं मकरन्दमादित्यमण्डलं लोहिताभिरस्य प्राचीभी रश्मिनाडीभिरानयन्ति, तदमृतं वसव उपजीवन्ति । अथास्यादित्यमधुनो दक्षिणाभी रश्मिनाडीभिः शुक्लाभिर्यजुर्वेदविहितकर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं यजुर्वेदमन्त्रभ्रमरा आदित्यमण्डलमानयन्ति, तदेतदमृतं रुद्रा उपजीवन्ति । अथास्यादित्यमधुनः प्रतीचीभी रश्मिनाडीभिः कृष्णाभिः सामवेदविहितकर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं साममन्त्रस्तोत्रभ्रमरा आदित्यमण्डलमानयन्ति, तदमृतमादित्या उपजीवन्ति । अथास्यादित्यमधुन उदीचीभिरतिकृष्णाभी रश्मिनाडीभिरथर्ववेदविहितेभ्यः कर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नमथर्वाङ्गिरसमन्त्रभ्रमराः, तथाश्वमेधवाचःस्तोमकर्मकुसुमात् इतिहासपुराणमन्त्रभ्रमरा आदित्यमण्डलमानयन्ति । अश्वमेधे वाचःस्तोमे पारिप्लवं शंसन्ति इति श्रवणादितिहासपुराणमन्त्राणामप्यस्ति प्रयोगः । तदमृतं मरुत उपजीवन्ति । अथास्य या आदित्यमधुन ऊर्ध्वा रश्मिनाड्यो गोप्यास्ताभिरुपासनभ्रमराः प्रणवकुसुमादाहृत्यादित्यमण्डलमानयन्ति, तदमृतमुपजीवन्ति साध्याः । ता एता आदित्यव्यपाश्रयाः पञ्च रोहितादयो रश्मिनाड्य ऋगादि-

## वेदान्तकल्पतरुः ।

येऽस्य दक्षिणा इत्यादि श्रुतिं व्याचष्टे—**अथास्येत्यादिना** । परः कृष्णमित्यमृतं श्रुतौ निर्दिष्टं तद्रश्म्युपाधिकमित्यभिप्रेत्याह—**अतिकृष्णाभिरिति** । चतुर्थपर्यायेऽथर्वाङ्गिरसो मधुकृत इतिहासपुराणं पुष्पमित्युक्तम् । तत्राथर्वाङ्गिरसमन्त्राणां मधुकरत्वाभिधानात्तैः प्रयोज्यम्, अथर्ववैदिकं कर्म पुष्पं सूचितम् । इतिहासपुराणमन्त्रा यत्र प्रयुज्यन्ते तस्य कर्मणः पुष्पत्वेन निर्देशात्तन्मन्त्रा मधुकृत इत्यर्थादुक्तमिति मनसि निधायाह—**अथर्वाङ्गिरसेति** । कर्मकुसुमेभ्य आहृत्याग्नौ हुतममृतमथर्वमन्त्रा आदित्यमण्डलं नयन्तीत्यन्वयः । इतिहासपुराणमन्त्रप्रयोगयोग्यं कर्माह—**तथाश्वमेधेति** । कर्मकुसुमादाहृत्येत्यनुषङ्गाल्लभ्यते । **ननु** कथमितिहासादिमन्त्राणां वाचस्तोमसंबन्धोऽत आह—**अश्वमेधेति । पारिप्लवो** यदृच्छया बुद्धिस्थमन्त्रशंसनम् । सर्वाण्याख्यानानि पारिप्लवे शंसन्तीति श्रवणादैतिहासिकान्यपि गृह्यन्त इति भावः । **विकल्पेनात्र विज्ञेयं पुष्पभ्रमरचिन्तनम् । इतिहासपुराणस्थमथ वाऽथर्ववेदगम्** ॥ नच यथाश्रुतं शक्यं घटयितुम्; इतिहासपुराणाथर्वणमन्त्रयोरसाधारणसंबन्धाभावादतः कुसुममधुकरचिन्तनैकप्रयोजनानां कर्ममन्त्राणामगत्या विकल्प इति । अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पमिति । पञ्चमपर्यायं व्याचष्टे—**ऊर्ध्वा इति** । आदिश्यन्त इत्यादेशा उपासनानि तेषां भ्रमराणां गोप्यानामाश्रयत्वान्नाडीनां गोप्यत्वमुक्तम् । व्याख्यातां मधुविद्यामुपसंहरति—**ता एता इति** । नाडीनिर्देशोऽमृताद्युपलक्षणार्थः । यशआद्यमृतस्याचाक्षुषत्वाद्दृष्ट्वेति ज्ञानमात्र-

## कल्पतरुपरिमलः ।

क्ता ऋचः एतदृग्वेदविहितं कर्मोद्दिश्या**तपन्** आलोचनमकुर्वन् । तप आलोचने इति धातुः । आलोचनपूर्वकं व्यापारमकुर्वन्निति यावत् । भ्रमरा हि यथा पुष्पाणि स्वानुप्रविष्टद्रवांशरूपं रसं मुञ्चन्ति, तथा मनस्यालोचनपूर्वकं चूषणव्यापारं कुर्वन्ति, तद्व्यापारेण च मधुरसो जायते, एवं मन्त्राः प्रयोगसमवेतार्थस्मृतिरूपं स्वव्यापारमकुर्वन्, तेन यशःप्रभृतिफलरूपरसस्रुतिरजायतेति । इदमेव भ्रमरसाम्यं श्रुतावुक्तं मधुनः स्वस्थाननयनरूपमपि तत्साम्यमर्थाल्लभ्यत इति टीकायां तदुक्तम् । **कर्मकुसुमेभ्य आहृत्याग्नौ हुतमिति** । यद्यप्यग्नौ होमः कर्मकुसुममेव; तथापि होमशरीरानुप्रविष्टद्रव्यम् अग्नौ पाकेन रसात्मना परिणमय्य नयनार्थं तस्य यो निष्कर्षः सोऽत्राहृत्येत्यनेन विवक्षितः । अग्नौ हुतमित्यनेनं "अग्नाववाड्व्यानि सुरभीणि कृत्वे"ति मन्त्रोक्तपाकविशेषो विवक्षित इति द्रष्टव्यम् । **यद्वा**—यजतिचोदनाचोदितेषु सोमादिषु देवतोद्देश्यकद्रव्यत्यागात्मकयागरूपात्प्रधानकर्मणोऽन्यद् यागविनियुक्तद्रव्यसंस्काररूपं होमकर्मेत्याचार्यपक्षमनुसृत्य क्त्वाप्रत्ययेन पृथग् निर्देशः ॥ **विकल्पेनेति । ननु**—अष्टदोषदुष्टो विकल्पः किमर्थमाश्रीयते ? ऋच एव पुष्पमित्यादिप्राचीनपर्यायत्रयसारूप्यार्थमथर्वाङ्गिरस एव मधुकृत इति प्रथमश्रुतरूपकानुसाराद् इतिहासपुराणशब्दस्य आथर्वणं चतुर्थमितिहासपुराणं पञ्चममिति श्रुत्यन्तरावगतपौर्वापर्यसंबन्धेन लक्षणाऽङ्गीकर्तुमुचिता । एवं च श्रुतमधुकृतां पुष्पाध्याहारः श्रुतपुष्पस्य मधुकृदध्याहारश्चेति क्लेशश्च परिहृतो भवति । नच इतिहासपुराणमन्त्रप्रयोज्यं कर्म वाचः स्तोम इत्यपि युज्यते । वाचः स्तोमे सर्वाण्याख्यातानि पारिप्लवं शंसतीति वाक्यस्य तद्वाक्यशेषाम्नातमन्वाख्यानपरतायाः पारिप्लवाधिकरणे ( ब्र. सू. अ. ३ पा. ४ सू. २३ । ) वक्ष्यमाणतयेतिहासपुराणगतोपाख्यानानां तत्र प्रयोगाप्रसक्तेः तेषां ऋगादिवन्मन्त्रत्वाभावाच्चेति—**चेत्, सत्यम्**; इतिहासपुराणं पुष्पमित्यस्य मुख्यार्थानुरोधेन पारिप्लवशब्दस्य वैदिकमैतिहासिकं पौराणिकं वा यदेव किंचिदाख्यानं मनसि परिप्लवते तादर्थ्यं परिकल्प्य कर्मप्रयोज्यत्वेनोपाख्यानानां मन्त्रत्वमुपचर्यार्थान्तरमपि वक्तुं शक्यमिति प्रौढ्येदं व्याख्यानान्तरं कृतम् । **आदेशा उपासनानीति** । उपासनान्यत्र प्रथमाध्यायनिरूपितानि कर्मावबद्धान्युद्गीथोपा-

वान्यं वस्वादिमहिमानं प्रेप्सेयुः ? तथा अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' ( छा० ३।१८।२ ), 'वायुर्वाव संवर्गः' ( छा० ४।३।१ ) 'आदित्यो ब्रह्मेत्यादेशः' ( छा०३।१९।१ ) इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः संभवति । तथा 'इमावेव गोतम भरद्वाजावयमेव गोतमोऽयं भरद्वाजः' ( बृ० २।२।४ ) इत्यादिष्वप्यृषिसंबन्धेषूपासनेषु न तेषामेवर्षीणामधिकारः संभवति ॥ ३१ ॥ कुतश्च देवादीनामनधिकारः ?

**ज्योतिषि भावाच्च ॥ ३२ ॥**

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगदवभासयति, तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते । लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च । नच ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयार्थित्वादिना वा योगोऽवगन्तुं शक्यते; मृदादिवदचेतनत्वावगमात् । एतेनाग्न्यादयो व्याख्याताः । स्यादेतत्—मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां

## भामती ।

संबद्धाः क्रमेणोपदिश्येति योजना । एतदेवामृतं दृष्ट्वोपलभ्य यथास्वं समस्तैः करणैर्यशस्तेजइन्द्रियसाकल्यवीर्यान्नाद्यात्मकमृतं तदुपलभ्यादित्ये तृप्यति । तेन खल्वमृतेन देवानां वस्वादीनां मोदनं विदधदादित्यो मधु । **एतदुक्तं भवति—न केवलमुपास्योपासकभाव एकस्मिन्विरुध्यते, अपितु ज्ञातृज्ञेयभावश्च प्राप्यप्रापकभावश्चेति । तथाग्निःपाद इति ।** अधिदैवतं खल्वाकाशे ब्रह्मदृष्टिविधानार्थमुक्तम् । आकाशस्य हि सर्वगतत्वं रूपादिहीनत्वं च ब्रह्मणा सारूप्यं, तस्य चैतस्याकाशस्य ब्रह्मणश्चत्वारः पादा अग्न्यादयः 'अग्निः पादः' इत्यादिना दर्शिताः । यथा हि गोः पादा न गवा वियुज्यन्ते, एवमग्न्यादयोऽपि नाकाशेन सर्वगतेनेत्याकाशस्य पादाः । तदेवमाकाशस्य चतुष्पदो ब्रह्मदृष्टिं विधाय स्वरूपेण वायुं संवर्गगुणकमुपास्यं विधातुं महीकरोति—**वायुर्वाव संवर्गः** । तथा स्वरूपेणैवादित्यं ब्रह्मदृष्ट्योपास्यं विधातुं महीकरोति—**आदित्यो ब्रह्मेत्यादेशः** उपदेशः । अतिरोहितार्थमन्यत् ॥ ३१ ॥ यद्युच्येत नाविशेषेण सर्वेषां देवर्षीणां सर्वासु ब्रह्मविद्यास्वधिकारः, किंतु यथासंभवमिति । तत्रेदमुपतिष्ठते—**ज्योतिषि भावाच्च ।** लौकिकौ ह्यादित्यादिशब्दप्रयोगप्रत्ययौ ज्योतिर्मण्डलादिषु दृष्टौ न चैतेषामस्ति । चैतन्यम् । नह्येतेषु देवदत्तादिवत्तदनुरूपा दृश्यन्ते चेष्टाः । **स्यादेतत्—मन्त्रार्थवादेतिहासपुराणलोकेभ्य इति ।** तत्र 'जगृभ्माते दक्षिणमिन्द्रहस्तम्' इति च, 'काशिरिन्द्र इत्' इति च । काशिर्मुष्टिः । तथा 'तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । मन्द्रो

## वेदान्तकल्पतरुः ।

विवक्षेत्याह—**उपलभ्येति** । श्रुताविन्द्रियमिति तत्साकल्यविवक्षा इन्द्रियमात्रसंबन्धस्य सिद्धत्वेन फललाभावादित्याह—**इन्द्रियसाकल्येति** । अन्नं च तदाद्यमत्तुं योग्यं वस्वाद्युपजीव्यान्यमृतानि । विजानतामित्यादिभाष्यार्थमाह—**न केवलमिति** । एकेस्मिन्नादित्ये उपास्योपासकभावो विरुद्धः, वस्वादौ तु स च प्राप्यप्रापकभावश्चेत्यर्थः ॥ ३१ ॥ देवादीनां सर्वेषां सर्वविद्यासु किमधिकारः, उत यथासंभवमिति विकल्प्य **प्रथमं** निरस्य **द्वितीयं** शङ्कते—**यद्युच्येतेति** । भाष्ये वाक्यशेषप्रसिद्धिः । पुरस्तादुदेता पश्चादस्तमेतेत्यादिः । हे इन्द्र, ते दक्षिणं हस्तं **जगृभ्म** गृहीतवन्तो वयम् । इमे रोदसी इन्द्र यदि गृह्णासि, तर्हि **ते** तव **काशिर्**मुष्टिः मुष्टौ संमात इत्यर्थः । मुष्टिप्रकारमभिनयति—**इदिति** । इत्थमित्यर्थः । **तुविग्रीवः** पृथुग्रीवः । **वपाच्छिद्रं** सावकाशोदर इत्यर्थः । अतएवा**न्धसो**ऽन्नस्योपयुक्तस्य **मदे** हर्षे सति इन्द्रो **वृत्राणि** शत्रून् **जिघ्नते** हतवानिति । **प्रस्थितस्यो**पकल्पितस्य पक्वस्य हविषो भाग**मद्धि** सोमस्य सुतस्य भागं पिब चेत्यर्थः । **ईशानामै**श्वर्यं देवताया दर्शयतीत्यनुषङ्गः । इन्द्रो दिवः स्वर्गस्येशे ईष्टे इति सर्वत्रानुषङ्गः । **अपां** पातालस्य । **वृधां** वीरुधां स्थावराणाम् । **मेधिराणां** मेधावतां जङ्गमानामिति यावत् । प्राप्तस्य रक्षणे क्षेमे योगे चाप्राप्तप्रापणे इन्द्र ईष्टेऽतो हव्य इन्द्रो यष्टव्य इत्यर्थः । हे इन्द्र, **जगतो** जङ्गमस्य **तस्थुषः** स्थावरस्य चेशानं स्वर्दृशं दिव्यज्ञानं त्वां स्तुम इत्यर्थः । **वरिवसितारं** पूजयितारम् । आहुतिभिः हुतादौ देवान् प्रीणयति । हुतमदन्तीति हुतादः । तस्मै होत्रे प्रीता देवा इषमन्नमूर्जं बलं च प्रयच्छन्तीति । **विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता । फलप्रदानमित्येतत्पञ्चकं विग्रहादिकम् ॥** ये सिद्धवादिनो मन्त्रा न ते विधिक्षमा इति तत्स्वरूपमेव श्रुत्यादिभिरैन्द्र्यादिभिस्तत्र तत्र कर्मणि

## कल्पतरुपरिमलः ।

सनानि प्रणवालम्बनानि विवक्षितानि, न तु स्वतन्त्राणि प्रणवालम्बनोपासनानि; तेषु ता अमृता आप इत्याद्यनन्वयात्, ज्ञातृज्ञेयभावश्चेति टीका अनुपपन्ना; मधुविद्यायामुपास्योपासकभावातिरेकेण ज्ञातृज्ञेयभावानुपदेशादित्याशङ्क्य वस्वादिगतस्योपासकभावपरतया व्याचष्टे—**वस्वादौ तु स चेति** ॥३१॥ **देवान् प्रीणयतीति** । प्रीणातेरेव सकर्मकत्वेऽपि तत्फु-

विग्रहवत्त्वाद्यवगमादयमदोष इति, नेत्युच्यते; नहि तावल्लोको नाम किंचित्स्वतन्त्रं प्रमाणमस्ति । प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसिध्यन्नर्थो लोकात्प्रसिध्यतीत्युच्यते । न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति । इतिहासपुराणमपि पौरुषेयत्वात्प्रमाणान्तरं मूलमाकाङ्क्षति । अर्थवादा अपि विधिनैकवाक्यत्वात्स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते । मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते । तस्मादभावो देवादीनामधिकारस्य ॥ ३२ ॥

## भामती ।

वृत्राणि जिघ्नते' इति विग्रहवत्त्वं देवताया मन्त्रार्थवादा अभिवदन्ति । तथा हविर्भोजनं देवताया दर्शयन्ति 'अद्धीन्द्र पिब च प्रस्थितस्य' इत्यादयः । तथेशनाम् 'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः' इति, तथा 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः' इति । तथा वरिवसितारं प्रति देवतायाः प्रसादं प्रसन्नायाश्च फलदानं दर्शयति—'आहुतिभिरेव देवान् हुतादः प्रीणाति तस्मै प्रीता इषमूर्जं च यच्छन्ति' इति, 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति च । **धर्मशास्त्रकारा** अप्याहुः—'ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।' इति पुराणवचांसि च भूयांसि देवताभिग्रहादिपञ्चकप्रपञ्चमाचक्षते । लौकिका अपि देवताविग्रहादिपञ्चकं स्मरन्ति चोपचरन्ति च । **तथाहि**—यमं दण्डहस्तमालिखन्ति, वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । कथयन्ति च देवता हविर्भुज इति । तथेशनामिमामाहुः—देवग्रामो देवक्षेत्रमिति । तथास्याः प्रसादं च प्रसन्नायाश्च फलदानमाहुः—प्रसन्नोऽस्य पशुपतिः पुत्रोऽस्य जातः । प्रसन्नोऽस्य धनदो धनमनेन लब्धमिति । तदेतत्पूर्वपक्षी दूषयति—**नेत्युच्यते । नहि तावल्लोको नामेति** । न खलु प्रत्यक्षादिव्यतिरिक्तो लोको नाम प्रमाणान्तरमस्ति, किंतु प्रत्यक्षादिमूला लोकप्रसिद्धिः सत्यतामश्नुते, तदभावे त्वन्धपरम्परावन्मूलाभावाद्विप्लवते । नच विग्रहादौ प्रत्यक्षादीनामन्यतममस्ति प्रमाणम् । नचेतिहासादि मूलं भवितुमर्हति; तस्यापि पौरुषेयत्वेन प्रत्यक्षाद्यपेक्षणात् । प्रत्यक्षादीनां चात्राभावादित्याह—**इतिहासपुराणमपीति** । **ननूक्तं** मन्त्रार्थवादेभ्यो विग्रहादिपञ्चकप्रसिद्धिरिति, अत आह—**अर्थवादा अपीति** । विध्युद्देशेनैकवाक्यतामापद्यमाना अर्थवादा विधिविषयप्राशस्त्यलक्षणापरा न स्वार्थे प्रमाणं भवितुमर्हन्ति । 'यत्परः शब्दः स शब्दार्थः' इति हि शब्दन्यायविदः । प्रमाणान्तरेण तु यत्र स्वार्थेऽपि समर्थ्यते, यथा वायोः क्षेपिष्ठत्वम्, तत्र प्रमाणान्तरवशात्सोऽभ्युपेयते न तु शब्दसामर्थ्यात् । यत्र तु न प्रमाणान्तरमस्ति, यथा विग्रहादिपञ्चके, सोऽर्थः शब्दादेवावगन्तव्यः । अतत्परश्च शब्दो न तदवगमयितुमलमिति । तदवगमपरस्य तत्रापि तात्पर्यमभ्युपेतव्यम् । नचैकं वाक्यमुभयपरं भवतीति वाक्यं भिद्येत । नच संभवत्येकवाक्यत्वे वाक्यभेदो युज्यते । तस्मात्प्रमाणान्तरानधिगता विग्रहादिमत्ता अन्यपराच्छब्दादवगन्तव्येति मनोरथमात्रमित्यर्थः । मन्त्राश्च व्रीह्यादिवच्छ्रुत्यादिभिस्तत्र तत्र विनियुज्यमानाः प्रमाणभावाननुप्रवेशिनः कथमुपयुज्यन्तां तेषु तेषु कर्मस्वित्यपेक्षायां दृष्टे प्रकारे संभवति नादृष्टकल्पनोचिता । दृष्टश्च प्रकारः प्रयोगसमवेतार्थस्मारणं, स्मृत्वा चानुतिष्ठन्ति खल्वनुष्ठातारः पदार्थान् । औत्सर्गिकी चार्थपरता पदानामित्यपेक्षितप्रयोगसमवेतार्थ-

## वेदान्तकल्पतरुः ।

विनियुज्यते अतो न प्रमाणं चेत्तर्हि किमुच्चारणमात्रोपयोगा अविवक्षितार्थाः ? नेत्याह—**दृष्टे प्रकारे इति । नन्वन**धिगतमेयाभावे कथं दृष्टार्थत्वम्, अत आह—**दृष्टश्चेति** । प्रयोगसमवेतो द्रव्यदेवतादिः स च विधिभिर्ज्ञात इति स्मार्यः । मन्त्राश्च विधय इव निरपेक्षा देवताद्यभिदधतीति नाप्रमाणम् । **ननु** स्मृतेरविहितायाः कथं द्वारत्वमत आह—**स्मृत्वा चेति** । सामर्थ्याद् द्वारतेत्यर्थः । **ननु** यथा देवतास्मरणे मन्त्राणां तात्पर्यम्, एवं देवताविग्रहादावप्यस्तु, विग्रहादेरपि मन्त्रपदैरवगमादत आह—**औत्सर्गिकी चेति** । उद्दिश्य त्यागस्य हि देवतास्वरूपमेवापेक्षितं, न विग्रहादि, तद्बोधकपदानां तु उत्सर्गप्राप्तमप्यर्थपरत्वं विध्यनपेक्षितत्वादपोद्यत इत्यर्थः ॥ ३२ ॥ **श्वित्री** त्वगामयवान् । **निर्णेजनं**

## कल्पतरुपरिमलः ।

टीकरणार्थं णिजध्याहारेण व्याख्यातम् । **उत्सर्गप्राप्तमपीति । ननु**—औत्सर्गिकदेवताविग्रहसमर्थकमन्त्रपदानामर्थपरत्वं कथमनपेक्षामात्रेणापोद्यते, नह्यनपेक्षामात्रेण रथ्यापतिततृणादिज्ञानप्रामाण्यमौत्सर्गिकं त्यज्यते, कथं चात्रानपेक्षा ? उद्दिश्य त्यागार्थं ह्यवश्यं देवतापदैः कश्चिदर्थः समर्पणीयः, स तु समभिव्याहृतपदान्तरसामर्थ्यप्राप्तो विग्रहवानेवास्तु, तमुपेक्ष्यार्थान्तरान्वेषणे को हेतुरिति—**चेत्, उच्यते**; लोके तावदादित्यश्चन्द्रः कुजो बुधः कृत्तिका रोहिणीत्येवमादिपदानाम-

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसंभवोऽधिकारस्य; तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः । अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य । नच क्वचिदसंभव इत्येतावता यत्र संभवस्तत्राप्यधिकारोऽपोद्येत । मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः संभवति । तत्र यो न्यायः सोऽत्रापि भविष्यति । ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्—'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' ( बृ० १।४।१० ) इति 'ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति । 'इन्द्रो ह वै देवानामभि प्रवव्राज विरोचनोऽसुराणाम्' ( छा० ८।७।२ ) इत्यादि च । स्मार्तमपि गन्धर्वयाज्ञवल्क्य-संवादादि । यदप्युक्तं ज्योतिषि भावाच्चेति, अत्र ब्रूमः—ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति; मन्त्रार्थवादादिषु तथा व्यवहारात् । अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम् । तथा हि श्रूयते सुब्रह्मण्यार्थवादे—मेधातिथेर्मेषेति । 'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' ( षड्विंश० ब्रा० १।१ ) इति । स्मर्यते च—'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' इति । मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते; मृदब्रवीदापोऽब्रुवन्नित्यादिदर्शनात् । ज्योतिरादेस्तु भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम् । यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति, अत्र ब्रूमः—प्रत्ययाप्रत्ययौ

---

### भामती ।

स्मरणतात्पर्याणां मन्त्राणां नानधिगते विग्रहादावपि तात्पर्यं युज्यत इति न तेभ्योऽपि तत्सिद्धिः । तस्माद्देवताविग्रहवत्त्वादिभावग्राहकप्रमाणाभावात् प्राप्ता षष्ठप्रमाणगोचरतास्येति प्राप्तम् ॥ ३२ ॥ एवं प्राप्तेऽभिधीयते—**भावं तु बादरायणोऽस्ति हि ।** **तुशब्दः पूर्वपक्षं व्यावर्तयति** इत्यादि **भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते** इत्यन्तमतिरोहितार्थम् । **मन्त्रार्थवादादिव्यवहारादिति ।** आदिग्रहणेनेतिहासपुराणधर्मशास्त्राणि गृह्यन्ते । मन्त्रादीनां व्यवहारः प्रवृत्तिस्तस्य दर्शनादिति । पूर्वपक्षमनुभाषते—**यदप्युक्तमिति ।** एकदेशिमतेन तावत्परिहरति—**अत्र ब्रूम इति ।** तदेतत्पूर्वपक्षिणमुत्थाप्य दूषयति—**अत्राह पूर्वपक्षी ।** शाब्दी खल्वियं गतिः, यत्तात्पर्याधीनवृत्तित्वं नाम । नह्यन्यपरः शब्दोऽन्यत्र प्रमाणं भवितुमर्हति । नहि श्वित्रिनिर्णेजनपरं श्वेतो धावतीति वाक्यमितः सारमेयगमनं गमयितुमर्हति । नच नञ्वति महावाक्येऽवान्तरवाक्यार्थो विधिरूपः शक्योऽवगन्तुम् । नच प्रत्ययमात्रात्सोऽप्यर्थोऽस्य भवति; तत्प्रत्ययस्य भ्रान्तित्वात् । न पुनः प्रत्यक्षादीनामियं गतिः । नह्युदकाहरणार्थिना घटदर्शनायोन्मीलितं चक्षुर्घटपटौ वा पटं वा केवलं नोपलभते । तदेवमेकदेशिनि पूर्वपक्षिणा दूषिते परमसिद्धान्तवाद्याह—

### वेदान्तकल्पतरुः ।

शोधनम् । श्वेतो वस्त्रं धावति शोधयतीति विवक्षायामितः श्वा धावति गच्छतीति नार्थधीरिति । वेदेऽपि न तात्पर्याद्विनार्थधीरित्याह—**नचेति ।** यदि तात्पर्याच्छाब्दधीः, तर्हि प्रत्यक्षादिष्वपि तथा स्यादत आह—**न पुनरिति ।** भाष्यकृद्भिः निषेधेषु पदान्वयैक्यादवान्तरवाक्यस्याग्रहणमित्युक्तमयुक्तम्; साध्याविशिष्टत्वादित्याशङ्क्यान्वयभेदे दण्डं

### कल्पतरुपरिमलः ।

चेतनेषु ज्योतिर्विशेषेषु व्युत्पत्तिर्गृहीता, इन्द्रो मित्र इत्यादिपदानामप्यनूराधा नक्षत्रं मित्रो देवता रोहिणी नक्षत्रमिन्द्रो देवतेत्यादिश्रौतसामानाधिकरण्येन ज्योतिर्विशेषेषु वृत्तिरवगम्यते, पृथिव्यादिशब्दानां मृदादिषु वृत्तिः सुप्रसिद्धैव । नचैते ज्योतिरादिवचना अप्यादित्यादिशब्दाः समभिव्याहृतपदान्तरस्वारस्यानुरोधेन ज्योतिरभिमानिविग्रहवद्देवतापर्यन्ताः कल्पनीयाः; तथा सति सर्वेषामपि जुह्वादीनां यज्ञाङ्गानां "जुहूरसि घृताचीनाम्ना" "शृणोत ग्रावाणः" "उच्छ्रयस्व वनस्पते" इत्यादिमन्त्रलिङ्गैश्चेतनत्वकल्पनाप्रसङ्गात् । तस्मान्मन्त्रगतदेवतापदैरचेतनानां ज्योतिरादीनां समर्पणेन तत एवोद्देशाकाङ्क्षाशान्त्या पदान्तरसमर्पिततद्विग्रहाणामनपेक्षिततया प्रथमगृहीताचेतनव्युत्पत्तिविरोधेन च त्यागो युक्त इति भावः ॥३२॥ **साध्याविशिष्टत्वादिति ।** हेतोरसिद्धत्वेन साध्यतुल्यत्वादित्यर्थः । **यथाप्रमाणान्तराविरोध इति ।** यत्र विधिशेषे-

हि सद्भावासद्भावयोः कारणं नान्यार्थत्वमनन्यार्थत्वं वा। तथाह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते। अत्राह—विषम उपन्यासः। तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति, येन तदस्तित्वं प्रतिपद्यते। अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याऽध्यवसातुम्। नहि महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य पृथक्प्रत्यायकत्वमस्ति; यथा 'न सुरां पिबेत्' इति नञ्वति वाक्ये पदत्रयसंबन्धात्सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते, न पुनः सुरां पिबेदिति पदद्वयसंबन्धात्सुरापानविधिरपीति। अत्रोच्यते—विषम उपन्यासः। युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणम्, विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते। यथा हि—'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना संबन्धः, नैवं वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्येषामर्थवादगतानां पदानाम्। नहि भवति वायुर्वा आलभेतेति, क्षेपिष्ठा देवता वा आलभेतेत्यादि। वायुस्वभावसंकीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवं विशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति। तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति, तत्र तदनुवादेनार्थवादः

## भामती।

अत्रोच्यते विषम उपन्यास इति। अयमभिसंधिः—लोके विशिष्टार्थप्रत्यायनाय पदानि प्रयुक्तानि तदन्तरेण न स्वार्थमात्रस्मारणे पर्यवस्यन्ति। नहि स्वार्थस्मारणमात्राय लोके पदानां प्रयोगो दृष्टपूर्वः, वाक्यार्थे तु दृश्यते; न चैतान्यस्मारितस्वार्थानि साक्षाद्वाक्यार्थं प्रत्याययितुमीशते इति स्वार्थस्मारणं वाक्यार्थमितयेऽवान्तरव्यापारः कल्पितः पदानाम्। नच यदर्थं यत्तेन विना पर्यवस्यतीति न स्वार्थमात्राभिधाने पर्यवसानं पदानाम्। नच नञ्वति वाक्ये विधानपर्यवसानम्। तथा सति नञ्पदमनर्थकं स्यात्। यथाहुः—'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥' इति। सेयमेकस्मिन्वाक्ये गतिः। यत्र तु वाक्यस्यैकस्य वाक्यान्तरेण संबन्धस्तत्र लोकानुसारतो भूतार्थव्युत्पत्तौ च सिद्धायामेकैकस्य वाक्यस्य तत्तद्विशिष्टार्थप्रत्यायनेन पर्यवसितवृत्तिनः पश्चात्कुतश्चिद्धेतोः प्रयोजनान्तरापेक्षायामन्वयः कल्प्यते। यथा 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति वायव्यं श्वेतमालभेत' इत्यत्र। इह हि यदि न स्वाध्यायाध्ययनविधिः स्वाध्यायशब्दवाच्यं वेदराशिं पुरुषार्थतामनेष्यत्ततो भूतार्थमात्रपर्यवसिता नार्थवादा विध्युद्देशेनैकवाक्यतामागमिष्यन्। तस्मात् स्वाध्यायविधिवशात्कैमर्थ्याकाङ्क्षायां वृत्तान्तादिगोचराः सन्तस्तत्प्रत्यायनद्वारेण विधेयप्राशस्त्यं लक्षयन्ति, न पुनरविवक्षितस्वार्था एव तल्लक्षणे प्रभवन्ति, तथा सति लक्षणैव न भवेत्; अभिधेयाविनाभावस्य तद्बीजस्याभावात्। अतएव गङ्गायां घोष इत्यत्र

## वेदान्तकल्पतरुः।

नञ्पदवैयर्थ्यापत्तिमाह—**अयमभिसन्धिरिति**। अन्वयमुक्त्वा व्यतिरेकमाह—**नहीति**। उपसंहरति—**वाक्यार्थे त्विति**। मा भूत् स्वार्थमात्राभिधाने पर्यवसानं, किमतः ? तत्राह—**नच नञ्वतीति**। एवं पदैकवाक्यतां सोदाहरणां दर्शयित्वा विध्यर्थवादेषु वाक्यैकवाक्यतामाह—**यत्र त्विति**। **ननु** विधिद्वयस्यैषा वाक्यैकवाक्यताऽत आह—**लोकानुसारत इति**। कय्या गौर्देवदत्तीया यतो बहुक्षीरेत्यादौ बहुक्षीरत्वादेराप्तवाक्यावगतेर्विध्यर्थवादयोरप्यस्ति वाक्यैकवाक्यतेत्यर्थः। **ननु** कार्यान्वित एव पदार्थस्तत्कुतोऽर्थवादपदानां पृथगन्वयोऽत आह—**भूतार्थेति**। **कुतश्चिद्धेतोरिति** यो वाक्यस्य वाक्यान्तरैकवाक्यत्वे हेतुः सूचितस्तं विवृणोति—**इह हीति**। अनेन भिन्नवाक्यार्थपर्यवसायिनां पदानां का नु खल्वपेक्षेति शङ्का वार्यते। स्वाध्यायविधिः स्वाध्यायशब्दवाच्यं वेदराशिं पुरुषार्थप्रकाशकतां यदि नानेष्यद् न प्रापयेत्, ततो भूतार्थमात्रपर्यवसिताः सन्तोऽर्थवादा विध्युद्देशेनैकवाक्यतां नागमिष्यन् न गच्छेयुः। प्रापयति त्वध्ययनविधिर्वेदस्य पुरुषार्थताम्, तस्मादेकवाक्यतां प्राप्नुयुरित्यर्थः। **ननु** यदि लक्षणायामभिधेयविवक्षा, कथं तर्हि विरुद्धार्थार्थवादेषु सा स्यात् ? तत्राभिधेयस्य विरुद्धत्वादेव विवक्षानुपपत्तेस्तत्राह—**अतएवेति**। अथवाऽर्थवादेषु स्वार्थविवक्षाया इदं गमकमुक्तम्, इतरथा हि गौणालम्बनचिन्ता मुधा स्यादिति। यथा प्रमाणान्तराविरोधस्तथाऽसूत्रयद्गुणवादस्त्विति सूत्रेण ( जै. अ. १ पा. २ सू. १० )। यथा च स्तुत्यर्थता येन गुणयोगेन स्तुत्यर्थतेत्यर्थः तथाऽसूत्रयत्तत्सिद्धि ( जै. अ. १ पा. ४ सू. २२ )रित्यनेनेत्यर्थः॥ यजमानः प्रस्तर इति किं विधिरुतार्थवाद इति

## भामती ।

गङ्गाशब्दः स्वार्थसंबद्धमेव तीरं लक्षयति, नतु समुद्रतीरं, तत्कस्य हेतोः ? स्वार्थप्रत्यासत्त्यभावात् । नचैतत्सर्वं स्वार्थविवक्षायां कल्पते । अतएव यत्र प्रमाणान्तरविरुद्धार्थो अर्थवादा दृश्यन्ते, यथा—'आदित्यो वै यूपः' 'यजमानः प्रस्तरः' इत्येवमादयः । तत्र यथा प्रमाणान्तराविरोधः, यथा च स्तुत्यर्थता, तदुभयसिद्ध्यर्थं 'गुणवादस्तु' इति च 'तत्सिद्धिः' इति चासूत्रयज्जैमिनिः । तस्माद्यत्र सोऽर्थोऽर्थवादानां प्रमाणान्तरविरुद्धस्तत्र गुणवादेन प्राशस्त्यलक्षणेति लक्षितलक्षिणा । यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिध्यति; द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थे प्रवृत्तेः । प्रमात्रपेक्षया त्वनुवादकत्वम् । प्रमाता ह्यव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्योऽर्थमवगच्छति, न तथाम्नायतः; तत्र व्युत्पत्त्याद्यपेक्षत्वात्, नतु प्रमाणापेक्षया, द्वयोः स्वार्थेऽनपेक्षत्वादित्युक्तम् । **नन्वेवं**—मानान्तरविरोधेऽपि कस्माद्गुणवादो भवति ? यावता शब्दविरोधे मानान्तरमेव कस्मान्न बाध्यते, वेदान्तैरिवाद्वैतविषयैः प्रत्यक्षादयः प्रपञ्चगोचराः, कस्माद्वाऽर्थवादवद्वेदान्ता अपि गुणवादेन न नीयन्ते ? **अत्रोच्यते**—लोकानुसारतो द्विविधो हि विषयः शब्दानाम्, द्वारतश्च तात्पर्यतश्च । यथैकस्मिन्वाक्ये पदानां पदार्था द्वारतो वाक्यार्थश्च तात्पर्यतो विषयः, एवं वाक्यद्वयैकवाक्यतायामपि । यथेयं देवदत्तीया गौः क्रेतव्येत्येकं वाक्यम्, एषा बहुक्षीरेत्यपरं तदस्य बहुक्षीरत्वप्रतिपादनं द्वारम् । तात्पर्यं तु क्रेतव्येति वाक्यान्तरार्थे । तत्र यद्द्वारतस्तत्प्रमाणान्तरविरोधेऽन्यथा नीयते । यथा "विषं भक्षये"ति वाक्यं "मा अस्य गृहे भुङ्क्ष्वे"ति वाक्यान्तरार्थपरं सत् । यत्र तु तात्पर्यं, तत्र मानान्तरविरोधे पौरुषेयमप्रमाणमेव भवति । वेदान्तास्तु पौर्वापर्यपर्यालोचनया निरस्तसमस्तभेदप्रपञ्चब्रह्मप्रतिपादनपरा अपौरुषेयतया स्वतःसिद्धतात्त्विकप्रमाणभावाः सन्तस्तात्त्विकप्रमाणभावात्प्रत्यक्षादीनि प्रच्याव्य सांव्यवहारिके तस्मिन्व्यवस्थापयन्ति । नच 'आदित्यो वै यूपः' इति वाक्यमादित्यस्य यूपत्वप्रतिपादनपरम्, अपि तु यूपस्तुतिपरम् । तस्मात्प्रमाणान्तरविरोधे द्वारभूतो विषयो गुणवादेन नीयते । यत्र तु प्रमाणान्तरं विरोधकं नास्ति, यथा देवताविग्रहादौ, तत्र द्वारतोऽपि विषयः प्रतीयमानो न शक्यस्त्यक्तुम् । नच गुणवादेन नेतुं, को हि मुख्ये संभवति गौणमाश्रयेत् ? अतिप्रसङ्गात् । तथा सत्यनधिगतं विग्रहमपि प्रतिपादयत् वाक्यं भिद्येतेति चेत्, अद्धा । भिन्नमेवैतद्वाक्यम् । तथा सति तात्पर्यभेदोऽपीति चेत्, न; द्वारतोऽपि तदवगतौ तात्पर्यान्तरकल्पनाऽयोगात् । नच यस्य यत्र न तात्पर्यं तस्य तत्राप्रामाण्यम्; तथा सति विशिष्टपरं वाक्यं विशेषणेष्वप्रमाणमिति विशिष्टपरमपि न स्यात्,

## वेदान्तकल्पतरुः ।

विशये विधिरपूर्वार्थलाभादिति प्राप्ते सिद्धान्तः । यदि प्रस्तरकार्ये यजमानो विधीयेत, तदा "प्रस्तरं प्रहरती"ति शास्त्राद् यजमानोऽग्नौ हूयेत, ततः प्रयोगो न समाप्येत । अथ यजमानकार्ये प्रस्तरो विधीयेत, तदानीमशक्यविधिः । नहि प्रथमलूनदर्भमुष्टिः प्रस्तरः शक्नोति चेतनयजमानकार्यं कर्तुम् । तस्मात्प्रस्तरं बर्हिष उत्तरं सादयतीत्यस्य विधेरर्थवादः । द्वितीयादिमुष्टिर्बर्हिः । कथं तर्हि सामानाधिकरण्यम् ? अत्र सूत्रं—**गुणवादस्त्विति** । ( जै. अ. १ पा. २ सू. १० ) । को गुणः ? इत्यपेक्षायां च **तत्सिद्धिरिति सूत्रम्** ( जै. अ. १ पा. ४ सू. २२ ) । तस्य यजमानस्य कार्यं क्रतुनिर्वृत्तिस्तत्प्रस्तरादपि सिध्यति । स हि जुह्वाधारतया क्रतुं निर्वर्तयति इति । आदित्यो यूप इत्यत्र तेजस्वित्वं गुणः; तेजसा घृतेन यूपस्याक्तत्वादिति । **ननु** विरुद्धार्थार्थवादेषु कथमभिधेयाविनाभावनिमित्ता प्राशस्त्यलक्षणा ? विरोधादेवाभिधेयाभावादत आह—**तस्माद्यत्रेति** । यजमानादिशब्दैस्तत्सिद्ध्यादि लक्ष्यते, ततश्च प्राशस्त्यमित्यर्थः । लक्षितेन यल्लक्ष्यं तदप्यभिधेयेनाविनाभूतमेव; तदविनाभूतं प्रत्यविनाभूतत्वात् । **नन्वनुवादकार्थवादानामप्रमाणकत्वात्कथं** विधिभिर्वाक्यैकवाक्यताऽत आह—**यत्र त्विति** । न स्मृतिवत्सापेक्षत्वं, किंतु प्रत्यक्षादिभिस्तुल्यविषयत्वम् । नचैतावता भवत्यप्रमाणता; प्रत्यक्षानुमानयोरपि तुल्यविषयत्वादित्यर्थः । तर्हि कथमनुवादकत्वप्रसिद्धिरत आह—**प्रमात्रपेक्षयेति** । प्रमातरि चरमप्रत्ययाधायकत्वादाश्रयस्यानुवादकत्वसिद्धिरित्यर्थः । यदि मानान्तरसिद्धार्थत्वेऽप्यर्थवादानामपेक्षत्वम्, तर्हि विरुद्धार्थानामपि तदस्तु; गौणार्थत्वेन किम् ? इति शङ्कते—**नन्वेवमिति** । तत्परतया निरवकाशा वेदान्ता बाधन्ते विरोधि प्रत्यक्षादि, नार्थवादाः; अतत्परत्वेन सावकाशत्वादिति विशेषेण प्रतिबन्दीं परिहरति—**अत्रोच्यत इत्यादिना** । इष्टप्रसङ्गतामाह—**अद्धेति** । विध्यन्वितोऽर्थवादो महावाक्यीभूय प्राशस्त्यं बोधयति, स्वरूपेण त्ववान्तरवाक्यीभूय विग्रहादि वक्तीत्यर्थः । वाक्यद्वित्वमेष्टुमशक्यम्; प्रत्यर्थं तात्पर्यभेदेन वाक्यवृत्तिप्रसङ्गात् । आवृत्तिं च पौरुषेयीं वेदो नानुमन्येतेति शङ्कते—**तथा सतीति** । न वज्रहस्तेन्द्रदेवतात्वात् प्रशस्तमैन्द्रं दधि, वज्रहस्तश्च सोऽस्तीत्यावृत्तिं ब्रूमः, किंतु स्तोतुमेव योर्थोऽर्थवादेनाश्रितस्तं नोपेक्षामह इति परिहरति—**नेति** । **ननु** तात्पर्याभावे शब्दात्कथं द्वारभूतविग्रहादिप्रमितिरित्याशङ्क्य व्याप्तिं प्रशिथिलयति—**नचेति** । यद्वाक्यं यत्रार्थे न तत्परं तत्र तदप्रमाणं चेत्, तर्हि विशिष्टविधेर्विशिष्टपरत्वं न स्यात् । तस्य हि विशेषणेष्वपि नागृहीतविशेषणन्यायेन प्रामाण्यं वाच्यम् । न च तेषु तात्पर्यम्; प्रतिविशेषणसा-

## भामती।

विशेषणाविषयत्वात्। विशिष्टविषयत्वेन तु तदाक्षेपे परस्पराश्रयत्वम्। आक्षेपाद्विशेषणप्रतिपत्तौ सत्यां विशिष्टविषयत्वं विशिष्टविषयत्वाच्च तदाक्षेपः। तस्माद्विशिष्टप्रत्ययपरेभ्योऽपि विशेषणानि प्रतीयमानानि तस्यैव वाक्यस्य विषयत्वेनानिच्छताप्यभ्युपेयानि यथा, तथान्यपरेभ्योऽप्यर्थवादवाक्येभ्यो देवताविग्रहादयः प्रतीयमाना असति प्रमाणान्तरविरोधे न युक्तास्त्यक्तुम्। नहि मुख्यार्थसंभवे गुणवादो युज्यते। नच भूतार्थमप्यपौरुषेयं वचो मानान्तरापेक्षं स्वार्थे,

## वेदान्तकल्पतरुः।

वृत्त्यापातात्। तथाच विशेषणप्रमितौ विशिष्टेऽप्रामाण्यापातादिति। **ननु** विशिष्टविधिरपर्यवस्यन् विशेषणविधीनाक्षिपतीत्यार्थिका विशेषणविधयः कल्प्यन्ते, अतो न वाक्यभेदः। **यथाऽऽहुः**—'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने। लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ' इति। एवं शङ्कित्वा परिहरति—**विशिष्टविषयत्वेनेति**। प्रतीतो हि विशिष्टविधिर्विशेषणविधीनाक्षिपेत्, तत्प्रतीतिरेव न विशेषणप्रतीतिमन्तरेणेति इतरेतराश्रय इति भावः। **ननु** पदैः पदार्था योग्यतादिवशेन विशेषणविशेष्यभूता लोकतोऽवगम्यन्ते, तदवगतौ च प्रतीतो विशिष्टविधिराक्षेप्ता विशेषणविधीनाम्। **सत्यम्**; न सर्वत्र विशेषणं लोकसिद्धमिति शक्यं वक्तुम्। क्वचिद्धि वाक्यैकगम्यमपि विशेषणं भवति। 'यथैतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति। अत्र हि विशिष्टविधौ रेवतीनामृचां वारवन्तीयसाम्नश्च संबन्धो विशेषणं वाक्यैकगम्यम् इति भावेनोपसंहरति—**तस्मादिति**। **नन्व**र्थवादा मानान्तरापेक्षाः सिद्धार्थत्वात्पुंवाक्यवत्। नच देवताविग्रहादौ मानान्तरमस्तीत्यप्रामाण्यम्। यद्धि सापेक्षं तन्मूलमानरहितमप्रमाणमित्यत आह—**नच भूतार्थमपीति**। वाक्यस्य सतः सापेक्षत्वे पौरुषेयत्वमुपाधिरिति समन्वयसूत्रे (ब्र. अ. १ पा. १ सू. ४) उक्तमि-

## कल्पतरुपरिमलः।

ऽर्थवादे प्रमाणान्तरविरुद्धो यथाश्रुतार्थः तत्र गुणवादः परिग्राह्य इत्यर्थवादाधिकरणे (जै. अ. १ पा. २ सू. १-१८) सामान्यतो व्युत्पादितम्। तत्र यजमानः प्रस्तर इत्यादिषु के गुणाः? इत्याकाङ्क्षायां तत्सिद्ध्यादयो गुणा इति '**तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया' इति** तत्सिद्ध्यधिकरण (जै. अ. १ पा. ४ सू. २३) सूत्रेणोक्तमित्यर्थः। सूत्रे गुणाश्रया इत्यस्य गुणशब्दप्रवृत्तिनिमित्तानीत्यर्थः। प्रस्तरे यजमानशब्दवृत्तौ यजमानस्य यत्कार्यं क्रतुनिर्वर्तनं तस्य सिद्धिः प्रस्तरेणापि भवतीति तत्सिद्धिर्निमित्तम्। आदित्यशब्दस्य यूपे वृत्तौ प्रत्यक्षदृश्यं तेजस्वित्वं निमित्तम्। एवं जात्यादिष्वप्युदाहार्यम्। तात्पर्याविषयस्य विशेषणस्याप्रमितत्वे विशिष्टेऽप्यप्रामाण्यापात इत्युक्ते तेन विशेषणाविधाने विशिष्टविध्यप्रवृत्तिरुक्तेति मन्यमानः शङ्कते—**ननु विशिष्टविधिरिति**। विशेषणाप्रसिद्ध्यभिप्रायोद्घाटने कृते तदप्रसिद्धिरसिद्धा "दध्ना जुहोति" "सोमेन यजेते" त्यादिषु दधिसोमादिविशेषणानां लोकप्रसिद्धत्वादिति पुनः शङ्कते—**नन्विति। यथैतस्यैवेति**। अश्वं नत्वा वारवन्तमित्यस्यामृचि गीतं साम वारवन्तीयं, तस्य "रेवतीर्नः सधमाद" इत्यादितृचसंबन्धः "कवतीषु रथन्तरं गाये"दिति वाक्येन कवतीरथन्तरसंबन्ध इव वाक्यान्तरेण न प्रसिद्ध इत्यनेनैव विधिवाक्येनावगम्यः। अस्य तत्र तात्पर्याभावेनाप्रामाण्ये तत्सिद्धिर्न स्यादित्यर्थः। **ननु**—अप्रसिद्धविशेषणविशिष्टविधिरपर्यवस्यन् विशेषणविधिमिवाप्रसिद्धविशेषणस्वरूपमपि कल्पयेदेव; तदभावेऽपि विशिष्टविध्यपर्यवसानाविशेषात्। वस्तुतस्त्वत्र सर्वविशिष्टविधिसाधारण्येन कल्प्यो विशेषणविधिरेव तात्पर्येण विशेषणस्वरूपप्रसिद्ध्यर्थो भवतीति न तत्प्रसिद्ध्यर्थं शब्दान्तरकल्पनमपेक्ष्यते, एवं खलु मीमांसकमर्यादा। चत्वारः साहस्रा इत्येकशब्दोपादानलक्षणसंघाताख्या निकायिन उपक्रम्य त्रिवृदग्निष्टुदग्निष्टोम इति प्रथममग्निष्टुतं विधाय वारवन्तीयमग्निष्टोमसाम कार्यमिति तस्य वैशेषिकगुणविधानानन्तरमेतस्यैव रेवतीष्विति श्रूयते। निकायिनां च पूर्वस्योत्तरेष्वित्यष्टमस्याधिकरणे निकायिषूत्तरेषां प्रथमविकारत्वस्य स्थापितत्वादेतद्विधिविधेयः क्रतुः प्रथमाग्निष्टुद्विकारो भवति। ततश्चात्र रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रभावनाविशिष्टक्रतुभावनाविधिना कल्प्यो विशेषणविधिर्नाग्निष्टोमस्तोत्रस्य न वा तद्गुणस्य वारवन्तीयस्य प्राप्त्यर्थः; द्वयोरप्यतिदेशतः प्राप्तेः, किंतु तदप्राप्तरेवतीवारवन्तीयसंबन्धप्राप्त्यर्थं इति तत एव तत्सिद्धेर्न तत्सिद्ध्यर्थं कल्पनान्तरमपेक्षणीयम्। अतो विशिष्टविधितात्पर्याविषयस्यापि विशेषणस्यात्र कल्प्यविशेषणविधितात्पर्यविषयत्वान्नाप्रामाणिकत्वप्रसक्तिरिति—**चेत्, मैवम्**; विशिष्टविधिरूपेणैव प्रमाणेन रेवतीवारवन्तीयसंबन्धरूपविशेषणस्याप्यप्रमितौ तद्विशिष्टविषयस्य विधेः कल्पकस्य प्रमाणसिद्धत्वाभावापत्त्या ततो विशेषणविधिकल्पनस्यासंभवेन तत्कल्पकस्य विशिष्टविधेरेव विशेषणस्वरूपेऽपि प्रामाण्यस्यावश्यवक्तव्यत्वात्, "यदाग्नेयोऽष्टाकपालः" "सप्तदश प्राजापत्यान् पशू"नित्यादीनां प्रथमप्रतीतद्रव्यदेवतासंबन्धकल्प्यतद्विशिष्टयागविधीनां यागकल्पके द्रव्यदेवतासंबन्धरूपविशेषणेऽपि प्रमाण्यभावे कल्पकप्रमित्यभावेन यागकल्पनानुपपत्त्या तद्विशिष्टयागविधेरेवाप्रवृत्तिप्रसङ्गेन तस्यैवाप्रसिद्धविशेषणस्वरूपे तात्पर्याविषयेऽपि प्रामाण्यकल्पनावश्यंभावाच्च। तद्वदर्थवादानां तात्पर्याविषयेऽपि स्वार्थे प्रामाण्यं युज्यत एव। नच तात्पर्याभावमात्रेण शब्दसामर्थ्याज्जायमानं ज्ञानं तस्य ज्ञानस्यौ-

## भामती।

येन मानान्तरासंभवे भवेदप्रमाणमित्युक्तम्। **स्यादेतत्**—तात्पर्यैक्येऽपि यदि वाक्यभेदः, कथं तर्ह्यर्थैकत्वादेकं वाक्यम्? न; तत्र तत्र यथास्वं तत्तत्पदार्थविशिष्टैकपदार्थप्रतीतिपर्यवसानसंभवात्। स तु पदार्थान्तरविशिष्टः पदार्थ एकः क्वचिद् द्वारभूतः क्वचिद् द्वारीत्येतावान् विशेषः। **नन्वेवं** सति ओदनं भुक्त्वा ग्रामं गच्छतीत्यत्रापि वाक्यभेदप्रसङ्गः। अन्यो हि संसर्ग ओदनं भुक्त्वेति अन्यस्तु ग्रामं गच्छतीति। **न**; एकत्र प्रतीतेरपर्यवसानात्। भुक्त्वेति हि समानकर्तृकता पूर्वकालता च प्रतीयते। न चेयं प्रतीतिरपरकालक्रियान्तरप्रत्ययमन्तरेण पर्यवस्यति। तस्माद्यावति पदसमूहे पदाहिताः पदार्थस्मृतयः पर्यवस्यन्ति। तावदेकं वाक्यम्। अर्थवादवाक्ये चैताः पर्यवस्यन्ति; विनैव विधिवाक्यं विशिष्टार्थप्रतीतेः। नच द्वाभ्यां द्वाभ्यां पदाभ्यां विशिष्टार्थप्रत्ययपर्यवसानात् पञ्चषट्पदवति वाक्ये एकस्मिन्नानात्वप्रसङ्गः; नानात्वेऽपि विशेषणानां विशेष्यस्यैकत्वात्, तस्य च सकृच्छ्रुतस्य प्रधानभूतस्य गुणभूत-

## वेदान्तकल्पतरुः।

त्यर्थः। **यदि** विधेः प्राशस्त्यपरा अप्यर्थवादा भिन्नं वाक्यं, तर्हि न्यायविरोध इत्याह—**स्यादेतदिति**। **द्वितीये स्थितम्**—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ( जै. सू. अ. २ पा. १ सू. ४६ )। देवस्य वा सवितुः प्रसवे इति मन्त्र एकं वाक्यं भिन्नं वेति संशये पदानामर्थभेदात्समुदायस्यावाचकत्वाद्भिन्नमिति प्राप्तेऽभिधीयते। एकप्रयोजनोपयोगिविशिष्टार्थस्यैक्यात्तद्बोधकपदान्येकं वाक्यम्। तच्च तर्ह्येव स्याद्यदि पदविभागे सति पदवृन्दं साकाङ्क्षं भवेत्। "भगो वां विभजत्वर्यमा वां विभज"त्वित्यत्र सत्यपि विभजत्यर्थैकत्वेऽनाकाङ्क्षत्वेन वाक्यभेदात्, 'स्योनं ते सदनं कृणोमि तस्मिन्सीदे'त्यत्र सत्यपि साकाङ्क्षत्वेऽर्थभेदेन वाक्यभेदात्, एकत्र हि सदनकरणं प्रकाश्यमन्यत्र पुरोडाशप्रतिष्ठापनमिति वाक्यभेदोऽत उभयं सूचितम्। तात्पर्यैक्येऽपि वाक्यभेदाभ्युपगम एतदधिकरणविरुद्ध इत्यर्थः। परिहरति—**नेति**। यथा हि सत्यपि वाक्यैक्ये प्रयाजादिवाक्यानाम् अवान्तरभेदः, एवमर्थवादानामप्यस्तु। त्वयाऽपि हि स्तुतिं लक्षयितुं तत्तत्पदार्थविशिष्टैकपदार्थप्रतीतिरभ्युपेया, अन्यथाऽभिधेयाविनाभावो न स्याद इत्युक्तत्वात्। तथा च तस्यां पर्यवस्यन्त्यर्थवादास्ततो विध्येकवाक्यतां च यान्तीति भावः। एवं तर्हि प्रयाजादिवाक्यानामर्थवादवाक्यानां च को भेदोऽत आह—**सत्विति**। यदि स्तुतिप्रतिपत्तिद्वारं विग्रहादि, प्रयाजादि तु नान्यप्रतीतौ द्वारम्, किं तु तद् द्वारि। स्वयं तात्पर्यविषय इति यावत्। यदि विध्येकवाक्यत्वेऽप्यर्थवादेषु पृथक्पदार्थसंसर्गप्रतीतेर्वाक्यभेदस्तर्ह्यतिप्रसङ्ग इति शङ्कित्वा प्रतीतिपर्यवसानतदभावाभ्यां वैषम्यमाह—**नन्वेवं सतीत्यादिना**। यद्यर्थवादेषु द्वारभूतार्थभेदाद् वाक्यभेदस्तदाप्यतिप्रसङ्ग इत्याशङ्क्य परिहरति

## कल्पतरुपरिमलः।

त्सर्गिकं बाधकाभावेनानपोदितं प्रामाण्यं च निवारयितुं शक्यम्। न च—आदित्यादिपदानां ज्योतिरादिषु व्युत्पत्तिग्रहो बाधकोऽस्तीति—शङ्कनीयम्; यथा स्रक्चन्दनवनिताहिमोष्णादिषु सुखजनकत्वतदजनकत्वदशयोः स्वर्गशब्दप्रयोगाप्रयोगदर्शनेनान्वयव्यतिरेकाभ्यामैहिकसाधारण्येन सुखमात्रवाचकत्वेनावगतस्य स्वर्गशब्दस्य "यन्न दुःखेन संभिन्न"मित्याद्यर्थवादावगतालौकिकसुखविशेषवाचकत्वावधारणादैहिकसुखेषु तत्प्रयोगो लाक्षणिकः कल्प्यते; एवं मन्त्रार्थवादावगतदेवताविशेषवाचिनां शब्दानां तत्तदभिमानविषयेषु प्रयोगो लाक्षणिक इति कल्पनोपपत्तेः। यदि स्वर्गफलकर्मविध्यपेक्षितत्वादर्थवादावगतेऽपि सुखविशेषे स्वर्गशब्दस्य शक्तिकल्पनम् तथाभूतसुखभोगोपयोगिभोगस्थानभोगोपकरणादिरूपलोकविशेषादिप्रतिपादकार्थवादानां तत्तल्लोकादिषु प्रामाण्यं चाभ्युपगम्येत, तर्हि तच्छन्दोगब्राह्मणाद्याम्नातदेवतादर्शनसंभाषणवशीकरणसालोक्यसायुज्यादिप्राप्तिफलककर्मोपासनाविध्यपेक्षितत्वान्नानाविधमहिमयुक्तदेवतातत्प्रतिपादकार्थवादानामपि तत्र तत्र प्रामाण्यमभ्युपगन्तव्यमिति समानम्। एवं च "रोहिणीनक्षत्रमिन्द्रो देवते"त्यादिनक्षत्रदेवतावाक्येषु तस्यपदमध्याहर्तव्यमिति रोहिणीनक्षत्रस्येन्द्रो देवतेत्यादिरर्थो ग्राह्यः। अत एव नक्षत्रेष्टियाज्यानुवाक्यासु इन्द्रो ज्येष्ठामनुनक्षत्रमेती"त्यादिभेदनिर्देश इत्यलं विस्तरेण॥ **समुदायस्येति**। यदि लोकसिद्धानुभवानपलापार्थं पदार्थसंसर्गो वाक्यार्थ इष्यते, तथापि तत्तत्पदार्थसंसर्गस्वरूपस्य वाक्यार्थस्य प्रतियोगिभेदेन भेदाद्वाक्यभेदो दुर्वारः। तस्मादेकार्थं विभागे पदकदम्बकं साकाङ्क्षं वाक्यमिति लक्षणेन देवस्य त्वेत्यत्र वाक्यैक्यं न सिध्येदिति भावः। **एकप्रयोजनेति**। स्यादयं दोषो यदि लक्षणेऽर्थशब्दः प्रतिपाद्यवाची स्यात्, प्रयोजनवाची त्वयम्। तथा चानुष्ठेयत्वेनोपयोगी मुख्यः प्रयोजनरूपो यो विशिष्टोऽर्थो निर्वापरूपः तस्य सकलविशेषणविशिष्टस्यैकत्वादुक्तलक्षणेन देवस्य त्वेत्याद्येकं वाक्यमिति युज्यत एव। न च तथापि निर्वपामीत्यस्य "देवस्य त्वा सवितुः प्रसवे निर्वपामी"त्यादिप्रकारेण प्रत्येकमन्वयाद् वाक्यचतुष्टयं स्याद् "भगो वां विभज"त्वित्यादाविवार्थैक्येऽपि गुणानुसारेण प्रधानावृत्त्ययोगात् "चित्पतिस्त्वा पुना"त्वित्यादिवाक्यत्रये गुणभूतस्यैवाच्छिद्रेणेत्यादिकस्याप्यावृत्तेश्चित्पत्त्यधिकरणे ( जैमिनि सू. अ. २ पा. १ सू. ४८ ) वक्तव्यत्वादिति भावः। एवमधिकरणशङ्कापरिहारौ न च द्वाभ्यामित्यादिटीकातद्व्याख्यानयोः स्पष्टीभविष्यत इति इहाधिकरणं संक्षेपेण लिखितम्। **स्तुतिप्रतिपत्तिद्वारमिति**। न च—अत्रापि

प्रवर्तते। यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन। यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यादाहोस्वित्प्रमाणान्तराविरोधाद्विद्यमानवाद इति प्रतीतिशरणैर्विद्यमानवाद आश्रयणीयो न गुणवादः। एतेन मन्त्रो व्याख्यातः। अपिच विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम्। नहि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते, नच चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते। श्रावयति च—'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' ( ऐ० ब्रा० ३।८।१ ) इति। नच शब्दमात्रमर्थस्वरूपं संभवति; शब्दार्थयोर्भेदात्। तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम्। इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम्। प्रत्यक्षादिमूलमपि संभवति। भवति ह्यस्माकमप्रत्यक्षमपि चिरंतनानां प्रत्यक्षम्। तथाच व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते। यस्तु ब्रूयादिदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्। ततश्च राजसूयादिचोदनोपरुन्ध्यात्। इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीते। ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात्। तस्माद्धर्मोत्कर्षवशाच्चिरंतना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपिच स्मरन्ति—'स्वाध्यायादिष्टदेवतासंप्रयोगः' ( यो० सू० २।४४ ) इत्यादि। योगोऽप्यणिमाद्यै-

## भामती ।

विशेषणानुरोधेनावर्तनायोगात्, प्रधानभेदे तु वाक्यभेद एव तस्माद्विधिवाक्यादर्थवादवाक्यमन्यदिति वाक्ययोरेव स्वस्ववाक्यार्थप्रत्ययावसितव्यापारयोः पश्चात्कुतश्चिदपेक्षायां परस्परान्वय इति सिद्धम्। **अपि च विधिभिरेवेन्द्रादिदैवत्यानीति**। देवतामुद्दिश्य हविरवमृश्य च तद्विषयस्वत्वत्याग इति यागशरीरम्। नच चेतस्यनालिखिता देवतोद्देष्टुं शक्या। नच रूपरहिता चेतसि शक्यते आलेखितुमिति यागविधिनैव तद्रूपापेक्षिणा यादृशमन्यपरेभ्योऽपि मन्त्रार्थवादेभ्यस्तद्रूपमवगतं तदभ्युपेयते; रूपान्तरकल्पनायां मानाभावात्, मन्त्रार्थवादयोरत्यन्तपरोक्षवृत्तिप्रसङ्गाच्च। यथा हि 'व्रात्यो व्रात्यस्तोमेन यजते' इति व्रात्यस्वरूपापेक्षायां "यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्यः" इति व्रात्यस्वरूपमवगतं व्रात्यस्तोमविध्यपेक्षितं सद्विधिप्रमाणकं भवति, यथा वा स्वर्गस्य रूपमलौकिकं 'स्वर्गकामो यजेत' इति विधिनापेक्षितं सदर्थवादतोऽवगम्यमानं विधिप्रमाणकम्, तथा देवतारूपमपि। **ननूद्देशो** रूपज्ञानमपेक्षते न पुनः रूपसत्तामपि, देवतायाः समारोपेणापि च रूपज्ञानमुपपद्यत इति समारोपितमेव रूपं देवताया मन्त्रार्थवादैरुच्यते। **सत्यम्** रूपमज्ञानमपेक्षते। तच्चान्यतोऽसंभवान्मन्त्रार्थवादेभ्य एव। तस्य तु रूपस्यासति बाधकेऽनुभवारूढं तथाभावं परित्यज्यान्यथात्वमननुभूयमानमसांप्रतं कल्पयितुम्। तस्माद्विध्यपेक्षितमन्त्रार्थवादैरन्यपरैरपि देवतारूपं बुद्धावुपनिधीयमानं विधिप्रमाणकमेवेति युक्तम्। **स्यादेतत्**—विध्यपेक्षायामन्यपरादपि वाक्यादवगतोऽर्थः स्वीक्रियते, तदपेक्षैव तु नास्ति; शब्दरूपस्य देवताभावात्, तस्य च मानान्तरवेद्यत्वादित्यत आह—**नच शब्दमात्रमिति**। न केवलं मन्त्रार्थवादतो विग्रहादिसिद्धिः, अपि तु इतिहासपुराणलोकस्मरणेभ्यो मन्त्रार्थवादमूलेभ्यो वा प्रत्यक्षादिमूलेभ्यो वेत्याह—**इतिहासेति**। **श्लिष्यते** युज्यते। निगदव्याख्यातमन्यत्। तदेवं मन्त्रार्थवादादिसिद्धे देवताविग्रहादौ गुर्वादिपूजावद्देवतापूजात्मको यागो देवताप्रसादादिद्वारेण सफलोऽवकल्पते। अचेतनस्य

## वेदान्तकल्पतरुः ।

**—न च द्वाभ्यामित्यादिना**। पञ्च षड् वा पदान्यस्येति पञ्चषट्पदवत्। अरुणयेत्यादि वाक्यम्। अत्र नावान्तरवाक्यभेदप्रसङ्गः; विशेषणानां भेदेऽपि विशेष्यक्रयादेरेकत्वात्तस्य च गुणानुरोधेनावृत्त्ययोगात्। गुणा एव तस्मिन् समुच्चेया इत्येकवाक्यतेत्यर्थः। विशेष्यैक्ये विशेषणभेदेऽपि न वाक्यभेद इत्येतद्व्यतिरेकप्रदर्शनेनोपपादयति—**प्रधानभेदेत्विति**। "आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम्" इत्यादौ हि प्रधानभेदाद्वाक्यभेदस्तदभावादरुणादावेकवाक्यतोपपत्तेर्न प्रतिबन्धावकाश इति। **नन्व**तत्परादपि वेदादर्थः प्रमीयेत, स यदि तात्पर्यगम्यार्थोपयोगी विशिष्टविधाविव विशेषणं, देवताविग्रहादि तु न तथेति शङ्कापनुत्त्यर्थमपि चेत्यादि भाष्यम्। तदादाय व्याख्याति—**देवतामुद्दिश्येत्यादिना**। **ननु** देवता आरोपितोल्लिख्यतां तत्राह—**रूपान्तरेति**। अस्यैव प्रपञ्चो **ननूद्देश** इत्यादिचोद्यपरिहारौ। दृष्टानुसाराच्चेतनो देवतेत्याह—**तदेवमिति**। शब्दमात्रत्वे तु नैवमित्याह—**अचेतनस्येति**। देवतातः फलोत्पत्तौ श्रुतहानिमा-

## भामती।

पूजामप्रतिपद्यमानस्य तदनुपपत्तिः। न चैवं यज्ञकर्मणो देवतां प्रति गुणभावाद्देवतातः फलोत्पादे यागभावनायाः श्रुतं फलवत्त्वं यागस्य च तां प्रतितत्फलांशं वा प्रति श्रुतं करणत्वं हातव्यम्। यागभावनाया एव हि फलवत्या यागल-

## वेदान्तकल्पतरुः।

शङ्काह—**न चैवमिति**। यजेत स्वर्गकाम इत्यस्य हि यागेन स्वर्गं भावयेदित्यर्थः। तत्र यागभावनायाः फलवत्त्वं श्रुतम्। अर्थाच्च यागस्य भावनां प्रति तदीयफलांशं वा प्रति करणत्वं श्रुतं यत् तन्न हातव्यम्। अत्र हेतुमाह—**यागेति**। **नवमे स्थितम्**—'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' ( जै. सू. अ. ६ पा. १ सू. ६। ) देवता धर्मान्प्रयोजयेदतिथिवद्भोजनस्य यागस्य तदर्थत्वाद् यथाऽतिथिप्रीत्यर्था धर्मा इति प्राप्ते—अपि वेति ( जै. सू. अ. ६ पा. १ सू. ६।) राद्धान्तः। यज्ञकर्म प्रधानमङ्गग्राहि न देवता; यजेत स्वर्गकाम इति यागगतफलसाधनतायाः शब्दपूर्वत्वात्। देवता तूद्देश्या भूतत्वाद्भव्यस्य यागस्य गुण इति तद्गुणत्वे देवताशब्दो वर्तत इति। तदस्मन्मतेऽप्यविरुद्धम्; गुणत्वस्वीकारादित्यर्थः ॥ ३३ ॥ **एत इतीति**। 'एते असृग्रमिन्दवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा' इत्यस्या ऋचः पदैर्देवादीन् स्मृत्वा ससर्ज ब्रह्मा।

## कल्पतरुपरिमलः।

प्रयाजवाक्यवदवान्तरतात्पर्यमिष्यतामिति—शङ्कनीयम्; अर्थवादवृन्दस्य तल्लक्षणीयायां प्रयाजादिवद्विध्यन्वितायां स्तुतौ अवान्तरतात्पर्ये अवश्यवक्तव्ये सत्त्वासत्त्वयौदासीन्येन प्रतीतमात्रतया स्तुत्युपकारिणि तद्द्वारभूतेऽप्यर्थेऽवान्तरतात्पर्यकल्पनस्यायुक्तत्वात्, तदभावेऽपि मानान्तरप्राप्तिबाधरूपापवादराहित्यप्रतिष्ठितौत्सर्गिकप्रामाण्यबलाद् देवताविग्रहादिसिद्धौ तत एव देवताध्यानविधेर्देवतासायुज्यादिफलनिर्देशस्य चापेक्षाशान्त्या तदपेक्षाशान्त्यर्थमपि देवताविग्रहादितात्पर्यवद्वाक्यान्तरकल्पनस्यार्थवादपदवृन्दस्यैवावान्तरतात्पर्यकल्पनस्य चानपेक्षितत्वात्, व्युत्पत्तिविरोधस्य च फलनिर्देशापेक्षितदेवताविग्रहादिवाक्यप्रामाण्यस्यावश्याभ्युपगन्तव्यत्वेन तद्बलेनैव निरसनोपपत्तेः, व्युत्पत्तिविरुद्धे तात्पर्यं न कल्पनीयमिति शङ्कायां तद्विरोधपरिहारार्थमस्यैव न्यायस्यापेक्षणीयत्वात्, देवताविग्रहाणामुद्देशोपयोगप्रदर्शनं फलनिर्देशोपयोगप्रदर्शनस्याप्युपलक्षणम्। तेन इन्द्रादिशब्दविषयो भविष्यत्युद्देशः। ऐन्द्रं दधीत्यादौ प्रथमोपस्थितस्येन्द्रादिशब्दस्य देवतात्वे नान्वयसंभवे तदधीनचरमोपस्थितिकस्यार्थस्य तथात्वेनान्वयकल्पनायोगात् शब्दे कार्यासंभव एवार्थे कार्यविज्ञानात् प्रसिद्धज्योतिरादिविषयो भविष्यत्युद्देशः। न ह्यश्वमेधे "यन्मेहसि तस्मै स्वाहा यच्छकृत्करोषि तस्मै स्वाहे"त्यादिमन्त्रानुष्ठेयहोमानां प्रसिद्धमेध्याश्वमूत्रपुरीषादिकमन्तरेणोद्देश्यमस्तीति शङ्कानिरासो लभ्यते, शब्दस्याचेतनस्य वा देवतात्वे तदत्र देवतादर्शनसंभाषणादिफलकर्मोपासनाविधीनामप्रामाण्यप्रसङ्गेन सङ्कर्षादिषु तथोक्तेरन्वारुह्यवादत्वात्, प्रथमोपस्थिते शब्दे कार्यान्वयस्यौत्सर्गिकत्वे च "ऋचि प्रणवं दधाती"त्यत्रापि प्रणवशब्दस्यैवानुवाक्यान्ते निधानापत्त्या तदर्थस्यौकारस्य निधानमिति व्यवस्थापयता संकर्षगतेनैवाधिकरणान्तरेण विरोधापत्तेश्च, यत्नसाध्ययागभावनां यत्नरूपां प्रति स्वरूपेण यागस्य करणत्वासंभवात् फलशिरस्कभावनाकरणत्वं वाच्यम्, तत्तु विवक्षितविवेकेन स्वर्गादिफलकरणत्वपर्यवसन्नमित्यभिप्रेत्य पक्षान्तरमाह—**तदीयफलांशं वेति। तदस्मन्मतेऽप्यविरुद्धमिति। ननु**—अतिथौ तत्प्रधानत्वं भावः कर्मणि स्यात्तस्य प्रीतिविधानत्वा ( जै. सू. अ. ६ पा. १ सू. १०। )दिति देवताधिकरणगुणसूत्रेण यज्ञस्यातिथ्यवैषम्यम्। आतिथ्यमतिथिप्रीत्यर्थं, न तु यज्ञो देवताप्रीत्यर्थं इत्येवंरूपं दर्शितं, तद्विरोधो यज्ञेन देवताप्रीतिमभ्युपगच्छतां दुर्वार इति—**चेत्, नैष दोषः**; तत्र हि तस्य प्रीतिविधानत्वादिति हेतोरयमर्थः। येन येन यावताऽतिथिः प्रीयते तेन तेन द्रव्येण तावता स पूजनीय इत्यातिथ्यमतिथिप्रधानम्। कर्मणि तु नास्ति प्रीतिविधानं येन द्रव्येण यावता या देवता प्रीयते तेन तावता सा पूजनीयेति, किं तु देवतैक्येपि तत्तत्कर्मविशेषव्यवस्थितैराज्यचरुपुरोडाशादिभिश्चतुर्गृहीतत्वावदानादिपरिमितैः स्रुवप्रस्तरादिभिरनदनीयैश्च यष्टव्यमित्येव विधानम्। अतस्तस्य प्रीतिविधानत्वादिति हेतुनाऽपि विरोधः। अस्माभिस्तु "एतद्वै दैव्यं मधु यद् घृतं यद्वै देवा हविर्जुषन्ते अल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्द्धयन्त" इत्याद्यर्थवाददर्शनेन हविषां देवतोचितद्रव्यरूपेण देवताभोजनपर्याप्तपरिमाणेन च विपरिणतिमङ्गीकृत्य देवताप्रीत्यर्थत्वं समर्थ्यते न त्वस्मिन्मतेऽप्यातिथ्यन्यायेन तत्तद्देवताप्रीतिकरद्रव्यपरिमाणविधानमस्तीति न कश्चिद्विरोधः॥३३॥ **देवादीन् स्मृत्वेति। ननु**—एते असृग्रमिति मन्त्रस्यायमर्थः। **एते इन्दवः** सोमास्**तिरःपवित्रं** तिर्यग्भूतं दशापवित्रं प्रति **आशवः** शीघ्रगामिनः **विश्वा सौभगा** सर्वाणि सौभाग्यनि **अभि** उद्दिश्या**सृग्रम**सृज्यन्तेति। एवं प्रतीयमानार्थानुसारेणैव सोमलतादेवत्ये विनियोगोऽस्य मन्त्रस्य श्रूयते—"बहिष्पवमानेन वै यज्ञः सृज्यते यदेते असृग्रमिन्दव इति प्रस्तौति यज्ञमेव तत्सृष्टं देवेभ्यः प्राहे"ति, कथमेवमन्यपराणामेत इत्यादीनां देवतास्मारकत्वं ? कथं च साधारणैरेत इत्यादिभिस्तत्तद्देवायसाधारणाग्निसूर्यादिपदैरिव तत्तद्देवादिजातीयव्यक्त्यन्तरसृष्ट्यनुकूलपरस्परव्यावृत्तजातिसंस्थानविशेषावच्छिन्नतत्तद्देवाद्युपस्थितिः ? **उच्यते**; "एते अस-

श्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योगमाहात्म्यं प्रख्यापयति—पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्' ( श्वे० २।१४ ) इति । ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात्समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति संभवे निरालम्बनाध्यवसातुं युक्ता । तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः । ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥ ३३ ॥ इति अष्टमं देवताधिकरणम् ॥

## भामती ।

क्षणस्वकरणावान्तरव्यापारत्वाद्देवता भोजनप्रसादादीनाम्, कृषिकर्मण इव तत्तदवान्तरव्यापारस्य सस्याधिगमसाधनत्वम् । आग्नेयादीनामिवोत्पत्तिपरमापूर्वावान्तरव्यापाराणां भवन्मते स्वर्गसाधनत्वम् । तस्मात्कर्मणो अपूर्वावान्तरव्यापारस्य वा देवताप्रसादावान्तरव्यापारस्य वा फलवत्त्वात् प्रधानत्वमुभयस्मिन्नपि पक्षे समानं, ननु देवताया विग्रहादिमत्याः प्राधान्यमिति न धर्ममीमांसायाः सूत्रम्—'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं गुणत्वे देवताश्रुतिः' इति विरुध्यते । तस्मात्सिद्धो देवतानां प्रायेण ब्रह्मविद्यास्वधिकार इति ॥ ३३ ॥ इति अष्टमं देवताधिकरणम् ॥

## वेदान्तकल्पतरुः ।

संनिहितवाच्येतच्छब्दो देवानां करणेष्वनुग्राहकत्वेन संनिहितानां स्मारकः । **असृग्** रुधिरम् । तत्प्रधानदेहरमणान्मनुष्याणा**मसृग्रशब्दः** । इन्दुमण्डलस्थपितॄणा**मिन्दुशब्दः** । पवित्रं सोमं स्वान्तस्तिरस्कुर्वतां ग्रहाणां **तिरःपवित्रशब्दः** । ऋचाऽस्तुवतां स्तोत्राणां गीतिरूपाणां **शवशब्दः** । स्तोत्रानन्तरं प्रयोगं विशतां शस्त्राणां **विश्वशब्दः** । **व्यापिवस्तुवाच्यभिशब्दयुक्तोऽभिसौभगेति शब्दो**ऽन्यासां प्रजानां स्मारक इति । **स मनसेति** । **स** प्रजापति**र्मनसा सह** वाचं **मिथुनभावं समभवद**भावयत् । त्रयीप्रकाशितां सृष्टिं मनसाऽऽलोचितवानित्यर्थः । नाम रूपं चेति स्मृतौ निष्पन्नकर्मणामनुष्ठापनमुक्तम् । सर्वेषां त्वित्यत्र कर्मणामेव सृष्टिरिति विवेकः । **यज्ञेनेति** । पुण्येन वाचो वेदस्य पदवीयम् । भावप्रधानो निर्देशः । **पदवीयतां** मार्गयोग्यतां वेदग्रहणयोग्यतामित्येतत् । **आयन्** आप्तवन्तः । ततः ऋषिषु प्रविष्टां तां वाचमन्वविन्दन् अनुलब्धवन्तः ॥ **यदा सुप्त** इत्यत्र प्राणः परमात्मा सर्वे प्राणाश्चक्षुरादयः तेभ्योऽनन्तरं तदनुग्राहका आदित्यादिदेवाः । ततो लोका विषयाः । इह वाक्ये कल्पितस्याज्ञातसत्त्वाभावात्प्रतीत्यप्रतीतिभ्यामुत्पत्तिलयाभिधानम् । व्यावहारिकसत्त्वे श्रुतेरनास्था । **यो ब्रह्माणमिति । प्रहिणोति** । ददाति आत्माकारबुद्धौ प्रकाशत इति तथोक्तः । तत्त्वमस्यादिवाक्यजबुद्धिविषयमित्येतत् । दशतय्यो दशमण्डलात्मकः ऋग्वेदः, तत्र भवा **दाशतय्यः । यो ह वा इति । आर्षेयमृ**षिसंबन्धः । **ब्राह्मणं** विनियोगः । आर्षेयादीन्यविदितानि यस्य मन्त्रस्य स तथाऽ**ध्यापयति** अध्ययनं कारयति । **स्थाणुं** स्थावरम् । **गर्तं** नरकम् । **शवर्यन्ते** प्रलयान्ते । **पर्यये** पर्याये । चक्षुराद्यभिमानिनो देवाः सांप्रतैस्तुल्याः । **तदिति** । तत्र ब्रह्मवेदनात्सर्वभाव इति स्थिते **यो यो देवानां मध्ये प्रतिबुद्ध**वानात्मानमहं ब्रह्मास्मीति **स** प्रतिबोद्धैव **तद्** ब्रह्माभवत् । **ते होचुरिति । ते** देवा असुराश्चो**चुः** किलान्योन्यं हन्त यद्यनुमतिर्भवतां, तर्हि तमात्मानं विचारयामः । यमात्मानं विचारणापूर्वं ज्ञात्वा सर्वान् लोकान् कामान् फलानि चाप्नोति इत्युक्त्वा विद्याग्रहणार्थम् इन्द्रविरोचनौ देवासुरराजौ प्रजापतिसकाशमाजग्मतुः । **पृथ्व्याप्येति** । पादतलमारभ्याजानोः जानोरारभ्यानाभि नाभेरारभ्याग्रीवं ग्रीवाया आकेशप्ररोहदेशं ततश्चाब्रह्मरन्ध्रं क्रमेण पृथिव्यादिभूतधारणया पृथिव्यादिपञ्चात्मके भूतगणे समुत्थिते जिते सति योगगुणे च अणिमादौ प्रवृत्ते योगाभिव्यक्ताग्निमयं तेजोमयं ब्रह्मशरीरं प्राप्तस्य योगिनो न जरादीत्यर्थः । **तथा चावोचन्नाचार्याः प्रपञ्चसारे—अवनिजलानलमारुतविहायसां**

## कल्पतरुपरिमलः ।

असिन्दव इति बहुभ्यः प्रतिपदं कुर्यात्" "एत इति सर्वामेवैनां वृद्ध्यै भूत्वा अभिवदती"ति विनियोगानुसारेण सोमविशेषणतया स्थितस्याप्येत इत्यस्य सत्रादियजमानप्रकाशकत्वं वक्तव्यम् । तद्वदेत इति वै प्रजापतिरित्यादिवाक्यानुसारेण स्रष्टारं प्रत्येत इत्यादिपदानां तत्तद्देवताविशेषरूपादिस्मारकत्वमपि भविष्यतीति न काचिदनुपपत्तिः । **जिते** वशीकृते । **अणिमादाविति** । पार्थिवाद्यैश्वर्योपलक्षणमेतत् । सन्ति हि पार्थिवादीनि प्रत्येकमष्टावष्टावैश्वर्याणि । ह्रस्वता स्थूलता बाल्यं वार्द्धकं यौवनं तथा । नानाजातिस्वरूपत्वं तथा सुरभिगन्धता ॥ पार्थिवांशं विना भूतैश्चतुर्भिर्देहधारणम् । गन्धतन्मात्रतत्त्वोत्थ-

( ९ अधिकरणम् ) **शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥**

यथा मनुष्याधिकारनियममपोद्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते । तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम्; अर्थित्वसामर्थ्ययोः संभवात्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' ( तै० सं० ७।१।१।६ ) इतिवत् 'शूद्रो विद्यायामनवक्लृप्तः' इति च निषेधाश्रवणात् । यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं, न तद्विद्यास्वधिकारस्यापवादकं लिङ्गम् । न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते । भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकम् । संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति—'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' ( छा० ४।२।३ ) इति । विदुरप्रभृतयश्च शूद्रायोनिप्रभवा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते । तस्मादधिक्रियते शूद्रो विद्यास्विति । एवं प्राप्ते ब्रूमः—न

## भामती ।

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥**

अवान्तरसंगतिं कुर्वन्नधिकरणतात्पर्यमाह—**यथा मनुष्याधिकारेति** । शङ्काबीजमाह—**तत्रेति** । निर्मृष्टनिखिलदुःखानुषङ्गे शाश्वतिक आनन्दे कस्य नाम चेतनस्यार्थिता नास्ति ? येनार्थिताया अभावाच्छूद्रो नाधिक्रियेत । नाप्यस्य ब्रह्मज्ञाने सामर्थ्याभावः । द्विविधं हि सामर्थ्यं निजं चागन्तुकं च । तत्र द्विजातीनामिव शूद्राणां श्रवणादिसामर्थ्यं निजमप्रतिहतम् । अध्ययनाभावादागन्तुकसामर्थ्याभावे सत्यनधिकार इति चेत्, हन्त आधानाभावे-

## वेदान्तकल्पतरुः ।

**शक्तिभिश्च तद्बिम्बैः । सारूप्यमात्मनश्च प्रतिनीत्वा तत्तदाशु जयति सुधीः ॥ इति । बिम्बानि** भूतमण्डलानि । **तच्छक्तयश्च** निवृत्त्याद्यास्तत्रैवोक्ताः । **इति अष्टमं देवताधिकरणम् ॥**

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥**

ब्रह्मविद्या शूद्राधिकारा न वेत्यध्ययनस्य प्रधानकर्मत्वसंस्कारकर्मत्वाभ्यां संशये पूर्वमत्रैवर्णिकदेवानां तद्यो य इति लिङ्गादधिकार उक्तस्तद्वद्विद्याधिकारिणः शूद्रशब्देन परामर्शलिङ्गाच्छूद्रस्याप्यधिकार इति सङ्गतिं भाष्यारूढामाह—**अवान्तरेति** । पूर्वपक्षमाह—**निर्मृष्टेति । आगन्तुकं** शास्त्रीयम् । अधिकारलक्षण एवावैद्यत्वादभावः कर्मणि स्या ( जै. सू. अ. ६ पा. १ सू. ३७ । )दित्यनधीयानस्यानधिकार इति स्थितत्वाद्गतार्थतामाशङ्कते—**अध्ययनेति** । एतद् **न हि आहवनीयादिरहितेन विद्या वेदितुं न शक्यत इति** भाष्यं व्याचक्षाणः परिहरति—**हन्तेति** । तत्रानग्नेरग्निसाध्ये कर्मण्यनधिकारः स्थितोऽवैद्यत्वम् अभ्युच्चयमात्रम्; अभ्युच्चयत्वं चाध्ययनविधेः पुरुषार्थत्वशङ्कायास्तत्रानिरासात्,

## कल्पतरुपरिमलः ।

मेतदष्टगुणं महत् ॥ इत्याद्यागमप्रसिद्धानि । **शक्तिभिश्च तद्बिम्बैरिति** । पृथिव्यादिशक्तयो निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताख्याः । पृथिव्यादिबिम्बाश्चतुरश्रधनुराकारत्रिकोणषट्कोणबिन्दुरूपाणि मण्डलानि । **सारूप्यमिति** । स्वात्मरूपतोपासनां कृत्वेत्यर्थः ॥ **इत्यष्टमं देवताधिकरणम्** ॥ ८ ॥

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥**

**ननु** शूद्रस्याध्ययनाभावे विद्यानधिकारशङ्कायामग्न्यभावेऽपि तदधिकारः संभवतीति समाधानमसंगतमित्याशङ्क्य तत्साङ्गत्यार्थं पूर्वतन्त्राधिकरणेन गतार्थत्वशङ्केयमित्यवतारयति—**आगन्तुकं शास्त्रीयमिति** । पूर्वतन्त्रे शूद्रस्य कर्मानधिकारेऽग्न्यभावो मूलयुक्तिरुक्ता, तस्या विद्यायामप्रवृत्तेः शूद्रस्य कर्मानधिकारेऽपि विद्याधिकारः संभवेदित्यधिकपूर्वपक्षसद्भावाद् न गतार्थत्वमिति परिहारग्रन्थाशयं दर्शयति—**तत्राऽनग्नेरिति । नन्ववैद्यत्वमपि** तत्र सिद्धान्तयुक्तित्वेनोक्तमतो गतार्थत्वं तदवस्थमित्याशङ्क्याह—**अवैद्यत्वमिति । ननु**—अनग्नित्वं तत्र मूलयुक्तिः अवैद्यत्वमभ्युच्चय इत्युभयमप्ययुक्तम्—**चातुर्वर्ण्यमविशेषा** ( जैमिनिसू. अ. ६ पा. १ सू. २५ । ) दिति पूर्वतन्त्राधिकरणे **निर्देशाद्वा त्रयाणां**

---

१ **तत्र सूत्राणि** ८—तदुपर्यपि बादरायणः संभवात् २६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् २७ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् २८ अत एव च नित्यत्वम् २९ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ३० मध्वादिष्वसंभवादनधिकारं जैमिनिः ३१ ज्योतिषि भावाच्च ३२ भावं तु बादरायणोऽस्त्विति ३३ ॥

## भामती ।

सत्यग्न्यभावादग्निसाध्ये कर्मणि मा भूदधिकारः । नच ब्रह्मविद्यायामग्निः साधनमिति किमित्यनाहिताग्नयो नाधिक्रियन्ते । न च—अध्ययनाभावात्तत्साधनायामनधिकारो ब्रह्मविद्यायामिति—सांप्रतम्; यतो युक्तं 'यदाहवनीये जुहोति' इत्याहवनीयस्य होमाधिकरणतया विधानात्तद्रूपस्यालौकिकतयानारभ्याधीतवाक्यविहितादाधानादन्यतोऽनधिगमादाधानस्य च द्विजातिसंबन्धितया विधानात्तत्साध्योऽग्निरलौकिको न शूद्रस्यास्तीति नाहवनीयादिसाध्ये कर्मणि शूद्रस्याधिकार इति । नच तथा ब्रह्मविद्यायामलौकिकमस्ति साधनं यच्छूद्रस्य न स्यात् । अध्ययननियम इति चेत्, न; विकल्पासहत्वात् । तदध्ययनं पुरुषार्थे वा नियम्येत, यथा धनार्जने प्रतिग्रहादि, क्रत्वर्थे वा, यथा 'व्रीहीनवहन्ति'

## वेदान्तकल्पतरुः ।

इह संस्कारपरामर्शादित्यादिसूत्रैरध्ययनविधेः संस्कारकर्मविषयत्वसमर्थनाच्च । अतोऽनग्नीनामपि शूद्राणामभ्यस्याध्यायां विद्यायामधिकार इति शङ्काया न गतार्थत्वमित्यर्थः । **ननु** कर्मण्यग्निवद्विद्यायामध्ययनं हेतुरित्याशङ्क्याह—**न चेति** । अग्निः कर्महेतुः, स च न शूद्रस्य, अध्ययनं तु विद्यायामनियतो हेतुः संभवति च शूद्रस्येत्युपपादयति—**यत इत्यादिना** । आहवनीयादिसाध्ये कर्मणि शूद्रस्य नाधिकार इत्येतद्यतः कारणाद् युक्तं, यतश्च विद्यायां शूद्रस्यासंभविसाधनमलौकिकं नास्ति, ततस्त्वदुक्तमसांप्रतमिति योजना । अग्नेः कर्मसूपयोगमाह—**यदाहवनीये इति** । **ननु** व्रीहिवदाहवनीयोऽस्तु शूद्रस्य नेत्याह—**तद्रूपस्येति** । संस्कृतोऽग्निराहवनीयः, स चालौकिक इत्यप्रकरणाधीताद्वाक्यविहिताधानादेव लभ्य इत्यर्थः । आधानमपि द्विजातिसंबद्धं यदि क्रतुं कंचिदारभ्य विधीयेत, तर्हि क्रत्वन्तरे शूद्रोऽधिक्रियेत, न त्वेतदस्ति; तस्याग्निद्वारा सर्वक्रतुसाधारण्यादित्येवमनारभ्याधीतग्रहणम् । आधानमप्यस्तु शूद्रस्य, नेत्याह—**आधानस्य चेति** । वसन्तादिवाक्येनेत्यर्थः । विद्यायामलौकिकं साधनं नास्तीत्यसिद्धमध्ययनक्रियाया लौकिकत्वेऽपि तन्नियमस्य वैधत्वादिति शङ्कां परिहरति—**न विकल्पासहत्वादिति** । नानोपायसाध्येऽक्षराधिगमेऽध्ययनं नियम्यमानं पुरुषार्थे तस्मिन्नियम्येतोत क्रत्वर्थे इति विकल्प्य

## कल्पतरुपरिमलः ।

**स्यादग्न्याधेये** ( जै. सू. अ. ६ पा. १ सू. २६ । ) **इति सूत्रेण** "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य" इत्याधानविधिवाक्यैस्त्रयाणामेषामाधाने निर्देशादनग्नेः शूद्रस्य नाधिकार इति सिद्धान्तयुक्तिं प्रथमं प्रदर्श्य, **निमित्तार्थेन वादरिस्तस्मात्सर्वाधिकारः स्या** ( जै. सू. अ. ६ पा. १ सू. २७ । ) दित्यादिसूत्रैर्य एवं विद्वानग्निमाधत्त इति वाक्येनाधाने सर्वसाधारणे विहिते वसन्तादिवाक्यानि ब्राह्मणादिनिमित्तेन वसन्तादिकालविधायकानि । अतो वसन्तादिवाक्यपर्यालोचनात् शूद्रस्यानग्नित्वासिद्धेस्ततः कर्मानधिकारो न सिध्यतीति तामुक्तिं दूषयित्वा तदनन्तरम् **अपि वा वेदनिर्देशादपशूद्रं प्रतीयेते** ( जै. सू. अ. ६ पा. १ सू. ३३ । ) ति सूत्रेण वेदाध्ययनार्थोपनयने वसन्ते ब्राह्मणमुपनयीतेत्यादिवाक्यैस्त्रयाणामेव निर्देशादुपनयनरहितः शूद्रोऽध्ययनाभावात्कर्मसु नाधिकारीति सिद्धान्तयुक्तिं प्रदर्श्य, **गुणार्थित्वान्नेति चे**( जै. सू. अ.६ पा.१ सू.३४। )दिति सूत्रेण कर्मानुष्ठानायाध्ययनार्थित्वादुपनयनाभावेऽपि स्वयमेव गत्वाऽध्येष्यत इत्याशङ्कामुद्भाव्य, **संस्कारस्य तदर्थत्वा** ( जै. सू. अ.६ पा. १ सू. ३५ । ) दिति सूत्रेणोपनयनसंस्कारस्याध्ययनार्थत्वादुपनयनाभावे स्वयमेव गत्वाऽध्ययनं विगुणं स्यादिति तां शङ्कां परिहृत्य **विद्यानिर्देशान्नेति चे**( जै. सू. अ. ६ पा. १ सू. ३६ । )दिति सूत्रेण कर्मानुष्ठानार्थमवश्यग्राह्यया विद्ययाऽऽक्षेपाल्लौकिकाध्ययनं भविष्यतीत्युपनयनपूर्वकवैधाध्ययनाभावेन न किंचिद्वैकल्यमिति शङ्कामुद्भाव्या**वैद्यत्वा** ( जै. सू. अ. ६ पा. १ सू. ३७ । ) दिति सूत्रेण न शूद्रेणाध्येतव्यमिति शूद्रस्याध्ययनमात्रनिषेधाद्विद्यारहितस्य तस्य कर्मसु नाधिकार इत्युक्त्वा तथा **चान्यार्थदर्शन** ( जै. सू. अ. ६ पा. १ सू. ३८ । ) मिति सूत्रेण "पद्यु ह वा एतदित्यादिश्रुतेः शूद्रसमीपेऽध्ययनप्रतिषेधात् शूद्रस्य कथंचिदप्यध्ययनं न संभवतीति कैमुतिकन्यायदर्शनेनावैद्यत्वादिति सूत्रोक्तयुक्तेर्दृढीकरणात्, न हि सूत्रकृता स्वयमेव निराकृता युक्तिर्मूलयुक्तिः बहुभिराक्षेपसमाधानैरुपपादिताऽभ्युच्चययुक्तिरिति युज्यत इति—**चेत्, उच्यते;** अनग्नित्वं मूलयुक्तिर्भवत्येव; द्वैतीयाधानाधिकरणे ( जै. सू. अ. २ पा. ३ सू. ४ । ) वसन्तादिवाक्यानां निमित्तार्थत्वं निराकृत्य ब्राह्मणादिसंयुक्ताधानविधायकतायाः समर्थितत्वात्, **अन्यथा** तत्समर्थनार्थमेव प्रवृत्तस्य तस्याधिकरणस्यात्यन्तवैयर्थ्यापत्तेः । अत एव शबरस्वामिभिरस्मिन्नधिकरणे "य एवं विद्वानग्निमाधत्त"इति वाक्यं संभारविधिशेषार्थवादो न त्वाधानविधायकम् । तद्विधायकानि तु वसन्तादिवाक्यान्येवेति सूत्रकाराभिप्रायवर्णनेनानग्नित्वस्य मूलयुक्तित्वं प्रतिष्ठापितम् । एवमाधानाधिकरणसिद्धानग्नित्वस्य पुनः कीर्तनमाभिप्रायिकपरिहारेण "य एवं विद्वानग्निमाधत्ते" इति वाक्यावलम्बनशङ्कानिरासार्थमेव; अन्यथा महर्षिवरनिर्मितानां सूत्राणां परस्परविरोधापत्तेः । एवमनग्नित्वेन सिद्धेऽनधिकारेऽध्ययनाभावोऽभ्युच्चय इत्येतत् तदुपपादकस्याध्ययनविधिपुरुषार्थत्वनिरासस्याभावादिति मूले एव स्पष्टम् ॥ **नन्विह**ापि शास्त्रेऽध्ययनविधिपुरुषार्थत्वनिरासः सूत्रकृता न कृत इत्याशङ्क्याह—**इह संस्कारेति** । **ननु—संस्कारपरामर्शा** ( व्या. सू. अ. १ पा. ३ सू. ३६ )

## भामती ।

इत्यवघातः । न तावत् क्रत्वर्थे । नहि 'स्वाध्यायोऽध्येतव्यः' इति कंचित् क्रतुं प्रकृत्य पठ्यते, यथा दर्शपूर्णमासं प्रकृत्य 'व्रीहीनवहन्ति' इति । न चानारभ्याधीतमप्यव्यभिचरितक्रतुसंबन्धितया क्रतुमुपस्थापयति, येन वाक्येनैव क्रतुना संबध्येताध्ययनम् । नहि यथा जुह्वादि अव्यभिचरितक्रतुसंबद्धमेवं स्वाध्याय इति । तस्मान्नैष क्रत्वर्थे नियमः । नापि पुरुषार्थे; पुरुषेच्छाधीनप्रवृत्तिर्हि पुरुषार्थो भवति, यथा फलं तदुपायो वा । तदुपायेऽपि हि विधितः प्राक् सामान्यरूपा प्रवृत्तिः पुरुषेच्छानिबन्धनैव । इतिकर्तव्यतासु तु सामान्यतो विशेषतश्च प्रवृत्तिर्विधिपराधीनैव ।

## वेदान्तकल्पतरुः ।

**द्वितीयं** निरस्यति—**न तावदिति** । अध्ययननियमस्य क्रत्वर्थाश्रितत्वं प्रकरणाद्वाक्याद्वेति विकल्प्याद्यं निरस्य **द्वितीयं** प्रत्याह—**न चाऽनारभ्येति** । व्याप्तया हि जुह्वा क्रतौ व्यापके बुद्धिस्थीकृते वाक्यं पर्णतां संबन्धयति, स्वाध्यायस्तु स्वशाखात्मकोऽवयवी न कर्मविशेषेण व्याप्त इत्यनुपस्थापिते कर्मणि कथं वाक्यमध्ययनस्य कर्मसंबन्धं ब्रूयादित्यर्थः । नन्वज्ञातोपाये कथं पुरुषेच्छातः प्रवृत्तिरत आह—**तदुपायेऽपि हीति** । फलमभिलषँस्तदुपायमप्यनुष्ठेयं मन्यते, विशेषं तु न वेदेति । तर्हि करणार्थेतिकर्तव्यतायामपि सामान्यप्रवृत्तिरिच्छाधीनेत्याशङ्क्याह—**इतिकर्तव्यता-**

## कल्पतरुपरिमलः ।

दिति सूत्रं शूद्रस्य विद्याङ्गोपनयनाभावाद् विद्यानधिकारपरम्; न च तदनन्तरमध्ययनस्य संस्कारकर्मत्वव्यवस्थापकं सूत्रान्तरमस्तीति—**चेत्, उच्यते**; पूर्वतन्त्राधिकरणेऽनग्नित्वयुक्त्याऽपि कर्मानधिकारसिद्धेस्तत्रानुपपादितमप्यध्ययनस्य संस्कारकर्मत्वम् इहावैद्यत्वमात्रेणोपपादनीयस्य विद्याऽनधिकारस्य समर्थनार्थमवश्यमुपपादनीयम् । अतस्तदुपपादनमपि संस्कारपरामर्शादित्यनेन स्वाध्यायस्याध्ययनसंस्कारसंबन्धादित्यर्थकेन विवक्षितमिति वक्तव्यमेव । अत एव टीकाकृता तदेव सूत्रं मूलं मनसिकृत्याध्ययनस्य संस्कारकर्मत्वं व्यवस्थापितम् । ततश्चाध्ययनसंस्कारः शूद्रेणापि क्रियतामित्याशङ्कापरिहारार्थं संस्कारपरामर्शादित्येतदेवाध्ययनाङ्गत्वेनोपनयनसंस्कारविधानादित्येतदर्थत्वेनापि योजनीयम् । अस्त्वध्ययनाङ्गोपनयनं शूद्रस्यापि; शिष्यस्य स्वयमुपगमनेऽप्याचार्यानुमतिरूपं तत्कर्तृकस्वसमीपप्रापणं विनाऽध्येतुमशक्यतयाऽर्थप्राप्ते उपनयने वसन्तादिवाक्यानां निमित्तार्थत्वोपपत्तेरिति शङ्कायां तदभावाभिलापा ( व्या. सू. अ.१ पा.३ सू. ३६ । ) चेत्येतद् । न च संस्कारमर्हतीत्यनेनाध्ययनाङ्गोपनयनाभावस्याप्यभिलापादित्येतत्परमपि योजनीयम् । एवमर्थभेदेन सूत्रभेदमभिप्रेत्य संस्कारपरामर्शादित्यादिसूत्रैरिति बहुवचननिर्देश इति सर्वमनवद्यम् ॥

**इदं तु चिन्त्यते**—इहत्याधिकरणगतसंस्कारशब्दस्येव पूर्वतन्त्रापशूद्राधिकरणगतस्य **संस्कारस्य तदर्थत्वा** ( जै. सू. अ. ६ पा. २ सू. ३ । ) दिति सूत्रस्थितसंस्कारशब्दस्याप्यध्ययनसंस्कारार्थत्वमपि परिकल्प्य शक्यमुपपादयितुम्; तत्राप्यध्ययनस्य संस्कारकर्मत्वं प्रसाधितमिति कर्म वा विलक्षण ( जै. सू. अ. ६ पा. १ सू. ३५ ) मिति नावमिकाधिकरणेनापि तत् सिद्धम् । तत्र ह्यधिकरणे द्वितीयसप्तमाध्याययोर्गीतिक्रियारूपत्वेनोक्तस्य साम्नोऽर्थकर्मत्वनिरासेन ऋगक्षराभिव्यञ्जकतया संस्कारकर्मत्वं व्यवस्थापितम् । तद्व्यवस्थापनं च स्वरविशेषविशिष्टतया ऋग्वर्णाभिव्यञ्जकस्य उच्चारणस्यैव संस्कारकर्मत्वव्यवस्थापनं पर्यवस्यति । सामाध्ययनकाले तद्व्यतिरेकेण क्रियान्तराभावात्तदेवोच्चारणं गुरुमुखोच्चारणानन्तरभावि सदध्ययनमुच्यत इति । तेन सामाध्ययनस्य संस्कारकर्मत्वसिद्धौ न्यायसाम्याद् वेदान्तराध्ययनस्यापि तथात्वं सिध्यति । किं बहुना ? **अथातो धर्मजिज्ञासेति** ( जै. सू. अ. १ पा. १ सू. १ । ) प्रथमाधिकरणेन कृत्स्नस्याप्यध्ययनस्य संस्कारकर्मत्वं कण्ठत एव प्रसाधितम् । तत्र ह्यतःशब्दोक्तेन वेदस्य विवक्षितार्थत्वेन सूचितम् अविवक्षितार्थत्वपूर्वपक्षं लिखद्भिर्व्याख्यातृभिस्तदुपपादनार्थम् अध्ययनस्य स्वर्गार्थत्वोक्त्या पुरुषार्थत्वं स्पष्टमुक्तम् । तत्सिद्धान्ते अक्षरावाप्त्यर्थज्ञानान्यतरफलकत्वेन स्वाध्यायसंस्कारत्वं समर्थितम् । **किंचात्र** प्रसाधितेनाध्ययनस्य संस्कारकर्मत्वेन शूद्राधिकारशङ्का नापैतीति व्यर्थमिह तत्प्रसाधनम्; स्वाध्यायाध्ययनविधेः स्वशाखाध्ययनविषयत्वेन शूद्रस्य सर्वापि शाखा न स्वशाखेति तदध्येतृभ्यो गृहीत्वा विद्यानुष्ठानोपपत्तेः । अन्यथा मैत्रेयीवाचक्नवीप्रभृतीनां स्त्रीणां विद्यानुष्ठाने का गतिः । तस्मान्नेयं गतार्थत्वशङ्कापरिहाररीतिर्युक्तेति । **अत्रेदमुत्तरम्** । शास्त्रभेदेऽपि गतार्थत्वं परिहरणीयं चेद्, विद्याधिकारिणः शूद्रेत्यामन्त्रणेन लिङ्गेन शूद्रस्य कर्मानधिकारेऽपि विद्याधिकारोऽस्तीत्यधिकशङ्कया न गतार्थत्वम्, न च—शूद्रशब्दो यौगिक इति—युक्तम्; रूढेर्बलवत्त्वात् । जानश्रुतेर्युव्याप्तं ज्योतिर्नास्तीति मनुष्यायसंभावितगुणभाववचनरूपहंसवाक्यानादरश्रवणेन गगनमयं खादितुं न शक्नोतीति वाक्यश्रवणेनेव न तस्य शोकः, किं तु रैक्वोपास्यदेवतोपासकस्य तदन्यस्यापि तदुपासना महाफलेति कथनेन रैक्वस्य महामहिमकीर्तनरूपस्तवनेन सयुग्वानमिति रैक्वचिह्नोपन्यासरूपेण तदुपगमनोपायोपदेशेन च महाफलविद्याग्रहणोपायो लब्ध इति जानश्रुतेर्मुदेवास्य संजातेति कल्पनौचित्येन शुगाद्रवणरूपयौगिकार्थासिद्धेश्च । न चात्र रूढि-

शूद्रस्याधिकारः; वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते। नच शूद्रस्य वेदाध्ययनमस्ति; उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात्। यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति; शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्, शास्त्रीयस्य च सामर्थ्य-

## भामती।

नह्यनधिगतकरणभेद इतिकर्तव्यतासु घटते। तस्माद्विध्यधीनप्रवृत्तितयाऽङ्गानां क्रत्वर्थता। क्रतुरिति हि विधिविषयेण विधिं परामृशति विषयिणम्। तेनार्थ्यते विषयीक्रियत इति क्रत्वर्थः। न चाध्ययनं वा स्वाध्यायो वा तदर्थज्ञानं वा प्राग्विधेः पुरुषेच्छाधीनप्रवृत्तिः, येन पुरुषार्थः स्यात्। यदि चाध्ययनेनैवार्थावबोधरूपं नियम्येत ततो मानान्तरविरोधः; तद्रूपस्य विनाप्यध्ययनं पुस्तकादिपाठेनाप्यधिगमात्। तस्मात् 'सुवर्णं भार्यम्' इतिवदध्ययनादेव फलं कल्पनीयम्। तथा चाध्ययनविधेरनियामकत्वाच्छूद्रस्याध्ययनेन वा पुस्तकादिपाठेन वा सामर्थ्यमस्तीति सोऽपि ब्रह्मविद्यायामधिक्रियेत। मा भूद्वाध्ययनाभावात्सर्वत्र ब्रह्मविद्यायामधिकारः, संवर्गविद्यायां तु भविष्यति; 'अहहारेत्वा शूद्र' इति शूद्रं संबोध्य तस्याः प्रवृत्तेः। न चैष शूद्रशब्दः कयाचिदवयवव्युत्पत्त्याऽशूद्रे वर्तनीयः; अवयवप्रसिद्धितः समुदायप्रसिद्धेरनपेक्षतया बलीयस्त्वात्। तस्माद्यथाऽनधीयानस्येष्टौ निषादस्थपतेरधिकारो वचनसामर्थ्यादेवं संवर्गविद्यायां शूद्रस्याधिकारो भविष्यतीति प्राप्तम्। **एवं प्राप्ते ब्रूमः—न शूद्रस्याधिकारः वेदाध्ययनाभावादिति।** **अयमभिसंधिः—**यद्यपि 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिर्न किंचित्फलवत्कर्मारभ्याम्नातः, नाप्यव्यभिचरितक्रतुसंबन्धपदार्थगतः, नहि जुह्वादिवत्स्वाध्यायोऽव्यभिचरितक्रतुसंबन्धः; तथापि स्वाध्यायस्याध्ययनसंस्कारविधिरध्ययनस्यापेक्षितोपायतामवगमयन् किं पिण्डपितृयज्ञवत् स्वर्गं वा सुवर्णं भार्यमितिवदर्थवादिकं वा फलं कल्पयित्वा विनियोगभङ्गेन स्वाध्यायेनाधीयीतेत्येवमर्थः कल्पतां, किंवा परम्परयाप्यन्यतोऽपेक्षितमधिगमय्य निर्वृणोत्विति विशये, न दृष्टद्वारेण परम्परयाप्यन्यतोऽपेक्षितप्रतिलम्भे च यथाश्रुतिविनियोगोपपत्तौ च संभवन्त्यां

## वेदान्तकल्पतरुः।

**स्विति**। अनधिगतः करणविशेषो विधितो येन पुंसा स इतिकर्तव्यतासु न घटते न चेष्टते। न हि करणसामान्यमितिकर्तव्यतोपकार्यं, किं तु विहितः कथंभावाकाङ्क्षः करणविशेषः, तत्र च यदङ्गं सामान्यतो यच्च विशेषतस्तत्र सर्वत्र विध्यधीनैव प्रवृत्तिरित्यर्थः। **ननु** कथं विध्यधीनप्रवृत्तिकता क्रत्वर्थताक्रतुविध्योर्भेदादत आह—**क्रतुरिति हीति**। क्रतुरिति शब्दो विषयेण क्रतुना तदभिधायकं विषयिणं विधिशब्दं परामृशति लक्षणयेत्यर्थः। **अर्थ्यते** ज्ञायते। मा भूवन्नध्ययनादयः पुमर्थाः, मा भूच्च तदाश्रितोऽदृष्टनियमोऽर्थावबोधे तु दृष्टे एवाध्ययनं नियम्यतामत आह—**यदि चेति**। यस्मान्नियमविधिरतोऽपूर्वविधिरित्याह—**तस्मादिति**। यदोपनयनाङ्गकाध्ययनविधिः काम्यः, तदा शूद्रस्य लौकिकाध्ययनादिना वेदग्रहणमित्याह—**तथा चेति**। द्वौ हीह पूर्वपक्षौ सर्वत्र शूद्रस्याधिकारः संवर्गविद्यायामेव वेति। **तत्राद्यं** प्रदर्श्य, स्वाध्यायविधेर्नियामकत्वमुपेत्यैव **द्वितीयमाह—मा भूद्वेति**। वाक्यप्रकरणयोरभावेऽपि कल्पनालाघवेन सामर्थ्यलक्षणलिङ्गेन चानुगृहीतस्तव्यप्रत्ययः कर्मप्राधान्यमवगमयन्नध्ययनस्य संस्कारकर्मतामापादयतीत्याह—**तथापीत्यादिना**। **विनियोगः** पदान्वयः। **परम्परयेति**। अक्षरावाप्तिपदार्थव्युत्पत्तिविचारपरम्परयेत्यर्थः। अन्यतोऽनुष्ठानतोऽपेक्षित-

## कल्पतरुपरिमलः।

बाधकमस्ति, येन यथाकथंचिद् योगः समाश्रीयेत; अध्ययनसंस्काराभावस्य तदबाधकतायाः समर्थितत्वात्। कर्मस्विव विद्यासु मन्त्राभावेन श्रवणादिप्रतिषेधस्याप्यबाधकत्वादिति। तदेतत्सूत्रभाष्यपर्यालोचनया स्फुटमिति न विवृतम्। विधान्तरेणागतार्थत्वं तु यथाकथंचिट्टीकोपपादनार्थमुपन्यस्तमित्यलं विस्तरेण॥ **न हि करणसामान्यमिति**। कर्मादिभिः करणैः संयोगविभागादिफलेषु जननीयेष्वितिकर्तव्यतापेक्षाभावादिति भावः। **किं तु विहित इति**। विहितस्य करणविशेषस्य कथमनेन फलापूर्वमुत्पादनीयमिति तत्प्रकारस्यानिर्ज्ञातत्वात् कथंभावापेक्षोदेतीति भावः। **मा भूवन्नध्ययनादयः पुमर्था इति**। बहुवचनमविवक्षितम्। अध्ययनं स्वाध्यायमात्रपरम्; अर्थज्ञानस्य हितैषिवचनावगम्ययागादिफलसन्निकृष्टतया पुरुषार्थत्वमभ्युपगम्य तत्र नियमाशङ्कनात्। **द्वौ हीह पूर्वपक्षाविति**। यथाकथंचित्संभवमात्रेण द्वितीयपूर्वपक्ष उपन्यस्तः। रैक्वेणानुष्ठीयमानां विद्यां संवर्गविद्येत्यविज्ञाय सामान्यतो या तदीया विद्या तां लप्स्ये इति धियोपसन्नस्य धार्मिकस्य विवेकिनो जानश्रुतेः शूद्रेत्यामन्त्रणलिङ्गेन विद्यासामान्याधिकारपूर्वपक्षस्यापि दृढत्वात्, अध्ययनाभावस्याबाधकताया उक्तत्वात्। **ननु** टीकाया विध्यपेक्षितत्वमप्यार्थवादिकार्थसिद्धावपेक्ष्यमित्युक्तमिति प्रतिभाति, तदयुक्तम्; बाधका-

**स्वाध्ययननिराकरणेन निराकृतत्वात्। यच्चेदं 'शूद्रो यज्ञेऽनवक्लृप्तः' इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति; न्यायस्य साधारणत्वात्। यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तल्लिङ्गम्; न्यायाभावात्। न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति। न**

## भामती।

श्रुतविनियोगभङ्गेनाध्ययनादेवाश्रुतादृष्टफलकल्पनोचिता। दृष्टश्च स्वाध्यायाध्ययनसंस्कारः। तेन हि पुरुषेण स प्राप्यते, प्राप्तश्च फलवत्कर्मब्रह्मावबोधमभ्युदयनिःश्रेयसप्रयोजनमुपजनयति, नतु सुवर्णधारणादौ दृष्टद्वारेण किंचित् परम्परयाप्यस्त्यपेक्षितं पुरुषस्य, तस्माद्विपरिवृत्य साक्षाद्धारणादेव विनियोगभङ्गेन फलं कल्प्यते। यदा चाध्ययनसंस्कृतेन स्वाध्यायेन फलवत्कर्मब्रह्मावबोधो भाव्यमानोऽभ्युदयनिःश्रेयसप्रयोजन इति स्थापितम्, तदा यस्याध्ययनं तस्यैव कर्मब्रह्मावबोधोऽभ्युदयनिःश्रेयसप्रयोजनो नान्यस्य, यस्य चोपनयनसंस्कारस्तस्यैवाध्ययनं, स च द्विजातीनामेवेत्युपनयनाभावेनाध्ययनसंस्काराभावात् पुस्तकादिपठितस्वाध्यायजन्योऽर्थावबोधः शूद्राणां न फलाय कल्पत इति शास्त्रीयसामर्थ्याभावान्न शूद्रो ब्रह्मविद्यायामधिक्रियत इति सिद्धम्। **यज्ञेऽनवक्लृप्त इति**। यज्ञग्रहणमुपलक्षणार्थम्। विद्यायामनवक्लृप्त इत्यपि द्रष्टव्यम्। सिद्धवदभिधानस्य न्यायपूर्वकत्वान्न्यायस्य चोभयत्र साम्यात्। द्वितीयं पूर्वपक्षमनुभाषते—**यत्पुनः संवर्गविद्यायामिति**। दूषयति—**न तल्लिङ्गम्**। कुतः? **न्यायाभावात्**। न तावच्छूद्रः संवर्गविद्यायां साक्षाच्चोद्यते, यथा 'एतया निषादस्थपतिं याजयेत्' इति निषादस्थपतिः, किंत्वर्थवादगतोऽयं शूद्रशब्दः, स चान्यतः सिद्धमर्थमवद्योतयति, न तु प्रापयतीत्यध्वरमीमांसकाः। अस्माकं तु अन्यपरादपि वाक्यादसति बाधके प्रमाणान्तरेणार्थोऽवगम्यमानो विधिना चापेक्षितः स्वीक्रियत एव। न्यायश्चास्मिन्नर्थे उक्तो बाधकः। नच विध्यपेक्षास्ति; द्विजात्यधिकारप्रतिलम्भेन विधेः पर्यवसानात्। विध्युद्देशगतत्वे त्वयं न्यायोऽपोद्यते वचनबलान्निषादस्थपतिवन्न त्वेष विध्युद्देशगत इत्युक्तम्। तस्मान्नार्थवादमात्राच्छूद्राधिकारसिद्धिरिति भावः। **अपिच किमर्थवाद-**

## वेदान्तकल्पतरुः।

मर्थबोधमित्यर्थः। अर्थबोधेऽध्ययनस्य सामर्थ्यं दर्शयति—**दृष्टश्चेति**। **संस्कारो**ऽवाप्तिः। सैव दर्श्यते—**तेन हीति**। **विपरिवृत्त्येति**। श्रुतविनियोगाद्व्यावृत्त्येत्यर्थः। **विनियोगभङ्गेनेति**। सुवर्णधारणेनेति कृत्वेत्यर्थः। यदवादि लिखितपठितवेदादर्थबोध इति, तत्राह—**यदा चेति**। एवं शूद्रस्य विद्यायामसामर्थ्यमुक्त्वा शास्त्रपर्युदासमाह—**यज्ञ इति**। अतत्परः शब्दो नाज्ञातार्थबोधीति मते मा भूल्लिङ्गादधिकारसिद्धिः, सिद्धान्ते तु किं न स्यादत आह—**अस्माकं त्विति**। असति बाधकेऽवगमादर्थसत्तासिद्धिरुक्ता, विधिना चापेक्ष्यत इति सप्रयोजनता। शूद्रशब्दस्यावयववृत्तिप्रदर्शनायाख्यायिकां श्रौतीमनुक्रामति—**एवं किलेत्यादिना**। जनश्रुतस्यापत्यं जानश्रुतिः। पुत्रसंज्ञस्यापत्यं पौत्रः। तस्यापत्यं पौत्रायणः। श्रद्धयाऽर्थिभ्यो देयं यस्य स तथा। पाक्यमन्नं बहु यस्य गृहे स तथा। **शृङ्गाटकानि** चतुष्पथाः। **शौण्डस्य** शूरस्य। **तदनुग्रहाय** उत्तमविद्याजिज्ञासां कर्तुम्। **दोषेत्यव्ययं** रात्रावित्यर्थः। **भल्लाक्ष भल्लाक्ष** विरुद्धलक्षणयाऽन्धेत्युपालम्भः। इत आरभ्य द्युलोके मा प्रसाङ्क्षीः प्रसक्तिं मा कार्षीः, यदि करोषि, तर्हि तन्मध्यप्रविष्टं त्वां तन्मा धाक्षीन्मा दहतु तद्धक्ष्यति। वराको जानश्रुतिरित्येकदेशद्वारोच्यते। एष तावद्वराकः एनमल्पं सन्तं किमेतद्वचनमात्थेत्येतच्छब्दान्वयः।

## कल्पतरुपरिमलः।

भावमात्रेण तत्सिद्ध्युपपत्तेरित्याशङ्क्य प्रयोजनकथनमात्रपरा तदुक्तिरिति व्याचष्टे—**विधिना चापेक्ष्यत इति**। **सप्रयोजनतेति**। उक्तेत्यनुषङ्गः। **अवयववृत्तीति**। शुचा दुद्रावेत्याद्यर्थेषु शूद्रशब्दस्य रुजं द्रावयतीत्यर्थे रुद्रशब्दस्येव नैरुक्तप्रक्रियया निष्पत्तिः। उकारदैर्घ्यस्यापि तत एव सिद्धिः। राज्ञो विशिष्टविद्योपदेष्टृगुरुसद्भावावगमेन मोद इव हंसो यदभावान्मामदूदुषत् सा विद्या सत्यपि संनिहिते गुरावपि इयन्तं कालं मया न लब्धा तेन तत्प्रयुक्तदूषणपात्रमभवमिति शोकोपि समभवत्। संजिहान एव क्षत्तारमुवाचेति वाक्यप्रतीतकालाक्षमत्वलिङ्गाद्यवगमितोऽस्त्येव मा प्रसाङ्क्षीरिति विहितस्य सत्त्यकरणस्य फलवचनतया योजयितुं शक्यमपि मैतत्त्वा धाक्षीरित्येतदज्ञानात् तत्सक्तिकरणेऽपि दाहो मा भूदित्याशीर्वचनतया योजयति—**यदि करोषीति**। धाक्षीरिति प्रथमपुरुषविषये मध्यमपुरुषश्छान्दसः। **ननु** वरो वराकः शोच्य इति वरशब्दैकदेशद्वारोच्यते चेत्, प्रथमान्तस्य कथमन्वयः? इत्याकाङ्क्षायां वाक्यभेदेनोद्देश्यसमर्पकपदाध्याहारेण च योजयति—**एष तावद्वराक इति**। केचिदरे इति हीनसंबोधनार्थतया पदविभागं कुर्वन्ति। तथा पदविभागे मय उञो वो वेत्युकारस्य वकारादेशेन भाव्यम्, पक्षे निपात एकाजनाङिति प्रगृह्यसंज्ञया प्रकृतिभावे सति कमु अर इति वा भाव्यम्। अतः कंवर इति श्रुतिसंधिसिद्ध्यर्थं वकारोपजन उकारोपजनो वा छान्दसः समाश्रयणीयः; न वा उ एतन्म्रियसे मरिष्यसीत्यादिवत्। **एनमित्थं सन्तं कमिति**। उद्दिश्येत्यध्याहार्यम्। ब्रूचिशासिगुणेन चेति संगृहीतमकथितकर्मत्वं वा कथं

चात्र न्यायोऽस्ति । कामं चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात्, तद्विषयत्वात् , न सर्वासु विद्यासु । अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते । शक्यते चायं शूद्रशब्दोऽधिकृतविषयो योजयितुम् । कथमित्युच्यते—'कंवर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' ( छा० ४।१।३ ) इत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे, तामृषी रैक्वः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते; जातिशूद्रस्यानधिकारात् । कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति ? उच्यते—तदाद्रवणात् । शुचमभिदुद्राव, शुचा वाभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्रः । अवयवार्थसंभवाद्रूढ्यर्थस्य चासंभवात् । दृश्यते चायमर्थोऽस्यामाख्यायिकायाम् ॥ ३४ ॥

## भामती ।

बलाद्विद्यामात्रेऽधिकारः शूद्रस्य कल्प्यते, संवर्गविद्यायां वा । न तावद्विद्यामात्र इत्याह—**कामं चायमिति** । नहि संवर्गविद्यायामर्थवादः श्रुतो विद्यामात्रेऽधिकारिणमुपनयति; अतिप्रसङ्गात् । अस्तु तर्हि संवर्गविद्यायामेव शूद्रस्याधिकार इत्यत आह—**अर्थवादस्थत्वादिति** । तत्किमेतच्छूद्रपदं प्रमत्तगीतं, न चैतद्युक्तम्; तुल्यं हि सांप्रदायिकमित्यत आह—**शक्यते चायं शूद्रशब्द इति** । **एवं किलात्रोपाख्यायते**—जानश्रुतिः पौत्रायणो बहुदायी श्रद्धादेयो बहुपाक्यः प्रियातिथिर्बभूव । स च तेषु तेषु ग्रामनगरशृङ्गाटकेषु विविधानामन्नपानानां पूर्णानतिथिभ्य आवसथान् कारयामास । सर्वत एत्यैतेष्वावसथेषु ममान्नपानमर्थिन उपयोक्ष्यन्त इति । अथास्य राज्ञो दानशौण्डस्य गुणगरिमसंतोषिताः सन्तो देवर्षयो हंसरूपमास्थाय तदनुग्रहाय तस्य निदाघसमये दोषा हर्म्यतलस्थस्योपरि मालामाबध्याजग्मुः । तेषामग्रेसरं हंसं संबोध्य पृष्ठतः पतन्नेकतमो हंसः साद्भुतमभ्युवाद ।'भो भो भल्लाक्ष भल्लाक्ष, जानश्रुतेरस्य पौत्रायणस्य द्युलोक आयतं ज्योतिस्तन्मा प्रसाङ्क्षीर्मैनत्त्वा धाक्षी'दिति । तमेवमुक्तवन्तमग्रगामी हंसः प्रत्युवाच । 'कंवर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' । **अयमर्थः**—वर इति सोपहासमवरमाह । **अथवा**—वरो वराकोऽयं जानश्रुतिः । कमित्याक्षेपे । यस्मादयं वराकस्तस्मात्कमेनं किंभूतमेतं सन्तं प्राणिमात्रं रैक्वमिव सयुग्वानमात्थ । युग्वा गन्त्री शकटी तया सह वर्तत इति सयुग्वा, रैक्वस्तमिव **कमेनं** प्राणिमात्रं जानश्रुतिमात्थ । रैक्वस्य हि ज्योतिरसह्यम्; नत्वेतस्य प्राणिमात्रस्य । तस्य हि भगवतः पुण्यज्ञानसंभारसंभृतस्य रैक्वस्य ब्रह्मविदो धर्मे त्रैलोक्योदरवर्तिप्राणभृन्मात्रधर्मोऽन्तर्भवति, न पुना रैक्वधर्मैकक्षां कस्यचिद्धर्मोऽवगाहत इति । अथैष हंसवचनादात्मनोऽत्यन्तनिकर्षमुत्कर्षकाष्ठां च रैक्वस्योपश्रुत्य विषण्णमानसो जानश्रुतिः कितव इवाक्षपराजितः पौनःपुन्येन निःश्वसन्नुद्वेलं कथं कथमपि निशीथमतिवाहयांबभूव । ततो निशावसानपिशुनमनिभृतवन्दारुवृन्दप्रारब्धस्तुतिसहस्रसंवलितं मङ्गलतूर्यनिर्घोषमाकर्ण्य तल्पतलस्थ एव राजा एकपदे यन्तारमाहूयादिदेश, वयस्य, रैक्वाह्वयं ब्रह्मविदमेकरातिं सयुग्वानमतिविविक्तेषु तेषु तेषु विपिननगनिकुञ्जनदीपुलिनादिप्रदेशेष्वन्विष्य प्रयत्नतोऽस्मभ्यमाचक्ष्वेति । स च तत्र तत्रान्विष्यन् क्वचिदतिविविक्ते देशे शकटस्याधस्तात् पामानं कण्डूयमानं ब्राह्मणायनमद्राक्षीत् । तं च दृष्ट्वा रैक्वोऽयं भवितेति प्रतिभावानुपविश्य सविनयमप्राक्षीत्, त्वमसि हे भगवन्, सयुग्वा रैक्व इति । तस्य च रैक्वभा-

## वेदान्तकल्पतरुः ।

युजेर्धातोः कर्तरि अन्येभ्योऽपि दृश्यन्त इति क्वनिपि कृते युग्वा । स्वारूढं पुरुषं देशान्तरेण युनक्तीत्यर्थः । **उद्वेलमपारं** । चिन्ताविष्टस्य हि रात्रिर्बहुर्भवति । **पिशुनः** सूचकः । **वन्दारवः** स्तावकास्तेषां **वृन्दं** समूहः । **एकपदे** झटिति । **यन्तारं** सारथिम् । **विपिन**मरण्यम् । **नगनिकुञ्जं** पर्वतगुहा । **पुलिनं** सैकतम् । **ब्राह्मणायनं** ब्राह्मणवेषम् । **धनाया** धनेच्छा । श्रुत्युक्तनिष्कव्याख्या **हारमिति** । अश्वतरीभ्यां युक्तो रथस्तथोक्तः । **आटोपः** संभ्रमः । अह हारेत्वेति पाठो व्याख्यातः । आहरे त्वेति पाठे त्वा इत्यस्यात्र वाक्ये न केनापि संबन्ध इत्यानर्थक्यम् । शकटोक्तेः प्राच्यां

## कल्पतरुपरिमलः ।

चित् समर्थनीयम्; एतद्वचनमिति कर्मान्तरोपादानात् । यद्यप्येतत्सन्तमित्यस्य प्राणिमात्रमिति टीकाया विवरणादीदृशं सन्तं मनुष्यसामान्यमर्यादामनतिक्रम्य वर्तमानमित्यर्थो विवक्षित इति भाति; तथापि छान्दोग्यविवरणानुसारादेतद्वचनमात्थेत्यन्वयो दर्शितः । **ब्राह्मणायन**मित्यस्य ब्राह्मणवंश्यमित्यर्थः; नडादिभ्यः फगिति सूत्रेण नडादिगणपठिताद् ब्राह्मणशब्दाद् गोत्रापत्यार्थे फक्प्रत्यये फस्यायनादेशे च सति तद्रूपनिष्पत्तेः । इदं ब्राह्मणवंश्यत्वं वेषेण ज्ञातव्यमिति तज्ज्ञापकमुपन्यस्तं—**ब्राह्मणवेषमिति** । **निष्कव्याख्या हारमितीति** । यद्यपि निष्कं पदकरुचकशब्दाभिधेयं स्वर्णाभरणं, हारो मणिमालेत्यस्ति लोके भेदव्यवहारः; तथापि निष्कशब्दोक्तस्याग्रे हारेत्वेति हारशब्देन विवरणादेवं व्याख्यातम् । **अश्वतरी-**

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

इतश्च न जातिशूद्रो जानश्रुतिः । यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गाद्गम्यते । उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः संकीर्त्यते—'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' ( छा० ४।३।५ ) इति । चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम् । कापेययोगो हि चित्ररथस्यावगतः 'एतेन वै चित्ररथं कापेया

### भामती ।

वानुमतिं च तैस्तैरिङ्गितैर्गार्हस्थ्येच्छां धनायां चोन्नीय यन्ता राज्ञे निवेदयामास । राजा तु तं निशम्य गवां षट्शतानि निष्कं च हारं चाश्वतरीरथं चादाय सत्वरं रैक्वं प्रतिचक्रमे । गत्वा चाभ्युवाद । हे रैक्व, गवां षट्शतानीमानि निष्कश्च हारश्चायमश्वतरीरथः, एतदादत्स्व, अनुशाधि मां भगवन्निति । तमेवमुक्तवन्तं प्रति साटोपं च सस्पृहं चोवाच रैक्वः । अह हारेत्वा शूद्र, तवैव सह गोभिरस्त्विति । अहेति निपातः साटोपमामन्त्रणे । हारेण युक्ता इत्वा गत्रीरथो हारेत्वा स गोभिः सह तवैवास्तु, किमेतन्मात्रेण मम धनेनाकल्पवर्तिनो गार्हस्थ्यस्य निर्वाहानुपयोगिनेति भावः । आहर त्वेति तु पाठोऽनर्थकतया च गोभिः सहेत्यत्र प्रतिसंबन्ध्यनुपादानेन चाचार्यैर्दूषितः । तदस्यामाख्यायिकायां शक्यः शूद्रशब्देन जानश्रुती राजन्योऽप्यवयवव्युत्पत्त्या वक्तुम् । स हि रैक्वः परोक्षज्ञतां चिख्यापयिषुरात्मनो जानश्रुतेः शूद्रेति शुचं सूचयामास । कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति । उच्यते—**तदाद्रवणात्** । तद्व्याचष्टे—शुचमभिदुद्राव जानश्रुतिः । शुचं प्राप्तवानित्यर्थः । शुचा वा जानश्रुतिः दुद्रुवे । शुचा प्राप्त इत्यर्थः । अथवा शुचा रैक्वं जानश्रुतिर्दुद्राव गतवान् । तस्मात्तदाद्रवणादिति तच्छब्देन शुग्वा जानश्रुतिर्वा रैक्वो वा परामृश्यत इत्युक्तम् ॥ ३४ ॥ **इतश्च न जातिशूद्रो जानश्रुतिः यत्कारणं** प्रकरणनिरूपणे क्रियमाणे क्षत्रियत्वमस्य जानश्रुतेरवगम्यते चैत्ररथेन लिङ्गादिति व्याचक्षाणः प्रकरणं निरूपयति—**उत्तरत्र हि** संवर्गविद्यावाक्यशेषे, चैत्ररथेनाभिप्रतारिणा निश्चितक्षत्रियत्वेन समानायां संवर्गविद्यायां समभिव्याहाराल्लिङ्गात्संदिग्धक्षत्रियभावो जानश्रुतिः क्षत्रियो निश्चीयते । 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' इति प्रसिद्धयाजकत्वेन कापेयेनाभिप्रतारिणो योगः प्रतीयते । ब्रह्मचारिभिक्षया चास्याशूद्रत्वमवगम्यते । नहि जातु ब्रह्मचारी शूद्रान् भिक्षते । याजकेन च कापेयेन योगाद्याज्योऽभिप्रतारी । क्षत्रियत्वं चास्य चैत्ररथित्वात् । 'तस्माच्चैत्ररथी नामैकः क्षत्रपतिरजायत' इति वचनात् । चैत्ररथित्वं चास्य कापेयेन याजकेन योगात् । **एतेन वै चित्ररथं कापेया अयाजयन्निति** छन्दोगानां द्विरात्रे श्रूयते । तेन चित्ररथस्य याजकाः कापेयाः । एष चाभिप्रतारी

### वेदान्तकल्पतरुः ।

व्याख्यायामस्ति संबन्धीति ॥ ३४ ॥ एवं तावन्न्यायबलेन शूद्रशब्दलिङ्गमन्यथा नीतम् । संप्रति शूद्राधिकारवारकबहुलिङ्गविरोधादपि तथेत्याह—**क्षत्रियत्वगतेश्चे**त्यारभ्य आ अधिकरणसमाप्तेः । **ननु** कापेययाज्योऽभिप्रतारी चित्ररथ एव किं न स्यादत आह—**एष चेति** । नामभेदादन्यत्वे सति तद्वंश्यत्वात्तद्याजकेन याज्यत्वमित्यर्थः । यद्यपि क्षत्रियसमभिव्याहारो न क्षत्रियत्वव्याप्तः कापेय एव व्यभिचारात्तथापि द्योतकतया संभावकः । सर्वं च वैदिकं लिङ्गमेवमेवेत्याह—

### कल्पतरुपरिमलः ।

**भ्यामिति** । अश्वायां गर्दभादुत्पन्ना गर्दभ्यामश्वादुत्पन्ना वा स्त्रीव्यक्तिरश्वतरी ॥३४॥ **आ अधिकरणसमाप्तेरिति** । **अनेन**—भाष्ये शूद्राधिकारनिषेधार्थत्वेनावतारितानां संस्कारपरामर्शा ( ब्र. सू. अ. १ पा. ३ सू. ३६ । ) दित्यादिसूत्राणामपि शूद्रामन्त्रणलिङ्गान्यथाकरणार्थत्ववचने तल्लिङ्गावलम्बनैवाधिकाशङ्काऽत्र निराकरणीया । अन्यत्सर्वं पूर्वतन्त्र एव सिद्धमिह न व्युत्पादनीयमिति—**सूचितम्** । **तथापि द्योतकतयेति** । व्यभिचारमभ्युपेत्य परिहारः । अस्मिन्प्रकरणे संवर्गविद्यान्वयिनो ब्राह्मणस्य द्वितीयः क्षत्रिय इति नियमे तु नास्ति व्यभिचारः ॥ **ननु**—उपन्यस्तलिङ्गसिद्ध्यर्थं प्रथममभिप्रतारिणः कापेययाज्यत्वं निर्धारणीयं, तत्कुतो निर्धार्यते ? न हि भोजनार्थं कापेयाभिप्रतारिणौ सहोपविष्टावित्येतावता तयोः किंचित्संबन्धान्तरं सिध्यति । सिध्यद्वा तयोरेकविद्यत्वमेव तत्सिद्ध्येत्; विद्याङ्गोपाख्यानेषु सहप्रस्थितानां प्राचीनशालसत्ययज्ञादीनां तस्यैव संबन्धान्तरस्यान्योन्यस्माद्विद्याङ्गगतविशेषग्रहणार्थत्वेन क्लृप्तत्वात्, तस्य कथंचित्कापेययाज्यत्वसिद्धावपि नामभेदेन चित्ररथादन्यस्य तस्य चैत्ररथित्वं कुतः सिध्यति ? समानान्वयानां समानान्वया याजका इति नियमाभावात्, कुलक्रमागता ऋत्विजः पितृभूता कस्य चित्कस्य चिदाधानप्रभृति यावज्जीवमृत्विजो मनुष्यभूतास्तत्र तत्र कर्मणि दैवात् प्राप्ता ऋत्विजो देवभूता इति त्रिविधानामृत्विजां शाट्यायनिशाखायां दर्शितत्वाद्, देवभूतर्त्विगभिप्रायेणैव राजसूये

**अयाजयन्' ( ताण्ड्यब्रा० २०।१२।५ ) इति । समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति । 'तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति च क्षत्रपतित्वावगमात्क्षत्रियत्वमस्यावगन्तव्यम् । तेन क्षत्रियेणाभिप्रतारिणा सह समानायां विद्यायां संकीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति । समानानामेव हि प्रायेण समभिव्याहारा भवन्ति । क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः । अतो न शूद्रस्याधिकारः ॥ ३५ ॥**

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

**इतश्च न शूद्रस्याधिकारः, यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते—'तं होपनिन्ये' ( श० ब्रा० ११।५।३।१३ ) । 'अधीहि भगव इति होपससाद' ( छा० ७।१।१ ) ब्रह्मपरा**

---

### भामती ।

चित्ररथादन्यः सन्नेव कापेयानां याज्यो भवति । यदि चैत्ररथिः स्यात् समानान्वयानां हि प्रायेण समानान्वया याजका भवन्ति । तस्माच्चैत्ररथित्वादभिप्रतारी काक्षसेनिः क्षत्रियः । तत्समभिव्याहाराच्च जानश्रुतिरपि क्षत्रियः संभाव्यते । इतश्च क्षत्रियो जानश्रुतिरित्याह—**क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च** । क्षत्तृप्रेषणे चार्थसंभवे च तादृशस्य वदान्यपृष्टस्यैश्वर्यं प्रायेण क्षत्रियस्य दृष्टं युधिष्ठिरादिवदिति ॥ ३५ ॥ न केवलमुपनीताध्ययनविधिपरामर्शेन न शूद्रास्याधिकारः, किंतु तेषु तेषु विद्योपदेशप्रदेशेषूपनयनसंस्कारपरामर्शात्, शूद्रस्य तदभावाभिधानाद्ब्रह्मविद्यायामनधिकार इति । नन्वनुपनीतस्यापि ब्रह्मोपदेशः श्रूयते—'तान्हानुपनीयैव इति । तथा शूद्रस्यानुपनीतस्यैवा-

### वेदान्तकल्पतरुः ।

**संभाव्यते इति** । एवं तावद्वाक्योपक्रमे सन्देहमभ्युपेत्यैव वाक्यशेषान्निर्णयः कृतः, इदानीं तु नैव सन्देहः; शूद्रशब्दपरामर्शात्प्रागेव स ह क्षत्तारमुवाचेत्यमात्यप्रैषादिना क्षत्रियत्वनिश्चयादित्याह—**इतश्चेति** । बहुदायी बहुपाक्य इति ह्यर्थसंभवोऽधिगतः । अन्ये वदान्या दानशीलाः पृष्टे यस्य स तथा । अर्थसंभवे च निमित्ते यदैश्वर्यं तस्य जानश्रुतेरवगतं तत् क्षत्रियस्य दृष्टमित्यर्थः ॥ ३५ ॥ आद्यसूत्रे एवाध्ययननियमस्य सूत्रितत्वात् पुनरुक्तिमाशङ्क्याह—**न केवलमिति** ।

### कल्पतरुपरिमलः ।

प्रतितन्त्रं दक्षिणाभेदेन तदा नेतव्यऋत्विक्कभेदेऽपि ऋत्विक्त्वाधिष्ठानभूताः पुरुषा राजसूयारम्भे यावत्समाप्ति नियता एव ग्राह्याः, न तु तत्र तन्त्रे भिन्ने भिन्नापेक्षा कर्तुमुचिता; कालविशेषकर्तव्येषु तन्त्रान्तरेषु कदा चिदृत्विक्स्खलनेन कर्मविघ्नप्रसङ्गादित्येकादशे राजसूयान्तर्गतकर्मणां भिन्नतन्त्राणामपि ऋत्विक्तन्त्रत्वमुक्तम् । तथा तस्य चित्ररथवंश्यत्वसिद्धावपि क्षत्रियत्वं कुतः सिध्यति ? 'एतेन वै चित्ररथं कापेया अयाजयन् तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वंस्तस्माच्चैत्ररथो नामैकः क्षत्रपतिर्जायते' इति चित्ररथानुष्ठितद्विरात्रक्रतुमहिम्ना तद्वंश्यैरपि क्षत्रपतित्वं लब्धमित्येतावदेव ह्युक्तं, न तु तद्वंश्यानां क्षत्रियत्वम्; अक्षत्रियस्यापि निषादस्थपत्यधिकरणपूर्वपक्षन्यायेन क्षत्रपतित्वोपपत्तेरित्याशङ्क्याह—**सर्वं च वैदिकं लिङ्गमिति** । अभिप्रतारिणा सह पठिते कापेये श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायमाने कापेययाज्योऽयमभिप्रतारीति बुद्धिर्भवति । अविदितपूर्वस्य हस्तिनो निकटे दृश्यमाने पुरुषे हस्तिपकोयमिति प्रत्यभिज्ञायमाने सत्ययमस्य शिक्षणीयो हस्तीति बुद्धिवद् ऋत्विक्षु पितृभूतानां मुख्यत्वात् पूर्वराजचरित्रेषु बहुशो याज्ययाजककुलव्यवस्थादर्शनाच्च कापेययाज्यत्वेन चित्ररथवंश्यत्वबुद्धिर्भवति । अथ यस्य ज्योतिरुक्थ्यः पूर्वमहर्भवत्यायुरुत्तर इति द्विरात्रप्रकरणे श्रुतस्यैकाकिनमेवैनमन्नाद्यस्याध्यक्षं करोतीत्यर्थवादस्यैनं द्विरात्रयाजिनमेकमेव भ्रातृवर्गादिज्ञातिमध्ये ऐश्वर्यस्याध्यक्षं करोतीत्यर्थः । ननु सर्वेष्वपि लोकेष्वेनमेकमेवैश्वर्य्यस्याध्यक्षं करोतीति; तदधिकैश्वर्यादीनामिन्द्रादीनां सत्त्वात् । ततश्च तदनन्तरश्रुते एतेन वै चित्ररथमित्युपाख्याने फलरूपतया श्रुतं क्षत्रपतित्वं ज्ञातिप्राधान्यरूपमिति ज्ञातीनां क्षत्रियत्वेन फलभागपि क्षत्रिय इति बुद्धिर्भवति । ततश्चोक्तहेत्ववलम्बनबुद्धीनां क्वचित्क्वचिद् बाधकोपनिपातेन प्रमात्वाभावेऽप्यत्र बाधकाभावेनौत्सर्गिकप्रमात्वबलादुदाहृतलिङ्गसिद्धिरित्यभिप्रायः । **अमात्यप्रैषादिनेति । वैश्याद् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते । जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम्** ॥ इत्युक्तलक्षणस्य क्षत्तुरमा राज्ञः समीपे भावाद्यौगिकममात्यत्वमस्तीत्यमात्यशब्देन निर्देशः । टीकायां रेफयुक्तः प्रष्ठशब्दश्चेत् प्रष्ठोऽग्रगामिनीति वैयाकरणनिपातेन तस्याग्रगामिवाचित्वात् षष्ठीसमास एव ग्राह्यः । ऋकारयुक्तं पाठं दृष्ट्वा तु क्लिष्टः परसप्तम्यन्तपदबहुव्रीहिराश्रितः । **तत् क्षत्रियस्य दृष्टमिति** । इदमपि प्रायिकमुख्यत्वाभिप्रायलिङ्गम् । संभवति ह्यतिक्रान्तमर्यादस्य शूद्रस्यापि बलवतोऽवेष्ट्यधिकरण ( जै. सू. अ. २ पा. ३ सू. ३ । ) दर्शितया रीत्या राज्यपालयितृत्वेन क्षत्तृप्रेषणादिकम् ॥ ३५ ॥ **आद्यसूत्रएवेति । न**

ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' ( प्र० १।१ ) इति च । 'तान्हानुपनीयैव' ( छा० ५।११।७ ) इत्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति । शूद्रस्य संस्काराभावोऽभिलप्यते; 'शूद्रश्चतुर्थो वर्ण एकजातिः' ( मनु० १०।४ ) इत्येकजातित्वस्मरणात्, 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' ( मनु० १०।१२६ ) इत्यादिभिश्च ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च न शूद्रस्याधिकारः । यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुम-

### भामती ।

धिकारो भविष्यतीत्यत आह—**तान्हानुपनीयैवेत्यपि प्रदर्शितैवोपनयनप्राप्तिः** । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य येषामुपनयनं प्राप्तं तेषामेव तन्निषिध्यते । तच्च द्विजातीनामिति द्विजातय एव निषिद्धोपनयना अधिक्रियन्ते न शूद्र इति ॥३६॥ 'सत्यकामो ह वै जाबालः प्रमीतपितृकः स्वां मातरं जबालां प्रपच्छ, अहमाचार्यकुले ब्रह्मचर्यं चरिष्यामि, तद्ब्रवीतु भवती किंगोत्रोऽहमिति साब्रवीत् । स्वजनकपरिचरणपरतया नाहमज्ञासिषं गोत्रं तवेति । स त्वाचार्यं गौतममुपससाद । उपसद्योवाच, हे भगवन्, ब्रह्मचर्यमुपेयां त्वयीति । स होवाच, नाविज्ञातगोत्र उपनीयत इति किंगोत्रोऽसीति । अथोवाच सत्यकामो नाहं वेद स्वं गोत्रं, स्वां मातरं जबालामपृच्छं, सापि न वेदेति । तदुपश्रुत्याभ्यधाद्गौ-

### वेदान्तकल्पतरुः ।

उपनीतस्य यदध्ययनं तद्विधिपरामर्श आलोचनम् । उपनयनमध्ययनाङ्गमेकम् अपरं च विद्याप्राप्तये उपसदनापरपर्यायमस्ति । हीनवर्णे राजन्याचार्ये औपमन्यवादीनां ब्राह्मणानामुपनयनं "तान्हेति" निषिध्यते । तत एवोत्तमवर्णाचार्यलाभे तेषामुपनयनं प्राप्नोत्यन्यथाऽस्यैवाप्राप्तनिषेधतापातादित्याह—**येषामिति** । ॥ ३६ ॥ ३७ ॥ ३८ ॥ **ते हैते** भारद्वाजा-

### कल्पतरुपरिमलः ।

**च्चाध्ययननियमः; संस्कारपरामर्शादिति** सूत्रयिष्यत इति प्रथमसूत्रे स्थिलोक्तमाचार्यैः कथमिह तस्याद्यसूत्रे सूत्रितत्वमुच्यते ? नैष दोषः; शूद्रशब्दस्य न्यायतो रूढिप्रच्यावनार्थं प्रवृत्ते प्रथमसूत्रेऽध्ययनाभावं हेतुमुपन्यस्तवतो भाष्यकारस्य तदुपपादकोऽध्ययनसंस्कारनियमोऽप्याद्यसूत्र एव सूचित इत्यभिप्रायः । अत एवात्र सूत्रे संस्कारशब्दो विद्याङ्गोपनयनपरतयैव भाष्ये व्याख्यात इत्यालोच्य तदभिप्रायानुसारेणात्र पुनरुक्तिशङ्का, स्वयं त्वध्ययनसंस्कारनियमः शब्दारूढत्वात्संस्कारसूत्रार्थ एव वक्तुमुचित इत्यभिप्रेत्याद्यसूत्रे तथाऽवोचत् । कस्तर्हि स्वमते रूढिप्रच्यावकन्यायः सूच्यते? इति सूत्रशेषसूचित एव; तेन हि शुगाद्रवणस्याख्यायिकया सूचितत्वात् । **तत् बुद्धिस्थमिति** । अबुद्धिस्थरूढितो बुद्धिस्थयोगो बलीयानिति न्यायः सूचितः ॥ **उपसदनेति** । **ननु** तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति विहितं शिष्यकर्तृकं गुरुकर्मकमुपसदनं तं होपनिन्ये-इत्यादिलिङ्गावगतकर्तव्यताकम् आचार्यकर्तृकम् शिष्यकर्मकं उपनयनमिति भेदसत्त्वात् कथं पर्यायतोक्तिः? **उच्यते**; शिष्येणोपसदने कृतेऽपि तस्याचार्यकर्तृकं शिष्यभावं स्वसमीपावस्थानानुमत्यादिरूपोपनयनं विना विद्योपदेशपर्यवसायित्वासंभवाद्यत्रोपसदनमात्रं श्रुतं तत्र तदेवोपनयनस्य गमकमिति व्यञ्जयितुं गमकवाचिशब्दस्य गम्ये पर्यायोक्तिः पर्यायोक्तालंकारे । **ननु**—शूद्रश्चतुर्थो वर्ण एव जातिरिति स्मृत्या द्वितीयजन्मरूपोपनयनाऽसंभवेऽपि सच्छूद्राणाममन्त्रकं विद्याङ्गोपनयनं संभवति; मानवधर्मशास्त्रे न च संस्कारमर्हतीत्येतदनन्तरं "धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुव्रताः । मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च" ॥ इत्यमन्त्रकसंस्काराभ्यनुज्ञानात्, तस्य वैशेषिकनिषेधगोचरद्वितीयजन्मरूपोपनयनाविषयत्वेऽपि विद्याङ्गोपनयनाविषयत्वस्यापि कल्पने प्रमाणाभावात् । नच—सत्यकामस्य शूद्रस्वभावसिद्धात् तत्त्वरहितवचनेन शूद्रत्वाभावनिर्धारणे सत्येव विद्याङ्गे सत्यकामोपनयने गौतमप्रवृत्तिलिङ्गेन शूद्रस्य विद्याङ्गोपनयनेऽपि निषेधोन्नयनात्संस्काराभ्यनुज्ञानं तदतिरिक्तविषयमपि कल्प्यमिति—वाच्यम्; गोत्रप्रश्नलिङ्गेन सत्यकामोपनयनस्याध्ययनाङ्गोपनयनत्वावगत्या तच्छूद्रत्वाभावनिर्धारणस्य तत्रैवोपयोगादिति—**चेत्**, **उच्यते**; "न चास्योपदिशेद्धर्ममित्युदाहरिष्यमाणमानववचनानुसारेण तदीयस्य संस्काराभ्यनुज्ञानस्य शूद्रं प्रति विशिष्य येऽभ्यनुज्ञाताः पाकयज्ञादयस्तन्मात्रविषयत्वकल्पनौचित्यात्, विद्याङ्गोपाख्यानश्रुतस्य शूद्रत्वाभावनिर्द्धारणस्य विद्यार्थताया अप्युपपत्तावन्यमात्रार्थत्वकल्पनाऽयोगेन तस्य विद्याङ्गोपनयनविद्योपदेशार्थताया अपि कल्पनौचित्याच्च । "अनृतं चातिवादश्च पैशुन्यमतिलोभता । निकृतिश्चाभिमानश्च जन्मतः शूद्रमाविशत् ॥" इति मनूदितं शूद्रभावप्रयोजकम् । **तान् हेति निषिध्यत इति** । **ननु** समीपप्रापणनिषेधे कथं विद्योपदेशलाभः ? नैष दोषः; शिष्यभावतत्कार्यशुश्रूषाद्यनुमतिपूर्वकं वैधमुपनयनं निषिध्यते, न तु समीपप्रापणमात्ररूपं लौकिकमपि । अत एव क्षत्रिये-

नुशासितुं च प्रववृते; 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्या- दगाः' ( छा० ४।४।५ ) इति श्रुतिलिङ्गात् ॥ ३७ ॥

**श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥**

इतश्च न शूद्रस्याधिकारः । यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति । वेदश्रवण- प्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेध- स्तावत् 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' इति । 'पद्यु ह वा एतच्छमशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति च । अत एवाध्ययनप्रतिषेधः । यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत । भवति च वेदोच्चारणे जिह्वाछेदो धारणे शरीरभेद इति । अत एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति 'न शूद्राय मतिं दद्यात्' इति, 'द्विजातीनामध्ययनमिज्या दानम्' इति च । येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याध- प्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं; ज्ञानस्यैकान्तिकफलत्वात्, 'श्राव- येच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् ॥ ३८ ॥ इति नवमं अपशूद्राधिकरणम् ॥

### भामती ।

तमः, नाद्विजन्मन आर्जवयुक्तमीदृशं वचः, तेनास्मिन्न शूद्रत्वसंभावनास्तीति त्वां द्विजातिजन्मानमुपनेष्य इत्युपनेतु- मनुशासितुं च जाबालं गौतमः प्रवृत्तः । तेनापि शूद्रस्य नाधिकार इति विज्ञायते । न सत्यादगा इति । न सत्यमतिक्रान्तवानसीति ॥ ३७ ॥ निगदव्याख्यानेन भाष्येण व्याख्यातम् । अतिरोहितार्थमन्यत् ॥ ३८ ॥ इति **नवममपशूद्राधिकरणम् ॥**

### वेदान्तकल्पतरुः ।

इयः **षड्** ऋषयोऽपरं ब्रह्म परत्वेनावगतवन्त इति ब्रह्मपराः तद्ध्यानानुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः परं च परमार्थं ब्रह्म अन्वे- षमाणा एष पिप्पलादस्तज्जिज्ञासितं सर्वं वक्ष्यतीति प्रतिपेदिरे । ते च तमेव भगवन्तमुपसन्नाः तानौपमन्यवादीननुपनीयैत- द्वैश्वानरविज्ञानमुवाच अश्वपती राजा । **त्रपुजतुभ्यां** वङ्गलाक्षाभ्यां तप्ताभ्याम् । द्विजातीनां दानं साधारणम्, प्रतिग्र- हस्तु ब्राह्मणस्यैवेति विवक्षितम्, न तु शूद्रस्यैव दानं वार्यते ॥ **इति नवममपशूद्राधिकरणम् ॥**

### कल्पतरुपरिमलः ।

णाजातशत्रुणा वा लोके ब्राह्मणस्य ब्रह्मविविदिषयोपसन्नस्य शिष्यभावेनानुव्रजनमननुमत्य तं पाणौ गृहीत्वैव यष्टिघातोत्थापनाय सुप्तपुरुषसकाशं प्रति प्रस्थितमित्याम्नातम् । "तत इह बालाकिः समित्पाणिः प्रतिचक्रामोप त्वा यानीति तं होवाचाजातशत्रुः प्रतिलोममेव तत्स्याद्यत् क्षत्रियो ब्राह्मणानुपनये देहि व्येव त्वा ज्ञपयिष्यामीति तं पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीय- तु"रिति ॥३६॥३७॥३८॥ ब्रह्मपराणां पुनः किमर्थं ब्रह्मविविदिषेत्याशङ्क्य व्याचष्टे—**अपरं ब्रह्मेति । त्रपुजतुभ्यामिति । ननु** शूद्राणां वेदश्रवणादिषु दण्डविधानेन निषेधावगमेऽपि वेदविद्भ्योऽवगत्य वेदाध्ययनरहितानां स्त्रीणामिव विद्यानुष्ठानं किं न स्यात्?तस्मात्—'न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् । न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ यो ह्यस्य धर्म- माचष्टे यश्चैवादिशति व्रतम् । सोऽसंवृतं नाम तमः सह तेनैव गच्छति ॥' इति शूद्राणां ये वैशेषिकधर्माः ये च सामान्य- धर्माः शूद्रसाधारणास्तद्व्यतिरिक्तवैदिकार्थग्राहणे सह तेनैव शूद्रेण गुरोर्नरकपातोक्तेः । कथं तर्हि भाष्ये तेषां पुराणेतिहासादिमू- लविद्यानुष्ठानाभ्युपगमः ? "श्रावयेच्चतुरो वर्णानिति" स्मरणात् । तस्य दृष्टार्थत्वाय पुराणेतिहासशैववैष्णवाद्यागमवर्णितय- जमानकर्तृकवैदिकमन्त्राद्युच्चारणानपेक्षव्रतनियमोपासनादि संभवतीति तदभिप्रायः । **ननु** दानस्य द्विजात्यसाधारण्योक्तिः दानं च दद्यात् शूद्रोऽपि पाकयज्ञैर्यजेत चेति स्मृत्यन्तरविरुद्धेत्याशङ्क्य व्याचष्टे—**द्विजातीनामिति** । द्विजातीनामध्यय- नमिज्या दानमित्येतदनन्तरं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहा इति प्रतिग्रहस्य ब्राह्मणासाधारण्यवचनात् पूर्ववाक्ये दानस्य प्रतिग्रहवैलक्षण्येन त्रैवर्णिकसाधारण्यमात्रं विवक्षितं, न तु शूद्रस्य दाननिषेध इति भावः ॥ **इति नवममपशू- द्राधिकरणम् ॥**

---

१ तत्र सूत्राणि ५—शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ३४ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ३५ संस्कारपरामर्शात् तदभावाभिलापाच्च ३६ तदभावनिर्धारणे च प्रवृत्तेः ३७ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

( १० अधिकरणम् ) **कम्पनात् ॥ ३९ ॥**

अवसितः प्रासङ्गिकोऽधिकारविचारः । प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः । 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' ( का० २।६।२ ) इति । एतद्वाक्यं 'एजृ कम्पने' इति धात्वर्थानुगमाल्लक्षितम् । अस्मिन्वाक्ये सर्वमिदं जगत्प्राणाश्रयं स्पन्दते, महच्च किंचिद्भयकारणं वज्रशब्दितमुद्यतं, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते । तत्र कोऽसौ प्राणः, किं तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत्प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति । प्रसिद्धेरेव चाशनिर्वज्रं स्यात् । वायोश्चेदं माहात्म्यं संकीर्त्यते । कथम्? सर्वमिदं जगत्पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायैजति । वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते । वायौ हि पर्जन्यभावेन

---

## भामती ।

### कम्पनात् ॥ ३९ ॥

प्राणवज्रश्रुतिबलाद्वाक्यं प्रकरणं च भङ्क्त्वा वायुः पञ्चवृत्तिराध्यात्मिको बाह्यश्चात्र प्रतिपाद्यः । **तथाहि—** प्राणशब्दो मुख्यो वायावाध्यात्मिके, वज्रशब्दश्चाशनौ अशनिश्च वायुपरिणामः । वायुरेव हि बाह्यो धूमज्योतिःसलिलसंवलितः पर्जन्यभावेन परिणतो विद्युत्स्तनयित्नुवृष्ट्यशनिभावेन विवर्तते । यद्यपि च सर्वं जगदिति सवायुकं प्रतीयते; तथापि सर्वशब्द आपेक्षिकोऽपि न स्वाभिधेयं जहाति, किंतु संकुचद्वृत्तिर्भवति । प्राणवज्रशब्दौ तु ब्रह्मविषयत्वे स्वार्थमेव त्यजतः । तस्मात् स्वार्थत्यागाद्वरं वृत्तिसंकोचः; स्वार्थलेशावस्थानात् । अमृतशब्दोऽपि मरणाभाववचनो न सार्वकालिकं तदभावं ब्रूते; ज्योतिर्जीवितयापि तदुपपत्तेः । यथा अमृता देवा इति तस्मात्प्राणवज्रश्रुत्यनुरोधाद्वायुरेवात्र विवक्षितो न ब्रह्मेति प्राप्तम् । एवं प्राप्त उच्यते—**कम्पनात्** सवायुकस्य जगतः कम्पनात्, परमात्मैव शब्दा-

## वेदान्तकल्पतरुः ।

### कम्पनात् ॥ ३९ ॥

अस्यानुप्रसक्तेनापशूद्रविचारेण न सङ्गतिरिति व्यवहितेनोच्यते । शब्दादेव प्रमित इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मैक्यबोधायेत्युक्तम् । इह तु प्राणस्य स्वरूपेण कल्पितस्य न ब्रह्मैक्यसंभवो यतोऽनूद्येत, ततस्तदुपास्तिविधिरिति प्रत्यवस्थीयते । प्राणमेवाभिसंविशन्तीत्यत्र निरपेक्षकारणत्वपरैवकारश्रवणाद् ब्रह्मपरत्वम्, इह तदभावादत एव प्राण इत्यनेनागतार्थत्वमुपक्रमोपसंहारैकरूप्यस्यास्पष्टत्वाच्च प्रातर्दनविचारेणापीति । **स्यादेतत्—**तदेव शुक्रं तद् ब्रह्मेति च भयादाभिस्तपतीति च प्राचीनपराचीनवचनसंदष्टतयाऽस्य तदेकवाक्यत्वादन्यत्र धर्मादिति ब्रह्मप्रकरणाच्च ब्रह्मपरत्वावगतेः कथं पूर्वपक्षोत्थानमत आह—**प्राणवज्रेति** । वायुपरिग्रहे वज्रशब्दः श्रुतिवृत्तः स्यादिति श्रुतिः । प्राणश्रुतिबलाद्वायुराध्यात्मिकः शारीरो वज्रश्रुतिबलाद्बाह्यश्च वायुरत्र प्रतिपाद्यः । न हि प्राणमात्रस्य वज्रोद्यमनहेतुता । उभयोश्च चिन्तनमेकं संवर्गविद्या-

## कल्पतरुपरिमलः ।

### कम्पनात् ॥ ३९ ॥

**ननु** श्रुतिबलाद् वाक्यभेदाभ्युपगमो न युक्तः; प्राणे बाह्यवायुभेदेऽपि तदुभयभेदे विषयविद्याविध्यैक्येन तदप्रसङ्गादित्याशङ्क्य प्रकारान्तरेण वाक्यभेदप्रसङ्गं दर्शयन्नवतारयति—**स्यादेतदिति । ननु** बाह्यवायौ वज्रशब्दः कथं श्रुतिः? वायुविकारभूताशनिवाचिनस्तस्य वायावपि लक्षणावश्यम्भावादित्याशङ्क्याह—**वायुपरिग्रह इति ।** अशन्याकारपरिणतस्यैव वायोरुपास्यत्वाङ्गीकारे वज्रशब्दः श्रुतिर्भवतीति भावः । **ननु**प्राणबाह्यवायू द्वावुपास्यौ किमित्यभ्युपगम्येते? प्राण एक एवोपास्य इत्यभ्युपगम्यतां, तृतीयपादे प्राण इत्यस्यानुषङ्गनिमित्तार्थताङ्गीकारेण तृतीयपादस्यापि प्राणविषयत्ववर्णनोपपत्तेरित्याशङ्क्याह—**न हि प्राणमात्रस्येति** । न हि कश्चिदपि प्राणो वज्रोद्यमनहेतुरस्ति । यद्यनुषक्तस्य प्राणशब्दस्य प्राणभेदोपचारेण बाह्ये वायौ वृत्तिराश्रीयते, तदापि वज्रोद्यमनहेतुत्वेन बाह्यवायुरेवोपास्यः पर्यवस्येदिति इष्टापत्तिरेव । तथा सति वज्रशब्दस्य मुख्यार्थत्वं च शङ्काशूकरहितं भवतीति भावः । अत एवायमर्थः पूर्वपक्षार्थत्वेन सिद्धान्ते प्रदर्शयिष्यते । **ननु** सूत्रे पक्षनिर्देशाभावेन न्यूनता**माशङ्क्य** शब्दात्प्रमित इत्यनुवृत्त्या तत्परिहारः कृतः । तत्रानुवृत्तेन शब्दादित्यनेनात्रौचित्यात् प्राणशब्द एव हि निर्देष्टव्यः, ततो न कश्चिदर्थः प्रमितोऽस्ति सिद्धान्तस्थितेः प्रागित्याशङ्क्याह—

विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते । वायुविज्ञानादेव चेदममृतत्वम् । तथाहि श्रुत्यन्तरम्—'वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद' इति । तस्माद्वायुरयमिह प्रतिपत्तव्य इति । एवं प्राप्ते ब्रूमः—ब्रह्मैवेदमिह प्रतिपत्तव्यम् । कुतः ? पूर्वोत्तरालोचनात् । पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि । पूर्वत्र तावत् 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' ( का० २।६।१ ) इति ब्रह्म निर्दिष्टं, तदेवेहापि संनिधानात् जगत्सर्वं प्राण एजतीति च लोकाश्रयवत्त्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः; 'प्राणस्य प्राणम्' ( बृ० ४।४।१८ ) इति दर्शनात् । एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य । तथाचोक्तम्—'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (का० २।५।५) इति । उत्तरत्रापि 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' ( का० २।६।३ ) इति ब्रह्मैव निर्देक्ष्यते न वायुः । सवायुकस्य जगतो भयहेतुत्वाभिधानात् तदेवेहापि संनिधानान्महद्भयं, वज्रमुद्यतमिति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । वज्रशब्दोऽप्ययं भयहेतुत्वसामान्यात्प्रयुक्तः । यथा हि वज्रमुद्यतं ममैव शिरसि निपतेद्यद्यहमस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमेन प्रवर्तत एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्तत इति भयानकं वज्रोपमितं ब्रह्म । तथाच ब्रह्मविषयं श्रुत्यन्तरम्—'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' ( तै० ८।१ ) इति । अमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते । ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः; 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ( श्वे० ६।१५ ) इति मन्त्रवर्णात् । यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितं तदापेक्षिकम् । तत्रैव

## भामती ।

त्प्रमित इति मण्डूकप्लुत्यानुषज्यते । ब्रह्मणो हि बिभ्यदेतज्जगत्कृत्स्नं स्वव्यापारे नियमेन प्रवर्तते, न तु मर्यादामतिवर्तते । **एतदुक्तं भवति**—न श्रुतिसंकोचमात्रं श्रुत्यर्थपरित्यागे हेतुः, अपि तु पूर्वापरवाक्यैकवाक्यताप्रकरणाभ्यां संवलितः श्रुतिसंकोचः । तदिदमुक्तम्—**पूर्वापरयोर्ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहीति** । तदनेन वाक्यैकवाक्यता दर्शिता । **प्रकरणादपि** इति भाष्येण प्रकरणमुक्तम् । यत्खलु पृष्टं तदेव प्रधानं प्रतिवक्तव्यमिति तस्य प्रकरणम् । पृष्टादन्यस्मिंस्तूच्यमाने शास्त्रमप्रमाणं भवेत्; असंबद्धप्रलापित्वात् । **यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितमापेक्षिकं तदिति** । 'अपपुनर्मृत्युं

## वेदान्तकल्पतरुः ।

वदिति न वाक्यभेद इति भावः । सर्वशब्दश्रुतिविरोधमाशङ्क्याह पूर्ववादी—**यद्यपि चेति** । **मण्डूकप्लुत्येति** । यथा मण्डूको बहून् विहाय स्वपङ्क्तिगतमण्डूकं प्रति प्लवते एवं शब्दादिति प्रतिज्ञा व्यवहिताऽपि हेतुनाऽनुषज्यते इत्यर्थः । शब्दोऽत्र सर्वशब्दः । सवायुकस्य जगतः कम्पयितृत्वमुपपादयति—**ब्रह्मणो हीति** । **ननु** प्राणवज्रश्रुत्योः स्वार्थत्यागभयात्सर्वशब्दसंकोच उक्तः, कथं सवायुकजगत्प्रतीतिरत आह—**एतदुक्तमिति** । प्रधानस्याङ्गाकाङ्क्षस्य वचनं प्रकरणमिति प्रकरणलक्षणं प्रस्तुते वर्तयति—**यत्खल्विति** । पृष्टं जिज्ञास्यत्वात्प्रधानं तस्य नियन्तृत्वादीनि प्रतिपत्तावङ्गानि प्रतिवचनेन निरूप्यन्त इति प्रकरणसिद्धिरित्यर्थः । **यदिदं किं च जगत् तत्सर्वं प्राणे** निमित्ते **एजति** चेष्टते ।

## कल्पतरुपरिमलः ।

**शब्दोऽत्रेति** । तथा च सर्वशब्दवशात् सर्वजगत्कम्पयितृत्वेन यः प्रमितः सोऽत्र पक्ष इति भावः । सर्वशब्दस्योपपदानुसारिसंकोचासंकोचभेदे सत्यपि साकल्यमर्थ इति निश्चितमेव । **नियन्तृत्वादीनीति** । **ननु**—नियन्तृत्वादिवत् प्राणबाह्यवायूपासनमपि ब्रह्मप्रतिपत्त्यङ्गमिति प्रकरणाविरोधो वक्तुं शक्यः । एवं चोपासनस्यामृतत्वफलकीर्तनमपि न विरुध्यते । पश्वाप्तिफलकसोमापौष्णपश्वङ्गयूपप्रकृत्युदुम्बरताविध्यर्थवादे ऊर्जं पशूनाप्नोतीति प्रधानफलस्येवाधानाङ्गपूर्णाहुत्यर्थवादे सर्वान्कामानवाप्नोतीति तदुपकर्तव्येष्टिसोमादिफलस्येव च ब्रह्मप्रतिपत्तिफलस्यानुवादोपपत्तिरिति—**चेत्, मैवम्**; पूर्वापरमन्त्रप्रतिपाद्यसर्वलोकाश्रयत्वशासितृत्वादिपरैतन्मन्त्रप्रतिपाद्यस्यापि दृष्टद्वारा प्रतिपत्त्यङ्गत्वे संभवत्यदृष्टद्वारकोपासनारूपत्वकल्पनायोगात् । **एजति चेष्टत इति** । न प्राणेन नापानेनेति मन्त्रसिद्धार्थपरत्वेनेदं व्याख्यानम् ।

**प्रकरणान्तरकरणेन परमात्मानमभिधाय 'अतोऽन्यदार्तम्' ( बृ० ३।४ ) इति वाय्वादेरार्तत्वाभिधानात् । प्रकरणादप्यत्र परमात्मनिश्चयः; 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (का० १।२।१४) इति परमात्मनः पृष्टत्वात् ॥३९॥ इति दशमं कंपनाधिकरणम् ॥**

( ११ अधिकरणम् ) **ज्योतिर्दर्शनात् ॥ ४० ॥**

**'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा०**

## भामती ।

जयति' इति श्रुत्या ह्यपमृत्योर्विजय उक्तो नतु परममृत्युविजय इत्यापेक्षिकत्वं, तच्च तत्रैव प्रकरणान्तरकरणेन हेतुना । न केवलमपश्रुत्या तदापेक्षिकमपितु परमात्मानमभिधाय 'अतोऽन्यदार्तम्' इति वाय्वादेरार्तत्वाभिधानात् । नह्यार्ताभ्यासादनार्तो भवतीति भावः ॥ ३९ ॥ इति दशमं कंपनाधिकरणम् ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

अत्र हि ज्योतिःशब्दस्य तेजसि मुख्यत्वात्, ब्रह्मणि जघन्यत्वात्, प्रकरणाच्च श्रुतेर्बलीयस्त्वात्, पूर्ववच्छ्रुतिसंकोचस्य चात्राभावात्, प्रत्युत ब्रह्मज्योतिःपक्षे क्त्वाश्रुतेः पूर्वकालार्थायाः पीडनप्रसङ्गात्, समुत्थानश्रुतेश्च तेज एव ज्योतिः । तथाहि—समुत्थानमुद्गमनमुच्यते, नतु विवेकविज्ञानम् । उद्गमनं च तेजः पक्षेऽर्चिरादिमार्गेणोपपद्यते । आदित्यश्चा-

## वेदान्तकल्पतरुः ।

तच्च तत एव **निःसृतम्** उत्पन्नम् । तच्च प्राणसंज्ञं जगत्कारणं **महत्** । बिभेत्यस्माज्जगदिति **भयम्** । भयहेतुत्वं रूपयति—**वज्रमिति** । उद्यतं वज्रमित्यर्थः । पूर्वपक्षे तु प्राणे निमित्ते महद्भयहेतुर्वज्रमुद्यतं भवतीति व्याख्यातम् । तथाच मुख्यार्थो वज्रशब्दः । यदि तु सिद्धान्तेऽपि ब्रह्मणि निमित्ते वज्रमुद्यतमिति व्याख्यायेत, तदापि वज्रशब्द उपलक्षणार्थः स्याद्; वज्रब्रह्मणोरसाधारणसंबन्धाभावादिति । **वायुरेव व्यष्टिर्विशेषः । समष्टिः** सामान्यम् । **शुक्रं** ज्योतिष्मत् । **अस्येश्वरस्य** भयादग्निसूर्यौ तपतः । इन्द्रादयस्तु धावन्ति स्वस्वकार्येषु । निर्विष्टानपेक्ष्य मृत्युः पञ्चमः । **भीषा** भयेन ॥३९॥ **इति दशमं कंपनाधिकरणम्** ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

ज्योतिरादित्यो ब्रह्म वेति ज्योतिःश्रुतेः परश्रुतेश्च संशयः । **ननु** ज्योतिषां ज्योतिरिति ब्रह्मापि ज्योतिःशब्दमतः कथमादित्य इति पूर्वपक्षस्तत्राह—**अत्रेति** । प्रकरणात्प्राणशब्दं ब्रह्मेति यथोक्तं तथा ज्योतिरप्यस्तु, तत्राह—**पूर्ववदिति** । तत्र हि सर्वशब्दश्रुतिसंकोचोऽस्ति, न त्विह । परमिति तु श्रुतिर्विशेषणार्थेति न प्रधानार्थज्योतिःश्रुतेर्बाधिकेत्यर्थः । अत एव सङ्गतिः । समुत्थानश्रुतेश्च पीडनप्रसङ्गादित्यनुषङ्गः । **ननु** समुत्थानं विवेक इति दहराधिकरणे ( ब्र. अ. १ पा. ३ सू. १४ ) व्याख्यातमत आह—**तथाहीति** । अप्रसिद्धेरित्यर्थः । परमिति विशेषणमादित्यस्यार्चिषः परत्वा-

## कल्पतरुपरिमलः ।

यद्यपि टीकायामेजतीत्येतत् स्वशासनातिलङ्घने किमयं करिष्यतीति भयात् कम्पत इत्येवंपरं व्याख्यातम्, ब्रह्मणो हि बिभ्यदित्यादिना तदेव चोत्तरमन्त्रानुगुणं तत्रास्येति पदेनैतन्मन्त्रप्रकृतं भयहेतुं परामृश्य सामान्येन निर्दिष्टस्य तदीयसकलभयहेतुत्वस्याग्निसूर्यादिप्रसिद्धदेवताभयहेतुत्वप्रदर्शनेन स्थैर्यं क्रियत इत्येवमेकवाक्यतासामञ्जस्यात्, तथापि ब्रह्मसद्भावमजानतां मनुष्यपशुपक्षिसरीसृपादीनां तच्छासनातिलंघनप्रयुक्तभयाभावेन सर्वशब्दस्य तत्सद्भावज्ञातृषु संकोचावश्यम्भावेन पूर्वपक्षे संकोचदोषापादनमलग्नं स्यादित्यभिप्रेत्यैवं व्याख्यातम्, उत्तरमन्त्रस्य तु महद्भयमित्युक्तार्थस्थिरीकरणार्थत्वेनैतदेकवाक्यता सामञ्जस्यमश्नुते । **तच्च तत एवेति** । यद्यपि प्राणे ततो निःसृतं सर्वं जगदेजतीत्यवान्तरवाक्यभेदं विना योजयितुं शक्यम्; तथापि तथा योजनायां सर्वान्निमज्ज्यितानानयेत्यत्रैव सर्वशब्दस्य संकोचसहिष्णुत्वशङ्का स्यात्, सा मा भूदित्येतदर्थमवान्तरवाक्यभेदेन व्याख्यातम् । **व्यष्टिरिति** । पृथक् पृथक् तत्तत्प्राणादिरूपेण विविधा व्याप्तिर्व्यष्टिः, समन्तात्सर्वसाधारणेन सूत्ररूपेण व्याप्तिः समष्टिः । अशू व्याप्ताविति धातोरष्टिशब्दो व्याप्तिवाची । कम्पनस्य प्राणसाधारण्यशङ्काभिभूतत्वादस्पष्टब्रह्मलिङ्गता ॥ ३९ ॥ **इति दशमं कंपनाधिकरणम्** ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

१ तत्र सूत्रम् १—कम्पनात् ॥ ३९ ॥

८।१२।३) इति श्रूयते । तत्र संशय्यते किं ज्योतिःशब्दं चक्षुर्विषयतमोपहं तेजः, किंवा परं ब्रह्मेति । किं तावत्प्राप्तम् ? प्रसिद्धमेव तेजो ज्योतिःशब्दमिति । कुतः ? तत्र ज्योतिःशब्दस्य रूढत्वात् । 'ज्योतिश्चरणाभिधानात्' ( ब्र० सू० १।१।२४ ) इत्यत्र हि प्रकरणाज्ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते । न चेह तद्वत्किंचित्स्वार्थपरित्यागे कारणं दृश्यते । तथाच नाडीखण्डे 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' ( छा० ८।६।५ ) इति मुमुक्षोरादित्यप्राप्तिरभिहिता । तस्मात्प्रसिद्धमेव तेजो ज्योतिःशब्दमिति । एवं प्राप्ते ब्रूमः—परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् ? दर्शनात् । तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते; 'य

## भामती ।

र्चिराद्यपेक्षया परं ज्योतिर्भवतीति तदुपसंपद्य तस्य समीपे भूत्वा स्वेन रूपेणाभिनिष्पद्यते, कार्यब्रह्मलोकप्राप्तौ क्रमेण मुच्यते । ब्रह्मज्योतिःपक्षे तु ब्रह्म भूत्वा का परा स्वरूपनिष्पत्तिः । नच देहादिविविक्तब्रह्मस्वरूपसाक्षात्कारो वृत्तिरूपोऽभिनिष्पत्तिः । सा हि ब्रह्मभूयात्प्राचीना न तु पराचीना । सेयमुपसंपद्येति क्त्वाश्रुतेः पीडा । तस्मात्तिसृभिः श्रुतिभिः प्रकरणबाधनात्तेज एवात्र ज्योतिरिति प्राप्तम् । एवं प्राप्तेऽभिधीयते—**परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् ? दर्शनात्, तस्य हीह प्रकरणे अनुवृत्तिर्दृश्यते** । यत्खलु प्रतिज्ञायते, यच्च मध्ये परामृश्यते, यच्चोपसंह्रियते, स एव प्रधानं प्रकरणार्थः । तदन्तःपातिनस्तु सर्वे तदनुगुणतया नेतव्याः, नतु श्रुत्यनुरोधमात्रेण प्रकरणादपकृष्टव्या इति हि लोकस्थितिः; अन्यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च तदन्तःपातिनो

## वेदान्तकल्पतरुः ।

दित्यर्थः । आदित्यस्य समीपे ब्रह्मलोके स्थित्वा तत्रोत्पन्नज्ञानान्मुच्यते इत्यर्थः । एवमादित्ये वाक्याऽऽञ्जस्यमुक्त्वा ब्रह्मपक्षे क्त्वाश्रुतिपीडामुक्तां प्रपञ्चयति—**ब्रह्मज्योतिरिति** । शरीरात्समुत्थायेति वाक्ये ज्योतिःप्राप्यावस्थितेऽस्य स्वरूपनिष्पत्तिरुच्यते, सा ब्रह्मज्योतिर्वादिनो न स्याद्; ब्रह्मण एव स्वरूपत्वात्, स्वरूपं प्राप्य स्वरूपं प्राप्नोतीति सङ्गतिप्रसङ्गादित्यर्थः । **नन्व**भिनिष्पत्तिः साक्षात्कार इत्यत आह—**नचेति** । साक्षात्काररूपाभिनिष्पत्तिर्ज्योतिरुपसंपत्तेः प्राप्तेः पूर्वा सती परत्वेन न वक्तव्या । या च मुखं व्यादाय स्वपितीतिवद्व्यत्यययोजना दहराधिकरणे कृता सा क्लिष्टेत्यर्थः । न चोपसंपत्तिरेव साक्षात्कारः; उत्कर्षवाचिपरशब्दयोगादुपसंपत्तेरेव प्राप्तित्वावगमादिति । ज्योतिरिति समुत्थायेत्युपसंपद्येति तिसृभिः श्रुतिभिर्य आत्मेति प्रकरणबाधः । अनेन विपक्षे श्रुतिसंकोचान्नाडीखण्डप्रस्तुतादित्यप्रकरणाच्च तेजो ज्योतिरिति पूर्वाधिकरणसिद्धान्तेन प्रत्यवस्थानात् संगतिरपि ध्वनिता । उपक्रममध्योपसंहारैकरूप्यान्निर्णीते आत्मनि ज्योतिरादिश्रुतयस्तदनुरोधेन नेतव्या इत्याह—**यत् खल्विति** । अत्र हि य आत्मेत्यात्मा प्रतिज्ञात एतं त्वेव तइति परामृष्टः स उत्तमः पुरुष इत्युपसंहृतः । प्रकरणमनुरुध्य श्रुतिभङ्गेऽधिकरणविरोधं शङ्कते—**तदिति** । ज्योतिष्टोमे श्रूयते—**तिस्र एवेत्यादि** । उपसद इष्टिविशेषास्तत्रित्वं ज्योतिष्टोमस्यैव, द्वादशत्वं तु साह्नस्योताऽहीनस्येति चिन्ता । साह्न एकाहत्वाद् ज्योतिष्टोमः, अहीनोऽहर्गणसाध्यत्वाद् द्वादशाहादिः; अह्नः खः क्रतुसमूह इति स्मृतेः, खस्येनादेशात् । अत्रत्यं पूर्वपक्षं प्रस्तुतेऽतिप्रसङ्गप्रदर्शनार्थमाह—**प्रकरणेति** । अहीनश्रुतिरहर्गणे रूढा । भगवाँस्तु पाणिनिः स्वरार्थं प्रत्ययमनुशशास । साज्योतिःश्रुतिरिव ब्रह्मप्र-

## कल्पतरुपरिमलः ।

**उत्कर्षवाचीति । ननु** पूर्वपक्ष इव परशब्दयोगेऽपि फलप्राप्तिपरत्वाभावोऽस्तु । **मैवम्**; पूर्वपक्षे प्राक् "तयोर्ध्वमाय"-न्निति "तावदादित्यं गच्छेदि"ति चोत्तरयोरुद्गमनादित्यप्राप्त्योरिह प्रत्यभिज्ञानात्, "तद्यथैतान्यमुष्मादाकाशादि"त्याद्यव्यवहितपूर्ववाक्ये परं ज्योतिरित्यस्यादित्यतेजःपरत्वस्य क्लृप्तत्वाच्च । तदनुरोधेन फलप्राप्तिपरत्वाभावोपपत्तावपि तदुभयमविगणय्य विवेकज्ञानाद्यर्थान्तरं वर्णयतः सिद्धान्तिनः पक्षे परशब्दानुरोधेन फलप्राप्तिपरत्वस्यावश्यवक्तव्यत्वादिति भावः । **श्रुतिसंकोचादिति** । क्त्वाश्रुतेः पूर्वकालत्वमपहाय समानकर्तृकत्वमात्रे वृत्तिः संकोचः । **आदित्यप्रकरणाच्चेति** । यद्यपीह तस्य तदुपासनस्य वा प्राधान्यमिति प्रधानस्याङ्गाकाङ्क्षस्य वचनं प्रकरणमिति पूर्वाधिकरणोक्तलक्षणं प्रकरणमादित्यस्य नास्ति, सन्निधानमात्रमपि बहुव्यवहितत्वान्नास्ति; तथापि मूर्धन्यनाड्या निष्क्रम्यादित्यं प्राप्तस्य केन द्वारेण निरुपाधिकामृतत्वप्राप्तिरित्याकाङ्क्षायां परं ज्योतिरित्यादिवाक्येनादित्यस्य समीपे ब्रह्मलोके स्थितस्य तस्य तत्रोत्पन्नज्ञानेन तत्प्राप्तिरिति तदुपपादनस्य कर्तव्यत्वात्तदाकाङ्क्षा युक्ता स्यादित्यादित्यप्राप्तिवचनं तत्प्रकरणत्वेनोपलक्षितं द्रष्टव्यम् ॥ **ध्वनितेति** । पूर्ववत् श्रुतिसंकोचाभावादिति टीकया कण्ठोक्ता प्रत्युदाहरणसंगतिः प्रागुपन्यस्ता, इदानीं प्रत्युतेति तदनन्तरोक्त्या ध्वनिता दृष्टान्तसंगतिरुपन्यस्तेति विवेकः । **स्वरार्थमिति** । "अह्नः खः क्रता"-विति सूत्रविहितप्रत्ययादेशे "आद्युदात्तश्चे"ति सूत्रेण तदादेरीकारस्योदात्तत्वेनाहीनशब्दस्य मध्योदात्तस्वरत्वाभार्थमि-

### भामती ।

'विष्णुरुपांशु यष्टव्यः' इत्यादयो विधिश्रुत्यनुरोधेन पृथग्विधयः प्रसज्येरन् । तत्किमिदानीं 'तिस्र एव साह्नस्योपसदः कार्या द्वादशाहीनस्य' इति प्रकरणानुरोधात्समुदायप्रसिद्धिबललब्धमहर्गणाभिधानं परित्यज्याहीनशब्दः कथमप्यवयवव्युत्पत्त्या साह्नं ज्योतिष्टोममभिधाय तत्रैव द्वादशोपसत्तां विधत्ताम् । स हि कृत्स्नविधानाच्च कुतश्चिदपि हीयते क्रतोरित्यहीनः शक्यो वक्तुम् । मैवम्; अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति श्रुत्या प्रकरणबाधनान्न द्वादशोपसत्तामहीनगुणयुक्ते ज्योतिष्टोमे शक्नोति विधातुम्, नाप्यतोऽपकृष्टं सदहर्गणस्य विधत्ते; परप्रकरणेऽन्यधर्मविधेरन्याय्यत्वात्, असंबद्धपदव्यवायविच्छिन्नस्य प्रकरणस्य पुनरनुसंधानक्लेशात् । तेनानपकृष्टेनैव द्वादशाहीनस्येतिवाक्येन साह्नस्य तिस्र उपसदः कार्या इति विधिं स्तोतुं द्वादशाहविहिता द्वादशोपसत्ता तत्प्रकृतित्वेन च सर्वाहीनेषु प्राप्ता निवीतादिवदनूद्यते । तस्मादहीनश्रुत्या प्रकरणबाधेऽपि न द्वादशाहीनस्येति वाक्यस्य प्रकरणादपकर्षः । ज्योतिष्टोमप्रकरणाम्नातस्य पूषाद्यनुमन्त्रणमन्त्रस्य यल्लिङ्गबलात्प्रकरणबाधेनापकर्षस्तदगत्या; पौष्णादौ च कर्मणि तस्यार्थवत्त्वात्, इह तु अपकृष्टस्यार्चिरादिमार्गोपदेशे फलस्योपायमार्गप्रतिपादकेऽतिविशदे 'एष संप्रसादः' इति वाक्यस्याविशदे-

### वेदान्तकल्पतरुः ।

करणरुद्धा साह्नमभिदधीयेत, तत्रैव च द्वादशोपसत्तां विदधीत । तत्किं विधत्ताम् । अयुक्तं हि विधातुमुत्कर्षस्य सिद्धान्तितत्वादित्यर्थः । अवयवव्युत्पत्त्येत्युक्तम्, तामाह—**स हीति** । सर्वप्रकृतित्वेन हीयते कुतश्चिन्न कृत्स्नाङ्गविधानान्न न्यूनो ज्योतिष्टोम इत्यर्थः । अहीनशब्दस्याहर्गणे रूढत्वान्न दुर्बलावयवप्रसिद्ध्या साह्नवाचिताऽतश्च द्वादशत्वस्य न साह्ने निवेश इति द्वादशाहादावुत्कर्ष इति यथाभाष्यं सिद्धान्तः । अत्र वार्तिककारपादसंमतं सिद्धान्तमादर्श्य विरोधं परिजिहीर्षुर्यथास्थितसिद्धान्तमध्ये एकदेशमनुजानाति—**अवयवेति** । द्वादशोपसत्तायाः प्रकरणे विधानाभावेऽपि द्वादशाहीनस्येति वाक्यस्य न प्रकरणादुत्कर्ष इत्याह—**नापीति** । प्रतिज्ञाद्वयमिदम् । इतः प्रकरणादिदं वाक्यं नापकृष्येतापकृष्टं च सदहर्गणे द्वादशोपसत्तां न विधत्त इति । तत्राद्यां प्रतिज्ञामुपपादयति—**परेति** । यदि विधिपरं सदिदं वाक्यमपकृष्येत, ततोऽहीनधर्मं ज्योतिष्टोमप्रकरणे विधत्त इति स्यात्, तच्चान्याय्यम्; कुतः ? इत्यत आह—**असंबद्धेति** । मध्ये प्रकृतासंगतविधाने तत्पदैः प्रकरणं विच्छिद्येत । पुनस्तदुद्धारेणानुसन्धाने सति क्लेशः स्यादिति । यदि नापकर्षो वाक्यस्य, किं तर्हि प्रयोजनमत आह—**तेनेति** । द्वादशोपसद इति वाक्येन द्वादशाहप्रकरणे विहिता द्वादशोपसत्ता तद्विकृतिषु अतिदेशप्राप्ताऽनेन वाक्येन ज्योतिष्टोमेऽनूद्यते त्रित्वविधिमौचित्येन स्तोतुम् । अहीनो हि महाँस्तस्य द्वादश, साह्नस्तु शिशुस्तस्य तिस्र इत्यर्थः । अनेन द्वितीयापि प्रतिज्ञा समर्थिता प्राप्तत्वान्न विधिरिति ॥ **निवितादिवदिति** । "निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामि"ति दर्शपूर्णमासयोराम्नायते । तत्रोपवीतं विधीयते एव । इतरयोस्तु विधिरुतार्थवाद इति संशये सत्यपूर्वार्थलाभाद् मनुष्यशब्दस्य च मनुष्यप्राधान्याभिधायित्वात्तत्प्रधाने आतिथ्ये कर्मणि निव्यातव्यं पित्र्ये च प्राचीनमाव्यातव्यम् इति पूर्वपक्षे राद्धान्तः । प्राप्तं हि मनुष्याणां क्रियासु सौकर्याय कण्ठालम्बिवस्त्रधारणं देहार्द्धे बन्धनं वा निवीतम् । प्राप्तं प्राचीनावीतं वचनान्तरेण पितृयज्ञे । तदनुवादेन निवीतमित्यादिरर्थवाद उपवीतं स्तोतुमिति । **ननु** यदि द्वादशोपसत्तावाक्यस्य प्रकरणादनुत्कर्षः कथं तर्हि जैमिनिरपकृष्येतेत्युत्कर्षमाहात आह—**तस्मादिति** । द्वादशोपसत्तायाः प्रकरणेऽङ्गत्वेन निवेशाभावाभिप्रायोऽपकर्षशब्द इत्यर्थः । ज्योतिष्टोमप्रकरणाम्नातवाक्यस्य नापकर्ष इत्यधस्तादन्वयः । तदेवं द्वादशोपसत्तावाक्यस्य प्रकरणनिवेशसमर्थनेन प्रतिबन्दी निरस्ता । **ननु** तर्हि पूष्णोऽहं देवयज्यया प्रजया च पशुभिरभिजनिषीयेत्यादीनामिष्टदेवतानामस्मरणाख्यानुमन्त्रणार्थमन्त्राणां दर्शपूर्णमासप्रकरणान्नोत्कर्षः स्यात्तत्राह—**पूषादीति** । दार्शपौर्णमासिकाम्यादिदेवतानुमन्त्रणमन्त्रनिरन्तरपाठात् पूषादिमन्त्राणां नाम्नेयादिविधिभिरर्थवादत्वेन समभिव्याहारावगतिः । तदिदमुक्तम्—**अगत्येति** । यत्र निनीष्यन्ते तत्रान्यतो न प्राप्तिरित्याह—**पौष्णादौ चेति** । अस्तु तर्हि ज्योतिर्वाक्येष्वपि श्रुतिवशादादित्यवादिनो निर्गुणप्रकरणानुपयोगादर्चिरादिमार्गे च सोपयोगत्वादुत्कर्षस्तत्राह—**इह त्विति** । तुशब्दो नेत्यर्थे । इह ज्योतिर्वाक्ये नोत्कर्ष इत्यर्थः । हेतुमाह—**अपकृष्टस्येति** । फलस्य ब्राह्मलौकिकभोगस्योपायो मार्गस्तत्प्रतिपादकोऽर्चिरादिमार्गोपदेशस्तेऽर्चिरभिसंभवन्तीत्यादिरतिविशदः । मार्गपर्वत्वेनादित्यस्तत्र स्वशब्दोपात्तः संवत्सरादादित्यमिति । ज्योतिर्वाक्ये तु ज्योतिःशब्दमात्रं श्रुतं न मार्गोऽतश्चाविशदमिदमेकदेशमादित्यं वदद्वदेत्त-

### कल्पतरुपरिमलः ।

त्यर्थः । **सिद्धान्तितत्वादिति** । अहीनोवा प्रकरणाद् गौण (जै. अ. ३ पा. ३ सू. १५) इति पूर्वपक्षव्यावर्तनपूर्वकमुत्कर्षस्यासंयोगात्तु मुख्यस्य तस्मादपकृष्येते (जै. अ. ३ पा. ३ सू. १६) ति सूत्रे सिद्धान्तितत्वादित्यर्थः । निवीतं गलवेणिकेति **केचित्** । परिकरबन्ध **इत्यन्ये** । तदुभयालम्बनेन व्याचष्टे—**कण्ठालम्बीति इष्टदेवता** यागो-

आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात्, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा० ८।९।३) इति चानुसंधानात्, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः, (छा० ८।१२।१) इति चाशरीरतायै ज्योतिःसंपत्तेरस्याभिधानात्, ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः' 'परं ज्योतिः' 'स उत्तमः पुरुषः' ( छा० ८।१२।३ ) इति च विशेषणात् । यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति । नासावात्यन्तिको मोक्षो गत्युत्क्रान्तिसंबन्धात् । न ह्यात्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ ४० ॥ इत्येकादशं ज्योतिरधिकरणम् ॥

## भामती ।

कदेशमात्रप्रतिपादकस्य निष्प्रयोजनत्वात् । नच—द्वादशाहीनस्येतिवद्यथोक्तात्मध्यानसाधनानुष्ठानं स्तोतुमेष संप्रसाद इति वचनमर्चिरादिमार्गमनुवदतीति—युक्तम्; स्तुतिलक्षणायां स्वाभिधेयसंसर्गतात्पर्यपरित्यागप्रसङ्गात् । द्वादशाहीनस्येति तु वाक्ये स्वार्थसंसर्गतात्पर्ये प्रकरणविच्छेदस्य प्राप्तानुवादमात्रस्य चाप्रयोजनत्वमिति स्तुत्यर्थो लक्ष्यते । नचैतद्दोषभयात्समुदायप्रसिद्धिमुल्लङ्घ्यावयवप्रसिद्धिमुपाश्रित्य साह्नस्यैव द्वादशोपसत्त्वं विधातुमर्हति; त्रित्वद्वादशत्वयोर्विकल्पप्रसङ्गात् । नच सत्यां गतौ विकल्पो न्याय्यः; साह्नाहीनपदयोश्च प्रकृतज्योतिष्टोमाभिधायिनोरानर्थक्यप्रसङ्गात्, प्रकरणादेव तदवगतेः, इह तु स्वार्थसंसर्गतात्पर्ये नोक्तदोषप्रसङ्ग इति पौर्वापर्यालोचनया प्रकरणानुरोधाद्रूढिमपि पूर्वकालतामपि परित्यज्य प्रकरणानुगुण्येन ज्योतिः परं ब्रह्म प्रतीयते । यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति । नासावात्यन्तिको मोक्षः, किंतु कार्यब्रह्मलोकप्राप्तिः । नच क्रममुक्त्यभिप्रायं स्वेन रूपेणाभिनिष्पद्यत इति वचनम्; नह्येतत्प्रकरणोक्तब्रह्मतत्त्वविदुषो गत्युत्क्रान्ती स्तः । तथा च श्रुतिः—'न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इति । नच तद्द्वारेण क्रममुक्तिः । अर्चिरादिमार्गस्य हि कार्यब्रह्मलोकप्रापकत्वम्, नतु ब्रह्मभूयहेतुभावः, जीवस्य तु निरुपाधिनित्यशुद्धबुद्धब्रह्मभावसाक्षात्कारहेतुके मोक्षे कृतमर्चिरादिमार्गेण कार्यब्रह्मलोकप्राप्त्या । अत्रापि ब्रह्मविदस्त-

## वेदान्तकल्पतरुः ।

त्वास्य संपूर्णमार्गोपदेशकेऽर्चिराद्युपदेशो नोत्कर्षः; निष्प्रयोजनत्वादित्यर्थः । **ननु** यद्यर्चिरादिमार्गे प्राप्त आदित्यस्तर्हि मैवं ज्योतिर्वाक्यं पूषादिमन्त्रवदुत्कर्षि एकदेशाभिधानेन त्वर्चिरादिमार्गं निर्गुणप्रकरणेऽनुवदद् ब्रह्मध्यानं स्तोतुं सायासोऽर्चिरादिपथः, इदं तु निरायासमितीत्यत आह—**नच द्वादशेति** । अस्तु तर्हि द्वादशत्ववाक्येऽपि श्रौतार्थसंसर्गपरत्वलोमेन विधित्वमिति चेत्तत्र वक्तव्यम् । किमहीनशब्दे रूढिमभङ्क्त्वा वाक्यं श्रौतार्थमाश्रीयेतोत भङ्क्त्वा । **नाद्य** इत्याह—**द्वादशेति** । अहीनधर्मस्येह विधौ प्रकरणं विच्छिद्येत, विच्छेदस्य चायुक्तत्वं द्वादशाहादौ च प्राप्तद्वादशोपसत्तानुवादस्य च निष्प्रयोजनत्वादित्यर्थः । **न द्वितीय** इत्याह—**नचैतदिति** । उपसदोऽवच्छेत्तुं विंशतेस्त्रित्वद्वादशयोर्विकल्पापात इत्यर्थः । समुच्चये पञ्चदशोपसत्तापातस्तिस्र एवेत्येवकारविरोधश्चेति । **अपिच** तिस्र उपसदो द्वादशेत्येतावतालम्, यद्युभयोः संख्ययोः प्रकरणे निवेशः, वृथा साह्नाहीनशब्दौ, प्रकरणादेव संख्ययोर्ज्योतिष्टोमसंबन्धसिद्धेरित्याह—**साह्नेति** । यदा त्वहीनशब्दोऽहर्गणवाची, तदा स तावदवश्यं प्रयोक्तव्यस्ततस्तिस्र इत्येवोच्यमाने त्रित्वमप्यानन्तर्यादहीने स्यात् । तन्निवृत्तये साह्नशब्दोऽप्यर्थवानिति भावः । ज्योतिर्वाक्ये तु मुख्यार्थेन प्रकरणविच्छेदादिरित्याह—**इह त्विति** । प्रकरणात् श्रुतेर्बलवत्त्वेऽप्यानर्थक्यप्रतिहतानां **विपरीतं बलाबलमिति न्यायात्** ज्योतिःश्रुतेश्च मुख्यार्थत्वे आनर्थक्यस्योक्तत्वात् प्रकरणानुगुण्येन ज्योतिः परं ब्रह्मेत्यर्थः । **नन्वा**दित्यस्येत्यप्यस्ति प्रकरणम्; "स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छती"ति प्रस्तावादित्युक्तमनुवदति—**यत्त्विति** । परिहरति—**नेति** । दहरविद्याफलं ब्रह्मलोकावाप्तिरादित्यद्वारा उक्ता । इदं तु य आत्माऽपहतपाप्मेत्यादिनिर्गुणप्रकरणमित्यर्थः । दहरविद्या च नाडीखण्डात्पूर्वं प्रस्तुतेति न प्रकरणोत्कर्षशङ्का । **नन्वात्य**न्तिकमोक्षोऽपि ब्रह्मलोकद्वारा प्राप्यतामिति, तत्र वक्तव्यम् । किं मोक्षस्य गतिपूर्वकानाप्यत्वमङ्गीकृत्यैतद्वाक्यं क्रममुक्तिपरमित्यभिमतम् ? उत नियमेन गतिपूर्वप्राप्यत्वमिति । **नाद्य** इत्याह—**नचेति** । **तस्मा**द्विद्वच्छरीराद् **अत्रैव** ब्रह्मणि **समवनीयन्ते** लीयन्ते । **न द्वितीय** इत्याह—**नच तद्द्वारेणेति** । तच्छब्देन ब्रह्मलोकमाह । यत्तूपसंपद्येति

## कल्पतरुपरिमलः ।

दिष्टदेवता । **आनर्थक्यप्रतिहतानामिति** । अवघातस्य व्रीह्यर्थत्वे तन्नियमोऽनर्थकः स्याद्, व्रीहिषु वैतुष्यस्योपायान्तरतोऽपि संभवेन व्रीहिस्वरूपे तदनन्वयादन्यस्य च तदनन्वययोग्यस्याप्रतीतेरित्यानर्थक्यप्रतिहतां व्रीहिश्रुतिं भङ्क्त्वा प्राकरणिकापूर्वीयत्वलक्षणाऽऽश्रीयत इत्यादिकमिहोदाहरणम् । **आनर्थक्यस्योक्तत्वादिति** । स्तुतिरप्यनर्थकप्रायेति भावः । **नच क्रममुक्त्यभिप्राय**मिति **नच तद्द्वारेण क्रममुक्तिरिति** ग्रन्थयोः पौनरुक्त्यमाशङ्क्य दूषणैक्येऽपि शङ्का-

## ( १२ अधिकरणम् ) आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा० ८।१४) इति श्रूयते। तत्किमाकाशशब्दं परं ब्रह्म किंवा प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो युक्तः; आकाशशब्दस्य तस्मिन्रूढत्वात्, नामरूपनिर्वहणस्य चावकाशदानद्वारेण तस्मिन्योजयितुं शक्यत्वात्, स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणादिति । एवं प्राप्त इदमुच्यते—परमेव ब्रह्मेहाकाशशब्दं भवितुमर्हति । कस्मात्? अर्थान्तरत्वादिव्यपदेशात् । 'ते यदन्तरा तद्ब्रह्म' इति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति । नच ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं संभवति; सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् । नामरूपयोरपि निर्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत्र संभवति; 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ ) इत्यादिब्रह्मकर्तृकत्वश्रवणात् । ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति । बाढमस्ति । अभेदस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति । 'तद्ब्रह्म तदमृतं स आत्मा' ( छा० ८।१४ ) इति च ब्रह्मवादस्य लिङ्गानि । 'आकाशस्तल्लिङ्गात्' (ब्र० १।१।२२ ) इत्यस्यैवायं प्रपञ्चः ॥४१॥ इति द्वादशं अर्थान्तरत्वाधिकरणम् ॥

---

### भामती ।

दुपपत्तेः । तस्मान्न ज्योतिरादित्यमुपसंपद्य संप्रसादस्य जीवस्य स्वेन रूपेण पारमार्थिकेन ब्रह्मणाभिनिष्पत्तिराञ्जसीति श्रुतेरत्रापि क्लेशः । अपिच परं ज्योतिः स उत्तमपुरुष इतीहैवोपरिष्टाद्विशेषणात्तेजसो व्यावर्त्य पुरुषविषयत्वेनावस्थापनाज्ज्योतिःपदस्य परमेव ब्रह्म ज्योतिः नतु तेज इति सिद्धम् ॥ ४० ॥ इति एकादशं ज्योतिरधिकरणम् ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

### वेदान्तकल्पतरुः ।

क्त्वाश्रुत्यनुपपत्तिरिति, तत्राह—**तस्मादिति** । आदित्यमुपसंपद्येति व्याचक्षाणानां मध्ये ब्रह्मलोकप्राप्तिव्यवायाङ्गीकारेण क्त्वाश्रुत्यनाञ्जस्यं तु तुल्यमित्यर्थः । तदेवं प्रकरणात् श्रुतिभङ्गमभिधाय श्रुतिवशादप्याह—**अपिचेति** । नच—उत्तमः पुरुषः प्राप्ता न तु प्राप्यं ज्योतिरिति—वाच्यम्; परत्वेन विशेषितस्य ज्योतिष एवोत्तमत्वेन विशेष्टुं योग्यत्वादिति । **अथ या एता हृदयस्य नाड्य** इति नाडीखण्डे । **अथ** विशेषविज्ञानोपरमानन्तरं **यत्र** काले **एतदिति** क्रियाविशेषणम् । **एतदुत्क्रमणं** करोति । **अथ** तदैतै रश्मिभिरूर्ध्वम् आक्रमते **उपरि गच्छतीत्युपक्रम्य** आदित्यं गच्छतीति श्रुतम् ॥ ४० ॥ **इति एकादशं ज्योतिरधिकरणम्** ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

अत्राकाशब्रह्मश्रुतिभ्यां संशयः । "सर्वाणि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्र हि सर्वजगदुत्पत्तेरेवकारावगतेर्निर्विशेषप्रकरणानुवृत्तिः सूत्रे दर्शनादिति हेतुकृता न स्पष्टेत्यस्पष्टब्रह्मलिङ्गता । सा शङ्का तत्परिहारश्चेत्युभयमपि दहराधिकरणे ( ब्र. सू. अ. १ पा. ३ सू. १४ ) स्फुटीकृतमस्माभिः ॥ ४० ॥ **इति एकादशं ज्योतिरधिकरणम्** ॥

### कल्पतरुपरिमलः ।

भाष्ये कारणादिति । द्युसंबन्धप्रत्यभिज्ञातस्य ब्रह्मणो यच्छब्देन परामर्शादित्यर्थः ।

मुखमेदेनापौनरुक्त्यं दर्शयति—**तत्र वक्तव्यमिति** । अत्र प्रजापतिविद्यायाः सगुणोपासनविषयत्वशङ्कया जीवाभिन्ननि-

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

**नैवमिहेति** । **ननु**—इहापि नामरूपव्याकर्तृत्वं स्पष्टं ब्रह्मलिङ्गमस्ति; निर्वहितेत्यस्य निरुपसर्गाभावे वोढृपरत्वेऽपि तत्सत्त्वेन कर्तृपरत्वादिति—**चेत्**, **उच्यते**; वै नामेति निपातद्योतिता प्रसिद्धिरिहोद्देश्यविशेषणमित्याकाशो वै नामेत्यतः प्रसिद्धाकाश इति धर्मिनिर्देशो लभ्यते । अतस्तस्य विशेषणस्याप्रसिद्धाकाशरूपं ब्रह्म व्यावर्त्य पर्यवस्यति । न हि भूतवद्

---

१ तत्र सूत्रम् १—ज्योतिर्दर्शनात् ॥ ४० ॥

## भामती ।

यद्यपि **'आकाशस्तल्लिङ्गात्'** इत्यत्र ब्रह्मलिङ्गदर्शनादाकाशः परमात्मेति व्युत्पादितम्; तथापि तद्वदत्र परमात्मलिङ्गदर्शनाभावान्नामरूपनिर्वहणस्य भूताकाशेऽप्यवकाशदानेनोपपत्तेरकस्माच्च रूढिपरित्यागस्यायोगात्, नामरूपे अन्तरा ब्रह्मेति च नाकाशस्य नामरूपयोर्निर्वहितुरन्तरालत्वमाह, अपितु ब्रह्मणः, तेन भूताकाशो नामरूपयोर्निर्वहिता । ब्रह्म चैतयोरन्तरालं मध्यं सारमिति यावत् । ननु निर्वोढैव 'ब्रह्म अन्तरालं वा निर्वोढृ । तस्मात्प्रसिद्धेर्भूताकाशो न तु ब्रह्मेति प्राप्तम् । एवं प्राप्त उच्यते—**परमेवाकाशं ब्रह्म, कस्मात्? अर्थान्तरत्वादिव्यपदेशात्** । नामरूपमात्रनिर्वाहकमिहाकाशमुच्यते । भूताकाशं च विकारत्वेन नामरूपान्तःपाति सत् कथमात्मानमुद्वहेत् । नहि सुशिक्षितोऽपि विज्ञानी स्वेन स्कन्धेनात्मानं वोढुमुत्सहते । नच नामरूपश्रुतिरविशेषतः प्रवृत्ता भूताकाशवर्जं नामरूपान्तरे संकोचयितुं सति संभवे युज्यते । नच निर्वाहकत्वं निरङ्कुशमवगतं ब्रह्मलिङ्गं कथंचिल्क्लेशेन परतन्त्रे नेतुमुचितम् ।

## वेदान्तकल्पतरुः ।

रपेक्षकारणत्वस्य प्रत्युक्तिसामानाधिकरण्यसामर्थ्यस्य च दर्शनाद् ब्रह्मपरत्वं नैवमिहेत्यगतार्थत्वमाह—**तथापीति** । हेतूनां प्रसिद्धेर्भूताकाशो ननु ब्रह्मेति वक्ष्यमाणेनान्वयः । अनन्तराधिकरणेनागतार्थत्वसंगती वक्ति—**अकस्माच्चेति** । पूर्वत्र हि प्रकरणादानर्थक्यहतश्रुतिर्नीता, इह तु न ब्रह्मप्रकरणम्; नाप्याकाशश्रुतेरानर्थक्यम्; नामरूपाधिष्ठानब्रह्मप्रतिपत्त्यर्थत्वादाकाशस्येति भावः । तर्हि नामरूपान्यत्वं ब्रह्मणो लिङ्गम्, ब्रह्मशब्दश्रुतिश्च, नेत्याह—**नामरूपे इति** । नामरूपे अन्तरा ब्रह्मेति श्रुतिर्नामरूपयोर्निर्वहितुराकाशस्यान्तरालत्वं नाचष्टे, किंतु ब्रह्मणः । ततः किमत आह—**तेनेति** । निषेधमुखेनैतदेव विशदयति—**नत्विति** । निर्वोढा य आकाशः स नैव ब्रह्म । अन्तरालभूतं वा यद् ब्रह्म तदपि नैव निर्वोढ्रित्यर्थः । एवंच ब्रह्मशब्दश्रुतिरपि ब्रह्मण्येव नाकाश इत्युक्तम् । अभिधानाभिधेयनामरूपनिर्वाहकत्वं नियन्तृत्वम्, तन्न नभसि सत्यप्यवकाशदातृत्वे घटत इत्याह—**नचेति** । नामरूपकर्तृत्वेन वाक्यान्तरगतब्रह्मप्रत्यभिज्ञामाह—

## कल्पतरुपरिमलः ।

ब्रह्म लोकवेदसाधारण्येनाकाश इति प्रसिद्धम् । सर्वाणि ह वा इमानि भूतानीत्यत्र तु वैशब्दद्योतितप्रसिद्धेर्नाकाशे धर्मिण्यन्वयः, किंतु सर्वजगत्कारणत्वरूपे धर्मे, तस्य धर्मस्य लोके प्रसिद्धिर्नास्तीत्यगत्या केवलवैदिक्येव ग्राह्या । सा च ब्रह्मलिङ्गान्वयिनीति सिद्धान्त एवोपयुज्यते । तस्मादिहैव तत्र न प्रसिद्धिलिङ्गमवलम्ब्य पूर्वपक्षशङ्कावकाश इति विशेषः । अतः प्रसिद्धिलिङ्गानुगृहीतोपक्रमगताकाशश्रुतिविरोधात् सत्यपि निरुपसर्गे यथाकथंचिदवकाशरूपाधिकरणतया वोढृत्वमेव निर्वहितेत्यनेनोच्यत इत्युपपादनीयमिति भावः । **नामरूपाभ्यामन्यत्वमिति** । अन्तराशब्दोक्तमध्यत्वोपलक्षितेन सारत्वेनान्यत्वमाक्षिप्यत इति भावः । **निर्वोढा य आकाश इति** । यथा देवदत्तश्चैत्रमैत्रयोः प्रेषयिता यस्तावदन्तरा वर्तते स यज्ञदत्त इत्युक्ते देवदत्तयज्ञदत्तयोर्भेदः प्रतीयते एकमिहाप्याकाशब्रह्मणोरिति भावः । **नियन्तृत्वमिति** । व्याकर्तृत्वमस्येदं वाच्यमिति नियमनरूपमिति भावः । **सत्यप्यवकाशदातृत्व इति** । सकलनामरूपावकाशदातृत्वं भूताकाशस्य वस्तुतो नास्त्येव; स्वात्मनि वृत्तिविरोधात् । यथाकथंचित्तदस्तु नाम, तथापि तन्निर्वहितेति निरुपसर्गेन नोच्यते, किंतु तद्व्याकर्तृत्वमेव । नच—प्रसिद्धिलिङ्गानुरोधेन निर्वहितेत्येतदवकाशदातृत्वपरतया योज्यमिति—शङ्कनीयम्; यतो निपातसमुदायो नाकाशशब्दविषयस्य तेन रूपेण प्रसिद्धिद्योतकः, किंतु नामरूपनिर्वोढृत्वरूपविधेयवत्त्वेन; तथैव व्युत्पत्तेः । नहि देवदत्तः खलु विद्वानित्युक्ते यः प्रसिद्धो देवदत्तः स विद्वान् त्वप्रसिद्धस्तदन्यो देवदत्त इति प्रतीयते, किंतु विद्वत्त्वेन देवदत्तः प्रसिद्ध इत्येव प्रतीयते । एवंच सकलनामरूपनिर्वोढृत्वेन श्रुत्यन्तरप्रसिद्धं ब्रह्मैवाकाशशब्दोक्तमिति लभ्यते । एवंच यद्यपि नामभेदेन धर्मिनिर्देशाद् भिन्नधर्मिनिर्देशाच्च देवदत्तश्चैत्रमत्रयोरित्यादिलौकिकवाक्यच्छायापत्त्या तिस्र एव साहस्येत्यादिवैदिकवाक्यच्छायापत्त्या चाकाशब्रह्मणोर्भेदः प्रतीयते; तथापि नामरूपव्याकर्तृत्वतद्वदन्यत्वयोर्ब्रह्मलिङ्गतया तद्वशादभेदोऽपि प्रतीयते, भेदाभेदप्रत्यायकोपनिपाते चाभेदप्रत्यायकानुरोध एव युक्तः; प्रतिपत्तिलाघवात्, एकवाक्यतानुग्रहात्, ते यदन्तरेति प्रकृतपरामर्शियत्पदानुग्रहाच्च । **किंच** नामभेदधर्मिभेदरूपभेदलिङ्गावगतिराकाशब्रह्मविषयभागद्वयपरामर्शापेक्षा विलम्बिता, नामरूपव्याकर्तृत्वतद्वदन्यत्वरूपब्रह्मलिङ्गावगतिरेकैकभागमात्रपरामर्शापेक्षा शीघ्रा । ततश्च यथा "ऽऽग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वत्याज्यभागा स्याद् बार्हस्पत्यश्चरुरि" त्यत्र प्रकृताऽऽग्नेयाऽग्नीषोमीयस्थानसाम्याद्वाक्यत्रयपरामर्शापेक्षत्वेन विलम्बितादाग्नावैष्णवबार्हस्पत्ययोर्नाग्नेयाग्नीषोमीयधर्मप्राप्तिः, किंतु तत्तद्वाक्यमात्रपरामर्शापेक्षत्वेन शीघ्राद् द्विदेवत्यैकदेवत्यसामान्यादग्नीषोमीयाग्नेयधर्मप्राप्तिः, तथात्रापि विलम्बितलिङ्गान्न भेदावगतिः, किंतु शीघ्रलिङ्गात् तदभेदावगतिर्भवतीत्येव युक्तम् । एवमर्थान्तरत्वादिव्यपदेशस्याकाशब्रह्मभावसाधकत्वपर्यवसानमस्पष्टमित्यस्पष्टब्रह्मलिङ्गता । **ननु**—टीकायां ते यदन्तरेत्यस्य ते नामरूपे अन्तरा यद्वर्तत इति योजनया ब्रह्मणो

( १३ अधिकरणम् ) **सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥**

**व्यपदेशादित्यनुवर्तते । बृहदारण्यके षष्ठे प्रपाठके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ०४।३।७) इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः । तत्किं संसारिस्वरूपमात्रान्वाख्यानपरं वाक्यमुतासंसारिस्वरूपप्रतिपादनपरमिति संशयः। किं तावत्प्राप्तम्? संसारिस्वरूपमात्रविषयमेवेति । कुतः ? उपक्रमोपसंहाराभ्याम् । 'उपक्रमे योऽयं विज्ञानमयः**

---

भामती ।

"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति च स्रष्टृत्वमतिस्फुटं ब्रह्मलिङ्गमत्र प्रतीयते । ब्रह्मरूपतया च जीवस्य व्याकर्तृत्वे ब्रह्मण एव व्याकर्तृत्वमुक्तम् । एवंच निर्वहितुरेवान्तरालतोपपत्तेरन्यो निर्वहिताऽन्यश्चान्तरालमित्यर्थभेदकल्पनापि न युक्ता । तथाच ते नामरूपे यदन्तरेऽत्ययमर्थान्तव्यपदेश उपपन्नो भवत्याकाशस्य । तस्मादर्थान्तरव्यपदेशात्, तथा 'तद्ब्रह्म तदमृतम्' इति व्यपदेशाद्ब्रह्मैवाकाशमिति सिद्धम् ॥ ४१ ॥ **इति द्वादशं अर्थान्तरत्वाधिकरणम् ॥**

**सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥**

**आदिमध्यावसानेषु संसारिप्रतिपादनात् । तत्परे ग्रन्थसंदर्भे सर्वं तत्रैव योज्यते ॥** संसार्येव तावदात्माहंकारास्पदं प्राणादिपरीतः सर्वजनसिद्धः । तमेव च 'योऽयं विज्ञानमयः प्राणेषु' इत्यादिश्रुतिसंदर्भ आदिमध्यावसानेष्वामृशतीति तदनुवादपरो भवितुमर्हति । एवंच संसार्यात्मैव किंचिदपेक्ष्य महान्, संसारस्य चानादित्वेनानादित्वादज उच्यते, नतु तदतिरिक्तः कश्चिदत्र नित्यशुद्धबुद्धमुक्तस्वभावः प्रतिपाद्यः । यत्तु सुषुप्त्युत्क्रान्त्योः प्राज्ञेनात्मना संपरिष्वक्त इति भेदं मन्यसे, नासौ भेदः किंत्वयमात्मशब्दः स्वभाववचनः; तेन सुषुप्त्युत्क्रान्त्यवस्थायां विशेषविषयाभावात्संपिण्डितप्रज्ञेन प्राज्ञेनात्मना स्वभावेन परिष्वक्तो न किंचिद्वेदेत्यभेदेऽपि भेदवदुपचारेण योज-

वेदान्तकल्पतरुः ।

**—अनेनेति । नन्व**नेन जीवेनेत्यत्रानुप्रवेशव्याकरणयोः क्त्वाप्रत्ययेनैककर्तृकत्वं प्रतीयते, अनुप्रवेशे च जीवः कर्तेति स एव व्याकरणेऽपि कर्ता स्यात्तथाच न व्याकर्तृत्वादिह ब्रह्मप्रत्यभिज्ञा, अत आह—**ब्रह्मरूपतया चेति** । जीवस्य व्याकर्तृत्वप्रतीतावपि न विरोधस्तस्य ब्रह्माभेदादित्यर्थः ॥ ४१ ॥ **इति द्वादशं अर्थान्तरत्वाधिकरणम् ॥**

**सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥**

अत्र विज्ञानमयशब्दादुपसंहारस्थसर्वेशानादिशब्दाच्च विशयः । अङ्गुष्ठमात्र इत्यत्र नोपक्रमोपसंहारौ जीवे, अत्र तु स्त इत्यगतता । पूर्वत्र नामरूपाभ्यां भेदव्यपदेशादाकाशं ब्रह्मेत्युक्तं, तत्र भेदव्यपदेशोऽनेकान्तोऽसत्यपि भेदे 'प्राज्ञेनात्मना संपरिष्वक्त' इति भेदोपचारदर्शनादित्याशङ्क्यात्रापि मुख्यभेदपरत्वसाध्यत्वात्सङ्गतिः । पूर्वपक्षमाह—**आदीति** । आदावन्ते च विज्ञानमयशब्दाद् मध्ये स्वप्नाद्युक्तेः संसारिपरे ग्रन्थे सति 'महानज' इत्यादि सर्वं संसारिण्येव योज्यत इत्यर्थः। **संपिण्डिता** विषयसंबन्धकृतविक्षेपाभावाद् घनीभूता **प्रज्ञा** यस्य स तदा संसार्येवानूद्यत इति । अनुवादप्रयोजनं कर्मापेक्षितकर्तृस्तु-

कल्पतरुपरिमलः ।

नामरूपसारत्वमर्थमुक्त्वा ते नामरूपे यदाकाशमन्तरेति ग्रन्थेन ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते इति छान्दोग्यविवरणदर्शितयोजनान्तरेण नामरूपाधारत्वमर्थान्तरमुच्यत इति व्याख्यातुं शक्यम् । तद्व्याख्यानं श्रुतान्तराशब्दस्याव्यवहितान्वयस्वारस्यानुकूलं च भवति । तथा किमिति न व्याख्यातमिति—**चेत्, उच्यते;** अन्तराशब्दयोगे त्वां च मां चान्तरा कमण्डलुरित्यादाववधिद्वयनिर्देशदर्शनेन श्रुतावन्तराशब्दस्य व्यवहितान्वयपक्ष एव युक्तः । उदाहृतटीकावाक्यमपि व्यवहितान्वयेन पूर्वोक्तार्थोपसंहारपरमित्यभिप्रेत्य तस्य तथा व्याख्यानं न कृतम् । तथा स्वाख्यानेपि न दोषः; 'ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः । वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिःश्वसन् ॥ इति भट्टिकाव्ये विनाप्यवधिद्वयमन्तराशब्ददर्शनात् ॥ ४१ ॥ **इति द्वादशमर्थान्तरत्वाधिकरणम् ॥**

**सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥**

**कर्तृस्तुतिरिति । ननु** अनन्वागतः पुण्येनेति स न साधुना कर्मणा भूयानिति च प्रतिपाद्यस्यात्मनः कर्मासंस्पर्श उच्यते, स कथं कर्माधिकारिस्तुतिः स्यात् ? **नैष दोषः;** तयोर्वाक्ययोः सुषुप्तौ कर्मफलभोगाभावाभिप्रायत्वात् । स न

---

१ तत्र सूत्रम् १—आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

प्राणेषु' इति शारीरलिङ्गात्, उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' ( बृ० ४।४।२२ ) इति तदपरित्यागात्, मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति । एवं प्राप्ते ब्रूमः—परमेश्वरोपदेशपरमेवेदं वाक्यं न शारीरमात्रान्वाख्यानपरम् । कस्मात्? सुषुप्त्युत्क्रान्त्यो च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात् । सुषुप्तौ तावत् 'अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' ( बृ० ४।३।२१ ) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति । तत्र पुरुषः शारीरः स्यात्; तस्य वेदितृत्वात् बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसंभवात्, प्राज्ञः परमेश्वरः; सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् । तथोत्क्रान्तावपि 'अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति' ( बृ० ४।३।३५ ) इति जीवाद्भेदेन परमेश्वरं व्यपदिशति । तत्रापि शारीरो जीवः स्यात्; शरीरस्वामित्वात्, प्राज्ञस्तु स एव परमेश्वरः । तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्परमेश्वर

## भामती ।

नीयम् । यथाहुः—'प्राज्ञः संपिण्डितप्रज्ञः' इति । पत्यादयश्च शब्दाः संसारिण्येव कारककरणसंघातात्मकस्य जगतो जीवकर्मार्जिततया तद्भोग्यतया च योजनीयाः । तस्मात्संसार्येवानूद्यते, नतु परमात्मा प्रतिपाद्यत इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—'सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशादित्यनुवर्तते । अयमभिसंधिः—किं संसारिणोऽन्यः परमात्मा नास्ति, तस्मात्संसर्यात्मपरं 'योऽयं विज्ञानमयः प्राणेषु' इति वाक्यम्? आहोस्विदिह संसारिव्यतिरेकेण परमात्मनोऽसंकीर्तनात्संसारिणश्चादिमध्यावसानेष्ववमर्शनात्संसार्यात्मपरं, न तावत्संसार्यतिरिक्त तस्याभावः । तत्प्रतिपादका हि शतश आगमाः 'ईक्षतेर्नाशब्दम्' 'गतिसामान्यात्' इत्यादिभिः सूत्रसंदर्भैरुपपादिताः । नचात्रापि संसार्यतिरिक्तपरमात्मसंकीर्तनाभावः; सुषुप्त्युत्क्रान्त्योस्तत्संकीर्तनात् । नच प्राज्ञस्य परमात्मनो जीवाद्भेदेन संकीर्तनं सति संभवे राहोः शिर इतिवदौपचारिकं युक्तम् । नच प्राज्ञशब्दः प्रज्ञाप्रकर्षशालिनि निरूढवृत्तिः कथंचिदज्ञविषयो व्याख्यातुमुचितः । नच प्रज्ञाप्रकर्षोऽसंकुचद्वृत्तिर्विदितसमस्तवेदितव्यात्सर्वविदोऽन्यत्र संभवति । नचेत्थंभूतो जीवात्मा । तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन जीवात्प्राज्ञस्य परमात्मनो व्यपदेशात् 'योऽयं विज्ञानमयः' इत्यादिना जीवात्मानं

## वेदान्तकल्पतरुः ।

तिः । नन्वसिद्धे ईश्वरे धर्मिणि भेदव्यपदेशोऽसिद्ध इत्याशङ्क्याह—**अयमभिसंधिरिति** । **द्वितीयं** विकल्पं निराचष्टे—**न चात्रेति** । **नन्वात्म**शब्दो जीवस्वभाववचन इत्युक्तं, तत्कथं तदतिरिक्तेश्वरव्यपदेशोऽत आह—**नच प्राज्ञस्येति** । **ननु** जीवस्यापि शास्त्रादिविषयप्रज्ञाप्रकर्षोऽस्ति, अत आह—**असंकुचद्वृत्तिरिति** । **ननु** भेदेन जीवपरव्यप-

## कल्पतरुपरिमलः ।

साधुनेत्याद्यपि सुषुप्तविषयमेव; य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इत्युपक्रमात्, सुषुप्तिप्रसङ्गाभावे मृत्वापि कर्मसंबन्ध उक्त एवेति भावः । **ननु** संसार्यनुवादेन तस्यासंसारिब्रह्मरूपताविधानपरमिदं प्रकरणमिति सिद्धान्तः सुषुप्त्युत्क्रान्ति ( ब्र. अ. १ पा. ३ सू. ४२ ) सूत्रानुगुणाङ्गुष्ठवाक्य इव सुषुप्त्युत्क्रान्तिवाक्ययोर्जीवब्रह्मपरपदसामानाधिकरण्याभावात् प्रत्युताभेदप्रतिकूलस्य भेदव्यपदेशस्य सत्त्वाच्चेत्याशङ्क्य विकल्पोत्तरत्वेन सूत्रद्वयप्रवृत्तिरित्याशयेन टीकायां विकल्पः कृतः । तत्र प्रथमविकल्पस्य निरालम्बनतामाशङ्क्य तदालम्बनं प्रदर्शयन्नवतारयति—**नन्वसिद्धे इति** । जीवातिरिक्त ईश्वर एव नास्ति; चेतनविषयसर्वश्रुतीनां क्लृप्तजीवविषयत्वोपपत्तौ तासु कासांचित्तदतिरिक्तविषयत्वकल्पनस्य गौरवपराहतत्वात् । नच—आनन्दमयादिवाक्यानां जीवाद्यतिरिक्तेश्वरविषयत्वं प्राचीनाधिकरणैः प्रसाधितमिति—शङ्कनीयम्; जीवातिरिक्तमीश्वरं तदसाधारणानि श्रुतिलिङ्गादीनि च सिद्धवत्कृत्य खलु तैस्तत्प्रसाधितम् । ईश्वर एव नास्तीति मूले कुठारनिधाने तदीयश्रुतिलिङ्गादीनीह निरस्तानीति तैस्तत्प्रसाधितं कथमवतिष्ठेत? एवंच ब्रह्मश्रुतित्वाभिमताः सर्वे शब्दा यथायथं जीवसामान्यस्य जीवविशेषाणां च श्रुतयः । लिङ्गानि च कारणत्वादीन्यदृष्टद्वारकाणि प्रशंसार्थान्यौपचारिकावस्थाभेदकृतभेदावलम्बनानि च सन्ति जीवविषयाण्येव । अत्रत्यभेदव्यपदेशोऽप्यात्मशब्दस्य स्वरूपपरत्वेनौपचारिकः । अतो न सिद्धान्तसिद्धिरिति प्रथमविकल्पस्य हृदयमित्याशयः । प्राग्विचारितानां वाक्यानामीश्वरमभ्युपगम्याप्यन्यपरत्वमस्त्विति शङ्कानिरासार्थं प्रदर्शिता ये श्रुतिलिङ्गादयस्तैरेव मा भूदीश्वर इति शङ्कापि निरस्ता भवति । नहि लाघवमात्रलोभेन सर्वज्ञं सर्वशक्तिकमनादिसकलप्रपञ्चप्रवाहस्रष्टारं सकलजीवजडविलक्षणमेकमीश्वरं प्रतिपादयतामेतावतामौपनिषदवाक्यानामतिक्लिष्टनयनं युक्तमिति प्रथमविकल्पदूषणाभिप्रायः । **द्वितीयं विकल्पमिति** । इहेश्वरो न संकीर्त्यत इति द्वितीयविकल्पोऽपि द्वेधा विकल्पनीयः किं संसारिव्यतिरिक्तत्वेनात्र न संकीर्तितः? उत सत्यपि

एवात्र विवक्षित इति गम्यते । यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येति । अत्र ब्रूमः—उपक्रमे तावत् 'योऽयं विज्ञानमयः प्राणेषु' इति न संसारिस्वरूपं विवक्षितं, किं तर्हि ? अनूद्य संसारिस्वरूपं परेण ब्रह्मणास्यैकतां विवक्षति । यतो 'ध्यायतीव लेलायतीव' इत्येवमाद्युत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते । तथोपसंहारेऽपि यथोपक्रममेवोपसंहरति–'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति । योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः । यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात्संसारिस्वरूपविवक्षां मन्यते, स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि दिशं प्रतिष्ठेत । यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं संसारित्वं वा विवक्षति, किं तर्हि ? अवस्थारहितत्वमसंसारित्वं च । कथमेतदवगम्यते ? यत् 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति पदे पदे पृच्छति । यच्च 'अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' (बृ० ४।३।१४,१५ ) इति पदे पदे प्रतिवक्ति । 'अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति' ( बृ ४।३।२२ ) इति च । तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम्, यदस्मिन्वाक्ये पत्यादयः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसारिस्वभावप्रतिषेधनाश्च भवन्ति । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्येवंजातीयका असंसारिस्वभावप्रतिपादनपराः । 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इत्येवंजातीयकाः संसारिस्वभावप्रतिषेधनाः । तस्मादसंसारी

---

### भामती ।

लोकसिद्धमनूद्य तस्य परमात्मभावोऽनधिगतः प्रतिपाद्यते । नच जीवात्मानुवादमात्रपराण्येतानि वचांसि; अनधिगतार्थावबोधनपरं हि शाब्दं प्रमाणं, न त्वनुवादमात्रनिष्ठं भवितुमर्हति । अतएव च संसारिणः परमात्मभावविधानायादिमध्यावसानेष्वनुवाद्यतयाऽवमर्शं उपपद्यते । एवं च महत्त्वं चाजत्वं च सर्वगतस्य नित्यस्यात्मनः संभवान्नापेक्षिकं कल्पयिष्यते । **यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासादिति** । नानेनावस्थावत्त्वं विवक्ष्यते, अपि त्ववस्थानामुपजनापायधर्मकत्वेन तदतिरिक्तमवस्थारहितं परमात्मानं विवक्षति, उपरितनवाक्यसंदर्भालोचना

### वेदान्तकल्पतरुः ।

देशे वाक्यं भिद्येतात आह—**लोकसिद्धमनूद्येति** । **नन्व**तिलाघवादनुवाद एव भवतु, नेत्याह—**न त्विति** । **नन्व**भ्यासाज्जीवपरत्वं वाक्यस्य, नेत्याह—**अत एवेति** । यत एवानुवादमात्रमनर्थकमत एव प्राणादिविवेकार्थमुपक्रमे जीववर्णनं स्वप्नादेर्व्यभिचारित्वादनात्मधर्मत्वार्थं मध्ये निर्देशः । अन्ते च शोधितजीवं परामृश्य तस्य ब्रह्मत्वं बोध्यत इति विवेकः । उपरितनवाक्यसंदर्भोऽत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यादिः ॥ ४२ ॥ वशिशब्दं व्याख्याति—**वश इति** ।

### कल्पतरुपरिमलः ।

व्यावहारिकभेदेन संकीर्तने तात्त्विकाऽभेदबोधनानुकूलं तत्संकीर्तनं नास्तीति । **तत्राद्यकल्पनिरासः** प्रथमसूत्रविवक्षितो न चात्रापीत्यादिग्रन्थेन प्रदर्श्यत इति भावः । **अनुवादमात्रमनर्थकमिति** । कर्मश्रुतिरप्यनर्थकप्राया, सापि न प्रतीयते; साधुकर्मणि सति तत्प्रयुक्तभूयस्त्वावश्यंभावेन तन्निषेधानुपपत्त्या ततः कर्माभावस्यापि सिद्धेः । तदसिद्धौ वा तस्य वाक्यस्य कृतमपि साधु कर्म निष्फलमित्यर्थपर्यवसन्नतया ततः कर्मनिन्दाया एव प्रतीतेः, कर्मविधिसन्निधानाभावादपि सापि न संभवतीति भावः । तस्मात् सुषुप्त्युत्क्रान्त्योरित्यादिटीकाग्रन्थेन प्रथमसूत्रार्थानुवादपूर्वकं पत्यादि ( व्या. सू. अ. १ पा. ३ सू. ४३ । ) सूत्रार्थोपन्यासेन द्वितीयविकल्पनिरासः कृतस्तमाह—**अन्ते चेति** । 'स वा एष महानज आत्मा योऽयं विज्ञानमय' इत्याद्युपसंहारे अभेदबोधनानुकूलं सामानाधिकरण्यमस्तीति भावः । परमेश्वर एव नास्तीति प्रथमविकल्पनिरासस्तु सूत्राद् बहिरेवेति द्रष्टव्यम् । **यद्वा—भावं तु बादरायण** ( व्या. सू. अ.१ पा. ३ सू. ३३ । ) इति सूत्रादस्तीत्यस्य पूर्वसूत्रा ( व्या. सू. अ.१ पा.३ सू. ४१ । ) दर्थान्तरत्वादिव्यपदेशादित्यस्य चानुवृत्तिमभिप्रेत्यास्ति जीवातिरिक्तः परमेश्वरः तस्य तद्भिन्नत्वज्ञापकानां तत्स्रष्टृत्वादिहेतूनां पूर्वोत्तराधिकरणविषयवाक्येषु विशिष्य

परमेश्वर इहोक्त इत्यवगम्यते ॥ ४३ ॥ इति त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ॥
इति श्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

## भामती ।

दिति ॥ ४२ ॥ **सर्वस्य वशी** । **वशः** सामर्थ्यं सर्वस्य जगतः प्रभवत्ययम्, व्यूहावस्थानसमर्थ इति । अत एव **सर्वस्येशानः**, सामर्थ्येन ह्ययमुक्तेन सर्वस्येष्टे; तदिच्छानुविधानाज्जगतः । अत एव **सर्वस्याधिपतिः** सर्वस्य नियन्ता । अन्तर्यामीति यावत् । **किंच** स एवंभूतो ह्यन्तर्ज्योतिः पुरुषो विज्ञानमयो न साधुना कर्मणा भूयानुत्कृष्टो भवतीत्येवमाद्याः श्रुतयोऽसंसारिणं परमात्मानमेव प्रतिपादयन्ति । तस्माज्जीवात्मानं मानान्तरसिद्धमनूद्य तस्य ब्रह्मभावप्रतिपादनपरो 'योऽयं विज्ञानमयः' इत्यादिवाक्यसंदर्भ इति सिद्धम् ॥ ४३ ॥ **इति त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ॥**

**इति श्रीमद्वाचस्पतिमिश्रविरचितशारीरकभगवत्पादभाष्यविभागे भामत्यां प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥**

## वेदान्तकल्पतरुः ।

वशः शक्तिरस्यास्तीति **वशी**। ततः फलितमाह—**सर्वस्य जगत इति** । अयमीश्वरः सर्वस्य जगतः प्रभवति प्रभुर्भवति प्रभावं प्रकटयति । **व्यूहेति** । व्यूहेन विभागेन जगतोऽवस्थाने साध्ये समर्थ इत्यर्थः । शक्तस्य तथैव करणं सर्वेशानपदार्थः । प्रकृतं जगत्प्रति नियन्तृत्वं सर्वाधिपतित्वम् । **विज्ञानम**न्तःकरणम् । **तन्मयः** तत्प्रायः । **प्राणेषु हृदीति** व्यतिरेकार्थे सप्तम्यौ प्राणबुद्ध्यतिरिक्त इत्यर्थः । **अन्तरिति** बुद्धिवृत्तेर्विविनक्ति । **ज्योतिरि**त्यज्ञानाद्भिनत्ति । **पुरुषः** पूर्णः । योयमेवंभूतः स आत्मेति याज्ञवल्कीयं प्रतिवचनं **कतम आत्मेति** जनकप्रश्नानन्तरम् । **अन्वारूढः** अधिष्ठितः । **उत्सर्जद्** वेदनातः शब्दं कुर्वन् बुद्धौ ध्यायन्त्यां ध्यायतीव चलन्त्यां चलतीव । **बुद्धान्तो** जाग्रत् **अतः** कामादिविवेकानन्तरं, विमोक्षाय ब्रूहीति जनकः पृच्छति । **तेन** जाग्रद्रोगादिना अनन्वागतो भवत्यसङ्गत्वादिति प्रतिवक्ति याज्ञवल्क्यः । **तदा** सुषुप्तौ **हृदयस्य** बुद्धेः संबन्धिनः **शोकाँ**स्तीर्णो भवति ॥ ४३ ॥ **इति त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ॥**

**इति श्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यभगवदमलानन्दकृते वेदान्तकल्पतरौ प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥**

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | १३ | ३२ |
| सूत्राणि | ४३ | १०६ |

## कल्पतरुपरिमलः ।

प्रतिपादनादिति तदर्थमादाय प्रथमविकल्पनिरासः कृत इति नेतव्यम् ॥ ४२ ॥ **वशः शक्तिरिति** । वश आयत्ततायां स्यात्; 'वश इच्छाप्रभुत्वयो'रित्यभिधानकोशः ॥ ४३ ॥ **इति त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ।**

**वैकुण्ठाचार्यवंशाम्बुधिहिमकिरणश्रीमदद्वैतविद्या-**
**चार्यश्रीरङ्गराजाह्वयविस्तृतयशोविश्वजिद्याजिसूनोः ।**
**ग्रन्थे वेदान्तकल्पद्रुवरपरिमले सर्वजिद्याजिनोऽस्मिन्**
**पूर्णः पादोऽजनिष्ट भ्रमरहितहिते निर्विशेषप्रधानः ॥**

**इति श्रीवेदान्तकल्पतरुपरिमले प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥**

**॥ इति प्रथमाध्यायस्य ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिसमन्वयाख्यस्तृतीयः पादः ॥**

---

१ तत्र सूत्रे २—सुषुप्त्युत्क्रान्त्योर्भेदेन ४२ पत्यादिशब्देभ्यः ४३ ॥

## प्रथमाध्याये चतुर्थः पादः ।

( १ अधिकरणम् ) **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम्—'जन्माद्यस्य यतः' ( ब्र० १।१।२ ) इति । तल्लक्षणं प्रधानस्यापि समानमित्याशङ्क्य तदशब्दत्वेन निराकृतम्—'ईक्षतेर्नाशब्दम्' ( ब्र० १।१।५ ) इति । गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन । इदं त्विदानीमवशिष्टमाशङ्क्यते—यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धम्; कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात् । अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते; तद्यावत्तेषां शब्दानामन्यपरत्वं न प्रतिपाद्यते, तावत्सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुलीभ-

---

### भामती ।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

**स्यादेतत्**—ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम्—'जन्माद्यस्य यतः' इति । तच्चेदं लक्षणं न प्रधानादौ गतं, येन व्यभिचारादलक्षणं स्यात्, किंतु ब्रह्मण्येवेति 'ईक्षतेर्नाशब्दम्' इति प्रतिपादितम् । गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते, न प्रधानकारणवादं प्रतीति प्रपञ्चितमधस्तनेन सूत्रसंदर्भेण । तत्किमवशिष्यते यदर्थमुत्तरः संदर्भ आरभ्यते । नच 'महतः परमव्यक्तम्' इत्यादीनां प्रधाने समन्वयेऽपि व्यभिचारः । नह्येते प्रधानकारणत्वं जगत आहुः, अपितु प्रधानसद्भावमात्रम् । नच तत्सद्भावमात्रेण 'जन्माद्यस्य यतः' इति ब्रह्मलक्षणस्य किंचिद्धीयते । तस्मादनर्थक उत्तरः संदर्भ इत्यत आह—**ब्रह्मजिज्ञासां प्रतिज्ञायेति** । न प्रधानसद्भावमात्रं प्रतिपादयन्ति—'महतः परमव्य-

### वेन्दान्तकल्पतरुः ।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

अर्वाचीनमहत्तत्त्वापेक्षया पूर्वकालत्वमविप्रकृष्टमव्यक्तस्य परशब्द आह । तथा च कारणत्वसिद्धिः । नियतप्राक्सत्त्वं हि तदित्यर्थः । **ननु** सिद्धे गतिसामान्ये का शङ्का ? महतः परमित्यादिवाक्यार्थानिर्णये वा कथं गतिसामान्यसिद्धिः ? **उच्यते—असाधि प्रतिवेदान्तं ब्रह्मकारणतागतिः । प्रतिवाक्यं न तत्सिद्धिः क्व चिदन्यार्थदर्शनात् ॥** पूर्वत्र हि प्रधानाद्येव सर्ववेदान्तार्थ इति प्रत्यवस्थिते तन्निषेधेन सर्ववेदान्तेषु ब्रह्मावगतिः साधिता, इह तु तामुपेत्य

### कल्पतरुपरिमलः ।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

**परशब्द आहेति** । **ननु**—अत्र परशब्दः श्रैष्ठ्यवचनः; "इन्द्रियेभ्यः परा ह्यर्था" इत्यादिपूर्ववाक्येषु श्रुतस्य तस्य तथात्वात्, सांख्यैरप्य"व्यक्तात्पुरुषः पर" इत्यत्र श्रुतस्य तथैव व्याख्येयत्वात्, प्रधानस्याकार्यत्वात्, कठवल्लीषु श्रुते "इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥" इति मन्त्रान्तरे परशब्दस्थाने उत्तमशब्ददर्शनाच्चेति—**चेत्, सत्यम्**; इह पूर्वपूर्वस्मादुत्तरोत्तरस्य श्रैष्ठ्यमुच्यमानं यस्य यथा संभवति तस्य तथोपपादनीयम् । अतः स्मार्तक्रमप्रत्यभिज्ञानादिह महदादिपदानां स्मार्तमहदादितत्त्वत्रयपरत्वस्थितौ महत्त्वात्प्रधानस्य श्रैष्ठ्यं कारणत्वेनैव भवेदिति पर्यवसितार्थकथनमिदम्, न तु परशब्दाभिधेयकथनमिति न विरोधः । **पूर्वत्र हीति** । एवं च

वेत् । अतस्तेषामन्यपरत्वं दर्शयितुं परः संदर्भः प्रवर्तते । आनुमानिकमप्यनुमाननिरूपितमपि प्रधानमेकेषां शाखिनां शब्दवदुपलभ्यते । काठके हि पठ्यते—'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' (१।३।११) इति । तत्र य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धास्त एवेह प्रत्यभिज्ञायन्ते । तत्राव्यक्तमिति स्मृतिप्रसिद्धेः शब्दादिहीनत्वाच्च न व्यक्तमव्यक्तमिति व्युत्पत्तिसंभवात् स्मृतिप्रसिद्धं प्रधानमभिधीयते । तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नम् । तदेव च

## भामती ।

कम्' 'अजामेकाम्' इत्यादयः, किंतु जगत्कारणं प्रधानमिति । 'महतः परम्' इत्यत्र हि परशब्दोऽविप्रकृष्टपूर्वकालत्वमाह । तथा च कारणत्वम् । 'अजामेकाम्' इत्यादीनां तु कारणत्वाभिधानमतिस्फुटम् । एवं च लक्षणव्यभिचारादव्यभिचाराय युक्त उत्तरसंदर्भारम्भ इति । पूर्वपक्षयति—**तत्र य एवेति** । सांख्यप्रवादरूढिमाह—**तत्राव्यक्तमिति** । सांख्यस्मृतिप्रसिद्धेर्न केवलं रूढिः, अवयवप्रसिद्ध्याप्ययमेवार्थोऽवगम्यत इत्याह—**न व्यक्तमिति** । शान्तघोरमूढशब्दादिहीनत्वाच्चेति । श्रुतिरुक्ता स्मृतिश्च सांख्यीया । न्यायश्च—'भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥' कारणमस्त्यव्यक्तम् इति । नच 'महतः परमव्यक्तम्' इति प्रकरणपरिशेषाभ्यामव्यक्तपदं शरीरगोचरम्; शरीरस्य शान्तघोरमूढरूपशब्दाद्यात्मकत्वेनाव्यक्तत्वानुपपत्तेः । तस्मात्प्रधानमेवाव्यक्त-

## वेदान्तकल्पतरुः ।

प्रधानाद्यपि कारणत्वेन समन्वयविषयः । न चानेककारणवैयर्थ्यम्; कल्पभेदेन व्यवस्थोपपत्तेरिति प्रत्यवस्थीयते । सूत्रकारोऽप्यपिशब्दमेकशब्दं च प्रयुञ्जानो ब्रह्माङ्गीकारेण पूर्वपक्षः क्वाचित्कश्चायं विचार इति सूचयांबभूव । अव्यक्तपदं प्रधानपरं शरीरपरं वेति स्मार्तक्रमश्रौतपारिशेष्याभ्याम् उभयोः प्रत्यभिज्ञानात्संशयः । सांख्यानां श्रुतिस्मृत्योरनुमानसिद्धानुवादित्वेन तुल्यता । भाष्ये स्मृतिशब्दः सांख्यस्मृत्यभिप्राय इत्याह—**सांख्येति** । शब्दादिहीनत्वादिति भाष्ये गुणवैषम्योत्तरकालभाविशब्दादिहीनत्वमुक्तं प्रधानकालेऽपि सूक्ष्मशब्दादिभावादित्याह—**शान्तेति** । शान्तः सात्त्विको घोरो राजसो मूढस्तामसः । **श्रुतिस्मृतिन्यायेति** भाष्यं व्याख्याति—**श्रुतिरिति** । **भेदानां** महदादिविशेषाणां **कारणम**व्यक्तमस्तीति संबन्धः । कुतः ? **परिमाणात्** । महदादि, अव्यक्तकारणकम्, अव्यापित्वाद् घटवत् । सत्कार्यवादे

## कल्पतरुपरिमलः ।

टीकायां व्यभिचारशब्दो दोषमात्रपर इति ईक्षत्यधिकरणा ( व्या. सू. अ. १ पा. १ सू. ५ । ) र्थानुवादकवाक्यश्रुतत्वस्य तस्यासंभवे पर्यवसानं प्रवर्तयिष्यमाणाधिकरणार्थानुवादकवाक्यश्रुतत्वस्यातिव्याप्तेरित्याशयः । **सांख्यानां श्रुतिस्मृत्योरिति** । इदं न सर्वश्रुतिस्मृत्यभिप्रायम् ; यागादिश्रुतितन्मूलस्मृतीनां सांख्यमतेऽप्यनुमानसिद्धार्थानुवादित्वाभावात्, त्रिविधं प्रमाणं तत्सिद्धौ सर्वसिद्धेरिति कपिलसूत्रे (अ.१ सू. ८७-८८ ।) सांख्यसप्तत्यां च शब्दस्य स्वतन्त्रप्रमाणत्वेन परिगणनात्, किं तु "महतः परमव्यक्त"मित्युदाहृतश्रुत्यव्यक्तविषयसांख्यस्मृत्यभिप्रायम् । उदाहृतश्रुतिर्हीन्द्रियादिपुरुषान्तपरापरभावपरेन्द्रियादीनामिवाव्यक्तस्याप्यन्यत्रापकमपेक्षते । अव्यक्तविषयसांख्यस्मृतिः स्मृतित्वादेव मूलमानमपेक्षते । तद्यद्यपि "सदेव सोम्येदमित्यादिकमिति वक्तुं शक्यम्, कपिलसूत्रवार्तिके प्रथमाध्याये सद्विद्यादीनां प्रधानपरत्वस्य व्यवस्थापितत्वात् ; तथापि "इन्द्रियेभ्यः परा" इत्यादिकमनुमानसिद्धार्थविषयमित्येव तन्मतम् । अत एव स्थूलात्पञ्चतन्मात्रस्योत्पत्त्यादीनि परार्थत्वात् पुरुषस्ये ( कपिलसू. अ. १ सू. ६२-६६ । ) त्यन्तानि कपिलसूत्राणि तद्वार्तिकक्तेन्द्रियेभ्यः परा इत्यादेरिन्द्रियार्थादिपुरुषान्तानामुत्तरोत्तरोत्कर्षे तात्पर्यं वर्णयितुं प्रवृत्तानीति प्रतिपादयतोक्तं रूपादिबुद्धिकार्यानुमेयेभ्य इन्द्रियेभ्यः स्थूलभूतकार्यानुमेयेभ्यः पञ्चतन्मात्रेभ्यश्च परस्तात्कारणत्वेनानुमेयो मनःशब्दोदितोऽहंकारः । उभयेषामहंकारकार्यत्वाविशेषेऽपि महाभूतप्रकृतित्वेन विशेषेण तन्मात्राणामिन्द्रियेभ्यः परत्वम् । एवमव्यक्तपर्यन्तानां पूर्वकारणत्वेनानुमेयत्वात् । **परत्वं** पुरुषस्य व्यक्तात् परत्वं । **भोक्तृत्वादिति** । अत एव चानुमानिकमप्येकेषामिति सूत्रेणानुमानसिद्धमव्यक्तम् एकेषां शाखायामनूद्यत इत्युक्तमित्यभिप्रेत्य तयोरनुमानसिद्धार्थानुवादित्वमुक्तम् । **सत्कार्यवादे इति** । इत्थं सांख्यानां सत्कार्यवादः । घटोत्पत्तेः प्रागपि मृद्यनभिव्यक्ता घटावस्था वर्तते; तदनभिव्यक्तिः पिण्डावस्थयाऽऽवृतत्वात्, घटसामग्र्या पिण्डावस्थोपमर्दे सति खनने कूपजलमिव क्षालने पटशौक्ल्यमिव च प्रतीयते । न च तथा सति मुद्गरपातानन्तरमपि घटावस्थाप्रतीतिप्रसङ्गः, इष्टापत्तेः; कपालानि चूर्णीकृत्य जलमृदन्तरसंयोजनमर्दनव्यापारैर्मार्दवं प्रापय्य दण्डचक्रादिमेलने घटाभिव्यक्तिदर्शनात् । न च—दग्धपटकारणानां पुनः पटभावो न दृश्यत इति—वाच्यम्; तद्भस्मनां क्षितिपतितानां कार्पासतरुफलपरिणतिक्रमेण पटभावोपपत्तेः । न च तन्त्ववस्थायाः पटावस्थावरणत्वे विरलतन्त्वारब्धपटे पटावस्थाऽनभिव्यक्तिप्रसङ्गः; फलबलेन संयोगविशेषरहिततन्त्ववस्थायास्तदावरकत्वादिति । अतो मृदादिकमव्यक्तघटाद्य-

जगतः कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेत् । नैतदेवम्; न ह्येतत्काठकं वाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम् । न ह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशं प्रत्यभिज्ञायते । शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते । स च शब्दो न व्यक्तमव्यक्तमिति यौगिकत्वादन्यस्मिन्नपि सूक्ष्मे सुदुर्लक्ष्ये च प्रयुज्यते । न चायं कस्मिंश्चिद्रूढः । या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते । नच क्रममात्रसामान्यात्समानार्थप्रतिपत्तिर्भवत्यसति तद्रूपप्रत्यभिज्ञाने । न ह्यश्वस्थाने गां पश्यन्नश्वोऽयमित्यमूढोऽध्यवस्यति । प्रकरणनिरूपणायां चात्र न परपरिकल्पितं प्रधानं प्रतीयते । शरीररूपकविन्यस्तगृहीतेः । शरीरं ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्देन परिगृह्यते ।

## भामती ।

मुच्यत इति प्राप्ते, उच्यते—**नैतदेवम्** । **नह्येतत्काठकं वाक्यमिति** । लौकिकी हि प्रसिद्धा रूढिर्वैदार्थनिर्णये निमित्तं; तदुपायत्वात् । **यथाहुः**—'य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्थाः' इति, नतु परीक्षकाणां पारिभाषिकी, पौरुषेयी हि सा न वेदार्थनिर्णयनिबन्धनसिद्धौ निमित्तं औषधादिप्रसिद्धिवत् । तस्माद्रूढितस्तावन्न प्रधानं प्रतीयते । योगस्त्वन्यत्रापि तुल्यः । तदेवमव्यक्तश्रुतावन्यथासिद्धायां प्रकरणपरिशेषाभ्यां शरीर-

## वेदान्तकल्पतरुः ।

प्राक्कार्योत्पत्तेरव्यक्तकार्यत्वात्कारणेऽव्यक्तशब्दप्रयोगः । तावेव प्रतिज्ञादृष्टान्तौ । **समन्वयात्त**दनुरागविज्ञानवेदनीयत्वात् । यद्येन समन्वितमिति सामान्येनात्र व्याप्तिः । **कारणशक्तितः** कार्यस्य **प्रवृत्तेः** कारणगताव्यक्तकार्यं हि शक्तिरित्यर्थः । इदमस्य कारणमिदमस्य कार्यमिति विभागात् । अव्यक्तकार्यसत्त्वरहितस्य नृशृङ्गवत्कारणत्वायोगादित्यर्थः । प्रलयावस्थायां वैश्वरूप्यस्याविभागाल्लीनानभिव्यक्तकार्याश्रयोऽस्त्यव्यक्तमिति । अव्यक्तपदेन किं रूढेः प्रधानप्रतीतिर्योगाद्वा स्मार्तक्रमानुगृहीतयोगाद्वा । **नाद्य** इत्याह—**लौकिकी हीति** । य एव लौकिका इति शाबरं वचः । लोकवेदयोः शब्दार्थभेदः; लौकिका वैदिका इति व्यपदेशभेदादेतद्वै दैव्यं मधु यद् घृतमिति देवमधुनो घृतत्वाभिधानाच्चेति प्राप्यग्य राद्धान्तितम् लोकावगतसंबन्धशब्दानां वेदे बोधकत्वोपपत्तेरैक्येन च प्रत्यभिज्ञानाद् घृते मधुत्वस्य स्तुत्यर्थत्वाच्चैक्यं शब्दार्थयोरिति । **द्वितीयं** प्रत्याह—**योगस्त्विति** । तृतीयं निराकरोति—**प्रकरणेति** । **अयं भावः**—इह विष्णोः पदं पुरुषः प्रधानं तत्प्रतिपत्त्यङ्गानि इन्द्रियादीनि "इन्द्रियेभ्यः परा" इत्यादिना निर्दिश्यन्ते । तानि 'चात्मानं रथिन'मिति वाक्ये रथादिरू-

## कल्पतरुपरिमलः ।

वस्थावद् घटाद्यात्मनानभिव्यक्तमित्यव्यक्तशब्दप्रयोग उपपन्न इति भावः । **सामान्येनात्र व्याप्तिरिति** । यद्यद्रूपानुरक्तं प्रतीयते, तदनभिव्यक्ततद्रूपानुरक्तकारणमिति सामान्यव्याप्तौ प्रागुक्तरीत्याऽनभिव्यक्तघटावस्थादिविशिष्टमृदादिकारणको घटादिरेव दृष्टान्तः । पक्षे च सुखदुःखमोहगुणकवस्तुप्रकृतिकं तद्गुणत्वात् घटवदिति घटो येन प्राप्यते तं प्रतिसत्त्वगुणोद्भवात् सुखरूपः, यदीयः सोऽन्येनापह्रियते तं प्रति रजोगुणोद्भवात् दुःखरूपः, यस्य तस्मिन्नुपेक्षया निरीक्षणाभावः तं प्रति तमोगुणोद्भवान्मुह वैचित्य इति धात्वर्थानुगमेनाज्ञानरूपो मोहो भवति । तानि च घटावस्थापेक्षाणि सुखादिरूपाणि मृदवस्थायामप्यनभिव्यक्तानि सन्त्येव । **कारणगतेति** । कारणगतं यदव्यक्तं कार्यं तदेव शक्तिर्न तद्व्यतिरेकेण शक्तिर्नाम किंचिद्वस्त्वस्तीति भावः । **नृशृङ्गवत्कारणत्वायोगाद्** इत्युपलक्षणम् । तिलेभ्य एव तैलं न सिकताभ्य इत्यादिव्यवस्थित्ययोगादित्यपि द्रष्टव्यम् । **अनभिव्यक्तकार्याश्रयोऽस्तीति** । अन्यथा तदनन्तरकल्पेऽसत्त्वान्तासत उत्पत्तौ नृशृङ्गादेरप्युत्पत्तिप्रसङ्ग इति भावः । **ननु** किं प्रकरणं? कश्च परिशेषः? कथं च ताभ्यामव्यक्तशब्दस्य शरीरार्थत्वसिद्धिः? इत्याकाङ्क्षायां तत्सर्वं भाष्ये विवक्षितं संक्षिप्य विशदयति—**अयं भाव इति । रथादिरूपितान्येव गृह्यन्त इति** । प्रकरणाम्नातत्वेन बुद्धौ विपरिवर्तमानानि षट्संख्यया च समानानि इन्द्रियादीनि गृह्यन्त इत्यर्थः । **ननु** विष्णुपदशब्दोक्तः पुरुषः स्वरूपेण प्रतिपिपादयिषिततया न प्रधानम्, किंतु निरतिशयपरत्वेन प्रतिपिपादयिषिततया; परमित्युपक्रान्तस्य परत्वस्य सा काष्ठेत्युपपादनात्, अतस्तन्निरतिशयपरत्वप्रतिपादनं कृत्स्नस्य जगतः परत्वावधितयाऽङ्गभावमपेक्षते । न च कृत्स्नं जगत् रूपकवाक्ये गृहीतम्; शरीरेन्द्रियार्थमनोबुद्धिभोक्तॄणामेव तत्र ग्रहणात् । अतस्तदाकाङ्क्षानुसारेण सांख्याभिमतपुरुषावरचतुर्विंशतितत्त्वात्मकसकलप्रपञ्चसमर्पकत्वमेवात्रेन्द्रियाद्यव्यक्तान्तशब्दानां युक्तम्; दश ज्ञानकर्मेन्द्रियाणि दश भूततन्मात्राः मनोऽन्तःकरणं बुद्धिरहङ्कारः महानात्मा महत्तत्त्वमव्यक्तं प्रधानमिति सांख्याभिमतानां चतुर्विंशतितत्त्वानां ग्रहणसंभवात् । यद्यपि सांख्यानां महत्तत्त्व एव बुद्धिशब्द आत्मशब्दश्च न महत्तत्त्वे; तथापि परत्वावधितया सकलतत्त्वनिर्देशाकाङ्क्षानुसा-

कुतः ? प्रकरणात्परिशेषाच्च । तथाह्यनन्तरातीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपककॢप्तिं दर्शयति—'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥' ( का० १।३।३,४ ) इति । तैश्चेन्द्रियादिभिरसंयतैः संसारमधिगच्छति । संयतैस्त्वध्वनः पारं तद्विष्णोः परमं पदमाप्नोतीति दर्शयित्वा, किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायां तेभ्य एव प्रकृतेभ्य इन्द्रियादिभ्यः परत्वेन परमात्मानमध्वनः पारं विष्णोः परमं पदं दर्शयति—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' ( का० १।३।१०,११ ) इति । तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन

## भामती ।

गोचरोऽयमव्यक्तशब्दः । यथा चास्य तद्गोचरत्वमुपपद्यते तथाग्रे दर्शयिष्यति । तेषु शरीरादिषु मध्ये विषयांस्तद्गोचरान् विद्धि । यथाश्वोऽध्वानमालम्ब्य चलत्येवमिन्द्रियहयाः स्वगोचरमालम्ब्येति । आत्मा भोक्तेत्याहुर्मनीषिणः । कथम्? **इन्द्रियमनोयुक्तम्** योगो यथा भवति । इन्द्रियार्थमनःसंनिकर्षेण ह्यात्मा गन्धादीनां भोक्ता । प्रधानस्याकाङ्क्षावतो वचनं प्रकरणमिति गन्तव्यं विष्णोः परमं पदं प्रधानमिति तदाकाङ्क्षामवतारयति—**तैश्चेन्द्रियादि-**

## वेदान्तकल्पतरुः ।

पितान्येव गृह्यन्ते । एवं स्थिते "महतः परमव्यक्त'मित्यत्र पौरुषेयवाक्यस्थपदार्थतत्क्रमापेक्षप्रधानप्रत्यभिज्ञा दुर्बला । प्रकरणाधीतपदार्थाश्रयत्वादभिधेयाकाङ्क्षाश्रयत्वाच्च पारिशेष्यनिमित्ता शरीरप्रत्यभिज्ञा प्रबला । **तथा हि**—रथत्वेन रूपितं शरीरं पुरुषपरत्वप्रतिपादकवाक्यान्वयमपेक्षते; इतरथा निष्प्रयोजनत्वात्, न च स्वाभिधेयावरुद्धा इन्द्रियादिशब्दास्तदभिदधतीति अस्ति अव्यक्तशब्दापेक्षा शरीरस्य । अव्यक्तशब्दोऽपि यौगिकत्वादभिधेयविशेषाकाङ्क्षी स्वशब्दोपात्तेन्द्रियाद्यभिधातुमक्षमः शरीराकाङ्क्षीति शरीरमेवाव्यक्तशब्दार्थ इति ॥ "विषयांस्तेषु गोचरा"निति श्रुतिं व्याचष्टे—**तेष्विति** । विषयानुद्दिश्य मार्गत्वं विधेयम् । स्वगोचरमालम्ब्य चलन्तीति विपरिणतानुषङ्गः । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इत्येतद्व्याचष्टे—**आत्मेति** । युक्तमिति भावे निष्ठा क्रियाविशेषणं चैतत्तदेव दर्शयति—**योग इति** । प्रकरणपरिशेषाभ्यामित्युक्तम् । **ननु** प्रकरणं कर्तव्यस्येतिकर्तव्याकाङ्क्षस्य वचनम्, कथमिह तदित्याशङ्क्याह—**प्रधानस्येति** । प्रधानस्येत्युक्तेऽर्थाकाङ्क्षाऽङ्गविषयेति सिध्यति । काण्डद्वयानुगतं लक्षणमिदमेवेत्यर्थः । किं प्रधानमत आह—**गन्तव्यमिति** । इन्द्रियादयश्च तस्य परत्वप्रतिपत्तावङ्गम् । संयताश्चेत्तत्प्राप्तावपि । यस्त्वविज्ञानवानित्यादिश्रुतौ भाष्ये चासंयमाभिधानमनुपयो-

## कल्पतरुपरिमलः ।

रेण सांख्यतत्त्वे प्रत्यभिज्ञापकभूयस्त्वानुसारेण च कार्ये कारणोपचारादहङ्कारे बुद्धिशब्दः महत्तत्त्वे व्यापकत्वाभिप्रायेणात्मशब्दः "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानआत्मनी"त्यत्रैवोपरितनमन्त्रे ज्ञानेऽप्यात्मशब्ददर्शनादिति समर्थयितुं शक्यमित्याशङ्कां निवर्तयितुमेवकारः । न सांख्याभिमतानामपि सर्वेषां तत्त्वानामिह ग्रहणं संभवति; अर्थशब्दस्येन्द्रियसमभिव्याहारेणेन्द्रियेभ्यः परत्वलिङ्गेन चेन्द्रियग्राह्यपरत्वात्, इन्द्रियेभ्योऽर्थानां परत्वस्येन्द्रियाणां पुरुषवशीकर्तृताया अर्थोपहाराधीनतया वशीकृतानामपि तेषामतिसुन्दरार्थसंनिधाने क्षोभदर्शनेन च समर्थनीयत्वात् । यदि साक्षाद्भोग्यानामिन्द्रियग्राह्याणां पुरुषावरत्वोक्तेरेतत्साधनत्वेन परम्परया पुरुषार्थपर्यवसायिनां भूतसूक्ष्माणां तत्कैमुतिकन्यायेन सिध्यतीति सांख्यतत्त्वग्रहणे सर्वतत्त्वव्यापिपरत्वावधिताप्राप्तिः समर्थ्येत, तर्हि संनिहितग्रहणेऽपि कण्ठोक्त्या कैमुतिकन्यायेन च कृत्स्नस्य जगतस्तत्प्राप्तिः समर्थयितुं शक्येति व्यर्थः प्रकरणाम्नातबुद्धिविपरिवर्तमानवैदिकपरित्यागस्य विपरीततत्त्वपरिग्रहश्च । अवश्यं च कठवल्लीष्वेवोत्तरत्राम्नाय तयोः 'इन्द्रियेभ्य परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ अव्यक्तात्तु परः पुरुषो व्यापको लिङ्ग एव च । यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥' इति मन्त्रयोः कृत्स्नस्य जगतः पुरुषावरत्वसिद्ध्यर्थं कैमुतिकन्यायः समाश्रयणीयः; तत्रार्थानामपाठात् । स इहाप्यस्त्विति भावः । एवं प्रकरणवशादिहेन्द्रियादयो रूपकवाक्याम्नाता एव ग्राह्या इति सामान्यतः सिद्धाविहाव्यक्तशब्देन शरीरं ग्राह्यमिति विशेषः परिशेषात्सिध्यतीति दर्शयति—**एवं स्थिते इति** । **ननु** यथोपपादयिष्यमाणपारिशेष्यनिमित्तप्रत्यभिज्ञया शरीरोपस्थितिः, तथा सांख्यतन्त्रसिद्धमहदव्यक्तपुरुषक्रमप्रत्यभिज्ञतया प्रधानोपस्थितिरस्ति, किमत्रान्यतरग्रहणे विनिगमकमित्याकाङ्क्षायां तत्र विनिगमकं बलाबलविभागं दर्शयति—**पौरुषेयेति** । प्रधानशरीरप्रत्यभिज्ञानप्राबल्यहेत्वोर्मध्ये प्रकरणाधीतपदार्थाश्रयत्वात् शरीरप्रत्यभिज्ञाहेतुः प्रबल इति तमुपपादयति—**रथत्वेनेति** । **इतरथेति** ।

प्रकृतास्त एवेह परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय । तत्रेन्द्रियमनोबुद्धयस्ताव-त्पूर्वत्रेह च समानशब्दा एव । अर्था ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टास्तेषां चेन्द्रियेभ्यः परत्वम्; 'इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वम्' (बृ० ३।२) इति श्रुतिप्रसिद्धेः । विषयेभ्यश्च मनसः परत्वं, मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य । मनसस्तु परा बुद्धिः । बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति । बुद्धेरात्मा महान्परः, यः स 'आत्मानं रथिनं विद्धि' इति रथित्वेनोपक्षिप्तः । कुतः ? आत्मशब्दात्, भोक्तुश्च भोगोपकरणात्परत्वोपपत्तेः । महत्त्वं

## भामती ।

भिरसंयतैरिति । असंयमाभिधानं व्यतिरेकमुखेन संयमावदातीकरणम् । परशब्दः श्रेष्ठवचनः । नन्वान्तरत्वेन यदि श्रेष्ठत्वं तदेन्द्रियाणामेव बाह्येभ्यो गन्धादिभ्यः श्रेष्ठत्वं स्यादित्यत आह—अर्था ये शब्दादय इति । नान्तर-त्वेन श्रेष्ठत्वमपि तु प्रधानतया, तच्च विवक्षाधीनं, ग्रहेभ्यश्चेन्द्रियेभ्योऽतिग्रहतयार्थानां प्राधान्यं श्रुत्या विवक्षित-मितीन्द्रियेभ्योऽर्थानां प्राधान्यात्परत्वं भवति । घ्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वचो हि इन्द्रियाणि श्रुत्याष्टौ ग्रहा उक्ताः । गृह्णन्ति वशीकुर्वन्ति खल्वेतानि पुरुषपशुमिति । न चैतानि स्वरूपतो वशीकर्तुमीशते, यावदस्मै पुरुषपशवे गन्धरसनामरूपशब्दकामकर्मस्पर्शान्नोपहरन्ति । अत एव गन्धादयोऽष्टावतिग्रहाः; तदुपहारेण ग्रहाणां ग्रहत्वोपपत्तेः । तदिदमुक्तम्—इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेरिति । ग्रहत्वेनेन्द्रियैः साम्येऽपि मनसः स्वगतेन विशेषेणार्थेभ्यः परत्वमाह—विषयेभ्यश्च मनसः परत्वमिति । कस्मात्पुमान् रथित्वेनोपक्षिप्तो गृह्यत इत्यत आह—आत्मशब्दादिति । तत्प्रत्यभिज्ञानादित्यर्थः । श्रेष्ठत्वे हेतुमाह—भोक्तुश्चेति । तदनेन

## वेदान्तकल्पतरुः ।

गीत्याशङ्क्याह—असंयमेति । संयमाभावे मोक्षाभावेन तद्भाव एव दृढीकृत इत्यर्थः । यदुक्तं पूर्ववादिना महतः पर-मित्यत्र परशब्दः कारणवचन इति, तत्राह—परशब्द इति । मनआदावर्थादिकारणत्वासंभावादस्मिन्प्रकरणे परशब्दः श्रैष्ठ्यवचन इत्यर्थः । इहाध्यात्मप्रकरणे आन्तरत्वाच्छ्रैष्ठ्यं वक्तव्यम्, तदर्थेषु नास्तीति शङ्कते—नन्विति । नामैव शब्दो वागभिव्यङ्ग्यः । श्रोत्रेण ग्राह्य इति द्विरुपात्तः । कामो मनसो विषयः कर्म हस्तयोः । ननु मनस इन्द्रियत्वेनार्थेभ्यो-ऽपरस्य कथं तेभ्य एव परत्वम् ? अत आह—ग्रहत्वेनेति । आत्मानं रथिनमित्यत्र य आत्मशब्दः स एव बुद्धेरात्मेत्यत्र प्रत्यभिज्ञायत इत्यभिप्रायेणात्मशब्दादिति भाष्यम्, अन्यथाऽऽत्मशब्दमात्रस्य प्रकृतरथिग्रहणहेतुत्वाभावादित्याह—तत्प्र-

## कल्पतरुपरिमलः ।

ननु नास्ति निष्प्रयोजनत्वम्; न हि परत्वावधित्वेनान्वयार्थमात्मशरीरादयो रथिरथादिभावेन रूपिताः । तत्र रथिरथादि-रूपणस्यानुपयोगात्, तत्रैव परत्वावधीन्द्रियाद्याम्नानसत्वेनेतरत्र इन्द्रियादिग्रहणानपेक्षणाच्च, किं तु निदिध्यासनोपकरणानां तेषां वशीकार्यत्वार्थम्, वशीकृतानि ह्येतानि तदुपकरणानि भवन्ति । यतस्तत्रैव श्रूयते । "यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥" इति । सत्यम्; रथिरथादिरूपेण वशीकार्यत्वज्ञापनार्थमिति तज्ज्ञापनमपि वशीकार्याणां परापरभावविवेचनं विना न प्रयोजनपर्यवसायि; यत्नेन वशीकार्यमुपेक्ष्यान्यवशीकरणप्रवृत्तौ प्रयोजनलाभासंभवात् । अतो वशीकार्यताज्ञापनरूप स्वप्रयोजनसिद्ध्यर्थमेव रथित्वादिना रूपिता षडपि इन्द्रियेभ्यः परा ह्यर्था इत्यादिवाक्यान्वय-मपेक्षन्त इत्यस्ति शरीरस्यापि तदन्वयापेक्षा । तत्र हीन्द्रियेभ्यस्तद्विषयाः वशीकार्यत्वे पराः वश्येन्द्रियस्यापि विषयसन्निधा-विन्द्रियविजृम्भणात् । तेभ्योऽपि मनः परम्; मनसि विषयध्यानप्रवृत्ते विषयासंनिधानेऽपि रागविजृम्भणात् । तस्मादपि बुद्धिः परा; इदमित्थं कर्तव्यमित्यध्यवसायाभावे मनसोऽकिञ्चित्करत्वात् । ततोऽप्यात्मा परः; बुद्धिवृत्तेरप्यात्माधीनत्वात् । तस्मादपि शरीरं परम्; तदायत्तत्वात्सर्वेषामपि तत्तदिन्द्रियार्थमनोबुद्धिप्रयुक्तपुरुषव्यवहाराणाम् । अतो हितमितमेध्याश-नादिभिः शरीरवशीकरणेऽत्यन्तमेव प्रयतितव्यमिति वशीकार्यत्वे परापरभावो विविच्यते । यद्यपीन्द्रियेभ्यः परा इत्यादेः कृत्स्नस्यापि सर्वापेक्षया पुरुषपरत्वे महातात्पर्यमित्याध्यानाधिकरणे ( ब्र।. सू. अ. ३ पा. ३ सू. १४ । ) निरूपयिष्यते; तथापि महातात्पर्यविषयस्य तस्यैव प्रमितावुपायत्वेन वर्ण्यमानमुत्तरोत्तरपरत्वं यथाकथाचिद् विधयोपपादनीयमिति प्राचीनवशीकार्यत्वज्ञानप्रयोजनपर्यवसानार्थं विश्वस्मादिन्द्र उत्तर इतिवत् सर्वस्मात् परः पुरुष इत्येतावदनुक्त्वा क्रमिकपरा-परभाववर्णनस्य साफल्यार्थं च प्रदर्शितप्रकारेणेन्द्रियादीनां परापरभावेऽवान्तरतात्पर्यमपि युज्यत एव । रूपितान्येवेत्ये-वकारेण प्रकरणाम्नातेन्द्रियादिग्रहणे कस्यचिन्न्यायस्य सूचने कृतेऽपि सर्वधारणमेव न्यायान्तरं शरीरे दर्शितमिति द्रष्ट-व्यम् । श्रेष्ठवचन इत्यर्थ इति । श्रैष्ठ्यं च वशीकार्यतापेक्षं विवक्षितमिति न तत्प्रयोजकत्वेनापि कारणत्वमपेक्षणीय-

चास्य स्वामित्वादुपपन्नम् । अथवा—'मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते ॥' इति स्मृतेः, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे० ६।१८) इति च श्रुतेर्या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परा प्रतिष्ठा । सेह महानात्मेत्युच्यते । सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हि रुगिहोपदिश्यते? तस्या अप्यस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः । एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यम्; परमार्थतः परमात्मविज्ञानात्मनोर्भेदाभावात् । तदेवं शरीरमेवैकं परिशिष्यते । इतराणीन्द्रियादीनि प्रकृतान्येव परमपददिदर्शयिषया समनुक्रामन्परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते । शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः शरीरादीनां रथादिरूपककल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिरिह विवक्षिता । तथा च 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' (का० १।३।१२) इति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति—'यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥' (का० १।३।१३) इति । एतदुक्तं भवति—वाचं मनसि संयच्छेत् वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत । मनोऽपि विषयविकल्पाभिमुखं विकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धावध्यवसायस्वभावायां धारयेत् । तामपि बुद्धिं महत्यात्मनि भोक्तर्यग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत् । महान्तं त्वात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेदिति च । तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य प्रधानस्यावकाशः ॥ १ ॥

## भामती ।

जीवात्मा स्वामितया महानुक्तः । अथवा—श्रुतिस्मृतिभ्यां हैरण्यगर्भी बुद्धिरात्मशब्देनोच्यत इत्याह—**अथवेति** **पूरिति** । भोग्यजातस्य बुद्धिरधिकरणमिति बुद्धिः पूः तदेवं सर्वासां बुद्धीनां प्रथमजहिरण्यगर्भबुद्ध्येकनीडतया हिरण्यगर्भबुद्धेर्महत्त्वं चापनादात्मत्वं च । अत एव बुद्धिमात्रात्पृथक्करणमुपपन्नम् । नन्वेतस्मिन्पक्षे हिरण्यगर्भबुद्धेरात्मत्वान्न रथिन आत्मनो भोक्तुरत्रोपादानमिति न रथमात्रं परिशिष्यतेऽपि तु रथवानपीत्यत आह—**एतस्मिंस्तु पक्ष इति** । यथा हि समारोपितं प्रतिबिम्बं बिम्बान्न वस्तुतो भिद्यते, तथा न परमात्मनो विज्ञानात्मा वस्तुतो भिद्यत इति परमात्मैव रथवानिहोपात्तस्तेन रथमात्रं परिशिष्टमिति । अथ रथादिरूपककल्पनायाः शरीरादिषु किं प्रयोजनमित्यत आह—**शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य हीति** । **वेदना** सुखाद्यनुभवः । प्रत्यर्थं मञ्चतीति प्रत्यगात्मेह जीवोऽभिमतस्तस्य ब्रह्मावगतिः । नच जीवस्य ब्रह्मत्वं मानान्तरसिद्धं, येनात्र नागमोऽपेक्ष्येतेत्याह—**तथाचेति** । वागिति छान्दसो द्वितीयालोपः । शेषमतिरोहितार्थम् ॥ १ ॥ पूर्वपक्षिणोऽनुशयबीजनिरा-

## वेदान्तकल्पतरुः ।

**त्यभिज्ञानादिति** । इन्द्रियद्वारा बुद्धिस्था भोग्यास्ततः पुरस्वाम्यं भोग्याश्रयत्वम् । **आपनाद्** व्याप्तेः । **बुद्धिमात्रादस**-दादिबुद्धेः । **ननु** रथिनः संसारिणः कथमसंसार्यात्मत्वेन निर्देशोऽत आह—**यथा हीति** । अञ्चत्यवगच्छति । भाष्योदाहृतायां यच्छेद्वाङ्मनसी इति श्रुतौ वाक्छब्दे द्वितीयालोपश्छान्दस इत्यर्थः । शरीरमेव रूपकेण रथेन विन्यस्तं रूपितम् इति सूत्रपदार्थः ॥१॥ **अनुशयो**ऽसंतोषः । **मत्सरं** सोमम्, **श्रीणीत** मिश्रयेत् । **एवंसतीति** । कार्यकारणाभेदे सतीत्यर्थः ।

## कल्पतरुपरिमलः ।

मिति भावः । **शरीरमेवेति** । **ननु**—रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम्; विशेषणस्य पूर्वनिपातित्वादिति—**चेत, न**; तथा सति हि रूपकविन्यस्तव्यतिरिक्तमपि शरीरमङ्गीकृत्य तद्व्यावर्तनार्थं विशेषणमिति स्यात्, रूपकविन्यस्तेन्द्रियादिव्यावर्तनमिहेष्यते, तत्तु शरीरविशेषणेनैव लभ्यत इति तल्लाभार्थं विपरीतविशेषणविशेष्यभावविवक्षया शरीरं पूर्वं निवेशितम् । **रूपकेण रथेनेति** । स्वेन रूपेण रथत्वेनोपमेयं रूपवत्करोतीत्यर्थे रूपवच्छब्दात् तत्करोतीति णिचि णाविष्ठवद्भावेन मतुब्लोपे टिलोपे रूपीत्यतो धातोः कर्तरि ण्वुलि णेरनिटीति णिलोपे च सति रूपकशब्दनिष्पत्तिः । **रूपितमिति** । रूपवत्कृतमित्यर्थः । रूपीत्यतः पूर्ववत्सनाद्यन्तधातोः कर्मणि क्तप्रत्यये वलाद्यार्धधातुकनिमित्ते इडागमे निष्ठायां सेटीति णिलोपे च सति रूपितशब्दनिष्पत्तिः ॥१॥ भाष्यटीकयोस्तत्त्वातत्त्वाभ्यामनिर्वाच्यत्वमव्यक्तपदप्रवृत्तिनिमित्तमित्युक्तमयुक्तम्, न व्यज्य-

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

उक्तमेतत्प्रकरणपरिशेषाभ्यां शरीरमव्यक्तशब्दं न प्रधानमिति । इदमिदानीमाशङ्क्यते—कथमव्यक्तशब्दार्हत्वं शरीरस्य ? यावता स्थूलत्वात्स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हमस्पष्टवचनस्त्वव्यक्तशब्द इति । अत उत्तरमुच्यते— सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते; सूक्ष्मस्याव्यक्तशब्दार्हत्वात् । यद्यपि स्थूलमिदं शरीरं न स्वयमव्यक्तशब्दमर्हति; तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति । प्रकृतिशब्दश्च विकारे दृष्टः । यथा 'गोभिः श्रीणीत मत्सरम्' ( ऋ० सं०९।४६।४ ) इति । श्रुतिश्च—'तद्धेदं तर्ह्यव्याकृतमासीत्' ( बृ० १।४।७ ) इतीदमेव व्याकृतनामरूपविभिन्नं जगत्प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमव्यक्तशब्दयोग्यं दर्शयति ॥ २ ॥

## तदधीनत्वादर्थवत् ॥ ३ ॥

अत्राह—यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थमव्यक्तशब्दार्हमभ्युपगम्येत, तदात्मना च शरीरस्याप्यव्यक्तशब्दार्हत्वं प्रतिज्ञायेत, स एव तर्हि प्रधानकारणवाद एवं सत्यापद्येत । अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमादिति । अत्रोच्यते—यदि वयं स्वतन्त्रां कांचित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम, प्रसञ्जयेम तदा प्रधानकारणवादम् । परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतन्त्रा । सा चावश्याभ्युपगन्तव्या । अर्थवती हि सा । नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति; शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः । मुक्तानां च पुनरनुत्पत्तिः । कुतः ? विद्यया तस्या बीज-

---

### भामती ।

करणपरं सूत्रम्—**सूक्ष्मं तु तदर्हत्वात्** । प्रकृतेर्विकाराणामनन्यत्वात्प्रकृतेरव्यक्तत्वं विकार उपचर्यते । यथा 'गोभिः श्रीणीत' इति गोशब्दस्तद्विकारे पयसि । अव्यक्तात्कारणात् विकाराणामनन्यत्वेनाव्यक्तशब्दार्हत्वे प्रमाणमाह—**तथाच श्रुतिरिति** । अव्याकृतमव्यक्तमित्यनर्थान्तरम् । नन्वेवं सति प्रधानमेवाभ्युपेतं भवति, सुखदुःखमोहात्मकं हि जगदेवंभूतादेव कारणाद्भवितुमर्हति, कारणात्मकत्वात्कार्यस्य । यच्च तस्य सुखात्मकत्वं तत्सत्त्वम् । यच्च तस्य दुःखात्मकत्वं तद्रजः । यच्च तस्य मोहात्मकत्वं तत्तमः । तथा चाव्यक्तं प्रधानमेवाभ्युपेतमिति ॥ २ ॥

शङ्कानिराकरणार्थं सूत्रम्—**तदधीनत्वादर्थवत्** । प्रधानं हि सांख्यानां सेश्वराणामनीश्वराणां चेश्वरात् क्षेत्रज्ञेभ्यो वा वस्तुतो भिन्नं शक्यं निर्वक्तुम् । ब्रह्मणस्त्वियमविद्या शक्तिर्मायादिशब्दवाच्या न शक्या तत्त्वेनान्यत्वेन वा निर्वक्तुम् । इदमेवास्या अव्यक्तत्वं यदनिर्वाच्यत्वं नाम । सोऽयमव्याकृतवादस्य प्रधानवादाद्भेदः । अविद्याशक्तेश्चेश्वराधीनत्वं तदाश्रयत्वात् । नच द्रव्यमात्रमशक्तं कार्यायालमिति शक्तेरर्थवत्त्वम् । तदिदमुक्तम्—**अर्थवदिति** । **स्यादेतत्**—यदि ब्रह्मणोऽविद्याशक्त्या संसारः प्रजायते, हन्त मुक्तानामपि पुनरुत्पादप्रसङ्गः, तस्याः प्रधानवत्तादवस्थ्यात् । तद्विनाशे वा समस्तसंसारोच्छेदः, तन्मूलाविद्याशक्तेः समुच्छेदादित्यत आह—**मुक्तानां च पुनः बन्धस्य अनुत्पत्तिः । कुतः ? विद्यया तस्या बीजशक्तेर्दाहात्** । **अयमभिसंधिः**—न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे, येनैवमुपालभ्येमहि, किंत्वियं प्रतिजीवं भिद्यते । तेन यस्यैव जीवस्य विद्योत्पन्ना तस्यैवा-

### वेदान्तकल्पतरुः ।

सेश्वराणामीश्वराद् अनीश्वराणां जीवेभ्य इति संबन्धः । प्रमाणैर्न व्यज्यते न निरूप्यत इत्यव्यक्तत्वमित्यर्थः ॥२॥ **तदाश्रयत्वात्** तद्विषयत्वादित्यर्थः । आधारवाची आश्रयशब्दः । अविद्याऽप्येकेति भ्रमादाशङ्कते—**स्यादेतदिति** । अविद्या ब्रह्मगता निवर्तते, न वा । **प्रथमे** सर्वमुक्तिः, **द्वितीये** मुक्तानां पुनर्बन्ध इति अविद्यादाहमुपेत्य सर्वमुक्तेरापादनादपरिहारत्वमाशङ्क्य भाष्यभावमाह—**अयमिति** । पूर्वभ्रमक्लृप्तेनाप्रधानेनात्मनोऽविवेकसंभवादविवेकप्रतियोगित्वेनापि कृतं

### कल्पतरुपरिमलः ।

त इति व्युत्पत्तिबलादस्पष्टत्वस्य तत्प्रवृत्तिनिमित्तत्वादित्याशङ्क्य व्याचष्टे—**प्रमाणैरिति** । व्युत्पत्तिवाक्यगतस्य व्यज्यत इत्यस्यात्र निरूप्यत इत्यर्थो ग्राह्यः; अविद्यायां प्रत्यक्षादिप्रमाणैः स्पष्टायामस्पष्टत्वरूपप्रवृत्तिनिमित्ताभावादित्याशयः ॥२॥ **अप्रधानेनेति** । परमेश्वरप्रेर्यत्वेनास्वतन्त्रयैवाविद्ययान्तःकरणादिरूपेण परिणतयेत्यर्थः । अप्रधानेनेति स्थाने क्वचिदज्ञानेनेति पाठः सुगमः । मायादिकमिति पाठान्तरम् । **अविवेकप्रतियोगित्वेनापी**त्यपिशब्देन प्रपञ्चोपादानत्वे-

शक्तेर्दाहात् । अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः । तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्; 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' ( बृ० ३।८।११ ) इति श्रुतेः । क्वचिदक्षरशब्दोदितम्; 'अक्षरात्परतः परः' ( मु० २।१।२ ) इति श्रुतेः । क्वचिन्मायेति सूचितम्; 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' ( श्वे० ४।१० ) इति मन्त्रवर्णात् ।

## भामती ।

विद्यापनीयते न जीवान्तरस्य; भिन्नाधिकरणयोर्विद्याविद्ययोरविरोधात्, तत्कुतः समस्तसंसारोच्छेदप्रसङ्गः ? प्रधानवादिनां त्वेष दोषः । प्रधानस्यैकत्वेन तदुच्छेदे सर्वोच्छेदोऽनुच्छेदे वा न कस्यचिदित्यनिर्मोक्षप्रसङ्गः । प्रधानाभेदेऽपि चैतदविवेकख्यातिलक्षणाविद्यासदसत्त्वनिबन्धनौ बन्धमोक्षौ, तर्हि कृतं प्रधानेन; अविद्यासदसद्भावाभ्यामेव तदुपपत्तेः । न च—अविद्योपाधिभेदाधीनो जीवभेदो जीवभेदाधीनश्चाविद्योपाधिभेद इति परस्पराश्रयादुभयासिद्धिरिति—सांप्रतम्; अनादित्वाद्बीजाङ्कुरवदुभयसिद्धेः । अविद्यात्वमात्रेण चैकत्वोपचारोऽव्यक्तमिति चाव्याकृतमिति चेति । नन्वेवमविद्यैव जगद्बीजमिति कृतमीश्वरेणेत्यत आह—**परमेश्वराश्रयेति** । नह्यचेतनं चेतनानधिष्ठितं कार्याय पर्याप्तमिति स्वकार्यं कर्तुं परमेश्वरं निमित्ततयोपादानतया चाश्रयते, प्रपञ्चविभ्रमस्य हीश्वराधिष्ठानत्वमहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम्, तेन यथाहिविभ्रमो रज्जूपादान एवं प्रपञ्चविभ्रम ईश्वरोपादानः, तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते, न त्वाधारतया; विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति । अत एवाह—**यस्यां स्वरूपप्रति-**

## वेदान्तकल्पतरुः ।

प्रधानेनेत्यर्थः । यद्यविद्या नाना, कथं तर्हि श्रुतावव्यक्तमित्येकवचनमित्यत आह—**अविद्यात्वेति** । **निमित्ततयेति** । प्रेरकतया अविद्याविषयत्वेन च तत्प्रेरकत्वं गन्धस्येव घ्राणं प्रति । **उपादानतयेति** । जगद्भ्रमाधिष्ठानतयेत्यर्थः । **विद्यास्वभावे इति** । "निरवद्य"मिति श्रुत्यवगतनिर्दोषज्ञानात्मत्वं विद्यास्वभावत्वम् । एवं चिद्रूपत्वं जीवेऽपि समम्, वाक्यजं प्रमारूपत्वमसिद्धमिति केषांचिदाक्षेपोऽनवकाशः । स्वरूपमविद्याश्रयो बिम्बं तु ब्रह्मनिरवद्यमिति किं न स्यादिति चेद्, न; बिम्बस्य स्वरूपातिरेके कल्पितत्वात्, अनतिरेके स्वरूपस्यैव निरवधित्वात् । मुखमात्रस्य तूपाधियोगः परिच्छिन्नत्वादविरुद्धः । **अपिच** दर्पणाद्युपाधेर्विषय एव मुखं नाश्रयः । न तु निर्विशेषब्रह्मस्वरूपस्याविद्यासंबन्धसंभवः इत्य-

## कल्पतरुपरिमलः ।

नापि प्रधानं नाभ्युपगन्तव्यम्; प्रपञ्चस्याविद्याविषयब्रह्मविवर्तत्वप्रतिपादनादिति दर्शयति—**निरवद्यमितीति** । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन"मिति श्रुतिः । **निर्दोषेति** । न च दोषवाच्यवद्यशब्दोऽयमज्ञानमपहाय शोकादिमात्रे संकुचितवृत्तिः कल्पयितुं युक्तः; साक्षाच्च "निरनिष्टो निरवद्यः शोकं मोहमत्येति नित्यमुक्तः' इति मोहशब्दिताज्ञानानाश्रयत्वं श्रूयते, नित्यमुक्त इति बन्धकराहित्योक्त्या च तदेव स्थिरीक्रियते । अज्ञानमेव हि मूलभूतं बन्धकम् । एवं ज्ञाज्ञौ द्वावजावीशानीशाविति श्रुतिरपि जीव एवाज्ञानाश्रयो न ब्रह्मेत्यत्र प्रमाणम् । मायिनं तु महेश्वरमिति श्रुताविनिप्रत्ययस्तु गृही धनी रथीत्यादाविव संबन्धान्तरविषयत्वेन चरितार्थः । **बिम्बं त्विति** । तथा च बिम्बभूतेश्वरविषया निरवद्यत्वादिश्रुतिः, जीवस्याज्ञत्वश्रुतिस्तत्त्वज्ञानकार्यभयशोकादिभाक्त्वपरेति भावः । **स्वरूपस्यैवेति** । बिम्बस्य स्वरूपानतिरेके बिम्बस्य यन्निरवद्यत्वं तत्स्वरूपस्यैवेति पर्यवसितमिति स्वरूपस्याविद्याश्रयत्वं न युक्तम्, बिम्बप्रतिबिम्बानुगतस्वरूपस्याविद्याश्रयत्वे च बिम्बस्य निरवद्यत्ववचो रिक्तमेव स्यादिति भावः । **ननु** मुखप्रतिमुखानुगतमुखमात्रस्योपाध्याश्रयत्वेऽपि यथा न बिम्बस्योपाधिसंसर्गः, तथेहापि स्यादित्याशङ्क्याह—**मुखमात्रस्य त्विति** । **ननु** परिच्छिन्नत्वमप्रयोजकमित्यपरितोषाद् वस्तुतस्तत्रापि मुखमात्रस्य नोपाधिसंसर्गः; बिम्बे तत्संसर्गाप्रतीतेः, किं तूपाधिविषयतामात्रमित्याह—**अपि चेति** । **मुखमात्रस्य त्विति** । प्रागवतारितोऽधस्तनग्रन्थः केषु चित्कोशेषु **अपि चेति** ग्रन्थमध्ये **न त्वित्य-**तः प्राक् पठ्यते, तस्मिन्पाठे मुखमात्रस्योपाधिसंसर्ग इत्येतदभ्युपेत्यापि प्रकृते तन्न्यायानवतारहेतुं वैषम्यं दर्शयितुमयं ग्रन्थ इति योजनीयम् । **परिच्छिन्नत्वादिति** । **नन्व**प्रयोजकमिदं वैषम्ये; परिच्छिन्नवदपरिच्छिन्नस्याप्युपाधिसंसर्गसंभवादित्याशङ्क्याह—**न त्विति** । **अयमाशयः**—निर्विशेषे यत्काल्पनिकं विशेषं संपादयति तत्स्वकल्पितविशेषोपहित एव संसृज्यते, यथा प्रदेशभेदरहिते नभस्यवकाशात्मके संसृज्यमानो घटः स्वावच्छेदकृतप्रदेशभेदोपहित एव तस्मिन् संसृज्यते, प्राच्यादिदिग्विभागोपाधयश्चोदयादिदशापन्नतपनादयः स्वावच्छेदकृतविभागोपहित एव प्राच्यादिदिग्विशेषे संसृज्यन्ते, कालोपाधयश्च नयनपरिस्पन्दादयः स्वावच्छेदकृतवर्तमानादिभेदोपहित एव कालविशेषे संसृज्यन्ते, तत एव खल्विह घटो न तत्र, प्राच्यां तपनो न प्रतीच्याम्; इदानीमयमस्ति न प्रागासीत्, इत्यादिव्यवहारः । एवमिहाप्ययमज्ञो न त्वीश्वरः

## वेदान्तकल्पतरुः।

नादिन्यौ जीवाविद्ये परस्पराधीनतया अविद्यातत्संबन्धवदुपेये इति। **ये त्वाहुः**—ब्रह्मणो जीवभ्रमगोचरस्याधिष्ठानतयोपादानत्वे सोऽकामयत स्वयमकुरुतेति च न स्यात्, प्रतिजीवं च भ्रमासाधारण्याद् जगत्साधारण्यानुभवविरोधः, भ्रमजस्य चाकाशादेरज्ञातसत्त्वायोगः, तस्मादीश्वरस्य प्रतिबिम्बधारिणी साधारणी माया। तद्यथश्च जीवोपाधयोऽविद्या मन्तव्याः—**इति**। तान् प्रति ब्रूमः। अकामयताकुरुतेति च कामकृती जीवाविद्याविवर्तः। नच ब्रह्मविक्रिया; विवर्तश्च विवर्ते हेतुः सर्प इव विसर्पणस्य। प्रतिमाणवककवर्त्यविद्याभिर्वर्णेषु स्वरादिवैशिष्ट्येन क्लृप्तम्। स्वोपाध्यायवक्त्रोद्गतवेदस्येव प्रपञ्चसाधारण्यप्रसिद्धिः। अधिष्ठानवर्णसाधारण्यात्तत्साधारण्यं प्रस्तुतेऽपि समं सर्वप्रत्यक्त्वाद् ब्रह्मणः। अज्ञातसत्त्वं प्रपञ्चस्य व्यावहारिकसत्त्वात्। न च जीवाविद्याजत्वे तदयोगः; स्वेन्द्रियादिवदुपपत्तेः। यत्तु जीवस्य मनोवच्छिन्नत्वं भूतसूक्ष्मावच्छिन्नत्वं च दूषितम्, तदस्मदिष्टमेव चेष्टितम्; अस्माभिर्जीवस्यानाद्यविद्यावच्छेदाभ्युपगमादिति। **अपि च—न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यता। अवच्छेदान्न तज्ज्ञानात्सर्वविज्ञानसंभवः॥ अधिष्ठाने तु जैवीभिरविद्याभिरपावृते। जगद्भ्रमप्रसिद्धौ किं साधारण्येह मायया॥** ग्रहीतृस्थाया अप्यविद्याया ग्राह्ये स्वसमजडावभासहे-

## कल्पतरुपरिमलः।

ज्ञाऽज्ञौ द्वौ द्वावजावित्यादिलौकिकवैदिकव्यवहारदर्शनादज्ञानकृतभेदोपहिते जीवे एवाज्ञानं संसृज्यत इति युक्तम्। न च—अज्ञानस्य जीवाश्रयत्वे बन्धमोक्षयोर्वैयधिकरण्यापातः, मोक्षदशायां जीवत्वाभावेन मोक्षस्य स्वरूपाश्रितत्वादिति—वाच्यम्; ब्रह्मण्यनतिप्रसङ्गार्थं जीवत्वोपधानमर्यादाभ्युपगमेऽप्यज्ञानस्य तदुपहितस्वरूपाश्रितत्वानपायात्, न हि स्वकृतभेदोपहिताकाशदिक्कालाश्रया घटादयो नाकाशाद्याश्रयाः। **एतेन** शाखावच्छिन्ने वृक्षे कपिसंयोगवदन्यावच्छेदकृतभेद एवाश्रयेऽन्यस्यासंकीर्णावस्थितिरुपपादनीया, न स्वावच्छिन्ने एव आत्माश्रयादित्यादिशङ्का **दूरनिरस्ता वेदितव्या। किंच** कपिसंयोगादिष्वपि स्वावच्छेदकृतभेदोपधानमेवाश्रयितुं युक्तम्। शाखावच्छेदेऽपि सैव गतिराश्रयणीया; अन्यथाऽनवस्थाद्यापत्तेरिति। **तस्मादीश्वरस्य प्रतिबिम्बधारिणीति**। तथा चेश्वरस्य चोपाधिमायापरिणामरूपे कामकृती, परिणामश्च प्रपञ्चः सर्वसाधारणः अज्ञातसत्तायोगी चेत्युपपद्यत इति भावः। **जीवाविद्याविवर्त इति**। जीवाविद्याविषयेश्वरविवर्त इत्यर्थः। **ब्रह्मविक्रियेति**। न ब्रह्मोपाधिमायापरिणाम इत्यर्थः। **प्रतिमाणवकेति**। वर्णेषु यद् ध्वनिगतोदात्तादिवैषम्यं प्रतिमाणवकवर्त्यविद्याकृतं तद्वैशिष्ट्येन क्लृप्तमस्येति वेदविशेषणम्। इदमुपलक्षणं शुक्तिरजतादिसाधारण्यप्रसिद्धेरपि। यदि तत्र युगपद्भ्राम्यद्बहुपुरुषाविद्याकृतमेकमेव रजतं कस्यचिद् भ्रमनिवृत्तौ पुनर्भ्रमानुवृत्तिस्तदा तदितरसकलपुरुषाविद्याकृतं रजतान्तरमिति साधारण्यमुपपाद्यते तदा स एव न्यायः प्रपञ्चे योजनीयः। तदिदमाह—**अधिष्ठानेति**। वर्णग्रहणं शुक्त्यादेरप्युपलक्षणम्। **नन्व**धिष्ठानैक्यं प्रपञ्चे नास्ति; वियदाद्यधिष्ठानब्रह्मैक्येऽपि तत्तद्देहेन्द्रियाद्यधिष्ठानजीवभेदात् देहेन्द्रियादिकं हि जीवाधिष्ठानकम्; अत एव ज्योतिरधिकरणे (व्या. सू. अ. २ पा. ४ सू. १४।) टीका कौक्षेयं हि ज्योतिर्जीवभावेनानुप्रविष्टस्य परमात्मनो विकारो जीवाभावे देहस्य शैत्याज्जीवतश्चौष्ण्याज्ज्ञायत इति। अयं न्यायो देहादावपि तुल्यः; जीवोत्क्रमणे देहादिविशरणदर्शनात्। तस्मादधिष्ठानैक्याभावाद् नेह साधारण्यमुपपद्यत इत्याशङ्क्याह—**सर्वप्रत्यक्त्वादिति**। वस्तुतोऽधिष्ठानैक्यमिहाप्यस्तीति भावः। **स्वेन्द्रियादिवदिति**। न हि मायिकत्वं व्यावहारिकसत्त्वे प्रयोजकत्वेन क्लृप्तमाविद्यकत्वं तु तथापि तथा क्लृप्तमेवेन्द्रियादाविति भावः। **न मायाप्रतिबिम्बस्येति। ननु**—इदं दूषणं स्वमतेऽपि तुल्यम्; न हि स्वमते नास्ति सविशेष ईश्वरः न च तस्य मुक्तप्राप्यत्वं तज्ज्ञानात्सर्वविज्ञानं चास्ति, अस्ति चेन्मायाप्रतिबिम्बस्यैवास्तु, कोन्वत्र विशेषः। न च—अविद्याप्रतिबिम्बस्य जीवस्याविद्योच्छेदे तत्प्रतिबिम्बभावो गच्छति परं, न प्रतिबिम्बान्तरभावो भवति। एकप्रतिबिम्बविज्ञानाच्च न सर्वप्रतिबिम्बतद्धर्मविशेषविज्ञानं भवतीत्यस्ति विशेष इति—वाच्यम्, कूपमध्यनिहितघटजलान्तर्गतसवितृकरमण्डलप्रतिबिम्बस्य घटनाशे कूपजलप्रतिबिम्बतापत्तिवद् व्यष्ट्यविद्याप्रतिबिम्बस्याविद्यानाशे व्यापकसमष्टिमायाप्रतिबिम्बतापत्तिसंभवाद् व्यापकोपाधिप्रतिबिम्बे व्यष्ट्युपाधिप्रतिबिम्बानामन्तर्भूतत्वेन तज्ज्ञानात् सर्वविज्ञानोपपादनसंभवाच्चेति—**चेत्, उच्यते;** मायोपाधिः किमर्थं कल्पनीयः किं मायाप्रतिबिम्ब एव मुक्तप्राप्यत्वसर्वविज्ञानश्रुतिविषयो वाच्य इति तद्विषयलाभार्थमुत जगद्भ्रमोपयोग्यधिष्ठानावरणसिद्ध्यर्थमिति विकल्पद्वयनिरासार्थं श्लोकद्वयम्। निर्विशेषब्रह्मभावप्राप्तिः परममुक्तिरित्यङ्गीकारान्मायाप्रतिबिम्बस्य मुक्तप्राप्यतैव नेष्यते; अधिष्ठानज्ञानेन तदध्यस्तसर्वविज्ञानस्योपपादनीयत्वात्। प्रतिबिम्बस्याध्यस्तत्वनियमेन मायाप्रतिबिम्बस्याप्यध्यस्ततया तस्य महाकाशरीत्याऽनवच्छिन्नस्य ब्रह्मण इवाधिष्ठानत्वायोगात्तज्ज्ञानतः सर्वविज्ञानं न संभवतीति न तदुभयश्रुतिविषयलाभार्थं मायोपाधिः कल्प्य इति प्रथमश्लोकार्थः। अधिष्ठानावरणमन्धकारवद्विषयाश्रितेनैवेति न नियमः; नयनपटलवद् ग्रहीतृगतेनापि तदुपपत्तेरिति द्वितीयश्लोकार्थः। भ्रमे कर्तृदोषवद्विषयदोषेणापि भाव्यमिति तदर्थं मायावरणकल्पनमित्याशङ्क्य तन्नियमभङ्गमाह—

अव्यक्ता हि सा माया; तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् । तदिदं 'महतः परमव्यक्तम्' इत्युक्तमव्यक्तप्रभवत्वान्महतः, यदा हैरण्यगर्भी बुद्धिर्महान् । यदा तु जीवो महांस्तदाप्यव्यक्ताधीनत्वाज्जीवभावस्य महतः परमव्यक्तमित्युक्तम् । अविद्या ह्यव्यक्तम् । अविद्यावत्त्वेनैव जीवस्य सर्वः संव्यवहारः संततो वर्तते । महतः परत्वमभेदोपचारात्तद्विकारे शरीरे परिकल्प्यते । सत्यपि शरीरवदिन्द्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैवाभेदोपचारादव्यक्तशब्देन ग्रहणं, इन्द्रियादीनां स्वशब्दैरेव गृहीतत्वात्परिशिष्टत्वाच्च शरीरस्य । अन्ये तु वर्णयन्ति—द्विविधं हि शरीरं स्थूलं सूक्ष्मं च । स्थूलं यदिदमुपलभ्यते । सूक्ष्मं यदुत्तरत्र वक्ष्यते—'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' ( ब्र० ३।१।१ ) इति । तच्चोभयमपि शरीरमविशेषात्पूर्वत्र रथत्वेन संकीर्तितम् । इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते; सूक्ष्मस्याव्यक्तशब्दार्हत्वात् । तदधीनत्वाच्च बन्धमोक्षव्यवहारस्य जीवात्तस्य परत्वम् । यथार्थाधीनत्वादिन्द्रियव्यापारस्येन्द्रियेभ्यः परत्वमर्थानामिति । तैस्त्वेतद्वक्तव्यं, अविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन संकीर्तितत्वात्समानयोः प्रकृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव शरीरमिह गृह्यते न पुनः स्थूलमपीति । आम्नातस्यार्थं प्रतिपत्तुं प्रभवामो नाम्नातं पर्यनुयोक्तुम्, आम्नातं चाव्यक्तपदं सूक्ष्ममेव प्रतिपादयितुं शक्नोति नेतरद्व्यक्तत्वात्तस्येति चेत्, न; एकवाक्यताधीनत्वादर्थप्रतिपत्तेः । नहीमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कंचिदर्थं प्रतिपादयतः; प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् । न चाकाङ्क्षामन्तरेणैकवाक्यताप्रतिपत्तिरस्ति । तत्राविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायां यथाकाङ्क्षं संबन्धेऽनभ्युपगम्यमान एकवा-

---

## भामती ।

**बोधरहिताः शेरते संसारिणो जीवा इति** । यस्यामविद्यायां सत्यां शेरते जीवाः । जीवानां स्वरूपं वास्तवं ब्रह्म, तद्बोधरहिताः शेरत इति लय उक्तः । संसारिण इति विक्षेप उक्तः । **अव्यक्ताधीनत्वाज्जीवभावस्येति** । यद्यपि जीवाव्यक्तयोरनादित्वेनानियतं पौर्वापर्यम्; तथाप्यव्यक्तस्य पूर्वत्वं विवक्षित्वैतदुक्तम् । **सत्यपि शरीरवदिन्द्रियादीनामिति** । गोबलीवर्दपदवदेतद्द्रष्टव्यम् । आचार्यदेशीयमतमाह—**अन्ये त्विति** । एतद्दूषयति—**तैस्त्विति** । प्रकरणपारिशेष्ययोरुभयत्र तुल्यत्वान्नैकग्रहणनियमहेतुरस्ति । शङ्कते—**आम्नातस्यार्थमिति** । अव्यक्तपदमेव स्थूलशरीरव्यावृत्तिहेतुर्व्यक्तत्वात्तस्येति शङ्कार्थः । निराकरोति—**न** । **एकवाक्यताधीनत्वादिति** । प्रकृतहान्यप्रकृतप्रक्रियाऽप्रसङ्गेनैकवाक्यत्वे संभवति न वाक्यभेदो युज्यते । न चाकाङ्क्षां विनैकवाक्यत्वम्, उभयं च प्रकृतमित्युभयं ग्राह्यत्वेनेहाकाङ्क्षितमित्येकाभिधायकमपि पदं शरीरद्वयपरम् । नच मुख्यया वृत्त्याऽतत्परमित्यौपचारिकं न भवति । यथोपहन्तृमात्रनिराकरणाकाङ्क्षायां काकपदं प्रयुज्यमानं श्वादिसर्वोपहन्तृपरं विज्ञायते । **यथाहुः**—'काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि नोदितः । उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥' इति । **ननु**—शरीरद्वयस्यात्राकाङ्क्षा, किंतु दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्य नतु षाट्कौशिकस्य स्थूलस्य । एतद्धि दृष्टबीभत्सतया सुकरं वैराग्यविषयत्वेन शोधयितुमित्यत

## वेदान्तकल्पतरुः ।

तुल्यमविरुद्धम्, पीतस्येव शङ्खे पीतिमप्रतिभासहेतुतेति विशदमशेषम् । यत एव ब्रह्माविद्याविषयोऽत एव ब्रह्मविषयबोधराहित्यं जीवानामाहेत्यर्थः । उपाधिभूताविद्यैवाप्रबोधेऽपि हेतुरित्याह—**सत्यामिति** । जीवाव्यक्तयोरनादित्वेन नियतं पौर्वापर्यं नास्तीति न पौर्वापर्यं न च तन्नियम इति यद्यपि; तथापि जीवत्वनियामकेऽव्यक्ते पूर्वत्वमुपचरितमित्यर्थः । यथा बलीवर्दमानयेत्युक्त्वा गामानयेति प्रयोगे गोपदमितरगोविषयमेवमव्यक्तपदमित्यर्थः । **प्रकृतेति** । अप्रसङ्गेनेति च्छेदः । अव्यक्तपदस्य स्थूले देहे मुख्यत्वाभावादौपचारिकत्वं स्यान्न च तद्युक्तम् । सकृच्छ्रुतस्य सूक्ष्मस्थूलदेहविषयतया मुख्यगौणत्वे वैरूप्यापातादत आह—**न च मुख्ययेति** । अतत्परमिति च्छेदः । अन्नोपघातिनिराकरणाकाङ्क्षायां वक्तुस्तत्प्रयुक्तकाकपदं

## कल्पतरुपरिमलः ।

**पित्तस्येवेति** । जीवाविद्ययोः पौर्वापर्याभावेऽपि तदध्यासयोस्तदस्तित्वात्याशङ्क्य तन्नियमो नास्ति बीजाङ्कुरवदनादित्वादित्याह—**पौर्वापर्यं चेति** । **अप्रसङ्गेनेति च्छेद इति** । तथा च प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गपरिहारेणैकवाक्यत्वं संभवतीत्यव्यवहितान्वयो लभ्यत इति भावः । तृतीयान्तस्य न वाक्यभेदो युज्यत इति व्यवहितेनान्वये तु न प्रश्लेषः । **अन्नोपघातीति** । सूक्ष्मशरीर एवाव्यक्तपदप्रवृत्तिनिमित्तमस्तीति वदता किं तत्प्रवृत्तिनिमित्तमिष्यते । यदि भाष्योक्तं तत्त्वातत्त्वाभ्यामनिर्वाच्यत्वम्, तर्हि तत् साक्षाद् अविद्यायामेव । यदि तत्परिणामत्वात् सूक्ष्मशरीरेऽपि तर्हि तत्

क्यतैव बाधिता भवति। कुत आम्नातस्यार्थप्रतिपत्तिः? न चैवं मन्तव्यं दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्येह ग्रहणं, स्थूलस्य तु दृष्टबीभत्सतया सुशोधत्वादग्रहणमिति; यतो नैवेह शोधनं कस्यचिद्विवक्ष्यते। नह्यत्र शोधनविधायि किंचिदाख्यातमस्ति। अनन्तरनिर्दिष्टत्वात्तु किं तद्विष्णोः परमं पदमितीदमिह विवक्ष्यते। तथाहीदमस्मात्परमिदमस्मात्परमित्युक्त्वा 'पुरुषान्न परं किंचित्' इत्याह। सर्वथापि त्वानुमानिकनिराकरणोपपत्तेस्तथा नामास्तु, न नः किंचिच्छिद्यते॥ ३॥

## ज्ञेयत्वावचनाच्च॥ ४॥

ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते गुणपुरुषान्तरज्ञानात्कैवल्यमिति वदद्भिः। नहि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुषस्यान्तरं शक्यं ज्ञातुमिति। क्वचिच्च विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति स्मरन्ति। न चेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते। पदमात्रं ह्यव्यक्तशब्दः। नेहाव्यक्तं ज्ञातव्यमुपासितव्यं चेति वाक्यमस्ति। न चानुपदिष्टपदार्थज्ञानं पुरुषार्थमिति शक्यं प्रतिपत्तुम्। तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते। अस्माकं तु रथरूपकक्लृप्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इत्यनवद्यम्॥ ४॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात्॥ ५॥

अत्राह सांख्यः—'ज्ञेयत्वावचनात्' इत्यसिद्धम्। कथम्? श्रूयते ह्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनम्—'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते॥' (का० २।३।१५) इति। अत्र हि यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितं तादृशमेव निचाय्यत्वेन निर्दिष्टं, तस्मात्प्रधानमेवेदं, तदेव चाव्यक्तशब्दनिर्दिष्टमिति। अत्र ब्रूमः—नेह प्रधानं निचाय्यत्वेन निर्दिष्टम्। प्राज्ञो हीह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते। कुतः? प्रकरणात्। प्राज्ञस्य हि प्रकरणं विततं वर्तते; 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यादिनिर्देशात्, 'एषु सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' इति च दुर्ज्ञातत्ववचनेन तस्यैव ज्ञेयत्वाकाङ्क्षणात्, 'यच्छेद् वाङ्मनसि प्राज्ञः' इति च तज्ज्ञानायैव वागादिसंयमस्य विहितत्वात्, मृत्युमुखप्रमोक्षणफलत्वाच्च। नहि प्रधानमात्रं निचाय्य मृत्युमुखात्प्रमुच्यत इति सांख्यैरिष्यते। चेतनात्मविज्ञानाद्धि मृत्युमुखात्प्रमुच्यत इति तेषामभ्युपगमः। सर्वेषु वेदान्तेषु प्राज्ञस्यैवात्मनोऽशब्दादिधर्मत्वमभिलप्यते। तस्मान्न प्रधानस्यात्र ज्ञेयत्वमव्यक्तशब्दनिर्दिष्टत्वं वा॥ ५॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च॥ ६॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा। यस्मात्त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन्ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते। तद्विषय एव च प्रश्नः। नातोऽन्यस्य प्रश्न उपन्यासो वास्ति। तत्र तावत् 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो

भामती।

आह—न चैवं मन्तव्यमिति। विष्णोः परमं पदमवगमयितुं परं परमत्र प्रतिपाद्यत्वेन प्रस्तुतं न तु वैराग्याय शोधनमित्यर्थः। अलं वा विवादेन, भवतु सूक्ष्ममेव शरीरं परिशोध्यं, तथापि न सांख्याभिमतमत्र प्रधानं परमित्यभ्युपेत्याह—सर्वथापि त्विति॥ ३॥ इतोऽपि नायमव्यक्तशब्दः सांख्याभिमतप्रधानपरः। सांख्यैः खलु प्रधानाद्विवेकेन पुरुषं निःश्रेयसाय ज्ञातुं च विभूत्यै च प्रधानं ज्ञेयत्वेनोपक्षिप्यते। न चेह जानीयादिति चोपासीतेति वा विधिविभक्तिश्रुतिरस्ति, अपि त्वव्यक्तपदमात्रम्। न चैतावता सांख्यस्मृतिप्रत्यभिज्ञानं भवतीति भावः॥ ४॥ ज्ञेयत्वावचनस्यासिद्धिमाशङ्क्य तत्सिद्धिप्रदर्शनार्थं सूत्रम्—वदतीति चेन्न प्राज्ञो हि प्रकरणात्। निगदव्याख्यातमस्य भाष्यम्॥ ५॥ वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादवाक्यप्रवृत्तिरासमाप्तेः कठवल्लीनां लक्ष्यते। मृत्युर्नचिकेतसे कुपितेन पित्रा प्रहिताय तुष्टस्त्रीन्वरान् प्रददौ, नचिकेतास्तु प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्याम्, तृतीयेनात्मविद्याम्; 'वराणामेष वरस्तृतीयः' इति वचनात्, नतु तत्र वरप्रदाने प्रधानगोचरे स्तः प्रश्नप्रतिवचने। तस्मात्कठवल्लीष्वग्निजीवपरमात्मपरैव वाक्यप्रवृत्तिर्न त्वनुपक्रान्तप्रधानपरा भवितुमर्हतीत्याह—इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वमिति। 'हन्त त इदं

प्रब्रूहि तं श्रद्दधानाय मह्यम्' ( का० १।१।१३ ) इत्यग्निविषयः प्रश्नः । 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । तद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥' ( का० १।१।२० ) इति जीवविषयः प्रश्नः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥' ( का० १।२।१४ ) इति परमात्मविषयः । प्रतिवचनमपि 'लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।' ( का० १।१।१५ ) इत्यग्निविषयम् । 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥' ( का० २।५।६,७ ) इति व्यवहितं जीवविषयम् । 'न जायते म्रियते वा विपश्चित्' ( का० १।२।१८ ) इत्यादिबहुप्रपञ्चं परमात्मविषयम् । नैवं प्रधानविषयः प्रश्नोऽस्ति । अपृष्टत्वाच्चानुपन्यसनीयत्वं तस्येति । अत्राह—योऽयमात्मविषयः प्रश्नो येयं प्रेते विचिकित्सा मनुष्येऽस्तीति, किं स एवायम् 'अन्यत्र धर्मादन्यत्राधर्मात्' इति पुनरनुकृष्यते, किंवा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यत इति । किं चातः ? स एवायं प्रश्नः पुनरनुकृष्यत इति यद्युच्येत, द्वयोरात्मविषययोः प्रश्नयोरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्रश्नावित्यतो न वक्तव्यं त्रयाणां प्रश्नोपन्यासाविति । अथान्योऽयमपूर्वः प्रश्न उत्थाप्यत इत्युच्येत, ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोष एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति । अत्रोच्यते—नैवं वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कंचित्कल्पयामो

## भामती ।

प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्' इत्यनेन व्यवहितं जीवविषयं 'यथा तु मरणं प्राप्यात्मा भवति गौतम' इत्यादि प्रतिवचनमिति योजना । **अत्राह चोदकः**—किं जीवपरमात्मनोरेक एव प्रश्नः, किं वान्यो जीवस्य 'येयं प्रेते' मनुष्य इति प्रश्नः, अन्यश्च परमात्मनः 'अन्यत्र धर्मात्' इत्यादिः । एकत्वे सूत्रविरोधस्त्रयाणामिति । भेदे तु सौमनस्यावाप्त्यग्न्यात्मज्ञानविषयवरत्रयप्रदानान्तर्भावोऽन्यत्र धर्मादित्यादेः प्रश्नस्य । तुरीयवरान्तरकल्पनायां वा तृतीय इति श्रुतिबाधप्रसङ्गः । वरप्रदानानन्तर्भावे प्रश्नस्य तद्वत् प्रधानाख्यानमप्यनन्तर्भूतं वरप्रदानेऽस्तु, महतः परमव्यक्तमित्याक्षेपः । परिहरति—**अत्रोच्यते, नैवं वयमिहेति** । वस्तुतो जीवपरमात्मनोरभेदात्प्रष्टव्याभेदेनैक एव प्रश्नः ।

## वेदान्तकल्पतरुः ।

काकगतोपघातकत्वं लक्षयद्यथा काकतदितरसाधारणमेवं पुरुषपरत्वप्रतिपत्त्यर्थं तुल्यवदाकाङ्क्षितप्रस्तुतशरीरद्वयं छत्रिन्यायेन लक्षयत्यव्यक्तपदं न सूक्ष्ममेवाभिधत्त इत्यर्थः । पूर्वं मायाभिधानद्वारा शरीरलक्षणोक्ता, इदानीं तु सूक्ष्मशरीराभिधानद्वारेण, एवमपि हि प्रधानं निरस्तं भवतीति । त्वङ्मांसरुधिराणि मातृतः । अस्थिस्नायुमज्जानः पितृतः । एतैः षड्कोशैरारब्धं षाट्कौशिकम् ॥३॥४॥५॥ व्यवहितं जीवविषयं प्रतिवचनमिति भाष्यस्थव्यवहितपदार्थमाह—**इत्यनेनेति** । हन्तेत्यादि सनातनमित्यन्तं परमात्मप्रतिवचनप्रतिज्ञावाक्यं तेन व्यवहितं यथेत्यादि जीवप्रश्नस्य प्रतिवचनमित्यर्थः । प्रश्नाभेदे दूषणमाह—**एकत्वे इति** । अग्न्यात्मविषयोर्द्वित्वात्सूत्रस्थत्रिशब्दविरोध इत्यर्थः । परमात्मप्रश्नस्य जीवप्रश्नाद्भेदे पितुः सौमनस्याग्निज्ञानात्मज्ञानविषयं यद्वरत्रयप्रदानं तत्रानन्तर्भावोऽन्यत्र धर्मादित्यादेः स्याच्चतुर्थत्वादित्यर्थः । अथ प्रश्नान्यथानुपपत्त्या वरान्तरं कल्प्येत, तत्राह—**तुरीयेति** । सन्तु त्रयो वराः परमात्मप्रश्नस्तेष्वनन्तर्भूतोऽस्तु यथा सृङ्कां च गृहाणेत्यवृतामपि रत्नमालां प्रीत्या ददौ नेत्याह—**वरप्रदानानन्तर्भावे इति** । महतः परमव्यक्तमिति प्रधानाख्यानमस्त्विति योजना । सृङ्कां चेति च शब्द

## कल्पतरुपरिमलः ।

स्थूलशरीरेऽपि स्यादित्यविशिष्टमव्यक्तपदस्य शरीरद्वयेऽपि मुख्यत्वम् । यदि प्रत्यग्भिन्नत्वेन तदभिन्नत्वेन वा स्पष्टत्वं तत्प्रवृत्तिनिमित्तमिष्यते; तदा स्थूलशरीर एव तन्मुख्यं स्यात् स्थूलोऽहं मम शरीरमित्युभयथापि प्रतीत्या तत्रैव प्रत्यग्भेदाभेदास्पष्टतासत्त्वात् । यदि प्रत्यक्षागोचरत्वं तत्प्रवृत्तिनिमित्तमिष्यते, तदा टीकातद्व्याख्यानयोरजहल्लक्षणोक्तेति द्रष्टव्यम् ॥३॥४॥५॥ स्नायवः सिराः मज्जाऽस्थिगतस्नेह इत्यनेनेत्यस्य टीकाप्रतीकस्य व्यवधायकविषयत्वेऽपि व्यवहितपदार्थमाहेति तदवतारणं यथेत्यादिप्रतिवचनं व्यवहितमित्येतदेव युक्तम्, हन्तेत्याद्यर्धमात्रस्य व्यवधायकत्वोक्तिस्तु न हृदयङ्गमा । "येयं प्रेते" इति मन्त्रानन्तरमाम्नातं 'देवैरत्रापि विचिकित्सितं पुरे"ति मन्त्रमुपक्रम्य प्रवृत्तस्य "यस्मिन्नेतावुपाश्रिता"-वित्यन्तस्य हन्तेत्यतः प्राचीनस्य महतः परमात्मविषयस्य प्रपञ्चस्य व्यवधायकस्य सत्त्वादित्यभिप्रेत्य । एवं च भाष्ये हन्तेत्याद्यर्धं व्यवधायकसमर्पकतया क्लेशेन न योजनीयं, किंतु यथेत्यादिवज्जीवविषयान्तर्गततयैव योजनीयम् । यथेत्यादिना जीवं प्रस्तुत्य—"तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥" इत्यादिना जीवस्यैव ब्रह्मभावोपदेशेन तस्यापि ब्रह्मवचनप्रतिज्ञासंस्पर्शात् । **चशब्द एवेति** । **ननु** चशब्दो वृतावृतसमुच्चयार्थो

वाक्योपक्रमसामर्थ्यात् । वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिरा समाप्तेः कठवल्लीनां लक्ष्यते । मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन्वरान्प्रददौ । नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे । द्वितीयेनाग्निविद्याम्, तृतीयेनात्मविद्याम्, 'येयं प्रेते' इति; 'वराणामेष वरस्तृतीयः' ( का० १।१।२० ) इति लिङ्गात् । तत्र यद्यन्यत्र धर्मादित्यन्योऽयमपूर्वः प्रश्नः उत्थाप्येत, ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत । ननु—प्रष्टव्यभेदादपूर्वोऽयं प्रश्नो भवितुमर्हति, पूर्वो हि प्रश्नो जीवविषयः; येयं प्रेते विचिकित्सा मनुष्येऽस्ति नास्तीति विचिकित्साभिधानात् । जीवश्च धर्मादिगोचरत्वान्नान्यत्र धर्मादिति प्रश्नमर्हति । प्राज्ञस्तु धर्माद्यतीतत्वादन्यत्र धर्मादिति प्रश्नमर्हति । प्रश्नच्छाया च न समाना लक्ष्यते; पूर्वस्यास्तित्वनास्तित्वविषयत्वादुत्तरस्य धर्माद्यतीतवस्तुविषयत्वात् । तस्मात्प्रत्यभिज्ञानाभावात्प्रश्नभेदः, न पूर्वस्यैवोत्तरत्रानुकर्षणमिति—चेत्, न, जीवप्राज्ञयोरेकत्वाभ्युपगमात् । भवेत्प्रष्टव्यभेदात्प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात्स्यात् । न त्वन्यत्वमस्ति; तत्त्वमसीत्यादिश्रुत्यन्तरेभ्यः । इह चान्यत्र धर्मादित्यस्य प्रश्नस्य प्रतिवचनं 'न जायते म्रियते वा विपश्चित्' इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति । सति हि प्रसङ्गे प्रतिषेधो भागी भवति । प्रसङ्गश्च जन्ममरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति न परमेश्वरस्य । तथा—'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥' ( का० २।४।४ ) इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन्न प्राज्ञादन्यो जीव इति दर्शयति । प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः । तथाग्रे—'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' ( छा० २।४।१० ) इति जीवप्राज्ञभेददृष्टिमपवदति । तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरम् 'अन्यं वरं नचिकेतो वृणीष्व' इत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल, तदैनं मृत्युरभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च 'विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त' ( का० १।२।४ ) इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन्नुवाच— 'तं दुर्दर्शं गूढमनु प्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥' ( का० १।२।१२ ) इति, तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते । यत्प्रश्ननिमित्तां च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेता यदि तं विहाय प्रशंसानन्तरमन्यमेव प्रश्नमुपक्षिपेदस्थान एव सा सर्वा प्रशंसा प्रसारिता स्यात् । तस्मात् 'येयं प्रेते' इत्यस्यैव प्रश्नस्यैतदनुकर्षणम् 'अन्यत्र धर्मात्' इति । यत्तु प्रश्नच्छायावैलक्षण्यमुक्तं तद-

## भामती ।

अत एव प्रतिवचनमप्येकम् । सूत्रं त्ववास्तवभेदाभिप्रायम् । वास्तवश्च जीवपरमात्मनोरभेदस्तत्र तत्र श्रुत्युपन्यासेन भगवता भाष्यकारेण दर्शितः । तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्येत्यादि । 'येयं प्रेते' इति हि नचिकेतसः प्रश्नमुपश्रुत्य तत्तत्कामविषयमलोभं चास्य प्रतीत्य मृत्युः 'विद्याभीप्सिनं नचिकेतसं मन्ये' इत्यादिना नचिकेतसं प्रशस्य प्रश्नमपि तदीयं प्रशंसन्नस्मिन्प्रश्ने ब्रह्मैवोत्तरमुवाच—तं दुर्दर्शमिति । यदि पुनर्जीवात्प्राज्ञो भिद्येत, जीवगोचरः प्रश्नः, प्राज्ञगोचरं चोत्तरमिति किं केन संगच्छेत । अपिच यद्विषयं प्रश्नमुपश्रुत्य मृत्युनैष प्रशंसितो नचिकेताः यदि तमेव भूयः पृच्छेत्तदुत्तरे चावदध्यात्, ततः प्रशंसा दृष्टार्था स्यात्, प्रश्नान्तरे त्वसावस्थाने प्रसारिता सत्यदृष्टार्था स्यादित्याह—यत्प्रश्नेति ।

## वेदान्तकल्पतरुः ।

एवाऽन्नैव माला दत्तेति गमयति, नैवं महतः परमित्यत्र । अतो वरप्रदानानुसारेणैवार्थप्रतिपादनम् । एक एव सन् देहादिव्यतिरेकधर्माद्यत्ययप्रवृत्तभेदाद् द्विःकृतः प्रश्न इत्यर्थः । अत एवेति । जीवपरयोरभेदादित्यर्थः । शतायुषः पुत्रपौत्रान् वृणीष्वेत्यादिस्तत्तत्कामः । त्वादृङ् नो भूयान्नचिकेतः प्रष्टेति विशेषणपरत्वात्तदीयप्रश्नप्रशंसा । जीवे पृष्टे तं दुर्दर्शमिति तद्व्यतिरिक्तपरमात्मप्रतिवचनमात्मप्रश्ने कोविदारप्रतिवचनवदसङ्गतम् । अत एव जीवप्रश्नतत्कर्तृप्रशंसापि जीवस्य परमात्माभेदप्रमित्यर्थत्वेन दृष्टार्था स्यादित्याह—यदि पुनरिति । एवं प्रतिवक्तृप्रवृत्त्या जीवपराभेदं साधयित्वा शब्दप्रवृत्त्यापि साधयति—अपि चेत्यादिना । तदुत्तरे तस्य प्रश्नस्योत्तरे । तमेव विषयं यद्यवदध्याज्जानीयादित्यर्थः । यत्प्रश्नेति भाष्ये यच्छब्दो विषयपरो न प्रश्नपरः । विषयगौरवाद्धि प्रश्नप्रशंसेत्याह—यस्मिन्निति ॥ ६ ॥

दूषणम्; तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात्। पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनोऽस्तित्वं पृष्टमुत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति यावद्ध्यविद्या न निवर्तते तावद्धर्मादिगोचरत्वं जीवस्य जीवत्वं च न निवर्तते। तन्निवृत्तौ तु प्राज्ञ एव तत्त्वमसीति श्रुत्या प्रत्याय्यते। न चाविद्यावत्त्वे तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति। यथा कश्चित्संतमसे पतितां कांचिद्रज्जुमहिं मन्यमानो भीतो वेपमानः पलायते, तं चापरो ब्रूयान्मा भैषीर्नायमही रज्जुरेवेति। स च तदुपश्रुत्याहिकृतं भयमुत्सृजेद्वेपथुं पलायनं च नत्वहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्यात्। तथैवैतदपि द्रष्टव्यम्। ततश्च 'न जायते म्रियते वा' इत्येवमाद्यपि भवत्यस्तित्वप्रश्नस्य प्रतिवचनम्। सूत्रं त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यम्। एकत्वेऽपि ह्यात्मविषयस्य प्रश्नस्य प्रायणावस्थायां देहव्यतिरिक्तास्तित्वमात्रविचिकित्सनात्कर्तृत्वादिसंसारस्वभावानपोहनाच्च पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रेक्ष्यते। उत्तरस्य तु धर्माद्यत्ययसंकीर्तनात्प्राज्ञविषयत्वमिति। ततश्च युक्ताग्निजीवपरमात्मकल्पना। प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति वैषम्यम्॥ ६॥

## महद्वच्च॥ ७॥

### भामती।

यस्मिन् प्रश्नो यत्प्रश्नः। शेषमतिरोहितार्थम्॥ ६॥ अनेन सांख्यप्रसिद्धेर्वैदिकप्रसिद्ध्या विरोधान्न सांख्यप्रसिद्धिर्वेद आदर्तव्येत्युक्तम्। सांख्यानां महत्तत्त्वं सत्तामात्रं, पुरुषार्थक्रियाक्षमं सत्तस्य भावः सत्ता

### वेदान्तकल्पतरुः।

अधिकरणादावव्यक्तशब्दस्य पौरुषेयी रूढिर्वेदानुपयोगिनीत्युक्तम्, इदानीं महच्छब्दस्येव वेदविरोधाद्वाध्याच। अव्यक्तशब्दस्य प्रकरणादिना वेदे शरीरपरत्वावधारणादित्युच्यत इत्याह—**अनेनेति**। साङ्ख्यैः सत्तामात्रे महच्छब्दः प्रयुक्त इति भाष्यमयुक्तम्; तैर्बुद्धेर्महत्त्वेन स्वीकारादित्याशङ्क्याह—**पुरुषार्थेति**। अर्थक्रियाकारिणि सच्छब्दः प्रयुक्तः, पुरुषापेक्षितप्रयोजनकारि

### कल्पतरुपरिमलः।

न भवति; येन वृतानग्निविद्यादीनवृतां सृङ्कां च ददाविति तदर्थो वर्ण्येत, किं तु, वृताग्निविद्यादित्रयव्यतिरिक्तावृतदेयान्तरसमुच्चयार्थः। "तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः। तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण॥" इति हि श्रूयते। एवं तर्हि तवैव नाम्नेत्यादिदेयद्वये यथा पृथग्वरदानमस्ति नैवमव्यक्ते इति विशेषो द्रष्टव्यः। **नन्वेवमव्यक्तपदस्य** शरीरार्थकत्वेऽप्यग्निविद्यादित्रयमात्रविषयप्रश्नोपन्यासविरोधस्तुल्यः, पृष्टस्य परमात्मन एव निरतिशयपरत्वेन प्रतिपादनार्थं परत्वावधितया शरीरस्य निर्देश इति चेत्, प्रधानस्यैवास्तु को न्वत्र विशेषः? **उच्यते;** निष्प्रपञ्चजीवब्रह्माभेदप्रतिपादनार्थं प्रवृत्तमिदं प्रकरणम्। "येयं प्रेते" इति प्रश्नो हि मृतजीवास्तित्वनास्तित्वविषयः; तत्र तस्य स्वारस्यात्, नचिकेतःप्रलोभनप्रस्तावे मरणं मानु प्राक्षीरिति मरणप्रश्नप्रतिषेधदर्शनात्, यथा च मरणं प्राप्येत्यादिमृतजीवास्तित्वनिर्धारणविषयप्रतिवचनदर्शनाच्च। यद्यपि स्वर्गसाधनाग्निप्रश्नादिना नचिकेतसः परलोकानुबन्धिजीवास्तित्वनिश्चयवत्त्वमवसीयते; तथापि तस्यैव स्थिरीकरणपूर्वकं तदीयपारमार्थिकरूपविविदिषया प्रश्न उपपद्यते। अत एव नचिकेतसो विषयवैराग्यदर्शनानन्तरं "विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते"ति वैवस्वतवचनम्। अन्यत्र "धर्मा"दिति प्रश्नः परमात्मविषय इति निर्विवादम्। प्रश्नद्वयस्य चैकविषयत्वं वरत्रित्वबलादविचलम्। अत्र च प्रकरणे "योनिमन्ये प्रपद्यन्ते" इत्यादिषु जीवस्य कर्मोपासनाकर्तृत्वात्फलभोक्तृत्वादयो धर्मा दर्शिताः। "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"त्यादौ परस्य जीवव्यावृत्ताः सर्वप्रपञ्चाश्रयत्व-सर्वोत्तरत्वादयो धर्मा दर्शिताः। विरुद्धधर्माश्रययोः कथमैक्यमित्याकाङ्क्षायां "यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं धर्मान् पृथक्पश्यंस्तानेवानु विधावति॥" इत्यभेदविरोधिधर्मव्यवस्थां मन्वानस्तानेव धर्माननुवर्ततेति संसारानुवृत्तिदोषमुक्त्वा "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमे"त्यध्यस्तसकलविरुद्धधर्मप्रहाण्या जीवपरैक्यं जानन्नेव मुक्तो भवतीति प्रतिपादितम्। एवं चात्र ब्रह्मपरतन्त्राणां शरीरेन्द्रियादीनां तदीयपरत्वावधितयोपन्यासो युज्यते, नतु साङ्ख्याभिमतस्य स्वतन्त्रप्रधानस्य प्रकरणप्रतिपाद्यप्रधानार्थविरोधादिति भावः। अत्राम्नान् पृष्ट इत्यादिपूर्वोत्तरग्रन्थविवरणे क्वचिदित एवैक एव जीवप्रश्नः तत्कर्तृप्रशंसापीति पाठः। अत एकत्वमेव एवं जीवप्रश्नतत्कर्तृप्रशंसाऽपीत्यन्यत्र पाठः। अत एकत्व एव जीवप्रश्नतत्कर्तृप्रशंसापीत्यपरत्र पाठः। सर्वेऽपि तुल्यार्थाः। आद्ये पाठद्वये वाक्यभेदः तृतीये वाक्यैक्यमिति विशेषः॥ ६॥

**अधिकरणादाविति। ननु**—अधिकरणादौ वैदिकं प्रकरणं पौरुषेयी रूढिर्वैदिकप्रकरणपरिशेषविरोधादेवानुपयोगिनी-

**यथा महच्छब्दः सांख्यैः सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽभिधत्ते । 'बुद्धेरात्मा महान्परः' ( का० १।३।१० ), 'महान्तं विभुमात्मानम्' ( का० १।२।२२ ), 'वेदाहमेतं पुरुषं महान्तम्' ( श्वे० ३।८ ) इत्येवमादावात्मशब्दप्रयोगादिभ्यो हेतुभ्यः । तथाव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति । अतश्च नास्त्यानुमानिकस्य शब्दवत्त्वम् ॥ ७ ॥ इति प्रथममानुमानिकाऽधिकरणम् ॥**

---

## भामती ।

तन्मात्रं महत्तत्त्वमिति । या या पुरुषार्थक्रिया शब्दाद्युपभोगलक्षणा च सत्त्वपुरुषान्यताख्यातिलक्षणा च सा सर्वा महति बुद्धौ समाप्यत इति महत्तत्त्वं सत्तामात्रमुच्यत इति ॥ ७ ॥ **इति प्रथममानुमानिकाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

महत्तत्वं सत्तत्प्रत्ययोऽपि स्वरूपपरो न सामान्यवाचीत्यर्थः । कार्यानुमेयं महन्न प्रत्यक्षमिति मात्रशब्दः ॥ ७ ॥ गूढ आत्मा अग्र्या इवाग्र्या सूक्ष्मवस्तुविषयत्वात् सूक्ष्मा । **अशब्दमिति** । शब्दादिगुणरहितम् । अभूतभौतिकमित्येतत् । **अव्ययम**-पक्षयरहितम् । **प्राक्** प्रध्वंसाभाववर्जितम् । **अनाद्यनन्तम्** अत एव नित्यम् । **महतः** क्षेत्रज्ञात्परम् । **ध्रुवम**परिणामि । **निचाय्य** ज्ञात्वा । **मृत्युर**ज्ञानं **तन्मुखं** संसारः । स्वर्गाय हितं **स्वर्ग्यम्** । **अध्येषि** जानासि । लोककारणविराड्दृष्ट्योपास्यत्वा**ल्लोकादि**श्चित्योऽग्निः । **याः** स्वरूपतः यावती सङ्ख्यातः यथा वाग्निश्चीयते तत्सर्वं तस्मै नचिकेतसे उवाच । हन्त इदानीं **गुह्यं** गोप्यं **सनातनं** चिरन्तनं ब्रह्म हे गौतम ते प्रवक्ष्यामीति ब्रह्मप्रतिवचनं प्रतिज्ञाय जीवं चाह । आत्मा मरणं प्राप्य यथा भवति तथा च प्रवक्ष्यामीति । योनि**मन्ये** देहिनः प्राप्नुवन्ति मानुषादिशरीरग्रहणाय अन्ये **स्थावरं** स्थाणुं संयन्ति कर्मज्ञानानुसारेण । स्वप्नजाग्रतोरन्तौ मध्ये उभे येनात्मनाऽनुपश्यति लोकः । **इह** देहे यच्चैतन्यं तदेवा**मुत्र** परत्र । **असंसारि** ब्रह्म । यच्चामुत्र तदेवेह देहे अनुप्रविष्टं वर्तते य **इह** ब्रह्मात्मनि **नानेव** मिथ्या भेदं पश्यति स **मरणान्मरणं** प्राप्नोति । पुनः पुनर्म्रियते । त्वां बहवः कामा न लोलुपन्त, लुप्लृ च्छेदने श्रेयसो विच्छेदं न कृतवन्तः, ततो विद्यार्थिनं **त्वां** मन्ये वेद जानेऽहं पुरुषम् ॥ **इति प्रथममानुमानिकाऽधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

त्युक्तम् । तस्मादधिकरणादौ पौरुषेयत्वमात्रेणानुपयोग उक्तः । महद्वच्चेति ( व्या. सू. अ. १ पा. ४ सू. ७ । ) सूत्रे प्रकरणविरोधादिना बाध उच्यत इति भेदकथनमयुक्तमिति—**चेत्, उच्यते;** अधिकरणादौ शरीरगृहीतिहेतुत्वेनात्मानं रथिनं विद्धीत्यादिप्रकरणं शरीरपरिशेषश्चेत्युभयमुपन्यस्तम् । अस्य सिद्धान्तहेतोः प्राबल्यसिद्ध्यर्थं सांख्यरूढेः पौरुषेयत्वेन दौर्बल्यं भाष्यादिषूक्तं प्रबलेन सिद्धान्तहेतुना सांख्यरूढेरर्थात् परं बाधः सिध्यति, न तु तद्बाधनार्थत्वेन तदुपन्यस्तम् । इह तु त्रयाणामिति ( व्या. सू. अ. १ पा. ४ सू. ६ । ) सूत्रेण जीवप्रश्नकर्तृप्रशंसाद्यवगमितं ब्रह्मात्मैक्यप्रकरणम् यत् साक्षादव्यक्तपदरूढेर्बाधकमिति सूचितम्, तत्र तस्मिन्नेव ब्रह्मात्मैक्यप्रकरणे श्रुतस्य महत्पदस्येवाव्यक्तपदस्यापि सांख्यरूढिर्गृह्यत इत्याशङ्कायां महद्वदिति सूत्रेण तद् ब्रह्मात्मैक्यप्रकरणं न केवलमव्यक्तपदरूढेरेव बाधकं, किं तु महत्पदरूढेरपीति दृष्टान्तव्याजेन प्रदर्श्यान्ते ब्रह्मात्मैक्यप्रकरणे भेदवाद्यभिमतस्य महतः प्रधानप्रसक्तिरित्ययमर्थ उच्यते । अतो न पौनरुक्त्यम् । एवं च महद्वदिति समुच्चयोपमा । "इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु । रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥" इत्यादाविवेति द्रष्टव्यम् । **अधिकरणादा**वित्यादिग्रन्थे इदानीं महत्शब्दस्येव वेदविरोधात् बाध्याव्यक्तशब्दस्येति क्वचित् पाठः । इदानीं महच्छब्दस्येव विरोधाद्बाध इत्यन्यत्र पाठः । पाठद्वयमप्यर्थतस्तुल्यम् । एवमन्यत्रापि यत्र पाठभेदस्तुल्यार्थः स्पष्टार्थश्च तत्र सर्वत्राप्येषैव रीतिरिति तत्र पाठभेदो नोदाह्रियते । प्रकरणादीत्यादिशब्देन महान्तं विभुमात्मानमित्यादि भाष्योदाहृतं गृह्यते । **स्वरूपपर इति ।** "प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥" इत्यत्र तल्प्रत्ययः स्वार्थिको न तु प्रवृत्तिनिमित्तधर्मवाची । तस्य भावः सत्तेति टीकायामपि भावशब्दः स्वरूपवाचीति भावः ॥ ७ ॥ **जीवं चाहेति ।** जीवाभिन्नब्रह्मस्वरूपोपदेशार्थतयेति भावः ॥ **इति प्रथममानुमानिकाधिकरणम् ॥**

---

१ **तत्र सूत्राणि ७—आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च १ सूक्ष्मं तु तदर्हत्वात् २ तदधीनत्वादर्थवत् ३ ज्ञेयत्वावचनाच्च ४ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ६ महद्वच्च ७ ॥**

( २ अधिकरणम् ) **चमसवदविशेषात् ॥ ८ ॥**

पुनरपि प्रधानवाद्यशब्दत्वं प्रधानस्यासिद्धमित्याह । कस्मात् ? मन्त्रवर्णात्—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ( श्वे० ४।५ ) इति । अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दै रजःसत्त्वतमांस्यभिधीयन्ते । लोहितं रञ्जनात्मकत्वात् । शुक्लं सत्त्वं प्रकाशात्मकत्वात् । कृष्णं तम आवरणात्मकत्वात् । तेषां साम्यावस्थाऽवयवधर्मैर्व्यपदिश्यते लोहितशुक्लकृष्णेति । न जायत इति चाजा स्यात्; 'मूलप्रकृतिरविकृतिः' इत्यभ्युपगमात् । नन्वजाशब्दश्छागायां रूढः । बाढम् । सा तु रूढिरिह नाश्रयितुं शक्या; विद्याप्रकरणात् । सा च बह्वीः प्रजास्त्रैगुण्यान्विता जनयति । तां प्रकृतिमज एकः पुरुषो जुषमाणः प्रीयमाणः सेवमानो वानुशेते । तामेवाविद्यया-

## भामती ।

### चमसवदविशेषात् ॥ ८ ॥

अजाशब्दो यद्यपि छागायां रूढः; तथाप्यध्यात्मविद्याधिकाराच्च तत्र वर्तितुमर्हति । तस्माद्रूढेरसंभवाद्योगेन वर्तयितव्यः । तत्र किं स्वतन्त्रं प्रधानमनेन मन्त्रवर्णेनानूद्यतामुत पारमेश्वरी मायाशक्तिस्तेजोबन्नव्याक्रियाकारणमुच्यताम् । किं तावत्प्राप्तम् ? प्रधानमेवेति । **तथाहि**—यादृशं प्रधानं सांख्यैः स्मर्यते तादृशमेवास्मिन्नन्यूनानतिरिक्तं प्रतीयते । सा हि प्रधानलक्षणा प्रकृतिर्न जायत इत्यजा च एका च लोहितशुक्लकृष्णा च । यद्यपि लोहितत्वादयो वर्णा न रजःप्रभृतिषु सन्ति; तथापि लोहितं कुसुम्भादि रञ्जयति, रजोऽपि रञ्जयतीति लोहितम् । एवं प्रसन्नं पाथः शुक्लं, सत्त्वमपि प्रसन्नमिति शुक्लम् । एवमावरकं मेघादि कृष्णं, तमोऽप्यावरकमिति कृष्णम् । परेणापि नाव्याकृतस्य स्वरूपेण लोहितत्वादियोग आस्थेयः, किंतु तत्कार्यस्य तेजोबन्नस्य रोहितत्वादि कारण उपचरणीयम् । कार्यसारूप्येण वा कारणे कल्पनीयं, तदस्माकमपि तुल्यम् । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति त्वात्मभेदश्रवणात् सांख्यस्मृतेरेवात्र मन्त्रवर्णे प्रत्यभिज्ञानं न त्वव्याकृतप्रक्रियायाः; तस्यामैकात्म्याभ्युपगमेनात्मभेदाभावात् । तस्मात्स्वतन्त्रं प्रधानं नाशब्दमिति प्राप्तम् । **तेषां साम्यावस्थाऽवयवधर्मैरिति** । अवयवाः प्रधानस्यैकस्य सत्त्वरजस्तमांसि तेषां धर्मा लोहितत्वादयस्तैरिति । **प्रजास्त्रैगुण्यान्विता इति** । सुखदुःखमोहात्मिकाः । **तथाहि**—मैत्रदारेषु नर्मदायां मैत्रस्य सुखं, तत् कस्य हेतोः ? तं प्रति सत्त्वस्य समुद्भवात् । तथाच तत्सपत्नीनां दुःखं ? तत् कस्य हेतोः ? ताः प्रति रजःसमुद्भवात्, तथा चैत्रस्य तामविन्दतो मोहो विषादः, स कस्य हेतोः । तं प्रति तमःसमुद्भवात् । नर्मदया च सर्वे भावा व्याख्याताः । तदिदं त्रैगुण्यान्वितत्वं प्रजानाम् । अनुशेत इति व्याचष्टे—**तामेवाविद्ययेति** । विषया हि शब्दादयः प्रकृतिविकारास्त्रैगुण्येन सुखदुःखमोहात्मान इन्द्रियमनोऽहंकारप्रणालिकया बुद्धिसत्त्वमपसंक्रामन्ति । तेन तद्बुद्धिसत्त्वं प्रधानविकारः सुखदुःखमोहात्मकं शब्दादिरूपेण परिणमते ।

## वेदान्तकल्पतरुः ।

### चमसवदविशेषात् ॥ ८ ॥

अजामन्त्रः प्रधानपरः उत तेजोबन्नरूपावान्तरप्रकृतिमायारूपपरमप्रकृत्योरन्यतरपर इति संशयः; अजाशब्दस्य तु छागातोऽपकृष्टस्य प्रधानमाययोस्तेजोबन्ने च गुणाद् वृत्तिसंभवात् । पूर्वत्रार्थतः प्रधानप्रत्यभिज्ञाया अभावान्नाव्यक्तपदवाच्यतेत्युक्तम्, इह तु त्रिगुणत्वादिना प्रधानप्रत्यभिज्ञानात् तत्परो मन्त्र इति पूर्वपक्षमाह—**प्रधानमेवेति । एका चेति** । अनेन मायायाः प्रतिजीवं भेदादेकामित्येकत्वानुपपत्तिरुक्ता । न च गौणत्वं दोषः, समत्वादित्याह—**परेणापीति** । उपचारेण कारणे रोहितत्वाद्यस्तिकल्पने त्वस्तीति विभागः । दारशब्दो नित्यबहुवचनान्तः । तामेवाविद्ययेति भाष्ये तच्छब्दार्थो विषयज्ञानाधारः प्रधानकार्यमन्तःकरणमित्याह—**विषया हीति** । चितिशक्तिरात्मा स्वयं सुखादिरूपे-

## कल्पतरुपरिमलः ।

### चमसवदविशेषात् ॥ ८ ॥

**त्रिगुणत्वादिनेति** । आदिशब्देनैकत्वादिवत् सृजमानामिति कृदुक्तस्वातन्त्र्यस्य जहातीत्युक्तत्व त्यागस्य च संग्रहोऽपि द्रष्टव्यः, परमेश्वराधीनयोर्मूलावान्तरप्रकृत्योः स्वातन्त्र्याभावाद्, मुक्तिदशायामविद्याया निरवशेषोच्छेदाभ्युपगमे-

त्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति। अन्यः पुनरजः पुरुष उत्पन्नविवेकज्ञानो विरक्तो जहात्येनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति। मुच्यत इत्यर्थः। तस्माच्छ्रुतिमूलैव प्रधानादिकल्पना कापिलानामिति। एवं प्राप्ते ब्रूमः—नानेन मन्त्रेण श्रुतिमत्त्वं सांख्यवादस्य शक्यमाश्रयितुम्। न ह्ययं मन्त्रः स्वातन्त्र्येण कंचिदपि वादं समर्थयितुमुत्सहते। सर्वत्रापि यया कयाचित्कल्पनयाऽजात्वादिसंपादनोपपत्तेः सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात्। चमसवत्—यथाहि 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ० २।२।३) इत्यस्मिन्मन्त्रे स्वातन्त्र्येणायं नामासौ चमसोऽभिप्रेत इति न शक्यते निरूपयितुम्। सर्वत्रापि यथाकथंचिदर्वाग्बिलत्वादिकल्पनोपपत्तेः। एवमिहाप्यविशेषोऽजामेकामित्यस्यमन्त्रस्य। नास्मिन्मन्त्रे प्रधानमेवाजाभिप्रेतेति शक्यते नियन्तुम्॥ ८॥ तत्र तु 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति वाक्यशेषाच्चमसविशेषप्रतिपत्तिर्भवति। इह पुनः केयमजा प्रतिपत्तव्येति? अत्र ब्रूमः—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ ९॥**

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या। तुशब्दोऽवधारणार्थः। भूतत्रयलक्षणैवेयमजा विज्ञेया न गुणत्रयलक्षणा। कस्मात्? तथा ह्येके शाखिनस्तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति। तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते; रोहितादिशब्दसामान्यात्। रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वाद्भाक्तत्वाच्च गुणविषयत्वस्य। असंदिग्धेन च संदिग्धस्य निगमनं न्याय्यं मन्यन्ते।

भामती।

चितिशक्तिरपरिणामिन्यप्रतिसंक्रमापि बुद्धिसत्त्वादात्मनो विवेकमबुध्यमाना बुद्धिवृत्त्यैव विपर्यासेनाविद्यया बुद्धिस्थान्सुखादीनात्मन्यभिमन्यमाना सुखादिमतीव भवति। तदिदमुक्तम्—**सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति**। एकः। सत्त्वपुरुषान्यताख्यातिसमुन्मूलितनिखिलवासनाविद्यानुबन्धस्त्वन्यो जहात्येनां प्रकृतिम्। तदिदमुक्तम्—**अन्यः पुनरिति**। भुक्तभोगामिति व्याचष्टे—**कृतभोगापवर्गाम्**। शब्दाद्युपलब्धिर्भोगः। गुणपुरुषान्यताख्यातिरपवर्गः। अपवृज्यते हि तया पुरुष इति। एवं प्राप्तेऽभिधीयते—न तावत् 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्येतदात्मभेदप्रतिपादनपरं, अपि तु सिद्धमात्मभेदमनूद्य बन्धमोक्षौ प्रतिपादयतीति। स चानूदितो भेदः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभिरात्मैकत्वप्रतिपादनपराभिर्विरोधात्काल्पनिकोऽवतिष्ठते। तथाच न सांख्यप्रक्रियाप्रत्यभिज्ञानमित्यजावाक्यं चमसवाक्यवत्परिप्लवमानं न स्वतन्त्रप्रधाननिश्चयाय पर्याप्तम्। तदिदमुक्तं सूत्रकृता—'चमसवदविशेषात्' इति॥ ८॥ उत्तरसूत्रमवतारयितुं शङ्कते—**तत्र त्विदं तच्छिर इति**। सूत्रमवतारयति—**अत्र ब्रूमः। ज्योतिरुपक्रमा तु तथा ह्यधीयत एके।** सर्वशाखाप्रत्ययमेकं ब्रह्मेति स्थितौ शाखान्तरोक्तरोहितादिगुणयोगिनी तेजोबन्नलक्षणा जरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामप्रकृतिभूतेयमजा प्रतिपत्तव्या; 'रोहितशुक्लकृष्णाम्' इति रोहितादिरूपतया तस्या एव प्रत्यभिज्ञानात्, न तु सांख्यपरिकल्पिता प्रकृतिः; तस्या अप्रामाणिकतया श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्, रञ्जनादिना च रोहिताद्युपचारस्य सति मुख्यार्थसंभवेऽयोगात्। तदिदमुक्तम्—**रोहितादीनां शब्दानामिति**। अजापदस्य च समुदायप्रसिद्धिपरि-

वेदान्तकल्पतरुः।

णापरिणामिनी। परिणामिन्यां बुद्धौ वस्तुतोऽप्रविष्टत्वादप्रतिसङ्क्रमा। अविद्ययेत्येतद्व्याचष्टे—**विपर्यासेनेति**। सांख्यानामप्यस्ति भ्रमः, स तु बुद्धावेवेति विशेषः। आत्मत्वेनोपगम्येत्येतद्विवृणोति—**बुद्धिस्थानि इति**। विपर्याससिद्धबुद्ध्यैक्येन बुद्धिधर्मानात्मन्यभिमन्यमानेत्यर्थः। कृतत्वोपपत्तयेऽपवर्गशब्दस्तदुपायपर इत्याह—**गुणेति**। न चानुवादसामर्थ्यात्प्रमाणं कल्प्यं, विरोधादित्याह—**स चेति**॥ ८॥ व्यवधानाच्छाखान्तरेणानिर्णयमाशङ्क्याह—**सर्वेति**। गुणवचनरोहितादिशब्दैर्लक्षणयापि निरूढया मुख्यवत्प्रत्यायकैः प्रतीतिमभिप्रेत्य सति मुख्यार्थसंभव इत्युक्तम्। **नन्वजा**वदजेति

कल्पतरुपरिमलः।

नानुवर्तमाने प्रधाने एव त्यागोक्तिसाङ्गत्याच्च। **सांख्यानामप्यस्ति भ्रम इति**। स गृहीतसंसर्गधर्मधर्मिविषयज्ञानद्वयरूपस्तदुभयसंसर्गाविषयकज्ञानरूपो वेत्यन्यदेतत्॥ ८॥ "यस्य ब्रह्मणो जगदुत्पत्ताविति टीकायामपेक्षितमध्याहरति—

तथेहापि 'ब्रह्मवादिनो वदन्ति । किंकारणं ब्रह्म' ( श्वे० १।१ ) इत्युपक्रम्य 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' ( श्वे० १।३ ) इति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात् । वाक्यशेषेऽपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'यो योनिं योनिमधितिष्ठत्येकः' ( श्वे० ४।१०,११ ) इति च तस्या एवावगमान्न स्वतन्त्रा काचित्प्रकृतिः प्रधानं नामाजामन्त्रेणाम्नायत इति शक्यते वक्तुम् । प्रकरणात्तु सैव देवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायत इत्युच्यते । तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम् ॥ ९ ॥ कथं पुनस्तेजोबन्नात्मना त्रैरूप्येण त्रिरूपाजा प्रतिपत्तुं शक्यते? यावता न तावत्तेजोबन्नेष्वजाकृतिरस्ति । नच तेजोबन्नानां जातिश्रवणादजातिनिमित्तोऽप्यजाशब्दः संभवतीति । अत उत्तरं पठति—

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥**

नायमजाकृतिनिमित्तोऽजाशब्दः । नापि यौगिकः । किं तर्हि ? कल्पनोपदेशोऽयम् । अजारूप-

---

## भामती ।

त्यागेन न जायत इत्यवयवप्रसिद्ध्याश्रयणे दोषप्रसङ्गात् । अत्र तु रूपककल्पनायां समुदायप्रसिद्धेरेवानपेक्षायाः स्वीकारात् । अपिचायमपि श्रुतिकलापोऽस्मद्दर्शनानुगुणो न सांख्यस्मृत्यनुगुण इत्याह—**तथेहापीति** । **किं कारणं ब्रह्मेत्युपक्रम्येति** । ब्रह्मस्वरूपं तावज्जगत्कारणं न भवति; विशुद्धत्वात्तस्य । यथाहुः—'पुरुषस्य तु शुद्धस्य नाशुद्धा विकृतिर्भवेत्' इत्याशयवतीव श्रुतिः पृच्छति । किंकारणम् ? यस्य ब्रह्मणो जगदुत्पत्तिस्तत् किंकारणं ब्रह्मेत्यर्थः । ते ब्रह्मविदो ध्यानयोगेनात्मानं गताः प्राप्ता अपश्यन्निति योजना । **यो योनिं योनिमिति** । अविद्या शक्तिर्योनिः, सा च प्रतिजीवं नानेत्युक्तमतो वीप्सोपपन्ना । शेषमतिरोहितार्थम् ॥ ९ ॥ सूत्रान्तरमवतारयितुं शङ्कते—**कथं पुनरिति** । अजाकृतिर्जातिस्तेजोऽबन्नेषु नास्ति । नच तेजोऽबन्नानां जन्मश्रवणादजन्मनिमित्तोऽप्यजाशब्दः संभवतीत्याह—**नच तेजोबन्नानामिति** । सूत्रमवतारयति—**अत उत्तरं पठति** । **कल्पनोपदेशाच्च मध्वादिवदविरोधः** ।

## वेदान्तकल्पतरुः ।

गुणवृत्त्यङ्गीकाराद्रूढिस्त्यक्ता, नेत्याह—**अत्र त्विति** । रूढेरपहृते योगे रूढार्थगुणयोगात्सिद्धा वृत्तिराश्रिता इति रूढिः स्वीकृता; इतरथा गुणयोगस्यैवासिद्धेरिति । न केवलं शाखान्तरान्निर्णयः प्रकरणादपीत्यव्याकृतपक्षं प्रस्तौति—**अपि चेति** । यस्य जगदुत्पत्तौ साध्यायां किं सहकारिकारणमिति पृच्छ्यते । तत्किंकारणमिति बहुव्रीहिः । ध्यानमेव योगो जीवस्य ब्रह्मैक्ययोजकत्वात् । आत्मप्राप्तिस्त्वनात्मविरहेण स्थितिः । **नानेत्युक्तमिति** । आनुमानिकाधिकरण इति नानाविद्याखप्येकामित्येकत्वं जात्यभिप्रायम्; प्रकरणादविद्यानिश्चयात् ॥ ९ ॥ १० ॥ देवात्मशक्तिमिति । देवात्मविषयां **मायिनं** मायाविषयं महेश्वरम् इत्यर्थः । **भाष्ये च—पारमेश्वर्याः शक्तेरिति** परमेश्वरविषयाया इत्यर्थः । एवं च—

## कल्पतरुपरिमलः ।

**साध्यायामिति** । **ब्रह्मैक्ययोजकत्वाद्** ब्रह्मैक्यप्रापकत्वात् । **ननु** ध्यानयोगेनात्मानं गता प्राप्ता यदि मुक्ताः, तर्हि कथं तेषां पुनरविद्यादर्शनमुच्यत इत्याशङ्क्य व्याचष्टे—**आत्मप्राप्तिस्त्वनात्मविरहेण स्थितिरिति** । अनात्मविरहोऽनात्मदर्शनविरहः । **जात्यभिप्रायमिति** । गुणसंघातरूपे प्रधानेऽप्येकत्वं संघाताभिप्रायं वाच्यमिति तुल्यमेव । सृजमानामिति कर्तृप्रत्ययालम्बनं स्वातन्त्र्यमन्यप्रेर्यत्वेऽपि न हीयते, न हि यन्त्रा प्रेर्यमाणो गजो न गच्छति । कल्पनोपदेशे च ज्ञानेनाविद्योच्छेदे मुच्यमानकर्तृकत्यागत्वकल्पना तु विरुद्धा । **ननु**—छागलकल्पनैव नोपपद्यते, अजो ह्येकः अजोऽन्य इत्यजशब्दयोश्चेतनवाचिनोरचेतनवाचिनश्चाऽजाशब्दस्य "ज्ञाज्ञौ" "द्वावजावीशानीशौ" "अजा ह्येका भोक्तृभोगार्थयुक्ते"ति प्राकरणिकमन्त्रान्तरगतशब्दवद्यौगिकतौचित्यादत्यन्तमेव प्रकृतिसंबन्धाद्विमुक्तस्य परब्रह्मरूपतां प्राप्तस्य पुनः छागासंसर्गयोग्यातिमूढप्राणिप्रथमोदाहरणे छागलकल्पनाऽयोगाद्, "असौ वा आदित्य" इत्यादौ मध्वादित्यादिपदद्वयसमभिव्याहारवदुपासनाप्रयोजनवच्चात्र कल्पनोपदेशत्वकल्पकाभावाच्चेति—**चेद्**, न; "द्वा सुपर्णे"त्याद्यनन्तरमन्त्रे प्रथमप्रतीतरूढ्यपरित्यागेन प्रहीणजात्यवलम्बनस्यापि प्रतिपत्तिसौकर्यप्रयोजनस्य कल्पनोपदेशस्य दृष्टत्वेन तथेहाप्युपपत्तेः ॥ **प्रकरणादविद्यानिश्चयादिति** । अनेन मूलप्रकृतिरजेत्येव मुख्यसिद्धान्तः । "अजा ह्येका" "मायां तु प्रकृति"मित्यादिपूर्वापरमन्त्रानुरोधस्य शाखान्तरोक्तरोहितादिशब्दप्रत्यभिज्ञानतो बलवत्त्वादिति सूचितम् ॥ ९ ॥ १० ॥ **ननु**

कक्लृप्तिस्तेजोबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते । यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्याद्बहुबर्करा सरूपबर्करा च, तां च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभोगां जह्यात्, एवमियमपि तेजोऽबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यत इति । न चेदमाशङ्कितव्यमेकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति । न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा, किंतु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा । प्रसिद्धं तु भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते । भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः; 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभ्यः । मध्वादिवत्, यथा आदित्यस्यामधुनो मधुत्वम् ( छा० ३।१ ), वाचश्चाधेनोर्धेनुत्वम् ( बृ० ५।८ ), द्युलोकादीनां चानग्नीनामग्नित्वम् ( बृ० ८।२।९ ) इत्येवंजातीयकं कल्प्यते, एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः । तस्मादविरोधस्तेजोबन्नेष्वजाशब्दप्रयोगस्य ॥ १० ॥ इति द्वितीयं चमसाधिकरणम् ॥

( ३ अधिकरणम् ) **न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥**

एवं परिहृतेऽप्यजामन्त्रे पुनरन्यस्मान्मन्त्रात्सांख्यः प्रत्यवतिष्ठते । 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' ( बृ० ४।४।१७ ) इति । अस्मिन्मन्त्रे पञ्च पञ्चजना इति पञ्चसंख्याविषयाऽपरा पञ्चसंख्या श्रूयते; पञ्चशब्दद्वयदर्शनात् । त एते पञ्च पञ्चकाः पञ्चविंशतिः संपद्यन्ते । तथा पञ्चविंशतिसंख्यया यावन्तः संख्येया

---

## भामती ।

**ननु** किं छागा लोहितशुक्लकृष्णैवान्यादृशीनामपि छागानामुपलम्भादित्यत आह—**यदृच्छयेति** । बहुबर्करा बहुशाबा । शेषं निगदव्याख्यातम् ॥ १० ॥ इति द्वितीयं चमसाधिकरणम् ॥

### न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

अवान्तरसंगतिमाह—**एवं परिहृतेऽपीति** । पञ्चजना इति हि समासार्थः पञ्चसंख्यया संबध्यते । नच—'दिक्संख्ये संज्ञायाम्' इति समासविधानान्मनुजेषु निरूढोऽयं पञ्चजनशब्द इति—वाच्यम्; तथाहि सति पञ्च-

## वेदान्तकल्पतरुः ।

जीवस्थाया अविद्याया विषयं ब्रह्म शुक्तिवत् । ऊचे वाचस्पतिर्भाष्यश्रुत्योर्हृदयवेदिता ॥ इति द्वितीयं चमसाधिकरणम् ॥[1]

### न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

पञ्च पञ्चजना इति सांख्यीयतत्त्वपरमुतार्थान्तरपरमिति योगरूढ्यविनिगमाद्विशयः । पूर्वत्राध्यात्मप्रकरणे रूढच्छागाया असंबन्धाद् अजा तेजआदिकेत्युक्तमिहापि रूढेर्मनुष्यग्रहे वाक्यस्य निस्तात्पर्यप्रसङ्गादवयववृत्त्या सांख्यस्मृततत्त्वपरतेत्यवान्तरसङ्गतिमधिकरणसङ्गतिमाहेत्यर्थः । **ननू**पसर्जनस्य संख्यायाः संख्यान्तरेण विशेषणायोगात् कथं पञ्चविंशतिलाभोऽत आह—**पञ्चजना इति** हीति । विशेष्यजनैः सख्यान्तरान्वय इत्यर्थः । न च पञ्चसंख्यावच्छेदाद् जनानां

## कल्पतरुपरिमलः ।

देवात्मशक्तिमित्यत्र दीव्यमानलवाचिदेवविशेषणमनावृतज्ञाने परमात्मन्येव युक्तमतस्तच्छक्तित्वोक्तिर्विरुद्धेत्याशङ्क्य व्याचष्टे—**देवात्मविषयामिति** ॥ इति द्वितीयं चमसाधिकरणम् ॥

### न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

**योगरूढ्यविनिगमादिति** । रूढियोगयोः स्वतः प्राबल्यदौर्बल्यविशेषे सत्यपि निस्तात्पर्यकत्वाप्रसङ्गतत्परिहार-

---

१ तत्र सूत्राणि ३—चमसवदविशेषात् ८ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ९ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

## भामती ।

मनुजा इति स्यात् । एवं चात्मनि पञ्चमनुजानामाकाशस्य च प्रतिष्ठानमिति निस्तात्पर्यम्; सर्वस्यैव प्रतिष्ठानात् । तस्माद्रूढेरसंभवात्तत्त्यागेनात्र योग आस्थेयः । जनशब्दश्च कथंचित्तत्त्वेषु व्याख्येयः । तत्रापि किं पञ्च प्राणादयो वाक्यशेषगता विवक्ष्यन्ते उत तदतिरिक्ता अन्य एव वा केचित् । तत्र पौर्वापर्यपर्यालोचनया काण्वमाध्यंदिनवाक्ययोर्विरोधात् । एकत्र हि ज्योतिषा पञ्चत्वमन्नेनेतरत्र । नच षोडशिग्रहणवद्विकल्पसंभवः; अनुष्ठानं हि विकल्प्यते न वस्तु । वस्तुतत्त्वकथा चेयं नानुष्ठानकथा; विध्यभावात् । तस्मात्कानिचिदेव तत्त्वानीह पञ्च प्रत्येकं पञ्चसंख्यायोगीनि पञ्चविंशतिस्तत्त्वानि भवन्ति । सांख्यैश्च प्रकृत्यादीनि पञ्चविंशति तत्त्वानि स्मर्यन्त इति तान्येवानेन मन्त्रेणोच्यन्त इति नाशब्दं प्रधानादि । न च—आधारत्वेनात्मनो व्यवस्थानात्स्वात्मनि चाधाराधेयभावस्य विरोधात् आकाशस्य च

## वेदान्तकल्पतरुः ।

नैराकाङ्क्ष्यम्; संख्यान्तरश्रवणे सति रक्तपटन्यायेनाकाङ्क्षोत्थापनादिति । वाक्यस्य निस्तात्पर्ये तात्पर्याभावे हेतुरुक्तः—**सर्वस्यैवेति** । जायन्त इति व्युत्पत्त्या जनशब्दव्याख्या । **ननु** रूढ्यत्यागेन मनुष्यसंबन्धिनः प्राणादयो लक्ष्यन्ते, तथा च न निस्तात्पर्यमत आह—**तत्रापीति** । रूढ्यर्थग्रहेऽपीत्यर्थः । वाक्यविरोधं व्यनक्ति—**एकत्र हीति** । आत्माकाशव्यतिरिक्तानां त्रयोविंशतितत्त्वानामपि प्रधानस्य त्रिधाकरणात्पञ्चविंशतित्वं श्रुतौ । स्मृतौ तु तत्त्वेष्वात्माकाशावन्तर्भाव्य प्रधानं चाभित्वा पञ्चविंशतितत्त्वगणनेत्यविरोधमाह—**न चाधारत्वेनेत्यादिना** । **हिरुग्भावेन** पृथग्भावेन ।

## कल्पतरुपरिमलः ।

लाभाभ्यां समबलत्वापादनेनाविनिगम उक्तः । **रक्तपटन्यायेनेति** । **ननु** श्रुतविशेषणसजातीये तद्विरोधिनि च नास्ति रक्तपटन्यायः यथा रक्तो रक्तः पट इत्यत्र, मृन्मयो हिरण्मयो घट इत्यत्र । **सत्यम्**; यथैकया संख्यया विशेषितानामर्थानां सजातीयेन विजातीयेन वा संख्यान्तरेण विशेषणात्संवर्धनेन महासंख्यालाभस्तत्र रक्तपटन्यायः प्रवर्तत एव । यथा "पञ्चभिर्धाता विदधाविदं य"दिति मन्त्रे तासां स्वसृरजनयत् पञ्चपञ्चेति । अत्र हि पञ्चविंशतिरूपा संवर्धनसंख्या विवक्षिता; त्रिंशत् स्वसार इति वाक्यशेषात् । यथा वा पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा इत्यादौ वाक्यचतुष्टये । अत्र पञ्चाशदुत्तरशतद्वयरूपा महासंख्या विदक्षिता; विश्वसृजां सहस्रसंवत्सरमिति वाक्यशेषात् । निस्तात्पर्यमिति पदस्यार्थं कथयन्नेव तद्धेतुवचनमवतारयति—**निस्तात्पर्य इति** । अर्थाभावेऽव्ययीभावः । तृतीयासप्तम्योर्बहुलमित्यम्भावस्य बाहुलकत्वात् तात्पर्ये इति सप्तम्यन्तरूपम् । **जायन्त इति व्युत्पत्त्येति** । जनिधातोः पचाद्यचि । एवं च संज्ञायामेव संख्यासमासविधानेऽप्यगत्येह छान्दसत्वेनासंज्ञायां तदुपपादनं कार्यमिति भावः । **ननु** तत्रापीत्यादिटीकाग्रन्थेन पञ्चजनशब्दार्थपरिग्रहे संभावितं प्रकारद्वयमुपन्यस्य प्रथमप्रकारं विरोधाद् निरस्य द्वितीयप्रकारः सांख्यतत्त्वग्रहणपर्यवसायी व्यवस्थाप्यत इति भाति । एवं सति तत्रेति तच्छब्देनाव्यवहितं योगं परामृश्य योगपक्षे प्रकारद्वयोपन्यासोऽयं योजनीयः, उत तेन व्यवहितां रूढिं परामृश्य रूढिपक्षे । **नाद्यः**; मनुष्यसंबन्धिषु प्राणादिषु रूढिपूर्वलक्षणोपपत्तौ योगपरिग्रहाऽनौचित्यात् । **न द्वितीयः**; योगं विना पञ्चविंशतिसंख्यालाभाऽसंभवे रूढिपक्षे सांख्यतत्त्वग्रहणायोगादित्याशङ्कावतारयति—**रूढ्यत्यागेनेति** । तदतिरिक्ता एव केचिदिति द्वितीयप्रकारोपन्यासो न सांख्यतत्त्वविषयः, किं तु निषादपञ्चमाश्चत्वारो वर्णा इत्याचार्यैकदेशिमतोपन्यासः । तत्र सदेवासुरमानुषसकलप्राण्याधारस्य परमेश्वरस्य तावदाश्रयत्वमात्रोपन्यासे वाक्यं निस्तात्पर्यं स्यादिति प्रागुक्तदोषानुवृत्तिं स्पष्टत्वादनुद्भाव्य प्रकारद्वयमपि विहाय तस्मात्कानिचिदेव तत्त्वानीत्याद्यग्रिमटीकाग्रन्थेन योगमाश्रित्य सांख्यतत्त्वग्रहणं समर्थ्यत इति तात्पर्यम् । **वाक्यविरोधं व्यनक्तीति** । प्राणादयो न विवक्षणीया इत्यध्याहरणीयसाध्ये हेतुवाक्यविरोधमित्यर्थः । मूले—**पञ्चविंशतिस्तत्त्वानीति** । समासान्तर्गतया संख्यया प्रथमं पञ्चधा विभागे कृते पुनरेकैकस्मिन्विभागे पञ्चसंख्यानिवेशे सति पञ्चविंशतिस्तत्त्वानि संपद्यन्त इत्यर्थः । **ननु** "तासां स्वसृरजनयत्पञ्चपञ्चे"त्यत्र "पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा" इत्यत्र चैकैकोपाधिकोडीकारं विनाप्यवान्तरसंख्यानिवेशो दृष्टः, तत्र प्रथमं पञ्चधा पञ्चाशद्धा च विभक्तेषु प्रत्येकं पञ्चसंख्यानिवेशेन महासंख्यालाभो न भवति, किं तु पञ्चपदद्वयेन पञ्चपञ्चाशत्पदद्वयेन च महासंख्यालक्षणया । न चेह तथा व्यस्तसमस्तयोः पञ्चपदयोरेकमहासंख्यालक्षकत्वमुपपद्यत इति चेत्तर्ह्यत्रापि मा भूत्समासः असमस्तेन पञ्चपदद्वयेन पञ्चविंशतिसंख्या लक्ष्यतामिति पूर्वपक्षान्तरमुद्भाव्यतीत्यवतारयति—**समासार्थ इत्यादिना** । **वियत एवार्थात्मनेति** । अपेक्षाबुद्धिरव्यक्ततया सतामेव द्वित्वादीनां व्यञ्जिका नोत्पादिकेति भावः । **भाषिकेण स्वरेणैकपदत्वनिश्चयादिति भाष्यवाक्यस्य** ब्राह्मणभवेन स्वरेण समासनिश्चयादित्यर्थः । भाषाशब्दस्य ब्राह्मणभागे प्रवचनशब्दस्य मन्त्रभागे च वैदिकानां निरूढिः । अत एव भाषास्वरोपदेशेप्यैरवत्प्रवचनप्रतिषेधः स्या ( जै. सू. अ. १२ पा. ३ सू. २० । ) दिति जैमिनीयं सूत्रम् । तन्मूले चाधिकरणे मन्त्रसमाम्नाये स्वरान्तरेण समाम्नातानां विनियोजकब्राह्मणस्वरान्तरेणोपात्तानां मन्त्राणां मन्त्रसमाम्नायस्वरे प्रावचनिकस्वर इति

आकाङ्क्ष्यन्ते तावन्त्येव च तत्त्वानि सांख्यैः संख्यायन्ते—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' ( सांख्यका० ३ ) इति । तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम् । ततो ब्रूमः—न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वं प्रत्याशा कर्तव्या । कस्मात्? नानाभावात् । नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि । नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तराले पराः पञ्च पञ्चसंख्या निविशेरन् । न ह्येकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः संख्या निविशन्ते । अथोच्येत पञ्चविंशतिसंख्यैवेयमवयवद्वारेण लक्ष्यते, यथा 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः' इति द्वादशवार्षिकीमनावृष्टिं कथयन्ति तद्वदिति । तदपि नोपपद्यते; अयमेवास्मि-

## भामती ।

व्यतिरेचनात् । त्रयोविंशतिर्जना इति स्यान्न पञ्च पञ्चजना इति—वाच्यम्; सत्यप्याकाशात्मनोर्व्यतिरेचने मूलप्रकृतिभागैः सत्त्वरजस्तमोभिः पञ्चविंशतिसंख्योपपत्तेः । तथाच सत्यात्माकाशाभ्यां सप्तविंशतिसंख्यायां पञ्चविंशति तत्त्वानीति स्वसिद्धान्तव्याकोप इति चेत्, न मूलप्रकृतित्वमात्रेणैकीकृत्य सत्त्वरजस्तमांसि पञ्चविंशतितत्त्वोपपत्तेः । हिरुग्भावेन तु तेषां सप्तविंशतित्वाविरोधः । तस्मान्नाशाब्दी सांख्यस्मृतिरिति प्राप्तम् । **मूलप्रकृतिः** प्रधानम् । नासावन्यस्य विकृतिरपि तु प्रकृतिरेव तदिदमुक्तम्—**मूलेति** । महदहंकारपञ्चतन्मात्राणि प्रकृतयश्च विकृतयश्च । **तथाहि**—महत्तत्त्वमहंकारस्य तत्त्वान्तरस्य प्रकृतिर्मूलप्रकृतेस्तु विकृतिः । एवमहंकारतत्त्वं महतो विकृतिः, प्रकृतिश्च तदेव तामसं सत् पञ्चतन्मात्राणाम् । तदेव सात्त्विकं सत् प्रकृतिरेकादशेन्द्रियाणाम् । पञ्चतन्मात्राणि चाहंकारस्य विकृतिराकाशादीनां पञ्चानां प्रकृतिः । तदिदमुक्तम्—**महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारः ।** षोडशसंख्यावच्छिन्नो गणो विकार एव । पञ्चभूतान्यतन्मात्राण्येकादशेन्द्रियाणीति षोडशको गणः । यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिः; तथापि न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति न प्रकृतिः । तत्त्वान्तरोपादानत्वं चेह प्रकृतित्वमभिमतं नोपादानमात्रत्वमित्यविरोधः । पुरुषस्तु कूटस्थनित्योऽपरिणामी न कस्यचित्प्रकृतिर्नापि विकृतिरिति । एवं प्राप्तेऽभिधीयते—**न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वाशङ्का कर्तव्या । कस्मात्? नानाभावात् । नाना ह्येतानि पञ्चविंशतितत्त्वानि । नैषां पञ्चशः पञ्चशः साधारणधर्मोऽस्ति ।** न खलु सत्त्वरजस्तमोमहदहंकाराणामेकः क्रिया वा गुणो वा द्रव्यं वा जातिर्वा धर्मः पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति । नापि पृथिव्यप्तेजोवायुघ्राणानाम् । नापि रसनचक्षुस्त्वक्श्रोत्रवाचाम् । नापि पाणिपादपायूपस्थमनसाम्, येनैकेनासाधारणेनोपगृहीताः पञ्च पञ्चका भवितुमर्हन्ति । पूर्वपक्षैकदेशिनमुत्थापयति—**अथोच्येत पञ्चविंशतिसंख्यैवेयमिति** । यद्यपि परस्यां संख्यायामवान्तरसंख्या द्वित्वादिका नास्ति; तथापि तत्पूर्वं तस्याः संभवात् पौर्वापर्यलक्षणया प्रत्यासत्त्या परसंख्योपलक्षणार्थं पूर्वसंख्योपन्यस्यत इति दूषयति—**अयमेवास्मिन्पक्षे दोष इति ।**

## वेदान्तकल्पतरुः ।

भाष्ये उदाहृतां मायां व्याख्याति—**मूलेति** । महानित्यध्यवसायात्मिका बुद्धिरुच्यते । **अहङ्कारो**ऽभिमानलक्षणः । **तन्मात्राणि** सूक्ष्मभूतानि **पञ्च भूतानि** स्थूलानि । अहङ्कारतत्त्वम् उद्भूततमस्कम् प्रकृतिस्तन्मात्राणाम् । उत्कटसत्त्वं त्विन्द्रियाणाम् । रजस्त्वहङ्कारगं गुणद्वयप्रवृत्तिहेतुर्नारम्भकमित्यर्थः । **ननु** षोडशको विकार एवेति कथं ? पृथिव्यादीनां घटादिप्रकृतित्वादत आह—**यद्यपीति । न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति** । उभयेषां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरतेत्यर्थः । आकाशात्मानौ विहाय या पञ्चविंशतिरुदिता तस्यां नावान्तरत्वेन पञ्चसंख्यानिवेश इत्याह—**न खल्विति ।** उद्रिक्ताकाशानां पृथिव्यादीनां ज्ञानेन्द्रियेभ्यो घ्राणमादाय पूरणमयुक्तम्, तेषां तस्य च साधारणोपाध्यभावादित्याह—**नापीति ।** तथा घ्राणातिरिक्तानां ज्ञानेन्द्रियाणां कर्मेन्द्रियेभ्यो वाचमाहृत्य न पञ्चसंख्या निवेश्येत्याह—**नापि रसनेति** । तथोद्रेचितवाचां कर्मेन्द्रियाणां न मनसा पञ्चत्वलाभ इत्याह—**नापि पाणीति । समासार्थसंख्यान्तरेण विशिष्यत इति** साक्षात्पूर्ववादिनि निरस्ते समासं पञ्चजनशब्देऽनभ्युपगच्छन्तमुत्थापयतीत्याह—**पूर्वपक्षैकदेशिनमिति । अस्यायमभिप्रायः**—यद्यप्यत्र नानाभावान्न सन्ति पञ्च पञ्च संख्याः, तथापि पञ्च पञ्च पूल्य इत्यादौ पञ्चविंशतिसंख्यायाः पञ्चभिः पञ्चसंख्याभिरविनाभावादिह ता निर्दिश्यमानाः स्वाव्याप्तां महासंख्यां लक्षयन्तीति । **ननु** तत्रापि कथं महासंख्याया अवान्तरसंख्याभिः संबन्धः ? अपेक्षाबुद्धिनाशे तन्नाशादित्याशङ्क्य साहचर्याभावेऽपि हेतुहेतुमद्भावोस्ति संबन्धो लक्षणाबीजमित्याह—**यद्यपीत्यादिना ।** अपिशब्देन विद्यतएवार्थात्मना महासंख्याख-

**न्पक्षे दोषो यल्लक्षणाश्रयणीया स्यात् परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति; भाषिकेण स्वरेणैकपदत्वनिश्चयात्, प्रयोगान्तरे च 'पञ्चानां त्वा पञ्चजनानाम्' ( तै० १।६।२।२ ) इत्यैकपद्यैकस्वर्यैकविभक्तिकत्वावगमात् । समस्तत्वाच्च न वीप्सा पञ्च पञ्चेति । नच पञ्चकद्वय-**

## भामती ।

नच पञ्चशब्दो जनशब्देन समस्तोऽसमस्तः शक्यो वक्तुमित्याह—**परश्चात्र पञ्चशब्द इति ।** **ननु** भवतु समासस्त-थापि किमित्यत आह—**समस्तत्वाच्चेति ।** **अपिच** वीप्सायां पञ्चकद्वयग्रहणे दशैव तत्त्वानीति न सांख्यस्मृतिप्र-त्यभिज्ञानमित्यसमासमभ्युपेत्याह—**न च पञ्चकद्वयग्रहणं पञ्च पञ्चेति ।** न चैका पञ्चसंख्या पञ्चसंख्यान्तरेण शक्या विशेष्टुम्, पञ्चशब्दस्य संख्योपसर्जनद्रव्यवचनत्वेन संख्याया उपसर्जनतया विशेषणेनासंयोगादित्याह—

## वेदान्तकल्पतरुः ।

वान्तरसंख्या, परं त्वपरिच्छेदिकेति सूचितम् । एवमसमासमभ्युपेत्य लक्षणैव दोष इत्यभिधायाभ्युपगमं त्यजति—**न च पञ्चशब्द इति । भाष्ये—भाषिकेण स्वरेणेति । तस्यार्थः**; अत्र मन्त्रे प्रथमः पञ्चशब्द आद्युदात्तः । द्वितीयः सर्वा-नुदात्तः । जनशब्दश्चान्तोदात्तः । तथा न द्वितीयपञ्चशब्दजनशब्दयोः समासादृते आकारस्यान्त्यस्योदात्तत्वमितरेषां चानु-दात्तत्वं घटते; समासस्येति सूत्रेण समासस्यान्तोदात्तत्वविधानात्, अनुदात्तं पदमेकवर्जमिति सूत्रेण यस्मिन् पदे उदात्तः स्वरितो वा विधीयते तमेकं विहाय शिष्टस्यानुदात्तत्वस्मरणाच्च । एवमत्रान्तोदात्तस्वरबलात् समासो निरणायि । भाषि-कसंज्ञके तु शतपथब्राह्मणस्वरविधायकग्रन्थे स्वरितोऽनुदात्तो वेति सूत्रेण यो मन्त्रदशायामनुदात्तः स्वरितो वा स ब्राह्मणे उदात्तो भवतीत्यपवाद आश्रितः । तत आकारादितरेषामनुदात्तानां ब्राह्मणे उदात्तत्वम् । उदात्तमनुदात्तमनन्त्यमिति सूत्रेण च मन्त्रदशायामुदात्तस्यानन्त्यस्य परलग्नतयोच्चार्यस्यानुदात्तत्वं विहितम् । ततश्च नकारोपरितन आकार आकाशश्चेत्यनेन संलग्नत्वेनोच्चार्यमाणोऽनुदात्तो भवति । सति चैवमन्तानुदात्तस्वरो भाषिकग्रन्थसिद्धो भाषिक इति भाष्ये उक्तम् । **ये तु**— छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ इति वचनमुदाहृत्यान्तोदात्तो भाषिक इति—**व्याचक्षते**; तेषामध्ययनविरोधः । अन्तानुदात्तं हि समाम्नातारः पञ्चजनपदमधीयते इति ॥ हे आज्य त्वा पञ्चजनानां कृते गृह्णामीति मन्त्रैकदेशस्यार्थः । असमासमभ्युपेत्यैव द्विः पञ्चशब्दप्रयोगे दशानामेव लाभान्न सांख्य-स्मृतिप्रत्यभिज्ञानमित्याहेति योजना । असमासपक्षे एव वीप्सां विहाय विशेषणपक्षमाशङ्क्याह—**न चैकेति ।** शुक्लादि-शब्दवत् पञ्चशब्दस्य संख्यामुपसर्जनं कृत्वा प्राधान्येन द्रव्यपरत्वाद्गुणीभूतसंख्याया न संख्यान्तरेण विशेषणम् । तथा

## कल्पतरुपरिमलः ।

ब्राह्मणस्वरे भाषिकस्वर इति च मीमांसकानां व्यवहारश्च । एवं चात्रान्तानुदात्तरूपेण भाषिकस्वरेण कथं समासनिश्चयः । समासे ह्यन्तोदात्तेन भाव्यमित्याशङ्क्य तदभिप्रायमाह—**भाषिकेण स्वरेणेति । तस्यार्थ इति ।** परसंलग्नतयेति टीकाग्रन्थश्च प्रतिष्ठित इत्यर्ध इव विरामं विनोच्चार्यस्येत्यर्थः । **ननु**—पञ्चजना इत्यत्राम्नानसिद्धस्यान्तानुदात्तस्वरस्य भाषि-कग्रन्थविहितब्राह्मणपठितमन्त्रत्वनिमित्तोदात्तादेशरूपतया तत्स्थानिना अन्तोदात्तस्वरेण समासनिश्चय इत्येतदयुक्तम्, असमासेऽपि जनशब्दस्य पचाद्यजन्ततया चित इति सूत्रेणान्तोदात्तत्वलाभादिति—**चेत्**; तथा सति नकारोपरितनस्य ब्राह्मणगतोदात्तस्थान्यनुदात्तस्वरसंभवेऽपि पञ्चशब्दगतयोरकारयोः समासं विना तदसंभवात्, चित्स्वरसूत्रापवादकेन 'वृक्षादीनां चेति' सूत्रेण वृक्षादिगणपठितस्य जनशब्दस्याद्युदात्तस्य विहिततया तस्य प्राग्विहितसकलपदस्वरापवादार्थं प्रवृत्तेनान्तोदात्तरूपेण समासस्वरेणैवापवदनीयत्वाच्च । **हे आज्येति ।** आज्यग्रहणतन्त्रत्वाद् विनियोगानुसारेण संबोधन-मध्याहृतम् । कृत इत्यव्ययं तादर्थ्ये । यन्त्राय धर्त्राय गृह्णामीति मन्त्रशेषाम्नातयन्त्रधर्त्रशब्दोक्तशरीरादिनियमनधारणार्थ-मित्यर्थः । यद्यपि जना यदग्निमयजन्त पञ्चेत्यसमासोऽपि वेदे दृश्यते; तथापि यत्र पञ्चशब्दद्वयं तत्र जनशब्दपूर्वपठितस्य पञ्चशब्दस्य समासनियमो दृष्ट इति तात्पर्यम् । **द्विः पञ्चशब्दप्रयोगे इति ।** अनेन भाष्यटीकयोर्वीप्सापदं स्वतन्त्रस्य पञ्चशब्दस्य द्विःप्रयोगमात्रपरं, न तु नित्यवीप्सयोरिति सूत्रोपात्तव्याप्तिविवक्षापरमिति दर्शितम् । **ननु** सूत्रोक्तायामेव वीप्सायामयं द्विःप्रयोगोऽस्तु, तथा च यथा "दश चैकैकं चमसमनुप्रसर्पन्ती"त्यत्र न द्वैगुण्येन विंशतिसंख्यालाभः; "शतं ब्राह्मणाः सोमं भक्षयन्ती"ति वाक्यशेषाद्, एवमिहापि पञ्चविंशतिसंख्यालाभः स्यात् । **मैवम्**; तत्रानुप्रसर्पणीयानां चमसानां दशसंख्यत्वात्तदनुप्रसर्पकाणां प्रतिचमसं दशसंख्यानां ब्राह्मणानां शतसंख्या निषिध्यते, एवमत्र जनानाम-धिकरणानि यदि पञ्च निर्दिष्टानि स्युः, तदा प्रत्यधिकरणं पञ्चसंख्यजनसंबन्धरूपव्याप्तीच्छया पञ्चविंशतिसंख्या निष्पद्येत, न त्वत्राधिकरणपञ्चकनिर्देशोऽस्तीति वैषम्यात् । **नन्वेवं** सति "तासां स्वसृ"रित्यत्रापि दशानामेव लाभः स्यात् । यदि तत्रैका पञ्चसंख्या पञ्चसंख्यान्तरेण विशेष्यते, तर्ह्यत्रापि तथास्त्वित्याशयवतः शङ्कां निराकरोतीत्याह—**असमास-पक्षे एवेति ।** 'तासां स्वसृ'रित्यत्र वाक्यशेषानुसारेणात्रागत्या विशेषणान्वयस्वीकारेणात्रावयवद्वारा दशसंख्यालक्षणया

**ग्रहणं पञ्च पञ्चेति । नच पञ्चसंख्याया एकस्याः पञ्चसंख्यया परया विशेषणं पञ्च पञ्चका इति; उपसर्जनस्य विशेषणेनासंयोगात् । नन्वापन्नपञ्चसंख्याका जना एव पुनः पञ्चसंख्यया विशेष्यमाणाः पञ्चविंशतिः प्रत्येष्यन्ते । यथा पञ्च पञ्चपूल्य इति पञ्चविंशतिपूलाः प्रतीयन्ते तद्वत् । नेति ब्रूमः; युक्तं यत्पञ्चपूलीशब्दस्य समाहाराभिप्रायत्वात्कतीति सत्यां भेदाकाङ्क्षायां पञ्च पञ्चपूल्य इति विशेषणम्, इह तु पञ्च जना इत्यादित एव भेदोपादानात्कतीत्यसत्यां भेदाकाङ्क्षायां न पञ्च पञ्चजना इति विशेषणं भवेत् । भवदपीदं विशेषणं पञ्चसंख्याया एव**

## भामती ।

**एकस्याः पञ्चसंख्याया इति** । तदेवं पूर्वपक्षैकदेशिनि दूषिते परमपूर्वपक्षिणमुत्थापयति—**नन्वापन्नपञ्चसंख्याका जना एवेति** । अत्र तावद्रूढौ सत्यां न योगः संभवतीति वक्ष्यते । तथापि यौगिकं पञ्चजनशब्दमभ्युपेत्य दूषयति—**युक्तं यत्पञ्चपूलीशब्दस्येति** । पञ्चपूलीत्यत्र यद्यपि पृथक्त्वैकार्थसमवायिनी पञ्चसंख्यावच्छेदिकास्ति; तथापीह समुदायिनोऽवच्छिनत्ति न समुदायं समासपदगम्यमतस्तस्मिन् कति ते समुदाया इत्यपेक्षायां पदान्तराभिहिता पञ्चसंख्या संबध्यते पञ्चेति । पञ्चजना इत्यत्र तु पञ्चसंख्ययोत्पत्तिशिष्टया जनानामवच्छिन्नत्वात्समुदायस्य च पञ्चपूलीवदत्राप्रतीतेर्न पदान्तराभिहिता संख्या संबध्यते । **स्यादेतत्**—संख्येयानां जनानां मा भूच्छब्दान्तरवाच्यसंख्यावच्छेदः, पञ्चसंख्यायास्तु तयावच्छेदो भविष्यति । नहि साप्यवच्छिन्नेत्याह—**भवदपीदं विशेषणमिति । उक्तोऽत्र दोषः** । नह्युपसर्जनं विशेषणेन युज्यते । पञ्चशब्द एव तावत्संख्येयोपसर्जनसंख्यामाह, विशेषतस्तु पञ्चजना इत्यत्र समासे । विशेषणापेक्षायां तु न समासः स्यात्; असामर्थ्यात् । नहि भवति ऋद्धस्य राजपुरुष इति समासः, अपि

## वेदान्तकल्पतरुः ।

सति विशेष्येण द्रव्येण विशेषणेन च संख्यया युगपदाकृष्यमाणा संख्या नैकेनाप्यन्वियादित्यर्थः । **तदेवमिति** । नानाभावेन दूषितमपि परमपूर्वपक्षिणं संख्यान्तरानाकाङ्क्षा नोपसर्जनन्यायाभ्यां दूषयितुं पुनरुत्थापयतीत्यर्थः । रूढौ **सत्यामिति** । तद्वारा प्राणादिषु लक्षणायां च सत्यामित्यर्थः । अनाकाङ्क्षां दर्शयति—**पञ्चपूलीत्यत्रेति** । पृथक्त्वेन सहैकस्मिन्नर्थे या समवैति सा तथोक्ता । ईवन्तद्विगुसमासेन समाहाराभिधानात् पदान्तरोपात्तसंख्यया समाहारोऽवच्छेद्यः, उत्पत्तिशिष्टया तु समानपदस्थया समाहारिणः पूला अवच्छेद्या इति पञ्चपूलीत्यत्रास्त्याकाङ्क्षा, पञ्चजना इत्यत्र त्वीबन्तत्वाश्रवणात्समाहाराप्रतीतेर्जनानां च स्वपदगतसंख्ययाऽवच्छिन्नत्वान्न संख्यान्तराकाङ्क्षेत्यर्थः । विजातीयविशेषणान्तरप्रयोगे च रक्तपटन्यायो न सजातीये प्रयोगे, न हि भवति रक्तपटो रक्त इति । इहापि पक्षे नोपसर्जनन्यायमवतारयिष्यन्नाशङ्कते—**स्यादेतदिति । न हि सापीति** । आत्माश्रयप्रसङ्गान्न संख्या तयाऽवच्छिद्यते । अतः संख्यान्तराकाङ्क्षेत्यर्थः । तत्र चोक्तो दोष इति परिहारभाष्यार्थमाह—**उक्त इति** । पञ्चशब्दस्य संख्योपसर्जनद्रव्यवाचकत्वादुपसर्जनसंख्याया न शब्दान्तरोक्तसंख्यासंबन्ध इत्यसमासवत् समासेऽपि दोषः । समासे तु पञ्चशब्दोपात्तसंख्याया जनशब्दार्थं प्रति विशेषणत्वाच्च न विशेषणान्वयः । **ननू**पसर्जनस्यापि विशेषणान्वयः किं न स्यादत आह—**विशेषणापेक्षायां त्विति** । नैरपेक्ष्यं हि सामर्थ्यं साकाङ्क्षत्वे सति स्वविशेषणेनाकृष्यमाणस्य न विशेष्यान्तरान्वय इत्यसमासः स्यादित्यर्थः । सापेक्षस्यासमासे उदाहरणमाह—**न हि भवतीति** । ऋद्धविशेषणापेक्षस्य राज्ञो न पुरुषेण समासोऽपि तु पदवृत्तिरेवंप्रकारा ऋद्धस्य राज्ञ इतीति । उदाहृतभाष्यस्यायमर्थ इत्याह—**इत्यर्थ इति** । प्रधानं त्रिधा भित्त्वा अतिरेकसमाधानादभ्युच्चयमात्रत्व-

## कल्पतरुपरिमलः ।

पञ्चशब्दाद्वयोपपादने संभवत्यनन्यगतिकविशेषणसंक्रमकल्पनायोगात्, दशसंख्यया च ते वा एते पञ्चान्ये पञ्चान्ये दशसन्तस्तत्कृतमित्यादिश्रुत्यन्तरप्रसिद्धसंख्येयग्रहणे संभवत्यप्रामाणिकसांख्यतत्त्वपर्यवसायिपञ्चविंशतिसंख्याग्रहणायोगाच्च नात्र तन्न्यायः प्रवर्तत इति भावः । **दूषितमपीति । ननु** यदि विशेषणस्य भिन्नपदोपात्तविशेषणान्तरान्वयो न संभवति 'तासां खसृ'रित्यत्र 'पञ्चपञ्चाशत' इत्यत्र का गतिः ? यदि तत्र कोडीकारकधर्ममनपेक्ष्यैव प्रथमं पञ्चधा पञ्चाशद्वा च विभक्तेषु पुनः पञ्चसंख्यान्वयात् संवर्धनसंख्यालाभः, तर्हि अत्रापि तथाऽस्त्वित्यनुशयवन्तं प्रथमपूर्वपक्षिणं प्रकारान्तरेण दूषयितुमुत्थापयतीत्याह—**नानाभावेनेति । ननु**—व्यस्तपञ्चसंख्यायाः न विशेष्यान्वयः; आकाङ्क्षाविरहाद्, नापि विशेषणान्वयः, असामर्थ्यादित्युक्तं दूषणमयुक्तम्; संवर्धनसंख्यालाभार्थं सजातीयविजातीयसंख्यान्तराकाङ्क्षोपपत्तेः, तदाकाङ्क्षाविरहेऽपि संख्यान्तरस्य शब्दगत्या साक्षाद् विशेषणान्वयमसामर्थ्यपराहतं परित्यज्य विशिष्टान्वयिन एव तस्य सप्तदशारत्निवाक्ये विधेरेव विशेषणसंख्यासंक्रमकल्पनोपपत्तेः । अन्यथा 'तासां खसृ'रित्यादौ का गतिरिति—**चेत्, उच्यते**; तत्र वाक्यशेषानुसारात्संवर्धनसंख्यालम्भकम् आकाङ्क्षोत्थापनं विशेषणसंक्रमणं चाभ्युपगम्यते, इह तु

भवेत्, तत्र चोक्तो दोषः । तस्मात्पञ्च पञ्चजना इति न पञ्चविंशतितत्त्वाभिप्रायम् । अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायम् । अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसंख्यायाः । आत्मा तावदिह प्रतिष्ठां प्रत्याधारत्वेन निर्दिष्टः; यस्मिन्निति सप्तमीसूचितस्य 'तमेव मन्य आत्मानम्' इत्यात्मत्वेनानुकर्षणात् । आत्मा च चेतनः पुरुषः । स च पञ्चविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं च युज्यते । अर्थान्तरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत । तथा 'आकाशश्च प्रतिष्ठितः' इत्याकाशस्यापि पञ्चविंशतावन्तर्गतस्य न पृथगुपादानं न्याय्यम् । अर्थान्तरपरिग्रहे चोक्तं दूषणम् । कथं च संख्यामात्रश्रवणे सत्यश्रुतानां पञ्चविंशतितत्त्वानामुपसंग्रहः प्रतीयेत ? जनशब्दस्य तत्त्वेष्वरूढत्वात्, अर्थान्त-

## भामती ।

तु पदवृत्तिरेव—ऋद्धस्य राज्ञः पुरुष इति । सापेक्षत्वेनासामर्थ्यादित्यर्थः । **अतिरेकाच्चेति** । अभ्युच्चयमात्रम् । यदि सत्त्वरजस्तमांसि प्रधानेनैकीकृत्यात्माकाशौ तत्त्वेभ्यो व्यतिरिच्येते, तदा सिद्धान्तव्याकोपः । अथ तु सत्त्वरजस्तमांसि मिथो भेदेन विवक्ष्यन्ते, तथापि वस्तुतत्त्वव्यवस्थापने आधारत्वेनात्मा निष्कृष्यताम् । आधेयान्तरेभ्यस्त्वाकाशस्याधेयस्य व्यतिरेचनमनर्थकमिति गमयितव्यम् । **कथं च संख्यामात्रश्रवणे सतीति** । 'दिक्संख्ये संज्ञायाम्' इति संज्ञायां समासस्मरणात् पञ्चजनशब्दस्तावदयं क्वचिन्निरूढः । नच रूढौ सत्यामवयवप्रसिद्धेर्ग्रहणम्; सापेक्षत्वात्, निरपेक्षत्वाच्च

## वेदान्तकल्पतरुः ।

मिति चेत्, का तर्हि गमनिकाऽत आह—**यदीति** । प्रधानं भित्त्वा संख्योपपादनेऽपि तव नोपास्तिपरं वचनमिति यथावस्तु वक्तव्यम् । तत्राधारत्वेन भोक्तुरात्मनो भोग्यप्रतिष्ठाहेतुत्वेन पृथक्कारेऽप्याकाशपृथक्कारो निष्प्रयोजन इत्यर्थः । कथं चेति भाष्यमयुक्तम्; पञ्चसंख्याद्वयात् पञ्चविंशतिसिद्धेरित्याशङ्क्याह—**दिक्संख्ये इति** । दिक्संख्यावाचिशब्दौ संज्ञायां गम्यमानायाम् उत्तरपदेन समस्येते यथा दक्षिणाग्निः सप्तऋषयः इति सूत्रार्थः । एवं च एकैव पञ्चसंख्या द्वितीयपञ्चशब्दस्य संज्ञा समासगतस्य न संख्यार्थतेति ग्रन्थार्थः । यद्यप्यवयवाभिधानसापेक्षयोगान्निरपेक्षरूढिर्बलीयसी;

## कल्पतरुपरिमलः ।

संवर्धनसंख्याविवक्षागमकवाक्यशेषाभावान्न तदुभयमाश्रयणीयमिति भावः । **कथं चेति भाष्यमयुक्तमिति । ननु—** कथं चेति भाष्यं नायुक्तम्, किं तु तद्भाष्यमयुक्तमित्येतदेव वचनमयुक्तम्; न हि तेन पञ्चविंशतिसंख्याया अलाभ उक्तः, किं तु यौगिकेन समस्तपदेन तल्लाभमभ्युपेत्य तथापि तत्संख्येयानि सांख्यतत्त्वानीति न सिध्यतीत्युक्तम् । अत एव तत्सिद्धिः किं जनशब्दशक्तिवशादुत पञ्चविंशतिसंख्यायाः संख्येयान्तराभावेन परिशेषादिति विकल्पं मनसि निधाय पक्षद्वयमपि भाष्ये क्रमेण दूषितम् । तत्र द्वितीयविकल्पदूषणस्यायमर्थः । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि भूतानि तन्मात्राणि मनोबुद्धिभोक्तृस्थूलसूक्ष्मशरीराणि चेतीन्द्रियेभ्यः पराह्यर्था इत्यादिश्रुतिप्रसिद्धाः सन्ति । देवाः पितरो गन्धर्वा दैत्या दानवा राक्षसा भूताः प्रेताः पिशाचाश्चत्वारो वर्णाः षडनुलोमाः षट्प्रतिलोमाश्चेत्येवमपि पञ्चविंशतिः श्रुतिप्रसिद्धा एव जनशब्दमुख्यार्थाः सन्ति । एवं श्रुत्यन्तरप्रसिद्धसंख्येयोपसंग्रहे कर्तुं शक्ये नाप्रामाणिकसांख्यकल्पिततत्त्वोपसंग्रहः कार्यः । एवं च संख्येयानामात्मनि प्रतिष्ठितत्ववर्णनमपि संगच्छते । न हि सांख्यतत्त्वोपसंग्रहे तत्संगतिरस्ति । प्रधानस्य स्वतन्त्रत्वादन्येषां प्रधानाश्रितत्वात् । आकाशग्रहणमपीन्द्रियादीनां संख्येयतायामव्याकृताकाशपरतया देवादीनां संख्येयतायां तावतामवकाशात्मनोपकारको भूताकाशो महानिति तत्परतयोपपद्यत इति । तस्माद् भाष्यायुक्तत्ववचनं तावदयुक्तम् । तथा पञ्चसंख्याद्वयात्पञ्चविंशतिसिद्धेरिति तदयुक्तत्वहेतुवचनं प्राक्पञ्चविंशतिसंख्यालाभस्य नानाभावाकाङ्क्षाविरहासामर्थ्यहेतुभिर्दूषितत्वादप्ययुक्तम् । न हि दूषितपक्षस्य प्रौढ्याऽभ्युपगमेन दूषणान्तरोक्तिवद् दूषितपक्षमेवावलम्ब्य शङ्कोत्थापनं संगच्छते । तस्मात्सर्वमिदमनुपपन्नमिति—**चेत्, अत्रायमाचार्याणामाशयः**—कथं चेत्यादिभाष्येण पञ्चविंशतिसंख्यामभ्युपगम्य ततः सांख्यतत्त्वोपसंग्रहस्य वस्तुतः पञ्चविंशतिसंख्यालाभस्य चाक्षेपः प्रतिज्ञातः । प्रथमाक्षेपे जनशब्दस्येत्यादिहेतुद्वयमुक्तम्; द्वितीयाक्षेपानुपपत्तिं कथं तर्हि पञ्च पञ्चजना इतीति भाष्येणोद्भाव्य तदुपपत्तिरुच्यत इत्यादिना दर्शिता । तत्र द्वितीयाक्षेपानुपपत्त्युद्भावनावाक्यस्यायमर्थः । पञ्चजना इत्यस्य क्लृप्ते योगे संभवति न रूढिः कल्पनीया; यौगिकत्वे च असमस्तः पञ्चशब्दो न पञ्चसंख्याप्रतिपत्त्यर्थः; समस्तपञ्चशब्देन तल्लाभात्, नापि द्वैगुण्यलाभार्थः; व्यस्तसमस्तयोः पञ्चशब्दयोरेकार्थलक्षकत्वासंभवात् । एवं चासमस्तं पञ्चपदं पञ्चधा विभक्तेषु प्रत्येकमन्वितां विशेषणसंक्रान्तां वा पञ्चसंख्यां यदि न समर्थयेत्, तदा व्यर्थमेव स्यादिति वाक्यशेषाभावेऽप्यसमस्तपञ्चपदान्तरसमभिव्याहारबलात् पञ्चविंशतिसंख्यासिद्धिरनिवार्या इति कथं तत्सिद्ध्यभावोऽपि प्रतिज्ञात इति । एवं कथंचेत्यादेः कथं तर्हि पञ्च पञ्चजना इत्यन्तस्य भाष्यस्यार्थं सिद्धं कृत्वा

रोपसंग्रहेऽपि संख्योपपत्तेः । कथं तर्हि पञ्च पञ्चजना इति? उच्यते—'दिक्संख्ये संज्ञायाम्' (पा० सू० २।१।५०) इति विशेषणस्मरणात्संज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः । ततश्च रूढत्वाभिप्रायेणैव केचित्पञ्चजना नाम विवक्ष्यन्ते न सांख्यतत्त्वाभिप्रायेण। ते कतीत्यस्यामाकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते । पञ्चजना नाम ये केचित्ते च पञ्चैवेत्यर्थः । सप्तर्षयः सप्तेति यथा ॥ ११ ॥ के पुनस्ते पञ्चजना नामेति? तदुच्यते—

**प्राणादयो वाक्यशेषात् ॥ १२ ॥**

'यस्मिन् पञ्च पञ्चजनाः' इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पञ्च निर्दिष्टाः—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति । तेऽत्र वाक्यशेषगताः संनिधानात्पञ्चजना विवक्ष्यन्ते । कथं पुनः प्राणादिषु जनशब्दप्रयोगः?

## भामती ।

रूढेः । तद्यदि रूढौ मुख्योऽर्थः प्राप्यते, ततः स एव ग्रहीतव्यः, अथ त्वसौ न वाक्ये संबन्धार्हः पूर्वापरवाक्यविरोधी वा, ततो रूढ्यपरित्यागेनैव वृत्त्यन्तरेणार्थान्तरं कल्पयित्वा वाक्यमुपपादनीयम् । यथा 'श्येनेनाभिचरन् यजेत' इति श्येनशब्दः शकुनिविशेषे निरूढवृत्तिस्तदपरित्यागेनैव निपत्यादानसादृश्येनार्थवादिकेन क्रतुविशेषे वर्तते, तथा पञ्चजनशब्दोऽवयवार्थयोगानपेक्ष एकस्मिन्नपि वर्तते, यथा सप्तर्षिशब्दो वसिष्ठ एकस्मिन् सप्तसु च वर्तते । न चैष तत्त्वेषु रूढः, पञ्चविंशतिसंख्यानुरोधेन तत्त्वेषु वर्तयितव्यः । रूढौ सत्यां पञ्चविंशतेरेव संख्याया अभावात्कथं तत्त्वेषु वर्तते ॥११॥ एवं च के ते पञ्चजना इत्यपेक्षायां किं वाक्यशेषगताः प्राणादयो गृह्यन्तामुत पञ्चविंशतिस्तत्त्वानीति विशये तत्त्वानामप्रामाणिकत्वात्, प्राणादीनां च वाक्यशेषे श्रवणात्तत्परित्यागे श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्प्राणादय एव पञ्चजनाः । नच—काण्वमाध्यन्दिनयोर्विरोधान्न प्राणादीनां वाक्यशेषगतानामपि ग्रहणमिति—सांप्रतम्; विरोधेऽपि तुल्यबलतया षोडशिग्रहणाग्रहणवद्विकल्पोपपत्तेः । न चेयं वस्तुस्वरूपकथा, अपितूपासनानुष्ठानविधिः; 'मनसैवानुद्रष्टव्यम्' इति विधिश्रवणात् । **कथं पुनः प्राणादिषु जनशब्दप्रयोग इति ।** जनवाचकः शब्दो जनशब्दः । पञ्चजनशब्द इति

## वेदान्तकल्पतरुः ।

तथापीह रूढमनुष्यग्रहणं निस्तात्पर्यमुक्तमित्यत आह—**तद्यदीति** । इह मनुष्या वाक्ये न संबन्धार्हा अजामन्त्रे लब्धात्माधिकाराच्छागा पूर्वापरवाक्यविरोधिनीति । रूढेर्योगेऽपहृते रूढ्यर्थसंबन्धात्तद्गुणाद्वाऽर्थान्तरवृत्तिसिद्धौ शब्दस्य न योगः कल्प्य इत्यत्रोदाहरणमाह—**यथेति** । उक्तं ह्यर्थवादेन यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेनेति । दार्ष्टान्तिकमाह—**तथेति** । अवयवार्थभूतपञ्चसंख्यासंबन्धानपेक्ष एकस्मिन्नपि मनुष्ये वर्तते । "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इत्यमरो हि जगौ । मनुष्ये रूढश्च पञ्चजनशब्दस्तत्संबन्धात्प्राणादिषु लक्षणया वर्त्स्यतीति वक्ष्यतीति । **ननु** रूढिरपि तत्त्वेष्वस्तु, किं लक्षणयाऽत आह—**न चैष इति** ॥ ११ ॥ अस्तु तर्हि तत्त्वेषु लाक्षणिकः पञ्चजनशब्दो नेत्याह—**एवं चेति** । यच्चोक्तं वाक्यशेषयोर्विरोधान्न प्राणादयः पञ्चजना इति तत्राह—**न च काण्वेति** । यच्च वस्तुनि न विकल्प इति, तत्राप्याह—**न चेयमिति** । उत्तरे मन्त्रे विधिश्रवणं । तत्रान्वयव्यतिरेकसिद्धतयाऽनूदिताऽप्युपास्तिः पुंसा विकल्पेन कर्तुं शक्येत्यर्थः । जनानां वाचकत्वेन संबन्धी शब्दो जनशब्द इति व्याख्याना-

## कल्पतरुपरिमलः ।

टीकाकारैरुच्यत इत्यादिभाष्यस्याभिप्रायवर्णनं कथं चेति प्रघट्टकादिप्रतीकग्रहणपूर्वकं दिक्संख्ये इत्यादिग्रन्थेन क्रियत इत्येवमभिप्रेत्य कथं तर्हीत्यादिशङ्काभाष्यार्थः कथं चेत्यादिभाष्यमयुक्तमित्याद्यवतारिकया संगृहीतः । एवं च टीकाकारैः कथं चेति भाष्यप्रतीकमुपादाय कथमुच्यत इत्यादिभाष्याभिप्रायवर्णनं कृतमित्यपि शङ्का निरवकाशा वेदितव्या । अथ त्वसौ न **वाक्ये** संबन्धार्हः, पूर्वापरवाक्यविरोधी वेत्यनयोः क्रमेणोदाहरणे दर्शयति—**इह मनुष्येति** । यथा श्येनेनेत्यादिदृष्टान्तवाक्ये रूढिपूर्वकलक्षणोदाहृता, तथेत्यादिदार्ष्टान्तिकवाक्ये तु रूढिसमर्थनमात्रं कृतं, न तु तत्पूर्वलक्षणासमर्थनम् । अतस्तथेत्यादि दृष्टान्ताननुगुणं भवतीति शङ्कामपनयति—**दार्ष्टान्तिकमाहेति** । दृष्टान्ताननुगुणत्वाशङ्कां टीकाग्रन्थापेक्षिताध्याहारेण निरस्यति—**तत्संबन्धादिति** ॥ ११ ॥ **तत्त्वेषु लाक्षणिक इति** । तत्त्वानामपि प्राणादिवद् मनुष्यसंबन्धित्वादिति भावः । **ननु** विधिश्रवणमसिद्धम्; मनसैवेति तृतीयावधारणाभ्यां मनोन्वयव्यतिरेकप्रदर्शनपराभ्यां तदन्वयव्यतिरेकानुविधायित्वेनोपासनानुवादप्रतीतेः, सुषुप्त्युत्क्रान्त्यधिकरण (ब्र. सू. अ.१ पा.३ सू. ४४) विषयवाक्यभूतनिष्प्रपञ्चप्रत्यगभिन्नब्रह्मप्रकरणमध्यपतितमनसैवानुद्रष्टव्यमित्येतदनन्तरं नेह नानाऽस्ति किंचन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति भेदनिषेधान्नानेन च विरुद्धस्योपासनाविधानस्याङ्गीकर्तुमयुक्तत्वाच्चेत्याशङ्क्याह—**तत्रान्वयव्यतिरेकेति** । अन्वयव्यतिरेकांशेऽनुवादत्वेऽपि तव्यप्रत्ययश्रवणादुपासने विधिरङ्गीकर्तुं शक्यः । अनुवादत्वेऽपि सत एवा-

तत्त्वेषु वा कथं जनशब्दप्रयोगः? समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात्प्राणादय एव ग्रहीतव्या भवन्ति। जनसंबन्धाच्च। प्राणादयो जनशब्दभाजो भवन्ति। जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः 'ते वा एते पञ्च ब्रह्मपुरुषाः' (छा० ३।१३।६) इत्यत्र। 'प्राणो ह पिता प्राणो ह माता' (छा० ७।१५।१) इत्यादि च ब्राह्मणम्। समासबलाच्च समुदायस्य रूढत्वमविरुद्धम्। कथं पुनरसति प्रथमप्रयोगे रूढिः शक्याश्रयितुम्? शक्योद्भिदादिवदित्याह। प्रसिद्धार्थसंनिधाने ह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभिव्याहारात्तद्विषयो नियम्यते, यथा 'उद्भिदा यजेत' 'यूपं छिनत्ति' 'वेदिं करोति' इति। तथायमपि पञ्चजनशब्दः समासान्वा-

## भामती।

यावत्। तस्य कथं प्राणादिष्वजनेषु प्रयोग इति व्याख्येयम्। अन्यथा तु प्रत्यस्तमितावयवार्थे समुदायशब्दार्थे जनशब्दार्थो नास्तीत्यपर्यनुयोग एव। रूढ्यपरित्यागेनैव वृत्त्यन्तरं दर्शयति—**जनसंबन्धाच्चेति**। जनशब्दभाजः पञ्चजनशब्दभाजः। **ननु** सत्यामवयवप्रसिद्धौ समुदायशक्तिकल्पनमनुपपन्नं, संभवति च पञ्चविंशत्यां तत्त्वेष्ववयवप्रसिद्धिरित्यत आह—**समासबलाच्चेति**। **स्यादेतत्**—समासबलाच्चेद्रूढिराश्रीयते हन्त न दृष्टस्तर्हि तस्य प्रयोगोऽश्वकर्णादिवद्वृक्षादिषु। तथाच लोकप्रसिद्ध्यभावान्न रूढिरित्याक्षिपति—**कथं पुनरसतीति**। जनेषु तावत्पञ्चजनशब्दस्य प्रथमः प्रयोगो लोकेषु दृष्ट इत्यसति प्रथमप्रयोग इत्यसिद्धमिति स्थवीयस्तयानभिधायाभ्युपेत्य प्रथमप्रयोगाभावं समाधत्ते—**शक्योद्भिदादिवदिति**। आचार्यदेशीयानां मतभेदेष्वपि न पञ्चविंशतिस्तत्त्वानि सिध्यन्ति। **परमार्थतस्तु**—

## वेदान्तकल्पतरुः।

भावे दोषमाह—**अन्यथेति**। प्रत्यस्तमितोऽवयवार्थो यस्मिन् समुदायशब्दार्थे सिद्धान्त्यभिमते प्राणादौ। जनशब्दस्य समुदायैकदेशस्यार्थो नास्तीति जनशब्दस्य प्राणादौ कथं प्रयोग इति यच्चोद्यं तदचोद्यं स्यादनुक्तोपालम्भत्वादित्यर्थः। भाष्ये-समाने रूढ्यतिक्रमे वाक्यशेषवशात् प्राणादयो ग्रहीतव्या इति प्राणादीनां लक्षणार्हत्वमुक्तम्। वाक्यग्रहणं तेषां प्रमितत्वार्थम्। शेषग्रहणं संनिहितत्वायेति लक्षणां दर्शयति। जनसंबन्धाच्चेति भाष्यम्। तस्य भावमाह—**रूढ्यपरित्यागेनेति**। रूढार्थसंबन्धादर्थान्तरप्रतीतिसिद्धौ न योगवृत्तिः प्रधानादौ कल्प्येति भाष्यार्थः। कल्प्या रुढिर्योगाद् दुर्बलेत्याशङ्क्य सूत्रात् क्लृप्तिमाह—**ननु सत्यामिति**। नोपसर्जनन्यायातिरेकौ करेणापिधाय संभवति चेत्युक्तम्। प्रयोगानुसारित्वाद् व्याकरणस्य तदभावान्न रूढिरित्याशङ्कते—**स्यादेतदिति**। मनुष्येषु पञ्चजनशब्दस्य लोके एव प्रयोगात्तत्संबन्धात्प्राणादिषु वृत्त्युपपत्तिं स्फुटां जनसंबन्धाच्चेति भाष्यसूचितां पृथङ् न वक्ति भगवान् भाष्यकारः, प्रौढ्या तु रूढिं समर्थयत इत्याह—**जनेष्विति**। **स्थवीयस्तया** स्फुटतयेत्यर्थः। **शक्योद्भिदादिवदिति भाष्ये**—उद्भिदधिकरण(जै.सू.अ.१पा.४.सू.२) मुदाहृतं, तदेवम्—उद्भिदा यजेत पशुकाम इत्यत्रोद्भित्पदं कर्मनामोत विधेयगुणसमर्पकमिति संशये उद्भिच्छब्दस्य खनित्रादौ प्रसिद्धेः नामत्वे च यजिसमानार्थत्वेनानर्थक्याद् ज्योतिष्टोमे गुणविधिरिति प्राप्ते राद्धान्तः। अत्र हि यजेतेति यागेन भावयेदित्यर्थः। तथा चोद्भिदेति तृतीयान्तपदं यजिसामानाधिकरण्याद् यागनाम स्यात्। न चेदं वचनं गुणं शक्नोति विधातुम्; द्रव्ययागयोर्भेदादुद्भिदा यागेनेति सामानाधिकरण्याऽयोगात्, उद्भिद्वतेति कल्पने मत्त्वर्थलक्षणापातात्, उद्भिदा यागं

## कल्पतरुपरिमलः।

नुवाद इति विध्युन्नयनमुपपद्यते। विश्वजित्सर्वपृष्ठ इति सर्वताविधावनूद्यमानतदाश्रयपृष्ठविध्युन्नयनवद् अभेदप्रकरणेऽपि तत्प्रतिपत्त्युपायतयोपासनाविधिर्युज्यते। तत्रैव प्रकरणे यज्ञादिविधेः संन्यासविधेश्च दर्शनादिति भावः। **शेषग्रहणमिति**। तेनान्नमयादीनां पञ्चसंख्यानां मनुष्यसंबन्धिनामपि नात्र ग्रहणमसंनिहितत्वादिति द्योत्यते। ज्योतिःप्राणमन्त्रयोरर्थान्तरपरत्वेन शर्कराञ्जनविध्यर्थवादरीत्या पञ्चजनवाक्यशेषत्वाभावेऽपि संनिधानमात्रमस्ति, सूत्रे तावदेव विवक्षितमित्यपि द्योत्यते। **अपिधायेति**। रूढिव्यवस्थापनावन्तौ नातिदृढावित्युपेक्ष्येत्यर्थः। अत एव विवक्षितोपसर्जनन्यायातिरेकप्रदर्शनस्थले तद्दार्ढ्यं रूढ्यैव संपादनीयमित्यभिप्रेत्य टीकायामत्र तावद्रूढौ सत्यां न योगः संभवतीति वक्ष्यत इति वक्ष्यमाणरूढिः स्मारिता। **प्रौढ्या तु रूढिमिति**। प्राणादिष्विति शेषः। **ननू**द्भेदनमूर्ध्वविदारणमनेन क्रियत इति योगं प्रदर्श्य खनित्रादौ प्रसिद्धिः संपादनीया, सा पशुफलस्योद्भेदनं प्रकाशनमुत्पादनं वा कुर्वति यागेऽपि संपादयितुं शक्येत्याशङ्क्याह—**नामत्वे चेति**। **मत्वर्थलक्षणेति**। न च नामत्वपक्षेऽप्युद्भिन्नामकत्वार्थे लक्षणा; तदपेक्षया मत्वर्थलक्षणाया जघन्यत्वादिति भावः। **वैरूप्यापातादिति**। प्रतियोगिभेदेन साध्यत्वसाधनत्वयोरविरोधेऽप्येकस्य यजेः साध्यसाधनोभयावस्थासमर्पकत्वं न संभवतीति भावः। अतः स्वरूपेणोपस्थितस्यैव यजेर्यथार्हं तेन तेनान्वयः स्यादित्याशङ्क्याह—

ख्यानादवगतसंज्ञाभावः संज्ञाकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते । कैश्चित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि च पञ्च पञ्चजना व्याख्याताः । अन्यैश्च चत्वारो वर्णा निषादपञ्चमाः परिगृहीताः । क्वचिच्च 'यत्पाञ्चजन्यया विशा' ( ऋ० सं० ८।५३।७ ) इति प्रजापरः प्रयोगः पञ्चजनशब्दस्य दृश्यते । तत्परिग्रहेऽपीह न कश्चिद्विरोधः । आचार्यस्तु न पञ्चविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवंपरतया 'प्राणादयो वाक्यशेषात्' इति जगाद ॥१२॥ भवेयुस्तावत्प्राणादयः पञ्चजना माध्यंदिनानां येऽन्नं प्राणादिष्वामनन्ति । काण्वानां तु कथं प्राणादयः पञ्चजना भवेयुर्येऽन्नं प्राणादिषु नामनन्तीति ? अत उत्तरं पठति—

**ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥**

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसंख्या पूर्येत । तेऽपि हि 'यस्मिन्पञ्च पञ्चजनाः' इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते—'तद्देवा ज्योतिषां ज्योतिः' इति । कथं पुनरुभयेषामपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्चसंख्यया केषांचिद्गृह्यते केषांचिन्नेति ? अपेक्षाभेदादित्याह । माध्यंदिनानां हि समानमन्त्रपठितप्राणादिपञ्चजन लाभान्नास्मिन्मन्त्रान्तरपठिते ज्योतिष्यपेक्षा भवति । तदलाभात्तु काण्वानां भवत्यपेक्षा । अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे । यथा समानेऽप्यतिरात्रे वचनभेदात्षोडशिनो ग्रहणाग्रहणे तद्वत् । तदेवं न तावच्छ्रुतिप्रसिद्धिः काचित्प्रधानविषयास्ति । स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥ १३ ॥ इति तृतीयं न संख्योपसंग्रहाधिकरणम् ॥

---

### भामती ।

पञ्चजना वाक्यशेषगता एवेत्याशयवानाह—**कैश्चिदिति** । शेषमतिरोहितार्थम् ॥ १२ ॥ १३ ॥ **इति तृतीयं न संख्योपसंग्रहाधिकरणम् ॥**

### वेदान्तकल्पतरुः ।

भावयेद्यागेन पशुमिति वैयधिकरण्ये च यागस्य फलं प्रति साधनत्वं गुणं प्रति साध्यत्वमिति वैरूप्यापातात्, विध्यावृत्त्या वाक्यभेदाच्च । उद्भिनत्ति साधयति पशुमिति यागेऽपि प्रसिद्धिः स्यात् । न च नामवैयर्थ्यम्; अत्र नामत्वसिद्धावन्यत्र समे दर्शपौर्णमासाभ्यां यजेत दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ नामवद्यागानुवादेन गुणफलविधिसंभवात् । न च ज्योतिष्टोमः प्रकृतो, यत्र गुणो विधीयते । तस्मान्नामधेयमिति । एवं यथा सन्निहितयज्ञानुरोधेनोद्भित्पदं यागनामधेयमेवं संनिहितवाक्यशेषात् पञ्चजनशब्दः प्राणादिषु रूढ इति भाष्यार्थः । यद्यप्युद्भित्पदं यौगिकम्; तथापि सामानाधिकरण्यादवगते नामत्वेऽवयवानुगमः क्रियत इति रूढितुल्यत्वाद्भाष्ये रूढित्वोक्तिः ॥१२॥१३॥ **यस्मिन्न**व्याकृताख्य आकाशश्च प्रतिष्ठितः, **तमेव** निष्प्रपञ्चं ब्रह्मात्मकममृतमात्मानं मन्ये । त्वं किं विद्वान् मर्तव्यादन्योऽमर्त्यः न किं तर्ह्यहमप्यविद्यया मर्त्यः । विद्वांस्तु सन्नमृतब्रह्मात्मक इति मन्त्रदृशो वचनं प्राणादीनां जीवनादिहेतूनां जीवनादिप्रदं त्वंपदलक्ष्यं ये विदुस्ते तस्य स्वरूपं **पुराणं** चिरन्तनम् । अग्रे कार्यदशायामप्यलुप्तत्वेन भवमग्र्यं ब्रह्म निश्चिक्युर्निश्चयेन ज्ञातवन्तः । पाञ्चजन्यया प्रजया विशतीति विशा मनुष्यरूपया । इन्द्रे आह्वातव्ये घोषा असृक्षत सृष्टा । यत्पूर्वार्धे कालानवच्छेद्यमुक्तं तज्ज्योतिषामादित्यादीनां भासकममृतत्वेन आयुष्ट्वेन जीवनगुणवत्तया च देवा उपासते तेन तत्रायुष्मन्तो जाताः । अस्मिन्मन्त्रे षष्ठ्यन्तज्योतिषा पञ्चसंख्यापूरणं नात्मज्योतिषा एकस्याधारत्वाधेयत्वायोगादिति ॥ **इति तृतीयं न संख्योपसंग्रहाधिकरणम्**[1] ॥

### कल्पतरुपरिमलः ।

**विध्यावृत्त्येति** ॥ १२ ॥ १३ ॥ यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षतेत्यर्धस्यार्थः कथितस्तेन पञ्चजनसंबन्धिन्याः प्रजाया मनुष्यत्वोक्त्या पञ्चजनशब्देनेह मनुष्याणां ग्रहणमित्युक्तं भवति । तत्र पञ्चसंख्या चतुरो वर्णानन्तरप्रभवत्वेनैकीकृता, न तु लोमप्रतिलोमांश्चापेक्ष्य योजनीया । **यत्पूर्वार्धे इति** । यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते इति पूर्वार्धम् । **षष्ठ्यन्तज्योतिषेति** । श्रुतौ बहुवचने सत्यप्यत्र सूत्रे चैकवचनं ज्योतिष्ट्वेनैकीकृत्य । अन्यथा हि पञ्चसंख्यातिरेकः स्यादिति ॥ **इति तृतीयं न संख्योपसंग्रहाधिकरणम् ॥**

---

१ तत्र सूत्राणि ३—न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ११ प्राणादयो वाक्यशेषात् १२ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

( ४ अधिकरणम् ) **कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥**

**प्रतिपादितं ब्रह्मणो लक्षणम् । प्रतिपादितं च ब्रह्मविषयं गतिसामान्यं वेदान्तवाक्यानाम् ।**

### भामती ।

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

अथ समन्वयलक्षणे केयमकाण्डे विरोधाविरोधचिन्ता, भविता हि तस्याः स्थानमविरोधलक्षणमित्यत आह— **प्रतिपादितं ब्रह्मण इति । अयमर्थः**—नानैकशाखागततत्तद्वाक्यालोचनया वाक्यार्थावगमे पर्यवसिते सति प्रमाणान्तरविरोधेन वाक्यार्थावगतेरप्रामाण्यमाशङ्क्याविरोधव्युत्पादनेन प्रामाण्यव्यवस्थापनमविरोधलक्षणार्थः, प्रासङ्गिकं तु तत्र सृष्टिविषयाणां वाक्यानां परस्परमविरोधप्रतिपादनम्, न तु लक्षणार्थः । तत्प्रयोजनं च तत्रैव प्रतिपादयिष्यते । इह तु वाक्यानां सृष्टिप्रतिपादकानां परस्परविरोधे ब्रह्मणि जगद्योनौ न समन्वयः सेद्धुमर्हति । तथाच न जगत्कारणत्वं ब्रह्मणो लक्षणं, नच तत्र गतिसामान्यं; नच तत्सिद्धये प्रधानस्याशब्दत्वप्रतिपादनं, तस्माद्वाक्यानां विरोधाविरोधाभ्यामुक्तार्थाक्षेपसमाधानाभ्यां समन्वय एवोपपाद्यत इति समन्वयलक्षणे संगतमिदमधिकरणम् । **वाक्यानां कारणे कार्ये परस्परविरोधतः । समन्वयो जगद्योनौ न सिध्यति परात्मनि ॥** 'सदेव सोम्येदमग्र आसीत्' इत्यादीनां कारणविषयाणां, 'असद्वा इदमग्र आसीत्' इत्यादिभिर्वाक्यैः कारणविषयैर्विरोधः । कार्यविषयाणामपि विभिन्नक्रमाक्रमोत्पत्तिप्रतिपादकानां विरोधः । **तथाहि**—कानिचिदन्यकर्तृकां जगदुत्पत्तिमाचक्षते वाक्यानि ।

### वेदान्तकल्पतरुः ।

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

**अकाण्डे**ऽनवसरे । **भविता** भविष्यति । मानान्तरविरोधपरिहारो द्वितीयाध्यायार्थः । श्रुतीनामितरेतरविरोधपरिहारस्तु नानाशाखागतपूर्वापरवाक्यपर्यालोचनया नानाशाखानामन्योन्यवाक्यानां चेतरेतरविरोधपरिहारेणाद्वितीयब्रह्मप्रतिपत्तिसिद्ध्या समन्वयसिद्ध्यर्थत्वादिह सङ्गत इत्याह—**नानेति** । नाना भिन्ना एका चेति तथोक्ता । यदि मानान्तराविरोधो द्वितीयाध्यायार्थस्तर्हि वियत्पादादौ ( ब्या. सू. अ.२ पा. ३ ) कथं श्रुतीनामितरेतराविरोधचिन्ताऽत आह—**प्रासङ्गिकं त्विति** । विप्रतिषेधात् परपक्षाणामनपेक्ष्यत्वे उक्ते स्वपक्षस्यापि तत्प्रसङ्गे तन्निवृत्तिः प्रयोजनं तत्रैव प्रतिपादयिष्यत इत्यर्थः । **परैरुद्भावितो दोष उद्धर्तव्यः स्वदर्शने । इति शिक्षार्थमत्रत्यचिन्तां तत्राकरोन्मुनिः** ॥ काचित्कस्यासच्छब्दस्य कर्मकर्तृप्रयोगस्य चासद्वादपरत्वं स्वभाववादपरत्वं च व्युदस्य गतिसामान्यव्यवस्थापनात्पादसङ्गतिः । अथवा एतदारम्य त्रीण्यधिकरणानि पादान्तरसङ्गतान्यपि अवान्तरसङ्गतिलोभादिह लिखितानि । प्रकृतिश्चेत्यस्य त्वध्यायावसाने लेखे निमित्तं वक्ष्यते । एतेनेत्यस्यापि सर्वन्यायातिदेशत्वादध्यायावसान एव निवेशः । जगत्कारणवादिवाक्यानि ब्रह्मणि प्रमाणं न वेति विप्रतिपत्तेर्विशये पूर्वत्रान्नज्योतिषोर्विकल्पेनोपास्तौ निवेशादविरोध उक्तः । इह तु सिद्धे कारणे त्रैकाल्यायोगाद्विरोधे सत्यप्रामाण्यमिति पूर्वपक्षमाह—**वाक्यानामिति** । वाक्यानां कार्ये विरोधात्कार्यद्वारगम्ये जगद्योनौ न समन्वयो वेदान्तानां कारणे विगानात् तदुपलक्ष्यपरमात्मनि च न सिध्यतीत्यर्थः । विभिन्नक्रमा अक्रमा च

### कल्पतरुपरिमलः ।

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

**परेति** । कारणश्रुतीनामिव कार्यश्रुतीनामपि विरोधस्यात्रैव समाधेयत्वेऽपि द्वितीयाध्याये परकर्तृकदोषसाम्यापादनप्रसक्तौ तत्समाधानम् । "बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम् । क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥ इति खाण्डनिकरीतिमवलम्ब्यानिर्वचनीयवादिभिरपि तत्समाधानप्रक्रियाया नोदासितव्यम् । तथा सति तत्त्वनिर्णयासिद्धिप्रसङ्गादिति शिष्यबोधनार्थमत्रैव तत्समाधाने कृते तद्विषयस्फुटबोधोदयासंभवादित्यर्थः । **काचित्कस्येति** । काचित्कप्रधानवादप्रतिपादनच्छायापन्नवाक्यगतिनिरूपणमेव पादार्थो न भवति, किं तु ब्रह्मवादविरोधिवादमूलच्छायापन्नं क्वचित्क्वचिदाम्नातं यद्यावद्वाक्यमस्ति तस्य सर्वस्य गतिनिरूपणं पादार्थः । अत एवोत्तराधिकरणद्वये जीववादमूलच्छायापन्नवाक्यगतिनिरूपणमपि क्रियत इति भावः । **ननु** पूर्वाधिकरणत्रय इवात्र काचित्कवाक्यगतिनिरूपणं न क्रियते, किं तु सर्ववेदान्तव्यापिब्रह्मप्रमाणत्वाभावप्रसक्तौ तत्समाधानम् । इदं तु समन्वयाधिकरणसन्निधौ संगतं, न त्वत्र । **किंचा**ग्रिमाधिकरणद्वयमपि विवक्षितरीत्याऽत्र संगमयितुमयुक्तम्; प्रधानसमर्पणाभासवाक्यगतिनिरूपणार्थपरः संदर्भः प्रवर्तत इति प्रतिपादयता पादारम्भभाष्येण विरोधादित्याशङ्क्याह—**अथ वेति । कर्मकर्त्रभिधानादिति** । न च—कर्मण्ययं लकारः स्यादिति—

प्रतिपादितं च प्रधानस्याशब्दत्वम्। तत्रेदमपरमाशङ्कते—न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं वेदान्तवाक्यानां प्रतिपत्तुं शक्यम्। कस्मात्? विगानदर्शनात्। प्रतिवेदान्तं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात्। तथाहि—कचित् 'आत्मन आकाशः संभूतः' (तै० २।१ इत्याकाशादिका सृष्टिराम्नायते। कचित्तेजआदिका—'तत्तेजोऽसृजत' (छा० ६।२।३) इति। कचित्प्राणादिका—'स प्राणमसृजत प्राणाच्छ्रद्धाम्' (प्र० ६।४) इति। कचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते—'स इमाँल्लोकानसृजत। अम्भो मरीचीर्मरमापः' (ऐ० उ० ४।१।२) इति। तथा कचिदसत्पूर्विका सृष्टिः पठ्यते—'असद्वा इदमग्र आसीत्ततो वै सदजायत'। (तै० २।७) इति। 'असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत् (छा० ३।१९) इति च। कचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते—'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्युपक्रम्य 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्' (छा० ६।२।१,२) इति। कचित्स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते—'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' (बृ० १।४।७) इति। एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या। स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति। एवं प्राप्ते ब्रूमः—

## भामती।

कानिचित्स्वयंकर्तृकाम्। सृष्ट्या च कार्येण तत्कारणतया ब्रह्म लक्षितम्। सृष्टिविप्रतिपत्तौ तत्कारणतायां ब्रह्मलक्षणे विप्रतिपत्तौ सत्यां भवति तल्लक्ष्ये ब्रह्मण्यपि विप्रतिपत्तिः। तस्माद्ब्रह्मणि समन्वयाभावान्न समन्वयगम्यं ब्रह्म। वेदान्तास्तु कर्त्रादिप्रतिपादनेन कर्मविधिपरतयोपचरितार्था अविवक्षितार्था वा जपोपयोगिन इति प्राप्तम्। **क्रमादीति।** आदिग्रहणेनाक्रमो गृह्यते। एवं प्राप्त उच्यते—**सर्गक्रमविवादेऽपि न स स्रष्टरि विद्यते। सतस्त्वसद्वचो भक्त्या निराकार्यतया कचित्॥** न तावदस्ति सृष्टिक्रमे विगानम्; श्रुतीनामविरोधात्। **तथाहि**—अनेकशिल्पपर्यवदातो देवदत्तः प्रथमं चक्रदण्डादि करोति, अथ तदुपकरणः कुम्भं, कुम्भोपकरणश्चाहरत्युदकं, उदकोपकर-

## वेदान्तकल्पतरुः।

युगपद्भाविनी या उत्पत्तिस्तत्प्रतिपादकानामित्यर्थः। आत्मन आकाशस्तत्तेजोऽसृजतेत्यत्र भिन्नः क्रमः। स इमाँल्लोकानसृजतेत्यक्रम इति। तन्नामरूपाभ्यां व्याक्रियतेत्यादीनि कर्मकर्त्रभिधानात्स्वयंकर्तृकत्वशंसीनीति। **ननु** कार्यविगाने ब्रह्मणि किमायातमत आह—**सृष्ट्या चेति।** धूमधूलिसंदेहे तद्गम्याग्निसंदेहवद् गमककार्यसंदेहाद् गम्यब्रह्मसंदेह इत्यर्थः। कार्यविगानमभ्युपेत्याह—**सर्गेति।** स्वयंकर्तृकत्वान्यकर्तृकत्वाभ्यां सर्गे क्रमाक्रमव्युत्क्रमैस्तत्क्रमे च विवादेऽपि स्रष्टरि स विवादो न विद्यते, सर्गस्य चाविवक्षितत्वात्तद्विवादोऽकिंचित्कर इत्यर्थः। कारणविगानं परिहरति—**सतस्त्विति।** असद्वा इदमग्र आसीदित्यादौ असद्वचो भक्त्या। अनभिव्यक्तिश्च भक्तिः। तद्धैक आहुरित्यत्र निराकरणीयत्वेनानुवादोऽसद्वच इत्यर्थः। अपिशब्दात्सर्गे क्रमे च न विवाद इति सूचितम्। तत्प्रकटयति—**न तावदित्यादिना।** तत्र विभिन्नक्रमत्वं तावत्परिहरति—**अनेकशिल्पेति। पर्यवदातः** कुशलः। **संयवनं** मिश्रणं **घृतपूर्णं** पक्वान्नविशेषः। क्रमेण नाना-

## कल्पतरुपरिमलः।

शक्यम्; तथात्वे कर्त्राक्षेपगौरवप्रसङ्गात्। नच— कर्मकर्तरि लकारेऽप्येष दोषस्तुल्यः; अलूयत केदारः स्वयमेवेत्यत्र सत्येवान्यस्मिन् लवनकर्तरि सौकर्यातिशयेन कर्मणः साध्वसिश्छिनत्तीत्यत्र करणस्येव कर्तृत्वविवक्षणात्। क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति। मुख्यस्य स्वगुणैर्युक्तं कर्मकर्तेति तं विदुः॥ इति शब्दाभियुक्तवचनादिति—वाच्यम्; कर्मकर्तृविवक्षायां कर्त्रन्तराक्षेपनियमाभावात्। महाभाष्ये कर्म्मणः कर्तृत्वरूपस्य स्वातन्त्र्यस्य किं सतो विवक्षा उत विवक्षामात्रमिति विमृश्य सत इति पक्षं परिगृह्य तत्र भिद्यते कुसूलेनेत्युदाहृत्य तत्राप्यन्ये भेदनकर्तारो वातवृष्ट्यादयो येऽकालाः सन्तीत्याशङ्क्य वातवृष्ट्यभावे चिरकालकृतस्य कुसूलस्य भेदने नान्यः कर्ताऽस्तीति तत्रैवोक्तत्वाच्च। **स्वयंकर्तृकत्वान्यकर्तृकत्वाभ्यां सर्गे इति। ननु**—स्वयंकर्तृकत्वे विगानानुवृत्तौ कथं स्रष्टर्यविगानं? नच स्वयं कर्तृकत्वपक्षे स्वयमेव कर्ताऽस्तीति तत्राविगानसिद्धिः। न हि स्रष्टृमात्रे इहाविगानं विवक्षितं, किंतु सर्वज्ञत्वसर्वेश्वरत्वादिविशिष्टे स्रष्टरि; अग्रे भाष्यटीकयोस्तत्रैवाविगानप्रदर्शनात्। **किंच** कर्मकर्तरि लकारेण प्रपञ्चस्य स्वव्यापारं भवनं प्रत्येव कर्तृत्वं सिध्यति, न तु तत्प्रयोजकव्यापारं भावनरूपं सर्गं प्रतीति न तेन स्रष्टृमात्रेऽप्यविगानसिद्धिः। लूयते इत्यत्रापि केदारस्य स्वव्यापारं द्विधाभवनं

सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किंचिद्विगानमस्ति। कुतः? यथाव्यपदिष्टोक्तेः। यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टस्तथाभूत एव वेदान्तातन्रेष्वपि व्यपदिश्यते। तद्यथा—'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१ ) इति। अत्र तावज्ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयदपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत्, तद्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरंपरया चान्तरनुप्रवेशनेन सर्वेषामन्तः प्रत्यगात्मानं निरधारयत्। 'बहु स्यां प्रजायेय' ( तै० २।६ ) इति चात्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत। तथा 'इदं सर्वमसृजत। यदिदं किंच' ( तै० २।६ ) इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीयं स्रष्टारमाचष्टे। तदत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञातं तल्लक्षणमेवान्यत्रापि विज्ञायते—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' ( छा० ६।२।१,३ ) इति। तथा 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजै' ( ऐ० उ० ४।१।१,२ ) इति च; एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात्, कार्यविषयं तु विगानं दृश्यते क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिकेत्येवंजातीयकम्। नच कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुम्; अतिप्रसङ्गात्। समाधास्यति चाचार्यः कार्यविषयमपि विगानं 'न वियदश्रुतेः' ( ब्र० सू० २।३।१ ) इत्यारभ्य। भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात्। न ह्ययं सृष्ट्यादिप्रपञ्चः

## भामती ।

णश्च संयवनेन गोधूमकणिकानां करोति पिण्डं, पिण्डोपकरणस्तु पचति घृतपूर्णं, तदस्य देवदत्तस्य सर्वत्रैतस्मिन् कर्तृत्वाच्छक्यं वक्तुं देवदत्ताच्चक्रादि संभूतं तस्माच्चक्रादेः कुम्भादीति। शक्यं च देवदत्तात्कुम्भः समुद्भूतस्तस्मादुदकाहरणादीत्यादि। नह्यस्त्यसंभवः। सर्वत्रास्मिन् कार्यजाते क्रमवत्यपि देवदत्तस्य साक्षात्कर्तुरनुस्यूतत्वात्। तथेहापि यद्यप्याकाशादिक्रमेणैव सृष्टिः; तथाप्याकाशानलानिलादौ तत्र तत्र साक्षात् परमेश्वरस्य कर्तृत्वाच्छक्यं वक्तुं परमेश्वरादाकाशः संभूत इति। शक्यं च वक्तुं परमेश्वरादनलः संभूत इत्यादि। यदि त्वाकाशाद्वायुर्वायोस्तेज इत्युक्त्वा तेजसो वायुर्वायोराकाश इति ब्रूयात्तदैवं विरोधः। न चैतदस्ति। तस्मादमूषामविवादः श्रुतीनाम्। एवं 'स इमाँल्लोकानसृजत' इत्युपक्रमाभिधायिन्यपि श्रुतिरविरुद्धा। एषा हि स्वव्यापारमभिधानक्रमेण कुर्वती नाभिधेयानां क्रमं निरुणद्धि। ते तु यथाक्रमावस्थिता एवाक्रमेणोच्यन्ते। यथा क्रमवन्ति ज्ञानानि जानातीति। तदेवमविगानम्। अभ्युपेत्य तु विगानमुच्यते—सृष्टौ खल्वेतद्विगानम्। स्रष्टा तु सर्ववेदान्तवाक्येष्वनुस्यूतः परमेश्वरः प्रतीयते। नात्र श्रुतिविगानं मात्रयाप्यस्ति। नच—सृष्टिविगानं स्रष्टरि तदधीननिरूपणे विगानमावहतीति—वाच्यम्; नह्येष सृष्टत्वमात्रेणोच्यतेऽपि तु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिना रूपेणोच्यते स्रष्टा। तच्चास्य रूपं सर्ववेदान्तवाक्यानुगतम्। तज्ज्ञानं च फलवत्; 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' इत्यादिश्रुतेः, सृष्टिज्ञानस्य तु न फलं श्रूयते। तेन 'फलवत्संनिधाव-

## वेदान्तकल्पतरुः ।

कार्याणि कुर्वाणे देवदत्ते प्रथमस्येव चरमस्यापि तेन साक्षात्सृष्टत्वात्ततो निष्पत्तिर्वक्तुं शक्या। तथा पूर्वकार्यस्योत्तरकार्यनिमित्तत्वात्कार्यात्कार्यान्तरसर्गश्च शक्यवचनः। दृष्टान्तमुक्त्वा एवं ब्रह्मैक्यादाकाशादेर्वाय्वाद्युपादानत्वमिति दार्ष्टान्तिकमाह—**तथेहापीति**। अनलाऽनिलेति तेजसः प्राथम्यनिर्देशः; तत्प्राथम्यघटनस्य प्रस्तुतत्वात्। तर्हि कदा निर्देशविरोधस्तत्राह—**यदि त्विति**। आकाशवायुतेजसां क्रमेणोत्पत्तिमुक्त्वा व्युत्क्रमाभिधाने हि विरोधः स्यान्न तु तेजसः साक्षाद् ब्रह्मणः सृष्टिमात्राभिधाने। न ह्यनेन क्रमो बाध्यत इत्यर्थः। एवमपिशब्दस्य भावमुक्त्वा **न स स्रष्टरीति** श्लोकभागं व्याचष्टे—**अभ्युपेत्येति**। यदवादि धूमसन्देहेन दहनसन्देहवत्सृष्टिसन्देह इति, तदनूद्यापनुदति—**न च सृष्टिविगानमिति**। सत्यादिलक्षणं ब्रह्मावगमय्य तदानन्त्योपपिपादयिषया जगतस्तत्रारोपः श्रुत्या सृष्टिरुच्यते, न तु सृष्टौ तात्पर्यम्, अतो मिथ्याभूतायां सृष्टौ विगानं न दोषोऽपित्वलंकार इत्यर्थः। **ननु** सृष्टेः कुत आत्मप्रमित्यर्थता? विपरीतता कस्मान्न स्यादत आह—**तज्ज्ञानं चेति। तदनुगुणतयेति**। व्याख्यातं च घृतपूर्णटीकायामित्यर्थः। सतत्त्वसद्वचो भक्त्येति श्लोकभागं व्याचष्टे—**यच्च कारण इत्यादिना**। तदप्येष इत्यादिः परिहारः। अस्ति ब्रह्मेति चेद्वेदेति प्रकृतं ब्रह्म तत्रशब्दसमानार्थतच्छब्देन परामृश्य श्लोकेनासदभिधाने श्लोकवाक्यमसंबद्धं स्यादित्यर्थः। श्रुत्यन्तरं सदेव सोम्येत्यादि। मानान्तरं विमतं सज्जन्यं, कार्यत्वात् कुम्भवदित्यादि। निराकार्यतया क्वचिदिति श्लोकभागं विभज्नते—

प्रतिपिपादयिषितः । नहि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा । नच कल्पयितुं शक्यते; उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात् । दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' ( छा० ६।८।४ ) इति । मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते । तथाच संप्रदायविदो वदन्ति—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । उपायः सोऽवताराय नास्ति भेदः कथंचन ॥' ( माण्डू० ३।१५ ), इति । ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते—'ब्रह्मविदाप्नोति परम्' ( तै० २।१ )' 'तरति शोकमात्मवित्' ( छा० ७।१।३ ) 'तमेव विदित्वाऽति मृत्युमेति' ( श्वे० ३।८ ) इति । प्रत्यक्षावगमं चेदं फलम् । 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥ १४ ॥ यत्पुनः कारणविषयं विगानं दर्शितम्—'असद्वा इदमग्र आसीत्' इत्यादि तत्परिहर्तव्यम् । अत्रोच्यते—

## समाकर्षात् ॥ १५ ॥

'असद्वा इदमग्र आसीत्' ( तै० २।७ ) इति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते । यतः 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य 'सोऽकामयत' इति तमेव प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा 'तत्सत्यमित्याचक्षते' इति

### भामती ।

फलं तदङ्गम्' इति सृष्टिविज्ञानं स्रष्टृब्रह्मविज्ञानाङ्गं तदनुगुणं सद्ब्रह्मज्ञानावतारोपायतया व्याख्येयम् । तथाच श्रुतिः—'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ' इत्यादिका । **शुङ्गेन** अग्रेण । कार्येणेति यावत् । तस्मान्न सृष्टिविप्रतिपत्तिः स्रष्टरि विप्रतिपत्तिमावहति, अपि तु **'गुणे त्वन्यायकल्पना'** इति तदनुगुणतया व्याख्येया । **यच्च कारणे विगानम्**—'असद्वा इदमग्र आसीत्' इति, **तदपि** 'तदप्येष श्लोको भवति' इति पूर्वप्रकृतं सद्ब्रह्माकृष्य 'असदेवेदमग्र आसीत्' इत्युच्यमानं त्वसतोऽभिधानेऽसंबद्धं स्यात् । श्रुत्यन्तरेण च मानान्तरेण च विरोधः । तस्मादौपचारिकं व्याख्येयम् । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति तु निराकार्यतयोपन्यस्तमिति न कारणे विवाद इति । सूत्रे—चशब्दस्त्वर्थः पूर्वपक्षं निवर्तयति । आकाशादिषु सृज्यमानेषु क्रमविगानेऽपि न स्रष्टरि विगानम् । कुतः? यथैकस्यां श्रुतौ व्यपदिष्टः परमेश्वरः सर्वस्य कर्ता तथैव श्रुत्यन्तरेषूक्तः, केन रूपेण, कारणत्वेन, अपरः कल्पो यथा व्यपदिष्टः क्रम आकाशादिषु, 'आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति, तस्यैव क्रमस्यानपबाधनेन 'तत्तेजोऽसृजत' इत्यादिकाया अपि सृष्टेरुक्तेर्न सृष्टावपि विगानम् ॥१४॥ नन्वेकत्रात्मन आकाशकारणत्वेनोक्तिरन्यत्र च तेजःकारणत्वेन, तत्कथमविगानमिति? अत आह—**कारणत्वेनेति** । हेतौ तृतीया । सर्वत्राकाशानलानि-

### वेदान्तकल्पतरुः ।

**तद्धैक इति** । यदा कार्ये विगानमुपेत्य कारणे तदभाव उच्यते, तदा समुच्चयाभावात् चकारस्तुशब्दसमानार्थतया समन्वयो न सिध्यति परात्मनीत्येवंरूपपूर्वपक्षनिषेधार्थ इत्यर्थः । कारणत्व इति सप्तमीमादाय सूत्रैकदेशेन वाक्यानां कारणे परस्परविरोध इति पूर्वपक्षोक्तहेतोरसिद्धिरविगानप्रतिज्ञयोच्यत इत्याह—**आकाशादिष्वित्यादिना** । प्रतिज्ञातविगानाभावे हेतुपरं सूत्रावयवं व्याचष्टे—**कुत इति** । पुनरावृत्त्या कारणत्वेनेति तृतीयान्तमित्थंभावार्थं विवक्षित्वा यथाव्यपदिष्टपदार्थविवरणपरत्वेन व्याख्याति—**केनेति** । एवं कारणविगाननिषेधपरत्वेन सूत्रं व्याख्याय संप्रति कार्यविगानपरिहारपरतया योजयति—**अपर इति** । **कल्पः** प्रकारः । अस्यां व्याख्यायां चकारः समुच्चये । **तदुक्तं न सृष्टावपीति** । कारणत्वेन विगानं नच कार्यक्रमे इति सूत्रे द्वे प्रतिज्ञे । आद्या प्रागुपपादिता, द्वितीयायां हेतुं योजयति—**यथाव्यपदिष्ट इति** । यथाशब्दोऽनतिक्रमार्थः । ब्रह्मणस्तेजःसृष्टिमात्रमुक्तं, न क्रमो भग्न इत्यर्थः । परस्तु कार्यान्तरव्यवधानमन्तरेण तेजसो ब्रह्मप्रभवत्वाभिधानात् प्रथमोत्पत्तिरभिप्रेताऽतः क्रमभङ्गाद्यथाव्यपदिष्टोक्तिरसिद्धेति शङ्कते—**नन्वेकत्रेति** । सिद्धान्ती तु साक्षाद् ब्रह्मसृज्यत्वमव्यवधाननिर्देशस्य प्रयोजनम् नतु कार्यान्तरस्यासर्ग इति मन्वानः पूर्ववदावृत्त्या तृतीयान्ततामादाय साक्षात्पदं चाध्याहृत्य सूत्रावयवव्याख्यया परिहरति—**अत आहेति** । पूर्वत्रेत्थंभावे व्याख्यातत्वात्तद्भ्रमापनुत्त्यर्थमाह—**हेताविति** । **अधस्ताद्** घृतपूर्णटीकायाम् । नामरूपाभ्यां व्याक्रियतेति

चोपसंहृत्य 'तदप्येष श्लोको भवति' इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरति—'असद्वा इदमग्र आसीत्' इति। यदि त्वसन्निरात्मकमस्मिञ्श्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसंबद्धं वाक्यमापद्येत। तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते। एषैव 'असदेवेदमग्र आसीत्' (छा० ३।१९।१) इत्यत्रापि योजना; 'तत्सदासीत्' इति समाकर्षणात्। अत्यन्ताभावाभ्युपगमे हि तत्सदासीदिति किं समाकृष्येत? 'तद्धैक आहुरसदेवेदमग्र आसीत्' (छा० ६।२।१) इत्यत्रापि न श्रुत्यन्तराभिप्रायेणायमेकीयमतोपन्यासः; क्रियायामिव वस्तुनि विकल्पस्यासंभवात्। तस्माच्छ्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यस्य निरास इति द्रष्टव्यम्। 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ० १।४।७) इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते; 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात्। निरध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना स इत्यनेन सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत? चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते। प्रविष्टस्य चेतनत्वश्रवणात् 'पश्यँश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनः' इति। अपिच यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियत एवमादिसर्गेऽपीति गम्यते; दृष्टविपरीतकल्पनानुपपत्तेः। श्रुत्यन्तरमपि 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६।३।२) इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति। व्याक्रियत इत्यपि कर्मकर्तरि लकारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः। यथा लूयते केदारः स्वयमेवेति सत्येव पूर्णके लवितरि। यद्वा कर्मण्येवैष लकारोऽर्थाक्षिप्तं कर्तारमपेक्ष्य द्रष्टव्यः। यथा गम्यते ग्राम इति ॥ १५ ॥ इति चतुर्थं कारणत्वाधिकरणम् ॥

## भामती ।

लादौ साक्षात्कारणत्वेनात्मनः। प्रपञ्चितं चैतदधस्तात्। व्याक्रियत इति च कर्मकर्तरि कर्मणि वा रूपं, न चेतनमतिरिक्तं कर्तारं प्रतिक्षिपति किंतूपस्थापयति। नहि लूयते केदारः स्वयमेवेति वा लूयते केदार इति वा लवितारं देवदत्तादिं प्रतिक्षिपति। अपि तूपस्थापयत्येव। तस्मात्सर्वमवदातम् ॥१५॥ इति चतुर्थं कारणत्वाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

कर्मकर्तरि कर्मणि वा लकारः। **आद्ये** कर्त्रप्रतिक्षेपस्तत्र हेतुमाह—**नहीति**। लूयते केदारः स्वयमेवेति भिन्नकर्तृकमेव सौकर्यापेक्षया कर्मकर्तृ इत्युच्यते इत्यर्थः। **द्वितीये** स्फुटैवान्यकर्त्रपेक्षेत्यर्थः। इदमसदिवाव्यक्तमासीत् तद्यदात्मना आसीत्

## कल्पतरुपरिमलः ।

प्रत्येव कर्तृत्वमर्थो नतु प्रयोजकव्यापारं द्विधाभावनं प्रति। यथोक्तं कैयटेन लुनातिस्तावद् द्विधाभवनोपसर्जने द्विधाभवने वर्तते। लुनाति केदारं देवदत्तः द्विधा भवन्तं द्विधा भावयतीत्यर्थः। यदा तु केदारस्य सौकर्यातिशयविवक्षायां देवदत्तव्यापारो न विवक्ष्यते, तदाद्विधाभवनमात्रे लुनातिर्वर्तते; अनेकार्थत्वाद् धातूनां, भिन्ना एव वा धातवो भिन्नार्थाः, सारूप्यात्तु तत्त्वाध्यवसायः। तत्र द्विधाभवने केदारस्य कर्तुः 'कर्मवत् कर्मणा तुल्यक्रिय' इति कर्मकार्याण्यतिदिश्यन्ते। तेन लूयते केदारः स्वयमेवेत्यादयः प्रयोगा उपपद्यन्ते इति। एवमन्यकर्तृकत्वपक्षेऽप्यसत्कर्तृकत्वं सत्कर्तृकत्वं वेत्यान्तरालिकविवादसत्त्वान्न विवक्षितरूपविशिष्टे स्रष्टर्यविगानसिद्धिः। तस्मात् स्वयंकर्तृकत्वान्यकर्तृकत्वविगानानुवृत्तिमभ्युपेत्य स्रष्टर्यविगानवचनमयुक्तमिति—**चेत्, अत्रायमाचार्याणामाशयः**—व्याक्रियतेति कर्मकर्तृलकारेण स्वज्यस्य प्रपञ्चस्य प्रपञ्चात्मना कर्तृत्वमुच्यत इति न पूर्वपक्षः, किंतु "तदात्मानं स्वयमकुरुत बहु स्यां प्रजायेये"त्यादिश्रवणात्परमेश्वरस्यैव प्रपञ्चभावेन परिणाम इति तदभेदं सिद्धं कृत्वा प्रपञ्चस्य परमेश्वरात्मना स्वकर्तृत्वमुच्यत इति। एवं श्रुत्यन्तरार्थसिद्धवत्कारसूचनार्थमेव पूर्वपक्षे तन्नामरूपाभ्यां व्याक्रियतेत्यादीनीत्यादिग्रहणं कृतम्। ततश्च स्वयंकर्तृकत्वविगानानुवृत्तावपि स्रष्टर्यविगानमस्तीति तद्वचनमुपपन्नम्। अन्यकर्तृकत्वकोटिः प्राक्प्रवृत्तानन्दमयाधिकरणा (ब्र. अ. १ पा. ४ सू. १५) दिपर्यालोचनेनैवात्रापि यथाव्यपदिष्टोक्तेरिति हेतुना पुनः प्रवर्तितयाऽसत्कर्तृकत्वकोटिर्निरस्तेति असद्वादनिराकरणे ब्रह्मपरमेश्वरकर्तृकत्वपर्यवसायिनीति तस्यामपि कोटौ स्रष्टर्यविगानवचनमुपपन्नम्। एवमन्यकर्तृकत्वकोटेः स्रष्टर्यविगानपर्यवसानमसद्वादनिराकरणसापेक्षमिति तन्निराकरणमिति श्लोके संगृहीतम्। तन्निराकरणं च यथाव्यपदिष्टोक्तिहेतुनैव सिध्यतीत्याविष्कर्तुमेवाग्रे तन्निराकरणप्रपञ्चनानन्तरं कारणत्वेनेति सूत्रं व्याख्याय स्वयंकर्तृकत्वनिराकरणं समाकर्षसूत्र (ब्र. अ. १ पा. ४ सू. १५) तात्पर्यविषयत्वाभिप्रायेण तदनन्तरं कृतम्। **कर्मकर्तरि कर्मणि वेति।** कर्मणीति

( ५ अधिकरणम् ) **जगद्वाचित्वात् ॥ १६ ॥**

**कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—'यो वै बलाक एतेषां पुरुषाणां कर्ता**

## भामती ।

## जगद्वाचित्वात् ॥ १६ ॥

**ननु**—'ब्रह्म ते ब्रवाणि' इति ब्रह्माभिधानप्रकरणात्, उपसंहारे च 'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति य एवं वेद' इति निरतिशयफलश्रवणाद्ब्रह्मवेदनादन्यत्र तदसंभवात्, आदित्यचन्द्रादिगतपुरुष-

## वेदान्तकल्पतरुः ।

तत्कारणसदर्थक्रियोन्मुखम् आसीत् । कार्यरूपेण च समभवत् । तत्तत्र कारणविषये एक आहुस्तेषां मतं दूषयति—**कुतस्त्विति** । तदेवाह—**कथमिति** । व्यतिरेकमुक्त्वाऽन्वयमाह—**सदेवेति** । **इदं** जगत् । **तर्हि** तदानीम् । **अव्याकृतं** कारणमासीत् । **ह** किल **तत्कारणं** शब्दार्थात्मना **व्याक्रियत** व्यक्तमभवत् । **भाष्ये-तद्विषयेण कामयितृत्ववचनेनेति** । सोऽकामयतेत्यनेनेत्यर्थः । अपरप्रेष्यत्वमिदं सर्वमसृजतेति स्वातन्त्र्यम् । तस्माद्वा एतस्मादात्मन इति तद्विषय आत्मशब्दः । संप्रदायविदां वचने अन्यथा अन्यथेति वीप्सा द्रष्टव्या । **लोहं** सुवर्णम् । अवताराय ब्रह्मात्मैक्यबुद्धेरिति शेषः । प्रतिपाद्ये ब्रह्मणि नास्ति भेदो न विगानमित्यर्थः । मृत्युमत्येतीत्यन्वयः । असद् ब्रह्मेति वेद चेदसाधुः स्यात् । पश्यन्नात्माचष्टे उपलभत इति चक्षुः शृणोति मनुत इति च श्रोत्राद्याख्यो भवति ॥ **इति चतुर्थं कारणत्वाधिकरणम् ॥**[१]

## जगद्वाचित्वात् ॥ १६ ॥

अत्र क्वाचित्कहैरण्यगर्भमतद्योतककर्मशब्दस्य ब्रह्मानुगुण्यवर्णनात्पादसंगतिः । इहोपक्रमानुरोधाद् ब्रह्म भाति उपसंहारानुरोधेन जीवः । ब्रह्मशब्दश्च स ब्रह्म त्यदित्याचक्षत इति प्राणेऽपि प्रयुक्त इति संशयः । एकवाक्ये त्यच्छब्दादसच्छब्दो नीयतां, वाक्यभेदे तु न ब्रह्मशब्दात्कर्मशब्दो नेय इति सङ्गतिः । यदा खल्वत्राप्येकवाक्यत्वं तदा यथोत्तरसच्छब्दानुसारेण प्राचीनोऽसच्छब्दो नीत एवमुत्तरस्मात्कर्मशब्दात्प्राचो ब्रह्मशब्दस्य नयनमिति सङ्गतिः । प्रातर्दन ( ब्र. अ. १ पा. १ सू. २८ ) विचारेण गतत्वं शङ्कते—**नन्विति** । तत्र ह्युपक्रमोपसंहारैकरूप्यादेकवाक्यत्वे सति जीवप्राणलिङ्गयोर्ब्रह्मपरतया नयनं कृतम्, तदिहापि सममित्यर्थः । मध्येऽपि ब्रह्मपरामर्शमाह—**आदित्येति** । पुरुषकर्तृत्वस्य ब्रह्मणो-

## कल्पतरुपरिमलः ।

पक्ष एव युक्ततरः; अव्याकृतमासीदिति कर्मण्येव निष्ठान्तस्य प्राक् प्रयोगात्, एकविषययोः प्रागव्याकृतं पश्चाद्व्याक्रियतेति प्रयोगयोः प्रागच्छिन्नं वनमिदानीमच्छिद्यतेति प्रयोगयोरिवैकार्थपरत्वावश्यंभावात् । नह्यव्याकृतमित्यपि कर्मकर्तरि प्रयोग इति वक्तुं शक्यम्; अनेनाव्याकृतमिति तृतीयाप्रसङ्गात् । कर्मणः कर्तृत्वविवक्षायां हि धातोरकर्मकत्वाद्भावे निष्ठेति कर्तुरनभिधानात् तृतीययैव भाव्यम् । नच—कर्मकर्तरि कर्मणि वा लकारेण कर्त्राक्षेपेऽपि सकर्तृश्रुत्यन्तरानुसारात् प्रपञ्चाभिन्नं स्यादिति स्वकर्तृत्वशङ्कातदवस्थेति—वाच्यम्; आरम्भणाधिकरणादिषु ( ब्र. अ. २ पा. १ सू. १४ ) परिणामवादस्य निराकरणीयत्वादिति भावः । **एवं**तर्ह्यानन्दमयाधिकरणा( ब्र. अ. १ पा. १ सू. १२ )दिनिर्णीतार्थस्यारम्भणाधिकरणादिनिर्णीतार्थस्य च पर्यालोचनेनैवासत्कर्तृकत्वपरताशङ्कायाः परिणामवादावलम्बनस्वकर्तृकत्वपरताशङ्कायाश्च निरसनसम्भवान्निरालम्बनपूर्वपक्षमिदमधिकरणमिति—**चेत्, सत्यम्**; तथाप्यसदादिशब्दश्रवणमात्रसंतुष्टः सांख्यः कारणवाक्येषु परस्परविरोधं तेषामनिर्णायकत्वं चोद्भाव्य स्मृतिन्यायाभ्यामेव जगत्कारणं निर्णेतव्यमिति मन्यमानस्तदनुसारेणैव पूर्वापरवाक्ययोजनायां प्रयतते, तदनुशयनिराकरणार्थमिदमधिकरणम् । **अतएव भाष्ये**—पूर्वपक्षोपसंहारवाक्यं **स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति** । अतो मिथ्याभूतायां सृष्टौ विगानं न दोष इति । अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमाने विगानं क्वचिदपि न दोषः । यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्यमानायां तत्प्राच्योदीच्यादिनक्षत्ररूपायां स्थूलारुन्धत्याम्, यथा वा रेखागवयन्यायेन नित्यशब्दप्रतिपत्त्युपायतया नानाव्याकरणैः परस्परभिन्नप्रकृतिप्रत्ययविभागेन कृत्रिमशब्द इति भावः ॥ **इति चतुर्थं कारणत्वाधिकरणम् ॥**

## जगद्वाचित्वात् ॥ १६ ॥

**हैरण्यगर्भेति** । **ननु**—किमिह हैरण्यगर्भं मतं विवक्षितम्? सत्यलोकादिप्राप्त्यर्थं हिरण्यगर्भ उपास्य इति मतमिति

---

**१ तत्र सूत्रे २—कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १४ समाकर्षात् १५ ॥**

## भामती ।

कर्तृत्वस्य च 'यस्य वैतत्कर्म' इति चास्यासत्यवच्छेदे सर्वनाम्ना प्रत्यक्षसिद्धस्य जगतः परामर्शेन जगत्कर्तृत्वस्य च ब्रह्मणोऽन्यत्रासंभवात्कथं जीवमुख्यप्राणाशङ्का ? **उच्यते**—ब्रह्म ते ब्रवाणीति बालाकिना गार्ग्येण ब्रह्माभिधानं प्रतिज्ञाय तत्तदादित्यादिगताब्रह्मपुरुषाभिधानेन न तावद्ब्रह्मोक्तम् । यस्य चाजातशत्रोः 'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म' इति वाक्यं न तेन ब्रह्माभिधानं प्रतिज्ञातम् । नचान्यदीयेनोपक्रमेणान्यस्य वाक्यं शक्यं नियन्तुम् । तस्मादजातशत्रोर्वाक्यसंदर्भपौर्वापर्यपर्यालोचनया योऽस्यार्थः प्रतिभाति स एव ग्राह्यः । अत्र च कर्मशब्दस्तावद्व्यापारे निरूढवृत्तिः । कार्ये तु क्रियत इति व्युत्पत्त्या वर्तते । नच रूढौ सत्यां व्युत्पत्तिर्युक्ताश्रयितुम् । नच ब्रह्मण उदासीनस्यापरिणामिनो व्यापारवत्ता । वाक्यशेषे च 'अथास्मिन् प्राण एवैकधा भवति' इति श्रवणात्परिस्पन्दलक्षणस्य च कर्मणो यत्रोपपत्तिः स एव वेदितव्यतयोपदिश्यते । आदित्यादिगतपुरुषकर्तृत्वं च प्राणस्योपपद्यते, हिरण्यगर्भरूपप्राणावस्थाविशेषत्वादादित्यादिदेवतानाम्; 'कतम एको देवः प्राणः' इति श्रुतेः । उपक्रमानुरोधेन चोपसंहारे सर्वशब्दः सर्वान् पाप्मन इति च

## वेदान्तकल्पतरुः ।

ऽन्यत्रासंभवादित्यन्वयः । अवच्छेदके प्रकरणादावसति सर्वनाम्ना प्रमाणमात्रसिद्धजगतः परामर्शे सति यज्जगत्कर्तृत्वमवगतं तस्य च ब्रह्मणोऽन्यत्रासंभवादित्यर्थः । **जगत्कर्तृत्वमन्यत्र ब्रह्मणो नेति दुष्यति । वाचस्पतावुपालम्भमनालोच्योचिरे परे ॥ जीवाज्ञे जगत्सर्वं सकारणमिति ब्रुवन् । क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम् ?॥ इति** । अधिष्ठानं हि ब्रह्म न जीवाः । अधिष्ठाने च समन्वय इत्यनवद्यम् । इह वाक्यभेदापादनेन तावदगतार्थतामाह—**उच्यत इत्यादिना** । अत्र बालाकिवाक्याद् ब्रह्म मन्यते सिद्धान्ती राजवाक्याद्वा । **नाद्य** इत्याह—**ब्रह्म ते इति । न द्वितीय** इत्याह—**यस्य चेति । ननु** बालाकिवाक्यगतब्रह्मप्रतिज्ञया राजवाक्यं ब्रह्मपरमस्त्वग्निवाक्यादिवाचार्यवाक्यमित्याशङ्क्याह—**नचेति** । तत्र हि वक्तृभेदेऽप्येकवाक्यताग्निभिर्दर्शिताऽऽचार्यस्तुते गतिं वक्तेति, इह तु तदभावाद्वाक्यभेद इत्यर्थः । **ननु** बालाकिवचने ब्रह्मशब्दस्य का गतिः ? अत आह—**तस्मादिति** । राजवाक्यार्थ एव ग्राह्यः राद्धान्तत्वात् । भ्रान्तगार्ग्योक्तिस्तु पूर्वपक्षत्वादसद्वादवदग्राह्येत्यर्थः । **ननु** राजवाक्येऽपि क्रियमाणसर्वजगत् प्रति कर्तव्यत्वं ब्रह्मलिङ्गं गम्यतेऽत अह—**अत्र चेति** । ब्रह्मकार्ये जगति योगसंभवमङ्गीकृत्य रूढ्याऽपहारमुक्त्वा योगासंभवमाह—**नच ब्रह्मण इति** । उदासीनस्येत्यस्पन्दतोक्ता । ब्रह्मणि कृत्यभावाज्जगतस्तत्कृतत्वायोग इत्यर्थः । ब्रह्मणो यदि न व्यापारवत्ता, कस्य तर्हि ? ननु प्राणस्यास्तु । ननु सोऽपि कथं वेदितव्यतयोच्यते ? प्रसिद्धत्वादित्याशङ्क्य तस्य हिरण्यगर्भरूपेण वेद्यत्वोपपत्तेः, वाक्यशेषस्य प्राणश्रुतेः कर्मशब्दस्य रूढार्थलाभाच्च प्राण एव कर्मसंबन्धीत्याह—**वाक्यशेषे चेति** ।

## कल्पतरुपरिमलः ।

चेद्, न; सिद्धान्तेऽपि श्रुतिषु तत्र तत्र तदुपासनस्याङ्गीकृतत्वेन तस्यासाधारण्येन हैरण्यगर्भमतत्वाभावात्, अधिकरणस्य ब्रह्मवादविरोधिकुन्मतनिरासार्थत्वाभावे विषयवाक्यस्य हिरण्यगर्भोपासनापरत्वनिरसनमात्रेण विवक्षितपादसंगत्यलाभाच्च, हिरण्यगर्भ एव मुमुक्षुभिरुपास्यं परं ब्रह्मेति मतमिति चेद्, न; पूर्वपक्षे तदनुवादस्य सिद्धान्ते तन्निरसनस्य चाप्रदर्शनात्, हिरण्यगर्भस्य परब्रह्मरूपत्वमङ्गीकृत्यैव परिच्छिन्नफलकतदुपासनापरत्वस्य पूर्वपक्षावसरे प्रदर्शनादिति—**चेत्, उच्यते;** उपन्यस्तो हिरण्यगर्भपूर्वपक्षोऽयम् । अजातशत्रोर्भ्रान्तत्वमृषावादित्वदोषपरिहारार्थं हिरण्यगर्भ एवोपक्रान्तं मुमुक्षूपास्यं परं ब्रह्मास्त्विति हैरण्यगर्भमतमादाय परिष्कर्तुं शक्यत इति कक्षान्तरे तत्पर्यवसायो भवेद् अतस्तन्मतनिरसनमपि कर्मशब्दे योगव्यवस्थापनादिना तन्मतोपस्थापकं लिङ्गमिह नास्तीति प्रदर्शनेन विवक्षितमित्याचार्याणामभिप्रायः । अतएव तस्य मतस्य थोत्यत्वमेवोपन्यस्तं नानुवाद्यत्वम् । **जीवाज्ञे इति** । परकीय उपालम्भकश्लोकः । अध्यारोपापवादाभ्यां यन्निष्प्रपञ्चं वेदान्तानां प्रतिपिपादयिषितं तत्र खलु तेषां समन्वयः । एवंच वाचस्पतिमते जीवएव समन्वयः पर्यवस्यति; तन्मते जीवाश्रिताविद्यापरिणामस्य प्रपञ्चस्य जीवेऽध्यारोपेण तत्रैवापवदनीयत्वात् । अतो जीवे समन्वयं पूर्वपक्षीकृत्य निरस्यन् वाचस्पतिः कथं न लज्जितवानित्यर्थः । **सकारणमिति** । कारणशब्दः सूक्ष्मभूतपरः अविद्यापरो वा; तस्या अपि प्रवाहाऽनादिभ्रमकल्पितत्वात् । **अधिष्ठानं हीति । अधिष्ठानं विवर्तानामाश्रयो ब्रह्म शुक्तिवत् । जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम् ॥ इति** प्रागेवाचार्यैर्वाचस्पतिमते ब्रह्मणः सजीवाविद्यासकलप्रपञ्चाधिष्ठानत्वमुक्तमिहानुसंधेयम् । **पूर्वपक्षत्वादिति । ननु**—असद्वादवदस्य निराकरणं न दृश्यत इति—**चेत्**, दृश्यतएव, "मृषा वै खलु मा संवादयिष्ठा" इति । तर्हि मृषावादित्वेन बालाकिमपोद्य स्वयमप्यजातशत्रुरब्रह्मोपदिशति चेत् सोऽपि मृषावादी स्यादिति चेद्, न; बालाकिवद् ब्रह्मोपदिशामीत्युपक्रम्य ब्रह्मोपदेशे हि मृषावादित्वं स्यात्, तदुपक्रमाभावे कुतो मृषावादित्वप्रसङ्गः ? ब्रह्मोपदेशार्थं प्रवृत्तस्य बालाकेरब्रह्मोपदेशाद् मृषावादित्वेन निरसनानन्तरं स्वयमब्रह्मोपदेशे का संगतिरिति चेत्, एषा

**यस्य वै तत्कर्म स वै वेदितव्यः' ( कौ० ब्रा० ४।१९ ) इति । तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते ? उत मुख्यः प्राणः ? उत परमात्मेति विशयः । किं तावत्प्राप्तम् ? प्राण इति । कुतः ? 'यस्य वैतत्कर्म' इति श्रवणात्, परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात्, वाक्यशेषे च**

## भामती ।

सर्वेषां भूतानामिति चापेक्षिकवृत्तिर्बहून् पाप्मनो बहूनां भूतानामित्येवंपरो द्रष्टव्यः । एकस्मिन् वाक्ये उपक्रमानुरोधादुपसंहारो वर्णनीयः । यदि तु दृप्तबालाकिमब्रह्मणि ब्रह्माभिधायिनमपोद्याजातशत्रोर्वचनं ब्रह्मविषयमेव; अन्यथा तु तदुक्ताद्विशेषं विवक्षोरब्रह्माभिधानमसंबद्धं स्यादिति मन्यते, तथापि नैतद्ब्रह्माभिधानं भवितुमर्हति, अपि तु जीवाभिधानमेव, यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात् प्राणादीनामभोक्तृत्वमस्वामित्वं प्रतिबोध्य यष्टिघातोत्थानात् प्राणादिव्यतिरिक्तं जीवं भोक्तारं स्वामिनं प्रतिबोधयति; परस्तादपि 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एनमात्मानं भुञ्जन्ति' इति श्रवणात् । यथा श्रेष्ठी प्रधानः पुरुषः स्वैर्भृत्यैः करणभूतैर्विषयान् भुङ्क्ते, यथा वा स्वा भृत्याः श्रेष्ठिनं भुञ्जन्ति । ते हि श्रेष्ठिनमशनाच्छादनादिग्रहणेन भुञ्जन्ति । एवमेवैष प्रज्ञात्मा जीव एतैरादित्यादिगतैरात्मभिर्विषयान् भुङ्क्ते । ते ह्यादित्यादय आलोकवृष्ट्यादिना साचिव्यमाचरन्तो जीवात्मानं भोजयन्ति, जीवात्मानमपि यजमानं तदुत्सृष्टहविरादानादादित्यादयो भुञ्जन्ति, तस्माज्जीवात्मैव ब्रह्मणोऽभेदाद्ब्रह्मेह वेदितव्यतयोपदिश्यते । **यस्य वैतत्कर्म इति** जीवप्रयुक्तानां देहेन्द्रियादीनां कर्म जीवस्य भवति । कर्मजन्यत्वाद्वा धर्माधर्मयोः कर्मशब्दवाच्यत्वं रूढ्यनुसारात् । तौ च धर्माधर्मौ जीवस्य, धर्माधर्माक्षिप्तत्वा-

## वेदान्तकल्पतरुः ।

त्रयस्त्रिंशदादिदेवानां कारणभूत एको देवः कतम इति पृष्टे प्राण इत्युत्तराद्धिरण्यगर्भात्मकप्राणकार्यत्वमादित्यादेरित्यर्थः । पाप्मसु भूतेषु चापेक्षिकवृत्तिः सङ्कुचितवृत्तिः सर्वशब्दः । सङ्कोचमेवाह **बहूनिति** । संप्रति विप्रनृपवचनयोरेकत्वमुपेत्यापि पूर्वपक्षसंभवमाह—**यदि त्विति** । यद्यपि गार्ग्यो भ्रान्तः; तथापि न भ्रान्तो ब्रह्मोपक्रमः, सहस्रमेतस्यां वाचि दद्म इति ब्रह्मप्रतिज्ञायां राज्ञा गोसहस्रस्य दत्तत्वात् । अत उपक्रान्तं ब्रह्मैव गार्ग्यं प्रति विशेषतो निरूप्यमिति यदि मन्येतानारम्भवादी, तथापि नैतत्परब्रह्माभिधानम्; उपसंहारे जीवनिर्णयादित्यर्थः । **उपेतं** शिष्यभावेन गतम् । प्राणो हि सुषुप्तौ व्याप्रियते, स चेतनश्चेद् बृहत्पाण्डरवास इत्यादि स्वनाम जानीयाद्, नच जज्ञिवानतः सुषुप्तस्य यष्टिघातेनोत्थापनात् प्राणादिव्यतिरिक्तं बोधयतीत्यर्थः । उपसंहारोऽपि जीवपर इत्याह—**परस्तादपीति । ननु** जीवस्यापि सर्वगतस्य निरवयवस्य परिस्पन्दपरिणामयोरसंभवात् कथं यस्य वैतत्कर्मेति निर्देशस्तत्राह—**यस्य वैतदिति** । जीवप्रेर्यदेहादिसंबन्धिकर्मषष्ठ्या जीवसम्बन्धित्वेन उपचर्यतइत्यर्थः । साक्षाज्जीवसम्बन्धिधर्मादौ कर्मशब्दो लाक्षणिक इत्याह—**कर्मजन्यत्वाद्वेति । ननु** योगवृत्त्या जगदभिधीयतां, नेत्याह—**रूढ्यनुसारादिति** । रूढ्यर्थं गृहीत्वा तदविनाभूतल-

## कल्पतरुपरिमलः ।

संगतिः । त्वदुक्तं तावत् किमपि ब्रह्म न भवति, अहमपि ब्रह्म न पश्यामि, अत इदानीं फलार्थिना त्वया हिरण्यगर्भ एव वेदितव्य इति । दृश्यते हि रसवादिनं ब्रवाणीति प्रतिज्ञातवतोदाहृतान् पुरुषान् विप्रलम्भकत्वादितत्तत्स्वरूपोपन्यासेन प्रत्याख्याय ततः परमुदाहरणीयपुरुषाभावात् तूष्णींभूते तस्मिन् प्रतिवक्ता स्वयमपि रसवादिनमपश्यता राजैव धनार्थिनोपसर्पणीय इत्युच्यत इति । **न भ्रान्तो ब्रह्मोपक्रम इति** । ब्रह्म ते ब्रवाणीति प्रतिज्ञावाक्येन ब्रह्मोपक्रान्तमित्येतद् न बाधितमित्यर्थः । तदेवोत्तरवाक्यगतेन लिङ्गेन द्रढयति—**सहस्रमिति । दत्तत्वादिति** । प्रतिश्रुतं दत्तप्रायम् । **यद्वा**—आशंसायां भूतवत् क्तः । दातुमाशंसितत्वादित्यर्थः । एवं ब्रह्मोपक्रमसिद्धौ गार्ग्यस्य भ्रान्तत्वेऽपि यस्यकस्यचिद् वाक्येनास्मिन् प्रकरणे ब्रह्म निर्णिनीषितमित्यवसीयते; अन्यथा ब्रह्मोपक्रमोपाख्याननिबन्धनस्य प्रकृतविद्यानुपयोगितापाताद्, वैश्वानरविद्यादिषु प्राचीनशालादीनां भ्रान्तत्वेऽपि वैश्वानराद्युपक्रमस्य प्राकरणिकतत्तन्निर्णयार्थत्वदर्शनाच्च । तथाच लौकिकरसवादवचनादिदृष्टान्तोऽत्र न क्रमते इति तात्पर्यम् । **उपसंहारे इति** । अनन्यथासिद्धौपसंहारिकजीवनिर्णयानुसारेण ब्रह्मोपक्रमस्तदभेदाभिप्रायेण योजनीय इति भावः । जीवपूर्वपक्षोऽयं जीवोपासनाविधिविषयो न भवति, किंतु परब्रह्मवज्ज्ञेयो जीवः प्रतिपद्य इत्येतद्विषयः । अतएवास्मिन् पूर्वपक्षे प्रथमपूर्वपक्ष इव पादसंगतिर्न प्रदर्शिता; समनन्तराधिकरणे वक्ष्यमाणैव साऽत्राप्युन्नेतुं शक्येत्यभिप्रायात् । अन्यथा पूर्वाधिकरणसंगतिवत्पादसंगतिरपि पृथगुच्येत । अतएव च जीवे समन्वयनिरसनमयुक्तमिति परकीयोपालम्भः प्रागु दर्शितः । जीवोपासनाविधिपरत्वमात्रेण हि जीवे समन्वयो न प्रसज्यते; अन्यथा पञ्चाग्निविद्यादीनां तत्समन्वयप्रसङ्गात् । **लाक्षणिक इति** । धर्माधर्मलक्षणया हि वेदितव्यस्यादित्यादिपुरुषकर्तृत्वं

'अथास्मिन्प्राण एवैकधा भवति' इति प्राणशब्ददर्शनात्, प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात्। ये चैते पुरस्ताद्बालाकिना 'आदित्ये पुरुषश्चन्द्रमसि पुरुषः' इत्येवमादयः पुरुषा निर्दिष्टास्तेषामपि भवति प्राणः कर्ता प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनाम्, 'कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते' ( बृ० ३।९।९ ) इति श्रुत्यन्तरप्रसिद्धेः। जीवो वायमिह वेदितव्यतयोपदिश्यते। तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुम् 'यस्य वैतत्कर्म' इति। सोऽपि भोक्तृत्वाद्भोगोपकरणभूतानामेतेषां पुरुषाणां कर्तोपपद्यते। वाक्य-

## भामती।

चादित्यादीनां भोगोपकरणानां तेष्वपि जीवस्य कर्तृत्वमुपपन्नम्। उपपन्नं च प्राणभृत्त्वाज्जीवस्य प्राणशब्दत्वम्। ये च प्रश्नप्रतिवचने—'क्वैष एतद् बालाके पुरुषोऽशयिष्ट' 'यदा सुप्तः स्वप्नं न कंचन पश्यति' इति अनयोरपि न स्पष्टं ब्रह्माभिधानमुपलभ्यते। जीवव्यतिरेकश्च प्राणात्मनो हिरण्यगर्भस्याप्युपपद्यते। तस्माज्जीवप्राणयोरन्यतर इह ग्राह्यो न परमेश्वर इति प्राप्तम्। **एवं प्राप्ते** उच्यते—**मृषावादिनमपोद्य बालाकिं ब्रह्मवादिनम्। राजा कथमसंबद्धं मिथ्या वा वक्तुमर्हति॥** यथा हि केनचिन्मणिलक्षणज्ञमानिना काचे मणिरेष वेदितव्य इत्युक्ते परस्य काचोऽयं, मणिर्न, तल्लक्षणायोगादित्यभिधाय आत्मनो विशेषं जिज्ञापयिषोस्तत्त्वाभिधानमसंबद्धम्। अमणौ मण्यभिधानं न पूर्ववादिनो विशेषमापादयति; स्वयमपि मृषाभिधानात्। तस्मादनेनोत्तरवादिना पूर्ववादिनो विशेषमापादयता मणितत्त्वमेव वक्तव्यम्। एवमजातशत्रुणा दृप्तबालाकेरब्रह्मवादिनो विशेषमात्मनो दर्शयता जीवप्राणाभिधाने असंबद्धमुक्तं स्यात्, तयोर्वाऽब्रह्मणोर्ब्रह्माभिधाने मिथ्याभिहितं स्यात्। तथाच न कश्चिद्विशेषो बालाकेर्गार्ग्यादजातशत्रोर्भवेत्। तस्मादनेन ब्रह्मतत्त्वमभिधातव्यम्। तथा सत्यस्य न मिथ्यावद्यम्। तस्मात् 'ब्रह्म ते ब्रवाणि' इति ब्रह्मणोपक्रमात्, सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति य एवं वेद' इति च सति संभवे सर्वश्रुतेरसंकोचान्निरतिशयेन फलेनोपसंहारात्, ब्रह्मवेदनादन्यतश्च तदनुपपत्तेः, आदित्यादिपुरुषकर्तृत्वस्य च स्वातन्त्र्यलक्षणस्य मुख्यस्य ब्रह्मण्येव संभवादन्येषां हिरण्यगर्भादीनां तत्पारतन्त्र्यात्, 'क्वैष एतद्बालाके' इत्यादेर्जीवाधिकरणभवनापादनप्रश्नस्य 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति' इत्यादेरुत्तरस्य च ब्रह्मण्येवोपपत्तेर्ब्रह्मविषयत्वं निश्चीयते।

## वेदान्तकल्पतरुः।

क्षणादित्यर्थः। अग्रहे हि न तत्संबन्धिनि लक्षणा। यद्यपि ब्रह्मशब्दाश्रवणात्स्पष्टं ब्रह्माभिधानं नोपलभ्यते; तथापि प्रश्नप्रतिवचनयोः क्वैष इति प्राण एवैकधा भवतीति च सप्तमीप्रथमाभ्यां जीवप्राणयोर्भेदो गम्यतेऽत आह—**जीवव्यतिरेकश्चेति**। जीवातिरिक्तहिरण्यगर्भस्य प्राणत्वान्न ब्रह्मसिद्धिरित्यस्माकमिष्टसिद्धिरित्यर्थः। **मृषेति**। आदित्यादीनब्रह्मणो ब्रह्मेति मृषावादिनं बालाकिं मृषा वै खलु मा संवदिष्ठा इत्यपोद्य निरस्य सत्यं ब्रह्माभिधित्सन् राजा यदि स्वरूपेण जीवं प्राणं वा ब्रूयात्, ततोऽसंबद्धवादी स्यात्। यदि जीवादि ब्रह्मत्वेन वदेत्, ततो मिथ्या वदेत्, तच्चानुपपन्नम्। तस्माद् ब्रह्मैव वदतीत्यर्थः। काच इन्द्रनीलसमानवर्णा मृत्। **मिथ्यावद्यम्** मिथ्यावदनम्। एवं च भिन्नवक्तृकवाक्यद्वयस्यापि भ्रमप्रसक्तिस्तन्निरासपरतयैकवाक्यत्वाद् ब्रह्मोपक्रमः सिद्धः। सिद्धं चास्योपसंहारेण संगानमिति ब्रह्मपरत्वं सर्वस्य संदर्भस्येत्याह—**तस्माद् ब्रह्म ते इति**। हेतूनां ब्रह्मपरत्वं निश्चीयत इत्युपरितनप्रतिज्ञयैवान्वयः। सर्वश्रुतेरसङ्कोचे निरतिशयफलेनोपसंहारो हेतुः। यदवादि व्यतिरेकनिर्देशो हिरण्यगर्भे स्यादिति, तत्राह—**क्वैष इति**। हे बालाके एष पुरुषः क्वैतदशयिष्ट एतदिति क्रियाविशेषणम्। इत्थमित्यर्थः। एष जीवाश्रयप्रश्नः। क्व वा एतदभूदिति भवनप्रश्नः। **भवनं** तादात्म्येन वर्तनम्। **शयनम**संबोधः। कुत एतदागादित्यपादानप्रश्नः। प्राण एवैकधा भवतीति भवनप्रश्नो-

## कल्पतरुपरिमलः।

कीदृशं विवक्षितमित्याकाङ्क्षायामपूर्वद्वारकं विवक्षितमित्याकाङ्क्षितार्थसमर्पकतया प्रकृतोपयोगि भवति, न परिस्पन्दपरतायामिति लक्षणैव ज्यायसीति भावः। **सप्तमीप्रथमाभ्यामिति**। क्व प्राणे इति सप्तमी क्वैष इति प्रथमा प्रतिवचने प्राणवाक्येऽप्यन्वयिनी। तथाच सुषुप्ताधारः प्राणे वेदितव्यः, पुरुषो न सुषुप्त इति भावः। जीवपूर्वपक्षे तु प्राकरणिकजीवव्यतिरेकनिर्देशं निरस्य वाक्यं योजनीयम्। क्वैष इति प्रश्नस्य प्राणे इति प्रतिवचनं न संभवति, किंतु हिता नाम नाड्य इति नाडीः प्रक्रम्याम्नातम्। तासु तदा भवतीति वचनं कदेत्याकाङ्क्षायां यदा सुप्तः स्वप्नं न कंचन पश्यतीति तच्छेषः। अथास्मिन् प्राण एवैकधा भवतीति प्राणशब्दनिर्दिष्टे नाडीस्थे जीवे करणमण्डलस्य लय उच्यते; तदैनं वाक् सर्वैर्नामभिः सहाप्येतीत्याद्यग्रिमविवरणदर्शनात्, स यदा प्रतिबुध्यत इति प्राणशब्दनिर्दिष्टस्य प्रबोधोपन्यासाच्चेति। तामेतां योजना-

शेषे च जीवलिङ्गमवगम्यते । यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात्प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबोधयति । तथा परस्तादपि जीवलिङ्गमवगम्यते—'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' ( कौ० ब्रा० ४।२० ) इति । प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वम् । तस्माज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयो न परमेश्वरः; तल्लिङ्गानवगमादिति । एवं प्राप्ते ब्रूमः—परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात् । कस्मात्? उपक्रमसामर्थ्यात् । इह हि बालाकिरजातशत्रुणा सह 'ब्रह्म ते ब्रवाणि' इति संवदितुमुपचक्रमे । स च कतिचिदादित्याद्यधिकरणान्पुरुषानमुख्यब्रह्मदृष्टिभाज उक्त्वा तूर्ष्णीं बभूव । तमजातशत्रुः मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणि' इत्यमुख्यब्रह्मवादितयापोद्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप । यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो बाध्येत । तस्मात्परमेश्वर एवायं भवितुमर्हति । कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते । 'यस्य

## भामती ।

अथ कस्मान्न भवतो हिरण्यगर्भगोचरे एव प्रश्नोत्तरे, तथाच नैताभ्यां ब्रह्मविषयत्वसिद्धिरित्येतन्निराचिकीर्षुः पठति—एतस्मादात्मनः प्राणा यथा यथायतनं प्रतिष्ठन्त इति । **एतदुक्तं भवति**—आत्मैव भवति जीवप्राणादीनामधिकरणं नान्यदिति । यद्यपि च जीवो नात्मनो भिद्यते; तथाप्युपाध्यवच्छिन्नस्य परमात्मनो जीवत्वेनोपाधिभेदाद्भेदमारोप्याधाराधेयभावो द्रष्टव्यः । एवंच जीवभवनाधारत्वमपादानत्वं च परमात्मन उपपन्नम् । तदेवं बालाक्यजात-

## वेदान्तकल्पतरुः ।

तरम् । आदिशब्दात्तदैनं वाक्सर्वैर्नामभिः सहाप्येति इत्यादि शयनप्रश्नोत्तरम् । "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मात्सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते" इत्यादेः क्रमयानप्रश्नोत्तरं च द्रष्टव्यम् । एतानि च न हिरण्यगर्भे संभवन्ति; जीवस्य जीवान्तरात्मत्वायोगादित्यर्थः । प्रश्नस्योत्तरस्येति चैकवचनं बहुष्वेव जात्यपेक्षम् । न केवलमनुपपत्त्या प्रश्नोत्तरयोर्ब्रह्मार्थत्वमपि त्वात्मशब्दादपीति वक्तुं पृच्छति—**अथ कस्मादिति** । निर्णीतार्थवाक्ये रूढिर्बाध्येत्याह—**तदेव-**

## कल्पतरुपरिमलः ।

मभिप्रेत्य भाष्यटीकयोः प्राणभृत्त्वेन जीवस्य प्राणशब्दवाच्यत्वमुपपादितम् । व्यतिरेकनिर्देशो जीवनाडीविषयः । अतो जीव एव वेदितव्य इति योजना तावदयुक्ता; तथा सति वेदितव्यस्वरूपस्यैव प्रष्टव्यतया तदाधारप्रश्नाऽयोगात्, नच—तस्य नाड्याधारत्वेन पापास्पृष्टतया वेदितव्यत्वोपपादनार्थमाधारप्रश्न इति—वाच्यम्; तथा सति पापास्पर्शस्यापि वक्तव्यत्वापत्तेः, नच—सौषुप्तिकनाडीः प्रविष्टस्य पाप्माऽस्पर्शः "तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवती"ति छान्दोग्यप्रसिद्धत्वान्नोक्त इति—वाच्यम्; क्वैष एतदिति प्रश्नानन्तरं तदु ह बालाकिर्न विजज्ञावित्युक्तत्वेन सुषुप्तौ नाडीप्रवेशमेवाऽजानतो बालाकेस्तत्प्रवेशकृतपाप्मास्पर्शप्रसिद्ध्यभावात् । तस्माज्जीवाधारो वेदितव्यः पुरुष इति प्रतिपादनार्थ एव स प्रश्नः । एवंच तासु तदा भवतीत्येतन्न तदुत्तरम्; नाडीनां वेदितव्यपुरुषत्वाभावात् । तत्तु ता हि प्रत्यवसृप्य पुरीतति शेते इति श्रुत्यन्तरानुसारेण हृदयावच्छिन्नब्रह्मप्राप्तेर्मार्गोपदेशपरम् । द्वितीयप्रश्नः करणग्रामाधिकरणविषय इत्यपि न युक्तम्; "क्वैष एतद् बालाके पुरुषोऽशयिष्ट" "क्व वा एतदभूत्" "कुत एतदागादिति" प्रश्नत्रयेऽपि प्रथमप्रश्ननिर्दिष्टस्यैव कर्तुरन्वयप्रतीत्या कर्त्रन्तराध्याहाराऽयोगात् । तथा सति प्रथमद्वितीयप्रश्नयोः पुनरुक्तिः स्यादिति चेद्, न; द्वितीयप्रश्नस्य प्राण एवैकधा भवतीत्युत्तरानुसारेण तादात्म्येन भवनविषयत्वाद् निर्देश इति सिद्धवत्कृत्य हिरण्यगर्भपूर्वपक्षे पर्यवसानं कृतम् । कुत एतदागादित्यपादानप्रश्नस्यापि कुतस्तादात्म्यभवनाधिकरणादागत इत्यर्थपरिग्रहेऽस्यैव साफल्यस्योपपादनीयत्वात् । यत्र धर्मिणि शयितस्तत आगादिति स्वत एव ज्ञातुं शक्यत्वेनापतिता हि तन्नैष्फल्यशङ्का तादात्म्यभवनाधिकरणस्यालौकिकत्वेनासंभावितत्वात्तद्दृढीकरणार्थस्तथाभूताधिकरणादागमनप्रश्न इत्युपपादनेन परिहरणीया । **तदेनं वागिति ।** अत्रैतत्पदं प्राणपरामर्शि; तस्य सप्तम्यन्तनिर्दिष्टत्वेऽपि प्रतिपिपादयिषितत्वेन प्राधान्यात् । ततश्च वाक्चक्षुःश्रोत्रमनसां सर्वैः स्वस्वविषयैः सहाप्ययोक्तौ जीवस्यापि मनोविषयत्वान्मनउपाधिकत्वाद्वा तस्मिन्नप्यय उक्तो भवतीति शयनप्रश्नोत्तरत्वलाभः; शयनप्रश्नस्योत्तरान्तराऽदर्शनात्, तदेनमित्यादेस्तदनुत्तरत्वे भवनापादानोत्तरद्वयमध्याम्नातस्य तस्य वैफल्यप्रसङ्गाच्च, एवमेवैतस्मादात्मन इत्यादेः सामान्यमुखेन जीवोद्गमनापादानप्रश्नोत्तरत्ववत्तदेनं वागित्यादेरपि सामान्यमुखेन जीवशयनाधिकरणत्वस्य प्रबोधे तदुद्गमनापादानत्वस्य चासंभवाच्चेति भावः । **आत्मशब्दादपीति ।** आप्ऌ व्याप्ताविति धातुतादात्म्यशब्दादित्यर्थः । **निर्णीतार्थवाक्ये इति ।** रूढिमभ्युपेत्य तद्बाधनार्थमेवमुक्तिः । **वस्तुतस्तु**—परि-

वैतत्कर्म' इत्यपि नायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः; तयोरन्यतरस्याप्यप्रकृतत्वात्, असंशब्दितत्वाच्च । नापि पुरुषाणामयं निर्देशः; एतेषां पुरुषाणां कर्तेत्येव तेषां निर्दिष्टत्वात्, लिङ्गवचनविगानाच्च नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः; कर्तृशब्देनैव तयोरुपात्तत्वात् । पारिशेष्यात्प्रत्यक्षसंनिहितं जगत्सर्वनाम्नैतच्छब्देन निर्दिश्यते । क्रियत इति च तदेव जगत्कर्म । ननु जगदप्यप्रकृतमसंशब्दितं च । सत्यमेतत् । तथाप्यसति विशेषोपादाने साधारणेनार्थेन संनिधानेन संनिहितवस्तुमात्रस्यायं निर्देश इति गम्यते न विशिष्टस्य कस्यचित्; विशेषसंनिधानाभावात् । पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानादविशेषितं जगदेवेहोपादीयत इति गम्यते । एतदुक्तं भवति—य

## भामती ।

शतुसंवादवाक्यसंदर्भस्य ब्रह्मपरत्वे स्थिते **यस्य वैतत्कर्म** इति व्यापाराभिधाने न संगच्छत इति कर्मशब्दः कार्याभिधायी भवति । एतदितिसर्वनामपरामृष्टं च तत्कार्यं, सर्वनाम चेदं संनिहितपरामर्शि, नच किंचिदिह शब्दोक्तमस्ति संनिहितम् । न चादित्यादिपुरुषाः संनिहिता अपि परामर्शार्हाः; बहुत्वात् पुल्लिङ्गत्वाच्च । एतदिति चैकस्य नपुंसकस्याभिधानात्, 'एतेषां पुरुषाणां कर्ता' इत्यनेनैव गतार्थत्वाच्च । तस्मादशब्दोक्तमपि प्रत्यक्षसिद्धं संबन्धार्हं जगदेव परामष्टव्यम् । **एतदुक्तं भवति ।** अत्यल्पमिदमुच्यते एतेषामादित्यादिगतानां जगदेकदेशभूतानां कर्तेति, किंतु कृत्स्नमेव जगद्यस्य कार्यमिति वाशब्देन सूच्यते । जीवप्राणशब्दौ च ब्रह्मपरौ; जीवशब्दस्य ब्रह्मोपलक्षणपरत्वात् । न पुनर्ब्रह्मशब्दो जीवोपलक्षणपरः । तथा सति हि बह्वसमञ्जसं स्यादित्युक्तम् । नचानधिगतार्थावबोधनस्वरसस्य शब्दस्याधिगतबोधनं युक्तम् । नाप्यनधिगतेनाधिगतोपलक्षणमुपपन्नम् । नच संभवत्येकवाक्यत्वे वाक्यभेदो न्याय्यः । वाक्यशेषानुरोधेन च जीवप्राणपरमात्मोपासनात्रयविधाने वाक्यत्रयं भवेत् । पौर्वापर्यपर्यालोचनया तु ब्रह्मोपासनपरत्वे एकवाक्यतैव । तस्मान्न जीवप्राणपरत्वमपि तु ब्रह्मपरत्वमेवेति सिद्धम् । **स्यादेतत्**—निर्दिश्यन्तां पुरुषाः कार्यास्तद्विषया तु कृतिरनिर्दिष्टा तत्फलं वा कार्यस्योत्पत्तिस्ते यस्येदं कर्मेति निर्देक्ष्येते, ततः कुतः पौनरुक्त्यमित्यत आह—**नापि पुरुषविषयस्येति । एतदुक्तं भवति**—कर्तृशब्देनैव कर्तारमभिदधता तयोरुपात्तत्वादाक्षिप्तत्वात् । नहि कृतिं विना कर्ता भवति । नापि कृतिर्भावनापराभिधाना भूतिमुत्पत्तिं विनेत्यर्थः । **ननु**—यदीदमा जगत्परामृष्टं ततस्तदन्तर्भूताः पुरुषा अपीति य एतेषां पुरुषाणामिति पुनरुक्तमित्यत आह—**एतदुक्तं भवति ।**

## वेदान्तकल्पतरुः ।

**मिति** । व्यापाराभिधाने सतीत्यर्थः । **ननु** तवापि सर्वकर्तृत्वे सिद्धे आदित्यादिकर्तृत्वं पुनरुक्तमत आह—**एतदुक्तमिति** । न तावद्व्यापकोक्तिरेकदेशोक्त्या पुनरुक्ता भवेद्, नाप्येकदेशोक्तिर्व्यापकोक्त्याऽऽदित्यादेरन्यत्राविशेषोक्तेरस्तु सङ्कोच इति बालाकिभ्रमापोहार्थत्वादित्यर्थः । कथं तर्हि ब्रह्मपरे वाक्ये जीववाची पुरुषशब्दः प्राणशब्दश्चात आह—**जीवेति** । प्राणयतीति योगाद्विश्वसत्तास्पदं ब्रह्म प्राणशब्दो वक्ति । जीववाची तु पुरुषशब्दो जीवसुप्तिस्थानभूतब्रह्मलक्षणार्थ इत्यर्थः । ब्रह्मभावापेक्षया ब्रह्मशब्देन जीवोपलक्षणे ब्रह्मशब्दोपक्रमो मृषावादिबालाक्यपवादो विश्वकर्तृत्वं चासमञ्जसमित्यर्थः । प्रत्यक्षत्वाज्जीवस्य न प्रतिपाद्यतापीत्याह—**नचानधिगतेति । स्वरसः** स्वभावः । ब्रह्मणा लोकानधिगतेनाधिगतजीवोपलक्षणं चानुपपन्नमित्यर्थः । **ननु** किं जीवस्य ब्रह्मोपलक्षकत्वेन ? प्रसिद्धावपि जीवप्राणावनूद्य नामादिवदुपास्तिर्विधीयतामिति शङ्कां निराकुर्वन् जीवमुख्येति सूत्रं ( ब्र. अ. १ पा. १ सू. ३१ ) व्याचष्टे—**नच संभवत्येकवाक्यत्व इत्यादिना** । एवं प्रसङ्गागतं जीवमुख्येति सूत्रं व्याख्यायाधिकरणाद्यसूत्रव्याख्यामेवानुसरति—**स्यादेतदित्यादिना** । पूर्वत्र यस्य चैतत्कर्मेत्येतच्छब्देन नादित्यादिपुरुषाणां परामर्श एतेषां पुरुषाणां कर्तेत्यनेन पुनरुक्तिरित्युक्तम् । तत्र पूर्ववादिनः पुनरुक्तिपरिहारमाशङ्क्य भाष्यव्याख्यया परिहरति—**निर्दिश्यन्तामित्यादिना । कृतिरनिर्दिष्टेति** । यद्यपि कर्तेति शब्दे कृतिरपि भाति; तथापि प्राधान्येनानिर्दिष्टेत्यर्थः । कार्योत्पत्तिः कर्तृव्यापारस्य साध्यतया फलम् । भाष्ये उपात्तत्वं नाभिधेयत्वं, किं त्वनुपपत्तिगम्यत्वं, तदेव दर्शयति—**नहीति** । शब्दोक्तपुरुषाणाम् एतच्छब्दापरामर्शेन अर्थसंनिधिना जगन्मात्रपरामर्शे स्वेनैव कृतप्रतिवचनमपि पौनरुक्त्यचोद्यम् । भाष्ये–क्रमप्राप्तं व्याचष्टे—**ननु यदीति** । इदानीमन्यार्थं तु जैमिनि ( ब्र. अ. १ पा. ४ सू. १८ ) रिति सूत्रस्थभाष्याणि व्याचष्टे—**ननु प्राण एवेत्यादिना** । प्राणशब्दो हिरण्यगर्भं वक्ति, कुतो ब्रह्मप्रतीतिरिति शङ्कार्थः । आत्मशब्दाद्गम्यत इति परिहारः । एतस्मादिति वाक्योदाहृतेरेव वेदान्तार्थत्वसिद्धेरुत्तरभाष्यवैयर्थ्यमाशङ्क्य सर्ववेदान्तानुगतिस्तेन दर्श्यत इत्याह—

एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण, यस्य कृत्स्नमेव जगदविशेषितं कर्मेति। वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः। ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तितास्तेषामब्रह्मत्वख्यापनाय विशेषोपादानम्। एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतयोपदिश्यते। परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः॥ १६॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥ १७॥

अथ यदुक्तं वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति। तत्परिहर्तव्यम्। अत्रोच्यते—परिहृतं चैतत् 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र० सू० १।१।३१) इत्यत्र। त्रिविधं ह्यत्रोपासनमेवं सति प्रसज्येत जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चैतन्न्याय्यम्, उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते। तत्रोपक्रमस्य तावद्ब्रह्मविषयत्वं दर्शितम्। उपसंहारस्यापि निरतिशयफलश्रवणाद्ब्रह्मविषयत्वं दृश्यते—'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति। नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत। न निर्णीयते; 'यस्य वैतत्कर्म' इत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात्। तस्मादत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते। प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः 'प्राणबन्धनं हि सोम्य मनः' (छा० ६।८।२) इत्यत्र। जीवलिङ्गमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम्॥ १७॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके॥ १८॥

अपिच नैवात्र विवदितव्यं जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति। यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते। कस्मात्? प्रश्नव्याख्यानाभ्याम्। प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्' (कौ० ब्रा० ४।१९) इति। प्रतिवचनमपि 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्यादि, 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ० ब्रा० ४।२०) इति च। सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति। परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा। तस्माद्यत्रास्य जीवस्य निःसंबोधतास्वच्छतारूपः

---

### भामती।

**य एषां पुरुषाणामिति**॥ १६॥ १७॥ **ननु** 'प्राण एवैकधा भवति' इत्यादिकादपि वाक्याज्जीवातिरिक्तः कुतः प्रतीयत इत्यतो वाक्यान्तरं पठति—**एतस्मादात्मनः प्राणा इति**। **अपिच** सर्ववेदान्तसिद्धमेतदित्याह—**सुषुप्तिकाले चेति**। वेदान्तप्रक्रियायामेवोपपत्तिमुपसंहारव्याजेनाह—**तस्माद्यत्रास्य** आत्मनो यतो निःसंबोधोऽतः स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूपो नतु स्वच्छतैव; लयविक्षेपसंस्कारयोस्तत्र भावात्। समुदाचरद्वृत्तिविक्षेपाभावमात्रेणोपमानम्। एतदेव विभजते—उपाधिभिः अन्तःकरणादिभिः जनितं यद्विशेषविज्ञानं घटपटादिविज्ञानं तद्रहितं स्वरूपमात्मनः। यदि विज्ञानमित्येवोच्येत ततस्तदविशिष्टमनवच्छिन्नं सद्ब्रह्मैव स्यात्तच्च नित्यमिति नोपा-

### वेदान्तकल्पतरुः।

**अपिचेति**। भ्रमसंस्कारे सत्यपि प्रोद्भूतभ्रमाभावान्मुक्त्योपमानं सुषुप्ते रूपशब्देन भाष्ये कृतमित्यर्थः। **विभजते**। उपाधिजनितविशेषेत्यादिभाष्येणेति शेषः। तद्व्याचष्टे—**उपाधिभिरिति**। **ननु** विज्ञानमित्येवास्तु, किं विशेषेति विशेषणेनात आह—**यदिति**। एतद्विशेषणाऽविशिष्टं विज्ञानं यत्तदनवच्छिन्नं सद्रूपं ब्रह्मैव स्यात्तच्च नित्यमिति कृत्वा नोपाधिजनितम्। नापि तेन ब्रह्मरूपेण रहितमात्मनः स्वरूपम्। अतो विशेषपदेन ब्रह्म व्यवच्छेद्यम्। राहित्याभावे

स्वाप उपाधिजनितविशेषविज्ञानरहितं स्वरूपं, यतस्तद्भ्रंशरूपमागमनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते। अपिचैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति—'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्' ( बृ० २।१।१६ ) इति प्रश्ने। प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति। आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तराकाशः' ( छा० ८।१।१ ) इत्यत्र। 'सर्वे एत आत्मनो व्युच्चरन्ति' इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यते। प्राणनिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः ॥ १८ ॥ इति पञ्चमं बालाक्यधिकरणम् ॥

---

### भामती।

धिजनितं, नापि तद्रहितं स्वरूपं ब्रह्मस्वभावस्याप्रहाणात्। अत उक्तम्—**विशेषेति**। यदा तु लयलक्षणाविद्योपबृंहितो विक्षेपसंस्कारः समुदाचरति, तदा विशेषविज्ञानोत्पादात्स्वप्नजागरावस्थातः परमात्मनो रूपाद्भ्रंशरूपमागमनमिति। न केवलं कौषीतकिब्राह्मणे, वाजसनेयेऽप्येवमेव प्रश्नोत्तरयोर्जीवव्यतिरिक्तमामनन्ति परमात्मानमित्याह—**अपिचैवमेक इति**। नन्वत्राकाशं शयनस्थानं, तत्कुतः परमात्मप्रत्यय इत्यत आह—**आकाशशब्दश्चेति**। न तावन्मुख्यस्याकाशस्यात्माधारत्वसंभवः। यद्यपि च द्वासप्ततिसहस्रहिताभिधाननाडीसंचारेण सुषुप्त्यवस्थायां पुरीतदवस्थानमुक्तं तदप्यन्तःकरणस्य। तस्मात् 'दहरोऽस्मिन्नन्तराकाशः' इतिवदाकाशशब्दः परमात्मनि मन्तव्य इति। प्रथमं भाष्यकृता जीवनिराकरणाय सूत्रमिदमवतारितम्। तत्र मन्दधियां नेदं प्राणनिराकरणायेति बुद्धिर्मा भूदित्याशयवानाह—**प्राणनिराकरणस्यापीति**। तौ ह बालाक्यजातशत्रू सुप्तं पुरुषमाजग्मतुः। तमजातशत्रुर्नामभिरामन्त्रयांचक्रे 'बृहत् पाण्डुरवासः सोमराजन्' इति। स आमन्त्र्यमाणो नोत्तस्थौ। तं पाणिनापेषं बोधयांचकार। स होत्तस्थौ। 'स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत्' इत्यादि। सोऽयं सुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेश इति ॥ १८ ॥ **इति पञ्चमं बालाक्यधिकरणम् ॥**

### वेदान्तकल्पतरुः।

हेतुमाह—**ब्रह्मस्वभावस्याप्रहाणादिति**। यतस्तद्भ्रंशरूपमागमनमिति भाष्यं व्याचक्षाणः सुषुप्तौ ब्रह्मभावं दृढीकर्तुं तद्व्यतिरेके संसारमाह—**यदात्विति। ननु** हिताऽहितफलप्रदा नाम नाड्यो द्वासप्ततिसहस्राणि ताभिः प्रत्यवसृप्य पुरीतति शेतइत्यत्र पुरीतद्यथाऽऽत्माधार उक्तः एवमाकाशः किं न स्यादत आह—**यद्यपीति। मन्दधियामिति**। जीवनिरासहेतुप्रश्नोत्तराधःस्थितयष्टिघातादेः सूत्रेऽर्थात्सूचनाऽज्ञानाद्धीमान्द्यम्। भाष्योक्तप्राणादिव्यतिरिक्तोपदेशं दर्शयति—**तौ हेति**। महत्त्वात् हे बृहत् पाण्डुरा आपो वासस्त्वेनास्य चिन्त्यन्त इति तथोक्तः। प्राणस्यैव चन्द्रात्मत्वात्सोमराजत्वम्; अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्र इति श्रुतेः ॥ १८ ॥ **आपेषम्** आपिष्यापिष्य। यत्र सुप्तस्तत्स्थानं किमिति प्रश्नः। यदा पुरुषः स्वपिति अथ तदा प्राणे एकीभवति प्राणः सर्वदेवानामात्मत्वेन महत्वाद् ब्रह्म तच्च ब्रह्म त्यदिति परोक्षेणाचक्षते परोक्षप्रियत्वाद्देवानाम्। अस्माद् ब्रह्मशब्दात् पूर्वपक्षे ब्रह्मोपक्रमः प्राणे घटितः। सर्वेषां श्रैष्ठ्यं गुणोत्कर्षम् आधिपत्यमैश्वर्यं **स्वराज्यम्** अनन्याधीनत्वम्। **मनो** मनउपाधिको जीवः। **प्राणबन्धनः** प्राणाश्रयः ॥ **इति पञ्चमं बालाक्यधिकरणम् ॥**

### कल्पतरुपरिमलः।

स्पन्दे विशिष्य शक्तिर्नाभ्युपेया; बर्हिराज्यादिशब्दानां संस्कृतेष्विव द्वितीयातृतीयादिशब्दानां तिथिविशेषेष्विव च योगरूढ्या सामान्यशक्त्यैव तत्र प्रयोगनिर्वाहे विशिष्य शक्त्यन्तरकल्पनस्य गौरवपराहतत्वात्। **किंच** परिस्पन्दे विशिष्य शक्त्यन्तरकल्पने परिस्पन्दाऽनपेक्षयोर्मानसपुण्यपापयोरपि कर्मशब्दप्रयोगसत्त्वेन तत्रापि विशिष्य शक्त्यन्तरस्य कल्पनीयतया रूढिद्वये परस्परं कलहायमाने लब्धोन्मेषेण योगेन कर्ममात्रोपस्थितिः संभवतीत्यपि द्रष्टव्यम्। **अर्थात्सूचनाज्ञानादिति। ननु**—अर्थात् सूत्रेण सूचितमर्थं जानतां सूक्ष्मधियां वा कथमिदं प्राणपूर्वपक्षनिराकरणसमर्थमिति धीः स्यात्? यष्टिघातादिना हि व्यष्टिप्राणान्यत्वं स्याद्, नतु समष्टिप्राणाभिमानिदेवतारूपहिरण्यगर्भान्यत्वमपि। नचामन्त्रणे बृहद्विशेषणेन तल्लाभः; व्यष्टेरपि चक्षुराद्यपेक्षमहत्त्वसत्त्वात्, सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमिति तस्यामपि दशायामनुपरतव्यापाराद् व्यष्टिप्राणादन्यत्वज्ञापनेनैवामन्त्रणादेः साफल्यस्योपपादनीयत्वाच्चेति—**चेत्, सत्यम्;**

( ६ अधिकरणम् ) **वाक्यान्वयात् ॥ १९ ॥**

**बृहदारण्यके मैत्रेयीब्राह्मणेऽभिधीयते—'न वा अरे पत्युः कामाय' इत्युपक्रम्य 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं**

## भामती ।

## वाक्यान्वयात् ॥ १९ ॥

**ननु** मैत्रेयीब्राह्मणोपक्रमे याज्ञवल्क्येन गार्हस्थ्याश्रमादुत्तमाश्रमं यियासता मैत्रेय्या भार्यया कात्यायन्या सहार्थसंविभागकरण उक्ते मैत्रेयी याज्ञवल्क्यं पतिममृतत्वार्थिनी पप्रच्छ, यन्नु म इयं भगोः सर्वा पृथ्वी वित्तेन पूर्णा स्यात्किमहं तेनामृता स्यामुत नेति । तत्र नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेन । एवं वित्तेनामृतत्वाशा भवेद्यदि वित्तसाध्यानि कर्माण्यमृतत्वे उपयुज्येरन् । तदेव तु नास्ति; ज्ञानसाध्यत्वादमृतत्वस्य, कर्मणां च ज्ञानविरोधिनां तत्सहभावित्वानुपपत्तेरिति भावः । सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि । अमृतत्वसाधनमिति शेषः। तत्रामृतत्वसाधनज्ञानोपन्यासाय वैराग्यपूर्वकत्वात्तस्य रागविषयेषु तेषु तेषु पतिजायादिषु वैराग्यमुत्पादयितुं याज्ञवल्क्यो 'न वा अरे पत्युः कामाय' इत्यादिवाक्यसंदर्भमुवाच । आत्मौपाधिकं हि प्रियत्वमेषां नतु साक्षात् प्रियाण्येतानि । तस्मादेतेभ्यः पतिजायादिभ्यो विरम्य यत्र साक्षात्प्रेम स एव **आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**। वाशब्दोऽवधारणे । आत्मैव द्रष्टव्यः साक्षात्कर्तव्यः । एतत्साधनानि च श्रवणादीनि विहितानि श्रोतव्य इत्यादिना । कस्मात् ? आत्मनो वा अरे दर्शनेन श्रवणादिसाधनेनेदं जगत्सर्वं विदितं। भवतीति वाक्यशेषः । यतो नामरूपात्मकस्य जगतस्तत्त्वं पारमार्थिकं रूपमात्मैव भुजङ्गस्येव समारोपितस्य तत्त्वं रज्जुः । तस्मादात्मनि विदिते सर्वमिदं जगत्तत्त्वं विदितं भवति, रज्वामिव विदितायां समारोपितस्य भुजङ्गस्य तत्त्वं विदितं भवति, यतस्तस्मादात्मैव द्रष्टव्यो नतु तदतिरिक्तं

## वेन्दान्तकल्पतरुः ।

## वाक्यान्वयात् ॥ १९ ॥

अत्र जीवब्रह्मलिङ्गाभ्यां विशयः । पूर्वत्र ब्रह्मोपक्रमात् तत्परत्ववदिहापि जीवोपक्रमात्तत्परतेति सङ्गतिः । क्वचित्समन्वयस्य जीवमात्रपर्यवसाननिषेधात्पादसङ्गतिः । मैत्रेयीब्राह्मणार्थमनुक्रामन् प्रातर्दननयेन गतार्थतामाशङ्कते—**नन्वित्यादिना । यियासता** गन्तुमिच्छता । **कात्यायन्या** द्वितीयभार्यया । **यत्** यदि । **भगोः** भगवन् । तेनामृता किं स्यामिति प्रश्नः । **उपकरणवताम्** अशनवसनादिमताम् । सिद्धरूपस्य वित्तस्यामृतत्वसाधनभावाप्राप्तेः प्रतिषेधायोगमाशङ्क्य तत्साध्यकर्मद्वारा प्राप्तिमुपपादयति—**एवमिमि** । श्रुतौ तच्छब्दार्थमाह—**अमृतत्वेति** । अमृतत्वसाधनज्ञानोपन्यासाय वैराग्यमुत्पादयितुं वाक्यसन्दर्भमुवाचेत्यन्वयः । वाक्यसन्दर्भं व्याख्याति—**आत्मेति** । आत्मा वा अरे इति कृतसन्धिको वैशब्दोऽनुकाराद्वाशब्द उक्तः । **विहितानि** विधिवन्निगदैर्बोधितानीत्यर्थः । **कस्मा**दित्यत्र द्रष्टव्य

## कल्पतरुपरिमलः ।

अभ्युच्चययुक्तिरियम् । अतएव भाष्येऽपि तथैवोक्तम् । एवं वाजसनेयशाखायां प्राणशब्दस्थाने आकाशशब्दाम्नानमभ्युच्चयान्तरम् । स हि परमात्मनि प्रसिद्धो न हिरण्यगर्भे । इदमप्याकाशशब्दश्चेति भाष्येण सूचितम् ॥ १८ ॥ **इति पञ्चमं बालाक्यधिकरणम् ॥**

## वाक्यान्वयात् ॥ १९ ॥

**वाक्यसंदर्भं व्याख्यातीति ।** पतिः प्रियो भवतीत्यादिभिर्वाक्यैः पत्यादीनां प्रेमविषयत्वोक्तिः कथं तेषु वैराग्योत्पादनीत्यादिशङ्कानिरासायेत्यर्थः । पतिजायादिवाक्येषु वैशब्दः प्रसिद्ध्यनुवादकः । प्रसिद्धं ह्येतत्तवापि मैत्रेयि पत्यादयो जायादीनां पत्यादिप्रयोजनाय प्रिया न भवन्ति, किंतु स्वप्रयोजनाय । अतएव तेषु स्वेष्टसंपादकत्वदशायामिव स्वानिष्टसंपादकत्वदशायां न प्रेमा । अतः सोपाधिकं **प्रियत्व**मेतेषामात्मन एव निरुपाधिकमिति पतिजायादिवाक्येषु परिहारप्रक्रिया । टीका स्पष्टेति न विवृता । यद्येवं तर्हि पत्यपेक्षया स्वात्मनः प्रियत्वं मैत्रेय्याः स्वानुभवसाक्षिकं प्रसिद्धं तद्दृष्टान्तेनोत्तरवाक्यानामपि प्रसिद्धार्थविषयतया सिद्धिः इत्येवं निरुपाधिकप्रेमास्पदत्वं जीवलिङ्गमेव पर्यवसितम् । एतदनुसारेण श्रवणादिवाक्यगतस्याप्यात्मशब्दस्य जीवविषयत्वं प्राप्नोतीति कथमिदं पूर्वपक्षलिङ्गं सिद्धान्तोपपादकतया टीकायां

## भामती ।

जगत् स्वरूपेण द्रष्टव्यम् । कुतः? यतो 'ब्रह्म तं परादात् ब्राह्मणजातिर्ब्राह्मणोऽहमित्येवमभिमान इति यावत् । **परादात्** पराकुर्यादमृतत्वपदात् । कं योऽन्यत्रात्मनो ब्रह्म ब्राह्मणजातिं वेद । एवं क्षत्रियादिष्वपि द्रष्टव्यम् । आत्मैव जगतस्तत्त्वं नतु तदतिरिक्तं किंचित्तदिति । अत्रैव भगवती श्रुतिरुपपत्तिं दृष्टान्तप्रबन्धेनाह । यत् खलु यद्रूहं विना न शक्यते ग्रहीतुं तत्ततो न व्यतिरिच्यते । यथा रजतं शुक्तिकायाः, भुजङ्गो वा रज्जोः, दुन्दुभ्यादिशब्दसामान्याद्वा तत्तच्छब्दभेदाः। न गृह्यन्ते च चिद्रूपग्रहणं विना स्थितिकाले नामरूपाणि । तस्मान्न चिदात्मनो भिद्यन्ते ॥ तदिदमुक्तम्—**स यथा दुन्दुभेर्हन्यमानस्येति** । दुन्दुभिग्रहणेण तद्गतं शब्दसामान्यमुपलक्षयति । न केवलं स्थितिकाले नामरूपप्रपञ्चश्चिदात्मातिरेकेणाग्रहणाच्चिदात्मनो न व्यतिरिच्यतेऽपि तु नामरूपोत्पत्तेः प्रागपि चिद्रूपावस्थानात् तदुपादानत्वाच्च नामरूपप्रपञ्चस्य तदनतिरेकः, रज्जूपादानस्येव भुजङ्गस्य रज्जोरनतिरेक इत्येतद्दृष्टान्तेन साधयति भगवती श्रुतिः—'स यथार्द्रैधोऽग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिना चतुर्विधो मन्त्र उक्तः । इतिहास इत्यादिनाष्टविधं ब्राह्मणमुक्तम् । **एतदुक्तं भवति**—यथाग्निमात्रं प्रथममवगम्यते क्षुद्राणां विस्फुलिङ्गानामुपादानम् । अथ ततो विस्फुलिङ्गा व्युच्चरन्ति । नचैतेऽग्नेस्तत्त्वान्य-

## वेदान्तकल्पतरुः ।

इत्यनुषङ्गः । श्रवणादीनि साधनानि यस्य तत्तथोक्तम् । आत्मानो वेत्यादिवाक्ये विदितमित्यस्यानन्तरं भवतीति शेषो द्रष्टव्य इत्यर्थः । **मतिर्**मननम् । **विज्ञानं** निदिध्यासनम् । श्रवणादिना यद्दर्शनं तेनेत्यर्थः । आत्मदर्शनफलमुक्त्वाऽनात्मदृष्टौ दोषदर्शकं वाक्यमवतारयति—**कुत इति** । ब्राह्मण्याद्यभिमानो नियोज्यत्वाविर्भावनेनात्मतत्त्वाद् भ्रंशयेदित्यर्थः । स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इत्यादिश्रुतिसूचितमनुमानं विशदयति—**यत्खल्विति** । स दृष्टान्तो यथा लोके **दुन्दुभेर्हन्यमानस्य** लक्षणया हन्यमानदुन्दुभ्यभिव्यक्तशब्दत्वसामान्यस्य विशेषभूतात् सामान्याद्बाह्यत्वेन ग्रहीतुं न शक्नुयादिति व्यतिरेकः । एवमन्वयोऽपि । दुन्दु-

## कल्पतरुपरिमलः ।

लिखितं ? जीवलिङ्गमेवेदम् अमृतत्वोपक्रमादिवशात् प्रातर्दनन्यायेन ( ब्र. अ. १ पा. १ सू. १८ ) परमात्मनि पर्यवस्यतीत्याशयेनैतदुपन्यस्तम् । अतएव प्रातर्दननयेन गतार्थतामाशङ्कत इत्यवतारिकाग्रन्थः । विदितं भवतीति वाक्यशेष इति टीकाग्रन्थेन भवतिमात्रस्याध्याहारो विवक्षितो विदितमित्यस्य श्रुतावाम्नानादित्याह—**विदितमित्यस्यानन्तरमिति । अनात्मदृष्टाविति** । आत्मव्यतिरिक्तस्तात्त्विकः प्रपञ्च इति दृष्टावित्यर्थः । एवंच योऽन्यत्रात्मन इति वाक्येषु प्रथमार्थे त्रल्प्रत्ययो द्रष्टव्यः । "समं समाधानमन्यत्राभिनिवेशात्" "अन्यत्र भीष्माद्गाङ्गेया"दित्यादिलौकिकप्रयोगेष्वपि हि तस्य प्रथमार्थएव स्वारस्यं दृश्यते । एवं प्रथमार्थपरिग्रह एवाग्रिमसिदं ब्रह्मेदं क्षत्रमिमे लोका इमे वेदा इमानि भूतानि इदं सर्वं यदयमात्मेति सामानाधिकरण्यवाक्यं समञ्जसं भवति । **नियोज्यत्वाविर्भावनेनेति** । ब्राह्मणादिजातिर्भेददर्शिनं न साक्षान्मोक्षाद् भ्रंशयति, किंतु टीकोक्तं ब्राह्मणोऽहमित्याद्यभिमानमपेक्ष्य, सोऽपि ब्राह्मणादिकर्मणि नियोज्यत्वाधिकारित्वबुद्धिमपेक्ष्य, तया हि बुध्या सांसारिकफलकर्मानुष्ठानेन साक्षात्पुरुषः प्रच्युतो भवतीत्यभिप्रेत्य नियोज्यत्वादिभावनापर्यन्तोक्तिः । दुन्दुभिवाक्यमात्मैव प्रपञ्चस्य तत्त्वमित्यत्रोपपत्तिपरतया स्पष्टं न प्रतीयत इत्याशङ्क्य व्याचष्टे—**यथा लोके इति । ननु**-अक्लिष्टमर्थान्तरमस्य वर्णयितुं शक्यम् । दुन्दुभौ हन्यमाने ततो बहिर्निःसरतः शब्दान् न कश्चिदपि निरोद्धुं शक्नुयात्, किंतु दुन्दुभेर्निरोधेन तदाहन्तृपुरुषनिरोधेन वा दुन्दुभिशब्दो निरुद्धो भवतीति । **सत्यम्**; इतोऽप्यक्लिष्टतरम् अर्थान्तरं वर्णयितुं शक्यम् । दुन्दुभौ हन्यमाने बाह्यान् दुन्दुभिशब्दव्यतिरिक्तान् मानुषादिशब्दान् दुन्दुभिशब्दाभिभूतान् ग्रहीतुं न शक्नुयाद् दुन्दुभेस्तदाहन्तृपुरुषस्य वा निरोधेन मानुषादिशब्दो गृहीतो भवतीति । अत्र हि बाह्यशब्दः सफलः । बहिर्निःसरत इत्यर्थवर्णने तु निष्फलः; दुन्दुभिशब्दे ततो बहिर्निस्सरणस्य स्वाभाविकत्वेन वाक्याभावात् । नच चोरादेरिव शब्दस्य निरोधोऽस्ति; उत्पत्त्यभिव्यक्तिप्रतिबन्धस्तु न निरोध इति प्रसिद्धः । पूर्वापरपरामर्शानुसारेणार्थवर्णने तु प्रकृतः सार्वात्म्योपपादकदार्ष्टान्तिकानुगुण एवार्थो वर्णनीयो न प्रकृतानुपयोग्यर्थान्तरम् । **ननु**—दुन्दुभिहननानुवृत्तौ दुन्दुभिशब्द इवेन्द्रियव्यापारानुवृत्तौ बाह्यार्थप्रत्ययो निरोद्धुं न शक्यते । तस्मादात्मदर्शनार्थिना तद्विरोधी बाह्यार्थप्रत्यय इन्द्रियनिरोधेन तद्विजृम्भणहेतुमनोनिरोधेन वा निरोद्धव्य इत्यक्लिष्टार्थवर्णनस्यापि प्रकृतोपयोगित्वमुपपादयितुं शक्यमिति—**चेत्**, एवमेव दुन्दुभिशब्देन प्रतिबन्धे सति मानुषादिशब्दो ग्रहीतुं न शक्यत इति तदग्रहणाय दुन्दुभिनिरोधकं यथापेक्ष्यते, एवं बाह्येन्द्रियव्यापारेण प्रतिबन्धे सत्यात्मस्वरूपं ग्रहीतुं न शक्यत इति तन्निरोधकमपेक्ष्यत इति दार्ष्टान्तिककल्पने प्रकृतोपयोगित्वमक्लिष्टतरार्थवर्णनस्यापि कल्पयितुं शक्यमेव । किंत्विदं सर्वं यदयमात्मेत्यव्यवहितपूर्व-

**सर्वं विदितम्' (बृ० ४।५।६ ) इति । तत्रैतद्विचिकित्स्यते—किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यत आहोस्वित्परमात्मेति । कुतः पुनरेषा विचिकित्सा ? प्रियसंसूचितेनात्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति । तथात्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति । किं तावत्प्राप्तम् ? विज्ञानात्मोपदेश इति । कस्मात् ? उपक्रमसामर्थ्यात् । पतिजा-**

## भामती ।

त्वाभ्यां शक्यन्ते निर्वक्तुम् । एवमृग्वेदादयोऽप्यल्पप्रयत्नाद्ब्रह्मणो व्युच्चरन्तो न ततस्तत्त्वान्यत्वाभ्यां निरुच्यन्ते । ऋगादिभिर्नामोपलक्ष्यते । यदा च नामधेयस्येयं गतिस्तदा तत्पूर्वकस्य रूपधेयस्य कैव कथेति भावः । न केवलं तदुपादानत्वात्ततो न व्यतिरिच्यते नामरूपप्रपञ्चः, प्रलयसमये च तदनुप्रवेशात्ततो न व्यतिरिच्यते । यथा सामुद्रमेवाम्भः । पृथिवीतेजःसंपर्कात् काठिन्यमुपगतं सैन्धवं खिल्यः, स हि स्वाकरे समुद्रे क्षिप्तोऽम्भ एव भवति, एवं चिदम्भोधौ लीनं जगच्चिदेव भवति, नतु ततोतिरिच्यत इति एतद्दृष्टान्तप्रबन्धेनाह—**स यथा सर्वासामपा-**

## वेदान्तकल्पतरुः ।

भिशब्दस्य ग्रहणेन तद्विशेषशब्दो दुन्दुभ्याघातसंज्ञको गृहीतः, आघातस्य वा ग्रहणेन तदवान्तरविशेषशब्दो गृहीत इति श्रुत्यर्थः । आर्द्रैरेधोभिरिद्ध **आर्द्रैधाः । अभ्याहितः** उपचितः । पञ्चम्यर्थे षष्ठ्यौ । धूमग्रहणं विस्फुलिङ्गाद्युपलक्षणार्थम् । किं तन्निःश्वसितं तदाह श्रुतिः । यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानीनीति । **अथर्वाङ्गिरसो**न्तश्चतुर्विधो मन्त्रः । **इतिहासः** उर्वशी हाप्सराः पुरूरवसमैलं चकमे इत्यादि । **पुराणं** सदेव सोम्येदमग्रआसीदित्यादि सर्गादिकथकम् । **विद्याः** देवयजनविद्यावाः । **उपनिषदः** प्रियमित्येतदुपासीतेत्याद्या रहस्योपासनाः । **श्लोकाः** ब्राह्मणप्रभवा मन्त्रास्तदेते श्लोका इत्यादौ निर्दिष्टाः । **सूत्राण्या**त्मेत्येवोपासीतेत्यादिवस्तुसंग्रहवाक्यानि । **अनुव्याख्यानानि** संग्रहविवरणानि । **व्याख्यानानि** मन्त्रव्याख्याः । इत्यष्टविधं ब्राह्मणमित्यर्थः । श्रुतौ शब्दसृष्ट्याऽर्थादर्थसृष्टिरुक्तेति वदन्नामरूपप्रपञ्चकारणतां व्याचक्षाण इति भाष्याभिप्रायमाह—**यदा चेति** । सिद्धान्त एव प्रकट इति गतार्थत्वं शङ्क्यतेऽतः शङ्कावसरेऽपि युक्ता सिद्धान्तभाष्यव्याख्या । स यथा सैन्धवखिल्य इति वाक्येन ज्ञाननिमित्त आत्यन्तिकः प्रलयः प्रपञ्चस्योक्तस्तमाह—**यथा सामुद्रमिति । खिल्यो घनः** । आत्यन्तिकप्रलये प्राकृतो लयो दृष्टान्तत्वेनोच्यतइत्याह—**एतदिति** । समुद्रेऽपां लयः प्राकृतलये दृष्टान्तो न त्वात्यन्तिकलये । सर्वेषां स्पर्शानां

## कल्पतरुपरिमलः ।

वाक्यप्रकृतार्थोपपादकदार्ष्टान्तिककल्पनया तदनुगुणदृष्टान्तपरत्ववर्णनमेव युक्ततममित्यलं विस्तरेण । **दुन्दुभ्याघातसंज्ञक इति** । वीरादिरससंयुक्तो दुन्दुभ्याघात उच्यते इति वार्तिककाराः । **धूमग्रहणमिति** । एतदुक्तं भवतीत्याद्यग्रिमटीकायां धूमस्थाने विस्फुलिङ्गोपन्यासात् तदुपलक्षणत्वोक्तिः । **अथर्वाङ्गिरसोऽन्त इति** । अथर्वाङ्गिरस इत्येतदन्त इत्यर्थः । **देवयजनविद्येति** । देवविद्या देवताकाण्डविचारितो यज्ञाङ्गदेवतास्वरूपसमर्थको वेदभागः । यजनविद्या इष्टिपशुसोमादिविविधप्रपञ्चः । **अर्थादर्थसृष्टिरुक्तेति** । यद्यपि षष्ठे मैत्रेयीब्राह्मणे सूत्राण्यनुव्याख्यानानीत्येतदनन्तरमिष्टं हुतमाशितं यापितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानीति रूपप्रपञ्चसृष्टिरपि कण्ठत एवोक्ता पृथक्कर्मप्रपञ्चसृष्टिरप्यधिकोक्ता, तदनुसारेण केषुचिद् भाष्यकोशेषु नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाण इति कर्मग्रहणमपि दृश्यते; तथापि चतुर्थे मैत्रेयीब्राह्मणे भाष्यकारैर्विषयवाक्यत्वेनोदाहृते इष्टं हुतमित्याद्यनाम्नानादेव-मुक्तिः । एवं चतुर्थे मैत्रेयीब्रह्मणे यथार्द्रैधाग्नेरभ्याहितादिति पञ्चम्यन्ताम्नाने सत्यपि टीकायामभ्याहितस्येति षष्ठमैत्रेयीब्राह्मणगतषष्ठ्यन्तपाठलेखनं पञ्चम्यर्थे षष्ठ्याविति तद्व्याख्यानं च षष्ठ्यन्ताम्नातस्यापि प्रसङ्गादत्रैवार्थनिर्णयो भवत्वित्यभिप्रेत्येति द्रष्टव्यम् । **नन्व**धिकरणानारम्भशङ्कावसरे सिद्धान्तभाष्यव्याख्यानस्य का सङ्गतिरित्याकाङ्क्षायामाह—**सिद्धान्त एवेति;** सिद्धान्तस्य स्फुटत्वाद् न पूर्वपक्षोऽस्तीति खल्वत्र शङ्का क्रियते अतः सिद्धान्तस्फुटत्वोपपादनसमये सिद्धान्तभाष्यव्याख्यानस्य प्रासङ्गिकी सङ्गतिरित्यर्थः । **यथा सैन्धवेति** । स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेतेत्यादिचतुर्थमैत्रेयीब्राह्मणगतदृष्टान्तोक्तिपूर्वकवाक्येनेत्यर्थः । सैन्धवखिल्यवाक्यात् प्राचीनं स यथा सर्वासामित्याद्येकायनवाक्यजातमप्यात्यन्तिकलये प्राकृतलयं दृष्टान्तीकर्तुं प्रवृत्तमिति टीकार्थं दर्शयन्नवतारयति—**आत्यन्तिक इति । नन्वा**त्यन्तिकलये प्राकृतलयो दृष्टान्तश्चेत् सर्वेषां स्पर्शानामित्यादिना दृष्टान्तमुक्त्वेति वक्तव्यं, कथं सर्वासामपामित्यादिना दृष्टान्तमुक्त्वेति टीकाग्रन्थः ? इत्याशङ्क्य सर्वासामित्यादिप्राकृतलय दृष्टान्तवचनमप्यात्यन्तिकलयदृष्टान्तोपपादकतया तद्दृष्टान्तकोट्यन्तर्भूतमिति ततः प्रभृति दृष्टान्तवाक्यतया टीकायामुपात्तमित्याशयेनाह—**समुद्रे अपां लय इति** ।

यापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगदात्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानमुपक्रम्यानन्तरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्यान्यस्यात्मनः स्यात् । मध्येऽपि 'इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति । तथा 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन

## भामती ।

मित्यादि । दृष्टान्तप्रबन्धमुक्त्वा दार्ष्टान्तिके योजयति—**एवं वा अरे इदं महदिति** । बृहत्त्वेन ब्रह्मोक्तम् । इदं ब्रह्मेत्यर्थः । **भूतं** सत्यम् । **अनन्तं** नित्यम् । **अपारं** सर्वगतम् । **विज्ञानघनः** विज्ञानैकरस इति यावत् । **एतेभ्यः** कार्यकारणभावेन व्यवस्थितेभ्यो **भूतेभ्यः समुत्थाय** साम्येनोत्थाय । कारणसंघातस्य ह्यवच्छेदाद्दुःखित्वशोकित्वादयस्तदवच्छिन्ने चिदात्मनि तद्विपरीतेऽपि प्रतीयन्ते, यथोदकप्रतिबिम्बिते चन्द्रमसि तोयगताः कम्पादयः । तदिदं साम्येनोत्थानम् । यदा त्वागमाचार्योपदेशपूर्वकमननिदिध्यासनप्रकर्षपर्यन्तजोऽस्य ब्रह्मस्वरूपसाक्षात्कार उपावर्तते, तदा निर्मृष्टनिखिलसवासनाविद्यामलस्य कार्यकारणसंघातभूतस्य विनाशे तान्येव भूतानि नश्यन्त्यनु तदुपाधिश्चिदात्मनः खिल्यभावो विनश्यति ततो न प्रेत्य कार्यकारणभूतनिवृत्तौ रूपगन्धादिसंज्ञास्तीति । न प्रेत्य संज्ञास्तीति संज्ञामात्रनिषेधादात्मा नास्तीति मन्यमाना सा मैत्रेयी होवाच, अत्रैव मा भगवानमूमुहन्मोहितवान् न प्रेत्य संज्ञास्तीति । स होवाच याज्ञवल्क्यः स्वाभिप्रायं, द्वैते हि रूपादिविशेषसंज्ञानिबन्धनो दुःखित्वाद्यभिमानः । आनन्दज्ञानैकरसब्रह्माद्वयानुभवे तु तत् केन कं पश्येत् ? ब्रह्म वा केन विजानीयात्? नहि तदास्य कर्मभावोऽस्ति स्वप्रकाशत्वात् । **एतदुक्तं भवति**—न संज्ञामात्रं मया व्यासेधि, किंतु विशेषसंज्ञेति । तदेवममृतत्वफलेनोपक्रमात्, मध्ये चात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनात्, उपसंहारे च महद्भूतमनन्तमित्यादिना च ब्रह्मरूपाभिधानात्, द्वैतनिन्दया चाद्वैतगुणकीर्तनाद्ब्रह्मैव मैत्रेयीब्राह्मणे प्रतिपाद्यं न जीवात्मेति नास्ति पूर्वपक्ष इत्यनारभ्यमेवेदमधिकरणम् । **अत्रोच्यते**—भोक्तृत्वज्ञातृताजीवरूपोत्थानसमाधये मैत्रेयीब्राह्मणे पूर्वपक्षेणोपक्रमः कृतः । पतिजायादिभोग्यसंबन्धो नाभोक्तु-

## वेदान्तकल्पतरुः ।

त्वगैकायनमित्यादिदृष्टान्तप्रबन्धः । तत्र हि महाप्रलयसमये त्वगादिशब्दलक्ष्यस्पर्शत्वादिसामान्येषु तद्विशेषाणां तेषां च सामान्यानां क्रमेण ब्रह्मणि लय उच्यते इति । 'एवं वा अरे इदं मह'दिति श्रुतिं व्याचक्षाण उदाहरति—**दार्ष्टान्तिके इति** । **अवच्छेदो**ऽल्पत्वम् । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्य'तीति वाक्यं विभजते—**स होवाचेति** । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन विजानीया'दिति वाक्यं विवृणोति—**आनन्देति** । विषयाभावेऽप्यात्मभूतं ब्रह्म जानीयादिति शङ्कापनुत्तये 'विज्ञातारमरे केन विजानीया'दिति वाक्यं, तद्व्याचष्टे—**ब्रह्म वेति** । येनाहं नामृता स्यामित्यमृतत्वोपक्रमाद् दुन्दुभ्यादिभिस्तदुपपादनात् । ब्रह्म तं परादादित्यादि द्वैतनिन्दा । इदं ब्रह्मेदं क्षत्रमित्यारभ्येदं सर्वं यदयमात्मेत्यन्तमद्वैतगुणकीर्तनम् । अस्तीत्याख्यातप्रतिरूपकमव्ययम् । विद्यमानपूर्वपक्षमित्यर्थः । यद्यपीह जीवब्रह्मलिङ्गसंदेहे सर्वात्मब्रह्मपर्यन्तभवन्तो जीवधर्मा न ब्रह्मपरतया योज्यन्ते । प्रातर्दनाधिकरणे ( ब्र. अ. १ पा. १ सू. २६ ) एव तत्सिद्धेः, नापि प्रसिद्धजीवानुवादेनाप्रसिद्धब्रह्मात्मबोधनपरताऽवधार्यते, सुषुप्त्युत्क्रान्त्यधिकरणे ( ब्र. अ. १ पा. ३ सू. ४४ ) तत्सिद्धेः; तथापि जीवमनूद्य ब्रह्मत्वबोधनादनुवाद्यविधेययोर्भेदाभेदाविति मतनिरासेन ऐकान्तिकमद्वैतं प्रतिपाद्यतइत्याह—**अत्रोच्यत इति** । मैत्रेयीब्राह्मणविषये जीवमात्रपरत्वपूर्वपक्षेण प्रस्तावमात्रं कृतं, तत्किमर्थमत आह—**भोक्तृत्वेति** ।

## कल्पतरुपरिमलः ।

**ननु** त्वगादिवाक्यजातं वा कथमात्यन्तिकलयदृष्टान्तवचनं स्यात् ? तेन हि सर्वासामपामित्यादिदृष्टान्तोक्तिपूर्वकमिन्द्रियाणां स्वस्वविषयायतनत्वमुच्यते, नतु ब्रह्मणः प्राकृतप्रपञ्चत्रयाधारत्वमित्याशङ्क्य व्याचष्टे—**तत्र हीति** । सर्वासामपामित्यादिदृष्टान्तवचनेन समुद्रस्य नद्यादिसकलत्रयाधारत्वमुच्यते; यथा नद्यः स्यन्दमाना इत्यादिश्रुत्यन्तरेषु तथैव समुद्रसलिलदृष्टान्तवर्णनदर्शनात् । ततश्च तदनुसारेण दार्ष्टान्तिकवचने त्वगादिशब्दैः स्पर्शादिसामान्यानि लक्षयित्वा तेषु तद्विशेषाणां लयप्रतिपादनद्वारा क्रमेण परमकारणे ब्रह्मणि स्पर्शादिसामान्यानामपि लयप्रतिपादने तात्पर्यं वर्णनीयम् । प्राकृतस्य लयस्यापि परमकारणपर्यन्ततायाः श्रुत्यन्तरेषु पुराणेषु च प्रतिपन्नत्वादिति भावः । **एवं वा अरे इति** । इयं श्रुतिरौपाधिकखिल्यभावनिवृत्त्या लवणं समुद्रभावमिव जीवो ब्रह्मभावं प्राप्नोतीति बोधयति; धर्मविशेषघटितसादृश्यप्रतिपादकयथैवंशब्दयोगात्, सैन्धवखिल्यवाक्योक्तदृष्टान्तस्य दार्ष्टान्तिकशब्दाभावात् । एकायनवाक्यजातोक्तदृष्टान्तस्य दार्ष्टान्तिकं त्वर्थगत्येति विशेषः । अमृतत्वोपक्रमात् तदुपपादनादिति हेतुद्वयं तद्विषयश्रुत्युदाहरणेन स्फुटीकरोति—**येनाहमिति** । **आख्यातप्रतिरूपकमिति** । अतएव जातेरस्तित्वनास्तित्वे नहि कश्चिद्विवक्षतीत्यादयः प्रयोगाः ॥ **अनुवाद्य-**

शब्देनोपसंहरन्विज्ञानात्मानमेवेहोपदिष्टं दर्शयति । तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्यौपचारिकं द्रष्टव्यमिति । एवं प्राप्ते ब्रूमः—परमात्मोपदेश एवायम् । कस्मात् ? वाक्यान्वयात् । वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानंप्रति अन्वितावयवं लक्ष्यते । कथमिति ? तदुपपाद्यते—'अमृतत्वस्य तु नाशास्ति वित्तेन' इति याज्ञवल्क्यादुपश्रुत्य 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि' इत्यमृतत्वमाशासानाया मैत्रेय्या याज्ञवल्क्य आत्मविज्ञानमिदमुपदिशति । नचान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति । तथाचात्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते । नचैतदौपचारिकमाश्रयितुं शक्यम्; यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानन्तरेण ग्रन्थेन तदेवोपपादयति—'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिना । यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति भेददृष्टिमपोद्य 'इदं सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमवतारयति । दुन्दुभ्यादिदृष्टान्तैश्च ( बृ० ४।५।८ ) तमेवाव्यतिरेकं द्रढयति । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृ० ४।५।११) इत्यादिना च प्रकृतस्यात्मनो नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाणः परमात्मानमेनं गमयति । तथैवैकायनप्रक्रियायामपि ( बृ० ४।५।१२ ) सविषयस्य सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्यैकायनमनन्तरमबाह्यं कृत्स्नं प्रज्ञानघनं व्याचक्षाणः परमात्मानमेनं गमयति । तस्मात्परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते ॥ १९ ॥ यत्पुनरुक्तं प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इति, अत्र ब्रूमः—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

अस्त्यत्र प्रतिज्ञा 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीदं सर्वं यदयमात्मा' इति च । तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम् । यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत । तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ॥ २० ॥

### भामती ।

ब्रह्मणोयुज्यते, नापि ज्ञानकर्तृत्वमकर्तुः, साक्षाच्च महतो भूतस्य विज्ञानात्मभावेन समुत्थानाभिधानं विज्ञानात्मन एव द्रष्टव्यत्वमाह । अन्यथा ब्रह्मणो द्रष्टव्यत्वपरेऽस्मिन् ब्राह्मणे तस्य विज्ञानात्मत्वेन समुत्थानाभिधानमनुपयुक्तं स्यात्तस्य तु द्रष्टव्यत्वमुपयुज्यते इत्युपक्रममात्रं पूर्वपक्षकृतः । **भोक्त्रर्थत्वाच्च भोग्यजातस्येति** । तदुपोद्बलनमात्रम् । सिद्धान्तस्तु निगदव्याख्यातेन भाष्येणोक्तः ॥ १९ ॥ तदेवं पौर्वापर्यालोचनया मैत्रेयीब्राह्मणस्य ब्रह्मदर्शनपरत्वे स्थिते भोक्त्रा जीवात्मनोपक्रममाचार्यदेशीयमतेन तावत्समाधत्ते सूत्रकारः—**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः** । यथा हि वह्नेर्विकारा व्युच्चरन्तो विस्फुलिङ्गा न वह्नेरत्यन्तं भिद्यन्ते, तद्रूपनिरूपणत्वात्, नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्त्यभावप्रसङ्गात् । तथा जीवात्मनोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते, चिद्रूपत्वाभावप्रसङ्गात् । नाप्यत्यन्तं न भिद्यन्ते; परस्परं व्यावृत्त्यभावप्रसङ्गात्, सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च । तस्मात्कथंचिद्भेदो जीवात्मनामभेदश्च । तत्र तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये विज्ञानात्मपरमात्मनोरभेदमुपादाय परमात्मनि

### वेदान्तकल्पतरुः ।

भोक्तृत्वादीनां भेदपरत्वेन शङ्क्यमानानां समाधये इत्यर्थः । भोक्तृत्वं विभजते—**पतीति** । आत्मनस्तु कामाय पतिः प्रियो भवति आत्मनस्तु कामाय जाया प्रियेत्यादिसंबन्ध इत्यर्थः । ज्ञातृतामाह—**नापीति** । विज्ञातारमरे केन विजानीयादिति श्रुतमित्यर्थः । जीवरूपेण ब्रह्मण उत्थानमुत्पत्तिमाह—**साक्षाच्चेति** । भोक्तृत्वादेरर्थापत्त्या जीवधीः, इह तु ब्रह्मण उत्पत्त्या मुखत एवेति साक्षाद्ग्रहणम् । भाष्ये भोक्त्रर्थत्वाद्भोग्यजातस्य जीवज्ञानात् सर्वज्ञानोपचार इति जीवपक्षस्योपबृंहणाभासो दुन्दुभ्यादिभिः सर्वज्ञानोपपादनादुपचाराऽयोगादित्यर्थः । सिद्धान्तभाष्यं गतार्थत्ववर्णनच्छलेन विवृतमित्यभिप्रेत्याह—**सिद्धान्तस्त्विति** । लिङ्गत्रयसमाधिं श्लोकोक्तं दर्शयति—**तदेवमित्यादिना** । पूर्वपक्षमाह—

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसंपर्कात्कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते । श्रुतिश्चैवं भवति—'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा० ८।१२।३ ) इति । क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति—'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥' ( मुण्ड० ३।२।८ ) इति । यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्त्येवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि तत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथाच ब्राह्मणम्—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ ) इत्येवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति । मन्त्रवर्णश्च—'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' ( तै० आ० ३।१२।७ ) इत्ये-

---

### भामती ।

दर्शयितव्ये विज्ञानात्मनोपक्रम इत्याश्मरथ्य आचार्यो मेने ॥२०॥ आचार्यदेशीयान्तरमतेन समाधत्ते—**उत्क्रमिष्यत एवंभावादित्यौडुलोमिः** । जीवो हि परमात्मनोऽत्यन्तं भिन्न एव सन् देहेन्द्रियमनोबुद्ध्युपधानसंपर्कात्सर्वदा कलुषः, तस्य च ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहेन्द्रियादिसंघातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणम् । **एतदुक्तं भवति**—भविष्यन्तमभेदमुपादाय भेदकालेऽप्यभेद उक्तः । **यथाहुः पाञ्चरात्रिकाः**—'आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥' इति । अत्रैव श्रुतिमुपन्यस्यति—**श्रुतिश्चैवमिति** । पूर्वं देहेन्द्रियाद्युपाधिकृतं कलुषत्वमात्मन उक्तम् । संप्रति स्वाभाविकमेव जीवस्य नामरूपप्रपञ्चाश्रयत्वलक्षणं कालुष्यं पार्थिवानामणूनामिव श्यामत्वं केवलं पाकेनेव । ज्ञानध्यानादिना तदपनीय जीवः परात्परतरं पुरुषमुपैतीत्याह—**क्वचिच्च जीवाश्रयमपीति** । नदीनिदर्शनम् 'यथा सोम्येमा नद्यः' इति ॥ २१ ॥
तदेवमाचार्यदेशीयमतद्वयमुक्त्वात्रापरितुष्यन्नाचार्यमतमाह सूत्रकारः—**अवस्थितेरिति काशकृत्स्नः** । एतद्व्याचष्टे—**अस्यैव परमात्मन इति** । न जीव आत्मनोऽन्यः, नापि तद्विकारः, किंत्वात्मैवाविद्योपाधानकल्पितावच्छेदः । आकाश इव घटमणिकादिकल्पितावच्छेदो घटाकाशो मणिकाकाशो नतु परमाकाशादन्यस्तद्विकारो वा ततश्च जीवात्मनोपक्रमः परमात्मनैवोपक्रमस्तस्य ततोऽभेदात् । स्थूलदर्शिलोकप्रतीतिसौकर्यायौपाधिकेनात्मरूपेणोपक्रमः कृतः ।

### वेदान्तकल्पतरुः ।

**आचार्यदेशीयेति । प्रतिज्ञेति ।** तद्रूपेण वह्निरूपेण निरूपणं येषां ते तथा । अत्यन्तमभेदे ब्रह्मवत्परस्परमव्यावृत्तिप्रसङ्गात् ब्रह्मव्यतिरिक्तजीवाभावे च तस्यैवोपदेशः स्यात् तस्य चायुक्तत्वादित्यर्थः । परमात्मनि दर्शयितव्ये यो विज्ञानात्मनोपक्रमः स तयोरभेदमादाय । स चाभेदः प्रतिज्ञासिद्धये इति योजना ॥२०॥ आश्मरथ्यमताद्भिनत्ति—**जीवो हीति** । उपाधिसंपर्को हेतुः कालुष्ये, न जीवपरभेदे । **सर्वदेति** अनादिकाले । **भेदहेतोः** गमकस्य संसारित्वादेरीश्वरविरुद्धधर्मस्येत्यर्थः । वृद्धवैशेषिकदृष्ट्याऽनाद्यणुश्यामतोदाहृता । यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहायेत्युदाहर्तव्यम् । तद्धि तथा विद्वानित्यस्य पूर्वार्धम् । अर्थसाम्यात्तु यथा सोम्येमा नद्यः स्यन्दमानाः समुद्रं प्राप्यास्तं गच्छन्तीत्युदाहरत् ॥ २१ ॥

### कल्पतरुपरिमलः ।

**विधेययोरिति** । सत्यप्यभेदे भेदेनापि भाव्यम् , अत्यन्ताभेदे अनुवाद्यविधेयभावाऽयोगादित्याश्मरथ्यादिमतमिह मुख्यः पूर्वपक्ष इत्यर्थः । **प्रतिज्ञासिद्ध्य इति** । सर्वविज्ञानप्रतिज्ञा त्वभेदांशेनोपपादनीया, नतु भेदांशेन इत्यनुपयोगाद् भेदांशोऽत्र न परामृष्ट इत्याश्मरथ्यमतम् ॥ २० ॥ **वृद्धवैशेषिकदृष्ट्येति** । गौतमसूत्रेऽप्यनादेः संसारस्य निवृत्तौ प्रागुत्पत्तेरभावनित्यत्ववदिति प्रागभावनिवृत्तिं दृष्टान्तीकृत्य प्रागभावाऽसंप्रतिपत्तावनादिभावनिवृत्तौ दृष्टान्तेन भाव्यमित्यनुशये चाणुश्यामतानित्यत्ववद्वेति परमाणुश्यामतानिवृत्तिदृष्टान्तेनानादिभावनिवृत्तिरभ्युपगता । **अर्थसाम्या-**

वंजातीयकः । नच तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक्सृष्टिः श्रुता, येन परस्मादात्मनोऽन्यस्तद्विकारो जीवः स्यात् । काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो जीवो नान्य इति मतम् । आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्; तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते । औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते । तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते; प्रतिपिपादयिषितार्थानुसारात् 'तत्त्वमसि' इत्यादिश्रुतिभ्यः । एवंच सति तज्ज्ञानादमृतत्वमवकल्पते । विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य प्रकृतिसंबन्धे प्रलयप्रसङ्गान्न तज्ज्ञानादमृतत्वमवकल्पेत । अतश्च स्वाश्रयस्य नामरूपस्यासंभवादुपाध्याश्रयं नामरूपं जीव उपचर्यते । अतएवोत्पत्तिरपि जीवस्य क्वचिदग्निविस्फुलिङ्गोदाहरणेन श्राव्यमाणोपाध्याश्रयैव वेदितव्या । यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयतीति, तत्रापीयमेव त्रिसूत्री योजयितव्या ।

## भामती ।

अत्रैव श्रुतिं प्रमाणयति—**तथाचेति** । अथ विकारः परमात्मनो जीवः कस्मान्न भवत्याकाशादिवदित्याह—**नच तेजःप्रभृतीनामिति** । नहि यथा तेजःप्रभृतीनामात्मविकारत्वं श्रूयते एवं जीवस्येति । आचार्यत्रयमतं विभजते—**काशकृत्स्नस्याचार्यस्येति** । आत्यन्तिके सत्यभेदे कार्यकारणभावाभावादनात्यन्तिकोऽभेद आस्थेयः; तथाच कथंचिद्भेदोऽपीति तमास्थाय कार्यकारणभाव इति मतत्रयमुक्त्वा काशकृत्स्नीयमतं साधुत्वेन निर्धारयति—**तत्र** तेषु मध्ये **काशकृत्स्नीयं मतमिति** । आत्यन्तिके हि जीवपरमात्मनोरभेदे तात्त्विकेऽनाद्यविद्योपाधिकल्पितो भेदस्तत्त्वमसीति जीवात्मनो ब्रह्मभावतत्त्वोपदेशश्रवणमननिदिध्यासनप्रकर्षपर्यन्तजन्मना साक्षात्कारेण विद्यया शक्यः समूलकाषं कषितुम्, रज्ज्वामहिविभ्रम इव रज्जुतत्त्वासाक्षात्कारेण, राजपुत्रस्येव च म्लेच्छकुले वर्धमानस्यात्मनि समारोपितो म्लेच्छभावो राजपुत्रोऽसीति आप्तोपदेशेन, नतु मृद्विकारः शरावादिः शतशोऽपि मृन्मृदिति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्यो निवर्तयितुं, तत्कस्य हेतोः ? तस्यापि मृदो भिन्नाभिन्नस्य तात्त्विकत्वात्, वस्तुनस्तु ज्ञानेनोच्छेत्तुमशक्यत्वात्, सोऽयं प्रतिपिपादयिषितार्थानुसारः । **अपिच** जीवस्यात्मविकारत्वे तस्य ज्ञानध्यानादिसाधनानुष्ठानात् स्वप्रकृतावप्यये सति नामृतत्वस्याशास्तीत्यपुरुषार्थत्वममृतत्वप्राप्तिश्रुतिविरोधश्च । काशकृत्स्नमते त्वेतदुभयं नास्तीत्याह—**एवंच सतीति** । **ननु** यदि जीवो न विकारः, किंतु ब्रह्मैव, कथं तर्हि तस्मिन्नामरूपाश्रयत्वश्रुतिः ? कथंच 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इति ब्रह्मविकारश्रुतिरित्याशङ्कामुपसंहारव्याजेन निराकरोति—**अतश्च स्वाश्रयस्येति** । यतः प्रतिपिपादयिषितार्थानुसारश्चामृतत्वप्राप्तिश्च विकारपक्षे न संभवतः, अतश्चेति योजना । द्वितीयपूर्वपक्षबीजमनयैव त्रिसूत्र्यापाकरोति—**यदप्युक्तमिति** । शेषमतिरोहितार्थं व्याख्यातार्थं च । तृतीयपूर्वपक्षबीजनिरासे काशकृत्स्नीयेनैवेत्यवधारणम्; तन्मताश्रयणेनैव तस्य शक्यनिरासत्वात् । ऐकान्तिके ह्यद्वैते आत्मनोऽन्यकर्मकरणे 'केन कं पश्येत्' इति आत्मनश्च कर्मत्वं 'विज्ञातारमरे केन विजानीयात्' इति शक्यं निषेद्धुम् । भेदाभेदपक्षे वैकान्तिके वा

## वेदान्तकल्पतरुः ।

अनेन जीवेनात्मनेति सामानाधिकरण्यं कार्यकारणभावेन भेदाभेदपरमिति शङ्किते परिहरति—**नच तेज इति** । आश्मरथ्यमते कार्यकारणभावस्य वास्तवत्वेनान्यूनत्वात्कियानपीति भाष्यनिर्देशायोगमाशङ्क्याह—**आत्यन्तिके इति** । अभेदे आत्यन्तिके सति विद्यमान इति च्छेदः । आस्थिते कथंचिदभेदेऽपीषद्भेद आपततीति स कार्यकारणभावनिर्वाहक इति लक्षणया तथोक्त इत्यर्थः । **ननूच्छेदाभिधानमेतदिति** शेषं भाष्यं न संज्ञामात्रं व्यासेधीत्यादिग्रन्थेन व्याख्यातार्थमित्यर्थः । **भाष्ये**—विज्ञातारमिति कर्तृनिर्देशलिङ्गं काशकृत्स्नमतेनैव परिहरणीयमित्येवकारस्याभिप्रायमाह—**काशकृत्स्नीयेनैवेति** । शक्यनिराकरणत्वमेव दर्शयति—**ऐकान्तिके हीति** । "यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्" इत्यात्मनोऽन्यकर्मकरणे निषिद्धे तत आत्मानं जानात्विति शङ्कायां स्वप्रकाशं विज्ञातारं केन विजानीयादिति तत्कर्मत्वं प्रतिषिद्धम् । एतानि भेदपक्षे भेदाभेदपक्षे च निषेद्धुं न शक्यानि प्रमाणादेः सत्त्वादित्यर्थः । अत्यन्तभिन्नस्य

## कल्पतरुपरिमलः ।

**त्विति** । यथा नद्य इत्यादिर्मुण्डकोपनिषन्मन्त्रः । यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते त्वासां नामरूपे समुद्र इत्येव प्रोच्यत इति प्रश्नोपनिषद्वाक्यम् । अस्य मन्त्रपूर्वार्धेनार्थसाम्यादित्यर्थः ॥ २१ ॥ **आत्मानं जानात्विति शङ्कायामिति** कर्माभावदूषणमात्रोद्धारेण शङ्का । तथापि करणाभावं स्वयमेव प्रकाशमानस्य ज्ञानकर्म-

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ।

इदमत्र प्रतिज्ञातम्—'आत्मनि विदिते सर्वं विदितं भवति'। 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ) इति च। उपपादितं च, सर्वस्य नामरूपकर्मप्रपञ्चस्यैकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात्। तस्या एव प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यन्महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते। अभेदे हि सत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमवकल्पत इति ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ।

उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्संप्रसन्नस्य परेणात्मनैक्यसंभवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते ॥

## अवस्थितेरिति काशकृत्स्नः ।

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते। ननूच्छेदाभिधानमेतत् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' (बृ० २।४।१२) इति, कथमेतदभेदाभिधानम्; नैष दोषः। विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानं नात्मोच्छेदाभिप्रायम्। 'अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्ति' इति पर्यनुयुज्य स्वयमेव श्रुत्यार्थान्तरस्य दर्शितत्वात् 'न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति' इति। एतदुक्तं भवति—कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्योच्छेदप्रसङ्गोऽस्ति। मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृताभिरसंसर्गो विद्यया भवति। संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावान्न प्रेत्य संज्ञास्तीत्युक्तमिति। यदप्युक्तम्—'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसंहाराद्विज्ञानात्मन एवेदं द्रष्टव्यमिति, तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयम्। अपिच 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ० २।४।१३) इत्यारभ्याविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्च्य 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावमभिदधाति। पुनश्च विषयाभावेऽपि आत्मानं विजानीयात् इत्याशङ्क्य 'विज्ञातारमरे केन विजानीयात्' इत्याह। ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन्भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते। दर्शितं तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम्। अतश्च विज्ञानात्मपरमात्म-

---

### भामती ।

भेदे सर्वमेतदद्वैताश्रयमशक्यमित्यवधारणस्यार्थः। न केवलं काशकृत्स्नीयदर्शनाश्रयणेन भूतपूर्वगत्या विज्ञातृत्वमपि तु श्रुतिपौर्वापर्यपर्यालोचनयाप्येवमेवेत्याह—**अपिच—यत्र हीति**। कस्मात् पुनः काशकृत्स्नस्य मतमास्थीयते? नेतरेषामाचार्याणामित्यत आह—**दर्शितं तु पुरस्तादिति**। काशकृत्स्नीयस्य मतस्य श्रुतिप्रबन्धोपन्यासेन पुनः

### वेदान्तकल्पतरुः ।

**तत्केनेति** प्रतिषेधो **विज्ञातरमिति** व्यावृत्तत्वेन जीवग्रहणाऽनिषेध इति केनचिदयुक्तमुक्तम्, आत्मैवाभूदिति भेदाभेदप्रतिषेधात् यत्र हि द्वैतमिवेति इवकारेण द्वैतवैतथ्योपक्रमाच्च। श्रुत्यनुसारिकाशकृत्स्नमतादत्यन्ताद्वैतसिद्धौ जीवस्य यत् ज्ञातृत्वमविद्यावस्थायां भूतं तदालोचनेन तन्निर्देश इत्यर्थात्स्थितम्। इदानीं पौरुषेयीं काशकृत्स्नदृष्टिमनपेक्ष्य श्रुतित एव निर्धार्यते इत्याह—**न केवलमिति**। यदि श्रुतिवित्काशकृत्स्न इति तन्मतमादृतं, हन्त किं न श्रुतिविद इतरे आचार्याः ? इति शङ्कते—**कस्मात्पुनरिति**। पुंगौरवेण श्रुत्यनुमानाद्वरं प्रत्यक्षश्रुतिदृष्टं मतं गृहीतमिति परिहारार्थः। **दर्शितं तु पुरस्ताद्**। यत्र हीत्यादिश्रुतिमत्त्वमित्यर्थः। उक्तश्रुत्युदाहरणभाष्यस्य पौनरुक्त्यमाशङ्क्य बहुवाक्यप्रदर्शकत्वेन परिहरति—**श्रुतिप्रबन्धेति**। स्मृतिमत्त्वं च स्मृत्युपन्यासेनेति शेषः। भाष्यगत उपसंहार उपक्रमे यस्य तच्छ्रु-

### कल्पतरुपरिमलः ।

ताऽनपेक्षां चोद्यव्याख्याथ परिहारः। **आत्मैवाभूदिति। इदं दूषणद्वयमुपलक्षणम्**; केन कं विज्ञातारमिति विशेष्य-

## भामती।

श्रुतिमत्त्वं स्मृतिमत्त्वं चोपसंहारोपक्रममाह—**अतश्चेति**। क्वचित्पाठ आतश्चेति। तस्यावश्यं चेत्यर्थः। जननजरामरणभीतयो विक्रियास्तासां सर्वासां 'महानजः' इत्यादिना प्रतिषेधः। परिणामपक्षेऽन्यस्य चान्यभावपक्षे ऐकान्तिकाद्वैतप्रतिपादनपराः 'एकमेवाद्वितीयम्' इत्यादयः द्वैतदर्शननिन्दापराश्च 'अन्योऽसावन्योऽहमस्मि' इत्यादयः, जन्मजरादिविक्रियाप्रतिषेधपराश्च 'एष महानजः' इत्यादयः श्रुतय उपरुध्येरन्। **अपिच** यदि जीवपरमात्मनोर्भेदाभेदावास्थीयेयाताम्, ततस्तयोर्मिथोविरोधात्समुच्चयाभावादेकस्य बलीयस्त्वे नात्मनि निरपवादं विज्ञानं जायेत; बलीयसैकेन दुर्बलपक्षावलम्बिनो ज्ञानस्य बाधनात्। अथ त्वगृह्यमाणविशेषतया न बलाबलावधारणं, ततः संशये

## वेदान्तकल्पतरुः।

तिमत्त्वं तथोक्तम्। उपसंहारोक्तिस्तद्द्वाराप्यजामिलाय। अतश्चेत्याद्यभ्युपगन्तव्य इत्यन्तं भाष्यमुपसंहारार्थम्, ततः परं श्रुतिप्रबन्धोपन्यासाय। आतश्चेति पाठे बहुप्रमाणदृष्टिरवश्यतया सूचिता। भाष्यकारेण स वा एष इति श्रुतिमुदाहृत्य सर्वविक्रियाप्रतिषेधादिति तात्पर्यमभाणि तद्विशदयति—**जननेति**। श्रुतावमर इत्यपक्षयप्रतिषेधः। भाष्यस्थश्रुतीनामनन्यथासिद्धिमाह—**परिणामेति**। अन्यथा निरपवादविज्ञानानुपपत्तेरिति भाष्यं व्याकरोति—**अपिचेति**। भेदाभेदावविरुद्धावुत विरुद्धौ, **नाद्य** इत्याह—**विरोधादिति**। अविरोधश्चेद्भेदेऽप्यत्यन्ताभेदाविरोधान्न भेदाभेदावकाश इति भावः। **द्वितीये** विषमबलौ, समबलौ वा। **आद्यमनूद्य** प्रत्याह—**नात्मनीति**। **भाष्ये-निरपवादत्वमबाध्यत्वम्**। **द्वितीयम**नुभाष्य दूषयन् **सुनिश्चितार्थत्वानुपपत्ते**श्चेति भाष्यभावमाह—**अथ त्विति**। समबलबोधितविपर्यये विषये संशयः सत्प्रतिपक्षानुमानवदित्यर्थः। **भेदाभेदव्यवस्था चेद्धिंसाविधिनिषेधवत्। कार्यकारणयोस्तर्हि नैकत्र स्तो भिदाभिदे॥** यथाग्नीषोमीयहिंसायां विधिर्वृथाहिंसायां निषेधः, नैकत्रैव; एवं कारणमेकं कार्याणि नानेति भेदवाद एव स्यात्। **सामानाधिकरण्यं यद्धेमकुण्डलगं न तत्। भेदाभेदावगाहीति प्राग्वाचस्पतिनेरितम्॥**

## कल्पतरुपरिमलः।

त्रयेऽप्यत्यन्तभिन्नत्वविशेषणाध्याहारगौरवप्रसङ्गाच्चेत्यपि द्रष्टव्यम्। **एतेन यत्र** यस्यामवस्थायां **द्वैतं** स्वतन्त्रमिव भवति, तदानीं स्वतन्त्र **इतरः** स्वतन्त्रं वस्त्वन्तरमनुभवति। **यदा तु** सर्वं ब्रह्मपरतन्त्रं प्रकाशते, तदा कश्चेतनः करणेन कं स्वतन्त्रमर्थमनुभवेदिति केषां चिद्य"त्र हि द्वैतमिवे"त्यादिवाक्यार्थकल्पनमप्यध्याहारगौरवेणैव—**निरस्तम्**; किंच षष्ठे स्वप्नावस्थायां जीवस्य स्वयंज्योतिष्ट्वे सुषुप्त्यवस्थायां यस्य बाह्याभ्यन्तरवेदनराहित्ये चोक्ते कथं ज्योतिःस्वरूपस्य वेदनराहित्यमिति शङ्कायां विषयाभावाद् नतु द्रष्टृस्वरूपाया दृष्टेर्विपरिलोपादित्येतत्प्रतिपादनार्थं प्रवृत्तेषु "यद्वैतन्न पश्यति पश्यन्वैतन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वाद् नतु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदि"त्यादिवाक्येषु श्रुतं द्वैतं तावत् स्वातन्त्र्येण विशेषयितुं न शक्यते; सुषुप्तौ स्वतन्त्रस्येव परतन्त्रस्यापि द्वैतस्य प्रतीत्यभावात्। ततश्च तेषु श्रुतं द्वितीयमपि तेन विशेषयितुं न शक्यते; द्वैतमात्रप्रतीत्यभावस्य द्वैतविशेषाभावेनोपपादयितुमशक्यत्वात्। एवंच तदनन्तरश्रुते "यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येदन्योऽन्यद् जिघ्रे"दित्यादिवाक्ये अन्यदपि स्वातन्त्र्येण विशेषयितुं न शक्यते; सुषुप्तौ यस्य विषयस्य व्यतिरेकात्प्रतीत्यभाव उक्तः तस्यैव स्वप्नजागरयोरन्वयात् प्रतीतेर्वक्तुमुपक्रान्तत्वात्। एवंच सुषुप्तावस्थाविषयोदाहृतवाक्यसमानप्रकारकेषु मुक्तावस्थाविषयेष्वपि वाक्येषु स्वातन्त्र्यविशेषणं विवक्षितुमयुक्तमिति॥ **बहुप्रमाणदृष्टिरिति**। अवश्यंभावोक्त्या अस्मिन्विषये श्रुतिस्मृतिरूपबहुप्रमाणदर्शनं सूचितमिति भावः। विरोधादित्युक्तं हेतुं पक्षान्तरे बाधकोपन्यासेनोपपादयति—**अविरोधश्चेदिति**। यद्यविरोधस्तर्हि भेदाङ्गीकारेऽप्यत्यन्ताभेदः प्रकारविशेषानपेक्ष्याभेदः स्याद्, विरोधे हि केनचित्प्रकारेण भेद इति भेदोपाधिप्रकारं परिहृत्य तदन्येन प्रकारेणाभेद इति वक्तव्यं स्यात्; तथाच भेदः कथं निविशताम्? यद्युच्येत विरोधाभावाद्भेदाभेदौ गन्धपृथिवीत्ववदसंकरोपपादकप्रकारभेदानपेक्षौ निवेष्टुमर्हत इति, तर्ह्येकस्यामेव व्यक्तौ गन्धवती पृथिवीति गन्धपृथिवीत्वबुद्धेरिव घटो भवति घटो न भवतीति बुद्ध्योरपि समावेशः स्यात्; तददर्शनात् तयोर्व्यवस्थितघटपटादिविषयत्वस्यैव च दर्शनाद् गन्धपृथिवीत्वयोरिव न भेदाभेदयोरविरोध इत्यर्थः। भास्करग्रन्थेषु विरुद्धयोरपि समबलयोरपि भेदाभेदयोरसंकरोपपादनं कृतम् भेदो घटशरावादिकार्यात्मना अभेदस्तावदनुवृत्तमृदादिकारणात्मनेति, तन्निरस्यति—**भेदाभेदव्यवस्था चेदिति**। **भेदवाद एव स्यादिति**। भेदाभेदयोराश्रयभेदवाद एव स्यादित्यर्थः। **ननु** कार्यकारणयोर्नात्यन्तं भेद इष्यते, किंत्वत्यन्तभेदेऽत्यन्ताऽभेदे वाऽनुपलभ्यमानाद् मृद् घटः हिरण्यं कुण्डलमित्यादिसामानाधिकरण्याद् भेदाभेदे इष्येते, तथाच कार्याणां भेदः कारणमपि स्पृशति कारणस्याभेदः कार्याण्यपि स्पृशति अतो भेदाभेदयोर्नात्यन्तिकाश्रयभेद इति तन्मतमाशङ्क्य निरस्यति—**सामानाधिकरण्यं यदिति**। **यावत्कार्यमवस्थायेति** प्रक्र-

नोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः; 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६।२।१ ) 'आत्मैवेदं सर्वम्' ( छा० ७।२५।२ ), 'ब्रह्मैवेदं सर्वम्' ( मुण्ड० २।२।११ ), 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ), 'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ), 'नान्यदतोऽस्ति द्रष्टृ, ( बृ० ३।८।११ ) इत्येवंरूपाभ्यः श्रुतिभ्यः । स्मृतिभ्यश्च 'वासुदेवः सर्वमिति' ( गी० ७।१९ ), 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' ( गी० १३।२ ), 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' (गी० १३।२७ ) इत्येवंरूपाभ्यः, भेददर्शनापवादाच्च 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' ( बृ० १।४।१० ), 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( बृ० ४।४।१९ ) इत्येवंजातीयकात्, 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृ० ४।४।२५ ) इति चात्मनि सर्वविक्रियाप्रतिषेधात्, अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः, सुनिश्चितार्थत्वानुपपत्तेश्च । निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकमात्मविषयमिष्यते; 'वेदान्तविज्ञानसुनिश्चितार्थाः' ( मुण्ड० ३।२।६ ) इति च श्रुतेः । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ( ई० ७ ) इति च । स्थितप्रज्ञलक्षणस्मृतेश्च ( गी० २।५४ ) । स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने क्षेत्रज्ञः परमात्मेति नाममात्रभेदात्, क्षेत्रज्ञोऽयं परमात्मनो भिन्नः

---

## भामती ।

सति न सुनिश्चितार्थमात्मनि ज्ञानं भवेत् । सुनिश्चितार्थं च ज्ञानं मोक्षोपायः श्रूयते—'वेदान्तविज्ञानसुनिश्चितार्थाः' इति । तदेतदाह—**अन्यथामुमुक्षूणामिति** । 'एकत्वमनुपश्यतः' इति श्रुतिर्न पुनरेकत्वानेकत्वे अनुपश्यत इति । **ननु** यदि क्षेत्रज्ञपरमात्मनोरभेदो भाविकः, कथं तर्हि व्यपदेशबुद्धिभेदौ क्षेत्रज्ञः परमात्मेति ? कथंच नित्यशुद्धबुद्धमुक्तस्वभावस्य भगवतः संसारिता ? अविद्याकृतनामरूपोपाधिवशादिति चेत् ? कस्येयमविद्या; न तावज्जीवस्य; तस्य परमात्मनो व्यतिरेकाभावात्, नापि परमात्मनः; तस्य विद्यैकरसस्याविद्याश्रयत्वानुपपत्तेः । तदत्र संसारित्वासंसारित्वविद्याविद्यावत्त्वरूपविरुद्धधर्मसंसर्गाद्बुद्धिव्यपदेशभेदाच्चास्ति जीवेश्वरयोर्भेदोऽपि भाविक इत्यत आह—**स्थिते च परमात्मक्षेत्रज्ञात्मैकत्वेति** । न तावद्भेदाभेदावेकत्र भाविकौ भवितुमर्हत इति विप्रपञ्चितं प्रथमे पादे । द्वैतदर्शननिन्दया चैकान्तिकाद्वैतप्रतिपादनपराः पौर्वापर्यालोचनया सर्वे वेदान्ताः प्रतीयन्ते । तत्र यथा बिम्बादवदातात्तात्त्विके प्रतिबिम्बानामभेदेऽपि नीलमणिकृपाणकाचाद्युपधानभेदात्काल्पनिको जीवानां भेदो बुद्धिव्यपदेशभेदौ वर्तयति, इदं बिम्बमवदातमिमानि च प्रतिबिम्बानि नीलोत्पलपलाशश्यामलानि वृत्तदीर्घादिभेदभाञ्जि बहूनीति, एवं परमात्मनः

## वेदान्तकल्पतरुः ।

भाष्यस्थश्रुत्या भेदाभेदौ निरस्ताविलाह—**एकत्वमिति** । स्थितप्रज्ञेति भाष्ये स्थितिर्निःसंशयता । लोकप्रसिद्ध्या जीवेश्वरभेदमाह—**कथं तर्हीति** । अनुमानादप्याह—**कथंचेति** । यद्विरुद्धधर्मवत्तया दहनतुहिनवत्तया च जीवेशावित्यर्थः । स्वाभाविकं विरुद्धधर्मवत्त्वमसिद्धमौपाधिकं तु बिम्बप्रतिबिम्बयोरनेकान्तमिति शङ्कित्वा परिहरति भेदवादी—**अविद्येत्यादिना** । भाष्यकृद्भिः श्रौताभेदसिद्धौ मृषा भेद इति प्रतिपादितं तदयुक्तम् । भेदाभेदसंभवादित्याशङ्क्याह—**न तावद्भेदाभेदाविति** । अविद्याश्रयं त्वविद्योपधानं चेत्यादिना वक्ष्याम इति तावच्छब्दः । मा भूतामेकत्र भेदाभेदौ, भेद एवास्तु, नेत्याह—**द्वैतेति** । लोकप्रसिद्धिमन्यथासिद्धयत्यनुमानं वाऽनेकान्तयति—**तत्र यथेत्यादिना** । परस्मिन्नुच्यते प्राचीनैराचार्यैरविद्या ब्रह्मणीति वदद्भिरित्यर्थः । अनादित्वमात्रे बीजाङ्कुरदृष्टान्तो ननु जीवाविद्याव्यक्तिभेदे । उत्पत्तौ हीतरेतराश्रयदोषोऽनाद्योर्जीवाविद्ययोश्च नोत्पत्तिः । इतरेतराधीनत्वं तु स्यात् । तच्च दृष्टमविद्यातत्संबन्धयोर्वाच्यवाचकत्वादीनां चेत्यर्थः । **यदत्राह केशवः—यद्युपाधिविशिष्टस्य संसारो नाशितात्मनः । तल्लक्षितस्य चेद् ब्रह्म मुक्त्वा तद्रूपमुच्यताम् ॥ इति । तन्न**; यतो न विशेषणम् अविद्या, नाप्युपलक्षणम्, किं तूपाधिः । कः पुनरेषां भेदः ? उच्यते । कार्यान्वयित्वेन विभेदकं हि विशेषणं नैल्यमिवोत्पलस्य । अनन्वयित्वेन तु भेदकानाम् उपाधिता उपलक्षणता च सिद्धा । **तत्र च—यावत्कार्यमवस्थाय भेदहेतोरुपाधिता । कादाचित्कतया भेद-**

## कल्पतरुपरिमलः ।

ताऽविद्योपाध्यभिप्रायेणोक्तम् । अलक्तकादौ तु यावत्कार्यमवस्थानं न नियतम्; बहुषु स्फटिकेषु सत्सु रक्तं स्फटिकमानयेति स्फटिकान्तरव्यावृत्त्यर्थं विशेषिते सत्यानयननियोगकालमात्रेऽलक्तकसन्निधानेनापि तद्व्यावर्तनफलसिद्धेः । उपाधिपदप्रयोगलभ्यं स्वसंनिहिते स्वधर्मप्रतीत्याधायकत्वमेवोपाधेर्विशेषणोपलक्षणव्यावृत्तं रूपम् । **कादाचित्कतयेति** । कादाचि-

**परमात्मायं क्षेत्रज्ञाद्भिन्न इत्येवंजातीयक आत्मभेदविषयो निर्बन्धो निरर्थकः । एको ह्ययमात्मा नाममात्रभेदेन बहुधाभिधीयते इति । नहि 'सत्यं ज्ञानमनन्तं ब्रह्म' । 'यो वेद निहितं गुहायाम्' ( तै० २।१ ) इति कांचिदेवैकां गुहामधिकृत्यैतदुक्तम् । नच ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति, 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै० २।६ ) इति स्रष्टुरेव प्रवेशश्रवणात् । ये तु निर्बन्धं कुर्वन्ति ते वेदान्तार्थं बाधमानाः श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते । कृतकमनित्यं च मोक्षं कल्पयन्ति । न्यायेन च न संगच्छन्त इति ॥ २२ ॥ इति षष्ठं वाक्यान्वयाधिकरणम् ॥**

---

## भामती ।

शुद्धस्वभावाज्जीवानामभेद ऐकान्तिकेऽप्यनिर्वचनीयानाद्यविद्योपधानभेदात्काल्पनिको जीवानां भेदो बुद्धिव्यपदेशभेदावयं च परमात्मा शुद्धविज्ञानानन्दस्वभाव इमे च जीवा अविद्याशोकदुःखाद्युपद्रवभाज इति वर्तयति । अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति; तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते । नचैवमन्योन्याश्रयो जीवविभागाश्रयाऽविद्या, अविद्याश्रयश्च जीवविभाग इति; बीजाङ्कुरवदनादित्वात् । अतएव कानुद्दिश्यैष ईश्वरो मायामारचयत्यनर्थिकाम् ? उद्देश्यानां सर्गादौ जीवानामभावात्, कथं चात्मानं संसारिणं विविधवेदनाभाजं कुर्यादित्याद्यनुयोगो निरवकाशः । न खल्वादिमान् संसारः, नाप्यादिमानविद्याजीवविभागः, येनानुयुज्येतेति । अत्र च नामग्रहणेनाविद्यामुपलक्षयति । **स्यादेतत्**—यदि न जीवात् ब्रह्म भिद्यते, हन्त जीवः स्फुट इति ब्रह्मापि तथा स्यात्, तथाच 'निहितं गुहायाम्' इति नोपपद्यत इत्यत आह—**नहि सत्यमिति** । यथाहि बिम्बस्य मणिकृपाणादयो गुहा एवं ब्रह्मणोपि प्रतिजीवं भिन्ना अविद्या गुहा इति । यथा प्रतिबिम्बेषु भासमानेषु बिम्बं तदभिन्नमपि गुह्यमेवं जीवेषु भासमानेषु तदभिन्नमपि ब्रह्म गुह्यम् । अस्तु तर्हि ब्रह्मणोऽन्यद्गुह्यमित्यत आह—**नच ब्रह्मणोऽन्य इति । येतु** आश्मरथ्यप्रभृतयः **निर्बन्धं कुर्वन्ति ते वेदान्तार्थमिति** । ब्रह्मणः सर्वात्मना भागशो वा परिणामाभ्युपगमे तस्य कार्यत्वादनित्यत्वाच्च तदाश्रितो मोक्षोऽपि तथा स्यात् । यदि त्वेवमपि मोक्षं नित्यमकृतकं ब्रूयुस्तत्राह—**न्यायेनेति** । एवं ये नदीसमुद्रनिदर्शनेनामुक्तेर्भेदं मुक्तस्य चाभेदं जीवस्याश्रिषत तेषामपि न्यायेना-

## वेदान्तकल्पतरुः ।

**धीहेतुरुपलक्षणम्** ॥ नीलोत्पलमानयेत्यत्र हि नैल्यं व्यावृत्तिप्रयुक्तानयनकार्यान्वयि सदुत्पलं रक्ताद्यावर्तयति । अलक्तककाकौ तु स्फटिकगृहकार्ययोर्नान्वीयेते । अलक्तकं तु यावद्रक्तस्फटिकानयनमनुवर्तते । काकस्तु न चैत्रगृहगमनं यावदनुवर्तते । तदिहाऽविद्या न विशेषणमिति न तन्नाशे जीवनाशः । नचोपलक्षणमिति न ब्रह्मणि संसारो यावत्संसारं चानुवर्तिष्यते । तन्निवृत्तौ च जीवः स्वं ब्रह्मभावमेष्यति । त्वयापि लिङ्गशरीरावच्छेदाभ्युपगमात् समौ पर्यनुयोगपरिहारौ । नचौपाधिकस्य सत्यत्वमित्यनन्तरमेव वक्ष्यत इति । अत एवेत्येतद्विवृणोति—**न खल्विति** । अविद्याधीनजीवविभागस्यानादित्वादुद्देश्याभावोऽसिद्धः । अनादित्वाच्च मायाया आरचनाभावः । संसारस्यानादित्वात्संसारिणं कथं कुर्यादित्यचोद्यमित्यर्थः । न मायाकृतसंसारे प्रयोजनानुयोगो गन्धर्वनगरादिभ्रमवदित्यादिशब्दार्थः । अविद्योपाधिवर्णनं नाममात्रभेदादिति भाष्यविरुद्धमित्याशङ्क्याह—**अत्र चेति** । नामेत्यवस्तुत्वेनाविद्योक्तिरित्यर्थः । यदा दर्पणादयोऽपि मुखादाववदातत्वादेर्भानाभाने तन्वते, तदा कैवाविद्यायाः कथेत्याह—**यथाहीति** । अविद्या गुहा न गिरिदरी । सा चैकस्मिन् स्वयंप्रभे निरंशेऽपि भानाभाने वर्तयत्यसंभावनीयावभासचतुरत्वादिति भाष्यटीकयोर्भावः । **नन्वैक्यसिद्धावुपाधिना** भानाभानसमर्थनम्, तदेवासिद्धमिति शङ्कते—**अस्तु तर्हीति** । ये तु निर्बन्धं कुर्वन्तीति भाष्यं व्याख्यानपूर्वकं प्रतीकत आदत्ते—**अपित्वित्यादिना इतीत्यन्तेन** । आश्मरथ्यस्य वेदान्तार्थबाधकत्वं भाष्योक्तं स्फुटयति—**ब्रह्मण इति** । भागशः परिणामे कार्यत्वं सावयवत्वात्ततश्चानित्यत्वं सर्वात्मना परिणामे च सर्वाभावादनित्यत्वं साक्षादित्यर्थः । अनेन कृतकमनित्यमिति भाष्यं व्याख्यातम् । न्यायेनासङ्गतिर्व्याघातात् । औडुलोमेर्न्यायासङ्गतिमाह—**एवमिति** । भिन्नयोरैक्यायोगा-

## कल्पतरुपरिमलः ।

त्कत्वं कार्यकालावस्थाननियमाभावः । तेन काकस्य यावद्गृहगमनकालं कदाचिदवस्थितावप्युपलक्षणत्वमेव । उपाधितस्तूपलक्षणस्य भेदः परत्र स्वधर्मप्रतीत्यनाधायकत्वरूपो द्रष्टव्यः । **त्वयापि लिङ्गशरीरेति** । भास्करमते जीवब्रह्मणोरभेदः स्वाभाविकः, भेदस्तु बुद्धीन्द्रियदेहोपाधिकृत इष्यते । तत्र बुद्ध्यादिषु विशेषणत्वादिचोद्यमुपाधित्वेन तत्परिहारवचनं चेत्युभयमपि समानम् । **वस्तुतस्तु**—तन्मते परिहारो न लगति; उपाधिप्रयुक्तस्य संसारस्य स्फटिकरक्तिमवदारोपितत्वनियमादिति भावः । **नन्वैक्यसिद्धाविति** । गुहानिहितस्य ब्रह्मणश्चैक्ये खलु यत्नेन भानाऽभानसमर्थनं कार्यम् । जीवभानात् तदभिन्ने ब्रह्मणि भासमाने गुहानिहितमन्यदिष्यतामिति शङ्कार्थः । **व्याघातादिति** । जीवस्य

## भामती।

संगतिः। नो जातु घटः पटो भवति। ननूक्तं यथा नदी समुद्रो भवतीति। का पुनर्नद्यभिमता आयुष्मतः? किं पाथःपरमाणव उतैषां संस्थानभेद आहोस्वित्तदारब्धोऽवयवी। तत्र संस्थानभेदस्य वावयविनो वा समुद्रनिवेशे विनाशात् कस्य समुद्रेणैकता। नदीपाथःपरमाणूनां तु समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः। एवं समुद्रादपि तेषां भेद एव। ये तु काशकृत्स्नीयमेव मतमास्थाय जीवं परमात्मनोंऽशमाचख्युः, तेषां कथं 'निष्कलं निष्क्रियं शान्तम्' इति न श्रुतिविरोधः? निष्कलमिति सावयवत्वं व्यासेधि, नतु सांशत्वम्, अंशश्च जीवः परमात्मनो नभस इव कर्णनेमिमण्डलावच्छिन्नं नभः शब्दश्रवणयोग्यं, वायोरिव च शरीरावच्छिन्नः पञ्चवृत्तिः प्राण इति चेत्, न तावन्नभो नभसोंऽशः, तस्य तत्त्वात्। कर्णनेमिमण्डलावच्छिन्नमंश इति चेत्, हन्त तर्हि प्राप्ताप्राप्तविवेकेन कर्णनेमिमण्डलं वा तत्संयोगो वेत्युक्तं भवति। नच कर्णनेमिमण्डलं तस्यांशः; तस्य ततो भेदात्। तत्संयोगो नभोधर्मत्वात्तस्यांश इति चेत्, न; अनुपपत्तेः। नभोधर्मत्वे हि तदनवयवं सर्वत्राभिन्नमिति तत्संयोगः सर्वत्र प्रथेत। नह्यस्ति संभवोऽनवयवमव्याप्य वर्तत इति। तस्मात्तत्रास्ति चेद्व्याप्यैव। न चेद्व्याप्नोति तत्र नास्त्येव। व्याप्यैवास्ति केवलं प्रतिसंबन्ध्यधीननिरूपणतया न सर्वत्र निरूप्यत इति चेत्, न नाम निरूप्यताम्। तत्संयुक्तं तु नभः श्रवणयोग्यं सर्वत्रास्तीति सर्वत्र श्रवणप्रसङ्गः। नच भेदाभेदयोरन्यतरेणांशः शक्यो निर्वक्तुम्। नचोभाभ्यां, विरुद्धयोरेकत्रासमवायादित्युक्तम्। तस्मादनिर्वचनीयानाद्यविद्यापरिकल्पित एवांशो नभसो न भाविक इति युक्तम्। नच— काल्पनिको ज्ञानमात्रायत्तजीवितः कथमविज्ञायमानोऽस्ति, असंश्चांशः कथं शब्दश्रवणलक्षणाय कार्याय कल्पते,

## वेदान्तकल्पतरुः।

देकलशास्त्रविकत्थनमसङ्गतमित्यर्थः। संस्थानभेदो नैरन्तर्येणावस्थानम्। अथ नदीपाथःपरमाणवः समुद्रावयविनैक्यं यान्ति तत्राह—**एवं समुद्रादपीति**। भास्करस्य मतमनूद्य दूषयति—**ये त्वित्यादिना**। सावयवत्वमवयवारब्धत्वं सांशत्वं भागवत्त्वमात्रमिति परो मेने। शब्दश्रवणयोग्यमित्यज्ञानदशायां कार्यकरत्वात् सत्यत्वमित्युक्तम्। दिगारभ्यं श्रोत्रमिति मते दृष्टान्तमाह—**वायोरिति**। नेम्याकारकर्णवलयतत्संयोगयोः प्राप्तयोराकाशांशनिर्देशादन्यथा चानिर्देशात् कल्पितनभोऽवच्छेदानभ्युपगमाच्च कर्णस्तत्संयोगो वा आकाशांश इत्युक्तं स्यादित्यर्थः। किं व्यापी संयोगो न वा। **आद्यमनुपलम्भान्निरस्य द्वितीयं** निरस्यति—**नहीति**। व्याप्तिपक्षमादायाऽनुपलम्भस्यान्यथासिद्धिमाशङ्क्याह—**व्याप्यैवेति**। कर्णस्य परिच्छेदात्काचित्कप्रथेत्यर्थः। परिहृतेऽपि सर्वत्र प्रथनप्रसङ्गे तत्कार्यस्य सर्वत्रापत्तिमाह—**न नामेति**। अज्ञातस्य तस्य शब्दधीहेतुत्वादित्यर्थः। इदानीमंशमात्रे साधारणं दूषणमाह—**नचेति**। भिन्नयोर्नांशांशित्वमश्वमहिषवन्नाभिन्नस्यैकैकवन्नापि भिन्नाभिन्नयोस्तद्विरोधस्य समन्वयसूत्रे (ब्र. अ. १ पा. १ सू. ४) उक्तत्वादित्यर्थः। नभोंशस्याविद्याकल्पितत्वमाक्षिप्य समाधत्ते—**नच काल्पनिक इति**। यत्काल्पनिकं न तदज्ञातदशायामस्ति रज्जुभुजङ्गवच्छ्रोत्रलक्षणांशो यदि काल्पनिकत्वेन ज्ञानमात्रप्राप्तजीविकः प्रतीतसत्ताकस्तर्हि कथमज्ञायमानेऽस्ति। इष्टप्रसङ्गतामाशङ्क्याह— **असंश्चेति**। अज्ञातत्वेन हि श्रोत्रं शब्दधीहेतुस्तदज्ञातदशायां यद्यसत्स्यात्ततः शब्दधीर्न स्यादित्यर्थः। अज्ञातत्वं तदानी-

## कल्पतरुपरिमलः।

तदाश्रितमोक्षस्य च कृतकत्वे नित्यत्वं व्याहतमित्यर्थः। **विकत्थनं** निरर्थकं वचः। **संस्थानभेद इति**। तथाच नद्या अवयवसन्निवेशविशेषरूपेण अवयविरूपेण स्वारम्भकपरमाणुरूपेण वा समुद्राभेदप्राप्त्यभावेऽपि समुद्रप्राप्तौ नद्यवयविनाशात्तदीयनामरूपप्रहाणमस्तीत्येतावत्यंशे श्रुतौ नदीसमुद्रदृष्टान्तः। अतएवास्तं गच्छन्तीत्येव दृष्टान्तभागे श्रवणमिति भावः। **भागवत्त्वमात्रमिति**। भेदकोपाध्यधीनसत्यभागवत्त्वमात्रमित्यर्थः। शब्दश्रवणायोग्यत्वविशेषणं सत्यत्वोपपादनार्थमित्याह—**शब्देति**। प्राप्ताप्राप्तविवेकेनेत्यादिग्रन्थं व्याचष्टे—**नेम्याकारेति**। **अनवस्थेति शङ्कां परिहरतीति**। एवंच कृत्स्नस्य प्रपञ्चस्य कल्पितत्वे यथा कार्यलिङ्गकपूर्वपूर्वश्रोत्रानुमितिरूपभ्रमतत्संस्कारप्रवाहकल्पितमुत्तरोत्तरश्रोत्रं कार्यजनकम् एवं श्रुतिजन्यसृष्टितत्क्रमादिविषयानादिपूर्वशाब्दज्ञानसंस्कारप्रवाहकल्पितं वियदादिकं तत्तत्सृष्टिवाक्याद्यालम्बवतां विवक्षितमिति द्रष्टव्यम्। अनयैव रीत्या मीमांसकैरपि वक्तृविवक्षारूपतात्पर्यावधारणं वेदार्थनिर्धारणोपयोगीति पक्षमुपपादयद्भिर्वेदाभिमानिदेवतानां तत्तन्न्यायसंप्रदायाभिज्ञमीमांसकयाज्ञिकानां च तत्तद्वाक्यार्थनिर्धारणाधीनतत्तदर्थप्रतिपादनेच्छारूपं तदिति समर्थितम्। वक्तृविवक्षारूपतात्पर्यज्ञानं वेदार्थनिर्धारणे कारणमिति तदाधारतयेश्वरसिद्धिमिच्छतो नैयायिकान् दूषयद्भिरपि तैः तत्तद्वाक्यार्थनिर्धारणाधीनपूर्वपूर्वमीमांसकयाज्ञिकविवक्षाप्रवाहेणान्यथासिद्धिरुक्ता। **यथाहुः— तथर्ग्वेदादयो वेदाः प्रोक्ता ये च पृथक्पृथक्। भोग्यत्वेनात्मनां तेऽपि चैतन्याऽनुगताः सदा॥**

## भामती ।

न जातु रज्ज्वामज्ञायमान उरगो भयकम्पादिकार्याय पर्याप्त इति—वाच्यम्; अज्ञातत्वासिद्धेः कार्यव्यङ्ग्यत्वादस्य । कार्योत्पादात्पूर्वमज्ञातं कथं कार्योत्पादाङ्गमिति चेत्, न; पूर्वपूर्वकार्योत्पादव्यङ्ग्यत्वादसत्यपि ज्ञाने तत्संस्कारानुवृत्तेरनादित्वाच्च कल्पनातत्संस्कारप्रवाहस्य । अस्तु वानुपपत्तिरेव; कार्यकारणयोर्मायात्मकत्वात् । अनुपपत्तिर्हि मायामुपोद्बलयत्यनुपपद्यमानार्थत्वान्मायायाः । अपिच भाविकांशवादिनां मते भाविकांशस्य ज्ञानेनोच्छेत्तुमशक्यत्वान्न ज्ञानध्यानसाधनो मोक्षः स्यात् । तदेवमाकाशांश इव श्रोत्रमनिर्वचनीयम् । एवं जीवो ब्रह्मणोंऽश इति काशकृत्स्नीयं मतमिति सिद्धम् ॥ २२ ॥ **इति षष्ठं वाक्यान्वयाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

मसिद्धमित्यापादकासिद्धिमाह—**अज्ञातत्वेति** । कुतोऽसिद्धिरत आह—**कार्येति** । निगूढोऽत्राभिसन्धिस्तमजानन् शङ्कते—**कार्योत्पादादिति** । शब्दोपलब्धिकार्यलिङ्गकानुमानाद्या श्रोत्रस्याभिव्यक्तिः सा कार्यात्परचीति प्राक् कार्यादसच्छ्रोत्रं स्यात्तद्बलात्तु तत्सत्त्वे चक्रकं सति श्रोत्रे तत्कार्यं तस्मिन्सति श्रोत्रानुमानं ततश्च श्रोत्रसत्त्वमिति । तथाच नियतप्राक्सत्त्वात्मककारणत्वमस्य न स्यादित्यर्थः । निगूढाभिसन्धिं प्रकटयति—**न पूर्वेति** । पूर्वपूर्वकार्यलिङ्गकानुमित्युपाधिकसत्त्ववतः श्रोत्रादिदानीन्तनकार्योदय इत्ययुक्तम्; अजानतामपि श्रोत्रं शब्दोपलम्भादिति चेत्तत्राह—**असत्यपीति** । यथा कल्पितप्रतीतिः सत्त्वोपाधिस्तथा तत्संस्कारोऽपीत्यर्थः । **एतदुक्तं भवति**—अभासमानं कार्यकरं श्रोत्रमिति न वास्तवं सत्वं कल्प्यम्; भ्रमसंस्कारोपाधिकसत्त्वसंभवादिति । अथ संस्कारः कुतः ? प्राक्तनानुमितेरिति चेत्, तर्हि अनवस्थेति शङ्कां परिहरति—**अनादित्वाच्चेति** । अथ नैकैकस्यानादित्वं न च प्रवाहो नाम वस्त्वत आह—**अस्तु वेति** । नोपपद्यतेऽर्थः परमार्थत्वं यस्यास्तस्या भावस्तत्वम् । कर्णनेमिमण्डलोपाध्यधीनं सत्त्वं श्रोत्रस्येति नाज्ञातसत्त्वविरोधो निरुपाधिकभ्रमेषु प्रातीतिकसत्ता इति वा परिहारः । **किंच—आरभ्यं श्रोत्रमस्माकं नभसा दिग्भिरेव वा । वायोः सांशत्वतः प्राणो भागः सत्यश्च संभवेत् ॥** रूपाणि शरीराणि विचित्य निर्माय तेषां नामानि कृत्वा तेषु प्रविश्याभिवदन् य अस्ते एतं महान्तं पुरुषमहं वेदेत्यर्थः ॥ २२ ॥ **इति षष्ठं वाक्यान्वयाधिकरणम् ॥**

## कल्पतरुपरिमलः ।

**तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादने । विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः ॥** इति न्यायेन संप्रदायेन ये मीमांसकयाज्ञिका वेदं व्याचक्षते तेषामभिप्रायोऽयमुच्यत इति । य एवं विद्वान् साम्ना स्तुवीतेत्यादिविधिषु यच्छब्दानूदिताऽविधीयमानकर्मकर्तृप्रसिद्धिर्यजमानो वा आहवनीय इत्याद्यर्थवादेषु वैशब्दानूदिता स्तुत्यालम्बनतत्तदर्थप्रसिद्धिश्च पूर्वपूर्वतत्तद्वाक्यार्थावगतिमूलैवोत्तरोत्तरतत्तद्वाक्यार्थावगतेरालम्बनमित्युपपादनीयमित्येतादृशान्युदाहरणान्यन्यत्रानुसंधेयानि । **अथ नैकैकस्येति** । यद्यपि प्रवाहानादित्वनिर्वचनासंभवेऽपि भ्रमसंस्कारोपाधिकं सत्त्वमित्युक्तोऽर्थस्य न क्षतिः; सर्वदा यस्य कस्यचित्संस्कारजातीयस्य सत्त्वात् । दर्शितं च तन्निर्वचनमाचार्यैरध्यासग्रन्थे । सर्वस्य प्रपञ्चस्य संस्कारोपाधिकं सत्त्वमिति पक्षे संस्कारे का गतिरिति चेत्, शब्दानुमानमूलकस्य सकलसंस्कारविषयतया तद्विषयस्यापि सतः संस्कारस्यानुवृत्त्या तदप्युपपद्यतएव । तथापि मायायामनुपपत्तिरलंकार इति न मायावादे अत्यन्तमुपपादनार्थं प्रयतितव्यमिति व्युत्पादनाय शङ्केयम् । अस्तु वेति प्रतीकोपादानानन्तरं नोपपद्यतेऽर्थः परमार्थसत्त्वं यस्याः सा तथेति पाठः साधुः । निरुपाधिकभ्रमविषयेष्वेव सत्त्वं प्रातीतिकमिति नियमः, श्रोत्रं तु न तथेति स्वयं परिहारान्तरमाह—**कर्णनेमीति** । कर्णनेम्यवच्छिन्नं नभः श्रोत्रमिति नैयायिकादिमते तदवच्छिन्ना दिक् श्रोत्रमिति कौमारिलमते च तदवच्छेदोपाधिकस्यांशस्य दृष्टान्तीकरणमुपपद्यते । स दृष्टान्तः स्वसिद्धान्तसंमतो न भवतीति स्वयं युक्त्यन्तरमाह—**आरभ्यमिति** । **सांशत्वतः** सावयवत्वतः । यद्यपि सावयवत्वमपि भेदाभेदतत्समुच्चयविकल्पदूषणेन दूषितप्रायम्; तथापि स्वमते सत्यो भाग इति व्यावहारिकसत्यत्वस्यैव कथनात् स न दोष इत्याशयः । **सत्यश्च संभवेदिति** । संभावनार्थेन लिङा जीवस्य ब्रह्मांशत्वं परोक्तरीत्या परमार्थसत्यमिति कथमपि संभावयितुं न शक्यते; मुक्तिदशायामभेदज्ञाननिवर्त्यस्य स्वाश्रयगताभेदरूपमुक्तिकालानुवृत्त्यात्यन्ताभावप्रतियोगिनश्च संसारदशायां प्रतीतस्य भेदस्य मिथ्यात्वाऽनतिलङ्घनादिति द्योतितम् । **अहं वेदेति** । सूक्तद्रष्टुरहमिति परामर्शः ॥ २२ ॥ **इति षष्ठं वाक्यान्वयाधिकरणम् ॥**

---

१ तत्र सूत्राणि ४—वाक्यान्वयात् १९ प्रतिज्ञासिद्धेर्लिङ्गमित्याश्मरथ्यः २० प्रक्रमिष्यत एवंभावादित्यौडुलोमिः २१ अवस्थितेरिति काशकृत्स्नः २२ ॥

( ७ अधिकरणम् ) **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥**

यथाभ्युदयहेतुत्वाद्धर्मो जिज्ञास्य एवं निःश्रेयसहेतुत्वाद्ब्रह्म जिज्ञास्यमित्युक्तम् । ब्रह्म च 'जन्माद्यस्य यतः' (ब्र० १।१।२ ) इति लक्षितम् । तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः, किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति ? तत्र निमित्तकारणमेव तावत्केवलं स्यादिति प्रतिभाति। कस्मात्?

भामती ।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ।

**स्यादेतत्**—वेदान्तानां ब्रह्मणि समन्वये दर्शिते समाप्तं समन्वयलक्षणमिति किमपरमवशिष्यते ? यदर्थमिदमारभ्यत इति शङ्कां निराकर्तुं संगतिं दर्शयन्नवशेषमाह—**यथाभ्युदयेति** । अत्र च लक्षणस्य संगतिमुक्त्वा लक्षणेनास्याधिकरणस्य संगतिरुक्ता । **एतदुक्तं भवति**—सत्यं जगत्कारणे ब्रह्मणि वेदान्तानामुक्तः समन्वयः । तत्र कारणभावस्योभयथा दर्शनाज्जगत्कारणत्वं ब्रह्मणः किं निमित्तत्वेनैव, उतोपादानत्वेनापि । **तत्र यदि प्रथमः** पक्षस्तत उपादानकारणानुसरणे सांख्यस्मृतिसिद्धं प्रधानमभ्युपेयम् । तथाच 'जन्माद्यस्य यतः' इति ब्रह्मलक्षणमसाधु, अतिव्याप्तेः प्रधानेऽपि गतत्वात्, असंभवाद्वा । यदि तूत्तरः पक्षस्ततो नातिव्याप्तिर्नाप्यव्याप्तिरिति साधु लक्षणम् । सोऽयमवशेषः तत्र **ईक्षापूर्वककर्तृत्वं प्रभुत्वमसरूपता । निमित्तकारणेष्वेव नोपादानेषु कर्हिचित्** ॥ तदिदमाह—**तत्र निमित्तकारणमेव तावदिति** । आगमस्य कारणमात्रे पर्यवसानादनुमानस्य तद्विशेषनियममागमो न प्रति-

वेदान्तकल्पतरुः ।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

मध्येपादं वृत्तकीर्तनस्य प्रयोजनमाह—**स्यादेतदिति** । व्यवहितसंबन्धापौनरुक्त्ये फले इत्यर्थः । जन्मादिसूत्र ( ब्र. अ. १ पा. १ सू. २ ) सङ्गत्यभिधित्सायां प्रथमसूत्रार्थानुवादेन यथाभ्युदयहेतुत्वादित्यादिभाष्योक्तेन किं प्रयोजनमत आह—**अत्र चेति** । ब्रह्मलक्षणस्य कारणत्वस्य विचारप्रतिज्ञया सङ्गतिमुक्त्वा तेनास्याधिकरणस्य कारणविशेषविचारपरस्य सङ्गतिरुक्ता । आकस्मिके हि लक्षणे तद्विशेषचिन्ताप्याकस्मिकी स्यादित्यर्थः । अत एवाध्यायसङ्गतिश्च । ब्रह्मकारणत्वाभ्युपगमेन विशेषविप्रतिपत्तिनिराससाम्यात्पादसङ्गतिः । अवशेषमाहेत्युक्ते तमवशिष्यमाणमर्थमाह—**एतदुक्तमिति** । कारणत्वमात्रं लक्षणमुक्त्वा यदि ब्रह्म निमित्तमेवेति पक्ष आश्रीयेत, तदा जगदुपादानमभ्युपेयं न वा । **आद्यं** निरस्य **द्वितीयं** निरस्यति—**असंभवाद्वेति** । भावकार्यस्य गगनादेरवश्याश्रयणीये उपादाने तदधिष्ठातृत्वेन निमित्तत्वं वक्तव्यं तदनभ्युपगमे तन्न स्यादित्यर्थः । उभयकारणत्वपक्षे प्रधानानभ्युपगमान्नातिव्याप्तिः । अद्वैताऽव्यासेधकत्वाच्चैवंविधकारणत्वस्य न लक्ष्याव्याप्तिर्नासंभव इत्यर्थः । एतदधिकरणसिद्धवत्कारेण च जन्मादिसूत्रे उभयकारणत्वव्यवहारः । यद्यपि तदनन्तरमिदमारब्धव्यम् ; तथापि निर्णीततात्पर्यैर्वेदान्तैर्निमित्तत्वमात्रसाधकानुमानस्य कालातीतत्वं सुवचमिति समन्वयावसाने लिलिखे । अप्रदर्शिते तु विषये समन्वयो दुष्प्रतिपाद इति कारणतामात्रं तत्रोक्तम् । ईक्षितृत्वश्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च ब्रह्म निमित्तमेवोतोपादानमपीति संशये पूर्वत्र प्रतिज्ञां मुख्यामाश्रित्य जीवपरत्वं वाक्यस्य निरस्तम्, इह तु निमित्तोपादानभेदाद्गौणी सेति सङ्गतिमभिसन्धाय पूर्वपक्षमाह—**ईक्षेति** । ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वात्कर्तृत्वात्स्वतन्त्रत्वादिति यावत् । प्रभुत्वाच्च राजवत् । सुखाद्युपादाने राज्ञि साध्यवैकल्यव्यावृत्तये प्रतिज्ञायां द्रव्यपदम् । ब्रह्म न पृथिवीप्रकृतिर्निर्गन्धत्वादभाववदित्यादिप्रयोगान्मत्वाह—**असरूपतेति** । एतेषामनुमानानामाशङ्क्यातीतकालतां विषयव्यवस्थया परिहरति—**आगमस्येति** । आगमे हि यत इति पञ्चमी

कल्पतरुपरिमलः ।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

**व्यवहितसंबन्धापौनरुक्त्ये फले इति** । व्यवहितेन जन्माद्यधिकरणेन संबन्धः । तेनैवापौनरुक्त्यं च । **पादसंगतिरिति** । बालाक्यधिकरण ( ब्र. अ. १ पा. ४ सू. १६ ) प्रथमसंगतिग्रन्थानुसारिणीयं संगतिः । **अद्वैताव्यासेधकत्वाच्चेति** । तद्व्यासेधकत्वे हि लक्ष्यसमर्पकब्रह्मशब्दोपात्तवस्त्वपरिच्छेदात्मकलक्ष्याकारविपरीताकारोपस्थापकं लक्षणं लक्ष्ये संभवदपि विवक्षितलक्ष्याकाराननुगुणत्वेन तदव्यापनदोषदुष्टं स्यादिति भावः । **समन्वयावसान इति** । बालाक्यधिकरणद्वितीयसंगतिग्रन्थे यत्प्रतिज्ञातं प्रकृताधिकरणस्याध्यायावसाने लेखनिमित्तं वक्ष्यतइति तदनेन दर्शितम् । **समन्वयो दुष्प्रतिपाद इति** । जगत्कारणब्रह्मणि समन्वय इत्यर्थः । कथं प्रतिज्ञादृष्टान्तयोजनेति शङ्काया-

ईक्षापूर्वककर्तृत्वश्रवणात् । ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते—'स ईक्षांचक्रे' (प्र०६।३) 'स प्राणमसृजत' (प्र० ६।४) इत्यादिश्रुतिभ्यः । ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम् । अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा । स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम् ; ईश्वरत्वप्रसिद्धेश्च । ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते; तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम् । कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यम् ; कार्यकारणयोः सारूप्यदर्शनात् । ब्रह्म च नैवंलक्षणमवगम्यते; 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे०६।१९) इत्यादिश्रुतिभ्यः । पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यम् । ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यवसानादिति । एवं प्राप्ते ब्रूमः—प्रकृतिश्चोपादानकारणं च ब्रह्माभ्युपगन्तव्यं निमित्तकारणं च । न केवलं निमित्तकारणमेव । कस्मात्? प्रतिज्ञादृष्टान्तानुपरोधात् । एवं प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते । प्रतिज्ञा तावत्—'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' ( छा०६।१।२ ) इति । तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते । तच्चोपादानकारणविज्ञाने सर्वविज्ञानं संभवत्युपादानकारणाव्यतिरेकात्कार्यस्य । निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति; लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् । दृष्टान्तोऽपि—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्युपादानकारणगोचर एवाम्नायते । तथा 'एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' 'एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' ( छा० ६।१।४,५,६ ) इति च । तथान्यत्रापि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मुण्ड० १।१।२ ) इति प्रतिज्ञा । 'यथा पृथिव्यामोषधयः संभवन्ति' ( मुण्ड० १।१।७ ) इति दृष्टान्तः । तथा 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' इति प्रतिज्ञा । 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' (बृ० ४।५।६,८) इति दृष्टान्तः । एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ । यत इतीयं पञ्चमी 'यतो वा इमानि भूतानि जायन्ते' इत्यत्र 'जनिकर्तुः प्रकृतिः' (पा० सू० १।४।३० ) इति विशेषस्मरणात्प्रकृतिलक्षण एवापादाने द्रष्टव्या । निमित्तत्वं त्वधिष्ठात्रन्तराभावादधिगन्तव्यम् । यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलालसुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्तते, नैवं ब्रह्मण उपादानकारणस्य ।

## भामती ।

क्षिपत्यपि त्वनुमन्यत एवेत्याह—**पारिशेष्याद्ब्रह्मणोऽन्यदिति** । ब्रह्मोपादानत्वस्य प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गात्सांख्यस्मृतिप्रसिद्धमानुमानिकं प्रधानं शिष्यत इति । एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानम् 'उत तमादेशम्' इत्यादिना, 'यथा सोम्यैकेन मृत्पिण्डेन' इति च दृष्टान्तः, परमात्मनः प्राधान्यं सूचयतः । यथा सोमशर्मणैकेन ज्ञातेन सर्वे कठा ज्ञाता भवन्ति । एवं प्राप्त उच्यते—**प्रकृतिश्च** । न केवलं ब्रह्म निमित्तकारणं, कुतः ? प्रतिज्ञादृष्टान्तयोरनुपरोधात् । निमित्तकारणत्वमात्रे तु तावुपरुध्येयाताम् । तथाहि—**न मुख्ये संभवत्यर्थे जघन्या वृत्तिरिष्यते । न चानुमानिकं युक्तमागमेनापवादितम् ॥** सर्वे हि तावद्वेदान्ताः पौर्वापर्येण वीक्षिताः । ऐकान्ति-

## वेदान्तकल्पतरुः ।

न प्रकृतावपि तु हेतुत्वमात्रे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति हेतोर्मनुष्याच्च रूप्यप्रत्ययविधौ 'तत आगत' इति प्रकृतस्य पञ्चम्यर्थस्य हेतोरिति विशेषणेन हेतावपि पञ्चमीज्ञापनात् । अतो न विरोध इत्यर्थः । **ननु** निमित्तोपादानभेदे कथं प्रतिज्ञादृष्टान्तयोजना तत्राह—**एकेति** । इत्यादिना यत्प्रतिज्ञातमित्यन्वयः । **ननु** प्रतिज्ञादृष्टान्तौ प्राधान्यपरौ, नेत्याह—**न मुख्ये इति** । **नन्वनुमानबाधाद्गौणताऽत आह—नचेति** । अस्त्वागमो निमित्तत्वपरस्तत्राह—**सर्वे हीति** ।

## कल्पतरुपरिमलः ।

मयं परिहाराभिप्रायः । ब्रह्मज्ञानेन वियदादेः सर्वस्य मृत्पिण्डलोहमणिनखनिकृन्तनज्ञानैर्घटशरावकटकमुकुटखनित्रकुद्दालादीनां च तत्तज्ज्ञानान्तरमपि संशयविषयत्वेनानुभूयमानानां मुख्यवृत्त्या ज्ञातत्वासंभवाद् गौणत्वं त्वयाऽप्यावश्यमिति । **प्राधान्यपरौ** प्राधान्याभिप्रायौ । अनुमानबाधादिति पूर्वपक्षलिखितान्यनुमानानि । **अस्त्वागमो निमित्तत्वपर**

## भामती ।

**काद्वैतपरा द्वैतमात्रनिषेधतः** ॥ तदिहापि प्रतिज्ञादृष्टान्तौ मुख्यार्थावेव युक्तौ, नतु यजमानः प्रस्तर इतिवद्गुणकल्पनया नेतव्यौ; तस्यार्थवादस्यातत्परत्वात् । प्रतिज्ञादृष्टान्तवाक्ययोस्त्वद्वैतपरत्वादुपादानकारणात्मकत्वाच्चोपादेयस्य कार्यजातस्योपादानज्ञानेन तज्ज्ञानोपपत्तेः। निमित्तकारणं तु कार्यादत्यन्तभिन्नमिति न तज्ज्ञाने कार्यज्ञानं भवति। अतो ब्रह्मोपादानकारणं जगतः। नच ब्रह्मणोऽन्यन्निमित्तकारणं जगत इत्यपि युक्तम्; प्रतिज्ञादृष्टान्तोपरोधादेव । नहि तदानीं ब्रह्मणि ज्ञाते सर्वं विज्ञातं भवति; जगन्निमित्तकारणस्य ब्रह्मणोऽन्यस्य सर्वमध्यपातिनस्तज्ज्ञानेनाविज्ञानात् । यत इति च पञ्चमी न कारणमात्रे स्मर्यते, अपितु प्रकृतौ, 'जनिकर्तुः प्रकृतिः' इति । ततोऽपि प्रकृतित्वमवगच्छामः । दुन्दुभिग्रहणं दुन्दुभ्याघातग्रहणं च तद्गतशब्दत्वसामान्योपलक्षणार्थम् ॥ २३ ॥ अनागतेच्छा संकल्पोऽभिध्या । एतया खलु

## वेदान्तकल्पतरुः ।

कथमैकान्तिकाऽद्वैतपरत्वं प्रकृतिविकाराभिधायिवेदान्तानामत आह—**द्वैतेति** । कार्यस्य विवर्तत्वेनाधिष्ठानव्यतिरेकेणाभावे वेदान्तानां तात्पर्यमित्यर्थः । यदि तज्ज्ञानात्सर्वकार्यज्ञानार्थं ब्रह्मोपादानमस्तु, तर्हि ततोऽन्यन्निमित्तमत आह—**नचेति** । न केवलमनुमानस्य प्रतिज्ञादिलिङ्गैर्बाधोऽपि तु श्रुत्यापीत्याह—**यत इतीति** । यत्तु ज्ञापकाद्धेतौ पञ्चमीति, तत्राह—**न कारणमात्र इति** । ज्ञापनेन विध्युन्नयनाद्दूरमिह प्रत्यक्षविधिप्राप्तप्रकृतित्वोपादानमिति भावः । **अपिच** गुणवचनेषु हेतुपञ्चमी दृश्यते जाड्याद्बद्ध इत्यादिषु । न च ब्रह्म गुणोऽनाश्रितत्वाद् येन यत इत्यस्य गुणवचनता स्यादिति जनिकर्तुर्जायमानस्य प्रकृतिरपादानसंज्ञा भवति ततोऽपादाने पञ्चमीति सूत्रेण प्रकृतौ स्मर्यत इत्यर्थः । भाष्यस्थश्रुतिं व्याचष्टे—**दुन्दुभीति** ॥ २३ ॥ सौत्र्यभिध्याऽनागतवस्तुनीच्छा तस्या व्याख्या—**संकल्प इति** । एतयाऽभिध्यया

## कल्पतरुपरिमलः ।

**इति** । तथाच नानुमानवृन्दस्यागमबाध इति भावः । **कार्यस्य विवर्तत्वेनेति** । तथाच सद्रूपस्य ब्रह्मणः प्रपञ्चतादात्म्यं सदात्मना सन् घट इत्यादिप्रतीतिषु भासत इति सदात्मना ब्रह्मज्ञानं सदात्मना प्रपञ्चतत्त्वविषयमपि भवति, एवं मृत्पिण्डस्वर्णमणिनखनिकृन्तनरूपोपादानतादात्म्यं घटादिषु मृत्सुवर्णकालायसात्मना मृद् घटः सुवर्णं कुण्डलं कौलायसं खनित्रमित्यादिप्रतीतिषु भासत इति तेन तेन कार्यानुविद्धेन मृदादिरूपेण मृत्पिण्डादिज्ञानं तेन तेन रूपेण तत्तत्कार्यविषयमपि भवति । नहि प्रपञ्चतादात्म्यापन्नं सद् घटादितादात्म्यापन्नं मृदादिकं वा तत्तदुपादानातिरिक्तम्, येन सन्मृदावात्मना ब्रह्ममृत्पिण्डादिज्ञानं तेन तेन रूपेण तत्तत्कार्यविषयं न स्यात् । **ननु**—भवेदेवं मृत्पिण्डादीनां घटाद्युपादानत्वे, तदेव नास्ति; घटादीनामिव पिण्डादीनामपि मृदादिकार्यविशेषत्वाद्, घटादिषु पिण्डाद्याकारानुवृत्त्यभावाच्च, सर्वमृण्मयादीनामेकैकमृत्पिण्डादिकार्यत्वस्य कथमप्युपपादयितुमशक्यत्वाच्च । तथाच दृष्टान्तभागस्योपादानाविषयतया दार्ष्टान्तिकवाक्यस्यापि तद्विषयता न युक्तेति—**चेद्, न;** मृत्पिण्ड एव घटः कृत इत्याद्यबाधितव्यवहारेण मृत्पिण्डादीनां घटादिकार्यान्तरोपादानत्वाद् मृत्पिण्डादिगतमृत्त्वादिरूपकिंचिदाकारानुवृत्तेर्घटादिषु सत्त्वाद्, उपादानगतयावदाकारानुवृत्तिनियमस्य क्षीरादिकार्येषु दध्यादिषु व्यभिचारात्, सर्वं मृण्मयमित्यादिषु सर्वशब्दानामेकैकमृत्कूटादिकार्यपरत्वात् । तस्माद् दृष्टान्तानुसारेणापि दार्ष्टान्तिकवाक्यस्योपादानविषयत्वं युक्तमेव ॥ **ननु** पञ्चमी न कारणमात्रे स्मर्यत इत्ययुक्तम्; ज्ञापनेन तत्सिद्धेरित्याशङ्क्य तत्तात्पर्यमाह—**ज्ञापनेनेति** । **ननु** नैतद्युक्तम्; पाणिनीये ज्ञापकयोगविभागलभ्यस्य व्याकरणान्तरे प्रत्यक्षविधानावश्यंभावात्, तद् दृष्ट्वैव व्याख्यातॄणां ज्ञापकाद्यन्वेषणप्रवृत्तेः, पाणिनीयस्यैव वेदार्थनिर्णयोपयोगित्वादित्याशङ्क्य ज्ञापकस्यान्यथासिद्धिमाह—**अपिचेति** । हेतुग्रहणमगुणवचनाद्धेतुपञ्चम्या न ज्ञापकम्; तस्य विभाषा 'गुणेऽस्त्रिया'मिति सूत्रविहितां गुणवचनेभ्यः पञ्चमीमादाय चारितार्थ्यात्, जाड्यादागतं जाड्यरूप्यमिति तदुदाहरणसंभवात् । **वस्तुतस्तु**–'हेतुमनुष्येभ्य' इति सूत्रे हेतुत्वं न पञ्चम्यर्थविशेषणम्, येन हेतौ पञ्चम्यन्वेषणीया स्यात्, किंतु मनुष्यवाचित्वमिव हेतुवाचित्वमपि प्रातिपदिकविशेषणम् । एवंच हेतुवाचिभ्यो मनुष्यवाचिभ्यश्च प्रातिपदिकेभ्यस्तत आगत इत्यर्थे रूप्यप्रत्ययविधिः । तत आगत इत्यधिकारसूत्रे च तत इत्यपादानपञ्चमी, तत्रापि मुख्यं यदपादानं विवक्षितं तद् ग्राह्यं, नतु नान्तरीयकम् । अतएव स्रुघ्नादागच्छन् मध्ये वृक्षमूले स्थित्वा ततोऽप्यागत इत्येतावता तत आगत इत्यर्थे स्रौघ्न इतिवद् वार्क्षमूल इति तद्धितो न भवति । एवंच यः स्वहेतुभूताज्जन्मभूम्यादेरपादानादागतः यश्चाहेतोरमनुष्याद् देवदत्तादेरपादानादागतस्तत्रोभयत्रापि हेतुवाचिनो मनुष्यवाचिनश्च प्रातिपदिकाद्रूप्यप्रत्ययविधायकस्यास्य सूत्रस्य हेतुपञ्चमीज्ञापकतायाः कथमपि न प्रसक्तिः । **ननु**—अस्य सूत्रस्य हेतुपञ्चमीज्ञापकत्वाभावेऽपि 'विभाषा गुणेऽस्त्रिया'मिति सूत्रे योगविभागादगुणवचनेभ्योऽपि हेतुपञ्चमी भविष्यतीति—**चेद्, न;** योगविभागानपेक्षणात्, पुत्रात्प्रमोदो जायते पश्चिमायामिनीयामात्प्रसादमिव चेतनेत्यादिप्रयोगाणां निमित्तेऽप्यन्तरङ्गकारणत्वज्ञापनार्थम् अपादानत्वारोपेण निर्वाहात् ।

सतोऽन्योऽधिष्ठातापेक्ष्योऽस्ति; प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणात्। अधिष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेवोदितो वेदितव्यः। अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासंभवात्प्रतिज्ञादृष्टान्तोपरोध एव स्यात्। तस्मादधिष्ठात्रन्तराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम्॥ २३॥ कुतश्चात्मनः कर्तृत्वप्रकृतित्वे ?

## अभिध्योपदेशाच्च ॥ २४ ॥

अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति 'सोऽकामयत बहु स्यां प्रजायेये'ति 'तदैक्षत बहु स्यां प्रजायेय' इति च। तत्राभिध्यानपूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते। बहु स्यामिति प्रत्यगात्मविषयत्वाद्बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते॥ २४॥

## साक्षाच्चोभयाम्नानात्॥ २५॥

प्रकृतित्वस्यायमभ्युच्चयः। इतश्च प्रकृतिर्ब्रह्म, यत्कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति' ( छा० १।९।१ ) इति। यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धम्। यथा व्रीहियवादीनां पृथिवी। साक्षादिति चोपादानान्तरानुपादानं दर्शयत्याकाशादेवेति। प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः॥ २५॥

---

### भामती।

स्वातन्त्र्यलक्षणेन कर्तृत्वेन निमित्तत्वं दर्शितम्। 'बहु स्याम्' इति च स्वविषयतयोपादानत्वमुक्तम् ॥ २४ ॥ **आकाशादेव** ब्रह्मण एवेत्यर्थः। साक्षादिति चेति सूत्रावयवमनूद्य तस्यार्थं व्याचष्टे—**आकाशादेवेति** श्रुतिर्ब्रह्मणो जगदुपादानत्वमवधारयन्ती उपादानान्तराभावं साक्षादेव दर्शयतीति **साक्षादिति** सूत्रावयवेन दर्शितमिति योजना

### वेदान्तकल्पतरुः।

स्वातन्त्र्यं दर्शितं तेन च निमित्तत्वं श्रुतौ दर्शितमित्यर्थः। बहु स्यामित्यभिध्याया ईश्वरविषयत्वेन कार्यकारणाऽभेदसूचनादुपादानत्वमुक्तमित्यर्थः ॥२४॥ साक्षाच्चेति सूत्रोदाहृतश्रुतावाकाशशब्दो ब्रह्मवचन इत्याह—**ब्रह्मण इति। व्याचष्टे इति।** उपादानान्तरेत्यादिनेति शेषः। आकाशादेवेति श्रौतावधारणोक्तोपादानान्तराभावं साक्षादिति सूत्रपदेन दर्शयति इत्येवं व्यवहितान्वयेन भाष्यं योजयति—**आकाशादेवेति** ॥ २५ ॥ भाष्ये प्रकृतिग्रहणमुपलक्षणार्थमित्यर्थः। निमित्तोपादानत्वे

### कल्पतरुपरिमलः।

समनन्तरापत्येऽपि गोत्ररूपाध्यारोपेण रामो जामदग्न्य इति गोत्रापत्यविहितष्यञ्प्रत्ययदर्शनाद् धूमवत्त्वादित्यादिपञ्चमीनिर्वाहः। हेतुपञ्चमीसद्भावे वा कथं तन्निर्वाहः ? नहि धूमवत्त्वं वह्नेः कारणम्, ज्ञापकं तु स्यात्। न ज्ञापके पञ्चमीविधानमस्ति। तस्मात् 'तदशिष्यं संज्ञाप्रमाणत्वाद्' 'लुब्योगाप्रख्यानादि'ति सूत्रकारप्रयोगाज् ज्ञापके पञ्चम्याः साधुत्वम्। कारकहेतौ तु हेताविति सूत्रेण तृतीययैव भाव्यम्। अस्तु वा कारकहेतावपि पञ्चमी, तथापि कारकविभक्तेर्बलीयस्त्वादिहापादानपञ्चम्येव। जनिकर्तुरिति सूत्रे पुत्रात्प्रमोदो जायत इत्यादिपञ्चमीसंग्रहार्थं प्रकृतिपदं कारणसामान्यपरमिति व्याख्यानमयुक्तम्; तथा सति कारकइत्यधिकृतस्य पदस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यानन्वयप्रसङ्गात्। नहि कारणानां मध्ये यदुपादानकारणमितिवत्कारणानां मध्ये यत्कारणमित्येतदन्वितार्थं भवति ॥२३॥ **कार्यकारणाभेदसूचनादिति।** नच—यथा "अग्ने यन्मे तनुवा ऊनं तन्म आपृणे"ति मन्त्रे 'यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावैतदाहेति" तदर्थप्रदर्शकब्राह्मणानुसारेण यजमानस्य स्वस्मिन् प्रजापश्वभेदोपचारवद् ब्रह्मणः स्वस्मिन् स्रक्ष्यमाणतेजःप्रभृत्यभेदोपचारः स्यादिति—शङ्कनीयम्; प्रतिज्ञातसर्वविज्ञानोपपादनार्थं प्रवृत्ते प्रपञ्चे तथोपचारकल्पनायोगात् ॥२४॥ **श्रौतावधारणेति** ॥२५॥ **ननु**—श्रुतावेवकारार्थ उपादानान्तराभावः कथं साक्षात्पदेन तदशक्तेन प्रदर्श्यते ? **उच्यते**—उभयाम्नानादित्येतावति सूत्रणीये साक्षादिति विशेषणमुभयाम्नानवाक्ये तदनुवादेनान्यः कश्चिदर्थो मुख्यतया प्रतिपाद्योऽस्तीत्यवगमयति। कोसाविति विचारणायामेवकारघटितवाक्यस्यात्र ह्येवावपन्तीत्यादिवदितरव्यवच्छेदप्रधानत्वादुपादानान्तराभावो मुख्यतया प्रतिपाद्योऽवतिष्ठते, तर्हि विषयवाक्यं ब्रह्मण उपादानत्वप्रतिपादकं न भवतीति सूत्रमपि तद्व्यवस्थापनार्थं न भवेत्, तथाच कथमितश्च प्रकृतिर्ब्रह्मेति भाष्यमित्याशङ्क्याह—**भाष्य इति।** विषयवाक्यप्रतिपाद्यस्य प्रकृत्यन्तराभावस्य

## आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मप्रक्रियायाम् 'तदात्मानं स्वयमकुरुत' ( तै० २।७ ) इत्यात्मनः कर्मत्वं कर्तृत्वं च दर्शयति । आत्मानमिति कर्मत्वं, स्वयमकुरुतेति कर्तृत्वम् । कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुम् ? परिणामादिति ब्रूमः । पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति । विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः । स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते ॥ परिणामादिति वा पृथक्सूत्रम् । तस्यैषोऽर्थः—इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते 'सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च' ( तै० २।६ ) इत्यादिनेति ॥ २६ ॥

## योनिश्च हि गीयते ॥ २७ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्म योनिरित्यपि पठ्यते वेदान्तेषु 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' ( मुण्ड० ३।१।३ ) इति, 'यद्भूतयोनिं परिपश्यन्ति धीराः' ( मुण्ड० १।१।६ ) इति च । योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति । स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानकारणत्वम्; क्वचित्स्थानवचनोऽपि योनिशब्दो दृष्टः—'योनिष्ट इन्द्र निषदे अकारि' ( ऋ० सं० १।१०४।१ ) इति । वाक्यशेषात्त्वत्र प्रकृतिवचनता परिगृह्यते; 'यथोर्णनाभिः सृजते गृह्णते च' ( मु० १।१।७ ) इत्येवंजातीयकात् । एवं प्रकृतित्वं ब्रह्मणः प्रसिद्धम् । यत्पुनरिदमुक्तमीक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु

---

### भामती ।

॥ २५ ॥ प्रकृतिग्रहणमुपलक्षणं, निमित्तमित्यपि द्रष्टव्यम्; कर्मत्वेनोपादानत्वात्कर्तृत्वेन च तत्प्रति निमित्तत्वात् । **कथं पुनरिति** । सिद्धसाध्ययोरेकत्रासमवायो विरोधादिति । **परिणामादिति ब्रूम इति** । पूर्वसिद्धस्याप्यनिर्वचनीयविकारात्मना परिणामोऽनिर्वचनीयत्वाद्भेदेनाभिन्न इवेति सिद्धस्यापि साध्यत्वमित्यर्थः ॥ एकवाक्यत्वेन व्याख्याय परिणामादित्यवच्छिद्य व्याचष्टे—**परिणामादिति वेति** । सच्च त्यच्चेति द्वे ब्रह्मणो रूपे । सच्च सामान्यविशेषेणापरोक्षतया निर्वाच्यं पृथिव्यप्तेजोलक्षणम् । त्यच्च परोक्षमत एवानिर्वाच्यमिदंतया वाय्वाकाशलक्षणं, कथं च तद्ब्रह्मणो रूपं? यदि तस्य ब्रह्मोपादानं, तस्मात्परिणामाद्ब्रह्म भूतानां प्रकृतिरिति ॥ २६ ॥ पूर्वपक्षिणोऽनुमानमनुभाष्यागमविरोधेन दूषयति—**यत्पुनरिति** । **एतदुक्तं भवति**—ईश्वरो जगतो निमित्तकारणमेव;

### वेदान्तकल्पतरुः ।

हेतुपरं यत्कारणमित्यादिभाष्यं व्याचष्टे—**कर्मत्वेनेति** । **पूर्वसिद्धस्येति** । भेदेनानिर्वचनादभिन्न इवेति योजना । सामान्येन द्रव्यत्वादिना विशेषेण पृथिवीत्वादिना निर्वाच्यमिति निरुक्तपदव्याख्या । **द्वे वा व ब्रह्मणो रूपे इति** मूर्तामूर्तं ब्रह्माभेदेन श्रुतं तत्कथं स्याद्यदि ब्रह्मोपादानं न स्यादिति व्यतिरेकं सिद्धवत्कृत्यान्वयमाह—**यदीति** । तर्ह्येवंरूपं स्यादिति

### कल्पतरुपरिमलः ।

प्रकृतिग्रहणम् उपलक्षणमित्यर्थः । प्रकृत्यन्तराभावव्यवस्थापनस्यापि ब्रह्मणः प्रकृतित्वस्थिरीकरणं फलमिति फलाभिप्रायेण भाष्यमिति तात्पर्यवर्णने तु नोपलक्षणत्वं कल्पनीयम् । **यद्वा**-प्रकृतिग्रहणमुपलक्षणमित्यात्मकृति ( ब्र. अ. १ पा. ४ सू. २६ ) टीकाग्रन्थापेक्षितो भाष्यइत्यध्याहारोऽनेन ग्रन्थेन दर्शितः । कथं च तद् ब्रह्मणो रूपमिति टीकाग्रन्थं ब्रह्मणि उपादानत्वाभावे तदभेदश्रवणं न घटेतेति व्यतिरेकप्रदर्शनार्थत्वेन योजयन्नेव यदीत्यादितदनन्तरग्रन्थम् अन्वयप्रदर्शनार्थत्वेनावतारयति—**द्वे वावेति** । यद्यपि सच्च त्यच्चाभवदित्यभेदेन श्रुतमिति वक्तव्यं, तस्यैव वाक्यस्य प्राक् प्रकृतत्वात्; तथापि द्वे वाव ब्रह्मणो रूपे इति टीकावाक्येन स्मारिते द्वे वावेत्यादिवाक्ये षष्ठ्या पृथिव्यादिवाय्वादिरूपयोर्मूर्तामूर्तयोर्ब्रह्मभेदः प्रतीयत इति शङ्कानिरासाय तस्या अपि न भेदे तात्पर्यम्, अथात आदेशो नेति नेतीति तदनन्तरवाक्ये ब्रह्मातिरिक्तमूर्तामूर्तनिषेधादिति दर्शयितुं तद्वाक्यमुपन्यस्तम् । कथं च तद् ब्रह्मणो रूपमिति टीकाग्रन्थस्य व्यतिरेकप्रदर्शनार्थत्वलाभाय यदि ब्रह्मोपादानं न स्यादिति शेषोऽध्याहृतः । एवमध्याहारापेक्षव्यतिरेकप्रदर्शकवाक्यार्थस्यास्फुटस्य गम्यत्वाद्व्यतिरेकमुक्त्वेत्येतद्विहाय व्यतिरेकं सिद्धवत्कृत्येत्युक्तम् । यदि तस्य ब्रह्मोपादानमित्यन्वयप्रदर्शनस्यापेक्षितांशमध्याहरति—**तर्ह्येवं रूपं स्यादिति शेष इति** । रूपं स्वरूपमभिन्नमिति यावत् । यदि न तस्य ब्रह्मोपादानमिति केषु

**लोके दृष्टं नोपादानेष्वित्यादि, तत्प्रत्युच्यते—न लोकवदिह भवितव्यम्। नह्ययमनुमानगम्योऽर्थः। शब्दगम्यत्वात्त्वस्यार्थस्य यथाशब्दमिह भवितव्यम्। शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम। पुनश्चैतत्सर्वं विस्तरेण प्रतिवक्ष्यामः॥ २७॥ इति सप्तमं प्रकृत्यधिकरणम्॥**

---

## भामती।

ईक्षापूर्वकजगत्कर्तृत्वात्, कुम्भकर्तृकुलालवत्। अत्रेश्वरस्यासिद्धेराश्रयासिद्धो हेतुः पक्षश्चाप्रसिद्धविशेषः। **यथाहुः**—'नानुपलब्धे न्यायः प्रवर्तते' इति। आगमात्तत्सिद्धिरिति चेत्, हन्त तर्हि यादृशमीश्वरमागमो गमयति तादृशोऽभ्युपगन्तव्यः, स च निमित्तकारणं चोपादानकारणं चेश्वरमवगमयति। विशेष्याश्रयग्राह्यागमविरोधान्नानुमानमुदेतुमर्हतीति कुतस्तेन निमित्तत्वावधारणेत्यर्थः। इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेणापि तु यथा सर्पस्योपादानं रज्जुरेवं ब्रह्म जगदुपादानं द्रष्टव्यम्। न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मनैकदेशेन वा परिणामः संभवति, नित्यत्वादनेकदेशत्वादित्युक्तम्। नच मृदः शरावादयो भिद्यन्ते, नचाभिन्नाः, न वा भिन्नाभिन्नाः, किंत्वनिर्वचनीया एव। **यथाह श्रुतिः**—'मृत्तिकेत्येव सत्यम्' इति। तस्माद्द्वैतोपक्रमादुपसंहाराच्च सर्व एव वेदान्ता ऐकान्तिकाद्वैतपराः सन्तः साक्षादेव क्वचिदद्वैतमाहुः, क्वचिद्द्वैतनिषेधेन, क्वचिद्ब्रह्मोपादानत्वेन जगतः। एतावतापि तावद्भेदो निषिद्धो भवति, नतूपादानत्वाभिधानमात्रेण विकारग्रह आस्थेयः। नहि वाक्यैकदेशस्यार्थोऽस्तीति॥ २७॥ **इति सप्तमं प्रकृत्यधिकरणम्॥**

## वेदान्तकल्पतरुः।

शेषः॥२६॥ **विशेष्येति।** साध्यं प्रति विशेष्यस्य हेतुं प्रत्याश्रयस्य च ग्राहकतयोपजीव्यागमविरोधादित्यर्थः। भास्करस्त्विह बभ्राम योनिरिति परिणामादिति च सूत्रनिर्देशाच्छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना परिणामस्तु स्यादित्यभिधानाच्च परिणामवादो वृद्धसंमत इति, तं प्रतिबोधयति—**इयं चेति।** ब्रह्मनन्दिना हि नासतोऽनिष्पाद्यत्वात्प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषादिति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य न संव्यवहारमात्रत्वादिति अनिर्वचनीयता सिद्धान्तिताऽतः परिणामस्त्विति मिथ्यापरिणामाभिप्रायं, सूत्रं त्वेतदभिप्रायमेवेत्यर्थः। उदाहरिष्यमाणश्रुतिसंमतां युक्तिमाह—**न खल्विति।** परिणामः सर्वात्मना एकदेशेन वा। **नाद्यः**; सर्वात्मना प्राक्तनरूपत्यागादनित्यत्वापत्तौ श्रौतनित्यत्वविरोधात्। **न द्वितीयः**; निष्कलश्रुत्यवगतानंशत्वविरोधादित्यर्थः। नित्यत्वादिति हेतुगर्भनिर्देशयोर्विवरणम्। एवं सौत्रपरिणामशब्दो विवर्तपरतया योजितः। इदानीं तु यथाश्रुतमाश्रित्य परिणामत्वेन लोकसिद्धस्य युक्त्यसहत्वेन विवर्ततामाह—**नच मृद इति।** मृद एव सत्यत्वावधारणात्कार्यमिथ्यात्वं श्रुतिराह, एकमेवाद्वितीयमित्यादौ, साक्षान्नेति नेतीत्यादौ निषेधेन। **ननु** सृष्टिश्रुतेः सप्रपञ्चताऽस्तु, नेत्याह—**नहीति।** उपक्रमाद्यवगततात्पर्यमहावाक्यमध्यस्थावान्तरवाक्यस्य प्रधानानुरोधेन मायामयसृष्टिविषयत्वमित्यर्थः। **अत्र कश्चिदाह**—भ्रान्ते ब्रह्मोपादानत्वे पूर्वपक्ष एव समर्थितः स्याद्, निर्विकारत्वश्रुतयः प्राक् सृष्टेरविकारितामाहुः—**इति। तन्न**; वाक्याभासोत्थभ्रममात्रसिद्धं ब्रह्मोपादानत्वमिति हि पूर्वपक्षाशयः; स्वप्नवदर्थक्रियासमर्थप्रपञ्चास्पदत्वं सिद्धान्तसंमतमिति भेदोपपत्तेः। प्रलयश्रुतिभिरेव प्रागविकारित्वसिद्धिर्न निर्विकारश्रुतिस्तत्परा, निर्विकारित्वं विकारात्यन्ताभावो ब्रह्मधर्मः स चानिर्वाच्यो विकारमनिर्वाच्यं न सहते सत्य इव तव घटाभावः सत्यघटं न चाद्वैतं व्याहन्तीति॥ २७॥ **इति सप्तमं प्रकृत्यधिकरणम्॥**[1]

## कल्पतरुपरिमलः।

चित् टीकाग्रन्थेषु नकारयुक्तः पाठो दृश्यते, तस्मिन्पाठे कथं चेत्याद्युपादानमित्यन्तमेकं वाक्यम् अध्याहारानपेक्षं व्यतिरेकमात्रप्रदर्शनार्थमिति द्रष्टव्यम्॥२६॥ **योनिरितीति।** पृथिवी योनिरोषधिवनस्पतीनामित्यादिप्रसिद्धिः परिणामिविषयैव दृष्टेति भावः। **नासत इति।** यदसत् तत्सर्वदैवासदिति न स्यान्निष्पाद्यत्वम्, यत् सत् तत्सर्वदा सदिति निष्पत्त्यर्थप्रवृत्त्यानर्थक्यम्। **ननु** नित्यस्य निष्कलस्येति हेतुगर्भनिर्देशाभ्यां सिद्धस्यार्थस्य नित्यत्वादनेकदेशत्वादिति पुनः कीर्तनं व्यर्थमित्याशङ्क्य तद्विवरणमित्याह—**हेतुगर्भनिर्देशयोरिति। श्रुतमाश्रित्येति।** अस्तु परिणामस्तथापि लौकिकपरिणामवदनिर्वचनीयत्वमायातीत्येवं प्रतिपादयतीत्यर्थः। संक्षेपशारीरकेऽप्येवमुक्तम्—**'प्रतिष्ठितेऽस्मिन् परिणामवादे स्वयं**

---

१ तत्र सूत्राणि ५—प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् २३ अभिध्योपदेशाच्च २४ साक्षाच्चोभयाम्नानात् २५ आत्मकृतेः परिणामात् २६ योनिश्च हि गीयते २७॥

( ८ अधिकरणम् ) **एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

'ईक्षतेर्नाशब्दम्' ( ब्र० सू० १।१।५ ) इत्यारभ्य प्रधानकारणवादः सूत्रैरेव पुनः पुनराशङ्क्य निराकृतः, तस्य हि पक्षस्योपोद्बलकानि कानिचिल्लिङ्गाभासानि वेदान्तेष्वापातेन मन्दमतीन्प्रति भान्तीति । स च कार्यकारणानन्यत्वाभ्युपगमात्प्रत्यासन्नो वेदान्तवादस्य । देवलप्रभृतिभिश्च कैश्चिद्धर्मसूत्रकारैः स्वग्रन्थेष्वाश्रितः, तेन तत्प्रतिषेधे यत्नोऽतीव कृतो नाण्वादिकारणवादप्रतिषेधे । तेऽपि तु ब्रह्मकारणवादपक्षस्य प्रतिपक्षत्वात्प्रतिषेद्धव्याः तेषामप्युपोद्बलकं वैदिकं किंचिल्लिङ्गमापातेन मन्दमतीन्प्रतिभायादिति । अतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति—एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः । तेषामपि प्रधानवदशब्दत्वाच्छब्दविरोधित्वाच्चेति । व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥ २८ ॥ **इत्यष्टमं सर्वव्याख्यानाधिकरणम् ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायेऽव्यक्तादिसंदिग्धपदमात्रसमन्वयाख्यश्चतुर्थः पादः ॥ ४ ॥

**॥ इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये समन्वयाख्यः प्रथमोऽध्यायः ॥**

---

## भामती ।

**स्यादेतत्**—मा भूत्प्रधानं जगदुपादानम्, तथापि न ब्रह्मोपादानत्वं सिध्यति; परमाण्वादीनामपि तदुपादानानामुपप्लवमानत्वात्, तेषामपि हि किंचिदुपोद्बलकमस्ति वैदिकं लिङ्गमित्याशङ्कामपनेतुमाह सूत्रकारः—

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

निगदव्याख्यातेन भाष्येण व्याख्यातं सूत्रम् । **प्रतिज्ञालक्षणं लक्ष्यमाणे पदसमन्वयः । वैदिकः स च**

## वेदान्तकल्पतरुः ।

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

अस्यातिदेशस्य जन्मादिसूत्रेणाक्षेपसङ्गतिं दर्शयन् अध्यायसङ्गतिमाह—**स्यादेतदिति** । ब्रह्मोररीकृत्य कारणान्तरप्रत्यवस्थानात् पादसङ्गतिः । **उपप्लवमानत्वाद्** बुद्धौ प्रतिभासमानत्वात् । **जगतः प्रकृतिर्ब्रह्म यदि स्यान्मृन्निदर्शनात् । अण्वादयोऽपि किं न स्युर्वटधानानिदर्शनात् ॥** इत्यवान्तरसङ्गत्यधिकशङ्के । न्यग्रोधफलमाहरेति भिन्धीति किमत्र पश्यसीति अण्व्य इमा धाना इति आसामेकां भिन्धीति किमत्र पश्यसीति न किंचन भगव इति एतस्य सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठतीति जगतः प्रागवस्थाया दृष्टान्तः श्रूयते । अत्र न किंचनेति शून्यस्वभाववादावणिम्न इत्यदृश्यमानाणुनिर्देशादणुवादश्च भान्ति दार्ष्टान्तिका इति । सिद्धान्तस्तु—**मृदादयो हि दृष्टान्ताः प्रतिज्ञामनुरुन्धते । धानास्तामुपरुन्धाना भक्तिमार्गं प्रपेदिरे ॥** इह खल्वेकविज्ञानात्सर्वविज्ञानप्रतिज्ञानं प्रधानं नासदादिपक्षेषु कल्पते, अतो न किंचनेत्यनभिव्यक्तिरणिम्न इति सूक्ष्मता चोक्तेति । अध्यायार्थं सङ्कलयति—**प्रतिज्ञेति । प्रथम-**

## कल्पतरुपरिमलः ।

**समायाति विवर्तवादः' इति । प्रधानानुरोधेनेति** । यथा स्वर्गकामकर्तव्यज्योतिष्टोमप्रकरणमध्यपातिनः को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा न वेति परलोकसंदेहवाक्यस्य प्रधानाविरोधाय तदङ्गभूतातीकाशविध्यपेक्षितवस्तुस्तवनपरतया पामरजनसिद्धसंदेहानुवादकत्वम्, एवमिहापि प्रधानप्रतिपाद्याद्वैतसिद्ध्यविरोधाय तदङ्गभूतप्रपञ्चनिषेधौपयिकतया भ्रान्तजनकल्पितपरिणामानुवादकत्वमित्यर्थः । **नचेति** । यथा ह्यसत्यो घटाभावः सत्यं घटं सहते, एवमनिर्वाच्यो विकारः स्वात्यन्ताभावं निर्वाच्यं सहते इत्यन्वयमुखेन सिद्धिः ॥ **इति सप्तमं प्रकृत्यधिकरणम् ॥**

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

**अदृश्यमानाणुनिर्देशादिति** । न किंचन भगव इत्युक्तेरणुवादे सालम्बनत्वसिद्ध्यर्थमदृश्यमानत्वविशेषणम् । **अणिम्न**

भामती ।

तत्रैव नान्यत्रेत्यत्र साधितम् ॥ इत्यष्टमं सर्वव्याख्यानाधिकरणम् ॥ २८ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमच्छारीरकभाष्यविभागे भामत्यां प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

इति भामत्यां समन्वयाख्यः प्रथमोऽध्यायः ॥

वेदान्तकल्पतरुः ।

सूत्रे विचारप्रतिज्ञा । लक्षणं द्वितीये । लक्ष्यमाणे समन्वयः चतुर्थे । स च तत्रैवेति शिष्टायां त्रिपाद्यां नान्यत्रेति चतुर्थपादे । इत्येतत्सर्वमत्राध्याये साधितमित्यर्थः ॥ इत्यष्टमं सर्वव्याख्यानाधिकरणम् ॥[1]

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥

इति कल्पतरौ समन्वयाख्यः प्रथमोऽध्यायः ॥

कल्पतरुपरिमलः ।

इति सूक्ष्मता चोक्तेति । स य एषोऽणिमेत्यादिसंप्रतिपन्नब्रह्मवाक्येष्विवेति भावः ॥ इत्यष्टमं सर्वव्याख्यानाधिकरणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ कल्पतरुव्याख्याने परिमले प्रथमस्याध्यायस्य चतुर्थः पादः समाप्तः ॥

इति परिमले समन्वयाख्यः प्रथमोऽध्यायः ॥

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ४० |
| सूत्राणि | २८ | १३४ |



१ तत्र सूत्रम् १—एतेन सर्वे व्याख्याता व्याख्याताः २८ इति ॥



# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## भामती–वेदान्तकल्पतरु–कल्पतरुपरिमलोपबृंहितम् ।

### अथ द्वितीयोऽध्यायः ।

( १ अधिकरणम् ) **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

प्रथमेऽध्याये सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणं मृत्सुवर्णादय इव घटरुचकादीनाम् । उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणं मायावीव मायायाः । प्रसारितस्य च जगतः पुनः स्वात्मन्येवोपसंहारकारणं अवनिरिव चतुर्विधस्य भूतग्रामस्य । स एव च सर्वेषां न आत्मेत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितम् । प्रधानादिकारणवादाश्चाशब्दत्वेन निराकृताः, इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः प्रधानादिवादानां च न्यायाभासोपबृंहितत्वं प्रतिवेदान्तं च सृष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थजातस्य प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते । तत्र प्रथमं तावत्स्मृतिविरोधमुपन्यस्य परिहरति—

---

भामती ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

वृत्तवर्तिष्यमाणयोः समन्वयविरोधपरिहारलक्षणयोः संगतिप्रदर्शनाय सुखग्रहणाय चैतयोः संक्षेपतस्तात्पर्यार्थमाह—**प्रथमेऽध्याय इति** । अनपेक्षवेदान्तवाक्यस्वरससिद्धसमन्वयलक्षणस्य विरोधतत्परिहाराभ्यामाक्षेपसमाधानकरणादनेन लक्षणेनास्ति विषयविषयिभावः संबन्धः । पूर्वलक्षणार्थो हि विषयस्तद्गोचरत्वादाक्षेपसमाधानयोरेप च विषयीति । तदेवमध्यायमवतार्य तदवयवमधिकरणमवतारयति—**तत्र प्रथमं तावदिति** । तन्त्र्यते व्युत्पाद्यते मोक्षसाधनमनेनेति तन्त्रं, तदेवाख्या यस्याः सा स्मृतिस्तन्त्राख्या परमर्षिणा कपिलेनादिविदुषा प्रणीता । अन्याश्चासुरिपञ्चशिखादिप्रणीताः स्मृतयस्तदनुसारिण्यः । न खल्वमूषां स्मृतीनां मन्वादिस्मृतिवदन्योऽवकाशः शक्यो वदितुम्रते

वेदान्तकल्पतरुः ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

चेतनजगदुपादानसमन्वयः साङ्ख्यस्मृत्या सङ्कोच्यतां न वेति सर्वज्ञभाषितत्वसाम्येन बलाबलाविनिगमात्संदेहे पूर्वपक्षमाह—**न खल्विति** । **विरोधे त्विति** । औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरुद्धा सर्वामावेष्टेतेति

कल्पतरुपरिमलः ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

**सर्वज्ञेति** । यः सर्वज्ञ इति श्रुत्या ब्रह्मण इव ज्ञानैर्बिभर्तीति श्रुत्या कपिलस्यापि सार्वज्ञ्यं प्रसिद्धम्, अतः सर्वज्ञभाषितत्वं वेदसांख्ययोः सममित्यर्थः । **ननु** स्मृत्यन्तरेभ्यो निरवकाशत्वेन प्राबल्येऽपि श्रुतिभ्यः प्राबल्याभावात्कथं पूर्वपक्ष इत्यत्राह—**पूर्वपक्षमाहेति** । वेदं कृत्वा वेदिरिति पदार्थधर्मक्रमविषयश्रुतितः श्रुत आचामेदिति स्मृतेः पदार्थविषयत्वे-

यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम् । कुतः ? स्मृत्यनवकाशदोषप्रसङ्गात् । स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता अन्याश्च तदनुसारिण्यः स्मृतयः एवं सत्यनवकाशाः प्रसज्येरन् । तासु ह्यचेतनं प्रधानं स्वतन्त्रं जगतः कारणमुपनिबध्यते । मन्वादिस्मृतयस्तावच्चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्पयन्त्यः सावकाशा भवन्ति । अस्य वर्णस्यास्मिन्कालेऽनेन विधानेनोपनयनं, ईदृशश्चाचारः, इत्थं वेदाध्ययनं, इत्थं समावर्तनं, इत्थं सहधर्मचारिणीसंयोग इति । तथा पुरुषार्थांश्च वर्णाश्रमधर्मान्नानाविधान्विदधति । नैवं कपिलादिस्मृतीनामनुष्ठेये विषयेऽवकाशोऽस्ति । मोक्षसाधनमेव हि सम्यग्दर्शनमधिकृत्य ताः प्रणीताः । यदि तत्राप्यनवकाशाः स्युरानर्थक्यमेवासां प्रसज्येत । तस्मात्तदविरोधेन वेदान्ता व्याख्यातव्याः । कथं पुनरीक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणमित्यवधारितः श्रुत्यर्थः स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते ? भवेदयमनाक्षेपः स्वतन्त्रप्रज्ञानाम् । परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन् । तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन् । अस्मत्कृते च व्याख्याने न विश्वस्युर्बहुमानात्स्मृतीनां प्रणेतृषु । कपिलप्रभृतीनां चार्षं ज्ञानमप्रतिहतं स्मर्यते । श्रुतिश्च

## भामती ।

मोक्षसाधनप्रकाशनात् । तदपि चेन्नाभिदध्युरनवकाशाः सत्योऽप्रमाणं प्रसज्येरन् । तस्मात्तदविरोधेन कथंचिद्वेदान्ता व्याख्यातव्याः । पूर्वपक्षमाक्षिपति—**कथं पुनरीक्षत्यादिभ्य इति** । प्रसाधितं खलु धर्ममीमांसायां **'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्'** इत्यत्र, यथा श्रुतिविरुद्धानां स्मृतीनां दुर्बलतयानपेक्षणीयत्वं तस्मान्न दुर्बलानुरोधेन बलीयसीनां श्रुतीनां युक्तमुपवर्णनम्, अपितु स्वतःसिद्धप्रमाणभावाः श्रुतयो दुर्बलाः स्मृतीर्बाधन्त एवेति युक्तम् । पूर्वपक्षी समाधत्ते—**भवेदयमिति** । प्रसाधितोऽप्यर्थः श्रद्धाजडान्प्रति पुनः प्रसाध्यत इत्यर्थः । आपाततः समाधानमुक्त्वा परमसमाधानमाह पूर्वपक्षी—**कपिलप्रभृतीनां चार्षमिति** । **अयमस्याभिसंधिः**—ब्रह्म हि शास्त्रस्य कारणमुक्तं 'शास्त्रयोनित्वात्' इति, तेनैष वेदराशिर्ब्रह्मप्रभवः सन्नाजानसिद्धानावरणभूतार्थमात्रगोचरत-

## वेदान्तकल्पतरुः ।

स्मृतिर्मानं वेति सन्देहे वेदार्थानुष्ठातॄणां स्मृतिभिर्मूलश्रुत्यनुमानात्प्रत्यक्षानुमितश्रुत्योश्च स्वपराधीतश्रुतिवत्समबलत्वादुदितानुदितादिवद्विकल्पादिसंभवान्मानमिति प्राप्ते राद्धान्तः । श्रुतिविरुद्धस्मृतीनां प्रामाण्यमनपेक्षमपेक्षावर्जितं हेयमिति यावत् । यतोऽसति विरोधे मूलश्रुत्यनुमानं स्वपराधीतश्रुत्योस्तुल्यवत्प्रमितत्वात्समबलता । प्रत्यक्षश्रुतिविरुद्धेऽर्थे तु न श्रुत्यनुमानम्; अर्थापहारेण मानस्याप्यपहारात् । अतो मूलाभावादप्रमाणमिति । **पूर्वपक्षी** पूर्वपक्षोपपादकः । अधिकरणारम्भवादीत्यर्थः । आर्षप्रत्यक्षमूलापि स्मृतिः सापेक्षा, वेदस्त्वपौरुषेयत्वादनपेक्ष इत्याशङ्क्याह—**अयमस्याभिसंधिरिति** । **आजानसिद्धा** स्वभावसिद्धा च साऽनावरणभूतार्थमात्रगोचरा च । भ्रमवत्सत्यानृतगोचरत्वं वारयति—**मात्रेति** । एवंभूता तस्य ब्रह्मणो या बुद्धिस्तत्पूर्वको वेदराशिरित्यर्थः । पौरुषेयत्वेन

## कल्पतरुपरिमलः ।

नैव सावकाशश्रुतितोऽपि निरवकाशत्वेन स्मृतेः प्राबल्यं भवेदतः पूर्वपक्षो युक्त इत्याशयः । **अर्थापहारेणेति** । सर्वेष्टनरूपस्मृत्यर्थापहारेण तन्मानभूतश्रुतेरप्यपहारात्तदनुमानं बाधितविषयमित्यर्थः । क्षुतनिमित्तकाशुद्ध्यपनयार्थमाचमनकरणेऽपि न वेदवेदिक्रमविरोधः; आचमनस्य शुद्धिद्वारा वेदिकरणाङ्गत्वादङ्गस्य चाव्यवधायकत्वात् । **उक्तं हि वार्तिके—वेदं कृत्वा यदा वेदिमकृत्वा चामति क्षुते । वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥ वेदिरेव ह्यनाचम्य कुर्वतो विगुणीभवेत् । तामेव सगुणां कर्तुं शुद्ध्या न व्यवधास्यते ॥ इति** । सत्यपि व्यवधाने श्रौतस्मार्तसकलपदार्थप्राप्त्यनन्तरमेवानुष्ठेयक्रमस्य संग्राह्यत्वात् पश्चात्संग्राह्यस्य पूर्वप्राप्त्यनुरोधेन संग्रहौचित्यान्न विरोधः । **तदप्युक्तं वार्तिके—प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्ष्यते । यदा प्राप्तेष्वसौ क्लृप्तः केन पश्चाद्विरुध्यते ॥ इति** । **नन्व**धिकरणारम्भे तटस्थेनाक्षिप्ते तदारम्भः सिद्धान्तिना समर्थनीयः कथं पूर्वपक्षी समाधत्त इत्युक्तिरित्याशङ्क्य पूर्वपक्षोपपादकत्वसाम्यात् सिद्धान्त्येव पूर्वपक्षिशब्देन लक्षणयोक्त इति व्याचष्टे—**पूर्वपक्षीति** । **पौरुषेयत्वेनेति** । **ननु** वेदस्यार्थज्ञानपूर्वकत्वेन पौरुषेयत्वमत्रत्यसिद्धान्तवक्ष्यमाणैव युक्त्या शास्त्रयोनित्वाधिकरणे निराकृतम्, कथमिह पुनः पौरुषेयत्वशङ्का ? **एवं तर्हि** सांख्यतन्त्रमप्यपौरुषेयमेव; तद्वक्तुः कपिलस्य वासुदेवांशत्वेन परब्रह्मरूपतया

भवति—'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' (श्वे० ५।२) इति। तस्मान्नैषां मतमयथार्थं शक्यं संभावयितुम्। तर्कावष्टम्भेन चैतेऽर्थं प्रतिष्ठापयन्ति। तस्मादपि स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः। तस्य समाधिः—नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति। यदि स्मृत्यनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आक्षिप्येत, एवमप्यन्या ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन्। ता उदाहरिष्यामः—'यत्तत्सूक्ष्ममविज्ञेयम्' इति परं ब्रह्म प्रकृत्य 'स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते' इति चोक्त्वा 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्याह। तथान्यत्रापि 'अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते' इत्याह। 'अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः। स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः' इति पुराणे। भगवद्गीतासु च—'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' (भ० गी० ७।६) इति। परमात्मानमेव च प्रकृत्यापस्तम्बः पठति—'तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः' (ध० सू० १।८।२३।२) इति। एवमनेकशः स्मृतिष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते। स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं वक्ष्यामीत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः। दर्शितं तु श्रुतीनामीश्वरकारणवादं प्रति तात्पर्यम्। विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणमनपेक्ष्या इतराः। तदुक्तं प्रमाणलक्षणे—'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' (जै० सू० १।३।३) इति। नचातीन्द्रियानर्थाञ्श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं संभावयितुम्; निमित्ताभावात्। शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत्, न; सिद्धेरपि सापेक्षत्वात्। धर्मानुष्ठानापेक्षा हि सिद्धिः। स च धर्मश्चोदनालक्षणः। ततश्च

---

## भामती।

बुद्धिपूर्वको यथा तथा कपिलादीनामपि श्रुतिस्मृतिप्रथिताजानसिद्धभावानां स्मृतयोऽनावरणसर्वविषयतद्बुद्धिप्रभवा इति न श्रुतिभ्योऽमूषामस्ति कश्चिद्विशेषः। नचैताः स्फुटतरं प्रधानादिप्रतिपादनपराः शक्यन्तेऽन्यथयितुम्। तस्मात्तदनुरोधेन कथंचिच्छ्रुतय एव नेतव्याः। **अपिच** तर्कोऽपि कपिलादिस्मृतीरनुमन्यते, तस्मादप्येतदेव प्राप्तम्। एवं प्राप्त आह—**तस्य समाधिरिति**। यथा हि श्रुतीनामविगानं ब्रह्मणि गतिसामान्यात्, नैवं स्मृतीनामविगानमस्ति प्रधाने; तासां भूयसीनां ब्रह्मोपादानत्वप्रतिपादनपराणां तत्र तत्र दर्शनात्। तस्मादविगानाच्छ्रौत एवार्थ आस्थेयो नतु स्मार्तो विगानादिति। तत्किमिदानीं परस्परविगानात्सर्वा एव स्मृतयोऽवहेया इत्यत आह—**विप्रतिपत्तौ च स्मृतीनामिति**। **नचातीन्द्रियार्थानिति** अर्वाग्दृगभिप्रायम्। शङ्कते—**शक्यं कपिलादीनामिति**। निराकरोति—**न। सिद्धेरपीति**। न तावत्कपिलादय ईश्वरवदाजानसिद्धाः, किंतु विनिश्चितवेदप्रामाण्यानां तेषां तदनुष्ठानवतां प्राचि भवेऽस्मिञ्जन्मनि सिद्धिः, अतएवाजानसिद्धा उच्यन्ते। यदस्मिन् जन्मनि न तैः सिद्ध्युपायोऽनुष्ठितः प्राग्भवीयवेदार्थानुष्ठानलब्धजन्मत्वात्तत्सिद्धीनाम्। तथाचावधृतवेदप्रामाण्यानां तद्विरुद्धार्थाभिधानं तदपबाधितमप्रमाणमेव। अप्रमाणेन च न वेदार्थोऽतिशङ्कितुं युक्तः; प्रमाणसिद्धत्वात्तस्य। तदेवं वेदविरोधे सिद्धवचनम-

## वेदान्तकल्पतरुः।

तुल्यत्वमुक्त्वा स्मृतेर्निरवकाशत्वं प्राबल्यहेतुमाह—**नचैता इति**। अनन्यपरत्वं स्फुटतरत्वम्। श्रुतिरनुष्ठानपरा। अन्यस्मृत्यनवकाशमात्रान्न सिद्धान्तसिद्धिः संदेहादित्याशङ्क्याह—**यथाहीत्यादिना**। देवताधिकरणे (ब्र. अ. १ पा. ३ सू. २४-३३) योगिप्रत्यक्षस्य समर्थितत्वाद्भाष्यमस्मदाद्यभिप्रायमित्याह—**अर्वागिति**। कपिलादयोऽर्वाचीनपुरुषविलक्षणा इत्याशङ्क्याह—**न तावत्कपिलादय इति**। प्राचि भवे तदनुष्ठानवताम् इति संबन्धः। तच्छब्देन वेदार्थो

## कल्पतरुपरिमलः।

तस्यापि तन्निःश्वसितत्वाविशेषादित्याशयः। **ननु** श्रुतीनामपि स्फुटतरत्वं विवक्षितं, यथाकथंचन श्रुतित्वेनास्फुटत्वकल्पने कपिलवचसामपि सूत्रत्वेन शक्यं तत्कल्पनम्, अतः स्फुटास्फुटत्वं न वैषम्यम्। अतएव श्रुतयः कपिलवचनैर्निर्णेयार्थास्तत्सापेक्षा इत्यधिकरणानारम्भशङ्कायाः प्रथमसमाधानमापातत इति टीकायामुक्तम्। अन्यथा हि स्पष्टोद्घायेदिति श्रुतिरपि सर्ववेष्टनस्मृत्या निर्णेयार्था तत्सापेक्षेति कल्पनं प्रसज्येतेत्याशङ्क्य व्याचष्टे—**अनन्यपरत्वमिति**। पूर्वपक्ष्या-

पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते । सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यन्निर्णयकारणमस्ति । परतन्त्रप्रज्ञस्यापि नाकस्मात्स्मृतिविशेषविषयः पक्षपातो युक्तः; कस्यचित्क्वचित्पक्षपाते सति पुरुषमतिवैश्वरूप्येण तत्त्वाव्यवस्थानप्रसङ्गात् । तस्मात्तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन श्रुत्यनुसारानुसारविषयविवेचनेन च सन्मार्गे प्रज्ञा संग्रहणीया । या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यम्; कपिलमिति श्रुतिसामान्यमात्रत्वात्, अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात्, अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात् । भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः—'यद्वै किंच मनुरवदत्तद्भेषजम्' ( तै० सं० २।२।१०।२ ) इति । मनुना च–'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥' ( १२।९१ ) इति सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते । कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात् । महाभारतेऽपि च 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु' इति विचार्य 'बहवः पुरुषा राजन्सांख्ययोगविचारिणाम्' इति परपक्षमुपन्यस्य तद्व्युदासेन—'बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥' इत्युपक्रम्य 'ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥ विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति भूतेषु स्वैरचारी यथासुखम् ॥' इति सर्वात्मतैव निर्धारिता । श्रुतिश्च सर्वात्मतायां भवति—'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ( ई० ७ ) इत्येवंविधा । अतश्च सिद्धमात्मभेदकल्पनयापि कपिलस्य तन्त्रं वेदविरुद्धं वेदानुसारिमनुवचनविरुद्धं च, न केवलं स्वतन्त्रप्रकृतिकल्पनयैवेति । वेदस्य हि निरपेक्षं

## भामती ।

प्रमाणमुक्त्वा सिद्धानामपि परस्परविरोधे तद्वचनादनाश्वास इति पूर्वोक्तं स्मारयति—**सिद्धव्यपाश्रयकल्पनायामपीति** । श्रद्धाजडान्बोधयति—**परतन्त्रप्रज्ञस्यापीति** । ननु श्रुतिश्चेत्कपिलादीनामनावरणभूतार्थगोचरज्ञानातिशयं बोधयति, कथं तेषां वचनमप्रमाणं ? तदप्रामाण्ये श्रुतेरप्यप्रामाण्यप्रसङ्गादित्यत आह—**या तु श्रुतिरिति** । न तावत्सिद्धानां परस्परविरुद्धानि वचांसि प्रमाणं भवितुमर्हन्ति । नच विकल्पो वस्तुनि; सिद्धे तदनुपपत्तेः । अनुष्ठानमनागतोत्पाद्यं विकल्प्यते, न सिद्धम्; तस्य व्यवस्थानात् । तस्माच्छ्रुतिसामान्यमात्रेण भ्रमः सांख्यप्रणेता कपिलः श्रौत इति । **स्यादेतत्**—कपिल एव श्रौतो नान्ये मन्वादयः । ततश्च तेषां स्मृतिः कपिलस्मृतिविरुद्धावहेयेत्यत आह—**भवति चान्या मनोरिति** । तस्याश्चागमान्तरसंवादमाह—**महाभारतेऽपि चेति** । न केवलं मनोः स्मृतिः स्मृत्यन्तरसंवादिनी, श्रुतिसंवादिन्यपीत्याह—**श्रुतिश्चेति** । उपसंहरति—**अत इति** । **स्यादेतत्**—भवतु वेदविरुद्धं कापिलं वचस्तथापि द्वयोरपि पुरुषबुद्धिप्रभवतया को विनिगमनायां हेतुर्यतो वेदविरोधि कापिलं वचोनादरणीयमित्यत आह—**वेदस्य हि निरपेक्षमिति** । **अयमभिसंधिः**—सत्यं शास्त्रयोनिरीश्वरस्तथाप्यस्य न

## वेदान्तकल्पतरुः ।

विवक्षितः । **पूर्वोक्तमिति** । विप्रतिपत्तौ चेत्यादिभाष्येण पूर्वोक्तं स्मारयतीत्यर्थः । **श्रुतिसामान्यमात्रेणेति** । सगरपुत्रप्रतप्तुः साङ्ख्यप्रणेतुश्च कपिल इति शब्दसाम्यमात्रेणेत्यर्थः । यथा नृत्यं कुर्वत्यपि नर्तकी नर्तकदर्शितक्रमेणैव नृत्यन्ती न स्वतन्त्रा, एवमीश्वरः प्राचीनक्रममनुरुध्य विरचयन्वेदं न स्वतन्त्रः क्रमोपगृहीतवर्णात्मा च वेदोऽर्थप्रमितिकर इति न वक्त्रपेक्षमस्य प्रामाण्यमित्याह—**सत्यमिति** । फलितमाह—**तेनेति** । येनानादिः कार्यकारणभावस्तेन न प्रागभूतस्य शास्त्रस्य तदर्थभानपूर्विकाऽभिनवा क्रिया, किंतु नियतक्रमस्य तस्य संस्काररूपेणानुवर्तमानस्य स्मारणेन व्यक्तीकार इत्यर्थः । **ननु** न नर्तक्यादिवदज्ञ ईश्वरस्ततः शास्त्रक्रियातः प्रागेव तदर्थज्ञानवत्त्वात्कपिलतुल्यः किं न स्यादत आह—**शास्त्रार्थज्ञानं चेति** । पूर्ववर्णानुपूर्वी हि शास्त्रम् । तथाच यदा तदर्थः स्फुरति तदैवानुपूर्व्यपि संस्कारारूढा

## कल्पतरुपरिमलः ।

शयं निराकरोति—**सगरपुत्रप्रतप्तुरिति** । यत्र वासुदेवांशेन वैदिकार्थो वर्ण्यते, तत्र तस्य सार्वात्म्योपदेष्टृत्वं दृष्टम्,

**स्वार्थे प्रामाण्यं रवेरिव रूपविषये । पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृतिव्यवहितं चेति विप्रकर्षः । तस्माद्वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोषः ॥ १ ॥ कुतश्च स्मृत्यनवकाशप्रसङ्गो न दोषः ?**

## इतरेषां चानुपलब्धेः ॥ २ ॥

**प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि वेदे लोके वोपलभ्यन्ते । भूतेन्द्रियाणि तावल्लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तुम् । अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येवेन्द्रियार्थस्य न स्मृतिरवकल्पते । यदपि क्वचित्तत्परमिव श्रवणमवभासते' तदप्यतत्परं व्याख्यातम्—'आनुमानिकमप्येकेषाम्' ( ब्र० १।४।१ ) इत्यत्र । कार्यस्मृतेरप्रामाण्यात्कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायः । तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः । तर्कावष्टम्भं तु—'न विलक्षणत्वात्' ( ब्र० २।१।४ ) इत्यारभ्योन्मथिष्यति ॥ २ ॥ इति प्रथमं स्मृत्यधिकरणम् ॥**

---

### भामती ।

शास्त्रक्रियायामस्ति स्वातन्त्र्यं कपिलादीनामिव । स हि भगवान् यादृशं पूर्वस्मिन् सर्गे चकार शास्त्रं तदनुसारेणास्मिन्नपि सर्गे प्रणीतवान् । एवं पूर्वतरानुसारेण पूर्वस्मिन् पूर्वतमानुसारेण च पूर्वतर इत्यनादिरयं शास्त्रेश्वरयोः कार्यकारणभावः । तत्रेश्वरस्य न शास्त्रार्थज्ञानपूर्वा शास्त्रक्रिया, येनास्य कपिलादिवत्स्वातन्त्र्यं भवेत् । शास्त्रार्थज्ञानं चास्य स्वयमाविर्भवदपि न शास्त्रकारणतामुपैति; द्वयोरप्यपर्यायेणाविर्भावात् । शास्त्रं च स्वतो बोधकतया पुरुषस्वातन्त्र्याभावेन निरस्तसमस्तदोषाशङ्कं सदनपेक्षं साक्षादेव स्वार्थे प्रमाणम् । कपिलादिवचांसि तु स्वतन्त्रकपिलादिप्रणेतृकाणि तदर्थस्मृतिपूर्वकाणि, तदर्थस्मृतयश्च तदर्थानुभवपूर्वाः । तस्मात्तासामर्थप्रत्ययाङ्गप्रामाण्यविनिश्चयाय यावत्स्मृत्यनुभवौ कल्प्येते तावत्स्वतःसिद्धप्रमाणभावयानेपक्षयैव श्रुत्या स्वार्थो विनिश्चायित इति शीघ्रतरप्रवृत्तया श्रुत्या स्मृत्यर्थो बाध्यत इति युक्तम्, ॥१॥ प्रधानस्य तावत्क्वचिद्वेदप्रदेशे वाक्याभासानि दृश्यन्ते, तद्विकाराणां तु महदादीनां तान्यपि न सन्ति, नच भूतेन्द्रियादिवन्महदादयो लोकसिद्धाः । तस्मादात्यन्तिकात् प्रमाणान्तरासंवादात् प्रमाणमूलत्वाच्च स्मृतेर्मूलाभावादभावो वन्ध्याया इव दौहित्र्यस्मृतेः । नचार्षज्ञानमत्र मूलमुपपद्यत इति युक्तम् । तस्मान्न कापिलस्मृतेः

### वेदान्तकल्पतरुः ।

स्फुरतीत्यादर्शात्मकशास्त्रस्वरूपमात्रज्ञानात्तत्करणोपपत्तौ न शास्त्रार्थज्ञानस्य हेतुतेत्यर्थः । स्वकृतप्राचीनादर्शपेक्षत्वाच्च माणवकवैलक्षण्यमीश्वरस्य । शास्त्रस्य वक्तृज्ञानाऽजन्यत्वेऽपि नान्तरीयकत्वेन शास्त्रस्फुरणे तदर्थस्फुरणात्सर्वज्ञेश्वरसिद्धिः । तदर्थज्ञानवत्ता च प्रलयान्तरितश्रुतेः ज्ञातृत्वात्सिध्यतीशस्य । नहि माणवकेऽस्ति तत् । सति चैवं शास्त्रयोनिलशास्त्रविषयाधिकविज्ञानवत्त्वयोर्व्याप्तिः कृत्तिकोदयरोहिण्यासत्तिवत् तद्भावनियतभावत्वरूपा नतु शास्त्रार्थज्ञानशास्त्रकरणयोर्हेतुहेतुमत्त्वकृता । **ननु**—गुणवद्वक्तृज्ञानजन्यत्वाभावे कथं शास्त्रस्य प्रामाण्यमिति—**चेत्**; स्वत इत्याह—**शास्त्रं चेति** । प्रमाणानां प्रामाण्यस्य स्वतस्त्वात्कपिलादिवचस्तथा किं न स्यादत आह—**कपिलादिवचांसि त्विति** । तेषां कपिलादिवचसामर्था एवार्था यासां तास्तथोक्ताः । तासां स्मृतीनामर्था एवार्था येषामनुभवादीनां ते तदर्थानुभवास्ते पूर्वा यासां ताः स्मृतयस्तथा । यथाऽनपेक्षत्वेन शीघ्रतरप्रवृत्तश्रुत्या तद्विरुद्धलिङ्गस्य श्रुतिकल्पनापेक्षत्वेन विलम्बितप्रवृत्तेः परिच्छेदकत्वमपह्रियते, एवमनपेक्षश्रुत्या तद्विरुद्धकापिलवचसः सापेक्षत्वेन विलम्बिनः प्रामाण्यमपह्रियते इत्यर्थः । **यावदिति** । कथंचिदित्यर्थः ॥१॥ दौहित्रस्य कर्म दौहित्र्यम् । वन्ध्या चेत्स्मरेदिदं मे दौहित्रेण कृतमिति सा स्मृतिरप्रमाणम् मूलस्य दुहितुरभावात्, एवमत्रापि मूलभूतानुभवाभावात् स्मरणाभाव इत्याह—**वन्ध्याया इवेति । नचा-**

### कल्पतरुपरिमलः ।

अतस्तद्विरुद्धार्थोपदेष्टुस्ततोऽन्यत्वं निश्चीयतइति भावः । तदर्थस्मृतिपूर्वकाणीत्यत्रापि बहुव्रीहिसमासमाह—**तेषामिति** । तदर्थानुभवपूर्विका इत्यत्र तमाह—**तासामिति** । यद्यपि तदर्थस्मृतिपूर्वकारिणीत्यत्रापि बहुव्रीहिगर्भबहुव्रीहिरविशिष्टः; तथापि तदर्थानुभवपूर्विका इत्यत्र बहुव्रीहिद्वयप्रदर्शनेन तत्रापि तदुन्नेतुं शक्यमिति लाघवार्था तदनुक्तिः । **कथंचिदित्यर्थ इति** । विलम्बेनेत्यर्थ इत्यर्थः । अनेनाग्रिमस्य तावदित्यस्य ततः प्रागेवेति शैघ्र्यमर्थ इत्यर्थादुक्तं भवति ॥१॥ **दौहित्रस्य कर्मेति** । ब्राह्मणादेराकृतिगणत्वात्कर्मणि ष्यञ् प्रत्यय इति भावः ॥ २ ॥ अव्यक्तस्योत्पत्तौ स्मृतिं प्रदर्श्य तल्लये स्मृत्यन्तरप्रदर्शनात्तस्य प्रलये नाशोऽभ्युपगत इति प्रतिभाति, तथाऽभ्युपगमो न युक्तः; तस्य ज्ञानैकनिवर्त्यत्वाभ्युपगमादित्याशङ्क्य

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

### भामती।

प्रधानोपादानत्वं जगत इति सिद्धम् ॥ २ ॥ इति प्रथमं स्मृत्यधिकरणम् ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

### वेदान्तकल्पतरुः।

**षमिति**। उपजीव्यवेदविरोधस्योक्तत्वादित्यर्थः ॥ २ ॥ अव्यक्तं ज्ञानाल्लीयते। **अहं सर्वस्येति**। प्रभवत्यस्मादिति प्रलीयतेऽस्मिन्निति च प्रभवप्रलयौ। तस्मादात्मनोऽधिष्ठातुः प्रभवन्ति स मूलमुपादानम्। **शाश्वतिकः** अनादिः। **नित्यो** ध्वंसवर्जितः। ज्ञानैः पूरयति यः स सर्वेषामात्मा। **पुरुषा** जीवाः। बहूनां देहिनां योनिः पृथिवी। **विश्वं** पूर्णम्। **गुणैः** सर्वज्ञत्वादिभिरधिकम्। सर्वात्मकत्वाद्विश्वमूर्धादित्वम् ॥ **इति प्रथमं स्मृत्यधिकरणम्** ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

### कल्पतरुपरिमलः।

व्याचष्टे—**ज्ञानात्प्रलीयत इति**। अव्यक्तोत्पत्तिस्मृतिस्तु भूतसूक्ष्मोत्पत्तिविषया। एवंच यद्यपि लयस्मृतिरपि तद्विषया योजयितुं शक्या, मूलकारणविषयत्वेऽपि प्रलये सूक्ष्मावस्थापत्तिविषया योजयितुं शक्या; तथापि स्वमते मूलकारणमविद्यारूपमिति विभावयितुं ज्ञानादित्यध्याहृतम्। ऋषिं प्रसूतमित्यादिमन्त्रार्धस्यायमर्थः। **अग्रे** सर्गादौ स्वस्मात्प्रसूतमृषिं **कपिलं** कनकवर्णं हिरण्यगर्भं ज्ञानैर्ज्ञप्तिकरणैर्वेदैर्यो **बिभर्ति** अयं सकलवेदार्थविद्भवत्वित्यनुग्रहकटाक्षेण जायमानावस्थायामेव पश्यति चेति; "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"। "हिरण्यगर्भं पश्यति जायमानमि" त्यादिमन्त्रान्तरैकार्थ्यात्। अत्र बिभर्तीत्येतद् भृञ्धातोः पोषणमर्थमादाय व्याचष्टे—**पूरयतीति**। मन्त्रगतयच्छब्दप्रतिनिर्देशकतच्छब्दघटितं वाक्यं दर्शयति—**यः स सर्वेषामात्मेति**। यद्यपि "यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वा" इति पूर्वार्धयुक्तेऽस्मिन् मन्त्रे नास्तीदं वाक्यम्, नापि पूर्वेतरमन्त्रयोरस्ति; तयोः "विद्याविद्ये ईशते यस्तु सोऽन्य इति सर्वाधिपत्वं कुरुते महात्मे"ति च विधेयान्तरपरत्वात्; तथापि पुरुष एवेदं सर्वं त्वं स्त्री त्वं पुमानसीत्यादितत्रत्यमन्त्रान्तरप्रतिपन्नार्थं इह विधेयत्वेन गृहीतः। तद्ग्रहणं च सार्वात्म्यप्रतिपादनप्रधानायामस्यां श्वेताश्वतरोपनिषदि न भेदनिष्ठसांख्यतन्त्रकर्तृमहिमप्रतिपादनस्य प्रसक्तिरस्तीति तेनापि हेतुना मन्त्रस्य तद्विषयत्वनिराकरणार्थम्। सांख्यकर्तृविषयत्वेऽपि तेन तस्य वेदार्थज्ञानवत्त्वमात्रं सिध्यति, नतु क्वचिदपि विषयेऽस्य भ्रमो विप्रलम्भश्च नास्तीत्येतदपि। मनोस्तु यद्वै किं चेति वीप्साशब्देन भेषजत्वोक्त्या च तदुक्तेः सर्वत्राप्यर्थे तदुभयराहित्यं सिद्ध्यतीत्यपि विशेषो द्रष्टव्यः। यजुर्वेदे "यो ब्रह्मवर्चसकामः स्यात्तस्माएतं सोमारौद्रं चरुं निर्वपेदि"ति ब्रह्मवर्चसकामस्येष्टिं विधाय "आज्यं प्रोक्षणमाज्येन मार्जयन्ते" इत्यन्तेन तस्य प्रत्येकं ब्रह्मवर्चसोपयोगार्थसहितं वैशेषिकमङ्गकलापं विधाय "यावदेव ब्रह्मवर्चसं तत्सर्वं करोती"ति फलार्थवादानन्तरम् "अतिब्रह्मवर्चसं क्रियते इत्याहुरीश्वरो दुश्चर्मा भवती"त्येवंरूपेष्ट्यनुष्ठानेनातिब्रह्मवर्चसं क्रियते तेन यजमानः श्वित्रीभवितुं प्रभवतीत्येवं फलमेव पुनर्दोषरूपं संकीर्त्य तत्परिहारार्थं "मानवीऋचौ धाय्ये कुर्यादि"ति मनुना दृष्टे ऋचौ "अग्निं वः पूर्व्यङ्गिरा देवमीडे वसूना"मित्यादीनां षण्णामृचां मध्ये ये केचिद्वे ऋचौ सामिधेनीमध्ये धाय्यारूपेण योजयेदिति विधाय कथं मानवीभ्यामृग्भ्यां श्वित्रपरिहार इत्याकाङ्क्षायां "यद्वै किं च मनुरवदत्तद्भेषजं भेषजमेवास्मै करोती" त्यर्थवादेन तत्संघटनं कृतम्। धर्मवक्त्रा मनुना यन्मन्त्रजातं दृष्टं तत्सर्वं भेषजं भवतीति तदिदमत्रोदाहृतम्। **ननु**—यद्वै किं चेति वचनं न स्वायम्भुवमनूक्तीनां भेषजत्वोक्तिपरं, किंतु समष्टिमनोऽभिमानिहिरण्यगर्भोक्तीनाम्; तैत्तिरीयशाखायां हि "मानवीऋचौ धाय्ये कुर्या"दिति विधिशेषार्थवादरूपमिदं वचनं श्रूयते। अत्रानूद्यमाने ऋचौ न मनोः प्रकाशिके, किंतु मनसः। देवानां यन्मन इति ह्यनूद्यमानयोः ऋचोः श्रूयते, अतो मानवी इत्यत्र समष्टिमनोभिमानित्वधर्मेण हिरण्यगर्भः प्रकृत्यंशेनोक्त इति स एव यद्वै किं चेति वाक्येऽपि मनुशब्दोक्तो भवितुमर्हतीति—**चेद्**, यद्येवं किंचिदिष्टिविकृतौ मनोः ऋचः सामिधेन्यो भवन्तीति विधिशेषतया श्रुतं मनुर्वै यत्किंचिदवदत्तद्भेषजमिति वचनमुदाहरणमस्तु। नहि तत्र मनःप्रकाशिका ऋचो विनियुज्यन्ते, किंतु मानससूक्तगता एव; तत्र रूढिभञ्जकाभावात्। अतएव तन्त्रवार्तिके मनूक्तीनां भेषजतायामिदमेव वचनमुदाहृतम्। **भाष्ये**–यद्वै किं चेत्युदाहरणमनादरेण। **सर्वज्ञत्वादिभिरिति**। **ननु**—सर्वज्ञत्वादिवचनाद् ममान्तरात्मेत्यादिकमन्तर्यामिविषयं स्यान्न तु जीवैक्यविषयमिति—**चेन्न**; बहवः

१ तत्र सूत्रे २—स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् १ इतरेषां चानुपलब्धेः ॥ २ ॥

**इति परिग्रहा न परिग्रहा अपरिग्रहाः शिष्टानामपरिग्रहाः शिष्टापरिग्रहाः । एतेन प्रकृतेन**

## भामती ।

रतम्यं विश्राम्यति यतो न क्षोदीयः संभवति तज्जगतो मूलकारणं परमाणुः । क्षोदीयोऽन्तरानान्त्ये तु मेरुराजसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गोऽनन्तावयवत्वादुभयोः । तस्मात् परममहतो ब्रह्मण उपादानादभिन्नमुपादेयं जगत्कार्यमभिदधती श्रुतिः प्रतिष्ठितप्रामाण्यतर्कविरोधात्सहस्रसंवत्सरसत्रगतसंवत्सरश्रुतिवत्कथंचिज्जघन्यत्ववृत्त्या व्याख्यायेत्यधिकं शङ्कमानं प्रति सांख्यदूषणमतिदिशति—**एतेनेति** सूत्रेण । **अस्यार्थः**—कारणात् कार्यस्य भेदं 'तदनन्यत्वमारम्भण-

## वेदान्तकल्पतरुः ।

**अत्यन्तेति । ननु** यदि कुम्भात् कुम्भकारमृदोरत्यन्तभेदः, तर्हि कथमुपादाननिमित्तव्यवस्थात आह—**तस्मादिति ।** परमाणोरपि मूर्तत्वात् क्षुद्रतरान्तरारभ्यत्वमतो न क्षुद्रत्वविश्रान्तिरत आह—**क्षोदीयोऽन्तरेति । सहस्रसंवत्सरेति ।** "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशा विश्वसृजामयने सहस्रसंवत्सरमुपयन्ती"त्यत्र संवत्सरशब्दस्य व्युत्पत्तिवाक्ये मुख्यार्थलाभात् तावदायुष्कररसादिसिद्धमनुष्याद्यधिकारतामाशङ्क्य षष्ठे सिद्धान्तितम् । प्रकृतौ हि "द्वादशाहे त्रयस्त्रिवृतो भवन्ति त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशा" इति त्रिवृदादिशब्दास्त्रिवृदादिस्तोत्रविशिष्टाहःपराः समधिगताः । एवंचात्रापि पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा इत्याद्युत्पत्तिवाक्येष्वहःपरत्रिवृदादिशब्दैर्निश्चितार्थैः सामानाधिकरण्यात्संवत्सरशब्दस्य स्वयं सौरचान्द्रादिनानोपाधित्वेनानिर्धारितार्थ-

## कल्पतरुपरिमलः ।

**णात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च कार्यस्य ॥** इति सांख्यानां सत्कार्यवादप्रसाधनश्लोकः । **अस्यार्थः**—कार्यं कारणव्यापारात्प्रागपि सदेव; नीलरूपस्य पीतभावेनेवासतः सत्त्वेन कर्तुमशक्यत्वात् । उपादानग्रहणाच्च प्रागपि सदेव कार्यम् । **उपादानानि** कारणानि तेषां कार्येण **ग्रहणात्** कारणैः कार्यस्य संबन्धादिति यावत् । कारणसंबद्धं हि कार्यं भवद् भवेत् । कारणासंबद्धमेव कार्यमुत्पद्यतामिति चेद्, न; सर्वसंभवाभावात् । असंबद्धस्य कार्यत्वे हि असंबद्धत्वाविशेषात्सर्वं कार्यं सर्वस्मात्संभवेद्, नचैदस्ति; असंबद्धमपि कारणं तदेव करोति यत्र शक्तमिति चेद्, न; शक्तस्य शक्यकरणात् । शक्तमपि हि कार्यं शक्यं करोति नाशक्यम्; अव्यवस्थातादवस्थ्यात् । शक्यं करोति चेत्कथमसति शक्तिविषयतारूपा शक्यता कार्यस्य कारणात्मत्वादपि कार्यं सदेव । तस्य कारणात्मत्वं च घटशरावादिकं पूर्वाह्णे मृत्कूट एवासीदित्यनुभवेन गुरुत्वद्वैगुण्यानुपलम्भादियुक्त्या चेति । **ननु**—पृथुबुध्नोदरादिसंस्थानविशेषाणां सदातनत्वेऽपि कदाचित्प्रत्यक्षत्वं कदाचित्परोक्षत्वं च पटकूर्माङ्गादिपरिणाहानामिवाविर्भावतिरोभावाभ्यामुपपद्यते; नहि पटकूर्माङ्गादिपरिणाहानां संकोचनावस्थायामप्रत्यक्षत्वमनुत्पत्त्या नाशेन वा, किंतु तिरोधानेन। ततश्च तेषां विकासव्यापारेणेव दण्डचक्रादिव्यापारेण पृथुबुध्नोदरादीनामभिव्यक्तौ प्रत्यक्षता, अभिव्यक्तिश्च तत्तिरोधायकपिण्डावस्थोपमर्दः । मुद्गरपातेन घटावस्थोपमर्द इति कपालावस्थाभिव्यक्तिः । कपालानि चूर्णीकृत्य जलमृदन्तरसंयोजनमर्दनादिभिर्मार्दवं प्रापय्य दण्डचक्रादिव्यापारेण तिरोहिताया घटावस्थायाः पुनरभिव्यक्तिः । एवं पटावस्थायां दाहेन तिरोहितायां तद्भस्मनां क्षितितलपतितानां तत्क्षितिप्ररूढकार्पासतरुकुसुमफलपरिणतौ क्रमेण तिरोहितायाः पटावस्थायाः पुनरभिव्यक्तिरिति । अवस्थानामपि सदातनत्वे प्रत्यक्षत्वपरोक्षत्वव्यवस्थायां न क्वचिदनुपपत्तिरिति—चेद्, एवं द्रव्यतदवस्थाविशेषाणां सदातनत्वसमर्थनेऽपि तदाविर्भावतिरोभावौ प्रागसन्तौ आगन्तुकावेवाभ्युपगन्तव्यौ; तयोरपि सदातनत्वे घटावस्थायां कदाचित्प्रत्यक्षत्वं कदाचित्परोक्षत्वमिति व्यवस्थानुपपत्तेः, ततश्च तयोरसदकरणादिहेतूनां प्रतिहतेः तद्वदेव घटादिद्रव्याणां तदाकारविशेषाणां चागन्तुकत्वमभ्युपगन्तुं युक्तम्; इदानीं मृत्पिण्ड एवास्ति घटो नास्तीत्यादिव्यवहारदर्शनात्, कारणचक्रव्यापारानन्तरमिदानीं घट आसीदित्यादिव्यवहारदर्शनाच्च, पटपरिणाह इदानीमभिव्यक्त आसीत् प्राक् तिरोहित आसीदित्यादिवदाविर्भावतिरोभावव्यवहाराभावाच्च । शेषमारम्भणाधिकरणे ( ब्र. अ. २ पा.१ सू. १४ ) वक्ष्यते । **प्रकृतौ हि द्वादशाहे इति । नन्व**हर्गणानां प्रकृतौ समूहे द्वादशाहे त्रयाणां त्रयाणामह्नां त्रिवृत्स्तोमकत्वादिकं नास्ति । **सत्यम्**; यत्रास्ति तदुपलक्षणमेतत् । तद्यथा क्वचिदेकोनपञ्चाशद्रात्रविशेषे श्रूयते—"अतिरात्रो नव त्रिवृद्वन्त्यहानि नव पञ्चदशान्यहानि नव सप्तदशान्यहानि नवैकविंशान्यहानि" "द्वादशाहस्य दशाहस्य दशाहानि महाव्रतं चातिरात्रश्चे"ति । **निश्चितार्थैरिति ।** यद्यपि त्रिवृदादिशब्दाः स्तोत्रीयाणामृचां नवसंख्यादिवाचिनो नाहर्वाचिनः; तथापि तेषामन्यत्र लक्षणयाऽहःपरत्वं दृष्टमित्येतावता तादर्थ्यनिश्चयोक्तिः । **ननु** तेषां संवत्सरपरत्वमपि "त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशा" इत्यादिद्वादशवार्षिकसत्रोत्पत्तिवाक्येषु "नव त्रिवृतः संवत्सरा नव पञ्चदशा" इत्यादिषट्त्रिंशत्संवत्सरसत्रोत्पत्तिवाक्येषु च दृष्टम्, नच तेषु संवत्सरशब्दस्यार्थानवधारणमस्ति; संवत्सरसत्राणां

१ भावाच्च सत्कार्यमिति सांख्यकारिकापाठः ।

प्रधानकारणवादनिराकरणकारणेन शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदंशेनापरिगृहीता येऽण्वादिकारणवादास्तेऽपि प्रतिषिद्धतया व्याख्याता निराकृता द्रष्टव्याः । तुल्यत्वान्निराकरणकारणस्य नात्र पुनराशङ्कितव्यं किंचिदस्ति । तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं तर्कस्याप्रतिष्ठितत्वमन्यथानुमानेऽप्यविमोक्ष आगमविरोधश्चेत्येवंजातीयकं निराकरणकारणम् ॥ १२ ॥ इति चतुर्थं शिष्टापरिग्रहाधिकरणम् ॥

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥**

अन्यथा पुनर्ब्रह्मकारणवादस्तर्कबलेनैवाक्षिप्यते । यद्यपि श्रुतिः प्रमाणं स्वविषये भवति;

**भामती ।**

शब्दादिभ्यः' इत्यत्र निषेत्स्यामः । अविद्यासमारोपणेन च कार्यस्य न्यूनाधिकभावमन्यप्रयोजकत्वादुपेक्षिष्यामहे । तेन वैशेषिकाद्यभिमतस्य तर्कस्य शुष्कत्वेनाव्यवस्थितेः सूत्रमिदं सांख्यदूषणमतिदिशति । यत्र कथंचिद्वेदानुसारिणी मन्वादिभिः शिष्टैः परिगृहीतस्य सांख्यतर्कस्यैषा गतिस्तत्र परमाण्वादिवादस्यात्यन्तवेदबाह्यस्य मन्वाद्युपेक्षितस्य च कैव कथेति । **केनचिदंशेनेति** । सृष्ट्यादयो हि व्युत्पाद्यास्ते च किंचित्सदसद्वा पूर्वपक्षन्यायोत्प्रेक्षितमप्युदाहृत्य व्युत्पाद्यन्त इति केनचिदंशेनेत्युक्तम् । सुगममन्यत् ॥ १२ ॥ **इति चतुर्थं शिष्टापरिग्रहाधिकरणम् ॥**

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ।**

**स्यादेतत्**—अतिगम्भीरजगत्कारणविषयत्वं तर्कस्य नास्ति, केवलागमगम्यमेतदित्युक्तम्, तत्कथं पुनस्तर्कनिमित्त आक्षेप इत्यत आह—**यद्यपि श्रुतिः प्रमाणमिति** । प्रवृत्ता हि श्रुतिरनपेक्षतया स्वतःप्रमाणत्वेन न प्रमाणान्तरमपे-

**वेदान्तकल्पतरुः ।**

स्याहःपरतैव । एवंचोत्पत्तिमालोच्य सहस्रसंवत्सरशब्दोऽपि सहस्रदिवससाध्यकर्मपरः । औषधादिसिद्धिकल्पनाप्येवं न भवति । तस्मान्मनुष्योऽधिकारीति । आरम्भे हि न्यूनपरिमाणान्महदुदयनियमो न निवर्तते, उन्नततरगिरिशिखरवर्तिमहातरुषु भूमिष्ठस्य दूर्वाकारनिर्भासप्रतिभासोपलम्भादित्याह—**अविद्यासमारोपेणेति** ॥ **इति चतुर्थं शिष्टापरिग्रहाधिकरणम् ॥**[1]

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥**

अद्वयब्रह्मणो जगत्सर्गवादिनः समन्वयस्य भेदग्राहिमानविरोधसंदेहे सङ्गतिगर्भमगतार्थत्वमाह—**प्रवृत्ता हीति ।**

**कल्पतरुपरिमलः ।**

प्रकृतिभूते गवामयने "चत्वारोऽभिप्लवाः षडह एकः पृष्ठ्यः षडहः स मास" इति त्रिंशति अहस्सु मासत्वोक्तिलिङ्गाद् "यावत्यश्चतुर्विंशोक्थ्यस्य स्तोत्रीयास्तावत्यः संवत्सरस्य रात्रय" इति संवत्सररात्रीणां षष्ठ्युत्तरत्रिंशत्संख्याकचतुर्विंशोक्थ्यस्तोत्रीयाभिः समसंख्यत्वोक्तिलिङ्गात् "सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृत" इति स्मरणाच्च सावनपरत्वावधारणेनाननुष्ठानपर्यन्तत्वदर्शनात्, तथेहापि मुख्यवृत्त्यैव सावनसंवत्सरपरत्वमुपपादयितुं शक्यमिति पूर्वोक्तस्वरसादाह—**औषधादिसिद्धिकल्पनापीति ।** सहस्रसंवत्सरजीवनोपायभूतमौषधादिकं क्वचित्प्रामाणिकशास्त्रे दृष्टं क्लृप्तं नास्ति, येन सहस्रसंवत्सरायुरर्थितया स्वत एवौषधादिसिद्धानामधिकार इति विध्याक्षेपगौरवं परिह्रियेत, किंतु सहस्रसंवत्सरविधिबलादेव तथाभूतमौषधादिकमस्तीति कल्पनीयम् । नच तथा कल्पनयाप्यधिकारनिर्वाहः; सामान्यतः कल्पितस्याप्यौषधादेरिदन्तया परिज्ञानाभावेन तत्सेवया तावदायुःसंपादनाभावात् । नह्यग्निसंवर्धनं' 'स्वरवर्णप्रसादनं' 'वलीपलितनाशन'मित्यादिरसायनानामिव तावदायुःसंपादकस्य रसायनस्येदन्तया परिज्ञानं कथमपि लब्धुं शक्यम्; तावदायुषां गन्धर्वादीनामधिकाराश्रयणेऽपि तेषां ब्राह्मण्यादिकं तदभावेऽप्यग्निसंपादनम् अन्यभावेऽपि क्रत्वनुष्ठानं वा कल्पनीयमिति विध्याक्षेपगौरवमपरिहार्यमतस्तत्परिहाराय पञ्चपञ्चाशत इति संख्यावाचिशब्दस्य संवत्सरा इति कालवाचिशब्दस्य वा लक्षणीयत्वेन वाक्यार्थे वक्तव्ये संख्याशब्दस्य व्यवस्थितार्थत्वात् संवत्सरशब्दस्यापाततोऽनेकार्थतया प्रचलदवस्थत्वादहरेव संवत्सर इत्यहनि दृष्टप्रयोगत्वाच्च अहर्लक्षणत्वमभ्युपेत्य वाक्यार्थो निर्णेतव्य इति भावः । **दूर्वाकारेति ।** यद्यारम्भणाधिकरणे स्फुटीकरिष्यमाणं विवर्तवादं प्रच्छाद्य समनन्तरभोक्त्रापत्त्यधिकरणावलम्बनं परिणामवादमाश्रित्य परमाणुवाददूषणं वक्तव्यम्, तदोपादानोपादेययोरल्पाधिकपरिमाणत्वनियमस्य प्रचितपरिमाणतूलपिण्डाद्यारब्धेषु पिचुप्रभृतिषु व्यभिचार उद्भावनीयः । मेरुसर्षपयोरनन्तावयवारब्धत्वाविशेषेऽपि तदानन्त्ययोरेवातीतक्षणकल्पानन्त्ययोरिव विशेषोपपादनेन तुल्यपरिमाणप्रसङ्गं निरस्य क्षोदीयोऽर्थान्तरकल्पनापत्तिप्रसङ्गेन च परमाणुकारणवादो दूषणीयः ॥१२॥ **इति चतुर्थं शिष्टापरिग्रहाधिकरणम् ॥**

---

१ तत्र सूत्रम् १—एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

तथापि प्रमाणान्तरेण विषयापहारेऽन्यपरा भवितुमर्हति। यथा मन्त्रार्थवादौ । तर्कोऽपि स्वविषयादन्यत्राप्रतिष्ठितः स्यात् । यथा धर्माधर्मयोः । किमतो यद्येवम्? अत इदमयुक्तं यत्प्रमाणान्तरप्रसिद्धार्थबाधनं श्रुतेः । कथं पुनः प्रमाणान्तरप्रसिद्धोऽर्थः श्रुत्या बाध्यत इति ? अत्रोच्यते—प्रसिद्धो ह्ययं भोक्तृभोग्यविभागो लोके भोक्ता चेतनः शारीरो भोग्याः शब्दादयो विषया इति । यथा भोक्ता देवदत्तो भोज्य ओदन इति । तस्य च विभागस्याभावः प्रसज्येत, यदि भोक्ता भोग्यभावमापद्येत, भोग्यं वा भोक्तृभावमापद्येत । तयोश्चेतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात्प्रसज्येत । नचास्य प्रसिद्धस्य विभागस्य बाधनं युक्तम् । यथा त्वद्यत्वे भोक्तृभोग्ययोर्विभागो दृष्टस्तथातीतानागतयोरपि कल्पयितव्यः । तस्मात्प्रसिद्धस्यास्य भोक्तृभोग्यविभागस्याभावप्रसङ्गादयुक्तमिदं ब्रह्मकारणतावधारणमिति चेत्कश्चिच्चोदयेत्तं प्रतिब्रूयात्—स्याल्लोकवदिति । उपपद्यत एवायमस्मत्पक्षेऽपि विभागः; एवं लोके दृष्टत्वात् । तथाहि—समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनवीचीतरङ्गबुद्बुदादीनामितरेतरविभाग इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते । नच समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गादीनामितरेतरभावापत्तिर्भवति । नच तेषामितरेतरभावानापत्तावपि समुद्रात्मनोऽन्यत्वं भवति । एवमिहापि । नच भोक्तृभोग्ययोरितरेतरभावापत्तिः, नच परस्माद्ब्रह्मणोऽन्यत्वं भविष्यति । यद्यपि भोक्ता न ब्रह्मणो विकारः, 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै० २।६) इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशेन भोक्तृत्वश्रवणात्; तथापि कार्यमनुप्रविष्टस्यास्त्युपाधिनिमित्तो विभाग आकाशस्येव घटाद्युपाधिनिमित्त इत्यतः परमकारणाद्ब्रह्मणोऽनन्यत्वेऽप्युपपद्यते भोक्तृभोग्यलक्षणो विभागः समुद्रतरङ्गादिन्यायेनेत्युक्तम् ॥ १३ ॥ इति पञ्चमं भोक्त्रापत्त्यधिकरणम् ॥

### भामती ।

क्षते । प्रवर्तमाना पुनः स्फुटतरप्रतिष्ठितप्रामाण्यतर्कविरोधेन मुख्यार्थात्प्रच्याव्य जघन्यवृत्तितां नीयते, यथा मन्त्रार्थवादावित्यर्थः । अतिरोहितार्थं भाष्यम् । **यथा त्वद्यत्व इति** । यद्यतीतानागतयोः सर्गयोरेष विभागो न भवेत्, ततस्तदेवाद्यतनस्य विभागस्य बाधकं स्यात्, स्वप्नदर्शनस्येव जाग्रद्दर्शनम् । नत्वेतदस्ति; अबाधिताद्यतनदर्शनेन तयोरपि तथात्वानुमानादित्यर्थः । इमां शङ्कामापाततोऽविचारितलोकसिद्धदृष्टान्तोपदर्शनमात्रेण निराकरोति सूत्रकारः—**स्याल्लोकवत्** ॥ १३ ॥ **इति पञ्चमं भोक्त्रापत्त्यधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

पूर्वत्र जगत्कारणे तर्कोऽप्रतिष्ठित इत्युक्तम्, तर्हि जगद्भेदे तर्कः प्रतिष्ठित इत्यद्वैतविरोधेन प्रत्यवस्थानात्सङ्गतिः । अतएव लब्धप्रतिष्ठतर्केण श्रुतेर्मुखनिरोधादगतार्थत्वं चेत्यर्थः । **प्रवर्तमानेति** । स्वविषयप्रतिष्ठविरोधितर्केण सहोन्मज्जननिमज्जनमनुभवन्ती बलाबलविवेकमपेक्षमाणेत्यर्थः । एतद्वैधर्म्यं च प्रवृत्तत्वम् । तर्कस्य प्राबल्यमाह—**स्फुटतरेति** । स्थूलनीलादिभेदगोचरत्वात्स्फुटतरत्वम् । **प्रतिष्ठितत्वमनुपचरितत्वम्** । आम्नायो ह्युपचारेणापि सावकाश इति वर्तमानविभागेनापि विरोधसिद्धेर्वर्तमानसाम्योपपादनमतीतानागतयोर्भाष्येऽनुपयोगीत्याशङ्क्य वर्तमानविभागसत्यत्वं फलमित्याह—**यदीति** ॥ १३ ॥ **इति पञ्चमं भोक्त्रापत्त्यधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

**ननु** केवलागमगम्यब्रह्मविषयत्वं साधकस्येव बाधकस्यापि तर्कस्य न संभवतीति शङ्कायां मन्त्रार्थवाददृष्टान्तेन परिहारो न संभवति; मन्त्रार्थवादयोर्मानान्तरगम्यविषययोरेवऽमानान्तरबाधेनान्यथानयनाङ्गीकारादित्याशङ्क्यात्रापि मानान्तरगम्यप्रपञ्चाभावश्रुतीनामेव तत्सत्त्वग्राहिमानान्तरेण बाधः शङ्क्यत इति तत्तात्पर्यमाह—**तर्हि जगद्भेद इति** । एतदनुसारेण प्रवृत्तप्रवर्तमानशब्दौ व्याख्यातुमयं ग्रन्थः ॥ १३ ॥ **इति पञ्चमं भोक्त्रापत्त्यधिकरणम्** ॥

---

१ तत्र सूत्रम् १—भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् १३ ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः, न त्वयं विभागः परमार्थतोऽस्ति; यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते । कार्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते । कुतः ? आरम्भणशब्दादिभ्यः । आरम्भणशब्दस्तावत् । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' ( छा० ६।१।४ ) इति । एतदुक्तं भवति—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत् । यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चनं चेति । न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्रं ह्येतदनृतं । मृत्तिकेत्येव सत्यमित्येष ब्रह्मणो दृष्टान्त आम्नातः । तत्र श्रुताद्वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते । पुनश्च तेजोऽबन्नानां ब्रह्मकार्यतामुक्त्वा तेजोऽबन्नकार्याणां तेजोबन्नव्यतिरेकेणाभावं ब्रवीति—'अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' ( छा० ६।४।१ ) इत्यादिना । आरम्भणशब्दादिभ्य इत्यादिशब्दात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' ( छा० ६।८।७ ), 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ), 'ब्रह्मैवेदं सर्वम्' ( मु० २।२।११ ), 'आत्मैवेदं सर्वम्' (छा० ७।२५।२ ), 'नेह नानास्ति किंचन' (बृ० ४।४।१९ ) इत्येवमाद्यप्यात्मै-

### भामती ।

परिहाररहस्यमाह—

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

पूर्वस्मादविरोधादस्य विशेषाभिधानोपक्रमस्य विभागमाह—**अभ्युपगम्य चेममिति** । **स्यादेतत्**—यदि कारणात् परमार्थभूतादनन्यत्वमाकाशादेः प्रपञ्चस्य कार्यस्य, कुतस्तर्हि न वैशेषिकाद्युक्तदोषप्रपञ्चावतारः ? इत्यत आह—**व्यतिरेकेणाभावः कार्यस्यावगम्यत इति** । न खल्वनन्यत्वमित्यभेदं ब्रूमः, किंतु भेदं व्यासेधामः, ततश्च नाभेदाश्रयदोषप्रसङ्गः । किंत्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति । भेदनिषेधहेतुं व्याचष्टे—**आरम्भणशब्दस्तावदिति** । एवंहि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत, यदि ब्रह्मैव तत्त्वं जगतो भवेत् । यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति । सा हि तस्य तत्त्वम् । तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव । अत्रैव वैदिको दृष्टान्तः—**यथा सोम्यैकेन मृत्पिण्डेनेति** । **स्यादेतत्**—मृदि ज्ञातायां कथं मृन्मयं घटादि ज्ञातं भवति ? नहि तन्मृदात्मकमित्युपपादितमधस्तात् । तस्मात्तत्त्वतो भिन्नम् । नचान्यस्मिन्विज्ञातेऽन्यद्विज्ञातं भवतीत्यत

### वेदान्तकल्पतरुः ।

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

पूर्वाधिकरणेऽपि भेदग्राहिमानाविरोधोक्तेः पुनरुक्तिमाशङ्क्याह—**पूर्वस्मादिति** । अङ्गीकृत्य हि भेदग्राहिमानस्य प्रामाण्यं भेदाभेदयो रूपभेदेन विरोधः परिहृतः, इदानीं लक्ष्मीकृत्य प्रामाण्यं तत्त्वावेदकत्वात्प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते । एवंभूतविशेषाभिधानेनोपक्रमो यस्य विरोधपरिहारस्य स तथोक्तः । तदनन्यत्वपदेन द्वैतमिथ्यात्वोक्तेरेवमुपक्रमत्वम् । श्रुतौ परिणामिमृदादिदृष्टान्तोपादानान्न भेदाभेदविवक्षेति मन्तव्यम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायां प्रधानस्यानुरोधेन गुणभूतदृष्टान्तस्य विवर्तपरत्वेन नेयत्वादित्याह—**एवंहीति** । **ननु** परिणामपक्षेऽप्यभेदांशेन सर्वज्ञानं स्यादत आह—**तत्त्वज्ञानं चेति** । भेदालीकताया उक्तत्वादित्यर्थः । **उपपादितमधस्तादिति** । शिष्टापरिग्रहाधिकरण ( ब्र. अ.

### कल्पतरुपरिमलः ।

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

लौकिकप्रमाणानां तत्त्वावेदकत्वप्रच्यावनरूपो विशेषोऽत्राभिधित्सितः कुतोऽवसीयते ? इत्याकाङ्क्षायां सौत्रपदेन तद्विषयमिथ्यात्वप्रतिपादनादित्याह—**तदनन्यत्वपदेनेति** । **ननु** सौत्रपदाद्बलवति विषयवाक्ये पूर्वाधिकरणव्यवस्थापितभेदाभेदानुगुणदृष्टान्तोपादानात्तद्दृढीकरणे तात्पर्यं कुतो नावसीयते ? इति शङ्कोत्तरत्वेन प्रतिज्ञावाक्यतात्पर्यवर्णनपरं ग्रन्थमवतारयति—**श्रुताविति** । **तत्त्वज्ञानं चेतीति** । तत्त्वस्याबाधितरूपस्य ज्ञानमित्यर्थः । तथा चेदन्तया प्रतीयमानस्य भुज-

**त्वप्रतिपादनपरं वचनजातमुदाहर्तव्यम्। नचान्यथैकविज्ञानेन सर्वविज्ञानं संपद्यते। तस्माद्यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं, दृष्टनष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य**

## भामती।

आह श्रुतिः—'वाचारम्भणं विकारो नामधेयम्'। वाचया केवलमारभ्यते विकारजातं, नतु तत्त्वतोऽस्ति, यतो नामधेयमात्रमेतत्। यथा पुरुषस्य चैतन्यमिति राहोः शिर इति विकल्पमात्रम्। **यथाहुर्विकल्पविदः**—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति। तथाचावस्तुतयानृतं विकारजातं, मृत्तिकेत्येव सत्यम्। तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदि ज्ञातायां येषां सर्वेषामेव तत्त्वं ज्ञातं भवति। तदिदमुक्तम्—**नचान्यथैकविज्ञानेन सर्वविज्ञानं संपद्यत इति**। निदर्शनान्तरद्वयं दर्शयन्नुपसंहरति—**तस्माद्यथा घटकरकाद्याकाशानामिति**। ये हि दृष्टनष्टस्वरूपा न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः, तथाच सर्वं विकारजातं, तस्मादवस्तुसत्। **तथाहि**—यदस्ति तदस्त्येव, यथा चिदात्मा। नह्यसौ कदाचित् क्वचित् कथंचिद्वास्ति, किंतु सर्वदा सर्वत्र सर्वथास्त्येव, न नास्ति। नचैवं विकारजातम्; तस्य कदाचित् कथंचित् कुत्रचिदवस्थानात्। **तथाहि**—सत्स्वभावं चेद्विकारजातं, कथं कदाचिदसत्? असत्स्वभावं चेत्, कथं कदाचित् सत्? सदसतोरेकत्वविरोधात्। नहि रूपं कदाचित् क्वचित् कथंचिद्वा गन्धो भवति। अथ तस्य सदसत्त्वे धर्मौ, ते च स्वकारणाधीनजन्मतया कदाचिदेव भवतः, तत्तर्हि विकारजातं दण्डायमानं सदातनमिति न विकारः कस्यचित्? अथासत्त्वसमये तन्नास्ति, कस्य तर्हि धर्मोऽसत्त्वम्? नहि धर्मिण्यप्रत्युत्पन्ने तद्धर्मोऽसत्त्वं प्रत्युत्पन्नमुपपद्यते। अथास्य न धर्मः किंत्वर्थान्तरमसत्त्वम्, किमायातं भावस्य? नहि घटे जाते पटस्य किंचिद्भवति। असत्त्वं भावविरोधीति चेत्, न; अकिंचित्करस्य तत्त्वानुपपत्तेः। किंचित्करत्वे वा तत्राप्यसत्त्वेन तदनुयोगसंभवात्। अथास्यासत्त्वं नाम किंचिन्न जायते, किंतु स एव न भवति। **यथाहुः**—'न तस्य किंचिद्भवति न भवत्येव केवलम्' इति। अथैष प्रसज्यप्रतिषेधो निरुच्यतां, किं तत्स्वभावोऽभाव उत भावस्वभावः स इति। **तत्र पूर्वस्मिन् कल्पे**

## वेदान्तकल्पतरुः।

१ पा. ३ सू. २४–३३) पूर्वपक्षे इत्यर्थः। दृष्टान्तमात्रान्नार्थसिद्धिरिति भाष्ये हेतुरुक्तो-दृष्टेति। तं व्याचष्टे—**ये हीति**। क्वचिद्दृष्टं पुनर्नष्टमदृष्टमित्यर्थः। दृष्टग्रहणं प्रतीतिसमयेऽपि सत्त्वव्यावृत्त्यर्थम्। व्यतिरेकव्याप्तिमाह—**यदस्तीति**। विमतं मिथ्या, सावधिकत्वाद्व्यतिरेके चिदात्मवदित्यनुमानस्य विपक्षे बाधकतामाह—**सत्स्वभावं चेदिति**। सत्त्वासत्त्वे विकारस्य स्वरूपमुत धर्मौ अथार्थान्तरमलीकं वेति विकल्प्य क्रमेण निराकुर्वन्ननुमानस्यानुकूलतर्कमाह—**असत्स्वभावं चेत्यादिना**। अर्थान्तरत्वेऽपि विरोधित्वं शङ्कते—**असत्त्वमिति**। विरोधिभूतमसत्त्वं भावस्य किमकिंचित्करमुतासत्व-

## कल्पतरुपरिमलः।

गस्य रज्विदमंश इव सत्तया प्रतीयमानस्य विश्वस्याधिष्ठानसदंशस्तत्त्वमिति सद्रूपे तस्मिन् विज्ञाते विश्वासरोपिततत्तद्वैशेषिकरूपेणाज्ञातमपि तत्त्वतो ज्ञातं तज्ज्ञानेनैव विषयीकृतं भवतीत्यर्थः। **एतेन**—असाधारणं स्वरूपं धर्मो वा तत्त्वं, नतु भ्रमाधिष्ठानम्; तथा सति सदंशस्तत्त्वमिति ब्रह्मशुक्त्याद्यधिष्ठानस्यानन्दशुक्तित्वादेरतत्त्वप्रसङ्गादिति—**निरस्तम्**; स्वरूपं धर्मो वाऽबाध्ये तत्त्वमित्यबाधितत्वविशेषणावश्यंभावे सत्यसाधारणविशेषणवैयर्थ्यात्। नष्टशब्दो यद्यपि प्रयोगप्राचुर्याद् ध्वस्ते प्रसिद्धः; तथापि दृष्टनष्टस्वरूपत्वादिति हेतोर्व्यतिरेकव्याप्तिप्रदर्शनपरे **तथा** हीत्यादिटीकाग्रन्थे त्रिविधपरिच्छेदराहित्यस्य वस्तुसत्त्वरूपसाध्याभावव्यापकत्वप्रदर्शनात् त्रिविधपरिच्छेदोऽत्र हेतुर्विवक्षितो नतु कालपरिच्छेदमात्रम्। नच त्रिविधोपादानवैयर्थ्यम्; ध्वंसात्यन्ताभावान्योन्याभावप्रतियोगित्वरूपहेतुत्रयपरत्वोपपत्तेः, अभावत्वेन सर्वकोडीकरणेनाभावप्रतियोगित्वरूपैकहेतुपरत्वोपपत्तेश्च। नच ब्रह्मणि व्यभिचारः; स्वान्यूनसत्ताकत्वेनाभावविशेषणादित्यभिप्रेत्य त्रिविधसंग्रहार्थं नश अदर्शने इति धात्वर्थकथनानुसारेण समभिव्याहृतदृष्टप्रतिद्वन्द्विविषयतौचित्यानुसारेण च नष्टशब्दं व्याचष्टे—**अदृष्टमित्यर्थ इति**। एवंच कालान्तरदेशान्तरवर्तितया वस्त्वन्तरतादात्म्येन चादृष्टत्वोक्त्या तत्तदर्थाभावाक्षेपात् कालपरिच्छिन्नत्वादिहेतुलाभः। **नन्वेवं** सति नष्टपदेनैव हेतुलाभात् किं दृष्टग्रहणेनेत्याशङ्क्य ध्वंसकालाद्यवच्छिन्नः सत्त्वाभाव इह साध्यते, स दृष्ट एवेति भ्रान्तशङ्कावारणार्थं प्रतीतिकालादिसाधारणः सत्त्वाभावः साध्य इति साध्यशरीरज्ञापनार्थं तदित्याह—**प्रतीतिसमये इति**। क्वचिददृष्टमित्यर्थ इति स्थाने अनित्यमित्यर्थ इति पाठस्तु नष्टशब्दस्य ध्वस्ते प्रसिद्धिप्राचुर्यमाश्रित्य। अस्मिन् पक्षे कालपरिच्छेदमात्रस्य हेतुत्वाद् ब्रह्मणि व्यतिरेकव्याप्तिप्रदर्शनपरे टीकाग्रन्थे न ह्यसौ कदाचित्क्वचित्कथंचिदस्तीति देशवस्तुपरिच्छेदयोरप्यभावकथनं कालपरिच्छेदाभावे दृष्टान्तार्थमिति योज्यम्। टीकायां ये हि दृष्टस्वरूपा इत्यनेन विवक्षितस्यानुमानस्य प्राथमिकतथाहिग्रन्थेन व्यतिरेकव्याप्तिः प्रदर्शिता, तस्यैव विपक्षबाधकं द्वैतीयीकतथाहिग्रन्थेनोच्यत इति निष्कृष्य तदनुमानप्रदर्शनपूर्वकमवतारयति—**विमतमिति। सावधिकत्वादिति**। पूर्वोक्तरीत्या त्रिविधावधिमत्त्वा-

**ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् । नन्वनेकात्मकं ब्रह्म, यथा वृक्षोऽनेकशाख एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म । अत एकत्वं नानात्वं चोभयमपि सत्यमेव । यथा वृक्ष इत्येकत्वं शाखा इति नानात्वम् । यथा च समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम् । यथाच मृदात्मनैकत्वं; घटशरावाद्यात्मना नानात्वम् । तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्म-**

## भामती ।

भावानां तत्स्वभावतया तुच्छतया जगच्छून्यं प्रसज्येत । तथाच भावानुभवाभावः । **उत्तरस्मिंस्तु** सर्वभावनित्यतया नाभावव्यवहारः स्यात् । कल्पनामात्रनिमित्तत्वेऽपि निषेधस्य भावनित्यतापत्तिस्तदवस्थैव । तस्माद्भिन्नमस्ति कारणाद्विकारजातं न वस्तुसत् । अतो विकारजातमनिर्वचनीयमनृतम् । तदनेन प्रमाणेन सिद्धमनृतत्वं विकारजातस्य कारणस्य निर्वाच्यतया सत्त्वं 'मृत्तिकेत्येव सत्यम्' इत्यादिना प्रबन्धेन दृष्टान्ततयानुवदति श्रुतिः । 'यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्तः' इति चाक्षपादसूत्रं प्रमाणसिद्धो दृष्टान्त इत्येतत्परं, न पुनर्लोकसिद्धत्वमत्र विवक्षितम्, अन्यथा तेषां परमाण्वादिर्न दृष्टान्तः स्यात् । नहि परमाण्वादिर्नैसर्गिकवैनयिकबुद्ध्यतिशयरहितानां लौकिकानां सिद्ध इति । संप्रत्यनेकान्तवादिनमुत्थापयति—**नन्वनेकात्मकमिति** । अनेकाभिः शक्तिभिर्याः प्रवृत्तयो नानाकार्यसृष्टयस्ताद्युक्तं ब्रह्मैकं नाना चेति । किमतो यद्येवमित्यत आह—**तत्रैकत्वांशेनेति** । यदि पुनरेकत्वमेव वस्तुसद्भवेत् ततो नानात्वाभावाद्वैदिकः कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः समस्त एवोच्छिद्येत । ब्रह्मगोचराश्च श्रवणमननादयः सर्वे दत्तजलाञ्जलयः प्रसज्येरन् । एवंचानेकात्मकत्वे ब्रह्मणो मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति । तमिममनेकान्त-

## वेदान्तकल्पतरुः ।

करं स्वरूपं वेति विकल्प्य क्रमेण दूषयति—**नेत्यादिना** । किंचित्करत्वे यत्किंचिदसत्त्वं क्रियते तदपि स्वरूपं धर्मो वेत्यादि विकल्प्य तद्दूषणानां संभवादित्यर्थः । असत्त्ववत्सत्त्वेऽपि अर्थान्तरत्वादिविकल्पा द्रष्टव्याः । अर्थान्तरत्वादपि विकारे फलाभावात्सत्त्वान्तरजन्मनि चानवस्थानाद् विकारे सत्त्वान्तरं न भवति, किंतु स एव सन् भवतीत्युक्तेऽपि सत्स्वभावस्यासत्त्वविरोधेन विकारनित्यत्वापातादिति । **ननु** कार्यमिथ्यात्वं कारणसत्यत्वं चानुमानसिद्धं श्रुत्या दृष्टान्तीकर्तुमयुक्तम्, लोकसिद्धस्य दृष्टान्तत्वोक्तेरित्याशङ्क्याह—**यत्रेति** । मृदेका शरावादयः परस्परं भिन्ना इत्यभ्युपगमेऽत्यन्तभेद एव स्यात् । अथ मृदात्मना शरावादीनामेकत्वं मृदश्च शरावाद्यात्मना नानात्वमिति मतम्, तद् विकल्प्य दूषयति—**इदं तावदित्यादिना** । अत्यन्ताभेदे ह्यपुनरुक्तशब्दद्वयप्रयोगो भेदाभेदयोः कार्यकारणात्मना व्यवस्थाच न स्यादित्याह—**तत्रेति** । **नचानेकान्तवाद**

## कल्पतरुपरिमलः ।

दनित्यत्वादिति वार्थः । सावधिकसत्त्वादिति पाठे सावधिकस्थितिकत्वादित्यर्थमादायोक्तार्थ एव पर्यवसानं द्रष्टव्यम्; अन्यथा कदाचित्सत्त्वमङ्गीकृत्य तेन त्रैकालिकसत्त्वाभावसाधने विरोधात् । टीकायामाद्यविकल्पद्वयं सत्त्वासत्त्वोभयविषयमुपन्यस्याऽर्थान्तरत्वादिविकल्पद्वयमसत्त्वमात्रविषयमुपन्यस्तम्, तत् स्वयं सत्त्वेनासत्त्वेन चानिर्वचनीयत्वाभावसिद्ध्यर्थं सत्त्वेऽप्यतिदिशति—**असत्त्ववदित्यादिना** । **ननु** सत्त्वं भावधर्मः असत्त्वं त्वभावरूपमर्थान्तरमित्यभ्युपगमे नास्ति दोषः, नचाकिंचित्करतायामर्थान्तरस्य विरोधित्वानुपपत्तिः; तस्य प्रतियोगिन्यकिंचित्करत्वेऽपि स्वभावादेव प्रतियोगिप्रतिक्षेपरूपविरोधित्वोपपत्तेः, अन्यथा प्रतियोगिनि किंचित्करस्यैव विरोधित्वनियमेऽत्रैव वियद्वाचकसमर्थनार्थस्य सदसतोरेकत्वविरोधादिति टीकाग्रन्थस्य सत्स्वभावस्यासत्त्वविरोधादित्यस्य ग्रन्थस्य चानिर्वाहात् । **उच्यते**; सत्त्वासत्त्वे भावधर्मावित्यभ्युपगमे विकारनित्यत्वापात इति यो दोष उक्तः स सत्त्वमेकमेव भावधर्मो न कदापि भावस्यासत्त्वमित्यभ्युपगमेऽपि तुल्यः । असत्त्वमर्थान्तरं नचासत्त्वान्तरकरमित्यभ्युपगमे त्वसन् घट इति सामानाधिकरण्यानुपपत्तिः । नहि सत्त्वासत्त्वगोत्वाश्वत्वादीनां स्वभावादेव परस्परविरोधसद्भावेऽपि सदसद्गौरश्व इत्यादिसामानाधिकरण्यमस्ति । नच—असन् घट इति सामानाधिकरण्यमभावप्रतियोगी घट इत्यर्थकमिति—वाच्यम्; तथासति प्रतियोगित्वधर्माश्रयतया विकारसत्त्वापातात् । एवं सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वमिह विश्वस्योपपादितम् । भेदाभेदाभ्यामनिर्वचनीयत्वमपि पूर्वाधिकरणे कार्यकारणभेदवादिभिश्च दर्शितैः परस्परं प्रतिक्षेप्तुमशक्यैर्न्यायैः सिद्धमित्यनुसंधेयम् । **ननु** मृदात्मना शरावादीनामेकत्वं मृदश्च शरावाद्यात्मना नानात्वमिति परोक्तमापाद्य विकल्पपूर्वकं दूषणमयुक्तोपालम्भः; मृदेका शरावादयो नानेत्येतावत एव परेणोक्तत्वात्, **भाष्ये—यथा वृक्ष इत्येकत्वं शाखा इति च नानात्वमिति** प्रथमदृष्टान्तानुसारेण मृदात्मना घटशरावाद्यात्मनेति आत्मशब्दयोरविवक्षितार्थत्वादित्याशङ्क्य तात्पर्यमाह—**मृदेकेति** । यदि तथा परमतं स्यात्, तदा सर्वविज्ञानप्रतिज्ञानिर्वाहार्थमस्मदुक्ता रीतिरनुसरणीयेति परमतेऽपि शुद्धाद्वैतमेव सिध्येद्, न नानात्वस्य सत्यता । अतस्तत्सत्यतामनुरुध्य प्रतिज्ञां निर्वोढुं कार्यकारणयोर्द्वयोरपि परस्परात्मनैकत्वं नानात्वं च परास्मिमतमिति वक्तव्यम् । अतएव **नन्वनेकात्मकं ब्रह्मेति भाष्ये** कारणस्य कार्यात्मताभिप्रायेण नानात्वमुक्तमिति तत्र विकल्प्य दूषणकथनं युक्तमित्यर्थः । अभेद एव स्यादिति पाठमनुरुध्य शुद्धाद्वैतमेव

काण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति। एवं च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति। नैवं स्यात्; 'मृत्तिकेत्येव सत्यम्' इति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात्, वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्, दार्ष्टान्तिकेऽपि 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात्, 'स आत्मा तत्त्वमसि श्वेतकेतो' इति च शारीरस्य ब्रह्मभावोपदेशात्। स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते, न यत्नान्तरप्रसाध्यम् अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं संपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम्। बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति, यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत। दर्शयति च—'यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभावम्। न चायं व्यवहाराभावोऽवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुम्; 'तत्त्वमसि' इति ब्रह्मात्मभावस्यानवस्थाविशेषनिबन्धनत्वात्। तस्करदृष्टान्तेन चानृताभिसंधस्य बन्धनं सत्याभिसंधस्य च मोक्षं दर्शयन्नेकत्वमेवैकं पारमार्थिकं दर्शयति (छा० ६।१६)। मिथ्याज्ञानविजृम्भितं च नानात्वम्। उभयसत्यतायां हि कथं व्यवहारगोचरोऽपि जन्तुरनृताभिसंध इत्युच्येत? 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ० ४।४।१९) इति च भेददृष्टिमपवदन्नेवैतद्दर्शयति। न चास्मिन्दर्शने ज्ञानान्मोक्ष इत्युपपद्यते; सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात्। उभयसत्य-

## भामती।

वादं दूषयति—**नैवं स्यादिति**। इदं तावदत्र वक्तव्यम्, मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वमिति वदतः कार्यकारणयोः परस्परं किमभेदोऽभिमतः, आहो भेदः, उत भेदाभेदाविति। तत्राभेद ऐकान्तिके मृदात्मनेति च घटशरावाद्यात्मनेति चोल्लेखद्वयं नियमश्च नोपपद्यते। भेदे चोल्लेखद्वयनियमावुपपन्नौ, आत्मनेति त्वसमञ्जसम्। नह्यन्यस्यान्य आत्मा भवति। न चानेकान्तवादः। भेदाभेदकल्पे तूल्लेखद्वयं भवेदपि। नियमस्त्वयुक्तः; नहि धर्मिणोः कार्यकारणयोः संकरे तद्धर्मावेकत्वनानात्वे न संकीर्येते इति संभवति। ततश्च मृदात्मनैकत्वं यावद्भवति तावद्घटशरावाद्यात्मनापि स्यात्। एवं घटशरावाद्यात्मना नानात्वं यावद्भवति तावन्मृदात्मना नानात्वं भवेत्। सोऽयं नियमः कार्यकारणयोरैकान्तिकं भेदमुपकल्पयति, अनिर्वचनीयतां वा कार्यस्य। पराक्रान्तं चास्माभिः प्रथमाध्याये तत्। आस्तां तावत्। तदेतद्युक्तिनिराकृतमनुवदन्तीं श्रुतिमुदाहरति—**मृत्तिकेत्येव सत्यमिति**। **स्यादेतत्**—न ब्रह्मणो जीवभावः काल्पनिकः, किंतु भाविकः। अंशो हि सः, तस्य कर्मसहितेन ज्ञानेन ब्रह्मभाव आधीयत इत्यत आह—**स्वयं प्रसिद्धं हीति**। स्वाभाविकस्यानादेरिति। यदुक्तं—नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यति—इति, तत्राह—**बाधिते चेति**। यावदबाधं हि सर्वोऽयं व्यवहारः स्वप्नदशायामिव तदुपदर्शितपदार्थजातव्यवहारः। स च यथा जाग्रदवस्थायां बाधकान्निवर्तते, एवं तत्त्वमस्यादिवाक्यपरिभावनाभ्यासपरिपाकभुवा शारीरस्य ब्रह्मात्मभावसाक्षात्कारेण बाधकेन निवर्तते। **स्यादेतत्**—'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्' इत्यादिना मिथ्याज्ञानाधीनो व्यवहारः क्रियाकारकादिलक्षणःसम्यग्ज्ञानेनापनीयत इति न ब्रूयते, किंत्ववस्थाभेदाश्रयो व्यवहारोऽवस्थान्तरप्राप्त्या निवर्तते, यथा बालकस्य कामचारवादभक्षतोपनयनप्राप्तौ निवर्तते। नच तावतासौ मिथ्याज्ञाननिबन्धनो भवत्येवमत्रापीत्यत आह—**न चायं व्यवहाराभाव इति**। कुतः? **तत्त्वमसीति ब्रह्मात्मभावस्येति**। न खल्वेतद्वाक्यमवस्थाविशेषविनियतं ब्रह्मात्मभावमाह जीवस्य, अपि तु न भुजङ्गो रज्जुरियमितिवत् सदातनं तमभिवदति। **अपिच** सत्यानृताभिधानेनाप्येतदेव युक्तमित्याह—**तस्करदृष्टान्तेन चेति**। **नचास्मिन्दर्शन इति**। नहि जातु काष्ठस्य दण्डकमण्डलुकुण्डलशालिनः कुण्डलित्वज्ञानं दण्डवत्तां कमण्डलुमत्तां बाधते। तत्

## वेदान्तकल्पतरुः।

**इति**। भेदपक्षेऽनेकान्तवादश्च न भवतीत्यर्थः। **न भवेदपीति**। अनेकान्तत्वान्न भवेदपीत्यपेरर्थः। सत्यवादिनस्तस्करत्वेनारोपितस्य मोक्षवत्सत्यब्रह्मात्मत्ववेदिनो मोक्ष इति तस्करदृष्टान्तः। अहंममाभिमानयोरेकत्र व्याघातः स्यादिति प्रविभज्य

## कल्पतरुपरिमलः।

सिध्येदिति तत्तात्पर्यं वर्णितम्। अत्यन्तभेद एव स्यादिति पाठस्तु सुगमः। **न भवेदपीति**। भेदमाश्रित्य भवनवदभेदमाश्रित्याभवनमपि वक्तुं शक्यमिति भावः। तस्करदृष्टान्तः छान्दोग्ये "पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयम-

**तायां हि कथमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्यते? ननु एकत्वैकान्ताभ्युपगमे नानात्वाभावात्प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन्निर्विषयत्वात्, स्थाण्वादिष्विव पुरुषादिज्ञानानि। तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत, मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात्तदभावे व्याघातः स्यात्। कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येतेति? अत्रोच्यते—नैष दोषः; सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेः, स्वप्नव्यवहारस्येव प्राक्प्रबोधात्। यावद्धि न सत्यात्मैकत्वप्रतिपत्तिस्तावत्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते। विकारानेव त्वहं ममेत्यविद्ययात्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा। तस्मात्प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः। यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान्भावान्पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधात्, नच प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, तद्वत्। कथं त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत? नहि रज्जुसर्पेण दष्टो म्रियते। नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इति, नैष दोषः; शङ्काविषा-**

## भामती।

कस्य हेतोः? तेषां कुण्डलादीनां तस्मिन् भाविकत्वात्, तद्वदिहापि भाविकगोचरेणैकात्म्यज्ञानेन न नानात्वं भाविकमपवदनीयम्। नहि ज्ञानेन वस्त्वपनीयते, अपि तु मिथ्याज्ञानेनारोपितमित्यर्थः। चोदयति—**नन्वेकत्वैकान्ताभ्युपगम इति**। अबाधितानधिगतासंदिग्धविज्ञानसाधनं प्रमाणमिति प्रमाणसामान्यलक्षणोपपत्त्या प्रत्यक्षादीनि प्रमाणतामश्नुवते। एकत्वैकान्ताभ्युपगमे तु तेषां सर्वेषां भेदविषयाणां बाधितत्वादप्रामाण्यं प्रसज्येत। तथा विधिप्रतिषेधशास्त्रमपि भावनाभाव्यभावककरणेतिकर्तव्यताभेदापेक्षत्वाद्व्याहन्येत। तथाच नास्तिक्यम्। एकदेशाक्षेपेण च सर्ववेदाक्षेपाद्वेदान्तानामप्यप्रामाण्यमित्यभेदैकान्ताभ्युपगमहानिः। न केवलं विधिनिषेधाक्षेपेणास्य मोक्षशास्त्रस्याक्षेपः स्वरूपेणास्यापि भेदापेक्षत्वादित्याह—**मोक्षशास्त्रस्यापीति**। अपि चास्मिन् दर्शने वर्णपदवाक्यप्रकरणादीनामलीकत्वात्तत्प्रभवमद्वैतज्ञानमसमीचीनं भवेत्, न खल्वलीकाद्धूमकेतनज्ज्ञानं समीचीनमित्याह—**कथं चानृतेन मोक्षशास्त्रेणेति**। परिहरति—**अत्रोच्यत इति**। यद्यपि प्रत्यक्षादीनां तात्त्विकमबाधितत्वं नास्ति, युक्त्यागमाभ्यां बाधनात्; तथापि व्यवहारे बाधनाभावात्सांव्यवहारिकमबाधनम्। नहि प्रत्यक्षादिभिरर्थं परिच्छिद्य प्रवर्तमानो व्यवहारे विसंवाद्यते सांसारिकः कश्चित्। तस्मादबाधनान्न प्रमाणलक्षणमतिपतन्ति प्रत्यक्षादय इति। **सत्यत्वोपपत्तेरिति**। सत्यत्वाभिमानोपपत्तेरिति। ग्रहणकवाक्यमेतत्। विभजते—**यावद्धि न सत्यात्मैकत्वप्रतिपत्तिरिति**। विकारानेव तु शरीरादीनहमित्यात्मभावेन पुत्रपश्वादीन्ममेत्यात्मीयभावेनेति। योजना। **वैदिकश्चेति** कर्मकाण्डमोक्षशास्त्रव्यवहारसमर्थना। 'स्वप्नव्यवहारस्येव' इति विभजते—**यथा सुप्तस्य प्राकृतस्येति**। 'कथं चानृतेन मोक्षशास्त्रेण' इति यदुक्तं तदनुभाष्य दूषयति—**कथं त्वसत्येनेति**। शक्यमत्र वक्तुं श्रवणाद्युपाय आत्मासाक्षात्कारपर्यन्तो वेदान्तसमुत्थोऽपि ज्ञाननिचयोऽसत्यः, सोऽपि हि वृत्तिरूपः कार्यतया निरोधधर्मा, यस्तु ब्रह्मस्वभावसाक्षात्कारोऽसौ न कार्यस्तत्स्वभावत्वात्, तस्मादचोद्यमेतत् **कथमसत्यात्सत्योत्पाद इति?** यत्खलु सत्यं न तदुत्पद्यत इति कुतस्तस्यासत्यादुत्पादः? यच्चोत्पद्यते तत्सर्वमसत्यमेव। सांव्यवहारिकं तु सत्यत्वं वृत्तिरूपस्य ब्रह्मसाक्षात्कारस्येव श्रवणादीनामप्यभिन्नम्। तस्मादभ्युपेत्य वृत्तिस्वरूपस्य ब्रह्मसाक्षात्कारस्य परमार्थसत्यतां व्यभिचारोद्भावनमिति मन्तव्यम्। यद्यपि सांव्यवहारिकस्य सत्यादेव भयात्सत्यं मरणमुत्पद्यते; तथापि भयहेतुरहिस्तज्ज्ञानं वाऽसत्यं ततो भयं सत्यं जायत इत्यसत्यात्सत्यस्योत्पत्तिरुक्ता। यद्यपि चाहिज्ञानमपि स्वरूपेण सत् तथापि न तज्ज्ञानत्वेन भयहेतुरपि त्वनिर्वाच्याहिरूपितत्वेन। अन्यथा रज्जुज्ञानादपि भयप्रसङ्गाज्ज्ञानत्वेनाविशेषात्।

## वेदान्तकल्पतरुः।

योजयति—**शरीरादीनीति**। **ननु** मिथ्यात्वे श्रवणादीनामविद्यानिवृत्तिसमर्थसाक्षात्कारहेतुत्वं न स्यादत आह—**सांव्यवहारिकं त्विति**। असत्यादपि कार्यक्षमपदार्थोत्पत्तिमनन्तरमेव वक्ष्याम इत्यर्थः। यद्यसत्यात्सत्यधीः स्यात्, तर्हि

## कल्पतरुपरिमलः।

कार्षीत् परशुमस्मै तपते" इत्यादिना प्रपञ्चितः। **असत्यादिति**। असत्यादहिज्ञानान्मरणकार्यक्षमभयोत्पत्तिर्वक्ष्यते। **ननु**—असज्ज्ञप्तावसत इवाहिज्ञप्तावहेरुपलक्षणत्वेन तादर्थ्यसंभवाद् नाहिज्ञानस्यासत्यत्वमिति—**चेद्, न**; असद्विकल्पस्यासद्विशिष्टत्वेनासत्त्वे बाधकाभावात्। नच शशशृङ्गमस्तीति ज्ञानाद् भ्रान्तस्य प्रवृत्त्यभावप्रसङ्गो बाधकः; असतः साधक-

दिनिमित्तमरणादिकार्योपलब्धेः, स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात् । तत्कार्यमप्यनृतमेवेति चेद्ब्रूयात्, तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतम्; तथापि तदवगतिः सत्यमेव फलम्; प्रतिबुद्धस्याप्यबाध्यमानत्वात् । नहि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येति मन्यते कश्चित् । एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः ।

## भामती ।

तस्मादनिर्वाच्याहिरूपितं ज्ञानमप्यनिर्वाच्यमिति सिद्धमसत्यादपि सत्यस्योपजन इति । नच ब्रूमः सर्वस्मादसत्यात्सत्यस्योपजनः, यतः समारोपितधूमभावाया धूममहिष्या वह्निज्ञानं सत्यं स्यात् । नहि चक्षुषो रूपज्ञानं सत्यमुपजायत इति रसादिज्ञानेनापि ततः सत्येन भवितव्यम् । यतो नियमो हि स तादृशः सत्यानां यतः कुतश्चित् किंचिदेव जायत इति । एवमसत्यानामपि नियमो यतः कुतश्चिदसत्यात्सत्यं कुतश्चिदसत्यं, यथा दीर्घत्वादेर्वर्णेषु समारोपितत्वाविशेषेऽप्यजीनमित्यतो ज्यानिविरहमवगच्छन्ति सत्यम्, अजिनमित्यतस्तु समारोपितदीर्घभावाज्ज्यानिविरहमवगच्छन्तो भवन्ति भ्रान्ताः। न चोभयत्र दीर्घसमारोपं प्रति कश्चिदस्ति भेदः । तस्मादुपपन्नमसत्यादपि सत्यस्योदय इति । निदर्शनान्तरमाह—**स्वप्नदर्शनावस्थस्येति** । यथा सांसारिको जाग्रद्भुजङ्गं दृष्ट्वा पलायते ततश्च न दंशवेदनामाप्नोति, पिपासुः सलिलमालोक्य पातुं प्रवर्तते ततस्तदासाद्य पायंपायमाप्यायितः सुखमनुभवति, एवं स्वप्नान्तिकेऽपि तदवस्थं सर्वमित्यसत्यात्कार्यसिद्धिः । शङ्कते—**तत्कार्यमप्यनृतमेवेति** । एवमपि नासत्यात्सत्यस्य सिद्धिरुक्तेत्यर्थः । परिहरति—**तत्र ब्रूमः । यद्यपि स्वप्नदर्शनावस्थस्येति** । लौकिको हि सुप्तोत्थितोऽवगम्यं बाधितं मन्यते, न तदवगतिं, तेन यद्यपि परीक्षका अनिर्वाच्यरूपितामवगतिमनिर्वाच्यां निश्चिन्वन्ति; तथापि लौकिकाभिप्रायेणैतदुक्तम् । अत्रान्तरे लौकायतिकानां मतमपाकरोति—**एतेन स्वप्नदृशोऽवगत्यबाधनेनेति** । यदा खल्वयं चैत्रस्तारक्षवीं

## वेदान्तकल्पतरुः ।

धूमाभासादपि वह्निधीः समीचीना स्यादित्युक्तम्, इत्याशङ्क्याह—**नच ब्रूम इति । धूममहिषी** धूमी। सा च बाष्पः । असत्यादपि सत्यमुत्पद्यत इत्युच्यते न पुनरसत्यात्सत्योत्पादनियम इत्यर्थः । यदि पुनः कुतश्चिदसत्यात्सत्यं जातमिति सर्वस्मादसत्यात्सत्यजन्मापाद्यते, तर्हि किंचित्सत्यं कस्यचित्सत्यस्य जनकमिति तत एव सर्वं सत्यं स्यादिति प्रतिबन्दीमाह—**न हीति** । चोद्यसाम्यमुक्त्वा परिहारसाम्यमाह—**यत इति** । यतो नियमादित्यर्थः । ज्यावयोहानावित्यस्य निष्ठायां संप्रसारणे नञ्समासे चाऽजीनमिति रूपम् । अस्मादध्यस्तदीर्घभावाद्यद्यपि ज्यानेर्वयोहानेरभावं सत्यमवगच्छति । वक्त्रा तु ह्रस्वत्वेनाजिनमिति उच्चरिते भ्रमादजीनमिति गृहीतादस्माच्छब्दाद्या वयोहानिप्रतीतिः सा भ्रान्तिरजिनशब्दो हि चर्मवचन इति । अत्र यथा आरोपितत्वाविशेषेऽपि किंचिद्दैर्घ्यं सत्यबोधकं किंचिदसत्यबोधकमेवमस्माकमपीत्यर्थः । **पायं पायं** पीत्वा पीत्वा । **तारक्षवीं** व्याघ्रमयीं तनुमास्थायेत्यन्वयः । **व्यात्तं** विवृतं **विकटाभ्यां** वक्राभ्यां दंष्ट्राभ्यां **करालं** भयानकम् आननं यस्याः सा तथोक्ता । **उत्तब्धम्** उन्नमय्य धृतम् । **वस्भ्रमद**त्यर्थं भ्रमन्मस्तकावचुम्बि लाङ्गूलं यस्याः सा तथा । **ध्वस्ते** इतस्ततो विक्षिप्ते लोचने यस्याः सा तथा । अमित्रमभि प्रतियोद्धुं गताम् **अभ्यमित्रीणाम्** । स्फटिकशैलप्रतिबिम्बितां ह्यमित्रमिति भ्रमादात्मतनुं धावन्तीं सुप्तो व्याघ्रतनुमास्थितः पश्यतीति । यदि स्वप्नदृशोऽवगतिरबाधिता स्यात्, तर्ह्येवोपपद्यत इत्यर्थः ।

## कल्पतरुपरिमलः ।

त्वदर्शनस्य प्रातिभासिकव्यावहारिकाणां साधकत्वोपपादने कैमुतिकन्यायेनानुकूलत्वात् । अतएव खण्डनकारैरसतः साधकत्वं यत्नेनोपपादितम् । **ननु**—तथापि व्यावहारिकत्वादिनिर्वचनेष्वपेक्षितमसत्प्रातिभासिकवैलक्षण्यं व्यावहारिकमभ्युपेयम्; असतः प्रातिभासिकस्य च तद्वैलक्षण्यस्यासति प्रातिभासिके च सत्त्वेनाव्यावर्तकत्वात्, अतस्तत्रासत्प्रातिभासिकवदहेरप्युपलक्षणत्वं स्यादिति—**चेत्, न;** तत्र विशिष्टरूपेणासदपि प्रातिभासिकमपि स्वरूपेण तद्वैलक्षण्यं विशेषणमिति विवक्षया व्यावर्तकत्वोपपत्तेः, क्वचित्कस्यचिद्बाधकवशादुपलक्षणत्वकल्पनेऽपि प्रकृते विशेषणत्वे संभवति तद्दृष्टान्तेनोपलक्ष्याकारान्तरसापेक्षोपलक्षणत्वकल्पनायोगात्, महासर्पभ्रमजन्यभये क्षुद्रसर्पभ्रमजन्यभयादुत्कर्षदर्शनेन कार्योत्कर्षानुविधेयोत्कर्षस्य सर्पस्य विशेषणतया भयप्रयोजककोटिनिवेशनावश्यंभावाच्च । **परिहारसाम्यमाहेति । ननु** कथं परिहारसाम्यम् ? सत्यत्वाविशेषेऽपि यत्कारणतावच्छेदकावच्छिन्नं ततः सत्यं कार्यं नान्यस्मादिति नियमः सत्यपक्षे संभवति, आरोपपक्षे त्वजिनमजीनमित्युभयोरपि दैर्घ्यारोपाऽविशेषे धूमबाष्पयोर्व्याप्त्यारोपाविशेषे च कथं नियमः ? **उच्यते;** यादृशेन ज्ञानेन सत्यत्वं कार्यकारणभावानतिप्रसङ्गोपपादकं सिद्धं परो मन्यते, तादृशज्ञानसिद्धं व्यावहारिकसत्त्वमस्माकं तदनतिप्रसङ्गोपपादकम्, तत्तु ज्ञानं परस्य सर्वथैवाबाध्यमित्यभिमानः । अस्माकं तु तद्युक्त्या ब्रह्मज्ञानेन च बाध्यमिति सिद्धान्तः । एवंच धूम एव वह्निव्याप्तिज्ञानात् तत्सत्त्वसिद्धिः, ननु धूमत्वभ्रान्तिविषये बाष्पे तज्ज्ञानादिति पराभिमानात्, अस्माकं धूमे एव वह्निव्याप्त्या-

तथाच श्रुतिः—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥' (छा० ५।२।९) इत्यसत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्रतिपत्तिं दर्शयति । तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु 'न चिरमिव जीविष्यतीति विद्यात्' इत्युक्त्वा 'अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यत इति दर्शयति । प्रसिद्धं चेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यत ईदृशेनासाध्वागम इति । तथाकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः । अपिचान्त्यमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकं नातः परं किंचिदाकाङ्क्ष्यमस्ति । यथा हि लोके यजेतेत्युक्ते किं केन कथमित्याकाङ्क्ष्यते, नैवं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किंचिदन्यदाकाङ्क्ष्यमस्ति; सर्वात्मैकत्वविषयत्वावगतेः । सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थे आकाङ्क्षा स्यात्, नत्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति य आकाङ्क्ष्येत । न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम्; 'तद्धास्य विजज्ञौ' ( छा० ६।१६।३ ) इत्यादिश्रुतिभ्यः, अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधानात् । न चेयमवगतिरनर्थिका

## भामती ।

व्यात्तविकटदंष्ट्राकरालवदनामुत्तब्धबभ्रमन्मस्तकावचुम्बिलाङ्गूलामतिरोषारुणध्वस्तविशालवृत्तलोचनां रोमाञ्चसंचयोत्फुल्लभीषणां स्फटिकाचलभित्तिप्रतिबिम्बितामभ्यमित्रीणां तनुमास्थाय स्वप्ने प्रतिबुद्धो मानुषीमात्मनस्तनुं पश्यति तदोभयदेहानुगतमात्मानं प्रतिसंदधानो देहातिरिक्तमात्मानं निश्चिनोति, नतु देहमात्रम्; तन्मात्रत्वे देहवत्प्रतिसंधानाभावप्रसङ्गात् । कथं चैतदुपपद्येत यदि स्वप्नदृशोऽवगतिरबाधिता स्यात् । तद्बाधे तु प्रतिसंधानाभाव इति । असत्याच्च सत्यप्रतीतिः श्रुतिसिद्धान्वयव्यतिरेकसिद्धा चेत्याह—**तथाच श्रुतिरिति** । **तथाकारादीति** । यद्यपि रेखास्वरूपं सत्यम्; तथापि तद्यथासंकेतमसत्यम् । नहि संकेतयितारः संकेतयन्तीदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्योऽपित्वीदृशो रेखाभेदोऽकार ईदृशश्च ककार इति । तथाचासमीचीनात्संकेतात्समीचीनवर्णावगतिरिति सिद्धम् । यच्चोक्तमेकत्वांशेन ज्ञानमोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यतीति, तत्राह—**अपिचान्त्यमिदं प्रमाणमिति** । यदि खल्वेकत्वानेकत्वनिबन्धनौ व्यवहारावेकस्य पुंसोऽपर्यायेण संभवतस्ततस्तदर्थमुभयसद्भावः कल्प्येत, न त्वेतदस्ति । नह्येकत्वावगतिनिबन्धनः कश्चिदस्ति व्यवहारः; तदवगतेः सर्वोत्तरत्वात् । **तथाहि**—'तत्त्वमसि' इत्यैकात्म्यावगतिः समस्तप्रमाणतत्फलतद्व्यवहारानपबाधमानैवोदीयते, नैतस्याः परस्तत्किंचिदनुकूलं प्रतिकूलं चास्ति, यदपेक्षेत, येन चेयं प्रतिक्षिप्येत, तत्रानुकूलप्रतिकूलनिवारणान्नातः परं किंचिदाकाङ्क्ष्यमिति । नचेयमवगतिर्डुलिक्षीरप्रायेत्याह—**नचेयमिति** । **स्यादेतत्**—अन्त्या चेदियमवगतिः, निष्प्रयोजना तर्हि । तथाच न प्रेक्षावद्भिरुपादीयेत, प्रयोजनवत्त्वे वा नान्त्या स्यादित्यत आह—**न चेयमवगतिरनर्थिका**, कुतः ? **अविद्यानिवृ-**

## वेदान्तकल्पतरुः ।

भेदाभेदव्यवहारौ भेदाभेदोपपादकाविति वदन् प्रष्टव्यः किं ब्रह्मज्ञानात्प्राचीनौ तदुपपादकौ पराचीनौ वेति । **नाद्य** इत्युक्तं—**नानात्वांशेन कर्मकाण्डाश्रय इत्यादिना** । तत्त्वज्ञानात्प्रागभेदव्यवहारस्याप्राप्तत्वान्न स उपन्यस्तः । **द्वितीय**मिदानीं शङ्कते—**यच्चोक्तमिति** । एकत्वज्ञानोत्तरकालम् एकत्वव्यवहारोऽपि नास्ति, नतरामनेकत्वव्यवहार इति परिहरति—**यदि खल्विति** । **डुलिः** कच्छपी । न तस्याः क्षीरमस्ति, स्मृत्या हि साऽपत्यानि पोषयति । **अवगति**वृत्ति-

## कल्पतरुपरिमलः ।

रोपाद्व्यावहारिकवह्निप्रमा नान्यत्रेति व्यवस्था । यदि क्वचिद्बाष्पधूमभ्रमस्थलेऽपि संवादिनी सा जायत इति न वस्तुसद्व्याप्तिमत्त्वं तत्प्रयोजकम्, किंतु साध्यवति लिङ्गज्ञानमात्रमारोपानारोपसाधारणमितीष्यते, तदा यतः साध्यवत्त्वज्ञानात्पक्षे साध्यवत्त्वस्य वस्तुसतः सिद्धिं परो मन्यते, तदस्माकमारोपरूपमिति तत्सिद्धं व्यावहारिकं साध्यत्वं तत्प्रयोजककोटौ निवेश्यम् । एवमजीनमजिनमित्यत्राप्युपपादनं वर्णदैर्घ्यादेश्च सत्यत्वमशक्योपपादनम् । नच दीर्घादिध्वनिसाहित्यं तदभिव्यक्तत्वं वा तत्, नहि दीर्घादिध्वनिसहिता इमे वर्णास्तदभिव्यक्ता वेति प्रतियन्ति लोकाः, किंतु दीर्घोऽयं ह्रस्वोऽयमित्येव प्रतियन्ति । लोकविरोधेन चानुभवव्याख्याने रजतभ्रमादीनामपि रजतसदृशमिदमित्यादिव्याख्यानं को वारयेत् । **ध्वस्ते इति** । ध्वंसु गतौ चेति गत्यर्थमादाय यथा श्रुतस्य ध्वस्तेति पाठस्य गतिरुक्ता । स्तब्धेति पाठः सुगम इति त्यक्तः । **तर्ह्येवेति** । कथं चेत्येतत्प्रकृतार्थानुगुण्यार्थं तर्ह्येवेत्यर्थे योजनीयम् । आक्षेपार्थत्वे स्वप्नदृगनुभवभ्रान्तित्वस्यैव प्रतिपिपादयिषितत्वापत्तेरिति भावः ।

भ्रान्तिर्वेति शक्यं वक्तुम्, अविद्यानिवृत्तिफलदर्शनात्, बाधकज्ञानान्तराभावाच्च । प्राक्चात्मैकत्वावगतेरव्याहतः सर्वः सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम । तस्मादन्त्येनप्रमाणेन प्रतिपादित आत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति । ननु मृदादिदृष्टान्तप्रणयनात्परिणामवद्ब्रह्म शास्त्रस्याभिमतमिति गम्यते । परिणामिनो हि मृदादयोऽर्था लोके समधिगता इति । नेत्युच्यते; 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृ० ४।४।२५ ), 'स एष नेति नेत्यात्मा' ( बृ० ३।९।२६ ), अस्थूलमनणु' ( बृ० ३।८।८ ) इत्याद्याभ्यः सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात् । न ह्येकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वं च शक्यं प्रतिपत्तुम् । स्थितिगतिवत्स्यादिति चेत्, न; कूटस्थस्येति विशेषणात् । नहि कूटस्थस्य ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं

## भामती ।

**त्तिफलदर्शनात्** । नहीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति, येन नान्त्या स्यात्, किंत्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते । अविद्यानिवृत्तिश्च न तत्कार्यतया फलमपि त्विष्टतया, इष्टलक्षणत्वात्फलस्येति । प्रतिकूलं पराचीनं निराकर्तुमाह—**भ्रान्तिर्वेति** । कुतः ? **बाधकेति** । **स्यादेतत्**—मा भूदेकत्वनिबन्धनो व्यवहारोऽनेकत्वनिबन्धनस्त्वस्ति, तदेव हि सकलामुद्वहति लोकयात्राम्, अतस्तत्सिद्ध्यर्थमनेकत्वस्य कल्पनीयं तात्त्विकत्वमित्यत आह—**प्राक्चेति** । व्यवहारो हि बुद्धिपूर्वकारिणां बुद्ध्योपपद्यते, न त्वस्यास्तात्त्विकत्वेन, भ्रान्त्यापि तदुपपत्तेरित्यावेदितम् । सत्यं च तत्; विसंवादात्, अनृतं च; विचारासहतयानिर्वाच्यत्वात् । अन्त्यस्यैकात्म्यज्ञानस्यानपेक्षतया बाधकत्वं अनेकत्वज्ञानस्य च प्रतियोगिग्रहापेक्षया दुर्बलत्वेन बाध्यत्वं वदन् प्रकृतमुपसंहरति—**तस्मादन्त्येन प्रमाणेनेति** । **स्यादेतत्**—न वयमनेकत्वव्यवहारसिद्ध्यर्थमनेकत्वस्य तात्त्विकत्वं कल्पयामः, किंतु श्रौतमेवास्य तात्त्विकत्वमिति चोदयति—**ननु मृदादीति** । परिहरति—**नेत्युच्यत इति** । मृदादिदृष्टान्तेन हि कथंचित्परिणाम उन्नेयः, नच शक्य उन्नेतुम्; 'मृत्तिकेत्येव सत्यम्' इति कारणमात्रसत्यत्वावधारणेन कार्यस्यानृतत्वप्रतिपादनात् । साक्षात्कूटस्थनित्यत्वप्रतिपादिकास्तु सन्ति सहस्रशः श्रुतय इति न परिणामधर्मता ब्रह्मणः । अथकूटस्थस्यापि परिणामः कस्मान्न भवतीत्यत आह—**न ह्येकस्येति** । शङ्कते—**स्थितिगतिवदिति** । यथैकबाणाश्रये गतिनिवृत्ती एवमेकस्मिन्ब्रह्मणि परिणामश्च तदभावश्च कौटस्थ्यं भविष्यत इति । निराकरोति—**न । कूटस्थस्येति विशेषणादिति** । कूटस्थनित्यता हि सदातनी स्वभावादप्रच्युतिः । सा कथं प्रच्युत्या न विरुध्यते ? नच धर्मिणो व्यतिरिच्यते धर्मः, येन तदुपजनापायेऽपि धर्मी कूटस्थः स्यात् । भेद ऐकान्तिके गवाश्ववद्धर्मधर्मिभावाभावात् । बाणादयस्तु परिणामिनः स्थित्या गत्या च परिणमन्त इति । **अपिच** स्वाध्यायाध्ययनविध्या-

## वेदान्तकल्पतरुः ।

व्यक्तं स्वरूपम् । यथा खलु घटध्वंसो घटविरोधिकार्योदय एव नाभावस्तस्य तुच्छत्वेन कार्यत्वायोगादेवमविद्यानिवृत्तिरपि विरोधिविद्याभिव्यक्तिरित्याह—**अविद्याविरोधिस्वभावतयेति** । अविद्यानिवृत्तिर्यदि विद्यायाः स्वरूपं, कथं तर्हि विद्याफलमत आह—**अविद्यानिवृत्तिश्चेति** । न वयं ज्ञानात्पराचीनव्यवहाराय द्वैतसत्यत्वं कल्पयामः, किंतु प्राचीनसिद्ध्यर्थमेवेति शङ्कते—**स्यादेतदिति । एकत्वनिबन्धनो व्यवहारो मा भूत्** । द्वैतसत्यत्वाक्षेपक इति शेषः । पूर्वं नानात्वांशेन कर्मकाण्डाश्रय इति ग्रन्थे प्रमाणसिद्धाद्भेदव्यवहाराद्भेदसत्यत्वमाशङ्क्य परिहृतम्, इदानीं सर्वलोकप्रसिद्धेर्भेदसत्यत्व-

## कल्पतरुपरिमलः ।

**नानात्वांशेन तु कर्मकाण्डाश्रया इत्यादिनेति । ननु**—अयं ग्रन्थो भाष्ये पूर्वपक्षग्रन्थः, टीकायां तु यच्चोक्तमित्यतः प्रागयं ग्रन्थ एव नास्ति, तदनन्तरं तु पूर्वपक्षभाष्यानुवादरूपोऽयं ग्रन्थः, कथमयं ग्रन्थो नाद्य इत्युक्तमिति सिद्धान्तग्रन्थतयाऽवतारितः ? **उच्यते**; अनेन ग्रन्थेनानूदितः पूर्वपक्षः सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेरित्यादिभाष्येण तात्पर्यप्रदर्शकटीकाग्रन्थेन च निराकृत इति प्रदर्शनार्थं पूर्वपक्षग्रन्थोपन्यास इति न दोषः । केषु चित्कोशेषु नानात्वांशेनेत्यादिप्रतीकग्रहणमेव नास्ति, तस्मिन् पाठे नाद्य इत्युक्तमित्येतावतैव सर्वव्यवहाराणामित्यादिभाष्यतद्व्याख्यानाभ्यामिति ज्ञातुं शक्यत्वात्प्रतीकाग्रहणम् । **यथा खल्विताीति** । घटध्वंसो नाम घटविरोधिकपालरूपकार्यान्तरोदय एव, न त्वभावरूपः; तदतिरिक्ताभावरूपध्वंसकल्पने गौरवात्, कपालरूपविरोधिकार्यान्तरोदयेनैव ध्वंसव्यवहारोपपत्तेश्च । **ननु** कपालोत्पत्त्यनन्तरं घटो नास्तीति व्यवहारविषयः कश्चिदभावोऽपि स्वीकर्तव्यः, स एव मुद्गरपातादिसाध्यो घटध्वंसोऽस्त्वित्यत आह—**तस्य तुच्छत्वेनेति** । सोऽभावो न कस्यचित्कार्योऽभावत्वादेव । तथा च घटापनयनानन्तरमिव मुद्गरपतनान-

संभवति । कूटस्थं च नित्यं ब्रह्म सर्वविक्रियाप्रतिषेधादित्यवोचाम । नच यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनमेवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित्फलायाभिप्रेयते; प्रमाणाभावात् । कूटस्थब्रह्मात्मत्वविज्ञानादेव हि फलं दर्शयति शास्त्रम्—'स एष नेति नेत्यात्मा' इत्युपक्रम्य 'अभयं वै जनक प्राप्तोऽसि' ( बृ० ४।२।४ ) इत्येवंजातीयकम् । तत्रैतत्सिद्धं भवति—ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, फलवत्संनिधावफलं तदङ्गमितिवत्, नतु स्वतन्त्रं फलाय कल्प्यत इति । नहि परिणामवत्त्वविज्ञानात्परिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तम्, कूटस्थनित्यत्वान्मोक्षस्य । कूटस्थब्रह्मात्मवादिन एकत्वैकान्त्यादीशित्रीशितव्याभाव ईश्वरकारणप्रतिज्ञाविरोध इति चेत्, न; अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात्सर्वज्ञत्वस्य । तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात्सर्वज्ञात्सर्वशक्तेरीश्वराज्जगज्जनिस्थितिप्रलया नाचेतनात्प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातः 'जन्माद्यस्य यतः' ( ब्र० सू० १।१।४ ) इति । सा प्रतिज्ञा तदवस्थैव न तद्विरुद्धोऽर्थः पुनरिहोच्यते । कथं नोच्यतेऽत्यन्तमात्मन एकत्वमद्वितीयत्वं च ब्रुवता ? शृणु यथा नोच्यते । सर्वज्ञस्येश्वरस्यात्मभूत इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते । ताभ्यामन्यः सर्वज्ञ ईश्वरः; 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' ( छा० ८।१४।१ ) इति श्रुतेः, 'नामरूपे व्याकरवाणि' ( छा० ६।३।२ ), 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' ( तै० आ० ३।१२।७ ), 'एकं बीजं बहुधा यः करोति' ( श्वे० ६।१२ ) इत्यादिश्रुतिभ्यश्च । एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि । स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्यकारणसंघातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे व्यवहारविषये । तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूप आत्मनीशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते । तथाचोक्तम्—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' ( छा० ७।२४।१ ) इति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिना च । एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे । तथेश्वरगीतास्वपि—'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥' (गी० ५।१४—१५ ) इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते । व्यवहारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः—'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' ( बृ० ४।४।२२ ) इति । तथाचेश्वरगीतास्वपि—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥' (गी० १८।६१ ) इति । सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभिप्रायेण तु स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति । अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति ॥ १४ ॥

---

## भामती ।

पादितार्थवत्त्वस्य वेदराशेरेकेनापि वर्णेनानर्थकेन न भवितव्यम्, किं पुनरियता जगतो ब्रह्मयोनित्वप्रतिपादकेन वाक्यसंदर्भेण ? तत्र फलवद्ब्रह्मदर्शनसमाम्नानसंनिधावफलं जगद्योनित्वं समाम्नायमानं तदर्थं सत्तदुपायतयावतिष्ठते नार्थान्तरार्थमित्याह—**नच यथा ब्रह्मण इति** । अतो न परिणामपरत्वमस्येत्यर्थः । तदनन्यत्वमित्यस्य सूत्रस्य प्रतिज्ञाविरोधं श्रुतिविरोधं च चोदयति—**कूटस्थब्रह्मात्मवादिन इति** । परिहरति—**न** । **अविद्यात्मक इति** । नाम च रूपं च ते एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य । **एतदुक्तं भवति**—न तात्त्विकमैश्वर्यं सर्वज्ञत्वं च ब्रह्मणः, किंत्वविद्योपाधिकमिति तदाश्रयं प्रतिज्ञासूत्रं, तत्त्वाश्रयं तु तदनन्यत्वसूत्रम्, तेनाविरोधः । सुगमम-

## भावे चोपलब्धेः ॥ १५ ॥

इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते नाभावे। तद्यथा सत्यां मृदि घट उपलभ्यते, सत्सु च तन्तुषु पटः । नच नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा । नह्यश्वो गोरन्यः सन् गोर्भाव एवोपलभ्यते । नच कुलालभाव एव घट उपलभ्यते । सत्यपि निमित्तनैमित्तिकभावेऽन्यत्वात् । नन्वन्यस्य भावेऽप्यन्यस्योपलब्धिर्नियता दृश्यते, यथाग्निभावे धूमस्येति । नेत्युच्यते; उद्धापितेऽप्यग्नौ गोपालघुटिकादिधारितस्य धूमस्य दृश्यमानत्वात् अथ धूमं कयाचिदवस्थया विशिंष्यादीदृशो धूमो नासत्यग्नौ भवतीति । नैवमपि कश्चिद्दोषः; तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदामः । न चासाववग्निधूमयोर्विद्यते । भावाच्चोपलब्धेरिति वा सूत्रम् । न केवलं शब्दादेव कार्यकारणयोरनन्यत्वम्; प्रत्यक्षोपलब्धिभावाच्च तयोरनन्यत्वमित्यर्थः । भवतिहि प्रत्यक्षोपलब्धिः कार्यकारणयोरनन्यत्वे । तद्यथा—

### भामती ।

न्यत् ॥ १४ ॥ कारणस्य भावः सत्ता चोपलम्भश्च तस्मिन् कार्यस्योपलब्धेर्भावाच्च। **एतदुक्तं भवति**—विषयपदं विषयविषयिपरं, विषयिपदमपि विषयिविषयपरं तेन कारणोपलम्भभावयोरुपादेयोपलम्भभावादिति सूत्रार्थः संपद्यते। तथा च प्रभारूपानुविद्धबुद्धिबोध्येन चाक्षुषेण न व्यभिचारः, नापि वह्निभावाभावानुविधायिभावाभावेन धूमभेदेनेति सिद्धं भवति । तत्र यथोक्तहेतोरेकदेशाभिधानेनोपक्रमते भाष्यकारः—**इतश्च कारणादनन्यत्वं** भेदाभावः **कार्यस्य, यत्कारणं** यस्मात्कारणात् **भाव एव कारणस्येति** । अस्य व्यतिरेकमुखेन गमकत्वमाह—**नच नियमेनेति**। काकतालीयन्यायेनान्यभावेऽन्यदुपलभ्यते, न तु नियमेनेत्यर्थः। हेतुविशेषणाय व्यभिचारं चोदयति—**नन्वन्यस्य भावेऽपीति** । एकदेशिमतेन परिहरति—**नेत्युच्यत इति** । शङ्क्यैकदेशिपरिहारं दूषयित्वा परमार्थपरिहारमाह—**अथेति** । तदनेन हेतुविशेषणमुक्तम् । पाठान्तरेणेदमेव सूत्रं व्याचष्टे—**न केवलं शब्दादेवेति** । पट इति हि

### वेदान्तकल्पतरुः ।

माशङ्क्य देहात्मभाववद् मिथ्यात्वेऽपि तदुपपत्तिमाहेति भेदः ॥ १४ ॥ कार्यं कारणादभिन्नं तद्भाव उपलब्धेरित्यापातसिद्धे सूत्रार्थे दोषं दृष्ट्वा व्याख्याति—**कारणस्य भाव** इति । भाव इत्यस्य व्याख्यानं—**सत्ता चेति** । **ननु** कारणस्य भाव एव सूत्रे प्रतीयते, कार्यस्योपलब्धिरेव, तत्कथमुभयत्रेतरेतरविशिष्टयोर्हेतुत्वमत आह—**एतदिति** । विषयपदं भावपरम्, भावो ह्युपलब्धिविषय इति तद्दण्डिन्यायेन विषयविषयिपरम् । एवं विषयिपदमुपलब्धिपदमप्युभयपरमित्यर्थः । **उपादेयं** कार्यम् । सविशेषणहेतौ फलमाह—**तथा चेति** । उपलब्धावुपलब्धेरिति हेतूकारे प्रभासाक्षात्कारे साक्षात्कृतेन चाक्षुषेण व्यभिचारः स्यात् । नहि घटादेः प्रभायाश्चाभेदस्तन्निवृत्त्यर्थं भावे भावादिति विशेषणम् । नहि प्रभाया भाव एव घटो भवतीत्यर्थः । यदा तद्भावानुरक्तधीबोध्यत्वं हेत्वर्थस्तदापि भाति घट इति प्रभानुरक्तधीगम्येऽनेकान्तस्तदिदमुक्तं—**प्रभारूपानुविद्धेति** । यदि भावे भावादिति हेतुस्तर्हि वह्निभावे भवति विशिष्टधूमेऽनेकान्तः स्यात् । उपलब्धावुपलब्धेरिति विशेषणे तु न भवेद्धूमस्य वह्न्युपलब्धावेवोपलब्धिरिति नियमाभावादित्याह—**नापीति** । तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदाम इति भाष्यम् । अत्र कारणस्वभावानुविद्धा कार्यबुद्धिर्हेतुत्वेनोक्तेति न भ्रमितव्यम्; तत्रापि व्यभिचारस्योक्तत्वात्, किंतु सूत्रगतोपलब्धिं बुद्धिं कार्यकारणोभयविषयां तयोः कार्यकारणयोर्भावेन सत्तयोपरक्तां विशेषितां हेतुं वयं वदाम इति भाष्यार्थ इत्याह—**तदनेनेति** । हेतुविशेषणमुक्तं

### कल्पतरुपरिमलः ।

न्तरमपि घटो नास्तीति व्यवहारो नित्यसंसर्गाभावविषय एव, ध्वंसव्यवहारस्तु कपालोत्पत्तिविषयः । अतएव कपालोत्पत्तिदशायां कपालान्युत्पद्यन्त इति व्यवहारवद् घटो ध्वस्त इति व्यवहारः, उत्पन्नेषु कपालेषु कपालान्युत्पन्नानीति व्यवहारवद् घटो ध्वस्त इत्येव व्यवहारः, कपालतदुत्पत्त्योरदर्शने घटो ध्वस्तो ध्वंसत इति च व्यवहारयोरभावश्च । **यद्वा**—तुच्छत्वेनेत्यस्याभावत्वेनेति नार्थः, किंत्वलीकत्वेनेति । तथा च भावविशेषैरेवाभावस्य व्यवहारोपपत्तेर्भावातिरिक्ताभावस्याप्रामाणिकत्वेन कार्यत्वशङ्कानास्पदत्वादित्यर्थः ॥ १४ ॥ **तत्रापि व्यभिचारस्योक्तत्वादिति** । तद्भावनानुरक्तधीबोध्यत्वं न तत्तादात्म्यधीबोध्यत्वम् । भाष्योदाहृते पटे तन्तुतादात्म्यबुद्ध्यभावादतस्तद्वैशिष्ट्यबुद्धिबोध्यत्वं तदिति वक्तव्यं तत्रालोकसंयुक्तत्वेनैव चाक्षुषधीवेद्यत्वनियते घटे व्यभिचार इति प्रागेवोक्तम् । तस्मात्तद्भावोपलब्धिनियतभावोपलब्धिकत्वरूपहेत्वर्थप्रदर्शनपरमिदं भाष्यमित्यर्थः । प्रागनुपलब्धत्वादित्यनेन किं पटाकारोल्लेखेनानुपलब्धिर्विवक्षिता उत स्वरूपेण । **नाद्यः**; तदानीमातानवितानरूपाकारविशेषाभावेन तदाकारोल्लेख्युपलब्ध्यभावस्योपपन्नतया तस्य द्रव्यभेदासाधकत्वादित्यभिप्रेत्य **द्वितीयमसिद्ध्या**

तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं नैवोपलभ्यते, केवलास्तु तन्तव आतानविता-नवन्तः प्रत्यक्षमुपलभ्यन्ते तथा तन्तुष्वंशवोंऽशुषु तदवयवाः । अनया प्रत्यक्षोपलब्ध्या लोहि-तशुक्लकृष्णानि त्रीणि रूपाणि ततो वायुमात्रमाकाशमात्रं चेत्यनुमेयम् ( छा० ६।४ ) । ततः परं ब्रह्मैकमेवाद्वितीयं, तत्र सर्वप्रमाणानां निष्ठामवोचाम ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

इतश्च कारणात्कार्यस्यानन्यत्वं, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरका-लीनस्य कार्यस्य श्रूयते । 'सदेव सोम्येदमग्र आसीत्' ( छा० ६।२।१ ), 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐ० आ० २।४।१।१ ) इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामाना-धिकरण्यात् । यच्च यदात्मना यत्र न वर्तते न तत्तत उत्पद्यते, यथा सिकताभ्यस्तैलम् । तस्मात्प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात्कार्यमित्यवगम्यते । यथाच कारणं ब्रह्म

### भामती ।

प्रत्यक्षबुद्ध्या तन्तव एवातानवितानावस्था आलम्ब्यन्ते, न तु तदतिरिक्तः पटः प्रत्यक्षमुपलभ्यते । एकत्वं तु तन्तूना-मेकप्रावरणलक्षणार्थक्रियावच्छेदाद्बहूनामपि । यथैकदेशकालावच्छिन्ना धवखदिरपलाशादयो बहवोऽपि वनमिति । अर्थक्रियायां च प्रत्येकमसमर्था अप्यनारभ्यैवार्थान्तरं किंचिन्मिलिताः कुर्वन्तो दृश्यन्ते, यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवार्थान्तरं तन्तवो मिलिताः प्रावरणमेकं करिष्यन्ति । नच—समवायाद्भिन्नयोरपि अनवसाय इति—सांप्रतम्; अन्योन्याश्रयत्वात् । भेदे हि सिद्धे समवायः समवायाच्च भेदः । नच भेदे साधनान्तरमस्ति; अर्थक्रियाव्यपदेशभेदयोरभेदेऽप्युपपत्तेरित्युपपादितम् । तस्माद्यत्किंचिदेतत् । अनया च दिशा मूलकारणं ब्रह्मैव पर-मार्थसत्, अवान्तरकारणानि च तन्त्वादयः सर्वेऽनिर्वाच्या एवेत्याह—**तथा तन्तुष्विति** ॥ १५ ॥ विभजते—**इतश्चेति** । न केवलं श्रुतिः, उपपत्तिश्चात्र भवति **यच्च यदात्मनेति** । नहि तैलं सिकतात्मना सिकतायामस्ति, यथा घटोऽस्ति मृदि मृदात्मना । प्रत्युत्पन्नो हि घटो मृदात्मनोपलभ्यते । नैवं प्रत्युत्पन्नं तैलं सिकतात्मना । तेन यथा सिकतायास्तैलं न जायत एवमात्मनोऽपि जगन्न जायेत, जायते च , तस्मादात्मात्मनासीदिति गम्यते । उपपत्त्यन्तर-माह—**यथा च कारणं ब्रह्मेति** । यथा हि घटः सर्वदा सर्वत्र घट एव, न जात्वसौ क्वचित्पटो भवत्येवं सदपि सर्वत्र सर्वदा सदेव, न तु क्वचित्कदाचिदसद्भवितुमर्हतीत्युपपादितमधस्तात् । तस्मात्कार्यं त्रिष्वपि कालेषु सदेव । सत्त्वं चेत् किमतो यद्येवमित्यत आह—**एकं च पुनरिति** । सत्त्वं चैकं कार्यकारणयोः । नहि प्रतिव्यक्ति सत्त्वं भिद्यते । ततश्चा-

### वेदान्तकल्पतरुः ।

न हेत्वन्तरपरत्वेन व्याख्यानमित्यर्थः । पटस्य तन्तुव्यतिरेकेणानुपलम्भः समवायस्य भेदतिरोधायकत्वादन्यथासिद्ध इत्याश-ङ्क्याह—**न चेति** । संबन्धस्य भिन्नाश्रितत्वाद्भेदसिद्धौ समवायः समवायाच्च व्यतिरेकानुपलब्धौ समाहितायां भेदसिद्धि रित्यन्योन्याश्रय इत्यर्थः । पटस्तन्तुभ्यो भिद्यते तदुपलम्भेऽपि कुविन्दव्यापारात्प्रागनुपलब्धत्वात् कुम्भवदित्यनुमानाद्भेदसि-द्धेर्नेतरेतराश्रयमित्याशङ्क्याह—**नच भेद इति** । अभेदवादिनस्तन्तूपलम्भे तदभिन्नपटोपलम्भाद्धेत्वसिद्धिरित्यर्थः । कारण-सत्त्वे तन्त्वादि सत्यं स्यादित्याशङ्क्याह—**अनयेति** ॥ १५ ॥ **उपपत्तिश्चात्र भवतीति** । आहेति शेषः । उपपत्तिमेव दर्शयति—**न हीति** । यथा मृदि घटो मृदात्मनाऽस्ति, तथा सिकतायां तदात्मना न तैलमस्ति, तदुपादानोपादेयत्वाभा-वक्तमित्यर्थः । **ननु** मृदेव घटोत्पत्तेः प्रागस्ति, कथं तदात्मना घटस्य सत्ता ? अत आह—**प्रत्युत्पन्नो हीति** । उत्पन्नस्य घटस्य मृदात्मत्वदर्शनान्मृदि सत्यां घटसत्त्वं युक्तमित्यर्थः । इत्थं तर्किते कार्यकारणाभेदे प्रयुज्यते—घटत्वं, मृन्निष्ठं घटनिष्ठ-त्वात्सत्त्ववदिति । एवं जगद्ब्रह्मणोरभेदेऽपि शब्दो ब्रह्मवृत्तिः आकाशवृत्तित्वात्सत्त्ववदिति । कार्यस्य कालत्रये सत्यत्वं भाष्यो-क्तमयुक्तम् ; तथा सति कार्यत्वव्याघातादित्याशङ्क्यानिर्वाच्यरूपस्य कादाचित्कत्वेऽपि कार्यस्य तत्त्वमधिष्ठानं तच्च नित्यमिति युक्तितः प्रतिपादयति—**यथाहि घट इति** । कार्यस्य सत्त्वं स्वरूपं धर्मो वा । **आद्ये** तस्य कदाचिदसत्त्वं न स्यात् । धर्मत्वे च सत्त्वाऽसत्त्वयोर्धर्मयोः कार्यस्य धर्मिणोऽन्वयात् कादाचित्कत्वव्याहतिरित्याद्युपपादितम् । **अधस्तात्** दृष्टनष्टस्व-

### कल्पतरुपरिमलः ।

दूषयति—**अभेदवादिन इति** ॥ १५ ॥ **ननु** कारणवत्कार्यमपि सत्यमित्येतावता सत्यद्वयं न प्रसज्यते; रज्ज्विदन्तायां भुजङ्ग इवारोपिते कार्ये कारणब्रह्मसत्ताया एव प्रतीतिः । तदनन्यत्वं च न तदभेदः, किं तु तद्व्यतिरेकेणाभाव इत्यधिकरणा-

**त्रिषु कालेषु सत्त्वं न व्यभिचरत्येवं कार्यमपि जगत्त्रिषु कालेषु सत्त्वं न व्यभिचरति । एकं च पुनः सत्त्वमतोऽप्यनन्यत्वं कारणात्कार्यस्य ॥ १६ ॥**

## भामती ।

भिन्नसत्तानन्यत्वादेते अपि मिथो न भिद्येते इति । नच—ताभ्यामनन्यत्वात्सत्वस्यैव भेद इति—युक्तम्; तथा सति हि सत्त्वस्य समारोपितत्वप्रसङ्गः । तत्र भेदाभेदयोरन्यतरसमारोपकल्पनायां किं तात्त्विकाभेदोपादाना भेदकल्पनास्तु, आहो तात्त्विकभेदोपादानाऽभेदकल्पनेति । वयं तु पश्यामो भेदग्रहस्य प्रतियोगिग्रहापेक्षत्वाद्भेदग्रहमन्तरेण च प्रतियो-

## वेदान्तकल्पतरुः ।

रूपत्वादिति भाष्यव्याख्यानावसर इत्यर्थः । कार्यस्य त्रिषु कालेषु सत्त्वे कारणस्यापि **तथात्वाद्** द्वे सत्त्वे स्यातां, तथाचाभेदासिद्धिरित्युक्ताभिप्रायानभिज्ञः शङ्कते—**सत्त्वं चेदिति ।** त्रिष्वपि कालेषु कार्यस्य सत्त्वं चेदित्यर्थः । कार्यकारणयोः स्वरूपसत्त्वं चैकमित्यर्थः । यदि कार्यकारणयोरेकसत्त्वादभेदादभिन्नत्वं, तर्हि तस्यापि द्वाभ्यामभेदाद्भेदापत्तिरित्याशङ्क्याह—**नच ताभ्यामिति ।** नहि वयं सत्त्वेन कार्यकारणयोः साक्षादभेदं ब्रूमः, किंतु तत्र तयोरारोपितत्वेन तद्व्यतिरेकेणाभावम् । यदि मन्येत सत्त्वमेव कार्यकारणयोरारोपितमस्त्विति, तत्राह—**तथा सति हीति ।** स्वकृतस्यैव प्रसञ्जनमयुक्तं दर्शयितुं तमेव पक्षविभागपूर्वकमाह—**तत्रेति । भेदः** कार्यकारणलक्षणः । **सत्त्वमभेदः** । अस्मादयं भिन्न इत्यत्र पञ्चम्युल्लिखिताव-धेर्ग्रहो धर्मिणः सकाशादगृहीतभेदस्य न संभवति । भेदग्रहश्च नागृहीते प्रतियोगित्वे उपपद्यते । धर्मिणोपि स्वापेक्षया तत्प्र-सङ्गात्ततश्चान्योन्याश्रयग्रस्तभेद एवारोपितो नाऽभेद इत्याह—**वयं त्विति । यस्तु**—यमन्योन्याश्रयस्य केनचिदुद्धारः कृतः, प्रतियोगित्वेन प्रतीतावधिकरणत्वप्रतीतिरधिकरणत्वेन प्रतीतौ प्रतियोगित्वप्रतीतिश्च भेदग्रहणकारणं न भेदेन गृहीतत्वम् । एकं हि अन्योन्याभावाख्यभेदं प्रति स्तम्भकुम्भयोरधिकरणत्वं प्रतियोगित्वं चास्ति । अतः स्वस्मादपि स्वस्य भेदग्रहवारणाय

## कल्पतरुपरिमलः ।

रम्भे वर्णितत्वादित्याशङ्क्याह—**उक्ताभिप्रायानभिज्ञ इति ।** भावे चोपलब्धेः ( ब्र. अ. २ पा. १ सू. १५ ) सत्त्वाच्चावरस्येति ( ब्र. अ. २ पा. १ सू. १६ ) सूत्रद्वयभाष्यटीकाग्रन्थच्छायया कार्यकारणयोरभेद इष्ट इति प्रति-भासेन प्रागुक्तमर्थमननुसंधानस्यैवेयं शङ्केत्यर्थः । **सत्त्वं चेदिति ।** सापेक्षं वाक्यमध्याहारेण पूरयति—**त्रिष्विति ।** यद्येवमिति टीकावाक्यमस्यैव वाक्यस्यार्थसंग्राहकमिति न पौनरुक्त्यम् । सत्त्वं चैकं कार्यकारणयोरिति षष्ठी भेदगर्भसंब-न्धार्था चेदग्रिमहेतूक्तिर्विरुध्येतेत्याशङ्क्य स्वरूपपदाध्याहारेण व्याचष्टे—**कार्येति ।** कार्यकारणयोरबाधितस्वरूपभूतं यत्सत्त्वं तदेकमित्यर्थः । **तस्यापि** तस्यैवेत्यर्थः । वैपरीत्यमेवास्त्विति खल्वियं शङ्का । अस्यां शङ्कायां तथासति हीति ग्रन्थस्य परिहारसमर्पकत्वेनान्वयाभावात्तत्संघटनार्थमभिप्रायानभिज्ञं शङ्कावादिनं प्रति स्वाभिप्रायोद्घाटनपरं वाक्यमध्याहरति—**न हीति ।** साक्षादभेदं मुख्याभेदं न ब्रूम इत्यर्थः । **तत्र तयोरारोपितत्वेनेति । ननु** कारणमिह ब्रह्म यत्सदेव सोम्येदमिति श्रुतं, यद्विज्ञानाच्च सर्वतत्त्वविज्ञानं प्रतिज्ञातं, ततश्च सद्रूपे कारणे कार्यस्यैव समारोपः, कथमिह कारणस्यापि समारोपोक्तिः ? **उच्यते;** कार्यकारणे उभे अपि सत्ये वस्तुतः परस्परं भिन्ने इत्येवंरूपेण द्वयोरपि सद्रूपे कारणे ब्रह्मण्यारोपितत्वं विवक्षितमिति न दोषः । एवमभिप्रायोद्घाटने कृते पुनस्तस्याप्युपरि वैपरीत्यशङ्कां परिहारग्रन्थनिवर्त्यत्वेन दर्शयति—**यदि मन्येतेति । ननु** सत्त्वमारोपितं चेदारोपितसत्त्वे कार्यकारणे अप्यारोपिते स्याताम्, कथं तत्सत्त्वमेवेत्यवधारणम् ? **उच्यते;** सत्त्वस्याभिन्नत्वेनारोपो विवक्षितः । एवंच द्वे सत्त्वे स्यातामिति नाभेदसिद्धिरित्येषा प्राक् कृतैव शङ्का स्थापितैव भवति । तयोः सत्वस्य वा समारोपितत्वप्रसङ्ग इति टीकाग्रन्थोऽप्युपपादितो भवति । अन्यथा सत्त्वस्य समारोपितत्वे तद्धर्मिणोः कार्यकारणयोरपि समारोपितत्वमवर्जनीयमिति वाकारेण विकल्पतः समारोपस्य प्रसञ्जनमनुपपन्नं स्यात् । **ननु** भिन्नत्वेन कार्यकारणयोः समारोपितत्वं सिद्धान्तिना स्वीकृतम् अभिन्नत्वेन सत्त्वस्य समारोपितत्वं पूर्वपक्षिणा । एवमुभाभ्यां स्वीकृतस्यान्यतरसमारोपितत्वस्य प्रसञ्जनं कस्यानिष्टमिति कियत इत्याशङ्क्य स्वीकृतार्थप्रसञ्जनं फलमाह—**अयुक्तं दर्शयितुमिति ।** उभाभ्यामङ्गीकृतयोरारोपयोर्मध्येऽयुक्तमारोपं निर्धारयितुं स्वीकृतप्रसञ्जनमित्यर्थः । अयुक्तता-मिति पाठे पूर्वपक्ष्यङ्गीकृतारोपस्यायुक्ततां दर्शयितुमित्यर्थः । **तामेवेति** द्वितीयपाठानुसारी स्त्रीलिङ्गनिर्देशः । प्रथमपाठे तु तमेवेति पुंलिङ्गनिर्देशेन भाव्यम् । **ननु** कार्यकारणयोः सत्त्वस्य वा समारोप इति प्रसक्तस्य पक्षद्वयस्य कथं भेदाभेदयो-रन्यतरसमारोपकल्पनायामित्यनुवाद इत्याशङ्क्य भेदाभेदशब्दौ लाक्षणिकाविति व्याचष्टे—**भेद इति ।** भिन्नत्वेन कार्यकार-णयोरभिन्नत्वेन सत्वस्य च समारोपौ सिद्धान्तिपूर्वपक्षिभ्यां विवक्षितौ, न स्वरूपेणेति विभावयितुमित्थं लाक्षणिकशब्दप्रयोग इति भावः । एवंच कार्यकारणभावसमारोपोक्तिः फलतो भेदसमारोपपर्यवसिता सत्त्वसमारोपोक्तिश्च अभेदसमारोपपर्यव-सितेति फलितार्थमवलम्ब्य वयं त्वित्यादिना भेदस्य समारोपितत्वं व्यवस्थापितमिति द्रष्टव्यम् । **स्वस्मादपीति ।** नच—

## वेदान्तकल्पतरुः ।

प्रतियोगित्वेनेत्यादिविशेषणम् । स्तम्भाद्भिन्नः कुम्भ इत्यत्र हि स्तम्भः प्रतियोगित्वेनैव प्रतीयते नाधिकरणत्वेन । कुम्भश्चाधिकरणत्वेन न प्रतियोगितया । कुम्भाद्भिन्नः स्तम्भ इति प्रतीत्यन्तरे तु तमेव भेदं प्रति कुम्भः प्रतियोगितया प्रतिभाति, स्तम्भश्च धर्मितया । ततश्चोक्तविधवस्तुप्रतीतिर्भेदग्रहे हेतुरिति केतरेतराश्रयम्—**इति, सोऽसाधुः**; भेदाधिकरणत्वेन भेदप्रतियोगित्वेन च प्रतीतेरपेक्षायामन्योन्याश्रयादनिस्तारात्, यस्य कस्यचिदधिकरणत्वेन प्रतियोगित्वेन च प्रतीत्यपेक्षायां सत्ताधिकरणत्वेन पुरोदेशादन्यदेशगतसंसर्गाभावं प्रति प्रतियोगित्वेन च स्फुरतः शुक्तीदमंशस्य रजताद्भेदग्रहप्रसङ्गेन भ्रमानुदयप्रसङ्गाद्वस्तुवृत्तेन भेदाधिकरणस्य तत्प्रतियोगिनश्च स्वरूपेण प्रतीत्यपेक्षाप्यत एवापास्ता; स्वरूपेण गृहीतयोः शुक्तीदमंशरजतयोर्वस्तुवृत्तेन तथाभूतयोर्भेदग्रहप्रसङ्गात् । एवं स्वरूपं भेद इति चात एवापास्तम् । असाधारणं स्वरूपं भेद इत्यपि न; असाधारणत्वस्य भेदग्रहाधीनग्रहत्वेन भेदान्तरापेक्षायां स्वरूपभेदाभ्युपगमभङ्गादिति **दिक्** । भेदेनोपजीव्यत्वाच्चाभेदो नाध्यस्त इत्याह

## कल्पतरुपरिमलः ।

स्वस्माद् भेदः स्वस्मिन्नास्तीति विषयाभावादेव तद्ग्रहणं न प्रसज्यत इति—वाच्यम्, एक एव भेदः स्तम्भकुम्भयोरन्योन्यप्रतियोगिको वर्तत इति प्रकृते पक्षे यः स्तम्भे कुम्भाद्भेदः तस्यैव कुम्भेऽपि वर्तमानतया विषयाभावस्य वक्तुमशक्यत्वादिति भावः । एवंच यद्यपि कुम्भएव कुम्भभेदप्रतीतिरुत्पन्ना प्रमा स्याद् विषयाबाधादिति वक्तुं शक्यम्; तथापि स्तम्भाद्भेदः कुम्भएव कुम्भाद्भेदः स्तम्भएव उभावपि भेदौ प्रतियोगिभेदेन भिन्नाविति पक्षे नेदं दूषणं प्रसरेदिति तत्साधारण्यार्थं दूषणान्तरमाह—**सोऽसाधुरित्यादिना** । तत्र भेदाधिकरणत्वेन भेदप्रतियोगित्वेन च प्रतीत्यपेक्षया मूलोक्तमन्योन्याश्रयं योजयित्वा तत्परिहारार्थम् अधिकरणत्वप्रतियोगित्वयोर्भेदविशेषणानिवेशने स्वयं दोषमाह—**यस्य कस्यचिदिति** । **ननु**—नेदं दोषापादनं युक्तम्; शुक्तिरजतभ्रमस्थले प्रतियोग्यधिकरणज्ञानरूपभेदग्रहकारणसत्त्वेऽपि दोषात्तद्ग्रहोपपत्तेरिति—**चेत्, न**; तथा सति भ्रमानन्तरं शुक्तित्वे विशेषदर्शनात् प्राग् दोषनिवृत्तौ तद्दर्शनमनपेक्ष्य रजतभेदग्रहापत्त्या यावद्विशेषदर्शनं भ्रमानुवृत्तेरभावप्रसङ्गात् । नच—विशेषादर्शनमेव भेदग्रहप्रतिबन्धको दोष इति न विशेषदर्शनात्प्राग् दोषनिवृत्तिसंभव इति—वाच्यम्; एवंहि विशेषदर्शनं रजतभेदग्रहे कारणमङ्गीकृतं स्यात्, तच्च न शुक्तित्वदर्शनमात्रम्; शुक्तित्वरजतत्वयोरविरोधभ्रमदशायां सत्यपि शुक्तित्वदर्शने रजतएव भेदप्रत्यक्षानुदयात्, किंतु रजतभेदव्याप्यत्वेन तद्दर्शनमिति वक्तव्यम् । ततश्च नान्योन्याश्रयानतिवृत्तिः । नच—अभेदभ्रमोत्तरभेदप्रत्यक्षे विशेषदर्शनापेक्षायामपि सर्वत्र तदनपेक्षणात्प्राथमिकं भेदप्रत्यक्षं न भेदज्ञानापेक्षमिति नान्योन्याश्रयापत्तिरिति—वाच्यम्; तत्रापि शुक्तौ रजताद्भिन्नेत्यसंकीर्णधर्मप्रतियोग्युल्लेखार्थं भेदव्याप्यत्वेन शुक्तित्वरजतत्वग्रहस्यावश्यापेक्षणीयत्वेनान्योन्याश्रयानिवारणात् । नच—वाच्यं शुक्तित्वरजतत्वयोः परस्परं संसर्गाभावव्याप्यत्वग्रहस्तदर्थमपेक्ष्यतामिति; शुक्तित्वरजतत्वयोरभेदभ्रमदशायां तयोः परस्पराभावव्याप्यत्वाग्रहणे तद्ग्रहार्थं तदुभयभेदग्रहापेक्षणाद्, धर्म्यभेदभ्रमदशायां तदुभयभेदग्रहासंभवे तद्ग्रहार्थं धर्मिभेदग्रहस्याप्यपेक्षितत्वाच्चान्योन्याश्रयानिवारणात् । **ननु**—अन्योन्याश्रयेण भेदे प्रतीतिदूषणे तत्रापि मिथ्याभूतभेदप्रतीतिर्न स्यात्; कारणाभावात्, नचेष्टापत्तिः; प्रतीतिमात्रापलापेऽनुभवविरोधात् । **उच्यते**; सत्यम् लोकमर्यादया प्राप्तं भेदग्रहघटितकारणकलापं विना भेदप्रतीतिर्न संभवतीति दूषणमुच्यते, नतु व्यावहारिकभेदप्रतीतिरपलप्यते । अस्मन्मते भेदतत्प्रतीत्योर्मायामयत्वेन लोकमर्यादया प्राप्तकारणानपेक्षणात् नह्यैन्द्रजालिकप्रदर्शितानेकप्रासादनगरादीनि तदपेक्षाणि, नवास्मन्मते रज्जुसर्पादीनि तदपेक्षाणि । स्वप्नेषु च कदाप्यदृष्टं दृश्यमानं विनैव पूर्वानुभवसंस्कारं प्रागनुभूतमिति प्रत्यभिज्ञायमानं दृश्यते । नच सत्यत्वेऽपि ईश्वरसामर्थ्यात् क्लृप्तकारणं विना कार्योत्पत्तिः शङ्कनीया; पुरुषसामर्थ्यस्य क्लृप्तकार्यकारणव्यवस्थानतिलङ्घित्वात् । नहीश्वरोऽपि गगनपर्वतादीन् वैपरीत्येन सृजति संहरति चेति सत्यत्ववादिभिरुपेयते, अस्माकं त्वध्यारोपापवादेन ब्रह्मात्मैक्यपराणां स्वार्थतात्पर्याभावान्मायिकप्रपञ्चसृष्टिर्यथा तथावास्तु । प्रतियोग्यधिकरणयोः स्वरूपेण प्रतीतिमात्रं न पर्याप्तं, किंतु परस्परव्यावृत्तधर्मावच्छेदेन प्रतीतिरपेक्षितेति शङ्कायामप्येतदेव दूषणं शुक्तीदमंशरजयतोर्भेदग्रहप्रसङ्गादिति । नहि शुक्तीदन्त्वं रजतत्वं च न परस्परव्यावृत्तं परस्परव्यावृत्तत्वेन ग्रहापेक्षायां तु प्रागुक्त एवान्योन्याश्रयः । **अतएव** शुक्तिरजतभेदग्रहेण भ्रमानुदयप्रसङ्गादेव । **नन्व**साधारणत्वं न भिन्नत्वम्; येन भेदान्तरापेक्षा स्यात्, किंतु तत्तत्प्रतियोगिकत्वम् । तथाच भ्रमस्थले घटादिप्रतियोगिकत्वभानेऽपि दोषाद् रजतप्रतियोगिकत्वाभावान्न तद्भेदग्रहरूपता धर्मिज्ञानस्य प्रसज्यत इत्याशङ्क्याह—**इति दिगिति** । शुक्तित्वाग्रहेऽपि दोषनिवृत्तौ रजतभेदग्रहापत्त्या भ्रमानुवृत्तिर्न स्यादित्यादिदूषणजातमत्रापि भवेदिति भावः । **भेदेनोपजीव्यत्वादिति** । **ननु** स्तम्भकुम्भोभयवृत्तिभेदो वस्तुत एकमेकं स्तम्भं कुम्भं चाश्रयतु नाम, न तावता स्तम्भकुम्भयोः प्रत्येकं सदैक्यं भेदस्योपजीव्यम्; तदुभयगतपृथिवीत्वादिवद् भेदाश्रयतायामप्रयोजकत्वात् । अस्तु वा यथाकथंचित्स्तम्भकुम्भादिष्वैक्यस्य भेदाश्रयतायामुपजीव्यता, किमायातं प्रकृते ? नहि तावता

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु क्वचिदसत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुतिः—'असदेवेदमग्र आसीत्' ( छा० ३।१९।१ ) इति, 'असद्वा इदमग्र आसीत्' ( तै० २।७।१) इति च । तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वमिति चेत्, नेति ब्रूमः; नह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः, किं तर्हि ? व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरं तेन धर्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्यस्य कारणरूपेणानन्यस्य । कथमेतदवगम्यते ? वाक्यशेषात् । यदुपक्रमे संदिग्धार्थं वाक्यं तच्छेषान्निश्चीयते । इह च तावत् 'असदेवेदमग्र आसीत्' इत्यसच्छब्देनोपक्रमे निर्दिष्टं यत्तदेव पुनस्तच्छब्देन परामृश्य सदिति विशिनष्टि 'तत्सदासीत्' इति; असतश्च पूर्वापरकालासंबन्धादासीच्छब्दानुपपत्तेश्च । 'असद्वा इदमग्र आसीत्' इत्यत्रापि 'तदात्मानं स्वयमकुरुत' इति वाक्यशेषे विशेषणान्नात्यन्तासत्त्वम् । तस्माद्धर्मान्तरेणैवायमसद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य । नामरूपव्याकृतं हि वस्तुसच्छब्दार्हं लोके प्रसिद्धम् । अतः प्राङ्नामरूपव्याकरणादसदिवासीदित्युपचर्यते ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वमनन्यत्वं च कारणादवगम्यते, शब्दान्तराच्च । युक्तिस्तावद्वर्ण्यते—दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते । नहि दध्यर्थिभिर्मृत्तिकोपादीयते, न घटार्थिभिः क्षीरं, तदसत्कार्यवादे नोपपद्येत । अविशिष्टे हि प्रागुत्पत्तेः सर्वस्य सर्वत्रासत्त्वे कस्मात्क्षीरादेव दध्युत्पद्यते ? न मृत्तिकायाः ? मृत्तिकाया एव च घट उत्पद्यते न क्षीरात् । अथाविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयो न मृत्तिकायां, मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीर इत्युच्येत, तर्ह्यतिशयवत्त्वात्प्रागवस्थाया असत्कार्यवादहानिः सत्कार्यवादसिद्धिश्च । शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्याऽसती वा कार्यं नियच्छेत्; असत्त्वाविशेषादन्यत्वाविशे-

---

### भामती ।

गिग्रहासंभवादन्योन्यसंश्रयापत्तेः, अभेदग्रहस्य च निरपेक्षतया तदनुपपत्तेरेकैकाश्रयत्वाच्च भेदस्यैकाभावे तदनुपपत्तेरभेदग्रहोपादानैव भेदकल्पनेति सर्वमवदातम् ॥१६॥ व्याकृतत्वाव्याकृतत्वे च धर्मावनिर्वचनीयौ । सूत्रमेतन्निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥१७॥ **अतिशयवत्त्वात्प्रागवस्थाया इति** । अतिशयो हि धर्मो नासत्यतिशयवति कार्ये भवितुमर्हतीति । **ननु** न कार्यस्यातिशयो नियमहेतुरपितु कारणस्य शक्तिभेदः, स चासत्यपि कार्ये कारणस्य

### वेदान्तकल्पतरुः ।

**—एकैकेति** वीप्सया भ्रान्तभेदानुवादः । अत एवैकाभाव इत्युक्तम् ॥ १६ ॥ व्याकृतनामरूपत्वादिति भाष्ये व्यक्ताव्यक्तस्वीकृतेः सांख्यवादापात इत्याशङ्क्याह**—व्याकृतत्वेति** ॥ १७ ॥ नान्याऽसतीति भाष्ये असतीति च्छेदः । कार्यरूपेण च

### कल्पतरुपरिमलः ।

कतरः समारोप्य इति विचार्ययोः सद्रूपाभेदकार्यकारणभेदयोरुपजीव्योपजीवकभावः समर्थितो भवति । **उच्यते**; कार्यकारणयोर्भेदमात्रमिह न निराकार्यम्; व्यावहारिकभेदस्य सिद्धान्तिनाप्यङ्गीकृतत्वात्, किंतु सत्यभेदो निराकार्यः । भेदसत्यत्वं च धर्मिसत्यत्वसापेक्षम् । अतः कार्यकारणयोः सद्रूपाभेदप्रतीतिमपेक्ष्य तयोः सत्यभेदप्रतीतिः संपादनीयेति तदभिप्रायेयमुपजीव्यत्वोक्तिः । **भ्रान्तभेदानुवाद इति** । तदनुवादस्य चेदं फलं—यत्सद्रूपानुगतप्रत्ययात्सद्रूपेण कार्यं कारणाभिन्नमिति खल्वभेदप्रतिपादनं कार्यम्; तत्रासंकीर्णधर्मिप्रतियोग्युल्लेखार्थं भेदप्रतीतिरपेक्षणीया, अतो भेदस्याप्यभेदोपजीव्यता तुल्येति शङ्काया निवर्तनम् । तन्निवर्तनं चैवं विवक्षितम् । अस्मादिदमभिन्नमित्यनेनेदमसदृशमित्यत्र सादृश्यस्येव भ्रान्तिप्रसक्ततयानुप्रविष्टस्य भेदस्य यौ धर्मिप्रतियोगिनौ तयोरुल्लेखोऽयं न त्वभेदस्य; असादृश्यवदभेदस्य निष्प्रतियोगिकत्वात् । ततश्च नोपजीव्यतया प्राबल्यं प्रतिषेध्यत्वात् । अन्यथा नेदं रजतमिति प्रतीतौ प्रसक्तितया रजतप्रतीतिरपेक्षणीयेति तस्याः प्राबल्यं भवेदिति ॥ १६ ॥ नान्याऽसतीति भाष्ये असतीति पदच्छेदमभिप्रेत्य नकारानुषङ्गेण नाप्यसतीति यद्वाक्यान्तरं दर्शितं तत्र कार्यरूपेणेत्यधिकाध्याहारस्य फलमाह**—कार्येति** । कार्यरूपेण शक्तेः सत्त्वमिहापाद्यते प्रसाद्यते तथा सत्येव हि कार्यस्य प्रागुत्पत्तेरसत्त्वप्रतिक्षेपः सिसाधयिषितः सिध्यति न स्वरूपतस्तत्सत्त्वप्रसाधनमात्रेण अतस्तत्सिद्ध्यर्थमध्याहार इत्याशयः ॥१७॥

पाच। तस्मात्कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यम्। अपिच कार्यकारणयोर्द्रव्यगुणादीनां चाश्वमहिषवद्भेदबुद्ध्यभावात्तादात्म्यमभ्युपगन्तव्यम्। समवायकल्पनायामपि समवायस्य समवायिभिः संबन्धेऽभ्युपगम्यमाने तस्य तस्यान्योन्यः संबन्धः कल्पयितव्य इत्यनवस्थाप्रसङ्गः। अनभ्युपगम्यमाने च विच्छेदप्रसङ्गः। अथ समवायः स्वयं संबन्धरूपत्वादनपेक्ष्यैवापरं संबन्धं संबध्यते, संयोगोऽपि तर्हि स्वयं संबन्धरूपत्वादनपेक्ष्यैव समवायं संबध्येत। तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पनानर्थक्यम्। कथं च कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं वर्तेत? किं समस्तेष्ववयवेषु वर्ततोत प्रत्यवयवम्। यदि तावत्समस्तेषु वर्तेत, ततोऽवयव्यनुपलब्धिः प्रसज्येत; समस्तावयवसंनिकर्षस्याशक्यत्वात्। नहि बहुत्वं समस्तेष्वाश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते। अथावयवशः समस्तेषु वर्तेत तदाप्यारम्भकावयवव्यतिरेकेणावयविनोऽवयवाः कल्प्येरन्, यैरारम्भकेष्ववयवेष्ववयवशोऽवयवी वर्तेत, कोशावयवव्यतिरिक्तैर्ह्यवयवैरसिः कोशं व्याप्नोति। अनवस्था चैवं प्रसज्येत; तेषु तेष्ववयवेषु वर्तयितुमन्येषामन्येषामवयवानां कल्पनीयत्वात्। अथ प्रत्यवयवं वर्तेत, तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात्। नहि देवदत्तः स्रुघ्ने संनिधीयमानस्तदहरेव पाटलिपुत्रेऽपि संनिधीयते। युगपदनेकत्र वृत्तावनेकत्वप्रसङ्गः स्यात् देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलि-

## भामती।

सत्त्वात्सन्नेवेत्यत आह—**शक्तिश्चेति**। नान्या कार्यकारणाभ्यां, नाप्यसती कार्यात्मनेति योजना। **अपिच कार्यकारणयोरिति**। यद्यपि 'भावाच्चोपलब्धेः' इत्यत्रायमर्थ उक्तः; तथापि समवायदूषणाय पुनरवतारितः। **अनभ्युपगम्यमाने च** समवायस्य समवायिभ्यां संबन्धे विच्छेदप्रसङ्गोऽवयवावयविद्रव्यगुणादीनां मिथः। नह्यसंबद्धः समवायिभ्यां समवायः समवायिनौ संबन्धयेदिति। शङ्कते—**अथ समवायः स्वयमिति**। यथाहि सत्त्वयोगाद्द्रव्यगुणकर्माणि सन्ति, सत्त्वं तु स्वभावत एव सदिति न सत्त्वान्तरयोगमपेक्षते, तथा समवायः समवायिभ्यां संबद्धुं न संबन्धान्तरयोगमपेक्षते, स्वयं संबन्धरूपत्वादिति। तदेतत्सिद्धान्तान्तरविरोधापादनेन निराकरोति—**संयोगोऽपि तर्हीति**। नच—संयोगस्य कार्यत्वात् कार्यस्य च समवायिकारणाधीनजन्मत्वात् असमवाये च तदनुपपत्तेः समवायकल्पना संयोगे इति—वाच्यम्; अजसंयोगे तदभावप्रसङ्गात्। **अपिच** संबन्ध्यधीननिरूपणः समवायो यथा संबन्धिद्वयभेदे न भिद्यते, तन्नाशे च न नश्यत्यपि तु नित्य एक एव, संयोगोऽपि भवेत्। ततः को दोषः? अथैतत्प्रसङ्गभिया संयोगवत्समवायोऽपि प्रतिसंबन्धिमिथुनं भिद्यते चानित्यश्चेत्यभ्युपेयते, तथासति यथैकस्मान्निमित्तकारणादेव जायत एवं संयोगोपि निमित्तकारणादेव जनिष्यत इति समानम्। **तादात्म्यप्रतीतेश्चेति**। संबन्धावगमो हि संबन्धकल्पनाबीजम्, न तादात्म्यावगमः, तस्य नानात्वैकाश्रयसंबन्धविरोधादिति। वृत्तिविकल्पेनावयवातिरिक्तमवयविनं दूषयति—**कथंच कार्यमिति**। **समस्तेति**। मध्यपरभागयोरर्वाग्भागव्यवहितत्वात्। अथ समस्तावयवव्यासङ्ग्यपि कतिपयावयवस्थानो ग्रहीष्यत इत्यत आह—**नहि बहुत्वमिति**। **अथावयवश इति**। बहुत्वसंख्या हि स्वरूपेणैव व्यासज्य संख्येयेषु वर्तते इत्येकतमसंख्येयाग्रहणेऽपि न गृह्यते, समस्तव्यासङ्गित्वात्तद्रूपस्य। अवयवी तु न स्वरूपेणावयवान्व्याप्नोति, अपि त्ववयवशः। तेन यथा सूत्रमवयवैः कुसुमानि व्याप्नुवन्न समस्तकुसुमग्रहणमपेक्षते, कतिपयकुसुमस्थानस्यापि तस्योपलब्धेः, एवमवयव्यपीति भावः। निराकरोति—**तदापीति**। शङ्कते—

## वेदान्तकल्पतरुः।

सत्त्वं शक्तेरापाद्यते, तथा सति हि कार्यस्यासत्त्वप्रतिक्षेपः सिध्यतीति मन्वान आह—**नाप्यसतीति**। भावाच्चेति द्वितीयपाठव्याख्यायां कारणातिरेकेण कार्यानुपलम्भस्योक्तत्वात्पुनरुक्तिमाशङ्क्याह—**यद्यपीति**। स्वपरनिर्वाहकत्वात्समवायः संबन्धान्तरानपेक्षश्चेत्संयोगोऽपि नापेक्षेतेति प्रतिबन्दी, सा संयोगस्य कार्यत्वरूपविशेषादयुक्तेत्याशङ्क्य नित्ये आत्माकाशसंयोगे तस्यासिद्धिमाह—**अजेति**। अजसंयोगमनिच्छन्तं प्रति सर्वत्रासिद्धिमाह—**अपिचेति**। अस्तु संयोगनित्यत्वाभावाय समवायोऽप्यनित्यः, तथापि नानवस्था; समवायस्य समवायिकारणानभ्युपगमेन निमित्तकारणमात्रात्तदुत्पत्तेः समवायान्तराप्रसङ्गादित्याशङ्क्याह—**तथासतीति**। ततः संयोगस्य समवायिकारणमिच्छता समवायस्यापि तदेष्टव्यमित्यनवस्था

## कल्पतरुपरिमलः।

**पुनरुक्तिमाशङ्क्येति**। यद्यपि समवायदूषणार्थत्वेऽपि समवायाभ्युपगमाच्च साम्यादनवस्थिते (ब्र. अ. २ पा. २ सू. १३) रिति द्वितीयपादगतेन [illegible] पुनरुक्तिर्भवेत्; तथापि तस्यैव संग्रह्य स्मरणार्थत्वेन तदपुनरुक्तिर्द्रष्टव्या।

पुत्रनिवासिनोः। गोत्वादिवत्प्रत्येकं परिसमाप्तेर्न दोष इति चेत्, न; तथा प्रतीत्यभावात्। यदि गोत्वादिवत्प्रत्येकं परिसमाप्तोऽवयवी स्यात्, यथा गोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यत एवमवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत। नचैवं नियतं गृह्यते। प्रत्येकपरिसमाप्तौ चावयविनः कार्येणाधिकारात्तस्य चैकत्वाच्छृङ्गेणापि स्तनकार्यं कुर्यादुरसा च पृष्ठकार्यम्। नचैवं दृश्यते। प्रागुत्पत्तेश्च कार्यस्यासत्त्व उत्पत्तिरकर्तृका निरात्मिका च स्यात्। उत्पत्तिश्च नाम क्रिया, सा सकर्तृकैव भवितुमर्हति गत्यादिवत्। क्रिया च नाम स्यादकर्तृका चेति विप्रतिषिध्येत। घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका, किं तर्हि? अन्यकर्तृकेति कल्प्या स्यात्। तथा कपालादीनामप्युत्पत्तिरुच्यमानाऽन्यकर्तृकैव कल्प्येत। तथाच सति घट उत्पद्यत इत्युक्ते कुलालादीनि कारणान्युत्पद्यन्त इत्युक्तं स्यात्। नच लोके घटोत्पत्तिरित्युक्ते कुलालादीनामप्युत्पद्यमानता प्रतीयते। उत्पन्नताप्रतीतेश्च। अथ स्वकारणसत्तासंबन्ध एवोत्पत्तिरात्मलाभश्च कार्यस्येति चेत्, कथमलब्धात्मकं संबध्येतेति वक्तव्यम्? सतोर्हि द्वयोः संबन्धः संभवति, न सदसतोरसतोर्वा; अभावस्य च निरुपाख्यत्वात्प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नम्। सतां हि लोके क्षेत्रगृहादीनां मर्यादा दृष्टा नाभावस्य। नहि वन्ध्यापुत्रो राजा बभूव प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते। यदि च वन्ध्यापुत्रोऽपि कारकव्यापारादूर्ध्वमभविष्यत्तत इदमप्युपापत्स्यत कार्याभावोऽपि कारकव्यापारादूर्ध्वं भविष्यतीति। वयं तु पश्यामो वन्ध्यापुत्रस्य कार्याभावस्य चाभावत्वाविशेषाद्यथा वन्ध्यापुत्रः कारकव्यापारादूर्ध्वं न भविष्यत्येवं कार्याभावोऽपि कारकव्यापा-

## भामती।

**गोत्वादिवदिति**। निराकरोति—**नेति**। यद्यपि गोत्वस्य सामान्यस्य विशेषा अनिर्वाच्या न परमार्थसन्तस्तथाच क्वास्य प्रत्येकपरिसमाप्तिरिति; तथाप्यभ्युपेत्येदमुदितमिति मन्तव्यम्। अकर्तृका यतोऽतो निरात्मिका स्यात्। कारणाभावे हि कार्यमनुत्पन्नं किंनाम भवेत्? अतो निरात्मकत्वमित्यर्थः। यद्युच्येत घटशब्दस्तदवयवेषु व्यापाराविष्टतया पूर्वापरीभावमापन्नेषु घटोपजनाभिमुखेषु तादर्थ्यनिमित्तादुपचारात्प्रयुज्यते, तेषां च सिद्धत्वेन कर्तृत्वमस्तीत्युपपद्यते घटो भवतीति प्रयोग इत्यत आह—**घटस्य चोत्पत्तिरुच्यमानेति**। उत्पादना हि सिद्धानां कपालकुलालानां व्यापारो नोत्पत्तिः। नचोत्पादनैवोत्पत्तिः; प्रयोज्यप्रयोजकव्यापारयोर्भेदात्, अभेदे वा घटमुत्पादयतीतिवद्घटमुत्पद्यत इत्यपि प्रसङ्गात्। तस्मात् करोतिकारयत्योरिव घटगो चरयोर्भृत्यस्वामिसमवेतयोरुत्पत्त्युत्पादनयोरधिष्ठानभेदोऽभ्युपेतव्यः, तत्र कपालकुलालादीनां सिद्धानामुत्पादनाधिष्ठानानां नोत्पत्त्यधिष्ठानत्वमस्तीति पारिशेष्याद्घट एव साध्य उत्पत्तेरधिष्ठानमेषितव्यः। नचासावसन्नधिष्ठानं भवितुमर्हतीति सत्त्वमस्याभ्युपेयम्। एवंच घटो भवतीति घटव्यापारस्य धातूपात्तत्वात्तत्रास्य कर्तृत्वमुपपद्यते, तण्डुलानामिव सतां विक्लित्तौ विक्लिद्यन्ति तण्डुला इति। शङ्कते—**अथ स्वकारणसत्तासंबन्ध एवोत्पत्तिरिति**। **एतदुक्तं भवति**—नोत्पत्तिर्नाम कश्चिद्व्यापारः, येनासिद्धस्य कथमत्र कर्तृत्वमित्यनुयुज्येत? किंतु स्वकारणसमवायः स्वसत्तासमवायो वा, स चासतोऽप्यविरुद्ध इति। सोऽप्यसतोऽनुपपन्न इत्याह—**कथमलब्धात्मकमिति**। अपिच प्रागुत्पत्तेरसत्त्वं कार्यस्येति कार्याभावस्य भावेन मर्यादाकरणमनुपपन्नमित्याह—**अभावस्यचेति**। **स्यादेतत्**—अत्यन्ताभावस्य वन्ध्यासुतस्य मा भून्मर्यादा, अनुपाख्यो हि सः, घटप्रागभावस्य तु भविष्यता घटेनोपाख्येयस्यास्ति मर्यादेत्यत आह—**यदि वन्ध्यापुत्रः कारकव्यापारादिति**। उक्तमे-

## वेदान्तकल्पतरुः।

तदवस्थैवेत्यर्थः। नानात्वेन सहैक आश्रयो यस्य स संबन्धस्तथोक्तः। उत्पत्तिकर्तुः कार्यस्य प्रागुत्पत्तेर्नासत्त्वमित्युक्ते तत्रोत्पत्तेर्न कार्यं कर्तृ, किंतु कारणमिति शङ्कते—**यद्युच्येतेति**। यद्यप्युत्पद्यते घट इति कार्यस्य कर्तृत्वं भाति; तथापि गौण्या वृत्त्या कारणस्य। तत्र च सिद्धेषु कपालेषु जायत इति पूर्वापरकालव्यासक्तप्रयोगानुपपत्तिः कार्योत्पादनाया व्यासक्तत्वादित्यर्थः। कपालकर्तृका घटविषयोत्पादना नोत्पत्तिः, सा तु घटकर्तृकेति परिहरति—**उत्पादना हीत्यादिना**। यद्युत्पत्तिरुत्पादनैव, तर्हि उत्पादनायामिवोत्पत्तावपि सकर्मकत्वाद् घटस्य कर्मत्वं व्यपदिश्येत, न चैवमस्तीत्यर्थः। भृत्यो हि घटं करोति स्वामी कारयति तत्र यथा करोतिकारयत्योराश्रयभेद एवमत्रापीत्यर्थः धातूपात्तव्यापारः कर्तेति कर्तृलक्षणयोगाच्च घट एवोत्पत्तिकर्तेत्याह—**एवंचेति**। स्वकारणे कार्यस्य समवायो जन्म स्वस्मिन्नसति कार्ये सत्तासमवायो वेत्यर्थः। **भिन्नमेवेति**।

## कल्पतरुपरिमलः।

**व्यासक्तत्वादिति**। व्यापाराविष्टतया पूर्वापरीभूतत्वादित्यर्थः। **इतरथा हीति**। सांख्यानामस्माकं च सत्कार्यवादोप-

रादूर्ध्वं न भविष्यतीति । नन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत, यथैव हि प्राक्सिद्धत्वात्कारणस्वरूपसिद्धये न कश्चिद्व्याप्रियते, एवं प्राक्सिद्धत्वात्तदनन्यत्वाच्च कार्यस्य स्वरूपसिद्धयेऽपि न कश्चिद्व्याप्रियेत, व्याप्रियते च । अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्यस्येति । नैष दोषः; यतः कार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यार्थवत्त्वमुपपद्यते । कार्याकारोऽपि कारणस्यात्मभूत एवानात्मभूतस्यानारभ्यत्वादित्यभाणि । नच विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति । नहि देवदत्तः संकोचितहस्तपादः प्रसारितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति; स एवेति प्रत्यभिज्ञानात्, तथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति; मम पिता मम भ्राता मम पुत्र इति प्रत्यभिज्ञानात् । जन्मोच्छेदानन्तरितत्वात्तत्र युक्तं नान्यत्रेति चेत्, न, क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात् । अदृश्यमानानामपि घटधानादीनां समानजातीयावयवान्तरोपचितानामाकारादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा । तेषामेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा । तत्रेदृग्जन्मोच्छेदान्तरितत्वाच्चेदसतः सत्त्वापत्तिः सतश्चासत्त्वापत्तिः, तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः । तथाच बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः, पित्रादिव्यवहारलोपप्रसङ्गश्च । एतेन क्षणभङ्गवादः प्रतिवेदितव्यः । यस्य पुनः प्रागुत्पत्तेरसत्कार्यं तस्य निर्विषयः कारकव्यापारः स्यात्; अभावस्य विषयत्वानुपपत्तेराकाशहननप्रयोजनखड्गाद्यनेकायुधप्रयुक्तिवत् । समवायिकारणविषयः कारकव्यापारः स्यादिति चेत्, न; अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् । समवायिकारणस्यैवात्मातिशयः कार्यमिति चेत्, न; सत्कार्यतापत्तेः । तस्मात्क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्यां लभन्त इति न कारणादन्यत्कार्यं वर्षशतेनापि शक्यं निश्चेतुम् । तथा मूलकारणमेवान्त्यात्कार्यात्तेन तेन कार्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते । एवं युक्तेः कार्यस्य प्रागुत्पत्तेः सत्त्वमनन्यत्वं च कारणादवगम्यते । शब्दान्तराच्चैतदवगम्यते । पूर्वसूत्रेऽसद्व्यपदेशिनः शब्दस्योदाहृतत्वात्ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरम्—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादि । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति चासत्पक्षमुपक्षिप्य 'कथमसतः सज्जायेत' इत्याक्षिप्य 'सदेव सोम्येदमग्र आसीत्' ( छा० ६।२।१ ) इत्यवधारयति । तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात्सत्त्वानन्यत्वे प्रसिध्यतः । यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्पश्चाच्चोत्पद्यमानं कारणे समवेयात्तदान्यत्कारणात्स्यात्, तत्र 'येनाश्रुतं श्रुतं भवति' ( छा० ६।१।३ ) इतीयं प्रतिज्ञा पीड्येत । सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते ॥ १८ ॥

---

## भामती ।

तदधस्ताद्यथा न जातु घटः पटो भवत्येवमसदपि सन्न भवतीति । तस्मान्मृत्पिण्डे घटस्यासत्त्वेऽत्यन्तासत्त्वमेवेति । अत्रासत्कार्यवादी चोदयति—**नन्वेवं सतीति** । प्राक् प्रसिद्धमपि कार्यं कदाचित्कारणेन योजयितुं व्यापारोऽर्थवान्भवेदित्यत आह—**तदनन्यत्वाच्चेति** । परिहरति—**नैष दोष इति** । उक्तमेतद्यथा भुजङ्गतत्त्वं न रज्जोर्भिद्यते, रज्जुरेव हि तत्, काल्पनिकस्तु भेदः, एवं वस्तुतः कार्यतत्त्वं न कारणाद्भिद्यते कारणस्वरूपमेव हि तत्, अनिर्वाच्यं तु कार्यरूपं भिन्नमिवाभिन्नमिव चावभासत इति । तदिदमुक्तम्—**वस्त्वन्यत्वमिति** । वस्तुतः परमार्थतोऽन्यत्वं न विशेषदर्शनमात्राद्भवति । सांव्यावहारिके तु कथंचित्तत्त्वान्यत्वे भवत एवेत्यर्थः । अनयैव हि दिशैष संदर्भो योज्यः । असत्कार्यवादिनं प्रति दूषणान्तरमाह—**यस्य पुनरिति** । कार्यस्य कारणादभेदे सविषयत्वं कारकव्यापारस्य स्यान्नान्यथेत्यर्थः । **मूलकारणं** ब्रह्म । शब्दान्तराच्चेति सूत्रावयवमवतार्य व्याचष्टे—**एवं युक्तेः कार्यस्येति** ।

## वेदान्तकल्पतरुः ।

सामानाधिकरण्येन हि भिन्नमिवाभिन्नमिव चकास्तीति । **अनयैवेति** । इतरथा हि सांख्यवादः स्यादिति । भाष्यगतमूलकारणशब्देन ब्रह्मणोऽन्यः कश्चिन्मायाप्रतिबिम्बितो नाभिधीयते । तथा सति तस्य परिच्छिन्नत्वादधिकरणोपक्रमोक्तस्य कारणविज्ञानात्सर्वविज्ञानस्यासंभवप्रसङ्गात्किंतु सर्वाधिष्ठानमित्याह—**मूलकारणमिति** ॥ १८ ॥ **स्वशक्त्या नटवद् ब्रह्म**

**पटवच्च ॥ १९ ॥**

यथाच संवेष्टितः पटो न व्यक्तं गृह्यते किमयं पटः किं वान्यद्द्रव्यमिति । स एव प्रसारितो यत्संवेष्टितं द्रव्यं तत्पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते । यथाच संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते, स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते न संवेष्टितरूपादन्योऽयं भिन्नः पट इति । एवं तन्त्वादिकारणावस्थं पटादि कार्यमस्पष्टं सत् तुरीवेमकुविन्दादिकारकव्यापारादिभिर्व्यक्तं स्पष्टं गृह्यते । अतः संवेष्टितप्रसारितपटन्यायेनैवानन्यत्कारणात्कार्यमित्यर्थः ॥ १९ ॥

**यथा च प्राणादि ॥ २० ॥**

यथा च लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्रेण रूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते, नाकुञ्चनप्रसारणादिकं कार्यान्तरम् । तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चनप्रसारणादिकमपि कार्यान्तरं निर्वर्त्यते । नच प्राणभेदानां प्रभेदवतः प्राणादन्यत्वम्; समीरणस्वभावाविशेषात् । एवं कार्यस्य कारणादनन्यत्वम् । अतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात्तदनन्यत्वाच्च सिद्धैषा श्रौती प्रतिज्ञा 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' ( छा० ६।१।१ ) इति ॥ २० ॥ इति षष्ठमारम्भणाधिकरणम् ॥

( ७ अधिकरणम् ) **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते । चेतनाद्धि जगत्प्रक्रियायामाश्रीयमाणायां हिताकरणादयोदोषाः प्रसज्यन्ते । कुतः ? इतरव्यपदेशात् । इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति

---

### भामती ।

अतिरोहितार्थम् ॥ १८ ॥ **पटवच्च । यथाच प्राणादि ।** इति च सूत्रे निगदव्याख्यातेन भाष्येण व्याख्याते ॥ १९ ॥ २० ॥ इति षष्ठमारम्भणाधिकरणम् ॥

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

यद्यपि शारीरात्परमात्मनो भेदमाहुः श्रुतयः; तथाप्यभेदमपि दर्शयन्ति श्रुतयो बह्वयः । नच भेदाभेदावेकत्र

### वेदान्तकल्पतरुः ।

**कारणं शङ्करोऽब्रवीत् । जीवभ्रान्तिनिमित्तं तद् बभाषे भामतीपतिः ॥ अज्ञातं नटवद् ब्रह्म कारणं शंकरोऽब्रवीत् । जीवाज्ञातं जगद्बीजं जगौ वाचस्पतिस्तथा** ॥१९॥ कार्यमुपादानाद् भिन्नं, तदुपलब्धावपि अनुपलब्धत्वात्, ततोऽधिकपरिमाणत्वाच्च संमतवदित्यनुमानयोर्व्यभिचारार्थं—**पटवच्चेति** सूत्रम् । तस्यामेव प्रतिज्ञायां भिन्नकार्यकरत्वस्य व्यभिचारार्थं—**यथा च प्राणादि** इति ॥ २० ॥ **इति षष्ठमारम्भणाधिकरणम्** ॥[1]

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

जीवाभिन्नं ब्रह्म जगदुपादानं वदन्समन्वयो यदि तादृग् ब्रह्म जगज्जनयेत्, तर्हि स्वानिष्टं न सृजेदिति न्यायेन विरुध्यते न वेति संदेहे पूर्वत्र कार्यकारणानन्यत्ववद् घटाकाशकल्पजीवानामपि महाकाशोपमब्रह्मात्मैक्यमुक्तं, तस्य हिताकरणाद्यनुपपत्तिभिराक्षेपात्सङ्गतिः । **ननु** "सोऽन्वेष्टव्य" इत्यादिभेदनिर्देशात् कथं पूर्वपक्षस्तत्राह—**यद्यपीति** । यदि भेदाभेदावेकत्र विरुद्धौ, तर्ह्यभेद एव भेदेन बाध्यतामत आह—**नच भेद इति** । **इत्युक्तम्** । अनन्तराधिकरण

### कल्पतरुपरिमलः ।

पादनच्छायासाम्येऽपि कार्यं कारणसत्तयैव सद्रूपं स्वतस्त्वनिर्वचनीयमिति भाष्यसंदर्भतात्पर्याकथने सांख्यवाद एवाङ्गीकृतः प्रसज्येतेत्यर्थः । **नटवदिति** । भाष्योदाहृतदृष्टान्तानुसारि वाचसतिमतमित्याह—**अज्ञातं नटवदिति** । नटो हि द्रष्टृभिरविज्ञातनिजरूप एव तत्तदभिनेयासत्यरूपतां प्रतिपद्यते । एवं जीवैरविज्ञातं ब्रह्मासत्यवियदादिप्रपञ्चाकारतां प्रतिपद्यत-इति दृष्टान्तोक्त्या वाचसतिमतं भाष्याभिमतं निश्चीयतइत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ **इतिषष्ठमारम्भणाधिकरणम्** ॥

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

**ब्रह्मात्मैक्यमुक्तमिति** । विषयवाक्यश्रुतसर्वविज्ञानप्रतिज्ञानिर्वाहार्थं ब्रह्मात्मैक्यमप्यत्र विवक्षितम् । अतएव सूत्रे

---

१ तत्र सूत्राणि ७—तदनन्यत्वमारम्भणशब्दादिभ्यः १४ भावे चोपलब्धेः १५ सत्त्वाच्चावरस्य १६ असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् १७ युक्तेः शब्दान्तराच्च १८ पटवच्च १९ यथा च प्राणादि २० ॥

श्रुतिः—'स आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६।८।७ ) इति प्रतिबोधनात् । यद्वा—इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै० २।६ ) इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वप्रदर्शनात् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६।३।२ ) इति च परा देवता जीवमात्मशब्देन व्यपदिशन्ती न ब्रह्मणो भिन्नः शारीर इति दर्शयति । तस्माद्यद्ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैवेति । अतः स स्वतन्त्रः कर्ता सन् हितमेवात्मनः सौमनस्यकरं कुर्यान्नाहितं जन्ममरणजरारोगाद्यनेकानर्थजालम् । नहि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति । नच स्वयमत्यन्तनिर्मलः सन्नत्यन्तमलिनं देहमात्मत्वेनोपेयात् । कृतमपि कथंचिद्यद्दुःखकरं तदिच्छया जह्यात् । सुखकरं चोपाददीत । स्मरेच्च मयेदं जगद्बिम्बं विचित्रं विरचितमिति । सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति । यथाच मायावी स्वयं प्रसारितां मायामिच्छयानायासेनैवोपसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत् । स्वमपि तावच्छरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुम् । एवं हितक्रियाद्यदर्शनादन्याय्या चेतनाज्जगत्प्रक्रियेति गम्यते ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षं व्यावर्तयति । यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत्, तद्वयं जगतः स्रष्टृ ब्रूमः । न तस्मिन्हिताकरणादयो दोषाः प्रसज्यन्ते । नहि तस्य हितं किंचित्कर्तव्यमस्त्यहितं वा परिहर्तव्यम्; नित्यमुक्तस्वभावत्वात् । नच तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति; सर्वज्ञत्वात्सर्वशक्तित्वाच्च । शारीरस्त्वनेवंविधः । तस्मिन्प्रसज्यन्ते हिताकरणादयो दोषाः, नतु तं वयं जगतः स्रष्टारं ब्रूमः । कुत एतत्? भेदनिर्देशात् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० २।४।५ ), 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ), 'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ), 'शारीर आत्मा प्राज्ञेनात्मनान्वारूढः' (बृ० ४।३।३५ ) इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति । नन्वभेदनिर्देशोऽपि दर्शितः 'तत्त्वमसि' इत्येवंजातीयकः । कथंभेदाभेदौ विरुद्धौ संभवेयाताम्? नैष दोषः; आकाशघटाकाशन्यायेनोभयसंभवस्य तत्र तत्र प्रतिष्ठापितत्वात् । अपिच यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम्; समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् । तत्र कुत एव सृष्टिः? कुतो वा हिताकरणादयो दोषाः? अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रान्तिर्हिताकरणादिलक्षणः संसारो नतु परमार्थतोऽस्तीत्यसकृदवोचाम । जन्ममरणच्छेदनभेदनाद्यभिमानवत् । अबाधिते तु भेदव्यवहारे 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्येवंजातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि ॥ २२ ॥

---

### भामती ।

समवेतौ; विरोधात्, नच भेदस्तात्त्विक इत्युक्तम् । तस्मात् परमात्मनः सर्वज्ञान्न शारीरस्तत्त्वतो भिद्यते । सएव त्वविद्योपधानभेदाद्घटकरकाद्याकाशवद्भेदेन प्रथते । उपहितं चास्य रूपं शारीरः, तेन मा नाम जीवाः परमात्मतामात्मनोऽनुभूवन्, परमात्मा तु तानात्मनोऽभिन्नाननुभवति । अननुभवे सार्वज्ञ्यव्याघातः । तथाचायं जीवान् बध्नन्नात्मानमेव बध्नीयात् । तत्रेदमुक्तम्—नहि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति इत्यादि, तस्मान्न चेतनकारणं जगदिति पूर्वः पक्षः ॥२१॥ सत्यमयं परमात्मा सर्वज्ञत्वाद्यथा जीवान् वस्तुत आत्मनोऽभिन्नान् पश्यति, पश्यत्येवं न भावत एषां सुखदुःखादिवेदनासङ्गोऽस्त्यविद्यावशात्त्वेषां तद्वदभिमान इति, तथाच तेषां सुखदुःखादिवेदनायामप्यहमुदासीन इति न तेषां बन्धनागारनिवेशेऽप्यस्ति क्षतिः काचिन्ममेति न हिताकरणादिदोषापत्तिरिति राद्धान्तः । तदिदमुक्तम्—अपिच यदा तत्त्वमसीति । अपिचेति चः पूर्वोपपत्तिसाहित्यं द्योतयति, नोपपत्त्यन्तर-

### वेदान्तकल्पतरुः ।

इत्यर्थः । ननु स्वाभाविकं ब्रह्मणैकत्वं जीवा अविद्योपहिताः स्वेषां न जानन्तीति हितेऽप्यहितभ्रमादकरणमुपपन्नमत आह—तेनेति ॥ २१ ॥ तद्वदभिमान इति । पश्यतीत्यन्वयः । यद्यपि परमात्मनो दर्शनक्रियाश्रयत्वमनुपपन्नम्;

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचिन्महार्हा मणयो वज्रवैडूर्यादयोऽन्ये मध्यमवीर्याः सूर्यकान्तादयोऽन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणा इत्यनेकविधं वैचित्र्यं दृश्यते, यथा चैकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं चन्दनकिंपाकादिषूपलक्ष्यते, यथा चैकस्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च विचित्राणि कार्याणि भवन्ति; एवमेकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यत इत्यतस्तदनुपपत्तिः । परपरिकल्पितदोषानुपपत्तिरित्यर्थः । श्रुतेश्च प्रामाण्याद्विकारस्य च वाचारम्भणमात्रत्वात्स्वप्नदृश्यभाववैचित्र्यवच्चेत्यभ्युच्चयः ॥ २३ ॥ इति सप्तममितरव्यपदेशाधिकरणम् ॥

( ८ अधिकरणम् ) **उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥**

चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते । कस्मात्? उपसंहारदर्शनात् । इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकसाधनोपसंहारेण

### भामती ।

ताम् ॥ २२ ॥ **स्यादेतत्**—यदि ब्रह्मविवर्तो जगत्, हन्त सर्वस्यैव जीववच्चैतन्यप्रसङ्ग इत्यत आह—**अश्मादिवच्च तदनुपपत्तिः** । अतिरोहितार्थेन भाष्येण व्याख्यातम् ॥ २३ ॥ **इति सप्तममितरव्यपदेशाधिकरणम्** ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

ब्रह्म खल्वेकमद्वितीयतया परानपेक्षं क्रमेणोत्पद्यमानस्य जगतो विविधविचित्ररूपस्योपादानमुपेयते, तदनुपपन्नम्; नह्येकरूपात्कार्यभेदो भवितुमर्हति, तस्याकस्मिकत्वप्रसङ्गात् । कारणभेदो हि कार्यभेदहेतुः; क्षीरबीजादिभेदाद्दध्यङ्कुरादिकार्यभेददर्शनात् । नचाक्रमात् कारणात् कार्यक्रमो युज्यते; समर्थस्य क्षेपायोगात्, अद्वितीयतया च क्रमवत्तत्सहकारिसमवधानानुपपत्तेः । तदिदमुक्तम्—**इह हि लोक इति** । एकैकं मृदादि **कारकं**, तेषां तु सामग्र्यं **साधनम्**,

### वेदान्तकल्पतरुः ।

तथापि पुरुषः स्वप्रकाश एव तत्तद्विशेषेणोपरक्तस्तं तं यथावस्थितं भासयतीति अतः पश्यतीति निर्दिश्यते ॥ २२ ॥ २३ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

ब्रह्म नोपादानमसहायत्वात्संमतवदिति न्यायेन समन्वयस्य विरोधसंदेहे पूर्वत्रौपाधिकजीवब्रह्मभेदाद्धिताकरणादिदोषः परिहृतः, इह तूपाधितोऽपि विभक्तमधिष्ठात्रादि नास्तीति पूर्वपक्षमाह—**ब्रह्म खल्वित्यादिना** । **एकमित्युपादानभेदवारणम्** । **अद्वितीयतयेति** सहकारिनिषेधः । एकत्वप्रयुक्तं दूषणमाह—**नह्येकरूपादिति** । कारणवैजात्ये हि कार्यवैजात्यमित्यर्थः । न केवलं कार्यवैजात्यायोग एकजातीयकार्याणामपि क्रमायोग इत्याह—**न चाक्रमादिति** । समर्थमपि सहकार्यपेक्षं सत् क्रमेण कुर्यादित्याशङ्कामपनयन्नद्वितीयत्वप्रयुक्तामनुपपत्तिमाह—**अद्वितीयतया चेति** । भाष्यस्थकारकसाधनपदयोः अपौनरुक्त्यमाह—**एकैकमिति** । समग्राणां भावः सामग्र्यम् । कथं तस्य साधनशब्दाभिधेयत्वमत आह—**ततो हीति** । **साधयत्येवेति** । साधनमित्यर्थः ॥ **श्रुतौ—करणं** निष्पादनम् । अत्यन्तव्यति-

### कल्पतरुपरिमलः ।

जीवेष्वभेदं जडेषु तद्व्यतिरेकेणाभावं च संग्रहीतुं तदनन्यत्वमित्युक्तमिति भावः । स्वाभाविकं ब्रह्मणैकत्वं जीवा अविद्योपहिता न जानन्तीत्येकवाक्यतया पाठः सङ्गतः । न जानन्तीति स्थाने स्वेष्टं न जानन्तीति पाठे तेषामज्ञानमस्तीति पाठे च स्वाभाविकमित्यारभ्य वाक्यत्रयमिति योजनीयम् ॥ २१ ॥ २२ ॥ २३ ॥ **इति सप्तममितरव्यपदेशाधिकरणम्** ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

**अद्वितीयत्वप्रयुक्तामनुपपत्तिमिति । ननु**—अद्वितीयस्यापि ब्रह्मणो मायया सगुणेश्वरभावापन्नस्य कर्मसापेक्षता 'वैषम्यनैर्घृण्ये न सापेक्षत्वा ( ब्र. अ. २ पा. २ सू. ३ ) दित्यधिकरणे दर्शयिष्यते । अत उपादानैक्येऽपि कर्मवैचित्र्यात्कार्यवैचित्र्यं कर्मक्रमात्कार्यक्रमश्च भविष्यतीति—**चेद्, न**; दृष्टसाधनभेदतत्क्रमावनपेक्ष्य अदृष्टभेदतत्क्रममात्रेण कार्यभेदतत्क्रमादर्शनादिति भावः । **साधयत्येवेति** । साधनमिति करणार्थे ल्युटा अतिशयितं साधकं करणमाहुः ।

१ तत्र सूत्राणि ३—इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २१ अधिकं तु भेदनिर्देशात् २२ अश्मादिवच्च तदनुपपत्तिः २३ ॥

संगृहीतसाधनाः सन्तस्तत्तत्कार्यं कुर्वाणा दृश्यन्ते । ब्रह्म चासहायं तवाभिप्रेतं तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत ? तस्मान्न ब्रह्म जगत्कारणमिति चेत्, नैष दोषः; यतः क्षीरवद्द्रव्यस्वभावविशेषादुपपद्यते । यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं तथेहापि भविष्यति । ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनमौष्ण्यादिकं, कथमुच्यते क्षीरवद्धीति ? नैष दोषः; स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रामनुभवति तावत्येव त्वर्यते त्वौष्ण्यादिना दधिभावाय । यदि च स्वयं दधिभावशीलता न स्यान्नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत । नहि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्यते । साधनसामग्र्या च तस्य पूर्णता संपाद्यते । परिपूर्णशक्तिकं तु ब्रह्म । न तस्यान्येन केनचित्पूर्णता संपादयितव्या । श्रुतिश्च भवति—'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' ( श्वे० ६।८ ) इति । तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात्क्षीरादिवद्विचित्रपरिणाम उपपद्यते ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥

स्यादेतत्—उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः; दृष्टत्वात् । चेतनाः पुनः कुलालादयः साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्तमाना

---

### भामती ।

ततो हि कार्यं साधयत्येव, तस्मान्नाद्वितीयं ब्रह्म जगदुपादानमिति प्राप्ते, उच्यते—**क्षीरवद्धि** । इदं तावद्भवान् पृष्टो व्याचष्टाम्—किंतात्त्विकमस्य रूपमपेक्ष्येदमुच्यते, उतानादिनामरूपबीजसहितं काल्पनिकं सार्वज्ञ्यं सर्वशक्तित्वं । **तत्र पूर्वस्मिन् कल्पे** किं नाम ततोऽद्वितीयादसहायादुपजायते ? नहि तस्य शुद्धबुद्धमुक्तस्वभावस्य वस्तुसत्कार्यमस्ति । **तथाच श्रुतिः**—'न तस्य कार्यं करणं च विद्यते' इति । **उत्तरस्मिंस्तु कल्पे** यदि कुलालादिवदत्यन्तव्यतिरिक्तसहकारिकारणाभावादनुपादानत्वं साध्यते, ततः क्षीरादिभिर्व्यभिचारः । तेऽपि हि बाह्यचेतनादिकारणानपेक्षा एव कालपरिवासवशेन स्वत एव परिणामान्तरमासादयन्ति । अत्रान्तरकारणानपेक्षत्वं हेतुः क्रियते, तदसिद्धम्; अनिर्वाच्यनामरूपबीजसहायत्वात् । **तथाच श्रुतिः**—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति । **कार्यक्रमेण** तत्परिपाकोऽपि क्रमवानुन्नेयः । **एकस्मादपि** च विचित्रशक्तेः कारणादनेककार्योत्पादो दृश्यते । यथैकस्माद्वह्नेर्दाहपाकावेकस्माद्वा कर्मणः संयोगविभागसंस्काराः ॥ २४ ॥ यदितु चेतनत्वे सतीति विशेषणान्न क्षीरादिभिर्व्यभिचारः, दृष्टा हि कुलालादयो बाह्यमृदाद्यपेक्षाः, चेतनं च ब्रह्मेति, तत्रेदमुपतिष्ठते—**देवादिवदपि लोके** । लोक्यतेऽनेनेति लोकः शब्द एव तस्मिन् ॥ २५ ॥ **इत्यष्टममुपसंहारदर्शनाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

रिक्तत्वं स्वधर्मत्वेनानन्तर्भूतत्वम् । एकस्मिन्काले उषित्वा तं परित्यज्य कालान्तरेऽपि वासः परिवासः पर्युषितमिति दर्शनात् । आन्तरत्वं नाम स्वधर्मत्वम् । **मायिनं** मायाविषयम् । अज्ञातत्वस्य वस्तुधर्मत्वात् तद्द्वारेण मायाख्यमज्ञानमपि धर्म इत्यान्तरत्वम् । **ननु** मायाया अप्यक्रमत्वात् कथमक्रमात्कारणात् कार्यक्रमस्तत्राह—**कार्यक्रमेणेति** । तस्या मायायाः परिपाकस्तत्तत्कार्यसर्गं प्रति पौष्कल्यम् । तस्य क्रमोऽपि कार्यक्रमान्यथानुपपत्त्या कल्प्य इत्यर्थः । पूर्वमविद्यासाचिव्यादसहायत्वमसिद्धमित्युक्तम्, इदानीमङ्गीकृत्यापि तदनैकान्तिकत्वमाह—**एकस्मादपीति** । शरे उत्पन्नं हि कर्म पूर्वाकाशप्रदेशविभागमुत्तरप्रदेशसंयोगं शरे च वेगाख्यसंस्कारं जनयतीत्यनैकान्तिकम् । असहायत्वं नानाकार्यानुत्पादकमित्यर्थः ॥ २४ ॥ असहायस्योपादानत्वं क्षीरवदुपपाद्यासहायस्याधिष्ठातृत्वसमर्थकं सूत्रमवतारयति—**यदि त्विति** ॥ २५ ॥ **इत्यष्टममुपसंहारदर्शनाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

अतिशयोऽत्राव्यभिचाररूपो विवक्षित इति भावः । **कालान्तरेऽपि वास इति** । सोऽपि क्षीरस्य धर्म इति भावः । **ननु** पयोम्बुवच्चेत्तत्रापीति ( ब्र. २ पा. २ सू. २४ ) द्वितीयपादसूत्रेण क्षीरपरिणामेऽपि परमेश्वरसङ्कल्परूपं तद्धर्मभूतं कारणान्तरमस्तीति वक्ष्यते, **सत्यम्** परमेश्वरं कारणं प्रत्याचक्षाणस्य ह्ययं पूर्वपक्षः । न तस्य लोकदृष्ट्यनुवर्तिनः क्षीरपरिणामे कारणान्तरमस्तीति तं प्रत्ययं दृष्टान्तः ॥२४॥ **असहायस्याधिष्ठातृत्वसमर्थकमिति** । **ननु**—मन्त्रार्थ-

---

१ तत्र सूत्रे २—उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २४ देवादिवदपि लोके २५ ॥

दृश्यन्ते । कथं ब्रह्म चेतनं सदसहायं प्रवर्तेतेति ? देवादिवदिति ब्रूमः । यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किंचिद्बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि च रथादीनि च निर्मिमाणा उपलभ्यन्ते; मन्त्रार्थवादेतिहासपुराणप्रामाण्यात्, तन्तुनाभश्च स्वत एव तन्तून्सृजति, बलाका चान्तरेणैव शुक्रं गर्भं धत्ते, पद्मिनी चानपेक्ष्य किंचित्प्रस्थानसाधनं सरोन्तरात्सरोन्तरं प्रतिष्ठते; एवं चेतनमपि ब्रह्मानपेक्ष्य बाह्यं साधनं स्वत एव जगत्स्रक्ष्यति । स यदि ब्रूयात्—य एते देवादयो ब्रह्मणो दृष्टान्ता उपात्तास्ते दार्ष्टान्तिकेन ब्रह्मणा न समाना भवन्ति; शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादन उपादानं, नतु चेतन आत्मा, तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणाल्लाला कठिनतामापद्यमाना तन्तुर्भवति, बलाका च स्तनयित्नुरवश्रवणाद्गर्भं धत्ते, पद्मिनी च चेतनप्रयुक्ता सत्यचेतनैव शरीरेण सरोन्तरात्सरोन्तरमुपसर्पति वल्लीव वृक्षं, नतु स्वयमेवाचेतना सरोन्तरोपसर्पणे व्याप्रियते । तस्मान्नैते ब्रह्मणो दृष्टान्ताः—इति तं प्रति ब्रूयान्नायं दोषः; कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वादिति । यथा हि कुलालादीनां देवादीनां च समाने चेतनत्वे कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते न देवादयः, तथा ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षिष्यत इत्येतावद्वयं देवाद्युदाहरणेन विवक्ष्यामः । तस्माद्यथैकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः ॥ २५ ॥ इत्यष्टममुपसंहारदर्शनाधिकरणम् ॥

( ९ अधिकरणम् ) **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्ष्य बाह्यसाधनं स्वयं परिणममानं जगतः कारणमिति स्थितम् । शास्त्रार्थपरिशुद्धये तु पुनराक्षिपति । कृत्स्नप्रसक्तिः कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति; निरवयवत्वात् । यदि ब्रह्म पृथिव्यादिवत्सावयवमभविष्यत्ततोऽस्यैकदेशः पर्यणंस्यदेकदेशश्चावास्थास्यत । निरवयवं तु ब्रह्म श्रुतिभ्योऽवगम्यते—'निष्कलं

---

भामती ।

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

**ननु** न ब्रह्मणस्तत्त्वतः परिणामो येन कार्त्स्न्यैभागविकल्पेनाक्षिप्येत । अविद्याकल्पितेन तु नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वान्यत्वाभ्यामनिर्वचनीयेन परिणामादिव्यवहारास्पदत्वं ब्रह्म प्रतिपद्यते । नच कल्पितं रूपं वस्तु स्पृशति । नहि चन्द्रमसि तैमिरिकस्य द्वित्वकल्पना चन्द्रमसो द्वित्वमावहति, तदनुपपत्त्या वा चन्द्रमसोऽनुपपत्तिः । तस्मादवास्तवी परिणामकल्पनाऽनुपपद्यमानापि न परमार्थसतो ब्रह्मणोऽनुपपत्तिमावहति । तस्मात्पूर्वपक्षाभावादनारभ्यमिदमधिकरणमिति, अत आह—**चेतनमेकम्** । यद्यपि श्रुतिशतादैकान्तिकाद्वैतप्रतिपादनपरात् परिणामो वस्तुतो निषिद्धः; तथापि क्षीरादिदेवतादृष्टान्तेन पुनस्तद्वास्तवत्वप्रसङ्गं पूर्वपक्षे आपाद्य सर्वथायं पक्षो न घटयितुं शक्यत

वेदान्तकल्पतरुः ।

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

सावयवस्यैव नानाकार्योपादानतेति न्यायेन समन्वयस्य विरोधसंदेहे पूर्वाधिकरणोक्तक्षीरदृष्टान्तात् परिणामित्वभ्रमे तन्निरासात् संगतिमाह—**क्षीरेति** । तस्मादविकृतं ब्रह्मेति भाष्यं तदस्तीति तत्त्वत इति च पदाध्याहारेण व्याचष्टे—

कल्पतरुपरिमलः ।

वादादरे तत एवेश्वरस्य सङ्कल्पमात्रेण स्रष्टृत्वं सिध्यति, तदनादरे देवादिदृष्टान्तेनापि न सिध्यतीति कथमिदं सूत्रं देवादिदृष्टान्तप्रदर्शकमुपपद्यत इति—**चेत्, उच्यते**; अचेतनस्य बाह्यसहकारिनिरपेक्षस्य कारणत्वमुपगम्य चेतनस्यैव तत्प्रत्याचक्षाणः पूर्वपक्षी पादादिमारभ्यानुवृत्तः सांख्य एव । स च परमेश्वरस्य स्रष्टृत्वमसहमानोऽपि देवादीनामाजानसिद्धं मनुष्यादीनां योगसाध्यं च अणिमादिसत्यसंकल्पत्वापरपर्यायप्राकाम्यपर्यन्तमैश्वर्यमन्तःकरणधर्ममङ्गीकरोतीति भूतवशिनां देवादीनां संकल्पमात्रेण स्रष्टृत्वादिकमपि हैरण्यगर्भवदङ्गीकरोत्येव । तेषां तदङ्गीकुर्वतश्च तद्विषयमन्त्रार्थवादप्रामाण्यमनुमतमिति तदवलम्ब्य सूत्रप्रवृत्तिः ॥ **इत्यष्टममुपसंहारदर्शनाधिकरणम्** ॥

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे० ६।१९), 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मु० २।१।२), 'इदं महद्भूतमनन्तमपारं विज्ञानघन एव' (बृ० २।४।१२), 'स एष नेति नेत्यात्मा' ( बृ० ३।९।२६ ), 'अस्थूलमनणु' (बृ० ३।८।८) इत्याद्याभ्यः सर्वविशेषप्रतिषेधिनीभ्यः । ततश्चैकदेशपरिणामासंभवात्कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत । द्रष्टव्यतोपदेशानर्थक्यं चापन्नम्; अयत्नदृष्टत्वात्कार्यस्य, तद्व्यतिरिक्तस्य च ब्रह्मणोऽसंभवात् । अजत्वादिशब्दकोपश्च । अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत, तथापि ये निरवयवत्वस्य प्रतिपादकाः शब्दा उदाहृतास्ते प्रकुप्येयुः । सावयवत्वे चानित्यत्वप्रसङ्ग इति । सर्वथायं पक्षो न घटयितुं शक्यत इत्याक्षिपति ॥ २६ ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्देनाक्षेपं परिहरति । न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति । न तावत्कृत्स्नप्रसक्तिरस्ति । कुतः? श्रुतेः । यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते, एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते; प्रकृतिविकारयोर्भेदेन व्यपदेशात्, 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२) इति 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा० ३।१२।६ ) इति चैवंजातीयकात्, तथा हृदयायतनत्ववचनात्सत्संपत्तिवचनाच्च । यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात्, 'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात्; विकृतेन ब्रह्मणा नित्यसंपन्नत्वादविकृतस्य च ब्रह्मणोऽभावात्, तथेन्द्रियगोचरत्वप्रतिषेधाद्ब्रह्मणो विकारस्य चेन्द्रियगोचरत्वोपपत्तेः । तस्मादस्त्यविकृतं ब्रह्म । नच निरवयवत्वशब्दकोपोऽस्ति; श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात् । शब्दमूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकं तद्यथाशब्दमभ्युपगन्तव्यम् । शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयत्यकृत्स्नप्रसक्तिं निरवयवत्वं च । लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशाच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते । ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्तेऽस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति । किमुताचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत । तथाचाहुः पौराणिकाः—'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥' इति । तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगमः । ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुं निरवयवं च ब्रह्म परिणमते नच कृत्स्नमिति । यदि निरवयवं ब्रह्म स्यान्नैव परिणमेत । कृत्स्नमेव वा परिणमेत । अथ केनचिद्रूपेण परिणमेत केनचिच्चावतिष्ठेतेति रूपभेदकल्पनात्सावयवमेव प्रसज्येत । क्रियाविषये हि 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्येवंजातीयकायां विरोधप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति; पुरुषतन्त्रत्वाच्चानुष्ठानस्य, इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः संभवत्यपुरुषतन्त्रत्वाद्वस्तुनः । तस्माद्दुर्घटमेतदिति । नैष दोषः; अविद्याकल्पितरूपभेदाभ्युपगमात् । नह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु संपद्यते । नहि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमा-

### भामती ।

इत्यपबाध्य श्रुतेस्तु शब्दमूलत्वात्, 'आत्मनि चैवं विचित्राश्च हि' इति सूत्राभ्यां विवर्तदृढीकरणेनैकान्तिकाद्वयलक्षणः श्रुत्यर्थः परिशोध्यत इत्यर्थः । तस्मादस्त्यविकृतं ब्रह्म तत्त्वतः । ननु शब्देनापीति चोद्यमविद्याकल्पितत्वोद्घाटनाय । नहि निरवयवत्वसावयवत्वाभ्यां विधान्तरमस्त्येकनिषेधस्येतरविधाननान्तरीयकत्वात् । तेन प्रकारान्तराभावान्निरवयवत्वसावयवत्वयोश्च प्रकारयोरनुपपत्तेर्ग्रावप्लवनाद्यर्थवादवदप्रमाणं शब्दः स्यादिति चोद्यार्थः । परि-

### वेदान्तकल्पतरुः ।

तस्मादिति । इतरथा हि मायामयविकारनिषेधे जगत्सर्गो न स्यादस्तीत्यनुक्तौ च साकाङ्क्षत्वं स्यादिति निरवयवेऽपि ब्रह्मणि विचित्रशक्तिवशेनाकृत्स्नप्रसक्तेरुक्तत्वाच्चोद्यानुपपत्तिमाशङ्क्य शक्तीनामवास्तवत्वकथनार्थत्वेन परिहरति—अविद्येति ॥२६॥ ॥२७॥२८॥ अवस्तुत्वात्समुदायो न परिणमते, समुदायिष्वपि यदि सत्त्वमात्रं परिणमते, न रजस्तमसी, ततो मूलोच्छेदो न

नोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते । वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्येति न निरवयवत्वं ब्रह्मणः कुप्यति । न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था; तत्प्रतिपत्तौ फलानवगमात्, सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा; तत्प्रतिपत्तौ फलावगमात् । 'स एष नेति नेत्यात्मा' इत्युपक्रम्याह—'अभयं वै जनक प्राप्तोऽसि' (बृ० ४।२।४) इति । तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अपिच नैवात्र विवदितव्यं कथमेकस्मिन्ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति ? यत आत्मन्यप्येकस्मिन्स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते—'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते' (बृ० ४।३।१०) इत्यादिना । लोकेऽपि देवादिषु मायाव्याधिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते । तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति ॥ २८ ॥

### भामती ।

हारः सुगमः ॥ २६ ॥ २७ ॥ अनेन स्फुटितो मायावादः । स्वप्नदृगात्मा हि मनसैव स्वरूपानुपमर्देन रथादीन् सृजति ॥ २८ ॥ चोदयति—**ननु नैवेति** । परिहरति—**नैवंजातीयकेनेति** । यद्यपि समुदायः सावयवः; तथापि प्रत्येकं सत्त्वादयो निरवयवाः । नह्यस्ति संभवः सत्त्वमात्रं परिणमते न रजस्तमसी इति; सर्वेषां संभूयपरिणामाभ्युपगमात् । प्रत्येकं चानवयवानां कृत्स्नपरिणामे मूलोच्छेदप्रसङ्गः । एकदेशपरिणामे वा सावयवत्वमनिष्टं प्रसज्येत । **तथाणुवादिनोऽपीति** । वैशेषिकाणां द्व्यणुभ्यां संयुज्य द्व्यणुकमेकमारभ्येत, तैस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमेकमारभ्यत इति प्रक्रिया । तत्र द्वयोरण्वोरनवयवयोः संयोगस्तावणू व्याप्नुयात् । अव्याप्नुवन्वा तत्र न वर्तेत । नह्यस्ति संभवः स एव तदानीं तत्र वर्तते न वर्तते चेति । तथा चोपर्यधःपार्श्वस्थाः षडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेर-

### वेदान्तकल्पतरुः ।

स्मान्न चैतदस्ति इत्याह—**यद्यपि समुदाय इति** । द्व्यणुकमारब्धुमणुना संयुज्यमानोऽणुरुपर्यधःपार्श्वतश्चतसृष्वपि दिक्षु कदाचित् कश्चित्संयुज्यते, ते च सर्वे तेन समानदेशा इति प्रथिमानुपपत्तेर्द्व्यणुकपिण्डः परमाणुमात्रः प्रसज्येतेत्यर्थः ।

### कल्पतरुपरिमलः ।

**द्व्यणुकमिति** । द्व्यणुकारम्भार्थमेकः परमाणुरण्वन्तरेणाधश्चोर्ध्वं च पार्श्वतश्चतसृषु दिक्ष्वेति षण्णां दिशां मध्ये यत्किंचिद्दिग्गतेन यदा संसृज्यते, तदा दैवादवशिष्टपञ्चदिग्गतैरपि कैश्चिदणुभिरस्य संसर्गो भवन्न निवारयितुं शक्यः । ते च षडपि परमाणवो मध्यगतपरमाणौ भिन्नभिन्नप्रदेशावच्छिन्ने संसृज्यन्ते चेत्स परमाणुः षडंशः स्यादिति तत्परिहाराय समानदेशा इति वक्तव्यम् । तथाच प्रथिमानुपपत्तिरित्यर्थः । द्व्यणुकएव प्रथिमानुपपत्तिदोषे वक्तुं शक्येऽपि तार्किकानभिमतं सप्तपरमाण्वारब्धं द्रव्यं युक्त्या अङ्गीकर्तव्यमापाद्य तत्रैतद्दोषाभिधानम्—**षट्केन युगपद्योगात्परमाणोः षडंशता । षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः** ॥ इति न्यायवार्तिकोदाहृतं परमाणुवाददूषणश्लोकमनुसृत्य । **ननु**—मूर्तानां समानदेशताविरोधादेकस्मिन्परमाणौ षट्परमाणुसंयोगा व्यापका न संभवन्तीति सप्तपरमाण्वारब्धद्रव्यासंभवाद् द्व्यणुकएव प्रथिमानुपपत्तिदोषो वक्तुं युक्त इति—**चेत्, न**; द्व्यणुकैस्त्र्यणुकारम्भं वदतस्तार्किकस्य मते परमाणुषु मूर्तत्वेऽपि समानदेशताविरोधस्य वक्तुमशक्यत्वादेकद्व्यणुकारम्भकपरमाणुसंयोगे सत्येव तदारम्भकपरमाण्वन्तरे द्व्यणुकान्तरारम्भकपरमाणुसंयोगस्यापि तेनाङ्गीकर्तव्यत्वात् कारणाकारणसंयोगात्कार्याकार्यसंयोग इति तन्मते यदवयवावच्छेदेनावयविद्वयसंयोगस्तयोरवयवयोरपि संयोगावश्यम्भावात् । तस्मात्षण्णां समानदेशत्व इति श्लोकानुसरणं युक्तमेव । तदनुसरणं च द्व्यणुके कैमुतिकन्यायेनैतद्दोषसंयोजनार्थं शङ्कान्तरनिवर्तनार्थं च । तत्र शङ्कान्तरमेवं मा भूत्—परमाण्वारब्धद्रव्येषु महत्त्वं तदारब्धेषु त्र्यणुकेषु तत्संभवाद् दृश्यमानघटादिमहत्त्वोपपत्तिः—इति, तन्निवर्तनमेवं विवक्षितम्—त्र्यणुकेषु वा कथं महत्त्वं भवेत् ? कारणमहत्त्वाभावात् । कारणबहुत्वाद्भवेदिति चेन्न; सप्तपरमाण्वारब्धद्रव्ये सत्यपि कारणबहुत्वे महत्त्वाभावाद् व्यभिचारेण कारणबहुत्वस्य कार्यमहत्त्वाप्रयोजकत्वात् । **ननु**—निरवयवेष्वसंयुक्तप्रदेशासंभवेन तद्बहुत्वस्य कार्यमहत्त्वाप्रयोजकत्वेऽपि सावयवककारणबहुत्वं कार्यमहत्त्वप्रयोजकं स्यादिति—**चेत्, न**; सावयवानामपि परमाण्वारब्धद्रव्याणां संयोगस्तदारम्भकपरमाणुद्वयसंयोगावच्छेदेन वाच्यः, हस्तपुस्तकसंयोगावच्छेदेनेव

## स्वपक्षदोषाच्च ॥ २९ ॥

**परेषामप्येष समानः स्वपक्षे दोषः । प्रधानवादिनोऽपि हि निरवयवमपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणमिति स्वपक्षः । तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वात्प्रधानस्य प्राप्नोति निरवयवत्वाभ्युपगमकोपो वा । ननु नैव तैर्निरवयवं प्रधानमभ्युपगम्यते, सत्त्वरजस्तमांसि त्रयो गुणा नित्यास्तेषां साम्यावस्था प्रधानं तैरेवावयवैस्तत्सावयवमिति । नैवंजातीयकेन सावयवत्वेन प्रकृतो दोषः परिहर्तुं पार्यते । यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम् । एकैकमेव चेतरद्वयानुगृहीतं सजातीयस्य प्रपञ्चस्योपादानमिति समानत्वात्स्वपक्षदोषप्रसङ्गस्य । तर्काप्रतिष्ठानात्सावयवत्वमेवेति चेत्, एवमप्यनित्यत्वादिदोषप्रसङ्गः । अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः, तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः । तथाणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत, ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः । अथैकदेशेन संयुज्येत, तथापि निरवयवत्वाभ्युपगमकोप इति स्वपक्षेऽपि समान एष दोषः । समानत्वाच्च नान्यतरस्मिन्नेव पक्ष उपक्षेप्तव्यो भवति । परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः ॥ २९ ॥ इति नवमं कृत्स्नप्रसक्त्यधिकरणम् ॥**

---

### भामती ।

णुमात्रः पिण्डः प्रसज्येत । अव्यापने वा षडवयः परमाणुः स्यादित्यनवयवत्वव्याकोपः । अशक्यं च सावयवत्वमुपेतुं, तथा सत्यनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्गः । तस्मात् समानो दोषः । आपातमात्रेण साम्यमुक्तम्, परमार्थतस्तु भाविकं परिणामं वा कार्यकारणभावं वेच्छतामेष दुर्वारो दोषो न पुनरस्माकं मायावादिनामित्याह—**परिहृतस्त्विति** ॥ २९ ॥ **इति नवमं कृत्स्नप्रसक्त्यधिकरणम् ॥**

विचित्रशक्तित्वमुक्तं ब्रह्मणः, तत्र श्रुत्युपन्यासपरं सूत्रम्—

### वेदान्तकल्पतरुः ।

अव्याप्यवृत्तौ संयोगस्य तावन्नैकत्र भावाभावावित्युक्तम् । अथ प्रदेशभेदेन भावाभावौ तत्राह—**अव्यापने चेति । कार्यकारणभाव** आरम्भः ॥ २९ ॥ **इति नवमं कृत्स्नप्रसक्त्यधिकरणम्**[1] ॥

### कल्पतरुपरिमलः ।

कायपुस्तकसंयोगः । परमाणुद्वयसंयोगश्चेद्व्याप्यवृत्तिस्तदा तत्कार्यद्रव्यसंयोगोऽपि तदवच्छेदेन भवन् व्याप्यवृत्तिरेव स्यादिति परमाण्वारब्धद्रव्येष्विव तदारब्धेषु त्र्यणुकेष्वपि महत्त्वापत्तिः समानैव । **द्व्यणुकपिण्ड इति** । कैमुतिकन्यायसिद्धार्थप्रदर्शनार्थं द्व्यणुकग्रहणम् । **अव्याप्यवृत्ताविति** । व्याप्यवृत्त्यभावे संयोगस्य तत्र वृत्तिरेव न स्यादित्यव्याप्नुवन्वेत्यादिग्रन्थेनोक्तमित्यर्थः । अव्यापने वेत्यनुवादस्याव्याप्नुवन्वेत्यनुवादाद् भिन्नार्थत्वसिद्धये प्रदेशभेदेनाव्याप्यवृत्तित्वं तदर्थमाह—**अथेति । तत्राहेति । ननु**—परमाणूनामवयवाभावेऽपि नानादिगवच्छेदभेदेन तत्संयोगानामव्याप्यवृत्तितोपपद्यत इति—**चेत्, न;** दिशामप्यसंबद्धानामवच्छेदकत्वासंभवे तत्संबन्धानां संयोगरूपाणां व्याप्यवृत्तित्वेनातिप्रसक्ततया-तदव्याप्यवृत्तितोपपादकावच्छेदकत्वासंभवात्, तत्राप्यवच्छेदकान्तरान्वेषणे अनवस्थानात् । **ननु** मेरुसर्षपपरिमाणसाम्यप्रसङ्गरूपप्रतिकूलतर्केण मूर्तत्वलिङ्गकोक्तानुमानपराहतिर्वक्तुं न शक्यते; अनन्तक्षणघटितयोरवान्तरकल्पमहाकल्पयोरिवानन्तपरमाण्वारब्धयोर्मेरुभूगोलकयोरिव चानन्त्यविशेषोपपत्तेरित्याशङ्क्य नानेनेत्थं प्रतिकूलतर्कपराहतिरुच्यते, किंतु मेरुसर्षपौ समानपरिमाणौ मूर्तत्वात्संप्रतिपन्नसाध्यघटद्वयवदित्यनुमानस्य धर्मिग्राहकप्रत्यक्षेणेव शङ्कितानुमानस्य धर्मिग्राहकानुमानेन बाध उच्यते; लाघवसहकृतेनानुमानेन परमाणोर्निरवयवत्वेन सिद्धेरित्याहुः । **यदि प्रत्यक्षेति ।** एवंच बाध एवात्र विपक्षे दण्डो विवक्षितः । इत्थं परप्रक्रियेहानूदिता । नहि स्वमते परमाणोस्तन्निरवयवत्वस्य वा सिद्धिरभ्युपगम्यते । **कार्यकारणभाव इति ।** कार्यकारणयोर्भाव इति द्विवचनान्ताद् भावशब्देन तयोः पृथग्भावो लभ्यत इत्यारम्भवादे पर्यवसानम् । अन्यत्रापि कृत्स्नैकदेशविकल्पेन दूषणं विवक्षितम् । अवयव्यवयवे वर्तमानः कार्त्स्न्येन वर्तते एकदेशेन वा । **आद्ये** क्वचिदेवावयवेऽवयविपरिसमाप्तेरवयवान्तरस्य तदनारम्भकत्वप्रसङ्गः । **द्वितीये** त्वेकदेशोऽवयव एवेति नात्राप्यवयविनो वृत्तिविकल्पेऽनवस्था । तथा अवयवः कृत्स्नमवयविनमारभते तदेकदेशं वा । **आद्ये** अवयवान्त-

---

१ तत्र सूत्राणि ४—कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा २६ श्रुतेस्तु शब्दमूलत्वात् २७ आत्मनि चैवं विचित्राश्च हि २८ स्वपक्षदोषाच्च २९ ॥

( १० अधिकरणम् ) **सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते विचित्रो विकारप्रपञ्च इत्युक्तम् । तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति ? तदुच्यते । सर्वोपेता च तद्दर्शनात् । सर्वशक्तियुक्ता च परा देवतेत्यभ्युपगन्तव्यम् । कुतः ? तद्दर्शनात् । तथाहि दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः—'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छा०३।१४।४ ), 'सत्यकामः सत्यसंकल्पः' ( छा० ८।७।१ ), 'यः सर्वज्ञः सर्ववित्' ( मुण्ड० १।१।९ ), 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' ( बृ० ३।८।९ ) इत्येवंजातीयका ॥ ३० ॥

**विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

स्यादेतत्—विकरणां परां देवतां शास्ति शास्त्रम्—'अचक्षुष्कमश्रोत्रमवागमनः' ( बृ०३।८।८ ) इत्येवंजातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत् ? देवादयो हि चेतनाः सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसंपन्ना एव तस्मै तस्मै कार्याय प्रभवन्तो विज्ञायन्ते । कथं च 'नेति नेति' ( बृ० ३।९।२६ ) इति प्रतिषिद्धसर्वविशेषाया देवतायाः सर्वशक्तियोगः संभवेदिति चेत्, यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम् । श्रुत्यवगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम् । नच यथैकस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति । प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोगः संभवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव । तथाच शास्त्रम्—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' ( श्वे० ३।१९ ) इत्यकरणस्यापि ब्रह्मणः सर्वसामर्थ्ययोगं दर्शयति ॥ ३१ ॥ इति दशमं सर्वोपेताधिकरणम् ॥

---

भामती ।

**सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

एतदाक्षेपसमाधानपरं सूत्रम्—कुलालादिभ्यस्तावद्बाह्यकरणापेक्षेभ्यो देवादीनां बाह्यानपेक्षाणामान्तरकरणापेक्षस्रष्टीनां प्रमाणेन दृष्टो यथा विशेषो नापह्नोतुं शक्यः, यथा तु जाग्रत्सृष्टेर्बाह्यकरणापेक्षायास्तदनपेक्षान्तरकरणमात्रसाध्या दृष्टा स्वप्ने रथादिसृष्टिरशक्यापह्नोतुम्, एवं सर्वशक्तेः परस्या देवताया आन्तरकरणानपेक्षाया जगत्सर्जनं श्रूयमाणं न सामान्यतोदृष्टमात्रेणापह्नवमर्हतीति ॥ ३० ॥ ३१ ॥ इति दशमं सर्वोपेताधिकरणम् ॥

वेदान्तकल्पतरुः ।

**सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

मायाशक्तिमद्ब्रह्मणः जगत्सर्वं वदतः समन्वयस्याशरीरस्य न मायेति न्यायेन विरोधसंदेहे संगतिमाह—**विचित्रेति ।** अन्तर्याम्यधिकरणे ( ब्र. अ. १ पा. ३ सू. १८) त्वविद्योपार्जितत्वसंबन्धे जगद्ब्रह्मणोः सिद्धे शरीररहितस्यापि नियन्तृत्वसंभव उक्तः, इह त्वशरीरस्याविद्यैवाक्षिप्यत इति भेदः ॥३०॥ तदुक्तमित्येतद्देवादिवदपीति (ब्र. अ. २ पा. १ सू. २८) सूत्रोक्तिपरत्वेन व्याचष्टे—**कुलालादिभ्य इति ।** आत्मनि चैव ( ब्र. अ. २ पा. १ सू. २५ ) मिति सूत्रोक्तिपरत्वेनापि व्याचष्टे—**यथा त्विति ।** शक्तिमन्तो देवादयो यद्यपि शरीरिणः; तथापि बाह्यसाधनानपेक्षाः । यदि तु तत्र

कल्पतरुपरिमलः ।

रस्यानुप्रवेशप्रसङ्गः । **द्वितीये** सोऽप्येकदेशोऽवयव इति तस्याप्येकदेशान्तरारम्भकत्वे अनवस्थेति । इदं दूषणमारम्भणाधिकरण ( व्या. अ. २ पा. १ सू. १४ ) भाष्येण सिद्धमित्यत्र नोपन्यस्तम् ॥ २९ ॥ **इति नवमं कृत्स्नप्रसक्त्यधिकरणम् ॥**

**सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

**अशरीरस्य न मायेति ।** शरीरग्रहणमिन्द्रियवर्गस्याप्युपलक्षणम् । विकरणत्वादिति हि सूत्रकृता पूर्वपक्षबीजमुद्भावयिष्यते । सूत्रेऽपि करणग्रहणं शरीरस्याप्युपलक्षणम् । शरीरेन्द्रियरहितस्य मायाशक्तिर्न संभवतीति तर्कस्य श्रुतेस्तु शब्दमूलत्वादि ( ब्र. अ. २ पा. १ सू. २७ ) त्यत एव परिहारे सिद्धेऽपि शुष्कतार्किकः श्रुतिमात्रेण न परितुष्येदिति

( ११ अधिकरणम् ) **न प्रयोजनवत्त्वात्** ॥ ३२ ॥

अन्यथा पुनश्चेतनकर्तृत्वं जगत आक्षिपति । न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति । कुतः ? प्रयोजनवत्त्वात्प्रवृत्तीनाम् । चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत्प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः । किमुत गुरुतरसंरम्भाम् ? भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' (बृ० २।४।५) इति । गुरुतरसंरम्भा चेयं प्रवृत्तिर्यदुच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम् । यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत। प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात्। अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टस्तथा परमात्मापि प्रवर्तिष्यत इत्युच्येत, तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत । तस्मादश्लिष्टा चेतनात्सृष्टिरिति ॥ ३२ ॥

**लोकवत्तु लीलाकैवल्यम्** ॥ ३३ ॥

तुशब्देनाक्षेपं परिहरति । यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किंचित्प्रयोजनमनभिसंधाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति, यथा चोच्छ्वासप्रश्वासादयोऽनभिसंधाय बाह्यं किंचित्प्रयोजनं स्वभावादेव संभवन्ति, एवमीश्वरस्याप्यनपेक्ष्य किंचित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति । नहीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः श्रुतितो वा संभवति । नच स्वभावः पर्यनुयोक्तुं शक्यते। यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरम्भेवाभाति; तथापि परमेश्वरस्य लीलैव केवलेयम्,

भामती ।

**न प्रयोजनवत्त्वात्** ॥ ३२ ॥

न तावदुन्मत्तवदस्य मतिविभ्रमाज्जगत्प्रक्रिया; भ्रान्तस्य सर्वज्ञत्वानुपपत्तेः । तस्मात् प्रेक्षावतानेन जगत् कर्तव्यम् । प्रेक्षावतश्च प्रवृत्तिः स्वपरहिताहितप्राप्तिपरिहारप्रयोजना सती नाप्रयोजनाऽल्पायासापि संभवति, किं पुनरपरिमेयानेकविधोच्चावचप्रपञ्चजगद्बिम्बविरचना महाप्रयासा। अतएव लीलापि परास्ता। अल्पायाससाध्या हि सा। नचेयमप्यप्रयोजना; तस्या अपि सुखप्रयोजनवत्त्वात् । तादर्थ्येन वा प्रवृत्तौ तदभावे कृतार्थत्वानुपपत्तेः, परेषां चोपकार्याणामभावेन तदुपकाराया अपि प्रवृत्तेरयोगात् । तस्मात् प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता तदभावेऽनुपपन्ना ब्रह्मोपादानतां जगतः प्रतिक्षिपतीति प्राप्तम् ॥ ३२ ॥ एवं प्राप्तेऽभिधीयते—**लोकवत्तु लीलाकैवल्यम्** । भवेदेतदेवं यदि प्रेक्षाव-

वेदान्तकल्पतरुः ।

दृष्टं शरीरित्वं शक्तिमत्त्वेन ब्रह्मण्यापाद्यते, तर्हि कर्तृत्वेन कुलालादिषु दृष्टं बाह्यसाधनापेक्षत्वं देवादिष्वप्यापाद्येतेति प्रतिबन्द्या प्रमेयसंभावनोक्ता । **श्रूयमाणम्** इति प्रमाणमुक्तम् ॥ ३१ ॥ **इति दशमं सर्वोपेताधिकरणम्** ॥[1]

**न प्रयोजनवत्त्वात्** ॥ ३२ ॥

परितृप्ताद्ब्रह्मणो जगत्सर्गवादिसमन्वयस्य ब्रह्म न विना प्रयोजनेन सृजति अभ्रान्तचेतनत्वात्संमतवदिति न्यायेन बाधसंदेहे पूर्वत्र सर्वशक्ति ब्रह्मेत्युक्तं, तर्हि शक्तस्यापि प्रयोजनाभिसंध्यभावादकर्तृत्वमिति पूर्वपक्षमाह—**न तावदित्यादिना । तादर्थ्येन** सुखार्थत्वेन । प्रवृत्तौ प्रवृत्तेः प्राक् सुखाभावे सति कृतार्थत्वानुपपत्तेरित्यर्थः । अविद्योपहितजीवान् करेणापिधायानुग्राह्याभाव उक्तः । न दृष्टः प्रयोजनोद्देशलक्षणो हेतुरस्या इत्यदृष्टहेतुका । **औत्पत्तिकी** पुरुषस्योत्पत्तिमारभ्य प्रवृत्ता । अदृष्टहेतुकत्वस्य विवरणं—**प्रयोजनानुसन्धानमन्तरेण** इत्येतत् । स्वापादौ प्रयोजनानभिसन्धिरूपे श्वासे साध्याभाववद्धेतोरपि चेतनकर्तृकत्वस्याभावान्न व्यभिचार इत्याशङ्क्याह—**नचास्यामिति** । जाग्रदादौ चेतनस्य

कल्पतरुपरिमलः ।

तत्परितोषाय प्रमेयसंभावनाजनकश्रुत्यनुग्राहकन्यायप्रदर्शनार्थमधिकरणारम्भः । तदर्थमेव पूर्वाधिकरणेऽपि श्रुतेस्त्विति तुशब्दद्योत्यतच्छ्रुत्यनुग्राहकन्यायोपन्यासः ॥ ३० ॥ ३१ ॥ **इति दशमं सर्वोपेताधिकरणम्** ॥

**न प्रयोजनवत्त्वात्** ॥ ३२ ॥

**स्वापादौ प्रयोजनानभिसंधिरूपे श्वासे साध्याभाववदिति** । अत्राद्ये सप्तम्यौ समानाधिकरणे । सर्वज्ञानो-

[1] तत्र सूत्रे २—सर्वोपेता च तद्दर्शनात् ३० विकरणत्वान्नेति चेत्तदुक्तम् ३१ ॥

अपरिमितशक्तित्वात्। यदि नाम लोके लीलास्वपि किंचित्सूक्ष्मं प्रयोजनमुत्प्रेक्ष्येत, तथापि नैवात्र किंचित्प्रयोजनमुत्प्रेक्षितुं शक्यते; आप्तकामश्रुतेः। नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा; सृष्टिश्रुतेः, सर्वज्ञश्रुतेश्च। न चेयं परमार्थविषया सृष्टिश्रुतिः; अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि नैव विस्मर्तव्यम्॥ ३३॥ इत्येकादशं नप्रयोजनवत्त्वाधिकरणम्॥

## भामती।

प्रवृत्तिः प्रयोजनवत्तया व्याप्ता भवेत्। ततस्तन्निवृत्तौ निवर्तेत, शिंशपात्वमिव वृक्षतानिवृत्तौ, न त्वेतदस्ति; प्रेक्षावतामनुसंहितप्रयोजनानामपि यादृच्छिकीषु क्रियासु प्रवृत्तिदर्शनात्। अन्यथा 'न कुर्वीत वृथा चेष्टाम्' इति धर्मसूत्रकृतां प्रतिषेधो निर्विषयः प्रसज्येत। नचोन्मत्तान् प्रत्येतत्सूत्रमर्थवत्; तेषां तदर्थबोधतदनुष्ठानानुपपत्तेः। **अपिचा-**दृष्टहेतुकौत्पत्तिकी श्वासप्रश्वासलक्षणा प्रेक्षावतां क्रिया प्रयोजनानुसंधानमन्तरेण दृष्टा। नच—अस्यां चेतनस्यापि चैतन्यमनुपयोगि, संप्रसादेऽपि भावादिति—युक्तम्; प्राज्ञस्यापि चैतन्याप्रच्युतेः, अन्यथा मृतशरीरेऽपि श्वासप्रश्वासप्रवृत्तिप्रसङ्गात्। यथाच स्वार्थपरार्थसंपदासादितसमस्तकामानां कृतकृत्यतयाऽनाकुलमनसामकामानामेव लीलामात्रात्सत्स्वप्यनुनिष्पादिनि प्रयोजने नैव तदुद्देशेन प्रवृत्तिरेवं ब्रह्मणोऽपि जगत्सर्जने प्रवृत्तिर्नानुपपन्ना। दृष्टं च यदल्पबलवीर्यबुद्धीनामशक्यमतिदुष्करं वा तदन्येषामनल्पबलवीर्यबुद्धीनां सुशकमीषत्करं वा। नहि वानरैर्मारुतिप्रभृतिभिर्नगैर्न बद्धो नीरनिधिरगाधो महासत्त्वानाम्। नचैष पार्थेन शिलीमुखैर्न बद्धः। न चायं न पीतः संक्षिप्य चुलुकेन हेलयेव कलशयोनिना महामुनिना। नचाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसापि दुष्कराणि नरेश्वराणाम्। तस्मादुपपन्नं यदृच्छया वा स्वभावाद्वा लीलया वा जगत्सर्जनं भगवतो

## वेदान्तकल्पतरुः।

जानतोऽपि चैतन्यमस्यां श्वासादिप्रवृत्तावनुपयोगि, सुषुप्तेऽपि तस्याभावादिति च न युक्तम्; कुतः? प्राज्ञस्य सुषुप्तस्यापि स्वरूपचैतन्याप्रच्युतेरित्यर्थः॥ ३२॥ यदुक्तं लीलाया अपि सुखप्रयोजनत्वादिति, तत्राह—**सत्यपीति**। अनुद्दिश्य प्रयोजनं न करोति इति साध्ये त्वभ्रान्तचेतनत्वं लीलाकर्तरि सव्यभिचारम् इत्यर्थः। **ननु** यद्बह्वायाससाध्यं तत्प्रयोजनाभिसंधिपूर्वकमिति व्याप्तिरभिमता, तथा च न लीलादौ व्यभिचारस्तत्राह—**दृष्टं चेति**। तदप्यस्मदाद्यपेक्षया जगद्बह्वायाससाध्यं भाति; तथापि न ब्रह्मापेक्षयेति न प्रयोजनाभिसंध्यापात इत्यर्थः। **नगैः** पर्वतैर्हनुमत्प्रभृतिभिः कर्तृभिर्न बद्ध इत्यर्थः। तत्तर्हीत्यन्वयः। एतच्छक्यत्वे निदर्शनम्। **एषः** नीरधिः समुद्रः। **शिलीमुखैः** शरैर्न बद्धः। नच नीरनिधिः न पीत इतीषत्करत्वे निदर्शनम्। आचार्य यो महीपतिर्महयांचकार तस्य नाम—**नृग** इति। नियतनिमित्तमनपेक्ष्य यदा कदाचित्प्रवृत्त्युदयो यदृच्छा, स्वभावस्तु स एव यावद्वस्तुभावी यथा श्वासादौ। यदुक्तं न तावदुन्मत्तस्येव मतिविभ्रमाज्जगत्प्रक्रियेति, तत्र मा भूदुन्मत्तं ब्रह्म, भवति तु जीवाविद्याविषयीकृतं जगद्विवर्ताधिष्ठानम्, तथा च न

## कल्पतरुपरिमलः।

परमरूपो हि स्वापादिः प्रयोजनानभिसंधिरूपोऽपि भवति। श्वासादौ प्रयोजनानभिसंधिरूपे साध्याभाववदिति क्वचित्पाठः। तस्मिन् पाठे प्रयोजनाभिसंधिरहित इत्येतदर्थकं द्वितीयसप्तम्यन्तं श्वासादिविशेषणम्। पाठद्वयेऽपि चेतनक्रिया प्रयोजनाभिसंधिपूर्विकेति टीकोपदर्शितव्याप्तौ व्यभिचाराभावशङ्का॥ ३२॥ **सूत्रे**—लीलाशब्दस्य क्रियामात्रं विलासरूपक्रिया चेत्यर्थद्वयं संभवति; लीला क्रिया विलासश्चेति स्मरणात्। तत्र क्रियामात्रार्थत्वमादाय यादृच्छिकाङ्गुलीचलनादिक्रियायां स्वाभाविकश्वासनिमेषादिक्रियायां च प्रयोजनोद्देशरहितायां व्यभिचार उक्तः। अथ विलासार्थमादाय व्यभिचार उच्यते, तत्रापि तात्कालिकक्षुद्रसुखादिप्रयोजनज्ञानमस्तीति न व्यभिचार इत्याशङ्कां निरस्यतीत्याह—**यदुक्तमिति। लीलाकर्तरि सव्यभिचारमिति**। सुखितस्य सुखानुभवप्रयुक्ता हासगानादिरूपा प्रयोजनोद्देशरहिता दृश्यते। नहि तत्र प्रयोजनमण्वपि संभावयितुं शक्यते; दुःखोद्रेके रोदनवत्सुखोद्रेके हासगानादेः प्रयोजनोद्देशरहितस्य सर्वानुभवसिद्धत्वात्। अतएव हसितरुदितादिषु कारणमेव पृच्छन्ति न प्रयोजनम्। **न लीलादौ व्यभिचार इति**। लीलायादृच्छिकस्वाभाविकक्रियासु च व्यभिचार इत्यर्थः। **क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा**॥ इति माण्डूक्योपनिषदि तात्कालिकानन्दप्रयोजनलीलात्वमेव क्रीडार्थं सृष्टिरित्यन्य इत्यनेनानभिमतं प्रदर्शितम्, न तु हासगानादितुल्यप्रयोजनोद्देशरहितं लीलात्वम्। **स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः। देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्** इति श्वेताश्वतरोपनिषदि सृष्टेः स्रज्यवस्तुस्वभावतैवानभिमतत्वेन प्रदर्शिता, नतु स्रष्टृस्वभावता। अतो लीलास्वभावपक्षयोर्न श्रुतिविरोधः। **एतच्छक्यत्वे निदर्शनमिति**। पर्वतसेतुबन्धनं बहुकर्तृकत्वाद्दुष्करं सत् शक्यमित्यत्र निदर्शनमित्यर्थः। महयां-

(१२ अधिकरणम्) **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥**

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखनन्यायेन प्रतिज्ञातस्यार्थस्य दृढीकरणाय । नेश्वरो जगतः कारणमुपपद्यते । कुतः ? वैषम्यनैर्घृण्यप्रसङ्गात् । कांश्चिदत्यन्तसुख-

भामती ।

महेश्वरस्येति । **अपिच नेयं** पारमार्थिकी सृष्टिर्येनानुयुज्येत प्रयोजनम्, अपि त्वनाद्यविद्यानिबन्धना । अविद्या च स्वभावत एव कार्योन्मुखी न प्रयोजनमपेक्षते । नहि द्विचन्द्रालातचक्रगन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति । नच तत्कार्या विस्मयभयकम्पादयः स्वोत्पत्तौ प्रयोजनमपेक्षन्ते । साच चैतन्यच्छुरिता जगदुत्पादहेतुरिति चेतनो जगद्योनिराख्यायत इत्याह—**न चेयं परमार्थविषयेति** । **अपिच** न ब्रह्म जगत्कारणमपि तत्तथा विवक्षन्त्यागमाः, अपि तु जगति ब्रह्मात्मभावम् । तथाच सृष्टेरविवक्षायां तदाश्रयो दोषो निर्विषय एवेत्याशयेनाह—**ब्रह्मात्मभावेति** ॥ ३३ ॥ **इत्येकादशं नप्रयोजनवत्त्वाधिकरणम् ॥**

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥**

अतिरोहितोऽत्र पूर्वः पक्षः । उत्तरस्तूच्यते—उच्चावचमध्यमसुखदुःखभेदवत्प्राणभृत्प्रपञ्चं च सुखदुःखकारणं सुधाविषादि चानेकविधं विरचयतः प्राणभृद्भेदोपात्तपापपुण्यकर्माशयसहायस्यात्रभवतः परमेश्वरस्य न वैषम्यनैर्घृण्ये प्रसज्येते । नहि सभ्यः सभायां नियुक्तो युक्तवादिनं युक्तवाद्यसीति चायुक्तवादिनमयुक्तवाद्यसीति ब्रुवाणः सभापतिर्वा युक्तवादिनमनुगृह्णन्नयुक्तवादिनं च निगृह्णन्नुरक्तो द्विष्टो वा भवति, अपि तु मध्यस्थ इति वीतरागद्वेष इति चाख्यायते, तद्वदीश्वरः पुण्यकर्माणमनुगृह्णन्नपुण्यकर्माणं च निगृह्णन्मध्यस्थ एव नामध्यस्थः । एवंह्यसावमध्यस्थः स्यात्, यद्यकल्याणकारिणमनुगृह्णीयात्कल्याणकारिणं च निगृह्णीयात् । नत्वेतदस्ति; तस्मान्न वैषम्यदोषः । अत एव न नैर्घृण्यमपि संहरतः समस्तान् प्राणभृतः । स हि प्राणभृत्कर्माशयानां वृत्तिनिरोधसमयः, तमतिलङ्घयन्नयमयुक्तकारी स्यात् । नच कर्मापेक्षायामीश्वरस्य ऐश्वर्यव्याघातः । नहि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति । नच—

वेदान्तकल्पतरुः ।

प्रयोजनपर्यनुयोगः सृष्टावित्याह—**अपि च नेयमिति** । **जीवभ्रान्त्या परं ब्रह्म जगद्बीजमजूघुषत् । वाचस्पतिः परेशस्य लीलासूत्रमलूलुपत् ॥ प्रतिबिम्बगताः पश्यन् ऋजुवक्रादिविक्रियाः । पुमान् क्रीडेद्यथा ब्रह्म तथा जीवस्थविक्रियाः ॥ एवं वाचस्पतेर्लीला लीलासूत्रीयसङ्गतिः । अस्वतन्त्रत्वतः क्लिष्टा प्रतिबिम्बेशवादिनाम् ॥** विभ्रमाणां प्रयोजनानपेक्षायामपि तत्कार्यस्य तदपेक्षा स्यादित्याकाशादेर्भ्रमकार्यस्य तदपेक्षामाशङ्क्याह—**नचेति** । नन्वविद्याया हेतुत्वे कथं ब्रह्म कारणमत आह—**सा चेति** । **छुरिता** मिश्रिता । **निर्विषय इति** । वेदान्तप्रतिपाद्यो विषयोऽस्य दूष्यत्वेन न वर्तत इति तथोक्तः ॥ ३३ ॥ **इत्येकादशं नप्रयोजनवत्त्वाधिकरणम् ॥**[1]

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥**

यो विषमसृष्टिकारी स सावद्यो ब्रह्म च विषमं सृजतीति न्यायेन समन्वयस्य विरोधसंदेहे पूर्वत्र लीलया स्रष्टृत्वमुक्तम्, इदानीं सैव न सापेक्षस्य संभवति; अनीश्वरत्वप्रसङ्गाद् निरपेक्षत्वे च रागादिमत्त्वमित्याक्षिप्यते । अनुमानस्य व्यभिचारमाह—**नहि सभ्य इति** । सापेक्षत्वेऽनीश्वरत्वमाशङ्क्य व्यभिचारमाह—**नहि सेवेति** । कर्मापेक्षत्वेव वैषम्यं

कल्पतरुपरिमलः ।

चकारेति पाठः साधुः । मह पूजायामिति धातुः स्वार्थण्यन्तः तस्य कथयतिवदकारान्तत्वादत उपधाया इति वृद्ध्यभावः । महीचकारेति पाठस्त्वस्मादेव धातोरेरजिति कर्मार्थकाजन्तात् च्विप्रत्यये सति अभूततद्भावे तदर्थे अभूतत्वाविवक्षायां योजनीयः । प्रसङ्गात्प्रतिबिम्बेश्वरवादे सौत्रलीलाशब्दसामञ्जस्यमाह—**प्रतिबिम्बगता इति** । लीलाशब्दस्य क्रीडावाचितायामिदं दूषणम्, न क्रियामात्रवाचितायामनायाससाध्यक्रियालक्षकतायां वा ॥ ३३ ॥ **इति एकादशं न प्रयोजनवत्त्वाधिकरणम् ॥**

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥**

व्यभिचारमाहेति । युक्तवादित्ववचनरूपविषमवाक्यस्रष्टरि सभ्ये निग्रहानुग्रहरूपविषमकृत्यस्रष्टरि सभापतौ च

---

१ तत्र सूत्रे २—न प्रयोजनवत्त्वात् ३२ लोकवत्तु लीलाकैवल्यम् ३३ ॥

भाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः पश्वादीन्, कांश्चिन्मध्यमभोगभाजो मनुष्यादीनित्येवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः। श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत। तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहाराच्च प्रसज्येत। तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः— वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते। कस्मात्? सापेक्षत्वात्। यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते, स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च, नतु निरपेक्षस्य निर्मातृत्वमस्ति। सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते। किमपेक्षत इति चेत्, धर्माधर्मावपेक्षत इति वदामः। अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः। ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः। यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति। देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्त्येवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति। कथं पुनरवगम्यते सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति? तथाहि दर्शयति श्रुतिः—'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' (कौ० ब्रा० ३।८) इति। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृ० ३।२।१३) इति च। स्मृतिरपि प्राणिकर्मविशेषापेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (भ० गी० ४।११) इत्येवंजातीयका ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१) इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म यदपेक्ष्य विषमा सृष्टिः स्यात्। सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म,

### भामती।

'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति श्रुतेरीश्वर एष द्वेषपक्षपाताभ्यां साध्वसाधुनी कर्मणी कारयित्वा स्वर्गं नरकं वा लोकं नयति, तस्माद्वैषम्यदोषप्रसङ्गान्नेश्वरः कारणमिति—वाच्यम्; विरोधात्। यस्मात् कर्म कारयित्वेश्वरः प्राणिनः सुखदुःखिनः सृजति इति श्रुतेरवगम्यते, तस्मान्न सृजतीति विरुद्धमभिधीयते। नच—वैषम्यमात्रमत्र ब्रूमो न त्वीश्वरकारणत्वं व्यासेधाम इति—वक्तव्यम्; किमतो यद्येवम्। तस्मादीश्वरस्य सवासनक्लेशापरामर्शमभिवदन्तीनां भूयसीनां श्रुतीनामनुग्रहायोन्निनीषतेऽधो निनीषत इत्येतदपि तज्जातीयपूर्वकर्माभ्यासवशात्प्राणिन इत्येवं नेयम्। यथाहुः—'जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तच्चैवाभ्यसते नरः॥' इति। अभ्युपेत्य च सृष्टेस्तात्त्विकत्वमिदमुक्तम्। अनिर्वाच्या तु सृष्टिरिति न प्रष्टव्यमत्रापि। तथाच मायाकारस्येवाङ्गसाकल्यवैकल्यभेदेन विचित्रान् प्राणिनो दर्शयतो न वैषम्यदोषः, सहसा संहरतो वा न नैर्घृण्यम्, एवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः संहरतश्च स्वभावाद्वा लीलया वा न कश्चिद्दोषः ॥ ३४ ॥ इति स्थिते शङ्कापरिहारपरं सूत्रम्—**न कर्माविभागादिति चेन्नानादित्वात्**। शङ्कोत्तरे अतिरोहितार्थेन भाष्यग्रन्थेन व्याख्याते ॥ ३५ ॥ अनादित्वादिति सिद्धवदुक्तं, तत्साधनार्थं

### वेदान्तकल्पतरुः।

परिहृतं, तर्हि विषमकर्मणि प्रेरकत्वेन वैषम्यतादवस्थ्यमित्याशङ्क्याह—**न चैष इति**। वैषम्यादिप्रसङ्गान्नेश्वरः कारणमिति नच वाच्यमित्यन्वयः। यदीश्वरोऽपि विषमं सृजेत्तर्हि रागादिमत्तयाऽनीश्वरः स्यादीश्वरश्चायं तस्मान्न विषमं सृजतीति किमनुमीयते उत ईश्वरो रागादिमान् विषमस्रष्टृत्वादिति वैषम्यम्। **नाद्यो** विरोधादित्युक्तम्। तमेवागमविरोधं दर्शयति—**यस्मादिति**। **द्वितीयं** निषेधति—**न चेति**। यद्येवं वैषम्यमनुमितं किमतो निरवद्यत्वस्यापि श्रुतिसिद्धत्वेनातीतकालतातादवस्थ्यादित्यर्थः। तदेव दर्शयति—**तस्मादिति**। श्रुतीनां ग्रावप्लवनादिश्रुतिभ्यो वैषम्यार्थमर्थसंभावनां दर्शयति—**तज्जातीयेति**। **उन्निनीषते** ऊर्ध्वं नेतुमिच्छति। ईश्वरः पर्जन्यवत्सृष्टिमात्रे कारणं, वैषम्ये तु बीजवत्तत्तत्प्राणिकर्मवासने इति नेश्वरस्य सावद्यतेत्यर्थः। **अपिच** मायामयी सृष्टिरस्माकम्। यदि च तथाविधसृष्टिकर्तृत्वेन रागादिमत्त्वमनुमीयते, तर्ह्यनैकान्तिकत्वमित्याह—**अभ्युपेत्य चेति** ॥ ३४ ॥ ३५ ॥ अकृताभ्यागमप्रसङ्गं व्याकरोति—

कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत । अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम । प्राग्विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत्, नैष दोषः? अनादित्वात्संसारस्य । भवेदेष दोषो यद्यादिमान्संसारः स्यात् । अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते ॥ ३५ ॥ कथं पुनरवगम्यतेऽनादिरेष संसार इति । अत उत्तरं पठति—

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

उपपद्यते च संसारस्यानादित्वम् । आदिमत्त्वे हि संसारस्याकस्मादुद्भूतेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः । अकृताभ्यागमप्रसङ्गश्च; सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात् । नचेश्वरो वैषम्यहेतुरित्युक्तम् । नचाविद्या केवला वैषम्यस्य कारणम्; एकरूपत्वात् । रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात् । नच कर्मान्तरेण शरीरं संभवति, नच शरीरमन्तरेण कर्म संभवतीतीतरेतराश्रयत्वप्रसङ्गः । अनादित्वे तु बीजाङ्कुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति । उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः । श्रुतौ तावत् 'अनेन जीवेनात्मना' ( छा० ६।३।२ ) इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिः संसार इति दर्शयति । आदिमत्त्वे तु प्रागनवधारितप्राणः सन् कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत । नच धारयिष्यतीत्यतोऽभिलप्येत । अनागताद्धि संबन्धादतीतः संबन्धो बलवान्भवति, अभिनिष्पन्नत्वात् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ( ऋ० सं० १०।१९०।३ ) इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति । स्मृता-

---

### भामती ।

**सूत्रम्—उपपद्यते चाप्युपलभ्यते च ।** अकृते कर्मणि पुण्ये पापे वा तत्फलं भोक्तारमध्यागच्छेत्, तथा च विधिनिषेधशास्त्रमनर्थकं भवेत्, प्रवृत्तिनिवृत्त्यभावादिति । मोक्षशास्त्रस्य चोक्तमानर्थक्यम् । **नचाविद्या केवलेति** लयाभिप्रायम् । विक्षेपलक्षणाऽविद्यासंस्कारस्तु कार्यत्वात्स्वोत्पत्तौ पूर्वं विक्षेपमपेक्षते, विक्षेपश्च मिथ्याप्रत्ययो मोहापरनामा पुण्यापुण्यप्रवृत्तिहेतुभूतरागद्वेषनिदानं, स च रागादिभिः सहितः स्वकार्यैर्न शरीरं सुखदुःखभोगायतनमन्तरेण संभवति । नच रागद्वेषावन्तरेण कर्म, नच भोगसहितं मोहमन्तरेण रागद्वेषौ, नच पूर्वशरीरमन्तरेण मोहादिरिति पूर्वपूर्वशरीरापेक्षो मोहादिरेवं पूर्वपूर्वमोहाद्यपेक्षं पूर्वपूर्वशरीरमित्यनादितैवात्र भगवती चित्तमनाकुलयति । तदेतदाह—**रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यादिति ।** रागद्वेषमोहा रागादयस्त एवहि 'पुरुषं संसारदुःखमनुभाव्य क्लेशयन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तानि प्रवर्तितानि कर्माणि तदपेक्षा लयलक्षणा अविद्या । **स्यादेतत्**—भविष्यतापि व्यपदेशो दृष्टो यथा 'पुरोडाशकपालेन तुषानुपवपति' इति । अत आह—**नच धारयिष्यतीत्यत इति ।** तदेवमनादित्वे सिद्धे 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति

### वेदान्तकल्पतरुः ।

**अकृते इति ।** तदङ्गीकारे आगतौ दोषावाह—**तथा चेति ।** वेदान्तानर्थक्यं मुक्तानामपीति भाष्योक्तमित्याह—**मोक्षशास्त्रस्येति ।** भाष्ये केवलाया अविद्याया वैषम्यकरत्वनिषेधोऽनुपपन्नः, भ्रान्तेर्विचित्रत्वेन वैषम्यहेतुत्वोपपत्तेरित्याशङ्क्याह—**लयेति ।** **ननु**—मा भूल्लयलक्षणाविद्या वैषम्यकरी, भ्रमसंस्कारस्तु किं न स्यादिति—**चेत्,** अस्तु न तु संसारानादितामन्तरेण स्यात्, तथा च सिद्धं नः समीहितमित्याह—**विक्षेपेति ।** विभ्रमसंस्कारस्य भ्रमसापेक्षत्वान्न स्वत एव वैषम्यहेतुत्वं, विभ्रमश्च न केवलो वैषम्यहेतुरपि रागादीन् जनयित्वा तत्सहितः । तथा च विभ्रमो रागादिसहितः शरीराच्छरीरं कर्मणः कर्म रागद्वेषाभ्यां तौ च मोहसंज्ञाद्विभ्रमात् स च शरीरादुदेतीति चक्रकभ्रमणमनादितैव समादधा-

### कल्पतरुपरिमलः ।

निरवद्ये हेतुसत्त्वेन व्यभिचार इत्यर्थः । **तत्तत्प्राणिकर्मवासने इति ।** स्यादेव विषमकर्मानुष्ठापनेन वैषम्यं परमेश्वरस्य, यदि तत्र स्वातन्त्र्यं भवेत्, न त्वेवं; सुखदुःखानुभावन इव तद्धेतुकर्मानुष्ठापनेऽपि तस्य तत्पूर्वकर्मवासनासापेक्षत्वादिति भावः ॥ ३४ ॥ ३५ ॥ **आगताविति ।** पुण्यपापे विना फलभोगाभ्यागतावित्यर्थः । **वेदान्तानर्थक्यमिति ।** अकस्मात्पुण्यपापफलाभ्यागतौ यथा विधिनिषेधशास्त्रानर्थक्यम्, एवं पुनः संसारोद्भूतौ मोक्षशास्त्रानर्थक्यमिति भाष्ये विवक्षितमिति व्याचष्टे इत्यर्थः । **अनादितैवेति ।** स्यादेव कर्मानुष्ठापने वैषम्यं,

वप्यनादित्वं संसारस्योपलभ्यते—'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा' ( गी० १५।३ ) इति । पुराणे चातीतानागतानां च कल्पानां न परिमाणमस्तीति स्थापितम् ॥ ३६ ॥ इति द्वादशं वैषम्यनैर्घृण्याधिकरणम् ॥

( १३ अधिकरणम् ) **सर्वधर्मोपपत्तेश्च ॥ ३७ ॥**

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान्विलक्षणत्वादीन्दोषान्पर्यहार्षीदाचार्यः । इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणं प्रारिप्समाणः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति । यस्मादस्मिन्ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते 'सर्वज्ञं सर्वशक्ति महामायं च ब्रह्म' इति, तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति ॥ ३७ ॥ त्रयोदशं सर्वधर्मोपपत्त्यधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यशंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

## ॥ इति द्वितीयाध्यायस्य सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयविरोधपरिहाराख्यः प्रथमः पादः ॥

### भामती ।

प्राक् सृष्टेरविभागावधारणं समुदाचरद्रूपरागादिनिषेधपरम्, न पुनरेतान्प्रसुप्तानप्यपाकरोतीति सर्वमवदातम् ॥ ३६ ॥ इति द्वादशं वैषम्यनैर्घृण्याधिकरणम् ॥

**सर्वधर्मोपपत्तेश्च ॥ ३७ ॥**

अत्र **सर्वज्ञमिति** दृश्यते सर्वस्य चेतनाधिष्ठितस्यैव लोके प्रवृत्तिरिति लोकानुसारो दर्शितः । **सर्वशक्तीति** सर्वस्य जगत उपादानकारणं निमित्तकारणं चेत्युपपादितम् । **महामायमिति** सर्वानुपपत्तिशङ्का परास्ता । तस्माज्जगत्कारणं ब्रह्मेति सिद्धम् ॥ ३७ ॥ इति त्रयोदशं सर्वधर्मोपपत्त्यधिकरणम् ॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

### वेदान्तकल्पतरुः ।

तीत्यर्थः । अवघातनिष्पन्नाँस्तुषान् पुरोडाशकपालेनोपवपति विगमयतीत्यत्रावघातसमये कपालेषु पुरोडाशश्रपणाभावाद्भविष्यच्छ्रपणमपेक्ष्य कपालानां पुरोडाशसंबन्धकीर्तनमिति ॥ ३६ ॥ इति द्वादशं वैषम्यनैर्घृण्याधिकरणम् ॥[1]

**सर्वधर्मोपपत्तेश्च ॥ ३७ ॥**

निर्गुणब्रह्मणो जगदुपादानत्वादिसमन्वयस्य यन्निर्गुणं न तदुपादानं गन्ध इवेति न्यायविरोधसंदेहे भवतु विषमसृष्टत्वं पक्षपातेनाव्याप्तमनेकान्तम् । साध्येन तु सगुणत्वे उपादानत्वमिति प्राप्ते विवर्ताधिष्ठानत्वमिहोपादानत्वम् । तच्च निर्गुणे-

### कल्पतरुपरिमलः ।

यदि क्वचित्सर्गादौ पूर्वकर्मवासनानपेक्षः, किंचित्कर्मानुष्ठापयेत्, क्वचिदपि कल्पे तन्नास्ति; बीजाङ्कुरन्यायेनानादित्वात् कर्मतद्वासनाप्रवाहस्येत्यर्थः । **भविष्यच्छ्रपणमपेक्ष्येति** । इदमगत्याऽङ्गीकृतम्; प्रकृतावपि तुषोपवापसमये कपाले सिद्धस्य पुरोडाशसंबन्धस्याभावात् । यत्र तु प्रकृतौ सिद्धसंबन्धो लभ्यते, तत्र भविष्यत्संबन्ध आश्रीयते, यथाऽग्निहोत्रहवण्या हवींषि निर्वपतीत्यत्र । तत्र ह्यग्निहोत्रं यया हुतं साग्निहोत्रहवणी गृह्यते, नतु यया होष्यते सापि; प्रकृत्यारम्भात् पूर्वमग्निहोत्रस्य हुतत्वेन प्रकृतिभूतयोर्दर्शपूर्णमासयोः सिद्धसंबन्धवत्त्वात् । यत्र तु तद्विकृतौ पवमानेष्टौ सिद्धाग्निहोत्रसंबन्धाग्निहोत्रहवणी न लभ्यते, तत्रासंभवाद् निर्वापगुणभूताया अग्निहोत्रहवण्या लोप इत्येव गुणलोपे च मुख्यस्येत्यधिकरणे ( जै. सू. अ. १० पा. २ सू. ६३ ) प्रतिपादितम् ॥ ३६ ॥ इति द्वादशं वैषम्यनैर्घृण्याधिकरणम् ॥

**सर्वधर्मोपपत्तेश्च ॥ ३७ ॥**

**निर्गुणेऽप्यविरुद्धमिति । इदमत्र वक्तुं शक्यम्**—ब्रह्मणो निर्गुणत्वमसिद्धम्; सर्वज्ञत्वादिगुणकत्वात्, तस्य

---

१ तत्र सूत्राणि ३—वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ३४ न कर्माविभागादिति चेन्नानादित्वात् ३५ उपपद्यते चाप्युपलभ्यते च ३६ ॥

## वेदान्तकल्पतरुः ।

ऽप्यविरुद्धम्; जात्यादावनित्यत्वाद्यारोपोपलब्धेरिति सिद्धान्तः । भाष्यकारेण सौत्रीं सर्वधर्मोपपत्तिं व्याकुर्वता सर्वज्ञत्वादयः कारणधर्मा ब्रह्मण्युपपद्यन्त इत्युक्तम्, तदयुक्तमिव; न ह्येते लोके कस्यचित्कारणस्य धर्मा दृश्यन्ते, अत आह— **अत्रेति ।** जडप्रेरकत्वं कुलालादौ दृष्टं, ब्रह्मण्यपि नियन्तरि तेन भाव्यम् । तस्य सर्वप्रेरकत्वस्य श्रुतिसिद्धत्वादर्थात्सर्वज्ञत्वसिद्धिः । एवं सर्वशक्तित्वादौ योज्यम् । सर्वशक्तित्वेनोपादानकारणत्वमुपपादितम् । सर्वज्ञत्वेन निमित्तकारणं चेत्युपपादितमित्यर्थः । महामायाविषयीकृतत्वेन निर्गुणत्वादिप्रयुक्तसर्वानुपपत्तिशङ्काऽपास्तेत्यर्थः ॥ ३७ ॥ **इति त्रयोदशं सर्वधर्मोपपत्त्यधिकरणम् ॥**[1]

**इति श्रीमत्परमहंसपरिव्राजकश्रीमदनुभवानन्दविरचिते**
**वेदान्तकल्पतरौ द्वितीयाध्यायस्य प्रथमः पादः ॥**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १३ | ५३ |
| सूत्राणि | ३७ | १७१ |

## कल्पतरुपरिमलः ।

निमित्तोपादानभावोपपादनार्थं सर्वज्ञत्वसर्वशक्तिकत्वयोः सर्वधर्मोपपत्तेश्चेत्यनेनैव सूत्रेण प्रतिपादनात्, अन्योन्यधर्मांश्चाध्यस्येत्यादिभाष्यवाक्यैरपि तदनुमोदनात् । वस्तुतो धर्मिभिन्नं ज्ञानादिकं ब्रह्मणि नास्तीति चेत्, न; घटाद्युपादानेष्वपि वास्तवतद्भिन्नरूपादिगुणासंप्रतिपत्तेः । तत्त्वतो ब्रह्मणि व्यावहारिकगुणत्वमपि नास्ति, किंतु स्वरूपप्रकाश एव तत्तद्विषयोपरागेण तत्तज्ज्ञानत्वव्यपदेशमात्रमिति चेत्, न; श्रुतिस्मृतिसिद्धसर्वज्ञत्वादिव्यवहारालम्बनया व्यावहारिकधर्मधर्मिभेदकल्पनोपपत्तौ व्यपदेशमात्रत्वाभ्युपगमायोगाज्जीवब्रह्मणोरिव ब्रह्मतज्ज्ञानयोरप्यनादिविभागाङ्गीकारेण धर्मज्ञान एवागमापायिविषयोपरागप्रयुक्तावान्तरभेदकल्पनोपपत्तेश्च । तथापि ब्रह्मणि प्रपञ्चगतरूपादिगुणो नास्तीति चेत्, किं ततः ? सगुणमेवोपादानमिति नियममातिष्ठमानस्य कुतार्किकस्य परितोषाय गुणवत्त्वमुपपादितमेव । नच तन्मतेऽप्यस्ति नियमः कार्यगतगुणवतोपादानेन भाव्यमिति; द्व्यणुकेषु महत्त्वाभावात् । नच विशेषगुणविषयोऽयं नियमः; परिमाणादिव्यावृत्तविशेषगुणत्वानिर्वचनात् । **किंच** निर्गुणस्य नोपादानत्वमिति परमतेऽपि नास्ति नियमः; प्रथमक्षणेऽस्यैव घटस्य रूपादिसमवायिकारणत्वाभ्युपगमात्, उपादानशब्देन द्रव्यसमवायिकारणविवक्षायामप्रयोजकत्वादिति । तदेतत्सर्वमाचार्याणामपि हृदयस्थमेव; पूर्वाधिकरणेषु विवर्तवादमपेक्ष्यापि परिहारान्तरप्रतिपादनात्, किंतु सूत्रभाष्याद्यालोचनया स्फुटमिति कण्ठतो न प्रतिपादितम् । **नित्यत्वाद्यारोपोपलब्धेरिति । ननु** जातिर्नित्येति न प्रत्यक्षारोपोऽस्ति, शब्दानुमानजारोपेषु न प्रातिभासिकविषयोत्पत्तिरस्ति, अनित्यत्वारोपोपलब्धेरिति पाठेऽप्ययमेव दोषः । नहि घटे दृश्यमाने घटत्वं नष्टमिति प्रत्यक्षारोपः संभवति । नष्टे घटे तत्संभवेऽपि तत्र घटत्वस्य धर्मिणोऽनभिव्यक्त्या न तद्धर्मिको नष्टत्वारोपः प्रत्यक्ष इत्युपपद्यते । **सत्यम्**; दशमस्त्वमसीति बोध्यस्येव यस्य संनिहिते विषये नष्टत्वभ्रमः स व्यवस्थितविषयश्चेत्तस्य तद्गतजातिनष्टत्वभ्रमः सन्निहितजातिधर्मिकः प्रत्यक्ष उपपद्यत इति तदभिप्रायमनित्यत्वारोपोपलब्धेरिति वचनम् । नित्यत्वेति पाठस्तु मिथ्यात्वेन ज्ञाननिवर्त्यायां जातौ शब्दानुमानजे नित्यत्वारोपेऽपि प्रातिभासिकविषयोत्पत्तिरस्तीति पक्षमाश्रित्य नेतव्यः । **इदमुपलक्षणम्**—रात्रौ दीपप्रभायां नीलोत्पलवर्णे रक्तवर्णत्वारोपः विभागे संयोगाभावत्वारोप इत्यादिकमप्युदाहरणं द्रष्टव्यम् ॥ ३७ ॥ **इति त्रयोदशं सर्वधर्मोपपत्त्यधिकरणम् ॥**

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीवेदान्तकल्पतरुपरिमले द्वितीयाध्यायस्य प्रथमः पादः ॥**

---

१ तत्र सूत्रम् १—सर्वधर्मोपपत्तेश्च ३७ ॥

# अथ द्वितीयाध्यायस्य द्वितीयः पादः ।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

यद्यपीदं वेदान्तवाक्यानामैदंपर्यं निरूपयितुं शास्त्रं प्रवृत्तम्, न तर्कशास्त्रवत्केवलाभिर्युक्तिभिः कंचित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम्; तथापि वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते। वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात्तन्निर्णयेन स्वपक्षस्थापनं प्रथमं कृतं, तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानादिति। ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तं, किं परपक्षनिराकरणेन परद्वेषकरेण? बाढमेवम्; तथापि महाजनप-

---

### भामती।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

**स्यादेतत्**—इह हि पादे स्वतन्त्रा वेदनिरपेक्षाः प्रधानादिसिद्धिविषयाः सांख्यादियुक्तयो निराकरिष्यन्ते, तदयुक्तम्; अशास्त्राङ्गत्वात्। नहीदं शास्त्रमुच्छृङ्खलतर्कशास्त्रवत्प्रवृत्तमपि तु वेदान्तवाक्यानि ब्रह्मपराणीति पूर्वपक्षोत्तरपक्षाभ्यां विनिश्चेतुम्। तत्र कः प्रसङ्गः शुष्कतर्कवत्स्वतन्त्रयुक्तिनिराकरणस्येत्यत आह—**यद्यपीदं वेदान्तवाक्यानामिति**। नहि वेदान्तवाक्यानि निर्णेतव्यानीति निर्णीयन्ते, किंतु मोक्षमाणानां तत्त्वज्ञानोत्पादनाय। यथा च वेदान्तवाक्येभ्यो जगदुपादानं ब्रह्मावगम्यते, एवं सांख्याद्यनुमानेभ्यः प्रधानाद्यचेतनं जगदुपादानमवगम्यते। न चैतदेव चेतनोपादानमचेतनोपादानं चेति समुच्चेतुं शक्यम्; विरोधात्। नच व्यवस्थिते वस्तुनि विकल्पो युज्यते। न च आगमबाधितविषयतयानुमानमेव नोदीयत इति—सांप्रतम्; सर्वज्ञप्रणीततया सांख्याद्यागमस्य वेदागमतुल्यत्वात् तद्भावितस्यानुमानस्य प्रतिकृतिसिंहतुल्यतयाऽबाध्यत्वात्। तस्मात्तद्विरोधान्न ब्रह्मणि समन्वयो वेदान्तानां सिध्यतीति न ततस्तत्त्वज्ञानं सेद्धुमर्हति। नच तत्त्वज्ञानादृते मोक्ष इति स्वतन्त्राणामप्यनुमानानामाभासीकरणमिह शास्त्रे संगतमेवेति। यद्येवं ततः परकीयानुमाननिरास एव कस्मात्प्रथमं न कृत इत्यत आह—**वेदान्तार्थनिर्णयस्य चेति**। ननु वीतरागकथायां तत्त्वनिर्णयमात्रमुपयुज्यते, न पुनः परपक्षाधिक्षेपः, स हि सरागतामावहतीति चोदयति—**ननु मुमुक्षूणामिति**। परिहरति—**बाढमेवं, तथापीति**। तत्त्वनिर्णयावसाना वीतरागकथा। नच परपक्षदूषणमन्तरेण

### वेदान्तकल्पतरुः।

उद्दण्डैर्बाहुदण्डैः पृथुतरपरिघप्रांशुभिर्भिन्नगात्राः
केचित्केचिच्च वज्रप्रतिमनखमुखैर्दीर्णदेहोपदेहाः।
आकर्ण्यैके च यस्य प्रलयघनघनध्वानगम्भीरनादं
विध्वस्ता दैत्यमुख्यास्तमहमतिवलं श्रीनृसिंहं प्रपद्ये ॥
स्वबोधदलिताबोधतदुद्भूतजगद्भ्रमम्।
सदानन्दघनाद्वैतं परं ब्रह्मास्मि निर्मलम् ॥

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

स्वतन्त्रा इत्यस्य व्याख्यानं—**वेदनिरपेक्षा इति**। विलक्षणत्वादयो हि प्रधानादिपरत्वेन वेदान्तव्याख्यायामनुग्राहिकाः, इमास्तु युक्तयः स्वातन्त्र्येण प्रधानादिसाधिका इति। अनेनाक्षेपावसरे एव पादार्थो विवेचितः। **मोक्षमाणानां** मोक्षमिच्छताम्। मुचेः सन्नन्तस्य लुप्ताभ्यासस्य रूपम्। वेदान्तैरेव ज्ञानजननात्किं परपक्षाक्षेपेण? तत्राह—**यथा चेति**। **ननु** प्रमाणावगतान्युपादानानि जगति समुच्चीयन्तां, तन्तव इव पटेऽत आह—**न चैतदेवेति**। चेतनमुपा-

### कल्पतरुपरिमलः।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

**मोक्षमाणानामिति**। मुचोऽकर्मकस्य गुणो वेति सूत्रेण कर्मणः कर्तृत्वविवक्षणादकर्मकस्य सन्नन्तस्य मुचेर्गुणः। अत्र

रिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत्केषांचिन्मन्दमतीनामेतान्यपि सम्यग्दर्शनायोपादेयानीत्यपेक्षा । तथा युक्तिगाढत्वसंभवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु, इत्यतस्तदसारतोपपादनाय प्रयत्यते । ननु—'ईक्षतेर्नाशब्दम्' ( ब्र० सू० १।१।५ ), 'कामाच्च नानुमानापेक्षा' (ब्र० सू० १।१।१८ ), 'एतेन सर्वे व्याख्याता व्याख्याताः' (ब्र० सू० १।४।२८ ) इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः, किं पुनः कृतकरणेनेति ? तदुच्यते—सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्यान्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते, तेषां यद्व्याख्यानं तद्व्याख्यानाभासं न सम्यग्व्याख्यानमित्येतावत्पूर्वं कृतम्, इह तु वाक्यनिरपेक्षः स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः । तत्र सांख्या मन्यन्ते—यथा घटशरावादयो भेदा मृदात्मनान्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्वे एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतयान्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति । यत्तत्सुखदुःखमोहात्मकं सामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना विवर्तत इति । तथा परिमाणा-

## भामती ।

तत्त्वनिर्णयः शक्यः कर्तुमिति तत्त्वनिर्णयाय वीतरागेणापि परपक्षो दूष्यते, न तु परपक्षतयेति न वीतरागकथात्वव्याहतिरित्यर्थः । पुनरुक्ततां परिचोद्य समाधत्ते—**नन्वीक्षतेरिति** । **तत्र सांख्या इति** । यानि हि येन रूपेणास्थौल्यादा च सौक्ष्म्यात्समन्वीयन्ते तानि तत्कारणानि दृष्टानि, यथा घटादयो रुचकादयश्चास्थौल्यादाच सौक्ष्म्यान्मृत्सुवर्णान्वितास्तत्कारणाः, तथा चेदं बाह्यमाध्यात्मिकं च भावजातं सुखदुःखमोहात्मनान्वितमुपलभ्यते, तस्मात्तदपि सुखदुःखमोहात्मसामान्यकारणकं भवितुमर्हति । तत्र जगत्कारणस्य येयं सुखात्मता तत्सत्त्वं, या दुःखात्मता तद्रजः, या च मोहात्मता तत्तम इति त्रैगुण्यकारणसिद्धिः । **तथाहि**—प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते । यथा मैत्रदारेषु पद्मावत्यां मैत्रस्य सुखम् । तत् कस्य हेतोः ? तंप्रति सत्त्वगुणसमुद्भवात् । तत्सपत्नीनां च दुःखं, तत्कस्य हेतोः ? ताः प्रत्यस्य रजोगुणसमुद्भवात्, चैत्रस्य तु स्त्रैणस्य तामविन्दतो मोहो विषादः, तत् कस्य हेतोः ? तं प्रत्यस्यास्तमोगुणसमुद्भवात् । पद्मावत्या च भावा व्याख्याताः । तस्मात्सर्वं सुखदुःखमोहान्वितं जगत्तत्कारणं गम्यते । तच्च त्रिगुणं प्रधानं प्रधीयते क्रियतेऽनेन जगदिति, प्रधीयते निधीयतेऽस्मिन्प्रलयसमये जगदिति वा प्रधानम् । तच्च मृत्सुवर्णवदचेतनं चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं स्वभावत एव प्रवर्तते, न तु केनचित्प्रवर्त्यते । **तथा ह्याहुः**—'पुरुषार्थ एव हेतुर्न केन

## वेदान्तकल्पतरुः ।

दानमस्येति तथोक्तम् । वेदो हि ब्रह्मप्रणीत इति सांख्याद्यागमस्य तत्तुल्यता । तथा च कपिलाद्यागमो वेदेन न बाध्यते, सिंह इव समबलसिंहान्तरेण । एवं कपिलाद्यागमं दृष्ट्वा कृतमनुमानमपि न बाध्यते, यथा सिंहं दृष्ट्वा कृते दार्वादिमये प्रतिकृतिसिंहे दृश्यमानाया ईदृशः सिंह इति सिंहाकारप्रतीतेरबाध इत्यर्थः । चेतनप्रकृतिकं जगदिति प्रतिपादकस्य वेदस्य प्रतिरोधकमनुमानमाह—**यानि हीति** । संयोगादौ व्यभिचारवारणार्थमा स्थौल्यादित्युक्तम् । संयोगादयो हि न स्थूलपिण्डादारभ्य कणपर्यन्तमनुयन्ति । कुम्भोपादानत्वं सत्त्वादिगुणाश्रितं मृद्गतत्वात्सत्तावदिति च वक्ररीत्याऽनुमानम् । **ननु** सुखं घट इत्याद्यनुपलम्भात् कथं तदात्मत्वेनानुगतिरत आह—**उपलभ्यत इति** । घटविषया हि बुद्धिस्तमनुकूलं प्रतिकूलं वा गोचरयतीति अस्त्येवानुगतिरित्यर्थः । अन्वितत्वादेव सुखदुःखमोहात्मकं सामान्यम् । सुखाद्यारब्धत्वेऽपि जगतः कथं सत्त्वाद्यात्मकप्रधानारभ्यत्वमत आह—**तत्रेति** । येयं जगत्कारणस्य कार्यवशोन्नीता सुखाद्यात्मता सा सत्त्वमित्यर्थः । विधेयापेक्षया नपुंसकप्रयोगः । उपलभ्यत इति यदुक्तं तद्व्यक्तीकरोति—**तथा हीति** । निरन्तरतरुष्वध्यस्तवनेऽनेकान्तवारणाय **प्रत्येक**मित्युक्तम् । **ननु** चेतनोपकारकत्वेन तं प्रति गुणीभूतगुणत्रयस्य कथं प्रधानत्वमत आह—**तच्च त्रिगुणमिति** । चेतनं प्रति गुणभूतस्यापि गुणत्रयस्य सिद्धान्तसिद्धमायया वैलक्षण्यमाह—**न तु केनचिदिति** ।

## कल्पतरुपरिमलः ।

लोपोऽभ्यासस्येत्यभ्यासलोपः । **संयोगादयो हीति** । स्थूलपिण्डस्य यः केनचित्संयोगस्तद्विभागः परिमाणविशेषो गुरुत्वविशेषो वा न तेषां कणपर्यन्तमनुवृत्तिरस्तीति न तेषु व्यभिचार इत्यर्थः । **ननु**—तथापि रूपे व्यभिचारः स्थूलपिण्डे यद्रूपं तस्यैव कणेऽपि दृश्यमानत्वादिति—**चेद्**, न तावत्कार्यकारणभेदवादिमते व्यभिचारः; तन्मते कारणे कार्ये च रूपभेदात्,

दिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते। तत्र वदामः—यदि दृष्टान्तबलेनैवैतन्निरूप्येत, नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किंचिद्विशिष्टपुरुषार्थनिर्वर्तनसमर्थान्विकारान्विरचयद्दृष्टम्। गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते। तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभावितमतैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेत्? लोष्टपाषाणादिष्वदृष्टत्वात्। मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते, तद्वत्प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः।

## भामती।

चित्कार्यते करणम्'-इति। परिमाणादिभिरित्यादिग्रहणेन 'शक्तितः प्रवृत्तेश्च। कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' इत्यव्यक्तसिद्धिहेतवो गृह्यन्ते। एतांश्चोपरिष्टाद्व्याख्याय निराकरिष्यत इति। तदेतत्प्रधानानुमानं दूषयति—**तत्र वदाम इति**। यदि तावदचेतनं प्रधानमनधिष्ठितं चेतनेन प्रवर्तते स्वभावत एवेति साध्यते, तदयुक्तम्; समन्वयादेर्हेतोश्चेतनानधिष्ठितत्वविरुद्धचेतनाधिष्ठितत्वेन मृत्सुवर्णादौ दृष्टान्तधर्मिणि व्याप्तेरुपलब्धेर्विरुद्धत्वात्। नहि मृत्सुवर्णदार्वादयः कुलालहेमकाररथकारादिभिरनधिष्ठिताः कुम्भरुचकरथाद्युपाददते। तस्मात् कृतकत्वमिव नित्यत्वसाधनाय प्रयुक्तं साध्यविरुद्धेन व्याप्तं विरुद्धम्, एवं समन्वयादि चेतनानधिष्ठितत्वे साध्य इति रचनानुपपत्तेरिति दर्शितम्। यद्युच्येत दृष्टान्त

## वेदान्तकल्पतरुः।

करणमिन्द्रियं केनचिच्चेतनेन न कार्यते न प्रेर्यते, किंतु कारणानां प्रवृत्तावनागतावस्थोपभोगापवर्गरूपः पुरुषार्थ एव हेतुः, स च न्यायो गुणानामपि तुल्य इत्यर्थः। **नन्वनुमानादचेतनोपादानत्वे जगतः सिद्धे जगदुपादानस्य चेतनाधिष्ठितत्वापत्त्या किं दूषणमुक्तं भवति?** साध्यसिद्धिमङ्गीकृत्य दृष्टान्तदृष्टधर्मान्तरसंचारो ह्युत्कर्षसमा जातिः स्यात्, यथा—यदि कृतकत्वेन घटवदनित्यः शब्दः, तर्हि तद्वन्मूर्तः स्यादिति, तत्राह—**यदि तावदिति। अयमत्र दूषणाभिप्रायः**—किं गुणत्रयं चेतनानधिष्ठितमुपादानं साध्यते, उत तस्योपादानत्वमात्रम्। **आद्ये** विरुद्धत्वं **द्वितीये** सिद्धसाधनं; त्रिगुणमायाया ईश्वराधिष्ठितायाः प्रकृतित्वेष्टेरिति। मूर्तत्वापादनाद् वैषम्यमाह—**व्याप्तेरिति**। कृतकत्वं हि न व्याप्तमित्यर्थः। **उपाददते** उत्पादयन्ति कृतकत्वमिव विरुद्धमित्यन्वयः। इवशब्दो यथाशब्दसमानार्थः उपमामात्रपरो न तूपमीयमानपरः; एवंशब्दस्य पृथक् प्रयोगात्। यदि सत्त्वाद्यन्वितत्वाज्जगत्तत्प्रकृतिकं मृदन्वितकुम्भवत्, तर्हि तच्चेतनाधिष्ठितं तत्प्रकृतिकं स्यात्तत एव तद्वदेवेत्युक्तम्। तत्रोपाधिमाशङ्कते—**यद्युच्येतेति**। यथैकस्मिन्साध्ये साधनद्वयसंनिपाते सति एकतरसाधनप्रयुक्ता व्याप्तिरितरत्रारोप्यत इति सोपाधिकता, तद्यथा निषिद्धत्वप्रयुक्ता व्याप्तिरधर्मत्वस्य हिंसात्वे समा-

## कल्पतरुपरिमलः।

नापि कारणातिरिक्तकार्यानिर्वचनीयत्ववादिमते; तन्मते कार्यवत्तद्रूपस्याप्यनिर्वचनीयस्याभ्युपगमसंभवात्, नापि कार्यकारणाभेदवादिनः सांख्यस्य मते; तन्मते पञ्चतन्मात्रप्रकृतौ तामसाहङ्कारे रूपाभावेन तस्य सूक्ष्मकारणपर्यन्तानुवृत्त्यभावात्। **ननु** चेतनानधिष्ठितत्वं सांख्येन साध्ये न प्रवेशितमतो विरुद्धत्वाभिधानमयुक्तमित्याशङ्क्य तदप्रवेशने सिद्धसाधनं स्यादिति तत्परिहाराय तत्प्रवेशनावश्यंभावमापाद्य विरुद्धत्वाभिधानमिति योजयति—**अयमत्रेति। एवंशब्दस्येति**। तथाच यथा कृतकत्वं विरुद्धम्, एवं समन्वयादिविरुद्धशब्दानुषङ्गेण वाक्ययोजनेति भावः। **ननु** सांख्यानुमाने विरुद्धत्वोद्भावनपरं सूत्रमित्युक्तम्; सिद्धान्त्युद्भावनीयकिंचिदनुमानपरमिति नोक्तमत उपाधिशङ्केयमस्थानविजृम्भितेत्याशङ्क्य विरुद्धत्वोपपादनाय हेतोः साध्यविपर्ययव्याप्तिर्या सिद्धान्तिना उपपादनीया तत्रेदमुपाध्युद्भावनमित्यवतारयति—**सत्त्वाद्यन्वितत्वादिति। ननु** साधनोपाध्योः साध्यव्याप्यत्वेन प्रतीयमानयोरुपाधिरेव वस्तुतः साध्यव्याप्यः, साधने तु तद्गतं साध्यव्याप्यत्वं सन्निधानादारोप्यते। अतएवोप समीपे स्थित्वाऽन्यत्र स्वधर्माधायकत्वाज्जपाकुसुमादिवन्निषिद्धत्वादिरुपाधिरित्युच्यते। ततश्च साधनमेव सर्वत्र सोपाधिकं न साध्यमतोऽत्र साध्यस्य सोपाधिकत्वशङ्का न युक्तेत्याशङ्क्य समानन्यायत्वात्साधनवत्साध्यस्यापि सोपाधिकत्वं वक्तुं युक्तमित्युपपादयति—**यथेति**। एवं चान्तरङ्गत्वे स्वधर्मासञ्जकलक्षणमुक्तमुपाधिपदप्रवृत्तिनिमित्तं यद्यपि नास्ति, किंतु साध्यान्तर एव; तथाप्यन्यदेव प्रवृत्तिनिमित्तं किंचिदनुमानदूषणोपाधावस्तु। नहि सर्वत्र उपाधिपदस्य तदेव प्रवृत्तिनिमित्तमिति नियमः। "उपाधिर्ना धर्मचिन्ता" "कुटुम्बव्यापृतस्तु यः। स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयं" मित्याद्यभिधानकोशेषु तस्योक्तप्रवृत्तिनिमित्तरहितार्थान्तरवाचकत्वस्यापि स्मरणादिति भावः। **ननु** व्यतिरेकव्याप्त्यनवधारणेऽप्यन्वयसहचारमात्रेण केवलान्वयिनीवान्वयव्याप्तिर्ग्रहीतुं शक्येत्याशङ्क्याह—

**नच मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं न बाह्यकुम्भकारादिव्यपा-**

## भामती ।

धर्मिण्यचेतनं तावदुपादानं दृष्टं, तत्र यद्यपि तच्चेतनप्रयुक्तमपि दृश्यते; तथापि तत्प्रयुक्तत्वं हेतोरप्रयोजकं बहिरङ्गत्वात्; अन्तरङ्गं त्वचैतन्यमात्रमुपादानानुगतं हेतोः प्रयोजकम् । **यथाहुः**—'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः' इति । तत्राह—**नच मृदादीति** । स्वभावप्रतिबद्धं हि व्याप्यं व्यापकमवगमयति । स च स्वभावप्रतिबन्धः शङ्कित-समारोपितोपाधिनिरासे सति निश्चीयते । तन्निश्चयश्चान्वयव्यतिरेकयोरायतते । तौ चान्वयव्यतिरेकौ न तथोपादा-

## वेदान्तकल्पतरुः ।

रोप्यते, एवमेकस्मिन्साधने समन्वयादौ प्रकृतिगताचेतनत्वचेतनाधिष्ठितत्वरूपसाध्यद्वयवत्यन्तरङ्गा चेतनत्वप्रयुक्ता हेतु-साध्ययोर्व्याप्तिर्बहिरङ्गचेतनाधिष्ठितत्वे समारोप्यत इति भवति साध्यमपि सोपाधिकमित्यर्थः । **कश्चिद्धर्मो**ऽन्तरङ्गत्वादिः । नान्तरङ्गत्वबहिरङ्गत्वकृते व्यापकत्वे, किंत्वव्यभिचारकृते अन्तरङ्गस्यापि महानसादिस्वरूपस्य व्यभिचाराद्धूमवत्त्वं प्रत्यव्या-पकत्वाद्बहिरङ्गस्यापि वह्निसंयोगस्याव्यभिचारेण व्यापकत्वादिति मत्वा परिहरति—**स्वभावेति** । **स्वभावप्रतिबद्ध-**मनौपाधिकत्वेन संबद्धम् । **ननु** स्वभावसंबन्धोऽप्यन्तरङ्गत्वाद् ज्ञेयस्तत्राह—**स चेति** । साधनाव्यापक उपाधिर्यथा प्रपञ्चः सत्यः प्रतिभासमानत्वाद् ब्रह्मवदित्यत्र चेतनत्वमुपाधिः । अयं हि साध्यव्यापकः सत्यब्रह्मव्यापनात् । नच साध-नव्यापकः; पक्षे साधनवत्यप्यप्रवृत्तेः । साध्यव्यापक इत्युक्ते शैलेऽनलस्यानुमायामिन्धनवत्त्वस्याप्युपाधिता स्यात् तद्वार-णाय साधनाव्यापक इत्युक्तम् । एतावत्युक्ते कारीषवह्निमत्त्वादेरप्युपाधित्वं भवेत्तन्मा भूदिति साध्यव्यापक इत्यभिहितम् । **नन्वेवं** पक्षेतरत्वस्याप्युपाधिता स्यात्तद्व्यावृत्त्यर्थं साध्यसमव्याप्तिरिति विशेषणीयमिति **तन्न । यतः—साध्याभावेन साकं स्वाभावव्याप्तेरनिश्चयात् । कुतः पक्षेतरत्वस्य साध्यव्यापकता मता** ॥ यदि हि यत्र पक्षान्यत्वं नास्ति, तत्र साध्यमिति व्यतिरेकव्याप्तिरवधार्येत, तदा यत्र साध्यं तत्र पक्षान्यत्वमित्यन्वयः । अन्यथा पक्षेतरत्वं त्यक्त्वा-पि साध्यसत्त्वे कुतस्तस्य तद्व्यापकता ? नचायमवधारयितुं शक्यते; यत्र पक्षान्यत्वं नास्ति पक्षे तत्र साध्याभावस्य संदिग्धत्वात् । एवं च साध्यव्यापकत्वेनैव पक्षेतरत्वस्य व्यावृत्तेः समपदं मुधेति । द्विधा चोपाधिस्तत्र शङ्कितोऽनुकूलतर्का-भावादिनावगम्यते, निश्चितस्तु यथायोगं प्रमाणैरवधार्यते । सदनुमाने तु समारोपित उपाधिः साधनव्याप्त्यादिभिरु-द्ध्रियते, शङ्कितस्त्वनुकूलतर्कैः, शङ्क्यमानश्च साध्यव्यापकः साधनाव्यापकश्च वाच्यः, तत्र साध्यव्यापकत्वं स्याद्, व्यापकं प्रति व्यापकस्य व्याप्यं प्रति व्यापकताया अवश्यंभावात्साधनाव्यापकत्वे च साध्याव्यापकत्वं भवेद् व्याप्यं प्रत्यव्यापकस्य तद्व्यापकं प्रत्यव्यापकत्वनियमादित्यादिभिश्च तदुद्धार इति । **नन्वेवमुपाधिसिद्धौ** निरुपाधिकसंबन्धरूपव्याप्तिसिद्धिस्तत्सिद्धौ च साधनाव्यापकत्वादिरूपलक्षणसिद्धिः सिद्धे च लक्षणे उपाधिसिद्धिरिति चक्रकं स्यात् । **नेति नवीनाः**—साध्य-वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपत्वात्साध्यव्यापकत्वस्य साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वात्मकत्वाच्च साधनाव्यापक-त्वस्येति । **नवीनतरास्तु** न साध्यत्वं सपक्षे यत्रोपाध्यवधारणम् । अथ साध्यत्वेन संभाव्यमानत्वं, तदेव कुतः ? यदि व्यापकत्वादिति मन्वीरन्, तदेव तर्हि चक्रकमापतितमिति घट्टकुट्यां प्रभातमिति । अस्माकं त्वनिर्वचनीयवादिनामत्रानास्थेति । अस्तु तर्ह्यनौपाधिकसंबन्धनिश्चयोऽन्तरङ्गत्वेनैव, नेत्याह—**तन्निश्चयश्चान्वयेति** ।

## कल्पतरुपरिमलः ।

**इतरथेति** । व्याप्यव्यापकयोर्व्यतिरेकवत्त्वे यत्र व्यापकाभावस्तत्र व्याप्यत्वाभिमतं वर्तत इति व्यभिचारशङ्काया निरस-नाय तत्र तदभावोऽवधारणीयः । नच तदवधारणं शक्यम्; पक्षान्यत्वरूपव्यापकाभावो हि पक्षमात्रवृत्तिः, तत्र च न साध्याभावनिर्णयोऽस्तीत्यर्थः । **समपदं मुधेति** । प्रवृत्तिनिमित्तलाभार्थं समव्याप्त्यन्वेषणमिति शङ्कायाः समाधानं तु अनुपदमेव सिद्धम् । नच प्रवृत्तिनिमित्तपरिज्ञानार्थमिह लक्षणमुच्यते, किंतु दूषकतौपयिकरूपपरिज्ञानार्थम् । तदर्थं च साध्यव्यापकत्वमेवापेक्षितं नतु तद्व्याप्यत्वमपि; उपाध्यभावेन पक्षे साध्याभावोन्नयनस्य साध्यव्यापकोपाधिव्यभिचारित्वेन साधने साध्यव्यभिचारोन्नयनस्य वा तत एव भावात् । **शङ्कितस्त्वनुकूलतर्कैरिति** । साधने साध्यव्याप्यत्वनिर्णायकै-रनुकूलतर्कैः शङ्कितोपाधिरुद्ध्रियते इत्यर्थः । उपाधिलक्षणानुप्रविष्टं व्यापकत्वं व्याप्तिप्रतियोगित्वं न भवति, येन व्याप्ति-लक्षणस्योपाधिगर्भतया चक्रकाश्रयः स्यात्, किंतु साध्यवन्निष्ठेत्यादिनिरुक्ताव्यभिचाररूपं तदिति नवीनैः कृते समाधाने दूषणमुक्तं नवीनतरैः । एवमपि साध्यत्वस्य व्याप्तिगर्भत्वान्न चक्रकोद्धार इति, कैश्चिदुक्तं तद्दूषणमुपन्यस्यति—**नवीनतरास्त्विति** । उपाधेः साध्यव्यापकत्वं सपक्षे ग्राह्यं, नतु पक्षे सपक्षे च संप्रतिपन्नं तत्र साधनीयमिति तत्र साधनीयत्वं न साध्यपदस्यार्थो इत्यन्यत्र साधनीयतया संभाव्यमानत्वं तदर्थ इति वक्तव्यम् । तथासंभावना साधनव्याप-कत्वप्रतिसंधानाधीनेति चक्रकापत्तितादवस्थ्यमित्यर्थः । **ननु** तदपि व्यापकत्वप्रतिसंधानं साधनवन्निष्ठात्यन्ताभावाप्रति-योगित्वविषयमस्तु कुतश्चक्रकमिति नवीनतरमते स्पष्टं तद्दूषणं स्वयं किमिति नोच्यत इत्याशङ्क्य अनास्थयेत्याह—**अस्माक-**

**श्रयेणेति किंचिन्नियामकमस्ति । नचैवं सति किंचिद्विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते; चेतनकारणसमर्पणात् । अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति । अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति । नहि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयान्वय उपपद्यते; सुखादीनां चान्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेः, तन्निमित्तत्वप्रतीतेश्च, शब्दाद्यविशेषेऽपि च भावनाविशेषात्सुखादिविशेषोपलब्धेः । तथा**

## भामती ।

नाचैतन्ये यथा चेतनप्रयुक्तत्वेऽतिपरिस्फुटौ । तदलमत्रान्तरङ्गत्वेनेति भावः । एवमपि चेतनप्रयुक्तत्वं नाभ्युपेयेत, यदि प्रमाणान्तरविरोधो भवेत्, प्रत्युत श्रुतिरनुगुणतरात्रेत्याह—**नचैवं सतीति** । चकारेण सुखदुःखादिसमन्वयलक्षणस्य हेतोरसिद्धत्वं समुच्चिनोतीत्याह—**अन्वयाद्यनुपपत्तेश्चेति** । आन्तराः खल्वमी सुखदुःखमोहविषादा बाह्येभ्यश्चन्दनादिभ्योऽतिविविच्छिन्नप्रत्ययप्रवेदनीयेभ्यो व्यतिरिक्ता अध्यक्षमीक्ष्यन्ते । यदि पुनरेत एव सुखदुःखादिस्वभावा भवेयुस्ततः स्वरूपत्वाद्धेमन्तेऽपि चन्दनः सुखः स्यात् । नहि चन्दनः कदाचिदचन्दनः । तथा निदाघेष्वपि कुङ्कुमपङ्कः सुखो भवेत् । नह्यसौ कदाचिदकुङ्कुमपङ्क इति । एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात् । नह्यसौ कांश्चित्प्रत्येव कण्टक इति । तस्मादसुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयम् । तस्मात्सुखादिरूपसमन्वयो भावानामसिद्ध इति नानेन तद्रूपं कारणमव्यक्तमुन्नीयत इति । तदिदमुक्तम्—**शब्दाद्यविशेषेऽपि च भावनाविशेषादिति** । भावना वासना संस्कारस्तद्विशेषात् । करभजन्मसंवर्तकं हि कर्म करभोचितामेव भावनामभिव्यनक्ति, यथास्मै

## वेदान्तकल्पतरुः ।

साध्यव्यापकत्वादित्युक्तधर्मान्तरस्यानुपलब्धौ सत्यां सतोश्चान्वयव्यतिरेकयोर्व्याप्तिनिश्चय आयतते सिध्यति प्राप्नोतीत्यर्थः । अचेतनस्य चेतनाप्रेरितस्य कार्यजनकत्वाभावाच्च चेतनप्रयुक्तान्वयव्यतिरेकयोरतिस्फुटत्वम् । अन्वयव्यतिरेकवन्मात्रानुमाने एतत् पर्वतेतरत्वादेरप्यनुमानं स्यादत आह—**एवमपीति** । आन्तराः प्रमातृबुद्ध्यैक्याध्यस्तचैतन्यधर्माः, एतद्वैपरीत्यं बाह्यत्वम् । एतस्य च व्याख्यानं—**विच्छिन्नेति** । चन्दनाद्यन्वयेऽपि सुखादिव्यभिचाराच्च नैक्यमित्याह—**यदि पुनरिति** । सुखयतीति **सुखः** । **क्रमेलक** उष्ट्रः । प्रधाने हेतोरपर्यवसानाद् अर्थान्तरतामाशङ्क्याह—

## कल्पतरुपरिमलः ।

**मिति । एतदिति** । धूमेन वह्न्यनुमानेऽप्येतत्पर्वतेतरवह्निसाध्यकता स्यादिति शङ्कार्थः । तत्र लाघवसहकृततया वह्निमात्रनिरूपितव्याप्तिग्राहकप्रमाणेनैवात्र केनचित्प्रमाणेन विरोधो नास्ति; सिद्धसाधनपरिहारार्थं तन्निवेशनस्य पूर्वपक्षिणापेक्षणीयत्वेन लाघवादरणायोगात्, प्रत्युत दृढप्रमाणानुगुण्यं चास्तीति परिहारार्थः । **सुखयति** सुखंकरोति । सुखदुःखतत्कृताविति चौरादिको धातुः । **ननु**—प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्था इति सांख्यैः सत्त्वादीनां सुखादिरूपत्वमुक्तम्, कथं सुखादिहेतुत्वं तदुक्तमापाद्य दूषणमुच्यते ? अथ पञ्चपाद्युदाहरणटीकायां सत्त्वादीनां सुखादिहेतुत्वमपि सांख्याभिमतमुपन्यस्तमिति चेत्, तर्हि अत्रोच्यमानं दूषणं न लगेत्; तत्र प्रतियोगिविशेषव्यवस्थितसत्त्वाद्युद्रेकेण तत्र तत्र व्यवस्थितसुखादिजनकत्वस्य समर्थितत्वात्, कथं च चन्दनकण्टकादिषु कालविशेषे प्राणिविशेषे च व्यवस्थितं सुखादिजनकत्वं सिद्धान्तिनापि निरसितुं शक्यम् ? अनुभवसिद्धत्वादिति—**चेत्, अयमिह दूषणाभिप्रायः**—भावेषु सुखादिसमन्वयः तथाभूतकारणानुमाने हेतुः किं प्रत्यक्षसिद्धः उत सुखादिकार्यकल्प्यः । **नाद्यः**; असिद्धेः । नहि घटः सुखी सुखमिति वाऽनुभवोऽस्ति । **द्वितीये** सर्वदा सर्वान् प्रति एकरूपं सुखादिकार्यं तत्कल्पकम्, उत कालविशेषेषु चानियततत्कल्पकम् । **नाद्यः**; असिद्धेरेव, चन्दनकण्टकादिषु सुखादिहेतुत्वनियमाभावात् । **न द्वितीयः**; अनिच्छाप्रयत्नादिरूपाणामपि भावानामनियतेच्छाप्रयत्नादिजनकत्ववदसुखादिरूपाणामपि तेषामनियतसुखादिजनकत्वसंभवेनानियतसुखादिकार्याणां विषयेषु ताद्रूप्याकल्पकत्वादिति । एवंच चन्दनान्वयेऽपि सुखादिव्यभिचाराच्च नैक्यमित्याहेत्यवतारिका विकल्पान्तरोत्तरावतारिकात्वेन योजनीया । ननु प्रागदूषित एवार्थे हेत्वन्तरसमुच्चयावतारिकात्वेन; सुखादिव्यभिचारस्य सत्त्वाद्युद्रेकाभावेनोपपत्त्या हेत्वन्तरपरत्वायोगाद् । **भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ कारणमस्त्यव्यक्तम् इति** सांख्यैः प्रधानसाधका हेतवो दर्शिताः । **अस्यार्थः**—विश्वरूपमेव वैश्वरूप्यं त्रैलोक्यादिवत्स्वार्थिकः प्रत्ययः । विश्वरूपस्य प्रपञ्चस्य कारणमव्यक्तमस्ति । कुतः कारणे कार्यस्य विभागादविभागाच्च । सत्कार्यवादे हि कारणे सत एव कार्यस्याभिव्यक्तिलयौ विभागाविभागौ कूर्मशरीरे सत इव तदवयवजातस्य । ततश्च यत्र कारणे सतः प्रपञ्चस्य विभागाविभागौ तदव्यक्तकार्यावस्थं कारणमस्ति । इतश्च तदस्ति ; **शक्तितः प्रवृत्तेश्च** । कारणशक्तितो हि कार्यं प्रवर्तते अशक्तात्कार्यानुत्पत्तेः । शक्तिश्च कारणगता न कार्यस्याव्यक्ताव-

परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात्संसर्गपूर्वकत्वमनुमिमानस्य सत्त्वरजस्तमसामपि संसर्गपूर्वकत्वप्रसङ्गः; परिमितत्वाविशेषात्। कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां शयनासनादीनां दृष्ट इति न कार्यकारणभावाद्बाह्याध्यात्मिकानां भेदानामचेतनपूर्वकत्वं शक्यं कल्पयितुम् ॥ १ ॥

**प्रवृत्तेश्च ॥ २ ॥**

आस्तां तावदियं रचना। तत्सिद्ध्यर्था या प्रवृत्तिः साम्यावस्थानात्प्रच्युतिः सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिर्विशिष्टकार्याभिमुखप्रवृत्तिता, सापि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते, मृदादिष्वदर्शनाद्रथादिषु च। नहि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः

---

**भामती।**

कण्टका एव रोचन्ते। एवमन्यत्रापि द्रष्टव्यम्। परिणामादिति सांख्यीयं हेतुमुपन्यस्यति—**तथा परिमितानां भेदानामिति**। संसर्गपूर्वकत्वे हि संसर्गस्यैकस्मिन्नद्वयेऽसंभवान्नानात्वैकार्थसमवेतस्य नानाकारणानि संसृष्टानि कल्पनीयानि, तानि च सत्त्वरजस्तमांस्येवेति भावः। तदेतत्परिमितत्वं सांख्यीयराद्धान्तालोचनेनानैकान्तिकमिति दूषयति—**सत्त्वरजस्तमसामिति**। यदि तावत्परिमितत्वमियत्ता, सा नभसोऽपि नास्तीत्यव्यापको हेतुः परिमाणादिति। अथ न योजनादिमितत्वं परिमाणमियत्तां नभसो ब्रूमः किंत्वव्यापिताम्, अव्यापि च नभस्तन्मात्रादेः। नहि कार्यं कारणव्यापि, किंतु कारणं कार्यव्यापीति परिमितं नभस्तन्मात्राद्यव्यापित्वात्। हन्त सत्त्वरजस्तमांस्यपि न परस्परं व्याप्नुवन्ति, नच तत्त्वान्तरपूर्वकत्वमेतेषामिति व्यभिचारः। नहि यथा तैः कार्यजातमाविष्टमेवं तानि परस्परं विशन्ति; मिथः कार्यकारणभावाभावात्। परस्परसंसर्गस्त्वावेशश्चितिशक्तौ नास्ति। नहि चितिशक्तिः कूटस्थनित्या तैः संसृज्यते, ततश्च तदव्यापका गुणा इति परिमिताः। एवं चितिशक्तिरपि गुणैरसंसृष्टेति सापि परिमितेत्यनैकान्तिकत्वं परिमितत्वस्य हेतोरिति। तथा कार्यकारणविभागोऽपि समन्वयमविरुद्ध इत्याह—**कार्यकारणभावस्त्विति** ॥ १ ॥ न केवलं रचनाभेदा न चेतनाधिष्ठानमन्तरेण भवन्त्यपि तु साम्यावस्थायाः प्रच्युतिर्वैषम्यं, तथाच यदुद्भूतं बलीयस्तदङ्ग्यभिभूतं च तदनुगुणतया स्थितमङ्गम्, एवं हि गुणप्रधानभावे सत्यस्य महदादौ कार्ये प्रवृत्तिः, सापि

**वेन्दान्तकल्पतरुः।**

**संसर्गपूर्वकत्वे हीति**। नानात्वेन सहैकस्मिन् अर्थे समवेतः संसर्गः स तथोक्तः। परिमितत्वं किं योजनादिमितत्वम्, उत स्वसत्तामतिक्रम्य वर्तमानेन वस्तुना सह वर्तमानत्वमथ वा स्वासंसृष्टवस्तुमत्त्वम्। **नाद्य** इत्याह—**यदि तावदिति**। **द्वितीयमाशङ्कते—अथेत्यादिना**। कारणं हि कार्यान्तरमपि व्याप्नोति न कार्यमतो यावत्कारणं शब्दतन्मात्रं तावन्न व्याप्नोति नभः, गन्धाद्यव्याप्तिस्तस्य प्रसिद्धैवेति। परिहरति—**हन्तेति**। **न तृतीय** इत्याह—**परस्परसंसर्गस्त्विति**। सत्त्वादीनां चितिशक्त्या आत्मना परस्परं च संसर्गो नास्तीत्यर्थः ॥ १ ॥ रचनायाः प्रवृत्तेः सकाशाद्भेदमाह—**रचनाभेदा इति**। कार्यगतविन्यासविशेषा इत्यर्थः। अपि त्वित्यस्य या प्रवृत्तिः सापि चेतनाधिष्ठानमेव गमयतीति वक्ष्यमाणेनान्वयः। प्रवृत्तेर्हेतुमाह—**साम्येति**। वैषम्यं भवतीति शेषः। वैषम्ये सत्यङ्गाङ्गित्वं भवतीत्याह—**तथाचेति**। अङ्गाङ्गित्वात्कार्योत्पादनरूपा प्रवृत्तिर्भवतीत्याह—**एवं हीति**। एवं चाङ्गित्वानुपपत्तेश्चेत्यस्य सूत्रस्य (ब्र.

**कल्पतरुपरिमलः।**

स्थाया भिन्नप्रमाणवतीति परिमाणसमन्वयावाकरे एव स्पष्टौ। तत्र समन्वयो विकल्पमभिप्रेत्य दूषितः। परिमाणदूषणप्रदर्शनार्थं मुखतो विकल्पयति—**परिमितत्वमिति**। **स्वसत्तामतिक्रम्येति**। अत्र सह वर्तनं सामानाधिकरण्यं न विवक्षितं, किंतु स्वयं यन्न व्याप्नोति तथाभूतवस्तुसत्त्वमात्रमतस्तथैव नभसि लक्षणानुगतिं दर्शयति—**कारणं हीति**। लोके हि कारणं मृदादि घटमिव शरावादिकमपि व्याप्नोति, घटस्तु शरावादिकमपि न व्याप्नोतीति दृष्टम्। अतः कार्यं कर्तृ कार्यान्तरेऽप्यनुगतं कारणं न व्याप्नोतीत्यर्थः। **ननु** शब्दतन्मात्रकारणकं नभो गन्धतन्मात्रादिकमपि न व्याप्नोतीति तदव्यापनेन लक्षणानुगतिः किमिति नोक्तेत्याशङ्क्याह—**गन्धेति**। नभो गन्धतन्मात्रं सर्वथा न स्पृशतीति तदव्यापनेन लक्षणानुगतिः सुप्रसिद्धेति स्पष्टत्वात् सात्र नोक्तेत्यर्थः। **ननु** सत्त्वरजस्तमस्सु व्यभिचार इति परिहारो न युक्तः **अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः। नैषामादिः संप्रयोगो वियोगो वोपलभ्यते** ॥ इति सांख्यैः सत्त्वादीनामन्योन्यसंसृष्टत्वेन सदा सर्वत्र सद्भावस्य वर्णितत्वादित्याशङ्क्याह—**परिहरतीति**। युक्त एवायं परिहारः कार्यकारणभावमूलो यस्तादात्म्येन पूर्णानुप्रवेशः सा व्याप्तिस्तदभावरूपमव्यापनम् इह परिमितत्वमिति विवक्षितत्वात्। नहि यथा तैः कार्यजातमित्यादिग्रन्थेन तथैव प्रतिपादनादिति भावः। **ननु**—किमनेन कुसृष्ट्या अर्थविशेषानुनीय विकल्पनेन? परिमितत्वं परिच्छिन्नत्व-

कुलालादिभिरश्वादिभिर्वानधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते । दृष्टाच्चादृष्टसिद्धिः । अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति । ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा, सत्यमेतत् । तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा, नत्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा । किं पुनरत्र युक्तम् ? यस्मिन्प्रवृत्तिर्दृष्टा तस्य सेति यत्संप्रयुक्तस्य दृष्टा तस्य सेति । ननु यस्मिन्दृश्यते प्रवृत्तिस्तस्यैव सेति युक्तमुभयोः प्रत्यक्षत्वात्, नतु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत्प्रत्यक्षः । प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः केवलाचेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति । अतएव च प्रत्यक्षे देहे सति दर्शनादसति चादर्शनाद्देहस्यैव चैतन्यमपीति लौकायतिकाः प्रतिपन्नाः । तस्मादचेतनस्यैव

## भामती ।

चेतनाधिष्ठानमेव गमयति । नहि चेतनाधिष्ठनमन्तरेण मृत्पिण्डे प्रधानेऽङ्गभावेन चक्रदण्डसलिलसूत्रादयोऽवतिष्ठन्ते । तस्मात्प्रवृत्तेरपि चेतनाधिष्ठानसिद्धिरिति 'शक्तितः प्रवृत्तेश्च' इत्ययमपि हेतुः सांख्यीयो विरुद्ध एवेत्युक्तं वक्रोक्त्या । अत्र सांख्यश्चोदयति—**ननु चेतनस्यापि प्रवृत्तिरिति** । अयमभिप्रायः—त्वया किलौपनिषदेनास्मद्धेतून् दूषयित्वा केवलस्य चेतनस्यैवान्यनिरपेक्षस्य जगदुपादानत्वं निमित्तत्वं च समर्थनीयम् । तदयुक्तम्, केवलस्य चेतनस्य प्रवृत्तेर्दृष्टान्तधर्मिण्यनुपलब्धेरिति । औपनिषदस्तु चेतनहेतुकां तावदेष सांख्यः प्रवृत्तिमभ्युपगच्छतु पश्चात् स्वपक्षमत एव समाधास्यामीत्यभिसंधिमानाह—**सत्यमेतत्** । न केवलस्य चेतनस्य प्रवृत्तिर्दृष्टेति । सांख्य आह—**नत्वचेतनसंयुक्तस्येति** । तुशब्द औपनिषदपक्षं व्यावर्तयति । अचेतनाश्रयैव सर्वा प्रवृत्तिर्दृश्यते, नतु चेतनाश्रया काचिदपि । तस्मान्न चेतनस्य जगत्सर्जने प्रवृत्तिरित्यर्थः । अत्रौपनिषदो गूढाभिसंधिः प्रश्नपूर्वकं विमृशति—**किंपुनरत्रेति** । अत्रान्तरे सांख्यो ब्रूते—**ननु यस्मिन्निति** । न तावच्चेतनः प्रवृत्त्याश्रयतया तत्प्रयोजकतया वा प्रत्यक्षमीक्ष्यते, केवलं प्रवृत्तिस्तदाश्रयश्चाचेतनो देहरथादिः प्रत्यक्षेण प्रतीयते, तत्राचेतनस्य प्रवृत्तिस्तन्निमित्तैव नतु चेतननिमित्ता । सद्भावमात्रं तु तत्र चेतनस्य गम्यते रथादिवैलक्षण्याज्जीवद्देहस्य । नच सद्भावमात्रेण कारणत्वसिद्धिः । मा भूदाकाश उत्पत्तिमतां घटादीनां निमित्तकारणमस्ति हि सर्वत्रेति । तदनेन देहातिरिक्ते सत्यपि चेतने तस्य न प्रवृत्तिं प्रति निमित्तभावोऽस्तीत्युक्तम् । यतश्चास्य न प्रवृत्तिहेतुभावोऽस्ति अतएव प्रत्यक्षे देहे सति प्रवृत्तिदर्शनादसति चादर्शनाद्दे-

## वेदान्तकल्पतरुः ।

अ. २ पा. २ सू. ८ ) प्रवृत्तेश्चेत्यनेन पौनरुक्त्यमर्थान्निरस्तम् । चेतनानधिष्ठितप्रधानसाधकत्वेन परोक्तस्य प्रवृत्तेरिति हेतोरेव चेतनाधिष्ठिताचेतनसिद्धौ हेतुत्वेनाभिधानात्साध्यविरुद्धोक्तिर्वक्रोक्तिः । औपनिषदेन न दृष्टान्तानुसारेण ब्रह्मकारणत्वं समर्थ्यतेऽतः केवलस्य चेतनस्य प्रवृत्तिर्न दृष्टा इत्यचोद्यमित्याशङ्क्याह—**त्वया किलेति** । उपनिषदर्थसंभावनायाम् अनुमानं सामान्यतो दृष्टं वाच्यमित्यर्थः । अविद्याप्रत्युपस्थापितेत्यादिभाष्येण स्वपक्षं समाधास्यामीत्यभिसंधिमानित्यर्थः । न केवलस्य चेतनस्य प्रवृत्तिर्दृष्टेत्येतत्सत्यमित्यर्थः । अत्र च शेषत्वेन तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टेति भाष्यमनुसन्धेयम् । इत्थं केवलस्य चेतनस्य प्रवृत्त्यभावमभ्युपगम्याचेतनस्य प्रवृत्तिश्चेतनाधीनेति समर्थिते सांख्य आहेत्यर्थः । न चेतनस्य प्रवृत्त्याश्रयत्वमित्यत्र लौकायतिकभ्रमोऽपि लिङ्गमित्याह—**यतश्चेति** । रचनायाः प्रवृ-

## कल्पतरुपरिमलः ।

मित्येवास्तु । तथाच सर्वगतेषु गुणपुरुषेषु न व्यभिचारः । नच—गुणानां सर्वगतत्वे प्रलये तेषां साम्यापत्तिः सर्गे वैषम्यापत्तिश्च न स्यादिति—वाच्यम्; न हि तावता तेषां प्रलये क्वचित्क्वचित्कदाचिदेव सत्त्वं सर्गादौ यस्य यदोद्रेकस्तस्य तदाऽन्यत्रापि अव्यापनमित्येष विशेषोऽङ्गीकार्यः; हेमन्तशिशिररात्रिषु निदाघदिवसेषु सदा सर्वत्र सतोरेव हिमातपयोः क्वचित्क्वचिदुद्रेकवत् सदा सर्वत्र सतामेव गुणानां क्वचित्कदाचित्कस्यचिदुद्रेक इत्युपपत्तेः । नच—हिमातपयोरवयवभूयस्त्वरूप उद्रेकः संभवति, नतु गुणानां निरवयवानामिति—वाच्यम्; तथापि परिणतिविशेषरूपोद्रेके अनुपपत्त्यभावादिति—**चेत्, न**; उद्रेकावस्थाया अपि महदहंकाराद्यवस्थावत् कार्यत्वेन तत्रैव परिमितत्वहेतुसत्त्वेन व्यभिचारादिति भावः ॥ १ ॥ सापीत्यस्यान्वयसौकर्याय यत्पदमध्याहरति—**या प्रवृत्तिरिति** । **साध्यविरुद्धोक्तिर्वक्रोक्तिरिति** । सांख्यानां प्रवृत्तेरिति हेतुर्विरुद्धस्तदीयसाध्यसाधको न भवतीति कण्ठतो नोक्तं, किंतु तस्यैव हेतोस्तदीयसाध्यविरुद्धसाध्यान्तरोक्तिरूपवक्रोक्त्या सूचितम् । नित्यः शब्दः कृतकत्वादिति साधयन्तं प्रति अनित्यः शब्दः कृतकत्वादित्यनुमानमनुकूलतर्कसहितं हि न केवलं पूर्वानुमाने बाधकतयाऽवतिष्ठते, किंतु तस्मिन् विरुद्धत्वोद्धाटनपर्यन्तमपि भवति । एवंच हेतुत्वेनाभिधानादिति पर्यन्तं साध्यविरुद्धोक्तौ न हेतुपरं, किंतु तस्या एव विवरणमिति योजनीयम् । **यद्वा**—तत्पर्यन्तपौनरुक्त्योपपादकत्वेन पूर्वत्र योजनीयम् । अग्रिम ( व्या. सू. अ. २ पा. २ सू. ८ ) सूत्रे वैषम्याऽसंभवमूला हि प्रकृतेर-

प्रवृत्तिरिति । तदभिधीयते—न ब्रूमो यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति । भवतु तस्यैव सा । सा तु चेतनाद्भवतीति ब्रूमः । तद्भावे भावात्तदभावे चाभावात् यथा काष्ठादिव्यपाश्रयापि दाहप्रकाशलक्षणा विक्रियानुपलभ्यमानापि च केवले ज्वलने ज्वलनादेव भवति, तत्संयोगे दर्शनात्तद्वियोगे चादर्शनात्तद्वत् । लौकायतिकानामपि चेतन एव देहोऽचेतनानां रथादीनां प्रवर्तको दृष्ट इत्यविप्रतिषिद्धं चेतनस्य प्रवर्तकत्वम् । ननु—तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्तकत्वमिति—चेत्, न; अयस्कान्तवद्रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः । यथायस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति । यथा वा रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति । एवं प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्च सन् सर्वं प्रवर्तयेदित्युपपन्नम् । एकत्वात्प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत्, न; अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत्प्रत्युक्तत्वात् । तस्मात्संभवति प्रवृत्तिः सर्वज्ञकारणत्वे न त्वचेतनकारणत्वे ॥ २ ॥

## भामती ।

हस्यैव चैतन्यमिति लौकायतिकाः प्रतिपन्नाः, तथाच न चिदात्मनिमित्ता प्रवृत्तिरिति सिद्धम् । तस्मान्न रचनायाः प्रवृत्तेर्वा चिदात्मकारणत्वसिद्धिर्जगत इति । औपनिषदः परिहरति—**तदभिधीयते । न ब्रूम इति** । न तावत् प्रत्यक्षानुमानागमसिद्धः शारीरो वा परमात्मा वास्माभिरिदानीं साधनीयः, केवलमस्य प्रवृत्तिं प्रति कारणत्वं वक्तव्यम् । तत्र मृतशरीरे वा रथादौ वानधिष्ठिते चेतनेन प्रवृत्तेरदर्शनात् तद्विपर्यये च प्रवृत्तिदर्शनादन्वयव्यतिरेकाभ्यां चेतनहेतुकत्वं प्रवृत्तेर्निश्चीयते, नतु चेतनसद्भावमात्रेण, येनातिप्रसङ्गो भवेत् । भूतचैतनिकानामपि चेतनाधिष्ठानादचेतनानां प्रवृत्तिरित्यत्राविवाद इत्याह—**लौकायतिकानामपीति** । **स्यादेतत्**—देहः स्वयं चेतनः करचरणादिमान् स्वव्यापारेण प्रवर्तयतीति युक्तम्; नतु तदतिरिक्तः कूटस्थनित्यश्चेतनो व्यापाररहितो ज्ञानैकस्वभावः प्रवृत्त्यभावात् प्रवर्तको युक्त इति चोदयति—**ननु तवेति** । परिहरति—**न; अयस्कान्तवद्रूपादिवच्चेति । यथा च रूपादय इति** । सांख्यानां हि स्वदेशस्था रूपादय इन्द्रियं विकुर्वते, तेन तदिन्द्रियमर्थं प्राप्तमर्थाकारेण परिणमत इति स्थितिः । संप्रति चोदकः स्वाभिप्रायमाविष्करोति—**एकत्वादिति** । येषामचेतनं चेतनं चास्ति तेषामेतद्युज्यते वक्तुं चेतनाधिष्ठितमचेतनं प्रवर्तत इति । यथा योगिनामीश्वरवादिनाम् । येषां तु चेतनातिरिक्तं नास्त्यद्वैतवादिनां, तेषां प्रवर्त्याभावे कं प्रति प्रवर्तकत्वं चेतनस्येत्यर्थः । परिहरति—**न अविद्येति** । कारणभूतया लयलक्षणयाऽविद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यत् प्रत्युपस्थापितं नामरूपं तदेव माया, तदावेशेनास्य चोद्यस्यासकृत्प्रत्युक्तत्वात् । **एतदुक्तं भवति**—नेयं सृष्टिर्वस्तुसती, येनाद्वैतिनो वस्तुसतो द्वितीयस्याभावादनुयुज्येत । काल्पनिक्यां तु सृष्टावस्ति काल्पनिकं द्वितीयं सहायं मायामयम् । **यथाहुः**—'सहायास्तादृशा एव यादृशी भवितव्यता ।' इति । न चैवं ब्रह्मोपादानत्वव्याघातः; ब्रह्मण एव मायावेशेनोपादानत्वात्तदधिष्ठानत्वाज्जगद्विभ्रमस्य, रजतविभ्रमस्येव शुक्तिकाधिष्ठानस्य

## वेदान्तकल्पतरुः ।

तेर्वा हेतोश्चिदात्मकारणकत्वसिद्धिर्जगतो नेत्यर्थः । यदुक्तं न चेतनः प्रवृत्त्याश्रयतयेष्यत इति, तत्र किं स्वरूपस्यासिद्धिरभिमता, उत प्रवृत्तिसंबन्धस्य ? **नाद्य** इत्याह—**न तावदिति । न द्वितीय** इत्याह—**तत्रेति** । आकाशस्य प्रवृत्त्यन्वयमात्रम्, चैतन्यस्य तु व्यतिरेकोऽप्यस्तीति वैषम्यमित्यर्थः । लौकायतिकोऽपि चेतनतन्त्रामचेतनप्रवृत्तिं मन्यते, सांख्यस्तु ततोऽप्यविवेकीत्याह—**भूतेति** । भूतानां चेतनेति येषां मतं ते तथोक्ताः । एवं तावद्रथादिवन्मूलकारणस्याप्यचेतनस्य चेतनाधीनप्रवृत्तिकत्वं साधितम्, तत्र दृष्टान्तासिद्धिमाशङ्कते—**स्यादेतदिति** । रथादिप्रवर्तको देह एव, स तु चेतन इत्यविवेकिनां प्रसिद्धिरनूदिता, साक्षाच्चेतनः सोऽसङ्गत्वादप्रवर्तक इत्यर्थः । **तवेति** । तवापीत्यर्थः । रूपादीनां संनिधिमात्रेणेन्द्रियप्रवर्तकत्वे चेतनाधिष्ठितादचेतनात्कार्यरचनेति नियमभङ्गमाशङ्क्य परसिद्धमुदाहृतमिति परिहरति—**सांख्यानां हीति । अर्थाकारेणेति** । अर्थविषयज्ञानाकारेणेत्यर्थः । उक्तं हि शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्ति-

## कल्पतरुपरिमलः ।

नुपपत्तिरुच्यते, इह तु प्रवृत्तेः सांख्यसाध्यविपरीतसाधने हेतुत्वमुपपाद्यत इति स्यात् । साध्यविरुद्धत्वोक्तिरिति क्वचित्पाठस्तस्मिन् पाठे हेतुत्वेनाभिधानाद्धेतोर्या साध्यविरुद्धत्वस्योक्तिः सूचनारूपा सा वक्रोक्तिर्भवतीत्यर्थः । अस्मिन् व्याख्याने टीकायां वक्रोक्त्येति न करणतृतीया, किंतु प्रकृत्यादितृतीयेति भेदः । **आलोचनमात्रमिति** । वस्तुस्वरूपमात्रगोचरं ज्ञानमालोचनम् । इदमित्थमित्यध्यवसायरूपा तु वृत्तिः त्रिविधान्तःकरणमध्ये बुद्धिरूपस्यान्तःकरणस्येति सांख्यानां मतम्

## पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

स्यादेतत्—यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दते, एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति । नैतत्साधूच्यते । यतस्तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे; उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात् । शास्त्रं च 'योऽप्सु तिष्ठन् योऽपोऽन्तरो यमयति' ( बृ० ३।७।४ ), 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' ( बृ० ३।८।७ ) इत्येवंजातीयकं समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति । तस्मात्साध्यपक्षनिक्षिप्तत्वात्पयोम्बुवदित्यनुपन्यासः; चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः, वत्सचोषणेन च पयस आकृष्यमाणत्वात् । नचाम्बुनोऽप्यत्यन्तमनपेक्षा; निम्नभूम्याद्यपेक्षत्वात्स्यन्दनस्य । चेतनापेक्षत्वं तु सर्वत्रोपदर्शितम् । 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र० सू० २।१।२४ ) इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम् । शास्त्रदृष्ट्या तु पुनः सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम्, नतु तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किंचिद्बाह्यमपेक्ष्यमवस्थितमस्ति । पुरुषस्तूदासीनो न प्रवर्तको न निवर्तक इत्यतोऽनपेक्षं प्रधानम्, अनपेक्षत्वाच्च कदाचित्प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमत इत्येतदयुक्तम् । ईश्वरस्य तु सर्वज्ञत्वात्सर्वशक्तित्वान्महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते ॥ ४ ॥

---

### भामती ।

शुक्तिकोपादानत्वमिति निरवद्यम् ॥ २ ॥ यथा पयोऽम्बुनोश्चेतनानधिष्ठितयोः स्वत एव प्रवृत्तिरेवं प्रधानस्यापीति शङ्कार्थः । तत्रापि चेतनाधिष्ठितत्वं साध्यं, नच साध्येनैव व्यभिचारः; तथा सत्यनुमानमात्रोच्छेदप्रसङ्गात्, सर्वत्रास्य सुलभत्वात् । नचासाध्यम्; अत्रापि चेतनाधिष्ठानस्यागमसिद्धत्वात् । नच सपक्षेण व्यभिचार इति शङ्कानिराकरणस्यार्थः । **साध्यपक्षे**त्युपलक्षणम् । सपक्षनिक्षिप्तत्वादित्यपि द्रष्टव्यम् । **ननु** 'उपसंहारदर्शनात्' इत्यत्रानपेक्षस्य प्रवृत्तिर्दर्शिता, इह तु सर्वस्य चेतनापेक्षा प्रवृत्तिः प्रतिपाद्यत इति कुतो न विरोध इत्यत आह—**उपसंहारदर्शनादिति** । स्थूलदर्शिलोकाभिप्रायानुरोधेन तदुक्तं नतु परमार्थत इत्यर्थः ॥ ३ ॥ यद्यपि सांख्यानामपि विचित्रकर्मवासनावासितं प्रधानं साम्यावस्थायामपि; तथापि न कर्मवासना सर्गस्येशते, किंतु प्रधानमेव स्वकार्ये प्रवर्तमानमधर्मप्रतिबद्धं सन्नसुखमयीं सृष्टिं कर्तुमुत्सहत इति धर्मेणाधर्मप्रतिबन्धोऽपनीयते । एवमधर्मेण धर्मप्रतिबन्धोऽपनीयते दुःखमय्यां सृष्टौ । स्वयमेव च प्रधानमनपेक्ष्य सृष्टौ प्रवर्तते । यथाहुः—'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्' इति । ततश्च प्रतिबन्धकापनयसाधने धर्माधर्मवासने अपि संनिहिते इत्यागन्तोरपेक्षणीयस्याभावात्

### वेदान्तकल्पतरुः ।

रिति ॥२॥ यदि पयोम्बुनोः सपक्षत्वमपि, कथं तर्हि साध्यपक्षनिक्षिप्तत्वादिति भाष्यमत आह—**साध्यपक्षेत्युपलक्षणमिति** ॥३॥ प्रधानस्य सहकार्यभावासिद्धेः सूत्रभाष्यायोगमाशङ्क्याह—**यद्यपीति** । सर्गस्य निर्माणे कर्मवासना न प्रभवतीति चेत्क तर्हि तासामुपयोगस्तत्राह—**प्रधानमेवेति** । **निमित्तं** धर्मादि । प्रकृतीनां मूलप्रकृतेर्महदादिप्रकृतिविकृतीनां च अप्रयोजकं स्वकार्ये सर्गे, किंतु **वरणस्य** प्रतिबन्धकस्य **भेदो** भङ्गस्ततो निमित्ताद्भवति, **क्षेत्रिकवद्**—यथा हि क्षेत्रकारी केदारादपां पूर्णात्केदारान्तरं समं निम्नं वा पिप्लावयिषुरपो न पाणिनाऽपकर्षति, किंतु वरणं तासां भिनत्ति, भिन्ने तस्मिन्स्वयमेवापः केदारान्तरं प्लावयन्ति, तद्वदिति पातञ्जलसूत्रार्थः । तर्ह्यपनीते प्रतिबन्धे सृजतु प्रधानमत आह—**ततश्चेति** । सदातनादपनायकात्सदापनीतः प्रतिबन्ध इति सदैव सर्गः स्यादित्यर्थः । ईश्वरस्य तु सर्वज्ञत्वात्प्राणिकर्मपरिपाकावसरा-

### कल्पतरुपरिमलः ।

॥ २ ॥ ३ ॥ **कर्मपरिपाकावसराभिज्ञस्येति** । **ननु**—कर्मपरिपाकापेक्षा सांख्यपक्षेऽपि समाना, धर्माधर्मयोर्मध्ये यः पक्वस्तेनैव तदितरस्य प्रतिबन्ध इति तन्मतेऽपि वक्तव्यत्वादिति—**चेत्, मैवम्**; चेतनाधिष्ठानरहितयोः पाकस्याप्य-

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

स्यादेतत्—यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराद्याकारेण परिणमते, एवं प्रधानमपि महदाद्याकारेण परिणंस्यत इति । कथंच निमित्तान्तरनिरपेक्षं तृणादीति गम्यते ? निमित्तान्तरानुपलम्भात् । यदि हि किंचिन्निमित्तमुपलभेमहि, ततो यथाकामं तेन तृणाद्युपादाय क्षीरं संपादयेमहि, नतु संपादयामहे । तस्मात्स्वाभाविकस्तृणादेः परिणामः । तथा प्रधानस्यापि स्यादिति । अत्रोच्यते—भवेत्तृणादिवत्स्वाभाविकः प्रधानस्यापि परिणामो, यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत नत्वभ्युपगम्यते, निमित्तान्तरोपलब्धेः । कथं निमित्तान्तरोपलब्धिः ? अन्यत्राभावात् । धेन्वैव ह्युपयुक्तं तृणादि क्षीरीभवति, न प्रहीणमनडुदाद्युपयुक्तं वा । यदि हि निर्निमित्तमेतत्स्याद्धेनुशरीरसंबन्धादन्यत्रापि तृणादि क्षीरीभवेत् । नच यथाकामं मानुषैर्न शक्यं संपादयितुमित्येतावता निर्निमित्तं भवति । भवति हि किंचित्कार्यं मानुषसंपाद्यं किंचिद्दैवसंपाद्यम् । मनुष्या अपि शक्नुवन्त्येवोचितेनोपायेन तृणाद्युपादाय क्षीरं संपादयितुम् । प्रभूतं हि क्षीरं कामयमानाः प्रभूतं घासं धेनुं चारयन्ति । ततश्च प्रभूतं क्षीरं लभन्ते । तस्मान्न तृणादिवत्स्वाभाविकः प्रधानस्य परिणामः ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

स्वाभाविकी प्रधानप्रवृत्तिर्न भवतीति स्थापितम् । तथापि नाम भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम, तथापि दोषोऽनुषज्येतैव । कुतः ? अर्थाभावात् । यदि तावत्स्वाभाविकी प्रधानस्य प्रवृत्तिर्न किंचिदन्यदिहापेक्षत इत्युच्येत, ततो यथैव सहकारि किंचिन्नापेक्षत एवं प्रयोजनमपि किंचिन्नापेक्षिष्यत इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेत । स यदि ब्रूयात्सहकार्येव केवलं नापेक्षते न प्रयोजनमपीति, तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यं भोगो वा स्यादपवर्गो वोभयं वेति । भोगश्चेत्कीदृशो-

---

### भामती ।

सदैव साम्येन परिणमेत वैषम्येण वा, न त्वयं कादाचित्कः परिणामभेद उपपद्येत । ईश्वरस्य तु महामायस्य चेतनस्य लीलया वा यदृच्छया वा स्वभाववैचित्र्याद्वा कर्मपरिपाकापेक्षस्य प्रवृत्तिनिवृत्ती उपपद्येते एवेति ॥ ४ ॥ धेनूपयुक्तं हि तृणपल्लवादि यथा स्वभावत एव चेतनानपेक्षं क्षीरभावेन परिणमते नतु तत्र धेनुचैतन्यमपेक्ष्यते; उपयोगमात्रे तदपेक्षत्वात् । एवं प्रधानमपि स्वभावत एव परिणंस्यते, कृतमत्र चेतनेनेति शङ्कार्थः । धेनूपयुक्तस्य तृणादेः क्षीरभावे किं निमित्तान्तरमात्रं निषिध्यते, उत चेतनम् । न तावन्निमित्तान्तरं धेनुदेहस्थस्यौदर्यस्य वह्न्यादिभेदस्य निमित्तान्तरस्य संभवात् । बुद्धिपूर्वकारी तु तत्रापीश्वर एव सर्वज्ञः संभवतीति शङ्कानिराकरणस्यार्थः । तदिदमुक्तम्—किंचिद्दैवसंपाद्यमिति ॥ ५ ॥ पुरुषार्थापेक्षाभावप्रसङ्गात् । तदिदमुक्तम्—एवं प्रयोजनमपि किंचिन्नापेक्षिष्यत इति । अथवा—पुरुषार्थाभावादिति योज्यम् । तदिदमुक्तम्—तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यमिति । न केवलं तात्त्विको भोगोऽनाधेयातिशयस्य कूटस्थनित्यस्य पुरुषस्य न संभवति, अनिर्मोक्षप्रसङ्गश्च । येन हि प्रयोजनेन

### वेदान्तकल्पतरुः ।

भिन्नस्य लीलादिना कदाचित् स्रष्टृत्वं न सर्वदेत्याह—ईश्वरस्य त्विति । यदृच्छयेति । यथास्मदादेस्तृणच्छेदादौ नियतनिमित्तानपेक्षा प्रवृत्तिरेवमित्यर्थः ॥ ४ ॥ वह्न्यादीति । पित्तधातुरादिशब्दार्थः ॥ ५ ॥ कीदृशोऽनाधेयातिशयस्य भोग इत्यादिभाष्यं व्याचष्टे—न केवलमिति । सिद्धान्तेऽप्यतात्त्विकभोगाभ्युपगमाद् अवास्तवस्य न निषेध इत्यर्थः ।

### कल्पतरुपरिमलः ।

संभवाद्, उत्तरसूत्रेण धेनूपयुक्ततज्जाठराग्निसंपर्काधीनतृणादिपाकेऽपि चेतनाधिष्ठानापेक्षाया वक्ष्यमाणत्वात् ॥ ४ ॥ ५ ॥ अवास्तवस्य न निषेध इति । ननु—सांख्यमतेऽप्यवास्तव एव पुरुषस्य भोगः । एवं हि तन्मतम् । पुरुषश्चैतन्यमात्रवपुः कूटस्थो नित्यमुक्तः सांसारिकसुखदुःखानुभवरूपः, भोगः परिणामिन्या बुद्धेर्धर्मः, पुरुषस्य तु बुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य तद्दर्शनमात्रं भोगः । तेन तस्य विवेकाग्रहादाध्यासिकं भोक्तृत्वम् । विवेकख्यात्या भोक्तृत्वाध्यासमात्रनिवृत्तिर्मोक्षः । वस्तुतः पुरुषो न बद्धो नापि मोक्ष्यत इति । यदाहुः । तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ सत्यम्—पुरुषस्य भोक्तृत्वमपि सांख्यैरभ्युपग-

ऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत्। अनिर्मोक्षप्रसङ्गश्च। अपवर्गश्चेत्प्रागपि प्रवृत्तेरपवर्गस्य सिद्धत्वात्प्रवृत्तिरनर्थिका स्यात्। शब्दाद्यनुपलब्धिप्रसङ्गश्च। उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव। नचौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः। नहि प्रधानस्याचेतनस्यौत्सुक्यं संभवति। नच पुरुषस्य निर्मलस्य निष्कलस्यौत्सुक्यम्। दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत्प्रवृत्तिस्तर्हि सर्गशक्त्यनुच्छेदवद्दृक्शक्त्यनुच्छेदात्संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव। तस्मात्प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम्॥ ६॥

**पुरुषाश्मवदिति चेत्तथापि॥ ७॥**

स्यादेतत्—यथा कश्चित्पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिविहीनः पङ्गुरपरं पुरुषं प्रवृत्तिशक्तिसंपन्नं दृक्शक्तिविहीनमन्धमधिष्ठाय प्रवर्तयति। यथा वाऽयस्कान्तोऽश्मा स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति। एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम्।

---

### भामती।

प्रधानं प्रवर्तितं तदनेन कर्तव्यं, भोगेन चैतत्प्रवर्तितमिति तमेव कुर्यान्न मोक्षं, तेनाप्रवर्तितत्वादित्यर्थः। **अपवर्गश्चेत्प्रागपीति**। चितेः सदा विशुद्धत्वान्नैतस्यां जातु कर्मानुभववासनाः सन्ति, प्रधानं तु तासामनादीनामाधारः। तथाच प्रधानप्रवृत्तेः प्राक् चितिर्मुक्तैवेति नापवर्गार्थमपि तत्प्रवृत्तिरिति। **शब्दाद्यनुपलब्धिप्रसङ्गश्च**। तदर्थमप्रवृत्तत्वात्प्रधानस्य। **उभयार्थताभ्युपगमेऽपीति**। न तावदपवर्गः साध्यः; तस्य प्रधानाप्रवृत्तिमात्रेण सिद्धत्वात्। भोगार्थं तु प्रवर्तेत। भोगस्य च सकृच्छब्दाद्युपलब्धिमात्रादेव समाप्तत्वान्न तदर्थं पुनः प्रधानं प्रवर्तेतेत्ययत्नसाध्यो मोक्षः स्यात्। निःशेषशब्दाद्युपभोगस्य चानन्त्येन समाप्तेरनुपपत्तेरनिर्मोक्षप्रसङ्गः। कृतभोगमपि प्रधानमासत्त्वपुरुषान्यताख्यातेः क्रियासमभिहारेण भोजयतीति चेत्, अथ पुरुषार्थाय प्रवृत्तं किमर्थं सत्त्वपुरुषान्यताख्यातिं करोति। अपवर्गार्थमिति चेत्, हन्तायं सकृच्छब्दाद्युपभोगेन कृतप्रयोजनस्य प्रधानस्य निवृत्तिमात्रादेव सिध्यतीति कृतं सत्त्वान्यताख्यातिप्रतीक्षणेन। नचास्याः स्वरूपतः पुरुषार्थत्वम्। तस्मादुभयार्थमपि न प्रधानस्य प्रवृत्तिरुपपद्यत इति सिद्धोऽर्थाभावः। सुगममितरत्। शङ्कते—**दृक्शक्तीति**। पुरुषो हि दृक्शक्तिः। सा च दृश्यमन्तरेणानर्थिका स्यात्। नच स्वात्मन्यर्थवती; स्वात्मनि वृत्तिविरोधात्। प्रधानं च सर्गशक्तिः। सा च सर्जनीयमन्तरेणानर्थिका स्यादिति यत्प्रधानेन शब्दादि सृज्यते तदेव दृक्शक्तेर्दृश्यं भवतीति तदुभयार्थवत्त्वाय सर्जनमिति शङ्कार्थः। निराकरोति—**सर्गशक्त्यनुच्छेदवदिति**। यथा हि प्रधानस्य सर्गशक्तिरेकं पुरुषं प्रति चरितार्थापि पुरुषान्तरं प्रति प्रवर्ततेऽनुच्छेदात्, एवं दृक्शक्तिरपि तं पुरुषं प्रत्यर्थवत्त्वायानुच्छेदात्सर्वदा प्रवर्तेतेत्यनिर्मोक्षप्रसङ्गः। सकृद्दृश्यदर्शनेन वा चरितार्थत्वे न भूयः प्रवर्तेतेति सर्वेषामेकपदे निर्मोक्षः प्रसज्येतेति सहसा संसारः समुच्छिद्येतेति॥ ६॥ **पुरुषाभावादिति चेत्तथापि**। नैव दोषात्प्रच्युतिरिति शेषः। मा भूत्पुरुषार्थस्य शक्त्यर्थवत्त्वस्य वा प्रवर्तकत्वम्, पुरुष एव दृक्शक्तिसंपन्नः

### वेदान्तकल्पतरुः।

उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणाम् आनन्त्यादनिर्मोक्षप्रसङ्ग एवेति भाष्यं, तदनुपपन्नमिव; अपवर्गार्थमपि प्रधानप्रवृत्तौ सत्यां क्रमेण भोगमोक्षोपपत्तेः, योगैश्वर्याच्चानन्तविकाराणां युगपदुपभोगसंभवादित्यशङ्क्याह—**न तावदपवर्ग इति**। किं निःशेषविकारान् भोजयितुं प्रधानं प्रवर्तते उत कियतोऽपि। **नान्त्य** इत्याह—**भोगस्य चेति**। **आद्ये** निषेधभाष्यमुपपादयति—**निःशेषेति**। यद्यपि सकृच्छब्दाद्युपलम्भाद् भोगः समाप्तः; तथापि न पुनरप्रवृत्तिः। तत्त्वज्ञानमन्तरेण मोक्षासिद्धेः, प्राक्च मोक्षाद्भोगस्यावश्यकत्वादिति शङ्कते—**कृतभोगमपीति**। **सत्त्वं** बुद्धिः। **क्रियासमभिहारो**ऽभ्यासः। अपवर्गः किं शब्दाद्यनुपलब्धिर्बुद्धिक्षेत्रज्ञभेदख्यातिर्वा। यदि **आद्य**स्तत्राह—**हन्तेति**। **न द्वितीय** इत्याह—**नचास्या इति**। **उभयार्थमिति**। भोगमोक्षार्थमित्यर्थः। शक्तिशक्तिमतोरभेदात्पुरुषो दृक्छक्तिः। दृक्शक्त्यनुच्छेदवदिति इदानीं भाष्यपाठो दृश्यते। निबन्धे तु सर्गशक्त्यनुच्छेदवदिति पाठं दृष्ट्वा व्याचष्टे—**सर्गेति**। दृक्शक्तिः किं सर्वप्रधानकार्यविषया, एकदेशविषया वा। **आद्ये** दोषमाह—**यथा हीति**। यथैकेन पुंसा स्वविकारदर्शनेन कृतार्थापि सर्गशक्तिः पुरुषान्तरं प्रति दर्शयितुमनुच्छेदादनुच्छेदेन प्रवर्तते, एवं दृक्शक्तिरपि सकृद्दृश्यदर्शनेन चरितार्थापि तं पुरुषं प्रति सर्वप्रधानविकाराणामर्थवत्त्वाय सर्वान्द्रष्टुमनुच्छेदेन प्रवर्तेत इत्यर्थः। **द्वितीयं** प्रत्याह—**सकृद्दृश्येति**। **एकपदे** एकपदन्यासावच्छिन्नक्षणे॥ ६॥ अर्थाभावसूत्रोक्तं दूषणमनुजानाति—**मा भूदिति**। **शक्त्यर्थवत्त्वं** दृक्शक्तिसर्गशक्त्यर्थवत्त्वम्। शङ्कैसत्र ग्रन्थच्छेदः॥ ७॥

अत्रोच्यते—तथापि नैव दोषान्निर्मोक्षोऽस्ति। अभ्युपेतहानं तावद्दोष आपतति । प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात्, पुरुषस्य च प्रवर्तकत्वानभ्युपगमात् । कथं चोदासीनः पुरुषः प्रधानं प्रवर्तयेत् ? पङ्गुरपि ह्यन्धं वागादिभिः पुरुषं प्रवर्तयति । नैवं पुरुषस्य कश्चिदपि प्रवर्तनव्यापारोऽस्ति; निष्क्रियत्वान्निर्गुणत्वाच्च । नाप्ययस्कान्तवत्संनिधिमात्रेण प्रवर्तयेत् । संनिधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात् । अयस्कान्तस्य त्वनित्यसंनिधेरस्ति स्वव्यापारः संनिधिः, परिमार्जनाद्यपेक्षा चास्यास्तीत्यनुपन्यासः पुरुषाश्मवदिति । तथा प्रधानस्याचैतन्यात्पुरुषस्य चौदासीन्यात्तृतीयस्य च तयोः संबन्धयितुरभावात्संबन्धानुपपत्तिः । योग्यतानिमित्ते च संबन्धे योग्यत्वानुच्छेदादनिर्मोक्षप्रसङ्गः । पूर्ववच्चेहाप्यर्थाभावो विकल्पयितव्यः । परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं च प्रवर्तकत्वमित्यस्त्यतिशयः ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते । यद्धि सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानं सा प्रधानावस्था । तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात्परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः । बाह्यस्य च कस्यचित्क्षोभयितुरभावाद्गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात् ॥ ८ ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अथापि स्यादन्यथा वयमनुमिमीमहे यथा नायमनन्तरो दोषः प्रसज्येत । नह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते; प्रमाणाभावात् । कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते । यथा यथा कार्योत्पाद उपपद्यते तथा तथैषां स्वभावोऽभ्युपगम्यते । चलं गुणवृत्तमिति चास्त्यभ्युपगमः । तस्मात्साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इति । एवमपि प्रधानस्य ज्ञशक्तिवियोगाद्रचनानुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव । ज्ञशक्तिमपि त्वनुमिमानः प्रतिवादित्वान्निवर्तेत । चेतनमेकमनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसङ्गात् । वैषम्योपगमयोग्या अपि गुणाः साम्यावस्थायां निमित्ताभावान्नैव वैषम्यं

---

### भामती ।

पङ्गुरिव प्रवृत्तिशक्तिसंपन्नं प्रधानमन्धमिव प्रवर्तयिष्यतीति शङ्का । दोषादनिर्मोक्षमाह—**अभ्युपेतहानं तावदिति** । न केवलमभ्युपेतहानम्, अयुक्तं चैतद्भवद्दर्शनालोचनेनेत्याह—**कथं चोदासीन इति** । निष्क्रियत्वे साधनम्—**निर्गुणत्वादिति** । शेषमतिरोहितार्थम् ॥७॥ यदि प्रधानावस्था कूटस्थनित्या, ततो न तस्याः प्रच्युतिः; अनित्यत्वप्रसङ्गात् । **यथाहुः**—'नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति' इति । तदिदमुक्तम्—**स्वरूपप्रणाशभयादिति** । अथ परिणामिनित्या । **यथाहुः**—'यस्मिन् विक्रियमाणेऽपि यत्तत्त्वं न विहन्यते तदपि नित्यम्' इति, तत्राह—**बाह्यस्य चेति** । यत्साम्यावस्थया सुचिरं पर्यणमत्कथं तदेवासति विलक्षणप्रत्ययोपनिपाते वैषम्यमुपैति । अनपेक्षस्य स्वतो वापि वैषम्ये न कदाचित्साम्यं भवेदित्यर्थः ॥ ८ ॥ **एवमपि प्रधानस्येति** । अङ्गित्वानुपपत्तिलक्षणो दोषस्तावन्न भवद्भिः शक्यः परिहर्तुमिति वक्ष्यामः । अभ्युपगम्याप्यस्यादोषत्वमुच्यत इत्यर्थः । संप्रत्यङ्गित्वानुपपत्तिमुपपादयति—**वैषम्योपगमयोग्या अपीति** ॥ ९ ॥ **क्वचित्सप्तेन्द्रियाणीति** । त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणस-

### वेदान्तकल्पतरुः ।

प्रधानावस्थानाशेऽपि अवस्थावतां गुणानामनाशात्स्वरूपप्रणाशभयादिति भाष्यायोगमाशङ्क्य विकल्पमुखेन व्याचष्टे—**यदि प्रधानावस्थेति** । **भाष्ये—अनपेक्षस्वरूपाणामिति** । इतरेतरमनपेक्षमाणानां गुणप्रधानत्वहीनानामित्यर्थः । **ननु** प्राचीनवैषम्यपरिणामसंस्कार एव पुनर्वैषम्यहेतुरस्तु किं बाह्यक्षोभयित्रा ? तत्राह—**यत्साम्यावस्थयेति** । प्रलयसमये यत्साम्याकारेण सुचिरं परिणतं तत्संस्कारप्राचुर्यात्पुनरपि साम्याकारेण परिणमते, तद् द्वयोः संस्कारयोः समत्वेऽपि प्राचीनवैषम्यसंस्कारस्याभिनवसाम्यसंस्कारेण व्यवधानात्साम्यपरिणाम एव युक्त इत्यर्थः । विलक्षणश्चासौ कार्यं जनयितुं प्रत्ययते आगच्छतीति तथोक्तः ॥ ८ ॥ ९ ॥ एकादशेन्द्रियाणां कथं सप्तत्वमित्याशङ्क्य बुद्धीन्द्रियाणि त्वगिन्द्रियेऽन्तर्भावयति—**त्वङ्मात्रमेवेति** । अनेकरूपादिग्रहणसमर्थं यत् त्वङ्मात्रं तदेव बुद्धीन्द्रियं तच्चैकमित्यर्थः ।

भजेरन् । भजमाना वा निमित्ताभावाविशेषात्सर्वदैव वैषम्यं भजेरन्निति प्रसज्यत एवायमनन्तरोऽपि दोषः ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः । क्वचित्सप्तेन्द्रियाण्यनुक्रामन्ति, क्वचिदेकादश । तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति, क्वचिदहंकारात् । तथा क्वचित्त्रीण्यन्तःकरणानि वर्णयन्ति, क्वचिदेकमिति । प्रसिद्ध एव तु श्रुत्येश्वरकारणवादिन्या विरोधस्तदनुवर्तिन्या च स्मृत्या । तस्मादप्यसमञ्जसं सांख्यानां दर्शनमिति । अत्राह—नन्वौपनिषदानामप्यसमञ्जसमेव दर्शनम्; तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात् । एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छतामेकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतावित्यभ्युपगन्तव्यं

### भामती ।

मर्थमेकं, कर्मेन्द्रियाणि पञ्च, सप्तमं च मन इति सप्तेन्द्रियाणि । क्वचित् त्रीण्यन्तःकरणानि । बुद्धिरहंकारो मन इति । क्वचिदेकं बुद्धिरिति । शेषमतिरोहितार्थम् । अत्राह सांख्यः—नन्वौपनिषदानामपीति । तप्यतापकभावस्तावदेकस्मिन्नोपपद्यते । नहि तपिरस्तिरिव कर्तृस्थभावकः, किंतु पचिरिव कर्मस्थभावकः । परसमवेतक्रियाफलशालि च कर्म । तथाच तप्येन कर्मणा तापकसमवेतक्रियाफलशालिना तापकादन्येन भवितव्यम्; अनन्यत्वे चैत्रस्येव गन्तुः स्वसमवेतगमनक्रियाफलनगरप्राप्तिशालिनोऽप्यकर्मत्वप्रसङ्गात् । अन्यत्वे तु तप्यस्य तापकाच्चैत्रसमवेतगमनक्रियाफलभाजो गम्यस्येव नगरस्य तप्यत्वोपपत्तिः । तस्मादभेदे तप्यतापकभावो नोपपद्यत इति । दूषणान्तरमाह

### वेदान्तकल्पतरुः ।

**ननु** तप्य एव मा भूद् यथाऽस्तीत्यत्र, तथा च कथमद्वैतव्याघातकस्तप्यतापकभावस्तत्राह—**नहि तपिरिति ।** कर्तृस्थो भावः फलं यस्य स तथोक्तः । **परसमवेतेति ।** कर्मत्वव्यापकोक्तिरियम् । तद्व्यावृत्त्या तद्व्यावृत्त्यैव न लक्षणोक्तिः । तथा सति वृक्षात्पतिते पर्णे पर्णसमवेतपतनक्रियाफलविभागभाजो वृक्षस्यापादानस्यापि कर्मत्वप्रसङ्गात् । **ननु**—'आत्मानं जानाति' 'पच्यते फलं स्वयमेवे'त्यत्रैकस्यापि कर्मकर्तृभावात् कथमस्य कर्मत्वव्यापकत्वम् ? **उच्यते**—सोपाध्यात्मनि उपाधिभेदादेव भेदान्निरुपाधौ यां वृत्तिं प्रति कर्मत्वं तस्या एवोपाधित्वस्य वर्णितत्वात्, पच्यते फलं स्वयमेवेत्यत्र कर्मत्वोपचारात् । पाणिनिर्हि कर्मवदित्याह । तस्माद् यत्कर्म तत्परसमवेतक्रियाफलभागीत्यर्थो नतु यदुक्तविधं

### कल्पतरुपरिमलः ।

तम् । यदाहुः । **संघातपरार्थत्वात् त्रैगुण्यविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥ इति ।** कथमिदं तेषां परस्परविरुद्धवचनमिति चेत् ? किं कुर्मः ? अतएव विप्रतिषेधाच्चासमञ्जसमिति वक्ष्यते । यदि त्वविरोधार्थं भोगाश्रयबुद्ध्यैक्यदर्शनं पुरुषस्य भोग इति कल्प्यते, तदा तद्दर्शनरूप एव तात्त्विको भोगः पुरुषस्य निर्विकारस्य न संभवतीति दूषणमिहोक्तं द्रष्टव्यम् ॥६॥७॥ ८ ॥ ९ ॥ **एकस्यापि कर्मकर्तृभावादिति ।** पच्यते फलमित्यत्र हि कर्मकर्तरि यक्प्रत्ययः । अतः फलस्यैव कर्तृत्वं कर्मत्वं चाविवादमित्यर्थः । **कर्मत्वोपचारादिति ।** कर्मकर्ता कर्तैव केवलं न कर्म कर्मकार्ययगात्मनेपदादिभाक्त्वात्तु कर्मत्वोपचारेण कर्मकर्तेति व्यपदेशः । **ननु**—'पच्यते फल'मित्यत्र फलगतपरिणत्यनुकूलः फलपाचकचैत्रगतदोहनव्यापारः पचिक्रियातज्जन्यपरिणतिफलशालिनः फलस्य मुख्यमेव कर्मत्वमुपपद्यते किमर्थमुपचाराश्रयणमिति—**चेत्, उच्यते;** इह पचिधातोः फलगता परिणतिरर्थः, ननु तदनुकूलपुरुषव्यापारः । येन पुरुषव्यापारं प्रत्येव सौकर्यातिशयात् कर्तृत्वेन विवक्षितस्य तज्जन्यक्रियाफलशालित्वात्कर्मत्वमपि मुख्यं संभवतीत्युच्येत, न त्वेवम्; कर्मकर्तृप्रयोगे धातूनां तत्तत्क्रियाफलवाचित्वात् । **यदाह कैयटः**—"लुनातिस्तावद् द्विधाभवनोपसर्जने द्विधाभावने वर्तते, लुनाति केदारं देवदत्तः द्विधा भवन्तं द्विधा भावयतीत्यर्थः । यदा तु केदारस्य सौकर्यातिशयविवक्षया देवदत्तव्यापारो न विवक्ष्यते, तदा द्विधाभवनमात्रे लुनातिर्वर्तते, अनेकार्थत्वाद्धातूनाम्, भिन्ना एव वा धातवो भिन्नार्थाः सारूप्यात्तु तत्त्वाध्यवसायः । तत्र द्विधाभवने केदारस्य कर्तुः "कर्मवत् कर्मणा तुल्यक्रिय" इति कर्मकार्याण्यतिदिश्यन्ते, तेन लूयते केदारः स्वयमेवेत्यादयः प्रयोगा उपपद्यन्त" **इति ।** एवं चात्र परिणतिरेव पचिक्रियेति तामवलम्ब्य परसमवेतक्रियाफलशालित्वस्य कर्मत्वव्यापकस्य समर्थयितुमशक्यत्वाद् व्यापकाभावे च व्याप्यासंभवात् कर्मत्वस्यौपचारिकत्वोक्तिर्युक्तैव ॥ अत्रैव साक्षित्वेन पाणिनिसूत्रांशमुदाहरति—**पाणिनिरिति ।** कर्मवत्कर्मणेति सूत्रे वतिना मुख्यकर्मत्वा-

स्यात् । यदि चैतौ तप्यतापकावेकस्यात्मनो विशेषौ स्यातां, स ताभ्यां तप्यतापकाभ्यां न निर्मुच्यत इति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात् । न ह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते । योऽपि जलतरङ्गवीचीफेनाद्युपन्यासः, तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः । प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके । तथाहि—अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते । यद्यर्थिनः स्वतोऽन्योऽर्थो न स्यात्, यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं स्यात्, यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं भवति । अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति । तथाऽर्थस्याप्यर्थत्वं न स्यात् । यदि स्यात्स्वार्थत्वमेव स्यात् । नचैतदस्ति; संबन्धिशब्दौ ह्येतावर्थी चार्थश्चेति । द्वयोश्च संबन्धिनोः संबन्धः स्यान्नैकस्यैव । तस्माद्भिन्नावेतावर्थार्थिनौ । तथानर्थानर्थिनावपि । अर्थिनोऽनुकूलोऽर्थः प्रतिकूलोऽनर्थस्ताभ्यामेकः पर्यायेणोभाभ्यां संबध्यते । तत्रार्थस्याल्पीयस्त्वाद्भूयस्त्वाच्चानर्थस्योभावप्यर्थानर्थावनर्थ एवेति तापकः स उच्यते । तप्यस्तु पुरुषो य एकः पर्यायेणोभाभ्यां संबध्यत इति तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः । जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात्स्यादपि कदाचिन्मोक्षोपपत्तिरिति । अत्रोच्यते—न; एकत्वादेव तप्यतापकभावानुपपत्तेः । भवेदेष दोषो यद्येकात्मतायां

---

भामती ।

**—यदि चेति** । नहि स्वभावाद्भावो वियोजितुं शक्य इति भावः । जलधेश्च वीचितरङ्गफेनादयः स्वभावाः सन्त आविर्भावतिरोभावधर्माणो नतु तैर्जलधिः कदाचिदपि मुच्यते । न केवलं कर्मभावात्तप्यस्य तापकादन्यत्वमपि त्वनुभवसिद्धमेवेत्याह—**प्रसिद्धश्चायमिति** । तथाहि—अर्थोऽप्युपार्जनरक्षणक्षयरागवृद्धिहिंसादोषदर्शनादनर्थः सन्नर्थिनं दुनोति, तदर्थी तप्यस्तापकश्चार्थः, तौ चेमौ लोके प्रतीतभेदौ । अभेदे च दूषणान्युक्तानि । तत्कथमेकस्मिन्नद्वये भवितुमर्हत इत्यर्थः।तदेवमौपनिषदं मतमसमञ्जसमुक्त्वा सांख्यः स्वपक्षे तप्यतापकयोर्भेदे मोक्षमुपपादयति—**जात्यन्तरभावेत्विति** । दृग्दर्शनशक्त्योः किल संयोगस्तापनिदानं, तस्य हेतुरविवेकदर्शनसंस्कारोऽविद्या, सा च विवेकख्यात्या विद्यया विरोधित्वाद्विनिवर्त्यते, तन्निवृत्तौ तद्धेतुकः संयोगो निवर्तते, तन्निवृत्तौ च तत्कार्यस्तापो निवर्तते । **तदुक्तं पञ्चशिखाचार्येण**—'तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः' इति । अत्र च न साक्षात्पुरुषस्यापरिणामिनो बन्धमोक्षौ,किंतु बुद्धिसत्त्वस्यैव चितिच्छायापत्त्या लब्धचैतन्यस्य। **तथाहि**—इष्टानिष्टगुणस्वरूपावधारणमविभागापन्नमस्य भोगः, भोक्तृस्वरूपावधारणमपवर्गः, तेन हि बुद्धिसत्त्वमेवापवृज्यते, तथापि यथा जयः पराजयो वा योधेषु वर्तमानः प्राधान्यात्स्वामिन्यपदिश्यते,एवं बन्धमोक्षौ बुद्धिसत्त्वे वर्तमानौ कथंचित्पुरुषेऽपदिश्येते,स ह्यविभागापत्त्या तत्फलस्य भोक्तेति । तदेतदभिसंधायाह—**स्यादपि कदाचिन्मोक्षोपपत्तिरिति** । अत्रोच्यते—**न एकत्वादेव तप्यतापकभावानुपपत्तेः** । यत एकत्वे तप्यतापकभावो नोपपद्यत एकत्वादेव, तस्मात्सांव्यवहारिकभेदाश्रय-

वेदान्तकल्पतरुः ।

त्कर्मेति । **ननु** क्रियाफलशालित्वमात्रव्याप्तं कर्मत्वम्, वृथा परविशेषणम्; तथा च तमुरेव तप्यत्वमस्तु, तत्राह—**अनन्यत्व इति** । तप्यस्य तापकादनन्यत्वे सति अकर्मत्वप्रसङ्गादित्यन्वयः । निदर्शनं—**चैत्रस्येवेति** । स्वसमवेता गमनक्रिया तस्याः फलं नगरप्राप्तिस्तच्छालिनोऽपि चैत्रस्य परत्वाभावादकर्मत्ववत्तप्यस्याप्यभेदाभ्युपगतावकर्मत्वप्रसङ्गादित्यर्थः । **ननु** यथा जलधिः स्वभावभूतैरपि वीच्यादिभिर्मुच्यते, तथा तप्यतापकाभ्यामात्मा, तत्राह—**जलधेश्चेति** । अर्थस्यापि स्वर्गादेस्तापकत्वं भाष्योक्तमुपपादयति—**अर्थोपीति** । **दुनोति** परितापयति । **दृक्शक्तिः** पुरुषः । दर्शयति स्वविकारान् पुंस इति **दर्शनशक्तिः** प्रधानं, तस्य च बुद्धिरूपेण परिणतस्य चिच्छायापत्तिः **संयोगः** । अविविक्तयोः प्रधानपुरुषयोर्दर्शनम् **अविवेकदर्शनम्** । भाष्ये स्यादपीत्यपिना न साक्षात्पुंसो मोक्ष इत्यसूचि, तदाह—**अत्र चेति** । बन्धमोक्षस्वरूपालोचनेन तयोः साक्षाद्बुद्धिधर्मत्वमाह—**तथा हीति** । अविभागो बुद्धिसत्त्वस्य पुरुषादविवेकस्तेन बुद्धेर्जडाया अप्यापन्नं गुणस्वरूपावधारणम् । अनुकूलप्रतिकूलशब्दादिज्ञानस्य विविक्तपुरुषज्ञानस्य च बुद्धिपरिणामत्वाद् बुद्धेरेव बन्धमोक्षावित्यर्थः । मोक्षनिरूपणाय च बन्धनिरूपणम् । अत एवापवृज्यत इत्येवाह । इदानीं स्वामिनि पुरुषे बन्धाद्युपचारं सदृष्टान्तमाह—**तथापीति** । अविभागस्याविवेकस्यापत्तिः प्राप्तिस्तयेत्यर्थः । औपनिषददर्शनासामञ्जस्यं निषेधति—**नेति** । किं वस्तुतस्तप्यतापकविभागानुपपत्तिरुच्यते [illegible] **आद्ये** [illegible] **एकत्वादेवेति** । उपात्तं भाष्यं व्या-

तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम्। नत्वेतदस्ति; एकत्वादेव। नह्यग्निरेकः सन्स्वमात्मानं दहति प्रकाशयति वा सत्यप्यौष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च। किं कूटस्थे ब्रह्मण्येकस्मिंस्तप्यतापकभावः संभवेत्? क पुनरयं तप्यतापकभावः स्यादिति? उच्यते—किं न पश्यसि कर्मभूतो जीवद्देहस्तप्यस्तापकः सवितेति? ननु—तप्तिर्नाम दुःखं सा चेतयितुर्नाचेतनस्य देहस्य। यदि हि देहस्यैव तप्तिः स्यात्सा देहनाशे स्वयमेव नश्यतीति तन्नाशाय साधनं नैषितव्यं स्यादिति। उच्यते—देहाभावेऽपि केवलस्य चेतनस्य तप्तिर्न दृष्टा। नच त्वयापि तप्तिर्नाम विक्रिया चेतयितुः केवलस्येष्यते। नापि देहचेतनयोः संहतत्वम्; अशुद्ध्यादिदोषप्रसङ्गात्। नच तप्तेरेव तप्तिमभ्युपगच्छसि। कथं तवापि तप्यतापकभावः? सत्त्वं तप्यं तापकं रज इति चेत्, न; ताभ्यां चेतनस्य संहतत्वानुपपत्तेः। सत्त्वानुरोधित्वाच्चेतनोऽपि तप्यत इवेति चेत्, परमार्थतस्तर्हि नैव तप्यत इत्यापतति; इवशब्दप्रयोगात्। न चेत्तप्यते नेवशब्दो दोषाय। नहि डुण्डुभः सर्प इवेत्येतावता सविषो भवति। सर्पो वा डुण्डुभ इवेत्येतावता निर्विषो भवति। अतश्चाविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिक इत्यभ्युपगन्तव्यमिति। नैवं सति ममापि किंचिद्दुष्यति। अथ पारमार्थिकमेव चेतनस्य तप्यत्वमभ्युपगच्छसि, तवैव सुतरामनिर्मोक्षः प्रसज्येत, नित्यत्वाभ्युपगमाच्च तापकस्य। तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयोगापेक्षत्वात्तप्तेः संयोगनिमित्तादर्शननिवृत्तावात्यन्तिकः संयोगोपरमः, ततश्चात्यन्तिको मोक्ष उपपन्न इति चेत्, न; अदर्शनस्य तमसो नित्यत्वाभ्युपगमात्। गुणानां

## भामती।

स्तप्यतापकभावोऽस्माभिरभ्युपेयः। तापो हि सांव्यवहारिक एव न पारमार्थिक इत्यसकृदावेदितम्। **भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाता**मित्यस्मदभ्युपगम इति शेषः। सांख्योऽपि हि भेदाश्रयं तप्यतापकभावं ब्रुवाणो न पुरुषस्य तपिकर्मतामाख्यातुमर्हति; तस्यापरिणामितया तपिक्रियाजनितफलशालित्वानुपपत्तेः केवलमनेन सत्त्वं तप्यमभ्युपेयं तापकं च रजः। दर्शितविषयत्वात्तु बुद्धिसत्त्वे तप्ये तदविभागापत्त्या पुरुषोऽप्यनुतप्यत इव, नतु तप्यतेऽपरिणामित्वादित्युक्तं, तदविभागापत्तिश्चाविद्या, तथा चाविद्याकृतस्तप्यतापकभावस्त्वयाभ्युपेयः, सोऽयमस्माभिरुच्यमानः किमिति भवतः परुष इवाभाति। **अपिच नित्यत्वाभ्युपगमाच्च तापकस्यानिर्मोक्षप्रसङ्गः।** शङ्कते—**तप्यतापकशक्त्योर्नित्यत्वेऽपीति।** सहादर्शनेन निमित्तेन वर्तत इति सनिमित्तः संयोगस्तदपेक्षत्वादिति। निराकरोति—**न अदर्शनस्य तमस इति।** न तावत्पुरुषस्य तप्तिरित्युक्तम्। केवलमियं बुद्धिसत्त्वस्य तापकरजोजनिता, तस्य च बुद्धिसत्त्वस्य तामसविपर्यासादात्मनः पुरुषाद्भेदमपश्यतः पुरुषस्तप्यत इत्यभिमानः, नतु पुरुषो विपर्यासतुषेणापि युज्यते। तस्य तु बुद्धिसत्त्वस्य सात्त्विक्या विवेकख्यात्या तामसीयमविवेक-

## वेदान्तकल्पतरुः।

ख्याति—**यत इति।** द्वितीये नानुपपत्तिर्व्यवहारतो भेदस्वीकारादित्याह—**तस्मादिति।** परोक्तदोषानुवाद एव भाष्ये भाति, न दूषणमित्याशङ्क्याध्याहारेणेष्टप्रसङ्गकथनपरतां स्फोटयति—**इत्यस्मदिति।** यदि भ्रान्तत्वं तप्यतापकभावस्य, तर्ह्येष एव दोष इत्याशङ्क्य साम्यप्रतिपादनार्थं तत्र त्वयापीति भाष्यम्, तद् व्याचष्टे—**सांख्योऽपि हीति।** ब्रुवाणोऽपीत्यन्वयः। **सत्त्वं** बुद्धिगतः सत्त्वगुणः। दर्शितो विषयो यस्य पुंसः स तथा तस्य भावस्तत्त्वं तत इति। अविभागापत्तिस्तर्हि क्षीरवत्सत्येति तन्निमित्ता तप्तिः पुंसः सत्या स्यादत आह—**तदविभागापत्तिश्चेति। अविवेको ह्यविभाग इति।** नित्यत्वाभ्युपगमाच्च तापकस्येति भाष्यमुपात्तम्। **अनिर्मोक्षप्रसङ्ग इति** तस्यातीतानन्तरपदानुषङ्गेण व्याख्या। न दृश्यतेऽनेन पुरुषत्वमिति **अदर्शनं** तमः। तस्य तप्तिहेतुत्वमुपपादयति—**न तावदित्यादिना।** तमसः तप्तस्य निवृत्त्ययोगात् परस्य तन्निमित्ततप्तेरनाश उक्तः। सिद्धान्ते त्वविद्याया अवस्तुतस्तप्तिहेतोर्विद्यया निवृत्तेर्मोक्षोपपत्ति-

## कल्पतरुपरिमलः।

भावः स्पष्टीकृत इत्यर्थः। **परोक्तदोषानुवाद एवेति।** यद्यप्यध्याहारेणाभ्युपगमाभावस्फोरण इवानध्याहारेण तद्विषयाभावस्फोरणेऽपीष्टप्रसङ्गकथनरूपदूषणं भायादेव; तथापि तथा स्फुटं न भातीति तात्पर्यम्। अविभागापत्तिश्चेत्यत्र अविभागो नैक्यम्। अख्यातिवादिनः सांख्यस्य मते भ्रमविषयैक्यविवर्ताभावादित्याशङ्क्य विवेकाग्रह एवाविभागशब्देन विवक्षित इति व्याचष्टे—**अविवेक इति।** भाष्यटीकास्थमदर्शनशब्दं तमःपरत्वेन व्याचष्टे—**न दृश्यतेऽनेनेति।**

चोद्भवाभिभवयोरनियतत्वादनियतः संयोगनिमित्तोपरम इति वियोगस्याप्यनियतत्वात्सांख्यस्यैवानिर्मोक्षोऽपरिहार्यः स्यात् । औपनिषदस्य त्वात्मैकत्वाभ्युपगमादेकस्य च विषयविषयिभावानुपपत्तेर्विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादनिर्मोक्षशङ्का स्वप्नेऽपि नोपजायते । व्यवहारे तु यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति न चोदयितव्यः परिहर्तव्यो वा भवति ॥ १० ॥ इति प्रथमं रचनानुपपत्त्यधिकरणम् ॥

( २ अधिकरणम् ) **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

प्रधानकारणवादो निराकृतः परमाणुकारणवाद इदानीं निराकर्तव्यः । तत्रादौ तावद्यो-

---

भामती ।

ख्यातिर्निवर्तनीया । नच सति तमसि मूले शक्यात्यन्तमुच्छेत्तुम् । तथा विच्छिन्नापि छिन्नबदरीव पुनस्तमसोद्भूतेन सत्त्वमभिभूय विवेकख्यातिमपोह्य शतशिखराऽविद्याविर्भाव्येतेति बतेयमपवर्गकथा तपस्विनी दत्तजलाञ्जलिः प्रसज्येत । अस्मत्पक्षे त्वदोष इत्याह—**औपनिषदस्य त्विति** । यथा हि मुखमवदातमपि मलिनादर्शतलोपाधिकल्पितप्रतिबिम्बभेदं मलिनतामुपैति, नच तद्वस्तुतो मलिनं, नच बिम्बात्प्रतिबिम्बं वस्तुतो भिद्यते, अथ तस्मिन् प्रतिबिम्बे मलिनादर्शोपधानान्मलिनता पदं लभते । तथा चात्मनो मलिनं मुखं पश्यन् देवदत्तस्तप्यते । यदा तूपाध्यपनयाद्बिम्बमेव कल्पनावशात् प्रतिबिम्बं तच्चावदातमिति तत्त्वमवगच्छति, तदास्य तापः प्रशाम्यति, नच मलिनं मे मुखमिति । एवमविद्योपधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्पः कल्पितैरेव शब्दादिभिः संपर्कात्तप्यते, नतु तत्त्वतः परमात्मनोऽस्ति तापः । यदा तु 'तत्त्वमसि' इति वाक्यश्रवणमननध्यानाभ्यासपरिपाकप्रकर्षपर्यन्तजोऽस्य साक्षात्कार उपजायते, तदा जीवः शुद्धबुद्धतत्त्वस्वभावमात्मनोऽनुभवन् निर्मृष्टनिखिलसवासनक्लेशजालः केवलः स्वस्थो भवति, न चास्य पुनः संसारभयमस्ति; तद्धेतोरवास्तवत्वेन समूलकाषं कषितत्वात्, सांख्यस्य तु सतस्तमसोऽशक्यसमुच्छेदत्वादिति । तदिदमुक्तम्—**विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादिति** ॥ १० ॥ **इति प्रथमं रचनानुपपत्त्यधिकरणम् ॥**

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

**प्रधानकारणवाद इति** । यथैव प्रधानकारणवादो ब्रह्मकारणवादविरोध्येवं परमाणुकारणवादोऽपि, अतः सोऽपि

वेदान्तकल्पतरुः ।

माह—**यथा हीति** । **सांख्यस्य त्विति** तुशब्दो नशब्दसमानार्थः ॥ १० ॥ **इति प्रथमं रचनानुपपत्त्यधिकरणम् ॥**[1]

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

यद्यप्यस्य स्वपक्षदोषपरिहारस्य स्मृतिपादे एव सङ्गतिः; तथापि यदि प्रधानगुणानन्वयाज्जगन्न तत्प्रकृतिकं, तर्हि ब्रह्मविशेषगुणानन्वयान्न तदुपादानकम् इत्यवान्तरसङ्गतिलोभादिह लिखितः । तत्त्वज्ञानप्रधानस्यास्य शास्त्रस्य परमतनिरासपरत्वाभावान्निराकृतो निराकर्तव्य इति च भाष्यनिर्देशायोगमाशङ्क्याह—**यथैवेति** । श्रौतब्रह्मधीसिद्ध्यै तन्निरास इत्यर्थः । एतेनेत्यत्र कारणं कार्यान्न्यूनपरिमाणमिति नियमो भग्नः, इह कारणविशेषगुणस्य कार्ये गुणारम्भनियमो भज्यत इति सत्यपि

कल्पतरुपरिमलः ।

**तुशब्द इति** सौत्रेषु पूर्वपक्षव्यावृत्त्यर्थेषु तुशब्देषु नकारसमानार्थत्वं प्रसिद्धम् ॥ १० ॥ **इति प्रथमं रचनानुपपत्त्यधिकरणम् ॥**

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

---

१ तत्र सूत्राणि १०—रचनानुपपत्तेश्च नानुमानम् १ प्रवृत्तेश्च २ पयोऽम्बुवच्चेत्तत्रापि ३ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ४ अन्यत्राभावाच्च न तृणादिवत् ५ अभ्युपगमेऽप्यर्थाभावात् ६ पुरुषाश्मवदिति चेत्तथापि ७ अङ्गित्वानुपपत्तेश्च ८ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ९ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

## भामती।

निराकर्तव्यः। 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' इत्यस्य प्रपञ्च आरभ्यते। तत्र वैशेषिका ब्रह्मकारणत्वं दूषयांबभूवुः। चेतनं चेदाकाशादीनामुपादानं तदारब्धमाकाशादि चेतनं स्यात्। कारणगुणप्रक्रमेण हि कार्ये गुणारम्भो दृष्टः यथा शुक्लैस्तन्तुभिरारब्धः पटः शुक्लः, न जात्वसौ कृष्णो भवति। एवं चेतनेनारब्धमाकाशादि चेतनं भवेन्न त्वचेतनम्। तस्मादचेतनोपादानमेव जगत्। तच्चाचेतनं परमाणवः। सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते, यथा तन्तुभिः पटस्यैवमंशुभ्यस्तन्तूनामेवमपकर्षपर्यन्तं कारणद्रव्यमतिसूक्ष्ममनवयवमवतिष्ठते, तच्च परमाणु। तस्य तु सावयवत्वेऽभ्युपगम्यमानेऽनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्गः इत्युक्तम्। तत्र च प्रथमं तावददृष्टवत्क्षेत्रज्ञसंयोगात्परमाणौ कर्म, ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते। बहवस्तु परमाणवः संयुक्ता न सहसा स्थूलमारभन्ते, परमाणुत्वे सति बहुत्वात्, घटोपगृहीतपरमाणुवत्। यदि हि घटोपगृहीताः परमाणवो घटमारभेरन्, न घटे प्रविभज्यमाने कपालशर्कराद्युपलभ्येत, तेषामनारब्धत्वात्, घटस्यैव तु तैरारब्धत्वात्। तथा सति मुद्गरप्रहा-

## वेदान्तकल्पतरुः।

भेदे रीतिसाम्यकृतजामित्वपरिहारः। **प्रपञ्च आरभ्यत इति**। कारणगुणस्य प्रक्रम उपक्रमो नियतपूर्वसत्त्वं तेन तमसमवायिकारणं कृत्वेत्यर्थः। तर्कस्य विपर्ययमनुमानमाह—**तस्मादिति**। विमतमचेतनोपादानकं कार्यद्रव्यत्वात्संमतवदित्यर्थः। ज्ञानादौ व्यभिचारवारणाय द्रव्यपदम्। मायाशबलब्रह्मोपादानत्वेन सिद्धसाधनत्वं व्यावर्तयितुमेवकारः। प्रधानसिद्ध्यार्थान्तरत्वमाशङ्क्याह—**तच्चेति**। **इत्युक्तमिति**। एतेन शिष्टापरिग्रहा ( ब्र. अ. २ पा. १ सू. १२ ) इत्यत्र पूर्वपक्षे इत्यर्थः। महाप्रलये प्रयत्नाभिघाताद्यभावात् कथमणुषु कर्म ? तत्राह—**अदृष्टवदिति**। **ननु** किं द्व्यणुकारम्भव्यवधिनाऽत आह—**बहवस्त्विति**। असंयुक्तानामारम्भानभ्युपगमात् सिद्धसाधनमाशङ्क्याह—**संयुक्ता इति**। **सहसेति**। द्व्यणुकमनारभ्येत्यर्थः। अनेन बाधोऽपोदितः। तन्त्वादिषु व्यभिचारवारणार्थ**मणुत्व इति**। द्व्यणुकेषु अनैकान्तिकत्ववारणार्थं **परमेति**। परमाण्वोः स्वापेक्षया स्थूलद्व्यणुकारम्भकयोरव्यभिचाराय **बहुत्वादिति**। साध्यवैकल्यमाशङ्क्याह—**यदि हीति**। परमाणवः किम् अनारभ्य द्व्यणुकादीनि कुम्भमारभन्त इति उतारभ्य। **नाद्य** इत्याह **न घटे इति**। सत्येव घटे बुद्ध्या विभज्यमाने कपालादिखण्डावयविनो नोपलभ्येरन्। तथाच त्रसरेणुवदनुपलब्धरेखोपरेखे घटे संस्थानविशेषानुपपत्तेः व्यञ्जकाभावाद् घटत्वानुपलब्धिप्रसङ्ग इत्यर्थः। **न द्वितीय** इत्याह—**घटस्यैव त्विति**। यदि हि परमाणव एव खण्डावयविनम् आरभ्य महावयविन आरभेरन्, तथा सति सर्वएव ते परमाणुषु संभवेयुः। तच्च न; मूर्तानामवयवावयविभावविरहिणामेकदेशत्वाभावनियमात्। अवयवावयविनौ हि तन्तुपटावेकत्र संयोगिभूभागे भवतो नतु परमाणुषु समवयतामवयविनामस्ति परस्परमवयवावयविभाव इति न समानदेशता। तस्माद्यदि परमाणुभिः स्थूलमारभ्येत घट एव वाऽऽरभ्यः स्यान्न कपालादीनीत्यर्थः। यदि च घट एव परमाणुभिरारब्धस्तदा न केवलं विद्यमाने घटे संस्थानानुपलम्भप्रसङ्गः, किंतु नाशादूर्ध्वमपि कपालाद्यनुपलम्भप्रसङ्ग इत्याह—**तथा सतीति**। नच वाच्यं कुम्भभङ्गसमनन्तरमवस्थितसंयोगसचिवाः परमाणवः कपालकणादीनारभन्ते, सति तु कुम्भे तेन प्रतिबन्धादसन्तोऽपि संयोगा नारभन्त इति; यतः कपालादीनामेव सहसारम्भे संस्थानानुपलम्भः स्याद्, द्व्यणुकादीन्यारभ्य तदारम्भे मूर्तानां समानदेशत्वायोगो द्व्यणुकादिप्रक्रमेण तदारम्भे कुम्भारम्भोऽपि तथा भवत्विति वृथा शुष्कवर्णनमिति। **ननु**—

## कल्पतरुपरिमलः।

**साम्यकृतेति**। परमाणुवादनिराकरणार्थत्वमात्रेण साम्यमिह विवक्षितम्; उभयत्रापि निराकरणीययुक्तिभेदस्य स्वयमेवोक्ततया सर्वथा साम्याभावात्। **यद्वा**—शिष्टापरिग्रहाधिकरणनिराकृतियुक्तिरप्यत्र टीकायामनुवादरूपेणोपन्यस्ता, भाष्येऽपि वैशेषिकप्रक्रियोपन्यासेन व्यञ्जितेति तेनापि रूपेण साम्यं विवक्षितम्। **एवकार इति**। मायाशबलस्य ब्रह्मण उपादानत्वे मायाप्युपादानमिति सिद्धसाधनवारणाय टीकायामेवकारः। तेन चेतनोपादानकं न भवतीति साध्यार्थे पर्यवसानान्न सिद्धसाधनमिति भावः। **असंयुक्तानामिति**। द्व्यणुकमारभ्य स्थूलारम्भकत्वं यत् शङ्कावाद्यभिमतं तदभाव इह साध्यः। स चासंयुक्तावस्थायां शङ्कावादिनाऽपीष्यत इति सिद्धसाधनवारणाय संयुक्तविशेषणमित्यर्थः। **द्व्यणुकमनारभ्येति** साध्यविशेषणस्य प्रयोजनमाह—**अनेन बाधोऽपोदित इति**। परमाणूनां द्व्यणुकारम्भद्वारा स्थूलारम्भकत्वात् स्थूलं नारभन्त इति साध्यं बाधितं स्याद्, द्व्यणुकमनारभ्येति विशेषणेन तन्निरासः कृत इत्यर्थः। **स्वापेक्षया स्थूलेति**। स्थौल्यमत्र परिमाणाधिक्यमात्रं विवक्षितं, नतु महत्त्वमिति भावः। **न द्वितीय इत्याहेति**। द्व्यणुकारम्भप्रक्रियायास्त्वयाऽनङ्गीकृतत्वाद् द्वितीयपक्षो न युज्यत इत्यर्थः। **अवयवावयविभावविरहिणामिति**। जलालोकादिविरलद्रव्यव्यतिरिक्तानामिति विशेषणान्तरस्याप्युपलक्षणमेतत्; स्वच्छजलान्तर्गतसिकतादिग्रहणार्थं यत्र जलं तत्रैवालोक-

## भामती ।

राद् घटविनाशे न किंचिदुपलभ्येत, तेषामनारब्धत्वात् । तदवयवानां परमाणूनामतीन्द्रियत्वात् । तस्मान्न बहूनां परमाणूनां द्रव्यं प्रति समवायिकारणत्वम्, अपि तु द्वावेव परमाणू द्व्यणुकमारभेते । तस्य चाणुत्वं परिमाणं परमाणुपरिमाणात् पारिमाण्डल्यादन्यदीश्वरबुद्धिमपेक्ष्योत्पन्ना द्वित्वसंख्यारभते । नच द्व्यणुकाभ्यां द्रव्यस्यारम्भः, वैयर्थ्यप्रसङ्गात् । तदपि हि द्व्यणुकमेव भवेन्न तु महत् । कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो हि महत्त्वस्योत्पत्तिः । नच द्व्यणुकयोर्महत्त्वमस्ति, यतस्ताभ्यामारब्धं महद्भवेत् । नापि तयोर्बहुत्वं, द्वित्वादेव । नच प्रचयभेदस्तूलपिण्डानामिव; तदव-

## वेदान्तकल्पतरुः ।

द्व्यणुकैरपि यदि बहुभिः कार्यमारभ्यते, तर्हि घटादयोऽप्यारभ्यन्तां, तथा चान्तरालिककार्यानुपलम्भप्रसङ्गः । अथ त्रसरेणुरेवारभ्यते, तर्हि परमाणुभिरपि स एवारभ्यतां, मुधा द्व्यणुकं विशेषो वाच्यः, **उच्यते**—किं सर्वत्र परमाणूनामारम्भकत्वमुत क्वचिद् द्व्यणुकादिप्रक्रमोऽपि । **नाद्यः**; यतोऽस्ति तावल्लोष्टमूलावयवपरमाणुसंख्यापेक्षया लोष्टावयवमूलपरमाणूनां संख्यापकर्षः । अन्यथा लोष्टतदवयवयोर्गुरुत्वादिसाम्यप्रसङ्गात् । एवं तदपेक्षया तदवयवतदवयवानां मूलावयवपरमाणुसंख्यापकर्षो द्रष्टव्यः । नचायं निरवधिः; एकत्वात्परन्यूनसंख्यासंभवात् । नच त्रित्वमारम्भकसंख्यावधिः; ततः परमप्येकत्वद्वित्वभावात् । न चैकत्वमेकस्य संयोगानुपपत्तावसमवायिकारणविधुरस्यानारम्भकत्वात् । तस्मात्सजातीयसंयुक्तपरमाणुगतद्वित्वमारम्भकसंख्यापकर्षावधिरिति सिद्धं द्व्यणुकम् । तथाच न सर्वत्र परमाणुभिस्त्र्यणुकारम्भः । **नापि द्वितीयः**; सिद्धं हि परमाणोस्त्र्यणुककारणं द्व्यणुकं प्रति कारणत्वम् । तथाच न तस्य क्वापि त्र्यणुककारणत्वसंभवः; कारणजातीयस्य कार्यजातीयं प्रति अनारम्भकत्वात् । न ह्यणुजातीयः तन्तुः कार्यं पटजातीयमारभत इति । बहुत्वं प्रति बहूनां परमाणूनां समवायिकारणत्वाद् द्रव्यं प्रतीत्युक्तम् । प्रलयेऽस्मदादीनामपेक्षाबुद्ध्यभावमाशङ्क्येश्वरबुद्धिमित्युक्तम् । **तदपि हीति** । परिमाणस्य सजातीयपरिमाणारम्भकत्वनियमादित्यर्थः । **कारणबहुत्वेति** । समपरिमाणदृढसंयोगवत्तन्त्वारब्धपटयोर्मध्ये यदन्यतरस्मिन् महत्त्वमुद्रिक्तं तस्य कारणबहुत्वादुत्पत्तिः । समसंख्यदृढसंयोगवत्तन्त्वारब्धयोस्तु कारणमहत्त्वात् समपरिमाणसमसंख्यतन्त्वारब्धयोः पुनः कारणप्राचुर्यादित्यर्थः । यथा तूलपिण्डानां प्रचयस्तथा द्व्यणुकयोर्नास्तीत्यत्र हेतुमाह—**तदवयवानामिति** । प्रचयो ह्यारम्भकावयवगतः शिथिलसंयोगः समतुलिततूलपिण्डद्वयाभ्याम् आरब्धयोर्महत्तूलपिण्डयोरन्यतरमहत्त्वातिशयकारणम् । नच द्व्यणुकयोरवयवानां परमाणूनां भागेन लग्नत्वं भागेनालग्नत्वमित्येवं

## कल्पतरुपरिमलः ।

स्याप्यङ्गीकृतत्वात् । **नन्वान्तरालिककार्योपलब्ध्यर्थमेव** त्र्यणुकारम्भ इष्यते इत्याशङ्कते—**अथेति** । **विशेषो वेति** । द्व्यणुकान्येव त्र्यणुकारम्भकाणि न परमाणव इत्यत्र विशेषो वक्तव्य इत्यर्थः । **अस्ति तावदिति** । **ननु**—अवयविनामवयवापकर्षोत्कर्षवैषम्यप्रसाधनं द्वित्वप्रभृत्यारम्भकत्वप्रयोजकताप्रसाधनं च क्वोपयुज्यते ? द्वयोः परमाण्वोः संयोगस्य कदाचिदवर्जनीयत्वाद् द्वयोः संयोगे सति समवाय्यसमवायिकारणसमवधानाद् द्व्यणुकोत्पत्तिरप्रत्याख्येयेति ऋजुना मार्गेण द्व्यणुकं साधयितुं शक्यम् । नच—द्वयोः संयोगान्न कार्यद्रव्योत्पत्तिरिति विवदमानं प्रति तत्प्रसाधनमिति—वाच्यम्; तत्रापि कार्यद्रव्येष्ववयवोत्कर्षापकर्षवैषम्यप्रसाधनस्यानुपयोगात्, तन्तुद्वयसंयोगात्सूत्रोत्पत्तिदर्शनेन तथा विवादानवकाशाच्च । तस्माद् द्व्यणुकप्रसाधने नैतावतो यत्नस्योपयोगः । यत्तु परमाणुद्वयेन द्व्यणुकवत्त्रयेण क्वचित् त्र्यणुकोत्पत्तिरस्त्विति शङ्काया निराकरणं, तदयुक्तम्; त्रयाणां परमाणूनां द्व्यणुकानामिव कदाचित्संयोगयौगपद्यस्यावर्जनीयतया परमाणुत्रयारब्धत्र्यणुकस्याप्यप्रत्याख्येयत्वात्, परमाणुसाधारण्येन द्वित्वप्रभृत्यारम्भकसंख्येत्यनुपदं स्वयमेव प्रसाधिततया परमाणुत्रित्वं नारम्भकसंख्येति वक्तुमशक्यत्वाच्च । कारणजातीयस्येत्यादिनियमस्त्वसिद्धः; क्वचित्तन्तुत्रयारब्धसूत्रत्रयेण त्रिवृत्सूत्रोत्पत्तिर्दृश्यते, क्वचित् तन्तुत्रयेणेति व्यभिचारात् । यदि सूत्रत्रयारब्धात्त्रिवृत्सूत्रात्तन्तुत्रयारब्धं त्रिवृत्सूत्रं विजातीयं, तर्हि द्व्यणुकत्रयारब्धात् त्र्यणुकात्परमाणुत्रयारब्धं त्र्यणुकमपि विजातीयमस्तु । अथ परमाणुत्रयारब्धं त्र्यणुकमण्वेव भवेदिति भोगभेदाभावेन वैयर्थ्यात्तथाभूतत्र्यणुकोत्पत्तिर्न संभवतीति चेत्, न; कारणबहुत्वान्महत्त्वसंभवेन भोगभेदोपपत्तेः, सामग्रीसद्भावप्रभावितस्य कार्यस्य प्रयोजनाभावेन प्रत्याख्यानाभावाच्च । नहि प्रयोजनक्षतिभिया सामग्री कार्यं नार्जयतीति न्यायाद् भोगभेदाभावेन सामग्रीसद्भावप्रभावितस्य कार्यस्य प्रत्याख्याने च द्व्यणुकमपि प्रत्याख्यायेत; परमाणुवत्तस्याप्यतीन्द्रियत्वेन भोगभेदाभावात् । यदि द्व्यणुकं त्र्यणुकोत्पत्तिप्रणाडिकया भोगभेदोपयोगि, तर्हीदमपि तथास्तु । **एतेन**—टीकोपन्यस्तद्व्यणुकद्वयारभ्यद्रव्यनिराकरणमपि—**निरस्तम्**; तस्यापि द्रव्यस्य स्थूलकार्योत्पादनप्रणाडिकया द्व्यणुकवद्भोगभेदोपयोगित्वात् । तस्मात्सर्वमिदमसमञ्जसमिति—**चेत्, उच्यते**; वैशेषिकप्रक्रियानुवादोऽयम् । अत एवेत्थमुपालम्भनीयः । अतएव भाष्ये वैशेषिकाभिमतव्यवस्थापक्षाश्रयणेन तदुक्तदूषणस्य व्यभिचारं प्रदर्श्य व्यवस्थापक्षो न स्थायीति सूचनार्थं यदापि बहवः परमाणवो बहूनि द्व्यणुकानीत्यादिवाक्येनाव्यवस्थापक्षमुद्भाव्य तत्रापि व्यभिचारसाम्यमुक्तम् । **महातूल-**

णुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते । तत्रायं वैशेषिकाणामभ्युपगमः—कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते; शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात्तद्विपर्ययादर्शनाच्च । तस्माच्चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात् । तददर्शनात्तु न चेतनं ब्रह्म जगत्कारणं भवितुमर्हतीति । इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति । एषा तेषां प्रक्रिया—परमाणवः किल कंचित्कालमनारब्धकार्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्च तिष्ठन्ति । ते च पश्चाददृष्टादिपुरःसराः संयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण कृत्स्नं कार्यजातमारभन्ते । कारणगुणाश्च कार्ये गुणान्तरम् । यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनपरानारभन्ते । परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते; द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात् । अणुत्वह्रस्वत्वे हि द्व्यणुकवर्तिनी परिमाणे वर्णयन्ति । यदापि द्वे द्वे द्व्यणुके चतुरणुकमारभेते, तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम् । अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते; चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात् । य-

## भामती ।

यवानामनवयवत्वेन प्रशिथिलावयवसंयोगभेदविरहात् । तस्मात्तेनापि तत्कारणद्व्यणुकवदणुनैव भवितव्यं, तथाच पुरुषोपभोगातिशयाभावाददृष्टानिमित्तत्वाच्च विश्वनिर्माणस्य भोगार्थत्वात्तत्कारणेन च द्व्यणुकेन तन्निष्पत्तेः कृतं द्व्यणुकाश्रयेण द्व्यणुकान्तरेणेत्यारम्भवैयर्थ्यात् । आरम्भार्थवत्त्वाय बहुभिरेव द्व्यणुकैस्त्र्यणुकं चतुरणुकं वा द्रव्यं महद्दीर्घमारब्धव्यम् । अस्ति हि तत्र तत्र भोगभेदः । अस्ति च बहुत्वसंख्येश्वरबुद्धिमपेक्ष्योत्पन्ना महत्त्वपरिमाणयोनिः । त्र्यणुकादिभिरारब्धं तु कार्यद्रव्यं कारणबहुत्वाद्वा कारणप्रचयभेदाद्वा कारणमहत्त्वाद्वा महद्भवतीति प्रक्रिया । तदेतयैव प्रक्रियया कारणसमवायिनो गुणाः कार्यद्रव्ये समानजातीयमेव गुणान्तरमारभन्त इति दूषणमदूषणीक्रियते, व्यभिचारादित्याह—यथा महद् द्रव्यं त्र्यणुकादि ह्रस्वाद् द्व्यणुकाज्जायते, नतु महत्त्वगुणोपजनने द्व्यणुकगतं महत्त्वमपेक्षते, तस्य ह्रस्वत्वात् । यथा वा तदेव त्र्यणुकादि दीर्घं ह्रस्वाद् द्व्यणुकाज्जायते, नतु तद्गतं दीर्घत्वमपेक्षते; तदभावात् । वाशब्दश्चार्थेऽनुक्तसमुच्चयार्थः । यथा द्व्यणुकमणुह्रस्वपरिमाणं परिमण्डलात् परमाणोरपरिमण्डलं जायत एवं चेतनाद्ब्रह्मणोऽचेतनं जगन्निष्पद्यत इति सूत्रयोजना । भाष्ये—**परमाणुगुणविशेषस्त्विति** । पारिमाण्डल्यग्रहणमुपलक्षणम् । न द्व्यणुकेऽणुत्वमपि परमाणुवर्ति पारिमाण्डल्यमारभते, तस्य हि द्वित्वसंख्यायोनित्वादित्यपि द्रष्टव्यम् । ह्रस्वपरिमण्डलाभ्यामिति सूत्रं गुणिपरं न गुणपरम् । **यदापि द्वे द्वे द्व्यणुके** इति पठितव्ये प्रमादादेकं द्वेपदं न पठितम् । एवं चतुरणुकमित्याद्युपपद्यते । इतरथा हि द्व्यणुकमेव तदपि स्यान्न तु महदित्युक्तम् । अथवा द्वे इति द्वित्वे, यथा 'द्व्येकयोर्द्विवचनैकवचने' इति । अत्र हि द्वित्वैकत्वयोरित्यर्थः । अन्यथा द्व्येकेष्विति स्यात्संख्येयानां बहुत्वात् । **तदेवं योजनीयम्**—द्व्यणुकाधिकरणे ये द्वित्वे ते यदा चतुरणुकमारभेते संख्येयानां चतुर्णां द्व्यणुकानामारम्भकत्वात्तत्तद्गते द्वित्वसंख्ये अपि आरम्भिके

## वेदान्तकल्पतरुः ।

रूपः शिथिलसंयोगः; निरवयवत्वादित्यर्थः । यदि द्व्यणुकगता संख्यैव त्र्यणुकगतमहत्त्वकारणं, तर्हि त्र्यणुकादिगता संख्यैव तत्कार्यमहत्त्वहेतुरस्तु इत्याशङ्क्य तत्र महत्त्वादिसंभवादनियम इत्याह—**त्र्यणुकादिभिरिति** । समानजातीयगुणान्तरमारभन्त इति दूषणव्यभिचाराद्धेतोरदूषणीक्रियते सूत्रकारेणेत्याह भाष्यकारः—**इममभ्युपगमं तदीययैव प्रक्रिययेत्यादिभाष्येणेति** शेषः । सूत्रमुदाहृत्य व्याचष्टे—**यथेत्यादिना** । यथाश्रुतसूत्रे परिमण्डलादपि महदारम्भो भाति स चायुक्त इति मत्वा वक्ति—**अनुक्तेति** । अनुक्तमेव दर्शयति—**यथा द्व्यणुकमिति** । सूत्रे वतोरधस्ताद् अण्वित्यध्याहर्तव्यम् । तथा च यथाक्रमं ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुवदिति सूचनाय वाशब्द इत्यर्थः । परिमाणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभत इति भाष्ये परमाणुपारिमाण्डल्याद् द्व्यणुके पारिमाण्डल्यारम्भनिषेधात् । अर्थाद् द्व्यणुकगताणुत्वस्य पारिमाण्डल्यादारम्भ इति भ्रमः स्यात्तं निरस्यति—**पारिमाण्डल्यग्रहणमिति** । **ननु** सूत्रे ह्रस्वपरिमाणस्य महद्दीर्घारम्भकत्वं परिमण्डलपरिमाणस्य ह्रस्वपरिमाणारम्भकत्वं च भाति, तदयुक्तम्; अनन्तरनिषेधादत आह—**गुणिपरमिति** । परिमाणवद्द्रव्याभ्यां द्रव्यान्तरारम्भ उच्यते, नतु गुणारम्भ इत्यर्थः । द्व्यणुक इति सप्तम्येकवचनं कृत्वा वाक्यार्थमाह—**द्व्यणुकाधिकरण इति** । **ननु** द्व्यणुकगतद्वित्वयोः कथं चतुरणुकारम्भकत्वम्, संख्याया द्रव्यारम्भकत्वायोगादत आह—**संख्येयानामिति** । जायतेपदानुषङ्गमाह—**योजनेति** । पारिमाण्डल्यादारम्भे अपो-

दापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्यमारभन्ते, तदापि समानैषा योजना । तदेवं यथा परमाणोः परिमण्डलात्सतोऽणु ह्रस्वं च द्व्यणुकं जायते महद्दीर्घं च त्र्यणुकादि न परिमण्डलम्, यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घं च त्र्यणुकं जायते नाणु नो ह्रस्वम्, एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे किं तव च्छिन्नम् ? अथ मन्यसे विरोधिना परिमाणान्तरेणाक्रान्तं कार्यद्रव्यं द्व्यणुकादीत्यतो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनीत्यभ्युपगच्छामि, नतु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति, येन कारणगता चेतना कार्ये चेतनान्तरं नारभेत । नह्यचेतना नाम चेतनाविरोधी कश्चिद्गुणोऽस्ति; चेतनाप्रतिषेधमात्रत्वात् । तस्मात्पारिमाण्डल्यादिवैषम्यात्प्राप्नोति चेतनाया आरम्भकत्वमिति । मैवं मंस्थाः । यथा कारणे विद्यमानानामपि पारिमाण्डल्यादीनामनारम्भकत्वमेवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात् । नच परिमाणान्तराक्रान्तत्वं पारि-

## भामती ।

इत्यर्थः । एवं व्यवस्थितायां वैशेषिकप्रक्रियायां तद्दूषणस्य व्यभिचार उक्तः । अथाव्यवस्थिता, तथापि तदवस्थो व्यभिचार इत्याह—**यदापि बहवः परमाणवः इति** । नाणु जायते नो ह्रस्वं जायते इति योजना । चोदयति—**अथ मन्यसे विरोधिना परिमाणान्तरेण** स्वकारणद्वारेणाक्रान्तत्वादिति । परिहरति—**मैवं मंस्था इति** । कारणगता गुणा न कार्ये समानजातीयं गुणान्तरमारभन्त इत्येतावतैवेष्टसिद्धौ न तद्धेत्वनुसरणे खेदनीयं मन इत्यर्थः । **अपिच** सत्परिमाणान्तरमाक्रामति नोत्पत्तेश्च प्राक् परिमाणान्तरं सदिति कथमाक्रामेत ? नच तत्कारणमाक्रामति । पारिमाण्डल्यस्यापि समानजातीयस्य कारणस्याक्रमणहेतोर्भावेन समानबलतयोभयकार्यानुत्पादप्रसङ्गादित्याशयवानाह—**नच परिमाणान्तराक्रान्तत्वमिति** । नच परिमाणान्तरारम्भे व्यापृतता पारिमाण्डल्यादीनाम् । नच कारणबहुत्वादीनां

## वेदान्तकल्पतरुः ।

दिते विरोधिपरिमाणान्तराक्रान्तिरसिद्धेत्याशङ्क्याह—**स्वकारणेति** । स्वकारणं संख्या । व्याप्तेर्व्यभिचारे उक्ते यत्र व्यभिचारस्तत्रास्त्वनारम्भे कारणमित्येतावदुच्यते उत तत्कारणराहित्येन व्याप्तिर्विशिष्यते । **नाद्य** इत्याह—**कारणगता इति** । **द्वितीयेऽपि** किमणुमहत्परिमाणाभ्यां द्व्यणुकत्र्यणुकयोः स्वरूपेण व्याप्तिः पारिमाण्डल्याणुत्वयोरनारम्भे हेतुरुत तत्कारणेन । **नाद्य** इत्याह—**अपि चेति** । **न चरम** इत्याह—**नचेति** । परमाण्वादौ पारिमाण्डल्यादिगुणवति सति तदारब्धद्व्यणुकादावणुमहत्त्वाद्यनुपपत्तिरुक्ता, संप्रति पारिमाण्डल्यादेरेव त्वराविशेषादणुत्वाद्यारम्भकत्वं परमाणुद्व्यणुकगतद्वित्वबहुत्वयोर्वा सन्निधानविशेषादणुमहत्त्वाद्यारम्भकत्वमिति आशङ्कानिरासार्थं भाष्यं व्याचष्टे—**न परिमाणान्तरारम्भ इति** । नच परिमाणान्तरे व्यापृतता; पारिमाण्डल्यादीनां व्यापृतत्वे पारिमाण्डल्याद्यारम्भेऽपि व्यापृततायास्तुल्यत्वादित्यर्थः । कारणबहुत्वादीनां संनिधानं पारिमाण्डल्यादीनाम् असंनिधानमित्येतच्च नास्ति; कारणैकार्थसमवायस्य तुल्यत्वादित्यर्थः । कारणावस्था द्रव्यमिति घृतद्रवत्वं वक्ष्यमाणमभिप्रेत्य भाष्ये द्रव्यस्य संयोग उदाहृतः । **ननु—आरभेत गुणं कार्ये सजातिं समवायिगः । विशेषगुण इत्यस्या व्याप्तेः का नु प्रतिक्रिया ॥ उच्यते**—न तावदस्ति विशेषगुण इति । यत्तूदयनेन तत्र लक्षणमभाणि स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवन्तो विशेषगुणा इति । नवस्तु

## कल्पतरुपरिमलः ।

**पिण्डयोरिति** युक्तः पाठः; नतु महत्तूलपिण्डयोरिति; "आन्महतः समानाधिकरणजातीययो"रित्यात्वनियमात् । **ननु—** महद्दीर्घवद्वेति सूत्रे सामानाधिकरण्ये सत्यपि आत्वं न दृश्यते, नच तत्र महद्दीर्घशब्दौ द्व्येकयोरितिवद् भावप्रधानाविति पदार्थभेदाद् द्वन्द्वसमासः, अतः सामानाधिकरण्याभावान्नात्वप्रसक्तिरिति—वाच्यम् ; टीकायां ह्रस्वपरिमण्डलाभ्यामित्यस्य धर्मिपरतायाः प्रदर्शितत्वेन महद्दीर्घशब्दयोरपि तदन्वयार्थं धर्मिपरताया वक्तव्यत्वात् । यदि तत्र पदार्थाभेदेऽपि पदार्थतावच्छेदकभेदाद् द्वन्द्व इति न सामानाधिकरण्यम्, तर्हीहापि तथास्त्विति—**चेत्, उच्यते**; पदार्थाभेदे पदार्थतावच्छेदकभेदेन द्वन्द्वो न संभवति; महाभाष्यविरोधात् । **तत्र हि**—"चार्थे द्वन्द्व" इति सूत्रे याज्ञिकश्चासौ वैयाकरणश्चेत्यादिषु पदार्थतावच्छेदकभेदाद् द्वन्द्वमाशङ्क्य "शेषो बहुव्रीहिरि"ति सूत्रतः शेष इत्यस्यानुवृत्तेस्तस्य समानाधिकरणसमासविषयत्वेन शेषत्वाभावात्तदप्राप्तिरुपपादिता । कथं तर्हि महद्दीर्घवदित्यस्य निर्वाहः । इत्थम् । कानिचित् त्र्यणुकानि महान्ति कानिचिद्दीर्घाणीति त्र्यणुकव्यक्तिभेदविवक्षया इह द्वन्द्वसमास आश्रीयते । यद्यपि सर्वाणि त्र्यणुकानि महान्ति दीर्घाणि च, महत्त्वदीर्घत्वयोः समनियतत्वात्; तथापि कानिचित् त्र्यणुकानि परितो द्व्यणुकसंयोगैरुत्पद्यन्ते कानिचित्तिर्यग्द्व्यणुकसंयोगैः । तत्र यानि द्वितीयापेक्षया महान्तीति द्वितीयान्यानि आद्यापेक्षया दीर्घाणीति च प्रत्यययोग्यानि भवन्तीति तथाभूतत्र्यणुकव्यक्तिद्वैविध्यापेक्षया द्वन्द्व उपपद्यते । नचेह तथा द्वन्द्वोपपत्तिः; द्वयोरपि तूलपिण्डयोर्महत्त्वाधिकरणत्वेन विवक्षितत्वात् । **स्वाश्र-**

माण्डल्यादीनामनारम्भकत्वे कारणम्; प्राक्परिमाणान्तरारम्भात्पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः, आरब्धमपि कार्यद्रव्यं प्राग्गुणारम्भात्क्षणमात्रमगुणं तिष्ठतीत्यभ्युपगमात् । नच परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनीत्यतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते परिमाणान्तरस्यान्यहेतुत्वाभ्युपगमात् । 'कारणबहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महत्' ( वै० सू० ७।१।९ ) 'तद्विपरीतमणु' ( ७।१।१० ) 'एतेन दीर्घत्वह्रस्वत्वे व्याख्याते' ( ७।१।१७ ) इति हि काणभुजानि सूत्राणि । नच संनिधानविशेषात्कुतश्चित्कारणबहुत्वादीन्येवारभन्ते न पारिमाण्डल्यादीनीत्युच्येत; द्रव्यान्तरे गुणान्तरे वारभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात् । तस्मात्स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वं, तथा चेतनाया अपीति द्रष्टव्यम् । संयोगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात्समानजातीयोत्पत्तिव्यभिचारः । द्रव्ये प्रकृते गुणोदाहरणमयुक्तमिति चेत्, न; दृष्टान्तेन विलक्षणारम्भमात्रस्य

## भामती ।

संनिधानमसंनिधानं च पारिमाण्डल्यस्येत्याह—**नच परिमाणान्तरारम्भे इति** । व्यभिचारान्तरमाह—**संयोगाच्चेति** । शङ्कते—**द्रव्ये प्रकृत इति** । निराकरोति—**न** । **दृष्टान्तेनेति** । न—चास्माकमयमनियमः, भवतामपी-

## वेदान्तकल्पतरुः ।

मध्ये यस्मिन्द्रव्ये वर्तन्ते तस्येतराष्टद्रव्येभ्यो व्यावर्तका इत्युक्तं भवति । एवंच नवान्यतममात्रवृत्तिगुणत्वं लक्षणम् । तत्र किं नवान्यतममात्रवृत्तित्वं वा नवसु मध्ये एकैकमात्रवृत्तित्वं नवव्यतिरिक्तव्यतिरिक्तमात्रवृत्तित्वं वा पृथिव्यादिनवलक्षणव्यतिरिक्तव्यतिरिक्तानेकसमानाधिकरणत्वानापादकसामान्यवत्त्वं वा । **नाग्रिमः**; अव्याप्तेः । **न द्वितीयः**; अतिव्याप्तेः । **न तृतीयः**; स ह्येवम् । पृथिव्यादीनां यानि नव लक्षणानि तेभ्यो यानि व्यतिरिक्तानि तेभ्यश्च व्यतिरिक्तानि तान्येव नव लक्षणानि तैरनेकैः समानाधिकरणत्वानापादकानि यानि सामान्यानि गन्धत्वादीनि तद्वत्त्वं विशेषगुणत्वम् । तथाच विशेषगुणस्यैकैकपृथिव्यादिनिष्ठत्वसिद्धिरिति । तन्न; किमिदं नवलक्षणव्यतिरिक्तव्यतिरिक्तत्वम् ? नवत्वविशिष्टव्यतिरिक्तत्वं वा, तदुपलक्षितव्यतिरिक्तव्यतिरिक्तत्वं वा । **नाद्यः**; नवत्वविशिष्टव्यतिरिक्तसमुदितातिरिक्तैकैकपृथिव्यादिलक्षणेभ्यो व्यतिरिक्तानि यानि गुणादिलक्षणानि तैरनेकैः समानाधिकरणत्वानापादकपरिमाणत्वसामान्यवतः परिमाणस्यापि विशेष-

## कल्पतरुपरिमलः ।

**येति** । स्वेषां विशेषगुणत्वाभिमतानां ये आश्रयास्तेषां व्यवच्छेदे तत्तद्विशेषगुणप्रवृत्तेतरव्यावर्तने उचिता अवच्छेदका येऽवान्तरसामान्यविशेषास्तद्वन्त इत्यर्थः । ते चावान्तरसामान्यविशेषा नीलरूपादिषु नीलत्वादयः शुक्लरूपे पृथिव्यादित्रयसाधारणे पाकजत्वापाकजत्वभास्वरत्वाभास्वरत्वानि । एवं रसादिष्वप्यूहनीयम् । स्नेहत्वावान्तरसामान्यसद्भावे तेन लक्षणानुगतिस्तदभावे स्नेहत्वेनैव; अवान्तरशब्दस्य व्याप्यपरत्वात् । अभेदेऽपि व्याप्यव्यापकभावसद्भावात् । अत्र स्वाश्रयशब्दस्य एकैकाश्रयभूतव्यक्तिपरत्वे नीलत्वादीनां तदितरसकलव्यावर्तकतावच्छेदकत्वाभावादसंभवः, लक्षणे सामान्यशब्दस्य जातिपरत्वमपहाय धर्ममात्रपरत्वमङ्गीकृत्य नीलादिषु लक्षणसमर्थने सामान्यगुणेष्वपि तथैव लक्षणसमर्थनसंभवादतिव्याप्तिरित्याशङ्क्याश्रयशब्देन नवानां मध्ये एकैकद्रव्यं सामान्येन विवक्षितं, नतु तत्तद्व्यक्तिमात्रमिति व्याचष्टे—**नवसु मध्य इति** । **व्यावर्तकाः** व्यावर्तकतावच्छेदकाः । **ननु** नवसु मध्येऽप्येकैकद्रव्यव्यक्तिरेकैकविशेषगुणव्यक्तेराश्रय इति तद्द्रव्यव्यक्तिगततदितरसकलव्यावृत्तिप्रयोजकतावच्छेदकगुणगतावान्तरजात्यभावादसंभवतादवस्थ्यम् । नच लक्षणप्रविष्टावान्तरसामान्येन यज्जातीयो गुणो यावत्सु वर्तते तावत्सु यद्गततदितरव्यावृत्तिप्रयोजकतावच्छेदकत्वं विवक्षितम्; अणुपरिमाणादिकं यावत्सु चतुर्विधद्व्यणुकादिषु वर्तते तावद्गतेतरव्यावृत्तिप्रयोजकतावच्छेदकमणुपरिमाणत्वादिकं भवतीति तद्वतामणुपरिमाणादीनां विशेषगुणत्वप्रसङ्गात् । तदाश्रयाश्चतुर्विधद्व्यणुकादयोऽपि हि नवसु मध्ये भवन्त्येव । अथ नवसु मध्य इति विशेषणबलान्नवान्यतममात्ररूपत्वं स्वाश्रयविशेषणं लभ्यत इति नोक्तदोष इति चेत्, तर्हि लाघवान्नवान्यतममात्रवृत्तिगुणत्वमेव लक्षणमस्त्वित्याशङ्क्य तत्रैवोक्तलक्षणार्थपर्यवसानमाह—**एवं चेति** । **पृथिव्यादीति** । अनेकेत्यादिमात्रोक्तावसंभवः स्याद्; नीलत्वादीनां विशेषगुणत्वप्रयोजकसामान्यानां काककोकिलकुवलयाद्यनेकलक्षणसामानाधिकरण्यापादकत्वात् । अतो नवलक्षणव्यतिरिक्तव्यतिरिक्तत्वमनेकविशेषणम् । यद्यपि नवानां लक्षणानां मध्ये इत्यन्वयमुखोक्तौ योऽर्थः स एवमुक्तावपि पर्यवस्यति; तथापि नवानां लक्षणानामननुगतानां नवलक्षणव्यतिरिक्तव्यतिरिक्तत्वेनानुगमार्थं व्यतिरेकमुखेनोक्तिः । **नवत्वविशिष्टेति** । एकोयं न नवेति प्रतीतेर्नवेमे नैक इति प्रतीतेश्च नवत्वविशिष्टभ्यस्ततस-

**विवक्षितत्वात् । नच द्रव्यस्य द्रव्यमेवोदाहर्तव्यं गुणस्य वा गुण एवेति कश्चिन्नियमे हेतुरस्ति । सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार—'प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात्संयोगस्य पञ्चात्मकं न विद्यते' ( वै० सू० ४।२।२ ) इति । यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन्संयोगोऽप्रत्यक्ष एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु समवयच्छरीरमप्रत्यक्षं स्यात् । प्रत्यक्षं हि शरीरम् । तस्मान्न पाञ्चभौतिकमिति । एतदुक्तं भवति—गुणश्च संयोगो द्रव्यं शरीरम् । 'दृश्यते तु' ( ब्र० सू० २।१।६ ) इति चात्रापि विलक्षणोत्पत्तिः प्रपञ्चिता । नन्वेवं सति तेनैवैतद्गतम् । नेति ब्रूमः; तत्सांख्यं प्रत्युक्तम्, एतत्तु वैशेषिकं प्रति । नन्वतिदेशोऽपि समानन्यायतया कृतः 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' ( ब्र० सू० २।१।१२ ) इति । सत्यमेतत् । तस्यैव त्वयं वैशेषिकप्रक्रियारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः ॥ ११ ॥ इति द्वितीयं महद्दीर्घाधिकरणम् ॥**

( ३ अधिकरणम् ) **उभयथापि न कर्मातस्तदभावः ॥ १२ ॥**

---

### भामती ।

**त्याह—सूत्रकारोऽपीति ।** सूत्रं व्याचष्टे—**यथा प्रत्यक्षाप्रत्यक्षयोरिति ।** शेषमतिरोहितार्थम् ॥ ११ ॥ **इति द्वितीयं महद्दीर्घाधिकरणम् ॥**

### उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

**परमाणूनामाद्यस्य कर्मणः कारणाभ्युपगमेऽनभ्युपगमे वा न कर्मातस्तदभावस्तस्य द्व्यणुकादिक्रमेण सर्गस्याभावः ।**

### वेदान्तकल्पतरुः ।

गुणत्वापत्त्यातिव्याप्तेः । **न द्वितीयः**; उपलक्षितैकैकातिरिक्तनवत्वविशिष्टपृथिव्यादिलक्षणव्यतिरिक्तानेकगुणादिलक्षणसमानाधिकरणत्वानापादकपरिमाणत्वसामान्यवति परिमाणेऽपि गतत्वेनोक्तदोषतादवस्थ्यात् । गुणत्वावान्तरजातिद्वारैकैकेन्द्रियग्राह्यसजातीया ये रूपादयो यानि च धर्माधर्मभावनासांसिद्धिकद्रवत्वानि तेभ्यो व्यतिरिक्तव्यतिरिक्तत्वं विशेषगुणत्वमिति चेत्, न; मिलितव्यतिरिक्तैकैकव्यतिरिक्ते एकैकव्यतिरिक्तमिलितव्यतिरिक्ते च संख्यादावतिव्याप्तेः । स्वसमवेतविशेषणविशिष्टत्वे सति स्वाश्रयैकजातीयव्यवच्छेदकत्वं विशेषगुणत्वम् व्योमशिवोक्तमशिवम्; स्वगतसंख्यात्वादिविशेषितैर्द्रव्यजातीयपृथिव्यादिव्यवच्छेदकैः संख्यादिभिरतिव्याप्तेः, गगनत्वजातिविरहेणैकजातीयकस्वाश्रयाव्यवच्छेदकशब्दाव्याप्तेश्च । स्वाश्रयैकजातिपदेन नवान्यतमविवक्षायाम् उक्तदोषादिति । एवमन्यदपि संभवल्लक्षणं खण्डनीयमिति । **किंच** कारणैकार्थसमवायाविशेषाद् महत्त्वमिव महत्त्वान्तरमणुत्वमपि कारणगतं कार्येऽणुत्वं किमिति नारभते ? कार्यस्याप्यणुत्वे भोगातिशयासिद्धेः नारभत इति चेत्, तर्हीहापि सर्वत्र जगति चेतनारम्भे शेषशेषिभावाभावाद्भोगो न स्यादतो मायाशबलब्रह्मण उपादानत्वान्मायागतं जाड्यं जगति जाड्यमारभते न ब्रह्मचेतना चेतनाम् । जीवेषु तु ब्रह्मावच्छेदेष्वचेतनावत्स्यतीति तुल्यम् । **तदुक्तमाचार्यवार्तिककृता—तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् । परः कारणतामेति भावनाज्ञानकर्मभिः ॥ इति द्वितीयं महद्दीर्घाधिकरणम् ॥**[1]

### उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

### कल्पतरुपरिमलः ।

मुदायान्तर्गतस्याप्येकस्य एकस्मात्तद् घटितानामपि नवानां भेदोऽस्तीति भावः । **उपलक्षितेति ।** यत्र विशेषणत्वं न तत्रोपलक्षणत्वमिति नवत्वविशिष्टास्तदुपलक्षितव्यतिरिक्ता इत्युक्तम् । न च—ये नवत्वविशिष्टास्तेऽप्यपेक्षाबुद्धिविनाशान्नवसंख्याविनाशे तदुपलक्षिता भवन्तीति—वाच्यम्; अपेक्षाबुद्धीनां यावदाश्रयभाविद्वित्वादिसंख्याव्यञ्जकत्वेनापेक्षाबुद्धितन्नाशाभ्यां द्वित्वाद्युत्पत्तिनाशानङ्गीकारात् । स्वसमवेतेति विशेष्यमात्रं घटत्वादिष्वतिव्याप्तमिति विशेषणोपादानं । सामान्येषु समवेतस्य कस्यचिद्धर्मस्याभावादतिव्याप्तिनिरासः । **द्रव्यजातीयेति ।** संख्यादीनामाश्रया नवापि द्रव्याणि द्रव्यत्वेनैकजातीयानि तेषां गुणादिभ्यो व्यवच्छेदकाः संख्यादय इत्यतिव्याप्तिः । **नन्वेक**जातीयत्वं द्रव्यत्वावान्तरजात्या विवक्षितमित्याशङ्क्य तथा सत्यव्याप्तिरित्याह—**गगनभेदेति ।** स्वमते कल्पभेदेन गगनभेदसत्त्वेऽपि लक्षणवादिमते स नास्तीति भावः ॥ २२ ॥ **इति द्वितीयं महद्दीर्घाधिकरणम् ॥**

### उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

---

१ तत्र सूत्रम् १—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ११ ॥

इदानीं परमाणुकारणवादं निराकरोति। स च वाद इत्थं समुत्तिष्ठते—पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेव संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि। तत्सामान्येन यावत्किंचित्सावयवं तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते। स चायमवयवावयविविभागो यतो निवर्तते सोऽपकर्षपर्यन्तगतः परमाणुः। सर्वं चेदं जगद्गिरिसमुद्रादिकं सावयवं, सावयवत्वाच्चाद्यन्तवत्। नचाकारणेन कार्येण भवितव्यमित्यतः परमाणवो जगतः कारणमिति कणभुगभिप्रायः। तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते। तेषां चापकर्षपर्यन्तगतत्वेन परतो विभागासंभवाद्विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति, स प्रलयकालः। ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति, ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते। एवमग्निरेवमाप एवं पृथिवी। एवमेव शरीरं सेन्द्रियमिति। एवं सर्वमिदं जगदणुभ्यः संभवति। अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्ति तन्तुपटन्यायेनेति काणादा मन्यन्ते। तत्रेदमभिधीयते—विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः, कर्मवतां तन्त्वादीनां संयोगदर्शनात्। कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम्। अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात्। अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा। यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत, तस्यासंभवान्नैवाणुष्वाद्यं कर्म स्यात्। नहि तस्यामवस्थायामात्मगुणः प्रयत्नः संभवति; शरीराभावात्। शरीरप्रतिष्ठे हि मनस्यात्मनः संयोगे सत्यात्मगुणः प्रयत्नो जायते। एते-

## भामती।

**अथवा**—यद्यणुसमवाय्यदृष्टमथवा क्षेत्रज्ञसमवायि, उभयथापि तस्याचेतनस्य चेतनानधिष्ठितस्याप्रवृत्तेः कर्माभावोऽतस्तदभावः सर्गाभावः। निमित्तकारणतामात्रेण त्वीश्वरस्याधिष्ठातृत्वमुपरिष्टान्निराकरिष्यते। **अथवा**—संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथापि न कर्मातः सर्गहेतोः संयोगस्याभावात् प्रलयहेतोर्विभागस्याभावात्तदभावः। तयोः सर्गप्रलययोरभाव इत्यर्थः। तदेतत्सूत्रं तात्पर्यतो व्याचष्टे—**इदानीं परमाणुकारणवादमिति**। निराकार्यस्वरूपमुपपत्तिसहितमाह—**स च वाद इति**। **स्वानुगतैः** स्वसंबद्धैः। संबन्धश्चाधार्याधारभूत इह प्रत्ययहेतुः समवायः। पञ्चमभूतस्यानवयवत्वात् **तानीमानि चत्वारि भूतानीति**। तत्र परमाणुकारणवादे इदमभिधीयते सूत्रम्। तत्र **प्रथमां** व्याख्यामाह—**कर्मवतामिति**। अभिघातादीत्यादिग्रहणेन नोदनसंस्कारगुरुत्वद्रवत्वानि गृह्यन्ते। नोदनसंस्कारावभिघातेन समानयोगक्षेमौ, गुरुत्वद्रवत्वे च परमाणुगते सदातने कर्मसातत्यप्रसङ्गः। **द्वितीयं**

## वेदान्तकल्पतरुः।

अस्य प्रासङ्गिकेनानन्तराधिकरणेन न संगतिरिति व्यवहितेनोच्यते। प्रधानं चेतनानधिष्ठितत्वान्न कारणं चेत्तर्ह्यणवस्तदधिष्ठिता भवन्तु कारणमिति सुखबोधाय सूत्रमादौ त्रेधा योजयति—**परमाणूनामित्यादिना**। अनवबोधरूप आत्मा अदृष्टाश्रय इति वदतामणवः किं न स्युरित्यणुसमवायीत्युक्तम्। **ननु** कर्मणश्चेतनानधिष्ठितत्वमसिद्धम् ईश्वराधिष्ठितत्वादत आह—**निमित्तेति**। **उपरिष्टादिति**। पत्यु (ब्र. अ. २ पा. २ सू. ३७) रित्यत्रेत्यर्थः। भाष्ये स्वानुगतैरिति न जातेरिव व्यक्तीनामनुगतत्वमुच्यत इत्याह—**स्वसंबद्धैरिति**। संबन्धोऽपि न संयोग इत्याह—**संबन्धश्चेति**। आधारीतीन्प्रत्ययो नित्ययोगे। अतश्चायुतसिद्धिसिद्धेर्न कुण्डबदरसंयोगेऽतिव्याप्तिः। समवाये प्रमाणमाह—**इहेति**। इह प्रत्ययकार्यगम्य इत्यर्थः। **संस्कारो** वेगादिः। **अभिघातः** क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषः। यथोद्यमित-

## कल्पतरुपरिमलः।

**अनवबोधरूप इति**। जडत्वाविशेषादणवोऽदृष्टाश्रयास्तव मते किं न स्युरित्युपहासार्थमणुसमवायित्वपक्षोक्तिरित्यर्थः। तस्य चेतनानधिष्ठितस्याप्रवृत्तेरिति कर्मणश्चेतनाधिष्ठितत्वं न केवलं सांख्याधिकरणोक्तरीत्याभ्युपगन्तव्यं किं त्वदृष्टस्य प्रलयेऽपि सत्त्वात्तदापि द्व्यणुकोत्पादककर्म माभूदित्येतदर्थमपि तदभ्युपगन्तव्यम्। न च—परिपक्वमदृष्टं फलजनकं परिपाकश्च सर्गाद्यसमय एव स्यादिति—वाच्यम्; ईश्वराधिष्ठानसाहित्यव्यतिरेकेण तत्परिपाकस्य निर्वक्तुमशक्यत्वात्, अणुवादिमते गुणरूपस्यादृष्टस्यौषधादिवत्ततोऽन्यस्य पाकस्यासंभवात्, फलकालादिसाहित्यरूपतया कथंचित्तन्निर्वचनेऽपि तथाभूतपाकयुक्तस्याप्यदृष्टस्य तन्मतेऽपि परमेश्वरविनियोज्यत्वात्। **उक्तं हि न्यायवार्तिककृता**—"कर्म पुरुषस्येश्वरोऽनुगृह्णाति

नाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम् । सर्गोत्तरकालं हि तत्सर्वं नाद्यस्य कर्मणो निमित्तं संभवति । अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्येत । तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा । उभयथापि नादृष्टनिमित्तमणुषु कर्मावकल्पेतादृष्टस्याचेतनत्वात् । न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यप्रक्रियायामभिहितम् । आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात् । आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यादसंबन्धात् । अदृष्टवता पुरुषेणास्त्यणूनां संबन्ध इति चेत्, संबन्धसातत्यात्प्रवृत्तिसातत्यप्रसङ्गो नियामकान्तराभावात् । तदेवं नियतस्य कस्यचित्कर्मनिमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात् । कर्माभावात्तन्निबन्धनः संयोगो न स्यात् । संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादि कार्यजातं न स्यात् । संयोगश्चाणोरण्वन्तरेण सर्वात्मना वा स्यादेकदेशेन वा । सर्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसङ्गो दृष्टविपर्ययप्रसङ्गश्च; प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात् । एकदेशेन चेत्सावयवत्वप्रसङ्गः । परमाणूनां कल्पिताः प्रदेशाः स्युरिति चेत्, कल्पितानामवस्तुत्वादवस्त्वेव संयोग इति वस्तुनः कार्यस्यासमवायिकारणं न स्यात् । असति चासमवायिकारणे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत । यथा चादिसर्गे निमित्ताभावात्संयोगोत्पत्त्यर्थं कर्म नाणूनां संभवत्येवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैवाणूनां संभवेत् । नहि तत्रापि किंचिन्नियतं तन्निमित्तं दृष्टमस्ति । अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलय-

---

## भामती ।

व्याख्यानमाशङ्कापूर्वमाह—**अथादृष्टं** धर्माधर्मौ । **आद्यस्य कर्मण इति** । **आत्मनश्च** क्षेत्रज्ञस्य **अनुत्पन्नचैतन्यस्येति** । **अदृष्टवता पुरुषेणेति** । संयुक्तसमवायसंबन्ध इत्यर्थः । **संबन्धस्य सातत्यादिति** । यद्यपि परमाणुक्षेत्रज्ञयोः संयोगः परमाणुकर्मजस्तथापि तत्प्रवाहस्य सातत्यमिति भावः । सर्वात्मना चेदुपचयाभावः । एकदेशेन हि संयोगे यावण्वोरेकदेशौ निरन्तरौ ताभ्यामन्ये एकदेशाः संयोगेनाव्याप्ता इति प्रथिमोपपद्यते । सर्वात्मना तु नैरन्तर्ये परमाणावेकस्मिन् परमाण्वन्तराण्यपि संमान्तीति न प्रथिमा स्यादित्यर्थः । शङ्कते—यद्यपि निष्प्रदेशाः परमाणवः; तथापि संयोगस्तयोरव्याप्यवृत्तिरेवं स्वभावत्वात् । कैषा वाचोयुक्तिर्निष्प्रदेशं संयोगो न व्याप्नोतीति । एषैव वाचोयुक्तिर्यद्यथा प्रतीयते तत्तथाभ्युपेयत इति । तामिमां शङ्कां सूद्धारामाह—**परमाणूनां कल्पिता इति** । नह्यस्ति संभवो निरवयव एकस्तदैव तेनैव संयुक्तश्चासंयुक्तश्चेति, भावाभावयोरेकस्मिन्नद्वये विरोधात् । अविरोधे वा न क्वचिदपि विरोधोऽवकाशमासादयेत् । प्रतीतिस्तु प्रदेशकल्पनयापि कल्प्यते । तदिदमुक्तम्—**कल्पिताः प्रदेशा इति** । तथाच सूद्धारेयमिति तामुद्धरति—**कल्पितानामवस्तुत्वादिति** । तृतीयां व्याख्यामाह—**यथा चादिसर्ग इति** । नन्वभिघातादयः प्रलयारम्भसमये कस्माद्विभागारम्भककर्महेतवो न संभवन्त्यत आह—**नहि तत्रापि**

## वेदान्तकल्पतरुः ।

निपातितमुसलस्योलूखलेन । नोदनं तु संयुक्तस्य स एव संयोगः प्रयत्नविशेषापेक्षः, यथा संनद्धकरशरसंयोगः क्षेपानुकूलप्रयत्नापेक्षः । निमित्तापेक्षत्वेन समानयोगक्षेमौ नोदनसंस्काराविल्यर्थः । तथापीश्वरस्य चैतन्यमस्तीत्याशङ्क्याह—**क्षेत्रज्ञस्येति** । **शङ्कत इति** । परमाणूनां कल्पिता इति वक्ष्यमाणप्रतीकग्रहणेनानुषङ्गः । **ननु** परैः कल्पिताः प्रदेशा नेष्यन्ते, किंतु परमाणौ संयोगस्य वृत्त्यवृत्ती इत्याशङ्क्य वृत्त्यवृत्तिपक्षे व्याघातान्निरस्ते, गत्यभावाद्वैशेषिको यदि परमाणौ संयोगस्याव्याप्यवृत्तये कल्पितं प्रदेशं मन्येत, स भाष्ये आशङ्क्य निरस्यत इति वक्तुं वृत्त्यवृत्तिपक्षं तावदाह—**यद्यपीति** । व्याघातमाह सिद्धान्ती—**कैषेति** । परिहरति वैशेषिकः—**एषेति** । घटादिषु हि संयोगस्य वृत्त्यवृत्ती दृश्येते, यदि तत्राप्यवयवविभागेन, तर्हि यावत्परमाणु तथात्वे परमाणोश्च निरंशत्वे संयोग एव न स्यादिति वृत्त्यवृत्ती एव तस्याव्याप्यवृत्तितेत्यर्थः । **सूद्धारां** सुपरिहारामापाद्येत्यर्थः । शङ्कायाः सूद्धारत्वसिद्ध्यर्थं वृत्त्यवृत्तिपक्षं दूषयति—**नह्यस्तीति** । यदि भावाभावयोरेकत्राविरोधस्तर्हि न क्वचिदपि भेदोऽवकाशमासादयेत्स हि विरुद्धधर्माध्यासरूपः, विरोधाय च त्वया जलाञ्ज-

## कल्पतरुपरिमलः ।

कोऽनुग्रहार्थः ? यद्यथाभूतं यस्य च यदा परिपाककालस्तत्तथा तदा च विनियुङ्क्ते" इति । नन्वस्तु तन्मतेऽपीश्वराधिष्ठितत्वाद्यभ्युपगमः, यथातथैवास्तु को दोष इत्याशङ्क्य तत्र पाशुपताधिकरणे ( ब्र. अ. २ पा. २ सू. ३७ ) दूषणं वक्ष्यत इत्याह—**पत्युरिति** । **प्रयत्नविशेषेति** । प्रायोभिप्रायमेतत् । वायुनापि नोदनदर्शनात् । **तर्हि न क्वचिदपीति** । वृक्षादिष्विव संयोगस्याव्याप्यवृत्तित्वोपपादकाः प्रदेशविशेषादयोऽपि वक्तुं न शक्येरन्निति भावः । प्रदेशकल्पनया प्रतीतिर-

प्रसिद्ध्यर्थमित्यतो निमित्ताभावान्न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म । अतश्च संयोगविभागाभावात्तदायत्तयोः सर्गप्रलययोरभावः प्रसज्येत । तस्मादनुपपन्नोऽयं परमाणुकारणवादः ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

समवायाभ्युपगमाच्च तदभाव इति प्रकृतेनाणुवादनिराकरणेन संबध्यते । द्वाभ्यां चाणुभ्यां द्व्यणुकमुत्पद्यमानमत्यन्तभिन्नमणुभ्यामण्वोः समवैतीत्यभ्युपगम्यते भवता । नचैवमभ्युपगच्छता शक्यतेऽणुकारणता समर्थयितुम् । कुतः ? साम्यादनवस्थितेः । यथैव द्व्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायलक्षणेन संबन्धेन ताभ्यां संबध्यत एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन्समवायलक्षणेनान्येनैव संबन्धेन समवायिभिः संबध्येत; अत्यन्तभेदसाम्यात् । ततश्च तस्य तस्यान्योन्यः संबन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत । ननु—इहप्रत्ययग्राह्यः समवायो नित्यसंबद्ध एव समवायिभिर्गृह्यते नासंबन्धः संबन्धान्तरापेक्षो वा । ततश्च न तस्यान्यः संबन्धः कल्पयितव्यो येनानवस्था प्रसज्येतेति । नेत्युच्यते—संयोगोऽप्येवं सति सं-

### भामती ।

**किंचिन्नियतमिति** । संभवन्त्यभिघातादयः कदाचित् क्वचित्, नत्वपर्यायेण सर्वस्मिन् नियमहेतोरभावादित्यर्थः । **न प्रलयप्रसिद्ध्यर्थमिति** । यद्यपि शरीरादिप्रलयारम्भेऽस्ति दुःखभोगः; तथाप्यसौ पृथिव्यादिप्रलये नास्तीत्यभिप्रेत्येदमुदितमिति मन्तव्यम् ॥ १२ ॥ व्याचष्टे—**समवायाभ्युपगमाच्चेति** । न तावत् स्वतन्त्रः समवायोऽत्यन्तं भिन्नः समवायिभ्यां समवायिनौ घटयितुमर्हत्यतिप्रसङ्गात् । तस्मादनेन समवायिसंबन्धिना सता समवायिनौ घटनीयौ । तथाच समवायस्य संबन्धान्तरेण समवायिसंबन्धेऽभ्युपगम्यमानेऽनवस्था । अथासौ संबन्धिभ्यां संबन्धे न संबन्धान्तरमपेक्षते संबन्धिसंबन्धनपरमार्थत्वात् । **तथाहि**—नासौ भिन्नोऽपि संबन्धिनिरपेक्षो निरूप्यते । नच तस्मिन् सति संबन्धिनावसंबन्धिनौ भवतः । तस्मात् स्वभावादेव समवायः समवायिनोर्न संबन्धान्तरेणेति नानवस्थेति चोदयति—**नन्विहप्रत्ययग्राह्य इति** । परिहरति—**नेत्युच्यते** । **संयोगोऽप्येवमिति** । **तथाहि**—संयोगोऽपि

### वेदान्तकल्पतरुः ।

लिर्दत्त इत्यर्थः । प्रदेशकल्पनयापि कल्प्य इति परेणाप्यङ्गीकार्यमित्यर्थः । **नन्वभिघातादय इति** । प्राक् प्रलयादभिघातादीनां हेतुत्वसंभवादित्यर्थः । सर्वस्मिन्नणावपर्यायेणाभिघातादयो न संभवन्तीत्यत्र हेतुमाह—**नियमेति** । सत्यपि पृथिव्यादौ शरीरादिलयादेव दुःखच्छेदसिद्धेरप्रयोजकस्तस्मिन् पृथिव्यादिलय इत्याह—**तथापीति** । भवन्मते तावन्न समवायः संबन्धिभ्यां कल्पिततत्तादात्म्यवान् । तथाच स्वतन्त्रोऽसंबद्धः सन् संबन्धिनौ न घटयितुमर्हतीत्यर्थः ॥ १२ ॥ समवायस्तन्तुपटाभ्यां संबद्धः तन्नियामकत्वात्कारणवदित्यत्रासंबन्धत्वमुपाधिमाशङ्कते—**अथासाविति** । अनवस्थया पक्षे साध्याभावनिश्चयात्पक्षेतरस्याप्युपाधिता संबन्धिनोर्न घटयितुमर्हतीत्यर्थः । परस्परं स्वस्य च ताभ्यां संबन्धनमविश्लिष्टत्वापादानं परमार्थः स्वभावो यस्य स तथा तत्त्वादित्यर्थः । स्वस्य संबन्धिभ्यां संबन्धनात्सत्त्वं नित्यपरतन्त्रत्वादित्याह—**नासाविति** । संबन्धिनोः संबन्धानात्मत्वे हेतुमाह—**नच तस्मिन्निति** । स्वसत्तायां संबन्धिनोरसंबन्धाभावान्न समवायस्य तत्संबन्धने स्वातिरिक्तसंबन्धापेक्षेत्यर्थः । समवायः समवायिनोरिति यत्तत्स्वभावादिति योजना । किमसंबन्धत्वमुपाधिः असमवायत्वं वा । **नाद्यः**; संयोगे साध्याव्याप्तेरित्याह—**संयोगोऽपीति** । समवायेन तुल्यन्या-

### कल्पतरुपरिमलः ।

यकल्पते चेत्तथैवास्तु को दोष इत्याशङ्क्य तथा सति संयोगतन्मूलद्व्यणुकादिः कल्पितः स्यादिति दूषणे तात्पर्यमाह—**प्रदेशकल्पनयापीति** ॥ १२ ॥ **तन्नियामकत्वात्** तन्तुपटोभयसंश्लिष्टताप्रयोजकत्वात् । **कारणवत्** पटोत्पादनद्वारा तदुभयसंश्लिष्टतापादकवेमादिवत् । **इदमत्र दूषणं वक्तुं शक्यम्**—प्रागभावस्यापि पटकारणत्वात्तस्य तन्तुपटाभ्यां संबन्धाभावाद्व्यभिचारः । अथ प्रागभावस्य पटे न प्रतियोग्यनुयोगिभावरूपः स्वरूपसंबन्धस्तस्य तन्तुभिरपि स्वरूपसंबन्धः कल्प्यः, कारणानां मिलितानां कार्यजनकत्वेन कार्योत्पत्तौ तेषां मेलनस्याप्यपेक्षितत्वान्मेलनस्य च संबन्धरूपत्वादिति चेत्किं स्वरूपमपि संबन्धो भवितुमर्हति ? ओमिति चेत्, तर्हि अवयवावयव्यादीनामपि स्वरूपमेव संबन्धः स्यादिति किं समवायेन । संबन्धिस्वरूपाणामनन्तत्वाल्लाघवेन सर्वानुगत एकः समवायः कल्प्यत इति चेद्, न; एकस्यानेकेषां वा कल्पनीयत्वे खलु लाघवादेकस्य कल्पनमिहानेकेषां क्लृप्तत्वात्तेष्वेव क्लृप्तेषु संबन्धत्वमात्रं कल्पनीयं न तु समवायस्तद्गतं संबन्धत्वं चेत्युभयं कल्पनीयं गौरवात् । अथ समवायपक्षे समवायस्तद्गतं संबन्धत्वं चेति द्वयमेव कल्पनीयम्, अवयवावयव्यादिषु संबन्धत्वकल्पने तेषामननुगतत्वेन क्रोडीकारकाभावाद् अनन्तानि संबन्धत्वानि कल्प्यानीति समवायपक्ष एव लाघवमिति चेन्न । निरूपकभेदेन संबन्धत्वे भेदानङ्गीकारेऽवयवादिषु तत्तदभावसंबन्धत्वस्य क्लृप्तस्यैवावयव्यादिसंबन्धत्व-

**योगिभिर्नित्यसंबद्ध एवेति समवायवन्नान्यं संबन्धमपेक्षेत । अथार्थान्तरत्वात्संयोगः संबन्धान्तरमपेक्षेत, समवायोऽपि तर्ह्यर्थान्तरत्वात्संबन्धान्तरमपेक्षेत । नच गुणत्वात्संयोगः संबन्धान्तरमपेक्षते न समवायोऽगुणत्वादिति युज्यते वक्तुम्; अपेक्षाकारणस्य तुल्यत्वात्, गुणपरिभाषायाश्चातन्त्रत्वात् । तस्मादर्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था । प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १३ ॥**

## भामती ।

संबन्धिसंबन्धनपरमार्थः । नच भिन्नोऽपि संयोगिभ्यां विना निरूप्यते । नच तस्मिन् सति संयोगिनावसंयोगिनौ भवत इति तुल्यचर्चः । यद्युच्येत गुणः संयोगः, नच द्रव्यासमवेतो गुणो भवति, नचास्य समवायं विना समवेतत्वं, तस्मात्संयोगस्यास्ति समवाय इति शङ्कामपाकरोति—**नच गुणत्वादिति** । यद्यसमवायेऽस्यागुणत्वं भवति कामं भवतु, न नः काचित्क्षतिः । तदिदमुक्तम्—**गुणपरिभाषायाश्चेति** । परमार्थतस्तु द्रव्याश्रयीत्युक्तम् । तच्च विनापि समवायं स्वरूपतः संयोगस्योपपद्यत एव । नच—कार्यत्वात्समवाय्यसमवायिकारणापेक्षितया संयोगः समवायीति—युक्तम्; अजसंयोगस्यातथात्वप्रसङ्गात् । **अपिच समवायस्यापि संबन्ध्यधीनसद्भावस्य संबन्धिनश्चैकस्य**

## वेदान्तकल्पतरुः ।

यत्नात्संयोगोऽप्यसंबन्धः प्रसज्येत । नचैवं लयेष्यतेऽतः साध्याव्याप्तिरित्यर्थः । पक्षद्वयेऽपि पक्षेतरत्वं च । यः संबन्धः समवायो वा संबन्धानपेक्ष इत्युपाधिव्यतिरेके दृष्टान्ताभावात् । नचानवस्थया पक्षे साध्याभावनिश्चयापदोषः; तथासति समवायस्य लोपात् । नचैवं समवायस्य संबन्धापेक्षानुमानमाश्रयासिद्धम्; परसिद्धमाश्रित्य परेषामनिष्टापादनादिति । अगुणत्वे सत्यसंबन्धत्वं संबन्धापेक्षायामुपाधिस्तथाच न साध्याव्याप्तिरित्याशङ्कते—**यद्युच्येतेति** । संयोगस्य गुणत्वमसिद्धमिति साध्याव्याप्तिस्तदवस्थेत्याह—**यद्यसमवाय इति** । संबन्धान्तरसापेक्षेऽपि संयोगे नास्त्यगुणत्वे सत्यसंबन्धत्वमस्मन्मतेऽस्यागुणत्वात्संबन्धत्वाच्च अतः साध्याव्याप्तिरित्यर्थः । **ननू**भयसिद्धस्थले साध्याव्याप्तिर्न्यायमते च संयोगस्यागुणत्वमसिद्धमित्याशङ्क्याह—**परमार्थस्त्विति** । अयं परिहार इति शेषः । **द्रव्याश्रयीत्युक्तमिति** । नच द्रव्यासमवेतो गुणो भवतीति ग्रन्थ इत्यर्थः । **अयं भावः**—अगुणत्वे सत्यसंबन्धत्वमित्युपाधेर्व्यतिरेक एवं वाच्यः । समवायः संबन्धाऽनपेक्षः अगुणत्वे सति संबन्धत्वादिति । अत्र तावद् दृष्टान्ताभावादनध्यवसितत्वम् । नच व्यतिरेकित्वम्; अभावे साध्यवत्यपि हेतोरवृत्तेः । विशेषणवैयर्थ्यं च । संयोगस्य प्रागुक्तरीत्या स्वाभाविकद्रव्याश्रितत्वप्रयुक्तेरगुणत्वोपपत्तौ अव्यवच्छेद्यत्वादिति । समवायः समवेतः संबन्धत्वात्संयोगवदित्यप्यनुमानं द्रष्टव्यम् । संयोगे संबन्धत्वे सति संबन्धापेक्षत्वे कार्यत्वमुपाधिः । जात्यादौ साध्याव्याप्तिवारणाय संबन्धत्वे सतीति साध्यविशेषणम् । तथा च कार्यत्वं समवायाद्यावर्तमानं स्वव्याप्तां संबन्धत्वे सति संबन्धापेक्षां वारयेत्, संबन्धत्वं च समवाये उभयवादिसिद्धम् । अतोऽर्थात्संबन्धापेक्षाव्यावृत्तिसिद्धिरित्याशङ्क्याह—**नच कार्यत्वादिति** । आत्माकाशसंयोगे साध्याव्याप्तिमाह—**अजसंयोग-**

## कल्पतरुपरिमलः ।

रूपताया अपि संभवेन अवयवादिषु संबन्धत्वस्यैकस्याप्यकल्पनीयत्वान्निरूपकभेदेन तद्भेदाङ्गीकारे समवायेऽपि तत्तन्निरूपकभेदप्रयुक्तानां तत्संबन्धत्वकल्पनावश्यंभावात् समवायपक्षे धर्मिकल्पनागौरवस्याधिकस्य सद्भावादिति । इत्थं दूषणं समवायस्य संबन्धान्तरानपेक्षत्वे संयोगोऽपि तदनपेक्षः स्यादिति वक्ष्यमाणरीत्यैवोन्नेतुं शक्यमिति भाष्यादिषु न कण्ठरवेणोक्तम् । **पक्षेतरस्यपीति** । यद्यपि पक्षमात्रव्यावृत्त उपाधिः पक्षेतरः प्रसिद्धः, असंबन्धत्वोपाधिश्च न तथा, अपक्षात्संयोगादपि व्यावृत्तत्वात्; तथाप्युपाधिव्यतिरेकेण साध्यव्यतिरेकसाधकं यदुपाध्युत्थाप्यं प्रतिपक्षानुमानमुपाधेर्दूषकताबीजं तस्यासाधारणहेत्वाभासदोषग्रस्तत्वं पक्षेतरत्वस्यानुपाधितायां बीजम् । यथा पर्वतीयवह्न्यनुमाने एतत्पर्वतेतरत्वस्यानुपाधितायामयं पर्वतो निर्वह्निः एतत्पर्वतत्वादिति तदुत्थाप्यप्रतिपक्षानुमानस्य सकलसपक्षव्यावृत्तत्वरूपेणासाधारण्येन दुष्टत्वात्तस्यानुपाधित्वम् । तदीयमनुपाधितावीजमिहापि समानम् । समवायोऽसंबद्धः संबन्धत्वादित्यत्रापि ह्यस्त्यसाधारण्यमित्यस्य पक्षेतरत्वसाम्येनानुपाधित्वशङ्का । उपाधित्वसमर्थनस्यायमाशयः । पक्षे साध्याभावनिश्चये सति पक्ष एव सपक्षोऽपि जातोऽतः सकलसपक्षव्यावृत्तत्वाभावाद् नासाधारण्यमनुपाधितावीजमस्तीति अगुणत्वे सत्यसंबन्धत्वम् अगुणत्वविशिष्टस्य संबन्धत्वस्याभावस्तथा च संयोगेऽपि विशेषणाभावप्रयुक्तविशिष्टाभावरूपोपाधिसत्त्वान्न साध्याव्यापकत्वम् । **संयोगस्य गुणत्वमसिद्धमिति** । रूपादिचतुर्विंशत्यनुगतस्यैकस्य गुणत्वस्य निर्वक्तुमशक्यत्वादिति भावः । **उभयसिद्धस्थल इति** । यद्यप्यनुमानवादिमते साध्याव्यापकत्वमप्युपाधिदोषः, एनं प्रति प्रतिपक्षोन्नयनासंभवात्; तथापि तथा निःशङ्कदोषो न भवतीति तात्पर्यम् । **अनध्यवसितत्वमसाधारण्यम्** । **संबन्धत्वे सतीति विशेषणमिति** । शुद्धसाध्यव्यापकत्वा-

## नित्यमेव च भावात् ॥ १४ ॥

अपिचाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वाऽनुभयस्वभावा वाऽभ्युपगम्यन्ते गत्यन्तराभावात् । चतुर्धापि नोपपद्यते । प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात्प्रलयाभावप्रसङ्गः । निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात्सर्गाभावप्रसङ्गः । उभयस्वभावत्वं च विरोधादसमञ्जसम् । अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यप्रवृत्तिप्रसङ्गात् । अतन्त्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसङ्गात् । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

### भामती ।

द्वयोर्वा विनाशित्वेन विनाशित्वात्कार्यत्वम् । नह्यस्ति संभवो गुणो वा गुणगुणिनौ वावयवो वावयवावयविनौ वा न स्तोऽप्यस्ति च तयोः संबन्ध इति । तस्मात् कार्यः समवायः । तथाच यथैष निमित्तकारणमात्राधीनोत्पाद एवं संयोगोऽपि । अथ समवायोऽपि समवाय्यसमवायिकारणे अपेक्षते, तथापि सैवानवस्थेति । तस्मात्समवायवत् संयोगोऽपि न संबन्धान्तरमपेक्षते । यद्युच्येत संबन्धिनावसौ घटयति नात्मानमपि संबन्धिभ्यां, तत् किमसावसंबद्ध एव संबन्धिभ्याम्? एवं चेदत्यन्तभिन्नोऽसंबद्धः कथं संबन्धिनौ संबन्धयेत् । संबन्धने वा हिमवद्विन्ध्यावपि संबन्धयेत् । तस्मात्संयोगः संयोगिनोः समवायेन संबद्ध इति वक्तव्यम् । तदेतत्समवायस्यापि समवायिसंबन्धे समानमन्यत्राभिनिवेशात् । तथाचानवस्थेति भावः ॥ १३ ॥ प्रवृत्तेरप्रवृत्तेर्वेति शेषः । अतिरोहितार्थमस्य भाष्यम् ॥ १४ ॥ यत् किल भूतभौतिकानां मूलकारणं तद्रूपादिमान् परमाणुर्नित्य इति भवद्भिरभ्युपेयते, तस्य चेद्रूपादिमत्त्वमभ्युपेयेत परमाणुत्वनित्यत्वविरुद्धे स्थौल्यानित्यत्वे प्रसज्येयातां, सोऽयं प्रसङ्ग एकधर्माभ्युपगमे धर्मान्तरस्य । नियता प्राप्तिर्हि प्रसङ्गलक्षणं, तदनेन प्रसङ्गेन जगत्कारणप्रसिद्ध्ये प्रवृत्तं साधनं रूपादिमन्नित्यपरमाणुसिद्धेः प्रच्याव्य ब्रह्मगोचरतां नीयते । तदेत-

### वेदान्तकल्पतरुः ।

**स्येति** । अजसंयोगश्च साधयिष्यते । संबन्धत्वेन हेतुना संयोगवत्समवायस्यापि कार्यत्वं साधयन्साधनव्याप्तिमाह—**अपिचेति** । ये तु समवायस्य कार्यत्वं स्वीकृत्यैव समवायिकारणानपेक्षत्वेन समवायान्तरापेक्षां न मन्यन्ते प्राभाकरास्तान्प्रति प्रतिबन्द्या समवायान्तरापेक्षामुपपादयति—**तथाचेति** । संयोगप्रतिबन्दीमुपसंहरति—**तस्मादिति** । **ननु** संयोगस्यापि संयोगिभ्यामसंबन्ध एव भवतु तथाच कुतः प्रतिबन्दीति कश्चिच्छङ्कते—**यद्युच्येतेति** । दूषयति—**तत्किमिति** । **संयोगिनोरिति** सप्तमी ॥ १३ ॥ १४ ॥ यदि परमाणून्पक्षीकृत्य रूपादिमत्त्वेन सावयवत्वमनित्यत्वं च साध्यते तर्ह्याश्रयासिद्धिरित्याशङ्क्याह—**यत्किलेति** । मूलकारणमुभयसंमतं पक्षस्तद्यदि रूपादिमत्तर्हि सावयवत्वाद्यापाद्यमिति नाश्रयासिद्धिरित्यर्थः । **नन्वेवमपि** पक्षधर्मत्वासिद्धिः स्यात्, सिद्धान्ते मूलकारणस्य रूपादिमत्त्वानभ्युपगमादत आह—**केति** । यदि पर्वतेऽनग्निमत्त्वम् अभ्युपगम्यते, तर्ह्यधूमवत्त्वं स्यादित्यादावप्रमितस्यैवाभ्युपगममात्रेणापादकत्वदर्शनादिति भावः । प्रसङ्गेऽप्यापाद्यापादकयोर्व्याप्तिः प्रमिता वक्तव्या । यदनग्निमत्तदधूमवदिति व्याप्तेः प्रमितत्वात्तदिदमुक्तं—**नियतेति** । **ननु** व्याप्यारोपाद्व्यापकारोपस्तर्कः कथमनेन वस्तुसिद्धिरत आह—**तदनेनेति** । **तदिति** । तत्रेत्यर्थः । विमतं सोपादानं भावकार्यत्वात्संमतवदिति सामान्यतः प्रवृत्तानुमानमेतत्तर्कोपबृंहितं नित्यव्यापकब्रह्मविषयं क्रियत इत्यर्थः । जगदुपादानं न सर्शवद् न चाणु नित्यत्वाद्—अत्यन्ताभाववदिति अनुमानपर्यवसानम् । सत्यपि स्पर्शादिमत्त्वे मूलका-

### कल्पतरुपरिमलः ।

भावेऽपि पक्षधर्मावच्छिन्नसाध्यव्यापकोयमुपाधिरित्यर्थः । **नन्वेवं** प्रतिपक्षोन्नयने शुद्धसाध्यव्यतिरेको न सिध्येदित्याशङ्क्य पक्षधर्मरूपविशेषणवति विशिष्टव्यतिरेकः सिध्यन्विशेष्यव्यतिरेकमादाय पर्यवस्येदित्याह—**तथाचेति** ॥ १३ ॥ १४ ॥ **व्याप्तिः प्रमिता वक्तव्येति** । नच विपक्षबाधकाभावादिह तर्कमूलव्याप्त्यप्रमितिः शङ्कनीया; रूपादीनां जन्यत्वे हि रूपत्वादिकं प्रयोजकमेष्टव्यम्, अनुगतत्वाल्लघुत्वाच्च, नतु कार्यगतरूपत्वम्; पार्थिवपरमाणुगतपाकजरूपाननुगतत्वाद्, गुरुत्वाच्च । तथाच परमाणुष्वपि रूपादिस्वीकारे अग्निसंयोगजन्या रूपादयः स्वोत्पत्तौ स्वाश्रयकारणगतरूपाद्यपेक्षा इति पराभ्युपगतरीत्यैव जलपरमाणुगतरूपादीनां पार्थिवपरमाणुगतश्यामरूपस्य चोत्पत्तावपेक्षितानां रूपादीनामाश्रयत्वेन परमाणूनां कारणीभूता अवयवाः सिध्यन्तो न निवारयितुं शक्यन्ते । सावयवत्वेचाऽनित्यत्वमप्यनिवार्यम् । तथा त्रसरेणुः, समवायिकारणारभ्यः, महत्त्वे सति चाक्षुषत्वात्, तदपि त्रसरेणुसमवायिकारणं, समवायिकारणारभ्यं, महदारम्भकत्वादिति परैः परमाणुः साध्यते । तथाचाद्यानुमाने विपक्षबाधकतर्क एवमुच्यते । महत्परिमाणस्य जन्यत्वे महत्त्वापकर्षमात्रं

सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः परो विभागो न संभवति ते चतुर्विधा रूपादिमन्तः परमाणवश्चतुर्विधस्य रूपादिमतो भूतभौतिकस्यारम्भका नित्याश्चेति यद्वैशेषिका अभ्युपगच्छन्ति स तेषामभ्युपगमो निरालम्बन एव। यतो रूपादिमत्त्वात्परमाणूनामणुत्वनित्यत्वविपर्ययः प्रसज्येत। परमकारणापेक्षया स्थूलत्वमनित्यत्वं च तेषामभिप्रेतविपरीतमापद्येतेत्यर्थः। कुतः? एवं लोके दृष्टत्वात्। यद्धि लोके रूपादिमद्वस्तु तत्स्वकारणापेक्षया स्थूलमनित्यं च दृष्टम्। तद्यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति, तथाचामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते, तस्मात्तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति। यच्च नित्यत्वे कारणं तैरुक्तम्—'सदकारणवन्नित्यम्' (वै० सू० ४।१।१) इति। तदप्येवं सत्यणुषु न संभवति; उक्तेन प्रकारेणाणूनामपि कारणवत्त्वोपपत्तेः। यदपि नित्यत्वे द्वितीयं कारणमुक्तम्—'अनित्यमिति च विशेषतः प्रतिषेधाभावः' (वै० ४।१।४) इति। तदपि नावश्यं परमाणूनां नित्यत्वं साधयति। असति हि यस्मिन्कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः समासो नोपपद्यते, न पुनः परमाणुनित्यत्वमेवापेक्ष्यते। तच्चास्त्येव नित्यं परमकारणं ब्रह्म। नच शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति; प्रमाणान्तरसिद्धयोः शब्दार्थयोर्व्यवहारावतारात्। यदपि नित्यत्वे तृतीयं कारणमुक्तम्—'अविद्या च' (वै० ४।१।५) इति, तद्यद्येवं विव्रीयेत सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेणाग्रहणमविद्येति, ततो द्व्यणुकनित्यताऽप्यापद्येत। अथाद्रव्यत्वे सतीति विशेष्येत, तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत। तस्य च प्रागेवोक्तत्वात् 'अविद्या च' इति पुनरुक्तं स्यात्। अथापि कारणविभागात्कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतो-

## भामती।

वैशेषिकाभ्युपगमोपन्यासपूर्वकमाह—**सावयवानां द्रव्यणामिति**। परमाणुनित्यत्वसाधनानि च तेषामुपन्यस्य दूषयति—**यच्च नित्यत्वे कारणमिति**। **सदिति** प्रागभावाद्व्यवच्छिनत्ति। **अकारणवदिति** घटादेः। **यदपि द्वितीयमिति**। लब्धरूपं हि क्वचित् किंचिदन्यत्र निषिध्यते। तेनानित्यमिति लौकिकेन निषेधेनान्यत्र नित्यत्वसद्भावः कल्पनीयः, ते चान्ये परमाणव इति। तन्न; आत्मन्यपि नित्यत्वोपपत्तेः, व्यपदेशस्य च प्रतीतिपूर्वकस्य तदभावे निर्मूलस्यापि दर्शनात्। यथेह वटे यक्ष इति। **यदपि नित्यत्वे तृतीयं कारणमविद्येति**। यदि सतां परमाणूनां परिदृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाग्रहणमविद्या तया नित्यत्वम्, एवं सति द्व्यणुकस्यापि नित्यत्वम्। **अथाद्रव्यत्वे सतीति विशेष्येत** तथा सति न द्व्यणुके व्यभिचारः, तस्यानेकद्रव्यत्वेनाविद्यमानद्रव्यत्वानुपपत्तेः। **तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत** यतोऽद्रव्यत्वमविद्यमानकारणभूतद्रव्यत्वमुच्यते, तथाच पुनरुक्तमित्याह—**तस्य चेति**। अपि चाद्रव्यत्वे सति सत्त्वादित्यत एवेष्टार्थसिद्धेरविद्येति व्यर्थम्। अथाविद्यापदेन द्रव्यविनाशकारणद्वयाविद्यमानत्वमुच्यते, द्विविधो हि द्रव्यनाशहेतुरवयवविनाशोऽवयवव्यतिषङ्गविनाशश्च, तदुभयं परमाणौ नास्ति, तस्मान्नित्यः परमाणुः। नच सुखादिभिर्व्यभिचारः, तेषामद्रव्यत्वादित्याह—**अथापीति**। निराकरोति—**नावश्य-**

## वेदान्तकल्पतरुः।

रणस्य नित्यत्वमनुमानात्सिध्यतीत्यर्थात्सत्प्रतिपक्षतामाशङ्क्य दूषयतीत्याह—**परमाणुनित्यत्वेति**। कारणाभावादेव नित्यत्वसिद्धेः कारणग्रहणोक्तिर्व्यर्थेत्याह—**अपिचेति**। परमाणुर्नित्यः अवयवविनाशावयवविभागरहितत्वादात्मवदित्येतत्सुखादिभिर्न सव्यभिचारं द्रव्यत्वे सतीति विशेषणादित्याह—**नच सुखादिभिरिति**। **ननु** स्थिते घृते काठि-

## कल्पतरुपरिमलः।

प्रयोजकं, ननु महत्परिमाणगतमुत्कर्षापकर्षरूपजातिद्वयम्; गौरवात्। तथाच त्रसरेणुमहत्त्वस्यापकृष्टमहत्त्वरूपतया जन्यत्वेन कारणापेक्षायां तत्र स्वाश्रयसमवायिकारणगतसंख्यापरिमाणप्रशिथिलसंयोगान्यतमावश्यम्भावेन त्रसरेणोः समवायिकारणमवश्यमभ्युपगन्तव्यमिति तत्र महत्त्वस्य जन्यत्वे महत्त्वापकर्षोऽपि न प्रयोजकः, किंतु परिमाणापकर्ष इति युक्तम्; सामान्यस्य लघुत्वाद्दीर्घपरिमाणानुगतत्वाच्च। ततश्च त्रसरेणुमूलकारणे यद्यपकृष्टपरिमाणमभ्युपगम्येत, तदा तस्य जन्यत्वेन कारणपरिमाणाद्यपेक्षया तस्य सावयवत्वं प्रसज्येतेति तत्परिहाराय तत्र परममहत्त्वस्याभ्युपगन्तव्यत्वात् तदुक्तरीत्यैव परिमाणगततज्जन्यताप्रयोजकरूपापेक्षया जगन्मूलकारणानुमानप्रवृत्तौ तेन परममहद्द्वैव तथात्वेनानुमितं भवेदिति। एवंच स्थौल्यानित्यत्वे प्रसज्येयातामिति तर्के स्थौल्यशब्दितस्य महत्त्वस्य परमात्रानिष्टस्यापादनम् अनित्यत्वस्य तूभयानिष्टस्येति विवेकः। **सत्प्रतिपक्षतामाशङ्क्येति**। **ननु**—जगत्सोपादानं भावकार्यत्वादिति यद्ब्रह्मपर्यवसाय्य-

**रसंभवोऽविद्या, सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत । नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीति नियमोऽस्ति । संयोगसचिवे ह्यनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमान एतदेवं स्यात् । यदा त्वपास्तविशेषं सामान्यात्मकं कारणं विशेषवदवस्थान्तरमापद्यमानमारम्भकमभ्युपगम्यते, तदा घृतकाठिन्यविलयनवन्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते । तस्माद्रूपादिमत्त्वात्स्यादभिप्रेतविपर्ययः परमाणूनाम् । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १५ ॥**

## भामती ।

**मिति ।** यदि हि संयोगसचिवानि बहूनि द्रव्याणि द्रव्यान्तरमारभेरन्निति प्रक्रिया सिध्येत्, सिध्येद् द्रव्यद्वयमेव (?) तद्विनाशकारणमिति । नत्वेतदस्ति; द्रव्यस्वरूपापरिज्ञानात् । न तावत् तन्त्वाधारस्तद्व्यतिरिक्तः पटो नामास्ति यः संयोगसचिवैस्तन्तुभिरारभ्येतेत्युक्तमधस्तात् । षट्पदार्थांश्च दूषयन्नग्रे वक्ष्यति । किंतु कारणमेव **विशेषवदवस्थान्तरमापद्यमानं** कार्यं, तच्च सामान्यात्मकम् । **तथाहि**—मृद्वा सुवर्णं वा सर्वेषु घटरुचकादिष्वनुगतं सामान्यमनुभूयते । नचैते घटरुचकादयो मृत्सुवर्णाभ्यां व्यतिरिच्यन्त इत्युक्तम् । अग्रे च वक्ष्यामः । तस्मान्मृत्सुवर्णे एव तेन तेनाकारेण परिणममाने घट इति च रुचक इति च कपालशर्कराकणमिति च शकलकणिकाचूर्णमिति च व्याख्यायेते; तत्र तत्रोपादानयोर्मृत्सुवर्णयोः प्रत्यभिज्ञानात्, नतु घटादयो वा कपालादिषु कपालादयो वा घटादिषु च रुचकादयो वा शकलादिषु शकलादयो वा रुचकादिषु प्रत्यभिज्ञायन्ते यत्र कार्यकारणभावो भवेत् । नच—विनश्यन्तमेव घटक्षणं प्रतीत्य कपालक्षणोऽनुपादान एवोत्पद्यते, तत्किमुपादानप्रत्यभिज्ञानेनेति—वक्तव्यम्; एतस्या अपि वैनाशिकप्रक्रियाया उपरिष्टान्निराकरिष्यमाणत्वात् । तस्मादुपजनापायधर्माणो विशेषावस्थाः सामान्यस्योपादेयाः, सामान्यात्मा तूपादानम् । एवं व्यवस्थिते यथा सुवर्णद्रव्यं काठिन्यावस्थामपहाय द्रवावस्थया परिणतं, नच तत्रावयवविभागः सन्नपि द्रवत्वे कारणं, परमाणूनां भवन्मते तदभावेन द्रवत्वानुपपत्तेः, तस्माद्यथा परमाणुद्रव्यमग्निसंयोगात्काठिन्यमपहाय द्रवत्वेन परिणमते, नच काठिन्यद्रवत्वे परमाणोरतिरिच्येते, एवं मृद्वा सुवर्णं वा सामान्यं पिण्डावस्थामपहाय कुलालहेमकारादिव्यापाराद्घटरुचकाद्यवस्थामापद्यते । नत्ववयवविनाशात्तत्संयोगविनाशाद्वा विनष्टुमर्हन्ति घटरुचकादयः । नहि कपालादयोऽस्योपादानं तत्संयोगो वाऽसमवायिकारणमपि तु सामान्यमुपादानं, तच्च नित्यम् । नच तत्संयोगसचिवम्; एकत्वात्, संयोगस्य द्विष्ठत्वेनैकस्मिन्नभावात् । तस्मात्सामान्यस्य परमार्थसतोऽनिर्वाच्या विशेषावस्थास्तदधिष्ठाना भुजङ्गादय इव रज्ज्वाद्युपादाना उपजनापायधर्माण इति सांप्रतम् । प्रकृतमुपसंहरति—**तस्मादिति** ॥ १५ ॥

## वेदान्तकल्पतरुः ।

भ्यनाशो भाष्ये उदाहृतः उत घृतस्यापि । **नाद्ये** द्रव्यलयस्योदाहरणम् । **अन्त्ये तु** अवयवविभागपूर्वकत्वात्तत्रापि घृतनाशस्य साध्यसमत्वमिति । तत्र साध्यसमत्वमुपरि परिहरिष्यति । काठिन्यं तावद् घृतस्यावस्था, न च दार्ष्टान्तिकेनासंगतिः; पटादीनामपि तन्त्वाद्यवस्थाविशेषत्वेन तत्त्वान्तरत्वाभावाद्, इत्याह—**द्रव्यस्वरूपापरिज्ञानादिति । अधस्तादार**म्भणाधिकारणे ( ब्र. अ. २ पा. १ सू. १४ ) । **ननु** विशेषावस्थापि संयोगपूर्वेति, नेत्याह—**तच्चेति** । एकं ह्यनुगतद्रव्यं कारणभूतं सामान्यं न तस्य संयोग इत्यर्थः । कारणस्य सामान्यात्मत्वमुपपादयति—**मृद्वेति** । कारणस्यैव कार्यरूपसंस्थानात्मकत्वमाह—**नचैत इति** । शकलम् इत्यारभ्य रुचकावान्तरो विकार उक्तः । **ननु** किमनुगतद्रव्यकल्पनया व्यावृत्ताः कपालशकलादय एव घटरुचकादीनारप्स्यन्ते, इत्यत आह—**तत्र तत्रेति** । सत्यपि जनकत्वाविशेषे कुम्भकारहेमकारादयो न कुम्भरुचकादीनाम् उपादानम् । नहि ते तांस्तादात्म्येनोपाददाना दृश्यन्ते । मृत्कनके तूपादानमिति व्यवस्था तादात्म्यकारिता; समवायस्य प्राग् निरस्तत्वात्, तादात्म्यं चानुवृत्तयोरेव महीहेम्नोर्घटरुचकादिष्वनुभूयते, नेतरेतरव्यावृत्तानामित्यनुगतद्रव्यमेवोपादानमित्यर्थः । **ननु** सत्युपादानेऽनुवृत्तिव्यावृत्तिचिन्ता, तदेव नेति बौद्धमतमाशङ्क्याह—**नच विनश्यन्तमिति । प्रतीत्य** प्राप्य । एवं यदा त्वपास्तविशेषं सामान्यात्मकं कारणं विशेषवदवस्थान्तरमापद्यमानम् आरम्भकमभ्युपगम्यत इति भाष्यमुपपादितम् । इदानीं तु तदा घृतकाठिन्यविलयनवदित्यादिभाष्यं कृतोपोद्घातं व्याचष्टे—**एवं व्यवस्थिते इति ।** यत्तु घृतस्यापि नाशाभ्युपगमेऽवयवविभागस्य सद्भावात्साध्यसमत्वमिति तत्र घृतनाशो नोपेयते, काठिन्यसंस्थाननाशस्तु नच तत्र विद्यमानोऽप्यवयवविभागप्रयोजकः; परमाणुगतकाठिन्यनाशे द्रवत्वोदये च तदभावादित्याह—**नच तत्रेति** । यथा कार्यद्रवत्वात्परमाणोर्द्रवत्वकल्पना, एवं काठिन्यमपि कल्प्यं न चेन्नेतरदपि । न केवलं परमाणुदृष्टान्ते अवयवविभागाद्यभाव उपजीव्यः, किंतु कार्यकारणभेदाभावोऽपीत्याह—**नच काठिन्यद्रवत्वे इति** ॥ १५ ॥ परमाणुषु गुणोपचयापचयाभ्याम् उपचितापचितावयवत्वप्रसञ्जनमयुक्तम्, अन्यत्वाद्गुणानां द्रव्यस्य निरवयवत्वाविघातादित्याशङ्क्य गुणसमुदायत्वं परमाणूनां वक्तुं कार्यस्य गुणसमुदायत्वं तद्वृद्धिह्रासाभ्यां च स्थौल्यसौक्ष्म्ये

## उभयथा च दोषात् ॥ १६ ॥

गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी, रूपरसस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः, स्पर्शगुणः सूक्ष्मतमो वायुरित्येवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानि च लोके लक्ष्यन्ते। तद्वत्परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन्न वा। उभयथापि च दोषानुषङ्गोऽपरिहार्य एव स्यात्। कल्प्यमाने तावदुपचितापचितगुणत्व उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः। नचान्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्यते; कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्। अकल्प्यमाने तूपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत्सर्वे एकैकगुणा एव कल्प्येरंस्ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात्, अप्सु रूपस्पर्शयोः, पृथिव्यां च रसरूपस्पर्शानाम्; कारणगुणपूर्वकत्वात्कार्यगुणानाम्। अथ सर्वे चतुर्गुणा एव कल्प्येरन्, ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात्, तेजसि गन्धरसयोः, वायौ गन्धरूपरसानाम्। नचैवं दृश्यते। तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनि-

---

### भामती।

अनुभूयते हि पृथिवी गन्धरूपरसस्पर्शात्मिका स्थूला, आपो रसरूपस्पर्शात्मिकाः सूक्ष्माः, रूपस्पर्शात्मकं तेजः सूक्ष्मतरं, स्पर्शात्मको वायुः सूक्ष्मतमः। **पुराणेऽपि स्मर्यते**—'आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत्। द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥१॥ रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ। त्रिगुणस्तु ततो वह्निः स शब्दस्पर्शवान् भवेत् ॥ २ ॥ शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत्। तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥३॥ शब्दः स्पर्शश्च रूपं च रसश्चेद्गन्धमाविशत्। संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम् ॥ ४ ॥ तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते। शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ ५ ॥ परस्परानुप्रवेशाद्धारयन्ति परस्परम्।' तेन गन्धादयः परस्परं संहन्यमाना पृथिव्यादयः। तथाच यथायथा संहन्यमानानामुपचयस्तथातथा संहतस्य स्थौल्यं, यथायथाऽपचयस्तथातथा सौक्ष्म्यतारतम्यं, तदेवमनुभवागमाभ्यामवस्थितमर्थं वैशेषिकैरनिच्छद्भिरप्यशक्यापह्नवमाह **—गन्धेति**। अस्तु तावच्छब्दो वैशेषिकैस्तस्य पृथिव्यादिगुणत्वेनानभ्युपगमादिति चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहृतवान्। अनुभवागमसिद्धमर्थमुक्त्वा विकल्प्य दूषयति**—तद्वत्** स्थूलपृथिव्यादिवत्। **परमाणवोऽपीति**। **उपचितगुणानां मूर्त्युपचयात्** उपचितसंहन्यमानानां संघातोपचयात् **अपरमाणुत्वप्रसङ्गः** स्थूलत्वादिति। यस्तु ब्रूते न गन्धादिसंघातः परमाणुरपि तु गन्धाद्याश्रयो द्रव्यं, नच गन्धादीनां तदाश्रयाणामुपचयेऽपि द्रव्यस्योपचयो भवितुमर्हत्यन्यत्वादिति, तं प्रत्याह**—नचान्तरेणापि मूर्त्युपचयं** द्रव्यस्वरूपोपचयमित्यर्थः। कुतः ? **कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्**। न तावत् परमाणवो रूपतो गृह्यन्ते, किंतु कार्यद्वारा, कार्यं च न गन्धादिभ्यो भिन्नं, यदा न तदाधारतया गृह्यतेऽपि तु तदात्मकतया, तथाच तेषामुपचये तदुपचितं दृष्टमिति परमाणुभिरपि तत्कारणैरेवं भवितव्यं, तथाचापरमाणुत्वं स्थूलत्वादित्यर्थः। **द्वितीयं विकल्पं दूषयति—अकल्प्यमाने तूपचितापचितगुणत्व इति**। **अथ सर्वे चतुर्गुणा इति**। यद्यप्यस्मिन्कल्पे सर्वेषां स्थौल्यप्रसङ्गः; तथाप्यतिस्फुटतयोपेक्ष्य दूषयति**—ततोऽप्स्वपीति**। वायो रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इत्यपि द्रष्टव्यम् ॥ १६ ॥ निगदव्याख्यातेन

### वेदान्तकल्पतरुः।

दर्शयति**—अनुभूयते हीत्यादिना**। येनामिलिता गुणास्तेन कारणेन स्थूलाः सन्तस्ते विशेषा व्यावृत्तव्यवहारवन्तस्ते च सात्त्विकत्वादिना शान्ततादियोगिन इत्यर्थः। **परस्परेति**। परस्परे गन्धादीनामनुप्रवेशाद् द्रव्यसंज्ञां लब्ध्वा रसादयः पृथिवी भूत्वा गन्धं धारयन्ति, रूपादय आपो भूत्वा रसं धारयन्ति, स्पर्शादयस्तेजो भूत्वा रूपं धारयन्ति, शब्दस्पर्शसमुदायश्च वायुर्भूत्वा स्पर्शं धारयतीत्यर्थः। **उपचितगुणानां मूर्त्युपचयादिति भाष्योपादानम्**। उपचयमात्रेण न संघातात्मकमूर्त्याधिक्यमतो व्याख्या**—संहन्यमानानामिति**। **संघातेति** मूर्तिशब्दव्याख्या। **यस्तु ब्रूते इति**। आगममनादृत्येत्यर्थः। गुणसङ्घातोपचयापादने इष्टपरतामाशङ्क्याह**—द्रव्यस्वरूपेति**। परमाणुषु गुणोपचयान्मूर्त्युपचये साध्ये कार्येषु तदुपचयान्मूर्त्युपचयप्रदर्शनं न तावद्दृष्टान्तत्वेन; साध्यसमत्वाद्, नापि हेतुत्वेन; व्यधिकरणत्वादित्याशङ्क्याह**—न तावदिति**। दृष्टान्तोक्तिस्तावदियम्। तत्र साध्यसमतां परिहरति**—कार्यं चेति**। भावे चोपलब्धे ( ब्र. अ. २

बद्धः। अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः ॥ १७ ॥

अपिच वैशेषिकास्तन्त्रार्थभूतान्षट्पदार्थान्द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नाभिन्नलक्षणानभ्युपगच्छन्ति। यथा मनुष्योऽश्वः शश इति। तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति। तन्नोपपद्यते; कथम्? यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ भवति द्रव्याधीनत्वं गुणादीनाम्, ततो द्रव्यभावे भावाद्द्रव्याभावेऽभावाद्द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति। यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग्भवति तद्वत्। तथा सति सांख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्। नन्वग्नेरन्यस्यापि सतो धूमस्याग्न्यधीनत्वं दृश्यते। सत्यं दृश्यते। भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते। इह तु शुक्लः कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन तेन विशेषणेन प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति। तस्माद्द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता। गुणादीनां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यदुच्येत,

## भामती।

भाष्येण व्याख्यातम् ॥ १७ ॥ संप्रत्युत्सूत्रं भाष्यकृद्वैशेषिकतन्त्रं दूषयति—**अपि च वैशेषिका इति**। **द्रव्याधीनत्वं** द्रव्याधीननिरूपणत्वम्। नहि यथा गवाश्वमहिषमातङ्गाः परस्परानधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, वह्न्याद्यधीनोत्पत्तयो वा धूमादयो यथा वह्न्याद्यनधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, एवं गुणादयो न द्रव्याद्यनधीननिरूपणाः, अपि तु यदायदा निरूप्यन्ते तदातदा तदाकारतयैव प्रथन्ते, नतु प्रथायामेषामस्ति स्वातन्त्र्यं, तस्मान्नातिरिच्यन्ते द्रव्यात्, अपितु द्रव्यमेव सामान्यरूपं तथातथा प्रथत इत्यर्थः। द्रव्यकार्यत्वमात्रं गुणादीनां द्रव्याधीनत्वमिति मन्वानश्चोदयति—**नन्वग्नेरन्यस्यापीति**। परिहरति—**भेदप्रतीतेरिति**। न तदधीनोत्पादतां तदधीनत्वमाचक्ष्महे, किंतु तदाकारतां, तथाच न व्यभिचार इत्यर्थः। शङ्कते—**गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसि-**

## वेदान्तकल्पतरुः।

पा. १ सू. १५ )रित्यत्र चोक्तरीत्येत्यर्थः। सौगतमते सङ्घातोऽनधिष्ठातृकः सिद्धान्ते त्वीश्वराधीनः। उपादानं च गन्धादीनामस्त्यव्याकृतमिति भेदः ॥ १६ ॥ १७ ॥

**उत्सूत्रमिति**। उत्सूत्रवाक्यमित्यर्थः। सौत्रचशब्दव्याख्यानत्वात् षट्पदार्थीदूषणस्य। **भाष्ये—द्रव्याधीनत्वं** द्रव्याधीननिरूपणत्वमिति, नतु तदुत्पाद्यत्वम्; केषांचिद्गुणानां सामान्यादीनां च तदभावाद्। द्रव्याधीनत्वमुपपादयति—**नहि यथेति**। पूर्वं स्वमते स्थित्वा द्रव्यस्य गुणसङ्घातमात्रत्वमुक्तमिदानीं वैशेषिकदृष्ट्या द्रव्यं किंचिदभ्युपेत्य द्रव्यसामानाधिकरण्यप्रतीत्या गुणादेर्द्रव्यमात्रत्वमुच्यत इति न पूर्वापरविरोधः। **ननु** न तादात्म्येन द्रव्याधीननिरूपणत्वं किंतु तदुत्पत्त्येत्याशङ्क्याह—**वह्न्याद्यधीनेति**। **ननु** तादात्म्येन प्रतीयमानत्वम् अभेदहेतुरित्युक्ते कथं भाष्येऽग्निधूमयोर्व्यभिचारशङ्कात आह—**द्रव्यकार्यमात्रत्वमिति**। **शङ्कत इति**। शुक्लत्वं घटवृत्ति शौक्ल्यवृत्तित्वात्सत्त्ववदित्यनुमान-

## कल्पतरुपरिमलः।

मुमानमुपन्यस्तं, यच्च जगदुपादानं न स्पर्शवन्न चाणु नित्यत्वादित्यनुमानान्तरमुपन्यस्तं, तत्रोभयत्रापि परमाणुनित्यत्वानुमानं न प्रतिपक्षतां भजते; तत्साध्याभावाविषयत्वाद्, जगत्कारणस्य स्पर्शवत्त्वेऽप्यणुत्वेऽपि नित्यत्वमकारणत्वादिभिरुपपद्यत इति द्वितीयानुमानस्याप्रयोजकत्वं परमतैरनुमानैः सिध्यति, तदपि द्वितीयानुमानकल्पनापेक्षम्। तस्मात्सामान्यतो जगत्कारणानुमानस्य ब्रह्मपर्यवसानेन परमाण्वसिद्धिदूषणमुक्त्वा नैयायिकोक्तानि परमाणुनित्यत्वानुमानान्यपि दूषयतीत्येवावतारयितुं युक्तमिति—**चेत्, उच्यते;** तावत्येवार्थे भाष्यटीकयोस्तात्पर्यम्, तथापि तेषामनुमानानां सिद्धान्तविरुद्धार्थविषयतामात्रेण प्रतिपक्षव्यपदेशः कृतः। तदेतदर्थादित्यनेन सूचितम्। **प्रतीत्य प्राप्येति**। निमित्तकारणत्वेन लब्ध्वेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥

उत्सूत्रवाक्यमिति व्याख्याने स्वयमेव हेतुमाह—**सौत्रचशब्दव्याख्यानत्वादिति। न तदुत्पाद्यत्वं केषांचिद्गुणानां सामान्यादीनां च तदभावादिति**। यद्यपि द्रव्याधीननिरूपणत्वमपि शब्दगन्धादिषु नास्तीत्यव्यापकत्वं समानम्; तथापि द्रव्योत्पाद्यत्वं वह्न्युत्पाद्ये धूमेऽतिप्रसक्तमिति तदुपेक्षणम्। **शुक्लत्वं द्रव्यवृत्तीति**। सामानाधिकरण्य-

**तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यादपृथक्कालत्वं वाऽपृथक्स्वभावत्वं वा । सर्वथापि नोपपद्यते । अपृथग्देशत्वे तावत्स्वाभ्युपगमो विरुध्येत । कथम्? तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते न पटदेशः । पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः । तथाचाहुः—'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' ( वै० १।१।१० ) इति । तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटमारभन्ते । तन्तुगताश्च गुणाः शुक्लादयः कार्यद्रव्ये पटे शुक्लादिगुणान्तरमारभन्त इति हि तेऽभ्युपगच्छन्ति । सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वे-**

### भामती ।

**द्धत्वादिति यद्युच्येत** । यत्र हि द्वावाकारिणौ विभिन्नाभ्यामाकाराभ्यामवगम्येते तौ संबद्धौ असंबद्धौ वा वैयधिकरण्येन प्रतिभासेते, यथेह कुण्डे दधि यथा वा न गौरश्च इति, न तथा गुणकर्मसामान्यविशेषसमवायाः, तेषां द्रव्याकारतयाकारान्तरायोगेन द्रव्यादाकारिणोऽन्यत्वेनाकारितया व्यवस्थानाभावात् । सेयमयुतसिद्धिः । तथाच सामानाधिकरण्येन प्रथेत्यर्थः । तामिमामयुतसिद्धिं विकल्प्य दूषयति—**तत्पुनरयुतसिद्धत्वमिति** । तत्रापृथग्देशत्वं तदभ्युपगमेन विरुध्यत इत्याह—**अपृथग्देशत्व इति** । यदि तु संयोगिनोः कार्ययोः संबन्धिभ्यामन्यदेशत्वं युतसिद्धिस्ततोऽन्याऽयुतसिद्धिः, नित्ययोस्तु संयोगिनोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं युतसिद्धिस्ततोऽन्याऽयुतसिद्धिः, तथाचाकाशपरमाण्वोः परमाण्वोश्च संयुक्तयोर्युतसिद्धिः सिद्धा भवति । गुणगुणिनोश्च शौक्ल्यपटयोरयुतसिद्धिः सिद्धा भवति। नहि तत्र शौक्ल्यपटाभ्यां संबन्धिभ्यामन्यदेशौ शौक्ल्यपटौ । सत्यपि पटस्य तदन्यतन्तुदेशत्वे शौक्ल्यस्य संबन्धिपटदेशत्वात् । तन्न; नित्ययोरात्माकाशयोरजसंयोगे उभयस्या अपि युतसिद्धेरभावात् । नहि तयोः पृथगाश्रयाश्रितत्वमनाश्रयत्वात् । नापि द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वममूर्तत्वेनोभयोरपि निष्क्रियत्वात् । नचाजसंयोगो नास्ति; तस्यानुमानसिद्धत्वात् । **तथाहि**–आकाशमात्मसंयोगि, मूर्तद्रव्यसङ्गित्वात्, घटादिवदित्यनुमानम् । पृथगाश्रयाश्रयित्वपृथग्गतिमत्त्वलक्षणयुतसिद्धेरन्या त्वयुतसिद्धिर्यद्यपि नाभ्युपेतविरोधमावहति; तथापि न सामानाधिकरण्यप्रथामुप-

### वेदान्तकल्पतरुः ।

ममिप्रेत्य तदनुकूलत्वेन सामानाधिकरण्यप्रतीतिरुक्ता, तस्या अन्यथासिद्धिं शङ्कत इत्यर्थः । अयुतसिद्धत्वसंबन्धेपि भेदे सति न सामानाधिकरण्यमुपपद्यत इत्याशङ्क्यायुतसिद्धत्वं निर्वक्ति—**यत्र हीति** । आकारिणौ स्वतन्त्रौ स्वतन्त्रवस्तुनोरसामानाधिकरण्यं न स्वतन्त्रपरतन्त्रयोर्द्रव्यतन्त्राश्च गुणादय इति भेदेऽपि सामानाधिकरण्यमित्यर्थः । **द्रव्याकारतया** द्रव्यधर्मतया । **आकारान्तरायोगेन** स्वातन्त्र्यप्रयोजकधर्मयोगेनेत्यर्थः । भवेदियमयुतसिद्धिः सामानाधिकरण्योपपादिका, एषैव तु न भेदे घटते, न हि भिन्नानां विन्ध्यहिमवदादीनां धर्मधर्मिभाव उपलभ्यते । अथ भिन्नानामप्यपृथग्देशत्वादिभिः प्रकारैर्धर्मधर्मिभाव उच्येत, तर्हि तान् विकल्प्य दूषयतीत्याह—**तामिमामिति** । तदर्थीविकल्पोऽपि तद्विकल्प इति तामित्युक्तम् । एकदेशत्वमपृथग्देशत्वं भाष्यदूषितं, स्वयं तु प्रकारान्तरेणापृथग्देशत्वमाशङ्कते, तत्र तावत्प्रतियोगिभूतं पृथग्देशत्वमाह—**यदि तु संयोगिनोरिति** । कुण्डबदरे हि संयोगिनी ताभ्यामन्यः स्वस्वावयव एव तयोर्देश इति । **ननु** परमाण्वोराकाशपरमाण्वोश्च संयोगे कथं संबन्धिभ्यामन्यदेशत्वं युतसिद्धिस्तेषामनाश्रितत्वादत आह—**नित्ययोस्त्विति** । अविभुनोर्द्वयोर्विभुनोस्त्वन्यतरस्याविभुन इत्यर्थः । **तथा चाकाशेति** । अत्र न यथासंख्यम् । **सत्यपीति** । एकतरस्य संबन्धिदेशत्वादेव न तयोः संबन्धिभ्यामन्यदेशत्वमित्यर्थः । **आत्मसंयोगीति** । आत्माश्रितसंयोगेन संयोगीत्यर्थः । तथाच न मूर्तत्वमुपाधिः स्यादात्मन्येव साध्याव्याप्तेः । तस्मात्माश्रितसंयोगे न संयोगित्वादमूर्तत्वाच्च । यथाश्रुते तु भवत्येवोपाधिः; यत्रात्मसंयोगित्वं तत्र मूर्तत्वमिति व्याप्तेरिति । **सङ्गित्वात्** संयोगित्वादित्यर्थः; संबन्धित्व-

### कल्पतरुपरिमलः ।

प्रत्यक्षमात्रेण नैयायिकंमन्यो न परितुष्येदिति तदनुग्राह्यमनुमानमुपन्यस्तम् । **नन्वाकारान्तरायोगोऽसिद्धः** गुणत्वादित्याशङ्क्य विशिनष्टि—**स्वातन्त्र्यप्रयोजकेति** । **ननु** तामिमामयुतसिद्धिं विकल्प्य दूषयतीत्युक्तम्; द्रव्याश्रितत्वनियमो गुणादीनामयुतसिद्धिरिति निरुक्तत्वात्तत्र च वक्ष्यमाणविकल्पाप्रसरादित्याशङ्क्यावतारयति—**भवेदिति** । तथापि तामिमामित्युक्तमित्याशङ्क्य तस्यार्थमाह—**तदर्थविकल्पोऽपीति** । अपृथग्देशत्वादयो हि धर्मधर्मिभावनियमरूपायुतसिद्ध्युपपादकत्वेन शङ्किताः, अतस्तदर्थीविकल्पस्तद्विकल्पत्वेनोपचरित इत्यर्थः । **प्रकारान्तरेणेति** । अपृथगेको देशो ययोरिति व्युत्पत्तिमाश्रित्य अपृथक्सिद्धत्वं भाष्ये दूषितम्, इदानीं पृथग्देशत्वाभावं तदर्थमाश्रित्य शङ्कत इत्युत्तरग्रन्थस्य सामान्यतोऽवतारिका । तत्राव्यवहितग्रन्थमवतारयति—**तत्र तावदिति । अन्यदेशत्वं युतसिद्धिरिति** । युतसिद्ध्युपपादकमन्यदेशत्वमित्यर्थः । सङ्गित्वादिति पाठमाश्रित्य तस्य संबन्धित्वादित्यर्थश्चेद्व्यभिचारः स्यादित्याशङ्क्य व्याचष्टे—**संयोगित्वादित्यर्थ इति । अभ्युपेत्यापीति** । आकाशात्मनोस्तन्मते संयोगाभावात्तन्मतमर्यादया पूर्वोक्तं दूषणं न

**ऽभ्युपगम्यमाने बाध्येत। अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत। तथाऽपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः संभवति; तस्य तादात्म्येनैव प्रतीयमानत्वात्। युतसिद्धयोः संबन्धः संयोगोऽयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव तेषाम्; प्राक्सिद्धस्य कार्यात्कारणस्यायुतसिद्धत्वानुपपत्तेः। अथान्यतरापेक्ष एवायमभ्युपगमः स्यादयुतसिद्धस्य कार्यस्य कारणेन संबन्धः समवाय इति, एवमपि**

## भामती ।

पादयितुमर्हति। एवंलक्षणेऽपि हि समवाये गुणगुणिनोरभ्युपगम्यमाने संबद्धे इति प्रत्ययः स्यान्न तादात्म्यप्रत्ययः। अस्य चोपपादनाय समवाय आस्थीयते भवद्भिः। स चेदास्थितोऽपि न प्रत्ययमिममुपपादयेत् कृतं तत्कल्पनया। नच प्रत्यक्षः सामानाधिकरण्यप्रत्ययः समवायगोचरः; तद्विरुद्धार्थत्वात्। तद्गोचरत्वे हि पटे शुक्ल इत्येवमाकारः स्यान्न तु पटः शुक्ल इति। नच—शुक्लपदस्य गुणविशिष्टगुणिपरत्वादेवं प्रथेति—सांप्रतम्; नहि शब्दवृत्त्यनुसारि प्रत्यक्षम्। न ह्यग्निर्माणवक इत्युपचरिताग्निभावो माणवकः प्रत्यक्षेण दहनात्मना प्रथते। नच—अयमभेदविभ्रमः समवायनिबन्धनो भिन्नयोरपीति—वाच्यं; गुणादिसद्भावे तद्भेदे च प्रत्यक्षानुभवादन्यस्य प्रमाणस्याभावात्तस्य च भ्रान्तत्वे सर्वाभावप्रसङ्गात्, तदाश्रयस्य तु भेदसाधनस्य तद्विरुद्धतयोत्थानासंभवात्। तदिदमुक्तम्—**तस्य तादात्म्येनैव प्रतीयमानत्वादिति।** **अपिचायुतसिद्धशब्दोऽपृथगुत्पत्तौ मुख्यः,** सा च भवन्मते न द्रव्यगुणयोरस्ति, द्रव्यस्य प्राक्सिद्धेर्गुणस्य च पश्चादुत्पत्तेः, तस्मान्मिथ्यावादोऽयमित्याह—**युतसिद्धयोरिति।** अथ भवतु कारणस्य युतसिद्धिः, कार्यस्य त्वयुतसिद्धिः कारणातिरेकेणाभावादित्याशङ्क्यान्यथा दूषयति—**एवमपीति।** संबन्धिद्वयाधीनसद्भावो हि संबन्धो नासत्येकस्मिन्नपि संबन्धिनि भवितुमर्हति। नच समवायो नित्यः स्वतन्त्र इति चोक्तमधस्तात्। नच कारणसमवायादनन्या

## वेदान्तकल्पतरुः ।

मात्रस्य गुणादौ व्यभिचारात्। एतावानेव हेतुः। सुखबोधार्थं तु मूर्तद्रव्यग्रहणम्। यद्यप्याकाशे आत्मसंयोगेऽस्ति विप्रतिपत्तिः; तथापि न तस्य मूर्तसंयोगेऽस्तीति। अभ्युपेत्यापि वर्णितामयुतसिद्धिं दोषान्तरमाह—**पृथगाश्रयाश्रयित्वमित्यादिना। स्यादेतत्**—न तादात्म्यप्रत्ययोपपादकः समवायः, किंतु सामानाधिकरण्यप्रत्ययविषय एवेति, नेत्याह—**नच प्रत्यक्ष इति। ननु** शुक्लत्वमित्यादिलतलादिभिर्निष्कृष्टो गुणोऽभिधीयते, शुक्लशब्दस्तु द्रव्य**निलीन**गुणवाची लक्षयति द्रव्यमतो लाक्षणिकं सामानाधिकरण्यम्, ततः कथं द्रव्यगुणयोरभेदप्रतिभानमत आह—**नचेति।** शाब्दो हि व्यवहारो लाक्षणिकः स्याद्, न प्रत्यक्षप्रत्यय इत्यर्थः। अभेदप्रत्ययस्य भ्रमत्वं भेदग्राहिप्रमाणाद्भवति, तच्च लक्षणरूपमनुमानम्, द्रव्यं गुणादिभ्यो भिद्यते समवायिकारणत्वादित्यादि, तच्च धर्मिग्राहकप्रत्यक्षविरोधादाभास इत्याह—**नचायमिति।** तस्य भ्रान्तित्वे सर्वाभावप्रसङ्गादाश्रयासिद्धिः। प्रमाणत्वे चाभेदविषयेण तेन विरोधादनुमानोत्थानासंभव इत्यर्थः। **ननु** संबन्धिन्यसति समवायो न भवतीति कथम्? उत्पत्तिर्हि समवायः, उत्पत्तिश्चासत्येव कार्ये भवति, इतरथा तद्वैयर्थ्यादित आह—**नच कारणसमवायादनन्येति।** अन्येति वा पाठः। तत्र च न कारणसमवायादन्यो-

## कल्पतरुपरिमलः ।

भवतीत्येतदुक्तापृथग्देशत्वस्याभ्युपगमे मूलम्। **ननु शुक्लत्वमित्यादीति।** शुक्लः पट इत्यादौ शुक्लशब्दस्य शुक्लगुणविशिष्टे द्रव्ये प्रवीणे कुशलशब्दस्येव निरूढा लक्षणा। नचैवं घटस्य शुक्ल इत्यपि कदाचित्प्रयोगप्रसङ्गः; निरूढलक्षणयाऽन्यत्र प्रयुक्तस्य पदस्य मुख्येऽर्थे प्रयोगस्यापि दर्शनात्। नहि कुशलशब्दस्य कुशलवनकर्तरि प्रयोगोऽस्ति। अतस्तत्र गुणविशिष्टद्रव्यलक्षणकात् शुक्लशब्दाद् भावार्थप्रत्ययोत्पत्त्या शुक्लत्वं शुक्लता शौक्ल्यं शुक्लिमेत्येव प्रयोग इत्यर्थः। **धर्मिग्राहकप्रत्यक्षविरोधादाभास इति।** नच—पटस्य शुक्लं रूपमिति व्यवहारमूलभूतं भेदविषयं प्रत्यक्षमप्यस्ति, तद् अभेदप्रत्यक्षं बाधेतेति—वाच्यम्; नह्युक्तव्यवहारो भेदविषयः, किंतु षष्ठ्यर्थसंबन्धविषयः। संबन्धेन तु भेदोऽनुमातव्यस्तदप्यनुमानं शुक्लः पट इत्यभेदसाक्षात्कारो बाधेत, तस्माद्राहोः शिर इतिवदौपचारिकं संबन्धव्यपदेशमात्रमिति कल्पनीयम्। **किंच** पटस्य शुक्लं रूपमित्येतत्पटस्य शुक्लत्वं शौक्ल्यमित्यादिना समानविषयं शुक्लत्वमित्यादिप्रत्यये च गुणगुणिभेदवादिभिर्गुणे यच्छुक्लत्वमभ्युपगम्यते तदेव पटे प्रतीयतेऽतः पटस्य शुक्लं रूपं शुक्लो गुण इत्यादिव्यवहारोऽपि पटगतशुक्लत्वसामान्यविषय इत्येव वक्तुमुचितम्। शुक्लत्वसामान्ये कथं शुक्लशब्द इति चेत्, शुक्लगुणे वा कथं शुक्लत्वं शुक्लिमेत्यादिभावप्रत्ययान्तः शब्दः। शुक्लशब्दस्य द्रव्यलक्षणामाश्रित्येति चेत्, तस्येह सामान्ये लक्षणाऽस्तु, गौर्नित्येति प्रयोगे गोशब्दस्येव। **यद्वा**—शुक्लशब्दः शुक्लद्रव्यस्येव तद्गतशुक्लत्वसामान्यस्यापि वाचकः, यथा साक्षात्कारशब्दः प्रत्यक्षज्ञानस्येव तद्गतसाक्षात्त्वसामान्यस्यापि। अतएव घटसाक्षात्कार इति साक्षात्कारिप्रमेति च व्यवहारः। एवं च गुणवचनेभ्यो मतुब्लोपानुशासनमपि

**प्राक्सिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन संबन्धो नोपपद्यते, द्वयायत्तत्वात्संबन्धस्य। सिद्धं भूत्वा संबध्यत इति चेत्, प्राक्कारणसंबन्धात्कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्। यथा चोत्पन्नमात्रस्याक्रियस्य**

### भामती ।

कार्यस्योत्पत्तिरिति शक्यं वक्तुम्; एवंहि सति समवायस्य नित्यत्वाभ्युपगमात् कारणवैयर्थ्यप्रसङ्गः, उत्पत्तौ च समवायस्य सैव कार्यस्यास्तु किं समवायेन ? सिद्धयोस्तु संबन्धे युतसिद्धिप्रसङ्गः। नचान्याऽयुतसिद्धिः संभवतीत्येतदुक्तम्। ततश्च यदुक्तं वैशेषिकैर्युतसिद्ध्यभावात् **कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्**; युतसिद्ध्यभावस्यैवाभावात्। एतेनाप्राप्तिसंयोगौ युतसिद्धिरित्यपि लक्षणमनुपपन्नम्। मा भूदप्राप्तिः कार्यकारणयोः, प्राप्तिस्त्वनयोः संयोग एव कस्मान्न भवति, तत्रास्या असंयोगत्वायान्या युतसिद्धिर्वक्तव्या। तथाच सैवोच्यतां किमनया परस्पराश्रयदोषग्रस्तया। नचान्या संभवतीत्युक्तम्। यद्युच्येताप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजोभयकर्मजा वा संयोगः, यथा स्थाणुश्येनयोर्मल्लयोर्वा। नच तन्तुपटयोः संबन्धस्तथा; उत्पन्नमात्रस्यैव पटस्य तन्तुसंबन्धात्। तस्मात्समवाय एवायमित्यत आह—**यथा चोत्पन्नमात्रस्येति**। संयोगजोऽपि हि संयोगो भवद्भिरभ्युपेयते; न क्रियाज एवेत्यर्थः। नचाप्राप्तिपूर्विकैव प्राप्तिः

### वेन्दान्तकल्पतरुः ।

त्पत्तिः, किं तूत्पत्तिरेव समवाय इति पूर्वपक्षिण एव ग्रन्थः। एवं हि सतीत्यारभ्य सिद्धान्तः। नित्यसमवायस्योत्पत्तित्वे कार्योत्पत्त्यर्थ कारणवैयर्थ्य चेत्तर्ह्यनित्योऽस्तु, तत्राह—**उत्पत्तौ चेति**। अथ समवायादन्या कार्यस्योत्पत्तिरुत्पन्नस्य च समवायस्तत्राह—**सिद्धयोस्त्विति। ननु** सिद्धयोरपि संबन्धिभ्यामन्यदेशत्वाभावादिभिरयुतसिद्धिः स्यादिति, नेत्याह —**नचान्येति। एतेनेति**। युतसिद्ध्यभावायत्संयोगाभावस्तदयोगेनेत्यर्थः। पूर्वमप्राप्तिस्ततः संयोगौ। एतेनेत्येतद्विवृणोति—**मा भूदिति**। एवंभूतयुतसिद्धिव्यवस्थापना हि कार्यकारणयोः संबन्धस्य संयोगत्वव्यावृत्त्यर्था, तत्र च कार्यस्य नित्यपारतन्त्र्येणाप्राप्त्यभावेऽपि तत्प्राप्तेः संयोगत्वाभावोऽसिद्धस्ततश्च युतसिद्धिलक्षणे संयोगपदं कार्यकारणसंबन्धाव्यवच्छेदकत्वाद् व्यर्थमित्यर्थः। अथ कार्यकारणसंबन्धाद्व्यावृत्तत्वेनोभयवादिसंमतधर्माणां वाचकेन पदवृन्देन युतं लक्षणान्तरं द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वमित्याद्यभिधीयेत, तत्राह—**तत्रेति**। अस्याः प्राप्तेः कार्यकारणसंबन्धस्यासंयोगत्वसिद्धौ तद्व्यावृत्तिसमर्थसंयोगपदवद्युतसिद्धिलक्षणस्य सिद्धिस्तत्सिद्धौ च तल्लक्षितयुतसिद्धिराहित्येन कार्यकारणसंबन्धस्यासंयोगत्वसिद्धिरितीरेतराश्रयम्। तर्ह्यन्यैवास्तु, नेत्याह—**नचान्येति**। अन्यासंभवोऽसिद्ध इति शङ्कते—**यद्युच्येतेति**। अप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजा प्राप्तिरुभयकर्मजा प्राप्तिरिति त्रीणि लक्षणानि। एतानि च कार्यकारणसंबन्धस्य न संभवन्तीति नेतरेतराश्रयमित्यर्थः। वैशेषिकैर्हि तन्तुभ्यः पटे उत्पन्ने तत्क्षणे एव तन्त्वाकाशसंयोगजन्यः पटाकाशसंयोग इष्यते, स च न कर्मजस्ततः प्राक् पटसत्ताक्षणे पटे कर्माभावादतश्च यथोक्तलक्षणं तत्राव्यापकं स्यादित्याह—**संयोगज**

### कल्पतरुपरिमलः ।

सामान्यवाचिभ्यो मतुपः प्रसक्त्या सार्थकं भविष्यति। नच—एवमपि साक्षात्कारीतिशब्दवत् शुक्लशब्दादिनिप्रत्ययेन शुक्लीत्यपि प्रयोगः स्यात् तल्लोपानुशासनाभावादिति—वाच्यम्; अर्शआदिगणे वर्णशब्दपाठस्यार्शआदिभ्योऽच्प्रत्ययविधानार्थत्वेन तत इनिठनोर्बाधात्। मतुपस्तु ततो बाधो न भवति; 'प्राणिस्थादातो लजन्यतरस्या'मित्यतोऽन्यतरस्यांग्रहणस्य वैशेषिकप्रत्ययैर्मतुपः समुच्चयार्थमनुवृत्त्यङ्गीकारात्। अतो मतुब्लोपानुशासनं सार्थकम्। एवमभेदप्रत्यक्षानुसारेण व्यवहारव्यवस्थाकरणे लाघवमपि भवति। द्रव्यातिरिक्तगुणाभ्युपगमे हि गुणस्तत्संबन्धश्चेत्युभयमपि कल्पनीयमिति गौरवं भवेत्। तस्माल्लाघवानुगृहीताभेदप्रत्यक्षबलाद् गुण्यभेद एव गुणानामास्थेयः; सुरभिर्गन्धफली मधुरो गुडः उष्णो वह्निरिति गन्धादीनामपि द्रव्याभेदप्रत्यक्षैस्तद्भेदनिरासात्। अयं च गुणगुण्यभेदो गुणिपरिशेषेण प्रतिनियतेन्द्रियग्राह्यनानागुणसंघातपरिशेषेणोभयथाप्यनिर्वचनीयभावेन वा पर्यवस्यतीत्यन्यदेतत्। **पूर्वपक्षिण एव ग्रन्थ इति**। नचेत्ययं शब्दः पूर्वपक्षनिराकरणार्थ इत्येवं सिद्धान्तग्रन्थो न भवति, किंतूत्पत्तेः समवायान्यत्वस्य निराकरणार्थः स इति पूर्वपक्षग्रन्थ एवायमित्यर्थः। **यद्युच्येतेति** प्रतीकग्रहणानन्तरमप्राप्तिपूर्विका प्राप्तिरित्येकं लक्षणम्। अन्यतरकर्मजोभयकर्मजप्राप्त्योरन्यतरेत्यपरं युतसिद्धिलक्षणम्। तद्भावश्च न कार्यकारणसंबन्धस्य भवतीति क्वचित्पाठः। तत्र कर्मजा प्राप्तिरित्येतावदेव वक्तव्यं जनककर्मद्वैविध्यस्पष्टीकरणार्थं विशेषणम्। अप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजा प्राप्तिः उभयकर्मजा प्राप्तिरिति त्रीणि संयोगलक्षणानि। एतानि च कार्यकारणसंबन्धस्य न भवन्तीति पाठान्तरम्। तत्र यद्यपि द्वितीयतृतीयलक्षणे परस्परलक्ष्याव्याप्तिः; तथापि तयोर्लक्षणशब्दः प्रकारभेदमात्रपर इति तत्रापि पाठे कर्मजा प्राप्तिरित्येकमेव लक्षणं लक्षणद्वयोक्त्या पर्यवस्यति। **उत्पन्ने तत्क्षण एवेति**। उत्पत्त्यनन्तरक्षण एवेत्यर्थः। **पटसत्ताक्षण इति**। पटोत्पत्तिक्षण

कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैः संबन्धः संयोग एवाभ्युपगम्यते, न समवायः एवं कारणद्रव्येणापि संबन्धः संयोग एव स्यान्न समवायः । नापि संयोगस्य वा संबन्धस्य संबन्धिव्यतिरेकेणास्तित्वे किंचित्प्रमाणमस्ति । संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात्तयोरस्तित्वमिति चेत्, न; एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयानेकशब्दप्रत्ययदर्शनात् । यथैकोऽपि सन् देवदत्तो लोके स्वरूपं संबन्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति, मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति, यथा चैकापि सती रेखा स्थानान्यत्वेन निविशमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति, तथासंबन्धिनोरेव संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वं न व्यतिरिक्तवस्त्वस्तित्वेन, इत्युपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य । नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोः संततभावप्रसङ्गः; स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात्, तथाऽण्वात्ममनसामप्रदेशत्वान्न संयोगः संभवति; प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात् । कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेत्, न; अविद्यमानार्थकल्पनायां सर्वार्थसिद्धिप्रसङ्गात्, इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमहेत्वभावात् । कल्पनायाश्च स्वायत्तत्वात्प्रभूतत्वसंभवाच्च । नच वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्योऽन्येऽधिकाः शतं सहस्रं वार्था न कल्पयितव्या इति निवारको हेतुरस्ति । तस्माद्यस्मै यद्यद्रोचते तत्तत्सिध्येत् । कश्चित्कृपालुः प्राणिनां दुःखबहुलः संसार एव माभूदिति कल्पयेत् । अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत् । कस्तयोर्निवारकः स्यात् । किंचान्यत्—द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव

## भामती ।

संयोगः; आत्माकाशसंयोगे नित्ये तदभावात्, कार्यस्य चोत्पन्नमात्रस्यैकस्मिन् क्षणे कारणप्राप्तिविरहाच्चेति । **अपिच** संबन्धिरूपातिरिक्ते संबन्धे सिद्धे तदवान्तरभेदाय लक्षणभेदोऽनुश्रीयेत, स एव तु संबन्ध्यतिरिक्तोऽसिद्धः, उक्तं हि परस्तादतिरिक्तः संबन्धिभ्यां संबन्धोऽसंबद्धो न संबन्धिनौ घटयितुमीष्टे । संबन्धिसंबधे चानवस्थितिः । तस्मादुपपत्त्यनुभवाभ्यां न कार्यस्य कारणादन्यत्वम्, अपितु कारणस्यैवायमनिर्वाच्यः परिणामभेद इति । तस्मात् कार्यस्य कारणादनतिरेकात् किं केन संबद्धं, संयोगस्य च संयोगिभ्यामनतिरेकात् कस्तयोः संयोग इत्याह—**नापि संयोगस्येति** । विचारासहत्वेनानिर्वाच्यतामस्यापरिभावयन्नाशङ्कते—**संबन्धिशब्दप्रत्ययव्यतिरेकेणेति** । निराकरोति—**न एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयेति** । तत्तदनिर्वचनीयानेकविशेषावस्थाभेदापेक्षयैकस्मिन्नपि नानाबुद्धिव्यपदेशोपपत्तिरिति । यथैको देवदत्तः स्वगतविशेषापेक्षया मनुष्यो ब्राह्मणोऽवदातः, स्वगतावस्थाभेदापेक्षया बालो युवा स्थविरः, स्वक्रियाभेदापेक्षया श्रोत्रियः, परापेक्षया तु पिता पुत्रः पौत्रो भ्राता जामातेति । निदर्शनान्तरमाह—**यथा चैकापि सती रेखेति** । दार्ष्टान्तिके योजयति—**तथा संबन्धिनोरिति** । अङ्गुल्योर्नैरन्तर्यं संयोगः, दधिकुण्डयोरौत्तराधर्यं संयोगः । कार्यकारणयोस्तु तादात्म्येऽप्यनिर्वाच्यस्य कार्यस्य भेदं विवक्षित्वा **संबन्धिनोरित्युक्तम्** । **नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोः** इत्येतदप्यनिर्वाच्यभेदाभिप्रायम् । **अपिचादृष्टवत्क्षेत्रज्ञसंयोगात् परमाणुमनसोश्चाद्यं कर्म भवद्भिरिष्यते**; 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि' इति वचनात् । न चाणुमनसोरात्मनाऽप्रदेशेन संयोगः संभवति । संभवे चाणुमनसोरात्मव्यापित्वात् परममहत्त्वेनानणुत्वप्रसङ्गात् । नच प्रदेशवृत्तिरनयोरात्मना संयोगोऽप्रदेशत्वादात्मनः, कल्पनायाश्च वस्तुतत्त्वव्यवस्थापनासहत्वादतिप्रसङ्गादित्याह—**तथाऽण्वात्ममनसामिति** । **किंचान्यत्**—द्वाभ्यामणुभ्यां कारणाभ्यां सावयवस्य कार्यस्य **द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः** । संश्लेषः संग्रहो यत एकसंबन्ध्याकर्षे संबन्ध्यन्तराकर्षो भवति तस्यानुपपत्तिरिति ।

## वेदान्तकल्पतरुः ।

**इति** । तर्ह्यप्राप्तिपूर्विका प्राप्तिरित्येतावल्लक्षणमस्तु तथा च नाव्याप्तिः । नापीतरेतराश्रयत्वं संयोगपदानुपादानादिति, तत्राह—**न चाप्राप्तीति** । अतिव्याप्तिं च लक्षणस्याह—**कार्यस्य चेति** । असति प्राप्तरि प्राप्त्यनुपपत्तेः कार्यसत्तोत्तरक्षणे प्राप्तिरिति क्षणमात्रमप्राप्तिरस्तीत्यर्थः । **ननु** निरवयवसावयवयोः समवायसंभवात् कथं संश्लेषानुपपत्तिरत आह—**संग्रह**

## कल्पतरुपरिमलः ।

इत्यर्थः । **असति प्राप्तरि प्राप्त्यनुपपत्तेरिति** । यद्यपि समवायनित्यत्वपक्षे पूर्वक्षणे प्राप्तर्यसत्यपि जन्मसमय एव

संश्लेषानुपपत्तिः । न ह्याकाशस्य पृथिव्यादीनां च जतुकाष्ठवत्संश्लेषोऽस्ति। कार्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यः समवाय इति चेत्, न; इतरेतराश्रयत्वात् । कार्यकारणयोर्हि भेदसिद्धावाश्रिताश्रयभावसिद्धिराश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः कुण्डबदरवदितीतरेतराश्रयता स्यात् । नहि कार्यकारणयोर्भेद आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते, कारणस्यैव संस्थानमात्रं कार्यमित्यभ्युपगमात् । किंचान्यत्—परमाणूनां परिच्छिन्नत्वाद्यावत्यो दिशः षडष्टौ दश वा तावद्भिरवयवैः सावयवास्ते स्युः, सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत । यांस्त्वं दिग्भेदभेदिनोऽवयवान्कल्पयसि त एव परमाणव इति चेत्, न; स्थूलसूक्ष्मतारतम्यक्रमेणापरमकारणाद्विनाशोपपत्तेः । यथा पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभूतापि विनश्यति, ततः सूक्ष्मं सूक्ष्मतरं च पृथिव्येकजातीयकं विनश्यति, ततो द्व्यणुकं, तथा परमाणवोऽपि पृथिव्येकजातीयकत्वाद्विनश्येयुः । विनश्यन्तोऽप्यवयवविभागेनैव विनश्यन्तीति चेत्, नायं दोषः; यतो घृतकाठिन्यविलयनवदपि विनाशोपपत्तिमवोचाम । यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामप्यग्निसंयोगाद्द्रवभावापत्त्या काठिन्यविनाशो भवति, एवं परमाणूनामपि परमकारणभावापत्त्या मूर्त्यादिविनाशो भविष्यति । तथा कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेन भवति; क्षीरजलादीनामन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात् । तदेवमसारतरतर्कसंदृब्धत्वादीश्वरकारणश्रुतिविरुद्धत्वाच्छ्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षास्मिन्परमाणुकारणवादे कार्या श्रेयोर्थिभिरिति वाक्यशेषः ॥ इति तृतीयं परमाणुजगदकारणत्वाधिकरणम् ॥

## भामती ।

अत एव संयोगादन्यः **कार्यकारणद्रव्ययोराश्रयाश्रितभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्पनीयः समवाय इति चेत्,** निराकरोति—**न;** कुतः ? **इतरेतराश्रयत्वात्** । तद्विभजते—**कार्यकारणयोर्हीति** । **किंचान्यत्—परमाणूनामिति** । ये हि परिच्छिन्नास्ते सावयवाः, यथा घटादयः । तथा च परमाणवः, तस्मात्सावयवा अनित्याः स्युः । अपरिच्छिन्नत्वे चाकाशादिवत् परमाणुत्वव्याघातः । शङ्कते—**यांस्त्वमिति** । निराकरोति—**न स्थूलेति** । किं सूक्ष्मत्वात् परमाणवो न विनश्यन्त्यथ निरवयवतया । तत्र पूर्वस्मिन् कल्पे इदमुक्तम्—**वस्तुभूतापीति** । भवन्मते उत्तरं कल्पमाशङ्क्य निराकरोति—**विनश्यन्तोऽप्यवयवविभागेनेति** । **यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामपीति** । यथा हि पिष्टपिण्डोऽविनश्यदवयवसंयोग एव प्रथते, प्रथमानश्चाश्वशफाकारतां नीयमानः पुरोडाशतामापद्यते, तत्र पिण्डो नश्यति पुरोडाशश्चोत्पद्यते, नहि तत्र पिण्डावयवसंयोगा विनश्यन्ति, अपि तु संयुक्ता एव सन्तः परं प्रथनेन नुद्यमाना अधिकदेशव्यापका भवन्ति, एवमग्निसंयोगेन सुवर्णद्रव्यावयवाः संयुक्ता एव सन्तो द्रवीभावमापद्यन्ते, नतु मिथो विभज्यन्ते । तस्माद्यथाऽवयवसंयोगविनाशावन्तरेणापि सुवर्णपिण्डो विनश्यति, संयोगान्तरोत्पादमन्तरेण च सुवर्णे द्रव उपजायते, एवमन्तरेणाप्यवयवसंयोगविनाशं परमाणवो विनङ्क्ष्यन्त्यन्ये चोत्पत्स्यन्त इति सर्वमवदातम् ॥ **इति तृतीयं परमाणुजगदकारणत्वाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

**इति** । एकाकर्षणे इतराकर्षणं हि सावयवानामङ्कुरतरुशाखादीनां दृश्यत इत्यर्थः । **न हि तत्र पिण्डावयवेति** । यथा संवेष्टनेन पिण्डीकृते पटे प्रसारणसमये तदवयवसंयोगा न नश्यन्ति, किं त्ववस्थितसंयोगानामेव तेषामधिकदेशव्याप्त्या पिण्डावस्था नश्यति तथा पिष्टस्यापीति ॥ **इति तृतीयं परमाणुजगदकारणत्वाधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

समवायरूपा कारणप्राप्तिरुपपद्यते; तथापि तदनित्यत्वपक्षे दूषणमिदं द्रष्टव्यम् । **एकाकर्षण इति** । एकस्मिन्नाकृष्यमाणे इतरेषां तत्संसृष्टानामाकर्षणं सावयवानामेव दृश्यते, अतो वायुना द्व्यणुके कृष्यमाणे तदवयवयोः परमाण्वोर्निरवयवद्रव्यत्वादाकाशवत्तत्संसृष्टत्वेऽप्याकर्षणं न स्यादित्यर्थः ॥ **इति तृतीयं परमाणुजगदकारणत्वाधिकरणम् ॥**

---

१ तत्र सूत्राणि ६—उभयथाऽपि न कर्मातस्तदभावः १२ समवायाभ्युपगमाच्च साम्यादनवस्थितेः १३ नित्यमेव च भावात् १४ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् १५ उभयथा च दोषात् १६ अपरिग्रहाच्चात्यन्तमनपेक्षा १७ ॥

( ४ अधिकरणम् ) **समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥**

**वैशेषिकराद्धान्तो दुर्युक्तियोगाद्वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्य इत्युक्तम्। सोऽर्धवैनाशिक इति वैनाशिकत्वसाम्यात्सर्ववैनाशिकराद्धान्तो नतरामपेक्षितव्य इतीदमिदानीमुपपादयामः। स च बहुप्रकारः प्रतिपत्तिभेदाद्विनेयभेदाद्वा। तत्रैते त्रयो वादिनो भवन्ति—केचि-**

---

भामती।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

अवान्तरसंगतिमाह—**वैशेषिकराद्धान्त इति**। वैशेषिकाः खल्वर्धवैनाशिकाः। ते हि परमाण्वाकाशदिक्कालात्ममनसां च सामान्यविशेषसमवायानां च गुणानां च केषांचिन्नित्यत्वमभ्युपेत्य शेषाणां निरन्वयविनाशमुपयन्ति, तेन तेऽर्धवैनाशिकाः। तेन तदुपन्यासो वैनाशिकत्वसाम्येन सर्ववैनाशिकान् स्मारयतीति तदनन्तरं वैनाशिकमतनिराकरणमिति। अर्धवैनाशिकानां स्थिरभाववादिनां समुदायारम्भ उपपद्येतापि, क्षणिकभाववादिनां त्वसौ दूरापेत इत्युपपादयिष्यामः। तेन **नतराम्** इत्युक्तम्। तदिदं दूषणाय वैनाशिकमतमुपन्यसितुं तत्प्रकारभेदानाह—**स च बहुप्रकार इति**। वादिवैचित्र्यात् खलु, केचित्सर्वास्तित्वमेव राद्धान्तं प्रतिपद्यन्ते। केचिज्ज्ञानमात्रास्तित्वम्। केचित्सर्वशून्यताम्। अथ त्वत्रभवतां सर्वज्ञानां तत्त्वप्रतिपत्तिभेदो न संभवति; तत्त्वस्यैकरूप्यादित्येतदपरितोषेणाह—**विनेयभेदाद्वा**। हीनमध्यमोत्कृष्टधियो हि शिष्या भवन्ति। तत्र ये हीनमतयस्ते सर्वास्तित्ववादेन तदाशयानुरोधाच्छून्यतायामवतार्यन्ते। ये तु मध्यमास्ते ज्ञानमात्रास्तित्वेन शून्यतायामवतार्यन्ते। ये तु प्रकृष्टमतयस्तेभ्यः साक्षादेव शून्यतातत्त्वं प्रतिपाद्यते। यथोक्तं बोधिचित्तविवरणे—'देशना लोकनाथानां सत्त्वाशयवशानुगाः। भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः ॥ १ ॥ गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा। भिन्नापि देशनाऽभिन्ना शून्यताऽद्वयलक्ष-

वेदान्तकल्पतरुः।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

**अभिमतफलदानैस्त्वत्कृतैर्विश्वलोके वितृषि गजमुख त्वद्गण्डभेदेन दानम्।**
**गलदलिकुलजुष्टं त्वद्वपुष्येव जीर्यद् ध्वनयति जनतायां नार्त्तिरस्तीति नूनम् ॥**

**समुदायेति। गुणानां च केषांचित्** परमाणुपरिमाणादीनाम्। अभेदे हि कार्यकारणयोः कार्यनाशोऽपि कारणरूपेण तिष्ठतीति न निरन्वयनाशः, भेदे तु निरन्वय इति। **ननु** निमित्ताभावाविशेषात् सङ्घातारम्भवादयोरनुपपत्त्यविशेषे कथं तरप्प्रयोगः? तत्राह—**स्थिरेति**। स्थिरपक्षे हि कारणस्य भूत्वा व्यापृत्य जनकत्वं युक्तं नेतरत्रेत्यर्थः। **वादिवैचित्र्यात्खलु**। बहुप्रकार इति गृहीतभाष्यप्रतीकानुषङ्गः। बहुप्रकारत्वमेव दर्शयति—**केचिदिति**। अत्रभवतां सौत्रान्तिकादीनां विप्रतिपत्तिर्हि पुरुषापराधाद्भवति यथा स्थाणौ वस्तुवशाद्वा यथा क्रियायामत्र तु न प्रथम इत्युक्तं—**सर्वज्ञानामिति। न द्वितीय** इत्यभिहितं—**तत्त्वस्येति**। बोधौ बुद्धस्तस्य चित्तमभिप्रायस्तद्विवरणग्रन्थे। **लोकनाथानां** बुद्धानाम्। **देशना** आगमाः प्राण्यभिप्रायवशानुसारिण्यः शून्यताप्रतिपत्त्युपायैः क्षणिकसर्वास्तित्वादिभिर्लोके श्रोतृसमुदाये पुनः पुनर्बहुधा भिद्यन्ते। भेदमेवाह—**गम्भीरेति**। अगाधो **गम्भीरः** तद्विपरीत **उत्तानः** स्थूलदृष्टियोग्यस्तद्रूपेण क्वचिद्ग्रन्थप्रवेश **उभयलक्षणा** ज्ञानमात्रास्तित्वबाह्यार्थास्तित्वलक्षणा तत्प्रतिपादिनी भिन्नाऽपि देशना शून्यतैवाद्वयाऽतल्लक्षणाऽतत्तात्पर्यवत्त्वाभिन्नेत्यर्थः। प्रत्ययवैचित्र्यादर्थोऽनुमेय इति सौत्रान्तिकाः। प्रत्यक्ष इति वैभाषिकाः।

कल्पतरुपरिमलः।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकाणाम् आदिबुद्धशिष्याणां सर्वशून्यत्वविज्ञानमात्रास्तित्वविज्ञानाकारानुमेयबाह्यास्तित्वप्रत्यक्षबाह्यास्तित्वविषयाः प्रस्थानभेदास्तेषामेव प्रतिपत्तिभेदादिति केचन बुद्धसमयस्था वदन्ति। **अन्ये त्वाहुः—** सर्वज्ञानां तेषां गुरुवाक्यानि शृण्वतां पुरोवर्तिन्येकस्य मैत्रत्वबुद्धिरन्यस्य चैत्रत्वबुद्धिरपरस्य स्थाणुत्वबुद्धिरित्यादिवद् भ्रान्तिरूपा विरुद्धप्रतिपत्तिर्न संभवति; तेषां सर्वज्ञत्वात्, षोडशिग्रहणाग्रहणप्रत्ययवद्वैकल्पिकार्थविषयापि न संभवति; क्रियायामिव सिद्धवस्तुनि विकल्पायोगात्। अतः प्रथममादिबुद्धेनोत्तममध्यमाधमभाविविनेयबुद्ध्यनुसारेण सर्वशून्यत्वादिपक्षभेदाः सूचितास्तद्विवरणार्था माध्यमिकादीनां प्रस्थानभेदा इति। तत्र **द्वितीयं** तन्मतं विवृणोति—**विप्रतिपत्ति-**

त्सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिन इति। तत्र ये सर्वास्तित्ववादिनो बाह्यमान्तरं च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं च चित्तं चैत्तं च, तांस्तावत्प्रतिब्रूमः। तत्र भूतं पृथिवीधात्वादयः। भौतिकं रूपादयश्चक्षुरादयश्च। चतुष्टये च पृथिव्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावास्ते पृथिव्यादिभावेन संहन्यन्त इति मन्यन्ते। तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्चस्कन्धाः। तेऽप्याध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्त इति मन्यन्ते। तत्रेदमभिधीयते—योऽयमुभयहेतुक उभयप्रकारः समुदायः परेषामभिप्रेतोऽणुहेतुकश्च भूतभौतिकसंहतिरूपः स्कन्धहेतुकश्च पञ्चस्कन्धीरूपः तस्मिन्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे तदप्राप्तिः स्यात्। समुदयाप्राप्तिः समुदायभावानुपपत्तिरित्यर्थः।

## भामती।

णा ॥२॥' इति। यद्यपि वैभाषिकसौत्रान्तिकयोरवान्तरमतभेदोऽस्ति; तथापि सर्वास्तितायामस्ति संप्रतिपत्तिरित्येकीकृत्योपन्यासः। तथा च त्रित्वमुपपन्नमिति। पृथिवी खरस्वभावा, आपः स्नेहस्वभावाः, अग्निरुष्णस्वभावः, वायुरीरणस्वभावः। ईरणं प्रेरणम्। भूतभौतिकानुक्त्वा चित्तचैत्तिकानाह—**तथा रूपेति**। रूप्यन्ते एभिरिति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि **रूपस्कन्धः**। यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्याः; तथापि कायस्थत्वाद्वा इन्द्रियसंबन्धाद्वा भवन्त्याध्यात्मिकाः। **विज्ञानस्कन्धो**ऽहमित्याकारो रूपादिविषय इन्द्रियादिजन्यो वा दण्डायमानः। **वेदनास्कन्धो** या प्रियाप्रियानुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्था चित्तस्य जायते स वेदनास्कन्धः। **संज्ञास्कन्धः** सविकल्पप्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासः, यथा डित्थः कुण्डली गौरो ब्राह्मणो गच्छतीत्येवंजातीयकः। **संस्कारस्कन्धो** रागादयः क्लेशाः, उपक्लेशाश्च मदमानादयः, धर्माधर्मौ चेति। तदेतेषां समुदायः पञ्चस्कन्धी। **तस्मिन्नुभयहेतुकेऽपीति**। बाह्ये पृथिव्याद्यणुहेतुके भूतभौतिकसमुदाये, रूपविज्ञानादिस्कन्धहेतुके च समुदाय आध्यात्मिकेऽभिप्रेयमाणे तदप्राप्तिस्तस्य समुदायस्यायुक्तता। **कुतः? समुदायिनामचेतनत्वात्**। चेतनो हि कुलालादिः सर्वं मृद्दण्डाद्युपसंहृत्य समुदायात्मकं घटमारचयन् दृष्टः। नह्यसति मृद्दण्डादिव्यापारिणि विदुषि कुलाले स्वयमचेतना मृद्दण्डादयो व्यापृत्य जातु घटमारचयन्ति। न चासति कुविन्दे तन्तुवेमादयः पटं वयन्ते। तस्मात् कार्योत्पादस्तदनुगुणकारणसमवधानाधीनस्तदभावे न भवति। कार्योत्पादानुगुणं च कारणसमवधानं चेतनप्रेक्षाधीन-

## वेदान्तकल्पतरुः।

अतो मतभेदः। रूप्यते एभिर्विषया इति शेषः। कायस्थत्वात्कायाकारेण संहतत्वादसंहतानामिन्द्रियसंबन्धित्वाद्वेत्यर्थः। अहमित्याकारमालयविज्ञानमिन्द्रियादिजन्यं रूपादिविषयं च ज्ञानमेतद् द्वयं दण्डायमानं प्रवाहापन्नं विज्ञानस्कन्ध इत्यर्थः। वेदनास्कन्ध इति भाष्योपादानं, या प्रियेत्यादि तद्व्याख्यानम्। सविकल्पप्रत्यय इत्यनेन विज्ञानस्कन्धो निर्विकल्प इति भेदः स्कन्धयोर्ध्वनितः। **वयन्ते** तन्तून् संतन्वन्ति। अनुपलब्धिलिङ्गकमनुमानमाह—**तस्मादिति**। यः कार्योत्पादः स तदनुगुणकारणमेलनाधीन इत्येकां व्याप्तिमुक्त्वा द्वितीयामाह—**कार्योत्पादानुगुणं चेति**। या कार्योत्पत्तिः सा चेतनाधिष्ठितकारणेभ्यो भवतीति व्याप्ता, सा स्वव्यापकचेतनाधिष्ठितत्वविरुद्धा अनधिष्ठितेभ्यः पराभिमतकारणेभ्यो व्यावर्तमाना चेतनाधिष्ठितकारणवत्त्वे सिद्धान्त्यभिमतेऽवतिष्ठते। अतो या कार्योत्पत्तिः सा चेतनाधिष्ठितकारणेभ्य इति व्याप्तिसिद्धि-

## कल्पतरुपरिमलः।

र्हीति। **असंहतानामिति**। कार्याकारेणासंहतानामपीन्द्रियसंबन्धादान्तरेण चित्तेन निरूप्यमाणतयाऽऽन्तरसमुदायमध्ये परिगणनमिति भावः। **अहमित्याकारमालयविज्ञानमिति। तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्। तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्**॥ इति तदीयो व्यवहारः। **विज्ञानस्कन्धो निर्विकल्प इति**। केचिद्देवदत्तादिनाम संज्ञास्कन्ध इत्याहुः। तन्मते विकल्पोऽपि विज्ञानस्कन्धः। **अनुपलब्धिलिङ्गकमिति**। यद्यपि प्रातश्चत्वरे गजाभावानुमानवदिहानुपलब्धिलिङ्गकत्वेन तान्त्रिकैर्व्यवहृतमनुमानं नास्ति; तथापि व्यापकविरुद्धोपलब्ध्या यच्चेतनानधिष्ठितकारणेभ्यः कार्योत्पत्तेर्व्यावर्तनं प्रसाधयिष्यते तदभिप्रायानुपलब्धिलिङ्गकत्वोक्तिः। **यद्वा**—अचेतनत्वादिति चैतन्याभावलिङ्गकं यदनुमानं प्रदर्शयिष्यते तदभिप्राया। **अतो या कार्योत्पत्तिरिति**। **ननु** या कार्योत्पत्तिः सा चेतनाधिष्ठितकारणेभ्यो भवतीति प्राग् दर्शितेयं व्याप्तिस्तामुपजीव्य व्यापकविरुद्धोपलब्ध्या परपक्षनिरसनं सिद्धान्त्यभिमतचेतनाधिष्ठितकारणवत्त्वप्रसाधनं च कृतं कथं तदनन्तरमव्याप्तिसिद्धिरुच्यते? नैष दोषः; प्रथमं या कार्योत्पत्तिरिति वाक्येन व्याप्यव्यापके उपन्यस्ते तयोर्व्याप्तिग्रहानुकूलतर्कौ विपर्ययपर्यवसानसहितः, स स्वव्यापकेत्यादिनाऽवतिष्ठत इत्यन्तेन ग्रन्थेन दर्शितः। तदनन्तरमतो या कार्योत्पत्तिरित्यादिवाक्येन व्याप्तिसिद्धिरुक्ता।

**कुतः? समुदायिनामचेतनत्वात्, चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्, अन्यस्य च कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुरनभ्युपगमात्, निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमप्रसङ्गात्, आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात्, क्षणिकत्वाभ्युपगमाच्च निर्व्यापारत्वात्प्रवृत्त्यनुपपत्तेः । तस्मात्समुदायानुपपत्तिः । समुदायानुपपत्तौ च तदाश्रया लोकयात्रा लुप्येत ॥ १८ ॥**

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

**यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपगम्यते; तथाप्यविद्यादीना-**

### भामती ।

मसत्यां चेतनप्रेक्षायां न भवितुमुत्सहत इति कार्योत्पत्तिश्चेतनप्रेक्षाधीनत्वव्याप्ता व्यापकविरुद्धोपलब्ध्या चेतनानधिष्ठितेभ्यः कारणेभ्यो व्यावर्तमाना चेतनाधिष्ठितत्व एवावतिष्ठत इति प्रतिबन्धसिद्धिः। यद्युच्येत अद्धा चेतनाधीनैव कार्योत्पत्तिः, अस्ति तु चित्तं चेतनं, तद्धीन्द्रियादिविषयस्पर्शे सत्यभिज्वलत् तत्कारणचक्रं यथायथा कार्याय पर्याप्तं तथातथा प्रकाशयदचेतनानि कारणान्यधिष्ठाय कार्यमभिनिर्वर्तयतीति, तत्राह—**चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्** । न खलु बाह्याभ्यन्तरसमुदायसिद्धिमन्तरेण चित्ताभिज्वलनं, ततस्तु तामिच्छन् दुरुत्तरमितरेतराश्रयमाविशेदिति । नच प्राग्भवीया चित्ताभिदीप्तिरुत्तरसमुदायं घटयति; घटनसमये तस्याश्चिरातीतत्वेन सामर्थ्यविरहात्, अस्मद्राद्धान्तवदन्यस्य **चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संघातकर्तुरनभ्युपगमात्** । कारणविन्यासभेदं हि विद्वान् कर्ता भवति । न चान्वयव्यतिरेकावन्तरेण तद्विन्यासभेदं वेदितुमर्हति । नच स क्षणिकोऽन्वयव्यतिरेककालानवस्थायी ज्ञातुमन्वयव्यतिरेकावुत्सहते। अत उक्तम्—**स्थिरस्येति** । यद्युच्येत असमवहितान्येव कारणानि कार्यं करिष्यन्ति परस्परानपेक्षाणि कृतमत्र समवधाययित्रा चेतनेनेत्यत आह—**निरपेक्षप्रवृत्त्यभ्युपगमे चेति** । यद्युच्यते अस्त्यालयविज्ञानमहंकारास्पदं पूर्वापरानुसंधातृ, तदेव कारणानां प्रतिसंधातृ भविष्यतीति, तत्राह—**आशयस्यापीति** । यत् खल्वेकं यदि स्थिरमास्थीयेत, ततो नामान्तरेणात्मैव । अथ क्षणिकं, तत उक्तदोषापत्तिः। नच तत्संतानः; तस्यान्यत्वे नामान्तरेणात्माभ्युपगतोऽनन्यत्वे च विज्ञानमेव, तच्च क्षणिकमेवेत्युक्तदोषापत्तिः । आशेरतेऽस्मिन् कर्मानुभववासना इत्याशय आलयविज्ञानं तस्य। अपिच प्रवृत्तिः समुदायिनां व्यापारः। नच क्षणिकानां व्यापारो युज्यते । व्यापारो हि व्यापारवदाश्रयस्तत्कारणकश्च लोके प्रसिद्धः । तेन व्यापारवता व्यापारात्पूर्वं व्यापारसमये च भवितव्यम्; अन्यथा कारणत्वाश्रयत्वयोरयोगात् । नच समसमययोरस्ति कार्यकारणभावः । नापि भिन्नकालयोराधाराधेयभावः । तथा च क्षणिकत्वहानिरित्याह—**क्षणिकत्वाभ्युपगमाच्चेति** ॥ १८ ॥ **यद्यपीति** ।

### वेदान्तकल्पतरुः ।

रित्यर्थः । **अत्र प्रयोगः**—विमतं, चेतनाधिष्ठितमचेतनत्वात्तन्तुवदिति । **चिरातीतत्वेनेति** । स्थायिवासनायास्त्वयाऽनिष्टत्वादित्यर्थः । व्यापारवदाश्रयो व्यापार इत्युक्ते तदाश्रितजातेस्तद्व्यापारत्वं स्यादिति तत्कारणक इत्युक्तम् । एतावत्युक्ते कुम्भोऽपि कुम्भकारव्यापारः स्यात्तन्निवृत्तये व्यापारवदाश्रय इति । एवमुक्तेऽपि मृदाश्रितो मृज्जश्च घटो मृद्व्यापारः स्यात्तन्निवृत्तये तत्कार्यं प्रति हेतुरित्यपि द्रष्टव्यम् । अस्त्वेवं व्यापारलक्षणं, प्रकृते किं जातमत आह—**न च समसमयोरिति** । व्यापारव्यापारिणोरेककालत्वं भिन्नकालत्वं वा । **नाद्यः**; कारणत्वस्य नियतप्राक्सत्त्वरूपत्वात् । **न द्वितीयः**; आधाराधेयभावसंबन्धस्यान्यतरस्मिन्नसत्यप्ययोगादित्यर्थः । अथ पदार्थः पूर्वं भूत्वा स्वजन्यव्यापारसमयेऽपि तदाश्रयत्वे-

### कल्पतरुपरिमलः ।

एवमेवानन्तराधिकरणेऽपि ये यस्मिन् सत्यपि कादाचित्कास्ते तदतिरिक्तापेक्षा इति प्रथमं व्याप्यव्यापकयोरुपन्यासः, ततो व्यापकविरुद्धोपलब्धिमूलकविपर्ययपर्यवसानसहिततर्कोपन्यासः, ततः प्रथमोपन्यस्तव्याप्यव्यापकयोर्व्याप्तिसिद्धिकथनं च भविष्यति । **तत्कार्यं प्रति हेतुरित्यपीति** । यद्यप्येवं सति व्यापारवदाश्रय इति विशेषणं न निवेशनीयम्, अत एव कुम्भकारकार्ये कुम्भेऽतिव्याप्तिवारणलाभात् तन्निवेशने यागव्यापारापूर्वाव्याप्त्यापत्तेश्च; तथापि चक्रभ्रमणादिवत्कारणक्रियारूपस्य व्यापारवदाश्रयत्वं नियतं कारणानां कार्यजननाय प्रवृत्तिरपि तत्क्रियारूपा, अतस्तत्र व्यापारव्यापारिणोः समसमयत्वे कार्यकारणभावानुपपत्तिर्भिन्नसमयत्वे आश्रयाश्रयिभावानुपपत्तिरिति दूषणं वक्तुं लक्षणेऽनपेक्षितस्यापि तस्य तदनुप्रवेशनेन सद्भावः स्मारितः ॥ १८ ॥ बाह्य आभ्यन्तरश्च प्रतीत्यसमुत्पादो हेतूपनिबन्धनश्चेति द्वाभ्यां कारणाभ्यां भवतीति बौद्धा व्यवहरन्ति । तत्र कारणं प्राप्य कार्यमुत्पद्यत इति यद् अयं प्रतीत्य समुत्पादः

## भामती ।

**अयमर्थः**—संक्षेपतो हि प्रतीत्यसमुत्पादलक्षणमुक्तं बुद्धेन 'इदं प्रत्ययफलम्' इति । 'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैषा धर्माणां धर्मता' । 'धर्मस्थितिता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमता' इति । अथ पुनरयं प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतश्च प्रत्ययोपनिबन्धतश्च । स पुनर्द्विविधो—बाह्य आध्यात्मिकश्च । तत्र बाह्यस्य प्रतीत्यसमुत्पादस्य **हेतूपनिबन्धः**—यदिदं बीजादङ्कुरोऽङ्कुरात्पत्रं पत्रात्काण्डं काण्डान्नालो नालाद्गर्भो गर्भाच्छूकः शूकात्पुष्पं पुष्पात्फलमिति । असति बीजेऽङ्कुरो न भवति, यावदसति पुष्पे फलं न भवति । सति तु बीजेऽङ्कुरो भवति, यावत् पुष्पे सति फलमिति । तत्र बीजस्य नैवं भवति ज्ञानमहमङ्कुरं निर्वर्तयामीति । अङ्कुरस्यापि नैवं भवति ज्ञानमहं बीजेन निर्वर्तित इति । एवं यावत्पुष्पस्य नैवं भवत्यहं फलं निर्वर्तयामीति । एवं फलस्यापि नैवं भवत्यहं पुष्पेणाभिनिर्वर्तितमिति । तस्मादसत्यपि चैतन्ये बीजादीनामसत्यपि चान्यस्मिन्नधिष्ठातरि कार्यकारणभावनियमो दृश्यते । उक्तो हेतूपनिबन्धः । **प्रत्ययोपनिबन्धः** प्रतीत्यसमुत्पादस्योच्यते । प्रत्ययो हेतूनां समवायः । हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणीति, तेषामयमानानां भावः प्रत्ययः । समवाय इति यावत् । यथा षण्णां धातूनां समवायाद्बीजहेतुरङ्कुरो जायते । तत्र च पृथिवीधातुर्बीजस्य संग्रहकृत्यं करोति यतोऽङ्कुरः कठिनो भवति अब्धातुर्बीजं स्नेहयति, तेजोधातुर्बीजं परिपाचयति, वायुधातुर्बीजमभिनिर्हरति यतोऽङ्कुरो बीजान्निर्गच्छति, आकाशधातुर्बीजस्यानावरणकृत्यं करोति, ऋतुरपि बीजस्य परिणामं करोति, तदेतेषामविकलानां धातूनां समवाये बीजे रोहत्यङ्कुरो जायते नान्यथा ।

## वेदान्तकल्पतरुः ।

नानुवर्तेत, तत्राह—**तथा चेति** ॥ १८ ॥ प्रत्ययोपनिबन्धस्य संग्राहकं बुद्धसूत्रमुदाहरति—**इदमिति** । हेतुमन्यं प्रति अयते गच्छतीति इतरसहकारिभिर्मिलितो हेतुः प्रत्ययः । इदं कार्यं प्रत्ययस्य कारणसमुदायमात्रस्य फलं, न चेतनस्य कस्यचिदित्यर्थः । हेतूपनिबन्धस्य संग्राहकं बुद्धसूत्रमुदाहरति—**उत्पादाद्वेति** । तथागतानां बुद्धानां मते धर्माणां कार्याणां कारणानां च या धर्मता कार्यकारणभावरूपा एषा उत्पादादनुत्पादाद्वा स्थिता । धत्ते इति धर्मः कारणम् । ध्रियते इति धर्मः कार्यम् । यस्मिन् सति यदुत्पद्यते असति च नोत्पद्यते तत्तस्य कारणं कार्यं च, न चेतनः क्वचित्कार्यसिद्धयेऽपेक्षितव्य इत्यर्थः । स्थितधर्मता इत्येतत्स्वयमेव सूत्रकृद्विभजते—**धर्मस्थितितेति** । कार्यतामाह—**कार्यस्य हि** धर्मस्य कारणादनतिप्रसङ्गेन कालविशेषे स्थितिर्भवतीति स्वार्थिकस्तल्प्रत्ययः । **धर्मनियामकतेति** । कारणतामाह—धर्मस्य कारणस्य कार्यं प्रति नियामकतेत्यर्थः । **नन्वे**वंविधमेव कार्यकारणत्वं न चेतनादृते सिध्यति, तत्राह—**प्रतीत्येति** । कारणे सति **तत्प्रतीत्य** प्राप्य समुत्पादानुलोमतानुसारिता या सैव धर्मता, सा चोत्पादानुत्पादात्मा धर्माणां स्थिता, न चेतनः कश्चिदुपलभ्यत इत्यर्थः । सूत्रद्वयं व्याचष्टे—**अथ पुनरयमिति** । हेतोरेकस्य कार्येणोपनिबन्धस्तथोक्तः । प्रत्ययानां मिलितानां नानाकारणानां कार्येणोपनिबन्धस्तथाऽभिहितः । हेतूपनिबन्धे उदाहरणमुक्त्वा तत्रैवोत्पादाद्वेति सूत्रं योजयति—**असति बीजे इत्यादिना** । यावत्पुष्पफलोदाहरणं तावदसति पुष्पे फलं न भवति इत्यादिव्यतिरेको द्रष्टव्य इत्याह—**यावदसतीति** । चैतन्यं बीजादीनां वाऽभ्युपगम्यते, किं वा तदतिरिक्तस्य कस्यचिद्भोक्तुः प्रशासितुर्वा । **नाद्य** इत्याह—**तत्र बीजस्येत्यादिना । यावत्पुष्पस्येति** । पुष्पपर्यन्तस्येत्यर्थः । फलेऽपि यावच्छब्दो योज्यः । **न द्वितीय** इत्याह—**असत्यपि चान्यस्मिन्निति** । अङ्कुराद्युत्पत्तौ चेतनव्यापारानुपलम्भादित्यर्थः । न च सोऽनुमेयस्तदन्यहेतौ सति कार्यानुत्पादादर्शनादिति । प्रत्ययोपनिबन्ध इत्यत्र प्रत्ययशब्द इणो धातोर्भावार्थीयाच्प्रत्ययान्तस्य रूपम् । तथा च समुदितत्ववाचीत्याह—**अयमानानामिति । तत्रास्य हेतूपनिबन्धः** । उच्यत इति वाक्यशेषः । उदाहरणमाह

## कल्पतरुपरिमलः ।

कारणात्कार्योत्पाद इत्यर्थः । **हेतूपनिबन्धः** एकैककारणसंबन्धः । **प्रत्ययोपनिबन्धः** कारणसमुदायसंबन्धः तत्र बाह्यकार्ये हेतूपनिबन्धस्योदाहरणं । बीजादिफलपर्यन्तं । प्रत्ययोपनिबन्धस्योदाहरणम् बीजादङ्कुरजनने महाभूतानि धातुविशेष इति षण्णां धातूनां समवायः । आध्यात्मिककार्ये हेतूपनिबन्धस्योदाहरणम् अविद्यादिदौर्मनस्यान्तं प्रत्ययोपनिबन्धस्योदाहरणम् पञ्चभूतान्यहंप्रत्ययरूपो विज्ञानधातुश्चेति षण्णां धातूनां समवायः । एवं द्विविधयोरपि कारणवर्गयोः कार्योत्पादे स्वस्वनिष्ठचैतन्यापेक्षा वा स्वतन्त्रकारणान्तरगतचैतन्यापेक्षा वा नास्तीत्यपि तेषां मतम् । तदिदं सर्वं संक्षेपतः प्रतीत्यसमुत्पादलक्षणमुक्तमित्यादिना सोऽयंप्रतीत्यसमुत्पादो दृष्टत्वाद् नान्यथयितव्य इत्यन्तेन टीकाग्रन्थेन प्रपञ्चितम् । तत्रैतेष्वेव षट्सु धातुष्वित्यादिना तदेतैरविद्यादिभिराक्षिप्तः संघात इत्यन्तेन टीकाग्रन्थेन भाष्यानुक्रान्ताविद्यादिदौर्मनस्यान्तस्वरूपविवरणपूर्वकं तेषां चेतनानपेक्षः कार्यकारणभाव उपसंहृतः । एवमाशङ्कासूत्रभागतद्भाष्यविवरणपरे टीकाग्रन्थद्वये व्याख्येयांशद्वयमुपादाय व्याचष्टे—**प्रत्ययोपनिबन्धस्य संग्राहकमित्यादिना** । उत्पादादनुत्पादाद्वेत्येतदन्व-

## भामती ।

तत्र पृथिवीधातोर्नैवं भवत्यहं बीजस्य संग्रहकृत्यं करोमीति, यावदृतोर्नैवं भवत्यहं बीजस्य परिमाणं करोमीति। अङ्कुरस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्निर्वर्तित इति । तथाध्यात्मिकः प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च । **तत्रास्य हेतूपनिबन्धः**—यदिदमविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्ययं जरामरणादीति । अविद्या चेन्नाभविष्यन्नैव संस्कारा अजनिष्यन्त । एवं यावज्जातिः । जातिश्चेन्नाभविष्यन्नैव जरामरणादय उदपत्स्यन्त । तत्राविद्याया नैवं भवत्यहं संस्कारानभिनिर्वर्तयामीति । संस्काराणामपि नैवं भवति वयमविद्यया निर्वर्तिता इति । एवं यावज्जात्या अपि नैवं भवत्यहं जरामरणाद्यभिनिर्वर्तयामीति। जरामरणादीनामपि नैवं भवति वयं जात्यादिभिर्निर्वर्तिता इति । अथ च सत्स्वविद्यादिषु स्वयमचेतनेषु चेतनान्तरानधिष्ठितेष्वपि संस्कारादीनामुत्पत्तिः, बीजादिष्विव सत्स्वचेतनेषु चेतनान्तरानधिष्ठितेष्वप्यङ्कुरादीनाम् । इदं प्रतीत्य प्राप्येदमुत्पद्यत इत्येतावन्मात्रस्य दृष्टत्वाच्चेतनाधिष्ठानस्यानुपलब्धेः। सोऽयमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः । **अथ प्रत्ययोपनिबन्धः**—पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां समवायाद्भवति कायः । तत्र कायस्य पृथिवीधातुः काठिन्यं निर्वर्तयति । अब्धातुः स्नेहयति कायम् । तेजोधातुः कायस्याशितपीते परिपाचयति । वायुधातुः कायस्य श्वासादि करोति । आकाशधातुः कायस्यान्तः सुषिरभावं करोति । यस्तु नामरूपाङ्कुरमभिनिर्वर्तयति पञ्चविज्ञानकार्यसंयुक्तं सास्रवं च मनोविज्ञानं, सोऽयमुच्यते विज्ञानधातुः । यदा ह्याध्यात्मिकाः पृथिव्यादिधातवो भवन्त्यविकलास्तदा सर्वेषां समवायाद्भवति कायस्योत्पत्तिः । तत्र पृथिव्यादिधातूनां नैवं भवति वयं कायस्य काठिन्यादि निर्वर्तयाम इति । कायस्यापि नैवं भवति ज्ञानमहमेभिः प्रत्ययैरभिनिर्वर्तित इति । अथ च पृथिव्यादिधातुभ्योऽचेतनेभ्यश्चेतनान्तरानधिष्ठितेभ्योऽङ्कुरस्येव कायस्योत्पत्तिः । सोऽयं प्रतीत्यसमुत्पादो दृष्टत्वान्नान्यथयितव्यः । तत्रैतेष्वेव षट्सु धातुषु यैकसंज्ञा पिण्डसंज्ञा, नित्यसंज्ञा, सुखसंज्ञा, सत्त्वसंज्ञा, पुद्गलसंज्ञा, मनुष्यसंज्ञा, मातृदुहितृसंज्ञा, अहंकारममकारसंज्ञा, **सेयमविद्या** संसारानर्थसंभारस्य मूलकारणं, तस्यामविद्यायां सत्यां **संस्कारा** रागद्वेषमोहा विषयेषु प्रवर्तन्ते । वस्तुविषया विज्ञप्तिर्**विज्ञानं**, विज्ञानाच्चत्वारो रूपिण उपादानस्कन्धास्तन्नाम, तान्युपादाय रूपमभिनिर्वर्तते । तदैकध्यमभिसंक्षिप्य **नामरूपं** निरुच्यते शरीरस्यैव कललबुद्बुदाद्यवस्था, नामरूपसंमिश्रितानीन्द्रियाणि **षडायतनं**, नामरूपेन्द्रियाणां

## वेदान्तकल्पतरुः ।

**—यदिदमिति** । अविद्यारूपाः प्रत्यया भ्रान्तय इत्यर्थः । तथा संस्काराश्चोत्तरत्र व्याख्यास्यमाना एतदारभ्य यावज्जातिप्रत्ययं जातिरूपं कारणं यावच्च जरामरणादितत्सर्वमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धे उदाहरणमित्यर्थः । विज्ञानधातुं व्याचष्टे**—यस्त्विति** । देवदत्तादिनाम्नः शौक्ल्यादिरूपस्य चाश्रयः शरीरं नामरूपं तस्य च सूक्ष्मावस्था कललबुद्बुदादिकाकान्तनामरूपम्, स एवाङ्कुरस्तं शब्दादिविषयैः पञ्चभिर्विज्ञानैः कार्यैः संयुक्तं योऽभिनिर्वर्तयति । आस्रवत्यनुगच्छति कर्तारमित्यास्रवः कर्म, तत्सहितं समनन्तरप्रत्ययरूपमनोविज्ञानं योऽभिनिर्वर्तयति स विज्ञानधातुरित्युच्यते, तच्चालयविज्ञानमित्यर्थः । देहाकारपरिणतेषु धातुषु शिरःपाण्यादिमत्त्वेन पिण्डसंज्ञा अत एवैकसंज्ञा एकैकस्मिन्धातौ नित्यसंज्ञा सत्त्वसंज्ञा प्राणिसंज्ञा वृद्धिह्राससंज्ञेत्यर्थः । **वस्तुविषयेति** । नालयत्वादिविशेषोऽपेक्ष्योऽपि तु सामान्येन वस्तुविषयेत्यर्थः । नामरूपं व्याचष्टे**—विज्ञानादिति** । विज्ञानाद्धेतोरभिनिर्वर्तत इति संबन्धः । चत्वारः पृथिव्यादयो उपादानकारणस्कन्धाः प्रमेदास्तन्नामेत्युच्यते । विधेयापेक्षयैकवचनं नामाश्रयत्वाच्च नामत्वम् । तानि चोपादानानि उपादाय कारणत्वेन विकृत्य रूपं सितादि रूपवच्छरीरमभिनिर्वर्तते निष्पद्यते इत्यर्थः । **ननु** नामरूपयोर्द्वित्वात्कथमेकवचनमत आह**—तदैकध्यमिति** । एकधेत्यर्थः । "एकाद्धो ध्यमुञन्यतरस्या"मित्येकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशे रूपम् ऐकध्यमिति। कार्यकारणे एकीकृत्यैक्यनिर्देश इत्यर्थः । जातेरुपरि वक्ष्यमाणत्वादिह गर्भाभ्यन्तरे देहाभिधानमित्याह**—शरीरस्यैवेति** । षडायतनं व्याचष्टे**—नामरूपसंमिश्रितानीति** । षट् पृथिव्यादिधातव आयतनानि यस्य कारणवृन्दस्य

## कल्पतरुपरिमलः ।

यव्यतिरेकपरतया व्याचष्टे**—यस्मिन् सतीति । मनो विज्ञानं च योऽभिनिर्वर्तयतीति** । अत्र पूर्ववाक्यस्य च योऽभिनिर्वर्तयतीत्यनुषङ्गः कृतः । यो नामरूपमभिनिर्वर्तयति यश्च मनोरूपं विज्ञानमभिनिर्वर्तयति, स विज्ञानधातुरुच्यत इत्यर्थः । **देहाकारपरिणतेष्विति** । केचिदविद्यादिरूपं क्वचित् क्वचिद्भेदेन वर्णयन्ति । क्षणिककार्यदुःखशून्येषु स्थायिनित्यसुखवस्तुबुद्धिर**विद्या**, ततो रागद्वेषमोहास्ततो धर्माधर्मसंस्कार इत्येतत्सर्वं संस्कारवशाज्जीवस्य गर्भाशयद्रव्ये वृत्तिलाभो **विज्ञानं**, विज्ञानसंसर्गाद्गर्भद्रव्यस्य कललपेश्याद्याकारेणाभिव्यक्ति**र्नामरूपं**, तदभिव्यक्तिक्रमेण निर्वृत्तं षडिन्द्रियायतनं **शरीरं**, षडायतननिर्वृत्तशरीरेन्द्रियस्य गर्भगतविषयेन्द्रियसंसर्गजं ज्ञानं **स्पर्शः**, तन्निमित्ते सुखदुःखे **वेदना**,

मितरेतरकारणत्वादुपपद्यते लोकयात्रा । तस्यां चोपपद्यमानायां न किंचिदपरमपेक्षितव्यमस्ति । ते चाविद्यादयोऽविद्या संस्कारो विज्ञानं नामरूपं षडायतनं स्पर्शो वेदना तृष्णा उपादानं भवो जातिर्जरा मरणं शोकः परिदेवना दुःखं दुर्मनस्तेत्येवंजातीयका इतरेतरहेतुकः सौगते समये क्वचित्संक्षिप्ता निर्दिष्टाः क्वचित्प्रपञ्चिताः । सर्वेषामप्ययमविद्यादिकलापोऽप्रत्याख्येयः । तदेवमविद्यादिकलापे परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमानेऽर्थाक्षिप्त उपपन्नः संघात इति चेत्, तन्न; कस्मात्? उत्पत्तिमात्रनिमित्तत्वात् । भवेदुपपन्नः संघातो यदि संघा-

## भामती ।

त्रयाणां संनिपातः **स्पर्शः**, स्पर्शाद्वेदना सुखादिका, वेदनायां सत्यां कर्तव्यमेतत्सुखं पुनर्मयेत्यध्यवसानं **तृष्णा** भवति । तत **उपादानं** वाक्कायचेष्टा भवति । ततो **भवो** भवत्यस्माज्जन्मेति भवो धर्माधर्मौ, तद्धेतुकः स्कन्धप्रादुर्भावो **जातिः** जन्म । जन्महेतुका उत्तरे जरामरणादयः । जातानां स्कन्धानां परिपाको जरा । स्कन्धानां नाशो मरणम् । म्रियमाणस्य मूढस्य साभिषङ्गस्य पुत्रकलत्रादावन्तर्दाहः शोकः । तदुत्थं प्रलपनं हा मातः! हा तात! हा च मे पुत्रकलत्रादीति **परिदेवना** । पञ्चविज्ञानकार्यसंयुक्तमसाध्वनुभवनं दुःखम् । मानसंच दुःखं दौर्मनस्यम् । एवंजातीयकाश्चोपायास्त उपक्लेशा गृह्यन्ते । तेऽमी परस्परहेतुकाः, जन्मादिहेतुका अविद्यादयोऽविद्यादिहेतुकाश्च जन्मादयो घटीयन्त्रवदनिशमावर्तमानाः सन्तीति तदेतैरविद्यादिभिराक्षिप्तः **संघात** इति । तदेतद्दूषयति—**तन्न**; कुतः? **उत्पत्तिमात्रनिमित्तत्वादिति** । **अयमभिसंधिः**—यत् खलु हेतूपनिबद्धं कार्यं तदन्यानपेक्षं हेतुमात्राधीनोत्पादत्वादुत्पद्यतां नाम । पञ्चस्कन्धसमुदायस्तु प्रत्ययोपनिबद्धो न हेतुमात्राधीनोत्पत्तिः, अपितु नानाहेतुसमवधानजन्मा । नच चेतनमन्तरेणान्यः संनिधापयितास्ति कारणानामित्युक्तम् । बीजादङ्कुरोत्पत्तेरपि प्रत्ययोपनिबद्धाया विवादाध्यासितत्वेन पक्षनिक्षिप्तत्वात्, पक्षेण च व्यभिचारोद्भावनायामतिप्रसङ्गेन सर्वानुमानोच्छेदप्रसङ्गात् । **स्यादेतत्**—अनपेक्षा एवान्त्यक्षणप्राप्ताः क्षित्यादयोऽङ्कुरमारभन्ते—तेषां तूपसर्पणप्रत्ययवशात्परस्परसमवधानम् । नच—एकस्मादेव कारणात्कार्यसिद्धेः किमन्यैः कारणैरिति—वाच्यम्; कारणचक्रानन्तरं कार्योत्पादात् सिद्धमित्येव नास्ति । न चैकोऽपि तत्कारणसमर्थ इत्यन्य उदासत इति युक्तम् । नहि ते प्रेक्षावन्तो येनैवमालोचयेयुरस्मासु समर्थ एकोऽपि कार्ये इति कृतं नः संनिधिनेति । किंतूपसर्पणप्रत्ययाधीनपरस्परसंनिधानोत्पादा नानुत्पत्तुं नाप्यसंनिधातुमीशते । तांश्च सर्वाननपेक्षान् प्रतीत्य कार्यमपि न नोत्पत्तुमर्हति । नच स्वमहिम्ना सर्वे कार्यमुत्पादयन्तोऽपि नानाकार्याणामीशते; तत्रैव

## वेदान्तकल्पतरुः ।

तत्तथा । **उपक्लेशाः** मदमानादयस्ते उपाया दुःखादीनां ते च भाष्यगतैवंजातीयकशब्दनिर्देश्या इत्यर्थः । उत्पादानुत्पादाभ्यां हेतुहेतुमद्भावे समर्थिते तावन्मात्रानुवादोऽयं दृश्यते? **उत्पत्तिमात्रनिमित्तत्वादिति** । ततश्चासंगतिमाशङ्क्याह—**अयमभिसंधिरिति** । अङ्गीकृत्य हेतूपनिबन्धनस्य चेतनानपेक्षां प्रत्ययोपनिबन्धनस्य सा वार्यत इत्यर्थः । चेतनमन्यमनपेक्ष्य स्कन्धानामणूनां चेतरेतरप्रत्ययत्वादितरेतरमिलितत्वात्कार्यसिद्धिरिति चेत्, न; अचेतनानां कार्योत्पत्तिमात्रे निमित्तत्वात्संघाते त्वस्ति चेतनापेक्षेति सूत्रार्थः । हेतूपनिबन्धस्तु स्वरूपत एव परेषां न संभवतीत्युत्तरसूत्र एवोत्तरोत्पादे च पूर्वनिरोधा( ब्र. अ. २ पा. २ सू. २० )दित्यत्र वक्ष्यत इति । **ननु** मिलितेभ्यः पृथिवीधात्वादिभ्यश्चेतनमन्तरेणैवाङ्कुरोत्पत्तिरुक्ता, तद्वद्देहोत्पादोऽपि किं न स्यादत आह—**बीजादिति** । तत्रापीश्वरोऽस्ति संहन्तेत्यर्थः । न च

## कल्पतरुपरिमलः ।

सुखप्राप्तिदुःखपरिहारार्था विषयोपादानेच्छा **तृष्णा**, तया विषयेषु प्रवृत्तिरु**पादानं**, ततः क्रमेण गर्भान्निष्क्रमणं **भवः**, निर्गतस्य मनुष्यत्वादिजात्यभिमानो **जातिः**, क्रमभाविनी **जरामरणे** प्रसिद्धे, म्रियमाणस्य पुत्रकलत्राद्यभिष्वङ्गादन्तर्दाहः **शोकः**, तदुत्थः प्रलापः **परिदेवना**, मरणक्लेशः **दुःखं**, मानसं दुःखं **दौर्मनस्यमिति** आचार्यैरप्यन्योक्त एवाविद्याशब्दार्थः प्रागुक्तः । **ननु** सूत्रे हेतूपनिबन्धे चेतनानपेक्षामभ्युपगम्य प्रत्ययोपनिबन्धमात्रे तदपेक्षाकथनमयुक्तम्; एकैककारणेऽपि तद्यापारयितृचेतनापेक्षाया वक्तुं शक्यत्वादित्याशङ्क्याह—**हेतूपनिबन्धस्त्विति** । स्वरूपत एव तदसंभवस्योत्तरसूत्रे वक्ष्यमाणत्वादधिष्ठातृचेतनाभावेनापि तन्निरसनं हतहननमित्युपेक्षितमिति भावः । तदेतदङ्गीकृत्येति पूर्वग्रन्थेन सूचितम् । **ननु मिलितेभ्य इति** । **ननु**—चेतनमन्तरेण देहोत्पत्तिरपि पूर्वपक्षिणा समर्थिता, न तत्राङ्कुरोत्पत्तिदृष्टान्तापेक्षाऽस्तीति—**चेत्, सत्यं,** पञ्चस्कन्धसमुत्पादस्तु प्रत्ययोपनिबन्धो न हेतुमात्राधीनोत्पत्तिरिति टीकायां विशिष्य कारणसमुदायाद्देहोत्पत्तौ चेतनापेक्षाऽस्तीति समर्थयितुं प्रारब्धम् । तेनाङ्कुरोत्पत्तौ चेतनापेक्षा त्यक्तेति भ्रान्तेयमाशङ्का । देहोत्पत्तिमात्रस्य विशिष्य निर्देशेऽप्यङ्कुरोत्पत्तिरपि पक्षकोटिरेवेति तत्समाधानम् । **नच सर्वत्र हेतुत्व इति** ।

**तस्य किंचिन्निमित्तमवगम्येत, न त्ववगम्यते । यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्त-रोत्तरस्योत्पत्तिमात्रनिमित्तं भवद्भवेन्न तु संघातोत्पत्तेः किंचिन्निमित्तं संभवति। ननु—अविद्या-**

## भामती ।

तेषां सामर्थ्यात् । नच कारणभेदात् कार्यभेदः, सामग्र्या एकत्वात् । तद्भेदस्य च कार्यनानात्वहेतुत्वात्तथा दर्शनात् । तन्न; यद्यन्त्यक्षणप्राप्ता अनपेक्षाः स्वकार्योपजनने, हन्तानेन क्रमेण ततः पूर्वे ततः पूर्वे सर्व एवानपेक्षास्तत्स्वकार्यो-पजनन इति कुसूलस्थत्वाविशेषेऽपि येन बीजक्षणेन कुसूलस्थेन स्वकार्यक्षणपरम्परयाङ्कुरोत्पत्तिसमर्थो बीजक्षणो जनयितव्यः सोऽनपेक्ष एव बीजक्षणः स्वकार्योपजनने एवं सर्व एव तदनन्तरानन्तरवर्तिनो बीजक्षणा अनपेक्षा इति कुसूलनिहितबीज एव स्यात् कृती कृषीवलः, कृतमस्य दुःखबहुलेन कृषिकर्मणा । येन हि बीजक्षणेन स्वक्षणपरम्पर-याङ्कुरो जनयितव्यस्तस्यानपेक्षासौ क्षणपरम्परा कुसूल एवाङ्कुरं करिष्यतीति । तस्मात्परस्परापेक्षा एवान्त्या वा मध्या वा पूर्वे वा क्षणाः कार्योपजनन इति वक्तव्यम् । यथाहुः—'न किंचिदेकमेकस्मात्सामग्र्याः सर्वसंभवः' इति । तच्चेदं समवधानं कारणानां विन्यासभेदतत्प्रयोजनाभिज्ञप्रेक्षावत्पूर्वकं दृष्टमिति नाचेतनाद्भवितुमर्हति । तदिदमुक्तम्— **भवेदुपपन्नः संघातो यदि संघातस्य किंचिन्निमित्तमवगम्येतेति । इतरेतरप्रत्ययत्वेऽपीति ।** इतरेतरहेतुत्वेऽपीत्यर्थः । उक्तमभिसंधिमविद्वान् परिचोदयति—**नन्वविद्यादिभिरर्थादाक्षिप्यत इति ।** परि-

## वेदान्तकल्पतरुः ।

सर्वत्र हेतुत्वे केवलव्यतिरेकापेक्षा । तथा सत्याद्यज्ञानस्य ज्ञानान्तरजन्यत्वं संलग्नज्ञानदृष्टं तेन भवद्भिर्नानुमीयेत । शुक्रादि-परिणाममात्रजन्यत्वसंभवादिति संहतानां हेतुत्वे संहन्त्रा भाव्यमित्युक्तं, तत्र संघातस्याप्रयोजकत्वं, ततश्च न संहन्तुरनु-मानमिति शङ्कते—**स्यादेतदित्यादिना ।** यद्यनपेक्षास्तर्हि कुसूलाभिहतबीजादिभ्यः किमित्यङ्कुरो न जायते, तत्राह— **अन्त्यक्षणप्राप्ता इति ।** अङ्कुरोत्पत्तेराद्यक्षणो बीजादीनामन्त्यक्षणस्तं प्राप्ता एव कारणं न पूर्वम्; तथैव दर्शनादित्यर्थः। ऐकैकश्येन कार्यजननसमर्थानां किं संघातेन ? तत्राह—**तेषां त्विति। उपसर्पणम्** इतरेतरसमीपगमनं तस्य **प्रत्ययः** कारणं तद्वशात्परस्परसंनिधानप्रयोजकं जायत इत्यर्थः । एकस्मादेव कार्यसिद्धेः किमन्यैरिति वदन् प्रष्टव्यः किमेकस्मात्कार्यस्य निष्पन्नत्वादन्येषां व्यर्थतेति, उत जनयितव्ये कार्ये एकस्मात्कारणात्सिध्यति न तत्कारणस्य कारणान्तरेष्वपेक्षेति । **नाद्य** इत्याह—**कारणचक्रेति । न द्वितीय इत्याह—न चैकोऽपीति ।** किं त्विल्वादिपूर्वोक्तनिगमनं परस्परं संनिधान-मुत्पादश्च येषां ते तथा । यदि प्रत्येकं कार्यजननसामर्थ्यं हेतूनां, तर्हि प्रतिकारणमेकैककार्योदयप्रसङ्ग इत्याशङ्क्याह—**न च स्वमहिम्नेति । तत्रैव** एकस्मिन्नेवेत्यर्थः । बीजेन हि अङ्कुरो जनयितव्यः मृदादिभिरपि स एव तत्र लाघवात्सर्वैरेक एव जन्यत इत्यर्थः । **नन्वङ्कुर** एव सर्वैः किमिति जनयितव्यः कारणभेदाद्विजातीयात्कार्यजन्म किं न स्यान्महीहेमभ्यामिव घटकटकौ, तत्राह—**न च कारणभेदादिति ।** अस्मिन्मते येषां मिलित्वैव हेतुता तेषां निरपेक्षाणामपि सामग्रीता । तद्भेदे च विजातीयकार्योत्पाद इति । इत्थं संघाताप्रयोजकत्वमुक्तं दूषयति—**तन्नेति ।** यद्यनपेक्षादन्त्यक्षणात्कार्यजन्म, तर्ह्युपान्त्यादयोऽपि स्वकार्यजननेऽनपेक्षाः स्युः, ततः किं जातमत आह—**कुसूलस्थत्वाविशेषेऽपीति ।** कुसूले ह्यङ्कुरजननोपयोगिबीजसंताननिर्वर्तको बीजक्षणोऽन्ये च बीजक्षणाः सन्ति । तत्र कुसूलगतविमतबीजक्षणोऽङ्कुरोपजननोप-योगिबीजसंताननिर्वर्तको बीजक्षणमनपेक्षो न जनयेत्; कुसूलस्थत्वात्, तत्कालोद्धृतभक्षितबीजक्षणवदित्याशङ्क्य कुसूलस्थ-त्वाविशेषेऽपीत्युक्तम् । अङ्कुरोपयोगिबीजसन्तानानन्तःपातित्वमुपाधिरित्यर्थः । **स्वकार्योपजनने इति ।** अनन्तरजन्यबी-जजनन इत्यर्थः । तस्मादाद्यक्षणादनन्तरानन्तरवर्तिन उपर्युपरिवर्तिनोऽनपेक्षाः स्वस्वकार्यजनन इत्यनुषङ्गः । **नन्वनन्तर-**क्षणपरंपरा बहिर्भवतु, कुतः कुसूले एवाङ्कुरसिद्धिस्तत्राह—**येन हीति ।** अनपेक्षस्य देशभेदेऽप्यपेक्षाविरहसाम्यादि-त्यर्थः । नाऽसंहतस्य सामग्रीत्वं संहन्ता च न तवेत्युक्तमभिसंधिमविद्वानित्यर्थः । अविद्यादिभिः कारणसंघातस्य य

## कल्पतरुपरिमलः ।

अङ्कुरादावपि चेतनस्य हेतुत्वे तत्र कारणान्तरेषु सत्सु चेतनमात्रव्यतिरेकादङ्कुरादिव्यतिरेको दर्शनीयः, स नास्तीति शङ्कार्थः । प्रत्यक्षेण कारणताग्रहे खल्वन्वयव्यतिरेकापेक्षा, इह तु घटादिदृष्टान्तेनाङ्कुरादौ चेतनकारणसत्त्वमनुमीयते । तत्र चेदानीन्तनज्ञानदृष्टान्तेनाद्यज्ञानस्य ज्ञानान्तरजन्यत्वानुमानवत्तदनपेक्षेति परिहारार्थः । **संघातस्याप्रयोजकत्व-मिति ।** संघातस्य कार्यहेतुत्वे हि कार्योत्पत्त्यर्थमपेक्षितस्य सिद्धये संहन्त्रा भाव्यम्, न तु स कार्यहेतुः, किंतु प्रत्येकस-मर्थानाम् आर्थसमाजमात्रमित्यर्थः । **अन्ये च बीजक्षणाः सन्तीति ।** भक्षणाद्युपयुक्ता इत्यर्थः । **अनन्तरजन्य-बीजजनन इति ।** स्वाव्यवहितानन्तरक्षणजन्यं यद्बीजं तज्जनन इत्यर्थः । **स्वस्वकार्यजनन इत्यनुषङ्ग इति ।** स्वश-ब्दान्तराध्याहारेणानुषङ्ग इत्यर्थः । **नन्विति ।** पूर्वपूर्वबीजक्षणस्योत्तरोत्तरबीजक्षणजनने भवत्वनपेक्षत्वम्, एतावता कथं

दिभिरर्थादाक्षिप्यते संघात इत्युक्तम् । अत्रोच्यते—यदि तावदयमभिप्रायोऽविद्यादयः संघातमन्तरेणात्मानमलभमाना अपेक्षन्ते संघातमिति, ततस्तस्य संघातस्य निमित्तं वक्तव्यम् । तच्च नित्येष्वप्यणुष्वभ्युपगम्यमानेष्वाश्रयाश्रयिभूतेषु च भोक्तृषु सत्सु न संभवतीत्युक्तं वैशेषिकपरीक्षायाम् । किमङ्ग पुनः क्षणिकेष्वप्यणुषु भोक्तृरहितेष्वाश्रयाश्रयिशून्येषु वाभ्युपगम्यमानेषु संभवेत् ? अथायमभिप्रायोऽविद्यादय एव संघातस्य निमित्तमिति, कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैव निमित्तं स्युः । अथ मन्यसे संघाता एवानादौ संसारे संतत्यानुवर्तन्ते तदाश्रयाश्चाविद्यादय इति, तदापि संघातात्संघातान्तरमुत्पद्यमानं नियमेन वा सदृशमेवोत्प-

## भामती ।

हरति—**अत्रोच्यते, यदि तावदिति** । किमाक्षेप उत्पादनम्, आहो ज्ञापनम् । तत्र न तावत् कारणमन्यथानुपपद्यमानं कार्यमुत्पादयति, किंतु स्वसामर्थ्येन । तस्माज्ज्ञापनं वक्तव्यम् । तथा च ज्ञापितस्यान्यदुत्पादकं वक्तव्यं, तच्च स्थिरपक्षेऽपि सत्यपि च भोक्तर्यधिष्ठातारं चेतनमन्तरेण न संभवति, किमङ्ग पुनः क्षणिकेषु भावेषु ? भोक्तुर्भोगेनापि कदाचिदाक्षिप्येत संघातः, स तु भोक्तापि नास्तीति दूरोत्सारितत्वं दर्शयति—**भोक्तृरहितेष्विति** । **अपिच** बहव उपकार्योपकारकभावेन स्थिताः कार्यं जनयन्ति । नच क्षणिकपक्ष उपकार्योपकारकभावोऽस्ति, भावस्योपकारानास्पदत्वात् । क्षणस्याभेद्यत्वादनुपकृतोपकृतत्वासंभवात् । कालभेदेन वा तदुपपत्तौ क्षणिकत्वव्याघातात् । तदिदमाह—**आश्रयाश्रयिशून्येषु चेति** । **अथायमभिप्राय इति** । यदा हि प्रत्ययोपनिबन्धनः प्रतीत्य समुत्पादो भवेत्तदा चेतनोऽधिष्ठाताऽपेक्षेतापि, न तु प्रत्ययोपनिबन्धनोऽपि तु हेतूपनिबन्धनः । तथाच कृतमधिष्ठात्रा । हेतुः स्वभावत एव कार्यसंघातं करिष्यति केवल इति भावः । अस्तु तावद्यथा केवलाद्धेतोः कार्यं नोपजायत इति, अन्योन्याश्रयप्रसङ्गोऽस्मिन् पक्ष इत्याशयवानाह—**कथं तमेवेति** । संप्रति प्रत्ययोपनिबन्धनं प्रतीत्यसमुत्पादमास्थाय चोदयति—**अथ मन्यसे संघाता एवेति** । अस्थिरा अपि हि भावाः सदा संहता एवोदयन्ते व्ययन्ते च । न पुनरितस्ततोऽवस्थिताः केनचित् पुञ्जीक्रियन्ते । तथाच कृतमत्र संहन्त्रा चेतनेनेति भावः । **अनादौ** इति परस्पराश्रयं निवर्तयति । तदेतद्विकल्प्य दूषयति—**तदापि संघातादिति** । स खलु संघातसंततिवर्ती धर्माधर्माह्वयः संस्कारसं-

## वेदान्तकल्पतरुः ।

आक्षेपः स उत्पाद उत ज्ञापनम् । **नाद्य** इत्याह—**तत्रेति** । यत्कार्यं तदन्यथानुपपद्यमानं सत्कारणं नोत्पादयति; अन्यथाऽनुपपद्यमानदशायां तस्यासत्त्वात्, किं तु यदि जनकं, तर्हि स्वसामर्थ्येन, सामर्थ्यं चाविद्यमानस्य नास्तीत्यर्थः । न केवलं संघातानुपपत्तिः, किं तु संहतानां य इतरेतरमुपकारः सोऽपि नेत्याह—**अपि चेति** । भावस्यान्यकृतोपकारस्य च किमेकक्षणवर्तित्वमुत जाते भावे उत्तरक्षणे उपकारः । **नाद्य** इत्याह—**भावस्येति** । यो ह्येकस्मिन् क्षणे उपकाराभावाद्धेतुतामनश्नुवानः क्षणान्तरे तत्कृतमुपकारमासाद्य हेतुतां भजते, तस्य स उपकारोऽन्यकृत इति ज्ञायते । अपरथा स तस्य स्वभावः किं न स्यात् ? तव तु मते पदार्थक्षणस्याभेद्यत्वाद्वस्तुन उपकृतत्वानुपकृतत्वे न संभवतोऽतश्च भावस्योपकारानास्पदत्वम् । तथा च नोपकार्योपकारकभाव इत्यर्थः । **द्वितीयं** प्रत्याह—**कालभेदेन वेति** । क्षणिकत्वव्याघातात् कालभेदेनापि नोपकार्योपकारकभाव इत्यधस्तनेनान्वयः । **भाष्ये**—आश्रयिभूतेष्वित्येतदणुविशेषणम् । चकारश्च भोक्तृषु सत्सु चेत्युपरि संबन्धनीयः । आश्रयाश्रयिशून्येष्वित्यत्र च भावप्राधान्यम् आश्रयाश्रयित्वशून्येष्वित्यर्थः । आश्रयाश्रयिभूतेष्विति तु पाठे भोक्तृविशेषणम् । **आश्रयश्चादृष्टमिति** । उक्तमभिसंधिमविद्वानिति यदुक्तं तद्विशदयति—**अस्तु तावदिति** । अदृष्टात्संघातोत्पत्तिव्यवस्थासिद्धेर्भाष्योक्तदूषणानुपपत्तिमाशङ्क्याह—**स खल्विति** । भोक्तुर्भोगाद-

## कल्पतरुपरिमलः ।

कुसूलस्थबीज एव कृषीवलः कृती स्यादिति दूषणं भवेद् ? अन्त्यक्षणस्य कुसूलाद्बहिर्भाव्यक्षेत्रेषूत्पन्नस्यैवाङ्कुरजनकत्वकल्पनोपपत्तेरिति शङ्कार्थः । **ननु** यथाकार्यमनुपपद्यमानं सत्कारणं नोत्पादयति, एवं स्वसामर्थ्येनापि तन्नोत्पादयत्येव, अतः किंतु स्वसामर्थ्येनेति कार्यस्य कारणोत्पादकत्वाभ्युपगमो न युक्त इत्याशङ्क्य सौध्याहारं व्याचष्टे—**यदि जनकमिति** । कार्यं कारणस्य जनकं चेत्, स्वसामर्थ्येनेत्येव वक्तव्यं, नच तदप्युपपद्यते; अविद्यमानस्य सामर्थ्याभावादित्यर्थः । **क्षणस्याभेद्यत्वादिति** क्षणस्य पूर्वभागे अनुपकृतत्वावस्था उत्तरभागे उपकृतत्वावस्थेति दर्शयितुं क्षणस्य भागशो भेत्तुमशक्यत्वादित्यर्थः । नित्येष्वणुष्विति भाष्यवाक्ये आश्रयाश्रयिभूतेष्वित्यस्य विशेष्यं दर्शयति—**भाष्य इति** । टीकायामवतारितं किमङ्ग पुनरिति द्वितीयभाष्यवाक्यस्थमाश्रयाश्रयिशून्येष्वित्येतद्भावप्राधान्येन योजनीयमित्याह—**आश्रयेति** । **आश्रयाश्रयिभूतेष्विति पाठे भोक्तृविशेषणमिति** । यद्यपि भोक्तृरहितेष्विति भाष्यपाठे उपसर्जनानां भोक्तॄणामिदं सप्तम्यन्तं विशेषणं भवितुं नार्हति; तथापि भोक्तृष्वसत्स्विति पाठान्तरमाश्रित्य तद्विशेषणत्वमुक्तम् । **तद्विशदयतीति** ।

द्येत, अनियमेन वा सदृशं विसदृशं वोत्पद्येत । नियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात् । अनियमाभ्युपगमेऽपि मनुष्यपुद्गलः कदाचित्क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेदिति प्राप्नुयात् । उभयमप्यभ्युपगमविरुद्धम् । अपिच यद्भोगार्थः संघातः स्यात्स नास्ति स्थिरो भोक्तेति तवाभ्युपगमः । ततश्च भोगो भोगार्थ एव स नान्येन प्रार्थनीयः । तथा मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यम् । अन्येन चेत्प्रार्थ्येतोभयं भोगमोक्षकालावस्थायिना तेन भवितव्यम् । अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः । तस्मादितरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेद्भवतु नाम नतु संघातः सिध्येत् । भोक्त्रभावादित्यभिप्रायः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उक्तमेतदविद्यादीनामुत्पत्तिमात्रनिमित्तत्वान्न संघातसिद्धिरस्तीति । तदपि तूत्पत्तिमात्रनिमित्तत्वं न संभवतीतीदमिदानीमुपपाद्यते । क्षणभङ्गवादिनोऽयमभ्युपगम उत्तरस्मिन्क्षण उत्पद्यमाने पूर्वः क्षणो निरुध्यत इति । न चैवमभ्युपगच्छता पूर्वोत्तरयोः क्षणयोर्हेतुफलभावः शक्यते संपादयितुम् । निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्याभावग्रस्तत्वादुत्तरक्षणहेतुत्वानुपपत्तेः । अथ भावभूतः परिनिष्पन्नावस्थः पूर्वक्षण उत्तरक्षणस्य हेतुरित्यभिप्रायस्तथापि नोपपद्यते; भावभूतस्य पुनर्व्यापारकल्पनायां क्षणान्तरसंबन्धप्रसङ्गात् । अथ भाव एवास्य व्यापार इत्यभि-

---

### भामती ।

तानो यथायथं सुखदुःखे जनयन्नागन्तुकं कंचनानासाद्य स्वत एव जनयेत्, आसाद्य वा । अनासाद्य जनने सदैव सुखदुःखे जनयेत्,समर्थस्यानपेक्षस्याक्षेपायोगात् । आसाद्य जनने तदासादनकारणं प्रेक्षावानभ्युपेयः । तथाच न प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादः । तस्मादनेनागन्तुकानपेक्षस्य संघातसंतानस्यैव सदृशजनने विसदृशजनने वा स्वभाव आस्थेयः । तथाच भाष्योक्तं दूषणमिति । **अपि च यद्भोगार्थः संघातः स्यादिति ।** अप्राप्तभोगो हि भोगार्थी भोगमाप्तुकामस्तत्साधने प्रवर्तत इति प्रत्यात्मसिद्धम् । सेयं प्रवृत्तिर्भोगादन्यस्मिन् स्थिरे भोक्तरि भोगतत्साधनसमयव्यापिनि कल्प्यते नास्थिरे । नच भोगादनन्यस्मिन् । नहि भोगो भोगाय कल्पते नाप्यन्यो भोगायान्यस्य । एवं मोक्षेऽपि द्रष्टव्यम् । तत्र बुभुक्षुमुमुक्षू चेत् स्थिरावास्थीयेयातां तदाभ्युपेतहानम्, अस्थैर्ये वा प्रवृत्तिप्रसङ्ग इत्यर्थः । **न तु संघातः सिध्येद्भोक्त्रभावादिति ।** भोक्त्रभावेन प्रवृत्त्यनुपपत्तेः कर्त्रभावः । ततः कर्माभावात्संघातासिद्धिरित्यर्थः ॥१९॥ पूर्वसूत्रेण संगतिमस्याह—**उक्तमेतदिति** । हेतूपनिबन्धनं प्रतीत्यसमुत्पादमभ्युपेत्य प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादो दूषितः । संप्रति हेतूपनिबन्धनमपि तं दूषयतीत्यर्थः । दूषणमाह—**इदमिदानीमिति । निरुध्यमानस्येति** । न तावद्वैशेषिकवन्निरोधकारणसांनिध्यं निरुध्यमानता स्वीक्रियते; वैनाशिकैरकारणं विनाशमभ्युपगच्छद्भिस्तस्यानिष्टत्वात् । तस्माद्विनाशग्रस्तत्वमचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम् । निरुद्धत्वं च चिरनिरुद्धत्वं विवक्षितं, तथा चोभयोरप्यभावग्रस्तत्वाद्धेतुत्वानुपपत्तिः । शङ्कते—**अथ भावभूत इति** । कारणस्य हि कार्योत्पादात् प्राक्कालसत्ताऽर्थवती न कार्यकाला, तदा कार्यस्य सिद्धत्वेन तत्सिद्ध्यर्थायाः सत्ताया अनुपयोगादिति भावः । तदेतल्लोकदृष्ट्या दूषयति—**भावभूतस्येति** । भूत्वा व्यापृत्य भावाः प्रायेण हि कार्यं कुर्वन्तो लोके दृश्यन्ते । तथा च स्थिरत्वम्, इतरथा तु लोकविरोध इति । पुनः शङ्कते—**अथ भाव एवेति** । यथाहुः—'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते' इति । भवत्वेवं व्यापारवत्ता, तथापि क्षणिकस्य न कारणत्वमित्याह—**तथापि नैवोपपद्यते**

### वेदान्तकल्पतरुः ।

भ्यत्वे हेतुमाह—**अप्राप्तभोगोहीति** । भोक्तुः स्थिरतायां हेतुर्**भोगार्थ** इति । अर्थिदशायां भोगदशायां चानुवृत्तेः स्थैर्यमित्यर्थः । अस्य विवरणं—**भोगमाप्तुकाम** इति । इतरथा हि भोगश्चासावर्थीति भ्रमः स्यादिति । अन्यस्य भोगायान्यो न कल्पत इत्यर्थः । **ननु** संघातासिद्धौ कर्त्रभावो वाच्यो न भोक्त्रभावः कर्तुर्हि हेतुता, तत्राह—**भोक्त्रभावेनेति** ॥ १९ ॥ **ननु** निरुद्धस्यास्त्वभावग्रस्तता निरुध्यमानस्य कथमत आह—**न तावदिति** । यथा हि आरम्भकतन्त्वादिसंयोगस्य नाशक्षणे पटादेर्विद्यमानस्यैव विनश्यदवस्था वैशेषिकैः स्वीकृता, न तथा वैनाशिकैरित्यर्थः । **ननू**भयोर्विनाशग्रस्तत्वे को भेदस्तत्राह—**तस्मादिति** । यद्विनाशग्रस्तत्वं तदचिरनिरुद्धत्वरूपं, सद् निरुध्यमानत्वं वक्तव्यं, तदेव चिरनिरुद्धत्वरूपं सद् विवक्षितमित्यर्थः । कार्यकाले कारणस्यासत्त्वेऽपि पूर्वक्षणसत्त्वेन हेतुत्वं भाष्योक्तमयुक्तम्; मृदादीनां कार्येऽन्वीयमानानामुपादानत्वोपलम्भादिति, तत्राह—**कारणस्य हीति** । प्रायेणेति क्रियाज्ञानव्यावृत्त्यर्थम् । एषां

प्रायस्तथापि नैवोपपद्यते; हेतुस्वभावानुपरक्तस्य फलस्योत्पत्त्यसंभवात्। स्वभावोपरागाभ्युपगमे च हेतुस्वभावस्य फलकालावस्थायित्वे सति क्षणभङ्गाभ्युपगमत्यागप्रसङ्गः। विनैव वा स्वभावोपरागेण हेतुफलभावमभ्युपगच्छतः सर्वत्र तत्प्राप्तेरतिप्रसङ्गः। अपिचोत्पादनिरोधौ नाम वस्तुनः स्वरूपमेव वा स्यातामवस्थान्तरं वा वस्त्वन्तरमेव वा। सर्वथापि नोपपद्यते। यदि तावद्वस्तुनः स्वरूपमेवोत्पादनिरोधौ स्यातां, ततो वस्तुशब्द उत्पादनिरोधशब्दौ च पर्यायाः प्राप्नुयुः। अथास्ति कश्चिद्विशेष इति मन्येतोत्पादनिरोधशब्दाभ्यां मध्यवर्तिनो वस्तुन आद्यन्ताख्ये अवस्थे अभिलप्येते इति एवमप्याद्यन्तमध्यक्षणत्रयसंबन्धित्वाद्वस्तुनः क्षणिकत्वाभ्युपगमहानिः। अथात्यन्तव्यतिरिक्तावेवोत्पादनिरोधौ वस्तुनः स्यातामश्वमहिषवत्, ततो वस्तु उत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः। यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्याताम्, एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनः शाश्वतत्वप्रसङ्ग एव। तस्मादप्यसंगतं सौगतं मतम्॥ २०॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा॥ २१॥**

क्षणभङ्गवादे पूर्वक्षणो निरोधग्रस्तत्वान्नोत्तरस्य क्षणस्य हेतुर्भवतीत्युक्तम्। अथासत्येव हेतौ

## भामती।

क्षणिकस्य कारणभावः। मृत्सुवर्णकारणा हि घटादयश्च रुचकादयश्च मृत्सुवर्णात्मानोऽनुभूयन्ते। यदि च न कार्यसमये कारणं सत् कथं तेषां तदात्मनानुभवः। नच—कारणसादृश्यं कार्यस्य न तु तादात्म्यमिति—वाच्यम्; असति कस्यचिद्रूपस्यानुगमे सादृश्यस्याप्यनुपपत्तेः। अनुगमे वा तदेव कारणं, तथा च तस्य कार्यतादात्म्यमिति सिद्धमक्षणिकत्वमित्यर्थः। सर्वथा वैलक्षण्ये तु हेतुफलभावस्तन्तुघटादावपि प्राप्त इत्यतिप्रसङ्ग इत्याह—**विनैव वेति**। नच तद्भावभावो नियामकः; तस्यैकस्मिन् क्षणेऽशक्यग्रहत्वात्। सामान्यस्य चाकारणत्वम्। कारणत्वे वा क्षणिकत्वहानेरस्मत्पक्षपातप्रसङ्गाच्चेति भावः। अपि चोत्पादनिरोधयोर्विकल्पत्रयेऽपि वस्तुनः शाश्वतत्वप्रसङ्ग इत्यह—**अपि चोत्पादनिरोधौ नामेति**। पर्यायत्वापादनेऽपि नित्यत्वापादनं मन्तव्यम्। **वस्तूत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः**। संसर्गेऽप्यसता संसर्गानुपपत्तेः। सत्त्वाभ्युपगमे शाश्वतत्वमित्यपि द्रष्टव्यम्। शेषं निगदव्याख्यातम्॥२०॥ नीलाभासस्य हि चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता। समनन्तरप्रत्ययात्पूर्वविज्ञानाद्बोधरूपता। चक्षुषोऽधिप-

## वेदान्तकल्पतरुः।

पदार्थानां या भूतिरुत्पत्तिः सैव क्रिया कारकमिति चोच्यते। **तदेव कारणमिति**। सामान्यं हि भेदविकल्पाधिष्ठानत्वेन कारणमित्यर्थः। **ननु** सादृश्यसिद्धौ तद्बलादनुगतरूपसिद्धिस्तदेव नास्ति, असत्यपि सादृश्ये सादृश्यभ्रमादत आह—**सर्वथेति**। **ननु** वैसादृश्येऽपि तन्तुभावे पटभावादुपादानोपादेयभाव इत्याशङ्क्याह—**न चेति**। एकस्मिन्पदार्थक्षणे तद्भावभावस्याशक्यग्रहत्वाद्रासभादावपि प्रसङ्गादित्यर्थः। अथ जात्युपाधौ कारणत्वं, तर्हि जातिरेव कारणं, व्यक्तयस्तदवस्थाः स्युर्नान्याः। अन्यकारणत्वस्यान्यत्रायोगात् त्वया चैतन्नेष्टमित्याह—**सामान्यस्य चेति**। भाष्ये उत्पादादिशब्दस्य वस्तुशब्दस्य च पर्यायत्वापादनेऽपि वस्तुनो नित्यत्वापादनं द्रष्टव्यम्। तथा सत्युत्पादनिरोधयोरभावादित्यर्थः॥ २०॥ प्रतिज्ञोपरोधं व्याख्यातुं चतुर्विधां नित्यादिप्रतिज्ञां बौद्धीयां भाष्योक्तां दर्शयति—**नीलाभासस्येत्यादिना**। तत्र ताव-

## कल्पतरुपरिमलः।

नासंहतस्य सामग्रीत्वमिति सिद्धान्त्यभिसन्ध्यवेदनं खलु प्रागुक्तं, तदिदानीमस्तु तावदिति ग्रन्थेन विशदीक्रियते। अनेन हि ग्रन्थेन केवलाद्धेतोः कार्यं नोपजायत इत्येतदास्तां तावदिति नासंहतस्य सामग्रीत्वमित्येतद् दूषणमिह नोद्भाव्यत इत्युक्तम्॥ **सामान्यं हीति**। भूयोवयवसामान्यं खलु सादृश्यं तदन्यापोहभ्रमाधिष्ठानत्वेन कारणमित्यर्थः। यद्यप्येतावता घटरुचकाद्यनुगता मृत्सुवर्णादिरूपकारणता नायाति; तथापि टीकायां श्रुतस्य कारणशब्दस्यार्थोऽयं, दूषणं तु तथा चेत्याद्यनन्तरग्रन्थेन भविष्यतीति तात्पर्यम्। **नन्विति**। कार्यकारणभावेऽसादृश्यमप्रयोजकं, किंतु यस्मिन् सति यद्भवति तत्कारणमित्यर्थः। **तर्हि जातिरेवेति**। जात्युपाधौ कारणत्वग्रहेऽभ्युपगम्यमानेऽपि विवक्षितविवेकेन जातेः कारणत्वग्रह उक्तः स्यात्। तथा च व्यक्तीनां कारणत्वं वदता त्वया तासां जात्यवस्थाविशेषणत्वेन जात्यभेदो वक्तव्यः; अन्यथा जातेः कारणत्वेन व्यक्तीनां कारणत्वानिर्वाहात्। नच तथेष्यत इति त्वया वक्तुं शक्यम्; जातिरवस्तुभूता व्यक्तयो वस्तुभूता इति त्वयेष्यमाणत्वादित्यर्थः। **वस्तुनो नित्यत्वापादानं द्रष्टव्यमिति**। उत्पादनिरोधशब्दयोर्वस्तुशब्दपर्यायत्वे वस्त्वतिरिक्तोत्पा-

फलोत्पत्तिं ब्रूयात्, ततः प्रतिज्ञोपरोधः स्यात्। चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्त इतीयं प्रतिज्ञा हीयेत। निर्हेतुकायां चोत्पत्तावप्रतिबन्धात्सर्वं सर्वत्रोत्पद्येत। अथोत्तरक्षणोत्पत्तिर्यावत्तावदवतिष्ठते पूर्वक्षण इति ब्रूयात्ततो यौगपद्यं हेतुफलयोः स्यात्। तथापि प्रतिज्ञोपरोध एव स्यात्। क्षणिकाः सर्वे संस्कारा इतीयं प्रतिज्ञोपरुध्येत ॥ २१ ॥

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

अपिच वैनाशिकाः कल्पयन्ति बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं चेति। तदपि च त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशं चेत्याचक्षते। त्रयमपि चैतदवस्त्वभावमात्रं निरुपाख्यमिति मन्यन्ते, बुद्धिपूर्वकः किल विनाशो भावानां प्रतिसंख्यानिरोधो नाम भाष्यते, तद्विपरीतोऽप्रतिसंख्यानिरोधः, आवरणाभावमात्रमाकाशमिति। तेषामाकाशं परस्तात्प्रत्याख्यास्यति। निरोधद्वयमिदानीं प्रत्याचष्टे। प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिः, असंभव इत्यर्थः। कस्मात्? अविच्छेदात्। एतौ हि प्रतिसंख्याऽप्रतिसंख्यानिरोधौ संतानगोचरौ वा स्यातां भाव-

---

### भामती।

तिप्रत्ययाद्रूपग्रहणप्रतिनियमः। आलोकात्सहकारिप्रत्ययाद्धेतोः स्पष्टार्थता। एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव कारणानि। सेयं प्रतिज्ञा चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इत्यभावकारणत्व उपरुध्येत। **अथोत्तरक्षणोत्पत्तिं यावदवतिष्ठत इति**। उत्पत्तिरुत्पद्यमानाद्भावादभिन्ना, तथा च क्षणिकत्वहानिरिति प्रतिज्ञाहानिः ॥ २१ ॥ भावप्रतीपा संख्या बुद्धिः प्रतिसंख्या, तया निरोधः प्रतिसंख्यानिरोधः। सन्तमिममसन्तं करोमीत्येवमाकारता च बुद्धेर्भावप्रतीपत्वम्। एतेनाप्रतिसंख्यानिरोधोऽपि व्यख्यातः। संतानगोचरो वा निरोधः, संतानिक्षणगोचरो वा। न तावत्संतानस्य निरोधः संभवति। हेतुफलभावेन हि व्यवस्थिताः संतानिन एवोदयव्ययधर्माणः न संतानः। तत्र योऽसावन्त्यः संतानी, यन्निरोधात्संतानोच्छेदेन भवितव्यं, स किं फलं किंचिदारभते न वा। आरभते चेत्, नान्त्यः। तथा च न संतानोच्छेदः। अनारम्भे तु भवेदन्त्यः सः, किंतु स्यादसन्; अर्थक्रियाकारितायाः सत्तालक्षणस्य विरहात्। तदसत्त्वे तज्जनकमप्यसज्जनकत्वेनासदित्यनेन क्रमेणासन्तः सर्व एव संतानिन इति तत्संतानो नितरामसन्निति कस्य प्रतिसंख्यया निरोधः। नच सभागानां संतानिनां हेतुफलभावः संतानः, तस्य विसभागोत्पादो निरोधः, विसभागोत्पादक एव च क्षणः संतानस्यान्त्यः। तथासति रूपविज्ञानप्रवाहे रसादिविज्ञा-

### वेदान्तकल्पतरुः।

चतुर्णां कारणानामेकस्मिन्नीलप्रत्यये समुच्चयेन कारणत्वसिद्ध्यर्थं द्वारभेदः प्रदर्श्यते। आलम्बनं च तत् प्रत्ययः कारणं चेति तथोक्तम्। उदितस्य ज्ञानस्य रसादिसाधारण्ये प्राप्ते रूपनियामकं चक्षुरधिपतिः लोके वियामकस्याधिपतित्वादिति। एवं चित्तानां ज्ञानानां चतुर्भ्य उत्पत्तिमुक्त्वा चैत्तानामपि दर्शयति—**एवमिति**। सुखं ज्ञानं, मनोजन्यत्वे सत्यपरोक्षत्वात्, संमतवदित्यर्थः। अपरोक्षत्वमदृष्टादिव्यावृत्त्यर्थम्। एकविधसामग्रीजत्वेन चित्तसंबन्धो बौद्धसूत्रे चैत्तशब्दार्थः। चत्वार्येतानि कारणानि। अत एव चित्ताभिन्नहेतुजत्वम्। उत्तरक्षणोत्पत्तिकाले पूर्वक्षणस्थितावपि न स्थायित्वं सिध्यति; एकक्षणेऽप्युभयसंभवाद्, उत्तरक्षणस्तु द्वितीयक्षणो भवत्वित्याशङ्क्याह—**उत्पत्तिरिति**। भूतितत्कर्त्रोरभेदोपगमादुत्तरभावक्षणतदुत्पत्ती अभिन्ने। तथा च पूर्वक्षणस्योत्तरक्षणं यावदवस्थितौ स्थायित्वमित्यर्थः ॥ २१ ॥ प्रतिशब्दः प्रातिलोम्यार्थः संख्याशब्दो बुद्धिवचन इति व्याचष्टे—**भावेति**। **प्रतीपा** विरोधिनी। **नन्वन्त्यसन्तानिनो** न फलानारम्भकत्वं, यतोऽसत्त्वापत्तिः। न च फलारम्भे सन्तानानुच्छेदः; न हि हेतुफलभावमात्रं सन्तानः, किं तु सजातीयानां हेतुफलभावस्तत्र विशुद्धविजातीयक्षणोत्पत्तावपि सजातीयहेतुफलभावरूपसन्तानो निवर्तत इत्याशङ्क्याह—**न च सभागानामिति**। हेतुमाह—**तथा सतीति**। सादृश्यं हि सन्तानिनां ज्ञानानां तुल्यजातीयविषयत्वेन। विषयाणां च तुल्यजातीयत्वं

### कल्पतरुपरिमलः।

दनिरोधानङ्गीकाराद्वस्तु नोत्पत्तिमन्न निरोधवदिति स्यात्। तथा च तस्य नित्यत्वापत्तिरित्यर्थः ॥ २० ॥ **उत्तरक्षणोत्पत्तिकाल इति**। उत्तरक्षणस्य कार्यस्योत्पत्तिः पूर्वस्मिन् कारणक्षण एव भवतु, तथाच न कारणक्षणस्योत्तरक्षणेऽप्यनुवृत्त्या स्थायित्वप्रसङ्गः। नापि कार्योत्पत्तेः कारणस्य च समसमयत्वहानिरिति शङ्कार्थः ॥ २१ ॥ **नन्वन्त्यसंतानिन इति**। मुक्तिपर्यन्तमनुवर्तमानायां विषयोपप्लुतचित्तसंततावन्त्यस्य सन्तानिन इत्यर्थः। **सादृश्यं हीति**। यद्यपि विषयविशेषोपरागकृतसादृश्यं न विवक्षितं, येन चैत्रात्मरूपचित्तसंतानेऽनुवर्तमान एव रूपज्ञानप्रवाहे रसज्ञानोत्पत्तौ तत्सन्तानविच्छेदः

गोचरौ वा । न तावत्संतानगोचरौ संभवतः; सर्वेष्वपि संतानेषु संतानिनामविच्छिन्नेन हेतुफलभावेन संतानविच्छेदस्यासंभवात् । नापि भावगोचरौ संभवतः । नहि भावानां निरन्वयो निरुपाख्यो विनाशः संभवति; सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात्, अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद्दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानात् । तस्मात्परपरिकल्पितस्य निरोधद्वयस्यानुपपत्तिः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

योऽयमविद्यादिनिरोधः प्रतिसंख्यानिरोधान्तःपाती परपरिकल्पितः, स सम्यग्ज्ञानाद्वा सपरिकरात्स्यात्स्वयमेव वा । पूर्वस्मिन्विकल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गः । उत्तरस्मिंस्तु मार्गोपदेशानर्थक्यप्रसङ्गः । एवमुभयथापि दोषप्रसङ्गादसमञ्जसमिदं दर्शनम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्च तेषामेवाभिप्रेतं निरोधद्वयमाकाशं च निरुपाख्यमिति, तत्र निरोधद्वयस्य निरुपाख्य-

---

### भामती ।

नोत्पत्तौ संतानोच्छेदप्रसङ्गः । कथंचित्सारूप्ये वा विसभागेऽप्यन्ततः सत्तया तदस्तीति न संतानोच्छेदः । तदनेनाभिसंधिनाह—**सर्वेष्वपि संतानेषु संतानिनामविच्छिन्नेन हेतुफलभावेन संतानविच्छेदस्यासंभवादिति । नापि भावगोचरौ संभवतः** प्रतिसंख्याऽप्रतिसंख्यानिरोधौ । अत्र तावदुत्पन्नमात्राप्रवृत्तस्य भावस्य न प्रतिसंख्यानिरोधः संभवति, तस्य पुरुषप्रयत्नापेक्षाभावादित्यस्त्येव दूषणं, तथापि दोषान्तरमुभयस्मिन्नपि निरोधे ब्रूते—**नहि भावानामिति** । यतो निरन्वयो विनाशो न संभवत्यतो निरुपाख्योऽपि न संभवति; तेनैवान्वयिना रूपेण भावस्य नष्टस्याप्युपाख्येयत्वात् । निरन्वयविनाशाभावे हेतुमाह—**सर्वास्वप्यवस्थास्विति** । यद्यदन्वयिरूपं तत्तत्परमार्थसद्भावः । अवस्थास्तु विशेषाख्या उपजनापायधर्माणः, तासां सर्वासामनिर्वचनीयतया स्वतो न परमार्थसत्त्वम् । अन्वय्येव तु रूपं तासां तत्त्वम् । तस्य च सर्वत्र प्रत्यभिज्ञायमानत्वान्न विनाश इत्यवस्थावतोऽविनाशान्नावस्थानां निरन्वयो विनाश इति । तासां तत्त्वस्यान्वयिनः सर्वत्राविच्छेदात् । **स्यादेतत्**—मृत्पिण्डमृद्घटमृत्कपालादिषु सर्वत्र मृत्तत्त्वप्रत्यभिज्ञानाद्भवत्वेवम् । तप्तोपलतलपतितनष्टस्य तूदबिन्दोः किमस्ति रूपमन्वयि प्रत्यभिज्ञायमानं, येनास्य न निरन्वयो नाशः स्यादित्यत आह—**अस्पष्टप्रत्यभिज्ञानास्वपीति** । अत्रापि तत्तोयं तेजसा मार्तण्डमण्डलमम्बुदत्वाय नीयत इत्यनुमेयं; मृदादीनामन्वयिनामविच्छेददर्शनात् । शक्यं तु तत्र वक्तुम्—**उदबिन्दौ च सिन्धौ च तोयभावो न भिद्यते । विनष्टेऽपि ततो बिन्दावस्ति तस्यान्वयोऽम्बुधौ** ॥ तस्मान्न कश्चिदपि निरन्वयो नाश इति सिद्धम् ॥ २२ ॥ परिकरः सामग्री सम्यग्ज्ञानस्य यमनियमादिः श्रवणमननादिश्च । मार्गाः क्षणिकनैरात्म्यादिभावनाः । अतिरोहितमन्यत् ॥ २३ ॥ **'आकाशे चाविशेषात्'** एतद्व्याचष्टे—**यच्च तेषामिति** ।

### वेदान्तकल्पतरुः ।

किमपरजात्या, उत परजात्या । नाद्यश्चेत्तसन्तानेऽनुवर्तमाने एव रूपज्ञानसन्तानविरमे रसज्ञानोदये सन्तानोच्छेदप्रसङ्गादित्युक्त्वा **द्वितीयं** दूषयति—**कथंचिदिति** । सत्तया जात्या तत्सारूप्यमस्तीति सोपप्लवसन्तानोपरमे सति विशुद्धसन्तानोदयेऽपि न सन्तानोच्छेदः स्यादित्यर्थः । सन्तानगोचरौ निरोधौ भावगोचरौ वेति विकल्प्याद्यं निरस्य **द्वितीयं** निरस्यति—**नापि भावगोचराविति** । भाष्यगतनिरन्वयनिरुपाख्यत्वपदयोर्हेतुहेतुमद्भावमाह—**यत इति** । अपरिशिष्यमाणरूपत्वं **निरन्वयत्वम्** असत्त्वं **निरुपाख्यत्वम्** । **ननु** यस्य घटादेर्विनाशः स नान्वयी, यस्य तु सामान्यस्यान्वयस्तन्न नश्यति, तत्कथं सान्वयत्वं नाशस्यात आह—**यद्यदन्वयिरूपमिति** । तप्तशिलातलपतितस्योदबिन्दोर्दृश्यमानान्वयिरूपाभावमङ्गीकृत्यानुमानादन्वयः समर्थितः, इदानीं प्रत्यक्षेणानुवृत्तिमाह—**शक्यं त्विति** । उदबिन्दावुपलतलपतिते सिन्धौ समुद्रे च तोयभावस्तोयत्वसामान्यं न भिद्यते । तस्मादुदबिन्दौ विनष्टेऽपि तस्य बिन्दोः सामान्यरूपेणाम्बुधावस्त्यन्वय इत्यान्तरश्लोकस्यार्थः ॥ २२ ॥ २३ ॥ मोक्षाप्तिहेतुत्वाद्भावनाया मार्गत्वम् । शब्दस्याकाशाश्रयत्वं परिशेषतः साधयति—**तथा-**

### कल्पतरुपरिमलः ।

स्यात् । नापि सत्तासामान्यकृतं, येन सोपप्लवचित्तोपरमे मुक्तौ निरुपप्लवचित्तसन्तानोदयेऽपि पूर्वसन्तानोच्छेदो न स्यात्, किं तु विषयोपप्लवकृतं सादृश्यं विवक्षितमिति वक्तुं शक्यम्; तथापि निरन्वयविनाशः क्वापि न संभवतीति द्वितीयविकल्पदोष एवात्रापि द्रष्टव्यः । **इदानीं प्रत्यक्षेणानुवृत्तिमाहेति** । तत्तोयं तेजसा मार्तण्डमण्डलमम्बुदत्वायोपनीयत इत्यनुमे-

त्वं पुरस्तान्निराकृतम्। आकाशस्येदानीं निराक्रियते। आकाशे चायुक्तो निरुपाख्यत्वाभ्युपगमः; प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात्। आगमप्रामाण्यात्तावत् 'आत्मन आकाशः संभूतः' (तै० २।१) इत्यादिश्रुतिभ्य आकाशस्य च वस्तुत्वप्रसिद्धिः। विप्रतिपन्नान्प्रति तु शब्दगुणानुमेयत्वं वक्तव्यम्; गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात्। अपि चावरणाभावमात्रमाकाशमिच्छतामेकस्मिन्सुपर्णे पतत्यावरणस्य विद्यमानत्वात्सुपर्णान्तरस्योत्पित्सतोऽनवकाशत्वप्रसङ्गः। यत्रावरणाभावस्तत्र पतिष्यतीति चेत्। येनावरणाभावो विशेष्यते, तत्तर्हि वस्तुभूतमेवाकाशं स्यात्; नावरणाभावमात्रम्। अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत। सौगते हि समये 'पृथिवी भगवः किंसंनिश्रया' इत्यस्मिन्प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते 'वायुः किंसंनिश्रयः' इत्यस्य प्रश्नस्य प्रतिवचनं भवति 'वायुराकाशसंनिश्रयः' इति। तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात्। तस्मादप्ययुक्तमाकाशस्यावस्तुत्वम्। अपिच निरोधद्वयमाकाशं च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यं चेति विप्रतिषिद्धम्। नह्यवस्तुनो नित्यत्वमनित्यत्वं वा संभवति; वस्त्वाश्रयत्वाद्धर्मधर्मिव्यवहारस्य। धर्मधर्मिभावे हि घटादिवद्वस्तुत्वमेव स्यान्न निरुपाख्यत्वम्॥ २४॥

## अनुस्मृतेश्च॥ २५॥

अपिच वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात्। नच सा संभवति; अनुस्मृतेः। अनुभवमुपलब्धिमनूत्पद्यमानं स्मरणमेवानुस्मृतिः। सा चोपलब्ध्येककर्तृका सती संभवति; पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात्। कथं ह्यहमदोऽद्राक्षमिदं पश्यामीति च पूर्वोत्तरदर्शिन्येकस्मिन्नसति प्रत्ययः स्यात्? अपिच दर्शन-

---

### भामती।

वेदप्रामाण्ये विप्रतिपन्नानपि प्रति शब्दगुणानुमेयत्वमाकाशस्य वक्तव्यम्। **तथाहि**—जातिमत्त्वेन सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्यास्पर्शत्वे सति बाह्यैकेन्द्रियग्राह्यत्वेन गन्धादिवद्गुणत्वमनुमितम्। नायमात्मगुणो बाह्येन्द्रियगोचरत्वात्। अत एव न मनोगुणः; तद्गुणानामप्रत्यक्षत्वात्। न पृथिव्यादिगुणः; तद्गुणगन्धादिसाहचर्यानुपलब्धेः। तस्माद्गुणो भूत्वा गन्धादिवदसाधारणेन्द्रियग्राह्यो यद्द्रव्यमनुमापयति तदाकाशं पञ्चमं भूतं वस्त्विति। **अपि चावरणाभावमाकाशमिच्छत इति**। निषेध्य–निषेधाधिकरणनिरूपणाधीननिरूपणो निषेधो नासत्यधिकरणनिरूपणे शक्यो निरूपयितुम्। तच्चावरणाभावाधिकरणमाकाशं वस्त्विति। अतिरोहितार्थमन्यत्॥ २४॥

विभजते **अपिच वैनाशिकः सर्वस्य वस्तुन इति**। यस्तु सत्यप्येतस्मिन्नुपलब्धृस्मर्त्रोरन्यत्वेऽपि समानायां संततौ कार्यकारणभावात् स्मृतिरुपपत्स्यत इति मन्यमानो न परितुष्यति तं प्रति प्रत्यभिज्ञासमाज्ञातप्रत्यक्षविरोधमाह—**अपिच दर्शनस्मरणयोः कर्तरीति। ततोऽहमद्राक्षीदिति प्रतीयात्** अहं स्मराम्यन्यस्त्वद्राक्षीदित्यर्थः। प्रत्यभिज्ञा-

### वेदान्तकल्पतरुः।

**हीति**। तस्य हि न तावद्द्रव्यादिभ्योऽन्यत्र प्रसङ्गः। प्रसक्ते च तेषु षट्स्वन्तर्भावे सामान्यादित्रये तावदनन्तर्भावमाह—**जातिमत्त्वेनेति**। त्रयाणां निःसामान्यरूपत्वादित्यर्थः। द्रव्यकर्मणोरनन्तर्भावमाह—गुणत्वेन शब्दस्याकाशाश्रयत्वसिद्धये—**अस्पर्शेति**। शब्दो गुणः जातिमत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वाद्गन्धवदित्यर्थः। वायुः स्पार्शनप्रत्यक्ष इति मते तस्मिन् व्यभिचाराभावायास्**पर्शत्वोक्तिः**। दिगादिव्यावृत्त्यर्थमि**न्द्रियग्राह्येति**। द्वीन्द्रियग्राह्यद्रव्यवारणाय **एकेति**। एकेन्द्रियग्राह्यगन्धत्वादिजातेरपाकरणाय **जातिमत्त्वे सतीति**। तथाविधात्मव्युदासाय **बाह्येत्युक्तमिति**॥ २४॥ **सत्यप्येतस्मिन्** अनुस्मरणे इत्यर्थः। उपलब्धृस्मर्त्रोरन्यत्वेऽपि स्मृतिरुपपत्स्यत इत्यन्वयः। अस्मिन्मते क्रियातिरिक्तकर्त्रभावादुपलब्धिस्मृती एव उपलब्धृस्मर्तारौ तयोर्भेदेऽप्येकसन्ततिगतत्वेन कार्यकारणभावान्नातिप्रसङ्ग इत्युक्तं भवति। प्रत्यभिज्ञात्वेन समाज्ञातं सम्यज्ज्ञातम्। अहमद्राक्षीदिति यथाश्रुते अपप्रयोगता स्यात्, तां परिहरति—**अहं स्मरामीति**।

### कल्पतरुपरिमलः।

यमिति प्रक्रिया। सूर्यकिरणतप्तशिलातलपतिताम्बुनि प्रवर्तते न लम्भितप्रायःपतिताम्बुनीत्यपरितोषात्प्रकारान्तरेण परिहारमाहेत्यर्थः॥ २२॥ २३॥ **तस्य हि न तावदिति**। भावरूपस्य शब्दस्य द्रव्यादिषड्भावबहिर्भावप्रसङ्गो नास्तीत्यर्थः। **द्वीन्द्रियग्राह्येति**। इदं दत्त्वा इदं देयमिति जरन्नैयायिकमतानुसारेण द्वीन्द्रियग्राह्यघटादिवारणार्थम्। एकविशे-

स्मरणयोः कर्तैकस्मिन्प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धोऽहमदोऽद्राक्षमिदं पश्यामीति। यदि हि तयोर्भिन्नः कर्ता स्यात्ततोऽहमद्राक्षीदिति प्रतीयात्, न त्वेवं प्रत्येति कश्चित्। यत्रैवं प्रत्ययस्तत्र दर्शनस्मरणयोर्भिन्नमेव कर्तारं सर्वलोकोऽवगच्छति—स्मराम्यहमसावदोऽद्राक्षीदिति। इह त्वहमदोऽद्राक्षमिति दर्शनस्मरणयोर्वैनाशिकोऽप्यात्मानमेवैकं कर्तारमवगच्छति। न नाहमित्यात्मनो दर्शनं निर्वृत्तं निह्नुते यथाग्निरनुष्णोऽप्रकाश इति वा। तत्रैवं सत्येकस्य दर्शनस्मरणलक्षणक्षणद्वयसंबन्धे क्षणिकत्वाभ्युपगमहानिरपरिहार्या वैनाशिकस्य स्यात्। तथाऽनन्तरामनन्तरामात्मन एव प्रतिपत्तिं प्रत्यभिजानन्नेककर्तृकामोत्तमादुच्छ्वासादतीताश्च प्रतिपत्तीरा जन्मन आत्मैककर्तृकाः प्रतिसंदधानः कथं क्षणभङ्गवादी वैनाशिको नापत्रपेत। स यदि ब्रूयात्सादृश्यादेतत्संपत्स्यत इति। तं प्रतिब्रूयात्। तेनेदं सदृशमिति द्वयायत्तत्वात्सादृश्यस्य क्षणभङ्गवादिनः सदृशयोर्द्वयोर्वस्तुनोर्ग्रहीतुरेकस्याभावात् सादृश्यनिमित्तं प्रतिसंधानमिति मिथ्याप्रलाप एव स्यात्। स्याच्चेत्पूर्वोत्तरयोः क्षणयोः सादृश्यस्य ग्रहीतैकः, तथासत्येकस्य क्षणद्वयावस्थानात्क्षणिकत्वप्रतिज्ञा पीड्येत। तेनेदं सदृशमिति प्रत्ययान्तरमेवेदं न पूर्वोत्तरक्षणद्वयग्रहणनिमित्तमितिचेत्, न; तेनेदमिति भिन्नपदार्थोपादानात्। प्रत्ययान्तरमेव चेत्साद-

---

## भामती।

प्रत्यक्षविरोधप्रपञ्चस्तूत्तरः। **आजन्मनः आ चोत्तमादुच्छ्वासात्**। आमरणादित्यर्थः। नच सादृश्यनिबन्धनं प्रत्यभिज्ञानम्; पूर्वापरक्षणदर्शिन एकस्याभावे तदनुपपत्तेः। शङ्कते—**तेनेदं सदृशमिति**। **अयमर्थः**—विकल्पप्रत्ययोऽयं, विकल्पश्च स्वाकारं बाह्यतयाध्यवस्यति, न तु तत्त्वतः पूर्वापरौ क्षणौ तयोः सादृश्यं वा गृह्णाति। तत्कथमेकस्यानेकदर्शिनः स्थिरस्य प्रसङ्ग इति ? निराकरोति—**न। तेनेदमिति भिन्नपदार्थोपादानादिति**। नानापदार्थसंभिन्नवाक्यार्थाभासस्तावदयं विकल्पः प्रथते। तत्रैते नानापदार्था न प्रथन्त इति ब्रुवाणः स्वसंवेदनं बाधेत। न चैकस्य ज्ञानस्य नानाकारत्वं संभवति; एकत्वविरोधात्। नच तावन्त्येव ज्ञानानीति युक्तम्; तथासति प्रत्याकारं ज्ञानानां समाप्तेस्तेषां च परस्परवार्ताज्ञानाभावान्नानेत्येव न स्यात्। तस्मात् पूर्वापरक्षणतत्सादृश्यगोचरत्वं ज्ञानस्य वक्तव्यम्। न चैतत्पूर्वापरक्षणावस्थायिनमेकं ज्ञातारं विनेति क्षणभङ्गभङ्गप्रसङ्गः। यद्युच्येत अस्त्येतस्मिन् विकल्पे तेनेदं सदृशमिति पदद्वयप्रयोगो न त्विह तत्तेदन्तास्पदौ पदार्थौ तयोश्च सादृश्यमिति विवक्षितम्, अपित्वेवमाकारता ज्ञानस्य कल्पितेति,

## वेदान्तकल्पतरुः।

पूर्वोत्तरक्षणद्वयग्रहणाभावे तेनेदमित्याकारप्रत्ययोदयायोगाद्भाष्यस्थशङ्कानुपपत्तिमाशङ्क्याह—**न तु तत्त्वत इति**। क्षणभङ्गवादी प्रष्टव्यः तेनेदं सदृशमिति प्रत्यये तत्तेदन्तावच्छिन्नावर्थौ तयोः सादृश्यं च किं न भासन्ते, भासमानानि वा किं ज्ञानस्याकाराः, उत तस्माद्भिन्नानि, यदा ज्ञानाकारत्वं तदा तज्ज्ञानं किमेकमुत नानेति। **नाद्य** इत्याह—**स्वसंवेदनमिति**। ज्ञानाकारत्वपक्षे एकस्य नानात्वं व्याहतमित्याह—**न चैकस्येति**। ज्ञानभेदं निराचष्टे—**न च तावन्तीति**। एकज्ञानेन नानापदार्थोल्लेखे हि नाना इत्युल्लेखो भवति, न ज्ञानभेदे इत्यर्थः। परिशेषाज्ज्ञानाद्भिन्नोऽर्थोऽभ्युपेयस्तस्य च नानाकारस्य तत्तेदन्तास्पदस्य परामर्शः स्थायिन्यात्मनि सति संभवतीत्याह—**तस्मादिति। ननु** न वयमर्थस्य ज्ञानेऽवभासमपजानीमहे, येन प्रतीतिं विरुन्धीमहि, किं तु सोऽर्थः प्रतीतावारोपितो न बहिरस्ति, न च प्रतीतितावन्मात्रः (?) ततश्च न ज्ञानस्यैकस्य नानार्थाकारत्वप्रयुक्तो व्याघातो नच बाह्यार्थाभ्युपगमप्रसङ्ग इति। विकल्पप्रत्ययोऽयमित्यादिशङ्काग्रन्थोक्तमर्थमाविष्करोति—**यदुच्येतेति**। कल्पितोऽपि ज्ञानेऽर्थाकारः तस्माद्भिन्नोऽभिन्नो वेति वक्तव्यम्। अनिर्वाच्यत्वानङ्गीकाराद्, भिन्नत्वे ज्ञानान्तरवदकल्पितः स्यात्, तथाच तेनेतीदमिति सदृशमिति च प्रतिभासमानानामर्थानामेकज्ञानाभेदाभ्युपगमे परस्पर-

## कल्पतरुपरिमलः।

षणे दत्ते पश्चाद्वायुवारणार्थमस्पर्शत्वे सतीति विशेषणं देयम्। प्रथममेव तस्मिन् दत्ते तु एकविशेषणं नापेक्षितम् ॥ २४ ॥ **एकस्य नानाकारत्वं व्याहतमिति**। ज्ञानातिरिक्ताकारानभ्युपगमादाकारनानात्वं ज्ञाननानात्वमेव पर्यवस्येदित्यर्थः। **एकज्ञानेनेति**। एकेनैव ज्ञानेन तत्तेदन्तावच्छिन्ननानापदार्थोल्लेखे सत्येव तेनेदं सदृशमिति सादृश्यस्फुरणापेक्षितनानालोल्लेखो भवतीत्यर्थः; । **ननु न वयमिति**। प्राग्विकल्पितेषु पक्षेषु तत्तेदन्तासादृश्यानि भासन्त एव, भासमानानिच ज्ञानस्याकारः ज्ञानं चैकमेवेति पक्षः। आकाराणामारोपितत्वेन वास्तवज्ञानैकत्वव्याघातो नास्तीति पुनराशङ्कते—**तथाच तेनेतीदमिति**। यतो भिन्नत्वे ज्ञानान्तरवदकल्पितः स्यात्तत आकाराणां ज्ञानाभेदेऽभ्युपगन्तव्ये परस्परमप्यभेदापत्त्या

**द्वयविषयं स्यात्तेनेदं सदृशमिति वाक्यप्रयोगोऽनर्थकः स्यात्। सादृश्यमित्येव प्रयोगः प्राप्नुयात्। यदा हि लोकप्रसिद्धः पदार्थः परीक्षकैर्न परिगृह्यते, तदा स्वपक्षसिद्धिः परपक्षदोषो वोभयमप्युच्यमानं परीक्षकाणामात्मनश्च यथार्थत्वेन न बुद्धिसंतानमारोहति। एवमेवैषोऽर्थ इति निश्चितं**

## भामती ।

तथाह—**यदा हि लोकप्रसिद्धः पदार्थ इति** । एकाधिकरणविप्रतिषिद्धधर्मद्वयाभ्युपगमो विवादः । तत्रैकः स्वपक्षं साधयत्यन्यश्च तत्साधनं दूषयति । न चैतत्सर्वमसति विकल्पानां बाह्यालम्बनत्वेऽसति च लोकप्रसिद्धपदार्थकत्वे भवितुमर्हति । ज्ञानाकारत्वे हि विकल्पप्रतिभासिनां नित्यत्वानित्यत्वादीनामेकार्थविषयत्वाभावात् ज्ञानानां च धर्मिणां भेदान्न विरोधः । नह्यात्मनित्यत्वं बुद्ध्यनित्यत्वं च ब्रुवाणौ विप्रतिपद्येते । न चालौकिकार्थेनानित्यशब्देनात्मनि विभुत्वं विवक्षित्वाऽनित्यशब्दं प्रयुञ्जानो लौकिकार्थं नित्यशब्दमात्मनि प्रयुञ्जानेन विप्रतिपद्यते । तस्मादनेन स्वपक्षं प्रतितिष्ठापयिषता परपक्षसाधनं च निराचिकीर्षता विकल्पानां लोकसिद्धपदार्थकता बाह्यालम्बनता च वक्तव्या । यद्युच्येत द्विविधो हि विकल्पानां विषयो ग्राह्यश्चाध्यवसेयश्च । तत्र स्वाकारो ग्राह्योऽध्यवसेयस्तु बाह्यः । तथाच पक्षप्रतिपक्षपरिग्रहलक्षणा विप्रतिपत्तिः प्रसिद्धपदार्थकत्वं चोपपद्यत इत्यत आह—**एवमेवैषोऽर्थ इति निश्चितं यत्तदेव वक्तव्यं, ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत्** । **अयमभिसंधिः**—केयमध्यवसेयता बाह्यस्य? यदि ग्राह्यता, न द्वैविध्यम् । यथान्या सोच्यतां, ननूक्ता तैरेव स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तिरिति । अथ विकल्पाकारस्य कोऽयमध्यवसायः ? किं करणमाहो योजनमुतारोप इति । न तावत् करणम्; नह्यन्यदन्यत् कर्तुं शक्यम् । नहि जातु सहस्रमपि शिल्पिनो घटं पटयितुमीशते । न चान्तरं बाह्येन योजयितुम् । **अपिच** तथासति युक्त इति प्रत्ययः स्यात् । न चास्ति । आरोपोऽपि किं गृह्यमाणे बाह्ये उतागृह्यमाणे । यदि गृह्यमाणे तदा किं विकल्पेनाहो तत्समयजेनाविकल्पकेन । न तावद्विकल्पोऽभिलापसंसर्गयोग्यगोचरोऽशक्याभिलापसमयं स्वलक्षणं देशकालाननुगतं गोचरयितुमर्हति । **यथाहुः**—'अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक् । तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी ॥' इति । नच तत्समयभाविना निर्विकल्पकेन गृह्यमाणे बाह्ये विकल्पेनागृहीते तत्र विकल्पः स्वाका-

## वेदान्तकल्पतरुः ।

मप्यभेदप्रसङ्गः । तथा चेतरेतरभेदेन लोकप्रसिद्धाः पदार्था निह्नूयेरन्, ज्ञानाच्च ज्ञेयस्य भेदः प्रसिद्धः सोऽप्यपलप्तः स्यात् । ओमिति वदन्तं प्रति स्वपक्षसाधनम् । परपक्षाक्षेपानुपपत्तिरुक्ता भाष्ये, तां विशदयति—**एकाधिकरणेति** । इदं नित्यमिदमनित्यमिति भिन्नयोर्ज्ञानयोराकारौ । तथा च धर्मिभेदेन व्यवस्थापनाद्विवादो न स्यादित्यर्थः । असति बाह्यालम्बनत्व इत्येतद्विवृणोति—**ज्ञानाकारत्वे हीति** । **विषयत्वाभावाद्** आश्रितत्वाभावात् । असति च लोकप्रसिद्धपदार्थकत्वे इत्यस्य विवरणं—**न चालौकिकार्थेनेति** । अनित्यशब्दो यद्यलौकिकार्थस्तर्हि तेन विभुत्वमपि वक्तुं शक्यं, तथाच नित्यत्वेन तस्य न विरोध इत्यर्थः । **प्रतितिष्ठापयिषता** स्थापयितुमिच्छता । एवं तावत्तत्तदन्तास्पदादिरर्थो ज्ञानस्यान्तर आकार इति विज्ञानवादिमतं बाह्यार्थवाददूषणमध्येऽपि प्रसङ्गादाशङ्क्य प्रतिचिक्षेप । इदानीमस्ति बाह्योऽर्थः, सतु क्षणिको निर्विकल्पके चकास्ति, सविकल्पप्रत्ययास्तु विकल्पास्तद्गतसादृश्याद्याकारेण निर्भासन्ते, अतो विप्रतिपत्त्यादिव्यवहारसिद्धिरिति बाह्यार्थवादमाश्रित्यैव शङ्कते—**यद्युच्येतेति** । **ननु** स्वग्राहकस्य ज्ञानस्य स्वयं तावद्ग्राह्यं कथमस्य बाह्याकारविषयत्वमत आह—**द्विविधोहीति** । स्वाकारस्य निर्विकल्पस्यावसायाद् अधि उपरि अवसेयोऽध्यवसेयः । अध्यवसेयस्य बाह्यार्थस्य निश्चितत्वादनिश्चितार्थत्वापादकं भाष्यमयुक्तम्, इत्याशङ्क्याह—**अयमभिसंधिरिति** । स्वमेव ज्ञानं प्रतिभासो यस्य तत्तथा । **अनर्थ इति** । अबाह्य इत्यर्थः । तस्मिन् बाह्यात्मत्वाध्यवसायात् प्रवृत्तिर्हानादिर्लोकस्येत्यर्थः । आन्तरस्यानभिधेयस्य ज्ञानाकारस्य तद्विपरीतबाह्याकाररूपेणाध्यवसायो नाम किं तद्रूपेण निष्पादनमुत तेन संबन्धनं किंवा तेनाकारेणारोपणमिति विकल्पार्थः । आन्तरं बाह्येन सह योजयितुं च नेशत इति योजना । गृह्यमाणे बाह्ये ज्ञानाकारस्यान्तरस्यारोप इति पक्षेऽधिष्ठानस्य बाह्यस्य केन ग्रहणं किं यस्याकार आरोप्यः तेनैव सविकल्पकप्रत्ययेनोत तत्समसमयभुवा निर्विकल्पकेन । **प्रथमे** किं बाह्यमभिमतं यत्रारोपः स्वलक्षणं वा सामान्यं वा, **नाद्य** इत्याह—**न तावद्विकल्प इति** । विकल्पः सविकल्पकप्रत्ययस्तावदभिलापसंसर्गयोग्यजातिविशिष्टवस्तुगोचरः । अभिलापस्य च शब्दस्य सामान्येनैव सह समयः शक्यो ग्रहीतुं न स्वलक्षणेन । तस्य देशकालाननुगतत्वेनानन्त्यात्तत्र संगतिग्रहायोगात् । अतः शब्दोल्लिखितसविकल्पकप्रत्ययस्य न स्वलक्षणविषयत्वमित्यर्थः । सुखादीनां क्षणिकभावानामात्मा स्वरूपमशक्य-

## कल्पतरुपरिमलः ।

पदार्थानां ज्ञानज्ञेययोश्च लोकप्रसिद्धो भेदो निह्नुतः स्यादित्यर्थः । **तथा च धर्मिभेदेनेति** । कस्यचिज्ज्ञानस्य नित्यत्वमाकारः कस्य चिदनित्यत्वमिति धर्मिभेदेन व्यवस्थायां विरोधाभावाद्वादिनां विवादो न स्यादित्यर्थः । **आन्तरस्यान-**

यत्तदेव वक्तव्यम् । ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत् । न चायं सादृश्यात्संव्यवहारो युक्तः । तद्भावावगमात्तत्सदृशभावानवगमाच्च । भवेदपि कदाचिद्बाह्यवस्तुनि विप्रलम्भसंभवात्तदेवेदं स्यात्तत्सदृशं वेति संदेहः । उपलब्धरि तु संदेहोऽपि न कदाचिद्भवति स एवाहं स्यां तत्सदृशो वेति; य एवाहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति निश्चिततद्भावोपलम्भात् । तस्मादप्यनुपपन्नो वैनाशिकसमयः ॥ २५ ॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

### भामती ।

रमारोपयितुमर्हति । नहि रजतज्ञानाप्रतिभासिनि पुरोवर्तिनि वस्तुनि रजतज्ञानेन शक्यं रजतमारोपयितुम् । अगृह्यमाणे तु बाह्ये स्वाकार इत्येव स्यान्न बाह्य इति । तथा च नारोपणम् । अपिचायं विकल्पः स्वसंवेदनं सन्तं विकल्पं किं वस्तुसन्तं स्वाकारं गृहीत्वा पश्चाद्बाह्यमारोपयति, अथ यदा स्वाकारं गृह्णाति तदैवारोपयति । न तावत् क्षणिकतया क्रमविरहिणो ज्ञानस्य क्रमवर्तिनी ग्रहणारोपणे कल्पेते । तस्माद्यदैव स्वाकारमनर्थं गृह्णाति तदैवार्थमारोपयतीति वक्तव्यम् । न चैतद्युज्यते । स्वाकारो हि स्वसंवेदनप्रत्यक्षतयातिविशदः । बाह्यं चारोप्यमाणमविशदं सत्ततोऽन्यदेव स्यान्न तु स्वाकारः समारोपितः । नच भेदाग्रहमात्रेण समारोपाभिधानम्; वैशद्यावैशद्यरूपतया भेदग्रहस्योक्तत्वात् । अपिचागृह्यमाणे चेद्बाह्येऽबाह्यात्स्वलक्षणाद्भेदाग्रहेण तदभिमुखी प्रवृत्तिः, हन्त तर्हि त्रैलोक्यत एवानेन न भेदो गृहीत इति यत्र क्वचन प्रवर्तेताविशेषात् । एतेन ज्ञानाकारस्यैवालीकस्यापि बाह्यत्वसमारोपः प्रत्युक्तः । तस्मात्सुष्ठूक्तं—'ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः ख्यापयेत्' इति । अपिच सादृश्यनिबन्धनः संव्यवहारस्तेनेदं सदृशमित्येवमाकारबुद्धिनिबन्धनो भवेन्न तु तदेवेदमित्याकारबुद्धिनिबन्धन इत्याह—न चायं सादृश्यात्संव्यवहार इति । ननु ज्वालादिषु सादृश्यादसत्यामपि सादृश्यबुद्धौ तद्भावावगमनिबन्धनः संव्यवहारो दृश्यते यथा, तथेहापि भविष्यतीति पूर्वापरितोषेणाह—भवेदपि कदाचिद्बाह्यवस्तुनीति । तथाहि—विविधजनसंकीर्णगोपुरेण पुरं निविशमानं नरान्तरेभ्य आत्मनिर्धारणायासाधारणं चिह्नं विदधतमुपहसन्ति पाशुपतं पृथग्जना इति ॥२५॥ इतश्चानुपपन्नो वैनाशिकसमय इति । अस्थिरात् कार्योत्पत्तिमिच्छन्तो वैनाशिका अर्थादभावादेव भावोत्पत्तिमाहुः ।

### वेदान्तकल्पतरुः ।

समयः । यतोऽनन्यभागन्याननुगतो हि सः । अतस्तेषां स्वसंवित्तिरसाधारणाकारविषया वित्तिरभिजल्पानुषङ्गिणी न भवति, किंतु निर्विकल्पिकैवेति श्लोकार्थः । एतेन सामान्यात्मकबाह्यस्य सविकल्पकबोधेन ग्रहणमपास्तम् । व्यक्तिमगृहीत्वा तद्ग्रहणायोगाद्व्यक्तेश्चोक्तमार्गेणाशक्यग्रहत्वादिति । द्वितीयं निषेधति—न चेति । विकल्पेनागृहीते बाह्ये विकल्पसमसमयेन निर्विकल्पकेन गृहीते विकल्पः स्वाकारमारोपयितुं नार्हतीत्यर्थः । आद्ययोर्द्वितीयं निषेधति—अगृह्यमाणे त्विति । अधिष्ठानाग्रहणे आरोप्यमात्रं प्रतीयते नारोप इत्यर्थः । एवं तावदधिष्ठानप्रतिभासासंभवाद्बाह्ये ज्ञानस्वरूपस्यारोपः प्रतिषिद्धः, इदानीमारोप्यस्फुरणायोगाच्च नारोप इत्याह—अपि चेति । स्वसंवेदनं सन्तं विकल्पं यदा बाह्यं बाह्यत्वेनारोपयति, तदा किं वस्तुसन्तं स्वाकारं गृहीत्वा पश्चादारोपयतीति योजना । युगपत्स्वाकारस्य ग्रहणं बाह्यत्वेन चारोपणमिति पक्षे किं स्वाकारबाह्ययोरैक्यस्फुरणमारोप उताख्यातिमत इव विवेकाग्रहमात्रम् । नाद्य इत्याह—स्वाकारो हीति । स्वप्रकाशत्वपरप्रकाशत्वाभ्यां भेदावभासान्नैक्यस्फुरणसंभव इत्यर्थः । अन्यदेव स्यात् सिध्येत् प्रथेतेत्यर्थः । ननु स्वाकारः समारोपित इति । यः स्वाकारः स समारोपितात्मको नतु स्यादित्यनुषङ्गः, न स्फुरेदित्येवार्थः । द्वितीये किं बाह्ये गृह्यमाणे विवेकाग्रहो मृषाव्यवहारं प्रसूते अगृह्यमाणे वा । नाद्य इत्याह—न चेति । न द्वितीय इत्याह—अपि चेति । अपिचकारः समुच्चयार्थे । एतदुपपत्तिसाहित्यं प्राच्या वक्ति एवं तावद्वस्तुसन्तमित्यारभ्य । परमार्थज्ञानाकारस्य बाह्यवस्त्वात्मना समारोपः प्रतिक्षिप्तः, इदानीं वासनापरिप्रापितस्य कल्पितज्ञानाकारस्य बाह्ये समारोपं पराकरोति—एतेनेति । तस्यापि स्वप्रकाशज्ञानवत्त्वेन बाह्याद्भेदग्रहस्य समत्वादित्यर्थः । पाशुपतस्य हि तपस्विन आत्मज्ञानाय चिह्नं कुर्वतः प्रमाणाकुशलजनैरप्युपहासादात्मस्वप्रकाशत्वमवगतम् ॥ २५ ॥ बौद्धैरभावस्यार्थक्रियाकारित्वानभ्युपगमात्कथम् अभावाद्भावोत्पत्तिस्तत्सिद्धान्तत्वेनानूद्य निरस्यते ? तत्राह—अस्थि-

### कल्पतरुपरिमलः ।

भिधेयस्येति । अनभिधेयत्वम् अशक्यसमयो ह्यात्मेति स्वयमेव स्फुटीकरिष्यति । व्यक्तेश्चोक्तमार्गेणाशक्यग्रहत्वादिति । यद्यपि मीमांसकमते शक्त्यविषयभूताया अपि व्यक्तेः शक्तिविषयसामान्यसमानवित्तिवेद्यतया शब्दोल्लेखिसविकल्पकप्रत्ययविषयत्वमस्ति; तथापि बौद्धैः स्वलक्षणं निर्विकल्पकमात्रविषय इत्यङ्गीकृतमित्यशक्यग्रहत्वमुक्तम् । पाशुपतस्य

इतश्चानुपपन्नो वैनाशिकसमयः, यतः स्थिरमनुयायिकारणमनभ्युपगच्छतामभावाद्भावोत्पत्तिरित्येतदापद्यते । दर्शयन्ति चाभावाद्भावोत्पत्तिम्—'नानुपमृद्य प्रादुर्भावात्' इति । विनष्टाद्धि किल बीजादङ्कुर उत्पद्यते, तथा विनष्टात्क्षीराद्दधि, मृत्पिण्डाच्च घटः । कूटस्थाच्चेत्कारणात्कार्यमुत्पद्येताविशेषात्सर्वं सर्वत उत्पद्येत । तस्मादभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पद्यमानत्वादभावाद्भावोत्पत्तिरिति मन्यन्ते । तत्रेदमुच्यते—'नासतोऽदृष्टत्वात्' इति । नाभावाद्भाव उत्पद्यते । यद्यभावाद्भाव उत्पद्येताभावत्वाविशेषात्कारणविशेषाभ्युपगमोऽनर्थकः स्यात् । नहि बीजादीनामुपमृदितानां योऽभावस्तस्याभावस्य शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद्विशेषोऽस्ति, येन बीजादेवाङ्कुरो जायते क्षीरादेव दधीत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान्स्यात् । निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन् । न चैवं दृश्यते । यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येतोत्पलादीनामिव नीलत्वादिस्ततो विशेषवत्त्वादेवाभावस्य भावत्वमुत्पलादिवत्प्रसज्येत ।

---

## भामती ।

उक्तमेतदधस्तात् । निरपेक्षात् कार्योत्पत्तौ पुरुषकर्मवैयर्थ्यम् । सापेक्षतायां च क्षणस्याभेद्यत्वेनोपकृतत्वानुपकृतत्वानुपपत्तेः, अनुपकारिणि चापेक्षाभावादक्षणिकत्वप्रसङ्गः । सापेक्षत्वानपेक्षत्वयोश्चान्यतरनिषेधस्यान्यतरविधाननान्तरीयकत्वेन प्रकारान्तराभावान्नास्थिराद्भावाद्भावोत्पत्तिरिति क्षणिकपक्षोऽर्थादभावाद्भावोत्पत्तिरिति परिशिष्यत इत्यर्थः । न केवलमर्थादापद्यते, दर्शयन्ति च—**नानुपमृद्य प्रादुर्भावात्** इति । एतद्विभजते—**विनष्टाद्धि किलेति** । किलकारोऽनिच्छायाम् । **कूटस्थाच्चेत्कारणात् कार्यमुत्पद्येताविशेषात् । सर्वं सर्वत उत्पद्येत । अयमभिसंधिः**—कूटस्थो हि कार्यजननस्वभावो वा स्यादतत्स्वभावो वा । स चेत्कार्यजननस्वभावस्ततो यावदनेन कार्यं कर्तव्यं तावत्सहसैव कुर्यात्; समर्थस्य क्षेपायोगात् । अतत्स्वभावे तु न कदाचिदपि कुर्यात् । यद्युच्येत समर्थोऽपि क्रमवत्सहकारिसचिवः क्रमेण कार्याणि करोतीति, तदयुक्तम्; विकल्पासहत्वात् । किमस्य सहकारिणः कंचिदुपकारमादधति न वा । अनाधानेऽनुपकारितया सहकारिणो नापेक्षेरन् । आधानेऽपि भिन्नमभिन्नं वोपकारमादध्युः । अभेदे तदेवाभिहतमिति कौटस्थ्यं व्याहन्येत । भेदे तूपकारस्य तस्मिन् सति कार्यस्य भावादसति चाभावात्सत्यपि कूटस्थे कार्यानुत्पादादन्वयव्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति नार्थक्रियाकारीति भावः । **तदुक्तम्**—'वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् । चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः ॥' । तथा चाकिंचित्करादपि चेत् कूटस्थात्कार्यं जायेत, सर्वं सर्वस्माज्जायेतेति सूक्तम् । उपसंहरति—**तस्मादभावग्रस्तेभ्य इति । तत्रेदमुच्यते—नासतोऽदृष्टत्वादिति** । नाभावात् कार्योत्पत्तिः । कस्मात् ? अदृष्टत्वात् । नहि शशविषाणादङ्कुरादीनां कार्याणामुत्पत्तिर्दृश्यते । यदि त्वभावाद्भावोत्पत्तिः स्यात्ततोऽभावत्वाविशेषात् शशविषाणादिभ्योऽप्यङ्कुरोत्पत्तिः । नह्यभावो विशि-

## वेदान्तकल्पतरुः ।

**रादिति** । आपाद्यानुवादोऽयमिति वदिष्यन् क्षणिकस्य कारणत्वासंभवमाह—**उक्तमेतदित्यादिना** । क्षणिकं कारणमिति वदन् प्रष्टव्यः तत्किमनपेक्षं सापेक्षं वेति । **नाद्यः**; इतरेतरप्रत्ययत्वा ( व्या. अ. २ पा. २ सू. १९ ) दिति सूत्रविवरणावसरे यद्यन्त्यक्षणप्राप्ता अनपेक्षा इत्यादिना निरस्तत्वादित्यर्थः । **द्वितीयोऽपि** तत्सूत्रव्याख्यानसमय एव न क्षणिकपक्ष उपकार्योपकारकभावोऽस्तीत्यादिना ग्रन्थेन प्रत्युक्तः । तत्सूत्रोक्तं निरासप्रकारमनुवदति—**सापेक्षतायां चेति** । सापेक्षतायां चाक्षणिकत्वप्रसङ्ग इत्यन्वयः । क्षणिकोऽपि सापेक्ष इति वदन् प्रष्टव्यः स किमन्यकृतोपकारस्याश्रयो न वेति । **आद्यस्य** निरसनं—**क्षणस्येति** । पूर्वमनुपकृतस्य पश्चादुपकारसंबन्धे ह्युपकृतत्वं ज्ञातुं शक्यम् । इतरथोपकारस्य स्वाभाविकत्वसंभवेनान्यकृतत्वासिद्धिरित्यर्थः । **द्वितीयं** प्रत्याह—**अनुपकारिणि चेति** । ततश्चोपकृतत्वानुपकृतत्वज्ञानाय क्षणद्वयस्थायित्वं वस्तुनो मन्तव्यमित्युक्तं भवति । यदि क्षणिकस्य नोपकृतत्वं संभवति, अनुपकृतस्य च न सापेक्षत्वं, निरपेक्षस्य च कारणत्वमतिप्रसङ्गि, तर्हि क्षणिको न सापेक्षो, नापि निरपेक्षः, किंतु प्रकारान्तरयोगीत्याशङ्क्याह—**सापेक्षत्वानपेक्षत्वयोश्चेति** । कूटस्थस्यापि नियतशक्तिकत्वाद्भाष्ये सर्वतः सर्वोत्पत्तिप्रसङ्गानुपपत्तिमाशङ्क्य सर्वतः सर्वावस्थात्तज्जन्यसर्वोत्पत्तिरिति कार्ययौगपद्यापत्तिपरतया व्याचष्टे—**अयमभिसंधिरिति** । अन्यकृतोपकारस्य भावादभेदे सत्युपकारशब्देन भावरूपमेवाभिहितं स्यात्, तस्य चान्यकृतत्वे कौटस्थ्यं व्याहन्येतेत्यर्थः । **चर्मोपमश्चेत्** स्थिरः कारणत्वाभिमतः पदार्थ उपकाराश्रयश्चेदित्यर्थः । उपकारादभेदे भावस्य स भावोऽनित्यः भेदे स उपकारोऽनित्यः, स एव च कारणं न भाव इत्यर्थः । उपकारानाश्रयत्वे दूषणम्—**असत्फल इति** । यदुक्तमन्वय-

नाप्यभावः कस्यचिदुत्पत्तिहेतुः स्यात्, अभावत्वादेव, शशविषाणादिवत् । अभावाच्च भावोत्पत्तावभावान्वितमेव सर्वं कार्यं स्यात् । न चैवं दृश्यते; सर्वस्य च वस्तुनः स्वेन स्वेन रूपेण भावात्मनैवोपलभ्यमानत्वात् । नच मृदन्विताः शरावादयो भावास्तन्त्वादिविकाराः केनचिदभ्युपगम्यन्ते । मृद्विकारानेव तु मृदन्वितान्भावांल्लोकः प्रत्येति । यत्तूक्तं स्वरूपोपमर्दमन्तरेण कस्यचित्कूटस्थस्य वस्तुनः कारणत्वानुपपत्तेरभावाद्भावोत्पत्तिर्भवितुमर्हतीति, तदुरुक्तम्; स्थिरस्वभावानामेव सुवर्णादीनां प्रत्यभिज्ञायमानानां रुचकादिकार्यकारणभावदर्शनात् । येष्वपि बीजादिषु स्वरूपोपमर्दो लक्ष्यते, तेष्वपि नासावुपमृद्यमाना पूर्वावस्थोत्तरावस्थायाः कारणमभ्युपगम्यते; अनुपमृद्यमानानामेवानुयायिनां बीजाद्यवयवानामङ्कुरादिकारणभावाभ्युपगमात् । तस्मादसद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात्सद्भ्यश्च सुवर्णादिभ्यः सदुत्पत्तिदर्शनादनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः । अपिच चतुर्भिश्चित्तचैत्ता उत्पद्यन्ते, परमाणुभ्यश्च भूतभौतिकलक्षणः समुदाय उत्पद्यत इत्यभ्युपगम्य पुनरभावाद्भावोत्पत्तिं कल्पयद्भिरभ्युपगतमपह्नुवानैर्वैनाशिकैः सर्वो लोक आकुलीक्रियते ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यदि चाभावाद्भावोत्पत्तिरभ्युपगम्येत, एवंसत्युदासीनानामनीहमानानामपि जनानामभिमतसिद्धिः स्यात्; अभावस्य सुलभत्वात् । कृषीवलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात् । कुलालस्य च मृत्संस्क्रियायामप्रयतमानस्याप्यमत्रोत्पत्तिः । तन्तुवायस्यापि तन्तूनतन्वानस्यापि तन्वानस्येव वस्त्रलाभः । स्वर्गापवर्गयोश्च न कश्चित्कथंचित्समीहेत । नचैतद्युज्यतेऽभ्युपगम्यते वा केनचित् । तस्मादप्यनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः ॥ २७ ॥ इति चतुर्थं समुदायाधिकरणम् ॥

---

### भामती ।

ष्यते । विशेषणयोगे वा सोऽपि भावः स्यान्न निरुपाख्य इत्यर्थः । विशेषणयोगमभावस्याभ्युपेत्याह—**नाप्यभावः कस्यचिदुत्पत्तिहेतुरिति** । अपि च यद्येनानन्वितं न तत्तस्य विकारः, यथा घटशरावोदञ्चादयो हेम्नानन्विता न हेमविकाराः । अनन्विताश्चेते विकारा अभावेन । तस्मान्नाभावविकाराः । भावविकारास्तु ते, भावस्य तेनान्वितत्वादित्याह—**अभावाच्च भावोत्पत्ताविति** । अभावकारणवादिनो वचनमनुभाष्य दूषयति—**यत्तूक्तमिति** । स्थिरोऽपि भावः क्रमवत्सहकारिसमवधानात् क्रमेण कार्याणि करोति । न चानुपकारकाः सहकारिणः । स चास्य सहकारिभिराधीयमान उपकारो न भिन्नो नाप्यभिन्नः, किंत्वनिर्वाच्य एव । अनिर्वाच्याच्च कार्यमप्यनिर्वाच्यमेव जायते । नचैतावता स्थिरस्याकारणत्वम्; तदुपादानत्वात्कार्यस्य, रज्जूपादानत्वमिव भुजङ्गस्येत्युक्तम् । **तथाच श्रुतिः**—'मृत्तिकेत्येव सत्यम्' इति । **अपिच** येऽपि सर्वतो विलक्षणानि स्वलक्षणानि वस्तुसन्त्यास्थिषत, तेषामपि किमिति बीजजातीयेभ्योऽङ्कुरजातीयान्येव जायन्ते कार्याणि, नतु क्रमेलकजातीयानि । नहि बीजाद्बीजान्तरस्य वा क्रमेलकस्य वात्यन्तवैलक्षण्ये कश्चिद्विशेषः । नच बीजाङ्कुरत्वे सामान्ये परमार्थसती, येनैतयोर्भाविकः कार्यकारणभावो भवेत् । तस्मात्काल्पनिकादेव स्वलक्षणोपादानाद्बीजजातीयात्तथाविधस्यैवाङ्कुरजातीयस्योत्पत्तिनियम आस्थेयः ।

### वेदान्तकल्पतरुः ।

व्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति, तत्राह—**न चैतावतेति** । परमार्थाश्रितत्वात्कार्यकल्पनाया भाव उपादानं तद्धर्मस्त्वनिर्वाच्य उपकारः कार्योपयोगीत्यर्थः । श्रुतौ मृद्दृष्टान्तस्य सत्यत्वाभिधानाद् दार्ष्टान्तिकस्य मूलकारणस्य सत्यत्वमुक्तम् । भेदाभेदाभ्यामनिर्वाच्येनोपकारेणोपकृतं कारणं कार्यमनिर्वाच्यं करोतीत्युक्तम्, तदयुक्तम्; भेदनिषेधे अभेदापत्तेरभेदनिषेधे च भेदप्रसङ्गादित्याशङ्क्य बौद्धं प्रति प्रतिबन्दीमाह—**अपि च येऽपीति** । किं व्यक्त्योरेव कार्यकारणभावः सामान्ययोर्वा तदुपहितव्यक्त्योर्वा । **न प्रथमो**ऽतिप्रसङ्गादित्यभिसंधाय **द्वितीये** सामान्ये वस्तुनी अवस्तुनी वा, **नाद्यो**ऽपराद्धान्तादित्याह—**नच बीजाङ्कुरत्वे इति** । अवस्तुनोरेव सामान्ययोः कार्यकारणभावोऽप्यर्थक्रियाकारिणः सत्त्वाभ्युपगमादपराद्धान्तावह एव । अवस्तुसामान्योपहितानां व्यक्तीनां कार्यकारणत्वाभ्युपगमे तद्वदुपकारकार्ययोरप्यवस्तुत्वसंभवसिद्धिरित्याह—**तस्मादिति** । **काल्पनिकात्** काल्पनिकसामान्योपहितादित्यर्थः । यदि सामान्योप-

( ५ अधिकरणम् ) **नाभाव उपलब्धेः ॥ २८ ॥**

**एवं बाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषूद्भावितेषु विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते। केषांचित्किल विनेयानां बाह्ये वस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवादप्रक्रियेयं विरचिता। नासौ सुगताभिप्रायः। तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः। तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते;**

### भामती।

अन्यथा कार्यहेतुकानुमानोच्छेदप्रसङ्गः। दिङ्मात्रमत्र सूचितम्। प्रपञ्चस्तु ब्रह्मतत्त्वसमीक्षान्यायकणिकयोः कृत इति नेह प्रतन्यते विस्तरभयात् ॥ २६ ॥ **उदासीनानामपि चैवं सिद्धिः।** भाष्यमस्य सुगमम् ॥ २७ ॥ **इति चतुर्थं समुदायाधिकरणम् ॥**

**नाभाव उपलब्धेः ॥ २८ ॥**

पूर्वाधिकरणसंगतिमाह—**एवमिति।** बाह्यार्थवादिभ्यो विज्ञानमात्रवादिनां सुगताभिप्रेततया विशेषमाह—**केषांचित्किलेति।** अथ प्रमाता प्रमाणं प्रमेयं प्रमितिरिति हि चतसृषु विधासु तत्त्वपरिसमाप्तिः, आसामन्यतमाभावेऽपि तत्त्वस्याव्यवस्थानात्। तस्मादनेन विज्ञानस्कन्धमात्रं तत्त्वं व्यवस्थापयता चतस्रो विधा एषितव्याः, तथाच न विज्ञानस्कन्धमात्रं तत्त्वम्। नह्यस्ति संभवो विज्ञानमात्रं चतस्रो विधाश्चेत्यत आह—**तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणेति।** यद्यप्यनुभवान्नान्योऽनुभाव्योऽनुभविताऽनुभवनम्; तथापि बुद्ध्यारूढेन बुद्धिपरिकल्पितेनान्तस्थ एवैष प्रमाणप्रमेयफलव्यवहारः प्रमातृव्यवहारश्चेत्यपि द्रष्टव्यम्, न पारमार्थिक इत्यर्थः। एवंच न सिद्धसाधनम्। नहि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति, किंत्वनिर्वचनीयं नीलादीति। **तथाहि—स्वरूपविज्ञानस्या-**

### वेदान्तकल्पतरुः।

धानमन्तरेण व्यक्तीनामेव कार्यकारणभावस्तत्र दोषान्तरमाह—**अन्यथेति।** अनुमानं हि सामान्योपाधौ प्रवर्तते, व्यक्तीनामानन्त्येन व्याप्तिग्रहायोगादित्यर्थः ॥ २६ ॥ २७ ॥ **इति चतुर्थं समुदायाधिकरणम् ॥**[1]

**नाभाव उपलब्धेः ॥ २८ ॥**

रूपादिरहितब्रह्मजगदुपादानत्ववादिसमन्वयस्य विज्ञानं नीलाद्याकारमित्यनुमानविरोधाविरोधसंदेहे पूर्वोक्तसमुदायाप्राप्त्यादिदूषणान्युपजीव्य बाह्यार्थापलापाद्धेतुहेतुमल्लक्षणां सङ्गतिमाहेत्यर्थः। व्याघातेन पूर्वपक्षानुत्थानमाशङ्कते—**अथेति।** चोद्यप्रारम्भार्थोऽथशब्दः। वस्तुव्यवस्थित्यै प्रमाणाद्यभ्युपगम्य तन्निषेधो व्याघात इत्यर्थः। **बुद्धिपरिकल्पितेनेति।** विभागमात्रं ज्ञेयाद्याकाराणां परिकल्पितं ज्ञेयादिरूपत्वं बुद्धेर्वास्तवमेव। **ननु** नीलाद्याकारं विज्ञानम् इत्यनुमाने वेदान्तिनां सिद्धसाधनम्; ब्रह्मणो विज्ञानात्मकस्य नीलाद्यात्मकत्वाद्, अन्यथा तदद्वैतासिद्धेरत आह—**एवं चेति।** बौद्धा हि वित्तेर्विज्ञानस्यान्तरं नीलादिरूपमाचक्षते, न वयमित्यर्थः। बुद्धौ परिकल्पितं ज्ञेयादिविभागमुपपादयति—**तथा**

### कल्पतरुपरिमलः।

**तपस्विन इति।** केचन पाशुपताः स्वकीयशिवभागवतचिह्नतया पूर्वाचारप्राप्तं जङ्घायां किङ्किणीबन्धादिकं कुर्वन्ति, तत् पृथग्जनाः जनसंबाधे स्वपरविपर्यासो मा भूदिति कृतं चिह्नमित्यारोप्य कथमस्य विपर्यासस्य प्रसक्तिरित्युपहसन्ति तेनापामरप्रसिद्धमात्मप्रथनमित्यर्थः। वर्षातपाभ्यां व्योम्नः किं फलमस्ति वर्षेणार्द्रत्वम् आतपेन शुष्कत्वं वा फलं नास्तीत्यर्थः। किं तु चर्मणि वर्षातपयोः फलमस्तीति पूर्वार्धस्यार्थे स्थिते उत्तरार्धस्यार्थमाह—**चर्मोपमश्चेत्यादिना** ॥ २६ ॥ २७ ॥ **इति चतुर्थं समुदायाधिकरणम् ॥**

**नाभाव उपलब्धेः ॥ २८ ॥**

---

१ **तत्र सूत्राणि १०**—समुदाय उभयहेतुकेऽपि तदप्राप्तिः १८ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् १९ उत्तरोत्पादे च पूर्वनिरोधात् २० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २१ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् २२ उभयथा च दोषात् २३ आकाशे चाविशेषात् २४ अनुस्मृतेश्च २५ नासतो दृष्टत्वात् २६ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

**सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात्। कथं पुनरवगम्यतेऽन्तस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति ? तदसंभवादित्याह। स हि बाह्यो-**

### भामती।

सत्याकारयुक्तं प्रमेयं, प्रमेयप्रकाशनं प्रमाणफलं, तत्प्रकाशनशक्तिः प्रमाणम्। बाह्यवादिनोरपि वैभाषिकसौत्रान्तिकयोः काल्पनिक एव प्रमाणफलव्यवहारोऽभिमत इत्याह—**सत्यपि बाह्येऽर्थ इति**। भिन्नाधिकरणत्वे हि प्रमाणफलयोस्तद्भावो न स्यात्। नहि खदिरगोचरे परशौ पलाशे द्वैधीभावो भवति। तस्मादनयोरैकाधिकरण्यं वक्तव्यम्। कथंच तद्भवति ? यदि ज्ञानस्थे एव प्रमाणफले भवतः। नच ज्ञानं स्वलक्षणमनंशमंशाभ्यां वस्तुसद्भ्यां युज्यते। तदेव ज्ञानमज्ञानव्यावृत्तिकल्पितज्ञानत्वांशं फलम्। अशक्तिव्यावृत्तिपरिकल्पितात्मानात्मप्रकाशनशक्त्यंशं प्रमाणम्। प्रमेयं त्वस्य बाह्यमेव। एवं सौत्रान्तिकसमयेऽपि। ज्ञानस्यार्थसारूप्यमनीलाकारव्यावृत्त्या कल्पितनीलाकारत्वं प्रमाणं; व्यवस्थापनहेतुत्वात्। अज्ञानव्यावृत्तिकल्पितं च ज्ञानत्वं फलम्; व्यवस्थाप्यत्वात्। **तथाचाहुः**—'नहि वित्तिसत्तैव तद्वेदना युक्ता; तस्याः सर्वत्राविशेषात्। तां तु सारूप्यमाविशत्सरूपयत्तद्घटयेत्' इति। प्रश्नपूर्वकं बाह्यार्थाभाव उपपत्तीराह—**कथं पुनरवगम्यत इति**। स हि विज्ञानालम्बनत्वाभिमतो बाह्योऽर्थः परमाणुस्तावन्न संभवति।

### वेदान्तकल्पतरुः।

**हीति। असत्याकारेति**। आकारस्यासत्यत्वं बाह्यरूपेणासत्येनान्तररूपेण सत्येनाकारेण युक्तमित्यर्थः। **ननु** बाह्यार्थसत्यत्वे प्रमाणादयः सत्याः सिध्यन्ति, किं कल्पितत्वेनेत्याशङ्क्य तन्मते प्रमेयविभागः सत्य उपलभ्येतापि, प्रमाणफलविभागस्तावन्मिथ्या, तथा चार्थात्प्रमेयमिथ्यात्वमापत्स्यत इत्यभिप्रेत्याह—**बाह्यवादिनोरपीति**। वैभाषिकमते प्रमाणफलविभागस्य कल्पितत्वमुपपादयति—**भिन्नाधिकरणत्वे हीति**। प्रमाणं हि करणं प्रमितिः फलं तयोर्भिन्नाधिकरणत्वे करणफलभावो न स्यात्। करणफलभाव एकाधिकरणयोरेवेत्यत्र दृष्टान्तमाह—**न हीति**। यद्यपि परशुः स्वावयवेषु समवेतो द्वैधीभावस्तु खदिरे; तथापि व्यापाराविष्टकरणीभूतः परशुः संयोगेन खदिराधिकरण इति करणफलयोरैकाधिकरण्यम्। भवतु प्रमाणफलयोरेकाधिकरणता, तावता कथं तद्विभागस्य कल्पितत्वसिद्धिरत आह—**कथं चेति**। यदि ज्ञानस्थे एव प्रमाणफले भवतः, तर्ह्येव तदैकाधिकरण्यं भवति; इतरथा कथं भवतीत्यर्थः। **ननु** भवेतां ज्ञानस्थे एव प्रमाणफलेऽतो वा किं जातमत आह—**नच ज्ञानं स्वलक्षणमिति**। न तावत् कुण्डे बदरवज् ज्ञाने प्रमाणफलयोरवस्थानसंभवः; ज्ञानस्यासंयोगित्वात्, तादात्म्येन तु स्यादवस्थानं, नच वस्तुतो भिन्नाभ्यामेकस्यैक्योपपत्तिस्ततः काल्पनिकप्रमाणफलभेद इत्यर्थः। तमेव दर्शयति—**तदेवेति**। अज्ञानव्यावृत्त्यात्मकापोहरूपेण कल्पितो ज्ञानत्वसामान्यरूपोंऽशो यस्य तत्तथोक्तम्। अशक्तिव्यावृत्तिरूपेण कल्पिता विज्ञानस्यात्मानं स्वमनात्मानमर्थं प्रति च या प्रकाशनशक्तिः सोंऽशो यस्य तद्विज्ञानं तथा। तच्च प्रमाणमित्यर्थः। वैभाषिकस्य बाह्योऽर्थः प्रत्यक्षः सौत्रान्तिकस्य ज्ञानगताकारवैचित्र्येणानुमेयः। तन्मतेऽपि प्रमाणफलविभागस्य कल्पितत्वमाह—**एवमिति**। ज्ञानगतं बाह्यनीलसारूप्यं भासमानमनीलाकारापोहरूपेण कल्पितं, तच्च बाह्यमर्थं व्यवस्थापयति, प्रतिबिम्बमिव बिम्बम्, अतः प्रमाणम्। ज्ञानात्सकाशाद्यदन्यत्तद्व्यावृत्तिरूपेण कल्पितं ज्ञानत्वं सामान्यं फलं, तद्धि सारूप्यबलान्नीलज्ञानत्वेन व्यवस्थाप्यते। अस्मिन्नपि मते प्रमेयं परमार्थभिन्नमिति सारूप्यस्य ज्ञानज्ञेयभावव्यवस्थापकत्वे सौत्रान्तिकवचनमाह—**तथा चेति। वित्तिसत्तैव तद्वेदना**। तस्यार्थस्य वेदना न युक्ता। कुतः ? तस्या वित्तिसत्तायाः सर्वत्रार्थे विशेषाभावात्। ज्ञानमात्रं हि सर्वज्ञेयसाधारणम्। तस्मात्तां तु वित्तिं सारूप्यमाविशद् घटयेत्। किं घटयेदित्यत आह—**सरूपयत्तदिति**। तद्बाह्यं वस्तु **सरूपयत्** स्वेन रूपेण सरूपां वित्तिं कुर्वद् **घटयेद्** वित्त्या सह विषयभावेन योजयेदित्यर्थः। सरूपयन्तमिति पाठे अर्थमिति शेषः। एवं संभाविते पूर्वपक्षे साधकप्रमाणानि कथयतीत्याह—**प्रश्नपूर्वकमिति**। स्तम्भाद्यर्थः किं परमाणुस्तत्कृतोऽवयवी वा। **प्रथमे** किं परमाणुमात्रस्तद्गोचरप्रतीतिविशेषकृतो वा। तत्र परमाणुमात्रत्वं निषेधति—**स हीति**। भासमानाद-

### कल्पतरुपरिमलः।

**तथा चार्थात्प्रमेयमिथ्यात्वमापत्स्यत इति**। यदा ज्ञानाधिकरणके प्रमाणफले अशक्तिव्यावृत्त्यज्ञानव्यावृत्त्यादिसामान्यात्मके, तदा तन्मते सामान्यस्य कल्पितत्वात्कल्पितेन प्रमाणेन तत्फलेन च वस्तुसिद्ध्यभावादर्थाद्बाह्यवस्तुमिथ्यात्वमापततीत्यर्थः। **न च वस्तुतो भिन्नाभ्यामिति**। वस्तुतो भिन्नाभ्यां प्रमाणफलाभ्याम् एकस्याभेदानुपपत्तेरेकज्ञानाभेदात्तयोर्न भेदसिद्धिरित्यर्थः। मा भूत्प्रमाणफलयोर्भेदसिद्धिः; सत्येन ज्ञानेन तादात्म्यात्, तयोः स्वरूपतः सत्यत्वसिद्धौ तावता तत्प्रमेयस्य बाह्यवस्तुनः सत्यत्वं सिद्ध्येदित्याशङ्क्य तयोरन्यापोहात्मकसामान्यरूपतया स्वरूपतोऽप्यसत्यत्वमुपपादयतीत्यवतारयति—**तमेव दर्शयतीति। सरूपयन्तमिति तु पाठे अर्थमिति शेष इति**। सरूपयत्तदिति पाठे सरूपय-

**ऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युस्तत्समूहा वा स्तम्भादयः स्युः । तत्र न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति; परमाण्वाभासज्ञानानुपपत्तेः । नापि तत्समूहाः स्तम्भादयः, तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात् । एवं जात्यादी-**

## भामती ।

एकस्थूलनीलाभासं हि ज्ञानं न परमसूक्ष्मपरमाण्वाभासम् । न चान्याभासमन्यगोचरं भवितुमर्हति; अतिप्रसङ्गेन सर्वगोचरतया सर्वसर्वज्ञत्वप्रसङ्गात् । नच—प्रतिभासधर्मः स्थौल्यमिति—युक्तम्; विकल्पासहत्वात् । किमयं प्रतिभासस्य ज्ञानस्य धर्म उत प्रतिभासनकालेऽर्थस्य धर्मः । **यदि पूर्वः कल्पः,** अद्धा, तथासति हि स्वांशालम्बनमेव विज्ञानमभ्युपेतं भवति । एवंच कः प्रतिकूलीभवत्यनुकूलमाचरति । **द्वितीय इति चेत्, तथाहि**—रूपपरमाणव एव निरन्तरमुत्पन्ना एकविज्ञानोपारोहिणः स्थौल्यम् । नचात्र कस्यचिद्भ्रान्तता । नहि न ते रूपपरमाणवः । नच न निरन्तरमुत्पन्नाः । नचैकविज्ञानानुपारोहिणः । तेन मा भून्नीलत्वादिवत्परमाणुधर्मः; प्रत्येकं परमाणुष्वभावात् । प्रतिभासदशापन्नानां तु तेषां भविष्यति बहुत्वादिवत्सांवृतं स्थौल्यम् । **यथाहुः**—'ग्रहेऽनेकस्य चैकेन किंचिद्रूपं हि गृह्यते । सांवृतं प्रतिभासस्थं तदेकात्मन्यसंभवात् ॥ १ ॥ नच तद्दर्शनं भ्रान्तं नानावस्तुग्रहाद्यतः । सांवृतं ग्रहणं नान्यन्न च वस्तुग्रहो भ्रमः ॥ २ ॥' इति । तन्न; नैरन्तर्यावभासस्य भ्रान्तत्वात् । गन्धरसस्पर्शपरमाण्वन्तरिता हि ते रूपपरमाणवो न निरन्तराः । तस्मादारात्सान्तरेषु वृक्षेष्वेकघनवनप्रत्ययवदेष स्थूलप्रत्ययः परमाणुषु सान्तरेषु भ्रान्त एवेति पश्यामः । तस्मात् कल्पनापोढत्वेऽपि भ्रान्तत्वाद्घटादिप्रत्ययस्य पीतशङ्खादिज्ञानवन्न प्रत्यक्षता परमाणुगोचरत्वाभ्युपगमे । तदिदमुक्तम्, **न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति । नापि तत्समूहा वा स्तम्भादयो**ऽवयविनः । तेषामभेदे परमाणुभ्यः परमाणव एव । तत्र चोक्तं दूषणम् । भेदे तु गवाश्वस्येवात्यन्तवैलक्षण्यमिति न तादात्म्यम् । समवायश्च निराकृत इति । एवं भेदाभेदविकल्पेन जातिगुणकर्मादीनपि प्रत्याचक्षीत । तस्माद्यद्यत्प्रतिभासते तस्य सर्वस्य विचारासहत्वात्, अप्रतिभासमानसद्भावे च प्रमाणाभावान्न

## वेदान्तकल्पतरुः ।

न्यगोचरत्वमात्रमतिप्रसङ्गः । **आद्यद्वितीयं** द्वेधा विकल्प्य दूषयति—**न चेति** । प्रतिभासनकाले तदुपाधिं कृत्वा अर्थस्य धर्म इत्यर्थः । **स्वांशः** स्वाकारः । **ग्रहेऽनेकस्येति** । अनेकस्य परमाणोरेकेन ज्ञानेन ग्रहणे किंचित् स्थूलं रूपं गृह्यते तच्च सांवृतम् । सांवृतत्वस्य विवरणं—**प्रतिभासस्थमिति** । विशकलितपरमाणुतत्त्वाच्छादकत्वात्संवृतिर्बुद्धिः । स्वाभाविकत्वाभावे हेतुमाह—**एकात्मनीति** । एकपरमाण्वात्मनि औपाधिकविषयत्वे स्थूलबुद्धेर्भ्रान्तित्वमाशङ्क्य द्वितीयश्लोकेन परिह्रियते—**न चेति** । तस्य स्थूलस्य दर्शनं न च भ्रान्तम्; यतः कारणान्नानावस्तूनां परमाणूनां ग्रहणात् सकाशात् सांवृतस्य स्थूलस्य ग्रहणमन्यन्न भवति । यएव हि भिन्नधीगृहीतास्त एव निरन्तराः परमाणव एकधिया गृह्यमाणाः स्थूलमिति निर्भासन्ते । ते च वस्त्वेव वस्तुग्रहश्च न भ्रम इत्यर्थः । एवं स्थूलनीलावभासस्य सालम्बनत्वं बाह्यार्थवादिना समर्थितं विज्ञानवादी दूषयति—**तन्नेति** । यदि निरन्तरा नीलपरमाणव एकधीगोचरा नीलं, तर्हि नैरन्तर्यमसिद्धम् । नीलपदार्थे च रसगन्धस्पर्शपरमाणूनामपि सत्त्वेन रूपपरमाणूनां नैरन्तर्याभावादित्यर्थः । **आरात्** दूरात् । घनं निबिडं तदेव वनम् । **ननु** स्थूलप्रत्ययस्य न भ्रान्तित्वं युक्तम्; स्वलक्षणविषयत्वेन निर्विकल्पकत्वात्, सविकल्पकं ह्यवस्तुभूतसामान्यविषयत्वाद् भ्रान्तमित्याशङ्क्याह—**तस्मादिति । कल्पना** अभिलापः । **तदपोढं** तद्रहितम् । यद्यपि स्थूलं व्यक्तिज्ञानं व्यक्तौ संबन्धग्रहस्याभावेन शब्दवाच्यत्वाभावात् तथापि भ्रान्तत्वान्नास्य प्रत्यक्षता कल्पनापोढमभ्रान्तमिति प्रत्यक्षलक्षणकरणादित्यर्थः । आद्यकल्पयोर्द्वितीयं निराकरोति—**नापि तत्समूहा इति** । परमाणुभ्यः स्तम्भादीनां भेदे संबन्धोऽस्ति न वा । यदि न, कथं तर्ह्युपादानोपादेयभावः ? अस्ति चेत्तर्हि संबन्धस्तादात्म्यं समवायो वा । **नाद्यो** व्याघातात् । **न द्वितीयो** वैशेषिकाधिकरणे ( ब्र. अ. २ पा. २ सू. १२ ) हि भिन्नयोः समवायो निरस्त इत्यर्थः । भाष्यकारेण ज्ञाने भासमानस्तम्भाद्याकारवैचित्र्यान्यथानुपपत्त्या स्तम्भदेर्ज्ञानाकारत्वमुक्तम्, तदयुक्तम्; भिन्नस्यैवार्थस्य ज्ञानेन प्रकाशनसंभवादित्याशङ्क्य भेदाभ्युपगमे अर्थस्यापरोक्षता न स्यादित्याह—**न तावदित्यादिना** । मा भूज्ज्ञानम् अर्थविषयज्ञानान्तरस्य जनकं, मा च विषयाश्रितं प्राकट्यमनेनाजनि, तथापि स्वभावसंबन्धादर्थविषयव्यवहारं जनयेदित्याशङ्क्याह—**तच्चेति** । ज्ञानमात्राकारस्य सर्वज्ञेयसाधारण्यान्नीलाकारवज्ज्ञानं नीलव्यवहारहेतुरित्यर्थः । विज्ञानवादी सौत्रान्तिक-

## कल्पतरुपरिमलः ।

दित्यस्य तदिति विशेष्यपदमस्ति, न तु स्वरूपयन्तमिति पाठेऽतस्तदुचितोऽर्थमिति पुंल्लिङ्गविशेष्यशब्दोऽध्याहृतः । **एकपरमाण्वात्मनीति** । एकपरमाणुस्वरूपे स्थौल्यं गृह्यते स्वाभाविकं भवति न त्वेकपरमाणौ स्थौल्यं संभवति; अतोऽनेकत्र परमाणौ स्थूलमित्येकाकारेण ग्रहणं न स्वाभाविकमित्यन्योपाधिकं वाच्यमित्यर्थः । **व्याघातादिति** । भेदे तादात्म्यं

**नपि प्रत्याचक्षीत । अपिचानुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः स्तम्भज्ञानं कुड्यज्ञानं घटज्ञानं पटज्ञानमिति, नासौ ज्ञानगतविशेषमन्तरेणोपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याङ्गीकर्तव्यम् । अङ्गीकृते च तस्मिन्विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बाह्यार्थसद्भावकल्पना । अपिच सहोपलम्भनियमादभेदो विषयविज्ञानयोरापतति । नह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भोऽस्ति । न चैतत्स्वभावविवेके युक्तं, प्रतिबन्धकारणाभावात् । तस्मादप्यर्थाभावः । स्वप्नादिवच्चेदं द्रष्टव्यम् । यथाहि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितगोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते; प्रत्ययत्वाविशेषात् । कथं पुनरसति बाह्यार्थे प्रत्यय-**

## भामती ।

बाह्यालम्बनाः प्रत्यया इति । **अपिच** न तावद्विज्ञानमिन्द्रियवन्निलीनमर्थं प्रत्यक्षयितुमर्हति । नहि यथेन्द्रियमर्थविषयं ज्ञानं जनयत्येवं विज्ञानमपरं विज्ञानं जनयितुमर्हति । तत्रापि समानत्वादनुयोगस्यानवस्थाप्रसङ्गात् । न चार्थाधारं प्राकट्यलक्षणं फलमाधातुमुत्सहते; अतीतानागतेषु तदसंभवात् । नह्यस्ति संभवोऽप्रत्युत्पन्नो धर्मी धर्मश्चास्य प्रत्युत्पन्न इति । तस्माज्ज्ञानस्वरूपप्रत्यक्षतैवार्थप्रत्यक्षताऽभ्युपेया । तच्चानाकारं सदाजानतो भेदाभावात् कथमर्थभेदं व्यवस्थापयेदिति तद्भेदव्यवस्थापनायाकारभेदोऽस्यैषितव्यः । **तदुक्तम्**—'न हि वित्तिसत्तैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषात् । तां तु सारूप्यमाविशत्स्वरूपयत्तद्घटयेत्' इति । एकश्चायमाकारोऽनुभूयते । स चेद्विज्ञानस्य, नार्थसद्भावे किंचन प्रमाणमस्तीत्याह—**अपिचानुभवमात्रेण साधारणात्मनो ज्ञानस्येति । अपिच सहोपलम्भनियमादिति ।** यद्येन सह नियतसहोपलम्भनं तत्ततो न भिद्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः । नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः । निषेध्यो हि भेदः सहोपलम्भानियमेन व्याप्तो यथा भिन्नावश्विनौ नावश्यं सहोपलभ्येते कदाचिदश्रापिधानेऽन्यतरस्यैकस्योपलब्धेः । सोऽयमिह भेदव्यापकानियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्तयतीति । **तदुक्तम्**—'सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥' इति । **स्वप्नादिवच्चेदं द्रष्टव्यम् ।** यो यः प्रत्ययः सर्वो बाह्यानालम्बनः, यथा स्वप्नमायादिप्रत्ययः, तथा चैष विवादाध्यासितः प्रत्यय इति स्वभावहेतुः । बाह्यानालम्बनता हि प्रत्ययत्वमात्रानुबन्धिनी वृक्षतेव शिंशपात्वमात्रानुबन्धिनीति तन्मात्रानुबन्धिनि निरालम्बनत्वे साध्ये भवति प्रत्ययत्वं स्वभावहेतुः । अत्रान्तरे सौत्रान्तिकश्चोदयति—**कथं पुनरसति बाह्येऽर्थे** नीलमिदं पीतमित्यादि **प्रत्ययवैचित्र्यमुपपद्यते ।** स हि मेने ये यस्मिन् सत्यपि कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षाः, यथाऽविवक्षत्यजिगमिषति मयि वचनगम-

## वेदान्तकल्पतरुः ।

स्यापि संमतमिति वदंस्तदुक्तिमाह—**तदुक्तमिति । ननु** न सौत्रान्तिकेन ज्ञानस्यैव नीलमाकार इत्युच्यते, किं तु बाह्यनीलसदृशो ज्ञानस्य नीलाकारोऽस्तीति तत्कथमर्थस्य ज्ञानाकारत्वसंमतिरत आह—**एकश्चेति ।** स्वीकृते ज्ञाननिष्ठनीलाकारे तेनैव व्यवहारोपपत्तेर्न बाह्यसिद्धिरित्यर्थः । एवं प्रत्यक्षेण ज्ञानाभेदमर्थस्य समर्थ्यानुमानादपि समर्थयते—**यद्येन सहेत्यादिना ।** विज्ञानवादिना यो ज्ञानार्थयोर्भेदो निषिध्यते, तद्व्यापकस्य सहोपलम्भनियमाभावस्य विरुद्धो यः सहोपलम्भनियमस्तदुपलब्धिस्ततश्च व्यापकाभावे व्याप्यभेदाभाव इति । व्यापकविरुद्धोपलब्धिं प्रपञ्चयति—**निषेध्यो हीति । अश्विनौ** नक्षत्रे । यो यन्मात्रानुबन्धी यदात्मा च स तत्र स्वभावहेतुः । उक्तं हि तद्भावमात्रान्वयिनि स्वभावो हेतुरात्मनीति । तद्भावं प्रकृते दर्शयति—**बाह्यानालम्बनता हीति । प्रत्ययत्वमात्रानुबन्धिनीति ।** तदात्मेत्यपि द्रष्टव्यम् । निरालम्बनत्वस्याभावस्य प्रत्ययरूपभावात्मकत्वात् । उक्तं हि न ह्यन्यासंसर्गिणो भावादन्योऽभाव इति । एवं तावत्प्रत्यये नीलाकारः स्वीकृतश्चेत्तेनैव व्यवहारसिद्धेर्बाह्यार्थवैयर्थ्यमुक्तम् । तत्र प्रत्ययगतार्थाकारभानमेव बाह्यार्थं कल्पयतीति प्रत्यवतिष्ठते इत्याह—**सौत्रान्तिक इति ।** बाह्यार्थसद्भावेऽनुमानमाह—**ये यस्मिन्निति ।** सौत्रान्तिकः स्वात्मसन्तानमेव दृष्टान्तयति—**यथेति । अविवक्षति** विवक्षामकुर्वति । **अजिगमिषति** गन्तुमनिच्छति । मयि

## कल्पतरुपरिमलः ।

व्याहतं, भेदाभेदपक्षस्तु विरोधान्न संभवतीति तत्र तत्रोक्तम् । **अश्विनाविति ।** यद्यप्यश्विनौ देवभिषजावश्वयुजोर्नक्षत्रयोर्देवता न तु नक्षत्रे एव अश्वयुजौ नक्षत्रमश्विनौ देवतेति श्रुतेः, तथाप्यभेदोपचारादश्विनौ नक्षत्रे इत्युक्तम् । स्वभावहेतुरित्यस्य बौद्धव्यवहारसिद्धमर्थमाह—**यो यन्मात्रानुबन्धीति । प्रत्ययत्वमात्रानुबन्धीति ।** स्वप्नप्रत्ययादिषु

## भामती ।

नप्रतिभासाः प्रत्ययाश्चेतनसंतानान्तरसापेक्षाः । तथाच विवादाध्यासिताः सत्यप्यालयविज्ञानसंताने षडपि प्रवृत्तिप्रत्यया इति स्वभावहेतुः । यश्चासावालयविज्ञानसंतानातिरिक्तः कादाचित्कप्रवृत्तिज्ञानभेदहेतुः स बाह्योऽर्थ इति । वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति चेत्, नन्वेकसंततिपतितानामालयविज्ञानानां तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना, तस्याश्च स्वकार्योपजनं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्ययः स्वसंतानवर्ती पूर्वक्षणः संतानान्तरापेक्षानभ्युपगमात्, तथाच सर्वेऽप्यालयसंतानपतिताः परिपाकहेतवो भवेयुः । न वा कश्चिदपि; आलयसंतानपातित्वाविशेषात् । क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात्कार्यकादाचित्कत्वमिति चेत्, **नन्वेवमेकस्यैव** नीलज्ञानोपजननसामर्थ्यं तत्प्रबोधसामर्थ्यं चेति क्षणान्तरस्यैतन्न स्यात् । सत्त्वे वा कथं क्षणभेदात्सामर्थ्यभेद इत्यालयसंतानवर्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे कार्यक्षेपानुपपत्तेः । स्वसंतानमात्राधीनत्वे निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वं तस्योपलब्ध्या कादाचित्कत्वं निवर्तमानं हेत्वन्तरापेक्षत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिः । नच

## वेदान्तकल्पतरुः ।

विवक्षुजिगमिषुपुरुषान्तरसन्तानाश्रितगमनवचनविषयप्रतिभासा यथा मयि सति कादाचित्का मद्व्यतिरिक्तपुरुषान्तरसन्तानमपेक्षन्ते, तथा दार्ष्टान्तिकेऽपीत्याह—**तथाचेति** । अहमित्युदीयमानालयविज्ञानेन जन्यमानास्तदतिरिक्तजन्यत्वाजन्यत्वाभ्यां विवादाध्यासिताः शब्दस्पर्शरूपरसगन्धसुखादिविषयाः षडप्यर्थविषयप्रवृत्तिहेतुत्वात् प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञानसन्ताने कदाचिद्भवन्तस्तदतिरिक्तहेतुका इत्यर्थः । अर्थान्तरमाशङ्क्याह—**यश्चेति** । अन्यस्यासंभवादित्यर्थः । असंभवोऽसिद्ध इति शङ्कते—**वासनेति** । शङ्काग्रन्थोक्तमर्थं व्याख्यानपूर्वकं दूषयति—**नन्विति** । **तत्प्रवृत्तीति** । तस्यां सन्ततौ प्रवृत्तिविज्ञानानि नीलादिविषयाणि तज्जननशक्तिर्वासनेत्यर्थः । तत्प्रत्येति प्रत्यागच्छति उत्पद्यतेऽनेन परिपाक इति प्रवृत्तिविज्ञानजनकालयविज्ञानात् पूर्वं आलयविज्ञानसन्ताने यदाकदाचिदुत्पन्नो नीलादिप्रत्ययः प्रत्यय इत्युक्तः । **ननु** किमिति स्वसन्ततिपतितपूर्तक्षण एवोत्तरक्षणवर्तिपरिपाककारणमाश्रीयते—सर्वज्ञानादिसन्तानवर्ती क्षणः किं न कारणं स्यादत आह—**संतानान्तरेति** । अत्र च हेतुं वक्ष्यति—**नच ज्ञानसंतानान्तरनिबन्धनत्वं सर्वेषामिति** ग्रन्थेन । एवं शङ्काभिप्रायं विशदीकृत्य दूषयति—**तथाचेति** । प्रवृत्तिविज्ञानजनकालयविज्ञानवर्तिवासनापरिपाकं प्रति सर्वेऽप्यालयविज्ञानसंतानवर्तिनः क्षणा हेतव इति वक्तव्यम् । न चेदेकोऽपि हेतुर्न स्यादिति बाधकमाह—**न वा कश्चिदिति** । सर्वेषां हेतुत्वे च दूषणं वक्ष्यते । इदानीमेकस्यैव हेतुत्वमिति पक्षं सौत्रान्तिकं प्रति विज्ञानवादी शङ्कते—**क्षणभेदादिति** । आलयविज्ञानसंतानवर्तिक्षणानां भेदादस्ति प्रतिक्षणं शक्तिभेदस्तस्य च शक्तिभेदस्य कादाचित्कत्वात् शक्तैकक्षणानन्तरं कार्यस्यालयविज्ञानक्षणवर्तिवासनापरिपाकस्य तज्जन्यप्रवृत्तिविज्ञानस्य च कादाचित्कत्वं सिध्यतीत्यर्थः । दूषयति सौत्रान्तिकः—**नन्वेवमिति** । एकस्यालयविज्ञानस्य प्रवृत्तिविज्ञानाख्यनीलज्ञानोपजननसामर्थ्यं स्यात्ततः प्राक्तनस्यालयविज्ञानवर्तिनीलादिविज्ञानक्षणस्य चैकस्यैव तत्प्रबोधसामर्थ्यमुत्तरक्षणगतवासनापरिपाकाख्यप्रबोधसामर्थ्यं स्यादिति द्वे एव ज्ञाने एकस्यामालयसंततौ कारणे स्यातां नेतराणीत्यर्थः । यदीतरेषामपि पूर्वज्ञानानां परिपाकहेतुत्वमुत्तरोत्तरेषां च प्रवृत्तिविज्ञानजननसामर्थ्यमिष्यते तत्राह—**सत्त्वे वेति** । भवन्तु सर्वे क्षणाः समर्थास्तत्राह—**समर्थहेतुसद्भावे इति** । यदवादिष्म सर्वेषां हेतुत्वे दूषणं वक्ष्यतीति तदनेन ग्रन्थेन क्रियते । यद्यनादिसंततौ पतिता आलयज्ञानक्षणाः सर्व एव नीलज्ञानजननसमर्थाः, तर्हीदं नीलज्ञानं सदा स्यान्न तु कदाचिदित्येवं निषेध्यं यत्कादाचित्कत्वं तस्य विरुद्धं सदातनत्वं तस्यापत्तिद्वारेण उपलब्ध्या कादाचित्कत्वं नीलज्ञानस्य निवर्तेत, नतु निवर्तितुमर्हति; दर्शनादेव । तत आलयविज्ञानाद्यद्धेत्वन्तरं बाह्योऽर्थस्तदपेक्षत्वे व्यवतिष्ठते । ततः किं जातमत आह—**इति प्रतिबन्धसिद्धिरिति** । ये यस्मिन्सत्यपि कादाचित्कास्ते तदतिरिक्तापेक्षाः इति प्राक् सौत्रान्तिकोक्तव्यापकयोः प्रतिबन्धसिद्धिर्व्याप्तिसिद्धिरित्यर्थः । **ननु** नीलविज्ञानमपेक्षतां हेत्वन्तरं, तदेव हेत्वन्तरमालयविज्ञानसंतानान्तरमस्तु, कुतो बाह्यार्थसिद्धिरित्यर्थान्तरतामनुमानस्याशङ्क्याह—**नचेति** । चैत्रसंताने विच्छिन्नौ गमनवचनप्रतिभासौ यस्य तत्काले उदयतो मैत्रसंतानस्थगमनवचनविषयविज्ञानस्य तत्तथोक्तम् । तस्यैव विज्ञानवादिभिः संतानान्तरनिमित्तत्वमिष्यते, नतु विवक्षति जिगमिषति च चैत्रे

## कल्पतरुपरिमलः ।

बाह्यानालम्बनत्वदर्शनात् प्रत्ययत्वमात्रप्रयुक्तं निरालम्बनत्वमित्यर्थः । निरालम्बनतायाः प्रत्ययात्मत्वं भावान्तरमभावो हीति तन्मतेतोपपादयति—**निरालम्बनत्वस्येति** । **सर्वेऽप्यालयविज्ञानसन्तानवर्तिनः क्षणा हेतव इति वक्तव्यमिति** । **ननु**—सर्वे हेतव इति वा कश्चिदेव हेतुरिति वा नोच्यते, किंतु केचन हेतवः केचिदहेतव इत्युच्यत इति—**चेद्**, **न**; सर्वसन्तानवर्तित्वाविशेषे तथाव्यवस्थितिकल्पनायोगात् । अतो नीलज्ञानकादाचित्कत्वसिद्ध्यर्थं बाह्यसत्त्वमभ्युपेयमिति भावः । **तत्प्रबोधसामर्थ्यमित्यस्य** विवरण**मुत्तरक्षणगतवासनापरिपाकाख्यप्रबोधसामर्थ्यमिति** ।

**वैचित्र्यमुपपद्यते । वासनावैचित्र्यादित्याह । अनादौ हि संसारे बीजाङ्कुरवद्विज्ञानानां वास॰**

## भामती ।

ज्ञानसंतानान्तरनिबन्धनत्वं सर्वेषामिष्यते प्रवृत्तिविज्ञानानां विज्ञानवादिभिः, अपितु कस्यचिदेव विच्छिन्नगमनवचनप्रतिभासस्य प्रवृत्तिविज्ञानस्य । **अपिच** सत्त्वान्तरसंताननिमित्तत्वे तस्यापि सदा संनिधानान्न कादाचित्कत्वं स्यात् । नहि सत्त्वान्तरसंतानस्य देशतः कालतो वा विप्रकर्षसंभवः । विज्ञानवादे विज्ञानातिरिक्तदेशानभ्युपगमादमूर्तत्वाच्च विज्ञानानामदेशात्मकत्वात्संसारस्यादिमत्त्वप्रसङ्गेनापूर्वसत्त्वप्रादुर्भावानभ्युपगमाच्च न कालतोऽपि विप्रकर्षसंभवः ।तस्मादसति बाह्येऽर्थे प्रत्ययवैचित्र्यानुपपत्तेरस्त्यानुमानिको बाह्यार्थ इति सौत्रान्तिकाः प्रतिपेदिरे, तान्निराकरोति—**वासनावैचित्र्यादित्याह** विज्ञानवादी । **इदमत्राकूतम्**—स्वसंतानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ संदिग्धविपक्षव्यावृत्तिकत्वेन हेतुरनैकान्तिकः । **तथाहि**—बाह्यनिमित्तकत्वेऽपि कथं कदाचित् नीलसंवेदनं कदाचित् पीतसंवेदनम् । बाह्यनीलपीतसंनिधानासंनिधानाभ्यामिति चेत्, अथ पीतसंनिधानेऽपि किमिति नीलज्ञानं न भवति ? पीतज्ञानं भवति ? तत्र तस्य सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत्, कुतः पुनरयं सामर्थ्यासामर्थ्यभेदः । हेतुभेदादिति चेत्, एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति । संतानिनो हि क्षणाः कार्यभेदहेतवस्ते च प्रतिकार्यं भिद्यन्ते च । नच संतानो नाम कश्चिदेक उत्पादकः क्षणानां, यदभेदात् क्षणा न भिद्येरन् । **ननूक्तं** न क्षणभेदाभेदाभ्यां शक्तिभेदाभेदौ, भिन्नानामपि क्षणानामेकसामर्थ्योपलब्धेः । अन्यथैक एव क्षणो नीलज्ञानजननसमर्थ इति न भूयो नीलज्ञानानि जायेरन् । तत्समर्थस्यातीतत्वात्, क्षणान्तराणां चासामर्थ्यात् । तस्मात् क्षणभेदेऽपि न सामर्थ्यभेदः, संतानभेदे

## वेदान्तकल्पतरुः ।

यद्गमनवचनप्रतिभानं तस्यापि । तस्य तु चैत्रसंतानमात्रहेतुकत्वं, तच्च निरस्तमिति बाह्यार्थापेक्षा वाच्येत्यर्थः । यदि तु तथाविधस्यापि प्रवृत्तिविज्ञानस्यालयविज्ञानसंतानान्तरनिबन्धनत्वमिष्यते, तत्राह—**अपिचेति । सत्त्वान्तरं** प्राण्यन्तरम् । विज्ञानानां समवायी देशोऽभ्युपेयते, संयोगी वा यद्भेदाद्विप्रकर्षः । **नाद्य** इत्याह—**विज्ञानातिरिक्तेति ।** वैशेषिकादिवत् त्वया ज्ञानसमवाय्यात्मानभ्युपगमादिति भावः । **न द्वितीय** इत्याह—**अमूर्तत्वाच्चेति** । नास्ति संयोगदेश आधारो येषां तानि तथा तदात्मकत्वादित्यर्थः । संतानानां कालतोऽपि न व्यवधानमित्याह—**संसारस्येति ।** एवं हि संतानान्तरस्य कालविप्रकर्षः स्याद्यदि संप्रतितनस्य चैत्रसंतानसंजातनीलज्ञानस्य समनन्तरपूर्वक्षणे मैत्रसंतान उत्पद्येत । इतरथा तस्याप्यनादित्वे कालविप्रकर्षाभावात्तथा च संसारः सादिः स्यादित्यर्थः । यस्मात्सन्तानान्तरनिमित्तत्वेऽपि तस्य सदा संनिधानात् प्रवृत्तिविज्ञानस्य कादाचित्कत्वमनुपपन्नं, **तस्मादि**त्युपसंहरति । प्रवृत्तिप्रत्यय आलयविज्ञानातिरिक्तहेतुक इति पक्षस्य स्वसंतानमात्रनिमित्तकत्वं विपक्षस्तस्मात्सन्दिग्धा व्यावृत्तिर्यस्य स हेतुस्तथा तत्त्वेत्यर्थः । स्वसन्तानमात्रनिमित्तत्वमुपपादयितुं प्रतिबन्दीमाह—**बाह्यनिमित्तकत्वेऽपीत्यादिना । नन्वा**लयविज्ञानक्षणानां संबन्धिस्वस्वहेतुवैचित्र्यात्सामर्थ्यभेदेऽप्येकसन्ततिपतितत्वाविशेषादेकविधं सामर्थ्यं स्यादित्याशङ्क्याह—**नच संतानो नामेति ।** आलयविज्ञानसन्तानैक्ये क्षणभेदेऽपि न सामर्थ्यभेद इत्युपपाद्य तद्व्यतिरिक्तबाह्यार्थसन्तानभेदे स्याच्छक्तिभेद इत्याह—**संतानभेदे त्विति ।** आलयविज्ञानानां नीलादिबाह्यार्थसन्तानानां च सामर्थ्यं भेदः । ततश्चालयविज्ञानस॰

## कल्पतरुपरिमलः ।

तदनन्तरचकारस्तु टीकास्थस्य नीलज्ञानोपजननसामर्थ्यसमुच्चयार्थस्यानुवादः । **एवं हि संतानान्तरस्य कालविप्रकर्षः स्यादिति ।** यदीदानीन्तनचैत्रसंतानसंजातनीलज्ञानसमनन्तरपूर्वक्षण एव मैत्रसंतानोत्पत्तिः स्यात्ततः प्राङ् मैत्रसंतानो न स्यात्, तदा प्राङ्मैत्रसंतानरूपापेक्षितव्यसहकार्यभावाच् चैत्रसंताने नीलज्ञानानुदय इति वक्तुं शक्यं, न त्वेतदस्ति; तथा सति मैत्रसंतानरूपसंसारस्य सादित्वप्रसङ्गात् । तस्मात्प्रागपि मैत्रसंतानसत्त्वे तु कालविप्रकर्षाभावान्नीलज्ञानोदयप्रसङ्ग इति भावः । **स्वसंतानमात्रनिमित्तकत्वं विपक्ष इति ।** हेतोरप्रयोजकत्वेन पक्षस्यैव साध्याभाववत्तया विपक्षत्वशङ्कायां हेतोर्विपक्षव्यावृत्तिः संदिग्धा भवति पक्षस्य साध्याभाववत्त्वे तद्वृत्तेर्हेतोर्विपक्षवृत्तितेति । यद्यपि हेतुमति पक्षे साध्यसंदेहः स्वारसिको न व्यभिचारसंदेहत्वेन दोषः, अनुमानमात्रोच्छेदापत्तेः; तथाप्यप्रयोजकत्वसंदेहाहितः सोऽपि तत्र दोष एवेति भावः । **स्वसंतानमात्रनिमित्तत्वमुपपादयितुमिति ।** संतानमात्रनिमित्तत्वेऽपि कादाचित्कत्वमुपपद्यत इति हेतोरप्रयोजकत्वमुपपादयितुमित्यर्थः । **नन्वालयविज्ञानक्षणानामिति ।** चैत्रमैत्रादिभिन्नसंततिपतितानामित्यर्थः । **नच संतानो नाम कश्चिदि**ति ग्रन्थेन संतानस्वरूपं निषिध्यत इति प्रतिभाति । तदयुक्तम्; अग्रे संतानभेदाभेदाभ्यां शक्तिभेदाभेदव्यवहारदर्शनादित्याशङ्क्य तद्वाक्यं संतानस्य क्षणोत्पादकत्वनिषेधार्थतया योजयति—**क्षणानां संबन्धीति** । संतानस्य क्षणोत्पादकत्वे खलूत्पादकाविशेषादेकविधं सामर्थ्यं स्याद्, नतु तदस्तीति भावः । **क्षणभेदेऽपि न सामर्थ्यभेद इत्युपपाद्येति** । **ननू**क्तमित्यादिशङ्कावादी सौत्रान्तिकः क्षणभे-

**नानां चान्योन्यनिमित्तनैमित्तिकभावेन वैचित्र्यं न विप्रतिषिध्यते । अपिचान्वयव्यतिरेकाभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते; स्वप्नादिष्वन्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञान-वैचित्र्यस्योभाभ्यामप्यावाभ्यामभ्युपगम्यमानत्वात्, अन्तरेण तु वासनामर्थनिमित्तस्य ज्ञानवै-चित्र्यस्य मयानभ्युपगम्यमानत्वात् । तस्मादप्यभावो बाह्यार्थस्येति । एवं प्राप्ते ब्रूमः—'नाभाव उपलब्धेः' इति । न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । कस्मात् ? उपलब्धेः ।**

## भामती ।

तु सामर्थ्यं भिद्यत इति । तन्न; यदि भिन्नानां संतानानां नैकं सामर्थ्यं, हन्त तर्हि नीलसंतानानामपि मिथो भिन्नानां नैकमस्ति नीलाकाराधानसामर्थ्यमिति संनिधानेऽपि नीलसंतानान्तरस्य न नीलज्ञानमुपजायेत । तस्मात्संतानान्तरा-णामिव क्षणान्तराणामपि स्वकारणभेदाधीनोपजनानां केषांचिदेव सामर्थ्यभेदः केषांचिन्नेति वक्तव्यम् । तथा चैकाल-यज्ञानसंतानपतितेषु कस्यचिदेव ज्ञानक्षणस्य स तादृशः सामर्थ्यातिशयो वासनापरनामा स्वप्रत्ययासादितः, यतो नीलाकरं प्रवृत्तिविज्ञानं जायते न पीताकारम् । कस्यचित्तु स तादृशो यतः पीताकारं ज्ञानं न नीलाकारमिति वासना-वैचित्र्यादेव स्वप्रत्ययासादिताज्ज्ञानवैचित्र्यसिद्धेर्न तदतिरिक्तार्थसद्भावे किंचनास्ति प्रमाणमिति पश्यामः । आलयवि-ज्ञानसंतानपतितमेवासंविदितं ज्ञानं वासना, तद्वैचित्र्यान्नीलाद्यनुभववैचित्र्यं, पूर्वनीलाद्यनुभववैचित्र्याच्च वासनावैचि-त्र्यमित्यनादितानयोर्विज्ञानवासनयोः। तस्मान्न परस्पराश्रयदोषसंभवो बीजाङ्कुरसंतानवदिति । अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्यस्यैव ज्ञानवैचित्र्यहेतुता नार्थवैचित्र्यस्येत्याह—**अपिचान्वयव्यतिरेकाभ्यामिति । एवं प्राप्ते ब्रूमः । नाभाव उपलब्धेरिति ।** न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । स ह्युपलम्भाभावाद्वाध्यवसीयेत, सत्यप्यु-पलम्भे तस्य बाह्याविषयत्वाद्वा, सत्यपि बाह्यविषयत्वे बाह्यार्थबाधकप्रमाणसद्भावाद्वा । न तावत् सर्वथोपलम्भाभाव इति प्रश्नपूर्वकमाह—**कस्मात् ? उपलब्धेरिति ।** नहि स्फुटतरे सर्वजनीन उपलम्भे सति तदभावः शक्यो वक्तुमि-

## वेदान्तकल्पतरुः ।

न्तानैरजन्यमपि नीलादिसंवेदनं बाह्यनीलादिसन्तानैर्जन्यत इति चेत्तत्र दूषणमाह—**हन्त तर्हीति ।** बाह्यार्थवादे हि क्षणिकत्वान्नीलार्थानां प्रतिनीलार्थं भिन्नाः सन्ति नीलसन्तानास्तत्र सन्तानभेदाच्छक्तिभेदोपगमे नीलसन्तानानामप्येकविधा शक्तिर्न स्यात्, तथा चैकमेव नीलं नीलाकारज्ञानं जनयेद्, न सन्तानान्तरवर्तीत्यर्थः । चोद्यसाम्यमुक्त्वा परिहारसाम्य-माह—**तस्मात्सन्तानान्तराणामित्यादिना ।** तथा नीलपीतादिसन्तानान्तराणां स्वस्वकारणभेदात्सामर्थ्यभेद एव-मालयविज्ञानसन्तानपतितक्षणान्तराणामपीत्यर्थः । **स्वप्रत्ययः** पूर्वोदितनीलादिप्रत्ययः । वासनावैचित्र्यादिति भाष्यस्थ-वासनाशब्दार्थमाह—**आलयविज्ञानेति ।** असंविदितमविज्ञातमर्थात्पूर्वमिति लभ्यते; वर्तमानस्य संविदितत्वाद् अनाग-तस्यासिद्धसत्ताकत्वात्तादृशज्ञानं वासना । न ह्यस्मिन्मतेऽस्ति स्थायिनी वासनेति भावः । पूर्वं शक्तिर्वासनेत्युक्तम्, इदानीं शक्तिशक्तिमतोरभेदाद्विज्ञानमिति न विरोधः । **ननु** पूर्वज्ञानात्मकवासनावैचित्र्याच्चेदुत्तरज्ञानानां वैचित्र्यं, तर्हि पूर्वज्ञानवै-चित्र्यमेव कुतस्तत्राह—**पूर्वनीलादीति ।** अनेनानादौ संसार इति भाष्यं व्याख्यातम् । तत्रभवता भाष्यकारेण प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवाविति वदतैतदिह सूचयांबभूवे । यथा किल ज्ञानाद्भेदेन स्थूलस्यार्थस्यासंभवः परेण भाष्यते, एवमभेदेनापि मया स सुभाष इत्यप्रयोजकोऽसम्भवः । प्रमाणं त्वावाभ्यामादर्तव्यमिति । तत्रासम्भवं

## कल्पतरुपरिमलः ।

देऽपि प्रतिविज्ञानव्यक्ति न सामर्थ्यभेदः; एकस्मादालयविज्ञानक्षणान्नीलज्ञाने सति पुनर्नीलज्ञानान्तरानुत्पत्तिप्रसङ्गादतः सर्वेषामपि तेषां सामर्थ्यमास्थेयमिति नीलज्ञानकादाचित्कत्वाभावप्रसङ्गमुपपाद्य स्वमते तत्प्रसङ्गं परिहरतीत्यर्थः । विज्ञानवादी सौत्रान्तिकमते **हन्त तर्हीत्यादिना** दूषणं वदतीत्यवतारयति—**तत्र दूषणमाहेति ।** एकमेव नीलं नीलाकारज्ञानं जनयेदित्येतदनन्तरं न सन्तानान्तरस्य वर्तीति स्थाने नीलान्तरं सन्तानान्तरवदिति क्वचित्पाठस्तत्र नीलान्तरं सन्तानान्तरवर्ति नीलाकारज्ञानं जनयेत् पीतसन्तानवर्तिगुणान्तरवदित्यर्थो ग्राह्यः । **यथाच नीलपीतादि-संतानान्तराणामिति ।** एकस्मान्नीलसंतानान्तरस्य पीतसंतानस्य च भेदाविशेषेऽपि क्वचिन्नीलज्ञानजननशक्तिः क्वचिन्नेतिवदेकज्ञान एवैकविज्ञानसन्ततिपातित्वाविशेषेऽपि केषुचित्तज्जननशक्तिः केषुचिन्नेतीति व्यवस्था कल्प्यते, दृष्टानु-सारित्वात्कल्पनायाः । अतः संतानभेदः शक्तिभेद इव तदभेदोऽपि शक्त्यभेदे न प्रयोजक इति भावः । **अर्थात्पूर्व-मिति लभ्यत इति ।** असंविदितत्वोक्तिसामर्थ्यात् पूर्वज्ञानमिति लभ्यत इत्यर्थः । सामर्थ्यमेवोपपादयति—**वर्तमान-स्येति ।** संविदितत्वात्तदानीं ज्ञायमानत्वादित्यर्थः । मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तप्रत्ययः । असंविदितत्वम् अना-गतेऽप्यविशिष्टम् अतस्तद्व्यावर्तनं विधान्तरेण दर्शयति—**अनागतस्य चेति । तादृशज्ञानमिति ।** यत्तदानीमज्ञाय-मानं सिद्धसत्ताकत्वं तथाभूतज्ञानं वासनेत्यर्थः । **इदमत्राकूतमित्यादिटीकाग्रन्थेन** वक्ष्यमाणमर्थं भाष्यारूढं करोति—

उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तम्भः कुड्यं घटः पट इति। नचोपलभ्यमानस्यैवाभावो भवितुमर्हति। यथाहि कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे न वा तृप्यामीति, तद्वदिन्द्रियसंनिकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे नच सोऽस्तीति ब्रुवन्कथमुपादेयवचनः स्यात्। ननु नाहमेवं ब्रवीमि न कंचिदर्थमुपलभ इति किं तूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि। बाढमेवं ब्रवीषि, निरङ्कुशत्वात्ते तुण्डस्य, नतु युक्त्युपेतं ब्रवीषि। यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्य उपलब्धेरेव। नहि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युपलभते। उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन्सर्वे लौकिका उपलभन्ते। अतश्चैवमेव सर्वे लौकिका उपलभन्ते यत्प्रत्याचक्षाणा अपि बाह्यार्थमेव व्याचक्षते यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति। तेऽपि सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति। इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः। नहि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत। तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगन्तुं नतु बहिर्वदवभासत इति। ननु बाह्यस्यार्थस्यासंभवाद्बहिर्वदवभासत इत्यध्यवसितम्। नायं साधुरध्यवसायो यतः

---

## भामती।

त्यर्थः। द्वितीयं पक्षमवलम्बते—**ननु नाहमेवं ब्रवीमीति**। निराकरोति—**बाढमेवं ब्रवीषि**। उपलब्धिग्राहिणा हि साक्षिणोपलब्धिर्गृह्यमाणा बाह्यविषयत्वेनैव गृह्यते नोपलब्धिमात्रमित्यर्थः। **अतश्च** इति वक्ष्यमाणोपपत्तिपरामर्शः। तृतीयं पक्षमालम्बते—**ननु बाह्यस्यार्थस्यासंभवादिति**। निराकरोति—**नायं साधुरध्यवसाय इति**। **इदमत्राकूतम्**—घटपटादयो हि स्थूला भासन्ते नतु परमसूक्ष्माः। तत्रेदं नानादिग्देशव्यापित्वलक्षणं स्थौल्यं यद्यपि ज्ञानाकारत्वे नावरणानावरणलक्षणेन विरुद्धधर्मसंसर्गेण युज्यते ज्ञानोपाधेरनावृतत्वादेव; तथापि तद्देशत्वातद्देशत्वकम्पाकम्पत्वरक्तारक्तत्वलक्षणैर्विरुद्धधर्मसंसर्गैरस्य नानात्वं प्रसज्यमानं ज्ञानाकारत्वेऽपि न शक्यं शक्रेणापि वारयितुम्। व्यतिरेकाव्यतिरेकवृत्तिविकल्पौ च परमाणोरंशवत्त्वं चोपपादितानि वैशेषिकपरीक्षायाम्। तस्माद्बाह्यार्थवन्न ज्ञानेऽपि

## वेदान्तकल्पतरुः।

परमते दर्शयति—**इदमत्रेत्यादिना**। तत्र बौद्धेन ज्ञानाद्भिन्नस्य स्थूलार्थस्यासंभवमुच्यमानमनुवदति—**तत्रेदमिति**। स्थौल्यं ह्यर्थस्य युगपद्भिन्नदिग्व्यापित्वं भिन्नदेशव्यापित्वं वा। एवं चैकदिग्देशेऽर्थस्यावरणमन्यदिग्देशे चानावरणमिति विरुद्धधर्माध्यासाद्भेदः स्यात्। ज्ञानाभेदे तु न दोषः। ज्ञानावच्छेदकार्थस्य ज्ञायमानस्य तदभिन्नस्यानावृतत्वादावृतस्य च तदात्मत्वाभावेन विरोधाप्रसङ्गादित्यर्थः। **ज्ञानाकारत्वे** इति सप्तमी। आवरणादिधर्मसंसर्गेण यद्यपि न युज्यत इति योजना। इदानीमेतमसंभवमनुमत्य बौद्धमतेऽप्यसंभवमाह—**तथापीति**। यद्यप्यवभासानवभासलक्षणविरुद्धधर्मसंसर्गोऽर्थस्य ज्ञानाभेदेऽभ्युपगते न प्रसज्येत; तथाप्येकज्ञानप्रकाशिते पटे नानादेशव्यासक्ते तद्देशत्वमतद्देशत्वं च दृश्यते, प्रदेशभेदेन च कम्पाकम्पौ चित्रे च तस्मिन् रक्तत्वारक्तत्वे च। सति चैवं ज्ञानाकारत्वेऽप्यर्थस्य वर्णितविरुद्धधर्मवत्त्वाद्भेदप्रसङ्गस्तुल्य इत्यर्थः। अर्थस्य ज्ञानाभेदे सति अवयविन्यवयवे चोक्तं दोषान्तरमपि ज्ञाने दुर्वारमित्याह—**व्यतिरेका-**

## कल्पतरुपरिमलः।

**तत्रभवतेति**। **तथापी**त्यादिटीकार्थं मनसि कृत्वाऽवतारयति—**तत्रासम्भवमिति**। ततः प्राक्तनग्रन्थं तदुपयोगिनमवतारयति—**तत्र बौद्धेनेति**। **स्थौल्यं ह्यर्थस्येति**। बाह्यार्थसत्त्वे युगपदनेकदिग्देशव्यापि वस्तु स्थूलमिति वक्तव्यम्। तच्च सर्वात्मना कदापि न दृश्यते; करतलामलकादीनामप्यधोभागावच्छेदेन दर्शनाभावात्। अतो दर्शनादर्शनाभ्याम् एकस्यैव स्थूलवस्तुन आवृतत्वमनावृतत्वं च वाच्यमिति विरुद्धधर्माध्यासाद्भेदः प्रसज्यते। विज्ञानवादे तु नायं दोषः। तत्र हि विज्ञाने यावानाकरो भासते तावानेवास्ति आवृतस्तु नान्तर्बहिर्व्याप्रियत इत्यर्थः। **इदानीमेतमसंभवमनुमत्येति**। आस्तामसंभवो ममानिर्वचनीयवादिनो मते, ते कथं नासंभव इति प्रतिपादयतीत्यर्थः। टीकायां व्यतिरेकाव्यतिरेकवृत्तिविकल्पौ च परमाणोरंशवत्त्वं चोपपादितानि वैशेषिकपरीक्षायामिति ग्रन्थं विज्ञानवादिमतनिराकरणार्थहेत्वन्तरपरत्वेन योजयति—**अर्थस्य ज्ञानाभेदे सत्यवयविन्यवयवे चोक्तदोषान्तरमपि ज्ञाने दुर्वारमित्याहेति**। अवयवी अवयवेभ्यो भिद्यते न वेति विकल्पो व्यतिरेकाव्यतिरेकविकल्पः। भेदपक्षे स प्रत्यवयवं कार्त्स्न्येन वर्तते एकदेशेन वेति विकल्पो वृत्तिविकल्पः। एताववयविदोषौ। सूक्ष्मावयवः परमाणुरपि सांशोऽनंशो वेति विकल्पपूर्वकं सांशत्वावश्यंभावापादनम् अवयवदोषः। एतद्दोषत्रयं विज्ञानवादिमतेऽपि स्यात्। नहि विज्ञानवादिनास्माभिरिव जगदनिर्वचनी-

**प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवाववधार्येते, न पुनः संभवासंभवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती। यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते तत्संभवति। यत्तु न केनचिदपि प्रमाणेनोपलभ्यते तन्न संभवति। इह तु यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न संभवतीत्युच्येतोपलब्धेरेव। नच ज्ञानस्य विषयसारूप्याद्विषयनाशो भवति; असति विषये विषयसारूप्यानुपपत्तेः, बहिरुपलब्धेश्च विषयस्य। अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यभ्यु-**

## भामती।

स्थौल्यसंभवः। न तावत् परमाण्वाभासमेकज्ञानम्, एकस्य नानात्मत्वानुपपत्तेः। आकाराणां वा ज्ञानतादात्म्यादेकत्वप्रसङ्गात्। नच यावन्त आकारास्तावन्त्येव ज्ञानानि; तावतां ज्ञानानां मिथो वार्तानभिज्ञतया स्थूलानुभवाभावप्रसङ्गात्। नच—तत्पृष्ठभावी समस्तज्ञानाकारसंकलनात्मक एकः स्थूलविकल्पो विजृम्भत इति—सांप्रतम्; तस्यापि साकारतया स्थौल्यायोगात्। **यथाह धर्मकीर्तिः**—'तस्मान्नार्थे नच ज्ञाने स्थूलाभासस्तदात्मनः। एकत्र प्रतिषिद्धत्वाद्बहुष्वपि न संभवः॥' इति तस्माद्भवतापि ज्ञानाकारं स्थौल्यं समर्थयमानेन **प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवावास्थेयौ**। तथा चेदन्तास्पदमशक्यं ज्ञानाद्भिन्नं बाह्यमपह्नोतुमिति। यच्च ज्ञानस्य प्रत्यर्थं व्यवस्थायै विषयसारूप्यमास्थितं, नैतेन विषयोऽपह्नोतुं शक्यः, असत्यर्थे तत्सारूप्यस्य तद्व्यवस्थायाश्चानुपपत्तेरित्याह—**नच ज्ञानस्य विषयसारूप्यादिति**। यश्च सहोपलम्भनियम उक्तः सोऽपि विकल्पं न सहते। यदि ज्ञानार्थयोः साहित्येनोपलम्भस्ततो विरुद्धो हेतुर्नाभेदं साधयितुमर्हति; साहित्यस्य तद्विरुद्धभेदव्याप्तत्वादभेदे तदनुपपत्तेः। अथैकोपलम्भनियमः, न; एकत्वस्यावाचकः सहशब्दः। **अपिच** किमेकत्वेनोपलम्भः, आहो एक उपलम्भो ज्ञानार्थयोः। न तावदेकत्वेनोपलम्भ इत्याह—**बहिरुपलब्धेश्च विषयस्य**। अथैकोपलम्भनियमः, तत्राह—**अतएव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यवगन्तव्यम्**। यथा हि सर्वं चाक्षुषं प्रभारूपानुविद्धं बुद्धिबोध्यं नियमेन मनुजैरुपलभ्यते, न चैतावता घटादिरूपं प्रभात्मकं भवति, किंतु प्रभोपायत्वान्नियमः, एवमिहाप्यात्मसाक्षिकानुभवोपायत्वादर्थस्यैकोपलम्भनियम इति। **अपिच** यत्रैकविज्ञानगोचरौ घटपटौ तत्रार्थभेदं विज्ञान-

## वेदान्तकल्पतरुः।

**व्यतिरेकेति। ननु** किमिति ज्ञानाभिन्नेऽर्थे तद्देशत्वातद्देशत्वादिविरुद्धधर्माध्यासप्रसङ्गः। यावता परमाणूनेव ज्ञानमवलम्बतां, ते च न भिन्नदेशत्वादिमन्त इत्यत आह—**न तावदिति**। नीलज्ञानं यदि परमाणूनालम्बेत, तर्हि त्वया ज्ञानज्ञेययोरभेदाभ्युपगमाज्ज्ञानस्य किं ज्ञेयमात्रत्वं ज्ञेयानां वा परमाणूनां ज्ञानमात्रत्वम्। **नाद्य** इत्याह—**एकस्येति**। ज्ञानस्येत्यर्थः। **न द्वितीय** इत्याह—**आकाराणां चेति**। ज्ञानाकाराणां परमाणूनामित्यर्थः। **ननु** नैकं ज्ञानं परमाणून् गोचरयति, यत उक्तदोषः स्यात्, किंतु प्रतिपरमाणु ज्ञानभेद इति, नेत्याह—**नच यावन्त इति**। तर्ह्येकैकज्ञानगृहीतनानापरमाणुपरामर्शात्मकः प्रत्ययः स्थूलालम्बन इति, तत्राह—**नच तत्पृष्ठेति**। तस्यापि प्रत्ययस्य साकारतया आकाराणां नानापरमाणूनां तदभेदात्तस्य परमाणुमात्रत्वे भेदः तेषां विज्ञानमात्रत्वे एकत्वमिति स्थूलालम्बनमेकं ज्ञानं न स्यादित्यर्थः। **तस्मान्नार्थे इति**। तस्माद्वृत्तिविकल्पादेस्तर्कादर्थे परमाणुसमूहात्मके विषये न स्थूलाभासः, नच ज्ञाने ज्ञानात्मकेऽर्थे। कुतः? एकत्र ज्ञाने वर्णितेन मार्गेण तदात्मनो नानाकारत्वात्मकत्वस्य प्रतिषिद्धत्वाद् बहुष्वपि विज्ञानेषु परमाणुगोचरेषु स्थूलाभासस्य न संभवः; बहूनां परस्परवार्तानभिज्ञत्वादित्यर्थः। एकोपलम्भमुक्त्वा यानुपलब्धिः सा सहोपलम्भनियम इति न विरुद्धत्वं हेतोश्चेत्तर्हि सहशब्द एकत्वस्यावाचक इत्यवाचकशब्दप्रयोगात्तव निग्रह इत्यर्थः।

## कल्पतरुपरिमलः।

यमित्युच्यते, येन तस्येत्थं विचारासहत्वं भूषणं स्यात्, किंतु बाह्यास्तित्ववादिभिर्यथावद्बहिरस्तीत्युच्यते तत्सर्वमन्तः सत्यमेवास्तीत्युच्यते, सत्यत्वे च बहिरिवान्तरप्येते विकल्पदोषाः प्रादुःष्युरिति भावः। अमुमेव टीकाग्रन्थमवयविवादिनं प्रत्युक्ता दोषाः समुदायवादिनं प्रत्यपि स्युरिति प्रासङ्गिकसौत्रान्तिकमतनिराकरणार्थत्वेनापि योजयति—**यद्वा विज्ञानादिभिन्नस्थूलार्थ इति**। केषुचित्कोशेषु द्वितीयावतारिकैव यद्वेतिशब्दरहिता दृश्यते, न प्रथमावतारिका यद्यप्ययं व्यतिरेकाव्यतिरेकादिटीकाग्रन्थः सर्वैरेव प्रमाणैर्बाह्यार्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न संभवतीत्युच्यत इति भाष्यानूदितविज्ञानवादिकृतबाह्यास्तित्वनिराकरणार्थं व्यतिरेकादिविकल्पविवरणमत्र न कर्तव्यम्, अधस्तादेव कृतमित्येतदर्थः प्रतिभाति; तथापि न केवलमयं दोषः ममानिर्वचनीयवादिनो मते न प्रसरतीत्येतावत् किंत्वन्तः सदिति वादिनो बहिः सदिति वादिनश्च बौद्धस्य मते वैशेषिकमत इव प्रसरतीत्युष्ट्रलगुडन्यायोऽप्यनेन ग्रन्थेन सूचित इति प्रदर्शयितुमस्य ग्रन्थस्य विधान्तरेण द्वेधा तात्पर्यमाचार्यैरुक्तम्। **परमाणूनिति**। ज्ञानाकाररूपानित्यर्थः। चाक्षुषस्य प्रभारूपानु-

पगन्तव्यम् । अपिच घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो न विशेष्यस्य ज्ञानस्य । यथा शुक्लो गौः कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य । द्वाभ्यां च भेद एकस्य सिद्धो भवत्येकस्माच्च द्वयोः । तस्मादर्थज्ञानयोर्भेदः । तथा घटदर्शनं घटस्मरणमित्यत्रापि प्रतिपत्तव्यम् । अत्रापि हि विशेष्ययोरेव दर्शनस्मरणयोर्भेदो न विशेषणस्य घटस्य । यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य तद्वत् । अपिच द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोः स्वसंवेदनेनैवोपक्षीणयोरितरेतरग्राह्यग्राहकत्वानुपपत्तिः । ततश्च विज्ञानभेदप्रतिज्ञा क्षणिकत्वादिधर्मप्रतिज्ञा स्वलक्षणसामान्यलक्षणवास्यवासकत्वाविद्योपप्लवसदसद्धर्मबन्धमोक्षादिप्रतिज्ञाश्च स्वशास्त्रगतास्ता हीयेरन् । किंचान्यत् । विज्ञानं विज्ञानमित्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः कुड्यमित्येवंजातीयकः कस्मान्नाभ्युपगम्यत

---

## भामती ।

भेदं चाध्यवस्यन्ति प्रतिपत्तारः । न चैतदैकात्म्येऽवकल्पत इत्याह—**अपिच घटज्ञानं पटज्ञानमिति** । तथार्थाभेदेऽपि विज्ञानभेददर्शनान्न विज्ञानात्मकत्वमर्थस्येत्याह—**तथा घटदर्शनं घटस्मरणमिति** । **अपिच** स्वरूपमात्रपर्यवसितं ज्ञानं ज्ञानान्तरवार्तानभिज्ञमिति ययोर्भेदस्ते द्वे न गृहीते इति भेदोऽपि तद्गतो न गृहीत इति । एवं क्षणिकशून्यानात्मत्वादयोऽप्यनेकप्रतिज्ञाहेतुदृष्टान्तज्ञानभेदसाध्याः । एवं स्वमसाधारणमन्यतो व्यावृत्तं लक्षणं यस्य तदपि यद्व्यावर्तते यतश्च व्यावर्तते तदनेकज्ञानसाध्यम् । एवं सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वाऽनेकज्ञानगम्यम् । एवं वास्यवासकभावोऽनेकज्ञानसाध्यः । एवमविद्योपप्लववशेन यत्सदसद्धर्मत्वं यथा नीलमिति सद्धर्मः, नरविषाणमित्यसद्धर्मः, अमूर्तमिति सदसद्धर्मः । शक्यं हि शशविषाणममूर्तं वक्तुम् । शक्यं च विज्ञानममूर्तं वक्तुम् । यथोक्तम्—'अनादिवासनोद्भूतविकल्पपरिनिष्ठितः । शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः ॥' इति । एवं मोक्षप्रतिज्ञा च यो मुच्यते यतश्च मुच्यते येन मुच्यते तदनेकज्ञानसाध्या । एवं विप्रतिपन्नं प्रतिपादयितुं प्रतिज्ञेति यत्प्रतिपादयति येन प्रतिपादयति यश्च पुरुषः प्रतिपाद्यते यश्च प्रतिपादयति तदनेकज्ञानसाध्यमित्यसत्येकस्मिन्ननेकार्थज्ञानप्रतिसंधातरि नोपपद्यते । तत्सर्वं विज्ञानस्य स्वांशालम्बनेऽनुपपन्नमित्याह—**अपिच द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोरिति** । **अपिच** भेदाश्रयः कर्मफलभावो नाभिन्ने ज्ञाने भवितुमर्हति । नो खलु छिदा छिद्यते किंतु दारु । नापि पाकः पच्यतेऽपि तु तण्डुलाः । तदिहापि न ज्ञानं स्वांशेन ज्ञेयम्; आत्मनि वृत्तिविरोधादपि तु तदतिरिक्तोऽर्थः पाच्या इव तण्डुलाः पाकातिरिक्ता इति । भूमिरचनापूर्वकमाह—**किंचान्यत् । विज्ञानं विज्ञानमित्यभ्यु-**

## वेदान्तकल्पतरुः ।

अर्थैकोपलम्भनियमादित्येव हेतुस्तत्राह—**अपिचेति** । **अनुविद्धं** विषयत्वेन संबद्धमित्यर्थः । उपलभ्यत इति साक्षात्कारामिप्रायम् । मनुजग्रहणं तिर्यगादिव्यावृत्त्यर्थम् । चाक्षुषवस्तुन आलोकसाक्षात्कारव्यतिरेकेणानुपलब्धावपि तदैक्याद‌र्शनादनैकान्तिको हेतुरित्यर्थः । ज्ञानभेदसाध्या इत्यादौ सर्वत्रासत्येकस्मिन्ननेकार्थज्ञानप्रतिसंधातरि नोपपद्यत इति वक्ष्यमाणेनान्वयः । **भाष्ये**—वास्यवासकत्वमविद्योपप्लवे हेतुरविद्योपप्लवश्च सदसद्धर्मेषु हेतुरिति व्याचष्टे—**एवमिति** । **अविद्या** सविकल्पकप्रत्ययः । **अनादीति** । अनादिवासनाजन्यसविकल्पकप्रत्ययात्मकविकल्पपरिनिष्ठितो विषयीकृतो यः शब्दार्थः स त्रिविधो ज्ञेयः । त्रैविध्यमेवाह—**भावेति** । भावं नीलादि नीलत्वादिरभावं नरविषाणं नरविषाणत्वादि । उभयं विज्ञाननरविषाणादिममूर्तत्वादिराश्रयत इति तथोक्तः । बन्धमोक्षादिप्रतिज्ञा इति भाष्यगतादिशब्दं व्याचष्टे—**एवं विप्रतिपन्नमिति** । प्रतिज्ञेत्यत्रेतिशब्दो यस्मादर्थे यदिति प्रतिपादनविषयनिर्देशः असत्येकस्मिन्प्रतिसंधातरि नोपपद्यते, तावल्लोके त्वया च स नेष्ट इत्याह—**तत्सर्वं विज्ञानस्येति** । कर्मफलभावो ज्ञानज्ञेयभावः अत्यन्तविरुद्धावित्यतः प्राक्तनभाष्येण प्रतिबन्दीरूपा भूमिरचना क्रियते । तया च ज्ञेयार्थस्वरूपं साधितम् । तत आरभ्य एकस्य कर्मक्रियाविरोध उक्तः ।

## कल्पतरुपरिमलः ।

विद्वद्बुद्धिबोध्यत्वनियमो नास्ति, उलूकपिशाचादिचक्षुर्ग्राह्ये व्यमिचारादित्याशङ्क्य मनुजैरिति विशेषितमित्याह—**मनुजग्रहणमिति** । **वास्यवासकत्वमविद्योपप्लवे हेतुरिति** । उत्तरज्ञानस्य नीलाद्याकारसमर्पणोपयुक्तवासनाशक्तिमत्पूर्वज्ञानं वासकम् उत्तरज्ञानं वास्यम् । अनयोः संबन्धो वास्यवासकत्वं तस्य सविकल्पकरूपाविद्योपप्लवहेतुत्वोक्त्या विवक्षितविवेकेन वासनाया एव तद्धेतुत्वमुक्तं भवति । अनादिवासनोद्भूतेति संमतिश्लोकेन च तथैव स्फुटीकरिष्यते । **भावमिति** । भावं नीलादिकम् **उभयं** विज्ञाननरविषाणादिकं च कर्म मूर्तत्वादि, अमूर्तत्वं सत्त्वमसत्त्वं च कर्तृ, समाश्रयत इति सत्त्वादिशब्दार्थो भावाभावोभयाश्रय उक्त इत्यर्थः । न चास्त्वेकः प्रतिसंधाता नैतावता बाह्यार्थसिद्धिरित्याशङ्क्याह—**त्वया च स नेष्ट इति** । बाह्यास्तित्व इव क्षणिकविज्ञानसन्तत्यतिरिक्तात्मास्तित्वेऽपि तन्मतभङ्गस्तुल्य इति भावः । **चोदयतीति** ग्रन्थमाश-

इति वक्तव्यम्। विज्ञानमनुभूयत इति चेत्, बाह्योऽप्यर्थोऽनुभूयत एवेति युक्तमभ्युपगन्तुम्। अथ विज्ञानं प्रकाशात्मकत्वात्प्रदीपवत्स्वयमेवानुभूयते न तथा बाह्योऽप्यर्थ इति चेत्, अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छस्यग्निरात्मानं दहतीतिवत्, अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छस्यहो पाण्डित्यं महद्दर्शितम्। नचार्थाव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते; स्वात्मनि क्रियाविरोधादेव। ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे तदप्यन्येन ग्राह्यं तदप्यन्येनेत्यनवस्था प्राप्नोति। अपिच प्रदीपवदवभासात्मकत्वाज्ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पना-

## भामती।

पगच्छतेति। चोदयति—**ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्व इति। अयमर्थः**—स्वरूपादतिरिक्तमर्थं चेद्विज्ञानं गृह्णाति, ततस्तदप्रत्यक्षं सन्नार्थं प्रत्यक्षयितुमर्हति। नहि चक्षुरिव तन्निलीनमर्थे कंचनातिशयमाधत्ते, येनार्थमप्रत्यक्षं सत्प्रत्यक्षयेत्, अपितु तत्प्रत्यक्षतैवार्थप्रत्यक्षता। **यथाहुः**—'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति' इति। तच्चेत् ज्ञानान्तरेण प्रतीयेत, तदप्रतीतं नार्थविषयं ज्ञानमपरोक्षयितुमर्हति। एवं तत्तदित्यनवस्था। तस्मादनवस्थाया बिभ्यता वरं स्वात्मनि वृत्तिराश्रिता। **अपिच** यथा प्रदीपो न दीपान्तरमपेक्षते, एवं ज्ञानमपि न ज्ञानान्तरमपेक्षितुमर्हति समत्वादिति। तदेतत्परिहरति—**तदुभयमप्यसत्। विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो ग्रहणाकाङ्क्षानुत्पादादनवस्थाशङ्कानुपपत्तेः। अयमर्थः**—सत्यमप्रत्यक्षस्योपलम्भस्य नार्थदृष्टिः प्रसिध्यति, न तूपलब्धारं प्रति तत्प्रत्यक्षत्वायोपलम्भान्तरं प्रार्थनीयम्, अपितु तस्मिन्निन्द्रियार्थसंनिकर्षादन्तःकरणविकारभेद उत्पन्नमात्र एव प्रमातुरर्थश्चोपलम्भश्च प्रत्यक्षौ भवतः। अर्थो हि निलीनस्वभावः प्रमातारं प्रति स्वप्रत्यक्षत्वायान्तःकरणविकारभेदमनुभवमपेक्षते, अनुभवस्तु जडोऽपि स्वच्छतया चैतन्यबिम्बोद्ग्रहणाय नानुभवान्तरमपेक्षते, येनानवस्था भवेत्। नह्यस्ति संभवोऽनुभव उत्पन्नश्च, नच प्रमातुः प्रत्यक्षो भवति, यथा नीलादिः। तस्माद्यथा छेत्ता छिदया छेद्यं वृक्षादि व्याप्नोति, नतु छिदा छिदान्तरेण, नापि छिदैव छेत्री, किंतु स्वत एव देवदत्तादिः, यथा वा पक्ता पाक्यं पाकेन व्याप्नोति नतु पाकं पाकान्तरेण, नापि पाक एव पक्ता किंतु स्वत एव देवदत्तादिः, एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति नतु प्रमां प्रमान्तरेण, नापि प्रमैव प्रमात्री, किंतु स्वत एव प्रमायाः प्रमाता व्यापकः। नच प्रमातरि कूटस्थनित्यचैतन्ये प्रमापेक्षासंभवो यतः प्रमातुः प्रमायाः प्रमात्रन्तरापेक्षायामनवस्था भवेत्। तस्मात् सुष्ठूक्तं 'विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणः प्रमातुः कूटस्थनित्यचैतन्यस्य ग्रहणाकाङ्क्षानुत्पादात्' इति। यदुक्तं 'समत्वादवभा-

## वेदान्तकल्पतरुः।

विज्ञानस्य स्वव्यतिरिक्तार्थविषयत्वे कुतस्तस्यान्येन ग्राह्यत्वापत्तिः? चक्षुर्वदप्रकाशमानस्याप्यर्थबोधकत्वसंभवादतश्चोद्यानुपपत्तिमाशङ्क्याह—**चोदयतीति। अप्रत्यक्षोपलम्भस्येति।** यद्यप्रत्यक्ष उपलम्भः स्यात्तर्हि चक्षुष इव तस्यार्थदृष्टिरजन्या स्यात्, सा च न सिध्यति; तस्या अप्यन्यदृष्ट्यपेक्षत्वेनानवस्थानादित्यर्थः। तर्हि ज्ञानं ज्ञानान्तरप्रत्यक्षं सदर्थप्रकाशो भवतु, तत्राह—**तच्चेदिति। नन्वर्थं** प्रत्यक्षयितुं यथा साक्षिणि उपलम्भ इष्यते, एवमुपलम्भमपि प्रत्यक्षयितुमुपलम्भान्तरमेष्टव्यं, तत्र कुतो नाकाङ्क्षा? अत आह—**सत्यमिति।** विज्ञानग्रहमात्र एवास्माभिः स्वीकृते विज्ञानसाक्षिणः विज्ञानविषयग्रहणान्तराकाङ्क्षानुत्पादादिति भाष्यार्थः। अनङ्गीक्रियमाणं दर्शयति—**नत्विति। तत्प्रत्यक्षत्वाय** तस्योपलम्भस्य प्रत्यक्षत्वायेत्यर्थः। स्वप्रकाशसाक्षिणि अन्तःकरणप्रतिबिम्बिते सत्यन्तःकरणपरिणामस्य भास्वरस्य स्वत एव साक्षिप्रतिबिम्बाधारतया सिद्धिसंभवान्न परिणामान्तरादपरोक्षतेति ग्रन्थार्थः। यद्यनुभवापरोक्ष्यं परिणामान्तरात्, तर्ह्यनुभव उदितोऽपि कदाचिन्न प्रकाशेत, न चैवम्। अतो नित्यसाक्ष्यनुभवसिद्ध इत्याह—**नह्यस्ति संभव इति। प्रमातुः** साक्षिणः। नचानुव्यवसायादनुभवप्रत्यक्षता; तस्याप्यप्रत्यक्षस्यानुभवसिद्धत्वायोगादनुभवान्तरतः प्रत्यक्षत्वेऽनवस्थाया उक्तत्वादिति। न केवलमनुभवे एवानुभवितुर्व्याप्तावनुभवान्तरानपेक्षा, किंतु क्रियामात्रमेव कर्त्रा क्रियान्तरमन्तरेण व्याप्यत इत्याह—**यथा छेत्तेति।** माभूज्ज्ञानविषयज्ञानपरिणामान्तरापेक्षयाऽनवस्था, साक्षिणस्तु साक्ष्यन्तराश्रितप्रमापेक्षयाऽनवस्था स्यादित्याशङ्क्य स्वप्रकाशत्वान्नेत्याह—**नच प्रमातरीति।** अनेन साक्षिविषयग्रहणाकाङ्क्षानुत्पादादित्येव-

## कल्पतरुपरिमलः।

ङ्क्षानिराकरणार्थत्वेनावतारयति—**विज्ञानस्य स्वव्यतिरिक्तार्थविषयत्व इति। विज्ञानग्रहणमात्र एवेति।** अन्तःकरणवृत्तिरूपं यद्विज्ञानं तन्नीलादिविषयग्रहणं, तन्मात्र एव स्वीकृते तत्प्रतिबिम्बितो विज्ञानसाक्षी विज्ञानविषयं ग्रहणान्तरं नापेक्षते, स्वयमेव तद्भावरूपत्वादतो नानवस्थेति भाष्यार्थ इत्यर्थः। **अनुभवितुर्व्याप्ताविति।** अनुभवितृकर्तृकव्याप्ता-

नर्थक्यमिति । तदुभयमप्यसत्; विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो ग्रहणाकाङ्क्षानुत्पादा-दनवस्थाशङ्कानुपपत्तेः । साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्ध्रुपलभ्यभावोपपत्तेः, स्वयं-

## भामती ।

स्वावभासकभावानुपपत्तेः' इति, तत्राह—**साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्ध्रुपलभ्यभावोपपत्तेः।** मा भूत् ज्ञानयोः साम्येन ग्राह्यग्राहकभावः । ज्ञातृज्ञानयोस्तु वैषम्यादुपपद्यत एव। ग्राह्यत्वं च ज्ञानस्य न ग्राहक-क्रियाजनितफलशालितया यथा बाह्यार्थस्य, फले फलान्तरानुपपत्तेः । यथाहुः—'न संविदर्यते फलत्वात्' इति, अपितु प्रमातारं प्रति स्वतःसिद्धप्रकटतया । ग्राह्योऽप्यर्थः प्रमातारं प्रति सत्यां संविदि प्रकटः संविदपि प्रकटा। **यथाहुरन्ये**—'नास्याः कर्मभावो विद्यते' इति । **स्यादेतत्**—यत्प्रकाशते तदन्येन प्रकाश्यते यथा ज्ञानार्थौ, तथाच साक्षीति नास्ति प्रत्ययसाक्षिणोर्वैषम्यमित्यत आह—**स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात् ।** **तथाहि**—अस्य साक्षिणः सदाऽसंदिग्धाविपरीतस्य नित्यसाक्षात्कारताऽनागन्तुकप्रकाशत्वे घटते । **तथाहि**—प्रमाता संदिहानोऽप्यसंदिग्धो विपर्यस्यन्नप्यविपरीतः परोक्षमर्थमुत्प्रेक्षमाणोऽप्यपरोक्षः स्मरन्नप्यानुभविकः प्राणभृन्मात्रस्य।

## वेदान्तकल्पतरुः ।

मपि पूर्वभाष्यं व्याख्यातम् । **ननु** साक्षिणं प्रति प्रत्ययस्योपलभ्यत्वे तद्विषय उपलम्भोऽन्योवाच्यः, तस्य प्राक् निरासात् पूर्वापरविरोध इति भ्रममपनयति—**ग्राह्यत्वं चेति ।** फलेन्तःकरणगतज्ञानपरिणामे स्वाभाविकाकाशकल्पसाक्षिचैतन्यव्य-तिरेकेण परिणामान्तरापेक्षफलान्तरानुत्पत्तेरित्यर्थः । चैतन्याभिव्यक्तिस्तु फलमस्त्येव । **तदाहुरत्रभवन्तो वार्ति-ककाराः—वियद्वस्तुस्वभावाऽनुरोधादेव न कारकात् । वियत्संपूर्णतोत्पत्तौ कुम्भस्यैवं दशा धियाम् ॥ इति । न संविदर्यते** ज्ञायते परिणामज्ञानेनेत्यर्थः । स्वतःसिद्धप्रकटतया ज्ञानस्य ग्राह्यत्वमित्यनुषङ्गः । **ननु** यदि परिणामव्याप्तिव्यतिरेकेण संवित् साक्षिणं प्रत्यपरोक्षा, तर्ह्यर्थोऽपि स्वाद्यापकसाक्षिसंबन्धस्य संविदर्थयोरविशेषादित्या-शङ्क्याह—**ग्राह्योऽप्यर्थ इति ।** अर्थो हि स्वविषयान्तःकरणपरिणामरूपायां संविदि सत्यां तदधीनाभिव्यक्तिकसाक्षिरू-पानुभवात् प्रकटो भवति । सा तु संवित् केवलस्वरूपानुभवात्स्वप्रतिबिम्बितात् प्रकटतां प्रतिपद्यते । **एतदुक्तं भवति**—सर्वव्यापी सन्नपि स्वरूपानुभवोऽविद्यावृतत्वान्न भासते, स तु निर्मले इव मुकुरतले मुखं भास्वरस्वभावविशेषवदन्तःकरणे व्यज्यत इति तद्वृत्तिरपि भासुरा संनिहिता चेति भवति स्वभावप्रकटा । अर्थस्त्वन्तःकरणं प्रति व्यवहितो न च स्वभावा-देव चैतन्याभिव्यञ्जनक्षमः । दृष्टं च संबन्धाविशेषेऽपि स्वभावविशेषाद् व्यञ्जकाव्यञ्जकत्वम् । यथा चाक्षुषी प्रभा संबन्धा-विशेषेऽपि रूपाद्येव व्यञ्जयति, न वाय्वादिकम् । तस्मात्परिणामाभिव्यक्तानुभवादर्थसिद्धिरिति । **कर्मभाव इति ।** परिणामक्रियाजन्यफलभागितेत्यर्थः । आत्मस्वप्रकाशत्वबलादिदं सर्वं सिध्यति, तदेवासिद्धमिति शङ्कते—**स्यादेतदिति ।** आत्मा ज्ञेयः प्रकाशमानत्वाद् घटवदित्यनुमानम् । इदं तावदाभासः । अत्र हि यत्प्रकाशते तद्वेद्यमिति व्याप्तिरभ्युपेया । तथा सत्यस्या व्याप्तेर्या ग्राहिका संवित् सा स्वस्यां परिस्फुरति न वा । **प्रथमे** किं कर्मत्वेन किं वाऽन्यसंविदनपेक्षस्वव्यव-

## कल्पतरुपरिमलः ।

वित्यर्थः । अनेनसाक्षिविषयेति विज्ञानसाक्षिग्रहणाकाङ्क्षानुत्पादादिति भाष्यं विज्ञानसाक्षिणः कर्तुर्विज्ञानविषयग्रहणाकाङ्क्षानु-त्पादादित्येतदर्थपरतया पूर्वं व्याख्यातं, तद्भाष्यमनेन ग्रन्थेन विज्ञानसाक्षिकर्मकग्रहणान्तराकाङ्क्षानुत्पादादित्यपि व्याख्यातं भवतीत्यर्थः । **वियद्वस्त्विवति ।** कुम्भस्योत्पत्तौ सत्यां तस्य या वियत्संपूर्णता सा वियद्वस्तुस्वभावानुरोधात्सर्वत्र व्यापकस्य वियतोऽयं स्वभावो यदवच्छेदकस्य कुम्भादेरुत्पत्तौ सत्यां तेनावच्छिद्यत इति । एवंभूततत्स्वभावानुरोधादेव नतु कारणा-न्तरात्सा संपूर्णता । एवं धियां दशा संपूर्णतापि दृग्वस्तुस्वभावादेवेति श्लोकार्थः । **स्वतःसिद्धप्रकटतया ज्ञानस्य ग्राह्यत्वमिति संबन्ध इति ।** ज्ञानस्य ग्राह्यत्वमित्यस्यानुषङ्ग इत्यर्थः । **व्यापकसाक्षिसंबन्धस्येति ।** अविद्यावच्छिन्नो जीव एव साक्षी, स च विषयप्रदेशेऽप्यस्तीति विषयस्यापि तत्संबन्धस्तुल्य इत्यर्थः । **तदधीनाभिव्यक्तिकेति ।** व्याप-कोऽपि साक्षी स्वच्छान्तःकरणावच्छिन्नोऽनावृतो विषयावच्छिन्नस्त्वावृत इत्यावरणभङ्गार्थं वृत्यपेक्षेत्यर्थः । एतत्प्रपञ्चस्त्वस्म-त्कृते सिद्धान्तलेशसंग्रहे द्रष्टव्यः । **यथा चाक्षुषी प्रभेति ।** यद्यपि दृष्टान्ते चक्षुःप्रभात्मकं व्यञ्जकमेकं रूपं वायुश्चेति व्यङ्ग्यमव्यङ्ग्यं च भिन्नं, दार्ष्टान्तिके व्यङ्ग्यसाक्षिचैतन्यमेकम् अन्तःकरणं घटादिकं चेति व्यञ्जकमव्यञ्जकं च भिन्नम्; तथापि व्यङ्ग्यव्यञ्जकभावो वस्तुमहिम्ना व्यवस्थित इत्येतावन्मात्रे दृष्टान्तः, सर्वात्मतासमस्तु दृष्टान्तः प्रागेवाचार्यैर्दर्शितः—मुकुरतले मुखमित्यनेन घटमुकुरयोर्मुखसन्निध्याविशेषेऽपि स्वच्छो मुकुर एव मुखस्य व्यञ्जको न घट इति । **आत्मा ज्ञेय इति । ननु** इदं शरीरं सात्मकं प्राणादिमत्त्वादित्यानुमानिकज्ञानविषयत्वेन चैत्रो विद्वानित्यादिशब्दज्ञानविषयत्वेन च सिद्धसाधनम् । प्रकाशमानत्वं ज्ञेयत्वं चेत्साध्याविशेषः । अन्यच्च दुर्वचमिति—चेत्, आत्मा अपरोक्षज्ञानविषयः

## वेदान्तकल्पतरुः ।

हारहेतुत्वेन । **नाग्रिमः**; स्वात्मनि वृत्तिविरोधात् । **न चरमः**; तस्यामेव संविदि व्यभिचारात् । **न चरमः**; अस्या एव संविदो विशेषस्यानवभासनात् कथं सकलविशेषोपसंग्रहवती व्याप्तिरस्यां संविदि परिस्फुरेत् ? परिस्फुरणे च कथमनुमानमुदयेत ? एवं सिद्धेऽस्य दौर्बल्ये स्वप्रकाशत्वसाधनीयदोषामनुमामाह कालातीतत्वसिद्धये—**तथाहीत्यादिना** । अनागन्तुकप्रकाश इति प्रतिज्ञा । आगन्तुकः स्वविषयी अर्थात् प्रकाश इति लभ्यते । स यस्य नास्ति स चासौ प्रकाशश्च तत्त्वे सतीत्यर्थः । अनेनाज्ञेयत्वे सति भासमानत्वं स्वप्रकाशत्वमिति निरुक्तम् । भासमानत्वं च व्यावहारिकबाधविधुरं भासत इति शब्दलक्ष्यत्वं न भानविषयत्वमिति न व्याघातः । नच वेदान्तज्ञेयत्वविरोधः । निरुपाधेरज्ञेयत्वाद्वेदान्तजन्यवृत्त्युपाधौ तज्ज्ञेयत्वमपीति ह्युक्तं तत्र प्रस्मर्तव्यम् । **अतएव**—स्वप्रकाशस्यानुमानज्ञेयत्वविरोध इति—**निरस्तम्**; अनुमितेरेव ज्ञेयत्वोपाधित्वात् । नित्यसाक्षात्कारताऽनागन्तुकप्रकाशत्वे हेतुः । संविदभिन्नत्वं च साक्षात्कारत्वं, न तु इन्द्रियजप्रतीतित्वादि । तच्च संविदः स्वतः; तदन्यस्य तदध्यासात्, तत्समर्थनार्थमसंदिग्धाविपरीतस्येत्युक्तम् । असंदिग्धाविपर्यस्तत्वमुपपादयति—**तथा हि प्रमातेत्यादिना** । संदिहानोऽप्यन्यदिति शेषः । एवं सर्वत्र । **तदयं प्रयोगः**—आत्मा, स्वयंप्रकाशः, शश्वदपरोक्षत्वात्, शश्वदपरोक्षश्च शश्वदसंदिग्धत्वाद्व्यतिरेके घटवत् । न चाप्रसिद्धविशेषणत्वम्; अयं घट एतदन्यज्ञेयत्वरहितभासमानान्यः,

## कल्पतरुपरिमलः ।

अनुमितिशाब्दज्ञानाजन्यव्यवहारविषयत्वादित्यत्र तात्पर्यात् । **कथं सकलविशेषोपसंग्रहवतीति** । यद्यपि व्यवहारविषयत्वमेक एव धर्मो हेतुः, नतु धूमवदनेकव्यक्तिरूप इति नात्र सकलहेतुव्युत्पत्त्युपसंग्रहापेक्षा; तथापि सकलहेत्वाश्रयोपसंग्रहापेक्षास्ति, योयो धूमवान् सोऽग्निमानित्यादिनोदाहरणवाक्येन व्याप्तिबोधकेन वीप्सितयच्छब्दोपस्थापितसकलहेत्वाश्रयेषु साध्यसंबन्धबोधनात्तदनुसारेण व्याप्तेर्यावद्धेत्वाश्रयवर्तिसाध्यसामानाधिकरण्यरूपताया वक्तव्यत्वादिति भावः । आगन्तुको यस्य नास्ति सोऽनागन्तुकः सचासौ प्रकाशश्चेति बहुव्रीहिगर्भकर्मधारयपरिग्रहे कोऽत्रागन्तुको निषेध्य इति जिज्ञासायामाह—**अर्थादिति** । नित्यापरोक्षत्वहेतूपादानसामर्थ्यादागन्तुकस्तद्विषयप्रकाशो निषेध्य इत्यर्थाल्लभ्यते इत्यर्थः । **भासमानत्वमिति** । आवृतत्वादभासमानेऽपि पूर्वोक्तेन भासत इति शब्देन बोध्यत्वमस्तीति तदपि भासमानं भवेदतो बाधविधुरमित्युक्तम् । तथा सत्यसंभवः; ब्रह्मातिरिक्तस्य सर्वस्य बाध्यत्वादिति व्यावहारिकविशेषणम् । **वेदान्तजन्यवृत्त्युपाधाविति** । तथाच यदुपहितं ज्ञेयं न तत्स्वप्रकाशत्वेनेष्यते, यत्त्वनुपहितं तथेष्यते न तज्ज्ञेयमिति नासंभव इत्यर्थः । **ननु**—वृत्त्युपहितस्य तेन रूपेण तद्विषयत्वं नोक्तं, किंतु वृत्त्युपरागे सति वृत्त्यंशं परित्यज्य केवलस्यात्मनस्तद्विषयत्वमुक्तं वृत्त्युपरागोऽत्र सत्तयैवोपयुज्यते, न प्रतिभास्यतया । अतो वृत्तिसंसर्गे सत्यात्मा विषयो भवति, नतु स्वत इति, अतः स्वप्रकाशस्य केवलस्यात्मनो वृत्तिविषयत्वाङ्गीकारादज्ञेयत्ववचनमयुक्तमिति—**चेद्, न**; उपाध्यघटनीयज्ञानविषयत्वाभावस्य विवक्षितत्वात् । नचैवं मुकुरोपाधिघटनीयज्ञानविषयभावे मुखप्रतिबिम्बेऽतिव्याप्तिः; प्रतिबिम्बस्य बिम्बाभिन्नत्वाद्बिम्बस्य च मुखप्रतिबिम्बोपाधिं विनापि ज्ञेयत्वात् । **संविदभिन्नत्वं चेति** । इन्द्रियत्वावच्छिन्नेन्द्रियजन्यज्ञानत्वं ज्ञानापरोक्ष्यं, तद्विषयत्वं विषयापरोक्ष्यमिति विभागो नेष्यते, किंतु सर्वानुगतमापरोक्ष्यं संविदभिन्नत्वं तच्च संविद्रूपस्यात्मनः स्वतःसिद्धं, तदन्यस्य बाह्यस्य घटादेरान्तरस्यान्तःकरणवृत्त्यादेश्च संविद्भेदेनाध्यस्तत्वादभिव्यक्तसंविदभेदाध्याससिद्धमित्यर्थः । **तत्समर्थनार्थमिति** । आत्मनो नित्यापरोक्षसंविदभिन्नत्वसमर्थनार्थमित्यर्थः । **शश्वदिति** । हेतुद्वयेऽपीदं विशेषणं घटादिव्यावृत्त्यर्थम् । अतएव तस्य व्यतिरेकदृष्टान्तता । यद्यप्यात्मनो वेदान्तप्रतिपाद्याखण्डानन्दरूपेणावृतत्वात्तेन रूपेण संदिग्धत्वमस्ति, अतएव तस्य शास्त्रविषयतोक्ता प्रथमसूत्रे; तथापि तस्य ज्ञानसुखादिसाक्षिचैतन्यरूपेणानावृतत्वमसंदिग्धत्वं चास्तीति द्वितीयहेतोर्नासिद्धिः । **नचाप्रसिद्धविशेषणत्वम्** । प्रथमानुमानस्येति शेषः । **एतदन्येति** । एतस्मात्पक्षीकृतादन्यत्वेन विशेषितं यज् ज्ञेयत्वं तद्रहितं यद्भासमानं तदन्येत्यर्थः । दृष्टान्ते पक्षादन्यत्वमादाय साध्यसिद्धिः । पक्षो हि ज्ञेयः सन्नपि पक्षान्यत्वाभावात्तद्विशिष्टज्ञेयत्वरहितो भवति, भासमानश्च, तदन्यत्वं पटे संप्रतिपन्नं, पक्षे तु न पक्षादन्यत्वमादाय साध्यसिद्धिः, बाधात्, किंतु पक्षादन्यत एव कुतश्चित्पक्षान्यत्वविशिष्टज्ञेयत्वरहिताद्भासमानादन्यत्वमादाय पक्षे साध्यसिद्धिर्वाच्या, प्रसिद्धघटादिमध्ये च पक्षादन्यत्वविशिष्टज्ञेयत्वरहितं भासमानं वस्तु नास्ति; सर्वस्यापि भासमानस्य पटादेः पक्षादन्यस्य पक्षान्यत्वविशिष्टज्ञेयत्ववत्त्वात् । अतो यस्मादन्यत्वमादाय पक्षे साध्यपर्यवसानं वाच्यं तत्किंचिदप्रसिद्धं पक्षादन्यविशिष्टज्ञेयत्वरहितं भासमानं वस्त्वनेनानुमानेन सिध्यति । तत्र च विशिष्टराहित्यं न पक्षान्यत्वविशेषणाभावाद्वक्तुं शक्यम् । यतोऽन्यत्वं पक्षस्य साध्यते, तस्य पक्षान्यत्वनियमादतस्तत्र ज्ञेयत्वरूपविशेष्याभावेन विशिष्टराहित्यं वाच्यमित्यज्ञेयभासमानवस्तुसिद्धिः । अतस्तस्य साध्यप्रसिद्ध्युपपादकस्यानुमानस्यानन्तरं क्वचित्क्वचित्कोशे अनुमानान्तरप्रदर्शनं तत्र हेतुविशेषणव्यावर्त्यकथनमाश्रयासिद्धिपरिहरणं साध्यार्थकथनं तत्रैव सिद्धसाधनत्वशङ्कानिराकरणार्थत्वेन नचैतदित्यादिटीकाग्रन्थवाक्यावतारणं च दृष्टं

सिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात् । किंचान्यत् । प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् । शिलाघनमध्यस्थ-

## भामती ।

न चैतदन्याधीनसंवेदनत्वे घटते । अनवस्थाप्रसङ्गश्चोक्तः । तस्मात्स्वयंसिद्धतास्याऽनिच्छताप्यप्रत्याख्येया प्रमाणमार्गीयत्वादिति । किंचोक्तेन क्रमेण ज्ञानस्य स्वयमवगन्तृत्वाभावात्प्रमातुरनभ्युपगमे च प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् । शिलाघनमध्य-

## वेदान्तकल्पतरुः ।

द्रव्यत्वाद्, घटवदिति तत्सिद्धेरिति । विपक्षे दण्डमाह—**न चैतदिति** । यदि नित्यसाक्षात्कारत्वमात्मनो न स्यात्, तर्हि कदाचिदात्मनि संदेहः स्यादित्यर्थः । **स्यादेतत्**—आत्मविषया संविदुदेत्येवेति, तत्राह—**अनवस्थेति** । उक्तेन

## कल्पतरुपरिमलः ।

तद्विलिख्यते—तथा देवदत्तस्य तदात्मास्तित्वजिज्ञासायामेकस्मिन् क्षण एव तदात्मनिष्ठतदात्मविषयसंदेहध्वंसोऽसंदिग्धाविपरीतैतदात्मानुभवजन्यः, एतदात्माभावप्रमैतदात्मविपर्ययाभ्यामजन्यत्वे सति जिज्ञास्यमानैतदात्मगोचरसंदेहनिवृत्तित्वात्, पुरुषान्तरगतैतदात्मगोचरतथाविधसंदेहनिवृत्तिर्वस्तुनि नास्तीत्यभावप्रमयास्तीति भ्रमेण वाऽनवधानेन वा भवति । सा च न भावतत्त्वानुभवजन्येति तत्र व्यभिचारः स्यात्तन्निवृत्त्यर्थमेतदात्माभावेत्यादिविशेषणत्रयत् । नच वाच्यमात्मनः शश्वदसंदिग्धत्वे कथं संदेहध्वंसः ? प्राप्त्यभावात्, संदिग्धत्वे च कथं शश्वदसंदिग्धत्वमिति; यतः शश्वदसंदिग्धत्वेऽपि पुरुषान्तरारोपितनास्तित्वकोटिकः संशयः स्यात्, स च स्वरूपानुभवात्सेत्स्यते । आत्मानुभवजन्य इत्यत्र चास्तीति व्यवहारहेतुरनुभव उक्तः स स्वरूपभूतोऽपि संभवतीति । ननूक्तविधानुभवजन्यत्वं संदेहध्वंसस्य सिद्धं साध्यते आत्मविषयतथाविधानुभवाभ्युपगमादित्याशङ्क्याह—नचैतदिति । यदि ततोऽन्योऽनुभवः संशयच्छेत्ता स्यात्, तर्हि तदात्मजिज्ञासायामप्यनुभवस्यानुदयसंभावनयाऽऽत्मसंदेहः स्यादित्यर्थः । स्यादेतत्—आत्मजिज्ञासायां तद्विषया संविदुदयत एवेति तत्राह—अनवस्थेति । यश्चेश्वरतथाविधानुभवजन्यत्वेन सिद्धसाधनत्वमाह, तं प्रत्यनीश्वरेति विशेषणीयम् । तदाभ्यां तर्काभ्यां परिशोधितमनुमानं स्वयंप्रकाशत्वे पर्यवस्यतीत्याह—तस्मादिति । सर्वमिदं प्रक्षिप्तमिव प्रतिभाति; नहि साध्यप्रसिद्ध्यर्थानुमानवदिहानुमानान्तरमपेक्षितम् । संदेहानुत्पादनियमवत्संदेहनिवृत्तिनियमोऽप्यनागन्तुकात्मानुभवसद्भावे साधकान्तरं भवेत् । वस्तुतः साधकान्तरमपि न भवति । यतस्तत्राश्रयासिद्धिरपरिहार्या, नहि सर्वानुभवसिद्धे सुखाद्यनुभवितरि साक्षिणि प्रत्यक्षदृष्टे घटइव पुरुषान्तरोक्तिमात्रेण नास्तित्वसंदेहः कस्यचिदुदेति, यतः संदेहनिवृत्तिः पक्षे सिध्येत् । चार्वाकोऽपि खल्वहमनुभवस्य शरीरं विषयं प्रदर्श्यातिरिक्तमात्मानमपलपति, नत्वहमनुभवमेवापलपति । नच—चार्वाकोपन्यस्तशरीरात्मवादयुक्तिश्रवणक्षुभितहृदयस्य शरीरातिरिक्तात्मास्तित्वसंदेहो भवतीति तन्निवृत्तिः पक्षे स्यादिति—वाच्यम्, तस्य संदेहस्य एक आत्मनः शरीरे भावा ( ब्र. सू. अ. ३ पा. २ सू. ५३ ) दित्यधिकरणोक्तस्थिरन्यायानुसंधाननिवर्त्यस्य शरीरविषयत्वेन शङ्कितान्यथासिद्धिनानुभवमात्रेण निवृत्त्यसंभवात् । **किंच** टीकायां स्वात्मनि संदेहानुत्पाद एव प्रपञ्चितः, संदेहनिवृत्तिस्तु लेशतोऽपि न स्पृष्टा । अतस्तत्र संदेहाद्यनुत्पादप्रपञ्चनानन्तरं प्रकृत्य तयोर्न **चैतदन्याधीनसंविदन्यत्वे घटते अनवस्थाप्रसङ्गश्चोक्त** इति वाक्ययोः संदेहनिवृत्तिपक्षकानुमानविषयसिद्धसाधनत्वशङ्कानिराकरणार्थत्वेनावतारणमपि न युक्तम्; उक्तानुमानयोः स्वप्रकाशत्वानुमाने विषयपरिशोधकतर्कत्वोक्तिरप्ययुक्ता; आद्यानुमानस्य साध्यप्रसिद्धिसंपादनार्थत्वात्, द्वितीयानुमानस्य कथंचिददृष्टत्वेऽपि नित्यानुभवे साधकान्तरत्वात् । तस्मान्न चैतदिति टीकावाक्यमात्मनो नित्यापरोक्षत्वाभावे कदाचिदात्मनि संदेहः स्यादित्येतत्परम् । आत्मविषयसंविदन्तरोत्पादनियमे वस्तुसंदेहानुत्पाद इति शङ्कावारणार्थमनवस्थाप्रसङ्गश्चोक्त इत्येव युक्तम् । तथैवावतारणं कोशान्तरेषु दृश्यते । तेषु खलु साध्यप्रसिद्ध्युपपादकमनुमानानन्तरमित्थं न चैतदित्यादिवाक्ययोरवतारणम् । विपक्षे दण्डमाह—**न चैतदिति** । यदि नित्यसाक्षात्कारत्वमात्मनो न स्यात्तर्हि कदाचिदात्मनि संदेहः स्यादित्यर्थः । **स्यादेतद्**—आत्मविषया संविदुदेत्येवेति, **तत्राह—अनवस्थेति** । एवं ग्रन्थेन व्याख्यानानन्तरं केषुचित्कोशेषु अधिकशङ्कापरिहारग्रन्थो दृश्यते—**ननु—सुखादीनामपि स्वसत्तायां संदेहाभावसाम्ये प्रकाश उच्यते ? आत्म-**

प्रदीपसहस्रप्रथनवत्। बाढमेवम्, अनुभवरूपत्वात्तु विज्ञानस्येष्टो नः पक्षस्त्वयाऽनुज्ञायत इति चेत्, नः अन्यस्यावगन्तुश्चक्षुःसाधनस्य प्रदीपादिप्रथनदर्शनात्। अतो विज्ञानस्याप्यवभास्यत्वाविशेषात्सत्येवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवदित्यवगम्यते। साक्षिणोऽवगन्तुः स्वयं सिद्धतामुपक्षिपता स्वयं प्रथते विज्ञानमित्येष एव मम पक्षस्त्वया वाचोयुक्त्यन्तरेणाश्रित इति चेत्, नः विज्ञानस्योत्पत्तिप्रध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात्। अतः प्रदीपवद्विज्ञानस्यापि व्यतिरिक्तावगम्यत्वमस्माभिः प्रसाधितम् ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति। तत्प्रतिवक्तव्यम्, अत्रोच्यते—न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात्? वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनर्वैधर्म्यम्। बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्या मयोपलब्धो महाजनसमागम इति, नह्यस्ति मम महाजनसमागमो निद्राग्लानं तु मे मनो बभूव तेनैषा भ्रान्तिरुद्बभूवेति। एवं मायादिष्वपि भवति यथायथं बाधः। नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते। अपिच स्मृतिरेषा यत्स्वप्नदर्शनम्।

### भामती।

**स्थप्रदीपसहस्रप्रथनवत्**। अवगन्तुश्चेत्कस्यचिदपि न प्रकाशते कृतमवगमेन स्वयंप्रकाशेनेति। विज्ञानमेवावगन्त्रिति मन्वानः शङ्कते—**बाढमेवम्। अनुभवरूपत्वादिति**। न फलस्य कर्तृत्वं कर्मत्वं वास्तीति प्रदीपवत्कर्त्रन्तरमेषितव्यं, तथाच न सिद्धसाधनमिति परिहरति—**न। अन्यस्यावगन्तुरिति**। ननु साक्षिस्थानेऽस्त्वस्मदभिमतमेव विज्ञानं, तथा च नाश्येव विप्रतिपत्तिर्नार्थ इति शङ्कते—**साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपता** अभिप्रेयता। **स्वयं प्रथते विज्ञानमित्येष एवेति**। निराकरोति—**नेति**। भवन्ति हि विज्ञानस्योत्पादादयो धर्मा अभ्युपेतास्तथा चास्य फलतया नावगन्तृत्वं, कर्तृफलभावस्यैकत्र विरोधात्, किंतु प्रदीपादितुल्यतेत्यर्थः ॥ २८ ॥ बाधाबाधौ वैधर्म्यम्। स्वप्नप्रत्ययो बाधितो जाग्रत्प्रत्ययश्चाबाधितः। त्वयापि चावश्यं जाग्रत्प्रत्ययस्याबाधितत्वमास्थेयं, तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते। जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेत्। नहि बाध्यमेव बाधकं भवितुमर्हति। तथाच न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्यात् **स्वप्नवदिति**। तस्माद्बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुम्। **निद्राग्लानमिति**। करणदोषाभिधनाम्। मिथ्यात्वाय वैधर्म्यान्तरमाह—**अपिच स्मृतिरेवेति**। संस्कारमात्रजं हि विज्ञानं स्मृतिः। प्रत्युत्पन्नेन्द्रियसंप्रयोगलिङ्गशब्दसारूप्यान्यथानुपपद्यमानयोग्यप्रमाणानुत्पत्तिलक्षणसामग्रीप्रभवं तु ज्ञानमुपलब्धिः। तदिह निद्राणस्य सामग्र्यन्तरविरहात्संस्कारः परिशिष्यते, तेन संस्कारजत्वात्स्मृतिः, सापि च निद्रादोषाद्विपरीताऽव-

### वेदान्तकल्पतरुः।

**क्रमेणेति**। न क्रिया तया व्याप्यते किंतु कर्त्रेत्यनेनेत्यर्थः। अनेन विज्ञानं व्यतिरिक्तग्राह्यं ग्राह्यत्वादिति पूर्वोक्तानुमानस्य विपक्षे दण्ड उच्यते। उक्तक्रमं स्फोरयति—**न फलस्येति। नार्थ इति**। नार्थेऽपि विप्रतिपत्तिः। तस्य लन्मतेऽपि मिथ्यात्वादित्यर्थः ॥ २८ ॥ स्वप्नवदित्ययं दृष्टान्तः साध्यविकलः स्यादिति योजना। अभ्युपेत्य स्वप्नप्रत्ययस्य निरालम्बनत्वं जाग्रत्प्रत्ययस्य तन्निरस्यति। वियतएव तु तस्यापि प्रातीतिकमालम्बनम्। एवं तावत् स्तम्भादिप्रत्ययो निरालम्बनः प्रत्ययत्वात्स्वप्नप्रत्ययवदित्यनुमानस्य बाध्यत्वेन सोपाधिकत्वमुक्तम्। नच साधनव्याप्तिः; सति प्रमातरि जाग्रत्प्रत्यये बाधविरहस्य प्रमितत्वेन साधनव्याप्त्यनुमानस्यातीतकालत्वात्। संप्रति प्रमाणाजन्यत्वेनापि सोपाधिकत्वमाह—**संस्कारमात्रजं हीति**। मात्रग्रहणेन प्रमाणकारणेन्द्रियादिसहितत्वं व्यावर्त्यते, नतु भ्रमहेतुदोषसाहित्यम्। अतएव भाष्यगतः स्मृतिशब्दः प्रमाणमिलितसंस्कारजत्वाद्भ्रमेऽपि स्वप्नज्ञाने औपचारिको व्याख्यातव्यः। उपलब्धिस्त्विति भाष्यगतमुपलब्धिशब्दं व्याचष्टे—**प्रत्युत्पन्नेति**। प्रत्युत्पन्नेन वर्तमानेन वस्तुना इन्द्रियसंयोगेनेत्यर्थः। षट्प्रमाणजनितं ज्ञानमुपलब्धिः। एवमव्याख्याने स्वप्न-

### कल्पतरुपरिमलः।

**प्रकाशेनैवानुगतेन तेषामापरोक्ष्यसंभवे प्रत्येकं न स्वप्रकाशत्वं कल्प्यमिति**। स्पष्टार्थोऽयं ग्रन्थः। **विपक्षे दण्ड उच्यत इति**। अनुकूलतर्क उच्यत इत्यर्थः ॥ २८ ॥ **साधनव्याप्त्यनुमानस्येति**। स्तम्भादिप्रत्ययो निरालम्बन इति दर्शितानुमानस्येत्यर्थः। **औपचारिको व्याख्यातव्य इति**। प्रमाणामिलितसंस्कारजत्वसादृश्यात्

उपलब्धिस्तु जागरितदर्शनम् । स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयतेऽर्थविप्रयोगसं-प्रयोगात्मकमिष्टं पुत्रं स्मरामि नोपलभ उपलब्धुमिच्छामीति । तत्रैवंसति न शक्यते वक्तुं मिथ्या जागरितोपलब्धिरुपलब्धित्वात्स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता । नच स्वानुभवा-पलापः प्राज्ञमानिभिर्युक्तः कर्तुम् । अपिचानुभवविरोधप्रसङ्गाज्जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुमिष्यते । नच यो यस्य स्वतो धर्मो न संभवति सोऽन्यस्य साधर्म्यात्तस्य संभविष्यति । न ह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्या-च्छीतो भविष्यति । दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः ॥ २९ ॥

## न भावोऽनुपलब्धेः ॥ ३० ॥

यदप्युक्तं विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्प्यत इति । तत्प्रतिवक्तव्यम् । अत्रोच्यते—न भावो वासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानाम् । अर्थोपलब्धि-निमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति । अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः । अनादित्वेऽप्यन्धपरंपरान्यायेनाप्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यान्ना-भिप्रायसिद्धिः । यावप्यन्वयव्यतिरेकावर्थापलापिनोपन्यस्तौ वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति, तावप्येवंसति प्रत्युक्तौ द्रष्टव्यौ । विनाऽर्थोपलब्ध्या वासनानुपपत्तेः । अपिच विनापि वासनाभिरर्थोपलब्ध्युपगमाद्विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमादर्थसद्भाव-मेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः । अपिच वासना नाम संस्कारविशेषाः । संस्काराश्च

---

### भामती ।

र्तमानमपि पित्रादि वर्तमानतया भासयति । तेन स्मृतेरेव तावदुपलब्धेर्विशेषस्तस्याश्च स्मृतेर्वैपरीत्यमिति । अतो मह-दन्तरमित्यर्थः । **अपिच** स्वतःप्रामाण्ये सिद्धे जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धं नानुमानेनान्यथयितुं शक्यम्; अनुभवविरोधेन तदनुत्पादात् । अबाधितविषयताप्यनुमानोत्पादसामग्रीग्राह्यतया प्रमाणम् । नच कारणाभावे कार्य-मुत्पत्तुमर्हतीत्याशयवानाह—**अपिचानुभवविरोधप्रसङ्गादिति** ॥ २९ ॥ यथा लोकदर्शनं चान्वयव्यतिरेका-वनुश्रियमाणावर्थ एवोपलब्धेर्भवतो नार्थानपेक्षायां वासनायाम् । वासनाया अप्यर्थोपलब्ध्यधीनत्वदर्शनादित्यर्थः । **अपिचा**श्रयाभावादपि न लौकिकी वासनोपपद्यते । नच क्षणिकमालयविज्ञानं वासनाधारो भवितुमर्हति; द्वयोर्युग-पदुत्पद्यमानयोः सव्यदक्षिणशृङ्गवदाधाराधेयभावाभावात् । प्रागुत्पन्नस्य चाधेयोत्पादसमयेसतः क्षणिकत्वव्याघात इत्याशयवानाह—**अपिच वासना नामेति** । शेषमतिरोहितार्थम् ॥ ३० ॥ **स्यादेतत्**—यदि साकारं विज्ञानं

### वेदान्तकल्पतरुः ।

स्यापि मिथ्योपलब्धित्वाद्वैधर्म्यं न सिध्येदिति । कालातीततां प्रत्ययत्वहेतोराह—**अपिच स्वत इति । ननूत्सर्गतः** प्राप्तमपि प्रामाण्यमनुमानादपोद्यतामत आह—**अनुभवविरोध इति** । अबाधितविषयत्वेनावगतस्यानुमानस्य प्रमाणत्वात्सति प्रत्यक्षबाधे न प्रमाजनकत्वमतो बाधकानुदयान्न प्रत्यक्षस्य प्रामाण्यापवाद इत्यर्थः । नहि यो यस्य स्वतो धर्मो न संभवति, सोऽन्यसाधर्म्यात्तस्य संभविष्यतीति भाष्यं । तत्र **न संभवतीति** प्रमाणेन न संभवतीत्यवधारित इत्यर्थः । तेन संदिग्धो वस्तुधर्मोऽन्यसाधर्म्याद्धूमवत्त्वादेः संभविष्यतीति सूचितम् ॥ २९ ॥ अर्थोपलब्ध्यभावान्न वासनानां भाव इत्युक्तम्; परेषामर्थाभावाद्वासनानामर्थोपलब्धिभिर्व्याप्तेरसंभूतत्वादित्याशङ्क्याह—**यथा लोकदर्शनमिति** । त्वयापि ह्यर्थोपलब्धेः स्वप्ने वासनाजन्यत्वं लोकसिद्धान्वयव्यतिरेकाभ्यामवगन्तव्यम् । तद्दृष्टान्तेन च जाग्रत्यनुमेयं, तथाच यौ लौकिकावन्वय-व्यतिरेकौ तावर्थोपलब्धेः कार्यस्यार्थएव कारणे सति भवतः नार्थानपेक्षवासनारूपकारणे; स्वप्नप्रत्ययजनकवासनाया अपि जाग्रदर्थोपलब्ध्यधीनत्वदर्शनात्कारणकारणत्वेन तत्राप्यर्थोपलब्धेः स्थितत्वादतश्च वासनानामर्थोपलब्धिभिर्व्याप्तिसिद्धेरि-त्यर्थः । **न लौकिकी वासनेति** । अन्तरेणाश्रयमेकसंततिपतितसमानाकारविज्ञानस्य वासनात्वं ह्यलौकिकमिति भावः । वासना हि गुणस्तस्याश्रयः समवायिकारणं तत्राश्रयत्वाभिमतमालयविज्ञानं वासनया सहोत्पद्यते पूर्वं वा । **नाद्य** इत्याह—**द्वयोरिति** । नियतप्राक्सत्त्वं हि कारणत्वमित्यर्थः । **न द्वितीय** इत्याह—**प्रागिति** । असतश्चाधारत्वायोगादिति द्रष्टव्यम् ।

### कल्पतरुपरिमलः ।

स्वप्नज्ञाने स्मृतिशब्दो गौणो व्याख्येय इत्यर्थः । **ननूपलब्धिशब्दोऽनुभवमात्रपरः** प्रसिद्धः, किमिति षट्प्रमाणजनितत्वेन विशेष्यते ? इत्याशङ्क्याह—**एवमव्याख्याने इति** । तेन संदिग्धवस्तुधर्म इति तेन भाष्येण सूचितमित्यन्वयः ॥२९॥३०॥

**नाश्रयमन्तरेणावकल्पन्ते । एवं लोके दृष्टत्वात् । नच तव वासनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः ॥ ३० ॥**

## क्षणिकत्वाच्च ॥ ३१ ॥

**यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं, तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत्प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति। नहि कालत्रयसंबन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधानस्मृतिप्रतिसंधानादिव्यवहारः संभवति। स्थिरस्वरूपत्वे त्वालयविज्ञानस्य सिद्धान्तहानिः। अपिच विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वाद्यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि 'उत्तरोत्पादे च पूर्वनिरोधात्' इत्येवमादीनि तानीहाप्यनुसंधातव्यानि। एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च। शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते। नह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुमपवादाभाव उत्सर्गप्रसिद्धेः ॥ ३१ ॥**

---

### भामती।

संभवति बाह्यश्चार्थः स्थूलसूक्ष्मविकल्पेनासंभवी, हन्तैवमर्थज्ञाने सत्त्वेन तावद्विचारं न सहेते। नाप्यसत्त्वेन; असतो भासनायोगात्, नोभयत्वेन; विरोधात्सदसतोरेकत्रानुपपत्तेः, नाप्यनुभयत्वेन; एकनिषेधस्येतरविधाननान्तरीयकत्वात्। तस्माद्विचारासहत्वमेवास्तु तत्त्वं वस्तूनाम्। यथाहुः—'इदं वस्तुबलायातं यद्वदन्ति विपश्चितः। यथायथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥' इति। न क्वचिदपि पक्षे व्यवतिष्ठन्त इत्यर्थः। तदेतन्निराचिकीर्षुराह—**शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते।** लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि। तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते। असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते। सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति। तथाच सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते। यद्युच्येत तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यवहारिकम्। तथाच भिन्नविषयत्वान्न सर्वप्रमाणविप्रतिषेध इत्यत आह—**नह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्।** प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते। अतात्त्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यम्। न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते। बाधकं चातात्त्विकत्वमेषां तद्गोचरविपरीततत्त्वोपदर्शनेन दर्शयेत्। यथा शुक्तिकेयं न रजतं मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि, तद्वदिहापि समस्तप्रमाणगोचरविपरीततत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्शनीयं,

### वेदान्तकल्पतरुः।

॥३०॥ वर्णकान्तरमधिकरणस्य दर्शयन् पूर्वपक्षमाह—**स्यादेतदित्यादिना।** विविच्यन्त इत्येतन्निर्णयाभिप्रायं न भवति, किंतु व्यवस्थापक्षाद्विभागाभिप्रायमित्याह—**न क्वचिदिति। नादरः क्रियते** सूत्रान्तराणि न रच्यन्ते। एतान्येवावृत्त्या योज्यन्त इत्यर्थः। नाभावो ज्ञानार्थयोः; प्रमाणैरुपलब्धेरिति सूत्रं योजयन् सिद्धान्तमाह—**लौकिकानि हीति।** अतात्त्विकत्वं प्रपञ्चस्य व्यवस्थापयितुम् अधिष्ठानं वस्तुभूतं वाच्यं तस्याभावस्त्वन्मते प्रमाणतस्तत्त्वानुपलब्धेरिति प्रतिपादयन्नभावोऽनुपलब्धेरिति सूत्रं योजयति—**यद्युच्येते**त्यादिना। अतात्त्विकत्वं प्रपञ्चस्य धर्मिग्राहकप्रमाणैरवगम्यते बाधकप्रमाणान्तरेण वा। **नाद्य** इत्याह—**प्रमाणानि हीति। न द्वितीय** इत्याह—**बाधकं चेति। ननु**—किमन्याधिष्ठानतत्त्वबोधनेन? प्रत्यक्षादिप्रमितवस्तुगतं विचारासहत्वमेव बाधकप्रमाणं गमयत्विति—**चेत्, तत्र वक्तव्यम्** किं विचारासहत्वं नाम सदसदादिपक्षेषु अन्यतमपक्षनिवेशो वस्तुभूतो धर्मः परं विचारं न सहते इत्युच्यते, उत विचारासहत्वेन रूपेण निस्तत्त्वं शून्यमभिमतम्। **नाद्य** इत्याह—**तत्रेति।** द्वितीयेऽपि निस्तत्त्वं सदादिपक्षनिविष्टं न वा। **न प्रथमः**; सदा-

### कल्पतरुपरिमलः।

**ननु किमन्याधिष्ठानतत्त्वबोधनेनेति।** प्रत्यक्षादिप्रमाणबोधितविपरीताधिष्ठानतत्त्वबोधकं प्रमाणं निरधिष्ठानभ्रमं वदतः शून्यवादिनो मते न भवति चेत्, तन्मा भूत्प्रत्यक्षादिप्रतीतवस्तुगतं यद्विचारासहत्वं तदेव बाधकप्रमाणं भूत्वा प्रत्यक्षादीनां सांव्यवहारिकं प्रामाण्यं तद्विषयाणामतात्त्विकत्वं च गमयतीत्यर्थः। **सदसदादिपक्षेति।** विचारासहत्वं

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

किं बहुना ? सर्वप्रकारेण यथायथायं वैनाशिकसमय उपपत्तिमत्त्वाय परीक्ष्यते, तथातथा सिकताकूपवद्विदीर्यत एव। न कांचिद्प्यत्रोपपत्तिं पश्यामः । अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः । अपिच बाह्यार्थविज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसंबद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति । सर्वथाप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामैरित्यभिप्रायः॥३२॥ इति पञ्चममभावाधिकरणम् ॥

### भामती ।

न त्वव्यवस्थापिततत्त्वान्तरेण प्रमाणानि शक्यानि बाधितुम् । विचारासहत्वं वस्तूनां तत्त्वं व्यवस्थापयद्बाधकमतात्त्विकत्वं प्रमाणानां दर्शयतीति चेत्, किं पुनरिदं विचारासहत्वं वस्तु यत्तत्त्वमभिमतं, किं तद्वस्तु परमार्थतः सदादीनामन्यतमत् केवलं विचारं न सहते, अथ विचारासहत्वेन निस्तत्त्वमेव । तत्र परमार्थतः सदादीनामन्यतमद्विचारं न सहत इति विप्रतिषिद्धम् । न सहते चेन्न सदादीनामन्यतमत् । अन्यतमच्चेत् कथं न विचारं सहते । अथ निस्तत्त्वं चेत्, कथमन्यतमत्तत्त्वमव्यवस्थाप्य शक्यमेवं वक्तुम् ? नच निस्तत्त्वतैव तत्त्वं भावानाम् । तथासति हि तत्त्वाभावः स्यात् । सोऽपि च विचारं न सहत इत्युक्तं भवद्भिः । **अपिचारोपितं** निषेधनीयम् । आरोपश्च तत्त्वाधिष्ठानो दृष्टो यथा शुक्तिकादिषु रजतादेः । न चेत् किंचिदस्ति तत्त्वं कस्य कस्मिन्नारोपः । तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्मानिर्वाच्यप्रपञ्चात्मनारोप्यते, तच्च तत्त्वं व्यवस्थाप्यातात्त्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपद्यत इति युक्तमुत्पश्यामः ॥ ३१ ॥ विभजते—**किं बहुना** उक्तेन **यथायथा** ग्रन्थतोऽर्थतश्च **अयं वैनाशिकसमय इति** । ग्रन्थतस्तावत्पश्यनातिष्ठनामिद्धपोषधाद्यसाधुपदप्रयोगः । अर्थतश्च नैरात्म्यमभ्युपेत्यालयविज्ञानं समस्तवासनाधारमभ्युपगच्छन्नक्षरमात्मानमभ्युपैति । एवं क्षणिकत्वमभ्युपेत्य 'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितिता' इति नित्यतामुपैतीत्यादि बहून्नेतव्यमिति ॥ ३२ ॥ **इति पञ्चममभावाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

द्विप्रकारतत्त्वव्यवस्थायास्त्वयाऽनिष्टत्वादित्याह—**कथमन्यतमदिति । न द्वितीय** इत्याह—**न चेति** । निस्तत्त्वं हि तत्त्वरूपत्वाभावः स चासन्नित्यत्वं भावानां व्यवस्थापितं स्यात् । तथा चासत्त्वाव्यवस्थाप्रतिज्ञाविरोध इत्यर्थः । पूर्वमधिष्ठानतत्त्वज्ञानाभावाद्बाधो न भवतीत्युक्तम्, इदानीम् अधिष्ठानाभावादारोपासंभवमाह—**अपि चेत्यादिना** । स्वपक्षे विशेषमाह—**तस्मादिति** । वैधर्म्यसूत्रं सुयोजम् । क्षणिकत्वाच्चेति सूत्रे उपदेशादित्युपस्करणीयम् । ततश्च क्षणिकपदार्थसत्त्वोपदेशाच्छून्योपदेशाच्च व्याहताभिव्याहारः सुगत इति योजनीयम् ॥ ३१ ॥ यथायथेति भाष्यस्थवीप्सां व्याचष्टे—**ग्रन्थत इति** । दर्शनमिति वक्तव्ये पश्यनेत्यपशब्दः । स्थानमिति वक्तव्ये तिष्ठनेत्यपशब्दः । तिष्ठतेर्दृशेश्च शिति प्रत्यये तिष्ठपश्यावादेशौ युच्प्रत्यये तु न तस्याशित्त्वात् । मिह सेचने इत्यस्य निष्ठान्तस्य मीढमिति सिध्यति । मिद्धमिति त्वपशब्दः । पोषधशब्द उपवासे बौद्धैः प्रयुज्यते स्नातः शुचिवस्त्राभरणः पोषधं विदधीतेति । स च लोकैरप्रयुक्तत्वादपशब्दः इति प्रतिभाति । अर्थतोऽनुपपत्तिमाह—**अर्थतश्चेति । अक्षर**मविनाशि । नमनादिवासनानामाश्रयत्वादक्षरत्वसिद्धिः । उत्पादाद्वेति सूत्रे स्थिता धर्मस्थितितेति च कारणत्वधर्मस्य कार्यत्वधर्मस्य च स्थिरत्वस्वीकारात्सर्वक्षणिकत्वविरोधः ॥ ३२ ॥ **इति पञ्चममभावाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

नाम कश्चिद्वस्तुभूतो धर्मोऽस्त्येव, स धर्मः सत्त्वासत्त्वसदसत्त्वानुभयात्मकत्वपक्षेष्वन्यतमपक्षपरिग्रहेण वस्तुभूतो व्यवस्थाप्यते, स तु वस्तुतः सत्त्वादिरूपेण विचारं न सहत इत्येतावदेवोच्यत इति प्रथमविकल्पार्थः । विचारासहत्वे सत्त्वादिपक्षान् परित्यज्य शून्यमेव लभ्यत इति द्वितीयविकल्पार्थः । **असत्त्वव्यवस्थाप्रतिज्ञाविरोध इति** । किंचिदपि वस्त्वसत्त्वेन व्यवस्थापयितुं न शक्यत इति तत्प्रतिज्ञाविरोध इत्यर्थः ॥ ३१ ॥ **इति प्रतिभातीति** । यद्यपि बौद्धव्याकरणे पश्यनादिशब्दाः साधुतया व्युत्पादिताः; तथापि अनादिसिद्धप्रयोगसिद्धसकलसाधुशब्दसंग्राहकपाणिनीयाद्यपरिगृहीतत्वादसाधवः प्रतिभान्तीत्यर्थः ॥ ३२ ॥ **इति पञ्चममभावाधिकरणम्** ॥

---

१ तत्र सूत्राणि ५—नाभाव उपलब्धेः २८ वैधर्म्याच्च न स्वप्नादिवत् २९ न भावोऽनुपलब्धेः ३० क्षणिकत्वाच्च ३१ सर्वथानुपपत्तेश्च ३२ ॥

( ६ अधिकरणम् ) **नैकस्मिन्नसंभवात् ॥ ३३ ॥**

**निरस्तः सुगतसमयः। विवसनसमय इदानीं निरस्यते। सप्त चैषां पदार्था संमता जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम। संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ। यथायोगं तयोरेवेतरान्तर्भावादिति मन्यन्ते। तयोरिममपरं प्रपञ्चमाचक्षते पञ्चास्तिकाया नाम, जीवास्तिकायः पुद्गलास्तिकायो धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायश्चेति। सर्वेषामप्येषामवान्तर-**

---

## भामती।

## नैकस्मिन्नसंभवात्।

निरस्तो मुक्तकच्छानां सुगतानां समयः। विवसनानां समय इदानीं निरस्यते। तत्समयमाह संक्षेपविस्तराभ्याम्—**सप्त चैषां पदार्थाः संमता इति।** तत्र संक्षेपमाह—**संक्षेपतस्तु द्वावेव पदार्थाविति।** बोधात्मको जीवो जडवर्गस्त्वजीव इति। यथायोगं तयोर्जीवाजीवयोरिममपरं प्रपञ्चमाचक्षते। तमाह—**पञ्चास्तिकाया नामेति। सर्वेषामप्येषामवान्तरप्रभेदानिति।** जीवास्तिकायस्त्रिधा—बद्धो मुक्तो नित्यसिद्धश्चेति। पुद्गलास्तिकायः षोढा—पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति। धर्मास्तिकायः प्रवृत्त्यनुमेयोऽधर्मास्तिकायः स्थित्यनुमेयः। आकाशास्तिकायो द्वेधा—लोकाकाशोऽलोकाकाशश्च। तत्रोपर्युपरि स्थितानां लोकानामन्तवर्ती लोकाकाशस्तेषामुपरि मोक्षस्थानमलोकाकाशः। तत्र हि न लोकाः सन्ति। तदेवं जीवाजीवपदार्थौ पञ्चधा प्रपञ्चितौ। आस्रवसंवरनिर्जरास्त्रयः पदार्थाः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते। द्विधा प्रवृत्तिः सम्यङ्मिथ्या च। तत्र मिथ्या प्रवृत्तिरास्रवः। सम्यक्प्रवृत्ती तु संवरनिर्जरौ। आस्रावयति पुरुषं विषयेष्वितीन्द्रियप्रवृत्तिरास्रवः। इन्द्रियद्वारा हि पौरुषं ज्योतिर्विषयान् स्पृशद्रूपादिज्ञानरूपेण परिणमत इति। अन्ये तु कर्माण्यास्रवमाहुः। तानि हि कर्तारमभिव्याप्य स्रवन्ति कर्तारमनुगच्छन्तीत्यास्रवः। सेयं मिथ्याप्रवृत्तिरनर्थहेतुत्वात्। संवरनिर्जरौ च सम्यक्प्रवृत्ती। तत्र शमदमादिरूपा प्रवृत्तिः संवरः। सा ह्यास्रवस्रोतसो द्वारं संवृणोतीति संवर उच्यते। निर्जरस्त्वनादिकालप्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारो-

## वेदान्तकल्पतरुः।

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

एकरूपब्रह्मसमन्वयविरोध्यनेकान्तवादभङ्गस्य बुद्धिसंनिधानलक्षणां संगतिमाह—**निरस्ते इति।** मुक्तकच्छेषु निरस्तेषु मुक्तवसना बुद्धिस्था भवन्तीति, अथवा समयमात्रसिद्धपञ्चस्कन्धादिपदार्थाश्रयन्यायाभासे निरस्ते पञ्चास्तिकायादिसामयिकपदार्थाश्रितं न्यायाभाससंदब्धं मतं भवति बुद्धिस्थम्। तदिदं समयपदेन सूचितम्। उपलब्धेरर्थसत्त्ववत्तदनेकान्तोऽप्युपलब्धेरेवास्तीत्यर्थसंगतिः। **अस्तीति** कायन्ते शब्द्यन्त इत्यस्तिकायाः। कै गै शब्दे। अर्हन् नित्यसिद्धः। इतरे केचित्साधनैर्मुक्ताः। अन्ये बद्धाः। **प्रवृत्त्यनुमेय इति।** सम्यङ्मिथ्यात्वेन प्रवृत्तिद्वैविध्यं वक्ष्यति। तत्र धर्मास्तिकायः सम्यक्प्रवृत्त्यनुमेय इत्यर्थः। शास्त्रीयबाह्यप्रवृत्त्या ह्यान्तरोऽपूर्वाख्यो धर्मोऽनुमीयत इत्यर्थः। **अधर्मेति।** ऊर्ध्वगमन-

## कल्पतरुपरिमलः।

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

**अस्तीति कायन्त इति।** कैधातोरादेच उपदेश इत्यात्वे कर्मणि घञि आतो युगिति युगागमे च सति काय इति रूपम्। **शास्त्रीयेति। शास्त्रीयया** तप्तशिलारोहणादिशास्त्रप्रभवया **बाह्यया** चेष्टारूपया प्रवृत्त्येत्यर्थः। आन्तरवृत्तिर्यत्नरूपा परकीया स्वयमप्रत्यक्षा नापूर्वानुमाने लिङ्गं भवेद् अतो बाह्यग्रहणम्। **ऊर्ध्वगमनशीलो हीति।** ऊर्ध्वगमनं जीवस्य स्वभावः। देहे स्थितिस्तत्प्रतिबन्धककर्माधीनेति मतमाश्रित्योक्तम्। **केचित्तु**—चिरकालशरीरावस्थितप्रयुक्तबन्धमुक्तावूर्ध्वगमनं—**मन्यते। ते खल्वेवमाहुः**—बन्धमुक्तस्योर्ध्वगमनं दृष्टम्; यथा पञ्जरमुक्तशुकस्य, यथा वा वारिनिर्भिन्नपरिणतैरण्डबीजस्य, यथा वा दृढपङ्कलिप्तजलनिमज्जनप्रक्षीणपङ्कलेपशुष्कालाबूफलस्य, इह त्वनादिकालप्रवृत्तबन्धविगमात्सततोर्ध्वगमनमिति। आस्रवादिषु पञ्चसु अन्तिमद्वयं फलरूपम् आदिमत्रयं तत्साधनम्। प्रवृत्तिरास्रवशब्दोक्तैकविधेति भेदः। **आस्रवः स्रोतसां द्वारं संवृणोतीति संवरः। आस्रवो भवहेतुः स्यात्संवरो मोक्षकारणम् ॥** इति जैनोक्तः शमदमादिरूप इति टीकायामुक्तम्। तत्रादिशब्देन गुप्तिसमित्यादिर्गृह्यते। कायवाङ्मनोनिग्रहो गुप्तिः। भूमिगतजन्तुहिंसापरिहाराय प्रहते मार्गे सम्यगादित्यरश्मिप्रकाशिते निरीक्ष्य संचरणं नियताहारनिषेवणमित्यादिकं समितिरिति जैनैः

**प्रभेदान्बहुविधान्स्वसमयपरिकल्पितान्वर्णयन्ति । सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति । एवमेवैकत्वनित्यत्वादिष्वपीमं**

## भामती ।

हणादिः । स हि निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरः । बन्धोऽष्टविधं कर्म । तत्र घातिकर्म चतुर्विधम् । **तद्यथा**—ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरायमिति । तथा चत्वार्यघातिकर्माणि । **तद्यथा**—वेदनीयं नामिकं गोत्रिकमायुष्कं चेति । तत्र सम्यग् ज्ञानं न मोक्षसाधनं, नहि ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते । आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म । बहुषु विप्रतिपिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म । मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरायं कर्म । तानीमानि श्रेयोहन्तृत्वाद्धातिकर्माण्युच्यन्ते । अघातीनि कर्माणि, तद्यथा वेदनीयं कर्म शुक्लपुद्गलविपाकहेतुः, तद्धि बन्धोऽपि न निःश्रेयसपरिपन्थि; तत्त्वज्ञानाविघातकत्वात् । शुक्लपुद्गलारम्भकवेदनीयकर्मानुगुणं नामिकं कर्म, तद्धि शुक्लपुद्गलस्याद्यावस्थां कललबुद्बुदादिमारभते । गोत्रिकमव्याकृतं ततोऽप्याद्यं शक्तिरूपेणावस्थितम् । आयुष्कं त्वायुः कायति कथयत्युत्पादनद्वारेत्यायुष्कम् । तान्येतानि शुक्लपुद्गलाद्याश्रयत्वादघातीनि कर्माणि । तदेतत् कर्माष्टकं पुरुषं बध्नातीति बन्धः । विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरिदेशावस्थानं मोक्ष इत्येके । अन्ये तूर्ध्वगमनशीलो हि जीवो धर्माधर्मास्तिकायेन बद्धस्तद्विमोक्षाद्यदूर्ध्वं गच्छत्येव स मोक्ष इति । त एते सप्तपदार्था जीवादयः सहावान्तरप्रभेदैरुपन्यस्ताः । तत्र **सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति, स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च,**

## वेदान्तकल्पतरुः ।

शीलो हि जीवस्तस्य देहेऽवस्थानेनाधर्मोऽनुमीयत इत्यर्थः । बन्धमोक्षौ फले । प्रवृत्ती तु समीच्यसमीच्यौ, तयोः साधने ते दर्शयति—**आस्रवेति** । **आस्रावयति** गमयति । **बन्धोऽष्टविधमिति** । यद्यपि पूर्वोक्त आस्रवोऽपि बन्धः; तथापि तद्धेतुत्वादयमपि बन्ध इत्यर्थः। **अतिप्रसङ्गादिति** । आशामोदकादिज्ञानेभ्योऽपि मोदकादिसिद्धिप्रसङ्गादित्यर्थः । **विपाकहेतुरिति** । शरीराकारेण परिणामहेतुः । तच्च कर्म वेदनीयं शरीरद्वारेण तत्त्ववेदनहेतुत्वादिति शुक्रशोणितव्यतिरेकजाते मिलितं तदुभयस्वरूपमायुष्कम् । तस्य देहाकारपरिणामशक्तिर्गोत्रिकम् । शक्तिमति तस्मिन् बीजे कललाख्यद्रवात्मकावस्थाया बुद्बुदात्मतायाश्चारम्भकः क्रियाविशेषो नामिकम् । सक्रियस्य बीजस्य तेजःपाकवशादीषद् घनीभावः शरीराकारपरिणामहेतुर्वेदनीयमिति विभागः। कायतीति कै गै शब्दे इत्यस्य रूपम्। स्यादस्ति च नास्ति चेत्येतदवक्तव्य इत्यस्याधस्तात् संबन्धनीयम् । सप्त चैकान्तत्वभङ्गाः कथं कथं कदा कदा च प्रसरन्तीत्यपेक्षायामनन्तवीर्यः प्रतिपादयामास—**तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् । स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥ क्रमेणोभयवाञ्छायां प्रयोगः समुदायभृत् । युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥ आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते। अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥ समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते ॥** इति, युगपदस्तित्वनास्तित्वयोर्विवक्षायां वाचः क्रमवृत्तित्वादुभयं युगपदवाच्यम् । आद्योऽस्तित्वभङ्गोऽन्त्येनासत्त्वेन सह युगपदवाच्यः । अन्त्यश्चाद्येन भङ्गेन सह युगपदवाच्यः । समुचितरूपश्च भङ्ग एकैकेन सह युगपदवाच्य इत्यर्थः ।

## कल्पतरुपरिमलः ।

परिभाष्यते । **आस्रावयति गमयति** । आस्रवत्यनेन जीव इत्यण्यन्तादास्रवशब्दः । ण्यन्ताच्चेदास्राव इति स्यात् । **बन्धोष्टविधमिति** । आस्रवः कर्मणा बन्धो निर्जरस्तद्विमोचनमिति जिनदत्तोक्ते टीकायामन्ये त्विति दर्शिते तु मते बन्धः कर्मापादिता जन्मपरंपरेति द्रष्टव्यम् । **पूर्वोक्त आस्रवोऽपीति** । **आस्रव** इन्द्रियप्रवृत्तिः । घात्यघातिकर्माण्याकरग्रन्थयोर्विवेचितानि । अन्ये तु विधान्तरेण तद्विवेकमाहुः । जैनमते ज्ञानदर्शनसुखवीर्यगुणकस्य जीवस्य ज्ञानादिगुणानां मोक्षदशायामाविर्भविष्यतां संसारदशायां प्रतिघातकानि प्रवाहानादीनि पापरूपाणि चत्वारि घातिकर्माणि । शरीरसंस्थानतदभिमानतास्थितितत्प्रयुक्तसुखादिनिर्मितानि चत्वार्यघातिकर्माणि पुण्यमिश्रितत्वात्पुण्यरूपाणीति । नामिकाद्वेदनीयस्य भेदमाह—**सक्रियस्य बीजस्येति** । **कायतीति** । आयुः कायतीत्यर्थे कैधातेरात्वे आतोऽनुपसर्गे क इति कप्रत्यये आतो लोप इति चेत्याकारलोपे सति गोद इतिवदायुष्कमिति रूपम् । युगपत्तद्विवक्षायामित्यर्धं व्याचष्टे—**युगपदस्तित्वनास्तित्वयोरिति** । तत्राशक्तिमुपपादयति—**वाचः क्रमवृत्तित्वादिति** । **आद्याऽवाच्यविव-**

**सप्तभङ्गीनयं योजयन्ति। अत्राचक्ष्महे—नायमभ्युपगमो युक्त इति। कुतः? एकस्मिन्नसंभवात्। नह्येकस्मिन्धर्मिणि युगपत्सदसत्त्वादिविरुद्धधर्मसमावेशः संभवति शीतोष्णवत्।**

## भामती।

**स्यादस्ति च नास्ति चावक्तव्यश्चेति।** स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योती। यथाहुः—'वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम्। स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः॥' इति। यदि पुनरयमनेकान्तद्योतकः स्याच्छब्दो न भवेत्, स्यादस्तीतिवाक्ये स्यात्पदमनर्थकं स्यात्॥ **तदिदमुक्तम्**—'अर्थयोगित्वात्' इति। अनैकान्तद्योतकत्वे तु स्यादस्ति कथंचिदस्तीति स्यात्पदात्कथंचिदर्थोऽस्तीत्यनेनानुक्तः प्रतीयत इति नानर्थक्यम्। तथा च **स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधेः। सप्तभङ्गनयापेक्षो हेयादेयविशेषकृत्॥'** किंवृत्ते प्रत्यये खल्वयं चिन्निपातविधिना सर्वथैकान्तत्यागात् सप्तस्वेकान्तेषु यो भङ्गस्तत्र यो नयस्तदपेक्षः सन् हेयोपादेयभेदाय स्याद्वादः कल्पते। तथाहि—यदि वस्त्वस्त्येवेत्येवैकान्ततस्तत् सर्वथा सर्वदा सर्वत्र सर्वात्मनास्त्येवेति न तदीप्साजिहासाभ्यां क्वचित् कदाचित् कथंचित् कश्चित् प्रवर्तेत निवर्तेत वा प्राप्ताप्रापणीयत्वात्, हेयहानानुपपत्तेश्च। अनैकान्तपक्षे तु क्वचित् कदाचित् कस्यचित् सत्त्वे हानोपादाने प्रेक्षावतां कल्पेते इति। तमेनं सप्तभङ्गीनयं दूषयति—**नैकस्मिन्नसंभवात्।** विभजते—**नह्येकस्मिन्धर्मिणि** परमार्थसति परमार्थसतां **युगपत्सत्त्वादीनां धर्माणां** परस्परपरिहारस्वरूपाणां **समावेशः संभवति। एतदुक्तं भवति**—सत्यं यदस्ति वस्तुतस्तत्सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव, न नास्ति, यथा प्रत्यगात्मा। यत्तु क्वचित् कथंचित् कदाचित् केनचिदात्मनाऽस्तीत्युच्यते, यथा प्रपञ्चः, तद्व्यवहारतो **नतु परमार्थतः; तस्य विचारासहत्वात्।** नच प्रत्ययमात्रं वास्तवत्वं व्यवस्थापयति; शुक्तिमरुमरीचिका-

## वेदान्तकल्पतरुः।

**अथवा**—सदसदुभयेष्वेकान्ते भग्नेऽनिर्वाच्यत्वनियमभङ्गः स्यादवक्तव्य इति कृतः। तेष्वेव पक्षेषु तत्तत्पूर्वपक्षवाद्युक्तानिर्वाच्यत्वनियमः स्यादस्त्यवक्तव्य इत्यादिना भज्यते। **नन्वस्ति** स्यादिति वर्तमानत्वविधिवाचिनोः कथमेकार्थपर्यवसानमत आह—**स्याच्छब्द इति।** तिङन्ततुल्योऽतो न विध्यर्थतेत्यर्थः। **वाक्येष्विति।** स्यादस्तीत्यादिवाक्येषु स्यादित्ययं शब्दस्तिङन्तसदृशो निपात इत्यन्वयः। कोऽस्यार्थ इति, तत्राह—**अनेकान्तेति।** अनेकान्तः किं स्वातन्त्र्येण प्रतिपाद्यते? नेत्याह—**गम्यं प्रतीति।** गम्यमस्तित्वादि। कुतोऽस्यानैकान्तद्योतित्वमत आह—**अर्थयोगित्वादिति।** एतदुपपादयति—**यदि पुनरिति।** व्यतिरेकमुक्त्वाऽन्वयमाह—**अनेकान्तद्योतकत्वे त्विति।** स्यात्पदेनानेकान्ताभिधाने किं प्रयोजनमत आह—**तथाचेति।** यथा स्याच्छब्दस्यानेकान्तद्योतकत्वं जैनैरुक्तं, तथा तत्प्रयोजनं चोक्तमित्यर्थः। स्याद्वादो हेयोपादेयविशेषकृदित्यन्वयः। किंशब्दात्किमश्चेति सूत्रेण थमुप्रत्ययो भवति, ततः कथमिति रूपं लभ्यते। तदुपरि चिदित्ययं निपातो विधीयते, ततः कथंचिदिति स्यात्। तस्मात्किंवृत्तचिद्विधेर्हेतोः कथंचिदस्ति कथंचिन्नास्तीत्यादिरूपात्सर्वथैकान्तत्यागात् भवन्तं सप्तभङ्गनयमपेक्ष्य स्याद्वादो हेयोपादेयविशेषकृदित्यर्थः। **किंवृत्ते** किंशब्दादुपरिवृत्ते प्रत्यये थमि सप्तस्वेकान्तेष्वस्त्यादिनियमेष्वित्यर्थः। सप्तानामेकान्तानां भङ्गे हेतुं न्यायं दर्शयति—**तथाहीति।** न प्रवर्तेतेत्यत्र हेतुमाह—**प्राप्तेति।** सतो वस्तुनः प्राप्तस्याप्रापणीयत्वादित्यर्थः। न निवर्तेतेत्यत्र हेतुमाह—**हेयेति।** असत्त्वे ह्येकान्ते हेयमेव त्यक्तमेवाहितं सर्वदा स्यात्, तस्य च साध्यं हानमनुपपन्नमित्यर्थः। यत्तु हेयादिसिद्धिहेतुः स्याद्वाद इति, तत्राह—**एतदुक्तमित्यादिना।** यदस्ति तदस्त्येवेति नियममेव मन्महे, यत्तु कथंचिदस्ति प्रपञ्चः स विकल्पितः, तत्रच हेयादिविभागसिद्धिरित्यर्थः। **विचारासहत्वादिति।** आरम्भणाधिकरणे

## कल्पतरुपरिमलः।

**क्षायामिति।** सार्धश्लोके कथमाद्यादिशब्दोक्तानां सत्त्वासत्त्वतदुभयसमुच्चयानामवाच्यत्वम्। नह्यत्र चतुर्थभङ्ग इवाशक्तिरस्तीत्याशङ्क्य तेष्वप्यन्त्येन सह युगपदाद्येन सह युगपदेकैकेन सह युगपदित्यध्याहारेणाशक्तिमुपपादयति—**आद्योऽस्तित्वभङ्गे इत्यादिना।** एवं व्याख्याने पञ्चमादिभङ्गानां चतुर्थभङ्गात् फलतो भेदाभावमाशङ्क्य प्रकारान्तरेण व्याचष्टे—**अथ वेति। तेष्वेव पक्षेष्विति।** सत्त्वैकान्तपक्षः सांख्याद्यभिमतः सत्कार्यवादः। असत्त्वैकान्तपक्षः शून्यवाद्यभिमतोऽसद्वादः। क्रमेण सदसत्त्वपक्षो वैशेषिकाद्यभिमतो घटादीनां मध्ये सतां पूर्वं पश्चाच्च प्रागभावप्रध्वंसप्रतियोगित्वरूपमसत्त्वमिति वादः। एतेषां पक्षेषु पूर्वपक्षा उत्तिष्ठन्ति, सत्त्वं निर्वक्तुमशक्यं प्रागभावादिप्रतियोगित्वं निर्वक्तुमशक्यमिति, तेषां पूर्वपक्षिणां ये तत्तदनिर्वाच्यत्वैकान्त्यवादाः तेषां भङ्गाः पञ्चमषष्ठसप्तमा इत्यर्थः। **नन्वस्ति स्यादिति।** अस्तीति वर्तमानत्वं बोध्यते, स्यादिति कालत्रयानवमर्शिविधेयत्वम्। तयोः परस्परविरुद्धयोः कथमेकस्मिन्नर्थे पर्यवसानं युगपद्बोध्यत्वमित्यर्थः॥ ३३॥ ३४॥ ३५॥ ३६॥ **इति षष्ठमेकस्मिन्नसंभवाधिकरणम्॥**

य एते सप्तपदार्था निर्धारिता एतावन्त एवंरूपाश्चेति ते तथैव वा स्युर्नैव वा तथा स्युः। इतरथा हि तथा वा स्युरतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात्। नन्वनेकात्मकं वस्त्विति निर्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हति। नेति ब्रूमः। निरङ्कुशं ह्यनेकान्तत्वं सर्ववस्तुषु प्रतिजानानस्य निर्धारणस्यापि वस्तुत्वाविशेषात्स्यादस्ति स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्धारणात्मकतैव स्यात्। एवं निर्धारयितुर्निर्धारणफलस्य च स्यात्पक्षेऽस्तिता स्याच्च पक्षे नास्तितेति। एवंसति कथं प्रमाणभूतः संस्तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्धारितासूपदेष्टुं शक्नुयात्? कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्धारितरूपे प्रवर्तेरन्? ऐकान्तिकफलत्वनिर्धारणे हि सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते, नान्यथा। अतश्चानिर्धारितार्थं शास्त्रं प्रणयन्मत्तोन्मत्तवदनुपादेयवचनः स्यात्। तथा पञ्चानामस्तिकायानां पञ्चत्वसंख्यास्ति वा नास्ति वेति विकल्प्यमाना स्यात्तावदेकस्मिन्पक्षे, पक्षान्तरे तु न स्यादित्यतो न्यूनसंख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात्। नचैषां पदार्थानामवक्तव्यत्वं संभवति। अवक्तव्याश्चेन्नोच्येरन्। उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धम्। उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च। तथा तदवधारणफलं सम्यग्दर्शनमस्ति वा नास्ति वा, एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्तिवेति प्रलपन्मत्तोन्मत्तपक्षस्यैव स्यान्न प्रत्यायितव्यपक्षस्य। स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावस्तथा पक्षे नित्यता पक्षे चानित्यतेत्यनवधारणायां प्रवृत्त्यनुपपत्तिः। अनादिसिद्धजीवप्रभृतीनां च स्वशास्त्रावधृतस्वभावानामयथावधृतस्वभावत्वप्रसङ्गः। एवं जीवादिषु पदार्थेष्वेकस्मिन्धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोर्धर्मयोरसंभवात्सत्त्वे चैकस्मिन्धर्मेऽसत्त्वस्य धर्मान्तरस्यासंभवादसत्त्वे चैवं सत्त्वस्यासंभवादसंगतमिदमार्हतं मतम्। एतेनैकानेकनित्यानित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युपगमा निराकृता मन्तव्याः। यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः संघाताः संभवन्तीति कल्पयन्ति, तत्पूर्वेणैवाणुवादनिराकरणेन निराकृतं भवतीत्यतो न पृथक्तन्निराकरणाय प्रयत्यते ॥ ३३ ॥

## एवं चात्माऽकार्त्स्न्यम् ॥ ३४ ॥

यथैकस्मिन्धर्मिणि विरुद्धधर्मासंभवो दोषः स्याद्वादे प्रसक्तः, एवमात्मनोऽपि जीवस्याकार्त्स्न्यमपरो दोषः प्रसज्येत। कथम्? शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीरपरिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत। शरीराणां चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित्कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात्। पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नः

---

### भामती।

दिषु रजततोयादेरपि वास्तवत्वप्रसङ्गात्, लौकिकानामबाधेन तु तद्व्यवस्थायां देहात्माभिमानस्याप्यबाधेन तात्त्विकत्वे सति लोकायतमतापातेन नास्तिकत्वप्रसङ्गात्। पण्डितरूपाणां तु देहात्माभिमानस्य विचारतो बाधनं प्रपञ्चस्याप्यनैकान्तस्य तुल्यमिति। अपिच सदसत्त्वयोः परस्परविरुद्धत्वेन समुच्चयाभावे विकल्पः। नच वस्तुनि विकल्पः संभवति। तस्मात् स्थाणुर्वा पुरुषो वेति ज्ञानवत् सप्तत्वपञ्चत्वनिर्धारणस्य फलस्य निर्धारयितुश्च प्रमातुस्तत्करणस्य प्रमाणस्य च तत्प्रमेयस्य च सप्तत्वपञ्चत्वस्य सदसत्त्वसंशये साधु समर्थितं तीर्थकरत्वमृषभेणात्मनः। निर्धारणस्य चैकान्तसत्त्वे सर्वत्र नानेकान्तवाद इत्याह—**य एते सप्त पदार्था इति**। शेषमतिरोहितार्थम् ॥ ३३ ॥ एवंचेति चेन समुच्चयं द्योतयति। शरीरपरिमाणत्वे ह्यात्मनोऽकृत्स्नत्वं परिच्छिन्नत्वम्। तथा चानित्यत्वम्। ये हि परिच्छिन्नास्ते सर्वेऽनित्या यथा घटादयस्तथाचात्मेति। तदेतदाह—**यथैकस्मिन्धर्मिणीति**। इदं चापरमकृत्स्नत्वेन सूत्रितमित्याह—**शरीराणां चानवस्थितपरिमाणत्वादिति**। मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्नुम-

### वेदान्तकल्पतरुः।

( ब्र. अ. २ पा. ३ सू. १४ ) हि सदसत्त्वे वस्तुनो न धर्मौ; असत्त्वदशायामपि वस्त्वनुवृत्त्यापातात्, नच स्वरूपं; सर्वदाऽद्वयप्रसङ्गादित्यादिर्हि विचारः कृतः स इहानुसन्धेय इत्यर्थः। **पण्डितरूपाणामिति**। प्रशंसायां रूपप्प्रत्ययः।

पुत्तिकाशरीरे संमीयेत । समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः । स्यादेतत्—अनन्तावयवो जीवस्तस्य त एवावयवा अल्पे शरीरे संकुचेयुर्महति च विकसेयुरिति । तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्यते वा न वेति वक्तव्यम् । प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे संमीयेरन् । अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेर्जीवस्याणुमात्रत्वप्रसङ्गः स्यात् । अपिच शरीरमात्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यम् ॥ ३४ ॥ अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्तीत्युच्येत, तत्राप्युच्यते—

**नच पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

नच पर्यायेणाप्यवयवोपगमापगमाभ्यामेतद्देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते । कुतः ? विकारादिदोषप्रसङ्गात् । अवयवोपरमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीय-

---

## भामती ।

ईत्यल्पत्वादित्यात्मनः कृत्स्नशरीराव्यापित्वादकात्स्न्यम्, तथाच न शरीरपरिमाणत्वमिति । तथा हस्तिशरीरं परित्यज्य यदा पुत्तिकाशरीरो भवति, तदा न तत्र कृत्स्नः पुत्तिकाशरीरे संमीयेतेत्यकात्स्न्यमात्मनः । सुगममन्यत् । चोदयति—**स्यादेतत्—अनन्तावयव इति** । यथा हि प्रदीपो घटमहाहर्म्योदरवर्ती संकोचविकासवानेवं जीवोऽपि पुत्तिकाहस्तिदेहयोरित्यर्थः । तदेतद्विकल्प्य दूषयति—**तेषां पुनरनन्तानामिति** । न तावत्प्रदीपोऽत्र निदर्शनं भवितुमर्हति; अनित्यत्वप्रसङ्गात् । विशरारवो हि प्रदीपावयवाः, प्रदीपश्चावयवी प्रतिक्षणमुत्पत्तिनिरोधधर्मा, तस्मादनित्यत्वात्तस्य नास्थिरो जीवस्तदवयवाश्चाभ्युपेतव्याः । तथाच विकल्पद्वयोक्तं दूषणमिति । यच्च जीवावयवानामानन्त्यमुदितं तदनुपपन्नतरमित्याह—**अपिच शरीरमात्रेति** ॥३४॥ शङ्कापूर्वं सूत्रान्तरमवतारयति—**अथ पर्यायेणेति** । **तत्राप्युच्यते—नच पर्यायादप्यविरोधो विकारादिभ्यः** । **कर्माष्टकमुक्तं** ज्ञानावरणीयादि । किंचात्मनो नित्यत्वाभ्युपगमे आगच्छतामपगच्छतां चावयवानामियत्ताऽनिरूपणेन चात्मज्ञानाभावान्नापवर्ग इति भावः । **अत एवमादिदोषप्रसङ्गादिति** । आदिग्रहणसूचितं दोषं ब्रूमः । किंचैते जीवावयवाः प्रत्येकं वा चेतयेरन् समूहो वा । तेषां प्रत्येकं चैतन्ये बहूनां चेतनानामेकाभिप्रायत्वनियमाभावात् कदाचिद्विरुद्धदिक्क्रियत्वेन शरीरमुन्मथ्येत । समूहचैतन्ये तु हस्तिशरीरस्य पुत्तिकाशरीरत्वे द्वित्रावयवशेषो जीवो न चेतयेत् । विगलितबहुसमूहितया समूहस्याभावात्पुत्तिकाशरीरे इति । **अथवेति** । पूर्वसूत्रप्रसञ्जितायां जीवानित्यतायां बौद्धवत्संतानित्यतामाशङ्क्येदं सूत्रम्—**नच पर्यायादप्यविरोधो विकारादिभ्यः** । नच पर्यायात् परिमाणानवस्थानेऽपि संतानाभ्युपगमेनात्मनो नित्यत्वादविरोधो बन्धमोक्षयोः । कुतः ? परिणामादिभ्यो दोषेभ्यः । संतानस्य वस्तुत्वे परिणामस्ततश्चर्मवदनित्यत्वादिदोषप्रसङ्गः । अवस्तुत्वे चादिग्रहणसूचितो नैरात्म्यापत्तिदोषप्रसङ्गः इति । **विसिचो** विवसनाः ॥३५॥ एवंहि मोक्षावस्थाभावि जीवपरिमाणं नित्यं भवेत् । यद्यभूत्वा न भवेत् । अभूत्वा भाविनामनित्यत्वाद्घटादीनाम् । कथंचाभूत्वा न भवेद्यदि प्रागप्यासीत् । नच परिमाणान्तरावरोधेऽपूर्वं भवितुमर्हति । तस्मादन्त्यमेव परिमाणं पूर्वमप्यासीदित्यभेदः । तथाचैकशरीरपरिमाणतैव

## वेदान्तकल्पतरुः ।

**ऋषभेण** बलीवर्देन ॥ ३३ ॥ **विशरारवो** विशरणशीला नश्वराः । **अनित्यत्वात्तस्येति** । निदर्शनस्येत्यर्थः । दार्ष्टान्तिके तु नानित्यत्वमित्याह—**नास्थिर इति** ॥ ३४ ॥ आगमापाय्यवयवानामनात्मत्वं भाष्योक्तं तदा युज्यते, यदि नित्य आत्मेति पराभ्युपगमः; इतरथा इष्टप्रसङ्गादारब्धावयविन एवात्मत्वेनावयवानामनात्मत्वादित्यभिप्रेत्याह—**आत्मन इति** । आत्मानिरूपणमपि भाष्ये प्रसज्यमानमिष्टमित्याशङ्क्याह—**अनिरूपणेनेति** । सिग् वस्त्रं विगतं येभ्यस्ते विसिचः ॥३५॥ देहान्तराप्रवेशान्मोक्षावस्थं परिमाणमन्त्यं, तस्य नित्यत्वादाद्यमध्यमयोर्नित्यत्वानुमाने परिमाणत्रयप्रसङ्गात्कथम् एकरूपपरिमाणात्मकाविशेषापादनमित्याशङ्क्याह—**एवं हीति** । नाद्यमध्यमपरिमाणयोर्नित्यत्वमापाद्यते, किं त्वाद्यमध्यमयोः कालयोरन्त्यपरिमाणस्यानुवृत्तिरित्यर्थः । यदि प्रागप्यासीत्तर्ह्यभूत्वा न भवतीत्यर्थः । **नन्वन्त्यपरिमाणस्य** कालत्रयेऽनुवृत्तावपि देहभेदप्राप्तिकालेष्वात्मनः परिमाणान्तराणि किं न स्युरत आह—**नचेति** । परिमाणभेदे द्रव्यभेदप्रसङ्गादित्यर्थः । भाष्यकारेणात्मगताद्यमध्यमपरिमाणे नित्ये आत्मपरिमाणत्वादन्त्यपरिमाणवत्ततश्चैकपरिमाणतेत्येकं व्याख्यानं कृतम् । अपरंच मोक्षकालगतात्मपरिमाणस्यावस्थितत्वान्नियतत्वात्पूर्वयोरप्याद्यमध्यमकालयोरवस्थितपरिमाण एव जीवः स्यादिति । तत्र द्वितीयव्याख्या स्वेन विशदिता । आद्यव्याख्यायामुभयपरिमाणनित्यत्वस्यान्त्यपरिमाणदृष्टान्ते

माणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्यम् । विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत । ततश्च बन्धमोक्षाभ्युपगमो बाध्येत कर्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत्संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्ध्वगामित्वं भवतीति । किंचान्यत् । आगच्छतामपगच्छतां चावयवानामागमापायधर्मवत्त्वादेवानात्मत्वं शरीरादिवत् । ततश्चावस्थितः कश्चिदवयव आत्मेति स्यात् । नच स निरूपयितुं शक्यतेऽयमसाविति । किंचान्यत् । आगच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्त्यपगच्छन्तश्च क्व वा लीयन्त इति वक्तव्यम्? नहि भूतेभ्यः प्रादुर्भवेयुर्भूतेषु च निलीयेरन्, अभौतिकत्वाज्जीवस्य । नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते; प्रमाणाभावात् । किंचान्यत् । अनवधृतस्वरूपश्चैवंसत्यात्मा स्यात्; आगच्छतामपगच्छतां चावयवानामनियतपरिमाणत्वात् । अतएवमादिदोषप्रसङ्गान्न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्येते । अथवा—पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकार्त्स्न्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसंताननित्यतान्यायेनात्मनो नित्यता स्यात् । यथा रक्तपटानां विज्ञानानवस्थानेऽपि तत्संताननित्यता तद्वद्विसिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते । संतानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः । वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अपिचान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः । तद्वत्पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषप्रसङ्गः स्यात् । एकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरान्तरप्राप्तिः । अथवान्त्यस्य जीवपरिमाणस्यावस्थितत्वात्पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात्, ततश्चाविशेषेण सर्वदैवाणुर्महान्वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः । अतश्च सौगतवदार्हतमपि मतमसंगतमित्युपेक्षितव्यम् ॥ ३६ ॥ इति षष्ठमेकस्मिन्नसंभवाधिकरणम् ॥

---

### भामती ।

स्यान्नोपचितापचितशरीरप्राप्तिः शरीरपरिमाणत्वाभ्युपगमव्याघातादिति । अत्रचोभयोः परिमाणयोर्नित्यत्वप्रसङ्गादिति योजना । एकशरीरपरिमाणतैवेति च दीप्यम् । द्वितीये तु व्याख्याने उभयोरवस्थयोरिति योजना । एकशरीरपरिमाणता न दीप्या, किंत्वेकपरिमाणतामात्रमणुर्महान् वेति विवेकः ॥ ३६ ॥ इति षष्ठमेकस्मिन्नसंभवाधिकरणम् ॥

### वेदान्तकल्पतरुः ।

नापाद्यत्वादुभयनित्यत्वादिति सिद्धवत्सूत्रे हेतुनिर्देशायोगमाशङ्क्याह—**अत्र चोभयोरिति । अत्रचेति ।** सूत्रे इत्यर्थः । **नन्वा**दिमध्यमान्तिमपरिमाणानां नित्यत्वे आपतिते परिमाणत्रयवत्त्वमात्मनः स्यात्, कुत एकपरिमाणताऽऽपाद्यते? अत आह—**एकशरीरेति ।** त्रयाणां परिमाणानां सर्वशरीरेषु समत्वात्सर्वशरीरेष्वेकरूपपरिमाणताऽऽत्मनः स्यादिति दीप्यं व्याख्येयमित्यर्थः । **द्वितीयव्याख्यायां**—सर्वदा परिमाणैक्यस्यैवापाद्यत्वात्सूत्रगतोभयशब्देन न परिमाणद्वयमभिधीयते, किंत्वाद्यमध्यमकालौ; ततश्चाद्यमध्यमकालयोरुभयोः परिमाणनित्यत्वादित्येवं रूपे हेतुं योजयति भाष्यकार इत्याह—**द्वितीये त्विति ।** अस्यां व्याख्यायामविशेषशब्देन न परिमाणत्रयस्य सर्वशरीरेषु तुल्यत्वमापाद्यते, किंतु यदैकशरीरे परिमाणतामात्रं सर्वशरीरेष्वापाद्यते तदाणुर्महान्वाऽऽत्मा सर्वदेहेषु स्यादित्येवंरूपमित्याह—**एकशरीरेति ॥ इति षष्ठमेकस्मिन्नसंभवाधिकरणम् ॥**[1]

---

[1] तत्र सूत्राणि ४—नैकस्मिन्नसंभवात् ३३ एवंचात्माकार्त्स्न्यम् ३४ नच पर्यायादप्यविरोधो विकारादिभ्यः ३५ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ३६ ॥

( ७ अधिकरणम् ) **पत्युरसामञ्जस्यात् ॥ ३७ ॥**

**इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते। तत्कथमवगम्यते। 'प्रकृतिश्च ? प्रतिज्ञा-दृष्टान्तानुपरोधात्', 'अभिध्योपदेशाच्च' ( ब्र० १।४।२३,२४ ) इत्यत्र प्रकृतिभावेनाधिष्ठातृभावे-**

भामती।

## पत्युरसामञ्जस्यात्।

अविशेषेणेश्वरकारणवादोऽनेन निषिध्यत इति भ्रमनिवृत्त्यर्थमाह—**केवलेति**। सांख्ययोगव्यपाश्रया हिरण्यगर्भपतञ्जलिप्रभृतयः। **प्रधानमुक्तम्**। दृक्शक्तिः **पुरुषः** प्रत्ययानुपश्यः। स च नानाक्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः प्रधानपुरुषाभ्यामन्यः। **माहेश्वराश्चत्वारः**—शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति। चत्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायितया माहेश्वराः। कारणमीश्वरः। कार्यं प्राधानिकं महदादि। योगोऽप्योंकारादिध्यानधारणादिः। विधिस्त्रिषवणस्नानादिर्गूढचर्यावसानः, दुःखान्तो मोक्षः। पशव आत्मानस्तेषां पाशो

वेदान्तकल्पतरुः।

## पत्युरसामञ्जस्यात् ॥ ३७ ॥

सत्त्वासत्त्वादेरेकत्रासंभववदधिष्ठातृत्वोपादानत्वयोरप्येकत्रासंभव इति प्रत्यवस्थानात्सङ्गतिः। सांख्ययोगव्यपाश्रया इत्यादिभाष्यं व्याचष्टे—**हिरण्यगर्भेत्यादिना**। भाष्यगतपुरुषपदव्याख्यानं—**दृक्शक्तिरिति**। शक्तिग्रहणं तु समर्थापि सर्वं ज्ञातुं जैवी दृग् न जानात्यावृतत्वादित्यर्थम्। कथं तर्हि जीवस्य ज्ञातृत्वं ? तत्राह—**प्रत्ययेति**। प्रत्ययमन्तःकरणपरिणाममनुपश्यतीति तथोक्तः। भाष्ये प्रधानपुरुषयोरधिष्ठातेति द्विवचनप्रयोगादेको जीव इति भ्रमः स्यात्तं व्युदस्यति—**स चेति**। समासान्तवर्तयैकवचनं जात्यभिप्रायेणेत्यर्थः। क्लेशेति सूत्रमीक्षत्यधिकरणे ( ब्र. अ. १ पा. १ सू. ५ ) व्याख्यातम्। पुरुषत्वात्प्रधानादन्यः क्लेशाद्यपरामृष्टत्वात्पुरुषादन्यः जीवादन्य इत्यर्थः। **गूढचर्या** स्वगुणाप्र-

कल्पतरुपरिमलः।

## पत्युरसामञ्जस्यात् ॥ ३७ ॥

नकुलीशपाशुपता मन्यन्ते कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपाशविमोक्षाय बोद्धव्याः। **तत्र—कार्याणि** पृथिव्यादीनि पञ्चतत्त्वानि रूपादयः पञ्च गुणाश्चेति दशविधानि, **कारणानि** ज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि पञ्च मनोबुद्ध्यहंकाररूपाणि त्रीण्यन्तःकरणानीति त्रयोदशविधानि। ध्यानादिरूपो **योगः**। धर्मार्थव्यापारो **विधिः**। स व्रतद्वाररूपेण द्विविधः। भस्मस्नानभस्मशयनोपहारादि व्रतम्। **आद्ये** प्रसिद्धे। **उपहारः** षड्विधः। हसितगीतनृत्तहुडुक्कारनमस्कारजपभेदेन। तत्र **हसित**मट्टहासः। **गीतं** गान्धर्वशास्त्रप्रकारेण। **हुडुक्कारो** जिह्वाताल्वसंयोगान्निष्पाद्यमानो वृषभनादसदृशो नादः। यत्र लौकिका न भवन्ति तत्र चत्वार्येतानि निगूढं प्रयोक्तव्यानि। जपनमस्कारौ प्रसिद्धौ। द्वाराणि कायनस्पन्दनमन्दनयानशृङ्गारणातत्कारणतद्भाषणभेदेन षड्विधानि। असुप्तस्यैव सुप्तलिङ्गप्रदर्शनं **कायनम्**। वातव्याध्यभिभूतस्येव शरीरावयवानां कम्पनं **स्पदनम्**। उपहतपादेन्द्रियस्येव गमनं **मन्दयानम्**। रूपयौवनसंपन्नां कामिनीमवलोक्यात्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तद्वदाचरणं **शृङ्गारणा**। कार्याकार्यविवेकविकलस्येव लोकनिन्दितकर्मकरणमपि **तत्कारणम्**। व्याहतापार्थकादिशब्दोच्चारणमपि **तद्भाषणम्**। **दुःखान्तो द्विविधः**—अनात्मकः सात्मकश्च। **अनात्मकः** सर्वदुःखानामत्यन्तोच्छेदः। **सात्मकस्तु** दृक्क्रियाशक्तिबललक्षणमैश्वर्यम्। तत्र दृक्शक्तिरेकापि विषयभेदात्पञ्चधोपचर्यते। दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति। सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पार्शनादिविषयं ज्ञानं **दर्शनम्**। अशेषशब्दविषयं ज्ञानं **श्रवणम्**। निरवशेषशास्त्रविषयं ज्ञानं **मननम्**। ग्रन्थतोऽर्थतश्चासंदिग्धज्ञानं **विज्ञानम्**। **सर्वज्ञत्वं** प्रसिद्धम्। क्रियाशक्तिरेकाऽपि त्रिविधोपचर्यते। मनोजवत्वं कामरूपित्वं विकरणधर्मित्वं चेति। निरतिशयशीघ्रगामित्वं **मनोजवत्वम्**। कर्मानपेक्ष्य स्वेच्छयैवानन्तशरीरेन्द्रियाधिष्ठातृत्वं **कामरूपित्वम्**। उपसंहतशरीरेन्द्रियस्यापि निरतिशयैश्वर्यशालित्वं **विकरणधर्मित्वम्**। पशुपतिस्तु परमेश्वरः सर्वत्रापि कार्ये निमित्तं पशूनां कर्मानपेक्ष्य स्वेच्छयैव फलप्रदः। निरतिशयस्वातन्त्र्यशालित्वात्। नचैवं कर्मवैयर्थ्यम्; ईश्वरेच्छानुगृहीतकर्मणः साफल्यात्, तदननुगृहीतस्य कर्मणः पर्जन्याननुगृहीतकृषिकर्मण इव नैष्फल्येऽपि दोषाभावात् तदनुग्रहसंभावनया कर्मसु प्रवृत्त्युपपत्तेरिति। एवं पाशुपतानामन्येषां च सांख्यादीनां केवलं निमित्तकारणमीश्वर इति मतमिह निराक्रियते। **स्वगुणाप्रख्यापनेनेति**।

**न चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात् । यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत, पूर्वोत्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत । तस्माद्प्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वाद्यत्नेनात्र प्रतिषिध्यते । सा चेयं वेदबाह्येश्वरकल्पनानेकप्रकारा । केचित्तावत्सांख्ययोगव्यपाश्रयाः कल्पयन्ति प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वर इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति । माहेश्वरास्तु—मन्यन्ते कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः पशुपतिरीश्वरो निमित्तकारणमिति—वर्णयन्ति । तथा वैशेषिकादयोऽपि—केचित्कथंचित्स्वप्रक्रियानुसारेण निमित्तकारणमीश्वर—इति वर्णयन्ति । अत उत्तरमुच्यते—'पत्युरसामञ्जस्यात्' इति । पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जग-**

---

## भामती ।

बन्धनं तद्विमोक्षो दुःखान्तः । **एष तेषामभिसंधिः**—चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं नतूपादानत्वमपि । तस्मादिहापीश्वरोऽधिष्ठता जगत्कारणानां निमित्तमेव, नतूपादानमप्येकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधादिति प्राप्तम् । एवं प्राप्तेऽभिधीयते—**'पत्युरसामञ्जस्यात्' इति । इदमत्राकूतम्—**ईश्वरस्य निमित्त-

## वेदान्तकल्पतरुः ।

ख्यापनेन देशेषु वासः । ईश्वरो, न द्रव्यं प्रत्युपादानं, चेतनत्वात्कुलालवदित्याह—**चेतनस्येति** । कुलालस्यापि सुखाद्युपादानत्वात्साध्यवैकल्यं स्यात्तद्वारणाय द्रव्यमित्यध्याहृतम् । जगत्कारणानां प्रधानस्य परमाणूनां चेत्यर्थः । निमित्तमित्यस्य विवरणम्—**अधिष्ठातेति । सिद्धान्तस्तु—अधिगम्य श्रुतेरीशमनुपादानता यदि । अनुमीयेत बाधः स्यादाश्रयासिद्धिरन्यथा** ॥ किमप्रमित ईश्वरेऽनुपादानत्वं साध्यते, उत प्रमिते । **नाद्यः**; आश्रयासिद्ध्यापातात् । **द्वितीयेऽपि** तत्प्रमितिः श्रुतेरनुमानाद्वा पौरुषेयागमाद्वा । **प्रथमे** किमीक्षणपूर्वककर्तृत्वादिप्रतिपादकश्रुत्यैवानुपादानत्वं साध्यते, तत्पूर्वकानुमानाद्वा । **नाग्रिमः**; तस्याः श्रुतेर्निमित्तत्वमात्रपरत्वं नतूपादानत्वनिषेधपरत्वमिति प्रकृतिश्चे (ब्र. अ. १ पा. ४ सू. २३) त्यधिकरणे सुसाधितत्वादित्याह—**न तावदिति । न द्वितीय** इत्याह—**तस्मादिति ।** आस्थीयमानमपि न संभवति; तदात्मानं स्वयमकुरुतेत्यादिश्रुत्यैव बाधादित्यर्थः ॥ अस्तु तर्ह्यनुमिते ईश्वरेऽनुपादानत्वानुमानमत आह—**तत्रेति ।** ईश्वरे इत्यर्थः । पौरुषेयागमं च निषेत्स्याम इति तावच्छब्दः । **तथाहि**—न तावदाद्यं कार्यं

## कल्पतरुपरिमलः ।

तदप्रख्यापनं कायनस्पन्दनादिभिः । तत्रानुमानं तावन्न संभवतीति टीकायां तत्रेत्यस्य पूर्वग्रन्थानुसारेण यद्यपीश्वरस्य निमित्तमात्रत्वमित्यर्थः प्रतिभाति; तथापि पराभिमतानीश्वरानुमानानि स्वयमुद्भाव्य निराकर्तुकामस्तदर्थं तत्रेत्येतत्तु ईश्वरपरामर्शीति व्याचष्टे—**ईश्वर इत्यर्थ इति । किं धर्मविषयत्वसंसर्गान्योन्याभाववत्त्वमिति । ननु**—घटादिष्वपि संसर्गाभावो नाम संसर्गप्रतियोगिकाभावो न भवति, येनात्र संसर्गस्य संसर्गाभावो वा तस्यान्योन्याभावो वेति विकल्पः प्रवर्तेत, किंतु घटादिप्रतियोगिकावेव संसर्गाभावान्योन्याभावौ, तत्र प्रतियोगिनः संसर्गमारोप्य यस्याभावस्य बुद्धिरिदमिह नास्तीति स संसर्गाभावः । प्रतियोगिनस्तादात्म्यमारोप्य यस्याभावस्य बुद्धिरिदमिदं न भवतीति सोऽन्योन्याभाव इत्येव पराभिमतसंसर्गाभावाऽन्योन्याभावभेदः । अतो धर्मविषयत्वसंसर्गाभाव इत्युक्ते—नेत्थं विकल्पपरंपरा प्रवर्तेत इति—**चेन्न;** संसर्गाभावान्योन्याभावबुद्ध्योः प्रतियोगितादात्म्यारोपपूर्वकत्वासिद्धेः । **तथा हि**—भूतले घटो नास्तीति व्यवहारे भूतल इत्यस्य घटेन नान्वयः, येन भूतले घटारोपः सिध्येत्, किंतु नास्तीत्यनेनान्वयः । एवं व्यवहारानुसारेण प्रतीतिरपि घटप्रतियोगिकभूतलाधिकरणकाभावविषया, नतु भूतलाधिकरणकेन प्रतियोगिना विशेषिताऽभावविषया । एवं घटः पटो न भवतीति व्यवहारेऽपि घटः पट इति यत्तन्नेति नान्वयः, येनाधिकरणे प्रतियोगितादात्म्यारोपः सिध्येत्किं तु घट इत्यस्य न भवतीत्यनेनान्वयः, योऽयं घटः स पटो न भवतीति । एवं व्यवहारानुसारेण तन्मूलभूतप्रतीतिरपि घटस्याधिकरणस्य पटप्रतियोगिकान्योन्याभाववत्त्वविषया, नतु घटतादात्म्यापन्नेन प्रतियोगिना विशेषिताभावविषया । एवं सत्येव प्रतियोगिनाऽधिकरणेन चाभावो निरूप्यत इति परमतमर्यादाऽपि संगच्छते । **किंच** यदि घटसंसर्गाभावो घटप्रतियोगिकः, तदा घटापसरणानन्तरं भूतले घटो नास्तीति प्रतीतिर्निरालम्बना स्यात् । नहि कदाचित्तत्र स्थितस्यात्यन्ताभावः संभवति, नाप्यन्यत्र तदानीं सतः प्रागभावध्वंसौ संभवतः, नाप्युत्पादविनाश्यभावान्तरकल्पनं युक्तम् । तर्हि कल्प्यमानं घटसंयोगनाशोत्पत्तिकाले उत्पद्यते पुनर्घटसंयोजनकाले नश्यतीत्यभ्युपगन्तव्यम् । एवं च सत्यवश्याभ्युपगन्तव्येन घटापसरणघटसंयोजनमध्यवर्तिना संसर्गप्रतियोगिकाभावसामान्येनैव प्रतीतिनिर्वाहे किं सामयिकात्यन्ता-

**त्कारणत्वं नोपपद्यते । कस्मात् ? असामञ्जस्यात् । किं पुनरसामञ्जस्यम् ? हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत । प्राणि-**

## भामती ।

कारणत्वमात्रागमाद्वोच्यते प्रमाणान्तराद्वा । प्रमाणान्तरमप्यनुमानमर्थापत्तिर्वा । न तावदागमात्, तस्य निमित्तोपादानकारणत्वप्रतिपादनपरत्वादित्यसकृदावेदितम् । तस्मादनेनास्मिन्नर्थे प्रमाणान्तरमास्थेयम् । तत्रानुमानं तावन्न संभवति । तद्धि दृष्टानुसारेण प्रवर्तते, तदनुसारेण चासामञ्जस्यम् । तदाह—**हीनमध्यमेति । एतदुक्तं भवति**—आगमादीश्वरसिद्धौ न दृष्टमनुसर्तव्यम् । नहि स्वर्गापूर्वदेवतादिष्वागमादवगम्यमानेषु किंचिदस्ति दृष्टम् । नह्यागमो दृष्टसाधर्म्यात्प्रवर्तते । तेन श्रुतसिद्ध्यर्थमदृष्टानि दृष्टविपरीतस्वभावानि सुबह्वन्यपि कल्प्यमानानि न लोहगन्धितामावहन्ति; प्रमाणवत्त्वात् । यस्तु तत्र कथंचिद्दृष्टानुसारः क्रियते स सुहृद्भावमात्रेण । आगमानपेक्षितमनुमानं तु दृष्टसाधर्म्येण प्रवर्त-

## वेदान्तकल्पतरुः ।

सकर्तृकं कार्यत्वात्कुम्भवदिति मानम्; जीवादृष्टजत्वसिद्धेः, अव्यवहितप्राक्कालवर्तिप्रयत्नजत्वसाधने चाद्यकार्यव्यवहितप्रयत्नजत्वस्य कुम्भेऽभावेन साध्यवैकल्यात्, कुम्भाव्यवहितप्रयत्नजत्वस्य आद्ये कार्ये बाधात्, किंचिदव्यवहितप्रयत्नजन्यत्वस्य च सिद्धसाधनात् । अदृष्टाव्यवहितप्राक्कालप्रयत्नजत्वादाद्यकार्यस्य । अथ द्व्यणुकं द्व्यणुकोपादानसाक्षात्कारवज्जन्यं कार्यत्वादिति । तच्च न; अप्रसिद्धविशेषणविशेष्यत्वाभ्यां द्व्यणुकस्य तदुपादानसाक्षात्कारस्य चासिद्धेः । दृष्टान्ते च संदिग्धसाध्यत्वम्; घटस्य द्व्यणुकोपादानसाक्षात्कारवदीश्वरप्रयत्नजन्यत्वस्यासंप्रतिपत्तेः । अदृष्टं प्रत्यक्षं मेयत्वादित्यत्र च योगिभिरर्थान्तरता, कार्यं सर्वज्ञकर्तृकं कार्यत्वादित्यत्र च । **स्यादेतत्**—धर्मो भ्रमसमानाधिकरणधर्मविषयत्वरहितसाक्षात्कारविषयः, मेयत्वाद्, घटवत् । साक्षात्कारगोचर इत्युक्ते योगिभिरर्थान्तरतेति **भ्रमसमानाधिकरणधर्मविषयत्वरहितग्रहणम्**; योगिसाक्षात्कारस्य कालभेदेन भ्रमसमानाश्रयत्वात् । भ्रमसमानाधिकरणत्वरहितसाक्षात्कारगोचर इत्युक्ते चाप्रसिद्धविशेषणत्वमिति तन्निवृत्त्यर्थं धर्मविषयत्वग्रहणम् । अस्मदादीनां घटादिविषयसाक्षात्कारस्य भ्रमसमानाश्रयत्वेऽपि धर्मविषयत्वाभावेन भ्रमसमानाधिकरणत्वे सति धर्मविषयत्वरूपविशिष्टधर्मरहितत्वात्तत्र साध्यसिद्धेः । साक्षात्कारस्य च भ्रमसमानाधिकरणत्वे सति धर्मविषयत्वरहितत्वं धर्मविषयत्वराहित्याद्वा भ्रमसमानाधिकरणत्वराहित्याद्वा भवति । **आद्ये** तस्य धर्मविषयत्वव्याघात इति द्वितीयः स्यात् । तथाच तादृशसाक्षात्कारवपीश्वरसिद्धिरिति । तन्न; किमिदं धर्मविषयत्वरहितत्वम् । धर्मविषयत्वसंसर्गाभाववत्त्वमिति चेत्तत्किं धर्मविषयत्वसंसर्गान्योन्याभाववत्त्वमुत तत्संसर्गाभाववत्त्वम् । **नाद्यः**; तथासत्यस्य विशेषणस्य वैयर्थ्यात्साक्षात्कारपदेनैव तद्वाच्यार्थस्य धर्मविषयत्वसंसर्गान्योन्याभाववत्त्वसिद्धेः । नहि धर्मविषयत्वसंसर्गात्मकः कश्चित्साक्षात्कारोऽस्ति, यद्व्यवच्छेदार्थमिदं विशेषणम् । **न द्वितीयः**; धर्मविषयत्वसंससर्गसंसर्गान्योन्याभावमादाय विशेषणवैयर्थ्यतादवस्थ्यात्, तत्रापि ससंसर्गान्तरं प्रति धावने च तत्तदन्योन्याभावमादाय वैयर्थ्यधावनात् । अथ मतं न संसर्गस्य संसर्गान्तरमस्ति, किंतु स्वयमेव स्वस्य संसर्ग इति क्वानवस्थेति ? नैतत्; तथासति तादृशसंसर्गान्योन्याभावमादाय विशेषणवैयर्थ्येन वज्रलेपनात् । एतत्खण्डनभयेन यदि विशेषणमुज्झसि, तर्हि ग्रस्तोऽसि योगिभिरर्थान्तरतया । एवं सर्वा महाविद्यास्तच्छाया वाऽन्ये प्रयोगाः खण्डनीया इति ॥ **तत्सुखाद्वैतबोधात्मस्वभावहरये नमः । वेदान्तैकप्रमाणाय कुतर्काणामभूमये** ॥ तस्मात्सुष्ठूक्तं तत्रेश्वरेऽनुमानं तावन्न संभवतीति । **अथवा**—पूर्वग्रन्थेनास्मिन्नर्थे ईश्वरस्य निमित्तमात्रत्वे प्रमाणान्तरमास्थेयमिति सामान्यतः श्रुतिव्यतिरिक्तप्रमाणापेक्षामुक्त्वा किं तदनुमानं पौरुषेयागमो वेति विकल्प्याद्यं प्रत्याह—**तत्रानुमानमिति** । यथैव चेतनस्य निमित्तत्वमात्रमनुमीयते, तथा रागादिकमप्यनुमेयं व्याप्तेरविशेषात्तथा च वाद्यभिमतनिरवद्यत्वविशेषविरुद्धोऽयं हेतुरित्याह—**तद्धि दृष्टानुसारेणेति । ननु** सिद्धान्ते श्रुतिगम्येश्वरस्यापि

## कल्पतरुपरिमलः ।

भावकल्पनया ? अतो घटसंसर्गप्रतियोगिकाभावो घटसंसर्गाभावः घटपटयोः परस्परप्रतियोगिकाभावोऽन्योन्याभाव इत्येव विभागे वक्तव्य इत्यभिप्रेत्यैवं विकल्पपरम्परा कृता । **अथवेति** । तत्रानुमानं तावन्न संभवतीति टीकाग्रन्थे तत्रेत्यस्य यः स्वारसिकोऽर्थस्त्यक्तस्तं परिगृह्योत्तरग्रन्थस्तद्विषयतया योज्यते । अस्मिन्व्याख्याने तस्मादनेनास्मिन् ग्रन्थे प्रमाणान्तरमास्थेयमिति टीकाग्रन्थे यदीश्वरस्य निमित्तमात्रत्वे प्रमाणान्तरमास्थेयमित्युक्तं तत्रास्थीयमानमपि न संभवति; तदात्मानं स्वयमकुरुतेत्यादिश्रुत्यैव बाधादित्येतावत्पर्यन्तं तात्पर्यं न वक्तव्यं, किंतु प्रमाणान्तराकाङ्क्षामात्रपरं तद्व्याख्येयमित्याह—**सामान्यतः श्रुतिव्यतिरिक्तेति । व्याप्तेरविशेषादिति । ईश्वरो न द्रव्योपादनमिति** । येन चेतनत्वहेतुनाऽनुमीयते तेनैव तस्य रागादिमत्त्वमप्यनुमातुं शक्यम्; उभयत्रापि मूलभूतव्याप्तेरनुकूलतर्कसद्भावासद्भावाभ्यां विशेषाभावात्प्रत्युत रागाद्यनुमान एवानुकूलतर्कः संभवति । संसारिणां

**कर्मापेक्षितत्वाददोष इति चेत्, न; कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। नानादित्वादिति चेत्, न; वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः। अपिच 'प्रवर्तनालक्षणा दोषः' ( न्यायसू० १।१।१८ ) इति न्यायवित्समयः। नहि कश्चिददोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते। स्वार्थप्रयुक्त एव च सर्वो जनः**

## भामती ।

मानं दृष्टविपर्यये तुषादपि बिभेतितरामिति। **प्राणिकर्मापेक्षितत्वाददोष इति चेत्, न;** कुतः? **कर्मेश्वरयोर्मिथः प्रवर्त्यप्रवर्तयितृत्व इतरेतराश्रयत्वदोषप्रसङ्गात्।** **अयमर्थः**—यदीश्वरः करुणापराधीनो वीतरागस्ततः प्राणिनः कपूये कर्मणि न प्रवर्तयेत्, तच्चोत्पन्नमपि नाधितिष्ठेत्, तावन्मात्रेण प्राणिनां दुःखानुत्पादात्। नहीश्वराधीना जनाः स्वातन्त्र्येण कपूयं कर्म कर्तुमर्हन्ति। तदनधिष्ठितं वा कपूयं कर्म फलं प्रसोतुमुत्सहते। तस्मात्स्वतन्त्रोऽपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयम्। तथाचायमपरो गण्डस्योपरि स्फोट इतरेतराश्रयः प्रसज्येत, कर्मणेश्वरः प्रवर्तनीय ईश्वरेण च कर्मेति। शङ्कते—**नानादित्वादिति चेत्**, पूर्वकर्मणेश्वरः संप्रतितने कर्मणि प्रवर्त्यते, तेनेश्वरेण संप्रतितनं कर्म स्वकार्ये प्रवर्त्यत इति। निराकरोति—**न। वर्तमानकालवदिति।** अथ पूर्वं कर्म कथमीश्वराप्रवर्तितमीश्वरप्रवर्तनलक्षणं कार्यं करोति? तत्रापि प्रवर्तितमीश्वरेण पूर्वतनकर्मप्रवर्तितेनेत्येवमन्धपरम्परादोषः। चक्षुष्मता ह्यन्धो नीयते नान्धान्तरेण। तथेहापि द्वावपि प्रवर्त्याविति कः कं प्रवर्तयेदित्यर्थः। **अपिच** नैयायिकानामीश्वरस्य निर्दोषत्वं

## वेदान्तकल्पतरुः ।

पुरुषत्वाद्रागादिमत्त्वानुमानं दुर्वारमत आह—**एतदुक्तमिति**। व्याप्त्यपेक्षं ह्यनुमानं व्याप्त्युपनीतं सर्वमनुमन्यते। आगमस्तु स्वतन्त्रस्तत्र यत् तद्विरुद्धमनुमानं तत् कालातीतं स्यादित्यर्थः। **लोहगन्धिता** कलङ्कगन्धिता। कथं तर्हि मानान्तरानुसारेणापूर्वादिकल्पना? तत्राह—**यस्त्विति**। तत्राप्यागमप्रामाण्यात्कालान्तरकृतयागात्स्वर्गोऽस्तु का क्षतिः? अनन्तरपूर्वक्षणवर्तिनः कारणत्वमिति लोकानुभवमनुरुध्यापूर्वकल्पनेत्यर्थः। इदानीं चेत्कर्मेश्वरयोः प्रवर्त्यप्रवर्तकत्वं प्रतीयेत, तत एतद्बलाद्बीजाङ्कुरवत् परंपराऽवलम्बिष्यते, तत्र कुत इतरेतराश्रयत्वं कुतस्तरामन्धपरंपरेत्याशङ्कादौ तावत्प्रवर्त्यप्रवर्तकभावानुपपत्तिं कर्मेश्वरयोर्दर्शयति—**यदीश्वर इति। अथवा**—करुणयैवेश्वरः प्रेरितः कर्म कारयति, तत्कुत इतरेतराश्रयत्वं भाष्ये उच्यते? तत्राह—**यदीश्वर इति। कपूयं** कुत्सितम्। उत्तरस्मिन् व्याख्याने कर्मभिः प्रयोजनैः करुणया हेतुना प्रवर्त्यत इति दृष्टविरुद्धम्; दृश्यमानकार्यस्य करुणाहेतुकत्वविरुद्धदुःखात्मकत्वादिति योजना। ईश्वरेण पूर्वं कर्म तावत्प्रवर्तयितुं न शक्यते; कुत्सितफलानुदयप्रसङ्गादेवं पूर्वकर्मेश्वराप्रवर्तितं कथमीश्वरप्रवर्तनलक्षणं कार्यं करोति? एवं सति प्रवर्तकत्वोपपत्तिमनुक्त्वा केवलं ततः पूर्वकर्मैवावलम्ब्यते, तत्राह—**तत्रापीति**। तत्रापीश्वरप्रवर्तने स्वकार्ये पूर्वं कर्म ततः पूर्वभाविकर्मप्रवर्तितेनेश्वरेण प्रवर्तितमिति वक्तव्यं, तथाच सर्वत्रानुपपत्तिसाम्यादन्धपरम्परेत्यर्थः।

## कल्पतरुपरिमलः ।

रागाद्युपादानतायाम् आप्तत्वमेव प्रयोजकं, न तु संसार्यात्मत्वं गौरवादित्येवंरूप इति भावः। **निरवद्यत्वविशेषविरुद्ध इति।** साध्यविरुद्धवदनुमानबाधमितविशेषान्तरविरुद्धोऽपि हेतुर्विरुद्धहेत्वाभास इति भावः। **तत्राप्यागमप्रामाण्यादिति।** यद्यागमश्चिरातीतान्निर्व्यापाराद्यागात्स्वर्ग इति बोधयेत्, तर्हि तथैवानुमन्येमहि, न त्वागमस्तथा बोधयति, किं तु यागात्स्वर्ग इत्येतावन्मात्रं बोधयति, तत्तु व्यापारकल्पनायामपि न विरुध्यत इत्यविरोधात्तत्र लोकानुसारेणाऽपूर्वकल्पनं, न त्विह तथा रागादिमत्त्वकल्पनं प्रवर्तते; निरवद्यत्वादिश्रुतिविरोधादिति भावः। यदीश्वर इति ग्रन्थे कारुण्यपर इति विशेषणस्वारस्यमनुसृत्य तेन ग्रन्थेन व्यावर्त्यामितरेतराश्रयदोषपरिहारशङ्कां प्रकारान्तरेण दर्शयति—**अथवेति।** करुणयैव कर्मभिरतो नान्योन्याश्रय इति भावः। **कर्मभिः प्रयोजनैरिति।** अध्ययनेन वसतीतिवत्फलस्य हेतुत्वविवक्षया तृतीयेति भावः। पूर्वकर्म कथमीश्वराप्रवर्तितमीश्वरप्रवर्तनलक्षणं कार्यं करोतीति टीकाग्रन्थो न युक्तः; पूर्वकर्मणोऽपीश्वरप्रवर्तितत्वस्य परेणोच्यमानत्वादित्याशङ्क्याह—**ईश्वरेण पूर्वकर्म तावदिति। एवं सति प्रवर्तकत्वोपपत्तिमनुक्त्वेति।** ईश्वरेण पूर्वं कर्म प्रवर्तयितुं न शक्यते; कुत्सितफलानुदयप्रसङ्गादित्युक्तानुपपत्तिपरिहारार्थमीश्वरस्य प्रवर्तकत्वोपपत्तिमनुक्त्वैव परः केवलं कर्मेश्वरयोः प्रवर्त्यप्रवर्तकभावस्यानादितामात्रं यद्यवलम्बेत, तदानीमन्धपरंपरादोषमाहेत्यर्थः। प्रवर्तकत्वानुपपत्तिमुक्त्वेति पाठे त्वीश्वरस्य प्रवर्तकत्वानुपपत्तिर्या सिद्धान्तिनोक्ता तदनुवादः। **अनुपपत्तिसाम्यादिति।** ईश्वरस्याद्यतनकर्मणि च प्रवर्तकत्वानुपपत्तेः साम्यादित्यर्थः। अतो यथा केनचिदन्धेन स पटो रक्त इत्युक्ते कुत इदं श्रुतमिति परस्याकाङ्क्षायां स यद्यन्यमन्धं तदुपदेष्टारं ब्रूयात्सोप्यनुयुक्तोऽन्यमन्धं सोऽप्यपरमन्धं न कंचिदपि स्वोपदेष्टारं चक्षुष्मन्तं ब्रूयाद् अनयान्धपरम्परया प्राप्तो पटरक्तिमा यथैवाप्रामाणिकः, एवमियमपि कर्मे-

परार्थेऽपि प्रवर्तेत इत्येवमप्यसामञ्जस्यम्; स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात् । पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम् ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

पुनरप्यसामञ्जस्यमेव । नहि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण संबन्धं प्रधानपुरुषयोरीशिता । न तावत्संयोगलक्षणः संबन्धः संभवति; प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च । नापि समवायलक्षणः संबन्धः, आश्रयाश्रयिभावानिरूपणात् । नाप्यन्यः कश्चित्कार्यगम्यः संबन्धः शक्यते कल्पयितुम्; कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात् । ब्रह्मवादिनः कथमिति चेत्, न; तस्य तादात्म्यलक्षणसंबन्धोपपत्तेः । अपिचागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति, परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः। परस्यापि सर्वज्ञप्रणीतागमसद्भावात्समानमागमबलमिति चेत्, न; इतरेतराश्रयत्वप्रसङ्गादागमप्रत्ययात्सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरिति । तस्मादनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासंभवमसामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत् । नचैवमुपपद्यते । नह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति मृदादिवैलक्षण्यात् ॥ ३९ ॥

### भामती ।

स्वसमयविरुद्धमित्याह—**अपिचेति** । अस्माकं तु नायं समय इति भावः । **ननु** कारुण्यादपि प्रवर्तमानो जनो दृश्यते । नच कारुण्यं दोष इत्यत आह—**स्वार्थप्रयुक्त एव चेति** । कारुण्ये हि सति अस्य दुःखं भवति तेन तत्प्रहाणाय प्रवर्तेत इति कारुणिका अपि स्वार्थप्रयुक्ता एव प्रवर्तन्त इति । **ननु** स्वार्थप्रयुक्त एव प्रवर्ततामेवमपि को दोष इत्यत आह—**स्वार्थवत्त्वादीश्वरस्येति** । अर्थित्वादित्यर्थः । **पुरुषस्य चौदासीन्याभ्युपगमान्न** वास्तवी प्रवृत्तिरिति ॥ ३७ ॥ अपरमपि दृष्टानुसारेण दूषणमाह—**संबन्धानुपपत्तेश्च** । दृष्टो हि सावयवानामसर्वगतानां च संयोगः । अप्राप्तिपूर्विका हि प्राप्तिः संयोगो न सर्वगतानां संभवत्यप्राप्तेरभावान्निरवयवत्वाच्च । अव्याप्यवृत्तिता हि संयोगस्य स्वभावः । नच निरवयवेष्वव्याप्यवृत्तिता संयोगस्य संभवतीत्युक्तम् । तस्मादव्याप्यवृत्तितायाः संयोगस्य व्यापिकाया निवृत्तेस्तद्व्याप्यस्य संयोगस्य विनिवृत्तिरिति भावः । **नापि समवायलक्षणः** । स ह्ययुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः संबन्ध इत्यभ्युपेयते । नच प्रधानपुरुषेश्वराणां मिथोऽस्त्याधाराधेयभाव इत्यर्थः । **नापि** योग्यतालक्षणः कार्यगम्यसंबन्ध इत्याह—**नाप्यन्य इति** । नहि प्रधानस्य महदहंकारादिकारणत्वमद्यापि सिद्धमिति । शङ्कते—**ब्रह्मवादिन इति** । निराकरोति—**न** । कुतः ? **तस्य** मतेऽनिर्वचनीय**तादात्म्यलक्षणसंबन्धोपपत्तेः । अपिचेति** । आगमो हि प्रवृत्तिं प्रति न दृष्टान्तमपेक्षत इत्यदृष्टपूर्वे तद्विरुद्धे च प्रवर्तितुं समर्थः । अनुमानं तु दृष्टानुसारि नैवंविधे प्रवर्तितुमर्हतीति । शङ्कते—**परस्यापीति** । परिहरति—**नेति** । अस्माकं त्वीश्वरागमयोरनादित्वादीश्वरयोनित्वेऽप्यागमस्य न विरोध इति भावः ॥३८॥ यथादर्शनमनुमानं प्रवर्तते नालौकिकार्थविषयमितीहापि न प्रवर्तितव्यम् । सुगममन्यत् ॥३९॥ **रूपादिहीनमिति** । अनुद्भूतरूपमित्यर्थः । रूपादिहीनकरणाधिष्ठानं हि पुरुषस्य स्वभोगा-

### वेदान्तकल्पतरुः ।

**द्वावपि** कर्मेश्वरौ । **अस्माकं त्विति** । मायामय्यां प्रवृत्तावचोद्यत्वादित्यर्थः । एवं श्रुतेरनुमानाच्चेश्वरसिद्धिं निरस्य पौरुषेयागमात्तत्सिद्धिर्निरस्यत इत्याह—**परस्यापीति । अस्माकं त्विति** । शास्त्रयोनित्वेऽपीश्वरस्यानादिसिद्धनियतक्रमापेक्षणान्नेश्वराधीनं वेदस्य प्रामाण्यं किंतु स्वतः । यथा देवदत्तकृतत्वेऽपि दीपस्य प्रकाशनशक्तिमत एव कृतत्वाद् न देवदत्तापेक्षं तस्य प्रकाशकत्वं तद्वदित्यर्थः । **ननु** रूपादिहीनस्याधिष्ठेयत्वानुपपत्तिर्मायायामपि तुल्या, तत्राह—**यथा-**

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

स्यादेतत्—यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्यतीति । तथापि नोपपद्यते । भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते । नचात्र भोगादयो दृश्यन्ते । करणग्रामसाम्ये वाभ्युपगम्यमाने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन् । अन्यथा वा सूत्रद्वयं व्याख्यायते—'अधिष्ठानानुपपत्तेश्च' । इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते न निरधिष्ठानः । अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किंचिच्छरीरं करणायतनं वर्णयितव्यं स्यात् । नच तद्वर्णयितुं शक्यते; सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः । निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः; एवं लोके दृष्टत्वात् । 'करणवच्चेन्न भोगादिभ्यः' । अथ लोकदर्शनानुसारेणेश्वरस्यापि किंचित्करणानामायतनं शरीरं कामेन कल्प्येत । एवमपि नोपपद्यते । सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत ॥ ४० ॥

---

### भामती ।

दावेव दृष्टं नान्यत्र । नहि बाह्यं कुठाराद्यपरिदृष्टं व्यापारयन् कश्चिदुपलभ्यते । तस्माद्रूपादिहीनं करणं व्यापारयत ईश्वरस्य भोगादिप्रसक्तिः । तथाचानीश्वरत्वमिति भावः । कल्पान्तरमाह—**अन्यथेति** । पूर्वमधिष्ठितिरधिष्ठानमिदानीं तु अधिष्ठानं भागायतनं शरीरमुक्तम् । तथा भोगादिप्रसङ्गेनानीश्वरत्वं पूर्वमापादितम् । संप्रति तु शरीरित्वेन भोगादिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेषः ॥ ४० ॥ **अपिच** सर्वत्रानुमानं प्रमाणयतः प्रधानपुरुषेश्वराणामपि संख्याभेदव-

### वेदान्तकल्पतरुः ।

**दर्शनमिति** । अधिष्ठानेति ( ब्र. अ. २ पा. २ सू. ३९ ) सूत्रगतव्याख्यानयोर्भेदमाह—**पूर्वमिति** । करणवच्चेदिति ( ब्र. अ. २ पा. २ सू. ४० ) सूत्रस्थव्याख्यानयोर्विशेषमाह—**तथेति** । **प्रधानपुरुषेश्वराणामिति** । एषां पुरुषान् जात्यैकीकृत्य त्रित्वं तावत्सिद्धं, पुरुषाणां तु परार्धादिसंख्यासु मध्येऽन्यतमसंख्ययेयन्त एवेति संख्याभेदवत्त्वं द्रव्यत्वात् कुसूलमितधान्यवदित्यनुमाय सर्वेषां प्रधानादीनां संख्यावत्त्वादन्तवत्त्वं विनाशित्वमनुमातव्यम् । यद्यपि द्रव्यत्वादेवान्तवत्त्वं सर्वेषामनुमातुं शक्यम्; तथापि प्रवाहनित्यत्वादनित्यानामपि स्रोतोरूपेण संसारवाहकत्वशङ्कां

### कल्पतरुपरिमलः ।

श्वरयोः प्रवर्त्यप्रवर्तकभावपरंपरोक्तानुपपत्तिधूननक्षमचक्षुष्मत्स्थानीयश्रुतिमूला यदि न स्यात्, तदा कर्मेश्वरयोः प्रवर्त्यप्रवर्तकभावो न प्रामाणिकः स्यादिति भावः । भाष्ये प्रधानपुरुषेश्वरत्रयमिति कथमुक्तम् ? पुरुषाणां बहुत्वादित्याशङ्क्य व्याचष्टे—**पुरुषान् जात्यैकीकृत्येति । तथापि प्रवाहनित्यत्वादिति** । यदि द्रव्यत्वादन्तवत्त्वमनुमीयते, तदा सर्वेषां संसारिणामनित्यत्वेऽपि प्रवाहरूपेण संसारस्यानुवृत्तिर्न निवारिता स्यात्तथा च तच्छून्यतायामीश्वरः किमधितिष्ठेत्किंविषये वास्य सर्वज्ञत्वेश्वरत्वे स्यातामिति भाष्योक्तदूषणमलग्नं स्यात् । अतएवहि विद्वत्सु मुच्यमानेषु सर्वदा ब्रह्माण्डलोके जीवानामनन्तत्वादशून्यतेति श्लोकोक्तप्रकारेणाऽशून्यतानिर्वाहोपपत्तिः । द्रव्यत्वादिहेतुना कुसूलनिहितबीजवदेतावन्त एवेति पुरुषाणामियत्तारूपसंख्यावत्त्वानुमाने तु तेषां सर्वेषां क्रमेण मुक्तौ शून्यतापत्तिरिति दूषणं लग्नं भवतीत्यभिप्रेत्य संख्याविशेषानुमानमादृतमित्यर्थः । **एतेन**—संख्यावत्त्वादेवान्तवत्त्वमनुमेयं चेदपि प्रधानस्येश्वरस्य जात्यैकीकृतानां पुरुषाणां च त्रित्वसंख्ययाऽन्तवत्त्वमनुमीयतां, तेषां प्रतिव्यक्तिगतैकत्वसंख्यया वा तदनुमीयतामित्यपि शङ्का—**निरस्ता;** तावता सर्वशून्यतायामीश्वरस्य ज्ञेयाधिष्ठेयाभावदूषणावकाशसिद्धेः । तस्मादियन्त एवेति परिच्छिन्नानां जीवानां मध्ये प्रतिकल्पमेकैकस्मिन्नन्तं प्राप्तेऽप्यनाद्यतीतकल्पप्रवाहे सर्वेऽपि जीवा अतीताः स्युरिति कस्य भोगार्थं प्रधानमीश्वरोऽधितिष्ठेत् ? किंविषया वाऽस्य सर्वज्ञता स्याद् ? इदानीं सर्वशब्दार्थालाभादिति दूषणसिद्ध्यर्थमियत्तारूपसंख्याविशेषानुमानमपेक्ष्यते । **ननु** यद्यतीतेषु कल्पेषु इयत्तापरिच्छेदाभावरूपमानन्त्यमिष्यते, तदा तत्रैव द्रव्यत्वादिहेतोर्व्यभिचारः । यदि नेष्यते, तदा जीवानामियत्तारूपसंख्याविशेषवत्त्वेऽप्यतीतकल्पापेक्षयाऽधिकसंख्यावन्तस्त इतीदानीं केषांचित्संसारिणामनुवृत्तेस्तद्भोगार्थमीश्वरस्य प्रधानाधिष्ठातृत्वं सर्वज्ञत्वं चोपपद्यते । अग्रे कदाचित्तदुभयं न स्यादिति चेदिष्टापत्तिः । नहि तत्रानुभवविरोधोऽस्ति । अभ्युपगम्यते च सर्वमुक्तिवादिभिरग्रे तथाभावः । **किंच** प्रधानपुरुषेश्वराणां त्रयाणामप्यन्त

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि सर्वज्ञस्तैरभ्युपगम्यतेऽनन्तश्च । अनन्तं च प्रधानमनन्ताश्च पुरुषा मिथो भिन्ना अभ्युपगम्यन्ते । तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत वा न वा परिच्छिद्येत । उभयथापि दोषोऽनुषक्त एव । कथम् ? पूर्वस्मिंस्तावद्विकल्प इयत्तापरिच्छिन्नत्वात्प्रधानपुरुषेश्वराणामन्तवत्त्वमवश्यं भाव्येवं लोके दृष्टत्वात् । यद्धि लोक इयत्तापरिच्छिन्नं वस्तु पटादि तदन्तवद्दृष्टं, तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत्स्यात् । संख्यापरिमाणं तावत्प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम् । स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति । पुरुषगता च महासंख्या । ततश्चेयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारान्मुच्यन्ते तेषां संसारोऽन्तवान्संसारित्वं च तेषामन्तवत् । एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात् । प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारित्वेनाभिमतं तच्छून्यतायामीश्वरः किमधितिष्ठेत् ? किंविषये वा सर्वज्ञतेश्वरते स्याताम् ? प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सत्यादिमत्त्वप्रसङ्गः । आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः । अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्यु-

---

### भामती ।

स्वमन्तवत्त्वं च द्रव्यत्वात् संख्यान्यत्वे सति प्रमेयत्वाद्वानुमातव्यं, ततश्चान्तवत्त्वमसर्वज्ञता वा । अस्माकं त्वागमगम्येऽर्थे तद्वाश्रितविषयतया नानुमानं प्रभवतीति भावः । **स्वरूपपरिमाणमपि** यस्य यादृशमणु महत् परममहद्दीर्घं ह्रस्वं चेति । **अथ मा भूदेष दोष इत्युत्तरो विकल्पः** । यस्मान्तोऽस्ति तस्मान्तवत्त्वाद्ग्रहणमसर्वज्ञतामा-

### वेदान्तकल्पतरुः ।

व्यावर्तयितुं संख्याभेदवत्त्वमनुमितम् । एवं तावद्द्रव्याश्रितैव संख्येति येषामाग्रहस्तन्मते संख्याभेदवत्त्वे द्रव्यत्वं हेतूकृतम् । अथ संख्यां विहाय सर्वत्र संख्यास्तीति मतं तन्मतेन मानं—**संख्यान्यत्वे सतीति** । संख्यान्यत्वादित्यर्थः । सप्तमी च निमित्तार्था । अथ संख्यायामपि संख्यास्तीति मतं, तत्रानुमानमाह—**प्रमेयत्वादिति** । सामान्यतो दृष्टानुमानोपन्यासस्तु ईदृशेनापि दूष्यत्वादाभासतरः परपक्ष इति द्योतनाय । व्याख्यातेऽर्थे सूत्रमवतारयति—**ततश्चेति** । **ननु** ब्रह्माप्यन्तवदेकत्वादेकघटवदिति किं न स्यादत आह—**अस्माकं त्विति** । भाष्यस्थस्वरूपपरिमाणपदं व्याचष्टे—

### कल्पतरुपरिमलः ।

वक्ष्यमाणानुमानिकेश्वरवादिनं प्रत्यापादितं, केन हेतुना सर्वेषु पुरुषेष्वप्यतीतेषु प्रधानेश्वरयोरवस्थितिमभ्युपगम्येदं दूषणमुच्यते ? तस्मादयुक्तमिदं दूषणमिति—**चेत्, उच्यते**; संख्यावत्त्वेन प्रमेयत्वेन पुरुषाणामियत्तानुमाने सर्वैः पुरुषैरनुभाव्यानि यावन्ति दुःखानि तेषामपि इयत्ता हेतुसाम्यात् सिध्यति, सा चेयत्ता एकाद्यष्टादशस्थानगतपरार्धमध्य एव कंचित्संख्याविशेषमादाय पर्यवस्यति । ततश्च सर्वैरपि पुरुषैरनादिकालप्रवाहप्रवृत्ततरशरीरेषु प्रतिशरीरमस्मदाद्यनिर्धार्यसंख्याविशेषाणि दुःखान्यनुभूयन्त इत्येतावता कालेन सर्वपुरुषगतानां सर्वेषामपि दुःखानामुच्छेदोऽवश्यंभावीत्यतो विनैव तत्त्वज्ञानं मुक्तेषु सर्वेषु पुरुषेषु स्वरूपतः स्थितेष्वपीदानीं स्थितेनापि प्रधानेन तेषां भोगार्थं न प्रवर्तनीयम् । नापीश्वरेण तदधिष्ठेयं नापि सृज्यं वस्तु किंचित्तेन ज्ञेयमस्तीति दूषणे तात्पर्यम् । यदि तु द्रव्यत्वहेतुनैव संख्याविशेषवत्त्वानुमानमिष्यत इति दुःखानामानन्त्यमभ्युपगम्येत, तदा प्रतिपुरुषवर्तिनां दुःखानामियत्तापरिच्छेदाभ्युपगमे क्रमेण भुज्यमानानां तेषां माषराशिन्यायेन स्वयमेव क्षयः स्यादिति मुक्तेस्तत्त्वज्ञानैकसाध्यत्वाभ्युपगमविरोधः । प्रतिपुरुषवर्तिनामपि दुःखानामानन्त्याभ्युपगमे तत्त्वज्ञाने सति योगसामर्थ्याद् बहूनि शरीराणि परिगृह्य भोगेन नाश्यतया पराभ्युपगतानां दुःखानामानन्त्यात्कदापि क्षयो न स्यादिति तत्त्वज्ञानान्मुक्त्यभावप्रसङ्ग इति दूषणं द्रष्टव्यम् ॥ **सप्तमी च निमित्तार्थेति** । क्षितिचेतिसूत्रवद् निमित्तार्था सप्तमी ज्ञापकहेतुपर्यवसितेति भावः । **ननु** घटस्य कुलालवज्जगतोपि केनचित्कर्त्रा भाव्यमिति ईश्वरानुमाने स कर्ता कुलालवदेव रागादिमान् स्यात्, कुलालो मृदादिकमिव स्वसंयुक्तमेवाधितिष्ठेद्रूपादिमदेवाधितिष्ठेत्, श्रोत्रस्पर्शनादिवद् रूपादिहीनस्याप्यधिष्ठाने तदधिष्ठानवदेव प्रधानाद्यधिष्ठानमप्यधिष्ठातृभोगार्थं स्यात्, कुलालवदेव च जगत्कर्ता शरीरी स्यात्, शरीरित्वे च भोगादिमान् स्यात्, प्रधानपुरुषेश्वराश्च संख्यावत्त्वात्परिमाणवत्त्वाच्चान्तवन्तः स्युः, पुरुषाश्च द्रव्यत्वादिभिः संख्याविशेषवन्तः स्युरित्यनुमानानि साम्येन दृष्टसाधर्म्यमात्रमवलम्ब्य प्रवृत्तानि, पर्वतो महानसवद्वह्निमाँश्चेत्तद्वदेव व्यञ्जनवानपि स्यादित्येतत्तुल्यामीत्याशङ्क्याह—**सामान्यतो दृष्टानुमानोपन्यासस्त्विति** ।

पगम्येत, न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति, तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत । तस्मादप्यसंगतस्तार्किकपरिगृहीत ईश्वरकारणवादः ॥ ४१ ॥ इति सप्तमं पत्यधिकरणम् ॥

( ८ अधिकरणम् ) **उत्पत्त्यसंभवात् ॥ ४२ ॥**

येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः प्रकृतिश्चाधिष्ठाता चेति । श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः । तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति? उच्यते—यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्यस्तित्वंशान्तरं विसंवादस्थानमित्यतस्तत्प्रत्याख्यानायारम्भः । तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मोच्यते। संकर्षणो नाम जीवः । प्रद्युम्नो नाम मनः। अनिरुद्धो नामाहंकारः । तेषां वासुदेवः परा प्रकृतिरितरे संकर्षणादयः कार्यम् । तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते—इति । तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा सर्वात्मा

---

### भामती ।

पादयेत् । यस्य त्वन्त एव नास्ति तस्य तदग्रहणं नासर्वज्ञतामावहति । नहि शशविषाणाद्यज्ञानादज्ञो भवतीति भावः । परिहरति—**तत इति** । आगमानपेक्षस्यानुमानमेषामन्तवत्त्वमवगमयतीत्युक्तम् ॥ ४१ ॥ **इति सप्तमं पत्यधिकरणम् ॥**

**उत्पत्त्यसंभवात् ॥ ४२ ॥**

### वेदान्तकल्पतरुः ।

**स्वरूपेति । परिहरति ।** तत ईश्वरस्येत्यादिभाष्येणेति शेषः । असति ह्यन्ते तदपरिच्छेदो न दोषायास्ति च स इत्याह—**आगमेति** । आगमानपेक्षो वादी तस्येति ॥ ४१ ॥ **इति सप्तमं पत्यधिकरणम् ॥**[1]

**उत्पत्त्यसंभवात् ॥ ४२ ॥**

### कल्पतरुपरिमलः ।

ईदृशेनासारतरेणाप्यनुमानजातेन दूषयितुं शक्यत्वादत्यन्ततुच्छः पक्ष इति द्योतनार्थं तदुपन्यासः । नह्यस्मादनुमानजातात् कार्यमात्रं कर्तृकारकसाध्यमित्याद्यनुमाने कश्चिद्विशेषोऽस्ति; घटादिषु दृष्टायां कर्तृजन्यतायां लाघवात्कार्यत्वमेवावच्छेदकं, नतु घटत्वादिकमननुगमादिति तर्केण दार्ढ्यापादने कार्यमात्रं दानादिवत्संप्रदानजन्यं पर्णपतनादिवदपादानजन्यमिति संप्रदानादिजन्यतायामपि कार्यत्वमेवावच्छेदकं लाघवान्न तु दानत्वादिकमननुगमादिति तर्कदृढीकृतानुमानैरङ्कुरादिकार्ये कर्तृकारकवत्संप्रदानापादानकारकयोरपि अतीन्द्रिययोः सिद्धिप्रसङ्गादिति भावः । **ननु** सांख्याधिकरणे कारणानि चेतनाधिष्ठानमन्तरेण कार्याणि न जनयन्तीत्यानुमानिकेश्वरसिद्धिरङ्गीकृता, इह कथं तद्दूषणं क्रियते ? **नैष दोषः**; तत्र पूर्वपक्षे मृद्घटादिषु दृष्टं कार्यानुसारिणा कारणेन भाव्यमिति नियममवलम्ब्य सुखदुःखमोहात्मकस्य जगतस्तथाभूतं कारणमनुमिमानं सांख्यं प्रति मृदादिदृष्टान्तेनैवाचेतनस्य जगत्कारणस्य चेतनेनाधिष्ठानमपि सिध्येत् स्वतन्त्रं प्रधानं जगत्कारणमिति निरीश्वरसांख्याभिमतं न सिध्येदित्येतावन्मात्रमुक्तं, नतु स्वतन्त्रमीश्वरानुमानमनवद्यमिति तेन नेश्वरः प्रसाधितः ॥ **इति सप्तमं पत्यधिकरणम् ॥**

**उत्पत्त्यसंभवात् ॥ ४२ ॥**

---

१ तत्र सूत्राणि ९—पत्युरसामञ्जस्यात् ३७ संबन्धानुपपत्तेश्च ३८ अधिष्ठानानुपपत्तेश्च ३९ करणवच्चेन्न भोगादिभ्यः ४० अन्तवत्त्वमसर्वज्ञता वा ४१ ॥

स आत्मनात्मानमनेकधा व्यूह्यावस्थित इति, तन्न निराक्रियते; 'स एकधा भवति त्रिधा भवति' ( छा० ७।२६।२ ) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात् । यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते, तदपि न प्रतिषिध्यते; श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते वासुदेवात्संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति, अत्र ब्रूमः—न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति; अनित्यत्वादिदोषप्रसङ्गात् । उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन् । ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्; कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात् । प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिम्—'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' ( ब्र० सू०२।३।१७ ) इति । तस्मादसंगतैषा कल्पना ॥ ४२ ॥

## भामती ।

अन्यत्र वेदाविसंवादाद्यत्रांशे विसंवादः स निरस्यते, तमंशमाह—**यत्पुनरिदमुच्यते वासुदेवात्संकर्षणो जीव इति** जीवस्य कारणवत्त्वे सत्यनित्यत्वम्, अनित्यत्वे परलोकिनोऽभावात्परलोकाभावः, ततश्च स्वर्गनरकापवर्गाभावापत्तेर्नास्तिक्यमित्यर्थः । अनुपपन्ना च जीवस्योत्पत्तिरित्याह—**प्रतिषेधिष्यति चेति** ॥ ४२ ॥ यद्यप्यनेकशिल्पपर्यवदातः परशुं कृत्वा तेन पलाशं छिनत्ति, यद्यपि च प्रयत्नेनेन्द्रियार्थात्ममनःसंनिकर्षलक्षणं ज्ञानकरणमुपादायात्मार्थं

## वेदान्तकल्पतरुः ।

अधिष्ठातैवेश्वर इति मते निरस्ते प्रकृतिरपि स इति मतस्य वेदसंगतार्थत्वाज्जीवोत्पत्तावपि प्रमाणत्वमतो जीवस्वरूपतया बोध्यमानाद् ब्रह्मणो जगत्सर्गं ब्रुवतः समन्वयस्य तेन बाध इति शङ्कानिरासात्संगतिमभिप्रेत्याह—**अन्यत्रेति** । पञ्चरात्रकर्तुर्वासुदेवस्य वेदादेव सर्वज्ञत्वावगमात् कपिलपतञ्जल्यादीनां च जीवत्वात्पञ्चरात्रस्य च पुराणेषु बुद्धादिदेशनावद्व्यामोहार्थमीश्वरप्रणीतत्वश्रवणान्न योगाद्यधिकरणगतार्थता । अवान्तरसंगतिवशादिह पादेऽस्य लेखः । भवतु क्रियाकरणमुत्पाद्यं नतु ज्ञानकरणमित्याशङ्क्याह—**प्रयत्नेति** । प्रयत्नादीनां करणत्वं विवक्षातः । **सिद्धान्तस्तु—बुद्धिपूर्वकृतिः पञ्चरात्रं निःश्वसितं श्रुतिः । तेन जीवजनिस्तत्र सिद्धा गौणी नियम्यते** ॥ यावच्चैकदेशे वेदाऽविरोधादीश्वरबुद्धेर्वेदमूलत्वं वेदाद्वा सर्वविषयत्वं प्रमीयते, तावदेव स्वतःप्रमाणवेदाज्जीवानुत्पत्तिप्रमितौ तादृग्बुद्धिपूर्वकेश्वरवचनान्न जीवोत्पत्तिरवगन्तुं शक्यते । अतः प्रमाणापहृतविषये गौणं तद्वचनं नतु भ्रान्तम् पूर्वपक्षयुक्तेरिति । संकर्षणसंज्ञो जीवः प्रद्युम्नं जनयितुं करणान्तरवान्न वा । **आद्ये** तदेव सर्वत्र करणं स्यादिति न प्रद्युम्नः करणं भवेत् । **द्वितीयं** प्रत्याह—

## कल्पतरुपरिमलः ।

**विष्णुभागवता मन्यन्ते**—भगवान् नारायणः परं ब्रह्म, स वासुदेवादिचतुर्व्यूहात्मनावतिष्ठते, तत्र वासुदेवः परिपूर्णषाड्गुण्यशाली, षड्गुणाश्च ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि, चेतनाचेतनात्मकसकलप्रपञ्चाहम्भावोल्लेखितया सामान्यतो विशेषतश्च सकलवस्तुगोचरं तस्य ज्ञानं **ज्ञानमुच्यते** । जगत्प्रकृतिभावः **शक्तिः** । जगत्सृजतोऽस्य श्रमाभावस्तिलकालकवदप्रयत्नेन स्वसृष्टसकलजगद्धरणं च **बलम्** । अप्रतिहतेच्छत्व**मैश्वर्यम्** । जगत्प्रकृतित्वेऽपि पयसो दधिभावेनेव विकारविरहो वीर्यम् । जगत्सृष्टौ सहकार्यनपेक्षत्वं पराभिभवसामर्थ्यं च **तेजः** । ततो ज्ञानबलोन्मेषेण संकर्षणस्ततो वीर्यैश्वर्योन्मेषेण प्रद्युम्नस्ततः शक्तितेजःसमुन्मेषेण अनिरुद्धो जायते संकर्षणादयश्च जीवमनोहंकाररूपा इति तन्मतम् । तन्निरासस्य पूर्वाधिकरणेन संगतिमाह—**अधिष्ठातैवेति । ननु** कापिलपातञ्जलस्मृतिप्रामाण्यनिरसनानन्तरं कर्तृगौरवेण विशेषेण पाञ्चरात्रप्रामाण्यनिरसनं पूर्वपादएव सङ्गतमित्याशङ्क्याह—**अवान्तरसंगतिवशादिति । ननु** यदि पाञ्चरात्रं बुद्धिपूर्वा कृतिर्निःश्वसितकल्पा श्रुतिरबुद्धिपूर्वा, तर्हि विपरीतं बलाबलम्; अबुद्धिपूर्वकस्य हि प्रामाण्यं घुणाक्षरन्यायेन क्वचिद्भवदपि न सार्वत्रिकं भवेत्, सर्वज्ञस्य भगवतो बुद्धिपूर्वा कृतिस्तु मूलदार्ढ्यात्सार्वत्रिकं प्रामाण्यमश्नुत इत्याशङ्क्याह—**यावच्चेति । अयमर्थः**—भगवतो बुद्धिरत्र विष्णुस्मृत्यादिमूलबुद्धिवत् स्मृतिरूपा विवक्षिता ? उत सर्वज्ञस्य भगवतः प्रत्यक्षं संभवतीति प्रत्यक्षरूपा वा । **आद्ये** स्मृत्यन्तराणामिव पाञ्चरात्रस्मृतेरपि वेदमूलत्वेन प्रामाण्यं समर्थनीयम् । **द्वितीये** भगवतः सार्वज्ञ्यं वेदादवगतमिति समर्थनीयम् । **पक्षद्वयेऽपि** वेदप्रामाण्यमुपजीव्य पाञ्चरात्रस्य प्रामाण्यमुपपादनीयम् । अबुद्धिपूर्वकस्यैव तस्य वक्तृदोषराहित्येन प्रामाण्यमविचलं, बुद्धिपूर्वकस्य तु वक्तृदोषसंभावनया प्रामाण्यं न तथा स्थिरम् । यद्यपि वेदावगतसार्वज्ञ्यस्य भ्रान्तिर्न संभवति; तथापि वेदविरोधदर्शने सति बुद्धदेशनावत्तदंशे व्यामोहकत्वशङ्का नापैति, सापि शङ्का यद्यपि न भवति; तथापि उपजीव्यविरोधे गौणत्वकल्पनमावश्यकमिति । **अत्र केचित्पाञ्चरात्रस्य प्रामाण्यमित्थं समर्थयन्ते**—एकायनशाखामूलकं पाञ्चरात्रमिति वेदमूलत्वेनैव तस्य प्रामाण्यम् । एकायनशाखामूलत्वं च पाञ्चरात्र

## नच कर्तुः करणम् ॥ ४३ ॥

इतश्चासंगतैषा कल्पना । यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते । वर्णयन्ति च भागवताः कर्तुर्जीवात्संकर्षणसंज्ञकात्करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते । कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहंकार उत्पद्यत इति । नचैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः नचैवंभूतां श्रुतिमुपलभामहे ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथापि स्यान्न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते, किं तर्हि ? ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वर्यैर्धर्मैरन्विता अभ्युपगम्यन्ते वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति । तस्मान्नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोतीति । अत्रोच्यते—एवमपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः । कथम् ? यदि तावदयमभिप्रायः परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यमेकेनैवेश्वरेणेश्वर-

### भामती ।

जानाति; तथापि संकर्षणोऽकरणः कथं प्रद्युम्नाख्यं मनः करणं कुर्यात् । अकरणस्य वा करणनिर्माणसामर्थ्ये कृतं करविणनिर्माणेन । अकरणादेव निखिलकार्यसिद्धेरिति भावः ॥ ४३ ॥ **वासुदेवा एवैते** संकर्षणादयो **निर्दोषा** अविद्यादिदोषरहिताः । **निरधिष्ठाना** निरुपादाना अतएव **निरवद्या** अनित्यत्वादिदोषरहिताः । तस्मादुत्पत्त्यसंभवोऽनुगुणत्वान्न दोष इत्यर्थः । **अत्रोच्यते—एवमपीति** । मा भूदभ्युपगमेन दोषः, प्रकारान्तरेण त्वयमेव दोषः । प्रश्नपूर्वं प्रकारान्तरमाह—**कथम् ? यदि तावदिति** । न तावदेते परस्परं भिन्ना ईश्वराः परस्परव्याहतेच्छा भवितुमर्हन्ति; व्याहतकामत्वे च कार्यानुत्पादात् । अव्याहतकामत्वे वा प्रत्येकमीश्वरत्वे एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम् ।

### वेदान्तकल्पतरुः ।

**संकर्षणोऽकरण इति । करणसामर्थ्य इति** । इह **करणं** कृतिः । **परस्परव्याहतेच्छा इति** । व्याहतेच्छत्वे ईश्वरत्वव्याघातादित्यर्थः । उत्पन्ने हि कार्ये तत्प्रतीश्वरत्वमुत्पत्तिरेव न स्याद्, इत्याह—**व्याहतकामत्वे वेति । परिशुद्धं**

### कल्पतरुपरिमलः ।

एवोक्तं, संकर्षणादयस्तु न जीवमनोहंकाराः, किंतु तदभिमानिनो भगवद्व्यूहाः, तेषां च जननमैच्छिकप्रादुर्भावरूपम्, अतो न जीवोत्पत्तिप्रतिपादनाद्वेदात् विरोधः । नच—तथापि वेदेषु ये गर्भाधानादयः चत्वारिंशत्संस्काराः समाम्नाताः तद्विपरीतास्ते पाञ्चरात्रे विहिता इत्यप्रामाण्यं—शङ्कनीयम्; तेषामप्येकायनशाखायामाम्नानाच्छाखाभेदेन च कर्मणां प्रकारभेदस्यान्यत्रापि संप्रतिपन्नत्वात् । अतएव तदनुष्ठातॄणामपि न वैकल्यम्; सर्वेषामपि स्वस्वशाखोक्तप्रकारकर्मानुष्ठानदर्शनात् । एवमेव तेषां ग्रन्थेषु कण्ठरवेणोक्तम् । तथा यदप्युक्तं गर्भाधानादिदाहान्तसंस्कारान्तराऽसेविनां भागवतानामब्राह्मण्यमिति तत्राप्यज्ञानमेवापराध्यति, न पुनरायुष्मतो दोषः । यत एते वंशपरम्परया वाजसनेयिशाखामधीयानाः कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते नातो ब्राह्मण्यात्प्रच्यवन्ते । ये पुनः सावित्र्यनुवचनप्रभृतित्रयीधर्मत्यागेनैकायनश्रुतिविहितानेव चत्वारिंशत्संस्कारान् कुर्वते, स्वशाखागृह्योक्तमर्थजातमनुतिष्ठन्ति, न ते शाखान्तरीयकर्माननुष्ठानेन ब्राह्मण्यात्प्रच्यवन्ते । एवं चतुर्व्यूहं भगवन्तं प्रत्यहं पाञ्चकालिकेनाभिगमनादिपञ्चकेन वार्षशतिकव्रतेन समाराध्य पुरुषः क्लेशैर्मुच्यते । **तत्राभिगमनं** प्रातर्भगवन्मन्त्रजपस्तुतिनमस्कारादिकम् । तदनन्तरं पूजार्थं पुष्पादिसंपाद**नमुपादनम्** । ततः पूजन**मिज्या** । अतो भगवच्छास्त्रतदनुगुणपुराणागमश्रवणचिन्तनादिकं **स्वाध्यायः** । ततः सायंसध्यानन्तरं भगवति चित्तसमाधानं योग इति ॥

**तैः** पाञ्चरात्रप्रामाण्यसमर्थनव्याजेन वयं पाञ्चरात्रिण एकायनशाखिन इत्यादिमन्यमानानां ब्राह्मण्यवैकल्यमेव प्रतिष्ठापितम् । **तथाहि**—ये वाजसनेयिशाखामधीत्य तच्छाखागृह्योक्तप्रकारेण संस्काराननुतिष्ठन्ति तेषां शाखारण्डतयैव ब्राह्मण्यवैकल्यं प्रतिष्ठापितम् । ये तु त्रयीविहितान् संस्कारान् परित्यज्य पाञ्चरात्रविहितानेव संस्काराननुतिष्ठन्ति, तेषां वैदिककर्माणि परित्यज्याऽवैदिककर्मानुष्ठानेन तत्प्रतिष्ठापितम् । न ह्येकायनशाखेति काचन शाखा क्वचिदधीयमाना दृश्यते, येन तन्मूलतया ते संस्कारा वैदिकाः स्युः । खिलशाखात्वकल्पनं च न प्रमाणमूलम् ।

कार्यसिद्धेः।सिद्धान्तहानिश्च, भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । अथायमभिप्राय एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तथापि तदवस्थ एवोत्पत्त्यसंभवः । नहि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्यातिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन यथा मृद्धटयोः । नह्यसत्यतिशये कार्यं कारणमित्यवकल्पते । नच पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिष्वेकस्मिन्सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते । वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते । नचैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्; ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥ ४४ ॥

## विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्चास्मिञ्छास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः; ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति; चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्मादसंगतैषा कल्पनेति सिद्धम् ॥ ४५ ॥ इत्यष्टमं उत्पत्त्यधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

---

### भामती ।

संभूय चेशनायां परिशुद्धो न कश्चिदीश्वरः स्यात्, सिद्धान्तहानिश्च; भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । तस्मात्कल्पान्तरमास्थेयम् । तत्र चोत्पत्त्यसंभवो दोष इत्याशयवान् कल्पान्तरमुपन्यस्योत्पत्त्यसंभवेनापाकरोति—**अथायमभिप्राय इति** । सुगममन्यत् ॥४४॥ गुणिभ्यः खल्वात्मभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रूते—**आत्मान एवैते भगवन्तो वासुदेवा इति** । आदिग्रहणेन प्रद्युम्नानिरुद्धयोर्मनोऽहंकारलक्षणतयात्मनो भेदमभिधायात्मान एवैत इति तद्विरुद्धाभेदाभिधानमपरं संगृहीतम् । वेदविप्रतिषेधो व्याख्यातः ॥ ४५ ॥ **इत्यष्टममुत्पत्त्यधिकरणम्** ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

### वेदान्तकल्पतरुः ।

निश्चितम् । अनेकेश्वरत्वेऽपसिद्धान्तमाह—**भगवानेवेति** । **व्याख्यातो** भाष्ये इति शेषः ॥ **इति अष्टमं उत्पत्त्यधिकरणम्** ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ द्वितीयाध्यायस्य द्वितीयः पादः ॥

| | अत्र पादे | आदितः |
|---|---|---|
| **अधिकरणानि** | ८ | ६१ |
| **सूत्राणि** | ४५ | २१६ |

### कल्पतरुपरिमलः ।

अतस्त्रयीविहितसंस्कारविपरीतसंस्कारविधानांशे व्यामोहकत्वं त्रयीधर्मायोग्यानधिकृत्य तद्विधानमिति वा कल्पनीयमित्येषा दिक् । प्रपञ्चस्तु मनोदीपिकायां द्रष्टव्यः । **व्याख्यातो भाष्य इति** । आगमसिद्धान्तदिव्यसिद्धान्ततन्त्रसिद्धान्त

---

१ तत्र सूत्राणि ४—उत्पत्त्यसंभवात् ४२ नच कर्तुः करणम् ४३ विज्ञानादिभावे वा तदप्रतिषेधः ४४ विप्रतिषेधाच्च ४५ ॥

कल्पतरुपरिमलः ।

तन्त्रान्तरसिद्धान्तरूपे चतुर्विधे पाञ्चरात्रे परस्परविप्रतिषेधो मा भूद्वेदनिन्दकपरिग्रहवैदिकसंस्कारवर्जनाऽवैदिकसंस्कारविधान-क्षुद्रविद्याबाहुल्यादिभिर्वेदविप्रतिषेधोऽपि भूयान् । स सर्वोऽपि भाष्यगतादिशब्दगृहीतो बोद्धव्य इत्यर्थः । **एवमवैदिकत्वादेव वैदिकापरिग्राह्यत्वं पाञ्चरात्रस्योक्तं वैखानसशास्त्रे—आग्नेयं पाञ्चरात्रं तु दीक्षायुक्तं च तान्त्रिकम् ॥ अवैदिकत्वात्तत्तन्त्रं ततो वैखासनेन तु ॥ सौम्येन वैदिकेनैव देवदेवं समर्चयेत् ॥ इत्यादिना ।** अत्र नहिनिन्दान्यायेन वैखानसप्रशंसार्थोऽयमर्थवाद इति केषांचित्समाधानमसाधु; अर्थवादेऽप्यवैदिकत्व-हेतूक्तिसामर्थ्येन वेदाऽनधिकृतविषयत्वसिद्धेरनिवारणात् । दृष्टं हि पर्वचतुष्टययुक्ते चातुर्मास्ये द्वयोः प्रणयन्तीति द्वयोः पर्वणोरपूर्वाग्निप्रणयनान्तरविधानस्य तस्माद् द्वाभ्यामेतीति गमनसाधनत्वप्रतिपादकार्थवादवशादूरू वा एतौ यज्ञस्य यद्वरुणप्रघासः साकमेधश्चेत्यूरुसंस्तुतवरुणप्रघाससाकमेधाख्यपर्वद्वयविषयतया व्यवस्थानम् । एवं च सिद्धवदवैदिकत्वकीर्तनमेव पाञ्चरात्रस्य एकायनशाखामूलत्वकल्पनमपि तुच्छीकरोतीत्यलं प्रपञ्चेन ॥ **इत्यष्टममुत्पत्त्यधिकरणम् ॥**

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवर-सूनोरप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरुपरिमले द्वितीयस्याध्यायस्य द्वितीयः पादः ।**

## ॥इति द्वितीयाध्यायस्य सांख्यादिमतानां दुष्टत्वप्रदर्शनं नाम द्वितीयः पादः॥



# अथ द्वितीयाध्यायस्य तृतीयः पादः ।

( १ अधिकरणम् ) **न वियदश्रुतेः ॥ १ ॥**

**वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते । केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न । तथा केचिद्वायोरुत्पत्तिमामनन्ति, केचिन्न । एवं जीवस्य प्राणानां च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते । विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं, तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनि-**

## भामती ।

### न वियदश्रुतेः ॥ १ ॥

पूर्वं प्रमाणान्तरविरोधः श्रुतेर्निराकृतः, संप्रति तु श्रुतीनामेव परस्परविरोधो निराक्रियते । तत्र सृष्टिश्रुतीनां परस्परविरोधमाह—**वेदान्तेषु तत्र तत्रेति** । श्रुतिविप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं, तद्वत्स्वपक्षस्य श्रुतिविप्रतिषेधादिति । **तदर्थनिर्मलत्वमर्थाभासविनिवृत्त्यार्थतत्वप्रतिपादनम्** । तस्य फलं स्वपक्षस्य जगतो ब्रह्मकारणत्वस्यानपेक्षत्वाशङ्कानिवृत्तिः । इह हि पूर्वपक्षे श्रुतीनां मिथो विरोधः प्रतिपाद्यते, सिद्धान्तेत्वविरोधः । तत्र सिद्धान्त्येकदेशिनो

## वेदान्तकल्पतरुः ।

### न वियदश्रुतेः ॥ १ ॥

इह पादे भूतभोक्तृविषयवाक्यानां विरोधः परिहियते । प्रासङ्गिकीं पादसंगतिं वक्तुं विप्रतिषेधाच्चेति भाष्यम् । तत्र श्रुतिविप्रतिषेधादित्यर्थः । परपक्षेषु सर्वत्र स्ववचनविरोधस्याभावादित्यभिप्रेत्याह—**श्रुतीति** । न वियदिति पूर्वपक्षः, अस्ति त्विति सिद्धान्त इति भ्रमं व्यावर्तयति—**इह हीति** । एवं ह्यविरोधाध्यायसंगतिरित्यर्थः । अत्र हि गौण्यसंभवादित्येकदेशिसूत्रस्य न वियदिति सूत्रोक्तानुत्पत्त्युपजीवित्वादेकवाक्यता । अत इदमप्येकदेशिन इति । **केचित्तु**—सूत्रद्वयेन पक्षद्वयं प्रदर्श्य विप्रतिषेध उच्यते, पादसंगतपूर्वपक्षार्थत्वसंभवे सूत्रस्यैकदेशिमतार्थत्वायोगात् **इत्याहुः** ।

## कल्पतरुपरिमलः ।

### न वियदश्रुतेः ॥ १ ॥

पादार्थमाह—**इहेति** । भूतविषयवाक्यविरोधपरिहार एव पादार्थः । भोक्तृविषयवाक्यविरोधपरिहारस्तु तत्प्रसङ्गागत इति नार्थभेदात्पादभेदप्रसङ्गः । **ननु** वाक्यानां परस्परविरोधसमाधानेन वाक्यार्थावधारणया समन्वये स्थिते तत्र मानान्तरविरोधसमाधानार्थो द्वितीयोऽध्यायः । अस्मिन् वियदादिसृष्टिवाक्यविरोधपरिहारस्य नास्ति सङ्गतिरित्याशङ्क्य विप्रतिषेधप्रसङ्गागतोऽयमिह तत्परिहार इति प्रदर्शनार्थं विप्रतिषेधाच्चेति भाष्यमित्याह—**प्रासङ्गिकीमिति । श्रुतिविप्रतिषेधादित्यर्थ इति । ननु** कारणविषयश्रुतिविप्रतिषेधे इव कार्यविषयश्रुतिविप्रतिषेधेऽपि समाधानं कृतमेव कारणत्वेन चाकाशादि ( ब्र. अ. १ पा. ४ सू. १४ ) ष्वित्यधिकरणे । तत्र हि सूत्रस्य एकां योजनामाश्रित्याकाशादिकार्येषु विगानेऽपि ब्रह्मणः कारणत्वे विगानं नास्ति । अकल्पितकारणवस्तुप्रतिपत्त्युपायतया कल्पितेषु तात्पर्याऽविषयेषु कार्येषु विगानं तु न दोष इति कार्यविगानमभ्युपेत्यैकं समाधानं कृतम् । योजनान्तरमाश्रित्य कार्यविगानस्य दोषत्वेऽपि तदिह नास्ति; दण्डचक्रादिघृतपूर्णान्तकार्यकर्तृविषययावत्कार्यकर्तृत्वकतिपयकार्यकर्तृत्वानुवादकवाक्यद्वयवत् तैत्तिरीयकच्छान्दोग्यश्रुत्योः प्रामाण्योपपत्तेरित्यपरं समाधानं कृतं, किमधिकमिह कर्तव्यं समाधानमवशिष्यते ? **उच्यते;** छान्दोग्ये तैत्तिरीयकश्रुतावाकाशवायूपसंहारमनपेक्ष्य तत्र द्वितीयसमाधानं कृतम्।इह तु तदुपसंहारमप्याश्रित्य तत्र संभावितशङ्कानिराकरणेन समाधानान्तरं कर्तुमयमारंभः। **परपक्षेषु सर्वत्रेति** । यद्यपि स्ववचनविरोध इव श्रुतिविरोधोऽपि न सर्वेषु परपक्षेषु निराकरणहेतुः, बौद्धार्हतपक्षनिराकरणे तान् प्रति श्रुतिविरोधस्य हेतुकरणायोगात्; तथापि तेषामपि पक्षाः श्रुतिविरुद्धा इति कृत्वाऽस्माभिर्निरस्यन्त इति श्रुतिविरोधो निरसनीयत्वे सार्वत्रिको हेतुर्भवतीति भावः । **न वियदिति** ।

मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति ? तत्र तावत्प्रतिपद्यते—'न वियदश्रुतेः' इति । न खल्वाकाशमुत्पद्यते । कस्मात् ? अश्रुतेः । नह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति । छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६।२।१ ) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत', 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते । श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ । नचात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी । तस्मान्नास्त्याकाशस्योत्पत्तिरिति ॥ १ ॥

## अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे । मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः, श्रुत्यन्तरे त्वस्ति । तैत्तिरीयका हि समामनन्ति—'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इति । ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्र-

---

### भामती ।

वचनं 'न वियदश्रुतेः' इति । **तस्याभिसंधिः**—यद्यपि तैत्तिरीयके वियदुत्पत्तिश्रुतिरस्ति; तथापि तस्याः प्रमाणान्तरविरोधाद्बहुश्रुतिविरोधाच्च गौणत्वम् । तथाच वियतो नित्यत्वात्तेजःप्रमुख एव सर्गः, तथाच न विरोधः श्रुतीनामिति । तदिदमुक्तम्—**प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति ?** यदि नास्ति न श्रुतिविरोधाशङ्का । अथास्ति ततः श्रुतिविरोध इति तत्परिहाराय प्रयत्नान्तरमास्थेयमित्यर्थः ॥ १ ॥ तत्र पूर्वपक्षसूत्रम्—**अस्ति तु** । तैत्तिरीये हि सर्गप्रकरणे केवलस्याकाशस्यैव प्रथमः सर्गः श्रूयते । छान्दोग्ये च केवलस्य

### वेदान्तकल्पतरुः ।

**तन्न**; किमश्रुतेरिति हेतुः सार्वत्रिक उतैकदेशपरः । **नाद्यः** तैत्तिरीयके नभःसंभवश्रवणात् । **नान्त्यः**; अनुत्पत्त्यसाधकत्वात् । नच क्वचिच्छ्रवणात् क्वचिदश्रवणाच्च विप्रतिषेधः; अश्रुतस्थले उपसंहारसंभवात् । नचेहैवोपसंहारचिन्ता; सर्ववेदान्तप्रत्ययाद्यधिकरणपौनरुक्त्यापातात् । तस्मान्न विप्रतिषेधः सूत्राभ्यां दर्शयितुं शक्यः । ततः क्वचिदाकाशस्य प्राथम्यं श्रुतं क्वचित्तेजस इत्येव विप्रतिषेधः । पूर्वपक्षाद्बहिष्ठात् सिद्धान्तच्छायमेकदेशिमतमिति संगतिः पादेन । एवमाऽध्यायसमाप्तेः प्रथमं विप्रतिषेधादप्रामाण्येन पूर्वपक्षः, तत एकदेशिव्याख्या ततः सिद्धान्त इति दर्शनीयम् । **नन्वे**कदेश्यपि श्रुतौ सत्यां कथमश्रुतेरिति ब्रूयाद् ? अत आह—**तस्याभिसंधिरिति** । विरोधेन पूर्वपक्षे भाष्यविरोधमाशङ्क्याह—**तदिदमिति** । अश्रुतस्थलेऽपि श्रुतोत्पत्तेरुपसंहारादविरोधमाशङ्क्याह पूर्वपक्षी—**नच श्रुत्यन्तरानु-**

### कल्पतरुपरिमलः ।

यद्यप्यस्तीति सूत्रमाचार्यैः सिद्धान्तसूत्रमिति वक्ष्यते; तथापि न वियदिति पूर्वपक्षसूत्रमस्ति त्विति सिद्धान्तसूत्रमिति विशिष्टार्थाभिप्रायेण भ्रमत्वमुक्तम् । **ननु**—किमर्थं तत्र भ्रमत्वमुच्यते ? तथैवास्तु, को दोषः ? अनुत्पत्तिं पूर्वपक्षं कृत्वोत्पत्तिसमर्थनेऽपि ह्यनुत्पत्तिशङ्केवोत्पत्त्यनुत्पत्तिश्रुतिविप्रतिषेधशङ्कापि निरस्ता भवतीति फलितमर्थमादाय प्रागुक्ता प्रसङ्गसङ्गतिरुपपद्यते । यथा गुणोपसंहारफलाया विद्याभेदाभेदचिन्ताया गुणोपसंहारपादसङ्गतिः, एवं न वियदिति सूत्रस्य पूर्वपक्षसूत्रतायामश्रुतेरित्यस्य वियदुत्पत्तिप्रतिपादनक्षमश्रुत्यभावादित्यर्थ इति नाश्रुतौ काचित्कत्वसार्वत्रिकत्वविकल्पावकाशः; वक्ष्यमाणासंभवादिहेतुबलेन विशिष्टश्रुत्यभावस्य सार्वत्रिकत्वात् । इदं सिद्धान्त्येकदेशिसूत्रमिति पक्षेऽपि हि मुख्यश्रुत्यभावादित्यर्थ इत्याचार्यैरयमेवार्थः स्फुटीकरिष्यत इति—**चेत्, सत्यम्**; तथापि साक्षान्निराकरणीयं पूर्वपक्षं प्रापय्य तत्र सिद्धान्त्येकदेशिनः परिहारं प्रथमं प्रदर्श्य तस्यापि निराकरणेन परमसिद्धान्तप्रदर्शनं क्रियतइत्येवं सूत्राणां प्रसक्तपूर्वपक्षनिराकरणार्थत्वे संभवति अप्रसक्तपूर्वपक्षान्तरनिराकरणार्थत्वं सूत्राणामङ्गीकृत्य तेन फलतः प्रसक्तपूर्वपक्षनिराकरणसिद्ध्यङ्गीकारो न युक्त इति तात्पर्यम् । एवं तर्हि प्रसक्तो विप्रतिषेधपूर्वपक्ष उत्सूत्रो मा भूद् । आद्यसूत्रद्वयं तत्प्रदर्शनार्थं, गौण्यसंभवा ( ब्र. अ. २ पा. ३ सू. ३ ) दित्यादिसूत्रत्रयमेव सिद्धान्त्येकदेशिमतप्रदर्शनार्थमित्यस्त्विति ये मन्यन्ते तन्मतं दूषयितुमुपन्यस्यति—**केचित्त्विति** । दूषयति—**किमश्रुतेरिति । अत्रेदं वक्तव्यम्**—काचित्क एवायमश्रुतेरिति हेतुः न, श्रूयते हि छान्दोग्ये सृष्टिप्रक्रियायामन्नेन शुङ्गेनेत्यादिकार्यलिङ्गकतत्तदव्यवहितकारणानुमानप्रक्रियायां च कार्यत्वेन वियत् । नचात्र तदुपसंहारः शक्य इति भाष्य एव स्पष्टमुक्तम् । एवं तावच्छान्दोग्यश्रुतिरश्रवणलिङ्गवती

मुखेति । नन्वेकवाक्यतानयोः श्रुत्योर्युक्ता । सत्यम् सा युक्ता, नतु सावगन्तुं शक्यते । कुतः? 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः तत्तेजोऽसृजत', 'तदाकाशमसृजत' इति । ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते, यथा सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामि । नैवं युज्यते; प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते तैत्तिरीयके चाकाशस्य । नचोभयोः प्रथमजत्वं संभवति । एतेनेतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इत्यत्रापि तस्मादाकाशः संभूतस्तस्मात्तेजः संभूतमिति सकृच्छ्रुतस्यापादानस्य संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धानुपपत्तेः । 'वायोरग्निः' ( तै० २।१ ) इति च पृथगाम्नानात् ॥ २ ॥ अस्मिन्विप्रतिषेधे कश्चिदाह—

## गौण्यसंभवात् ॥ ३ ॥

नास्ति वियत उत्पत्तिरश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति । कस्मात् ? असंभवात् । नह्याकाशस्योत्पत्तिः संभावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु । ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति । समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते । द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति । नचाकाशस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति; यस्मिन्समवायिकारणे सत्यसमवायिकारणे च तत्संयोग आकाश उत्पद्येत । तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति । उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकाल-

### भामती ।

तेजसः प्रथमः सर्गः । नच श्रुत्यन्तरानुरोधेनासहायस्याधिगतस्यपि ससहायताकल्पनं युक्तमसहायत्वावगमविरोधात् । श्रुतसिद्ध्यर्थं खल्वश्रुतं कल्प्यते नतु तद्विघाताय, विहन्यते चासहायत्वं श्रुतं कल्पितेन ससहायत्वेन । नच परस्परानपेक्षाणां व्रीहियववद्विकल्पः । अनुष्ठानं हि विकल्प्यते न वस्तु । नहि स्थाणुपुरुषविकल्पो वस्तुनि प्रतिष्ठां लभते । नच सर्गभेदेन व्यवस्थोपपद्यते, सांप्रतिकसर्गवद्भूतपूर्वस्यापि तथात्वात् । न खल्विह सर्गे क्षीराद्दधि जायते सर्गान्तरे तु दध्नः क्षीरमिति भवति । तस्मात्सर्गश्रुतयः परस्परविरोधिन्यो नास्मिन्नर्थे प्रमाणं भवितुमर्हन्तीति पूर्वः पक्षः ॥२॥ सिद्धान्त्येकदेशी सूत्रेण स्वाभिप्रायमाविष्करोति—**गौण्यसंभवात्** । प्रमाणान्तरविरोधेन बहुश्रुत्यन्तरविरोधेन चाकाशोत्पत्त्यसंभवाद्गौण्येषाकाशोत्पत्तिश्रुतिरित्यविरोध इत्यर्थः । प्रमाणान्तरविरोधमाह—**नह्याकाशस्येति** । समवाय्यसमवायिनिमित्तकारणेभ्यो हि कार्यस्योत्पत्तिर्नियता, तदभावे न भवितुमर्हति धूम इव धूमध्वजाभावे । तस्मात्सदकारणमाकाशं नित्यमिति । **अपिच** य उत्पद्यन्ते तेषां प्रागुत्पत्तेरनुभवार्थक्रिये नोपलभ्येते उत्पन्नस्य च दृश्येते, यथा तेजःप्रभृतीनाम् । नचाकाशस्य तादृशो विशेष उत्पादानुत्पादयोरस्ति, तस्मान्नोत्पद्यत इत्याह—**उत्पत्तिमतां**

### वेदान्तकल्पतरुः ।

**रोधेनेत्यादिना** । अस्ति त्वित्यपि सूत्रं निगूढाभिसंधेःसिद्धान्तिन एव अभिप्रायानभिव्यक्तिमपेक्ष्य पूर्वपक्षसूत्रमित्युक्तमिति न वियदिति सूत्रेण पुनरुक्तिमाशङ्क्याह—**स्वाभिप्रायमिति** । अश्रुतेरित्यस्य मुख्यश्रुत्यभावादिति ह्यभिप्रायस्तं

### कल्पतरुपरिमलः ।

उपसंहारमप्यसहमाना वियदुत्पत्त्यसंभवाद्यनुगृहीता तदुत्पत्तिं प्रतिक्षिपतीत्ययमर्थो न वियदिति सूत्रेणोच्यते, तैत्तिरीयकश्रुतिः सर्वविज्ञानप्रतिज्ञाद्यनुगृहीता तां व्यवस्थापयतीत्ययमर्थोऽस्ति त्विति सूत्रेणोच्यते । एवं श्रुतिप्रतिषेधपूर्वपक्षे सूत्रद्वयेन पर्यवसिते सर्वविज्ञानप्रतिज्ञानमन्यथासिद्धम् असंभवादिकमेव त्वनन्यथासिद्धमिति मन्यमानस्य वियदनुत्पत्तिवादिनः सिद्धान्त्येकदेशिनो मतं सूत्रत्रयेणोच्यत इत्यङ्गीकारेऽपि न काचिदनुपपत्तिरिति । **अस्ति त्वित्यपि सूत्रं निगूढाभिसंधेः सिद्धान्तिन एवेति । ननु** अस्य सूत्रस्य सिद्धान्तसूत्रत्वमङ्गीकृत्य सिद्धान्ताभिप्रायानभिव्यक्त्यपेक्षमौपचारिकं पूर्वपक्षसूत्रत्वकथनमिति क्लिष्टयोजना किमर्थं क्रियते ? पूर्वपक्षसूत्रमेवेदमस्तु, एतत्सूत्रव्याख्यानानन्तरं हि भाष्ये ततश्च श्रुत्योर्विरोध इत्यादिना श्रुतिविप्रतिषेधपूर्वपक्षो दर्शितः । तदनन्तरं च तस्मिन् विप्रतिषेधे कश्चिदाहेतीत्युत्तरसूत्रावतारणं च कृतं, टीकायामप्येतत्सूत्रव्याख्यानावसानएव तस्मात्सर्वाः श्रुतयः परस्परविरोधिन्यो नास्मिन्नर्थे प्रमाणं भवितुमर्हन्तीति पूर्वः पक्ष इति विप्रतिषेधपूर्वपक्षोपसंहारः कृतः । **सत्यम्**; टीकायां न वियदिति सूत्रं सिद्धान्त्येकदेशिन इत्युपक्रान्तं,

योर्विशेषः संभाव्यते प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति । आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यते । किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम् ? पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः। तस्माद्यथा लोक आकाशं कुर्वाकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथाच घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इति, एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥ ३ ॥

## शब्दाच्च ॥ ४ ॥

शब्दः खल्वाकाशस्याजत्वं ख्यापयति । यत आह—'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ० २।३।३ ) इति । नह्यमृतस्योत्पत्तिरुपपद्यते । 'आकाशवत्सर्वगतश्च नित्यः' इति चाकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति । नच तादृशस्योत्पत्तिरुपपद्यते । 'स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' इति चोदाहरणम् । 'आकाशशरीरं ब्रह्म' ( तै० १।६।२ )' 'आकाश आत्मा' ( तै० १।७।१ ) इति च । नह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति, नीलेनेवोत्पलस्य । तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

इदं पदोत्तरं सूत्रम् । स्यादेतत्—कथं पुनरेकस्य संभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवत्याकाशे च गौणत्वमिति ? अत उत्तरमुच्यते—स्याच्चैकस्यापि संभूतशब्दस्य विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत् । यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्म' ( तै० ३।२ ) इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोग आनन्दे च मुख्यः । यथाच तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यतेऽञ्जसा तु विज्ञेये ब्रह्मणि तद्वत् । कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' ( छा० ६।२।१ ) इतीयं प्रतिज्ञा समर्थ्यते ॥ ५ ॥

ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति । कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति ? तदुच्यते—एकमेवेति तावत्स्वकार्यापेक्षयोपपद्यते । यथा लोके कश्चित्कुम्भकारकुले पूर्वेद्युर्मृद्दण्ड-

---

### भामती ।

चेति । प्रकाशनं प्रकाशो घटपटादिगोचरः । **पृथिव्यादिवैधर्म्याच्चेति** । आदिग्रहणेन द्रव्यत्वे सत्यस्पर्शवत्त्वादात्मवन्नित्यमाकाशमिति गृहीतम् । **आरण्यानाकाशेष्विति** । वेदेप्येकस्याकाशस्यौपाधिकं बहुत्वम् ॥ ३ ॥ तदेवं प्रामाणान्तरविरोधेन गौणत्वमुक्त्वा श्रुत्यन्तरविरोधेनापि गौणत्वमाह—**शब्दाच्च** । सुगमम् ॥ ४ ॥ पदस्यानुषङ्गो न पदार्थस्य । तद्धि क्वचिन्मुख्यं क्वचिदौपचारिकं संभवासंभवाभ्यामित्यविरोधः ॥ ५ ॥ चोद्यद्वयं

### वेदान्तकल्पतरुः ।

विवृणोतीत्यर्थः । **आदिग्रहणेनेति** । विभुत्वादिलक्षणादित्यत्रत्येनेत्यर्थः । घटादिव्यावृत्त्यर्थमस्पर्शत्वं क्रियादिव्यावृत्त्यर्थं द्रव्यत्वविशेषणम् । एकस्य संभूतशब्दस्य सकृत्प्रयोगे गौणमुख्यत्वव्याघातस्य ब्रह्मशब्ददृष्टान्तेन कथं परिहारः, तत्रापि तुल्यत्वादनुपपत्तेरित्याशङ्क्योभयत्र न्यायमाह—**पदस्येति** । अर्थो हि गौणत्वमुख्यत्वविरुद्धधर्माध्यासं न सहते, शब्दस्तु येनानुषज्यते तेन योग्यतामपेक्ष्य संबध्यते, ततो यत्र मुख्यवृत्त्यान्वययोग्यता तत्र मुख्योऽन्यत्र गौणः संभवतीत्यर्थः ॥ ५ ॥ कुलशब्दस्य संतानवाचित्वं व्यावर्तयति—**गृहमिति** । अमत्रशब्दस्य स्थालादिवचनत्वं च व्युदस्यति—

### कल्पतरुपरिमलः ।

तस्य च प्रागेव विप्रतिषेधपूर्वपक्षप्राप्तौ सत्यामुत्थानं वाच्यम् । नच विप्रतिषेधपूर्वपक्षनिराकरणार्थं सिद्धान्त्येकदेशिमते प्रवर्तिते तदनन्तरमेव पूर्वपक्षोत्थानमिति युज्यते । नचाद्यसूत्रे सिद्धान्त्येकदेशिसूत्रत्वेन बहिर्भूते सति केवलेन द्वितीयसूत्रेण विप्रतिषेधपूर्वपक्षोपि लम्भयितुं शक्यते । तस्माद्बहिःष्ठ एव पूर्वपक्षः सिद्धान्त्येकदेशिसिद्धान्तिसूत्राभ्यां निगूढस्वाभिसंधिभ्यां स्पष्टीकृतो जात इत्येतावता सूत्रद्वयव्याख्यानानन्तरं भाष्यादिषु पूर्वपक्षस्फुटीकरणमिति तात्पर्यम् ॥ ५ ॥ **स्थालादिवचनत्वमिति** । स्थालं भोजनपात्रम् । **स्थालंऽभोजनपात्रे स्यादुखायां तु सा स्त्रियाम्** । **स्थाली**

चक्रादीनि चोपलभ्यापरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयान्मृदेवैकाकिनी पूर्वेद्युरासीदिति, स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयान्न दण्डचक्रादि, तद्वदद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति । यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते, नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति। नच नभसापि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते। लक्षणान्यत्वनिमित्तं हि नानात्वम्। नच प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति; क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्तत्वादिधर्मसामान्यात् । सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरत्तिष्ठति। तेनान्यत्वमवसीयते। तथाच 'आकाशशरीरं ब्रह्म' ( तै० १।६।२ ) इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः । अतएव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः। अपिच सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवतीति, अतो ब्रह्मणा तत्कार्येण च विज्ञातेन सहविज्ञातमेवाकाशं भवति। यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति, नहि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते, एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वाद्गृहीतमेव ब्रह्मग्रहणेन नभो भवति। तस्माद्वाक्तं नभसः संभवश्रवणमिति, एवं प्राप्त इदमाह—

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति' ( छा० ६।१।१ ), 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' ( बृ० ४।५।६ ) इति, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मुण्ड० १।१।३ ) इति, 'न काचन मद्बहिर्धा वियास्ति,' इति चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते । तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात्। व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत। स चाव्यतिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत। शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते। तथाहि—'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६।२।१ ), 'तदैक्षत', 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति—'ऐतदात्म्यमिदं सर्वम्' ( छा० ६।८।७ ) इत्यारभ्याप्रपाठकपरिसमाप्तेः। तद्यद्याकाशं न ब्रह्मकार्यं स्यान्न ब्रह्मणि विज्ञात आकाशं विज्ञायेत, ततश्च प्रतिज्ञाहानिः स्यात्। नच प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम्। तथाहि—प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां स्थाप-

---

### भामती ।

करोति—कथमिति । प्रथमं चोद्यं परिहरति—एकमेवेति तावदिति। कुलं गृहम्। अमत्राणि पात्राणि घटशरावादीनि । आपेक्षिकमवधारणं न सर्वविषयमित्यर्थः । उपपत्त्यन्तरमाह—नच नभसापीति । अपिरभ्युपगमे । यदि सर्वापेक्षं तथाप्यदोष इत्यर्थः । नच प्रागुत्पत्तेः । जगत इति शेषः । द्वितीयं चोद्यमपाकरोति—अतएव च ब्रह्मविज्ञानेनेति। लक्षणान्यत्वाभावेनाकाशस्य ब्रह्मणोऽनन्यत्वादिति। अपि चाव्यतिरिक्तदेशकालमाकाशं ब्रह्मणा च ब्रह्मकार्यैश्च तदभिन्नस्वभावैरतः क्षीरकुम्भप्रक्षिप्तकतिपयपयोबिन्दुवद्ब्रह्मणि तत्कार्ये च विज्ञाते नभोविदितं भवतीत्याह—अपिच सर्वं कार्यमुत्पद्यमानमिति। एवं सिद्धान्तैकदेशिमते प्राप्त इदमाह—प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः। ब्रह्मविवर्तात्मतया जगतस्तद्विकारस्य वस्तुतो ब्रह्मणाऽभेदे ब्रह्मणि ज्ञाते ज्ञानमुपपद्यते। नहि जगत्तत्त्वं ब्रह्मणोऽन्यत्। तस्मादाकाशमपि तद्विवर्ततया तद्विकारः सत्तज्ज्ञानेन ज्ञातं भवति नान्यथा। अविकारत्वे तु

### वेदान्तकल्पतरुः ।

घटशरावादीनीति। क्षीरस्येति षष्ठी तृतीयार्थे। द्वे किल पूर्वपक्षिणाऽनुपपत्ती उक्ते, तत्तेजोऽसृजतेत्यत्राकाशस्योपसंहारे सकृदसृजतेति श्रुतस्य स्रष्टुराकाशतेजोभ्यां संबन्धे सत्यावृत्त्या वाक्यभेदः स्याद्, द्वयोश्चाकाशतेजसोः प्रथमसृष्टत्व-

### कल्पतरुपरिमलः ।

ना तु महादेव इति नैघण्टुका विदुः ॥ षष्ठी तृतीयार्थे इति। पूरणगुणेत्यादिसूत्रेण पूरणार्थयोगे षष्ठीसमासनि-

यन्ति 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ), 'ब्रह्मैवेदममृतं पुरस्तात्' ( मुण्ड० २।२।११ ), इत्येवमादयः । तस्माज्ज्वलनादिवदेव गगनमप्युत्पद्यते । यदुक्तमश्रुतेर्न वियदुत्पद्यत इति तदयुक्तम्; वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इति । सत्यं दर्शितम् । विरुद्धं तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण, न; एकवाक्यत्वात्सर्वश्रुतीनाम् । भवत्वेकवाक्यत्वमविरुद्धानाम्, इह तु विरोध उक्तः, सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासंभवाद्द्वयोश्च प्रथमजत्वासंभवाद्विकल्पासंभवाच्चेति । नैष दोषः; तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः' ( तै० २।१ ) इति । अशक्या हीयं श्रुतिरन्यथा परिणेतुम् । शक्या तु परिणेतुं छान्दोग्यश्रुतिस्तदाकाशं वायुं च सृष्ट्वा 'तत्तेजोऽसृजत' इति । नहीयं श्रुतिस्तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति; एकस्य वाक्यस्य व्यापारद्वयासंभवात् । स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत् इत्येकवाक्यत्वकल्पनायां संभवन्त्यां

## भामती ।

ततस्तत्त्वान्तरं न ब्रह्मणि विदिते विदितं भवति । भिन्नयोस्तु लक्षणान्यत्वाभावेऽपि देशकालाभेदेऽपि नान्यतरज्ञानेनान्यतरज्ञानं भवति । नहि क्षीरस्य पूर्णकुम्भे क्षीरे गृह्यमाणे सत्स्वपि पाथोबिन्दुषु पाथस्तत्त्वं प्रति ज्ञातत्वमस्ति विज्ञाने । तस्मान्न ते क्षीरे विदिते विदिता इति प्रतिज्ञादृष्टान्तप्रचयानुपरोधाय वियत उत्पत्तिरकामेनाभ्युपेयेति । तदेवं सिद्धान्तैकदेशिनि दूषिते पूर्वपक्षी स्वपक्षे विशेषमाह—**सत्यं दर्शितम्** अतएव **विरुद्धं तु तदिति** । सिद्धान्तसारमाह—**नैष दोषः । तेजःसर्गस्य तैत्तिरीयक इति** । श्रुत्योरन्यथोपपद्यमानान्यथानुपपद्यमानयोरन्यथानुपपद्यमाना बलवती तैत्तिरीयकश्रुतिः छान्दोग्यश्रुतिश्चान्यथोपपद्यमाना दुर्बला । नन्वसहायं तेजः प्रथममवगम्यमानं ससहायत्वेन विरुध्यत इत्युक्तमत आह—**नहीयं श्रुतिस्तेजोजनिप्रधानेति** । सर्गसंसर्गः श्रौतो भेदस्त्वार्थः । स च श्रुत्यन्तरेण विरोधिना बाध्यते; जघन्यत्वात् । नच तेजःप्रमुखसर्गसंसर्गवदसहायत्वमप्यस्य श्रौतं, किंतु व्यतिरेकलभ्यम् । नच श्रुतेन तदपवादबाधने श्रुतस्य तेजःसर्गस्यानुपपत्तिः, तदिदमुक्तम्—'तेजोजनिप्रधाना' इति । **स्यादेतत्**—यद्येकं वाक्यमनेकार्थं न भवत्येकस्य व्यापारद्वयासंभवात्, हन्त भोः कथमेकस्य स्रष्टुरनेकव्यापारत्वमविरुद्धमित्यत आह—**स्रष्टा त्वेकोऽपीति** । वृद्धप्रयोगाधीनावधारणं शब्दसामर्थ्यम् । नचानावृत्तस्य शब्दस्य क्रमाक्रमाभ्यामनेकत्रार्थे व्यापारो दृष्टः । दृष्टं तु क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारत्वमित्यर्थः । नचास्मिन्नर्थे एकस्य वाक्यस्य व्यापारोऽपि

## वेदान्तकल्पतरुः ।

विरोध इति । तत्र द्वितीयामनुपपत्तिं परिहरति—**श्रुत्योरिति** । तेजः प्रथमं सृष्टमिति प्रथमशब्दस्य छान्दोग्यश्रुतावश्रवणात्तेजोजन्ममात्रेणान्यथोपपत्तिरित्याकाशमेव प्रथमं, तेजस्तु यथातैत्तिरीयश्रुति तृतीयमिति न विरोध इत्यर्थः । तदुक्तं भाष्ये—**तृतीयत्वश्रवणादिति** । **ननु** यद्यपि प्रथमशब्दो न श्रुतः; तथापि प्रथमं तावत्तेजोऽवगतं तदाकाशोपसंहारे बाध्येतेति शङ्कते—**नन्वसहायमिति** । परिहारभाष्याभिप्रायमाह—**सर्गसंसर्ग इति** । तेजसो जन्मसंसर्ग एव श्रुतः, भेदस्तु व्यावृत्तिराकाशस्य न श्रुता, किंतु प्रथमस्थाने तेजःश्रवणादर्थात्कल्प्यते, स्थानं च तैत्तिरीयश्रुत्यन्तरेण विरोधात्तेन बाध्यते; स्थानाच्छ्रुतेर्बलीयस्त्वादित्यर्थः । न केवलं विरोधादाकाशजन्माभावकल्पना, किंतु श्रुतानुपयोगादपीत्याह—**नच तेजःप्रमुखेति** । तत्रापि लभ्यमित्यन्तः पूर्वोक्तविरोधानुवाद एव व्यतिरेको व्यावृत्तिश्रुत्यन्तरश्रुतेर्नाकाशजन्मना तस्यार्थिकस्य व्यतिरेकस्य बाधने श्रुतस्य तेजःसर्गस्य नानुपपत्तिः । अतः श्रुताकाशजन्मविरोधित्वात् श्रुततेजोजन्मानुपयोगित्वाच्चाकाशजन्माभावो न कल्प्य इत्यर्थः । प्रथमामनुपपत्तिं प्रसङ्गद्वारेणोत्थाप्य परिहरति—**स्यादेतदित्यादिना** । तत्र किमर्थानुपपत्तिरुच्यते, शब्दानुपपत्तिर्वा? **नाद्य** इति तावत्प्रथमं प्रतिपाद्यते, तत्र यदुक्तं यथैकं वाक्यमनेकार्थं न भवति, एवमेकस्य कर्तुरनेकव्यापारवत्त्वमपि विरुद्धमिति, तत्र दृष्टान्तस्य वैषम्यमाह—**वृद्धप्रयोगेति** । अनेकत्रार्थेऽनावृत्तस्य शब्दस्य व्यापारो वृद्धव्यवहारे न दृष्टः, आवृत्तौ तु शब्दभेद एवेति नैकस्य शब्दस्य नानार्थतेत्यर्थः । दार्ष्टान्तिके तु नैवमित्याह—**दृष्टं त्विति** । शब्दानुपपत्तिं परिहरति—**नचास्मिन्निति** ।

## कल्पतरुपरिमलः ।

षेधाज्ज्ञापकात् तृतीयार्थे षष्ठी । **न केवलं विरोधादाकाशजन्माभावकल्पनेति** । छान्दोग्यश्रुतावाकाशस्य जन्माभावो न कल्पनीय इति यद् इदं तैत्तिरीयश्रुतिविरोधमात्रान्न भवति, किंतु छान्दोग्यश्रुतेः क्वचिदप्युपयोगाभावादपीत्याहेत्यर्थः । **ननू**पयोगाभावो नच श्रुतेन तदपवाधने इत्यादिग्रन्थेनोच्यते, ततः पूर्वंस्तु लभ्यमित्यन्तग्रन्थः संसर्गः श्रौतः भेदस्त्वार्थ इति ग्रन्थेन पुनरुक्त इत्याशङ्क्य तदनुवादकत्वमाह—**तत्रापीति** । **पूर्वोक्तविरोधानुवाद एवेति** ।

न विरुद्धार्थत्वेन श्रुतिर्हातव्या । नचास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धोऽभिप्रेयते; श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात् । यथाच 'सर्वं खल्विदं ब्रह्म तज्जलान्' ( छा० ३।१४।१) इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति । ननु—शमविधानार्थमेतद्वाक्यम् ; 'तज्जलानिति शान्त उपसीत' इति श्रुतेः, नैतत्सृष्टिवाक्यं, तस्मादेतत्र प्रदेशान्तरप्रसिद्धं क्रममुपरोद्धुमर्हतीति, 'तत्तेजोऽसृजत' इत्येतत्सृष्टिवाक्यम् । तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य इति । नेत्युच्यते—नहि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात्क्रमस्य । अपिच 'तत्तेजोऽसृजत' इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति । अर्थात्तु क्रमोऽवगम्यते । स च 'वायोरग्निः' इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते । विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयावसंभवानभ्युपगमाभ्यां निवारितौ । तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः । अपिच छान्दोग्ये 'येनाश्रुतं श्रुतं भवति' इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि वियदुत्पत्तावुपसंख्यातव्यं, किमङ्ग पुनस्तैत्तिरीयके समाम्नातं नभो न संगृह्यते । यच्चोक्तमाकाशस्य सर्वे-

---

## भामती ।

तु भिन्नानां वाक्यानामित्याह—**नचास्माभिरिति** । सुगमम् । चोदयति—**ननु शमविधानार्थमिति** । यत्परः शब्दः स शब्दार्थः । नचैष सृष्टिपरोऽपितु शमपर इत्यर्थः । परिहरति—**नहि तेजःप्राथम्यानुरोधेनेति** । गुणत्वादार्थत्वाच्च क्रमस्य श्रुतप्रधानपदार्थविरोधात्तत्त्यागोऽयुक्त इत्यर्थः । सिंहावलोकितन्यायेन वियदनुत्पत्तिवादिनं प्रत्याह—**अपिच छान्दोग्य इति** । यत्पुनरन्यथा प्रतिज्ञोपपादानं कृतं, तद्दूषयति—**यच्चोक्तमिति** । दृष्टान्तानुरूपत्वाद्दार्ष्टा-

## वेदान्तकल्पतरुः ।

तत्तेजोऽसृजतेत्यत्र ह्याकाशजन्मन्युपसंहृते वाक्यद्वयमनुमीयते तदाकाशमसृजत तत्तेजोऽसृजतेति च । ततश्चैकस्मिन् श्रूयमाणे वाक्येन शब्दावृत्तिरूपवाक्यभेदापत्तिरित्यर्थः । **वाक्यानामिति** । बहुवचनमुपसंहारोदाहरणान्तराभिप्रायं प्रथमस्थाने तेजःश्रवणमर्थादाकाशस्य प्रथमं जन्म वारयतीत्यार्थिकक्रमस्याकाशजन्मश्रुत्या बाधो दर्शितः । इदानीं क्रमस्य पदार्थधर्मत्वाच्च न श्रुताकाशपदार्थबाधकत्वमित्याह—**गुणत्वादिति** । वियदुत्पत्त्यभ्युपगमेन श्रुतिविप्रतिषेधवादिनिराकरणे प्रस्तुते वियदुत्पत्तिहेतुकथनं भाष्यकारीयमसंगतमित्याशङ्क्याह—**सिंहावलोकितेति** । **विकारा इति** । पराधीनसत्ताका इत्यर्थः । एवंच विभक्तत्वमविद्यादौ नानैकान्तं तस्य प्रागभावत्वाभावेऽप्यध्यस्तत्वेन परायत्तसत्ताकत्वा-

## कल्पतरुपरिमलः ।

श्रुतिविरोधेनार्थिकस्य बाध्यत्वं यदुक्तं तस्यार्थिकत्वोक्तिमुखेनानुवाद इत्यर्थः । **वाक्यद्वयमनुमीयत इति** । श्रुतकल्पिताभ्यां तेजोवियत्सृष्टिवाक्याभ्यां तद्भिन्नत्वमनुमीयत इत्यर्थः । **उपसंहारोदाहरणान्तराभिप्रायमिति** । उपसंहारे उदाहरणान्तरं तद्वायुमसृजतेति कल्प्यं वाक्यं तेन सह त्रित्वाद्बहुवचनमित्यर्थः । **वियदुत्पत्त्यभ्युपगमेनेति** । सिद्धान्त्येकदेशिनं प्रति प्रतिज्ञाहानिरव्यतिरेकादित्युक्तां वियदुत्पत्तिमभ्युपगमय्य, **सत्यं दर्शितं विरुद्धं तु तदित्यादिना** श्रुतिविप्रतिषेधवादिनं पूर्वपक्षिणमुत्थाप्य, तन्निराकरणे प्रस्तुते सिद्धान्त्येकदेशिनं प्रति वक्तव्यस्य वियदुत्पत्तौ हेत्वन्तरस्य कथनमिहासंगतमित्यर्थः । यदितु **अपिच च्छान्दोग्य**इत्यादिभाष्यग्रन्थो वियदुत्पत्तौ हेत्वन्तरप्रतिपादनार्थो न भवति, किंतु प्रस्तुते वियत्तेजःप्राथम्यश्रुतिविप्रतिषेधनिराकरण एव । पूर्वं हि छन्दोगश्रुतेः तैत्तिरीयश्रुत्यनुवर्तनमर्थतः श्रुतेर्बलीयस्त्वात् श्रुतिविरोधाभावात्क्रमेण पदार्थबाधायोगाच्च समर्थितम्, इदानीं छन्दोगश्रुत्या वियदुपसंहारस्य स्वयमेवापेक्षितत्वादपि तदनुवर्तनं समर्थ्यत इत्येवं यदि व्याख्यायेत, तदा प्रस्तुतग्रन्थेनैवैकवाक्यतेति न सिंहावलोकितन्यायापेक्षेति द्रष्टव्यम् । **पराधीनसत्ताका इत्यर्थ इति** । **नन्वेवं**—सत्यविद्यावदेव वियतोऽपि स्वतः सत्ताराहित्येनाध्यस्तत्वमात्रं सिध्यति न कार्यत्वमिति—**चेत्, मा सैत्सी**दितोऽनुमानात् कार्यत्वं संभूतश्रुत्या हि तत्सिद्धिरभिमता । किमर्थं तर्हीदं सूत्रसूचितमनुमानम् ? संभूतश्रुतिगौणत्वापादकासंभवशङ्कानिराकरणार्थम्; तथैव च भाष्ये सूत्रमवतारितम्, असंभवशङ्का च समवायिकारणाद्यभावप्रयुक्ता पूर्वोत्तरकालयोर्विशेषाभावप्रयुक्ता वाऽध्यस्तत्वसिद्ध्या निवर्ततएव; अध्यस्तरजतादिषु रजतावयवतत्संयोगाद्यारम्भकानपेक्षणाद्, अध्यस्तस्य ज्ञाननिवर्त्यत्वनियमेन निवृत्त्यनन्तरकालइवोत्पत्तिपूर्वकालेऽपि वियत्कृतविशेषाभावोपपत्तेश्च । उत्पत्तिराहित्यानुमानानि तु हेत्वसिद्ध्यप्रयोजकत्वादिदोषपराहतानीति स्पष्टमेव । **अविद्यादा**वित्यादिशब्देन षडस्माकमनादय इत्युक्तजीवेश्वराद्यन्तरसंग्रहः । **ननु** जीवेश्वरौ स्वरूपतः सत्यौ न पराधीनसत्ताकाविति तयो-

णानन्यदेशकालत्वाद्ब्रह्मणा तत्कार्यैश्च सह विदितमेव तद्भवत्यतो न प्रतिज्ञा हीयते, नच 'एकमेवाद्वितीयम्' इतिश्रुतिकोपो भवति, क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति । अत्रोच्यते; न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम् । मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते । क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात् । नहि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति । नच वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारणमुपपद्यते । सावधारणा चेयम् 'एकमेवाद्वितीयम्' इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत । नच स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकमेवाद्वितीयतावधारणं चेति न्याय्यं, मृदादिष्वपि हि तत्संभवान्न तदपूर्ववदुपन्यसितव्यं भवति 'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' ( छा० ६।१।१ ) इत्यादिना । तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम् ॥ ६ ॥ यत्पुनरेतदुक्तमसंभवाद्गौणी गगनस्योत्पत्तिश्रुतिरिति, अत्र ब्रूमः—

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

तुशब्दोऽसंभवाशङ्काव्यावृत्त्यर्थः । न खल्वाकाशोत्पत्तावसंभवाशङ्का कर्तव्या । यतो यावत्किंचिद्विकारजातं दृश्यते घटघटिकोदञ्चनादि वा कटककेयूरकुण्डलादि वा सूचीनाराचनिस्त्रिंशादि वा तावानेव विभागो लोके लक्ष्यते, न त्वविकृतं किंचित्कुतश्चिद्विभक्तमुपलभ्यते । विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते । तस्मात्सोऽपि विकारो भवितुमर्हति । एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् । नन्वात्माप्याकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिवत्प्राप्नोति, न; 'आत्मन आकाशः संभूतः' (तै० २।१ ) इति श्रुतेः । यदि ह्यात्मापि विकारः स्यात्तस्मात्परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे

---

### भामती ।

न्तिकस्य, तस्य प्रकृतिविकाररूपत्वाद्दार्ष्टान्तिकस्यापि तथाभावः । अपिच भ्रान्तिमूलं चैतद्वचनम् 'एकमेवाद्वितीयम्' इति तोये क्षीरबुद्धिवत्, औपचारिकं वा सिंहो माणवक इतिवत् । तत्र न तावद्भ्रान्तमित्याह—**क्षीरोदकन्यायेनेति** । भ्रान्तेर्विप्रलम्भाभिप्रायस्य च पुरुषधर्मत्वादपौरुषेये तदसंभव इत्यर्थः । नाप्यौपचारिकमित्याह—**सावधारणा चेयमिति** । काममुपचारादस्त्वेकत्वम्, अवधारणाऽद्वितीयपदे नोपपद्येते । नहि माणवके सिंहत्वमुपचर्य न सिंहादन्योऽस्ति मनागपि माणवक इति वदन्ति लौकिकाः । तस्माद्ब्रह्मत्वमैकान्तिकं जगतो विवक्षितं श्रुत्या न त्वौपचारिकम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति नत्वल्पत्वमपि प्रागेवौपचारिकमित्यर्थः । **नच स्वकार्यापेक्षयेति** । निःशेषवचनः स्वरसतः सर्वशब्दो नासति श्रुत्यन्तरविरोधे एकदेशविषयो युज्यत इत्यर्थः ॥ ६ ॥ आकाशस्योत्पत्तौ प्रमाणान्तरविरोधमुक्तमनुभाष्य तस्य प्रमाणान्तरस्य प्रमाणान्तरविरोधेनाप्रमाणभूतस्य न गौणत्वापादनसामर्थ्यमिति आह—**यावद्विकारं तु विभागो लोकवत्** । **सोऽयं प्रयोगः**—आकाशदिक्कालमनःपरमाणवो विकाराः, आत्मान्यत्वे सति विभक्तत्वात्, घटशरावोदञ्चनादिवदिति । **सर्वं कार्यं निरात्मकमिति** । निरुपादानं स्यादित्यर्थः । शून्यवादश्च निराकृतः

### वेदान्तकल्पतरुः ।

जीवेश्वरावपि विभागविशिष्टरूपेण समारोपितमेव । नन्वद्वैतवादिनः कथमाकाशादेर्विभक्तत्वसिद्धिरत आह—**आत्मान्यत्वे सतीति** । तत्त्वतो विभक्तत्वाभावेऽप्यविद्ययाऽऽकाशादेरन्यत्वकल्पनायां सत्यामस्ति विभक्तत्वमित्यर्थः । विभागश्च धर्मिसमानसत्ताको विवक्षितः । तथाच न ब्रह्मणि व्यभिचारः; तद्गतस्याकाशादिप्रतियोगिकभेदस्य मिथ्यात्वेन ब्रह्मसमानसत्त्वाभावादिति । भाष्ये कथमात्मनः कार्यत्वे सत्याकाशादेर्निरात्मकत्वमापाद्यते ? नह्यन्यस्य कार्यत्वेऽन्यं निरात्मकं स्यादत आह—**निरुपादानं स्यादिति** । सर्वकार्यसृष्टेः प्रागप्यात्मापि न स्यात्, तर्हि निरुपादानत्वमसत्त्वं कार्यस्येत्यनेनापाद्यते । उपादानं हि कार्यस्यात्मेत्यर्थः । भाष्योक्तशून्यवादप्रसङ्गस्य तन्मतेनेष्टप्रसङ्गत्वमाशङ्क्याह—**शून्यवादश्चेति** ।

### कल्पतरुपरिमलः ।

व्यभिचारतादवस्थ्यमित्याशङ्क्याह—**जीवेश्वरावपीति** । आदिशब्देन वैराजाद्यैश्वररूपान्तरसंग्रहः । विभागविशिष्टरूपं विना स्वरूपमात्रविवक्षायां तु तत्र धर्मिसमसत्ताकविभागरूपो हेतुरपि नास्तीति न व्यभिचार इति द्रष्टव्यम् । आत्मान्यत्वे सतीत्यस्य हेतुविशेषणत्वे विशेष्यांशवैयर्थ्यमाशङ्क्य विभक्तत्वहेतुत्वसिद्धिपरिहारार्थत्वेन योजयति—**नन्वद्वैतवादिन इति** ।

स्यात् । तथाच शून्यवादः प्रसज्येत । आत्मत्वाच्चात्मनो निराकरणशङ्कानुपपत्तिः । नह्यात्मागन्तुकः कस्यचित्, स्वयंसिद्धत्वात् । नह्यात्माऽऽत्मनः प्रमाणमपेक्ष्य सिध्यति । तस्य हि प्रत्यक्षादीनि प्रमाणान्यप्रसिद्धप्रमेयसिद्धय उपादीयन्ते । नह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयं सिद्धाः केनचिदभ्युपगम्यन्ते । आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात्सिध्यति । नचेदृशस्य निराकरणं संभवति । आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम् । य एव हि निराकर्ता तदेव तस्य स्वरूपम् । नह्यग्नेरौष्ण्यमग्निना निराक्रियते । तथाहमेवेदानीं जानामि वर्तमानं वस्त्वहमेवातीतमतीततरं चाज्ञासिषमहमेवानागतमनागततरं च ज्ञास्यामीत्यतीतानागतवर्तमानभावेनान्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति; सर्वदा वर्तमानस्वभावत्वात् । तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्तमानस्वभावादन्यथास्वभावत्वं वा न संभावयितुं शक्यम् । एवमप्रत्याख्येयस्वभावत्वादेवाकार्यत्वमात्मनः कार्यत्वं चाकाशस्य । यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति, तत्प्रत्युच्यते—न तावत्समानजातीयमेवारभते न भिन्नजातीयमिति नियमोऽस्ति । नहि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति; द्रव्यगुणत्वाभ्युपगमात् । नच निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति । स्यादेतत्—समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न कारणान्तरविषय इति । तदप्यनैकान्तिकम् । सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते । तथा सूत्रैरूर्णादिभिश्च विचित्रान्कम्बलान्वितन्वते । सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यम्; सर्वस्य सर्वेण समानजातीयकत्वात् । नाप्यने-

---

## भामती ।

स्वयमेव श्रुत्योपन्यस्य 'कथमसतः सज्जायेत' इति । उपपादितं च तन्निराकरणमधस्तादिति । आत्मत्वादेवात्मनः प्रत्यगात्मनो **निराकरणाशङ्कानुपपत्तिः** । **एतदुक्तं भवति**—सोपादानं चेत्कार्यं तत आत्मैवोपादानमुक्तं, तस्यैवोपादानत्वेन श्रुतेरुपादानान्तरकल्पनानुपपत्तेरिति । **स्यादेतत्**—अस्त्वात्मोपादानमस्य जगतः, तस्य तूपादानान्तरमश्रूयमाणमप्यन्यद्भविष्यतीत्यत आह—**नह्यात्मागन्तुकः कस्यचित्** उपादानान्तरस्योपादेयः । कुतः ? **स्वयंसिद्धत्वात्** । सत्ता वा प्रकाशोवास्य स्वयंसिद्धी । तत्र प्रकाशात्मिकायाः सिद्धेस्तावदनागन्तुकत्वमाह—**नह्यात्माऽऽत्मन इति** । उपपादितमेतद्यथा संशयविपर्यासपारोक्ष्यानास्पदत्वात्कदापि नात्मा पराधीनप्रकाशः, तदधीनप्रकाशास्तु प्रमाणादयः । अतएव श्रुतिः–'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । **नचेदृशस्य निराकरणं संभवतीति** । निराकरणमपि हि तदधीनात्मलाभं तद्विरुद्धं नोदेतुमर्हतीत्यर्थः । सत्ताया अनागन्तुकत्वमित्याह—**तथाहमेवेदानीं जानामीति** । प्रमाप्रमाणप्रमेयाणां वर्तमानातीतानागतत्वेऽपि प्रमातुः सदा वर्तमानत्वेनानुभवादप्रच्युतस्वभावस्य नागन्तुकं सत्त्वम् । त्रैकाल्यावच्छेदेन ह्यागन्तुकत्वं व्याप्तं, तत्प्रमातुः सदावर्तमानाद्व्यावर्तमानमागन्तुकत्वं स्वव्याप्यमादाय निवर्तत इति । **अन्यथाभवत्यपि ज्ञातव्य इति** । प्रकृतिप्रत्ययाभ्यां ज्ञानज्ञेययोरन्यथाभावो दर्शितः । ननु जीवतः प्रमातुर्मा भूदन्यथाभावो मृतस्य तु भविष्यतीत्यत आह—**तथा भस्मीभवत्यपीति** । यत्खलु सत्स्वभावमनुभवसिद्धं तस्यानिर्वचनीयत्वमन्यतो बाधकादवसातव्यम् । बाधकं च घटादीनां स्वभावाद्विचलनं प्रमाणोपनीतम् । यस्य तु न तदस्त्यात्मनो न तस्य तत्कल्पनं युक्तम्; अबाधितानुभवसिद्धस्य सत्स्वभावस्यानिर्वचनीयत्वकल्पनाप्रमाणाभावात् । तदिदमुक्तम्—**न संभावयितुं शक्यमिति** । तदनेन प्रबन्धेन प्रत्यनुमानेनाकाशानुत्पत्त्यनुमानं दूषयित्वानैकान्तिकत्वेनापि दूषयति—**यत्तूक्तं समानजातीयमिति** । **नाप्यनेकमेवो-**

## वेदान्तकल्पतरुः ।

श्रुतिममन्यमानं प्रत्याह—**उपपादितं चेति** । भाष्ये आत्मसमर्थनमात्मन एवाकाशाद्युपादानत्वसमर्थनार्थम्; अन्यथा प्रकृतासंगतेरित्यभिप्रेत्याह—**आत्मवादे चेति** । **आत्मत्वादेवेति** । प्रत्यगात्मनो निराकरणशङ्कानुपपत्तिरित्येतद्भाष्यमात्मत्वादेवोपादानत्वादेवेति व्याख्येयमित्यर्थः । तदर्थमात्मन उपादानत्वं समर्थयते—**एतदुक्तमिति** । वियदादेर्भावकार्यत्वात्सोपादानत्वं तदुपादानस्य च श्रुतावात्मत्वं सिद्धमित्यर्थः । **प्रकृतिप्रत्ययाभ्यामिति** । ज्ञा इति धात्वंशः प्रकृतिः । तव्य इति प्रत्ययः । ज्ञानविशिष्टस्य ज्ञेयस्यान्यथाभावोक्तिर्विशेषणभूतज्ञानेऽपि द्रष्टव्येत्यर्थः । क्षीरावयवानां

## कल्पतरुपरिमलः ।

**आत्मवादे चेति** । आत्मवादे चात्मनो निराकरणशङ्कानुपपत्तिरिति यदेतद्भाष्यं तत्रात्मवादे चेत्येतदुपादानवादे चेत्ये-

कमेवारभते नैकमिति नियमोऽस्ति; अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते न द्रव्यान्तरैः संहत्येत्यभ्युपगम्यते । द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेत् , न; परिणामाभ्युपगमात् । भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत । तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते । तच्च क्वचिदनेकं परिणमते मृद्बीजाद्यङ्कुरादिभावेन । क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन । नेश्वरशासनमस्त्यनेकमेव कारणं कार्यं जनयतीति, अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते। तथाचोक्तम्—'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' ( ब्र० सू० २।१।२४ ) इति । यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति, तदयुक्तम्; येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते । यथाच ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत्, 'अस्थूलमनणु' ( बृ० ३।८।८ ) इत्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते । तस्मात्प्रागुत्पत्तेरनाकाशमिति स्थितम् । यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति । तदप्यसत्; श्रुतिविरोधे सत्युत्पत्त्यसंभवानुमानस्याभासत्वोपपत्तेः, उत्पत्त्यनुमानस्य च दर्शितत्वात्, अनित्यमाकाशमनित्यगुणाश्रयत्वाद्घटादिवदित्यादिप्रयोगसंभवाच्च । आत्मन्यनैकान्तिकमिति चेत्, न; तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः, विभुत्वादीनां चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात् । यच्चोक्तमेतच्छब्दाच्चेति, तत्रामृतत्वश्रुतिस्तावद्वियत्यमृता दिवौकस इतिवद्द्रष्टव्या; उत्पत्तिप्रलययोरुपपादितत्वात् । 'आकाशवत्सर्वगतश्च नित्यः' इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते निरतिशयमहत्त्वाय नाकाशसमत्वाय । यथेषुरिव सविता धावतीति क्षिप्रगतित्वायोच्यते नेषुतुल्यगतित्वाय तद्वत् । एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता । 'ज्यायानाकाशात्' इत्यादिश्रुतिभ्यश्च ब्रह्मण आकाशस्योनपरिमाणत्वसिद्धिः । 'न तस्य प्रतिमास्ति' (श्वे० ४।१९ ) इति च ब्रह्मणोऽनुपमानत्वं दर्शयति । 'अतोऽन्यदार्तम्' ( बृ० ३।४।२ ) इति च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्वं दर्शयति । तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम् । तस्माद्ब्रह्मकार्यं वियदिति सिद्धम्॥ ७ ॥ इति प्रथमं वियदधिकरणम् ॥

---

## भामती ।

पादानमुपादेय**मारभते** । यत्र हि क्षीरं दधिभावेन परिणमते, तत्र नावयवानामनेकेषामुपादानत्वमभ्युपगन्तव्यं किंतूपात्तमेव क्षीरमेकमुपादेयदधिभावेन परिणमते । यथा निरवयवपरमाणुवादिनां क्षीरपरमाणुर्दधिपरमाणुभावेनेति शेषमतिरोहितार्थम् ॥ ७ ॥ **इति प्रथमं वियदधिकरणम्** ॥

## वेदान्तकल्पतरुः ।

दध्युपादानत्वाद्दृष्टान्तः साध्यसम इत्याशङ्क्याह—**तत्र नावयवानामिति । उपात्तं** सिद्धम् । नहि दधिभावसमये क्षीरं नश्यति, यतस्तदवयवानामारम्भकत्वं कल्प्येतेत्यर्थः । **ननु** दध्यनेकोपादानं कार्यद्रव्यत्वात् पटवद् इत्यनुमीयतां, तत्राह—**यथेति** । यथा भवतां क्षीरे नष्टे क्षीरारम्भकपरमाणौ दध्यारम्भाय क्षीररसादिव्यतिरेकेणापरे रसादय उदयन्ते, तेषां चैकारभ्यत्वमेवं दध्नोऽपि किं न स्यात्? तस्यापि दुग्धसंस्थानमात्रत्वेन गुणवद्द्रव्यान्तरत्वानभ्युपगमादिति भावः ॥ ७ ॥ **इति प्रथमं वियदधिकरणम्** ॥[1]

## कल्पतरुपरिमलः ।

तत्परतया व्याख्येयमित्यर्थः । **आत्मवादे** चेत्येतदनन्तरम् **उपादानवादे चेति** प्रतिपदनिर्देशेन टीकायां दर्शिते इत्यर्थः । क्वचिदात्मत्वादेवोपादानत्वादेवेति व्याख्येयमित्यर्थ इति पाठो दृश्यते, स पाठ आत्मत्वादेव चात्मनो निराकरणशङ्कानुपपत्तिरिति भाष्यपाठमनुसृत्य तस्मिन् पाठे टीकायामात्मवादे चेति स्वकीयस्यैव शब्दस्योपादानवादे चेति विवरणं, तेन भाष्यस्थमात्मत्वादिति पदमुपादानत्वादित्यर्थकं व्याख्येयमित्यर्थात्सूचितं भवतीत्यर्थः । **यथा भवतामिति** । न्याय-

---

१ **तत्र सूत्राणि** ७—न वियदश्रुतेः १ अस्ति तु २ गौण्यसंभवात् ३ शब्दाच्च ४ स्याच्चैकस्य ब्रह्मशब्दवत् ५ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ६ यावद्विकारं तु विभागो लोकवत् ७॥

( २ अधिकरणम् ) **एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥**

**अतिदेशोऽयम्। एतेन वियद्व्याख्यानेन मातारिश्वापि वियदाश्रयो वायुर्व्याख्यातः। तत्राप्येते यथायोगं पक्षा रचयितव्याः। न वायुरुत्पद्यते छान्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः। अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरण आम्नानम् 'आकाशाद्वायुः' ( तै० २।१ ) इति पक्षान्तरम्। ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिरसंभवादित्यपरोऽभिप्रायः। असंभवाच्च 'सैषाऽनस्तमिता देवता यद्वायुः' ( बृ० १।५।२२ ) इत्यस्तमयप्रतिषेधात्, अमृतत्वादिश्रवणाच्च। प्रतिज्ञानुपरोधाद्यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः। अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः; अग्न्यादीनामिव वायोरस्तमयाभावात्। कृतप्रतिविधानं चामृतत्वादिश्रवणम्। ननु—वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु किमतिदेशेनासति विशेष इति। उच्यते—सत्यमेवमेतत्। तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः क्रियते। संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात्, अस्तमयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥ इति द्वितीयं मातरिश्वव्याख्यानाधिकरणम् ॥**

---

## भामती।

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

यद्यभ्यासे भूयस्त्वमर्थस्य भवति नाल्पत्वं दूरत एवोपचरितत्वं, हन्त भोः पवनस्य नित्यत्वप्रसङ्गः। 'वायुश्चान्तरिक्षमेतदमृतम्' इति द्वयोरमृतत्वमुक्त्वा पुनः पवनस्य विशेषेणाह—**सैषानस्तमिता देवता यद्वायुरिति।** तस्मादभ्यासान्नापेक्षिकं वायोरमृतत्वमपि त्वौत्पत्तिकमेवेति प्राप्तम्। तदिदमुक्तं भाष्यकृता—**अस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्चेति।** चेन समुच्चयार्थेनाभ्यासो दर्शितः। एवं प्राप्त उच्यते—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, प्रतिज्ञावाक्यार्थस्य प्राधान्यात्, तदुपपादनार्थत्वाच्च वाक्यान्तराणां, तेषामपि चाद्वैतप्रतिपादकानां मात-

## वेदान्तकल्पतरुः।

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

संगतिमाह—**यदीति।** पूर्वाधिकरणे हि ब्रह्मण्यद्वितीयत्वप्रतिज्ञा, न गौणी एकाऽद्वितीयैवशब्दैरस्या अभ्यासादित्युक्तं, तद्वद्वायुनित्यत्वमपि नापेक्षिकमभ्यस्यमानत्वादित्यर्थः। अन्तरिक्षसहितवाय्वनुत्पत्तिवादिवाक्यमात्रोदाहृतावन्तरिक्षोत्पत्तेः पूर्वत्रोदाहृतेर्वायुनित्यत्वोक्तिरप्यौपचारिकीति शङ्का स्यात्तां परिहरति—**पवनस्य विशेषेणेति।** मुक्त्वान्तरिक्षमित्यर्थः। **चेनेति।** चकारेणेत्यर्थः। **तदुपपादनार्थत्वाच्चेति।** बृहदारण्यके खल्वनेन ह्येतत्सर्वं वेदेत्यात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं वायुश्चान्तरिक्षमित्यादिवाक्यं चात्मकार्यवाय्वादिप्रदर्शनेन तदुपपादकमित्यर्थः। प्रधानेनाप्रधानबाधमुक्त्वा गुणभूतावान्तरवाक्यैरपि बहुभिर्वायुनित्यत्ववाक्ययोर्बाधमाह—**तेषामपीति।** तेषामवान्तरवाक्यानां मध्ये इत्यर्थः।

## कल्पतरुपरिमलः।

मते क्षीरमविनष्टं न दध्याकारेण परिणमते, किं त्ववयवसंयोगनाशात् क्षीरे नष्टे तदारम्भकपरमाणुषु रसान्तरोत्पत्तौ सत्यां द्व्यणुकादिप्रक्रियया दधिरूपद्रव्यान्तरारम्भ इति। **तथैवाक्षपादसूत्रं**—'न पयसः परिणामो गुणान्तरप्रादुर्भावाद्, 'व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानमिति'। दधि अविनष्टस्य पयसः परिणामो न भवति; तद्रसविरुद्धरसान्तरप्रादुर्भावादिति प्रथमसूत्रार्थः। घटपटादिषु सर्वत्र कुतश्चिद् द्रव्याद् द्रव्यान्तरस्योत्पत्तिः व्यूहान्तरादवयवसंयोगान्तरादिति दृश्यते, तदेतत्पूर्वद्रव्यनिवृत्तौ क्षीरविनाशस्यानुमापकं क्षीरावयवानां संयोगान्तरं पूर्वसंयोगविनाशं विना न संभवति, तद्विनाशे च क्षीरविनाशोऽवश्यंभावी असमवायिकारणविनाशे सति कार्यस्थित्यसंभवादिति द्वितीयसूत्रार्थः ॥ ७ ॥ **इति प्रथमं वियदधिकरणम् ॥**

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

**प्रधानेनाप्रधानबाधमुक्त्वेति।** यथा स्वर्गकामवाक्येन प्रधानेन को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेत्यप्रधानस्य फलसंदेहवाक्यस्य बाधस्तथेति भावः ॥ ८ ॥ **इति द्वितीयं मातरिश्वव्याख्यानाधिकरणम् ॥**

( ३ अधिकरणम् ) **असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः । तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत । तामाशङ्कामपनेतुमिदं सूत्रम्—'असंभवस्तु' इति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या । कस्मात् ? अनुपपत्तेः । सन्मात्रं हि ब्रह्म । न तस्य सन्मात्रादेवोत्पत्तिः संभवति; असत्यतिशये

### भामती ।

रिश्वोत्पत्तिक्रमप्रतिपादकानां बहुलमुपलब्धेः, मुख्यभूयस्त्वाभ्याममूषां श्रुतीनां बलीयस्त्वात्, एतदनुरोधेनामृतत्वात्समयप्रतिषेधावापेक्षिकत्वेन नेतव्याविति । भूयसीः श्रुतीरपेक्ष्य द्वे अपि श्रुती शब्दमात्रमुक्ते ॥ ८ ॥ इति द्वितयं मातरिश्वव्याख्यानाधिकरणम् ॥

**असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

**ननु** 'न चास्य कश्चिज्जनिता' इत्यात्मनः सतोऽकारणत्वश्रुतेः कथमुत्पत्त्याशङ्का ? नच—वचनमदृष्ट्वा पूर्वः पक्ष इति—युक्तम्; अधीतवेदस्य ब्रह्मजिज्ञासाधिकारदर्शनानुपपत्तेरत आह—**वियत्पवनयोरिति** । यथाहि वियत्पवनयोरमृतत्वानस्तमयत्वश्रुती श्रुत्यन्तरविरोधादापेक्षिकत्वेन नीते, एवमकारणत्वश्रुतिरात्मनोऽग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधात्प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या । न चात्मनः कारणवत्त्वेऽनवस्था लोहगन्धितामावहत्यनादित्वात् कार्यकारणपरम्पराया इति भावः । **तथा विकारेभ्य इति** प्रमाणान्तरविरोधो दर्शितः । एवं प्राप्त उच्यते—सदेकस्वभावस्योत्पत्त्यसंभवः, कुतः ? **अनुपपत्तेः** । सदेकस्वभावं हि ब्रह्म श्रूयते; तदसति बाधके नान्यथयितव्यम् । उक्तमेतद्विकाराः सत्त्वेनानुभूता अपि कतिपयकालकलातिक्रमे विनश्यन्तो दृश्यन्त इत्यनिर्वचनीयास्त्रैकाल्यावच्छेदादिति । न चात्मा तादृशस्तस्य श्रुतेरनुभवाद्वा वर्तमानैकस्वभावत्वेन प्रसिद्धेस्तदिदमाह—**सन्मात्रं हि ब्रह्मेति** । **एतदुक्तं भवति**—यत्स्वभावाद्विचलति तदनिर्वचनीयं निर्वचनीयोपादानं युक्तं, नतु विपर्ययः । यथा रज्जूपादानः सर्पो नतु

### वेदान्तकल्पतरुः ।

**अद्वैतप्रतिपादकानामिति** । इदं सर्वं यदयमात्मेत्यादिवाक्यानामित्यर्थः । मातरिश्वोत्पत्तिक्रमग्रहणमाकाशजन्मसमर्थनात् कार्यस्यापि कार्यं वायुः कुतोऽस्य नित्यत्वमित्यर्थम् ॥८॥ **इति द्वितीयं मातरिश्वव्याख्यानाधिकरणम् ॥**[1]

**असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

भास्करोक्तं दूषणं शङ्कित्वा भाष्यमवतारयति—**नन्वित्यादिना** । **अग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधादिति** । **ननु** नात्माश्रुतेरित्यधिकरणेऽप्येतच्छ्रुतिबलेन पूर्वपक्षः, **सत्यम्**; तत्र हि ब्रह्म नित्यमुपेत्यैव जीवस्य तस्मादुत्पत्तिरेतद्वाक्यबलेन शङ्किष्यतेऽत्र तु यथाग्नेरग्निरेव विस्फुलिङ्ग उत्पद्यते एवं ब्रह्मान्तराद् ब्रह्मेति शङ्क्यते । **ननु** यद्यात्मा आत्मान्तरं प्रति कारणं, तर्हि तस्याप्यन्य इत्यनवस्थेत्याशङ्क्याऽग्निविस्फुलिङ्गवदनादित्वाददोष इत्याह—**नचेति** । **अपिच** विवर्तता हि कार्यता, तत्र ब्रह्म कार्यमिति वदन् प्रष्टव्यः किं ब्रह्म स्वयं सत्यमसत्ये कुत्रचिदध्यस्तम्, उत सत्यान्तरे, किं वा विनैवाधिष्ठानेन स्वयमेवारोपितम् । **नाद्य** इत्याह—**यत्स्वभावाद्विचलतीति** । **न द्वितीय**

### कल्पतरुपरिमलः ।

**असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

"यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति" "न चास्य कश्चिद् जनिता न चाधिपः" इति श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे प्राप्ते सिद्धान्त्येकदेशिमतरूपतद्व्यावर्तकपूर्वपक्षान्तरप्रदर्शकं भाष्यं शङ्कोत्तरत्वेनावतारयतीत्याह—**भास्करोक्तेति** । सन्मात्रं हि ब्रह्मेत्यादिभाष्यस्य सत्सामान्यं ब्रह्मोत्पद्यते चेत्स सामान्यान्तरादुत्पद्यते सद्विशेषादसतो वेति विकल्पत्रयनिरासार्थत्वं प्रतीयते, टीकायां त्वेतदुक्तं भवतीति तत्तात्पर्यवर्णनमुपक्रम्यान्यदेवोच्यत्ते, कथमनयोर्व्याख्यानव्याख्येयभाव इत्याशङ्क्य यथाश्रुतभाष्यव्याख्यानार्थो न भवति टीकाग्रन्थः, किंतु भाष्याशयस्थयुक्त्यन्तरविवरणपर इति द्योतयन्नवतारयति—**अपि च विवर्तता हीति** । **ब्रह्म कार्यमिति वदन् प्रष्टव्य इति** । यद्यपि कार्यत्वं विवर्तत्वं चेत्सद्रूपस्य ब्रह्मणः कार्यत्वमेव न संभवतीत्यैकध्येन दूषणं वक्तुं शक्यम्; तथापि प्रपञ्चार्थो विकल्पः । **न द्वितीय इत्याहेति** ।

[1] तत्र सूत्रम् १—एतेन मातरिश्वा व्याख्यातः ८ ॥

**प्रकृतिविकारभावानुपपत्तेः। नापि सद्विशेषाद्दृष्टविपर्ययात्। सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादयो न तु विशेषेभ्यः सामान्यम्। नाप्यसतो निरात्मकत्वात्। 'कथमसतः सज्जायेत' (छा० ८।७।१) इति चाक्षेपश्रवणात्। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे० ६।९) इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता, न तु ब्रह्मणः सास्तीति वैषम्यम्। नच विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात्। या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः॥ ९॥ इति तृतीयं असंभवाधिकरणम्॥**

---

## भामती।

सर्पोपादानां रज्जुरिति। ययोस्तु स्वभावादप्रच्युतिस्तयोर्निर्वचनीययोर्नोपादेयोपादानभावः, यथा रज्जुशुक्तिकयोरिति। नच निरधिष्ठानो विभ्रम इत्याह—**नाप्यसत इति**। नच निरधिष्ठानभ्रमपरंपरानादितेत्याह—**मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गादिति**। पारमार्थिको हि कार्यकारणभावोऽनादिर्नानवस्थया दुष्यति। समारोपस्तु विकारस्य न समारोपितोपादान इत्युपपादितं माध्यमिकमतनिषेधाधिकारे, तदत्र न प्रस्तव्यम्। तस्मान्नासदधिष्ठानविभ्रमसमर्थनानादित्वेनोचितेत्यर्थः। अग्निविस्फुलिङ्गश्रुतिश्चौपाधिकरूपापेक्षया नेतव्या शेषमतिरोहितार्थम्। ये तु गुणदिक्कालोत्पत्तिविषयमिदमधिकरणं वर्णयांचक्रुस्तैः 'सतोऽनुपपत्तेः' इति क्लेशेन व्याख्येयम्। अविरोधसमर्थनप्रस्तावे चास्य संगतिर्वक्तव्या। अवादिवद्दिक्कालादीनामुत्पत्तिप्रतिपादकवाक्यस्यानवगमात्। तदास्तां तावत्॥ ९॥ **इति तृतीयं असंभवाधिकरणम्॥**

## वेदान्तकल्पतरुः।

इत्याह—**ययोस्त्विति। न तृतीय** इत्याह—**नच निरधिष्ठान इति**। अनादित्वान्नानवस्थादोषमावहतीत्युक्तत्वाद् भाष्यायोगमाशङ्क्याह—**पारमार्थिको हीति**। भाष्येऽनवस्थाशब्देन प्रमाणाभाव उच्यते। अग्निविस्फुलिङ्गादेर्हि क्वचित्कार्यकारणभावस्य प्रमितत्वात् प्रागप्येवमिति परंपरा स्यादत्र तु विकारस्य सतो ब्रह्मणः समारोपिते क्वचित्समारोपः स्यात्स च न प्रमित इत्यपरिनिष्ठेत्यर्थः। माध्यमिकमतनिषेधप्रस्तावे हि अन्यत्तत्त्वमनधिगम्य प्रत्यक्षादिप्रमितनिषेधो न युज्यते, तैरेव विरोधादतः प्रमितः परमार्थ एवाधिष्ठानमिति ह्युपपादितम्। **असदधिष्ठानेति**। असच्छब्दोऽपरमार्थवचनः। भास्करस्य भाष्यकारीयमते यदरुचिनिदानं तत्प्रागेव विचित्सितम्। इदानीं तदुदीरितामधिकरणभङ्गीं भञ्जयति—**ये त्विति। क्लेशेनेति**। सतो विद्यमानस्य गुणादेर्नित्यत्वासंभवः, कुतः? अद्वितीयश्रुत्यनुपपत्तेरित्यध्याहारः क्लेशः। **किंच** तैरश्रुतोत्पत्तिकानामनुत्पत्तिशङ्कानिरासोऽधिकरणार्थ इत्युच्यते। ततश्च श्रुतिविरोधापरिहारात् पादासंगतिरित्याह—**अविरोधेति। यत्तु**—केशवेन समादधे पूर्वाधिकरणार्थ एवात्राक्षिप्यते; श्रुताकाशादिभिरश्रुतदिगादीनां

## कल्पतरुपरिमलः।

आरम्भपरिणामयोः परं समानसत्ताकयोरुपादानोपादेयभावः नतु विवर्तइत्याशयः। **न तृतीय इत्याहेति**। यथाश्रुतभाष्यप्रतीततृतीयविकल्पनिराकरणार्थ एव **नाप्यसत** इति भाष्यग्रन्थः स्वविकल्पिततृतीयपक्षनिराकरणार्थत्वेनाप्यावृत्त्या टीकाकारैर्योजित इति भावः। **अत्र तु विकारस्य सतो ब्रह्मण इति**। यत्कारणं तत्कार्यमिति नियमेन ब्रह्मणः कारणाभ्युपगमे तदपि कारणं तेनैव नियमेन कार्यं स्यात्, कार्यं च विवर्तरूपमित्युक्तम्। ततश्च ब्रह्मणः कारणसद्भावोक्तिः समारोपिते क्वचित्तस्य सामारोप इत्यर्थपर्यवसिता भवेत्, समारोपिते समारोपश्च क्वचिदपि न प्रमित इत्यप्रामाणिकमित्यर्थः। **नन्वसति** समारोपो न संभवतीति माध्यमिकमतनिषेधे समर्थितं नतु समारोपिते समारोपो न संभवतीत्यत आह—**माध्यमिकेति**। तत्र हि यथा शुक्तिकेयमित्यन्यत्तत्त्वमनधिगम्य प्रत्यक्षावगतं रजतं न निषिध्यते, एवं प्रत्यक्षादिप्रमितः प्रपञ्चोऽन्यदधिष्ठानतत्त्वमनधिगम्य निषेद्धुं न शक्यते; अधिष्ठानत्वावगमकबाधकप्रमाणानुदये प्रत्यक्षादीनां प्रामाण्याविघातेन तैरेव स्वविषयनिषेधमसहमानैर्विरोधात्। अतो बाधकप्रमाणावगम्येन तात्त्विकाधिष्ठानेन भाव्यमित्युपपादितम्। इदमुपपादनमसति समारोपस्यैव समारोपिते समारोपस्यापि निषेधकं भवतीति भावः। **अपरमार्थवचन इति**। समारोपितवचन इत्यर्थः। अनेन च निरधिष्ठानभ्रमपरम्परानादितेत्याहेति प्राचीनटीकाग्रन्थेऽपि निरधिष्ठानशब्दः समारोपिताधिष्ठानपर इत्यर्थाद्व्याख्यातम्। **अध्याहारः क्लेश इति**। स्वमते सतो ब्रह्मणः असंभवः उत्पत्त्यभाव उत्पत्त्यनुपपत्तेरिति सूत्रयोजना। अत्राबुद्धिस्थस्य कस्यापि नाध्याहारः, प्रतिज्ञाहानिरव्यतिरेका (ब्र. अ. २ पा. ३ सू. ६) दित्यत्र यदव्यतिरेकः कृत्स्नस्य जगतोऽनूदितः तत्सद्रूपं ब्रह्म बुद्धिस्थम्। वियन्मातरिश्वनोः समर्थितोत्पत्तिरपि इह निषेध्यबुद्धिस्था सैवाऽनुपपत्तेरित्यत्राऽनुपपद्यमाना प्रतियोगिनी बुद्धिस्थेति। परमते तु गुणादिकं नित्यत्वं चाबुद्धिस्थम्

( ४ अधिकरणम् ) **तेजोऽतस्तथाह्याह ॥ १० ॥**

**छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वम् । तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावद्ब्रह्मयोनिकं तेज इति । कुतः ? 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात्, सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात् । 'तज्जलान्' ( छा० ८**

### भामती ।

## तेजोऽतस्तथाह्याह ॥ १० ॥

यद्यपि 'वायोरग्निः' इत्यपादानपञ्चमी 'कारकविभक्तिरुपपदविभक्तेर्बलीयसी' इति नेयमानन्तर्यपरा युक्ता; तथापि बहुश्रुतिविरोधेन दुर्बलाप्युपपदविभक्तिरेवात्रोचिता । ततश्चानन्तर्यदर्शनपरेयं वायोरग्निरिति श्रुतिः । नच 'साक्षाद्ब्रह्मजत्वसंभवे तद्वंश्यत्वेन तज्जत्वं परंपरयाश्रयितुं युक्तम् । वाजपेयस्य पशुयूपवदिति प्राप्तम् । एवं प्राप्ते उच्यते—युक्तं

### वेदान्तकल्पतरुः ।

परिसंख्यायां प्रतिज्ञाव्यतिरेकियोर्बाधाद्, अपरिसंख्यायां त्वेकदेशोपादानवैयर्थ्यम्—**इति । तन्न**; अनादिपूर्वपक्षाभासोत्प्रेक्षितानुत्पत्तीनामाकाशादीनामुत्पत्त्यभिधानस्य सर्वकार्योपलक्षणार्थत्वादिति ॥ ९ ॥ **इति तृतीयमसंभवाधिकरणम् ॥**[1]

## तेजोऽतस्तथा ह्याह ॥ १० ॥

अध्यस्तस्याधिष्ठानत्वायोगान्न ब्रह्मणः कुतश्चित्संभव इत्युक्तं, तर्हि वायोरप्यध्यस्तत्वान्न तेजसस्ततो जन्म, किंतु ब्रह्मण एवेति प्रत्यवस्थानात्संगतिः । अत्र पूर्वपक्षसंभावनार्थं भाष्यं वायोरग्निरिति क्रमोपदेशो वायोरनन्तरमग्निः संभूत इति । तदनुपपन्नम्, वायोरनन्तरमिति दिग्योगार्थपञ्चम्या अनन्तरमित्युपपदसापेक्षत्वात्, अपादानपञ्चम्या निरपेक्षत्वाद्, वायोरेव तेजःप्रत्युपादानत्वप्रतीतेरित्याशङ्क्याह—**यद्यपीति ।** बहुश्रुतयस्तत्तेज इत्याद्यास्ता हि ब्रह्मजत्वं तेजसोऽभिवदन्त्यो वायुजत्वे विरुध्येरन्निति । **ननु** श्रुतयः परंपरया ब्रह्मजत्वेऽपि योक्ष्यन्तेऽत आह—**नचेति ।** पारम्पर्यसंबन्धिदृष्टान्तमाह—**वाजपेयस्येति ।** वाजपेयस्य यूप इतिवद् यत्परम्परया तज्जत्वं तत्साक्षाद् ब्रह्मजत्वसंभवे सति न युक्तमिति योजना । **शेषलक्षणे स्थितम्**—आनर्थक्यात्तदङ्गेषु ( जै. अ. ३ पा. १ सू. १८ ) । सप्तदशारत्निर्वाजपेयस्य यूप इति श्रूयते । तत्र न तावद्यो वाजपेयस्य यूपः स सप्तदशारत्निरिति विधीयते; विशिष्टोद्देशेन वाक्यभेदप्रसङ्गात् । तत्रान्यतरोद्देशे किं वाजपेयोद्देशेन सप्तदशारत्नित्वं विधीयते, उत यूपोद्देशेनेति संशयेऽनन्तरदृष्टत्वात्प्रधानत्वात्प्रकरणित्वाच्च वाजपेय उद्देश्यः, तस्य च साक्षात्सप्तदशारत्नित्वासंभवे तदीयषोडश्याख्योर्ध्वपात्रोपलक्षणार्थो यूपशब्द इति प्राप्ते सिद्धान्तः । यूप उद्देश्यः । एवं हि यूपशब्दो मुख्यार्थः स्यान्न च वाजपेयस्येति गौणता; व्यवहितसंबन्धेऽपि षष्ठ्या मुख्यत्वाच्चैत्रस्य नप्तेतिवत् । तस्माद्वाजपेये यूपाभावात्तदङ्गगतयूपे सप्तदशारत्निता विधीयते इति । पशुयागसंबन्धिनो यूपस्य साक्षाद्वाजपेयसंबन्धो न

### कल्पतरुपरिमलः ।

अद्वितीयश्रुतिरप्युत्पत्तिवद् नाव्यवहितबुद्धिस्थेति तदध्याहारः क्लेशः । **पूर्वाधिकरणार्थ एवात्राक्षिप्यत इति ।** पूर्वाधिकरणाक्षेपसमाधानार्थत्वात् तत्सङ्गतिरेव संगतिरिति भावः । **पूर्वपक्षाभासेति ।** आकाशस्य तावदनुत्पत्तिर्न्यायशास्त्रादिसिद्धा भूगोलकादीनामपि न कदाचिदनीदृशं जगदिति सर्गप्रलयानभ्युपगन्तृमते प्रसिद्धा । एवमुत्पत्तिरहितत्वेन प्रसिद्धानामाकाशादीनामुत्पत्त्यभिधानं सर्वकार्योपलक्षणार्थमिति नैकदेशोपादानवैयर्थ्यं न चेतरपरिसंख्यानमिति स्पष्टमेव । अतो न पूर्वाधिकरणाक्षेपावकाश इति भावः ॥ ९ ॥ **इति तृतीयमसंभवाधिकरणम् ॥**

## तेजोतस्तथा ह्याह ॥ १० ॥

**अत्र पूर्वपक्षसंभावनार्थमिति** सिद्धान्त्येकदेशिमतमिह पूर्वपक्षत्वेन व्यपदिष्टम् । तत्तेजोऽसृजत वायोरग्निरिति श्रुत्योर्विरोध इति पूर्वपक्षः प्रागेव द्रष्टव्यः । **तदीयषोडश्याख्येति ।** षोडशिपात्रस्य खादिरत्वमप्यूर्ध्वपात्रान्तरेभ्योऽधिकं यूपसादृश्यमस्तीति विशिष्य षोडशिपात्रग्रहणम् । एवंच वाजपेयाङ्गत्वेन विधीयमानस्य सप्तदशारत्नित्वस्य साक्षाद्वाजपेयाख्ययागक्रियान्वयायोगात्तदङ्गत्वनिर्वाहार्थं वाजपेयान्वय्यरत्निसंबन्धयोग्यकिंचिद्द्रव्यापेक्षायां यूपस्य वाजपेयानन्वयित्वात् षोडशिपात्रस्य प्रदेयसोमरसधारणद्वारा वाजपेयान्वयात्तत्संबन्धः सप्तदशारत्नित्वस्य वाजपेयाङ्गत्वश्रुत्यार्थप्राप्तो गौणेन यूपशब्देनानूद्यत इत्यर्थः । **तदङ्गगतयूप इति ।** वाजपेयाङ्गभूता ये पशवस्तद्गते तदङ्गे यूपे सप्तदशारत्नित्वं विधीयते ।

१ तत्र सूत्रम् ९—असंभवस्तु सतोऽनुपपत्तेः ९ ॥

।७।१ ) इति चाविशेषश्रुतेः, 'एतस्माज्जायते प्राणः' ( मुण्ड० २।१।३ ) इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्, तैत्तिरीयके च 'स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच' ( तै० ३।६।१ ) इत्यविशेषश्रवणात् । तस्मात् 'वायोरग्निः' इति क्रमोपदेशो द्रष्टव्यः । वायोरनन्तरमग्निः संभूत इति । एवं प्राप्त उच्यते—तेजोऽतो मातरिश्वनो जायत इति । कस्मात् ? तथाह्याह—'वायोरग्निः' इति । अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरितीयं श्रुतिः कदर्थिता स्यात् । ननु क्रमार्थैषा भविष्यतीत्युक्तम्, नेति ब्रूमः—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१।१ ) इति पुरस्तात्संभवत्यपादानस्यात्मनः पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्, परस्तादपि च तदधिकारे 'पृथिव्या ओषधयः' ( तै० २।१।१ ) इत्यपादानपञ्चमीदर्शनाद्वायोरग्निरित्यपादानपञ्चम्येवैषेति गम्यते । अपिच वायोरूर्ध्वमग्निः संभूत इति कल्प्य उपपदार्थयोगः, क्लृप्तस्तु कारकार्थयोगो वायोरग्निः संभूत इति । तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति । नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति 'तत्तेजोऽसृजत' इति, न; तस्याः पारम्पर्यजत्वेऽप्यविरोधात् । यदापि ह्याकाशं वायुं

## भामती ।

पशुयागवाजपेययोरङ्गाङ्गिनोर्नानात्वात्तत्र साक्षाद्वाजपेयासंबन्धे क्लेशेन परंपराश्रयणम्, इह तु वायोर्ब्रह्मविकारस्यापि ब्रह्मणो वस्तुतोऽनन्यत्वाद्वायूपादानत्वे साक्षादेव ब्रह्मोपादानत्वोपपत्तेः कारकविभक्तेर्बलीयस्त्वानुरोधेनोभयथोपपद्यमानाः श्रुतयः कांस्यभोजिवत् न्यायेन नियम्यन्त इति युक्तमिति राद्धान्तः । **'पारम्पर्यजत्वेऽपि'** इति भेदकल्पनाभि-

## वेदान्तकल्पतरुः ।

संभवति; वाजपेयपशुयागयोरङ्गाङ्गित्वेन विरुद्धधर्माध्यासेन भेदात् । तत्र वाजपेयस्येति षष्ठी परम्परासंबन्धमाश्रयेत् । अत्र तु वायोरिति श्रुत्या वायूपादानत्वे तेजसोऽभिहितेऽपि न ब्रह्मजत्वश्रुतिभिः पारम्पर्यमवलम्ब्यम् । ब्रह्मवाय्वोरभेदेन वायुजस्यापि ब्रह्मजत्वोपपत्तेरित्याह—**युक्तमित्यादिना** । वायोर्ब्रह्मविकारस्य यद्यपि ब्रह्मणः सकाशात् काल्पनिको भेदः; तथापि वास्तवाभेदादव्यवधानमित्याह—**ब्रह्मविकारस्यापीति** । यदुक्तं बह्वीभिर्ब्रह्मजत्वश्रुतिभिः कारकविभक्तेर्बाध इति, तदप्येवं सत्यपास्तमित्याह—**उभयथेति** । वायुभावापन्नब्रह्मजत्वे केवलब्रह्मजत्वेऽपीत्यर्थः । यद्यप्येकाकिनी कारकविभक्तिस्तास्तु बह्व्यः; तथापि तासां वायुभावापन्नब्रह्मजत्वेऽपि तेजसो न विरोध इति पञ्चम्यनुग्रहाय तत्रैव नियम्यन्त इति भावः । एवंच कल्पितस्य वायोरधिष्ठानत्वायोग इति परास्तम्; तद्भावापन्नब्रह्मणः परमार्थत्वादिति । **कांस्यभोजिवदिति** । लोके कस्यचिच्छिष्यस्य कांस्यभोजित्वं नियतम्, उपाध्यायस्य त्वनियतपात्रभोजित्वम्, तत्र यदि तयोः कुतश्चिन्निमित्तादेकस्मिन्पात्रे भोजनं प्राप्नुयात्, तदानीममुख्यस्यापि शिष्यस्य धर्मोऽबाधायोपाध्यायोऽपि कांस्यभोजित्वेनैव नियम्यत इति । अव्यवधानस्य समर्थितत्वाद् भाष्यायोगमाशङ्क्याह—**भेदकल्पनेति** । काल्पनिकं वायुब्रह्म-

## कल्पतरुपरिमलः ।

वाजपेयस्येति शब्दस्तु तस्य प्रकरणप्राप्तवाजपेयसंबन्धानुवादकः । यद्यपीतिकर्तव्यताकाङ्क्षालक्षणप्रकरणेन तस्य वाजपेयसंबन्धो न प्राप्नोति, वाजपेयाङ्गगतस्य तस्य तदितिकर्तव्यताकाङ्क्षापूरकत्वाभावात्; तथाप्यधिकारलक्षणप्रकरणात् तस्य वाजपेयेन परम्परासंबन्धः प्राप्नोतीति स वाजपेयस्येत्यनेनानूद्यत इति भावः । **वास्तवाभेदादिति** । वायौ कारणत्वेनानुगतं यद् ब्रह्मरूपं तदभिप्रायमिदमभेदकथनम्, नतु विकारांशाभिप्रायम्; अध्यस्तस्य तस्य तात्त्विकब्रह्माभेदायोगात्, वायुभावापन्नस्य ब्रह्मण एव तेजःकल्पनाधिष्ठानत्वस्यानुपदं वक्ष्यमाणत्वाच्च । **पञ्चम्यनुग्रहायेति** । वायोरिति पञ्चम्या वायोस्तेजसि मृदो घटइवोपादानत्वं प्रतीयते, तच्च वायुरूपविकारानुगतस्य ब्रह्मणोऽधिष्ठानत्वएवोपपद्यते, न विकारान्तरानुगतस्य केवलस्य वेति भावः । **तद्भावापन्नेति** । तत्राधिष्ठानत्वेन सत इत्यर्थः । **लोके कस्यचिच्छिष्यस्येति** । अधिकश्च गुणः साधारण्येऽविरोधात् कांस्यभोजिवदमुख्येपी( जै. अ. १२ पा. २ सू. ३४ )ति पूर्वतन्त्राधिकरणे चिन्तितम्—आग्रयणे आग्नेयैन्द्राग्नादयो यागाः श्रुताः । तत्र द्यावापृथिव्य एककपालोऽपि श्रुतः, स च वैश्वदेवपर्वगतैककपालयागप्रकृतिक इति ततः प्रसूनं बर्हिः प्राप्नोति, **प्रसूनं** पुष्पितं लूनं पुनर्जातं वा । आग्नेयादीनां तु प्रसूनं अप्रसूनं वेत्यनियतं बर्हिः । तत्राग्नेयादीनां मुख्यत्वात्तदनुरोधेनानियमे प्राप्ते सिद्धान्तः । प्रसूनबर्हिरुपादानेपि मुख्यानामप्याग्नेयादीनां न किंचिद्वैकल्यम् । अप्रसूनबर्हिरुपादाने त्वेककपालस्यास्ति वैकल्यम्, अतस्तमनुरुध्य प्रसूनमेव बर्हिरुपादेयमिति । अत्र सूत्रकृता दृष्टान्तीकृतः कांस्यभोजिन्याय इह विवृतः ॥ १० ॥ **इति चतुर्थं तेजोधिकरणम्** ॥

च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि ब्रह्मजत्वं तेजसो न विरुध्यते यथा तस्याः शृतं तस्या दधि तस्या आमिक्षेत्यादि । दर्शयति च ब्रह्मणो विकारात्मनावस्थानं 'तदात्मानं स्वयमकुरुत' ( तै० २।७।१ ) इति । तथाचेश्वरस्मरणं भवति—'बुद्धिर्ज्ञानमसंमोहः' ( भ० गी० १०।४) इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' (भ० गी० १०।५) इति। यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते; तथापि सर्वस्य भावजातस्य साक्षात्प्रणाड्या वेश्वरवंश्यत्वात् । एतेनाक्रमवत्सृष्टिवादिन्यः श्रुतयो व्याख्याताः; तासां सर्वथोपपत्तेः, क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः । प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते, नाव्यवहितजन्यत्वमित्यविरोधः ॥ १० ॥ इति चतुर्थं तेजोधिकरणम् ॥

( ५ अधिकरणम् ) **आपः ॥ ११ ॥**

'अतस्तथाह्याह' इत्यनुवर्तते । आपोऽतस्तेजसो जायन्ते । कस्मात् ? तथाह्याह—'तदपोऽसृजत' इति 'अग्नेरापः' इति च । सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरियामित्याप इति सूत्रयांबभूव ॥ ११ ॥ इति पञ्चममधिकरणम् ॥

( ६ अधिकरणम् ) **पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥**

---

भामती ।

प्रायं यतः पारमार्थिकाभेदमाह—**वायुभावापन्नं ब्रह्मेति** । **यथा तस्याः शृतम्** इति तु दृष्टान्तः परम्परामात्रसाम्येन, नतु सर्वथा साम्येनेति सर्वमवदातम् ॥ १० ॥ इति चतुर्थं तेजोऽधिकरणम् ॥

**आपः ॥ ११ ॥**

निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ १ ॥ इति पञ्चममधिकरणम् ॥

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥**

वेदान्तकल्पतरुः ।

भेदमाश्रित्य पारम्पर्यवाद इत्यर्थः । **नतु सर्वथेति** । शृतस्य दुग्धस्य धेन्वाश्च वायुब्रह्मणोरिवाभेदाभावादित्यर्थः ॥ १० ॥ इति चतुर्थं तेजोधिकरणम् ॥

**आपः ॥ ११ ॥**

अतिदेशोऽयम् । एतस्माज्जायतइत्युपक्रम्य खं वायुर्ज्योतिराप इति श्रूयते । अग्नेराप इति च । अतश्चापः किं सतो जायन्ते उत तेजस इति संशयादि पूर्ववत् । अपामग्निदाह्यत्वादग्नेरुत्पत्त्ययोगादग्नेरापस्तत्तेजोऽपो सृजतेति च गौण्यौ श्रुती इति शङ्कात्र निवर्त्यते । अत्रिवृत्कृताऽप्तेजसोरविरुद्धत्वादिति ॥ ११ ॥ इति पञ्चममधिकरणम् ॥[1]

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥**

कल्पतरुपरिमलः ।

**आपः ॥ ११ ॥**

अतिदेशाधिकरणमिदम् । एतस्माज्जायतइत्युपक्रम्य खं वायुर्ज्योतिराप इति श्रुत्या ब्रह्मजत्वमपां प्रतीतम् । अग्नेराप इति कारकपञ्चमीश्रुत्या तेजोयोनित्वं तच्छ्रुत्योर्विरोध इति पूर्वपक्षः । स इदं सर्वमसृजतेत्यादिबहुश्रुत्यनुसारेण पञ्चमी क्रमार्थेति श्रुत्योरविरोध इत्येकदेशिमतम् । ब्रह्मतेजसोर्वास्तवाभेदात्तेजोयोनित्वेऽपि ब्रह्मजत्वमविरुद्धम् । तस्मादापः कारकपञ्चम्या तेजोयोनय इत्यधिकरणशरीरं सर्वं पूर्ववत् । अधिकाशङ्कानिरासप्रकारमाह—**अत्रिवृत्कृतेति** । अत्रिवृत्कृतयोरप्तेजसोर्विरोधग्राहकप्रमाणाभावादविरुद्धत्वसिद्धिः ॥ इति पञ्चममधिकरणम् ॥

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥**

---

१ तत्र सूत्रम् ३—तेजोऽतस्तथा ह्याह । ... २ तत्र सूत्रम् ३—आपः ॥ ११ ॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' ( छा० ६।२।४ ) इति श्रूयते। तत्र संशयः—किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं चौदनाद्युच्यते, किंवा पृथिवीति। तत्र प्राप्तं तावद्व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति । तत्र ह्यन्नशब्दः प्रसिद्धो लोके, वाक्यशेषोऽप्येतमर्थमुपोद्बलयति । 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवतीति' । व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवीति। एवं प्राप्ते ब्रूमः—पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति। कस्मात्? अधिकाराद्रूपाच्छब्दान्तराच्च। अधिकारस्तावत् 'तत्तेजोऽसृजत' 'तदपोऽसृजत' इति महाभूतविषयो वर्तते। तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः। तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते 'यत्कृष्णं तदन्नस्य' इति। नह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति। नापि व्रीह्यादीनाम् । ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति; पयःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात्, नायं दोषः; बाहुल्यापेक्षत्वात्। भूयिष्ठं हि पृथिव्याः कृष्णं रूपं न तथा श्वेतरोहिते । पौराणिका अपि पृथिवीछायां शर्वरीमुपदिशन्ति। सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते। श्रुत्यन्तरमपि समानाधिकारमद्भ्यः पृथिवीति भवति। 'तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्'—( बृ० १।२।२ ) इति च। पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति—'पृथिव्या ओषधय ओषधीभ्योऽन्नम्' इति च। एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः? प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते। वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम्। तस्मात्पृथिवीयमन्नशब्देति ॥ १२ ॥
इति षष्ठं पृथिव्यधिकरणम् ॥

## भामती ।

अन्नशब्दोऽयं व्युत्पत्त्या च प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते। श्रुतिश्च प्रकरणाद्बलीयसी, सा च वाक्यशेषेणोपोद्बलिता 'यत्र क्वचन वर्षति' इत्येतेन तस्मादभ्यवहार्यं व्रीहियवाद्येवात्राद्भ्यो जायत इति विवक्षितम्। कार्ष्ण्यमपि हि संभवति कस्यचिददनीयस्य। नहि पृथिव्यपि कृष्णा; लोहितादिरूपाया अपि दर्शनात्। ततश्च श्रुत्यन्तरेण 'अद्भ्यः पृथिवी पृथिव्या ओषधयः' इत्यादिना विरोध इति पूर्वः पक्षः। श्रुत्योर्विरोधे वस्तुनि विकल्पानुपपत्तेरन्यतरानुगुणतयान्यतरा नेतव्या। तत्र किम् 'अद्भ्यः पृथिवी' इति पृथिवीशब्दोऽन्नपरतया नीयतामुत 'अन्नमसृजत' इत्यन्नशब्दः पृथिवीपरतयेति विशये, महाभूताधिकारानुरोधात्प्रायिककृष्णरूपानुरोधाच्च 'तद्यदपां शर आसीत्' इति च पुनः श्रुत्यनुरोधाच्च वाक्यशेषस्य चान्यथाप्युपपत्तेरन्नशब्दोऽन्नकारणे पृथिव्यामिति राद्धान्तः ॥ १२ ॥
इति षष्ठं पृथिव्यधिकरणम् ॥

## वेदान्तकल्पतरुः ।

सृष्ट्यावपां तेजसोऽनन्तरत्वात्पृथिव्याश्चाबानन्तर्यादधिकरणद्वयस्य बुद्धिसंनिधानरूपा संगतिः । **व्युत्पत्त्या** व्युत्पाद्यत इति योगवृत्त्या। **प्रसिद्ध्या** रूढ्या। न वयं महाभूतप्रकरणमात्रादन्नश्रुतिं बाधामहे, किंतु लिङ्गप्रकरणसहितसाभ्यासपृथिवीश्रुत्या इत्याह—**श्रुत्योरित्यादिना**। लिङ्गमाह—**प्रायिकेति**। **तत्** तत्र सृष्टिकाले **यद्** यः **अपां शरः** मण्डः घनीभाव आसीत्सा पृथिव्यभवद् इति पुनःश्रुतेरर्थः। **ननु** वर्षणाद्भूयिष्ठत्वप्राप्तिलिङ्गमन्नश्रुतेरप्यनुग्राहकमस्ति, अत आह—**वाक्यशेषस्य चेति**। तस्य लिङ्गप्रकरणाभ्यां बाधात्। अन्यथा पार्थिवव्रीह्यादिपरत्वेऽनुपपत्तेरित्यर्थः ॥ १२ ॥
इति षष्ठं पृथिव्यधिकरणम् ॥[1]

## कल्पतरुपरिमलः ।

ता अन्नमसृजन्त अद्भ्यः पृथिवी इति श्रुत्योर्विरोधः। अपां व्रीहियवादीनां च वाचकयोरन्यतरलक्षणायां विनिगमनाविरहादिति पूर्वपक्षे सिद्धान्त्येकदेशिमतं परमसिद्धान्तव्यावर्तनीयत्वात्पूर्वपक्ष इति टीकायां व्यावहृतम्। अत्र व्युत्पत्तिप्रसिद्ध्योर्भेदमाह—**योगवृत्त्येति रूढ्येति च। साभ्यासपृथिवीश्रुत्येति**। "अद्भ्यः पृथिवी पृथिव्या ओषधयः" इत्येकस्मिन्प्रकरणे पृथिवीशब्दद्वयश्रवणं, "यदपां शर" इति श्रुत्यन्तरे पृथिवीशब्दश्रवणं चाभ्यासोक्त्या संगृहीतं वर्षनिमित्तबहुभावापत्तिलिङ्गान्यथोपपत्तिप्रदर्शकम्। अन्यथाप्युपपत्तेरित्येतद् व्याचष्टे—**अन्यथा पार्थिवव्रीह्यादिपरत्वेना-**

१ तत्र सूत्रम् १—पृथिव्यधिकाररूपशब्दान्तरेभ्यः १२ ॥

( ७ अधिकरणम् ) **तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥**

**किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान्सृजन्त्याहोस्वित्परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति संदेहे सति प्राप्तं तावत्स्वयमेव सृज-**

---

भामती।

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

सृष्टिक्रमे भूतानामविरोध उक्तः। इदानीमाकाशादिभूताधिष्ठात्र्यो देवताः किं स्वतन्त्रा एवोत्तरोत्तरभूतसर्गे प्रवर्तन्त उत परमेश्वराधिष्ठिताः परतन्त्रा इति। तत्र 'आकाशाद्वायुर्वायोरग्निः' इति स्ववाक्ये निरपेक्षाणां श्रुतेः स्वयंचेतनानां च चेतनान्तरापेक्षायां प्रमाणाभावात्, प्रस्तावस्य च लिङ्गस्य च पारम्पर्येणापि मूलकारणस्य ब्रह्मण उपपत्तेः, स्वतन्त्राणा-

वेदान्तकल्पतरुः।

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

**ननु** न तावदिह भूतानां ब्रह्माधिष्ठितानां स्रष्टृत्वाभावश्चिन्त्यते; ईक्षत्याद्यधिकरणै ( ब्र. अ. १ पा. १ सू. ५ ) र्गतत्वात्। नापि ब्रह्मण एव तत्तद्भूतात्मनावस्थितस्योत्तरकार्योपादानत्वम्; तेजोऽत ( ब्र. अ. २ पा. ३ सू. १० ) इत्यत्र तन्निर्णयात्। अतोऽधिकरणानारम्भ इत्याशङ्कामपनयन् सङ्गतिमाह—**सृष्टिक्रम इति**। पूर्वपक्षमाह—**तत्राकाशाद्वायुरिति**। यद्यपि परात्तु तच्छ्रुते ( ब्र. अ. २ पा. ३ सू. ४१ ) रित्यत्र जीवकर्तृत्वमीश्वराधीनमिति वक्ष्यते; तथापीह देवतानामैश्वर्ययोगात्स्वातन्त्र्यमाशङ्क्यते। नच देवतानामपीश्वराधीनत्वेऽत्र सिद्धे कैमुतिकन्यायाज्जीवमात्रेष्वपि तत्सिद्धेस्तदधिकरणानारम्भः शङ्क्यः; सत्यपि देवतानां महाभूतस्रष्टावीश्वरपारतन्त्र्ये विहितक्रियाकर्तृत्वादौ क्षुद्रे जीवमात्रस्यापि स्वातन्त्र्यशङ्कोदयसंभवादिति। अत्राकाशादिशब्दैराकाशाद्यभिमानिन्यो देवता विवक्षिताः मनुष्यादिशब्दैरिव जीवाः। पञ्चम्यश्च निमित्तार्थाः। **एतदुक्तं भवति**—यथाऽऽकाशाद्यात्मनेश्वरो वाय्वाद्युपादानमेवं तदभिमानिदेवतात्मनाऽधिष्ठातेति। भूतानामपि चेतनत्वश्रवणादिति भाष्यं भूताभिमानिदेवताभिप्रायम्। **ननु** सोऽकामयतेति परमेश्वरप्रस्तावं कृत्वा तद्ब्रह्मात्मानं स्वयमकुरुतेति कर्तृत्वं श्रूयते, यः पृथिव्यां तिष्ठन् यमयतीति चेश्वरस्य नियन्तृत्वलिङ्गमस्ति, तत्कथं देवतानां स्वातन्त्र्येण कार्यनियन्तृत्वमत आह—**प्रस्तावस्य चेति**। मूलकारणस्य च ब्रह्मणः प्रस्तावलिङ्गयोरिति-

कल्पतरुपरिमलः।

**प्युपपत्तेरिति**। व्रीह्यादीनां पार्थिवत्वात्तेषामद्भ्यो जननोक्त्या पृथिव्या एवाद्भ्यो जननमुक्तं भवतीत्यर्थः। **अन्यथा** पृथिवीपरत्वेनाप्युपपत्तेरिति पाठेऽप्यत्रैवार्थे पर्यवसानम् ॥ १२ ॥ **इति षष्ठं पृथिव्यधिकरणम्** ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

**ईक्षत्याद्यधिकरणैरिति**। ईक्षत्यधिकरणे श्रुतत्वाच्चेति ( ब्र. अ. १ पा. ४ सू. १६ ) सूत्रे "स करणाधिपाधिप" इति श्रुतिमुदाहृत्य परमेश्वरस्य जगत्कारणत्वं प्रसाधितम्, आनन्दमयाधिकरणे च तद्धेतुव्यपदेशाच्चेति ( ब्र. अ. १ पा. १ सू. १४ ) सूत्रे "इदं सर्वमसृजत यदिदं किंचेति" श्रुतिमुदाहृत्य तत्र जगत्कर्तृत्वलिङ्गसमन्वयो दर्शितः, बालाक्यधिकरणे ( ब्र. अ. ३ पा. २ सू. ३६ ) च "यो वै बालाकिः एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्य" इति श्रुतिमुदाहृत्य तत्र तत्समन्वयो दर्शितः। कर्तृत्वं च सकलकारकान्तरप्रयोक्तृत्वम्। तेन परमेश्वरानधिष्ठितानां भूतानां स्रष्टृत्वनिषेधो लब्धः। साक्षाच्च सांख्याधिकरणे ( ब्र. अ. १ पा. ४ सू. १ ) प्रधानस्य चेतनाधिष्ठानाभावे जगद्रचयितृत्वासंभवो मृदादिदृष्टान्तेन समर्थितः। स न्यायो भूतेष्वपि तुल्यः। यद्यपि तस्य न्यायस्य पाशुपताद्यधिकरणो ( ब्र. अ. २ पा. २ सू. ३७ ) क्तप्रतिन्यायैः पराहत्या स्वातन्त्र्येण नार्थसाधनक्षमता; तथापि श्रुतिमनुग्राह्य प्रमाणं प्रविष्टस्य तस्य वनप्रविष्टसिंहन्यायेन बलवत्त्वात्सास्त्येव शरणम्। एवमीक्षत्याद्यधिकरणैर्गतार्थः। **इत्याशङ्कामपनयन्निति**। इत्थमाशङ्कापनयनं यथा "त्मन आकाश" इत्यत्रात्मनः स्वातन्त्र्यमेवमाकाशाद्वायुरित्यादिष्वप्याकाशादीनां स्वातन्त्र्यमुतेश्वरपारतन्त्र्यमिति यदिह विचार्यते नेदमन्यत्र विचारितं, किंतु स्वातन्त्र्यपूर्वपक्षे यदीक्षत्याद्यधिकरणेषु भूतानां ब्रह्माधिष्ठितानामेव कारणत्वं स्थितं यच्चान्तर्याम्यधिकरणे ( ब्र. अ. १ पा. ३ सू. १८ ) साक्षाद् ब्रह्मणः सर्वनियन्तृत्वं स्थितं यच्च तेजोत ( ब्र. अ. २ पा. ३ सू. १७ ) इत्यधिकरणे तत्तद्भूतात्मनावस्थितस्य ब्रह्मण एवोत्तरोत्तरकार्योपादानत्वं स्थितं, तस्य सर्वस्याप्यनेनाक्षेपो भवतीति विशेषः। **पूर्वपक्षमाहेति**। आकाशाद्वायुरित्यादिश्रुतेर्य आकाशे तिष्ठन्नित्यादिश्रुतेश्चाकाशादिस्वातन्त्र्यपारतन्त्र्यविषयतया

न्तीति। कुतः ? 'आकाशाद्वायुर्वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात् । नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा, नैष दोषः; 'तत्तेज ऐक्षत ता आप ऐक्षन्त' (छा० ६।२।४) इति च भूतानामपि चेतनत्वश्रवणादिति । एवं प्राप्तेऽभिधीयते—स एव परमेश्वरस्तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति। कुतः? तल्लिङ्गात्। तथा हि शास्त्रम्—'यः पृथिव्यां तिष्ठन्यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' (बृ० ३।७।३) इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति । तथा 'सोऽकामयत बहुस्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत्। तदात्मानं स्वयमकुरुत' (तै० २।६।१) इति च

---

## भामती ।

मेवाकाशादीनां वाय्वादिकारणत्वमिति जगतो ब्रह्मयोनित्वव्याघात इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—'आकाशाद्वायुः' इत्याद्य आकाशादीनां केवलमुपादानभावमाचक्षते, न पुनः स्वातन्त्र्येणाधिष्ठातृत्वम् । नच चेतनानां स्वकार्यस्वातन्त्र्यमित्येतदप्यैकान्तिकम्; परतन्त्राणामपि तेषां बहुलमुपलब्धेर्भृत्यान्तेवास्यादिवत् । तस्माल्लिङ्गप्रस्तावसामर्थ्याय स ईश्वर एव तेन तेनाकाशादिभावेनोपादानभावेनावतिष्ठमानः स्वयमधिष्ठाय निमित्तकारणभूतस्तं तं विका-

## वेदान्तकल्पतरुः ।

तसर्वनियन्तृत्वस्य पारंपर्येणाभिमानिदेवताद्वारेणोपपत्तेरित्यर्थः । **ब्रह्मयोनित्वेति** । योनिशब्दो निमित्तार्थः । आकाशादिशब्दैर्न देवतालक्षणा; मुख्यार्थबाधाभावात् । पञ्चम्यश्चापादानार्थास्तत्र रूढतरत्वादित्याह—**आकाशादीनामिति** । देवतालक्षणमङ्गीकृत्याप्याह—**नच चेतनानामिति** । भाष्ये तेन तेनात्मनाऽवतिष्ठमानत्वम् इति भूतात्मतामापन्नस्योपादानत्वमुक्तमिति भ्रममपनुदति—**स्वयमधिष्ठायेति** । तत्र चान्यत्र चानुगतकारणरूपेणावस्थानं, नतु तदात्मनाऽ-

## कल्पतरुपरिमलः ।

विरोधेनाप्रामाण्यमिति पादसंगतपूर्वपक्षे प्राप्ते सत्येकदेशिमतरूपं पूर्वपक्षमाहेत्यर्थः । **आकाशादिशब्दैरिति** । यथा आत्मन आकाश इति स्वतन्त्रे ह्यात्मनि पञ्चम्यर्थान्वयो दृश्यते, तथाऽऽकाशादित्यादिपञ्चम्यन्तोक्तानामपि तत्प्रायपाठेन स्वातन्त्र्यमवगम्यते । नचाऽचेतनानां स्वातन्त्र्यासंभवः; तत्तदभिमानिदेवतार्थपरिग्रहात्, यमाकाशो न वेदेत्यादिश्रुतिष्वाकाशादिशब्दानां देवतापरत्वस्य दृष्टत्वात्, तत्तेज ऐक्षतेत्यादिच्छान्दोग्यश्रुतावीक्षणलिङ्गेन तेजःशब्दस्याप्यभिमानिदेवतापरत्वस्य वक्तव्यत्वेनात्रापि तथात्वौचित्याच्चेति भावः । **यथाऽऽकाशाद्यात्मनेति** । समुच्चयोपमेयं । बाह्यादिषु ब्रह्म स्वरूपेण नोपादानम्; आकाशादित्यादिपञ्चम्यन्तपदैस्तत्तदभिमानिदेवतापदानामधिष्ठातृरूपनिमित्तत्वस्य प्रतिपाद्यतया तैराकाशाद्यनुगतस्य ब्रह्मण उपादानत्वाप्रतिपादनात्, किंतु स्वविकारजडाकाशादिभूतरूपेण । नापि स्वरूपेणाधिष्ठातृ; तत्तदभिमानिदेवतानामधिष्ठातृत्वावगमात्, ऐश्वर्यवतीनां च तासां स्वातन्त्र्योपपत्तेः, किंतु तत्तदभिमानिदेवतात्मनेत्यर्थः । एवंच सोऽकामयतेत्यादिश्रुतौ ब्रह्मणो यत् सर्वत्र कार्ये कर्तृत्वमुपादानत्वं च श्रुतं यच्चान्तर्यामिब्राह्मणे तस्याकाशादिष्वपि नियन्तृत्वं श्रुतं तद्विरोधमाशङ्क्य परिहरति—**ननु सोऽकामयतेत्यादिना । मूलकारणस्य च ब्रह्मण इति** । अत्र मूलाकारणत्वविशेषेण ब्रह्मणः सर्वोपादानत्वमपि मूलकारणत्वात्पारम्पर्येणेति दर्शितम् । **अभिमानिदेवताद्वारेणेति** । "आकाशमन्तरो यमयती"त्यादिवाक्यमाकाशाधिष्ठातृदेवतात्मभावेन व्यवहितस्य ब्रह्मण आकाशादिनियन्तृत्वपरम् । "यमाकाशो न वेदे"त्यादिकं कर्तृकर्मभावविरोधेन स्वस्य स्ववेद्यत्वाभावपरमिति भावः । **आकाशादिशब्दैरिति** । आकाशादिशब्दानां चेतने तदभिमानिदेवतायां च प्रयोगसद्भावेऽपि नोभयत्रापि शक्तिः; प्रसिद्धिप्राचुर्यानुसारेण तेषामचेतने शक्तिः देवतायां लक्षणेत्युपपत्तावुभयत्र शक्तिकल्पनाऽयोगात् । एवं मनुष्यादिशब्दानामपि मनुष्यत्वादिजातिमत्सु देहेषु शक्तिः तदधिष्ठातृजीवेषु लक्षणा । नचाकाशाद्वायुरित्यादिष्वाकाशादिशब्दानां लक्षणायां कारणमस्तीत्यर्थः । **तत्र रूढतरत्वादिति** । अपादाने पञ्चम्याहत्य विहिता प्रसिद्धतरा, हेतौ तु ज्ञापकान्वेषणेन कथंचित्समर्थनीया न प्रसिद्धेत्यर्थः । **भूतात्मतामापन्नस्योपादानत्वमुक्तमिति भ्रममपनुदतीति** । आकाशादिविकाररूपेण तत्तद्विकारावच्छिन्नरूपेण वा ब्रह्मण उपादानत्वमुक्तमिति भ्रान्तिं निराकरोतीत्यर्थः । न विकारात्मना विकारावच्छिन्नेन वा परस्परव्यावृत्तेन रूपेणोपादानत्वं विवक्षितम्; तस्योभयस्यापि कल्पितत्वेन व्यावहारिकाध्यासाधिष्ठानत्वायोगात्सृष्टिनिरूपणस्याध्यारोपापवादन्यायेन निर्विशेषब्रह्मसिद्ध्यर्थताया असकृदावेदितत्वेनात्रोपादानोपादेयभावस्याधिष्ठानाध्यस्तभावरूपस्यैव वक्तव्यत्वात् । **अधिष्ठानं विवर्तानामाश्रयो ब्रह्म शुक्तिवत् । जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम्** ॥ इत्याचार्यैः प्रागुक्तया रीत्या सकलचेतनाचेतनप्रपञ्चविवर्ताधिष्ठानं सर्वविकारानुगतं यन्निर्विशेषं तेन रूपेणाकाशविकारानुगतेन सता वायूपादानत्वमित्याद्युक्तमिति समाधानार्थः । **ननु**—एवं सति आकाशादिपदानामाकाशाद्यनुगते

तस्यैव च सर्वात्मभावं दर्शयति । यत्त्वीक्षणश्रवणमप्तेजसोस्तत्परमेश्वरावेशवशादेव द्रष्टव्यम्; 'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ) इतीक्षित्रन्तरप्रतिषेधात् । प्रकृतत्वाच्च सत ईक्षितुः 'तदैक्षत बहु स्यां प्रजायेय' इत्यत्र ॥ १३ ॥ इति सप्तमं तदभिध्यानाधिकरणम् ॥

( ८ अधिकरणम् ) **विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥**

भूतानामुत्पत्तिक्रमश्चिन्तितः। अथेदानीमप्ययक्रमश्चिन्त्यते। किमनियतेन क्रमेणाप्यय उतो-

भामती ।

वाय्वादिकं सृजतीति युक्तम्, इतरथा लिङ्गप्रस्तावौ क्लैशितौ स्यातामिति । **परमेश्वरावेशवशादिति** । परमेश्वर एवान्तर्यामिभावेनाविष्ट ईक्षिता, तस्मात्सर्वस्य कार्यजातस्य साक्षात्परमेश्वर एवाधिष्ठाता निमित्तकारणं न त्वाकाशादिभावमापन्नः । आकाशादिभावमापन्नस्तूपादानमिति सिद्धम् ॥ १३ ॥ इति सप्तमं तदभिध्यानाधिकरणम् ॥

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥**

उत्पत्तौ महाभूतानां क्रमः श्रुतो नाप्यये; अप्ययमात्रस्य श्रुतत्वात् । तत्र नियमे संभवति नानियमः । व्यवस्थारहितो

वेदान्तकल्पतरुः ।

वस्थानं नतु तदात्मत्वेनैव परिसमाप्तिः । भाष्ये परमेश्वरावेशो जीवापत्तिरिति भ्रान्तिं निरस्यति—**अन्तर्यामिभावेनेति** ॥ १३ ॥ इति सप्तमं तदभिध्यानाधिकरणम् ॥[1]

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥**

कल्पतरुपरिमलः ।

ब्रह्मणि लक्षणा स्याद्, लक्षणा चानुपदमेव निषिद्धा; आत्मन आकाश इत्यादिषु प्रथमान्तानामाकाशादिपदानां विकारपरत्वस्य दृष्टत्वात्, पञ्चम्यन्तानामपि मुख्यवृत्त्या तत्परत्वमेव च युक्तमिति—**चेत्, उच्यते**; ब्रह्मण उपादानत्वोक्तिरियमार्थिकार्थविषया । आकाशाद्वायुरित्यादिशब्दार्थस्तु आकाशवाय्वादीनामेव मृद्घटन्यायेनोपादानोपादेयभावस्तस्मिन् कथिते तदाकाशादिविकारानुगतं ब्रह्म वाय्वाद्यधिष्ठानमित्यर्थात्सिध्यति । अन्यथा सच्चत्यच्चाभवदित्यादिश्रुत्युक्तस्य ब्रह्मणः सर्वप्रपञ्चाध्यासाधिष्ठानत्वस्यानिर्वाहात् । इदमाकाशादित्यादिपदानां मुख्यवृत्त्या विकारमात्रपरत्वं तत्तद्विकारानुगतस्य ब्रह्मणोऽधिष्ठानत्वस्यार्थिकत्वं च विवरणाचार्यैर्न्यायनिर्णये वर्णितम् । **तत्रेदमधिकरणमित्थं दर्शितम्**—आकाशादीनामुत्तरोत्तरभूतोपादानत्वं पञ्चम्यन्तपदैर्यदवगतं तत्तावदन्यानपेक्षं प्रतीयते; तावतैव वायोरुपादानाकाङ्क्षापूरणात्, **व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनाः । यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते** ॥ इति न्यायात्, ब्रह्मणोऽप्यन्यानपेक्षं सर्वोपादानत्वमाकाशादेव समुत्पद्यत इति सावधारणश्रुत्यावगतम्, तत्रान्यतरोपादानेन्यतरपदार्थबाधप्रसङ्गात् श्रुतपदार्थबाधकल्पनाद्वरं धर्मबाधकल्पनमिति वियदधिकरणोक्तन्यायेन नैरपेक्ष्यधर्मं बाधित्वा समुच्चयो ग्राह्यः । अतः पूर्वपूर्वभूताकारापन्नं ब्रह्मोत्तरोत्तरभूतोपादानमिति । यद्यप्याचार्याणामप्ययमर्थोऽभिमतः; तथापि वियदधिकरणेन गतार्थमालोच्य टीकानुसारेणाधिकरणशरीरं प्रकारान्तरेण दर्शितम्, वियदधिकरणन्यायसिद्धस्त्वयमुपादानसमुच्चयस्तेजोत इत्यधिकरणएव सिद्धवत्कृत्य व्यवहृतः । **अस्माभिस्तु चतुर्मतसारसंग्रहे टीकोक्तं न्यायनिर्णयोक्तं चार्थं संयोज्याधिकरणशरीरं दर्शितम्**—'तत्तद्भूताकारापन्नं सदितरजनकमिति कथं श्रुतिद्वयवैशसाद् व्योमादीनां पञ्चम्या हि श्वसनमुखजनिषु विदिता स्फुटं निरपेक्षता । तेषां स्वातन्त्र्यं चादुष्टं सत एव बहुभवनदृशः श्रुतावुपवर्णनादाकाशादेवेत्यप्यन्या श्रुतिरिह समधिगमयते सतो निरपेक्षताम् ॥ बाधं नार्हन्त्येते सर्वे द्विविधवचनसमधिगता यतः खलु धर्मिणः सन्त्वाकाशाश्रेहासते नहि किमपि विनिगमकं तदन्यतरोज्झितौ । तस्माद्बाध्या तद्धर्मत्वाद्वियदधिकृतिकथितनयादियं निरपेक्षता भूतानां तत्स्वातन्त्र्यं च स्थितवति यमयितरि परे न किंचन युज्यते ॥ भुजङ्गविजृम्भितं नामेदं वृत्तम् । अत्र पूर्वपक्षश्लोके यदाकाशादीनां स्वातन्त्र्यं तच्छान्दोग्यश्रुतिमवलम्ब्य निबद्धम्; तत्र तैत्तिरीयोक्तवियत्पवनोपसंहारे तयोरपि तेजोजलयोरिव बहुभवनवीक्षणायुक्तवाक्यद्वयकल्पनात्, तैत्तिरीयश्रुतिस्तु भूतानां न्यायनिर्णयोक्तनिरपेक्षोपादानत्वप्रतीतिनिर्वाहार्थतया निवेशितेत्याचार्योक्तपूर्वपक्षप्रकाराद्भेदः ॥ १३ ॥ **इति सप्तमं तदभिध्यानाधिकरणम्** ॥

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥**

१ तत्र सूत्रम् १—तदभिध्यानादेव तु तल्लिङ्गात्सः १३ ॥

त्पत्तिक्रमेणाथवा तद्विपरीतेनेति । त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते—'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति' (तै० ३।१।१) इति। तत्रानियमोऽविशेषादिति प्राप्तम् । अथवोत्पत्तेः क्रमस्य श्रुतत्वात्प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादिति । एवं प्राप्ते ततो ब्रूमः—विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद्भवितुमर्हति । तथाहि लोके दृश्यते येन क्रमेण सोपानमारूढस्ततो विपरीतेन क्रमेणावरोहतीति । अपिच दृश्यते मृदो जातं घटशरावाद्यप्ययकाले मृद्भावमप्येत्यद्भ्यश्च जातं हिमकरकाद्यब्भावमप्येतीति । अतश्चोपपद्यत एतत् । यत्पृथिव्यद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयादापश्च तेजसो जाताः सत्यस्तेजोऽपीयुः । एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम् । नहि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः । स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः—'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते' इत्येवमादौ । उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति । न

## भामती ।

हि सः । नच व्यवस्थायां सत्यामव्यवस्था युज्यते । तत्र क्रमभेदापेक्षायां किं दृष्टोऽप्ययक्रमो घटादीनां महाभूताप्ययक्रमनियामकोऽस्त्वाहो श्रौत उत्पत्तिक्रम इति विशये श्रौतस्य श्रौतान्तरमभ्यर्हितम्; समानजातीयतया तस्यैव बुद्धिसांनिध्यात् । न दृष्टम्; विरुद्धजातीयत्वात् । तस्माच्छ्रौतेनैवोत्पत्तिक्रमेणाप्ययक्रमो नियम्यत इति प्राप्त उच्यते—अप्ययस्य क्रमापेक्षायां खलूत्पत्तिक्रमो नियामको भवेत्, नत्वस्त्यप्ययस्य क्रमापेक्षा; दृष्टानुमानोपनीतेन क्रमभेदेन श्रुत्यनुसारिणोऽप्ययक्रमस्य बाध्यमानत्वात् । तस्मिन् हि सत्युपादानोपरमेऽप्युपादेयमस्तीति स्यात् । न चैतदस्ति । तस्मात् तद्विरुद्धदृष्टक्रमावरोधादाकाङ्क्षैव नास्ति; क्रमान्तरं प्रलययोग्यत्वात् तस्य । **तदिदमुक्तं सूत्रकृता—'उपपद्यते च'**

## वेदान्तकल्पतरुः ।

यद्यप्यत्र श्रुतिविप्रतिषेधो न परिह्रियते; तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थो विचार्यत इति प्रासङ्गिक्यौ पादावान्तरसङ्गती । भास्करेण सिद्धान्ते स्थित्वाऽन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छेत्यत्र लयेऽपि भूतानां क्रमः श्रुत इत्युक्तं, तदयुक्तमित्याह—**नाप्यय इति** । तत्र हि कार्येण कारणमनुमाप्यते, न लयोऽभिधीयत इति । यत्तु यत्प्रयन्त्यभिसंविशन्तीति, तत्र लयमात्रमुक्तं न क्रम इत्याह—**अप्ययमात्रस्येति** । यच्च भास्करेणाऽनियमः पूर्वपक्ष इत्युक्तं, तदप्ययुक्तमित्याह—**तत्रेति** । श्रुतोत्पत्तिक्रमादेव नियमे सति नानियम इत्यर्थः । **यत्तु**—केशवेनोक्तम् अयोग्य उत्पत्तिक्रमो नाप्यये भवितुमर्हति, न हि नष्टेषु तन्तुषु पटस्तिष्ठन् दृष्टः—**इति, तदयुक्तम्**; अनियमेऽपि पाक्षिकस्यायोग्यत्वस्यापरिहारात् । तत्र तदपि स्वीकृत्याव्यवस्थितपक्षाभ्युपगमाद्वरं व्यवस्थितोत्पत्तिक्रमाश्रयणम् । भाष्यकारस्त्वनियतपक्षमुपक्रममात्रमुक्तवानिति । घटादीनां दृष्टोऽप्ययक्रमो विपरीतः, स भूतानां किमस्त्वित्याह—**किं दृष्ट इति** । सन्निधानेप्युत्पत्तिक्रमस्यानाकाङ्क्षितत्वान्नाप्ययसंबन्ध इत्याह—**अप्ययस्येति** । नच विपरीतक्रमस्यासन्निधानं, प्रमाणेन सन्निधापितत्वादित्याह—**दृष्टेति** । घटादौ दृष्टेनात्राप्यनुमानोपनीतेनेत्यर्थः । **श्रुत्यनुसारिणोऽप्ययक्रमस्येति** । उत्पत्तौ श्रुतस्याप्यप्ययेऽपि संगमयितुं लयेष्यमाणस्येत्यर्थः । लोकदृष्टपदार्थबोधाधीना हि श्रुतिरतः श्रुतिसंनिहितादपि लौकिकः क्रमः सन्निहिततर इति तेन तद्बाधनं युक्तम् । दृष्टेन क्रमेण श्रौतबाधे हेत्वन्तरं चाह—**तस्मिन् हि सतीति** । अनाकाङ्क्षामु-

## कल्पतरुपरिमलः ।

किं दृष्टोऽप्ययक्रम इत्यादिसिद्धान्तकोटिप्रदर्शकं वाक्यं योजयन्नवतारयति—**घटादीनामिति** । घटादीनां यो विपरीतोऽप्ययक्रमो दृष्टः, स भूतानामस्तु किमित्याहेत्यर्थः । अप्ययस्य क्रमापेक्षायामित्यादिसिद्धान्तग्रन्थं तात्पर्यकथनपूर्वकमवतारयति—**सन्निधानेऽपीति** । दृष्टानुमानोपनीतेत्येतद् दृष्टपदस्यानुमानोपनीतपदस्य च कर्मधारयमाश्रित्य व्याचष्टे —**घटादौ दृष्टेनेति** । **ननु** श्रुतिसन्निहितादपि लौकिकक्रमः सन्निहिततर इत्युक्तम्; तथा सत्यश्वदाननिमित्तायां वारुणचतुष्कपालेष्टौ श्रुतिसन्निहितं पौण्डरीकेऽश्वदानं न निमित्तं किंतु सुहृदादिभ्यः क्रियमाणं लौकिकमश्वदानं निमित्तमिति स्यात् । **किंच** लोकादरणे लोके दग्धपटादिषु समकालः कार्यकारणयोरप्ययो दृष्ट इत्यक्रम एवात्र किं न स्यात् ? यद्युच्येत श्रुतौ भूतानामुत्पत्तिः क्रमवती दृष्टेति तेषामप्ययेनापि क्रमवता भाव्यमिति, तर्हि क्रमाकाङ्क्षोत्थापकत्वेन श्रुतावुत्पत्तिक्रमदर्शनं प्राथमिकमिति श्रौतक्रम एव लौकिकक्रमाद् बुद्धिस्थसन्निधानेन सन्निहिततर इत्यस्वरसाद्धेत्वन्तरोक्तिरित्यवतारयति—**दृष्टेन क्रमेणेति** । भूतानामप्ययक्रमस्तु भूतशुद्धिप्रकारेण द्रष्टव्यः । स यथा गन्धादिपञ्चगुणसंघातरूपा पृथिवी प्रथमं

चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते । नहि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः; कारणाप्यये कार्यस्यावस्थानानुपपत्तेः, कार्याप्यये तु कारणस्यावस्थानं युक्तम् मृदादिष्वेवं दृष्टत्वात् ॥ १४॥ इत्यष्टमं विपर्ययाधिकरणम् ॥

## ( ९ अधिकरणम् ) अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम् । आत्मादिरुत्पत्तिः प्रलयश्चात्मान्त इत्यप्युक्तम् । सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः; 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुः' ( कठ० ३।३। ) इत्यादिलिङ्गेभ्यः । तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ; सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात् । अपिचाथर्वण उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' ( मुण्ड० २।१।३ ) इति । तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेत् , न; अविशेषात् । यदि तावद्भौतिकानि करणानि ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत

### भामती ।

इति । भाष्यकारोऽप्याह—**न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यत इति** । तस्मादुत्पत्तिक्रमाद्विपरीतः क्रम इत्येतन्न्यायमूला च स्मृतिरुक्ता ॥ १४ ॥ इत्यष्टमं विपर्ययाधिकरणम् ॥

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥**

तदेवं भावनोपयोगिनौ भूतानामुत्पत्तिप्रलयौ विचार्य बुद्धीन्द्रियमनसां क्रमं विचारयति । अत्र च विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्देनेन्द्रियाणि च बुद्धिं च ब्रूते । तत्रैतेषां क्रमापेक्षायामात्मानं च भूतानि चान्तरा समाम्नानात्तेनैव पाठेन क्रमो नियम्यते । तस्मात् पूर्वोत्पत्तिक्रमभङ्गप्रसङ्गः । यत आत्मनः करणानि करणेभ्यश्च भूतानीति

### वेदान्तकल्पतरुः ।

पसंहरति—**तद्विरुद्धेति** । तस्योपादानोपरमेऽपि कार्यसत्तापादकस्योत्पत्तिक्रमस्य विरुद्धो यो विपरीतक्रमस्तस्यावरोधात्संबन्धादित्यर्थः । **ननु** विपरीतक्रमे श्रुत्यभावाद् भाष्योक्तजगत्प्रतिष्ठेत्याद्या स्मृतिर्निर्मूलेत्यत आह—**एतन्न्यायमूलेति** । उपादानलये कार्यस्थित्ययोगो न्यायः ॥ १४ ॥ इत्यष्टमं विपर्ययाधिकरणम् ॥[1]

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥**

संगतिमाह—**तदेवमिति** । **भावनोपयोगिनाविति** ।पूर्वाधिकरणानां प्रयोजनोक्तिः । भूतोत्पत्तिलयशीलनं ह्यद्वैतब्रह्मध्यानोपयोगीति बुध्याद्युत्पत्तिक्रमविचारोऽपि तत्फल एव । **ननु** सूत्रे विज्ञानशब्दप्रयोगात्तस्य च बुद्धिवृत्तौ प्रसिद्धेः कथं बुद्धीन्द्रियाणामुत्पत्तिचिन्ता ? अत आह—**अत्रेति** । निश्चयवती बुद्धिः संशयादिमन्मनः इति तद्भेदः । चेदित्यन्तस्य योजनया पूर्वपक्षमाह—**तत्रैतेषामिति** । आत्मानं भूतानीति च द्वितीये; "अन्तरान्तरेण युक्ते" इति षष्ठ्यर्थे सामान्ना-

### कल्पतरुपरिमलः ।

गन्धापचयेन रसादिचतुर्गुणसङ्घातात्मकजलरूपतामापद्यते, ततो जलं रसाप्ययेन तेजोरूपतां, तेजो रूपाप्ययेन वायुरूपतां, वायुः स्पर्शाप्ययेनाकाशरूपतां, ततः शब्दतन्मात्राप्यय एवाकाशाप्ययः । एवं रसादिचतुर्गुणसङ्घातरूपं जलतत्त्वं प्रथमं रसाप्ययेन तेजोरूपतामापद्यत इत्यादि द्रष्टव्यम् । गुणसङ्घातातिरिक्ततदाश्रयद्रव्याभ्युपगमे च पञ्चगुणा पृथिवी चतुर्गुणजलरूपतामापद्यत इत्यादिक्रमोऽनुसंधेयः ॥ १४ ॥ **इत्यष्टमं विपर्ययाधिकरणम् ॥**

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥**

**भूतोत्पत्तिलयशीलनं हीति** । यद्यपि तच्छीलनेन पूर्वप्रलयपुनःसर्गमध्यवर्ति कादाचित्कमेवेति निष्प्रपञ्चत्वं लभ्यते, न लभ्यस्तवियदादिप्रपञ्चमिथ्यात्वपरिशीलनेनेव सार्वदिकं निष्प्रपञ्चत्वम्; तथापि स्थूललक्ष्याभ्यासन्यायात् तत्र

[1] तत्र सूत्रम् १—विपर्ययेण तु क्रमोऽत उपपद्यते च १४ ॥

**इति नैतयोः क्रमान्तरं मृग्यम् । भवति च भौतिकत्वे लिङ्गं करणानाम् । अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' ( छा० ६।५।४ ) इत्येवंजातीयकम् । व्यपदेशोऽपि क्वचिद्भूतानां करणानां च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः । अथ त्वभौतिकानि करणानि, तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते । प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि प्रथमं वा भूतान्युत्पद्यन्ते चरमं वा करणानीति । आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च, न तत्रोत्पत्तिक्रम उच्यते । तथान्यत्रापि पृथगेव भूतक्रमात्करणक्रम आम्नायते—'प्रजापतिर्वा इदमग्र आसीत्स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत्तदात्मानमैक्षत तद्वाचमसृजत' इत्यादिना । तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥ १५ ॥ इति नवममन्तराविज्ञानाधिकरणम् ॥**

## भामती ।

प्रतीयते, तस्मादात्मन आकाश इति भज्यते । अन्नमयमिति च मयडानन्दमय इतिवत् न विकारार्थ इति प्राप्तेऽभिधीयते—विभक्तत्वात्तावन्मनःप्रभृतीनां कारणापेक्षायामन्नमयं मन इत्यादिलिङ्गश्रवणादपेक्षितार्थकथनाय विकारार्थत्वमेव मयटो युक्तम्, इतरथा त्वनपेक्षितमुक्तं भवेत् । नच तदपि घटते । नह्यन्नमयो यज्ञ इतिवदन्नप्राचुर्यं मनसः संभवति । एवं चेद्भूतविकारा मनआदयो भूतानां परस्तादुत्पद्यन्त इति युक्तम् । प्रौढवादितयाभ्युपेत्याह—**अथ त्वभौतिकानीति** । भवत्वात्मन एव करणानामुत्पत्तिः, न खल्वेतावता भूतैरात्मनो नोत्पत्तव्यम् । तथाच नोक्तक्रमभङ्गप्रसङ्गः । **विशिष्यते** भिद्यते भज्यत इति यावत् ॥ १५ ॥ **इति नवममन्तराविज्ञानाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

नात् । एतस्माज्जायत इति वाक्ये इत्यर्थः । श्रुतिविरोधपरिहारेण चिन्तां संगमयति—**तस्मात्पूर्वेति** । **ननु** यदि साक्षादात्मकार्याणीन्द्रियाणि, कथं तर्ह्यन्नादिमयत्वं मनआदीनामाम्नायतेऽत आह—**अन्नमयमिति चेति** । प्राचुर्यार्थो मयट् प्राचुर्यं चान्नात्मकशरीरेण मनआदेरवच्छेदादित्यर्थः । **अन्नमयमित्यादिलिङ्गश्रवणादिति** । अन्नमशितं त्रेधा विधीयतइति आध्यात्मिकत्रिवृत्करणपरे वाक्ये मनसोऽन्नमयत्वेन निर्देशो लिङ्गदर्शनमिति । **इतरथा त्विति** । प्राचुर्यार्थत्वेऽनपेक्षितं प्राचुर्यमुक्तं भवेदित्यर्थः । **नच तदपीति** । प्राचुर्यमित्यर्थः । अन्नकार्यत्वं तु मनसो घटते; अन्नोपयोगे मनोवृद्धेः श्रुत्यैव दर्शितत्वादिति । भूतानां मध्ये आकाशः प्रथमं जायत इत्युक्तक्रमः [1] ॥ १५ ॥ **इति नवममन्तराविज्ञानाधिकरणम् ॥**

## कल्पतरुपरिमलः ।

क्रमेणोपयुज्यते इति भावः । कथं बुद्धीन्द्रियाणामुत्पत्तिचिन्तेति करणव्युत्पत्त्याश्रयणेपि मनः सर्वेन्द्रियाणि चेति श्रुतौ सर्वशब्दगृहीतानां कर्मेन्द्रियाणां न संग्रह इति शङ्का, अजहल्लक्षणया तेषामपि संग्रह इति समाधानार्थः । **श्रुतिविरोधपरिहारेणेति** । आत्मन आकाश इत्यादिश्रुतेरेतस्माज्जायतइत्यादिश्रुतेश्च भूतेन्द्रियोत्पत्तिक्रमविषये विरोध इति पूर्वपक्षः । आथर्वणपाठक्रमादिन्द्रियाणां प्रथममुत्पत्तिः छान्दोग्ये तेजसः प्रथमं श्रवणेऽपि तैत्तिरीयकाम्नातवियत्पवनोपसंहारेण तेजःप्राथम्यस्येव तैत्तिरीयके वियतः प्रथमं श्रवणेऽपि आथर्वणाम्नातमनइन्द्रियोपसंहारेण वियत्प्राथम्यस्यापि बाधोपपत्तेः । नच—मनइन्द्रियाणां भौतिकत्वेन श्रुतभूतोत्पत्त्यनन्तरभावित्वस्य वक्तव्यतया पाठक्रमादर्थक्रमो बलीयानिति तेषां भूतानन्तरं निवेशो युक्त इति—वाच्यम्; तेषामाहङ्कारिकत्वेन भौतिकत्वासिद्धेः । नच—यः प्राणः स वायुरिति प्राणभौतिकत्वश्रवणात्तस्य भूतान्तरं निवेशः कार्यस्तत्प्रायपाठान्मनइन्द्रियाणामपि भूतानन्तरं निवेशः स्यादिति—वाच्यम्; प्राणस्यार्थतः पाठक्रमबाधेन पश्चान्निवेशेऽपि मनस इन्द्रियाणां च प्रायपाठरूपेण स्थानप्रमाणेन पाठक्रमबाधनायोगादित्येकदेशिमतम् । **मनसोऽन्नमयत्वेन निर्देश इति** । त्रिवृत्करणरूपविकारकथनपरे वाक्ये अन्नमयत्वनिर्देशो मयटो विकारार्थत्वे लिङ्गमित्यर्थः । **नन्वापोमयः** प्राण इत्यत्र मयटो नास्ति विकारार्थत्वम् । अथाऽपां वायुरूपप्राणे कारणत्वं न संभवतीति तत्त्यागः, तर्हि प्राक्सिद्धे मनसि प्रत्यहमश्यमानस्यान्नस्य कारणत्वं न संभवतीत्यत्राप्यसंभवस्तुल्यः । कथं च मनसोऽन्नविकारत्वश्रवणमात्रेण सर्वेषामिन्द्रियाणां भौतिकत्वसिद्धिः ? **उच्यते**; वायुरूपः प्राणोऽपां मुख्यो विकारो न भवतीत्याप्यायनमात्रेणाऽमुख्यं विकारत्वं मयडर्थ आश्रीयते, नवाऽन्नमयमित्यत्र तस्य मुख्यार्थपरित्यागे कारणमस्ति; प्राक्सिद्धेऽपि मनस्युपचितरूपावच्छिन्ने कारणत्वोपपत्तेः । दृश्यते हि प्राक्सिद्धेऽपि तडागे वृष्टिजलस्योपचितरूपावच्छिन्ने कारणत्वम् । एवं तेजोमयी वागित्यत्रापि मयटो मुख्यविकारार्थत्वं द्रष्टव्यम् । एवं वाङ्मनसयोर्भौतिकत्वकथनं स्थालीपुलाकन्यायेनोपलक्षणमित्यन्येषामपीन्द्रियाणां सांख्यकल्पिताहंकारप्रकृतिकत्वासंभवाद् भौतिकत्वसिद्धिः ॥ **इति नवमन्तराविज्ञानाधिकरणम् ॥**

---

१ तत्र सूत्रम् १—अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् १५ ॥

(१० अधिकरणम्) **चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्त-स्तद्भावभावित्वात् ॥ १६ ॥**

स्तो जीवस्याप्युत्पत्तिप्रलयौ, जातो देवदत्तो मृतो देवदत्त इत्येवंजातीयकाल्लौकिकव्यपदेशात् जातकर्मादिसंस्कारविधानाच्चेति स्यात्कस्यचिद्भ्रान्तिस्तामपनुदामः । न जीवस्योत्पत्तिप्रलयौ स्तः, शास्त्रफलसंबन्धोपपत्तेः । शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम् । श्रूयते च—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' ( छा० ६।११।३) इति । ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः । सत्यं दर्शितः । भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः । किमाश्रयः पुनरयं मुख्यो यदपेक्षया भाक्त इति ? उच्यते-चराचरव्यपाश्रयः । स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ । स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते चातस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते; तद्भावभावित्वात् । शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्मरणशब्दौ भवतो नासतोः । नहि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिल्लक्ष्यते । 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः स उत्क्रामन् म्रियमाणः' ( बृ० ४।३।८) इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति । जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम् । अभावाज्जीवप्रादुर्भावस्य । जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति । देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणावोचत् ॥ १६ ॥ इति दशमं चराचरव्यपाश्रयाधिकरणम् ॥

---

भामती ।

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

देवदत्तादिनामधेयं तावज्जीवात्मनो न शरीरस्य, तन्नाम्ने शरीराय श्राद्धादिकरणानुपपत्तेः । तन्मृतो देवदत्तो जातो देवदत्त इति व्यपदेशस्य मुख्यत्वं मन्वानस्य पूर्वः पक्षः मुख्यत्वे शास्त्रोक्तामुष्मिकस्वर्गादिफलसंबन्धानुपपत्तेः शास्त्रविरोधाल्लौकिकव्यपदेशो भाक्तो व्याख्येयः । भक्तिश्च शरीरस्योत्पादविनाशौ ततस्तत्संयोग इति । जातकर्मादि च गर्भबीजसमुद्भवजीवपापप्रक्षयार्थं, नतु जीवजन्मजपापक्षयार्थम् । अतएव स्मरन्ति 'एवमेनः शमं याति बीजगर्भसमुद्भवम्' इति । तस्मान्न शरीरोत्पत्तिविनाशाभ्यां जीवजन्मविनाशाविति सिद्धम् । एतच्च लौकिकव्यपदेशस्याभ्रान्तिमूलत्वमभ्युपेत्याधिकरणम् । उक्तात्वध्यासभाष्येऽस्य भ्रान्तिमूलतेति ॥१६॥ **इति दशमं चराचरव्यपाश्रयाधिकरणम् ॥**

वेदान्तकल्पतरुः ।

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

एवं तावत्तत्पदवाच्यकारणत्वनिर्णयाय भूतोत्पत्तिश्रुतिविरोधो निरस्तः । इदानीमापादसमाप्तेस्त्वंपदार्थशुद्ध्यै जीवविषयश्रुतिकलहो वारयिष्यते । यदीन्द्रियोत्पत्तिर्न भूतोत्पत्तिक्रममन्यथयति, तर्हि जीवोत्पत्तिस्तमन्यथयेदिति शङ्कायां सैव नास्ति, कुतः कलहः ? इति प्रतिपादनादवान्तरसंगतिः । इह जीवजननिधननिमित्तश्राद्धवैश्वानरीयेष्ट्यादिशास्त्राणां च जीवनित्यत्वशास्त्राणां चाविरोधः साध्यते । देवदत्तादिनाम्नो देहवाचकत्वात्कथं भाष्ये जातो देवदत्त इत्यादिव्यपदेशाज्जीवजन्मशङ्काऽत आह—**देवदत्तादीति । तन्मृत इति ।** तदिति तस्मादर्थे । देहेन सहात्मनाशे श्राद्धादिविधिवैयर्थ्यात् स्याय्यात्मेति सिद्धान्तयति—**मुख्यत्व इति ।** भक्तिर्गुणयोगः तत्संयोग इत्यन्वयः । शरीरोत्पादविनाशौ स्त इति शेषः ॥ **इति दशमं चराचरव्यपाश्रयाधिकरणम् ॥**[१]

कल्पतरुपरिमलः ।

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

प्रासङ्गिकीं संगतिमाह—**एवं तावत्तत्पदवाच्येति ।** पूर्वोत्तराधिकरणयोः संगतिमाह—**यदीन्द्रियोत्पत्तिरिति ।** तन्मृतो देवदत्त इति पाठमाश्रित्य तदिति तस्मादित्यर्थ इति व्याख्यातम् । तस्मान्मृत इति पाठस्तु स्पष्टार्थः । **देहेन सहेति ।** जीवनित्यत्वश्रुतीनां जीवजननमरणनिमित्तजातकर्मश्राद्धादिविधीनां च विरोधेन पूर्वपक्षे जातकर्मादिविध्यन्यथा-

---

१ तत्र सूत्रम् १—चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् १६ ॥

( ११ अधिकरणम् ) **नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥**

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी । स किं व्योमादिवदुत्पद्यते ब्रह्मण आहोस्विद्ब्रह्मवदेव नोपद्यत इति श्रुतिविप्रतिपत्तेर्विशयः । कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते, कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते नचोत्पत्तिराम्नायत इति । तत्र प्राप्तं तावदुत्पद्यते जीव इति । कुतः ? प्रतिज्ञानुपरोधादेव । 'एकस्मिन्विदिते सर्वमिदं विदितम्' इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत । नचाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुम्; लक्षणभेदात् । अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः । विभक्तत्वादाकाशादिवदस्य विकारत्वसिद्धिः । यावान्ह्याकाशादिः प्रविभक्तः स सर्वो विकारः । तस्य चाकाशादेरुत्पत्तिः समधिगता । जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखयुक्प्रतिशरीरं प्रविभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसर उत्पत्तिर्भवितुमर्हति । अपिच 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' ( बृ० २।१।२० ) इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा 'सर्व एत आत्मानो व्युच्चरन्ति' इति भोक्तृणामात्मनां पृथक्सृष्टिं शास्ति । 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मुण्ड० २।१।१

---

भामती ।

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥**

मा भूतामस्य शरीरोदयव्ययाभ्यां स्थूलावुत्पत्तिविनाशौ, आकाशादेरिव तु महासर्गादौ तदन्ते चोत्पत्तिविनाशौ जीवस्य भविष्यत इति शङ्कान्तरमपनेतुमिदमारभ्यते । नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः । विचारमूलसंशयस्य बीजमाह—**श्रुतिविप्रतिपत्तेरिति** । तामेव दर्शयति—**कासुचिच्छ्रुतिष्विति** । पूर्वपक्षं गृह्णाति—**तत्र प्राप्तमिति** । परमात्मनस्तावद्विरुद्धधर्मसंसर्गादपहतानपहतपाप्मत्वादिलक्षणाज्जीवानामन्यत्वम् । ते चेन्न विकारास्ततस्तत्त्वान्तरत्वे बहुतराद्वैतश्रुतिविरोधः । ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधश्च । तस्माच्छ्रुतिभिरनुज्ञायते विकारत्वम् । प्रमाणान्तरं चात्रोक्तम्—**विभक्तत्वादाकाशादिवदिति** । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इति च श्रुतिः साक्षादेव ब्रह्मविकारत्वं जीवानां दर्शयति । 'यथा सुदीप्तात् पावकात्' इति च ब्रह्मणो जीवानामुत्पत्तिं च तत्राप्ययं च साक्षाद्दर्शयति । नन्वक्षराद्भावानामुत्पत्तिप्रलयाववगम्येते न जीवानामित्यत आह—**जीवात्मनामिति** । **स्यादेतत्**—सृष्टिश्रुतिष्वाकाशा-

वेदान्तकल्पतरुः ।

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥**

स्वर्गादिभोगाय देहनाशेऽप्यात्मा न नश्यतीत्युक्तम्, तर्हि कल्पमात्रावस्थानेऽपि स्वर्गादिभोगसंभवाज्जीवः कल्पाद्यन्तयोरुत्पत्तिविनाशवानिति संगतिमाह—**मा भूतामिति** । **नन्वसंभवस्त्वि** ( ब्र. अ. २ पा. ३ सू. ९ )त्यत्र ब्रह्मजन्मनिषेधात् कथं तदभिन्नजीवजन्मशङ्काऽत आह—**परमात्मनस्तावदिति** । परमात्मनो जीवानामन्यत्वमित्यन्वयः ।

कल्पतरुपरिमलः ।

नुपपत्त्या जीवस्य जनिरङ्गीकार्या । नच तत्र देहजनिर्निमित्तम् मृतजातदेहेऽपि जातकर्मादिप्रसङ्गात् । तस्माज्जीवनित्यत्वश्रुतयो भाक्तत्वेन व्याख्येया इत्येकदेशिमतम् । तत्र श्राद्धादिविधेरन्यथोपपादयितुमशक्यत्वाज् जीवनित्यत्वमवश्यमङ्गीकार्यम्; जातकर्मादिविधीनां जीवसंयुक्तदेहजन्म निमित्तं भविष्यतीत्येवं सिद्धान्तयतीत्यर्थः । भक्तिश्च शरीरस्योत्पादविनाशौ तत्तत्संयोग इति टीकाग्रन्थं भक्तिश्च तत्संयोग इति व्यवहितान्वयेन शरीरस्योत्पादविनाशौ स्त इति वाक्यभेदेन च योजयति—**भक्तिरित्यादिना** । भक्तिश्च शरीरस्योत्पादविनाशवतः संयोग इति पाठे त्वेकमेव वाक्यम् ॥ १६ ॥

**इति दशमं चराचरव्यपदेशाधिकरणम् ॥**

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥**

**कल्पाद्यन्तयोरुत्पत्तिविनाशवानिति** । कल्पादौ परमेश्वरसंकल्पमात्रभवा अयोनिजा जीवा जन्मप्रभृत्येव कर्मा-

इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते । सरूपवचनात्, जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात् । नच क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति; श्रुत्यन्तरगतस्याप्यविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या; 'तदात्मानं स्वयमकुरुत' इत्यादिवत् । तस्मादुत्पद्यते जीव इति । एवं प्राप्ते ब्रूमः—नात्मा जीव उत्पद्यत इति । कस्मात्? अश्रुतेः। नह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु । ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम्। सत्यमुक्तम्। उत्पत्तिरेव त्वस्य न संभवतीति वदामः। कस्मात् ? नित्यत्वाच्च ताभ्यः । चशब्दादजत्वादिभ्यश्च । नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते तथाजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मना चेति । नचैवंरूपस्योत्पत्तिरुपपद्यते । ताः काः श्रुतयः ? 'न जीवो म्रियते' (छा० ६।११।३), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृ० ४।४।२५ ), 'न जायते म्रियते वा विपश्चित्' ( कठ० २। १८), 'अजो नित्यः शाश्वतोऽयं पुराणः' ( कठ० २।१८ ), 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै० २।६।१ ), 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ ), 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' ( बृ० १।४।७ ), 'तत्त्वमसि' ( छा० ६।८।७ ), 'अहं ब्रह्मास्मि' ( बृ० १।४। १० ), 'अयमात्मा ब्रह्म सर्वानुभूः' ( बृ० २।५।१९), इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति । ननु—प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यत इत्युक्तम्, अत्रोच्यते—नास्य प्रविभागः स्वतोऽस्ति; 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' ( श्वे० ६।११ ) इति श्रुतेः । बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसंबन्धनिमित्तम् । तथाच शास्त्रम्—'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' ( बृ० ४।४।५ ) इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽप्येकस्यानेकबुद्ध्यादिमयत्वं दर्शयति । तन्मयत्वं चास्य विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म इत्यादिवद्द्रष्टव्यम् । यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं, तदप्यत एवोपाधिसंबन्धान्नेतव्यम् ।

## भामती ।

त्पत्तिरिव कस्माज्जीवोत्पत्तिर्नाम्नायते? तस्मादाम्नानयोग्यस्यानाम्नानात्तस्योत्पत्त्यभावं प्रतीम इत्यत आह—**नच क्वचिदश्रवणमिति**। एवं हि कस्यांचिच्छाखायामाम्नातस्य कतिपयाङ्गसहितस्य कर्मणः शाखान्तरीयाङ्गोपसंहारो न भवेत् । तस्माद्बहुतरश्रुतिविरोधादनुप्रवेशश्रुतिर्विकारभावापत्त्या व्याख्येया । तस्मादाकाशवज्जीवात्मान उत्पद्यन्त इति प्राप्ते, उच्यते—भवेदेवं यदि जीवा ब्रह्मणो भिद्येरन् । न त्वेतदस्ति; 'तत् सृष्ट्वा तदेवानुप्राविशत्', 'अनेन जीवेन' इत्याद्यविभागश्रुतेः, औपाधिकत्वाच्च भेदस्य घटकरकाद्याकाशवद्विरुद्धधर्मसंसर्गस्योपपत्तेः । उपाधीनां च मनोमय इत्यादीनां श्रुतेर्भूयसीनां च नित्यत्वाजत्वादिगोचराणां श्रुतीनां दर्शनात् 'उपाधिप्रविलयेनोपहितस्य' इति च प्रश्नोत्तराभ्यामनेकधोपपादनादविभागस्य च 'एको देवः सर्वभूतेषु गूढः' इति श्रुत्यैवोक्तत्वान्नित्या जीवात्मानो न विकारा न चाद्वैतप्रतिज्ञाविरोध इति सिद्धम् । मैत्रेयीब्राह्मणं चाधस्ताद्व्याख्यातमिति नेह व्याख्यातम् ॥ १७ ॥ **इत्येकादशं आत्माधिकरणम्** ॥

## वेदान्तकल्पतरुः ।

**एवं हीति**। क्वचिच्छ्रुतस्यान्यत्रानुपसंहारे सतीत्यर्थः । **विकारभावापत्त्येति**। जीवलक्षणविकारभावमापद्य तद्रूपेण शरीरे प्रवेश इत्यर्थः । **मनोमय इत्यादीनामिति**। मनोमयादिशब्देषु श्रुतानां मनआदीनामित्यर्थः । उपाधिप्रविलयेन हेतुना उपहितस्यैव विशिष्टस्यैव प्रविलयो न शुद्धस्येति प्रश्नोत्तराभ्याम् अत्रैव मा भगवान् मूमुहदित्यविनाशी वा अरे अयमात्मा इत्याभ्यामुपपादनादित्यर्थः । **अनेकधेति**। अविनाशी अनुच्छित्तिधर्मेति निरन्वयसान्वयनाशवारणादित्यर्थः । श्रुत्योपपादनादित्यधस्तनेनान्वयः । **अविभागस्य** चेति च्छेदः । **अधस्तादिति**। वाक्यान्वया ( ब्र. अ. १ पा. ४ सू. १९ )दित्यधिकरणे इत्यर्थः[1] ॥ १७ ॥ **इत्येकादशं आत्माधिकरणम्** ॥

## कल्पतरुपरिमलः ।

नुष्ठानशङ्का इति तत्तदुत्पत्त्यनन्तरकालानुष्ठितसाध्वसाधुकर्मपरम्पराधीना तेषां भोगवैचित्री न पूर्वकल्पानुष्ठितकर्माधीनेति भावः । **न शुद्धस्येति**। शुद्धस्यैव स्वरूपेण प्रविलये मुक्तिभाक्त्वमपि न स्यादिति भावः । **अविभागस्यचेति च्छेद**

१ तत्र सूत्रम् १—नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

उपाध्युत्पत्त्यास्योत्पत्तिस्तत्प्रलयेन च प्रलय इति । तथाच दर्शयति—'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति' ( बृ० ४।५।१३ ) इति । तथोपाधिप्रलय एवायं नात्मविलय इत्येतदप्यत्रैव 'मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञास्ति' इति प्रश्नपूर्वकं प्रतिपादयति—'न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति' ( बृ० ४।५।१४ ) इति । प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात् । लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव; 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' ( बृ० ४।३।१५ ) इति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात् । तस्मान्नैवात्मोत्पद्यते प्रविलीयते चेति ॥ १७ ॥ इत्येकादशं आत्माधिकरणम् ॥

( १२ अधिकरणम् ) ज्ञोऽत एव ॥ १८ ॥

स किं कणभुजानामिवागन्तुकचैतन्यः स्वतोऽचेतन आहोस्वित्सांख्यानामिव नित्यचैतन्यस्वरूप एवेति वादिविप्रतिपत्तेः संशयः । किं तावत्प्राप्तम् ? आगन्तुकमात्मनश्चैतन्यमात्ममनःसंयोगजमग्निघटसंयोगजरोहितादिगुणवदिति प्राप्तम् । नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहाविष्टा

भामती ।

ज्ञोऽत एव ॥ १८ ॥

कर्मणा हि जानात्यर्थो व्याप्तस्तदभावे न भवति धूम इव धूमध्वजाभावे, सुषुप्त्याद्यवस्थासु च ज्ञेयस्याभावात्तद्व्याप्यस्य ज्ञानस्याभावः । तथाच नात्मस्वभावश्चैतन्यम्; तदनुवृत्तावपि चैतन्यस्य व्यावृत्तेः । तस्मादिन्द्रियादिभावाभावानुविधानात् ज्ञानभावाभावयोरिन्द्रियादिसंनिकर्षाधेयमागन्तुकमस्य चैतन्यं धर्मो न स्वाभाविकः । अत एवेन्द्रियादीनामर्थवत्त्वम्, इतरथा वैयर्थ्यमिन्द्रियाणां भवेत् । नित्यचैतन्यश्रुतयश्च शक्त्यभिप्रायेण व्याख्येयाः । अस्ति हि ज्ञानोत्पादनशक्तिर्निजा जीवानां, नतु व्योम्न इवेन्द्रियादिसंनिकर्षेऽप्येषां ज्ञानं न भवतीति । तस्माज्जडा एव

वेदान्तकल्पतरुः ।

ज्ञोऽत एव ॥ १८ ॥

आत्मैवास्य ज्योतिरित्यादिश्रुतीनां पश्यंश्चक्षुः शृण्वन् श्रोत्रमित्यादिश्रुतिभिर्जीवस्यागन्तुकज्ञानत्ववादिनीभिर्विरोधः परिह्रियते । प्रागुक्तजीवानुत्पत्तिहेतुम् उपादाय स्वप्रकाशत्वसाधनात् संगतिः सूत्रभाष्ययोरेव स्पष्टा । अनुत्पत्तौ हि स्वप्रकाशं ब्रह्मैवोपहितं जीव इति तत्र स्वप्रकाशता । न चैवं गतार्थत्वम्; अनुत्पन्नस्यापि जीवस्यानित्यज्ञानत्वश्रुतिवशाद् ब्रह्मान्यत्वशङ्कोपपत्तेर्ब्रह्मैक्ययोग्यत्वाय जीवस्येह स्वप्रकाशत्वं समर्थ्यते । उत्तरेण स्वाभाविकाणुत्वनिरासेन वस्तुतो महत्परिमाणं चैतन्यादीषद्बहिष्ठं साधयिष्यते । ततोऽधिकरणत्रयेण ततोऽपि बहिष्ठं कर्तृत्वं बुद्धिकर्तृत्वव्यावर्तनेनात्मनाध्यस्तमुपपादयिष्यते । एवं ज्ञानयोग्यत्वस्य जीवस्य ब्रह्मणैक्यम् अंश ( ब्र. अ. २ पा. ३ सू. ४३ ) इत्यत्र वक्ष्यते । इत्यापादसमाप्ति संगतयः । अनित्यज्ञानत्वे युक्तिमप्याह—**कर्मणा हीत्यादिना** । यदि जीवानां स्वाभाविकी ज्ञानशक्तिर्न स्यात्, तर्हि इन्द्रियादिसंनिकर्षेऽपि न जानीरन्नाकाशवन्न चैवमित्याह—**नतु व्योम्न इवेति** । **ननु** जीवस्वरूपेऽस्ति

कल्पतरुपरिमलः ।

**इति** । विभागमङ्गीकृत्य सर्वविज्ञानप्रतिज्ञानिर्वाहार्थं कार्यत्वाङ्गीकारे च कल्पादावुत्पन्नानां भोगे वैचित्र्यं न स्यात् । प्राथमिकसाध्वसाधुकर्मकरणस्य तद्वैचित्र्यहेतुत्वे च तत्करणस्य पूर्वकल्पानुष्ठितकर्मापेक्षत्वाभावे तैस्तैर्जीवैः प्रथमं साधून्यसाधूनि च कर्माणि कारयितुमीश्वरस्य वैषम्यनैर्घृण्ये प्रसज्येयातां प्राथमिककर्माचरणेषूदास्ते परमेश्वरस्तदनुसारेणोत्तरोत्तरकर्माण्येव कारयतीत्येवं तस्य सर्वकर्मकारयितृत्ववचनानां द्वितीयादिकर्मविषयतया संकोचकल्पनेऽप्ययमसाधु कर्म करिष्यतीति जानतः परमेश्वरस्य कूपे बालकः पतिष्यतीति जानतस्तत्परिहरणाशक्तस्येवौदासीन्यकृतस्तदुभयप्रसङ्गोऽशक्यनिराकरणः । तस्मादनादिकर्मपरम्पराश्रयणाज्जीवानामनादित्वस्य सर्वविज्ञानप्रतिज्ञानस्य चोपपादनार्थमविभाग एवाभ्युपेय इति भावः ॥ १७ ॥ **इत्येकादशं आत्माधिकरणम्** ॥

ज्ञोऽत एव ॥ १८ ॥

**एवं ज्ञानयोग्यत्वस्येति** । ब्रह्माभेदविरोधिष्वनित्यत्वास्वप्रकाशत्वाणुत्वस्वाभाविककर्तृत्वेषु निरस्तेषु ज्ञाततदभेदयो-

नामपि चैतन्यं स्यात् । ते पृष्टाः सन्तो न किंचिद्वयमचेतयामहीति जल्पन्ति स्वस्थाश्च चेतयमाना दृश्यन्ते । अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेति । एवं प्राप्तेऽभिधीयते—ज्ञो नित्यचैतन्योऽयमात्मात एव, यस्मादेव नोपपद्यते परमेव ब्रह्माविकृतमुपाधिसंपर्काज्जीवभावेनावतिष्ठते। परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम्—'विज्ञानमानन्दं ब्रह्म' ( बृ० ३।९।२८ ), सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१।१ ), 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' ( बृ० ४।५।१३ ), इत्यादिषु श्रुतिषु । तदेव चेत्परं ब्रह्म जीवस्तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति गम्यते । विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति—'असुप्तः सुप्तानभिचाकशीति' ( बृ० ४।३।११ ) 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' ( बृ० ४।३।९ ) इति, 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' ( बृ० ४।३।३० ) इत्येवंरूपाः । 'अथ यो वेदेदं जिघ्राणीति स आत्मा' ( छा० ८।१२।४ ) इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेनानुसंधानात्तद्रूपत्वसिद्धिः । नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चेत्, न; गन्धादिविषयविशेषपरिच्छेदार्थत्वात् । तथाहि दर्शयति—'गन्धाय घ्राणम्' इत्यादि । यत्तु सुप्तादयो न चेतयन्त इति तस्य श्रुत्यैव परिहारोऽभिहितः । सुषुप्तं प्रकृत्य 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति—नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' ( बृ० ४।३।२३ ) इत्यादिना । एतदुक्तं भवति—विषयाभावादियमचेतयमानता न चैतन्याभावादिति । यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात्तद्वत् । वैशेषिकादितर्काश्च श्रुतिविरोध आभासी भवति । तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः ॥ १८ ॥ इति द्वादशं ज्ञाधिकरणम् ॥

( १३ अधिकरणम् ) **उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥**

---

### भामती ।

जीवा इति प्राप्तेऽभिधीयते—यदागन्तुकज्ञानं जडस्वभावं तत्कदाचित् परोक्षं कदाचित् संदिग्धं कदाचिद्विपर्यस्तं, यथा घटादि, न चैवमात्मा । तथाहि—अनुमिमानोऽप्यपरोक्षः, स्मरन्नप्यानुभविकः, संदिहानोऽप्यसंदिग्धः, विपर्यस्यन्नप्यविपरीतः सर्वस्यात्मा । तथाच तत्स्वभावः । नच तत्स्वभावस्य चैतन्यस्याभावः तस्य नित्यत्वात् । तस्माद्वृत्तयः क्रियारूपाः सकर्मिकाः कर्माभावे सुषुप्त्यादौ निवर्तन्ते । तेन चैतन्यमात्मस्वभाव इति सिद्धम् । तथाच नित्यचैतन्यवादिन्यः श्रुतयो न कथंचित् क्लेशेन व्याख्यातव्या भवन्ति। गन्धादिविषयवृत्त्युपजने चेन्द्रियाणामर्थवत्तेति सर्वमवदातम् ॥१८॥ इति द्वादशं ज्ञाधिकरणम् ॥

**उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥**

### वेदान्तकल्पतरुः ।

विशेषः, शक्तावपि तुल्यमिति चेद्, न; कार्यनियमाय शक्तेः पितृत्वादिवदसाधारण्यकल्पनादित्यर्थः । व्यतिरेकव्याप्तिपूर्वकमात्मस्वप्रकाशत्वेऽनुमानमाह—**यदागन्तुकज्ञानमित्यादिना** । व्याख्याता एते ग्रन्था बौद्धाधिकरणे । यदुक्तमसति कर्मणि न चैतन्यमिति तत्राह—**तस्माद् वृत्तय इति** । अतएव पश्यंश्चक्षुरित्यादिषु श्रुतयो दत्तविषयाः ॥१८॥ **इति द्वादशं ज्ञाधिकरणम्** ॥[1]

**उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥**

### कल्पतरुपरिमलः ।

ग्यताकस्येत्यर्थः । यद्यपि कर्ता शास्त्रार्थवत्त्वा ( ब्र. अ. २ पा. ३ सू. ३३ )दित्यधिकरणेनोपपादनीयं जीवगतं कर्तृत्वमध्यस्तमित्येतदेवाभेदयोग्यताज्ञानोपयोगि, नतु परात्तु तच्छ्रुते ( ब्र. अ. २ पा. ३ सू. ४१ )रित्यधिकरणे व्युत्पादयिष्यमाणं जीवेश्वरयोः प्रवर्त्यप्रवर्तकत्वमपि । तत्तु भेदसापेक्षं सदभेदयोग्यताविरोधित्वशङ्कास्कन्दितं काल्पनिकभेदेन कथंचिदुपपादनीयम्; तथापि तद्विषयश्रुतिकलहोऽपि क्वचिद्वारणीय इति प्रसङ्गादत्रैव पादे तद्वारणं कृतम् । अतो मूलाधिकरणसङ्गत्यैव प्रासङ्गिकाधिकरणमप्यत्र सङ्गतमिति भावः ॥ १८ ॥ **इति द्वादशं ज्ञाधिकरणम्** ॥

**उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥**

---

[1] तत्र सूत्रम् १—ज्ञोऽत एव ॥ १८ ॥

इदानीं तु किंपरिमाणो जीव इति चिन्त्यते। किमणुपरिमाण उत मध्यमपरिमाण आहोस्विन्महापरिमाण इति। ननुच—नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तम् । अतश्च पर एवात्मा जीव इत्यापतति । परस्य चात्मनोऽनन्तत्वमाम्नातं, तत्र कुतो जीवस्य परिमाणचिन्तावतार इति ? उच्यते—सत्यमेतत् । उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति । स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते । तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः । तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नोऽणुपरिमाणो जीव इति । उत्क्रान्तिस्तावत्—'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' ( कौषीत० ३।३ ) इति। गतिरपि 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषीत० १।२ ), इति। आगतिरपि 'तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' ( बृ० ४।४।६ ) इति । आसामुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नस्तावज्जीव इति प्राप्नोति । नहि विभोश्चलनमवकल्पत इति। सति च परिच्छेदे शरीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्पेत। उत्तरे तु गत्यागती नाचलतः संभवतः । स्वात्मना हि तयोः संबन्धो भवति; गमेः कर्तृस्थक्रियात्वात् । अमध्यमपरिमाणस्य च गत्यागती अणुत्व एव संभवतः । सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृप्तिरेव देहादिति प्रतीयते । नह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनात्—'चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' ( बृ० ४।४।२ ) इति । 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' ( बृ० ४।४।१ ),

---

### भामती ।

यद्यप्यविकृतस्यैव परमात्मनो जीवभावस्तथा चानणुपरिमाणत्वम्; तथाप्युत्क्रान्तिगत्यागतीनां श्रुतेश्च साक्षादणुपरिमाणश्रवणस्य चाविरोधार्थमिदमधिकरणमित्याक्षेपसमाधानाभ्यामाह—**ननु चेति** । पूर्वपक्षं गृह्णाति—**तत्र प्राप्तं तावदिति**। विभागसंयोगोत्पादौ हि तूत्क्रान्त्यादीनां फलं नच सर्वगतस्य तौ स्तः; सर्वत्र नित्यप्राप्तस्य वा सर्वात्मकस्य वा तदसंभवादिति ॥ १९ ॥ उत्क्रमणं हि मरणे निरूढम् । तच्चाचलतोऽपि तत्र सतो देहस्वाम्यनिवृत्त्योपपद्यते, नतु गत्यागती । तयोश्चलने निरूढयोः कर्तृस्थभावयोर्व्यापिन्यसंभवादिति मध्यमं परिमाणं महत्त्वं शरीरस्येव । तच्चार्हतपरीक्षायां प्रत्युक्तम् । गत्यागती च परममहति न संभवतोऽतः पारिशेष्यादणुत्वसिद्धिः । गत्यागतिभ्यां च प्रादेशिकत्वसिद्धौ मरणमपि देहादपसर्पणमेव जीवस्य, नतु तत्र सतः स्वाम्यनिवृत्तिमात्रमिति सिद्धमित्याह—**सत्योश्च गत्यागत्योरिति**। इतश्च देहादपसर्पणमेव जीवस्य मरणमित्याह—**देहप्रदेशानामिति** । तस्माद्गत्यागत्यपेक्षोत्क्रान्तिरपि सापादानाणुत्वसाधनमित्यर्थः । न केवलमपादानश्रुतेः, तच्छरीरप्रदेशगन्तव्यत्वश्रुतेरप्येवमेवेत्याह—**स एतास्तेजो**-

### वेदान्तकल्पतरुः ।

अणुरिति श्रुतेरिति चोत्तरसूत्रादाकृष्याणुर्जीव उत्क्रान्त्यादीनां श्रुतेरिति योजना ॥ १९ ॥ **तच्चाचलतोऽपीति।** देहस्वामित्वं हि देहाभिमान इत्युक्तमध्यासे । तदेव च जीवनं तन्निवृत्तिश्च मरणमित्यचलतोऽपि तत्संभव इत्यर्थः । कर्तृस्थो भवतीति भावः । फलं संयोगविभागाख्यं ययोस्ते गत्यागती कर्तृस्थभावे तयोरित्यर्थः । तयोर्व्यापिन्यसंभवादित्येतन्निगमयति—**गत्यागती चेति । अपि सापादानेति** । अपिश्चार्थे सापादाना च सतीति हेत्वन्तरसमुच्चयः । अनेन सौत्रश्चशब्दो व्याख्यातः । **न केवलमिति** । चक्षुष्टो वा मूर्ध्नो वा निष्क्रामतीति शरीरैकदेशानामुत्क्रान्तावुपादान-

### कल्पतरुपरिमलः ।

**अचलतोऽपीति** । यद्यप्यवयवव्युत्पत्तौ उत्क्रमणमूर्ध्वदेशाक्रमणरूपं चलत एव भवति; तथापि जीववैभववादिनो जीवस्य तदसंभवादुत्क्रमणशब्दस्य देहाभिमाननिवृत्तिमात्रं मरणमिति तत्र रूढिं मन्यन्ते, तदाशयानुरोधेनाचलतोपि तत्संभव इत्युक्तम् । **सापादाना च सतीति**। उत्क्रान्तिर्देहादपसृप्तिरूपा साक्षादणुत्वसाधनमित्यत्र गत्यागतिश्रवणमिव विश्लेषावधिरूपापादानश्रवणमपि हेतुस्तत्समुच्चयार्थ इत्यर्थः । उत्क्रान्तिरपीत्यपिशब्दस्य भिन्नक्रमतां विनोत्क्रान्त्यन्वयोपि घटते गत्यागतिवदुत्क्रान्तिरपि गत्यागतिशिरस्कत्वात्सापादानत्वाच्च देहादपसृप्तिरूपा सत्यणुत्वसाधनमिति **न केवलमुपादानश्रुतेरित्यादिटीकाग्रन्थं योजयन्नेव** तस्य तात्पर्यमाह—**चक्षुष इति** । केवलमुत्क्रान्तिरणुत्वसाधनमित्येतदपादानश्रुतेरेव न भवति, किंतु हृदयादीनां गन्तव्यत्वश्रुतेरपि । यद्यपि हृदयगमनं ततो जागरिते पुनः चक्षुरादिस्थानगमनं

'शुक्रमादाय पुनरैति स्थानम्' ( बृ० ४।३।११ ) इति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः । तस्मादप्यस्याणुत्वसिद्धिः ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अथापि स्यान्नाणुरयमात्मा । कस्मात्? अतच्छ्रुतेः । अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' ( बृ० ४।४।२२ ), 'आकाशवत्सर्वगतश्च नित्यः', 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१।१ ) इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेत्, नैष दोषः; । कस्मात् ? इतराधिकारात् । परस्य ह्यात्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः; परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्, विरजः पर आकाशादित्येवंविधाच्च परस्यैवात्मनस्तत्र तत्र विशेषाधिकारात् । ननु 'योऽयं विज्ञानमयः प्राणेषु' ( बृ० ४।४।२२ ) इति शारीर एव महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते । शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववद्द्रष्टव्यः । तस्मात्प्राज्ञविषयत्वात्परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्चाणुरात्मा यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते—'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश' ( मुण्ड० ३।१।९ ) इति । प्राणसंबन्धाच्च जीव एवायमणुरभिहित इति गम्यते । तथोन्मानमपि जीवस्याणिमानं गमयति'—'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' ( श्वे० ५।८ ) इति । 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' ( श्वे० ५।८ ) इति चोन्मानान्तरम् ॥ २२ ॥ नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते । दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरिति, अत उत्तरं पठति—

### भामती ।

**मात्रा इति** ॥ २० ॥ यत उत्क्रान्त्यादिश्रुतिभिर्जीवानामणुत्वं प्रसाधितं ततो व्यापकात्परमात्मनस्तेषां तद्विकारतया भेदः । तथाच महत्त्वानन्त्यादिश्रुतयः परमात्मविषया न जीवविषया इत्यविरोध इत्यर्थः । यदि जीवा अणवस्ततो 'योऽयं विज्ञानमयः प्राणेषु' इति कथं शारीरो महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते ? इति चोदयति—**नन्विति** । परिहरति—**शास्त्रदृष्ट्या** पारमार्थिकदृष्ट्या निर्देशो वामदेववत् । यथाहि गर्भस्थ एव वामदेवो जीवः परमार्थदृष्ट्यात्मनो ब्रह्मत्वं प्रतिपेदे, एवं विकाराणां प्रकृतेर्वास्तवादभेदात्तत्परिमाणत्वव्यपदेश इत्यर्थः ॥२१॥ स्वशब्दं विभजते—**साक्षादेवेति** । उन्मानं विभजते—**तथोन्मानमपीति** । उद्धृत्य मानमुन्मानं बालाग्रादुद्धृतः शततमो भागस्तस्मादपि शततमादुद्धृतः शततमो भाग इति तदिदमुन्मानम् । आराग्रादुद्धृतं मानमाराग्रमिति ॥२२॥ सूत्रान्तरमवतारयितुं चोदयति—**नन्वणुत्वे**

### वेदान्तकल्पतरुः ।

त्वश्रुतेरेव केवलमुत्क्रान्तिरणुत्वसाधनमित्येतदेव न, किंतु शरीरप्रदेशानां हृदयादीनां गन्तव्यत्वश्रुतेरप्युत्क्रान्तिरणुत्वसाधनमित्यर्थः । स आत्मा एतास्तेजस उपलक्षितभूतमात्रा भूतकार्याणीन्द्रियाण्याददानो हृदयं पुण्डरीकमन्ववक्रामति अवक्रामन् लिङ्गशरीरमनु तदुपाधिरवक्रामति प्राप्नोति उत्क्रान्तौ । सुषुप्तः पुनः शुक्रं शोचिष्मन्तमिन्द्रियसमुदायमादाय जागरितस्थानमेति आगच्छतीति श्रुतेरर्थः ॥१९॥२०॥ इतराधिकारादिति सूत्रमयुक्तम्; जीवपरयोरभेदादित्याशङ्क्याह—**यत उत्क्रान्त्यादीति** ॥ २१ ॥ **उद्धृत्येति** । अवयविनोऽवयवमुद्धृत्य विभज्यमानमुन्मानमित्यर्थः । बालाग्रदृष्टान्तेऽपि व्याचष्टे—**आराग्रादिति** । अत्र मात्रेत्यध्याहारः । आराग्रस्य तोत्राग्रप्रोतलोहाग्रस्य मात्रेव मात्रा परिमाणं यस्य सोऽवरो

### कल्पतरुपरिमलः ।

च साक्षादणुत्वसाधनम्; तथापि तथाभूतयोरेव पूर्वोदाहृतगत्यागत्योरुत्क्रान्तेर्देहादपसृप्तिरूपत्वगमकतया तस्य अणुत्वसाधनतासिद्धाविवानयोरपि तत्सिद्धावुपयोगो युज्यत इति तात्पर्यम् । **सुषुप्तः पुनरिति** । सुषुप्तशब्दस्योत्तरवाक्येऽन्वयः । ननु व्याप्नोति सुषुप्त इति पूर्ववाक्ये । स एव तास्तेजोमात्रा इत्यादिवाक्यं मुमूर्षुविषयं शुक्रमादाय पुनरेति स्थानं हिरण्मयः एकहंस इति मन्त्रः सुषुप्तविषय इति भेदात् ॥ १९ ॥ २० ॥ २१ ॥ **अत्र मात्रेत्यध्याहार इति** । आराग्रमिति

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथा हि हरिचन्दनबिन्दुः शरीरैकदेशसंबद्धोऽपि सन्सकलदेहव्यापिनमाह्लादं करोत्येव-मात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति । त्वक्संबन्धनाच्चास्य सकल-शरीरगता वेदना न विरुध्यते । त्वगात्मनोर्हि संबन्धः कृत्स्नायां त्वचि वर्तते, त्वक्च कृत्स्नश-रीरव्यापिनीति ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह यदुक्तमविरोधश्चन्दनवदिति, तदयुक्तम्; दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात् । सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति, प्रत्यक्षं तु चन्दनस्यावस्थितिवैशेष्यमेकदेश-स्थत्वं सकलदेहाह्लादनं च । आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं नैकदेशवर्तित्वम् । अनुमेयं तु तदिति यदप्युच्येत । नचात्रानुमानं संभवति । किमात्मनः सकलशरीरगता वे-दना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः ? किंवा विभोर्नभस इवाहोस्विच्चन्दनबिन्दोरिवा-णोरेकदेशस्थस्येति संशयानतिवृत्तेरिति। अत्रोच्यते—नायं दोषः; कस्मात् ? अभ्युपगमात् । अभ्युपगम्यते ह्यात्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यम् । कथमिति ? उच्यते; हृदि ह्येष आत्मा पठ्यते वेदान्तेषु। 'हृदि ह्येष आत्मा' ( प्रश्न० ३।६ ), 'स वा एष आत्मा हृदि' (छा० ८।३।३), 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' ( बृ० ४।३।७ ) इत्याद्युपदेशेभ्यः। तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्याद्युक्तमेवैतदविरोधश्चन्दन-वदिति ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वाऽणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते । यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभाऽपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति तद्वत् । स्यात्कदाचिच्चन्दनस्य सावयवत्वात्सूक्ष्मावयवविसर्पणेनापि सकलदेह आह्ला-

---

### भामती ।

**सतीति** । अणुरात्मा न शरीरव्यापीति न सर्वाङ्गीणशैत्योपलब्धिः स्यादित्यर्थः । त्वक्संयुक्तो हि जीवः, त्वक्च सकलशरीरव्यापिनीति त्वग्व्याप्यात्मसंबन्धः सकलशैत्योपलब्धौ समर्थः ॥ २३ ॥ चन्दनबिन्दोः प्रत्यक्षतोऽल्पीयस्त्वं बुद्ध्वा युक्ता कल्पना भवति, यस्य तु संदिग्धमणुत्वं सर्वाङ्गीणं च कार्यमुपलभ्यते तस्य व्यापित्वमौत्सर्गिकमपहाय नेयं कल्पनाऽवकाशं लभत इति शङ्कार्थः । नच हरिचन्दनबिन्दुदृष्टान्तेनाणुत्वानुमानं जीवस्य, प्रतिदृष्टान्तसंभवेनानैकान्ति-कत्वादित्याह—**नचात्रानुमानमिति** । शङ्कामपाकरोति—**अत्रोच्यत इति** । यद्यपि पूर्वोक्ताभिः श्रुतिभिरणुत्वं सिद्धमात्मनः; तथापि वैभवाच्छ्रुत्यन्तरमुपन्यस्तम् ॥ २४ ॥ ये तु सावयवत्वाच्चन्दनबिन्दोरणुसंचारेण देहव्याप्तिरुप-पद्यते नत्वात्मनोऽनवयवस्याणुसंचारः संभवी, तस्माद्वैषम्यमिति मन्यन्ते, तान् प्रतीदमुच्यते—**गुणाद्वा लोक-वदिति** । तद्विभजते—**चैतन्य इति** । यद्यप्यणुर्जीवः; तथापि तद्गुणश्चैतन्यं सकलदेहव्यापि। यथा प्रदीपस्याल्पत्वेऽपि

### वेदान्तकल्पतरुः।

जीवो दृष्ट इति श्रुतेरर्थः ॥ २२ ॥ २३ ॥ एकदेशस्थस्य व्यापि कार्यं न संभवतीति न व्याप्तिश्चन्दनान्दौ व्यभिचारादित्युक्ते दृष्टान्तः प्रत्यक्ष इत्युक्त्या न परिहार इत्याशङ्क्याह—**यस्य त्विति** । शरीरैकदेशमात्रवृत्तित्वेनाप्रमितत्वे सति शरीरव्या-पिकार्यकारित्वात्त्वग्वदात्मनः सकलशरीरव्यापित्वमनुमीयत इत्यर्थः । **प्रतिदृष्टान्तसंभवेनेति** । उक्तमार्गेण प्रतिदृष्टान्त-संभवेनेत्यर्थः । **अनैकान्तिकत्वादिति** । चन्दनदृष्टान्तस्यानिर्णायकत्वादित्यर्थः । शरीरैकदेशमात्रवृत्तित्वेनाप्रमितत्वं हेतुविशेषणमसिद्धम्; हृदि ह्येष आत्मेत्यादिश्रुतिभिरेकदेशस्थत्वस्य प्रमितत्वादिति परिहरतीत्याह—**शङ्कामिमामिति** । **ननू**त्क्रान्त्यादिश्रुतिभिरेवात्मनोऽणुत्वैकदेशस्थत्वयोः सिद्धौ किमितीह श्रुत्यन्तरमुदाह्रियते ? अत आह—**यद्यपीति** ।

### कल्पतरुपरिमलः ।

प्रथमान्ते आराग्रमिति मात्रेत्यंशाध्याहार इत्यर्थः ॥ २२ ॥ २३ ॥ **उक्तमार्गेणेति** । त्वगिन्द्रियोदाहरणेनेत्यर्थः ॥

दयितृत्वं न त्वणोर्जीवस्यावयवाः सन्ति यैरयं सकलदेहं विप्रसर्पेदित्याशङ्क्य गुणाद्वा लोकवदित्युक्तम् ॥ २५ ॥ कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत ? नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते । प्रदीपप्रभावद्भवेदिति चेत्, न; तस्या अपि द्रव्यत्वाभ्युपगमात् । निबिडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवं तु तेजोद्रव्यमेव प्रभेति, अत उत्तरं पठति—

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति; अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु कुसुमगन्धोपलब्धेः, एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति । अतश्चानैकान्तिकमेतद्गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिरिति; गुणस्यैव सतो गन्धस्याश्रयविश्लेषदर्शनात् । गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेत्, न; यस्मान्मूलद्रव्याद्विश्लेषस्तस्य क्षयप्रसङ्गात् । अक्षीयमाणमपि तत्पूर्वावस्थातो गम्यते । अन्यथा तत्पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत । स्यादेतत्—गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात्सन्नपि विशेषो नोपलक्ष्यते । सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेत्, न; अतीन्द्रियत्वात्परमाणूनां स्फुटगन्धोपलब्धेश्च नागकेसरादिषु । नच लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति । गन्ध एवाघ्रात इति तु लौकिकाः प्रतियन्ति । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत्, न; प्रत्यक्षत्वादनुमानाप्रवृत्तेः । तस्माद्यद्यथा लोके दृष्टं तत्तथैवानुमन्तव्यं निरूपकैर्नान्यथा । नहि रसो गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते ॥ २६ ॥

## तथाच दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' (छा० ८।८।१) इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' ( काषी० ३।६ ) इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' ( बृ० २।१।१७ ) इति च कर्तुः शारीरात्पृथग्विज्ञानस्योपदेश एतमेवाभिप्रायमुपोद्बलयति तस्मादणुरात्मेति ॥ २८ ॥ एवं प्राप्ते ब्रूमः—

---

### भामती ।

तद्गुणः प्रभा सकलगृहोदरव्यापिनीति ॥ २५ ॥ एतदपि शङ्काद्वारेण दूषयित्वा दृष्टान्तान्तरमाह—**व्यतिरेको गन्धवत् । अक्षीयमाणमपि तदिति** । क्षयस्यातिसूक्ष्मतयानुपलभ्यमानक्षयमिति शङ्कते—**स्यादेतदिति** । विश्लिष्टानामल्पत्वादित्युपलक्षणं, द्रव्यान्तरपरमाणूनामनुप्रवेशादित्यपि द्रष्टव्यम् । विश्लेषानुप्रवेशाभ्यां च सन्नपि विश्लेषः सूक्ष्मत्वान्नोपलक्ष्यते इति । निराकरोति—न । कुतः? **अतीन्द्रियत्वादिति** । परमाणूनां परमसूक्ष्मत्वात्तद्गतरूपादिवद्गन्धोऽपि नोपलभ्येत । उपलभ्यमानो वा सूक्ष्म उपलभ्येत न स्थूल इत्यर्थः । शेषमतिरोहितार्थम् ॥ २६ ॥ २७ ॥

### वेदान्तकल्पतरुः ।

२४ ॥ २५ ॥ सर्वथा यदक्षीयमाणं, तर्हि गुरुत्वादिहानानुपपत्तिरित्याशङ्क्य व्याचष्टे—**क्षयस्येति** ॥ २६ ॥ २७ ॥ २८ ॥ **ननु** यदि त्वक्कण्टकसंयोगस्य यावत्त्वग्व्यापित्वात्तज्जं दुःखं सर्वाङ्गीणं स्यात्, तर्हि तव मतेऽपि जीवस्य सकलशरीरव्यापित्वात्त्वग्जीवकण्टकयोगस्यापि यावज्जीवव्यापित्वात्कण्टकतोजनितवेदनायाः सकलशरीरव्यापितोपलम्भप्रसङ्गस्तत्राह—**महदल्पयोरिति** । कण्टकावच्छेदकल्पिते जीवैकदेशे जीवकण्टकसंयोगो वर्तते न सर्वत्रेत्यर्थः । **अवरुध्यते** अवरुणद्धि । तर्हि ममापि त्वक्कण्टकसंयोगस्त्वक्प्रदेशे वर्ततेति साम्यमिति च न शङ्क्यम्; तथा सति त्वग्जीवसंयोगस्यापि जीवा-

### कल्पतरुपरिमलः ।

२४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ **तथा सति त्वग्जीवसंयोगस्यापीति** । महदल्पयोः संयोगोऽल्पानुरोधीति सिद्धान्तिनैवाणोर्जीवस्य सकलशरीरव्यापिनीं वेदनां समर्थयमानेन पूर्वपक्षिणा वक्तुं न शक्यमिति भावः । **ननु** जीवमनःसंयोगस्य मनोऽनुरोधित्वेऽपि मनःसंयुक्तायास्त्वचः सर्वशरीरव्यापित्वात्सर्वाङ्गीणशैत्योपलब्धिरित्ययुक्तं जीवमनः-

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्त्यणुरात्मेति । उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम् । परमेव चेद्ब्रह्म जीवस्तस्माद्याव-त्परं ब्रह्म तावानेव जीवो भवितुमर्हति । परस्य च ब्रह्मणो विभुत्वमाम्नातम् । तस्माद्विभुर्जीवः । तथाच 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' ( बृ० ४।४।२२ ) इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति । नचाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते । त्वक्संबन्धात्स्यादिति चेत्, न; कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत । त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते त्वक्च कृत्स्नशरीरव्यापिनीति । पादतल एव तु कण्टकनुन्नो वेदनां प्रति लभते । नचाणोर्गुणव्याप्तिरुपपद्यते; गुणस्य गुणिदेशत्वात् । गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत । प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम् । गन्धोऽपि गुणत्वाभ्युपगमात्साश्रय एव संचरितुमर्हति । अन्यथा गुणत्वहानिप्रसङ्गात् । तथाचोक्तं द्वैपायनेन—'उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः । पृथिव्यामेव तं विद्या-

### भामती ।

निगदव्याख्यातमस्य भाष्यम् ॥२८॥ **कण्टकतोदनेऽपीति** । महदल्पयोः संयोगोऽल्पमवरुध्यते न महान्तं, न जातु घटकरकादिसंयोगा नभसो नभो व्यश्नुवतेऽपित्वल्पानेव घटकरकादीन्, इतरथा यत्र नभस्तत्र सर्वत्र घटकरकाद्युपलम्भ इति तेऽपि नभःपरिमाणा प्रसज्येरन्निति । नचाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते । यद्यप्यन्तःकरणमणु; तथापि तस्य त्वचा संबद्धत्वात्त्वचश्च समस्तशरीरव्यापित्वादेकदेशेऽप्यधिष्ठिता त्वगधिष्ठितैवेति शरीरव्यापी जीवः शक्नोति सर्वाङ्गीणं शैत्यमनुभवितुं त्वगिन्द्रियेण गङ्गायाम् । अणुस्तु जीवो यत्रास्ति तस्मिन्नेव शरीरप्रदेशे तदनुभवेन्न सर्वाङ्गीणम्; तस्यासर्वाङ्गीणत्वात् । कण्टकतोदनस्य तु प्रादेशिकतया न सर्वाङ्गीणोपलब्धिरिति वैषम्यम् । **गुणत्वमेव हीति** । इदमेव हि गुणानां गुणत्वं यद्द्रव्यदेशत्वम् । अतएव हि हेमन्ते विषक्तावयवाप्यद्द्रव्यगतेऽतिसान्द्रे शीतस्पर्शेऽनुभूयमानेप्यनुद्भूतं रूपं नोपलभ्यते यथा, तथा मृगमदादीनां गन्धवाहविप्रकीर्णसूक्ष्मावयवानामतिसान्द्रे गन्धेऽनुभूयमाने रूपस्पर्शौ नानुभूयेते, तत्कस्य हेतोः? अनुद्भूतत्वात्तयोर्गन्धस्य चोद्भूतत्वादिति । नच द्रव्यस्य प्रक्षयप्रसङ्गः; द्रव्यान्तरावयवपूरणात् । अतएव कालपरिवासवशादस्य हतगन्धितोपलभ्यते । अपिच चैतन्यं नाम न गुणो जीवस्य

### वेदान्तकल्पतरुः ।

नुरोधित्वापत्तौ त्वगुद्वारा सकलशरीरव्यापिवेदनोपलम्भाऽलाभेन वृद्धिमिष्टवतो मूलमपि नष्टमिति कष्टतरप्रसरादित्याह—**न चाणोरिति** । चस्त्वर्थः । न त्वित्यर्थः । अनन्तरदोषान्निस्तारेऽपि प्रस्तुतं न निर्वहेदित्यर्थः । **ननु** यदि महदल्पयोः संयोगोऽल्पानुरोधी, तर्हि जीवमनःसंयोगोऽपि मनोऽनुरुन्धीतेति न तद्द्वारा सर्वाङ्गीणशैत्योपलम्भस्तत्राह—**यद्यपीति** । **ननु** त्वङ्मनःसंबन्धोपित्वदेकदेशवृत्तिः, सत्यं मनोऽधिष्ठितत्वं त्वचोऽपेक्षितं दंडवत्, व्यापिवेदनोपलब्धौ तु त्वगात्मसंयोगो हेतुरित्याह—**एकदेशेऽप्यधिष्ठितेति** । नचाणोर्जीवस्येत्येतद्विवृणोति—**अणुस्त्विति** । **तदिति** । दुःखादीत्यर्थः । **तस्येति** । जीवस्येत्यर्थः । महदल्पयोरित्यादिग्रन्थेनोक्तमर्थं निगमयति—**कण्टकतोदनस्य त्विति** । यदुक्तं गन्धवदवयवानां परमसूक्ष्मत्वात्तद्गतरूपादिवद् गन्धोपि नोपलभ्येतोपलभ्यमानो वा सूक्ष्म उपलभ्येत, स्थूलस्तूपलभ्यमानो द्रव्यं मुक्त्वैव गच्छति गन्ध इति न द्रव्यदेशत्वनियम इति, तत्राह—**अतएव हीति** । यत एव द्रव्यदेशत्वनियमो यत एव चैकार्थसमवेतगुणानां मध्ये कस्यचिदुद्भवः कस्यचिच्च नेति संभवति अतएवेत्यर्थः । **विषक्ताः** विप्रकीर्णाः अवयवा

### कल्पतरुपरिमलः ।

संयोगवन् मनोनुरोधित्वादित्याशङ्कते—**ननु त्वङ्मनःसंबन्धोऽपीति** । **दण्डवदिति** । यथैकदेशे गृहीते दण्डः पुरुषेणाधिष्ठीयते तथेत्यर्थः । **ननु—जीवमनःसंयोगो ज्ञानासमवायिकारणं, तस्य प्रादेशिकत्वे कथं ज्ञानं** व्यापीति शङ्कावारणार्थम्—**असमवायिकारणस्य प्रादेशिकत्वेऽपि कार्यमप्रादेशिकं तन्तुसंयोगस्य तन्त्वेकदेशस्थत्वेऽपि पटस्य तन्तुव्यापित्वादिति** । केषुचिद्ग्रन्थेष्वधिकः पाठः । **यद्यप्यन्तःकरणमण्वि**त्यादिटीकावाक्यं **तद्व्याख्यानं च**—मनोऽणु तस्यात्मना संयोगश्च ज्ञानाद्यसमवायिकारणमिति नैयायिकपक्षमाश्रित्य, यदि सिद्धान्तानुसारेण पाञ्चभौतिकं मनः प्रदीपप्रभावत्संकोचविकासशीलं तत्संयोगश्च नासमवायिकारणं, तदा नैवात्र परिहरणीया शङ्कास्ति । **न चाणोरिति** । नचाणोर्जीवस्येति पूर्ववाक्योक्तमर्थं विवृणोतीत्यर्थः । **नन्वत एव** हीत्यादिग्रन्थो

दपो वायुं च संश्रितम्' इति । यदि च चैतन्यं जीवस्य समस्तं शरीरं व्याप्नुयान्नाणुर्जीवः स्यात् । चैतन्यमेव ह्यस्य स्वरूपमग्नेरिवौष्ण्यप्रकाशौ । नात्र गुणगुणिविभागो विद्यत इति । शरीरपरिमाणत्वं च प्रत्याख्यातम् । परिशेषाद्विभुर्जीवः । कथं तर्ह्यणुत्वादिव्यपदेशः ? इत्यत आह—'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति । तस्या बुद्धेर्गुणास्तद्गुणा इच्छा द्वेषः सुखं दुःखमित्येवमादयस्तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे संभवति स तद्गुणसारस्तस्य भावस्तद्गुणसारत्वम् । नहि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति । बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनः । तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वतः । तथाच—'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' ( श्वे० ५।९ ) इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह । तच्चैवमेव समञ्जसं स्याद्यद्यौपचारिकमणुत्वं जीवस्य भवेत्पारमार्थिकं चानन्त्यम् । नह्युभयं मुख्यमवकल्पेत । नचानन्त्यमौपचारिकमिति शक्यं विज्ञातुम्; सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात् । तथेतरस्मिन्नप्युन्माने 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' ( श्वे० ६।८ ) इति च बुद्धिगुणसंबन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मना । एषोऽणुरात्मा चेतसा वेदितव्यः' ( मुण्ड० ३।१।९ ) इत्यत्रापि न जीवस्याणुपरिमाणत्वं शिष्यते; परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात्, जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः । तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा द्रष्टव्यम् । तथा 'प्रज्ञया शरीरं समारुह्य' ( कौषी० ३।६ ) इत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यम् । व्यपदेशमात्रं वा, शिलापुत्रकस्य शरीरमित्यादिवत् । नह्यत्र गुणगुणिविभागोऽपि विद्यत इत्युक्तम् । हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात् । तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति—'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति' ( प्रश्न ६।३ ) 'स प्राणमसृजत' ( प्र० ६।४ ) इति । उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते । न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः—'अणीयान्व्रीहेर्वा यवाद्वा' ( छा० ३।१४।३ ) 'मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः' ( छा० ३।१४।२ ) इत्येवं-

### भामती ।

गुणिनः, किंतु स्वभावः । नच स्वभावस्य व्यापित्वे भावस्याव्यापित्वं, तत्त्वप्रच्युतेरित्याह—**यदि च चैतन्यमिति** । तदेवं श्रुतिस्मृतीतिहासपुराणसिद्धे जीवस्याविकारितया परमात्मत्वे, तथा श्रुत्यादितः परममहत्त्वे च, या नामाणुत्वश्रुतयस्तास्तदनुरोधेन बुद्धिगुणसारतयाव्याख्येया इत्याह—**तद्गुणसारत्वादिति** । तद्व्याचष्टे—**तस्या बुद्धेरिति** । आत्मना स्वसंबन्धिन्या बुद्धेरुपस्थापितत्वात्तदा परामर्शः । नहि शुद्धबुद्धमुक्तस्वभावस्यात्मनस्तत्त्वं संसारिभिरनुभूयते, अपितु योऽयं मिथ्याज्ञानद्वेषाद्यनुषक्तः स एव प्रत्यात्ममनुभवगोचरः । नच ब्रह्मस्वभावस्य जीवात्मनः कूटस्थनित्यस्य

### वेदान्तकल्पतरुः ।

यस्य तदाप्यद्रव्यं तथा । **अतिसान्द्रे**ऽतिघने । न चात्रापि विप्रतिपत्तव्यम्; कुङ्कुममृगमदादिवच्छीतस्पर्शोपलम्भसमये जलावयविनो देशान्तरस्थस्यानुपलम्भात् । एतदपि विप्रतिपन्नमिति न वाच्यम्; सर्वत्र सूक्ष्महिमकणप्रसरस्य कालविशेषादुपपत्तेरित्यभिप्रेत्योक्तं—**हेमन्ते इति** । दार्ष्टान्तिकमाह—**तथेति** । **कालपरिवासः** कालात्ययः; पर्युषितमिति यातयामे प्रयोगात् । बुद्धेरप्रकृतत्वात् सूत्रगततच्छब्देन परामर्शायोगमाशङ्क्याह—**आत्मनेति** । **ननु** तद्गुणसारत्वादिति हेतुरसिद्धः; स्वत एवाणुरात्मेति वदन्तं पूर्वपक्षिणं प्रत्यात्मनि बुद्धिगुणाध्यारोपासिद्धेरहमिति चात्मनो विवेकग्रहणात्तस्मिन्नारोपायोगाच्चेति अत आह—**नहीति** । अहमिति प्रतिभासेऽप्यनवच्छिन्नानन्दस्वभावस्यात्मतत्त्वस्याऽननुभवादारोपसंभव इत्यर्थः । **ननु** किमवच्छिन्नस्वभावत्वेन स्वत एव जीव इच्छादिमानस्तु, तत्राह—**नच ब्रह्मस्वभावस्येति** । तत्त्वम-

### कल्पतरुपरिमलः ।

न युक्तः; समीपे स्थितस्यैव गन्धवद्द्रव्यस्येव शीतद्रव्यस्यापि सन्निहितदेशस्थितस्य व्यापको गुण उपलभ्यत इति वक्तुम् शक्यत्वादित्याशङ्क्याह—**नचात्रापि विप्रतिपत्तव्यमिति** । **तत्प्रायणविषयमित्याहेति** । प्रायण-

प्रकारस्तद्वत् ॥ २९ ॥ स्यादेतत्—यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति अत उत्तरं पठति—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया । कस्मात्? यावदात्मभावित्वाद्बुद्धिसंयोगस्य । यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति । यावदेव चायंबुद्ध्युपाधिसंबन्धस्तावज्जीवस्य जीवत्वं संसारित्वं च । परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिसंबन्धपरिकल्पितस्वरूपव्यतिरेकेणास्ति । नहि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते । 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता'( बृ० ३।७।२३ ), 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' ( छा० ६।८।७ ), 'तत्त्वमसि' ( छा० ६।१।६ ), 'अहं ब्रह्मास्मि' ( बृ० १।४।७ ) इत्यादिश्रुतिशतेभ्यः । कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह । तथाहि शास्त्रं दर्शयति—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव'( बृ० ४।३।७ ) इत्यादि । तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति; प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इति विज्ञानमयस्य मनआदिभिः सह पाठात् । बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते । यथा लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते तद्वत् । 'स समानः सन्नुभौ लोकावनुसंचरति' इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति । केन समानस्तयैव बुद्ध्येति गम्यते संनिधानात् । तच्च दर्शयति—'ध्यायतीव लेलायतीव' ( बृ० ४।३।७ ) इति । एतदुक्तं भवति—नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां बुद्धौ चलतीवेति । अपिच मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसंबन्धः । नच मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मात्मतानवबोधस्तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति । दर्शयति च—'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ( श्वेता० ३।८ ) इति ॥ ३० ॥ ननु—सुषुप्तप्रलययोर्न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम्; 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' ( छा० ६।८।१ ) इति वचनात् , कृत्स्नविकारप्रलयाभ्युपगमाच्च , तत्कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येति? अत्रोच्यते—

### भामती ।

स्वत इच्छाद्वेषाद्यनुषङ्गसंभव इति बुद्धिगुणानां तेषां तदभेदाध्यासेन तद्धर्मत्वाध्यासः, उदशरावाध्यस्तस्येव चन्द्रमसो बिम्बस्य तोयकम्पे कम्पवत्त्वाध्यास इत्युपपादितमध्यासभाष्ये । तथाच बुद्ध्याद्युपाधिकृतमस्य जीवत्वमिति बुद्धेरन्तःकरणस्याणुतया सोऽप्यणुव्यपदेशभाग्भवति, नभ इव करकोपहितं करकपरिमाणम् । तथाचोत्क्रान्त्यादीनामुपपत्तिरिति । निगदव्याख्यातमितरत् । प्रायणेऽसत्त्वमसंसारित्वं वा ततश्च कृतविप्रणाशाकृताभ्यागमप्रसङ्गः ॥२९॥ यावत्संसार्यात्मभावित्वादित्यर्थः । **समानः सन्निति** । बुद्ध्या समानः तद्गुणसारत्वादिति । **अपिच मिथ्याज्ञानेति** । न केवलं यावत्संसार्यात्मभावित्वमागमतः, उपपत्तितश्चेत्यर्थः । **आदित्यवर्णमिति** । प्रकाशरूपमित्यर्थः । **तमस इति** । अविद्याया इत्यर्थः । तमेव विदित्वा साक्षात्कृत्य मृत्युमविद्यामत्येतीति योजना ॥ ३० ॥ अनुशयबीजं पूर्वपक्षी प्रकटयति—**ननु-सुषुप्तप्रलययोरिति** । सता परमात्मना । अनुशयबीजपरिहारः । अत्रोच्यते—**पुंस्त्वादिवत्त्वस्य सतोऽभिव्य-**

### वेदान्तकल्पतरुः ।

सीत्युपदेशाद् ब्रह्मैव जीव इत्यर्थः । बुद्धिगुणानां तेषां तस्या बुद्धेरात्मना सहाऽभेदाध्यासेन तद्धर्मवत्त्वाध्यासः तद्धर्मवानात्मेत्येवं प्रतिभास इत्यर्थः । एवं हेतुं समर्थ्य हेतुमन्तं परिमाणारोपमाह—**तथाचेति** । भाष्ये बुद्धिवियोगे सत्यात्मनोऽसत्त्वमुक्तं, तत्प्रायणविषयमित्याह—**प्रायणे इति** । बुद्धिवियोगे चेदात्मनो मरणं, तर्ह्यसत्त्वम्; अथ वियोगेनावस्थानं, तर्ह्यसंसारित्वं; तथाच को दोषस्तत्राह—**ततश्चेति** ॥ २९ ॥ ३० ॥ ३१ ॥ अनुभूषाशुश्रूषे, साश्रये, गुण-

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति, नाविद्यमानान्युत्पद्यन्ते; षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात्,—एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति । एवं ह्येतद्युज्यते । नह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति; अतिप्रसङ्गात् । दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्—'सति संपद्य न विदुः सति संपद्यामह इति', 'त इह व्याघ्रो वा सिंहो वा' ( छा० ६।९।३ ) इत्यादिना । तस्मात्सिद्धमेतद्यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥

तच्चात्मन उपाधिभूतमन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते । कचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते निश्चयादिवृत्तिकं बुद्धिरिति । तच्चैवंभूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम् । अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात् । आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां संनिधाने सति नित्यमेवोपलब्धिः प्रसज्येत । अथ सत्यपि हेतुसमवधाने फलाभावस्ततो नित्यमेवानुपलब्धिः प्रसज्येत । नचैवं दृश्यते । अथवान्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः । नचात्मनः शक्तिप्रतिबन्धः संभवति; अविक्रियत्वात् । नापीन्द्रियस्य; नहि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत । तस्माद्यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । तथाच श्रुतिः—'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' ( बृ० १।५।३ ) इति, 'मनसा ह्येव पश्यति मनसा शृणोति' ( बृ० १।५।३ ) इति । कामादयश्चास्य वृत्तय इति दर्शयति 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' ( बृ० १।५।३ ) इति । तस्माद्युक्तमेतत् 'तद्गुणसारत्वात्तद्व्यपदेशः' इति ॥ ३२ ॥ इति त्रयोदशमुत्क्रान्त्यधिकरणम् ॥

---

### भामती ।

क्रियोगात् । निगदव्याख्यातमस्य भाष्यम् ॥ ३१ ॥ स्यादेतत्—अन्तःकरणेऽपि सति तस्य नित्यसंनिधानात् कस्मान्नित्योपलब्ध्यनुपलब्धी न प्रसज्येते? अथादृष्टविपाककादाचित्कत्वात् सामर्थ्यप्रतिबन्धाप्रतिबन्धाभ्यान्तःकरणस्य नायं प्रसङ्गः । तावसत्येवान्तःकरणे आत्मनो वेन्द्रियाणां वा स्तां, तत्किमन्तर्गडुनान्तःकरणेनेति चोदयति—**अथवान्यतरस्यात्मन इति** । अथवेति सिद्धान्तं निवर्तयति । सिद्धान्ती ब्रूते—**नचात्मन इति** । अवधानं खल्वबुभूषा शुश्रूषा वा । नचैते आत्मनो धर्मौ; तस्याविक्रियत्वात् । नचेन्द्रियाणाम्; एकैकेन्द्रियव्यतिरेकेऽप्यन्धादीनां दर्शनात् । नच ते आन्तरत्वेनानुभूयमाने बाह्ये संभवतः । तस्मादस्ति तदान्तरं किमपि । यस्य चैते तदन्तःकरणम् । तदिदमुक्तम्—**यस्यावधानेति** । अत्रैवार्थे श्रुतिं दर्शयति—**तथाचेति** ॥ ३२ ॥ **इति त्रयोदशमुत्क्रान्त्यधिकरणम् ॥**

### वेदान्तकल्पतरुः ।

त्वाद्, रूपवद्, यस्तयोराश्रयस्तन्मन इत्युक्तेऽर्थान्तरतामाशङ्क्याह—**नचैते इति** । स्तां तर्हि घटादेरनुबुभूषाशुश्रूषे, नेत्याह—**नच ते इति** । बाह्ये इति सप्तमी ॥ ३२ ॥ **इति त्रयोदशमुत्क्रान्त्यधिकरणम् ॥**[1]

### कल्पतरुपरिमलः ।

ग्रहणं सुषुप्तेरप्युपलक्षणम्; तथैवाग्रिमभाष्यदर्शनात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ **इति त्रयोदशं उत्क्रान्त्यधिकरणम् ॥**

---

१ तत्र सूत्राणि १४—उत्क्रान्तिगत्यागतीनाम् १९ स्वात्मना चोत्तरयोः २० नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २१ स्वशब्दोन्मानाभ्यां च २२ अविरोधश्चन्दनवत् २३ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २४ गुणाद्वा लोकवत् २५ व्यतिरेको गन्धवत् २६ तथाच दर्शयति २७ पृथगुपदेशात् २८ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् २९ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ३० पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ३१ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ३२ ॥

( १४ अधिकरणम् ) **कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते । कर्ता चायं जीवः स्यात् । कस्मात् ? शास्त्रार्थवत्त्वात् । एवंच 'यजेत'; 'जुहुयात्', 'दद्यात्' इत्येवंविधं विधिशास्त्रमर्थवद्भवति । अन्यथा तदनर्थकं स्यात् । तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति । नचासति कर्तृत्वे तदुपपद्येत । तथेदमपि शास्त्रमर्थवद्भवति 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' ( प्र० ५।९ ) इति ॥ ३३ ॥

**विहारोपदेशात् ॥ ३४ ॥**

इतश्च जीवस्य कर्तृत्वं, यज्जीवप्रक्रियायां संध्ये स्थाने विहारमुपदिशति—'स ईयतेऽमृतो यत्र कामम्' ( बृ० ४।३।१२ ) इति, 'स्वे शरीरे यथाकामं परिवर्तते' ( बृ० २।१।१८ ) इति च ॥ ३४॥

**उपादानात् ॥ ३५ ॥**

इतश्चास्य कर्तृत्वं, यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति—'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' ( बृ० २।१।१७ ) इति, 'प्राणान्गृहीत्वा' ( बृ० २।१।१८) इति च ॥ ३५ ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥**

इतश्च जीवस्य कर्तृत्वं, यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्र-

---

भामती ।

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

**ननु** 'तद्गुणसारत्वात्' इत्यनेनैव जीवस्य कर्तृत्वं भोक्तृत्वं च लब्धमेवेति तदुत्पादनमनर्थकमित्यत आह—**तद्गुणसारत्वाधिकारेणेति** । तस्यैवैष प्रपञ्चो ये पश्यन्त्यात्मा भोक्तैव न कर्तेति तन्निराकरणार्थः । 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्याह स भगवान् जैमिनिः । **प्रयोक्तरि** अनुष्ठातरि । कर्तरीति यावत् । **शास्त्रफलं** स्वर्गादि । कुतः? प्रयोक्तृफलसाधनतालक्षणत्वात् शास्त्रस्य विधेः । कर्त्रपेक्षितोपायता हि विधिः । बुद्धिश्चेत्कर्त्री भोक्ता चात्मा, ततो यस्यापेक्षितोपायो भोक्तुर्न तस्य कर्तृत्वं, यस्य कर्तृत्वं नच तस्यापेक्षितोपाय इति, किं केन संगतमिति शास्त्रस्यानर्थकत्वमविद्यमानाभिधेयत्वं तथा चाप्रयोजनकत्वं स्यात् । यथाच तद्गुणसारतयास्याऽवस्तुसदपि भोक्तृत्वं सांव्यवहारिकमेवं कर्तृत्वमपि सांव्यवहारिकं नतु भाविकम् । अविद्यावद्विषयत्वं च शास्त्रस्योपपादितमध्यासभाष्य इति सर्वमवदातम् ॥ ३३ ॥ **विहारः** संचारः क्रिया, तत्र स्वातन्त्र्यं नाकर्तुः संभवति । तस्मादपि कर्ता जीवः ॥ ३४ ॥ तदेतेषां प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं ग्रहणशक्तिमादायोपादायेत्युपादाने स्वातन्त्र्यं नाकर्तुः संभवति ॥ ३५ ॥

वेदान्तकल्पतरुः ।

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

अत्राऽसङ्गो ह्ययं पुरुष इत्यादिश्रुतीनां विध्यादिश्रुतीनां चात्मकर्तृत्वाऽकर्तृत्ववादिनीनां बन्धमोक्षावस्थाविषयत्वेन विरोधः परिह्रियते । क्रियाश्रयत्वे नित्यत्वप्रसङ्गादकर्ताऽऽत्मेति पूर्वपक्षमाह—ये सांख्याः **पश्यन्तीति** । सिद्धान्तमाह—**शास्त्रेति** । अधिकरणं त्वध्यासभाष्येऽनुक्रान्तं कर्तृभोक्त्रोर्भेदे शास्त्रानर्थक्यात् भोक्तुरात्मन एव कर्तृत्वमित्यभिधाय क्रियाश्रयस्यानित्यत्वं परिहरति—**यथाचेति** । चित्स्वभावत्वं चेद् भोक्तृत्वं, मुक्तावपि स्यात्, क्रियावेशात्मकं

कल्पतरुपरिमलः ।

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

**बन्धमोक्षावस्थाविषयत्वेनेति** । बन्धावस्थायामाध्यासिकं कर्तृत्वं मोक्षावस्थायां स्वाभाविकमकर्तृत्वमित्येवं विषयभेदेनेत्यर्थः । यद्यपि जीवस्याल्पपरिमाणवत्कर्तृत्वमपि बुद्ध्युपाधिकमिति वक्तुं शक्यम्; तथापि शास्त्रप्रतिपन्नं कर्तृत्वं किमर्थमस्वाभाविकमङ्गीकरणीयं ? बुद्धिरेव तत्स्वाभाविको धर्मः जीवस्त्वकर्तेति विषयभेदेन विरोधपरिहारोऽस्तु । **अथवा**—जीवस्यैव संसारदशायां फलमुखकर्तृत्वं न मुक्तिदशायामवस्थाभेदेन तत्परिहारोऽस्त्विति शङ्काद्वयनिराकरणार्थोऽधिकरणद्वयारम्भः । **क्रियाश्रयत्व इति** । क्रियावेशो हि विक्रियमाणस्य भवति, विक्रियमाणस्य चानित्यत्वं नियतमिति भावः । ये इत्यस्य विशेष्यमध्याहरति—**सांख्या इति** । **अनित्यत्वं परिहरतीति** । कर्तृत्वस्याध्यासिकत्वेन टीकायामनित्यत्वपरिहारः कृतः । स्वयं सांख्यान् प्रति भोक्तृत्वप्रतिबन्द्या परिहारान्तरमाह—**चित्स्वभावत्वं चेदिति** ॥३३॥३४॥

म्—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' ( तै० २।५।१ ) इति । ननु विज्ञानशब्दो बुद्धौ समधिगतः । कथमनेन जीवस्य कर्तृत्वं सूच्यत इति ? नेत्युच्यते । जीवस्यैवैष निर्देशो न बुद्धेः न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्यात् । विज्ञानेनेत्येवं निरदेक्ष्यत् । तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ० २।१।१७ ) इति । इह तु 'विज्ञानं यज्ञं तनुते' ( तै० २।५।१ )इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः ॥ ३६ ॥ अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्स स्वतन्त्रः सन्प्रियं हितं चैवात्मनो नियमेन संपादयेन्न विपरीतम् । विपरीतमपि तु संपादयन्नुपलभ्यते । नच स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इति, अत उत्तरं पठति—

## उपलब्धिवदनियमः ॥ ३७ ॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपलभत एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति । उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेत्, न; विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम् । उपलब्धौ त्वनन्यापेक्षत्वमात्मनश्चैतन्ययोगात् । अपिचार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति; देशकालनिमित्तविशेषापेक्षत्वात् । नच सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते । भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम् । सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते ॥ ३७ ॥

### भामती ।

अभ्युच्चयमात्रमेतन्न त्वस्यगुपपत्तिः । विज्ञानं कर्तृ यज्ञं तनुते । सर्वत्र हि बुद्धिः करणरूपा करणत्वेनैव व्यपदिश्यते न कर्तृत्वेन, इह तु कर्तृत्वेन, तस्या व्यपदेशे विपर्ययः स्यात् । तस्मादात्मैव विज्ञानमिति व्यपदिष्टः । तेन कर्तेति ॥३६॥ सूत्रान्तरमवतारयितुं चोदयति—अत्राह यदीति । प्रज्ञावान् स्वतन्त्र इष्टमेवात्मनः संपादयेन्नानिष्टम् । अनिष्टसंपत्तिरप्यस्योपलभ्यते । तस्मान्न स्वतन्त्रस्तथाच न कर्ता । तल्लक्षणत्वात्तस्येत्यर्थः । अस्योत्तरम्—उपलब्धिवदनियमः । करणादीनि कारकान्तराणि कर्ता प्रयुङ्क्ते, नत्वयं कारकान्तरैः प्रयुज्यत इत्येतावन्मात्रमस्य स्वातन्त्र्यं नतु कार्यक्रियायां न कारकान्तराण्यपेक्षत इति । ईदृशं हि स्वातन्त्र्यं नेश्वरस्याप्यत्रभवतोऽस्तीत्युत्सन्नसंकथः कर्ता स्यात् । तथाचायमदृष्टपरिपाकवशादिष्टमभिप्रेप्सुस्तत्साधनविभ्रमेणानिष्टोपायं व्यापारयन्ननिष्टं प्राप्नुयादित्यनियमः कर्तृत्वं चेति न विरोधः। विषयप्रकल्पनमात्रप्रयोजनत्वादिति । नित्यचैतन्यस्वभावस्य खल्वात्मन इन्द्रियादीनि करणानि स्वविषयमुपनयन्ति, तेन विषयावच्छिन्नमेव चैतन्यं वृत्तिरिति विज्ञानमिति चाख्यायते, तत्र चास्यास्ति स्वातन्त्र्यमित्यर्थः ॥३७॥ पूर्वं कारकविभक्तिविपर्यय उक्तः । संप्रति कारकशक्तिविपर्यय इत्यपुनरुक्तम् । अविपर्ययाय तु करणान्तरकल्पनायां नाम्नि-

### वेदान्तकल्पतरुः ।

चेत्, कर्तृत्वमपि तद्वदविरुद्धमित्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ अभ्युच्चयमात्रमिति । विज्ञानशब्देन कोशरूपबुद्धेरभिधानादात्मकर्तृत्वासाधकत्वादित्यर्थः ॥ ३६ ॥ भाष्ये स्वरूपभूतोपलब्धावनपेक्षत्वात् स्वातन्त्र्यम्, आत्मनः विषयविकल्पने त्वन्यापेक्षेत्युक्तमिति प्रतिभाति, तथाच प्रकृतासंगतिः । कर्तृत्वे हि कार्येऽन्यापेक्षायामपि स्वातन्त्र्यमुपपादनीयमतो व्याचष्टे—नित्यचैतन्येति । उपलब्धौ विषयावच्छिन्नचैतन्येऽन्योपलब्ध्यनपेक्षत्वमात्मनः चैतन्यात्मकत्वादुपलब्धिहेतूनाम् इन्द्रियादीनामपि विषयप्रकल्पनेऽवच्छिन्नोपलब्ध्युत्पत्तावुपकरणमात्रत्वं न स्वातन्त्र्यव्याघात इति भाष्यं योज्यम् ॥ ३७ ॥ ननु कर्त्र्या बुद्धेर्न करणशक्तिः कल्प्यते, सा तु कर्त्र्यैव किंत्वन्यदस्ति तस्याः साधारणं कारणमतः कथं शक्तिविपर्ययस्तत्राह—अविपर्ययाय त्विति । तर्हि सैवास्माकमात्मा स्यादिति नाम्नि विप्रतिपत्तिर्न त्वर्थे इत्यर्थः ॥ ३८ ॥ पातञ्जले धारणादीनि लक्षितानि । देशबन्धश्चित्तस्य धारणा ( पतञ्जलियोग. पा. २ सू. १ ) । नाभिचक्रहृदय-

### कल्पतरुपरिमलः ।

॥ ३५ ॥ कोशरूपबुद्धेरभिधानादिति । बुद्धिरूपविज्ञानमयकोशपर्याये श्रुतस्य विज्ञानं यज्ञं तनुतइत्यस्य नात्मकर्तृत्वसाधकतेत्यर्थः ॥ ३६ ॥ अन्यापेक्षायामपि स्वातन्त्र्यमुपपादनीयमिति । न त्वन्यानपेक्षोपपादनीयेति भावः । प्रकृतसङ्गतेऽर्थे भाष्यं योजयति—उपलब्धाविति । नित्यचैतन्यस्वरूपायां विषयोपलब्धौ तावन्नेन्द्रियाद्यपेक्षा, नापि तदपेक्षितजन्योपलब्ध्यन्तरे; उपलब्धेरुपलब्ध्यन्तरानपेक्षत्वात् , किंतु नित्योपलब्धावेव विषयोपरक्तरूपायाम् । नच तावता

## शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति । यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्ययः स्यात् । करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत । सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम्; अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात् । अहं गच्छाम्यहमागच्छाम्यहं भुञ्जेऽहं पिबामीति च । तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत्कल्पयितव्यम् । शक्तोऽपि हि सन्कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यत इति । ततश्च संज्ञामात्रे विवादः स्यान्न वस्तुभेदः कश्चित्; करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( बृ०२।४।५ ), 'ओमित्येवं ध्यायथ आत्मानम्' ( मुण्ड० २।२।६ ) इत्येवंलक्षणः, सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत । तस्मादप्यस्य कर्तृत्वसिद्धिः ॥ ३९ ॥ इति चतुर्दशं कर्त्रधिकरणम् ॥

## (१५ अधिकरणम् ) यथा च तक्षोभयथा ॥ ४० ॥

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितं, तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते । तत्रैतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वमपवाद-

---

### भामती ।

विसंवाद इति ॥ ३८ ॥ समाधिरिति संयममुपलक्षयति । धारणाध्यानसमाधयो हि संयमपदवेदनीयाः । यथाहुः—'त्रयमेकत्र संयमः' इति । अत्र श्रोतव्यो मन्तव्य इति धारणोपदेशः । निदिध्यासितव्य इति ध्यानोपदेशः । द्रष्टव्य इति समाधेरुपदेशः । यथाहुः—'तदेव ध्यानमर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति । सोऽयमिह कर्तात्मा समाधावुपदिश्यमान आत्मनः कर्तृत्वमवैतीति सूत्रार्थः ॥ ३९ ॥ इति चतुर्दशं कर्त्रधिकरणम् ॥

#### यथा च तक्षोभयथा ॥ ४० ॥

अवान्तरसंगतिमाह—एवं तावदिति । विमृशति—तत्पुनरिति । पूर्वपक्षं गृह्णाति—तत्रेति । शास्त्रार्थवत्त्वादयो हि हेतव आत्मनः कर्तृत्वमापादयन्ति । नच स्वाभाविके कर्तृत्वे संभवत्यसत्यपवादे तदौपाधिकं युक्तम्, अतिप्रसङ्गात् ।

### वेदान्तकल्पतरुः ।

पुण्डरीकादिदेशेष्वन्यस्मिन्वा विषये चित्तस्य वृत्तिमात्रेण बन्धो धारणेत्यर्थः । तत्र प्रत्ययैकतानता ध्यानम् । ( पातञ्जलयोगसू. पा. २ सू. ३ ) तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्य एकरूपस्रोतःकरणं ध्यानमिति । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव भवतीति समाधिः । ( योगसू. पा. २ सू. ३ ) ध्यानमेव ध्येयाकारनिर्भासं ध्येयस्वभावावेशात् प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति तदा समाधिरित्युच्यते । त्रयमेकत्र संयमः ( पातञ्जलयोगसू. पा. २ सू. ४ ) एकविषयाणि त्रीणि साधनानि संयम उच्यते इति । तत्र कथं भाष्यकारेण श्रवणादीनां समाधित्वमुच्यतेऽत आह—संयममुपलक्षयतीति । वाक्ययुक्तिभ्यां ब्रह्मणि चित्तनिवेशात्मकत्वाच्छ्रवणमननयोर्धारणात्वं दर्शनस्य साक्षात्कारस्य वृत्तिरूपस्य ब्रह्मण्यावेशात्स्वरूपशून्यमिव भवतीति समाधित्वम्[1] ॥ ३९ ॥ इति चतुर्दशं कर्त्रधिकरणम् ॥

#### यथा च तक्षोभयथा ॥ ४० ॥

ननु यद्युपाधिमन्तरेण कर्ताऽऽत्मा, तर्हि मुक्तावपि कर्म कुर्यात्, इतरथा कथं कर्तृत्वमस्य स्वभावः स्यात्? तथाच न

### कल्पतरुपरिमलः ।

स्वातन्त्र्यव्याघातः; सर्वत्र कर्तुरुपकरणापेक्षादर्शनादित्यस्मिन्नर्थे भाष्यं योज्यमित्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ इति चतुर्दशं कर्त्रधिकरणम् ॥

---

अत्र सूत्राणि ७ ॥ कर्ताशास्त्रार्थवत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥ उपादानात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां नचेन्निर्देशविपर्ययः ॥ ३६ ॥ उपलब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥ ३९ ॥ इति ॥

**हेत्वभावादिति, एवं प्राप्ते ब्रूमः । न स्वाभाविकं कर्तृत्वमात्मनः संभवति; अनिर्मोक्षप्रसङ्गात् । कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः संभवति; अग्नेरिवौष्ण्यात् । नच कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः; कर्तृत्वस्य दुःखरूपत्वात् । ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात्पुरुषार्थः सेत्स्यति । तत्परिहारश्च निमित्तपरिहारात् । यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावस्तद्वत्, न; निमित्तानामपि शक्तिलक्षणेन संबन्धेन संबद्धानामत्यन्तपरिहारासंभवात् । ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति, न; साधनायत्तस्यानित्यत्वात् । अपिच नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता । तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वेऽवकल्पेत । तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम् । तथाच श्रुतिः—'ध्यायतीव लेलायतीव' ( बृ० ४।३।७ ) इति । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' ( कठ० ३।४ ) इति चोपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति । नहि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते; 'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ४।३।२३ ) इत्यादिश्रवणात् । पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत, पर-**

## भामती ।

नच मुक्त्यभावप्रसङ्गोऽस्यापवादकः, यथा ज्ञानस्वभावो ज्ञेयाभावेऽपि नाज्ञो भवत्येवं कर्तृस्वभावोऽपि क्रियावेशाभावेऽपि नाकर्ता । तस्मात् स्वाभाविकमेवास्य कर्तृत्वमिति प्राप्तेऽभिधीयते—नित्यशुद्धबुद्धमुक्तस्वभावं हि ब्रह्म भूयोभूयः श्रूयते । तदस्य बुद्धत्वमसत्यपि बोद्धव्ये युक्तं, वह्नेरिवासत्यपि दाह्ये दग्धृत्वम् ; तच्छीलस्य तस्यावगमात् । कर्तृत्वं त्वस्य क्रियावेशादवगन्तव्यम् । नच नित्योदासीनस्य कूटस्थस्य नित्यस्यासकृच्छ्रुतस्य संभवति; तस्य च कदाचिदप्यसंसर्गे कथं तच्छक्तियोगः? निर्विषयायाः शक्तेरसंभवात् । तथाच यदि तत्सिध्यर्थं तद्विषयः क्रियावेशोऽभ्युपेयते, तथा सति तत्स्वभावस्य स्वभावोच्छेदाभावाद्भावनाशप्रसङ्गः । नच मुक्तस्यास्ति क्रियायोग इति । क्रियाया दुःखत्वान्नविगलितसकलदुःखपरमानन्दावस्था मोक्षः स्यादित्याशयवानाह—**न स्वाभाविकं कर्तृत्वमात्मन इति** । अभिप्रायमबुद्ध्वा चोदयति—**ननु स्थितायामपीति** । परिहरति —**न; निमित्तानामपीति** । शक्तशक्याश्रया शक्तिः स्वसत्तयाऽवश्यं शक्यमाक्षिपति । तथाच तयाक्षिप्तं शक्यं सदैव स्यादिति भावः । चोदयति—**ननु मोक्षसाधनविधानादिति** । परिहरति—**न; साधनायत्तस्येति** । अस्माकं तु न मोक्षः साध्यः, अपितु ब्रह्मस्वरूपं तच्च नित्यमिति । उक्तमभिप्रायमाविष्करोति—**अपिच नित्यशुद्ध इति** । चोदयति—**पर एव तर्हि संसारीति** । **अयमर्थः**—परश्चेत्संसारी

## वेदान्तकल्पतरुः ।

मुक्तिः स्यादित्याशङ्क्याह—**नच मुक्त्यभावेति** । जीवस्य ब्रह्मात्मत्वं हि मोक्षो ब्रह्म च ज्ञानं, सत्यं ज्ञानमिति श्रुतेः । ततश्च ज्ञानात्मत्वमसत्यपि विषये मोक्षे स्यात्, कर्तृत्वं तु ब्रह्मस्वभाव इति न श्रुतम् । अतः क्रियावेशादेव लोकवद् द्रष्टव्यम् । क्रियाभ्युपगमे च मुक्तिव्याघात इति प्रतिबन्दीं परिहरति—**नित्यशुद्धेत्यादिना** । नित्योदासीनत्वे हेतुः—**कूटस्थेति** । तत्र प्रमाणम्—**असकृदिति** । **संभवति** । क्रियावेश इत्यनुषङ्गः । **ननु** क्रियावेशाभावेऽपि तद्विषयशक्तिमत्त्वं स्यात्, तदेव च कर्तृत्वमित्याशङ्क्याह—**तस्य चेति** । **तत्सिद्ध्यर्थमिति** । क्रियायोगविषयशक्तिसिद्ध्यर्थम् । **तद्विषयस्तस्याः** शक्तेर्विषयः । उपाधिमन्तरेण क्रियायोगश्चेत्तर्हि स स्वरूपं स्यात् स्वाभाविको वा धर्मः अग्नेरिवौष्ण्यं तन्नाशे आत्मनाशः स्यादित्याह—**तथा सतीति** । स क्रियावेशः स्वभावो यस्य स आत्मा तथा स्वभाविनि सति स्वभावोऽपि सन्नेव; भेदाभावादित्यर्थः । **भावनाशप्रसङ्गः** स्वभाविन आत्मनो नाशप्रसङ्गः । **ननु** मुक्तावपि क्रियायोगोऽस्तु, कथमात्मनाशापत्तिरत आह—**नच मुक्तस्येति** । मुक्तस्य नास्ति क्रियायोग इति यस्मादतो भावनाशप्रसङ्गः इति योजना । मुक्तस्य क्रियायोगाभावे हेतुः—**क्रियाया इति** । फलितमाह—**न विगलितेति** । परमार्थशक्तिवादिनां मते दूषणमाह—**शक्तशक्याश्रयेति** । शक्तमाश्रयत्वेनाश्रयते शक्यं विषयत्वेनेत्यर्थः । शक्तग्रहणं दृष्टान्तार्थम् । **उक्तमभिप्रायमिति** । ज्ञानं ब्रह्मस्वभावो न कर्तृत्वमितीममित्यर्थः । तक्षणि विवक्षितविवेचनेन साम्यमुक्त्वा सर्वथैव समं

## कल्पतरुपरिमलः ।

## यथा च तथोभयथा ॥ ४० ॥

**स आत्मा तथेति** । स आत्मा तत्स्वभावस्येति शब्देनोक्त इत्यर्थः । **ननु** स्वभावोच्छेदात्स्वभाविनो भावस्य नाशप्रसङ्ग इति धर्मनाशेन धर्मिनाशापादनमयुक्तमित्याशङ्क्य स्वभावसिद्धधर्मनाशे धर्मिनाशः स्यादित्युपपादयति—**स्वभाविनि सतीति** । **परमार्थेति** । पारमार्थिका शक्तिर्मोक्षेऽप्यनुवर्तेत इति वादिनां मत इत्यर्थः ।

स्यादन्यश्चेच्चितिमाञ्जीवः कर्ता बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्, नः अविद्याप्रत्युपस्थापितत्वात्कर्तृत्वभोक्तृत्वयोः । तथाच शास्त्रम्—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' ( बृ० २।४।१४ ) इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० २।४।१४ ) इति । तथा स्वप्नजागरितयोरात्मन उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति—'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' ( बृ० ४।३।२१ ) इत्यारभ्य 'एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' ( बृ० ४।३।३२ ) इत्युपसंहारात् । तदेतदाहाचार्यः—'यथाच तक्षोभयथा' इति । त्वर्थे चायं चः पठितः । नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति । यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसंघातोऽकर्ता सुखी भवति संप्रसादावस्थायाम् । तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृतः सुखी भवति । तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः । तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति । स्वशरीरेण त्वकर्तैव । एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति स्वात्मना त्वकर्तैवेति, नत्वात्मनस्तक्ष्ण इवावयवाः सन्ति, यैर्हस्तादिभिरिव वास्यादीनि तक्षा मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा । यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति, तन्न; विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति । नच स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम । तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते । कर्ता विज्ञानात्मा पुरुष इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृ-

## भामती ।

तस्याविद्याप्रविलये मुक्तौ सर्वे मुच्येरन्नविशेषात् । ततश्च सर्वसंसारोच्छेदप्रसङ्गः । परस्मादन्यश्चेत्स बुद्ध्यादिसंघात एवेति, तस्यैव तर्हि मुक्तिसंसारौ नात्मन इति । परिहरति—न । अविद्याप्रत्युपस्थापितत्वादिति । न परमात्मनो मुक्तिसंसारौ; तस्य नित्यमुक्तत्वात् । नापि बुद्ध्यादिसंघातस्य; तस्याचेतनत्वात्, अपि त्वविद्योपस्थापितानां बुद्ध्यादिसंघातानां भेदात्तत्तद्बुद्ध्यादिसंघातभेदोपधान आत्मैकोऽपि भिन्न इव विशुद्धोऽप्यविशुद्ध इव ततश्चैकबुद्ध्यादिसंघातापगमे तत्र मुक्त इवेतरत्र बद्ध इव यथा मणिकृपाणाद्युपधानभेदादेकमेव मुखं नानेव दीर्घमिव वृत्तमिव श्याममिवावदातमिव अन्यतमोपधानविगमे तत्र मुक्तमिवान्यत्रोपहितमिवेति नैकमुक्तौ सर्वमुक्तिप्रसङ्गः । तस्मान्न परमात्मनो मोक्षसंसारौ, नापि बुद्ध्यादिसंघातस्य, किंतु बुद्ध्याद्युपहितस्यात्मस्वभावस्य जीवभावमापन्नस्येति परमार्थः । अत्रैवान्वयव्यतिरेकौ श्रुतिभिरादर्शयति—**तथाचेति** । इतश्चौपाधिकं यदुपाध्यभिभवोद्भवाभ्यामस्याभिभवोद्भवौ दर्शयति श्रुतिरित्याह—**तथा स्वप्नजागरितयोरिति** । अत्रैवार्थे सूत्रं व्याचष्टे—**तदेतदाहेति** । **संप्रसादः** सुषुप्तिः । **स्यादेतत्**—तक्ष्णः पाण्यादयः सन्ति तैरयं वास्यादीन् व्यापारयन् भवतु दुःखी, परमात्मा त्वनवयवः केन मनःप्रभृतीनि व्यापारयेदिति वैषम्यं तक्ष्णो दृष्टान्तेनेत्यत आह—**तक्षदृष्टान्तश्चेति** । यथा स्वशरीरेणोदासीनस्तक्षा सुखी, वास्यादीनि तु करणानि व्यापारयन् दुःखी तथा स्वात्मनात्मोदासीनः सुखी, मनःप्रभृतीनि तु कारणादीनि व्यापारयन् दुःखीत्येतावतास्य साम्यं न तु सर्वथा । यथात्मा च जीवोऽवयवान्तरानपेक्षः स्वशरीरं व्यापारयत्येवं मनःप्रभृतीनि तु कारणान्तराणि व्यापारयतीति प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तिः । पूर्वपक्षहेतूननुभाष्य दूषयति—**यत्तूक्तमिति** । यत्परं हि शास्त्रं स एव शास्त्रार्थः । कर्त्रपेक्षितोपायभावनापरं तन्न कर्तृस्वरूपपरम् । तेन यथा लोकसिद्धं कर्तारमपेक्ष्य स्वविषये प्रवर्तमानं न पुंसः स्वाभाविकं कर्तृत्वमवगमयितुमुत्सहते, तस्मात्तत्त्वमसीत्याद्युपदेशविरोधादविद्याकृतं

## वेदान्तकल्पतरुः ।

दृष्टान्तमाह—**यथाऽऽत्मा चेति** । यः प्रेरयति स पाण्यादिभिरेव प्रेरयतीति नियोगेन नियमेन पर्यनुयोगो नियोगपर्यनुयोगः तस्यानुपपत्तिरित्यर्थः । अपेक्षितोपायो भावना पुरुषप्रवृत्तिस्तत्परमित्यर्थः । **नन्व**तत्परादपि देवताविग्रहादिवत् कर्ता प्रतीयतामत आह—**तस्मादिति** । यद्यन्याधीनस्यापि स्वातन्त्र्यवाचिनी कर्तृविभक्तिस्तर्ह्यतिप्रसङ्ग इत्याह—

त्वमनुवदिष्यति । एतेन विहारोपादाने परिहृते; तयोरप्यनुवादरूपत्वात् । ननु—संध्ये स्थाने प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परिवर्तत इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृत्वमावहति । तथोपादानेऽपि 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यात्मनः कर्तृत्वं गमयत इति । अत्रोच्यते—न तावत्संध्ये स्थानेऽत्यन्तमात्मनः करणविरमणमस्ति; 'स धीः स्वप्नो भूत्वेमं लोकमतिक्रामति' ( बृ० ४।३।७ ) इति तत्रापि धीसंबन्धश्रवणात् । तथाच स्मरन्ति—'इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम्' इति । कामादयश्च मनसो वृत्तयः' इति श्रुतिः । ताश्च स्वप्ने दृश्यन्ते । तस्मात्समना एव स्वप्ने विहरति । विहारोऽपि च तत्रत्यो वासनामय एव नतु पारमार्थिकोऽस्ति । तथाच श्रुतिरिवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति—'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' ( बृ०४।३।१३ ) इति । लौकिका अपि तथैव स्वप्नं कथयन्ति । आरुक्षमिव गिरिशृङ्गमद्राक्षमिव वनराजिमिति । तथोपादानेऽपि यद्यपि करणेषु कर्मकरणविभक्तिनिर्देशः; तथापि तत्संपृक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम् । केवले कर्तृत्वासंभवस्य दर्शितत्वात् । भवति च लोकेऽनेकप्रकारा विवक्षा योधा युध्यन्ते योधै राजा युध्यत इति । अपिचास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते, न स्वातन्त्र्यं कस्यचिदबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्, यस्त्वयं व्यपदेशो दर्शितः 'विज्ञानं यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं प्रापयति; विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्, मनोनन्तरं पाठाच्च, 'तस्य श्रद्धैव शिरः' ( तै० २।४ ) इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात्, श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः, 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते' ( तै० २।५।१ ) इति च वाक्यशेषात्, ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात्, 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात् । नच बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति; सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात् । उपलब्ध्यपेक्षं त्वेषां करणानां करणत्वं, साचात्मनः । नच तस्यामप्यस्य कर्तृत्वमस्ति; नित्योपलब्धिस्वरूपत्वात् । अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति; अहंकारस्याप्यु-

## भामती ।

तदवतिष्ठते । चोदयति—ननु संध्ये स्थान इति । औपाधिकं हि कर्तृत्वं नोपाध्यपगमे संभवतीति स्वाभाविकमेव युज्यत इत्यर्थः । अपिच यत्रापि करणमस्ति, तत्रापि केवलस्यात्मनः कर्तृत्वश्रवणात्स्वाभाविकमेव युक्तमित्याह—तथोपादानेऽपीति । तदेतत् परिहरति—न तावत्संध्य इति । उपाध्यपगमोऽसिद्धोऽन्तःकरणस्योपाधेः संध्येऽप्यवस्थानादित्यर्थः । अपिच स्वप्ने यादृशं ज्ञानं तादृशो विहारोऽपीत्याह—विहारोऽपि च तत्रेति । तथोपादानेऽपीति । यद्यपि कर्तृविभक्तिः केवले कर्तरि श्रूयते; तथापि कर्मकरणोपधानकृतमस्य कर्तृत्वं न शुद्धस्य, नहि परशुसहायश्छेत्ता केवलश्छेत्ता भवति । ननु यदि न केवलस्य कर्तृत्वमपि तु करणादिसहितस्यैव, तथा सति करणादिष्वपि कर्तृविभक्तिः स्यात् । नचैतदस्तीत्याह—भवति च लोक इति । करणादिष्वपि कर्तृविभक्तिः कदाचिदस्त्येव विवक्षावशादित्यर्थः । अपिचेयमुपादानश्रुतिः करणव्यापारोपरममात्रपरा, न स्वातन्त्र्यपरा, कर्तृविभक्तिस्तु भाक्ती; कूलं पिपतिषतीतिवदबुद्धिपूर्वकस्य करणव्यापारोपरमस्य दृष्टत्वादित्याह—अपिचास्मिन्नुपादान इति । यस्त्वयं व्यपदेश इति यत्तदुक्तमस्माभिरभ्युच्चयमात्रमेतदिति तदितः समुत्थितम् । सर्वकारकाणामेवेति । विक्लिद्यन्ति तण्डुला ज्वलन्ति काष्ठानि बिभर्ति स्थालीति हि स्वव्यापारे सर्वेषां कर्तृत्वं, तत्किं बुद्ध्यादीनां कर्तृत्वमेव न करणत्वमित्यत आह—उपलब्ध्यपेक्षं त्वेषां करणत्वम् । नन्वेवं सति तस्यामेवात्मनः स्वाभाविकं कर्तृत्वमस्त्वित्यत आह—नच तस्यां उपलब्धावप्यस्य स्वाभाविककर्तृत्वमस्ति, कस्मात् ? नित्योपलब्धिस्वरूपत्वात् आत्मनः । नहि नित्ये स्वभावे चास्ति भावस्य व्यापार इत्यर्थः । तदेवं नास्योपलब्धौ स्वाभाविकं कर्तृत्वमस्तीत्युक्तम् । नापि बुद्ध्यादेरुपलब्धिकर्तृत्वमात्मन्यध्यस्तं यथा तद्गतमध्यवसायादिकर्तृत्वमित्याह—अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भ-

## वेदान्तकल्पतरुः ।

ननु यदीति । भाष्ये कर्तृत्वमात्रस्यैवाहङ्कारोपाधिनाऽऽत्मन्यध्यस्तत्वनिषेधः प्रतिभाति, तथाचाध्यासभाष्येण विरोध

## कल्पतरुपरिमलः ।

भाष्ये कर्तृत्वमात्रस्येति । अहङ्कारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवतीति भाष्ये कर्तृत्वसामान्यस्याहङ्कारिकस्यात्मन्यध्यस्तत्वं

पलभ्यमानत्वात् । नचैवं सति करणान्तरकल्पनाप्रसङ्गः; बुद्धेः करणत्वाभ्युपगमात् । समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः; यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात् । तस्मात्कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम् ॥ ४० ॥ इति पञ्चदशं तक्षाधिकरणम् ॥

( १६ अधिकरणम् ) **परात्तु तच्छ्रुतेः ॥ ४१ ॥**

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितं, तत्किमनपेक्ष्येश्वरं भवत्याहोस्विदीश्वरापेक्षमिति भवति विचारणा । तत्र प्राप्तं तावन्नेश्वरमपेक्षते जीवः कर्तृत्व इति । कस्मात् ? अपेक्षाप्रयोजनाभावात् । अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति । तस्य किमीश्वरः करिष्यति ? नच लोके प्रसिद्धि-

भामती ।

**वितुमर्हति । कुतः ? अहंकारस्याप्युपलभ्यमानत्वात् ।** नहि शरीरादि यस्यां क्रियायां गम्यं तस्यामेव गन्तृ भवति । **एतदुक्तं भवति**—यदि बुद्धिरुपलब्धी भवेत्, ततस्तस्या उपलब्धृत्वमात्मन्यध्यवस्येत । नचैतदस्ति; तस्या जडत्वेनोपलभ्यमानतयोपलब्धिकर्तृत्वानुपपत्तेः । यदा चोपलब्धौ बुद्धेरकर्तृत्वं, तदा यदुक्तं बुद्धेरुपलब्धृत्वे करणान्तरं कल्पनीयं, तथाच नाममात्रे विसंवाद इति, तन्न भवतीत्याह—**नचैवं सति करणान्तरकल्पना;** बुद्धेरुपलब्धृत्वाभावात् । तत्किमिदानीमकरणं बुद्धिरुपलब्धावात्मा चानुपलब्धेत्यत आह—**बुद्धेः करणत्वाभ्युपगमात् । अयमभिसंधिः**—चैतन्यमुपलब्धिरात्मस्वभावो नित्य इति न तत्रात्मनः कर्तृत्वं, नापि बुद्धेः करणत्वं, किंतु चैतन्यमेव विषयावच्छिन्नं वृत्तिरिति चोपलब्धिरिति चाख्यायते । तस्य तु तत्तद्विषयावच्छेदे वृत्तौ बुद्ध्यादीनां करणत्वमात्मनश्च तदुपधानेनाहंकारपूर्वकं कर्तृत्वं युज्यत इति ॥ ४० ॥ **इति पञ्चदशं तक्षाधिकरणम् ॥**

**परात्तु तच्छ्रुतेः ॥ ४१ ॥**

यदेतज्जीवानामौपाधिकं कर्तृत्वं तत्प्रवर्तनालक्षणेषु रागादिषु सत्सु नेश्वरमपरं प्रवर्तकं कल्पयितुमर्हति; अतिप्रसङ्गात् । नचेश्वरो द्वेषपक्षपातरहितो जीवान् साध्वसाधुनि कर्मणि प्रवर्तयितुमर्हति; येन धर्माधर्मापेक्षया जगद्वैचित्र्य-

वेदान्तकल्पतरुः ।

इत्याशङ्क्य चैतन्यकर्तृत्वस्य तथाविधत्वेन निषेध इत्याह—**तदेवमिति ।** शरीरादि यथा स्वकर्मकक्रियायाः कर्तृ न भवत्येवं बुद्धिरपि स्वकर्मचैतन्ये न कर्त्रीत्यर्थः । बुद्धेः कर्त्र्या उपलब्धिः क्रिया यदि भवेदित्यर्थः । उत्तरमपि भाष्यं बुद्धेश्चैतन्यं प्रति कर्तृत्वे सत्यात्मत्वापत्तौ तन्निषेधार्थमित्याह—**यदा चेति । ननू**पलब्धेर्नित्यत्वात्तस्यां यदि न कर्त्री बुद्धिस्तर्हि न करणमपि स्यात्, तथाच बुद्धेरुपलब्धिकरणत्वप्रसिद्धिबाध इति शङ्कते—**तत्किमिदानीमिति ।** चैतन्यव्यञ्जकवृत्तौ बुद्धेः करणत्वं तदुपहितस्य चात्मनः कर्तृत्वम्, तथाच न प्रसिद्धिबाध इति परिहरति—**किंतु चैतन्यमेवेति** ॥ ४० ॥ **इति पञ्चदशं तक्षाधिकरणम् ॥**

**परात्तु तच्छ्रुतेः ॥ ४१ ॥**

एष ह्येवेत्यादिश्रुतीनां विधिश्रुत्यादिभिर्विरोधसंदेहे संगतिगर्भं पूर्वपक्षमाह—**यदेतदित्यादिना ।** ईश्वरस्य प्रवर्तकत्वयोग्यतामङ्गीकृत्य प्रवर्तकान्तरस्य सिद्धत्वाद्वैयर्थ्यमुक्तं, तत्र प्रवर्तकत्वमेवेश्वरस्यायुक्तम्; विषमं सृजतो रागादिमत्त्वप्रसङ्गात् । **ननु** कर्मापेक्षत्वाददोष इति, तत्राह—**न चेश्वर इति । ननु** नेश्वरो धर्मादितन्त्रः प्रवर्तयति, किंतु करुणयेति

कल्पतरुपरिमलः ।

निषिध्यत इति प्रतिभाति, नच तद्युक्तम्; आत्मन्याहङ्कारिककर्तृत्वाध्यासस्याध्यासभाष्ये समर्थितत्वादित्याशङ्क्य चैतन्यकर्तृत्वस्यैवात्मन्यध्यसनीयत्वेन निषेध इत्याहेत्यर्थः । **तथाविधत्वेनेति** स्थाने तथाविरुद्धत्वेनेति क्वचित्पाठः । तत्र तथा आत्मन्यध्यसनीयत्वेन निषेधः कर्मकर्तृभावस्य विरुद्धत्वादित्यर्थः । यदि बुद्धेरुपलब्धिर्भवेदिति ग्रन्थं व्याचष्टे—**बुद्धेः कर्त्र्या इति** ॥ ४० ॥ **इति पञ्चदशं तक्षाधिकरणम् ॥**

**परात्तु तच्छ्रुतेः ॥ ४१ ॥**

न चेश्वर इत्यादिटीकाग्रन्थेन रागादिरहितस्येश्वरस्य साध्वसाधुकर्मसु प्रवर्तकत्वमेवानुपपन्नमित्युक्त्यनन्तरसमुत्थितशङ्कान्तरनिराकरणार्थं येन धर्माधर्मापेक्षयेत्यादिवाक्यं मध्ये शङ्कान्तरं विना तदनन्वयादिति मत्वा शङ्कान्तरनिराकरणार्थत्वेन योजयति—**तत्र प्रवर्तकत्वमेव तस्यायुक्तमित्यादिना ।** अनेन नचेश्वरः सन् कर्मपरतन्त्र इति युक्तम्;

रस्ति कृष्यादिकासु क्रियास्वनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति । क्लेशात्मकेन च कर्तृत्वेन जन्तून्संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम् । ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' ( ब्र० २।१।३४ ) इत्युक्तम् । सत्यमुक्तम् सति त्वीश्वरस्य सापेक्षत्वसंभवे । सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोः, तयोश्च सद्भावः सति जीवस्य कर्तृत्वे । तदेव चेत्कर्तृत्वमीश्वरापेक्षं स्यात् किंविषयमीश्वरस्य सापेक्षत्वमुच्येत । अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत । तस्मात्स्वत एवास्य कर्तृत्वमिति । एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते—'परात्' इति । अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जिवस्याविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात्साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति । कुतः ? तच्छ्रुतेः । यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धम्; तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवसीयते । तथाहि श्रुतिर्भवति—'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' ( कौषी० ३।८ ) इति 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयका ॥ ४१ ॥ नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातामकृताभ्यागमश्च जीवस्येति, नेत्युच्यते—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

तुशब्दश्चोदितदोषव्यावर्तनार्थः । कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणस्तदपेक्ष एवैनमीश्वरः कारयति । ततश्चैते चोदिता दोषा न प्रसज्यन्ते । जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजेत्पर्जन्यवदीश्वरो निमित्तत्वमात्रेण । यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चासाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः । नह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते, नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते । ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते, नैष दोषः; परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः । कुर्वन्तं हि तमीश्वरः कारयति । अपिच पूर्वप्रयत्नमपेक्ष्येदानीं कारयति पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात्संसारस्येत्यनवद्यम् । कथं पुनरवगम्यते कृतप्रयत्ना-

---

### भामती ।

सुपपद्येत, स हि स्वतन्त्रः कारुणिको धर्म एव जन्तून् प्रवर्तयेन्नाधर्मे, ततश्च तत्प्रेरिता जन्तवः सर्वे धार्मिका एवेति सुखिन एव स्युर्न दुःखिनः । स्वतन्त्रास्तु रागादिप्रयुक्ताः प्रवर्तमाना धर्माधर्मप्रचयवन्तो वैचित्र्यमनुभवन्तीति युक्तम् । एवंच विधिनिषेधयोरर्थवत्त्वमितरथा तु सर्वथा जीवा अस्वतन्त्रा इतीश्वरेणैव प्रवर्त्यन्त इति कृतं विधिनिषेधाभ्याम् । नहि बलवदनिलसलिलौघनुद्यमानं प्रत्युपदेशोऽर्थवान् । तस्मात् 'एष ह्येव साधु कर्म कारयति' इत्यादयः श्रुतयः समस्तविधिनिषेधश्रुतिविरोधाल्लोकविरोधाच्चैश्वर्यप्रशंसापरतया नेया इति प्राप्तेऽभिधीयते—'एष ह्येव साधु कर्म कारयति' इत्यादयस्तावत् श्रुतयः सर्वव्यापारेषु जन्तूनामीश्वरतन्त्रतामाहुः । तदसति प्रतिबन्धके न प्रशंसापरतया व्याख्यातुमुचितम् । नच श्रुतिसिद्धस्य कल्पनीयता; येन प्रवर्तकेषु रागादिषु सत्सु तत्कल्पना विरुध्येत । नच—ईश्वरतन्त्रत्वे धर्म एव जन्तूनां प्रवृत्तेः सुखित्वमेव न वैचित्र्यमिति—युक्तम् ; यद्यप्ययमीश्वरो वीतरागस्तथापि पूर्वपूर्वजन्तुकर्मापेक्षया जन्तून् धर्माधर्मयोः प्रवर्तयन् न द्वेषपक्षपाताभ्यां विषमः नापि निर्घृणः । नच कर्मप्रचयस्यादिरस्त्यनादित्वात्संसारस्य । नच—ईश्वरतन्त्रस्य कृतं विधिनिषेधाभ्यामिति—सांप्रतम् ; नहीश्वरः प्रबलतरपवन इव जन्तून् प्रवर्तयत्यपितु तच्चैतन्यमनुरुध्यमानो रागाद्युपहारमुखेन । एवं चेष्टानिष्टप्राप्तिपरिहारार्थिनो विधिनिषेधावर्थवन्तौ भवतः । तदनेनाभिसंधिनोक्तम्—परायत्तेऽपि हि कर्तृत्वे करोत्येव जीव इति । तस्माद्विधिनिषेधशास्त्राविरोधाल्लोकस्य स्थूलदर्शित्वात् 'एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतेः । अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' ॥ इति स्मृतेश्चेश्वरतन्त्राणामेव जन्तूनां कर्तृत्वं, ननु

### वेदान्तकल्पतरुः ।

तत्राह—स हि स्वतन्त्र इति । अत्यन्तपराधीनं प्रति न विधिरित्यत्र दृष्टान्तमाह—नहि बलवदिति । श्वभ्रं

पेक्ष ईश्वर इति ? विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्याह । एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति । अन्यथा तदनर्थकं स्यात् । ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत । अत्यन्तपरतन्त्रत्वाज्जीवस्य । तथा विहितकारिणमप्यनर्थेन संसृजेत्प्रतिषिद्धकारिणमप्यर्थेन । ततश्च प्रामाण्यं वेदस्यास्तमियात् । ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं तथा देशकालनिमित्तानां पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति ॥ ४२ ॥ इति षोडशं परायत्ताधिकरणम् ॥

( १७ अधिकरणम् ) **अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥**

जीवेश्वरयोरुपकार्योपकारकभाव उक्तः । स च संबद्धयोरेव लोके दृष्टो यथा स्वामिभृत्ययोर्यथा वाग्निविस्फुलिङ्गयोः । ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात्किं स्वामिभृत्यवत्संबन्ध आहोस्विदग्निविस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति ।

## भामती ।

स्वतन्त्राणामिति सिद्धम् । ईश्वर एव विधिनिषेधयोः फलं तदीश्वरेण तत्प्रतिपादितधर्माधर्मनिरपेक्षेण कृतमिति विधिनिषेधयोरानर्थक्यम् । न केवलमानर्थक्यं विपरीतं चापद्येत इत्याह—**तथा विहितकारिणमिति** । पूर्वोक्तश्च दोषः कृतनाशाकृताभ्यागमः प्रसज्येत । अतिरोहितार्थमन्यत् ॥ ४१ ॥ ४२ ॥ **इति षोडशं परायत्ताधिकरणम्** ॥

**अंशो नानाव्यपदेशादन्यथा चापि दशकितवादित्वमधीयत एके ॥ ४३ ॥**

अवान्तरसंगतिमाह—**जीवेश्वरयोरिति** । उपकार्योपकारकभावः प्रयोज्यप्रयोजकभावः । अत्रापाततो विनिगमनाहेतोरभावादनियमोऽनिश्चय इत्युक्तम् । निश्चयहेत्वाभासदर्शनेन भेदपक्षमालम्ब्याह—**अथवेति** । ईशितव्येशि-

## वेदान्तकल्पतरुः ।

गर्तम् । विधौ प्रतिषेधे चेश्वर एव नियोज्य इति भ्रमं व्यावर्तयति—**स्थान इति** । पूर्वोक्तदोषप्रसङ्गश्चेति भाष्यं पूर्वपक्षावसरोक्तदोषपरत्वेन व्याचष्टे—**कृतनाशेति** ॥ ४१ ॥ ४२ ॥ **इति षोडशं परायत्ताधिकरणम्** ॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥**

जीवब्रह्मभेदाभेदश्रुतिविरोधसंदेहे पूर्वत्र जीवनियन्तेश्वर इत्युक्तम्, इदानीं स ईश्वर आक्षिप्य समर्थ्यत इति संगतिमाहेति दर्शयति—**अवान्तरेति** । भाष्ये स्वामिभृत्यवत् संबन्ध इति न पूर्वपक्ष उक्तः; तथा सति तद्वन्नियन्तृनियन्तव्यत्वसंभवात्पूर्वोक्ताक्षेपरूपसंगत्यसिद्धेरतो विरोधैकशङ्काप्रदर्शनम् । अतएव टीकाकारो न ब्रह्मैकमद्वयमिति ब्रह्माभावेन पूर्वपक्षमुपसंहरिष्यति । जीवेश्वरयोरुपकार्योपकारकभावाभ्युपगमादिति भाष्ये उत्पाद्योत्पादकत्वमुक्तमिति भ्रमं व्युदस्यति—**उपकार्येति** । **निश्चयहेत्वाभासेति** । अभेदश्रुतिषु सतीषु भेदो निश्चेतुं न शक्यते इत्याभासत्वमत एकं शृङ्गं

## कल्पतरुपरिमलः ।

येन तस्य प्रवर्तनीयधर्माधर्मापेक्षया साध्वसाधुकर्मप्रवर्तयितृत्ववैचित्र्यमुपपद्येतेत्यस्मिन्नर्थे तद्वाक्यं योजितम् । **विधिप्रतिषेधयोरिति** । ईश्वर एव विधिप्रतिषेधयोर्नियुज्येतेति भाष्यस्येश्वर एव विधिनिषेधशास्त्रनियोज्यः स्याद्, ननु जीवो न स्वर्गकामनादिमान् मनुष्य इत्यर्थः प्रतिभाति, नतु सोऽर्थो युक्तः; नहीश्वरस्य कर्मानपेक्षस्य जीवप्रवृत्तिनिवृत्तिकारयितृत्वे तथा दोष आपद्यते, किंत्वीश्वरस्य स्वतन्त्रत्वे स एव विधिनिषेधस्थानाभिषिक्तः स्यादित्येव दोष आपद्यतेऽतस्तथार्थस्फूर्तये भाष्ये स्थान इति पदमध्याहरतीत्यर्थः ॥ ४१ ॥ ४२ ॥ **इति षोडशं परायत्ताधिकरणम्** ॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥**

निरतिशयोपाधिसंपद्विभूतियोगादित्यस्य सकलाविद्योपाधिसंबन्धादित्यर्थः प्रतीयते, सोऽर्थो न युक्तः; जीवानामेवा-

अथवा स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव संबन्ध इति प्राप्नोति। अतो ब्रवीति—अंश इति । जीव ईश्वरस्यांशो भवितुमर्हति, यथाग्नेर्विस्फुलिङ्गः। अंश इवांशो नहि निरवयवस्य मुख्योंऽशः संभवति । कस्मात्पुनर्निरवयवत्वात्स एव न भवति ? नानाव्यपदेशात्। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ) 'एतमेव विदित्वा मुनिर्भवति' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते । ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इत्यत आह—अन्यथा चापीति । नच नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः । किं तर्हि ? अन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः । तथाहि—एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते—'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना । दाशा य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिष्वात्मानमुपक्षपयन्ति, ये चान्ये कितवा द्यूतकृतस्ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह । तथान्यत्रापि ब्रह्मप्रक्रियायामयमेवार्थः प्रपञ्च्यते—'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' ( श्वे० ४।३ ) इति । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति च । 'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ) इत्यादिश्रुतिभ्यश्चास्यार्थस्य सिद्धिः । चैतन्यं चाविशिष्टं जीवेश्वरयोर्यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम् । अतो भेदाभेदावगमाभ्यामंशत्वावगमः ॥ ४३ ॥ कुतश्चांशत्वावगमः ?

---

## भामती ।

तृभावश्चान्वेष्यान्वेष्टृभावश्च ज्ञेयज्ञातृभावश्च नियम्यनियन्तृभावश्चाधाराधेयभावश्च न जीवपरमात्मनोरभेदेऽवकल्प्यते । नच 'ब्रह्मदाशा ब्रह्मकितवाः' इत्याद्याश्च श्रुतयो दाशा ब्रह्म कितवा ब्रह्मेत्यादिप्रतिपादनपरा जीवानां ब्रह्मणो भेदेऽवकल्प्यन्ते । नचैताभिर्भेदप्रतिपादनपराभिः श्रुतिभिः साक्षादंशत्वप्रतिपादकाच्च मन्त्रवर्णात् 'पादोऽस्य विश्वाभूतानि' इत्यादेः, स्मृतेश्च 'ममैवांशः' इत्यादेर्जीवानामीश्वरांशत्वसिद्धिः । निरतिशयोपाधिसंपदा च विभूतियोगेनेश्वरः स्वांशानामपि निकृष्टोपाधीनामीष्ट इति युज्यते । नहि तावदनवयवेश्वरस्य जीवा भवितुमर्हन्त्यंशाः । अपिच जीवानां ब्रह्मांशत्वे तद्गता वेदना ब्रह्मणो भवेत् । पादादिगता इव वेदना देवदत्तस्य । ततश्च ब्रह्मभूयंगतस्य समस्तजीवगतवेदनानुभवप्रसङ्ग इति वरं संसार एव मुक्तेः । तत्र हि स्वगतवेदनामात्रानुभवान्न भूरि दुःखमनुभवति । मुक्तस्तु सर्वजीववेदनाभागिति प्रयत्नेन मुक्तिरनर्थबहुलतया परिहर्तव्या स्यादिति । तथा भेदाभेदयोः परस्परविरोधिनोरेकत्रासंभवान्नांशत्वं जीवानाम् । नच—ब्रह्मैव सत्, असन्तस्तु जीवा इति—युक्तम्; सुखदुःखमुक्तिसंसारव्यवस्थाभावप्रसङ्गादनुज्ञापरिहाराभावप्रसङ्गाच्च । तस्माज्जीवा एव परमार्थसन्तो न ब्रह्मैकमद्वयम् । अद्वैतश्रुतयस्तु जातिदेशकालाभेदनिमित्तोपचारादिति प्राप्तेऽभिधीयते—अनधिगतार्थावबोधनानि प्रमाणानि, विशेषतः शब्दः । तत्र भेदो लोकसिद्धत्वान्न शब्देन प्रतिपाद्यः । अभेदस्त्वनधिगतत्वादधिगतभेदानुवादेन प्रतिपादनमर्हति । येन च वाक्यमुपक्रम्यते मध्ये च परामृश्यते अन्ते चोपसंह्रियते तत्रैव तस्य तात्पर्यम् । उपनिषदश्चाद्वैतोपक्रमतत्परामर्शतदुपसंहारा अद्वैतपरा एव युज्यन्ते । नच यत्परास्तदौपचारिकं युक्तम्; अभ्यासे हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि प्रागेवोपचरितत्वमित्युक्तम् । तस्मादद्वैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीयाविद्योपधानभेदादेक-

## वेदान्तकल्पतरुः ।

दर्शितमित्यर्थः । विरोधोद्घाटनाय शङ्कान्तरं दर्शयति—**नच ब्रह्मेति** । भेदे इति च्छेदः । उभयीनां श्रुतीनामविरोधमाशङ्क्याह—**नचैताभिरिति** । नच युज्यत इत्युपरितनेनान्वयः । **ननु** जीवानामीश्वरांशत्वसिद्धावपि नेश्वरस्य जीवनियन्तृत्वं, चेतनत्वेन जीवैरविशेषादित्याशङ्क्याह—**निरतिशयेति** । अधिष्ठानेऽतिशयानाधायिन्यो जीवाश्रया अविद्या निरतिशयाः ताभिर्विषयीकृतत्वाद् ब्रह्मणस्ता उपाधितयोक्ताः । निरतिशया उपाधिसंपत् सा यस्य स विभूतियोगस्तथोक्तः । विभूतेरनवच्छिन्नरूपस्य योगो घटकं तेनेत्यर्थः । अविरोधवाद्याह—**तस्मादिति** । यदुक्तमीशित्रीशितव्यभावश्चेत्यादि तत्राह—**तत्र भेद इति** । प्रमेयापूर्वत्वलक्षणतात्पर्यलिङ्गाद्द्वैतश्रुतिर्बलीयसीत्युक्त्वोपक्रमाद्यैकरूप्यादपीत्याह—

## कल्पतरुपरिमलः ।

विद्याश्रयत्वाद् ब्रह्मणस्तदनाश्रयत्वादित्याशङ्क्यान्यथा व्याचष्टे—**अधिष्ठानेति** । अनेनाधिष्ठाने ब्रह्मणि निरतिशयानां स्वकृतदोषरूपातिशयानाधायिनामुपाधीनां संपद् अविद्योपाधिविषयीकरणं यस्य तस्माद्विभूतियोगाद् अविद्यादोषकृतैश्वर्य-

## मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्चैतमर्थमवगमयति 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' ( छा० ३।१२।६ ) इति । अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति; 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति प्रयोगात् । अंशः पादो भाग इत्यनर्थान्तरम् । तस्मादप्यंशत्वावगमः ॥ ४४ ॥ कुतश्चांशत्वावगमः ?

## अपिच स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते—'ममैवांशो जीवलोके जीवभूतः सनातनः' ( १५।७ ) इति। तस्मादप्यंशत्वावगमः। यत्तूक्तं स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति। यद्यप्येषा लोके प्रसिद्धिः; तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्यभावश्च निश्चीयते। निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्नाञ्जीवान्प्रशास्तीति न किंचिद्विप्रतिषिध्यते ॥ ४५ ॥ अत्राह—ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेनांशिन ईश्वरस्यापि दुःखित्वं स्यात् । यथा लोके हस्तपादाद्यन्यतमाङ्गगतेन दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वं तद्वत् । ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात् । अतो वरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादिति, अत्रोच्यते—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवः संसारदुःखमनुभवति, नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे । जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमित्यविद्यया कृतं दुःखोपभोगमभिमन्यते। नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वास्ति। जीवस्याप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो नतु पारमार्थिकोऽस्ति। यथाच स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति, तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवत्यहमेव पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः। ततश्च निश्चितमेतदवगम्यते—मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति। व्यतिरेकदर्शनाच्चैवमवगम्यते। तथाहि—पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्संबन्धाभिमानिष्वितरेषु च पुत्रो मृतो मित्रं मृतमित्येवमाद्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामेव तन्निमित्तं दुःखमुत्पद्यते, नाभिमानहीनानां परिव्राजकादीनाम् । अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टं, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूप-

---

### भामती ।

स्येव बिम्बस्य दर्पणाद्युपाधिभेदात्प्रतिबिम्बभेदाः । एवंचानुज्ञापरिहारौ लौकिकवैदिकौ सुखदुःखमुक्तिसंसारव्यवस्था चोपपद्येत । नच मोक्षस्यानर्थबहुलता; यतः प्रतिबिम्बानामिव श्यामतावदाततादिर्जीवानामेव नानावेदनाभिसंबन्धो ब्रह्मणस्तु बिम्बस्येव न तदभिसंबन्धः । यथाच दर्पणापनये तत्प्रतिबिम्बं बिम्बभावेऽवतिष्ठते न कृपाणे प्रतिबिम्बितमपि । एवमविद्योपधानविगमे जीवे ब्रह्मभाव इति सिद्धं जीवो ब्रह्मांश इव तत्तन्त्रतया न त्वंश इति तात्पर्यार्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ सप्तदशसंख्यापरिमितो राशिर्गणः सप्तदशकः । तद्यथा—बुद्धिकर्मेन्द्रियाणि बाह्यानि दश बुद्धिमनसी वृत्तिभेदमात्रेण भिन्ने अप्येकीकृत्यैकमन्तःकरणं शरीरं पञ्च विषया इति सप्तदशको राशिः

### वेदान्तकल्पतरुः ।

**येनचेति** । यदुक्तं ब्रह्मभावं गतस्य समस्तजीवगतवेदनाप्रसङ्ग इति । तत्राह—**यथाच दर्पणापनय इति** । दर्पणस्यापगमे तत्रत्यं मुखप्रतिबिम्बं बिम्बभावेनावतिष्ठते, नतु प्रतिबिम्बान्तररूपेण; यद्यपि बिम्बात्मतामापन्नं तत्र तद्रूपेण कृपाणे प्रतिबिम्बितं; तथापि बिम्बप्रतिबिम्बयोरवदातत्वश्यामत्वादिव्यवस्थानात्तद्धर्मसांकर्यमित्यर्थः । दार्ष्टान्तिकमाह—**एवमिति** ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ॥ जीवे ब्रह्मभाव एव न जीवान्तरापत्तिरित्यर्थः । भाष्योदाहृतस्मृतौ सप्तदशकपदं व्याचष्टे—**सप्तदशेति** । निश्चयः संशयश्चेति वृत्तिभेदमात्रेण ॥ ४७ ॥ **ननु** प्रवर्तयितुः स्वामिनोऽभिमतो-

स्येति। तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः। प्रकाशादिवदिति निदर्शनोपन्यासः। यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते। यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति यथा चोदशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान्सूर्यः कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते। जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम्। तथाचाविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः 'तत्त्वमसि' इत्येवमादयः। तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः॥ ४६॥

## स्मरन्ति च॥ ४७॥

स्मरन्ति च व्यासादयो यथा जैवेन दुःखेन न परमात्मा दुःखायत इति। 'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा। कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते। स सप्तदशकेनापि राशिना युज्यते पुनः' इति। चशब्दात्समामनन्ति चेति वाक्यशेषः। 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ( श्वे० ४।६ ) इति। 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' ( कठ० ५।११ ) इति च॥ ४७॥

अत्राह—यदि तर्ह्येक एव सर्वेषां भूतानामन्तरात्मा स्यात्कथमनुज्ञापरिहारौ स्यातां लौकिकौ वैदिकौ चेति ? ननु—चांशो जीव ईश्वरस्येत्युक्तम्। तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते, किमत्र चोद्यते इति ? उच्यते—नैतदेवम्; अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति—'तत्सृष्ट्वा तदेवानुप्राविशत्, ( तै० २।६।१ ), 'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ), 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( बृ० ४।४।१९ ), 'तत्त्वमसि' ( छा० ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृ० १।४।१० ) इत्येवंजातीयकाः। ननु भेदाभेदावगमाभ्यामंशत्वं सिध्यतीत्युक्तम्। स्यादेतदेवं यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्, अभेद एव त्वत्र प्रतिपिपादयिषितः; ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः। स्वभावप्राप्तस्तु भेदोऽनूद्यते। नच निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः संभवतीत्युक्तम्। तस्मात्पर एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्यानुज्ञापरिहारोपपत्तिः, तां ब्रूमः—

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्॥ ४८॥

'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा। 'गुर्वङ्गनां नोपगच्छेत्' इति परिहारः। तथा 'अग्निषोमीयं पशुं संज्ञपयेत्' इत्यनुज्ञा। 'न हिंस्यात्सर्वा भूतानि' इति परिहारः। एवं लोकेऽपि मित्रमुपसेवितव्यमित्यनुज्ञा। शत्रुः परिहर्तव्य इति परिहारः। एवंप्रकारावनुज्ञापरिहारावेकत्वेऽप्यात्मनो देहसंबन्धात्स्याताम्। देहैः संबन्धो देहसंबन्धः। कः पुनर्देहसंबन्धः ? देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च सा सर्वप्राणिनामहं गच्छाम्यहमागच्छाम्यहम-

---

### भामती।

॥ ४७॥ अनुज्ञा विधिरभिमतो न तु प्रवृत्तप्रवर्तना; अपौरुषेये प्रवर्तयितुरभिप्रायानुरोधासंभवात्, क्रत्वर्थायामग्नीषोमीयहिंसायां प्रवृत्तप्रवर्तनानुपपत्तेश्च। पुरुषार्थेऽपि नियमांशेऽप्रवृत्तेः। कः पुनर्देहसंबन्ध इति। नहि कूटस्थनित्यस्यात्मनोऽपरिणामिनोऽस्ति देहेन संयोगः समवायो वाऽन्यो वा कश्चित् संबन्धः सकलधर्मातिगत्वादित्यभिसंधिः। उत्तरम्—देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। अयमर्थः—सत्यं नास्ति कश्चिदात्मनो

### वेदान्तकल्पतरुः।

पाय इति मत्वा प्रवृत्ते भृत्ये पुनरहिताशङ्कया सहसा निवृत्तौ स्वामिनोऽनुज्ञा प्रवृत्तप्रवर्तनी, सा च प्रवर्तयितुः स्वामिनोऽभिप्रायानुरोधिनी न वेदे संभवति, तत्कथमनुज्ञेति सूत्रनिर्देशस्तत्राह—विधिरिति। क्रत्वर्थायामिति। क्रत्वर्थग्रहणं पुरुषार्थे फलकामनया सामान्यतः प्रवृत्तस्य प्रवर्तको विधिरनुज्ञापि स्यादिति शङ्कां वारयितुम्। अपिच पुरुषार्थेऽपि सामान्यतः प्रवर्तितां गोदोहनादिसाधनविशेषनियमे पक्षप्राप्तौ विधितः प्रागप्रवृत्त इति नानुज्ञा संभवतीत्याह—पुरुषा-

न्धोऽहमनन्धोऽहं मूढोऽहममूढ इतीत्येवमात्मिका। नह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति। प्राक्तु सम्यग्दर्शनात्प्रततैषा भ्रान्तिः सर्वजन्तुषु। तदेवमविद्यानिमित्तदेहाद्युपाधिसंबन्धकृताद्विशेषादैकात्म्याभ्युपगमेऽप्यनुज्ञापरिहारावकल्प्येते। सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तम्, न; तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः। हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्। आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन्कथं नियुज्येत? नचात्मात्मन्येव नियोज्यः स्यात्। शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेत्, न; तत्संहतत्वाभिमानात्। सत्यं व्यतिरेकदर्शिनो नियोज्यत्वं, तथापि व्योमादिवद्देहाद्यसंहतत्वमपश्यत एवात्मनो नियोज्यत्वाभिमानः। नहि देहाद्यसंहतत्वदर्शिनः कस्यचिदपि नियोगो दृष्टः। किमुतैकात्म्यदर्शिनः? नच नियोगाभावात्सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः। सर्वत्राभिमानस्यैव प्रवर्तकत्वादभिमानाभावाच्च सम्यग्दर्शिनः। तस्माद्देहसंबन्धादेवानुज्ञापरिहारौ ज्योतिरादिवत्। यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात्परिह्रियते नेतरः। यथाच प्रकाश एकस्यापि सवितुरमेध्यदेशसंबन्धः परिह्रियते नेतरः शुचिभूमिष्ठः। यथा भौमाः प्रदेशा वज्रवैडूर्यादय उपादीयन्ते, भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते। यथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते तदेव जात्यन्तरे परिवर्ज्यते तद्वत्॥ ४८॥

## असंततेश्चाव्यतिकरः॥ ४९॥

स्यातां नामानुज्ञापरिहारावेकस्याप्यात्मनो देहविशेषयोगात्। यस्त्वयं कर्मफलसंबन्धः स चैकात्म्याभ्युपगमे व्यतिकीर्येत स्वाम्येकत्वादिति चेत्, नैतदेवम्; असंततेः। नहि कर्तुर्भोक्तुश्चात्मनः संततः सर्वैः शरीरैः संबन्धोऽस्ति। उपाधितन्त्रो हि जीव इत्युक्तम्। उपाध्यसंतानाच्च नास्ति जीवसंतानः। ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति॥ ४९॥

## आभास एव च॥ ५०॥

आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः। न स एव साक्षात्। नापि वस्त्वन्तरम्। अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैक-

### भामती।

देहादिभिः पारमार्थिकः संबन्धः, किंतु बुद्ध्यादिजनितात्मविषया विपरीता वृत्तिः 'अहमेव देहादिसंघातः' इत्येवंरूपा। अस्यां देहादिसंघात आत्मतादात्म्येन भासते। सोऽयं सांवृतस्तादात्म्यलक्षणः संबन्धो न पारमार्थिक इत्यर्थः। गूढाभिसंधिश्चोदयति—**सम्यग्दर्शिनस्तर्हीति**। उत्तरं—**न**। **तस्येति**। यदि सूक्ष्मस्थूलदेहादिसंघातोऽविद्योपदर्शित एकमेवाद्वितीयं ब्रह्मास्मीति सम्यग्दर्शनमभिमतम्, अद्धा तद्वन्तं प्रति विधिनिषेधयोरानर्थक्यमेव। एतदेव विशदयति—**हेयोपादेययोरिति**। चोदको निगूढाभिसंधिमाविष्करोति—**शरीरव्यतिरेकदर्शिन एव**। आमुष्मिकफलेषु कर्मसु दर्शपूर्णमासादिषु नियोज्यत्वमिति चेत् परिहरति—**न। तत्संहतत्वाभिमानात्**। एतद्विभजते—**सत्यमिति**। यो ह्यात्मनः षाट्कौशिकाद्देहादुपपत्त्या व्यतिरेकं वेद, नतु समस्तबुद्ध्यादिसंघातव्यतिरेकं, तस्यामु-

### वेदान्तकल्पतरुः।

**र्थेऽपीति। ननु** विपरीतप्रत्ययस्य कथं देहाद्यात्मसंबन्धत्वं? तस्यात्ममात्रनिष्ठत्वादत आह—**अस्यामिति**। भ्रान्तविषयमिथ्यातादात्म्यं संबन्ध इति कथयितुं भाष्ये विपरीतप्रत्ययोत्पत्तिरुक्ता इत्यर्थः। यदि देहात्मनोर्मिथ्या तादात्म्यं संबन्धस्तर्हि देहव्यतिरेकज्ञस्य स नास्तीति देहसंबन्धनिमित्तविधिनिषेधौ ब्रह्मविद इव न स्याताम्। नचानिष्टप्रसङ्गः; देहव्यतिरेकविद एव नियोज्यत्वादित्याह—**व्यतिरेकदर्शिन एवेति**। अस्थिस्नायुमज्जात्वङ्मांसशोणितानि षट् कोशाः। तत्कृतं **षाट्कौशिकं** स्थूलशरीरम्। तन्मात्रविवेकिनोऽपि सूक्ष्मदेहविवेकाभावान्न देहसंबन्धाभाव इति विधिगोचरता। निष्प्र-

### कल्पतरुपरिमलः।

परिच्छेदरहितपारमेश्वररूपसंपादनादिति व्याख्यानं कृतम्। **इत्थमपि व्याख्यातुं शक्यम्**—उपाधिशब्देन मायोपाधिकृताः सृष्ट्यादिशक्तय उच्यन्ते, ताश्च निरतिशयाः, नतु जीवशक्तिवत्कतिपयसृज्यादिविषयत्वेन सातिशयाः; तासां संपद्बाहुल्यं सैव विभूतिरैश्वर्यं तद्योगात्—इति॥ एवंच लोकेऽप्यधिकशक्तयो राजादयोऽल्पशक्तीनां प्रजादीनामीशत इति दर्शनात्तथैव निरतिशयशक्तिशाली परमेश्वरो निकृष्टोपाधीनामल्पशक्तीनां देवमनुष्यादिजीवानामीष्ट इति वाक्यार्थः

स्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्धः । एवमप्यव्यतिकर एव कर्मफलयोः । आभासस्य चाविद्याकृतत्वात्तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः । येषां तु बहव आत्मानस्ते च सर्वे सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति । कथम् ? बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च । तदर्थं साधारणं प्रधानं तन्निमित्तैषां भोगापवर्गसिद्धिरिति सांख्याः । सति बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानस्तदुपकरणानि चाणूनि मनांस्यचेतनानि । तत्रात्मद्रव्याणां मनोद्रव्याणां च संयोगान्नवेच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते । ते चाव्यतिकरेण प्रत्येकमात्मसु समवयन्ति स संसारः । तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः । तत्र सांख्यानां तावच्चैतन्यस्वरूपत्वात्सर्वात्मनां संनिधानाद्यविशेषाच्चैकस्य सुखदुःखसंबन्धे सर्वेषां सुखदुःखसंबन्धः प्राप्नोति । स्यादेतत्—प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वाद्व्यवस्था भविष्यति । अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात् । तथाचानिर्मोक्षः प्रसज्येतेति । नैतत्सारम्; नह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम् । उपपत्त्या तु कयाचिद्व्यवस्थोच्येत । असत्यां पुनरुपपत्तौ कामं मा भूदभिलषितं पुरुषकैवल्यं, प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः । काणादानामपि यदैकेनात्मना मनः संयुज्यते तदात्मान्तरैरपि नान्तरीयकः संयोगः स्यात्संनिधानाद्यविशेषात् । ततश्च हेत्वविशेषात्फलाविशेष इत्येकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि समानं सुखदुःखित्वं प्रसज्येत ॥ ५० ॥ स्यादेतत्—अदृष्टनिमित्तो नियमो भविष्यतीति । नेत्याह—

**अदृष्टानियमात् ॥ ५१ ॥**

बहुष्वात्मस्वाकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण संनिहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणमदृष्टमुपार्ज्यते । सांख्यानां तावत्तदनात्मसमवायि प्रधानवर्ति प्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते । काणादानामपि पूर्ववत्साधारणेनात्ममनःसंयोगेन निर्वर्तितस्याप्यदृष्टस्याप्यस्यैवात्मन इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः ॥ ५१ ॥ स्यादेतत्—अहमिदं फलं प्राप्नवानीदं परिहराणीत्थं प्रयता इत्थं करवाणीत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति, नेत्याह—

---

## भामती ।

ष्मिकफलेष्वधिकारः । समस्तबुद्ध्यादिव्यतिरेकवेदिनस्तु कर्मभोक्तृत्वाभिमानरहितस्य नाधिकारः कर्मणि । तथाच न यथेष्टचेष्टा, अभिमानविकलस्य तस्या अप्यभावादिति ॥ ४८ ॥ ४९ ॥ येषां तु सांख्यानां वैशेषिकाणां वा सुखदुःखव्यवस्थां पारमार्थिकीमिच्छतां बहव आत्मानः सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति । तत्र प्रश्नपूर्वकं सांख्यान् प्रति व्यतिक्रमं तावदाह—**कथमिति** । यादृशस्तादृशो गुणसंबन्धः सर्वान् पुरुषान् प्रत्यविशिष्ट इति तत्कृते सुखदुःखे सर्वान् प्रत्यविशिष्टे । नच कर्मनिबन्धना व्यवस्था; कर्मणः प्राकृतत्वेन प्रकृतेश्च साधारणत्वेनाव्यवस्थातादवस्थ्यात् । चोदयति—

## वेदान्तकल्पतरुः ।

पञ्चब्रह्मात्मतासाक्षात्कारिणस्तु न विधिगोचरता । नच यथेष्टचेष्टा; तथाविधाभिमानाभावादित्यर्थः । अभिमानाभासस्तु न स्वैरचेष्टाहेतुः तत्त्वबोधाग्निदग्धत्वादित्यर्थः । **उक्तं हि वार्तिककारैः**—उत्पन्नात्मप्रबोधानामात्माविद्या तदुद्भवम् । सम्यग्ज्ञानाग्निना नित्यं दह्यमानं प्रजायते॥ इति॥४८॥४९॥ भाष्ये साक्षात्प्रत्येकमात्मनः सुखादिसंबन्धमङ्गीकृत्य सर्वेषां तदीयसुखादिसंबन्धश्च आपादितः । तत्र निर्विशेषस्य न संबन्धोऽपीत्याह—**यादृश इति** । आत्ममनःसंयोगस्य सर्वात्मसाधारण्यमङ्गीकृत्य

## कल्पतरुपरिमलः ।

परिनिष्पन्नो भवति । निरतिशयोपाधिसंपन्नश्चेश्वरो हीनोपाधिसंपन्नान् जीवान् प्रशास्तीति भाष्यस्याप्येवमेवार्थः । **अयमिह पूर्वपक्षः**—सन्ति तावत् ज्ञातृज्ञेयध्यातृध्येयनियम्यनियामकाधेयाधिकरणभावादिविषया भेदश्रुतयः । सन्ति चाभेदश्रुतयः । यथाऽऽथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमानिति मन्त्रः । यथा वा श्वेताश्वतरोपनिषदादिषु त्वं स्त्री त्वं पुमानित्यादयः । नचोभयविधश्रुत्यनुग्रहाय भेदाभेदपक्षाभ्युपगमो युक्तः; तस्य विरोधादिभिर्दुष्टत्वात् । तस्मादप्रमाणमेताः श्रुतयः—**इति** । **अत्र**

## अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥ ५२ ॥

## प्रदेशादितिचेन्नान्तर्भावात् ॥ ५३ ॥

अथोच्येत विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एवात्मप्रदेशे भविष्यत्यतः प्रदेशकृता व्यवस्थाऽभिसंध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति । तदपि नोपपद्यते। कस्मात्? अन्तर्भावात्। विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्ति। तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः । कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति। शरीरमपि सर्वात्मसंनिधावुत्पद्यमानमस्यैवात्मनो नेतरेषामिति न नियन्तुं शक्यम्। प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरेणोपभोगसिद्धिः स्यात्; समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवात्। तथाहि—देवदत्तो यस्मिन्प्रदेशे सुखदुःखमन्वभूत्तस्मात्प्रदेशादपक्रान्ते तच्छरीरे यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते तस्यापीतरेण समानः सुखदुःखानुभवो दृश्यते स न स्याद्यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं न स्यात्। स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात्, ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य । सर्वगतत्वानुपपत्तिश्च बहूनामात्मनाम्; दृष्टान्ताभावात्। वद तावत्त्वं के बहवः समानप्रदेशाश्चेति। रूपादय इति चेत्, न; तेषामपि धर्म्यंशेनाभेदाल्लक्षणभेदाच्च। नतु बहूनामात्मनां लक्षणभेदोऽस्ति । अन्त्यविशेषवशाद्भेदोपपत्तिरितिचेत्, न; भेदकल्पनाय अन्त्यविशेषकल्पनायाश्चेतरेतराश्रयत्वात्। आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धम्; कार्यत्वाभ्युपगमात्। तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम् ॥ ५३ ॥ इति सप्तदशमंशाधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ श्रीशारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

### भामती ।

**स्यादेतदिति। अयमर्थः**—न प्रधानं स्वविभूतिख्यापनाय प्रवर्तते, किंतु पुरुषार्थम्। यं च पुरुषं प्रत्यनेन भोगापवर्गौ पुरुषार्थौ साधितौ, तं प्रति समाप्ताधिकारतया निवर्तते, पुरुषान्तरं तु प्रत्यसमाप्ताधिकारं प्रवर्तते । एवंच मुक्तसंसारिव्यवस्थोपपत्तेः सुखदुःखव्यवस्थापि भविष्यति इति, निराकरोति—**नहीति** । सर्वेषां पुरुषाणां विभुत्वात् प्रधानस्य च साधारण्यादमुं पुरुषं प्रत्यनेनार्थः साधित इत्येतदेव नास्ति। तस्मात् प्रयोजनवशेन विना हेतुं व्यवस्थास्थेया । सा चायुक्ता हेत्वभावादित्यर्थः। भवतु सांख्यानामव्यवस्था, प्रधानसमवायाददृष्टस्य, प्रधानस्य च साधारण्यात्। काणादादीनां त्वात्मसमवाय्यदृष्टं प्रत्यात्मसाधारणं तत्कृतश्च मनसा सहात्मनः स्वस्वामिभावलक्षणः संबन्धोऽनादिरदृष्टभेदानामनादित्वात्, तथाचात्ममनःसंयोगस्य साधारण्येऽपि स्वस्वामिभावस्यासाधारण्यादभिसंध्यादिव्यवस्थोपपद्यत एव। नच संयोगोऽपि साधारणः। नहि तस्य मनस आत्मान्तरैर्यः संयोगः स एव स्वामिनापि, आत्मसंयोगस्य प्रतिसंयोगिभेदेन भेदात्। तस्मादात्मैकत्वस्यागमसिद्धत्वात्, व्यवस्थायाश्चैकत्वेऽप्युपपत्तेः, नानेकात्मकल्पना, गौरवा-

### वेदान्तकल्पतरुः ।

स्वस्वामिसंबन्ध आत्मविशेषेणासाधारण इत्युक्तम्। इदानीमात्ममनःसंयोगोऽप्यसाधारण इत्याह—**नचेति**। आत्मना सह मनसो यः संयोगस्तस्यैकत्वेऽपि मनसः प्रतिसंयोगिनामात्मनां भेदेन भेदादाश्रयभेदेन हि संयोगो भिद्यते, घटेन सह पटकुड्यसंयोगवदित्यर्थः। यद्यदृष्टाद्यनियमेन न वैशेषिकमतं दूष्यं, कथं तर्हि दूष्यमत आह—**तस्मादिति**। अदृष्टहेतु-

### कल्पतरुपरिमलः ।

**टीकानुसारेण सिद्धान्त्येकदेशिमतम्**—ईश्वर एव नास्ति । यतो जीवानां भेदाभेदचिन्ता, तद्विषयश्रुतयस्तु केवलमर्थवादाः; भेदपक्षेऽभेदपक्षे भेदाभेदपक्षे च दोषदर्शनात् । नच तद्दोषपरिहाराय जीवा न सन्तीति वक्तुं युक्तम्; तेषां प्रत्यक्षादिसिद्धत्वात्। अतो जीवानामेव जात्यैक्यमवलम्ब्याद्वितीयश्रुतयः—**इति। भाष्यानुसारेण तु**—भेदश्रुतयः

### भामती ।

दागमविरोधाच्च । अन्त्यविशेषवत्त्वेन च भेदकल्पनायामन्योन्याश्रयापत्तेः । भेदे हि तत्कल्पना ततश्च भेद इति । एतदेव काणादमतदूषणम् । भाष्यकृता तु प्रौढवादितया काणादान् प्रत्यप्यदृष्टानियमादित्यादीनि सूत्राणि योजितानि । सांख्यमतदूषणपराण्येवेति तु रोचयन्ते केचित्तदास्तां तावत् ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ इति सप्तदशमंशाधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

### वेदान्तकल्पतरुः ।

कमनःसंयोगो यदैकस्यात्मनस्तदैव सर्वेषामात्मनां तेन मनसा संयोगः स्यात्; तेषां व्यापकत्वात्, ततश्च प्रत्यात्मं संयोगभेदेऽपि हेत्वविशेषाददृष्टनिष्पत्तिस्तुल्या स्यात्, तत्कृताश्च स्वस्वामिभावाः सर्वात्मना स्युरिति कुतस्तत्कृताभिसंध्यादिव्यवस्थासिद्धिरिति केचित्कारेण सूचितम् ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ इति सप्तदशमंशाधिकरणम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ द्वितीयाध्यायस्य तृतीयः पादः ॥

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | १७ | ७८ |
| सूत्राणि | ५३ | २६९ |

### कल्पतरुपरिमलः ।

स्वार्थपराः; पूर्वाधिकरणनिर्णीतस्य प्रवर्त्यप्रवर्तकभावस्य भेदापेक्षत्वात्, स्वामिभृत्ययोस्तथात्वदर्शनात्, अभेदश्रुतयस्तु चेतनत्वसाम्यैक्यनिबन्धना उपचरितार्थाः; अभेदे सुखदुःखवैचित्र्यानुज्ञापरिहारादेरनुपपत्तेः—इति । एवमीश्वरापलपेनैव सिद्धान्त्येकदेशिमतं द्रष्टव्यम् । ननु क्रत्वर्थग्रहणेन गोदोहनादिपुरुषार्थप्रवृत्तिः पुरुषाभिप्रायानुरोध्यनुज्ञाधीनाभ्युपगता भवेदिति शङ्कां परिहरतीत्याह—अपिच पुरुषार्थेऽपीति ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ इति सप्तदशं अंशाधिकरणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीवेदान्तकल्पतरुपरिमले द्वितीयाध्यायस्य तृतीयः पादः ॥

॥ इति द्वितीयाध्यायस्य पञ्चमहाभूत—जीवश्रुतीनां विरोधपरिहाराख्यस्तृतीयः पादः ॥



# अथ द्वितीयाध्याये चतुर्थः पादः ।

( १ अधिकरणम् ) **तथा प्राणाः ॥ १ ॥**

वियदादिविषयः श्रुतिविप्रतिषेधस्तृतीयेन पादेन परिहृतः। चतुर्थेनेदानीं प्राणविषयः परिह्रियते। तत्र तावत् 'तत्तेजोऽसृजत' ( छान्दो० ६।२।३ ) इति, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तैत्ति० २।१।१ ) इति चैवमादिषूत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्नाम्नायते। क्वचिच्चानुत्पत्तिरेवैषामाम्नायते; 'असद्वा इदमग्र आसीत्' (तै० २।७ ) 'तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत् तदाहुः के ते ऋषय इति प्राणा वाव ऋषयः' इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्। अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते—'यथाऽग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' इति 'एतस्माज्जायते प्राणो

---

भामती ।

**तथा प्राणाः ॥ १ ॥**

यद्यपि ब्रह्मवेदने सर्ववेदनप्रतिज्ञातदुपपादनश्रुतिविरोधाद्बहुतराद्वैतश्रुतिविरोधाच्च प्राणानां सर्गादौ सद्भावश्रुतिर्वियदमृतत्वादिश्रुतय इवान्यथा कथंचिन्नेतुमुचिताः, तथाप्यन्यथानयनप्रकारमविद्वानन्यथानुपपद्यमानैकापि श्रुतिर्बह्वीरन्यथयेदिति मन्वानः पूर्वपक्षयति। अत्र चात्युच्चतया वियदधिकरणपूर्वपक्षहेतून् स्मारयति—**तत्र तावदिति**। शब्दैकप्रमाणसमधिगम्या हि महाभूतोत्पत्तिस्तस्या यत्र शब्दो निवर्तते तत्र तत्प्रमाणाभावेन तदभावः प्रतीयते। यथा चैत्यवन्दनतत्कर्मधर्मताया इत्यर्थः। अत्रापाततः श्रुतिविप्रतिपत्त्यानध्यवसायेन पूर्वपक्षयित्वाऽथवेत्यभिहितं पूर्वपक्षमवतारयति । अभिप्रायोऽस्य दर्शितः 'पानव्यापच्च तद्वत्' इत्यत्राश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षसूत्रार्थ-

वेदान्तकल्पतरुः ।

**तथा प्राणाः ॥ १ ॥**

वियदधिकरणेन ( ब्र. अ. २ पा. २ सू. १ ) गतार्थत्वमाशङ्क्य परिहरति—**यद्यपीत्यादिना**। सर्ववेदनप्रतिज्ञारूपा श्रुतिस्तस्य सर्ववेदनस्योपपादनश्रुतिश्च यथोक्ता ताभ्यां विरोधादित्यर्थः। कस्मिन्सति सर्ववेदनमित्यपेक्षायां ब्रह्मवेदने इति पश्चात्संबन्धनीयम्। **अन्यथानयनप्रकारमिति**। अवान्तरप्रलयाभिप्रायमित्यर्थः। ये पुनराप ( ब्र. अ. २ पा. ३ सू. ११ ) इत्यधिकरणेऽप्यपामाप एवेदमग्र आसुरिति प्रलयकाले सद्भावश्रवणादनुत्पत्तिरिति पूर्वपक्षयित्वा तस्यावान्तरप्रलयपरत्वेन सिद्धान्तयांबभूवुः, तेषां मतेन पुनरुक्तिः। अस्माभिस्त्वतिदेशत्वेन तद्व्याख्यातम्। **ननु** भाष्ये कथमनाम्नानात् प्राणानामनुत्पत्तिनिश्चयः ? न खलु प्रमाणाभावमात्रं प्रमेयाभावव्याप्तम्, पुराणनगरनिहितनिधिष्वदर्शनादत आह—**शब्दैकेति**। महाभूतशब्दोऽस्मदाद्यनुपलभ्योत्पत्तिकपदार्थपरः। तथाच प्राणानामपि संग्राहको महाभूतोत्पत्तेः प्रतिपादकः शब्दो यत्र महाभूते प्राणलक्षणे निवर्तते, तत्र तस्या उत्पत्तेः प्रमाणाभावेन तदभावः तस्या उत्पत्तेरभावः प्रतीयते इत्यर्थः। चैत्यवन्दनं तत्कर्म तस्य चैत्यस्य करणं निष्पादनं तयोर्धर्मताया यथाशब्दाभावान्निवृत्तिरित्यर्थः। **अश्वेति**।

कल्पतरुपरिमलः ।

**तथा प्राणाः ॥ १ ॥**

ब्रह्मवेदने सर्ववेदनप्रतिज्ञातदुपपादनश्रुतिविरोधादिति टीकायां ब्रह्मवेदन इत्यस्य द्वन्द्वसमासान्तर्गतपूर्वपदार्थभूतया सर्वविज्ञानप्रतिज्ञयाऽन्वयमपेक्षावशेन दर्शयति—**कस्मिन्निति**। कस्मिन्सतीत्यर्थः। **दोषास्त्विष्टिरिति**। "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत् ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेद् वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चती"ति तैत्तिरीयाः समामनन्ति । **अस्यार्थः**—प्रजापति**र्वरुणाय** प्रतिग्रहीत्रे अश्वमनयद् **अददात् स** प्रजापतिः **स्वां देवतां** प्रतिग्रहीतृत्वेन स्वदेवताभूतं वरुण**मार्च्छत्** प्रापद्, **वरुणग्रहशब्दितः** जलोदरव्याधियुक्तो जातः, तत्परिहारार्थं वारुणीं चतुष्कपालेष्टिं कृतवानिति । एवमुपक्रमा-

मनः सर्वेन्द्रियाणि च' ( मुण्ड० २।१।३ ) इति, 'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मु० २।१।८ ) इति, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्' ( प्र० ६।४ ) इति चैवमादिप्रदेशेषु । तत्र तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाच्चाप्रतिपत्तिः प्राप्नोति । अथवा—प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति । अत उत्तरमिदं पठति—'तथा प्राणाः' इति । कथं पुनरत्र तथेत्यक्षरानुलोम्यम् ? प्रकृतोपमानाभावात् । सर्वगतात्मबहुत्ववादिदूषणमतीतानन्तरपादान्ते प्रकृतं, तत्तावन्नोपमानं संभवति; सादृश्याभावात् । सादृश्ये हि सत्युपमानं स्यात् । यथा सिंहस्तथा बलवर्मेति । अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत, यथाऽदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वमेवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वमिति । तदपि देहानियमेनैवोक्तत्वात्पुनरुक्तं भवेत् । नच जीवेन प्राणा उपमीयेरन्; सिद्धान्तविरोधात् । जीवस्य ह्यनुत्पत्तिराख्याता । प्राणानां तूत्पत्तिर्व्याचिख्यासिता । तस्मात्तथेत्यसंबद्धमिव प्रतिभाति । न; उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः । अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्—'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' ( बृ० २।१।२० ) इत्येवंजातीयकम् । तत्र यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते तथा प्राणा अपीत्यर्थः । तथा—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' ( मुण्ड० २।१।३ ) इत्येवमादिष्वपि खादिवत्प्राणानामुत्पत्तिरिति द्रष्टव्यम् । अथवा—'पानव्यापच्च तद्वत्' ( जै० अ० ३।४।१५ ) इत्येवमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात् यथाऽतीतानन्तरपादाद्युक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगतास्तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योजयितव्यम् । कः पुनः प्राणानां विकारत्वे हेतुः ? श्रुतत्वमेव । ननु केषुचित्प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयत इत्युक्तं, तदयुक्तम्; प्रदेशान्तरेषु श्रवणात् । नहि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते । तस्माच्छ्रुतत्वाविशेषादाकाशादिवत्प्राणा अप्युत्पद्यन्त इति सूक्तम् ॥ १ ॥

## वेदान्तकल्पतरुः ।

**शेषलक्षणे स्थितम्**—दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ( जै. अ. ३ पा. ४ सू. ३४ ) वरुणो वा एनं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान्वारुणान् निर्वपेदित्यत्र दातुरिष्टिरित्युत्तराधिकरणे ( जै. अ. ३ पा. ४ सू. ३६-३७ ) स्थास्यति ततो दाननिमित्तेष्टिः । सा किं लौकिकेऽश्वदाने वैदिके वेति संदेहो नतु लौकिकेऽश्वप्रतिग्रहे वैदिके वेति; रागप्राप्तप्रतिग्रहस्याविहितत्वेन वैदिकत्वासंभवात्, तत्र दोषनिर्घातार्थत्वादिष्टेः, दोषस्य च न केसरिणो ददातीति प्रतिषिद्धलौकिकाश्वदानएव संभवात्, पौण्डरीकेऽश्वसहस्रं दक्षिणेत्यादिविशेषविधिविहिते तु वैदिकेऽश्वदाने सामान्यनिषेधाऽनवकाशेन दोषाऽप्राप्तेर्लौकिकेऽश्वदाने इष्टिरिति प्राप्तेऽभिधीयते—अर्थवादोऽनुपपातात्तस्माद्यज्ञे प्रतीयते ( जै. अ. ३ पा. ४ सू. ३५ ) । न तावद्यथाश्रुति जलोदररूपवरुणग्रहदोषो लौकिकेऽश्वदाने सति भवतीति प्रत्यक्षादिभिः प्रमीयते; तत्रानेन दाने दोषः तन्निर्घातार्था चेष्टिरिति वदतो वाक्यभेदात् । नच—वृणोतीति व्युत्पत्त्या वरुणशब्दो निषेधातिक्रमकृतदोषमनुवदतीति—युक्तम्; तथा सति प्रसिद्धित्यागात् । तत्त्यागे च वैदिकेऽपि दानेऽश्वत्यागजन्यदुःखेन वृणोतीति भवति वरुणशब्दः । तस्मात्प्राप्तस्यानुवादकोऽर्थवादोऽयम् ।

## कल्पतरुपरिमलः ।

नुसारेणेयं दातुरिष्टिरित्युत्तराधिकरणे स्थास्यन्तमर्थं सिद्धवत्कृत्यैतदधिकरणप्रवृत्तिरित्याह—**ततो दाननिमित्तेष्टिरिति** । **ननु** उत्तराधिकरणार्थमनुपेक्ष्य योऽश्वं प्रतिगृह्णातीति यथाश्रुतवैदिकशब्दानुसारेण लौकिकेऽश्वप्रतिग्रहे वैदिके वेत्येवमेतदधिकरणप्रवृत्तिः किं न स्यादित्याशङ्क्याह—**नतु लौकिके इति** । वैदिकत्वं वेदविहितत्वरूपं प्रतिग्रहे न संभवति; यद्यपि प्रतिग्रहैर्ब्राह्मणो धनमर्जयेदिति नियमविधिव्यापारोऽस्ति; तथाप्यश्वप्रतिग्रहे सोऽपि नास्ति, नोभयतोदतः प्रतिगृह्णातीति तन्निषेधात्, **किंच** शास्त्राद्धि वैदिके न दोषः स्यादिति वैदिके दोषाभावः स्मर्यते, नचाश्वप्रतिग्रहे दोषाभावोऽस्ति । अतो दानविषय एवायं विचार इति भावः । **न केसरिण इति** । सुहृदादिभ्यो रागप्राप्तमश्वदानं प्रतिषिद्धम् ॥ **प्राप्तस्यानुवादकोऽर्थवादोयमिति** । **ननु** अर्थवादोऽनुपपातादिति ( जै. अ. ३ पा. ४ सू. ३५ । ) सूत्रेण वरुणग्रहशब्दोर्थवाद एव; अश्वदानप्रयुक्ततया जलोदरव्याधेरनुवादादित्युक्तम्, इहापि सिद्धान्ते तथैवोक्तं, कुतः प्राप्तस्येदानीमनुवादः कीर्त्यते ? **उच्यते** । लोकप्राप्तस्य जलोदरव्याधेरिहानुवादः "वरुणो वा एतमश्वदातारं गृह्णाती"ति निर्देशस्तूप-

## गौण्यसंभवात् ॥ २ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति । तत्प्रत्याह—'गौण्यसंभवात्' इति । गौण्या असंभवो गौण्यसंभवः । नहि प्राणानामुत्पत्तिश्रुतिर्गौणी संभवति; प्रतिज्ञाहानिप्रसङ्गात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मुण्ड० १।१।३ ) इति ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्साधनायेदमाम्नायते—'एतस्माज्जायते प्राणः' ( मुण्ड० २।१।३ ) इत्यादि । सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात्सिध्यति । गौण्यां तु प्राणानामुत्पत्तिश्रुतौ प्रतिज्ञेयं हीयेत । तथाच प्रतिज्ञातार्थमुपसंहरति—'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' ( मुण्ड० २।१।१० ) इति, 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' ( मुण्ड० २।२।११ ) इति च । तथा 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इत्येवंजातीयकासु श्रुतिष्वेषैव प्रतिज्ञा योजयितव्या । कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम्? नैतन्मूलप्रकृतिविषयम्; 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' ( मुण्ड० २।१।२ ) इति मूलप्रकृतेः प्राणादिसमस्तविशेषर-

### भामती ।

सादृश्यं तदा परामृष्टम् । राद्धान्तस्तु स्यादेतदेवं यदि सर्गादौ प्राणसद्भावश्रुतिरनन्यथासिद्धा भवेत्, अन्यथैव त्वेषा सिध्यति; अवान्तरप्रलये ह्यग्निसाधनानां सृष्टिर्वक्तव्येति तदर्थोऽसावुपक्रमः । तत्राधिकारिपुरुषः प्रजापतिरप्रनष्ट एव त्रैलोक्यमात्रं प्रलीनमतस्तदीयान् प्राणानपेक्ष्य सा श्रुतिरुपपन्नार्था । तस्माद्भूयसीनां श्रुतीनामनुग्रहाय सर्वविज्ञानप्रतिज्ञोपपत्त्यर्थस्य चोत्तरस्य संदर्भस्य गौणत्वे तु प्रतिज्ञातार्थानुगुण्याभावेनानपेक्षितार्थत्वप्रसङ्गात्प्राणा अपि नभोवद्ब्रह्मणो

### वेदान्तकल्पतरुः ।

ततो यज्ञसंबन्धिनि दाने इष्टिरिति । ततः कस्तस्याः कर्तेति चिन्ता । तत्र अचोदितं च कर्म भेदात् ( जै. अ. ३ पा. ४ सू. ३६ ) । दातुरचोदितमिष्टिकर्म यः प्रतिगृह्णाति स निर्वपेदिति तस्य प्रतिग्रहीत्रा भेदाद् विशेषणादिति । सिद्धान्तस्तु—सा लिङ्गादार्त्विजे स्यात् ( जै. अ. ३ पा. ४ सू. ३८ ) । ऋत्विजामयमित्यार्त्विजो यजमानः तस्मिन्सेष्टिः स्यात् । प्रजापतिर्वरुणायाश्वमनयदित्युपक्रमे दातृकीर्तनाद् लिङ्गादुपक्रमाधीनत्वाच्चैकस्मिन् वाक्ये उपसंहारस्य । प्रतिगृह्णातीति च प्रतिग्रहकर्तृत्वमुच्यते । दातापि प्रतिग्रहं करोति संप्रदानप्रेरणादिना । अतः प्रतिगृह्णातीति दातर्यप्यविरुद्धमिति । पानव्यापच्च तद्वत् ( जै. अ. ३ पा. ४ सू. ३८ ) । सौमेन्द्रं चरुं निर्वपेद् श्यामाकं सोमवामिन इति श्रूयते । तत्राश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षवल्लौकिके धातुसाम्यार्थं पीतसोमस्य वमने याग इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमतीति दोषाद् वमननिमित्तेन्द्रियशोषस्य दर्शनान्न वरुणग्रहवदप्राप्तिरित्यधिकाशङ्का । वैदिके तु सोमपाने शेषप्रतिपत्तेर्जातत्वाद्वमनेऽपि न दोष इति । सिद्धान्तस्तु लोके धातुसाम्यार्थत्वाद्वमनस्य तज्जन्येन्द्रियशोषस्य धातुसाम्यकरत्वान्न दोषता । वेदे तु "मा मे वाङ्नाभिमिति गा" इति सम्यग्जरणार्थमन्त्रलिङ्गाद्वमने कर्मवैगुण्याद्दोष इति । **अग्निसाधनेति** । अग्निश्चितोग्निः तत्साधनानि शर्करादीनि । **अधिकारिपुरुषः** स्रष्टा । **तस्मादिति** । प्राणा अपि नभोवद्

### कल्पतरुपरिमलः ।

मार्थः । "अग्निमेव खलु वा एष प्रविशति योऽवान्तरदीक्षामुपैती"तिवद् इवशब्दयोगात्तत्र वाच्योपमा, इह तु सामानाधिकरण्यनिर्देशाद् गम्येति विशेषः । ततश्च जलोदरव्याधिमता तच्चिकित्सेवाश्वं दत्तवतेयमिष्टिरवश्यं कार्येति सिद्धं भवति । **किंच** प्रजापतिर्वरुणायाश्वमनयदित्याद्यसदर्थवादप्रतीतस्य दोषस्याश्वदातृत्वसामान्यादन्येष्वपि प्राप्तस्य "वरुणो वा एतं गृह्णातीत्य"त्रानुवाद इत्युपपद्यते । **ननु** इयमिष्टिर्मा भूद्दोषनिर्घातार्था, तथापि वैदिक इति कुतः ? लौकिकेऽपि वा लौकिकएव वा किं न स्यात्? **उच्यते**; न तावदुभयत्र भवितुमर्हति; लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेत्येकस्य वाक्यस्य क्रतुपुरुषशेषताप्रतिपादकत्वेन वाक्यवैरूप्यप्रसङ्गात् । नापि लौकिकएव; वैदिकस्य नैमित्तिकस्य वैदिकं निमित्तं प्रत्यासन्नमिति तद्विहायाप्रत्यासन्नलौकिकग्रहणायोगात्, तद्ग्रहणे फलकल्पनागौरवप्रसङ्गाच्च । अतस्तस्याद्यङ्गे प्रतीयेतेति युक्तः सिद्धान्तः । **लौकिके धातुसाम्यार्थमिति** । वमनेनान्तर्गतदोषनिःसरणाद्धातुसाम्यं भवतीति वमनोपायतया वैद्यके सोमपानमुक्तमस्ति, तत्कृतं वमनं लौकिकं तस्मिन्नित्यर्थः । **धातुसाम्यकरत्वान्न दोषतेति** । धातुसाम्यार्थं वमने क्रियमाणे तात्कालिकेन्द्रियशोषो भवति चेद्भवत्वित्यङ्गीकृतत्वान्न दोष इत्यर्थः । **मन्त्रलिङ्गादिति** । सोमरसं प्रति नाभिमतिक्रम्य मागा इत्यूर्ध्वमुखत्वनिषेधकमन्त्रलिङ्गादित्यर्थः । **ननु** अनुत्पत्तौ तत्त्वान्तरत्वापादनमयुक्तमविद्यादि-

हितत्वावधारणात् । अवान्तरप्रकृतिविषयं त्वेतत्स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यम्; व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः । वियदधिकरणे हि 'गौण्यसंभवात्' इति पूर्वपक्षसूत्रत्वाद्गौणी जन्मश्रुतिरसंभवादिति व्याख्यातम् । प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः, इह तु सिद्धान्तसूत्रत्वाद्गौण्या जन्मश्रुतेरसंभवादिति व्याख्यातम् । तदनुरोधेन त्विहापि गौणी जन्मश्रुतिरसंभवादिति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात् ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

इतश्चाकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः । यज्जायत इत्येकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सदुत्तरेष्वप्याकाशादिष्वनुवर्तते । 'एतस्माज्जायते प्राणः' ( मु० २।१।३ ) इत्यत्राकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितं तत्सामान्यात्प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति । नह्येकस्मिन्प्रकरण एकस्मिंश्च वाक्य एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यम्; वैरूप्यप्रसङ्गात् । तथा 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' ( प्रश्न० ६।४ ) इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वप्युत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते । यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते तत्राप्येष एव न्यायः । यथा 'सर्वाणि भूतानि व्युच्चरन्ति' इत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इत्येतस्मिन्प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोबन्नानामेव च त्रयाणां भूतानामुत्पत्तिश्रवणात्; तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसां तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति । तथाहि— अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते—'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' ( छा० ६।५।४ ) इति । तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वं ततो वर्तत एव ब्रह्मप्रभवत्वम् । अथ भाक्तम्, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात् 'येनाश्रुतं श्रुतं भवति' ( छा० ६।१।३ ) इति चोपक्रमात् 'ऐतदात्म्यमिदं सर्वम्' ( छा० ६।८।७ ) इति चोपसंहाराच्छ्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते । तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः ॥ ४ ॥ इति प्रथमं प्राणोत्पत्त्यधिकरणम् ॥

---

### भामती ।

विकारा इति । नच चैत्यवन्दनादिवत्सर्वथा प्राणानामुत्पत्त्यश्रुतिः; क्वचित् खल्वेषामुत्पत्त्यश्रवणमुत्पत्तिश्रुतिस्तु तत्र तत्र दर्शिता । तस्माद्वैषम्यं चैत्यवन्दनयोषधादिभिरिति । केचित्—वियदधिकरणव्याख्यानेन गौण्यसंभवादिति सूत्रं व्याचक्षते । गौणी प्राणानामुत्पत्तिश्रुतिसंभवादुत्पत्तेः इति, तदयुक्तम्; विकल्पासहत्वात् । तथाहि—प्राणानां जीववद्वाऽविकृतब्रह्मात्मतयानुपपत्तिः स्यात्, ब्रह्मणस्तत्त्वान्तरतया वा । न तावज्जीववदेषामविकृतब्रह्मात्मता; जडत्वात् । तस्मात्तत्त्वान्तरतयैषामनुत्पत्तिरास्थेया । तथाच ब्रह्मवेदनेन सर्ववेदनप्रतिज्ञाव्याहतिः, समस्तवेदान्तव्याकोपश्चेत्येतदाह—वियदधिकरणे हीति ॥ २ ॥ निगदव्याख्यातमस्य भाष्यम् ॥ ३ ॥ वाच इति वाक्प्राणमनसामुपलक्षणम् । अयमर्थः—यत्रापि तेजःप्रभृतीनां सृष्टौ प्राणसृष्टिर्नोक्तेति ब्रूषे, तत्राप्युक्तेति ब्रूमहे । तथाहि—यस्मिन्

### वेदान्तकल्पतरुः ।

ब्रह्मणो विकारा इत्युपरि संबध्यते । भूयसीनां प्राणोत्पत्तिश्रुतीनां ब्रह्मविज्ञानात्सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थस्य चोत्तरस्य संदर्भस्य प्राणसृष्टिपरस्य प्राणा व्युच्चरन्तीत्यादेरनुग्रहाय तदीयान् प्राणानपेक्ष्य सा श्रुतिरुपपन्नार्थेति योजना । उपवासवाची योषधशब्द इति बौद्धाधिकरणे ( ब्र, अ. २ पा. २ अधि. ५ ) उक्तम् । तत्त्वान्तरतयैषामनुत्पत्तिरास्थेयेति ।

( २ अधिकरणम् ) **सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥**

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः। संख्याविषय इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति, संप्रति तु कतीतरे प्राणा इति संप्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः। क्वचित्सप्त प्राणाः संकीर्त्यन्ते—'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मुण्ड० २।१।८ ) इति। क्वचिच्चाष्टौ प्राणा ग्रहत्वेन गुणेन संकीर्त्यन्ते—'अष्टौ ग्रहा अष्टावतिग्रहाः' ( बृ० ३।२।१ ) इति। क्वचिन्नव—'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' ( तै० सं० ५।१।७।१ ) इति। क्वचिद्दश—'नव वै पुरुषे प्राणा नाभिर्दशमी' इति। क्वचिदेकादश—'दशेमे पुरुषे प्राणा आत्मैकादशः' ( बृ० ३।९।४ ) इति। क्वचिद्द्वादश—'सर्वेषां स्पर्शानां त्वगेकायनम्' ( बृ० २।४।

## भामती ।

प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते 'अन्नमयं हि' इत्यादिना, तद्यदि मुख्यार्थं ततस्तत्सामान्यात्सर्वेषामेव प्राणानां सृष्टिरुक्ता। अथ गौणम्, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायामुपक्रमोपसंहारपर्यालोचनया श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चार्थमेव प्राणादीनामापोमयत्वाद्यभिधानमित्युक्तैव तत्रापि प्राणसृष्टिरिति सिद्धम् ॥ ४ ॥ **इति प्रथमं प्राणोत्पत्त्यधिकरणम् ॥**

**सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥**

अवान्तरसंगतिमाह—**उत्पत्तिविषय इति**। संशयकारणमाह—**श्रुतिविप्रतिषेधादिति**। **विशयः** संशयः। **क्वचित् सप्त प्राणाः**। **तद्यथा**—चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति। क्वचिदष्टौ प्राणा **ग्रहत्वेन** बन्धनेन गुणेन संकीर्त्यन्ते। **तद्यथा**—घ्राणरसनवाक्चक्षुःश्रोत्रमनोहस्तत्वगिति, त एते ग्रहाः। एषां तु विषया अतिग्रहस्त्वष्टावेव 'प्राणो वै ग्रहः सोऽपानेनातिग्रहणे गृहीतोऽपानेन हि गन्धान् जिघ्रति' इत्यादिना संदर्भेणोक्ताः। **क्वचिन्नव**। **तद्यथा—सप्त वै शीर्षण्याः** प्राणाः **द्वाववाञ्चाविति**। द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका वागिति सप्त। पायूपस्थौ बुद्धिमनसी वा द्वाववाञ्चाविति नव। **क्वचिद्दश**। **नव वै पुरुषे** प्राणास्त उक्ता नाभिर्दशमीति। **क्वचिदेकादश—'दशेमे पुरुषे प्राणाः**।' **तद्यथा**—बुद्धीन्द्रियाणि घ्राणादीनि पञ्च कर्मेन्द्रियाण्यपि हस्तादीनि पञ्चात्मैकादश, आप्नोति व्याप्नोत्यधिष्ठानेनेत्यात्मा मनः स एकादश इति। **क्वचिद्द्वादश**। **'सर्वेषां स्पर्शानां त्वगेकायनम्'**

## वेदान्तकल्पतरुः ।

अविद्यादिवदनाद्यध्याससिद्धये साक्षिणाऽव्यवधानात् सुषुप्तेऽप्युपलम्भप्रसङ्गादित्यर्थः। **तत्सामान्यादिति**। अन्नादीनां ह्रासे ह्रासाद्वृद्धौ वृद्धेर्हि मनआदीनामन्नादिमयत्वं श्रुत्योच्यते, तदिन्द्रियान्तराणामपि तुल्यमित्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ब्रह्मकर्तृकायां नामरूपव्याक्रियायां विषये यावुपक्रमोपसंहारौ तत्पर्यालोचनया हेतुना उक्तैव सृष्टिदृष्टिरित्यन्वयः ॥ ४ ॥ **इति प्रथमं प्राणोत्पत्त्यधिकरणम् ॥**[1]

**सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥**

पूर्वपक्षे सप्तभ्यः प्राणेभ्यस्त्वम्पदार्थस्य विवेको ज्ञातव्यः। सिद्धान्ते एकादशभ्य इति प्रयोजनम्। ग्रहत्वेनेत्यस्य व्याख्यानं—**बन्धनेनेति**। रागोत्पादनेनेन्द्रियाकर्षकत्वाद् विषयाणामतिग्रहत्वम्। **प्राण** इति प्राणेन्द्रियं लक्षणयोच्यते। **अपान** इति च गन्धः। अपानेन गन्धलक्षणायां हेतुं श्रुतिरेवाह—**अपानेन हीति**। अपश्वासेनेत्यर्थः। **अधिष्ठाने-**

## कल्पतरुपरिमलः ।

वदनुत्पत्तावप्यतत्त्वान्तरत्वोपपत्तेरित्याशङ्क्याह—**अविद्यादीति** ॥ २ ॥ ३ ॥ ४ ॥ **इति प्रथमं प्राणोत्पत्त्यधिकरणम् ।**

**सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥**

**पूर्वपक्ष इति**। यस्मात्स्थूलात्सूक्ष्माच्च शरीरात् त्वम्पदार्थो विवेक्तव्यः, तस्मिन् भौतिके विषये श्रुतिविरोधपरिहारार्थोऽयं पादः। तत्र सप्तैव प्राणा लिङ्गशरीरान्तर्गतास्तदा तेभ्य एव त्वम्पदार्थो विवेक्तव्यः, एकादश चेदन्येभ्योऽपीति प्रयोजनमित्यर्थः। ग्रहानतिशेरत इति व्युत्पत्तिमाश्रित्यातिग्रहशब्दस्य विषयेषु वृत्तौ हेतुमाह—**रागोत्पादनेनेति**। **अपानइति च गन्ध इति**। लक्षणयोच्यत इत्यनुषङ्गः। **अपानेनेति**। अपानशब्देन गन्धस्य लक्षणायां हेतुं तद्वाच्ये-

१ **तत्र सूत्राणि ४**—तथा प्राणाः १ गौण्यसंभवात् २ तत्प्राक्श्रुतेश्च ३ तत्पूर्वकत्वाद्वाचः ४ ॥

११ ) इत्यत्र । क्वचिन्नयोदश—'चक्षुश्च द्रष्टव्यं च' ( बृ० ४।८ ) इत्यत्र । एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः । किं तावत्प्राप्तम् ? सप्तैव प्राणा इति । कुतः ? गतेः । यतस्तावन्तोऽवगम्यन्ते—'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मुण्ड० २।१।८ ) इत्येवंविधासु श्रुतिषु । विशेषिताश्चैते 'सप्त वै शीर्षण्याः प्राणाः' इत्यत्र । ननु 'प्राणा गुहाशया निहिताः सप्त सप्त' ( मुण्ड० २।१।८ ) इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान्प्राणान्गमयतीति । नैष दोषः; पुरुषभेदाभिप्रायेयं वीप्सा प्रतिपुरुषं सप्त सप्त प्राणा इति, न तत्त्वभेदाभिप्राया सप्त सप्तान्येऽन्ये प्राणा इति । नन्वष्टत्वादिकापि संख्या प्राणेषूदाहृता, कथं सप्तैव स्युः ? सत्यमुदाहृता । विरोधात्त्वन्यतमा संख्याध्यवसातव्या । तत्र स्तोककल्पनानुरोधात्सप्तसंख्याध्यवसानम् । वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते ॥ ५ ॥ अत्रोच्यते—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते—'हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति' ( बृ० ३।२।८ ) इत्येवमाद्यासु श्रुतिषु । स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभावयितुम् । हीनाधिकसंख्याविप्रतिपत्तौ ह्यधिका संख्या संग्राह्या भवति तस्यां हीनान्तर्भवति, न तु हीनायामधिका । अतश्च नैवं मन्तव्यं स्तोककल्पना-

### भामती ।

इत्यत्र तद्यथा—त्वङ्नासिकारसनचक्षुःश्रोत्रमनोहृदयहस्तपादोपस्थपायुवागिति । क्वचिदेत एव प्राणा अहंकाराधिकास्त्रयोदश । एवं विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः । अत्र प्रश्नपूर्वं पूर्वपक्षं गृह्णाति—किं तावत् प्राप्तं? सप्तैवेति । सप्तैव प्राणाः । कुतः ? गतेः अवगतेः । श्रुतिभ्यः 'सप्त प्राणाः प्रभवन्ति' इत्यादिभ्यः । न केवलं श्रुतितोऽवगतिः; विशेषणादप्येवमेवेत्याह—विशेषितत्वाच्च । सप्त वै शीर्षण्याः प्राणा इति । ये सप्त शीर्षण्याः श्रोत्रादयस्ते प्राणा इत्युक्ते इतरेषामशीर्षण्यानां हस्तादीनामप्राणत्वं गम्यते । यथा दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीति गम्यते । एतदुक्तं भवति—यद्यपि श्रुतिविप्रतिषेधो यद्यपि च पूर्वसंख्यासु न परासां संख्यानां निवेशः, तथाप्यवच्छेदकत्वेन बह्वीनां संख्यानामसंभवादेकस्यां कल्प्यमानायां सप्तत्वमेव युक्तं प्राथम्याल्लाघवाच्च वृत्तिभेदमात्रविवक्षया त्वष्टत्वादयो गमयितव्या इति प्राप्तम् ॥ ५ ॥ एवं प्राप्त उच्यते—हस्तादयस्तु स्थितेऽतो नैवम् । तुशब्दः पक्षं व्यावर्तयति । न सप्तैव, किंतु हस्तादयोऽपि प्राणाः । प्रमाणान्तरादेकादशत्वे प्राणानां स्थितेऽतोऽस्मिन् सति सार्वविभक्तिकस्तसिः । नैवम् लाघवात् प्राथम्याच्च सप्तत्वमित्यक्षरार्थः । एतदुक्तं भवति—यद्यपि श्रुतयः स्वतःप्रमाणतयाऽनपेक्षाः; तथापि परस्परविरोधान्नार्थतत्त्वपरिच्छेदायालम् । नच सिद्धे वस्तुनि अनुष्ठान इव विकल्पः संभवति । तस्मात् प्रमाणान्तरोपनीतार्थवशेन व्यवस्थाप्यन्ते । यथा—हीनेति । 'स्रुवेणावद्यति' इति मांसपुरोडाशावदानासंभवात्, संभवाच्च द्रवावदानस्य स्रुवावदाने द्रवाणीति व्यवस्थाप्यते । एवमिहापि रूपादिबुद्धिपञ्चककार्यव्यवस्थातश्चक्षुरादिबुद्धीन्द्रियकरणपञ्चकव्यवस्था । नह्यन्धादयः सत्स्वपीतरेषु घ्राणादिषु गन्धाद्युपलब्ध्यानुमितसद्भावेषु रूपादीनुपलभन्ते । तथा वचनादिलक्षणकार्यपञ्चकव्यवस्थातो वाक्पाण्यादिलक्ष-

### वेदान्तकल्पतरुः ।

नेत्यात्मेति । इन्द्रियाणीति शेषः । स्पर्शानां लगेकायनमाश्रयः ग्राहकत्वात् । ननु शीर्षण्याः प्राणाः सप्तेत्युक्तेऽर्थादशिरस्याः प्राणा अन्ये सन्तीति गम्यतेऽत आह—ये सप्तेति । नेह शीर्षण्यान् प्राणानुद्दिश्य सप्तत्वं विधीयते; अन्यतोऽवगमाद् अनुवादत्वापत्तेः, किंतु शीर्षण्यान् सप्त श्रोत्रादीनुद्दिश्य प्राणत्वम् । तथाच प्राणान्तरस्य व्यावृत्तिः फलमित्यर्थः । नन्वष्टत्वादिसंख्या अपि प्राणेषु श्रूयन्ते, नच ताः सप्तत्वे अन्तर्भवन्ति, अन्तर्भवति तु तासु सप्तत्वमतः कथं सप्तसंख्यानियमः ? तत्राह—यद्यपीति । इह रूपोपलब्ध्यादिकार्यवशादनुमानानुगृहीतैकादशत्वश्रुत्यैकादशेन्द्रियाणीति सिद्धान्त्यते, तदयुक्तम्; श्रुतेः परतः प्रामाण्यप्रसङ्गादित्याशङ्क्याह—यद्यपि श्रुतय इति । श्रुतीनां परस्परविरोधाववोधकत्वभ्रमे तद्व्युदासेन तात्पर्यनिर्णयायानुमानानुसरणमित्यर्थः ॥ ५ ॥ स्रुवेणेति । प्रमाणलक्षणे स्थितम्—अर्थाद्वा कल्पनैकदेशत्वात् ( जै. अ. १ पा. ४ सू. ३० ) ॥ स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यतीति श्रूयते ।

### कल्पतरुपरिमलः ।

नापश्वासेन करणेनाविययत्वरूपं संबन्धं श्रुतिरेव वदतीत्यर्थः । प्राणान्तरव्यावृत्तिरिति । अशीर्षण्यानां प्राणत्वव्यावृत्ति-

नुरोधात्सप्तैव प्राणाः स्युरिति। उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः—'दशेमे पुरुषे प्राणा आत्मैकादशः' (बृ० ३।९।४) इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते; करणाधिकारात्। नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते। सत्यमुदाहृते, नत्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति यदर्थमधिकं करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदास्तदर्थानि पञ्च बुद्धीन्द्रियाणि। वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदास्तदर्थानि च पञ्च कर्मेन्द्रियाणि। सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम्। तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते—'मनो बुद्धिरहंकारश्चित्तं च' इति। तथाच श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह—'एतत्सर्वं मन एव' (बृ० १।५।३) इति। अपिच सप्तैव शीर्षण्यान्प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः। स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते 'द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्' इति। नच तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुम्; हस्तादिवृत्तीनामत्यन्तविजातीयत्वात्। तथा 'नव वै पुरुषे प्राणा नाभिर्दशमी' इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण; नाभिर्दशमीति वचनात्। नहि नाभिर्नाम कश्चित्प्राणः प्रसिद्धोऽस्ति। मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते। क्वचिदुपासनार्थं कतिचित्प्राणा गण्यन्ते क्वचित्प्रदर्शनार्थम्। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किंपरमाम्नानमिति विवेक्तव्यम्। कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम् ॥ ६ ॥

---

## भामती।

णकर्मेन्द्रियपञ्चकव्यवस्था। नहि जातु मूकादयः सत्स्वपि विहरणाद्यवगतसद्भावेषु पादादिषु बुद्धीन्द्रियेषु वा वचनादिमन्तो भवन्ति। एवं कर्मबुद्धीन्द्रियासंभविन्या संकल्पादिक्रियाव्यवस्थयान्तःकरणव्यवस्थानुमानम्। एकमपि चान्तःकरणमनेकक्रियाकारि भविष्यति, यथा प्रदीप एको रूपप्रकाशवर्तिविकारस्नेहशोषणहेतुः। तस्मान्नान्तःकरणभेदः। एकमेव त्वन्तःकरणं मननान्मन इति चाभिमानादहंकार इति चाध्यवसायाद्बुद्धिरिति चाख्यायते। वृत्तिभेदाच्चाभिन्नमपि भिन्नमिवोपचर्यते त्रयमिति। तत्त्वेन त्वेकमेव; भेदे प्रमाणाभावात्। तदेवमेकादशानां कार्याणां व्यवस्थानादेकादश प्राणा इति श्रुतिराज्ञसी। तदनुगुणतया त्वितराः श्रुतयो नेतव्याः। तत्रावयुत्यनुवादेन सप्ताष्टनवदशसंख्याश्रुतयो यथैकं वृणीते द्वौ वृणीते इति त्रीन् वृणीत इत्येतदानुगुण्यात्। द्वादशत्रयोदशसंख्याश्रुती तु कथंचिद्वृत्तिभेदेन भेदं विवक्षित्वोपासनादिपरतया नेतव्ये। तस्मादेकादशैव प्राणा नेतर इति सिद्धम्। अपिच शीर्षण्यानां प्राणानां यत्सप्तत्वाभिधानं, तदपि चतुर्ष्वेव व्यवस्थापनीयम्; प्रमाणान्तरविरोधात्। न खलु द्वे चक्षुषी; रूपोपलब्धिलक्षणस्य कार्यस्याभेदात्। पिहितैकचक्षुषस्तु न तादृशी रूपोपलब्धिर्भवति, यादृशी समग्रचक्षुषः, तस्मादेकमेव चक्षुरधिष्ठानभेदेन तु भिन्नमिवोपचर्यते। काणस्याप्येकगोलकगतेन चक्षुरवयवेनोपलम्भः। एतेन घ्राणश्रोत्रे अपि व्याख्याते ॥ ६ ॥

## वेदान्तकल्पतरुः।

स्वधितिरुभयतोधारः क्षुरः, अवदानं चास्ति द्रवाणामाज्यादीनां संहतानां च मांसादीनाम्। तत्राविशेषश्रवणादनियमे प्राप्ते राद्धान्तः। अशक्यार्थविध्यसंभवाद्विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति। शक्तश्च स्रुवो द्रवस्यावदाने स्वधितिर्मांसस्य हस्तश्च पुरोडाशस्य। तस्मादर्थात्सामर्थ्यात्कल्पनाव्यवस्था; सामर्थ्यस्य योग्यतारूपस्य बोधकैकदेशत्वादिति। **मननात्।** संशयादिरूपविचारकरणादित्यर्थः। **भेदे प्रमाणाभावादिति।** चक्षुष इव शब्दोपलब्धौ वृत्तिमन्मनसोऽध्यवसायादिकार्ये व्यतिरेकानवगमादित्यर्थः। **अवयुत्यानुवादेनेति।** न तावत्सप्त वै शीर्षण्याः प्राणा इति श्रुतिरज्ञातार्थबोधनपरा; "सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः, शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान्दधाती" त्युखाधूपनस्तुतिपरत्वात्। **सप्तभि**र्वेसवस्त्वा धूपयन्त्वित्यादिमन्त्रैरित्यर्थः। ततः प्राणान्तरव्यावृत्तिपरत्वयोजना न युक्ता।

## कल्पतरुपरिमलः।

रित्यर्थः ॥ ६ ॥ **उखाधूपनस्तुतिपरत्वादिति।** तथाच ये शीर्षण्याः प्राणास्ते सप्तेति लोकसिद्धार्थानुवादेन सप्तभि-

इयमपरा सूत्रद्वययोजना—सप्तैव प्राणाः स्युर्यतः सप्तानामेव गतिः श्रूयते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृ० ४।४।२ ) इत्यत्र । ननु सर्वशब्दोऽप्यत्र पठ्यते तत्कथं सप्तानामेव गतिः प्रतिज्ञायत इति ? विशेषितत्वादित्याह । सप्तैव हि प्राणाश्चक्षुरादयस्त्वक्पर्यन्ता विशेषिता इह प्रकृताः 'स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति' ( बृ० ४।४।१ ) 'एकीभवति न पश्यतीत्याहुः' ( बृ० ४।४।२) इत्येवमादिनानुक्रमणेन । प्रकृतगामी च सर्वशब्दो भवति यथा सर्वे ब्राह्मणा भोजयितव्या इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते नान्ये । एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते नान्य इति । नन्वत्र विज्ञानमष्टममनुक्रान्तं, कथं सप्तानामेवानुक्रमणम् ? नैष दोषः; मनोविज्ञानयोस्तत्त्वाभेदाद्वृत्तिभेदेऽपि सप्तत्वोपपत्तेः । तस्मात्सप्तैव प्राणा इति ॥ एवंप्राप्ते ब्रूमः—हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते—'हस्तौ वै ग्रहः' ( बृ०३।२।८ ) इत्यादिश्रुतिषु । ग्रहत्वं च बन्धनभावो गृह्यते, बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति, स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य । तस्माच्छरीरान्तरसंचारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति । तथाच स्मृतिः—'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ।' इति प्राङ्मोक्षाद्ग्रहसंज्ञकेनानेन बन्धनेनावियोगं दर्शयति । आथर्वणे च विषयेन्द्रियानुक्रमणे 'चक्षुश्च द्रष्टव्यं च' इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति—'हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च

---

## भामती ।

**इयमपरा सूत्रद्वययोजना—सप्तैव प्राणाः** चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वच उत्क्रान्तिमन्तः स्युः । सप्तानामेव गतिश्रुतेर्विशेषितत्वादिति व्याख्यातुं शङ्कते—**ननु सर्वशब्दोऽप्यत्रेति** । अस्योत्तरं—**विशेषितत्वादिति** । चक्षुरादयस्त्वक्पर्यन्ता उत्क्रान्तौ विशेषिताः । तस्मात्सर्वशब्दस्य प्रकृतापेक्षत्वात्सप्तैव प्राणा उत्क्रामन्ति न पाण्यादय इति प्राप्तम् । चोदयति—**नन्वत्र विज्ञानमष्टममिति** । 'न विजानातीत्याहुः' इत्यनेनानुक्रान्तम् । परिहरति—**नैष दोष इति** ॥

सिद्धान्तमाह—**हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः** उत्क्रान्तिभाजोऽवगम्यन्ते ग्रहत्वश्रुतेर्हस्तादीनाम् । एवं खल्वेषां ग्रहत्वाम्नानमुपपद्येत । यद्यामुक्तेरात्मानं बध्नीयुरितरथा षाट्कौशिकशरीरवदेषां ग्रहत्वं नाम्नायेत । अतएव च स्मृतिरेषां मुक्त्यवधितामाह—**पुर्यष्टकेनेति** । तथाथर्वणश्रुतिरप्येषामेकादशानामुत्क्रान्तिमभिवदति ।

## वेदान्तकल्पतरुः ।

यद्यपि दशेमे पुरुषे प्राणा आत्मैकादश इत्यनुवाद एव; तथापि सदनुवाद इति विशेषः । एकं वृणीत इत्यत एव प्राण ( ब्र. अ. २ पा. ३ सू. २३ ) इत्यत्र व्याख्यातम् ॥ ६ ॥

पूर्वयोजनायां हि गतेरित्यस्यावगतेरिति क्लिष्टा योजना । श्रुत्यन्तरगताधिकप्राणावगतेश्च वृत्तिभेदविषयकल्पनाक्लेशः । ये सप्त तएव प्राणा इति योजनायां परिसंख्यापत्तिरिति व्याख्यानान्तरमाह—**इयमपरेति** । अस्मिन्व्याख्याने प्राणानां सप्तत्वं नावध्रियते, पूर्वस्मादविशेषापातात्, किंतु सन्त्वन्ये प्राणाः, उत्क्रान्तिस्तु सप्तानामेवेति । **सप्तैव प्राणा**

## कल्पतरुपरिमलः ।

धूपनस्य स्तुतिरिति युक्तम्, ननु ये शीर्षण्यास्तएव प्राणा इत्यलौकिकार्थपरत्वमिति भावः ॥ **तथापि सदनुवाद इति विशेष इति । ननु** शीर्षण्याः प्राणाः सप्तेत्यपि सदनुवाद एव, को विशेषः ? नेति ब्रूमः; वस्तुतश्चत्वार एव हि शीर्षण्याः प्राणा इति वक्ष्यते टीकायाम् । एकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानान्न चक्षुर्द्वित्वम्, एकविनाशे द्वितीयाविनाशान्नैकत्वमित्यक्षपादेन पूर्वोत्तरपक्षसूत्राभ्यां व्यवस्थापितं चक्षुर्द्वित्वं च दूषयिष्यते ॥ ६ ॥

इयमपरा योजनेत्यादिग्रन्थेनेन्द्रियाणामेकादशत्वमङ्गीकृत्यैवोत्क्रामदिन्द्रियसंख्याविषयश्रुतिकलहवारणार्थं वर्णकान्तरमारब्धम् ॥ तत्र सप्तैवोत्क्रामन्ति, अन्यानि तु शरीरवत्प्रतिजन्म जायन्त इति पूर्वपक्षः । एकादशाप्युत्क्रामन्तीति सिद्धान्तः । अस्मिन् वर्णके पूर्ववर्णकादुत्कर्षं दर्शयितुं पूर्ववर्णके पूर्वपक्षसूत्रयोजनाक्लेशं पूर्वपक्षोपपादनाय तद्विरुद्धश्रुतियोजनाक्लेशं च दर्शयति—**पूर्वयोजनायां हीति । वृत्तिभेदविषयत्वकल्पनेति** । यद्यपि द्वितीयवर्णकपूर्वपक्षेऽपि ते

विसर्जयितव्यं च पादौ च गन्तव्यं च' ( प्र० ४।८ ) इति। तथा 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति' ( बृ० ३।९।४ ) इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति। सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानोऽशेषान्प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते; प्रकरणाच्छब्दस्य बलीयस्त्वात्। सर्वे ब्राह्मणा भोजयितव्या इत्यत्रापि सर्वेषामेवावनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यम्; सर्वशब्दसामर्थ्यात्। सर्वभोजनासंभवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता, इह तु न किंचित्सर्वशब्दार्थसंकोचने कारणमस्ति। तस्मात्सर्वशब्देनात्राशेषाणां प्राणानां परिग्रहः। प्रदर्शनार्थं च सप्तानामनुक्रमणमित्यनवद्यम्। तस्मादेकादशैव प्राणाः शब्दतः कार्यतश्चेति सिद्धम्॥ ६॥ इति द्वितीयं सप्तगत्यधिकरणम्॥

( ३ अधिकरणम् ) **अणवश्च ॥ ७॥**

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति। अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः। अणुत्वं चैषां सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्; कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात्। सूक्ष्मा एते प्राणाः, स्थूलाश्चेत्स्युर्मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन्म्रियमाणस्य पार्श्वस्थैः। परिच्छिन्नाश्चैते प्राणाः, सर्वगताश्चेत्स्युरुत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्। तद्गुणसारत्वं च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्, न; वृत्तिमात्रस्य करणत्वोपपत्तेः। यदेव ह्युपलब्धिसाधनं वृत्तिरन्यद्वा तस्यैव नः करणत्वं संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका। तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः॥ ७॥ इति तृतीयं प्राणाणुत्वाधिकरणम्॥

---

## भामती।

तस्माच्छ्रुत्यन्तरेभ्यः स्मृतेश्च सर्वशब्दार्थासंकोचाच्च सर्वेषामुत्क्रमणे स्थितेऽस्मिन्नेवं यदुक्तं सप्तैवेति, किंतु प्रदर्शनार्थं सप्तत्वसंख्येति सिद्धम्॥ ६॥ इति द्वितीयं सप्तगत्यधिकरणम्॥

**अणवश्च ॥ ७॥**

अत्र सांख्यानामाहंकारिकत्वादिन्द्रियाणामहंकारस्य च जगन्मण्डलव्यापित्वात्सर्वगताः प्राणाः वृत्तिस्तेषां शरीरदेशतया प्रादेशिकी तन्निबन्धना च गत्यागतिश्रुतिरिति मन्यन्ते, तान्प्रत्याह—**अणवश्च** ॥ प्राणा अनुद्भूतरूपस्पर्शता चाणुत्वं दुरधिगमत्वान्न तु परमाणुत्वं; देहव्यापिकार्यानुत्पत्तिप्रसङ्गात्, तापदूनस्य शिशिरह्रदनिमग्नस्य सर्वाङ्गीणशीतस्प-

## वेदान्तकल्पतरुः।

**इति भाष्ये च** उत्क्रामन्तीत्यध्याहार्यम्। प्रयोजनं तूत्क्रामतामेव प्राणानां सर्वदेहानुयायित्वेन बन्धकत्वादध्यात्माधिदैविकोपासनेषु सप्तानामुपास्तिः पूर्वपक्षे, सिद्धान्ते त्वेकादशानामिति॥ ५॥ ६॥ **इति द्वितीयं सप्तगत्यधिकरणम्॥**

**अणवश्च ॥ ७॥**

एकादशप्राणानामुत्क्रान्तिरुक्ता, सा न मुख्या; तेषां व्यापित्वादिति सङ्गतिगर्भं पूर्वपक्षमाह—**अत्रेति**। वृत्तिः

## कल्पतरुपरिमलः।

यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्तीति श्रुतेर्वृत्तिभेदविषयत्वकल्पनाक्लेशोऽस्ति, तथाप्यस्मिन् वर्णके स एक एव क्लेशः पूर्ववर्णके क्लेशत्रयमिति विशेषः। **आध्यात्माधिदैविकोपासनेष्विति**। अध्यात्मं वागादीनामधिदैवमग्न्यादीनां च सन्त्येकोपासनाद्ब्रह्मयादिशरीरप्राप्तिफलकानि, तेषु यानि शरीरान्तरेऽप्यनुवर्तमानानीन्द्रियाणि तान्येव तत्कतुन्यायादुपासनीयानि। अतः पूर्वपक्षे सप्तानामुपासनमेकादशानामपि सिद्धान्त इति फलभेदः॥ ६॥ **इति द्वितीयं सप्तगत्यधिकरणम्॥**

**अणवश्च ॥ ७॥**

द्वितीयवर्णकेन सङ्गतिमाह—**एकादशानां प्राणानामिति**। पादसङ्गतिस्तु प्रासङ्गिकी श्रुतिकलहनिरासाभावात्,

---

तत्र सूत्रे १—सप्त गतेर्विशेषितत्वाच्च ५ हस्तादयस्तु स्थितेऽतो नैवम् ६॥

( ४ अधिकरणम् ) **श्रेष्ठश्च ॥ ८ ॥**

मुख्यश्च प्राण इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति। तच्चाविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ( मुण्ड० २।१।३ ) इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्, 'स प्राणमसृजत' ( प्र० ६।४ ) इत्यादिश्रवणेभ्यश्च। किमर्थं पुनरतिदेशः ? अधिकाशङ्कापाकरणार्थः। नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' ( ऋ० सं० ८।७।१७ ) इति। आनीदिति प्राणकर्मोपादानात्प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति। तस्मादजः प्राण इति जायते कस्यचिन्मतिः। तामतिदेशेनापनुदति। आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति; अवातमिति विशेषणात्, 'अप्राणो ह्यमनाः शुभ्रः' इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात्। तस्मात्कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति, श्रेष्ठ इति च मुख्यं प्राणमभिदधाति; 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' ( छा० ५।१।१ ) इति श्रुतिनिर्देशात्। ज्येष्ठश्च प्राणः; शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात्। न चेत्तस्य तदानीं वृत्तिलाभः स्याद्योनौ निषिक्तं शुक्रं पूयेत न संभवेद्वा। श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम्। श्रेष्ठश्च प्राणः; गुणाधिक्यात्, 'न वै शक्ष्यामस्त्वदृते जीवितुम्' ( बृ० ६।१।१३ ) इति श्रुतेः ॥ ८ ॥ इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम् ॥

### भामती।

र्शोपलब्धिरस्तीत्युक्तम्। एतदुक्तं भवति—यदि सर्वगतानीन्द्रियाणि भवेयुस्ततो व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्गः। सर्वगतत्वेऽपि देहावच्छिन्नानामेव करणत्वं, तेन न व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्ग इति चेत्, हन्त प्राप्ताप्राप्तविवेकेन शरीरावच्छिन्नानामेव तेषां करणत्वमिन्द्रियत्वमिति न व्यापिनामिन्द्रियभावः। तथाच नाममात्रे विसंवादो नार्थे। अस्माभिस्तदिन्द्रियमुच्यते, भवद्भिस्तु वृत्तिरिति सिद्धमणवः प्राणा इति ॥ ७ ॥ इति तृतीयं प्राणाणुत्वाधिकरणम्॥

**श्रेष्ठश्च ॥ ८ ॥**

न केवलमितरे प्राणा ब्रह्मविकाराः श्रेष्ठश्च प्राणो ब्रह्मविकारः। 'नासदासीत्' इत्यधिकृत्य प्रवृत्ते ब्रह्मसूक्ते नासदासीये सर्गात्प्रागानीदिति प्राणव्यापारश्रवणादसति च व्यापारवति व्यापारानुपपत्तेः प्राणसद्भावाज्ज्येष्ठत्वश्रुतेश्च न ब्रह्मविकारः प्राण इति मन्वानस्य बहुश्रुतिविरोधेऽपि च श्रुत्योरेतयोर्गतिमपश्यतः पूर्वपक्षः। राद्धान्तस्तु बहुश्रुतिविरोधादेवानीदिति न प्राणव्यापारप्रतिपादिनी, किंतु सृष्टिकारणमानीत् जीवति स्म आसीदिति यावत्। तेन तत्सद्भावप्रतिपादनपरा। ज्येष्ठत्वं च श्रोत्राद्यपेक्षमिति गमयितव्यम्। तस्माद्बहुश्रुत्यनुरोधान्मुख्यस्यापि प्राणस्य ब्रह्मविकारत्वमिति सिद्धम् ॥ ८ ॥ इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम् ॥

### वेदान्तकल्पतरुः।

अभिव्यक्तिः। **दूनस्य** परितप्तस्य। अहंकारस्य व्यापित्वमसिद्धम्; आध्यात्मिकाहंकारस्याहंप्रत्ययेन परिच्छेदप्रतिभासात्। आधिदैविकव्यापकाहंकारसद्भावे च नास्ति प्रमाणम्; इन्द्रियाणां तत्प्रकृतिकत्वं तु षण्ढसुतसमम्, व्यापित्वं तु तेषां प्रतिज्ञातुमशक्यमसंभावितत्वादित्याह—**यदीति** ॥ ७ ॥ इति तृतीयं प्राणाणुत्वाधिकरणम् ॥[1]

**श्रेष्ठश्च ॥ ८ ॥**

पादाद्यधिकरणन्यायोऽत्रातिदिश्यते। ज्ञातेषु चक्षुरादिषु तद्व्यापारात् प्राणस्य भेदचिन्ता वक्ष्यमाणा सुकरेति तदनन्तरमनतिदेशः। आनीदित्यस्य महाप्रलयविषयत्वेनाधिकाशङ्कामाह—**नासदासीदितीति** ॥ ८ ॥ इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम् ॥[2]

### कल्पतरुपरिमलः।

सांख्यविप्रतिपत्तिमात्रनिरासात्। **परिच्छेदेति**। अहमिहैवास्मीति परिच्छेदभानादित्यर्थः। **आधिदैविकव्यापकेति**। यद्यपि व्यष्ट्यन्तःकरणचैतन्यसंवलनरूपास्मदादिव्यष्ट्यहङ्कारवत्समष्ट्यन्तःकरणचैतन्यसंवलनरूपः समष्ट्यहङ्कारोऽस्ति हैरण्यगर्भः, स तु व्यापक इति वक्तुं शक्यम्; तथापि सांख्याभिमतमहत्प्राकृतिकेन्द्रियप्रकृतिभूतव्यापकाहङ्कारसद्भावे प्रमाणं नास्तीति तात्पर्यम् ॥ ७ ॥ इति तृतीयं प्राणाणुत्वाधिकरणम् ॥

१ तत्र सूत्रम् १—अणवश्च ७ ॥ २ तत्र सूत्रम् १—श्रेष्ठश्च ८ ॥

(५ अधिकरणम्) **न वायुक्रिये पृथगुपदेशात्॥ ९॥**

स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते। तत्र प्राप्तं तावच्छ्रुतेर्वायुः प्राण इति। एवं हि श्रूयते—'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' इति। अथवा—तन्त्रान्तरीयाभिप्रायात्समस्तकरणवृत्तिः प्राण इति प्राप्तम्। एवं हि तन्त्रान्तरीया आचक्षते—सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्चेति। अत्रोच्यते—न वायुः प्राणो नापि करणव्यापारः। कुतः? पृथगुपदेशात्। वायोस्तावत्प्राणस्य पृथगुपदेशो भवति—'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च' (छान्दो० ३।१८।४) इति। नहि वायुरेव सन् वायोः पृथगुपदिश्येत। तथा करणवृत्तेरपि पृथगुपदेशो भवति; वागा-

भामती।

**न वायुक्रिये पृथगुपदेशात्॥ ९॥**

संप्रति मुख्यप्राणस्वरूपं निरूप्यते। अत्र हि 'यः प्राणः स वायुः' इति श्रुतेर्वायुरेव प्राण इति प्रतिभाति। **अथवा**—'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा' इति वायोर्भेदेन प्राणस्य श्रवणादेतद्विरोधाद्वरं तन्त्रान्तरीयमेव प्राणस्य स्वरूपमस्तु, श्रुती च विरुद्धार्थे कथंचिन्नेष्येते इति सामान्यकरणवृत्तिरेव प्राणोऽस्तु। नचात्रापि करणेभ्यः

वेदान्तकल्पतरुः।

**न वायुक्रिये पृथगुपदेशात्॥ ९॥**

संगतिमाह—**संप्रतीति**। उत्पत्तिचिन्तानन्तरमुत्पद्यमानस्वरूपं निरूप्यत इत्यर्थः। प्रयोजनं तु पूर्वपक्षे वायुमात्रादिन्द्रियमात्राच्च त्वंपदार्थस्य विवेकः कार्यः, सिद्धान्ते प्राणादपीति। भाष्ये श्रुतिबलेन वायुरेव प्राण इत्येकं पूर्वपक्षमुक्त्वा सांख्यप्रसिद्धकरणव्यापारः प्राण इति पक्षान्तरमुक्तमयुक्तम्; दृढश्रौतपक्षव्यतिरेकेण स्मार्तपक्षोपन्यासवैयर्थ्यादत आह—**अथवेति**। छान्दोग्येऽध्यात्मं मनो ब्रह्मेत्युपासीतेति उपक्रम्य मनआख्यब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैः पादैश्चतुष्पात्त्वमुक्तम्। वागादिभिर्हि मनःस्वविषयेषु प्रवर्तते, गौरिव पादैः तत्र प्राणा एवेति ब्रह्मणो वागाद्यपेक्षया चतुर्थः पादः। स च वायुनाऽऽधिदैविकेन भाति अभिव्यक्तो भवति। तपति च स्वव्यापारे उद्यच्छतीत्यर्थः। पदभाष्ये इन्द्रियप्रकरणाद् घ्राणेन्द्रियं प्राण इति व्याख्यातम्। अत्र तु प्राणशब्दश्रुतिवशान्मुख्यः प्राण इति। **एतद्विरोधादिति**। एतयोर्भेदाभेदश्रवणयोर्विरोधादित्यर्थः। किं श्रुती हातव्ये? नेत्याह—**कथंचिदिति**। त्वयापि हि वायुप्राणयोः स्वरूपाभेदमाश्रित्याभेदश्रुतिः वृत्तितद्वद्भेदाभिप्राया च भेदश्रुतिरिति व्याख्यातव्यमित्यर्थः। तर्हि किं वायुरेव प्राणोऽस्तु? तदपि नेत्याह—**इति सामान्येति**। यदा तु श्रुती त्याजितस्वार्थे, तदा करणव्यापारपरतयापि कथंचिच्छक्ययोजने। शक्यते हि करण-

कल्पतरुपरिमलः।

**श्रेष्ठश्च॥ ८॥**

**आनीदित्यस्येति**। सदसदात्मकसकलप्रपञ्चाभिव्यक्त्या महाप्रलयविषयत्वमानीदित्यस्यावगम्यत इत्यर्थः॥ ८॥

**इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम्॥**

**न वायुक्रिये पृथगुपदेशात्॥ ९॥**

एतस्माज्जायते प्राणः यः प्राणः स वायुरिति प्राणवायुभेदाऽभेदश्रुत्योर्विरोध इति **पूर्वपक्षः**। श्रुत्योर्विरोधे स्मृत्या तत्तात्पर्यं निर्णेतव्यमतः सांख्यस्मृत्या करणानां साधारणवृत्तिः प्राणो वायोर्भिन्न इति **सिद्धान्त्येकदेशिमतम्। पदभाष्य इति**। प्रतिपदविवरणरूपं छान्दोग्यभाष्यं पदभाष्यं, तत्र वागादीन्द्रियप्रायपाठात्प्राणो घ्राणमिति व्याख्यातम्; इह तु प्राणश्रुतिः प्रायपाठाद्बलीयसीति प्राणो मुख्यप्राण उक्त इत्यर्थः। कथंचिन्नयनं सिद्धान्तिनोऽपि तुल्यमित्याह—**त्वयापि हीति**। सिद्धान्तिनापि हि वायुप्राणयोः स्वरूपाभेदे तत्त्वाभेदमाश्रित्याभेदश्रुतिः वृत्तितद्वद्भेदाभिप्राया बाह्याध्यात्मिकव्यापारद्वैविध्याभिप्राया च भेदश्रुतिरिति व्याख्यातव्यम्। अतः कथंचिद्योजनं तन्मतेऽपि समानमित्यर्थः। **तर्हि किमिति**। प्राणो न वायुमात्रं, नापि वायोस्तत्त्वान्तरमिति सिद्धान्ते भेदाभेदश्रुत्योरुभयोरपि योजनायां क्लेशोऽस्ति चेत्, तर्ह्यभेद इति प्रथमपूर्वपक्ष एव किमिति नाद्रियते, तत्र हि भेदश्रुतिमात्रस्य क्लेशेन योजनेत्याशङ्कार्थः। परिहाराभिप्रायमाह—**यदा त्विति**। यदा प्रथमावस्थायां विरुद्धे श्रुती विनिगमनाविरहात्परस्परत्याजितार्थे वर्तेते, तदा लब्धप्रसरया स्मृत्या करणव्यापारः प्राण इति प्रतिपादिते श्रुती तत्परतया योज्येते। तत्र भेदश्रुतेर्योजनाया न कश्चन क्लेशः, अभेदश्रुतिस्तु

दीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात् । वृत्तिवृत्तिमतोश्चाभेदान्नहि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत । तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुः' ( मु० २।१।३ ) इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः । नच समस्तानां करणानामेका वृत्तिः संभवति; प्रत्येकमेकैकवृत्तित्वात्समुदायस्य चाकारकत्वात् । ननु पञ्जरचालनन्यायेनैतद्भविष्यति । यथैकपञ्जरवर्तिन एकादशपक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूयैकं पञ्जरं चालयन्ति, एवमेकशरीरवर्तिन एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति । नेत्युच्यते । युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः संभूयैकं पञ्जरं चालयेयुरिति; तथा दृष्टत्वात्, इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्; प्रमाणाभावात् । अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य । तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां, न करणवृत्तिमात्रे प्राणेऽवकल्पते । तस्मादन्यो वायुक्रियाभ्यां प्राणः । कथं तर्हीयं श्रुतिः ? 'यः प्राणः स वायुः' इति ? उच्यते—वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरं नापि वायुमात्रम् । अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते ॥ ९ ॥ स्यादेतत्—प्राणोऽपि तर्हि जीववदस्मिञ्शरीरे स्वातन्त्र्यं प्राप्नोति; श्रेष्ठत्वाद्गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम् । तथा ह्यनेकविधा विभूतिः प्राणस्य श्राव्यते—'सुप्तेषु वागादिषु प्राण एको हि जागर्ति प्राण एको मृत्युनानाप्तः प्राणः संवर्गो वागादीन्संवृङ्क्ते प्राण इतरान्प्राणान्रक्षति मातेव पुत्रान्' इति । तस्मात्प्राणस्यापि जीववत्स्वातन्त्र्यप्रसङ्गः । तं परिहरति—

## भामती ।

पृथक्प्राणस्यानुक्रमणश्रुतिविरोधो वृत्तिवृत्तिमतोर्भेदादिति पूर्वः पक्षः । सिद्धान्तस्तु—न सामान्येन्द्रियवृत्तिः प्राणः स हि मिलितानां वेन्द्रियाणां वृत्तिर्भवेत्, प्रत्येकं वा । न तावन्मिलितानाम्; एकद्वित्रिचतुरिन्द्रियाभावे तदभावप्रसङ्गात् । नो खलु चूर्णहरिद्रासंयोगजन्माऽरुणगुणस्तयोरन्यतराभावे भवितुमर्हति । नच बहुविष्टिसाध्यं शिबिकोद्वहनं द्वित्रिविष्टिसाध्यं भवति । नच त्वगेकसाध्यम्; तथा सति सामान्यवृत्तित्वानुपपत्तेः । अपिच यत्संभूय कारकाणि निष्पादयन्ति तत्प्रधानव्यापारानुगुणावान्तरव्यापारेणैव, यथा वयसां प्रातिस्विको व्यापारः पञ्जरचालनानुगुणः । न चेन्द्रियाणां प्राणे प्रधानव्यापारे जनयितव्येऽस्ति तादृशः कश्चिदवान्तरव्यापारस्तदनुगुणः । ये च रूपादिप्रत्यया न ते तदनुगुणाः, तस्मान्नेन्द्रियाणां सामान्यवृत्तिः प्राणः । तथाच वृत्तिवृत्तिमतोः कथंचिद्भेदविवक्षया न पृथगुपदेशो गमयितव्यः । तस्मान्न क्रिया, नापि वायुमात्रं प्राणः, किंतु वायुभेद एवाध्यात्ममापन्नः पञ्चव्यूहः प्राण इति ॥ ९ ॥ स्यादेतत्—यथा चक्षुरादीनां जीवं प्रति गुणभूतत्वाज्जीवस्य च श्रेष्ठत्वाज्जीवः स्वतन्त्र एवं प्राणोऽपि प्राधान्यात् श्रेष्ठत्वाच्च स्वतन्त्रः प्राप्नोति । नच द्वयोः स्वतन्त्रयोरेकस्मिन् शरीरे एकवाक्यत्वमुपपद्यत इत्यपर्यायं विरुद्धानेकदिक्क्रिय-

## वेदान्तकल्पतरुः ।

व्यापारे चलनाश्रयवाची वायुशब्द उपचरितुम् । तथाचाभग्नस्वार्थस्मृतिबलात्करणवृत्तिरेव प्राण इत्यर्थः । स्यादेतत्—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणिच" इत्यादौ करणेभ्योऽपि पृथक् प्राणः स्वतन्त्रवदुपदिश्यते, स कथं करणव्यापारमात्रः स्यादतोऽत्रापि समः श्रुतिविरोध इत्यत आह—नचात्रापीति । अस्ति तावद्वृत्तितद्वतोर्भेदः । यत्तु स्वतन्त्रवन्निर्देशः स जीवनाख्यकरणवृत्तेर्देहस्थित्युपयोगित्वेन प्राधान्यमभिप्रेत्येत्यर्थः । मा भूदनेकसाध्यो गुण एकस्मात्क्रिया तु किं न स्यादित्यत आह—नचेति । विष्टयो वाहकाः । प्रत्येकवृत्तित्वे च प्रतीन्द्रियं प्राणभेदप्रसङ्गः । यदि मन्येत नानेकेन्द्रियवृत्तिः प्राणो यतः प्रत्येकमिलितविकल्पावकाशः, किंतु त्वङ्मात्रवृत्तिरिति, तत्राह—नच त्वगिति । न ते तदनुगुणा इति । तदुपरमेऽपि सुषुप्तौ प्राणदर्शनादित्यर्थः । वायुभेद इति । वायोः परिणामरूपकार्यविशेष इत्यर्थः ॥ ९ ॥ संहतत्वादिति । सत्त्वादिगुणसंहतिरूपत्वादित्यर्थः । एतच्च सांख्यदृष्ट्योक्तम् । सिद्धान्तमाश्रित्याह—

## कल्पतरुपरिमलः ।

वयुशब्दस्यौपचारिकत्वकल्पनया शक्ययोजना । अतः पूर्वं पश्चाच्च भेदाभेदश्रुतिभ्यामभग्नस्वार्थस्मृत्यनुसारेण करणवृत्तिः प्राण इत्येव पूर्वपक्ष आद्रियत इत्यर्थः । प्रत्येकमिन्द्रियाणां वृत्तिः प्राण इति विकल्पे टीकायां दूषणं नोक्तम् । तत्र स्वयं दूषणमाह—प्रत्येकवृत्तित्व इति ॥ ९ ॥ १० ॥ पुरुषार्थत्वात् पुरुषं प्रति पारतन्त्र्यमिति हेतुसाध्ययोरभेदशङ्कां परि-

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुशब्दः प्राणस्य जीववत्स्वातन्त्र्यं व्यावर्तयति । यथा चक्षुरादीनि राजप्रकृतिवज्जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतन्त्राणि, तथा मुख्योऽपि प्राणो राजमन्त्रिवज्जीवस्य सर्वार्थकरत्वेनोपकरणभूतो न स्वतन्त्रः । कुतः ? तत्सहशिष्ट्यादिभ्यः । तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु । समानधर्मणां च सह शासनं युक्तं बृहद्रथंतरादिवत् । आदिशब्देन संहतत्वाचेतनत्वादीन्प्राणस्य स्वातन्त्र्यनिराकरणहेतून्दर्शयति ॥ १० ॥ स्यादेतत्—यदि चक्षुरादिवत्प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत्प्रसज्येत । रूपाद्यालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति । अपिचैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः नतु द्वादशमपरं कार्यजातमधिगम्यते यदर्थमयं द्वादशः प्राणः प्रतिज्ञायेतेति । अत उत्तरं पठति—

## अकरणत्वाच न दोषस्तथाहि दर्शयति ॥ ११ ॥

न तावद्विषयान्तरप्रसङ्गो दोषः । अकरणत्वात्प्राणस्य । नहि चक्षुरादिवत्प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते । नचास्यैतावता कार्याभाव एव । कस्मात् ? तथाहि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु—'अथ ह प्राणा अहंश्रेयसि व्यूदिरे' इत्युपक्रम्य 'यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' ( छा० ५।१।६,७ ) इति चोपन्यस्य प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति । 'तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति चैतमेवार्थं श्रुतिराह । 'प्राणेन रक्षन्नवरं कुलायम्' ( बृ० ४।३।१२ ) इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति । 'यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यति' ( बृ० १।३।१९ ) । 'तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति' इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति । 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति, 'स प्राणमसृजत' इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥ ११ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यं, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतेषु 'प्राणोऽपानो व्यान उदानः समानः' ( बृ० १।५।३ ) इति । वृत्तिभेदश्चायं कार्यभेदापेक्षः । प्राणः

---

### भामती ।

तया देह उन्मथ्येत, इति प्राप्ते उच्यते—**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः** । यद्यपि चक्षुराद्यपेक्षया श्रेष्ठत्वं प्राधान्यं च प्राणस्य; तथापि संहतत्वादचेतनत्वाद्भौतिकत्वाच्चक्षुरादिभिः सहशिष्टत्वाच्च पुरुषार्थत्वात् पुरुषं प्रति पारतन्त्र्यं शयनासनादिवद्भवेत् । तथाच यथा मन्त्री इतरेषु नैयोगिकेषु प्रधानमपि राजानमपेक्ष्यास्वतन्त्रः, एवं प्राणोऽपि चक्षुरादिषु प्रधानमपि जीवेऽस्वतन्त्र इति ॥ १० ॥ **स्यादेतत्**—चक्षुरादिभिः सह शासनेन करणं चेत् प्राणः, एवं सति चक्षुरादिविषयरूपादिवदस्यापि विषयान्तरं वक्तव्यम् । नच तच्छक्यं वक्तुम् । एकादशकरणगणनव्याकोपश्चेति दोषं परिहरति —**अकरणत्वाच्च न दोषस्तथाहि दर्शयति** । न प्राणः परिच्छेदधारणादिकरणमस्माभिरभ्युपेयते, येनास्य विषयान्तरमन्विष्येत । एकादशत्वं च करणानां व्याकुप्येतापि तु प्राणान्तरासंभवि देहेन्द्रियविधारणकारणं प्राणः । तच्च श्रुतिप्रबन्धेन दर्शितं न केवलं शरीरेन्द्रियधारणमस्य कार्यम् ॥११॥ अपिच—**पञ्चवृत्तिर्मनोवद्व्यपदि-**

### वेदान्तकल्पतरुः ।

**अचेतनत्वादिति** । एभिर्हेतुभिः पुरुषार्थत्वं पुरुषं प्रति शेषत्वं, ततश्च तत्पारतन्त्र्यमित्यर्थः ॥ **धारणादीति** । **धारणं** मेधा ॥ ११ ॥ मिथ्याज्ञानत्वे हेतुरतद्रूपप्रतिष्ठलम् । पातञ्जलसूत्रे शब्दज्ञानानुपातित्वविशेषणेन विकल्पस्य विपर्ययाद्भेद

### कल्पतरुपरिमलः ।

हरति—**पुरुषार्थत्वमिति** । परिच्छेदधारणादीति ग्रन्थे धारणशब्दार्थमाह—**धारणं मेधेति** । परिच्छेदाहरणादीति

प्राग्वृत्तिरुच्छ्वासादिकर्मा । अपानोऽर्वाग्वृत्तिर्निश्वासादिकर्मा । व्यानस्तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः । उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः । समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयतीति । एवं पञ्चवृत्तिः प्राणो मनोवत् । यथा मनसः पञ्च वृत्तय एवं प्राणस्यापीत्यर्थः । श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः, नतु कामः संकल्प इत्याद्याः परिपठिताः परिगृह्येरन् । पञ्चसंख्यातिरेकात् । नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्यातिरेकः । एवं तर्हि 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्चवृत्तयः परिगृह्यन्ते 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयो' ( पात० योग० सू० १।१।६ ) नाम । बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम् । जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यम् ॥ १२ ॥ इति पञ्चमं नवायुक्रियाधिकरणम् ॥

( ६ अधिकरणम् ) **अणुश्च ॥ १३ ॥**

अणुश्चायं मुख्यः प्राणः प्रत्येतव्य इतरप्राणवत् । अणुत्वं चेहापि सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वम्; पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात् । सूक्ष्मः प्राणः; उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात् । परिच्छिन्नश्चोत्क्रान्तिगत्यागतिश्रुतिभ्यः । ननु—विभुत्वमपि प्राणस्य समाम्नायते—'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' ( बृ० १।३।२२ ) इत्येवमादिप्रदेशेषु । तदुच्यते—आधिदैवकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैवैतद्विभुत्वमाम्नायते, नाध्यात्मिकेन । अपिच समः प्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोषः ॥ १३ ॥ इति षष्ठं श्रेष्ठाणुत्वाधिकरणम् ॥

---

### भामती ।

इष्यते । 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' यथा मरुमरीचिकादिषु सलिलादिबुद्धयः । अतद्रूपप्रतिष्ठता च संशयेऽप्यस्ति तस्यैकाप्रतिष्ठानात् । अतः सोऽपि संगृहीतः । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' । यद्यपि मिथ्याज्ञानेऽप्यस्ति वस्तुशून्यता; तथापि न तस्य व्यवहारहेतुतास्ति । अस्य तु पण्डितरूपविचारासहस्यापि शब्दज्ञानमाहात्म्याद्व्यवहारहेतुभावोऽस्त्येव । यथा पुरुषस्य चैतन्यमिति । नह्यत्र षष्ठ्यर्थः संबन्धोऽस्ति; तस्य भेदाधिष्ठानत्वात्, चैतन्यस्य पुरुषादत्यन्ताभेदात् । यद्यपि चात्राभावप्रत्ययालम्बना वृत्तिर्नेष्यते; तथापि विक्षेपसंस्कारलक्षणा मनोवृत्तिरिहास्त्येवेति सर्वमवदातम् ॥ १२ ॥ **इति पञ्चमं नवायुक्रियाधिकरणम् ॥**

**अणुश्च ॥ १३ ॥**

'समस्त्रिभिर्लोकैः' इति विभुत्वश्रवणाद्विभुः प्राणः, 'समः प्लुषिणा' इत्याद्यास्तु श्रुतयो विभोरप्यवच्छेदाद्भविष्यन्ति । यथा विभुन आकाशस्य कुटकरकाद्यवच्छेदात्कुटादिसाम्यमिति प्राप्त आह—**अणुश्च** । उत्क्रान्तिगत्यागतिश्रुतिभ्य

### वेदान्तकल्पतरुः ।

उक्तः । तं विशदयति—**यद्यपीति** । अधिष्ठानतत्त्वे प्रमिते व्यवहारहेतुत्वं विशेष इत्यर्थः । वस्तुशून्यत्वं विकल्पस्य दर्शयति—**नह्यत्रेति** । **ननु** मनसो निद्रावृत्तिरित्यसूत्रयत् पतञ्जलिरभावप्रत्ययेत्यादिना, सिद्धान्ते च सुषुप्तौ मनोलय इष्टः, अतः कथं तत्रान्तरस्थपञ्चवृत्तिताऽत आह—**यद्यपीति** । सूत्रमीक्षत्यधिकरणे ( ब्र. अ. १ पा. १ सू. ५ । ) व्याख्यातम् ॥ १२ ॥ **इति पञ्चमं नवायुक्रियाधिकरणम् ॥**

**अणुश्च ॥ १३ ॥**

अणवश्चेत्यत्र साङ्ख्योक्तमाहंकारिकत्वकृतं व्यापित्वमिन्द्रियाणां निरस्तम् । वादिविप्रतिपत्तिनिरासोऽपि श्रुतिविरोधनिरा-

### कल्पतरुपरिमलः ।

पाठे ज्ञानेन्द्रियसाध्यो रूपादिप्रत्ययः परिच्छेदः । हस्तादिकर्मेन्द्रियसाध्य आहरणादिः ॥ ११ ॥ १२ ॥ **इति पञ्चमं नवायुक्रियाधिकरणम् ॥**

---

१ तत्र सूत्राणि ४—न वायुक्रिये पृथगुपदेशात् ९ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः १० अकरणत्वाच्च न दोषस्तथा हि दर्शयति ११ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते १२ ॥

( ७ अधिकरणम् ) **ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥**

**ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्त्याहोस्विद्देवताधिष्ठिताः प्रभवन्तीति विचार्यते—तत्र प्राप्तं तावद्यथास्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति । अपिच देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गाच्छारीरस्य भोक्तृत्वं प्रलीयेत । अतः स्वमहिम्नैवैषां प्रवृत्तिरिति । एवं प्राप्त इदमुच्यते—'ज्योतिराद्यधिष्ठानं तु' इति । तुशब्देन पूर्वपक्षो व्यावर्त्यते । ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते । हेतुं व्याचष्टे—तदामननादिति । तथाह्यामनन्ति—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐत०२।४ ) इत्यादि । अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनाऽधिष्ठातृत्वमङ्गीकृत्योच्यते । नहि देवतासंबन्धं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषसंबन्धो दृश्यते । तथा 'वायुः**

---

**भामती ।**

आध्यात्मिकस्य प्राणस्यावच्छिन्नता न विभुत्वम् । दुरधिगमतामात्रेण च शरीरव्यापिनोऽप्यणुत्वमुपचर्यते, न त्वणुत्वमित्युक्तमधस्तात् । यत्त्वस्य विभुत्वाम्नानं तदाधिदैविकेन सूत्रात्मना समष्टिव्यष्टिरूपेण न त्वाध्यात्मिकेन रूपेण । तदाश्रयाश्च 'समः प्लुषिणा' इत्येवमाद्याः श्रुतयो देहसाम्यमेव प्राणस्याहुः स्वरूपतो नतु करकाकाशवत्परोपाधिकतया कथंचिन्नेतव्या इति ॥ १३ ॥ **इति षष्ठं श्रेष्ठाणुत्वाधिकरणम् ॥**

**वेदान्तकल्पतरुः ।**

करणपरे पादे प्रसङ्गात् संगच्छते । प्राणेषु हि प्रस्तुतेषु तत्परिमाणस्यापि वादिसंमतस्य बुद्धिस्थत्वात् । अत्र तु श्रुत्यावगतप्राणव्यापित्वमाधिदैविकविषयं व्यवस्थाप्यते इति न तुल्यन्यायता । अतएव भाष्यकारनिबन्धकाराभ्याम् अणवश्चेत्यत्र न काचन श्रुतिरुदाहृता । **अन्ये त्वाहुः**—तस्यातिदेशोऽयम्, समोऽनेन सर्वेणेति व्यापित्वश्रुतेश्चाधिका शङ्का आधिदैविकविषयत्वेन च तन्निरासः—**इति । तन्न;** सर्वेऽनन्ता इतीन्द्रियाणामपि व्यापित्वश्रवणस्य व्यवस्थायाश्च साम्यात् । **अपरे प्रतिपादयन्ति**—तत्र चात्र चेन्द्रियाणां प्राणस्य च व्यापित्वपरिच्छिन्नत्वश्रुतय उदाहरणम् । तत्रेन्द्रियव्याप्तिश्रुतीनां "स यो हैताननन्तानुपास्ते"इत्युपास्तिविषयत्वादुपास्तेश्चारोपेणाप्युपपत्तेर्न व्याप्तिसाधकत्वमित्युक्तम्, अत्र तु समोऽनेन सर्वेणेत्यादेः प्राणव्याप्तिश्रवणस्याधिदैविकविषयत्वं वर्ण्यत—**इति । तन्न;** अत्रापि समत्वात्, साम प्राण इति व्युत्पाद्य य एवमेतत् साम वेदेत्युपास्तिविधानाद्, हेतुभेदस्य चाधिकरणाभेदकत्वादिति । **कुटो** घटः । **यत्त्वस्य विभुत्वाम्नानमिति ।** सम एभिस्त्रिभिर्लोकैरित्येतदित्यर्थः । **समष्टिः** सामान्यं । **व्यष्टिः** विशेषस्तद्रूपेण । यस्तु विशेषमात्ररूपः प्राणो न तद्रूपेण विभुत्वाम्नानमित्याह—**नत्विति ।** आत्मनि शरीरे भवतीत्याध्यात्मिकम् । **प्लुषिर्**मशकादपि सूक्ष्मशरीरः पुत्तिकाख्यो जन्तुविशेषः । **तदाश्रया** आध्यात्मिकप्राणाश्रयाः ॥१३॥ **इति षष्ठं श्रेष्ठाणुत्वाधिकरणम् ॥**[1]

**कल्पतरुपरिमलः ।**

**अणुश्च ॥ १३ ॥**

**साम प्राण इति व्युत्पाद्येति ।** "एष उ एव साम वाग्वै सा अम एष सा चामश्चेति तत्साम्नः सामत्व"मिति पूर्ववाक्येन सामशब्दः प्राणे व्युत्पादितः । **ननू**भयमुभयत्र विषयः तत्र व्यापित्वश्रुतीनामुपासनार्थत्वहेतुरणवश्चेत्यधिकरणे दर्शितः, अस्मिन्नधिकरणे तु प्राणव्याप्तिकश्रुतेराधिदैविकविषयत्वे हेतुरुच्यत इति विशेषमाशङ्क्याह—**हेतुभेदस्य चाधिकरणाभेदत्वादिति ।** पूर्वपक्षे विशेषाभावे सैद्धान्तिकहेतुभेदमात्रेण नाधिकरणभेदो भवति; ईक्षत्यधिकरणादिषु अधिकरणैक्येऽपि सैद्धान्तिकहेतुबाहुल्यदर्शनादिति भावः । स्वमते त्वणवश्चेत्यधिकरणमिन्द्रियविषये सांख्यविप्रतिपत्तिनिरासार्थम् । इदमधिकरणं यद्यपि प्राणविषये श्रुतिविप्रतिपत्तिनिरासार्थम्; तथाप्यत्रैकेन्द्रियविषयश्रुतिविप्रतिपत्तिनिरासोऽप्यर्थात्सिध्यति । समः प्लुषिणेत्यादेः प्राणे तत्तच्छरीरानुरोधिसंकोचविकासपरतयोपपादनेन हि त्वगिन्द्रियस्यापि तथैव संकोचविकासशालितया सर्वाङ्गीणशैत्योपलब्धिकरणत्वमित्यर्थात्सिध्यति । सम एभिस्त्रिभिर्लोकैरिति प्राणे विभुत्वाम्नानं परम् आधिदैविकविषयतया योजनीयमिति तत्राधिकयत्नसद्भावात् प्राणप्रधानमिदमधिकरणमित्यणुश्चेत्येकवचनेन दर्शितमिति तात्पर्यम् । **कुटो घट इति ।** घटः कुटो निवापोऽस्त्रीत्यमरसिंहः । **समएभिस्त्रिभिर्लोकैरित्येतदिति ।** समोऽनेन सर्वेणेत्येतत्तु न विभुत्वप्रतिपादनैकान्तिकम्; प्लुषिमशकनागव्यतिरिक्तमपि यद्यत्प्राण्यस्ति, तत्तच्छरीरानुकूलसंकोचविकासशालितया तेन सर्वेणापि सममित्येवमर्थताया अप्युपपत्तेरिति भावः ॥ १३ ॥ **इति षष्ठं श्रेष्ठाणुत्वाधिकरणम् ॥**

---

[1] तत्र सूत्रम् १—अणुश्च १३ ॥

प्राणो भूत्वा नासिके प्राविशत्' ( ऐत० २।४ ) इत्येवमाद्यपि योजयितव्यम् । तथान्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' ( छा० ३।१८।३ ) इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्वादिवचनेनैतमेवार्थं द्रढयति । 'स वै वाचमेव प्रथमामत्यवहत्सा, यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्' ( बृ० १।३।१२ ) इति चैवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति । सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति । स्मृतावपि—'वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः । वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ।' इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं दर्शितम् । यदुक्तं स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति, तदयुक्तम्; शक्तानामपि शकटादीनामनडुदाद्यधिष्ठितानां प्रवृत्तिदर्शनात् । उभयथोपपत्तौ चागमाद्देवताधिष्ठितत्वमेव निश्चीयते ॥ १४ ॥ यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्येति तत्परिह्रियते—

## प्राणवता शब्दात् ॥ १५ ॥

सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैवैषां प्राणानां संबन्धः श्रुतेरवगम्यते । तथाहि श्रुतिः—'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' ( छा० ८।१२।४ ) इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति । अपिचानेकत्वात्प्रतिकरणम-

---

### भामती ।

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

यद्धि यत्कार्यं कुर्वद्दृष्टं तत्स्वमहिम्नैव करोतीत्येष तावदुत्सर्गः । पराधिष्ठानं तु तस्य बलवत्प्रमाणान्तरवशात् । **स्यादेतत्**—वास्यादीनां तक्षाद्यधिष्ठितानामचेतनानां कार्यकारित्वदर्शनादचेतनत्वेनेन्द्रियाणामप्यधिष्ठातृदेवताकल्पनेति चेत्, न; जीवस्यैवाधिष्ठातुश्चेतनस्य विद्यमानत्वात् । नच 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिश्रुतिभ्यो देवतानामप्यधिष्ठातृत्वमभ्युपगन्तुं युक्तम्; अनेकाधिष्ठानाभ्युपगमे हि तेषामेकाभिप्रायनियमनिमित्ताभावान्न किंचित्कार्यमुत्पद्येत, विरोधात् । **अपिच** य इन्द्रियाणामधिष्ठाता स एव भोक्तेति देवतानां भोक्तृत्वेन स्वामित्वं शरीर इति न जीवः स्वामी स्याद्भोक्ता च । तस्मादग्न्याद्युपचारो वागादिषु प्रकाशकत्वादिना केनचिन्निमित्तेन गमयितव्यो ननु

### वेदान्तकल्पतरुः ।

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

चक्षुषा हि रूपाणि पश्यत्यग्निर्वाग्भूत्वेत्यादावविरोधविचारादध्यायसङ्गतिः । यथा स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तन्ते इत्ययुक्तम्; शक्तस्याप्यन्याधिष्ठितत्वाविरोधादित्याशङ्क्याह—**यद्धीति** । ननु करणानां पराधीनत्वेऽपि बलवत्प्रमाणमित्यर्थः । **ननु** करणानि, चेतनाधिष्ठितानि, अचेतनत्वे सति प्रवर्तमानत्वाद्, वास्यादिवदित्याशङ्क्य जीवाधिष्ठितत्वेन सिद्धसाधनत्वमाह—**वास्यादीनामित्यादिना । ननु** माऽनुमानाद्बाध्युत्सर्गः, आगमात्तु बाधिष्यते, तत्राह—**नचाग्निरित्यादिना । वाग्भूत्वेति** । वागधिष्ठाता भूत्वेत्यर्थः । जीवस्य देवतानां चाधिष्ठातृत्वसाम्यमभ्युपगम्य विरोध उक्तः, अधुना तु तदेव नास्तीत्याह—**अपिचेति** । सत्यपि जीवे देवतानां करणाधिष्ठातृत्वाभ्युपगमे हि जीवस्य करणाधिष्ठातृत्वं न स्यात्, अप्रयोजकत्वात्, ततश्च ता एव भोक्त्र्यः कर्त्र्यश्च स्युरित्यर्थः । आगमस्तावदुत्सर्ग

### कल्पतरुपरिमलः ।

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

**न तु करणानामिति । ननु**—यद्धीत्यादिटीकोक्तस्योत्सर्गस्येन्द्रियेषु प्रवृत्तिर्बलवदुपपादकाभावेनाभ्युपगन्तुमयुक्ता; यश्चक्षुषि तिष्ठन्नित्यादेस्तदपवादकस्य सत्त्वादिति—**चेत्, सत्यम्**; ईश्वराधिष्ठानमपरामृश्यायं पूर्वपक्षः । अतएव सिद्धान्ते करणानि चेतनाधिष्ठितानीत्यनुमानस्येश्वरेण सिद्धसाधनमाशङ्क्य परिहरिष्यते । नचेश्वरेण सिद्धसाधनत्वम् । तदभ्युपगमे त्वयैवोत्सर्गबाधस्येष्टत्वादिति । **अथवा**—उत्सर्गस्येश्वराधिष्ठितत्वांश इवाग्न्याद्यधिष्ठितत्वाद्यंशे त्यागो न कार्यः । तत्र बलवत्प्रमाणा[illegible] । [illegible] करणानि चेतनाधिष्ठितानीति सिद्धान्त्यनुमानस्य पूर्वपक्षे जीवाधिष्ठित-

धिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्शरीरेऽवकल्पते। एको ह्येवमस्मिञ्शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते ॥ १५ ॥

**तस्य च नित्यत्वात् ॥ १६ ॥**

तस्य च शारीरस्यास्मिञ्शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसंभवात्सुखदुःखोपभोगसंभवाच्च न देवतानाम्। ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति—'पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति' ( बृ० १। ५।२ ) इति शारीरेणैव च नित्यः प्राणानां संबन्धः; उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृ० ४।४।२ ) इत्यादिश्रुतिभ्यः। तस्मात्सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति। करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति ॥ १६ ॥ इति सप्तमं ज्योतिराद्यधिकरणम् ॥

---

**भामती ।**

स्वरूपेणाग्न्यादिदेवतानां मुखाद्यनुप्रवेश इति प्राप्तम्। एवं प्राप्ते उच्यते—नानाविधासु तावच्छ्रुतिषु स्मृतिषु च तत्र तत्र वागादिष्वग्न्यादिदेवताधिष्ठानमवगम्यते। नच तदसत्यामनुपपत्तौ क्लेशेन व्याख्यातुमुचितम्। नच स्वरूपोपयोगभेदज्ञानविरहिणो जीवस्येन्द्रियाधिष्ठातृत्वसंभवः, संभवति तु देवतानामिन्द्रियाद्यार्षेण ज्ञानेन साक्षात्कृतवतीनां तत्स्वरूपभेदतदुपयोगभेदविज्ञानम्। तस्मात्तास्ता एव देवतास्तत्तत्करणाधिष्ठात्र्य इति युक्तं नतु जीवः। भवतु वा जीवोऽप्यधिष्ठाता, तथाप्यदोषः। अनेकेषामधिष्ठातॄणामेकः परमेश्वरोऽस्ति नियन्तान्तर्यामी तद्वशाद्विप्रतिपित्सवोऽपि न विप्रतिपत्तुमर्हन्ति। तथा चैकवाक्यतया न तत्कार्योत्पत्तिप्रत्यूहः। नचैतावता देवतानामत्र शरीरे भोक्तृत्वम्। नहि यन्ता रथमधितिष्ठन्नपि तत्साध्यविजयादेर्भोक्तापि तु स्वाम्येव। एवं देवता अधिष्ठात्र्योऽपि न भोक्त्र्यस्तासां तावन्मात्रस्य श्रुतत्वात्। भोक्ता तु जीव एव। नच नरादिशरीरोचितं दुःखबहुलमुपभोगं सुखमय्यो देवता अर्हन्ति। तस्मात् प्राणानामधिष्ठात्र्यो देवता इति सिद्धम्, शेषमतिरोहितार्थम् ॥ १४ ॥ १५ ॥ १६ ॥ **इति सप्तमं ज्योतिराद्यधिकरणम् ॥**

**वेदान्तकल्पतरुः ।**

स्यापवादकः, नच स औपचारिकः साभ्यासत्वादित्याह—**नानाविधास्विति ।** **ननु** श्रुतिस्मृतिषु करणाधिष्ठातृदेवतानिरूपणमाध्यात्मिककरणानामाधिदैविकाग्न्यादिभिरभेदोपासनार्थम्, उपासनं च समारोपादपि संभवति, तत्राह—**नच तदसत्यामिति ।** अनुपपत्तिर्ह्यत्राभिप्रायभेदात्कार्यासिद्धिस्तां तु परिहरिष्यति—**अनेकेषामधिष्ठातॄणाम् एकः परमेश्वरोऽस्ति नियन्तेति** ग्रन्थेन। अनुमानमप्युत्सर्गं बाधत इति वदामः। **ननु** तत् जीवेन सिद्धसाधनमित्युक्तमत आह—**नच स्वरूपोपयोगेति ।** अधिष्ठातृत्वं ह्यधिष्ठानानन्तरपूर्वक्षणेऽधिष्ठेयस्वरूपतत्साध्यप्रयोजनज्ञानपूर्वकं तत्प्रेरकत्वं, नच तदस्ति जीवे इति कथं सिद्धसाधनमित्यर्थः। नचेश्वरेण सिद्धसाधनत्वम्; तदभ्युपगमे त्वयैवोत्सर्गबाधस्येष्टत्वात्, स्वरूपप्रयोजनाद्यभिज्ञजीवाधिष्ठितमिति साध्यत्वाच्च। यच्चोक्तं करणाधिष्ठातृत्वाद् भोगः स्यादिति, तत्राह—**नचैतावतेति ।** यो यदधिष्ठाता स तत्साध्यफलभोक्तेति न व्याप्तिः; यन्तरि सारथौ अनेकान्तादित्यर्थः। यदि मन्येत यन्तरि भोक्तृत्वे मानाभावाद्युक्तस्तदभाव इति, तर्हि देवतास्वपि स सम इत्याह—**तावन्मात्रस्येति ।** अधिष्ठातृत्वमात्रस्येत्यर्थः। **स्यादेतत्**—देवता एतदिन्द्रियसाध्यफलभोगिन्यः तदधिष्ठातृत्वाज्जीववदिति विशेषतोऽनुमीयते, तत्कुतोऽनैकान्तिकताऽत आह—**नच नरादीति ।** न ह वै देवान्पापं गच्छति इत्यागमविरुद्धमनुमानमित्यर्थः ॥१४॥१५॥१६॥[2]
**इति सप्तमं ज्योतिराद्यधिकरणम् ॥**

**कल्पतरुपरिमलः ।**

त्वेन सिद्धसाधनत्वम् जीवस्य बलवत्प्रमाणवशादधिष्ठातृत्वमङ्गीकृत्यानुपदं वक्ष्यते—**नच तदस्ति जीव इति ।** यद्यप्यभिमतार्थग्राहकेन्द्रियमनःसंयोजनतद्ग्रहणार्थचक्षुर्विस्फारणश्रोत्रावधानदानादिना जीवस्येन्द्रियाधिष्ठातृत्वमनुभवसिद्धम्, उपपद्यते च; तदिन्द्रियाणामतीन्द्रियत्वेऽपि तेषामभिमतार्थे ग्रहणाय नोदनकारिणीषु नाडीषु स्पार्शनापरोक्षज्ञानस्य तन्मूलप्रयत्नस्य च संभवाद्, नाडीगोचरप्रयत्नेनैव तन्नोदनीयानां श्वासजमलानामिच्छया मोचनधारणदर्शनात्, अथ यो वेदेदं जिघ्राणीत्यादिश्रुत्यनुमतं च जीवस्येन्द्रियाधिष्ठातृत्वम्; तथापि जीवाधिष्ठानं न सार्वत्रिकम्। अनिच्छतोऽप्यनभिमतज्ञानादिदर्शनादिति तात्पर्यम्। **न ह वै देवानिति ।** **ननु** अग्न्यादिदेवताः एतदिन्द्रियसाध्यपुण्यफलभागिन्यः तदधिष्ठा-

---

१ अत्र कानिचन वाक्यानि उपलब्धेष्वादर्शेषु नोपलब्धान्यपि परिमलतस्त्रुटितानीति गम्यते।

२ तत्र सूत्राणि ३—ज्योतिराद्यधिष्ठानं तु तदामननात् १४ प्राणवता शब्दात् १५ तस्य च नित्यत्वात् ॥ १६ ॥

( ८ अधिकरणम् ) **त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥**

**मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः । तत्रेदमपरं संदिह्यते । किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणा आहोस्वित्तत्त्वान्तराणीति । किं तावत्प्राप्तम् ? मुख्यस्यैवेतरे वृत्तिभेदा इति । कुतः ? श्रुतेः । तथाहि श्रुतिर्मुख्यमितरांश्च प्राणान्संनिधाप्य मुख्यात्मतामितरेषां ख्याप-**

## भामती ।

### त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

मा भूत् प्राणो वृत्तिरिन्द्रियाणाम् । इन्द्रियाण्येवास्य ज्येष्ठस्य श्रेष्ठस्य च प्राणस्य वृत्तयो भविष्यन्ति । तद्भावाभावानुविधायिभावाभावत्वमिन्द्रियाणां श्रुत्यनुभवसिद्धम् । तथाच प्राणशब्दस्यैकस्यान्याय्यमनेकार्थत्वं न भविष्यति; वृत्तीनां वृत्तिमतस्तत्त्वान्तरत्वाभावात् । तत्त्वान्तरत्वे त्विन्द्रियाणां प्राणशब्दस्यानेकार्थत्वं प्रसज्येत, इन्द्रियेषु लाक्षणिकत्वं वा । नच मुख्यसंभवे लक्षणा युक्ता; जघन्यत्वात् । नच भेदेन व्यपदेशो भेदसाधनम्; 'एतस्माज्जायते प्राणः' इत्यादिर्मनसोऽपीन्द्रियेऽभ्योऽस्ति भेदेन व्यपदेश इत्यनिन्द्रियत्वप्रसङ्गः । स्मृतिवशात्तु तस्येन्द्रियत्वे इन्द्रियाणामपि प्राणाद्भेदेन

## वेदान्तकल्पतरुः ।

### त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

सत्सु इन्द्रियेषु तदधिष्ठातृचिन्ता, तान्येव तु न मुख्यप्राणवृत्तिव्यतिरेकेण सन्तीति शङ्कते—**मा भूदिति । तद्भावेति ।** तस्य प्राणभावाभावावनुविधायिनावनुसरणशीलौ भावाभावौ येषां तानीन्द्रियाणि तथा तत्त्वादित्यर्थः । **प्राणशब्दस्येति ।** तस्मादेत एतेनाख्यायन्ते प्राणा इतीत्यस्येत्यर्थः । एतस्माज्जायते इत्यादिव्यपदेशो न भेदसाधनमिति योजना । तत्र हेतुः—**मनसोऽपीति ।** तस्मिन्नेव वाक्ये मनः सर्वेन्द्रियाणीति भेदव्यपदेशान्मनसोऽप्यनिन्द्रियत्वप्रसङ्ग इत्यर्थः । **स्मृतिवशादिति ।** मनःषष्ठानीन्द्रियाणीति स्मृतिः । हन्त इदानीमस्यैव मुख्यप्राणस्य रूपमसाम भवेमेति प्राणसंवादे

## कल्पतरुपरिमलः ।

तृत्वादित्यनुमाने नास्त्यागमविरोधः । **सत्यम्**; अप्रयोजकत्वं त्वनुमानस्य तदा भवति । आगमस्तावद्देवतानां पापफलं नास्तीति वदति, ततश्च यथा तासां पापहेतुज्ञानकर्मकारयितृत्वेऽपि तथाभूतज्ञानकर्मताश्रयत्वात् तदुत्पत्तावालोकादिवत्करणानुग्राहकतया सहकारिमात्रत्वाद् न तज्जन्यपापफलभागित्वम्, एवं तज्जन्यपुण्यफलभागित्वाभावस्याप्युपपत्तेः । नच पुण्यमेवामुं गच्छतीति श्रुतिबलात्तासां तज्जन्यपुण्यफलभागित्वं शङ्कनीयम्; नह्येषा श्रुतिरिन्द्रियाधिष्ठातृदेवतानां स्वस्वाधिष्ठेयेन्द्रियजन्यज्ञानकर्मप्रयुक्तपुण्यफलभागित्वं ब्रवीति, किंतु वाङ्मनःप्राणरूपत्र्यन्नोपासकस्य सार्वात्म्यफलप्राप्त्यनन्तरम् आत्मान्तरगतपापफलानुभवप्रसक्तौ तन्निवारणं करोति । अमुं त्र्यन्नोपासकमुपासनाजन्यं पुण्यमेव गच्छति न त्वात्मान्तरगतं पापमित्यनेन वाक्येन त्र्यन्नोपासकस्य पापप्राप्त्यभावे प्रतिपाद्ये सामान्यमुखेन तत्समर्थनार्थं "न ह वै देवानिति" वाक्यं देवतामात्रमेव किमपि पापं न स्पृशति, हिरण्यगर्भवदुत्कृष्टदेवताभावं प्राप्तं त्र्यन्नोपासकं किमपि पापं न स्पृशतीति किमु वक्तव्यमिति तदभिप्रायः ( **तत्किमितीति** मृत्युमतीत्य यत्प्राप तत्किमिति प्राप्यविशेषनिर्धारणार्थः प्रश्नः । सा यदेत्यादिश्रुतिं तदुत्तरत्वेन व्याचष्टे—**उच्यत इति । अतिमुक्ता** त्यक्तवती । **अग्निरभवदिति ।** एवं चाग्निभावः प्राप्य इत्युक्तं भवति । दर्शनाय चक्षुरित्यस्याभिप्रायमाह—**न चैतन्यायेति ।** चैतन्यस्यात्मरूपत्वान्न तत्र चक्षुरपेक्षा, किंतु चाक्षुषवृत्ताविति गूढोऽभिप्रायः । अमुमभिप्रायं विवरीतुम् अथ यो वेदेदमित्यादिश्रुतिवाक्यं, तद्विवृणोति—**अथापीति ।** अथशब्दोऽप्यर्थे वर्तत इत्यर्थः । क इहाप्यर्थ इत्याकाङ्क्षायामाह—**दर्शनाद्यर्थं चक्षुराद्यपेक्षायामपीति ।** अथ यत्रैतदाकाशमित्यादिवाक्ये चक्षुर्ग्रहणं सर्वेषामिन्द्रियाणां, दर्शनग्रहणं सर्वेन्द्रियजन्यवृत्तीनां चोपलक्षणम्, अतो—**दर्शनादीति चक्षुरादीति चोभयत्राप्यादिग्रहणम् ।** स्वतएव यो वेदेतीति । स्वस्वरूपलाभार्थं कारणमनपेक्ष्य यो वेदेत्यर्थः । **स आत्मेति ।** वेदेत्यत्र प्रकृत्यर्थभूतवेदनस्वरूप आत्मेत्यर्थः । यदि नित्यात्मस्वरूपमेव वेदनं, कुत्र तर्हीन्द्रियापेक्षा ? किंरूपं च वेदेत्यत्र प्रत्ययार्थभूतं वेदनं प्रति कर्तृत्वमित्याकाङ्क्षायां **गन्धाय घ्राणमिति वाक्यम् ।** तत्र गन्धशब्दो वृत्तिरूपगन्धज्ञानपर इति व्याचष्टे—**तस्येति ।** एवंच गन्धवेदनरूपचैतन्यावच्छेदकवृत्त्युत्पत्त्यर्थमिन्द्रियाद्यपेक्षा तत्कर्तृकत्वोपाधिकं च तदवच्छिन्नस्वस्वरूपकर्तृत्वमित्युक्तं भवति ) ॥१४॥१५॥१६॥ **इति सप्तमं ज्योतिराद्यधिकरणम् ॥**

### त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

भेदश्रुतेरिति वैलक्षण्याच्चेति सूत्रयोर्भाष्यकारैरसुरपाप्मविद्धत्वाविद्धत्वगोचरा मृत्युप्राप्तत्वाप्राप्तत्वगोचरा च द्विविधा

यति—'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्' ( बृ० १।५।२१ ) इति । प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः । इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत, एकत्र वा मुख्यत्वमितरत्र वा लाक्षणिकत्वमापद्येत । तस्माद्यथैकस्यैव प्राणस्य प्राणाद्याः पञ्चवृत्तय एवं वागाद्या अप्येकादशेति । एवं प्राप्ते ब्रूमः—तत्त्वान्तराण्येव प्राणाद्वागादीनीति । कुतः ? व्यपदेशभेदात् । कोऽयं व्यपदेशभेदः ? ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वावशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते । श्रुतावेवं व्यपदेशदर्शनात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ( मु० २।१।३ ) इति ह्येवंजातीयकेषु पृथक्प्राणो व्यपदिश्यते पृथक्चेन्द्रियाणि । ननु मनसोऽप्येवं सति वर्जनमिन्द्रियत्वेन प्राणवत्स्यात्; 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात् । सत्यमेतत्; स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत्संगृह्यते । प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्ष उपपद्यते । तत्त्वैकत्वे तु स एवैकः सन्प्राण इन्द्रियव्यपदेशं लभते न लभते चेति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता मुख्यादितरे ॥ १७ ॥ कुतश्च तत्त्वान्तरभूताः ?

## भामती ।

व्यपदिष्टानामप्यस्ति प्राणस्वभावत्वे 'हन्त अस्यैव रूपमसाम' इति श्रुतिः । तस्मादुपपत्तेः श्रुतेश्च प्राणस्यैव वृत्तय एकादशेन्द्रियाणि न तत्त्वान्तराणीति प्राप्तम् । एवं प्राप्त उच्यते—मुख्यात् प्राणात्तत्त्वान्तराणीन्द्रियाणि, तत्र तत्र भेदेन व्यपदेशात्, मृत्युप्राप्ताप्राप्तत्वलक्षणविरुद्धधर्मसंसर्गश्रुतेः, अर्थक्रियाभेदाच्च । देहधारणं हि प्राणस्य क्रियाऽर्थालोचनमनने चेन्द्रियाणाम् । नच तद्भावाभावानुविधानं तद्वृत्तितामावहति; देहेन व्यभिचारात् । प्राणादयो हि देहान्वयव्यतिरेकानुविधायिनो नच देहात्मानः । यापि च प्राणरूपतामिन्द्रियाणामभिदधाति श्रुतिः, तत्रापि पौर्वापर्यालोचनायां भेद एव प्रतीयत इत्युक्तं भाष्यकृता । तस्माद्बहुश्रुतिविरोधात् पूर्वापरविरोधाच्च प्राणरूपताभिधानमिन्द्रियाणां प्राणायत्ततया भाक्तं गमयितव्यम् । मनसस्त्विन्द्रियत्वे स्मृतेरवगते क्वचिदिन्द्रियेभ्यो भेदेनोपादानं गोबलीवर्दन्यायेन । अथवा इन्द्रियाणां वर्तमानमात्रविषयत्वान्मनसस्तु त्रैकाल्यगोचरत्वाद्भेदेनाभिधानम् । नच प्राणे भेदव्यपदेशबाहुल्यं तथा नेतुं युक्तम्, प्राणरूपताश्रुतेश्च गतिर्दर्शिता । तथा ज्येष्ठे प्राणशब्दस्य मुख्यत्वादिन्द्रियेषु ततस्तत्त्वान्तरेषु लाक्षणिकः प्राणशब्द इति युक्तम् । नच मुख्यत्वानुरोधेनावगतभेदयोरैक्यं युक्तम्; मा भूद्गङ्गादीनां तीरादिभिरैक्यमिति ।

## वेदान्तकल्पतरुः ।

इन्द्रियाणामुक्तिः । मृत्युर्वागादीनां स्वविषयासङ्गः सोऽसुरशब्देन भाष्ये उक्तः । **मृत्युप्राप्तेति** । श्रूयते हि यो वाचि भोगस्तं देवेभ्य आगायत् यत्कल्याणं वदति तदात्मन इत्यादिना वागादीनां विषयासङ्गवत्त्वं संश्राव्य तानि मृत्युः श्रमो भूत्वोपयेमेऽथेममेव नाप्नोद्योयं मध्यमः प्राण इति । **अर्थक्रियाभेदाच्चेति** । अर्थालोचनं बाह्येन्द्रियाणामर्थक्रिया, मनसो मननम् ॥

भाष्यकारैर्हि तत्त्वान्तराणीति भेदवाचकं तत्त्वान्तरशब्दं सूत्रेऽध्याहृत्य प्राणात्तत्त्वान्तराणि वागादीनीति प्रतिज्ञां

## कल्पतरुपरिमलः ।

भेदश्रुतिरुदाहृता, टीकाकारैस्तु द्वितीयैवोपात्ता, नत्वाद्या; तत्किमाद्यशङ्कायामस्वारस्यादित्याशङ्क्य—मृत्युप्राप्तशब्देनैवासुरपाप्मविद्धत्वस्यापि संगृहीतत्वादित्याह—**मृत्युर्वागादीनां स्वविषयासङ्ग इति** । **असुरशब्देना**सुरपाप्मविध्वस्तानिति शब्देन । उक्तार्थोपपादनार्थं मृत्युप्राप्तेत्यादिटीकामुपादाय श्रुतिद्वयमप्युपन्यस्यति—**श्रूयते हीति** । श्रूयत इत्यस्य विषयासङ्गवत्त्वमित्यनेन संबन्धः । त्वं न उद्गायेति । देवैर्नियुक्तायां वाचि यो भोगः अभिवदनलक्षणं फलं तद्देवेभ्य आगायत्सकलदेवसाधारणं गानेन सा वाक् संपादितवती, तत्र यत्कल्याणं स्वरवर्णादिभ्रंशरहितमभिरूपमभिवदनं तदात्मने आगायदिति लिखितश्रुतिभागस्यार्थः । आदिशब्देन तामभिद्रुत्य पाप्मना विध्यन्नित्यन्तो वाक्यशेषः संगृहीतः । तानि मृत्युरित्यादिश्रुत्यन्तरोदाहरणेऽपि श्रूयत इत्यनुषङ्गः कार्यः । केषु चित्कोशेषु विषयासङ्गवत्त्वमित्यस्य तानि मृत्युरित्यस्य च मध्ये संश्राव्येति पदान्तरयुक्तः पाठो दृश्यते, स न साधुरिव लक्ष्यते । यो वाचि भोग इत्यादिश्रुतिरुद्गीथविद्याप्रकरणगता, तानि मृत्युरित्यादिश्रुतिः सप्तान्नब्राह्मणगतेति भेदात् । **अर्थालोचनमिति** ज्ञानेन्द्रियाभिप्रायम् ।

टीकायामन्ये त्वित्यादिना वृत्तिकारमतमुपन्यस्तं, तद्भाष्यकारमते सूत्रयोजनाक्लेशोऽस्तीत्यपरितोषादिति वक्तुं भाष्यकारमते सूत्रयोजनां दर्शयति—**भाष्यकारैर्हीति** । **न केवलमध्याहारापेक्षत्वादिति** । अनेन भेदशब्दाध्याहार-

## भेदश्रुतेः ॥ १८ ॥

भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते, 'ते ह वाचमूचुः' ( बृ० १।३।२ ) इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्योपसंहृत्य वागादिप्रकरणम् 'अथ हेममासन्यं प्राणमूचुः' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात् । तथा 'मनो वाचं प्राणं तान्यात्मनेऽकुरुत' इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ॥ १८ ॥
कुतश्च तत्त्वान्तरभूताः ?

## वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यं च भवति मुख्यस्येतरेषां च । सुप्तेषु वागादिषु मुख्य एको जागर्ति स एव चैको मृत्युनाऽनाप्त आप्तास्त्वितरे । तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वं नेन्द्रियाणाम् । विषयालोचनहेतुत्वं चेन्द्रियाणां न प्राणस्येत्येवंजातीयको भूयाँल्लक्षणभेदः प्राणेन्द्रियाणाम् । तस्मादप्येषां तत्त्वान्तरभावसिद्धिः । यदुक्तम्—'त एतस्यैव सर्वे रूपमभवन्' ( बृ० १।५।२१ ) इति श्रुतेः प्राण एवेन्द्रियाणि—इति, तदयुक्तम्; तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः । तथाहि—'वदिष्याम्येवाहमिति वाग्दध्रे' ( बृ० १।५।२१ ) इति वागादीनीन्द्रियाण्यनुक्रम्य 'तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्' इतिच श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय 'अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः' ( बृ० १।५।२१ ) इति पृथ-

---

### भामती ।

**अन्ये तु**—भेदशब्दाध्याहारभिया **भेदश्रुतेश्चेति** पौनरुक्त्यभिया च तच्छब्दस्य चानन्तरोक्तपरामर्शकत्वादन्यथा वर्णयांचक्रुः । किमेकादशैव वागादय इन्द्रियाण्याहो प्राणोऽपीति विशये इन्द्रस्यात्मनो लिङ्गमिन्द्रियं, तथाच वागादिवत्प्राणस्यापीन्द्रलिङ्गतास्ति । नच रूपादिविषयालोचनकरणतेन्द्रियता, आलोकस्यापीन्द्रियत्वप्रसङ्गात् । तस्माद्भौतिकमिन्द्रलिङ्गमिन्द्रियमिति वागादिवत्प्राणोऽपीन्द्रियमिति प्राप्तम् । एवं प्राप्तेऽभिधीयते—इन्द्रियाणि वागादीनि श्रेष्ठात् प्राणादन्यत्र । कुतः ? तेनेन्द्रियशब्देन तेषामेव वागादीनां व्यपदेशात् । नहि मुख्ये प्राण इन्द्रियशब्दो

### वेदान्तकल्पतरुः ।

रचयित्वा, तद्व्यपदेशाद् भेदव्यपदेशादिति हेतुं व्याख्याय, तत्साधनार्थं सूत्रशेषो योजितः । अन्यत्र श्रेष्ठात् श्रेष्ठं मुक्त्वा ये प्राणास्त इन्द्रियाणि इन्द्रियशब्देनोक्ताः श्रुतौ, अतः प्राणासंभवीन्द्रियशब्दवाच्यत्वादिन्द्रियाणि प्राणात्तत्त्वान्तराणीत्यर्थ इति । तत्राऽपरितोषं दर्शयन् व्याख्यान्तरमाह—**अन्ये त्विति** । न केवलमध्याहारापेक्षत्वात् प्रतिज्ञोक्तिरयुक्ता; हेतूक्तिरपि पौनरुक्त्यादयुक्तेत्याह—**भेदश्रुतेश्चेति** । यदि तद्व्यपदेशादितीन्द्रियाणां प्राणाद् भेदव्यपदेशादित्यर्थः, तर्ह्युत्तरसूत्रे स एव हेतुर्विवक्षित इति पुनरुक्तिरित्यर्थः । **ननु** प्राणा इतीन्द्रियाणीति च संज्ञाभेदस्तद्व्यपदेशादित्युक्तः, प्रकरणभेदस्तु भेदश्रुतेरित्युक्त इत्यपौनरुक्त्यम्, प्रकरणभेदश्च भाष्ये प्रकटित इति, **उच्यते**; यदीन्द्रियशब्दः प्राणशब्देनापुनरुक्तः सन्प्राणादन्यत्किंचिद्वक्तीति विवक्षितं; तर्हि प्राणवृत्तीनामिन्द्रियाणां प्राणादन्यत्वात् सिद्धसाधनम् । अथ स्वतन्त्रं वक्तीति, न तर्हि संज्ञाभेदः संज्ञिस्वातन्त्र्यव्याप्तः प्राणाप्राणवृत्तिशब्दयोरेव व्यभिचारात् । अतएव संज्ञाभेदं जानन्नेव तदप्रयोजकतां मन्वानो निबन्धात्तद्व्यपदेशं विवृण्वन् मृत्युप्राप्ताप्राप्तत्वेत्यादिना प्रकरणभेदमेव वर्णयांबभूव । तत उभयत्रायमेव वक्तव्यस्तथा च पुनरुक्तिरित्यभिप्रायः । **किंचास्यां** व्याख्यायां तद्व्यपदेशादित्यत्रत्यस्तच्छब्दस्तत्त्वान्तराणीति प्रतिज्ञागतमध्याहृतपदार्थं परामृशेन्न साक्षादुक्तम् । स्वव्याख्यायां त्वेकादशप्राणानामिन्द्रियत्वाप्रतिज्ञानादिन्द्रियपदार्थमनन्तरोक्तं परामृशतीति लाभमाह—**तच्छब्दस्य चेति** । **नन्विन्द्रियशब्दश्चक्षुरादिषु** रूढः कथं प्राणे वर्त्स्यतीत्यत आह—**इन्द्रस्येति** । जीवभावमापन्नस्येत्यर्थः । **स्मरति स्म हि भगवान् पाणिनिः** "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वेति" । इन्द्रशब्दात् षष्ठीसमर्थाल्लिङ्गमित्येतस्मिन्नर्थे घच्प्रत्ययो भवति । घस्यायनादिसूत्रेण इयादेशः । चकारश्चित इत्यन्तोदात्तार्थः । अस्मादेव तृतीयासमर्थादिन्द्रेण दृष्टमित्याद्यर्थे प्रत्ययो योज्यः । अतएव रूढौ सत्यां व्युत्पत्तिशङ्कैव नास्तीति केशवोक्तमसाधु; स्मृतिदर्शनात् शङ्कोपपत्तेरिति । भौतिकमित्युक्ते देहस्यापीन्द्रियत्वं स्यादितीन्द्रलिङ्गत्वोक्तिः । नहि सुषुप्तौ देहमात्रम् इन्द्रमनुमापयति । यदि प्राणो न स्याद् इन्द्रलिङ्गत्वमज्ञानादेरप्यस्तीति भौतिकग्रहणम् । इन्द्रियत्व-

### कल्पतरुपरिमलः ।

भियेत्येतत्प्रतिज्ञायां तत्त्वान्तराणीत्यध्याहारभियेत्येवमर्थतया व्याख्यातम् । **घच्प्रत्ययो भवतीति** । घच्प्रत्ययान्तो

**कप्राणं मृत्युनानभिभूतं तमनुक्रामति । 'अयं वै नः श्रेष्ठः' ( बृ० १।५।२१ ) इति च श्रेष्ठताम-स्यावधारयति । तस्मात्तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागा दीनामिति मन्तव्यं न तादात्म्यम् । अतएव च प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः । तथाच श्रुतिः—'त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणाः' ( बृ० १।५। २१ ) इति मुख्यप्राणविषयस्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति । तस्मात्तत्त्वान्त-राणि प्राणादीन्द्रियाणीति ॥ १ ॥ इत्यष्टममिन्द्रियाधिकरणम् ॥**

## भामती ।

दृष्टचरः । इन्द्रलिङ्गता तु व्युत्पत्तिमात्रनिमित्तं यथा गच्छतीति गौरिति । प्रवृत्तिनिमित्तं तु देहाधिष्ठानत्वे सति रूपा-द्यालोचनकरणत्वम् । इदं चास्य देहाधिष्ठानत्वं यद्देहानुग्रहोपघाताभ्यां तदनुग्रहोपघातौ । तथाच नालोकस्येन्द्रियत्व-प्रसङ्गः । तस्माद्रूढेर्वागादय एवेन्द्रियाणि न प्राण इति सिद्धम् । भाष्यकारीयं त्वधिकरणं भेदश्रुतेरित्यादिषु सूत्रेषु नेयम् ॥ १७ ॥ १८ ॥ १९ ॥ **इत्यष्टमिन्द्रियाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

जातिव्यञ्जकमाह—**देहाधिष्ठानत्वे इति** । तद्गोलकेषु देहशब्दः । **तस्माद्रूढेरिति** । रूढस्यैवेन्द्रियशब्दस्य स्वरसि-द्ध्यर्थं पाणिनिर्व्युत्पत्तिमन्वशादत एव चानियमप्रदर्शनम् । व्युत्पन्नेषु पाचकादिषु नियतोऽवयवार्थः, रूढानां पुनः शब्दानां यथाकथंचित्परिकल्पितेनाप्यवयवार्थेन व्युत्पत्तिः क्रियत इति । **भाष्यकारीयं त्विति** । द्वे इमे अधिकरणे इत्यर्थः । **सूत्रेष्विति** । बहुवचनं सूत्रद्वयगतपदाभिप्रायम् । एवं चाद्यसूत्रे एव यद्भाष्यकारैरिन्द्रियाणां प्राणवृत्तित्वनिर-सनमकारि, तन्मात्रमयुक्तमित्युक्तं भवति । **ननु** टीकायां दुरुक्तिचिन्ता न युक्ता; वार्तिके हि सा भवति, तर्हि वार्तिक-त्वमस्तु न हि वार्तिकस्य शृङ्गमस्ति । अतएवानन्दमयाधिकरणे मान्त्रवर्णिकसूत्रे आरम्भणाधिकरणे च भावे चोपलब्धेरि-तिसूत्रभाष्यमनपेक्ष्य व्याख्यां चकार ॥ १७ ॥ १८ ॥ १९ ॥ **इत्यष्टममिन्द्रियाधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

निपात इत्यर्थः । **तन्मात्रमयुक्तमित्युक्तं भवतीति । वस्तुतस्तु**—भाष्यकारीयायामाद्यसूत्रव्याख्यायामयुक्तत्वप्रदर्श-नार्थो न भवति वृत्तिकारमतस्योपन्यासः, किंतु तस्यैवायुक्तत्वप्रदर्शनार्थः । तस्मिन्नुपन्यस्यमानएव हि तदयुक्तत्वं स्फुटं प्रतीयते । **तथाहि**—संशयवाक्येन तावत्प्राणव्यावृत्तत्वगर्भायैकादशानुगतमिन्द्रियत्वं सिद्धान्ते निर्वक्तव्यतया उपक्रान्तम् । अग्रे तु **देहाधिष्ठानत्वे सति रूपाद्यालोचनकरणत्वमिन्द्रियत्वमिति** कर्मेन्द्रियेभ्योऽपि व्यावृत्तं निरुक्तम् । निष्प्रयोजनं वाऽधिकरणम् । यदि पूर्वपक्षरीत्या प्राणानुगतमिन्द्रियत्वं निरुच्यते, यदि वा सिद्धान्तरीत्या तद्व्यावृत्तम्, उभयथापि हि नास्ति प्रयोजनम् । नहि वैशेषिकशास्त्रवत्साधर्म्यवैधर्म्यविचारार्थो अस्य शास्त्रस्य प्रवृत्तिः । नच प्राणस्ये-न्द्रियत्वे इन्द्रियेभ्य एव त्वम्पदार्थो विवेक्तव्यः, अनिन्द्रियत्वे तु प्राणादपीति प्रयोजनभेदः शङ्कनीयः; नहीन्द्रियेभ्योऽहं भिन्न इति त्वम्पदार्थो विवेक्तव्यः, किं त्वन्धः काणो मूको बधिरः कुणिः खञ्ज इत्यादिरूपतत्तदिन्द्रियविशेषाभेदभ्रमनिरा-सायान्धादहं भिन्न इत्यादिप्रकारेण । अतः प्राणद्वादशानामिन्द्रियत्वेऽपि प्राणादपि त्वम्पदार्थस्य विवेकः कार्य एव । भाष्यकारीये तु पूर्वपक्षे प्राणाद्विवेकव्यतिरेकेणेन्द्रियेभ्यो विवेको न कार्यः; सिद्धान्ते तु कार्यः; वृत्तिमतः प्राणात्तत्त्वान्तरस्य तद्वृत्तिभ्यस्तत्त्वान्तरत्वस्य कैमुतिकन्यायेन सिद्धेः । पाणिनि स्मृतिमवलम्ब्य पूर्वपक्षोऽपि तुच्छः; तामेवावलम्ब्येन्द्रदृष्टेषु विषयेष्विन्द्रजुष्टेषु भोग्येष्विन्द्रसृष्टेषु घटादिष्विन्द्रदत्तेषु ग्रामादिषु चेन्द्रियत्वपूर्वपक्षप्रसङ्गात्, इन्द्रियशब्दरूढिमवलम्ब्याति-प्रसङ्गपरिहारे तत एव प्राणव्यावृत्तेरपि लाभात्, सूत्रयोजनाक्लेशभिया तुच्छाधिकरणार्थपरिग्रहस्तु वदान्यगृहान्तःप्रवेशक्ले-शभिया तद्वारदृष्टपरिग्रहतुल्यः । नच भाष्यकारमते सूत्रयोजनाक्लेशोऽपि । **तथाहि**—प्रतिज्ञाध्याहारस्तावदसिद्धः । **ते** वागादयः श्रेष्ठादन्यत्र श्रेष्ठादन्ये तत्त्वान्तराणीति सौत्रपदैरेव प्रतिज्ञालाभात् । भेदश्रुतेरित्यनेन पौनरुक्त्यमप्यसिद्धम्; तद्व्य-पदेशादित्यस्य उत्पत्तिव्यपदेशादित्येतदर्थकत्वेन भेदव्यपदेशादित्येतदर्थकत्वाभावात् । उत्पत्तिव्यपदेशः प्राणेऽप्यस्तीति व्यभि-चारवारणाय **श्रेष्ठादन्यत्रेति** हेतावपि विशेषणम् । इन्द्रियाणीति मनःसर्वेन्द्रियाणि चेत्येतच्छ्रुतिगतशब्दानुकरणम् । तत्र इतिशब्दमात्रमध्याहर्तव्यम् । तथाच श्रेष्ठव्यतिरेकेण श्रेष्ठोत्पत्तिव्यतिरेकेणेन्द्रियाणि जायन्त इति शब्देनोत्पत्तिव्यपदेशादिति हेत्वर्थो भवतीति श्रेष्ठव्यतिरेकोक्त्या श्रेष्ठोत्पत्तिव्यतिरेक इन्द्रियाणामुत्पत्तिव्यपदेशोक्तिसामर्थ्याल्लभ्यते । यथा सिंहतुल्यपराक्रमो राजेत्यत्र राज्ञः पराक्रमोक्तिसामर्थ्यात्सिंहोक्त्या सिंहपराक्रमो लभ्यते । एवंभूत एव हेत्वर्थो भाष्ये व्यपदेशभेदादित्यनेन व्यपदेशविशेषादित्यर्थकेन विवक्षितः । अतएव कोऽयं व्यपदेशभेद इति प्रश्नपूर्वकं हेत्वर्थस्यैव विवरणमुत्तरत्र क्रियते, ननु

१ तत्र सूत्राणि ३—त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् १७ भेदश्रुतेः १८—वैलक्षण्यात् १९ ॥

(९ अधिकरणम्) **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥**

सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' (छा० ६।३।२)। तत्र संशयः—किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित्परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावज्जीवकर्तृकमेवेदं नामरूपव्याकारणमिति। कुतः? 'अनेन जीवेनात्मना' इति विशेषणात्। यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानीत्येवंजातीयके प्रयोगे चारकर्तृकमेव सत्सैन्यसंकलनं हेतुकर्तृत्वाद्राजात्मन्यध्यारोपयति संकलयानी-

---

### भामती।

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥**

सत्प्रक्रियायां 'तत्तेज ऐक्षत' इत्यादिना संदर्भेण तेजोऽबन्नानां सृष्टिं विधायापदिश्यते—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति। **अस्यार्थः**—पूर्वोक्तं बहुभवनमीक्षणप्रयोजनमद्यापि सर्वथा न निष्पन्नमिति पुनरीक्षां कृतवती बहुभवनमेव प्रयोजन-

### वेदान्तकल्पतरुः।

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥**

उत्पद्यमानव्यापार उत्पत्तिः। उत्पादकव्यापार उत्पादना। तत्र जगदुत्पत्तिविषयश्रुतिविरोध इतः प्राक् पादद्वये निरस्तः। इदानीम् उत्पादनाविषयश्रुतिविरोधो निरस्यते। तत्रात्रिवृत्कृतभूतोत्पादनं पारमेश्वरमेवेति श्रुतिष्वविगीतमवगतम्, भौतिकनिर्माणे तु श्रुतिषु विप्रतिपत्तिर्दृश्यते इति तन्निरासाय यत्यते। विषयप्रदर्शकं भाष्यमुदाहृत्य व्याचष्टे—**अस्यार्थ इत्यादिना। ननु** तदैक्षत बहु स्यां प्रजायेयेतीक्षणं ब्रह्मण उक्तम्, अतः कथं सेयं देवतैक्षतेति पुनरुच्यतेऽत आह—**पूर्वोक्तमिति।** अत्रिवृत्कृतभूतानां सूक्ष्मत्वेन व्यवहारायोग्यत्वादीक्षणस्य प्रयोजनं बहुभवनं सामस्त्येन न

### कल्पतरुपरिमलः।

हेत्वर्थस्य प्रसाधनम्; हेत्वर्थस्वरूपस्यैव प्रश्नदर्शनात्। अतः श्रेष्ठादन्यत्रेत्येतद्धेतावप्यन्वेति इन्द्रियाणीत्येतद्धेतावेवान्वेतीति। इदं सर्वं भाष्याभिमतमेव। तच्छब्दस्यानन्तरोक्तपरामर्शकत्वमप्युपपद्यतएव; न वियदश्रुते (ब्र. अ. २ पा. ३ सू. १) रित्यारभ्योत्पत्तेः प्रकृतत्वात्, तथा प्राणाः (ब्र. अ. २ पा. ४ सू. १) श्रेष्ठश्चे (ब्र. अ. २ पा. ४ सू. ८) ति सूत्रयोः प्राणेन्द्रियविषयतयापि तस्याः प्रकृतत्वात्। एतस्माज्जायत इति विवक्षितमूलश्रुत्युपात्ततयाऽपि तत्परामर्शोपपत्तेश्च। तथा प्राणा इति सूत्रे हि विषयवाक्यसंनिहितोपमानस्यापि तच्छब्देन परामर्शोऽङ्गीकृतः। इहेन्द्रियाणीति सौत्रशब्देनैवोपात्ते मूलश्रुतिवाक्ये तत्संनिहितपरामर्शः सुतरामुपपद्यते। **एतेन**—प्राण इन्द्रियाणीति संज्ञाभेदमात्रं, न तत्त्वान्तरत्वसाधकमिति शङ्कापि—**निरस्ता;** प्राणोत्पत्तिव्यतिरेकेणोत्पत्तिकथनस्य हेत्वर्थत्वात्। **ननु**—एवमपि श्रेष्ठादन्यत्रेत्यस्य साध्यान्वितस्य हेतावप्यावृत्त्याऽन्वयः हेताविति शब्दाध्याहारश्चेति क्लेशोऽस्तीति—**चेद्, न;** परमतेऽप्यावृत्त्या तदन्वयावश्यम्भावात्। **टीकायां हि**—तेनेन्द्रियशब्देन तेषां वागादीनां व्यपदेशादिति हेतुरुक्तः, स तु वागादीनामेव श्रेष्ठं वर्जयित्वेन्द्रियशब्देन व्यपदेशादित्यवधारणापेक्षः; अन्यथेन्द्रियव्यपदेशस्य प्राणव्यावृत्तत्वाप्रतीतौ तत्प्रवृत्तिनिमित्तस्येन्द्रियत्वस्य प्राणाद्व्यावृत्त्यसिद्धेः। अतएव चाचार्यैर्दर्पणे सावधारणो हेतुरुपन्यस्तः—"तेनेन्द्रियशब्देन तेषामेव वृद्धव्यवहारे व्यपदेशादि"ति। **एतेन**—हेताविति शब्दाध्याहारक्लेशोऽपि—**निरस्तः।** परमतएव भेदश्रुते (ब्र. अ. २ पा. ४ सू. ८) रित्यधिकरणान्तरसूत्रे वागादीनीन्द्रियाणि श्रेष्ठात्तत्वान्तराणीति प्रतिज्ञाध्याहारार्थबहुक्लेशसद्भावात्। इन्द्रियाणि श्रेष्ठादन्यत्रेत्यस्मात्सूत्रादनुषङ्गतः प्रतिज्ञा लभ्यत इति चेत्, तर्हि श्रेष्ठादन्यत्रेत्यस्य ते वागादयः श्रेष्ठादन्यत्रेन्द्रियाणीति पूर्वाधिकरणसाध्यान्वितस्य पुनस्तद्धेतावन्वितस्य भेदश्रुतेरिति सूत्रेऽप्यन्वय इति परमतएवातिक्लेशः। अस्मन्मते त्विन्द्रियाणीत्यस्य विनैवेतिशब्दाध्याहारं तइन्द्रियाणीति पक्षनिर्देशार्थत्वेनाप्यस्त्युपपत्तिः। तथा पक्षनिर्देशस्य मनःसर्वेन्द्रियाणि चेतीन्द्रियोत्पत्तिप्रतिपादकवाक्यस्मरणार्थत्वाद् न वैयर्थ्यम्; तत एव तत्स्मरणसिद्धेः, न हेतावपि तदन्वयापेक्षा; इति शब्दाध्याहारेण हेतौ तदन्वयस्यापि अनुक्तेस्तस्य चेति सूत्रे तस्य चेत्यंशस्यैव विवक्षितश्रुतिवाक्यसूचनप्रयोजनात्। तस्मात्स्वरूपव्याक्रियैव निराक्रियेत्यभिप्रेत्य टीकायां वृत्तिकारमतोपन्यास इत्येव युक्तम्॥ १७ ॥ १८ ॥ १९ ॥ **इत्यष्टममिन्द्रियाधिकरणम्॥**

**संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥**

**विषयप्रदर्शकं भाष्यमुदाहृत्य व्याचष्ट इति।** भाष्यं गृहीत्वा तदुदाहृतं विषयवाक्यं व्याचष्ट इत्यर्थः।

त्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वाद्देवतात्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अपिच डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम्। तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्तेऽभिधत्ते—'संज्ञामूर्तिक्लृप्तिस्तु' इति। तुशब्देन पक्षं व्यावर्तयति संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्येतत्। त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति; त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात्। येयं संज्ञाक्लृप्तिमूर्तिक्लृप्तिश्चाग्निरादित्यश्चन्द्रमा विद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति। कुतः? उपदेशात्। तथाहि—'सेयं देवतैक्षत' इत्युपक्रम्य 'व्याकरवाणि' इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते। ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्याध्यवसितम्। नैतदेवम्; जीवेनेत्येतदनुप्रविश्येत्यनेन संबध्यत आनन्तर्यात्, न व्याकरवाणीत्यनेन। तेन हि संबन्धे व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत। नच गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य जीवस्य

## भामती।

मुद्दिश्य। कथम्? हन्तेदानीमहमिमा यथोक्तास्तेजआद्यास्तिस्रो देवताः पूर्वसृष्टानुभूतेन संप्रति स्मरणसंनिधापितेन जीवेन प्राणधारणकर्त्रात्मनानुप्रविश्य बुद्ध्यादिभूतमात्रायामादर्श इव मुखबिम्बं तोय इव चन्द्रमसो बिम्बं छायामात्रतयानुप्रविश्य नाम च रूपं च ते व्याकरवाणि विस्पष्टं करवाणीदमस्य नामेदं च रूपमिति। तासां तिसृणां देवतानां त्रिवृतं त्रिवृतं तेजोऽबन्नात्मना त्र्यात्मिकां त्र्यात्मिकामेकैकां देवतां करवाणीति। तत्र संशयः—किं जीवकर्तृकमिदं नामरूपव्याकरणमाहो परमेश्वरकर्तृकमिति। यदि जीवकर्तृकम् ततः 'आकाशो वै नामरूपयोर्निर्वहिता' इत्यादिश्रुतिविरोधादनध्यवसायः। अथ परमेश्वरकर्तृकम्, ततो न विरोधः। तत्र डित्थडवित्थादिनामकरणे च घटपटादिरूपकरणे च जीवकर्तृत्वदर्शनादिहापि त्रिवृत्करणे नामरूपकरणे चास्ति संभावना जीवस्य। तथाच योग्यत्वादनेन जीवेनेति व्याकरवाणीति प्रधानक्रियया संबध्यते, न त्वानन्तर्यादनुप्रविश्येत्यनेन संबध्यते। प्रधानपदार्थसंबन्धो हि साक्षात्सर्वेषां गुणभूतानां पदार्थानामौत्सर्गिकस्तादर्थ्यात्तेषाम्। तस्य तु क्वचित्साक्षादसंभवात्परम्पराश्रयणं, साक्षात्संभवश्च योग्यतया दर्शितः। ननु सेयं देवतेति परमेश्वरकर्तृत्वं श्रूयते। सत्यम्; प्रयोजकतया तु तद्भविष्यति। यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानीति। यदि पुनरस्य साक्षात्कर्तृभावो भवेदनेन जीवेनेत्यनर्थकं स्यात्। नहि जीवस्यान्यथा करण-

## वेदान्तकल्पतरुः।

निष्पन्नमित्यर्थः। अस्मानपेक्ष्य परोक्षत्वात्तेजआदिषु देवताशब्दः। **ननु** प्रलयसमये प्राणाभावात् कथं तद्धारणनिमित्तजीवशब्दस्तत्राह—**पूर्वसृष्टाविति**। सत्यप्यविद्योपहिते जीवे प्राणोपाध्यभिव्यक्तिरूपाभावाभिप्राया स्मरणसन्निधापितत्वोक्तिः। भूतमात्रायां भूतकार्ये रूपनिष्पत्त्यर्था या त्रिवृत्करणश्रुतिस्तां व्याचष्टे—**तासामिति**। तासां मध्ये एकैकां त्रिवृतं करवाणीति योजना। नामरूपनिर्माणेऽपि समाननामरूपत्वमुक्तं न प्रस्मर्तव्यम्। ततश्च न शब्दार्थसंबन्धस्य कृत्रिमत्वशङ्का। जीवेनेत्यस्य व्याकरणानुप्रवेशसंबन्धाभ्यां संशयमाह—**तत्रेति**। जीवस्य समुद्रादिनामरूपनिर्माणयोग्यत्वाभावात् जीवेनेत्यस्य व्याकरवाणीत्यनेनासंबन्धे पूर्वपक्षाभावमाशङ्क्याह—**डित्थेति**। अस्ति तावत् सामान्येन नामरूपनिर्माणे जीवस्य योग्यत्वं, तावन्मात्रं चान्वयोपयोगि; विशेषाणामानन्त्येनाशक्यज्ञानत्वात्। **यथाह—सामान्येनैव योग्यत्वं लोके यदवधारितम्। तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम्॥ इति**। योग्यतामुपपाद्याकाङ्क्षामाह—**प्रधानक्रिययेति**। **ननु** जीवेनेत्यस्यानुप्रविश्येत्यनेन सन्निधिरस्तीति, तत्राह—**नत्विति**। आकाङ्क्षायोग्यताभ्यां लिङ्गाभ्यां संनिधिस्थानलक्षणो दुर्बल इत्यर्थः। प्रधानक्रिययेत्येतद्विवृणोति—**प्रधानपदार्थेति**। क्वचिदित्यारुणादौ परम्परया संबन्धाश्रयणमित्यर्थः। **ननु** व्याकरवाणीत्यस्य मुख्यार्थस्वीकारे को बाधः? यतः प्रयोजकव्यापारलक्षणा, तत्राह—**यदि पुनरिति**। **स्यादेतत्**—साक्षात्कर्त्र्या देवतायाः करणं भवतु जीवस्तक्ष्ण इव वास्यादीति, नेत्याह—**नहि जीवस्येति**। जीवो हि चेतनत्वात् कर्ता, यत्र च कर्त्रन्तरं प्रति करणं तत्र करणभूतस्य स्वतन्त्रकर्तृत्वमितरस्य तु

## कल्पतरुपरिमलः।

**अरुणादाविति**। यद्यप्यरुणाधिकरणे एकहायनीद्रव्यवदारुण्यस्यापि साक्षादेव क्रयान्वयः शाब्दो व्युत्पादितः; तथापि श्रुतक्रयसाधनत्वनिर्वाहार्थमारुण्यस्यैकहायनीद्रव्यावच्छेदकत्वेनार्थः पार्ष्ठिकान्वयोऽभ्युपगत इति तदभिप्राया परम्परासंबन्धोक्तिः। सप्तदशारत्निर्वाजपेयस्य यूप इति तु साक्षात्प्रधानसंबन्धासंभवेन शाब्दपरम्परासंबन्धाश्रयणे उदाहरणम्। **यत्र च कर्ता कर्त्रन्तरं प्रति करणमिति**। जीवस्तावत् तृतीयाश्रुत्या करणत्वेन प्रतीयते, चेतनस्य चेतनान्तरं

व्याकरणसामर्थ्यमस्ति; येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत् । नच जीवो नाम परमेश्वरादत्यन्तभिन्नश्चार इव राज्ञः; आत्मनेति विशेषणात्, उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य । तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति । परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः; 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' (छा० ८।१४।१ ) इत्यादिश्रुतिभ्यः । तस्मात्परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपयोर्व्याकरणम् । त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते; प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नोत्पत्तिवचनेनैवोक्तत्वात् । तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' ( छा० ६।४।१ ) इत्यादिना । तत्राग्निरितीदं रूपं व्याक्रियते सति च रूपव्याकरणे विषयप्रतिलम्भादग्निरितीदं नाम व्याक्रियते । एवमेवादित्यचन्द्रविद्युत्स्वपि द्रष्टव्यम् । अनेन चाग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति; उपक्रमोपसंहारयोः साधारणत्वात् । तथाह्यविशेषेणैवोपक्रमः—'इमास्तिस्रोदेवतास्त्रिवृत्त्रिवृदेकैका भवति' ( छा० ६।३।४ ) इति । अविशेषेणैव चोपसंहारः—'यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्' इत्येवमादिः, 'यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास' इत्ये( छा० ६।४।६,७ )वमन्तः ॥ २० ॥ तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनामध्यात्ममपरं त्रिवृत्करणमुक्तम्—'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' ( छा० ६।४।७ ) इति । तदिदानीमाचार्यो यथाश्रुत्येवोपदर्शयत्याशङ्कितं कंचिद्दोषं परिहरिष्यन्—

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मांसादिकार्यं यथाशब्दं निष्पद्यते । तथाहि

### भामती ।

भावो भवितुमर्हति । प्रयोजककर्तुस्तत्साक्षात्कर्ता करणं भवति प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुर्व्यापनात् । तस्मादत्र जीवस्य कर्तृत्वं नामरूपव्याकरणेऽन्यत्र तु परमेश्वरस्येति विरोधादनध्यवसाय इति प्राप्तम् । एवं प्राप्त उच्यते—परमेश्वरस्यैवेहापि नामरूपव्याकर्तृत्वमुपदिश्यते, नतु जीवस्य; तस्य प्रधानक्रियासंबन्धं प्रत्ययोग्यत्वात् । **ननु**—अन्यत्र डित्थडवित्थादिनामकर्मणि घटशरावादिरूपकर्मणि च कर्तृत्वदर्शनादिहापि योग्यता संभाव्यत इति—**चेत्, न**; गिरिनदीसमुद्रादिनिर्माणासामर्थ्येनार्थापत्त्यभावपरिच्छिन्नेन संभावनापबाधनात् । तस्मात् परमेश्वरस्यैवात्र साक्षात्कर्तृत्वमुपदिश्यते, न जीवस्य । अनुप्रविश्येत्यनेन तु संनिहितेनास्य संबन्धो योग्यत्वात् । न चानर्थक्यम्; त्रिवृत्करणस्य भोक्तृजीवार्थतया तदनुप्रवेशाभिधानस्यार्थवत्त्वात् । **स्यादेतत्**—अनुप्रविश्य व्याकरवाणीति समानकर्तृत्वे क्त्वः स्मरणात् प्रवेशनकर्तुर्जीवस्यैव व्याकर्तृत्वमुपदिश्यतेऽन्यथा परमेश्वरस्य व्याकर्तृत्वे जीवस्य प्रवेष्टृत्वे भिन्नकर्तृकत्वेन क्त्वः प्रयोगो व्याहन्येतेत्यत्राह—**नच जीवो नामेति** । अतिरोहितार्थमन्यत् ॥ २० ॥ मांसादि भौमं यथाशब्दमितर-

### वेदान्तकल्पतरुः ।

प्रयोजककर्तृत्वं चारेण संकलयानीत्यादौ तथा दर्शनादित्यर्थः । **नामकर्मणीति** । नामोत्पादने इत्यर्थः । सामान्यतोऽवगतयोग्यत्वस्य विशेषे बाधकप्रमाणाभावादपवादमाह—**न गिरिनदीति** । **अर्थापत्त्यभावेति** । करणसामर्थ्ये हि प्रमाणं कार्यजनकत्वान्यथानुपपत्तिर्जीवस्य च समुद्रादिजनकत्वादर्शनात् तच्छक्तौ नार्थापत्तिरस्ति, तेन सामर्थ्याभावोऽर्थापत्त्यनुदयपरिच्छिन्न इत्यर्थः । जीवेनेत्यस्य व्याकरवाणीति प्रतिप्रधानान्वययोग्यतायां निरस्तायां संनिधेरेव साम्राज्यमित्याह—**अनुप्रविश्येत्यनेन त्विति** । **क्त्वः** क्त्वाप्रत्ययस्य ॥ २० ॥ **अन्नभागतेति** । योऽणिष्ठस्तन्मन इत्युक्ता

### कल्पतरुपरिमलः ।

कर्तारं प्रति करणतयोपकरणत्वं च प्रयोज्यकर्तृत्वेनैव भवति नान्यथेति भावः । नच पाचयत्योदनं देवदत्तेनेतिवदिह तृतीयायाः कर्त्रर्थत्वं शङ्कनीयम्; तत्र ण्यन्तधातूक्ताख्याताभिहितकर्तृकप्रयोजकव्यापारव्यतिरेकेण तत्प्रकृतिभूतपचत्यर्थानभिहितकर्तृकप्रयोज्यव्यापारवदिहाख्याताभिहितकर्तृकाध्यारोपितप्रयोजकव्यापाररूपव्यापारव्यतिरेकेणानभिहितकर्तृकस्य कस्यचित्प्रयोज्यव्यापारस्याभावात् । तस्मादुत्तमपुरुषनिर्दिष्टाया देवतायाः कर्तृत्वेनान्वये सति तृतीयान्तनिर्दिष्टस्य जीवस्य तस्यां करणत्वेनैवान्वयो वक्तव्य इति भावः । **प्रधानान्वययोग्यतायामिति** । यथेष्टकाः पक्त्वा भुङ्क्ते इत्यत्रेष्टकानां

श्रुतिः—'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' ( छा० ६।५।१ ) इति । त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः । तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति । मध्यममध्यात्मं मांसं वर्धयति । अणिष्ठं तु मनः । एवमितरयोरप्तेजसोर्यथाशब्दं कार्यमवगन्तव्यम् । एवं मूत्रं लोहितं प्राणश्चापां कार्यम् । अस्थि मज्जा वाक्तेजस इति ॥ २१ ॥ अत्राह—यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकमविशेषश्रुतेः 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति । किंकृतस्तर्ह्ययं विशेषव्यपदेशः 'इदं तेज इमा आप इदमन्नम्' इति ? तथा 'अध्यात्ममिदमन्नस्याशितस्य कार्यं मांसादि ? इदमपां पीतानां कार्यं लोहितादि ? इदं तेजसोऽशितस्य कार्यमस्थ्यादि' इति ? अत्रोच्यते—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

तुशब्देन चोदितं दोषमपनुदति । विशेषस्य भावो वैशेष्यम् । भूयस्त्वमिति यावत् । सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते 'अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वम्' इति । व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम् । व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत् । तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेष तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते । तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥ २२ ॥ इति नवमं संज्ञाक्लृप्त्यधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ
शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥
इति द्वितीयोऽध्यायः ॥ २ ॥

---

### भामती ।

योश्च ॥ २१ ॥ अत्र भाष्यकृतोत्तरसूत्रशेषतया सूत्रमेतद्विषयोपदर्शनपरतया व्याख्यातम् । शङ्कानिराकरणार्थत्वमप्यस्य शक्यं वक्तुम् । **तथाहि**—योऽन्नस्याणिष्ठो भागस्तन्मनस्तेजसस्तु योऽणिष्ठो भागः स वागित्यत्र हि काणादानां सांख्यानां चास्ति विप्रतिपत्तिः । तत्र काणादा मनो नित्यमाचक्षते । सांख्यास्त्वाहंकारिके वाङ्मनसे । अन्नभागतावचनं त्वस्यान्नसंबन्धलक्षणार्थम् । अन्नोपभोगे हि मनः स्वस्थं भवति । एवं वाचोऽपि पाटवेन तेजःसाम्यमभ्यूहनीयम् । तत्रेदमुपतिष्ठते—**मांसादीति** । वाङ्मनस इति वक्तव्ये मांसाद्यभिधानं सिद्धेन सह साध्यस्योपन्यासो दृष्टान्तलाभाय । यथा मांसादि भौमाद्येव वाङ्मनसे अपि तैजसभौमे इत्यर्थः । **एतदुक्तं भवति**— न तावद्ब्रह्मव्यतिरिक्तमस्ति किंचिन्नित्यम्; ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञाव्याघातात्, बहुश्रुतिविरोधाच्च । नाप्याहंकारिकम्; अहंकारस्य सांख्याभिमतस्य तत्त्वस्याप्रामाणिकत्वात् । तस्मादसति बाधके श्रुतिराञ्जसी नान्यथा कथंचिन्नेतुमुचितेति । कंचिद्दोषमित्युक्तं, तं दोषं

### वेदान्तकल्पतरुः ।

अन्नस्य सूक्ष्मभागात्मतेत्यर्थः । वाचः पटुत्वात्तेजसा साम्यमस्ति तत्तेजोमयी वागित्युक्तमित्यूहनीयमित्यर्थः । तेज इत्यग्निदीपकं घृताद्युच्यते । तेजसः सूक्ष्मो भागो वाग् अन्नस्याशितस्य सूक्ष्मो भागो मन इति श्रुतिवशाद् वाङ्मनसयोस्तैजसभौमत्वे वक्तव्ये कथं मांसादेर्भौमत्वमुच्यते ? अत्राह—**वाङ्मनसे इति** । मांसादीत्यादिशब्देनाप्तेजःकार्ययोर्मज्जालोहितयोर्ग्रहणम् । मज्जा नामास्थ्नोऽभ्यन्तरो रसः । नित्यत्वं मनसो दूषयति—**न तावदिति** । नाप्याहंकारिकं मन

### कल्पतरुपरिमलः ।

प्रधानक्रियान्वयायोग्यत्वादुपसर्जनक्रियान्वयः तथेहापीत्यर्थः । प्रवेशक्रियान्वयपक्षेऽपि न कर्तरि तृतीया । नच यथेष्टकाः पक्त्वा भुङ्क्ते इत्यत्रेष्टकानां कर्मत्वस्य क्त्वाप्रत्ययेनानभिधानादिष्टका इति कर्मणि द्वितीया, तथेह कर्तरि तृतीया शङ्कनीया; युक्ता तत्र क्त्वाप्रत्ययस्य कर्मानभिधायित्वाद् द्वितीया समानकर्तृकयोः पूर्वकाल इति स्मरणादिह क्त्वाप्रत्ययेन कर्तुरभिधानमस्तीति न कर्तरि तृतीया युक्ता । नच—क्रियाद्वयकर्तुरैक्यमेव क्त्वाप्रत्ययार्थः, नतु तद्गतकर्तृशक्तिरप्यतस्तदनभिधानात्तत्र तृतीया भवितुमर्हतीति—शङ्कनीयम्; तथा सतीष्टकाः पक्त्वाऽहं भोक्ष्य इत्यत्रापि मयेति तृतीयाप्रसङ्गात् । नच—भोजनक्रियाकर्तुराख्यातेनाभिधानत्तृतीया न भवतीति वाच्यम्; न ह्यनभिहितसूत्रस्याभिहितकारकशक्त्याश्रये तृतीया न भवतीत्यर्थः, किंत्वनभिहितकारकशक्त्याश्रये भवतीति; भाष्यवार्तिकयोः पर्युदासपक्षाश्रयणात् । अतएव प्रासादे आस्त इत्यत्र प्रसीदन्त्यस्मिन् जना इत्यर्थे विहितेन घञा प्रसादनक्रियाधिकरणत्वस्याभिहितत्वेऽपि

भामती ।

दर्शयन्नाह पूर्वपक्षी—**यदि सर्वमेव इति** ॥ २१ ॥ **वैशेष्यात्तु तद्वादस्तद्वादः** ॥ २२ ॥ त्रिवृत्करणाविशेषेऽपि यस्य च यत्र भूयस्त्वं तेन तस्य व्यपदेश इत्यर्थः ॥ २२ ॥ **इति नवमं संज्ञाक्लृप्त्यधिकरणम्** ॥

**इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमद्भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

वेदान्तकल्पतरुः ।

आदीति शेषः ॥ २१ ॥ भूयस्त्वं भूतानां स्वस्वार्धाधिक्यम् । तच्च ईक्षत्यधिकरणेऽस्माभिर्दर्शितमिति ॥ २२ ॥ **इति नवमं संज्ञाक्लृप्त्यधिकरणम्** ॥[1]

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ द्वितीयाध्यायस्य चतुर्थः पादः ॥**

**समाप्तश्चायमविरोधाख्यो द्वितीयोऽध्यायः ॥**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ९ | ८७ |
| सूत्राणि | २२ | २९१ |

कल्पतरुपरिमलः ।

आसिक्रियाधिकरणत्वस्यानभिधानात् सप्तमी। एवमिहापि भुजिक्रियाकर्तृत्वस्याभिधानेऽपि पाकक्रियाकर्तृत्वानभिधानात् तृतीया स्यात् । तस्मात्तत्र क्त्वाप्रत्ययेन कर्तृशक्त्यभिधानमाश्रित्यैव तृतीयाभाव उपपादनीयः, तथेहापि कर्तरि तृतीया न भवतीति करणार्थैव सेति युक्तम् । **तदयमर्थः**—सेयं देवता जीवरूपेणानुप्रविश्य तद्भोगार्थं नामरूपे व्याकरवाणीति संकल्पितवतीति ॥ २० ॥ २१ ॥ २२ ॥ **इति नवमं संज्ञाक्लृप्त्यधिकरणम्** ॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीवेदान्तकल्पतरुपरिमले द्वितीयाध्यायस्य चतुर्थः पादः ॥**

**इति लिङ्गशरीरश्रुतीनां विरोधपरिहाराख्यश्चतुर्थः पादः ॥**

**॥ इति श्रीमद्ब्रह्मसूत्रशांकरभाष्येऽविरोधाख्यो द्वितीयोऽध्यायः ॥**

---

१ तत्र सूत्राणि ३—संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् २० मांसादि भौमं यथाशब्दमितरयोश्च २१ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥



# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## भामती—वेदान्तकल्पतरु—कल्पतरुपरिमलोपबृंहितम् ।

## अथ तृतीयोऽध्यायः ।

( १ अधिकरणम् ) **तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

**द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः । परपक्षाणां चानपेक्षत्वं प्रपञ्चितम् । श्रुतिविप्रतिषेधश्च परिहृतः । तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम् । अथेदानीमुपकरणोपहितस्य जीवस्य संसारगतिप्रकारस्तदवस्थान्तराणि ब्रह्मसतत्त्वं विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ सम्यग्दर्शनात्पुरुषार्थसिद्धिः सम्यग्दर्शनोपायविधिप्रभेदो मुक्तिफलानियमश्चेत्येतदर्थजातं तृतीयेऽध्याये निरूपयिष्यते प्रसङ्गागतं च किमप्यन्यत् । तत्र प्रथमे तावत्पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः**

---

### भामती ।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ।** द्वितीयतृतीयाध्याययोर्हेतुहेतुमद्भावलक्षणं संबन्धं दर्शयन् सुखावबोधार्थसंक्षेपमाह—**द्वितीयेऽध्याय इति ।** स्मृतिन्यायश्रुतिविरोधपरिहारेण हि अनध्यवसायलक्षणमप्रामाण्यं परिहृतम्; तथाच प्रामाण्ये निश्चलीकृते तार्तीयो विचारो भवत्यन्यथा तु निर्बीजतया न सिध्येदिति । अवान्तरसंगतिं दर्शयितुं **तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि** चेत्युक्तम् । अध्यायार्थसंक्षेपमुक्त्वा पादार्थसंक्षेपमाह—**तत्र प्रथमे तावत्पाद इति ।** तस्य प्रयोजनमाह—**वैराग्य इति**

### वेदान्तकल्पतरुः ।

**कल्पादौ नूनमाशा हरिरसृजदमूः कीर्तिविस्तारविज्ञः । श्रीमद्व्यासाश्रमस्य प्रतिवदनमधात्कर्णयुग्मं विरिञ्चिः ॥ श्रोतुं वाचस्पतेर्वाक्सरणिषु विततं कल्पवृक्षं निबन्धम् । भेजे वज्री सहस्रं चरितमभिनवं द्रष्टुमक्ष्यम्बुजानाम् ॥ १ ॥** इदममलात्मनः—**मत्सरपित्तनिदानां विदुषामरुचिं चिकित्सति प्रबलाम् । स्वगुणगणामृतवर्षैः कृतिरेषा कर्णरन्ध्रगता ॥ २ ॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ अविरोधेन वेदान्तवेद्यं ब्रह्म निरूपितम् । तत्प्राप्तिसाधनं ज्ञानं सोपायमिह चिन्त्यते ॥** हेतुहेतुमद्भावं विशदयति—**स्मृतिन्यायेति ।** स्मृतिन्यायश्रुतिभिः सह श्रुतीनां विरोधपरिहारेणेति योजना । **अवान्तरसंगतिः** पादसंगतिः । भाष्ये प्रसङ्गागतमिति देहात्मव्यतिरेकादिरुक्तः । **पूर्वापरौ**

### कल्पतरुपरिमलः ।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥१॥ अविरोधेनेति ।** द्वितीयाध्यायकृतेन स्मृतिन्यायश्रुतिविरोधसमाधानेन वेदान्तवेद्यं ब्रह्मेत्यस्मिन्नर्थे प्रतिष्ठिते तस्य ब्रह्मणः प्राप्तौ वेदान्तोत्थं ज्ञानं साधनमिति तत्सोपायमस्मिन्नध्याये चिन्त्यत इत्यर्थः । सोपायसाधननिरूपणमध्यायार्थः । तत्र वेदान्तमूलकं ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनमित्येतत्पुरुषार्थाधिकरणे(ब्र. अ. ३ पा. ४ सू. १) निरूपितम् । तच्च जीवाभिन्नब्रह्मविषयमित्यात्मेति तूपगच्छन्ती ( ब्र. अ. ४ पा. १ सू. ३ ) त्यधिकरणे तत्त्वमसिवाक्यार्थगोचरस्यास्य ज्ञानस्य तत्त्वंपदार्थज्ञानपूर्वकत्वाद् द्वितीयपादे न स्थानतोऽपीत्यतः प्राक् त्वंपदार्थः शोधितः । ततः प्रभृति तत्पदार्थः शोधितः । शोधितस्य तत्पदार्थस्य तथात्वेन वेदान्तैः सिद्ध्यर्थं तस्मिन्नुपसंहरणीया विधिनिषेधरूपा धर्मा आनन्दादयअक्षरधिया (ब्र. अ.३ पा.३ सू. ३३) मित्यधिकरणयोर्दर्शिताः । **प्रथमपादे** वैराग्यरूपं, **द्वितीयपादान्त्याधिकरणे** परमेश्वरप्रसादरूपं, **तृतीयपादे** सगुणविषयाधिकरणेषु सगुणविद्यापरिशीलनरूपं **चतुर्थपादे** कर्मतत्संन्यासशमदमादिरूपं च तदुपायजातं निरूपितमिति विवेकः । **पादसंगतिरिति ।** जीवोपकरणप्राणादिस्वरूपनिरूपणा-

प्रदर्श्यते वैराग्यहेतोः; 'तस्माज्जुगुप्सेत' इति चान्ते श्रवणात् । जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यत इत्येतदवगतम् । 'अथैनमेते प्राणा अभिसमायन्ति' इत्येवमादेः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' ( बृ० ४।४।१,४ ) इत्येवमन्तात्संसारप्रकरणस्थाच्छब्दात्, धर्माधर्मफलोपभोगसंभवाच्च । स किं देहबीजैर्भूतसूक्ष्मैरसंपरिष्वक्तो गच्छत्याहोस्वित्संपरिष्वक्त इति चिन्त्यते । किं तावत्प्राप्तम्? असंपरिष्वक्त इति । कुतः ? करणोपादानवद्भूतोपादानस्याश्रुतत्वात् । 'स एतास्तेजोमात्राः समभ्याददानः' ( बृ० ४।४।१ ) इति ह्यत्र तेजोमात्राशब्देन करणानामुपादानं संकीर्तयति; वाक्यशेषे चक्षुरादिसंकीर्तनात् । नैवं भूतमात्रोपादानसंकीर्तनमस्ति । सुलभाश्च सर्वत्र भूत-

## भामती ।

पूर्वापरपरिशोधनाय भूमिकामारचयति—**जीवो मुख्यप्राणसचिव इति । करणोपादानवद्भूतोपादानस्याश्रुतत्वादिति ।** अत्र च करणोपादानश्रुत्यैव भौतिकत्वात् करणानां भूतोपादानसिद्धेरिन्द्रियोपादानातिरिक्तभूतविवक्षयाधिकरणारम्भः । यदि भूतान्यादायागमिष्यत्, तदा तदपि करणोपादानवदेवाश्रोष्यत् । नच श्रूयते । तस्मान्न भूतपरिष्वक्तो रंहत्यपि तु करणमात्रपरिष्वक्तः । नह्यागमैकगम्येऽर्थे तदभावः प्रमेयाभावं न परिच्छेत्तुमर्हति । नच देहान्तरारम्भान्यथानुपपत्त्या भूतपरिष्वक्तस्य रंहणकल्पनेति युक्तमित्याह—**सुलभाश्च सर्वत्र भूतमात्रा इति । द्युपर्जन्य इति ।** इह हि कायारम्भणमग्निहोत्रापूर्वपरिणामलक्षणं श्रद्धादित्वेन पञ्चधा प्रविभज्य द्युप्रभृतिष्वग्निषु होतव्यत्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विवक्षन्नाह—श्रुतिः—'असौवाव लोको गौतमाग्निः' इत्यादि । अत्र सायंप्रातरग्निहोत्राहुती, हुते पयआदिसाधने श्रद्धापूर्वमाहवनीयाग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गभाविते कर्त्रादिकारकभाविते चान्तरिक्षं क्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते द्रवद्रव्यपयःप्रभृत्यप्संबन्धादप्शब्दवाच्ये, श्रद्धाहेतुकत्वाच्च श्रद्धाशब्दवाच्ये । तयोराहुत्योरधिकरणमग्निरन्ये च समिद्धूमार्चिरङ्गारविस्फुलिङ्गा रूपकत्वेन निर्दिश्यन्ते । **असौ वाव द्युलोको गौतमाग्निः ।** यथाग्निहोत्राधिकरणमाहवनीय एवं श्रद्धाशब्दवाच्याग्निहोत्राहुतिपरिणामावस्थारूपा सूक्ष्मा या आपः श्रद्धाभावितास्तदधिकरणं द्युलोकः । अस्यादित्य एव समित् । तेन हीद्धोऽसौ द्युलोको दीप्यतेऽतः समिन्धनात्समित् तस्यादित्यस्य रश्मयो धूमाः; इन्धनादिवादित्याद्रश्मीनां समुत्थानात् । अहरर्चिः; प्रकाशसामान्यादादित्यकार्यत्वाच्च । चन्द्रमा अङ्गारः; अर्चिषः प्रशमेऽभिव्यक्तेः । नक्षत्राण्यस्य विस्फुलिङ्गाः; चन्द्रमसोऽङ्गारस्यावयवा इव विप्रकीर्णतासामान्याद्विस्फुलिङ्गाः । तदेतस्मिन्नग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदैवम् । श्रद्धां जुह्वति श्रद्धा चोक्ता । **पर्जन्यो वाव गौतमाग्निः ।** पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषः । तस्य वायुरेव समित् । वायुना हि पर्जन्योऽग्निः समिध्यते; पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं धूमः; धूमकार्यत्वात् धूमसादृश्याच्च । विद्युदर्चिः; प्रकाशसामान्यात् । अशनिरङ्गाराः; काठिन्याद्विद्युत्संबन्धाच्च । गर्जितं मेघानां विस्फुलिङ्गाः; विप्रकीर्णता-

## वेदान्तकल्पतरुः ।

पूर्वोत्तरपक्षौ । **भूमिकेति** विषयः । भूतपरिष्वङ्गे प्राणानां नरकादिगमनाद्वैराग्यम्, नचेद् निराश्रयप्राणगत्यभावान्नेति चिन्ताप्रयोजनम् । करणेषु उपात्तेषु भूतानुपादानं व्याहतम्; कार्यस्वीकारे तत्प्रकृतिस्वीकारस्यावश्यंभावादित्याशङ्क्याह—**अत्रेति । ननु** भूतोपादानस्याश्रवणं तदभावगमकं न भवति; सत्यपि प्रमेये प्रमाणानुदयसंभवादत आह—**नह्यागमैकेति ।** नानाप्रमाणगम्ये हि वस्तुन्येकप्रमाणानुत्पत्तावपि प्रमाणान्तरप्रवृत्तिशङ्कया वस्तुसद्भावशङ्का स्यात्, नत्विहेत्यर्थः । अनग्निषु द्युलोकादिष्वग्नित्वस्यानाहुतित्वस्योपचारे निमित्तमाह—**इह हीति ।** यदि शरीरोत्पत्त्यवस्थामाहुतिजां पञ्चाहुतित्वेन प्रविभज्य तदाधारेषु द्युलोकादिष्वग्नित्वसंपादनं विधीयते, कथं तर्ह्यापः पुरुषवचस इति प्रश्ने आहुतावप्शब्दः? कथं वा प्रतिवचने श्रद्धां जुह्वतीति श्रद्धाशब्दः? अत आह—**अत्र सायमित्यादिना ।** श्रद्धापूर्वं हुते इत्यन्वयः । वक्ष्यमाणरूपकसिद्ध्यर्थमाह—**आहवनीयाग्नीति ।** पञ्चाग्निविद्याश्रुतिमुदाहृत्य व्याचष्टे—**असौवावेत्यादिना । आदित्यकार्यत्वाच्चेति ।** समिद्रूपादित्यकार्यत्वादहरर्चिः; प्रसिद्धस्यार्चिषः समित्कार्यत्वादित्यर्थः । अधिदैवं यजमानप्राणा इत्यन्वयः । तन्निर्दिशति—**अग्न्यादिरूपा इति ।** ह्रादुनयो विस्फुलिङ्गा इति श्रुतिं व्याचष्टे—**गर्जितमिति ।** अग्निरूपा इत्यग्न्यादिरूपा इति द्रष्टव्यम् । स्वर्गे आरब्धो देहः सोमो राजा । यद्यपि श्रद्धा सोम इत्यादिराहुतिभेदः श्रूयते; तथापि जीवस्य भूतपरिष्वङ्गसिद्ध्यर्थमाप एव तत्तदाकारपरिणतास्तथा तथा

## कल्पतरुपरिमलः ।

र्थेन पूर्वपादेन सोपकरणजीवगतागतनिरूपणार्थस्यास्य पादस्य संगतिरित्यर्थः । **भूतपरिष्वङ्ग इति ।** इदं चिन्ताप्रयोजनं

## भामती ।

सामान्यात् । तस्मिन्देवा यजमानप्राणा अग्निरूपाः सोमं राजानं जुह्वति तस्य सोमस्याहुतेर्वर्षं भवति । **एतदुक्तं भवति**—श्रद्धाख्या आपो द्युलोकमाहुतित्वेन प्रविश्य चन्द्राकारेण परिणताः सत्यो द्वितीये पर्याये पर्जन्याग्नौ हुता वृष्टित्वेन परिणमन्त इति । 'पृथिवी वाव गौतमाग्निः' तस्य पृथिव्याख्यस्याग्नेः संवत्सर एव समित् संवत्सरेण कालेन हि समिद्धा भूमिर्व्रीह्यादिनिष्पत्तये कल्पते । आकाशो धूमः पृथिव्यग्नेरुत्थित इवाकाशो दृश्यते । रात्रिरर्चिः पृथिव्याः श्यामाया अनुरूपा श्यामतया रात्रिरग्नेरिवानुरूपमर्चिः । दिशोऽङ्गाराः; प्रगे रात्रिरूपार्चिःशमने उपशान्तानां प्रसन्नानां दिशां दर्शनात् । अवान्तरदिशो विस्फुलिङ्गाः; क्षुद्रत्वसाम्यात् । तस्मिन्नग्नौ श्रद्धासोमपरिणामक्रमेणागता अपो वृष्टिरूपेण परिणता देवा जुह्वति तस्या आहुतेरन्नं व्रीहियवादि भवति । पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् । वाचा खल्वयं ताल्वाद्यष्टस्थानस्थितया वर्णपदवाक्याभिव्यक्तिक्रमेणार्थजातं प्रकाशयन् समिध्यते । प्राणो धूमः; धूमवन्मुखान्निर्गमात् । जिह्वार्चिः; लोहितत्वसाम्यात् । चक्षुरङ्गाराः; प्रभाश्रयत्वात् । श्रोत्रं विस्फुलिङ्गाः; विप्रकीर्णत्वात् । ता एवापः श्रद्धादिपरिणामक्रमेणागताः व्रीह्यादिरूपैः परिणताः सत्यः पुरुषेऽग्नौ हुतास्तासां परिणामो रेतः संभवति । योषा वाव गौतमाग्निः, तस्या उपस्थ एव समित् । तेन हि सा पुत्राद्युत्पादनाय समिध्यते, यदुपमन्त्रयते स धूमः, स्त्रीसंभवादुपमन्त्रणस्य । लोमानि वा धूमः, योनिरर्चिः, लोहितत्वात् । यदन्तः करोति मैथुनं तेऽङ्गाराः। अभिनन्दाः सुखलवा विस्फुलिङ्गाः; क्षुद्रत्वात् । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति । एवं श्रद्धासोमवर्षान्नरेतोवहनक्रमेण योषाग्निं प्राप्यापो गर्भाख्या भवन्ति । तत्राप्समवायित्वादापः पुरुषवचसो भवन्ति पञ्चम्यामाहुताविति । यतः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति, तस्मादद्भिः परिवेष्टितो जीवो रंहतीति गम्यते । **एतदुक्तं भवति**—श्रद्धाशब्दवाच्या आप इत्यग्रे वक्ष्यति, तासां त्रिवृत्कृततया तेजोऽन्नाविनाभावेनाब्ग्रहणेन तेजोऽन्नयोरपि संग्रह इत्येतदपि वक्ष्यते । यद्यप्येतावतापि भूतवेष्टितस्य जीवस्य रंहणं नावगम्यते; तेजोबन्नानां पञ्चम्यामाहुतौ पुरुषवचस्त्वमात्रश्रवणात्, तथापीष्टादिकारिणां धूमादिना पितृयाणेन पथा चन्द्रलोकप्राप्तिकथनपरया 'आकाशाच्चन्द्रमसमेष सोमो राट्' इति श्रुत्या सह 'श्रद्धां जुह्वति तस्या आहुतेः एष सोमो राजा संभवति' इत्यस्याः श्रुतेः समानत्वाद्गम्यते भूतपरिष्वक्तो रंहतीति । **तथाहि—या एवापो हुता द्वितीयस्यामाहुतौ सोमभावं**

## वेदान्तकल्पतरुः ।

निर्दिश्यन्त इत्याह—**श्रद्धाख्या इति । प्रगे इति ।** प्रभाते इत्यर्थः । स्वरूपाभावमुपशममाशङ्क्याह—**प्रसन्नानामिति** । श्रोत्रं शब्दश्रवणार्थं दिक्षु विप्रकीर्णमिव । उपमन्त्रणं संकेतः । श्रुत्यन्तरवशेनाह—**लोमानि वेति** । तानि च गौणानि धूमोऽर्चिर्जन्यत्वादित्यर्थः । सुखलवविस्फुलिङ्गहेतुत्वाद् ग्राम्यकर्मणोऽङ्गारत्वम् । अप्समवायित्वाद्गर्भस्येति शेषः । अश्रुतत्वादिति सूत्रार्थमिह प्राप्तावसरं दर्शयति—**यद्यपीत्यादिना** । कर्मिणां चन्द्रलोकारोहावरोहावाश्रित्य पञ्चाग्निदर्शनमुच्यते । तत्र दक्षिणमार्गे "तद्य इमे ग्राम इष्टाद्युपासते धूममभिसंभवन्ति" इत्युपक्रम्य "एष सोमो राजे"ति चन्द्रलोकप्राप्तः पुरुषो निर्दिष्टः, पञ्चाग्निविद्यायामपि स्वर्गे लोके सोमो राजा भवतीति स एव निर्दिश्यते । सोमराजश्रुतिसाम्यात्स्वर्गाख्यस्थानसाम्याच्चेत्याह—**तथापीष्टादिकारिणामिति** । श्रद्धां जुह्वतीत्यत्रापामिष्टादिकारिभिरन्वयमुक्त्वा एष सोमोराजेत्यत्र कर्तॄणां श्रद्धावाक्यावगताभिरद्भिः परिष्वङ्गमाह—**तथाहि या एवेति** । अन्त्याहुत्यपेक्षया द्वितीया श्रद्धाहुतिः । **अथ वा**—पर्जन्याग्नौ द्वितीये द्वितीयस्यामाहुतौ होतव्यायां सोमभावं गता इत्यर्थः । अस्मिन्पक्षे प्रत्यव-

## कल्पतरुपरिमलः ।

भूतगमनाभावे तदाश्रयाणां प्राणानां गत्यसंभवं सूचयता प्राणगतेश्चेति ( ब्र. अ. ३ पा. १ सू. ३ ) सूत्रेण दर्शितम् । यदि शरीरोत्पत्त्यवस्थामित्येतदनन्तरम् आहुतिजामनाहुतिमिति द्विविधः पाठः । द्विविधोऽप्युपपन्नः अग्निहोत्राहुतिप्रभवत्वाद् वस्तुत आहुतित्वाभावाच्च । **अधिदैवं यजमानप्राणा इत्यन्वय इति** । अग्न्यादयो ह्याधिदैविकयजमानप्राणाः वागादयस्त्वाध्यात्मिकयजमानप्राणाः । अत आध्यात्मिकप्राणव्यावर्तकत्वेनाधिदैवमित्येतत्प्राणविशेषणमिति भावः । तथापीत्यादिग्रन्थोक्तादर्थात् तथा हीत्यादिग्रन्थेनोच्यमानस्यार्थस्य नास्ति विशेषः; उभयत्रापीष्टादिकारिणां जीवस्य च संबन्धमात्रप्रतिपादनाद्, अतः पुनरुक्तिरित्याशङ्क्य विशेषमाह—**श्रद्धां जुह्वतीत्यत्रेति** । पूर्वं श्रद्धां जुह्वतीति पञ्चाग्निविद्यावाक्ये श्रद्धाशब्दलक्षितास्त्रिवृत्कृता आप एव होम्यत्वेनोक्ताः, न तासामिष्टादिकारिभिः संबन्ध उक्त इति शङ्का वारिता, इदानीमेष सोमो राजेति दक्षिणमार्गवाक्ये इष्टादिकर्तॄणां सोमराजभावमात्रमुक्तं, न तेषामद्भिः परिष्वङ्ग उक्त इति शङ्का वार्यत इत्यर्थः । श्रुतिद्वयेऽपि परस्परार्थविशेषग्रहणे सोमराजश्रुतिस्वर्गस्थानयोरैक्यमेव हेतुः । श्रद्धाहुतिः प्रथमा, कथं द्वितीयोक्तेत्याशङ्क्याह—**अन्त्याहुत्यपेक्षयेति** । यजमानशरीरस्य वैतानिकाग्नावाहुतिरन्त्याहुतिः । सापि

मात्राः । यत्रैव देह आरब्धव्यस्तत्रैव सन्ति, ततश्च तासां नयनं निष्प्रयोजनम् । तस्मादसंपरिष्वक्तो यातीति। एवं प्राप्ते पठत्याचार्यः—तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति । तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तो रंहति गच्छतीत्यवगन्तव्यम् । कुतः ? प्रश्ननिरूपणाभ्याम् । तथाहि प्रश्नः—'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' ( छा० ५।३।३ ) इति । निरूपणं च प्रतिवचनं, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' ( छा० ५।९।१ ) इति । तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते । नन्वन्या श्रुतिर्जलूकावत्पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति—'तद्यथा तृणजलायुका' ( बृ० ४।४।३ ) इति, तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः । एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति

## भामती ।

गतास्ताभिरेष परिष्वक्तो जीव इष्टादिकारी चन्द्रभूयं गतश्चन्द्रलोकं प्राप्त इति । **ननु** स्वतन्त्रा आपः श्रद्धादिक्रमेण सोमभावमाप्नुवन्तु, ताभिरपरिष्वक्त एव तु जीवः सेन्द्रियमात्रो गत्वा सोमभावमनुभवतु, को दोषः? अयं दोषः; यतः श्रुतिसामान्यातिक्रम इति । एवं हि श्रुतिसामान्यं कल्पेत, यदि येन रूपेण येन च क्रमेणापां सोमभावस्तेनैव जीवस्यापि सोमभावो भवेत्; अन्यथा तु न श्रुतिसामान्यं स्यात् । तस्मात्परिष्वक्तापरिष्वक्तरंहणविशये श्रुतिसामान्यानुरोधेन परिष्वक्तरंहणं निश्चीयते । अतो दधिपयःप्रभृतयो द्रवभूयस्त्वादापो हुताः सूक्ष्मीभूता इष्टादिकारिणमाश्रिता नेन्धनेन विधिना देहे हूयमाने हुताः सत्य आहुतिमय्य इष्टादिकारिणं परिवेष्य स्वर्गं लोकं नयन्तीति । चोदयति—**नन्वन्या श्रुतिरिति । अयमर्थः**—एवं हि सूक्ष्मदेहपरिष्वक्तो रंहेत् यद्यस्य स्थूलं शरीरं रंहतो न भवेत् । अस्ति त्वस्य वर्तमानस्थूलशरीरयोग आदेहान्तरप्राप्तेस्तृणजलायुकानिदर्शनेन, तस्मान्निदर्शनश्रुतिविरोधान्न सूक्ष्मदेहपरिष्वक्तो रंहतीति । परिहरति—**तत्रापीति** । न तावत्परमात्मनः संसरणसंभवः, तस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वात् , किंतु जीवानाम् । परमात्मैव चोपाधिकल्पितावच्छेदो जीव इत्याख्यायते, तस्य च देहेन्द्रियादेरुपाधेः प्रादेशिकत्वान्न तत्र सन् देहान्तरं गन्तुमर्हति । तस्मात्सूक्ष्मदेहपरिष्वक्तो रंहतिकर्मोपस्थापितः प्रतिपत्तव्यः प्राप्तव्यो यो देहस्तद्विषयाया

## वेदान्तकल्पतरुः ।

रोहसाम्यं वाक्यद्वये दर्शितम् । **तथाहि**—पञ्चाग्निविद्यायां पर्जन्यादिष्वग्निषु हुतस्य सोमराजस्य वृष्ट्यन्नरेतोभाव आम्नायते । तथा दक्षिणमार्गेऽपि प्रत्यवरूढानां सोमराजानां तथाभावो वायोर्वृष्टिं ते पृथिवीं प्राप्यान्नं भवन्तीत्यादिना । अतश्च श्रद्धावाक्ये कर्मिणां लाभ इत्यर्थः । चन्द्रलोकं प्राप्तस्ततश्चन्द्रभूयं चन्द्रभावममृतमयशरीरात्मतां गत इत्यर्थः । वाक्यद्वयस्थसोमराजशब्दयोरर्थभेदं शङ्कते—**ननु स्वतन्त्रा इति** । श्रद्धावाक्ये आप एव सोमाख्यशरीरभावमाप्नुवन्तु, एष सोमो राजेत्यत्र तु अद्भिरपरिष्वक्त इन्द्रियमात्रोपहितश्चन्द्रलोकं गत्वा सोमशरीरं भुङ्क्तामित्यर्थः । उत्तरम्—**अयं दोष इति । येन रूपेणेति** । अमृतमयशरीराभिमानित्वेनेत्यर्थः । **क्रम** आहुतिपरिणामलक्षणः । शब्दमात्रसाम्यमगमकं बटोरप्यग्निशब्दाविशेषाद् ज्वलनाभेदप्रसङ्गादित्याशङ्क्याह—**तस्मादिति** । अप्शब्दात्पुरुषवचस इति पुरुषशब्दाच्च केवलभूतगमनस्य पुरुषाधिष्ठितभूतगमनस्य च संशये सोमराजशब्दसाम्यं निर्णायकं भवति, माणवकस्य तु ज्वलनाद्भेदनिश्चयान्नाभेदापात इत्यर्थः । **एवं हि सूक्ष्मेति** । सूक्ष्मशरीरं भूतसूक्ष्माणीति । **जलूकैव** जलायुका । **ननु**—व्यापकस्यात्मन इह देहान्तराभिमानपूर्वकमेतद्देहत्यागः संभवति, तत्र किमिति दृष्टान्तश्रुतेरार्जवभङ्गः क्रियत इति—**चेत्, तत्र वक्तव्यं**—किं परमात्मन उक्तविधा देहान्तरप्राप्तिरुत जीवस्य । **नाद्य** इत्याह—**न तावदिति** । जीवोऽपि स्वतन्त्र एव व्यापकः सन्नस्मिन्देहे वर्तमानो देहान्तरमभिमन्यते, उतौपाधिकः सन्नुपाधिव्याप्त्या । **न प्रथम** इत्याह—**परमात्मैव चेति । न द्वितीय** इत्याह—**तस्य चेति** । "तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायं शरीर आत्माऽन्यमाक्रममाक्रम्यात्मानमुपसंहरती"ति श्रुतौ प्रतिपत्तव्यदेहविषयभावनादीर्घीभाव उपमीयत इति भाष्ये उक्तम् । तत्र भाविदेहस्याननुभूतत्वात्स्मृतिहेतुभावनानुपपत्तेरयुक्तिमाशङ्क्य व्याचष्टे—**उत्पाद-**

## कल्पतरुपरिमलः ।

छान्दोग्ये दर्शिता "तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती"ति । बृहदारण्यके तु स्पष्टमुक्ता "तस्याग्निरेवाग्निः समिदेव समि"दित्यादिना । तदपेक्षया श्रद्धाहुतिर्द्वितीयेत्यर्थः । चन्द्रभूयं गतश्चन्द्रलोकं गत इत्यनयोर्व्याख्यानव्याख्येयभावशङ्कां निराकुर्वन् तयोरन्वयं दर्शयति—**चन्द्रलोकं प्राप्त इति । न द्वितीय इत्याहेति** । अविद्योपाधेर्व्यापकत्वेऽपि

याः पुरुषमतिप्रभवाः कल्पना व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद्वृत्तिलाभस्तत्र भवति । केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति । इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थान उत्पद्यन्ते । मन एव वा केवलं भोगस्थानमभिप्रतिष्ठेत । जीव एवोत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक इव वृक्षाद्वृक्षान्तरम्, इत्येवमाद्याः सर्वा एवानादर्तव्याः श्रुतिविरोधात् ॥ १ ॥ ननूदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति; अप्शब्दश्रवणसामर्थ्यात्, तत्र कथं सामान्येन प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति ? अत उत्तरं पठति—

**त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

तुशब्देन चोदितामाशङ्कामुच्छिनत्ति । त्र्यात्मिका ह्यापः; त्रिवृत्करणश्रुतेः । तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति । त्र्यात्मकश्च देहस्त्रयाणामपि तेजोबन्नानां तस्मिन्कार्योपलब्धेः, पुनश्च त्र्यात्मकस्त्रिधातुत्वात्त्रिभिर्वातपित्तश्लेष्मभिः । न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । तस्माद्भूयस्त्वापेक्षोऽयमापः पुरुषवचस इति । प्रश्नप्रतिवचनयोरप्शब्दो न कैवल्यापेक्षः । सर्वदेहेषु हि रसलोहितादिद्रवद्रव्यभूयस्त्वं दृश्यते । ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते, नैष दोषः; इतरापेक्षयाप्यपां बाहुल्यं भविष्यति । दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं देहान्तरारम्भे । कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि, कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति । तस्माद-

---

## भामती ।

भावनाया उत्पादनाया दीर्घीभावमात्रं जलूकयोपमीयते । सांख्यानां कल्पनामाह—**व्यापिनां करणानामिति** । आहंकारिकत्वात्करणानामहंकारस्य च जगन्मण्डलव्यापित्वात्करणानामपि व्यापितेत्यर्थः । बौद्धानां कल्पनामाह—**केवलस्यैवात्मन इति** । आलयविज्ञानसंतान आत्मा तस्य वृत्तिः षट् प्रवृत्तिविज्ञानि । पञ्चेन्द्रियाणि तु चक्षुरादीनि अभिनवानि जायन्ते । कणभुक्कल्पनामाह—**मन एव चेति** । भोगस्थानं भोगायतनं शरीरमभिनवमिति यावत् । दिगम्बरकल्पनामाह—**जीव एवोत्प्लुत्येति** । आदिग्रहणेन लोकायतिकानां कल्पनां संगृह्णाति । ते हि शरीरात्मवादिनो भस्मीभावमात्मन आहुर्न कस्यचिद्गमनमिति ॥ १ ॥ चोदयति—**ननूदाहृताभ्यामिति** । अत्र सूत्रेणोत्तरमाह—**त्र्यात्मकत्वात्तु भूयस्त्वात्** । तेजसः कार्यमशितपीताहारपरिपाकः । अपां कार्यं स्नेहस्वेदादि । पृथिव्याः कार्यं गन्धादि । यस्तु गन्धस्वेदपाकप्राणावकाशदानदर्शनाद्देहस्य पाञ्चभौतिकत्वं पश्यंस्तेजोबन्नात्मकत्वेन त्र्यात्मकत्वेन परितुष्यति, तं प्रत्याह—**पुनश्च त्र्यात्मक इति** । वातपित्तश्लेष्मभिस्त्रिभिर्धातुभिः शरीरधारणात्मकैस्त्रिधातुत्वात् । अतो न स देहो भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । अब्ग्रहणनियमस्तर्हि कस्मादित्यत आह—**तस्माद्भूयस्त्वापेक्ष इति** । पृथिवीधातुवर्जमितरतेजआद्यपेक्षया कार्यस्य शरीरस्य लोहितादिद्रवभूयस्त्वात्तत्करण-

## वेदान्तकल्पतरुः ।

**नाया इति** । प्राक्तनकर्मारभ्य भाविदेहोत्पत्तिं यावत्कर्तृव्यापारस्य विततत्वाद् दीर्घीभावः । **एतदुक्तं भवति**—यथा जलूका तृणान्तरं प्राप्य तृणं मुञ्चति एवं संसार्यपि देहान्तरप्राप्त्यर्थं कर्म कृत्वा देहं त्यजतीति । शब्दादिज्ञानानि सुखादिज्ञानानि च षट् प्रवृत्तिविज्ञानानि । अहमित्यालयविज्ञानसन्तानस्य वृत्तिः कार्यम् ॥ १ ॥ भाष्योक्तां देहे भूतत्रयकार्योपलब्धिं दर्शयति—**तेजस इत्यादिना** । साम्यावस्थाः शरीरं दधतीति वातादयो धातवः । कथं त्रिधातुकत्वे शरीरस्य पञ्चभूतात्मकत्वमत आह—**अतो न स देह इति** । वातान्वयाद् वाय्वारब्धत्वं कफपित्तान्वयादप्तेजआरब्धत्वम् अवकाशदानान्वयादाकाशारब्धत्वमित्यर्थः । **अत्र नैयायिकादयो विवदन्ते**—यदि देहः पञ्चभूतसमवायिकारणकः स्यात्, तर्हि द्रव्यं न स्यात्, पञ्चभूतसमवायिकारणकबहुत्ववत् । यदि च प्रत्यक्षाप्रत्यक्षसमवायिकारणकः स्यात्, तर्हि प्रत्यक्षो न स्यात्, तरुमरुत्संयोगवत् । तस्मान्न देहः पञ्चभूतसमवायिकारणकः द्रव्यत्वादाकाशवत् । नापि प्रत्यक्षाप्रत्यक्षसमवायिकारणकः प्रत्यक्षत्वाद्गन्धवत् । तोयाद्यारब्धत्वे च शैत्याद्युपलम्भप्रसङ्गः, तोयत्वादिजातिसंकरप्रसङ्गश्च—**इति । तन्न**; त्र्यणुकादेरपि प्रत्यक्षत्वादिहेतोरप्रत्यक्षसमवायिकारणत्वाभावानुमानापातात् । शीतस्पर्शादिश्च शरीरे

## कल्पतरुपरिमलः ।

पूर्वदेहत्यागहेतुरन्तःकरणाद्युपाधिः परिच्छिन्न इति भावः ॥ १ ॥ **त्र्यणुकादेरपीति** । तथा चोदाहृततर्काद्भुमाना-

## वेदान्तकल्पतरुः ।

उद्भवाभिभवाभ्यां क्रमेणोपलभ्यतएव । जातिसंकरश्चादूषणम् । **यत्तु**—मन्येत द्रव्यत्वादि पृथिवीत्वादिजातिं यद्यपि परिहरति व्यापकत्वात्; तथापि पृथिवीत्वादि द्रव्यत्वादिजातिं न मुञ्चति; व्याप्यत्वात्तादृग्जात्योश्चैकत्र समावेशो नेतरयोः । पृथिवीत्वादिजातिश्च परस्परपरिहारिणी; कुम्भे सलिलत्वाभावात् कुम्भसलिले च पृथिवीत्वाभावात् । परस्परपरिहारस्यासमावेशानिश्चायकत्वे च गोत्वाश्वत्वयोरप्यसमाविष्टत्वनिश्चयाभावप्रसङ्गः, उच्छिद्येत च तज्जातीयविरोधकथा । तथाचाप्तवचनावसिततुरगभावे तुरगत्वान्न स गौरित्याद्यनुमानपूर्वकव्यवहारविलयप्रसङ्गः—**इति । तदपि न** काश्चित्परस्परं परिहरन्त्यः क्वचिदपि न समाविशन्ति, काश्चित्तु जातयः क्वचित्परिहरन्ति क्वचित्समाविशन्ति च । समावेशश्च कियत्स्वेव देहादिष्विति निश्चित्य गोत्वादावप्युक्तरीत्योरेकामाप्तादिभ्यः परिच्छिद्य प्रवृत्त्युपपत्तेः। अपि चायमत्र प्रमाणार्थः । पृथिवीत्वजलत्वे नैकत्र समाविशतः; परस्परपरिहारित्वाद् गोत्वाश्वत्ववदिति । तत्र परस्परेति पृथिवीत्वसलिलत्वविवक्षायां साधनविकलो दृष्टान्तः । नहि गोत्वाश्वत्वे पृथिवीत्वं परिहरतः । गोत्वाश्वत्वविवक्षायामविशेषेण यत्किंचित्परस्परविवक्षायां च हेतोरनैकान्तिकता; गुणत्वरूपत्वयोर्गोत्वाश्वत्वे त्यजतोर्यत्किंचित्परस्परात्मकस्तम्भकुम्भौ परिहरतोरप्येकत्र समावेशात् । तस्मात्प्रसिद्धिसामर्थ्याद्बाधकस्यानिरूपणात् पञ्चभूतमयः कायः श्रुतितोऽप्यनुमीयताम् । श्रूयते हि पृथिवीमय आपोमयो वायुमयस्तेजोमय आकाशमय इति । अत्र च देहद्वारात्मनः पञ्चभूतमयत्वमुच्यते; चक्षुर्मय इत्यादिवाक्यशेषात् । अनुमानमपि देवदत्तशरीरमेतज्जनकत्वे सत्यनुदकत्वातेजस्त्वावायुत्वानाकाशत्वात्यन्ताभाववत्समवायिकारणकं शरीरत्वाद्यज्ञदत्तशरीरवदिति । यद्यपि यज्ञदत्तशरीरमनुदकत्वादिमत् पृथिवीमात्रसमवायिकारणकं परेषां; तथापि देवदत्तशरीरजनकत्वे सति अनुदकादिमज्जन्यं न भवति, तस्य देवदत्तशरीरजनकत्वाभावेन तद्विशिष्टानुदकादिमत्त्वरहितत्वात् । अतः साध्यप्रसिद्धिः । एतज्जनकत्वे सत्यनुदकत्वादिमत्त्वरहित-

## कल्पतरुपरिमलः ।

नामाभाससमानयोगक्षेमतया न साधकतेत्यर्थः । **उच्छिद्येत चेति** । अश्वजातीयं गोजातीयेन विरुद्धं तादात्म्यायोग्यमिति या तज्जातीयानां परस्परविरोधप्रसिद्धिः सोच्छिद्येतेत्यर्थः । तथा सति दोषमाह—**तथाचेति । उक्तरीत्योरेकामाप्तादिभ्यः परिच्छिद्य प्रवृत्त्युपपत्तेरिति** । एवमनङ्गीकारे च भूतत्वमूर्तत्वोपाध्योः समावेशाङ्गीकारादन्यत्राप्युपाधिसमावेशशङ्कया क्वचिदाप्तवाक्याद्यवगतेर्नित्यत्वादिभिरनित्यत्वाद्यभावानुमानं न सिध्येदिति भावः । **ननु** गोत्वाश्वत्वाद्यनन्तविरुद्धजातीनां परस्परासामानाधिकरण्यमनुभूयते । तत्र च परस्परात्यन्ताभावसमानाधिकरणजातित्वमवच्छेदकं, नतु गोत्वाश्वत्वादिरूपत्वमननुगमादिति परस्परपरिहारिण्योर्जात्योरसमावेशसिद्धिः । नचैवमवच्छेदके गौरवाज्जातित्वं न प्रवेशनीयमित्युपाधिसङ्करस्यापि त्यागापत्तिः; तथा सति घटान्यत्वपटान्यत्वयोः घटपटयोरेव परस्परपरिहारिणोरन्यत्राप्यसमावेशः स्यादिति कुड्यादीनां घटाद्यात्मकतापत्त्या उपाधिसङ्करस्य परिहर्तुमशक्यत्वेन जातिविशेषणगौरवस्य प्रामाणिकत्वादिति—**चेत्, मैवम्** ; किंचिद्धर्मक्रोडीकारेणानन्तव्यक्तिषु प्रवृत्त्यादिव्यवहारार्थं ग्राह्यस्य कार्यत्वकारणत्वव्याप्यत्वव्यापकत्वशक्यत्वादेरिवासामानाधिकरण्यस्यावच्छेदकापेक्षत्वाभावात्, अनुगतावच्छेदकाभावेऽप्युपाध्यसामानाधिकरण्यवज्जात्यसामानाधिकरण्यस्याप्यात्मलाभोपपत्तेः । **किंच** जातीनामसामानाधिकरण्यमात्रं नावद्यम् ; सर्वासामपि जातीनां यत्किंचित्समानाधिकरणत्वेन क्वचिदपि जातौ सामानाधिकरण्यसामान्याभावाभावात् । परस्परासामानाधिकरण्यं तु परस्परशब्दार्थाननुगमादननुगतम् । एवमवच्छेदकमपि परस्परात्यन्ताभावसमानाधिकरणत्वं तत एवाननुगतम् । तस्मात्परस्परशब्दार्थानुसारेण गोत्वाश्वत्वादिषु पृथक् तेन तेन रूपेणासमावेशो ग्राह्य इति पृथिवीत्वादिसंकरे न काचिदनुपपत्तिः । **किंच** सर्वत्र जातिसंकरस्य प्रत्याख्याने मृन्मयहिरण्मयादिघटेषु घटत्वजातेर्देवदत्तीययज्ञदत्तीयतारमन्दगकारादिषु देवदत्तीयत्वादिजातीनां कथमभ्युपगमः ? यदि पृथिवीत्वादिव्याप्यं घटत्वं नाना, गत्वादिव्याप्यानि च देवदत्तीयत्वादीनि नानेति तासु संकरपरिहारः, तर्हीहापि भूगोलके समुद्रादिषु शरीरेषु. च पृथिवीत्वजलत्वादिकं नानेति तत्परिहारोऽस्तु । **परस्परपरिहारित्वादिति** । परस्परपरिहारिजातित्वादित्यर्थः । गुणत्वरूपत्वयोरनैकान्तिकता गोत्वाश्वत्वविवक्षापक्षे अविशेषपक्षे च समाना । **तत्राद्यपक्षे** तयोरनैकान्तिकतां विवृणोति—**गोत्वाश्वत्वे त्यजतोरिति । द्वितीयपक्षे** तां विवृणोति—**यत्किंचिदिति । प्रसिद्धिसामर्थ्यादिति** । पञ्चभूतकार्यदर्शनं प्रसिद्धिः । **एतज्जनकत्वे सतीति** । पक्षीकृतदेवदत्तशरीरजनकत्वसमानाधिकरणानि यान्यनुदकत्वातेजस्त्वावायुत्वानाकाशत्वानि तेषामत्यन्ताभाववद् यद्भूतं तत्समवायिकारणकमित्यर्थः । पृथिवीमात्रसमवायिकारणकत्वेन पराभिमते दृष्टान्ते समवायिकारणं यद्भूतं पृथिवी तस्य पक्षजनकत्वविशिष्टानुदकत्वात्यन्ताभाववत्त्वं पक्षजनकत्वरूपविशेषणाभावादित्याह—**यद्यपीति** । पक्षे समवायिकारणानि यानि भूतानि तेषामुक्तरूपविशिष्टाभाववत्त्वं विशेष्याभावात्सिध्यतीत्युदकादिभूतसमवायिकारणकत्वसिद्धिरित्याह—**एतज्जन-**

प्यपां बाहुल्यप्रसिद्धिः । बाहुल्याच्चाप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यम् ॥ २ ॥

## प्राणगतेश्च ॥ ३ ॥

प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्राव्यते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृ० ४।४।२ ) इत्यादिश्रुतिभिः । सा च प्राणानां गतिर्नाश्रयमन्तरेण संभवतीत्यतः प्राणगतिप्रयुक्ता तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते । नहि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा जीवतो दर्शनात् ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

स्यादेतत्—नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति; अग्न्यादिगतिश्रुतेः । तथाहि श्रुतिर्मरणकाले वागादयः प्राणा अग्न्यादीन्देवान्गच्छन्तीति दर्शयति—'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' ( बृ० ३।२।१३ ) इत्यादिनेति चेत्, न; भाक्तत्वात्, वागादीनामग्न्यादिगतिश्रुतिर्गौणी; लोमसु केशेषु चादर्शनात् । 'ओषधीर्लोमानि वनस्पतीन्केशाः' ( बृ० ३।२।१३ ) इति हि तत्राम्नायते । नहि लोमानि केशाश्चोत्प्लुत्यौषधीर्वनस्पतींश्च गच्छन्तीति संभवति । नच जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवकल्प्यते । नापि प्राणैर्विना देहान्तर उपभोग उपपद्यते । विस्पष्टं च प्राणानां सह जीवेन गमनमन्यत्र श्रावितम् । अतो वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाल उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन्गच्छन्तीत्युपचर्यते ॥ ४ ॥

---

### भामती ।

योश्चोपादाननिमित्तयोर्द्वयभूयस्त्वादपां पुरुषवचस्त्वोक्तिर्न पुनर्भूतान्तरनिरासार्था ॥ २ ॥ प्राणानां जीवद्देहे साश्रयत्वमवगतं, गच्छति जीवद्देहे तदनुविधायिनः प्राणा अपि गच्छन्तीति दृष्टम्, अतः पाट्कौशिकात्, देहादुत्क्रामन्तः कस्मिंश्चिदुत्क्रामत्युत्क्रामन्ति । स चैषामनुविधेयः सूक्ष्मो देहो भूतेन्द्रियमय इति गम्यते । नहीन्द्रियमात्राश्रयत्वमेषां दृष्टं यतस्तन्मात्राश्रयाणां गतिरुपपद्येतेति ॥ ३ ॥ श्राविते्ऽपि स्पष्टे जीवस्य प्राणैः सह गमनेऽग्न्यादिगतिशङ्का श्रुतिविरोधोत्थापनार्था । अत्र हि लोमकेशयोरोषधिवनस्पतिगमनं दृष्टविरोधाद्भाक्तं तावदभ्युपेयम् । एवं च तन्मध्य-

### वेदान्तकल्पतरुः ।

जन्यत्वमनुदकत्वादिमत्त्वरहितजन्यत्वाद्वा स्यादेतज्जनकत्वरहितजन्यत्वाद्वा । **द्वितीयो** व्याहत इति **प्रथमः** स्यात्तथा चोदकत्वादिमद्भूतसमवायिकारणत्वसिद्धिरिति ॥ २ ॥ **ननु** निराश्रया एव प्राणा गच्छन्तु वायुवदित्याशङ्क्याह—**जीवद्देहे इति** । भवतु साश्रयत्वं, गतिस्त्वाश्रयस्यैव न प्राणानामिति, नेत्याह—**तदनुविधायिन इति** । न चेत्प्राणा गच्छन्ति स्थित्याधारदेशान्न वियुज्येरन् । तथाच देशान्तरगते देहे प्राणोपलब्धिर्न स्यादित्यर्थः । साश्रयप्राणोत्क्रान्ताबाश्रयदर्शनप्रसङ्गमाशङ्क्याह—**सूक्ष्म इति** । **ननु** कार्यवशाद्यः कश्चिदाश्रयः कल्प्यतां, कथं भूतसिद्धिरत आह—**भूतेन्द्रियमय इति** । इन्द्रियग्रहणं मृतदेहतुल्यत्वव्यावृत्त्यर्थम् । जागरिते भूतमयदेहाश्रयत्वदर्शनादित्यर्थः । तर्हीन्द्रियाणि सन्त्वाश्रयो, नेत्याह—**नहीति** ॥ ३ ॥ तेषामपि परोपाधिगमनत्वेन प्राणगत्यनुपपादकत्वादित्यर्थः । नैव प्राणा गच्छन्तीति भाष्यं दृष्ट्वा प्राणानां गमनाभावेऽग्न्यादिगतिश्रुतिर्हेतुरुक्त इति कश्चिन्मन्येत, तच्चायुक्तम्; श्रुतौ सत्यामवधारणानुपपत्तेः, अत आह—**श्राविते्ऽपीति** । अत्र श्रुतिद्वयविरोधादनध्यवसाय आशङ्क्यते । भाष्यं च प्राणा गच्छन्त्येवेति यत्तन्नेति व्याख्येयमित्यर्थः । परिहारभागं व्याचष्टे—**अत्र हीत्यादिना** । **तेषामपीति** । वागादिगमनानाम-

### कल्पतरुपरिमलः ।

**कत्वे सतीति** । नचानुदकत्वाद्यभावचतुष्टयवदुदकादिचतूरूपम्, एकं भूतं नास्तीति साध्यस्य पक्षे बाधः शङ्कनीयः । एतज्जनकत्वविशिष्टानुदकत्वात्यन्ताभाववद्भूतसमवायिकारणकमित्येवमादिरूपाणां चतुर्णामनुमानानां तेन साध्यनिर्देशेन सूचनादनुमानचतुष्टयेन शरीरस्य पाञ्चभौतिकत्वसिद्ध्युपपत्तेः । **यद्वा**—त्र्यात्मकत्वात्तु भूयस्त्वा ( ब्र. अ. ३ पा. १ सू. २ ) दिति सूत्रे शरीरकारणानां त्र्यात्मकत्वमुक्तं, तत्पञ्चात्मकत्वस्योपलक्षणमिति शरीरकारणेषु भूतेषु प्रत्येकमुदकादिचतूरूपत्वसिद्धावपि न बाधः ॥ २ ॥ **गतिस्त्वाश्रयस्यैवेति** । यदि जीवद्देहे गतिराश्रयस्यैव न प्राणानां, तदा मृतावपि प्राणानां गतिर्नाभ्युपगन्तव्येति न तदाश्रयभूतपरिष्वङ्गसिद्धिरिति शङ्कितुर्हृदयम् । एतच्छङ्कापरिहारार्थं जीवद्दशायामाश्रये गच्छति प्राणानां गतिं साधयति—**न चेत् प्राणा गच्छन्तीति** ॥ ३ ॥ ४ ॥ **ननु** पञ्चम्यामाहुता-

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

**स्यादेतत्—कथं पुनः 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' ( छा० ५।३।३ ) इत्येतन्निर्धारयितुं पार्यते । यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति । इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चानामाहुतीनामाधारत्वेनाधीताः तेषां च प्रमुखे 'असौ वाव लोको गौतमाग्निः' ( छा०५।४।१ ) इत्युपन्यस्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' ( छा० ५।४।२ ) इति श्रद्धा होम्यद्रव्यत्वेनावेदिता । न तत्रापो होम्यद्रव्यतया श्रुताः । यदि नाम पर्जन्यादिषूत्तरेषु चतुर्ष्वग्निष्व-**

### भामती ।

पतितत्वेन तेषामपि श्रुतिविरोधाद्भाक्तत्वमेवोचितमिति । भक्तिश्चोपकारनिवृत्तिरुक्ता ॥ ४ ॥ पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रथमायामाहुतौ अनपां श्रद्धाया होतव्यताभिधानमसंबद्धमनुपपन्नं च । नहि यथा पश्वादिभ्यो हृदयादयोऽवयवा अवदाय निष्कृष्य हूयन्ते, एवं श्रद्धा बुद्धिप्रसादलक्षणा निष्क्रष्टुं वा होतुं वा शक्यते । न चाप्येवमौत्सर्गिकी कारणानुरूपता कार्यस्य युज्यते । तस्माद्भक्त्यायमप्सु श्रद्धाशब्दः प्रयुक्त इति । अतएव श्रुतिः 'आपो

### वेदान्तकल्पतरुः ।

पीत्यर्थः । **ननु** संदिग्धं वस्तु प्रायदर्शनान्निर्णीयते गौणमुख्यग्रहणविषये च मुख्ये संप्रत्ययस्तत्र कथं वागादीनामग्न्यादिगतिश्रुतिः प्रायदर्शनमात्रान्मुख्यार्थात्प्रच्याव्यते, अत आह—**श्रुतिविरोधादिति** । जीवेन सहोत्क्रान्त्यादिश्रुतिविरोधात्संदिह्यमानार्था वागादिगतिश्रुतिरतः प्रायदर्शनावकाश इत्यर्थः । **भक्तिर्**गुणयोगः । **उपकारनिवृत्तिरुक्ता** । भाष्ये इति शेषः ॥ ४ ॥ ता एव ह्युपपत्तेरिति सूत्रस्य ( ब्र. अ. ३ पा. १ सू. ५४ ) परिहारभागं व्याचष्टे—**पञ्चम्यामाहुतावित्यादिना** । पञ्चम्यामाहुतावपां पुरुषशब्दवाच्यत्वं यथा भवति, तथा किं वेत्थेति प्रश्ने पुरुषशब्दवाच्यत्वप्रकारमात्रमग्निविस्फुलिङ्गादिदृष्टिविशिष्टमज्ञातं पृच्छयते, वाक्यस्य विशेषणसंक्रान्तत्वात् । आपस्त्वग्निहोत्रादिफलप्राप्तिपुनरावृत्तिपर्यालोचनया शास्त्रान्तराद् ज्ञाता एव । तत्र प्रथमाद्याहुतिष्वप्याहुतिविशेषमजिज्ञासित्वा पञ्चम्याम् आहुतिविषयः प्रश्न एवमभिप्रायः यैव पञ्चम्याहुतिः सैव प्रथमादिस्थानेऽपि भवतीति । सति चैवं प्रश्नहृदये प्रथमाहुतौ अव्व्यतिरिक्ताहुत्यभिधानमसंबद्धं स्यादित्यर्थः । अप्शब्दस्य नित्यवहुवचनान्तत्वादनपां श्रद्धाया इति निर्देशः । अव्व्यतिरिक्तायाः श्रद्धायाः प्रथमाहुतित्वे परंपरया तज्जातस्य देहस्याव्बहुलत्वं न स्यादित्याह—**नचाप्येवमिति** । ब्रह्मकार्यस्य तद्वैलक्षण्याभ्युपगमादौत्सर्गिकीत्युक्तम् । श्रद्धायामप्त्वोपचारापेक्षितं संबन्धमाह—**अतएवेति** । आपो हास्मै श्रद्धां संनमन्त

### कल्पतरुपरिमलः ।

वित्यादिटीकाग्रन्थो न युक्तः; प्रथमाहुतावनपां होतव्यत्वेऽपि पञ्चमाहुतेरब्द्रव्यकत्वमात्रेणापां पुरुषवचस्त्वप्रकारप्रश्नोपपत्तेरित्याशङ्क्य पञ्चस्वप्याहुतिष्वपामेव होतव्यत्वं शास्त्रान्तरान्निर्ज्ञातं तदुपजीव्य प्रथमाहुतावनपां होतव्यत्वाभिधानस्यासंबन्धत्वमुक्तमित्युपपादयति—**पञ्चम्यामाहुतावपां पुरुषशब्दवाच्यत्वं यथा भवतीत्यादिना । ननु—**शास्त्रान्तरमनपेक्ष्य प्रश्नोत्तरसंदर्भपर्यालोचनयैव पञ्चस्वप्याहुतिषु अपामनुवृत्तिर्निश्चेतुं शक्या । यदि ह्यपां पञ्चमपर्याये हूयमानानां पुरुषाकारपरिणामं वक्तुं प्रथमादिपर्यायत्वेऽपि तासामेव हूयमानानां सोमराजादिपरिणाम उक्तः स्यात्, तदानी'मिति तु पञ्चम्यामाहुता'वितीतिशब्देन प्रकारवाचिना पूर्वोक्तसर्वप्रकारपरामर्शः संगच्छते; प्रथमादिपर्यायेष्वापः सोमराजादिभावं प्राप्य पञ्चमपर्याये पुरुषभावं प्राप्नुवन्तीत्यन्वयात्, यदि तु श्रद्धादिशब्दोक्तानामनपां सोमराजादिभाव उक्तः स्यात्, तदा पूर्वोक्तः सर्वोऽपि प्रकारोऽपां परिणामक्रमविषयो न भवतीति स न संगच्छेत; अपां पुरुषवचस्त्वप्रकारे पृष्टे तत्प्रकारं विहाय प्राचीनपर्यायेष्वन्यदन्यदुच्यते चेदपृष्टोत्तरता स्यात् । अतएव सौत्रशङ्काभागविवरणभाष्ये श्रद्धाशब्दस्य प्रत्ययपरत्वसमर्थनानन्तरं तस्मादयुक्तः पञ्चम्यामाहुतावपां पुरुषभाव इति प्रश्नोत्तरयोरनुपपत्तिरेवोपसंहृतेति**—चेत्, सत्यम्**, एवं प्रश्नोत्तरसंदर्भपर्यालोचनया प्रतीयमानमप्यपां प्रथमाहुतिमारभ्य होमद्रव्यत्वं न प्रश्नवाक्यएव विधेयम् । आहुतिष्वपां होमद्रव्यत्वं पञ्चमाहुतौ तासां पुरुषाकारपरिणतिप्रकारश्चेत्युभयं पृष्टमिति प्रश्नवाक्यस्योभयविषयत्वकल्पने वाक्यभेदापत्तेर्विशिष्टस्य प्रश्नविषयत्वकल्पनेऽपि गौरवात् । अतः प्रश्नस्य पुरुषाकारपरिणतिप्रकाररूपविशेषणसंक्रान्तत्वसिद्ध्यर्थं विशेष्यप्राप्त्याकाङ्क्षायां तत्प्रापकं शास्त्रान्तरमुदाहृतम् । **ननु** यदि शास्त्रान्तरवशात्पञ्चस्वप्याहुतिष्वपां होतव्यतास्ति, तदा प्रथमाद्याहुतिष्वपि हूयमानानां तासां परिणतिविशेषाः संभवन्तीति तेष्वपि सत्सु तानजिज्ञासित्वा पञ्चमाहुतावेव किमर्थं विशेषो जिज्ञास्यते, इत्याशङ्क्य तदभिप्रायमाह—**तत्र प्रथमाद्याहुतिष्वपीति । यैव पञ्चम्याहुतिरिति** । यदेव पञ्चमाहुतिद्रव्यं तदेव प्रथमाद्याहुतिष्वपि द्रव्यमिति तावच्छास्त्रान्तरान्निश्चितम् । तत्र प्रथमाहुतिमारभ्य हूयमानानामपां पञ्चमाहुतौ केन प्रकारेण पुरुषाकारपरिणाम इति प्रश्ने जिज्ञासितप्रकारविशेषान्तर्गत-

पां हौम्यद्रव्यता परिकल्प्येत, परिकल्प्यतां नाम; तेषु होतव्यतयोपात्तानां सोमादीनामब्बहुलत्वोपपत्तेः । प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्याश्रुता आपः परिकल्प्यन्त इति साहसमेतत् । श्रद्धा च नाम प्रत्ययविशेषः प्रसिद्धिसामर्थ्यात् । तस्मादयुक्तः पञ्चम्यामाहुतावपां पुरुषभाव इति चेत्, नैष दोषः; यतस्तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभिप्रेयन्ते । कुतः ? उपपत्तेः । एवं ह्यादिमध्यावसानसंगानादनाकुलमेतदेकवाक्यमुपपद्यते । इतरथा पुनः पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो हौम्यद्रव्यं श्रद्धां नामावतारयेत्ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यात् । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति चोपसंहरन्नेतदेव दर्शयति । श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवदब्बहुलं लक्ष्यते । सा च श्रद्धाया अप्त्वे युक्तिः । कारणानुरूपं हि कार्यं भवति । नच श्रद्धाख्यः प्रत्ययो मनसो जीवस्य वा धर्मः सन्धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनीत्याप एव श्रद्धाशब्दा भवेयुः । श्रद्धाशब्दश्चाप्सूपपद्यते, वैदिकप्रयोगदर्शनात् 'श्रद्धा वा आपः' इति । तनुत्वं श्रद्धासारूप्यं गच्छन्त्य आपो देहबीजभूता इत्यतः श्रद्धाशब्दाः स्युः । यथा सिंहपराक्रमो नरः सिंहशब्दो भवति । श्रद्धापूर्वककर्मसमवायाच्चाप्सु श्रद्धाशब्द उपपद्यते मञ्चशब्द इव पुरुषेषु । श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः; 'अपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे' इति श्रुतेः ॥ ५ ॥

---

### भामती ।

हास्मै' इति ॥ ५ ॥ अस्यार्थः पूर्वमेवोक्तः । अग्निहोत्रे षट्सूत्क्रान्तिगतिप्रतिष्ठातृप्तिपुनरावृत्तिलोकप्रत्युत्थायिष्वग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गेषु प्रश्नाः षट्, तेषां यः समाहारः षण्णां सा षट्प्रश्नी, तस्या निरूपणं प्रतिवचनम् ॥ ६ ॥

### वेदान्तकल्पतरुः ।

इति श्रुतौ कार्यकारणभावोऽवगम्यते इत्यर्थः ॥ ५ ॥ आहुत्योऽपूर्वरूपा आपो जीवं परिवेष्ट्य परलोकं नयन्तीत्यत्र संवादकत्वेन ते वा एते इत्यादिवाजसनेयिब्राह्मणं भाष्यकारैरुदाहृतम् । **तदित्थम्**—अग्निहोत्राहुती प्रक्रम्य जनकेन याज्ञवल्क्यं प्रति "न त्वेवैनयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकप्रत्युत्थायिनं वेत्थ" त्यज्ञाने उद्भाविते तेन चानुमोदिते जनकः षट् प्रश्नान्निर्णिनाय । ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्रामाहुतिं ते अन्तरिक्षं तर्पयतस्ते दिवमाविशतस्ते दिवमेवाहवनीयं कुर्वाते आदित्यं समिधं चन्द्रमसमेव शुक्रामाहुतिं ते दिवं तर्पयतस्ते तत आवर्तेते" इत्युपक्रम्य "पृथिवीं पुरुषं योषितं चाहवनीयत्वेनोपन्यस्य संवत्सरादींश्च समिदादित्वेन परिकल्प्य योषिदग्नेर्यः पुत्रो जायते स लोकं प्रत्युत्थायीति । तत्रैष षट्प्रश्नीनिर्णयः पञ्चाग्निविद्यायामद्भिः परिवेष्टितस्य जीवस्य न गमयितुमर्हति; विद्याभेदात् । षट्प्रश्न्यां ह्याहवनीयसमिदाहुतय एव श्रूयन्ते, नतु धूमार्चिरङ्गाराः । अन्तरिक्षाग्निश्चाधिकः पर्जन्यश्च न श्रुत इति । तत्र सत्यपि विद्यान्यत्वे आहुतिगत्यागतिसाम्याद् दृष्टान्तत्वमित्यस्त्येव परिहारः । आचार्यस्तु प्रौढ्या विद्यैक्यमुपेत्याप्याह—**षट्प्रश्नीति ।**

### कल्पतरुपरिमलः ।

तया प्रथमाद्याहुतिपरिणतिक्रमोऽपि पृष्टो भवतीति पञ्चमाहुतिविशेषमात्रविषयः प्रश्न इत्यर्थः ॥ ५ ॥ **आहुत्योऽपूर्वरूपा इति । ननु**—आहुतिजन्यापूर्वं आत्मगुणरूपं जलाद्याहुतिद्रव्यजन्यमपि न जलादिरूपमिति तत्परिवेष्टनोक्त्या न भूतपरिष्वङ्गसिद्धिः । तत्सिद्धावपि तत्परिवेष्टनं भाष्यटीकयोरन्त्याहुत्यनन्तरमुक्तमिति नोत्क्रमणकालमारभ्य प्राणगतिनिर्वाहकस्य भूतपरिष्वङ्गस्य सिद्धिरिति—**चेत्, उच्यते**; अपूर्वरूपा इत्यनेन सूक्ष्मरूपा इति विवक्षितं, न त्वात्मगुणरूपा इति; कर्मणामीश्वरप्रसाद एव द्वारमिति सिद्धान्ते यावत्फलं स्थाय्यदृष्टरूपद्वाराऽनङ्गीकारात् । भाष्यटीकयोरन्त्याहुतिकथनं नान्त्याहुत्यनन्तरमद्भिः परिवेष्टनमित्येतदभिप्रायं, किंतु यजमानस्य शीघ्रं परलोकनयनार्थमन्त्याहुत्यपेक्षाभिप्रायम्; उपकोसलविद्यायामर्चिरादिमार्गप्राप्तिरस्तीत्युक्तिसामर्थ्यादन्येषां शवकर्माकरणे शीघ्रं मार्गप्राप्तिर्नास्तीति सूचनेनोपासनान्तरनिष्ठानां कर्मिणां च झटिति मार्गप्राप्त्यर्थमन्त्येष्ट्यपेक्षणस्य पदभाष्ये भाष्यकारैरुक्तत्वात् । **आहुतिगत्यागतिसाम्याद् दृष्टान्तत्वमिति । एतेनेयमपि शङ्का निरस्ता**—षट्प्रश्ननिरूपणे अग्निहोत्राहुतिसूक्ष्मरूपैः संपरिष्वक्तस्य जीवस्योर्ध्वगमनं नोच्यते, किंतु तेषामेवाहुत्युद्देश्यदेवतातृप्त्यर्थं तत्तल्लोकं प्रत्यूर्ध्वगमनमुच्यते; "ते अन्तरिक्षं तर्पयतः ते दिवं तर्पयत इति वाक्यशेषात्, तस्मादाहुतिसूक्ष्मांशा जीवं संवेष्ट्य परलोकं नयन्तीत्यत्र नेदमुदाहरणम्—**इति ।** तथापि भूतसूक्ष्माणां द्युपर्यन्तोत्क्रमणं पुनरावर्तनं चास्तीत्येतावत्यंशे दृष्टान्ततया अवैकल्यात् । **प्रौढ्या विद्यैक्यमुपेत्येति** विद्याभेदवादिनां परितोषार्थमुक्तम् । **वस्तुतस्तु**—विद्यैक्यमुपपद्यते एव; द्युपृथिवीपुरुषयोषिदग्निकल्पना-

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अथापि स्यात्प्रश्नप्रतिवचनाभ्यां नामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्, नतु तत्संपरिष्वक्ता जीवा रंहेयुः; अश्रुतत्वात् । नह्यत्रापामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति । तस्माद्रंहति संपरिष्वक्त इत्ययुक्तमिति चेत्, नैष दोषः । कुतः ? इष्टादिकारिणां प्रतीतेः । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' ( छा० ५।१०।६ ) इत्युपक्रम्येष्टादिकारिणां धूमादिना पितृयाणेन पथा चन्द्रप्राप्तिं कथयति—'आकाशाच्चन्द्रमसमेष सोमो राजा' ( छा० ५।१०।४ ) इति । त एवेहापि प्रतीयन्ते 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' ( छा० ५।४।२ ) इति श्रुतिसामान्यात् । तेषां चाग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात्प्रत्यक्षमेवापः सन्ति । ता आहवनीये हुताः सूक्ष्मा आहुत्योऽपूर्वरूपाः सत्यस्तानिष्टादिकारिण आश्रयन्ति । तेषां च शरीरं नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वति 'असौ स्वर्गाय लोकाय स्वाहा' इति । ततस्ताः श्रद्धापूर्वककर्मसमवायिन्य आहुतिमय्य आपोऽपूर्वरूपाः सत्यस्तानिष्टादिकारिणो जीवान्परिवेष्ट्यामुं लोकं फलदानाय नयन्तीति यत्तदत्र जुहोतिनाभिधीयते—'श्रद्धां जुह्वति' ( बृ० ६।२।९ ) इति । तथाचाग्निहोत्रे षट्प्रश्नीनिर्वचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' इत्येवमादिनाग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिः प्रदर्शिता । तस्मादाहुतीमयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते ॥ ६ ॥
कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते ? यावता तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानामन्नभावं दर्शयति—'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' ( छा० ५।१०।४ ) इति 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति' ( बृ० ६।२।१६ ) इति च समानविषयं श्रुत्यन्तरम् । नच व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः संभवतीति, अत उत्तरं पठति—

---

### भामती ।

सूत्रान्तरमवतारयितुं शङ्कते—**कथं पुनरिति** । **सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षय-**

### वेदान्तकल्पतरुः ।

अग्निहोत्रे षट्सु उत्क्रान्त्यादिषु ये प्रश्नास्तेऽग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गेषु समस्तेषु विषयेषु घटन्ते; विस्फुलिङ्गादीनां तत्राप्युपसंहर्तव्यत्वात्, बहुसाम्ये सत्यल्पवैषम्यस्याकिंचित्करत्वात्पर्जन्याग्नेश्चाग्निहोत्रे स्वर्गात् पृथिवीप्राप्त्यभिधानेनार्थसिद्धेः । अन्तरिक्षाग्नेश्च पञ्चाग्निविद्यायां पृथिव्याः स्वर्गप्राप्त्यभिधानात् सामर्थ्यसिद्धेरित्यर्थः । **यः समाहारः** षण्णामुत्क्रान्त्यादीनामित्यर्थः । एवं च षडग्न्युपासनमिदम् । पञ्चाग्नीन्वेदेति त्ववान्तरसंख्याभिप्रायम्; साम्यलिङ्गात् षष्ठाग्न्युपसंहारसिद्धौ प्रचयशिष्टप्राप्तसंख्यानुवादिपञ्चशब्दस्य दुर्बलस्य तद्व्यावर्तकत्वानुपपत्तेः । एवं विस्फुलिङ्गादिषु षट्प्रश्नानुपलम्भादुत्क्रान्त्यादिविषयाणां च विस्फुलिङ्गादिविषयत्वाभावात् श्रुत्यनभिज्ञो वाचस्पतिरित्युपहासोऽनवसरः ॥ ६ ॥ भाष्य-

### कल्पतरुपरिमलः ।

प्रत्यभिज्ञानाद्, योषिदग्निपर्याये पुरुषाकारपरिणतिप्रत्यभिज्ञानाच्च । **अथ वाऽऽहुतिश्रवणयोः** सामान्यविशेषभावेनैकार्थपर्यवसानोपपत्तेः एकैकत्रानुक्तानां विशेषाणां परस्परोपसंहारोपपत्तेः अन्तरिक्षपर्जन्ययोः परस्परोपसंहारेणाग्नीनां पञ्चसंख्यातिरेकेऽपि "अथह एतानेव पञ्चाग्नीन्वेदेति" पञ्चसंख्याभिप्रायेणोपपत्तेः । अन्यथा तस्याग्निरेवाग्निः समिदेव समिदित्यादिना बृहदारण्यकोक्तस्य षष्ठाग्नेरप्यनुपसंहारप्रसङ्गात्, एकस्यामेव वाजसनेयिशाखायां शाण्डिल्यविद्याया इव पञ्चाग्निविद्याया अपि उभयत्र संकीर्तनस्य विशेषविधानार्थत्वोपपत्तेः, बहुतरार्थप्रत्यभिज्ञानेऽपि किंचिद्वैलक्षण्यादिमात्रेण विद्यैक्यपरित्यागे क्वचिदपि विद्यैक्यासिद्धिप्रसङ्गाच्च । नच—तर्पयत इत्युक्त्या देवतातृप्त्यर्थम् आहुत्योरुत्क्रमणं संकीर्त्यत इति—शङ्कनीयम्; अग्निहोत्राहुत्योरन्तरिक्षस्य दिवस्तत्तल्लोकस्थितप्राणिनां वोद्देश्यदेवतात्वाभावेन तेषां तर्पणीयत्वायोगात् । तस्मात्ते देवा भक्षयन्तीति श्रुत्युक्तप्रकारेणाजानदेवानां कर्मदेवा भृत्या इत्यग्निहोत्राहुती भृत्यानयनेन तत्तल्लोकस्थितानाजानदेवान् प्रीणयत इत्येवमभिप्रायं तर्पयत इति वाक्यद्वयमपि योज्यते । **अग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गेष्विति** । यथा छान्दोग्ये अपां पुरुषशब्दवाच्यप्रकारमात्रविषयतया प्रतीयमानस्यापि प्रश्नस्याग्निसमिद्धूमादिविषयत्वमपि कल्प्यते; अन्यथा प्रश्नोत्तरवैयधिकरण्यापत्तेः, एवमत्रापि श्रवणोपसंहाराभ्यामग्निसमिद्धूमादिषट्-

## भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

**वाशब्दश्चोदितदोषव्यावर्तनार्थः । भाक्तमेषामन्नत्वं न मुख्यम् । मुख्ये ह्यन्नत्वे 'स्वर्गकामो यजेत' इत्येवंजातीयकाधिकारश्रुतिरुपरुध्येत । चन्द्रमण्डलेचेदिष्टादिकारिणामुपभोगो न स्यात्किमर्थमधिकारिण इष्टाद्यायासबहुलं कर्म कुर्युः । अन्नशब्दश्चोपभोगहेतुत्वसामान्यादनन्नेऽप्युपचर्यमाणो दृश्यते । यथा विशोऽन्नं राज्ञां पशवोऽन्नं विशामिति । तस्मादिष्टस्त्रीपुत्रमित्रभृत्यादिभिरिव गुणभावोपगतैरिष्टादिकारिभिर्यत्सुखविहरणं देवानां तदेवैषां भक्षणमभिप्रेतं न मोदकादिवच्चर्वणं निगरणं वा । 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' ( छा० ३।६।१. ) इति च देवानां चर्वणादिव्यापारं वारयति । तेषां चेष्टादिकारिणां देवान्प्रति गुणभावोपगतानामप्युपभोग उपपद्यते राजोपजीविनामिव परिजनानाम् । अनात्मवित्त्वाच्चेष्टादिकारिणां देवोपभोग्यभाव उपपद्यते । तथाहि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति— 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' ( बृ० १।४।१० ) इति । स चास्मिन्नपि लोक इष्टादिभिः कर्मभिः प्रीणयन्पशुवद्देवानामुपकरोत्यमुष्मिन्नपि लोके तदुपजीवी तदादिष्टं फलमुपभुञ्जानः पशुवद्देवानामुपकरोतीति गम्यते ॥**

### भामती ।

न्तीति । क्रियासमभिहारेणाप्यायनापक्षयौ तथा भक्षयन्ति सोममयांल्लोकानित्यर्थः । **अत उत्तरं पठति—भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ।** कर्मजनितफलोपभोगकर्ता ह्यधिकारी न पुनरुपभोग्यस्तस्माच्चन्द्रसालोक्यमुपगतानां देवादिभक्ष्यत्वे 'स्वर्गकामो यजेत' इति यागभावनायाः कर्त्रपेक्षितोपायतारूपविधिश्रुतिविरोधादन्नशब्दो भोक्तॄणामेव सतां देवोपजीवितामात्रेण भाक्तो गमयितव्यो नतु चर्वणनिगरणाभ्यां मुख्य इति । अत्रैवार्थे श्रुत्यन्तरं संगच्छत इत्याह—**तथाहि दर्शयति** श्रुतिरनात्मविदामनात्मवित्त्वादेव पशुवद्देवोपभोग्यतां नतु चर्वणीयतया । यथा हि बलीवर्दादयो भुञ्जाना अपि स्वफलं स्वामिनो हलादिवहनेनोपकुर्वाणा भोग्याः, एवं परमतत्त्वमविद्वांस इष्टादिकारिण इह दधिपयःपुरोडाशादिनाऽमुष्मिंश्च लोके परिचारकतया देवानामुपभोग्या इति श्रुत्यर्थः ।

### वेदान्तकल्पतरुः ।

स्थश्रुतिं व्याचष्टे—**क्रियेति** । सोमस्य यथेति शेषः । लोण्मध्यमैकवचनं सर्वविभक्त्यर्थेषु क्रियासमभिहाराख्यपौनःपुन्ये स्मर्यते । **तेनाप्यायस्वेति** आप्याय्येत्यर्थः । **अपक्षीयस्वेति** अपक्षपय्येत्यर्थः । यथा सोमं यज्ञे भक्षयन्त्येवं कर्मिणः पुरुषान् देवा इत्यर्थः । एताँस्तत्र भक्षयन्तीति श्रुतौ एतान्शब्देन कर्मिणामभिधानं गृहीत्वा भाक्तत्वं भक्षणस्य सूत्रभाष्यकाराभ्यां वर्णितं, स्वयं तु सिद्धान्तानुसारेणाविरुद्धमर्थमाह—**सोममयाँल्लोकानिति** । युक्ततरश्चायमर्थः; एष सोमो राजेति कर्माभिप्राप्यस्य प्राधान्येन प्रकृतत्वात्, विभूतिमनुभूयेति भोक्तृत्वनिर्देशः साक्षादन्नत्वेऽनुपपत्तिः ॥ ७ ॥

### कल्पतरुपरिमलः ।

स्वप्युत्तरवाक्यगतेषु सत्सु तावत्पर्यन्तं प्रश्नवाक्यानामभिप्रायः कल्पनीय इति भावः ॥ ६ ॥ **यथेति शेष इति । मूले**—यथा सोमस्येति यथाशब्दयुक्तपाठे तु न शेषाध्याहारः । **ननु** क्रियासमभिहारविवक्षायां तस्य तस्य धातोर्द्विर्भावोऽनुप्रयोगश्च प्राप्नोति; तत्सूत्रवार्तिके द्विर्भावानुशासनाद्, यथाविध्यनुप्रयोगः पूर्वस्मिन्निति सूत्रेण तस्य धातोरनुप्रयोगनियमाच्च । **नैष दोषः**; आप्यायनापक्षययोः प्रत्येकं पौनःपुन्यं समुच्चयश्चेत्युभयविवक्षोपपत्तेः । उभयविवक्षायां हि समुच्चयविवक्षाप्रयुक्तमेव कार्यं भवति; विप्रतिषेधे परं कार्यमिति स्मरणात् । प्रपञ्चितश्चायमर्थः प्रथमसूत्रे जायस्व म्रियस्वेति श्रुत्यर्थकथनावसरे । **युक्ततरश्चायमर्थ इति** । युक्ततरत्वोक्तेरभिप्रायं न विद्मः । यद्यप्येष सोमो राजेत्यत्र सोमो राजेति शब्दावादित्याच्चन्द्रमसमिति प्रस्तुतचन्द्रपरौ; तयोस्तत्र लोकवेदप्रसिद्धत्वात्तद्देवानामन्नमिति च तस्मिन् प्रथमां पिबते वह्निरित्यादिप्रसिद्धं देवान्नत्वमुच्यते, तं देवा भक्षयन्तीत्येतदपि स्वर्गं प्राप्य कर्मदेवरूपा इष्टादिकारिणोऽपि तं भुञ्जत इत्येवं तेषां त्रैविष्टपभोगकथनार्थम् । एवंच ते धूममभिसंभवन्तीति बहुवचनान्तशब्देन प्रकृतानां देवा इति बहुवचनान्तशब्देन परामर्शः । चन्द्रमसमित्येकवचनान्तेन प्रकृतस्य चन्द्रस्य सोमो राजेत्येकवचनान्तेन परामर्श इत्येतदप्युपपद्यत इति प्रतिभाति; तथाप्येष सोमो राजेत्येतस्य प्रकृतेष्टादिकारिपरत्वमेव युक्तम् । पञ्चाग्निविद्यावाक्ये सोमो राजेति श्रुतस्य प्रथमाहुतितः संभवस्य द्वितीयाहुतौ होतव्यत्वस्य चेष्टादिकारिणीव चन्द्रेऽन्वयसंभवात्पञ्चाग्निविद्यावाक्ये पितृयाणवाक्ये च श्रुतयोः सोमराजशब्दयोः श्रुतिस्थानसामान्याभ्यामैकार्थ्यावश्यम्भावात्तदुपजीवनेनैव भूतपरिष्वक्तजीवरंहणस्याश्रुतत्वा-( ब्र. अ. ३ पा. १ सू. ६ ) दिति सूत्रेण समर्थितत्वाच्च । **किंच** छान्दोग्ये सोमो राजेति प्राप्यस्य सोमस्य प्राधान्येन

अनात्मवित्त्वात्तथाहि दर्शयतीत्यस्यापरा व्याख्या—अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणो न ज्ञानकर्मसमुच्चयानुष्ठायिनः । पञ्चाग्निविद्यामिहात्मविद्येत्युपचरन्ति; प्रकरणात् । पञ्चाग्निविज्ञानविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनान्नत्वमुद्भाव्यते पञ्चाग्निविज्ञानप्रशंसायै । पञ्चाग्निविद्या हीह विधित्सिता; वाक्यतात्पर्यावगमात् । तथाहि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति—'स सोमलोके विभूतिमनुभूय पुनरावर्तते' ( प्र० ५।४ ) इति । तथान्यदपि श्रुत्यन्तरम् 'अथ ये शतं पितृणां जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते' ( बृ० ४।३।३३ ) इतीष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति । एवं भाक्तत्वादन्नभाववचनस्येष्टादिकारिणोऽत्र जीवा रंहन्तीति प्रतीयते । तस्माद्रंहति संपरिष्वक्त इति युक्तमेवोक्तम् ॥ ७ ॥ इति प्रथमं तदन्तरप्रतिपत्त्यधिकरणम् ॥

( २ अधिकरणम् ) **कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥**

### भामती ।

अथवा—**अनात्मवित्त्वात्तथाहि दर्शयति** इत्यस्यान्या व्याख्या । आत्मवित् पञ्चाग्निविद्यावित् न आत्मवित् अनात्मवित् । यो हि पञ्चाग्निविद्यां न वेद तं देवा भक्षयन्तीति निन्द्यते पञ्चाग्निविद्यां स्तोतुम्; तस्या एव प्रकृतत्वात् । तदनेनोपचारस्य प्रयोजनमुक्तम् । उपचारनिमित्तमनुपपत्तिमाह—**तथाहि दर्शयति** श्रुतिर्भोक्तृत्वम् । **स सोमलोके विभूतिमनुभूयेति** । शेषमतिरोहितार्थम् ॥ ७ ॥ **इति प्रथमं तदन्तरप्रतिपत्त्यधिकरणम् ॥**

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ यावत्संपातमुषित्वेति** यावदुपबन्धात् ।

### वेदान्तकल्पतरुः ।

**पञ्चम्यां त आहुतावापो यथा पुरुषशब्दवाच्या भवन्ति तं प्रकारं किं वेत्थेति श्वेतकेतुं प्रति** प्रवाहणस्य राज्ञः प्रश्नः । **तमात्मानम्** । यत्र काले अस्य पुरुषस्य वागादयोऽग्न्यादिदेवान् गच्छन्ति क्वायं तदा पुरुषो भवतीति आर्तभागस्य याज्ञवल्क्यं प्रति प्रश्नः । **अस्मै** अधिकारिणे । **श्रद्धां सन्नमन्ते** आनयन्ति । **अथोत्तरमार्गकथा**नन्तरम् । **ग्रामे** गृहाश्रमे स्थित्वा । **इष्टं** यागादिपूर्तवाप्यादिकरणं **दत्तं** दानम् । इत्येतान्युपासतेऽनुतिष्ठन्ति ये ते **धूमं** धूमाभिमानिनीं देवताम् **अभिसंभवन्ति** प्राप्नुवन्ति आकाशदेवतातो वायुमाप्नुवन्ति । **असौ** अमुकनामा स्वर्गाय लोकाय **स्वाश्रयं हा गच्छतु** एतदेवादित्यस्य रोहितायमृतं दृष्ट्वैव वस्वादयो देवास्तृप्यन्तीति मधुविद्यायां श्रुतम् । **अथ** पित्रानन्दकथनानन्तरं **जितः** प्राप्तः श्राद्धादिकर्मभिः पितृलोको यैस्तेषां पितृणां ये आनन्दाः **स कर्मदेवानामेक आनन्दः** । पित्रानन्दशतगुण आनन्दः कर्मदेवानां भवतीत्यर्थः । **ये कर्मणेति** कर्मदेवानां व्याख्यानम् ॥ **इति प्रथमं तदन्तरप्रतिपत्त्यधिकरणम् ॥**[1]

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥** कर्मसमवायिनीनाम् अपां पञ्चम्यामाहुतौ पुंपरिणामहेतुमाश्रित्याद्भिः परिवेष्टितजीवगमनमुक्तं, तत्र स्वर्गादवरोहतः कर्मैव नास्ति, कुतस्तत्समवायिन्य आपः ? कुतस्तरां पुंपरिणामः ? इत्याक्षेपसङ्गतिगर्भं पूर्वपक्षमाह—**यावत्संपातमित्यादिना** । अतएव च कर्मणामैकभविकनयाद्विलय-

### कल्पतरुपरिमलः ।

प्रकृतत्वोक्त्या एतांस्तत्र भक्षयन्तीति श्रुत्यन्तरस्यैतानित्यस्य चन्द्रलोकपरत्वे का युक्तिर्दर्शिता स्यात् ? छन्दोगश्रुत्यर्थे श्रुत्यन्तरस्यापि पर्यवसानं स्यादिति युक्तिरिति चेन्न; श्रुत्यन्तरे ते चन्द्रं प्राप्यान्नं भक्षयन्तीति कर्मिणामेवान्नभावश्रवणं प्राधान्येन प्रकृतत्वं चास्तीति तत्र कर्मिणामेवान्नत्वं भक्ष्यत्वं चोच्यत इति तदनुसारेण छन्दोगश्रुतावपि अन्नत्वभक्ष्यत्वश्रवणस्य तद्विषयत्वस्थितौ तन्निर्वाहार्थं पञ्चाग्निविद्यागतसोमराजशब्दैकार्थ्यनिर्वाहार्थं च छान्दोग्ये पितृयाणवाक्यगतसोमराजशब्दस्यैवेष्टादिकारिपरत्वप्राप्तेः, चन्द्रवाचकस्याप्यमृतमयदेहत्वरूपचन्द्रसादृश्यविधानार्थत्वेन देवभोग्यत्वरूपतत्सादृश्यविधानार्थत्वेन चेष्टादिकारिषु गौणतोपपत्तेः । बहुष्वप्येकवचनस्य ग्रहं संमार्ष्टि पत्नीं सन्नह्येत्यादिष्विव प्रतिव्यक्तिगतैकत्वानुवादकतोपपत्तेश्च । तस्मादस्या युक्ततरत्वोक्तेरभिप्रायोऽन्वेषणीयः ॥७॥ **इति प्रथमं तदन्तरप्रतिपत्त्यधिकरणम् ॥**

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ एकभविकनयादिति** । प्राणस्य सकलकर्म-

[1] तत्र सूत्राणि ७—तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् १ त्र्यात्मकत्वात्तु भूयस्त्वात् २ प्राणगतेश्च ३ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ४ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ५ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ६ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ७ ॥

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते—'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' ( छा० ५।१०।५ ) इत्यारभ्य यावद्रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिमिति । तत्रेदं विचार्यते—किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्त्याहोस्वित्सानुशया इति । किं तावत्प्राप्तम्? निरनुशया इति । कुतः? यावत्संपातमिति विशेषणात् । संपातशब्देनात्र कर्माशय उच्यते—संपतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति । यावत्संपातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति । 'तेषां यदा तत्पर्यवैति' ( बृ० ६।२।१६ ) इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते । स्यादेतत्—यावदमुष्मिंल्लोक उपभोक्तव्यं कर्म तावदुपभुङ्क्ते इति कल्पयिष्यामीति । नैवं कल्पयितुं शक्यते; यत्किंचेत्यन्यत्र परामर्शात् । 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' (बृ० ४।४।६ ) इति ह्यपरा श्रुतिर्यत्किंचेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षयिततां दर्शयति । अपिच प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम्; प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः । तच्चाविशेषाद्यावत्किंचिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकम् । नहि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति, नह्यविशिष्टे प्रदीपसंनिधौ घटोऽभिव्यज्यते न पट इत्युपपद्यते । तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः—कृतात्ययेऽनुशयवानिति । येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते । सवितृकिरणसंपर्कादिव हिमकरकाः । हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम् । ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति । केन हेतुना? दृष्टस्मृतिभ्यामित्याह ।

## भामती ।

**यत्किंचेह करोत्ययमिति** च यत्किंचेह कर्म कृतं तस्यान्तं प्राप्येति श्रवणात्, प्रायणस्य चैकप्रघट्टकेन सकलकर्माभिव्यञ्जकत्वात् । न खल्वभिव्यक्तिनिमित्तस्य साधारण्येऽभिव्यक्तिनियमो युक्तः । फलदानाभिमुखीकरणं चाभिव्यक्तिस्तस्मात्समस्तमेव कर्म फलमुपभोजितवत् । स्वफलविरोधि च कर्म । तस्माच्छ्रुतेरुपपत्तेश्च निरनुशयानामेव चरणादाचारादवरोहो न कर्मणः । आचारकर्मणी च श्रुतेः प्रसिद्धभेदे । यथाकारी यथाचारी तथा भवतीति । तथाच रमणीयचरणाः कपूयचरणा इत्याचारमेव योनिनिमित्तमुपदिशति नतु कर्म । स्तां वा कर्मशीले द्वे अप्यविशेषेणानुशयः, तथापि यद्यप्ययमिष्टापूर्तकारी स्वयं निरनुशयो भुक्तभोगत्वात्; तथापि पित्रादिगतानुशयवशात्तद्विपाकान् जात्यायुर्भोगांश्चन्द्रलोकादवरुह्यानुभविष्यति । स्मर्यते ह्यन्यस्य सुकृतदुष्कृताभ्यामन्यस्य तत्संबन्धिनस्तत्फलभागिता—'पतत्यर्धशरीरेण यस्य भार्या सुरां पिबेत्' इत्यादि । तथा श्राद्धवैश्वानरीयेष्ट्यादेः पितापुत्रादिगामिफलश्रुतिः । तस्माद्यावत्संपातमित्युपक्रमानुरोधात् 'यत् किंचेह करोति' इति च श्रुत्यन्तरानुसाराद्रमणीयचरणत्वं संबन्ध्यन्तरगतमिष्टापूर्तकारिणि भाक्तं गमयितव्यम् । तथाच निरनुशयानामेव भुक्तभोगानामवरोह इति प्राप्त उच्यते—येन कर्मकलापेन फलमुपभोजितं तस्मिन्नतीतेऽपि सानुशया एव चन्द्रमण्डलादवरोहन्ति । कुतः? दृष्टस्मृतिभ्याम् । प्रत्यक्षदृष्टा श्रुतिर्दृष्टश-

## वेदान्तकल्पतरुः

संभवे सम्यग्ज्ञानस्य नैष्फल्यं पूर्वपक्षे प्रयोजनम् । श्रुतिमुदाहृत्य व्याचष्टे—**यदिति** । **अन्तः** फलम् । युक्तिमप्याह—**प्रायणस्य चेति** । एषां हेतूनां समस्तमेव कर्म स्वकीयं फलमुपभोजितवदित्युपरितनप्रतिज्ञयान्वयः । **ननु** फलं दत्त्वाऽपि कर्म तिष्ठतु, तत्राह—**स्वफलविरोधीति** । लोके तथोपलम्भादित्यर्थः । **नन्वसति** कर्मणि निमित्ताभावात्कथमवरोहणमत आह—**आचारादिति** । चरणादिति चेदिति सूत्रभागः पूर्वपक्ष इत्यर्थः । आचारे चाग्निहोत्रादिवन्नाव्बाहुल्यमिति पूर्वपक्षघटना । **ननु** यथाकारी यथाचारीत्युपक्रम्य साधुकारीत्युपसंहारात् करणाचरणयोरेकत्वमवगम्यतेऽत आह—**स्तां वेति** । भवेतामित्यर्थः । कर्तारमनुशेतेऽनुगच्छतीत्यर्थोऽनुशयः । **जाति**र्जन्म । स्मृतिश्चोपन्यस्ता । वर्णा आश्रमा

## कल्पतरुपरिमलः ।

शक्त्यभिव्यञ्जकत्वादभिव्यक्तशक्तिभिः कर्मभिः प्राणानन्तरभाविन्येकस्मिन्नेव शरीरे फलजननावश्यंभाव एकभविकनयः । **सम्यग्ज्ञानस्य नैष्फल्यमिति** । नच—आचारेणान्यकृतेन कर्मणा वा जातस्य पुनरपि देहान्तरापादनीयकर्मपरम्परा प्रतीयेतेति न सम्यग्ज्ञाने नैष्फल्यमिति—वाच्यम्; तिर्यग्योनिजातस्य कर्मानुष्ठानसामर्थ्यात्प्रागेव मृतस्य वा तेन देहेनाचारान्यकृतकर्मणोरपि क्षपणेन सम्यग्ज्ञाननैष्फल्यं स्यादिति भावः । **लोके तथोपलम्भादिति** । कर्मणामुत्तरदेश

तथाहि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' ( छा० ५।१०।७ ) इति चरणशब्देनानुशयः सूच्यत इति वर्णयिष्यति। दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति; अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृतिरपि 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति सानुशयानामेवावरोहं दर्शयति । कः पुनरनुशयो

## भामती ।

ब्दवाच्या । स्मृतिश्चोपन्यस्ता । **अथवा**—दृष्टशब्देनोच्चावचरूपो भोग उच्यते । **अयमभिसंधिः**—कपूयचरणा रमणीयचरणा इत्यवरोहतामेतद्विशेषणम् । नच सति मुख्यार्थसंभवे संबन्धिमात्रेणोपचारितार्थत्वं न्याय्यम्, नच—उपक्रमविरोधाच्छ्रुत्यन्तरविरोधाच्च मुख्यार्थासंभव इति—सांप्रतम्; दत्तफलेष्टापूर्तकर्मापेक्षयापि यावत्पदस्य यत्किंचेति पदस्य चोपपत्तेः । नहि 'यावज्जीवमग्निहोत्रं जुहुयात्' इति यावज्जीवमाहारविहारादिसमयेऽपि होमं विधत्ते, नापि मध्याह्नादौ, अपितु सायंप्रातःकालापेक्षया; सायंप्रातःकालविधानसामर्थ्यात् कालस्य चानुपादेयतयानङ्गस्यापि निमित्तानुप्रवेशात्तत्रैवमिति चेत्, न; इहापि रमणीयचरणा इत्यादेर्मुख्यार्थत्वानुरोधात्तदुपपत्तेः । तत्किमिदानीमुपसंहारानुरोधेनोपक्रमः संकोचयितव्यः ? नेत्युच्यते; नह्यसावुपसंहारानुरोधेऽप्यसंकुचद्वृत्तिरुपपत्तुमर्हति । नहि यावन्तः संपाता यावतां वा पुंसां संपातास्ते सर्वे तत्रेष्टादिकारिणा भोगेन क्षयं नीयन्ते; पुरुषान्तराश्रयाणां कर्माशयानां तद्भोगेन क्षयेऽतिप्रसङ्गात्, चिरोपभुक्तानां च कर्माशयानामसतां चन्द्रमण्डलोपभोगेनापनयनात् । तथाच स्वयं संकुचन्ती यावच्छ्रुतिरुपसंहारानुरोधप्राप्तमपि संकोचनमनुमन्यते । **एतेन**—'यत्किंचेह करोति' इत्यपि—**व्याख्यातम् । अपिचेष्टापूर्तकारीह** जन्मनि केवलं न तन्मात्रमकार्षीदपि तु गोदोहनेनापः प्रणयन् पशुफलमप्यपूर्वं समचैषीत् । एवमहर्निशं च वाङ्मनःशरीरचेष्टाभिः पुण्यापुण्यमिहामुत्रोपभोग्यं संचितवतो न मर्त्यलोकादिभोग्यं चन्द्रलोके भोग्यं भवितुमर्हति । नच स्वफलविरोधिनोऽनुशयस्य ऋते प्रायश्चित्तादात्मज्ञानाद्वाऽदत्तफलस्य ध्वंसः संभवति । तस्मात्तेनानुशयेनायमनुशयवान् परावर्तेत इति श्लिष्टम् । नचैकभविकः कर्माशय इत्यग्रे भाष्यकृद्वक्ष्यति । **अन्येतु**—

## वेदान्तकल्पतरुः ।

इत्याद्या भाष्ये इत्यर्थः । दृष्टश्चायं प्रतिप्राणीत्यादि भाष्यं व्याचष्टे—**अथवेति** । उपभोगवैचित्र्यं स्वर्गादवरोहतामिति कथमवगम्यतेऽत आह—**कपूयचरणा इति । यावत्पदस्येति** । वाक्योपक्रमगतस्येत्यर्थः । **यत्किंचेतिपदस्येति** । श्रुत्यन्तरगतस्येत्यर्थः । यावज्जीवमग्निहोत्रमित्यत्रत्ययावत्पदस्य सायंप्रातःकालावच्छिन्नजीवनविषयत्वेऽस्ति प्रमाणमिति दृष्टान्ते विशेषं शङ्कते—**सायंप्रातःकालविधानेति । ननु** सायं जुहोति प्रातर्जुहोति इति अग्निहोत्रे विधीयतां कालः, स लङ्गत्वात् प्रधानासंकोचकः, तत्राह—**कालस्य चेति** । कालस्य पुरुषानिष्पाद्यत्वात् सिद्धत्वेन निमित्तत्वं, ततश्च नैमित्तिकस्य कर्मणः संकोच इत्यर्थः । **तदुपपत्तेरिति** । यावत्संपातमित्यादेः स्वर्गे तदफलेष्टापूर्तविषयत्वोपपत्तेरित्यर्थः । असंजातविरोधस्योपक्रमगतयावच्छब्दस्य संजातविरोधोपसंहारगतरमणीयचरणश्रुत्या कथं संकोचः ? इति शङ्कते—**तत्किमिति** । स्वयमेव संकुचितार्था यावच्छ्रुतिस्त्वदपेक्षितविषये उपसंहारेण नीयत इति परिहरति—**नेत्युच्यत इत्यादिना** । रमणीयचरणनिमित्तकोऽवरोह इति वदन्त्या श्रुत्याऽर्थात्तदितरभुक्तफलकर्मविषया यावच्छ्रुतिरिति विषयो दत्त इत्यर्थः । **यावत्संपातमिति** । किं तद् भोक्तृकृतं कर्मोच्यते, कर्ममात्रं वा । **नाद्य** इत्याह—**यावन्त इति । न द्वितीय** इत्याह—**यावतां वेति । प्रथमाभावे** हेतुश्चिरेति । **द्वितीयाभावे** हेतुः—**पुरुषान्तरेति** । पूर्वदर्शि-

## कल्पतरुपरिमलः ।

संयोगादिफलविनाश्यत्वदर्शनादित्यर्थः । **स्वर्गादवरोहतामिति कथमवगम्यत इति** । तृतीयस्थानादवतीर्णानां दृश्यमानं भोगवैचित्र्यमस्तु, अतः स्वर्गादवरोहतां न तद्बलेनानुशयसिद्धिरिति शङ्काभिप्रायः । स्वर्गादवरोहतां कपूयरमणीयानुशयश्रवणात्तेषामपि तत्कृतं भोगवैचित्र्यं भवेदिति परिहाराभिसंधिः । यद्यप्ययमभिसंधिरित्यादिटीकाग्रन्थोऽन्यकृतकर्मणा ब्राह्मणादिदेहप्राप्तिरिति पूर्वपक्षस्य कपूयचरणा इत्यादिबहुव्रीहिप्रतिपाद्ये मतुबर्थे कर्मसंबन्धे मुख्यसाक्षात्संबन्धरूपे संभवत्यमुख्यपरम्परासंबन्धरूपः स नाश्रयणीय इति युक्त्या निराकरणार्थः प्रतीयते; तथापि भाष्योक्तं भोगवैचित्र्यमन्वर्थोपपत्तिनिराकरणेनोपपादयितुं प्रवृत्तस्य टीकाग्रन्थस्य तदप्यानुषङ्गिकं प्रयोजनमिति तात्पर्यम् । **निमित्तत्वमिति** । सायंप्रातः-

नामेति ? केचित्तावदाहुः—स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत् । यथाहि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते भाण्डानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते तथाऽनुशयोऽपीति । ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यम् । नायं दोषः । नहि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे । ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढः । बाढम्; तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न लभ्यते । यथा किल कश्चित्सेवकः सकलैः सेवोपकरणै राजकुलमुपसृप्तश्चिरप्रवासात्परिक्षीणबहूपकरणश्छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति । एवमनुशयमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोति—इति । न चैतद्युक्तमिव; नहि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते कार्यविरोधित्वादित्युक्तम् । नन्वेतदप्युक्तम्—न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति । तदेतदपेशलम्; स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं न जनयति स्वर्गच्युतस्यापि कंचित्फललेशं जनयतीति । न शब्दप्रमाणकानामीदृशी कल्पनाऽवकल्पते, स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते । तथा सेवकस्योपकरणलेशानुवृत्तिश्च दृश्यते, न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते, नापि कल्पयितुं शक्यते; स्वर्गफलत्वशास्त्रविरोधात् । अवश्यं चैतदेवं विज्ञेयम् । न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति । यदिहि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभूवंस्तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत, ततो रमणीय एवैकोऽनुशयः स्यान्न विपरीतः । तत्रेयमनुशयविभागश्रुतिरुपरुध्येत—'तद्य इह रमणीयचरणा अथ य इह कपूय-

---

## भामती ।

सकलकर्मक्षये परावृत्तिशङ्का निर्बीजेति मन्यमाना अन्यथाधिकरणं वर्णयांचक्रुरित्याह—**केचित्तावदाहुरिति** । अनुशयोऽत्र दत्तफलस्य कर्मणः शेष उच्यते । तत्रेदमिह विचार्यते—किं दत्तफलानामिष्टापूर्तकर्मणामवशेषादिहावर्तन्ते उत तान्युपभोगेन निरवशेषं क्षपयित्वाऽनुपभुक्तकर्मवशादिहावर्तन्त इति । तत्रेष्टादीनां भोगेन समूलकाषं कषितत्वान्निरनुशया एवानुपभुक्तकर्मवशादावर्तन्त इति प्राप्त उच्यते—सानुशया एवावर्तन्त इति । कुतः ? दृष्टानुसारात् । यथा भाण्डस्थे मधुनि सर्पिषि वा क्षालितेऽपि भाण्डलेपकं तच्छेषं मधु वा सर्पिर्वा न क्षालयितुं शक्यमिति दृष्टमेवं तदनुसारादेतदपि प्रतिपत्तव्यम् । नचावशेषमात्राच्चन्द्रमण्डले तिष्ठासन्नपि स्थातुं पारयति । यथा सेवको हास्तिकाश्वीयपदातिव्रातपरिवृतो महाराजं सेवमानः कालवशाच्छत्रपादुकावशेषो न सेवितुमर्हतीति दृष्टं, तन्मूला च लौकिकी स्मृतिरिति दृष्टस्मृतिभ्यां सानुशया एवावर्तन्त इति । तदेतद्दूषयति—**नचैतदिति** । एवकारे प्रयोक्तव्ये इवकारो गुडजिह्विकया प्रयुक्तः । शब्दैकगम्येऽर्थे न सामान्यतोदृष्टानुमानावसर इत्यर्थः । शेषमतिरोहितार्थम् । पूर्वपक्ष-

## वेदान्तकल्पतरुः ।

ताधिकरणपूर्वपक्षस्य तुच्छतामाह—**सकलेति** । हेत्वभावे कार्यायोगात् कर्मरहितावरोहशङ्का न भवतीत्यर्थः । पित्रादिकर्मचरणाभ्यां तदुपपादनान्मन्यमानोक्तिः सिद्धान्त्युक्तसिद्धान्त एवैकदेशिनः पूर्वपक्ष इत्याह—**अनुपभुक्तकर्मवशादिति** । अस्मिन्मते सौत्रदृष्टशब्दार्थमाह—**दृष्टानुसारादिति** । **ननू**त्पत्तिकर्मशेषे तत्फलमपि स्वर्गे एव भोक्तव्यं, समस्तज्योतिष्टोमादेः स्वर्गार्थत्वेन विधानादत आह—**नचावशेषेति** । **तिष्ठासन्** स्थातुमिच्छन् भुवि शेषफलभोग इत्यर्थः । हस्तिनां समूहो **हास्तिकम्** । अश्वानां समूहोऽश्वीयम् । **तन्मूला चेति** । दृष्टन्यायमूला लौकिकी कालिदासादिस्मृतिरित्यर्थः । **वेदैर्गीतां सुकृतशकलैः स्वर्गिणां भूमिभागे भोगप्राप्तिं कथयति पुरीं वर्णयन् कालिदासः । स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ अथवा**—ततः शेषेणेत्याद्येव स्मृतिर्लौकिकी । अस्मिन्पक्षे तन्मूलेत्यस्य विवरणं—**लौकिकीति** । लौकिकन्यायमूलेत्यर्थः । शक्यते चास्याः स्मृतेर्वेदोऽनुमातुम् । **गुडजिह्विका** मधुरोक्तिः । **नैव युक्तमित्युक्ते**नैष्ठुर्यं स्यादिति । यत्तु स्वर्गसुखं भुवि भोक्तव्यमिति, तत्राह—**शब्दैकगम्येऽर्थे इति** । भाण्डस्नेहवत् सामान्यतो दृष्टेन हि कर्मशेषोऽनु-

## कल्पतरुपरिमलः ।

कालावच्छिन्नजीवनं निमित्तमिति निमित्तसंकोचकतया निमित्तकोट्यनुप्रविष्टत्वमित्यर्थः । पृथग् निमित्तनैमित्तिकसंकोचकत्वानुपपत्तेः अभ्यासोऽकर्मशेषत्वा ( जै. अ. ६ पा. २ सू. २३ ) दिति पूर्वतन्त्राधिकरणे सायंप्रातःकालयोर्जीवनविशेषणतया निमित्तसंकोचकत्वस्यैवोक्तत्वाच्च । **उपमिमान इति** । उत्प्रेक्षमाण इत्यर्थः । वर्णनीयपुरं हि शेषपुण्यकृतक-

चरणाः' (छा० ५।१०।७) इति । तस्मादामुष्मिकफले कर्मजात उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयस्तद्वन्तोऽवरोहन्तीति । यदुक्तं यत्किंचेत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति । नैतदेवम्; अनुशयसद्भावस्यावगमितत्वात् । यत्किंचिदिह कृतमामुष्मिकफलं कर्मारब्धभोगं तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते । यदप्युक्तं प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति तत्र केनचित्कर्मणाऽमुष्मिँल्लोके फलमारभ्यते केनचिदस्मिन्नित्ययं विभागो न संभवतीति । तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम् । अपिच केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम् । आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात्प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत । ततो वक्तव्यम् । यथैव तर्हि प्राक्प्रायणादारब्धफलेन कर्मणाऽप्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिरित्येवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासंभवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति । नह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन्प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुम्; प्रतिनियतफलत्वविरोधात् । नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्; ऐकान्तिकफलत्वविरोधात् । नहि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभाव्यते । स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति—'कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति । मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते' इत्येवंजातीयका । यदि च कृत्स्नमनारब्धफलं कर्मैकस्मिन्प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत । ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत । नच धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम् । नच दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीत्यव्यापिकाऽपीयं प्रायणस्याभिव्यञ्जकत्वकल्पना । प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः । स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्चेदं द्रष्टव्यम् । यथाहि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपमभिव्यनक्ति न सूक्ष्मम् । एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति न दुर्बलस्येति । तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः । शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः; सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः । तस्मात्स्थितमेतदेवानुशयवन्तोऽवरोहन्तीति । ते चावरोहन्तो यथेतमनेवं चावरोहन्ति । यथेतमिति यथागतमित्यर्थः । अनेवमिति तद्विपर्ययेणेत्यर्थः । धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे संकीर्तनाद्यथेतंशब्दाच्च यथागतमिति प्रतीयते । रात्र्याद्यसंकीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते ॥ ८ ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

---

### भामती ।

हेतुमनुभाषते—यदप्युक्तं प्रायणमिति । दूषयति—तदप्यनुशयसद्भाव इति । रमणीयचरणाः कपूयचरणा इत्यादिकयानुशयप्रतिपादनपरया श्रुत्या विरुद्धमित्यर्थः । अपिचेत्यादि । इह जन्मनि हि पर्यायेण सुखदुःखे भुज्यमाने दृश्येते । युगपच्चेदेकप्रघट्टकेन प्रायणेन सुखदुःखफलानि कर्माणि व्यज्येरन् । युगपदेव तत्फलानि भुज्येरन् ।

### वेदान्तकल्पतरुः ।

मितः, तस्य च भुवि भोगः कल्पितः, तत्सर्वं स्वर्गोद्देशेन यागविधिना विरुध्यते, भौमसुखस्य स्वर्गत्वायोगादित्यर्थः । अत एव स्मार्तः शेषशब्दोऽपि न भुक्तकर्मणः शेषं वक्ति, किंतु कर्मराशिमध्येऽनुपभुक्तं कर्मान्तरमिति । कविरपि दिवः खण्डमिवेति पुरसुपमिमानो भुवि भोगमाह—प्रायणेनेति । पूर्वदेहावसानकालीनेनेत्यर्थः । **युगपदेव तत्फलानि**

### कल्पतरुपरिमलः ।

लिपतद्युखण्डतादात्म्येनोत्प्रेक्ष्यते, नतु तथाभूतेन केनचिद् द्युखण्डेनेदं सदृशमित्युपमीयते । **भुवि भोगमिति** । यस्य कर्मणः स्वर्ग एव फलमुक्तं, तद्विषया भुवि भोगाभावोक्तिः । यस्य तु कर्मणः स्वर्गभोगानन्तरं भुव्यपि फलमनेकजन्मानु-

अथापि स्यात् । या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता—'तद्य इह रमणीयचरणाः' (छा० ५।१०।७) इति, सा खलु चरणाद्योन्यापत्तिं दर्शयति नानुशयात् । अन्यच्चरणमन्योऽनुशयः । चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम् । अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम् । श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति—'यथाकारी यथाचारी तथा भवति' (बृ० ४।४।५) इति 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' (तै० १।११।२) इति च । तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत्, नैष दोषः; यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्यादेतत्—कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते । ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति । अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम् । अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत्, नैष दोषः; कुतः? तदपेक्षत्वात् । इष्टादि हि कर्मजातं चरणापेक्षम् । नहि सदाचारहीनः कश्चिदधिकृतः स्यात्; 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः । पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम् । इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कंचिदतिशयमारप्स्यते । कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः । तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम् । नहि कर्मणि संभवति शीलाद्योन्यापत्तिर्युक्ता । नहि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति ॥ १० ॥

---

### भामती ।

तस्मादुपभोगपर्यायदर्शनाद्बलीयसा दुर्बलस्याभिभवः कल्पनीयः । एवं विरुद्धजातिनिमित्तोपभोगफलेष्वपि कर्मसु द्रष्टव्यम् । नचाभिव्यक्तं च कर्म फलं न दत्त इति च संभवति; फलोपजनाभिमुख्यं हि कर्मणामभिव्यक्तिः । अपिच प्राणस्याभिव्यञ्जकत्वे स्वर्गनरकतिर्यग्योनिगतानां जन्तूनां तस्मिञ्जन्मनि कर्मस्वनधिकारान्नापूर्वकर्मोपजनः पूर्वकृतस्य कर्माशयस्य प्रायणाभिव्यक्ततया फलोपभोगेन प्रक्षयान्नास्ति तेषां कर्माशय इति न ते संसरेयुः । नच मुच्येरन्नात्मज्ञानाभावादिति कष्टां बताविष्टा दशाम् । किंच स्वसमवेतमेव प्रायणेनाभिव्यज्यतेऽपूर्वं, न परसमवेतं, येन पित्रादिगतेन कर्मणाऽऽवर्तेरन्निति । शेषं सुगमम् ॥ ८ ॥ अनेन निरनुशया एवावरोहन्तीति पूर्वपक्षबीजं निगूढमुद्भाव्य निरस्यति । यद्यपि 'अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः ॥' इति स्मृतेः शीलमाचारोऽनुशयाद्भिन्नः; तथाप्यस्यानुशयाङ्गतयाऽनुशयोपलक्षणत्वं कार्ष्णाजिनिराचार्यो मेने । तथाच रमणीयचरणाः कपूयचरणा इत्यनेनानुशयोपलक्षणात्सिद्धं सानुशयानामेवावरोहणमिति ॥ ९ ॥ 'आचारहीनं न पुनन्ति वेदाः' इति हि स्मृत्या वेदपदेन वेदार्थमुपलक्षयन्त्या वेदार्थानुष्ठानशेषत्वमाचारस्योक्तं नतु स्वतन्त्र आचारः फलस्य साधनं, तेन वेदार्थानुष्ठानोपकारकतयाचारस्य नानर्थक्यं क्रत्वर्थस्य । तदनेन समिदादिवदाचारस्य क्रत्वर्थत्वमुक्तम् । संप्रति स्नानादिवत्पुरुषार्थत्वे पुरुषसंस्कारत्वेऽप्यदोष इत्याह—**पुरुषार्थत्वेऽप्याचारस्येति** । तदेवं चरणशब्देनाचारवा-

### वेदान्तकल्पतरुः ।

**भुज्येरन्निति** । इदानीमित्यर्थः । **ननु** युगपदभिव्यक्तान्यपि कर्माणि क्रमेण फलं ददतामत आह—**नचाभिव्यक्तमिति** । **ननु** स्वर्गादिभुजः स्वर्गादिभोगानन्तरं परकर्मभिः संसरन्तु नेत्याह—**नचेति** ॥ ८ ॥ **निरनुशया एवेति** । अग्निहोत्रादिकर्मापूर्वरहिता इत्यर्थः ॥९॥ आचारस्य यागादिवद् न प्रधानकर्मत्वेन पुरुषार्थत्वमित्याह—**स्नानादिवदिति** । ज्योतिष्टोमे श्रूयते—"तीर्थे स्नाति तीर्थमिव हि सजातानां भवती"ति । दर्शपूर्णमासयोरप्याम्नायते "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति प्राणापानावात्मन् धत्त" इति । तत्र तीर्थस्नानं जृम्भानिमित्तमन्त्रोच्चारणं च किं प्रकृतक्रतुधर्मः, उत शुद्धमनुष्यधर्मः प्रकृतक्रतुयुक्तमनुष्यधर्मो वेति संदेहे न तावत्प्रकृतक्रतुधर्मत्वम्; वाक्येन पुरुषधर्मत्वप्रतीतेः । प्रकरणाच्च

### कल्पतरुपरिमलः ।

यायि श्रुतं, तस्य श्रुतिवशाद्भुव्यपि फलं भवन्न निवार्यते ॥८॥९॥ **आचारस्य यागादिवदिति** । भाष्ये पुरुषार्थत्वोक्त्या यागादिवदाचारस्य स्वतन्त्रपुरुषार्थसाधनत्वं नोक्तं, किंतु पुरुषसंस्कारत्वमुक्तमित्याहेत्यर्थः । **वाक्येन पुरुषधर्मत्वप्रतीतेरिति** । जञ्जभ्यमान इति कृत्प्रत्ययान्तेन जृम्भणकर्ता पुरुष उच्यते कर्ता; कर्तरि कृदित्यनुशासनात्, ततस्तत्समभि-

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

**बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते । चरणमनुष्ठानं कर्मेत्यनर्थान्तरम् । तथाहि—अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते । यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते धर्मं चरत्येष महात्मेति । आचारोऽपि च धर्मविशेष एव । भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्माद्रमणीयचरणाः प्रशस्तकर्माणः कपूयचरणा निन्दितकर्माण इति निर्णयः ॥ ११ ॥ इति द्वितीयं कृतात्ययाधिकरणम् ॥**

### भामती ।

चिना सर्वोऽनुशयो लक्षित इत्युक्तम् ॥ १० ॥ बादरिस्तु मुख्य एव चरणशब्दः कर्मणीत्याह—**सुकृतदुष्कृते एवेति तु बादरिः** । ब्राह्मणपरिव्राजकन्यायो गोबलीवर्दन्यायः । शेषमतिरोहितार्थम् ॥ ११ ॥ **इति द्वितीयं कृतात्ययाधिकरणम् ॥**

### वेदान्तकल्पतरुः ।

वाक्यस्य बलवत्त्वात् । अतएव न प्रकृतक्रतुयुक्तपुरुषधर्मत्वम्; दुर्बलस्य प्रकरणस्याविशेषकत्वात्तस्माच्छुद्धपुरुषधर्मत्वे प्राप्ते राद्धान्तितं शेषलक्षणे । न तावदिदं पुरुषं प्रति फलाय प्रधानकर्मत्वेन विधीयते; फलकल्पनाप्रसङ्गात्, वाक्यशेषनिर्दिष्टस्य वर्तमनोपदिष्टत्वेन फलत्वानभिव्यक्तेः । गुणकर्म तु स्यात् । तच्च न पुरुषमात्रे विधातुं शक्यम्; वैयर्थ्यात् । अपूर्वसाधनांशे हि धर्मविधानम् अपूर्वसाधनत्वलक्षणा च न प्रकरणादृते इति दुर्बलस्यापि प्रकरणस्य वाक्येनानुज्ञातत्वात् प्रकृतक्रतुयुक्तमनुष्यधर्मत्वमेवेति । एवं यथा तीर्थस्नानादेः प्रकरणवाक्याभ्यां क्रत्वनुष्ठायिपुरुषधर्मत्वं, तथाऽऽचारस्याप्याचारहीनमिति वाक्यानुमितविधिवाक्याद् वेदार्थानुष्ठातृपुरुषधर्मत्वमित्यर्थः । अजहल्लक्षणामाह—**सर्वोऽनुशय इति** ॥१०॥ यथाकारी यथाचारीति करणाचरणभेदनिर्देशो ब्राह्मणपरिव्राजकन्यायेनेति भाष्योक्तमयुक्तम्; ब्राह्मणत्वस्य यावत्पिण्डभावित्वेन जातित्वेऽपि परिव्राजकत्वस्य गार्हस्थ्याद्यवस्थायामभावेन जातित्वाभावात् करणचरणत्वयोश्चादृष्टत्वावान्तरजातित्वादृष्टान्तासङ्गनादित्याशङ्क्याह—**गोबलीवर्देति** । परापरजातिविषयगोबलीवर्दन्यायेऽनुवृत्तव्यावृत्तविषयत्वसाम्याद् ब्राह्मणपरिव्राजकशब्द उपचरित इत्यर्थः ॥११॥ तेषां कर्मिणां तददृष्टं यदा पर्यवैति परिगच्छति परिक्षीणं भवति तदा त आवर्तन्त इत्युत्तरवाक्येनान्वयः । **प्राप्येति** । यत्किंचिदिह लोके यः संसारी कर्म करोति तस्यान्तं फलं परलोके प्राप्य तस्माल्लोकात्पुनरस्मै लोकाय **आ एति** आगच्छति । पुनः शब्दात्पूर्वमप्यागत इति गम्यतेऽनादित्वात्संसारस्य । किमर्थमागमनं ? **कर्मणे** कर्मानुष्ठानाय । तत्र तेष्वनुशयिषु मध्ये इह लोके ये पूर्वं रमणीयाचरणवन्त आसन्, ते तदनुरूपां ब्राह्मणादियोनिं शरीरमापद्येरन्निति यत् तद् अभ्याशः क्षिप्रम् अवश्यमेवेत्यर्थः । योनिशब्दः स्थानवचनः । **कपूयचरणाः** कुत्सिताचरणाः । **वर्णा** वर्णिनः । **आश्रमा** आश्रमिणः । विशिष्टदेशादयो मेधान्ता येषां ते तथा । संसारे मज्जमानस्य जन्तोः **कदाचित्सुकृतं** सुष्ठ्वभिमानपूर्वकं कृतं यत्कर्म तद्यावद् दुःखात्संसारान्मुच्यते तावत्कूटस्थमिव तिष्ठतीति योजना ॥ **इति द्वितीयं कृतात्ययाधिकरणम् ॥**[1]

### कल्पतरुपरिमलः ।

व्याहाररूपेण वाक्येन मन्त्रवचनस्य पुरुषार्थत्वमवसीयते, तन्निर्वाहाय प्राणापानावेवात्मन् धत्तइत्यर्थवादावगतं चिरजीवित्वं फलमुखेन विपरिणमनीयम् । तीर्थे स्नातीत्यत्र यद्यपि शब्दतस्तीर्थस्नानकर्ता न प्रतीयते, आख्यातस्य कर्तृसंख्यामात्रवाचित्वात्; तथापि स्नानं मलापकर्षणार्थं तीर्थविशेषणं सुखावतरणार्थमिति लिङ्गात्तीर्थस्नानमपि तत्कर्तृपुरुषार्थतयाऽवगम्यते । अतस्तत्रापि तीर्थमेव समानानां भवतीत्यर्थवादश्रुतफलविपरिणामः कार्य इति भावः । एवंच मूले वाक्येनेति शब्दो लिङ्गस्याप्युपलक्षको द्रष्टव्यः । **गुणकर्म तु स्यादिति** । पुरुषसंस्कारकतयेति भावः । **तच्च न पुरुषमात्र इति** । यथा व्रीहिप्रोक्षणं न व्रीहिमात्रे विधीयते; वैयर्थ्यात्फलान्तरकल्पने गौरवाच्च, किं त्वपूर्वसाधनेषु व्रीहिष्विति प्रकृतक्रत्वपूर्वसाधनत्वलाभार्थंमतिप्रबलयापि श्रुत्या प्रकरणमपेक्षितमभ्यनुज्ञायते । एवमिहापीति क्रतुयुक्तपुरुषसंस्कारौ स्नानमन्त्रवचने, यथा क्रतुयुक्तव्रीहिसंस्कारः प्रोक्षणमिति भावः ॥ १० ॥११॥ कदाचित्सुकृतं कर्मेति श्लोके सुकृतशब्दं दुष्कृतसाधारण्येन व्याचष्टे—**सुष्ठ्वभिमानपूर्वकं कृतमिति ॥ इति द्वितीयं कृतात्ययाधिकरणम् ॥**

---

१ तत्र सूत्राणि ४—कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ८ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ९ आनर्थक्यमिति चेन्न तदपेक्षत्वात् १० सुकृतदुष्कृते एवेति तु बादरिः ११ ॥

## ( ३ अधिकरणम् ) अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम्। ये त्वितरेऽनिष्टादिकारिणस्तेऽपि किं चन्द्रमसं गच्छन्त्युत न गच्छन्तीति चिन्त्यते। तत्र तावदाहुः—इष्टादिकारिण एव चन्द्रमसं गच्छन्तीत्येतन्न। कस्मात्? यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम्। यथाह्यविशेषेण कौषीतकिनः समामनन्ति—'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' ( कौषी० १।२ ) इति। देहारम्भोऽपि च पुनर्जायमानानां नान्तरेण चन्द्रप्राप्तिमवकल्पते; पञ्चम्यामाहुतावित्याहुतिसंख्यानियमात्। यस्मात्सर्व एव चन्द्रमसमासीदेयुः। इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्, न; इतरेषां चन्द्रमण्डले भोगाभावात् ॥ १२ ॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति सर्वे चन्द्रमसं गच्छन्तीति। एतत्कस्मात्? यतो भोगायैव चन्द्रारोहणं न निष्प्रयोजनम्। नापि प्रत्यवरोहायैव। यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानायैव, न निष्प्रयोजनं, नापि पतनायैव। भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम्। तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे। ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति। एवंभूतौ तेषामारोहावरोहौ भवतः। कुतः? तद्गतिदर्शनात्। तथाहि यमवचनसरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति—'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' ( कठ० २।६ ) इति। 'वैवस्वतं संगमनं जनानाम्' इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

अपिच मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥ १४ ॥

## अपिच सप्त ॥ १५ ॥

अपिच सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः। तानानिष्टा-

---

### भामती।

**अनिष्टादिकारिणामपि च श्रुतम्।** 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति कौषीतकिनां समाम्नानात्, देहारम्भस्य च चन्द्रलोकगमनमन्तरेणानुपपत्तेः, पञ्चम्यामाहुतावित्याहुतिसंख्यानियमात्। तथाहि—द्युसोमवृष्ट्यन्नरेतःपरिणामक्रमेण ता एवापो योषिदग्नौ हुताः पुरुषवचसो भवन्तीत्यविशेषेण श्रुतम्।

### वेदान्तकल्पतरुः।

**अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥** इष्टादिकारिणां प्रतीतेरित्युक्तम्। तत्रेष्टादिकारित्वविशेषणवैयर्थ्यमाशङ्क्य परिह्रियते। प्रयोजनं त्वनिष्टादिकारिणां शुभमार्गेण गमनमात्रमपि नास्तीति प्रतिपादनेन वैराग्यजननम्। यत्किंचिद्यावच्छब्दयोश्चिरभुक्तादिकर्मविषयत्वादस्तु सङ्कोचः, येके च सर्वशब्दानामर्थसङ्कोचे नास्ति हेतुरिति पूर्वपक्षमाह—**ये के चेति।** हेतूनामेषामनिष्टादिकारिणामपि चन्द्रलोकगमने प्राप्त इति वक्ष्यमाणप्रतिज्ञया संबन्धः। न केवलं समाम्नानम्, उपपत्तिरप्यस्तीत्याह—**देहारम्भस्य चेति।** कुतोऽनुपपत्तिरत आह—**पञ्चम्यामिति।** नन्वाहुतिसंख्यानियम इष्टादिकारिविषय एवास्तु, नेत्याह—**तथाहीति।** द्युशब्देन दिवि हुता श्रद्धा लक्ष्यते। श्रद्धा सोमेत्यर्थः। **पुरुषवचसो भवन्तीति।** साधारणपुरुषश्रुतिर्न सङ्कोचमर्हतीत्यर्थः। तर्हि यथोपात्तमनुष्येष्वेव सङ्कोच्यतां मनुष्यत्वं चेष्टादिकारिणामेवेति भ्रममपोहति—**नचैतदिति।** दक्षिणोत्तरमार्गयोरेव श्रुतावववगमादुत्तरस्य च ज्ञानिभिरेवावरुद्धत्वादनिष्टा-

### कल्पतरुपरिमलः।

**अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥** इष्टादिकारिणां प्रतीतेरित्युक्तमित्यादिना व्यवहिताधिकरणसंबन्ध उक्तः। अव्यवहिताधिकरणसंगतिमाह—**यत्किंचिद्यावच्छब्दयोरिति। यथोपात्तमनुष्येष्विति।** पुरुषशब्दो मनुष्यवाचित्वेन नैघण्टुकैः स्मृत इति भावः। टीकायामसौ लोक इति स्थाने असौ मार्ग इत्यपि पाठान्तरं दृश्यते,

दिकारिणः प्राप्नुवन्ति। कुतस्ते चन्द्रं प्राप्नुयुरित्यभिप्रायः॥ १५॥ ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति। यावता तेषु रौरवादिष्वन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति। नेत्याह—

## तत्रापि च तद्व्यापारादविरोधः॥ १६॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः। यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते॥ १६॥

## विद्याकर्मणोरिति तु प्रकृतत्वात्॥ १७॥

पञ्चाग्निविद्यायाम् 'वेत्थ यथासौ लोको न संपूर्यते' ( छा० ५।३।३ ) इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते—अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति। जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' ( छा० ५।१०।८ ) इति। तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत्। कस्मात्? प्रकृतत्वात्। विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपत्तौ प्रकृते। 'तद्य इत्थं विदुः' इति विद्या तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः। 'इष्टापूर्ते दत्तम्' ( छा० ५।१०।१,३ ) इति कर्म तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः। तत्प्रक्रियायाम्—'अथैतयोः पथोर्न कतरेणचन' इति श्रुतम्। एतदुक्तं भवति—येन विद्यासाधनेन देवयाने पथ्यधिकृता नापि कर्मणा पितृयाणे, तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति। तस्मादपि नानिष्टादिकारिभिश्चन्द्रमाः प्राप्यते। स्यादेतत्—तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्त इति। तदपि नास्ति; आरोहानर्थक्यात्। अपिच सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्स्वसौ लोकः प्रयद्भिः संपूर्येतेत्यतः प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत। तथाहि प्रतिवचनं दातव्यं यथाऽसौ लोको न संपूर्यते। अवरोहाभ्युपगमादसंपूर्णोपपत्तिरिति चेत्, न; अश्रुतत्वात्। सत्यमवरोहादप्यसंपूरणमुपपद्यते, श्रुतिस्तु तृतीयस्थानसंकीर्तनेनासंपूरणं दर्शयति—'एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' ( छा० ५।१०।८ ) इति। तेनानारोहादेवासंपूरणमिति युक्तम्। अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात्। तुशब्दस्तु शाखान्तरीयवाक्यप्रभवामशेषगमनाशङ्कामुच्छिनत्ति। एवं सत्यधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते।

---

### भामती।

नचैतन्मनुष्याभिप्रायम्; कपूयचरणाः श्वयोनिमित्यमनुष्यस्यापि श्रवणात्, गमनागमनाय च देवयानपितृयाणयोरेव मार्गयोराम्नानात्, पथ्यन्तरस्याश्रुतेः, 'जायस्वम्रियस्वेति तृतीयं स्थानम्' इति च स्थानत्वमात्रेणावगमात्पथित्वेनाप्रतीतेश्चन्द्रलोकादवतीर्णानामपि च तत्स्थानत्वसंभवादसंपूरणेन प्रतिवचनोपपत्तेः, अनन्यमार्गतया च तद्भोगविरहिणामपि ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवत्संयमनादिषु यमवश्यतायै चन्द्रलोकगमनोपपत्तेः, 'न कतरेणचन' इत्यस्यासंपूर-

### वेदान्तकल्पतरुः।

दिकारिणां चन्द्रप्राप्तिरेवेत्याह—**गमनागमनाय चेति**। द्वयोरेव मार्गयोराम्नानादित्यस्यासिद्धिमाशङ्क्याह—**जायस्वेति। स्थानत्वं** भोगायतनत्वम्। **ननु** "वेत्थ यथाऽसौ लोको न संपूर्यते" इत्यस्य प्रश्नस्य "जायस्वम्रियस्वे" त्येतत्प्रतिवचनम्। अस्मिंश्चन्द्रलोकासंपूरणहेतुत्वेनोक्तस्थानस्य मार्गान्तरत्वं प्रतीयते, एकमार्गत्वे हि सर्वकर्मिणां चन्द्रलोको निबिडः स्यादित्यत आह—**चन्द्रलोकादिति**। असंपूरणेन हि प्रतिवचनोपपत्तिः सा चन्द्रलोकादागत्येह श्वादिजन्मप्राप्त्यापि स्यादित्यर्थः। **ननु** पापिनां चन्द्रलोकगमनेन तत्र भोगः स्यात्ततश्चाकृताभ्यागमप्रसञ्जनमाशङ्क्याह—**अनन्यमार्गतयेति**। पूर्वं तृतीयस्थानशब्दस्य मार्गपरत्वाभावः प्रतिपादितः। इदानीं न कतरेण च नेत्यस्य तृतीयस्थानसूचकत्वं निराकरोति—**न कतरेण च नेतीति**। एतयोर्देवयानपितृयाणयोः कतरेण च न एकतरेणापि ये न गच्छन्ति तानि क्षुद्रभूतानि भवन्तीति निर्देशात् कीटादिप्राप्तिमार्गद्वयमुत्थितानामित्येतन्न मन्तव्यम्, वाक्यस्य चन्द्रलोकासंपूरणपरत्वादसंपूरणस्य च चन्द्रलोकादागतानां कीटादिप्राप्त्याप्युपपत्तेः करेणापि नेति निषेधो निन्दार्थ इत्यर्थः। तृतीयं स्थानमित्यत्र स्थानशब्दो यद्यपि शरीरे व्युत्पन्नत्वान्न मार्गमाह; तथापि मार्गमुपक्रम्य तृतीयत्वेन निर्दिश्यमानस्य स्वार्थस्य मार्गत्वं गमयत्यवान्तरसंख्यानिवेशस्य साजात्यापेक्षत्वादिति सिद्धान्तयति—**सत्यमित्यादिना**। असौ लोको न सपूर्यते

ये वै केचिदधिकृता अस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति ॥ १७ ॥ यत्पुनरुक्तं देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति, पञ्चम्यामाहुतावित्याहुतिसंख्यानियमादिति, तत्प्रत्युच्यते—

## न तृतीये तथोपलब्धेः ॥ १८ ॥

न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनामादर्तव्यः। कुतः? तथोपलब्धेः। तथाह्यन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते—'जायस्वम्रियस्वेत्येतत्तृतीयं स्थानम्' (छा० ५।१०।८) इति। अपिच 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५।३।३) इति मनुष्यशरीरहेतुत्वेनाहुतिसंख्या संकीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन; पुरुषशब्दस्य मनुष्यजातिवचनत्वात्। अपिच पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, नापञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते; वाक्यस्य द्व्यर्थतादोषात्। तत्र येषामारोहावरोहौ संभवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति, अन्येषां तु विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते ॥ १८ ॥

### भामती।

णप्रतिपादनपरतया मार्गद्वयनिषेधपरत्वाभावात् अनिष्टादिकारिणामपि चन्द्रलोकगमने प्राप्तेऽभिधीयते—सत्यं स्थानंतयावगतस्य न मार्गत्वं, तथापि वेत्थ यथाऽसौ मार्गो न संपूर्यते इत्यस्य प्रतिवचनावसरे मार्गद्वयनिषेधपूर्वं तृतीयं स्थानमभिवदन्नसंपूरणाय तत्प्रतिपक्षमाचक्षीत। यदि पुनस्तेनैव मार्गेणागत्य जन्ममरणप्रबन्धवत्स्थानमध्यासीत; नैतत्तृतीयं स्थानं भवेत्। नहीष्टादिकारिणश्चन्द्रमण्डलादवरुह्य रमणीयां निन्दितां वा योनिं प्रतिपद्यमानास्तृतीयं स्थानं प्रतिपद्यन्ते। तत्कस्य हेतोः? पितृयाणेन पथावरोहात्। तद्यदि क्षुद्रजन्तवोऽप्यनेनैव पथावरोहेयुः, नैतदेषां जन्ममरणप्रबन्धवत्तृतीयं स्थानं भवेत्। ततोऽवगच्छामः संयमनं सप्त च यातनाभूमीर्यमवशतया प्रतिपद्यमाना अनिष्टादिकारिणो न चन्द्रमण्डलादवरोहन्तीति। तस्मात् 'ये वै के च' इतीष्टादिकारिविषयं न सर्वविषयम्। पञ्चम्यामाहुताविति च स्वार्थविधानपरं, न पुनरपञ्चम्याहुतिप्रतिषेधपरमपि; वाक्यभेदप्रसङ्गात्। संयमने त्वनुभूयेति सूत्रेणावरोहापादानतया संयमनस्योपादानाच्चन्द्रमण्डलापादाननिषेध आञ्जसः। तथाच सिद्धान्तसूत्रमेव। पूर्वपक्ष-

### वेदान्तकल्पतरुः।

इत्युदाहर्तव्ये न्यायसाम्यादसौ मार्ग इत्युक्तम्। **तत्प्रतिपक्षं** तस्य मार्गद्वयस्य प्रतिद्वन्द्वीभूतं मार्गमेवाचक्षीत न शरीरमित्यर्थः। यदि पितृयाणेनैव गत्वा आगत्य च प्राप्तस्य क्षुद्रजन्तुदेहग्रहणस्य तृतीयस्थानत्वं निर्दिश्येत, नतु मार्गान्तरस्य, तर्हि "तद्य इह रमणीयचरणा" इत्यत्रापि प्राप्यमाणशुभाशुभशरीरस्य तृतीयत्वनिर्देशः स्यान्न चास्ति। तस्मात्तृतीयस्थानशब्दो मार्गवाचीत्याह—**नहीष्टादिकारिण इत्यादिना**। **ननु** ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव सर्वे गच्छन्तीति सर्वेषां चन्द्रगमनमुक्तमिति, **सत्यम्**; तत्सामान्यवचनं तृतीयमार्गविषयविशेषवचनेन सङ्कोचनीयमित्याह—**तस्माद्ये वै के चेति**। यदुक्तमाहुतावाप इत्याहुतिसंख्यानियमात् सर्वेषां स्वर्गगमनमिति, तत्राह—**स्वार्थविधानपरमिति**। भास्करेण सुकृतिनां दुष्कृतिभिः समानफलभाक्त्वमयुक्तमित्याशङ्कायां तन्निरसनेन पूर्वपक्षोपपादकतया संयमने त्वित्यादिसूत्राणि नीतानि। न भोगश्चन्द्रलोके दुष्कृतिनां, किंतु तद्द्वारा नरकं प्राप्यावरोहादिति विद्याकर्मणोरिति सूत्रादारभ्य सिद्धान्तो दर्शितः। तद्दूषयति—**अवरोहापादानतयेति**। संयमने त्वनुभूयावरोह इत्युक्ते संयमनस्य श्रुतस्यावरोहापादानता शीघ्रमवगम्यते। तुशब्देन च चन्द्रापादानता वार्यते। परस्य तु भोगवैषम्यमर्थाद्गम्येत, चन्द्रम-

### कल्पतरुपरिमलः।

तद्व्याचष्टे—**न्यायसाम्यादिति**। गन्तव्यलोकासंपूरणे मार्गासंपूरणमप्यर्थसिद्धमित्यर्थः। **भोगवैषम्यमर्थाद्गम्येत इति**। परमते दुष्कृतिनां चन्द्रमण्डलारोहोऽस्ति, तेषां सुकृतिभिर्भोगसाम्यं स्यात्, तच्चायुक्तमिति शङ्कां भोगवैषम्यप्रदर्शनेन निराकृत्य पूर्वपक्षोपपादनार्थमिदं सूत्रं, तत्र भोगवैषम्यं शब्दतो न प्रतीयते, किंतु संयमन इति स्थानविशेषकीर्तनेनार्थात्सिध्यति। नच यदर्थं सूत्रप्रवृत्तिस्तस्य शाब्दत्वे संभवति आर्थत्वं वक्तुं युक्तं। तस्माच्चन्द्रमण्डलारोहावरोहपूर्वपक्षनिरासस्तुशब्दार्थ इति सिद्धान्तसूत्रत्वमेव वक्तुं युक्तमित्यर्थः। **ननु** पूर्वपक्षसूत्रत्वेऽपि तुशब्दो भोगसाम्यशङ्काव्यावृत्त्यर्थ इति विवक्षितार्थः शाब्दो भवत्येव, **नैवम्**; सिद्धान्तसूत्रतायामनिष्टादिकारिणां संयमनेऽनुभूय प्रत्यवरोहणमित्येतदनन्तरं भाष्ये एवं भूतारोहावरोहाविति सूत्रशेषयोजनया नतु चन्द्रमण्डलारोहावरोहाविति तु शब्दार्थः स्पष्टं प्रतीयते। परमते भोगवैषम्यस्य शब्दार्थत्वाभावात् तत्प्रतिद्वन्द्विभोगसाम्यशङ्कानिरासस्तुशब्दार्थतया स्पष्टं न प्रतीयत इति वैषम्यसङ्का

## स्मर्यतेऽपिच लोके ॥ १९ ॥

अपिच स्मर्यते लोके। द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां चायोनिजत्वम्। तत्र द्रोणादीनां योषिद्विषयैकाहुतिर्नास्ति। धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः। यथा च तत्राहुतिसंख्यानादरो भवत्येवमन्यत्रापि भविष्यति। बलाकाप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति लोकरूढिः ॥ १९ ॥

## दर्शनाच्च ॥ २० ॥

अपिच चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्तिदर्शनादाहुतिसंख्यानादरो भवति। एवमन्यत्रापि भविष्यति ॥ २० ॥ ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति 'आण्डजं जीवजमुद्भिज्जम्' ( छा० ६।३।१ ) इत्यत्र त्रिविध एव भूतग्रामः श्रूयते, कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति ? अत्रोच्यते—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

'आण्डजं जीवजमुद्भिज्जम्' ( छा० ६।३।१ ) इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः; उभयोरपि स्वेदजोद्भिज्जयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः ॥ २१ ॥ इति तृतीयमनिष्टादिकार्यधिकरणम् ॥

---

### भामती ।

सूत्रत्वे तु शङ्कान्तराध्याहारेण कथंचिद्गमयितव्यम्। जीवजं जरायुजम्। संशोकजं संस्वेदजम् ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ इति तृतीयं अनिष्टादिकार्यधिकरणम् ॥

### वेदान्तकल्पतरुः ।

ण्डलादवरोह इति चाध्याहारापेक्षा स्यादित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ न सांपराय इति। **सम्यगवश्यम्भावेन परा** परस्ताद्देहपाताद् ईयते गम्यत इति संपरायः परलोकस्तत्प्राप्त्यर्थः साधनविशेषः **सांपरायः**। तं बालमविवेकिनं विशेषतो वित्तनिमित्तेन मोहेन **मूढं** छन्नदृष्टिमत एव प्रमादं कुर्वन्तं प्रति न भाति; स न केवलमज्ञ एव, किं तु विपरीतदर्श्यपि, यतोऽयमेव लोकः स्त्र्यन्नपानादिरस्ति **न पर इति मानी** मननशीलः। अतस्तदनुरूपमाचरन्पुनःपुनर्जननमरणप्राप्त्यामेव समापद्यत इति मृत्योर्नचिकेतसं प्रति वचनम्। वैवस्वतं जनानां परलोकगतानां संगमनं संगम्यं हविषा प्रीणयतेति। **जीवजं** जरायुजम्। अण्डजं हि किंचिद्वृश्चिकादि मातुरुदरं निर्भिद्य मृताज्जायते। उद्भिज्जं च किंचिद्वृक्षाद्यचेतनं पृथिव्याद्युद्भिद्य जायते। जरायुजं तु जीवतो जायत इति ॥ **इति तृतीयं अनिष्टादिकार्यधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

वात्। **ननु—**स्पष्टमप्रतीयमानोऽपि स एव तु शब्दार्थो वक्तव्यः ? अन्यथा विद्याकर्मणोः ( ब्र. अ. ३ पा. १ सू. १७ ) इति सूत्रस्य सिद्धान्तारम्भसूत्रत्वाभावे तद्गततुशब्दस्य वैफल्यप्रसङ्गादिति—**चेन्न ?** अत्रत्यतुशब्देन दुष्कृतिनां चन्द्रमण्डलारोहावरोहशङ्काया भोगराहित्येन नैष्फल्यान्निरासे सति सर्वे चन्द्रमसं गच्छन्तीति श्रुतिमवलम्ब्य पुनस्तच्छङ्कोत्थितौ मार्गद्वयभ्रष्टानां तृतीयस्थानोक्तिहेतुना सर्वशब्दसंकोचावश्यंभावप्रदर्शनेन तन्निरासार्थतया भाष्यएव तत्रत्यतुशब्दस्य व्याख्यातत्वात्। **चन्द्रमण्डलादवरोह इति चाध्याहारापेक्षा स्यादिति**। परमते हि प्रथमं चन्द्रमण्डलारोहः ततस्तस्मादवरोहस्तद्द्वारा संयमनं प्राप्यानुभूयावतरणमिति हि सूत्रार्थः। तथाच संयमनेऽनुभूय प्रत्यवरोहणमित्येतावत्यंशे मतद्वयेऽपि सूत्रयोजनायाः साम्येऽप्यारोहावरोहाविलत्र स्वमते श्रुतस्यैव संयमनस्यारोहणीयत्वम् अवरोहापादानत्वं च। परमते तु अध्याहृतस्य चन्द्रमण्डलस्येति विशेष इत्यर्थः। अण्डजमित्यादिविभागो न युक्तः,

---

[1] तत्र सूत्राणि १०—अनिष्टादिकारिणमपि च श्रुतम् १२ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् १३ स्मरन्ति च १४ अपि च सप्त १५ तत्रापि च तद्व्यापारादविरोधः १६ विद्याकर्मणोरिति तु प्रकृतत्वात् १७ न तृतीये तथोपलब्धेः १८ स्मर्यतेऽपि च लोके १९ दर्शनाच्च २० तृतीयशब्दावरोधः संशोकजस्य २१ ॥

( ४ अधिकरणम् ) **साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥**

इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम् । अथावरोहप्रकारः परीक्ष्यते । तत्रेयमवरोहश्रुतिर्भवति—'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' ( छा० ५।१०।५) इति । तत्र संशयः—किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते, किंवाकाशादिसाम्यमिति ? तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्त इति । कुतः ? एवं हि श्रुतिर्भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या न लक्षणा । तथाच वायुर्भूत्वा धूमो भवतीत्येवमादीन्यक्षराणि तत्तत्स्वरूपोपपत्तावाञ्जस्येनावकल्पन्ते । तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति । एवं प्राप्ते ब्रूमः—आकाशादिसाम्यं प्रतिपद्यन्त इति । चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं

## भामती ।

**साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥** यद्यपि यथेतमाकाशमाकाशाद्वायुमित्यतो न तादात्म्यं स्फुटमवगम्यते; तथापि वायुर्भूत्वेत्यादेः स्फुटतरं तादात्म्यावगमाद्यथेतमाकाशमित्येतदपि तादात्म्य एवावतिष्ठते। नचान्यस्यान्यभावानुपपत्तिः; मनुष्यशरीरस्य नन्दिकेश्वरस्य देवदेहरूपपरिणामस्मरणाद्देवदेहस्य च नहुषस्य तिर्यक्त्वस्मरणात् । तस्मान्मुख्यार्थपरित्यागेन न गौणी वृत्तिराश्रयणीया । गौण्यां च वृत्तौ लक्षणाशब्दः प्रयुक्तो गुणे लक्षणायाः संभवात् । **यथाहुः—** 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति । एवं प्राप्ते ब्रूमः—**साभाव्यापत्तिः** । समानो भावो रूपं येषां ते

## वेदान्तकल्पतरुः ।

**साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥** अत्राकाशं वायुमिति कर्मत्वनिर्देशाद्धूमो भवतीत्यादि भवति श्रुतेश्च संशयः, तदाह—**यद्यपीति** । युक्तं मार्गं प्रक्रम्य तृतीयत्वनिर्देशात्स्थानशब्दस्य मार्गलक्षणार्थत्वम्; नतु भवतिश्रुतेः सादृश्यलक्षणार्थत्वेऽस्ति निमित्तमिति संगतिः । वायुमिति कर्मत्वेन निर्दिष्टस्य वायुर्भूत्वेति तादात्म्यवत्त्वेन परामर्शकवाक्यशेषान्निर्णयेन पूर्वपक्षमाह—**वायुर्भूत्वेत्यादेरिति** । वाक्यशेषस्यासंभवदर्थत्वमाशङ्क्याह—**नचान्यस्येति** । नन्दिकेश्वरो हि रुद्रमाराध्य मानुषशरीरेणैव देवदेहत्वेन परिणनाम । नहुषोऽपीन्द्रत्वं गतोऽगस्त्यशापादजगरत्वं जगाम । एवं हि श्रुतिर्भवति । इतरथा लक्षणा स्यादिति भाष्यं तदनुपपन्नं भवति । श्रुतेर्हि सादृश्यालम्बनत्वे माणवके इव वह्निश्रुतेः गौणता स्यान्न लक्षणेत्याशङ्क्याह—**गौण्यामिति** । गौण्यामपि गुणस्य लक्षणास्ति, लक्षणायां त्वभिधेयसंबन्धात् प्रवर्तमानायां संबन्धिवस्त्वन्तरपरत्वम्, न संबन्धपरत्वम्, गुणात् प्रवर्तमानायां तु गौण्यां वृत्तौ गुणपरत्वं न गुणयुक्तवस्तुपरत्वमिति विवेकः । स्वाभाव्यापत्तिरिति पाठे स्वसमो भावो येषां ते स्वभावास्तेषां भावः । स्वाभाव्यमिति समपदाध्याहारः स्यादतः साभाव्यापत्तिरिति युक्तः पाठस्तं व्याचष्टे—**समान इति** । चन्द्रलोके उषित्वाऽथ तत्र प्रवृत्तफलकर्मक्षया-

## कल्पतरुपरिमलः ।

अण्डजादीनामपि जीवजत्वादित्याशङ्क्य, यज्जीवदवस्थाज्जायते तज्जीवजं विवक्षितम्, अण्डजादिकं तु किंचिन्मृतादेव जायते, किंचिदचेतनादेव भूतलाज्जलाद्वा जायते, अतो विभागो युक्त इत्याह—**अण्डजं हि किंचिदिति** ॥ १२ ॥ १३ ॥ ॥ १४॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ **इति तृतीयमनिष्टादिकार्यधिकरणम् ॥**

**साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ नतु भवतिश्रुतेः सादृश्यलक्षणार्थत्वेऽस्ति निमित्तमिति ।** यद्यपि वायुर्भूत्वा धूमो भवतीत्यादिवाक्येषु वायुधूमादिशब्दानां तत्तत्सदृशे गौणी वृत्तिरित्यपि वक्तुं शक्यम्; तथापि तद्भावस्तत्सादृश्येनौपचारिको व्याख्येय इति सिद्धान्तटीकानुसाराद्वाय्वादिसादृश्यं वाय्वादिभवनत्वेनोपचरितमित्यभिप्रेत्य सिद्धान्ते भवतिश्रुतेर्लक्षणोक्ता । **वाक्यशेषान्निर्णयेनेति** । अवरोहतां सूक्ष्मशरीरस्य क्रमेणाकाशवायुभावापत्तौ तदनुप्रवेशे कर्मतयाऽप्याकाशं वायुमिति द्वितीयानिर्देश उपपद्यते। धूमो भवतीत्यादिनिर्देशस्तु देवो भवति मनुष्यो भवतीत्यादिनिर्देशवत्तत्तच्छरीरकत्व एवोपपद्यत इति व्यवस्थितार्थेन वाक्यशेषे वा व्यवस्थितार्थस्योपक्रमस्य निर्णयो विवक्षितः । गङ्गायां घोष इत्यत्र गङ्गाशब्दस्य तीरे गङ्गासंबन्धितीरत्वेन लक्षणा, नतु तीरत्वसामान्येन; गङ्गायां घोष इति वाक्यश्रवणानन्तरं घोषं जिगमिषोर्विशिष्य गङ्गातीरे प्रवृत्तिदर्शनादित्येकं मतम् । तीरत्वेनैव लक्षणा, तस्य गङ्गासंबन्धस्त्वर्थात्सिद्ध्यति, मुख्यार्थासंबन्धिनो लक्ष्यत्वायोगादित्यपरं मतम् । अग्निर्माणवक इत्यत्र मुख्यार्थसादृश्यरूपपैङ्गल्यविशिष्टे माणवके गौणी वृत्तिरित्येकं मतम् । अग्निशब्दस्य माणवकवृत्तिपैङ्गल्यमात्रे लक्षणा, तदविनाभावाद्धर्मिप्रतीतिः, सैव **गौणी** वृत्तिरित्यपरं मतम् । तत्र लक्षणागौणवृत्त्योर्द्वितीयमताश्रयणेन भेदमाह—**लक्षणायामिति** । आकाशसदृशा भवन्तीति सूक्ष्मतापत्तिः

सूक्ष्ममाकाशसमं भवति ततो वायोर्वशमेति ततो धूमादिभिः संपृच्यत इति । तदेतदुच्यते—'यथेतमाकाशमाकाशाद्वायुम्' ( छा० ५।१०।५ ) इत्येवमादिना । कुत एतत् ? उपपत्तेः । एवं ह्येतदुपपद्यते । नह्यन्यस्यान्यभावो मुख्य उपपद्यते । आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते । विभुत्वाच्चाकाशेन नित्यसंबन्धवत्त्वान्न तत्सादृश्यापत्तेरन्यस्तत्संबन्धो घटते । श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव । अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते ॥ २२ ॥ इति चतुर्थं साभाव्याधिकरणम् ॥

( ५ अधिकरणम् ) **नातिचिरेण विशेषात् ॥ २३ ॥**

तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः । किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्त्युताल्पमल्पमिति । तत्रानियमो नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्त इदमाह—नातिचिरेणेति । अल्पमल्पं कालमाकाशादिभावेनावस्थाय

भामती ।

सभावास्तेषां भावः साभाव्यं सारूप्यं सादृश्यमिति यावत् । कुतः ? **उपपत्तेः** । एतदेव व्यतिरेकमुखेन व्याचष्टे—**नह्यन्यस्यान्यभावो मुख्य उपपद्यते** । युक्तमेतद्यद्देवशरीरमजगरभावेन परिणमते, देवदेहसमयेऽजगरशरीरस्याभावात् । यदि तु देवाजगरशरीरे समसमये स्यातां न देवशरीरमजगरशरीरं शिल्पिशतेनापि क्रियते । नहि दधिपयसी समसमये परस्परात्मनी शक्ये संपादयितुम्, तथेहापि सूक्ष्मशरीराकाशयोर्युगपद्भावान्न परस्परात्मत्वं भवितुमर्हति । एवं वाय्वादिष्वपि योज्यम् । तथाच तद्भावस्तत्सादृश्येनौपचारिको व्याख्येयः । नन्वाकाशभावेन संयोगमात्रं लक्ष्यतां, किं सादृश्येनेत्यत आह—**विभुत्वाच्चाकाशेनेति** ॥ २२ ॥ **इति चतुर्थं साभाव्यापत्त्यधिकरणम्** ॥

**नातिचिरेण विशेषात्** ॥ २३ ॥ 'दुर्निष्प्रपतरम्' इति दुःखेन निःसरणं ब्रूते नतु विलम्बेनेति मन्यते पूर्वपक्षी ।

वेदान्तकल्पतरुः ।

नन्तरमेतमेव वक्ष्यमाणं पन्थानं पुनर्निवर्तन्ते, पुनः शब्दप्रयोगादनादौ संसारे पूर्वमपि चन्द्रमण्डलं गता निवृत्ताश्चेति गम्यते । कोऽसावध्वा यं प्रति निवर्तन्त इति, उच्यते—**यथेतम्** । यथागतम् । मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमिति गमनक्रमः । आगमनेऽप्याकाशनिर्देशाद् यथेतमिति प्रतीयते । आगमने पितृलोकाद्यसंकीर्तनादभ्रादिसंकीर्तनाच्चानेवमपीति गम्यतेऽतो यथेतमिति उपलक्षणम् । आकाशं प्रतिपद्यते, या आपश्चन्द्रमण्डले शरीरमारब्धवन्त्यस्ताः कर्मक्षये द्रुता आकाशगता आकाशसदृशा भवन्ति । तदुपहिता अनुशयिनोऽप्याकाशसमाना भवन्ति । आपो वायुना इतश्चामुतश्च नीयमाना वायुसमा भवन्ति । अनुशय्यपि तादृशो भवति । तदनन्तरं गमनकाले यो धूम आसीत् तत्तुल्यो भवति । ततः अपां भरणात् संभृतोदकमभ्रं तद् भवति । ततो जलसेचनान्मेघो वर्षणकर्ता संभवति । तद्भावं तत्सादृश्यमापद्य प्रवर्षति । वर्षधाराभिरनुशयी पृथिवीमापद्यत इत्यर्थः ॥ २२ ॥ **इति चतुर्थं साभाव्यापत्त्यधिकरणम्** ॥

**नातिचिरेण विशेषात्** ॥ २३ ॥ आकाशादिसादृश्यचिराचिरत्वविचारणात्संगतिः । **स्यादेतत्**—अतो वै खलु दुर्निष्प्रपततरमिति दुरुपसर्गतरप्प्रत्ययाभ्यां व्रीह्यादिप्राप्तिनिर्गमनस्यैव विलम्बितत्वप्रतीत्यन्यथानुपपत्त्याऽऽकाशादेर्वेगान्निष्क्रमणं प्रतीयते, ततः कथं तत्रापि चिरावस्थानेन पूर्वपक्षोऽत आह—**दुर्निष्प्रपततरमिति** । दुःशब्दो ह्येकदेशलक्षणया दुःखं वक्ति, नतु व्यवधानात् । विलम्बमित्यर्थः । उत्तराधिकरणेऽनुशयिनां दुःखनिषेधान्मन्यते इत्युक्तम् ।

कल्पतरुपरिमलः ।

सादृश्यं । **गमनकाले यो धूम आसीदिति** । यद्यपि धूममात्रं श्रुतम्; तथापि गमनकालोक्तप्रत्यभिज्ञानादेवमुक्तम् । एवमुक्तिश्चाकाशवद्धूमस्यापि पूर्वसिद्धतया ताद्रूप्येणानुशयिनां सूक्ष्मशरीरस्य परिणामो न संभवतीति न्यायसाम्यसूचनार्थम् । एवमाकाशवाक्ये धूमवाक्ये च ताद्रूप्येण परिणत्यसंभवात् तत्सादृश्यार्थकत्वव्यवस्थितौ वाक्येष्वपि तथैवार्थव्यवस्था सिध्यतीति तात्पर्यम् । **तत्तुल्यो भवतीति** । वायुस्वभावानुवृत्तिवद्धूमादिस्वभावानुवृत्तिस्तेन तेन तुल्यता ॥२२॥ **इति चतुर्थं साभाव्यापत्त्यधिकरणम्** ॥[1]

**नातिचिरेण विशेषात्** ॥ २३ ॥ आकाशादिष्वनुशयिनां चिरमचिरं वाऽवस्थानमिति विशये नियमकारिणः शास्त्रस्याभावाद् अनियम इति पूर्वपक्षो भाष्ये दर्शितः, स न युक्तः; व्रीह्यादिषु चिरावस्थानश्रुतिबलादाकाशादिष्वचिरावस्थानलाभादित्याशङ्क्य टीकाकारैस्तदुपपादनं कृतम्—**दुर्निष्प्रपतरशब्दो न चिरावस्थानवाचकः किंतु**

[1] तत्र सूत्रम् १—साभाव्यापत्तिरुपपत्तेः २२ ॥

वर्षधराभिः सहेमां भुवमापतन्ति। कुत एतत्? विशेषदर्शनात्। तथाहि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि—'अतो वै खलु दुर्निष्प्रपतरम्' (छा० ५।१०।६) इति। तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः। दुर्निष्प्रपतरं दुर्निष्क्रमतरं दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः। तदत्र दुःखं निष्प्रपतनं प्रदर्शयन्पूर्वेषु सुखं निष्प्रपतनं दर्शयति। सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः; तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासंभवात्। तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति ॥ २३ ॥ इति पञ्चमं नातिचिराधिकरणम् ॥

## भामती।

विना स्थूलशरीरं न सूक्ष्मशरीरे दुःखभागीति दुर्निष्प्रपतरं विलम्बं लक्षयतीति राद्धान्तः ॥ २३ ॥ इति पञ्चमं नातिचिराधिकरणम् ॥

## वेदान्तकल्पतरुः।

एतदेव विवृण्वन् सिद्धान्तयति—**विनेति**। न चैवमस्थानारम्भः; अनुशयिनामाकाशादिप्रवर्षणान्तसादृश्यं चिरभावि अनुशयिसादृश्यरूपत्वाद् व्रीह्यादिसादृश्यवदित्यनुमानस्य प्रागुक्तश्रुतार्थापत्त्या बाधार्थमधिकरणान्तरारम्भोपपत्तेरिति ॥२३॥ **इति पञ्चमं नातिचराधिकरणम्** ॥[1]

## कल्पतरुपरिमलः।

**दुःखनिष्क्रमणवाचकः। अतस्तद्वशादाकाशादिभ्यः सुखनिष्क्रमणं लभ्यते, ननु चिरावस्थानमिति**। एवं पूर्वपक्षोपपादनमपि न युक्तम्; व्रीह्यादिभावेऽनुशयिनां दुःखसद्भावस्यानन्तराधिकरणे निषेत्स्यमानतया दुर्निष्प्रपतरमित्यस्य लक्षणया विलम्बपरत्वादित्यपरितोषादाचार्यैः सामान्यतो दृष्टावलम्बनपूर्वपक्षं प्रदर्श्य तस्य श्रुतार्थापवादः सिद्धान्ते वर्णितः। सामान्यतो दृष्टमात्रावलम्बनः पूर्वपक्षस्तुच्छ इति तत्राप्यपरितोषादाचार्यैः पूर्वपक्षस्येत्थमुपोद्बलनं कृतम्। अतो वै खल्वित्यत्रातःशब्दः प्रकृतानामाकाशादीनां सर्वेषां परामर्शक इति सर्वेष्वपि तेषु चिरावस्थानं श्रुतित एव प्रतीयते तदनुग्राहकमनुमानमिति। अतःशब्दः समनन्तरवाक्योक्तान् व्रीह्यादीनेव परामृशेद्, न व्यवहितानाकाशादीन्; सर्वनामस्वाभाव्यात्तथा च व्रीह्यादिषु चिरावस्थानश्रुतिसामर्थ्यादाकाशादिष्वचिरावस्थानलाभात्तद्बाधितमनुमानमिति सिद्धान्तो वर्णितः। **वस्तुतस्तु**—यथाभाष्यमनियमपूर्वपक्ष एव दृढः। "अतो वै खलु दुर्निष्प्रपतरमिति" वाक्येन व्रीह्यादिषु चिरावस्थाननियमो बाध्यते न तत्सत्तामात्रम्; चिरमचिरं वेत्यनियतस्य चिरावस्थानस्य व्रीह्यादिष्ववस्थानोक्त्यैव लब्धत्वेन तस्याविधेयत्वात्। तथाच विशिष्य व्रीह्यादिषु चिरावस्थाननियमप्रतिपादनसामर्थ्यादाकाशादिभ्यश्चिरावस्थाननियम एव व्यावर्तते, न त्वनियतं चिरावस्थानमपि। अत एवार्धमन्तर्वेद्यर्धं बहिर्वेदीति पूयमानदेशविधावन्तर्वेदीत्येव विधिस्तत्सामर्थ्यादर्धान्तरं बहिर्वेदीति लभ्यते। अतोऽर्धं बहिर्वेदीत्यनुवाद इति पूर्वपक्षे दूषणमुक्तम् "तथा यूपस्य वेदि" (ब्र. अ. ३ पा. ७ सू. १३) इत्यधिकरणे—अर्धमन्तर्वेदीति नियमविधिसामर्थ्यादर्धान्तरादन्तर्वेदिनियम एव व्यावर्तते, नान्तर्वेदित्वरूपमित्यर्धान्तरमन्तर्वेदिवबहिर्वेदिवेत्यनियमः प्राप्नोति, न तु बहिर्वेद्येवेति नियमो लभ्यते। अतोऽर्धं बहिर्वेदीत्यनुवाद इति पूर्वपक्षे पाक्षिकानुवादोऽयं स्यादिति नित्यवच्छ्रवणविरोधः, तत्परिहारायार्धं बहिर्वेदीत्यपि विध्यन्तराश्रयणे वाक्यभेदः, तस्मादन्तर्वेदिबहिर्वेदिशब्दाभ्यां लक्षितोऽन्तरालदेशो विधीयत इत्यङ्गीकर्तव्यमिति। एवं प्राप्तस्य पूर्वपक्षस्य निरासप्रकारोऽपि भाष्य एव विशेषादिति सौत्रपदव्याख्यानेन स्पष्टीकृतः। स इत्थम्। दुर्निष्प्रपतरमिति तरप्प्रत्ययार्थस्यातिशयस्य प्रतियोग्याकाङ्क्षायां प्रागनुक्रान्तानाम् आकाशादीनां बुद्धिसंनिधानात्तत्प्रतियोगित्वेनान्वयः स्यात्। तथा च व्रीह्यादिष्वाकाशाद्यपेक्षा चिरमवस्थानोक्तावाकाशादिष्ववस्थानस्य तदपेक्षयाऽल्पकालत्वं पर्यवस्यतीति। **ननु**—असिद्धस्तरप्प्रत्ययस्तकारलोपवद्रेफोपजनस्यापि छान्दसस्य वक्तुं शक्यत्वादिति—**चेन्न**; उभयथासंभवेऽर्थातिशयसिद्ध्यर्थं तकारलोपेन तरप्प्रत्ययसद्भावस्यैवाश्रयितुं युक्तत्वात्, दुरुपपदात् पतिधातोः खलर्थे डप्रत्यये सति दुर्निष्प्रपतरमिति रूपसिद्धौ विनैव तकारलोपं तरप्प्रत्ययान्तत्वस्य निर्वक्तुं सुकरत्वाच्च। "अन्येष्वपि दृश्यत" इति जनेरुपपदान्तरेषु डप्रत्ययविधायकसूत्रे "अन्येभ्योऽपीति दृश्यत" इति वक्तव्यमिति वार्तिककृता धात्वन्तरेभ्योऽपि डप्रत्ययस्यानुशिष्टत्वात्, तत्र दृशिग्रहणं सर्वोपाधिव्यभिचारार्थमिति वृत्तिकारेणोक्ततया कृत्यल्युटो बहुलमिति बहुलग्रहणादन्येऽपि कृतः प्राप्तमभिधेयं व्यभिचरन्तीति तेनैवोक्ततया च तस्य डप्रत्ययस्य खलर्थवृत्तित्वोपपत्तेश्च। एतेनातःशब्दः

---

१ तत्र सूत्रम् १—नातिचिरेण विशेषात् २३ ॥

(६ अधिकरणम्) **अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥**

तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते—'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' (छा० ५।१०।६) इति । तत्र संशयः—किमस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो भवन्त्याहोस्वित्क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति । किं तावत्प्राप्तम् ? स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति । कुत एतत् ? जनेर्मुख्यार्थत्वोपपत्तेः स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः । पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः । तस्मान्मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म । श्वादिजन्मवत् । यथा श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वेति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति । एवं व्रीह्यादिजन्मापीति । एवं प्राप्ते ब्रूमः—अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते न तत्सुखदुःखभाजो भवन्ति । पूर्ववत् । यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रम् । एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम् । कुत एतत् ? तद्वदेवेहाप्यभिलापात् । कोऽभिलापस्य तद्वद्भावः । कर्मव्यापारमन्तरेण संकीर्तनम् । यथाकाशादिषु प्रवर्षणान्तेषु न कंचित्कर्मव्यापारं परामृशत्येवं व्रीह्यादिजन्मन्यपि; तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम् । यत्र तु सुखदुःखभाक्त्वमभिप्रैति परामृशति तत्र कर्मव्यापारं रमणीयचरणाः कपूयचरणा इति च । अपिच मुख्येऽनुशयिनां व्रीह्यादिजन्मनि व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः । यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन्पीड्यमाने प्रवसतीति प्रसिद्धम् । तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत । अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति । एतेन जनेर्मुख्यार्थत्वं प्रतिब्रूयादुपभोगस्थानत्वं च स्थावरभावस्य । नच वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे । भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानामेतदुपभोगस्थानम्, चन्द्रमसस्त्ववरोहन्तोऽनुशायिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे ॥ २४ ॥

**अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥**

यत्पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवानुशयिनां व्रीह्यादिजन्मास्तु तत्र गौणी कल्पनानर्थिकेति, तत्परिह्रियते । न, शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य । अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणम्; अतीन्द्रियत्वात्तयोः अनियतदेशकालनिमित्तत्वाच्च । यस्मिन्देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेष्वधर्मो भवति । तेन शास्त्रादृते धर्माधर्मविषयं विज्ञानं न कस्यचिदस्ति । शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः, स कथमशुद्ध इति शक्यते

---

भामती ।

**अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥** आकाशसारूप्यं वायुधूमादिसंपर्कोऽनुशयिनामुक्तः, इहेदानीं

वेदान्तकल्पतरुः ।

**अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥** अत्र जायन्त इति श्रुतेः कर्मपूर्वकत्वाश्रुतेश्च संशयो भवति । श्रुतेरुपचरितार्थत्वस्योक्तत्वात् पुनरुक्तिमाशङ्क्याह—**आकाशसारूप्यमिति** । सर्वगताकाशसंयोगस्यासाध्यत्वात्सादृश्यं तेनोक्त-

कल्पतरुपरिमलः ।

संकोचकाभावादाकाशादिसर्वपरामर्शक इति शङ्कापि निरवकाशीकृता; आतिशायनिकप्रत्ययार्थप्रतियोगित्वेनान्वयिताया वक्तव्यत्वेन तस्याव्यवहितव्रीह्यादिमात्रपरत्वावश्यंभावाद् व्रीह्यादिभ्यो दुर्निष्प्रपतरत्वोक्तिसामर्थ्यादाकाशादिभ्योऽपि दुर्निष्प्रपतरत्वमात्रमस्तीति तेष्वपि चिरावस्थानावगमात् सूत्रे नातिचिरेणेत्यतिचिरावस्थाननिषेधः कृतः इत्यास्तां विस्तरः । **कथं तत्रापि चिरावस्थानेन पूर्वपक्ष इति** । चिरावस्थानस्य कोट्यन्तरतया प्रवेशनेन कथं पूर्वपक्ष इत्यर्थः । भाष्योक्ते ह्यनियमपूर्वपक्षे चिरावस्थानमपि कोट्यन्तरत्वेन प्रविशति । **व्यवधानादिति** । विलम्बे दुरुपसर्गस्याप्रसिद्धत्वेन साक्षाद्वाचकतया तस्मिन्नप्रवृत्तेरित्यर्थः ॥ २३ ॥ **इति पञ्चमं नातिचिराधिकरणम् ॥**

भामती ।

व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त इति श्रूयते । तत्र संशयः—किमनुशयिनां भोगाधिष्ठानं व्रीहियवादयः स्थावरा भवन्ति, आहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेष्वेषु संसर्गमात्रमनुभवन्तीति । तत्र मनुष्यो जायते देवो जायत इत्यादौ प्रयोगे जनेः शरीरपरिग्रहे प्रसिद्धत्वादत्रापि व्रीह्यादिशरीरपरिग्रह एव जनेर्मुख्यार्थ इति व्रीह्यादिशरीरा एवानुशयिन इति युक्तम् । नच—रमणीयचरणाः कपूयचरणा इतिवत् कर्मविशेषासंकीर्तनात्तदभावे व्रीह्यादीनां शरीरभावाभावात्क्षेत्रज्ञान्तराधिष्ठितानामेव तत्संपर्कमात्रमिति—सांप्रतम्; इष्टादिकारिणामिष्टादिकर्मसंकीर्तनादिष्टादेश्च हिंसादोषदूषितत्वेन सावद्यफलतया चन्द्रलोकभोगानन्तरं स्थावरशरीरभोग्यदुःखफलत्वस्याप्युपपत्तेः । नच—'न हिंस्यात्सर्वा भूतानि' इति हिंसासामान्यशास्त्रस्याग्नीषोमीयपशुहिंसाविषयविशेषशास्त्रेण बाधनं, सामान्यशास्त्रस्य सामान्यद्वारेण विशेषोपसर्पणं विलम्बेनेति साक्षाद्विशेषस्पृशः शास्त्राच्छीघ्रतरप्रवृत्ताद्दुर्बलत्वादिति—सांप्रतम्; नहि बलवदित्येव दुर्बलं बाधते किंतु सति विरोधे । नचेहास्ति विरोधः, भिन्नगोचरचारित्वात् । 'अग्नीषोमीयं पशुमालभेत' इति हि क्रतुप्रकरणे समाम्नातं क्रत्वर्थतामस्य गमयति, न त्वपनयति निषेधापादितामस्य पुरुषं प्रत्यनर्थहेतुताम् । तेनास्तु निषेधादस्य पुरुषं प्रत्यनर्थहेतुता, विधेश्च क्रत्वर्थता को विरोधः ? **यथाहुः**—'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तत्र वैगुण्यं यथा चोदितसिद्धितः' इति । तस्माज्जनेर्मुख्यार्थत्वाद्व्रीह्यादिशरीरा अनुशयिनो जायन्त इति प्राप्तेऽभिधीयते—भवेदेतदेवं यदि रमणीयचरणाः कपूयचरणा इतिवद्व्रीह्यादिष्वनुशयवतां कर्मविशेषः कीर्त्येत, न चैतदस्ति । नचेष्टादेः कर्मणः स्थावरशरीरोपभोग्यदुःखफलप्रसवहेतुभावः संभवति; तस्य धर्मत्वेन सुखैकहेतुत्वात् । नच तद्गतायाः पशुहिंसाया 'न हिंस्यात्' इति निषेधात्क्रत्वर्थाया अपि दुःखफलत्वसंभवः; पुरुषार्थाया एव न हिंस्यादिति प्रतिषेधात् । **यथाहि**—न हिंस्यादिति निषेधस्य निषेध्याधीननिरूपणतया यदर्थं

वेदान्तकल्पतरुः ।

मित्यर्थः । अन्यस्यान्यथाभावानुपपत्तेर्हि तत्रोपचार उक्तः, अत्र तु जायते इति शब्दस्य देहग्रहणे रूढत्वात्तदाशङ्कते, तच्चाविरुद्धमिति न गौणत्वावहमित्यर्थः । अस्मिन्प्रकरणे यन्मुख्यं जन्म तत्कर्मसाध्यं श्रुतं, यथा रमणीयचरणा इत्यादि । अत्र तु व्यापककर्मजत्वश्रुतिव्यावृत्त्या तद्व्याप्यमुख्यत्वव्यावृत्तिमाशङ्क्य हेत्वसिद्धिमाह—**नच रमणीयेत्यादिना ।** शरीरभावः शरीरत्वं तस्याभावादित्यर्थः । **नन्विष्टादेर्विहितत्वात्** पुण्यस्य कथं स्थावरशरीरप्राप्तिहेतुता ? अत आह—**इष्टादेश्चेति ।** विहितत्वेऽपि तद्गतपशुहिंसोच्छिष्टसोमभक्षादेर्निषिद्धत्वाद् दुःखहेतुतेत्यर्थः । सामान्यविषयनिषेधशास्त्रस्य विशेषशास्त्रेण बाधनं स्यात्, कुतः ? तस्य ततो दुर्बलत्वादित्येतन्न च सांप्रतमिति योजना । सामान्यशास्त्रस्य दौर्बल्ये हेतुः—**सामान्यद्वारेणेति ।** विशेषशास्त्रप्राबल्ये हेतुः—**साक्षादिति । ननु** क्रतुप्रकरणस्थहिंसाविधेर्हिंसागतक्रतुशेषत्वं विषयः, हिंसानिषेधस्य तद्गतानर्थफलत्वं गोचर इति विषयभेदाद्विधिनिषेधयोरविरोधश्चेत्तर्हि क्रतुमध्ये निषिद्धहिंसानुष्ठाने क्रतुवैगुण्यं स्यादित्याशङ्क्याह—**यथाहुरिति ।** कलञ्जभक्षणादिनिषेधानां पुरुषार्थत्वात्तदतिक्रमे पुरुषस्यैव प्रत्यवायो न क्रतोर्वैगुण्यम् । यथाविहितस्य तस्य सिद्धेः । नहि क्रतुशेषः प्रतिषेधो यतस्तदतिलङ्घनात्क्रतुवैगुण्यं स्यादिति भट्टोक्तेरर्थः । एवं हि विहितायाअपि हिंसाया दुःखफलत्वं, यदि विधिनिषेधयोरेकविषयत्वं, तदेव नास्तीत्याह—**पुरुषार्थाया एवेति ।** क्रत्वर्थो हि प्रतिषेधः क्रत्वर्थां हिंसां प्रतिषेधेत् । तत्र यद्ययं न हिंस्यादिति निषेधः क्रत्वर्थां हिंसां प्रतिषेधेत्, तर्ह्येव क्रत्वर्थः

कल्पतरुपरिमलः ।

**अन्याधिष्ठिते पूर्ववदभिलापात्** ॥ २४ ॥ **ननु क्रतुप्रकरणस्थेति ।** यथा खल्वामतकं कोष्ठे कफं हन्तीति वाक्यस्येष्टसाधनत्वं विषयः कण्ठे कफं करोतीति वाक्यस्यानिष्टसाधनत्वं विषय इति विषयभेदादविरोधः, एवं विधिनिषेधयोरविरोधश्चेत्तर्हि क्रतुहिंसा विहितापि निषिद्धेति वक्तव्यम् । ततश्च क्रतुमध्ये निषिद्धानुष्ठाने कथं क्रतुवैगुण्यं न स्यादिति शङ्कार्थः । **नहि क्रतुशेषः प्रतिषेध इति ।** यथा कलञ्जभक्षणप्रतिषेधस्य क्रतुशेषत्वाभावात्कलञ्जभक्षणेन न क्रतोर्वैकल्यम्, एवं हिंसानिषेधस्यापि क्रतुशेषत्वाभावाद्धिंसया न क्रतोः साकल्यमेव, किंतु क्रतुसाकल्यलोभात्पुरुषार्थनिषेधमतिक्रामतः पुरुषस्य परं प्रत्यवाय इति परिहारार्थः । **एवं विहिताया अपीति ।** यथेष्टसाधनत्वबोधनास्पदमेव तक्रपानमनिष्टसाधनत्वबोधनस्याप्यास्पदम्, एवं विहितैव हिंसा यदि निषेधस्यापि गोचरा स्यात्तर्ह्येव सा दुःखफला स्याद्, नत्वेवं निषेधस्य पुरुषार्थहिंसामात्रविषयत्वादित्याहेत्यर्थः । **ननु** पुरुषार्थहिंसाया एव निषेध्यत्वादिति हेतुसाधनाय प्रवृत्ते तथाहीत्यादिटीकाग्रन्थे हिंसानिषेधस्यानृतवदननिषेधवत् क्रतुप्रकरणाम्नानाभावात् क्रत्वर्थहिंसा न निषेध्येत्येतावति वक्तव्ये यदर्थं निषेध्यं तदर्थो निषेध इति निषेध्यनिषेधयोरेकविषयत्वनियमोक्तिः क्वोपयुज्यत इत्याशङ्क्य तदुपयोगं दर्शयन्नवतारयति—**क्रत्वर्थो हि प्रतिषेध इति । अयमाशयः** क्रत्वर्थपुरुषार्थोभयविधस्य हिंसामात्रस्य पुरुषार्थो निषेध इति सांख्यमतेन खल्वत्र पूर्वपक्षः कृतः । न तन्मतं युज्यते । निषेध्यनिषेधयोरेकविषयत्वनियमेन

## भामती ।

निषेध्यं तदर्थ एव निषेधो विज्ञायते । नचैतत् 'नानृतं वदेत्' 'न तौ पशौ करोति' इतिवत्कस्यचित्प्रकरणे समाम्नातं

## वेदान्तकल्पतरुः ।

स्यात्तच नास्तीति वदिष्यन् निषेध्यनिषेधयोरेकार्थतामाह—**तथाहीति** । यो हि यदर्थं प्रवृत्तो यस्माद्विषयाद् निवार्यते तन्निषेधोऽपि तदर्थं इत्यर्थः । तर्हि क्रत्वर्थहिंसाप्रतियोगिकोऽयं प्रतिषेधोऽत एव क्रत्वर्थश्चेत्याशङ्क्याह—**नचैतदिति** । येन प्रकरणाम्नातत्वेनानृतवदनस्य क्रत्वर्थत्वेन तन्निषेधोऽपि क्रत्वर्थः स्याद्, येनच तेनैव प्रकरणाम्नातत्वेन पशौ निषिद्धयोराज्यभागयोः क्रत्वर्थत्वात्तन्निषेधस्यापि क्रत्वर्थत्वं भवेत्, तेन प्रकारेण न हिंस्यादित्येतत् कस्यचित्प्रकरणे न समाम्नातमित्यर्थः । **नन्वाज्यभागौ** भवेतां क्रत्वर्थौ निषेधस्त्वभावार्थः कथं क्रत्वर्थः स्यादत आह—**एवं हि सतीति** । पशुयागेऽतिदेशप्राप्ताज्यभागनिषेधे सति तद्वर्जनयुक्ताङ्गान्तरैर्भावार्थरूपैराज्यभागसाध्य उपकारो जन्यते न केवलनिषेधमात्रात् । अतश्च विकल्प आज्यभागतदभावयोः । फलभूमार्थिनस्त्वनुष्ठानम् । प्राभाकरास्तु पर्युदासमेतमाहुः । अत्र च पशुप्रकरण एवैतद्वाक्यमस्तीति कृत्वा प्रतिषेधत्वमस्योक्तम् । गुणोपसंहारे तु हानौ तूपायनेत्यधिकरणे ( ब्र. अ. पा. ३ सू. २६) दर्शपूर्णमासप्रकरणपठितस्य न तौ पशावित्यस्य पाशुकप्रकरणाभ्युपगतैतद्वाक्यसिद्धार्थानुवादित्वेनार्थवादत्वं वक्ष्यतीति न विरोध इति । अनृतवदननिषेधस्य क्रत्वर्थत्वेऽधिकरणमनुक्रम्यते—दर्शपूर्णमासयोराम्नायते नानृतं वदेदिति । तत्रायं निषेधः क्रत्वर्थः पुरुषार्थो वेति संशयः, तदर्थं प्रतिषेध्या प्रवृत्तिः किमर्थेति च चिन्त्यते । यो हि यदर्थं प्रवृत्तः सन्निवार्यते स तदर्थमेव च निवार्यते । प्रवृत्तिकैमर्थ्यनिर्णयाय च आख्यातेन कर्ताऽभिधीयते न वेति च विचार्यते । अभिहिते हि कर्तरि तस्य प्रत्ययेन प्राधान्येनाभिहितत्वात् प्रवृत्तेः प्रयोजनाकाङ्क्षावेलायां श्रुतिसंनिधापितकर्त्रपेक्षितोपायत्वं प्रकरणबाधयाऽवगम्येत, अनभिहिते तु बाधकश्रुत्यभावादर्थाच्च कर्तुः प्रवृत्तिं प्रति गुणत्वेनैवावगतेः प्रकरणेन प्रवृत्तेः क्रत्वर्थताऽवधार्यते । तत्र पचति देवदत्त इत्याद्याख्यातैः कर्त्रवगमाद् लः कर्मणि चेति सूत्रगतचकारेण कर्तर्यपि लकारविधानाद् लकारादेशानां च तिबादीनां स्थानिवद्भावेन कर्तृवाचकत्वादाख्याताभिधेयः कर्तेति प्रापय्य राद्धान्तितं शेषलक्षणे । क्रत्वर्थोऽयं प्रतिषेधः, आख्यातेन कर्तुरनभिधानात् । या त्वाख्यातात्कर्तृप्रतीतिः सा आख्याताभिहितभावनया कर्तुरुपस्थापनादन्यथासिद्धा । सूत्रं त्वभिधेयत्वबोधत्वयोरुदासीनम् । **अपिच** लः कर्मणीत्यभिधाय द्व्येकयोरिति सूत्रेण द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचनविधानात् कर्तृसंख्यैवाख्यातवाच्या न कर्ता । संख्येयकर्तृविवक्षायां हि द्व्येकेष्विति स्याद्; द्वयोरेकस्य च कर्तॄणां बहुत्वात् । आख्यातेन कर्तुरनभिधानेऽनभिहिताधिकारविहिततृतीयापत्तेः पचति देवदत्तेनेति प्रयोगप्रसङ्गः । गम्यमानकर्तुः संख्याया अनेनाभिधाने करणादिसंख्यानामप्याख्यातेनाभिधानप्रसङ्गः । पच्यत इत्यत्रापि कर्तुर्ग-

## कल्पतरुपरिमलः ।

निषेधस्य पुरुषार्थत्वे निषेध्यहिंसाया अपि पुरुषार्थत्वावश्यंभावादित्येवं नियमकथनस्य सांख्यप्रक्रियानिराकरणेन हेतुसिद्ध्युपयोगित्वं तावत् स्पष्टमेव, तर्हि नियमाऽविरोधाय निषेध्यनिषेधावुभावपि क्रत्वर्थौ स्ताम्, एवमपि पुरुषार्थीया एव निषेधादिति हेतोरसिद्धिर्भवेदिति शङ्कोत्थानेऽपि नियमवर्णनस्यास्त्युपयोगः, तस्यां शङ्कायां निषेध्यस्य क्रत्वर्थत्वासंभवेन दूषितायां तद्वैनारभ्याधीतस्य हिंसानिषेधस्यानृतवदननिषेधवत् क्रतूपस्थापकप्रकरणाभावेन क्रत्वर्थनिषेधत्वासंभवे क्रत्वर्थत्वं पुरुषार्थत्वं च विशेषणं विना हिंसिधात्वर्थमात्रस्य निषेधोऽस्तु । तथाच क्रत्वर्थहिंसाया अपि निषेधो लभ्यतइति शङ्कायां निषेधस्य क्रत्वर्थत्वपुरुषार्थत्वबोधनाय वाक्यवैरूप्यापत्त्या तद्दूषणे चास्त्यस्य नियमवर्णनस्योपयोग इति । एवंच क्रत्वर्थो हि प्रतिषेधः क्रत्वर्थं प्रतिषेधेदिति हिंसानिषेधयोर्वक्ष्यमाणनियमलभ्यस्य क्रत्वर्थत्वस्य वचनमग्रे शङ्किष्यमाणस्य क्रतुपुरुषोभयार्थत्वस्याप्युपलक्षणमिति वक्ष्यन्नित्येतत्क्रतुपुरुषोभयार्थत्वं नास्तीति वक्ष्यमाणान्तरस्याप्युपलक्षणम् । तेन प्रकारेण न हिंस्यादित्येतत्कस्यचित्प्रकरणे न समाम्नातमिति दार्ष्टान्तिकांशमाकाङ्क्षितमध्याहृत्य टीकार्थः कथितः । **कथं क्रत्वर्थः स्यादिति** । आज्यभागजन्योपकारस्याभावेनासंभवदिति भावः । **प्राभाकरास्त्विति** । प्राभाकराणां पर्युदासपक्षो दर्शपूर्णमासप्रकरणगतवाक्यस्यार्थवादत्वपक्षश्च हानौ तूपायने ( ब्र. अ. ३ पा. ३ सू. २६ ) त्यधिकरण एव स्पष्टीकरिष्यते । **प्रवृत्तिकैमर्थ्यनिर्णयाय चेति** । यद्याख्यातेन कर्ताऽभिधीयते, तदा श्रुत्युपात्तकर्तृपुरुषशेषभूतमनृतवदनं निषेध्यमिति तन्निषेधोऽपि पुरुषार्थो भवति । यदि तेन कर्ता नाभिधीयते, तदा प्रकरणसन्निधापितक्रत्वर्थं तन्निषेध्यमिति तन्निषेधोऽपि क्रत्वर्थो भवतीति विचाराणां फलफलिभावमाह—**अभिहितेति** । **ननु**—न तौ पशौ करोतीति निषेधे आज्यभागवन्नानृतं वदेदिति निषेधे निषेध्यमनृतवदनं क्रत्वर्थतया विहितं नास्तीति—**चेत्, सत्यम्;** क्रत्वर्थद्रव्यादिसंपादनोपायभूतं यदनृतवदनं तदविहितमपि द्रव्यार्जनवत्क्रतूपकारकतया क्रत्वर्थमिह विवक्षितम् । **अथवा**—व्रीहिभिर्यक्ष्य इति संकल्प्य यस्तदलाभे तत्प्रतिनिधीन्नीवारादीन् विहाय यवैर्यजते तस्य तत्संकल्पवचनमनृतं जायत इति तथाभूतमनृतमिह क्रत्वर्थानृतवचनमिति विवक्षितम् । **गम्यमानकर्तुः संख्याया इति** । समानप्रत्ययोपात्तकर्तृसंख्याभिधा-

## भामती ।

येनानृतवदनवदस्य निषेध्यस्य क्रत्वर्थत्वे निषेधोऽपि क्रत्वर्थः स्यात् । पशौ निषिद्धयोराज्यभागयोः क्रत्वर्थत्वेन निषेधस्यापि क्रत्वर्थत्वं भवेत् । एवं हि सत्याज्यभागरहितैरप्यङ्गान्तरैराज्यभागसाध्यः क्रतूपकारो विज्ञायते । तस्मादनारभ्याधीतेन न हिंस्यादित्यनेनाभिहितस्य विध्युपहितस्य पुरुषव्यापारस्य विधिविभक्तिविरोधात्प्रकृत्यर्थहिंसाकर्मभाव्यत्वपरित्यागेन पुरुषार्थ एव भाव्योऽवतिष्ठते; आख्यातानभिहितस्यापि पुरुषस्य कर्तृव्यापाराभिधानद्वारेणोपस्थापितत्वात् । केवलं तस्य रागतः प्राप्तत्वात्तदनुवादेन नञर्थं विधिरुपसंक्रामति, तेन पुरुषार्थो निषेध्य इति तदधीननिरूपणो निषेधोऽपि पुरुषार्थो भवति । तथाचायमर्थः संपद्यते—यत्पुरुषार्थं हननं तन्न कुर्यादिति । क्रत्वर्थस्यापि च निषेधे हिंसायाः क्रतूपकारकत्वमपि कल्प्येत । नच दृष्टे पुरुषोपकारकत्वे प्रत्यर्थिनि सति तत्कल्पनास्पदम् । नच स्वातन्त्र्यपारतन्त्र्येऽसति संयोगपृथक्त्वे खादिरतादिवदेकत्र संभवतः । तस्मात्पुरुषार्थप्रतिषेधो न क्रत्वर्थत्वमप्यास्कन्दतीति शुद्धसुखफलत्वमेवेष्टादीनां न स्थावरशरीरोपभोग्यदुःखफलत्वमपीति । आकाशादिष्विव कर्मव्यापारमन्तरेणाभिलापात्

## वेदान्तकल्पतरुः ।

म्यमानत्वात्तत्संख्याभिधानापात इति चेद्, न, अनभिहितस्यापि कर्तुरितरकारकापेक्षया प्रधानत्वाद्भावनायाश्च तद्व्यापारत्वादाख्यातेन प्राधान्येन द्योतनादनभिहिताधिकारस्य च प्राधान्येन द्योतितत्वाभिप्रायत्वात्, करणादीनां पचतीत्याद्याख्यातैः प्राधान्येन ध्वनितत्वाभावात्, पच्यत इत्यादौ च कर्मप्राधान्येन कर्तृप्राधान्यस्याद्योतनात् । तस्मादाख्यातेन कर्तुरनभिधानात्सिद्धमनृतवदनप्रतिषेधस्य क्रत्वर्थत्वमिति । **ननु** मा भूत् प्रकरणानाम्नानात्र हिंस्यादिति निषेधस्य क्रत्वर्थता, पुरुषार्थत्वं तु कथमवगम्यते ? नहीह पुरुषस्तदर्थोवगम्यत इति तत्र पुरुषार्थप्रतीतिमुपपादयति—**तस्मादनारभ्याधीतेनेति** । न हिंस्यादित्यनेनेति नञ्व्यतिरिक्तोपादानं विवक्षितम् । अत्र वाक्ये हिंस्यादिति भागेनाभिहितस्य पुरुषव्यापारस्य पुरुषार्थ एव भाव्य इत्यन्वयः । **ननु** हिंसैव भाव्या किं न स्यादत आह—**विध्युपहितस्येति** । श्रेयःसाधनत्वविध्यवच्छिन्नत्वादित्यर्थः । न केवलमर्थविरोधो धात्वर्थभाव्यत्वे अपितु शब्दविरोधश्चेत्याह—**विधिविभक्तीति** । हिंसैव कर्म क्रिया तद्भाव्यत्वपरित्यागेनेत्यर्थः । पुरुषप्रतीतिमुपपादयति—**आख्यातानभिहितस्यापीति** । कर्त्रधिकरणे तु अनभिहितपुरुषस्याप्राधान्येन निषेधस्य प्रकरणवशात् क्रत्वर्थमुक्तम्, इह तु प्रकरणाभावादार्थिककर्तृशेषत्वमविरुद्धं निषेधस्य । एतच्च प्राचीनग्रन्थे अनारभ्याधीतेनेति पदेन द्योतितम् । **ननु** हिंस्यादिति विध्यंशेन यदि हिंसाश्रेयःसाधनमवगता, कथं तर्हि निषेधावकाशः ? इत्याशङ्क्यानुवादत्वमाह—**केवलमिति** । **स्यादेतत्**—हिंस्यादिति क्रतुपुरुषार्थसाधारणी हिंसाऽनूद्य निषिध्यतां, तथाचोभयार्थत्वं निषेधस्य वाक्येनावगम्यतामिति, नेत्याह—**क्रत्वर्थस्यापि चेति** । हिंसाविषयस्य निषेधस्य रागप्राप्तहिंसाविषयत्वेन चरितार्थत्वेऽधिकारान्तरानुप्रविष्टक्रतुशेषहिंसानुवादतन्निषेधविषयत्वकल्पनायां गौरवं स्यादित्यर्थः । उभयनिषेधे च वाक्यभेदः स्यादित्याह—**नचस्वातन्त्र्येति** । क्रत्वर्थनिषेधत्वे हि क्रत्वर्थत्वात् पारतन्त्र्यं स्यात्, पुरुषार्थनिषेधत्वे पुरुषार्थत्वात्स्वातन्त्र्यम् । तच्च वाक्यद्वयेन संबन्धद्वयबोधने भवेद्, न त्विहेत्यर्थः । विधिनिषेधयोर्विषयभेदमुक्तमुपसंहरति—**तस्मादिति** । यदा च निषेधस्य रागप्राप्तार्थता, तदा इष्टादिकर्मणः पुण्यमात्ररूपत्वाद्व्रीह्यादिभावस्य कर्मजन्यत्वासंकीर्तनरूपो हेतुः सिद्ध इत्याह—**आकाशादिष्विवेति** । अत्र भाष्यकारैर्न हिंस्यादित्युत्सर्गः अग्नीषोमीयमालभेतेत्यपवाद इत्युक्तम्, तदयुक्तम्;

## कल्पतरुपरिमलः ।

नपक्षे नातिप्रसङ्गः । गम्यमानस्यापि चेत्कर्तुः संख्याऽऽख्यातेनाभिधीयेत, तदा पदान्तरोपात्तकरणादिसंख्या तेन सुतरामभिधातुं शक्येति चैत्रः काष्ठैः पचतीत्यपि प्रयोगप्रसङ्ग इत्यर्थः । अथ गम्यमानस्यापि कर्तुरेव संख्या तेनाभिधेया, तदैककर्तृके पाके तण्डुलान् पच्यन्त इति प्रयोगप्रसङ्ग इत्याह—**पच्यत इत्यत्रापीति** । **अनभिहितस्यापीति** । यत्प्रधानं कारकं तत्संख्याऽऽख्यातेनाभिधेयेति नियमः । तथाच पचति तण्डुलानित्यत्र कर्तुः प्राधान्यात्तत्संख्या तेनाभिधेया । पच्यन्ते तण्डुला इत्यत्र कर्मणः प्राधान्यात्तत्संख्या, करणादीनां तु सर्वत्राप्राधान्यान्न क्वाप्याख्यातेन तदभिधानप्रसङ्ग इत्यर्थः । **अनुवादकत्वमाहेति** । बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपं श्रेयःसाधनत्वमनूद्य तन्निषेधः क्रियते, स च निषेधो विशेष्यसत्त्वाद्विशेषणनिषेधमादाय पर्यवस्यतीत्यर्थः । **रागप्राप्तेति** । पुरुषार्थेत्यर्थः । तथा चाख्यातोपात्तभावनाक्षेपोपस्थितपुरुषशेषहिंसाविषयत्वेन चारितार्थ्यादनुपस्थितक्रतुशेषहिंसानुवादतन्निषेधविषयत्वकल्पनं गौरवपराहतमित्यर्थः । **ननु** पुरुषार्थत्वेन क्रत्वर्थत्वेन च हिंसोपस्थितिमपेक्ष्य तन्निषेधो नोच्यते किंतु हिंसासामान्यनिषेधेन पुरुषार्थहिंसानिषेधवत् क्रत्वर्थहिंसानिषेधोऽपि लभ्यत इत्युच्यतेऽतो न क्रत्वर्थतोपस्थितिगौरवमित्यस्वरसादाह—**उभयनिषेधे चेति** । **रागप्राप्ततेति** । पुरुषार्थतेत्यर्थः, न तु रागाधीनप्रवृत्तिविषयतेत्यर्थः । क्रत्वर्थहिंसाया अपि रागाधीनप्रवृत्तिविषयत्वात्फलरागं विनाऽप्यापि प्रवृत्त्यसंभवात्कामाधिकारे करणांशे रागतः प्रवृत्तिः अङ्गेषु वैधी प्रवृत्तिरिति निरा-

## भामती।

अनुशयिनां व्रीह्यादिसंयोगमात्रम्, नतु तद्देहत्वमिति। अयमेवार्थ उत्सर्गापवादकथनेनोपलक्षितः। **अपिच मुख्ये-**

## वेदान्तकल्पतरुः।

विशेषविधिविहितस्यार्थस्य सामान्यविधिनापि विषयीकारे ह्युत्सर्गापवादन्यायः। यथाऽऽहवनीये जुहोति पदे जुहोतीति होममात्रस्याहवनीयान्वयविधिना पदहोमस्यापि विषयीकारे पदहोमान्वयविशेषविधिना बाधात्तदितरपरत्वं सामान्यशास्त्रस्य। अत्र तु वर्णितेन न्यायेन निषेधस्योत्पत्तिसमय एव पुरुषार्थहिंसाविषयत्वान्न क्रत्वर्थहिंसानुप्रवेश इत्याशङ्क्याह— **अयमेवार्थ इति।** एकस्य निषेधविधेः स्वविषयस्य क्रत्वर्थत्वेन पुरुषार्थत्वेन च विनियोगे विरोधात् सामान्यविषयत्वे

## कल्पतरुपरिमलः।

लम्बनायाः प्राभाकरपरिभाषायाः सिद्धान्तानभिमतत्वात्तदयुक्तम्। **विशेषविधिविहितस्यार्थस्येति। अत्रेदं वक्तव्यम्**—इहाप्युत्सर्गापवादन्यायः प्रवर्तत एव; हिंस्यादित्यनेन विहितहिंसाया अपि क्रोडीकारात्। मरणफलोपहितमरणकारणपुरुषव्यापारत्वं हिंसात्वं हिंसाशब्दप्रवृत्तिनिमित्तं तद्वैधहिंसायामप्यविशिष्टम्। नच—सत्यपि हिंसाशब्दार्थत्वे हिंस्यादित्याख्यातोपात्तभावनाक्षिप्ततत्कर्तृपुरुषशेषभूतैव हिंसा प्रतीयत इति न तत्र हिंसिधातुना वैधहिंसाक्रोडीकारोऽस्ति तद्व्यावर्तकविशेषणसद्भावादिति—वाच्यम्; उद्देश्ये तथा विशेषणायोगात्। अन्यथा आहवनीयवाक्येऽपि जुहोतिधातुनाऽऽख्यातोपात्तभावनाक्षिप्तपुरुषशेषाणां पुरुषार्थहोमानामेवानुवादो न क्रत्वर्थहोमानामिति ज्योतिष्टोमक्रत्वर्थस्य पदहोमस्य तेनाविषयीकरणादाहवनीयपदवाक्ययोरुत्सर्गापवादन्यायः प्रत्युच्छ्रियेत, नारिष्टहोमादीनां च क्रत्वर्थानामाहवनीयसिद्धिर्न स्यात्। **ननु**—तत्र प्रत्यक्षविधिविहितानां सर्वेषां होमानामनुवादसंभवादनपेक्षितोद्देश्यविशेषणे वाक्यभेदापत्तेर्न पुरुषशेषत्वं विशेषणम्, इह तु हिंसामात्रनिषेधे अनृतवदननिषेधस्य क्रत्वर्थत्वम्। हिंसानिषेधस्य पुरुषार्थत्वम्। लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेति वाक्यवैरूप्यापत्तेर्लौकिकवैदिकान्यतरग्रहणाकाङ्क्षायामुपस्थितपुरुषशेषभूतैव हिंसा गृह्यते नानुपस्थितक्रतुशेषभूतेति—**चेन्न;** लौकिकवैदिकोभयविधहिंसानिषेधस्य पुरुषार्थैकरूपत्वोपपत्तेः। निषेध्यनिषेधयोर्विषयैकरूप्यनियमस्त्वसिद्धः; स्त्र्युपगमनमांसभक्षणादीनां प्रतिषेधस्य क्रत्वर्थत्वदर्शनात्, "स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः। प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रया" दिति वार्तिकोक्तेश्च। तथापि क्रत्वर्थस्य निषेधः क्रत्वर्थ एव न पुरुषार्थ इति नियमोऽस्तीति चेन्न; अप्रयोजकत्वात्, क्रत्वर्थपुरुषार्थसाधारणापगोरणसामान्यादिनिषेधानां पुरुषार्थत्वसंप्रतिपत्तेश्च, अन्यथा क्रत्वनुष्ठानप्रतिबन्धकब्राह्मणापगोरणादिषु स्वाच्छन्द्यप्रसङ्गात्। **ननु**—एवं सति क्रत्वर्थस्यैवानृतवदनस्य निषेधः क्रत्वर्थ इति क्रतुमध्ये क्रत्वर्थानृतवदन एव क्रतोर्वैकल्यं, पुरुषार्थानृतवदने तु यो नाम क्रतुमध्यस्थ इत्युक्तरीत्या पुरुषस्यैव प्रत्यवाय इति कर्त्रधिकरणसिद्धान्तो नावतिष्ठेत, उक्तनियमानङ्गीकारे क्रत्वर्थानि पुरुषार्थानि वा यावन्त्यनृतवदनानि तेषां सर्वेषामपि निषेधस्य क्रत्वर्थत्वोपपत्तेरिति—**चेत्, उच्यते;** नानृतं वदेदिति वाक्ये अनृतं वदेदिति भागस्य प्रकरणाम्नानादयमर्थो भवति अनृतवदनेन दर्शपूर्णमासयोरुपकुर्यादिति। ततश्च नञा संबन्धादयमंशोऽनुवादो न विधिरित्यवसायात् कृत्स्नस्य वाक्यस्यायमर्थो भवति अनृतवदनेन दर्शपूर्णमासयोरुपकुर्यादिति यत्तन्नेति। इत्थमेवास्य वाक्यस्य योजनाप्रकारो वार्तिके दर्शितः। एवमनया रीत्या प्रकरणसामर्थ्यात्क्रत्वर्थानृतवदननिषेध एव क्रत्वर्थ इति लाभान्न तन्निर्वाहार्थमुक्तनियमोऽपेक्षणीयः। **नन्वेवं**—प्रकरणाम्नातानृतवदननिषेधवाक्यार्थकथने अनारभ्याधीतहिंसानिषेधवाक्यस्यानया प्रक्रिययेत्थमर्थो भवति हिंसया पुरुषस्योपकुर्यादिति यत्तन्नेति। तथाच पुरुषार्थहिंसानिषेध एव वाक्यार्थ इति क्रत्वर्थहिंसायाः तदविषयत्वात्तत्र नोत्सर्गापवादन्यायप्रवृत्तिः। अत इदं घट्टकुट्यां प्रभातमिति—**चेन्न;** क्रत्वर्थहिंसायाः परंपरया पुरुषोपकारकत्वेन तस्या अपि तेन विषयीकरणात्, क्रत्वर्थताद्वारा अन्यथा वा यथाकथंचित् पुरुषोपकारपर्यवसानमात्रमेव हि तत्रानुवाद्यकोटौ प्रविष्टं, यथाऽनृतवदननिषेधे पुरुषार्थताद्वाराऽन्यथा वा क्रतूपकारमात्रम्। नहि तत्रानृतवदनं पुरुषार्थतामनपेक्ष्य क्रतूपकारकम्। क्रतूपयोगिद्रव्यादिराहित्यावस्थाविशिष्टस्य पुरुषस्यैव हि शेषभूतं सद् द्रव्यार्जनोपायान्तरवत् क्रतूपकारकम्। एवं व्रीहीन् संकल्प्य यवानुपाददानस्य संकल्पवचनानृततापादनमपि। नहि तदुभयं क्रत्वर्थतया विहितम्। **नन्वेवं**—निषेध्यनिषेधयोरेकार्थतानियमानादरे क्रत्वर्थपुरुषार्थसाधारणहिंसासामान्यनिषेधस्य केवलपुरुषार्थतोपपत्तेः सांख्य एव विजयी स्यात्; महाफलसाधनस्य यागस्य प्रत्यक्षादिप्रमाणाप्राप्तं वित्तव्ययायासप्रयुक्तमिव पशुमालभेतेत्यादिश्रुतिप्राप्तं हिंसादिकरम्बितत्वप्रयुक्तमपि स्वल्पदुःखमस्त्विति प्रवृत्त्युपपत्तेः, असति विरोधे हिंसासामान्यनिषेधस्य वैधहिंसाविधिना बाधनायोगात्, अतो हिंसानिषेधवाक्यस्य वैधहिंसापरिहारमिच्छता निषेधवाक्यस्य प्रथममेव पुरुषार्थहिंसाविषयत्वं वर्णनीयमिति न तत्रोत्सर्गापवादन्यायप्रवृत्तिः, अपवादसद्भावप्रयुक्ततद्विषयपरिहारस्थलस्यैव तन्न्यायविषयत्वादिति—**चेत्, उच्यते;** हिंसानिषेधविधानयोरुत्सर्गापवादन्यायविषयत्वाभावव्यवस्थापनप्रत्याशया निर्मूलं निषेध्यनिषेधयोरेकविषयत्वनियममवलम्ब्य पुरुषार्थहिंसाया एव निषेध इति समर्थनेऽपि तयोरुत्सर्गा-

वक्तुम्। ननु 'न हिंस्यात्सर्वा भूतानि' इति शास्त्रमेव भूतविषयां हिंसामधर्मं इत्यवगमयति। बाढम्, उत्सर्गस्तु सः। अपवादः 'अग्नीषोमीयं पशुमालभेत' इति। उत्सर्गापवादयोश्च व्यवस्थितविषयत्वम्। तस्माद्विशुद्धं कर्म वैदिकं, शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वाच्च। तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम्। नच श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति। तद्धि कपूयचरणानधिकृत्योच्यते, नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति। अतश्चन्द्रमण्डलस्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते ॥ २५ ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावो यत्कारणं व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते—'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' (छा० ५।१०।६) इति। न चात्र मुख्यो रेतःसिग्भावः संभवति। चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति। कथमिवानुपचरितं तद्भावमन्नमानान्नानुगतोऽनुशयी प्रतिपद्यते? तत्र तावदवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः। तद्वद्व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः ॥ २६ ॥

## योनेः शरीरम् ॥ २७ ॥

अथ रेतःसिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि योनेरधिशरीरमनुशयफलोपभोगाय जायत इत्याह शास्त्रम्—'तद्य इह रमणीयचरणाः' (छा० ५।१०।७) इत्यादि। तस्मादप्यवगम्यते नाव-

---

### भामती।

**ऽनुशयिनां व्रीह्यादिजन्मनीति**। व्रीह्यादिभावमापन्नाः खल्वनुशयिनः पुरुषैरुपभुक्ता रेतःसिग्भावमनुभवन्तीति श्रूयते। तदेतद्व्रीह्यादिदेहत्वेऽनुशयिनां नोपपद्यते। व्रीह्यादिदेहत्वे हि व्रीह्यादिषु लूनेष्ववहन्तिना फलीकृतेषु च व्रीह्यादिदेहविनाशादनुशयिनः प्रवसेयुरिति कथमनुशयिनां रेतःसिग्भावः। संसर्गमात्रे तु संसर्गिषु व्रीह्यादिषु नष्टेष्वपि न संसर्गिणोऽनुशयिनः प्रवसेयुरिति रेतःसिग्भाव उपपद्यते। शेषमुक्तम् ॥ २४ ॥ २५ ॥ सद्यो जातो हि बालो न रेतःसिग्भवत्यपितु चिरजातः प्रौढयौवनः, तस्मादपि संसर्गमात्रमिति गम्यते ॥ २६ ॥ तत्किमिदानीं सर्वत्रैवानुश-

### वेदान्तकल्पतरुः।

च पुरुषार्थहिंसासु सावकाशस्य न क्रत्वर्थहिंसानिषेधविषयत्वं तदा ह्यधिकारान्तरानुप्रवेशितेन सापेक्षत्वं स्यादिति यो विषयनिष्कर्षः कृतोऽयमेवाविशेषप्रवृत्तत्वेनावभासमानशास्त्रस्य विशेषत्याजनलक्षणगुणसाम्यादुत्सर्गापवाद इत्युक्त इत्यर्थः। अवहन्तिना **फलीकृतेषु** कण्डितेषु। तेऽनुशयिन इह लोके व्रीहियवा इत्येवंरूपेण जायन्ते। यो यो ह्यनुशयिभिः संश्लिष्टमन्नमत्ति स एव च यो रेतः सिञ्चति स्त्रियामृतुकाले तद्भूय एव तद्भाव एव तत्समानाकारतामित्यर्थः।

### कल्पतरुपरिमलः।

पवादन्यायविषयता नापैति; मरणान्तप्रायश्चित्तमाहवाभिमुखहननमुचितदण्डरूपचोरहननं स्तेनहननमिति बहूनां पुरुषार्थहिंसनानां निषेधेन परिहरणीयत्वात्। नहि सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येदिति शुद्ध्यर्थमेव विहितमात्महननमशुद्ध्यापादकमिति वक्तुं शक्यम्; न दोषो हिंसायामाहव इति परस्पराह्वानपूर्वके धर्मयुद्धे योद्धुमभिमुखस्य हनने दोषाभावः कण्ठत एवोक्तः। 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैव गच्छति ॥' 'स्तेनः प्रकीर्णकेशो मुसली राजानमीयात्कर्माचक्षाणः पूतो वधमोक्षाभ्यामघ्नन्नेनस्वी राजे'ति राज्ञो दण्डरूपचोरावहनने स्तेनाहनने च दोषस्मरणात्तादृशहननेऽपि दोषाभावः सिद्धः। तथाच पुरुषार्थहिंसानिषेधपक्षेऽप्यनुपदिष्टप्रायश्चित्तविहितहिंसातिरिक्तहिंसाविषयत्वमवश्यं वक्तव्यम्। तथाच तत एव वैधपशुसंज्ञपनस्याप्युत्सर्गापवादन्यायेनैव परिहारसिद्धेः किं प्रथममेव तत्परिहारार्थं पुरुषार्थहिंसाया निषेध्यत्वकल्पनेन? "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति छन्दोगोपनिषदि हिंसानिषेधे तीर्थपर्युदसनेनापि हिंसानिषेधविधानयोरुत्सर्गापवादन्यायः प्रत्याय्यते। तत्र हि तीर्थशब्देनागर्हिता या हिंसा सा पर्युदस्यते। अगर्हिता चानुपदिष्टप्रायश्चित्तविहितहिंसा। अतएव "श्येनेनाभिचरन् यजेत" "आततायिनमायान्तं हन्यादेवाविचारयन्" इति विहितयोरपि अभिचाराततायिवधयोः प्रायश्चित्तोपदेशाद्गर्हितत्वेन न पर्युदासविषयता। **एतेन**—वैधहिंसायां स्वल्पदोषोऽस्तीति वदन्तः साङ्ख्याः साङ्ख्यमतनिरासासामर्थ्येन वैधपशुसंज्ञपनं हिंसैव न भवति पश्वनुग्रहार्थत्वश्रवणादिति वदन्तश्चैकदेशिनो—**निरस्ताः**। क्रत्वर्थपुरुषार्थरूपागर्हितवैधहिंसामात्रे सामान्यनिषेधाप्रवृत्तेः, समर्थितत्वाद्धिंसाशब्दप्रवृत्तिनिमित्तसद्भावेन हिंसात्वाभावोक्त्ययोगाच्च। नच "न वा इवेतन्म्रियसे तरिष्यसी"त्यादिश्रवणेन वध्यानुग्रहपर्यवसन्नत्वादहिंसात्वमाशङ्कनीयम्; व्रणशा

रोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति । तस्माद्व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति, सिद्धम् ॥ २७ ॥ इति षष्ठं अन्याधिष्ठिताधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

भामती ।

यिनां संसर्गमात्रं ? तथाच रमणीयचरणा इत्यादिषु तथाभाव आपद्येतेति नेत्याह—योनेः शरीरम् । सुगमम् ॥ २७ ॥ इति षष्ठं अन्याधिष्ठिताधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकमीमांसाभाष्यविभागे भामत्यां तृतीयस्याध्यायस्य प्रथमः पादः ॥

वेदान्तकल्पतरुः ।

भवति प्रतिपद्यते अनुशयी । तथाच मनुष्यान्मनुष्यो जायते पश्वादेश्च पश्वादिरिति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ इति षष्ठं अन्याधिष्ठिताधिकरणम् ॥[1]

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकभगवदमलानन्दविरचिते वेदान्तकल्पतरौ तृतीयस्याध्यायस्य प्रथमः पादः ॥

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ६ | ९३ |
| सूत्राणि | २७ | ३१८ |

कल्पतरुपरिमलः ।

न्त्यर्थं कृतावयवच्छेदनस्य छेदनीयानुग्रहार्थत्वेऽपि क्रोधकृतावयवच्छेदसाधारणच्छेदेन शब्दप्रवृत्तिनिमित्तसद्भावेन छेदनत्ववद्वैधहिंसाया अपि हिंसात्वस्यानिवार्यत्वात् । भाष्ये हिंसादीत्यादिशब्दगृहीतस्य सोमोच्छिष्टभक्षणस्य सौत्रामण्यादिषु सुराग्रहादीनां चानुच्छिष्टभक्षणत्वासुराग्रहत्वादीनां वक्तुमशक्यत्वाच्चेति यथाभाष्यमुत्सर्गापवादन्यायः समञ्जस एव । हिंसैव वैधमपि संज्ञपनं न हिंस्यादित्यत्र रागकृतता पुरुषार्थता वा । आद्ये न हिंसनविशेषणमस्त्यथापि नौत्सर्गिकः स्पृशति वैधमयं निषेधः ॥ सार्वत्रिको न खलु वृत्तिनिमित्ततौल्ये शब्दार्थतापलपनं परिहारहेतुः । उच्छिष्टभक्षणसुराग्रहणानुरागप्राप्ताखिलद्रव्यपरिहारमुखेष्वभावात् ॥ रागप्रयुक्त पुरुषार्थविशेषणेऽपि हिंसानिषेधनमसर्वगमेव वाच्यम् । नो चेददोषलवमाहवहिंसनादि व्यावर्तनं प्रतिलभेत कथं निषेधात् ? ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ इति अन्याधिष्ठिताधिकरणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीवेदान्तकल्पतरुपरिमले तृतीयस्याध्यायस्य प्रथमः पादः ॥

॥ इति तृतीयाध्यायस्य गत्यागतिचिन्तया वैराग्यनिरूपणाख्यः प्रथमः पादः ॥

---

१ तत्र सूत्राणि ४—अन्याधिष्ठिते पूर्ववदभिलापात् २४ अशुद्धमिति चेन्न शब्दात् २५ रेतःसिग्योगोऽथ २६ योनेः शरीरम् २७ ॥

## तृतीयाध्याये द्वितीयः पादः।

( १ अधिकरणम् ) **संध्ये सृष्टिराह हि ॥ १ ॥**

**अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः । इदानीं तु तस्यैवावस्थाभेदः प्रपञ्च्यते। इदमामनन्ति—'स यत्र प्रस्वपिति' ( बृ० ४।३।९ ) इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते' ( बृ० ४।३।१० ) इत्यादि। तत्र संशयः—किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति ? तत्र तावत्प्रतिपद्यते संध्ये तथ्यरूपा सृष्टिरिति। संध्यमिति स्वप्नस्थानमाचष्टे; वेदे प्रयोगदर्शनात्**

---

### भामती।

**संध्ये सृष्टिराह हि ॥** इदानीं तु तस्यैव जीवस्यावस्थाभेदः स्वयंज्योतिष्ट्वसिद्ध्यर्थं प्रपञ्च्यते—**किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति।** यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागत-

### वेन्दान्तकल्पतरुः।

**संध्ये सृष्टिराह हि ॥ १ ॥** कर्मफलस्य यातायातरूपत्वेन वैराग्यं निरूपितम् । इदानीं विरक्तस्य तत्त्वंपदार्थविवेकार्थं द्वितीयः पाद आरभ्यते । तत्रापि न स्थानतोऽपी ( ब्र. अ. ३ पा. २ सू. ११ ) त्यतः प्राक् त्वंपदार्थो विवेचितः, तत आरभ्य तत्पदार्थः । आद्याधिकरणस्य तात्पर्यमाह—**तस्यैवेति** । यस्य पूर्वस्मिन्पादे जाग्रदवस्थायामिहलोकपरलोकसंचार उक्तः तस्यैवेत्यर्थः । प्रयोजनमाह—**स्वयंज्योतिष्ट्वेति।** जाग्रदवस्थायां ह्यादित्यादिसंकराद् दुर्विवेकमात्मनः स्वयंज्योतिष्ट्वं, तत्र यदि स्वप्नोऽपि सत्यः स्यात् तदवस्थं दुर्विवेकत्वमिति तन्मिथ्यात्वमुच्यते । मनस्तु

### कल्पतरुपरिमलः।

**संध्ये सृष्टिराह हि ॥ १ ॥ कर्मफलस्य यातायातरूपत्वेनेति। प्रथमाधिकरणे**—तावद्गमनं चिन्तितम्। तत्र सकलसंसारदुःखायतनस्य भूतेन्द्रियसंघातरूपदेहसंबन्धस्याब्रह्मसाक्षात्कारमिह परत्र च गतागतयोरनुवृत्तिर्निरूपिता। तत्रैव भाक्तं वानात्मवित्त्वा ( ब्र. अ. ३ पा. १ सू. ७ ) दिति सूत्रे देवभृत्यभावेन तत्प्रयुक्त क्लेशकरम्बितस्य स्वर्गभोगानुभवस्य तुच्छत्वं सातिशयत्वं चाविष्कृतम् । **द्वितीयाधिकरणे**—सूक्ष्मदेहस्यापि कारणतया सकलसंसारक्लेशनिदानस्य कर्मबन्धस्य ब्रह्मज्ञानपर्यन्तमनुवृत्तिर्निरूपिता । तत्रैव स्वर्गभोगस्य क्षयिष्णुत्वदोषोऽपि कृतात्यय ( ब्र. अ. ३ पा. १ सू. ८ ) इति सूत्रभागेन दर्शितः । एवमनेकदोषदुष्टस्यापि स्वर्गभोगस्य जनकं यागादिकं प्रतिजन्म यावज्जीवकर्तव्यस्नानसंध्यावन्दनादिविहितानुष्ठाननिषेधपरिहाररूपबहुविधशरीरक्लेशसाध्यस्मार्ताचारसापेक्षत्वादतिदुष्करमिति चरणादिति चे ( ब्र. अ. ३ पा. १ सू. ९ ) दित्यादिसूत्रैः प्रकटितम् ॥ अनिष्टादिकारिणां तु शुभमार्गेण गतिर्वा ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीति न्यायेन स्वर्गप्राप्तिमात्रं वा नास्तीति **तृतीयाधिकरणे** वर्णितम् । **चतुर्थे**—स्वर्गादवरोहताम् आकाशादिभावश्रवणात् तदभिमानिदेवतानामिवाकाशादिशरीरकत्वप्रयुक्तः कियान् दिव्यभोगोऽस्तीति शङ्कावारणायाकाशादिषु संश्लेषमात्रमित्युक्तम् । **पञ्चमे** तेषु चिरमचिरं वाऽवस्थानमिति अनियमनिरासव्याजेन व्रीह्यादिषु सुखभोगरहितम् अनतिचिरावस्थानमिति दर्शितम् । तच्च तदभिमानिजीवात्मना चेत्तत्त्वनपर्यन्तमेव भवेदित्यनतिहेयत्वशङ्कानिराकरणात्तेषु संश्लेषमात्रमिति **षष्ठाधिकरणे** दर्शितम् । स च संश्लेषस्तेषां शोषणकुसूलावस्थापनावहननफलीकरणपाकभक्षणादिदशास्वनुवर्तमानः पितृवीर्यात्मना परिणामपर्यन्त इति रेतःसिक्सूत्रेण ( ब्र. अ. ३ पा. १ सू. २६ ) दर्शितम्। पुरुषभक्षणविषयत्वमनापन्नेषु व्रीह्यादिषु संश्लिष्टानामनुशयिनां तेषु संश्लेषः, तत्तद्व्रीह्यादिपरिणामान्तरपरम्पराक्रमेण यथाकथंचित्पुरुषभक्षणविषयत्वप्राप्त्यनन्तरं तेषां तद्वीर्यात्मना परिणामपर्यन्त इत्यपि तेनैव सूत्रेण सूचितम् । पुरुषवीर्यानुप्रवेशेऽपि योषितमप्राप्य तेषां न शरीरलाभः । तद्यदि वीर्यमपरिग्रहाणां वन्ध्यादिषु प्रवृत्तानां वा स्यात्, तदा तद्वीर्यपरिणामान्तरक्रमेण पुनरपि पुरुषभक्षणविषयत्वं प्राप्य तद्वीर्यसंसक्तया ऋतुमतीनां योषितां गर्भगोलकप्रवेशानन्तरमेव क्वचिज्जन्मनि भोगाश्रयस्य भोगमोक्षसाधनानुष्ठानोपयोगिनश्च शरीरस्य लाभ इति योनेः शरीरमिति सूत्रेण दर्शितम्। एवं गतागतनिरूपणेन वैराग्यं दृढीकृतमित्यर्थः । जीवावस्थाभेदोऽनुगतः पादार्थो न भवतीत्याशङ्क्याह—**तत्त्वम्पदार्थविवेकार्थमिति** । महावाक्यार्थान्वयिपदार्थविवेकायेत्यर्थः । **तदवस्थमिति** । स्वप्नेऽप्यादित्यादिसद्भावादिति भावः। **मनस्तु स्वप्ने सदपीति** । व्यावहारिकमपीत्यर्थः । **ननु** मनो यदि दृश्यत्वान्नात्मभासनक्षमं, तर्हि स्वाप्न आदित्यादिरपि तत एव तथेति तन्मिथ्यात्वसमर्थनं व्यर्थमित्याशङ्क्य प्रातिभासिकत्वसिद्ध्यर्थं तदित्याह—

'संध्यं तृतीयं स्वप्नस्थानम्' ( बृ० ४।३।९ ) इति । द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा संधौ भवतीति संध्यम् । तस्मिन्संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति । कुतः ? यतः प्रमाणभूता श्रुतिरेवमाह—'अथ रथान्रथयोगान्पथः सृजते' ( बृ० ४।३।१० ) इत्यादि । स हि कर्तेति चोपसंहारादेवमेवावगम्यते ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

अपिचैके शाखिनोऽस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति—'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' ( क० ५।८ ) इति । पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति । ननु कामशब्देनेच्छाविशेषा एवोच्येरन्, न; 'शतायुषः पुत्रपौत्रान्वृणीष्व' ( क० १।२३ ) इति प्रकृत्यान्ते 'कामानां त्वा कामभाजं करोमि' ( क० १।२४ ) इति प्रकृतेषु तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् । प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । प्राज्ञस्य हीदं प्रकरणम्—'अन्यत्र धर्मादन्यत्राधर्मात्' ( क० २।१४ ) इत्यादि । तद्विषय एव च वाक्यशेषोऽपि—'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' ( क० ५।८ ) इति । प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिता-

---

### भामती ।

योरुभयोरपि सर्गयोर्मायामयत्वम्; तथापि यथा जाग्रत्सृष्टिर्ब्रह्मात्मभावसाक्षात्कारात्प्रागनुवर्तते । ब्रह्मात्मभावसाक्षात्कारात्तु निवर्तते । एवं किं स्वप्नसृष्टिराहोस्वित् प्रतिदिनमेव निवर्तत इति विमर्शार्थः । **द्वयोः** इहलोकपरलोकस्थानयोः । संधौ भवं संध्यम् । ऐहलौकिकचक्षुराद्यव्यापाराद्रूपादिसाक्षात्कारोपजननादनैहलौकिकं पारलौकिकेन्द्रियादिव्यापारस्य च भविष्यतोऽप्रत्युत्पन्नत्वेन न पारलौकिकम् । नच न रूपादिसाक्षात्कारोऽस्ति स्वप्नदृशः । तस्मादुभयोर्लोकयोरस्यान्तरालत्वमिति ब्रह्मात्मभावसाक्षात्कारात्प्राक् तथ्यरूपैव सृष्टिर्भवितुमर्हति । **अयमभिसंधिः**—इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणं, तेषां सत्यत्वं प्रतिज्ञायते । प्रकृतोपयोगितया तु स्वप्नज्ञानमुदाहृतम् । ज्ञानं यमर्थमवबोधयति स तथैवेति युक्तम्; तथाभावस्य ज्ञानारोहात्, अतथात्वस्य त्वप्रतीयमानस्य तथाभावप्रमेयविरोधेन कल्पनास्पदत्वात् । बाधकप्रत्ययादतथात्वमिति चेत्, न; तस्य बाधकत्वासिद्धेः । समानगोचरे हि विरुद्धार्थोपसंहारिणी ज्ञाने विरुध्येते । बलवदबलवत्त्वनि-

### वेदान्तकल्पतरुः ।

स्वप्ने सदपि दृश्यत्वादनात्मभासकम् । आदित्यादीनां दृश्यत्वाविशेषेऽपि स्वरूपतोऽपि व्यतिरेकसमर्थनार्थमर्थवती मिथ्यात्वचिन्ता । आरम्भणाधिकरणे ( ब्र. अ. २ पा. १ सू. १४ ) समस्तभेदमिथ्यात्वोपपादनादजामित्वाय प्रपञ्च्यत इत्युक्तिः । रथादिसर्गाम्नानाद्रथाद्यभावाम्नानाच्च संशयमाह—**किमिति** । सर्वविकारमिथ्यात्वस्याधस्तात्साधनाद् न पूर्वपक्षिणो दृष्टान्तसिद्धिरित्याशङ्क्याह—**यद्यपीति** । स्वप्नस्य व्यावहारिकत्वमस्ति न वेति चिन्त्यत इत्यर्थः । अनेन प्रपञ्च्यत इत्येतद्विवृतम् । द्वयोर्लोकस्थानयोः संधौ भवतीति संध्यमिति भाष्यं न युक्तं; स्वप्नस्येहैव लोकेऽनुभवादित्याशङ्क्याह—**ऐहलौकिकेति** । यथा लोके ग्रामसंधिर्द्वौ ग्रामौ भजते, एवं स्वप्न उभौ लोकौ लक्षणतः स्पृशति, तत्र परलोकस्यैतल्लोकवर्तिचक्षुराद्यजन्यरूपादिसाक्षात्कारवत्त्वं व्यापारविरहाच्चेदनैहलौकिकत्वं स्वप्नस्य, तर्ह्यैहलौकिकसुषुप्तेरप्यनैहलौकिकत्वं स्यादत आह—**रूपादिसाक्षात्कारोपजननादिति** । चक्षुरादिशब्दो गोलकाभिप्रायः; करणानां लोकद्वयेऽप्यविशेषात् । स्वप्नस्य परलोकलक्षणवत्त्वमुक्त्वा इहलोकलक्षणवत्त्वमाह—**पारलौकिकेति** । अत्रापि पारलौकिकसुषुप्तेरपारलौकिकत्वव्यावृत्तये **नच न रूपादी**त्युक्तम् । संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हतीति भाष्यमयुक्तम्; आरम्भणाधिकरणादौ सर्वकार्यमिथ्यात्वसमर्थनादत आह—**ब्रह्मात्मभावसाक्षात्कारादिति** । स्वप्नसत्यत्वं वक्तुं न शक्यते इदंरजतादिबोधेष्विव बाधविरोधादित्याशङ्क्याह—**अयमभिसंधिरिति** । ज्ञानं सर्वं यथार्थमिति पूर्वपक्ष इत्यर्थः । तर्हि स्वप्नोदाहरणमयुक्तं सर्वभ्रमेषु विप्रतिपत्तेरविशेषादत आह—**प्रकृतोपयोगितयेति** । स्वप्रकाशित्वश्रुतौ प्रकृतमात्रायंपुरुषः स्वयंज्योतिर्भवतीति । बाधकत्वासिद्धिमुपपादयितुं पराभिमतबाधकस्वरूपमनुवदति—**समानगोचरे**

### कल्पतरुपरिमलः ।

**आदित्यादीनामिति** । **शुक्तिरजतात्मकमेकमेव वस्त्विति** । रजतावयवैः शुक्त्यवयवैश्च शुक्तिरारब्धा, यथा व्रीह्यवयवैर्नीवारावयवैश्च नीवाराः । अत एवेष्टिषु व्रीह्यलाभेन समग्रव्रीह्यवयवोपादानाऽसंभवे सति यथाकथंचिद् व्रीहिशास्त्रार्थलिप्सया कतिपयव्रीह्यवयववन्तो नीवारा उपादेया इति पूर्वतन्त्रे प्रतिनिधिपेटिकायां समर्थितम् । इयाँस्तु विशेषः । शुक्तौ शुक्त्यवयवा भूयांस इति प्रायेण शुक्त्याकारो गृह्यते, तद्ग्रहणदशायां तेनाभिभवाद्रजताकारो न गृह्यते ।

श्रया, तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति । तथाच श्रुतिः—'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' (बृ० ४।३।१४) इति स्वप्नजागरितयोः समानन्यायतां श्रावयति । तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति ॥ २ ॥ एवं प्राप्ते प्रत्याह—

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥**

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति यदुक्तं संध्ये सृष्टिः पारमार्थिकीति । मायैव संध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति । कुतः? कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । नहि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः । किं पुनरत्र कार्त्स्न्यमभिप्रेतं? देशकालनिमित्तसंपत्तिरबाधश्च । नहि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने संभाव्यन्ते । न तावत्स्वप्ने रथादीनामुचितो देशः संभवति । नहि संवृते देहदेशे रथादयोऽवकाशं लभेरन् । स्यादेतत्—बहिर्देहात्स्वप्नं द्रक्ष्यति देशान्तरितद्रव्यग्रहणात् । दर्शयति च श्रुतिर्बहिर्देहात्स्वप्नम्—'बहिष्कुलायाद-

## भामती ।

श्रयाच्च बाध्यबाधकभावं प्रतिपद्येते । नचेह समानविषयत्वम्; कालभेदेन व्यवस्थोपपत्तेः । यथाहि क्षीरं दृष्टं कालान्तरे दधि भवति, एवं रजतं दृष्टं कालान्तरे शुक्तिर्भवेत् । नानारूपं वा तद्वस्तु । तद्यस्य तीव्रातपक्लान्तिसहितं चक्षुः स तस्य रजतरूपतां गृह्णाति । यस्य तु केवलमालोकमात्रोपकृतं, स तस्यैव शुक्तिरूपतां गृह्णाति । एवमुत्पलमपि नीललोहितं दिवा सौरीभिर्भाभिरभिव्यक्तं नीलतया गृह्यते । प्रदीपाभिव्यक्तं तु नक्तं लोहिततया । एवमसत्यां निद्रायां सतोऽपि रथादीन्न गृह्णाति, निद्राणस्तु गृह्णातीति सामग्रीभेदाद्वा कालभेदाद्वा विरोधाभावः । नापि पूर्वोत्तरयोर्बलवदबलवत्त्वनिर्णयः; द्वयोरपि स्वगोचरचारितया समानत्वेन विनिगमनाहेतोरभावात् । तस्मादप्यवश्यमविरोधो व्यवस्थापनीयः । तत्सिद्धमेतत् । विवादास्पदं प्रत्ययाः, सम्यञ्चः, प्रत्ययत्वात्, जाग्रत्स्तम्भादिप्रत्ययवदिति । इममर्थं श्रुतिरपि दर्शयति—'अथ रथान् रथयोगान् पथः सृजते' इति । नच 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इति विरोधादुपचरितार्था सृजत इति श्रुतिर्व्याख्येया; सृजत इति हि श्रुतेर्बहुश्रुतिसंवादात्प्रमाणान्तरसंवादाच्च बलीयस्त्वेन तदनुगुणतया 'न तत्र रथा' इत्यस्या भाक्तत्वेन व्याख्यानात् । जाग्रदवस्थादर्शनयोग्या न सन्ति ननु रथा न सन्तीति । अतएव कर्तृश्रुतिः शाखान्तरश्रुतिरुदाहृता । प्राज्ञकर्तृकत्वाच्चास्य पारमार्थिकत्वं वियदादिसर्गवत् । नच—जीवकर्तृत्वान्न प्राज्ञकर्तृकत्वमिति—सांप्रतम्; 'अन्यत्र धर्मादन्यत्राधर्मात्' इति प्राज्ञस्यैव प्रकृतत्वात्, जीवकर्तृकत्वेऽपि च प्राज्ञादभेदेन जीवस्य प्राज्ञत्वात् । **अपिच** जाग्रत्प्रत्ययसंवादवन्तोऽपि स्वप्नप्रत्ययाः केचिद्दृश्यन्ते । तद्यथा स्वप्ने शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणायनः प्रियव्रतं प्रत्याह—प्रियव्रत, पञ्चमेऽहनि प्रातरेवोर्वराप्रायभूमिदानेन नरपतिस्त्वां मानयिष्यतीति । स च जाग्रत्तथात्मनो मानमनुभूय स्वप्नप्रत्ययं सत्यमभिमन्यते । तस्मात्संध्ये पारमार्थिकी सृष्टिः ॥ १ ॥ २ ॥ इति प्राप्ते उच्यते—**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** । इदमत्राकूतम्—न तावत् क्षीरस्येव दधि रजतस्य परिणामः शुक्तिः संभवति । नहि जात्वीश्वरगृहे चिरस्थितान्यपि रज-

## वेदान्तकल्पतरुः ।

**इति** । समानगोचरविरुद्धार्थज्ञानयोरपि सत्प्रतिपक्षयोरिव न बाध्यबाधकलमित्यत उक्तं—**बलवदबलवत्त्वेति** । तत्र तावदिदंरजतादिज्ञानानां नेदंरजतादिज्ञानानां च विरोधाभावमाह—**नापि पूर्वोत्तरयोर्बलवदबलवत्त्वनिश्चय** इत्यतः प्राक्तनेन ग्रन्थेन । नीलोत्पले रात्रौ रक्तत्वभ्रमो भवति तमुपपादयति—**एवमुत्पलमपीति** । **तस्मादपीति** । अपिकारेण प्रागुक्तं विरोधाभावं समुच्चिनोति । विवादास्पदं प्रत्यया इति नियतलिङ्गत्वात्सामानाधिकरण्यम् । रथैर्युज्यन्त इति **रथयोगा** अश्वादयः । **पथो** रथमार्गान् । **बहुश्रुतिसंवादादिति** । **बहुश्रुतयः** स हि कर्तेत्याद्या उदाहृता भाष्ये । **प्रमाणान्तरम्** उक्तमनुमानं वक्ष्यमाणं प्राज्ञकर्तृकत्वहेतुकम् । **भाक्तत्वेनेति** । **भक्तिः** संकोचः । तमेवाह—**जाग्रदिति** । बहुश्रुतिविरोधादित्येतत्स्पष्टयति—**अतएवेति** । **कर्तृश्रुतिः** स हि कर्तेत्येषा बार्हदारण्यकी । **शाखान्तरश्रुतिस्तु** एष सुप्तेष्वित्याद्या कठशाखागता । अनुमानान्तरं वक्ष्यमाणमित्युक्तं तदाह—**प्राज्ञेति** । हेतोरसिद्धिमाशङ्क्याह—**नच जीवकर्तृकत्वादिति** । य एष सुप्तेष्विति वाक्यस्याधस्तात् प्राज्ञस्यैव परमात्मन एव प्रकृतत्वादित्यर्थः । विमतिपदं सत्यं स्वप्नत्वात्, संवादिस्वप्नवदित्याह—**अपिचेति** । ब्राह्मणा अयनमाश्रयो यस्य स तथा । स्वयं तु ब्राह्मणाभास इत्यर्थः । तथाविधेनोक्तमपि स्वप्ने सत्यं भवति किं पुनरन्यदिति भावः । **प्रियव्रतं** प्रियव्रतनामानं कंचित् । **उर्वरा** सर्वसस्या भूः ॥ १ ॥ २ ॥ यदुक्तं क्षीरदधिवत्कालभेदेनैकस्य शुक्तिरजतात्मकत्वादविरोधो रजतशुक्तिज्ञानयोरिति, तत्राह—**न तावत्क्षीरस्येवेत्यादिना** । ईश्वरस्य राजादेर्गृहे वस्तुतो यदीदं रजतं स्यात्, तर्हि, कालान्तरेऽपि शुक्तिर्न स्याद्, राजमन्दिरगतरजतकुम्भवदित्युक्तम्, इदानीं यदापि रजतत्वेनानुभूयते, तदैव पुरुषान्तरे

मृतश्चरित्वा । स ईयतेऽमृतो यत्र कामम्' ( बृ० ४।३।१२ ) इति स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीतेति । नेत्युच्यते । नहि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं संभाव्यते । क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन्प्रतिबुद्धश्चेति । देहाच्चेदपेयात्पञ्चालेषु प्रतिबुध्येत न तानसावभिगत इति कुरुष्वेव तु प्रतिबुध्यते । येन चायं देहेन देशान्तरमश्नुवानो मन्यते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति । यथाभूतानि चायं देशा-

## भामती ।

सभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते । नचेतरस्य रजतानुभवसमयेऽन्योऽनाकुलेन्द्रियो न तस्य शुक्तिभावमनुभवति प्रत्येति च । नच—उभयरूपं वस्तु सामग्रीभेदात्तु कदाचिदस्य तोयभावोऽनुभूयते कदाचिन्मरीचितेति—सांप्रतम्; पारमार्थिके ह्यस्य तोयभावे तत्साध्यामुदन्योपशमलक्षणार्थक्रियां कुर्यान्मरीचिसाध्यामपि रूपप्रकाशलक्षणाम् । न मरीचिभिः कस्यचित्तृष्णजोदन्योपशाम्यति । नच तोयमेव द्विविधमुदन्योपशमनमतदुपशमनमिति युक्तम् । तदर्थक्रियाकारित्वव्याप्तं तोयत्वं मात्रयापि तामकुर्वत्तोयमेव न स्यात् । **अपिच** तोयप्रत्ययसमीचीनत्वायास्य द्वैविध्यमभ्युपेयते तच्चाभ्युपगमेऽपि न सेद्धुमर्हति । **तथाहि**—असमर्थविधापाति तोयमेतदिति मन्वानो न तृष्णयापि मरीचितोयमभिधावेत् । यथा मरीचीननुधावन् । अथाशक्तं शक्तमभिमन्यमानोऽभिधावति । किमपराद्धं मरीचिषु तोयविपर्यासेन सर्वजनीनेन? यत्तमतिलङ्घ्य विपर्यासान्तरं कल्प्यते । नच क्षीरदधिप्रत्ययवदाचार्यमातुलब्राह्मणप्रत्ययवद्वा तोयमरीचिविज्ञाने समुच्चितावगाहिनी; स्वानुभवात्परस्परविरुद्धयोर्बाध्यबाधकभावावभासनात् । तत्रापि रजत-

## वेदान्तकल्पतरुः ।

विसंवादादपि न वास्तवं रजतत्वमित्याह—**नचेतरस्येति** । अन्योऽनाकुलेन्द्रियस्तस्य शुक्तिभावं नानुभवतीत्येतन्नेति व्यतिरेकमुक्त्वाऽन्वयमाह—**प्रत्येति चेति** । शुक्तिभावमित्यनुषङ्गः । शुक्तिरजतात्मकमेकमेव वस्तु ग्रहणसामग्रीभेदात्कदाचिच्छुक्तित्वेन ज्ञायते, कदाचिद्रजतत्वेन ज्ञायते । मा भूत्परिणाम इति यदुक्तं, तद् दूषयति—**नचोभयरूपमिति** । इष्टप्रसङ्गतामाशङ्क्याह—**न मरीचिभिरिति** । **तृष्णजः** पिपासोः । स्वपितृषोर्नजिङिति तृषेर्नजिङ्प्रत्ययः । **उदन्या** पिपासा । **ननु** मा कुर्वन्तु मरीचयस्तोयसाध्यामर्थक्रियां, सन्तु च तोयं, का बाधा ? तोयस्य द्व्यात्मकत्वादित्याशङ्क्याह—**नच तोयमेवेति** । पिपासोपशमकमुदकमित्यैकरूप्यस्य सति संभवे न प्रयोजकद्वैविध्यं कल्प्यमित्यर्थः । अकल्पने च व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिमप्याह—**तदर्थेति** । **ननु** न कल्प्यते, किंतु दृश्यते इत्याशङ्क्य प्रयोजकद्वैविध्याभ्युपगमेनापि परिहरति—**अपिचेति** । मरीचिषु तोयमवभासमानमर्थक्रियायामसमर्थमिति भासेत समर्थमिति वा, **नाद्य** इत्याह—**असमर्थविधेति** । असमर्थस्य विधा प्रकारस्तं पतति प्राप्नोति तथोक्तम् । यथा मरीचीन् शुद्धानित्यर्थः । पूर्वं क्षीरस्येव दधि न रजतस्य शुक्तिः परिणाम इत्यर्थं दूषणमभाणि, संप्रति प्रतीतिरपि तथा नास्तीत्याह—**नच क्षीरदधिप्रत्ययवदिति** । आचार्यादौ न परिणामः किं त्वपेक्षामात्रम् । एवं तावत् ज्ञानद्वयस्य विरुद्धार्थत्वविषयत्वमुक्तम् । अथ यदुक्तं बाध्यबाधकभावो न ज्ञानयोर्निर्णीयते; स्वगोचरशूरत्वाद् द्वयोरिति तत्र स्वगोचरशूरत्वेऽप्यर्थाद्विरोधमुपरिष्टाद्वक्ष्यति । इदानीं बाध्यबाधकभावं निगमयति—**तत्रापीति** । **परं** शुक्तिज्ञानमबाधित्वैव **पूर्वं** रजतज्ञानं जायते, कुतः? पर**स्यागामित्वाद्** भविष्यत्त्वादप्राप्तेस्तन्निषेधस्य पूर्वेण कर्तुमशक्यत्वादित्यर्थः । **ननु**

## कल्पतरुपरिमलः ।

दोषवशात्तदग्रहणे गृह्यत इति भावः ॥ १ ॥ २ ॥ **तद् दूषयतीति** । नीवारेषु व्रीह्यवयवानामिव शुक्तिषु रजतावयवानां सत्त्वे शुक्तिदाहे क्षारभाववद् द्रवीभावस्याप्युपलब्धिप्रसङ्गः । आधाने रजतशकलाद्यलाभे शुक्तिशकलोपादानप्रसङ्गः । अतः शुक्तौ रजतावयवाभावात्तत्सत्त्वेन रजतज्ञानप्रमात्वसमर्थनमयुक्तम् । कथंचिद्रजतावयवसत्त्वकल्पनेऽपि सर्वावयवावच्छेदेन शुक्तौ रजतज्ञानस्य चित्रपटे सर्वः पटो रक्त इति ज्ञानस्येव प्रमात्वं निर्वोढुं न शक्यम् । असावैत्रिकं चैतदवयवालम्बनतया प्रमात्वसमर्थनम्; तेन नीवारादिषु व्रीह्यादिज्ञानस्य प्रमात्वालाभात् । नहि रजतावयवेषु रजतत्वमिव व्रीह्यवयवे व्रीहित्वमस्ति । उत्पले नीलिमा उत्पलेऽरुणिमेति ज्ञानयोश्च प्रमात्वं निर्वोढुमशक्यम्; द्रव्येषु द्रव्यान्तराणामिव निरवयवेषु गुणेषु गुणान्तराणामवयवानुप्रवेशस्य वक्तुमशक्यत्वात्, पृथग्भूतयोश्च नीलिमारुणिमगुणयोरेकत्र व्याप्यवृत्तितया समावेशासंभवादिति दोषान्मनसिकृत्य दूषयतीत्यर्थः । **ननु** तोयद्वैविध्यवादिनं प्रति पिपासोपशमरूपतोयार्थक्रियाव्यावृत्तिसाधनं न युक्तमित्याशङ्क्य तोयद्वैविध्यकल्पनमयुक्तमिति तावदाह—**पिपासोपशामकमिति । अकल्पने चेति** । तोयद्वैविध्याकल्पने इत्यर्थः । कल्पनइति पाठे पिपासोपशमकमुदकमित्यैकविध्यकल्पन इत्यर्थः । **तन्निषेधस्य पूर्वेण कर्तुमशक्यत्वादिति । ननु**—कोऽत्र निषेधः ? यः परेण पूर्वस्य कर्तुं शक्यः सन् पूर्वेण परस्य

## भामती ।

ज्ञानं पूर्वमुत्पन्नं बाध्यमुत्तरं तु बाधकं शुक्तिज्ञानं प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । रजतज्ञानात्प्राक्प्रापकाभावेन शुक्तेरप्राप्तायाः प्रतिषेधासंभवात्पूर्वज्ञानप्राप्तं तु रजतं शुक्तिज्ञानमपबाधितुमर्हति । तदपबाधात्मकं च स्वानुभवादवसीयते । यथाहुः—'आगामित्वादबाधित्वा परं पूर्वं हि जायते । पूर्वं पुनरबाधित्वा परं नोत्पद्यते क्वचित् ।' नच—वर्तमानरजतावभासिज्ञानं भविष्यत्तामस्यागोचरयन्न भविष्यता स्वसमयवर्तिनीं शुक्तिं गोचरयता प्रत्ययेन बाध्यते, कालभेदेन विरोधाभावादिति—युक्तम्; मा नामास्य ज्ञासीत्प्रत्यक्षं भविष्यत्तां तत्पृष्ठभावि त्वनुमानमुपकारभावहेतुमिवासति विनाशप्रत्ययोपनिपाते स्थेमानमाकलयति । असति विनाशप्रत्ययोपनिपाते रजतमिदं स्थिरं रजतत्वादनुभूतप्रत्यभिज्ञातरजतवत् । तथाच रजतगोचरं प्रत्यक्षं वस्तुतः स्थिरमेव रजतं गोचरयेत् । तथाच भविष्यच्छुक्तिकाज्ञानकालं, रजतं व्याप्नुयादिति विरोधाच्छुक्तिज्ञानेन बाध्यते ॥

## वेदान्तकल्पतरुः ।

तर्हि पूर्वमपि परेण न बाध्यते, स्वविषयशूरत्वादुभयोरिति, तत्राह—**पूर्वं पुनरिति** । सत्यं तथापि पूर्वप्रतीतार्थाभाववोधित्वात् तस्य बाधकमित्यर्थः । स्वविषयशूरत्वेऽपि अर्थाद्विरोधं वक्ष्यतीत्यवादिष्म, तमाह—**नच वर्तमानरजतावभासीत्यादिना** । वर्तमानरजतावभासि विज्ञानमत एवास्य रजतस्य भविष्यत्तामगोचरयद् भविष्यता शुक्तिप्रत्ययेन स्वसमयवर्तिनीं शुक्तिं गोचरयता न बाध्यते, कुतः ? कालभेदेन विरोधाभावादित्येतन्न च युक्तमिति योजना । अत्र हेतुमाह—**मा नामेति । अस्य** रजतस्य भविष्यत्तां **मा ज्ञासीन्नाम** मा प्रकाशयतु नाम । **उपकारभावहेतुमिवेति ।** इदं रजतमुपकारकं रजतत्वात्संमतवदिति यथेत्यर्थः । विनाशं प्रत्येति वस्तु येन स विनाशप्रत्ययो विनाशकारणम् । रजतज्ञानकालमारभ्य यावच्छुक्तिज्ञानकालं रजतविनाशहेत्वदर्शनात् स्थायित्वे शुक्तित्वरजतयोरेकदैकत्र विरोधादर्थाद् बाध्यबाधकत्वं ज्ञानयोरित्यर्थः । अनुमानानुगृहीतप्रत्यक्षेण गृह्यमाणं रजतं चिरस्थायीति गृह्यते इति व्याख्यास्यति । तेन तद्रजतं भविष्यच्छुक्तिकाज्ञानस्य यः कालः तं व्याप्नोतीति वार्तिकार्थः । **ननु** यथा प्रत्यभिज्ञाप्रत्यक्षं कालान्तरवर्तिनीं तत्तां गृह्णाति, एवं रजतप्रत्यक्षमपि भविष्यत्तां रजतस्य ग्रहीष्यति, अत आह—**नच प्रत्यभिज्ञेति । अत्यन्ताभ्यासवशेनेति** सूक्ष्मकालव्यवधानागणने हेतुः । परिच्छेदानन्तरक्षणे अनुमानस्य प्रत्यक्षं प्रति सहकारित्वात्तदा च तस्य विनश्यत्त्वाद्विनश्यदवस्थत्वोक्तिः । एतत्सूक्ष्मतरं कालव्यवधानमविवेचयन्तः सौगता अनुमानगम्योऽपि संतानोऽनुगतरूपः प्रत्यक्षाध्यवसेयः स्वलक्षणग्रहणादध्युपर्यवसेय इत्याहुरित्यर्थः । इदंरजतादिभ्रमाणां बाधमुपपाद्य प्रकृते योजयति—**एतेनेति** । स्वप्नस्य य आख्यातो ब्राह्मणाभासस्तेन सह जागरणे गत्वा आख्याते त्वया ममैतदुक्तमित्यभिधाने तेन च नेत्युक्ते विसंवादात्तत्रापि स्वप्ने न सत्यत्वमिति शेषः । भाष्यमुपादाय व्याचष्टे—**रजन्यामिति** । भारतवर्षे वासरमिति भारतग्रहणव्यवच्छेद्यमाह—**रजनीति** । भारतवर्षे यो रजनीसमयस्तस्मिन्नपीत्यर्थः । केतुमालमिति मेरोः

## कल्पतरुपरिमलः ।

कर्तुं न शक्य इत्युच्यते, किं ध्वंसः ? उत स्वरूपतो विषयतो वा तदभावबोधनम् ? **नाद्यः**; द्वित्रिक्षणावस्थायिनः पूर्वज्ञानस्योत्तरात्मविशेषगुणमात्रात्कालाच्च ध्वंससत्त्वेन तत्साधारणस्य ध्वंसकत्वस्य विरोधिविषयज्ञानाऽसाधारणबाधकत्वरूपतानुपपत्तेः । **न द्वितीयतृतीयौ**; रजतविषयतया निष्पन्नत्वेन स्वरूपतो नास्तीति तद्रजतविषयं न भवतीति च तस्याभावबोधनासंभवात् । नच रजतज्ञानस्य भ्रमत्वप्रत्यायनं निषेधः; दर्पणे चैत्रमुखं नास्तीति पूर्वप्रत्यक्षेण चैत्रमुखसन्निधानानन्तरभाविनो दर्पणे चैत्रमुखमिति प्रत्यक्षस्य वृक्षोर्ध्वाग्रत्वप्रत्यक्षेण तत्समसमयवर्तिजलप्रतिबिम्बितवृक्षाधोग्रत्वप्रत्यक्षस्य च भ्रमत्वप्रत्यायनादिति—**चेत्, उच्यते**; पूर्वं बाध्यं परं बाधकमिति प्रायिकोक्तिः । लोके प्रवृत्तिसंवादादिना वेदे तदर्थतत्त्वनिर्णायकन्यायेन च बलवद्बाधकम् इतरद्बाध्यमिति व्यवस्था । इयांस्तु विशेषः । परेण पूर्वस्य भ्रमत्वप्रत्यायनमेव बाधः, पूर्वेण परस्य तु सोपाधिकभ्रमस्थले भ्रमत्वप्रत्यायनं बाधः, निरुपाधिकभ्रमस्थले वैदिके चोत्पत्तिप्रतिबन्धः । अत एव शीघ्रभाविना श्रौतविनियोगेन लैङ्गिकविनियोगस्य बाध इष्यते । **भारते वर्षे यो रजनीसमय इति ।** लक्षयोजनविस्तृतवर्तुलाकारलवणार्णवपरिवृतस्य लक्षयोजनविस्तृतस्य जम्बूद्वीपस्य मध्ये भूकमलकर्णिकाकृतेरिलावृताख्यमध्यवर्षमध्यमध्यासीनस्य मेरोर्दक्षिणतो हरिकिम्पुरुषभारताख्यानि त्रीणि वर्षाणि । उत्तरतो रम्यकहिरण्मयोत्तरकुरुसंज्ञानि त्रीणि । पश्चिमतः केतुमालाख्यमेकम् । पूर्वतो भद्राश्वसंज्ञमेकम् । वसन्ति रमन्ति चैतेषु प्राणिन इति मर्यादा । पर्वतान्तरिताः प्राणिनिवासस्थानभूता भूप्रदेशा वर्षाण्युच्यन्ते । तेषु मेरुं प्रदक्षिणीकुर्वाणस्यादित्यस्य रश्मयो यदा यावत्पर्यन्तं प्राप्नुवन्ति तदा तावत्पर्यन्तं दिवसः अन्यत्र रजनीति व्यवस्था । एवंच भारते वर्षे सूर्यास्तमयानन्तरं केतुमाले मेरुव्यवधानाभावात्सूर्यप्रकाशोऽस्तीति दिवसो भवति । अतो रजन्यां दिवसो न विरुद्ध इति शङ्कावारणाय भारते वर्षे रजन्यां सुप्तस्य तत्रैव स्वाप्नं दिवसदर्शनमुदाहृतम् । **ननु**—इदं रजन्यां दिवसदर्शनं न विरुध्यते; स्वप्ने परमेश्वरसृष्टस्वप्नदृगेकानुभाव्यादित्यर-

न्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति । परिधावंश्चैतपश्येज्जाग्रद्वद्वस्तुभूतमर्थमाकलयेत् । दर्शयति च श्रुतिरन्तरेव देहे स्वप्नम्—'स यत्रैतत्स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' ( बृ० २।१।१८ ) इति । अतश्च श्रुत्युपपत्तिविरोधाद्बहिष्कुलायश्रुतिर्गौणी व्याख्यातव्या बहिरिव कुलायादमृतश्चरित्वेति । यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवतीति । स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः, कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते । तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्बहुवर्षपूगानतिवाहयति । निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते । करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति । रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा । बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे । स्वप्न एव चैते सुलभबाधा भवन्ति; आद्यन्तयोर्व्यभिचारदर्शनात् । रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः । स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम्—'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' ( बृ० ४।३।१० ) इत्यादि । तस्मान्मायामात्रं स्वप्नदर्शनम् ॥ ३ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति । नेत्युच्यते । सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः । तथाहि श्रूयते—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' ( छा० ५।२।९ ) तथा पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति । आचक्षते च स्वप्नाध्यायविदः—'कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति । मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमानत्वा-

### भामती ।

यथाहुः—'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते । भविष्यच्छुक्तिकाज्ञानकालं व्याप्नोति तेन तत् ॥' इति । प्रत्यक्षेण चिरस्थायीति गृह्यत इति केचिद्व्याचक्षते । तदयुक्तम्; यदि चिरस्थायित्वं योग्यता, न सा प्रत्यक्षगोचरः शक्तेरतीन्द्रियत्वात् । अथ कालान्तरव्यापित्वं, तदप्ययुक्तम्; कालान्तरेण भविष्यतेन्द्रियस्य संयोगायोगात्तदुपहितसीम्नो व्यापित्वस्यातीन्द्रियत्वात् । नच प्रत्यभिज्ञाप्रत्ययवदत्रास्ति संस्कारः सहकारी, येनावर्तमानमप्याकलयेत् । तस्मादत्यन्ताभ्यासवशेन प्रत्यक्षानन्तरं शीघ्रतरोत्पन्नविनश्यदवस्थानुमानसहितप्रत्यक्षाभिप्रायमेव चिरस्थायीति गृह्यत इति मन्तव्यम् । अतएवैतत्सूक्ष्मतरं कालव्यवधानमविवेचयन्तः सौगताः प्राहुः, द्विविधो हि विषयः प्रत्यक्षस्य ग्राह्यश्चाध्यवसेयश्च । ग्राह्यक्षण एकः स्वलक्षणोऽध्यवसेयश्च संतान इति । एतेन स्वप्नप्रत्ययो मिथ्यात्वेन व्याख्यातः । यत्तु सत्यं स्वप्नदर्शनमुक्तं तत्राप्याख्यात्रा ब्राह्मणायनेनाख्याते संवादाभावात् । प्रियव्रतस्याख्यानसंवादस्तु काकतालीयो न स्वप्नज्ञानं प्रमाणयितुमर्हति, तादृशस्यैव बहुलं विसंवाददर्शनात् । दर्शितश्च विसंवादो भाष्यकृता कार्त्स्न्येनानभिव्यक्तिं विवृण्वता । रजन्यां सुप्त इति । रजनीसमयेऽपि हि भारताद्वर्षान्तरे केतुमालादौ वासरो भवतीति भारते वर्ष इत्युक्तम् ॥ ३ ॥ दर्शनं सूचकं तच्च स्वरूपेण सत्, असत्तु दृश्यम् । अतएव स्त्रीदर्शनस्वरूपसाध्याश्चरमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपनदन्तक्षतादयो नानुवर्तन्ते ।

### वेदान्तकल्पतरुः ।

पश्चिमदेशः ॥ ३ ॥ ननु कुञ्जरारोहादिदर्शनं स्वप्ने सूचकं तच्च सत्यमिति कथं मिथ्याभूतस्य स्वप्नस्य सूचकत्वं सूत्रे उच्यते ? तत्राह—तच्च स्वरूपेणेति । विषयाविशेषितरूपेण ज्ञानमात्ररूपेण सत् । तच्च न सूचकम् । यतः कुतश्चिज्ज्ञानादस्य कस्यचित् सूचनप्रसङ्गात् । असत्तु दृश्यं तस्मात्तदुपहितं दर्शनं सूचकम् । तच्च मिथ्यैवेत्यर्थः । यदि सूचकत्वं स्वप्नस्योपेयते तर्ह्यर्थक्रियाकारित्वमहत्त्वसंयोगात् जाग्रद्वद् ब्रह्मसाक्षात्कारादर्वागबाधः स्यात् । अतश्च पूर्वापरविरोध इत्याशङ्क्याह —अतएवेति । अस्ति मिथ्याभूतस्याप्युपहितस्यापि स्वप्नदर्शनस्य व्यावहारिकं सत्त्वम् । अत एवाद्राक्षं स्वप्नमहमिति मिथ्यार्थोपहितं स्वप्नदर्शनमनुमन्यते । युक्त्या तु तस्य मिथ्यार्थोपहितत्वान्मिथ्यात्वमुच्यते । अर्थस्तु स्वाप्नो मिथ्या, नच व्यावहारिकमपि सत्त्वं तस्यास्तीति न पूर्वापरविरोध इत्यर्थः । स्वप्नः सत्यः, प्राज्ञकर्तृकत्वादित्यनुमिते नचास्माभिरिति

दित्यभिप्रायः । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् । यदुक्तम् 'आह हि' इति तदेवं सति भाक्तं व्याख्यातव्यम् । यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते नतु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति । एवं निमित्तमात्रत्वात्सुप्तो रथादीन्सृजते स हि कर्तेति चोच्यते, नतु प्रत्यक्षमेव सुप्तो रथादीन्सृजति । निमित्तत्वं त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम् । अपिच जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः । तत्र यदि रथादिसृष्टिवचनं श्रुत्यानीयेत, तदा स्वयंज्योतिष्ट्वं न निर्णीतं स्यात् । तस्माद्रथाद्यभाववचनं श्रुत्या रथादिसृष्टिवचनं तु भक्त्येति व्याख्येयम् । एतेन निर्माणश्रवणं व्याख्यातम् । यदप्युक्तम्—'प्राज्ञमेनं निर्मातारमामनन्ति' इति । तदप्यसत्; श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निनिर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' (बृ० ४।३।९) इति जीवव्यापारश्रवणात् । इहापि 'य एष सुप्तेषु जागर्ति' ( क० ५।८ ) इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता संकीर्त्यते । तस्य तु वाक्यशेषेण तदेव शुक्रं तद्ब्रह्मेति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते—'तत्त्वमसि' ( छा०६।९।४ ) इत्यादिवदिति न ब्रह्मप्रकरणं विरुध्यते । नचास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते; तस्य सर्वेश्वरत्वात्सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः । पारमार्थिकस्तु नायं संध्याश्रयः स्वर्गो वियदादिसर्गवदित्येतावत्प्रतिपाद्यते । नच वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति । प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( ब्र० सू० २।१।१४ ) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक्तु ब्रह्मात्मत्वदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितरूपो भवति । संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इति । अतो वैशेषिकमिदं संध्यस्य मायामात्रत्वमुदितम् ॥ ४ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

अथापि स्यात्परस्यैव तावदात्मनोंऽशो जीवोऽग्नेरिव विस्फुलिङ्गः । तत्रैवं सति यथाग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवत एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती ततश्च जीवस्य ज्ञानैश्वर्यवशात्सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति । अत्रोच्यते—सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् । किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव ? न नास्त्येव । विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधानात् । तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति न स्वभावत एव सर्वेषां जन्तूनाम् । कुतः ? ततो हीश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः । ईश्वरस्वरूपापरिज्ञानाद्बन्धस्तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथाच श्रुतिः—'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवलआप्तकामः' ( श्वे० १।११ ) इत्येवमाद्या ॥ ५ ॥

## देहयोगाद्वा सोऽपि ॥ ६ ॥

कस्मात्पुनर्जीवः परमात्मांश एव संस्तिरस्कृतज्ञानैश्वर्यो भवति ? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशनयोरिति, उच्यते; सत्यमेवैतत्; सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति । अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतो यथा वा भस्मच्छन्नस्य ।

भामती ।

नचास्माभिः स्वप्नेऽपि प्राज्ञव्यापार इति । प्राज्ञव्यापारत्वेन पारमार्थिकत्वानुमानं प्रत्यक्षेण बाधकप्रत्ययेन विरुध्यमानं नात्मानं लभत इति भावः । बन्धमोक्षयोरान्तरालिकं तृतीयमैश्वर्यमिति ॥ ४ ॥ पराभिध्यानात्तु

वेदान्तकल्पतरुः ।

भाष्येण स्वप्नस्य प्राज्ञकर्तृकत्वमभ्यनुज्ञायते तत्र हेतुस्वीकारे हेतुमत्सत्यत्वमपि स्यादित्याशङ्क्याह—प्राज्ञव्यापारत्वेनेति ॥ ॥ ४ ॥ तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यमिति भाष्योदाहृतश्रुतौ तृतीयशब्दार्थमाह—बन्धमोक्षयोरिति । सगु-

**एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात्तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः । वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः । नन्वन्य एव जीव ईश्वरादस्तु तिरस्कृतज्ञानैश्वर्यत्वात्किं देहयोगकल्पनया ? नेत्युच्यते । नह्यन्यत्वं जीवस्येश्वरादुपपद्यते 'सेयं देवतैक्षत' ( छा० ६।३।२ ) इत्युपक्रम्य 'अनेन जीवेनात्मनाऽनुप्रविश्य' ( छा० ६।३।२ ) इत्यात्मशब्देन जीवस्य परामर्शात् । 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६।९।४ ) इति च जीवायोपदिशतीश्वरात्मत्वम् । अतोऽनन्य एवेश्वराज्जीवः सन् देहयोगात्तिरोहितज्ञानैश्वर्यो भवति । अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते । यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यान्नैवानिष्टं कश्चित्स्वप्नं पश्येत् । नहि कश्चिदनिष्टं संकल्पयते । यत्पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं स्थापयतीति न तत्साम्यवचनं सत्यत्वाभिप्रायम्; स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात् । जागरितप्रभववासनानिमितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत् । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥ ६ ॥ इति प्रथमं संध्याधिकरणम् ॥**

---

## भामती ।

**तिरोहितं ततो ह्यस्य बन्धविपर्ययौ देहयोगाद्वा सोऽपि** इति सूत्रद्वयं कृतोपपादनमस्माभिः प्रथमसूत्रे । निगदव्याख्यातं चैतयोर्भाष्यमिति ॥ ५ ॥ ६ ॥ **इति प्रथमं संध्याधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

णत्रह्मोपासनफलमीश्वरसायुज्यं हि न बन्धो दुःखाभावान्न मोक्षो भेदाश्रयत्वादतोऽन्तरालवर्तीत्यर्थः । **कृतोपपादनमिति ।** प्रथमसूत्रे हि स्वप्रकाशस्याप्यविद्याविषयत्वसमर्थनात् जीवस्यैश्वर्यतिरोधानम् अविद्यादेर्मिथ्यात्वेन तत्त्वसाक्षात्कारान्निवृत्तेरभिव्यक्तिश्च समर्थितेति अध्यासात्मकश्च देहयोगः समर्थित इत्यर्थः ॥ ५ ॥ ६ ॥

सुप्तेषु प्राणेषु य एष साक्षी जगर्ति, न स्वपिति । कथं न स्वपित्यत आह—कामं कामं तं तमभिप्रेतं विषयं निर्मिमाणो जागर्ति यस्तदेव शुक्रं शुद्धममृतं ब्रह्मोच्यते । **वृणीष्वेति ।** नचिकेतसंप्रति मृत्युवचनम् । काम्यपुत्रादीनां **कामभाजं** प्रकामभाजमतिशयभाजम् । तद् ब्रह्म **कश्चित्** कश्चिदपि **नात्येति** उशब्द एवार्थे । नात्येत्येवेत्यर्थः । **अथो** स्वयंज्योतिष्ट्वकथनानन्तरम् । अन्ये आहुः । अस्यात्मनो जागरितदेश एवैष यः स्वप्नः । अत्र हेतुमाह—यानि हि जाग्रत्पुरुषः पश्यति तान्येव सुप्तोपि पश्यतीति । **बहिष्कुलायादिति ।** स्वप्नावस्थायां प्राणेन रक्षन्न**वरं कुलायं** कुत्सितं नीडं शरीरं **तस्मा**त्कुलायाद्ब**हिश्चरित्वा** तस्मिन्नभिमानमकृत्वेत्यर्थः । **स** आत्मा **यत्र कामं** यत्र कामो भवति तत्र विषये **ईयते** गच्छति । **स्वप्नया** स्वप्नरूपयाऽन्तःकरणवृत्त्येत्यर्थः । **स्वय**मात्मा **जाग्रद्देहं विहत्य** निश्चेष्टमापाद्य । देहव्यापारो ह्यात्मभोगार्थः भोगार्थं कर्मणश्चात्मा कर्ता, तदा च जाग्रद्भोगप्रदकर्मोपरमे सति देहपातादात्मा विहन्तेत्युच्यते । तथा स्वप्नदेहमदृष्टद्वारा

## कल्पतरुपरिमलः ।

दिमप्रचारेण तं प्रति तदा दिवसोपपत्तेः, एवंच मुहूर्तमात्रवर्तिनि स्वप्ने वर्षपूगातिवाहनं च युज्यते; देवादिकालोपाधिभ्यो मनुष्यादिकालोपाधीनामिव जाग्रत्कालोपाधिभ्यः स्वाप्नकालोपाधीनां सूक्ष्मत्वतारतम्यकल्पनात्कालविपर्यासवद्देशविपर्यासोऽपि घटते; स्वप्ने कुरुदेशाधिष्ठितशरीरसदृशेन यथास्वप्नानुभवं तद्विसदृशेन वा शरीरान्तरेण पञ्चालदेशगमनोपपत्तेः, योजनशतप्राप्यस्यापि देशान्तरस्य क्षणेन प्राप्तेः क्षणेन ततः प्रत्यागतेश्च स्वाप्नशरीरस्याश्चर्यरूपस्य जाग्रच्छरीरविलक्षणत्वादुपपत्तेः, जागरे गजादिमत्सु देशेषु रथाद्युपलम्भस्य च स्वप्नार्थानां जागरितार्थानां च जलालोकपवनन्यायेन मूर्तत्वेऽपि मिथःप्रतिघातकत्वाभावकल्पनयोपपत्तेः, स्वप्नानुभूतरथादीनां स्वप्नदृष्टदारुरथादिभस्मनां च जागरानन्तरमननुभवस्य स्वप्नान्ते परमेश्वरकृतनिरवशेषस्वाप्नपदार्थोपसंहारकल्पनया स्वाप्नपदार्थानां स्वाप्नचक्षुरादिमात्रगम्यत्वकल्पनया चोपपत्तेरिति—**चेत्, उच्यते,** एतावल्लोकदृष्टविरुद्धं किमवलम्ब्य कल्प्यते । बहिष्कुलायश्रुतिं रथादिसृष्टिश्रुतिं चेति चेत्, न; बहिष्कुलायश्रुतेः स्वे शरीरइति श्रुत्यनुसारेण भाक्तत्वात् । शरीरान्तरमपि स्वीयमेवेति न विरोध इति चेत्, न; तस्य पूर्वशरीरवत्स्वीयत्वमनुक्तसिद्धमिति तस्यावक्तव्यतया तस्याः श्रुतेर्विकृतशरीरान्तरपरिग्रहदर्शनेऽपि बहिः सञ्चारदर्शनेपि शेते पूर्वशरीरएव परिवर्तते नापि बहिः संचरतीति तस्य सर्वस्यापि मिथ्यात्वदर्शनेनैव साफल्यस्योपपादनीयत्वाद्, "न तत्र रथा" इत्याद्युपक्रमानुसारेण भाक्तत्वात्, तत्र लडाख्याताभ्यां रथाद्यभावरथादिसृष्ट्योः समानकालत्वप्रतिपादनेन रथादिमिथ्यात्वे तात्पर्यावसायात्, अथेत्यव्ययस्य अथापीत्येतदर्थत्वेनाप्युपपत्तेः । **किंच** सृष्टिशरीरान्तरश्रुत्योः स्वार्थपरत्वे प्रकरणप्रतिपाद्यप्रधानार्थविरोधः स्यात्, तद्धि प्रकरणमात्मनः स्वयंज्योतिष्ट्वं साधयितुं प्रवृत्तम् । तत्र जाग्रदवस्थायामादित्यादिज्योतिर्व्यतिकरात्तद् दुर्विवेचमिति तद्विवेचनाय स्वप्नावस्थाऽवतारिता । तत्र यदि सृष्टिः प्रतिपाद्येत

(२ अधिकरणम्) **तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥**

स्वप्नावस्था परीक्षिता, सुषुप्तावस्थेदानीं परीक्ष्यते। तत्रैताः सुषुप्तिविषयाः श्रुतयो भवन्ति। क्वचिच्छ्रूयते—'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' (छा० ८।६।३) इति। अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते—'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ० २।१।१९) इति। तथान्यत्र नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' (कौषी० ४।१९) इति। तथान्यत्र 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ० २।१।१७) इति। तथान्यत्र 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा० ६।८।१) इति। प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ० ४।३।२१) इति च। तत्र संशयः—किमेतानि नाड्यादीनि परस्परनिरपेक्षाणि भिन्नानि सुषुप्तिस्थानान्याहोस्वित्परस्परापेक्षयैकं सुषुप्तिस्थानमिति। किं तावत्प्राप्तम्? भिन्नानीति। कुतः? एकार्थत्वात्। नह्येकार्थानां क्वचित्परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम्।

## भामती।

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥** इह हि नाडीपुरीतत्परमात्मानो जीवस्य सुषुप्तावस्थायां स्थानत्वेनश्रूयन्ते। तत्र किमेषां स्थानानां विकल्प आहोस्वित्समुच्चयः। किमतो यद्येवम्। एतदतो भवति। यदा नाड्यो वा पुरीतद्वा सुषुप्तस्थानं, तदा विपरीतग्रहणनिवृत्तावपि न जीवस्य परमात्मभाव इति। अविद्यानिवृत्तावपि जीवस्य

## वेदान्तकल्पतरुः।

स्वयं निर्माय स्वेन भासा वासनाजन्यज्ञानेन युक्तः स्वेन ज्योतिषा तत्साक्षिचित्प्रकाशेन इत्थंभूतः प्रस्वपिति वासनामयीर्वृत्तीः पश्यन्नास्त इत्यर्थः। देवमीश्वरमहमस्मीति **ज्ञात्वा** साक्षात्कृत्य सर्वपाशानामविद्यादिबन्धानामपहानिर्भवति। क्षीणैः क्लेशैर्जन्ममरणयोर्हेत्वभावात् प्रहाणिरिति निर्गुणविद्याफलमुक्त्वा सगुणोपास्तिफलमाह—**तस्येति**। तृतीयत्वं विश्वैश्वर्यस्योपपादितं। देहभेदे देहवियोगे सति विश्वैश्वर्यं भवतीत्यर्थः। तत्र च भोगान् भुक्त्वा ब्रह्मविद्यामिव्यक्तौ केवलोऽद्वितीय आप्तकामः प्राप्तपरमानन्दः परानन्दात्मा भवतीति क्रममुक्तिरुक्ता। भाष्येऽरणिनिहिताभ्युदाहरणमरण्योर्निहितो जातवेदा इत्यादिशास्त्रदृष्ट्यपेक्षं लोकदृष्ट्यपेक्षं भस्मच्छन्नोदाहरणम् ॥ १ ॥ **इति प्रथमं संध्याधिकरणम्** ॥

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ जीवस्य स्वप्रभवत्वाय स्वप्नमिथ्यात्वमीरितम्। अथास्य ब्रह्मभावाय सुषुप्तिः क्वेति चिन्त्यते** ॥ आसु तदा नाडीषु इत्यादिसप्तमीनिर्देशात् ताभिः प्रत्यवसृप्येत्यादिसमुच्चयनिर्देशाच्च संशयमाह—**तत्र किमिति**। प्रयोजनमाह—**एतदत इति**। वस्तुतो ब्रह्मण एव सतो जीवस्य तद्वैपरीत्यं भ्रमः। तद्यदि निवृत्तेऽपि सुषुप्तौ विपर्यासे नाडीषु पुरीतति वा तिष्ठेद्, नतु ब्रह्मतादात्म्यं भजेत जीवस्तदा ब्रह्मभावे विपरीतज्ञाननिवृत्तिरप्रयोजिका स्यादित्यर्थः। **ननु** दण्डायमानभावरूपाज्ञाननिवृत्तौ ब्रह्मभावः, सुषुप्तौ तु नाड्यादिस्थस्य तदनिवृत्तमिति न ब्रह्मभावः ततो नाड्यादेः सुषुप्तिस्थानत्वाभावचिन्ता निष्प्रयोजनेत्याशङ्क्याह—**अविद्यानिवृत्तावपीति**। यावद्यावद्धि प्रतिबन्धनिवृत्तिस्तावत्तावद् ब्रह्मभावोऽप्याविर्भवेत्। तत्र यदि मिथ्याज्ञाननिवृत्तौ न ब्रह्म-

## कल्पतरुपरिमलः।

तदा तस्यामपि तद्दुर्विवेचं स्यात्। आदित्यादिज्योतिरन्तरसद्भावात्। अतः प्रधानप्रतिपाद्यविरोधात्स्वर्गार्थज्योतिष्टोमप्रकरणे तदङ्गविध्यर्थवादरूपस्य "को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा न वेति" वाक्यस्येव स्वप्नसृष्टिशरीरान्तरपरिग्रहवचनस्य न स्वार्थे तात्पर्यमित्येव वक्तुं युक्तम्। **किंच** स्वप्ने महासेनायां गजतुरगरथभोग्रभटादिरूपाः पारेपरार्धं चेतना दृश्यन्ते। एवमेकैकस्य स्वप्नं निर्वोढुं कियन्तश्चेतनाः कुतः समानीय परमेश्वरेणापि मेलनीयाः। नहि स्वप्ननिर्वाहार्थमेव तेन क्वचित्केचन चेतनाः पृथग् निवेशिताः सन्ति। चेतनांशे चेत् स्वप्नानामयथार्थता, अचेतनांशेऽपि तथाऽस्तु किमर्धजरतीयेन। अवश्यं तच्छरीरान्तरपरिग्रहेऽपि प्राचीनं तदेवेदं मच्छरीरमित्यभिमानांशेऽपि स्वाप्नसृष्ट्यङ्गीकारेऽपि चिरातीतेषु पित्रादिषु दृश्यमानेषु त एवैते मे पित्रादय इत्यभिमानांशेऽपि भ्रमत्वमवश्यं वाच्यम्। आरुक्षमिव शैलाग्रमाविक्षमिव काननमित्यादिलोकानुभवसिद्धं च स्वप्नस्य भ्रमत्वम् "उतेव स्त्रीभिः सह मोदमान" इत्यादिश्रुत्यापि तदनूदितम्। तस्माद्युक्तं देशकालादिविपर्ययेण स्वप्नस्य मिथ्यात्ववर्णनम् ॥ ४ ॥ ५ ॥ ६ ॥ **इति प्रथमं संध्याधिकरणम्** ॥

---

१ तत्र सूत्राणि ६—संध्ये सृष्टिराह हि १ निर्मातारं चैके पुत्रादयश्च २ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ३ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ४ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ५ देहयोगाद्वा सोऽपि ६ ॥

नाड्यादीनां त्वेकार्थता सुषुप्तौ दृश्यते—'नाडीषु सृप्तो भवति' ( छा० ८।६।३ ) 'पुरीतति शेते' ( बृ० २।१।१९ ) इति च तत्र तत्र सप्तमीनिर्देशस्य तुल्यत्वात् । ननु नैवं सति सप्तमीनिर्देशो दृश्यते—'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इति, नैष दोषः; तत्रापि सप्तम्यर्थस्य गम्यमानत्वात् । वाक्यशेषो हि तत्रायतनैषी जीवः सदुपसर्पतीत्याह—'अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते' ( छा० ६।८।२ ) इति । प्राणशब्देन तत्र प्रकृतस्य सत उपादानात् । आयतनं च सप्तम्यर्थः । सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते—'सति संपद्य न विदुः सति संपद्यामह इति' ( छा० ६।९।२ ) । सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशिष्यते । तस्मादेकार्थत्वान्नाड्यादीनां विकल्पेन कदाचित्किंचित्स्थानं स्वापायोपसर्पतीति । एवं प्राप्ते प्रतिपाद्यते—तदभावो नाडीष्वात्मनि चेति । तदभाव इति तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः सुषुप्तमित्यर्थः । नाडीष्वात्मनि चेति समुच्चयेनैतानि नाड्यादीनि स्वापायोपैति न विकल्पेनेत्यर्थः । कुतः ? तच्छ्रुतेः । तथाहि—सर्वेषामेव नाड्यादीनां तत्र तत्र सुषुप्तिस्थानत्वं श्रूयते, तच्च समुच्चये संगृहीतं भवति । विकल्पे ह्येषां पक्षे बाधः स्यात् । नन्वेकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवदित्युक्तम्, नेत्युच्यते; नह्येकविभक्तिनिर्देशमात्रेणैकार्थत्वं विकल्पश्चापतति । नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात्प्रासादे शेते पर्यङ्के शेत इत्येवमादिषु । तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्येतदुपपद्यते समुच्चयः । तथाच श्रुतिः—'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' ( कौषी०

## भामती ।

परमात्मभावाय कारणान्तरमपेक्षितव्यं, तच्च कर्मैव, नतु तत्त्वज्ञानम्; विपरीतज्ञाननिवृत्तिमात्रेण तस्योपयोगात्, विपरीतज्ञाननिवृत्तेश्च विनापि तत्त्वज्ञानं सुषुप्तावपि संभवात् । ततश्च कर्मणैवापवर्गो न ज्ञानेन । यथाहुः—'कर्मणैव तु संसिद्धिमास्थिता जनकादयः' इति । अथ तु परमात्मैव नाडीपुरीतत्सृप्तिद्वारा सुषुप्तिस्थानं, ततो विपरीतज्ञाननिवृत्तेरस्ति मात्रया परमात्मभाव उपयोगः । तथा हि तावदेष जीवस्तदवस्थानो भवति केवलं । तत्त्वज्ञानाभावेन समूलकाषमविद्याया अकाषाज्जाग्रत्स्वप्नलक्षणं जीवस्य व्युत्थानं भवति । तस्मात्प्रयोजनवत्येषा विचारणेति । किं तावत्प्राप्तम् ? नाडीपुरीतत्परमात्मसु स्थानेषु सुषुप्तस्य जीवस्य निलयं प्रति विकल्पः । यथा बहुषु प्रासादेष्वेको नरेन्द्रः कदाचित्क्वचिन्निलीयते कदाचित्क्वचिदेवमेको जीवः कदाचिन्नाडीषु कदाचित्पुरीतति कदाचिद्ब्रह्मणीति । यथा निरपेक्षा व्रीहियवाः क्रतुसाधनीभूतपुरोडाशप्रकृतितया श्रुता एकार्था विकल्प्यन्ते, एवं सप्तमीश्रुत्या वायतनश्रुत्या वैकनिलयनार्थाः परस्परानपेक्षा नाड्यादयोऽपि विकल्पमर्हन्ति । यत्रापि नाडीभिः प्रत्यवसृप्य पुरीतति शेत इति नाडीपुरीततोः समुच्चयश्रवणं 'तथा तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति । अथास्मिन् प्राण एवैकधा भवति' इति

## वेदान्तकल्पतरुः ।

भावः श्रुत्योच्येत, तर्ह्यज्ञाननिवृत्तावपि न ब्रह्मभाव इति श्रुतेराशयः स्यात् । ततो ब्रह्मभावाय कारणान्तरं स्याद् नाज्ञानमिथ्याज्ञाननिवृत्ती इत्यर्थः । तर्हि तदेव कारणान्तरं ज्ञानमस्तु, नेत्याह—**तच्चेति** । कर्म ह्यभूतप्रादुर्भावफलं, ज्ञानं त्वविद्यानिवृत्तिमात्रफलमित्यर्थः । विपरीतज्ञाननिवृत्तिरविद्यानिवृत्तेरप्युपलक्षणम्, नतु विपरीतज्ञानमेवाविद्येति भ्रमितव्यम्; समूलकाषमविद्याया अकाषादित्युपरितनग्रन्थे मूलशब्देन भावरूपाऽविद्याया अभिधानात् । तर्ह्यविद्यानिवृत्तिद्वारेण ब्रह्मभावं ज्ञानमभिव्यनक्तु, नेत्याह—**विपरीतज्ञाननिवृत्तेरिति** । चशब्देनाविद्यानिवृत्तेरप्यप्रयोजकत्वादित्यर्थः । **मात्रयेति** । स्तोकप्रतिबन्धनिवृत्तिरूपेणेत्यर्थः । तया विपरीतज्ञाननिवृत्त्या तावत्तदवस्थानो ब्रह्मभावावस्थानो भवति जीवस्तावच्छब्देन न सर्वात्मना तदवस्थानो मूलाविद्यायाः स्थितत्वादित्यर्थः । लौकिकं विकल्पोदाहरणमुक्त्वा वैदिकमाह—**यथा निरपेक्षा इति** । निरपेक्षा इति समुच्चयासंभवार्थम् । **आयतनश्रुत्या चेति** । सदायतना इत्यत्रत्यायतनस्य सप्तम्यर्थत्वादिर्थः । सिद्धान्तबीजमाशङ्क्याह—**यत्रापीति** । **नन्वत्र** प्राणप्राप्तिः प्रतीयते, कथं नाडीब्रह्मसमुच्चयः ? तत्राह—**प्राणशब्दमिति** । पदार्थमुक्त्वा प्रस्तुतवाक्यमेव योजयति—**अथास्मिन् प्राण इति** इतिवच-

## कल्पतरुपरिमलः ।

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ मूलाऽविद्यायाः स्थितत्वादित्यर्थ इति** । सूच्यतइति शेषः । एवं हि तावच्छब्दस्यान्वयो भवति । बृहत्पृष्ठं भवतीति ज्योतिष्टोमे माध्यन्दिनपवमानानन्तरभाविमाहेन्द्रस्तोत्रं पृष्ठाख्यं बृहत्पृष्ठं भवतीत्यादिवाक्यद्वयेन बृहद्रथन्तरे तत्साधनत्वेन विधीयेते । मृगारूढगीतिक्रियारूपसामविशेषवाचिनोर्बृहद्रथन्तरशब्दयोः प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानरूपस्तोत्रविशेषवाचिनः पृष्ठशब्दस्य च साध्यसाधनभावविवक्षां

## भामती ।

नाडीब्रह्मणोराधारयोः समुच्चयश्रवणम् । प्राणशब्दं च ब्रह्म; 'अथास्मिन् प्राणे ब्रह्मणि स जीव एकधा भवति' इति वचनात् । तथाप्यासु तदा नाडीषु सृप्तो भवतीति च पुरीतति शेत इति च निरपेक्षयोर्नाडीपुरीततोराधारत्वेन निर्देशान्निरपेक्षयोरेवाधारत्वम् । इयांस्तु विशेषः । कदाचिन्नाड्य एवाधारः कदाचिन्नाडीभिः संचरमाणस्य पुरीतदेव । एवं ताभिरेव संचरमाणस्य कदाचिद्ब्रह्मैवाधार इति सिद्धमाधारत्वे नाडीपुरीतत्परमात्मनामनपेक्षत्वम् । तथाच विकल्पो व्रीहियववद्बृहद्रथन्तरवद्वेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—जीवः समुच्चयेनैवैतानि नाड्यादीनि स्वापायोपैति न विकल्पेन । **अयमभिसंधिः**—नित्यवदाम्नातानां यत्पाक्षिकत्वं नाम तद्गत्यन्तराभावे कल्प्यते । **यथाहुः**—'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते' इति । प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया हि परस्परानपेक्षौ व्रीहियवौ विहितौ शक्नुतश्चैतौ प्रत्येकं पुरोडाशमभिनिर्वर्तयितुम् । तत्र यदि मिश्राभ्यां पुरोडाशोऽभिनिर्वर्त्येत परस्परानपेक्षव्रीहियवविधातृणी उभे अपि शास्त्रे बाध्येयाताम् । नचैतौ प्रयोगवचनः समुच्चेतुमर्हति । स हि यथाविहितान्यङ्गान्यभिसमीक्ष्य प्रवर्तमानो नैतान्यन्यथयितुं शक्नोति । मिश्रणे चान्यथात्वमे-

## वेदान्तकल्पतरुः ।

नायत्रापि नाडीब्रह्मणोः समुच्चयश्रवणमिति योजना । **तथापीति** । तत्रापीत्यर्थः । यत्रापीत्युपक्रमात् । निरपेक्षसप्तमीश्रुतिभ्यां यदि नाडीपुरीततोर्निरपेक्षमाधारत्वं, का तर्हि समुच्चयश्रवणस्य गतिः ? अत आह—**इयांस्त्विति** । नाड्यस्तावत्, स्वतन्त्रा एवाधारः, पुरीतद्ब्रह्मप्राप्ती तु नाडीद्वारा भवतः, परस्परं चानपेक्षे, तत्र समुच्चयश्रवणाभावात् कदाचिच्च नाडीनां पुरीतद्ब्रह्मसमुच्चयेऽपि कदाचिदनपेक्षस्थानत्वाद्विकल्पसिद्धिरित्यर्थः । बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीति पृष्ठाख्यस्तोत्रसाधनत्वेन बृहद्रथन्तरयोर्विधानाद्विकल्पः । **एवमेषोऽष्टदोष इति** । (१) व्रीह्यनुष्ठानपक्षे यवशास्त्रस्य प्रतीतप्रामाण्यपरित्यागः (२) अप्रतीताप्रामाण्यस्वीकारः, तथा प्रयोगान्तरे (३) यवेषु उपादीयमानेषु यवशास्त्रस्य प्राक्स्वीकृताप्रामाण्यत्यागः (४) परित्यक्तप्रामाण्योपादानमिति यवशास्त्रे चत्वारो दोषाः, एवं यवानुष्ठानपक्षेऽपि व्रीहिशास्त्रे (५.६.७.८) चत्वार इत्यष्टदोषदुष्टो विकल्पः । **ननु** यदि व्रीहियवौ द्वौ विहितौ, तर्ह्याग्नेयादिवत्समुच्चयः किं न स्यादित्याशङ्कां निराकुर्वन् 'गतिरन्या न विद्यते' इत्येतत्प्रपञ्चयति—**प्रकृतक्रतुसाधनीभूतेत्यादिना** । मा भूद्वाक्यद्वयसामर्थ्यात् समुच्चयः, अङ्गसहितप्रधानानुष्ठापकप्रयोगवचनो व्रीहियवौ समुच्चाययतु, तत्राह—**नचैताविति** । **ननु** मा मिश्र्येतां व्रीहियवावुभयविध्यर्थवत्त्वायैकस्मिन्नेव प्रयोगे व्रीहिभिरेकवारं यवैरप्यपरवारमिज्यतामिति गत्यन्तरमाश-

## कल्पतरुपरिमलः ।

विना सामानाधिकरण्यायोगात्, तयोश्चैकस्तोत्रसाधनत्वाद्व्रीहियवन्यायेन विकल्प इत्यर्थः । **व्रीह्यनुष्ठानपक्ष इति** । प्रथमं व्रीह्यनुष्ठान इत्यर्थः । **एवं यवानुष्ठानपक्ष इति** । ( १ ) द्वितीयप्रयोगे यदा यवानुष्ठानं तदा व्रीहिशास्त्रस्य प्रतीतप्रामाण्यपरित्यागः ( २ ) अप्रतीताऽप्रामाण्यस्वीकारश्च द्वौ दोषौ । पुनस्तृतीयप्रयोगे ( ३ ) व्रीहिषूपादीयमानेषु व्रीहिशास्त्रस्य स्वीकृताऽप्रामाण्यपरित्यागः ( ४ ) परित्यक्तप्रामाण्यस्वीकारश्चेति द्वौ दोषौ । एवं प्रयोगत्रयेण यवशास्त्रे चत्वारो दोषाः । व्रीहिशास्त्रे चत्वार इति । एवमष्टदोषदुष्टो विकल्प इत्यर्थः । नाडीपुरीतद्ब्रह्मणां विकल्पे तु द्वादश दोषाः प्रसज्येरन् । **तथाहि**—एकस्यां सुप्तौ नाड्यां शयने पुरीतद्वाक्ये ब्रह्मवाक्ये च प्रत्येकं प्राथमिकौ द्वौ द्वौ दोषौ, सुप्त्यन्तरे पुरीतति शयने नाडीवाक्ये प्राथमिकौ द्वौ दोषौ, पुरीतद्वाक्ये तूपरितनमपि दोषद्वयमिति चत्वारो दोषाः । पुनः सुप्त्यन्तरे ब्रह्मणि शयने ब्रह्मवाक्येऽप्युपरितनदोषद्वयम् । ततः सुप्त्यन्तरे नाड्यां शयने नाडीवाक्येऽप्युपरितनं दोषद्वयमिति स्वापचतुष्टयेन द्वादश दोषाः प्रादुःष्युः । **ननु**—प्रामाण्यपरित्यागो नाम प्रामाण्याभावस्वीकार एव; अन्याऽनिर्वचनात् । अप्रामाण्यस्वीकारोऽपि स एव; निर्दोषे वेदे विपर्याससरूपाप्रमितिजनकत्वस्यासंभवेनाप्रामाण्यस्वीकार इत्यत्राऽप्रामाण्यशब्दस्य प्रामाण्याभावपरत्वात्, तथाचाद्ययोर्दोषयोर्न भेद इति—**चेत्, उच्यते**—उभयत्रापि प्रामाण्याभावस्वीकार एव पर्यवसितो दोषः । तस्य च दोषत्वबीजं द्विविधम् प्रामाण्ये प्रमाणस्य निर्दोषत्वादेः असद्भावरूपं, प्रामाण्याभावे प्रमाणस्य प्रामाण्याऽनुपलम्भस्याभावरूपं चेति । एवंच भावप्रमाणसद्भावोपाधिकतया आद्यो दोषः । अभावप्रमाणाभावोपाधिकतया स एव द्वितीयो दोष इत्युपाधिभेदेन दोषद्वैविध्यं विवक्षितत् । **तदुक्तं वार्तिके—प्रमाणं त्वप्रतीतं यदुज्ज्वलं तदपहुतम् । एकस्तावदयं दोषः स्यात्प्रमाणविपर्ययात् ॥ तथा तदप्रमाणत्वं यदभावप्रमाणकम् । भावे सत्यप्यभावेन विनैव परिकल्प्यते ॥ इति** । **अत्राद्यश्लोके**—प्रमाणविपर्ययादित्यनेन प्रामाण्यसद्भावविषयकप्रमाणाऽविरोधादित्यर्थकेन भावप्रमाणासद्भावमूलकं प्रामाण्याभावस्वीकारस्य दोषत्वं दर्शितम् । द्वितीयेन तु श्लोकेनाभावप्रमाणसद्भावमूलकं प्रामाण्याभावस्वीकारस्य दोषत्वं दर्शितम् । **द्वितीयश्लोकस्यायमर्थः**—यथा प्रामाण्यपरित्यागो दोषस्तथा तदप्रमाणत्वमपि दोषः । **यत्** यस्माद्धेतोः । **अभावप्रमाणकं** प्रामाण्यानुपलब्धिरूपाभाव-

## भामती ।

**तेषाम् । नचाङ्गानुरोधेन प्रधानाभ्यासो 'गोसवे उभे कुर्यात्' इति वद्युक्तः; अश्रुतो ह्यत्र प्रधानाभ्यासोऽङ्गानुरोधेन च सोऽन्याय्यः । नच अङ्गभूतेन्द्रवायवादिग्रहानुरोधेन यथा प्रधानस्य सोमयागस्यावृत्तिरेवमत्रापीति—युक्तम्; 'सोमेन यजेत' इति हि तत्रापूर्वयागविधिः । तत्र च दशमुष्टिपरिमितस्य सोमद्रव्यस्य 'सोममभिषुणोति', 'सोममभि-**

## वेदान्तकल्पतरुः ।

**क्षाह—नचाङ्गानुरोधेनेति ।** प्रकृतौ बृहद्रथन्तरे पृष्ठस्तोत्रसाधनत्वेन विहिते विकल्प्येते, विकृतौ गोसवाख्यैकाहेऽतिदेशेन प्राप्नुतः । तत्रापि विकल्पप्राप्तौ गोसवे उभे बृहद्रथन्तरे कुर्यादित्यङ्गभूतद्बृहद्रथन्तरसाहित्यवचनात् पृष्ठस्तोत्रमावर्तते बृहतैकवारं रथन्तरेणैकवारमिति । एवमिहाङ्गभूतव्रीहियवानुरोधेन प्रधानाग्नेययागस्याभ्यासो न युक्तः । कारणमाह—**अश्रुत इति ।** तत्र ह्युमे कुर्यादित्यङ्गसाहित्यश्रवणात्तस्य च प्रधानस्तोत्रावृत्तिव्यतिरेकेणासंभवात्तात्पर्यवृत्त्या प्रधानाभ्यासः श्रुतः, नैवमत्र व्रीहियवाभ्यां यजेतेति श्रवणमस्ति, येनावृत्तिः स्यादित्यर्थः । एवं सत्यङ्गविधिमात्रात्प्रधानावृत्तिः प्रकल्प्या, सा चायुक्तेत्याह—**अङ्गानुरोधेन चेति ।** नहि स्थालानि संपन्नानीति भुक्तवतापि पुनर्भोक्तव्यमेवमिहापीत्यर्थः । **ननु** साहित्याश्रवणेऽप्यङ्गानुरोधेन प्रधानाभ्यासो दृश्यते, यथा सोमेन यजेतेति श्रुतस्य सोमयागस्यैन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णात्याश्विनं गृह्णातीत्यादिग्रहणरूपाङ्गानुरोधेनावृत्तिरित्याशङ्क्याह—**नचाङ्गभूतेति । ननु** कथमत्र प्रधानस्याङ्गानुरोधेनाऽऽवृत्तिः ? यावतैन्द्रवायवादिवाक्येभ्य एव द्रव्यदेवतासंबन्धाभिधानात्तद्वाराऽनुमितयागा विधीयन्ते, सोमेन यजेतेति तु तेषां यागानां समुदायानुवाद इत्याशङ्क्याह—**सोमेन यजेतेति हीति । इदमत्राकूतम्**—न समुदायानुवादत्वम् सोमवाक्यस्य; प्रत्यभिज्ञानाभावात्, ऐन्द्रवायवादिशब्दा हि रसमभिदधति; सोममभिषुणोति सोमं प्लावयतीत्यादिवाक्ये रसस्य प्रस्तुतत्वात् । सोमशब्दश्च लतापरः, ततश्च लताविशिष्टयागविधिरयं कथमनुवादकः स्यात्? प्रत्यक्षे च यागविधावानुमानिकविधिकल्पनाऽनुपपन्ना । तस्मात्सोमेन यजेतेत्येवापूर्वविधिः, इतराणि त्विन्द्रवाय्वादिविशिष्टग्रहणाख्यसंस्कारविधायकानीति द्वितीये निरूपितमिति । भवत्वपूर्वविधिस्तथापि कथमावृत्तिसिद्धिः? सोमवाक्यविहितसोमयागे इन्द्रवाय्वादिदेवता विकल्पेन विधीयन्तां, नेत्याह—**तत्र चेत्यादिना ।** एवं ह्यत्र विकल्पः स्याद्, यदीमानि देवताविधानानि द्रव्यं वा सर्वं सकृत् त्यक्तुं शक्यम् । न तावद् द्रव्यस्य सकृत् त्यागसंभवो दशमु-

## कल्पतरुपरिमलः ।

प्रमाणग्राह्यं प्रामाण्याभावरूपमप्रमाणत्वं । **भावे सत्यपि** प्रामाण्योपलम्भरूपे भावे विद्यमानेऽपि तस्याभावेन विनैव कल्प्यते ततो हेतोर्द्वितीयदोष इत्यर्थः ॥ **पृष्ठस्तोत्रमावर्तत इति । ननु**—पृष्ठस्तोत्रमेकं न भवति; येनाङ्गानुरोधात्प्रधानाभ्यासे इदमुदाहरणं भवेत्, किंतु बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीति पृथगुत्पत्तिवाक्याभ्यां बृहत्सामकं रथन्तरसामकं चान्यदन्यत्पृष्ठस्तोत्रमुत्पन्नम् । एवंच यद्यपि स्तुतशस्त्राधिकरणन्यायेन स्तोत्राणामदृष्टार्थत्वात् स्तोत्रद्वयस्यापि समुच्चयः प्राप्नोति; तथापि बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनबलाद्विकल्प इत्युक्तं नवमाध्याये वार्तिककारैः । एतदवलम्बनेनैव च तैर्बृहद्रथन्तरधर्माणां बृहति प्रस्तूयमाने "समुद्रं मनसा ध्यायेद्रथन्तरे प्रस्तूयमाने संमीलयेदित्येवमादीनां यथानिर्देशं व्यवस्था समर्थिता । बृहद्रथन्तरयोरेकार्थत्वेतु व्रीहिधर्माणां यवेष्विव तेषां संकरः स्यादित्यप्युक्तम् । अतः प्रकृतौ प्राप्तस्य समुच्चयस्य विकल्पवचनेनापोदितस्य गोसवादिष्वनुज्ञाकरणएवेदमुदाहरणं न त्वङ्गानुरोधात्प्रधानाभ्यास इति—**चेत्, सत्यम्;** माहेन्द्राख्यं पृष्ठस्तोत्रमेकमित्यप्यस्ति मतान्तरम् । तदित्थम् । "पृष्ठैः स्तुवत" इति माहेन्द्रादीनां चतुर्णां स्तोत्राणामुत्पत्तिवाक्यम्; वाक्यशेषे तेषां संकीर्तनात्, तत्र बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीति माहेन्द्रे पृष्ठस्तोत्रे बृहद्रथन्तरयोः साधनतया विधानमित्येकार्थत्वादेव तयोर्विकल्पः । ननु तद्विधायकवाक्ययोर्वाकारोऽस्ति पृष्ठस्तोत्रे भेदपक्षेऽपि नास्ति बृहद्रथन्तरवाक्ययोर्वाकारापेक्षा लिङ्गदर्शनात्तयोर्विकल्पसिद्धेः । समुच्चये हि द्वादशाग्निष्टोमस्य स्तोत्राणीति स्तोत्रसंख्या तस्य "नवतिशतं स्तोत्रीया" इति स्तोत्रीयक्सृक्संख्या च पीड्येत । त्रयोदश स्तोत्राणि सप्तोत्तरे द्वे शते स्तोत्रीयाश्च स्युः । अतः सप्तदशयोः कयोश्चित्स्तोत्रयोर्वैकल्पिकत्वे वक्तव्ये गोसवे उभे कुर्यादिति विकृतिविशेषेषु बृहद्रथन्तरस्तोत्रसमुच्चयविधानलिङ्गात्प्रकृतौ तयोरेव विकल्पोऽवसीयत इति । धर्मासङ्करस्तु शूरत्वचित्रत्वादिश्रुतिद्वारभेदानुगृहीताद् रथन्तरे प्रस्तूयमाने बृहति प्रस्तूयमाने इति निर्देशभेदात् । रथन्तरगेयक्सृक्साध्या हि स्तुतिः "अभि त्वा शूर नोनुम" इति शूरत्वादिद्वारा, बृहत्साध्या तु स्तुतिः "स त्वं नश्चित्रेति" चित्रत्वादिद्वारा । एवं पृष्ठस्तोत्रमेकमनेकमिति पक्षद्वयसद्भावादेकमिति पक्षमाश्रित्याङ्गानुरोधात् प्रधानावृत्तिरुदाहृता । **ननु कथमत्रेति**—बहुयागसमुच्चयएवेदमुदाहरणं न त्वेकस्य यागस्याङ्गानुरोधादभ्यासे इति शङ्कार्थः । इमां शङ्कां पशुसोमाधिकरणे ( जै. अ. २ पा. २ सू. १७—२० ) सोमोदाहरणविषयसिद्धान्तं दर्शयन् परिहरति—**इदमत्राकूतमित्यादिना । इतराणि त्विन्द्रवाय्वादिविशिष्टेति ।** यागोत्पत्तिवाक्यावगतं सोमलताया हविष्ट्वं रसद्वारेत्यभिषवादिसंस्कारवाक्यपर्यालोचनया पर्यवस्यतीति न विरोध इति भावः । **यदीमानि देवताविधानानीति** । ऐन्द्रवाय्वादिवाक्यानां देवताविधानार्थत्वे तत्प्रापितदेवतानां याज्यानुवाक्यानां

## भामती ।

प्लावयति' इति च वाक्यान्तरानुलोचनया रसद्वारेण यागसाधनीभूतस्येन्द्रवाय्वाद्युद्देशेन प्रादेशमात्रेषूर्ध्वपात्रेषु ग्रहणानि पृथक्प्रकल्पनानि संस्कारा विधीयन्ते, नतु सोमयागोद्देशेनेन्द्रवाय्वादयो देवताश्चोद्यन्ते, येन तासां याग-निष्पत्तिलक्षणैकार्थत्वेन विकल्पः स्यात् । नच प्रादेशमात्रमेकैकमूर्ध्वपात्रं दशमुष्टिपरिमितसोमरसग्रहणाय कल्पते, येन तुल्यार्थतया ग्रहणानि विकल्प्येरन् । नच यावन्मात्रमेकमूर्ध्वपात्रं व्याप्नोति तावन्मात्रं गृहीत्वा परिशिष्टं त्यज्येतेति युज्यते; दशमुष्टिपरिमितोपादानस्यादृष्टार्थत्वप्रसङ्गात् । एवं तदृष्टार्थं भवेद्यदि तत्सर्वं याग उपयुज्येत । नच दृष्टे संभवत्यदृष्टकल्पना न्याय्या । तस्मात्सकलस्य सोमरसस्य यागशेषत्वेन संस्कारार्हत्वादेकैकेन च ग्रहणेन सकलस्य संस्कर्तुमशक्यत्वात्तदवयवस्यैकेन संस्कारेऽवयवान्तरस्य ग्रहणान्तरेण संस्कार इति कार्यभेदाद्ग्रहणानि समुच्चीयेरन् । अतएव समुच्चयदर्शनं 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति । समुच्चये च सति क्रमोऽप्युपपद्यते । 'आश्विनो दशमो गृह्यते तृतीयो हूयते' । तथैव 'ऐन्द्रवायवाग्रान्ग्रहान्गृह्णाति' इति । तेषां च समुच्चये सति यावद्यदुद्देशेन गृहीतं

## वेदान्तकल्पतरुः ।

ष्टीर्मिमीते इति विधेः सोमस्य विपुलत्वात् । नच दशापि मुष्टयो लतारूपेण व्यज्यन्ते; अभिषुणोत्यभिप्लावयति गालयतीत्यर्थ इत्यादिना रसभावेन यागोपयोगावगमात्, तस्य च नियतपरिमाणोदककलशजलैः सेकात् । नच सर्वोऽपि रसः सकृत् त्यज्येत, नानादेवतोद्देशेन गृह्यमाणत्वादित्याह—**इन्द्रवाय्वादीति । ननु** प्रतीन्द्रवाय्वादिकं ग्रहणानि विकल्प्यन्तां, तत्राह—**प्रादेशमात्रेष्विति ।** प्रादेशमात्रेण हि पात्रेण एकैकेनेन्द्रवाय्वादिभ्यो रसो गृह्यते, नचैकस्मिन्पात्रे कृत्स्नो रसः संमातीत्यर्थः । **ग्रहणानी**त्यस्य व्याख्यानं—**पृथक्कल्पनानीति** । एवं द्रव्यस्य सकृत्त्यागासंभवमभिधाय देवताविध्यसंभवमाह—**ननु सोमयागोद्देशेनेति** । एषु हि वाक्येषु गृह्णातीति ग्रहणान्वयो देवतानामवगम्यते, अतः कथं यागे देवताविधिरित्यर्थः । ग्रहणमात्रे त्वपर्यवसानादर्थाद्देवतानां यागान्वयः । दशमुष्ट्यादिग्रन्थं स्वयमेव व्याचष्टे—**नच प्रादेशमात्रमित्यादिना** । प्रादेशमात्रे ऊर्ध्वत्वप्रतीतिः तर्ह्येव घटते, यदि विस्तारः प्रादेशादूनस्तिर्यक्प्रसारे ह्यूर्ध्वत्वं न स्यात्, ततोऽल्पत्वविशेषणद्वयेनोक्तं—**तुल्यार्थतयेति** । एकसोमसंस्कारप्रयोजनतयेत्यर्थः । लिङ्गदर्शनान्याह—**अतएवेति** । विकल्पे ह्येक एव प्रयोगः स्यादित्यर्थः । समुच्चये सत्युपपद्यमानं क्रमं दर्शयति—**आश्विन इति** । दशानां ग्रहाणां मध्ये आश्विनो ग्रहणकाले दशमत्वेन गृह्यते, होमकाले तृतीयत्वेन हूयत इत्येतद् विकल्पे सति न युज्यते; एकत्वेन दशमत्वाद्ययोगात् । तथा विकल्पे सति ग्रहणकाले ग्रहाणामैन्द्रवायवाग्रत्वमैन्द्रवायवप्राथम्यवत्त्वं न स्यादेकत्वे प्रथमचरमभावायोगादित्यर्थः । **नन्वेवमपि** ग्रहणान्यावर्तन्तां कथं यागावृत्तिस्तत्र श्रुत्यभावाद्, यतोऽङ्गानुरोधेन प्रधानावृत्तिः स्यादित्याशङ्क्य सामर्थ्यमाह—**तेषां चेति । कांचन देवतामिति ।** इन्द्र-

## कल्पतरुपरिमलः ।

मन्त्रवर्णकल्पितविधिप्रापितोपांशुयाजदेवतानामिवैककार्यत्वाद्विकल्पः स्याद्, नत्वेवम्; तेषामिन्द्रवाय्वादिदेवतोद्देश्यकग्रहणविधानार्थत्वस्य वक्ष्यमाणत्वादित्यर्थः । **द्रव्यं चेति ।** यदि ग्रहणसंस्कृतं सर्वं द्रव्यं युगपत्त्यक्तुं शक्यम्, तदापि देवताविकल्पः स्यात्; विकल्पेनैकैकामेव देवतामुद्दिश्य त्यागसंभवात् । द्रव्यमपि सकृत् त्यक्तुं न शक्यते; ग्रहचमसेषु तत्तद्देवतोद्देशेन पृथग् गृहीतानां तथैव पृथक् त्यक्तव्यताया वक्ष्यमाणत्वादित्यर्थः । प्रथमं युगपत् त्यक्तुं न शक्यमित्येतत्संभावितसकलशङ्कानिराकरणेनोपपादयति—**न तावदिति । ननु** दशमुष्टिपरिमितापि लता सकृदेव त्यज्यतां, तत्राह—**नच दशापीति । अभिषवः** चर्मणि सोमलतां निधाय ग्रावभिः कुट्टनम् । **प्लावनं** वस्त्रेण सोमरसगालनं प्लावयतीत्यादिनेत्यन्वयः । गालयतीति तदर्थकथनं तु दशमुष्टिपरिमितस्यापि सोमस्य रस एकस्मिन् पात्रे ग्रहीतुं शक्यो बहुपात्राऽपर्याप्तश्च । अत एकस्मिन् पात्रे गृहीतस्य सकृदेव त्यागाद्देवताविकल्पः सिध्येदित्याशङ्क्य रसबाहुल्यप्रत्यायनाय । नियतपरिमाणेषूदककलशेषु संस्कृतस्य सोमरसस्येति शाबरभाष्योक्तविशेषार्थं दर्शयति—**तस्य च नियतेति** । एवं भूयसोऽपि रसस्य युगपत्त्यागशङ्का तत्तद्देवतोद्देशेन पृथग् ग्रहणं प्रदर्श्य निरस्यतीत्याह—**नच सर्वोऽपीति ।** ग्रहणविकल्पेन देवताविकल्पशङ्कां निरस्यतीत्याह—**ननु प्रतीन्द्रवाय्वादिकमिति । नचैकस्मिन्पात्रे इति ।** नच—यावान् संमाति तावानेव गृह्यतामिति—शङ्कनीयम्; कृत्स्नस्य रसस्य देवतार्थत्वाभावे तावद्रससंपादनस्यादृष्टार्थत्वप्रसङ्गस्य टीकायां वक्ष्यमाणत्वादिति भावः । **ननु** यदि देवताविशिष्टग्रहणविधिर्न यागे देवताविधिस्तदा कथमासां देवतानां यागान्वयसिद्धिरित्याशङ्क्याह—**ग्रहणमात्रे त्वपर्यवसानादर्थाद्देवतानां यागान्वय इति । अयं भावः**—ऐन्द्रवायवमित्यादयस्तावद्देवतातद्धितान्ताः, नतु संबन्धसामान्यादिविषयतद्धितान्ताः । मरुत्वतीयं गृह्णातीत्यत्र छप्रत्ययस्य 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च'ेति सूत्रेण देवतायामेव विहितत्वेन तत्प्रायपाठादैन्द्रवायवादिष्वपि देवतातद्धितनिश्चयात् । नच ग्रहणान्वयमात्रेण देवतात्वनिर्वाहः; सूक्तहविषोरेव देवतातद्धितनियमात् । अत-

४।१९ ) इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयत्येकवाक्योपादानात् । प्राणस्य च ब्रह्मत्वं समधिगतम्—'प्राणस्तथानुगमात्' ( ब्र० सू० १।१।२८ ) इत्यत्र । यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति—'आसु तदा नाडीषु सृप्तो भवति' ( छा० ८।६।३ ) इति, तत्रापि प्रदेशान्तरप्रसिद्धस्य ब्रह्मणोऽप्रतिषेधान्नाडीद्वारेणैव ब्रह्मण्येवावतिष्ठत इति प्रतीयते । नचैवमपि नाडीषु सप्तमी विरुध्यते; नाडीद्वारापि ब्रह्मोपसर्पन्सृप्त एव नाडीषु भवति । यो

भामती ।

तावत्तस्यै देवतायै त्यक्तव्यमित्यर्थाद्यागस्यावृत्त्या भवितव्यम् । यदि पुनः पृथक्कृतान्यप्येकीकृत्य कांचन देवतामुद्दिश्य त्यजेरन्, पृथक्करणानि च देवतोद्देशाश्चादृष्टार्था भवेयुः । नच दृष्टे संभवत्यदृष्टकल्पना न्याय्येत्युक्तम् । तस्मात्तत्र समुच्चयस्यावश्यंभावित्वाद्गुणानुरोधेनापि प्रधानाभ्यास आस्थीयते । इह त्वभ्यासकल्पनाप्रमाणाभावात्पुरोडाशस्य चानियमेन प्रकृतिद्रव्ये यस्मिन्कस्मिंश्चित्प्राप्ते एकैका परस्परानपेक्षा व्रीहिश्रुतिर्यवश्रुतिश्च नियामिकैकार्थतया विकल्पमर्हतः, नतु नाडीपुरीतत्परमात्मनामन्योन्यानपेक्षाणामेकनिलयनार्थसंभवो येन विकल्पो भवेत् । नह्येकविभक्तिनिर्देशमात्रेणैकार्थता भवति; समुच्चितानामप्येकविभक्तिनिर्देशदर्शनात् पर्यङ्के शेते प्रासादे शेत इति । तस्मादेकविभक्तिनिर्देशस्यानैकान्तिकत्वादन्यतो विनिगमना वक्तव्या । सा चोक्ता भाष्यकृता—**यत्रापि निरपेक्षा एव नाडीः**

वेदान्तकल्पतरुः ।

वाय्वादीनां मध्ये एकामित्यर्थः । **इह त्विति** । व्रीहियववाक्ये इत्यर्थः । व्रीहियवसमुच्चये हि यागाभ्यासकल्पना स्यात्, तत्र च प्रमाणाभावादित्यर्थः । न केवलं व्रीहियवसमुच्चये प्रमाणाभावः, प्रमाणविरोधोऽपीत्याह—**पुरोडाशस्य चेति** । पुरोडाशचोदनयैवौषधिद्रव्ये यस्मिन्कस्मिंश्चित्प्राप्ते व्रीहयोऽपि पक्षे प्राप्तास्तत्राप्राप्तांशपूरणार्था व्रीहिश्रुतिर्व्रीहिभिरेवेति नियमयेत्तत्र यवसमुच्चये व्रीहिश्रुतिबाधः स्याद्, एवं यवश्रुतेरपि नियमार्थत्वाद् व्रीहिसमुच्चये तद्बाध इत्यर्थः । **एकार्थतयेति** । एकपुरोडाशार्थतयेत्यर्थः । एवं गत्यन्तराभावाद्व्रीहियवयोर्विकल्पमुक्त्वा प्रकृते गत्यन्तरसद्भावाद्विकल्पाभाव-

कल्पतरुपरिमलः ।

स्तत्तत्पात्रगृहीतसोमरसरूपैर्हविःसंबन्धेनैव तेषां देवतात्वमर्थात्पर्यवस्यतीति । **नन्वभ्यासे** प्रमाणाभावमुक्त्वा व्रीहियवसमुच्चये प्रमाणविरोध उच्यते, कथमनयोरेकविषयत्वं पुरोडाशस्य चेति चकारेण प्रत्याय्यते ? इत्याशङ्क्य प्रमाणाभावोक्तिमपि समुच्चयविषयतया योजयति—**व्रीहियववाक्ये इति** । **वस्तुतस्तु**—बहुपात्रगृहीतसोमरसद्रव्यकयागाभ्यासकल्पनइव व्रीहियवप्रकृतिकपुरोडाशद्वयद्रव्यकयागाभ्यासकल्पनायां तथा बलवत्प्रमाणं नास्ति; पुरोडाशप्रकृतिद्रव्याकाङ्क्षायां स्वस्वशास्त्रसमर्पितयोर्व्रीहियवयोः प्रत्येकं पुरोडाशनिवर्तनसामर्थ्यं पर्यालोचयता प्रयोगवचनेन तयोः पाक्षिकतया ग्रहणोपपत्तेः । अत इह नाभ्यास इत्येतावन्मात्रपर इह त्वित्यादिग्रन्थः । पुरोडाशस्य चेत्यादिग्रन्थस्त्वेकस्यामेव सुषुप्तौ नाडीपुरीतद्ब्रह्मणां समुच्चयं वक्तुमेकस्मिन् पुरोडाशे यथा व्रीहियवयोर्न समुच्चयस्तथेह किं न स्यादित्याशङ्कायां तद्वैषम्यप्रदर्शनार्थमुत्तरग्रन्थशेष इति युक्तम्; पुरोडाशस्येत्यादिवाक्यानन्तरं ननु नाडीपुरीतद्ब्रह्मणामित्यादिवाक्यप्रवृत्तिच्छायया तथैवावगमात् । इह त्वित्यादिग्रन्थोऽपि व्रीहियवसमुच्चयनिराकरणार्थ इति व्याख्यानेपि तत्र पुरोडाशद्वयार्थतया व्रीहियवसमुच्चयस्य प्रमाणाभावेन निराकरणम्, इह त्वेकपुरोडाशार्थतया तत्समुच्चयस्य प्रमाणविरोधेन निराकरणमिति विषयभेदस्यापरिहार्यत्वाच्च । मिश्रपुरोडाशपक्षे प्रमाणविरोधमुपपादयति—**पुरोडाशचोदनयैवेति । व्रीहिश्रुतिबाधः स्यादिति । ननु**—समुच्चये सति नाप्राप्तांशपरिपूरणार्थं व्रीहिश्रुतिबाधः; सर्वेष्वपि पुरोडाशेषु व्रीहिप्राप्तिसत्त्वेन क्वचिदपि तदप्राप्त्यभावात्, प्रत्युत विकल्प एव । यवपक्षे व्रीह्यप्राप्त्या तद्बाधः । एवं यवश्रुतेरपि यवाप्राप्तांशपरिपूरणार्थाया न समुच्चये बाधः, किंतु विकल्पएवेति—**चेत्, उच्यते;** अश्वशफपरिमाणस्य कृत्स्नस्य पुरोडाशस्य प्रकृतिद्रव्याकाङ्क्षायां व्रीहिशास्त्राप्रवृत्तौ यवनीवारादीनामिव कृत्स्नपुरोडाशनिर्वर्तनसमर्थैकद्रव्यालाभे व्रीहियवरूपद्रव्यद्वयस्यापि पक्षे प्राप्तिर्भवति, तथा चाकाङ्क्षानुसारिणा व्रीहिशास्त्रेण कृत्स्नपुरोडाशप्रकृतितया व्रीहिनियमे क्रियमाणे पक्षप्राप्तानां नीवारादीनामिव व्रीहियवद्रव्यद्वयस्यापि निवृत्तिर्भवत्येव । कृत्स्नपुरोडाशप्रकृतितया पक्षप्राप्तानां यवानां परं निवृत्तिर्न भवति; यवशास्त्रविरोधात्, मिश्रद्रव्यद्वयनिवृत्तौ तु नानुपपत्तिः; तद्विधायकशास्त्राभावात् । एवंच मिश्रपुरोडाशे क्रियमाणे व्रीहिश्रुतिबाधः । एवं यवश्रुतिबाधोपीति युक्तमुक्तम् । **न्यायसुधायां तु**—व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनाः । यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते ॥ नैव व्रीहिभिरिष्टं स्याद्यवैर्न च यथाश्रुतेः । मिश्रैरिज्येत चेत्तत्र भवेदुभयसाधनम् ॥ इति वार्तिकश्लोकव्याख्यानावसरे समर्थः पदविधिरिति पदमात्रविधेः सामर्थ्यापेक्षत्वाद्व्रीह्यादिप्रातिपदिकस्य यवादिसापेक्षत्वे तद्व्याघातापत्तेर्विभक्त्यन्वयायोगान्निरपेक्षाणामेव व्रीहियवानां तृतीयया करणत्वप्रतीतेर्मिश्रत्वं न युक्तमिति मिश्रपक्षे व्रीहिभिर्यवैरिति तृतीयाश्रुतिबाध उक्तः । **प्रकृते गत्यन्तरसद्भावादिति** । नाडीनां पुरीतत्परिवेष्टितहृदय-

हि गङ्गया सागरं गच्छति गत एव स गङ्गायां भवति । अपिचात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वान्नाडीस्तुत्यर्थं सुप्तिसंकीर्तनं । 'नाडीषु सृप्तो भवति' ( छा० ८।६।३) इत्युक्त्वा तं न कश्चन पाप्मा स्पृशति' ( छा० ८।६।३) इति ब्रुवन्नाडीः प्रशंसति । ब्रवीति च पाप्मस्पर्शाभावे हेतुम्—'तेजसा हि तदा संपन्नो भवति' ( छा० ८।६।३ ) इति । तेजसा नाडीगतेन पित्ताख्येनाभिव्याप्तकरणो न बाह्यान्विषयानीक्षत इत्यर्थः । अथवा—तेजसेति ब्रह्मण एवायं निर्देशः; श्रुत्यन्तरे—'ब्रह्मैव तेज एव' ( बृ० ४।४।७ ) इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात् । ब्रह्मणा हि तदा संपन्नो भवति नाडीद्वारेणातस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः । ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः; 'सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः' ( छा० ८।४।२ ) इत्यादिश्रुतिभ्यः । एवंच सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुषुप्तिस्थानेनानुगतो नाडीनां समुच्चयः समधिगतो भवति । तथा पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात्तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते—'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' ( बृ० २।१।१७ ) इति हृदयाकाशे सुप्तिस्थाने प्रकृत इदमुच्यते 'पुरीतति शेते' ( बृ० २।१।१९ ) इति । पुरीतदिति हृदयपरिवेष्टनमुच्यते । तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते पुरीतति शेत इति वक्तुम् । प्राकारपरिक्षिप्तेऽपि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते । हृदयाकाशस्य च ब्रह्मत्वं समधिगतम्—'दहर उत्तरेभ्यः' ( ब्र० सू० १।३।१४ ) इत्यत्र । तथा नाडीपुरीतत्समुच्चयोऽपि 'ताभिः प्रत्यवसृप्य पुरीतति शेते' ( बृ० २।१।१९ ) इत्येकवाक्योपादानादवगम्यते । सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम् । एवमेतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि नाड्यः पुरीतद्ब्रह्म चेति । तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं सुषुप्तिस्थानम् । अपिच नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति, तत्रास्य करणानि वर्तन्त

### भामती ।

**सुप्तिस्थानत्वेन श्रावयतीत्यादिना** । सापेक्षश्रुत्यनुरोधेन निरपेक्षश्रुतिर्नेतव्येत्यर्थः । शेषमतिरोहितार्थम् । **ननु** यदि ब्रह्मैव निलयनस्थानं तावन्मात्रमुच्यतां, कृतं नाड्युपन्यासेनेत्यत आह—**अपिचात्रेति** । अपिचेति समुच्चये न विकल्पे । एतदुपपत्तिसहिता पूर्वोपपत्तिरर्थसाधिनीति । मार्गोपदेशोपयुक्तानां नाडीनां स्तुत्यर्थमत्र नाडीसंकीर्तनमित्यर्थः । पित्तेनाभिव्याप्तकरणो न बाह्यान्विषयान्वेदेति तद्द्वारा सुखदुःखाभावेन तत्कारणपाप्मास्पर्शेन नाडीस्तुतिः । यदा तु तेजो ब्रह्म तदा सुगमम् । **अपिच नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवतीति** । **अयमर्थः**—अभ्युपेत्य जीवस्याधेयत्वमिदमुक्तम् । परमार्थतस्तु न जीवस्याधेयत्वमस्ति । **तथाहि**—नाड्यः पुरीतद्वा जीवस्योपाधीनां करणानामाश्रयो जीवस्तु ब्रह्माव्यतिरेकात्स्वमहिमप्रतिष्ठः । नचापि ब्रह्म जीवस्याधारः; तादात्म्यात् ।

### वेदान्तकल्पतरुः ।

माह—**ननु नाडीत्यादिना** । भाष्ये समुच्चयश्रुत्यनुरोधादसमुच्चयश्रुतिर्नेयेति प्रतिज्ञामात्रमिव भाति, ततोऽभिप्रायं स्फोरयति—**सापेक्षश्रुत्यनुरोधेनेति** । निरपेक्षता ह्यपेक्षाभाव उत्सर्गः, तस्य सापेक्षतापवादिकेत्यर्थः । **न विकल्प इति** । विकल्पफलकोऽभ्युच्चय इत्यर्थः । एवं तावत्तुल्यबलश्रुत्यभावान्न नाड्यादीनां विकल्प इत्युक्तम्, इदानीमतुल्यार्थत्वाच्च न विकल्प इत्याह—**अभ्युपेत्येत्यादिना** । जीवोपाधिरन्तःकरणादिर्नाडीपुरीततोराश्रितः, जीवस्तु न क्वापीति

### कल्पतरुपरिमलः ।

पुण्डरीकमध्यगतब्रह्मप्राप्तौ मार्गत्वेन यो हि गङ्गया सागरं गच्छतीति भाष्योक्तरीत्या समुच्चयो घटते, पुरीततोपि प्राकारन्यायेन स घटते । श्रुतावपि बर्हिषि हवींष्यासादयतीति वेद्यास्तीर्णे बर्हिष्यासादनीयानां हविषां वेद्यां हवींष्यासादयतीति वेद्यामप्यधिकरणत्वमाम्नायते । एवं द्वारभेदात्समुच्चयोपपत्तेर्न विकल्प इत्यर्थः । **स्यादेतत्**—अथ यदा सुषुप्तो भवति यदा न कंचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते इति जीवस्य हृदयान्नाडीभिर्निष्क्रम्य पुरीतति शयनं श्रूयते । हृदयात्पुरीततं गच्छतो नाडीनां मार्गत्वोपपादनाय हि हृदयात्पुरीततमभिप्रतिष्ठन्ते इत्युक्तम् । अतः प्राकारन्यायोऽत्र न प्रवर्तते; नहि प्रासादान्निर्गत्य प्राकारे शेते नृपतिरिति वाक्यं प्राकारवेष्टितप्रासादमध्यगपर्यङ्कशयनेनोपपादयितुं शक्यम्, **नैष दोषः**; ताभिः प्रत्यवसृप्येति हृदयात्प्रत्यागमनं नोच्यते, किंतु हृदयं परितः स्थिताभ्यः स्वप्नवहननाडीभ्यः । स यत्रैतत्स्वप्नयाचरतीत्युपक्रम्य उतेव महाराजो भवत्युतेव महाब्राह्मण इत्यादिना स्वप्नदर्शनप्रकारमनूद्य स्वे शरीरे यथाकामं परिवर्ततइत्यन्तेन स्वप्नावस्थानिरूपणानन्तरम् अथ यदा सुषुप्तो भवतीत्युपक्रमात् । हृदयात्पुरीततमभिप्रतिष्ठन्तइति तु स्वरूपकथनार्थम्; द्वासप्ततिसहस्राणीति संख्यावचनवद् । नाडीषु पुरीततीति निरपेक्षश्रुतिविरोधं परिहरति—**निरपेक्षता ह्यपेक्षाभाव उत्सर्ग इति** ।

इति । नह्युपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित्संभवति; ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात् । ब्रह्माधारत्वमप्यस्य सुषुप्ते नैवाधाराधेयभेदाभिप्रायेणोच्यते, कथं तर्हि? तादात्म्याभिप्रायेण । यत आह 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' ( छा० ६।८।१ ) इति । स्वशब्देनात्माभिलप्यते, स्वरूपमापन्नः सुप्तो भवतीत्यर्थः । अपिच न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति; स्वरूपस्यानपायित्वात् । स्वप्नजागरितयोस्तूपाधिसंपर्कवशात्पररूपापत्तिमिवापेक्ष्य तदुपशमात्सुषुप्तेः स्वरूपापत्तिर्विवक्ष्यते । अतश्च सुप्तावस्थायां कदाचित्सता संपद्यते कदाचिन्न संपद्यत इत्ययुक्तम् । अपिच स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत्सुषुप्तं न क्वचिद्विशिष्यते । तत्र सति संपन्नस्तावत्तदेकत्वान्न विजनातीति युक्तम्; 'तत्केन कं विजानीयात्' ( बृ० २।४।१४ ) इति श्रुतेः । नाडीषु पुरीतति च शयानस्य न किंचिदविज्ञाने कारणं शक्यं विज्ञातुम्; भेदविषयत्वात् 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' ( बृ० ४।३।३१ ) इति श्रुतेः । ननु भेदविषयस्याप्यतिदूरादिकारणमविज्ञाने स्यात् । बाढम् । एवं स्याद्यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यति । नतु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते । उपाधिगतमेवातिदूरादिकारणमविज्ञान इति यद्युच्येत, तथाप्युपाधेरुपशान्तत्वात्सत्येव संपन्नो न विजानतीति युक्तम् ।

## भामती ।

विकल्प्य तु व्यतिरेकं ब्रह्मण आधारत्वमुच्यते जीवं प्रति । तथाच सुषुप्तावस्थायामुपाधीनामसमुदाचाराज्जीवस्य ब्रह्मात्मत्वमेव ब्रह्माधारत्वं, नतु नाडीपुरीतदाधारत्वम् । तदुपाधिकरणमात्राधारतया तु सुषुप्तदशारम्भाय जीवस्य नाडीपुरीतदाधारत्वमित्यतुल्यार्थतया न विकल्प इति । **अपिच न कदाचिज्जीवस्येति** । औत्सर्गिकं ब्रह्मस्वरूपत्वं जीवस्यासति जाग्रत्स्वप्नदशारूपेऽपवादे सुषुप्तावस्थायां नान्यथयितुं शक्यमित्यर्थः । **अपिच** येऽपि स्थानविकल्पमास्थिषत तैरपि विशेषविज्ञानोपशमलक्षणा सुषुप्त्यवस्थाङ्गीकर्तव्या । नचेयमात्मतादात्म्यं विना नाड्यादिषु परमात्मव्यतिरिक्तेषु स्थानेषूपपद्यते । तत्र हि स्थितोऽयं जीव आत्मव्यतिरेकाभिमानी सन्नवश्यं विशेषज्ञानवान् भवेत् । **तथाहि श्रुतिः**—'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इति । आत्मस्थानत्वे त्वदोषः; 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्विजानीयात्' इति श्रुतेः । तस्मादप्यात्मस्थानत्वस्य द्वारं नाड्यादीत्याह—**अपिच स्थानविकल्पाभ्युपगमेऽपीति** । अत्र चोदयति—**ननु भेदविषयस्यापीति** । भिद्यत इति भेदः । भिद्यमानस्यापि विषयस्येत्यर्थः । परिहरति—**बाढमेवं स्यादिति** । न तावज्जीवस्यास्ति स्वतःपरिच्छेदः; तस्य ब्रह्मात्मत्वेन विभुत्वात् । औपाधिके तु परिच्छेदे यत्रोपाधिरसंनिहितस्तन्मात्रं न जानीयान्न तु सर्वम् । नह्यसंनिधानात्सुमेरुमविद्वान् देवदत्तः संनिहितमपि न वेद । तस्मात्सर्वविशेषविज्ञानप्रत्यस्तमयीं सुषुप्तिं प्रसाधयता तदाऽस्य सर्वोपाध्युपसंहारो वक्तव्यः । तथाच सिद्धमस्य तदा ब्रह्मात्मत्वमित्यर्थः । गुणप्रधानभावेन समुच्चयो न समप्रधानतयाग्नेयादिवदिति वदन्विकल्पमप्यपा-

## वेदान्तकल्पतरुः ।

कथमाधारत्वेन तुल्यार्थतेत्यर्थः । **ननु** सर्वदा जीवस्य ब्रह्माभेदे सुषुप्तौ किमित्याधारत्वोपचारस्तत्राह—**उपाधीनामसमुदाचारादिति** । अव्यक्तेरित्यर्थः । **ननु** तादात्म्यादुपाध्युपशान्तेश्च यथा सुषुप्तौ जीवस्य ब्रह्माश्रयत्वोपचार एवं जीवोपाध्याधारत्वात्सुषुप्तौ नाड्यादेर्जीवाश्रयत्वोपचारोऽस्तु, तत औपचारिकाश्रयत्वेन तुल्यार्थत्वमत आह—**सुषुप्तदशारम्भायेति** । सुषुप्तिप्राक्काले उपाधिद्वारेण जीवस्य नाड्याश्रयत्वमुपचरितुं शक्यम्, तेन सुषुप्तौ उपाधीनां लीनत्वादित्यर्थः । **न समप्रधानतयेति** । समप्रधानत्वे हि नाडीपुरीतद्ब्रह्मसु त्रिष्वपि जीवस्थानं स्यात्, तदा च न ब्रह्मभाव इति समप्राधान्यं निरस्यति तन्निरासश्च विकल्पनिरासोपलक्षणार्थमित्यर्थः । **नीतार्थं** गतार्थम् । **तद्यत्रैतदिति** । नाडीष्वादित्यरश्मीनां प्रवेशः पूर्ववाक्यउक्तस्तत्रैवं सति **यत्र** यस्मिन् काले **एतत्** स्वप्नं सुप्तः कुर्वन् ओदनपाकं पचतीतिवत् स्वापस्य द्विप्रकारत्वात् सुषुप्तसिद्ध्यर्थं विशेषणं । **समस्त इति** । उपसंहृतसर्वकरण इत्यर्थः । विषयसंपर्क-

## कल्पतरुपरिमलः ।

नाडीपुरीततोर्नाडीब्रह्मणोश्च समुच्चयं स्वीकृत्य त्रयाणां विकल्पस्यापि स्वीकाराद्वरं सर्वेषां द्वारभेदेन समुच्चयस्यैव स्वीकार इति भावः । **विकल्पफलकोऽभ्युच्चय इति** । तया वा युक्त्या प्रकृतार्थनिर्णयोऽनया वा युक्त्येति विकल्पफलके युक्त्यन्तरसमुच्चये अयमपिचेति शब्दो न भवतीत्यर्थः । **इदानीमतुल्यार्थत्वाच्च न विकल्प इत्याहेति** । यद्यपि प्रागपि द्वारभेदेनातुल्यार्थत्वमुक्तम्; तथापि जीवस्य ब्रह्मणेव नाडीपुरितद्भ्यां तादात्म्यसंपत्तिरूपविवक्षिताधाराधेयभावयोग्यता नास्तीत्येवं विधान्तरेणातुल्यार्थत्वमिदानीमुच्यत इति भावः । **समप्रधानत्वे हीति** । सिद्धान्त्यभिमतः समु-

नच वयमिह तुल्यवन्नाड्यादिसमुच्चयं प्रतिपादयामः । नहि नाड्यः सुप्तिस्थानं पुरीतद्वेत्यनेन विज्ञानेन किंचित्प्रयोजनमस्ति । नह्येतद्विज्ञानप्रतिबद्धं किंचित्फलं श्रूयते । नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते, ब्रह्म त्वनपायि सुप्तिस्थानमित्येतत्प्रतिपादयामः । तेन तु विज्ञानेन प्रयोजनमस्ति जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च । तस्मादात्मैव सुप्तिस्थानम् ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

यस्माच्चात्मैव सुप्तिस्थानमत एव च कारणान्नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते—'कुत एतदागात्' ( बृ० २।१।१६ ) इत्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' ( बृ० २।१।२० ) इत्यादिना । 'सत आगम्य न विदुः सत आगच्छामहे' ( छा० ६।१०।२ ) इति च । विकल्प्यमानेषु तु सुषुप्तिस्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मन इत्यशासिष्यत् । तस्मादप्यात्मैव सुप्तिस्थानमिति ॥ ८ ॥ इति द्वितीयं तदभावाधिकरणम् ॥

( ३ अधिकरणम् ) **स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥**

---

### भामती ।

करोति—**नच वयमिहेति** । स्वाध्यायाध्ययनविध्यापादितपुरुषार्थत्वस्य वेदराशेरेकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तम् । नच सुषुप्तावस्थायां जीवस्य स्वरूपेण नाड्यादिस्थानत्वप्रतिपादने किंचित्प्रयोजनम्; ब्रह्मभूयप्रतिपादने त्वस्ति । तस्मान्न समप्रधानभावेन समुच्चयो नापि विकल्प इति भावः । नीतार्थमन्यत् ॥ ७ ॥ ८ ॥ **इति द्वितीयं तदभावाधिकरणम् ॥**

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥** यद्यपीश्वरादभिन्नो जीवः; तथाप्युपाध्यवच्छेदेन भेदं विवक्षित्वा-

### वेदान्तकल्पतरुः ।

जनितकालुष्याभावात् संप्रसन्नः सन् स्वप्नं न विजानाति तदा आसु रश्मिपूर्णासु नाडीषु सृप्तः प्रविष्टो भवतीत्यर्थः । सुषुप्तमुत्थाप्य तदागमनावधिमजातशत्रुर्गार्ग्यं प्रति पप्रच्छ—**कुत एतदागादिति** । एतदागमनं **कुत आगात्** कृतवानित्यर्थः ॥ ७ ॥ ८ ॥ **इति द्वितीयं तदभावाधिकरणम् ॥**[1]

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ आत्यन्तिकत्वेनोत्सृष्टा सत्संपत्तिः पुरोदिता । तस्या अविद्याशेषत्वमपवाद इहोच्यते ॥** अथवाऽतः प्रबोधोऽस्मादिति सुषुप्त्यनन्तरं ब्रह्मणः प्रबोधश्रवणात् तदात्मनैव सुषुप्तस्तिष्ठतीत्युक्तं, ततः प्रबोधः तत्संपत्तिं न गमयति सुषुप्तादन्यस्य प्रबोधसंभवेन सुषुप्तस्य नाडीपुरीततोरवस्थानसंभवादित्याक्षिप्यते । **अत्र भास्करेण भाष्यकारमतेऽधिकरणानारम्भ उक्तः**—येषामीश्वर एव साक्षात्संसारीति दर्शनं न तेषां पूर्वपक्षोऽवकल्पते । नापि सिद्धान्तः; ईश्वरस्य सुषुप्त्युत्थानादेरदर्शनात् । कल्पितस्य च जीवस्य स्वाप्नजीववदुत्थानाद्यसंभवात्—**इति,** तत्सिद्धान्तानवबोधजृम्भितमित्याह—**यद्यपीश्वरादिति** । अवस्थात्रयानुगामि व्यावहारिकसत्त्वोपेताविद्योपहितजीवस्य स्वप्नकल्पितजीववैलक्षण्यात्स एवोत्तिष्ठत्त्वन्यो वेति चिन्ता संभवतीत्यर्थः । अत्र

### कल्पतरुपरिमलः ।

च्चयः समप्राधान्ये न भवति, किंतु गुणप्रधानतयेति नच वयमिह तुल्यं नाड्यादिसमुच्चयं प्रतिपादयाम इत्यादिभाष्येण वर्ण्यते, तस्य पूर्वपक्षिकृतविकल्पनिरासार्थत्वेनोपयोग इत्यर्थः । **पूर्ववाक्ये उक्त इति** । एता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता इति वाक्ये इत्यर्थः ॥ ७ ॥ ८ ॥ **इति द्वितीयं तदभावाधिकरणम् ॥**

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ आत्यन्तिकत्वेनेति** । ब्रह्मप्राप्तिरौत्पत्तिकीति तावदुत्सृष्टा मुक्ता वौत्सर्गिकत्वेनावधारितेति सुषुप्तावपि सत्संपत्तिः पूर्वाधिकरणे वर्णिता । तस्या अप्यात्यन्तिकत्वप्राप्तावविद्याशेषत्वसमर्थनेनापवादोऽस्मिन्नधिकरणे वर्ण्यतइत्यर्थः । एतेन मिथ्याज्ञानातिरिक्तामविद्यामपहत्य मिथ्याज्ञानवदविद्याया अपि निवृत्तिं चापाद्य पूर्वपक्षः प्रवर्ततइति दर्शितम्; अन्यथा पूर्वपक्षानुत्थानात् । **सुषुप्तस्य नाडीपुरीततोरवस्थानसंभवादित्याक्षिप्यत इति । ननु**—यदि नाडीपुरीततोरवस्थानं संभाव्य सत्संपत्तिराक्षिप्यते, कथं तर्हि तेनान्योत्थानं

---

१ तत्र सूत्रे २—तदभावो नाडीषु तच्छ्रुतेरात्मनि च ७ अतः प्रबोधोऽस्मात् ८ ॥

तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः किं य एव सत्संपन्नः स एव प्रतिबुध्यत उत स वाऽन्यो वेति चिन्त्यते । तत्र प्राप्तं तावदनियम इति । कुतः ? यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते, जलराशिरेव स तदा भवति, पुनरुद्धरणे च स एव जलबिन्दुर्भवतीति दुःसंपादम् । तद्वत्सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति । तस्मात्स एवेश्वरो वाऽन्यो वा जीवः प्रतिबुध्यत इत्येवं प्राप्त इदमाह—स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति नान्यः । कस्मात् ? कर्मानुस्मृतिशब्दविधिभ्यः । विभज्य हेतुं दर्शयिष्यामि । कर्मशेषानुष्ठानदर्शनात्तावत्स एवोत्थातुमर्हति नान्यः । तथाहि—पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन्दृश्यते । नचान्येन सामि कृतस्य कर्मणोऽन्यः शेषक्रियायां प्रवर्तितुमर्हति; अतिप्रसङ्गात् । तस्मादेक एव पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते । इतश्च स एवोत्तिष्ठति यत्कारणमतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणमन्यस्योत्थाने नोपपद्यते । नह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति । सोऽहमस्मीति चात्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते । शब्देभ्यश्च तस्यैवोत्थानमवगम्यते । तथाहि—'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' ( बृ० ४।३।१६ ) 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' ( छा० ८।३।२ ) 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति' ( छा० ६।९।३ ) इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिता नात्मान्तरोत्थाने सामञ्जस्यमीयुः । कर्मविद्याविधिभ्यश्चैवमेवावगम्यते । अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः । अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यत इत्यापद्येत । एवं चेत्स्यात् वद किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात् ? अपिचान्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्तत्रत्यव्यवहारलोपप्रसङ्गः स्यात् । अथ तत्र सुप्त उत्तिष्ठेत्कल्पनानर्थक्यं

---

### भामती ।

धिकरणान्तरारम्भः । स एवेति दुःसंपादमिति स वान्यो वेति ईश्वरो वेति संभवमात्रेणोपन्यासः । नहि तस्य शुद्धमुक्तस्वभावस्याविद्याकृतव्युत्थानसंभवः । अतएव विमर्शावसरेऽस्यानुपन्यासः । यद्धि द्व्यहादिनिर्वर्तनीयमेकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्यास्ति स्मृतिरिति वक्तव्येऽनुः प्रत्यभिज्ञानसूचनार्थः । अतएव सोऽहमस्मीत्युक्तम् । **पुनः प्रतिन्यायं प्रतियोन्याद्रवतीति** । अयनं आयः नियमेन गमनं न्यायः । जीवः प्रतिन्यायं संप्रसादे सुषुप्तावस्थायां बुद्धान्तायाद्रवति आगच्छति प्रतियोनि । योहि व्याघ्रयोनिः सुषुप्तो बुद्धान्तमागच्छन् स व्याघ्र एव भवति न जात्यन्तरम् । तदिदमुक्तम्—**त इह व्याघ्रो वा सिंहो वेति** । **अथ तत्र सुप्त उत्तिष्ठेदिति** । यो हि

### वेदान्तकल्पतरुः ।

पूर्वपक्षोपसंहारभाष्यं—**तस्मात्स एवेश्वरोऽन्यो वा जीवः प्रतिबुध्यत इति** । तत्र स एवेत्ययुक्तम्; अनियमेनात्र पूर्वपक्षणात्, स एवोत्तिष्ठतीत्यस्य सिद्धान्तत्वात् । अतीतानन्तरभाष्ये च न स एव पुनरुत्थातुमर्हतीत्यभिहितत्वादत आह—**स एवेतीति** । स एवेत्येतत् पूर्वपक्षत्वेन दुःसंपादमिति यतस्तस्माद्वाशब्दसमानार्थ एवकारः । तथाच स वाऽन्यो वेति व्याख्येयो ग्रन्थ इत्यर्थः । ईश्वरो वेति पक्षोपि न स्थिरपूर्वपक्ष इत्याह—**ईश्वरो वेतीति** । जीववचेतनत्वादीश्वरोत्थानसंभावना । **विमर्शावसर इति** । किं य एव सत्संपन्नः स एव प्रतिबुध्यते उत स एवाऽन्यो वेति संदेहभाष्ये इत्यर्थः । **ननु** स्मृतिमात्रस्यापि सुप्तोत्थितजीवैक्यगमकत्वमस्ति, नह्यन्यदृष्टमन्यः स्मरति, स्मरति चात्र सुषुप्तो जाग्रदृष्टमतः सूत्रे अनुस्मृतीत्यनुशब्दो व्यर्थ इत्याशङ्क्याह—**यद्धि द्व्यहादीति** । द्वे अहनी द्व्यहः । यत एव सूत्रेऽनुस्मृतिः प्रत्यभिज्ञा, अतएत सोऽहमस्मीति प्रत्यभिज्ञोदाहृता भाष्ये इत्यर्थः । भाष्यगतश्रुतिमुदाहृत्य व्याचष्टे—**अयनमिति** । इणो धातोर्घञि कृते आय इति रूपम् । **बुद्धान्ताय** बुद्धमध्याय जाग्रदवस्थायै । **प्रतियोनीति** ।

### कल्पतरुपरिमलः ।

समर्थ्यते ? संपन्नस्योत्थानं न संभवतीति युक्त्या खलु तत्समर्थनीयम्, **उच्यते**—यदि सिद्धान्तिना सुषुप्तस्य सत्संपत्तिरिष्यते, तदा तेनान्यस्यैवोत्थानमभ्युपेतव्यम् । यदि कर्मानुस्मृत्याद्यनुरोधात्तस्यैवोत्थानं वाच्यम्, तदा तस्य सत्संपत्तिर्हातव्येति नाडीपुरीततोरवस्थानमुपपद्यते । अतो न पूर्वाधिकरणसिद्धान्तसिद्धिरित्याक्षेपे तात्पर्यम् । एवंच स एवोत्तिष्ठत्यन्यो वेत्यनियमपूर्वपक्षोपि सत्संपत्त्यभ्युपगमतत्परित्यागपक्षद्वयानुसारेण व्यवस्थितः पर्यवस्यति । तथासत्येव चात्यन्तिकीं सत्संपत्तिं प्राप्तस्य कथं पाक्षिकतयाऽपि पुनरुत्थानं पूर्वपक्षीक्रियतइति शङ्काप्यनवकाशा भवति । **येषामीश्वर एवेति** । ईश्वरादन्यः संसारी नास्तीति वादिनामीश्वर एव वा संसारी स्यात्, स्वप्नदृष्टमनुष्यादिवत्कल्पितो वा । आद्ये तस्य न सुषुप्तिर्न प्रबोधः । द्वितीये प्रातिभासिकस्य नोत्थानादिव्यवहार इति दूषणार्थः । **द्वे अहनी द्व्यह इति** ।

स्यात्। यो हि यस्मिञ्शरीरे सुप्तः स तस्मिन्नोत्तिष्ठत्यन्यस्मिञ्शरीरे सुप्तोऽन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्? अथ मुक्त उत्तिष्ठेदन्तवान्मोक्ष आपद्येत। निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम्। एतेनेश्वरस्योत्थानं प्रत्युक्तम्; नित्यनिवृत्ताविद्यत्वात्। अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्याताम्। तस्मात्स एवोत्तिष्ठति नान्य इति। यत्पुनरुक्तं यथा जलराशौ प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यत एवं सति संपन्नो जीवो नोत्पतितुमर्हतीति। तत्परिह्रियते। युक्तं तत्र विवेककारणाभावाज्जलबिन्दोरनुद्धरणम्, इह तु विद्यते विवेककारणं कर्म चाविद्या चेति वैषम्यम्। दृश्यते च दुर्विवेचयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनम्। अपिच न जीवो नाम कश्चित्परस्मादन्यो विद्यते यो जलबिन्दुरिव जलराशेः सतो विविच्येत। सदेव तूपाधिसंपर्काज्जीव इत्युपचर्यत इत्यसकृत्प्रपञ्चितम्। एवं सति यावदेकोपाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः। उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः। स एवायमुपाधिः स्वापप्रबोधयोर्बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम् ॥ ९ ॥ इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

( ४ अधिकरणम् ) **मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥**

## भामती।

जीवः सुप्तः स शरीरान्तर उत्तिष्ठति, शरीरान्तरगतस्तु सुप्तजीवसंबन्धिनि शरीर उत्तिष्ठति, ततश्च न शरीरान्तरे व्यवहारलोप इत्यर्थः। **अपिच न जीवो नाम कश्चित्परस्मादन्य इति।** यथा घटाकाशो नाम न परमाकाशादन्यः। अथ चान्य इव यावद्धटमनुवर्तते। न चासौ दुर्विवेचस्तदुपाधेर्घटस्य विविक्तत्वात्। एवमनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवो न वस्तुतः परमात्मनो भिद्यते तदुपाध्युद्भवाभिभवाभ्यां चोद्भूत इवाभिभूत इव प्रतीयते। ततश्च सुषुप्तादावपि अभिभूत इव जाग्रदवस्थादिपूद्भूत इव। तस्य चाविद्यातद्वासनोपाधेरनादितया कार्यकारणभावेन प्रवहतः सुविवेकतया तदुपहितो जीवः सुविवेक इति ॥ ९ ॥ **इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥**

**मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥** विशेषविज्ञानाभावान्मूर्छा जागरस्वप्नावस्थाभ्यां भिद्यते, पुनरुत्थानाच्च

## वेदान्तकल्पतरुः

योनिशब्दः स्थानवचनः सन् शरीरमाह—**अनाद्यनिर्वाच्येति**। अनाद्यनिर्वाच्याया अविद्याया य उपधाने भेदःसंबन्धविशेषः स एवोपाधिः तेन कल्पितो जीव इत्यर्थः। यद्यौपाधिको जीवस्तर्हि सुषुप्तावुपाधिनाशान्न पश्यतीत्यत आह—**उपाध्युद्भवेति**। सुषुप्तादावन्तःकरणाद्युपाधिरभिभूतो भवति, संस्कारात्मनाऽवतिष्ठते, नतु सर्वात्मना न पश्यतीत्यर्थः। **ननु** जाग्रदादावन्तःकरणादि सुषुप्तौ तद्वासनेत्युपाधिभेदाज्जीवभेदः स्याद्, अतः कथं तस्यैव जीवस्योत्थानमत आह—**तस्य चेति**। अविद्या भ्रान्तिज्ञानं तद्वासना चोपाधी अवच्छेदकौ मृद इव घटशरावादि यस्य सोऽविद्यातद्वासनोपाधिदण्डायमानोऽविद्यालक्षणः तस्यानादितया कार्यकारणात्मकभ्रमतत्संस्कारभावेन प्रवहतः प्रकृतिविकारयोरभेदात् परिणममानस्य सुविवेकतया तदुपहितो जीवोऽनादिकालेऽपि सुविवेको ब्रह्मासंकीर्णः सन् सुषुप्त्याद्यवस्था अनुभवतीत्यर्थः। अत एव यथाश्रुतग्रन्थार्थग्राहिभिः कैश्चिद्वाचस्पतिमते सुषुप्तौ भ्रमसंस्कार उपाधिर्जाग्रत्यन्तःकरणादीत्युपाधिभेदादुपहितजीवभेदप्रसङ्गः, संस्कारस्य च सुषुप्तौ न सांकर्यवारकत्वम्। न हि घटसंस्कारो घटाकाशं व्यवस्थापयतीत्याक्षेपौ कृतावनवकाशौ। **अहरहर्गच्छन्त्य इति**। अहरहरिति वीप्सा एकस्यैव गत्यागती दर्शयति। ये प्राणिनः सुषुप्ते सत्संपन्नास्तइह जागरिते व्याघ्रो वेत्यादि यद्यद् भवन्त्यभवन् तएव सुषुप्तादागत्य भवन्ति ॥ ९ ॥ **इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥**[1]

**मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥** पूर्वत्र प्रत्यभिज्ञानात् स एवोत्तिष्ठतीत्युक्तम्, तर्हि विशेषविज्ञानाभावविशेषेणैक्यप्रत्यभिज्ञानात् सुषुप्तिरेव मुग्धिरिति पूर्वपक्षमाह—**विशेषविज्ञानाभावादित्यादिना**। विकारान्तरे कराल-

## कल्पतरुपरिमलः।

द्वे अहनी समाहृते इत्यर्थे तद्धितार्थोत्तरपदसमाहारे चेति समासः। राजाहःसखिभ्यष्टजिति समासान्तप्रत्ययः। रात्राह्नाहाः पुंसीति पुँल्लिङ्गता ॥ ९ ॥ **इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥**

**मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥ ऐक्यप्रत्यभिज्ञानादिति।** यद्यप्यत्र व्यक्त्यैक्यप्रत्यभिज्ञानं न संभ-

---

१ तत्र सूत्रम् १—स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ९ ॥

अस्ति मुग्धो नाम यं मूर्छित इति लौकिकाः कथयन्ति । स तु किमवस्थ इति परीक्षायामुच्यते । तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धा जागरितं स्वप्नः सुषुप्तमिति । चतुर्थी शरीरादपसृप्तिः, न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धास्ति । तस्माच्चतसृणामेवावस्थानामन्यतमावस्था मूर्छेत्येवं प्राप्ते ब्रूमः—न तावन्मुग्धो जागरितावस्थो भवितुमर्हति; न ह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतत्—इषुकारन्यायेन मुग्धो भविष्यति । यथेषुकारो जाग्रदपीष्वासक्तमनस्तया नान्यान्विषयानीक्षत एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान्विषयानीक्षत इति, न; अचेतयमानत्वात् । इषुकारो हि व्यापृतमना ब्रवीतीषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवमिति । मुग्धस्तु लब्धसंज्ञो ब्रवीत्यन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किंचिन्मया चेतितमिति । जाग्रतश्चैकविषयविषक्तचेतसोऽपि देहो विध्रियते । मुग्धस्य तु देहो धरण्यां पतति । तस्मान्न जागर्ति, नापि स्वप्नान्पश्यति; निःसंज्ञकत्वात् । नापि मृतः; प्राणोष्मणोर्भावात् । मुग्धे हि जन्तौ मृतोऽयं स्यान्न वा मृत इति संशयाना ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थं प्राणोऽस्ति नास्तीति च नासिकादेशम् । यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति, ततो मृतोऽयमित्यध्यवसाय दहनायारण्यं नयन्ति । अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति । पुनरुत्थानाच्च न दिष्टं गतः । नहि यमराष्ट्रात्प्रत्यागच्छति । अस्तु तर्हि सुषुप्तः निःसंज्ञत्वादमृतत्वाच्च, न, वैलक्षण्यात् । मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति सवेपथुरस्य देहो भवति भयानकं च वदनं विस्फारिते नेत्रे । सुषुप्तस्तु प्रसन्नवदनस्तुल्यकालं पुनः पुनरुच्छ्वसिति निमीलिते अस्य नेत्रे भवतः । न चास्य देहो वेपते । पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः; मुसलसंपातादिनिमित्तत्वान्मोहस्य, श्रमादिनिमित्तत्वाच्च स्वापस्य । नच लोकेऽस्ति प्रसिद्धिर्मुग्धः सुप्त इति । परिशेषादर्धसंपत्तिर्मुग्धतेत्यवगच्छामः । निःसंज्ञत्वात्संपन्न इतरस्माद्वैलक्षण्यादसंपन्न इति । कथं पुनरर्धसंपत्तिर्मुग्धतेति शक्यते वक्तुम्? यावता सुप्तं प्रति तावदुक्तं श्रुत्या—'सता सोम्य

## भामती ।

मरणावस्थायाः । अतः सुषुप्तिरेव मूर्छा विशेषज्ञानाभावाविशेषात् । चिरानुच्छ्वासवेपथुप्रभृतयस्तु सुप्तेरवान्तरप्रभेदाः । तद्यथा कश्चित्सुप्तोत्थितः प्राह सुखमहमस्वाप्सं लघूनि मे गात्राणि प्रसन्नं मे मन इति, कश्चित्पुनर्दुःखमस्वाप्सं गुरूणि मे गात्राणि भ्रमत्यनवस्थितं मे मन इति । न चैतावता सुषुप्तिर्भिद्यते । तथा विकारान्तरेऽपि मूर्छा न सुषुप्तेर्भिद्यते । तस्माल्लोकप्रसिद्ध्यभावान्नेयं पञ्चम्यवस्थेति प्राप्तम् । एवं प्राप्त उच्यते—यद्यपि विशेषविज्ञानोपशमेन मोहसुषुप्तयोः साम्यम्; तथापि नैक्यम् । नहि विशेषविज्ञानसद्भावसाम्यमात्रेण स्वप्नजागरयोरभेदः । बाह्येन्द्रियव्यापारभावाभावाभ्यां तु भेदे तयोः सुषुप्तमोहयोरपि प्रयोजनभेदात्कारणभेदाल्लक्षणभेदाच्च भेदः । श्रमापनुत्त्यर्था हि ब्रह्मणा संपत्तिः सुषुप्तम् । शरीरत्यागार्था तु ब्रह्मणा संपत्तिर्मोहः । यद्यपि सत्यपि मोहे न मरणम्; तथाप्यसति मोहे न मरणमिति

## वेदान्तकल्पतरुः ।

वदनत्वादौ सत्यपीत्यर्थः । यदि ज्ञानाभावसाम्येन सुप्तिमुग्ध्योरभेदः, तर्हि स्वप्नजागरितयोरपि विशेषविज्ञानसाम्यादभेदः स्यादिति प्रतिबन्दीमाह—**न हीति** । अथ सत्यप्यप्रयोजकसाम्ये प्रयोजकभेदात् स्वप्नजागरितयोर्भेदः, तर्हि सुषुप्तिमोहयोरप्यविशिष्ट इत्याह—**बाह्येन्द्रियेत्यादिना** । प्रयोजनभेदमाह—**श्रमापनुत्त्यर्था हीति** । **ननु** शरीरपरित्यागार्थश्चेन्मोहस्तर्हि मुग्धः सर्वः शरीरं त्यजेदत आह—**यद्यपीति** । सत्येव मोहे मृतिरित्यस्ति व्याप्तिः, सैव कारणत्वोपयोगिनी, न तु सति भवत्येवेति स्थिरकारणस्वीकारादित्यर्थः । यदुक्तं सुखमहमस्वाप्सं दुःखमहमस्वाप्समित्यादिवैलक्ष-

## कल्पतरुपरिमलः ।

वति; सुखमहमस्वाप्समिति परामर्शोन्नीतसौषुप्तिकानुभवयोग्याविद्यापरिणामविशेषः सुषुप्तिरित्यभ्युपगमे व्यक्तिभेदस्य स्फुटत्वात्, विशेषविज्ञानसंसर्गाभावकूटः सेत्यभ्युपगमेऽपि तत्तत्कालं मिलितकूटानुप्रविष्टविज्ञानप्रागभावप्रध्वंसव्यक्तीनां विपर्यासेन कूटभेदस्यावर्जनीयत्वात्; तथापि क्वचिन्निमीलितनयनत्वनिश्चेष्टत्वादिविशिष्टे पुरुषे सुषुप्तिमेव गतवतो मूर्छितमपि तथाभूतं पश्यतो भवति जात्यैक्यविषया प्रत्यभिज्ञा सैवेयमस्य सुषुप्तिरिति स एवायं शङ्खध्वनिरितिवत्सैवात्र पूर्वपक्षसाधनसमर्था पूर्वपक्षिणा विवक्षिता । एवं च पूर्वाधिकरणे व्यक्त्यैक्यविषया प्रत्यभिज्ञा इह जात्यैक्यविषयेति भेदसद्भावेऽपि प्रत्यभिज्ञासामान्यं संगत्यर्थं विवक्षितमिति नासंगतिः । **स्थिरकारणस्वीकारादिति** । क्षणिकवाद एव

तदा संपन्नो भवति' ( छा० ६।८।१ ) इति अत्र 'स्तेनोऽस्तेनो भवति' ( बृ० ४।३।२२ ) 'नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' ( छा० ८।४।१ ) इत्यादि। जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति। नच सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्येते, मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते। तस्मादुपाध्युपशमात्सुषुप्तवन्मुग्धेऽपि कृत्स्नसंपत्तिरेव भवितुमर्हति नार्धसंपत्तिरिति, अत्रोच्यते—न ब्रूमो मुग्धेऽर्धसंपत्तिर्जीवस्य ब्रह्मणा भवतीति। किं तर्ह्यर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वमर्धेनावस्थान्तरपक्षस्येति ब्रूमः। दार्शिते च मोहस्य स्वापेन साम्यवैषम्ये। द्वारं चैतन्मरणस्य। यदास्य सावशेषं कर्म भवति, तदा वाङ्मनसे प्रत्यागच्छतः। यदा तु निरवशेषं कर्म भवति, तदा प्राणोष्माणावपगच्छतः। तस्मादर्धसंपत्तिं ब्रह्मविद इच्छन्ति। यत्तूक्तं न पञ्चमी काचिदवस्था प्रसिद्धास्तीति, नैष दोषः; कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात्। प्रसिद्धा चैषा लोकायुर्वेदयोः। अर्धसंपत्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम्॥ १०॥ इति चतुर्थं मुग्धाधिकरणम्॥

( ५ अधिकरणम् ) **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥ ११॥**

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात्संपद्यते तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते। सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' ( छा० ३।१४।२ ) इत्येवमाद्याः सविशेषलिङ्गाः। 'अस्थूलमनण्वह्रस्वमदीर्घम्' ( बृ० ३।८।८ ) इत्येवमाद्याश्च निर्विशेषलिङ्गाः। किमासु श्रुतिषूभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गम्। यदा-

---

## भामती।

मरणार्थो मोहः। मुसलसंपातादिनिमित्तत्वान्मोहस्य श्रमादिनिमित्तत्वाच्च सुषुप्तस्य, मुखनेत्रादिविकारलक्षणत्वान्मोहस्य प्रसन्नवदनत्वादिलक्षणभेदाच्च सुषुप्तस्य, सुषुप्तस्य त्ववान्तरभेदेऽपि निमित्तप्रयोजनलक्षणाभेदादेकत्वम्। तस्मात् सुषुप्तमोहावस्थयोर्ब्रह्मणा संपत्तावपि सुषुप्ते यादृशी संपत्तिर्न तादृशी मोह इत्यर्धसंपत्तिरुक्ता। साम्यवैषम्याभ्यामर्धत्वम्। यदा चैतदवस्थान्तरम्, तदा भेदात्तत्प्रविलयाय यत्नान्तरमास्थेयम्। अभेदे तु न यत्नान्तरमिति चिन्ताप्रयोजनम्॥ १०॥ इति चतुर्थं मुग्धाधिकरणम्॥

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥११॥** अवान्तरसंगतिमाह—**येन ब्रह्मणा सुषुप्तादिष्विति** यद्यपि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र निष्प्रपञ्चमेव ब्रह्मोपपादितम्; तथापि प्रपञ्चलिङ्गानां बह्वीनां श्रुतीनां

## वेदान्तकल्पतरुः।

ण्यात् सुषुप्तस्यापि भेदप्रसङ्ग इति, तत्राह—**सुषुप्तस्य त्विति**। निमित्तादीनि श्रमादीन्युक्तान्येव। **तत्प्रविलयायेति**। अद्वयब्रह्मात्मत्वप्रतीतिसमये विचारेण तत्प्रविलयायेत्यर्थः॥ १०॥ **इति चतुर्थं मुग्धाधिकरणम्॥**[1]

**न स्थानतोऽपि हि परस्योभयलिङ्गं सर्वत्र हि॥ ११॥** **अत्र कश्चिद्**—भिन्नाभिन्ने ब्रह्मण्यभिन्नरूपमात्रं चिन्तनीयमित्यनेनाधिकरणेन विचार्यते, न तु भेदो निषिध्यते इति—**वदति**। तस्य भ्रान्तिज्ञानं ब्रह्मणि स्यात्, नहि रूपरसाद्यात्मके घटे रूपवानेवेति ज्ञानमभ्रान्तं भवति। भिन्नरूपमदृष्ट्वाऽभिन्नरूपं द्रष्टव्यमिति चेत्, तर्हि तस्य भिन्नाकारस्य ज्ञेयत्वेन ब्रह्मण्यनन्तर्भावाद् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपरोधः। भेदस्य चानुपास्यतायां भिन्नाभिन्ने ब्रह्मणि समन्वयनिरूपणं निष्फलम्। ज्ञानार्थो हि समन्वयः। तस्माद्—**उपाधितोऽपि भेदस्य मायामात्रत्ववर्णनात्। निर्विशेषमिह ब्रह्मयाथात्म्यं प्रतिपद्यते॥** **प्रपञ्चलिङ्गानामिति**। प्रपञ्चो लिङ्गं सविशेषब्रह्मणस्तद्याभिः प्रका-

## कल्पतरुपरिमलः।

समर्थस्य क्षेपायोगात्समर्थे बीजक्षणे सत्यङ्कुरजननमवश्यंभावीति नियमः। स्थिरवादिभिस्तु समर्थस्यापि सहकारिविरहसमये कार्याजनकत्वमभ्युपगतमिति भावः। **अद्वयेति**। तत्पदार्थाभेदसिद्ध्यर्थं त्वंपदार्थशोधनाय पूर्वपक्षे जागराद्यवस्थाचतुष्टयेनासबन्धो जीवस्य परिभावनीयः, सिद्धान्ते तु मूर्च्छयापीत्येवं फलभेद इत्यर्थः॥ १०॥ **इति चतुर्थं मुग्धाधिकरणम्॥**

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥ ११॥** पृथिव्याद्युपाधिप्रयुक्तैः सर्वगन्धत्ववामनीत्वादिगुणैः शाण्डिल्योपकोसलविद्याद्युपास्यस्य ब्रह्मणः स्वरूपेण भेदो न निषिध्यते, किं तु ज्ञेयत्वेन, तदर्थमेवेदमधिकरणमिति ये

---

[1] तत्र सूत्रम् १—मुग्धेऽर्धसंपत्तिः परिशेषात् १०॥

प्यन्यतरलिङ्गं, तदापि किं सविशेषमुत निर्विशेषमिति मीमांस्यते। तत्रोभयलिङ्गश्रुत्यनुग्रहादुभयलिङ्गमेव ब्रह्मेत्येवं प्राप्ते ब्रूमः—न तावत्स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते। न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं चेत्यवधारयितुं शक्यम्; विरोधात्। अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति। तदपि नोपपद्यते। नह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति। नहि स्वच्छः सन्स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। अतश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं न तद्विपरीतम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' (क० ३।१५। मुक्तिको० २।७२) इत्येवमादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते॥ ११॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात्॥ १२॥

अथापि स्याद्यदुक्तं निर्विकल्पमेकलिङ्गमेव ब्रह्म नास्य स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति। तन्नोपपद्यते; कस्मात्? भेदात्। भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते। चतुष्पाद्ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्मेत्येवंजातीयकाः। तस्मात्सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम्। ननूक्तं नोभयलिङ्गत्वं ब्रह्मणः संभवतीति। अयमप्यविरोधः, उपाधिकृतत्वादाकारभेदस्य। अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति; चेत्, नेति ब्रूमः; कस्मात्? प्रत्येकमतद्वचनात्। प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रम्—'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' (बृ० २।५।१) इत्यादि। अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम्। भेदस्योपासनार्थत्वादभेदे तात्पर्यात्॥ १२॥

## अपि चैवमेके॥ १३॥

अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति—'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (क० ४।११) इति। तथान्येऽपि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे० १।१२) इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते॥ १३॥ कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति? अत उत्तरं पठति—

## अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यं न रूपादिमत्। कस्मात्? तत्प्रधानत्वात्। 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ० ३।८।८) 'अशब्दमस्पर्शमरूपमव्ययम्' (कठ० ३।१५। मुक्ति० २।७२) 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा० ८।१४।१) 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मुण्ड० २।१।२), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' (बृ० २।५।१९) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं 'तत्तु समन्वयात्' (ब्र० सू० १।१।४) इत्यत्र। तस्मा-

### भामती।

दर्शनाद्भवति पुनर्विचिकित्सा अतस्तन्निवारणायारम्भः। तस्य च तत्त्वज्ञानमपवर्गोपयोगीति प्रयोजनवान् विचारः। तत्रोभयलिङ्गश्रवणादुभयरूपत्वं ब्रह्मणः प्राप्तम्। तत्रापि सविशेषत्वनिर्विशेषत्वयोर्विरोधात्स्वाभाविकत्वानुपपत्तेरेकं स्वतोऽपरं तु परतः। नच यत्परतस्तदपारमार्थिकम्। नहि चक्षुरादीनां स्वतःप्रमाणभूतानां दोषतोऽप्रामाण्यमपारमा-

### वेदान्तकल्पतरुः।

इयते ताः प्रपञ्चलिङ्गाः। **तस्य चेति**। निष्प्रपञ्चब्रह्मण इत्यर्थः। सिद्धान्तात्पूर्वपक्षस्य विशेषमाह—**न चेति**। **ननु**

### कल्पतरुपरिमलः।

मन्यन्ते तन्मतं स्वयं दूषयति—**यस्तु कश्चिदिति**। **सिद्धान्तादिति**। दोषोपाधिप्रयुक्तं चक्षुरादीनां भ्रमकरणल-

देवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम् । इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि । उपासनाविधिप्रधानानि हि तानि । तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम् । सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीति । एष विनिगमनायां हेतुः । येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति ॥ १४ ॥ का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिः ? इत्यत आह—

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तदाकारतामिव प्रतिपद्यते, तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते । एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति । नहि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तम् प्रतिपत्तुम्; प्रमाणत्वाविशेषात् । नन्वेवमपि यत्पुरस्तात्प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते । नेति ब्रूमः; उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात् । सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम ॥ १५ ॥

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ० ४।५।१३) इति । एतदुक्तं भवति—नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम् । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैवेति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषत्वात्—'अथात आदेशो नेति नेति' (बृ० २।३।६) इति 'अन्यदेव तद्विदितादथो अविदितादधि' (के० १।३) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै० २।४।१) इत्येवमाद्या । बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते—'स होवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि । उपशान्तोऽयमात्मा' इति । तथा स्मृ-

### भामती ।

र्थिकम्; विपर्ययज्ञानलक्षणकार्यानुत्पादप्रसङ्गात् । तस्मादुभयलिङ्गकशास्त्रप्रामाण्यादुभयरूपता ब्रह्मणः पारमार्थिकीति प्राप्त उच्यते—न स्थानत उपाधितोऽपि परस्य ब्रह्मण उभयचिह्नत्वसंभवः । एकं हि पारमार्थिकमन्यदध्यारोपितम् । पारमार्थिकत्वे ह्युपाधिजनितस्य रूपस्य ब्रह्मणः परिणामो भवेत् । स च प्राक्प्रतिषिद्धः । तत्पारिशेष्यात्स्फटिकमणेरिव स्वभावस्वच्छधवलस्य लाक्षारसावसेकोपाधिररुणिमा सर्वगन्धत्वादिरौपाधिको ब्रह्मण्यध्यस्त इति पश्यामो निर्विशेषताप्रतिपादनार्थत्वाच्छ्रुतीनाम् । सविशेषतायामपि 'यश्चायमस्यां पृथिव्यां तेजोमयः' इत्यादीनां श्रुतीनां ब्रह्मैकत्वप्रतिपादनपरत्वादेकत्वनानात्वयोश्चैकस्मिन्नसंभवादेकत्वाङ्गत्वेनैव नानात्वप्रतिपादनपर्यवसानात्, नानात्वस्य प्रमाणान्तर-

### वेदान्तकल्पतरुः ।

परोपाधिकं किंचित्सत्यं यथा चक्षुरादीनामप्रमाकरणत्वं किंचिन्मिथ्या यथा स्फटिकलौहित्यं तत्र सविशेषनिर्विशेषत्वयोर्यदन्यतरपक्षोपाधिकं तत्सत्यमेवेति कुतो निर्णयः ? तत्राह—**उभयलिङ्गकशास्त्रप्रामाण्यादिति । सविशेषतायामपीति** । पृथिव्याद्युपाधिकसविशेषतायां सत्यामपि यश्चायमस्यां पृथिव्यां यश्चायमध्यात्ममिति तामनूद्यायमेव स इत्यद्वैतप्रतिपादकत्वादित्यर्थः । **ननु** पृथिव्याद्युपाधिकभेद एकत्वं च प्रतीयतामत आह—**एकत्वनानात्वयोश्चेति** । भवतु तर्हि नानात्वमेव प्रतिपाद्यं, नेत्याह—**एकत्वाङ्गत्वेनैवेति** । तदेव साधयति—**नानात्वस्येति** । व्यावहारि-

### कल्पतरुपरिमलः ।

मिव पृथिव्याद्युपाधिप्रयुक्तं ब्रह्मणः सविशेषत्वं सत्यमित्येवंरूपपूर्वपक्षस्य सिद्धान्ताद्विशेषमाहेत्यर्थः । **अयमेव स इत्य-**

तिष्वपि परप्रतिषेधेनैवोपदिश्यते—'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' ( गी० १३।१२ ) इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते—'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' इति ॥ १७ ॥

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु—'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' (ब्र० विं० १२) इत्येवमादिषु ॥१८॥ अत्र प्रत्यवस्थीयते—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

न जलसूर्यकादितुल्यत्वमिहोपपद्यते; तद्वदग्रहणात् । सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः, न त्वात्मा मूर्तो न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः सर्वगतत्वात्सर्वानन्यत्वाच्च । तस्मादयुक्तोऽयं दृष्टान्त इति ॥ १९ ॥ अत्र प्रतिविधीयते—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

युक्त एव त्वयं दृष्टान्तो विवक्षितांशसंभवात् । नहि दृष्टान्तदार्ष्टान्तिकयोः क्वचित्कंचिद्विवक्षितांशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते । सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । नचेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्, शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते । किं पुनरत्र विवक्षितं सारूप्यमिति ? तदुच्यते—वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुयायि भवति न तु परमार्थतः सूर्यस्य तथात्वमस्ति । एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीन् । एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः ॥ २० ॥

---

### भामती ।

सिद्धतयानुवाद्यत्वादेकत्वस्य चानधिगतेर्विधेयत्वोपपत्तेर्भेददर्शननिन्दया च साक्षाद्भूयसीभिः श्रुतिभिरभेदप्रतिपादनादाकारवद्ब्रह्मविषयाणां च कासांचिच्छ्रुतीनामुपासनापरत्वमसति बाधकेऽन्यपराद्वचनात्प्रतीयमानमपि गृह्यते । यथा देवतानां विग्रहवत्त्वम् । सन्ति चात्र साक्षाद्द्वैतापवादेनाद्वैतप्रतिपादनपराः शतशः श्रुतयः । कासांचिच्च द्वैताभिधायिनीनां तत्प्रविलयपरत्वम् । तस्मान्निर्विशेषमेकरूपं चैतन्यैकरसं सद्ब्रह्म परमार्थतः, विशेषाश्च सर्वगन्धत्ववामनीत्वादय उपाधिवशादध्यस्ता इति सिद्धम् । शेषमतिरोहितार्थम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥

### वेदान्तकल्पतरुः ।

कप्रमाणसिद्धभेदानुवादेन पारमार्थिकाभेदप्रतिपादनपरा श्रुतिरित्यर्थः । जीवब्रह्मणोरेकत्वमपि सत्त्वाद्यात्मना सिद्धमिति, तत्राह—**एकत्वस्य चेति** । उपाधिनिषेधेनैकत्वस्यासिद्धेर्विधेयत्वोपपत्तेः प्रतिपाद्यत्वोपपत्तेरित्यर्थः । **ननु** भवतु निर्गुणब्रह्मसंनिधिसमाम्नातभेदश्रुतीनां निषेध्यभेदानुवादकत्वमेकत्वस्य प्रतिपाद्यत्वाद्, उपासनाप्रकरणपठितभेदश्रुतीनां तु भेदपरत्वमस्तु, एकत्वस्य तत्राप्रतिपादनादत आह—**आकारवद्ब्रह्मेति** । उपास्तिपरत्वान्न भेदप्रमापकत्वमित्यर्थः । **ननु** द्वा सुपर्णेत्याद्याः श्रुतयः सन्ति भेदप्रतिपादनपरास्तत्राह—**कासांचिच्चेति** । अस्यां तावद् ऋचि बुद्ध्युपाध्यकर्तृत्वनिषेधेन निर्विशेषः प्रत्यगात्मा प्रतिपाद्यते इति पैङ्ग्युपनिषद्व्याख्यातम् । एवमन्यत्रापि द्रष्टव्यम् ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

### कल्पतरुपरिमलः ।

**द्वैतप्रतिपादकत्वादिति** । अद्वैतप्रतिपादके च ब्रह्मणः सविशेषत्वं विवक्षितमिति वक्तुं न शक्यम्; विरुद्धविशेषवता ब्रह्मणः जीवस्याभेदायोगादिति भावः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

## दर्शनाच्च ॥ २१ ॥

दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम्—'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' ( बृ० २।५।१८ ) इति । 'अनेन जीवेनात्मनानुप्रविश्य' ( छा० ६।३।२ ) इति च । तस्माद्युक्तमेतत्—'अत एव चोपमा सूर्यकादिवत्' ( ब्र० सू० ३।२।१८ ) इति । तस्मान्निर्विकल्पकैकलिङ्गमेव ब्रह्म नोभयलिङ्गं विपरीतलिङ्गं चेति सिद्धम् ॥

अत्र केचिद्द्वे अधिकरणे कल्पयन्ति । प्रथमं तावत्—किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्मोत प्रपञ्चवदनेकाकारोपेतमिति । द्वितीयं तु—स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभयलक्षणमिति । अत्र वयं वदामः—सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति । यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासस्तत्पूर्वेणैव 'न स्थानतोऽपि' इत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं 'प्रकाशवच्च' एतद्व्यर्थमेव भवेत् । नच सल्लक्षणमेव ब्रह्म न बोधलक्षणमिति शक्यं वक्तुम्; विज्ञानघन एवेत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत ? नापि बोधलक्षणमेव ब्रह्म न सल्लक्षणमिति शक्यं वक्तुम्; 'अस्तीत्येवोपलब्धव्यः' ( क० ६।१३ ) इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्। कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत ? नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम्; पूर्वाभ्युपगमविरोधप्रसङ्गात्। सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं ब्रह्मणः प्रसज्येत । श्रुतत्वाददोष इति चेत्, न; एकस्यानेकस्वभावत्वानुपपत्तेः । अथ सत्तैव बोधो बोध एव सत्ता नानयोः परस्परव्यावृत्तिरस्तीति यद्युच्येत, तथापि किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभयलक्षणमित्ययं विकल्पो निरालम्बन एव स्यात् । सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि । अपिच ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्नास्वनाकारे ब्रह्मणि परिगृहीतेऽवश्यं वक्तव्येतरासां श्रुतीनां गतिः । तादर्थ्येन प्रकाशवच्चेत्यादीनि सूत्राण्यर्थवन्तराणि संपद्यन्ते । यदप्याहुराकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेनानाकारप्रतिपत्त्यर्था एव न पृथगर्था इति,

### भामती ।

अत्र केचिद्द्वे अधिकरणे कल्पयन्तीति । किं सल्लक्षणं च ब्रह्म किं सल्लक्षणमेव ब्रह्मोत प्रकाशलक्षणमेवेति, तत्र पूर्वपक्षं गृह्णाति—**प्रकाशवच्चावैयर्थ्यात्** । चकारात्सच्च । अवैयर्थ्यात् । ब्रह्मणि सच्छ्रुतेः, सिद्धान्तयति—**आह च तन्मात्रम्** । प्रकाशमात्रम् । नहि सत्त्वं नाम प्रकाशरूपादन्यत्, यथा सवैगन्धत्वादयः, अपि तु प्रकाश-

### वेदान्तकल्पतरुः ।

एकदेशिमते द्वितीयाधिकरणे वचनव्यक्तीराह—**किं सल्लक्षणमेवेति** । एवकारो बोधाद्भेदव्यवच्छेदार्थः । बोधलक्षणमेवेत्यत्र तु बोधस्य सत्ताया भेदव्यावृत्त्यर्थः । ततश्च बोधात्मिका सत्ता सत्तात्मको वा बोधो ब्रह्मेति सिद्धान्तपक्षः प्रदर्शितः । सच्छ्रुतेः सदेवेदमित्याद्याया अवैयर्थ्यार्थं सत्तावच्च ब्रह्म मन्तव्यमित्यर्थः । तदेतदधिकरणवचनम् । **अनेन** अत्र

### कल्पतरुपरिमलः ।

**वचनव्यक्तीराह किं सल्लक्षणमिति** पूर्वपक्षाभिमतप्रथमवचनव्यक्तिप्रतीकोपादानम्। व्यक्तीरिति बहुवचनं पूर्वपक्षसिद्धान्ताभिमतवचनव्यक्तित्रयाभिप्रायम् । **ननु** वचनव्यक्तित्रयोपन्यासाद् द्वौ पूर्वपक्षौ एकः सिद्धान्त इति प्रतिभाति। अग्रे च सल्लक्षणं प्रकाशलक्षणं च ब्रह्मेत्येकस्यैव पूर्वपक्षस्य निराकरणं दृश्यते, कथमेतद्युज्यते ? इत्याशङ्क्य द्वितीयतृतीये द्वे अपि वचनव्यक्ती सिद्धान्तिन एवेति व्याख्यातुं द्वितीयवचनव्यक्तिमुपादत्ते—**किं सल्लक्षणमेवेति** । **नन्वियं** वचनव्यक्तिः कथं सिद्धान्त्यभिमता ? एवकारेण प्रकाशलक्षणत्वव्यावर्तनात्, सिद्धान्ते च प्रकाशलक्षणत्वाङ्गीकारादित्याशङ्क्य प्रकाशलक्षणाद् भेदव्यवच्छेद एवकारार्थो न तु प्रकाशलक्षणत्वव्यवच्छेदार्थ इति व्याचष्टे—**एवकार इति** । **नन्वेवकार**द्वयं प्रकाशलक्षणत्वसल्लक्षणत्वव्यवच्छेदार्थं न भवति चेत्, सिद्धान्तेऽप्युभयलक्षणं ब्रह्मेति पूर्वपक्षात्तस्य को विशेषः ? इत्याशङ्क्याह—**ततश्चेति** । सत्प्रकाशभेदेनोभयरूपं ब्रह्मेति पूर्वपक्षः । तयोरभेदेनैकरूपं तदिति सिद्धान्त इति विशेष इत्यर्थः । सचेति साध्ये अवैयर्थ्यादिति हेतुं विवृणोति—**सच्छ्रुतेरिति** । **नन्वे**कदेश्यभिमतसिद्धान्तनिराकरणप्रस्तावेनाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम्; पूर्वाभ्युपगमविरोधप्रसंगादिति भाष्यं सिद्धान्त्यभिमतस्यैव पक्षान्तरस्य निराकरणार्थं प्रवृत्तमिति प्रतिभाति, तस्य तादर्थ्यमयुक्तम्; उभयलक्षणत्वं पूर्वपक्षीकृत्य तन्निराकरणार्थतयैव द्वितीयाधिकरणप्रवृत्ते-

तदपि न समीचीनमिव लक्ष्यते । कथम् ? ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते यथा— 'युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' (बृ० २।५।१९ ) इत्येवमादयस्ते भवन्ति प्रविलयार्थाः; 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ० २।५।१९) इत्युपसंहारात्। ये पुनरुपासनाविधानाधिकारे प्रपञ्चा उच्यन्ते, यथा 'मनोमयः प्राणशरीरो भारूपः' (छा० ३।१४।२) इत्येवमादयो न तेषां प्रविलयार्थत्वं न्याय्यम्; 'स क्रतुं कुर्वीत' ( छा० ३।१४।१ ) इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां संबन्धात्। श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्प्यमाने न लक्षणया प्रविलयार्थत्वमवकल्पते । सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' ( ब्र० सू० ३।२।१४ ) इति विनिगमनकारणवचनमनवकाशं स्यात्। फलमप्येषां यथोपदेशं क्वचिद्दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः क्वचित्क्रममुक्तिरित्यवगम्यत एवेत्यतः पार्थगर्थ्यमेवोपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यं नैकवाक्यत्वम्। कथं चैषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम्। एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदिति चेत्, न; ब्रह्मवाक्येषु नियोगाभावात् । वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनीत्येतद्विस्तरेण प्रतिष्ठापितम् 'तत्तु समन्वयात्' (ब्र० सू० १।१।४) इत्यत्र। किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्। पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चिन्नियुज्यते। ननु द्वैतप्रपञ्चप्रविलयो नियोगविषयो भविष्यति। अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यत एवमपवर्गकामस्य प्रपञ्चप्रविलयः। यथा च तमसि व्यवस्थितं घटादि तत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यत एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म, तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति। अत्र वयं पृच्छामः—कोऽयं प्रपञ्चप्रविल-

## भामती ।

रूपमेव सदिति नोभयरूपत्वं ब्रह्मण इत्यर्थः । तदेतदनेनोपन्यस्य दूषितम् । सत्ताप्रकाशयोरेकत्वे नोभयलक्षणत्वम् । भेदे न स्थानतोऽपीति निराकृतमिति नाधिकरणान्तरं प्रयोजयति । परमार्थतस्त्वभेद एव प्रकृष्टप्रकाशवदिति ।

## वेदान्तकल्पतरुः ।

केचिदित्यादिभाष्येणेत्यर्थः । अत्र पूर्वपक्षानुत्थानमाह—**सत्ताप्रकाशयोरिति** । प्रकाशवच्च ब्रह्मेत्युक्ते किं सत्ताप्रकाशयोरभेद उत भेदः । **आद्ये** सिद्धान्त एवेति न पूर्वपक्षत्वमित्याह—**नोभयलक्षणत्वमिति** । ब्रह्मण इति शेषः । **द्वितीये** गतार्थत्वमित्याह—**भेद इति** । शङ्कितो भेदः स्वनिराकरणाय नाधिकरणान्तरं प्रयोजयतीत्यर्थः । पूर्वाभ्युपगमविरोधप्रसङ्गादिति भाष्यार्थोऽपि हेतुः पूर्वपक्षानुत्थानएव; पूर्वाधिकरणसिद्धान्ते स्थिते तद्विरोधेन पूर्वपक्षानुत्थानादित्यर्थः । यश्च सत्ताप्रकाशयोरेकत्वं कृत्वा सद्बोधात्मकं ब्रह्मेति सिद्धान्तः सोऽप्ययुक्तः; तथा सद्बोधशब्दयोः पर्यायत्वप्रसङ्गात्। कथं तर्हि सिद्धान्ते अखण्डत्वसिद्धिः ? अत आह—**परमार्थतस्त्विति** । अनि र्वाच्यभेदाभ्युपगमान्न पर्या-

## कल्पतरुपरिमलः ।

रेकदेशिभिरुक्तत्वादित्याशङ्क्य तदपि भाष्यं पूर्वपक्षस्यैव निराकरणार्थमित्याह—**पूर्वपक्षानुत्थानएवेति** । **ननु**—पूर्वपक्षनिराकरणार्थत्वे प्राग् यदि तावदनेकलिङ्गत्वमित्यादिभाष्योक्तहेतुना पौनरुक्त्यमिति—**चेत्, न;** प्राक् पूर्वाधिकरणे सिद्धस्यार्थस्य पुनः साधनवैयर्थ्यमिति सिद्धान्तदूषणतयोक्तम् । इदानीं पूर्वाधिकरणसिद्धान्ते स्थिते तदनुपमृद्य पूर्वपक्षोत्थानं न संभवतीति पूर्वपक्षदूषणतयोच्यत इति मुखभेदेनापौनरुक्त्यात् । यद्यपि तत्र सिद्धान्तदूषणमपि पूर्वपक्षानुत्थानमुपजीव्योक्तम्, अन्यथा सिद्धान्तवैयर्थ्योक्त्ययोगात्; तथापि पूर्वपक्षानुत्थानं द्वारीकृत्य सिद्धान्तदूषणपर्यन्तं पूर्वभाष्यम्, इदं तु भाष्यं पूर्वपक्षानुत्थानमात्रपर्यवसायीति भेदः । अत एवाचार्यैरिह पूर्वपक्षानुत्थान एवेत्येवकारः कृतः। **वस्तुतस्तु**—केवलसल्लक्षणत्वे केवलबोधलक्षणत्वे चोक्तदोषं पश्यन् सिद्धान्ती यद्यगत्या स्वनिराकृतमेव पूर्वपक्षं परिगृह्णीयात्, तदा तस्य न केवलं पूर्वपक्षिण इह पूर्वाधिकरणसिद्धान्तोक्तयुक्तिविरोधमात्रम्, अपि तु स्वाभ्युपगमविरोधोऽपीत्ययमेवार्थो भाष्यस्य स्वारसिकः । **नन्वे**कदेशिसिद्धान्ते किं दूषणं दृष्ट्वा परमार्थतस्त्वभेद एव प्रकृष्टप्रकाशवदित्यखण्डसिद्धान्तसिद्धान्ताभिमततयोपसंहारः कृतः? इत्याशङ्क्य टीकाभिप्रेतं परसिद्धान्तदूषणं दर्शयति—**यश्च सत्ताप्रकाशयोरिति** ।

यो नाम । किमग्निप्रतापसंपर्काद्घृतकाठिन्यप्रविलयः इव प्रपञ्चप्रविलयः कर्तव्य आहोस्विदेकस्मिश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति । तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रविलयोपदेशोऽशक्यविषय एव स्यात् । एकेन चादिमुक्तेन पृथिव्यादिप्रविलयः कृत इतीदानीं पृथिव्यादिशून्यं जगदभविष्यत् । अथाविद्याध्यस्तो ब्रह्मण्येकस्मिन्नयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात् । ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम् 'एकमेवाद्वितीयं ब्रह्म' 'तत्सत्यं स आत्मा तत्त्वमसि' (छा० ६।८।७) इति, तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते, तथाचाविद्या बाध्यते, ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत्प्रविलीयते । अनावेदिते तु ब्रह्मणि ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयं चेति शतकृत्वोऽप्युक्ते न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायते । नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविषयो वा नियोगः स्यात्, न; निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैवोभयसिद्धेः । रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानमविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति । नच कृतमेव पुनः क्रियते । नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम स प्रपञ्चपक्षस्यैव वा स्याद्ब्रह्मपक्षस्यैव वा । प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात्कस्य प्रपञ्चविलये नियोग उच्येत ? कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत ? द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपं जीवत्वं त्वविद्याकृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव । द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वाभिमुखीकरणप्रधाना न तत्त्वा-

## भामती ।

**सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' इति विनिगमनकारणवचनमनवकाशं स्यात्** । एवं हि तस्यावकाशः स्याद्यदि काश्चिदुपासनापरतया रूपमाचक्षीरन् काश्चिन्नीरूपब्रह्मप्रतिपादनपरा भवेयुः । सर्वासां तु प्रविलयार्थत्वेन नीरूपब्रह्मप्रतिपादनार्थत्वे उक्तो विनिगमनहेतुर्न स्यादित्यर्थः । **एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदि**त्यधिकाराभिप्रायम्, अनुबन्धभेदात्तु भिन्नोऽनयोरपि नियोग इति । **कोऽयं प्रपञ्चप्रविलय इति** । वास्तवस्य वा प्रपञ्चस्य प्रविलयः सर्पिष इवाग्निसंयोगात् । समारोपितस्य वा रज्ज्वां सर्पभावस्येव रज्जुतत्त्वपरिज्ञानात् । न तावद्वास्तवः सर्वसाधारणः पृथिव्यादिप्रपञ्चः पुरुषमात्रेण शक्यः समुच्छेत्तुम् । **अपिच** प्रह्लादशुकादिभिः पुरुषधौरेयैः समूलमुन्मूलितः प्रपञ्च इति शून्यं जगद्भवेत् । नच वास्तवं तत्त्वज्ञानेन शक्यं समुच्छेत्तुम् । आरोपितरूपविरोधित्वात्तत्त्वज्ञानस्येत्युक्तम् । समारोपितरूपस्तु प्रपञ्चो ब्रह्मतत्त्वज्ञापनपरैरेव वाक्यैर्ब्रह्मतत्त्वमवबोधयद्भिः शक्यः समुच्छेत्तुमिति कृतमत्र विधिना । नहि विधिशतेनापि विना तत्त्वावबोधनं प्रवर्तस्वात्मज्ञान इति वा कुरु प्रपञ्चप्रविलयं चेति प्रवर्तितः शक्नोति प्रपञ्चप्रविलयं कर्तुम् । न चास्यात्मज्ञानविधिं विना वेदान्तार्थब्रह्मतत्त्वावबोधो न भवति; मौलिकस्य स्वाध्यायाध्ययनविधेरेव विवक्षितार्थतया सकलस्य वेदराशेः फलवदर्थावबोधनपरतामापादयतो विद्यमानत्वात् । अन्यथा कर्मविधिवाक्यान्यपि विध्यन्तरमपेक्षेरन्निति । नच चिन्तासाक्षात्कारयोर्विधिरिति तत्त्वसमीक्षायामस्माभिरुपपादितम् । विस्तरेण चायमर्थस्तत्रैव प्रपञ्चितः । तस्मात् 'जर्तिलयवाग्वा जुहुयात्' इतिवद्विधिसरूपा एते 'आत्मा वा अरे द्रष्टव्य' इत्यादयो न तु विधय इति । तदिदमुक्तम् **—द्रष्टव्यादिशब्दा अपि तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना इति** । **अपिच** ब्रह्मतत्त्वं

## वेदान्तकल्पतरुः ।

यता । परमार्थतस्तु ब्रह्मणो लक्ष्यस्याभेद एव यथा प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकर्षप्रकाशाभ्यां लक्ष्यमाणचन्द्रस्यैकत्वं तद्वदित्यर्थः । प्रपञ्चितं चैतदस्माभिर्जन्मादिसूत्रे ( ब्र. अ. १ पा. १ सू. २ ) । भाष्यमुपादाय व्याचष्टे—**सर्वेषां चेति** । प्रयाजनियोगानामपि समिधो यजतीत्याद्याख्याताभिहितानां दर्शपूर्णमासनियोगाद्भेदाद्भाष्यायोगमाशङ्क्याह—**अधिकाराभिप्रायमिति** । अधिकारः परमापूर्वं तदेकमिति तदपेक्षयैकनियोगत्वम् । अनुबन्धो नियोगावच्छेदको धात्वर्थः । स हि प्रयाजादावाग्नेयादौ च द्रव्यदेवतादिभेदाद् भिन्न इति । कुरु प्रपञ्चप्रविलयमिति प्रवर्तितो न शक्नोति प्रविलयं कर्तुं प्रवर्तस्वात्मज्ञाने इति प्रवर्तितश्च न शक्नोत्यात्मज्ञानं कर्तुमित्यपि द्रष्टव्यम् । अयं ज्ञातव्योऽर्थ इति विधिद्वारेणैव वाक्यस्य विवक्षितार्थत्वमित्याशङ्क्याह—**न चास्येति** । अधिकारिण इत्यर्थः । मा भूच्छाब्दज्ञाने विधिः, शब्दादेव तस्योत्पत्तिः ध्याने साक्षात्कारे वाऽस्तु, तत्राह—**न चेति** । **जर्तिलेति** । दशमे स्थितम्—" न चेदन्यं प्रकल्पयेत्प्रक्लृप्तौ चार्थ-

वबोधविधिप्रधाना भवन्ति । लोकेऽपीदं पश्येदमाकर्णयेति चैवंजातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते न साक्षाज्ज्ञानमेव कुर्विति । ज्ञेयाधिमुखस्यापि ज्ञानं कदाचिज्जायते कदाचिन्न जायते । तस्मात्तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन । तस्मिन्दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते । नच प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं

## भामती ।

निष्प्रपञ्चमुक्तम्; न तत्र नियोज्यः कश्चित्संभवति । जीवो हि नियोज्यो भवेत्, स चेत्प्रपञ्चपक्षे वर्तते को नियोज्यस्तस्योच्छिन्नत्वात् । अथ ब्रह्मपक्षे तथाप्यनियोज्यः, ब्रह्मणोऽनियोज्यत्वात् । अथ ब्रह्मणोऽनन्योऽप्यविद्ययाऽन्य इवेति नियोज्यः । तदयुक्तम्; ब्रह्मभावं पारमार्थिकमवगमयतागमेनाविद्याया निरस्तत्वात् । तस्मान्नियोज्याभावादपि न नियोगः । तदिदमुक्तम्—**जीवो नाम प्रपञ्चपक्षस्यैवेति** । **अपिच** ज्ञानविधिपरत्वे तन्मात्रात्तु ज्ञानस्यानुत्पत्तेस्तत्त्वप्रतिपादनपरत्वमभ्युपगमनीयम् । तत्र वरं तत्त्वप्रतिपादनपरत्वमेवास्तु; तस्यावश्याभ्युपगन्तव्यत्वेनोभयवादिसिद्धत्वात् । एवं च कृतं तत्त्वज्ञानविधिनेत्याह—**ज्ञेयाभिमुखस्यापीति** । नच ज्ञानाधाने प्रमाणानपेक्षस्यास्ति कश्चिदुपयोगो विधेः । एवं हि तदुपयोगो भवेद्यद्यन्यथाकारं ज्ञानमन्यथादधीत । नच तच्छक्यं नापि युक्तमित्याह—**नच प्रमाणान्तरेणेति** । **किंचान्यन्नियोगनिष्ठतयैव च पर्यवस्यत्याम्नाये यदभ्युपगतं** भवद्भिः शास्त्रपर्यालोच-

## वेदान्तकल्पतरुः ।

वादः स्यादानर्थक्यात्परसामर्थ्याच्च" ( जै. अ. १० पा. ८ सू. ७ ) । अग्निहोत्रं प्रकृत्याधीयते—जर्त्तिलयवाग्वा जुहुयाद् गवीधुकयवाग्वा वा जुहुयाद् न ग्राम्यान्पशून् हिनस्ति नारण्याननाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहुयादिति । तत्र किं जर्तिलगवीधुकवाक्ये विधिः अनाहुतिरिति च प्रतिषेधः पयसेति च विध्यन्तरम् उत पयसेत्येव विधिरितरस्तदर्थोऽर्थवाद इति । तत्र अनाहुतिरिति निन्दाया निषेधशेषत्वेन विधिशेषत्वायोगान्निषेधं परिकल्प्य विधिनिषेधसमावेशाद्विकल्प इति प्राप्ते सिद्धान्तः । अनाहुतिरित्येतन्निषेधं प्रकल्पयेद् यद्यन्यं विधिं स्वशेषित्वेन न कल्पयेत् । कल्पयति त्विदं पयसेति विधिं स्वशेषित्वेन । प्रकृतौ चार्थवादः स्यात् । विध्येकवाक्यता हि प्रत्यक्षवाक्यभेदापादिकां प्रतिषेधकल्पनां वारयति । **किंच** कल्पितेऽपि प्रतिषेधे विकल्पः स्यात् । जर्तिलगवीधुकयवागूभ्यां होतव्यं न होतव्यमिति । तत्र प्रतिषेधकल्पनस्यानर्थक्यम्; होमार्थत्वेन जर्तिलगवीधुकपयसां विधिभिरेव विकल्पसिद्धेः । **ननु** निन्दायाः प्रतिषेधशेषत्वात् कथं विधिशेषत्वमत उक्तं—**परसामर्थ्याच्चेति** । परेण पयोहोमविधिना एकवाक्यत्वसामर्थ्याच्चेत्यर्थः । इह हि ग्राम्यारण्यपशुहिंसाविरहाज्जर्त्तिलगवीधुकहोमः प्रशस्ततया कीर्त्यते । तदनु ततो पयोहोमस्य प्रशस्ततरत्वार्थमनाहुतिवाक्येन जर्तिलगवीधुकहोमौ निन्द्येते तस्मादर्थवाद इति । निष्प्रपञ्चमुक्तम् एकदेशिनाऽपि न स्थानतोऽपी ( ब्र. अ. ३ पा. २ सू. ११ ) त्याद्यधिकरणे इत्यर्थः । नियोज्य आकाशादिप्रपञ्चान्तर्भूतो ब्रह्मैव वा ब्रह्मण औपाधिकावच्छेदो वेति विकल्पान् क्रमेण निरस्यति—**स चेदित्यादिना** । त्वया विज्ञाते ब्रह्मणि तज्ज्ञानेन प्रपञ्चप्रविलयः साध्य इति वक्तव्यम् । तदा च ज्ञानजन्मानन्तरमेव नियोज्यस्योच्छिन्नत्वान्नियोगासिद्धिरित्यर्थः । तत्त्वप्रतिपादनस्य ज्ञानोत्पत्ताववश्यापेक्षणीयत्वमुक्त्वा विधौ तदभावमाह—**नच ज्ञानाधान इति** । **साध्यानुबन्धभेदादिति** । द्वेधा हि प्राभाकराणां शास्त्रभेदः साध्यभेदादनुबन्धभेदाच्च । तत्र साध्यं सप्तविधम् उत्पत्तिप्राप्तिसंस्कृतिविकृतिकरणोपकारकरणावान्तरव्यापाराधिकाररूपम् । संयवनस्य पिण्ड उत्पाद्यः । दोहनस्य पयः प्राप्यम् । प्रोक्षणस्य व्रीहयः संस्कार्याः । अवघातस्य तएव विकार्याः । प्रयाजादीनां दर्शपूर्णमासादिकरणानि प्रत्युपकारः साध्यः । आग्नेयादीनां प्रत्येकं करणावान्तरव्यापाररूपाण्यपूर्वाणि साध्यानि । सर्वेषां चैषामधिकारापूर्वं परमसाध्यमिति । तैः साध्यैर्नियोगाः पिष्टं संयौतीत्यादिशास्त्राणि भिद्यन्ते । तथा द्रव्यदेवतादिरूपभेदाद्धात्वर्थभेदस्ततश्च नियोगावच्छेदकधात्वर्थात्मकविषयभेद इति । अस्यां पृथिव्यामधिदैवं यस्तेजोमयश्चिन्मात्रस्वरूपोऽमृतमयोऽमृतस्वरूपः पुरुषो यश्चायमध्यात्मं शरीरे भवः शारीरस्तावुभावपि सर्वेषां

## कल्पतरुपरिमलः ।

सर्वात्मना सत्ताप्रकाशयोरभेदाभ्युपगमे सद्बोधशब्दयोः पर्यायत्वप्रसङ्गः । अनिर्वाच्यप्रवृत्तिनिमित्तभेदेन पर्यायत्वसमाधाने त्वस्मत्सिद्धान्त एव । नच—तथा निर्णयार्थमेवाधिकरणान्तरमिहास्त्विति—शङ्कनीयम्; स्वरूपतटस्थलक्षणोपपादनार्थं प्रवृत्ते जन्माधिकरण ( ब्र. अ. १ पा. १ सू. २ ) एव स्वरूपलक्षणेनाखण्डसिद्धिरिति पूर्वपक्षस्य निराकृतत्वेन पुनरिह शङ्कानुत्थानादित्यर्थः । **जर्तिलाः** आरण्यतिलाः । **गवीधुकाः** आरण्यगोधूमाः । शारीरस्तेजोमयोऽमृतमयः पुरुष इत्येतदनन्तरमियं पृथिवीति वाक्यादनुषक्तपदानि योजयन्नाकाङ्क्षां पूरयति—**सर्वेषां भूतानां मध्विति** । मधुशब्दस्य सुज्यत्वसाम्याल्लक्षणीयमर्थमाह—**उपकारकाविति** । वाक्यद्वयादनुषङ्गलब्धानि पदानि योजयित्वा वाक्यान्तरं दर्शयति—**तयोश्च सर्वाणि भूतानि मध्विति** । एतावदनुषङ्गश्चकारसामर्थ्यान्मध्वित्युपक्रमाच्चेत्याह—**चशब्दा-**

नियुक्तस्याप्युपपद्यते । यदि पुनर्नियुक्तोऽहमित्यन्यथा ज्ञानं कुर्यान्न तु तज्ज्ञानं, किं तर्हि ? मानसी सा क्रिया । स्वयमेव चेदन्यथोत्पद्येत, भ्रान्तिरेव स्यात् । ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च न तन्नियोगशतेनापि कारयितुं शक्यते । नच प्रतिषेधशतेनापि वारयितुं शक्यते । नहि तत्पुरुषतन्त्रं, वस्तुतन्त्रमेव हि तत् । अतोऽपि नियोगाभावः । किंचान्यन्नियोगनिष्ठतयैव पर्यवस्यत्याम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य तदप्रमाणकमेव स्यात् । अथ शास्त्रमेवानियोज्यब्रह्मात्मत्वमप्याचक्षीत तदवबोधे च पुरुषं नियुञ्जीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयाताम् । नियोगपरतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षस्यादृष्टफलत्वमनित्यत्वं चेत्येवमादयो दोषा न केनचित्परिहर्तुं शक्याः । तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि न नियोगनिष्ठानि । अतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम् । अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु

## भामती ।

नयाऽनियोज्यब्रह्मात्मत्वं जीवस्येति तदेतच्छास्त्रविरोधादप्रमाणकम् । अथैतच्छास्त्रमनियोज्यब्रह्मात्मत्वं च जीवस्य प्रतिपादयति जीवं च नियुङ्क्ते ततो द्व्यर्थं च विरुद्धार्थं च स्यादित्याह—**अथेति** । दर्शपौर्णमासादिवाक्येषु जीवस्यानियोज्यस्यापि वस्तुतोऽध्यस्तनियोज्यभावस्य नियोज्यता युक्ता । नहि तद्वाक्यं तस्य नियोज्यतामाह, अपि तु लौकिकप्रमाणसिद्धां नियोज्यतामाश्रित्य दर्शपूर्णमासौ विधत्ते । इदं तु नियोज्यतामपनयति च नियुङ्क्ते चेति दुर्घटमिति भावः । **नियोगपरतायां चेति** । पौर्वापर्यालोचनया वेदान्तानां तत्त्वनिष्ठता श्रुता न श्रुता नियोगनिष्ठतेत्यर्थः । **अपिच** नियोगनिष्ठत्वे वाक्यस्य दर्शपौर्णमासकर्मण इवापूर्वावान्तरव्यापारादात्मज्ञानकर्मणोऽप्यपूर्वावान्तरव्यापारादेव स्वर्गादिफलवन्मोक्षस्यानन्दरूपफलस्य सिद्धिः । तथा चानित्यत्वं सातिशयत्वं स्वर्गवद्भवेदित्याह—**कर्मफलवदिति** । **अपिच ब्रह्मवाक्येष्विति** । सप्रपञ्चनिष्प्रपञ्चोपदेशेषु हि साध्यानुबन्धभेदादेकनियोगत्वमसिद्धम् । दर्शपौर्णमासप्रयाजवाक्येषु तु यद्यप्यनुबन्धभेदः, तथाप्यधिकारांशस्य साध्यस्य भेदभावादभेद इति ॥ २१ ॥ **इति पंचममुभयलिङ्गाधिकरणम्** ॥

## वेदान्तकल्पतरुः ।

भूतानां मधु उपकारकौ तयोश्च सर्वाणि भूतानि मध्वित्यनुषज्यते । चशब्दादियं पृथिवी सर्वेषां भूतानां मध्वित्युपक्रमाच्च सोऽधिदैवाध्यात्मावच्छिन्नः पुरुषोऽयमेव योऽयमात्मा सर्वकारणभूत इत्यर्थः । शास्त्राचार्यसंस्कृतमनसैवेदं ब्रह्मास्वयं ज्ञातव्यम् । ज्ञाते खिह ब्रह्मणि किंचन किंचिदपि न नास्ति । यस्त्वविद्यया नानेव आभासं नानारूपं पश्यति स **मृत्योर्मरणान्मृत्युं** मरणं गच्छति । **पुनः**पुनर्म्रियते इत्यर्थः । यो भोक्ता जीवस्तं भोग्यं शब्दादिप्रेरितारमीश्वरं च मत्वा विचार्य त्रिविधमेतद्ब्रह्म प्रोक्तम् । ब्रह्ममिति च्छान्दसम् । ब्रह्म मे तु मामितिवद् मे मम तद्ब्रह्म प्रोक्तमिति वा । तदेतदिति । तद् ब्रह्म सर्वकारणमेतदेवात्मरूपं तद्ब्रह्म विशेष्यते । पूर्वं कारणं तस्य न विद्यते **इत्यपूर्वम्** । स्वयं कार्यं न भवतीत्यर्थः । परं कार्यमस्य न विद्यते **इत्यनपरम्** । स्वयं च न कारणमित्यर्थः । एवंविधमेतज्जातीयमन्यदस्य नास्तीति अनन्तरं तथा एवंविधं बाह्यं विजातीयमस्य च नास्ती**त्यबाह्यम्** । एवं तावदपूर्वादिलक्षणं ब्रह्मानूद्यात्मत्वं विहितम्, संप्रत्यात्मानुवादेन ब्रह्मत्वं विदधाति—**अयमिति** । य आत्माऽयं ब्रह्मेत्यर्थः । स आत्मा किंलक्षणोऽत आह—सर्वानुभूः साक्षिरूपेण सर्वमनुभवतीति **सर्वानुभूः** । **अधीह** ध्यापय **भो** भगवन् । आदिरस्य विद्यत इत्यादिमत्तद् न भवतीत्यनादिमत् **सत्** कारणम् **अस**त्कार्यं च तद्रूपेण ब्रह्म नोच्यते । **पुरः** पुराणि । **द्विपदो** द्विपदोपलक्षितानि शरीराणि चक्रे । पुरः पुरस्ताच्चक्षुराद्यभिव्यक्तेः पूर्वमेव च स ईश्वरः पक्षी लिङ्गशरीरस्य तैत्तिरीयादौ पक्षपुच्छादिसम्पादनात् पक्षीति लिङ्गशरीरमुच्यते तदभिमानी भूत्वा पुरः सृष्टानि शरीराणि पुरुष आविशत् प्रविष्ट इति ॥ २१ ॥ **इति पञ्चममुभयलिंगाधिकरणम्** ॥[1]

## कल्पतरुपरिमलः ।

**दिति** । नानेवेतीवशब्दार्थमाह—**आभासमिति** । वस्तुतोऽपारमार्थिकमित्यर्थः । **स्वयं च न कारणमिति** । वस्तुतः कारणं न भवति; सत्यस्य कार्यस्याभावादिति भावः । **पक्षीति लिङ्गशरीरमुच्यत इति** । मनःप्राणविज्ञानानां लिङ्गशरीरान्तर्गतानां पक्षपुच्छादिनिरूपणादिति भावः ॥ २१ ॥ **इति पञ्चममुभयलिङ्गाधिकरणम्** ॥

---

१ **तत्र सूत्राणि ११**—न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ११ न भेदादिति चेन्न प्रत्येकमतद्वचनात् १२ अपि चैवमेके १३ अरूपवदेव हि तत्प्रधानत्वात् १४ प्रकाशवच्चावैयर्थ्यात् १५ आह च तन्मात्रम् १६ प्रदर्शयति चाथो अपि स्मर्यते १७ अत एव चोपमा सूर्यकादिवत् १८ अम्बुवदग्रहणात्तु न तथात्वम् १९ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् २० दर्शनाच्च २१ ॥

चासिद्धम् । नहि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुम् । प्रयाजदर्शपूर्णमासवाक्येषु त्वधिकारांशेनाभेदाद्युक्तमेकत्वम्, न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति । नहि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः । नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात् । नहि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं चैकस्मिन्धर्मिणि युक्तं समावेशयितुम् । तस्माद्यस्मदुक्त एव विभाग आकारवदनाकारोपदेशानां युक्ततर इति ॥ २१ ॥ इति पञ्चममुभयलिङ्गाधिकरणम् ॥

(६ अधिकरणम्) **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥**

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' (बृ० २।३।१) इत्युपक्रम्य पञ्चमहाभूतानि द्वैरा-

## भामती ।

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥** अधिकरणविषयमाह—**द्वे वाव ब्रह्मणो रूपे इति** । द्वे एव ब्रह्मणो रूपे ब्रह्मणः परमार्थतोऽरूपस्याध्यारोपिते द्वे एव रूपे ताभ्यां हि तद्रूप्यते । ते दर्शयति—**मूर्तं चैवामूर्तं च** । समुच्चीयमानावधारणम् । अत्र पृथिव्यप्तेजांसि त्रीणि भूतानि ब्रह्मणो रूपं मूर्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं कठिनमिति यावत् । तस्यैव विशेषणान्तराणि—**मर्त्यं** मरणधर्मकम् । **स्थितमव्यापि** । अवच्छिन्नमिति यावत् । सत् अन्येभ्यो विशिष्यमाणमसाधारणधर्मवदिति यावत् । गन्धस्नेहोष्णताश्चान्योन्यव्यवच्छेदहेतवोऽसाधारणा धर्माः । तस्यैतस्य ब्रह्मरूपस्य तेजोऽबन्नस्य चतुर्विशेषणस्यैष रसः सारो य एष सविता तपति । अथामूर्तं वायुश्चान्तरिक्षं च तद्धि न कठिनमित्यमूर्तमेतदमृतममरणधर्मकम् । मूर्तं हि मूर्तान्तरेणाभिहन्यमानमवयवविश्लेषाद्ध्वंसते, नतु तथाभावः संभवत्यमूर्तस्य । एतद्यदेति गच्छति व्याप्नोतीति । एतत्त्यं नित्यपरोक्षमित्यर्थः । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् सवितृमण्डले पुरुषः । करणात्मको हिरण्यगर्भप्राणाह्वयस्त्यस्य ह्येष रसः सारो नित्यपरोक्षता च साम्यमित्यधिदैवतम् । अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणान्तराकाशाभ्यां भूतत्रयं शरीरारम्भकमेतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रस

## वेदान्तकल्पतरुः ।

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ निषेधश्रुतिभिर्ब्रह्म निर्विशेषं निरूपितम् । तासां ब्रह्मनिषेद्धृत्वमिहाशङ्क्य निरस्यते ॥ अथवा—सन्मात्रं ब्रह्म सामान्यं तद्विशेषानपेक्षते । निषेधेषु निषिद्धेषु नास्ति ब्रह्मेति शङ्क्यते ॥** श्रुतिगतवावशब्दार्थमाह—**द्वे एवेति** । समुच्चये सत्येवकारो विरुध्यते तन्मात्रावधारणस्य तदितरसमुच्चयस्य च विरोधादित्याशङ्क्याह—**समुच्चीयमानावधारणमिति** । सर्वदा द्वे अपि रूपे मिलिते एवेत्यर्थ एवकार इत्यर्थः । **एषा अत्र श्रुतिः**—द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः, अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एव एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इति । अस्यां श्रुतौ तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चेत्येतद्व्याचष्टे—**पृथिव्यप्तेजांसीति** । **मूर्च्छनं** स्थूलीभावः । तत्र हेतुः—**इतरेतरानुप्रविष्टावयवमिति** । पटादेर्हि तन्त्वाद्यवयवा इतरेतरमनुप्रविष्टा दृश्यन्ते, ततश्च तन्त्वाद्यवस्थातः स्थूलाश्च । यद्यपि वायोरपीदं तुल्यम्; तथापि प्रत्यक्षेणानुग्रहणादनादरः श्रुतेः, **यदिति** गच्छदित्यर्थः । ततश्चैकत्रैव च न तिष्ठतीति व्यापीत्यर्थः । त्यच्छब्दः सर्वनामतच्छब्दसमानार्थः । त्यदिति वक्तव्ये त्यमिति छान्दसम् । यद्यपि पञ्चभूतकार्यं हिरण्यगर्भः;तथाप्यमूर्तभूतद्वयस्य हिरण्यगर्भस्य च रसरसिभावे सामान्यहेतुः श्रुतिगतहिशब्देन विवक्षितस्तं दर्शयति—**नित्यपरोक्षतेति** । रसत्वमत्र कार्यत्वम् । एवमधिदैवतं हिरण्यगर्भमधिकृत्य मूर्तामूर्तव्यवस्थामुक्त्वाऽऽध्यात्मिकविषयां श्रुतिमथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश इत्याद्यामुदाहरति—**अथाध्यात्ममित्यादिना** । यश्चायमन्तरात्मन्नन्तःशरीरे आकाशस्तस्मात्प्राणाच्च यदन्यत्तन्मूर्तमिति श्रुतियोजनामभिप्रेत्योक्तं—**यदन्यत् प्राणान्तराकाशाभ्यामिति** । आध्यात्मिकत्वसिद्ध्यर्थमाह—**शरीरारम्भकमिति** । **चक्षुरिति** गोलक-

## कल्पतरुपरिमलः ।

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ ननु** यदित्यस्य गच्छदित्यर्थश्चेद्वायोरेव संग्रहो नाकाशस्येत्याशङ्क्याह—**ततश्चेति** । यदित्यनेन गच्छद्धर्मं एकत्रैवावस्थानाभावो लक्ष्यते, स व्याप्तिः आकाशस्यापि तुल्य इति भावः । **यद्यपि पञ्चभूतेति** । समष्टिलिङ्गशरीरस्य पञ्चभूतकार्यत्वात्तदभिमानिनो हिरण्यगर्भस्य तथात्वमुक्तम् । चक्षुरिन्द्रियस्य तैजसत्वाच्चक्षुषोरसत्त्ववचनं गोलकाभिप्रायमित्याह—**चक्षुरिति** । **रूपाद्युपलब्धिभिः क्रिया-**

**द्वयेन प्रविभज्यामूर्तरसस्य च पुरुषशब्दोदितस्य माहारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते—'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' ( बृ० २।३।६ ) इति । तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे । न ह्यत्रेदं तदिति विशेषितं किंचित्प्रतिषेध्यमुपलभ्यते । इतिशब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते नेति नेतीतीतिपरत्वान्नञ्प्रयोगस्य ।**

## भामती ।

इति । अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषस्त्यस्य ह्येष रसः । लिङ्गस्य हि करणात्मकस्य हिरण्यगर्भस्य दक्षिणमक्ष्यधिष्ठानं श्रुतेरधिगतम् । तदेवं ब्रह्मण औपाधिकयोर्मूर्तामूर्तयोराध्यात्मिकाधिदैविकयोः कार्यकरणभावेन विभागो व्याख्यातः सत्यच्छब्दवाच्ययोः । अथेदानीं तस्य करणात्मनः पुरुषस्य लिङ्गस्य रूपं वक्तव्यम् । मूर्तामूर्तवासनाविज्ञानमयं विचित्रं मायामहेन्द्रजालोपमं तद्विचित्रैर्दृष्टान्तैरादर्शयति—'तद्यथा माहारजनम्' इत्यादिना । **एतदुक्तं भवति**—मूर्तामूर्तवासनाविज्ञानमयस्य विचित्रं रूपं लिङ्गस्येति । तदेवं निरवशेषं सवासनं सत्यरूपमुक्त्वा यत्तत्सत्यस्य सत्यमुक्तं ब्रह्म तत्स्वरूपावधारणार्थमिदमारभ्यते । यतः सत्यस्य रूपं निःशेषमुक्तमतोऽवशिष्टं सत्यस्य यत्सत्यं तस्यानन्तरं तदुक्तिहेतुकं स्वरूपं वक्तव्यमित्याह—**अथात आदेशः** कथनं सत्यसत्यस्य परमात्मनस्तमाह—**नेति नेति** । एतदर्थकथनार्थमिदमधिकरणम् । **ननु**

## वेदान्तकल्पतरुः ।

मात्रम् । **ननु** चैतन्यव्याप्तं लिङ्गशरीरं स्थूलशरीरे सर्वत्र वर्तते, तत्र कथं दक्षिणमक्ष्याधारत्वेनोक्तमत आह—**लिङ्गस्य हीति** । लिङ्ग्यतेऽनुमीयते इति लिङ्गम् । अनुमानप्रकारमाह—**करणात्मकस्येति** । रूपाद्युपलब्धिभिः क्रियाभिः करणत्वेनानुमीयत इत्यर्थः । आध्यात्मिकचक्षुरादेराधिदैविकहिरण्यगर्भादित्यादिव्यष्टिलाद्धिरण्यगर्भस्येत्युक्तम् । **अथवा**—अनुग्राहकत्वेन हिरण्यगर्भस्य चक्षुष्यप्यवस्थानमुक्तं विशेषावस्थानमदृष्टमपि शास्त्रीयमस्तीत्यर्थः । **ब्रह्मण औपाधिकयोरिति** । ब्रह्मण उपाधिरज्ञानं तत्र भवत इत्यौपाधिके तयोरित्यर्थः । **कार्यकरणभावेनेति** । कार्यं शरीरं करणमिन्द्रियम् । **सत्यशब्दवाच्ययोरिति** । सदितित्यमिति च शब्दवाच्ययोरित्यर्थः । एवं मूर्तामूर्ते प्रतिषेध्ये दर्शयित्वा वासनामयं रूपं निषेध्यं दर्शयति—**अथेदानीमिति** । मूर्तामूर्तविषयानुभवजनितवासनाजन्यविज्ञानविषय इत्यर्थः । तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकमित्यादिदृष्टान्तैरुपमां दर्शयतीत्यर्थः । **महारजनं** हरिद्रा तया रक्तं माहारजनम् । **नन्वनुद्भूतरूपं** लिङ्गशरीरं, तस्य कथं हारिद्रादिरूपतुल्यरूपसंभवः ? अत आह—**एतदुक्तं भवतीति** । वासनाजन्यभ्रान्तिवशाद्रूपाध्यासयोग्यः कोऽप्याकारो लिङ्गशरीरैक्येनारोप्यते, तन्निष्ठाः स्वप्ने रूपभेदाः प्रकाशन्त इति प्रतिषेध्यं रूपं प्रदर्श्य प्रतिषेधावधिभूतं रूपि ब्रह्म दर्शयति श्रुतिरित्याह—**तदेवमिति** । **सत्यरूपमिति** । व्यावहारिकसत्यं ब्रह्मणो रूपमित्यर्थः । अथात आदेश इत्यत्रातःशब्दार्थमाह—**यत इति तदुक्तिहेतुकमित्यन्तेन** । मध्ये अथशब्दार्थमाह—**तस्यानन्तरमिति** । **सत्यसत्यस्येति** । व्यावहारिकस्य सत्यस्य प्रपञ्चस्य यः सत्य आत्मा तस्येत्यर्थः । न ह्येतस्मादिति नेत्यपरमस्तीत्युत्तरवाक्यं व्याचष्टे—**ननु किमेतावदेवेति** । इति नेत्यादिष्टादेतस्मादन्यत्परमुत्कृष्टं

## कल्पतरुपरिमलः ।

**भिरिति** । रूपाद्युपलब्धिभिर्गमनादानक्रियाभिश्चेत्यर्थः । **आध्यात्मिकेति** । आध्यात्मिकलिङ्गशरीरान्तर्गतस्य चक्षुरादेः समष्टिरूपलिङ्गशरीरान्तर्गतादित्यादिव्यष्टिलात्समष्ट्यभिमानिनो हिरण्यगर्भस्य व्यष्ट्यभिमानिदेवतालमप्यस्तीति हिरण्यगर्भलोक्तिरित्यर्थः । एवं च लिङ्गशरीरस्य सकलस्थूलशरीरवर्तित्वेऽपि तदभिमानिदेवतायाश्चक्षुष्यवस्थानं श्रुतिबलादङ्गीकार्यमिति तात्पर्यम् । **अथवेति** । आदित्यश्चक्षुर्भूत्वेति श्रुतौ चक्षुरनुग्राहकत्वेनादित्यस्य तस्मिन्नवस्थानं प्रसिद्धं, स आदित्यः प्राणात्मनाऽऽदित्यमण्डलमधितिष्ठन् हिरण्यगर्भ एव; हिरण्यगर्भस्य तथात्वेन पुराणेषु प्रसिद्धेः, तस्य श्रुतिपुराणसिद्धाया जगदण्डादुत्पत्तेः छन्दोगोपनिषदि आदित्ये समाम्नानाच्चेति भावः । **कार्यं शरीरं करणमिन्द्रियमिति** । आधिदैविकाध्यात्मिकभेदे द्विविधे सत् त्यदित्युभे द्विविधसद्दशभूते आदित्यमण्डलचक्षुर्गोलके चेत्येतत्सर्वं समष्टिव्यष्टिस्थूलशरीररूपं कार्यशब्देनोक्तम् । द्विविधरसभूतं समष्टिलिङ्गशरीरद्वयं करणशब्देनोक्तमिति विभागः । यद्यपि द्विविधमपि लिङ्गशरीरं द्विविधसकलस्थूलशरीरवर्ति; तथापि तदभिमानिनो मण्डलगोलकयोः सन्निधानात्तस्यापि तयोर्वर्तनमभिमान्यभेदोपचारादुक्तम् । तदभेदोपचारादेव तस्य हैतस्य पुरुषस्येति अनन्तरवाक्ये पुरुषशब्देनाभिमानिवाचिना करणद्वयस्य परामर्शः । कार्यकारणभावेनेति पाठे तु मूर्तामूर्ते रूपे कारणे तद्रसतयोक्तानि कार्याणि । स एवो विभागः । **मूर्तामूर्तेति** । मूर्तामूर्तविषयेण जागरानुभवेन जनितया वासनया जन्यं विज्ञानं स्वप्रविभ्रमस्तद्विषय इत्यर्थः । विज्ञानमयमिति पाठेऽपि विज्ञानविषय इत्येवार्थः । **दृष्टान्तैरुपमां दर्शयतीति** । महारजनादिरूपसमानं रूपमादर्शयतीत्यर्थः । **महारजनं हरिद्रेति** । नैघण्टुकास्तु महारजनं कुसुम्भमाहुः । **वासनाजन्येति** । वासनाजन्यपूर्वपूर्वस्वप्रविश्रान्तिवशादुत्तरोत्तर-

**इतिशब्दश्चायं संनिहितालम्बन एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते 'इति ह स्मोपाध्यायः कथयति' इत्येवमादिषु । संनिहितं चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणस्तच्च ब्रह्म यस्यैते द्वे रूपे । तत्र नः संशय उपजायते किमयं प्रतिषेधो रूपे रूपवच्चोभयमपि प्रतिषेधत्याहोस्विदेकतरम् । यदाप्येकतरं तदापि किं ब्रह्म प्रतिषेधति रूपे परिशिनष्ट्याहोस्विद्रूपे प्रतिषेधति, ब्रह्म परिशिनष्टीति । तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे । द्वौ चैतौ प्रतिषेधौ द्विर्नेतिशब्दप्रयोगात् । तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यतेऽपरेण रूपवद्ब्रह्मेति भवति मतिः । अथवा—ब्रह्मैव रूपवत्प्रतिषिध्यते, तद्धि वाङ्मनसातीतत्वादसंभाव्यमान-**

## भामती ।

किमेतावदेवादेश्यमुतेतः परमन्यदप्यस्तीत्यत आह—**नह्येतस्माद्ब्रह्मण इति** । न नेत्यादिष्टादन्यत्परमस्ति यदादेश्यं भवेत् । तस्मादेतावदेवादेश्यं नापरमस्तीत्यर्थः । अत्रैवमर्थेनेतिना यत्संनिहितं परामृष्टं तन्निषिध्यते नञा संनिहितं च मूर्तामूर्तं सवासनं रूपद्वयम् । तदवच्छेदकत्वेन च ब्रह्म । तत्रेदं विचार्यते—किं रूपद्वयं सवासनं ब्रह्म च सर्वमेव च प्रतिषिध्यते, उत ब्रह्मैवाथ सवासनं रूपद्वयं ब्रह्म तु परिशिष्यत इति । यद्यपि तेषु तेषु वेदान्तप्रदेशेषु ब्रह्मस्वरूपं प्रतिपादितं तदसद्भाववज्ञानं च निन्दितम् । 'अस्तीत्येवोपलब्धव्यः' इति चास्य सत्त्वमवधारितम्; तथापि सद्बोधरूपं तद्ब्रह्म सवासनमूर्तामूर्तरूपसाधारणतया च सामान्यं तस्य चैते विशेषा मूर्तामूर्तादयः । नच तत्तद्विशेषनिषेधे सामान्यमवस्थातुमर्हति; निर्विशेषस्य सामान्यस्यायोगात् । **यथाहुः**—'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' इति । तस्मात्तद्विशेषनिषेधेऽपि तत्सामान्यस्य ब्रह्मणोऽनवस्थानात्सर्वस्यैवायं निषेधः । अतएव नह्येतस्मादिति नेत्यन्यत्परमस्तीति निषेधात् परं नास्तीति सर्वनिषेधमेव तत्त्वमाह श्रुतिः । 'अस्तीत्येवोपलब्धव्यः' इति चोपासनाविधानवन्नेयं, न त्वस्तित्वमेवास्य तत्त्वम् । तत्प्रशंसार्थं चासद्भाववज्ञाननिन्दा । यच्चान्यत्र ब्रह्मस्वरूपप्रतिपादनं तदपि मूर्तामूर्तरूपप्रतिपादनवन्निषेधार्थम् । असंनिहितोऽपि च तत्र निषेधो योग्यत्वात्संभन्स्यते । **यथाहुः**—'येन यस्याभिसंबन्धो दूरस्थस्यापि तेन सः' इति । तस्मात्सर्वस्यैवाविशेषेण निषेध इति **प्रथमः पक्षः** । **अथवा**—पृथिव्यादिप्रपञ्चस्य समस्तस्य प्रत्यक्षादिप्रमाणसिद्धत्वात्, ब्रह्मणस्तु वाङ्मनसागोचरतया सकलप्रमाणविरहात्, कतरस्यास्तु निषेध इति विशये प्रपञ्चप्रतिषेधे समस्तप्रत्यक्षादिव्याकोपप्रसङ्गात्, ब्रह्मप्रतिषेधे त्वव्याकोपाद्ब्रह्मैव प्रतिषेधेन संबध्यते योग्यत्वान्न प्रपञ्चस्तद्रूप-

## वेदान्तकल्पतरुः ।

न ह्यस्तीति वाक्ययोजना दर्शिता । एवंशब्दस्यार्थ एवार्थो यस्य स एवमर्थस्तेन । **इतिना** इतिशब्देनेत्यर्थः । **तदवच्छेदकत्वेनेति** । कस्य रूपद्वयमित्यपेक्षायां ब्रह्मण इत्येवंरूपेण विशेषणत्वेनेत्यर्थः । अथ सवासनं रूपद्वयमित्यत्रापि प्रतिषिध्यत इत्यनुषङ्गः । ब्रह्मप्रतिषेधेन पूर्वपक्षस्यानुत्थानमाशङ्क्याह—**यद्यपीत्यादिना** । **सद्बोधरूपमिति** । बोधत्वेन रूपेण विशेषात्मकत्वमुक्तं, सदिति सामान्यात्मत्वम् । तच्च सवासनमूर्तामूर्तसाधारणत्वेन व्यक्तीकृतम् । निर्विशेषं यत्तत्सामान्यं न भवेदिति योजना । **उपासनाविधानवदिति** । यथा नाम ब्रह्मेत्युपासीतेत्यादावब्रह्मणि ब्रह्मत्वेनोपासना विधीयते, एवमसत्येवास्तीत्युपलब्धिदृष्टिर्विधीयते, इतिशब्दशिरस्कत्वाविशेषादित्यर्थः । **तत्प्रशंसार्थमिति** । अस्तित्वदृष्टिविधिप्रशंसार्थमसन्नेव स भवति असद्ब्रह्मेति वेद चेदित्यसद्भावज्ञाननिन्देत्यर्थः । **संभन्स्यते** संबद्धो भविष्यति । कंचिद्धर्मिणमनाश्रित्य निषेधायोगात्पक्षान्तरमाह—**अथवेति** । **ननु** पञ्चम्यन्तशब्दादुपसर्जनत्वेन प्रस्तुतं ब्रह्म कथं निषेधेन संबध्यते ? तत्राह—**योग्यत्वादिति** । अप्रमितत्वमेव निषेधयोग्यत्वम् । **ननु** विशेषाणां निषेधे सामान्यस्या-

## कल्पतरुपरिमलः ।

स्वप्नेषु प्रतीयमाने प्रपञ्चे महारजनादिसमानरूपाध्यासानुकूलः कोप्याकारो लिङ्गशरीरे तादात्म्येनारोप्यते । तन्निष्ठा रूपभेदाः स्वाप्नपदार्थेषु भासन्ते तत्परिणामत्वात्स्वाप्नपदार्थानामिति भावः । **ननु** सत्सामान्यस्य बोधरूपविशेषसत्त्वान्नात्र मूर्तामूर्तविशेषव्यावृत्तावपि सत्तासामान्यं व्यावर्ततेत्याशङ्क्याह—**तच्चेति** । तत्सत्त्वस्य सामान्यात्मकत्वं सवासनमूर्तामूर्तसाधारण्योक्त्या स्पष्टीकृतमित्यर्थः । **अयमाशयः**—यथा शोणकर्कादयोऽश्वविशेषाः; शोणोऽश्वः कर्कोऽश्व इत्यादिव्यावृत्तानुवृत्तव्यवहाराद्, एवं मूर्तामूर्तब्रह्मरूपत्वेनोक्ताः पृथिव्यादयः सद्विशेषाः; सती पृथिवी सज्जलमित्यादिव्यवहारात्, ततश्च यथा शोणकर्कादियावद्विशेषव्यावृत्तावश्वत्वसामान्यं व्यावर्तते, एवं पृथिव्याद्यात्मकयावद्रूपविशेषव्यावृत्तौ सामान्यं व्यावर्तेत । न च बोधरूपविशेषान्तरसद्भावात्तद्व्यावृत्तिः शङ्कनीया; द्वे वावेत्यवधारणेन ब्रह्मणि मूर्तामूर्तरूपद्वयव्यतिरेकेण रूपान्तरं नास्तीत्यवगमात् । एवं च बोधात्मकत्वं सहैव ब्रह्मणा धर्मिणा श्रुतमप्यसदेव स्यादिति । यथाहुरित्युदाहृतस्यार्थस्य निर्विशेषं सामान्यं शशविषाणवन्न भवेदिति योजनान्तरभ्रान्तिं वारयति—**निर्विशेषं यत्तत्सामान्यं न भवेदिति योजनेति** । **ननु** विशेषणत्वादेव योग्यत्वमसिद्धमित्याशङ्क्याह—**अप्रमितत्वमेवेति** । प्रमितत्वमेव प्रतिषे-

सद्भावं प्रतिषेधार्हम्, न तु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात्प्रतिषेधार्हः। अभ्यासस्त्वादरार्थ इति। एवं प्राप्ते ब्रूमः—न तावदुभयप्रतिषेध उपपद्यते; शून्यवादप्रसङ्गात्। किंचिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादयः। तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्प्यते। उभयप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत्। अपरिशिष्यमाणे चान्यस्मिन्य इतरः प्रतिषेद्धुमारभ्यते प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः। नापि ब्रह्मप्रतिषेध उपपद्यते; 'ब्रह्म ते ब्रवाणि' ( बृ० २।१।१ ) इत्याद्युपक्रमविरोधात्, 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्' ( तैत्ति० २।६।१ ) इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्यः' ( कठ० ६।१३ ) इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च। वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते। नहि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परम्' ( तै० २।१।१ ) 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१।१ ) इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत; 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति हि न्यायः।

## भामती।

रीत्यात्, वीप्सा तु तदत्यन्ताभावसूचनायेति—मध्यमः पक्षः। तत्र प्रथमं पक्षं निराकरोति—**न तावदुभयप्रतिषेध उपपद्यते शून्यवादप्रसङ्गादिति।** अयमभिसंधिः—उपाधयो ह्यमी पृथिव्यादयोऽविद्याकल्पिता न तु शोणकर्कादय इव विशेषा अश्वत्वस्य। न चोपाधिविगमे उपहितस्याभावोऽप्रतीतिर्वा; नह्युपाधीनां दर्पणमणिकृपाणादीनामपगमे मुखस्याभावोऽप्रतीतिर्वा। तस्मादुपाधिनिषेधेऽपि नोपहितस्य शशविषाणायमानताऽप्रत्ययो वा। नच—इतीति संनिधानाविशेषात्सर्वस्य प्रतिषेध्यत्वमिति—युक्तम्; नहि भावमनुपाश्रित्य प्रतिषेध उपपद्यते। किंचिद्धि क्वचिन्निषिध्यते। नह्यनाश्रयः प्रतिषेधः शक्यः प्रतिपत्तुम्। तदिदमुक्तम्—**अपरिशिष्यमाणे चान्यस्मिन्य इतरः प्रतिषेद्धुमारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः।** मध्यमं पक्षं प्रतिक्षिपति—**नापि ब्रह्मप्रतिषेध उपपद्यते।** युक्तं यन्नैसर्गिकाविद्याप्राप्तः प्रपञ्चः प्रतिषिध्यते प्राप्तिपूर्वकत्वात्प्रतिषेधस्य। ब्रह्म तु नाविद्यासिद्धं, नापि प्रमाणान्तरात्। तस्माच्छब्देन प्राप्तं प्रतिषेधनीयम्। तथाच यस्तस्य शब्दः प्रापकः स तत्पर इति स ब्रह्मणि प्रमाणमिति कथमस्य निषेधोऽपि प्रमाणवान्? नच पर्युदासाधिकरणपूर्वपक्षन्यायेन विकल्पः; वस्तुनि सिद्धस्वभावे तदनुपपत्तेः। न चावाङ्मनसगोचरो बुद्धावालेखितुं शक्यः। अशक्यश्च कथं निषिध्यते? प्रपञ्चस्त्वनाद्यविद्यासिद्धोऽनूद्य ब्रह्मणि प्रतिषिध्यत इति युक्तम्। तदिमामनुपपत्तिमभिप्रेत्योक्तम्—**'नापि ब्रह्मप्रतिषेध उपपद्यते'** इति। हेत्वन्तरमाह—**ब्रह्म ते ब्रवाणीति। उपक्रमविरोधादिति।** उपक्रमपरामर्शोपसंहारपर्यालोचनया

## वेदान्तकल्पतरुः।

ध्ययोगाच्छून्यवादप्रसङ्ग इत्याशङ्क्य सामान्यविशेषभावो ब्रह्मगतोऽसिद्ध इत्याह—**उपाधय इति। शोणो** लोहितः। **कर्क** ईषल्लोहितः। निर्विशेषं सामान्यं न भवेदित्युक्तं, तत्र निषेधेन निषेध्यसत्ता निषिध्यते, सा किमर्थस्वभावभूता उत प्रमाणसंबन्धात्मिका। द्वावपि पक्षौ नेत्याह—**अभावोऽप्रतीतिर्वेति। शशविषाणायमानता** शशविषाणतुल्यता। **ननु** न वयं विशेषात्मजगन्निषेधेनार्थाद् ब्रह्मनिषेधं ब्रूमः, किंतु रूपद्वयवत् सन्निधानादपीतिशब्देन प्रतिषेध्यत्वेनोपात्तत्वात्साक्षादुभयनिषेधमित्यत आह—**न चेतीति। भावमनाश्रित्या**श्रयत्वेनानुपादाय प्रतिषेधो नोपपद्यते इति प्रतिषेधसत्ताया आश्रयापेक्षां व्यतिरेकमुखेनोक्त्वाऽन्वयमुखेनाप्याह—**किंचिद्धीति।** प्रतीतावप्यभावस्याश्रयापेक्षामाह—**न ह्यनाश्रय इति।** वेदान्तेषु ब्रह्मप्रतिपादनस्य निषेध्यसमर्पकतायाः पूर्वपक्षे उक्तत्वाद् ब्रह्म ते ब्रवाणीत्याद्युपक्रमविरोधादित्यादिभाष्योक्तहेतुना शङ्कितान्यथासिद्धीनां सिद्धवद्ब्रह्मप्रतिषेधवारकत्वायोगं मत्वा भाष्येऽर्थात्सूचितं हेतुं विवृणोति—**युक्तमित्यादिना।** नैसर्गिकाविद्याप्राप्तः प्रपञ्चः प्रतिषिध्यत इति यत्तद्युक्तमित्यर्थः। किं भ्रमसिद्धं ब्रह्म प्रतिषिध्यते, उत प्रत्यक्षादिसिद्धम्, आहो शास्त्रसिद्धम्। **नाद्य** इत्याह—**ब्रह्म त्विति।** सद्रूपत्वेन निर्वचनीयत्वादित्यर्थः। **न द्वितीय** इत्याह—**नापीति। तृतीय**मनूद्य दूषयति—**तस्मादिति। ननु** शास्त्रप्रमितेऽपि प्रतिषेधः प्रमाणवान् भवेद्, विधिप्रतिषेधयोस्तुल्यबलत्वेन विकल्पसंभवादित्याशङ्क्याह—**न च पर्युदासेति।** पर्युदासाधिकरणं गुणोपसंहारे 'हानौ तूपा-

## कल्पतरुपरिमलः।

धायोग्यत्वं, न तु विशेषणत्वमिति। ब्रह्मणस्तु प्रमितत्वमसिद्धम्; रूपद्वयवन्निषेधायानुवादोपपत्तेरिति भावः। **कर्क ईषल्लोहित इति।** अमरसिंहस्त्वश्वप्रकरणे पृष्ठः स्थूरी सितः कर्क इति श्वेतमश्वं कर्कमाह। **निषेधेन निषेध्यसत्तेति।** निर्विशेषं सामान्यं न भवेदिति निषेधेन सत्ता किमर्थस्वभावभूता निषेध्या उत प्रमाणसंबन्धात्मिकेति संभावितविकल्पद्वयप्रतिषेधार्थमभावोऽप्रतीतिर्वेत्युक्तमित्यर्थः। द्वे वावेत्यवधारणं तु रूपद्वयातिरिक्तां ब्रह्मणो बोधरूपतां न व्यव-

**प्रतिपादनप्रक्रिया त्वेषा 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' ( तै० २।४।१ ) इति । एतदुक्तं भवति—वाङ्मनसातीतमविषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति । तस्माद्ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति परिशिनष्टि ब्रह्मेत्यभ्युपगन्तव्यम् । तदेतदुच्यते—प्रकृतैतावत्त्वं हि प्रतिषेधतीति । प्रकृतं यदेतावदियत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । तद्धि प्रकृतं प्रपञ्चितं च पूर्वस्मिन्ग्रन्थेऽधिदैवतमध्यात्मं च । तज्जनितमेव च वासनालक्षणमपरं रूपममूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं महारजनाद्युपमाभिर्दर्शितम्; अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः । तदेतत्सप्रपञ्चं ब्रह्मणो रूपं संनिहितालम्बनेनेतिकरणेन प्रतिषेधकं नञं प्रत्युपनीयत इति गम्यते, ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन्ग्रन्थे न स्वप्रधानत्वेन । प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तम् 'अथात आदेशो नेति नेति' (बृ० २।३।६) इति । तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदमिति निर्णीयते । तदास्पदं हीदं समस्तं कार्यं नेति**

---

## भामती ।

हि वेदान्तानां सर्वेषामेव ब्रह्मपरत्वमुपपादितं प्रथमेऽध्याये । न चासत्यामाकाङ्क्षायां दूरतरस्थेन प्रतिषेधेनैषां संबन्धः संभवति । यच्च वाङ्मनसातीततया ब्रह्मणस्तत्प्रतिषेधस्य न प्रमाणान्तरविरोध इति, तत्राह—**वाङ्मनसातीतत्वमपीति** । प्रतिपादयन्ति वेदान्ता महता प्रयत्नेन ब्रह्म । नच निषेधाय तत्प्रतिपादनम्; अनुपपत्तेरित्युक्तमधस्तात् । इदानीं तु निष्प्रयोजनमित्युक्तम्; 'प्रक्षालनाद्धि पङ्कस्य' इति न्यायात् । तस्माद्वेदान्तवाचा मनसि संनिधानाद्ब्रह्मणो वाङ्मनसातीतत्वं नाञ्जसमपि तु प्रतिपादनप्रक्रियोपक्रम एषः । यथा गवादयो विषयाः साक्षाच्छृङ्गग्राहिकया प्रतिपाद्यन्ते प्रतीयन्ते च नैवं ब्रह्म । **यथाहुः**—'भेदप्रपञ्चविलयद्वारेण च निरूपणमिति ।' **ननु** प्रकृतप्रतिषेधे ब्रह्मणोऽपि कस्मान्न प्रतिषेधः ? इत्यत आह—**तद्धि प्रकृतं प्रपञ्चितं चेति** । प्रधानं प्रकृतं; न ब्रह्म । तस्य षष्ठ्यन्ततया प्रपञ्चावच्छेदकत्वेनाप्रधानत्वादित्यर्थः । ततोऽन्यद्ब्रवीतीति नेति नेतीति प्रतिषेधादन्यद्भूयो ब्रवीतीति तन्निर्वचनम् । नह्येतस्मादित्यस्य यदा नह्येतस्मादिति नेति नेत्यादिष्टाद्ब्रह्मणोऽन्यत्परमस्तीति व्याख्यानं, तदा प्रपञ्चप्रतिषेधादन्यद्ब्रह्मैव ब्रवीतीति व्याख्येयम् । यदा तु नह्येतस्मादिति सर्वनाम्ना प्रतिषेधो ब्रह्मण आदेशः परामृश्यते, तदापि प्रपञ्चप्रतिषेध-

## वेदान्तकल्पतरुः ।

यनशब्दशेषत्वा' (व्या. सू. अ. ३ पा. ३ सू. २६) दित्यत्र स्वयमेवानुक्रमिष्यति, तत्रैव तत्पूर्वपक्षोऽपि द्रष्टव्यः । तत्र यथा विधिप्राप्तस्य यागेषु येयजामहकरणस्य सर्वात्मना नानूयाजेष्विति प्रतिषेधेन वारयितुमशक्यत्वाद् अनुयाजेषु येयजामहविकल्पः, एवमत्र सत्त्वासत्त्वयोर्न विकल्पः, वस्तुनि तदयोगात् । पुरुषप्रवृत्तिनिवृत्त्योः प्रागेव तस्यैकरूपत्वेन सिद्धत्वादित्यर्थः । यच्च वाङ्मनसागोचरत्वेन प्रमाणविरोधाभावाद् ब्रह्मणः प्रतिषेध इत्युक्तं, तन्न; तथा सति योग्यप्राप्त्या निषेधायोगादित्याह—**न चासत्यामिति** । अयं हि निषेधः सन्निहितप्रपञ्चविषयत्वेन निराकाङ्क्षो न दूरस्थेन ब्रह्मणा संबध्यते । यद्यपि ब्रह्मणोऽपि सन्निधानमविशिष्टं, बृहदारण्यके एतन्निषेधं प्रति; तथापि षष्ठ्यन्तत्वेनोपसर्जनत्वान्न तस्य निषेधेन संबन्ध इति वक्ष्यति प्रधानं प्रकृतमिति ग्रन्थेन । सन्निहितमपि प्रपञ्चं प्रमाणाविरोधादुपेक्ष्य प्रतिषेधो दूरस्थं ब्रह्माकाङ्क्षतीत्याशङ्क्याह—**यच्चेति** । ब्रह्मनिषेधेऽप्यस्ति प्रमाणाविरोधः, वेदान्तानां तत्र प्रमाणत्वादित्याह—**प्रतिपादयन्ति वेदान्ता इति । अनुपपत्तेरिति** । शास्त्रप्रमितनिषेधे हि विकल्पः स्यात्तस्य च वस्तुन्यनुपपत्तिरित्युक्तम् इत्यर्थः । **अधस्तादिति** । नापि ब्रह्मप्रतिषेध उपपद्यत इति भाष्य इत्यर्थः । तर्हि तेनैव वाङ्मनसातीतत्वमपीति भाष्यं पुनरुक्तमित्याशङ्क्याह—**इदानीं त्विति** । तेन भाष्येण शास्त्रप्रमितस्य निषेधानुपपत्तिरुक्ता, अनेन तु निषेद्धुमिष्टस्य प्रतिपादनवैयर्थ्यम् । अत्र लिङ्गं भाष्ये प्रक्षालनाद्धीति न्यायोदाहरणमित्यर्थः । प्रक्रियाशब्दस्य व्याख्या—**उपक्रम इति** । वाङ्मनसगोचरत्वे निषिद्धे तथैव मनसि स्थिरीकृते स्वयंज्योतिरात्मा स्फुरतीत्युपक्रमत्वम् । प्रधानं प्रकृतमिति प्रकर्षेण कृतं प्रकाशितं प्रकृतं प्रकर्षः प्राधान्यमित्यर्थः । न ब्रह्मेत्यत्र प्रधानं प्रकृतमित्यनुषङ्गः । सूत्रे ततःशब्दादुपर्यन्यदित्यध्याहरति—**ततोऽन्यदिति** । इतरथा हि ब्रवीतीत्युक्ते किं ब्रवीतीति न ज्ञायेतेति । ततःशब्दार्थमाह—**नेति नेतीति प्रतिषेधादिति** । प्रतिषेधादभावादन्यद्भावरूपं ब्रह्म ब्रवीतीत्यर्थः । प्रतिषेधादन्यद्वस्तु ब्रुवाणं वाक्यमुदाहरति—**निर्वचनं न ह्येतस्मादितीति** । नेति नेतीति प्रतिषेधनिबन्धनरूपं न ह्येतस्मादिति वाक्यमित्यर्थः । अस्य वाक्यस्यार्थद्वैविध्यमुपा-

## कल्पतरुपरिमलः ।

च्छिनत्ति, किं तु रूपद्वयस्यासमुच्चयमित्याचार्यैः प्रागेव व्याख्यातम् । **तत्र यथा विधिप्राप्तस्येति** । यजतिषु येयजामहङ्करोतीत्येतदनन्तरं नानुयाजेष्वित्यनेनानुयाजेषु येयजामहकरणं निषिध्यत इति पूर्वपक्षे निषेधस्य निषेध्यप्राप्तिपूर्वकत्वान्न

नेतीति प्रतिषिद्धम्। युक्तं च कार्यस्य वाचारम्भणशब्दादिभ्योऽसत्त्वमिति नेति नेतीति प्रतिषेधनम्, नतु ब्रह्मणः; सर्वकल्पनामूलत्वात्। नचात्रेयमाशङ्का कर्तव्या। कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति—'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति? यतो नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय चेति निरवद्यम्। द्वौ चैतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः। यद्वा—पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधत्युत्तरो वासनाराशिम्। अथवा—'नेति नेति' (बृ० २।३।६) इति वीप्सेयमितीति यावत्किंचिदुत्प्रेक्ष्यते तत्सर्वं न भवतीत्यर्थः। परिगणितप्रतिषेधे हि क्रियमाणे यदि नैतद्ब्रह्म किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात्। वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते। तस्मात्प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति परिशिनष्टि ब्रह्मेति निर्णयः। इतश्चैष एव निर्णयः। यतस्ततः प्रतिषेधाद्भूयो ब्रवीति 'अन्यत्परमस्ति' (बृ० २।३।६) इति। अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परमस्तीति ब्रूयात्? तत्रैषाक्षरयोजना—नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति। नेति नेतीत्यस्य कोऽर्थः? नह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेतिनेतीत्युच्यते, न पुनः स्वयमेव नास्तीत्यर्थः। तच्च दर्शयत्यन्यत्परमप्रतिषिद्धं ब्रह्मास्तीति। यदा पुनरेवमक्षराणि योज्यन्ते—नह्येतस्मादिति नेति नेति। नहि प्रपञ्चप्रतिषेधरूपादादेशनादन्यत्परमादेशनं ब्रह्मणोऽस्तीति। तदा ततो ब्रवीति च भूय इत्येतन्नामधेयविषयं योजयितव्यम्। अथ नामधेयम्—'सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ० २।१।२०) इति हि ब्रवीतीति। तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति। अभावावसाने तु प्रतिषेधे किं सत्यस्य सत्यमित्युच्येत? तस्माद्ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसान इत्यध्यवस्यामः॥ २२॥

## तदव्यक्तमाह हि॥ २३॥

यत्प्रतिषिद्धात्प्रपञ्चजातादन्यत्परं ब्रह्म तदस्ति चेत्कस्मान्न गृह्यत इति? उच्यते—तदव्यक्तमनिन्द्रियग्राह्यम्; सर्वदृश्यसाक्षित्वात्। आह ह्येवं श्रुतिः—'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' (मुण्ड० ३।१।८) 'स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते' (बृ० ३।९।२६) 'यत्तदद्रेश्यमग्राह्यम्' (मुण्ड० १।१।६) 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' (तै० २।७।१) इत्याद्या। स्मृतिरपि—'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' (भ० गी० २।२५) इत्याद्या॥ २३॥

## अपि च संराधने प्रत्यक्षानुमानाभ्याम्॥ २४॥

अपिचैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः। संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम्। कथं पुनरवगम्यते संराधनकाले पश्यन्तीति? प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथापि श्रुतिः—'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्-

---

### भामती।

मात्रं न प्रतिपत्तव्यमपि तु तेन प्रतिषेधेन भावरूपं ब्रह्मोपलक्ष्यते। कस्मादित्यत आह—**ततो ब्रवीति च भूय इति**। यस्मात्प्रतिषेधस्य परस्तादपि ब्रवीति। अथ ब्रह्मणो नामधेयं नाम सत्यस्य सत्यमिति, तद्व्याचष्टे श्रुतिः—**'प्राणा वै सत्यम्' इति**। माहारजनाद्युपहितं लिङ्गमुपलक्षयति। तत् खलु सत्यमितरापेक्षया तस्यापि परं सत्यं ब्रह्म। तदेवं यतः प्रतिषेधस्य परस्ताद्ब्रवीति तस्मान्न प्रपञ्चप्रतिषेधमात्रं ब्रह्मापि तु भावरूपमिति। तदेवं पूर्वस्मिन् व्याख्याने निर्वचनं ब्रवीतीति व्याख्यातम्। अस्मिंस्तु सत्यस्य सत्यमिति ब्रवीतीति व्याख्येयम्। शेषमतिरोहितार्थम्।

### वेदान्तकल्पतरुः।

दायाभावादन्यप्रतिपादकतामुक्तामुपपादयति—**अस्येति**। नह्येतस्मादित्येतद्व्याचष्टे—**इति नेति इत्यादिष्टादिति**। नेति नेत्येवंरूपेणादिष्टाद् ब्रह्मणोऽन्यन्नास्ति, परम् अप्रतिषिद्धं ब्रह्म त्वस्तीत्यर्थः। धेयप्रत्ययः स्वार्थिक इत्याह—**नामेति**। स्थूलशरीरापेक्षया प्राणप्रधानस्य लिङ्गशरीरस्य स्थायित्वात् सत्यत्वमुच्यत इत्याह—**माहारजनादीति**। माहारजनादीनि रूपाण्युपहितानि निक्षिप्तानि यस्मिँस्तथोक्तम्। उपमितमिति पाठो यद्यस्ति तदा सुगमम्। **इतरापेक्षयेति**। स्थूल-

पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' ( क० ४।१ ) इति। 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' ( मु० ३।१।८ ) इति चैवमाद्या । स्मृतिरपि—'यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इति चैवमाद्या ॥ २४ ॥ ननु संराध्यसंराधकभावाभ्युपगमात्परेतरात्मनोरन्यत्वं स्यादिति, नेत्युच्यते—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

यथा प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते, नच स्वाभाविकीमविशेषात्मतां जहति। एवमुपाधिनिमित्त एवायमात्मभेदः स्वतस्त्वैकात्म्यमेव । तथाहि—वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥ २५ ॥

## अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

अतश्च स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मनैकतां गच्छति। तथाहि लिङ्गम्—'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३।२।९ ) 'ब्रह्मैव सन्ब्रह्माप्येति' ( बृ० ४।४।६ ) इत्यादि ॥ २६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये । क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' ( मुण्ड० ३।१।८ ) इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च। 'परात्परं पुरुषमुपैति दिव्यम्' (मु० ३।२।८) इति गन्तृगन्तव्यत्वेन। 'यः सर्वाणि भूतान्यन्तरो यमयति' इति नियन्तृनियन्तव्यत्वेन। क्वचित्तु तयोरेवाभेदो व्यपदिश्यते 'तत्त्वमसि' ( छा० ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृ० १।४।१० ) 'एष त आत्मा सर्वान्तरः' ( बृ० ३।४।१ ) 'एष त आत्मान्तर्याम्यमृतः' ( बृ० ३।७।३ ) इति । तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्ततो गृह्यते, भेदव्यपदेशो निरालम्बन एव स्यात्। अत उभयव्यपदेशदर्शनादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति । यथाहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादीनीति तु भेद एवमिहापीति ॥ २७ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथवा—प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम्। यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नौ उभयोरपि तेजस्त्वाविशेषात्। अथ च भेदव्यपदेशभाजौ भवत एवमिहापीति ॥२८॥

### भामती।

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ **उभयव्यपदेशात्त्वहिकुण्डलवत्**। अनेनाहिरूपेणाभेदः कुण्डलादिरूपेण तु भेद इत्युक्तं तेन विषयभेदाद्भेदाभेदयोरविरोध इत्येकविषयत्वेन वा सर्वदोपलब्धेरविरोधः। विरुद्धमिति हि नः क्व संप्रत्ययो न यत्प्रमाणेनोपलभ्यते। आगमतश्च प्रमाणादेकगोचरावपि भेदाभेदौ प्रतीयमानौ न विरोधमावहतः सवितृप्रकाशयोरिव प्रत्यक्षात्प्रमाणाद्भेदाभेदाविति ॥ २७ ॥ प्रकारान्तरेण भेदाभेदयोरविरोधमाह—**प्रकाशाश्रयवद्वा तेजस्त्वात्** ॥ २८ ॥ तदेवं परमतमुपन्यस्य स्वमतमाह—**पूर्ववद्वा**। **अयमभिसंधिः**—यस्य मतं वस्तुनोऽहित्वेनाभेदः कुण्डलत्वेन भेद इति, स एवं ब्रुवाणः प्रष्टव्यो जायते, किमहित्वकुण्डलत्वे वस्तुनो भिन्ने उताभिन्ने इति। यदि भिन्ने,

### वेदान्तकल्पतरुः।

शरीरापेक्षयेत्यर्थः। **तदिति** तस्मादर्थे ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ अहिकुण्डलसूत्रस्य (ब्र. अ. ३ पा. २ सू. २७) प्रकाशाश्रयवद्वेति ( ब्र. अ. ३ पा. २ सू. २८ ) सूत्रस्य च भेदाभेदविषयत्वसाम्यात्पौनरुक्त्यमाशङ्क्याह—**विषयभेदादिति**। अहिरेकः कुण्डलभोगादयः परस्परं भिन्ना इति भेदाभेदौ भिन्नविषयौ, तदिदमुक्तं कुण्डलादीत्यादिशब्देन। सवितरि तु प्रकाशस्य गुणस्य द्रव्यस्य च परस्परं भेदाऽभेदौ नच वस्त्वन्तरापेक्षयेत्येकविषयत्वम्। एकविषयत्वे हेतुमाह—**सर्वदेति**। विरोधे हि विषयव्यवस्था सदानुभूयमानत्वादविरोध इत्येकविषयत्वमित्यर्थः ॥ २७ ॥ २८ ॥ भेदाभेदौ भिन्नविषयाविति पक्षं दूषयति—**यस्य मतमिति**। न तावदेवं भेदाभेदौ निर्वक्तुं शक्यौ; कुण्डलादयो भिन्ना अहिश्चानुयायी एक इति अत्यन्तभेदवादिभिरपि तथेष्टत्वात्। तस्मादेकस्य वस्तुनो द्वाभ्यामाकाराभ्यां भेदाभेदौ इति निरूपणी-

## पूर्ववद्वा ॥ २९ ॥

यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैवैतद्भवितुमर्हति । तथाह्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते । यदि पुनः परमार्थत एव बद्धः कश्चिदात्माहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन चैकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत, नचात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति । अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया । तस्मात्प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥

इतश्चैष एव सिद्धान्तः । यत्कारणं परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति शास्त्रम्—'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ) इत्येवमादि। 'अथात आदेशो नेति नेति' ( बृ० २।३।६ ) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ० २।५।१९) इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद्ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते ॥ ३० ॥ इति षष्ठं प्रकृतैतावत्त्वाधिकरणम् ॥

---

### भामती ।

अहित्वकुण्डलत्वे भिन्ने इति वक्तव्यं, नतु वस्तुनस्ताभ्यां भेदाभेदौ । नह्यन्यभेदाभेदाभ्यामन्यद्भिन्नमभिन्नं वा भवितुमर्हति; अतिप्रसङ्गात् । अथ वस्तुनो न भिद्येते अहित्वकुण्डलत्वे, तथा सति को भेदाभेदयोर्विषयभेदस्तयोर्वस्तुनोऽनन्यत्वेनाभेदात् । नचैकविषयत्वेऽपि सदानुभूयमानत्वाद्भेदाभेदयोरविरोधः स्वरूपविरुद्धयोरप्यविरोधे क्व नाम विरोधो व्यवतिष्ठेत ? नच सदानुभूयमानं विचारासहं भाविकं भवितुमर्हति; देहात्मभावस्यापि सर्वदानुभूयमानस्य भाविकत्वप्रसङ्गात् । प्रपञ्चितं चैतदस्माभिः प्रथमसूत्र इति नेह प्रपञ्चितम् । तस्मादनाद्यविद्याविक्रीडितमेवैकस्यात्मनो जीवभावभेदो न भाविकः । तथाच तत्त्वज्ञानादविद्यानिवृत्तावपवर्गसिद्धिः। तात्त्विकत्वे त्वस्य न ज्ञानान्निवृत्तिसंभवः। नच तत्त्वज्ञानादन्यदपवर्गसाधनमस्ति । यथाह श्रुतिः—'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । शेषमतिरोहितार्थम् ॥ २९ ॥ ३० ॥ इति प्रकृतैतावत्त्वाधिकरणम् ॥

### वेदान्तकल्पतरुः ।

यम् । तत्राहित्वमनुवृत्ताकारः कुंडलत्वं व्यावृत्ताकारः । तदात्मना चेत्तदुभयाश्रयस्य वस्तुनो भेदाभेदाविष्येते, तदा तावाकारौ वस्तुनो भिन्नौ चेत्तर्ह्यहित्वकुण्डलत्वे परस्परं भिन्ने वस्तुनि समवेते इति वक्तव्यं, नतु वस्तुनस्तदात्मना भेदाऽभेदावित्यर्थः । अहित्वेनेत्याद्यास्तृतीया इत्थम्भावार्थाः । प्रकाशाश्रयवद्भेदाभेदौ निषेधति—**नचेति** । भावाभावयोर्हि स्वाभाविको विरोधस्तदनुषङ्गादन्यत्रेति स्थितिः । तत्र भेदतदभावयोर्यद्यविरोधः, तदा क्वापि विरोधो न स्यादित्याह—**परस्परविरुद्धयोरिति** । **ननु** सवितृप्रकाशगतभेदाभेदयोः सहानुभवादविरोध इत्युक्तम् इति, तत्राह—**नचेति** ॥ २९ ॥ ३० ॥

आत्मा न चक्षुषा गृह्यते नापि वाचा शब्दोच्चारणद्वारेणाभिधीयते । नान्यैर्देवैरिन्द्रियैर्गृह्यते तपसा कृच्छ्रादिना कर्मणाऽग्निहोत्रादिना न गृह्यते, इति नेति नेतीति य आत्मा व्याख्यातः स एषोऽगृह्योऽग्राह्यः यस्मान्न हि गृह्यते ग्रहणायोग्यः प्रत्यगात्मत्वादित्यर्थः । **स्वयंभूरी**श्वरः । **खानि** खं श्रोत्रमाकाशारब्धत्वात्तदुपलक्षितानि सर्वेन्द्रियाणि **पराञ्चि** बहिर्विषयाणि यथा भवन्ति तथा **व्यतृण**द्धिंसितवान् **तस्मा**द्धेतोः **पराङेव** पश्यति सर्वो लोकः **नान्तरात्मन्** अन्तरात्मनि विषये न पश्यति। **कश्चित्तु** धीमान् विवेकी प्रत्यगात्मा**नमैक्षत्** ईक्षितवान् **आवृत्तचक्षु**रुपरतेन्द्रियः । किमर्थम्**—अमृतत्वमिच्छन्** । ज्ञायतेऽर्थोऽनेनेति ज्ञानमन्तःकरणं तस्य प्रसादो रागादिराहित्यं तेन **विशुद्धसत्त्वः** प्रत्यक्प्रवणान्तःकरणस्ततस्तु विशुद्धसत्त्वाद्धेतोः **तमात्मानं निष्कलं** निरवयवं ध्यायमानः पश्यति । **स्मृतौ योगात्मन** इति योगगम्यात्मन इत्यर्थः । **परा**त्कारणात्परं दिव्यं स्वप्रकाशं यः सर्वान्तरः सर्वाधिष्ठानभूतः एष त आत्मा स्वरूपम् ॥ **इति षष्ठं प्रकृतैतावत्त्वाधिकरणम्** ॥[1]

---

[1] **तत्र सूत्राणि ९**—प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः २२ तदव्यक्तमाह हि २३ अपि संराधने प्रत्यक्षानुमानाभ्याम् २४ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् २५ अतोऽनन्तेन तथा हि लिङ्गम् २६ उभयव्यपदेशात्त्वहिकुण्डलवत् २७ प्रकाशाश्रयवद्वा तेजस्त्वात् २८ पूर्ववद्वा २९ प्रतिषेधाच्च ३० ॥

( ७ अधिकरणम् ) **परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥**

यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितमस्मात्परमन्यत्तत्त्वमस्ति नास्तीति श्रुतिविप्रतिपत्तेः संशयः । कानिचिद्धि वाक्यान्यापातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत्तत्त्वं प्रतिपादयन्तीव । तेषां हि परिहारमभिधातुमयमुपक्रमः क्रियते । परमतो ब्रह्मणोऽन्यत्तत्त्वं भवितुमर्हति । कुतः ? सेतुव्यपदेशादुन्मानव्यपदेशात्संबन्धव्यपदेशाद्भेदव्यपदेशाच्चेति । सेतुव्यपदेशस्तावत्—'अथ य आत्मा स सेतुर्विधृतिः' ( छा० ८।४।१ ) इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं संकीर्तयति । सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे मृद्दार्वादिप्रचये प्रसिद्धः, इह तु सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति; 'सेतुं तीर्त्वा' ( छा० ८।४।२ ) इति च तरतिशब्दप्रयोगात् । यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं प्राप्नोत्येवमात्मानं सेतुं तीर्त्वाऽनात्मानमसेतुं प्राप्नोतीति गम्यते । उन्मानव्यपदेशश्च भवति तदेतद्ब्रह्म चतुष्पादष्टाशफं षोडशकलमिति । यच्च लोक उन्मितमेतावदिदमिति परिच्छिन्नं कार्षापणादि ततोऽन्यद्वस्त्वस्तीति प्रसिद्धम् । तथा ब्रह्मणोऽप्युन्मानात्ततोऽन्येन वस्तुना भवितव्यमिति गम्यते । तथा संबन्धव्यपदेशोऽपि भवति—'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इति 'शारीर आत्मा' ( तै० २।३।१ ) 'प्राज्ञेनात्मना संपरिष्वक्तः' ( बृ० ४।३।२१ ) इति च । मितानां च मितेन संबन्धो दृष्टो यथा नराणां नगरेण । जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ । अतस्ततः परमन्यदमितमस्तीति गम्यते । भेदव्यपदेशश्चैतमेवार्थं

## भामती ।

**परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥३१॥** यद्यपि श्रुतिप्राचुर्याद्ब्रह्मव्यतिरिक्तं तत्त्वं नास्तीत्यवधारितम्; तथापि सेत्वादिश्रुतीनामापाततस्तद्विरोधनदर्शनात्तत्प्रतिसमाधानार्थमयमारम्भः । **जाङ्गलं** स्थलम् । प्रकाशवदनन्तवज्ज्योतिष्मदायतनवदिति पादा ब्रह्मणश्चत्वारस्तेषां पादानामर्धान्यष्टौ शफाः । तेऽष्टावस्य ब्रह्मण इत्यष्टशफं ब्रह्म । षोडश कला अस्येति षोडशकलम् । तद्यथा प्राची प्रतीची दक्षिणोदीचीति चतस्रः कला अवयवा इव कलाः स प्रकाशवान्नाम प्रथमः पादः । एतदुपासनायां प्रकाशवान् मुख्यो भवतीति प्रकाशवान् पादः । अथापराः पृथिव्यन्तरिक्षं

## वेदान्तकल्पतरुः ।

**परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥** नेति नेत्यपूर्वमनपरमेकमेवाद्वितीयमित्यादिवाक्यैरद्वितीयत्वं ब्रह्मणः साधितम् । कथमिह ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमाशङ्क्यते ? नच सेतुशब्दादाशङ्का; द्युभ्वाद्यधिकरणे ( ब्र. सू. अ. १ पा. ३ सू. १ ) तस्य नीतत्वादित्याशङ्कामुद्भाव्य निरस्यति—**यद्यपीति** । द्युभ्वाद्यधिकरणे हि सेतुशब्दस्य पूर्वपक्षेऽप्यमुख्यार्थत्वाद्विधरणत्वमर्थ आश्रितः, इह तून्मानसंबन्धभेदव्यपदेशानां पूर्वपक्षे मुख्यार्थत्वलाभात्तेषां वक्ष्यमाणा गतीरजानतः पूर्वपक्ष इत्यर्थः । तदिदमुक्तं—**सेत्वादिश्रुतीनामिति** । आदिशब्देन न केवलं सेतुश्रुतिस्तदाद्या अन्या अपि सन्त्यनिर्णीतार्था इत्यर्थः । पूर्वं च प्रतिषेधादन्यस्य ब्रह्मणः श्रुत्योक्तत्वादस्ति ब्रह्मेत्युक्तम् । अस्मिन् ब्रह्मव्यतिरिक्तस्यापि श्रुत्योक्तत्वाद् ब्रह्मव्यतिरिक्तमस्तीति प्रत्यवस्थीयते । जाङ्गलं वातभूयिष्ठम् इति वैद्योक्तत्वाद्वातबहुलदेशो जाङ्गलम् । भाष्ये—तुल्यन्यायत्वात्स्थलमात्रमुक्तमित्याह—**स्थलमिति** । उन्मानव्यपदेशविवरणार्थं ब्रह्म चतुष्पादित्यादि भाष्यं, तच्छान्दोग्यश्रुत्युक्तषोडशकलविद्यासंबन्धिपादशफोदाहरणेन व्याचष्टे—**प्रकाशवदित्यादिना** । गवां हि पादेषु पुरतो द्वौ खुरौ पृष्ठतश्च द्वे पार्ष्ण्यौ भवतः । तत्र पुरतोऽर्धं पश्चादर्धं च शफशब्देनोच्यते । ततोऽष्टाशफम् । एकैकस्मिन् पादे कलाचतुष्टयमिति षोडशकलम् । पादस्य प्रकाशवत्त्वसमाख्यायां हेतुमाह—**एतदुपासनायामिति** । प्रकाशवान्भवतीति

## कल्पतरुपरिमलः ।

हिंस्यादित्यत्र हिंसनस्येव यजतिषु येयजामहकरणस्य लोकतः प्राप्त्यभावाच्च तस्य यजतिषु येयजामहं करोतीत्यनेनैव प्राप्तिर्वक्तव्या । तथाच सर्वात्मना प्रतिषेधप्रापकशास्त्रस्याप्रामाण्यप्रसङ्गाद् विधिप्रतिषेधशास्त्रद्वयप्रामाण्यायानुयाजेषु येयजामहविकल्प आश्रित इत्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ **इति षष्ठं प्रकृतैतावत्त्वाधिकरणम् ॥**

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ श्रीवेदान्तकल्पतरुपरिमले तृतीयाध्यायस्य द्वितीयः पादः ॥**

गमयति । तथाहि—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' ( छा० १।६।६ ) इत्यादित्याधारमीश्वरं व्यपदिश्य ततो भेदेनाक्ष्याधारमीश्वरं व्यपदिशति—'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' ( छा० १।७।५ ) इति । अतिदेशं चास्यामुना रूपादिषु करोति—'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' ( छा० १।७।५ ) इति । सावधिकं चेश्वरत्वमुभयोर्व्यपदिशति—'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' ( छा० १।६।८ ) इत्येकस्य । 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' ( छा० १।७।६ ) इत्येकस्य । यथेदं मागधस्य राज्यमिदं वैदेहस्येति ॥ ३१ ॥ एवमेतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीत्येवं प्राप्ते प्रतिपाद्यते—

## सामान्यात्तु ॥ ३२ ॥

तुशब्देन प्रदर्शितां प्राप्तिं निरुणद्धि । न ब्रह्मणोऽन्यात्किंचिद्भवितुमर्हति; प्रमाणाभावात् । नह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे । सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम् । अनन्यत्वं च कारणात्कार्यस्य । नच ब्रह्मव्यतिरिक्तं किंचिदजं संभवति; 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१) इत्यवधारणात् । एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते । ननु सेत्वादिव्यपदेशा ब्रह्मव्यतिरिक्तं तत्त्वं सूचयन्तीत्युक्तम्, नेत्युच्यते; सेतुव्यपदेशस्तावन्न ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते । सेतुरात्मेति ह्याह न ततः परमस्तीति । तत्र परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत । न चैतन्न्याय्यम्; हठो ह्यप्रसिद्धकल्पना । अपिच सेतुव्यपदेशादात्मनो लौकिकसेतुनिदर्शनेन सेतुबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयतापि प्रासङ्क्ष्यत । नचैतन्न्याय्यम्; अजत्वादिश्रुतिविरोधात् । सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते । जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः । अतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते । सेतुं तीर्त्वेत्यपि तरतेरतिक्रमासंभवात्प्राप्नोत्यर्थ एव वर्तते । यथा व्याकरणं तीर्ण इति प्राप्त इत्युच्यते नातिक्रान्तस्तद्वत् ॥ ३२ ॥

### भामती ।

द्यौः समुद्र इति चतस्रः कला एष द्वितीयः पादोऽनन्तवान्नाम । सोऽयमनन्तवत्त्वेन गुणेनोपास्यमानोऽनन्तत्वमुपासकस्यावहतीति अनन्तवान् पादः । अथाग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः स ज्योतिष्मान्नाम पादस्तृतीयस्तदुपासनाज्ज्योतिष्मान् भवतीति ज्योतिष्मान् पादः । अथ घ्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाश्चतुर्थः पाद आयतनवान्नाम । एते घ्राणादयो हि गन्धादिविषया मन आयतनमाश्रित्य भोगसाधनं भवन्तीत्यायतनवान्नाम पादः । तदेवं चतुष्पाद्ब्रह्माष्टशफं षोडशकलमुन्मिषितं श्रुत्या । अतस्ततो ब्रह्मणः परमन्यदस्ति । **स्यादेतत्**—अस्ति चेत् परिसंख्यायोच्यतामेतावदिति, अत आह—**अमितमस्तीति** । प्रमाणसिद्धम् । नत्वेतावदित्यर्थः । भेदव्यपदेशश्च त्रिप्रकारः—आधारतश्चातिदेशतश्चावधितश्च ॥ ३१ ॥ जगतस्तन्मर्यादानां च विधारकत्वं च सेतुसामान्यम् । यथा हि तन्तवः पटं विधारयन्ति तदुपादानत्वादेवं ब्रह्मापि जगद्विधारयति तदुपादानत्वात् । तन्मर्यादानां च विधारकं ब्रह्म । इतरथातिचपलस्थूलबलवत्कल्लोलमालाकलिलो जलनिधिरिलापरिमण्डलमवगिलेत् । वडवानलो वा विस्फूर्जि-

### वेदान्तकल्पतरुः ।

फलश्रुतिं व्याचष्टे—**मुख्य इति** । कीर्तिमान् हि सर्वत्र मुख्यो भवतीत्यर्थः । **प्राण इति** । प्राण इह घ्राणेन्द्रियम्; तस्य प्राणसहचरस्य गन्धग्राहकत्वात् । **मन आयतनमाश्रित्येति** । गन्धादिविषयज्ञानाश्रयमाश्रित्यैतेनाधिष्ठितानि भूत्वेत्यर्थः । अतः परमन्यदमितमस्तीति भाष्यं, तदनुपपन्नमिव; अन्यत्वे सत्यमितत्वानुपपत्तेः । अत उचितशङ्कां कृत्वा अवतारयति—**स्यादेतदस्तिचेदिति** । अस्ति चेदन्यदित्यनुषङ्गः । **परिसंख्याय** गणयित्वा । भाष्ये गम्यते इति पदं व्याचष्टे—**प्रमाणसिद्धमिति** । संख्यातुमशक्यानि वस्तूनि ब्रह्मणोऽन्यानि सन्तीति भाष्यार्थमाह—**नत्वेतावदिति** । अथ य एषोऽन्तरादित्यइत्यथयएषोक्षणीति च भेदव्यपदेशं व्याचष्टे—**आधारत इति** । तस्यैतस्य तदेव रूपं यदमुष्य रूपमित्यादिभेदव्यपदेशं व्याकरोति—**अतिदेशत इति** । ये वाऽमुष्मात्पराञ्चो लोका इत्यादिभेदव्यपदेशं व्याख्याति—**अवधितश्चेति** ॥ ३१ ॥ न केवलं जगत उपादानत्वेन ब्रह्म धारकम्, किंतु नियन्तृत्वेनापीत्याह—**तन्मर्यादानां चेति** । अतिचपला अनियतचेष्टाः स्थूलाश्च बलवन्तश्च **कल्लोला**स्तरङ्गास्तेषां मालास्ताभिः **कलिलः** क्षोभितो जलनिधिः स **इलापरिमण्डलं** भूमण्डल**मवगिलेद्** ग्रसेद् यदि ब्रह्म भुवं न धारयेदित्यर्थः । यदि च ब्रह्म जगन्न धारयेत्, तर्हि स्फूर्जन्त्यो दीप्यमाना

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

यदप्युक्तमुन्मानव्यपदेशादस्ति परमिति, तत्राभिधीयते—उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः । किमर्थस्तर्हि ? बुद्ध्यर्थ उपासनार्थ इति यावत् । चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा बुद्धिः । कथं नु नाम ब्रह्मणि स्थिरा स्यादिति ? विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते । नह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुं मन्दमध्यमोत्तमबुद्धित्वात्पुंसामिति । पादवत् । यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते चत्वारश्चाग्न्यादय आकाशसंबन्धिन आध्यानाय तद्वत् । अथवा—पादवदिति यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते । नहि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते क्रयविक्रये परिमाणानियमात्तद्वदित्यर्थः ॥ ३३ ॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारो विधीयते । यदप्युक्तं संबन्धव्यपदेशाद्भेदव्यपदेशाच्च परमतः स्यादिति, तदप्यसत्; यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते । संबन्धव्यपदेशे तावदयमर्थः । बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः स परमात्मना संबन्ध इत्युपाध्यपेक्षयैवोपचर्यते, न परिमितत्वापेक्षया । तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयोपचर्यते, न स्वरूपभेदापेक्षया । प्रकाशादिवदित्युपमोपादानम् । यथैकस्य प्रकाशस्य सौर्यस्य चान्द्रमसो वोपाधियोगादुपजातविशेषस्योपाध्युपशमात्संबन्धव्यपदेशो भवत्युपाधिभेदाच्च भेदव्यपदेशः । यथावा सूचीपाशाकाशादिषूपाध्यपेक्षयैवैतौ संबन्धभेदव्यपदेशौ भवतस्तद्वत् ॥ ३४ ॥

### भामती ।

तज्ज्वालाजटिलो जगद्भस्मसाद्भावयेत् । पवनः प्रचण्डो वाकाण्डमेव ब्रह्माण्डं विघटयेदिति । तथाच श्रुतिः—'भीषास्माद्वातः पवते' इत्यादिका ॥ ३२ ॥ मनसो ब्रह्मप्रतीकस्य समारोपितब्रह्मभावस्य वाग्घ्राणश्चक्षुः श्रोत्रमिति चत्वारः पादाः । मनो हि वक्तव्यघ्रातव्यद्रष्टव्यश्रोतव्यान् गोचरान् वागादिभिः संचरतीति संचरणसाधारणतया मनसः पादास्तदिदमध्यात्मम् । आकाशस्य ब्रह्मप्रतीकस्याग्निर्वायुरादित्यो दिश इति चत्वारः पादाः । ते हि व्यापिनो नभस उदर इव गोः पादा विलग्ना उपलक्ष्यन्त इति पादास्तदिदमधिदैवतम् । तदनेन पादवदिति वैदिकं निदर्शनं व्याख्याय लौकिकं चेदं निदर्शनमित्याह—**अथवा पादवदिति । तद्वदिति** । इहापि मन्दबुद्धीनामाध्यानव्यवहारायेत्यर्थः ॥ ३३ ॥ बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य जाग्रत्स्वप्नयोर्विशेषविज्ञानस्योपाध्युपशमेऽभिभवे सुषुप्तावस्थानमिति । तथा भेदव्यपदेशोऽपि त्रिविधो ब्रह्मण उपाधिभेदापेक्षयेति । यथा सौधजालमार्गनिवेशिन्यः सवितृभासो जालमार्गोपाधिभेदाद्भिन्ना भासन्ते तद्विगमे तु गभस्तिमण्डलेनैकीभवन्त्यतस्तेन संबध्यन्त एवमिहापीति ॥ ३४ ॥ **स्यादेतत्**—एकीभावः कस्मादिह संबन्धः कथंचिद्व्याख्यायते न मुख्य एवेत्येतत्सूत्रेण परिहरति—**उपपत्तेश्च** । स्वमपीत इति हि स्वरूपसंबन्धं ब्रूते । स्वभावश्चेदनेन संबन्धत्वेन स्पृष्टस्ततः स्वाभाविकस्तादात्म्यान्नातिरिच्यत इति

### वेदान्तकल्पतरुः ।

ज्वालारूपा जटा यस्य स वडवाग्निर्वा जगद्भस्मसाद्भावयेत् कुर्यादिति । **अकाण्डमिति** । अनवसरो यथा भवति तथा अकाले इत्यर्थः । प्रलयकालो हि विघटनावसरः ॥ ३२ ॥ पादवदिति सूत्रावयवव्याख्यानार्थं भाष्यं—**यथा मनआकाशयोरध्यात्ममधिदैवं चेत्या**दि, तद्व्याचष्टे—**मनस इत्यादिना** । ब्रह्मप्रतीकस्येत्येतस्य व्याख्यानम्—**आरोपितब्रह्मभावस्येति** । प्राण इति घ्राणमुक्तम् । वागादीनां मनःपादत्वे हेतुमाह—**मनो हीति । संचरणसाधारणतयेति** । संचर्यत एभिरिति संचरणाः । तद्रूपत्वेन प्रसिद्धपादसाधारणतया वागादयो मनसः पादा इति । आध्यात्मिकं मनश्चतुष्पाद्व्याख्यायाधिदैविकमाकाशं चतुष्पादं व्याचष्टे—**आकाशस्येत्यादिना** । भाष्ये कार्षापण इति षोडशपणाः कपर्दका उक्ताः । ताम्रकर्षमितः क्रयसाधनमुद्राविशेषो वा । **सौधं** हर्म्यं तस्य **जालं** गवाक्षं तन्मार्गनिवेशिन्यः ॥ ३३ ॥ यः संबन्धः स एकीभाव इति कथंचित्कस्माद्व्याख्यायत इत्यर्थः । **ननु** स्वरूपसंबन्धः समवायोऽपि संभवति, कथं जीवस्य ब्रह्मतादात्म्यसिद्धिरत आह—**स्वभावश्चेदिति** । अनेन संबन्धत्वेन संबन्धभावेन स्वभावश्चेत् स्पृष्टः स्वभावसंबन्ध इति चेदुच्यत इत्यर्थः । ततः स्वाभाविकः संबन्धस्तादात्म्यान्नातिरिच्यते; समवायस्याप्रामाणिकत्वादित्युक्तं तर्कपादे

## उपपत्तेश्च ॥ ३५ ॥

उपपद्यते चात्रेदृश एव संबन्धो नान्यादृशः, 'स्वमपीतो भवति' (छा० ६।८।१) इति हि स्वरूपसंबन्धमेनमामनन्ति स्वरूपस्य चानपायित्वात् । न नरनगरन्यायेन संबन्धो घटते । उपाधिकृतस्वरूपतिरोभावात्तु—'स्वमपीतो भवति' (छा० ६।८।१) इत्युपपद्यते। तथा भेदोऽपि नान्यादृशः संभवति; बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात् । तथाच श्रुतिरेकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति—'योऽयं बहिर्धा पुरुषादाकाशः' (छा० ३।१२।७) 'योऽयमन्तः पुरुष आकाशः' (छा० ३।१२।८) 'योऽयमन्तर्हृदय आकाशः,' (छा० ३।१२।९) इति ॥ ३५ ॥

## तथान्यप्रतिषेधात् ॥ ३६ ॥

एवं सेत्वादिव्यपदेशान्परपक्षहेतूनुन्मथ्य संप्रति स्वपक्षं हेत्वन्तरेणोपसंहरति । तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते। तथाहि—'स एवाधस्तात्' (छा० ७।२५।१) 'अहमेवाधस्तात्', (छा० ७।२५।१), 'आत्मैवाधस्तात्' (छा० ७।२५।२) 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद', (बृ० २।४।६) 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्', (छा० ७।२५।२), 'नेह नानास्ति किंचन', (बृ० ४।४।१९), 'यस्मात्परं नापरमस्ति किंचित्', (श्वे० ३।९), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ० २।५।१९) इत्येवमादिवाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुमशक्यमानानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति । सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तरात्मास्तीत्यवधार्यते ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति । अन्यथा हि तन्न सिध्येत् । सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत; सेत्वादीनामेवमात्मकत्वात् । तथान्यप्रतिषेधेऽप्यसति वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत । सर्वगतत्वं चास्यायामशब्दादिभ्योऽभिज्ञायते । आयामशब्दो व्याप्तिवचनः शब्दः 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छा० ८।१।३) 'आकाशवत्सर्वगतश्च नित्यः' 'ज्यायान्दिवः' (छा० ३।१४।३) 'ज्यायानाकाशात्' 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' (भ. गी. २।२४) इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति ॥ ३७ ॥ इति सप्तमं पराधिकरणम् ॥

### भामती ।

तर्कपाद उपपादितमित्यर्थः । तथा भेदोऽपि त्रिविधो वान्यादृशः स्वाभाविक इत्यर्थः ॥ ३५ ॥ **तथान्यप्रतिषेधात्** । सुगमेन भाष्येण व्याख्यातम् ॥३६ ॥ ब्रह्माद्वैतसिद्धावपि न सर्वगतत्वं सर्वव्यापिता सर्वस्य ब्रह्मणा स्वरूपेण रूपवत्त्वं सिध्यतीत्यत आह—**अनेन सेत्वादिनिराकरणेन** । परहेतुनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च स्वसाधनोपन्यासेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति । अद्वैते सिद्धे सर्वोऽयमनिर्वचनीयः प्रपञ्चावभासो ब्रह्माधिष्ठान इति सर्वस्य ब्रह्मसंबन्धाद्ब्रह्म सर्वगतमिति सिद्धम् ॥ ३७ ॥ **इति सप्तमं पराधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

इत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ भास्करेणानेन सर्वगतत्वमिति सूत्रं प्रसङ्गादात्मसर्वगतत्वप्रतिपादकं, नात्र पूर्वपक्षाशङ्का निरस्यत इत्युक्तम्, तत्सूत्राभिप्रायानवबोधादिति दर्शयन्नाशङ्कामाह—**ब्रह्माद्वैतसिद्धावपीति** । ब्रह्मव्यतिरिक्तवस्त्वभावे सर्वाभावादेव सर्वसंबन्धात्मकसर्वगतत्वासिद्धिरतश्चाकाशवत् सर्वगत इत्यादिश्रुतिविरोधः । तस्मात्सर्वगतत्वार्थं ब्रह्मातिरिक्तवस्त्वपेक्षणात्परमत इति पूर्वपक्ष उन्मज्जतीति शङ्का । न वास्तवं सर्वगतत्वं किंतु प्रपञ्चेन मिथ्यातादात्म्यमित्याह—**अद्वैते इति** ॥ ३७ ॥ **इति सप्तमं पराधिकरणम्**[1] ॥

---

१ तत्र सूत्राणि ७—परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ३१ सामान्यात्तु ३२ बुद्ध्यर्थः पादवत् ३३ स्थानविशेषात् प्रकाशादिवत् ३५ उपपत्तेश्च ३६ अनेन सर्वगतत्वमायामशब्दादिभ्यः ३७ ॥

( ८ अधिकरणम् ) **फलमत उपपत्तेः ॥ ३८ ॥**

तस्यैव ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते । यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनां किमेतत्कर्मणो भवत्याहोस्विदीश्वरादिति भवति विचारणा, तत्र तावत्प्रतिपाद्यते फलमत ईश्वराद्भवितुमर्हति । कुतः ? उपपत्तेः । सहि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधद्देशकालविशेषाभिज्ञत्वात्कर्मिणां कर्मानुरूपं फलं संपादयतीत्युपपद्यते । कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्; अभावाद्भावानुत्पत्तेः । स्यादेतत्—कर्म विनश्यत् स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति । तदपि न परिशुध्यति; प्राग्भोक्तृसंबन्धात्फलत्वानुपपत्तेः । यत्कालं हि यत्सुखं दुःखं वात्मना भुज्यते तस्यैव लोके फलत्वं प्रसिद्धम् । नह्यसंबद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः । अथोच्येत मा भूत्कर्मानन्तरं फलोत्पादः । कर्मकार्यादपूर्वात्फलमुत्पत्स्यत इति, तदपि नोपपद्यते । अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः; तदस्तित्वे च प्रमाणाभावात् । अर्थापत्तिः प्रमाणमिति चेत्, न; ईश्वरसिद्धेरर्थापत्तिक्षयात् ॥ ३८ ॥

**श्रुतत्वाच्च ॥ ३९ ॥**

न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः, किं तर्हि; श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे । तथाच श्रुतिर्भवति—'स वा एष महानज आत्मान्नादो वसुदानः' ( बृ० ४।४।२४ ) इत्येवंजातीयका ॥ ३९ ॥

## भामती ।

**फलमत उपपत्तेः ॥ ३८ ॥** सिद्धान्तोपक्रममिदमधिकरणम् । **स्यादेतत्**—नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः कुत ईश्वरत्वं कुतश्च फलहेतुत्वमपीत्यत आह—**तस्यैव ब्रह्मणो व्यावहारिक्यामिति** । नास्य पारमार्थिकं रूपमाश्रित्यैतच्चिन्त्यते, किंतु सांव्यवहारिकम् । एतच्च 'तपसा चीयते ब्रह्म' इति व्याचक्षाणैरस्माभिरुपपादितम् । इष्टं फलं स्वर्गः । यथाहुः—'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्' इति । अनिष्टमवीच्यादिस्थानभोग्यं, व्यामिश्रं मनुष्यभोग्यम् । **तत्र तावत्प्रतिपाद्यते—फलमत ईश्वरा**त्कर्मभिराराधिताद्भवितुमर्हति । अथ कर्मण एव फलं कस्मान्न भवतीत्यत आह—**कर्मणस्त्वनुक्षणविनाशिनः** प्रत्यक्षविनाशिन इति । चोदयति—**स्यादेतत्कर्म विनश्यदिति** । उपात्तमपि फलं भोक्तुमयोग्यत्वाद्वा कर्मान्तरप्रतिबन्धाद्वा न भुज्यत इत्यर्थः । परिहरति—**तदपि न परिशुध्यतीति** । नहि स्वर्ग आत्मानं लभतामित्यधिकारिणः कामयन्ते । किंतु भोग्योऽस्माकं भवत्विति । तेन यादृशमेभिः काम्यते तादृशस्य फलत्वमिति भोग्यमेव सत्फलमिति । नच तादृशं कर्मानन्तरमिति कथं फलं ? सदपि स्वरूपेण । **अपिच** स्वर्गनरकौ तीव्रतमे सुखदुःखे इति तद्विषयेणानुभवेन भोगापरनाम्नावश्यं भवितव्यम् । तस्मादनुभवयोग्ये अननुभूयमाने शशशृङ्गवन्न स्त इति निश्चीयते । चोदयति—**अथोच्येत मा भूत्कर्मानन्तरं फलोत्पादः । कर्मकार्यादपूर्वाद्भवेदिति** । परिहरति—**तदपि नेति** । यद्यदचेतनं तत्तत्सर्वं चेतनाधिष्ठितं प्रवर्तत इति प्रत्यक्षागमाभ्यामवधारितम् । तस्मादपूर्वेणाप्यचेतनेन चेतनाधिष्ठितेनैव प्रवर्तितव्यं नान्यथेत्यर्थः । नचापूर्वं प्रामाणिकमपीत्याह—**तदस्तित्वे इति** ॥ ३८ ॥ **श्रुतत्वाच्च** ।

## वेदान्तकल्पतरुः ।

**फलमत उपपत्तेः ॥ ३८ ॥** ब्रह्मव्यतिरिक्तवस्तुनि निषिद्धे फलदातृत्वमपि ब्रह्मणो न स्यादित्याशङ्क्य व्यवहारतस्तत्समर्थ्यते । सत्यपि सर्वगतत्वेन समानन्यायत्वे कर्मण एव फलमित्याशङ्कानिरासायारम्भः । एतच्चेति ब्रह्मण उपाधिवशादीक्षणकर्तृत्वम् । तपसेति मन्त्र ईक्षत्यधिकरणे व्याख्यातः । तेन फलदातृत्वमप्यौपाधिकमुपपादितमित्यर्थः । भाष्यस्थमिष्टपदं व्याचष्टे—**इष्टं फलमित्यादिना** । अवीचिर्नरकविशेषः । वैषम्यनैर्घृण्यप्रसङ्गमीश्वरस्य परिहरति—**कर्मभिराराधितादिति** । यदि कर्म स्वानन्तरकालमारभेत, तर्ह्युपलभ्येतेत्याशङ्क्याह—**उपात्तमपीति** । स्वरूपेण सदपि कथं फलमिति योजना । भुज्यमानमपि फलं विषयान्तरव्यासङ्गान्न दृश्यत इत्याशङ्क्याह—**तीव्रतमे इति** । **प्रत्यक्षागमाभ्यामिति** । यः सर्वाणि भूतान्यन्तरो यमयतीत्यागमः ॥ ३८ ॥ अन्नमा समन्ताद्ददातीत्यन्नादः । अत्र भगवता भाष्यकारेण विधिश्रुतेर्विषयभावोपगमादित्यादिभाष्येण कर्मण एव फलमिति पूर्वपक्षघटनाय स्वर्गकामाधिकरणसिद्धान्तः संचिक्षिपे, तन्निवर्त्यामाशङ्कामादर्शयंस्तदधिकरणपूर्वपक्षमाह—**नन्वित्यादिना** । धात्वर्थनिष्पादकः कर्तृव्यापारो भावना, सैव क्रियेत्यन्येषाम् ।

## भामती ।

**अन्नादः अन्नप्रदः ॥ ३९ ॥** सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति—**धर्मं जैमिनिरत एव ।** श्रुतिमाह—**श्रूयते तावदिति ।** **ननु** 'स्वर्गकामो यजेत' इत्यादयः श्रुतयः फलं प्रति न साधनतया यागं विदधति । **तथाहि**—यदि यागादय एव क्रिया न तदतिरिक्ता भावना, तथापि त एव स्वपदेभ्यः पूर्वापरीभूताः साध्यस्वभावा अवगम्यन्त इति न साध्यान्तरमपेक्षन्त इति न स्वर्गेण साध्यान्तरेण संबद्धुमर्हन्ति । अथापि तदतिरेकिणी भावनास्ति, तथाप्यसौ भाव्यापेक्षापि स्वपदोपात्तं पूर्वावगतं च भाव्यं धात्वर्थमपहाय न भिन्नपदोपात्तं पुरुषविशेषणं च स्वर्गादि भाव्यतया स्वीकर्तुमर्हति । न चैकस्मिन् वाक्ये साध्यद्वयसंबन्धसंभवः; वाक्यभेदप्रसङ्गात् । न केवलं शब्दतो वस्तुतश्च पुरुषप्रयत्नस्य भावनायाः साक्षाद्धात्वर्थ एव साध्यो न तु स्वर्गादिस्तस्य तदव्याप्यत्वात् । स्वर्गादेस्तु नामपदाभिधेयतया सिद्धरूपस्याख्यातवाच्यं साध्यं धात्वर्थं प्रति 'भूतं भव्यायोपदिश्यते' इति न्यायात्साधनतया गुणत्वेनाभिसंबन्धः । **तथाच पारमर्षं सूत्रम्**—'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति । तथाच कर्मणो यागादेर्दुःखत्वेन पुरुषेणासमीहितत्वात्, समीहितस्य च स्वर्गादेरसाध्यत्वान्न यागादयः पुरुषस्योपकुर्वन्ति, अनुपकारिणां चैषां न पुरुष ईष्टे, अनीशानश्च न तेषु संभवत्यधिकारीत्यधिकाराभावप्रतिपादितानर्थक्यपरिहाराय कृत्स्नस्यैवाम्नायस्य निर्मृष्टनिखिलदुःखानुषङ्गनित्यसुखमयब्रह्मज्ञानपरत्वं भेदप्रपञ्चविलयनद्वारेण । **तथाहि**—सर्वत्रैवाम्नाये क्वचित्कस्यचिद्भेदस्य प्रविलयो गम्यते—यथा 'स्वर्गकामो यजेत' इति शरीरात्मभावप्रविलयः । इह खल्वापाततो देहातिरिक्त आमुष्मिकफलोपभोगसमर्थोऽधिकारी गम्यते । तत्राधिकारस्योक्तेन क्रमेण निराकरणादसतोऽपि प्रतीयमानस्य विचारासहस्योपायतामात्रेणावस्थानादनेन वाक्येन देहात्मभावप्रविलयस्तत्परेण क्रियते । 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यत्रापयापाततोऽधिकृताधिकारावगमादधिकारिभेदप्रविलयः । निषेधवाक्यानि च साक्षादेव प्रवृत्तिनिषेधेन विधिवाक्यानि चान्यानि 'सांग्रहण्या यजेत ग्रामकामः' इत्यादीनि न सांग्रहण्यादिप्रवृत्तिपराण्यपितूपायान्तरोपदेशेन सेवादिदृष्टोपायप्रतिषेधार्थानि—यथा विषं भुङ्क्ष्व मास्य गृहे भुङ्क्ष्वेति । तथाच रागाद्याक्षिप्तप्रवृत्तिप्रतिषेधेन शास्त्रस्य शास्त्रत्व-

## वेदान्तकल्पतरुः ।

तत्र पूर्वस्मिन्पक्षे स्वर्गाद्यनपेक्षामाह—**तथा हीति ।** यागादीनामेव क्रियात्वे तेषां धातुभिरेव प्रतीतेः प्रत्ययपौनरुक्त्यमाशङ्क्याह—**पूर्वापरीभूता इति ।** यजेतेत्यत्र हि यजिना प्रकृत्या याग एव प्रतीयते । प्रत्ययसहितेन तु तेन स एव पूर्वापरीभूतो नानाक्षणव्यासक्तोऽभिधीयते । पूर्वापरीभूतत्वं यजत इत्यादिवर्तमानापदेशेष्वप्यस्तीति लिङादिषु विशेषमाह—**साध्यस्वभावा इति ।** द्वितीयपक्षे तादृशभावनाभाव्यः किं स्वर्गादिरेव ? किं वा यागादिरपि ? **न प्रथम** इत्याह—**तथाप्यसाविति ।** प्रत्ययार्थभूता भावना धात्वर्थातिरिक्ता यद्यपि स्वातिरिक्तं भाव्यमाकाङ्क्षते; तथापि धात्वर्थ एवास्या भाव्यः, तस्य यजेतेत्येकपदश्रुत्या साध्यत्वप्रतीतेः । अत एव च पूर्वावगतेः न स्वर्गः । तस्य भिन्नपदोपात्तस्य वाक्येन साध्यत्वस्य प्रत्येतव्यत्वाद्, वाक्यस्य च लिङ्गश्रुतिकल्पनापेक्षस्य चरमभावित्वात् । **किंच** पुरुषविशेषणस्वर्गस्य न यागेन संबन्धः; उपसर्जनस्य पदान्तरेणासंबन्धादित्यर्थः । **न द्वितीय** इत्याह—**न केवलमिति ।** यागादयो न साध्यान्तरमपेक्षन्ते इत्येतन्न केवलं शब्दतोऽपि तु वस्तुतश्चेत्यर्थः । वस्तुसामर्थ्यमेव दर्शयति—**पुरुषप्रयत्नस्येति ।** यदि स्वर्गो न साध्यः, कथं तर्हि स्वर्गो यागेन संबध्यतेऽत आह—**स्वर्गादेस्त्विति ।** प्रीतिसाधनं चन्दनादि **स्वर्गः** । तस्य सिद्धत्वात् साध्यक्रियां प्रति साधनत्वेनान्वय इत्यर्थः । उक्तेऽर्थे स्वर्गकामाधिकरणपूर्वपक्षसूत्रमुदाहरति—**द्रव्याणामिति ।** यदि यागादेर्न स्वर्गादिसाधनत्वम्, कथं तर्हि पुरुषाः प्रवर्तेरन्नप्रवर्तमानेषु वा तेषु कथं शास्त्राणां प्रामाण्यमत आह—**तथा च कर्मण इत्यादिना ।** कथं कर्मविधीनां ब्रह्मज्ञानपरत्वमत आह—**भेदप्रपञ्चेति ।** अप्रविलापिते हि प्रपञ्चे ब्रह्माद्वैतं प्रत्येतुमशक्यमिति । **ननु** स्वर्गकामवाक्य आकाशादिलयो न भात्यत आह—**क्वचिदिति ।** अनुक्ते स्वर्गसाध्यत्वे देहातिरिक्तात्माप्रतीतिरुक्ते च वाक्यस्य तत्परत्वं स्यादित्याशङ्क्याह—**आपातत इति ।** आपातप्रतीतोऽपि तथाऽस्तु देवताविग्रहादिवदत आह—**तत्रेति ।** निराकृतस्य कथं प्रपञ्चप्रविलयप्रमित्यर्थत्वमत आह—**असतोऽपीति ।** असन्नपि प्रमित्यर्थो वपोत्खननादिरिव प्राशस्त्यप्रमित्यर्थ इति भावः । स्वर्गकामवाक्ये देहात्मभावोपलक्षितजडप्रपञ्चविलयमुक्त्वा गोदोहनवाक्ये दर्शपूर्णमासाधिकारिण एव गोदोहनेऽप्यधिकारावगमादुभयत्राधिकारिभेदप्रविलापनद्वारा तदुपलक्षितात्मभेदः प्रविलाप्यत इत्याह—**गोदोहनेनेति ।** एवं प्रवृत्तिविषयजडप्रपञ्चस्य स्वरूपेण प्रविलयं प्रवृत्तिकर्तुश्चेतनस्य भेदमात्रप्रविलयं चाभिधाय प्रवृत्तेः प्रविलयमाह—**निषेधवाक्यानीति ।** साक्षादेव प्रवृत्तिनिषेधेनात्मज्ञानोपयोगीनीत्यध्याहारः । **विधिवाक्यानीति ।** ऐहिकफलानीत्यर्थः । पारलौकिकफलानां देहात्मभावप्रविलयार्थत्वस्योक्तत्वात् सांग्रहणीष्ट्यादिप्रवृत्तिपराणि न भवन्ति; स्वर्गकामपदवद् ग्रामकामपदस्यापि फलसमर्पकत्वायोगादित्यर्थः । **सेवादिदृष्टोपायप्रतिषेधार्थानीति ।** सेवादिविषयप्रवृत्तिर्हि सांग्रहण्यामनुष्ठीयमानायां न भवतीत्यर्थः । एवं मुख्यार्थपरिग्रहे बाधकप्रदर्शनेन विधीनां

## भामती ।

मप्युपपद्यते । रागनिबन्धनां तूपायोपदेशद्वारेण प्रवृत्तिमनुजानतो रागसंवर्धनादशास्त्रत्वप्रसङ्गः । तन्निषेधेन तु ब्रह्मणि प्रणिधानमादधच्छास्त्रं शास्त्रं भवेत् । तस्मात्कर्मफलसंबन्धस्याप्रामाणिकत्वादनादिविचित्राविद्यासहकारिण ईश्वरादेव कर्मानपेक्षाद्विचित्रफलोत्पत्तिरिति । कथं तर्हि विधिः ? किमत्र कथं ? प्रवर्तनामात्रत्वाद्विधेस्तस्य चाधिकारमन्तरेणाप्युपपत्तेः । नहि यो यः प्रवर्तयति स सर्वोऽधिकृतमपेक्षते । पवनादेः प्रवर्तकस्य तदनपेक्षत्वादिति शङ्कामपाचिकीर्षुराह—**तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते । अन्यथा ह्यननुष्ठातृको याग आपद्येत । अयमभिसंधिः**—उपदेशो हि विधिः । **यथोक्तम्**—'तस्य ज्ञानमुपदेशः' इति । उपदेशश्च नियोज्यप्रयोजने कर्मणि लोकशास्त्रयोः प्रसिद्धः । तद्यथारोग्यकामो जीर्णे भुञ्जीत । एष सुपन्था गच्छतु भवाननेनेति । न त्वाज्ञादिरिव नियोक्तृप्रयोजनस्तत्राभिप्रायस्य प्रवर्तकत्वात्, तस्य चापौरुषेयेऽसंभवात् । अस्य चोपदेशस्य नियोज्यप्रयोजनव्यापारविषयत्वमनुष्ठात्रपेक्षितानुकूलव्यापारगोचरत्वमस्माभिरुपपादितं न्यायकणिकायाम् । तथाच 'स्वर्गकामो यजेत' इत्यादिषु स्वर्गकामादेः समीहितोपाया गम्यन्ते यागादयः, इतरथा तु न साधयितारमनुगच्छेयुः । **तदुक्तमृषिणा**—'असाधकं तु तादर्थ्यात्' इति । अनुष्ठात्रपेक्षितोपायतारहितप्रवर्तनामात्रार्थत्वे यजेतेत्यादीनामसाधकं कर्म यागादि स्यात् । साधयितारं नाधिगच्छेदित्यर्थः । न चैते साक्षाद्भावनाभाव्या अपि कर्त्रपेक्षितसाधनताविध्युपहितमर्यादा भावनोद्देश्या भवितुमर्हन्ति, येन पुंसामनुपकारकाः सन्तो नाधिकारभाजो भवेयुः; दुःखत्वेन कर्मणां चेतनसमीहानास्पदत्वात् । स्वर्गादीनां तु भावनापूर्वरूपकामनोपधानाच्च प्रीत्यात्मकत्वाच्च नामपदाभिधेयानामपि पुरुषविशेषणानामपि भावनोद्देश्यतालक्षणभाव्यत्वप्रतीतेः, फलार्थप्रवृत्तभावनाभाव्यत्वलक्ष-

## वेदान्तकल्पतरुः ।

प्रपञ्चलयार्थत्वमुक्तमिदानीं लक्षणास्वीकारे प्रयोजनमाह—**तथा चेति । ननु** यदि न कर्मणां फलसाधनत्वम्, कथं तर्हि जगद्वैचित्र्यम् ? अत आह—**अनादिविचित्रेति । कथं तर्हि विधिरिति ।** त्वयाऽपि सांग्रहण्यादीनां दृष्टार्थप्रवृत्तिपरिसंख्यायकत्वं ब्रुवता विधिर्न त्यक्तः । तथा च फलार्थिनोऽधिकारिणोऽभावे विधित्वं न स्यादित्यर्थः । वायूदकादिवद्विधेः प्रवर्तकत्वमित्येतत्तावद् निषेधन् स्वर्गकामाधिकरणसिद्धान्तं दर्शयति—**उपदेशो हीत्यादिना । ननु** भवतूपदेशो विधिः, कथं तस्य फलसाधनविषयता ? अत आह—**उपदेशश्चेति ।** नियोज्यः प्रवर्त्यः पुरुषस्तदीयं प्रयोजनं साध्यं यस्य कर्मणः तन्नियोज्यप्रयोजनम् । **ननु** नियोक्तृपुरुषप्रयोजनसाधनं यथाऽऽज्ञादौ बोध्यते, एवमुपदेशेऽपि किं न स्यादत आह—**न त्वाज्ञादिरिव नियोक्तृप्रयोजन इति ।** उपदेश इत्यनुषङ्गः । उत्तमनियोक्तृका ह्याज्ञा यथा गामानयेति । अनुत्तमनियोक्तृकाऽभ्यर्थना यथा मम पुत्रमध्यापयेति । उभयत्रापि प्रवर्तयितुः प्रयोजनसाधनं बोध्यते, नैवमुपदेशे । तत्र हेतुमाह—**तत्राभिप्रायस्येति ।** प्रवर्तयिता स्वस्य हितं भवत्विति यत्र प्रवर्तयति तत्राज्ञादिस्तदभिप्रायविशेषः प्रवर्तकः । अपौरुषेये वेदे तस्यासंभवान्नियोज्यप्रयोजनसाधनमुपदिश्यत इत्यर्थः । नच वाच्यमुपदेशोऽपि नियोज्यप्रयोजनसाधनविषयोऽभिप्रायविशेष इति कथमसावपौरुषेये वेदे संभवतीति; यतः परस्य स्वस्य वा प्रयोजनमनभिसंधायापि गोपालादेर्मार्गाद्युपदेष्टृत्वं भूतार्थविषयं दृश्यते । **ननु** नियोज्यप्रयोजनसाधनविषयत्वमनुज्ञायामपि दृश्यते, यथेच्छसि तथा कुर्वित्यादौ, तत्राह—**अस्य चेति ।** अनुज्ञायां हि प्रवृत्तस्य प्रवर्तनमुपदेशे त्वप्रवृत्तस्य ततश्चाप्रवृत्तप्रवर्तकत्वे सतीति विशेषणविशिष्टनियोज्यप्रयोजनसाधनविषयत्वमुपदेशस्यैव लक्षणमिति न्यायकणिकायाम् उपपादितमित्यर्थः । नियोज्यप्रयोजनेत्यादेर्व्याख्यानम्—**अनुष्ठात्रपेक्षितेत्यादि ।** प्राभाकराभिमतनियोज्यव्यावृत्त्यर्थं सिद्धान्तसूत्रगतं तादर्थ्यादिति पदं व्याचष्टे—**अनुष्ठात्रपेक्षितोपायतारहितेति । तादर्थ्यात्** तादर्थ्ये सति पूर्वपक्षोक्तप्रवर्तनामात्रार्थत्वे सतीत्यर्थः । यदुक्तं साक्षाद्भावनाभाव्यो यागादिः, स च दुःखरूप इत्यप्रवृत्तिरिति, तत्राह—**न चैत इति ।** विधिविषयीकृतभावनायाः श्रेयःसाधनत्वात् स्वर्ग एवोद्देश्यो न तु यागादयः । यदि स्युस्तर्ह्यप्रवृत्तिविषयता तेषां स्यात्, तच्च नास्ति; यागादीनां भावनां प्रत्यनीप्सितकर्मतामात्रत्वादित्यर्थः । यागादीनां भावनोद्देश्यत्वाभावे हेतुः—**दुःखत्वेन कर्मणामिति ।** यत्स्वर्गादेर्भावनां प्रति व्यवधानान्न भाव्यत्वमित्युक्तं, तत्राह—**स्वर्गादीनां त्विति ।** सर्वो हि कामनानन्तरं प्रवर्तते, ततश्च स्वर्गादेर्भावनायाः पूर्वरूपकामनाविषयत्वादतितरामव्यवधानमित्यर्थः । यच्च द्रव्यत्वात् स्वर्गादेः क्रियाशेषत्वमिति, तत्राह—**प्रीत्यात्मकत्वाच्चेति ।** एषां हेतूनां स्वर्गकामादेरधिकार इति वक्ष्यमाणप्रतिज्ञायां संबन्धः । प्रीतौ हि रूढः स्वर्गशब्द इति तच्छेषा क्रिया इत्यर्थः । यत्तु सुबन्तपदाभिधेयत्वात्सिद्धरूपतेति, तन्न; तथापि कामपदात्साध्यत्वप्रतीतिरित्यभिप्रेत्याह—**नामेति ।** यदपि पुरुषविशेषणत्वात्स्वर्गादेर्न भाव्यत्वमिति, तत्राह—**पुरुषविशेषणानामपीति ।** भावनाक्षिप्तकर्त्रनुवादेन विशेषणभूतस्वर्गपरं स्वर्गकामपदं स्वर्गं भाव्यत्वेन समर्पयतीत्यर्थः । यत्तु यागादेः स्वर्गादेश्च भाव्यत्वेन वाक्यभेद इति, तत्राह—**फलार्थप्रवृत्तेति ।** फलार्थं प्रवृत्तस्य पुरुषस्य या भावना तया भाव्यत्व-

## धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते । अत एव हेतोः श्रुतेरुपपत्तेश्च । श्रूयते तावदयमर्थः—'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु । तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते । अन्यथा ह्यननुष्ठातृको याग आपद्येत, तत्रास्योपदेशवैयर्थ्यं स्यात् । नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः, नैष दोषः; श्रुतिप्रामाण्यात् । श्रुतिश्चेत्प्रमाणं यथाऽयं कर्मफलसंबन्धः श्रुत उपपद्यते तथा कल्पयितव्यः । न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्कालान्तरितं फलं दातुं शक्नोत्यतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामास्तीति तर्क्यते । उपपद्यते चायमर्थ उक्तेन प्रकारेण । ईश्वरस्तु फलं ददातीत्यनुपपन्नम् । अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गादनुष्ठानवैयर्थ्यापत्तेश्च । तस्माद्धर्मादेव फलमिति ॥ ४० ॥

### भामती ।

णेन च यागादिसाध्यत्वेन फलार्थप्रवृत्तभावनाभाव्यत्वरूपस्य फलसाध्यत्वस्य समप्रधानत्वाभावेनैकवाक्यसमवायसंभवात्, भावनाभाव्यत्वमात्रस्य च यागादिसाध्यत्वस्य करणेऽप्यविरोधात्, अन्यथा सर्वत्र तदुच्छेदात्, परश्वादेरपि छिदादिषु तथाभावात्, फलस्य साक्षाद्भावनाव्याप्यत्वविरहिणोऽपि तदुद्देश्यतया सर्वत्र व्यापितया व्यवस्थानात्स्वर्गसाधने यागादौ स्वर्गकामादेरधिकार इति सिद्धम् । न चाप्राप्तार्थविषयाः सांग्रहण्यादियागविधयः परिसंख्यायका नियामका वा भवितुमर्हन्ति । न चाधिकाराभावे देहात्मप्रविलयो वाधिकारिभेदप्रविलयो वा शक्य उपपादयितुम् । आपाततः प्रतिभाने चास्य तत्परत्वमेव नार्थायातपरत्वम् । स्वरसतः प्रतीयमानेऽर्थे वाक्यस्य तादर्थ्ये संभवति न संपातायातपरत्वमुचितम् । न चैतावता शास्त्रत्वव्याघातः; तस्य स्वर्गाद्युपायशासनेऽपि शास्त्रत्वोपपत्तेः । पुरुषश्रेयोभिधायकत्वं हि शास्त्रत्वम् । सरागवीतरागपुरुषश्रेयोऽभिधायकत्वेन सर्वपारिषदतया न तत्त्वव्याघातः । तस्माद्विधिविषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति सिद्धम् । **कर्मणो वा काचिदवस्थेति** । कर्मणोऽवान्तरव्यापारः । **एतदुक्तं भवति**—कर्मणो हि फलं प्रति यत्साधनत्वं श्रुतं, तन्निर्वाहयितुं तस्यैवावान्तरव्यापारो भवति । नच—व्यापारवति सत्येव व्यापारो नासतीति—युक्तम्; असत्स्वप्याग्नेयादिषु तदुत्पत्त्यपूर्वाणां परमापूर्वे जनयितव्ये तदवान्तरव्यापारत्वात् । असत्यपि च तैलपानकर्मणि तेन पुष्टौ कर्तव्यायामन्तरा तैलपरिणामभेदानां तदवान्तरव्यापारत्वात् । तस्मात्कर्मकार्यमपूर्वं कर्मणा फले कर्तव्ये तदवान्तरव्यापार इति युक्तम् । यदा पुनः फलोपजननान्यथानुपपत्त्या किंचित्कल्प्यते तदा **फलस्य वा पूर्वावस्था । अविचित्रस्य कारणस्येति** । यदीश्वरादेव केवलादिति शेषः । कर्मभिर्वा शुभाशुभैः कार्यद्वैधोत्पादे रागादिमत्त्वप्रसङ्ग इत्याशयः ॥ ४० ॥ दृष्टानुसारिणी हि कल्पना युक्ता नान्यथा । नहि जातु मृत्पिण्डदण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय विभववन्तो दृष्टाः । नच विद्युत्पव-

### वेदान्तकल्पतरुः ।

लक्षणेनेति प्रथमग्रन्थे विग्रहः । फलार्थं या प्रवृत्ता भावना तया भाव्यत्वरूपस्येति द्वितीयग्रन्थे । ततश्च यागादेः साध्यत्वमन्यत्साधयितुं स्वर्गादेस्तु स्वत इति स्वतन्त्रसाध्यद्वयाभावान्न वाक्यभेद इत्युक्तं भवति । **ननु** यागादिर्न करणं स्याद्, भावनाभाव्यत्वात्स्वर्गवदिति, तत्राह—**भावनाभाव्यत्वमात्रस्येति** । परश्वादेरपि तथाभावाद्व्यापाराविष्टरूपेण साध्यत्वादित्यर्थः । स्वर्गादीनां त्विति ग्रन्थेन भावनां प्रति स्वर्गादीनामव्यवधानातिशय उक्तः । इदानीं व्यवधानमङ्गीकृत्याप्युद्देश्यत्वेन साध्यत्व आकाङ्क्षातिशयमाह—**फलस्य साक्षादिति** । तदुद्देश्यतया लक्षणेन फलस्य सर्वत्र व्यापितया व्यापित्वेनावस्थानादिति योजना । व्यापित्वनिर्देशो लक्षणस्याव्याप्त्यतिव्याप्तिपरिहारार्थः । **न चाधिकाराभावे इति** । स्वर्गभोक्तुर्यागाधिकारान्यथानुपपत्त्या हि देहात्मत्वाभावावगतिरित्यर्थः । **संपातः** आपातः । यच्च प्रपञ्चप्रविलयादिलक्षणायां प्रयोजनं शास्त्रत्वसिद्धिरिति, तत्राह—**न चैतावतेत्यादिना** । **सर्वपारिषदतया** सर्वपरिषत्प्रसिद्धतया । यदि प्राभाकरा मन्वीरन्, असति व्यापारवति न व्यापार इति, तान्प्रत्याह—**असत्स्वप्याग्नेयादिष्विति** । तेषामपि मते आग्नेयादिवाक्यैर्यागा एव विधीयन्ते नापूर्वाणि । अधिकारवाक्यसन्निधिसमाम्नातानामाग्नेयादिवाक्यानामधिकारापूर्वानुवादकत्वशङ्कायां कुण्ठितशक्तीनां द्रागित्येवापूर्वान्तरप्रत्ययाजनकत्वात्तैश्च परमापूर्वे जनयितव्येऽवान्तरव्यापारा जन्यमाना असत्स्वपि व्यापारवत्सु भवन्तीत्यर्थः । अथ लौकिको वदेत्, तत्राह—**असत्यपीति** । सापेक्षेश्वरात् फलसिद्धेर्वक्ष्यमाणत्वादविचित्रस्येति भाष्यायोगमाशङ्क्याह—**केवलादितीति** । तर्हि कर्मापेक्षत्वपक्षो निर्दोष इति कथं पूर्वपक्षावकाशः ? तत्राह—**कर्मभिर्वेति** । कंचिच्छुभं कारयति कंचिदशुभमिति वैषम्यप्रसङ्ग इत्यर्थः ॥ ४० ॥ कर्मादि चेतनाधिष्ठितम-

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं पक्षस्तुशब्देन व्यावर्त्यते । कर्मापेक्षादपूर्वापेक्षाद्वा यथातथास्त्वीश्वरात्फलमिति सिद्धान्तः । कुतः ? हेतुव्यपदेशात् । धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति । स्मर्यते चायमर्थो भगवद्गीतासु—'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हितान्' ( ७।२१ ) इति । सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते । तदेव चेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजतीति । विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते ॥ ४१ ॥ इत्यष्टमं फलाधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पादकृतौ
श्रीमच्छारीरकमीमांसाभाष्ये तृतीयाध्यायस्य
द्वितीयः पादः ॥ २ ॥

---

### भामती ।

नादिभिरप्रयत्नपूर्वैर्व्यभिचारः; तेषामपि कल्पनास्पदतया व्यभिचारनिदर्शनत्वानुपपत्तेः । तस्मादचेतनं कर्म वापूर्वं वा न चेतनानधिष्ठितं स्वतन्त्रं स्वकार्ये प्रवर्तितुमुत्सहते । नच चैतन्यमात्रं कर्मस्वरूपसामान्यविनियोगादिविशेषविज्ञानशून्यमुपयुज्यते, येन तद्रहितक्षेत्रज्ञमात्राधिष्ठानेन सिद्धसाध्यत्वमुद्भाव्येत । तस्मात्तत्प्रासादाट्टालगोपुरतोरणाद्युपजननिदर्शनसहस्रैः सुपरिनिश्चितं यथा चेतनाधिष्ठानादचेतनानां कार्यारम्भकत्वमिति तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुमित्यपि स्पष्टं निरटङ्कि देवताधिकरणे । लौकिकश्चेश्वरो दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति, विरोधितश्चापक्रियाभिर्विरोधकायाहितमित्यपि सुप्रसिद्धम् । तदिह केवलं कर्म वाऽपूर्वं वा चेतनानधिष्ठितमचेतनं फलं प्रसूत इति दृष्टविरुद्धम् । यथा विनष्टं कर्म न फलं प्रसूत इति कल्प्यते दृष्टविरोधादेवमिहापीति । तथा देवपूजात्मको यागो देवतां नप्रसादयन् फलं प्रसूत इत्यपि दृष्टविरुद्धम् । नहि राजपूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते । तस्माद्दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुत्पाद्यते । तथाच देवताप्रसादादेव स्थायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण । एवमशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम् । ततः स्थायिनोऽनिष्टफलप्रसवः । नच शुभाशुभकारिणां तदनुरूपं फलं प्रसुवाना देवता द्वेषपक्षपातवतीति युज्यते । नहि राजा साधुकारिणमनुगृह्णन्निगृह्णन् वा पापकारिणं भवति द्विष्टो रक्तो वा तद्वदलौकिकोऽपीश्वरः । यथा च परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः । एवं प्रधानाराधनेऽङ्गाराधनानामुत्पत्त्याराधनानां चोपयोगः । स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति सर्वं समानमन्यत्राभिनिवेशात् । तस्माद्दृष्टाविरोधेन देवताराधनात् फलं न त्वपूर्वात्कर्मणो वा

### वेदान्तकल्पतरुः ।

चेतनत्वात् मृद्वदित्यनुमानस्य जीवैः सिद्धसाधनत्वमाशङ्क्याह—**न चैतन्यमात्रमिति** । कर्म स्वरूपं तस्य च शुभस्य सुखमितरस्य दुःखमित्येवं सामान्यविनियोगः । आदिशब्देन ज्योतिष्टोमात्स्वर्ग इत्यादिविशेषविनियोग उच्यते । फलसिद्धिपूर्वक्षणे कर्मस्वरूपादिसाक्षात्कारवदधिष्ठितमस्माभिः साध्यत इति न सिद्धसाधनमित्यर्थः । आगमप्रमिते संभावनामात्राभिधानात्पत्युरसामञ्जस्या ( व्या. सू. अ. २ पा. २ सू. ३७ ) दित्यत्रोक्तखण्डनानामनवकाशः । दुर्गेषु यो जनानां निवेशनार्थं भूमिकाविशेषो रच्यतेऽसावट्टालः । **निरटङ्कि** निष्टङ्कितं निर्णीतमित्यर्थः । **नन्वीश्वरश्चेत्फलं** ददाति, किं कर्मभिरत आह—**लौकिकश्चेश्वर इति** । ईश्वरस्य कर्मापेक्षामुक्त्वा कर्मणामीश्वरापेक्षामुक्तां स्मारयति—**तदिह केवलं कर्मेति** । न केवलं कर्माधिष्ठानत्वादीश्वरसिद्धिरपि तु कर्मभिरीश्वरप्रसादस्य साध्यत्वाच्चेत्याह—**तथा देवपूजात्मक इति** । नप्रसादयन्नित्यप्रसादयन्नित्यर्थः । नशब्दोयं प्रतिषेधवचनः । **विरोधनं** द्रोहः । **ननु** प्रधानयागेन परमेश्वरः प्रसीदतु, अङ्गानुष्ठानं तर्हि किमर्थमत आह—**यथा च परमापूर्वं इति** । **अत्र भास्करेण प्रलेपे**—भाष्यकारमतेऽन्तर्यामिव्यापारः फलोत्पादकः, स च संनिधिमात्ररूप इति नित्यः, सर्वजीवसाधारणश्चातो न तस्यैकैकजीवकर्मभिः

## भामती।

केवलाद्विरोधतो हेतुव्यपदेशश्च श्रौतः स्मार्तश्च व्याख्यातः। ये पुनरन्तर्यामिव्यापाराया फलोत्पादनाया नित्यत्वं सर्वसाधारणत्वमिति मन्यमाना भाष्यकारीयमधिकरणं दूषयांबभूवुस्तेभ्यो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामिति भाष्यं व्याचक्षीत ॥ ४१ ॥ इति अष्टमं फलाधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां
तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

## वेदान्तकल्पतरुः।

साध्यत्वमिति, तं भाष्यव्याख्यानेनानुगृह्णाति—ये पुनरिति। अविद्योपाधिवशादीश्वरस्यानित्यः प्रतिजीवं कर्मसाध्यश्चानुग्रहोऽस्तीत्यर्थः ॥ ४१ ॥ इत्यष्टमं फलाधिकरणम् ॥[1]

इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभवानन्दपूज्यपादशिष्यभगवदमलानन्दस्य व्यासाश्रमापरनामधेयस्य कृतौ वेदान्तकल्पतरौ तृतीयस्याध्ययस्य द्वितीयः पादः ॥

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | १०१ |
| सूत्राणि | ४१ | ३५९ |

॥ इति तृतीयाध्यायस्य तत्त्वम्पदार्थपरिशोधनाख्यो द्वितीयः पादः ॥



१ तत्र सूत्राणि ४—फलमत उपपत्तेः ३८ श्रुतत्वाच्च ३९ धर्मं जैमिनिरत एव ४० पूर्वं तु बादरायणो हेतुव्यपदेशात् ४१ ॥

# अथ तृतीयाध्यायस्य तृतीयः पादः ।

( १ अधिकरणम् ) **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥

**व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वम्, इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते—ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितमेकरसं सैन्धवघनवदवधारितं तत्र कुतो विज्ञानभेदाभेदचिन्तावतारः? नहि कर्मबहुत्ववद्ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम्। ब्रह्मण एकत्वादेकरूपत्वाच्च। न चैकरूपे ब्रह्मण्यनेकरूपाणि विज्ञानानि संभवन्ति। न ह्यन्यथार्थोऽन्यथा ज्ञानमित्यभ्रान्तं भवति। यदि पुनरेकस्मिन्ब्रह्मणि बहूनि विज्ञानानि वेदान्तान्तरेषु प्रतिपिपादयिषितानि, तेषामेकमभ्रान्तं भ्रान्तानीतराणीत्यनाश्वासप्रसङ्गो वेदान्तेषु। तस्मान्न तावत्प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते। नाप्यस्य चोदनाद्यविशेषादभेद उच्यते; ब्रह्मविज्ञानस्याचोदनालक्षणत्वात्। अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः 'तत्तु समन्वयात्' ( ब्र० सू० १।१।४ ) इत्यत्र। तत्कथमिमां**

---

### भामती ।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ पूर्वेण संगतिमाह—**व्याख्यातं विज्ञेयस्य ब्रह्मण इति**। निरुपाधिब्रह्मतत्त्वगोचरं विज्ञानं मन्वान आक्षिपति—**ननु विज्ञेयं ब्रह्मेति**। सावयवस्य ह्यवयवानां भेदात्तदवयवविशिष्टब्रह्मगोचराणि विज्ञानानि गोचरभेदाद्भिद्येरन्नित्यवयवा ब्रह्मणो निराकृताः पूर्वापरादीत्यनेन। नच नानास्वभावं ब्रह्म; यतः स्वभावभेदाद्भिन्नानि ज्ञानानीत्युक्तम्—**एकरसमिति**। **घनं** कठिनम्। नन्वेकमप्यनेकरूपं लोके दृष्टं, यथा सोमशर्मैकोऽप्याचार्यो मातुलः पिता पुत्रो भ्राता भर्ता जामाता द्विजोत्तम इत्यनेकरूप इत्यत उक्तम्—**एकरूपत्वाच्च**।

### वेदान्तकल्पतरुः ।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ द्वितीये पादे तत्त्वंपदार्थौ परिशोधितौ, इदानीमपुनरुक्तापेक्षितपदार्थोपसंहारेण सगुणनिर्गुणब्रह्मवाक्यानामर्थोऽवधार्यते। सगुणवाक्यार्थचिन्तातु तद्विद्यानां सत्त्वशुद्धिद्वारा निर्गुणविद्योपयोगात्। पदार्थोपसंहारेण वाक्यार्थावधारणार्थं च सगुणविद्यानामभेदचिन्ता, भेदचिन्ता तु तदपवादत्वेन। निर्गुणविद्यायां तु विद्याभेदादैक्यं सिद्धमेवेति तन्न विचार्यते। गुणोपसंहारस्तु आनन्दादय इत्याद्यधिकरणे ( व्या. सू. अ. ३ पा. ३ सू. ११ ) लक्ष्याखण्डवाक्यार्थसिद्ध्यर्थवाक्यार्थोपसंहाररूपो वर्णयिष्यते। तदेतत्सर्वमभिसंधायाह—**पूर्वेणेति**। **अत्राक्षेपभाष्यं**—'ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितमेकरसं सैन्धवघनवदवधारितमित्या'दि, तदनुपपन्नमिव; सगुणब्रह्मणो नानारसत्वेन तद्विज्ञानभेदाभेदचिन्तायाः संभवात्। अत आह—**निरुपाधीति**। पूर्वापरादिभेदरहितमेकरसमिति च विशेषणद्वयस्यापुनरुक्तमर्थमाह—**सावयवस्य हीत्यादिना**। अवयविनि ह्यवयवाः पूर्वापरभावेन वर्तन्ते, अतस्तन्निषेधात्सावयवत्वनिषेधः। एकरसमित्यनेकधर्मवत्त्वनिषेध इत्यर्थः। **स्वभावो** धर्मः। भाष्यगतघनशब्दार्थमाह—**कठिनमिति**। अच्छिद्रत्वाद् रसान्तररहितमित्यर्थः। अवयवभेदं धर्मभेदं च निरस्यापेक्षिकभेदमाशङ्क्य तन्निषेध एकरूपत्वविशेषणे क्रियत इत्याह—**नन्वेकमपीत्यादिना**। भाष्ये एकत्वादित्यनेन प्राङ् निषिद्धावयवधर्मभेदे निषेधानुवादः।

### कल्पतरुपरिमलः ।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ पूर्वपादेन सङ्गतिं प्रदर्शयन् पादार्थमाह—**द्वितीयपाद इति**। तत्त्वम्पदार्थशोधनेन निर्विशेषब्रह्मणि निर्द्धारिते मोक्षसाधनं तज्ज्ञानोपयोगिसगुणनिर्गुणवाक्यार्थनिर्धारणं क्रियत इति पादसंगतिः। हिरण्मयादिवाक्यं सगुणविषयं प्रतर्दनादिवाक्यं निर्गुणविषयमित्येवंरूपसगुणनिर्गुणवाक्यार्थनिर्धारणस्य प्रथमाध्यायेन कृतत्वेऽपि नानाशाखाम्नातगुणोपसंहारेण तन्निर्धारणं न कृतमिति तदर्थोऽयं पादः। तथा च गुणोपसंहारः पादार्थ इति भावः। **ननु** सगुणवाक्यार्थनिर्द्धारणं विचार्यत्वेन प्रतिज्ञातस्य निर्विशेषस्य ज्ञाने नोपयोगीत्यत आह—**सगुणेति**। चित्तशुद्धिद्वारेणेत्युपलक्षणम्। चित्तैकाग्र्यद्रढिमसंपादनद्वारेत्यपि द्रष्टव्यम्। **ननु** गुणोपसंहारः केषुचिदेवाधिकरणेषु चिन्त्यते, केषु चिद्विद्यानामभेदः केषु चिद्भेदः, अतो नैकः पादार्थ इत्यत आह—**पादार्थोपसंहारेणेति**। गुणोपसंहार एव पादार्थः। अभेदचिन्ता तदुपयोगिभेदचिन्ता तदपवादत्वेनेत्यर्थः। अभेदचिन्ता गुणोपसंहारोपयोगिनी चेन्निर्गुणविद्यायां किमिति सा न कृतेत्याशङ्क्याह—**अधिकरणैरिति**। यद्यप्यानन्दाधिकरणे आनन्दादिभावरूपगुणोपसंहारचिन्ता अक्षरधियामित्यधिकरणे (व्या. सू. अ. ३ पा. ३ सू. ३३ ) स्थूलत्वाद्यभावरूपगुणोपसंहारचिन्तेत्यधिकरणद्वयमेव

भेदाभेदचिन्तामारभत इति ? तदुच्यते—सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेत्यदोषः । अत्र हि कर्मवदुपासनानां भेदाभेदौ संभवतः कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते । क्रममुक्तिफलानि च कानिचित्सम्यग्ज्ञानोत्पत्तिद्वारेण । तेष्वेषा चिन्ता संभवति । किं प्रतिवेदान्तं विज्ञानभेद आहोस्विन्नेति । तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते । नाम्नस्तावद्भेदप्रतिपत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु । अस्ति चात्र वेदान्तान्तरवि-

## भामती ।

एकस्मिन् गोचरे संभवन्ति बहूनि विज्ञानानि न त्वनेकाकाराणीत्युक्तम्—**अनेकरूपाणि रूपमाकारः** । समाधत्ते—**उच्यते** । **सगुणेति** । तत्तद्गुणोपाधानब्रह्मविषया उपासनाः प्राणादिविषयाश्च दृष्टादृष्टक्रममुक्तिफला विषयभेदाद्भिद्यन्त इत्यर्थः । तत उपपन्नो विमर्श इत्याह—**तेष्वेषा चिन्ता** । पूर्वपक्षं गृह्णाति—**तत्रेति** । **नाम्नस्तावदिति** । अस्ति 'अथैष ज्योतिः—एतेन सहस्रदक्षिणेन यजेत' इति । तत्र संशयः—किं यजेतेति संनिहितज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणगुणविधानम्, उतैतद्गुणविशिष्टकर्मान्तरविधानमिति । किं तावत् प्राप्तम् ? ज्योतिष्टोमस्य प्रक्रान्त-

## वेदान्तकल्पतरुः ।

नन्वनेकरूपाणि ज्ञानानीत्यत्र रूपग्रहणं व्यर्थम्, अनेकानीत्येवोच्यताम्, अत आह—**एकस्मिन् गोचर इति** । **ननु** ज्ञानस्य गुणस्य कथमनेकरूपत्वप्राप्तिरत आह—**रूपमाकार इति** । नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः स्या ( जै. सू. अ. २ पा. ४ सू. ८ ) दिति शाखान्तराधिकरणपूर्वपक्षसूत्रम् । तत्र निन्देति उदितहोमानुदितहोमनिन्दोच्यते । "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रं दिवाकीर्त्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषा"मित्यनुदितहोमनिन्दा । "यथाऽतिथये प्रद्रुतायान्नं हरेयुस्तादृक् तद्यदुदिते जुह्वती"त्युदितहोमनिन्दा । **प्रद्रुताय** निर्गतायेत्यर्थः । ततश्च एकस्य विरुद्धकालद्वयासंभवात्कर्मभेदः । प्रायश्चित्तमुदितानुदितहोमव्यतिक्रमे । तत्र निन्दाप्रायश्चित्ते वेदान्तगतविद्यासु न स्त इति नोदाहियेते । इतरे ये नामादयो भेदहे-

## कल्पतरुपरिमलः ।

निर्गुणविद्याया अवगतपरस्परगुणोपसंहारविषयम्; तथाप्यात्मगृहीतिरित्यधिकरणे प्रथमवर्णके पूर्वपक्षे "आत्मा वा इदमेक एवाग्र आसीदि"त्यैतरेयवाक्यं हिरण्यगर्भविषयम् । द्वितीयवर्णकपूर्वपक्षे "सदेव सोम्येदमग्रआसीदि"त्यादिच्छान्दोग्यवाक्यं सत्तासामान्यविषयमित्युभयत्रापि पूर्वपक्षयोरानन्दादिगुणानुपसंहारः सिद्धान्ते तदुपसंहार इति निर्गुणविद्यागतगुणोपसंहारफलत्वात् कामाद्यधिकरणे (व्या. सू. अ. ३ पा. ३ सू. ३६ । ) निर्गुणविद्यायां सगुणविद्यागतसत्यकामादिगुणोपसंहारस्य साक्षान्निरूपितत्वाच्च तदभिप्रायमधिकरणैरिति बहुवचनम् । **नामरूपेति** । काठककालापादि**र्नामभेदः** । क्वचिच्छाखायां दर्शपूर्णमासयोरग्नीषोमीय एकादशकपालः श्रूयते शाखान्तरे द्वादशकपाल इति **रूपभेदः** । कारीर्यादिषु शिरोभूमिभोजनादि**र्धर्मविशेषः** । **पुनरुक्तिः** अग्निहोत्रादिविधेः शाखाभेदेनाविशेषपुनःश्रवणरूपो**ऽभ्यासः** । **निन्दा** उदितानुदितहोमयोः । **अशक्तिः** सर्वशाखोदितसकलाङ्गग्रहार्थतावच्छाखाध्ययनाशक्तिः । मैत्रायणीयानामन्वारोहसंज्ञकेषु स्थलारोहणमन्त्रेष्वग्निचयनस्य समाप्तिः अन्यत्रान्येषामिति **समाप्तिभेदः** । केषां चिच्छाखायामुदितहोमव्यतिक्रमे प्रायश्चित्तम् अन्येषामनुदितहोमव्यतिक्रमे इति **प्रायश्चित्तभेदः** । "यदि पुरा दिदीक्षाणाः स्युर्बृहत्सामानमतिरात्रमुपेयुरुपेतं ह्येषां रथन्तरं यद्यदिदीक्षाणाः रथन्तरसामानमतिरात्रमुपेयुरि"त्यनिष्टप्रथमयज्ञानां द्वादशाहदर्शनं शाखाभेदेन द्वादशाहभेदेऽन्यार्थदर्शनरूपं **लिङ्गम्** । **दिदीक्षाणाः** प्राग्दीक्षितवन्तः । लिटः कानचि द्विर्वचनम् । कथं प्राग्दीक्षितानां द्वादशाहदर्शनं द्वादशाहभेदे लिङ्गमुच्यते ? शाण्डिल्यशाखाया"मेष वात्र प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तत्कुरुते" इति सर्वक्रतूनां ज्योतिष्टोमपाश्चात्त्यत्वमङ्गं विहितम् । यद्येक एव द्वादशाहो नानाशाखासु विधीयते, तदा तस्य ज्योतिष्टोमपूर्वकत्वनियमादनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं नोपपद्यते । यदि प्रतिशाखं द्वादशाहभेदः स्यात्तदा शाण्डिल्यशाखायाम् "अथान्येन यजते"इत्यन्यशब्दस्य शाण्डिल्यशाखागतद्वादशाहादिविषयत्वोपपत्तेः शाखान्तरगतद्वादशाहानां ज्योतिष्टोमपाश्चात्यत्वस्याविधानात् । यस्यां शाखायामनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं तच्छाखागतद्वादशाहविषयत्वेन तदुपपद्यते । एवं नामभेदादिहेतुभिः प्रतिशाखमग्निहोत्रादिकर्म भिद्यत इति सूत्रार्थः । **विरुद्धकालद्वयासंभवादिति** । यद्यपि कालद्वयं विकल्पेन संभवति; तथापि निन्दयोदितानुदितहोमपक्षद्वयेऽपि वैगुण्यापादकमुदितानुदितकालद्वयमपि कर्मैक्ये न संभवतीति भावः । न केवलं निन्दया वैगुण्यमवगम्यते किं तूदितानुदितकालव्यतिक्रमे प्रायश्चित्तोपदेशेनाप्येतद्दर्शयति—**प्रायश्चित्तमिति** । **निन्दाप्रायश्चित्ते इति** । अन्धं तमः प्रविशन्तीत्यादिषु केवलयोर्विद्याकर्मणोर्निन्दासद्भावेऽपि भिन्नशाखागतयोरग्निहोत्रयोरिव विद्ययोर्भेदापादिका निन्दा

### भामती।

त्वाद्यजेतेति तदनुवादाज्ज्योतिरिति प्रातिपदिकमात्रं पठित्वा एतेनेत्यनुकृष्य कर्मसामानाधिकरण्येन कर्मनामव्यवस्थापनात्, कर्मणश्चानुवाद्यत्वेन तत्तन्त्रस्य नाम्नोऽपि तथैव व्यवस्थापनात्, ज्योतिःशब्दस्य 'वसन्ते वसन्ते ज्योतिषा' इति च ज्योतिष्टोमे प्रयोगदर्शनात्, नामैकदेशेन च नामोपलक्षणस्य लोकसिद्धत्वाद्भीमसेनोपलक्षणभीमपदवत्, अथ शब्दस्य चानन्तर्यार्थस्यासंबन्धित्वेऽनुपपत्तेः, गुणविशिष्टकर्मान्तरविधेश्च गुणमात्रविधानस्य लाघवात्, द्वादशशतदक्षिणायाश्चोत्पत्त्यशिष्टतया समशिष्टतया सहस्रदक्षिणया सह विकल्पोपपत्तेः, प्रकृतस्यैव ज्योतिष्टोमस्य सहस्रदक्षिणालक्षणगुणविधानार्थमयमनुवादो न तु कर्मान्तरमिति प्राप्तम्। एवं प्राप्त उच्यते—भवेत्पूर्वस्मिन् गुणविधिर्यदि तदेव प्रकरणं स्यात्। विच्छिन्नं तु तत्। तथाहि संनिधावपि पूर्वासंबद्धार्थं संज्ञान्तरं प्रतीयमानम् 'अन्यायश्चानेकार्थत्वम्' इति न्यायादुत्सर्गतोऽर्थान्तरार्थत्वात्पूर्वबुद्धिं व्यवच्छिनत्त्यपूर्वबुद्धिं च प्रसूत इति लोकसिद्धम्। न जातु देहि देवदत्ताय गामथ देवाय

### वेदान्तकल्पतरुः।

त्वस्तदुपन्यासार्थं नाम्नस्तावदित्यादिभाष्यं, तद्याचष्टे—**अस्त्यथैष ज्योतिरित्यादिना**। **ननु** यजेतेति प्रकृतज्योतिष्टोमानुवादोऽनुपपन्नः; नाम्नैव तद्बुद्धिविच्छेदादत आह—**ज्योतिरितीति**। ज्योतिरिति हि प्रातिपदिकमात्रम्, न त्वस्य नामत्वमभिव्यक्तम्। एतेनेत्यमुमनुकृष्य यजेतेत्याख्यातवाच्यकर्मसामानाधिकरण्यात्तु नामत्वाभिव्यक्तिः। तथा चाख्यातपारतन्त्र्याद्यद्याख्यातं कर्म विदधीत, तर्हि नामापि तद्भेदेदथ त्वनुवदेत्तर्हि नामापि तदनुवदिष्यतीत्यप्रयोजकमिह नाम भेदाभेदयोः। ततश्चाख्यातार्थ एव चिन्त्य इत्यर्थः। **उक्तं हि**—प्रायेणाख्यातसम्बन्धि नामेष्टं पारतन्त्र्यभाक्। तस्यैव प्रथमं तेन भेदाभेदनिमित्ततः॥ इति। ज्योतिरिति कर्मसामानाधिकरण्येन कर्मनामव्यवस्थापनादित्यादिहेतूनां सहस्रदक्षिणागुणविधानार्थोऽयमनुवाद इति वक्ष्यमाणप्रतिज्ञया संबन्धः। **अथ शब्दस्य चेति**। आनन्तर्यं हि पूर्ववृत्तापेक्षं गुणविधिपक्षेचाश्रयदानार्थमस्ति ज्योतिष्टोमापेक्षा न कर्मान्तरत्वे। न हि क्रतुः क्रत्वन्तरमपेक्षत इत्यर्थः। **ननु** द्वादशशतं दक्षिणेति ज्योतिष्टोमे द्वादशशतं गावो दक्षिणा तद्विरुद्धं सहस्रदक्षिणाविधानमित्यत आह—**द्वादशशतेति**। उत्पत्तिः कर्मस्वरूपज्ञापनं तन्मध्ये विहित**मुत्पत्तिशिष्टं** कर्मस्वरूपज्ञापनोत्तरकालविहितमुत्पन्नशिष्टम्। तत्र द्वादशशतं दक्षिणा यद्युत्पत्तौ श्रूयेत, तर्हि बलवत्त्वात् सहस्रदक्षिणां बाधेत, न त्वेवमस्त्युभयोरपि कर्मज्ञापनोत्तरकालं श्रुतत्वादित्यर्थः। अन्यायश्चानेकार्थत्वमिति न्यायादिति दृष्टान्तोक्तिरियम्। यथाऽनेकार्थत्वमेकस्य शब्दस्यान्याय एवमेकस्यार्थस्यान्याय्यमनेकशब्दत्वमित्यपि न्यायस्ततो ज्योतिष्टोमज्योतिःशब्दौ नैकस्य कर्मणो वाचकावित्यर्थः। **ननु** वसन्तवाक्ये ज्योतिष्टोमवाक्ये च ज्योतिर्ज्योतिष्टोमशब्दयोरेकार्थत्वादनेकशब्दत्वमपि क्वचिदाश्रितमत आह—**उत्सर्गत इति**। असम्बद्धार्थपदव्यवायादिति पूर्वेणा-

### कल्पतरुपरिमलः।

नास्तीति भावः। **अस्त्यथैष ज्योतिरित्यादिनेति**। प्राग् ज्योतिष्टोमे प्रकृते अथैष ज्योतिरित्याद्युपक्रमः। **ज्योतिरिति हि प्रातिपदिकमात्रं न त्वस्य नामत्वमभिव्यक्तमिति**। मात्रशब्देन यजिसामानाधिकरण्यं व्यावर्त्यते। अथैष ज्योतिरित्यत्र यजिसामानाधिकरण्याभावाद् न क्रतुनामत्वमभिव्यक्तमित्यर्थः। प्रतीकमात्रमिति क्वचित्पाठः। तत्र ज्योतिष्टोमनामावयवमात्रमिति नास्य प्रकृतज्योतिष्टोमनामत्वमभिव्यक्तमित्यर्थः। यद्यपि तदभिव्यक्तिसत्त्वे तदिष्टमेव प्रकृते ज्योतिष्टोमे सहस्रदक्षिणालक्षणगुणविधिरिति वदतः पूर्वपक्षिणः; तथाप्यप्रयोजकमिह नामभेदाभेदयोरित्यग्रिमग्रन्थे नाम यथा पूर्वपक्ष्यभिमते अभेदे न प्रयोजकम्, एवं सिद्धान्त्यभिमते भेदेऽपि न प्रयोजकमिति वक्ष्यमाणत्वात् तत्र कथमभेदेन प्रयोजकं ज्योतिरिति प्रकृतज्योतिष्टोमनाम्ना तदभेदप्रतीतेरित्याशङ्कानिवारणार्थत्वेनेदं वाक्यमिति नेतव्यम्। **प्रायेणाख्यातसंबन्धीति**। आख्यातसंबन्धस्यापि प्रागेव क्वचिल्लब्धप्रवृत्तिनिमित्तकं नाम नाख्यातपरतन्त्रम्, यथाऽग्नेयादीनां प्रयाजादीनां च यागानां सन्निधौ श्रूयमाणे "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारवाक्ये यजेतेत्यस्य संनिहितसर्वयागानुवादस्वारस्येऽपि न तत्पारतन्त्र्येण दर्शपूर्णमासनाम्नस्तावद्यागवृत्तित्वं, किं त्वमावास्यापौर्णमासीकालयुतेष्वाग्नेयादिषु क्लृप्तप्रवृत्तिनिमित्तकत्वात्तावन्मात्रवृत्तित्वमभिप्रेत्य प्रायेणेत्युक्तम्। तथा चाक्लृप्तप्रवृत्तिनिमित्तकं नामाख्यातपरतन्त्रं, तथाभूतं च ज्योतिरिति नाम, अतस्तस्याख्यातपारतन्त्र्यादाख्यातस्य च प्रकृतज्योतिष्टोमानुवादस्वारस्यात्तत्परतन्त्रं नामापि तु तत्रैव वर्तितुमर्हतीति भावः। **ज्योतिरिति कर्मसामानाधिकरण्येन कर्मनामव्यवस्थापनादित्यादिहेतूनामिति**। अत्र टीकायामसन्नपि ज्योतिरित्ययमंशः कस्य कर्मनामत्वं व्यवस्थितमित्याकाङ्क्षितांशपूरणार्थं स्वयमध्याहृतः। **द्वादशशतं दक्षिणेति**। श्रुतौ द्वादशमिति शब्दस्तदस्मिन्नधिकमिति दशान्ताड्ड इति सूत्रविहितडप्रत्ययान्तः। ततश्च द्वादशाधिकं शतमित्यर्थः। द्वादशशतं गाव इत्युदाहृतश्रुतिवाक्ये गोशब्दाभावेऽपि तत्र निर्दिष्टा द्वादशशतसंख्या गौश्चाश्वश्चाश्वतरश्च गर्दभश्चेत्यादिपूर्वसंदर्भप्रकृतगोविषयेति दक्षिणाधिकरणे ( जै. सू. अ. १० पा. ३ सू. ३९–४९। ) निर्णीतत्वाद्गाव इत्युक्तम्। अन्यायश्चानेकशब्दत्वमिति न्यायः प्रकृते उदाहर्तव्यः। अतो न्यायान्तरोदाहरणं दृष्टान्तार्थमिति व्याचष्टे—**यथानेकार्थत्वमिति**। **ज्योतिर्ज्योतिष्टोमशब्दयोरेकार्थत्वादिति**। यद्यपि वसन्तवाक्ये ज्योतिः,

## भामती ।

वाजिनमिति देवशब्दाद्देवदत्तं वाजिभाजमवस्यन्ति लौकिकाः । तथा चोपरिष्टात् 'यजेत्' इति श्रूयमाणमसंबद्धार्थपद-व्यवायात्तत्कर्मबुद्धिमनादधत् तत्र गुणविधानमात्रासमर्थं कर्मान्तरमेव विधत्ते । न चैकत्रानुपपत्त्या लक्षणया ज्योतिःशब्दो ज्योतिष्टोमे प्रवृत्त इत्यसत्यामनुपपत्तौ लाक्षणिको युक्तः । नहि गङ्गायां घोष इत्यत्र गङ्गापदं लाक्षणिकमिति मीनो गङ्गायामित्यत्रापि लाक्षणिकं भवति । भेदेऽपि च प्रथमं संज्ञान्तरेणोल्लिखिते यजिशब्दसामानाधिकरण्यं कर्मनामधेयमात्रतामावहति, नतु संज्ञान्तरोपजनितां भेदधियमपनेतुमुत्सहते । तथा चाथशब्दोऽधिकारार्थः प्रकरणान्तरतामवद्योतयति । एषशब्दश्चाधिक्रियमाणपरामर्शक इति सोऽयं संज्ञान्तराद्भेद इति । भवतु संज्ञान्तरात्कर्मभेदः, प्रस्तुते तु किमायातमित्यत आह—**अस्ति चात्र वेदान्तान्तरविहितेष्विति** । यथैव काठकादिसमाख्या ग्रन्थे प्रयुज्यन्त एवं ज्ञानेऽपि लौकिकाः । न चास्ति विशेषो यतो ग्रन्थे मुख्या विज्ञाने गौणी भवेत् । प्रणयनं च ग्रन्थज्ञानयोरभिन्नं प्रवृत्तिनिमित्तम् । तस्माज्ज्ञानस्यापि वाचिका समाख्या । तथाच यदा ज्योतिष्टोमसंनिधौ श्रूयमाणं समाख्यान्तरं तत्प्रतीकमपि कर्मणो भेदकं तदा कैव कथा शाखान्तरीये विप्रकृष्टतमेऽतत्प्रतीकभूतसमाख्यान्तराभिधेये ज्ञात इति । तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धः, यथा—'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्येवमादिषु । **इयमाम्नायते**—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति । अत्र हि द्रव्यदेवतासंबन्धानुमितो

## वेदान्तकल्पतरुः

सम्बद्धार्थवता ज्योतिःपदेन व्यवधानादित्यर्थः । यत्तु वसन्तादिवाक्ये ज्योतिःशब्द एकदेशान्तरलक्षणार्थे दृष्ट एवमत्रापीति, तत्राह—**न चैकत्रेति** । वसन्तादिवाक्ये हि ज्योतिषा यजेतेत्याख्याततन्त्रा सञ्ज्ञा, आख्यातं च कालादिविधिसंक्रान्तमिति पूर्वकर्मानुवदेत्, एषा तु प्रथमान्तत्वादतत्तन्त्रेति प्रकृतकर्मबुद्धिं विच्छिनत्तीत्यर्थः । यत्तु ज्योतिरिति प्रातिपदिकमुच्चार्यैतेनेति परामृश्य यजेतेति विधानाद् नामधेयं ज्योतिःशब्द इति, तदोमिति ब्रूमः; तस्यैव नाम्नः कर्मान्तरवाचकत्वादित्याह—**भेदेऽपि चेति** । अपिचेति समुच्चये । यथा नामधेयत्वमेवं भेदोऽपि प्रथममुल्लिखित इत्यर्थः । **ननु** कठेन प्रणीतत्वादध्यापितत्वाद्वा काठकमुच्यते, न विद्या प्रणीयते, तस्या अशाब्दत्वादत आह—**प्रणयनं चेति** । प्रणयनं शिष्येभ्यो नयनमुपदेशः स ज्ञानेऽपि अविशिष्ट इत्यर्थः । ज्योतिःसञ्ज्ञायाः सकाशात् काठकत्वादिसंज्ञाया भेदकत्वातिशयमाह—**तथा चेति** । ज्योतिष्टोमस्य संनिधौ श्रुतत्वात्तदनुवादकत्वेन तन्नामैकदेशत्वेन च संभाव्यमानमपि ज्योतिरिति नाम यदा कर्मभेदकं, तदा शाखान्तरस्थत्वेन दूरस्थं संपूर्णं च काठकादिनामातितरां ज्ञानभेदकमित्यर्थः । अतत्प्रतीकभूतेति च्छेदः । तथारूपभेदोऽपीत्यादिभाष्यमुपात्तं, तद्व्याचष्टे—**इदमाम्नायत इत्यादिना** । नन्विह सिद्धानुवादमात्रं सा आमिक्षेति प्रतीयते, न विधिः, तत्र कथं कर्मभेदाभेदचिन्तावकाशः ? तत्राह—**द्रव्यदेवतेति** । **वाजिनं गुणो विधीयत**

## कल्पतरुपरिमलः ।

शब्दः एकदेश्येकदेशसंबन्धेन ज्योतिष्टोमशब्दं स्मारयति, स्मृतज्योतिष्टोमशब्दाभिहितो यागो वाक्यार्थान्वयी, न त्वत्र ज्योतिःशब्दो ज्योतिष्टोमस्य वाचकः; ज्योतिष्टोमज्योतिःशब्दौ नैकस्य कर्मणो वाचकौ इत्यनुपदमेवाभिहितत्वात्, वसन्तादिवाक्ये ज्योतिःशब्दः एकदेशान्तरलक्षणार्थ इत्यनुपदमेव वक्ष्यमाणत्वाच; तथापि यथाकथंचिज्ज्योतिष्टोमयागप्रतीत्युपयोगित्वेन श्रुतो ज्योतिःशब्दः प्रयुक्त इत्येतावता तयोरैकार्थ्यमुक्तम् । नामतयैकार्थप्रतीत्युपयोग्यनेकशब्दप्रसिद्धावन्यत्र सुलभतरायामपि क्लिष्टोदाहरणम् अथैष ज्योतिरित्यत्र यस्य ज्योतिःपदस्य ज्योतिष्टोम इति नामान्तरवति वृत्तिरन्याय्येति विचिकित्सते तस्यैवान्यत्र तस्मिन् वृत्तिर्दृष्टेति दर्शयितुम् । **यत्तु वसन्तादिवाक्य इति** । वसन्तादिवाक्ये इव अथैष ज्योतिरित्यत्राप्युत्सर्गबाधोऽस्त्विति भावः । **एकदेशान्तरलक्षणार्थे इति** । अत्र लक्षणार्थ इत्यनेन एकदेश्येकदेशसंबन्धमूलकज्योतिष्टोमशब्दस्मृत्यर्थत्वं विवक्षितम्, न त्वेकदेशान्तरे एकदेशिनि वा लाक्षणिकत्वं शक्यसंबन्धाभावात् । न हि नामैकदेशस्य किंचिच्छक्यम्; एकदेशस्य एकदेशिनश्च शक्यसंबन्धो वाऽस्ति । **न चैकत्रेतीति प्रतीकग्रहणानन्तरं**—वसन्तवाक्ये ज्योतिषा यजेतेति आख्याततन्त्रा संज्ञा आख्यातं च कालविधिसंक्रान्तमिति पूर्वकर्मानुवदेदेषा तु प्रथमान्तत्वादतन्त्रेति प्रकृतकर्मबुद्धिं व्यवच्छिनत्तीत्यर्थ इति शुद्धः पाठः । वसन्तवाक्ये हि काललक्षणानिमित्तसंक्रान्तत्वाद्विधेः कर्मसिद्ध्यनुपपत्तिः नान्यत्रेत्यर्थ इति क्वचित्पाठो दृष्टः, सोऽप्यत्रैवार्थे कथंचिद्योज्यः । तस्मिन् पाठे नान्यत्रेत्यस्य न त्वत्रेत्यर्थः । तथा च वसन्तवाक्ये कर्मविध्यनुपपत्तेराख्यातेन पूर्वकर्मानुवदनीयमिति तत्समानाधिकरणज्योतिःशब्दस्यापि कथंचित्तत्प्रत्यायकत्वमाश्रितं, नत्वत्र तदाश्रयणीयम्; प्रथमान्ते तथानुपपत्तिस्फूर्त्यभावादिति । **तस्यैव नाम्नः कर्मान्तरवाचकत्वादित्याहेति** । प्रथमान्तज्योतिःशब्दस्य विधास्यमानकर्मनामतायास्तदानीमनभिव्यक्तावपि पूर्वासंबन्धिपदेन तेन प्रकरणविच्छेदादिति भावः । अत्र हि द्रव्यदेवतेति वाजिनद्रव्यदेवतासंबन्धो यागेनैव कर्तव्य इति द्रव्यदेवतासंबन्धस्य यागाविनाभावात्तेन यागानुमितिः । टीकायां

## भामती।

यागो विधीयते। तदनन्तरं चेदमाम्नायते—'वाजिभ्यो वाजिनम्' इति। अत्रेदं संदिह्यते—किं पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयते उत कर्मान्तरं द्रव्यदेवतान्तराविशिष्टमपूर्वं विधीयत इति। किं तावत् प्राप्तम्? द्रव्यदेवतान्तरविशिष्टकर्मान्तरविधौ विधिगौरवप्रसङ्गात् कर्मान्तरापूर्वान्तरकल्पनागौरवप्रसङ्गाच्च न कर्मान्तरविधानमपि तु पूर्वस्मिन्नेव कर्मणि वाजिनद्रव्यविधिः। न च—उत्पत्तिशिष्टामिक्षागुणावरोधात्तत्र वाजिनमलब्धावकाशं कर्मान्तरं गोचरयतीति—युक्तम्; उभयोरपि वाक्ययोः समसमयप्रवृत्तेरामिक्षावाजिनयोरुत्पत्तौ समं शिष्यमाणत्वेन नामिक्षायाः शिष्टत्वम्। तत्कथमनयावरुद्धं कर्म न वाजिनं निविशेत्? नच वैश्वदेवीत्यत्र श्रौत आमिक्षासंबन्धो विश्वेषां देवानां, येन वाजिनसंबन्धाद्वाक्यगम्याद्बलवान्भवेदुभयोरपि पदान्तरापेक्षप्रतीतितया वाक्यगम्यत्वाविशेषात्। नो खलु वैश्वदेवीत्युक्ते आमिक्षापदानपेक्षामामिक्षामध्यवस्यामः। अस्तु वा श्रौतत्वं, तथापि वाजिभ्य इति पदं वाजमन्नमामिक्षा तदेषामस्तीति व्युत्पत्त्या तत्संबन्धिनो विश्वान्देवानुपलक्षयति। यद्यपि विश्वदेवशब्दाद्वाजिपदं भिन्नं, येन च

## वेदान्तकल्पतरुः।

इति। यद्यप्यत्र वाजिनं देवता च गुणो विधीयते इति वक्तुं शक्यम्; तथापि प्राप्ते कर्मण्यनेकगुणविध्यसंभवाद् द्रव्यमात्रविधिरुक्तः। वाजिपदेन तु विश्वेदेवा अभिधीयन्ते इति वक्ष्यति, सिद्धान्ते तु विशिष्टविधित्वादप्राप्तं कर्मानेकगुणविशिष्टं विधातुं शक्यमिति मत्वा द्रव्यदेवतान्तरविशिष्टमपूर्वकर्म विधीयते इत्युक्तम्। विशिष्टविधौ कर्म विधातव्यम्, विशेषणभूतं द्रव्यं देवता चेति गौरवमित्याह—**विधिगौरवेति**। यदाऽऽमिक्षायागाद्वाजिनयागः कर्मान्तरं विधीयते, तदा तत्तावत् कल्प्यं तच्चान्यमपूर्वं च कल्पनीयमित्याह—**कर्मान्तरापूर्वान्तरेति**। **ननु** वैश्वदेव्यामिक्षेत्यत्र यागविधिप्रतीतिसमय एवाऽऽमिक्षा यागान्विता प्रतीयते, वाजिनं तु वाक्यान्तरेणाऽत उत्पत्तिशिष्टामिक्षाऽवरुद्धे कर्मणि वाजिनं दुर्बलमवकाशमलभमानं कर्मान्तरं गमयतीत्याशङ्क्याह—**न चोत्पत्तिशिष्टेति**। किमिति न युक्तमत आह—**उभयोरपीति**। **अयमभिप्रायः**—अत्र ह्यामिक्षायां वाजिने वा न प्रत्यक्षं विधिमुपलभामहे, न्यायबलात्तु कल्पयेमहि। तत्र वैश्वदेवीवाक्ये आमिक्षाविश्वेदेवसंबन्धः प्रतीयते, वाजिनवाक्ये तु वाजिनां तेषामेव विश्वेषां देवानां वाजिनस्य च संबन्धः। तत्र देवतैक्याद् द्रव्यद्वयस्य सहत्यागकल्पनया द्रव्यद्वययुक्तैकयागविधिरनुमीयते। तत्र कुत उत्पत्तिशिष्टत्वमामिक्षायाः? कुतो वा वाजिनस्योत्पन्नशिष्टत्वमिति? **नन्वा**मिक्षावरुद्धयागस्य प्रथमं प्रत्यक्षविध्यभावेऽपि विश्वदेवानां श्रौत आमिक्षासंबन्धः, तेषां पुनर्वाजिपदाभिधेयानां वाजिभ्यो वाजिनमिति वाक्यीयो वाजिनसंबन्धः, स च श्रौतसंबन्धाद्दुर्बल इति न विश्वे देवा वाजिनेन संबध्यन्ते। तत्र कर्मान्तरं वाजिभ्यो वाजिनमिति पदद्वयात्मकवाक्यगम्यं विधीयते, अत आह—**नच वैश्वदेवीत्यत्रेति**। वैश्वदेव्यामिक्षेति पदद्वयात्मकवाक्यादेव विश्वेषां देवानामामिक्षासंबन्धः एवं वाजिनसंबन्धोऽपि तेषां वाजिभ्यो वाजिनमिति पदद्वयात्मकवाक्यगम्य इति तुल्यतेत्यर्थः। **ननु** वैश्वदेवीति तद्धितान्तपदश्रुतिमात्रादामिक्षासंबन्धो विश्वेषां देवानाम् अवगम्यत इत्याशङ्क्य तथासत्यामिक्षापदवैयर्थ्यं स्यादित्याह—**नो खल्विति**। **ननु** विश्वे देवा देवता अस्या इति तद्धितार्थः अस्या इति शब्देन च सन्निहिताऽऽमिक्षैवोच्यते, अतः श्रौत एवामिक्षासंबन्धस्तत्राह—**अस्तु वेति**। **तत्सबन्धिनो विश्वान् देवानुपलक्षयतीति**। उपलक्षितेषु चामिक्षासंबद्धेषु विश्वेषु देवेषु यत्फलिष्यति तत्तत्श्चामिक्षासंबन्धोपजी-

## कल्पतरुपरिमलः।

गुणाधिकरणसंदेहोपन्यासपूर्वपक्षकोटौ द्रव्यमात्रस्य विधिरुक्तो न देवतायाः, तत्र किमर्थं देवताया अपि विधिर्नोक्तः अविधाने च देवतायाः कुतो लाभ इत्याशङ्क्याह—**यद्यपीत्यादिना**। **ननू**भयोरपि वाक्ययोः समसमयवृत्तेरिति टीकोक्तमयुक्तम्; आमिक्षावाक्ये स्वार्थमभिधाय पर्यवसिते वाजिनवाक्यप्रवृत्तेः, न ह्युत्तरवाक्यप्रवृत्तिपर्यन्तं पूर्ववाक्यमपर्यवसिताभिधानं भवतीति क्वचिद् दृष्टमित्याशङ्क्यान्यत्रातथाभावेऽपि प्रकृते तथाभावमुपपादयति—**अयमभिप्राय इति**। यत्र पूर्वापरवाक्यद्वयमपि किंचिदंशकल्पनया पूरणीयं भवेत्तत्र नानेकं कल्पनीयं गौरवादिति भावः। **तद्धितान्तपदश्रुतिमात्रादिति**। विश्वे देवा देवता अस्या इति विग्रहवाक्ये अस्या इत्येतदर्थत्वेनामिक्षायाः प्रवेशात्तत्समानार्था तद्धितश्रुतिरपि द्रव्यदेवतासंबन्धार्था वाजिभ्य इति चतुर्थ्यन्तशब्दस्तूद्देश्यदेवतामात्रमभिधत्ते, न तस्या द्रव्यसंबन्धमपि, स तु तत्र वाक्यगम्य एवेति भावः **तथा सतीति**। विग्रहवाक्यस्थस्यास्या इति पदस्यामिक्षायां पर्यवसानार्थम् आमिक्षापदसमभिव्याहारापेक्षाऽस्तीतीहापि वाक्यबोध्य एव संबन्ध इति भावः। **श्रौत एवामिक्षासंबन्ध इति**। पर्यवसिताभिधानस्य यत्प्रत्यायनाय पदान्तरसमभिव्याहारापेक्षा तत्रैव वाक्यं प्रमाणं, यत्र त्वपर्यवसिताभिधानाय पदान्तरापेक्षा तत्र पदान्तरसन्निधानेन पर्यवसिता श्रुतिरेव प्रमाणमिति भावः। टीकायां तथापीत्यारभ्योपलक्षयतीत्यन्तेन ग्रन्थेन प्रकृते श्रुतितो वाक्यस्य दौर्बल्याभावमुपपादयितुमुपक्रम्य तद्विहाय यद्यपीत्यादिना विचारान्तरं प्रवर्तितं, तदनन्वितमित्याशङ्क्य उपलक्षयतीत्यन्तस्योपरितनग्रन्थेनान्वयं दर्शयति—**उपलक्षितेषु चेति**। विश्वान् देवानुपलक्षयतीत्युक्ते कथं वाजिशब्दोक्ता विश्वेदेवाः स्युः? शब्दभेदेन देवताभेदादित्याशङ्कायां प्रसक्तायां तन्निराकरणेन विश्वान् देवानुपलक्षयती-

## वेदान्तकल्पतरुः।

वनेनेत्युपरितनग्रन्थे वक्ष्यति। **ननु** वाजिभ्य इति इन्प्रत्ययान्तं पदमामिक्षासंबन्धिनो विश्वदेवानुपलक्षयितुं न शक्नोति, अधिकरणान्तरविरोधादित्याशङ्कते—**यद्यपीति। दशमे स्थितम्**—विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना। (जै. सू. अ. १० पा.४ सू. २३) दर्शपूर्णमासयोर्देवतापदान्याग्नेयादीनि सन्ति, सन्ति चाग्नेरभिधानानि लोकेऽग्निः पावक इत्यादीनि। तत्र संदेहः किं हविःप्रदानसमये येन केनचिदग्निवाचकपदेनाग्निरुद्देश्यः, उत विधिगताग्निपदेनैवेति। तत्रार्थरूपत्वाद्देवतात्वस्य तस्य च येन केनचिद्वाचकेन निर्देशसंभवादनियम इति प्राप्ते राद्धान्तः। सत्यमर्थात्मकं देवतात्वं तत्तु न स्वर्गवासित्वादि संभवति; मासेभ्यः स्वाहेत्यादौ मासादेरदेवतात्वप्रसङ्गात्, किंतु त्यज्यमानहविः प्रत्युद्देश्यत्वम्। उद्देशश्च हविः प्रति प्राधान्येन निर्देशः तत्राग्नेय इति विधिगतस्यैव मन्त्रत्वे देवताप्रकाशकत्वे भावो देवतात्वं हविस्त्यागकालेऽपि स्यात्; तद्धितवर्त्यग्निशब्देन हविः प्रत्यग्नेः प्राधान्येन निर्देशाद्धविस्त्यागकालेऽपि तेनैव स निर्देश्यः। शब्दान्तरेण निर्देशे देवतात्वं न स्यात्तस्माद्विधिशब्दस्यैव मन्त्रत्वे देवताप्रकाशकत्वे भावः स्यात्तेन हि देवतामुद्दिश्य हविषश्चोदनेति। तत्र शब्दभेदेऽपि देवतैक्ये एतदधिकरणविरोध इत्यर्थः। यदि च शब्दभेदेऽपि देवतैक्यं, तर्हि सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः आदित्यं चरुं निर्वपेदिति च सौर्यादित्यचर्वोरेकदेवतात्वं स्यादित्यर्थः। न चैतयोरेकदेवतात्वमेष्टुं शक्यम्; सूर्याय जुष्टं निर्वपामीति आदित्याय जुष्टं निर्वपामीति च सर्वसंमतानुष्ठानविरोधादिति आशङ्क्य परिहरति—**तथापीत्या-**

## कल्पतरुपरिमलः।

त्यर्थे स्थिरीकृते सति तत्फलमिह वाक्यदौर्बल्याभावलक्षणमग्रे वक्ष्यत इति नानन्वय इति भावः। तामेव प्रसक्तामाशङ्कां दर्शयति—**नन्विति। हविःप्रदानसमय इति।** दर्शपूर्णमासयोर्देवतापदापेक्षा निगमाः सन्ति, 'अग्नये जुष्टं निर्वपामि' 'अग्नये जुष्टं प्रोक्षामि' 'अग्नेः प्रिया धामानि' 'अग्निरिदं हविरजुषते'त्याद्यास्तेष्वाहत्याग्निपदश्रवणात् न तेष्वियं चिन्ता, किं तूद्देशत्याग एवेति भावः। यदि शब्द एव देवता स्यादर्थरूपा देवता न स्यात्तदा पर्यायाणां न प्रसक्तिरत आह—**अर्थरूपत्वाद्देवतात्वस्येति।** अस्ति तावदग्न्यादिदेवताशब्देभ्योऽग्नये जुष्टमित्यादिनिगमेषु नानाविभक्त्युत्पत्तिः। ताः तेषां प्रातिपदिकत्वमन्तरेण नोत्पद्यन्ते, तत्प्रातिपदिकत्वं च नार्थवत्त्वमन्तरेण भवतीति सन्त्यग्न्यादिशब्दानामर्थास्त एव देवताः; सास्य देवतेत्यर्थेऽग्न्यादिप्रातिपदिकेभ्यस्तद्धितोत्पत्तिदर्शनादिति भावः। **तत्तु न स्वर्गवासित्वादीति।** नाकसत्त्वादिकं देवतात्वं चेन्नाकसदामग्न्याद्यभिमानिनां लोकवेदप्रसिद्धपर्यायसद्भावात्पर्यायाः प्रसज्येरन्, न तु तदिह देवतात्वं विवक्षितम्; मासादिदेवतानानुगतत्वादित्यर्थः। यद्यपि मासाद्यभिमानिदेवताः सन्ति, अत एवार्चिरादिपर्वभूतानां मासादीनामातिवाहिकत्वं वक्ष्यते; तथापि तन्नानुगतम्; 'दद्भ्यः स्वाहा' 'हनूभ्यां स्वाहे'त्यादिहोमेष्वश्वस्य दन्तहनुशकृन्मूत्रादीनामपि देवतात्वदर्शनादिति भावः। अस्तु हविः प्रति प्राधान्येन निर्देश्यत्वं देवतात्वं, तन्निर्देश एव पर्यायान्तरेण किं न स्यादित्याशङ्क्य सूत्रं योजयन् विधिशब्देनैव निर्देश्यत्वे हेतुमाह—**तत्राग्नेय इतीति। शब्दान्तरेण निर्देशे देवतात्वं न स्यादिति। अयमाशयः**—आग्नेय इति तद्धितेनाग्निरूपा देवता यागाङ्गत्वेन विधीयत इति वक्तव्यम्। अनुष्ठेयमुपकारकं चाङ्गं भवति, न चाग्नीन्द्रादिरूपा देवता यागमध्ये स्वरूपेणानुष्ठातुं शक्याः। न च ऋत्विजामिव देवतानां हस्तादिनोपकारकत्वमस्ति। तस्मात्तद्वाचकशब्दोच्चारणमेव पुरुषस्यानुष्ठेयं स्ववाचकशब्दद्वारैव तासामुपकारकत्वं चेत्यास्थेयम्। तथाचावश्यकत्वादग्न्यादिशब्दानां प्रथमोपस्थितत्वाच्चाग्न्यादिशब्दयुक्तेन यागेनेष्टं भावयेदित्येवाग्नेयादिपदयुक्तविधिवाक्यार्थः। हविस्त्यागकाले यद्वाचकशब्देनोद्देशः क्रियते, तस्य देवतात्वमर्थसिद्धमिति तदेवार्थसिद्धं देवतात्वं तद्धितैरनूद्यते, यथाऽऽग्नेयमष्टाकपालं निर्वपतीति विकृतीष्टिवाक्येऽश्रुतोऽपि द्रव्यदेवतासंबन्धो विधीयते, श्रुतोऽपि निर्वापो न विधीयते, किंतु प्रकृतितः प्राप्तुवन्ननूद्यते। **एतत्सर्वमभिप्रेत्योक्तमाचार्यशबरस्वामिना**—"शब्द एव हविषा संबध्यते तत्संबन्धादर्थो देवता भविष्यतीति"। तस्माच्छब्दान्तरेण निर्देशे विधेयाग्न्यादिशब्दनिर्देशार्थप्राप्यमग्न्यादीनां देवतात्वं न सिध्येदिति 'आदित्यः प्रायणीयश्चरुरि'ति विकृतिविशेषे क्वचिदादित्यदेवताकयागविधायकमिदं वाक्यमाचार्यैर्दृष्टं भविष्यति। ज्योतिष्टोमे तु प्रायणीयचरुरदितिदेवत्यः। क्वचित्कोशे "यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुं निर्वपे"दित्यादित्यचरुवाक्योदाहरणं दृष्टम्। तदपि शाखान्तरस्थमाचार्यैर्दृष्टमित्येवोपपादनीयम्। प्रसिद्धतैत्तिरीयशाखास्थे तु वाक्ये बहुवचनान्तादित्यशब्दस्तद्धितान्तः; आदित्यानेव स्वेन भागधेयेनोपधावतीति वाक्यशेषात्। **सर्वसंमतानुष्ठानविरोधादिति। ननु**—अनुष्ठानविरोधः पूर्वपक्षिणो न दूषणम्; मीमांसानुसार्यनुष्ठानविरोधेनैव हि सर्वत्र पूर्वपक्षः, अन्यथाऽऽग्नेययागएव सर्वसंमतानुष्ठानविरोधादिति वक्तुं शक्ये किं बकबन्धविधिप्रयासेन ? यद्यस्मिन्नधिकरणे पर्यायान्तरेण देवतां निर्दिश्यापि हविःप्रदानमस्त्विति विप्रतिपद्यमानः पूर्वपक्षी सौर्यचरौ निर्वापमन्त्रैः सूर्यायेत्येवानुष्ठानं न कदाप्यादित्यायेत्यनुष्ठानमित्यस्मिन्नंशे विप्रतिपत्तिरहितः स्यात्, तदा सर्वसंमतानुष्ठानविरोधादित्येवं तवापि संमतमनुष्ठानं विरुध्येतेत्येतदर्थतया योजयितुं शक्यम्, न त्वेतदस्ति। विधिशब्दस्य मन्त्रत्व (जै. अ. १० पा. ४ सू. २३)

## वेदान्तकल्पतरुः ।

**दिना** । तदस्यास्तीत्यर्थे हीनिप्रत्ययः स्मर्यते, अस्येति च सर्वनाम, तेन विश्वेदेवपदसन्निहितानां परामर्शान्न शब्दान्यत्व-प्रयुक्तं देवतान्यत्वमित्यर्थः । आमिक्षासंबद्धविश्वदेवोपलक्षणे फलं वक्ष्यतीत्युक्तं, तत्राह—**ततश्चेति** । वाक्येनैवामिक्षा-संबन्धोपजीवनेन वाजिनविधानान्न वाजिनसंबद्धयाऽऽमिक्षया बाधितुं शक्यते; श्रौतात्संबन्धाद्वाक्यीयः संबन्धो दुर्बल इति न्यायादवगन्तव्यम् । स च न्यायो वचनेन बाधिष्यत इत्यभिप्रायः । द्रव्यद्वयेन युक्तमेकं कर्म विधीयत इति यदवा-दिष्म वाजिनामिक्षयोः सहत्याग इति, तदिदमुत्थितम् । एवंच यत् संदेहप्रदर्शनावसरे उक्तं पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयते इति तदापातप्रतिभानमादायाभिहितमिति विश्वेषां देवानामामिक्षासंबन्धस्य श्रौतत्वाद् वाजिनसंबन्धस्य च वाक्यीयत्वात् श्रुतिबलीयस्त्वन्यायमादाय सिद्धान्तयति—**स्यादेतदेवमित्यादिना । ननु** तद्धित आमिक्षाविशिष्टान्वि-

## कल्पतरुपरिमलः ।

इत्येतदधिकरणानन्तरं प्रवृत्ते तथोत्तरस्यां ततौ तत्प्रकृतित्वा (जै. अ. १० पा. ४ सू. २५)दित्यधिकरणे अस्तु प्रकृताविव सौर्यं चरुं निर्वपेदिति विधिविहितायां विकृतावपि हविःप्रदाने सूर्यशब्दनियमः; निर्वापादिनिगमेषु सूर्यायेत्यादिवदादित्या-येत्यादिरपि कदाचिन्निर्देशोऽस्तु; सौर्यं चरुं निर्वपेदित्युत्पत्तिवाक्येन हविःप्रदानमात्रे सूर्यशब्दयोगस्य विहितत्वात्प्रकृतावग्नये जुष्टमित्यादिपाठवत्सौर्यचरौ सूर्याय जुष्टमित्यादिपाठाभावाच्चेत्येव पुनः पूर्वपक्ष इत्युत्थानदर्शनात् । तस्मादनुष्ठानविरोधो-क्तिर्न सङ्गच्छत इति—**चेत्, उच्यते**; अनुष्ठानविरोधादित्यत्रानुष्ठानशब्दः करणव्युत्पत्त्याऽनुष्ठापकविधिपरः । तथाचाय-मर्थः । सौर्यं चरुं निर्वपेदिति वाक्येन सूर्यशब्दप्रयोगश्चरुमात्रे न विधीयते, किंतु प्रयोगान्तर्गताश्च निर्वापादिनिगमा इति तेष्वपि सूर्यपदसिद्धिः । नच—एवं सति प्रकृतौ निर्वापादिनिगमेष्वग्निपदपाठो व्यर्थः स्यात्प्रयोगाङ्गाग्निपदविधानत एव तत्सिद्धेरिति—वाच्यम्; प्रयोगाङ्गाग्निपदनिर्देशस्य प्रयोगान्तर्गतेषु सर्वेषु पदार्थेषु प्रतिपदार्थं प्राप्तौ निर्वापादिषूज्झित्वन्तेषु केषु चिदेवेति तत्परिसंख्यानार्थत्वात् । एवंच यदा सौर्यचरौ सूर्यपदप्रयोगविधानं निर्बाधं निर्वापप्रभृत्यङ्गपर्यन्तमाक्रामति, तदा किमु वक्तव्यमुत्पत्तिपरवाक्येऽग्निपदयोगविधानं प्रधानं हविःप्रदानं न त्यजतीत्येवमुत्तराधिकरणसिद्धान्तस्मारणेनोप-न्यस्ताधिकरणसिद्धान्तदृढीकरणार्थमनुष्ठानविरोधोक्तिरिति न काचिदनुपपत्तिः । **विश्वदेवपदसन्निहितानामिति ।** यद्यप्यन्यत्र तद्धितादिविग्रहवाक्यस्थसर्वनामपरामर्शनीयं येनार्थगतेन रूपेण सन्निहितं तेनापि परामृष्टुं शक्यमिति न सन्निधापकशब्दरूषितत्वेन परामर्शनियमः; तथापि प्रकृते विश्वेषां देवानां शब्दैकगम्यानामनुपस्थितरूपान्तराणां सन्नि-धापकशब्दरूषिततयैवोपस्थितिनियमोऽस्तीति तात्पर्यम् । **स च न्यायो वचनेन बाधिष्यत इति ।** यथा क्षुदितेष्टा-वाग्नेयेन्द्रश्रुतिबलीयस्त्वन्यायः पूर्वदेवतापनयदेवतान्तरसंयोजनवचनेन बाध्यते, एवमत्रापीत्यर्थः । **इति तदिदमुत्थि-तमिति ।** समुच्चितद्रव्यद्वययुक्तमेकं कर्म विधीयत इति टीकावाक्यालोचनया समुत्थितमित्यर्थः । द्रव्यद्वययुक्तैक-कर्मविधिरिति पूर्वपक्षे आमिक्षावाक्यप्राप्तकर्मानुवादेन वाजिनवाक्ये गुणविधिरिति कथं संदेहटीकायामुक्तमित्याकाङ्क्षाया-माह—**एवं चेति । तदापातप्रतिभानमादायेति ।** आपातप्रतिभानमित्येतदापातदर्शिनो विनेयान् प्रत्युक्तम् । **वस्तुतस्तु**—संदेहटीकोक्तमपि विमर्शपूर्वकमेव । **तथाहि**—द्विविधोऽस्मिन्नधिकरणे सिद्धान्तन्यायः प्रवर्तते । उत्प-त्तिवाक्यशिष्टामिक्षावरुद्धे यागे वाक्यान्तरेण वाजिनं निवेशनं न लभत **इत्युत्पत्तिशिष्टबलीयस्त्वन्याय एकः ।** श्रौतामिक्षावरुद्धेषु विश्वेषु देवेषु वाक्येन वाजिनं निवेशनं न लभत इति **श्रुतिबलीयस्त्वन्यायो द्वितीयः । तत्र द्वितीयस्य** टीकायां द्वेधोपमर्दः कृतः । वैश्वदेवीशब्दः श्रुतिर्न भवतीति, श्रुतित्वेऽपि वचनबलादिह श्रुतिबलीयस्त्वन्यायो न प्रवर्तत इति च । **एवमाद्यस्यापि** सिद्धान्तन्यायस्य द्वेधोपमर्दो विवक्षितः । आमिक्षोत्पत्तिशिष्टा न भवतीति उत्पत्तिशि-ष्टत्वेऽपि वचनबलादिहोत्पत्तिशिष्टबलीयस्त्वन्यायो न प्रवर्तत इति च । **अत्र प्रथमः प्रकारः** समसमयेति टीकायां कण्ठत उक्तः । **द्वितीयस्तु** श्रुतिबलीयस्त्वन्यायस्य वचनबलाद्बाधोक्त्यैव न्यायतौल्यादूहितुं शक्यत इति कण्ठतो नोक्तः । दृष्टं ह्यभ्युदयेष्टौ श्रुतिबलीयस्त्वन्यायस्येवोत्पत्तिशिष्टबलीयस्त्वन्यायस्यापि पूर्वदेवतापनयदेवतान्तरसंयोजनवचनबलाद्बाधनम् । एवमुत्पत्तिशिष्टबलीयस्त्वन्यायबाधने पूर्वकर्मानुवादेन वाजिनमात्रगुणविधिरिति संदेहटीकोक्तप्रकारोऽपि संगच्छते । वाक्याभ्यां द्रव्यद्वययुक्तमेकं कर्म विधीयतइति पूर्वपक्षोपसंहारटीकाऽपि पक्षद्वयसाधारण्येन योजयितुं शक्या । प्रथम-वाक्येनैकगुणविशिष्टतयोत्पन्नं कर्मानूद्य द्वितीयवाक्येन गुणान्तरविधिरिति पक्षेऽपि हि वाक्यद्वयेनैकं कर्म गुणद्वययुक्तं सिध्यति, न त्वेकवाक्येन, वैश्वदेवीत्यस्य श्रुतित्वोपपादनार्थं प्रवृत्तेः । स्यादेतदेवमित्यादिसिद्धान्तटीकाग्रन्थोपसंहारे तद्धि-तश्रुत्यवगतामिक्षालक्षणगुणावरोधात्पूर्वकर्मसंयोगि वाजिनद्रव्यं स्वसंबन्धिकर्म पूर्वस्माद्भिनत्तीति वाक्यमपि प्रथमवाक्य-विहितं कर्मानूद्य द्वितीयवाक्येन गुणमात्रविधानमिति पूर्वपक्षानुमितिं सूचयति । अन्यथाहि श्रौतामिक्षावरुद्धानां विश्वेषां देवानां वाक्यप्रमाणकवाजिनसंबन्धासंभवाद् युगपद् द्रव्यद्वययुक्तविश्वदेवदेवतैकयागविधिर्न संभवतीति वक्तव्यं स्यात् । तस्मात्संदेहटीकायां पूर्वपक्षशरीरोपन्यासोऽपि विमर्शपूर्वक एव । **श्रुतिबलीयस्त्वन्यायमादाय सिद्धान्तयतीति ।**

## भामती।

शब्देन चोदना तेनैवोद्देशो देवतात्वं न शब्दान्तरेणान्यथाऽर्थैकत्वेन सूर्यादित्यपदयोः सूर्यादित्यचर्वोरेकदैवत्यप्रसङ्गात्; तथापि वाजिन्नितीनेः सर्वनामार्थे स्मरणात् संनिहितस्य च सर्वनामार्थत्वात्, विश्वेषां देवानां च विश्वदेवपदेन संनिधापनात्तत्पदपुरःसरा एवैते वाजिपदेनोपस्थाप्या न तु सूर्यादित्यपदवत्स्वतन्त्राः। तथाच तदुपलक्षणार्थं वाजिपदं विश्वदेवोपहितामेव देवतामुपलक्षयतीति न शब्दान्तराद्देवताभेदः। ततश्चामिक्षासंबन्धोपजीवनेन विश्वेभ्यो वाजिनं विधीयमानं नामिक्षया बाध्यते, किंतु तया सह समुच्चीयत इति न कर्मान्तरमपितु वाक्याभ्यां द्रव्ययुक्तमेकं कर्म विधीयत इति प्राप्त उच्यते—स्यादेतदेवं यदि वैश्वदेवीति तद्धितश्रुत्यामिक्षा नोच्येत। तद्धितस्यत्वस्येति सर्वनामार्थे स्मरणात् संनिहितस्य च विशेष्यस्य सर्वनामार्थत्वात्तत्रैव तद्धितस्यापि वृत्तिर्नतु विश्वेषु देवेषु। न तत्संबन्धे, नापि तत्संबन्धिमात्रे। नन्वेवं सति कस्माद्वैश्वदेवीशब्दमात्रादेव नामिक्षां प्रतीमः? किमिति चामिक्षापदमपेक्षामहे? तद्धितान्तस्य पदस्याभिधानापर्यवसानान्न प्रतीमस्तत्पर्यवसानाय चापेक्षामहे। अवसिताभिधानं हि पदं समर्थमर्थधियमाधातुम्। इदं तु संनिहितविशेषाभिधायि तत्संनिधिमपेक्षमाणं संनिधापकमामिक्षापदमपेक्षत इति कुत आमिक्षापदानपेक्ष आमिक्षाप्रत्ययप्रसङ्गः? कुतो वा तत्रानपेक्षा? अतश्च सत्यामपि पदान्तरापेक्षायां यत् पदं पदान्तरापेक्षमभिधत्ते तत्प्रमाणभूतप्रथमभाविपदावगम्यत्वाच्छ्रौतं बलीयश्च। यत्तु पर्यवसिताभिधानपदाभिहितपदार्थावगमगम्यं, तत्तचरमप्रतीतवाक्यगम्यं दुर्बलं चेति तद्धितश्रुत्यवगतामिक्षालक्षणगुणावरोधात्पूर्वकर्मासंयोगि वाजिनद्रव्यं ससंबन्धि पूर्वस्माद्भिनत्ति। एवंच सति

## वेदान्तकल्पतरुः।

श्वान्देवानभिधत्ताम्, अथवा तेषामामिक्षासंबन्धमभिवदतु, यद्वा विश्वेषां देवानां यत्संबन्धिमात्रं तद्वा वक्तु, तथाच कुतोऽस्यामिक्षावाचकत्वमत आह—**ननु विश्वेषु देवेष्वित्यादिना**। अत्र सर्वत्र हेतुरुक्त एव सन्निहितविशेषस्य सर्वनामार्थत्वादिति। अथ यदुक्तं वैश्वदेवीपदादामिक्षाप्रतीतावामिक्षापदवैयर्थ्यमिति, तदनुभाषते—**नन्वेवं सतीति**। उत्तरमाह—**तद्धितान्तस्येति**। नात्र वैश्वदेवीपद एकस्मिन्नर्थे पर्यवसिते आमिक्षापदेन चापरस्मिन्नभिहिते तयोर्वैशिष्ट्यं पदद्वयसमभिव्याहारादवगम्यते, किंतुनाम संनिहितावलम्बिनः सर्वनाम्नोऽर्थः क इत्यज्ञायमान आमिक्षापदेन समर्प्यते, अतश्च यथाऽयं घट इत्युक्तेऽयमिति पदस्य संनिहितावलम्बिनो विषयसंनिधापकप्रत्यक्षापेक्षायामपि न श्रुतित्वहानिरित्येवं तद्धितस्यापीत्यर्थः। एतदेव स्फुटीकरोति—**अवसिताभिधानं हीति**। अवसिताभिधानत्वं नाम परिपूर्णविषयलाभः। द्वयं हि सर्वत्रापाद्यमभिमतविघातोऽनभिमतप्रसरश्चेति। तत्रानभिमतप्रसरं वारयति—**कुत आमिक्षापदानपेक्ष इति**। अभिमतविघातोऽपि नास्तीत्याह—**कुतो वेति**। नन्वेवमामिक्षापदसापेक्षवैश्वदेवीपदादामिक्षासंबन्धो विश्वेषां देवानां गम्यते, तर्हि द्वे अपि पदे मिलित्वा प्रमाणं स्यात्, तथा च वाक्यत्वम्। अथ सत्यामप्यामिक्षापदापेक्षायां वैश्वदेवीपदमेव तत्र प्रमाणं, तर्ह्यामिक्षापदमेव किं न स्यादत आह—**अतश्चेति**। यदिति द्वितीयान्तः शब्दः पदमिति च प्रथमान्तः। आमिक्षेत्युक्ते हि न क्वाप्यपेक्षाऽवभासते, वैश्वदेवीत्युक्तेऽस्ति कासावित्यपेक्षा, अतो वैश्वदेवीपदमेव साकाङ्क्षमर्थमभिदधत् प्रमाणम्, आमिक्षापदं तु तदीयार्थाभिधानकथंभावाकाङ्क्षापरिपूरकमितिकर्तव्यभावमनुभवतीति विनिगमकहेतुबलाद् वैश्वदेवीपदमेव प्रमाणम्। ततश्च श्रुतित्वाद्वाक्यापेक्षया तत् प्रथमभावि, ततः पदान्तरापेक्षं वैश्वदेवीपदं यदामिक्षाविश्वदेवसंबन्धरूपं वस्त्वभिधत्ते, तदुक्तप्रकारेण प्रमाणभूतप्रथमभाविवैश्वदेवीपदावगम्यत्वात् श्रौतं, ततश्च बलवदित्यर्थः। एतत्प्रकारवैपरीत्यं वाजिनविश्वदेवसंबन्धे दर्शयँस्तस्य वाक्यीयतामाह—**यत्त्विति**। वाजिभ्य इति वाजिनमिति च पदे पर्यवसिताभिधाने। यद्यपि वाजिपदं वैश्वदेवसापेक्षम्; तथापि न वाजिनपदापेक्षम्। ततश्च पर्यवसिताभिधानाभ्यां पदाभ्यां यावभिहितौ पदार्थौ वाजिवाजिनरूपौ तदवगम्यं यद्विश्वदेववाजिनसंबन्धरूपं वस्तु तदामिक्षाविश्वदेवसंबन्धाच्चरमभावि, अतो वाक्यगम्यत्वेन दुर्बलमित्यर्थः। कर्मान्तरविधौ हेत्वन्तरमाह—**एवं चेति**। पूर्वपक्षे हि विकल्पः समुच्चयो वा वक्तव्यः, सचायुक्तः; नित्यवदवगतसाधनभावाया आमिक्षाया

## कल्पतरुपरिमलः।

श्रुतिबलीयस्त्वमङ्गीकृत्य विश्वदेवामिक्षासंबन्धे वैश्वदेवीशब्दस्य श्रुतित्वं नास्तीति विवादेन पूर्वपक्षे तस्य तत्र श्रुतित्वोपपादनम्। तस्य श्रुतित्वमङ्गीकृत्य श्रुतिबलीयस्त्वन्यायः प्रकृते न प्रवर्ततइति विवादेन पूर्वपक्षे तत्प्रत्युपपादनं चेत्युभयमप्यत्र विवक्षितम्। आमिक्षाविशिष्टानिति, आमिक्षासंबन्धमिति च वस्तुवृत्तकथनं, न त्वामिक्षाया अप्यभिधेयकोटिनिवेशाभिप्रायम्। एवं च सति कुतोऽस्यामिक्षावाचकत्वमित्याचार्यग्रन्थो न तु विश्वेषु देवेषु न तत्संबन्धेनापि तत्संबन्धिमात्रइति टीकाग्रन्थश्च न संगच्छते। कुत आमिक्षापदानपेक्षप्रत्ययप्रसङ्गः कुतो वा तत्रानपेक्षेति वाक्ययोः पौनरुक्त्यशङ्कां परिहरति—**द्वयं हि सर्वत्रापाद्यमिति। यदिति द्वितीयान्तः शब्द इति**। स च पदाभिधेयवस्तुपर

**हितेषु विज्ञानेष्वन्यदन्यन्नाम तैत्तिरीयकं वाजसनेयकं कौथुमकं शाट्यायनकमित्येवमादि । तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धो वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्येवमादिषु । अस्ति चात्र रूपभेदः । तद्यथा—केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्त्यपरे पुनः पञ्चैव पठन्ति । तथा प्राणसंवादादिषु केचिदूनान्वागादीनामनन्ति केचिदधिकान् । तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक आशङ्कितः कारीर्यादिषु । अस्ति चात्र धर्मविशेषः । यथाथर्वणिकानां शिरोव्रतमिति ।**

## भामती ।

नित्यवदवगतानपेक्षसाधनभावामिक्षा न वाजिनद्रव्येण सह विकल्पसमुच्चयौ प्राप्स्यति । न चाश्वत्वे निरूढत्वादनपेक्षवृत्ति वाजिपदं कथंचिद्यौगिकं सापेक्षवृत्तिविश्वदेवशब्दां देवतां वैश्वदेवीपदादामिक्षाद्रव्यं प्रत्युपसर्जनीभूतामवगतामुपलक्षयिष्यति ? प्रकृतं हि सर्वनामपदगोचरः । प्रधानं च प्रकृतमुच्यते नोपसर्जनम् । प्रामाणिके च विधिकल्पनागौरवे अभ्युपेतव्ये एव; प्रमाणस्य तत्त्वविषयत्वात् । तस्माद्यथेह पूर्वकर्मासंभविनो गुणात्कर्मभेद एवमिहापि पञ्चाग्निविद्यायाः षडग्निविद्या भिन्ना, एवं प्राणसंवादेषूनाधिकभावेन विद्याभेद इति । **तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपा-**

## वेदान्तकल्पतरुः ।

विकल्पायोगात्, अनपेक्षावगतसाधनभावायाश्च तस्याः समुच्चयायोगादित्यर्थः । नित्यमेवेति वक्तव्ये मृदूक्त्या वतिप्रयोगः । यत्तूक्तं वचनेनैव श्रुतिबलीयस्त्वन्याय ( जै. सू. अ. ३ पा. ३ सू. १४ ) बाध इति तत्राह—**न चाश्वत्वे इति ।** विश्वे देवा इत्ययं शब्दो यस्याः सा तथोक्ता तां वैश्वदेवशब्दाम् । द्रव्यवचनादामिक्षाद्रव्यं प्रत्युपसर्जनभूतामवगतामेवं सति कर्मान्तरविधिपक्षे नोपलक्षयिष्यति उपलक्षणे हि नोपसर्जनन्यायबाधः स्यादित्यर्थः । **ननू**पसर्जनभूता अपि विश्वे देवा वाजिन इति तद्धितान्तवर्तिसर्वनाम्ना परामृश्यन्तां, सर्वनाम्नः संनिहितगोचरत्वादत आह—**प्रकृतं हीति ।** यत्तु कर्मान्तरविधिपक्षे विधिगौरवमपूर्वकल्पनागौरवं चेति, तत्राह—**प्रामाणिके चेति । तत्त्वविषयत्वाद्** यथार्थवि-

## कल्पतरुपरिमलः ।

इत्यग्रे स्फुटीभविष्यति । **अनपेक्षावगतसाधनभावाया इति ।** वैश्वदेवीति तद्धितेनामिक्षा द्रव्यान्तरानपेक्षा हविरवगम्यते, तत्सापेक्षाया हविष्ट्वे सामर्थ्याभावेन तद्धितानुत्पत्तिप्रसङ्गादिति भावः । एवंच यदा श्रुतिबलीयस्त्वन्यायस्य द्रव्यद्वयसमुच्चयप्रापकेण वचनेन बाधः पूर्वपक्षिणोक्तः, तदा न केवलया श्रुत्या वाक्यस्य बाधाभावमात्रं, किं तु निरवकाशदेवतातद्धितश्रुतिबाधोऽपि स्यादित्यतो वाक्यस्यैव स्वतो दुर्बलस्य सावकाशस्य द्रव्यदेवताविशिष्टकर्मान्तरविधायकत्वकल्पनं युक्तमिति । एवं समुच्चयपक्षे दोषं दृष्ट्वा वचनबलेन प्राप्यमाणं वाजिनं निरपेक्षसाधनभावसमर्पकतद्धितश्रुतिबाधपरिहाराय विकल्पेनान्वयं लभतामिति पूर्वपक्षी ब्रूयादित्यभिप्रायेण शङ्कितो विकल्पपक्षोऽपि निराकृतः । **मृदूक्त्या वतिप्रयोग इति ।** कुपितत्वेनावगतेऽपि राज्ञि त्वं कुपित इव वर्तसे इत्युक्तिरिव नित्यत्वेनावगते नित्यवदित्युक्तिर्मृदूक्तिरिति भावः । स्यादेतद्वाक्यम्, यागान्तरविधानेनैव तद्धितश्रुतिसंबन्धसामान्यमक्षतम्, अग्नीषोमीयपुरोडाशस्येवामिना । एवं च विशिष्टविधिकर्मान्तरापूर्वान्तरकल्पनागौरवपरिहाराय तद्धितश्रुतेरेव संबन्धसामान्यरूपावकाशान्तरकल्पनं युक्तम् । न चैवं सति देवताया अलाभप्रसङ्गः; देवतापेक्षायां क्लृप्तहविरेकदेशसंबन्धानां बुद्धिस्थानां विश्वेषां देवानां देवतात्वकल्पनोपपत्तेरित्याशङ्कोत्तरत्वेन नचाश्व इत्यादिग्रन्थमवतारयति—**यत्तूक्तं वचनेनैवेति ।** क्लृप्तो योगः कल्प्यमानां रूढिमिवाबुद्धिस्थरूढिं बुद्धिस्थयोगो बाधत इति शङ्कापरिहारार्थं टीकायां प्रधानं यत्तत्प्रकृतं तदेव सर्वनाम परामृशति नोपसर्जनमिति नोपसर्जनन्यायो दर्शितस्तं विवृणोति—**वैश्वदेवशब्दामिति ।** उपसर्जनीभूतामित्यस्य नोपलक्षयिष्यतीत्यस्य च मध्ये एवं सति कर्मान्तरविधिपक्षइति पदान्याकरग्रन्थेषु दृश्यन्ते, तान्यत्र नान्वितानि । हेत्वन्तरमाहेति प्रागवतारिते एवं च सतीति टीकाग्रन्थे चकारः किंचेत्यर्थो हेत्वन्तरमाहेत्युक्त्या विवृतः । एवं सतीत्यंशे विवरणीये स्थिते तद्विवरणार्थानि तत्रैव प्रतीकोपादानानन्तरं लेखनीयानि व्यत्यस्तकाकुपदजनितभ्रान्तिभिर्लेखकैरिह प्रमादाल्लिखितानि । **यद्वा**—तत्र व्याख्यातव्य एव सन्नेवं सतीत्यंश इहाकृष्य व्याख्यातः । न चाश्वेत्व इत्यादौ नोपलक्षयिष्यतीत्यन्ते द्वितीयवाक्येऽप्यनुवृत्तिसूचनाय तत्रैव व्याख्याने एवं सति विकल्पसमुच्चयो न प्राप्स्यते इति प्रथमवाक्य एवान्वयः प्रतीयेत, एवं सति नोपलक्षयिष्यतीति द्वितीयवाक्येऽपि विवक्षितस्तदन्वयो न प्रतीयते । **ननु** नोपसर्जनन्यायो न सर्वनाम्ना परामर्शे प्रवर्तते; "अथ शब्दानुशासनं केषां शब्दाना"मिति महाभाष्यदर्शनात्, सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्येति वामनसूत्राच्चेत्यभिप्रेत्याशङ्कते—**ननूपसर्जनभूता अपीति ।** सर्वनामश्रवणे तेनोपसर्जनस्यापि परामर्शो भवति, नचेह वाजिपदे सर्वनामपदश्रवणमस्ति, किं तु तद्धितान्तविग्रहवाक्ययोरैकार्थ्यनियमात् तत्र विग्रहवाक्यस्थसर्वनामानुप्रवेशमात्रम् । न चात्र तद्धितान्तत्वमपि निश्चितमस्ति; बुद्धिस्थविषयादपि क्लिष्टयोगादक्लिष्टरूढेरेव न्याय्यत्वात् । **प्रामाणिके**

**एवं पुनरुक्त्यादयोऽपि भेदहेतवो यथासंभवं वेदान्तान्तरेषु योजयितव्याः। तस्मात्प्रतिवे-**

## भामती।

**दक इति।** **तथाहि**—कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नाचरन्त्यन्ये। तथाग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भमाहरन्ति नाहरन्त्यन्ये। तथाश्वमेधमधीयानाः केचिदश्वस्य घासमानयन्ति नानयन्त्यन्ये। केचित्त्वाचरन्त्यन्यमेव धर्मम्। नच तान्येव कर्माणि भूमिभोजनादिजनितमुपकारमाकाङ्क्षन्ति नाकाङ्क्षन्ति चेति युज्यते। अतोऽवगम्यते भिन्नानि तासु तासु शाखासु कर्माणीति। अस्तु, प्रस्तुते किमायातमित्यत आह—**अस्ति चात्रेति।** अन्येषां शाखिनां नास्तीति शेषः।

**एवं पुनरुक्त्यादयोऽपीति।** 'समिधो यजति' इत्यादिषु पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः। तत्र किमेका कर्मभावना किंवा पञ्चैवेति। किं तावत्प्राप्तम्? धात्वर्थानुबन्धभेदेन शब्दान्तराधिकरणे भावनाभेदाभिधानाद्धात्वर्थस्य च धातुभेदमन्तरेण भेदानुपपत्तेः 'समिधो यजति' इति प्रथमभाविना वाक्येन विहिता कर्मभावना विपरिवर्तमानोपरितनैर्वाक्यैरनूद्यते। नच प्रयोजनाभावादननुवादः; प्रमाणसिद्धस्याप्रयोजनस्याननुयोज्यत्वात्। कर्मभावनाभेदे चानेकापूर्वकल्पनाप्रसङ्गादेकापूर्वावान्तरव्यापारमेकं कर्मेति प्राप्तम्। एवं प्राप्त उच्यते—परस्परानपेक्षाणि हि समिदादिवाक्या-

## वेदान्तकल्पतरुः।

षयत्वात्। एवं गुणात्कर्मभेदे व्यवस्थितमुदाहरणं दृष्टान्तमुक्त्वाऽत्रत्यपूर्वपक्षे गुणाज्ज्ञानभेदं दार्ष्टान्तिकमाह—**एवमिहापीति॥** **अस्ति चात्रेति।** भाष्येऽन्येषां शाखिनां शिरोव्रतस्यासत्त्वं नोक्तमतोऽध्याहरति—**अन्येषामिति।** शिरस्यङ्गारपात्रधारणं **शिरोव्रतम्।**

अभ्यासाधिकरणस्य (जै. सू. अ. २ पा. २ सू. २) शब्दान्तराधिकरणेन प्रत्युदाहरणलक्षणां सङ्गतिमाह—**धात्वर्थानुबन्धेनेति।** शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्। (जै. सू. अ. २ पा. २ सू. २) यजति ददाति जुहोति इत्यत्र किं यजत्यादय एकां भावनां विशिंषन्ति, उत प्रतिधात्वर्थं भावनाभेद इति संदेहे भावनायाः प्रत्ययार्थस्य प्रधानत्वात्तस्मिन् गुणभूतधात्वर्थानां समुच्चय इत्येकभावनाविशेषकत्वेन प्राप्ते राद्धान्तः—नियमेन धातुप्रत्यययोरन्विताभिधायित्वात् प्रत्ययस्य च 'धातो'रिति सूत्रेण विवक्षितैकवचनेनैकस्मादेव धातोर्विधानादेकधात्वर्थानुरक्ता भावनाऽभिहिता, सा न धात्वर्थान्तरेण संबध्यते; तत्संबन्धस्योत्पत्तिशिष्टत्वात्। यत्र पदान्तरोपात्तं प्रधानं तत्र भवति गुणानां समुच्चयः क्रये इवारुण्यादीनाम्। तस्मादपुनरुक्तधात्वात्मकशब्दान्तरे **कर्मभेदो** भावनाभेदः **कृतानुबन्धत्वा**दुत्पत्त्यैव कृतधात्वर्थसंबन्धत्वाद्भावनाया इत्यर्थः। धात्वर्थ एवानुबन्धोऽवच्छेदकः। **ननु** समिधो यजतीत्यादावेकभावनाविधाने एकत्र विधिरपरत्रानुवाद इति वक्तव्यं, तत्र को विधिरिति न ज्ञायतेऽत आह—**प्रथमभाविना वाक्येनेति।** विपरिवर्तमाना बुद्धाविति शेषः। ततश्च प्रत्यभिज्ञायमानेत्यर्थः। विध्यनुवादाविनिगमेन सिद्धान्तमाह—**परस्परानपेक्षाणीति।**

## कल्पतरुपरिमलः।

**चेतीति।** तद्धितस्य हविर्देवताभावसंबन्धरूपविशेषविषयत्वं परित्यज्य किंचिद्विशेषपर्यवसानसापेक्षसंबन्धसामान्यविषयत्वकल्पनेनापि तत्प्रतिपत्तिगौरवमप्रामाणिकम्; विशेषपर्यवसानलम्भकाभावात्। नच—यागस्य देवतापेक्षया श्रुतहविरेकदेशसंबन्धानां विश्वेषां देवानां देवतात्वकल्पनया संबन्धविशेषपर्यवसानं स्यादिति—वाच्यम्; देवतापेक्षस्य यागस्य श्रवणाभावात्, तद्धितस्य संबन्धसामान्यविषयत्वे च यागकल्पकस्य द्रव्यदेवतासंबन्धस्य प्रागनुपस्थितेः, विशिष्टविध्यादिकल्पनागौरवं तु प्रामाणिकम्; "पर्यग्निकृतं पात्नीवतमुत्सृजति" "आज्येन शेषं संस्थापयती"त्यादिषु दर्शनादिति भावः॥

**एकां भावनां विशिंषन्तीति।** अपूर्वरूपफलैक्योपाधिकं भावनैक्यं, न तत्स्वरूपैक्यम्; प्रयत्नव्यक्तीनां बहुत्वाद्गुणभूतधात्वर्थानां समुच्चय इति क्रय इवारुणिमादीनामिति भावः। **एकस्मादेव धातोर्विधानादिति।** यद्यप्युदाहृतेषु यजत्यादिषु बहुभ्यो धातुभ्य एकः प्रत्यय इति शङ्का न प्रवर्तते, बहुधात्वश्रवणात्; तथापि बदरामलकबिल्वा इति बहुभ्यो नामभ्यः सुप इव बहुभ्यो धातुभ्यस्तिङ उत्पत्तिरन्यत्रापि नास्तीति दर्शयितुमिदमुक्तम्। एकधात्वर्थानुरक्ता भावना न धात्वर्थान्तरेण संबध्यत इति सामान्यतः खल्वग्रे साध्यं निर्दिश्यते। **ननु—परस्परापेक्षाणामेकवाक्यत्वे हि स प्रयोजकः स्यादिति टीकाग्रन्थो** वैदिकशब्दानां बोधकतायां पाठक्रमस्याप्रयोजकत्वे कथमुपक्रमोपसंहारयोरुपक्रमप्राबल्यव्यवस्था सिध्येदित्याशङ्कानिराकरणार्थत्वेन व्याख्यातुमुचितः। तथा व्याख्याने हि यत्रैकवाक्यता तत्र पाठक्रमः प्रथमचरमभावे नियामक इत्युपक्रमोपसंहारव्यवस्थासिद्धिः। यत्र नैकवाक्यत्वं तत्र बोधकतायां पाठक्रमो न नियामक इति वैषम्यकथनेन परिहारसिद्धेः, पाठक्रमस्य प्रयाजानामनुष्ठानक्रमे इव प्रयाजवाक्यानां बोधनक्रमेऽपि नियामकत्वं स्यादिति शङ्कानिराकरणार्थत्वेन व्याख्यानं तु न युक्तम्; तदा हि प्रयाजवैषम्यं प्रयाजवाक्येषु दर्शनीयम्।

## भामती।

नीति। सर्वाण्येव प्राथम्यार्हाण्यपि युगपदध्ययनानुपपत्तेः क्रमेणाधीतानीति। न त्वयमेषां प्रयोजकः क्रमः। परस्परापेक्षाणामेकवाक्यत्वे हि स प्रयोजकः स्यात्। तेन प्राथम्याभावात् प्राप्तमित्येव नास्तीति कस्य कोऽनुवादः ? कथंचिद्विपरिवृत्तिमात्रस्यौत्सर्गिकाप्रवृत्तप्रवर्तनालक्षणविधित्वापवादसामर्थ्याभावात्। गुणश्रवणे हि गुणविशिष्टकर्मविधाने विधिगौरवभिया गुणमात्रविधानलाघवाय कर्मानुवादापेक्षायां विपरिवृत्तेरुपकारः। यथा 'दध्ना जुहोति' इति दधिविधिपरे वाक्ये विपरिवृत्त्यपेक्षायाम् 'अग्निहोत्रं जुहोति' इति विहितस्य होमस्य विपरिवर्तमानस्यानुवादः। न चात्र गुणाद्भेदः; समिदादिपदानां कर्मनामधेयानां गुणवचनत्वाभावात्। अगृह्यमाणविशेषतया च किंवचनविहितकिंकर्मानुवादेन कस्य गुणविधित्वमिति न विनिगम्यते। न चापूर्वं नाम ज्योतिरादिवद्विधानासंबद्धं प्रथममवगतम्,

## वेदान्तकल्पतरुः।

एषां बोधकत्वे क्रमो न प्रयोजक इत्यर्थः। **ननु** पाठक्रमानादरणे कथं प्रयाजादीनां पाठानुष्ठानक्रमसिद्धिस्तत्राह—**परस्परापेक्षाणामिति।** प्रयाजा ह्येकं करणोपकारं कुर्वन्तीति परस्परापेक्षाः। अतस्तेषामेककरणोपकारजनकतया एकवाक्यत्वे संभूयकारित्वे सति पाठक्रमोऽनुष्ठाने प्रयोजकः स्यादित्यर्थः। तद्वाक्यानि स्वार्थबोधने परस्परं नापेक्षन्ते इति न क्रमापेक्षा। यत एकत्वं पाठक्रमान्नियम्येतेत्यर्थः। **ननु** धात्वैक्यादितरेतरत्र च प्रत्यभिज्ञानमुक्तमत आह—**कथंचिदिति।** समिदादिनामभिः कर्मभेदप्रतीतेः प्रत्यभिज्ञैव नास्तीति कथंचिदित्युक्तम्। आख्यातस्य हि सर्वत्र विधित्वमुत्सर्गः, स च बलवदपवादकेन बाधनीयः। न च इहैतदस्तीत्यर्थः। किं तद्बलवदपवादकं ? तदाह—**गुणश्रवणे हीति।** यत्र हि वाक्ये गुणः श्रूयते तत्र गुणविशिष्टकर्मविधाने विशेषणं विशेष्यं च विधातव्यं, तदा विधिगौरवं स्यात्। तत्र हि गुणमात्रविधानप्रयुक्तलाघवाय विधिना विशेष्यकर्मणोऽनुवादोऽपेक्ष्यते, तदपेक्षायां बुद्धिसन्निधानस्योपकार इत्यर्थः। उदाहरति—**यथेति। ननु** समिदादिवाक्यं नाभ्यासात् कर्मभेदे उदाहरणं, समिदादिगुणाद्भेदप्रतीतेरत आह—**न चात्रेति।** समिधोऽग्नआज्यस्य व्यन्त्वित्यादिमन्त्रैरेव समिदादिदेवतासंबन्धसिद्धेस्तत्प्रख्यशास्त्रैः (जै. सू. अ. १ पा. ४ सू ४) समिदादीनि नामधेयानीत्यर्थः। अङ्गीकृत्य गुणवचनत्वमाह—**अगृह्यमाणेति।** केन वचनेन विहितमिति किंवचनविहितम्। किंवचनविहितं च तत् किंकर्म चेति किंवचनविहितकिंकर्म। तदनुवादेन कस्य वाक्यस्य गुणविधित्वमिति न विनिगम्यते इत्यर्थः। न चाग्नेयादिकर्मसु गुणविधिः; तेषामुत्पत्तिशिष्टाग्न्याद्यविरोधादिति। यदि नामधेयानि समिदादीनि,

## कल्पतरुपरिमलः।

प्रयाजाः सर्वेऽप्यखण्डोपकाररूपं स्वप्रयोजनं परस्परापेक्षया संभूय कुर्वन्तीति तेषां मेलनार्थं युगपदनुष्ठानप्रसक्तौ एकेन कर्त्रा बहूनां युगपदनुष्ठातुमशक्यतया क्रमापेक्षायां पाठक्रमस्तन्नियामक इष्यते। न च प्रयाजवाक्यानाम् अर्थबोधनरूपं स्वप्रयोजनं जनयितुं परस्परापेक्षा संभूयकारित्वपरतया नीयत इत्यपरः क्लेशः। तस्मादिदं व्याख्यानं न युक्तमिति—**चेत्, उच्यते;** इह पाठक्रमानादरे उपक्रमोपसंहारवैषम्यं प्रयाजादियागवैषम्यं चेत्युभयमपि परस्परापेक्षाणामिति टीकाग्रन्थेनैव तन्त्रेण प्रदर्श्यत इत्यभिप्रेत्य तत्राद्यवैषम्यप्रदर्शनपरतया योजनं स्फुटमित्यपहायाऽस्फुटं द्वितीयवैषम्यपरतया योजनमाचार्यैः प्रदर्शितमिति न दोषः। **नन्व**ध्ययनमात्रवत (व्या. सू. अ. ३ पा. ४ सू. १२) इति सूत्रे भाष्यादिष्वध्ययनविधेरर्थावबोधफलकत्वमङ्गीकृतम्। अर्थावबोधः स्तोभाक्षरादिष्वव्याप्त इति तत्फलं जपपारायणाद्यनुगमेनाधीतेन स्वाध्यायेन यद्भावयितुं शक्यं तत्फलकोऽध्ययनविधिरिति तदुपपादनीयम्। स्वाध्यायशब्दार्थश्च क्रमविशेषविशिष्टवर्णराशिरित्यध्ययनगृहीतेन विशेष्यांशेन वर्णराशिनेव विशेषणांशेन क्रमेण यद्भावयितुं शक्यं तदप्यध्ययनफलत्वेन संगृहीतं भवति। तथा च यथा विधिपाठक्रमस्य प्रयाजाद्यनुष्ठानक्रमः फलं, मन्त्रपाठक्रमस्याऽऽग्नेयाग्नीषोमीययागक्रमः फलम्, उपक्रमोपसंहारपाठक्रमस्योपक्रमप्राबल्येन वारुणेष्ट्यश्वदात्रोः शेषशेषिभावः फलं, काम्येष्टीनां काम्येष्टियाज्यानुवाक्यानां च पाठक्रमस्येष्टिविशेषाणां मन्त्रविशेषाणां च शेषशेषिभावः फलम् एवं समिदादिवाक्यानां पाठक्रमस्य तेषां विध्यनुवादभावः फलं भवन्न निवार्यतामित्याशङ्कापरिहारार्थमिह पाठक्रमादरेऽपि विध्यनुवादविशेषो न सिध्यतीति प्रदर्शनाय प्रवृत्तं कथंचिदित्यादिटीकाग्रन्थमवतारयति—**ननु धात्वैक्यादिति। प्रत्यभिज्ञानमुक्तमिति।** प्रत्यभिज्ञया यागैक्ये सत्येकस्मिन् यागे विधिद्वयानपेक्षणादेको विधिरन्योऽनुवाद इति विशेषनिर्णयः पाठक्रमेण सिध्यतीति भावः। **आख्यातस्य हीति।** वैदिकस्य लिङाद्याख्यातस्याप्रवृत्तप्रवर्तकत्वमुत्सर्गः, शासनादेव हि तच्छास्त्रं भवेदिति भावः। किं **तद्बलवदपवादकमिति।** सन्निधिकृतमैक्यप्रत्यभिज्ञानमात्रं विधिश्रुतिस्वभावस्यापवादकं भवितुं नार्हतीति भावः। **तदपेक्षायामिति।** तथा च विधिश्रुत्यपेक्षितानुवादकत्वसिद्ध्यर्थं धात्वर्थस्य पूर्ववाक्यतः प्राप्तिं समर्पयन् सन्निधिर्विधिश्रुतेरनुग्राहको नोपमर्दकः, इह तु गुणश्रवणाभावादनुवादत्वं नापेक्षितमिति विधिश्रुतिः सन्निधिं बाधत इति भावः। **यदि नामधेयानीति।**

दान्तं विज्ञानभेद इति। एवं प्राप्ते ब्रूमः—सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन्वेदान्ते तानि तान्येव भवितुमर्हन्ति। कुतः? चोदनाद्यविशेषात्। आदिग्रहणेन शाखान्तराधिकरण-सिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते। संयोगरूपचोदनाख्याविशेषादित्यर्थः। यथैकस्मि-न्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नस्तादृश एव चोद्यते जुहुयादिति; एवम् 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' (बृ० ६।१।१ छा० ५।१।१) इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना। प्रयोजनसंयोगोऽप्यविशिष्ट एव 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' (बृ० ६।१।१) इति। रूपम-प्युभयत्र तदेव विज्ञानस्य यदुत ज्येष्ठश्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वम्। यथाच द्रव्यदे-वते यागस्य रूपमेवं विज्ञेयं रूपं विज्ञानस्य तेन हि तद्रूप्यते। समाख्याऽपि सैव प्राणविद्येति। तस्मात्सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम्। एवं पञ्चाग्निविद्या वैश्वानरविद्या शाण्डिल्यविद्येत्ये-वमादिषु योजयितव्यम्। ये तु नामरूपादयो भेदहेत्वाभासास्ते प्रथम एव काण्डे 'न नाम्ना स्यादचोदनाभिधानत्वात्' इत्यारभ्य परिहृताः ॥ १ ॥ इहापि कंचिद्विशेषमाशङ्क्य परिहरति—

## भामती।

यतः पूर्वबुद्धिविच्छेदेन विधीयमानं कर्म पूर्वस्मात्संज्ञातो व्यवच्छिन्द्यात्, किंतु प्रथमत एव कर्मसामानाधिकरण्येना-वगताः समिदादयस्तद्वशात्कर्मनामधेयतां प्रतिपद्यमाना आख्यातस्यानुवादत्वेऽनुवादा विधित्वे विधयो ननु स्वात-न्त्र्येण कस्यचिदीशते। तस्मात् स्वरससिद्धाप्राप्तकर्मविधिपरत्वात्कर्मण्ययमभ्यासो भावनानुबन्धभूतानि भिन्दानो भावनां भिनत्ति यथा, तथा शाखान्तरविहिता अपि विद्याः शाखान्तरविहिताभ्यो विद्याभ्योऽभ्यासो भेत्स्यतीति।

अशक्तेश्च। नह्येकः पुरुषः सर्ववेदान्तप्रत्ययात्मिकामुपासनामुपसंहर्तुं शक्नोति सर्ववेदान्ताध्ययनासामर्थ्यादनधी-तार्थोपसंहारेऽध्ययनविधानवैयर्थ्यप्रसङ्गात्। प्रतिशाखं भेदे तूपासनानां नायं दोषः। समाप्तिभेदाच्च। केषांचित् शाखिनामोङ्कारसार्वात्म्यकथने समाप्तिः। केषांचिदन्यत्र। तस्मादप्युपासनाभेदः।

अन्यार्थदर्शनादपि भेदः। तथाहि—'नैतदचीर्णव्रतोऽधीते' इति अचीर्णव्रतस्याध्ययनाभावदर्शनादुपासना-भावः। क्वचिदचीर्णव्रतस्याध्ययनदर्शनादुपासनावगम्यते। तस्मादुपासनाभेद इति। अत्र सिद्धान्तमाह—सर्ववेदा-न्तप्रत्ययं चोदनाद्यविशेषात्। तद्व्याचष्टे—सर्ववेदान्तप्रत्ययानि सर्ववेदान्तप्रमाणानि विज्ञानानि तस्मिंस्त-स्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति। यान्येकस्मिन् वेदान्ते तान्येव वेदान्तान्तरेष्वपीत्यर्थः। चोद-नाद्यविशेषात्—आदिशब्देन संयोगरूपाख्याः संगृह्यन्ते। अत्र च चोद्यत इति चोदना पुरुषप्रयत्नः। स हि पुरु-षस्य व्यापारः। तत्र खल्वयं होमादिधात्वर्थावच्छिन्ने प्रवर्तते। तस्य देवतोद्देशेन त्यागस्यासेचनावधिकस्यावच्छेद्यः पुरुषप्रयत्नः स एव शाखान्तरे यथैवमिहापि प्राणज्येष्ठत्वश्रेष्ठत्ववेदनविषयः पुरुषप्रयत्नः स एव शाखान्तरेष्वपीति। एवं फलसंयोगोऽपि ज्येष्ठश्रेष्ठभवनलक्षणः स एव। रूपमपि तदेव। यथा यागस्य यदेकस्यां शाखायां द्रव्यदेवतारूपं तदेव शाखान्तरेष्वपीति। एवं वेदनस्यापि यदेकत्र प्राणज्येष्ठत्वश्रेष्ठत्वरूपं विषयस्तच्छाखान्तरेष्वपीति ॥ १ ॥ कंचिद्विशेषमिति। युक्तं यदग्नीषोमीयस्योत्पन्नस्य पश्चादेकादशकपालत्वादिसंबन्धेऽप्यभेद इति। यथोत्पन्नस्य तस्य

## वेदान्तकल्पतरुः।

तर्हि नाम्न एव भेदो नाभ्यासादत आह—नचापूर्वमिति। पूर्वकर्मानन्वयीत्यर्थः। अनन्वयित्वे हेतुः—विधाना-ऽसंबद्धमिति। ननु ज्योतिरादेरपि विधिना संबन्धोऽसिद्धः एतेनेत्यनुकृष्य यजेतेति विधिसंबन्धावगमादत आह—प्रथममिति। ज्योतिरित्यादिनाम हि प्रथमं विधानेनासंबद्धमवगतं, पश्चात् तस्य विधिसंबन्धः। स च विधास्यमान-कर्मनामधेयत्वेनाप्यविरुद्धः, समिदादि तु प्रथममेव विधिसंबद्धमिति न पूर्वकर्मबुद्धिविच्छेदकमित्यर्थः। तस्य देवतेति। तस्य पुरुषकृतस्य कृते त्यागस्यासेचनाधिकस्य प्रक्षेपाधिकस्य होमस्यावच्छेद्यो यः पुरुषप्रयत्न एकस्यां शाखायां चोद्यते स एव शाखान्तरे चोद्यते यथेत्यर्थः। दार्ष्टान्तिकमाह—एवमिति।

शाखान्तराधिकरणेनास्यापौनरुक्त्यं सूत्रभाष्याभ्यामुक्तमुपपादयति—युक्तमिति। शाखान्तराधिकरणे हि एकस्यां शाखायाम् अग्नीषोमीयस्यैकादशकपालत्वमपरस्यां द्वादशकपालत्वमिति रूपभेदात् कर्मभेदः शङ्कितः, सिद्धान्ते तु तयोर्विकल्प इत्युक्तम्। तद्युक्तम् कपालसंख्ययोरुत्पन्नशिष्टयोरुत्पत्तावैकरूप्येणावगम्यमानकर्मप्रत्यभिज्ञाऽबाधकत्वेन कर्मभेदकत्वा-

## कल्पतरुपरिमलः।

ननु—समिदादीनां पञ्चानां नामधेयत्वमभ्यासात्कर्मभेदे सिद्धे सिध्यति, अभेद इति पूर्वपक्षे एकस्य नामधेयपञ्चकायो-गाद्यागविधौ श्रूयमाणं समिदित्येकमेव नाम, अनुवादेषु श्रूयमाणं तनूनपातमित्यादिकं विकल्पितदेवतं देवताविधायकं विष्णुरुपांशुयष्टव्य इत्यादिवत् मन्त्रवर्णप्राप्तदेवतानुवादेन स्तुतिपरं वा वक्तव्यम्। अतएव नाम्न एव भेदो नाभ्यासा-दित्युक्ता शङ्केति—चेत्, सत्यम्; अभ्युपेत्य परिहारान्तरं दर्शयितुमियं शङ्का ॥ १ ॥ अग्निगतपञ्चसंख्यायास्तु

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

स्यादेतत्—सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदान्नोपपद्यते । तथाहि—वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति 'तस्याग्निरेवाग्निर्भवति' ( बृ० ६।२।१४ ) इत्यादिना । छन्दोगास्तु तं नामनन्ति पञ्चसंख्ययैव च त उपसंहरन्ति—'अथ ह य एतानेवं पञ्चाग्नीन्वेद' ( छा० ५।१०।१० ) इति । येषां च स गुणोऽस्ति येषां च नास्ति कथमुभयेषामेका विद्योपपद्येत ? नचात्र गुणोपसंहारः शक्यते प्रत्येतुम्; पञ्चसंख्याविरोधात् । तथा प्राणसंवादे श्रेष्ठादन्यांश्चतुरः प्राणान्वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति, वाजसनेयिनस्तु पञ्चममप्यामनन्ति 'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद' ( बृ० ६।१।६ ) इति । आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभेदो द्रव्यदेवताभेदादिव यागस्येति चेत्, नैष दोषः; यत एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते । यद्यपि षष्ठस्याग्नेरुपसंहारो न संभवति; तथापि द्युप्रभृतीनां पञ्चानामग्नीनामुभयत्र प्रत्यभिज्ञायमानत्वान्न विद्याभेदो भवितुमर्हति । नहि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते । पठ्यतेऽपि च षष्ठो-

---

### भामती ।

सर्वत्र प्रत्यभिज्ञायमानत्वादिह त्वग्निपूत्पत्तिगत एव गुणभेद इति कथं वैश्वदेवीवन्न भेदक इति विशेषः । तमिमं विशेषमभिप्रेत्याशङ्कते सूत्रकारः—**भेदान्नेति चेदिति** । परिहारः सूत्रावयवः—**न एकस्यामपीति** । पञ्चैव सांपादिका अग्नयो वाजसनेयिनामपि छान्दोग्यानामिव विधीयन्ते । षष्ठस्त्वग्निः संपद्यतिरेकायानूद्यते, नतु विधीयते । वैश्वदेव्यां तूत्पत्तौ गुणो विधीयत इति भवतु भेदः । **अथवा**—छान्दोग्यानामपि षष्ठोऽग्निः पठ्यत एव । **अथवा**—भवतु वाजसनेयिनां षष्ठाग्निविधानं मा च भूच्छान्दोग्यानां, तथापि पञ्चत्वसंख्याया अविधानान्नोत्पत्तिशिष्टत्वं

### वेदान्तकल्पतरुः ।

भावात् । अग्निगतपञ्चसंख्यायांस्तु उत्पत्तिशिष्टत्वाद् वाजिनवद् भेदकत्वमिति शङ्कोत्थानादगतार्थत्वमित्यर्थः । अग्निहोत्रस्येत्यशुद्धः पाठः; अग्निहोत्रे कपालाभावात् । **अथवा**—अग्नौ होत्रं होम इति अग्नीषोमीय एवोच्यते । एकादशकपालत्वादेरुत्पन्नशिष्टत्वमिति वदता वाचस्पतिना कस्यांचिच्छाखायाम् अग्नीषोमीयो भवतीति केवलोत्पत्तिवाक्यं दृष्टमिति गम्यते । इतरथाऽग्नीषोमीयमेकादशकपालमित्यादौ संख्ययोरुत्पत्तिशिष्टत्वादिति । उत्पत्तिशिष्टा पञ्चसंख्यैव न षट्संख्या षष्ठस्याग्नेरनूद्यमानत्वादिति परिहरति—**पञ्चैवेति** । **सांपादिका** उपास्याः । **संपद्यतिरेकाय** उपास्तिव्यतिरेकाय । अग्निरेवाग्निरित्यादिना मुख्याग्निसमिदादेरनुवादादुपास्यत्वव्यावृत्तिर्बोध्यत इत्यर्थः । एवं षष्ठाग्नेरनुवाद्यत्वमङ्गीकृत्य परिहार उक्तः । इदानीं षडप्यग्नयः शाखाद्वयेऽप्युपास्याः, पञ्चसंख्या त्वमुख्यानग्नीन् योषिदादीनवच्छेत्तुमित्यभिप्रेत्याह—**अथ वा छान्दोग्यानामिति** । छन्दोगेन दृष्टां शाखामधीयते इति छान्दोग्याः । इदानीं पञ्चसंख्या उपास्याग्निविशेषणत्वेन न विधीयते, किं त्वनूद्यते । अग्नयस्तु पञ्च शाखाद्वयेऽप्यविशेषेणोपास्यतया विधीयन्ते, अधिकस्तु षष्ठोऽग्निर्विकल्प्यते इति परिहरति—**अथ**

### कल्पतरुपरिमलः ।

**उत्पत्तिशिष्टत्वादिति । ननु** असौ वाव लोको गौतमाग्निरित्यादीनां पञ्चानामग्नीनां कीर्तनानन्तरं यद्यदित्थं विदुरित्यादौ स एतान् ब्रह्म गमयतीत्यन्ते वाक्ये वेदनविधानमस्ति, तदतिलङ्घ्य य एतानेवं पञ्चाग्नीन्वेदेत्यादौ शुचिः पूतः पुण्यलोको भवतीत्यन्ते उपसंहारवाक्ये वेदनविधानं किमित्यभ्युपगम्यते ? यतः पञ्चसंख्योत्पत्तिशिष्टा स्यादिति—**चेत्, उच्यते**; उभयत्राप्यार्थवादिकफलश्रवणं रात्रिसत्रन्यायेन फलपरं विपरिणमय्य लाघवादेकमेवाधिकारवाक्यमवान्तरवाक्यद्वयोपात्तयावद्विशेषणसहितं कल्पनीयम् । तत्रैव च वेदनस्योत्पत्तिरपि; पृथगुत्पत्तिवाक्याभावात्तस्मिन् पञ्चसंख्याप्यनुप्रविष्टेत्युत्पत्तिशिष्टत्वं पञ्चसंख्याया उक्तम् । **षडप्यग्नयः शाखाद्वयेऽप्युपास्या इति** । लोकान्तरगमनागमनयोः पुरुषाहुत्याधारभूताः खलु द्युलोकादयोऽग्नयः कीर्त्यन्ते, प्रत्यक्षाग्निरपि पुरुषाहुत्याधारत्वेन कथ्यत इति द्युलोकादिसाम्यात्सोप्यग्निः सर्वथोपास्य इति भावः । **ननु** टीकायां छन्दोगानामिति वक्तव्ये कथं छान्दोग्यानामित्युक्तिस्तत्राह—**छन्दोगेन दृष्टां शाखामधीयत इति** । छान्दोग्या इति छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य इति छन्दोगशब्दाद्धर्माम्नाययोरेव ञ्यप्रत्ययो विहितः । छन्दोगेन दृष्टां शाखामधीयत इत्यर्थे ञ्यप्रत्ययः छान्दोग्यरूपापादकः कश्चिदन्यो वा प्रत्ययः पाणिनीये विहितो न दृश्यते । अतोऽत्र व्याकरणान्तरमन्वेषणीयम् । पाणिनीयानुसारेण तु छान्दोग्यं छन्दोगानामाम्नायो येषामस्तीत्यर्थे मत्वर्थीयाकारप्रत्ययान्तोऽत्र छान्दोग्यशब्दो वाच्यः । **अधिकस्तु षष्ठोऽग्निर्विकल्प्यत इति** । यद्यपि षष्ठोऽग्निश्छान्दोग्येऽप्युपसंहार्य इति वक्तुमुचितम्; विरोधाभावेऽपि भाष्येपि तथैवोक्तम्; तथापि विरोधमभ्युपगम्य षोडशिग्रहणन्यायेन विकल्पो भविष्यतीति

ग्निश्छन्दोगैः—'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति' ( छा० ५।९।२ ) इति । वाजसनेयिनस्तु संपादिकेषु पञ्चस्वग्निष्वनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित्समित्' ( बृ० ६।२।१४ ) इत्यादि समामनन्ति स नित्यानुवादः । अथाप्युपासनार्थ एष वादस्तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम् । नचात्र पञ्चसंख्याविरोध आशङ्क्यः; सांपादिकाग्न्यभिप्राया ह्येषा पञ्चसंख्या नित्यानुवादभूता न विधिसमवायिनीत्यदोषः । एवं प्राणसंवादेष्वप्यधिकस्य गुणस्येतरत्रोपसंहारो न विरुध्यते । नचावापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाशङ्क्यः; कस्यचिद्वेद्यांशस्यावापोद्वापयोरपि भूयसो वेद्यराशेरभेदावगमात् । तस्मादेकविद्यमेव ॥ २ ॥

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

यदप्युक्तमाथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणादन्येषां च तदनपेक्षणाद्विद्याभेद इति, तत्प्रत्युच्यते । स्वाध्यायस्यैष धर्मो न विद्यायाः, कथमिदमवगम्यते ? यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थ आथर्वणिका इदमपि वेदव्रतत्वेन व्याख्यातमिति समामनन्ति । 'नैतदचीर्णव्रतोऽधीते' ( मु० ३।२।११ ) इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते । ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' ( मुण्ड० ३।२।१० ) इति ब्रह्मविद्यासंयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति संकीर्येतैष धर्मः, न तत्राप्येतामिति प्रकृतप्रत्यवमर्शात् । प्रकृतत्वं च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येवैष धर्मः । सववच्च तन्नियम इति निदर्शननिर्देशः । यथाच सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसंबन्धादाथर्वणोदितैकाग्न्यभिसंबन्धाच्चाथर्वणिकानामेव नियम्यन्ते, तथैवायमपि धर्मः स्वाध्यायविशेषसंबन्धात्तत्रैव नियम्यते । तस्मादप्यनवद्यं विद्यैकत्वम् ॥ ३ ॥

**दर्शयति च ॥ ४ ॥**

दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात् 'सर्वे वेदा यत्पदमामनन्ति'

---

## भामती ।

संख्यायाः, किंतूत्पन्नेष्वग्निषु प्रचयशिष्टा संख्यानूद्यते सांपादिकानग्नीनवच्छेत्तुं, तेन येषामुत्पत्तिस्तेषां प्रत्यभिज्ञानात् अप्रत्यभिज्ञायमानायाश्च संख्याया अनुवाद्यत्वेनानुत्पत्तेर्विधीयमानस्य चाधिकस्य षोडशिग्रहणवद्विकल्पसंभवान्न शाखान्तरे ज्ञानभेदः । उत्पत्तिशिष्टत्वेऽसिद्धे प्राणसंवादादयोऽपि भवन्ति प्रत्यभिज्ञानादभिन्नास्तासु तासु शाखास्विति ॥ २ ॥ यैराथर्वणिकग्रन्थोपाया विद्या वेदितव्या, तेषामेव शिरोव्रतपूर्वाध्ययनप्राप्तग्रन्थबोधिता फलं प्रयच्छति नान्येषाम् । अन्येषां तु छान्दोग्यादीनां सैव विद्याऽचीर्णशिरोव्रतानां फलदेत्याथर्वणग्रन्थाध्ययनसंबन्धादवगम्यते । तत्संबन्धश्च वेदव्रतेनेति 'नैतदचीर्णव्रतोऽधीते' इति समाम्नानादवगम्यते । 'तेषामेवैतां ब्रह्मविद्यां वदेत' इति विद्यासंयोगेऽप्येतामिति प्रकृतपरामर्शिना सर्वनाम्नाऽध्ययनसंबन्धाविरोधादाथर्वविहितैव विद्योच्यत इति । **सवा** होमाः सप्त सौर्यादयः शतौदनान्ता आथर्वणिकानां त एकस्मिन्नेवाथर्वणिकेऽग्नौ क्रियन्ते न त्रेतायाम् ॥ ३ ॥ विद्यैकत्वं **दर्शयति च** । भूयोभूयो विद्यैकत्वस्य वेदे दर्शनात् । यत्रापि सगुणब्रह्मविद्यानां न साक्षाद्वेद एकत्वमाह, तासामपि तत्प्रायपठितानां तद्विधानां प्रायदर्शनादेकत्वमेव । तथाह्यग्र्यप्राये लिखितं दृष्ट्वा भवेदयमग्र्य इति बुद्धिरिति ।

यच्च काठकादिसमाख्ययोपासनाभेद इति, तदयुक्तम्; एता हि पौरुषेय्यः समाख्याः काठकादिप्रवचनयोगात्तासां शाखानां नतूपासनानाम् । नह्येताः कठादिभिः प्रोक्ताः, नच कठाद्यनुष्ठानमासामितरानुष्ठानेभ्यो विशेष्यते । नच

## वेदान्तकल्पतरुः ।

**वा भवतु वाजसनेयिनामित्यादिना । प्रचयशिष्टेति** । एकैकशोऽग्निषु विहितेषु तेषां प्रचयेनार्थात् ज्ञातेत्यर्थः । **सांपादिकानिति** । समारोप्याग्निभावानित्यर्थः । **उत्पत्तिशिष्टत्व इति** । प्राणगताधिकसंख्यादेरिति शेषः । असिद्ध इति च्छेदः ॥ २ ॥ ३ ॥ दर्शयति चेति सूत्रं पूरयति—**विद्यैकत्वमिति** । **ननु** सर्वे वेदा यत्पदमामनन्तीति वाक्यं वेद्यैक्यद्वारेण विद्यैक्यदर्शकं निर्गुणब्रह्मविषयं, कथमनेन सगुणविद्यैक्यसिद्धिः ? अत आह—**यत्रापीति** । **तत्प्रायपठितानामिति** । निर्गुणविद्यासंनिधिपठितानामित्यर्थः । अग्र्यः श्रेष्ठः । **ननु** विद्यानामशब्दात्मकत्वात् कठादिप्रोक्तत्वाभावेऽपि कठाद्यनुष्ठितत्वात् काठकादिसंज्ञा किं न स्यादत आह—**नच काठादीति** । अध्ययनं हि प्रतिशाखं स्वरादि-

## भामती ।

कठप्रोक्ततानिमित्तमात्रेण ग्रन्थे प्रवृत्तौ तद्योगाच्च कथंचिल्लक्षणयोपासनासु प्रवृत्तौ संभवन्त्यामुपासनाभिधानमप्यासां शक्यं कल्पयितुम् । नच तद्भेदाभेदौ ज्ञानभेदाभेदप्रयोजकौ; मा भूद्यथास्वमासामभेदाज्ज्ञानानामेकशाखागतानामैक्यम् । कठादिपुरुषप्रवचननिमित्ताश्चैताः समाख्याः कठादिभ्यः प्राक् नासन्निति तन्निबन्धनो ज्ञानभेदो नासीदिदानीं चास्तीति दुर्घटमापद्येत । तस्मान्न समाख्यातो भेदः ।

अभ्यासोऽपि नात्र भेदकः । युक्तं यदेकशाखागतो यजत्यभ्यासः समिदादीनां भेदक इति । तत्र हि विधित्वमौत्सर्गिकमज्ञातज्ञापनमप्रवृत्तप्रवर्तनं च कुप्येयाताम् । शाखान्तरे त्वध्येतृपुरुषभेदादेकत्वेऽपि नौत्सर्गिकविधित्वव्याकोप इति ।

अशक्तिरपि न भेदहेतुः । स्वाध्यायोऽध्येतव्य इति स्वशाखायामध्ययननियमः । ततश्च शाखान्तरीयानर्थानन्येभ्यस्तद्विद्येभ्योऽधिगम्योपसंहरिष्यति । समाप्तिश्चैकस्मिन्नपि तत्संबन्धिनि समाप्ते तस्य व्यपदिश्यते । यथाध्वर्यवे कर्मणि ज्योतिष्टोमस्य समाप्तिं व्यपदिशन्ति—'ज्योतिष्टोमः समाप्तः' इति । तस्मात्समाप्तिभेदोऽपि न साधनमुपासनाभेदस्य । तदेवमसति बाधके चोदनाद्यविशेषात्सर्ववेदान्तप्रत्ययानि कर्माणि तानि तान्येवेति सिद्धम् ॥

## वेदान्तकल्पतरुः ।

र्भिद्येत, नत्वनुष्ठानमित्यर्थः । **ननु** किं कठप्रोक्तत्वादिनिमित्तानुसरणेन विद्यायां ग्रन्थे च काठकादिशब्दा रूढा भवन्तु, तत्राह—**नच कठप्रोक्ततेति । ग्रन्थे** अवयवार्थयोगसंभवे ग्रन्थे रूढिर्न कल्पनीया, ग्रन्थसंबन्धाद्विद्यायां च वृत्तिसंभवे तत्रापि रूढिर्न कल्पनीयेत्यर्थः । अङ्गीकृत्यापि काठकादिसंज्ञानां विद्याभिधायकत्वमप्रयोजकत्वमाह—**नच तद्भेदाभेदाविति** । यदि काठकादिसंज्ञानां भेदाद्विद्या भिद्येत, तर्हि एकशाखागतदहरषोडशकलादिविद्यानामैक्यं प्रसज्येत, तच्च मा भूद्, अयुक्तं हि तद्; नानाशब्दादिभेदा (ब्र. अ. ३ पा. ३ सू. ५८)दित्यत्र तन्निषेधादित्यर्थः । नित्यानित्यसंयोगविरोधाच्च संज्ञानां न विद्याभेदकत्वमित्याह—**कठादिपुरुषेति** । यश्च तत्तच्छाखास्थोंकारसार्वात्म्यादौ ब्रह्मविद्यासमाप्तिव्यपदेशोऽध्येतॄणां सोऽपि तत्तदंशसमाप्त्यभिप्रायस्ततो न शाखान्तरे विद्याया भेदक इत्याह—**समाप्तिश्चेति ।**

## कल्पतरुपरिमलः ।

भाष्ये यः पक्ष उक्तः स इह दर्शितः । उपसंहारस्त्वग्रिमाधिकरणन्यायेन सेत्स्यतीति स्पष्टत्वान्नोक्तः । **ननु किं कठप्रोक्तत्वादिनिमित्तानुसरणेनेति । ननु**—काठकशब्दः कठप्रोक्तत्वनिमित्तो न भवति, किंतु कठाम्नायत्वनिमित्तः; तस्येदमित्यधिकारे गोत्रचरणाद्वुञिति विहितस्य वुञश्चरणाद्धर्माम्नाययोरिष्टेः कठेन प्रोक्तमित्यर्थे वुञ्प्रत्ययस्य विधानाभावादिति—**चेत्, सत्यम्**; आम्नायार्थवुञ्प्रत्ययप्रकृतिभूतकठशब्दे प्रोक्तार्थप्रत्ययार्थस्याप्यन्तर्भावोऽस्ति । तत्र कठशब्दस्य कठप्रोक्तशाखाध्येतृवचनत्वात्, अन्यथा कठशब्दस्य चरणवाचित्वाभावेन ततश्चरणलक्षणवुञनुत्पत्तिप्रसङ्गात् । शाखासंबन्धनिमित्तकः खलु चरणशब्दः । कथं कठशब्दः कठप्रोक्तशाखाध्येतृषु वर्तेत इति चेत्, इत्थम्; कठशब्दात्कठेन प्रोक्तमित्यर्थे कलापिवैशम्पायनान्तेवासिभ्यश्चेति सूत्रेण वैशम्पायनान्तेवासित्वलक्षणे णिनिप्रत्यये तस्य कठचरकाल्लुगिति लुकि पुनरपि कठेत्येवरूपे स्थिते ततः कठप्रोक्तां शाखामधीयत इत्यर्थे प्राग्दीव्यतीये अण्प्रत्यये तस्यापि प्रोक्ताल्लुगिति लुकि सति कठशब्द एव लुप्तप्रोक्ताध्येतृप्रत्ययद्वयः कठप्रोक्तशाखाध्येतृपुरुषवाची । तत्र कठप्रोक्तशाखायां प्रोक्तप्रत्ययलोपमात्रेण कठशब्दो न प्रयोज्यः, किंतु प्रत्ययद्वयलोपेन तदध्येतृपुरुषेष्वेव प्रयोज्यः; छन्दोब्राह्मणानि च तद्विषयाणीति सूत्रेण प्रोक्तप्रत्ययान्तानि छन्दांसि ब्राह्मणानि चाध्येतृवेदितृविषयप्रत्ययोत्पादनेनाध्येतृवेदितृविषयाण्येव प्रयोज्यानीति नियमितत्वात् । अतः काठकशब्दार्थे कठप्रोक्तस्यान्तर्भावात् केवलप्रोक्तप्रत्ययान्तस्य च कठशब्दस्य शाखाविद्ययोः प्रयोगानर्हत्वात्कठशाखाध्येतृपुरुषाम्नायवाचिनः काठकशब्दस्य भवानीपतिशब्दस्य भवइव कठप्रोक्तशाखायां वस्तुतः पर्यवसानाच्च काठकशब्दः कठप्रोक्तत्वनिमित्तकत्वेन व्यवहृत इति न दोषः । **ग्रन्थसंबन्धाद्विद्यायां च वृत्तिसंभव इति ।** नच विनिगमनाविरहः; एकस्यां शाखायां मुख्यवृत्तस्य बह्वीषु विद्यासु लक्षणाभ्युपगमे शक्तिकल्पनालाघवस्य विनिगमकत्वात् । **उक्तंहि**—शाखया ह्येकया योगाद्बहुकर्मावबोधनम् । युज्यते कर्मनानात्वं नैकशाखोपलक्षणम् ॥ इति । **ननु** विद्यासु काठकशब्दः कठधर्मत्वनिमित्तोऽस्तु, चरणाद्धर्माम्नाययोरित्यनुशासनात्, अतो मुख्यवृत्तिसंभवे लक्षणा न कल्पनीयेति काठकवाजसनेयकतैत्तिरीयकादिशब्दैर्विद्यानां कठवाजसनेयितैत्तिरीयादिपुरुषधर्मस्य प्रतीतेस्तासां भेदः स्यादित्याशङ्क्याह—**अङ्गीकृत्यापीति** । अपिशब्देनोक्तयुक्तिरसार्वत्रिकी; केवलप्रोक्तप्रत्ययान्तया याज्ञवल्क्यादिसमाख्यया विद्याभेदसिद्धेः । छन्दोब्राह्मणानीति सूत्रे छन्दोग्रहणेन सिद्धे पुनर्ब्राह्मणग्रहणस्य चिरन्तनऋषिप्रोक्तब्राह्मणप्रत्ययार्थत्वेनाचिरजातयाज्ञवल्क्यादिप्रोक्तब्राह्मणविषयाणां प्रोक्तप्रत्ययान्तानामध्येतृवेदितृविषयत्वनियमाभावादिति सूचयति ।

( क० २।१५ ) इति । तथा 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एवं महाव्रते छन्दोगाः' इति च । तथा 'महद्भयं वज्रमुद्यतम्' ( क० ६।२ ) इति काठक उक्तस्येश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दार्थं परामर्शो दृश्यते । 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य' ( तै० २।७।१ ) इति । तथा वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम् 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' ( छा० ५।१८।१ ) इति । तथा सर्ववेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानायोपादानात्प्रायदर्शनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥ ४ ॥ इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥

## ( २ अधिकरणम् ) उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

इदं प्रयोजनसूत्रम् । स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानामन्यत्रोदितानां विज्ञान-

### भामती ।

कंचिद्विशेषमाशङ्क्य पूर्वतन्त्रप्रसाधितम् । वक्ष्यमाणार्थसिद्ध्यर्थमर्थमाह स सूत्रकृत् ॥ ४ ॥ इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥

चिन्ताप्रयोजनप्रदर्शनार्थं सूत्रम्—उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । अत्रेदमाशङ्क्यते—भवतु सर्वशाखाप्रत्ययमेकं विज्ञानम्, तथापि शाखान्तरोक्तानां तदङ्गान्तराणां न शाखान्तरोक्ते तस्मिन्नुपसंहारो भवितुमर्हति । तस्यैकस्य कर्मणो यावन्मात्रमङ्गजातमेकस्यां शाखायां विहितं तावन्मात्रेणैवोपकारसिद्धेरधिकानपेक्षणात् । अपेक्षणे चाधिकमपि तत्र विधीयेत । न च विहितम् । तस्माद्यथा नैमित्तिकं कर्म सकलाङ्गवद्विहितमपि अशक्तौ यावच्छक्यमङ्गमनुष्ठातुं तावन्मात्रजन्येनोपकारेणोपकृतं भवत्येवमिहाप्यङ्गान्तराविधानादेव भविष्यतीति । एवं प्राप्त उच्यते—सर्वत्रैकत्वे कर्मणः

### वेदान्तकल्पतरुः ।

शाखान्तराधिकरणेनास्य पौनरुक्त्यमाशङ्क्याह—**कंचिदिति** श्लोकेन । पञ्चाग्निविद्यायामग्निगतपञ्चत्वषट्त्वसंख्ययोरुत्पत्तिशिष्टत्वं विशेषः, स च प्रागेव परिहृत इति । **वक्ष्यमाणावर्थौ** गुणोपसंहारानुपसंहारौ । **रेतः** प्रजननेन्द्रियं **प्रजापतिः** प्रजननम् । गुणविशिष्टतदुपास्तेः फलमाह—**प्रजायते हीति** । तं यजमानं प्रेतं दिष्टं परलोकाय कर्मभिरादिष्टमितो ग्रामादग्नये अभ्यर्थं हरन्ति नयन्त्यृत्विजः । शिरस्यङ्गारपूर्णपात्रधारणं **शिरोव्रतम्** । एतं ह्येवात्मानं बह्वृचा ऋग्वेदिनो महत्युक्थे शस्त्रविशेषे मीमांसन्ते । **महाव्रते** क्रतुविशेषे । महद्भयं भयहेतुर्वज्रमुद्यतं यथा तथा ब्रह्मेत्यर्थः । **एषो**ऽधिकृतः पुरुष **एतस्मि**न्नात्मनि **उद्** अपि **अरमल्पम् अन्तरं** भेदम् । अल्पमपि भेदं यदा कुरुते, **अथ** तदा तस्य भयं भवति । **तत्त्वेव** ब्रह्मशब्देन **विदुषो** ज्ञातवतो**ऽमन्वानस्य** अतर्कयतो मननमकुर्वतो भयं भयहेतुः ॥ ४ ॥ **इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥**[1]

**उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥** सर्वशाखासु विद्यैक्ये सिद्धे गुण्याकृष्टगुणानामुपसंहारसिद्धेरधिकरणानारम्भ इत्याशङ्क्याह—**भवत्विति** । करणं हि विद्याऽङ्गमाकाङ्क्षते, आकाङ्क्षा च संनिधिसमाम्नातैः अङ्गैः शान्तेति न शाखान्तरीयाङ्गापेक्षेत्यर्थः । यद्यपेक्षा स्यात्तत्राह—**अपेक्षणे चेति** । साकाङ्क्षस्य प्रयोगविधेरनुष्ठापकत्वासंभवात्तन्निराकाङ्क्षत्वाय सर्वमङ्गजातमेकस्यामेव शाखायां विधीयेतेत्यर्थः । **ननु** सर्वशाखासु विद्यैक्ये सति शाखान्तरगततदीयाङ्गाननुष्ठानेऽखण्डकरणोपकारासिद्धेरनुपकृता विद्या न श्रेयस्करी स्यादत आह—**तस्माद्यथा नैमित्तिकमिति** । **ननु** नित्यकर्मणि यावज्जीवमित्यादिनियतनिमित्तवशाच्छक्याङ्गानुष्ठानमात्रेण परिपूर्णोपकारः कल्प्यते, उपासनासु तु स्वशाखाधीतैरेवाङ्गैः परिपूर्णोपकारकल्पनायां को हेतुरत आह—**अङ्गान्तराविधानादेवेति** । **गृहमेधीयेति** ।

### कल्पतरुपरिमलः ।

**शाखान्तराधिकरणेनेति** । प्रौढ्याऽभ्युपगते ऐकशाख्यपक्षे पौनरुक्त्यशङ्का । सैद्धान्तिके शास्त्रभेदपक्षेऽप्येवं योजना । स्वशाखोपयुक्तमपि शास्त्रान्तरे चिन्तितं यत्स्वाभिमतं तदिह न चिन्त्यते । यथा न्यायशास्त्रे चिन्तितं कर्मानुमानादि । यथा च पूर्वतन्त्रे चिन्तितम् अग्निहोत्रवाक्यार्थादि । अतः शाखान्तराधिकरणन्यायोऽपि स्वाभिमत एव तत्र चिन्तितः । अतस्तच्चिन्तने पौनरुक्त्यमिति ॥ ४ ॥ **इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥**

---

[1] **तत्र सूत्राणि ४**—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् १ भेदान्नेति चेन्नैकस्यामपि २ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३ दर्शयति च ४ ॥

## भामती।

स्थिते गृहमेधीयन्यायेन नोपकारावच्छेदो युज्यते । नहि तदेव कर्म सत्तदङ्गमपेक्षते नापेक्षते चेति युज्यते । नैमित्तिके तु निमित्तानुरोधादवश्यकर्तव्ये सर्वाङ्गोपसंहारस्य सदातनत्वासंभवादुपकारावच्छेदः कल्प्यते । प्राकृतोपकारपिण्डे चोदकप्राप्ते आज्यभागविधानाद्गृहमेधीयेऽप्युपकारावच्छेदः स्यात् । इह तु शाखान्तरे कतिपयाङ्गविधानं तानि विधत्ते

## वेदान्तकल्पतरुः।

अस्ति चातुर्मास्येषु गृहमेधीयो मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदन इति। तत्रेदमामनन्त्याज्यभागौ यजतीति । तत्र संदेहः किमयमतिदेशप्राप्तयोराज्यभागयोरनुवादः, उताङ्गान्तरपरिसंख्या । अथवाऽतिदेशेनाज्यभागावेव प्राप्येते इत्येतदनेन वचनेन ज्ञाप्यते, किंवा सर्वाङ्गेभ्यो य उपकारः स आज्यभागाभ्यामेवाङ्गान्तरानपेक्षाभ्यां भवतीत्युपकारावच्छेद इति। अन्येऽपि पक्षाः प्रथमे काण्डे समाशङ्क्य निरस्तास्ते तु विस्तरभयान्न लिख्यन्ते । तत्रानुवादमात्रस्य वैफल्यात्परिसंख्यायाश्च प्रतिषेधविषयत्वादङ्गान्तरप्रतिषेधस्य च वाक्यादप्रतीतेः कल्पनायां चाज्यभागवाक्यस्य स्वार्थत्यागप्रसङ्गात् प्राप्तस्य चाङ्गान्तरस्य प्रतिषेधे प्रापकप्रमाणबाधापातात् तदेवं स्वार्थहानिरस्वार्थकल्पनं प्राप्तबाधश्चेति त्रिदोषीप्रसङ्गात् । अतिदेशस्य च विकल्पपेक्षितप्राकृताखण्डकरणोपकारातिदेशद्वारेणोपकारजनकपदार्थान् विकृतौ प्रापयतो युगपदेव सर्वाङ्गविषयत्वेन प्रवृत्तेराशुभावमात्रविषयत्वकल्पनस्यायोगादुपकारावच्छेद एवेति दशमे सिद्धान्तितम् । एतन्न्यायेनेह नोपकारावच्छेदो युज्यते । कुतः ? इत्यत आह—**नहीति** । गृहमेधीये हि न्याये विकृतिकर्मैव गृहमेधीयः आज्यभागातिरिक्तमङ्गग्रामं स्वोपकाराय नापेक्षते, प्रकृतिस्त्वपेक्षते । अत्र पुनरेकमेव विज्ञानं शाखान्तरीयाङ्गमेतच्छाखिभिरनुष्ठीयमानं सन्नापेक्षते, शाखान्तरिभिरनुष्ठीयमानं सदपेक्षते । एतच्च विरुद्धमित्यर्थः । यच्चोक्तं यथा नैमित्तिकं कर्मेत्यादि, तत्राप्याह—**नैमित्तिके त्विति** । यावज्जीवनिमित्तानुरोधात् प्रधानकर्तव्यत्वं नित्यमवगतं सर्वाङ्गोपसंहारस्य च सर्वदा पुंसां संपादयितुमशक्यत्वाच्छक्यमात्राङ्गानुष्ठानादेव सकलाङ्गसाध्योपकारसिद्धिरित्युपकारस्यावच्छेदः । अशक्याङ्गेभ्योऽवच्छिद्य शक्येष्ववस्थापनं युज्यते, नतु तथेह शाखान्तरीयाङ्गोपसंहारस्याशक्यत्वम् । अशक्तेः प्रथमाधिकरणे निरस्तत्वात् । नचोपास्तीनां नित्यत्वावगतिः काम्यत्वादित्यर्थः । पूर्वमेकस्यैकस्मिन्विषयेऽपेक्षाऽनपेक्षयोर्विरोधाद् गृहमेधीयन्यायासंभव उक्तः, इदानीं वैषम्यान्तरेण प्रकृते

## कल्पतरुपरिमलः।

**उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ अन्येऽपि पक्षा इति** । प्रथमे काण्डे अष्टौ पक्षा विचारिताः । तत्र प्रथमपञ्चमसप्तमाष्टमपक्षा इह लिखिताः । वैयर्थ्यदोषत्रयाभ्यां प्रथमपञ्चमपक्षौ दूषयित्वा सप्तमपक्षं दूषयति—**अतिदेशस्य चेति** । अखण्डकरणोपकारः समस्तप्रकृताङ्गजन्यदृष्टादृष्टोपकारद्वारा प्रधानस्य फलजननसामर्थ्योद्बोधनम् । तस्य प्रकृतौ क्लृप्तस्य विकल्पपेक्षितस्य विकृतावतिदेशो भवन् तत्तदुपकाररूपजनकाङ्गरूपपदार्थान् विनोपकारासंभवात्प्राकृतसकलपदार्थविशिष्टविषयो भवतीत्यर्थः । **ननु** सामान्यतः प्रवृत्तो भवत्यतिदेशस्तस्यैवाज्यभागविषयेण विशेषशास्त्रेणोपसंहारः किं न स्यात् ? छुसद्वारप्रत्याम्नातप्रतिषिद्धव्यतिरिक्तपदार्थोपसंहारवत्, **उच्यते**; सामान्यतोऽतिदेशशास्त्रं कल्पयित्वा तस्य विशेषशास्त्रेणोपसंहरणस्य यदाज्यभागमात्रानुष्ठानफलमिष्यते तत् क्लृप्ताद्विशेषशास्त्रत एव भवतीति किं चोदककल्पनया ? अथोच्येत अवैयर्थ्याय प्राकृतसकलाङ्गविषयमेवातिदेशशास्त्रं कल्प्यत इति । तत्रेदं दूषणमुक्तमतिदेशस्य **चेति । उपकारावच्छेद एवेति** । अखण्डोपकारस्याज्यभागातिरिक्ताङ्गेभ्योऽवच्छिद्याज्यभागयोरेवावस्थापनम् **उपकारावच्छेदः** । कथमयमाज्यभागविधानतो लभ्यते ? इति चेत्—इत्थम्, गृहमेधीयस्येतिकर्तव्यताकाङ्क्षस्य प्रत्यक्षश्रुतक्लृप्तोपकाराज्यभागसंयोजनाया निराकाङ्क्षतापादनेन तदाकाङ्क्षामूलकचोदककल्पनाप्रतिबन्धस्य द्वारा गृहमेधीयस्य प्रकृतिराहित्यरूपापूर्वतासिद्ध्यर्थमिदमाज्यभागविधानमिति चोदकसंभवत्प्राप्तिकयोः पुनर्विधानसामर्थ्यात्कल्प्यते । ततश्च ताभ्यामेवाखण्डोपकारसिद्धिरित्यपि कल्प्यते । नचैवं—सांग्रहण्यादीनामप्यामनहोमादिनैवाखण्डोपकारः सिध्येदिति विकृतिषु यत्किंचिद्वैशेषिकाङ्गश्रवणे सति प्राकृताङ्गातिदेशो न स्यादिति—वाच्यम्; उपकारद्वारा भवन्ती हि पदार्थेष्वाकाङ्क्षा प्रथमं क्लृप्तोपकारेष्वेव भवति, प्रकृतिः क्लृप्तोपकारपदार्थादर्शनादक्लृप्तोपकारानपि सन्निध्याम्नातान् गृहीत्वा तत्तत्पदार्थसामर्थ्यानुसारिण्या दृष्टादृष्टोपकारकल्पनया निर्वृणोति । विकृतिस्तु क्लृप्तोपकारप्राकृतपदार्थसत्तां पश्यन्ती सन्निध्याम्नातामनहोमादीनक्लृप्तोपकारान्विहाय क्लृप्तोपकारान् प्राकृतपदार्थानेवातिदेशप्राप्यान् प्रथमं गृह्णाति, ततो निराकाङ्क्षापि सांग्रहण्यादिर्विकृतिराम्नायवैयर्थ्यपरिहारायामनहोमादीनपि गृह्णातीति भवति विकृतिष्वतिदेशः । **उक्तं हि**—क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह । संबध्यन्ते समीपस्थं विकाराः प्रोज्झ्य चोदितम् ॥ इति । गृहमेधीयस्य तु सन्निधौ क्लृप्तोपकारावाज्यभागौ श्रुताविति तयोः प्रथमं ग्रहणे सति तत एवोपकारशान्तिः कल्प्यते । अन्यथा पुनरुपश्रवणवैयर्थ्यापत्तेरिति विशेषः । **अशक्तेः प्रथमाधिकरणे निरस्तत्वादिति** । नच—परशाखाध्ययनाभावप्रयुक्ताशक्तेस्तत्र निरासेऽप्यनन्तशाखाम्नातगुणेयत्तापरिच्छेदाशक्तिर्न निरस्तेति—वाच्यम्; सर्वैर्महर्षिभिः प्रणीतेषु कल्पसूत्रेषु कर्मणामङ्गय-

**गुणानामन्यत्रापि समाने विज्ञान उपसंहारो भवति । अर्थाभेदात् । य एव हि तेषां गुणानामेकत्रार्थो विशिष्टविज्ञानोपकारकः स एवान्यत्रापि । उभयत्रापि हि तदेवैकं विज्ञानम् । तस्मादुपसंहारः । विधिशेषवत् । यथाहि विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहरणमेवमिहापि । यदि हि विज्ञानभेदो भवेत्ततो विज्ञानान्तरनिबन्धत्वाद्गुणानां प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः । विज्ञानैकत्वे तु नैवमिति । अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः सर्वाभेदादित्यारभ्य भविष्यति ॥ ५ ॥ इति द्वितीयमुपसंहाराधिकरणम् ॥**

( ३ अधिकरणम् ) **अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥**

---

## भामती ।

नेतराणि परिसंचष्टे । नच तदुपकारपिण्डे चोदकप्राप्ते आज्यभागवत्तन्मात्रविधानम् । तस्मात्तत्वेन कर्मणां सर्वाङ्गसङ्गम औत्सर्गिकोऽसति बलवति बाधके नापवदितुं युक्त इति ॥ ५ ॥ **इति द्वितीयमुपसंहाराधिकरणम् ॥**

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् । द्वया** द्विप्रकाराः प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव

## वेदान्तकल्पतरुः ।

तदसंभवमाह—**प्राकृतेति । चोदको**ऽतिदेशः । तेन प्राकृत उपकारपिण्डो गृहमेधाय प्राप्यते तद्द्वारा च तज्जनकानि सकलप्राकृताङ्गानि । तत्राज्यभागावपि तन्मध्ये प्राप्तुत इति प्राप्तयोः पुनर्वचनात् सकलाङ्गजन्योपकारस्य तन्मात्रजन्यत्वेनावच्छेदः स्यादिह तु स्वशाखागताङ्गानां वचनाद्विना न प्राप्तिरिति तद्विधायकमेव वचनं नेतरपरिसंख्यायकमित्यर्थः । अनेन गृहमेधीयपूर्वपक्षगतपरिसंख्यापक्षोऽपि व्युदस्तः । तन्मात्रविधिपक्षस्यापि गृहमेधीयपूर्वपक्षगतस्यात्रासंभवमाह—**नच तदुपकारेति** । तच्छब्देन प्राकृतमङ्गं परामृशति । आज्यभागतदितराङ्गसाध्ये उपकारस्तोमेऽतिदेशप्राप्तेऽप्याज्यभागविधानाद्धि तत्रातिदेशस्य तन्मात्रविधानपरत्वं कल्पितं, नहिह विद्यासु स्वपरशाखागतधर्मसाध्योपकारपिण्डस्यास्ति कश्चिदतिदेशः, यस्य तत्प्राप्तधर्मस्य स्वशाखायां विधानात् स्वशाखागतधर्ममात्रविधायकत्वं कल्प्येतेत्यर्थः । **तत्त्वेन** एकत्वेन । **बलवति बाधके इति** । प्राप्तौ पुनर्विधानमेव बलवद् बाधकम् ॥ ५ ॥ **इति द्वितीयं उपसंहाराधिकरणम् ॥**[1]

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥** चोदनाद्यविशेषादित्यस्यापवादार्थमिदमधिकरणम् । भाष्ये वाजसनेयिशाखागतमुद्गीथब्राह्मणं छान्दोग्यगत उद्गीथाध्यायश्च विषयत्वेनोदाहृतः । तत्र वाजसनेयिब्राह्मणं तावद्याचष्टे—**द्वया इत्यादिना** । "द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत्ते विदुरनेन वैत उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् अथ हेममासन्यं प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेने"त्याद्यभिधाय "तमभिद्रुत्य पाप्मनाऽविध्यन्त्सन्स यथाऽश्मानमृत्वा लोष्टो विध्वंसतैवं हैव विध्वंसमाना विष्वञ्चो विनेशु"रिति श्रुतिः । तत्र प्रजापतिः कर्मज्ञानाधिकृतः पुरुषः । तदपत्यानीन्द्रियवृत्तयः

## कल्पतरुपरिमलः ।

त्तेव ब्राह्मवासिष्ठादिषु विद्याकल्पेषूपासनानां गुणेयत्तापि निर्धारितेति तेभ्यस्तत्परिच्छेदसंभवात् । **प्राप्तयोः पुनर्वचनादिति** । प्राप्तयोः संभवत्प्राप्तिकयोरित्यर्थः । चोदकप्रवृत्त्यभावात्पूर्वपक्षगतपरिसंख्यापक्षोऽपि व्युदस्त इति तस्मिन् पक्षे चोदकप्रवृत्तिरस्तीत्यष्टमपक्षोऽपि परिसंख्यापक्ष एव; आज्यभागातिरिक्ताङ्गवर्जनरूपस्य परिसंख्याशब्दार्थस्य तत्रापि सत्त्वात्, तथापि पञ्चमपक्षे शाब्दी परिसंख्या तत्राज्यभागयागविधेस्तदितरयागपरिवर्जने लक्षणाभ्युपगात् । अतएव सा परिसंख्या त्रिदोषेत्युक्तम् । अष्टमपक्षे त्वार्थी परिसंख्येति विशेषः । नच—विद्यास्वपि शाखान्तरतः संभवप्राप्तिकानां गुणानां पुनः श्रवणमस्ति येन तद्गुणान्तरपरिवर्जनफलकं स्यादिति—वाच्यम्; तस्य गुणोपसंहारार्थविद्यैक्यप्रत्यभिज्ञानार्थत्वेनान्यथासिद्धत्वादिति भावः । आज्यभागतदितराङ्गसाध्योपकारे अतिदेशप्राप्ते इत्यत्रोपकारस्तोमेऽतिदेशप्राप्ते इति क्वचित्पाठः । तत्र मूलगतपिण्डशब्दव्याख्यानार्थः स्तोमशब्दस्तदङ्गजन्यदृष्टादृष्टोपकारसमुदायार्थः । उपकारावच्छेद इत्यत्र तज्जन्यस्य फलजननसामर्थ्योद्बोधनरूपस्याखण्डोपकारस्यैवाज्यभागमात्रजन्यत्वेनावच्छेदः नतु दृष्टादृष्टोपकारसमुदायस्याङ्गान्तरजन्यदृष्टोपकाराणामाज्यभागजन्यत्वासंभवात्प्राप्तौ पुनर्विधानमेव बलवद्बाधकमिति तत्र नास्तीति भावः ॥ ५ ॥ **इति द्वितीयमुपसंहाराधिकरणम् ॥**

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ प्रजापतिः कर्मज्ञानाधिकृतः पुरुष इति** । वक्ष्यमाण-

---

[1] तत्र सूत्रम् १—उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' ( बृ० १।३।१ ) 'ते ह वाचमूचुस्त्वं न उद्गाय' ( बृ० १।३।२ ) इति प्रक्रम्य वागादीन्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते—'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' ( बृ० १।३।७ ) इति। तथा छान्दोग्येऽपि—'तद्ध देवा उद्गीथमाजग्मुरनेनैनानभिभविष्यामः' (छा० १।२।१) इति प्रक्रम्येतरान्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते—'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' ( छा० १।२।७ ) इति। उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते। तत्र संशयः—किमत्र विद्याभेदः स्यादाहोस्विद्विद्यैकत्वमिति। किं तावत्प्राप्तम् ? पूर्वेण न्यायेन विद्यैकत्वमिति। ननु न युक्तं विद्यैकत्वं प्रक्रमभेदात्। अन्यथा हि प्रक्रमन्ते वाजसनेयिनोऽन्यथा छन्दोगाः 'त्वं न उद्गाय' ( बृ० १।३।२ ) इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति। छन्दोगास्तूद्गीथत्वेन 'तमुद्गीथमुपासांचक्रिरे' ( छा० १।२।७ ) इति। तत्कथं विद्यैकत्वं स्यादिति चेत्, नैष दोषः। नह्येतावता विशेषेण विद्यैकत्वमपगच्छति; अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात्।

## भामती।

देवा ज्यायसा असुराः। शास्त्रजन्यया सात्त्विक्या बुद्ध्या संपन्नाः देवाः। ते हि दीव्यन्त इति देवाः। शास्त्रयुक्त्यपरिकल्पितमतयस्तामसवृत्तिप्रधाना असुराः। असुभिः प्राणैरनिन्द्रियैरगृहीतैस्तेपु तेषु विषयेषु रमन्त इत्यसुराः, अतएव ते ज्यायांसः। यतोऽमी तत्त्वज्ञानवन्तः कानीयसास्तु देवाः। अज्ञानपूर्वकत्वात्तत्त्वज्ञानस्य। प्राणस्य प्रजापतेः सात्त्विकवृत्त्युद्भवस्तामसवृत्त्यभिभवः कदाचित्। कदाचित्तामसवृत्त्युद्भवोऽभिभवश्च सात्त्विक्या वृत्तेः। सेयं स्पर्धा। ते ह देवा ऊचुः, हन्त असुरान् यज्ञ उद्गीथेनात्ययाम असुरान् जयामास्मिन्नाभिचारिके यज्ञ उद्गीथलक्षणसामभक्त्युपलक्षितेनौद्गात्रेण कर्मणेति। ते ह वाचमूचुरित्यादिना संदर्भेण वाक्प्राणचक्षुःश्रोत्रमनसामासुरपाप्मविद्धतया निन्दित्वा अथ हेममासन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यं प्राणं प्राणाभिमानवतीं देवतामूचुस्त्वन्न उद्गायेति तथेत्यभ्युपगम्य तेभ्य एव प्राण उदगायत् तेऽसुरा विदुरनेन प्राणेनोद्गात्रा नोऽस्मान् देवा अत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्नसुरा यथाश्मानमृत्वा प्राप्य मृद्वा लोष्टो वा विध्वंसत एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुः। तदेतत् संक्षिप्याह—**वाजसनेयक इति**। तथा छान्दोग्येऽप्येतदुक्तमित्याह—**तथा छान्दोग्येऽपीति**। विषयं दर्शयित्वा विमृशति—**तत्र संशय इति**। पूर्वपक्षं गृह्णाति—**विद्यैकत्वमिति**। पूर्वपक्षमाक्षिपति—**ननु न युक्तमिति**। एकत्रोद्गातृत्वेनोच्यते प्राण एकत्र चोद्गानत्वेन। क्रियाकर्त्रोश्च स्फुटो भेद इत्यर्थः। समाधत्ते—**नैष दोष**

## वेदान्तकल्पतरुः।

**प्राजापत्याः**। असुराणां ज्यायस्त्वं वृद्धत्वं श्रुत्युक्तमुपपादयति—**यतोऽमी इति**। **कानीयसाः** कनीयांसो देवाः। कनिष्ठत्वमुपपादयति—**अज्ञानपूर्वकत्वादिति**। अनादि ह्यज्ञानं तत्त्वज्ञानं चरमभावि। अतस्तज्जन्यप्रवृत्तिरूपाणां देवानां कनिष्ठत्वमित्यर्थः। अस्पर्धन्तेत्येतद्व्याचष्टे—**तदस्येत्यादिना**। **प्राणस्ये**त्येतच्छ्रुतिगतप्रजापतिशब्दस्य व्याख्यानम्। प्राणप्रधानस्य क्षेत्रज्ञस्येत्यर्थः। हन्तेत्यनुमतौ। यद्यनुमतिरस्ति सर्वेषामस्माकमसुरजये, तर्ह्यसुरानत्ययामातीत्यासुरान् देवभावमाप्नुवामेत्यर्थः। **यज्ञो** ज्योतिष्टोमः। सोसुराणां विध्वंसकत्वादाभिचारिकः। वाक् प्राणेत्यत्र प्राणो घ्राणेन्द्रियम्। **निन्दित्वेति**। तान्येव वागादीनीत्यर्थाल्लभ्यते। प्राणमात्रस्य संवादकर्तृत्वायोगाद्देवता लक्ष्यत इत्याह—**प्राणाभिमानेति**। एष इति मुख्यप्राणस्य विशेषणं घ्राणव्यावृत्त्यर्थम्। **अभिद्रुत्या**धिगम्य। अविध्यंस्ताडितवन्तः। अविध्यन्त्सन्निति श्रुतिपदं तत्र सन्प्रत्ययमुपेक्ष्य प्रकृतिमात्रमुदाहृतम्। **लोष्टः** पांसुपिण्डः। स चान्यो वा दुर्बलः काष्ठादिरित्यर्थः। वाशब्दः श्रुतावविद्यमानोऽपि न्यायलभ्यत्वादुपन्यस्तः। उद्गीथकर्तृत्वम् उद्गानक्रियारूपत्वं च शाखाभेदेन

## कल्पतरुपरिमलः।

वागादिवृत्तिरूपाणां प्रजानामपत्यानां पतिरीश्वरस्तत्तत्कार्येषु नियोजने समर्थः कर्मज्ञानेषु लौकिकवैदिकेष्वधिकृतः पुरुषः क्षेत्रज्ञः। कर्मज्ञानानि हीन्द्रियपाटवसापेक्षाणि तदपत्यानीन्द्रियवृत्तय इति। यद्यपि तदपत्यानीन्द्रियाणीति व्याख्यातुं युक्तं, ते ह वाचमूचुरित्याद्युपरितनसंदर्भे तदपत्यरूपेषु देवेषु वागादीनामेव ह्यनुप्रवेश उक्तः, ननु तद्वृत्तीनां; बृहदारण्यकभाष्येऽपि तथैव व्याख्यातं, सात्त्विकवृत्त्या संपन्ना देवास्तामसवृत्तिप्रधाना असुरा इति टीकाया अपि तत्रैव स्वारस्यम्; तथाप्युद्भवाभिभवरूपस्पर्धोक्तिश्छान्दोग्यगतसंग्रामोक्तिश्च परस्परभिन्नासु वृत्तिष्वेव सङ्गच्छत इत्येवं व्याख्यातम्। छान्दोग्यभाष्येऽप्येवमेव व्याख्यातम्। प्रजापतिः कर्मज्ञानाधिकृतः पुरुषः तस्य शास्त्रीयाः स्वाभाविक्यश्च करणवृत्तयो विरुद्धास्तदपत्यानीव तदुद्भवत्वाददिति। वृत्तिवृत्तिमदभेदविवक्षया न व्याख्यानयोः परस्परविरोधः। **अविध्यन्त्सन्निति**। विषयासङ्गरूपदोषेण पाप्मना वेद्धुमै-

तथाहि—देवासुरसंग्रामोपक्रमत्वमसुरात्ययाभिप्राय उद्गीथोपन्यासो वागादिसंकीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रयस्तद्वीर्याच्चासुरविध्वंसनमश्मलोष्टनिदर्शनेनेत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते । वाजसनेयकेऽपि चोद्गीथसामानाधिकरण्यं प्राणस्य श्रुतम्—'एष उ वा उद्गीथः' ( बृ० १।३।२३ ) इति । तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम् । तस्माच्च विद्यैकत्वमिति ॥ ६ ॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

न वा विद्यैकत्वमत्र न्याय्यं विद्याभेद एवात्र न्याय्यः । कस्मात्? प्रकरणभेदादिति । प्रक्रमभेदादित्यर्थः । तथाहि—इह प्रक्रमभेदो दृश्यते । छान्दोग्ये तावत्—'ओमित्येतदक्षरमुद्गीथमुपासीत' ( छा० १।१।१ ) इत्येवमुद्गीथावयवस्योंकारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानं तत्र कृत्वा 'अथ खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' ( छा० १।१।१० ) इति पुनरपि तमेवोद्गीथावयवमोंकारमनुवर्त्य देवासुराख्यायिकाद्वारेण तम् 'प्राणमुद्गीथमुपासांचक्रिरे' ( छा० १।२।२ ) इत्याह । तत्र यद्युद्गीथशब्देन सकला भक्तिरभिप्रेयेत तस्याश्च कर्तोद्गातार्त्विक्तत उपक्रमश्चोपरुध्येत लक्षणा च प्रसज्येत । उपक्रमानुरोधेन चैकस्मिन्वाक्य उपसंहारेण भवितव्यम् । तस्मादत्र तावदुद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते वाजसनेयके तूद्गीथशब्देनावयवग्रहणे कारणाभावात्सकलैव भक्तिरावेद्यते । 'त्वं न उद्गाय' (बृ० १।३।२) इत्यपि तस्याः कर्तोद्गातर्त्विक्प्राणत्वेन निरूप्यत इति प्रस्थानान्तरम् । यदपि तत्रोद्गीथसामानाधिकरण्यं प्राणस्य तदप्युद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति । सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यम् । नच प्राणस्योद्गातृत्वमसंभवेन हेतुना परित्यज्यते; उद्गीथभाववदुद्गातृभावस्याप्युपासनार्थत्वेनोपदिश्यमानत्वात् । प्राणवीर्येणैव चोद्गातौद्गात्रं करोतीति नास्त्यसंभवः । तथाच तत्रैव श्रावितम्—'वाचा च ह्येव स प्राणेन चोदगायत्' ( बृ० १।३।२४) इति । नच विवक्षितार्थभेदेऽवगम्यमाने वाक्यच्छायानुकारमात्रेण समानार्थत्वमध्यवसातुं युक्तम् । तथाह्यभ्युदयवाक्ये पशुकामवाक्ये च—त्रेधा

### भामती ।

इति । बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञायमानं किंचिल्लक्षणया नेतव्यम् । न केवलं शाखान्तरे, एकस्यामपि शाखायां दृष्टमेतन्नच तत्र विद्याभेद इत्याह—**वाजसनेयकेऽपि चेति** । बहुतररूपप्रत्यभिज्ञानानुग्रहाय चोमित्यनेनापि उद्गीथावयवेन उद्गीथ एव लक्षणीय इति पूर्वपक्षः ॥ ६ ॥ बहुतरप्रत्यभिज्ञानेऽपि उपक्रमभेदात्तदनुरोधेन चोपसंहारवर्णनादेकस्मिन्वाक्ये तस्यैव चोद्गीथस्य पुनःपुनः संकीर्तनाल्लक्षणायां च छान्दोग्ये वाजसनेयके प्रमाणाभावाद्विद्याभेद इति राद्धान्तः । **ॐकारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानमोङ्कारस्य** । **तथाहि—भूत**पृथिव्योषधिपुरुषवागृक्साम्नां पूर्वस्योत्तरमुत्तरं रसतया सारतयोक्तम् । तेषां सर्वेषां रसतम ओंकार उक्तश्छान्दोग्ये । **नच विवक्षितार्थभेद इति** । एकत्रोद्गीथोद्गातारावुपास्यत्वेन विवक्षितावेकत्र तदवयव ॐकार इति । **तथा ह्यभ्यु-**

### वेदान्तकल्पतरुः ।

श्रूयमाणं न विद्याभेदकम्, एकस्यां शाखायां विद्यैक्यसंप्रतिपत्तावपि तद्दर्शनादित्याह—**न केवलं शाखान्तरे इति** । एवं कर्तृक्रियात्वनिर्देशवैषम्यं परिहृत्य सकलभक्तिनिर्देशो वाजसनेयके भक्त्यैकदेशप्रणवनिर्देशश्छान्दोग्ये इति वैषम्यं परिहरति—**बहुतररूपेति** । रसतमादिगुणोपव्याख्यानमोङ्कारस्य कृत्वेति शेषः । एतच्च भाष्यप्रतीकोपादानम् । एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधय ओषधीनां पुरुषो रसः पुरुषस्य वाग् रसो वाच ऋग्रसः ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथ इति श्रुतिः । एतच्छ्रुतिव्याख्यानेन भाष्योक्तरसतमादिगुणयोगं विवृणोति—**तथाहीति** । यस्य यजमानस्य पुरस्तात् पूर्वं हविरुप्तं देवतार्थं सङ्कल्पितं भवति चन्द्रमाश्च

### कल्पतरुपरिमलः ।

च्छन्नित्यर्थः । व्यध ताडनइति धातोः सन्प्रत्ययान्तस्य लङि रूपम् । **न विद्याभेदकमिति** । उद्गातृशब्दस्योद्गीथे लक्षणायामुभयत्रापि विद्यैक्यं भवतीत्यर्थः ॥ ६ ॥ उद्गीथ उद्गानक्रियेत्यभिप्रेत्य टीकायां लक्षणोक्ता । यद्युद्गीथावयव ॐकार इति व्यवहाराद्गीयमानवर्णसमुदायरूपा द्वितीया भक्तिरुद्गीथस्तदा सौकर्यातिशयेन कर्मणः कर्तृत्वविवक्षयोद्गातृशब्द उद्गीथस्य वाचक इत्यपि समर्थयितुं शक्यम् । ॐकारस्येत्यस्य षष्ठ्यन्तस्याकाङ्क्षापूरणार्थं कृत्वेति शेषाध्याहारेऽपि तथा हीत्यग्रिमग्रन्थेन नान्वय इत्याशङ्क्य कृत्वेत्यन्तं भाष्यप्रतीकोपादानमित्याह—**एतच्चेति** । **यस्य यजमानस्येति** ।

## भामती ।

**दयवाक्ये इति । एवंहि श्रूयते**—'विवा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताचन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति । **तत्र संदेहः**—किं कालापराधे यागान्तरमिदं चोद्यते, उत तेष्वेव कर्मसु प्रकृतेषु कालापराधे निमित्ते देवतापनय इति । **एष तावदत्र विषयः**—अमावास्यायामेव दर्शकर्मार्थं वेदिक्रियाग्निप्रणयनक्रिया व्रतादिश्च यजमानसंस्कारः, दध्यर्थश्च दोहः, प्रतिपदि च दर्शकर्मप्रवृत्तिरित्यनुष्ठानक्रमस्तात्त्विकः । यस्य तु यजमानस्य कुतश्चिद्भ्रमनिबन्धनाचतुर्दश्यामेवामावास्याबुद्धौ प्रवृत्तप्रयोगस्य चन्द्रमा अभ्युदीयते, तत्रेदं श्रूयते—'यस्य हविर्निरुप्तम्' इति । तेन यजमानेनाभ्युदितेनामावास्यायामेव निमित्ताधिकारं परिसमाप्य पुनस्तदहरेव वेद्युद्धरणादिकर्म कृत्वा प्रतिपदि दर्शः प्रवर्तयितव्यः । तत्राभ्युदये किं नैमित्तिकमिदं कर्मान्तरं दर्शाचोद्यत उत तस्मिन्नेव दर्शकर्मणि पूर्वदेवतापनयनेन देवतान्तरं विधीयत इति । तत्र हविर्भागमात्रश्रवणाचरुविधानसामर्थ्याच कर्मान्तरम् । यदि हि पूर्वदेवताभ्यो हवींषि विभजेदिति श्रूयेत ततस्तान्येव हवींषि देवतान्तरेण युज्यमानानि न कर्मान्तरं गमयितुमर्हन्ति, किंतु प्रकृतमेव कर्म तद्धविष्कमपनीतपूर्वदेवताकं देवतान्तरयुक्तं स्यात् । अत्र पुनस्त्रेधा तण्डुलान् विभजेदिति हविष एव मध्यमादिक्रमेण विभागश्रवणादनपनीता हविषि पूर्वदेवता इति

## वेदान्तकल्पतरुः ।

पश्चादभ्युदेति स चतुर्दश्याममावास्याभ्रमवान् मध्यमादिभावेन त्रेधाभूताँस्तण्डुलानग्न्यादिभ्यो दर्शदेवताभ्यः सकाशाद्विभजेद् । विभज्य च दात्रग्न्यादिदेवताभ्यो निर्वपेदित्यर्थः । **दधन्** दधनि । **शृते** दुग्धे । **तेष्वेव कर्मस्विति ।** आग्नेयादिष्वित्यर्थः । कालापराधं विवरीतुं यथाकालमनुष्ठानं दर्शयति—**एष तावदिति । अभितः** सन्निधौ उदितश्चन्द्रो यस्य स यजमानोऽभ्युदितः । अत्र सिद्धान्ते दर्शकर्मण्येव देवतापनयमात्रमित्यस्मिन् प्रयोजनमाह—**अमावास्यायामेवेति ।** तस्यैव कर्मणोऽनुवर्तमानत्वे हि स्वदेवतायुक्तं तत्परिसमापनीयं ततश्चतुर्दश्यां निरुप्तहविषा देवतान्तरेभ्यो नैमित्तिकप्रयोगं परिसमाप्य पुनरमावास्यायामेवाग्न्यादिभ्यो दर्शदेवताभ्यो हविर्निरुप्य प्रतिपदि दर्शः प्रवर्तयितव्यः । दर्शलोपे तु प्रायश्चित्तभूतमिदं कर्मामावास्यायां कृत्वोपरन्तव्यमिति चिन्ताप्रयोजनमित्यर्थः । पूर्वपक्षमाह—**हविर्भागेत्यादिना । उत्पत्तिशिष्टदेवतावरुद्धे कर्मणि देवतान्तरानवकाशात्** कर्मान्तरत्वमित्येवमर्थं हविर्विभागमात्रश्रवणादिति संग्रहवाक्यं, **प्राप्ते कर्मण्यनेकगुणविधौ वाक्यभेदप्रसङ्गात् कर्मान्तरत्व**मित्येवमभिप्रायं चरुविधानसामर्थ्याचेति द्वितीयं संग्रहवाक्यम् । तत्राद्यं विभजते—**यदि हीत्यादिना ।** पूर्वदेवताभ्योऽग्न्यादिभ्यो हवींषि विभजेदिति वाक्येन विहिते उत्पत्तिशिष्टदेवतावरोधस्य वाक्येनैव वारितत्वात् पूर्वकर्मणि देवतान्तरनिवेशसंभवे सति न कर्मान्तरत्वं स्यात् । हविर्मात्रविभागविधाने तूत्पत्तिशिष्टदेवतावरोधाद् वाजिनेज्यावत् कर्मान्तरत्वमित्यर्थः ।

## कल्पतरुपरिमलः ।

केचित्तु हविरिति द्वितीयान्तम् अभिरभागे इत्थम्भूतलक्षणे कर्मप्रवचनीययुक्ते द्वितीयेत्येवमवान्तरवाक्यभेदं विना व्याचक्षते, पुरस्तादित्येतच पूर्वस्यां दिशीति व्याचक्षते । निरुप्तं हविरभ्युदेति ज्ञायते देवतार्थमसंकल्पितस्य यजमानद्रव्यमात्रस्य हविष्ट्वाभावात् । एवंच यद्यपि सिद्धरूपं यजमानद्रव्यमात्रम् अनाविष्टव्यापारं चन्द्रोदयीयलक्षणत्वेन न विशेषणत्वेन निवेशयितुं शक्यम्; तथापि हविःपदात् प्रतीतस्य सङ्कल्पमात्रस्य विशेषणतोपपत्तौ न पदान्तरप्रतीतः शकटानीताव्रीहिराशेः पुरोडाशार्थैकदेशग्रहणलक्षणो निर्वापोऽपि निवेशनीयः । अनाकाङ्क्षितोद्देश्यविशेषणविवक्षायां वाक्यभेदापत्तेरिति भावः । **दात्रग्न्यादिदेवताभ्यो निर्वपेदिति ।** दात्रग्न्यादिदेवता उद्दिश्य यजेतेत्यर्थः । **अभितः सन्निधाविति ।** यमुपक्रान्तदर्शमभि उदितश्चन्द्रः स यजमानोऽभ्युदित इत्यपि व्याचष्टे ॥ **दर्शलोपे त्विति । ननु**—अकालोपक्रान्तस्य दर्शस्य लोपोऽस्तु, तावता नैमित्तिकं कर्म कृत्वा किमित्युपरन्तव्यम् ? सिद्धान्त इव पूर्वपक्षेऽपि मुख्यकाले दर्शकर्तव्यताया आवश्यकत्वाद्वाक्यान्तरेण दर्शितत्वाच । एवंहि "तद्यदि बिभियादभि नोदेष्यतीति महारात्रे हवींषि निर्वपेत् फलीकृतैस्तण्डुलैरुपासीतार्धं दधि हविरातञ्चनार्थं निदध्यादर्धं न यद्यभ्युदियात्तेनातञ्च्य प्रचरेद्यदि नान्येद्युस्तेन ब्राह्मणं भोजयेदिति । **अस्यार्थः**—यः प्रवृत्तदर्शतन्त्रो यजमानः किमद्य चतुर्दश्याममावास्याभ्रान्त्या दर्शः प्रारब्धः किं चन्द्रमा अभ्युदेष्यतीति शङ्कया भयं प्राप्नुयात्, स महत्यामेव रात्रौ हविर्निरुप्यावहत्य फलीकृत्योदीक्षमाण आसीत । सायंदोहसंपादितं च दधि द्विधा विभज्य तदर्धं मुख्यकाले करिष्यमाणस्य दर्शस्यार्थे तत्पूर्वदिनसायंदोहं संपाद्य दध्यातञ्चनाय निदध्यादर्धान्तरं तदर्थं न निदध्यात्किंतु पूर्ववदेव स्थापयेत् । एवं कृते यद्यभ्युदयः स्यात्तदा मुख्यकाले दर्शप्रारम्भानन्तरमातञ्चनार्थं निहितेनार्धेन दध्ना सायं दुग्धे पयस्यातञ्चनं कृत्वा दध्युत्पाद्यान्येद्युर्दधियागं निर्वर्तयेद्, यदि नाभ्युदयस्तदानीमातञ्चनार्थं निहितादर्धादन्येनार्धेन दर्शनिर्वृत्तेस्तदर्थं दध्युत्पादनानपेक्षणेनातञ्चनार्थं निहितमर्धं ब्राह्म-

## भामती ।

पूर्वदेवतावरुद्धे हविषि देवतान्तरमलब्धावकाशं श्रूयमाणं कर्मान्तरमेव गोचरयेत् । **अपिच प्राप्ते पूर्वस्मिन् कर्मणि** दध्नस्तण्डुलानां पयसस्तण्डुलानां चेन्द्रादिदेवतासंबन्धश्च विधातव्यः । चरुत्वं चात्र विहितं नास्तीति तदपि विधातव्यम् । तथा प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यं भिद्येत । कर्मान्तरं त्वपूर्वं शक्यमेकेनैव प्रयत्नेनानेकगुणविशिष्टं विधातुमिति निमित्ते कर्मान्तरमेव विधीयते । दर्शस्तु लुप्यते कालापराधादिति प्राप्त उच्यते—**न कर्मान्तरम्; पूर्वदेवतातो हविषो** विभागपूर्वं निमित्ते देवतान्तरविधानात् । चर्वर्थस्य चार्थप्राप्तेः । भवेदेतदेवं यदा त्रेधा तण्डुलान् विभजेदिति तण्डुलानां त्रेधा विभागविधानपरमेतद्वाक्यं स्यात्, अपितु वाक्यान्तरप्राप्तं तण्डुलानां त्रेधात्वमनूद्य विभजेदित्येतावद्विधत्ते ।

## वेदान्तकल्पतरुः ।

द्वितीयं संग्रहं विवृणोति—**अपिचेति । ननु** कर्मान्तरविधौ प्रारब्धदर्शप्रयोगस्य का गतिस्तत्राह—**दर्शस्तु लुप्यते इति** । कर्मान्तरमिति प्रतिज्ञाय हेतुमाह—**पूर्वदेवतात इति** । उत्पत्तिशिष्टदेवतावरोधं परिहृत्य वाक्यभेदं परिहरति—**चर्वर्थस्येति । वाक्यान्तरप्राप्तमिति** । ये मध्यमा इत्यादिवाक्यैः प्राप्तमित्यर्थः । **ननु** विभजेदित्येतावन्मात्रविधौ

## कल्पतरुपरिमलः ।

णभोजनेन प्रतिपादयेदिति । तदेतदातञ्चनाभ्यासदर्शनं सिद्धान्तलिङ्गत्वेन वर्णितम् । यदि कर्मान्तरमभ्युदयेष्टिः स्यात्तदा पशुकामेष्टाविव दधिशृतयोरधिकरणत्वेन प्रणीताकार्ये विधानादुपादेयत्वेन च प्रकृतग्रहणप्रमाणाभावाल्लौकिकएव दध्नि पयसि च श्रपणं कृत्वा सायंदोहेनाकालकृतेनापि प्रायश्चित्तनिर्हृतकालापराधदोषेण मुख्यकाले दर्शः कर्तव्यो न दध्यन्तरमुत्पाद्यम् । यद्यकाले प्रक्रान्तमेव दर्शकर्म देवताविकारयुक्तं सदभ्युदयेष्टिः स्यात्तदा तदर्थं कृतेन दध्ना तस्यैवानुष्ठितत्वान्मुख्यकालकर्तव्यदर्शार्थमवश्यं दध्यन्तरमुत्पाद्यमित्यर्थवदातञ्चनम् । तत्रामुख्यकालकृतसायंदोहार्थैनैवातञ्चनं कार्यमित्येतावान् विशेषो विधीयतइति । अत्र सिद्धान्तलिङ्गतयोपन्यस्तेनातञ्चनाभ्यासेन मुख्यकाले दर्शकर्तव्यतापि ज्ञाप्यत इति स्पष्टमेव । पूर्वपक्षिणाप्यकालोपक्रान्तं दर्शं त्यक्त्वा नैमित्तिकं कृत्वा पुनर्दर्शः समारम्भणीय इति सिद्धान्तिवदेव मन्यमानेन पुनरारब्धदर्शप्रयोगाद्बहिरकालकृतस्य दध्नो मुख्यकालकर्तव्यदर्शानर्हत्वेनातञ्चनाभ्यासोऽभ्युदितेष्टेः कर्मान्तरत्वेऽप्युपपद्यत इति तस्य सिद्धान्तलिङ्गत्वमेवापह्नूयते, नतु मुख्यकालकर्तव्यदर्शकालज्ञापकत्वम् । सिद्धान्तिना त्वकालोपक्रमदोषस्य पूर्वपक्षे नैमित्तिकेन कर्मान्तरेण निर्हृतत्वादकालोपक्रान्त एव दर्शो मुख्यकाले समापनीयः नतु मुख्यकाले पुनर्दर्शः समारम्भणीय इत्यापाद्य तस्यातञ्चनाभ्यासलिङ्गानुपपत्तिः समर्थ्यते । अमावास्यायामेवेत्यादिटीकाग्रन्थोऽपि पूर्वपक्षसिद्धान्तसाधारण्येन निमित्ताधिकारस्य कर्मान्तरस्य विकृतदर्शप्रयोगस्य वा समाप्त्यनन्तरं मुख्यकाले दर्शः कर्तव्य इत्येतत्पर एव स्वरसतः प्रतिभाति, न सिद्धान्तकोटिप्रयोजनप्रदर्शनपरः पूर्वपक्षकोटिप्रयोजनप्रदर्शनाभावात्तदहरेव वेद्युद्धरणादि कृत्वेत्येतदातञ्चनाभ्यासलिङ्गसमर्थनार्थं पूर्वपक्ष्यनुसारेण पूर्वपक्षेऽपि योजयितुं शक्यम् । अथवाऽमावास्यायामेवेत्यादिटीकाग्रन्थः सिद्धान्तकोटावनुष्ठानप्रकारमात्रस्य प्रदर्शनपरः, नतु पूर्वपक्षे मुख्यकालकर्तव्यो दर्शो नास्तीति तद्व्यावृत्तसिद्धान्तकोटिफलप्रदर्शनपरः । पूर्वपक्षे आतञ्चनाभ्यासलिङ्गानुपपत्तिं समर्थयमानेन सिद्धान्तिना पूर्वपक्षेऽपि मुख्यकाले दर्शयागानुष्ठानस्य दर्शितत्वाद्, दर्शस्तु लुप्यते कालापराधादिति पूर्वपक्षोपसंहारटीकाग्रन्थोऽप्यातञ्चनाभ्यासलिङ्गसमर्थनप्रवृत्तपूर्वपक्ष्याशयानुसारेणाकालोपक्रान्तदर्शप्रयोगमात्रलोपपरः; कालापराधादिति हेतूक्तेः । तस्मादकालोपक्रान्तदर्शप्रयोगं त्यक्त्वा संकल्पप्रभृति कर्मान्तरं पूर्वपक्षे कर्तव्यं सिद्धान्ते त्वकालोपक्रान्तदर्शप्रयोग एव देवतान्तरसंयोजनरूपविकारयुक्तः संपादनीय इत्येव पूर्वपक्षसिद्धान्तयोः प्रयोजनभेदो वक्तुमुचित इति—**चेत्, उच्यते**; अकालोपक्रमदोषेण तस्याममावास्यायां सर्वात्मना दर्शो लुप्तः । मध्यमादिवाक्यैर्विहितं कर्मान्तरं तु लुप्तस्य प्रत्याम्नायरूपम् । अतो यथा स प्रत्यामनेत्स्थानादित्यधिकरणपूर्वपक्षे यस्योभयं हविरार्तिमार्च्छेति ऐन्द्रं पञ्चशरावमोदनं निर्वपेदिति दधिशृतरूपसान्नाय्यनाशे निमित्ते विधीयमानो दर्शेष्टितः कर्मान्तररूपः पञ्चशरावयागो दर्शेष्टेर्हविर्नाशेन लोपात्तत्प्रत्याम्नाय इति तदधिकरणपूर्वपक्षे दर्शेष्टिलोपः । एवमभ्युदयनिमित्तेऽपीति कैश्चिदेकदेशिभिः पूर्वपक्षे प्रयोजनमुक्तं भविष्यति तदनुवादोऽयमिति न दोषः । **येमध्यमादिवाक्यैर्देवतान्तरेष्विति** । अत्र पूर्वकर्मणि देवतान्तरविधानं न विवक्षितम्; तस्योत्पत्तिशिष्टगुणावरोधपरिहाराय देवतापनयविधिप्रवृत्तिसापेक्षत्वेन परस्पराश्रयापत्तेः, किंतु ये मध्यमादिवाक्यैर्यदि पूर्वकर्मणि देवतान्तरविधिः, यदि वा देवतान्तरविशिष्टकर्मान्तरविधिः, पक्षद्वयेऽपि देवतान्तरविधिरविप्रतिपन्न इत्येतावद्विवक्षितम् । एतावता तत्सजातीयानां देवतानां बुद्धिस्थतोक्ता । तत्प्रतियोगिनीनामित्यनेनाप्येकहविःसंबन्धित्वेन तत्प्रतिद्वन्द्वित्वं न विवक्षितम्; परस्पराश्रयतादवस्थ्यापत्तेः, किंतु साजात्येन तत्संबन्धित्वमात्रम् । **अथवा**—तण्डुलदधिशृतशब्दैः प्रकृतदर्शहविषां प्रत्यभिज्ञानात्तेषामेव देवतान्तरविधानं ये मध्यमादिवाक्यैः क्रियत इति तावत्प्रतिभाति, तच्च तेषां पूर्वदेवतापनयमन्तरेण नोपपद्यत इति विमर्शोपस्थितदार्शिकहविषां देवतान्तरविधानं त्रेधावाक्यस्यान्यतःप्राप्तिमत्प्रतीयमानार्थतयाऽर्थान्तरपर्यवसानापेक्षस्य

## भामती ।

**तत्र च वाक्यान्तरालोचनया पूर्वदेवताभ्य इति गम्यते । तण्डुलानिति त्वविवक्षितं हविरुभयत्ववत् । तथाच ये मध्यमा**

## वेदान्तकल्पतरुः ।

कस्मादिति न ज्ञायते, तत्राह—**तत्र च वाक्यान्तरेति** । ये मध्यमादिवाक्यैः देवतान्तरेषु तत्प्रतियोगिनीनां देवतानामेव बुद्धिस्थानां विभागप्रतियोगित्वं गम्यते इत्यर्थः । **ननु** तण्डुलानामेव देवताभ्यो विभागश्रवणाद्दधिपयसोर्न पूर्वदेवतातो विभागोऽवगतोऽतस्तयोरुत्पत्तावैन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामितीन्द्रदेवतावरुद्धयोर्न देवतान्तरावकाश इति कर्मभेद एव स्यादत आह—**तण्डुलानिति त्वविवक्षितमिति** । हविर्मात्रं विभागविषयः । तस्य तण्डुलत्वेन विशेषणे विशिष्टोद्देशाद्वाक्यभेदः स्यादित्यर्थः । **हविरुभयत्ववदिति** । दर्शपूर्णमासयोराम्नायते । यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । उभयं दधिपयः । तत्र श्रुतत्वाद्धविर्वदुभयत्वमपि निमित्तान्तर्भूतमिति प्रापय्य षष्ठे राद्धान्तितम् । अविवक्षितमुभयत्वम् । तद्विवक्षायां हि विशिष्टोद्देशनाद्वाक्यं भिद्येत; हविरार्तौ निर्वपेदुभयार्तौ चेति, विध्यावृत्तिप्रसङ्गात् । **ननु** तर्हि हविरप्यविवक्षितं स्याद्धविर्विशिष्टार्तेरुद्देश्यत्वे वाक्यभेदतादवस्थ्यात्; न; आर्तिमात्रस्य सर्वदा सर्वेषां संभवेन निमित्तत्वापर्यवसानात् तत्पर्यवसानस्य हि मृष्यामहे हविषा विशेषणम् । उभयत्वं तु पर्यवसिते निमित्ते विशेषणं भवद्विध्यनाकाङ्क्षितं वाक्यं भिन्द्यादिति तन्न मृष्यामः । तस्मादविवक्षितमुभयत्वमिति । **ननु** शक्नुवन्तु

## कल्पतरुपरिमलः ।

दार्शिकहविषां पूर्वदेवताभ्यो विभागोऽर्थ इति निर्णयहेतुत्वेन विवक्षितम् । अतएव विभागविषयेषु सामर्थ्यलब्धहविष्ट्वविशेषणावश्यम्भावात्तत्तुल्यत्वस्यापि विवक्षायां वाक्यभेदापत्तिर्वक्ष्यते हविर्मात्रं विभागविषय इत्यादिना । पूर्वव्याख्याने तु यद्यपि हविष्ट्वं न श्रुतम्; तथापि तण्डुलानां हवीरूपेणैव देवतासंबन्धित्वं न स्वरूपेणेति हविष्ट्वं तावदश्रुतमपि यस्य हविर्निरुप्तमित्यत्र सन्निहितमवश्यं विवक्षणीयम् । अतस्तण्डुलत्वस्यापि विवक्षायां वाक्यभेदापत्तिरिति योज्यम् । **ननु** श्रुतत्वेऽप्युद्देश्यविशेषणस्य ग्रहैकत्वस्याविवक्षा तृतीये निर्णीता, तेनैव न्यायेनोभयत्वस्याविवक्षा सिद्धा, कथं पूर्वपक्षः ? इत्याशङ्क्याह—**हविर्वदिति** । यदार्तिमार्च्छेतीत्युद्देश्याया निमित्तभूताया नाशप्राप्तेर्हविर्विशेषणं सिद्धान्तेऽपि विवक्षितमङ्गीक्रियते, तत् पदान्तरोपात्तत्वेन ग्रहैकत्ववैलक्षण्याच्चेदुभयत्वमपि तत एव विवक्षितमस्त्विति भावः । विशिष्टोद्देशे वाक्यभेदं विवृणोति—**हविरार्ताविति** । **ननु** विशिष्टोद्देशो नाम द्वित्वविशिष्टहविरार्तेर्निमित्ततयोद्देशः । तत्र वाक्यभेदं प्रतिज्ञाय कथं हविरुभयत्वयोर्विशेषणविशेष्यभावं विना स्वातन्त्र्येणार्त्यन्वये वाक्यभेदः प्रदर्श्यते ? **उच्यते;** नामपदानां परस्परमसंबद्धानामेवाख्यातान्वयोऽरुणाधिकरणन्यायसिद्धः । अतएव बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवतीति विहितायां विकृतीष्टौ प्राकृते चतुर्मुष्टिनिर्वापे चोदकतः प्राप्ते चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरकस्य चरोः संपादयितुमशक्यत्वेन तत्र संख्यामुष्ट्यन्यतरबाधे कर्तव्ये मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वादिति ( जै. अ. १० पा. २ सू. ६४ ) सूत्रेण मुष्टिगुणभूतसंख्याबाधः कार्य इति पूर्वपक्षं कृत्वा न निर्वापशेषत्वादिति ( जै. अ. १० पा. २ सू. ६५ ) सूत्रेण संख्यामुष्ट्योरुभयोरपि निर्वापशेषत्वेन तयोर्गुणप्रधानभावविशेषाभावात् चरमश्रुतस्य मुष्टेरेव बाधः कार्यः । अतश्चतुर्भिर्महापात्रैः सप्तदशशरावचरुसंपादनापेक्षितव्रीहिनिर्वापः कार्य इति दशमे सिद्धान्तितम् । अतश्चतुरो मुष्टीन्निर्वपतीत्यत्र संख्यामुष्ट्योरिवात्र हविरुभयत्वयोराख्यातेनैवान्वयो न तूभयत्वस्य हविरन्वयः । तथापि कथंचित्तस्य हविरन्वयः कल्प्येत, यदि तदाकाङ्क्षा स्याद्, न त्वसावस्ति; हविरार्तिमात्रस्य निमित्तत्वोपपत्तेः । तस्मात्संख्यामुष्टिन्यायेन हविरुभयत्वयोराख्यातान्वयसिद्धौ संख्यामुष्ट्युभयविशिष्टनिर्वापविधानेनावाक्यभेदेऽप्यत्र निमित्तविशेषणयोरुद्देश्यकोटिनिविष्टयोर्विधेययोरिव क्रियया वशीकार्यत्वाभावेन क्रियायास्ताभ्यां प्रत्येकसंबन्धनिमित्तो वाक्यभेदो भवतीति हविरार्तौ निर्वपेदुभयार्तौ चेति वाक्यभेदो दर्शितः । हविरार्तौ निर्वपेदुभयहविरार्तौ चेति क्वचित्पाठः । स पाठः एतावन्तमर्थं मनसि निधाय इति उपरि शङ्कान्तरपरिहारार्थत्वेन योजनीयः । **अत्रैवं शङ्का**—नेह हविरुभयत्वयोरप्यार्त्यन्वयः, किं तु हविरार्तिमार्च्छेदिति हविरार्तेर्निमित्तत्वबोधनानन्तरं हविरुभयमिति तस्य हविषः संख्यान्वयो बोध्यते । तत्राख्याताश्रवणादुभयत्वं हविषैव संबध्यते नीलमुत्पलमित्यत्रोत्पलेनेव नैल्यं, निमित्तपर्यवसानार्थं हविषः स्वतः संख्याकाङ्क्षाविरहेऽपि तत्संबन्धबोधनेनैदम्पर्यप्रवृत्तवचनबलात्तत्र तद्बोधः स्यादेव—**इति** । एवमपि वाक्यभेदः स्वयं प्रदर्शितयैव रीत्या समापतन्न निवार्य इति परिहारः स्पष्टः । तत्र हविरुभयमित्येतावति द्वितीयवाक्ये प्रदर्शनीये प्रथमवाक्यप्राप्तांशानुवादसाहित्येनोभयहविरार्तौ निर्वपेदिति द्वितीयवाक्यमुपन्यस्तम् । **वाक्यभेदतादवस्थ्यादिति** । आर्तिमार्च्छेदित्येतावता निमित्तापर्यवसानात् सा चार्तिर्हविर्विशिष्टेति पृथग्बोधनीयम् । तथा चोभयविशेषणाभावेऽप्यार्तिमार्च्छेद्धविरार्तिमार्च्छेदिति वाक्यभेदस्तदवस्थ इत्यर्थः । सर्वदा सर्वेषामपि यजमानानामन्ततश्चिन्तितनिमिषितादिनाशसत्त्वान्नाशमात्रं न निमित्तम्, अनियतत्वाभावादित्यस्ति हविर्विशेषणापेक्षा, नैवमुभयत्वविशेषणापेक्षास्तीति परिहारार्थः । **तस्मादविवक्षितमुभयत्वमिति** । श्रुतिगतं तूभयपदं न केवलं

## भामती ।

इत्यादीनि वाक्यान्यपनीते पूर्ववत् देवतासंबन्धे हविषस्तस्मिन्नेव कर्मण्यप्रत्यूहं देवतान्तरसंबन्धं विधातुं शक्नुवन्ति । तथाच द्रव्यमुखेन प्रकृतमखप्रत्यभिज्ञानात् देवतान्तरसंबन्धेऽपि न कर्मान्तरकल्पना भवितुमर्हति । ततश्च समाप्तेऽपि नैमित्तिकाधिकारे नित्याधिकारसिद्ध्यर्थं तान्येव पुनः कर्माण्यनुष्ठेयानि । नच दधनि चरुमिति चरुसप्तम्यर्थयोर्विधानम्; तयोरप्यर्थप्राप्तत्वात् । प्रकृते हि कर्मणि तण्डुलपेषणप्रथनं पुरोडाशपाकादि दधिपयसी च प्राप्तानि । तत्राभ्युदयनिमित्ते दधियुक्तानां पयोयुक्तानां च तण्डुलानां विभजेदिति वाक्येन पूर्वदेवतापनयं कृत्वा ये मध्यमा इत्यादिभिर्वाक्यैर्देवतान्तरसंबन्धः कृतः । नच प्रभूतदधिपयःसंसक्तैरल्पैस्तण्डुलैः पुरोडाशक्रिया संभवतीति पुरोडाशनिवृत्तौ तदर्थस्य प्रथनस्यापि निवृत्तिरनिवृत्तस्तु पाकोऽपवादाभावात्तथा चार्थप्राप्तश्चोद्यते । भवतु वा अनेकवाक्यकल्पनम् । प्रकृताधिकारा-

## वेदान्तकल्पतरुः ।

वाक्यानि तस्मिन् कर्मणि देवतान्तरं विधातुं, तस्यैवबुद्धिस्थत्वात्कथं तत्र देवताविधिरत आह—**द्रव्यमुखेनेति** । पूर्वोक्तं सिद्धान्तप्रयोजनं निगमयति—**ततश्चेति** । एवमुत्पत्तिशिष्टदेवतावरोधं परिहृत्य वाक्यभेदप्रसङ्गं परिहरति—**नच दधनि चरुमित्यादिना** । प्राकृतकर्मणि तण्डुलादयः पाकान्ताः पुरोडाशसामर्थ्यात्सिद्धाः । दधिपयसी च स्वत एव सिद्धे । कथमेतावताऽधिकरणचर्वर्थयोः प्राप्तिरत आह—**तत्राभ्युदयेति** । दध्नस्तण्डुलानां पयसस्तण्डुलानां च साहित्यं येमध्यमादिवाक्यावगतादेकदेवताकत्वात्सिद्धम् । तदिदमुक्तं—**दधियुक्तानां पयोयुक्तानां चेति** । **नन्वेवमपि** दधिपयसोस्तण्डुलानां च मिश्रणमेव भवति, कथमधिकरणार्थलाभस्तत्राह—**नच प्रभूतेति** । त्र्यधिकगवां दोहविधानाद्दधिपयसोः प्रभूतत्वम् । अतश्चाल्पाँस्तण्डुलान् प्रत्याधारत्वं सप्तम्यर्थो दधिपयसोः सिद्धः । **ननु** पुरोडाशनिवृत्तौ पाकोऽपि निवर्ततां, तथाच कथं चरुसिद्धिरत आह—**अनिवृत्तस्त्विति** । साधनविशेषाश्रितत्वाद्धर्माणां तण्डुलेष्वपि पाकानुवृत्तिर्व्रीहि-

## कल्पतरुपरिमलः ।

दध्न एवार्तिनिमित्तं नापि केवलपयस एवेत्येतदर्थमनुवादमात्रमिति तात्पर्यम् । शाब्दिकास्तु द्वित्वसंख्याविवक्षां नानुमन्यन्ते । **यदुक्तं हरिणा**—एकत्वं वा बहुत्वं वा केषांचिदविवक्षितम् । तद्विजात्यभिधानाय द्वित्वं तु स्याद्विवक्षितम् ॥ इति । एतद्व्याख्यानावसरे हेलाराजेन तथा सति यस्योभयं हविरित्यत्रापि द्वित्वस्य विवक्षायामन्यतरार्तौ नैमित्तिकाभावप्रसङ्ग इत्याशङ्क्य समाहितम् । तत्र द्वित्वमात्रं न श्रुतं, किंतु ध्ववयवः समुदायः; संख्याया अवयवे तयबिति संख्याविशेषयुक्तावयवघटितसमुदायार्थतयप्प्रत्ययादेशायजन्तत्वादुभयशब्दस्य । ततश्चात्रोभयशब्दार्थस्यावयवद्वयारब्धसमुदायस्यैकावयवनाशेऽपि नाशान्निमित्तमस्तीत्यन्यतरनाशेऽपि नैमित्तिकानुष्ठानमुपपद्यत इति । **द्रव्यमुखेनेतीति** । इह हि दार्शिकद्रव्याण्यपनीतपूर्वदेवतानि देवतान्तरसंयोजनसाकाङ्क्षाण्यासते, अतो मध्यमादिशब्दानां प्रकृतदार्शिकद्रव्यपरत्वावश्यंभावात्तन्मुखेन दर्शकर्मप्रत्यभिज्ञानं पूर्वोक्तं सिद्धान्तप्रयोजनं न गमयतीत्यवतारितः ततश्चेति टीकाग्रन्थः शङ्कान्तरपरिहारार्थत्वेनापि योजयितुं शक्यः । **तत्रेयं शङ्का**—कर्मान्तरमिति पूर्वपक्षे भवतु पुनर्दर्शानुष्ठानं प्रक्रान्तस्यैव दर्शस्य विकृतप्रयोगोऽभ्युदयेष्टिरिति सिद्धान्ते दर्शस्यानुष्ठितत्वात्किमिति पुनर्दर्शानुष्ठानम्—**इति** । **तत्रायं परिहारः**—अकालोपक्रान्तदर्शे नैमित्तिकेन विकृतिप्रयोगेण समापितेऽपि मुख्यकाले त्वननुष्ठितत्वाच्च पुनस्तदनुष्ठानम्—**इति** । **पुरोडाशसामर्थ्यादिति** । पुरोडाशस्यापूपविशेषत्वेन तत्सामर्थ्यादेव तण्डुलादीनां पाकान्तानां प्राप्तिः, व्रीहीनवहन्ति तण्डुलान् पिनष्टि पिष्टं संयौति पुरोडाशं श्रपयति कपालेषु श्रपयतीत्यादिविधयस्तु कर्तृकरणाद्युपायनियमार्था इति भावः । **दध्नस्तण्डुलानामिति** । **ननु**—देवतैक्याद्दधितण्डुलानां पयस्तण्डुलानां च प्रदाने साहित्यं सिध्यति, न तु पाके । स तु पयसः कुम्भ्यां भर्जनकपालेऽन्यत्र वा तण्डुलानामिति भेदेनैव प्राप्नोति । नच—दधँश्चरुं शृते चरुमिति दधियुक्ततण्डुलानां पयोयुक्ततण्डुलानां च देवतासंबन्धबोधनात् तण्डुलानां पाककाले तद्युक्तयोर्दधिपयसोरपि सहपाकः प्राप्नोतीति—वाच्यम्; दध्नः पयसश्च सप्तम्योः सहपाकादर्थप्राप्ताधिकरणत्वानुवादकतया वक्ष्यमाणत्वेन सप्तमीभ्यां दधिपयःसाहित्येन तण्डुलानां देवतासंबन्धाभावादिति—**चेत्**, अभ्युदयेष्टिप्रकरणे 'सह श्रपयती'ति वाक्यमस्ति, तेन दधितण्डुलानां पयस्तण्डुलानां च सहपाकसिद्धिरित्याहुः । **त्र्यधिकेति** । सान्नाय्यदोहं प्रकृत्य श्रूयते—'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयती'ति । तत्र कपिञ्जलन्यायेन तिस्र एवोत्तरा गावो न दोग्धव्याः, किंतु यावत्यो यजमानस्य गावस्ताः सर्वा दोग्धव्याः; "नास्यैतां रात्रिं कुमाराश्च न पयसो लभन्ते" इति वाक्यशेषात् । नचात्र कुमाराणामदृष्टार्थः पयोनिषेधः; दृष्टार्थत्वे संभवत्यदृष्टार्थकत्वकल्पनानुपपत्तेः । अप्यर्थेन च नेत्यनेनापि कृत्स्नस्य यजमानपयसो देवतार्थत्वेन विनियोगप्रतीतेश्चेति उत्तरासु न यावत्स्वमपूर्वत्वात् ( जै. अ. ११ पा. १ सू. ४६ ) दित्येकादशे निर्णीतम् । तदर्थोऽत्रानुसंहितः । **ननु पुरोडाशनिवृत्ताविति** पुरोडाशसामर्थ्याद् लब्धः तदर्थत्वेन च श्रुतः पाकः पुरोडाशनिवृत्तौ निवर्ततेति भावः । **साधनविशेषाश्रितत्वादिति** । यथा व्रीहीनवहन्तीत्यादिषु श्रुता अवहननादयो न व्रीहिप्रयुक्ताः,

## कल्पतरुपरिमलः ।

किं त्वपूर्वसाधनरूपसाधनविशेषप्रयुक्ताः । नहि ते व्रीहय इति कृत्वाऽवहन्यन्ते, किं तर्हि ? तण्डुलादिप्रणाडिकया पुरोडाशनिर्वर्तनद्वारेण यागापूर्वस्य साधनानीति यवेष्वपि तद्रूपसाम्यात्तेषामप्यवहननादयो भवन्ति, तथा पुरोडाशस्य पाको न पुरोडाशप्रयुक्तः, किं त्वपूर्वसाधनतारूपो यस्तद्धितसाधनताविशेषस्तत्प्रयुक्तः । स च स्वविष्टादिवाक्यद्वयाम्नातेषु तण्डुलेष्वपि समान इति भावः । **ननु** तण्डुलावस्थायां देवतासंयोजनाच्चरुत्वस्याविधानाच्च तण्डुला एव प्रदेया इति प्रथनपेषणवत् पाकोऽपि निवर्तेत, प्रदेयद्रव्यसिद्ध्यर्थो हि पाकः, इह प्रदेयास्तण्डुला विनैव पाकं सिद्धाः, अतएव चित्रायागद्रव्येभ्यस्तण्डुलेभ्यः पाकनिवृत्तिरुक्ता न्यायरत्नमालायां—'तण्डुलेभ्योऽर्थलोपेन श्रपणं विनिवर्तते' इति । दोहनानन्तरमेव श्रपितस्य शृतस्य दध्नश्च कथमपि न पाकप्राप्तिरस्ति । **सत्यम्**; इह सह श्रपयतीति वाक्यादेव पाकस्यापि सिद्धिः । **स्यादेतत्**—चरुसप्तम्यर्थयोरनुवाद्यत्वेन तद्विधानप्रयुक्तवाक्यभेदाभावेऽपि दधि तण्डुलांश्चोद्दिश्य पयस्तण्डुलांश्चोद्दिश्य देवतासंबन्धविधानेन प्रत्युद्देश्यं वाक्यपरिसमाप्त्या वाक्यभेदो दुर्निवारः । नच वाच्यं सप्तम्यन्तसमभिव्याहारलभ्यं तण्डुलानां दधियुक्तत्वं पयोयुक्तत्वं च विधेयमस्तु, मा भूत्सप्तम्यर्थस्यानुवाद्यत्वं, तथा च सहितस्यैकस्योद्देशान्न वाक्यभेद इति; तथापि साहित्यं देवतासंबन्धश्चेत्युभयविधाने वाक्यभेदानिवारणाद्दधिपयःसाहित्यस्य विधेयत्वे सान्नाय्यरहितानां सोमयाजिनामप्यभ्युदयेष्टिरस्तीति निर्णायकेन सान्नाय्यसंयोगान्नासन्नयतः स्या ( जै. अ. ६ पा. ५ सू. २१ )दित्यधिकरणेन विरोधप्रसङ्गाच्च । तत्र ह्यसन्नयतो दधिपयसोरभावान्नाभ्युदयेष्टिरिति पूर्वपक्षे दध्नस्तण्डुलानां पयसस्तण्डुलानां च प्रत्येकमुद्देश्यत्वेन तत्साहित्यस्याविवक्षितत्वादसन्नयतामपि केवलतण्डुलद्रव्यकाभ्युदयेष्टिः स्यात् । नच चरुत्वसिद्ध्यर्थं दधिपयसोर्मिश्रणापेक्षा; अनूद्यमानचरुत्वस्यानङ्गत्वेन तदभावे वैकल्याभावाद्, अप्सु श्रपणसंभवाच्चेति व्यवस्थापितम् । **एतेन**—देवतापनये प्रयोगविशेषश्चोद्यत इति टीकानुसाराद् द्रव्यद्वयेन देवतया च विशिष्टस्यैकस्य प्रयोगस्य विधानान्न वाक्यभेद इत्यपि शङ्का—**निरस्ता**; दधिपयसोर्विधेयतायामसन्नयतामभ्युदयाभावप्रसङ्गात्, प्रयोगस्य प्राप्ततया विकारमात्रविधानपर्यवसानेन वाक्यभेदपरिहारालाभाच्चेत्याशङ्कायां—**भवतु वाऽनेकवाक्यकल्पनम् । प्रकृताधिकारावगमबलादस्यापि न्याय्यत्वादिति** टीका प्रवृत्ता । तत्र यदि प्रकृताधिकारावगमः प्रकृतदर्शयागानुवृत्तिप्रत्यभिज्ञानं, तदा पञ्चशरावयागोऽपि विकृतो दर्श एव स्यान्न कर्मान्तरम् । तथा सति पञ्चशरावस्तु द्रव्याश्रुतेः प्रतिनिधिः स्यादित्यधिकरणे ( जै. अ. ६ पा. ४ सू. २८ ) यदार्तदोहप्रतिनिधित्वेन दर्शयाग एव पञ्चशरावद्रव्यविधिः न तु कर्मान्तरविधिरिति पूर्वपक्षे पञ्चशरावौदनस्य द्रव्यस्य इन्द्रस्य देवतायाश्च प्रकृतसान्नाय्ययागानुवादेन विधौ वाक्यभेदः स्यादतो द्रव्यदेवताविशिष्टनैमित्तिककर्मान्तरविधिरिति सिद्धान्तितं तद्विरोधः स्यात् । तथापि प्रकृतप्रत्यभिज्ञानेन वाक्यभेदस्यासोढव्यतापत्तिरित्याशङ्क्य विशेषितं द्रव्यद्वारेणेति । अपनीतपूर्वदेवतान्तरसंयोजनसापेक्षाणि दार्शिकान्येव तण्डुलादीनि गृह्यन्त इत्याकाङ्क्षानुसारेणावगम्यते । **किंच** यदि विभियादित्यादिवाक्ये महारात्रे फलीकरणपर्यन्तं कृत्वा पेषणमकृत्वा प्रतीक्षणवचनादपीदं ज्ञायते । अभ्युदयेष्ट्यामेत एव तण्डुला "इन्द्राय प्रदात्रे विष्णवे शिपिविष्टाय चे"ति । अन्यथा पेषणात्प्रागेव प्रयोगमवस्थाप्य प्रतीक्षणमदृष्टार्थं स्यात् । तथा आतञ्चनार्थस्य दध्यर्धस्याभ्युदयाभावपक्ष इव तदन्यस्य दध्यर्धस्याभ्युदयपक्षे प्रतिपत्त्यविधानादिदं ज्ञाप्यते अभ्युदयेष्ट्यां तदेवान्यदर्धं दधीति । अभ्युदयाभावपक्षे दध्यन्तरोत्पादनस्यानपेक्षितत्वादातञ्चनार्थं दध्यर्धप्रतिपत्त्यपेक्षावदभ्युदयपक्षे तदितरार्धस्य लौकिकदधिसाध्यायामभ्युदयेष्ट्यां दध्यन्तरोत्पादननिर्वर्त्ये मुख्यकालदर्शे चानुपयोगात्प्रतिपत्त्यपेक्षाऽस्तीति तत्प्रतिपत्तिरप्युदवर्ण्यत । तथा "विष्णवे शिपिविष्टाय शृते चरु"मिति शृतपदप्रयोगात् ज्ञायते अभ्युदयेष्ट्यां वैदिकप्रसिद्ध्या रूढ्या शृतशब्दवाच्यः प्रातर्दोह एव पयो न तु लौकिकं पय इति । अन्यथा आदित्यः प्रायणीयः पयसि चरुरित्यत्रेव पयःशब्द एव प्रयुज्येतेति । पशुकामेष्टौ तु गृहीतः शृतशब्दो लौकिकपयसो लक्षणार्थ इति सूत्रकृतैवोक्तं लक्षणार्था शृतश्रुतिरिति । न चेह लक्षणायां कारणमस्ति । एवमिह द्रव्यैक्यकृतानन्यथासिद्धा प्रत्यभिज्ञैव प्रकृतत्वमात्रकृता वाक्यभेददोषाभावात् प्रच्यावयितुं न क्षमेति विशेषं सूचयितुं द्रव्यद्वारेणेत्युक्तम् । एवंच स्वविष्टादिवाक्यद्वय इव सह श्रपयतीति वाक्येऽपि वाक्यभेदः । स च तण्डुलोद्देशेन प्रत्येकं दध्ना पयसा च सहपाकविधिरित्येवंरूपो वा दधितण्डुलानां च पयस्तण्डुलानां च सहपाकविधिरित्येवंरूपो वा न भवति; असन्नयतोऽभ्युदयेष्ट्यभावप्रसङ्गात्, किंतु दध्युद्देशेन पयउद्देशेन च तण्डुलसहपाकविधिः । तेन यत्र दधिपयसी तत्रैवेदं वाक्यद्वयं प्रवर्तत इत्यसन्नयतोऽप्यभ्युदयेष्टिलाभः । एवं चासन्नयतः प्रभूतदधिपयःसहपाकप्रयुक्तायाः पुरोडाशभावनिवृत्तेरभावात्पुरोडाशभावेनैव प्रदेयता । चरुशब्दः पाक्षिकानुवादः । दधिपयसोः सप्तमी च स्वविष्टानामणिष्टानां च तण्डुलानां देवतासंबन्धवच्चरुभावो विधेयः; स्वविष्टाणिष्टवाक्ययोः प्रत्येकं वाक्यत्रैविध्योपपत्तेः । एवं चरुभावस्याङ्गत्वादेवार्थाच्चरुभावसाधने दध्नि पयसि च प्रणीताधर्माणां प्राप्तिर्नवमे स्थापिता, असन्नायिनामप्सु चरोः श्रपणं भाष्यकारैरुक्तं च सङ्गच्छते । टीकायां परस्माच्च वरः वराच्च वरीयानिति व्युत्पत्तिर्दर्शिता । तत्र पञ्चम्यन्तस्य परशब्दस्य वरशब्दस्य च पूर्ववाक्ये सामगतिपरं-

तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्' इत्यादिनिर्देशसा-म्येऽप्युपक्रमभेदादभ्युदयवाक्ये देवतापनयोऽध्यवसितः, पशुकामवाक्ये तु यागविधिः। तथेहाप्युपक्रमभेदाद्विद्याभेदः । परोवरीयस्त्वादिवत् । यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' ( छा० १।९।१ ) 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा० १।९।२) इति परोवरीयस्त्वगुणविशिष्टमुद्गीथोपासनमक्ष्यादित्यादिगतहिर-ण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिन्नम् । नचेतरेतरगुणोपसंहार एकस्यामपि शाखायां तद्वच्छाखान्तरस्थेष्वप्येवंजातीयकेषूपासनेष्विति ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

अथोच्येत संज्ञैकत्वाद्विद्यैकत्वमत्र न्याय्यमुद्गीथविद्येति ह्युभयत्राप्येका संज्ञेति । तदपि नोप-पद्यते। उक्तं ह्येतत्—'न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्' ( ब्र० सू० ३।३।७) इति । तदेव चात्र न्याय्यतरम् । श्रुत्यक्षरानुगतं हि तत् । संज्ञैकत्वं तु श्रुत्यक्षरबाह्यमुद्गीथशब्दमात्रप्रयोगा-ल्लौकिकैर्व्यवहर्तृभिरुपचर्यते । अस्ति चैतत्संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषू-द्गीथविद्येति । तथा प्रसिद्धभेदानामप्यग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते तथेहापि भविष्यति। यत्र तु नास्ति कश्चिदेवंजातीयको भेदहेतुस्तत्र भवतु संज्ञैकत्वाद्विद्यैकत्वं यथा संवर्गविद्यादिषु ॥ ८ ॥ इति तृतीयमन्यथात्वाधिकरणम् ॥

### भामती ।

वगमबलादस्यापि न्याय्यत्वादिति । तस्मात्तदेवेदं कर्म नतु कर्मान्तरमिति सिद्धम् । पशुकामवाक्ये त्वपूर्वकर्मविधिर-भ्युदयवाक्यसारूप्येऽपि 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्याद्ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति । अत्रहि अमावा-स्यामिष्ट्वेति समाप्ते यागे पशुकामेष्टिविधानेनात्र पूर्वस्य कर्मणोऽननुवृत्तेर्यागान्तरविधिरिति युक्तम् । **परोवरीय-स्त्वादिवत्** । यथोद्गीथोपासनासाम्येऽपि आदित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनातः परोवरीयस्त्वगुण-विशिष्टोद्गीथोपासना भिन्ना तद्वदिदमपीति । परस्मात् परो वराच्च वरीयानिति परोवरीयानुद्गीथः परमात्मरूपः संपन्नः । अतएव अनन्तः । परमात्मदृष्टिमुद्गीथे भावयितुम् 'आकाशो ह्येवैभ्यो भूतेभ्यो ज्यायान्' इत्याकाशशब्देन परमात्मानं निर्दिशति ॥ ७ ॥ स्फुटतरे भेदावगमे संज्ञैकत्वं नाभेदसाधनमतिप्रसङ्गापातात् । **अपिच** श्रुत्यक्षरालोच-नया भेदप्रत्ययोऽन्तरङ्गश्चानपेक्षश्च । संज्ञैकत्वं तु श्रुतिबाह्यतया बहिरङ्गं च पौरुषेयतया सापेक्षं च । तस्माद्दुर्बलं नाभे-दसाधनायालमिति ॥ ८ ॥ **इति तृतीयमन्यथात्वाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

धर्माणामिवावघातादीनां यवेष्वित्यर्थः । **प्रकृताधिकारेति** । प्रकृतस्य दर्शपूर्णमासकर्मणो द्रव्यद्वारेणाधिकारावगमात् संबन्धावगमादगत्या वाक्यभेदस्य न्याय्यत्वादित्यर्थः । वत्सानपाकुर्याद्भोदेशाद्देशान्तरं नयेत् । इतरथा हि ते सर्वे दुग्धं पिबेयुरिति । भवतु परस्मात्स्वरप्राणादेः परो वराच्च तस्मादेव वरीयान् वरतर उद्गीथः कथमनन्तस्तत्राह—**परमात्म-रूपेति** । परमात्मदृष्ट्यध्यासात्तद्रूपसंपत्तिः । **ननु** "का साम्नो **गतिः** कारणं, स्वर इति होवाच स्वरस्य का गतिरिति प्राण" इतीत्युपक्रम्यास्य लोकस्य का गतिरित्यनन्ताकाशं निर्दिश्याकाशो ह्येवैभ्यो ज्यायानित्यादिनाऽऽकाशस्यैव परोव-रीयस्त्वादिगुणयोगं दर्शयति । तत्कथं परमात्मदृष्ट्यध्यास उद्गीथेऽत आह—**परमात्मदृष्टिमिति** । आकाशस्तल्लिङ्गा ( ब्र. अ. १ पा. १ सू. २२ ) दित्युक्तं न प्रस्मर्तव्यमित्यर्थः ॥ ७ ॥ ८ ॥

**तत्** तत्र देवासुरसंग्रामे ह किल देवा **उद्गीथम्** उद्गीथावयवोङ्कारम् **आजह्रुः**राहृतवन्तः । तस्य केवलस्याहरणायोगात् तदाश्रयं ज्योतिष्टोमादि आहृतवन्त इत्यर्थः । अनेन कर्मणा एतानसुरानभिभविष्याम इति स उद्गाता **वाचा प्राणेन** च वागुपसर्जनप्राणेनोद्गानं कृतवान् ॥ **इति तृतीयमन्यथात्वाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

परायां निवेशितस्वरप्राणादिरर्थ इति व्याचष्टे—**परस्मात्स्वरप्राणादेः परो वराच्च तस्मादेव वरीयान् वरतर इति** । परोवरीयानित्येकं पदं परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयतीति वाक्यशेषात्परशब्दे ओलनिपातेन सिद्धोयं शब्द उपन्यस्तार्थविषयः ॥ ७ ॥ ८ ॥ **इति तृतीयमन्यथात्वाधिकरणम्** ॥

---

१ **तत्र सूत्राणि ३**—अन्यथात्वं शब्दादिति चेन्नाविशेषात् ६ नवा प्रकरणभेदात् परोवरीयस्त्वादिवत् ७ संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ८ ॥

( ४ अधिकरणम् ) **व्याप्तेश्च समञ्जसम् ॥ ९ ॥**

'ओमित्येतदक्षरमुद्गीथमुपासीत' ( छा० १।१।१ ) इत्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभासनात्कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः । तत्राध्यासो नाम—द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धावन्यतरबुद्धिरध्यस्यते यस्मिन्नितरबुद्धिरध्यस्यतेऽनुवर्तत एव तस्मिंस्तद्बुद्धिरध्यस्तेतरबुद्धावपि । यथा नाम्नि ब्रह्मबुद्धावध्यस्यमानायामप्यनुवर्तत एव नामबुद्धिर्न ब्रह्मबुद्ध्या निवर्तते । यथावा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः । एवमिहाप्यक्षर उद्गीथबुद्धिरध्यस्यत उद्गीथे वाक्षरबुद्धिरिति । अपवादो नाम—यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेर्निवर्तिका भवति । यथा देहेन्द्रियसंघात आत्मबुद्धिरात्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या 'तत्त्वमसि' (छा० ६।८।७ ) इत्यनया यथार्थबुद्ध्या निवर्त्यते । यथा वा दिग्भ्रान्तिबुद्धिर्दिग्याथात्म्यबुद्ध्या निवर्त्यते । एवमिहाप्यक्षरबुद्ध्योद्गीथबुद्धिर्निवर्त्यत उद्गीथबुद्ध्या वाक्षरबुद्धिरिति । एकत्वं त्वक्षरोद्गीथशब्दयोरनतिरिक्तार्थवृत्तित्वम् । यथा द्विजोत्तमो ब्राह्मणो भूमिदेव इति । विशेषणं पुनः सर्ववेदव्यापिन ओमित्येतस्याक्षरस्य ग्रहणप्रसङ्ग औद्गात्रविशेषस्य समर्पणम् । यथा नीलं यदुत्पलं तदानयेति । एवमिहाप्युद्गीथो य ॐकारस्तमुपासीतेति । एवमेतस्मिन्सामानाधिकरण्ये वाक्ये विमृश्यमान एते पक्षाः प्रतिभान्ति तत्रान्यतमनिर्धारणकारणाभावादनिर्धारणप्राप्ताविदमुच्यते—व्याप्तेश्च समञ्जसमिति । चशब्दोऽयं तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः । तदिह त्रयः पक्षाः सावद्या

---

## भामती ।

**व्याप्तेश्च समञ्जसम् ॥९॥ अध्यासो नामेति** । गौणी बुद्धिरध्यासः । यथा माणवकेऽनिवृत्तायामेव माणवकबुद्धिव्यपदेशवृत्तौ सिंहबुद्धिव्यपदेशवृत्तिः सिंहो माणवक इति, एवं प्रतिमायां वासुदेवबुद्धिर्नाम्नि च ब्रह्मबुद्धिस्तथोङ्कार उद्गीथबुद्धिव्यपदेशाविति । अपवादैकत्वविशेषणानि चोक्तानि । एकार्थेऽपि च शब्दद्वयप्रयोगो दृश्यते । यथा वैश्वदेव्यामिक्षा विज्ञानमानन्दम् । व्याख्यायां च पर्यायाणामपि सहप्रयोगो यथा सिन्धुरः करी पिकः कोकिल इति । विमृश्यानध्यवसायलक्षणं पक्षं गृह्णाति—**तत्रान्यतम इति** । सिद्धान्तमाह—**इदमुच्यते—व्याप्तेश्च** । प्रत्यनुवाकं प्रत्यृचमुपक्रमे च समाप्तौ चोंकारः सर्ववेदव्यापीति किंगतोऽयमोंकारस्तत्तदाप्त्यादिगुणविशिष्टस्तस्मै तस्मै कामावाप्त्यादिफलायोपास्यत्वेनाधिक्रियत इत्यपेक्षायामुद्गीथपदेनेति विशिष्यते । उद्गीथपदेनोंकाराद्यवयवघटितसामभक्तिभेदाभिधायिना समुदायस्यावयवभावानुपपत्तेस्तत्संबन्ध्यवयव ओंकारो लक्ष्यते, न पुनरोंकारेणावयविन उद्गीथस्य लक्षणा।

## वेदान्तकल्पतरुः ।

**व्याप्तेश्च समञ्जसम् ॥ ९ ॥** ॐमित्येतदक्षरम् उद्गीथमिति वाक्ये ॐकारस्योद्गीथेन विशेषणमर्थं सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदो दर्शितः, इदानीं स एवार्थश्चिन्त्यते । भाष्ये भेदबुद्धावनुवर्तमानायामन्यतरबुद्धिरध्यास इत्यध्यासलक्षणमुक्तम् । तदयुक्तम्; स्मृतिरूप इत्यत्राविवेकपूर्वकत्वस्य वर्णितत्वादत आह—**गौणी बुद्धिरध्यास इति । उक्तानीति ।** भाष्ये यथाश्रुतान्येव ग्राह्याणि न व्याख्यानापेक्षाणीत्यर्थः । उद्गीथोङ्कारशब्दयोरैकार्थ्ये पर्यायत्वात्सहप्रयोगादेकत्वपक्षानुत्थानमाशङ्क्याह—**ऐकार्थ्येऽपीति** । भाष्यमुपादत्ते—**इदमुच्यत** इतीति शब्दो द्रष्टव्यः । ॐकारस्य शब्दविशेषस्य कथं वेदव्याप्तिरत आह—**प्रत्यनुवाकमिति** । यजुर्वेदे अध्ययनप्रवचनयोः प्रत्यनुवाकमुपक्रमसमाप्तौ चोङ्कार उच्चार्यते, ऋग्वेदे तु प्रत्यृचम् । अतएव सामवेदेऽपि ऋगध्यूढत्वात् साम्न इति सर्ववेदे व्यापक ॐकारः, प्रतिवेदं च स्वरादिभेदाद् भिद्यते । तद्विशेषप्रतिपत्त्यर्थमुद्गीथविशेषणमित्याह—**किंगतोऽयमिति** । विशेषणे च प्रयोजनमाह—**तत्तदाप्त्यादीति** । आदिशब्देन समृद्धिरसतमत्वादि गृह्यते । **आप्तिः** कामप्रापकत्वम् । **अधिक्रियते** प्रतिपाद्यते । **ननु** संभवे व्यभिचारे च विशेषणमर्थवत्, तत्र सर्ववेदव्यापकत्वाद्विशेष्यस्योङ्कारस्य भवतु विशेषणेन व्यभिचारः, संभवस्तु विशेष्ये ॐकारे विशेषणस्योद्गीथत्वस्य नोपपद्यते; उद्गीथशब्दस्य सकलभक्तिवाचित्वाद् भक्तित्वस्य च भक्त्यवयवे ॐकारेऽनुपपत्तेरत आह—**उद्गीथपदेनेति । स्यादेतत्**—उद्गीथशब्दस्य किमित्यवयवलक्षणार्थत्वम् ? ओंकारशब्द एवोद्गीथभक्तिनीमवयविनीं लक्षयतु, तदापि शब्दयोः सामानाधिकरण्यसंभवादत आह—**न पुनरोंकारेणेति** । खल्वेतस्यैवाक्षरस्योपव्याख्यानं

## कल्पतरुपरिमलः ।

**व्याप्तेश्च समञ्जसम् ॥ ९ ॥ स एवार्थ इति** । उद्गीथेन विशेषणरूपं यमर्थं सिद्धवत्कृत्य विद्याभेदो दर्शितः स-

## भामती ।

ॐकारस्यैवोपरिष्टात्तु तत्तद्गुणविशिष्टस्य तत्तत्फलविशिष्टस्य चोपव्याख्यास्यमानत्वात् । दृष्टश्च समुदायशब्दोऽवयवे लक्षणया, यथा ग्रामो दग्धः पटो दग्ध इति तदेकदेशदाहे । अध्यासे तु लक्षणा फलकल्पना च । **तथाहि** आप्त्यादिगुणकप्रणवोपासनादिदमुद्गीथोपासनं प्रणवस्यान्यत् । नचात्राप्त्यादि उपासनेष्विव फलं श्रूयते । तस्मात् कल्पनीयम् । उद्गीथसंबन्धिप्रणवोपासनाधिकारपरे वाक्ये नायं दोषः । **अपिच** गौण्या वृत्तेर्लक्षणावृत्तिर्बलीयसी; लाघवात् । लक्षणया हि लक्षणीयपरत्वं पदस्य तस्यैव वाक्यार्थान्तर्भावात् । यथा गङ्गायां घोष इति लक्ष्यमाणस्य तीरस्य वाक्यार्थेऽन्तर्भावोऽधिकरणतया । गौर्वाहीक इत्यत्र तु गोसंबन्धितिष्ठन्मूत्रपुरीषादिलक्षणया न तत्परत्वं गोशब्दस्य,

## वेदान्तकल्पतरुः ।

भवति; आपयिता ह वै कामानां भवति य एतदेवंविद्वानक्षरमुद्गीथमुपास्ते इत्यादिना प्रणवस्यैवाप्त्यादिगुणविशिष्टस्य तादृक्फलविशिष्टस्य चोपव्याख्यास्यमानत्वात्, प्रधाने च लक्षणानुपपत्तेरुद्गीथशब्द एव लाक्षणिक इत्यर्थः । ॐकारेण भक्तिलक्षणायां वैयर्थ्यं च स्याद्, उद्गीथपदेन भक्तिविशेषस्यैव समर्पणेन व्यभिचाराभावादित्यपि द्रष्टव्यम् । निरूढा चेयं लक्षणा न सांप्रतिकी स्यादित्यर्थः । इयं च वक्ष्यमाणन्यायेन गौण्येव लक्षणेत्युक्तेति । **ननु** किमिति फलकल्पना ? आप्त्यादिफलस्य श्रुतत्वादत आह—**आप्त्यादिगुणकेति** । ॐकारउद्गीथदृष्टेस्तस्मिन्नाप्त्यादिगुणदृष्टेस्तस्मिन्नाप्त्यादिदृष्टेश्चोपास्यरूपभेदाद्भेद इत्यर्थः । सिद्धान्ते फलकल्पनां वारयति—**उद्गीथसंबन्धीति** । उद्गीथभक्तिसंबन्धिनः प्रणवस्योपासनाया अधिकारप्रतिपादनं, तत्परे तु वाक्ये न फलकल्पनादोषः । आप्त्यादिदृष्टीर्विधातुमोमित्येतदक्षरमिति वाक्येन विशिष्टप्रणवसमर्पणेन पृथगुपासनविध्यभावादाप्त्यादिगुणविशिष्टप्रणवोपास्तेश्चापयिता ह वै कामानां भवतीत्यादिना फलश्रवणाचेत्यर्थः । विषयतया ॐकारउद्गीथदृष्टिविधौ हि गौण्युद्गीथशब्दस्य वृत्तिः स्यात् । उद्गीथदृष्टिविषयत्वं च गुणः । ततश्चोद्गीथदृष्टिदृष्टत्वादोङ्कार उद्गीथ इत्यर्थः संपद्यते । न पुनरुद्गीथेनोङ्कारलक्षणा तथा सति दृष्टिविध्यसिद्धेः । सिद्धान्ते त्ववयवविवचनेनोद्गीथशब्देनावयवलक्षणा । ततः किं जातमत आह—**गौण्या वृत्तेरिति** । वाच्यमर्थं विहाय यद्वस्तु लक्ष्यते तन्मात्रपरत्वलक्षणायाम् इत्यव्यवधानमुक्त्वा गौण्या लक्षणीयार्थद्वाराऽर्थान्तरे शब्दस्य वृत्तेर्व्यवधानमाह—**गौर्वाहीक इति** ।

## कल्पतरुपरिमलः ।

एवार्थश्छिन्त्यत इत्यर्थः । **उद्गीथभक्तिसंबन्धिनः प्रणवस्योपासनाया अधिकारप्रतिपादनमिति । प्रतिपादनं** विधानम् । तथाचोमित्यक्षरमुद्गीथमुपासीतेत्यत्र उद्गीथभक्त्यवयवोङ्कारकर्मविशिष्टोपासनाविधिरयं सोमेन यजेतेतिवद्विशिष्टविधिरूप उत्पत्तिविधिः । स एव रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ इत्यत्रोङ्कारे रसतमत्वगुणविधिः । "आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते" इत्यत्राप्तिगुणविधिः । "समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुपास्ते" इति तस्मिन् समृद्धिगुणविधिः । आप्तिसमृद्धिगुणविध्यर्थवादश्रुतफलद्वयग्रहणेन कल्प्योऽधिकारविधिः । **आप्त्यादिदृष्टीर्विधातुमिति** । दृष्टिविषयानाप्त्यादिगुणान् विधातुमित्यर्थः; उत्पत्तिविधिनैव दृष्टिप्राप्तेः । **पृथगुपासनाविध्यभावादिति** । वक्ष्यमाणफलविशिष्टोपासनोत्पत्तिविषयत्वेन स्वतन्त्रोपासनान्तरविध्यभावादित्यर्थः । नच—अत्र मा भूदयमुत्पत्तिविधिः, यथाश्रुतग्रन्थस्वारस्यानुरोधेनोद्गीथावयवत्वविशिष्टप्रणवरूपाश्रयसमर्पणपरोऽयमस्त्विति—वाच्यम्; एकपदश्रुत्योपासनान्वितस्य विधेस्तदतिलङ्घनेन विशेषणसंक्रान्तिकल्पनानौचित्यात् । अन्यथा सोमेन यजेतेति विधेरप्यधिकारविधित्वंभ्ययागानुवादेन सोमगुणमात्रविधित्वकल्पनाप्रसङ्गादिह रसतमत्वादिगुणविधिषु त्रिष्वपि विनिगमनाविरहात्तत्तद्गुणविशिष्टोपासनाविधित्वस्य कल्पनीयतया बहुविशिष्टबहूपासनाविधिकल्पनागौरवप्रसङ्गाच्च । **अपिच** गौण्या वृत्तेरिति टीकायामध्यासपक्षे गौणी वृत्तिः सिद्धवत्कृत्य व्यवहृता, विशेषणपक्षइव तस्मिन्नपि पक्षे लक्षणैव किं न स्यादित्याशङ्क्य तस्मिन् पक्षे दृष्टिविधित्वलाभार्थं गौणी वृत्तिरवश्याश्रयणीयेत्याह—**ॐकार उद्गीथदृष्टिविधौ हीति** । सादृश्यलक्षणागर्भा खलु गौणी । ततश्चोद्गीथशब्दस्य यद्योङ्कारे गौणी वृत्तिराश्रीयेत, तदोद्गीथदृष्टिविषयत्वम् । अमी पिष्टपिण्डाः सिंहाः क्रियन्तामित्यत्र सिंहाकारमिव साध्यसादृश्यं गृहीत्वा ॐकारमुद्गीथदृष्टिविषयं कुर्वन्नुपासीतेत्यर्थे पर्यवसानं कर्तुं शक्यमिति दृष्टिविधिर्लभ्येत । अवयवावयविसंबन्धमूलकलक्षणाश्रयणे तु सा न लभ्यतइति । **उद्गीथदृष्टिविषयत्वादोङ्कार उद्गीथ इत्यर्थ इति** । गौणवृत्त्याश्रयणे ओमित्येदक्षरमुद्गीथमित्यस्यैव तदर्थो लभ्यत इत्यर्थः । **गौण्यां लक्षणीयार्थद्वाराऽर्थान्तरे शब्दस्य वृत्तेर्व्यवधानमाहेति । लक्षणीयार्थो** मुख्यार्थसादृश्यम् । **ननु**—भाष्यस्वारस्यान्मुख्यार्थे यत्प्रवृत्तिनिमित्तं तस्यान्यत्रारोपेण शब्दस्य वृत्तिर्गौणी वृत्तिरभिमतेति प्रतीयते । टीकायामप्यधिकरणोपक्रमे तथैव गौणी वृत्तिर्लक्षिता । इह लक्षणागौण्योः सन्निकर्षविप्रकर्षप्रदर्शनभाष्यव्याख्यानावसरे मुख्यार्थसादृश्यं

इति पर्युदस्यन्ते । विशेषणपक्ष एवैको निरवद्य इत्युपादीयते । तत्राध्यासे तावद्या बुद्धिरितरत्राध्यस्यते तच्छब्दस्य लक्षणावृत्तित्वं प्रसज्येत तत्फलं च कल्प्येत । श्रूयत एव फलम् 'आपयिता ह वै कामानां भवति' ( छा० १।१।७ ) इत्यादीति चेत्, न; तस्यान्यफलत्वात् । आप्त्यादिदृष्टिफलं हि तन्नोद्गीथाध्यासफलम् । अपवादेऽपि समानः फलाभावः । मिथ्याज्ञाननिवृत्तिः फलमिति चेत्, न; पुरुषार्थोपयोगानवगमात् । नच कदाचिदप्योंकारादोंकारबुद्धिर्निवर्तत उद्गीथाद्वोद्गीथबुद्धिः । नचेदं वाक्यं वस्तुतत्त्वप्रतिपादनपरम्; उपासनाविधिपरत्वात् । नाप्यैकत्वपक्षः संगच्छते; निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात्; एकेनैव विवक्षितार्थसमर्पणात् । नच हौत्रविषय आध्वर्यवविषये वाऽक्षर ओंकारशब्दवाच्य उद्गीथशब्दप्रसिद्धिरस्ति । नापि सकलायां साम्नो द्वितीयायां भक्तावुद्गीथशब्दवाच्यायामोंकारशब्दप्रसिद्धिर्येनानतिरिक्तार्थता स्यात् । परिशेषाद्विशेषणपक्षः परिगृह्यते । व्याप्तेः—सर्ववेदसाधारण्यात् । सर्वव्याप्यक्षरमिह मा प्रसञ्जीत्यत उद्गीथशब्देनाक्षरं विशेष्यते । कथं नाम ? उद्गीथावयवभूत ओंकारो गृह्येतेति । नन्वस्मिन्नपि पक्षे समाना लक्षणा; उद्गीथशब्दस्यावयवलक्षणार्थत्वात् । सत्यमेवमेतत् । लक्षणायामपि तु संनिकर्षविप्रकर्षौ भवत एव । अध्यासपक्षे ह्यर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा, विशेषणपक्षे त्ववयविवचनेन शब्देनावयवः समर्प्यत इति संनिकृष्टा । समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तमाना दृष्टाः पटग्रामादिषु । अतश्च व्याप्तेर्हेतोरोमित्येतदक्षरमित्येतस्योद्गीथमित्येतद्विशेषणमिति समञ्जसमेतन्निरवद्यमित्यर्थः ॥ ९ ॥
इति चतुर्थं व्याप्त्यधिकरणम् ॥

## भामती।

अपितु तत्कक्षाध्यवसिततद्गुणयुक्तवाहीकपरत्वमिति गौण्या वृत्तेर्दुर्बलत्वं तदिदमुक्तं—**लक्षणायामपि त्विति**। गौण्यपि वृत्तिर्लक्षणावयवत्वाल्लक्षणोक्ता । यद्यपि वैश्वदेवीपदमामिक्षायां प्रवर्तते; तथाप्यर्थभेदः स्फुटतरः । आमिक्षापदं हि रूपेणामिक्षायां प्रवर्तते । वैश्वदेवीपदं तु तस्यामेव विश्वदेवविशिष्टायाम् । एवं हि विज्ञानानन्दयोरपि स्फुटतरः प्रवृत्तिनिमित्तभेदः सत्यपि ब्रह्मण्यैकार्थ्ये । नच व्याख्यानमुभयोरपि प्रसिद्धार्थत्वाद्भिन्नार्थत्वाच्च । शेषमतिरोहितार्थम् ॥ ९ ॥ **इति चतुर्थं व्याप्त्यधिकरणम्** ॥

## वेदान्तकल्पतरुः।

**लक्षणायामपीति** । भाष्ये पूर्वपक्षेऽपि लक्षणाभ्युपगमो न युक्तः, तत्र गौणी वृत्तिरित्युक्तत्वादत आह—**गौण्यपीति**। लक्षणा गुणविषयावयव एकदेशो यस्याः सा तथोक्ता । एवमध्यासपक्षं दूषयित्वैकत्वपक्षं दूषयति—**यद्यपीति**। वैश्वदेव्यादिशब्दे लक्ष्यैक्येऽपि वाच्यभेदान्न पर्यायत्वं, तव तु वाच्याभेदात्पर्यायत्वमित्यर्थः । **ननु** पर्यायत्वेऽपि करिसिन्धुरादिशब्दानां सहप्रयोग उक्तस्तत्राह—**नच व्याख्यानमिति** ॥ ९ ॥ **इति चतुर्थं व्याप्त्यधिकरणम्** ॥

## कल्पतरुपरिमलः।

लक्षयित्वा तद्द्वारेण तद्वत्यर्थान्तरे वृत्तिर्गौणीति लक्षितलक्षणारूपा सा टीकाकारैराचार्यैश्च वक्ष्यते ? किमर्थमिह भाष्यस्वारस्यपरित्यागः ? भाष्योक्त आरोप एव हि प्रकृतोपयोगी प्रसिद्धश्च । **तथाहि**—अध्यासपक्षे नाम्नि ब्रह्मत्वादेरोङ्कारे उद्गीथत्वादेरारोप्योपासना वर्णिता, तथोपासना च नाम्नि ब्रह्मशब्दस्य ब्रह्मत्वारोपेणोङ्कारे उद्गीथशब्दस्योद्गीथत्वारोपेण च वृत्त्यैव घटते । तस्मादारोपपक्ष एव प्रकृतोपयोगी । प्रसिद्धश्च स एव लोके वेदे च । लोके तावत्—"किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः । मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥" इति । अत्र नलविहारातुरया दमयन्त्या चन्द्रं प्रत्युपालम्भः क्रियते । मृतानां मनः चन्द्रे लगतीति प्रतिपादयन्तीं "यत्रास्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमित्या"दिश्रुतिं दृष्ट्वा खलु दमयन्ती मृता चेदस्या मनः स्वस्मिन् लग्नं भवेदिति प्रत्याशया मां मारयितुमिच्छसि । सा जडस्य तव प्रत्याशा निष्फला । यतः सा श्रुतिः नलमुखचन्द्रविषयेति विबुधो मन्मथो मह्यमुपदिष्टवानिति । एवं श्रुतेश्चन्द्रान्तरविषयत्ववर्णनं नलमुखे चन्द्रत्वारोपएव संगच्छते । एवम्—"अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अफाललोचनः शम्भुर्भगवान् बादरायणः ॥" इत्यत्रापि बादरायणे ब्रह्मत्वाद्यारोपे एव चतुर्वदनत्वादिप्रसिद्धब्रह्माद्यैकैकगुणवैकल्यवर्णनं स्वारस्यमश्नुते । अत्यल्पमिदमुदाहृतम् । सर्वत्रारोपप्रमाणा एव कार्यसरणयः । एवंभूतेष्वारोपेषु सादृश्यं व्यङ्ग्यविषयतया कविभिर्विवक्ष्यते, नतु गौणवृत्तिविषयतया । अतएव रूपकेणोपमा व्यज्यत इत्यालङ्कारिकसमयः । तथा वेदेऽप्यात्मानं रथिनं विद्धि शरीरं रथमेव चेत्यादिष्वात्मशरीरादिषु रथिरथादिभावारोपः सुप्रसिद्धः ।

१—तत्र सूत्रम् १—व्याप्तेश्च समञ्जसम् ९ ॥

( ५ अधिकरणम् ) **सर्वाभेदादन्यत्रेमे ॥ १० ॥**

वाजिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तम् । वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः । ते च गुणाः प्राणे पुनः प्रत्यर्पिताः—'यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' ( बृ० ६।१।१४ ) इत्यादिना । अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु 'अथातो निःश्रेयसादानम्', 'एता ह वै देवता अहंश्रेयसे विवदमानाः' ( कौ० २।१४ ) इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तं न त्विमे वसिष्ठत्वादयोऽपि गुणा उक्ताः । तत्र संशयः—किमिमे वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्राप्यस्येरन्नुत नास्येरन्निति । तत्र प्राप्तं तावन्नास्येरन्निति । कुतः ? एवंशब्दसंयोगात् । 'अथो य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा' इति तत्र तत्रैवंशब्देन वेद्यं वस्तु निवेद्यते । एवंशब्दश्च संनिहितावलम्बनो

## भामती ।

**सर्वाभेदादन्यत्रेमे ।** एवंशब्दस्य सन्निहितप्रकारभेदपरामर्शार्थत्वात्साक्षाच्छब्दोपस्थापितस्य च संनिधानाच्छाखान्तरगतस्य चानुक्रमतया संनिधानाभावान्न कौषीतकिप्राणसंवादवाक्ये प्राणस्य वसिष्ठत्वादिभिर्गुणैरुपास्यत्वमपि तु

## वेदान्तकल्पतरुः ।

**सर्वाभेदादन्यत्रेमे ॥ १० ॥** ओंकारस्य सर्वस्य प्राप्तावुद्गीथमिति विशेषणादन्यव्यावृत्तिवदेवं विद्वानित्येवंशब्दात्संनिहितावलम्बनादसंनिहितस्य विद्यैक्यद्वाराऽनुमानात् प्राप्नुवतो वसिष्ठत्वादेर्व्यावृत्तिरिति पूर्वपक्षमाह—**एवंशब्दस्येति । ननु** कौषीतकिवाक्यं, वसिष्ठत्वादिमत्प्राणविषयं, श्रैष्ठ्यादिगुणकप्राणोपास्तिपरत्वाद्, वाजसनेयिवाक्यवदित्यनुमानाद्वसिष्ठत्वादिकमपि संनिहितमिति नेत्याह—**साक्षादिति ।** अशब्दस्य शाब्देनाऽनन्वयात् । नहि गामानयेति वाक्यार्थे प्रत्यक्षदृष्टो घटोऽन्वेतीति । फलविधिपरे एवंविद्वानिति वाक्येऽन्यव्यावृत्तिपरत्वमेवंशब्दस्य न युक्तम्; वाक्यभेदप्रसङ्गादिति केशवोक्त-

## कल्पतरुपरिमलः ।

अजामेकामित्यादिमन्त्रे प्रकृतावजात्वकल्पना 'असौ वा आदित्यो देवमधि'त्यादावादित्यमण्डले मधुत्वकल्पनेत्यादिकमपि सुप्रसिद्धमेव । इत्थं वेदे आरोपमूलां शब्दवृत्तिं "शरीररूपकविन्यस्तगृहीतेरिति" "कल्पनोपदेशाच्च" "मध्वादिवदविरोध" इतिं च सूत्रकारोऽपि स्पष्टमाह । तस्मादिह लक्षितलक्षणारूपा गौणीति व्याख्यातुमयुक्तम् । नच लक्षणागौण्योः सन्निकर्षविप्रकर्षप्रतिपादकव्याख्येयभाष्यमनुसृत्य तथा व्याख्यानम्; मुख्यार्थसाक्षात्संबन्धमूला लक्षणा सन्निकृष्टा मुख्यार्थवृत्तिगुणसमानगुणाधिकरणत्वरूपपरम्परासंबन्धमूला गौणी विप्रकृष्टेत्येवं भाष्यतात्पर्योपपत्तेरिति—**चेत्, उच्यते**; यथाभाष्यमारोपमूला गौणीत्येव टीकाकाराणामाचार्याणामप्यभिमतं तदधिकरणोपक्रमटीकातद्व्याख्यानाभ्यां स्पष्टम् । सन्निकर्षविप्रकर्षभाष्यं गौण्यारोपमूला न भवति, किंतु सादृश्यलक्षणामूलेति ये पूर्वमीमांसका वर्णयन्ति तन्मतानुसारेणापि योजयितुं शक्यमिति वैभवात्तथा व्याख्यातम् । पूर्वमीमांसकैर्हि तत्सिद्धिपेटिकायां यजमानः प्रस्तर इत्यत्र प्रस्तरे यजमानशब्दस्य यजमानत्वारोपेण वृत्तिर्न भवति, किंतु तत्कार्यकरणत्वरूपयजमानसादृश्येनेति महता यत्नेनोपपादितम् । वस्तुतस्त्वत्रापि यजमानत्वारोपेण वृत्तिरित्येव युक्तम् । "उत्तरं बर्हिषः प्रस्तरं सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोती"ति संदर्भो "रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वा यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानं स्वर्गं लोकं गमयती"ति संदर्भश्च संगच्छते । बर्हिष उपरि यत्प्रस्तरस्यासादनं तदेव यजमानस्यायजमानादुत्तरीकरणमिति वचनं हि बर्हिषि प्रस्तरत्वारोपे प्रस्तरे यजमानत्वारोपे च सत्येव संगच्छते । तथा रोहितेन त्वेत्यादिभिर्मन्त्रैः प्रस्तरस्याहवनीये स्वर्गो लोक आहवनीय इत्यर्थवादान्तरश्रुतेः प्रहरणं प्रक्षेपणमिति वचनमपि मन्त्रेषु देवाश्वत्वस्य प्रस्तरे यजमानत्वस्याहवनीये स्वर्गत्वस्य चारोप एव संगच्छते । एवं सत्यपि वार्तिकादिषु यदारोपप्रच्छादनं तद्वेदप्रामाण्यसंरक्षणव्यसनितया । यद्यपि रुद्ररोदनाद्यसदर्थमवलम्ब्य विधेयस्तुतौ तात्पर्यवर्णने प्रामाण्यस्य न क्षतिः; तथापि—**प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥** इति न्यायमवलम्ब्य वेदप्रामाण्यप्रतिषेधकारणं कियतोऽप्यवकाशस्यालाभायारोपपक्षः प्रौढ्या प्रच्छादितः । अलं विस्तरेण ॥ ९ ॥ **इति चतुर्थं व्याप्त्यधिकरणम् ॥**

**सर्वाभेदादन्यत्रेमे ॥ १० ॥ ननु कौषीतकिवाक्यमिति ।** एवंशब्दः सन्निहितावलम्बन इत्येतावता शाखान्तरोक्तं वसिष्ठत्वादिकं न व्यावर्तयति, तस्याप्यनुमानतः सन्निहितत्वेनैवंशब्दपरामर्शनीयत्वादिति शङ्कार्थः । सन्निधापितमेवैवंशब्दः परामृशति न प्रमाणान्तरसन्निधापितमपि; अन्यथा गामानयेत्यत्र गोरिव प्रत्यक्षोपस्थापितघटस्यापि कर्मतयाऽन्वयप्रसङ्गादिति परिहारार्थः । **फलविधिपरे इति ।** अथो य एवं विद्यादित्यादि तदस्तो भवति यदस्ता देवा

न शाखान्तरपरिपठितमेवंजातीयकं गुणजातं शक्नोति निवेदयितुम् । तस्मात्स्वप्रकरणस्थैरेव गुणैर्निराकाङ्क्षत्वमिति । एवं प्राप्ते प्रत्याह—अस्येरन्निमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि । कुतः ? सर्वाभेदात् । सर्वत्रैव हि तदेवैकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते—प्राणसंवादादिसारूप्यात् । अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन् ? नन्वेवंशब्दस्तत्र तत्र भेदेनैवंजातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम् । अत्रोच्यते—यद्यपि कौषीतकिब्राह्मणगतेनैवंशब्देन वाजसनेयिब्राह्मणगतं गुणजातमसंशब्दितमसंनिहितत्वात्; तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेनैवंशब्देन तत्संशब्दितमिति न पर-

## भामती ।

ज्येष्ठश्रेष्ठत्वमात्रेणेति पूर्वः पक्षः । सिद्धान्तस्तु—सत्यं संनिहितं परामृशति एवंकारो न तु शब्दोपात्तमात्रं संनिहितम् । किंतु यच्छब्दाभिहितार्थनान्तरीयकतया प्राप्तं तदपि हि बुद्धौ संनिहितं संनिहितमेव । यथा 'यस्य पर्णमयी जुहूर्भवति' इत्यव्यभिचरितक्रतुसमन्वयया जुह्वोपस्थापितः क्रतुः । तस्मादुपास्यफलप्रत्यभिज्ञानात्तदव्यभिचारिणः प्रकारभेदस्येहानुक्तस्यापि बुद्धौ संनिधानात्प्रकृतपरामर्शिनैवंकारेण परामर्शो युक्त इति सिद्धं कौषीतकिब्राह्मणगतेन तावदेवंकारेण शक्यते परामृष्टुम् । तथाप्यभ्युपेत्यापि ब्रूम इत्याशयवता भाष्यकृतोक्तं—**तथापि तस्मिन्नेव विज्ञाने**

## वेदान्तकल्पतरुः ।

मयुक्तम्; व्यावृत्तिपरेऽपि वाक्ये विद्यैक्यद्वारा प्राप्तशाखान्तरीयफलसंबन्धानुवादात् कुतो वाक्यभेदः ? सत्यमशाब्दं शाब्दे नान्वेति सन्निधिमात्रमभिदधतस्त्वेवंशब्दस्य शाखान्तरीयमपि वसिष्ठत्वादिकं गुणिद्वारेण सन्निहितमभिधेयमिति भवति शाब्दम् । अतश्च वाक्यार्थेऽन्वेतीति सिद्धान्तयति—**सत्यमित्यादिना** । एवंच सिद्धान्ते संनिहितसमस्तधर्मपरामर्शिन एवंशब्दस्यानुवादकत्वात् फलपरत्वमेव कौषीतकिवाक्यस्येति वेदितव्यम् । जुह्वोपस्थापितक्रतुः संनिहितः, स च जुहूपदस्य लक्ष्य इति नाशाब्द इत्यर्थः । **उपास्यफलप्रत्यभिज्ञानादिति** । उपास्यप्राणस्य प्रत्यभिज्ञानात्तदासिलक्षणफलस्य प्रत्यभिज्ञानाच्चेत्यर्थः । भाष्ये कौषीतकिब्राह्मणगतेनैवंशब्देन वाजसनेयिब्राह्मणगतगुणपरामर्शाभावाङ्गीकारो न युक्तः; उक्तप्रकारेण तत्परामर्शस्यापि संभवादत आह—**तथापीति** । शाखान्तरीयगुणोपसंहारेऽपि स्वशाखागतगुणस्वीकारा-

## कल्पतरुपरिमलः ।

इत्यन्तं तत्र फलवाक्यम् । **विद्यैक्यद्वारा प्राप्तशाखान्तरीयफलसंबन्धानुवादादिति** । **ननु** कौषीतकिशाखायां "तदमृतो भवति यदमृता देवा" इति प्राणदेवतासायुज्यं फलमुक्तम् । शाखान्तरे तु छान्दोग्ये बृहदारण्यके च ज्यैष्ठ्यश्रैष्ठ्यरूपफलं तद्बृहदारण्यके स्वानामिति विशेषणात् ज्ञातिमध्ये वयसा गुणेन चाधिक्यरूपमैहिकमेव, तत्कुतः शाखान्तरीयफलानुवादसंभवः ? इति—**चेत्, उच्यते**; कौषीतकिशाखायामिवास्ति शाखान्तरेऽप्यनाम्नातवसिष्ठत्वादिगुणा प्राणविद्या । अतएव भाष्ये कौषीतकिप्रभृतीनामित्युक्तम् । तेषु प्राणदेवतासायुज्यं फलमुक्तमस्तीत्याचार्याणामाशयः । **ननु**—छान्दोग्यबृहदारण्यकोक्तज्यैष्ठ्यश्रैष्ठ्यगुणलाभोऽपि प्राणदेवतासायुज्यरूप एव; तत्सायुज्यस्य तद्गुणान्वयरूपत्वात्, बृहदारण्यके ज्येष्ठश्च श्रेष्ठश्च स्वानां भवतीत्येतदनन्तरमपि च येषां बुभूषति य एवं वेदेति वाक्येनान्येषामपि येषां ज्येष्ठश्च श्रेष्ठश्च भवितुमिच्छति तेषामपि ज्येष्ठः श्रेष्ठश्च भवतीति ज्यैष्ठ्यश्रैष्ठ्ययोरैहिकामुष्मिकसाधारण्यस्योक्तत्वात्, एवं फलाभेदोपपादनेन पूर्वपक्षसिद्धान्तयोर्विद्यैक्यसिद्धवत्कारयोगात् । तस्मात्फलानुवादेनान्यव्यावृत्तिपरतोक्तिर्युक्तैव । **ननु**—पञ्चाग्निविद्यावैश्वानरविद्यादिफलवाक्येष्वपि एवं श्रूयते तेषामपि शाखान्तरप्राप्तफलानुवादेनान्यव्यावृत्तिपरता स्यादिति—**चेत्, अस्तु**, पूर्वपक्षिणः का हानिः ? अत्र सैद्धान्तिकन्यायव्युत्पादनेन तेष्वनुपसंहारशङ्कानिरासो भविष्यतीति । **ननु** सत्यमित्यादिटीकायामशाब्दस्यापि शाखान्तरीयगुणजातस्य शाब्दान्वयो युक्तः; अव्यभिचरितक्रतुसंबन्धिजुहूपस्थापितस्य क्रतोः पर्णतान्वयदर्शनात्, तथेहाऽव्यभिचरितवसिष्ठत्वादिगुणसंबन्ध्युपास्यफलोपस्थापितस्य वसिष्ठत्वादेरन्वयसंभवादित्युक्तमिति प्रतिभाति । तन्न युक्तम्; शब्दोपस्थापितस्यैव शाब्दान्वयनियमात्, पर्णतावाक्येऽपि न लिङ्गोपस्थापितस्य क्रतोरन्वयः, किंतु जुहूपदलक्षितस्य । पर्णताया जुह्वाकृतिमात्रार्थत्वे वैयर्थ्यं स्यादिति जुहूपदस्य तद्वति क्रतौ लक्षणा स्वीकृता । न चेह कस्यचित्पदस्य शाखान्तरीयगुणजातलक्षणायां किंचित्कारणमस्तीत्याशङ्कां वारयति—**सत्यमशाब्दं शाब्दे नान्वेतीति । भवति शाब्दमिति** । स्वशाखाम्नातवत्परशाखाम्नातमपि शाब्दमेव; शाब्दत्वेऽपि कौषीतकिशाखागतैवंशब्दार्थावगतिसमये शाखान्तराम्नातं गुणजातं शब्देन नोपस्थितं, किं तु स्वशाखाम्नातं तत्पूर्वापरानेकवाक्यविहितं तदाशब्देनोपस्थितं । तदानीमशाब्दमपि शब्दमूलप्रतिपत्त्यास्पदमेतत्प्रकरणाम्नातगुणत्वेन क्रोडीकृतम् एवंशब्दो गोचरयेदिति चेत्, एवं तर्हि शाखान्तराम्नातमपि गुणजातमेतद्विद्यासंबन्धिगुणत्वेन क्रोडीकृतं स गोचरयतीत्यस्तु; प्रधानभूतविद्याघटितप्रकरणानुप्रवेशापेक्षया विद्यानुप्रवेशो लाघवादिति भावः । **उपास्यफलप्रत्यभिज्ञानादिति** । फलप्रत्यभिज्ञान-

शाखागतमप्यभिन्नविज्ञानावरुद्धं गुणजातं स्वशाखागताद्विशिष्यते। नचैवं सति श्रुतहानिरश्रुतकल्पना वा भवति। एकस्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति; गुणवतो भेदाभावात्। नहि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरं गतस्तद्देश्यैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति। यथाच तत्र परिचयविशेषाद्देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते। एवमभियोगविशेषाच्छाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽप्यस्येरन्। तस्मादेकप्रधानसंबद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैवोपसंहर्तव्या इति॥ १०॥ इति पञ्चमं सर्वाभेदाधिकरणम्॥

## भामती।

**वाजसनेयिब्राह्मणगतेनेति। श्रुतहानिरिति।** केवलस्य श्रुतस्य हानिरितरसहितस्य चाश्रुतस्य कल्पना न चेत्यर्थः। अतिरोहितमन्यत्॥ १०॥ **इति पञ्चमं सर्वाभेदाधिकरणम्॥**

## वेदान्तकल्पतरुः।

त्कथं श्रुतहानिप्रसक्तिर्यतो भाष्ये निषिध्यतेऽत आह—**केवलस्येति।** केवला हि स्वशाखायां श्रुतास्तेषां कैवल्यहानिरश्रुतोपसंहारे सतीति शङ्केत्यर्थः॥ १०॥

**निःश्रेयसं** श्रैष्ठ्यं तस्यादानं निर्धारणं प्रस्तूयत इत्यर्थः। **अहंश्रेयसे** आत्मश्रेष्ठत्वाय। यथा प्राणो वागादिभ्यः श्रेष्ठस्तथाउ। तथाउशब्दोऽप्यर्थः। एवं विद्वानपि प्राणे श्रैष्ठ्यं विदित्वा उपास्यप्राणात्मत्वप्राप्त्या श्रैष्ठ्यादिगुणान्वितो भवति॥ **इति पञ्चमं सर्वाभेदाधिकरणम्॥**[1]

## कल्पतरुपरिमलः।

मुपपादितम्। **स्यादेतत्**—वसिष्ठत्वादीनां कौषीतकिशाखाम्नातायामुदाहृतप्राणविद्यायामुपसंहारो न युज्यते; विरोधात्, तथाहि—**वाचो वसिष्ठत्वं** वाग्मिनः सद्व्यवहारजननेन वसुमत्तासंपादकत्वं **चक्षुषः प्रतिष्ठात्वं** चक्षुष्मतः समविषमभूतलादिप्रदर्शनेन प्रतिष्ठासंपादकत्वं **श्रोत्रस्य संपत्त्वं** वेदशास्त्रतदर्थश्रवणादिसंपादनेन संपत्करत्वं **मनस आयतनत्वं** स्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वमिति तत्तद्वाक्यशेषाद्यनुसारेण स्थितम्। अतो यदहं वसिष्ठोऽस्मीत्यादेर्यदहं वसुमत्तासंपादनसमर्थोऽस्मि त्वं तद्वसिष्ठोऽसि मत्सामर्थ्यस्य त्वदधीनत्वात्त्वैतत्सामर्थ्यमित्यादिरर्थः। इदं च प्राणस्य वागादिगततत्तत्कार्यसंपादनसामर्थ्यनिमित्तत्वरूपं वसिष्ठत्वादिकं छान्दोग्यवाजसनेयकगतप्राणविद्यायामुपपाद्यते; तयोः प्राणोच्चिक्रमिषायां वागादीनामपि क्रमेण प्रसक्तिवर्णनेन तेषां स्वकार्यकरणसामर्थ्यस्य प्राणाधीनत्वात्। कौषीतकिशाखायां दशमाध्याये यत्प्राणविद्याम्नानं, तत्रापि वसिष्ठत्वादिकमुपपद्यते। तत्र हि "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवती"त्यारभ्य छान्दोग्यबृहदारण्यकरीत्यैव प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यगुणवत्त्वं वागादीनां वसिष्ठत्वादिगुणकत्वं मुख्यप्राणस्य वागादीनां च श्रैष्ठ्यविषयपरस्परविवादेन ब्रह्मसभोपवर्णनं यस्मिन्नुत्क्रान्ते शरीरेन्द्रियानवस्थितिः स श्रेष्ठ इति ब्रह्मवचनं तत्परिचिकीर्षया वागादीनामेकैकस्य शरीरादुत्क्रम्य पर्यटनं तदा शरीरस्येन्द्रियाणां च यथापूर्वमवस्थानं प्राणस्योत्क्रमणप्रवृत्तौ तेषां विशरणं ततो भीतानां वागादीनां मोत्क्रमीस्त्वन्नः श्रेष्ठ इति मुख्यप्राणं प्रति वचनमित्येतत्सर्वं क्रमेण वर्णितम्। प्राणे वागादिगतवसिष्ठत्वादिगुणसमर्पणमात्रं नोक्तम्। कौषीतकिशाखायां चतुर्थाध्याये "अथातो निःश्रेयसादान"मित्यारभ्य या प्राणविद्याऽऽम्नाता तस्यामुक्तरूपं वसिष्ठत्वादिकं प्राणे नोपपाद्यते। तत्र हि प्राणानधीनकार्यत्वं वागादीनामुक्तम्। शरीरमात्रस्य प्राणाधीनस्थितिसंचारादिमत्त्वमुक्तम्। "अथातो निःश्रेयसादानं सर्वा वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुस्तद्दारुभूतं शिश्ये अथैतद्वाक् प्रविवेश तद्वाचा वदच्छिश्य एव। अथैनच्चक्षुः प्रविवेश तद्वाचावदच्चक्षुषा पश्यच्छिश्य एव। अथैनत् श्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वत् शिश्य एव। अथैनन्मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यत् श्रोत्रेण शृण्वत् मनसा ध्यायत् शिश्य एव। अथैनत् प्राणः प्रविवेश तत्तत एव समुत्तस्थाविति। तस्मादुदाहृतकौषीतकिशाखाम्नातप्राणविद्यायां वसिष्ठत्वाद्युपसंहारो न युक्त इति—**चेत्, उच्यते;** वागादीनामभिवदनमात्रस्य प्राणानधीनत्वोक्ताविति गोष्ठीषु सद्व्यवहारजननेन वसुमत्तासंपादकत्वरूपं यद्वसिष्ठत्वम् एवमादिकं शरीरस्थितिसंचारापेक्षं प्राणाधीनमित्येतदिहाप्यनुमतमेवेति वसिष्ठत्वाद्युपसंहारे न काप्यनुपपत्तिः॥ १०॥

**उशब्दोऽप्यर्थ इति।** तथो इत्यत्र तथा उ इति द्वे पदे इति भावः। **प्राणात्मत्वप्राप्त्या** प्राणसायुज्यप्राप्त्या। **अथ वा**—कल्पान्तरे प्राणदेवताभावप्राप्त्या॥ **इति पञ्चमं सर्वाभेदाधिकरणम्॥**

---

१ तत्र सूत्रम् १—सर्वाभेदादन्यत्रेमे॥ १०॥

( ६ अधिकरणम् ) **आनन्दादयः प्रधानस्य ॥ ११ ॥**

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिष्वानन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वमित्येवंजातीयका ब्रह्मणो धर्माः क्वचित्केचिच्छ्रूयन्ते । तेषु संशयः—किमानन्दादयो ब्रह्मधर्मा यत्र यावन्तः श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः किंवा सर्वे सर्वत्रेति । तत्र यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायामिदमुच्यते—आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः । कस्मात् ? सर्वाभेदादेव । सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यते । तस्मात्सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन ॥ ११ ॥ नन्वेवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन् । तथाहि—तैत्तिरीयक आनन्दमयमात्मानं प्रक्रम्याम्नायते—'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' ( तै० २।५ ) इति । अत उत्तरं पठति—

## भामती ।

**आनन्दादयः प्रधानस्य ॥ ११ ॥** गुणविधानस्य वास्तवगुणव्याख्यानाद्विवेकार्थमिदमधिकरणम् । यथैकस्य ब्रह्मणः संयद्वामत्वादयः सत्यकामादयश्च गुणा न संकीर्येरन् । एवमानन्दविज्ञानत्वादयो विभुत्वनित्यत्वादिभिर्गुणैः प्रदेशान्तरोक्तैर्न संकीर्येरन् । तत्संकरे वा संयद्वामत्वादयोऽपि सत्यकामादिभिः संकीर्येरन् । नहि ब्रह्मणो धर्मिणः सत्वे कश्चिद्विशेष इति पूर्वः पक्षः । राद्धान्तस्तु—वास्तवविधेययोर्वस्तुधर्मतया चानुष्ठेयतया चाव्यवस्थाव्यवस्थे व्यवतिष्ठेते । वस्तुधर्मो हि यावद्वस्तु व्यवतिष्ठते । नासावेकत्रोक्तोऽन्यत्रानुक्तो नास्तीति शक्यं वक्तुम् । विधेयस्तु पुरुषप्रयत्नतन्त्रः । पुरुषप्रयत्नश्च यत्र यावद्गुणविशिष्टे ब्रह्मणि चोदितः स तावत्येवावतिष्ठते नाविहितमपि गुणं गोचरीकर्तुमर्हति । तस्य विधितन्त्रत्वाद्विधेश्च व्यवस्थानात् । तस्मादानन्दविज्ञानादयो ब्रह्मतत्त्वात्मतयोक्ता यत्र यत्र ब्रह्म श्रूयते तत्र तत्रानुक्ता । अपि लभ्यन्ते । संयद्वामादयश्चोपासनाप्रयत्नविधिविषया यथाविध्यवतिष्ठन्ते, न तु यथावस्त्विति सिद्धम् । प्रिय-

## वेदान्तकल्पतरुः ।

**आनन्दादयः प्रधानस्य ॥ ११ ॥** प्राणस्य सविशेषत्वाद्युक्तः शाखान्तरीयवसिष्ठत्वाद्युपसंहारः, ब्रह्मणस्तु निर्विशेषत्वात् स्वशाखागतधर्मैरेव प्रमितिसिद्धेर्नानन्दाद्युपसंहार इति प्रत्यवस्थानात्सङ्गतिः । **ननु** वेद्यब्रह्मैक्याद् गुणोपसंहार उत्सर्गप्राप्तः । नचात्रापवादकमेवंशब्दवत् किंचिदुपलभ्यते तत्किमर्थमधिकरणमारभ्यते ? अत आह—**गुणविधानस्येति** । यद्यानन्दादयो ब्रह्मैक्यात्सर्वशाखासूपसंह्रियेरन्, तर्हि संयद्वामत्वादयः किमिति नोपसंहृता इति प्रतिबन्द्याशङ्कायां संयद्वामत्वादय उपासनार्थं विधेया विधिप्रयुक्तापूर्वस्य चानिर्ज्ञातपरिमाणत्वादपूर्वप्रयुक्तधर्माणां यथाविधि व्यवस्था, सत्यज्ञानादयस्तु वस्तुतत्त्वप्रमित्यर्था इति यत्र यत्र वस्तुतत्त्वप्रतिपत्तिस्तत्र तत्र नेतव्या इति विशेषप्रदर्शनेन प्रतिबन्दीं परिहर्तुमयमारम्भ इत्यर्थः । शिष्टं स्पष्टार्थम् । **यत्तु**—निर्विशेषे पदान्तरवैयर्थ्यादनुपसंहारः—**इति, तत्रोच्यते**; सत्यज्ञानानन्दानन्तात्मत्वपदार्था इतरेतरं विशेषणविशेष्यभूता विरुद्धानृतजडदुःखपरिच्छेदानात्मताभ्रान्तीर्व्यावर्तयन्तः सत्तादिपरापरसामान्याधारभूतामेकामानन्दव्यक्तिं लक्षयन्ति सद् द्रव्यं कुम्भ इति पदानीव कुम्भव्यक्तिम् । एतादृशब्रह्मसि-

## कल्पतरुपरिमलः ।

**आनन्दादयः प्रधानस्य ॥ ११ ॥ संयद्वामत्वादय** इत्यादेर्**यथाविधि व्यवस्थे**त्यन्तस्यायमर्थः । अक्षिपुरुषोपासनार्थमुपास्यगुणत्वादयो संयद्वामत्वादयो दध्यादिवद्विधेयाः । अतः कालान्तरभाविफलोद्देश्यकगुणविशिष्टब्रह्मोपासनाविधिप्रयुक्तं फलापूर्वमभ्युपगन्तव्यम्, तत्प्रयुक्ताश्चेतिकर्तव्यतारूपा धर्माः । कर्तव्यत्वेनोपदिष्टस्य कथं कर्तव्यमित्याकाङ्क्षायामित्थं कर्तव्यमित्युपदिश्यमानस्तत्तत्प्रकारविशेषः खल्वितिकर्तव्यता, सात्वपूर्वप्रयुक्तेति पूर्वतन्त्रे सप्तमाद्ये व्युत्पादितम् । **तदित्थं**—यद्यपि यागेनाऽपूर्वं कृत्वा स्वर्गं भावयेदिति विधिना यागकर्तव्यताऽप्यवगम्यते; तथापि तत्र न प्रकाराकाङ्क्षाऽस्ति, किंचिदुद्दिश्य द्रव्यत्यागरूपस्य लौकिकस्य तस्य निर्ज्ञातप्रकारत्वात् । न ह्योदनं पचेदित्युक्ते कथमिति प्रकारविशेषाकाङ्क्षा जायते, जायते तु घृतपूरं पचेदित्युक्ते । तथेहापूर्वकर्तव्यताया अनिर्ज्ञातप्रकारत्वात्तत्र कथमाकाङ्क्षायां तदितिकर्तव्यतारूपतयोपदिश्यमाना धर्मास्तत्प्रयुक्ता इति तदपूर्वमियतो धर्मानपेक्षत इति लोकतस्तत्परिमाणानवगमाद्यत्र यावतामन्वयस्तावद्भिस्तद्भवतीति विध्यनुसारेणावगन्तव्यत्वात् यथाविधि व्यवस्थेति । एवं चानिर्ज्ञातपरिमाणत्वादित्यस्यानिर्ज्ञातपरिमाणधर्मसाध्यत्वादित्यर्थः; अपूर्वबहुत्वाभावेन यथाश्रुतानन्वयात् । **अथवा**—अवान्तरापूर्वाभिप्रायं सर्वमिदं वाक्यं योजनीयम् । बहुगुणविशिष्टब्रह्मोपासने हि पाठक्रमेण गुणचिन्तनेषु बहुषु जायमानेषु प्रयाजाद्यपूर्ववद्बहून्यवान्तरापूर्वाणि भवन्ति तत्प्रयुक्ताश्च भवन्ति उपास्यफलाः । अङ्गापूर्वाणामपि तदङ्गगुणप्रयोजकत्वात्तेषामियत्तारूपं परिमाणमनिर्ज्ञातं विध्यधीनं

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयक आम्नातानां नास्त्यन्यत्र प्राप्तिः । यत्कारणं प्रियं मोदः प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्त्रन्तरापेक्षया चोपचितापचितरूपा उपलभ्यन्ते । उपचयापचयौ च सति भेदे संभवतः । निर्भेदं तु ब्रह्म 'एकमेवाद्वितीयम्' (छा० ६।२।१ ) इत्यादिश्रुतिभ्यः । नचैते प्रियशिरस्त्वादयो ब्रह्मधर्माः, कोशधर्मास्त्वेत इत्युपदिष्टमस्माभिः 'आनन्दमयोऽभ्यासात् ( ब्र० सू० १।१।१२ ) इत्यत्र । अपिच परस्मिन्ब्रह्मणि चित्तावतारोपायमात्रत्वेनैते परिकल्प्यन्ते न द्रष्टव्यत्वेन । एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनाम् । ब्रह्मधर्मास्त्वेतान्कृत्वा न्यायमात्रमिदमाचार्येण प्रदर्शितं प्रियशिरस्त्वाद्यप्राप्तिरिति । स च न्यायोऽन्येषु निश्चितेषु ब्रह्मधर्मेषूपासनायोपदिश्यमानेषु नेतव्यः संयद्वामादिषु सत्यकामादिषु च । तेषु हि सत्यप्युपास्यस्य ब्रह्मण एकत्वे प्रक्रमभेदादुपासनाभेदे सति नान्योन्यधर्माणामन्योन्यत्र प्राप्तिः । यथा च द्वे नार्यावेकं नृपतिमुपासाते छत्रेणैका चामरेणान्या तत्रोपास्यैकत्वेऽप्युपासनाभेदो धर्मव्यवस्था च भवत्येवमिहापीति । उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते, न निर्गुणे परस्मिन्ब्रह्मणि । अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः ॥ १२ ॥

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे त्वानन्दादयो धर्मा ब्रह्मस्वरूपप्रतिपादनायैवोच्यमाना अर्थसामान्यात्प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात्सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यम् । प्रतिपत्तिमात्रप्रयोजना हि त इति ॥ १३ ॥ इति षष्ठमानन्दाद्यधिकरणम् ॥

( ७ अधिकरणम् ) **आध्यानाय प्रयोजनाभावात् ॥ १४ ॥**

काठके हि पठ्यते—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः' ( क० ३।१० ) इत्यारभ्य 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' ( क० ३।११ ) इति ।

---

### भामती ।

शिरस्त्वादीनां तूपास्यत्वमारोप्य न्यायो दर्शितः । तस्य तु संयद्वामादिरुक्तः । मोदनमात्रं मोदः प्रमोदः प्रकृष्टो मोदस्ताविमौ परस्परापेक्षावुपचयापचयौ ॥ ११ ॥ १२ ॥ १३ ॥ इति षष्ठमानन्दाद्यधिकरणम् ॥

**आध्यानाय प्रयोजनाभावात् ॥१४॥ इन्द्रियेभ्यः पराह्यर्था इति ।** किमत्र सर्वेषामेवार्थादीनां परत्वं प्रति-

### वेदान्तकल्पतरुः ।

द्विश्च नैकस्मात्पदात्तन्मात्रप्रयोगे विरोधाभावाल्लक्षणाया अनुत्थानात्प्रयोक्तव्ये च पदान्तरे यावन्तो भ्रान्तयः संभाव्यन्ते, तन्निरसनसमर्थपदवृन्दं प्रयोक्तव्यमिति समारोपितभ्रमनिरसनसमर्थ पदार्थवृन्दं सर्वत्रोपसंहर्तव्यमिति ॥ ११ ॥ १२ ॥ ॥ १३ ॥ इति षष्ठमानन्दाद्यधिकरणम् ॥[1]

**आध्यानाय प्रयोजनाभावात् ॥ १४ ॥** विद्याभेदाभेदप्रसङ्गेन वाक्यभेदाभेदचिन्ता । तन्निबन्धनविद्याभेदाभेदचिन्तनाद्वा पादसंगतिः । ब्रह्मस्वभावभूतोपसंहार्यधर्मचिन्तानन्तरमस्वभावस्यानुपसंहार्यस्याप्यर्थादिपरत्वरूपधर्मस्य ब्रह्मप्रतिपत्त्युपायत्वचिन्तनादवान्तरसंगतिः । विगतज्वरत्वं प्रतितिष्ठत्यर्थं संबध्यते । शतं सहस्रमित्यादिभिर्मन्वन्तरमेव विशे-

### कल्पतरुपरिमलः ।

निर्ज्ञातमिति यथाविधि व्यवस्था । **यावन्तो भ्रान्तय इति ।** निर्गुणप्रकरणेषु गुणवैशिष्ट्याम्नानस्य प्रधानभूतनिर्गुणप्रमित्यर्थत्वसिद्ध्यर्थं गुणवैशिष्ट्यांशं त्यक्तुं ज्ञानत्वानन्दत्वादीनामन्यतमगुणवैशिष्ट्यश्रवणेऽपि विरोधस्फूर्तये प्रकरणान्तराम्नातगुणोपसंहारे कर्तव्ये विनिगमनाविरहान्नानाप्रकरणाम्नानात् सर्वगुणोपसंहारः कार्यः । नचैवं सगुणप्रकरणाम्नातसंयद्वामत्वादिगुणानामपि निर्गुणप्रकरणे उपसंहारप्रसक्तिः; सच्चिदानन्दत्वानामुपसंहारस्यानृतजडदुःखात्मत्वपरिच्छिन्नत्वानात्मत्वभ्रान्तिनिवारणेनेव संयद्वामत्वादीनामुपसंहारस्य किंचिद्भ्रान्तिनिवर्तनेन सच्चिदानन्दापरिच्छिन्नप्रत्यगात्मभूतब्रह्मस्वरूपप्रमित्युपयोगित्वाभावादिति भावः ॥ ११ ॥ १२ ॥ १३ ॥ इति षष्ठमानन्दाद्यधिकरणम् ॥

**आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ ब्रह्मस्वभावभूतेति ।** सत्तादिसामान्यानि घटत्वादिवद्धर्मिस्वभावभू-

---

१ तत्र सूत्राणि ३—आनन्दादयः प्रधानस्य ११ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे १२ इतरे त्वर्थसामान्यात् १३ ॥

तत्र संशयः—किमिमे सर्व एवार्थादयस्ततः परत्वेन प्रतिपाद्यन्त उत पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति। तत्र तावत्सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः। तथाहि श्रूयते—'इदमस्मात्परमिदमस्मात्परम्' इति। ननु बहुष्वर्थेषु परत्वेन प्रतिपिपादयिषितेषु वाक्यभेदः स्यात्, नैष दोषः; वाक्यबहुत्वोपपत्तेः। बहून्येव ह्येतानि वाक्यानि प्रभवन्ति बहुविषयान्परत्वोपेतान्प्रतिपादयितुम्। तस्मात्प्रत्येकमेषां परत्वप्रतिपादनमिति। एवं प्राप्ते ब्रूमः—पुरुष एव ह्येभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तम्, न प्रत्येकमेषां परत्वप्रतिपादनम्। कस्मात्? प्रयोजनाभावात्। नहीतरेषु परत्वेन प्रतिपन्नेषु किंचित्प्रयोजनं दृश्यते श्रूयते वा। पुरुषे त्विन्द्रियादिभ्यः परस्मिन्सर्वानर्थव्रातातीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः। तथाच श्रुतिः—'निचाय्य तं मृत्युमुखात्प्रमुच्यते' ( क० ३।१५ ) इति। अपिच परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्शयन्पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति। आध्यानायेति। आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः। सम्यग्दर्शनार्थमेव हीहाध्यानमुपदिश्यते न त्वाध्यानमेव स्वप्रधानम्॥ १४॥

## भामती।

पिपादयिषितम्, आहो पुरुषस्यैव, तत्प्रतिपादनार्थं चेतरेषां परत्वप्रतिपादनम्। तत्र प्रत्येकमर्थादिपरत्वप्रतिपादनश्रुतेः श्रूयमाणतत्तत्परत्वे च संभवति न तत्तदतिक्रमे सर्वेषामेकपरत्वाध्यवसानं न्याय्यम्। नच प्रयोजनाभावादसंभवः; सर्वेषामेव प्रत्येकं परत्वाभिधानस्याध्यानप्रयोजनत्वात्, तत्तदाध्यानानां च प्रयोजनवत्त्वस्मृतेः। तथाहि स्मृतिः— 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः। बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः॥ पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते।' इति। प्रामाणिकस्य वाक्यभेदस्याभ्युपेयत्वात् प्रत्येकं तेषामर्थादीनां परत्वपराण्येतानि वाक्यानीति प्राप्त उच्यते— इन्द्रियेभ्यः परा ह्यर्था इत्येष तावत्संदर्भो वस्तुतत्त्वप्रतिपादनपरः प्रतीयते, नाध्यानविधिपरः; तदश्रुतेः। तदत्र यत्प्रत्ययस्य साक्षात्प्रयोजनवत्त्वं दृश्यते तत्प्रत्ययपरत्वं सर्वेषाम्। दृष्टं च विष्णोः परमपदज्ञानस्य निखिलानर्थसंसारकारणाविद्योपशमः; तत्त्वज्ञानोदयस्य विपर्यासोपशमलक्षणत्वेन तत्र तत्र दर्शनात्। अर्थादिपरत्वप्रत्ययस्य नतु दृष्टमस्ति प्रयोजनम्। नच दृष्टे संभवति अदृष्टकल्पना न्याय्या। नच परमपुरुषार्थहेतुपरत्वे संभवति अवान्तरपुरुषार्थतोचिता। तस्माद्दृष्टप्रयोजनवत्त्वात् पुरुषपरत्वप्रतिपादनार्थोऽयं संदर्भ इति गम्यते। किंचादरादप्ययमेवास्यार्थं इत्याह—अपिच परप्रतिषेधेनेति। नन्वत्राध्यानविधिर्नास्ति तत्कथमुच्यते आध्यानायेत्यत आह—आध्यानायेति॥ १४॥ अनधिगतार्थप्रतिपादनस्वभावत्वात्प्रमाणानां विशेषतश्चागमस्य, पुरुषशब्दवाच्यस्य चात्मनः स्वयं श्रुत्यैव दुरधिगमत्वावधारणाद्वस्तुतश्च दुरधिगमत्वादर्थादीनां च सुगमत्वात्तत्परत्वमेवार्थादिपरत्वाभिधानस्येत्यर्थः। श्रुतेराशयातिशय इवाशयातिशयः। तत्तात्पर्यतेति यावत्। किंच श्रुत्यन्तरापेक्षिताभिधानादप्येवमेव। अर्थादिपरत्वे

## वेदान्तकल्पतरुः।

ध्यते। सूक्ष्मशब्दादिभूतध्यायिनो भौतिकाः। करणाभिमान्यादित्यादिदेवताध्यायिन आभिमानिकाः। अन्तःकरणध्यायिनो बौद्धाः। दृष्टप्रयोजने संभवत्यदृष्टकल्पनाऽनुपपत्तेः पुरुषपरत्वार्थत्वमितरेषामित्याह—तदत्रेति॥ १४॥ फलवत्त्वं तात्पर्यलिङ्गं पुरुषपरत्वेऽभिधायमानमानान्तरानधिगतत्वलक्षणमपूर्वत्वं तात्पर्यलिङ्गमाह—अनधिगतार्थेति। अचेतनायाः श्रुतेरभिप्रायायोगाद् भाष्ये आशयशब्दो गौण इत्याह—आशयातिशय इवेति। किंचार्थादिपरत्वे वाक्यभेदेन प्रतिपादिते प्रकरणोत्कर्षः स्यान्निर्गुणविद्यायां तदनुयोगात्पुरुषपरत्वमात्रप्रतिपादने चैकवाक्यत्वं लभ्यत इत्याह

## कल्पतरुपरिमलः।

तानि, अर्थादिपरत्वं तु प्रतियोगिसापेक्षम् अस्वभावभूतमित्यर्थः। न सर्वैर्वाक्यैरिन्द्रियादिभ्यः सर्वेभ्यः पुरुषस्य परत्वं शब्दवृत्त्या प्रतिपाद्यते, इन्द्रियादिभ्योऽर्थादीनां क्रमेण प्रतिपादनदर्शनात्। नच "एकं वृणीते द्वौ वृणीते त्रीन् वृणीते" इत्यत्र त्रयाणां वरणस्य विधानेनार्थसिद्धम् एकस्य द्वयोश्च वरणमिव पुरुषस्याव्यक्तात्परत्वप्रतिपादनेनार्थादीनामिन्द्रियादिपरत्वमर्थसिद्धमनुवदितुं शक्यम्; तथेहार्थतः सिद्ध्यसंभवात्। तस्मात्तेन तेन वाक्येनार्थादिपरत्वमपि प्रतिपादनीयमित्यतः सर्वेषां वाक्यानां पुरुषपरत्वप्रतिपादनमात्रे तात्पर्यं कल्पयितुं न युक्तमिति भावः। दृष्टप्रयोजने संभवतीति। "यद् ग्राम्याणां पशूनां पयसा जुहुयाद् ग्राम्यान् पशून् शुचाऽर्पयेत् यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान् अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति पयसाग्निहोत्रं जुहो-

## आत्मशब्दाच्च ॥ १५ ॥

इतश्च पुरुषप्रतिपत्त्यर्थैवेयमिन्द्रियादिप्रवाहोक्तिः। यत्कारणम् 'एष सर्वेषु भूतेषु गूढो त्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' ( कठ० ३।१२ ) इति प्रकृतं पुरुषमात्मेत्याह । अतश्चानात्मत्वमितरेषां विवक्षितमिति गम्यते । तस्यैव च दुर्विज्ञानतां संस्कृतमतिगम्यतां च दर्शयति । तद्विज्ञानायैव 'यच्छेद्वाङ्मनसी प्राज्ञः' ( ३।१३ ) इत्याध्यानं विदधाति । तद्व्याख्यातम् 'आनुमानिकमप्येकेषाम्' ( ब्र० सू० १।४।१ ) इत्यत्र । एवमनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते नेतरेषु । अपिच 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' ( क० ३।९ ) इत्युक्ते किं तदध्वनः पारं ? विष्णोः परमं पदमित्यस्यामाकाङ्क्षायामिन्द्रियाद्यनुक्रमणात्परमपदप्रतिपत्त्यर्थ एवायमायास इत्यवसीयते ॥ १५ ॥ इति सप्तममाध्यानाधिकरणम् ॥

( ८ अधिकरणम् )

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

ऐतरेयके श्रूयते—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति' ( ऐ० १।१ ) स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापः' ( ऐ० १।२ ) इत्यादि । तत्र संशयः—किं पर एवात्मेहात्मशब्देनाभिलप्यत उतान्यः कश्चिदिति । किं तावत्प्राप्तम् ? न परमात्मेहात्मशब्दाभिलप्यो भवितुमर्हतीति । कस्मात् ? वाक्यान्वयदर्शनात् । ननु वाक्यान्वयः

### भामती ।

तु स्वरूपेण विवक्षिते नापेक्षितं श्रुतिराचष्टे इत्याह—**अपिच सोऽध्वनः पारमाप्नोतीति** ॥ १५ ॥ **इति सप्तममाध्यानाधिकरणम्** ॥

**आत्मगृहीतिरितरवदुत्तरात्** ॥१६॥ श्रुतिस्मृत्योर्हि लोकसृष्टिः परमेश्वराधिष्ठितापरेश्वरहिरण्यगर्भकर्तृकोपलब्धा, सेयमिह महाभूतसर्गमनभिधाय प्राथमिकी लोकसृष्टिरुपलभ्यमानावान्तरेश्वरकार्या प्रागुत्पत्तेरात्मैकत्वावधारणं चावा-

### वेदान्तकल्पतरुः ।

—**किंच श्रुत्यन्तरेति** । एतत्प्रकरणस्थं सोऽध्वन इति वाक्यमेव श्रुत्यन्तरम् ॥ १५ ॥ **इति सप्तममाध्यानाधिकरणम्** ॥[1]

**आत्मगृहीतिरितरवदुत्तरात्** ॥ १६ ॥ पूर्वत्र वाक्यभेदप्रसङ्गादर्थादिपरत्वं निरस्तं, तर्हि हिरण्यगर्भे सकलस्य वाक्यस्यान्वयेन वाक्यभेदाभावात्तत्परत्वं वाक्यस्यात्राशङ्कते । **ननु**—एक एवाग्र आसीदिति प्रागुत्पत्तेरात्मैकत्वावधारणादीक्षतेतीक्षितृत्वश्रवणाच्च परमेश्वरे गम्यमाने कथं हिरण्यगर्भशङ्का ? अत आह—**श्रुतिस्मृत्योरिति** । आत्मा वेति वाक्यं, हिरण्यगर्भपरं, महाभूतसृष्ट्यविषयत्वे सति लोकसृष्टिविषयत्वात्, "आत्मैवेदमग्र आसीत्पुरुषविधः" "स वै शरीरी प्रथम" इति च वाक्यवदित्यनुमानात्तु लिङ्गद्वयमन्यथा नेयमित्यर्थः । लोकसृष्टिरुपलभ्यमानाऽवान्तरेश्वरकार्या सती एकत्वावधारणादिकमवान्तरेश्वरसंबन्धितया गमयतीति योजना । अनुमानस्य श्रुतिस्मृत्योरित्यादिनाऽन्वयव्याप्तिरुक्ता, इदानीं व्यतिरेकव्याप्तिमाह—**पारमेश्वरसर्गस्येति** । पारमेश्वरलिङ्गद्वयस्यान्यथानयनप्रकारमेव दर्शयति—

### कल्पतरुपरिमलः ।

ती"त्यत्र ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयवाग्वोर्यदपेक्षयाऽपकर्षस्तत्पयोऽत्यन्तं प्रशस्तमिति पयःप्राशस्त्यप्रतिपादनार्थं जर्तिलगवीधुकयवाग्वोर्विधिसरूपार्थवादो नतु विधिः । एवमिन्द्रियाद्यपेक्षया उत्तरोत्तरोत्कर्षावधेरव्यक्तादपि परः पुरुष इति पुरुषपरत्वप्रतिपादनएव तात्पर्यम् । इन्द्रियेभ्यः परा ह्यर्था इत्यादिस्तु तत्तत्परत्वप्रतिपादकसरूपस्तच्छेषः; पुरुषपरत्वप्रमितिरूपे दृष्टफलार्थत्वे संभवति उपासनाद्वारकादृष्टार्थत्वायोगात् । भूमपरत्वप्रतिपादनपरायामपि भूमविद्यायां नामाद्युपासनातत्फलश्रवणस्येवात्रेन्द्रियाद्युपासनातत्फलश्रवणस्याभावेनावान्तरतात्पर्यकल्पनायोगात् । न च स्मृत्यनुसारेण तत्कल्पनम्; स्मृतेः सांख्यकल्पिततत्त्वविषयत्वेन श्रुतेरानुमानिकाधिकरणो ( ब्र. सू. अ. १ पा. ४ सू. १ )क्तन्यायाच्छरीरेन्द्रियादिविषयत्वेन च स्मृतेः श्रुत्यनुसारित्वाभावात् । आचार्यैर्व्याख्यातेन प्रकारेण स्मृतेः सांख्यकल्पिताहंकारादिविषयत्वाभावेऽपि श्रुतिकल्पितरथाश्वप्रग्रहादिविषयत्वादिति भावः ॥ १४ ॥ १५ ॥ **इति सप्तममाध्यानाधिकरणम्** ॥

[1] तत्र सूत्रे २—आध्यानाय प्रयोजनाभावात् १४ आत्मशब्दाच्च १५ ॥

सुतरां परमात्मविषयो दृश्यते; प्रागुत्पत्तेरात्मैकत्वावधारणात्, ईक्षणपूर्वकस्रष्टृत्ववचनाच्च । नेत्युच्यते; लोकसृष्टिवचनात् । परमात्मनि हि स्रष्टरि परिगृह्यमाणे महाभूतसृष्टिरादौ वक्तव्या, लोकसृष्टिस्त्विहादावुच्यते । लोकाश्च महाभूतसंनिवेशविशेषाः । तथाचाम्भःप्रभृतींल्लोकत्वेनैव निर्ब्रवीति—'अदोऽम्भः परेण दिवम्' ( ऐ० १।२ ) इत्यादिना । लोकसृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते । तथाहि श्रुतिर्भवति—'आत्मैवेदमग्र आसीत्पुरुषविधः' ( बृ० १।४।१ ) इत्याद्या । स्मृतिरपि 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति । ऐतरेयिणोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः' इत्यत्र पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति । आत्मशब्दोऽपि तस्मिन्प्रयुज्यमानो दृश्यते—'आत्मैवेदमग्र आसीत्पुरुषविधः' ( बृ० १।४।१ ) इत्यत्र । एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते । ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम् । अपिच ताभ्यो गामानयत्ताभ्योऽश्वमानयत्ताभ्यः पुरुषमानयत्ता अब्रुवन्नित्येवंजातीयको भूयान्व्यापारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्ध इहाप्यनुगम्यते । तस्माद्विशेषवानेव कश्चिदिहात्मा स्यादिति । एवं प्राप्ते ब्रूमः—पर एवात्मेहात्मशब्देन गृह्यत इतरवत् । यथेतरेषु सृष्टिश्रवणेषु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१।१ ) इत्येवमादिषु परस्यात्मनो ग्रहणम् । यथा चेतरस्मिंल्लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते, तथेहापि भवितुमर्हति । यत्र तु 'आत्मैवेदमग्र आसीत्' (बृ० १।४।१) इत्येवमादौ 'पुरुषविधः' ( बृ० १।४।१ ) इत्येवमादि विशेषणान्तरं श्रूयते, भवेत्तत्र विशेषवदात्मनो ग्रहणम् । अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते 'स ईक्षत

## भामती ।

न्तरेश्वरसंबन्धितया गमयति । पारमेश्वरसर्गस्य महाभूताकाशादित्वादस्य च तद्वैपरीत्यात् । अस्ति हि तस्यैवैकस्य विकारान्तरापेक्षयाग्रत्वमस्ति चेक्षणम् । अपिचैतस्मिन्नैतरेयके पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकैव लोकसृष्टिरुक्ता । तदनुसारादप्येतदेव विज्ञायते । अपिच ताभ्यो गामानयदित्यादयश्च व्यवहाराः श्रुत्योक्ता विशेषवत्स्वात्मसु प्रसिद्धाः । ततोऽप्यवान्तरेश्वर एव विज्ञायते । आत्मशब्दप्रयोगश्चात्रापि दृष्टस्तस्मादपरात्माभिलापोऽयमिति प्राप्त उच्यते—परमात्मनो गृहीतिरिह यथा इतरेषु सृष्टिश्रवणेषु 'एतस्मादात्मन आकाशः संभूतः' इत्यादिषु । तस्मादुत्तरात्स ऐक्षतेतीक्षणपूर्वकस्रष्टृत्वश्रवणादात्मैत्वावधारणाच्च । एतदभिसंहितम्—मुख्यं तावत् सर्गात्प्राक्केवलत्वमात्मपदत्वं स्रष्टृत्वं च परमेश्वरस्यात्र भवतः । तदसत्यामनुपपत्तौ ततोऽन्यत्र व्याख्यातुमुचितम् । नच महाभूतसृष्ट्यनभिधानेन लोकसृष्ट्यभिधानमनुपपत्तिबीजम्; आकाशपूर्विकायां वस्तुतो ब्रह्मणः सृष्टौ यथा क्वचित्तेजःपूर्वकसृष्ट्यभिधानं न विरुध्यते, 'एतस्मादात्मन आकाशः संभूतः' इति दर्शनात् आकाशं वायुं सृष्ट्वेति हि तत्र पूरयितव्यमेवमिहापि महाभूतानि

## वेदान्तकल्पतरुः ।

**अस्ति हीति** । संदंशन्यायं वक्तुं पूर्ववाक्यमनुसंधत्ते—**अपिचैतस्मिन्निति** । अथातो रेतसः सृष्टिः प्रजापते रेतो देवा इत्यादिना प्रजापतिकर्तृका सृष्टिरुक्तेत्यर्थः । उत्तरवाक्यमालोचयति—**अपिच ताभ्य इति** । **अत्रापि दृष्ट इति** । आत्मैवेदमग्र आसीत्पुरुषविध इति वाक्ये दृष्ट इत्यर्थः । आत्मैवेति पदं यस्य तस्य भावस्तत्त्वम् । महाभूताविषयत्वे सति लोकसृष्टिविषयत्वादिति हेतोर्विशेषणासिद्धिमाह—**नच महाभूतसृष्टीति** । **इहापि महाभूतानि सृष्ट्वेति कल्पनीयमिति** । अनेन सिद्धान्ते महाभूतसर्गोपसंहारात्पादसङ्गतिः । सूत्रितसर्गस्य महाभूतादित्वं यच्छ्रुत्यन्तरे श्रुतं तस्मिन् शैथिल्यं नादरणीयं, किंतु तस्येहोपसंहारः कार्य इत्यर्थः । **औपयिकत्वमुपयोगित्वम्** । महाभूतानुपसंहारेऽपि परमात्मा

## कल्पतरुपरिमलः ।

**आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ महाभूतसर्गोपसंहारात्पादसंगतिरिति ॥ १६ ॥ १७ ॥**

अग्रे वक्ष्यमाणे महाभूतसर्गानुपसंहाररूपे पादार्थे अनेकविषयवाक्योदाहरणपूर्वकं विद्याभेदपूर्वपक्षं कृत्वा विद्यैक्यसमर्थनेन गुणोपसंहारस्यानिरूपणात्पादसंगतिर्नास्तीति यो मन्यते तत्परितोषार्थं वर्णकान्तरमारभत इत्यर्थः । यद्यपि निर्गुणविद्यासु गुणोपसंहारमात्रं विचार्यं, नतु विद्यैक्यमित्युक्तमाचार्यैः, पादारम्भे आनन्दादय ( ब्र. अ. ३ पा. ३ सू. ११ ) इत्यधिकरणे च निर्गुणविद्यैक्यमनाक्षिप्यैव गुणोपसंहारमात्रं चिन्तितम्; तथापि नैतस्मिन्नधिकरणे सगुणविद्याधिकरणेष्विवानेकविषयवाक्यस्पर्शोऽस्ति, किंतु प्रथमाध्यायाधिकरणेष्विव कस्यचिद्विषयवाक्यस्यार्थविशेषनिर्धारणमात्रं, तत्प्रथमाध्याय एव सङ्गतमिति यो मन्यते तत्परितोषार्थं वर्णकान्तरारम्भ इति तात्पर्यम् । विद्यैक्यगुणोपसंहाराऽनिरूपणादित्यस्य

लोकान्नु सृजा इति, ( ऐ० १।१ ) 'स इमाँल्लोकानसृजत' (ऐ० १।२) इत्येवमादि। तस्मात्तस्यैव ग्रहणमिति न्याय्यम् ॥ १६ ॥

**अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥**

**वाक्यान्वयदर्शनान्न परमात्मग्रहणमिति पुनर्यदुक्तं तत्परिहर्तव्यमिति। अत्रोच्यते—स्यादवधारणादिति। भवेदुपपन्नं परमात्मनो ग्रहणम्। कस्मात्? अवधारणात्। परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते। अन्यथा ह्यनाञ्जसं तत्परिकल्पेत। लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि। यथा 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इत्येतच्छ्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमित्ययूयुजमेवमिहापि। श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषूपसंहर्तव्यो भवति। योऽप्ययं व्यापारविशेषानु-**

### भामती।

सृष्टेति कल्पनीयम्। सर्वशाखाप्रत्ययत्वेन ज्ञानस्य श्रुतिसिद्ध्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यं न पुनः श्रुते महाभूतादित्वे सर्गस्य शैथिल्यमादरणीयम्। **अपिच** स्वाध्यायविध्यधीनग्रहणो वेदराशिरध्ययनविध्यापादितप्रयोजनवदर्थमभिदधानो यथा यथा प्रयोजनाधिक्यमाप्नोति तथा तथानुमन्यतेतराम्। यथाचास्य ब्रह्मगोचरत्वे परमपुरुषार्थौपयिकत्वं नैवमन्यगोचरत्वे, तदिदमुक्तम्—**योऽप्ययं व्यापारविशेषानुगम इति।** नच लोकसर्गोऽपि हिरण्यगर्भव्यापारोऽपि तु तदनुप्रविष्टस्य परमात्मन इत्यत्रैवोक्तम्। तस्मादात्मैवाग्र इत्युपक्रमात्तद्व्यापारेण चेक्षणेन मध्ये परामर्शादुपरिष्टाच्च भेदजातं महाभूतैः सहानुक्रम्य ब्रह्मप्रतिष्ठत्वेन ब्रह्मण उपसंहाराद्ब्रह्माभिलापत्वमेवास्येति निश्चीयते। यत्र तु पुरुषविधादिश्रवणं तस्य भवेत्त्वन्यपरत्वं गत्यन्तराभावादिति सर्वमवदातम् ॥ १६ ॥

**अपरः कल्पः।** सदुपक्रमस्य संदर्भस्यात्मोपक्रमस्य च किमैकार्थ्यमाहोस्विदर्थभेदः। तत्र सच्छब्दस्याविशेषे-

### वेदान्तकल्पतरुः।

प्रत्येतुं शक्य इत्याह—**नच लोकसर्गोऽपीति। अत्रैवोक्तमिति।** अस्मिन्नेव शास्त्रे संज्ञामूर्तिक्लृप्त्या( ब्र. अ. २ पा. ४ सू. २० )द्यधिकरणेष्वित्यर्थः। **उपरिष्टाच्चेति।** एष ब्रह्मैष इन्द्र इत्यादिवाक्ये इत्यर्थः। इदं जगदग्रे सृष्टेः प्रागात्मा एक एवासीत्। एवकारस्तु सत्यप्यात्मतादात्म्ये इदानीमिव विशेषावस्थाया निषेधार्थः। **मिषन्निमेषव्यापारवच्चेतनं** तन्नामिषतोऽप्युपलक्षणम्। **ईक्षत** ऐक्षत। आडभावः छान्दसः। कथमीक्षितवान्। लोकान् **नु सृजै** स्रक्ष्यामीति। लोका एवोच्यन्ते **अम्भ इत्यादिना।** अम्भःप्रभृतीन् स्वयमेव श्रुतिर्व्याचष्टे—"अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आप" इति। अदस्तदम्भः यत्परेण दिवं दिवः परस्ताद्वर्तते तस्य च परस्ताद्वर्तमानस्य द्यौः प्रतिष्ठा आश्रयः साऽप्यम्भःशब्दवाच्या दिवमारभ्योपरितनलोकाँश्चान्द्रमसैरम्भोभिरभिव्याप्तत्वादम्भ उच्यन्ते इत्यर्थः। अन्तरिक्षलोकः सवितृमरीचिव्याप्तत्वान्मरीचय इत्यर्थः। स्थानभेदापेक्षया बहुवचनम्। म्रियन्तेऽस्मिन् भूतानीति पृथिवीलोको मरः याः पृथिव्याः अधस्तात्ता आपः पातालानि। तेषामब्बाहुल्याद्विधेयापेक्षया स्त्रीलिङ्गत्वम्। **आत्मा** हिरण्यगर्भः **पुरुषविधः** पुरुषप्रकारः शिरःपाण्यादिमान्प्रजापतेः रेतःकार्यं देवाः। प्रजापतिः कार्यकारणाधिष्ठात्रीरग्न्याद्या देवता वागादिभिः सह सृष्टवान्। ताश्च तं प्रति भोगसिद्ध्यर्थं शरीरमयाचन्त। स च ताभ्यो गां गोशरीरमानीतवान्। तथाऽश्वशरीरं पुरुषशरीरं च। ततस्ता देवताः सोऽब्रवीद्। **यथायतनं** यथाचक्षुरादिस्थानम् **अस्मिन्** शरीरे प्रविशतेति। स ईश्वर एतमेव सीमानं मूर्ध्नः केशविभागावसानं विदार्य छिद्रं कृत्वा एतया द्वारा ब्रह्मरन्ध्रसंज्ञया शरीरं प्रापद्यत प्राप्तवान्। स शरीरे प्रविष्ट ईश्वर एतमेव शरीरान्तर्गतं स्वात्मानं ब्रह्म ततमं तकार एको लुप्तो द्रष्टव्यः। **ततमं** व्याप्ततमं यद् ब्रह्म तद्रूपेणैतमात्मानम् अपश्यदित्यर्थः। यः शरीरे प्रविष्टः परमेश्वर एष एव ब्रह्म परमात्मा प्रजापतिर्हिरण्यगर्भोऽप्येष एव प्रज्ञा ब्रह्मचैतन्यं नीयतेऽनेनेति नेत्रं नियन्तृ यस्य तत्प्रज्ञानेत्रम्। प्रज्ञाने तस्मिन्नेवाधिष्ठाने प्रतिष्ठितम्। लोकोऽपि भूरादिप्रज्ञानेत्रः प्रज्ञानियन्तृकः। सैव प्रज्ञा सर्वस्य लोकस्य प्रतिष्ठाऽधिष्ठानम्। तच्च प्रज्ञानं ब्रह्म ॥ १६ ॥ १७ ॥

पूर्ववर्णके विद्यैक्यगुणोपसंहारानिरूपणात्पादसङ्गतिसिद्ध्यर्थं वर्णकान्तरमारभते—**अपरः कल्प इति। कल्पः** प्रकारः। पूर्वत्र वाक्यैक्यबलादर्थादिपरत्वमविवक्षित्वा विद्यैक्यमुक्तम्, अत्र तु भिन्नार्थोपक्रमेण वाक्यभेदाद्विद्याभेद इति

### कल्पतरुपरिमलः।

सर्वाभेदाधिकरणादिष्विव विद्यैक्यस्यानन्दाधिकरणइवानेकविषयवाक्योदाहरणपूर्वकगुणोपसंहारस्य चानिरूपणादित्यर्थः। **भिन्नार्थोपक्रमेणेति।** आत्मानात्मसु सत्तासामान्ययोगेन प्रयुज्यमानः सच्छब्दः सत्तासामान्यस्यैव वाचकः; "विशेष्यं

गमस्ताभ्यो गामानयदित्येवमादिः, सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः । नह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुम्; तत्प्रतिपत्तौ पुरुषार्थाभावात् । ब्रह्मात्मत्वं त्विह विवक्षितम् । तथा ह्यम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि करणायतनं च शरीरमुपदिश्य स एव स्रष्टा 'कथं न्विदं मदृते स्यात्' ( ऐ० ३।११ ) इति वीक्ष्येदं शरीरं प्रविवेशेति दर्शयति—'स एतमेव सीमानं विदर्यैतया द्वारा प्रापद्यत' ( ऐ० ३।१२ ) इति । पुनश्च 'यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितम्' ( ऐ० ३।११ ) इत्येवमादिना करणव्यापारविवेचनपूर्वकम् 'अथ कोऽहम्' ( ऐ० ३।११ ) इति वीक्ष्य 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' ( ऐ० ३।१३ ) इति ब्रह्मात्मत्वदर्शनमवधारयति । तथोपरिष्टात् 'एष ब्रह्मैष इन्द्रः' ( ऐ० ५।३ ) इत्यादिना समस्तभेदजातं सह महाभूतैरनुक्रम्य 'सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' ( ऐत० ५।३) इति ब्रह्मात्मत्वदर्शनमेवावधारयति । तस्मादिहात्मगृहीतिरित्यनपवादम् ॥ १७ ॥

अपरा योजना—आत्मगृहीतिरितरवदुत्तरात् ॥

वाजसनेयके—कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' ( बृ० ४।३।७ ) इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसङ्गविनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति । तथा ह्युपसंहरति—'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृ० ४।४।२५ ) इति । छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६।२।१ ) इत्यन्तरेणैवात्मशब्दमुपक्रम्योदर्के 'स आत्मा तत्त्वमसि' ( छा० ६।८।७ ) इति तादात्म्यमुपदिशति । तत्र संशयः—तुल्यार्थत्वं किमनयोराम्नानयोः स्यादतुल्यार्थत्वं वेति । अतुल्यार्थत्वमिति तावत्प्राप्तमतुल्यत्वादाम्नानयोः । नह्याम्नानवैषम्ये सत्यर्थसाम्यं युक्तं प्रतिपत्तुम्; आम्नानतन्त्रत्वादर्थपरिग्रहस्य । वाजसनेयके ह्यात्मशब्दोपक्रमादात्मतत्त्वोपदेश इति गम्यते । छान्दोग्ये तूपक्रमविपर्ययादुपदेशविपर्ययः । ननु छन्दोगानामप्यस्त्युदर्के तादात्म्योपदेश इत्युक्तम् । सत्यमुक्तम् । उपक्रमतन्त्रत्वादुपसंहारस्य तादात्म्यसंपत्तिः सेति मन्यते । तथा प्राप्तेऽभिधीयते—आत्मगृ-

## भामती ।

णात्मनि चानात्मनि च प्रवृत्तेर्नात्मार्थत्वं, किंतु समस्तवस्त्वनुगतसत्तासामान्यार्थत्वं तथा चोपक्रमभेदाद्भिन्नार्थत्वम् । स आत्मा तत्त्वमसीति चोपसंहार उपक्रमानुरोधेन संपत्त्यर्थतया व्याख्येयः । तद्धि सत्सामान्यं परमात्मतया संपादनीयम् । तद्विज्ञानेन च सर्वविज्ञानं महासामान्यस्य सत्तायाः समस्तवस्तुविस्तारव्यापित्वादित्येवं प्राप्त उच्यते—आत्मगृहीतिर्वाजसनेयिनामिव छान्दोग्यानामपि; उत्तरात् स आत्मा तत्त्वमसीति तादात्म्योपदेशात् । अस्तु तावदात्म-

## वेदान्तकल्पतरुः ।

पूर्वपक्षयति—तत्र सच्छब्दस्येति । उपक्रमभेदाद्भिन्नार्थत्वमिति । आत्मोपक्रमवाजसनेयिवाक्याद् भिन्नार्थत्वमित्यर्थः । ननु स आत्मेत्युपसंहारादुपक्रमस्याप्यात्मपरत्वमस्तु, नेत्याह—स आत्मेति । असंजातविरोधोपक्रमात्संजातविरोध उपसंहारः सत्तासामान्ये परमात्मदृष्ट्यध्यासपरत्वेन नेतव्य इत्यर्थः । नन्वद्वयब्रह्मात्मत्वपरत्वाभावे वाक्यस्य कथमेकविज्ञानात्सर्वविज्ञानप्रतिज्ञा सदुपक्रमादप्यादौ निर्दिष्टा घटते ? अत आह—तद्विज्ञानेन चेति । ननु छान्दोग्ये उपक्रम एवात्मपरः; आत्मन एव सत्त्वेन सच्छब्दस्याकाशशब्दवद्व्यक्तिवाचित्वेनासन्दिग्धार्थत्वात्, तत्र किमित्युपसंहारगतात्मतादात्म्यपरामर्शो भाष्यकारैराश्रितः ? अत आह—अस्तु तावदिति । आत्मैव सन्नित्येतदस्तु तावदिति योजना । अभ्युपेत्यापि सच्छब्दस्य सामान्यवचनत्वं तादात्म्योपदेशादिति हेतुमाहेत्यर्थः । सच्छब्दस्य सामान्यवचनत्वे-

## कल्पतरुपरिमलः ।

नामिधा गच्छेत् क्षीणबुद्धिर्विशेषणे" इति न्यायात् । सन् घट इत्यादिप्रयोगे तु घटशब्दादिसामानाधिकरण्याद्धर्मिपर्यन्तता । नच सदेव सोम्येदमित्यत्र धर्मिपर्यन्तपदसामानाधिकरण्यमस्ति; ततः सत्तोपक्रमाच्छान्दोग्यवाक्यमात्मोपक्रमाद्वाक्याद्भिन्नार्थमिति विद्याभेद इति पूर्वपक्षयतीत्यर्थः । ननु च्छान्दोग्य इति । अस्तिधातोः सत्तावाचिनः शतृप्रत्ययान्तः सन्शब्दः सत्ताविशिष्टधर्मिवाची, सत्ता त्वात्ममात्रवृत्तिः; प्रपञ्चस्यानिर्वाच्यत्वादित्याकाशशब्दवदेकव्यक्तिवचन इत्युपक्रमस्यासंदिग्धार्थत्वं शक्यमुपपादयितुम् । अतो यथा "वासः परिधत्त" इत्यत्र वासःशब्दस्य त्वविशेषे पर्यवसानमिति संदिग्धार्थस्य क्षौमे पर्यवसानार्थं "एतद्वै सर्वदेवत्यं वासो यत् क्षौम"मित्युपसंहारापेक्षा, एवमिह सच्छब्दस्यात्मनि पर्यवसानार्थं नोपसंहारापेक्षास्तीति शङ्कार्थः । अभ्युपेत्यापि सच्छब्दस्य सामान्यवाचित्वमिति । आत्माऽनात्म-

हीतिः 'सदेव सोम्येदमग्र आसीत्' ( छा० ६।२।१ ) इत्यत्र छन्दोगानामपि भवितुमर्हतीतरवत् । यथा 'कतम आत्मा' ( बृ० ४।३।७ ) इत्यत्र वाजसनेयिनामात्मगृहीतिस्तथैव । कस्मात् ? उत्तरात्तादात्म्योपदेशात् ॥ १६ ॥

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

यदुक्तमुपक्रमान्वयादुपक्रमे चात्मशब्दश्रवणाभावान्नात्मगृहीतिरिति तस्य कः परिहार इति चेत्सोऽभिधीयते स्यादवधारणादिति । भवेदुपपन्नेहात्मगृहीतिः । अवधारणात् । तथाहि —'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' ( छा० ६।१।१ ) इत्येकविज्ञानेन सर्वविज्ञानमवधार्य तत्संपिपादयिषया 'सदेव—'इत्याह । तच्चात्मगृहीतौ सत्यां संपद्यते । अन्यथा हि योऽयं मुख्य आत्मा स न विज्ञात इति नैव सर्वविज्ञानं संपद्येत । तथा प्रागुत्पत्तेरेकत्वावधारणं जीवस्य चात्मशब्देन परामर्शः स्वापावस्थायां च तत्स्वभावसंपत्तिकथनं परिचोदनापूर्वकं च पुनः पुनः 'तत्त्वमसि' ( छा० ६।८।७ ) इत्यवधारणमिति च सर्वमेतत्तादात्म्यप्रतिपादनायामेवावकल्पते न तादात्म्यसंपादनायाम् । नचात्रोपक्रमतन्त्रत्वोपन्यासो न्याय्यः । नह्युपक्रम आत्मत्वसंकीर्तनमनात्मत्वसंकीर्तनं वास्ति । सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुध्यते; विशेषाकाङ्क्षित्वात्सामान्यस्य । सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः संभवति; अतोऽन्यस्य वस्तुजातस्यारम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः । आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति; आहर पात्रं पात्रमाहरेत्येवमादिष्वर्थसाम्येऽपि तद्दर्शनात् । तस्मादेवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम् ॥ १७ ॥ इत्यष्टममात्मगृहीत्यधिकरणम् ॥

---

## भामती ।

व्यतिरिक्तस्य प्रपञ्चस्य सदसत्त्वाभ्यामनिर्वाच्यतया न सत्त्वं, सत्त्वं त्वात्मधातोरेव तत्त्वेन निर्वाच्यत्वात्तस्मादात्मैव सन्नित्यभ्युपेत्याह । सच्छब्दस्य सत्तासामान्याभिधायित्वात्प्रतिव्यक्ति च तस्य प्रवृत्तेरात्मनि चान्यत्र च सच्छब्दप्रवृत्तेः संशये सत्युसंहारानुरोधेन सदेवेत्यात्मन्येवावस्थाप्यते नीतार्थोपक्रमानुरोधेन ह्युपसंहारवर्णना, न पुनः संदिग्धार्थेनोपक्रमेणोपसंहारो वर्णनीयः । अपिच संपत्तौ फलं कल्पनीयम् । नच सामान्यमात्रे ज्ञाते विशेषज्ञानसंभवः । न खल्वाकाराद्वृक्षे ज्ञाते शिंशपादयस्तद्विशेषा ज्ञाता भवन्ति । तदेवमवधारणादि सर्वमनात्मार्थत्वे स्यादनुपपन्नमिति छान्दोग्यस्यात्मार्थत्वमेवेति सिद्धम् । अत्र च पूर्वस्मिन् पूर्वपक्षे हिरण्यगर्भोपासना सिद्धान्ते तु ब्रह्मभावनेति ॥ १६ ॥ ॥ १७ ॥ इत्यष्टममात्मगृहीत्यधिकरणम् ॥

## वेदान्तकल्पतरुः ।

ऽभ्युपेते वाक्यशेषस्य निर्णायकत्वमाह—**सच्छब्दस्येति** । सदेवेत्येतद्वाक्यमात्मन्येव व्यवस्थाप्यत इत्यर्थः । **ननु** क्वचिदुपक्रमादुपसंहारोऽपि निर्णीयते, यथा वेदोपक्रमादृगादिशब्दानां वेदपरत्वं, तद्वदिह किं न स्यादत आह—**नीतार्थेति** । निर्णीतार्थेत्यर्थः । अदृष्टफलकल्पनाप्रसङ्गाच्च न सत्तायामात्मसंपत्तिरित्याह—**अपिचेति** । **किंचास्तु** नामोपक्रमादुपसंहारनिर्णयः, सदुपक्रमादपि प्राक्तनादेकविज्ञानहेतुकसर्वविज्ञानात्परमात्मपरत्वं वाक्यस्येत्याह—**नचेति** । वर्णकद्वयप्रयोजनं विभजते—**अत्रच पूर्वस्मिन्निति** । पूर्ववर्णकगतपूर्वपक्षे ऐतरेयकवाक्यं हिरण्यगर्भोपास्तिपरम् । तत्सिद्धान्ते तु तद्वाक्यं ब्रह्मभावनापरं ब्रह्मत्वप्रतिपादनद्वारेणार्थात् तद्भावनायां पुरुषप्रवृत्तिहेतुरित्यर्थः । अस्मिंस्तु वर्णके पूर्वपक्षे छान्दोग्यवाक्यं सत्तासामान्ये ब्रह्मत्वसंपत्त्यर्थं, वाजसनेयिवाक्यं त्वात्मनो ब्रह्मत्वगोचरमिति विद्याभेदः । सिद्धान्ते द्वे अपि वाक्ये प्रत्यग्ब्रह्मैक्यगोचरे इति भेदोऽनन्तरोक्तत्वात् ज्ञायतएवेति नोक्तः । **श्रुतिद्वयेऽपि विद्यैक्ये**

## कल्पतरुपरिमलः ।

साधारण्येन सत्ताविशिष्टमात्रवाचित्वमिह सामान्यवाचित्वं, नतु सत्तासामान्यवाचित्वम्; आत्मरूपविशेषपर्यवसानोक्तिविरोधापत्तेः । **श्रुतिद्वयेऽपि विद्यैक्य इति** । **ननु** सकलशाखास्वपि निर्गुणविद्यैक्यमस्ति, तस्मिन् सत्यप्यानन्दवल्लीप्रतर्दनाख्यायिकाकठवल्लीमुण्डकादिषूपक्रमभेदो दृश्यते, तथेहाप्युपपद्यते ? कोत्र विशिष्योपक्रमभेदफलप्रश्नः ? **उच्यते;** सत्यपि सकलशाखाम्नातनिर्गुणविद्यैक्ये विशिष्य च्छान्दोग्यवाजसनेयकयोर्निर्गुणविद्यैक्यमुच्यमानमत्यन्तसादृश्यविशेषकृतं भवितुमर्हति—तथाचात्यन्तसदृशयोरुपक्रमभेदस्य किं फलमिति प्रश्नः । अनयोरौपसंहारिकप्रत्यग्ब्रह्मैक्यवेदने परस्परोपकारप्रयुक्तमिह विद्यैक्यं विवक्षितं, परस्परोपकारश्च सदात्मोपक्रमभेदेनैव भवति, नान्यथेत्युपक्रमभेदफलं न्यायसंग्रहे विवरणा-

( ९ अधिकरणम् ) **कार्याख्यानादपूर्वकम् ॥ १८ ॥**

**छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्यैवापो वास आमनन्ति । अनन्तरं च छन्दोगा आमनन्ति—'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' ( छा० ५।२।२ ) इति । वाजसनेयिनस्त्वामनन्ति 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' ( बृ० ६।१।१४ ) 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति । तत्र त्वाचमनमनग्नताचि-**

### भामती ।

**कार्याख्यानादपूर्वम् ॥१८॥** विषयमाह—**छन्दोगा वाजसनेयिनश्चेति** । अननं प्राणनं अनः प्राणः तं प्राणमनग्नं कुर्वन्तः । **अनग्नताचिन्तनमिति** । मन्यन्त इति मननं ज्ञानं तच्चानपर्यन्तमिति चिन्तनमुक्तम् । संशयमाह—

### वेदान्तकल्पतरुः ।

**सदात्मभ्यामुपक्रमः । कुतः किमिति तत्रोचुराचार्या न्यायसंग्रहे ? ॥ तद्यथा**—तत्त्वंपदयोः श्रौतसामानाधिकरण्यस्य वाच्यार्थे भेदादनुपपत्तौ तत्परिहाराय लक्षणाऽऽश्रीयते । तत्र लक्ष्यमाणावपि तत्त्वमर्थौ यदि भेदेनैव लक्ष्येते, तर्हि तत्रापि लक्षणान्तरं स्यादित्यनवस्था स्यात्, सा मा भूदिति लक्ष्यमाणार्थैक्यमेव युक्तम् । ततस्त्वंपदार्थो ब्रह्मपर्यन्तस्तत्पदार्थोऽपि प्रत्यगात्मपर्यन्तो लक्षणीयः । तथाच वाजसनेयिवाक्यं त्वमर्थं तदर्थपर्यन्तं लक्षयति, छान्दोग्यवाक्यं तु तदर्थं त्वमर्थपर्यन्तं लक्षयतीत्यर्थैक्याद्विद्यैक्यमिति ॥ १६ ॥ १७ ॥ **इत्यष्टममात्मगृहीत्यधिकरणम् ॥**[1]

**कार्याख्यानादपूर्वम् ॥ १८ ॥** सन्दिग्धसदुपक्रमस्य वाक्यशेषान्निर्णयवदशिष्यन्त आचामन्तीत्यादेर्वर्तमानापदेशत्वेन विधित्वसन्देहे सत्यशिष्यन्नाचामेदित्यादिवाक्यशेषादाचमनविधिपरत्वं निर्णेयमिति पूर्वपक्षणात्सङ्गतिः । अनशब्दस्य प्राणवृत्तौ योगमाह—**अननमिति** । अननं चेष्टां करोतीत्यन इत्यर्थः । 'अनग्नं कुर्वन्तो मन्यन्ते' इति श्रुतौ मन्यतेर्ज्ञानार्थत्वाद् भाष्ये चिन्तनत्वेन व्याख्याय निर्देशो न युक्तः; चिन्तनशब्दस्य ध्यानवाचित्वादित्याशङ्क्याह—**तच्चानपर्यन्त-**

### कल्पतरुपरिमलः ।

चार्यैरुक्तं दर्शयति—**तद्यथेति । अयमर्थः**—तत्त्वमसीत्यत्र तत्त्वम्पदयोः श्रौते सामानाधिकरण्ये वाच्यार्थयोः सर्वज्ञत्वकिंचिज्ज्ञत्वादिविरुद्धधर्माक्रान्तयोरभेदायोगेनानुपपन्ने सति तत्परिहारार्थं तत्त्वंपदयोर्विरुद्धविशेषणांशत्यागेन ब्रह्मजीवस्वरूपमात्रे लक्षणाऽऽश्रीयते, तथा लक्ष्यमाणावपि ब्रह्मजीवौ भेदेनैव प्रतीयेयातां, लक्ष्यकोट्यननुप्रविष्टस्यापि हि भेदस्य तत्त्वमिति नामभेदप्रयुक्ता प्रतीतिरनिवार्या; "अथैष ज्योति"रित्यादौ नामभेदस्यार्थभेदप्रत्यायकतायाः क्लृप्तत्वात् । ततश्च भेदकप्रतीतावप्यघटमानस्याभेदस्य साक्षाद्भेदप्रतीत्याऽत्यन्तमघटना स्यात् । अतो भेदकविशेषणयोरिव भेदस्यापि त्यागार्थं लक्षणान्तरमाश्रयणीयम्, तदपि लक्षणान्तरं तत्त्वंपदयोरेवेति पुनरपि नामभेदत्यागाय लक्षणान्तरमाश्रयणीयमित्यनवस्था भवेत्तत्परिहाराय लक्ष्यमाणतादशायामेव प्रत्यग्ब्रह्मैक्यब्रह्मप्रतीतिदशायामेव शाब्दस्याभेदस्य प्रतीतेर्नामभेदन्यायलभ्यो भेदो नोन्मज्जति । अतस्तत्त्वंपदार्थौ जीवब्रह्मपर्यन्तौ लक्षणीयौ, तत्पर्यन्तलक्षणा च लक्षणीयार्थप्रसिद्धिमपेक्षते । तत्र छान्दोग्यवाक्यं तत्त्वमसीत्यतः प्राक्तनं तदर्थं त्वमर्थपर्यन्तमानयति सर्वविज्ञानप्रतिज्ञानादिना । वाजसनेयिवाक्यं स वा एष महानज आत्मेत्यतः प्राक्तनं त्वमर्थं तदर्थपर्यन्तमानयति "अत ऊर्ध्वं विमोक्षाय ब्रूही"ति प्रश्नोत्तरतालिङ्गेन । अतः परस्परोपकाररूपप्रयोजनैक्याद् विद्यैक्यमपि । यद्यपि तत्पदार्थे विशेषणांशत्यागाय छान्दोग्ये वाचारम्भणादिश्रुतिरुपकरोति, त्वंपदार्थे विशेषणांशत्यागाय वाजसनेयके "अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इत्यसङ्गत्वश्रुतिरुपकरोतीत्येवमपि परस्परोपकारो वक्तुं शक्यं; तथापि स्पष्टत्वात्तमंशं विहाय तत्त्वंपदार्थयोर्जीवब्रह्मपर्यन्ततताप्रतिपादनेन परस्परोपकारकत्वमुक्तम् । एतेनेयमपि शङ्का निरस्ता । इहापि वर्णके विद्यैक्यं गुणोपसंहारो वा न निर्धार्यते, किं त्वैतरेयकवाक्यस्य पूर्ववर्णक इव छान्दोग्यवाक्यस्य प्रतिपाद्यविशेष्यमात्रं निर्धार्यते, विद्यैक्यचिन्तापर्यवसानकल्पनार्थं परं वाजसनेयिवाक्यमपि उदाहृतम् । इदं पूर्ववर्णकेऽप्युदाहृत्य किमैतरेयकवाक्ययोर्विद्याभेद उत विद्यैक्यमिति शक्यं विचारयितुम्—इति । क्वचिद्ब्रह्मणो जीवैक्यप्रतिपादनमित्यत्र जीवस्य ब्रह्मैक्यप्रतिपादनं चोपसंहारार्थमुपकर्तुर्ब्रह्मणो जीवपर्यन्ततताया जीवस्य ब्रह्मपर्यन्ततायाश्चोपक्रमे प्रतिपादनस्य छान्दोग्यवाजसनेयकयोरेव सद्भावात्पूर्वपक्षे सत्तासामान्यविषयतया छान्दोग्यवाजसनेयकयोरिव जीवविशेषजीवसामान्यविषयतया ऐतरेयकवाजसनेयकयोर्विद्याभेदस्योपपादयितुमशक्यत्वाच्च जीवविशेषे जीवसामान्यविषयतया वचनानामुपसंहारेण विद्यैक्योपपत्तेः ॥ १६ ॥ १७ ॥ **इत्यष्टममात्मगृहीत्यधिकरणम् ॥**

[1] तत्र सूत्रे २—आत्मगृहीतिरितरवदुत्तरात् १६ अन्वयादिति चेत् स्यादवधारणात् १७ ॥

न्तनं च प्राणस्य प्रतीयते । तत्किमुभयमपि विधीयत उताचमनमेवोतानग्नताचिन्तनमेवेति विचार्यते । किं तावत्प्राप्तम् ? उभयमपि विधीयत इति । कुतः ? उभयस्याप्यवगम्यमानत्वात् । उभयमपि चैतदपूर्वत्वाद्विध्यर्हम् । अथवाचमनमेव विधीयते, विस्पष्टा हि तस्मिन्विधिविभक्तिस्तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदिति । तस्यैव स्तुत्यर्थमनग्नतासंकीर्तनमिति । एवं प्राप्ते ब्रूमः—नाचमनस्य विधेयत्वमुपपद्यते; कार्याख्यानात् । प्राप्तमेव हीदं कार्यत्वेनाचमनं प्रायत्यार्थं स्मृतिप्रसिद्धमन्वाख्यायते । नन्वियं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात्, नेत्युच्यते; विषयनानात्वात् । सामान्यविषया हि स्मृतिः पुरुषमात्रसंबद्धं प्रायत्यार्थमाचमनं प्रापयति । श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाचमनं विदधती विदध्यात् । नच भिन्नविषययोः श्रुतिस्मृत्योर्मूलमूलिभावोऽवकल्पते । नचेयं श्रुतिः प्राणविद्यासंयोग्यपूर्वमाचमनं विधास्यतीति शक्यमाश्रयितुम्; पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्येह प्रत्यभिज्ञायमानत्वात् । अतएव च नोभयविधानम् । उभयविधाने च वाक्यं भिद्येत । तस्मात्प्राप्तमेवाशिशिषतामशितवतां चोभयत आचमनमनूद्य 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' ( बृ० ६।१।१४ ) इति प्राणस्यानग्नताकरणसंकल्पोऽनेन वाक्येनाचमनीयास्वप्सु प्राणविद्यासंबन्धित्वेनापूर्व उपदिश्यते । न च —अयमनग्नतावाद आचमनस्तुत्यर्थ इति—न्याय्यम्; आचमनस्याविधेयत्वात्, स्वयं चानग्नता-

### भामती ।

**तत्किमिति** । खुररवमात्रेणापातत उभयविधानपक्षं गृहीत्वा मध्यमं पक्षमालम्बते पूर्वपक्षी—**अथवाऽऽचमनमेवेति** । यद्येवमनग्नतासंकीर्तनस्य किं प्रयोजनमित्यत आह—**तस्यैव तु स्तुत्यर्थमिति** । **अयमभिसन्धिः**—यद्यपि स्मार्तं प्रायत्यार्थमाचमनमस्ति; तथापि प्राणोपासनप्रकरणेऽविधानात्तदङ्गत्वेनाप्राप्तमिति विधानमर्थवद्भवति, अनृतवदनप्रतिषेध इव स्मार्ते ज्योतिष्टोमप्रकरणे समाम्नातो नानृतं वदेदिति प्रतिषेधो ज्योतिष्टोमाङ्गतयार्थवानिति । राद्धान्तमाह—**एवं प्राप्त इति** । चोदयति—**नन्वियं श्रुतिरिति** । परिहरति—**नेति** । तुल्यार्थयोर्मूलमूलिभावो भातुल्यार्थयोरित्यर्थः । अभिप्रायस्थं पूर्वपक्षबीजं निराकारोति—**नचेयं श्रुतिरिति** । क्रत्वर्थपुरुषार्थयोरनृतवदनप्रतिषेधयोर्युक्तमपौनरुक्त्यम्, इह तु स्मार्तमाचमनं सकलकर्माङ्गतया विहितं प्राणोपासनाङ्गमपीति व्यापकेन स्मार्तेनाचमनविधिना पुनरुक्तत्वादनर्थकम् । नच स्मार्तस्यानेन पौनरुक्त्यम्; तस्य च व्यापकत्वादेतस्य च प्रतिनियतविषयत्वादिति । मध्यमं पक्षमपाकृत्य प्रथमपक्षमपाकरोति—**अतएव च नोभयविधानम्** । युक्त्यन्तरमाह—**उभयविधाने चेति** । उपसंहरति—**तस्मात् प्राप्तमेवेति** । **न चायमनग्नतावाद इति** । स्तोतव्याभावे स्तुतिर्नोपपद्यत इत्यर्थः ।

### वेदान्तकल्पतरुः ।

**मिति** । अनग्नतावदस्य स्तुत्यर्थत्वेनोपपत्तौ सत्यां वाक्यभेदकल्पनानुपपत्तेरुभयविधिलमशक्यशङ्कमित्यभिप्रेत्याह—**खुररवमात्रेणेति** । यथा ह्यनिर्णीयैव खुरशब्दमात्रेणाश्वो धावतीत्युच्यते एवमिदमपीत्यर्थः । सिद्धान्तबीजमाशङ्क्य परिहरति —**यद्यपीति** । अनृतवदनप्रतिषेधे इति स्मार्ते इति च द्वे सप्तम्यावनादरार्थे । सत्यपि स्मार्तेऽनृतवदनप्रतिषेधे तमनादृत्य यथा नानृतं वदेदिति प्रतिषेधो ज्योतिष्टोमाङ्गत्वेनार्थवांस्तथाऽऽचमनविधिरपि प्राणोपास्त्यङ्गत्वेनार्थवानित्यर्थः । स्मार्तोऽनृतवदनप्रतिषेधः पुरुषार्थत्वाज्ज्योतिष्टोमे न प्राप्नोतीति ज्योतिष्टोमे पृथक्प्रतिषेधोऽर्थवान्, आचमनविधिस्तु स्मार्तो 'द्विजो नित्यमुपस्पृशे'दित्यादिः सकलकर्मगोचरः प्राणोपासनेऽपि प्राप्नोतीति तदङ्गाचमनविषयत्वे श्रुतेरनुवादकत्वं स्यादित्याह—**क्रत्वर्थपुरुषार्थयोरित्यादिना** । **ननु** नित्यश्रुत्यर्थानुवादित्वमनित्यायाः स्मृतेः किं न स्यादत आह—**नच स्मार्तस्येति** । स्मृत्यनुमितश्रुतेर्व्यापकविषयत्वात्तत्सिद्धार्थानुवादिनी श्रुतिः स्मृत्यपेक्षयाऽप्यनुवादिनी स्यादित्यर्थः । अत एवाचमनस्यान्यतः प्राप्तत्वादाचमनवासोदृष्ट्योरुभयोरपि न विधानमित्यर्थः । प्रथमपक्षं निराकृत्य पुनरपि मध्यमे पक्षेऽधिकं दूषणं वक्तुं न चायमित्यादिभाष्यं व्याचष्टे—**स्तोतव्याभाव इत्यादिना** । आचमनपर्यालोचनयाऽनग्नता-

### कल्पतरुपरिमलः ।

**कार्याख्यानादपूर्वम्** ॥ १८ ॥ **ज्योतिष्टोमाङ्गत्वेनार्थवानिति** । मीमांसकैर्दर्शपूर्णमासयोर्नानृतं वदेदिति श्रूयते, स निषेधः क्रत्वर्थः, तेन यो दर्शपूर्णमासावनुतिष्ठन् तदुपयोगिद्रव्यसंपादनार्थितया पुरुषार्थं निषेधमुल्लङ्घ्याऽनृतं वदेत्तस्य न केवलं पुरुषार्थनिषेधातिलङ्घनेन प्रत्यवायमात्रं, किंतु क्रत्वर्थनिषेधातिक्रमेण क्रतोर्वैगुण्यमपीति निर्णीतं कर्त्रधिकरणे ( ब्र. अ. ३ पा. ३ सू. ३३ ) । इह **नोदाहरणमादरणीयमिति न्यायमनुसृत्य** दर्शपूर्णमासपदस्थाने ज्योतिष्टोमपदं निवेशितम् । ज्योतिष्टोमप्रकरणेऽपि वा "नानृतं वदेदि"ति वाक्यान्तरं दृष्ट्वा न्यायसाम्येन तन्निवेशितम् । **आचमनपर्यालोचनयेति** । अनग्नतावादः साक्षादाचमनस्य न स्तुतिर्भवति, किं त्वाचमनीयानामपां वासस्त्वकीर्तनात्तद्द्वारेणा-

संकल्पस्य विधेयत्वप्रतीतेः। न चैवं सत्येकस्याचमनस्योभयार्थताऽभ्युपगता भवति प्रायत्यर्थता परिधानार्थता चेति; क्रियान्तरत्वाभ्युपगमात् । क्रियान्तरमेव ह्याचमनं नाम प्रायत्यार्थं पुरुषस्याभ्युपगम्यते तदीयासु त्वप्सु वासःसंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्याभ्युपगम्यत इत्यनवद्यम् । अपिच 'यदिदं किंचाश्वभ्य आ कृमिभ्य आ कीटपतंगेभ्यस्तत्तेऽन्नम्' ( बृ० ६।१।१४ ) इत्यत्र तावन्न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यं वक्तुम्; अशब्दत्वादशक्यत्वाच्च, सर्वं तु प्राणस्यान्नमितीयमन्नदृष्टिश्चोद्यते, तत्साहचर्याच्चापो वास इत्यत्रापि नापामाचमनं चोद्यते, प्रसिद्धास्वेव त्वाचमनीयास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तम् । नह्यर्धवैशसं संभवति । अपिचाचामन्तीति वर्तमानापदेशित्वान्नायं शब्दो विधिक्षमः । ननु मन्यन्त इत्यपि समानं वर्तमानापदेशित्वम् । सत्यमेवमेतत्; अवश्यविधेये त्वन्यपरस्मिन्वासःकार्याख्यानादपां वासःसंकल्पनमेवापूर्वं विधीयते नाचमनं पूर्ववद्धि तदित्युपपादितम् । यदप्युक्तं विस्पष्टा चाचमने विधिविभक्तिरिति, तदपि पूर्ववत्त्वेनैवाचमनस्य प्रत्युक्तम् । अतएवाचमनस्याविधित्सितत्वादेतमेव तदनमनग्नं कुर्वन्तो मन्यन्त इत्यत्रैव काण्वाः पर्यवस्यन्ति नामनन्ति तस्मादेवंविदित्यादि । तस्मान्माध्यंदिनानामपि पाठ आचमनानुवादेनैवंवित्त्वमेव प्रकृतप्राणवासोवित्त्वं विधीयत इति प्रतिपत्तव्यम् । योऽप्ययमभ्युपगमः क्वचिदाचमनं विधीयते क्वचिद्वासोविज्ञानमिति सोऽपि न साधुः; आपो वास इत्यादिकाया वाक्यप्रवृत्तेः सर्वत्रैकरूप्यात् । तस्माद्वासोविज्ञानमेवेह विधीयते नाचमनमिति न्याय्यम् ॥ १८ ॥ इति नवमं कार्याख्यानाधिकरणम् ॥

## भामती ।

**अपिच** मानान्तरप्राप्तेनाप्राप्तं विधेयं स्तूयेत । नचानग्नतासंकल्पोऽन्यतः प्राप्तो यतः स्तावको भवेत् । न चाचमनमन्यतोऽप्राप्तं येन विधेयं सत्स्तूयेतेत्याह—**स्वयं चानग्नतासंकल्पस्येति** । अपि चैकस्य कर्मण एकार्थतैवेत्युचितं तस्य बलवत्प्रमाणवशादनन्यगतित्वे सत्यनेकार्थता कल्प्यते । संकल्पे तु कर्मान्तरे विधीयमाने नायं दोष इत्याह—**नचैवं सत्येकस्याचमनस्येति** । अपिच दृष्टिचोदनासाहचर्याद्दृष्टिचोदनैव न्याय्या, नचाचमनचोदनेत्याह—**अपिच यदिदं किंचेति** । यथा हि श्वादिमर्यादस्यान्नस्यात्तुमशक्यत्वादन्नदृष्टिश्चोद्यते, एवमिहाप्यपां परिधानासंभवाद्दृष्टिरेव चोद्यत इत्यन्नदृष्टिविधिसाहचर्याद्गम्यते । अशब्दत्वं च यद्यपि दृष्ट्यभ्यवहरयोस्तुल्यम्; तथापि दृष्टिः शाब्ददृश्यनान्तरीयकतया साक्षात् शब्देन क्रियमाणोपलभ्यते । अभ्यवहारस्त्वध्याहरणीयः कथंचिद्योग्यतामात्रेणेति विशेषः । किंच छान्दोग्यानां वाजसनेयिनां चाचमने प्रायेणाचामन्तीति वर्तमानापदेशः, एवं यत्रापि विधिविभक्तिस्तत्रापि "जर्तिलयवाग्वा वा जुहुया"दितिवद्विधित्वमविवक्षितम् । मन्यन्त इति त्वप्राप्तार्थत्वात्समिधो यजतीत्यादिवद्विधिरेवेत्याह—**अपिचाचामन्तीति** । शेषमतिरोहितार्थम् ॥ १८ ॥ **इति नवमं कार्याख्यानाधिकरणम्** ॥

## वेदान्तकल्पतरुः ।

वादो न स्तुत्यर्थ इत्युक्तम्, अनग्नतासङ्कल्पपर्यालोचनयाप्येवमेवेत्याह—**अपि च मानान्तरेति** । **स्तावकः** स्तुतिहेतुरित्यर्थः । आचमनस्यान्यतः प्राप्तिमुक्तां निगमयति—**नचाचमनमिति** । प्राणविद्याङ्गत्वेन यदा आचमनं विधीयते, न त्वनूद्यते, तदा नैमित्तिके नित्याधिकारस्य प्रसङ्गसिद्धेरावृत्त्यनाक्षेपाच्छुद्ध्यर्थत्वं प्राणविद्योपकारार्थत्वं चेत्युभयार्थत्वमाचमनस्य स्यात् । सिद्धान्ते त्वाचमनानुवादेन वासोदृष्टेर्विधानान्नायं प्रसङ्गः; दृष्टेः शुद्ध्यर्थाचमनसंबन्धस्यानुवादसामर्थ्यसिद्धेरकल्प्यत्वादित्येवमर्थपरत्वेन भाष्यं व्याचष्टे—**अपि चैकस्य कर्मण इति** । परिधानार्थता चेति भाष्ये परिधानशब्दः परिदधतीति श्रुतिगतपरिधानं वदन्नुपकारपरः । अशब्दत्वान्न सर्वान्नाभ्यवहारश्चोद्यत इति भाष्योक्तमयुक्तम्, सर्वान्नदृष्टेरपि सिद्धान्तसंमताया अश्रुतत्वादित्याशङ्क्याह—**अशब्दत्वं चेति** । शाब्दं दृश्यं शब्दप्रकाशितं ज्ञेयं प्राणस्य सर्वान्नत्वं तन्नान्तरीयकत्वेन दृष्टिर्ज्ञप्तिशब्देन क्रियमाणोपलभ्यते, अभ्यवहारस्तु न क्रियतेऽपीति न बुद्धिस्थ इति वैषम्यमित्यर्थः । **कथंचिद्योग्यतामात्रेणेति** । प्राणस्य समस्तमन्नं श्रुतं प्राणविच्च तदात्मनि, तेनापि सर्वमन्नमभ्यवहर्तव्यमिति योग्यतामात्रेणेत्यर्थः । **प्रायेणेति** । माध्यन्दिनानां विधिदर्शनात्प्रायशब्दः ॥ १८ ॥ **इति नवमं कार्याख्यानाधिकरणम्** ॥[1]

## कल्पतरुपरिमलः ।

चमनस्तुतौ पर्यवसानं वाच्यं, तदपि न संभवत्याचमनस्याविधेयत्वादित्यर्थः । **अनग्नतासंकल्पपर्यालोचनयेति** ।

1 तत्र सूत्रम् १—कार्याख्यानादपूर्वम् १८ ॥

( १० अधिकरणम् ) **समान एवं चाभेदात् ॥ १९ ॥**

वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या विज्ञाता । तत्र च गुणाः श्रूयन्ते—'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्येवमादयः । तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते—'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' ( बृ० ५।६।१ ) इति । तत्र संशयः—किमियमेका विद्याऽग्निरहस्यबृहदारण्यकयोर्गुणोपसंहारश्च, उत द्वे इमे विद्ये गुणानुपसंहारश्चेति । किं तावत्प्राप्तम् ? विद्याभेदो गुणव्यवस्था चेति । कुतः ? पौनरुक्त्यप्रसङ्गात् । भिन्नासु हि शाखास्वध्येतृवेदितृभेदात्पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसायैकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिष्वित्युक्तम् । एकस्यां पुनः शाखायामध्येतृवेदि-

## भामती ।

**समान एवं चाभेदात्** । इहाभ्यासाधिकरणन्यायेन पूर्वः पक्षः । द्वयोर्विद्याविध्योरेकशाखागतयोरगृह्यमाणविशेषतया कस्य कोऽनुवाद इति विनिश्चयाभावादज्ञातज्ञापनाऽप्रवृत्तप्रवर्तनारूपस्य च विधित्वस्य स्वरससिद्धेरुभयत्रोपासनाभेदः । नच गुणान्तरविधानायैकत्रानुवादः; उभयत्रापि गुणान्तरविधानोपलब्धेर्विनिगमनाहेत्वभावात्समानगुणानभिधानप्रसङ्गाच्च । तस्मात्समिधो यजतीत्यादिवदभ्यासादुपासनाभेद इति प्राप्त उच्यते—ऐककर्म्यमेकत्वेन प्रत्यभिज्ञानात् । नचागृह्यमाणविशेषता; यत्र भूयांसो गुणा यस्य कर्मणो विधीयन्ते तत्र तस्य प्रधानस्य विधिरितरत्र तु

## वेदान्तकल्पतरुः ।

**समान एवं चाभेदात् ॥ १९ ॥** पूर्वत्र प्राप्ताचमनानुवादेनानग्नताचिन्तनं विधेयमित्युक्तम्, इह तु वाक्ययोः कस्य विधित्वं कस्य वानुवादत्वमित्यनिश्चयाद् द्वयोरपि विद्याविधित्वमिति पूर्वपक्षमाह—**इहेति** । अभ्यासाधिकरणन्यायमेव प्रकृते योजयति—**द्वयोरिति** । निर्गुणे हि कर्मणि विहिते तदनु गुणो विधीयते, यथाऽग्निहोत्रं जुहोतीति विहितनिर्गुणकर्मानुवादेन दध्ना जुहोतीति दधिगुणः । शाण्डिल्यविद्याविध्योस्तूभयोरपि सगुणत्वान्नान्यतरस्यानुवादतेत्याह—**नच गुणान्तरेति** । सगुणत्वेऽपि द्वयोर्वाक्ययोरन्यतरस्यानुवादत्वं भवति, यथा"ऽऽग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"ति कालद्वयान्वितानेयविध्यन्तर्भावात् "यदाग्नेयोष्टाकपालोऽमावास्यायां भवतीत्येककालाग्नेयवाक्यस्यानुवादता, न तथेह वाक्यद्वयार्थयोरितरेतरत्रान्तर्भाव इति गमयितुं **गुणान्तरेत्यन्तरशब्दः** । अग्निरहस्ये हि "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा दिशोऽनुसंभूतं सर्वमिदमभ्यात्तमवाक्यनादरं यथा व्रीहिर्वा यवो वेत्यादयो बहुतरा गुणा आम्नाताः, आरण्यके तु 'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशीत्यादयः स्तोकाः । तत्र वशित्वादयो नाग्निरहस्ये, कामरूपित्वादयश्च नारण्यकेऽत इतरेतरानन्तर्भावान्नानुवादतेत्यर्थः । **अपिचै**कमार्गेण विधित्वेऽधिका एव गुणाः श्रूयेरन्, न तु समाना मनोमयत्वादयः, अतोऽप्युभयत्र विद्याविधिरित्याह—**समानगुणानभिधानेति** । पूर्वपक्षं निरस्यति—**नेति** । सिद्धान्तं प्रतिजानीते—**ऐककर्म्यमिति** । ऐकविद्यमित्यर्थः । एकविद्यात्वे हेतुमाह—**एकत्वेनेति** । उभयत्र मनोमयत्वादिगुणविशिष्टपुरुषप्रत्यभिज्ञानादित्यर्थः । **ननु** समानासमानगुणवत्तयोभयोरपि वाक्ययोरतुल्यत्वात् क्व विद्याविधिः ? क्व वा गुणविधिरिति ? न ज्ञायते, अत आह—**न चागृह्यमाणेति** । हस्तिनां समूहो **हास्तिकम्** । अश्वानां समूहो**ऽश्वीयम्** । शक्तियष्टिधनुःकृपाणप्रासाः प्रहरणानि येषां ते तथोक्ताः । ऋग्वेदे यजुर्वेदे च श्रूयमाणज्योतिष्टोमस्य तावदेकत्र विधिरन्यत्र गुणविध्यर्थमनुवाद इति स्थिते क्व विधानमित्यनिर्णयप्राप्तौ यजुर्वेदे दीक्षणीयाद्यङ्गभूय-

## कल्पतरुपरिमलः ।

अनग्नतासंकल्पो विधेयः; सर्वाङ्गदृष्टिविधिसाहचर्यात्, "लम्भुको ह वासो भवत्यनग्नो भवती"ति छान्दोग्ये फलार्थवादश्रवणात् । छान्दोग्यकाण्वशाखयोर्वासस्त्वकीर्तनवदाचमनविधेरश्रवणेन तत्र वासस्त्वकीर्तन एव विधिपर्यवसानस्य वक्तव्यत्वाच्च । अतो विधेयेनाविधेयस्य स्तुतिकल्पनमत्यन्तमन्याय्यमित्यर्थः । **प्राणविद्याङ्गत्वेन यदा आचमनं विधीयत इति** । प्राणद्वारा सर्वकर्मसाधारणाङ्गात् स्मार्ताचमनादन्यत्प्राणविद्यायाम् असाधारणाङ्गमाचमनान्तरं विधेयमभ्युपगम्यते । स्मार्तात्सर्वसाधारणात्प्राणाग्निहोत्रादन्यदेव वैश्वानरविद्याङ्गं प्राणाग्निहोत्रं, तदा नैमित्तिकेन नित्यस्य प्रसङ्गसिद्धकार्यतयाऽऽवृत्त्यनपेक्षणादेकमेवाचमनमुभयकार्यार्थमङ्गीकरणीयमिति कल्पनागौरवं भवेन्न सिद्धान्त इत्यर्थः ॥ १८ ॥

**इति नवमं कार्याख्यानाधिकरणम् ॥**

**समान एवं चाभेदात् ॥ १९ ॥ ऋग्वेदे यजुर्वेदे चेति** । सामवेदे यजुर्वेदे च ज्योतिष्टोमः श्रूयत इति पूर्वमी-

तृभेदाभावादशक्यपरिहारे पौनरुक्त्ये न विप्रकृष्टदेशस्थैका विद्या भवितुमर्हति । नचात्रैकमाम्नानं विद्याविधानार्थमपरं गुणविधानार्थमिति विभागः संभवति; तदा ह्यतिरिक्ता एव गुणा इतरत्रेतरत्र चाम्नायेरन्न समानाः । समाना अपि तूभयत्राम्नायन्ते मनोमयत्वादयः । तस्मान्नान्योन्यं गुणोपसंहार इति । एवं प्राप्ते ब्रूमहे—यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवत्येवमेकस्यामपि शाखायां भवितुमर्हति; उपास्याभेदात् । तदेव हि ब्रह्म मनोमयत्वादिगुणकमुभयत्राप्युपास्यमभिन्नं प्रत्यभिजानीमः । उपास्यं च रूपं विद्यायाः । नच विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः । नापि विद्याऽभेदे गुणव्यवस्थानम् । ननु पौनरुक्त्यप्रसङ्गाद्विद्याभेदोऽध्यवसितः, नेत्युच्यते; अर्थविभागोपपत्तेः । एकं ह्याम्नानं विद्याविधानार्थमपरं गुणविधानार्थमिति न किंचिन्नोपपद्यते । नन्वेवं सति यदपठितमग्निरहस्ये तदेव बृहदारण्यके पठितव्यम् 'स एष सर्वस्येशानः' यत्तु पठितमेव मनोमय इत्यादि, तन्न पठितव्यम्, नैष दोषः; तद्बलेनैव प्रदेशान्तरपठितविद्याप्रत्यभिज्ञानात् । समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां प्रत्यभिज्ञाप्य तस्यामीशानत्वाद्युपदिश्यते । अन्यथा हि कथं तस्यामयं गुणविधिरभिधीयते ? अपि चाप्राप्तांशोपदेशेनार्थवति वाक्ये संजाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाऽप्युपपद्यमानत्वान्न तद्बलेन प्रत्यभिज्ञाऽपोदितुं शक्यते । तस्मादत्र समानायामपि शाखायां विद्यैकत्वं गुणोपसंहारश्चेत्युपपन्नम् ॥ १९ ॥ इति दशमं समानाधिकरणम् ॥

## भामती ।

तदनुवादेन कतिपयगुणविधिः । यथा यत्र छत्रचामरपताकाहास्तिकाश्वीयशाक्तीकयाष्टीकधानुष्ककार्पाणिकप्रासिकपदातिप्रचयस्तत्रास्ति राजेति गम्यते, न तु कतिपयगजवाजिपदातिभाजि तदमात्ये, तथेहापि । नचैकत्र विहितानां गुणानामितरत्रोक्तिरनर्थिका; प्रत्यभिज्ञानदार्ढ्यार्थत्वात् । अस्तु वास्मिन्नित्यानुवादः; नह्यनुवादानामवश्यं सर्वत्र प्रयोजनवत्त्वम् । अनुवादमात्रस्यापि तत्र तत्रोपलब्धेः । तस्मात्तदेव बृहदारण्यकेऽप्युपासनं तद्गुणेनोपसंहारादिति सिद्धम् ॥ १९ ॥ इति दशमं समानाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

स्त्वेन तत्रैव विधीयत इति सिद्धान्तितं भेदलक्षणे । एवमत्रापि धर्मभूयस्त्वादग्निरहस्ये विद्याविधिनिर्णय इत्यर्थः । **यत्तु केशवेनोक्तं**—सिद्धे कर्मण उत्पत्त्यैक्ये प्रयोगविधिः क्वेति वीक्षायामङ्गभूयस्त्वेन प्रयोगविधिस्तत्र निर्णीतः, अत्र पुनर्विद्योत्पत्त्यैक्यमेव न सिद्धमिति मुधा भूयस्त्वन्यायोपन्यासः—**इति । तन्न**; यतोऽत्रापि प्रत्यभिज्ञया विद्यैक्ये सिद्धे क्वोत्पत्तिरिति निर्णीयते । न च—अङ्गभूयस्त्वं प्रयोगविधिनिर्णायकं नोत्पत्तिविधिनिर्णायकमिति—वाच्यम्; उत्पत्तेः प्रयोगाऽविनाभूतत्वेन प्रयोगगमकादङ्गभूयस्त्वादुत्पत्तेरप्यनुमातुं युक्तत्वादिति । **अनुवादमात्रस्यापीति** । आग्नेयैककालत्वादिविषयस्येत्यर्थः । भाः प्रकाशात्मकः **सत्यः** परमार्थः **तस्मिन्**मनोमयपदप्रकृतिभूतमनःशब्देन प्रस्तुते हृदयेऽन्तर्यथा व्रीह्यादिस्तथा तावत्प्रमाणः पुरुष आस्ते । स एव सर्वस्य वशीत्यादिलक्षणः ॥ १९ ॥ इति दशमं समानाधिकरणम् ॥[1]

## कल्पतरुपरिमलः ।

मांसकैर्लिखितम्, इह तूदाहरणानास्थया ऋग्वेदे इत्युक्तम् । **अथवा**—सामवेद एव योनिग्रन्थोत्तराग्रन्थरूपसामाधारऋक्संहितावत्त्वादृग्वेदशब्देनोक्तः । **सिद्धान्तितं भेदलक्षण इति** । शेषलक्षणे इति लेखनीये प्रमादाल्लेखकैर्भेदलक्षणे इति लिखितम् । तृतीयाध्याये हि वाक्यपादे भूयस्त्वेनोभयश्रुती ( जै. सू. अ. ३ पा. ३ सू. १० )त्यधिकरणम् । **प्रयोगविधिस्तत्र निर्णीत इति** । उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्नेति वाक्यैः ऋग्वेदयजुर्वेदसामवेदैरनुष्ठाप्यानां कर्मणां क्रमादुच्चैष्ट्वोपांशुत्वोच्चैष्ट्वरूपाः स्वरा विहिताः । यस्मिन्वेदे यस्य कर्मणः प्रयोगविधिस्तत्कर्म तेन वेदेनानुष्ठाप्यते प्रयोगविधिमूलत्वादनुष्ठानस्य । अतो ज्योतिष्टोमस्य सामवेदे यजुर्वेदे च साधिकारविधिश्रवणे सति तस्मिन् कतरस्य वेदस्य स्वरो भवतीत्याकाङ्क्षायां यजुर्वेदस्य स्वर इति निर्णेतुमङ्गभूयस्त्वेन यजुर्वेदे प्रयोगविधिस्तस्मिन्नधिकरणे निर्णीत इत्यर्थः । प्रकृते विद्यैक्याऽसिद्धिदूषणं प्रत्याचष्टे—**यतोऽपीति** । अङ्गभूयस्त्वं प्रयोगविधेरेव निर्णायकमुत्पत्तिविधिनिर्णयानुपयोगीति दूषणमनूद्य निराकरोति—**न चाङ्गभूयस्त्वमिति** । अङ्गसाकल्यधीसापेक्षं प्रयोगविधिकल्पनं यत्राङ्गबाहुल्यं तत्राङ्गसाकल्यधीर्भवति, न तु यत्राङ्गानामल्पीयस्त्वं तत्रापि । न हि महति तरुषण्डे कतिपयतरुहानेपि वनबुद्धिवत् पञ्चषद्तरुवृन्दे वनबुद्धिर्भवति । अतोऽङ्गभूयस्त्वं प्रयोगविधेरेव नियामकं नोत्पत्तिविधेरिति प्रकृतानुपयोगवाद्यभिप्रायः । **प्रयोगाऽवि-**

[1] तत्र सूत्रम् १—समान एवं चाभेदात् १९ ॥

( ११ अधिकरणम् ) **संबन्धादेवमन्यत्रापि ॥ २० ॥**

बृहदारण्यके 'सत्यं ब्रह्म' ( बृ० ५।५।१ ) इत्युपक्रम्य 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' ( बृ० ५।५।२ ) इति तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं चायतनविशेषमुपदिश्य व्याहृतिशरीरत्वं च संपाद्य द्वे उपनिषदावुपदिश्येते। तस्योपनिषदहरित्यधिदैवतम्। तस्योपनिषदहमित्यध्यात्मम्। तत्र संशयः—किमविभागेनैवोभे अप्युपनिषदावुभयत्रानुसंधातव्ये, उत विभागेनैकाऽधिदैवमेकाऽध्यात्ममिति। तत्र सूत्रेणैवोपक्रमते। यथा शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार उक्त एवमन्यत्राप्येवंजातीयके विषये भवितुमर्हति; एकविद्याभिसंबन्धात्। एका हीयं सत्यविद्याऽधिदैवमध्यात्मं चाधीता; उपक्रमाभेदाद्व्यतिषक्तपाठाच्च। कथं तस्यामुदितो धर्मस्तस्यामेव न स्यात्? यो ह्याचार्ये कश्चिदनुगमनादिराचारश्चोदितः स ग्रामगतेऽरण्यगते च तुल्यवदेव भवति। तस्मादुभयोरप्युपनिषदोरुभयत्र प्राप्तिरिति ॥ २० ॥ एवं प्राप्ते प्रतिविधत्ते—

**न वा विशेषात् ॥ २१ ॥**

न वोभयोरुभयत्र प्राप्तिः। कस्मात्? विशेषात्। उपासनस्थानविशेषोपनिबन्धादित्यर्थः। कथं स्थानविशेषोपनिबन्ध इत्युच्यते—'य एष एतस्मिन्मण्डले पुरुषः' ( बृ० ५।५।३ ) इति ह्याधिदैविकं पुरुषं प्रकृत्य तस्योपनिषदहरिति श्रावयति। 'योऽयं दक्षिणेऽक्षन्पुरुषः' ( बृ० ५

---

**भामती।**

**संबन्धादेवमन्यत्रापि ॥ २० ॥** यद्येकस्यामपि शाखायां तत्त्वेन प्रत्यभिज्ञानादुपासनस्य तत्र विहितानां धर्माणां संकरः, तथा सति सत्यस्यैकस्याभेदान्मण्डलद्वयवर्तिन उपनिषदोरपि संकरप्रसङ्गात् तस्येति च प्रकृतपरामर्शित्वाद्भेदः। सत्यस्य च प्रधानस्य प्रकृतत्वादधिदैवमित्यस्य विशेषणतयोपसर्जनस्येनाप्रस्तुतत्वादप्रस्तुतस्य च सत्यस्याभेदात्पूर्ववद्गुणसं-

**वेदान्तकल्पतरुः।**

**संबन्धादेवमन्यत्रापि ॥ २० ॥** आप एवेदमग्रआसुः ता आपः सत्यमसृजन्त। **सत्यमिति** हिरण्यगर्भ उच्यते। तच्च सत्यं ब्रह्म महद् इत्युपक्रम्यतत्रैवं सति यत्तत्सत्यं हिरण्यगर्भाख्यं सोसावादित्यापेक्षया पुँल्लिङ्गप्रयोगः। क आदित्यः? किं मण्डलमेव? न। किं तर्हि? य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष इति। तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं चादित्यचाक्षुषपुरुषरूपेणावस्थानमुक्त्वा तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्निती तरेतरव्यतिषक्तत्वमुक्त्वाऽऽदित्यपुरुषस्य य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिरः भुव इति बाहू सुवरिति प्रतिष्ठा पादावित्यर्थ इति व्याहृतिशरीरत्वमुक्त्वा तस्योपनिषदहरित्यादित्यपुरुषस्याहर्नामत्वमुक्तम्। अनन्तरं योऽयं दक्षिणेऽक्षन् पुरुषस्तस्यापि भूरिति शिर इत्यादिना व्याहृतिशरीरत्वमुक्त्वा तस्योपनिषदहमित्यहंनामत्वमुक्तम्। **उपनिषदिति**। देवतामुपनिगमयतीति देवताप्रकाशकं रहस्यं नाम भण्यते। **अहःशब्दः** प्रकाशवचनः। **अहंशब्दः** प्रत्यगात्मत्ववाची। एते उपनिषदौ सत्यस्य ब्रह्मणः स्थानभेदेन व्यवस्थयाऽनुचिन्तनीये उत द्वे अप्युभयत्रेति स्थानभेदात्सत्यब्रह्मैक्याच्च संशये संगतिगर्भं पूर्वपक्षमाह—**यद्येकस्यामपीति**। **ननु** तस्योपनिषदहमिति चादित्यमण्डलाक्षिस्थानविशिष्टस्य सत्यब्रह्मणः परामर्शात्कथमुपनिषदोः संकर इति सिद्धान्ताशयमाशङ्क्याह—**तस्येति चेति**। तस्येति शब्दस्य प्रकृतपरामर्शित्वात्स्थानावच्छिन्नस्य च प्रकृतत्वादुपनिषदोर्मिथोऽसंकर इति हि सिद्धान्ताशय इत्यर्थः। एवमनूदितसिद्धान्ताशयं दूषयति—**सत्यस्य चेति**। सत्यं प्रकृतावलम्बि सर्वनाम, प्रकृतमिति च प्राधान्येन पूर्वमवगतमुच्यते, अतः सत्यं ब्रह्मैव प्रधानं परामृश्यते, न गुणभूतः स्थानविशेषः। नापि तद्वैशिष्ट्यम्; तस्यापि स्वरूपधर्मत्वेनोपसर्जनत्वात्, तथा च सत्यस्यैक्यादुपनिषदोः संकरः इत्यर्थः। **पूर्ववदिति**। शाण्डिल्यविद्यावदित्यर्थः ॥ २० ॥ सत्यं न गुणभूतं स्थानमात्रं तच्छ-

**कल्पतरुपरिमलः।**

**नाभूतत्वेनेति**। प्रयोगविधिव्याप्यस्य प्रयोगविधिसमव्याप्तमुत्पत्तिविधिं प्रत्यपि व्याप्यत्वमस्तीति भावः ॥ १९ ॥ **इति दशमं समानाधिकरणम् ॥**

**संबन्धादेवमन्यत्रापि ॥ २० ॥** विषयशुद्ध्यर्थं विद्योपक्रमश्रुतिमुदाहृत्य विवृणोति—**आप इति**। आपोऽत्र पञ्चाग्निविद्यायामापः पुरुषवचसो भवन्तीत्यत्रेहामुत्र च संचरतां जीवानामिव प्रथमजीवस्य हिरण्यगर्भस्य शरीरारम्भार्था भूतान्तरसहिता आप उच्यन्ते। सूक्ष्मावस्थास्ता एव इदं सर्वं व्याकृतं समस्तं जगद्धिरण्यगर्भशरीररूपम् अग्रे नामरूपव्याक-

।५।४ ) इति ह्याध्यात्मिकं पुरुषं प्रकृत्य तस्योपनिषदहमिति । तस्येति चैतत्संनिहितावलम्बनं सर्वनाम । तस्मादायतनविशेषव्यपाश्रयेणैवैते उपनिषदावुपदिश्येते । कुत उभयोरुभयत्र प्राप्तिः? नन्वेक एवायमधिदैवतमध्यात्मं च पुरुषः; एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्, सत्यमेवमेतत्; एकस्यापि त्ववस्थाविशेषोपादानेनैवोपनिषद्विशेषोपदेशात्तदवस्थस्यैव सा भवितुमर्हति । अस्ति चायं दृष्टान्तः सत्यप्याचार्यस्वरूपानपाये यदाचार्यस्यासीनस्यानुवर्तनमुक्तं न तत्तिष्ठतो भवति । यच्च तिष्ठत उक्तं न तदासीनस्येति । ग्रामारण्ययोस्त्वाचार्यस्वरूपानपायात्तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावादुभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः । तस्माद्व्यवस्थाऽनयोरुपनिषदोः ॥ २१ ॥

## दर्शयति च ॥ २२ ॥

अपि चैवंजातीयकानां धर्माणां व्यवस्थेति लिङ्गदर्शनं भवति—'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' ( छा० १।७।५ ) इति । कथमस्य लिङ्गत्वमिति? तदुच्यते । अक्ष्यादित्यस्थानभेदभिन्नान्धर्मानन्योन्यस्मिन्ननुपसंहार्यान्पश्यन्निहातिदेशेनादित्यपुरुषगतान्रूपादीनक्षिपुरुष उपसंहरति—'तस्यैतस्य तदेव रूपम्' ( छा० १।७।५ ) इत्यादिना । तस्माद्व्यवस्थिते एवैते उपनिषदाविति निर्णयः ॥ २२ ॥ इति एकादशं संबन्धाधिकरणम् ॥

## ( १२ अधिकरणम् ) संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसंभृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते । तेषामेव चोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते । तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन्न वेति विचारणायां, ब्रह्मसंबन्धादुपसंहारप्राप्तावेवं पठति । संभृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः; अतएव चायतनविशेषयोगात् । तथाहि शाण्डिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तम्—'एष म आत्माऽन्तर्हृदये' ( छा० ३।१४।३ ) इति । तद्वदेव दह-

### भामती ।

करः ॥ २० ॥ इति प्राप्त उच्यते—**न वाविशेषात्** । सत्यं यत्र स्वरूपमात्रसंबन्धो धर्माणां श्रूयते, तत्रैवं स्वरूपस्य सर्वत्र प्रत्यभिज्ञायमानत्वात्तन्मात्रसंबन्धित्वाच्च धर्माणाम् । यत्र तु सविशेषणं प्रधानमवगम्यते तत्र सविशेषणस्यैव तस्य धर्माभिसंबन्धो न निर्विशेषणस्य नाप्यन्यविशेषणसहितस्य । नहि दण्डिनं पुरुषमानयेत्युक्ते दण्डरहितः कमण्डलुमानानीयते । तस्मादधिदैवं सत्यस्योपनिषदुक्ता न तस्यैवाध्यात्मं भवितुमर्हति । यथा चाचार्यस्य गच्छतोऽनुगमनं विहितं न तिष्ठतो भवति । तस्मान्नोपनिषदोः संकरः, किंतु व्यवस्थितिः । तदिदमुक्तं—**स्वरूपानपायादिति** ॥२१॥ अतिदेशादप्येवमेव । तत्त्वे हि नातिदेशः स्यादिति ॥ २२ ॥ **इत्येकादशं संबन्धाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

च्छेदेन परामृश्यते, नापि तद्वैशिष्ट्यं धर्मैः, किं तु स्थानविशिष्टं ब्रह्मैव; य एष एतस्मिन्मण्डले पुरुष इति तथैव प्रकृतत्वात्, तथा च विशिष्टस्य विशिष्टान्तरेऽननुगमान्नोभयत्रोभयनामचिन्तनमिति सिद्धान्तयति—**सत्यं यत्रेत्यादिना** । **तत्त्वे हीति** । विशिष्टयोरेकत्वेऽन्तरादित्येऽन्तरक्षिणीत्युपदिष्टहिरण्मयपुरुषयोरेकत्वाद् रूपाद्यतिदेशो न स्यादतिदेशस्य भिन्नाऽधिष्ठानत्वादित्यर्थः ॥ २१ ॥ २२ ॥ **इत्येकादशं संबन्धाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

रणात्प्राक् आसुः नान्यद्विकारजातमासीदित्यर्थः । तावेतावादित्याक्षिपुरुषावन्योन्यस्मिन्नादित्यपुरुषोऽक्षिपुरुषेऽक्षिपुरुषश्चादित्यपुरुषे परस्परोपकारं कुर्वन्तौ प्रतिष्ठितौ । एष आदित्यपुरुषः अस्मिन्नक्षिपुरुषे रश्मिभिः प्रकाशदानेनानुग्रहं कुर्वन्प्रतिष्ठितः । अक्षिपुरुषः अमुष्मिन्नादित्यपुरुषे प्राणैरनुग्रहं कुर्वन् प्रतिष्ठितः । प्राणैरादित्यपुरुषस्यानुग्रहस्तस्य प्राणसूक्ष्मरूपत्वात्तथात्वं च तस्य पुरुषविद्याधिकरणे अक्षितमसीत्यादिमन्त्रत्रयव्याख्यानेन स्पष्टीकरिष्यते ॥ २० ॥ २१ ॥ २२ ॥ **इत्येकादशं संबन्धाधिकरणम्** ॥

१ तत्र सूत्राणि ३—संबन्धादेवमन्यत्रापि २० न वा विशेषात् २१ दर्शयति च २२ ॥

रविद्यायामपि 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' ( छा० ८।१।१ ) इति । उपकोसलविद्यायां त्वक्ष्यायतनत्वम् 'य एषोऽक्षणि पुरुषो दृश्यते' ( छा० ४।१५।१ ) इति । एवं तत्र तत्र तत्तदाध्यात्मिकमायतनमेतासु विद्यासु प्रतीयते । आधिदैविक्यस्त्वेता विभूतयः संभृतिद्युव्याप्तिप्रभृतयः, तासां कुत एतासु प्राप्तिः ? नन्वेतास्वप्याधिदैविक्यो विभूतयः श्रूयन्ते—'ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ' ( छा० ३।१४।३ ) 'एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' ( छा० ४।१५।४ ) 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' ( छा० ८।१।३ ) इत्येवमाद्याः । सन्ति चान्या आयतनविशेषहीना अपीह ब्रह्मविद्याः षोडशकलाद्याः । सत्यम् ; एवमेतत्, तथाप्यत्र विद्यते विशेषः संभृत्याद्यनुपसंहारहेतुः । समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्र-

## भामती ।

**संभृतिद्युव्याप्त्यपि चातः ।** 'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ?' । ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठा जज्ञे आस । यद्यपि तासु तासु शाण्डिल्यादिविद्यास्वायतनभेदपरिग्रहेणाध्यात्मिकायतनत्वं संभृत्यादीनां गुणानामाधिदैविकत्वमित्यायतनभेदः प्रतिभाति; तथापि ज्यायान् दिव इत्यादिना संदर्भेणाधिदैविकविभूतिप्रत्यभिज्ञानात्षोडशकलाद्यासु च विद्यास्वायतनाश्रवणादन्ततो ब्रह्माश्रयतया साम्येन प्रत्यभिज्ञासंभवात् संभृत्यादीनां गुणानां शाण्डिल्यादिविद्यासु षोडशकलादिविद्यासु चोपसंहार इति पूर्वः पक्षः । राद्धान्तस्तु—मिथः समानगुणश्रवणं प्रत्यभिज्ञाय यद्विद्या अपूर्वानपि तत्राश्रुतान्गुणानुपसंहारयति, न त्विह संभृत्यादिगुणकब्रह्मविद्यायां शाण्डिल्यादिविद्यागतगुणश्रवणमस्ति । या तु काचिदाधिदैविकी विभूतिः शाण्डिल्यादिविद्यायां श्रूयते तस्यास्तत्प्रकरणाधीनत्वात्तावन्मात्रं ग्रहीष्यते नैतावन्मात्रेण संभृत्यादीननुकृष्टुमर्हति । तत्रैतत्प्रत्यभिज्ञानाभावादित्युक्तम् । ब्रह्माश्रयत्वेन तु प्रत्यभिज्ञानसमर्थनमतिप्रसक्तम्; भूयसीनामैक्यप्रसङ्गात्,

## वेदान्तकल्पतरुः ।

**संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥** यद्यपि वैश्वानरषोडशकलादिविद्यानामितरेतरमाधिदैविकविभूतिप्रत्यभिज्ञानं ब्रह्मसंबन्धप्रत्यभिज्ञानं चाविशिष्टम्; तथापि तासु नेतरेतरगुणोपसंहारः शङ्क्यते, तासां प्रत्यक्षविधिविहितत्वेन भेदनिश्चयात्संभृत्यादीनां त्वश्रुतविधिकत्वात्परिशिष्टोपदेशात्मकखिलग्रन्थशिष्टत्वाच्चोपनिषदुदितविद्याशेषत्वमाशङ्क्यते । **ज्येष्ठा** ज्येष्ठानि । छन्दसि बहुवचनस्य डादेशः । ब्रह्मज्येष्ठानि **वीर्याणि** पराक्रमविशेषाः । अन्यैर्हि पुरुषैः सहायानपेक्ष्य विक्रमाः संभ्रियन्ते । तेन तत्पराक्रमाणां न तएव नियतपूर्वभावित्वरूपकारणत्वेन ज्येष्ठाः, किं तु तत्सहकारिणोऽपि । ब्रह्मवीर्याणां तु ब्रह्मैव ज्येष्ठमनन्यापेक्षं ब्रह्म जगज्जन्मादि करोतीत्यर्थः । **किंचान्येषां** पराक्रममाणानां बलवद्भिर्मध्ये भङ्गोऽपि भवति, तेन ते स्ववीर्याणि न संबिभ्रति, ब्रह्मवीर्याणि तु ब्रह्मणा संभृतानि अविघ्नेन संभृतानीत्यर्थः । तच्च ज्येष्ठं ब्रह्म **अग्रे** इन्द्रादिजन्मनः प्रागेव **दिवं** स्वर्ग**माततान** व्याप्तवद् नित्यमेव विश्वव्यापकमित्यर्थः । देशतोऽपरिच्छेदमुक्त्वा कालतोऽप्याह—**ब्रह्म भूतानामिति** । जज्ञ इत्यस्योत्पत्तिवचनत्वं व्यावर्तयति—**आसेति** । पूर्वाधिकरणे स्थानविशेषादनुपसंहार उक्तः । तस्यातिदेशोऽयम् । अस्याधिकाशङ्कामाह—**यद्यपीत्यादिना । आयतनभेदपरिग्रहेणेति** । हृदयाद्यायतनं मा भूदायतनविशेषावरोधाच्छाण्डिल्यादिविद्यासु संभृत्यादीनामुपसंहारस्त्रैलोक्यात्मकविषयासु विद्यासु आयतनाभावात् तासूपसंहारो भविष्यतीत्यभ्यधिकाशङ्कान्तरमाह—**षोडशकलाद्यासु चेति** । एकस्यां विद्यायां ये गुणा असाधारणास्ते यद्यन्यत्रापि श्रूयन्ते, तत्र विद्यैक्यं गुणोपसंहारश्च, यथाऽग्निरहस्ये बृहदारण्यके च मनोमयत्वाद्यसाधारणगुणप्रत्यभिज्ञानाद्विद्यैक्यं न तु साधारणगुणमात्रश्रवणं विद्यैक्यगमकमतिप्रसङ्गात् । तत्र किं संभृत्यादिविद्यायाः शाण्डिल्यादिविद्यानां चासाधारणगुणसाम्यादेकत्वमुत साधारणगुणसाम्यादथ वोभयत्र ब्रह्ममात्रप्रत्यभिज्ञानात्, **नाद्य** इत्याह—**मिथः समानेति** । समानगुणेत्यसाधारणगुणसाम्यं विवक्षितम् । शाण्डिल्यादिविद्यागतगुणश्रवणं नास्तीत्यप्यसाधारणगुणाभिप्रायम् । **द्वितीयं** प्रत्याह—**या तु काचिदिति** । द्युव्याप्त्यादिगुणास्तु यद्यपि संभृत्यादिविद्यायां शाण्डिल्यादिविद्यायां च समाः; तथापि तेषां वैश्वानरषोडशकलादिविद्यास्वपि साधारण्येन तासामपीतरेतरमैक्यापादकत्वेनातिप्रसञ्जित्वान्न विद्यैक्यबोधनद्वारेण संभृत्यादिगुणकर्षकत्वं, किं तु शाण्डिल्यादिविद्याप्रकरणपठितत्वात्तावन्मात्रमेव शाण्डिल्यादिविद्यासु स्वीकर्तव्यमित्यर्थः । **तत्रैतत्प्रत्यभिज्ञानाभावादिति** । संभृत्यादिप्रत्यभिज्ञानाभावादित्यर्थः । **इत्युक्तम्** । संभृतिद्युव्या-

## कल्पतरुपरिमलः ।

**संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥** **नन्वा**धिदैविकविभूतिब्रह्मप्रत्यभिज्ञानमात्रमन्यत्राम्नातगुणानामुपसंहारे न हेतुः; वैश्वानरषोडशकलादिविद्याम्नातगुणानामपि परस्परोपसंहारप्रसङ्गादित्याशङ्क्य तदुभयप्रत्यभिज्ञानमात्रमिह नोपसंहारहे-

कृष्टदेशा गुणा उपसंह्रियेरन्निति युक्तम्, संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च मनोमयत्वादयो गुणाः परस्परव्यावृत्तस्वरूपत्वान्न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः। नच ब्रह्मसंबन्धमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनमित्युच्यते; विद्याभेदेऽपि तदुपपत्तेः। एकमपि हि ब्रह्म विभूतिभेदैरनेकधोपास्यत इति स्थितिः, परोवरीयस्त्वादिवद्भेददर्शनात्। तस्माद्वीर्यसंभृत्यादीनां शाण्डिल्यविद्यादिष्वनुपसंहार इति॥ २३॥ इति द्वादशं संभृत्यधिकरणम्॥

(१३ अधिकरणम्) **पुरुषविद्यायामिव चेतरेषामनाम्नानात्॥ २४॥**

अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या। तत्र पुरुषो यज्ञः कल्पितः। तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितम्। अशिशिषादीनि च दीक्षादिभावेन कल्पितानि। अन्ये च धर्मास्तत्र समधिगता आशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कंचित्पुरुषयज्ञं कल्पयन्ति—'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' (नारा० ८०) इत्येतेनानुवाकेन। तत्र संशयः—किं य इतरत्रोक्ताः पुरुषयज्ञस्य धर्मास्ते तैत्तिरीयकेषूपसंहर्तव्याः, किंवा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषादुपसंहारप्राप्तावाचक्ष्महे—नोपसंहर्तव्या इति। कस्मात्? तद्रूपप्रत्यभिज्ञानाभावात्। तदाहाचार्यः—पुरुषविद्यायामिवेति। यथैकेषां शाखिनां ताण्डिनां

---

**भामती।**

तदिदमुक्तं—**संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्चेति**। तस्मात्संभृतिश्च द्युव्याप्तिश्च तदिदं संभृतिद्युव्याप्त्यपि चातः प्रत्यभिज्ञानाभावान्न शाण्डिल्यादिविद्यासूपसंह्रियत इति सिद्धम्॥ २३॥ **इति द्वादशं संभृत्यधिकरणम्॥**

**पुरुषविद्यायामिव चेतरेषामनाम्नानात्।** पुरुषयज्ञत्वमुभयत्राप्यविशिष्टम्। नच विदुषो यज्ञस्येति न सामानाधिकरण्यसंभवः; यज्ञस्यात्मेत्यात्मशब्दस्य स्वरूपवचनत्वात् यज्ञस्य स्वरूपं यजमानस्तस्य च चेतनत्वाद्विदुष

**वेदान्तकल्पतरुः।**

सीति सूत्रेणेति शेषः। तृतीयं प्रत्याह—**ब्रह्माश्रयत्वेन त्विति। तदिदमुक्तमिति**। आधिदैविकविभूतेः साधारण्यात्संभृत्याद्यनाकर्षकत्वं ब्रह्मप्रत्यभिज्ञायाश्चातिप्रसक्तत्वं चेत्यर्थः। तत्रापि आधिदैविकविभूतेर्बहुविद्यासाधारणत्वेनाऽसाधारणसंभृत्यादेः सकाशाद्व्यावृत्तत्वात्तदनाकर्षकत्वं संभृत्यादयस्त्विति भाष्येणोक्तम्। **नच ब्रह्मसंबन्धमात्रेणेत्यादिना** चब्रह्मप्रत्यभिज्ञाया अप्रयोजकत्वमुक्तमिति विवेकः। संभृतिद्युव्याप्तीत्येतत्सूत्रपदं प्रगृह्यत्वाभावाय द्वन्द्वैकवद्भावेन व्याचष्टे—**तस्मादिति**। अत इति सूत्रपदेन पूर्वाधिकरणोक्तस्थानभेदो न परामृश्यते; तस्य षोडशकलादिविद्यास्वभावेनाव्यापकत्वात्, किं तु यथा तत्रादित्यविशिष्टब्रह्मणोऽक्षिविशिष्टब्रह्मणश्चाप्रत्यभिज्ञानमुक्तमेवमिहाप्यसाधारणगुणप्रत्यभिज्ञाऽभावोऽस्त्यसावत इति निर्दिश्यत इत्याह—**प्रत्यभिज्ञानाभावादिति। प्रत्यक्षविध्यभावेऽपि प्रत्यभिज्ञानवर्जनात्।**

**कल्पयित्वा विधिं विद्या खिलोक्तापीह भेदिता॥ १॥ २३॥ इति द्वादशं संभृत्यधिकरणम्॥**[1]

**पुरुषविद्यायामिव चेतरेषामनाम्नानात्॥ २४॥** छान्दोग्यशाखाविशेषे तावदेका विद्याऽधिगता, पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनम् अष्टाचत्वारिंशत् तृतीयं सवनम्। यदशिशिषति पिपासति यद्रमते साऽस्य दीक्षा अथ यद्धसति जक्षति तत् स्तुतशस्त्रे। शब्दवत्त्वसामान्यादिति दीक्षादिकल्पना।

**कल्पतरुपरिमलः।**

तुत्वेन विवक्षितं, किं तु विध्यश्रवणेन खिलग्रन्थपठितत्वेन चोपष्टब्धं तदित्याह—**यद्यपीत्यादिना॥२३॥ इति द्वादशं संभृत्यधिकरणम्॥**

**पुरुषविद्यायामिव चेतरेषामनाम्नानात्॥ २४॥** पुरुषो वाव यज्ञ इत्यादिखण्डद्वये विषयविवेकार्थमपेक्षितानि तत्र तत्र स्थितानि वाक्यानि संकलय्य दर्शयति—**पुरुषो वावेति**। ता अस्य दीक्षेति श्रुतिपाठः, साऽस्य दीक्षेति दीक्षाशब्दसामानाधिकरण्येनार्थानुसारादेकवचनेन पठितम्। यद्धसति जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेतीति श्रुतिरर्थतोऽनूदिता। **शब्दवत्त्वसामान्यादिति** संपत्तिहेतुभूतं साम्यं श्रुतिविवक्षितं स्वयं विवृतम्। तं चेदेतस्मिन्

---

[1] तत्र सूत्रम् १—संभृतिद्युव्याप्त्यपि चातः २३॥

पैङ्गिनां च पुरुषविद्यायामाम्नानं नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति । तेषां हीतरविलक्षणमेव यज्ञसंपादनं दृश्यते; पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपश्वृत्विगाद्यनुक्रमणात् । यदपि सवनसंपादनं, तदपीतरविलक्षणमेव 'यत्प्रातर्मध्यंदिनं सायं च तानि' ( ना॰ ८० ) इति । यदपि किंचिन्मरणावभृथत्वादिसाम्यं, तदप्यल्पीयस्त्वाद्भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापनक्षमम् । नच तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते; विदुषो यज्ञस्येति हि नैते समानाधिकरणे षष्ठ्यौ विद्वानेव यो यज्ञस्तस्येति । नहि पुरुषस्य मुख्यं यज्ञत्वमस्ति । व्यधिकरणे त्वेते षष्ठ्यौ विदुषो यो यज्ञस्तस्येति । भवति हि पुरुषस्य मुख्यो यज्ञसंबन्धः । सत्यां च गतौ मुख्य एवार्थ आश्रयितव्यो न भाक्तः । आत्मा यजमान इति च यजमानत्वं पुरुषस्य निर्ब्रुवन्वैयधिकरण्येनैवास्य यज्ञसंबन्धं दर्शयति । अपिच तस्यैवंविदुष इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावमात्मादीनां च यजमानादिभावं प्रतिपित्समानस्य

## भामती ।

इति सामानाधिकरण्यसंभवः । तस्मात्पुरुषयज्ञत्वाविशेषान्मरणावभृथत्वादिसामान्याच्चैकविद्याध्यवसाने उभयत्र उभयधर्मोपसंहार इति प्राप्तम् । एवं प्राप्त उच्यते—यादृशं ताण्डिनां पैङ्गिनां च पुरुषयज्ञसंपादनं तदायुषश्च त्रेधा व्यवस्थितस्य सवनत्रयसंपादनम् । अशिशिषादीनां च दीक्षादिभावसंपादनं, नैवं तैत्तिरीयाणाम् । तेषां न तावत् पुरुषे यज्ञसंपत्तिः । नह्यात्मा यजमान इत्यत्रायमात्मशब्दः स्वरूपवचनः; नहि यज्ञस्वरूपं यजमानो भवति; कर्तृकर्मणोरभेदाभावात्, चेतनाचेतनयोश्चैक्यानुपपत्तेः, यज्ञकर्मणश्चाचेतनत्वात्, यजमानस्य चेतनत्वात् । आत्मनस्तु चेतनस्य यजमानत्वं च विद्वत्त्वं चोपपद्यते । **तथा चायमर्थः**—एवं विदुषः पुरुषस्य यः संबन्धी यज्ञः तस्य संबन्धितया यजमान आत्मा, तथा चात्मनो यजमानत्वं च विद्वत्संबन्धिता च यज्ञस्य मुख्ये स्याताम्; इतरथात्मशब्दस्य स्वरूपवाचित्वे विदुषो यज्ञस्येति च यजमानो यज्ञस्वरूपमिति च गौणे स्याताम् । नच सत्यां गतौ तद्युक्तम् । तस्मात्पुरुषयज्ञता तैत्तिरीये नास्तीति तया तावन्न साम्यम् । नच पत्नीयजमानवेदविद्यादिसंपादनं तैत्तिरीयाणामिव ताण्डिनां पैङ्गिनां वा विद्यते । सवनसंपत्तिरप्येषां विलक्षणैव । तस्माद्भूयोवैलक्षण्ये सति न किंचिन्मात्रसालक्षण्याद्विद्यैकत्वमुचितमतिप्रसङ्गात् । **अपिच** तस्यैवं विदुष इत्यनुवादश्रुतौ सत्यामनेकार्थविधाने वाक्यभेददोषप्रसक्तिरित्यर्थः । **अपि**चेयं पैङ्गिनां ताण्डिनां च पुरुषयज्ञविद्या फलान्तरयुक्ता स्वतन्त्रा प्रतीयते । तैत्तिरीयाणां तु एवंविदुष इति श्रवणात्पू-

## वेदान्तकल्पतरुः ।

तं चेदेतस्मिन्वयसि किं चिद् व्याध्याद्युपतपेत्स ब्रूयात् प्राणा वा वसव इदं मे प्रातःसवनं माध्यन्दिनं सवनमनुसन्तनुतेत्यादिराशीः । सोन्तवेलायामेतत्त्रयं प्रतिपद्येताऽक्षितमस्यच्युतमसि प्राणसंशितमसीति मन्त्रप्रयोगः । तैत्तिरीयके तु पठ्यते "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युरिति । विषयविवेको भाष्यटीकयोर्व्याख्यानार्थं दर्शितः । अत्र तैत्तिरीयगतयोर्विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यवैयधिकरण्याऽनवधारणात्संदेहः । असाधारणगुणप्रत्यभिज्ञानाभावात्संभृत्यादौ विद्याभेद उक्तः, इह त्वसाधारणगुणप्रत्यभिज्ञानाद्विद्यैक्यमिति पूर्वपक्षयति—**पुरुषयज्ञत्वमिति** । पुरुषस्य यज्ञत्वं पुरुषयज्ञत्वं पुरुषे यज्ञत्वसंपत्तिस्तस्या अविशेषादित्यर्थः । तैत्तिरीयके पुरुषयज्ञत्वसंपत्तिरसिद्धा, विदुषो यज्ञस्येति विद्वत्संबन्धियज्ञप्रतीतेः । न चैते षष्ठ्यौ समानाधिकरणे; आत्मा यजमान इति विदुष आत्मनो यजमानत्वनिर्देशाद्, एकस्य च यज्ञत्वयजमानत्वविरोधादत आह—**न च विदुष इति** । यज्ञस्यात्मेत्यत्रात्मशब्दस्य स्वरूपवचनत्वे सति यत्फलितं तदाह—**यज्ञस्य स्वरूपमिति** । पुरुषस्यैव यदा यज्ञत्वं संपाद्यते, तदा तत्स्वरूपमेव यजमान इति न विरोध इत्यर्थः । **अत एव**—विद्वद्यज्ञयोश्चेतनाचेतनत्वाद्विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यानुपपत्तिरिति चोद्यं—**निरस्तम्**; पुरुषैक्येन संपादितस्य यज्ञस्य चेतनत्वेन विद्वत्त्वसंभवादित्याह—**तस्य चेति** । आत्मा यजमान इत्यनेन यज्ञस्वरूपं यजमान इत्युच्यत इत्यभिहितं, तत्किं मुख्यमुत गौणं, **न प्रथम** इत्याह—**न हि यज्ञस्वरूपमिति** । न केवलं यज्ञस्वरूपस्य मुख्ययजमानत्वासंभवः, विदुषो यज्ञस्येति षष्ठ्योश्च न मुख्यसामानाधिकरण्यसंभव इत्याह—**चेतनाऽचेतनयोश्चेति** । विद्वान् हि चेतनस्तस्याऽचेतनयज्ञैक्यायोग इत्यर्थः । वैयधिकरण्यपक्षे तु षष्ठ्योरुपपत्तिमाह—**आत्मनस्त्वित्यादिना** । यजमान आत्मेत्यात्मोद्देशेन यजमानत्वं विहितम् । **द्वितीयपक्षमाशङ्कते—इतरथेति** । दूषयति—**नच सत्यामिति** । पुरुषाङ्गेषु पत्न्यादिकल्पनात्पुरुषे यज्ञत्वकल्पनसंभव इति केशवो वक्ति । तस्यैतं ग्रन्थं व्याचक्षीत अवयवेषु स्वगत्या संपत्तिराश्रिता, पुरुषे तु षष्ठ्योर्वैयधिकरण्येन मुख्यार्थः संभवति । **अपिच तस्यैवं विदुष** इति भाष्यमुपादाय व्याचष्टे—**अनुवादश्रुतौ सत्यामिति** । विद्वत्संबन्धियज्ञानुवादेन तस्य

वाक्यभेदः स्यात् । अपिच ससंन्यासामात्मविद्यां पुरस्तादुपदिश्यानन्तरं तस्यैवंविदुष इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायो न स्वतन्त्र इति प्रतीमः । तथाचैकमेव फलमुभयोरप्यनुवाकयोरुपलभामहे 'ब्रह्मणो महिमानमाप्नोति' ( नारा० ८० ) इति । इतरेषां त्वनन्यशेषः पुरुषविद्याम्नायः, आयुरभिवृद्धिफलो ह्यसौ; 'स ह—षोडशं वर्षशतं जीवति य एवं वेद' ( छा० ३।१६।७ ) इति समभिव्याहारात् । तस्माच्छाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनामप्राप्तिस्तैत्तिरीयके ॥ २४ ॥ इति त्रयोदशं पुरुषविद्याधिकरणम् ॥

( १४ अधिकरणम् ) **वेधाद्यर्थभेदात् ॥ २५ ॥**

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः—'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः' इत्यादिः । ताण्डिनाम्—'देव सवितः प्रसुव यज्ञम्' इत्यादिः । शाट्यायनिनाम्—'श्वेताश्वो हरितनीलोऽसि' इत्यादिः । कठानां तैत्तिरीयाणां च—'शं नो मित्रः शं वरुणः' (तै० १।१।१ ) इत्यादिः । वाजसनेयिनां तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं

---

### भामती ।

र्वोक्तपरामर्शात्तत्फलत्वश्रुतेश्च पारतन्त्र्यम् । नच स्वतन्त्रपरतन्त्रयोरैक्यमुचितमित्याह—**अपिच ससंन्यासामात्मविद्यामिति** । उपसंहरति—**तस्मादिति** ॥ २४ ॥ इति त्रयोदशं पुरुषविद्याधिकरणम् ॥

**वेधाद्यर्थभेदात्** । विचारविषयं दर्शयति—**आथर्वणिकानामिति** । आथर्वणिकाद्युपनिषदारम्भे ते ते मन्त्रास्ता-

### वेदान्तकल्पतरुः ।

विद्वदङ्गैरङ्गकल्पनादेकवाक्यता न प्रतीयते । तव तु विद्वान् यज्ञस्तस्य चात्मादयो यजमानादय इति विध्यावृत्त्या वाक्यभेद इत्यर्थः । तस्मान्न्यासमेषां तपसामतिरिक्तमाहुरिति ॐमित्यात्मानं युञ्जीतेति च ससंन्यासात्मविद्या प्रक्रान्ता ॥ २४ ॥ इति त्रयोदशं पुरुषविद्याधिकरणम् ॥[1]

**वेधाद्यर्थभेदात् ॥ २५ ॥ अन्यत्रानुपसंहारसिद्ध्यर्थं मन्त्रकर्मणाम् । सन्निधौ श्रूयमाणानां विद्याङ्गत्वं निरस्यते ॥ १ ॥**

पूर्वत्रात्मविद्यासंनिधौ श्रवणात्तैत्तिरीयशाखागतः पुरुषयज्ञो विद्याङ्गमिति स्वीकृत्यायुर्वृद्धिफलविद्याया भेद उक्तः ।

### कल्पतरुपरिमलः ।

वयसि किं चिदुपतपेदिति श्रुतिपाठः । किं चिदित्येतद्व्याख्यानार्थं—**व्याध्यादीत्युक्तम्** । अक्षितमसीत्यादितन्मन्त्रत्रये पुरुषयज्ञे सवनदेवतात्वेन प्रस्तुतानां प्राणानां सूक्ष्मरूपमाधिदैविकमादित्यात्मकमक्षितमित्यादिशब्दैरुच्यते । अक्षितमक्षीणमक्षतं वा अच्युतं स्वस्वरूपादप्रच्युतं प्राणसंज्ञितं प्राणरूपं च सूक्ष्मतत्त्वात्सम्यक् तनूकृतं च प्राणसूक्ष्मरूपं सावित्रं तत्त्वमित्येतत्तत्रैते ऋचौ भवतः, आदित्प्रत्नस्य रेतस उद्वयं तमसस्परीत्यादिना सावित्रमन्त्रद्वयस्य यजुस्त्रयप्रतिपादितार्थप्रतिपादकत्वेनावतरणात्स्पष्टम् । **ननु** छान्दोग्यबृहदारण्यकगतोद्गीथविद्ययोर्बहुतरप्रत्यभिज्ञाने सत्यप्यल्पवैरूप्यमात्रेण भेदोऽन्यथात्वं शब्दादित्यधिकरणे ( जै. अ. ३ पा. ३ सू. ६ ) व्युत्पादितः, कथमिह छान्दोग्यतैत्तिरीयकाम्नातपुरुषविद्ययोर्बहुतरवैरूप्ये जाग्रति मरणावभृथत्वसाम्यमात्रेणाभेदः शङ्क्यते ? **उच्यते**; उद्गीथविद्ययोर्बहुतरप्रत्यभिज्ञाने सत्यप्युपक्रमभेदात्प्रधानोपास्यभेदाच्च भेद उक्तः, इह तु छान्दोग्ये यत्पुरुषस्य यज्ञत्वं प्रधानमुपास्यमुपक्रान्तं तदेव तैत्तिरीयकेऽपि; विदुषो यज्ञस्येति सामानाधिकरण्याद्विद्वत्संबन्धिनः कस्य चिद्यज्ञस्य तत्रासंपादितत्वाच्च । यज्ञावयवा एव हि तत्र संपादिताः । अतः प्रधानसारूप्यादवयवासारूप्यमष्टाकपालत्वद्वादशकपालत्वादिवद्विकल्पयिष्यते । एकमपि प्रधानमेव ह्यनुरोध्यं न बहवोऽपि गुणाः । अत एव यूपप्रकृतिर्मुख्यः खादिरो यदा तनुत्वेन तक्षणादिसंस्कारायोग्यो लब्धः, कदरस्तु स्थूलस्तद्योग्यो लब्धः, तदा बहूनां संस्कारशास्त्राणामनुग्रहाय कदरो ग्राह्य इति पूर्वपक्षे—एकस्यापि मुख्यस्यानुग्रहाय खादिर एव ग्राह्यः; असंभवतां संस्काराणामस्तु लोप इति सिद्धान्तितं षष्ठे इत्यधिकाशङ्कयाऽत्र पूर्वपक्षे ( इत्थमधिकाशङ्का इह त्वसाधारणगुणप्रत्यभिज्ञानाद्विद्यैक्यमिति पूर्वपक्षयतीत्यवतारिकया पुरुषयज्ञत्वमुभयत्राप्यविशिष्टमिति टीकाग्रन्थेन च दर्शिता । ) भाष्याद्युक्तप्रकारेण विदुषो यज्ञस्येत्यत्र वैयधिकरण्यकल्पनाद् वक्ष्यमाणामात्मादिषु यजमानादिकल्पनामालोच्य तदर्थसमूहस्य यज्ञत्वेन प्रकरणलब्धेन विद्वत्संबन्धित्वेन चानुवादसंभवाच्च अत्राप्युपक्रान्तप्रधानभेद एवास्तीति सिद्धान्तः ॥ २४ ॥ इति त्रयोदशं पुरुषविद्याधिकरणम् ॥

---

[1] तत्र सूत्रम् १—पुरुषविद्यायामिव चेतरेषामनाम्नानात् २४ ॥

पठ्यते—'देवा ह वै सत्रं निषेदुः' इत्यादि । कौषीतकिनामप्यग्निष्टोमब्राह्मणम्—'ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ति' इति । किमिमे सर्वे प्रविध्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंहियेरन्किंवा नोपसंहियेरन्निति मीमांसामहे । किं तावन्नः प्रतिभाति ? उपसंहार एवैषां विद्यास्विति, कुतः ? विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात् । नन्वेषां विद्यार्थतया विधानं नोपलभामहे, बाढम् । अनुपलभमाना अपि त्वनुमास्यामहे संनिधिसामर्थ्यात् । नहि संनिधेरर्थवत्त्वे संभवत्यकस्माद-

## भामती ।

नि तानि च प्रवर्ग्यादीनि कर्माणि समाम्नातानि । संशयमाह—**किमिम इति** । पूर्वपक्षं गृह्णाति—**उपसंहार एवैषां विद्यास्विति** । सफला हि सर्वा विद्या आम्नातास्तत्सन्निधौ मन्त्राः कर्माणि च समाम्नातानि 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायाद्विद्याङ्गभावेन विज्ञायन्ते । चोदयति—**नन्वेषामिति** । नह्यत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि सन्ति विनियोजकानि प्रमाणानि, नहि यथा दर्शपूर्णमासावारभ्य समिदादयः समाम्नातास्तथा कांचिद्विद्यामारभ्य मन्त्रा वा कर्माणि वा समाम्नाति । न चासति सामान्यसंबन्धे संबन्धिसंनिधानमात्रात्तादर्थ्यसंभवः । नच श्रुतस्वाङ्गपरिपूर्णा विद्या एतानाकाङ्क्षितुमर्हति, येन प्रकरणापादितसामान्यसंबन्धानां संनिधिर्विशेषसंबन्धाय भवेदित्यर्थः । समाधत्ते—**बाढमनुपलभमाना अपीति** । मा नाम भूत्फलवतीनां विद्यानां परिपूर्णाङ्गानामाकाङ्क्षा, मन्त्राणां तु स्वाध्यायविध्यापादितपुरुषार्थभावानां कर्मणां च प्रवर्ग्यादीनां स्वविध्यापादितपुरुषार्थभावानां पुरुषाभिलषितमाकाङ्क्षतां संनिधानादन्यतराकाङ्क्षानिबन्धनो रक्तपटन्यायेन संबन्धः । तत्रापि च विद्यानां फलवत्त्वात्तादर्थ्यमफलानां मन्त्राणां कर्मणां च । नच प्रवर्ग्यादीनां पिण्डपितृयज्ञवत्स्वर्गः कल्पनास्पदम्; फलवत्संनिधानेन तदवरोहात् । **अनुमास्यामहे संनिधिसामर्थ्यादिति** । इदं खलु निवृत्ताकाङ्क्षाया विद्यायाः संनिधाने श्रुतमनाकाङ्क्षया

## वेदान्तकल्पतरुः ।

तर्हि प्रवर्ग्यादीनामपि विद्यासंनिध्यविशेषाद्विद्याङ्गत्वमिति पूर्वपक्षमाह—**सफला हीति** । **ननु** मा भूदाकाङ्क्षालक्षणं प्रकरणं, संनिधिलक्षणं तु तत्किं न स्यादत आह—**नचाऽसति सामान्यसंबन्धे इति** । काम्येष्टीनां काम्ययाज्याकाण्डस्य च समाख्यैक्यात्सिद्धे हि सामान्यसंबन्धे प्रथमेष्टेः प्रथमो मन्त्रो द्वितीयाया द्वितीय इति संनिधेर्विशेषसंबन्धो दृष्टः, नतु संनिधिमात्रं विनियोजकमित्यर्थः । अङ्गप्रधानयोरितरेतराकाङ्क्षालक्षणप्रकरणाऽनुपलम्भेऽप्यङ्गाकाङ्क्षया प्रधानस्याप्याकाङ्क्षामुत्थाप्य प्रकरणव्यक्तेः सामान्यसंबन्धसिद्धौ संनिधेर्विद्याविशेषाङ्गत्वं मन्त्रकर्मविशेषाणामिति पूर्वपक्षमुपपादयति—**मा नामेति** । **रक्तपटन्यायेति** । यथा पटो भवतीति वाक्यस्यानाकाङ्क्षत्वेऽपि सहोच्चारितरक्तपदस्याकाङ्क्षयेतरस्याप्याकाङ्क्षामुत्थाप्य रक्तः पटो भवतीति वाक्यपर्यवसानमेवमिहापीति । **नन्वेवमुभयसंबन्धेऽपि** कस्याङ्गत्वमत आह—**तत्रापीति** । **कल्पनास्पदं** कल्पनालम्बनम् । **अवरोहात्** उत्तराग्निवर्तनादित्यर्थः । पिण्डपितृयज्ञाधिकरणं समन्वयसूत्रेऽनुक्रान्तम् । संनिधिसामर्थ्यान्मन्त्रादीनां विद्याङ्गत्वविध्यनुमानं भाष्योक्तमुपपादयति—**इदं खल्विति** । आकाङ्क्षोत्थापनात्प्रकरणव्यक्तिमुक्त्वा विद्यावाक्यस्य मन्त्रकर्मवाक्ययोश्चैकविशिष्टार्थबोधकत्वेन वाक्यैकवाक्यत्वकल्पनामाह—

## कल्पतरुपरिमलः ।

**वेधाद्यर्थभेदात् ॥ २५ ॥ सन्निधिलक्षणमिति** । यद्यपीतिकर्तव्यताकाङ्क्षालक्षणं चतुर्थं, सन्निधिस्तु स्थानप्रमाणावान्तरभेदरूपं पञ्चमं प्रमाणम्; तथापि मीमांसकैः स्थानप्रमाणविशेषरूपोऽपि सन्निधिस्तत्र तत्र प्रकरणशब्देनापि व्यवह्रियते । गोदोहनस्य प्रकरणात्प्रणयनरूपाश्रयलाभ इत्यादिस्थलेषु । तद्व्यवहारमनुरुध्याऽत्र संनिधावपि प्रकरणत्वोक्तिरितिकर्तव्यताकाङ्क्षा पारिभाषिकं प्रकरणं सन्निधिर्लौकिकप्रकरणमिति विशेषः । **काम्येष्टीनाम्** इत्यादेर्**विशेषसंबन्धो दृष्ट** इत्यन्तस्यायमर्थः—काम्येष्टिकाण्डे प्रथममिन्द्राग्निदेवत्यं काम्येष्टिद्वयं ततो वैश्वानरदेवत्यं काम्येष्टिद्वयमित्येवंप्रकारेण काम्येष्टयः पठिताः । काम्ययाज्यानुवाक्याकाण्डे प्रथममिन्द्राग्निदेवत्यं याज्यानुवाक्यायुगलद्वयं ततो वैश्वानरदेवत्यमित्येवंक्रमेण याज्यानुवाक्यामन्त्राः समाम्नाताः । तत्र काम्येष्टिकाण्डस्य याज्यानुवाक्याकाण्डस्य च समाख्यायाः संज्ञाया एकत्वात्सामान्यतः संबन्धः सिध्यति, एतासामिष्टीनामेते याज्यानुवाक्यामन्त्रा इति, विशेषस्तु संबन्धः प्रथमाया इष्टेः प्रथमं याज्यानुवाक्यायुगलं द्वितीयाया द्वितीयमित्येवंरूपः सन्निधिवशादिति ॥ अत्रेष्टिकाण्डस्य मन्त्रकाण्डस्य च संज्ञैक्येनेष्टीनां मन्त्राणां च संबन्धो मीमांसकैर्नोक्तः; किंतु मन्त्रकाण्डस्यैव काम्ययाज्यानुवाक्याकाण्डमिति संज्ञया । आचार्यैस्तु न्यायसंग्रहोक्तं समाख्यालक्षणमनुरुध्य संज्ञैक्यमुक्तम् । न्यायसंग्रहे हि समाख्या यौगिकी संज्ञेति मीमांसकोक्तप्रकारं विहाय प्रकारान्तरमाश्रितम् । प्रदेशद्वयाम्नातयोः संबन्धनिमित्तं संज्ञैक्यं समाख्या, यथाऽतिमुक्तिहोमानामग्निर्यज्ञं नयतु प्रजानन्नित्यादिमन्त्राणां च संबन्धनिमित्तमाध्वर्यवसंज्ञैक्यमिति । अत्रापीष्टिमन्त्रकाण्डयोः काम्येष्टिकाण्डमित्येवमादिरूपैका संज्ञास्तीत्या-

**सावनाश्रयितुं युक्तः । ननु नैषां मन्त्राणां विद्याविषयं किंचित्सामर्थ्यं पश्यामः । कथं च प्रव-**

### भामती ।

साकाङ्क्षस्यापि संबद्धुमसामर्थ्यात्तस्या अप्याकाङ्क्षामुत्थापयति । उत्थाप्य चैकवाक्यतामुपैति । असमर्थस्य चोपकारकत्वानुपपत्तेः प्रकरणिनं प्रति उपकारसामर्थ्यमात्मनः कल्पयति । नच सत्यपि सामर्थ्ये तत्र श्रुत्याऽविनियुक्तं तदङ्गतामुपगन्तुमर्हतीत्यनया परम्परया संनिधिः श्रुतिमर्थापत्त्या कल्पयति । आक्षिपति—**ननु नैषां मन्त्राणामिति ।** प्रयोगसमवेतार्थप्रकाशनेन हि मन्त्राणामुपयोगो वर्णितः 'अविशिष्टस्तु वाक्यार्थः' इत्यत्र । नच विद्यासंबद्धं कंचनार्थं मन्त्रेषु प्रतीमः । यद्यपि च प्रवर्ग्यो न किंचिदारभ्य श्रूयते; तथापि वाक्यसंयोगेन क्रतुसंबन्धं प्रतिपद्यते— 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति; उपसदां जुहूवदव्यभिचरितक्रतुसंबन्धत्वात् । यद्यपि ज्योतिष्टोमविकृतावपि सन्त्युपसदः; तथापि तत्रानुमानिक्यो ज्योतिष्टोमे तु प्रत्यक्षविहितास्तेन शीघ्रप्रवृत्तितया ज्योतिष्टोमाङ्गतैव वाक्येनावगम्यते । **अपिच** प्रकृतौ विहितस्य प्रवर्ग्यस्य चोदकेनोपसद्वत्तद्विकृतावपि प्राप्तिः । प्रकृतौ वा अद्भिरुक्तत्वादिति न्यायाज्ज्योतिष्टोमे एव विधानमुपसदा सह युक्तं, तदेतदाह—**कथं च प्रवर्ग्यादीनीति ।** संनिधानादर्थविप्रकर्षेण

### वेदान्तकल्पतरुः ।

**उत्थाप्य चेति ।** वाक्याल्लिङ्गकल्पनामाह—**असमर्थस्य चेति ।** सामर्थ्यमात्रेणाप्यशाब्दस्यान्वयानुपपत्तेर्लिङ्गबलाच्छ्रुतिकल्पनामाह—**नच सत्यपीति ।** अविनियुक्तमिति च्छेदः । **असौ** संनिधिरकस्माद्विना विषयेणाश्रयितुं न युक्त इति भाष्यार्थः । लोकवेदयोरविशिष्टस्तु वाक्यार्थः, तत्र मन्त्राणामनुष्ठेयार्थप्रकाशकत्वेनार्थवत्त्वं वक्तव्यं नाविवक्षितार्थत्वमिति सूत्रार्थः । प्रवर्ग्यादीनामन्यार्थत्वेन विनियोगं भाष्योक्तमुपपादयति—**यद्यपि चेति । नन्वेवमपि** उपसत्संबन्धोऽस्तु प्रवर्ग्यस्य, कथं कर्मसंबन्धस्तत्राह—**उपसदामिति ।** यत्रोपसदस्तत्र कर्मणि प्रवर्ग्य इति वाक्येन सामान्यतोऽवगतं कर्म, विशेषेण तु केनास्य संबन्धः ? किं प्रकृतिविकृतिभ्यामुत प्रकृत्यैवेति । केवलविकृतिप्रवेशस्त्वनाशङ्क्यः; प्रकृतावुपसदां प्रत्यक्षत्वेन तत्परित्यागकारणाभावात् । तत्र निर्णयमाह—**यद्यपीति ।** कर्मोपस्थापिका उपसदः प्रकृतावेव प्रत्यक्षाः, विकृतौ त्वतिदेशद्वारेणानुमानिका इति प्रकृतावेव प्रवर्ग्यनिवेश इत्यर्थः । आस्तामुपसदां प्रत्यक्षत्वाप्रत्यक्षत्वचिन्ता, अनारभ्याधीतत्वादेव प्रवर्ग्यस्य प्रकृतावेव निवेशः सिध्यतीत्याह—**अपिचेति । चोदकेन** अतिदेशेन । **शेषलक्षणे स्थितम्**—तत्सर्वार्थमविशेषात् ( ब्र. अ. ३ पा. ३ सू. ३५ ) । अनारभ्य कंचित्क्रतुमधीयते 'यस्य खादिरः

### कल्पतरुपरिमलः ।

चार्याणामभिप्रायः । इह सन्निधिवशाद्विशेषसंबन्धलाभ इति यदुक्तं, तत्राप्यस्ति मीमांसकानां विमतिः । **ते खल्वित्थमाहुः**—द्विविधस्तावदाम्नानसादेश्यरूपः क्रमः यथासंख्याम्नानं सन्निध्याम्नानं चेति । तत्राद्येनोदाहृतानामिष्टिमन्त्राणां संबन्धः, नतु सन्निधिना; भिन्नप्रदेशाम्नातानां तेषां परस्परसन्निध्यभावात्, सन्निधिना तु 'शुन्धध्वं दैव्यायेति' मन्त्रस्य सान्नाय्यपात्रशुन्धने विनियोग इत्यतोऽत्र सन्निधिशब्दः सादेश्यमात्रे यथासंख्यरूपविशेषपर्यवसायी व्याख्येयः । **ननु** प्रकृते मन्त्रकर्मणां विद्यासन्निध्याम्नानमस्त्यतो दार्ष्टान्तिकसारूप्यायान्यतो लब्धसामान्यसंबन्धानां विशेषसंबन्धमात्रे सन्निधिः प्रभवति, यथा प्रकरणापादितक्लृप्तपूर्वसंबन्धानां शुन्धनमन्त्रादीनां सान्नाय्यपात्रादिसंबन्धे । नच इह सामान्यसंबन्धापादकं प्रकरणमस्त्यतः सन्निधिरत्र न प्रभवतीत्युदाहर्तव्यम् । सत्यमित्थमुदाहरणं **नहि यथा दर्शपूर्णमासावारभ्येत्यादि**टीकाग्रन्थेन प्रकृते प्रकरणाभावं प्रदर्शयताऽवगन्तुं शक्यमिति तद्विहाय प्रकरणान्तरेण दार्ष्टान्तिकसारूप्यार्थमाचार्यैर्यथासंख्योदाहरणं कृतम् । दार्ष्टान्तिके हि तदुपनिषदाम्नाताभिर्बह्वीभिर्विद्याभिर्मन्त्रकर्मणां सामान्यसंबन्धापादकं किंचिन्नास्तीति प्रतिपिपादयिषितम् । तत्र यथा काम्ययाज्यानुवाक्यानां बह्वीभिरिष्टिभिः सामान्यसंबन्धापादकं समाख्यैक्यमस्तीति व्यतिरेकदृष्टान्तोदाहरणम् । अङ्गप्रधानयोरित्यादिपूर्वपक्षोपपादकग्रन्थस्यायमाशयः—यथा सांग्रहण्यादिविकृतीनां क्लृप्तोपकारप्राकृताङ्गसंबन्धेन प्रथमभाविना नैराकाङ्क्ष्येऽप्यामनहोमादीनां प्रधानान्वयसाकाङ्क्षाणां सन्निधानतस्तासामाकाङ्क्षोत्थापनादभिव्यक्तेन प्रकरणेन सामान्यसंबन्धसिद्धौ सन्निधानादामनहोमादीनां यथासामर्थ्यमारादुपकारकत्वादिनान्वयस्तथेहापीति । भाष्यगतस्यासावित्यस्य व्याख्यानं—**सन्निधिरिति ।** अकस्मादित्यस्य व्याख्यानं—**विना विषयेणेति ।** विना फलेनेत्यर्थः । अर्थवत्त्वे संभवतीति ह्युपक्रान्तम् । **आश्रयितुम्** अङ्गीकर्तुम् । **न युक्त इति । नहीत्य**त्रत्यस्य न युक्त इत्यत्रान्वयो दर्शितः । अनेन सन्निधेः साफल्यसंभवे निष्फलोऽसावङ्गीकर्तुं न युक्त इति भाष्यार्थ उक्तो भवति । **ननु** तदर्थशास्त्रादिहेतुभिर्मन्त्राणामर्थविवक्षा नास्तीति पूर्वपक्षे प्राप्ते अविशिष्टस्तु वाक्यार्थ ( जै. अ. १ पा. २ सू. ४० ) इति सूत्रे लोके इव मन्त्रेष्वपि वाक्यार्थविवक्षास्तीत्येतावन्मात्रमुच्यते, नतु तेषां प्रयोगसमवेतार्थप्रकाशनेनोपयोगः, अतः प्रयोगसमवेतार्थेत्यादिटीकाऽनुपपन्नेत्याशङ्क्य तात्पर्यगत्या तावत्पर्यन्तः सूत्रार्थ इति व्याचष्टे—**लोकवेदयोरिति । तत्सर्वार्थमविशेषादिति ।** अनारभ्य विधानानां प्रकृतिगामित्वमिति निर्णयार्थस्य

**र्ग्यादीनि कर्माण्यन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहीति ? नैष दोषः । सामर्थ्यं तावन्मन्त्राणां विद्याविषयमपि किंचिच्छक्यं कल्पयितुं हृदयादिसंकीर्तनात् । हृदयादीनि हि प्रायेणोपासनेष्वायतनादिभावेनोपदिष्टानि तद्द्वारेण च हृदयं प्रविध्येत्येवंजातीयकानां मन्त्राणामुपपन्नमुपासनाङ्गत्वम् । दृष्टश्चोपासनेष्वपि मन्त्रविनियोगः 'भूः प्रपद्येऽमुनामुना-**

## भामती ।

वाक्यं बलीय इति भावः । समाधत्ते—**नैष दोषः । सामर्थ्यं तावदिति ।** यथा 'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रे अग्नये निर्वपामीति पदे कर्मसमवेतार्थप्रकाशके । शिष्टानां तु पदानां तदेकवाक्यतया यथाकथंचिद्व्याख्यानमेव-मिहापि हृदयपदस्योपासनायां समवेतार्थत्वात्तदनुसारेण तदेकवाक्यतापन्नानि पदान्तराणि गौण्या लक्षणया च वृत्त्या कथंचिन्नेयानीति नासमवेतार्थता मन्त्राणाम् । नच मन्त्रविनियोगो नोपासनेषु दृष्टः, येनात्यन्तादृष्टं कल्प्यत इत्याह—**दृष्टश्चोपासनेष्विति ।** यद्यपि वाक्येन बलीयसा संनिधिर्दुर्बलो बाध्यते; तथापि विरोधे सति । न चेहास्ति विरो-

## वेदान्तकल्पतरुः ।

स्रुवो भवति छन्दसामेव रसेनावद्यति यस्य पर्णमयी जुहूरि'त्यादि । तत्र किं खादिरत्वादि प्रकृतौ विकृतौ च निविशत उत प्रकृतावेवेति विशये तत् खादिरतादि सर्वार्थम्; प्रकृत्यर्थं अप्रकरणात् । नहि कस्यचित्प्रकरणे इदं श्रुतम् । तत्र क्रतुमात्रनियतस्रुवादिद्वारेण वाक्यात् सर्वार्थमिति प्राप्ते—राद्धान्तः प्रकृतौ वाऽद्विरुक्तत्वात् ( ब्र. अ. ३ पा. ३ सू. ३५ ) प्रकृतिविकृतिगामित्वे हि खादिरतादेः विकृतावतिदेशतोऽनारभ्याधीतादप्यस्मादुपदेशात् प्राप्तेर्द्विरुक्तत्वं स्यात्, तच्चायुक्तमतिदेशतः प्राप्तौ प्राप्तप्रापणवैयर्थ्यात् । नचोपदेशतः प्राप्त्याऽतिदेशवैयर्थ्यमाशङ्क्यम्; यतोऽयमुपदेशोऽतिदेशमन्तरेण न प्रवर्तितुमर्हति । तथा ह्ययं प्राप्तस्रुवाद्यनुवादेन खादिरत्वादिधर्ममात्रं विकृतौ विदधेद्विदध्याद् धर्मविशिष्टस्रुवादिविधानस्य गौरवादेवानुपपत्तेः । नचातिदेशेन विना विकृतौ स्रुवादिप्राप्तिः । तस्माद् द्विरुक्तत्वालाभाय प्रकृतावेव निवेश इति । एवमिहाप्यनारभ्याधीतत्वात्प्रवर्ग्यस्य प्रकृतौ विहितस्य सतोऽतिदेशेन विकृतावप्युपसदां प्राप्तिसिद्धेरद्विरुक्तत्वलाभाय प्रकृतौ वेति न्यायात् ज्योतिष्टोमे एवोपसदा सह विधानं युक्तमित्यर्थः । उपसद्वदुपसदा सहेति च निर्देश उपसदां तुल्ययोगक्षेमत्वं न प्रवर्ग्यसंबन्धविशेषहेतुत्वमिति ज्ञापनार्थः । **ननु** तर्हि संनिधिवाक्याभ्यामुभयार्थत्वमस्तु, तत्राह—**संनिधानादिति । नन्वेवमपि** हृदयपदमात्रस्य विद्यायामङ्गत्वेन समवेतार्थप्रकाशकत्वेन सामर्थ्यं न पदान्तराणामत आह—**यथाऽग्नयइति ।** समवेतहृदयादिविशेषणीभूतस्वार्थप्रकाशकत्वद्वारा तद्विशिष्टसमवेतार्थप्रकाशकत्वादितरपदानामपि समवेतार्थत्वमित्यर्थः । भाष्यकारैर्वाक्येन ज्योतिष्टोमे विनियुक्तस्यापि प्रवर्ग्यस्य संनिधानाद्विद्यास्वपि विनियोगः वृहस्पतिसवस्येव स्वतन्त्राधिकारविहितस्य वाजपेये विनियोग इत्युक्तम्, तदयुक्तम्; वाक्यात् संनिधेर्दुर्बलत्वस्योक्तत्वादित्याशङ्क्याह—**यद्यपीति ।** प्रबलस्यापि वाक्यस्य न संनिधिबाधकत्वम्; विरोधाभावात्; न हि बलवानित्येव राजा साधुजनान् बाधते । तदिह संनिधिर्न वाक्यगम्यं ज्योतिष्टोमसंबन्धं प्रत्याचष्टे, अपितु तमनुमत्यैव लिङ्गत्वमपि गमयति इत्युभयाङ्गत्वं प्रव-

## कल्पतरुपरिमलः ।

पर्णमय्यधिकरणस्य षष्ठपादादिमस्य पूर्वपक्षसूत्रं सर्वार्थमप्रकरणा( जै. अ. ३ पा. ६ सू. १ )दित्येवंरूपं, तदिहार्थतः पठितम् । तत्सर्वार्थमविशेषादित्येवंरूपं तु शेषलक्षणे तृतीयपादे पौष्णपेषणाधिकरणस्य पूर्वपक्षसूत्रम् । **न प्रवर्ग्यसंबन्धविशेषहेतुत्वमिति ज्ञापनार्थ इति ।** यद्यपि प्रवर्ग्यस्य ज्योतिष्टोमसंबन्धरूपे संबन्धविशेषे हेतुत्वमुपसदामस्ति, उपसदुपस्थापिते एव ज्योतिष्टोमे प्रवर्ग्यसंबन्धस्य बोधनीयत्वात्; तथापि न तदभावज्ञापनार्थत्वमिहोपसदा सहेत्यस्योक्तं, किंतु प्रवर्ग्योपसदोरङ्गाङ्गिभावरूपसंबन्धविशेषाभावज्ञापनार्थत्वम् । **तेन**—पुरस्तादुपसदामित्यादिवाक्यं प्रवर्ग्यस्योपसदुपस्थापितकलाङ्गत्वबोधकं मा भूत्, उपसदङ्गत्वबोधकमस्तु, राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाज इत्यत्रेवोपसदामित्यत्र षष्ठ्याः शेषिविषयत्वोपपत्तेरिति **शङ्का,** पुरस्ताच्छब्दसत्त्वाद्दिग्योगलक्षणे षष्ठीयं न शेषिविषया, नच प्राप्तानुवादेन पूर्वकालत्वे विधीयमानेऽङ्गाङ्गिभावोऽपि विधातुं शक्यते, वाक्यभेदप्रसङ्गादिति परिहारसूचनेन—**व्यावर्तिता ।** एवमेव चतुर्थाध्याये "पुरस्तादुपसदां सौम्येन प्रचरन्ती"ति राजसूयान्तर्गतवाक्ये सौम्यचरूपसदोरङ्गाङ्गिभावो विधीयत इति पूर्वपक्षो निरस्तः । **इतरपदानामपि समवेतार्थत्वमिति ।** यद्यपि निर्वापमन्त्रे सवित्रादिपदान्यसमवेतार्थान्येव; असमवेतानामपि समवेतविशेषणतयाभिधानमदृष्टार्थम्, अतएव तेषां प्रकृतिष्वनूह इति नवमाध्याये निर्णीतम्; तथापि तद्विशिष्टाग्न्यर्थनिर्वापरूपसमवेतार्थपर्यवसानाभिप्रायेण समवेतार्थत्वमुक्तम् । **तदिह संनिधिरिति ।** यदि सन्निधिर्वाक्यगम्यमर्थं प्रत्याख्यातुं प्रवर्तेत, तर्हेव बलवता वाक्येन सन्निधिर्बाध्येत, नत्वेवमस्तीत्यर्थः । **ननु** विरोधाभावेन प्रबलदुर्बलप्रमाणलभ्यविनियोगद्वयाभ्युपगमे बलाबलाधिकरणविरोधः स्यात्, श्रुत्यादिभिः क्वचन विनियुक्तानां विरोधाभावेन लिङ्गादिभिरन्यत्रापि विनियोगोपपत्तेरित्याशङ्क्याह—**तदनेनेति ।** तत्राप्येवमेवास्त्विति पूर्वपक्ष्याशय इति भावः । क्त्वः समानकर्तृत्वमवग-

धः । वाक्येन विनियुक्तस्यापि ज्योतिष्टोमे प्रवर्ग्यस्य संनिधिना विद्यायामपि विनियोगसंभवात् । यथा 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत' इति ब्रह्मवर्चसफलोऽपि बृहस्पतिसवो वाजपेयाङ्गत्वेन चोद्यते—"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति। अत्र हि क्त्वः समानकर्तृकत्वमवगम्यते; धातुसंबन्धे प्रत्ययविधानात् धात्वर्थान्तरसंबन्धश्च । कथं च समानः कर्ता स्यात् ? यद्येकः प्रयोगो भवेत् । प्रयोगाविष्टं हि कर्तृत्वम् । तच्च प्रयोगभेदे कथमेकम् ? तस्मात्समानकर्तृकत्वा-देकप्रयोगत्वं वाजपेयबृहस्पतिसवयोर्धात्वर्थान्तरसंबन्धाच्च । नच गुणप्रधानभावमन्तरेणैकप्रयोगता, संबन्धश्च । तत्रापि

## वेदान्तकल्पतरुः ।

ग्र्यस्येत्यर्थः । तदनेन श्रुतिलिङ्गाधिकरण ( ब्र. अ. ३ पा. ३ सू. ७ ) मप्याक्षिप्तम् । **ननु** वाजपेयेनेत्यत्र न बृहस्पतिस-वस्य वाजपेयाङ्गत्वं बोध्यते, किंतु कस्मिन् काले बृहस्पतिसवः कर्तव्य इत्यपेक्षायां वाजपेयानुष्ठानोत्तरकालता; इष्ट्वेति क्त्वाप्रत्ययेन कालाभिधानादत आह—**अत्र हीति** । अत्र हि पूर्वकालताभिधानमङ्गत्वेऽप्यविरुद्धम् । बृहस्पतिसवस्य वाजपेयोत्तराङ्गत्वात्, तत्र "धातुसंबन्धे प्रत्ययाः" इत्यधिकारविहितः समानकर्तृकत्ववाची च क्त्वाप्रत्ययो न कालमात्रविधौ घटत इत्यर्थः । **क्त्वः** क्त्वाप्रत्ययस्य । धातुसंबन्धे इत्युक्तेऽर्थाद् धात्वर्थान्तरसंबन्धो लभ्यते । धातोरित्येकत्वाधिकाराद्धातु-स्वरूपसंबन्धे धातुद्वयापत्तेः । ततश्च धातुद्वयोपरि प्रत्ययविध्यनुपपत्त्या धातुशब्देन धात्वर्थलक्षणात् । एकस्य च धात्वर्थस्य स्वेन संबन्धायोगेन धात्वर्थान्तरलाभाच्चेति । समानकर्तृकत्वादेकप्रयोगतां तावदुपपादयति तत एवाङ्गाङ्गित्वसिद्ध्यर्थम् । **कथं च समान इति** । कथं च समानः कर्ता स्यादेकप्रयोगतामन्तरेणेति शेषः । व्यतिरेकमुक्त्वान्वयमाह—**यदीति** । यद्येकः प्रयोगो भवेत्तर्ह्येव समानः कर्ता स्यादित्यनुषङ्गः । **ननु** भिन्नप्रयोगत्वेऽपि क्रिययोः कर्तृत्वाधिष्ठानपुरुषैक्यात् क्त्वा-प्रत्ययोपपत्तिस्तत्राह—**प्रयोगाविष्टं हीति** । करोतीति हि कर्ता भवति । अधिष्ठानलक्षणायां तु सैव दोष इत्यर्थः । धात्व-र्थान्तरसंबन्धोऽपि प्रयोगैक्यगमकः एकप्रयोगत्वमन्तरेण क्रिययोरसाधारणसंबन्धानिरूपणादित्याह—**धात्वर्थान्तरेति** । भवत्वेकप्रयोगत्वं, ततः किं जातमत आह—**नचेति** । प्रधानभेदे हि स्वतन्त्रत्वात्प्रयोगो भिद्येतेत्यर्थः । संबन्ध एकप्रयो-गतां गमयतीत्युक्तम् । इदानीं स एव साक्षाद्गुणप्रधानभावं च गमयतीत्याह—**संबन्धश्चेति** । **ननु** भवत्वङ्गाङ्गित्वं वाज-पेयबृहस्पतिसवयोः, कस्य त्वङ्गत्वं ? कस्य वाङ्गित्वम् ? अत आह—**तत्रापीति** । प्रकरणिनो वाजपेयस्य प्रधानत्वाद-ङ्गित्वम्, बृहस्पतिसवस्य तु परप्रकरणे श्रूयमाणस्याङ्गत्वमित्यर्थः । **नन्वेवं** मीमांसकानां मुद्राभेदः कृतः । **तथा हि**—यदि बृहस्पतिसवेन यजेतेत्येतत् प्रकरणान्तरस्थबृहस्पतिसवविपरिवृत्त्यर्थं कस्तर्हि वाजपेयाङ्गत्वविधिः ? अथ विधिः, कथं प्रकरणा-न्तरस्थबृहस्पतिसवस्येह संनिधिः ? नचैकमेव वाक्यं दूरस्थमपि कर्म सन्निधापयत्यन्याङ्गत्वेन च विधत्तइति युज्यते । तस्मात्प्रकरणान्तरे कौण्डपायिनवत्कर्मान्तरं बृहस्पतिसवः । बृहस्पतिसवनाम तु प्रसिद्धबृहस्पतिसवधर्मातिदेशार्थम् । तथाच तद्धर्मकं कर्मान्तरमेव वाजपेयाङ्गत्वेन विधीयते इति मतद्वयेऽपि संमतम् । एवंच कथं विनियुक्तविनियोगशङ्का ? **सत्यम्**; अभ्युपेत्यवाद एषः । व्यवस्थितोदाहरणमिह खादिरत्वादिः । यदि साधिकारयोरपि कर्मणोः क्त्वाश्रुत्याऽङ्गाङ्गिभावः, तर्ह्य-

## कल्पतरुपरिमलः ।

म्यत इत्यत्र क्त्व इत्यस्यार्थमाह—**क्त्वाप्रत्ययस्येति** । क्त्वाप्रत्ययादिति व्याख्यातव्यं, षष्ठ्यन्तपाठस्तु लेखकप्रमादागतः । "धातुसंबन्धे प्रत्ययाः" इति सूत्राद्धातुसंबन्ध इत्यस्यानुवृत्त्याऽनुवृत्तस्य द्वयोर्धात्वर्थयोर्गुणप्रधानभावेन संबन्धोऽर्थ इत्येतदुप-पादयति—**धातुसंबन्ध इत्युक्तइत्यादिना** । धातोरित्येकत्वाधिकारादिति हेतुः धातुद्वयात्प्रत्ययविध्यनुपपत्तौ, धातुद्वया-पत्तौ त्वेकस्य धातोः स्वेनैव संबन्धायोगो हेतुः । **समानकर्तृकत्वादेकप्रयोगतामिति** । यद्यपि शरदि वाजपेयानन्तरं बृहस्पतिसवस्य कालः वसन्ते कर्तव्य इति चतुर्थएव निर्णीतत्वाद् बृहस्पतिसवस्य तद्व्यतिरिक्तसकलाङ्गसहितवाजपेयप्रयो-गात् पृथक् प्रयोगोऽस्ति; तथापि स्वाराज्यफलार्थिराजसूयकर्त्रैक्यप्रयुक्तं महाप्रयोगैक्यमस्तीत्याशयः । **प्रयोगो भिद्ये-तेति** । महाप्रयोगैक्यमपि न भवेदित्यर्थः । **नचैकमेव वाक्यं दूरस्थं कर्म सन्निधापयति अन्याङ्गत्वेन च विधत्तइति युज्यत इति** । सन्निधिना विपरिवृत्तौ सत्यां वाक्यं विधिमात्रपरं दृष्टम् । यथाऽग्निहोत्रविधिसन्निधौ श्रूय-माणं दध्ना जुहोतीति वाक्यम् । यत्र न सन्निधिस्तत्रैकेन वाक्येन विपरिवृत्तौ कृतायाम् अन्यद्वाक्यं विधिपरं दृष्टम्, यथा गवामयनादिगतैर्ज्योतिर्गौरायुरित्याद्यहःक्लृप्तिवचनैर्ज्योतिराद्यभिधानानामेकाहक्रतुरूपाणां सोमयागानां विपरिवृत्तौ कृतायां 'यं कामं कामयते तमेतेनाप्नोती'ति वचनान्तरेण तत्रैकदेशतया फले विधानम् । एवमेव प्रकरणान्तराधिकरणे वार्तिक-कृतैतद्वचनमुदाहृत्योक्तम्—'एकेन वचनेन पर्युपस्थाप्यापरेण फले विधीयन्ते'इति । नचेह तथा वाक्यद्वयमस्ति । नच—एतद्वाक्यं प्रसिद्धं बृहस्पतिसवप्रत्यभिज्ञापनार्थमेवास्तु प्रत्यभिज्ञापनावैयर्थ्याय तस्याङ्गत्वेन विधिः कल्प्यता-मिति—वाच्यम्; क्त्वाप्रत्ययश्रवणादत्रैव वाक्ये वाजपेयोत्तरकाले बृहस्पतिसवविधेरप्यङ्गीकर्तव्यत्वात् । तस्मात्प्रत्यभिज्ञा-पनाभिधानरूपव्यापारद्वयावेशे वाक्यभेदप्रसङ्गाद्विधानावश्यंभावेन प्रत्यभिज्ञानविरहे सति कर्मान्तरविधानमेव प्राप्नोती-त्यर्थः । **मतद्वयेपि संमतमिति** । मतद्वयमाचार्यमतं गुरुमतं च । **सत्यमभ्युपेत्यवाद इति** ॥

## भामती ।

वाजपेयस्य प्रकरणे समाम्नानाद्वाजपेयः प्रधानम् । अङ्गं बृहस्पतिसवः । नच 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्राङ्गप्रधानभावप्रसङ्गः; नह्येतद्वचनं कस्यचिद्दर्शपूर्णमासस्य सोमस्य वा प्रकरणे समाम्नातम् । तथाच द्वयोः साधिकारतया अगृह्यमाणविशेषतया गुणप्रधानभावं प्रति विनिगमनाभावेनाधिष्ठानमात्रविवक्षया लाक्षणिकं समानक-

## वेदान्तकल्पतरुः ।

तिप्रसङ्ग इत्याशङ्क्य विशेषप्रदर्शनेन परिहरति—**नच दर्शेति** । वाजपेयप्रकरणे समाम्नानाद्धि बृहस्पतिसवस्याङ्गत्वम्, इदं तु वाक्यमनारभ्याधीतमिति नाङ्गाङ्गित्वबोधकमित्यर्थः । **ननु** क्वचित्सोमयागप्रकरणे इदं वाक्यं श्रुतम्, अतः

## कल्पतरुपरिमलः ।

**ननु**—किमर्थं समाधीयते ? मीमांसकानां मुद्राभङ्ग इह चिकीर्षित एव कृत इति किमिति नोच्यते ? विधानं प्रत्यभिज्ञानं चैकस्मिन् वाक्ये न संभवतीति मीमांसकमुद्रा हि निरालम्बना; प्रत्यभिज्ञानं पदकृत्यं विधानं वाक्यकृत्यमित्येकस्मिन् वाक्ये तदुभयसमावेशसंभवात्, अन्यथा "आज्यभागौ यजती"त्यत्र का गतिः ? न हि तत्राज्यभागानामव्यतिरेकेण प्रसिद्धाज्यभागयोः प्रत्यभिज्ञापकमस्ति । नच चोदकः प्रत्यभिज्ञापकः । चोदकलोपाङ्गीकारान्न वा तत्र विधायकमन्यदस्ति । नच प्रत्यभिज्ञापनावैयर्थ्याय विधिः कल्पनीयोऽस्त्विति शङ्कितुं शक्यम्; कृत्तोपकारप्राकृताङ्गविषयप्रत्यक्षविधिना नैराकाङ्क्ष्येण हि तत्र चोदकलोप इष्यते, आज्यभागयोरिति चेद्विधिः कल्पनीयः । चोदक एव किमिति न कल्प्येत ? तथात्वे हीतिकर्तव्यताकाङ्क्षा प्रकामं परिपूर्णा भवेत् । आज्यभागौ यजतीत्येतच्च "यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवतीति"वदनुवादमात्रं स्यात् । तस्मादा"ज्यभागौ यजती"त्यत्रैव विधानं प्रत्यभिज्ञानं चेत्यभ्युपगन्तव्यम् । एवमेवोक्तं भाष्यादिष्वपि । एवं तर्हि मासाग्निहोत्रमपि नित्याग्निहोत्रान्न भिद्येत; नित्याग्निहोत्रस्यैव नाम्ना प्रत्यभिज्ञापितस्य तत्रापि विधानसंभवादिति चेद्, अस्तु का हानिः ? संप्रतिपन्नं हि नित्याग्निहोत्रस्य प्रकरणान्तरेऽप्यग्निहोत्रनाम्ना प्रत्यभिज्ञानम् । यथा शतपथब्राह्मणे दर्शपूर्णमासप्रकरणे चातुर्मास्येषु गृहमेधीयप्रकरणे च स यवाग्वैतां रात्रिमग्निहोत्रं जुहोतीति अश्वमेधप्रकरणे च वाग्यतस्यैतां रात्रिमग्निहोत्रं जुहोतीति । **एतेन**—धातुना पूर्वापरीभूततया प्रतीतस्य नाम्ना प्रत्यभिज्ञानं न संभवतीत्यपि शङ्का—**निरस्ता** । कथंच धात्वर्थोपस्थापकत्वाभावात्तन्नामत्वमग्निहोत्रशब्दस्य भवेत् ? **ननु**—विहितस्य नित्याग्निहोत्रस्य पुनर्विधानायोगेन विधियोग्यकर्मान्तरपरत्वावश्यंभावेन तत्परतन्त्रं नामापि कर्मान्तरपरं स्यादिति—**चेद्, न**; स्वातन्त्र्येण विहितस्यापि नित्याग्निहोत्रस्य सत्राङ्गत्वसिद्धये पुनर्विधानसंभवेनाख्यातस्य भेदौदासीन्ये सति कांस्यभोजिन्यायादाख्यातेनैव नाम्नोऽनुवर्तनीयत्वान्नाम्नोऽप्रसिद्धार्थतायामाख्यातपारतन्त्र्येऽपि प्रसिद्धार्थतायामाख्यातस्यैव नामपारतन्त्र्याच्च । न चैवं सति प्रकरणान्तराधिकरणविरोधः; तस्य धात्वर्थाभेदेऽप्यध्यायार्थभूतो भावनाभेदः स्वतन्त्रपरतन्त्रविध्यायत्तोऽस्तीत्येतत्परत्वात् । **उक्तंच वार्तिककृता तस्मिन्नधिकरणे**—नाम्ना धात्वर्थमात्रं च सन्निधाप्येत शक्तितः । भावना त्वनुपस्थानाद्धियमाना न वार्यते ॥ इति । **ननु**—तथापि उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्या( जै. अ. ७ पा. ३ सू. १ )दिति सप्तमाधिकरणेन मासाग्निहोत्रे नित्याग्निहोत्रधर्माणां नाम्नाऽतिदेशं प्रतिपादयता विरोधः स्यादिति—**चेत्, न**; तस्य नित्याग्निहोत्रप्रकरणइव मासाग्निहोत्रस्थलेऽपि देवताविधानकृताऽग्निहोत्रनाम्नः प्रवृत्तिनिमित्ताभिव्यक्तिर्नास्तीत्यस्फुटशक्तिकत्वाभिप्रायत्वात्, प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्या( जै. अ. ३ पा. ३ सू. ४ )दिति तदधिकरणसूत्रेण तथा तदभिप्रायस्फुटीकरणात् । तस्मात्स्वतन्त्रबृहस्पतिसवस्यैव वाजपेयाङ्गतायां न कश्चिद्विरोध इत्येवं सैद्धान्तिकः पक्षोऽभ्युपगन्तुं युक्तः । अतएव विवरणाचार्यैरपि पुरुषार्थस्य सौत्रामणिबृहस्पतिसवादेरग्निचयनवाजपेयादिप्रकरणान्तरेषु तत्तत्कर्माङ्गतया विधानं सिद्धवत्कृत्य व्यवहृतम् । तस्मादभ्युपेत्यवाद इति न वक्तव्यमिति—**चेत्**, सत्यमनभ्युपेत्यवादत्वोक्तिरेवेयम् । एतावद्दूरविवेचनाऽसमर्थान् विनेयान् प्रत्यभ्युपेत्यवादरूपा । अथवाऽङ्गं बृहस्पतिसवः कर्मान्तरमित्यभ्युपगतवतां मीमांसकानां कर्मान्तरत्वपक्षोऽप्यभ्युपेत्यवादरूपोस्तीत्येतत्परेयमभ्युपेत्यवादत्वोक्तिः । गुरुणा हि निबन्धनटीकायामङ्गसौत्रामणिबृहस्पतिसवयोः कर्मान्तरत्वं प्रसाधितवतापि विवरणटीकायामकर्मान्तरत्वं व्यवहृतम् । एवमिदं मीमांसकदृष्ट्या न व्यवस्थितमुदाहरणमिति मत्वैवं तन्मते व्यवस्थितोदाहरणं खदिरत्वादीत्युदाहरणान्तरमन्विष्टम् ।

**नाङ्गाङ्गित्वबोधकमिति** । नाम्ना प्रसिद्धयोर्दर्शपूर्णमासयोः सोमद्रव्येण प्रसिद्धस्य सोमयागस्यच प्रत्यभिज्ञानात्तेषां च साधिकारत्वेन विनिगमनाविरहान्न किंचिदङ्गत्वेनान्यविधानं शक्यमित्यर्थः । **ननु**—सोमयागे विधिश्रवणं तस्याङ्गत्वेन

१ गृहमेधीयप्रकरणगते आज्यभागौ यजतीत्यत्रेत्यर्थः ।

मुना' (छा० ३।१५।३ ) इत्येवमादिः । तथा प्रवर्ग्यादीनां कर्मणामन्यत्रापि विनियुक्तानां सतामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पतिसवस्येति । एवं प्राप्ते ब्रूमः—नैषामुपसंहारो विद्यास्विति । कस्मात् ? वेधाद्यर्थभेदात् । हृदयं प्रविध्येत्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयो भिन्ना अनभिसंबद्धास्त उपनिषदुदिताभिर्विद्याभिः । न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति । ननु हृदयस्योपासनेष्वप्युपयोगात्तद्द्वारक उपासनासंबन्ध उपन्यस्तः । नेत्युच्यते; हृदयमात्रसंकीर्तनस्य ह्येवमुपयोगः कथंचिदुत्प्रेक्ष्येत, नच हृदयमात्रमत्र मन्त्रार्थः । हृदयं प्रविध्य धमनीः प्रवृज्येत्येवंजातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसंबध्यते । आभिचारिकविषयो ह्येषोऽर्थः । तस्मादाभिचारिकेण कर्मणा सर्वं प्रविध्येत्येतस्य मन्त्रस्याभिसंबन्धः । तथा 'देव सवितः प्रसुव यज्ञम्' इत्यस्य यज्ञप्रसवलिङ्गत्वाद्यज्ञेन कर्मणा संबन्धः, तद्विशेषसंबन्धस्तु प्रमाणान्तरादनुसर्तव्यः । एवमन्येषामपि मन्त्राणां केषांचिल्लिङ्गेन केषांचिद्वचनेन केषांचित्प्रमाणान्तरेणेत्येवमर्थान्तरेषु विनियुक्तानां रहस्यपठितानामपि सतां न

## भामती ।

तृकत्वमित्यदोषः । यदि तु कस्यांचिच्छाखायामारभ्याधीतं दर्शपूर्णमासाभ्यामिष्ट्वेति, तथाप्यनारभ्याधीतस्यैवारभ्याधीते प्रत्यभिज्ञानमिति युक्तम् । तथा सति द्वयोरपि पृथगधिकारतया प्रतीतं समप्रधानत्वमत्यक्तं भवेत् । इतरथा तु गुणप्रधानभावेन तत्यागो भवेत् । तस्मात्कालार्थोऽयं संयोग इति सिद्धम् । सिद्धान्तमुपक्रमते—**एवं प्राप्त इति** । हृदयं प्रविध्येत्ययं मन्त्रः स्वरसतस्तावदाभिचारिककर्मसमवेतं सकलैरेव पदैरर्थमभिदधदुपलभ्यते । तदस्याभिधानसामर्थ्यलक्षणं लिङ्गं वाक्यप्रकरणाभ्यां क्रमाद्बलीयोभ्यामपि बलवत्, किमङ्ग पुनः क्रमात् ? तस्माल्लिङ्गेन संनिधिमपोद्याभिचारिककर्मशेषत्वमेवापाद्यते । यद्यपि चोपासनासु हृदयपदमात्रस्य समवेतार्थत्वम्; तथापि तदितरेषां सर्वेषामेव पदानामसमवेतार्थत्वम् आभिचारिके तु कर्मणि सर्वेषामर्थसमवाय इति किमेकपदसमवेतार्थता करिष्यति ? नच—संनिध्युपगृहीतासूपासनासु मन्त्रमवस्थापयतीति—युक्तम्; हृदयपदस्याभिचारेऽपि समवेतार्थस्येतरपदैकवाक्यतापन्नस्य वाक्यप्रमाणसहितस्याभिचारिकात्कर्मणः संनिधिना चालयितुमशक्यत्वात् । एवं 'देवसवितः प्रसुव यज्ञम्' इत्यादेरपि यज्ञप्रसवलिङ्गस्य यज्ञाङ्गत्वे सिद्धे जघन्यो विद्यासंनिधिः किं करिष्यति ? एवमन्येषामपि श्वेताश्व इत्येवमादीनां केषांचि-

## वेदान्तकल्पतरुः ।

सोमाङ्गता दर्शपूर्णमासयोरिति, नेत्याह—**यदि त्विति** । अनारभ्याधीतवाक्यार्थ एव तत्राप्यनूद्यत इत्यर्थः । अनुवादे लाभमाह—**तथा सतीति** । अधिकरणं त्वत्रत्यमस्माभिः प्रथमसूत्रेऽनुक्रान्तम् । **ननु** यद्यप्येकपदसमवेतार्थता बहुपदसमवेतार्थताया दुर्बला; तथापि विद्यासंनिध्यनुगृहीता हृदयमित्येकपदसमवेतार्थता विद्याङ्गत्वं मन्त्रस्य गमयिष्यतीत्यत आह—**नच संनिध्युपगृहीतास्विति** । मन्त्रमवस्थापयतीत्यत्रैकपदसमवेतार्थतेत्यनुषङ्गः । हृदयपदं विद्यायामभिचारे च समवेतार्थमिति साधारणम्, इतराणि तु पदानि विद्यायामसमवेतार्थानि समवेतार्थानि त्वभिचारेऽतः कांस्यभोजिन्यायेन हृदयपदमितरपदानुरोधेनाभिचारमेव मन्त्रं गमयतीत्यर्थः । यत्त्वेकपदसमवेतार्थताया अस्ति संनिधिरनुग्राहक इति, तन्न; बहुपदसमवेतार्थतायाः सन्निधेरपि प्रबलेन वाक्येनानुगृहीतत्वादित्याह—**इतरपदैकवाक्यतापन्नस्येति** । इतरपदैकवाक्यतापन्नस्यात एव वाक्यप्रमाणानुगृहीतस्याभिचारेऽपि समवेतार्थस्य हृदयपदस्याभिचारात्कर्मणोऽन्यत्र संनिधिना चालयितुमशक्यत्वादिति योजना । यत्तु वाक्यलिङ्गाभ्यामन्यत्र विनियुक्तयोरपि मन्त्रकर्मणोः संनिधानाद्विद्यायामपि तदविरोधेन विनियोगसंभवादुभयार्थत्वमित्युक्तं, तदनूद्य परिहरति—**कस्मात्पुनरित्यादिना** ।

## कल्पतरुपरिमलः ।

विधाने विनिगमकमस्तीति—**चेत्; उच्यते;** सोमस्य दर्शपूर्णमासाङ्गत्वे तद्विकृतीनां दीक्षणीयादिसोमयागाङ्गेष्टीनामपि सोऽङ्गं स्यादिति दीक्षणीयादिसहितस्य सोमयागस्य सिद्धौ दीक्षणीयादीनां साङ्गत्वसिद्धिः सोमयागसहितानां दीक्षणीयादीनां सिद्धौ सोमयागस्य साङ्गत्वसिद्धिरिति परस्पराश्रयः स्यात् । तत्परिहाराय दीक्षणीयादिषु सोमयागव्यतिरिक्तैष्टिकविध्यन्तरातिदेशः कल्पनीयः । दर्शपूर्णमासयोः सोमाङ्गत्वे विधेर्गुणसंक्रमणं कल्पनीयमेवं प्राप्तौ किमत्र कल्पनीयमित्यत्र विनिगमनाविरहो विवक्षितः । **ननु क्वचित्सोमयागप्रकरणे इति । ननू**त्पत्तिकालविषय( जै. अ. ४ पा. ३ सू. ३ ) इति चतुर्थाध्यायाधिकरणप्रथमसूत्रे यदनुक्रान्तं तत्र दर्शपूर्णमासाङ्गसोमद्रव्यकयागान्तरविधिरिति पूर्वपक्षो दर्शितः, स कथमुपपद्यते ? अस्य वाक्यस्य सोमप्रकरणे श्रवणात्, तदा हि सोमाङ्गत्वेन दर्शपूर्णमासविधिरिति पूर्वपक्षः कार्यः । सत्यमिदं वाक्यं दर्शपूर्णमासप्रकरणे श्रूयत इति भाष्यकारमत्या तत्र भाष्यकारोक्तप्रकारेण तदधिकरणमनुक्रान्तम्, इह वार्तिककारमतानुसारिटीकोक्तप्रकारेण सोमयागे बृहस्पतिसववैषम्यं दर्शितमिति न विरोधः । **अनुवादे लाभमाहेति** । प्रकरणि-

संनिधिमात्रेण विद्याशेषत्वोपपत्तिः । दुर्बलो हि संनिधिः श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे 'श्रुति-

## भामती ।

लिङ्गेन केषांचिच्छ्रुत्या **केषांचित्प्रमाणान्तरेण** प्रकरणेनेति । कस्मात्पुनः संनिधिर्लिङ्गादिभिर्बाध्यते ? इत्यत आह—**दुर्बलो हि संनिधिरिति** । प्रथमतन्त्रगतोऽर्थः स्मार्यते । तत्र तु श्रुतिलिङ्गयोः समवाये समानविषयत्वलक्षणे विरोधे किं बलीय इति चिन्ता ॥

**अत्रोदाहरणम्**—अस्त्यैन्द्री ऋक् 'कदाचन स्तरीरसि नेन्द्र' इत्यादिका, श्रुतिर्विनियोक्त्री 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति । अत्र हि सामर्थ्यलक्षणाल्लिङ्गादिन्द्रे विनियोगः प्रतिभाति । श्रुतेश्च गार्हपत्यमिति द्वितीयातो गार्हपत्यस्य शेषित्वं ऐन्द्र्येति च तृतीयाश्रुतेरैन्द्र्या ऋचः शेषत्वमवगम्यते । यद्यपि गार्हपत्यमिति द्वितीयाश्रुतेराग्नेयीमृचं प्रति गार्हपत्यस्य शेषित्वेनोपपत्तेः, यद्यपि चैन्द्र्येति च तृतीयाश्रुतेरैन्द्र्या इन्द्रं प्रति शेषत्वेनोपपत्तेरविरोधः, पदान्तरसंबन्धे तु वाक्यस्यैव लिङ्गेन विरोधो नतु श्रुतेः । तत्र च विपरीतं बलाबलम्; तथापि श्रुतिवाक्ययो रूपतो व्यापारभेदाददोषः । द्वितीयातृतीयाश्रुती हि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावमवगमयत इति विनियोजिके । क्रियां प्रति हि कर्मणः शेषित्वं करणस्य च शेषत्वमिति हि विनियोगः । पदान्तरानपेक्षे च क्रियां प्रति शेषशेषित्वे श्रुतिमात्रात्प्रतीयेते इति श्रौते । सोऽयं श्रुतितः सामान्यावगतो विनियोगः पदान्तरवशाद्विशेषेऽवस्थाप्यते । सोऽयं विशेषणविशेष्यभावलक्षणः संबन्धो वाक्यगोचरः, शेषशेषिभावस्तु श्रौतः । तस्माद्वाक्यलभ्यं विशेषमपेक्ष्य श्रौतः शेषशेषिभावो लिङ्गेन विरुध्यत इति श्रुतिलिङ्गविरोधे किं लिङ्गानुगुण्येन गार्हपत्यमिति द्वितीयाश्रुतिः सप्तम्यर्थे व्याख्यायतां—गार्हपत्यसमीपे ऐन्द्र्येन्द्र उपस्थेय इति । आहो श्रुत्यनुगुणतया लिङ्गं व्याख्यायताम् । प्रभवति हि स्वोचितायां क्रियायां गार्हपत्य इतीन्द्र इन्दतेरैश्वर्यवचनत्वादिति । किं तावत्प्राप्तम् ? श्रुतेर्लिङ्गं बलीय इति । नो खलु यत्रासमर्थं तच्छ्रुतिसहस्रेणापि तत्र विनियोक्तुं शक्यते । यथा अग्निना सिञ्चेत् पाथसा दहेदिति । तस्मात्सामर्थ्यं पुरोधाय श्रुत्या

## वेदान्तकल्पतरुः ।

**श्रुतिलिङ्गयोरिति** । यत्र ह्येक एव शेष एकेन प्रमाणेनैकशेषिणा संबद्धत्वेन बोधितः स एव प्रमाणान्तरेण शेष्यन्तरार्थत्वेन बोध्यते, तत्रैकेनैव संबन्धे शेषस्य निराकाङ्क्षत्वादपरसंबन्धो विरुध्यते । तदनयोः प्रमाणयोः परस्परविषयापहारेण भवितव्यम् । अत एकशेषविषययोर्भिन्नशेषिसंबन्धबोधिनोः प्रमाणयोर्बाध्यबाधकत्वे स्थिते तदर्थं किं बलीय इति चिन्ता क्रियते श्रुतिलिङ्गसूत्रेणेत्यर्थः । अतएव विनियुक्तविनियोगेऽपि वैषम्यमुक्तम् । तत्र हि तुल्यबलत्वात्प्रमाणयोरुभयार्थत्वमिति । **ननु** नेदं श्रुतिलिङ्गविरोधोदाहरणम् । **तथाहि**—किमैन्द्र्या गार्हपत्यमिति द्वितीयातृतीयाश्रुत्योः पदान्तरानपेक्षयोर्मन्त्रगतेन्द्रप्रकाशनसामर्थ्येन विरोध उच्यते ? किंवा पदान्तरैर्वाक्यानापन्नयोः ? प्रथमकल्पानुपपत्तिमाशङ्कते—**यद्यपीति** । द्वितीया हि गार्हपत्यः किंचित्प्रतिशेषीति वक्ति, तच्च कांचिदाग्नेयीमृचं प्रति शेषित्वेऽपि चरितार्थमिति नैन्द्र्या इन्द्रप्रकाशनसामर्थ्यं बाधेत, ऐन्द्र्येति च तृतीयैन्द्र्याः किंचित्प्रति शेषत्वमाह, तच्च तस्या इन्द्रं प्रति शेषत्वेऽप्यविरुद्धमित्यर्थः । द्वितीयकल्पानुपपत्तिमाशङ्कते—**पदान्तरेति** । वाक्यलिङ्गयोर्लिङ्गस्य बलवत्त्वाद्वाक्यस्यैव बाधा स्यादित्यर्थः । परिहरति—**तथापीति** । श्रुत्योरेव लिङ्गेन विरोध इति वक्तुं श्रुतिवाक्ययोरभिधेयभेदमाह—**द्वितीयेत्यादिना** । ऐन्द्र्येति तृतीयया क्रियायामैन्द्री शेषित्वेन बोधिता । गार्हपत्यमिति द्वितीयया गार्हपत्यः शेषत्वेन बोधितः, शेषशेषिभावश्च विनियोग इति । श्रुती विनियोगे निरपेक्षे चेत्तर्हि वाक्येन किं बोध्यतेऽत आह—**सोऽयमिति** । ऐन्द्र्यादिपदार्थविशिष्टोपस्थानकर्तव्यता हि वाक्यार्थः । तेनैन्द्र्या यत्सामान्येन क्रियां प्रति शेषत्वमवगतं गार्हपत्यकर्मकोपस्थाने यच्च गार्हपत्यस्य कर्मत्वं तदैन्द्रीकरणोपस्थान इति सामान्यावगतसंबन्धो वाक्यीयविशेषणविशेष्यभावबलाद्विशेषेऽवस्थाप्यते । नचैवं—वाक्यस्यैव लिङ्गेन विरोधो न श्रुतेरिति—वाच्यम्; यतो यदि गार्हपत्यमिति द्वितीया सप्तम्यर्थं लक्षयेत्, सप्तम्यर्थश्च सामीप्यं, तदा नैव लिङ्गस्य का चित् क्षतिः; गार्हपत्यसमीपे स्थित्वेन्द्रस्यैवोपस्थानसंभवात् । यदि तु द्वितीयेप्सिततमतां न मुञ्चति, तदैव विरोध इति श्रुतेरेव लिङ्गविरोधः । **ननु** श्रुतिमात्रमपि लिङ्गेन न विरुध्यते इत्युक्तम्, अत आह—**तस्मादिति** । नह्येकं पदं कदा चित्प्रयुज्यते; वैयर्थ्यात् । अतः प्रतिनियतौ श्रुतिवाक्यसंबन्धौ । तत्र श्रुतिरेवं वदति वाक्यगम्यस्य विशेषणविशेष्यभावस्यैवंविधं शेषशेषित्वमिति । एवंच श्रौतेन शेषशेषिभावेन लिङ्गस्य विरोध इत्यर्थः । **नन्वेवं** श्रौतस्य शेषशेषिभावस्यायं विशेष्यविशेषणभाव इति वाक्येन बोधनात्तस्य च लिङ्गेन विरोधाद्

## कल्पतरुपरिमलः ।

सोमाङ्गतया दर्शपूर्णमासयोर्विधौ स्वतन्त्राधिकारयोस्तयोरङ्गतया विधानेनात्रापाततः प्राधान्यपरित्यागस्याभावो लाभः । दर्शपूर्णमासोत्तरकाले सोमयागविधौ विधिः समानपदोपात्तविषयो भवति, पक्षान्तरे तु गुणसंक्रान्तो विधिः स्यादिति तत्प्रसक्त्यभावोऽपि लाभ इति द्रष्टव्यम् । **अतएव विनियुक्तविनियोगेऽपीति** । क्रत्वर्थतया विनियुक्तस्य खादिरादेः

## भामती ।

विनियोक्तव्यम्। तच्चास्या ऋचः प्रमाणान्तरतः शब्दतश्च इन्द्रे प्रतीयते । **तथाहि**—विदितपदतदर्थः कदाचनेत्यृचः स्पष्टमिन्द्रमवगच्छति, शब्दाचैन्द्रयेत्यतः। तस्माद्दारुदहनस्येव दहनस्य सलिलदहने विनियोगो गार्हपत्ये विनियोग ऐन्द्र्याः। नच—श्रुत्यनुरोधाज्जघन्यामास्थाय वृत्तिं सामर्थ्यकल्पनेति—साम्प्रतम्; सामर्थ्यस्य पूर्वभावितया तदनुरोधेनैव श्रुतिव्यवस्थापनात्। तस्मादैन्द्र्येन्द्र एव गार्हपत्यसमीप उपस्थापयितव्य इतिप्राप्तेऽभिधीयते—**लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनयोक्तृता । श्रुतिज्ञानं पुरोधाय लिङ्गं तु विनियोजकम् ।**' यदि हि सामर्थ्यमवगम्य श्रुतेर्विनियोगमवधारयेत्प्रमाता ततः श्रुतेर्विनियोगं प्रति लिङ्गज्ञानापेक्षत्वाद्दुर्बलत्वं भवेत्, न त्वेतदस्ति । श्रुतिर्विनियोगाय सामर्थ्यमपेक्षते नापेक्षते सामर्थ्यविज्ञानम्। अवगते तु ततो विनियोगे नासामर्थ्यस्य स इति तन्निर्वाहाय सामर्थ्यं कल्प्यते। तच्छ्रुतिविनियोगात्पूर्वमस्ति सामर्थ्यम्, न तु पूर्वमवगम्यते। विनियोगे तु सिद्धे तदन्यथानुपपत्त्या पश्चात्प्रतीयत

## वेदान्तकल्पतरुः ।

लिङ्गवाक्यविरोधोदाहरणमिदं किं न स्यात्; **उच्यते** स्वार्थबोधे श्रुतेः शीघ्रप्रवृत्तेर्लिङ्गविरोध्यर्थतया द्रागित्येव बोधित इति तद्विरोधत्वेनैवोदाहियत इति । **तदाहुः**—यथा शीघ्रप्रवृत्तत्वाल्लिङ्गादेर्बाधिका श्रुतिः । तथैव विनियोगेऽपि सैव पूर्वं प्रवर्तते ॥ इति । एवमुदाहरणं परिशोध्याधिकरणमारचयति—**किं लिङ्गानुगुण्येनेत्यादिना । प्रभवति** समर्थः । प्रमाणान्तरं वृद्धव्यवहार इत्याह—**विदितपदेति ।** लिङ्गबाधकत्वेनोक्ता तृतीयाश्रुतिः । तदीयप्रातिपदिकमैन्द्रीत्येवं रूपं तद्धितान्तं शब्दत इत्युक्तम्। इन्द्रस्येयमितीन्द्रशेषत्वेनैतामृचं बोधयतीत्याह—**शब्दाच्चेति ।** दारु दहतीति दारुदहनः । **दहनो**ऽग्निः । ऐन्द्र्या गार्हपत्ये यो विनियोगः स काष्ठदाहकस्याग्नेः सलिलदाहे विनियोग इव विरुद्ध इत्यर्थः । **उपस्थापयितव्य इति ।** प्रकाशयितव्य इत्यर्थः । ऋचः प्रकाशनव्यतिरेकेण कार्याभावात् । यदि सामर्थ्यज्ञानं नापेक्षते श्रुतिः, तर्हि योग्यतावधारणं व्यर्थं स्यादित्यग्निना सिञ्चेदित्यपि प्रमाणं स्यादत आह—**अवगते त्विति ।** यथा स्फोटे जाते वह्नेर्दाहशक्तिर्ज्ञायते, नतु दाहकत्वं वह्नेः शक्तिज्ञानापेक्षमेवं श्रुतेः शेषत्वे ज्ञातेऽनन्तरमर्थे तादृशी शक्तिः कल्प्यते। अतो नार्थगतसामर्थ्यज्ञानं विनियोगकारणमित्यर्थः । **तदिति** तस्मादर्थे । **ननु** यदि विनियोगोत्तरकालमर्थसामर्थ्यं विनियोगनिर्वाहाय कल्प्यते, तर्हि तदैन्द्र्या गार्हपत्यप्रकाशने नास्तीति कथं विनियोगनिर्वाहस्तत्राह—**श्रुतिविनियोगादिति ।** मन्त्रो ह्यभ्रान्तया श्रुत्या विनियुज्यते । तत्र यदि मुख्यं सामर्थ्यं न दृश्यते, तर्हि प्रथमावगतविनियोगस्यासंजातविरोधत्वात्तस्य च सामर्थ्यकल्पकत्वेन तदनुगुणं गौणमपि सामर्थ्यं मन्त्रे कल्पनीयम् ।

## कल्पतरुपरिमलः ।

पुरुषार्थतया विनियोगान्तरं विनियुक्तविनियोगः । **स्वार्थबोधे श्रुतेः शीघ्रप्रवृत्तेरिति ।** वाक्यसमर्पणीयविशेषणविशेष्यभावोपेतस्य श्रौतस्य शेषशेषिभावस्य लैङ्गिकविनियोगेन विरोधः समर्थनीय इति श्रुतिवाक्ययोरन्योन्यापेक्षयोर्लिङ्गेन विरोधेऽपि श्रुतेः स्वप्रमेये वाक्यतः शीघ्रं प्रवृत्तेः श्रुतिलिङ्गविरोधे एवेदमुदाहरणमित्यर्थः । **तथा** श्रौतस्य शेषशेषिभावस्य प्रतियोगिविशेषसमर्पणेन गुणभूतं वाक्यं, प्रधानेन च विरोधो लक्षणीय इत्यतोऽपि श्रुतिलिङ्गविरोधे एवेदमुदाहरणम्। **अपिच** लिङ्गे बलीयसि यस्य बाधः तल्लिङ्गेन विरुध्यते, न चात्र बलीयसि वाक्यं बाध्यते, किं तु गार्हपत्यश्रुतिरिन्द्रे लक्षणया द्वितीयाश्रुतिर्वा सामीप्ये लक्षणया बाध्यते, वाक्यं तु पदत्रयसमभिव्याहाररूपं तथैवावतिष्ठते, तर्हि लिङ्गवाक्यविरोधोदाहरणे लिङ्गबाध्यस्य "स्योनं ते" इत्यादेः सुमनस्यमान इत्यन्तस्य वाक्यस्य लिङ्गेन बाधे वाक्यद्वयकल्पनाऽस्ति। अतोऽपि श्रुतिलिङ्गविरोधे एवेदमुदाहरणम्। **ननु** उपस्थापयितव्य इत्यस्य प्रकाशयितव्य इत्यर्थः कुतो लब्ध इत्याकाङ्क्षायामाह—**ऋच इति ।** उपान्मन्त्रकरणे इति सूत्रेण उपपूर्वात्तिष्ठतेर्धातोः मन्त्रकरणकेऽर्थे वर्तमानादात्मनेपदं विहितम्। मन्त्रकरणं मन्त्रकार्यं तच्च प्रकाशनमेवेत्युक्तार्थलाभ इति भावः। **केचित्तु**—उपपूर्वात्तिष्ठतेर्धातोरात्मनेपदं, तदर्थ एव समीपावस्थाने मन्त्रकरणके विधीयते, समीपोपस्थानं मन्त्रकरणकं तदा स्याद्यद्यभिधानफलकं स्यात्। तथा चोपस्थापयितव्य इत्यस्य समीपेऽवस्थाय प्रकाशयितव्य इत्यर्थः—**इत्याहुः । नन्वा**चार्यैरनेन श्रुतिलिङ्गाधिकरणमप्याक्षिप्तमिति पूर्वग्रन्थेन प्रबलदुर्बलाभ्यामपि प्रमाणाभ्यामुभयत्र विनियोगोऽस्तु विरोधाभावादिति पूर्वपक्षः श्रुतिलिङ्गाधिकरणे निराकृत इति सूचितं, कथमिह लैङ्गिक एव विनियोगो न श्रौत इति पूर्वपक्षः क्रियते ? **उच्यते**; वस्तुतस्तत्रैव श्रुतिलिङ्गाधिकरणे पूर्वपक्षः, लैङ्गिक एव विनियोगो न श्रौत इति पूर्वपक्षवचनात्। यथार्थमैन्द्री स्यादित्यधिकरणे निराकृतत्वात्, तथापि टीकाकारैरिह ऐन्द्र्यधिकरणं लिखितवद्भिः प्रबलस्तदधिकरणपूर्वपक्ष एव श्रुतिलिङ्गाधिकरणपूर्वपक्षत्वेन लिखित इत्याचार्यैरपि तदनुवर्तनं कृतम्। **श्रुतेः शेषत्वे ज्ञातेऽनन्तरमर्थे तादृशी शक्तिः कल्प्यत इति ।** अग्निना सिञ्चेदित्यत्र शक्तिकल्पनस्य बाधितत्वादप्रामाण्यमिति भावः। **गौणमपि सामर्थ्यमिति ।** गौणशब्द इह स्वगुणान्यगुणसाधारण्येन गुणयोगनिमित्तकत्वमात्रपरो योगगौणवृत्तिसाधारणः। अत इन्द्रशब्दस्य यौगिकत्वप्रदर्शकेन **प्रभवति हि स्वोचितायामित्याद्य-**

## भामती ।

इति श्रुतिविनियोगात्पराचीना सामर्थ्यप्रतीतिस्तदनुरोधेनावस्थापनीया, लिङ्गं तु न स्वतो विनियोजकमपि तु विनियोक्त्रीं कल्पयित्वा श्रुतिम् । **तथाहि**—न स्वरसतो लिङ्गादनेनेन्द्र उपस्थातव्य इति प्रतीयते, किंत्वीदृगिन्द्र इति तस्य तु प्रकरणाम्नानसामर्थ्यात् सामान्यतः प्रकरणापादितैदमर्थ्यस्य तदन्यथानुपपत्त्या विनियोगकल्पनायामपि श्रौताद्विनियोगात्कल्पनीयस्य विनियोगस्यार्थविप्रकर्षाच्छ्रुतिरेव कल्पयितुमुचिता, नतु तदर्थौ विनियोगः । नहि श्रुतमनुपपन्नं शक्यमर्थेनोपपादयितुम् । नहि त्रयोऽत्र ब्राह्मणाः कठकौण्डिन्याविति वाक्यं प्रमाणान्तरोपस्थापितेन माठरेणोपपादयन्ति, उपपादयतो वा नोपहसन्ति शाब्दाः । माठरश्चेति तु श्रावयन्तमनुमन्यन्ते । तस्माच्छ्रुतार्थसमुत्थानानुपपत्तिः श्रुतेनैवार्थान्तरेणोपपादनीया, नार्थान्तरमात्रेण प्रमाणान्तरोपनीतेनेति लोकसिद्धम् । नच लोकसिद्धस्य नियोगानुयोगौ युज्येते; शब्दार्थज्ञानोपायभूतलोकविरोधात् । तस्माद्विनियोजिका श्रुतिः कल्पनीया । तथाच यावल्लिङ्गाद्विनियोजिकां श्रुतिं कल्पयितुं प्रक्रान्तव्यापारस्तावत्प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध इति निवृत्ताकाङ्क्षं प्रकरणमिति कस्यानुपपत्त्या लिङ्गं विनियोक्त्रीं श्रुतिमुपकल्पयेत् ? मन्त्रसमाम्नानस्य प्रत्यक्षयैव विनियोगश्रुत्योपपादितत्वात् । **यथाहुः**—'यावदज्ञातसंदिग्धं ज्ञेयं तावत्प्रमित्स्यते । प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यते' इति । तस्मात्प्रतीतश्रौतविनियोगोपपत्त्यै मन्त्रस्य सामर्थ्यं तदनुगुणत्वेन नीयमानं प्रथमां वृत्तिमजहज्जघन्ययापि नेयमिति सिद्धम् ॥

## वेदान्तकल्पतरुः ।

तचोक्तं संदेहावसरे—**प्रभवति हि स्वोचितायामित्यादिनेति** । एवं श्रुत्यनपेक्षत्वपरं श्लोकस्य पूर्वार्धं व्याख्याय लिङ्गस्य सापेक्षत्वेन दौर्बल्यप्रतिपादकं द्वितीयार्धं व्याचष्टे—**लिङ्गं त्वित्यादिना । तस्य त्विति** । मन्त्रस्येत्यर्थः । अग्निचयनप्रकरणाम्नानसामर्थ्यादित्यर्थः । **तदन्यथानुपपत्त्येति** । इन्द्रस्वरूपाभिधानान्यथानुपपत्त्येत्यर्थः । **ननु** यथा प्रत्यक्षेणाग्निर्बोध्यते तथानुमानेनाऽपि, एवं लिङ्गश्रुतिभ्यां मन्त्रस्येन्द्रे गार्हपत्ये च विनियोगो बोध्यताम्, तथाच तुल्यबलत्वमत आह—**श्रौताद्विनियोगादिति । अर्थविप्रकर्षादिति** । शब्दप्रकाशितार्थेन सहार्थिकस्यार्थस्य विप्रकर्षात् संबन्धा-

## कल्पतरुपरिमलः ।

ग्रिमग्रन्थेन न विरोधः । इदि परमैश्वर्ये इति धातोरिन्द्रशब्द इत्ययं योगः प्रदर्शितः । यदि 'ऋज्रेन्द्राग्रवज्र'त्यादिसूत्रेणेन्धिधातो रन्प्रत्ययान्ततया निपातननिष्पन्न इन्द्रशब्द इष्यते, तदा गार्हपत्ये योगः सुतरां संगच्छते । अग्नावेव खल्विन्धि दीप्ताविति धात्वर्थः सुप्रसिद्धः । **ननु**—श्रौते गार्हपत्यशेषत्वे सुप्रसिद्ध ऋगाम्नातस्यैन्द्रशब्दस्य तस्मिन् यौगिकी वृत्तिः कल्पनीया । तदेव कथं सिद्ध्यति ? न ह्यैन्द्रीति तद्धितान्तेन प्रातिपदिकेन इन्द्रशेषतयाऽनूदिता ऋग्गार्हपत्यशेषत्वेन तृतीयया विधातुं शक्या । "प्रयाजशेषेण हवींष्यभिघारयती"त्यत्र सत्यामपि तृतीयायां प्रयाजशेषतयाऽनूदितस्य हि द्विरभिघारणशेषत्वेन विधानं न संभवतीति तृतीयामविगणय्य प्रयाजशेषं हविष्षु क्षारयेदिति प्रयाजशेषप्रतिपत्तिविधानार्थत्वं वाक्यस्य समाश्रितम्, तथेहापीन्द्रशेषत्वेनानूदिताया ऋचो गार्हपत्यशेषत्वेन विधानं न संभवतीति गार्हपत्यसमीपे स्थित्वेन्द्रः प्रकाशयितव्य इत्यर्थसमाश्रयणं युक्तमिति—**चेत्, उच्यते**; ऐन्द्रीप्रातिपदिकेनेन्द्रप्रकाशकतामात्ररूपमिन्द्रशेषत्वमुच्यते; न त्विन्द्रोपस्थानविनियुक्तत्वरूपम्; तद्विनियोजकवुद्ध्यभावात् । इन्द्रप्रकाशकत्वं च न गार्हपत्योपस्थाने विनियोगेन विरुध्यते; मुख्यतयेन्द्रप्रकाशकस्यापि गौणवृत्त्या गार्हपत्यप्रकाशकत्वसंभवात् । अतो विरोधाभावाद्विधिवाक्ये क्वचिदपि पदे जघन्यवृत्तिर्नाभ्युपगन्तव्या । अवश्यं क्वचिदाश्रयणीया जघन्यवृत्तिरनुवादके तेन विधिना विनियोज्ये मन्त्र एवाश्रयितव्येति युक्तम् । **प्रकरणाम्नानसामार्थ्या**दित्यस्य दर्शपूर्णमासप्रकरणाम्नानसामर्थ्यादिति व्याख्यानं कोशेषु दृश्यते, तत्प्रायो लेखकप्रमादापादितम्, अग्निचयनप्रकरणे ख"ल्वैन्द्या गार्हपत्यमुपतिष्ठत" इति विधिराम्नायते । **ननु यथा प्रत्यक्षेणाग्निर्बोध्यते इति । ननु**—श्रुतिलिङ्गाभ्यां तुल्यबलाभ्यामस्य मन्त्रस्य गार्हपत्यशेषत्वमिन्द्रशेषत्वं चास्तीति शङ्का न पूर्वपक्षिणो युक्ता; लिङ्गादिन्द्रशेषत्वमेवेति हि पूर्वपक्षः कृतः । तथाशङ्कायां च यथा प्रत्यक्षानुमानाभ्यां वह्निर्बोध्यते इति न दृष्टान्तीकर्तुमुचितं, किंतु यथैकस्य पर्वतस्य प्रत्यक्षानुमानाभ्यां हृदवत्त्वं वह्निमत्त्वं चेति दृष्टान्तीकर्तव्यमिति—**चेत्, उच्यते**; लिङ्गेन साक्षाद्विनियोगो न कल्पनीय इति प्रतिज्ञायां हि श्रौताद्विनियोगात्कल्पनीयस्यार्थविप्रकर्षादिति टीकायां हेतुरुक्तः, स च लिङ्गस्य साक्षाद्विनियोजकत्वशङ्कां सोपपत्तिकामवतार्य तन्निरासार्थत्वेनावतारणीयः । तत्र साक्षाद्विनियोजकत्वे च श्रुत्या हि लिङ्गस्य तुल्यबलत्वमेवायाति नाधिकबलवत्त्वम्; श्रुतेर्लिङ्गसापेक्षत्वस्य निराकृतत्वात् । अत इह श्रुतिलिङ्गाभ्यां विनियोगद्वयमिति पूर्वपक्षोऽपि टीकाशयस्थ इत्यभिप्रेत्याऽऽभ्यां तुल्यबलाभ्यामुभयत्र विनियोग इति शङ्का कृता, दृष्टान्तस्तु श्रुतिवल्लिङ्गेनापि स्वातन्त्र्येण स्वविषयबोधनं संभवति; वह्निविषयप्रत्यक्षवत्तद्विषयानुमानेनापि तत्प्रत्यक्षनिरपेक्षेण वह्निबोधदर्शनादित्येतावन्मात्रे योजनीयः । **यद्वा**—इन्द्रे विनियोगः श्रुत्येव लिङ्गेनापि बोधयितुं शक्य इत्यस्मिन्नर्थे दृष्टान्तोऽयम् । अत्र दार्ष्टान्तिकांश उन्नेयः । इत्थं लिङ्गस्य स्वातन्त्र्ये सति फलितं श्रुतिलिङ्गयोस्तुल्यबलत्वमवलम्ब्योभयत्र विनियोगाशङ्का **एवं**

लिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' ( जै० सू० ३।३।१३ ) इत्यत्र । तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः । नह्येषां

## भामती ।

**लिङ्गवाक्ययोरिह विरोधो यथा—**"स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमानः" इति । किमयं कृत्स्न एव मन्त्रः सदनकरणे पुरोडाशासादने च प्रयोक्तव्य उत कल्पयाम्यन्त उपस्तरणे तस्मिन्त्सीदेत्येवमादिस्तु पुरोडाशासादन इति । यदि वाक्यं बलीयः कृत्स्नो मन्त्र उभयत्र, सुशेवं कल्पयामीत्येतदपेक्षो हि तस्मिन्त्सीदेत्यादिः पूर्वेणैकवाक्यतामुपैति यत्कल्पयामि तस्मिन्त्सीदेति । अथ लिङ्गं बलीयस्ततः कल्पयाम्यन्तः सदनकरणे, तत्प्रकाशने हि तत्समर्थम् । तस्मिन्त्सीदेति पुरोडाशासादने, तत्र हि तत्समर्थमिति । किं तावत्प्राप्तम् ? लिङ्गाद्वाक्यं बलीय इत्युभयत्र कृत्स्नस्य विनियोग इति । इह हि यत्तत्पदसमभिव्याहारेण विभज्यमानसाकाङ्क्षत्वादेकवाक्यतायां सिद्धायां तदनुरोधेन पश्चात्तदभिधानसामर्थ्यं कल्पनीयम् । यथा "देवस्यत्वे"तिमन्त्रेऽग्नये निर्वपामीति पदयोः समवेतार्थत्वेन तदेकवाक्यतया पदान्तराणां तत्परत्वेन तत्र सामर्थ्यकल्पना । तदेवं प्रतीतैकवाक्यतानिर्वाहाय तदनुगुणतया सामर्थ्यं क्लृप्तं सन्न तद्व्यापादयितुमर्हति, अपितु विनियोजिकां श्रुतिं कल्पयत्तदनुगुणमेव कल्पयेत् । तथाच वाक्यस्य लिङ्गतो बलीयस्त्वात्सदनकरणे च पुरुडाशासादने च कृत्स्न एव मन्त्रः प्रयोक्तव्य इति प्राप्तम् । एवं प्राप्त उच्यते—भवेदेतदेवं यद्येकवाक्यतावगमपूर्वं सामर्थ्यावधारणम्, अपि

## वेदान्तकल्पतरुः ।

योग्यत्वादाकाङ्क्षितविनियोगप्रकाशिका श्रुतिरैन्द्र्येन्द्रं प्रकाशयेदित्येवंरूपा कल्पयितुमुचितेत्यर्थः । **नियोग** आज्ञा । **अनुयोग** आक्षेपः । **प्रक्रान्तव्यापारः** प्रतिपत्तेति शेषः । प्रथमां मुख्यवृत्तिं यद्यजहतिष्ठेत्तर्हि प्रसह्य जघन्ययापि वृत्त्या नेयमित्यर्थः ॥

**कल्पयाम्यन्त उपस्तरण इति** । घृतस्य धारया सुशेवं कल्पयामीति लिङ्गादुपस्तरणं प्रतीयत इत्यर्थः । **आसादनं** स्थापनम् । उभयत्र कृत्स्नमन्त्रप्रयोगस्य प्रमाणभूतमेकवाक्यत्वमेव दर्शयति—**एतदपेक्षो हीति** । एकवाक्यतापूर्वकं सामर्थ्यकल्पनाल्लिङ्गस्योपजीव्यं वाक्यं लिङ्गाद्बलवदिति सोदाहरणमाह—**इह हीत्यादिना** । यत्तत्पदसमभिव्याहारो विभज्यमानसाकाङ्क्षत्वे हेतुः । विभज्यमानत्वे सति साकाङ्क्षत्वं चैकवाक्यत्वे हेतुः । आह हि परमर्षि"रर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या"( ब्र. अ. २ पा. १ सू. ४६ )दिति । **साकाङ्क्षत्वादि**त्युक्ते प्रकृतिप्रत्यययोरप्येकवाक्यता स्यात्तन्निवृत्त्यर्थं **—विभज्यमानेति** । नहि प्रकृतिप्रत्यययोर्विभागो विद्यते । विभज्यमानत्वेन पदत्वापत्तिर्विवक्षिता । तावत्युक्ते "भगो वां विभजत्वर्यमा वां विभजत्वि"त्यादौ निरपेक्षविभागेऽपि वाक्यत्वं स्यात् । तत्र हि प्रतिपदं विभजत्वित्यन्वयान्निराकाङ्क्षत्वम् । तन्निवृत्त्यर्थं साकाङ्क्षत्वविशेषणम् । अर्थैकत्वविशेषणस्य तु "स्योनं ते" इतीदमेव व्यावर्त्यम् । अत्र च वाक्यभेदोऽद्याप्यसिद्ध इति तन्नोपन्यस्तम् । "देवस्य त्वे"ति मन्त्रे ह्य"ग्नये निर्वपामी"तिपदातिरिक्तपदानां न निर्वापे समवेतार्थत्वम् । एवमन्यत्रापि कर्मणि तेषां न समवेतार्थतोपलभ्यते, तेनागतीनां तेषां समवेतार्थाग्नयेनिर्वपामिपदाभ्यामेकवाक्यतां कल्पयित्वा तदनुरोधेन जघन्ययाऽपि वृत्त्याऽर्थाभिधानसामर्थ्यं कल्प्यताम् । मन्त्रभागयोस्त्वनयोरुपस्तरणासादनार्थयोः पृथगर्थाभिधानसामर्थ्यस्यैकवाक्यतामनपेक्ष्यैवार्थप्रतीतिकार्यवशेन सिद्धत्वान्न वाक्यपूर्वकत्वं लिङ्गस्येति सिद्धान्तयति—**भवेदेतदेव**

## कल्पतरुपरिमलः ।

**लिङ्गश्रुतिमित्यादिना** दर्शिता । तत्रैवमित्यस्य एवं सतीत्यर्थ इति न किंचिदवद्यम् । **अनुयोग आक्षेप इति** । यद्यपि प्रश्नोऽनुयोगः पृच्छा चेत्यनुयोगशब्दः प्रश्नेऽनुशिष्टः; तथापि शास्त्रेषु प्रश्न आक्षेपपर्यवसायीत्येवं व्याख्यातम् ॥

**यत्तत्पदसमभिव्याहार इति** । तत्पददर्शनादध्याहृतं यत्पदमित्युभयसमभिव्याहार उक्तः । **तावत्युक्ते इति** । विभज्यमानत्वे सति साकाङ्क्षत्वमिति लक्षणे विभज्यमानमित्येतावत्युक्ते इत्यर्थः । **अर्थैकत्वविशेषणस्य त्विति** । यद्यपि विभज्यमानसाकाङ्क्षत्वमात्रं "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे"त्यत्रातिव्याप्तं, तत्राप्युत्तरवाक्ये तत्पदसद्भावेन विभागे पूर्वसाकाङ्क्षतायाः सद्भावात्; तथापि यजुःशब्दाभिधेयेषु प्रश्लिष्टपठितमन्त्रेषु परिमाणं दुर्ज्ञानमिति तज्ज्ञानाय निरूपितेऽस्मिन् लक्षणे यजूरूपमेव विशेषणव्यावर्त्यं वक्तव्यं, तत्तु "स्योनं ते" इत्यादिकमेव; विभज्यमानसाकाङ्क्षयजुष्ट्वस्यान्यत्रातिव्याप्तिशङ्काभावात्, "स्योनं ते" इत्यादिमन्त्रे च पूर्वपक्षदशायां वाक्यभेदो न सिद्ध इति व्यावर्त्याभावादर्थैकत्वविशेषणं नोपात्तमित्यर्थः । **अग्नये निर्वपामिपदाभ्यामेकवाक्यतां कल्पयित्वेति** । यद्यप्येकवाक्यता स्वत एव प्रतीयते; तथाप्यसमवेतार्थत्वेन वाक्यानन्तर्भावशङ्कां परिहृत्य प्रतीतैकवाक्यता निर्वहणीयेति—**कल्पयित्वेत्युक्तम्** । **अभिधानसामर्थ्यं कल्प्यतामिति** । निर्वापान्वयोपयोगितत्प्रशंसाभिधानसामर्थ्यं कल्प्यतामित्यर्थः, नतु निर्वापाभिधानसामर्थ्यं कल्प्यतामिति; निर्वपामीत्यनेन पौनरुक्त्यापत्तेः । एवं दार्ष्टान्तिकेऽपि कृत्स्नमन्त्रस्य यदा सदनकरणे विनियोगस्तदो-

## भामती ।

तु अवधृतसामर्थ्यानां पदानां प्रश्लिष्टपठितानां सामर्थ्यवशेन प्रयोजनैकत्वेनेकवाक्यत्वावधारणम् । यावन्ति पदानि प्रधानमेकमर्थमवगमयितुं समर्थानि विभागे साकाङ्क्षाणि तान्येकं वाक्यम् । अनुष्ठेयश्चार्थो मन्त्रेषु प्रकाश्यमानः प्रधानम् । सदनकरणपुरोडाशासादने चानुष्ठेयतया प्रधाने । तयोश्च सदनकरणं कल्पयाम्यन्तो मन्त्रः समर्थः प्रकाशयितुं, पुरोडाशासादनं च तस्मिन्सीदेत्यादिः । ततश्च यावदेकवाक्यतावशेन सामर्थ्यमनुमीयते तावत्प्रतीतं सामर्थ्यमेकैकस्य भागस्यैकैकस्मिन्नर्थे विनियोजिकां श्रुतिं कल्पयति । तथाच श्रुत्यैवैकैकस्य भागस्यैकत्र विनियोगे सति प्रकरणपाठोपपत्तौ न वाक्यकल्पितं लिङ्गं विनियोजिकां श्रुतिमपरां कल्पयितुमर्हतीत्येकवाक्यताबुद्धिरुत्पन्नाप्याभासीभवति; लिङ्गेन बाधनात् । यत्र तु विरोधकं लिङ्गं नास्ति, तत्र समवेतार्थैकद्वित्रिपदैकवाक्यता पदान्तराणामपि सामर्थ्यं कल्पयतीति भवति वाक्यस्य विनियोजकत्वम् । यथाऽत्रैव "स्योनं त" इत्यादीनाम् । तस्माद्वाक्याल्लिङ्गं बलीय इति सिद्धम् ॥

## वेदान्तकल्पतरुः ।

**मिति । प्रयोजनैकत्वेनेति** । विशिष्टैकार्थप्रमितिः प्रयोजनम् । **प्रधानमेकमर्थमित्य**त्रैकशब्दः प्रयुक्तः तत्र "स्योनं ते" इत्यस्य वाक्यभेदप्रतिपादनात् एकस्मिन्वाक्ये पदार्थानां बहुत्वादेकार्थत्वम् अयुक्तमित्याशङ्क्य विशिष्टार्थाभिप्रायेण प्रधानमित्युक्तम् । **ननु** भावनैव प्रधानं कथमुपस्तरणादेः प्राधान्यमत आह—**अनुष्ठेयार्थश्चेति** । मन्त्रावयवावविनियुज्य हि नाऽवयविरूपं वाक्यं विनियोक्तुं शक्यते । अतश्चैकवाक्यत्ववादिनाऽप्यवयवौ विनियोज्यौ, तयोश्च मिलितयोर्नैकार्थप्रकाशनं सिद्धमिति । यत्र तु "देवस्य त्वे"त्यादाविवैकवाक्यतावशेन कथंचित्सामर्थ्यमनुमेयम् । तत्रोपस्तरणे पूर्वभागार्थे उत्तरो मन्त्रभागो भङ्क्त्वा व्याख्येयः । पुरोडाशासादने चोत्तरभागार्थे पूर्वः । एवं यावदेकवाक्यतावशेन सामर्थ्यमनुमीयते तावत्पूर्वस्योत्तरस्य च मन्त्रभागस्यैकैकस्मिन्नुपस्तरणे पुरोडाशासादने चार्थप्रतीतिकार्यवशेन प्रतीतं यत्सामर्थ्यं तन्मन्त्रभागद्वयस्य विनियोजिकां श्रुतिं पूर्वेणोपस्तृणुयादुत्तरेण पुरोडाशमासादयेदित्येवंरूपां कल्पयति । ततः किं जातमत आह—**तथाचेति** । एकं विनियोगं कर्तुं वाक्यलिङ्गयोः सह प्रस्थितयोः वाक्ये लिङ्गं कल्पयितुमुपक्रान्तवति एकैकमन्त्रभागगतं लिङ्गं वाक्यकल्प्यलिङ्गादपि विनियोगफलं प्रति प्रत्यासन्नां श्रुतिं कल्पयति । वाक्यकल्पिते च लिङ्गे श्रुतिं कल्पयितुमुपक्रान्ते लिङ्गकल्पिता श्रुतिर्विनियोगं गृह्णाति, गृहीते च तया तस्मिन् वाक्येन लिङ्गद्वारकल्पिता श्रुतिरेकसोपानान्तरितत्वात्फलमनवाप्य विलीयते । **आह चात्र निदर्शनमाचार्यसुन्दरपाण्ड्यः—निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च । एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥ १ ॥ एकसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः । उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥ २ ॥ विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः । प्रथमेन गृहीतेऽस्मिन्पश्चिमोऽवतरेन्मुधा ॥ ३ ॥ इति ।**

एवमुत्तरत्रापि द्रष्टव्यम् । यदि लिङ्गाभ्यां मन्त्रभागयोरर्थभेदेन वाक्यं भङ्क्त्वा विनियोगस्तर्हि देवस्य त्वेत्यत्रापि लिङ्गाद्वाक्यं भङ्क्त्वा भेदेन विनियोगः स्यात् । तथाचात्रापि समवेतार्थसदनादिपदातिरिक्तपदानां मन्त्रभागाभ्यामेकवाक्यता न स्यादत आह—**यत्र त्विति** । यत्र विरोधकं पृथक् कर्मसमवेतार्थप्रकाशनसामर्थ्यं नास्ति, तत्र समवेतार्थेनैकेन पदेन द्वाभ्यां त्रिभिर्वा पदैर्यैकवाक्यता सा क्वापि कर्मण्यसमवेतार्थानां पदान्तराणां वैयर्थ्यपरिहाराय स्वानुसारेण सामर्थ्यं कल्पयतीति भवति तत्र वाक्यस्य विनियोजकत्वं न त्वत्र । पृथक्कर्मवर्तिपदार्थप्रकाशनादित्यर्थः । **उक्तं च—**'पदान्तराणि यत्रार्थं वदेयुः कर्मवर्तिनम् । तत्रैवमितरेषां तु वाक्यमप्यगतेर्वरम्' ॥ इति । **एवमिति** । लिङ्गाद्वाक्यभङ्ग इत्यर्थः ॥

## कल्पतरुपरिमलः ।

त्तरभागस्य प्रतिष्ठापनार्थत्वरूपतद्विशेषाभिधानसामर्थ्यकल्पनेति द्रष्टव्यम् । **अत्रैकशब्दः प्रयुक्त इति** । सिद्धान्ते यजुःपरिमाणलक्षणे अर्थैकत्वविशेषणस्यापेक्षितत्वादेकशब्दः प्रयुक्त इत्यर्थः । तदपेक्षायां हेतुं सिद्धान्ते तद्व्यावर्त्यसिद्धं दर्शयति—**स्योनं त इत्यस्येति** । एवमेकत्वविशेषणे कृते तत्प्रयुक्तलक्षणासंभवपरिहारार्थं प्रधानमिति विशेषणमित्याह—**एकस्मिन्वाक्ये इति । प्राप्तिमात्रोपपादि चेति** । निःश्रेण्यारोहणप्राप्यं प्रासादादि प्राप्तिमात्रेण लभ्यमित्यर्थः । विलम्बेन लभ्यं चेत्पश्चादारूढोऽपि कदाचित्फलं गृह्णीयादित्याशङ्कापरिहारार्थमिदं विशेषणम् **पश्चिमोऽवतरेन्मुधेति** । एवमेव वाक्यमूलकसामर्थ्यादिकल्पनाक्रमो विनियोगलक्षणं फलमगृहीत्वा परावर्तेत इति दार्ष्टान्तिके योजनीयम् । **भेदेन विनियोगः स्यादिति** । अग्नये जुष्टं निर्वपामीत्येतदतिरिक्तानां देवस्य त्वेत्यादिपदानामिति शेषः । तथासत्यतिप्रसङ्गान्तरमप्यापतेदित्याह—**तथाचेति** । सदनादिपदातिरिक्तपदानां स्योनमादिपदानाम् । यत्र तु विरोधि लिङ्गम्, अस्य तु विवरणं—**पृथगिति । अगतेर्वरमिति** । यदि पृथक्कर्मवर्तिपदार्थाप्रकाशकपदानां वा सामर्थ्यकल्पनेन विनियोजकत्वं न स्यात्, तदा तेषां गत्यन्तराभावेन वैफल्यं स्यात्, ततो वरं तेषां वाक्यं विनियोजकमित्याश्रयणमित्यर्थः । उदाहृतश्लोकस्थमेवमिति पदमुपादाय व्याचष्टे—**लिङ्गाद्वाक्यभङ्ग इत्यर्थ इति** ॥

## भामती ।

**वाक्यप्रकरणयोर्विरोधोदाहरणम्**—अत्र च पदानां परस्परापेक्षावशात्कस्मिंश्चिद्विशिष्ट एकस्मिन्नर्थे पर्यवसितानां वाक्यत्वं, लब्धवाक्यभावानां च पुनः कार्यान्तरापेक्षावशेन वाक्यान्तरेण संबन्धः प्रकरणम्। कर्तव्यायाः खलु फलभावनाया लब्धधात्वर्थकरणाया इतिकर्तव्यताकाङ्क्षाया वचनं प्रकरणमाचक्षते वृद्धाः। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। एतद्धि वचनं प्रकरणम्। तदेतस्मिन् स्वपदगणेन कियत्यप्यर्थे पर्यवसिते करणोपकारलक्षणकार्यान्तरापेक्षयां 'समिधो यजति' इत्यादिवाक्यान्तरसंबन्धः। समिदादिभावना हि स्वविध्युपहिताः पुरुषेहितं भाव्यमपेक्षमाणा विश्वजिन्न्यायेन वानुषङ्गतो वार्थवादतो वा फलान्तराप्रतिलम्भेन दर्शपूर्णमासभावनां निर्वारयितुमीशते। तस्मात्तदाकाङ्क्षयामुपनिपतितान्येतानि वाक्यानि स्वकार्यापेक्षाणि तदपेक्षितकरणोपकारलक्षणं कार्यमासाद्य निर्वृण्वन्ति च निर्वारयन्ति च प्रधानम्। सोऽयमनयोर्नष्टाश्वदग्धरथवत्संयोगः। तदेवं लक्षणयोर्वाक्यप्रकरणयोर्विरोधोदाहरणं सूक्तवाकनिगदः। तत्र हि पौर्णमासीदेवताः अमावास्यादेवताः समाम्नाताः। ताश्च न मिथ एकवाक्यतां गन्तुमर्हन्तीति लिङ्गेन पौर्णमासीयागादिन्द्राग्नीशब्द उत्क्रष्टव्यः अमावास्यायां च समवेतार्थत्वात्प्रयोक्तव्यः। अथेदानीं संदिह्यते—किं यदिन्द्राग्निपदैकवाक्यतया प्रतीयते 'अवीवृधेतां महो ज्यायोऽक्राताम्' इति तन्नोत्क्रष्टव्यमुतेन्द्राग्निशब्दाभ्यां सहोत्क्रष्टव्यमिति। तत्र यदि प्रकरणं बलीयस्ततोऽपनीतदेवताकोऽपि शेषः प्रयोक्तव्योऽथ वाक्यं ततो यत्र देवताशब्दस्तत्रैव प्रयोक्तव्यः।

## वेदान्तकल्पतरुः ।

प्रकरणवाक्ययोर्विरोधमुदाहर्तुं वाक्यलक्षणमाह—**अत्र चेति**। प्रकरणलक्षणमाह—**लब्धेति**। कार्यान्तरापेक्षावशेन प्रकरणत्वं शबरस्वामिसंमतमित्याह—**कर्तव्याया इति**। प्रधानवाक्यस्याङ्गवाक्याकाङ्क्षामुक्त्वाऽङ्गवाक्यानां प्रधानवाक्याकाङ्क्षामाह—**समिदादीति**। सन्निहितकरणोपकारे संभवति न विश्वजिन्न्यायेन ( जै. सू. अ. ४ पा. ३ सू. १५) स्वर्गकल्पना, नापि दर्शपूर्णमासफलस्वर्गस्यानुषङ्गः; प्रयाजादेः फलाकाङ्क्षायामपि स्वर्गस्यानाकाङ्क्षत्वादित्याह—**अनुषङ्गतो वेति**। करणोपकारस्य सिद्धत्वादेव यज्ञवर्मकरणाद्यार्थवादिकं फलं सत्रन्यायेन न कल्प्यमित्याह—**अर्थवादतो वेति**। **निर्वारयितुं** चरितार्थीकर्तुं। **निर्वृण्वन्ति** कृतार्थीभवन्ति। **निर्वारयन्ति**। स्वकृतोपकारेण प्रधानं दर्शपूर्णमासादीत्यर्थः। उक्तामितरेतरापेक्षां सदृष्टान्तमुपसंहरति—**सोऽयमिति**। "अग्निरिदं हविरजुषतावीवृधत महोज्यायोऽकृत प्रजापतिरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽकृते"ति सूक्तवाकनिगदः। देवतासंबोधनप्रधानः पदसमूहो निगद इत्याख्यायते। तत्राग्निः पौर्णमास्यमावास्ययोः साधारणः। प्रजापतिः पौर्णमास्यामेवोपांशुयाजस्य। "नाऽसोमयाजी सन्नये"दित्यसोमयाजिनः सान्नाय्याभावात् अमावास्ययोर्दधिपयसोरभावे ऐन्द्राग्नमेकादशकपालं विहितं तस्य देवतेन्द्राग्नी। इदमाह—**तत्र हीति**। एकत्र सहपाठेऽपि लिङ्गादुत्कृष्टेनेन्द्राग्निपदेनैकवाक्यतापन्नोऽवीवृधेतामित्यादिमन्त्रशेषो यत्रामावास्यायामिन्द्राग्निपदं नीतं तत्र नीयेतोतेन्द्राग्निपदमात्रममा-

## कल्पतरुपरिमलः ।

**कार्यान्तरापेक्षावशेनेति**। कार्यान्तरमितिकर्तव्यता। तथाच सन्निध्याम्नातपदार्थसंबन्धापादकेतिकर्तव्यताकाङ्क्षावत्प्रधानवचनं प्रकरणमित्युक्तं भवति। तद्विशेषणभावात् क्वचिदितिकर्तव्यताकाङ्क्षावशेन सन्निहितवाक्यान्तरसंबन्धः प्रकरणमिति व्यवह्रियते। क्वचिदितिकर्तव्यताकाङ्क्षैव प्रकरणमिति व्यवह्रियते। इदं कर्मप्रकरणमात्रासाधारणं प्रकरणलक्षणम्। ब्रह्मप्रकरणसाधारणं तु तल्लक्षणमाकाङ्क्षायामितिकर्तव्यताकाङ्क्षाविषयत्वविशेषणं विहाय निर्वक्तव्यम्। **सन्निहितकरणोपकारे संभवतीति**। सन्निध्याम्नातस्य करणस्योपकारे आकाङ्क्षावशाद्बुद्धिस्थे फले संभवत्यबुद्धिस्थस्वर्गफलकल्पना न युक्तेत्यर्थः। अयमेव हेतुरनुषङ्गार्थवादिकफलाकल्पनयोरपि। स्वर्गस्यानाकाङ्क्षत्वादित्यभ्युच्चयमात्रम्; स्वर्गस्य दर्शपूर्णमासकरणान्वयेऽनाकाङ्क्षत्वेऽपि प्रयाजादीनां फलाकाङ्क्षया तदन्वयसंभवात्, "या ते अग्ने अयाशये"त्यादिमन्त्रान्वयेन निराकाङ्क्षस्यापि "तनूर्वर्षिष्ठे"त्यादिवाक्यशेषस्य "या ते अग्ने रजाशया" "या ते अग्ने हराशयेति" मन्त्रयोरपि तदाकाङ्क्षामात्रेणानुषङ्गस्य द्वितीयेऽध्याये निर्णीतत्वात्, चतुर्थाध्याये 'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकाम' इत्यत्र श्रुतस्य फलस्य सांग्रहणीष्टिरूपकारणान्वयेन निराकाङ्क्षत्वेऽप्या "मनमस्यामनस्यदेवा इति तिस्र आहुतीर्जुहोती"ति तत्सन्निध्याम्नातानां होमानां फलाकाङ्क्षयाऽनुषङ्ग इति पूर्वपक्षं कृत्वा सांग्रहणीतिकर्तव्यतारूपेण तदुपकारात्मकफले संभवति नानुषङ्गः कल्पनीय इति सिद्धान्तितत्वाच्च। **वर्मकरणादीति**। "वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य यत्प्रयाजानूयाजा इज्यन्ते" इत्यर्थवादोक्तं फलं रात्रिसत्रन्यायेन न विपरिणमनीयमित्यर्थः। **देवतासंबोधनप्रधान इति**। परसंबोधनार्थलोडन्ताख्यातयुक्तः पदसमूहो निगद इति यद्यपि निगदाधिकरणे वर्णितम्; तथापि सूक्तवाकनिगद इडानिगद इत्यादिव्यवहारदर्शनादन्यत्रापि नितरां गद्यत इत्युच्चैष्ट्वयोगेन तद्व्यवहारोऽस्तीति भावः। **दधिपयसोरभाव इति**। यद्यप्यसोमयाजिनो दधिपयसोरभाव ऐन्द्राग्नपुरोडाशश्चेत्युभयं तत्तद्वचनबलान्मिलितम्, नतु प्रयोज्यप्रयोजकभावात्; अन्यथा वैपरीत्यमेव किं न

## भामती ।

किं तावत्प्राप्तम् ? अपनीतदेवताकोऽपि शेषः प्रयोक्तव्यः; प्रकरणस्यैवाङ्गसंबन्धप्रतिपादकत्वात् । फलवती हि भावना प्रधानेतिकर्तव्यतात्वमापादयति; तदुपजीवनेन श्रुत्यादीनां विशेषसंबन्धापादकत्वात् । अतः प्रधानभावनावचनलक्षण-प्रकरणविरोधे तदुपजीविवाक्यं बाध्यत इति प्राप्तम् । एवं प्राप्त उच्यते—भवेदेतदेवं यदि विनियोज्यस्वरूपसामर्थ्यम-नपेक्ष्य प्रकरणं विनियोजयेत्, अपितु विनियोगाय तदपेक्षते; अन्यथा पूषाद्यनुमन्त्रणमन्त्रस्य द्वादशोपसत्तायाश्च नोत्कर्षः स्यात् । तद्रूपालोचनायां च यद्यदेव शीघ्रं प्रतीयते, तत्तद्बलवद्विप्रकृष्टं तु दुर्बलम् । तत्र यदि तद्रूपं श्रुत्या लिङ्गेन वाक्येन वान्यत्र विनियुक्तम्, ततः प्रकरणं भङ्क्त्वोत्कृष्यते, परिशिष्टैस्तु प्रकरणस्येतिकर्तव्यतापेक्षा पूर्यते । अथ स्वस्य शीघ्रप्रवृत्तं श्रुत्यादि नास्ति, ततः प्रकरणं विनियोजकम् । यथा समिदादेः । तदिह प्रकरणाद्वाक्यस्य शीघ्रप्रवृत्तत्वमु-च्यते । प्रकरणे हि स्वार्थपूर्णानां वाक्यानामुपकार्योपकारकाकाङ्क्षामात्रं दृश्यते । वाक्ये तु पदानां प्रत्यक्षसंबन्धः । ततश्च सह प्रस्थितयोर्वाक्यप्रकरणयोर्यावत्प्रकरणेनैकवाक्यता कल्प्यते, तावद्वाक्येनाभिधानसामर्थ्यं, यावदितरत्र वाक्येन सामर्थ्यं तावदितरत्र सामर्थ्येन श्रुतिर्यावदितरत्र सामर्थ्येन श्रुतिस्तावदिह श्रुत्या विनियोगस्तावता च विच्छि-न्नायामाकाङ्क्षायां श्रुत्यनुमाने विहते प्रकरणेनान्तरा कल्पिते विलीयन्त इति वाक्यबलीयस्त्वात्तद्देवताशेषाणामपकर्ष एवेति सिद्धम् ॥

**क्रमप्रकरणविरोधोदाहरणम्**—राजसूयप्रकरणे प्रधानस्यैवाभिषेचनीयस्य संनिधौ शौनःशेपोपाख्यानाद्याम्नातम् । तत्किं समस्तस्य राजसूयस्याङ्गमुताभिषेचनीयस्य । यदि प्रकरणं बलीयस्ततः समस्तस्य राजसूयस्य, अथ क्रमस्ततोऽभिषे-चनीयस्यैवेति, किं तावत्प्राप्तम् ? नाकाङ्क्षामात्रं हि संबन्धहेतुः । गामानय प्रासादं पश्येति गामित्यस्य क्रियामात्रापे-

## वेदान्तकल्पतरुः ।

वायां नीत्वा वाक्यशेष उभयत्र पौर्णमास्यमावास्ययोः प्रयोक्तव्य इति संदेहस्य प्रापकमाह—**तत्र यदीति** । फलवती भावना प्रधाना सती इतिकर्तव्यत्वं संनिधिपठितस्यापादयतीत्यर्थः । आकाङ्क्षात्मकं हि प्रकरणं न श्रुतिरिव विनि-योगमभिधत्ते, किंतु विनियोज्यपदार्थशक्तिं प्रमाणान्तरप्रमितामपेक्षते, एवंच सति विनियोज्यस्य मन्त्रवाक्यशेषस्य वाक्येनान्यत्र विनियुक्तत्वान्न प्रकरणेन कृत्स्नार्थत्वेन विनियोग इत्याह—**भवेदेतदेवमिति** । विपक्षे दण्डमाह—**अन्यथेति** । द्वादशोपसत्ताधिकरणं ज्योतिर्दर्शना(व्या. सू. अ. १ पा. ३ सू. ४० ) दित्यत्रानुक्रान्तम् । पूषाद्यनु-मन्त्रणमन्त्राश्च तत्रैवोदाहृताः । **यद्यदेवेति** । विनियोजकं प्रमाणमित्यर्थः । **एकवाक्यतेति** । वाक्यैकवाक्यतेत्यर्थः । **यावदितरत्र सामर्थ्यमिति** । वाक्यद्वयैकवाक्यतायां कल्पितायाम् अन्यथानुपपत्त्या वाक्यद्वयार्थयोरितरेतरोपका-र्योपकारकत्वसामर्थ्यं कल्प्यत इत्यर्थः ॥

नानेष्टिपशुसोमसमुदायो राजसूयः । तत्राभिषेचनीयः सोमयागविशेषः । शुनःशेपः किल ऋषिपुत्रो हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं पशुत्वेन क्रीतः । स वरुणाय स्वस्यालम्भे कर्तुमारब्धे वरुणं तुष्टाव । स च तुष्ट एनं ररक्षेत्याख्यानं बह्वृच-ब्राह्मणे पठ्यते । अक्षद्यूतादिकमभिषेचनीयसन्निधौ श्रुतमादिशब्दार्थः । यद्याकाङ्क्षामात्रात्पदानां संबन्धः, तर्ह्यानय प्रासा-दमिति पदद्वयव्यवहितेन पश्येत्यनेनापि गामित्यस्याभिसंबन्धः स्यात्, आनयेत्यनेन तु सन्निधानात्संबन्ध उपपन्नः । तस्मान्ना-

## कल्पतरुपरिमलः ।

स्यात्; तथाप्यर्थसमाजमात्रमवलम्ब्य प्रयोज्यप्रयोजकभाव उपचरितः । **अवीवृधेतामित्यादिमन्त्रशेष इति** । इदं हविरजुषतामित्यंशस्याप्युपलक्षणमेतत् ॥

**नानेष्टिपशुसोमसमुदाय इति** । अनुमत्यादिदेवताकानामिष्टीनामग्न्यादिपशुकानां पशुबन्धानां सोमयागानां च स-न्निधौ पठिते "राजा स्वाराज्यकामो राजसूयेन यजेत" त्यधिकारवाक्ये श्रुतस्य राजसूयपदस्य नामधेयस्याप्रसिद्धार्थत्वेनाख्या-तपारतन्त्र्यादाख्यातस्य च सन्निहितसकलयागानुवादत्वात्तस्यात्सन्निहितसकलेष्टिपशुसोमसमुदायो राजसूय इत्यर्थः । शौनः-शेपाख्यानं विवृणोति—**शुनःशेपः किलेति । तदित्थम्**—"हरिश्चन्द्रस्य राज्ञः शतं जाया बभूवुः । तासु पुत्रमलभमानः-स्वगृहे वसन्तं नारदं पुत्रप्रयोजनं पप्रच्छ । स पुत्रवतः प्रशंसया तद्रहितस्य निन्दया च पुत्रलाभमतितरां प्रशस्य जातेन पुत्रेण वरुणं यक्ष्ये इति संकल्पे कृते तव पुत्रो भवितेत्युवाच । हरिश्चन्द्रस्तथेति सङ्कल्प्य रोहितं नाम पुत्रं लेभे । तदैव वरुणेन मामनेन यजस्वेति पृष्टो दन्तोत्पत्त्यनन्तरमिति तदनन्तरं पृष्टो दन्तपतनानन्तरमिति ततः पृष्टो द्वितीयदन्तोत्प-त्त्यनन्तरमिति तदनु पृष्टः कवचधरे जाते इति च तावत्पर्यन्तं कालं पशुभावानर्हतोद्भावनेन क्षपयामास । कवचधरं कुमारं दृष्ट्वा मामनेन यजस्वेति वरुणेन पृष्टे कुमारो धनुर्गृहीत्वा वनं प्रतस्थे । हरिश्चन्द्रो वरुणगृहीतो जलोदरव्याधियुक्तो यज्ञे । रोहितः संवत्सरं वने चरित्वा प्रत्यागतः संचारे फलं प्रदर्शयतेन्द्रेणोपदिष्टः पुनरपि संवत्सरं वने चरित्वा प्रत्याजगाम । एवं पुनरिन्द्रस्योपदेशात् षड्वारानेकैकं संवत्सरं वने चचार । षष्ठे पर्याये पुत्रवन्तमजीगर्तनामानं ऋषिं वने दृष्ट्वा तमेकं

## भामती ।

क्षिणः पश्येत्यनेनापि संबन्धसंभवाद्विनिगमनाभावप्रसङ्गात् । तस्मात्संनिधानं संबन्धकारणम् । तथा चाऽऽनयेत्यनेनैव गामित्यस्य संबन्धो विनिगम्यते । नच संनिधानमपि संबन्धकारणम् । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञ इत्यस्य पुत्रपुरुषपदसंनिधानाविशेषान्मा भूदविनिगमना । तस्मादाकाङ्क्षा निश्चयहेतुर्वक्तव्या । अत्र पुत्रशब्दस्य संबन्धिवचनतया समुत्थिताकाङ्क्षस्यान्तिके यदुपनिपतितं संबन्ध्यन्तराकाङ्क्षं पदं तस्य तेनैवाकाङ्क्षापरिपूर्तेः पुरुषपदेन पुरुषरूपमात्राभिधायिना स्वतन्त्रेणैव न संबन्धः, किंतु परेणापसार्यतामित्यनेनापसरणीयापेक्षेणेति । सत्यपि संनिधाने आकाङ्क्षाभावादसंबन्धः । **तथा चाभाणकः—**'तप्तं तप्तेन संबध्यते' इति । तथा चाकाङ्क्षितमपि न यावत्संनिधाप्यते तावन्न संबध्यते । तथा संनिहितमपि यावन्नाकाङ्क्ष्यते न तावत्संबध्यत इति द्वयोः संबन्धं प्रति समानबलत्वात्क्रमप्रकरणयोः समुच्चयासंभवाच्च विकल्पेन राजसूयाभिषेचनीययोर्विनियोगः शौनःशेपोपाख्यानादीनामिति प्राप्तम् । एवं प्राप्त उच्यते—राजसूयके कथंभावापेक्षा हि पवित्रादारभ्य क्षत्रस्य धृतिं यावदनुवर्तते । तथाच—**अविच्छिन्ने कथं-**

## वेदान्तकल्पतरुः ।

काङ्क्षामात्रं संबन्धहेतुरित्यर्थः । अत्र विकल्पेन पूर्वपक्षं वक्ष्यन् संनिधेरपि केवलस्य न संबन्धे हेतुत्वमित्याह—**नचेति ।** अयमेतीति वाक्ये राज्ञ इत्येतत्पदं पुत्रपदस्योपरिष्टात्पुरुषपदस्य चाधस्ताद्दृश्यते । यदि संनिधिमात्रं संबन्धकारणं, तर्हि राज्ञ इति पदस्य पुत्रपदेन वा संबन्धः राज्ञः पुत्र इति, किं वा पुरुषपदेन राज्ञः पुरुष इत्यविनिश्चयः स्यादित्यर्थः । एवमनिश्चये सत्याकाङ्क्षाया निर्णयमाह—**तस्मादिति । अन्तिके यदुपनिपतितमिति ।** पितृसमर्पकं राजपदमित्यर्थः । यदि राज्ञ इति पदस्य पुरुषपदेनासंबन्धः, तर्हि तेनासंबद्धस्य पुरुषपदस्य केन संबन्धस्तत्राह—**किंत्विति । ननु** प्रकरणाद्राजसूयार्थत्वं क्रमादभिषेचनीयार्थत्वं च किं न स्यादत आह—**समुच्चयाऽसंभवाच्चेति ।** अभिषेचनीयस्यापि राजसूयमध्यपातित्वात्तदर्थमप्यनुष्ठितमाख्यानादि राजसूयाङ्गमपि भवति; पृथक्प्रयोगाऽनपेक्षणाद् न समुच्चय इत्यर्थः ।

## कल्पतरुपरिमलः ।

पुत्रं ययाचेति हरिश्चन्द्रेण कर्तव्ये वरुणयज्ञे पशुत्वेन नियुज्य स्वात्मनिष्क्रयार्थं । तदा पिता ज्येष्ठं माता कनिष्ठपुत्रं च दातुं नान्वमन्यत । अर्थान्मध्यमः शुनःशेपो देयः पर्यवसितः । तं क्रीत्वा समागत्य वरुणं यष्टुं पुत्रो ददौ । पिता च हरिश्चन्द्रो राजसूयं प्रारभ्याभिषेचनीये शुनःशेपं पशुं सङ्कल्पयामास । अजीगर्तः पुनः शतं गृहीत्वा तं विशसितुमुद्युक्तः । तस्मिन्विशसितुमुद्युक्ते शुनःशेपो वरुणं तुष्टाव । वरुणस्य प्रीत्या पाशाद्विमुक्तस्तत्र यज्ञे होतारं विश्वामित्रं प्राप्य तस्य पुत्रो बभूवेति । आचार्यैर्हरिश्चन्द्रेण कर्तुं प्रारब्धो राजसूय एव पुरुषपशुकत्वेन पुरुषमेध उपचरितः" । **विकल्पेन पूर्वपक्षं वक्ष्यन्निति ।** संदेहटीकायामभिषेचनीयस्यैवाङ्गमिति पूर्वपक्षकोटिप्रदर्शनमुपक्रममात्रमिति भावः । **ननु—**आकाङ्क्षितमपि सन्निहितमेवान्वेति सन्निहितमप्याकाङ्क्षितमेवान्वेतीत्याकाङ्क्षासन्निधानयोर्लोके परस्परापेक्षादर्शनेन प्रकरणसन्निधानयोस्तुल्यबलतया प्रकरणाद्राजसूयस्य वाङ्गं सन्निधानादभिषेचनीयस्य वाङ्गमिति विकल्पेन पूर्वपक्ष इत्येतन्न युज्यते; राजसूयस्य प्रकरणासिद्धेः, तदन्तर्गतानामिष्ट्यादीनां विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गसंबन्धनिराकाङ्क्षत्वात्, प्रकरणसत्त्वेऽपि सन्निध्यनुरोधपक्षइव प्रकरणानुरोधपक्षेऽप्यभिषेचनीयाङ्गत्वस्यावश्यंभावेन नित्यस्य तस्य वैकल्पिकत्वासंभवाच्चेति—**चेत्, उच्यते;** इष्ट्याद्यात्मना नैराकाङ्क्ष्येऽपि राजसूयात्मनाऽस्त्याकाङ्क्षा पवित्रादारभ्य क्षत्रस्यधृतिपर्यन्तं राजसूयः; यद्येता उत्पुनातीत्यादिष्वङ्गवाक्येषु राजसूयपरामर्शानुवृत्त्या तदात्मनेतिकर्तव्यताकाङ्क्षोत्थापनात् । विकल्पोक्तिस्तु अभिषेचनीयातिरिक्तपवित्रादिप्रधानान्तरविषया । एवं च संदेहटीकाऽप्यङ्गशब्दस्य नित्याङ्गत्वविषयतया अथ क्रम इत्येतदनन्तरं प्रकरणतुल्यवत इत्यध्याहारेण चोक्तार्थे सुयोजेति नोपक्रमविरोधोऽपि । **ननु प्रकरणाद्राजसूयार्थत्वमिति ।** विरोधे हि प्रकरणसन्निधानयोः पाक्षिकप्रवृत्तिर्वाच्या । सकलराजसूयाङ्गत्वाभिषेचनीयाङ्गत्वयोर्नास्ति विरोधः । न च सन्निधानेनाभिषेचनीयमात्राङ्गत्वं बोध्यमिति विरोधः शङ्कनीयः; प्रकरणसन्निधानयोस्तुल्यबलत्वपूर्वपक्षेऽपि प्रकरणबोध्यस्य प्रधानान्तराङ्गत्वस्याप्रतिक्षेप्यतया सन्निधिना तन्मात्राङ्गत्वालाभात्, अतो विरोधाभावात्समुच्चयोऽस्त्विति भावः । सन्निधिबोध्यमभिषेचनीयाङ्गत्वं पवित्रादिसकलप्रधानाङ्गत्वं बोधयता प्रकरणेनैव बोधितमिति सन्निधिबोध्यस्य समुच्चयस्याभावान्न समुच्चयः संभवति । अथोच्येत सन्निधिबलादभिषेचनीयार्थत्वेन किंचिदनुष्ठानं प्रकरणबलात्सकलराजसूयार्थत्वेनान्यदित्यनुष्ठानसमुच्चयः संभवतीति, तत्राह—**अभिषेचनीयस्यापीति ।** अभिषेचनीयार्थं यत्राभिषेचनीयमाहेन्द्रस्तोत्रकाले उपाख्यानाद्यनुष्ठेयं तत्रैव सकलराजसूयार्थमप्यनुष्ठेयम्, अभिषेचनीयानन्तरमाम्नातस्यापि साम्राज्याभिषेकात् प्राचीनस्योपाख्यानादेर्माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इति साम्राज्याभिषेकापकर्षविधिप्रयुक्तस्य तदन्तापकर्षन्यायसिद्धस्यापकर्षस्य पक्षद्वयेऽप्यविशेषात् । तथाच देशकालकर्त्रैक्यादिदमनुष्ठानमभिषेचनीयार्थमेव, नतु सकलराजसूयार्थमिति विशेषग्रहणाभावादभिषेचनीयार्थमेवानुष्ठानं सकलराजसूयार्थमपि भवेत् । अतोऽभिषेचनीयमात्रार्थं पृथगनुष्ठानाऽलाभादनुष्ठानभेदेनापि समुच्चयोपपादनं न संभवतीति

## भामती।

**भावे यत्प्रधानस्य पठ्यते। अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता' इति** न्यायाद्राजसूयाङ्गता शौनःशेपोपाख्यानादीनाम्। अभिषेचनीयस्य तु स्ववाक्योपात्तपदार्थनिराकाङ्क्षस्य संनिधिपाठेनाकाङ्क्षोत्थापनीया यावत्, तावत्सिद्धाकाङ्क्षेण राजसूयेनैकवाक्यता कल्प्यते। यावच्चाभिषेचनीयाकाङ्क्षया तदेकवाक्यता कल्प्यते, तावत्कॢप्तया राजसूयैकवाक्यतया तदुपकारकतया सामर्थ्यलक्षणं लिङ्गं यावच्चाभिषेचनीयैकवाक्यतया लिङ्गं कल्प्यते तावत्कॢप्तलिङ्गं विनियोक्त्रीं श्रुतिं कल्पयति यावद्वाक्यकल्पितेन लिङ्गेन श्रुतिरितरत्र कल्प्यते तावत्कॢप्तया श्रुत्या विनियोगे सति प्रकरणपाठोपपत्तौ संनिधानपरिकल्पितमन्तरा विलीयते; प्रमाणाभावेऽप्रतिभत्वात्, प्रकरणिनश्च राजसूयस्य सर्वदा बुद्धिसांनिध्येन तत्संनिधेरकल्पनीयत्वात्। तस्मात्प्रकरणविरोधे क्रमस्य बाध एव। नच विकल्पो दुर्बलत्वादिति सिद्धम्॥

**क्रमसमाख्ययोर्विरोधोदाहरणम्**—पौरोडाशिक इति समाख्याते काण्डे सान्नाय्यक्रमे च "शुन्धध्वं दैव्याय कर्मणे" इति शुन्धनार्थो मन्त्रः समाम्नातः, तत्र संदिह्यते—किं समाख्यानस्य बलीयस्त्वात्पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः, आहो सान्नाय्यपात्राणां शुन्धने, क्रमो बलीयानिति। किंतावत्प्राप्तम्? समाख्यानं बलीय इति। पौरोडाशिकशब्देन हि पुरोडाशसंबन्धीनीत्युच्यन्ते, तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकम्। ततश्च यावत्क्रमेण प्रकरणाद्यनुमानपरम्परया संबन्धः प्रतिपादनीयः तावत्समाख्यया श्रुत्यैव साक्षादेव स प्रतिपादित इति अर्थविप्रकर्षेण क्रमात्समाख्यैव बलीयसीति पुरोडाशपात्रशुन्धने मन्त्रः प्रयोक्तव्यः न सान्नाय्यपात्रशुन्धन इति प्राप्तम्। एवं प्राप्तेऽभिधीयते—समाख्यानात्क्रमो बलवानर्थविप्रकर्षादिति। **तथाहि—समाख्या न तावत्संबन्धस्य वाचिका, किंतु पौरोडाश-**

## वेदान्तकल्पतरुः।

नचैवं चिन्तावैयर्थ्यम्; अभिषेचनीयार्थत्वेनानुष्ठितस्य पवित्राद्यवयवान्तरानुपकारकत्वादवयविराजसूयार्थस्य तदीयसर्वावयवार्थत्वोपपत्तेस्तत्सिद्ध्यै राजसूयाङ्गत्वस्याप्युपाख्यानादेश्चिन्तनीयत्वादिति। **पवित्रः** सोमयागविशेषः। **क्षत्रस्य धृति**रिष्टिः। **प्रधानस्य कथम्भावे** कथं भावना निष्पद्यत इत्यपेक्षायामितिकर्तव्यताकाङ्क्षायामित्यर्थः। एतस्यामवस्थायामनिर्ज्ञातफलं यदेतत्कर्म पठ्यते तस्य प्रकरणिनं प्रत्यङ्गता भवति, निर्ज्ञातफलस्य गोदोहनादेर्वाङ्गता, तस्य फलवत्त्वेनाकाङ्क्षानुदयादित्यर्थः। प्रधानस्याकाङ्क्षायामनुवर्तमानायामाम्नातस्यासंबद्धैः पदैर्व्यवधानाभावाद्राजसूयाङ्गत्वमुक्त्वाऽभिषेचनीयं प्रति संनिधेर्दुर्बलत्वादनङ्गत्वमाह—**अभिषेचनीयस्य त्विति**। निराकाङ्क्षस्येति प्रकरणानुत्थाने हेतुः। **ननु** यथाऽभिषेचनीयस्य सन्निधिवशात्प्रकरणकल्पना, एवं राजसूयस्यापि प्रकरणात्संनिधिः कल्प्य इति तुल्यत्वमुभयोरित्याशङ्क्याह—**प्रकरणिनश्चेति**। सर्वव्यापकत्वाद्राजसूयस्याभिषेचनीयस्यापि तदात्मकत्वात्संनिधिसिद्धिरित्यर्थः।

पौरोडाशिककाण्डे आग्नेयादीनां कर्मणां क्रमे मन्त्राः श्रुताः तत्राऽमावस्यिकसान्नाय्यक्रमे शुन्धध्वमिति मन्त्रः समाम्नात इत्यर्थः। यदुक्तं समाख्याश्रुतिः साक्षात्पुरोडाशपात्रमन्त्रसंबन्धबोधनीति, तत्राह—**समाख्या न तावदिति**। यौगि-

## कल्पतरुपरिमलः।

कदाचिदभिषेचनीयार्थं कदाचित्सकलराजसूयार्थमिति विकल्पेनैवानुष्ठानमप्युपपादनीयमिति भावः। **नचैवं चिन्तावैयर्थ्यमिति**। एवं हि सति न कश्चिदुपाख्यानाद्यनुष्ठाने विशेषः। नच तदननुष्ठानेऽभिषेचनीयमात्रवैकल्यं पवित्रादिसकलवैकल्यं वेत्यतो विशेषः; पक्षद्वयेऽपि परमाऽपूर्वाऽनुत्पत्तिदोषस्यैकरूपत्वात्। तस्मादेषा चिन्ता व्यर्थेति न शङ्कनीयमित्यर्थः। **तत्सिद्धय इति**। तदीयसर्वावयवार्थत्वसिद्धय इत्यर्थः। तत्सिद्धौ राजसूयान्तर्गतसकलेष्टिपशुसोमविकृतिष्वतिदेशेन नित्योपाख्यानादिप्राप्तिः, पूर्वपक्षे त्वभिषेचनीयविकृतावेव नित्या तत्प्राप्तिः अन्यविकृतिषु वैकल्पिकीति फलभेद इति भावः। **क्षत्रस्य धृतिरिष्टिरिति**। "अग्निष्टोममन्तत आहरति अग्निः सर्वा देवता देवतास्वेव प्रतितिष्ठती"ति राजसूयप्रकरणान्ते श्रवणात् क्षत्रस्य धृतिः सोमयागविशेष इत्यवगम्यते। "क्षत्राणां धृतिस्त्रिष्टोमोऽग्निष्टोमः पञ्चापवर्गः। तेन अन्ततो यजेत संतिष्ठते राजसूय" इत्यापस्तम्बवचनादपि तथाऽवसीयते। इष्टिरिति त्वाचार्यैः शाखान्तरं कल्पसूत्रान्तरं वा दृष्ट्वोक्तम्। **प्रधानस्याकाङ्क्षायामनुवर्तमानायामिति**। राजसूयस्याकाङ्क्षा पवित्रादारभ्य प्राक्सिद्धाऽनुवर्तते, अभिषेचनीयसन्निधिना तु तदानीमुत्थापनीया। अतः सह प्रस्थितयो राजसूयाकाङ्क्षाभिषेचनीयसन्निधानयोराद्या शीघ्रं विनियोगफलं गृह्णीयादिति भावः॥

**स्यादेतत्**—क्रमप्रकरणविरोधोदाहरणमिदमयुक्तम्; उपाख्यानविदेवनादीनामभिषेचनीयमध्यगतत्वेन तदङ्गत्वस्यैवोचितत्वात्। **ननु**—अनुष्ठानमेव तेषामभिषेचनीयमध्यगतमाम्नानं त्वभिषेचनीयानन्तरम्। एवमनन्तरमाम्नानेऽपि तेभ्यः पश्चादाम्नातस्याभिषेकस्य माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इत्यभिषेचनीयाङ्गमाहेन्द्रस्तोत्रकालेऽपकृष्टतया तदन्तापकर्षन्यायेन

## भामती ।

विशिष्टं काण्डमाह । तद्विशिष्टत्वान्यथानुपपत्त्या तु संबन्धः काण्डस्यानुमीयते, नतु साक्षान्मन्त्रभेदस्य । तद्द्वारेण च तन्मध्यपातिनो मन्त्रभेदस्यापि तदनुमानम् । नचासौ संबन्धोऽपि श्रुत्यैव शेषशेषिभावः प्रतीयते, अपितु संबन्धमात्रम् । तस्माच्छ्रुतिसादृश्यमस्य दूरापेतमिति क्रमेण नास्य स्पर्धोचिता । तत्रापि च सामान्यतो दर्शपूर्णमासप्रकरणापादितैदमर्थ्यस्य शौनःशेपोपाख्यानादिवच्चारादुपकारकतया प्रकृतमात्रसंबन्धानुपपत्तिः; मन्त्रस्य प्रयोगसमवेतार्थस्मारणेन समवायिकाङ्क्षत्वात् । तथाच यं कंचित्प्रकृतप्रयोगगतमर्थं प्रकाशयतोऽस्य प्रकरणाङ्गत्वमविरुद्धमिति विशेषापेक्षायां

## वेदान्तकल्पतरुः ।

कशब्देन हि विशिष्टं द्रव्यमुच्यते, न संबन्धः; तद्वाचकत्वे हि संबन्धिनौ संबन्धश्चेति त्रयो वाच्याः प्रसज्येरन् । अतः संबन्ध आनुमानिक इत्यर्थः । आनुमानिकोऽपि संबधो न विशेषस्य साक्षात्सिध्यति, काण्डमात्रविषयत्वादित्याह—**नतु साक्षादिति । अपिच** भवतु समाख्या श्रुतिः, सा श्रुत्या च संबन्धं वक्तु, नासौ विशेषरूपो विनियोगः । स चेह विचार्यते, अतः संबन्धमात्राभिधानेऽपि नापेक्षितसिद्धिरित्याह—**न चासाविति । ननु** यथा शौनःशेफोपाख्यानादिकमभिषेचनीयसन्निधिबाधेन प्रकरणात्समस्तराजसूयाङ्गं निर्णीतमेवमत्रापि सान्नाय्यक्रमं बाधित्वा समस्तदर्शपूर्णमासार्थत्वमेव मन्त्रस्यास्तु, वृथा क्रमसमाख्ययोः प्राबल्यदौर्बल्यचिन्तनमतआह—**तत्रापि चेति** । सामान्यतो दर्शपूर्णमासप्रकरणेनापादितमैदमर्थ्यं यस्य स मन्त्रस्तथोक्तस्य यथा आरादुपकारतया शौनःशेफोपाख्यानादेः प्रकृतमात्रार्थत्वमेवं प्रकृतमात्रसंबन्धानुपपत्तिरित्यर्थः । मन्त्रस्य दृष्टार्थत्वेन संनिपत्योपकारकत्वमाह—**मन्त्रस्येति । ननु** दृष्टार्थत्वेन स्थानादर्थविशेषसंबन्धे प्रकरणं बाधितं स्यादत आह—**यं कंचिदिति** । पदार्थशक्त्यपेक्षत्वात्प्रकरणस्य मन्त्रस्य च क्वचिदेव प्रका-

## कल्पतरुपरिमलः ।

तेषामपि तत्रापकर्षात्तन्मध्येऽनुष्ठानमात्रम् । ततश्च तेषां महाप्रकरणेन राजसूयसंयोगादभिषेचनीयमध्येऽनुष्ठानमात्रेण न तेष्वभिषेचनीयाङ्गत्वापादकं तदवान्तरप्रकरणमुन्मिषति; असंयुक्तं प्रकरणादिति न्यायात् । एवमेव च चतुर्थपञ्चमयोर्निर्णीतमिति—**चेत्**, स्यादेतदेवं यद्यभिषेचनीयमध्ये तेषामाम्नानं न स्यात् । अस्ति तु "तद्विशोभयं राजाऽभूदि"ति । पञ्चाक्षान् प्रयच्छतीति शौनःशेफमाख्यायते इति च । एतदनन्तरमपि हि "मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्य"तीति प्रागुपक्रान्ताभिषेचनीयाङ्गेष्टिशेषानुवर्तनम् । "अपांनप्त्रे स्वाहोर्जोनप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोती"त्यभिषेचनीयाङ्गहोमविशेषविधानं च दृश्यते । अतोभिषेचनीयाङ्गसदृशाद्विदेवनादेस्तदवान्तरप्रकरणसद्भावः स्पष्ट एव । यदि शाखान्तरे क्वचित्तेषामभिषेचनीयसमाप्त्यनन्तरमाम्नानं स्यात्, तथाप्यत्रावान्तरप्रकरणेन सिद्धं तदङ्गत्वम्; अन्यत्राप्यप्रत्याख्येयं महाप्रकरणादवान्तरप्रकरणस्य बलीयस्त्वादिति—**चेत्, उच्यते;**

नोदाहरणमादरणीयं न्यायमात्रनिष्ठमधिकरणम् । यत्र क्रमस्यैव प्रकरणेन विरोधः नावान्तरप्रकरणसद्भावशङ्कास्ति, तदत्र मुख्यमुदाहरणं भविष्यति कृत्वाचिन्तया त्विदमुदाहरणमिति न कश्चिद्विरोधः ।

**संबन्ध आनुमानिक इति** । पदार्थान्तररूपेण वैशिष्ट्येन संबन्धोऽनुमेय इत्यर्थः । **ननु** विशिष्टवाचकत्वेऽपि वैशिष्ट्यं तत्प्रतियोग्यनुयोगिनौ चेति त्रयो वाच्याः प्रसज्येरन्निति तुल्यो दोषः । प्रतियोगिविशेषविशिष्टं द्रव्यमुच्यत इति विशिष्टरूपेण वाच्यैकसमर्थनं तत्संबद्धद्रव्यमुच्यत इति संबन्धवाचकत्वपक्षेऽपि संबन्धसामान्यमेव श्रुत्या लभ्यते नतु विनियोगरूपः संबन्धविशेष इत्याह—**अपिच भवत्विति । सन्निधिमुपकल्पयतीति । ननु**—सन्निध्यभावेऽपि—'यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्'॥ इति न्यायात् संबन्धो घटते । अशक्यं चान्यत्राम्नातानामन्यसन्निध्याम्नानकल्पनम् । तस्मात्समाख्यया सन्निधिकल्पनं तावदयुक्तम्, तथा सन्निधिनाऽऽकाङ्क्षाकल्पनमपि न युक्तम्; सन्निध्यभावेऽपि पुरोडाशपात्रशुन्धनस्यानुष्ठानाय स्मृतिजनकाकाङ्क्षासत्त्वात्, तथाऽऽकाङ्क्षयैकवाक्यत्वकल्पनमपि न युक्तम्; शुन्धनविधेः शुन्धनप्रकाशकमन्त्रविनियोजकविध्येकवाक्यत्वाद्व्रीह्यादिरीत्या विनियोज्यपदार्थरूपेण मन्त्रेणैकवाक्यत्वानपेक्षणात्, वाक्येन सामर्थ्यकल्पनमपि न युक्तम्; शुन्धनप्रकाशनसामर्थ्यस्य स्फुटतरत्वात्, स्फुटतरतत्प्रकाशनसामर्थ्यलब्ध एव हि शुन्धनसंबन्धः समाख्यया पुरोडाशपात्रशुन्धने बोधनीयः स्थानेन सान्नाय्यपात्रशुन्धने वेति संदेहो दर्शित इति—**चेत्, उच्यते;** संबन्धेनाम्नानसन्निधेः कल्पनमिह न विवक्षितं, किंत्वनुष्ठानसन्निधेः । स तु घटतएव । अन्यत्राम्नातस्याप्यन्यत्रानुष्ठानसन्निधिना च सन्निध्यनुष्ठीयमानमन्त्रविशेषाकाङ्क्षाकल्पनं विवक्षितं, तत्तु प्राङ् न सिद्धम्; अनुष्ठेयार्थस्मृतिजनकमात्रापेक्षाऽपि हि प्राक्सिद्धा, तदाकाङ्क्षया चैकवाक्यत्वं पुरोडाशपात्रशुन्धनविधेर्मन्त्रसंबन्धमात्ररूपं विवक्षितं, तत्तु प्रकाश्यप्रकाशकभावरूपमुपपद्यते, तत्प्रकाशकत्वनिर्वाहार्थं च शुन्धनसामान्यप्रकाशकस्य मन्त्रस्य पुरोडाशपात्रशुन्धनप्रकाशनसामर्थ्यं कल्पनीयमिति तत्कल्पनं विवक्षितम् । अतः सर्वमेतदुपपन्नम् ।

## भामती ।

साम्नाय्यक्रमः साम्नाय्यं प्रति प्रकरणाद्यनुमानद्वारेण विनियोगं कल्पयितुमुत्सहते न तु समाख्यानम्; तस्य दुर्बलत्वात् । तथाहि—समाख्या संबन्धनिबन्धना सती तत्सिद्ध्यर्थं संनिधिमुपकल्पयति यावत् तावद्वैदिकेन प्रत्यक्षदृष्टेन संनिधानेनाकाङ्क्षा कल्प्यते । यावच्च क्लृप्तेन संनिधानेनाकाङ्क्षा कल्प्यते तावदितरत्र क्लृप्तयाकाङ्क्षयैकवाक्यता । यावच्च क्लृप्तयाऽऽकाङ्क्षयैकवाक्यता तावदितरत्रैकवाक्यतया क्लृप्तयोपकारसामर्थ्यम् । यावच्चात्रैकवाक्यतयोपकारसामर्थ्यं तावदितरत्र लिङ्गेन विनियोजिका श्रुतिः । यावदत्र लिङ्गेन विनियोजिका श्रुतिस्तावदितरत्र क्लृप्तया श्रुत्या विनियोग इति तावतैव प्रकरणपाठोपपत्तेः सर्वं समाख्यानकल्पितं विच्छिन्नमूलत्वाल्लूयमानसस्यमिव निर्बीजं भवति । पुरोडाशाभिधायकमन्त्रबाहुल्यात्काण्डस्य पौरोडाशिकसमाख्येति मन्तव्यम् । **एकद्वित्रिचतुष्पञ्चवस्त्वन्तरयकारितम् । श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते** ॥ इत्यर्थविप्रकर्ष उक्तः । तत्रापि च **बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा । मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया** ॥ इति विशेष उक्तो वृद्धैः । तत् वयं विस्तराद्बिभ्यतोऽपि प्रथमतन्त्रानभिज्ञानुकम्पया निम्ना विस्तरे पतिताः स इत्युपरम्यते ॥

तस्माद्यथानुज्ञापनानुज्ञयोः प्रज्ञातक्रमयोरुपहूत उपह्वयस्वेत्येवं मन्त्रावाम्नातौ देशसामान्यात्तथैवाङ्गतया प्राप्नुतः । उपहूत इति लिङ्गतोऽनुज्ञानमन्त्रो नानुज्ञापने उपह्वयस्वेति च लिङ्गतोऽनुज्ञापने च मन्त्रो नानुज्ञायाम् । तदिह लिङ्गेन क्रमं बाधित्वा विपरीतं शेषत्वमापाद्यते । यावद्धि स्थानेन प्रकरणमुत्पाद्यैकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोग इति अकल्पितलिङ्गश्रुतेः क्रमस्य बाधः । तद्वदिहापि विनियोगे प्रत्येकान्तरितेन लिङ्गेन चतुरन्तरितस्य विद्याक्रमस्य बाध इति । यद्यपि प्रथमतन्त्र एवायमर्थ उपपादितः; तथापि विरोधे तदुपपादनमिह

## वेदान्तकल्पतरुः ।

शनशक्तौ तन्मात्रोपकारकत्वेनापि प्रकरणस्वीकारो भवतीत्यर्थः । तदेवं प्रकरणापेक्षितविशेषसंबन्धः स्थानेन वा बोधनीयः समाख्यया वेति संदेहे निर्णयमाह—**साम्नाय्यक्रम इति** । असंनिहितयोः संबन्धायोगात् संबन्धसिद्ध्यर्थं संनिधिमुपकल्पयतीत्यर्थः । **वैदिकेनेति** । पौरोडाशिकसमाख्या हि पाठकैः कृता, साम्नाय्यपात्रमन्त्रयोस्तु क्रमो वेदेनैव कृत इत्यर्थः । आकाङ्क्षा कल्प्यते साम्नाय्यपात्रमन्त्रयोरित्यर्थः । **यावच्च क्लृप्तेनेति** । पुरोडाशपात्रमन्त्रयोरित्यर्थः । एवमुत्तरत्र योज्यम् । अधिकरणपञ्चकार्थं वृद्धोक्त्या संकलयति—**एकेति** । लिङ्गस्यैकया श्रुत्या श्रुत्यर्थविनियोगं प्रति **अन्तरयो** व्यवधानं प्रतीयते । **वाक्यस्य द्वाभ्यां** लिङ्गश्रुतिभ्यां, **प्रकरणस्य** वाक्यलिङ्गश्रुतिभिः **तिसृभिः**, स्थानस्य प्रकरणवाक्यलिङ्गश्रुतिभिश्च**तसृभिः**, समाख्यायाः स्थानप्रकरणवाक्यलिङ्गश्रुतिभिः **पञ्चभिः** श्रुत्यर्थप्रत्यन्तरयः प्रतीयते इत्यर्थः । सौकर्यार्थं बाध्यबाधकभावमपि विभजते—**बाधिकैवेति** । मध्यमानां तु लिङ्गादीनामुत्तरापेक्षया बाधकत्वं पूर्वापेक्षया बाध्यत्वम् । **तद्यथा**—लिङ्गं वाक्यस्य बाधकं तदेव श्रुतेर्बाध्यमित्यादीति । **निम्नाः** परवशीकृताः । एवं श्रुत्यादिषु बलाबले निरूप्य प्रस्तुते लिङ्गात्संनिधिबाधे उपयुक्तमुदाहरणमाह—**तस्मादिति** । यः सोमं पिबति स इतरान् प्रत्यनुज्ञां याचते ते चानुज्ञां ददति । तत्रा**नुज्ञापन**मनुज्ञायाचनम्, **अनुज्ञे**त्यनुज्ञानदानम् । **उपह्वयस्व** अनुजानीहीत्यर्थः । **उपहूतः** अनुज्ञातोऽसीत्यर्थः । **देशसामान्या**त्पाठक्रमादित्यर्थः । **लिङ्गेनेति** । आदौ ह्यनुज्ञापनं पश्चादनुज्ञेति लोकसिद्धम् । तत्रोपहूत इति मन्त्रो यद्यपि प्रथमपठितत्वादनुज्ञापने प्राप्तः; तथापि लिङ्गादनुज्ञायां शेषत्वेन प्रतिपाद्यते । उपह्वयस्वेति च मन्त्रो यद्यपि चरमपठितत्वादनुज्ञायां प्राप्तः; तथाप्यनुज्ञायाचनप्रकाशनसामर्थ्यात्तच्छेषत्वेन प्रतिपाद्यते इत्यर्थः । प्रथमतन्त्रोक्तस्मारणस्य प्रयोजनमाशङ्कान्तरनिवृत्तिरित्याह—**तथापीत्यादिना** । विनियुक्तविनियोगो न वस्तुनि विरुध्यते; दध्ना जुहोति दध्नेन्द्रियकामस्य जुहोतीत्येकस्य दध्न उभयार्थत्वदर्शनात्, अथ प्रतीतौ विरोधः अन्यशेषस्यान्यशेषत्वविरोधाद्देवदत्तीयं तद्यज्ञदत्तशेष इतिवत्, तर्ह्यधिष्ठानलक्षणया सोऽपि विरोधः शम-

## कल्पतरुपरिमलः ।

अर्थेषु प्रतीतिविरोधो न वस्तुविरोध इति टीकायां वस्तुविरोधाभावे विवक्षितं हेतुमाह—**दध्न उभयार्थत्वदर्शनादिति** । प्रतीतिविरोधसद्भावे विवक्षितं हेतुमाह—**अन्यशेषस्येति । ननु** अन्यशेषस्यान्यशेषत्वरूपं वस्तुतो न विरुद्धमित्यनुपदमेवोक्तं, कथं तद्विरोधो हेतूक्रियते ? अथान्यशेषत्वेनानूदितस्यान्यशेषत्वेनानुवादादन्यस्यैव शेष इत्ययमर्थो लभ्यते; व्यावर्तकस्वभावानां विशेषणानामन्ययोगव्यवच्छेदस्वारस्यात्, तथाचानूद्यमानविधीयमानार्थयोर्विरुद्धयोः प्रत्यायनमेकेन वाक्येन न संभवतीत्येवंरूपः प्रतीतिविरोधो विवक्षितः । अनेनैवाभिप्रायेण दृष्टान्त उक्तः, यद् देवदत्तीयं तद्यज्ञदत्तशेष इतिवदिति । **यदिति** । अत्र हि यद्देवदत्तीयमित्यनेन देवदत्तस्यैव स्वमुच्यते, न तु यज्ञदत्तस्यापि साधारणम्; तथा सति देवदत्तस्य स्वसंबन्धे यज्ञदत्तसापेक्षतया सामर्थ्याभावेन तद्धितानुत्पत्तिप्रसङ्गात् । **तर्ह्यधिष्ठानलक्षणयेति** । यत्रानुवादेऽन्यशेषत्ववाचकः शब्दोऽस्ति "पुरोडाशकपालेन तुषानुपवपति" "परिधौ पशुं नियुञ्जीत"त्यादौ तद्विषयेऽयम-

## भामती।

त्वविरोधः। नहि लिङ्गेनाभिचारिककर्मसंबन्धः विद्यासंबन्धेन क्रमकृतेन विरुध्यते। नच विनियुक्तविनियोगलक्षणोऽत्र विरोधः; बृहस्पतिसवेऽपि तत्प्रसङ्गात्। अथैष प्रतीतिविरोधो नच वस्तुविरोधः स विद्यायां विनियोगेऽपि तुल्यः। तस्मादविरोधाद्वेधादिमन्त्रस्योपासनाङ्गत्वमित्यस्त्यभ्यधिकाशङ्का। **तत्रोच्यते—नहि लिङ्गविरोधेन क्रमबाधोऽभिधीयते। किंतु लिङ्गपरिच्छिन्ने न क्रमः कल्पनाक्षमः**। प्रकरणपाठोपपत्त्या हि श्रुतिलिङ्गवाक्यप्रकरणैरविनियुक्तः क्रमेण प्रकरणवाक्यलिङ्गश्रुतिकल्पनाप्रणालिकया विनियुज्यते; तदविनियुक्तस्य प्रकरणपाठानर्थक्यप्रसङ्गात्। उपपादिते तु श्रुत्यादिभिः प्रकरणपाठे क्षीणत्वादर्थापत्तेः क्रमो न स्वोचितां प्रमामुत्पादयितुमर्हति प्रमित्साभावादिति। बृहस्पतिसवस्य तु क्त्वाश्रुतिरेव धातुसंबन्धाधिकारात्समानकर्तृकतायां विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनि-

## वेदान्तकल्पतरुः।

युज्यत इति चेद्विद्यायां मन्त्रस्य विनियोगेऽपि तत्तुल्यमित्याह—**स विद्यायामिति**। नचैवमैन्द्र्या अपीन्द्रे गार्हपत्ये च विनियोगशङ्का; एकस्मिन्प्रयोगे मन्त्रावृत्तिप्रसङ्गादिति। बृहस्पतिसवोदाहरणं तु कृत्वा चिन्तयेत्युक्तमेव। अस्य पुनः स्मारणस्याभ्यधिकाशङ्केत्यर्थः। प्रथमतन्त्रे हि श्रुत्यादिभिर्लिङ्गादीनां बाध उक्तः, अत्र तु लिङ्गात् क्रमस्य बाधो नोच्यते, किंतु शीघ्रं लिङ्गेनान्यत्र विनियुक्ते मन्त्रे विलम्बेन क्रमस्य परिच्छेदकत्वमेव नास्तीति प्रतिपाद्यते। तत्र क्रमस्यापरिच्छेदकत्वे ज्ञाते कुतो विनियुक्तविनियोगशङ्केत्याह—**नेहेति**। श्लोकं विवृणेति—**प्रकरणेति**। यद्यपि प्रथमेऽपि काण्डे लिङ्गादीनां श्रुत्यादिभिरप्राप्तबाध एव दर्शितः; तथापि तत्र दुर्बलप्रमाणात् प्राप्तिः शङ्कितुं शक्यते। गार्हपत्यस्य इन्द्रस्य च स्वस्वप्रकाशकत्वेन मन्त्राकाङ्क्षत्वात्। इह तु विद्याया निराकाङ्क्षत्वाद् मन्त्रकर्मणां चान्यत्र विनियुक्तत्वेन रक्तपटन्यायाभावाच्च प्राप्तिरेव नास्तीति वैषम्यम्। भाष्ये बृहस्पतिसवस्य तुल्यबलप्रमाणद्वयादुभयार्थत्वे स्थिते प्रवर्ग्यस्यापि बृहस्पतिसवेन तुल्यत्वाशङ्कायां सन्निधेर्दुर्बलत्वादतुल्यत्वं प्रतिपादनीयम्। तथाच सति अपिचशब्दानुपपत्तिरित्याशङ्क्य नाभ्यु-

## कल्पतरुपरिमलः।

धिष्ठानलक्षणोक्तिः। तत्र हि पुरोडाशशेषत्वादिरूपविशेषणांशं विहाय वस्तुतस्तदधिष्ठाने कपालादिविशेष्यमात्रे लक्षणा पुरोडाशकपालादिशब्दस्याभ्युपेता, प्रकृतदधिबृहस्पतिसवविषया न भवति त्वियमधिष्ठानलक्षणोक्तिः; तयोरन्यशेषत्वसमर्पकशब्दाभावात्। **तत्तुल्यमिति। ननु**—अधिष्ठानलक्षणया विरोधसमाधानं विद्यायां मन्त्रस्य विनियोगेऽपि तुल्यमिति न वक्तव्यम्; सन्निधिकल्पनीये विद्याविनियोगवाक्ये वेधादिमन्त्रस्य दधिबृहस्पतिसववत्स्वरूपेण ग्रहणस्योपपन्नतयाऽन्यशेषत्वेनोपादानाभावात्, अतो यद्यप्यथैष प्रतीतिविरोधो न वस्तुविरोध इति शङ्कानन्तरं स विद्याविनियोगेऽपि तुल्य इति टीकाग्रन्थस्य विरोधतौल्यार्थकत्वं परिहृत्य विरोधसमाधानार्थकत्वमुपपादयितुं शङ्काग्रन्थस्यैव कस्मिंश्चिद्विरोधसमाधाने तात्पर्यमुक्त्वा विद्याविनियोगे तत्तौल्यवचनस्यापि तत्समाधानतौल्यपरत्वं वक्तव्यं तदाप्येवं वक्तुमुचितम्। दधिबृहस्पतिसवयोरनूद्यमानयोरन्यशेषत्वप्रत्यायकविशेषणाभावान्नास्ति विरोध इति चेद्विद्यायां मन्त्रस्य विनियोगेऽपि तुल्यमिति। तस्मादधिष्ठानलक्षणया विरोधसमाधानतौल्यवचनमयुक्तमिति—**चेत्, उच्यते**; अन्यशेषत्वप्रत्यायकविशेषणसत्त्वेऽप्यधिष्ठानलक्षणया विरोधसमाधानेन विनियुक्तविनियोगः कर्तुं शक्यते, इह तदभावे किमु वक्तव्यमिति कैमुतिकन्यायोद्घाटनार्थमनया भङ्ग्या विरोधसमाधानतौल्यमुक्तमिति न काचिदनुपपत्तिः। **एकस्मिन् प्रयोगे मन्त्रावृत्तिप्रसङ्गादिति**। यद्यप्ययं न दोषः; ज्योतिष्टोमप्रकरणाम्नातस्य "अग्न आयाहि वीतये" इति मन्त्रस्य यजुर्वेदे "आग्नेय्याग्नीध्रमुपतिष्ठत" इत्याग्नीध्रोपस्थानेऽपि विनियोगदर्शनात्, तत्र विनियोजकप्रमाणद्वयानुसारेण यथैकस्मिन्नपि ज्योतिष्टोमप्रयोगे मन्त्रावृत्तिः, तथैन्द्र्यादावपि तथा स्यादिति चेत्, एवं तर्हि श्रुतिलिङ्गाधिकरणमप्याक्षिप्यैतदधिकरणप्रवृत्तिरित्यस्तु। एवमेव खल्वाचार्यैरुक्तं पूर्वपक्षे। **ननु** बृहस्पतिसवन्यायेन विनियुक्तविनियोगोपपादनं न युक्तम्, अङ्गबृहस्पतिसवस्य स्वतन्त्रबृहस्पतिसवादन्यत्वस्य मीमांसकैरुक्तत्वादित्याशङ्क्याह—**बृहस्पतिसवोदाहरणं त्विति**। अत्र वक्तव्यं प्रागेवोक्तम्। अस्त्यधिकाशङ्केति टीकाया अर्थमाह—**अस्य पुनः स्मारणस्येति। ननु** टीकायां नेहेत्यादिश्लोकतद्विवरणाभ्यामधिकाशङ्कापरिहारो यः कृतः, सोऽपि श्रुतिलिङ्गाद्यधिकरणस्थ एव। **तथा हि**—द्विविधो बाधः प्राप्तबाधोऽप्राप्तबाधश्चेति। तत्र दशमे वैकृतविधिवाक्यशेषेण चोदकेन कृष्णलादिषु प्राप्तस्यैवावहननादेर्द्वारलोपादिना बाधो निरूपितः। तृतीये तु श्रुत्यादिभिर्लिङ्गादीनां स्वस्वप्रमेयपरिच्छेदप्राप्तिरहितानामेव नैराकाङ्क्ष्येण प्राप्तिनिरोधलक्षणोऽप्राप्तबाधो निरूपित इति पूर्वमीमांसकैः कृतो विभागस्तदनुसारेण टीकायामपि बलाबलाधिकरणानुक्रमणे ऐन्द्रीमन्त्रादीनां प्रथमप्रवृत्तश्रुत्यादिभिर्निराकाङ्क्षीकरणेनाप्राप्तबाध एव वर्णितः। तथाचेयमधिकाशङ्कापरिहारोक्तिरयुक्तेत्याशङ्कते—**यद्यपीति**। श्रुत्यादिभिर्लिङ्गादिबाधः पूर्वमन्त्रनिरूपितोऽप्राप्तबाधः सन्नपि प्रकाश्यस्येन्द्रादेः प्रकाशकमन्त्राद्याकाङ्क्षावशात्प्राप्तबाधकशङ्कामात्रस्यापि विषयो भवति, इह तु तदपि नास्ति; विद्यायाः मन्त्राकाङ्क्षाविरहादिति भेदप्रदर्शनेन पौनरुक्त्यं परिहरति—**तथापीति। ननु**—इन्द्रस्य

विद्याभिः सहैकार्थ्यं किंचिदस्ति । वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरम्—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । अपिचैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्बलेन प्रमाणेनान्यत्रापि विनियोगमर्हति । अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यान्न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता संभवति; बलवदबलवत्त्वविशेषादेव । तस्मादेवंजातीयकानां मन्त्राणां कर्मणां वा न संनिधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम् । अरण्यानुवचनादिधर्मसामान्यात्तु संनिधिपाठ इति संतोष्टव्यम् ॥ २५ ॥

इति चतुर्दशं वेधाद्यधिकरणम् ॥

## भामती ।

योजयन्ती न शक्या श्रुत्यन्तरेण निरोद्धुं स्वप्रमामिति वैषम्यम् । तदिदमुक्तम्—**वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरमिति । अपि चैकोऽयं प्रवर्ग्य इति ।** तुल्यबलतया बृहस्पतिसवस्य तुल्यताशङ्कापाकरणद्वारेण समुच्चयो न तु पृथगुक्तितया परस्परापेक्षत्वादिति । संनिधिपाठमुपपादयति—**अरण्यानुवचनादीति** ॥ २५ ॥ **इति चतुर्दशं वेधाद्यधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

च्चयार्थः सः, किंत्वेतदुपपत्तिसाहित्यं पूर्वोक्तन्यायस्य वदतीत्याह—**तुल्यबलतयेति** । प्रमाणयोस्तुल्यबलतया बृहस्पतिसवेन प्रवर्ग्यस्य या तुल्यताशङ्का तदपाकरणद्वारेणेत्यर्थः । बृहस्पतिसवस्येति षष्ठी चन्द्रस्य तुल्यं मुखमितिवत्तुल्यार्थयोगनिबन्धना । **अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः । सर्वभावगता शक्तिर्लिङ्गमित्यभिधीयते ॥ संहत्यार्थं ब्रुवन् वृन्दं पदानां वाक्यमुच्यते । प्रधानवाक्यमङ्गोक्त्याकाङ्क्षं प्रकरणं मतम् ॥ स्थानं समानदेशत्वं समाख्या यौगिको रवः । इति श्रुत्यादिलक्ष्योक्तं मीमांसाबुद्धिपारगैः** ॥ २५ ॥

अभिचारकर्मदेवतामभिचारकर्ता प्रार्थयते हे देव मद्रिपोः सर्वमङ्गं **प्रविध्य** दारय हृदयं च दारय **धमनीः** सिराः **प्रवृञ्ज** विभज त्रोटय शिरश्च अभितो विदराय । एवं मद्रिपुस्त्रिधा विपृक्तो विश्लिष्टो भवत्वित्यर्थः । **हरि**रिन्द्रनीलस्तद्वन्नीलोऽसीतीन्द्रः संबोध्यते । **मित्र** आदित्यः । **शं** सुखम् करत् भूयादिति विद्यार्थ्याशास्ते । अग्निष्टोमो ब्रह्म स यस्मिन्नहनि क्रियते तदपि ब्रह्मातएव तदहरहर्निर्वर्त्यं कर्म **य उपयन्ति** अनुतिष्ठन्ति ते ब्रह्मणैव साधनेन ब्रह्मापर**मुपयन्ति** प्राप्नुवन्ति, ते चामृतत्वं परं ब्रह्म चाप्नुवन्ति । पुत्रस्य दीर्घायुष्ट्वसिद्धये छान्दोग्ये त्रैलोक्यं

## कल्पतरुपरिमलः ।

नास्ति प्रकाशकमन्त्राकाङ्क्षा, अग्निचयनप्रकरणे तस्य यष्टव्यत्वादिनाऽनाम्नातत्वेन प्रकाशनानपेक्षणादिति—**चेत्, सत्यम्**; नोदाहरणमादरणीयम् उदाहरणान्तरं भविष्यति "इमामगृभ्णन् रशनामृतस्ये"ति मन्त्रस्य "इत्यश्वाभिधानीमादत्त" इतीतिकारश्रुत्या तृतीयाश्रुतिसमानार्थयाऽश्वरशनाग्रहणे विनियोगे कृतेऽपि रशनाग्रहणप्रकाशनसामर्थ्यरूपाल्लिङ्गाद् गर्दभरशनाग्रहणेऽपि प्राप्तिः शङ्कितुं शक्यते; तस्याप्यश्वरशनाग्रहणवदग्निचयनेऽनुष्ठेयस्य तन्मन्त्राकाङ्क्षत्वात्तदिहोदाहरणम् । **ननु—**प्राप्तिशङ्कासद्भावतदभावाभ्यां विशेषकथने वेधाद्यधिकरणानारम्भकशङ्कैव स्थिरीकृता स्यात्, प्राप्तिमत्त्वशङ्कास्पदस्यापि लिङ्गादेः श्रुत्या बाधे पूर्वतन्त्रे निरूपिते सति तच्छङ्काऽनास्पदस्य विद्यासन्निधेर्लिङ्गादिभिर्बाधस्य कैमुतिकन्यायेन सिद्धेरिति **—चेत्, उच्यते**; शास्त्रभेदान्न पौनरुक्त्यमित्येव मुख्यः परिहारोऽत्राभिसंहितः । क्वचित्प्रौढ्या व्यवहृतमैकशास्त्र्यपक्षं यथाकथंचित्समर्थयितुमभ्युच्चयरूपेयमधिकाशङ्कापरिहारयोरुक्तिः । अधिकाशङ्कापि वस्तुतोऽत्र नास्त्येव; अविरोधे प्रबलदुर्बलयोरपि श्रुतिलिङ्गयोर्न बाध्यबाधकभाव इत्यतः श्रुत्या क्वचिद्विनियुक्तस्यापि लिङ्गेनान्यत्र विनियोगो घटत इत्येव श्रुतिलिङ्गाधिकरणे पूर्वपक्षकरणात् । ऐकशास्त्र्यपक्षे भाष्यादिष्वधिकशङ्कापरिहारावन्यावपि सूचितौ । लिङ्गादिभिरन्यत्र विनियुक्तानां मन्त्रादीनां विद्यायामपि सन्निधिना विनियोगः कल्पनीयः; अन्यथा विद्यासन्निध्याम्नानवैयर्थ्यप्रसङ्गात् । "अथातोऽग्निष्टोमेनानुयजन्तीति वाक्येनाहवनीयाधारतया चित्याग्नौ प्रकृत्यग्निष्टोमे प्राप्तेऽप्युत्तरवेद्याः प्रकरणाम्नानवैयर्थ्यपरिहारार्थं तदाधारतया प्राप्तिमङ्गीकृत्य विषमशिष्टयोरभ्युत्तरवेद्योर्विकल्पोऽप्यभ्युपगम्यते, अत्र विकल्पाप्रसक्तौ सन्निधिवैयर्थ्यं परिहर्तव्यमिति किमु वक्तव्यमित्यधिकाशङ्का । विद्यासन्निध्याम्नानम् आरण्यकत्वप्राप्त्यर्थत्वेनान्यथासिद्धम्, अन्यत्र विनियोगेन निराकाङ्क्षाणां नान्यत्र विनियोगकल्पनक्षममिति परिहारः । यजेतेत्यादिसमानपदश्रुतौ प्रकृतिप्रत्यययोरन्योन्यापेक्षासत्त्वादव्याप्तिवारणाय पदेऽन्यस्मिन्निति विशेषणम् । तथाच स्वार्थाभिधाने पदान्तरनिरपेक्षः शब्दः श्रुतिरिति लक्षणार्थः । "बर्हिर्देवसदनं दामी"त्यादिमन्त्रेषु शब्दशक्तिवत् "स्रुवेणावद्यती"त्यादिविधिषु स्रुवादीनां द्रवद्रव्यावदानशक्तिरिह लिङ्गमिति तत्साधारण्याय भावगतेत्युक्तम् । समानदेशत्वं यथासंख्येन सन्निधिना वा । सन्निधिरप्याम्नानसन्निधिरनुष्ठानसन्निधिरिति द्विविधः ॥२५॥ **त्रैलोक्यमिति ।** "अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति । दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं

( १५ अधिकरणम् ) **हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥**

अस्ति ताण्डिनां श्रुतिः—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' ( छा० ८।१३।१ ) इति । तथाऽऽथर्वणिकानाम् 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड० ३।२।८ ) इति । तथा शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । तथैव कौषीतकिनः 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' ( कौ० १।४ ) इति । तदिह क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं क्वचित्तूभयमपि हानमुपायनं च । तद्यत्रोभयं श्रूयते तत्र तावन्न किंचिद्वक्तव्यमस्ति । यत्राप्युपायनमेव श्रूयते न हानं, तत्राप्यर्थादेव हानं संनिपतति । अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात्तद्धानस्य । यत्र तु हानमेव श्रूयते नोपायनं तत्रोपायनं संनिपतेद्वा न वेति विचिकित्सायामश्रवणादसंनिपातः । विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपिचात्मकर्तृकं सुकृतदुष्कृतयोर्हानं परकर्तृकं तूपायनं तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत । तस्मादसंनिपातो हानावुपायनस्येति । अस्यां प्राप्तौ पठति हानौ त्विति । हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं संनिपतितुमर्हति; तच्छेषत्वात् । हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये । तस्मादन्यत्र केवलहान-

## भामती ।

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्** ॥२६॥ यत्र हानोपायने श्रूयेते तत्राविवादः संनिपाते, यत्राप्युपायनमात्रश्रवणं तत्रापि नान्तरीयकतया हानमाक्षिप्तमित्यस्ति संनिपातः । यत्र तु हानमात्रं सुकृतदुष्कृतयोः श्रुतं, न श्रूयते उपायनं, तत्र किमुपायनमुपादानं संनिपतेन्न वेति संशयः । अत्र पूर्वपक्षं गृह्णाति—**असंनिपात इति । स्यादेतत्**—यथा श्रूयमाणमेकत्र शाखायामुपासनाङ्गं तस्मिन्नेवोपासने शाखान्तरेऽश्रूयमाणमुपसंह्रियते । एवं शाखान्तरश्रुतमुपायनमुपसंहरिष्यत इत्यत आह—**विद्यान्तरगोचरत्वाच्चेति** । एकत्वे ह्युपासनकर्मणामन्यत्र श्रुतानामप्यन्यत्र समवायो घटते । न त्विहोपासनानामेकत्वं, सगुणनिर्गुणत्वेन भेदादित्यर्थः । **ननु** यथोपायनं श्रुतं हानमुपस्थापयत्येवं हानमपि उपायनमित्यत आह—**अपि चात्मकर्तृकमिति** । ग्रहणं हि न स्वामिनोऽपगममन्तरेण भवतीति । ग्रहणादपगमसिद्धिरवश्यंभाविनी । अपगमस्त्वसत्यप्यन्येन ग्रहणे दृष्टो यथा प्रायश्चित्तेनापगतिरेनस इति । कर्तृभेदकथनं त्वेतदुपोद्बलनार्थं न पुनरवश्यंभावस्य प्रयोजकमुपायनेनानैकान्त्यादिति । सिद्धान्तमुपक्रमते—**अस्यां प्राप्ताविति । अयमस्यार्थः**—कर्मान्तरे विहितं हि न कर्मान्तर उपसंह्रियते; प्रमाणाभावात् । यत्पुनर्न विधीयते,

## वेदान्तकल्पतरुः ।

कोशत्वेन परिकल्प्योपासनमुक्तम् । तत्रायं पितुः प्रार्थनामन्त्रः । अमुनेति पुत्रस्य त्रिर्नाम गृह्णाति । अमुना डित्थनाम्ना सह भूरितीमं लोकं प्रपद्य इत्यर्थः ॥ **इति चतुर्दशं वेधाद्यधिकरणम् ॥**[1]

**हानौ तूपायनशब्दशेषत्वात् कुशाछन्दस्तुत्युपगानवत्तदुक्तम्** ॥ २६ ॥ यथा विद्यासन्निधौ श्रुतस्यापि मन्त्रादेर्विद्यायामसामर्थ्यादनुपसंहारः, एवं हानसन्निधौ श्रुतस्याप्युपायनस्य तदन्तरेणापि हानसंभवेन हानोपपादनसामर्थ्याभावादनुपसंहार इति प्रापय्य प्रतिविधीयते । उपायनमित्यस्य व्याख्यानमुपादानमिति । **सगुणनिर्गुणत्वेनेति** । कौषीतकिशाखागतपर्यङ्कविद्या हि सगुणेति । यद्यपि सगुणविद्यायां हानसन्निधावुपायनं श्रुतम्; तथापि निर्गुणविद्यास्थं हानं तदाक्षिपति, तदन्तरेण तदनुपपत्तेरिति शङ्कते—**ननु यथेति** । कर्तृभेदो नानावश्यकत्वे प्रयोजकः; परकर्तृकहाननियतेन **स्वकर्तृको**पायनेनानेकान्तादित्यर्थः । यदुक्तं विद्याभेदादनुपसंहार इति, तत्राह—**कर्मान्तरइति** । अश्वरोमादि-

## कल्पतरुपरिमलः ।

स एष वसुधान" इत्यादिना त्रैलोक्यस्य कोशत्वेन कर्मफलरूपवसुनिधानार्थपेटिकात्वेनोपासना पुत्रदीर्घायुष्ट्वफलार्थं विहिता । तस्य कोशस्य भूमिर्मूलावयवः अन्तरिक्षमुदरं द्यौः पिधानार्थी ऊर्ध्वावयवः दिशः कोणा इति प्रसिद्धकोशसादृश्यापादकावयवकल्पना कृता । **भूरिति इमं लोकमित्यर्थ इति** । इदं मन्त्रगतशब्दमात्रं गृहीत्वा व्याख्यातम् । श्रौते तु वाक्यशेषे भूरित्यस्य लोकत्रयपरत्वेन व्याख्यानं दृश्यते । "अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्ये अन्तरिक्षं प्रपद्ये दिवं प्रपद्ये इत्येतदवोच"मिति ॥ **इति चतुर्दशं वेधाद्यधिकरणम् ॥**

[1] तत्र सूत्रम् १—वेधाद्यर्थभेदात् २५ ॥

शब्दश्रवणेऽप्युपायनानुवृत्तिः । यदुक्तमश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासंनिपात इति, तदुच्यते । भवेदेषा व्यवस्थोक्तिर्यद्यनुष्ठेयं किंचिदन्यत्र श्रुतमन्यत्र निनीष्येत । न त्विह हानमुपायनं वाऽनुष्ठेयत्वेन संकीर्त्यते, विद्यास्तुत्यर्थं त्वनयोः संकीर्तनम् । इत्थं महाभागा विद्या यत्सामर्थ्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते चास्य सुहृद्द्विषत्सु निविशेते इति । स्तुत्यर्थे चास्मिन्संकीर्तने हानानन्तरभावित्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय । प्रसिद्धा चार्थवादान्तरापेक्षार्थवादान्तरप्रवृत्तिः—'एकविंशो वा इतोऽसावादित्यः' ( छा० २।१०।५ ) इत्येवमादिषु । कथं हीहैकविंशतादित्यस्याभिधीयेतऽअनपेक्ष्यमाणेऽर्थवादान्तरे द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्येतस्मिन् । तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इन्द्रियं वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते । विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीवाभिनिवेष्टव्यम् । उपायनशब्दशेषत्वादिति तु शब्दशब्दं समुच्चारयन्स्तुत्यर्थामेव हानावुपायनानुवृत्तिं सूचयति । गुणोपसंहारविवक्षायां ह्युपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात् । तस्माद्गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रदर्शनार्थमिदं सूत्रम् । कुशाछन्दस्तुत्युपगानवदित्युपमोपादानम् । तद्यथा भाल्लविनाम्—

## भामती ।

किंतु स्तुत्यर्थं सिद्धतया संकीर्त्यते, तदसति बाधके देवताधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । तथाच विधूतयोः सुकृतदुष्कृतयोर्निर्गुणायां विद्यायामश्वरोमादिवत्किं भवत्वित्याकाङ्क्षायां न तावत्प्रायश्चित्तेनेव तद्विलयसंभवस्तथा सत्यश्वरोमराहुदृष्टान्तानुपपत्तेः । न जात्वश्वरोमराहुमुखयोर्विलयनमस्ति, अपि त्वश्वचन्द्राभ्यां विभागः । नच नष्टे विधूननप्रमोचनार्थसंभवः । तस्मादर्थवादस्यापेक्षायां शब्दसंनिधिकृतोऽपि विशेष उपायनं बुद्धौ संनिधापयितुं शक्नोत्यपेक्षां पूरयितुमिति । निर्गुणापि विद्या हानोपायनाभ्यां स्तोतव्या । स्तुतिप्रकर्षस्तु प्रयोजनं न प्रमाणम्; अप्रकर्षेऽपि स्तुत्युपपत्तेः । न चार्थवादान्तरापेक्षार्थवादान्तराणां न दृष्टा । नच तैर्न पूरणमित्याह—**प्रसिद्धा चेति । विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्येति** । यद्यप्यन्यदीये अपि सुकृतदुष्कृते अन्यस्य फलं प्रयच्छतः, यथा पुत्रस्य श्राद्धकर्म पितुस्तृप्तिं, यथा च पितुर्वैश्वानरीयेष्टिः पुत्रस्य, नार्याश्च सुरापानं भर्तुर्नरकम्; तथाप्यन्यदीये अपि सुकृतदुष्कृते साक्षादन्यस्मिन्न संभवत इत्याशयेन शङ्का । फलतः प्राप्त्या स्तुतिरिति परिहारः । **गुणोपसंहारविवक्षाया**मित्यपि न स्वरूपतः सुकृतदुष्कृतसंचाराभिप्रायम् । **ननु** विद्यागुणोपसंहाराधिकारे कोऽयमकाण्डे स्तुत्यर्थविचार इति शङ्कामुपसंहरन्नपाकरोति—**तस्माद्गुणोपसंहारविचारप्रसङ्गेनेति** । विद्यागुणोपसंहारप्रसङ्गतः स्तुतिगुणोप-

## वेदान्तकल्पतरुः ।

वद्विधूतयोरिति योजना । यदप्युक्तं हाने उपायनं नावश्यकमिति, तत्राह—**न तावत्प्रायश्चित्तेनेति । न** केवलमश्वरोमदृष्टान्तात् सुकृतादिविलयाभावः, किंतु विधूय प्रमुच्येति श्रुतिभ्यामपीत्याह—**नच नष्ट इति । शब्दसन्निधिकृतोऽपि विशेष इति** । हानोपायनशब्दयोः कौषीतकिशाखायां सन्निधिरस्ति तत्कृतो विशेष इत्यर्थः । यद्यश्वरोमदृष्टान्ताद्विधूतयोः सुकृतदुष्कृतयोः परत्रावस्थानसापेक्षत्वादन्यत्र हानसन्निधौ श्रुतमुपायनं केवलहानश्रवणेऽप्यपेक्षितत्वादायातीति व्याख्यायते, कथं तर्हि भाष्यकारः स्तुतिप्रकर्षलाभायेति स्तुतिप्रकर्षमुपायनोपसंहारकल्पकं प्रमाणमाचष्टे ? अत आह—**स्तुतिप्रकर्षस्त्विति** । स्तुतिर्हि विद्यायाः कार्या, सा च केवलश्रुतहानेनाप्युपपद्यते । एवं हि प्रकर्षोऽपेक्ष्येत यद्यप्रकर्षे स्तुतिर्न स्यात्तच्च नास्ति, तस्मात्प्रमाणासिद्धस्योपायनोपसंहारस्य प्रयोजनं भाष्ये उक्तमित्यर्थः । भाष्ये केनापि प्रकारेण पुरुषान्तरे सुकृतदुष्कृतयोरसङ्क्रान्तिरङ्गीकृतेति भाति, तच्चायुक्तम्; फलद्वारेण सङ्क्रान्तिसंभवादित्याशङ्क्याह—**यद्यपीति ।** वैश्वानरीयेष्ट्यधिकरणं द्वितीयसूत्रेऽनुक्रान्तम् । भाष्ये अतीवशब्दः सुकृतादिस्वरूपपरः । **स्तुत्यर्थत्वाच्चेति भाष्यस्य** चान्यत्र विद्यासामर्थ्यात्सुकृतदुष्कृतफलसंचाररूपमोक्षाभिधानेन विद्यास्तुत्यर्थत्वादित्यर्थः । गुणोपसंहारविवक्षायामुपायनार्थस्यैवानुवृत्तिं ब्रूयादिति भाष्येऽप्युपायनार्थशब्देन सुकृतदुष्कृतस्वरूपोपायनं विवक्षितं फलत उपायनस्योक्तत्वादित्यभिप्रेत्याह—**न स्वरूपत इति** । संचार इत्यभिप्रायमितीतिशब्दोऽध्याहर्तव्यः । **स्तुतिगुणेति** । स्तुत्युपयोगी गुणः सुकृतदुष्कृतयोः परत्र संचारः तदुपसंहारो विचारितो यद्यपि स नोपास्य इत्यर्थः । कुशशब्दो हि न स्त्रीलिङ्गः; अस्त्री

## कल्पतरुपरिमलः ।

**हानौ तूपायनशब्दशेषत्वात् कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ परत्रावस्थानसापेक्षत्वादिति ।** अवश्यं हि कुतश्चित्प्रहीणं किंचिदुपैति, यथाऽश्वात्प्रहीणं रोमवृन्दं भूप्रदेशमिति हानस्योपायनापेक्षा, विद्यमानयोः

"कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणे शाट्यायनिनामौदुम्बराः कुशा इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते । यथाच कचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्नानात्प्रतीयन्ते । यथाच षोडशिस्तोत्रे केषांचित्कालविशेषाप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः । यथैव चाविशेषेणोपगानं केचित्समामनन्ति विशेषेण भाल्लविनः । यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वय एवं हानावप्युपायनान्वय इत्यर्थः । श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् । स चान्याय्यः सत्यां गतौ । तदुक्तं द्वादशलक्षण्याम्—'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्' इति ।

## भामती ।

संहारो विचारितः । प्रयोजनं चोपासके सौहार्दमाचरितव्यं न त्वसौहार्दमिति । छन्द एवाच्छन्द आच्छादनादाच्छन्दो भवति । **यथैव चाविशेषेणोपगानमिति** । ऋत्विज उपगायन्तीत्यविशेषेणोपगानमृत्विजाम् । भाल्लविनस्तु विशेषेण नाध्वर्युरुपगायतीति । तदेतस्माद्भाल्लविनां वाक्यमृत्विज उपगायन्तीत्येतच्छेषं विज्ञायते । **एतदुक्तं भवति**—अध्वर्युवर्जिता ऋत्विज उपगायन्तीति । कस्मात्पुनरेवं व्याख्यायते ? **ननु** स्वतन्त्राण्येव सन्तु वाक्यानीत्यत आह—**श्रुत्यन्तरकृतमिति** । अष्टदोषदुष्टविकल्पप्रसङ्गभयेन वाक्यान्तरस्य वाक्यान्तरशेषत्वमत्रभवतो जैमिनेरपि संमतमित्याह—**तदुक्तं द्वादशलक्षण्याम्** । 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इत्येतदेव सूत्रमर्थद्वारेण पठति—**अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्स** चान्याय्य इति शेषः । एवं किल श्रूयते—'एष वै सप्तदशः प्रजापतिर्यज्ञे यज्ञेऽन्वायत्त' इति । ततोऽनुयाजेषु येयजामहं करोतीति ।

## वेदान्तकल्पतरुः ।

कुशमित्यमरसिंहेनानुशिष्टत्वाद्, अतस्तदविरोधेन सूत्रेण पदं छिनत्ति—**आच्छन्द इति** । आङुपसर्गस्यार्थमाह—**आच्छादनादिति** । अनुष्ठातारं पापादाच्छादयतीति आच्छन्द इत्यर्थः । श्रूयते हि छादयन्ति हि वा एनं छन्दांसि पापात्कर्मण इति । अत्र समिधः कुशा इत्युच्यन्ते । औदुम्बरा इति विशेषणात्समिद्वाची कुशाशब्दोऽन्य एव स्त्रीलिङ्ग इति लिङ्गानभिज्ञानाद्वाचस्पतिः पदं चिच्छेदेति—**केचित्** । **तदतिमन्दम्**; अनेकशब्दत्वस्यान्याय्यत्वात् । कुशसंबन्धात् समित्सु कुशशब्दस्य तु लाक्षणिकत्वोपपत्तेः, यज्ञसंबन्धादिव गार्हपत्ये इन्द्रशब्दस्य । यदि तु कस्यांचिच्छ्रुतावौदुम्बर्य इति प्रयोगः स्यात्तर्हि स छान्दसो भवेद्भाष्ये च तस्यानुकारमात्रम् । तस्मात्—**पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः । वाचस्पतेरियत्यर्थेऽप्यबोध इति साहसम्** ॥ १ ॥

विकल्पपरिहारार्थं वाक्यस्य पर्युदासार्थत्वमाह—**तदेतदिति** । अष्टदोषा विकल्पस्य तदभावो नाडीष्वित्यत्र दर्शिताः । पर्युदासाधिकरणविषयमाह—**एवमिति** । "आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै" इति सप्तदशाक्षरो मन्त्रगणः प्रजापतित्वेन स्तूयते; प्रजापतेरपि सप्तदशकलिङ्गशरीरसमष्टिरूपत्वात् । यज्ञे यज्ञेऽन्वायत्तोऽनुगत इत्यनारभ्यवादेन वाक्येन सर्वयज्ञेषु मन्त्रगणो विनियुक्तः । तत्र यदि नानुयाजेष्वित्ययं प्रतिषेधः, तर्हि विधिप्रतिषेधसंनिपाताद्विकल्पः स्यात् । अथ पर्युदासः ततो विधेरेव वाक्यशेषः सन्ननुयाजाति-

## कल्पतरुपरिमलः ।

सुकृतदुष्कृतयोः फलजननावश्यम्भावादपि तदपेक्षाऽस्तीति भावः । **समिध इति** । उद्गातॄणां प्रस्तावकर्मणि स्तोत्रसंख्यागणनार्था दारुशलाकाविशेषा इत्यर्थः । **औदुम्बरा इति विशेषणादिति** । अनेन शाट्यायनिशाखायां कुशशब्दः पुल्लिङ्ग इति सूचितम् । स्त्रीलिङ्गत्वे त्वौदुम्बर्य इति स्यात् । **यदि तु कस्यांचिदिति** । औदुम्बर्य इति भाष्यप्रयोगं दृष्ट्वा तदनुकार्यश्रुत्युन्नयनम् । **पर्युदासाधिकरणविषयमाहेति** । **ननु**—नदीक्षिताधिकरणसिद्धान्तसूत्रं भाष्यकारैः पठितं, तत्किमिति टीकाकारैः पर्युदासाधिकरणसिद्धान्तसूत्रमत्र पठितमापाद्य पर्युदासाधिकरणमनुक्रम्यते ? किमिति च तदनुमोदनमाचार्यैः क्रियते ? इत्थं हि नदीक्षिताधिकरणम् । दीक्षितो न जुहोतीति ज्योतिष्टोमप्रकरणाम्नातं वाक्यं क्रत्वर्थपुरुषार्थसाधारण्येन सर्वेषामपि होमानां प्रतिषेधकम्, अथवा क्रत्वर्थेषु प्रत्यक्षशिष्टान् विहायातिदेशप्राप्तानां क्रत्वर्थानां पुरुषार्थानां च होमानां प्रतिषेधकमिति पूर्वपक्षेऽप्यग्निहोत्रादिहोमानां स्वस्वविधिभिः क्रतुमध्ये कर्तव्यतया नदीक्षितवचनेनाकर्तव्यतया च पर्युदासाधिकरणपूर्वपक्षन्यायेन प्रतिषेधाङ्गीकारे विकल्पः स्यात्, तत्परिहाराय नदीक्षितवाक्यस्याग्निहोत्रादिवाक्यशेषत्वमभ्युपगम्य नञः पर्युदासवृत्तिराश्रयणीया, तेनादीक्षितो यावज्जीवमग्निहोत्रं जुहोतीत्यग्निहोत्रादिवाक्यानामर्थः संपद्यत इति । तदेव चाधिकरणं प्रदेशान्तरस्थवाक्यस्य प्रदेशान्तरस्थवाक्यशेषतायां प्रसाधनीयत्वेन प्रस्तुतायां

अथवा—एतास्वेव विधूननश्रुतिष्वेतेन सूत्रेणैतच्चिन्तयितव्यम् । किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते ? किंवाऽर्थान्तरमिति । तत्र चैवं प्रापयितव्यम् । न हानं विधूननमभिधीयते; 'धूञ् कम्पने' इति स्मरणात्, दोधूयन्ते ध्वजाग्राणीति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्, तस्माच्चालनं विधूननमभिधीयते । चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनादित्येवं प्रापय्य प्रतिवक्तव्यम् । हानावेवैष विधूननशब्दो वर्तितुमर्हति । उपायनशब्दशेषत्वात् । नहि परपरिग्रहभूतयोः सुकृतदुष्कृतयोरप्रहीणयोः परैरुपायनं संभवति । यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं संभाव्यते; तथापि तत्संकीर्तनात्तावत्तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते । क्वचिदपि चेदं विधूननसंनिधावुपायनं श्रूयमाणं कुशाच्छन्दस्तुत्युपगानवद्विधूननश्रुत्या सर्वत्रापेक्षमाणं सार्वत्रिकं निर्णयकारणं संपद्यते । नच चालनं ध्वजाग्रवत्सुकृतदुष्कृतयोर्मुख्यं संभवति; अद्रव्यत्वात् । अश्वश्च

## भामती ।

तदत्रानारभ्य कंचिद्यज्ञं यज्ञेषु येयजामहकरणमुपदिष्टम् । तदुपदिश्य चाम्नातं नानुयाजेष्विति । तत्र संशयः—किं विधिप्रतिषेधयोर्विकल्प उत पर्युदासोऽनुयाजवर्जितेषु येयजामहः कर्तव्य इति । मा भूदर्थप्राप्तस्य शास्त्रीयेण निषेधेन विकल्पः । दृष्टं हि तादात्विकीमस्य सुन्दरतां गमयति नायतौ दोषवत्तां निषेधति । तस्य तत्रौदासीन्यात्; निषेधशास्त्रं तु तादात्विकं सौन्दर्यमबाधमानमेव प्रवृत्त्युन्मुखं नरं निवारयदायत्यामस्य दुःखफलत्वमवगमयति । यथाह 'अकर्तव्यो दुःखफलः' इति । ततो रागतः प्रवृत्तमप्यायत्यां दुःखतो बिभ्यतं पुरुषं शक्नोति निवारयितुमिति । बलीयान् शास्त्रीयः प्रतिषेधो रागतः प्रवृत्तेरिति न तया विकल्पमर्हति । शास्त्रीयौ तु विधिनिषेधौ तुल्यबलतया षोडशिग्रहणवद्विकल्प्येते । तत्र हि विधिदर्शनात्प्रधानस्योपकारभूयस्त्वं कल्प्यते । निषेधदर्शनाच्च वैगुण्येऽपि फलसिद्धिरवगम्यते । यथाह—'अर्थप्राप्तवदिति चेन्न तुल्यत्वादुभयं शब्दलक्षणम्' इति । नच वाच्यं यावद्यजतिषु येयजामहकरणं यजतिसामान्यद्वारेणानुयाजं यजतिविशेषमुपसर्पति तावदनुयाजगतेन निषेधेन तन्निषिद्धमिति शीघ्रप्रवृत्तेः सामान्यशास्त्राद्विशेषनिषेधो बलवानिति; यतो भवत्वेवंविधिषु ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । तत्र तक्रविधिर्न दधिविधिमपेक्षते प्रवर्तितुमिह तु प्राप्तिपूर्वकत्वात्प्रतिषेधस्य येयजामहस्य चान्यतोऽप्राप्तेस्तन्निषेधेन निषेधप्राप्त्यै तद्विधिरपेक्षणीयः । नच—सापेक्षतया निषेधाद्विधिरेव बलीयानित्यतुल्यशिष्टतया न विकल्पः, किंतु निषेधस्यैव बाधनमिति —सांप्रतम्; तथा सति निषेधशास्त्रं प्रमत्तगीतं स्यात् । नच तद्युक्तम्; तुल्यं हि सांप्रदायिकम् । नच "न तौ

## वेदान्तकल्पतरुः ।

रिक्तयागेषु येयजामहविधिपरः स्यात्, तदर्थं संशयमाह—**तत्रेति । ननु** प्रतिषेधेऽपि कथं विकल्पप्राप्तिः ? प्रतिषेधस्य प्रतिषेध्यं प्रति प्रबलत्वाद् भुजङ्गायाङ्गुलिर्न देयेतिवदिति शङ्कां निराकुर्वन्पूर्वपक्षमाह—**मा भूदित्यादिना । अर्थप्राप्तस्य** भ्रमगृहीतविषयसौन्दर्यसामर्थ्यात् प्राप्तस्य शास्त्रीयेण निषेधेन विकल्पो मा भूत् । अत्र कारणमाह—**दृष्टं हीति ।** तात्कालिकश्रेयःसाधनत्वं प्रत्यक्षबोधितं, प्रतिषेधेन तु कालान्तरीयदुरितहेतुत्वं ज्ञाप्यत इति विषयभेदेन तुल्यार्थोपनिपाताभावान्न विकल्प इत्यर्थः । तर्हि कथं बाध्यबाधकभावस्तत्राह—**आयत्यां** भविष्यत्काले **दुःखतो बिभ्यतमिति ।** यदिदानीं प्रवृत्तस्य सुखं दृश्यते तत्तुल्यमेवचेद्दुःखं कालान्तरे भवेत्, तर्हि व्यर्थोऽयं प्रतिषेधः; प्रवृत्तेर्दुःखकरत्ववन्निवृत्तेरपि सुखविगमे हेतुत्वात् । ततश्च दृष्टात्सुखादधिकं दुःखमस्तीति प्रतिषेधेन गमिते सत्यास्तिकानां प्रवृत्तेरुपरमात् प्रतिषेधस्य फलतो बाधकत्वमित्यर्थः । **ननु** कथं षोडशिग्रहणाग्रहणयोर्विकल्पः ? अकरणेऽपि क्रतूपकारसिद्धौ करणवैयर्थ्यादत आह—**तत्र हीति ।** उपकारभूमार्थिनोऽनुष्ठानमुपकारमात्रार्थिनोऽननुष्ठानमिति विकल्प इत्यर्थः । शास्त्रीयविधिनिषेधयोस्तुल्यबलत्वमित्यत्र जैमिनीयं सूत्रमुदाहरति—**यथाऽऽहेति । तुल्यहेतुत्वादिति ।** प्रतिषेध्यप्राप्तेः प्रतिषेधस्य च तुल्यप्रमाणकत्वादित्यर्थः । तदेव दर्शयति—**उभयं** प्रवृत्तितत्प्रतिषेधरूपं **शब्दलक्षणं** शब्दप्रमाणकमित्यर्थः । शास्त्रीयत्वेऽपि विधिनिषेधयोः सामान्यविशेषविषयत्वेनातुल्यबलत्वमाशङ्क्याह—**न च वाच्यमिति । यजतिषु** यागेषु येयजामहकरणं यागसामान्यं यावद्विषयीकरोति तावन्निषेधोऽनुयाजे यागविशेष एव येयजामहानुष्ठानं निषेधति । निषिद्धे च विधेः सामान्यद्वारा विशेषसंक्रान्तिर्निरुध्यते इति न च वाच्यम्; कुतः ? अत आह—**यत इति ।** विध्योर्हि सामान्यविशेषविषययोर्विधिर्बलवान्; परस्परं निरपेक्षत्वाद्, निषेधस्तु विधिप्राप्तं निषेधद् विशेषविषयोऽपि न विधेरधिकबलः; प्राप्तिसापेक्षत्वेन विध्युपजीवित्वादित्यर्थः । तर्हि विधिरेव निषेधेनोपजीव्यत्वात्प्रबलः स्यात्, तथा च कथं विकल्पावकाशस्तत्राह—**न च सापेक्षतयेति ।** अनन्यगतिकत्वान्निषेधस्य विधिना तुल्यबलत्वं कल्प्यमित्यर्थः । **ननु** नानन्यगतित्वमर्थवादत्वेन गतिसंभवादित्याशङ्क्याह—**न च न ताविति ।** तावाज्यभागौ पशौ न करोति इति दर्शपूर्णमासयोः

## भामती।

पशौ करोती''तिवदर्थवादता; असमवेतार्थत्वात्। पशौ हि नाज्यभागौ स्त इत्युपपद्यते । नचात्र तथा येयजामहाभावः, यजतिषु येयजामहविधानात्, अनुयाजानां च तद्भावात्। नच पर्युदासस्तदाननुयाजेष्विति कात्यायनमतेन नियमप्रसक्तेः। तस्माद्विहितप्रतिषिद्धतया विकल्प इति प्राप्तम्। एवं प्राप्त उच्यते—युक्तं षोडशिग्रहणाग्रहणयोर्विकल्प इति। नहि तत्रान्या गतिरस्ति। तेनाष्टदोषदुष्टोऽपि विकल्प आश्रीयते, पक्षेऽपि प्रामाण्यान्माभूत्प्रमत्तगीततेति, इह तु पर्युदासेनाप्युपपत्तौ संभवन्त्यामन्याय्यं विकल्पाश्रयणमयुक्तम्। एवं हि तदा नञः संबन्धोऽननुयाजेषु यजतिष्वनुयाजवर्जितेषु येयजामहः कर्तव्य इति। किमतो यद्येवम् । **एतदतो भवति**—नानुयाजेष्वित्येतद्वाक्यमपरिपूर्णं साकाङ्क्षं पूर्ववाक्यैकदेशेन संभन्त्स्यते यदेतद्येयजामहंकरोतीत्येतन्नानुयाजेषु यावदुक्तं स्यादनुयाजवर्जितेष्विति ताव-

## वेदान्तकल्पतरुः।

श्रूयते। तथा क्वचित्पशुप्रकरणेऽपि। पशुप्रकरणस्थं तु वाक्यमतिदेशवाक्यं प्रति शेषत्वेन पर्युदासः यत्प्रकृतिवत्पशौ कर्तव्यं तदाज्यभागवर्जमिति। दर्शपूर्णमासप्रकरणगतं तु वाक्यं ज्योतिष्टोमगतद्वादशोपसत्तावाक्यवत् पशुगताज्यभागाभावानुवादद्वारेणार्थवादः। पशावप्याज्यभागौ न क्रियेते। तौ पुनर्दर्शपूर्णमासयोः क्रियेते। तस्मात्प्रशस्तौ दर्शपूर्णमासाविति। नैवमिहार्थवादः। हेतुमाह—**असमवेतेति**। उदाहरणे तु समवेतार्थत्वेन वैषम्यमाह—**पशौ हीति**। उपपद्यतेऽर्थवादतेत्यनुषङ्गः । असमवेतार्थत्वादित्येतद्विवृणोति—**न चात्रेति**। अस्तु तर्हि पर्युदासत्वं गतिर्नेत्याह—**न च पर्युदास इति**। नानुयाजेष्वित्ययं यदि पर्युदासः स्यात्तदा सुबन्तेन नञो योगात्समासः स्यात्कात्यायनेन समासनियमस्य स्मृतत्वादित्यर्थः। **न हि तत्रान्येति**। विधिनिषेधयोरुभयोरपि विशेषनिष्ठत्वान्न पर्युदाससंभव इत्यर्थः। **ननु** पर्युदासेऽपि किमिति न विकल्पः स्यात्? अनुयाजवर्जितेष्वित्युक्ते येयजामहस्यानुयाजविच्छेदप्रतीतेः सामान्यविधिना च संबन्धप्रतीतेरिति शङ्कते—**किमत इति**। परिहरति—**एतदिति**। अनुयाजव्यतिरिक्तेष्वित्युक्ते के त इति न ज्ञायन्ते ततोऽपर्यवसितं वाक्यं येऽनुयाजादन्ये ते यागा इति पर्यवसातुं पूर्ववाक्यमपेक्षते, न पृथक् पर्यवस्यतीति न विकल्प

## कल्पतरुपरिमलः।

दृष्टान्तत्वेनोदाहर्तुं युक्तं न पर्युदासाधिकरणमिति—**चेत्; उच्यते**; नदीक्षितवाक्ये प्रतिषेधाश्रयणे वस्तुतो विकल्पो न प्रसज्यते; होमनिषेधः क्रत्वर्थो होमः पुरुषार्थ इति विधिनिषेधयोर्विषयभेदात्। उभयोरपि क्रत्वर्थत्वेन विषयैक्ये हि षोडशिग्रहणाग्रहणरीत्या तयोरन्यतरस्य यस्य कस्यचित्परिग्रहेऽपि क्रतोः साद्गुण्याद्विकल्पो भवेत्, इह तु होमनिषेध एव क्रत्वर्थ इति होमपक्षे क्रतोर्वैगुण्याद्विकल्पस्य न प्रसक्तिः। कृत्वा चिन्तया तु तत् सूत्रं प्रवृत्तम् । यदि प्रतिषेधाश्रयणे विकल्पः प्रसज्यते, तदा नदीक्षितवाक्यस्याग्निहोत्रादिवाक्यशेषत्वमङ्गीकृत्यापि सुपरिहरणीयम् । किंचित्प्रकरणाम्नतस्यैकस्य शब्दस्य प्रदेशान्तरआम्नातानेकवाक्यशेषभावादपि पापीयान् विकल्प इति न्यायं व्युत्पादयितुम्। अतः पर्युदासाधिकरणपूर्वपक्षे एव वस्तुतो विकल्पप्राप्तिरिति तदधिकरणसिद्धान्तसूत्रमेवात्र पठितव्यमित्याशयेन टीकाकारैर्भाष्यमन्यथा कृतम्। आचार्यैश्च तदनुमोदितम्। **भाष्यकाराणां त्वयमाशयः**—प्रतिषेधपक्षे विकल्पो भवत्येव । अग्निहोत्राद्यनुष्ठाने सोमयागवैकल्यं तदननुष्ठाने यावज्जीवाग्निहोत्रसंकल्पवैकल्यमित्यन्यतरवैकल्याभ्युपगमेनाग्निहोत्रज्योतिष्टोमानुष्ठानस्य तयोर्विकल्पं विना गत्यन्तराभावात्। **किंच** चोदकप्राप्तक्रत्वर्थहोमप्रतिषेधे पर्युदासाधिकरणपूर्वपक्षन्यायेन प्रत्यक्षशिष्टहोमप्रतिषेधे च चतुर्विंशन्मन्त्रतत्प्रतिषेधन्यायेनानिवार्यो विकल्पः। यदि च विकल्पप्रसक्त्यभावेऽपि प्रदेशान्तरस्थवाक्यशेषभावेन तदन्वयादपि विकल्पः पापीयानिति न्यायव्युत्पादनार्थं नदीक्षिताधिकरणं स्यात्, तदा सुतरां तदधिकरणसूत्रोदाहरणं प्रकृतोपयोगि; प्रदेशान्तरस्थानां कुशाछन्दःस्तुत्युपगानविशेषवाक्यानां हानोपादानोभयविषयवाक्यस्य च प्रदेशान्तरस्थवाक्यशेषभाव एव युक्तो न विकल्प इत्युपपादयितुं खल्वदाहरणमन्विष्यत इति। **ननु** "न तौ पशौ करोती"त्यर्थवाद इति टीकोक्तमयुक्तम्; पूर्वमीमांसकैः खल्वपूर्वे चार्थवादः स्या( जै. अ. १० पा. ८ सू. ५ )दित्यधिकरणे "न तौ पशौ करोती"ति पशावाज्यभागयोः, प्रतिषेधार्थः न तु दार्शपौर्णमासिकाज्यभागस्तुत्यर्थोऽनुवादः; पशावाज्यभागप्रतिषेधस्याप्राप्तत्वात्, अधिकरणं तु न सोमेऽध्वर इत्येतद्विषयम् । तदित्थम्। अयं प्रतिषेधोऽर्थवादो वेति संशये सोमाङ्गेषु दीक्षणीयादिषु चोदकप्राप्तयोराज्यभागयोरयं प्रतिषेधः "तस्यैकशतं प्रयाजानूयाजा" इत्यत्र दीक्षणीयाद्यङ्गानां प्रयाजानूयाजानामिव तथाभूतयोराज्यभागयोरपि सोमसंबन्धित्वेन कीर्तनोपपत्तेरिति प्राप्ते तथा सति "न तौ पशौ करोती"त्येतद्वैयर्थ्यं स्यात्; न सोमेऽध्वर इत्यत एव दीक्षणीयादिवत्सोमाङ्गे अग्नीषोमीयपशौ तद्विकृतिषु सवनीयादिषु चाज्यभागप्रतिषेधलाभात्। अतस्तौ न पशाविव्यस्यायं प्रतिवस्तूपमाविधया दृष्टान्तसमर्पणेन स्तुत्यर्थोऽर्थवाद इति। तस्मादयुक्तं "न तौ पशावि"त्यस्य टीकोक्तमर्थवादत्वमित्याशङ्क्याह—**तथा क्वचित्पशुप्रकरणेऽपीति**। **अयमाशयः**—न तौ पशौ करोतीति पशुप्रकरणेऽपि किंचिद्वाक्यं

**रोमाणि विधुन्वानस्त्यजत्व्रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति । 'अश्व इव रोमाणि विधूय पापम्' ( छा० ८।१३।१ ) इति च ब्राह्मणम् । अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरण-विरोधः । तदुक्तमिति व्याख्यातम् ॥ २६ ॥ इति पञ्चदशं हान्यधिकरणम् ॥**

## भामती ।

दुक्तं भवति नानुयाजेष्विति । तथाच यजतिविशेषणार्थत्वादननुयाजविधिरेवायमिति प्रतिषेधाभावान्न विकल्पः । न चाभियुक्ततरपाणिनिविरोधे कात्यायनस्य सद्भादिर्वं नित्यसमासवादिनः संभवति । स हि विभाषाधिकारे समासं शास्ति । तस्मादनुयाजवर्जितेषु येयजामहविधानमिति सिद्धम् ॥

वर्णकान्तरमाह—**अथवैतस्मिन्निति** । यथा हि सुकृतदुष्कृतयोरमूर्तयोः कल्पनं नाञ्जसं मूर्तस्यानुविधायित्वात्कम्पस्य, तथान्यदीययोरन्यत्र संचारोऽप्यनुपपन्नोऽमूर्तत्वादेव । तस्माद्यत्र विधूननमात्रं श्रुतं, तत्र कम्पनेन वरं स्वकार्यारम्भाच्चालनमात्रमेव लक्ष्यतां, नतु ततोऽपगत्याऽन्यत्र संचारः; कल्पनागौरवप्रसङ्गात् । तस्मात्स्वकार्यारम्भाच्चालनं विधूननमिति प्राप्तेऽभिधीयते—यत्र तावदुपायनश्रुतिस्तत्रावश्यं त्यागो विधूननं वक्तव्यम् । क्वचिदपि चेद्विधूननं त्यागे वर्तते तथा सत्यन्यत्रापि तत्रैव वर्तितुमर्हति । एवं हि न वर्तेत यदि विधूननमिह मुख्यं लभ्येत । न चैतदस्ति; तत्रापि स्वकार्याच्चालनस्य लक्ष्यमाणत्वात् । नच प्रामाणिकं कल्पनागौरवं लोहगन्धितामाचरति । अपिचानेकार्थत्वाद्धातूनां त्यागेऽपि विधूयेति मुख्यमेव भविष्यति; **प्राचुर्येण त्यागेऽपि लोके प्रयोगदर्शनात्, विनिगमनाहेतोरभावात्, गणकारस्य चोपलक्षणत्वेनाप्यर्थनिर्देशस्य तत्र दर्शनात् । तस्माद्धानार्थ एवात्रेति युक्तम् ॥ २६ ॥ इति पञ्चदशं हान्यधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

इत्यर्थः । **नन्वनुयाजवर्जितेष्वित्युक्ते** वर्जनाभिधानान्निषेधत्वमिति, नेत्याह—**तथाचेति** । पूर्ववाक्ये येयजामहं प्रति शेषित्वेन बोधितानां यागानामननुयाजत्वं विशेषणमज्ञातमनेन ज्ञाप्यत इति विधिशेषत्वान्न प्रतिषेधतेत्यर्थः ॥

अमूर्तयोः सुकृतदुष्कृतयोश्चालनाऽनुपपत्तेः पूर्वपक्षासंभवमाशङ्क्य सिद्धान्तेऽपि साम्यमाह—**यथाहीति** । **ननूपायनं** च विधूननं च यत्र कौषीतक्यादौ श्रूयते, तत्रोपायनसिद्ध्यर्थं हानमन्यत्र संचार इति वक्तव्यं, तद्वदन्यत्राप्यस्तु, तत्राह—**यत्र विधूननमात्रमिति** । **ननु** विधूननशब्दस्य लाक्षणिकत्वाविशेषे किमिति फलारम्भाच्चालनमेव लक्ष्यते ? न पुनरन्यत्र संचार इति, तत्राह—**कल्पनागौरवेति** । अमूर्तयोः सुकृतदुष्कृतयोः स्वाश्रयादपसरणमन्यत्र चावस्थानमिति विरुद्धार्थद्वयलक्षणात् स्वाश्रयस्थयोरेव तयोः फलात् प्रधावनं लघुत्वाल्लक्षणीयमित्यर्थः । उपायनसंनिधौ श्रुतो विधूननशब्दस्तावत्त्यागं लक्षयति, ततोऽन्यत्रापि केवलविधूननशब्दश्रुतौ प्रवृत्तत्वात् सैव लक्षणा बुद्धिस्था भवतीति न स्वफलाच्चालनलक्षणा, तस्या निवृत्तत्वादित्याह—**यत्र तावदिति** । **ननु** क्वचिद्येन शब्देन योऽर्थो लक्षितः स एव तस्यान्यत्राप्यर्थ इति न नियतं, नह्यग्निरधीत इत्यत्र माणवको लक्षित इत्यग्निर्ज्वलतीत्यत्रापि तदर्थता, अत आह—**एवं हीति** । यदि केवलविधूननशब्दश्रवणे चालनमर्थो लभ्येत, तर्हि प्रयोगान्तरे प्राप्तो लाक्षणिकार्थो न परिगृह्येत, न त्वेतदस्तीति प्राप्तस्त्याग एव लक्ष्यत इत्यर्थः । **नन्वस्मिन्पक्षे** कल्पनागौरवमुक्तमत आह—**नच प्रामाणिकमिति** । प्रवृत्तस्य लक्ष्यार्थस्य प्रयोगान्तरेऽपि बुद्धौ संनिधानं प्रमाणं, तत आयातं प्रामाणिकम् । **ननु** चालने मुख्यो विधूननशब्दस्त्यागे तु गौण इति, नेत्याह—**प्राचुर्येणेति** । अवधूत इत्यादौ त्यागे धुनोतेः प्रयोगदर्शनादित्यर्थः । अश्वो यथा जीर्णानि रोमाणि **विधुनुते** त्यजत्येवं पापं विधूय यथा चन्द्रो राहोर्मुखात्प्रमुच्य भास्वरो भवति; एवं धूत्वा शरीरं स्वच्छो भूत्वा ब्रह्मलोकमभिसंभवामि प्राप्नोमीत्यन्वयः । **कृतः** सिद्धः न पुनरपूर्वपुण्योपचयेन साध्य आत्मा यस्य स कृतात्मा कृतकृत्य इत्यर्थः । ब्रह्मैव लोको ब्रह्मलोकः ॥ २६ ॥ **इति पञ्चदशं हान्यधिकरणम् ॥**

## कल्पतरुपरिमलः ।

टीकाकारैर्दृष्टमस्ति, तस्माज्यभागवर्ज्यं प्रकृतिवत्कुर्यादिति पर्युदासवृत्त्या प्रकृतिवच्छब्दशेषत्वेनान्वये सति तल्लब्धस्य पशावाज्यभागाभावस्यानुवादो न तौ पशाविति न सोमे इति सोमे नित्यप्राप्तस्य तदभावस्यानुवादः । उभयमपि विधेयाज्यभागस्तुत्यर्थमिति । एवंच प्रतिषेधपक्षे पशावाज्यभागयोर्विकल्पः, पर्युदासपक्षे नित्यमेव वर्जनमिति विशेषः । यद्यपि दर्शपूर्णमासप्रकरणाम्नातस्यैव "न तौ पशा"वित्यस्य प्रकरणादुत्कृष्टस्य पर्युदासवृत्त्या पाशुकप्रकृतिवच्छब्दशेषत्वं वक्तुं शक्यम्, प्राभाकरैरपि पर्युदासपक्षं समर्थयमानैस्तथैवोक्तम्; तथापि टीकोक्तमनुवादत्वं पशुप्रकरणे तथाभूतं वाक्यं विना न निर्वहतीति तत्सद्भावोऽङ्गीकृतः ॥

**अवधूतेति** । लोके त्यक्तसकलकर्माणमवधूतमाहुः । तत्र धूननस्य त्यागार्थत्वं प्रसिद्धमित्यर्थः । यद्यप्यवधूतशब्दस्योक्तार्थपरतायामवधूतकर्मेति प्रयोक्तव्यम्; तथापि विभक्तधनेषु भ्रातृषु विभक्ता भ्रातर इतिवद्भ्रम्यमानत्वादुत्तरपदस्याप्रयोगः ।

१ तत्र सूत्रम् १—हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् २६ ॥

( १६ अधिकरणम् ) **सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥**

**देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति—'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' ( कौ० १।३ ) इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवाऽत्येति तत्सुकृतदुष्कृते विधूनुते' ( कौ० १।४ ) इति । तत्किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यमाहोस्विदादावेव देहादपसर्पण इति विचारणायां श्रुतिप्रामाण्याद्यथाश्रुति प्रतिपत्तिप्रसक्तौ पठति सांपराय इति । सांपराये गमन एव देहादपसर्पण इदं विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवतीति प्रतिजानीते । हेतुं चाचष्टे—तर्तव्याभावादिति । नहि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमस्ति, यदर्थं कतिचित्क्षणानक्षीणे ते कल्प्येताम् । विद्याविरुद्धफलत्वात्तु विद्यासामर्थ्येन तयोः क्षयः, स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति । तस्मात्प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते । तथा ह्यन्येऽपि शाखिनस्ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति 'अश्व इव रोमाणि विधूय पापम्' ( छा० ८।१३।१ ) इति, तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ॥ २७ ॥**

## भामती ।

**सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥२७॥ ननु** पाठक्रमादर्धपथे सुकृतदुष्कृततरणे प्रतीयेते, विद्यासामर्थ्याच्च प्रागेवावगम्येते; तथा शाट्यायनिनां ताण्डिनां च श्रुतेः, श्रुत्यर्थौ च पाठक्रमाद्बलीयांसौ, 'अग्निहोत्रं जुहोति यवागूं पचति' इत्यत्र यथा । तस्मात्पूर्वपक्षाभावादनारभ्यमेतत् । **अत्रोच्यते**—नैतत्पाठक्रममात्रमपि तु श्रुतिस्तत्सुकृतदुष्कृते विधूनुत इति । तदिति हि सर्वनाम तस्मादर्थे सन्निहितपरामर्शकं तस्य हेतुभावमाह । सन्निहितं च यदनन्तरं श्रुतम् । तच्चार्धपथवर्ति विरजानदीमनोऽभिगमनमित्यर्धपथ एव सुकृतदुष्कृतत्यागः । नच श्रुत्यन्तरविरोधः; अर्धपथेऽपि पापविधूनने ब्रह्मलोकसंभवात्प्राक्कालतोपपत्तेः । एवं शाट्यायनिनामप्यविरोधः । नहि तत्र जीवन्निति वा जीवत इति वा श्रुतम् । तथा चार्धपथ एव सुकृतदुष्कृतविमोकः । एवंच न पर्यङ्कविद्यातस्तत्प्रक्षय इति पूर्वः पक्षः । राद्धान्तस्तु—विद्यासामर्थ्यविधूतकल्मषस्य ज्ञानवत उत्तरेण पथा गच्छतो ब्रह्मप्राप्तिर्न चाप्रक्षीणकल्मषस्योत्तरमार्गगमनं संभवति । यथा यवागूपाकात्प्रागग्निहोत्रम्; यमनियमाद्यनुष्ठानसहिताया विद्याया उत्तरेण मार्गेण पर्यङ्कस्थब्रह्मप्राप्त्युपायत्वश्रवणात् । अप्रक्षीणपाप्मनश्च तदनुपपत्तेः, विद्यैव तादृशी कल्मषं क्षपयति क्षपितकल्मषं चोत्तरमार्गं प्रापयतीति कथमर्धपथे कल्मषक्षयः । तस्मात्पाठक्रमबाधेनार्थक्रमोऽनुसर्तव्यः । **ननु** न पाठक्रममात्रमत्र, तदिति सर्वनामश्रुत्या संनिहितपरामर्शादित्युक्तम् । **तदयुक्तम्**; बुद्धिसंनिधानमात्रमत्रोपयुज्यते नान्यत्, तच्चानन्तरस्येव विद्याप्रकरणाद्विद्याया अपीति समाना श्रुतिरुभयत्रापीति । अर्थपाठौ परिशिष्येते । तत्र चार्थो बलीयानिति । नच ताण्ड्यादिश्रुत्यविरोधः पूर्वपक्षे । अश्व इव रोमाणि

## वेदान्तकल्पतरुः ।

**सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥** सिद्धं कृत्वा विद्यायाः कर्मक्षयहेतुत्वं हानसंनिधावुपायनोपसंहार उक्तः, इदानीं तदेवासिद्धं मार्गमध्ये श्रूयमाणस्य कर्मक्षयस्य विद्याहेतुकत्वाभावादित्याशङ्क्यते । अग्निहोत्रं जुहोतीत्यत्र पाठादर्थो बलीयानत एव श्रुतिरतिबलीयसी अर्थादपि तस्याः प्रबलत्वादित्यर्थः । ताण्डिनां श्रुतिविरोधं परिहरति—**अर्धपथेऽपीति** । विधूय पापमिति हि ब्रह्मलोकप्राप्तेः प्राक्कालतोच्यते, सा चार्धपथे विधूननेऽप्युपपद्यत इत्यर्थः । **एवं शाट्यायनिनामिति** । अर्धपथ एवोपायनसंभवादित्यर्थः । **ननु** जीवत एव विधूननोपायने, न; एवं श्रुत्यभावादित्याह—**नहि तत्रेति** । सर्वनामश्रुतेरन्यथासिद्धिमभिधास्यन्पाठक्रमभञ्जकमर्थक्रमं तावदाह—**विद्यासामर्थ्येत्यादिना** । यवागूपाकस्याग्निहोत्रात्पूर्वकालत्वे सामर्थ्यं होमस्य द्रव्यापेक्षत्वेनावगतम् । विद्यायाः पापक्षयहेतुत्वे किं प्रमाणमित्यत आह—**यमनियमादीति** । **श्रवणात्** कौषीतकिशाखायामिति शेषः । यमाद्यङ्गसहिताया विद्याया उत्तरमार्गद्वारेण ब्रह्मलोकप्राप्तिहेतुत्वमस्तु, तावता कथं पापक्षयहेतुत्वमत आह—**अप्रक्षीणेति** । **तदनुपपत्तेः** । ब्रह्मलोकमार्गप्राप्त्यनुपपत्तेरित्यर्थः । **तादृशीति** । यमादिसहितेत्यर्थः । कथमेकस्या विद्याया उभयार्थत्वमत आह—**क्षपितेति** । ब्रह्मलोकप्रापणार्थमेव पापक्षयं करोतीत्यर्थः । तच्छब्दश्रुतिविरोधमुक्तमनूद्य निराचष्टे—**ननु न पाठेत्यादिना** । प्रधानरूपपरामर्शित्वात्सर्वनाम्नो विद्यैव परामृश्यते, नानन्तरनिर्दिष्टोऽपि विरजानद्यतिक्रमः । अभ्युपेत्य तु

## छन्दत उभयाविरोधात् ॥ २८ ॥

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात् । तस्मात्पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात् । तत्पूर्वकं च सुकृतदुष्कृतहानमिति द्रष्टव्यम् । एवं निमित्तनैमित्तिकयोरुपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥ २८ ॥ इति षोडशं सांपरायाधिकरणम् ॥

### भामती ।

विधूयेति हि स्वतन्त्रस्य पुरुषस्य व्यापारं ब्रूते, नच परेतस्यास्ति स्वातन्त्र्यम्, तस्मात्तद्विरोधः ॥२७॥ **छन्दत उभयाविरोधात्** । केभ्यश्चित्पदेभ्य इदं सूत्रम् । **ननु** यथा परेतस्योत्तरेण पथा ब्रह्मप्राप्तिर्भवतीति विद्याफलमेवं तस्यैवार्धपथे सुकृतदुष्कृतहानिरपि भविष्यतीति शङ्कापदानि, तेभ्य उत्तरमिदं सूत्रम् । तद्व्याचष्टे—**यदि च देहादपसृप्तस्येति** । विद्याफलमपि ब्रह्मप्राप्तिर्नापरेतस्य भवितुमर्हति शङ्कापदेभ्यः । **यथाहुः**—नाजनित्वा तत्र गच्छन्तीति । सुकृतदुष्कृतक्षयस्तु सत्यपि नरशरीरे संभवतीति समर्थस्य हेतोर्यमनियमादिसहिताया विद्यायाः कार्यक्षेपायोगाद्युक्तो जीवत एव सुकृतदुष्कृतक्षय इति सिद्धम् । **छन्दतः** स्वच्छन्दतः स्वेच्छयेति यावत् । स्वेच्छयानुष्ठानं यमनियमादिसहिताया विद्यायाः । **तस्य** जीवतः पुरुषस्य स्यान्न मृतस्य । तत्पूर्वकं च सुकृतदुष्कृतहानं स्याज्जीवत एव; समर्थस्य क्षेपायोगात् । एवं कारणानन्तरं कार्योत्पादे सति निमित्तनैमित्तकयोस्तद्भावस्योपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिः, इतरथा स्वातन्त्र्याभावेनासंगतिरुक्ता स्यात् । तदनेनोभयाविरोधो व्याख्यातः । ये तु परस्य विदुषः सुकृतदुष्कृते कथं परत्र संक्रामत इति शङ्कोत्तरतया सूत्रं व्याचख्युः । छन्दतः संकल्पत इति श्रुतिस्मृत्योरविरोधादेव, न त्वत्रागमगम्येऽर्थे स्वातन्त्र्येण युक्तिर्निवेशनीयेति । तेषामधिकरणशरीरानुप्रवेशे संभवत्यर्थान्तरोपवर्णनमसङ्गतमेवेति ॥ २८ ॥ **इति षोडशं सांपरायाधिकरणम् ॥**

### वेदान्तकल्पतरुः ।

समानश्रुतिरित्युक्तम् ॥ २७ ॥ शङ्काग्रन्थोक्तदृष्टान्ताद्वैषम्यमाह—**विद्याफलमपीति** । **अजनित्वा** देवभावेनानुत्पद्येत्यर्थः । स्याज्जीवत एवेत्यत्र ग्रन्थच्छेदः । **असङ्गतिरुक्तेति** । विधूयेति हि स्वतन्त्रस्य पुरुषस्य व्यापारं ब्रूते इति ग्रन्थे उक्ता याऽसङ्गतिः सा स्यादित्यर्थः । भास्करमतमनुवदति—**ये त्विति** । **छन्दः** संकल्पः । विदुषि यः शुभं संकल्पयति तस्य तदीयं शुभं भवति अशुभं संकल्पयतस्तदीयं पापमित्यर्थतया छन्दत इत्येतत्पदं तन्मतेन व्याख्यायोभयाविरोधपदं व्याचष्टे—**श्रुतिस्मृत्योरिति** । 'ते नः कृतादकृतादेनसो देवासः पिपृत स्वस्तये' इति श्रुतिर्भास्करोदाहृता । **ते** यूयं **देवा**सो देवाः **नः** अस्मानद्य **कृता**त्स्वकृता**दकृता**दन्यकृता**देनसः** पापा**त्पिपृत** पालयत **स्वस्तये** क्षेमायेति श्रुतेरर्थः । अन्यकृतादपि भयश्रुतेरस्त्यन्यकृतस्य कर्मणोऽन्यत्र प्राप्तिरिति । "प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् । 'विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम्" इति मनुस्मृतिः । **ननु** श्रुतिस्मृतिभ्यामपि कथममूर्तयोः सुकृतदुष्कृतयोराश्रयान्तरसंचारस्तत्राह—**नत्वत्रेति** । एतद्व्याख्यानं दूषयति—**तेषामिति** । अयं हि विचारो भवन्नपि हानौ लिख्यधिकरणे संगच्छते, नात्र; ततः शङ्कोत्तरत्वेनास्यत्कृतमेव व्याख्यानं भद्रम् । तस्य प्रियाः सुकृतमुपयन्त्यप्रिया दुष्कृतमिति तदधिकरणोदाहृतवाक्यादेव निर्णीते वृथा च वाक्यान्तरोदाहरणम् । यत्तु केशवेनास्य विचारस्यैवं तदधिकरणसङ्गम उक्तः । विद्वद्वर्तिसुकृतदुष्कृताकर्षणहेतुर्जनानां विदुषि शुभाशुभसंकल्पो जीवत्येव च विदुषि युक्तः, ततश्च जीवदवस्थायामेव विदुषः कर्महानं नार्धपथ इति । सोऽसाधुः; मार्गमध्यगतमपि विद्वांसं प्रति जनानां प्रीत्यप्रीतिसंभवात्तदापि सुकृतादिसंक्रमोपपत्तेरित्यास्तां तावत् ॥ २८ ॥ **इति षोडशं सांपरायाधिकरणम् ॥**[1]

### कल्पतरुपरिमलः ।

धातूनां निर्दिष्टार्थव्यतिरेकेणाप्यर्थान्तरसद्भावे शाब्दिका ज्ञापकमाहुः । धातुपाठे कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येवकारः पठ्यते, स धात्वन्तराणां धातुपाठे निर्दिष्टादर्थान्तरमप्यस्तीति ज्ञापयति; अन्यथाऽर्थनिर्देशादेव क्रीडामात्रार्थत्वसिद्धेरेवकारवैयर्थ्यादिति ॥ २६ ॥ **इति पञ्चदशं हान्यधिकरणम् ॥**

**सांपराये तर्तव्याभावात्तथा ह्यन्ये** ॥ २७ ॥ **टीकायां—सुकृतदुष्कृतक्षयस्त्विति** । नच वाच्यं पर्यङ्कविद्यायामर्चिरादिपथं प्राप्तस्य मध्ये चन्द्रेण सह संवादोक्तेः संवादस्य शरीरसाध्यत्वात्तदर्थं कर्मापेक्षास्तीति; विद्यासामर्थ्यादेव

१ तत्र सूत्रे २—साम्पराये तर्तव्याभावात्तथा ह्यन्ये २७ छन्दत उभयाविरोधात् २८ ॥

( १७ अधिकरणम् ) **गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥**

क्वचित्पुण्यपापप्रहानसंनिधौ देवयानः पन्थाः श्रूयते क्वचिन्न । तत्र संशयः—किं हानावविशेषेणैव देवयानः पन्थाः संनिपतेदुत विभागेन क्वचित्संनिपतेत्क्वचिन्नेति । यथा तावद्धानावविशेषेणैवोपायनानुवृत्तिरुक्तैवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तावाचक्ष्महे—गतेर्देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति क्वचिदर्थवती गतिः क्वचिन्नेति, नाविशेषेण । अन्यथा ह्यविशेषेणैवैतस्यां गतावङ्गीक्रियमाणायां विरोधः स्यात् । 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ( मु० ३।१।३ ) इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत । कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत् ? गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥ २९ ॥

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः क्वचिन्नेति; तल्लक्षणार्थोपलब्धेः । गतिकारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते । यत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहु देशान्तरप्राप्त्यायत्तं फलं श्रूयते, तत्रार्थवती गतिः । नहि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । नह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किंचिदस्ति, तत्रानर्थिका गतिः । लोकवच्चैष विभागो द्रष्टव्यो यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते नारोग्यप्राप्तावेवमिहापीति । भूयश्चैनं विभागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥ ३० ॥ इति सप्तदशं गतेरर्थवत्त्वाधिकरणम् ॥

---

## भामती ।

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥** यथा हानिसंनिधावुपायनमन्यत्र श्रुतमिति यत्रापि केवला हानिः श्रूयते तत्रापि उपायनमुपस्थापयत्येवं तत्सन्निधावेव देवयानः पन्थाः श्रुत इति यत्रापि सुकृतदुष्कृतहानिः केवला श्रुता तत्रापि देवयानं पन्थानमुपस्थापयितुमर्हति । नच निरञ्जनः परमं साम्यमुपैतीत्यनेन विरोधः; देवयानेन पथा ब्रह्मलोकप्राप्तौ निरञ्जनस्य परमसाम्योपपत्तेः । तस्माद्धानिमात्रे देवयानः पन्थाः संबध्यत इति प्राप्तम् । एवं प्राप्त उच्यते—विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति हि विदुषो विधूतपुण्यपापस्य विद्यया क्षेमप्राप्तिमाह । भ्रमनिबन्धनोऽक्षेमो याथात्म्यज्ञानलक्षणया विद्याया विनिवर्तनीयः । नासौ देशविशेषमपेक्षते । नहि जातु रज्जौ सर्पभ्रमनिवृत्तये समुत्पन्नं रज्जुतत्त्वज्ञानं देशविशेषमपेक्षते; विद्योत्पादस्यैव स्वविरोध्यविद्यानिवृत्तिरूपत्वात् । नच विद्योत्पादाय ब्रह्मलोकप्राप्तिरपेक्षणीया; यमनियमादिविशुद्धसत्त्वस्येहैव श्रवणादिभिर्विद्योत्पादात् । यदि परमारब्धकार्यकर्मक्षपणाय शरीरपातावध्यपेक्षेति न देवयानेनास्तीहार्थ इति श्रुतिदृष्टविरोधान्नापेक्षितव्य इति । अस्ति तु पर्यङ्कविद्यायां तस्यार्थ इत्युक्तं द्वितीयेन सूत्रेणेति । ये तु यदि पुण्यमपि निवर्तते, किमर्था तर्हि गतिरित्याशङ्क्य सूत्रमवतारयन्ति ।

## वेदान्तकल्पतरुः ।

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥** विद्योदयसमनन्तरक्षण एव कर्मदहनमिति प्रसङ्गागतं निरूप्य प्रस्तुतगुणोपसंहारचिन्ताया अपवादकत्वेनाधिकरणं संबन्धयन् पूर्वपक्षयति—**यथेत्यादिना** । मोक्षार्थमर्चिराद्यपेक्षा विद्योत्पत्त्यर्थं वा, विदुषोऽपि द्वैतदर्शनेन यत्नान्तरापेक्षणाद्वा । **नाद्यः**; विद्ययैव मोक्षश्रवणादित्याह—**विद्वानित्यादिना** । अन्यायमप्याह—**भ्रमनिबन्धन इति** । द्वितीयं प्रत्याह—**नच विद्योत्पादायेति** । **न तृतीय** इत्याह—**यदि परमिति** । भोगादारब्धकर्मक्षये द्वैतदर्शनोपरमसिद्धेर्न मार्गापेक्षेत्यर्थः । उक्तमर्थं निगमयति—**इति श्रुतिदृष्टविरोधादिति** । श्रुतिर्निरञ्जनः परमिति । **दृष्टं** न्यायः । भास्करमतमाह—**ये त्विति** । विदुषः पुण्यमपि निवर्तते

## कल्पतरुपरिमलः ।

मार्गेऽपि शरीरलाभोपपत्तेः । अवश्यं हि विद्यायाः दिव्यशरीरोत्पादनेऽपि सामर्थ्यं वक्तव्यम् । अन्यथा पर्यङ्कविद्यायामेव देवयानेन पथा ब्रह्मलोकं प्राप्तस्य पर्यङ्कस्थेन ब्रह्मणा सह संवादोक्तेः का गतिः ? ॥ २७ ॥ २८ ॥ **इति षोडशं सांपरायाधिकरणम् ॥**

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥ एनसः पापात् परीति** । अपपरी वर्जने इति वर्जनार्थोऽत्र परिशब्दः पञ्चम्यपाङ्परिभिरिति तद्योगे पञ्चमी । स्वकृतमन्यकृतं चास्मदनुभाव्यफलमेनो वर्जयित्वा विनाश्य

( १८ अधिकरणम् ) **अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥**

**सगुणासु विद्यासु गतिरर्थवती न निर्गुणायां परमात्मविद्यायामित्युक्तम् । सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते—यथा पर्यङ्कविद्यायामुपकोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायामिति । नान्यासु—यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति । तत्र संशयः—किं यास्वेवैषा गतिः श्रूयते तास्वेव नियम्येतोतानियमेन सर्वाभिरेवंजातीयकाभिर्विद्याभिरभिसंबध्येतेति । किं तावत्प्राप्तम् ? नियम इति । यत्रैव श्रूयते तत्रैव**

### भामती ।

गतेरर्थवत्त्वमुभयथा दुष्कृतनिवृत्त्या सुकृतनिवृत्त्या च । यदि पुनः पुण्यमनुवर्तेत ब्रह्मलोकगतस्यापीह पुण्यफलोपभोगायाऽऽवृत्तिः स्यात् । तथा चैतेन प्रतिपाद्यमानागत्यनावृत्तिश्रुतिविरोधः । तस्माद्दुष्कृतस्येव सुकृतस्यापि प्रक्षयः—इति, तैः पुनरनाशङ्कनीयमेवाशङ्कितम् । विद्याक्षिप्तायां हि गतौ केयमाशङ्का ? यदि क्षीणसुकृतः किमर्थमयं यातीति । नह्येषा सुकृतनिबन्धना गतिरपि तु विद्यानिबन्धना । तस्माद्बृद्धोक्तमेवोपवर्णनं साध्विति ॥ २९ ॥ ३० ॥ इति **सप्तदशं गतेरर्थवत्त्वाधिकरणम् ॥**

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥३१॥** प्रकरणं हि धर्माणां नियामकम् । यदि तु तन्नाद्रियते, ततो दर्शपूर्णमासज्योतिष्टोमादिधर्माः संकीर्येरन् । नच तेषां विकृतिषु सौर्यादिषु द्वादशाहादिषु चोदकतः प्राप्तिः;

### वेदान्तकल्पतरुः ।

चेद् भोगप्रयोजकाभावाद् गतिर्वृथा स्यादित्यर्थः । अन्यथा हि विरोध इति सूत्रभागं तन्मतेन योजयति—**यदि पुनरिति** । पुण्यक्षयेऽप्युपास्तेर्भोगप्रयोजिकाया विद्यमानत्वादाशङ्कानुत्थानेन दूषयति—**तैरिति** ॥ २९ ॥ ३० ॥ **इति सप्तदशं गतेरर्थवत्त्वाधिकरणम् ॥**[1]

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥** सगुणनिर्गुणविद्यासु गतिभावाऽभावव्यवस्थावत्सगुणास्वपि व्यवस्थाप्राप्तौ तदपवादार्थमारभ्यते । **ननु** ब्रह्मलोकप्राप्तेर्गत्यपेक्षत्वात्तत्फलासु सकलसगुणविद्यासु लिङ्गाद्गतिसिद्धेः कथं प्रकरणेन दुर्बलेन गतिव्यवस्था शङ्क्यते ? तत्राह—**प्रकरणं हीति** । लिङ्गस्य सामान्यसंबन्धसापेक्षत्वात्प्रकृते च तदभावादविनियोजकत्वे प्रकरणाद्व्यवस्थेत्यर्थः । यदि पञ्चाग्निविद्यासु श्रुतापि गतिर्विद्यान्तरे संचार्येत, ततोऽतिप्रसङ्ग इत्याह—**यदि त्विति** । प्रकरणस्यानियामकत्वे यत्र क्वचिच्छ्रुतं सर्वत्र श्रुतमेवेति दर्शपूर्णमासविकृतिषु सौर्यादिषु ज्योतिष्टोमविकृतिषु द्वादशाहादिषु च प्राकृतधर्माणामतिदेशतः प्राप्तिर्न स्यात्सर्वेषां सर्वत्रौपदेशिकत्वप्रसङ्गादित्याह—**नच तेषामिति** । अतिप्रसङ्गान्तरमाह—**नच दर्विहोमस्येति** । "यदेकया जुहुयाद्दर्विहोमं कुर्यादि"ति श्रूयते । यत्रैकया ऋचा जुहुयाद् होतुमारभेत, तत्र दर्विहोमं कुर्यादित्यर्थः । ये होमाः कुतश्चित्प्रकृतेर्धर्मं न गृह्णन्ति, नच केभ्यश्चित्स्वधर्मं प्रयच्छन्ति, तेषां दर्विहोम इति नाम, तेषु नाऽऽरादुपकारकमङ्गमस्ति । तत्र दर्विहोमा धर्मग्राहिणो न वेति संदेहे उत्पत्तावश्रुतदेवतात्मकाऽव्यक्तत्वेन सोमयागसाम्यात् तद्विकृतित्वात्तद्धर्मप्राप्तावष्टमे सिद्धान्तितम्—अग्निहोत्रं जुहोतीत्यादेरिव दर्विहोमस्य होमत्वात् सोमस्य च यागत्वाद् वैषम्येण न प्रकृतिविकृतिभावः । अव्यक्तत्वं च सति यागत्वे विशेषसंबन्धनिमित्तं न यागहोमत्वरूपात्यन्तवैलक्षण्ये प्रकृतिविकृतिभावमवगमयितुमर्हति । अस्तु तर्हि नारिष्टहोमप्रकृतिकत्वं दर्विहोमानाम् ? तदपि न; नतावदग्निहोत्रस्य नारिष्टप्रकृतिकत्वमुभयत्रापि कतिपयधर्मसद्भावेनागृह्यमाणविशेषत्वात् । नच होमान्तराणां नारिष्टप्रकृतिकत्वम्; तेषां नारिष्टप्रकृतिकत्वमग्निहोत्रप्रकृतिकत्वं वेत्यविनिगमप्रसङ्गात् । तस्मादपूर्वो दर्विहोम इति । तदेवमप्रकृतिविकृतिभूतस्य दर्विहोमस्याधर्मकत्वं सिध्यति । प्रकरणस्यानियामकत्वे यत्र क्वापि श्रुतस्य दर्विहोमशेषत्वापत्तेरित्यर्थः । **अपिच** प्रकरणस्याऽनियामकत्वे सर्वे धर्माः सर्वकर्मणां स्युः, तथा

### कल्पतरुपरिमलः ।

परिपालयतेति योजना । **पिपृतेति** । पॄ पालनपूरणयोरिति धातुः । "यदेनश्चकृमा वयं यद्वाऽन्यकृतमारिम अनया समिधा वयं सर्वं तदपमृन्महे" इति सामवेदमन्त्रे "इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः तेनो मुञ्चन्त्वेनसो यदन्यकृतमारिमेति" यजुर्वेदमन्त्रे चान्यकृतपापस्यान्यत्र सङ्क्रमणं स्पष्टमेव श्रूयते । एवमनेकश्रुतिप्रतिपन्नेऽर्थे शङ्कानुत्थानान्न तद्व्यावर्तनार्थत्वेन सूत्रं योजनीयमित्यपि द्रष्टव्यम् ॥ २९ ॥ ३० ॥ **इति सप्तदशं गतेरर्थवत्त्वाधिकरणम् ॥**

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ उभयत्रापीति** । नारिष्टहोमानामप्यङ्गप्रधा-

---

१ तत्र सूत्रे २—गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः २९ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ३० ॥

भवितुमर्हति; प्रकरणस्य नियामकत्वात् । यद्यन्यत्र श्रूयमाणाऽपि गतिर्विद्यान्तरं गच्छेच्छ्रुत्यादीनां प्रामाण्यं हीयेत; सर्वस्य सर्वार्थत्वप्रसङ्गात् । अपिचार्चिरादिकैकैव गतिरुपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत्पठ्यते, तत्सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात् । तस्मान्नियम इत्येवं प्राप्ते पठति—अनियम इति । सर्वासामेवाभ्युदयप्राप्तिफलानां सगुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति । नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः । नैषोऽस्ति विरोधः; शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथाहि श्रुतिः—'तद्य इत्थं विदुः'

## भामती ।

सर्वत्रौपदेशिकत्वात् । नच दर्विहोमस्याप्रकृतिविकारभूतस्याधर्मकत्वम् । नच सर्वधर्मयुक्तं कर्म किंचिदपि शक्यमनुष्ठातुम् । नचैवं सति श्रुत्यादयोऽपि विनियोजकाः; तेषामपि हि प्रकरणेन सामान्यसंबन्धे सति विनियोजकत्वात्, यत्रापि विना प्रकरणं श्रुत्यादिभ्यो विनियोगोऽवगम्यते, तत्रापि तन्निर्वाहाय प्रकरणस्यावश्यं कल्पनीयत्वात् । तस्मात्प्रकरणं विनियोगाय तन्नियमाय चावश्याभ्युपेतव्यम्, अन्यथा श्रुत्यादीनामप्रामाण्यप्रसक्तेः । तस्माद्यास्वेवोपासनासु देवयानः पितृयाणो वा पन्था आम्नातस्तास्वेव; नतूपासनान्तरेषु तदनाम्नानात् । नच 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति सामान्यवचनात्सर्वविद्यासु तत्पथप्राप्तिः; श्रद्धातपःपरायणानामेव तत्र तत्पथप्राप्तिः श्रूयते, नतु विद्यापरायणानाम् । अपिचैवं सत्येकस्यां विद्यायां मार्गोपदेशः सर्वासु विद्यास्वित्येकत्रैव मार्गोपदेशः कर्तव्यो न विद्यान्तरे । विद्यान्तरे च श्रूयते । तस्मान्न सर्वोपासनासु पथिप्राप्तिरिति प्राप्तम् । एवं प्राप्ते उच्यते—'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति न श्रद्धातपोमात्रस्य पथिप्राप्तिमाहापितु "विद्यया तदारोहन्ती"त्यत्र नाविद्वांसस्तपस्विन इति केवलस्य तपसः श्रद्धायाश्च तत्प्राप्तिप्रतिषेधाद्विद्यासहिते श्रद्धातपसी तत्प्राप्त्युपायतया वदन् विद्यान्तरशीलानामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां दर्शयति । तथाऽन्यत्रापि पञ्चाग्निविद्याधिकारेऽभिधीयते—'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्य-

## वेदान्तकल्पतरुः ।

चाशक्यानुष्ठानतेत्याह—**नच सर्वधर्मेति । ननु** प्रकरणस्यानियामकत्वेऽपि श्रुत्यादिभिः शेषशेषिभावावगमः स्यादत आह—**नचैवं सतीति ।** श्रुत्यादयो हि द्विप्रकाराः केचित्सामान्येन प्रवर्तन्ते यथा व्रीहीन् प्रोक्षतीति, केचिद्विशेषतो यथैन्द्र्या गार्हपत्यमिति । आद्येष्वाह—**तेषामपीति ।** इतरथाऽऽनर्थक्यादित्यर्थः । द्वितीयेष्वाह—**यत्रापीति ।** विशेषतस्तु श्रुतिविनियुक्तस्यापि धर्मस्य प्रकरणानपेक्षायामानर्थक्यमेव स्यात् । नह्यैन्द्र्या गार्हपत्यप्रकाशनमात्रेण किंचित्फलं लभ्यमित्यर्थः । यत्र स्वयमेव प्रकरणं विनियोजकं यथा प्रयाजादिषु, तत्र विनियोगाय यत्र श्रुत्यादीनि विनियोजकानि तत्र विनियोगनिर्वाहाय प्रकरणमवश्याभ्युपेयमित्यर्थः । प्रकरणस्य वाक्याद्बाधमाशङ्क्याह—**नच ये चेति ।** छान्दोग्यस्थपञ्चाग्निविद्यावाक्यगतश्रद्धातपसोर्वाक्यान्तरवशेन विद्यालक्षणार्थत्वं व्याख्याय वाक्येन प्रकरणबाधया सर्वसगुणाहंग्रहविद्यानामर्चिरादिद्वारा ब्रह्मलोकप्राप्तिसाधनत्वमुक्तम्, इदानीं वाजसनेयकगतपञ्चाग्निविद्यायां साक्षात्सत्यब्रह्मोपासनस्यार्चिरादिप्राप्तिसाधनत्वप्रतीतेरप्येवमेवेत्याह—**तथान्यत्रापीति । ननु** सत्यशब्देन फलाऽव्यभि-

## कल्पतरुपरिमलः ।

नार्थैर्वैहिराज्यादिधर्मैः कतिपयधर्मवत्त्वमस्तीति भावः । **श्रुत्यादयो हि द्विप्रकारा इति । ननु**—इदं विशेषकथनमनुपपन्नम्; व्रीहिश्रुतेर्निरुप्ताऽनिरुप्तव्रीहिष्विवैन्द्रीश्रुतेरुपास्तिप्रकरणाम्नाताऽनाम्नातानैन्द्रीषु साधारण्यात् । प्रकृतानुपयुक्तं चेदं प्रकारद्वयकथनम् । नचैवमिति यत्रापीति च टीकाग्रन्थयोः प्रकरणाम्नाताऽनाम्नातश्रुत्यादिविषयत्वस्यैव स्पष्टं प्रतीयमानतया तयोः सामान्यविशेषविषयश्रुत्यादिविषयत्वाप्रतीतेः । **उच्यते**—इन्द्रो देवता अस्या इति विग्रहवाक्यसमानार्थत्वादैन्द्रीश्रुतेर्विग्रहवाक्यस्थस्य च सर्वनाम्नः "कदाचन स्तरीरसी"ति प्रकृतैन्द्रीविषयत्वादैन्द्रीश्रुतेर्विशेषविषयत्वमुक्तम् । यत्रापीति टीकाग्रन्थस्य प्रकरणाभावे श्रुत्यादिकृतविनियोगनिर्वाहाय प्रकरणं कल्पनीयमित्येतदर्थपरत्वं न युक्तम्; नहि "यदाहवनीये जुहोती"त्यनारभ्याधीतश्रौतविनियोगे "यस्य पर्णमयी जुहूर्भवती"त्यनारभ्याधीतवाक्यविनियोगे च श्रुतिवाक्याभ्यां प्रकरणकल्पनमिष्यते । तथा सति श्रुत्यादिषूत्तरोत्तरमेव पूर्वपूर्वकल्पनामपेक्ष्य प्रमाणं, न तु पूर्वपूर्वमुत्तरोत्तरकल्पनामपेक्ष्येति बलाबलाधिकरणमर्यादाभङ्गापत्तेः । तस्मात् क्लृप्तकल्पनीयप्रकरणकश्रुत्यादिविषयत्वमुदाहृतटीकावाक्यद्वयस्यानुपपन्नमित्यालोच्याचार्यैर्विषयान्तरं दर्शितम् । **वस्तुतस्तु**—अप्रकरणाम्नातश्रुत्यादिकृतविनियोगनिर्वाहाय प्रकरणकल्पनमपि टीकोक्तमुपपादयितुं शक्यम्; श्रुत्यादिषूत्तरोत्तरस्य स्वपरिच्छेद्यप्रमेये पूर्वपूर्वकल्पनापेक्षा हि बलाबलाधिकरणदौर्बल्यहेतुत्वेन दर्शिता, साऽत्र नोच्यते, किंत्वनारभ्याधीतश्रुत्यादिकृतविशेषविनियोगनिर्वाहायाऽपूर्वैदमर्थ्यरूपसामान्यविनियोगहेतुत्वाकाङ्क्षालक्षणप्रकरणकल्पनमुच्यते । नच प्रमेयभेदेनान्यापेक्षामात्रं स्वप्रमेयपरिच्छेदार्थां श्रुत्यादिप्रवृत्तिं निरुन्धे, येन प्रकरणादिह श्रुत्यादीनां बलाबलाधिकरणोक्तदौर्बल्यमापतेदिति । **प्रकरणस्य वाक्याद्बाधमाशङ्क्याहेति ।** यद्यपि वाक्य-

( छा० ५। १०।१ ) इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती 'ये चेमेऽरण्ये श्रद्धा-तप इत्युपासते' (छा० ५।१०।१ ) इति विद्यान्तरशीलिनामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति । कथं पुनरवगम्यते विद्यान्तरशीलिनामियं गतिरिति ? ननु श्रद्धातपःपरायणानामेव स्यात्तन्मात्रश्रवणात् । नैष दोषः; नहि केवलाभ्यां श्रद्धातपोभ्यामन्तरेण विद्याबलमेषा गतिर्लभ्यते; 'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति श्रुत्यन्तरात् । तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम् । वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते—'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' ( बृ० ६।२।१५ ) इति । तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम्; सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात् । पञ्चाग्निविद्याविदां चेत्थंवित्तयैवोपात्तत्वाद्विद्यान्तरपरायणानामेवैतदुपादानं न्याय्यम् । 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' ( बृ० ६।२।१६ ) इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिर्देवयानपितृयाणयोरेवैनानन्तर्भावयति । तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः । स्मृतिरपि—'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः' (भ. गी. ८।२६ ) इति । यत्पुनर्देवयानस्य पथो द्विराम्नानमुपकोसलविद्यायां पञ्चाग्निविद्यायां च तदुभयत्राप्यनुचिन्तनार्थम् । तस्मादनियमः ॥ ३१ ॥ इत्यष्टादशमनियमाधिकरणम् ॥

## भामती ।

मुपासते' इति । सत्यशब्दस्य ब्रह्मण्येवानपेक्षप्रवृत्तित्वात् । तदेव हि सत्यम्; अन्यस्य मिथ्यात्वेन कथंचिदापेक्षिकसत्यत्वात्, पञ्चाग्निविदां चेत्थंवित्तयैवोपात्तत्वात् । विद्यासाहचर्याच्च विद्यान्तरपरायणानामेवेदमुपादानं न्याय्यम्; मार्गद्वयभ्रष्टानां चाधोगतिश्रवणात् । तत्रापि च योग्यतया देवयानस्यैवेहाध्वनोऽभिसंबन्धः । एतदुक्तं भवति—भवेत्प्रकरणं नियामकं यद्यनियमप्रतिपादकं वाक्यं श्रौतं स्मार्तं वा न स्यात्, अस्ति तु तत्, तस्य च प्रकरणाद्बलीयस्त्वम् । तस्मादनियमो विद्यान्तरेष्वपि सगुणेषु देवयानः पन्था । असकृन्मार्गोपदेशस्य च प्रयोजनं वर्णितं भाष्यकृतेति ॥३१॥

इत्यष्टादशमनियमाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

चारात्पञ्चाग्नय एवोच्यन्ताम्, अत आह—**पञ्चाग्निविदां चेति** । न केवलं लौकिकसत्यस्यापेक्षिकत्वाद् ब्रह्मणश्च निरङ्कुशसत्यत्वात्सत्यमुपासत इति ब्रह्मोपासनाया ग्रहणमपि तु पञ्चाग्निविद्यासंनिधानादपीत्याह—**विद्यासाहचर्याच्चेति** । दक्षिणोत्तरमार्गहीनानाम''थ य एतौ पन्थानौ न विदु''रित्यधोगतिश्रवणाद्विद्यान्तरशीलानां मार्गद्वयेऽन्तर्भावश्चेत्तर्ह्युपासकानां दक्षिणमार्गप्राप्तिरस्तीति, नेत्याह—**तत्रापि च योग्यतयेति** । विद्यया तदारोहन्तीति विद्यादेवयानयोः संबन्धं योग्यतयेत्यर्थः । यत्तु प्रकरणस्यानियामकत्वे दूषणजातमुक्तं, तदनङ्गीकारपरास्तमित्याह—**भवेत्प्रकरणमिति** । वाक्यबाधितविषयादन्यत्र प्रकरणस्य नियामकत्वमिष्यत इत्यर्थः । **श्रौतं** वाक्यं ये चेमेऽरण्ये श्रद्धां सत्यमुपासतइत्यादि, **स्मार्तं** शुक्लकृष्णे गती ह्येते इत्यादि । विद्यान्तरेष्वपि देवयानः पन्था अस्तीति शेषः । यत्तूक्तमेकस्य श्रुतस्य मार्गस्य सर्वत्रोपसंहारश्चेत्तर्ह्युपकोसलविद्यायां पञ्चाग्निविद्यायां चानेकत्र मार्गोक्तिवैयर्थ्यमिति, तत्राह—**असकृदिति** । उभयत्रानुचिन्तनं भाष्योक्तं प्रयोजनम् ॥ ३१ ॥ **यत्र** यस्मिन्प्राप्ते **कामाः** क्षुद्रविषयाः **परागता** निवृत्ता भवन्ति **तद्** ब्रह्मलोकाख्यं स्थानं विद्ययाऽऽरोहन्ति **तत्र** च स्थाने **दक्षिणा** दक्षिणमार्गगा न यन्ति । तपस्विनोऽप्यविद्वांसो न यन्ति, ये एतत्पञ्चाग्निरूपं विदुः ये चारण्ये स्थित्वा इमे वनस्थादयः श्रद्धां कृत्वा सत्यमवितथं परं ब्रह्मोपासते, उभयेऽप्यर्चिरादिमार्गं प्राप्नुवन्तीति शेषः । **एतौ** पन्थानौ दक्षिणोत्तरौ ये न विदुरेतत्प्राप्तिसाधनं नानुतिष्ठन्तीत्यर्थः । **ते** कीटादयो भवन्ति, **कीटा** गोमयादिसंभवाः । **पतङ्गाः** शलभाः । **दन्दशूकः** सर्पः ॥ **इत्यष्टादशमनियमाधिकरणम्** ॥[1]

## कल्पतरुपरिमलः ।

स्यापि स्वप्रमेयविशेषविनियोगनिर्वाहाय सामान्यविनियोगहेतुप्रकरणापेक्षणमनुपदमेवोक्तमिति वाक्येन स्वापेक्षितप्रकरणबाधनमशक्यशङ्कम्; तथापि यथाकथंचित्प्रकरणबाधकत्वेन शङ्कनीयं वाक्यमप्यत्र नास्तीति दर्शयितुं शङ्कोत्थापनमिति द्रष्टव्यम् । सिद्धान्ते प्रकरणस्य वाक्याविरोधिन एव वाक्येन सामान्यसंबन्धनिर्वाहायान्वेषणं, ननु विरोधिनोऽपीति यदुक्तम्, इदं सर्वासां विद्यानां गत्यपेक्षालक्षणलिङ्गस्यापि समानम् । लिङ्गमपि हि स्वविरोधिप्रकरणं नानुरुन्धे; दर्शपूर्णमास-

[1] तत्र सूत्रम् १—अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ३१ ॥

## ( १९ अधिकरणम् ) **यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥**

### भामती ।

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥** सगुणायां विद्यायां चिन्तां कृत्वा निर्गुणायां चिन्तयति। निर्गुणायां विद्यायां नापवर्गः फलं भवितुमर्हति । श्रुतिस्मृतीतिहासपुराणेषु विदुषामप्यपान्तरतमःप्रभृतीनां तत्तद्देहपरिग्रहपरित्यागौ श्रूयेते । तदपवर्गफलत्वे नोपपद्यते; अपवृक्तस्य तदनुपपत्तेः, उपपत्तौ वा तल्लक्षणायोगात् । अपुनरावृत्तिर्हि तल्लक्षणम् । तेन सत्यामपि विद्यायां तदनुपपत्तेर्न मोक्षः फलं विद्यायां, विभूतयस्तु तास्तास्तस्याः फलम् । अपुनरावृत्तिश्रुतिः पुनस्तत्प्रशंसार्थेति मन्यते । नच—'तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्य' इति श्रुतेर्विदुषो देहपातावधिप्रतीक्षावद्वसिष्ठादीनामपि प्रारब्धकर्मफलोपभोगप्रतीक्षेति—सांप्रतम्; येन हि कर्मणा वसिष्ठादीनामारब्धं शरीरं तत्प्रतीक्षा स्यात् । तथाच न शरीरान्तरं ते गृह्णीयुः । नच तावदेव चिरमित्येतदप्यार्जवेन घटते; समर्थहेतुसंनिधौ क्षेपायोगात् । तस्मादेतदपि विद्यास्तुत्यैव गमयितव्यम् । तस्मान्नापवर्गो विद्याफलम् । तथाचापवर्गाक्षेपेण पूर्वः पक्षः । अत्र च पाक्षिकं मोक्षहेतुत्वमित्यापाततः, अहेतुत्वं वेति तु पूर्वपक्षतत्त्वम् । राद्धान्तस्तु—**विद्याकर्मस्वनुष्ठानतोषितेश्वरचोदितम्। अधिकारं समाप्यैते प्रविशन्ति परं पदम् ॥** निर्गुणायां विद्यायामपवर्गलक्षणं श्रूयमाणं न स्तुतिमात्रतया व्याख्यातुमुचितम्; पौर्वापर्यपर्यालोचने भूयसीनां श्रुतीनामत्रैव तात्पर्यावधारणात् । नच यत्र तात्पर्यं तदन्यथयितुं युक्तम् । उक्तं हि 'न विधौ परः शब्दार्थः' इति । नच—विदुषामपान्तरतमःप्रभृतीनां तत्तद्देहसंचारात्सत्यामपि ब्रह्मविद्यायामनिर्मोक्षान्न ब्रह्मविद्या मोक्षस्य हेतुरिति—साम्प्रतम्; हेतोरपि सति प्रतिबन्धे कार्यानुपजनो न हेतुभावमपाकरोति । नहि वृन्तफलसंयोगप्रतिबद्धं गुरुत्वं न पतनमजीजनदिति प्रतिब-

### वेदान्तकल्पतरुः ।

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥** निर्गुणविद्यायां गतिं प्रतिषिध्य सगुणविद्यायां गतिप्रयोजकैश्वर्यविशेषदर्शनाद्गतिरर्थवतीत्युक्तम् । सगुणासु च गतेः सार्वत्रिकत्वं वर्णितम् । इदानीं निर्गुणविद्याया अपि मोक्षहेतुत्वाऽनुपपत्तेरैश्वर्यफलत्वं वक्तव्यम्, ऐश्वर्यविशेषश्च न गतिमन्तरेणेति सगुणास्विति विशेषणं व्यर्थमित्यभिहितव्यवस्थाक्षेपेण प्रत्यवस्थीयते । तत्रोपरितनकतिपयाधिकरणानां तात्पर्यमाह—**सगुणायामिति । अपुनरावृत्तिर्हीति ।** पुनर्देहानुपादानमित्यर्थः । **ननु** पुनर्देहानुपादानं नापवर्गः, किंत्विदानीं प्रवृत्तफलकर्मजन्यभाविदेहसंबन्धाभावः । वसिष्ठादीनां च सोऽस्तीति कथं नापवर्ग इत्याशङ्क्याह—**नच तावदेवेति ।** भाविदेहस्य सर्वस्याप्रवृत्तफलकर्मजन्यत्वाद्वसिष्ठादयो यदि देहान्तरं गृह्णीयुस्तर्ह्यप्रवृत्तफलकर्मजन्यदेहत्वान्मुक्ता न स्युः । अतश्च यदि प्रवृत्तफलं कर्ममात्रं प्रतीक्षेरंस्तर्हि वसिष्ठादिदेहमात्रारम्भकं प्रतीक्षेरन्निति देहान्तरग्रहणानुपपत्तिरित्यर्थः । यच्च वसिष्ठादीनां प्रारब्धकर्मप्रतीक्षायामस्मदादिविद्वन्निदर्शनं, तदप्यसिद्धमित्याह—**नच तावदिति ।** विद्याकर्मणोः सुष्ठ्वनुष्ठानं **विद्याकर्मस्वनुष्ठानम् ।** प्रतिबन्धापगमे गुरुत्वं न न हेतुरपि तु हेतुरेवेत्यर्थः । सेतुभेदेन हेतुनाऽपि निम्नदेशमापो नाभिसर्पन्तीति न, अपितु अभिसर्पन्त्येवेत्यर्थः । **आवर्जितो** वशीकृतः । **ध्रियते** प्रतिबध्यते । प्रारब्धमधिकारलक्षणं फलं याभ्यां विद्याकर्मभ्यां ते प्रारब्धाधिकारलक्षणफले विद्याकर्मणी इत्येको बहुव्रीहिः तादृशे विद्याकर्मणी यस्य स प्रारब्धाधिकारलक्षणफलविद्याकर्मा पुरुष इत्यपरः । सौभरिवद्युगपत्क्रमेण वेति प्रवृत्तफलादेव कर्मणो नानादेहप्राप्तिरुक्ता । **मुक्तो** जीवन्मुक्तः । **अनाभोगात्मिकयेति ।**

### कल्पतरुपरिमलः ।

प्रकरणादिभ्यः पूषाद्यनुमन्त्रणमन्त्राणां पूषदेवताकयागादिषूत्कर्षाभ्युपगमात् । **ननु**—विद्याद्वये गत्याम्नानमनुचिन्तनार्थमित्येतदयुक्तम्; सर्वास्वपि विद्यासु गतिरनुचिन्तनीया, तत्क्रतुन्यायाद्गतेरप्यान्तरालिकविद्याफलत्वात्, "एतमितः प्रेत्याभिसंभवितास्मी"ति शाण्डिल्यविद्यायां ब्रह्मप्राप्तिवद्गतेरप्यनुचिन्तनीयकोटौ निवेशनात् । तत्र हि प्रेत्येति प्रकर्षेण गमनं दूराध्वगमनमुच्यते, तत्तु देवयानमार्गगमनमेव भवति। सूत्रकारेणापि चतुर्थाध्याये गत्यनुचिन्तनस्य सकलविद्यासाधारण्यमुक्तम्—विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्चेति । गतिचिन्तनस्य सर्वब्रह्मविद्यासाधारण्येऽपि पञ्चाग्निविद्यायां ब्रह्मविषयायां प्राप्त्यर्थत्वेन तद्यइत्थं विदुरिति वचनं सफलम् । उपकोसलविद्यायाम् "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु चने"त्यारभ्यार्चिरादिमार्गकथनम् अक्षिपुरुषोपासकस्य पुत्रैर्दहनकर्मणोऽकृतत्वेऽपि त्वरितमेवार्चिरादिगतिप्राप्तिरस्ति न विद्यान्तरशीलिनामिव तत्प्राप्तौ विलम्बोऽस्तीति विशेषप्रदर्शनार्थत्वेन सफलम् । "एतेन प्रतिपद्यमाना इमं मानवं नावर्तन्त" इत्यनावृत्तिफलरूपविशेषप्रदर्शनेनापि सफलम् । तस्मादुभयत्राम्नातमनुचिन्तनार्थमित्येतत्कथमुपपादनीयमिति—**चेत्, इत्थम्;** यत् प्राप्त्यर्थमाम्नानं यच्च विशेषप्रदर्शनार्थं तदनुचिन्तनार्थमपि भवति । अनुचिन्तनमेव हि साक्षाद्विद्याशेषः तद्विषयभूता गतिः क्वाचित्कस्तदीयो विशेषश्चानुचिन्तननिर्वाहार्थत्वेन कथितोऽतः प्राधान्यादनुचिन्तनं फलत्वेनोक्तमिति न कश्चिद्दोषः ॥ ३१ ॥ **इत्यष्टादशमनियमाधिकरणम् ॥**

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ ऐश्वर्यफलकत्वमिति ।** निर्गुणविद्यायाः परममुक्ति-

विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः संपत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते। नहि पाकसाधनसंपत्तावोदनो भवेन्न वेति चिन्ता संभवति, नापि भुञ्जानस्तृप्येन्न वेति चिन्त्यते। उपपन्ना त्वियं चिन्ता; ब्रह्मविदामपि केषांचिदितिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात् । तथाह्यपान्तरतमानाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात्कलिद्वापारयोः संधौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति। वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां संबभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः श्रूयते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात्स्कन्दत्वेन प्रादुर्बभूव। एवमेव दक्षनारदप्रभृतीनां भूयसी देहान्तरोत्पत्तिः कथ्यते तेन तेन निमित्तेन स्मृतौ। श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च केचित्पतिते पूर्वदेहे देहान्तरमाददते केचित्तु स्थित एव तस्मिन्योगैश्वर्यवशादनेकदेहादानन्यायेन । सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते। तदेतेषां देहान्तरोत्पत्तिदर्शनात्प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति । अत उत्तरमुच्यते। न। तेषामपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानामधिकारतन्त्रत्वात्स्थितेः। यथासौ भगवान्सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसान उदयास्तमयवर्जितं कैवल्यमनुभवति 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' ( छा० ३।११।१ ) इति श्रुतेः। यथा च वर्तमाना ब्रह्मविद आरब्धभोगक्षये कैवल्यमनुभवन्ति, 'तस्य तावदेव चिरं यावन्न विमोऽक्ष्येथ संपत्स्ये' ( छा० ६।१४।२) इति श्रुतेः, एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते। तदवसाने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येणैव गृहादिव गृहान्तरमन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान्युगपत्क्रमेण वाधितिष्ठन्ति । नचैते जातिस्मरा इत्युच्यन्ते; 'त एवैते' इति स्मृतिप्रसिद्धेः। यथा हि सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामाऽव्युदस्य स्वं देहं जानकं देहमाविश्य व्युद्य तेन पश्चात्स्वमेव देहमाविवेशेति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत्, ततोऽन्यदप्यदग्ध-

## भामती।

न्धापगमे तत्कुर्वन्न तद्धेतुः। नच न सेतुप्रतिबन्धानामपां निम्नदेशानभिसर्पणमिति सेतुभेदे न निम्नमभिसर्पन्ति, तद्वदिहापि विद्याकर्माराधनावर्जितेश्वरविहिताधिकारपदप्रतिबद्धा ब्रह्मविद्या यद्यपि न भुक्तिं दत्तवती; तथापि तत्परिसमाप्तौ प्रतिबन्धविगमे दास्यति। यथा हि प्रारब्धविपाकस्य कर्मणः प्रक्षयं प्रतीक्षमाणश्चरमदेहसमुत्पन्नब्रह्मसाक्षात्कारोऽपि ध्रियतेऽथ तत्प्रक्षयान्मोक्षं प्राप्नोति, एवं प्रारब्धाधिकारलक्षणफलविद्याकर्मा पुरुषो वसिष्ठादिर्विद्वानपि तत्क्षयं प्रतीक्षमाणो युगपत्क्रमेण वा तत्तद्देहपरिग्रहपरित्यागौ कुर्वन्मुक्तोऽप्यनाभोगात्मिकया प्रख्यया सांसारिक इव विहरति। तदिदमुक्तम्—**सकृत्प्रवृत्तमेव हि ते कर्माशयमधिकारफलदानायेति**। प्रारब्धविपाकानि तु कर्माणि वर्जयित्वा व्यपगतानि ज्ञानेनैवातिवाहितानि। **नचैते जातिस्मरा इति**। यो हि परवशो देहं परित्याज्यते देहान्तरं च नीतः पूर्वजन्मानुभूतस्य स्मरति स जन्मवाञ्जातिस्मरश्च। गृहादिव गृहान्तरे स्वेच्छया कायान्तरं संचरमाणो न जातिस्मर आख्यायते। व्युद्य विवादं कृत्वा। व्यतिरेकमाह—**यदि ह्युपयुक्ते सकृत्प्रवृत्ते** प्रारब्धविपाके

## वेदान्तकल्पतरुः।

अविस्तारात्मिकया। **प्रख्यया** प्रतीत्या दृढाभिमानेन रहितयेत्यर्थः। **विहरति** चेष्टते। सकृत्प्रवृत्तमिति भाष्ये किमर्थप्रवृत्तः कर्मसमूहः इति न ज्ञायतेऽतः पूरयति—**अधिकारेति**। **ननु** प्रवृत्तफलं कर्माशयं भोगेनातिवाहयन्तु, अप्रवृत्तफलानां तु कथं निवृत्तिरत आह—**प्रारब्धविपाकानि त्विति**। **व्यपगतानि** निवृत्तानि। तत्र हेतु**र्ज्ञानेनैवेति**। जातिस्मरस्याधिकारिकपुरुषाद्वैषम्यमाह—**यो हीति**। **परित्याज्यते** परित्यक्तत्वेन क्रियते। **पूर्वजन्मानुभूतस्येति**। कर्मणि षष्ठी। **स जन्मवानिति**। जातोऽहमित्यबाधिताभिमानवानित्यर्थः। आधिकारिकपुरुषस्य जातिस्मराद्वैषम्यमाह—**गृहादिवेति**। बाधितदेहाभिमान इति प्रदर्शनार्थं गृहोदाहरणम्। व्युद्येति भाष्यपदमुपादाय व्याचष्टे—**विवादं कृत्वेति**। **व्यतिरेकमाहेति**। प्रवृत्तफलमेव कर्मभोगेन क्षपयन्त्याधिकारिका इत्युक्तं, तस्य व्यति-

बीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वाशङ्क्येत, न त्वियमाशङ्का युक्ता ; ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् । तथाहि श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ( मुण्ड० २।२।८ ) इति । 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' ( छा० ७।२६।२ ) इति चैवमाद्या । स्मृतिरपि— 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' ( भ. गी. ४।३७ ) 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति चैवमाद्या । नचाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते । नह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते । प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः; 'तस्य तावदेव चिरम्' ( छा० ६।१४।२ ) इति शरीरपातावधि क्षेपकरणात् । तस्मादुपपन्ना यावदधिकारमाधिकारिकाणामवस्थितिः । नच ज्ञानफलस्यानैकान्तिकता । तथाच श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' (बृ० १।४।१०) इति । ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः । ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाः कैवल्यं प्रापुरित्युपपद्यते ; 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मरणात् । प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः । कर्मफले हि स्वर्गादावनुभवानारूढे स्यादाशङ्का भवेद्वा न वेति । अनुभवारूढं तु ज्ञानफलम्; 'यत्साक्षादपरोक्षाद्ब्रह्म' ( बृ० ३।४।१ ) इति श्रुतेः, 'तत्त्वमसि' ( ६।८।७ ) इति च सिद्धवदुपदेशात् । नहि 'तत्त्वमसि' इत्यस्य वाक्यस्यार्थस्तत्त्वं मृतो भविष्यसीत्येवं परिणेतुं शक्यः । 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' ( बृ० १।४।१० ) इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति । तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः ॥ ३२ ॥ इत्येकोनविंशं यावदधिकाराधिकरणम् ॥

## भामती ।

कर्मणि कर्मान्तरमप्रारब्धविपाकमिति । स्यादेतत्—विद्ययाऽविद्यादिक्लेशनिवृत्तौ नावश्यं निःशेषस्य कर्माशयस्य निवृत्तिरनादिभवपरम्पराहितस्यानियतविपाककालस्यासंख्येयत्वात्कर्माशयस्येत्यत आह—नचाविद्यादिक्लेशदाहे सतीति । नहि समाने विनाशहेतौ कस्यचिद्विनाशो नापरस्येति शक्यं वदितुम् । तत्किमिदानीं प्रवृत्तफलमपि कर्म विनश्येत् ? तथाच न विदुषो वसिष्ठादेर्देहधारणेत्यत आह—प्रवृत्तफलस्य तु कर्मण इति । तस्य तावदेव चिरमिति श्रुतिप्रामाण्यादनागतफलमेव कर्म क्षीयते न प्रवृत्तफलमित्यवगम्यते । अपिच नाधिकारवतां सर्वेषामृषीणामात्मतत्त्वज्ञानं तेनाव्यापकोऽयं पूर्वपक्ष इत्याह—ज्ञानान्तरेषु चेति । तत्किं तेषामनिर्मोक्ष एव, नेत्याह—ते पश्चादैश्वर्य क्षय इति । निर्विण्णा विरक्ताः । प्रतिसंचरः प्रलयः । अपिच स्वर्गादावनुभवपथमनारोहति शब्दैकसमधिगम्ये विचिकित्सा स्यादपि मन्दधियामामुष्मिकफलत्वं प्रति । यथाचार्थवादः—'को हि तद्वेद यदमुष्मिँल्लोकेऽस्ति वा न वेति' । अद्वैतज्ञानफलत्वे मोक्षस्यानुभवसिद्धे विचिकित्सागन्धोऽपि नास्तीत्याह—प्रत्यक्षफलत्वाच्चेति । अद्वैततत्त्वसाक्षात्कारो हि अविद्यासमारोपितं प्रपञ्चं समूलघातं निघ्नन्घोरं संसाराङ्गारपरितापमुपशमयति पुरुषस्येत्यनुभवादिति स्फुटमुपपत्तिदृढिम्नश्च श्रुतिर्दर्शिता । तच्चानुभवाद्वामदेवादीनां सिद्धम् । ननु तत्त्वमसि वर्तस इति वाक्यं कथमनुभवमेव द्योतयतीत्यत आह—नहि तत्त्वमसीत्यस्येति । वर्तमानापदेशस्य भविष्यदर्थता मृतशब्दाध्याहारश्चाशक्य इत्यर्थः ॥ ३२ ॥ इत्येकोनविंशं यावदधिकाराधिकरणम् ॥

## वेदान्तकल्पतरुः ।

रेकमुपन्यस्य दूषयतीत्यर्थः । प्रवृत्तफलाऽनेककर्मजन्यफलभोगस्याधिकारिष्वपीष्टत्वात्कर्मान्तरशब्दं व्याख्याति—अप्रारब्धेति । त्वं तदसि वर्तस इति ब्रह्मात्मत्वं जीवस्य वर्तत इत्युक्तेऽनुभवारूढत्वं ब्रह्मात्मत्वस्य न प्रतीयतेऽर्थसत्तामात्रस्योक्तत्वादित्याशङ्कायाः परिहारमाह—वर्तमानापदेशस्येति । स्वप्रकाशं ब्रह्मात्मत्वमत उपदिष्टे तस्मिन्ननुभवेन भाव्यम्; अज्ञानस्य प्रतिबन्धकस्यापनीतत्वात् । नचेदनुभूयेत, तर्हि तदिदानीं नास्तीति मृतस्त्वं तद् भविष्यसि इत्यध्याहार्यम् । अतोऽध्याहारभयाद् वर्तमानापदेश उत्तमाधिकारिणं प्रत्यनुभवपर्यन्ततामपि गमयतीत्यर्थः । अथ आधिकारिकैश्वर्यप्रापककर्मक्षयानन्तरं ततः पदादूर्ध्वः विलक्षणः सन् साक्षादेत्य उद्गम्य नैवोदेता नास्तमेताऽऽदित्यः किं तर्ह्येकल एव मध्ये स्वात्मनि स्थाता[1] ॥ ३२ ॥ इत्येकोनविंशं यावदधिकाराधिकरणम् ॥

---

१ तत्र सूत्रम् १—यावदधिकारमवस्थितिराधिकारिकाणाम् ३२ ॥

## ( २० अधिकरणम् ) अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

**वाजसनेयके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्' ( बृ० ३।८।८ ) इत्यादि । तथाथर्वणे श्रूयते—'अथ परा यया तदक्षरमधिग-**

### भामती ।

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥** अक्षरविषयाणां प्रतिषेधधियां सर्ववेदवर्तिनीनामवरोध उपसंहारः प्रतिषेधसामान्यादक्षरस्य तद्भावप्रत्यभिज्ञानात् । आनन्दादयः प्रधानस्येत्यत्रायमर्थो यद्यपि भावरूपेषु विशेषणेषु सिद्धस्तन्न्यायतया च निषेधरूपेष्वपि सिद्ध एव; तथापि तस्यैवैष प्रपञ्चोऽवगन्तव्यः । **निदर्शनम् जामदग्न्येऽहीन इति** । यद्यपि शाबरे दत्तोत्तरमत्रोदाहरणान्तरं; तथापि तुल्यन्यायतयैतदपि शक्यमुदाहर्तुमित्युदाहरणान्तरं दर्शयति । तत्र शाबरमुदाहरणमस्त्याधानं यजुर्वेदविहितम्—'य एवं विद्वानग्निमाधत्त' इति । तदङ्गत्वेन यजुर्वेद एव 'य एवं विद्वान्वारवन्तीयं गायति य एवं विद्वान्यज्ञायज्ञीयं गायति य एवं विद्वान्वामदेव्यं गायति' इति विहितम् । एतानि च सामानि सामवेदेपूत्पन्नानि । तत्रेदं संदिह्यते—किमेतानि यत्रोत्पद्यन्ते तत्रत्येनैवोच्चैष्ट्वेन स्वरेणाधाने प्रयोक्तव्यान्यथ यत्र विनियुज्यन्ते तत्रत्येनोपांशुत्वेन ? स्वरेण 'उच्चैः साम्नोपांशु यजुषा' इति श्रुतेः । किं तावत्प्राप्तम् ? उत्पत्तिविधिनैवापेक्षितोपायत्वात्मना विहितत्वादङ्गानां तस्यैव प्राथम्यात्तन्निबन्धन एवोच्चैःस्वरे प्राप्त उच्यते—**गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः** । **अयमर्थः**—उत्पत्तिविधिर्गुणो विनियोगविधिस्तु प्रधानं, तदनयोर्व्यतिक्रमे विरोधे उत्पत्तिविध्यालोचनेनोच्चैष्ट्वं विनियोगविध्यालोचनेन चोपांशुत्वं सोऽयं विरोधो व्यतिक्रमस्तस्मिन्व्यतिक्रमे मुख्येन प्रधानेन नियुज्यमानस्वरूपेण तस्य वारवन्तीयादेर्वेदसंयोगो ग्राह्यो नोत्पद्यमानत्वेन

### वेदान्तकल्पतरुः ।

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥** पूर्वत्राधिकारिकाणां प्रारब्धकर्मण एव शरीरान्तरारम्भसंभवेन कर्मान्तरस्य निमित्तत्वेत्युक्तम्, एवमिहापि तत्तत्प्रकरणपठितनिषेधेभ्य एवोपलक्षणतया सर्वप्रपञ्चनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां तत्र ब्रह्मप्रमितिहेतुत्वमित्याशङ्क्यते । अक्षरस्य धियोऽक्षरधियः । अक्षरे धर्मिणि प्रपञ्चप्रतिषेधधिय इत्यर्थे सूत्रपदं व्याचष्टे—**अक्षरविषयाणामिति** । **प्रतिषेधसामान्यादिति** । प्रतिषेधानां भूमनिवर्तकत्वसामान्यादित्यर्थः । **तस्यैवैष प्रपञ्च इति** । अस्यार्थः—

> भवेद् ब्रह्मस्वरूपत्वादानन्दाद्युपसंहृतिः । निषेधानामनात्मत्वान्नोपसंहारसंभवः ॥ १ ॥
> आनन्त्याच्च निषेध्यानां तन्निषेधधियामपि । असंख्येयतयैकत्र कथं शक्योपसंहृतिः ॥ २ ॥
> स्थालीपुलाकवर्तिकचिन्निषेधेनान्यलक्षणे । यथाश्रुतेन तत्सिद्धेरुपसंहरणं वृथा ॥ ३ ॥

इत्याशङ्कानिवृत्त्यर्थमेतदधिकरणम् ॥ निवृत्तिप्रकारस्तु—

> प्रतिषेधा अनात्मानोऽप्यात्मलक्षणतां गताः । आत्मप्रमितिसिद्ध्यर्थं संयास्यन्त्यश्रुतस्थले ॥ ४ ॥

न च निषेधानन्त्यादनुपसंहारः;

> प्रपञ्चो हि निषेध्योऽत्र भूतं वा भौतिकानि वा । इन्द्रियाणि शरीरं वाऽविद्या वा विश्वकारणम् ॥ ५ ॥
> एषां परिमितत्वेन निषेधपरिमेयतः । साकाङ्क्षेषु निषेधेषु गच्छेयुः पूर्तये परे ॥ ६ ॥

तत्राप्यस्थूलवाक्ये परिपूर्णो निषेधः; अस्थूलमित्याद्यदीर्घमित्यन्तेन शरीरनिषेधात्, अतम इत्यविद्यानिषेधात्; अवाय्वनाकाशमिति भूतनिषेधात्, अचक्षुष्कमित्यादिनेन्द्रियनिषेधात्, अन्यत्र त्वस्मादुपसंहार इति सूचयितुं भगवता सूत्रकारेणाक्षरधियामित्युक्तम् । भाष्यकारेणौपसदवदिति सूत्रोक्तदृष्टान्तविवरणाय जामदग्न्याहीनगतमन्त्रा उदाहृताः । तएव गुणा मुख्याधिकरणविषया इति च सूचितम् । प्रधानकर्मत्वाच्चाङ्गानामिति तत्रैव सूत्रयोजनात् । शाबरतन्त्रे चान्यदुदाहृतमिति विरोधमाशङ्क्याह—**यद्यपीति** । वारवन्तादिपदवन्ति सामानि वारवन्तीयादीनि वारवन्तीयादेर्वेदसंयोग इति

### कल्पतरुपरिमलः ।

फलकत्वासंभवे निर्गुणविद्यावाक्यशेषाम्नातं "स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वे"त्यादिसगुणविद्याफलकीर्तनं निर्गुणविद्याफलमेवाभ्युपेतं स्यादिति भावः ॥ ३२ ॥ **इत्येकोनविंशं यावदधिकाराधिकरणम् ॥**

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ वारवन्तादिपदवन्तीति ।**

म्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' (मु० १।१।५) इत्यादि। तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते। तत्र च क्वचित्केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते। तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये श्रुतिविभागाद्व्यवस्थाप्राप्तावुच्यते—अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः सामान्यतद्भावाभ्याम्—समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः। तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते। तत्र किमित्यन्यत्र कृता बुद्धयोऽन्यत्र न स्युः? तथाच 'आनन्दादयः प्रधानस्य' (ब्र० सू० ३।३।११) इत्यत्र व्याख्यातम्। तत्र विधिरूपाणि विशेषणानि चिन्तितानीह प्रतिषेधरूपाणीति विशेषः। प्रपञ्चार्थश्चायं चिन्ताभेदः। औपसदवदिति निदर्शनम्। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणाम् 'अग्ने वेर्होत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसंबन्धो भवति। अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानाम्। एवमिहाप्यक्षरतन्त्रत्वात्तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे—'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' (जै० सू० ३।३।८) इत्यत्र ॥ ३३ ॥ इति विंशमक्षरध्यधिकरणम् ॥

## भामती।

गुणेन। कुतः? विनियुज्यमानत्वस्य मुख्यत्वेनोत्पद्यमानत्वस्य गुणत्वेन तदर्थत्वाद्विनियुज्यमानार्थत्वादुत्पद्यमानत्वस्य। **एतदुक्तं भवति**—यद्यप्युत्पत्तिविधावपि चातूरूप्यमस्ति, विधित्वस्याविशेषात् तन्मात्रनान्तरीयकत्वाच्च चातूरूप्यस्य; तथापि वाक्यानामैदंपर्यं भिद्यते एकस्यैव विधेरुत्पत्तिविनियोगाधिकारप्रयोगरूपे चतुर्षु मध्ये किंचिदेव रूपं केनचिद्वाक्येनोल्लिख्यते यदन्यतोऽप्राप्तम्। तत्र यद्यपि सामवेदे सामानि विहितानि; तथापि तद्वाक्यानां तदुत्पत्तिमात्रपरता विनियोगस्य याजुर्वैदिकैरेव वाक्यैः प्राप्तत्वात्। तथाचोत्पत्तिवाक्येभ्यः समीहितार्थाप्रतिलम्भाद्विनियोगवाक्येभ्यश्च तदवगतेस्तदर्थान्येवोत्पत्तिवाक्यानि भवन्तीति तत्र येन वाक्येन विनियुज्यन्ते तस्यैव स्वरस्य साधनत्वसंस्पर्शिनो ग्रहणं नतु रूपमात्रस्पर्शिन इति। भाष्यकारीयमप्युदाहरणमेवमेव योजयितव्यम्। उद्गातृवेदोत्पन्नानां मन्त्राणामुद्गात्रा प्रयोगे प्राप्ते अध्वर्युप्रदानकेऽपि पुरोडाशे विनियुक्तत्वात्प्रधानानुरोधेनाध्वर्युणैव तेषां प्रयोगो नोद्गात्रेति दार्ष्टान्तिके योजयति—**एवमिहापीति** ॥ ३३ ॥ इति विंशमक्षरध्यधिकरणम् ॥

## वेदान्तकल्पतरुः।

वेदसंयोगे सिद्धे तत्रत्येनैव स्वरेण स्वरवत्त्वं च सिध्यतीत्यभिप्रायः। **विनियुज्यमानत्वस्य मुख्यत्वेनेति**। तद्धि फलसंनिकर्षान्मुख्यमिति। **ननु** सर्वेषां विधीनामुत्पत्तिविनियोगाधिकारप्रयोगात्मकत्वात्कथं विधीनां शेषशेषित्वमित्यत्राह—**एतदुक्तमिति**। विधित्वं हि अपेक्षितोपायत्वरूपम्। तत्रानुष्ठेयभावार्थज्ञानादुत्पत्तिरस्ति। अस्तिच किंचित्प्रति शेषत्वाद्विनियोगः। अस्ति च फलसाधने स्वामित्वं पुरुषस्याधिकारः। अस्तिचानुष्ठेयत्वबोधात् प्रयोग इत्युत्पत्तिविधावपि विद्यते चातूरूप्यमिति। ऐदंपर्यभेदे हेतुमाह—**एकस्यैव हि विधेरिति**। विधेर्विध्यर्थस्य उत्पत्त्यादिषु मध्ये यद्येकमप्राप्तमितराणि प्राप्तानि, तर्हि तदेव रूपं वाक्येनोल्लिख्यते नेतराण्यन्यतः प्राप्तेः। यदि सर्वाण्यन्यतोऽप्राप्तानि, तर्ह्यगत्या सर्वाण्युल्लिख्यन्ते इत्यर्थः। प्रकृते तु विनियोगादेरन्यतः प्राप्तेरुत्पत्तिमात्रपरत्वमित्याह—**तत्रेति**। **समीहितार्थाप्रतिलम्भादिति**। समीहितशेषः समीहितार्थः। भावप्रधानो निर्देशः। हितसाधनत्वं तदप्रतिलम्भादित्यर्थः। **तदर्थान्येवेति**। विनियोगवाक्यार्थान्येवेत्यर्थः। भवतु साम्नो सामवेदे उत्पत्तिर्यजुर्वेदे च विनियोगस्ततः किं जातमत आह—**तत्र येन वाक्येनेति**। येन वाक्येन सामानि विनियुज्यन्ते तस्यैव तद्वाक्यप्रकाशितत्वकृतस्य उपांशुस्वरस्य ग्रहणं युक्तम्। तस्य साधनत्वसंस्पर्शात्, विनियोगदशायां हि साम्नां साधनत्वं ज्ञायते नोत्पत्तिदशायां, साधनत्वं च प्रधानम्। उत्पत्तिवाक्यप्रकाशितत्वनिमित्तः स्वरः सामरूपमात्रसंस्पर्शी, उत्पत्तिवाक्यस्य रूपमात्रप्रकाशकत्वादित्यर्थः ॥ ३३ ॥ इति **विंशमक्षरध्यधिकरणम्** ॥[१]

## कल्पतरुपरिमलः।

अश्वं नत्वा वारवन्तमिति वारवन्तपदवत्यामृचि गीतं साम वारवन्तीयम्। यज्ञायज्ञा वो अग्नय इति यज्ञायज्ञापदवत्यामृचि गीतं साम यज्ञायज्ञीयम्। वामदेव्यं तु वामदेवेन दृष्टं साम। वारवन्तादिपदवन्तीति बहुवचनं छत्रिन्यायेन योज्यम्। **उत्पत्त्यादिषु मध्यइति**। यद्यपि सर्वेषां विधीनामुत्पत्तिविनियोगप्रयोगाधिकारशक्तिरस्ति; तथापि लाघवार्थं विधयो

१ तत्र सूत्रम् १—अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

( २१ अधिकरणम् ) **इयदामननात् ॥ ३४ ॥**

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु० ३।१।१) इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति। तथा कठाः 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायाऽऽतपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' (क० ३।१)। किमत्र विद्यैकत्वमुत विद्यानानात्वमिति संशयः। किं तावत्प्राप्तम्? विद्यानानात्वमिति। कुतः? विशेषदर्शनात्। द्वा सुपर्णेत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते एकस्यचाभोक्तृत्वं दृश्यते। ऋतं पिबन्तावित्यत्रोभयोरपि भोक्तृत्वमेव दृश्यते, तद्वेद्यरूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति विद्यैकत्वमिति। कुतः? यत उभयोरप्यनयोर्मन्त्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपमभिन्नमामनन्ति। ननु दर्शितो रूपभेदः, नेत्युच्यते; उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतो नार्थान्तरम्। 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते। वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' (श्वे० ४।७) इति। 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबत्यशनायाद्यतीतः परमात्मापि साहचर्याच्छत्रिन्यायेन पिबतीत्युपचर्यते; परमात्मप्रकरणं ह्येतत् 'अन्यत्र धर्मादन्यत्राधर्मात्' (क० २।१४) इत्युपक्रमात्।

## भामती।

**इयदामननात् ॥ ३४ ॥** गुहां प्रविष्टावात्मानौ' इत्यत्र सिद्धोऽप्यर्थः प्रपञ्च्यते। एकत्र भोक्त्रभोक्त्रोर्वेद्यता, अन्यत्र भोक्त्रोरेवेति वेद्यभेदाद्विद्याभेद इति। नच सृष्टीरुपदधातीतिवत्पिबदपिबल्लक्षणापरं पिबन्ताविति नेतुमुचितम्; सति मुख्यार्थसंभवे तदाश्रयणायोगात्। नच वाक्यशेषानुरोधात्तदाश्रयणम्; संदेहे हि वाक्यशेषान्निर्णयो नच मुख्यलाक्षणिकग्रहणविषयो विशयः संभवति; तुल्यबलत्वाभावात्, प्रकरणस्य च ततो बलीयसा वाक्येन बाधनात्। तस्माद्वेद्यभेदाद्विद्याभेद इति प्राप्त उच्यते—द्वासुपर्णेत्यत्र ऋतं पिबन्तावित्यत्र च द्वित्वसंख्योत्पत्तौ प्रतीयते, तेन समानतौत्सर्गिकी। पिबन्ताविति द्वयोः पिबत्ता या सा बाधनीया, सा चोपक्रमोपसंहारानुरोधेन न द्वयोरपि तु

## वेदान्तकल्पतरुः।

**इयदामननात् ॥ ३४ ॥** पुनरुक्तिमाशङ्क्याह—**गुहामिति**। पूर्वत्र प्रतिपाद्यब्रह्मप्रत्यभिज्ञानाद्विद्यैक्येऽक्षरधियामुपसंहार उक्तः, इह तु प्रतिपाद्यभेदाद्विद्याभेद इत्याह—**एकत्रेति**। सिद्धोऽर्थः प्रपञ्च्यत इत्युक्तम्, तमेव प्रपञ्चप्रकारमाह—**नच सृष्टीति**। यथा "सृष्टीरुपदधाती"ति सृष्ट्यसृष्टिमन्त्रकेष्टकासमूहलक्षणया सर्वसमूहपरो भवति, एवं पिबच्छब्दोऽपि पिबदपिबत्पर इत्यर्थः। सृष्ट्यधिकरणं गुहाप्रविष्टाधिकरणे (ब्र. अ. १ पा. २ सू. ११) ऽनुक्रान्तम्। **ननु** यः सेतुरीजानानामक्षरं ब्रह्म यत्परमिति वाक्यशेषे परमात्मप्रतिपादनात्तस्यैव जीवद्वितीयत्वादभोक्तृत्वाच्च पिबन्तावित्यत्र भोक्त्रभोक्तारौ प्रतिपाद्येते। तथाच छत्रिन्यायेन पिबन्तावित्येतल्लाक्षणिकमिति, नेत्याह—**नच वाक्यशेषानुरोधादिति**। **ननु** "अन्यत्र धर्मादि"ति प्रकरणात् पिबन्तावित्यत्र जीवद्वितीयः परमात्मा प्रतीयते इति, नेत्याह—**प्रकरणस्येति**। **उत्पत्तौ** प्रथमप्रतीतौ। वस्तुप्रतीत्यनन्तरं प्रतीतौ हि न संख्याया वस्त्वैक्यगमकत्वं स्यादिति। न वयं वाक्यशेषाद्वा केवलात्प्रकरणाद्वा पिबन्तावित्यस्य लाक्षणिकत्वं ब्रूमः, किंतु उभाभ्याम्। तथाच संदर्भस्यैकवाक्यत्वावगमात् जीवपरमात्मपरत्वम्। तथाच तन्मध्यपतितं पिबन्तावित्येतदपि लाक्षणिकमित्याह—**सा चोपक्रमोप-**

## कल्पतरुपरिमलः।

१विध्यन्तरप्राप्त्यांशं विहायाप्राप्तांशमात्रे विश्राम्यन्ति, यथा दर्शपूर्णमासयो"र्यदाग्नेयोऽष्टाकपाल" इत्यादय उत्पत्तिविधयः। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यधिकारविधिः। स एवाङ्गवाक्यैरेकवाक्यतापन्नो विनियोगविधिः। "पौर्णमास्यां पूर्णमास्या यजेत अमावास्यायाममावास्यया यजेते"ति प्रयोगविधिः। विध्यन्तराभावे त्वेकस्यैव विधेश्चातूरूप्यम्। यथा "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम" इति ॥ ३३ ॥ **इति विंशमक्षरध्यधिकरणम् ॥**

**इयदामननात् ॥ ३४ ॥** अत्र गुहाधिकरणेन पौनरुक्त्यमाशङ्क्य तत्रोक्ता पिबच्छब्दस्य लक्षणा न युक्ता; मुख्यार्थसंभवात्। नच प्रकरणेन वाक्यशेषेण वा लक्षणा; ताभ्यां बलीयसो वाक्यस्य बाधायोगादित्यधिकाशङ्कामुद्भाव्य न केवलं प्रकरणेन वाक्यस्य बाध उच्यते, किंतूपक्रमोपसंहारैकरूप्यावगमितमहावाक्यविरोधेनावान्तरवाक्यस्य बाध उच्यत इति परिहारव्युत्पादनार्थत्वेनाधिकरणस्य साफल्यमुक्तमिति प्रतीयते। तत्रोपक्रमोपसंहारानुसारेण मध्यमवाक्यं नेयमित्येतदपि प्रतर्दनाधिकरणादिषु बहुशः क्षुण्णम्। तस्मादित्थमधिकरणस्य साफल्यं वक्तव्यम्। मन्त्रयोरौत्पत्तिकद्वित्वविशि-

तद्विषय एव चात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' ( क० ३।२ ) इति । 'गुहां प्रविष्टावात्मानौ हि' ( ब्र० सू० १।२।११ ) इत्यत्र चैतत्प्रपञ्चितम् । तस्मान्नास्ति वेद्यभेदस्तस्माच्च विद्यैकत्वम् । अपिच त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते । तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया । नच परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम् । तस्मात्प्रपञ्चार्थ एवैष योगः । तस्माच्चाधिकधर्मोपसंहार इति ॥ ३४ ॥ इत्येकविंशमियदधिकरणम् ॥

( २२ अधिकरणम् ) **अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥**

'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' ( बृ० ३।४।१–३।५।१ ) इत्येवं द्विरुषस्तकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति । तत्र संशयः—विद्यैकत्वं वा स्याद्विद्यानानात्वं वेति । विद्यानानात्वमिति तावत्प्राप्तम् ; अभ्याससामर्थ्यात् । अन्यथा ह्यन्यूनानतिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात् । तस्माद्यथाभ्यासात्कर्मभेद एवमभ्यासाद्विद्याभेद इत्येवं प्राप्ते

---

## भामती ।

छत्रिन्यायेन लाक्षणिकी व्याख्येया । येन ह्युपक्रम्यते येन चोपसंस्थीयते तदनुरोधेन मध्यं ज्ञेयम् । यथा जामित्वदोषसंकीर्तनोपक्रमे तत्प्रतिसमाधानोपसंहारे च संदर्भे मध्यपातिनो "विष्णुरुपांशु यष्टव्योऽजामित्वाये"त्यादयः पृथग्विधित्वमलभमाना विधित्वमविवक्षित्वाऽर्थवादतया नीताः । तत्कस्य हेतोः ? एकवाक्यता हि साधीयसी वाक्यभेदादिति, तथेहापि तदनुरोधेन पिबदपिबत्समूहपरं लक्षणीयं पिबन्ताविव्यनेन । तथाच वेद्याभेदाद्विद्याऽभेद इति । **अपिच** त्रिष्वप्येतेषु वेदान्तेषु प्रकरणत्रयेऽपि पौर्वापर्यपर्यालोचनया परमात्मविद्यैवावगम्यते । यद्येवं कथं तर्हि जीवोपादानमस्त्वित्यत आह—**तादात्म्यविवक्षयेति** । नास्यां जीवः प्रतिपाद्यते, किंतु परमात्मनोऽभेदं जीवस्य दर्शयितुमसावनूद्यते । परमात्मविद्यायाश्चाभेदविषयत्वान्न भेदाभेदविचारावतारः । तस्मादैकविद्यमत्र सिद्धम् ॥ ३४ ॥ इत्येकविंशमियदधिकरणम् ॥

**अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥** कौषीतकेयकहोलचाक्रायणोषस्तप्रश्नोपक्रमयोर्विद्ययोर्नैरन्तर्येणाम्नातयोः

## वेदान्तकल्पतरुः ।

**संहारेति** । उपांशुयाजाधिकरणं समन्वयसूत्रे ( ब्र. अ. १ पा. १ सू. ४ ) ऽनुक्रान्तम् । पिबदपिबतोर्यत्समूहि तत्परं केवलं लक्षणीयमित्यर्थः । पिबच्छब्दोऽपि पिबदपिबतोः समूहं लक्षयति तद्द्वारा च समूहिनाविति । **त्रिष्वपीति** । मुण्डककठवल्लीश्वेताश्वतरेषु ॥ ३४ ॥ **इत्येकविंशमियदधिकरणम्** ॥[1]

**अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥** बृहदारण्यके पञ्चमेऽध्याये "अथ हैनं याज्ञवल्क्यमुषस्तश्चाक्रायणः पप्रच्छ यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे"त्युपक्रम**मेकं ब्राह्मणम्** । "अथ हैनं कहोलः कौषीतकेयः पप्रच्छ यदेव साक्षादि"त्याद्य**परम्** । उषस्त इति नामतः । चक्रस्यापत्यं चाक्रः । चाक्रस्यापत्यं चक्रस्य युवा चाक्रायणः । कहोल इत्यपि नामतः । कुषीतकस्यापत्यं कौषीतकः । तस्यापत्यं कुषीतकस्य युवा कौषीतकेयः । घटादीनां हि वृत्तिकर्मत्वेनापरोक्षत्वम्, ब्रह्म तु साक्षात्स्वत एवापरोक्षादपरोक्षमित्यर्थः । तदेव ब्रह्म प्रत्यगात्मेत्याह—**य आत्मेति** । स च सर्वान्तरः; ब्रह्मणि सिद्धस्य सर्वान्तरत्वस्यात्मनि निर्देशादात्मनि स्थितस्य चापरोक्षत्वस्य ब्रह्मणि संकीर्तनादुभयोरेकत्वं सुदृढीकृतम् । अत्राभ्यासात्सर्वान्तरत्वप्रत्यभिज्ञानाच्च संशयमाह—**किमस्ति भेद इति** । पूर्वत्र पिबन्ताविव्यस्य लाक्षणिकत्वमुपादाय मन्त्रद्वयेऽपि भोक्तृभोक्तृपरत्वेनार्थैक्याद्विद्यैक्यमुक्तम्,

## कल्पतरुपरिमलः ।

ष्टमाध्यात्मिकं वस्तुद्वयं तावत्प्रतिपाद्यं, तच्चोभयत्राप्यभिन्नमिति प्रतीयते । तुल्याभिधानरूपसमाख्याप्रमाणवशादिति टीकोक्तन्यायव्युत्पादनार्थमिदमधिकरणम् । नच समाख्यायाः किंचिद्बाधकमस्ति, प्रत्युतानुग्राहकमेवास्तीति बाधकाभावंव्यतिरेकमुखेन व्यवस्थापयितुमुपक्रमोपसंहारप्रदर्शनमिति ॥ ३४ ॥ **इत्येकविंशमियदधिकरणम्** ॥

**अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥ युवेति** । "अपत्यं पौत्रप्रभृति गोत्रं" "जीवति तु वंश्ये युवे"ति पाणिनीयोक्तलक्षणं युवापत्यमित्यर्थः । **अपरोक्षादिति** । व्यत्ययो बहुलमिति छान्दसेन विभक्तिव्यत्ययेन प्रथमार्थे पञ्चमी । **अभ्यासात्सर्वान्तरत्वप्रत्यभिज्ञानाच्चेति** । **ननु** द्वावत्र पूर्वपक्षौ । उभयत्र वेद्यभेद इत्येकः । वेद्याऽभेदेऽप्यभ्या-

---

[1] तत्र सूत्रम् १—इयदामननात् ॥ ३४ ॥

प्रत्याह—अन्तराऽऽम्नानाविशेषात्स्वात्मनो विद्यैकत्वमिति । सर्वान्तरो हि स्वात्मोभयत्राप्यविशिष्टः पृच्छ्यते च प्रत्युच्यते च । नहि द्वावात्मानावेकस्मिन्देहे सर्वान्तरौ संभवतः । तदाह्येकस्याञ्जसं सर्वान्तरत्वमवकल्प्येत । एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्वं स्यात् । यथाच पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तरा अद्भ्यस्तेजोऽन्तरमिति सत्यप्यापेक्षिकेऽन्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति तथेहापीत्यर्थः । अथवा—भूतग्रामवदिति श्रुत्यन्तरं निदर्शयति । यथा—'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' ( श्वे० ६।११ ) इत्यस्मिन्मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्माऽऽम्नायते । एवमनयोरपि ब्राह्मणयोरित्यर्थः । तस्माद्वेद्यैक्याद्विद्यैकत्वमिति ॥ ३५ ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदुक्तमनभ्युपगम्यमाने विद्याभेद आम्नानभेदानुपपत्तिरिति, तत्परिहर्तव्यम् । अत्रोच्यते—नायं दोषः; उपदेशान्तरवदुपपत्तेः । यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके—'स आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६।८।७ ) इति नवकृत्वोऽप्युपदेशे न विद्याभेदो भवत्येवमिहापि भविष्यति । कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति ? उपक्रमोपसंहाराभ्यामेकार्थतावगमात्, 'भूय एव मा भगवान्विज्ञापयतु' (छा० ६।५।४) इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितव्यत्वेनोपक्षेपात्, आशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः । एवमिहापि प्रश्नरूपाभेदात् 'अतोऽन्यदार्तम्' ( बृ० ३।४।२-३।५।१ ) इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते । 'यदेव साक्षादपरोक्षाद्ब्रह्म' ( बृ० ३।५।१ ) इति द्वितीये प्रश्न एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरत्रानुकृष्यमाणं दर्शयति । पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते, उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं कथ्यते, इत्येकार्थतोपपत्तिः । तस्मादेका विद्येति ॥ ३६ ॥ इति द्वाविंशमन्तरत्वाधिकरणम् ॥

---

### भामती ।

किमस्ति भेदो न वेति विशये भेद एवेति ब्रूमः । कुतः ? यद्यप्युभयत्र प्रश्नोत्तरयोरभेदः प्रतीयते; तथापि तस्यैवैकस्य पुनः श्रुतेरविशेषादानर्थक्यप्रसङ्गाद्यजत्यभ्यासवद्भेदः प्राप्तः । नच—एकस्यैव ताण्डिनां नवकृत्व उपदेशेऽपि यथा भेदो न भवति स 'आत्मा तत्त्वमसि श्वेतकेतो' इत्यत्र तथेहाप्यभेद इति—युक्तम्; 'भूय एव मा भगवान् विज्ञापयतु' इति हि तत्र श्रूयते, तेनाभेदो युज्यते । नचेह तथास्ति; तेन यद्यपीह वेद्याभेदोऽवगम्यते; तथाप्येकत्र तस्यैवाशनायादिमात्रात्ययोपाधेरुपासनादेकत्र च कार्यकरणविरहोपाधेरुपासनाद्विद्याभेद एवेति प्राप्ते प्रत्युच्यते । नैतदुपासनाविधानपरमपि तु वस्तुस्वरूपप्रतिपादनपरं प्रश्नप्रतिवचनालोचनेनोपलभ्यते । किमतो यद्येवम् ? **एतदतो भवति**—विधेरप्राप्तप्रापणार्थत्वात्प्राप्तावनुपपत्तिः । वस्तुस्वरूपं तु पुनःपुनरुच्यमानमपि न दोषमावहति । शतकृत्वोऽपि हि पथ्यं वदन्त्याप्ताः । विशेषतस्तु वेदः पितृभ्यामप्यभ्यर्हितः । नच सर्वथा पौनरुक्त्यम्; एकत्राशनायाद्यत्ययादन्यत्र च

### वेदान्तकल्पतरुः ।

इह त्वर्थैक्येऽपि न विद्यैक्यमभ्यासादिति पूर्वपक्षमाह—**भेद एवेति । नचेह तथास्तीति ।** यदेव साक्षादित्येवकारो यत्साक्षादपरोक्षादेव न कदाचिदपि परोक्षमित्येवं योज्यतइति मन्यते, सिद्धान्ते तु व्यवहितान्वयप्रसङ्गान्नेयं साध्वी योजनेति प्रकान्तस्यैवानुवृत्त्यर्थ एवकार इत्युक्तं भाष्ये । **नन्व**परोक्षत्वादिरूपविद्यैक्यप्रत्यभिज्ञाने कथं विद्याभेदस्तत्राह—**तेनेति ।** उषस्तिब्राह्मणे कार्यकरणविरहः प्रतिपाद्यः; प्राणेन प्राणितीत्यादिनिर्देशात् । कहोलब्राह्मणेऽशनायादिविरहः । अयं चाभ्याससिद्धोपासनभेदनिर्वाहक उपाधिः समिदादीनामिव देवतादिः । **प्रश्नप्रतिवचनालोचनेनेति ।** तन्मे व्याचक्ष्वेति हि प्रवृत्तिरुपलभ्यते । प्रतिवचनस्य च न दृष्टेर्द्रष्टारं पश्येरित्यविषयवस्तुप्रतिपादनपरत्वं दृश्यते न तूपास्तिपरत्वमिति । **ननु** सिद्धवस्तुप्रतिपादनपरत्वेऽप्यभ्यासवैयर्थ्यस्य का गतिरिति परिचोद्यं परिहरति—**किमत इत्यादिना ।** समिधो यजति इत्यादौ विधेः प्रवृत्त्युत्पादकत्वात् ज्ञाते च स्वत एव प्रवृत्तेर्विधिवैयर्थ्यादज्ञातं वस्तु ज्ञाप्यम्, सिद्धवस्तुज्ञापनं तु प्राप्तेप्यर्थे श्रोतुरादरार्थं पुनः पुनः कृतमपि प्रमित्यतिशयफलत्वाददुष्टमित्यर्थः । **पितृभ्यां** मातापितृभ्याम् । **ननु** यद्यस्मिन्नधिकरणेऽभ्यासाद्विद्याभेद इति पूर्वः पक्षः । तर्ह्यन्तराम्नानाविशेषादिति सिद्धान्ते हेतुर्न वक्तव्यः ।

( २३ अधिकरणम् ) **व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥**

यथा—'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादित्यपुरुषं प्रकृत्यैतरेयिणः समामनन्ति। तथा जाबालाः 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इति। तत्र संशयः—किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्योतैकरूपैवेति। एकरूपैवेति तावदाह। न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वान्यत्किंचिच्चिन्तयितव्यमस्ति। यदि चैवं चिन्तयितव्यो विशेषः परिकल्प्येत, संसारिणश्चेश्वरात्मत्वमीश्वरस्य संसार्यात्मत्वमिति। तत्र संसारिणस्तावदीश्वरात्मत्व उत्कर्षो भवेदीश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात्। तस्मादैकरूप्यमेव मतेः। व्यतिहाराम्नायस्त्वेकत्वदृढीकारार्थ इति। एवं प्राप्ते प्रत्याह—व्यतिहारोऽयमाध्यानायाम्नायते। इतरवत्। यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते तद्वत्। तथाहि विशिंषन्ति समाम्नातार उभयोच्चारणेन 'त्वमहमस्म्यहं च त्वमसि' इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति। अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्; एकेनैव कृतत्वात्। ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तम्। नैष दोषः; ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। नन्वेवं सति स एवैकत्वदृढीकार आपद्येत। न वयमेकत्वदृढीकारं वारयामः, किं तर्हि? व्यतिहारेणेह द्विरूपा मतिः कर्तव्या, वचनप्रामाण्यान्नैकरूपेत्येतावदुपपादयामः। फलतस्त्वेकत्वमपि दृढीभवति। यथाध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति तद्वत्। तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषय उपसंहर्तव्यो भवतीति ॥ ३७ ॥ इति त्रयोविंशं व्यतिहाराधिकरणम् ॥

## भामती ।

कार्यकारणप्रविलयात्। तस्मादेका विद्या प्रत्यभिज्ञानात्। उभाभ्यामपि विद्याभ्यां भिन्न आत्मा प्रतिपाद्यते इति यो मन्यते पूर्वपक्षैकदेशी तं प्रति सर्वान्तरत्वविरोधो दर्शितः ॥ ३५ ॥ अस्य तु पूर्वपक्षतत्त्वाभिप्रायो दर्शितः। सुगममन्यत् ॥ ३६ ॥ **इति द्वाविंशमन्तरत्वाधिकरणम् ॥**

**व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥** उत्कृष्टस्य निकृष्टरूपापत्तेर्नोभयत्रोभयरूपानुचिन्तनम्, अपि तु निकृष्टे जीव उत्कृष्टरूपाभेदचिन्तनमेवं हि निकृष्ट उत्कृष्टो भवतीति प्राप्तम्। एवं प्राप्त उच्यते—इतरेतरानुवादेनेतरेतररूपविधानादुभयत्रोभयचिन्तनं विधीयते। इतरथा तु योऽहं सोऽसावित्येतावदेवोच्येत। जीवात्मान-

## वेदान्तकल्पतरुः ।

अर्थैक्यस्याभ्याससाधकत्वेन पूर्वपक्षानुगुण्यादत आह—**उभाभ्यामपीति**। प्रथमं सूत्रं पूर्वपक्षैकदेशिमतनिरासार्थं, साक्षात्पूर्वपक्षसिद्धान्तौ तूत्तरौ भाष्यटीकाभ्यामवगन्तव्यावित्यर्थः। तथाच पूर्वपक्षभाष्यमभ्याससामर्थ्यादित्यादि वस्तुस्वरूपं नित्यादिका च सिद्धान्तटीका। तत्र वस्तुस्वरूपंत्वित्यादिनाऽभ्यासहेतोरन्यथासिद्धिरुक्ता। न च सर्वथा पौनरुक्त्यमित्यादिनाभ्यास एवासिद्धोऽर्थभेदादित्युक्तम् ॥ ३५ ॥ **नन्वे**कविधेऽपि तत्त्वमसीतिवत्पुनःश्रुत्युपपत्तेः न द्वितीयसूत्रगतशङ्काभागस्योत्थानमित्याशङ्क्याह—**अस्य त्विति**। भूय एव मा भगवान्विज्ञापयत्विति वाक्यात्, तत्र विद्यैक्यं नात्र तदिति पूर्वपक्षाभिप्रायो दर्शित इत्यर्थः। यदेव साक्षादित्येवकारादत्रापि विद्यैक्यमिति भगवता भाष्यकारेण प्रतिपादितं, तत् स्फुटमिति न व्याख्यायतइत्याह—**सुगममन्यदिति** ॥ ३६ ॥ **इति द्वाविंशमन्तरत्वाधिकरणम् ॥**

**व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥** पूर्वत्र विद्यैक्येऽप्यभ्यास आदरार्थ इत्युक्ते अयमपि तथेत्यभिसंधाय पूर्वपक्षमाह—**उत्कृष्टस्येति। ननु** वचनवशादुभयत्रोभयचिन्तनाश्रयणे एकत्वदृढीकारः पूर्वपक्षाभिमतस्त्वयाऽपीष्टः

## कल्पतरुपरिमलः ।

साद्विद्याभेद इति द्वितीयः। तत्राद्यनिराकरणएव सर्वान्तरत्वप्रत्यभिज्ञायुक्तिः, न द्वितीयनिराकरणे; सर्वान्तरत्वप्रत्यभिज्ञानस्याविशेषपुनःश्रवणरूपाभ्यासोपपादकतया द्वितीयपक्ष एवोपपादकत्वस्याचार्यैरग्रे वक्ष्यमाणत्वात्। तस्य तु निराकरणम् अभ्यासासिद्ध्यन्यथासिद्धिभ्यां करिष्यते। **सत्यम्**; प्रथमपूर्वपक्षनिराकरणयुक्तिरेवात्र सिद्धान्तकोट्युपपादकयुक्तित्वेन लिखिता, द्वितीयपूर्वपक्षे निराकरणयुक्तिस्तु वक्ष्यमाणा ज्ञातुं शक्येति न लिखिता ॥ ३५ ॥ ३६ ॥ **इति द्वाविंशमन्तरत्वाधिकरणम् ॥**

**व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥** भाष्यकारैरधिकरणान्ते जाबालैरैतरेयिभिश्च प्रदर्शितस्य व्यतिहारस्य

१ तत्र सूत्रे २—अन्तरा भूतग्रामवत्स्वात्मनः ३५ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ३६ ॥

( २४ अधिकरणम् ) **सैव हि सत्यादयः ॥ ३८ ॥**

'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' ( बृ० ५।४।१ ) इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायाऽनन्तरमाम्नायते—'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' ( बृ० ५।५।२ ) इत्यादि । तत्र संशयः—किं द्वे एते सत्यविद्ये किंवैकैवेति ? द्वे इति तावत्प्राप्तम् । भेदेन हि फलसंयोगो भवति 'जयतीमाँल्लो-

## भामती ।

मनूद्येश्वरत्वमस्य विधीयेत, नत्वीश्वरस्य जीवात्मत्वं योऽसौ सोऽहमिति । यथा तत्त्वमसीत्यत्र । तस्मादुभयरूपमुभयत्राध्यानायोपदिश्यते । नन्वेवमुत्कृष्टस्य निकृष्टत्वप्रसङ्ग इत्युक्तं, तत्किमिदानीं सगुणे ब्रह्मण्युपास्यमानेऽस्य वस्तुतो निर्गुणस्य निकृष्टता भवति, कस्मैचित्फलाय, तथा ध्यानमात्रं विधीयते, नत्वस्य निकृष्टतामापादयतीति चेदिहापि व्यतिहारानुचिन्तनमात्रमुपदिश्यते फलाय नतु निकृष्टता भवत्युत्कृष्टस्य । अन्वाचयशिष्टं तु तादात्म्यदार्ढ्यं भवन्नोपेक्षामहे । सत्यकामादिगुणोपदेश इव तद्गुणेश्वरसिद्धिरिति सिद्धमुभयत्रोभयात्मत्वाध्यानमिति ॥ ३७ ॥ **इति त्रयोविंशं व्यतिहाराधिकरणम् ॥**

**सैव हि सत्यादयः ॥ ३८॥** "तद्वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित इन्वसावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म" । अत्र पूर्वोक्तस्य हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनमनेन संदर्भेण विधीयते । तदिति हृदयाख्यं ब्रह्मैकेन तदा परामृशति । एतदेवेति वक्ष्यमाणं प्रकारान्तरमस्य परामृशति । तत्तदाग्रे आस बभूव । किं तदित्यत आह—**सत्यमेव** । सच्च मूर्तं त्यच्चामूर्तं च सत्यम् । तदुपासकस्य फलमाह—**स यो हैतमिति** । यः प्रथमजं यक्षं पूज्यं वेद । कथं वेदेत्यत आह—**सत्यं ब्रह्मेतीति** । स जयतीमान् लोकान् । किंच जितो वशीकृत इनुशब्द इत्थं शब्दार्थे वर्तते । विजेतव्यत्वेन बुद्धिसंनिहितं शत्रुं परामृशति—**असाविति** । असन्नवेन्नश्येत् । उक्तमर्थं निगमयति—**य एवमेतदिति** । एवं विद्वान्कस्माज्जयतीत्यत आह—**सत्यमेव यस्माद्ब्रह्मेति** । अतस्तदुपासनात् फलोत्पादोऽपि सत्य इत्यर्थः । तद्यत्तत्सत्यं किमसौ ? अत्रापि तत्पदाभ्यां रूपप्रकारौ परामृष्टौ । कस्मिन्नालम्बने तदुपासनीयमित्यत उत्तरम्—**स आदित्यो य एष इत्यादिना**

## वेदान्तकल्पतरुः ।

स्यादत आह—**अन्वाचयशिष्टमिति** । पश्चात्प्रतीतमित्यर्थः । जीवतादात्म्यस्यानेन प्रकरणेनानुचिन्त्यमानत्वादिति भाष्यम् । **तस्यार्थः**—जीवतादात्म्यस्येश्वरे शास्त्रादारोप्योपास्यत्वान्नेश्वरस्योत्कर्षनिवृत्तिरिति ॥ ३७॥ **इति त्रयोविंशं व्यतिहाराधिकरणम् ॥**[1]

**सैव हि सत्यादयः ॥ ३८ ॥** पूर्वत्र जीवब्रह्मणोरितरेतरात्मत्वनिर्देशभेदाद् द्विरूपा मतिः कर्तव्येत्युक्तम्, एवमिहापि "जयतीमान् लोकान् हन्ति पाप्मानमि"ति च फलनिर्देशभेदाद्विद्याभेद इति प्रत्यवस्थानात्सङ्गतिः । सत्यविद्यां सनामाक्षरोपासनां विधायेत्याद्यर्थतो विषयप्रदर्शकं भाष्यं श्रुत्युदाहरणेन व्याचष्टे—**तद्वैतदित्यादिना । पूर्वोक्तस्येति ।** वाजसनेयक एव "एष प्रजापतिर्यद्धृदयमेतद् ब्रह्मे"त्यादिना पूर्ववाक्येनोक्तस्येत्यर्थः । हृदयाख्यं ब्रह्मैकेन **तदा** तच्छब्देन परामृशति । वैकारस्योपरितनेन द्वितीयेन तच्छब्देन यत्तस्य ब्रह्मणस्तदेतदक्षरं हृदयमित्यादिना हृदयनामाक्षरोपासनादिः प्रकार उक्तस्तमपि परामृशतीति द्रष्टव्यम् । तदेतद्व्याचष्टे—**अग्र इति । प्रथमजं** भौतिकानां मध्ये प्रथमजातम् । यथा प्रजापतिर्लोकानजयद् एवमुपासकोऽपीति इत्थंशब्दार्थः । **तद्यत्पदाभ्यामिति** । एकस्य तच्छब्दस्य यच्छब्देन सह

## कल्पतरुपरिमलः ।

समाने विषये उपसंहारः कार्य इत्युक्तम् । तत्र समाने विषये इत्येतत्समानगुणविद्यान्तरविषयं सकलाहंग्रहोपासनापरं वा ॥ ३७ ॥ **इति त्रयोविंशं व्यतिहाराधिकरणम् ॥**

**सैव हि सत्यादयः ॥ ३८ ॥ नन्विहाधिकरणे** सत्यविद्याभेदाभेदचिन्तावत्सत्यहृदयविद्याभेदाभेदचिन्तापि कर्तुं शक्यते; सत्यविद्यायां "जयतीमान् लोकानि"ति फलनिर्देशः, हृदयविद्यायां "एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत् त्र्यक्षरं हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद इत्येकमक्षरं द इत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेदे"ति फलनिर्देशभेदः पूर्वपक्षन्यायस्तुल्यः । तच्छब्दद्वयेन प्रकृतहृदयब्रह्मस्वरूपप्र-

[1] तत्र सूत्रम् १—व्यतिहारो विशिंषन्ति हीतरवत् ३७ ॥

कान्' ( बृ० ५।४।१) इति पुरस्तात् 'हन्ति पाप्मानं जहाति च' (बृ० ५।५।३।४ ) इत्युपरिष्टात् । प्रकृताकर्षणं तूपास्यैकत्वादिति । एवं प्राप्ते ब्रूमः—एकैवेयं सत्यविद्येति । कुतः? 'तद्यत्तत्सत्यम्' ( बृ० ५।५।२ ) इति प्रकृताकर्षणात् । ननु विद्याभेदेऽपि प्रकृताकर्षणमुपास्यैकत्वादुपपद्यत इत्युक्तम्, नैतदेवम्, यत्र तु विस्पष्टात्कारणान्तराद्विद्याभेदः प्रतीयते तत्रैतदेवं स्यात् । अत्र तूभयथा संभवे तद्यत्तत्सत्यमिति प्रकृताकर्षणात्पूर्वविद्यासंबद्धमेव सत्यमुत्तरत्राकृष्यत इत्येकविद्यात्वनिश्चयः । यत्पुनरुक्तं फलान्तरश्रवणाद्विद्यान्तरमिति, अत्रोच्यते—तस्योपनिषदहरहमिति चाङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणमित्यदोषः । अपिचार्थवादादेव फले कल्पयितव्ये सति विद्यैकत्वे चावयवेषु श्रूयमाणानि बह्वन्यपि फलान्यवयविन्यामेव विद्यायामुपसंहर्तव्यानि भवन्ति । तस्मात्सैवेयमेका सत्यविद्या तेन तेन विशेषेणोपेताऽऽम्नातेत्यतः सर्व एव सत्यादयो गुणा एकस्मिन्नेव प्रयोग उपसंहर्तव्याः । केचित्पुनः—अस्मिन्सूत्र इदं च वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यं, छान्दोग्ये च—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा० १।६।६) अथ 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा० ४।१५।१) इत्युदाहृत्य सैवेयमक्ष्यादित्यपुरुषविषया विद्योभयत्रैकैवेति कृत्वा सत्यादीन्गुणान्वाजसनेयिभ्यश्छन्दोगानामुपसं-

## भामती ।

तस्योपनिषदहरहमिति । हन्ति पाप्मानं जहाति च य एवं वेदेत्यन्तेन । **उपनिषत्** रहस्यं, नाम । तस्य निर्वचनं—**हन्ति पाप्मानं जहाति चेति** । हन्तेर्जहातेर्वा रूपमेतत् । तथाच निर्वचनं कुर्वन्फलं पापहानिमाहेति । तमिमं विषयमाह भाष्यकारः—**यो वै हैतमिति । सनामाक्षरोपासनामिति** । तथाच श्रुतिः—"तदेतदक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवति नैवं विद्वांसमनृतं हिनस्ति' इति । तीतीकारानुबन्ध उच्चारणार्थः । निरनुबन्धस्तकारो द्रष्टव्यः । अत्र हि प्रथमोत्तमे अक्षरे सत्यं मृत्युरूपाभावात् । मध्यतो मध्येऽनृतमनृतं हि मृत्युः; मृत्यवनृतयोस्तकारसाम्यात् । तदेतदनृतं मृत्युरूपमुभयतः **सत्येन परिगृहीतम्**, अन्तर्भावितं सत्यरूपाभ्याम् । अतोऽकिंचित्परं तत्सत्यभूयमेव सत्यबाहुल्यमेव भवति । शेषमतिरोहितार्थम् । सेयं सत्यविद्यायाः सनामाक्षरोपासनता । यद्यपि तद्यत्सत्यमिति प्रकृतानुकर्षणाभेदः प्रतीयते; तथापि फलभेदेन भेदः साध्यभेदेनेव नित्यकाम्यविषययोः "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेते"ति शास्त्रयोः सत्यप्यनुबन्धाभेदे भेद इति प्राप्ते प्रत्युच्यते—**एकैवेयं** विद्या; तत्सत्यमिति प्रकृतपरामर्शादभेदेन प्रत्यभिज्ञानात् । **नच फलभेदः**; तस्योपनिषदहरहमिति तस्यैव यदङ्गान्तरं रहस्यनाम्नोपासनं तत्प्रशंसार्थोऽर्थवादोऽयं न फलविधिः । यदि पुनर्विद्याविधावधिकारश्रवणाभावात्तत्कल्पनार्थमार्थवादिकं फलं कल्प्येत, ततो जातेष्टाविवागृह्यमाणविशेषतया संवलिताधिकारकल्पना, ततश्च समस्तार्थवादिकफलयुक्तमेकमेवोपासनमिति सिद्धम् । परकीयं व्याख्यानमुपन्यस्यति—**केचित्पुनरिति** । वाजसनेयकमप्यक्ष्यादित्यविषयं छान्दोग्यमपीत्युपास्याभेदादभेदः । ततश्च वाजसनेयोक्तानां सत्यादीनामुपसंहार इत्यत्रार्थे **सैव हि सत्यादय** इति सूत्रं

## वेदान्तकल्पतरुः ।

सङ्गतिरुक्ता, द्वितीयस्तच्छब्दस्तत्रशब्दसमानार्थः । **तत्रैवं** हृदयात्मत्वे ब्रह्मणः सिद्ध इत्यर्थः । **अनुबन्धाभेदेऽपि** धात्वर्थाभेदेऽपि स्वर्गकामो यजेत यावज्जीवं यजेतेति शास्त्रयोर्नित्यकाम्यविषययोः साध्यभेदेन यथा भेदः, एवमुपास्यैकत्वेऽपि सत्यविद्ययोः फलभेदेन भेद इत्यर्थः । उपास्यैक्याद्विद्यैक्यमौत्सर्गिकं तावदाह—**एकैवेति** । फलभेदमपवादकमाशङ्क्याह—**नच फलभेद इति** । किं "जयतीमान् लोकानि"त्यनेन प्रधानोपासनविध्युद्देशे फलवति संजाते "हन्ति पाप्मानमि"ति गुणभूताहरहंनामोपनिबद्धस्य फलनिर्देशस्य विद्याभेदकत्वमुच्यते, उत प्रधानतदङ्गानामर्थवादात् रात्रिसत्रन्यायेन फलकल्पनामाश्रित्य । **प्रथमं** प्रत्याह—**तस्येति** । अङ्गानां प्रधानान्वयद्वारेण फलसंबन्धसिद्धेरर्थवादगतानि गुणफलानि प्रयाजादिफलवदुपेक्ष्यन्त इत्यर्थः । **द्वितीयेऽपि** फलभेदस्य न विद्याभेदकत्वमित्याह—**यदि पुनरिति** । एवंकामपदाभावेन पुरुषस्य कर्मण्यैश्वर्यरूपाधिकाराश्रवणादित्यर्थः । असुकं फलं प्रधानस्येत्यगृह्यमाणविशेषत्वाद्वाक्यशेषगतसर्वफलकामस्याधिकारकल्पनेत्यर्थः । **संवलितो** मिलितः । **एतदुक्तं भवति**—विहितानां फलाकाङ्क्षाविशेषादर्थवादातफलकल्पनाविशेषाच्च यत्किंचिदर्थवादगतं सत् फलं सर्वमेकीकृत्य गुणविशिष्टगुणिनः फलत्वेन कल्पनीयमिति । "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाती"ति जातेष्टौ पुत्रजन्मनिमित्तपुत्रपूतत्वादिसंवलितोऽधिकारो दृष्टान्तितः । अधिकरणं त्वत्रत्यं द्वितीयसूत्रेऽनुक्रान्तम् । **उपास्याभेदादिति** । अक्ष्यादित्यगतत्व-

हार्यान्—मन्यन्ते । तन्न साधु लक्ष्यते । छान्दोग्ये हि ज्योतिष्टोमकर्मसंबन्धिनीयमुद्गीथव्यपाश्रया विद्या विज्ञायते । तत्र ह्यादिमध्यावसानेषु हि कर्मसंबन्धिचिह्नानि भवन्ति 'इयमेवर्गग्निः साम' ( छा० १।६।१ ) इत्युपक्रमे, 'तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः' (छा० १।६।८) इति मध्ये, 'य एवं विद्वान्साम गायति' ( छा० १।७।९ ) इत्युपसंहारे । नैवं वाजसनेयके किंचित्कर्मसंबन्धि चिह्नमस्ति । तत्र प्रक्रमभेदाद्विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥ ३८ ॥ इति चतुर्विंशं सत्याद्यधिकरणम् ॥

( २५ अधिकरणम् ) **कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥**

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' ( छा० ८।१।१ ) इति प्रस्तुत्य छन्दोगा अधीयते—'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' ( छा० ८।१।५ ) इत्यादि । तथा वाजसनेयिनः—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' ( बृ० ४।४।२२) इत्यादि । तत्र विद्यैकत्वं परस्परगुणयोगश्च किं वा नेति संशये विद्यैकत्वमिति । तत्रेदमुच्यते—कामादीति । सत्यकामादीत्यर्थः । यथा देवदत्तो दत्तः सत्यभामा भामेति ।

### भामती ।

व्याख्यातम्, तदेतद्दूषयति—**तन्न साध्विति** । **ज्योतिष्टोमकर्मसंबन्धिनीयमुद्गीथव्यपाश्रयेति** । अनुबन्धाभेदेऽपि साध्यभेदाद्भेद इति विद्याभेदादनुपसंहार इति ॥ ३८ ॥ **इति चतुर्विंशं सत्याद्यधिकरणम्** ॥

**कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥** छान्दोग्यवाजसनेयविद्ययोर्यद्यपि सगुणनिर्गुणत्वेन भेदः । **तथाहि—छान्दोग्ये**—'अथ य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्कामान्' इत्यात्मवत्कामानामपि वेद्यत्वं श्रूयते । वाजसनेये तु निर्गुणमेव परं ब्रह्मोपदिश्यते 'विमोक्षाय ब्रूहि' इति; तथापि तयोः परस्परगुणोपसंहारः । निर्गुणायां तावद्विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासंबन्धिगुणोपसंहारः संभवी । सगुणायां च यद्यप्याध्यानाय न वशित्वादि-

### वेदान्तकल्पतरुः ।

मुपास्यपुरुषस्याभेदः । **अनुबन्धाभेदेऽपीति** । अक्ष्यादित्यपुरुषविषयोपासनरूपविध्यवच्छेदकानुबन्धाभेदेऽपीत्यर्थः । **साध्यभेदादिति** । कर्मसमृद्धिलोकजयादिफलभेदादित्यर्थः । अनेनैकदेशिमते पूर्वपक्ष एव दूषणत्वेन योजित इति ॥ ३८ ॥ **इति चतुर्विंशं सत्याद्यधिकरणम्** ॥[1]

**कामादीतरत्र चायतनादिभ्यः ॥ ३९ ॥** पूर्वत्र तद्यत्सत्यमिति प्रकृताकर्षणेन रूपाभेदाद्गुणोपसंहार उक्तः, इह तु क्वचिदाकाशस्योपास्यत्वं क्वचित्तदाश्रितस्य ज्ञेयत्वमिति रूपभेदाद्गुणानुपसंहारः । अधिकरणानारम्भमाशङ्कते—**छान्दोग्येति** । आशङ्कां विवृणोति—**तथाहीति** । परिहरति—**तथापीति** । स्तुतिर्हि दृष्टेन द्वारेण कर्तुं शक्येति सगुणविद्यासु ध्येयत्वेनोक्तानामपि गुणानां निर्गुणविद्यायामुपपन्नः स्तुत्यर्थत्वेनान्वयश्चेत्तर्हि निर्गुणविद्यागतवशित्वादीनां सगुणविद्यासु कथमन्वयः ? तं प्रकारमाह—**सगुणायां चेति** । ध्येयत्वं ह्यपूर्वविध्येकगम्यं यत्र च वशित्वादयः श्रूयन्ते न तत्रैषां ध्येयत्वेन विधानमित्यन्यत्र गतानामपि न ध्येयत्वम्, स्तुत्यर्थत्वं तु स्यात्तदपि न शब्दत एषां तत्र नयनमपेक्षते; सत्यकामत्वादिसामर्थ्यादेव सर्वेश्वरत्वादिसिद्धेः । अतोऽन्तर्भावमात्रमुपसंहार इत्यर्थः । यत्तु सर्वापि विद्या

### कल्पतरुपरिमलः ।

कारपरामर्शेन तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यरूपतोच्यत इति वेद्याभेदान्न विद्याभेदः । फलनिर्देशभेदस्त्वसिद्धः; "जयतीमान् लोकानि"ति प्रधानब्रह्मोपासनायाः फलवत्त्वे सिद्धे तदङ्गहृदयानामक्षरोपासनाफलनिर्देशस्यार्थवादत्वात्, प्रधानेऽप्येवं कामपदेन फलनिर्देशाभावात् । सत्रन्यायेन फलविपरिणामे कल्पनीये प्रधाने तदवयवे यत्किञ्चित्फलं श्रुतं सर्वस्यापि जातेष्टिफलन्यायेन समुच्चयकल्पनोपपत्तेश्चेति सिद्धान्तन्यायोऽपि तुल्यः । "अथ एष प्रजापतिर्यद्धृदयमि"त्यारभ्य "तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेदे"त्यन्तेन संदर्भेण विधीयमानैकैव विद्येत्येवमधिकरणव्युत्पाद्येऽर्थे वक्तव्ये किमिति "स यो ह वैतदि"ति मध्ये गृहीत्वा भेदाभेदचिन्ता ? **उच्यते** । एकदेशे कृता चिन्ता तुल्यन्यायतयैकदेशान्तरेऽपि संचारयितुं शक्येति क्वचिदियं चिन्ता कृता ॥ ३८ ॥ **इति चतुर्विंशं सत्याधिकरणम्** ॥

**कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ तस्य न स्थानतोऽपीति** । **उपलक्षणमेतत्**—इहाप्यधिकरणे भाष्यकारैर्बृहदारण्यकोक्ता निर्गुणविद्या तत्पूर्वोत्तरसन्दर्भोदाहरणेन छान्दोग्यवर्णिता सगुणविद्येत्येतांश्च सत्यान्

१ तत्र सूत्रम् १—सैव हि सत्यादयः ३८ ॥

यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते तदितरत्र वाजसनेयके 'स वा एष महानज आत्मा' इत्यत्र संबध्यते, यच्च वाजसनेयके वशित्वाद्युपलभ्यते तदपीतरत्र छान्दोग्ये 'एष आत्माऽपहतपाप्मा' ( छा० ८।१।५ ) इत्यत्र संबध्यते । कुतः ? आयतनादिसामान्यात् । समानं ह्युभयत्रापि हृदयमायतनं समानश्च वेद्य ईश्वरः समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनमित्येवमादि बहु सामान्यं दृश्यते । ननु विशेषोऽपि दृश्यते छान्दोग्ये हृदयाकाशस्य गुणयोगो वाजसनेयके त्वाकाशाश्रयस्य ब्रह्मण इति, न ; 'दहर उत्तरेभ्यः' ( ब्र० सू० १।३।१४ ) इत्यत्र छान्दोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात् । अयं त्वत्र विद्यते विशेषः । सगुणा हि ब्रह्मविद्या छान्दोग्य उपदिश्यते; 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' ( छा० ८।१।६ ) इत्यात्मवत्कामानामपि वेद्यत्वश्रवणात् । वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमानं दृश्यते; 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' ( बृ० ४।३।१४ ) 'असङ्गो ह्ययं पुरुषः' ( बृ० ४।३।१५ ) इत्यादिप्रश्नप्रतिवचनसमन्वयात् । वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते । तथाचोपरिष्टात् 'स एष नेति नेत्यात्मा' (बृ० ३।९।२६ ) इत्यादिना निर्गुणमेव ब्रह्मोपसंहरति । गुणवतस्तु ब्रह्मण एकत्वाद्विभूतिप्रदर्शनायायं गुणोपसंहारः सूत्रितो नोपासनायेति द्रष्टव्यम् ॥ ३९ ॥ इति पञ्चविंशं कामाद्यधिकरणम् ॥

## भामती ।

गुणोपसंहारसंभवः, नहि निर्गुणायां विद्यायामाध्यातव्यत्वेनैते चोदिताः, येनात्राऽऽध्येयत्वेन संबध्येरन्नपितु सत्यकामादिगुणनान्तरीयकत्वेनैतेषां प्राप्तिरित्युपसंहार उच्यते, एवं व्यवस्थित एष संक्षेपोऽधिकरणार्थस्य—साम्यबाहुल्येऽप्येकत्राकाशाधारत्वस्यापरत्र चाकाशतादात्म्यस्य श्रवणाद्भेदे विद्ययोर्न परस्परगुणोपसंहार इति पूर्वपक्षः । राद्धान्तस्तु—सर्वसाम्यमेव; उभयत्राप्यात्मोपदेशादाकाशशब्देनैकत्रात्मोक्तोऽन्यत्र च दहराकाशाधारः स एवोक्त इति सर्वसाम्याद्ब्रह्मण्युभयत्रापि सर्वगुणोपसंहारः । सगुणनिर्गुणत्वेन तु विद्याभेदेऽपि गुणोपसंहारव्यवस्था दर्शिता । तस्मात्सर्वमवदातम् ॥ ३९ ॥ इति पञ्चविंशं कामाद्यधिकरणम् ॥

## वेदान्तकल्पतरुः ।

सगुणेति मन्यमान इह सक्षाद् गुणोपसंहारमाह, तस्य न स्थानतोऽपी ( ब्र. ३ पा. २ सू. ११ अ. ) त्यधिकरणं व्याचक्षीत । **एकत्रेति** । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते इत्यत्राकाशाधारत्वस्य श्रवणादित्यर्थः । आकाश आधारो यस्य तस्य भावस्तत्त्वम् । **अपरत्रेति** । दहरोऽस्मिन्नन्तराकाश इत्यत्र गुणवत आकाशात्मत्वगुणश्रवणादित्यर्थः । छान्दोग्ये आत्मैवाकाशात्मत्वेनोक्तः, बृहदाण्यके तु हृदयपुण्डरीकान्तर्वर्तिभौतिकदहराकाशाश्रित आत्मा वशित्वादिगुणक उक्त इति न रूपभेद इत्याह—**आकाशशब्देनेति** । नन्वात्मोच्यतां, सगुणनिर्गुणत्वेन तु भेदात्कथं गुणोपसंहार इति, तत्राधिकरणारम्भसमर्थनावसरोक्तं परिहारं स्मारयति—**सगुणेति** ॥ ३९ ॥ इति पञ्चविंशं कामाद्यधिकरणम् ॥[1]

## कल्पतरुपरिमलः ।

कामानिति तत्रत्यवाक्योदाहरणेन च स्पष्टीकृतम् । एतांश्च सत्यान् कामानित्येतदुदाहरणेनापि बृहदारण्यकोक्ता विद्या निर्गुणविद्येति व्यञ्जितम् । कथमिति चेत्? इत्थम्, विद्यान्तरेषूपास्यगुणानामुपदेशमात्रं कृतं, तावतैव गुणविशिष्टोपासना सिध्यतीति, इह तु गुणानामप्युपासना विधीयते, तत्किमर्थं ? बृहदारण्यके उपसंहृता एते निर्गुणप्रकरणानुसारेणानुपास्यास्तथेहाप्यनुपास्या मा भूवन्नित्येतदर्थमित्येव कल्पनीयम् ; प्रयोजनान्तराभावात्, कामशब्दसंगृहीतगुणजातव्यतिरिक्तद्यावापृथिव्यादिसमानाधारत्वप्रमुखगुणानामनुपास्यतायाः प्रयोजकत्वकल्पने परिसंख्यार्थत्वप्रसङ्गात् । गुणानां पृथगुपासनासिद्ध्यर्थत्वं स्यादिति चेत्, न तावद्धर्मिणं विना उपासना पृथगुपासना; श्रुतौ सत्यकामादिशब्दानां धर्मिपर्यन्तत्वेन गुणोपासनाविधानेऽपि गुणविशिष्टधर्म्युपासनाप्राप्तेः । नापि धर्मिविशेषणतयैव गुणानां क्रमेणोपासना पृथगुपासना; शाण्डिल्यविद्यादिषु मनोमयादिगुणानामपि तथैवोपासनेति ततो विशेषाभावात् । नापि गुणविशेष्यकोपासना पृथगुपासना; तस्यापि विवक्षितत्वे "अस्मिन् कामाः समाहिता" इति गुणविशेष्यकोपदेशतस्तल्लाभात् । तस्मादस्मदुक्तमेव तत्प्रयोजनमिति युक्तम् । तन्मुखेन च भाष्यकारैर्वाजसनेयोक्तविद्याया निर्गुणविद्यात्वं व्यञ्जितम् । **ननु**—छान्दोग्यवाजसनेयकोक्तविद्ययोः सगुणनिर्गुणविषयतया भेदेऽप्यायतनत्वादिसाम्यमात्रेण परस्परगुणोपसंहारे समाख्याभेदेन भिन्नयोर्दहरशाण्डिल्यविद्ययोरपि परस्परगुणोपसंहारः स्यात्? तयोरपि हृदयायतनम्; एतत्सत्यं ब्रह्मपुरं मनोमयोऽयं पुरुषो भाः सत्यमि"त्युक्तं सत्यत्वम्, "अथ य आत्मा स सेतुर्विधृतिः सत्यधृति"रित्युक्ता धृतिः, "सत्यकामः सत्यसङ्कल्पः भारूपः सत्यसङ्कल्प इत्युक्तं सत्यस-

[1] तत्रैकं सूत्रं १—कामादीतरत्र चायतनादिभ्यः ॥ ३९ ॥

( २६ अधिकरणम् ) **आदरादलोपः ॥ ४० ॥**

**छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते—'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथममाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' ( छा० ५।१९।१ ) इत्यादि । तत्र पञ्च प्राणाहुतयो विहिताः । तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं विद्वानग्निहोत्रं जुहोति' ( छा० ५।२४।२ ) इति 'यथेह क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' (छा० ५।२४।५ ) इति च । तत्रेदं विचार्यते—किं भोजनलोपे लोपः प्राणाग्निहोत्रस्योतालोप इति । तद्यद्भक्तमिति भक्तागमनसंयोगश्रवणाद्भक्तागमनस्य च भोजनार्थत्वाद्भोजनलोपे लोपः प्राणा-**

## भामती ।

**आदरादलोपः ॥ ४० ॥** अस्ति वैश्वानरविद्यायां तदुपासकस्यातिथिभ्यः पूर्वभोजनम् । तेन यद्यपीयमुपासनागोचरा न चिन्ता साक्षात्; तथापि तत्संबद्धप्रथमभोजनसंबन्धादस्ति संगतिः । विचारगोचरं दर्शयति—**छान्दोग्ये वैश्वानरविद्यां प्रकृत्येति** । विचारप्रयोजकं संदेहमाह—**किं भोजनलोप इति** । अत्र पूर्वपक्षाभावेन संशयमाक्षिपति—**तद्यद्भक्तमिति भक्तागमनसंयोगश्रवणादिति** । उक्तं खल्वेतत्प्रथम एव तन्त्रे 'पदकर्माप्रयोजकं नयनस्य परार्थत्वात्' इत्यनेन । यथा सोमक्रयार्थानीयमानैकहायनीसप्तमपदपांसुग्रहणमप्रयोजकं न पुनरेकहायन्यानयनं प्रयोजयति, तत्कस्य हेतोः ? सोमक्रयेण तन्नयनस्य प्रयुक्तत्वात्तदुपजीवित्वात्सप्तमपदपांसुग्रहणस्येति । तथेहापि भोजनार्थभक्तागमनसंयोगात्प्राणाहुतेर्भोजनाभावे भक्तं प्रत्यप्रयोजकत्वमिति नास्ति पूर्वपक्ष इत्यपूर्वपक्षमिदमधिकरण-

## वेदान्तकल्पतरुः ।

**आदरादलोपः ॥ ४० ॥** उपास्तिलोपेऽपि स्तुत्यर्थत्वेन गुणलोपवत् "पूर्वोऽतिथिभ्य" इत्यादिस्तुत्युपपत्त्यर्थं भोजनलोपेऽपि प्राणाग्निहोत्रलोप इत्यवान्तरसङ्गतिः । पादसङ्गतिमाह—**अस्तीति** । **पूर्वभोजनमिति** । तद्यद्भक्तं प्रथममिति वाक्यविहितं प्राणाग्निहोत्रमित्यर्थः । **पदकर्मेति** । "एकहायन्या क्रीणाती"ति प्रकृत्य श्रूयते "षट् पदान्यनुनिष्क्रामति सप्तमं पदमञ्जलिना गृह्णाति यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्या"दिति । सोमक्रयार्थं नीयमानाया एकहायन्याः षट्पदान्यनुगच्छेदध्वर्युः । सप्तमपदबिम्बगतपांसूनञ्जलिना गृह्णीयाद्, गृहीत्वा स्थापयेत्पुनर्यस्मिन् दिवसे हविर्धाने शकटे द्वे प्राङ्मुखे प्रवर्तयेयुस्तदा तेन पांसुनाऽक्षं रथस्याञ्जयेल्लिम्पेदित्यर्थः । तत्र संशयः । यदेतदक्षाभ्यञ्जनं सप्तमपदसाध्यं तदर्थमप्येकहायनीनयनम् । अतश्च तेनापि प्रयुज्यते, उत क्रयार्थमेव, ततश्च तेनैव प्रयुज्यते इति तत्र द्वयोरप्येकहायनीनयनसाध्यत्वात्कस्यचिदपि वाक्यतो विशेषसंबन्धाऽनवगमात् संनिध्यविशेषाच्चोभयार्थत्वं प्रापय्य चतुर्थे सिद्धान्तितम् । यद्यपि क्रयनयनयोर्न साक्षादस्ति वाक्यकृतः संबन्धः; तथाप्येकहायनीद्वारा विद्यते । सा हि तृतीयया क्रयार्थाऽवसीयते । यदर्था च सा तदर्थमेव तत्संस्कारार्थं नयनमित्यस्ति क्रयनयनयोर्विशेषसंबन्धः । नैवमस्ति पदकर्मणा नयनस्य विशेषसंबन्धः । तस्मात्क्रयार्थमेव नयनमिति । तदिदमाह—**यथेत्यादिना** । सोमक्रयार्था चासौ नीयमाना चासावेकहायनी च तस्याः सप्तमपदपांसुग्रहणमित्यर्थः । तावच्छब्देना-

## कल्पतरुपरिमलः ।

क्लृप्तत्वम्, "सर्वस्येशानः सर्वस्याधिपति"रित्युभयत्राप्युक्ते सर्वेश्वरत्वसर्वाधिपतित्वे चेत्येवं बहवो गुणाः समाना दृश्यन्त इति—**चेत्**, नात्र साक्षान्मुख्य उपासनार्थगुणोपसंहार उच्यते । किंत्वेकैकत्र श्रुतानां गुणानामन्यत्रापि सत्यकामत्वादिसामर्थ्येन हृदयायतनत्वादिसाम्येन चोपस्थितानां स्तुतिप्रकर्षमात्रप्रयोजनतोच्यते, एवमेव हि ध्येयत्वमपूर्वमित्यादिना अतोऽन्तर्भावमात्रमुपसंहार इत्यन्तेन प्राक्तनग्रन्थेनोक्तम् । अन्यत्राप्ययं न्यायो भवत्विति चेद्, भवतु नाम; नैतावता विद्याभेदे ध्यानार्थगुणोपसंहारप्रसङ्गः ॥ ३९ ॥ **इति पञ्चविंशं कामाद्यधिकरणम् ॥**

**आदरादलोपः ॥ ४० ॥ पूर्वोऽतिथिभ्य इत्यादिस्तुत्युपपत्त्यर्थमिति** । यद्यपि पूर्वोऽतिथिभ्योऽश्नीयादित्ययं विधिः, यथा वै स्वयमहुतवेत्यादिस्तदर्थवाद एव स्तावकः; तथाप्यर्थवादो यथा विधेये आदरावहः, एवमिह "पूर्वोऽतिथिभ्य" इति विधिरपि प्राणाग्निहोत्रे आदरावह इति साम्याद्विधिरपि स्तुतिकोटौ निवेशितः । **यद्वा**—"पूर्वोऽतिथिभ्योऽश्नीया"दित्ययमादिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणाऽर्थवादांश एव गृहीतः । **यदेतदक्षाभ्यञ्जनमिति** । अक्षाभ्यञ्जनमप्येकहायनीनयनस्य प्रयोजकं चेदक्षाभ्यञ्जनात्प्राक् पदपांस्वपचारे तत्संपादनार्थं पुनरप्येकहायनीनयनं कार्यम्, अप्रयोजकं चेत्पुनस्तन्न कार्यम् । अक्षाभ्यञ्जनं तु पांस्वन्तरेणान्येन वा कार्यमिति फलभेदः । **नन्वेकहायनीक्रयार्थानयनं** क्रयाभ्यञ्जनोभयार्थमस्तु, उभयोरपि नयनसाध्यत्वाविशेषादित्याशङ्क्याह—**यदर्था च सेति** । यदर्थं द्रव्यं तत्संस्कारोऽपि द्रव्यद्वारा तदर्थ एव स्यादिति भावः । **सप्तमपदपांसुग्रहणमित्यर्थ इति** । एवंच टीकाकारपक्षे पदकर्मेति सूत्रपदेन पदपां-

ग्निहोत्रस्येति । एवं प्राप्ते—न लुप्येतेति तावदाह । कस्मात्? आदरात् । तथाहि—वैश्वानरविद्यायामेव जाबालानां श्रुतिः—'पूर्वोऽतिथिभ्योऽश्नीयात् । यथा ह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्र आदरं करोति । या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते । ननु भोजनार्थभक्तागमनसंयोगाद्भोजनलोपे लोपः प्रापितः, न; तस्य द्रव्य-

## भामती ।

मित्यर्थः । पूर्वपक्षमाक्षिप्य समाधत्ते—एवं प्राप्ते—न लुप्येतेति तावदाह । तावच्छब्दः सिद्धान्तशङ्कानिराकरणार्थः । पृच्छति—कस्मात्? उत्तरम्—आदरात् । तदेव स्फोरयति—तथाहीति । जाबाला हि श्रावयन्ति—'पूर्वोऽतिथिभ्योऽश्नीयात्' इति । अश्नीयादिति च प्राणाग्निहोत्रप्रधानं वचः । 'यथा हि क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' इति वचनादग्निहोत्रस्यातिथीन्भूतानि प्रत्युपजीव्यत्वेन श्रवणात्तदेकवाक्यतयेहापि पूर्वोऽतिथिभ्योऽश्नीयादिति प्राणाहुतिप्रधानं लक्ष्यते । तदेवं सति 'यथाह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादित्येवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं स्वामिनः प्राणाग्निहोत्रं प्रथमं प्रापयन्ती प्राणाग्निहोत्रादरं करोति । नन्वाद्रियतामेषा श्रुतिः प्राणाहुतिं, किंतु स्वामिभोजनपक्ष एव नाभोजनेऽपीत्यत आह—या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते । ईदृशः खल्वयमादरः प्राणाग्निहोत्रस्य, यदतिथिभोजनोत्तरकालविहितं स्वामिभोजनं समयादपकृष्यातिथिभोजनस्य पुरस्ताद्विहितम् । तद्यदाऽग्निहोत्रस्य धर्मिणः प्राथम्यधर्मलोपमपि न सहते श्रुतिस्तदाऽस्याः कैव कथा धर्मिलोपं सहत इत्यर्थे पूर्वपक्षाक्षेपमनुभाष्य दूषयति—ननु भोजनार्थेति । यथा हि कौण्डपायिनामयनगते अग्निहोत्रे प्रकरणान्तरान्नैयमिकाग्निहोत्राद्भिन्ने द्रव्यदेवतारूपधर्मान्तररहिततया तदाकाङ्क्षे साध्यसादृश्येन नैयमिकाग्निहोत्रसमाननामतया तद्धर्मातिदेशेन रूपधर्मान्तरप्राप्तिरेवं प्राणाग्निहोत्रेऽपि नैयमिकाग्निहोत्रगतपयःप्रभृतिप्राप्तौ भोजनगतभक्तद्रव्यता

## वेदान्तकल्पतरुः ।

स्थिरत्वं पूर्वपक्षस्य नोच्यत इत्याह—तावच्छब्द इति । स्वामिभोजनस्य ह्यतिथिभोजनादुत्तरः कालः, तं कालमतीत्य प्राक्काले प्राणाग्निहोत्रस्य श्रवणात् भोजनलोपेऽपि प्राणाग्निहोत्रकर्तव्यताऽवगम्यत इत्याह—जाबाला हीति । नन्वत्राशनमात्रस्य भोजनकालादपकर्षः प्रतीयते, न प्राणाग्निहोत्रस्येत्यत आह—अश्नीयादिति चेति । 'अग्निहोत्रमुपासत' इति वचनादतिथिरूपभूतानि प्रति उपजीव्यमग्निहोत्रं श्रुतम्, एवं सति अतिथिभोजनरूपाग्निहोत्रात्प्रागुच्यमानमशनमप्यग्निहोत्रमेव; अग्निहोत्रेण समभिव्याहारादेकवाक्यत्वप्रतीतेरित्यर्थः । एवं विधिबलात्प्राणाग्निहोत्रस्य भोजनकालादपनयनं प्रदर्श्यादरादिति सूत्रसूचितं वाक्यशेषमेतस्यार्थस्य स्तावकं दर्शयति—तदेवं सतीति । ननु भाष्ये भोजनशब्दात्प्राणाग्निहोत्रादरो न प्रतीयतेऽत आह—स्वामिनः प्राणाग्निहोत्रमिति । अतिथिप्राणाग्निहोत्रात्पूर्वं स्वीयप्राणाग्निहोत्रं कुर्यादितरथा पूर्वमतिथिभ्यो भोजनदाने स्वाग्निहोत्राहोमेन पराग्निहोत्रकरणमिवायुक्तं कृतं स्यादित्यादरः स्वामी यदा भुङ्क्ते तदैव । तथाच कथं भोजनलोपे प्राणाहुत्यापत्तिरिति शङ्कते—नन्वाद्रियतामिति । कर्तर्ययं प्रयोगः । अतिथिभोजनस्य पुरस्ताद्विहितं स्वामिभोजनमित्यध्याहारः । दूषणपरभाष्यस्याभिप्रायमाह—यथाहीति । कौण्डपायनेप्युपसदादिधर्मोऽस्तीति—द्रव्यदेवतारूपेत्युक्तं । यागस्य रूपं द्रव्यदेवते एव । धर्मान्तरं द्रव्यदेवतारूपधर्मान्तरं । प्रकरणान्तराधिकरणं धर्मातिदेशाधिकरणं

## कल्पतरुपरिमलः ।

सुग्रहणं विवक्षितं, तद्विषयः प्रयोजकत्वाप्रयोजकत्वविचार इति प्रथमं शिलायां सप्तमपदनिधाने पदपांसुग्रहणार्थं पुनरप्येकहायनीनयनं पूर्वपक्षे कार्यं सिद्धान्ते नेति फलभेदः । पक्षद्वयेऽपि पूर्वपक्षसिद्धान्तन्यायौ समानौ । वस्तुतः—पांसुग्रहणमक्षाभ्यञ्जनं चेत्युभयमप्यधिकरणस्योदाहरणम् । एकस्मिन्नुदाहृते न्यायसाम्यादन्यदप्युदाहरणमुपगन्तुं शक्यमित्यभिप्रेत्य टीकाकारैः प्रथमातिक्रमे कारणं नास्तीति पांसुग्रहणमुदाहृतम् । आचार्यैस्त्वक्षाञ्जनमप्युदाहरणमिति स्पष्टीकर्तुं तदुदाहृतम् । तस्यैकहायनीनयनसाध्यतायाः पांसुग्रहणद्वारकतया तस्यैकहायनीनयनप्रयोजकत्वसमर्थनेनैव पांसुग्रहणस्यापि तत्प्रयोजकत्वसामर्थ्यात्समर्थितं भवतीति तन्नोदाहृतम् । प्रागुच्यमानमशनमप्यग्निहोत्रमेवेति । अतएवाधिकरणारम्भे पादसङ्गतिः । टीकायां प्राणाग्निहोत्रमेव पूर्वभोजनशब्देनोक्तम् । स्वामिभोजनमित्यध्याहार इति । यदतिथिभोजनोत्तरकालं विहितं स्वामिभोजनं समयादपकृष्येत्यत्र विद्यमानं स्वामिभोजनपदम् अपकर्षकर्मसमर्थकतया द्वितीयान्तमित्यभिप्रेत्य विहितमित्यस्यान्वयार्थं प्रथमान्तस्य स्वामिभोजनपदान्तरस्याध्याहार उक्तः । वस्तुतस्तु—तदेव पदं प्रथमान्तं वक्तुं शक्यम् । अपकृष्य विहितमित्यत्र विधानरूपप्रधानक्रियाकर्मणोऽभिहितत्वमात्रेणाश्रुतपदस्य प्रथमान्तलोपपत्तेः; अयं ब्राह्मणस्ततोऽपकृष्यात्र नीत इत्यादिप्रयोगदर्शनात् । अतो नाध्याहारापेक्षा । उपसदादिधर्म-

भामती ।

विधीयते । नचैतवता भोजनस्य प्रयोजकत्वम्; उक्तमेतद्यथा भोजनकालातिक्रमात्प्राणाग्निहोत्रस्य न भोजनप्रयुक्तत्व-मिति । नचैकदेशद्रव्यतयोत्तरार्धात्स्विष्टकृते समवद्यतीतिवदप्रयोजकत्वमेकदेशद्रव्यसाधनस्यापि प्रयोजकत्वात् । यथा जाघन्यापत्नीः संयाजयन्तीति पत्नीसंयाजानां जाघन्येकदेशद्रव्यजुषां जाघनीप्रयोजकत्वम् । स हि नामाऽप्रयोजको भवति यस्य प्रयोजकग्रहणमन्तरेणार्थो न ज्ञायते । यथा न प्रयोजकपुरोडाशग्रहणमन्तरेणोत्तरार्धं ज्ञातुं शक्यम् । शक्यं तु जाघनीवद्भक्तं ज्ञातुम् । तस्माद्यथा जाघन्यन्तरेणापि पशूपादानं परप्रयुक्तपशूपजीवनं वा खण्डशो मांसविक्रयिणो मुण्डादिवदाकृतिरुपादीयते, एवं भक्तमपि शक्यमुपादातुम् । तस्मान्न भोजनस्य लोपे प्राणाग्निहोत्रलोप इति मन्यते पूर्वपक्षी । अद्भिरिति तु प्रतिनिध्युपादानमावश्यकत्वसूचनार्थं भाष्यकारस्य ॥ ४० ॥ तद्धोमीयमिति हि वचनं

वेदान्तकल्पतरुः ।

च प्रथमसूत्रेऽनुक्रान्तम् । **ननु** विधीयतां भक्तद्रव्यकता, तथापि भक्ताभावेऽग्निहोत्रं लुप्येतेति, नेत्याह—**नचैताव-तेति** । अत्र हेतुमाह—**उक्तमिति** । मा भूत् भोजनमाश्रित्य विधानाद्भोजनप्रयुक्तत्वं प्राणाग्निहोत्रस्य, भोजनार्थभक्तैक-देशद्रव्याश्रितत्वाद्भोजनप्रयुक्तत्वं किं न स्यादत आह—**नचैकदेशेति** । "मध्यात्पूर्वार्धाच्च द्विर्हविषोऽवद्यत्युत्तरार्धाच्च स्विष्टकृते समवद्यती"ति श्रूयते । स्विष्टकृन्नाम देवताविशेषः । तन्नाम्ना याग एव प्रतीयते । तत्र स्विष्टकृत् किमुत्तरार्ध-पुरोडाशयोः प्रयोजकः, किं वा यदङ्क्ते अञ्जनं करोति चक्षुरेव भ्रातृव्यस्येति फलश्रुतिप्रयुक्तपुरोडाशोपजीवीति संदेहे अग्न्याद्यर्थस्य हविषो देवतान्तरावरुद्धत्वात्स्विष्टकृदर्थमन्यद्धविः कॢप्ताऽवद्यतीति प्राप्ते राद्धान्तः—कस्योत्तरार्धादिति नित्यापे-क्षत्वात्स्ववाक्ये च संबन्धिनिर्देशादग्न्यादिप्रयुक्तस्यैव हविषः प्रकृतत्वात्तस्योत्तरार्धादित्यवगमादप्रयोजकः स्विष्टकृत् । अन्या-र्थस्यापि हविषो वचनादन्यार्थत्वमविरुद्धमिति । तद्वदप्रयोजकत्वं प्राणाग्निहोत्रस्य । ततश्च भोजनप्रयुक्तत्वमित्येतत्तत्रास्तीत्यत्र हेतुमाह—**एकदेशद्रव्यसाधनस्यापीति** । एकदेशो द्रव्यं साधनं यस्य यागस्य तस्यापि द्रव्यं प्रति प्रयोजकत्वं स्यादित्यर्थः । तत्रोदाहरणमाह—**यथेति** । दर्शपूर्णमासयोराम्नायते—'जाघन्या पत्नीः संयाजयन्ति' इति । पत्न्यो नाम देवताविशेषाः । जघनप्रदेशादवत्तो मांसखण्डो **जाघनी** । तत्रैकदेशद्रव्यत्वात्परप्रयुक्तकृतप्रयोजनाग्नीषोमीयपशुजाघनी-प्रतिपत्तिकर्मत्वात्पत्नीसंयाजानां प्रकरणोत्कर्षमाशङ्क्य सिद्धान्तितं शेषलक्षणे, तं प्रकारमाह—**स हि नामेति** । उक्ताग्नि-होत्रसाधनं भक्तं भोजनाङ्गभक्तज्ञानं विनापि जाघनीवज्ज्ञातुं शक्यमित्यर्थः । दृष्टान्तं साधयति—**तस्मादिति** । जाघनी-त्येतावन्मात्रं श्रूयते, नतु पशोरिति । तस्मात्प्राणिमात्रस्य जाघनी पशुज्ञानं विनापि ज्ञातुं शक्येत्यर्थः । आग्नीषोमीययाग-प्रयुक्तत्वात्परप्रयुक्तः पशुरग्नीषोमीयः, तदुपजीवनं चान्तरेण जाघनीज्ञानात् तत्साध्यदार्शपौर्णमासिकपत्नीसंयाजेष्वाज्येन सह जाघनी विकल्प्यते नतूत्कृष्यत इत्यर्थः । हिंसापि न कार्येत्याह—**खण्डश इति** । **मन्यते पूर्वपक्षीति** । तद्धोमीयमिति तच्छब्दार्थानभिज्ञत्वान्मन्यतेग्रहणम् । **नन्वेवं** भक्तस्यैव भोजनबहिर्भूतस्य संभवे कथमद्भिरिति प्रतिनि-धिर्भाष्ये उक्तोऽत आह—**अद्भिरिति** । अग्निहोत्रादिनित्यकर्मसु श्रुतव्रीह्याद्यलाभे कर्मोत्सर्गे प्राप्ते नित्यानामनित्यानां च प्रारब्धानामवश्यकर्तव्यत्वावगमात् श्रुतद्रव्यैः प्रतिनिहितैश्च क्रियमाणस्य प्रयोगस्याविशिष्टत्वेन प्रत्यभिज्ञानात्प्रतिनिधायापि कर्म कर्तव्यमिति षष्ठे सिद्धान्तितम् ॥

**भाष्योदाहृतमप्यधिकरणं लिख्यते**—सन्त्यग्न्याधाने पवमानेष्टयः "अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्व-पेदि"त्याद्याः । तासु प्रकृतेर्दर्शपूर्णमासाद"ग्निहोत्रहवण्या हवींषि निर्वपेदि"ति विहितो हविर्निर्वापोऽतिदेशेन प्राप्नोति । आधानकाले चाग्निहोत्राभावान्नाग्निहोत्रहवणी । ततस्तद्विशिष्टत्वेन श्रुतस्य निर्वापस्य तल्लोपाल्लोपप्राप्तौ दशमे सिद्धान्तितम् ।

कल्पतरुपरिमलः ।

**इति** । उपसद आदयो यस्याग्निहोत्रस्य तदुपसदादि । भावप्रधानो निर्देशः । तथा चोपसदादित्वधर्मैः उपसदानन्तर्यधर्मी इत्यर्थः । **देवतान्तरावरुद्धत्वादिति** । आग्नेयमष्टाकपालमग्नीषोमीयमेकादशकपालमित्यादिविधिभिः कृत्स्नस्य पुरोडा-शस्य देवतान्तरार्थत्वावगमादित्यर्थः । नच—द्व्यवदानमात्रस्याग्नौ प्रक्षेपात्तावदेवाग्न्याद्यर्थमिति—शङ्कनीयम्; उत्पत्तिवा-क्यानुसारात् । कृत्स्नेन पुरोडाशेनाग्न्यादियागः, प्रक्षेपमात्रं द्व्यवदानस्य; तेन द्व्यवदानप्रक्षेपकाले कृत्स्नः पुरोडाशोऽग्न्यादिदे-वतायै मनसा त्यक्तव्य इति सर्वप्रदानाधिकरणे वार्तिककारैः स्थापितत्वात् । **प्राणिमात्रस्य** वराहमेषहरिणादेः । **उक्तंच वार्तिकेऽपि जाघन्यधिकरणे**—"नावश्यमिति यच्छागादेव ग्रहीतव्या जाघनी; जाघनीनामकावयवमात्रश्रवणा-दि"ति । **अनित्यानां च प्रारब्धानामिति** । प्रारब्धकाम्यकर्मणामित्यर्थः । **अविशिष्टत्वेन प्रत्यभिज्ञानादिति** । प्रतिनिधिद्रव्येषु नीवारादिषु मुख्यव्रीह्यादिद्रव्यावयवानुप्रवेशप्रयुक्तसादृश्यमूलात्प्रत्यभिज्ञानादित्यर्थः । **नाग्निहोत्रहव-णीति** । यद्यप्यग्निहोत्रं यया होष्यते साप्यग्निहोत्रहवणीति वक्तुं शक्या, ल्युटो हि भूतकाले विधानाभावात्; तथापि भाव्यर्थे प्रमाणाभावात् प्रवृत्तिनिमित्तनिर्धारणाय ययाऽग्निहोत्रं हुतं सैवाग्निहोत्रहवणी ग्राह्येति भावः । **तद्विशिष्टत्वेन**

विशेषविधानार्थत्वात् । प्राकृते ह्यग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वादिहाप्यग्निहोत्रशब्दात्कौण्डपायिनामयनवत्तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यैकतागुणविशेषविधानार्थमिदं वाक्यं तद्यद्भक्तमिति । अतो गुणलोपे न मुख्यस्येत्येवं प्राप्तम् भोजनलोपेऽप्यद्भिर्वाऽन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ॥ ४० ॥ अत उत्तरं पठति—

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

उपस्थिते भोजनेऽतस्तस्मादेव भोजनद्रव्यात्प्रथमोपनिपतितात्प्राणाग्निहोत्रं निर्वर्तयितव्यम् । कस्मात् ? तद्वचनात् । तथाहि—'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' ( छा० ५।१९।१ ) इति । सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । नचात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति; कुण्डपायिनामयने हि मासमग्निहोत्रं जुहोतीति विध्युद्देशगतोऽग्निहोत्रशब्दस्तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः । इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति । तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धरणादयोऽपि प्राप्येरन् । नचास्ति संभवः ।

---

### भामती ।

किमपि संनिहितद्रव्यं होमे विनियुङ्क्ते, तदः सर्वनाम्नः संनिहितावगममन्तरेणाभिधानापर्यवसानात्, तदनेन स्वाभिधानपर्यवसानाय तद्यद्भक्तं प्रथममागच्छेदिति संनिहितमपेक्ष्य निर्वर्तितव्यम् । तच्च संनिहितं भक्तं भोजनार्थमित्युत्तरार्थात्स्विष्टकृते समवद्यतीतिवन्न भक्तं वाऽपो वा द्रव्यान्तरं वा प्रयोक्तुमर्हति । जाघन्यास्त्ववयवभेदस्य नाग्नीषोमीयपश्वधीनं निरूपणम्; स्वतन्त्रस्यापि तस्य सूनास्थस्य दर्शनात्तस्मादस्त्येतस्य जाघनीतो विशेषः । यच्चोक्तं—चोदकप्राप्तद्रव्यबाधया भक्तद्रव्यविधानमिति, तदयुक्तम्; विध्युद्देशगतस्याग्निहोत्रनाम्नस्तथाभावादार्थवादिकस्य तु सिद्धं किंचित्साद्दश्यमुपादाय स्तावकत्वेनोपपत्तेर्न तद्भावं विधातुमर्हतीत्याह—**नचात्र प्राकृताग्निहोत्रधर्मप्राप्तिरिति** । अपिचाग्निहोत्रस्य चोदकतो धर्मप्राप्तावभ्युपगम्यमानायां बहुतरं प्राप्तं बाध्यते । नच संभवे बाधनिचयो न्याय्यः । कृष्णलचरौ खल्वगत्या प्राप्तबाधोऽभ्युपेयत इत्याह—**तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामिति** । चोदकाभावमुपो-

### वेदान्तकल्पतरुः ।

गुणलोपे च मुख्यस्य ( जै. अ. १० पा. २ सू. ६३ ) । विकृतौ हि कार्यद्वारा पदार्थाः प्राप्नुवन्ति, तेन हविःसंस्कारार्थं निर्वापः प्रथमं प्राप्तः, तद्वारेण च तदङ्गमग्निहोत्रहवणी पश्चात्प्राप्नोति, ततो निरपेक्षा प्राप्तिः । प्रधानभूतश्च निर्वापोऽङ्गलोपेऽपि कर्तव्य इति गुणलोपेऽपि मुख्यस्य प्रयोग इति । **भक्तं वेति** । भोजनानङ्गमित्यर्थः । **ननु** तद्यद्भक्तमिति वाक्योक्तस्य तद्धोमीयमित्यत्रत्यतच्छब्देन परामर्शेऽपि न भोजनाङ्गभक्तपरामर्शसिद्धिः । तद्भक्तमिति वाक्यस्याऽन्यार्थत्वादित्युक्तमनूद्य निरस्यति—**यच्चोक्तमित्यादिना** । **विध्युद्देशगतस्येति** । विध्येकवाक्यतापन्नो ह्यग्निहोत्रशब्दो गौणः सन् कर्तव्यसादृश्यं वक्तुं शक्तः; कर्तव्यार्थविशेषणपरत्वात् । अर्थवादगतस्तु सिद्धमर्थं विशिंषन् सिद्धमेव सादृश्यं वक्तीत्यर्थः । **कृष्णलचराविति** । "प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति श्रूयते । कृष्णलो नाम परिमाणविशेषवान् सुवर्णमणिः । तत्रातिदेशप्राप्ता अवघातादयो द्वाराभावेऽपि पाकवत्कर्तव्याः । अचरौ चरुशब्दस्याग्निहोत्रशब्दवद्धर्मातिदेशकत्वादिति प्रापय्य दशमे सिद्धान्तितम् । कृष्णलाञ्छ्रपयेदिति श्रौतः पाको द्वाराभावेऽपि कर्तव्यः । अतएव चरुशब्दोऽपि पाकयोगाद्विभक्तत्वाच्च सिद्धसादृश्यपरः; सत्यां गतौ विधौ गौणत्वायोगात् । तस्मान्नावघातादि-

### कल्पतरुपरिमलः ।

**श्रुतस्येति** । यद्यपि "चतुरो मुष्टीन्निर्वपती"ति संख्यामुष्टिविशिष्टे निर्वापे विहिते अग्निहोत्रहवण्येति वाक्यान्तरेण तत्साधनमात्रं विधीयेत; तथापि तस्मिन्वाक्ये साधनविशेषविशिष्टत्वप्रतीतिरस्तीति तद्विशिष्टत्वश्रवणमुक्तम् । **पश्चात्प्राप्नोतीति** । यद्यप्यखण्डोपकारमुखेन सकलपदार्थानां युगपदेव प्रापकश्चोदकः, नतु चोदकस्य प्रतिपदार्थं पृथग्व्यापारोऽस्ति, न वा प्रतिपदार्थं चोदकभेदोऽस्ति; तथापि प्रकृतिवच्छब्देन युगपत्प्राप्तेष्वपि पदार्थेष्वनुष्ठानकाले तत्तदवान्तरोपकारापेक्षाक्रमेण तत्तदुपकारजनकपदार्थानुष्ठानापेक्षितबुद्धिक्रमोऽस्तीत्येतदवलम्ब्य प्राप्तिपौर्वापर्यमुक्तम् । **अर्थवादगतस्त्विति** । सोमो वै वाजिनमित्यर्थवादे सोमे वाजिनशब्दवत् "एष वै दर्शपूर्णमासयोरवभृथ" इति अर्थवादे अपां व्युत्सेके अवभृथशब्दवच्च सिद्धसादृश्यमात्रपर इत्यर्थः । **परिमाणविशेषवानिति** । गुञ्जाबीजपरिमाणं **परिमाणविशेषः** । **अवघातादय इति** । आदिशब्देन निष्फलीकरणग्रहणम् । **ननु** वितुषीभावादिलक्षणद्वाराभावे बाध एव युक्त इति कथं पूर्वपक्षः ? इत्यत्राह—**अचराविति** । अनवस्राविता न्तर ऊष्मपक्वौदनविशेषवाची चरुशब्द इति दशमे निर्णीतम् । तथा चाचरौ चरुशब्दोऽयं चरुधर्माणाम् अवघातादीनामतिदेशकः स्यादित्यर्थः । **सत्यां गतौ विधौ गौणत्वायोगादिति** । अग्नि-

अभ्युद्धरणं तावद्धोमाधिकरणभावाय, न चायमग्नौ होमः; भोजनार्थताव्याघातप्रसङ्गात्। भोजनोपनीतद्रव्यसंबन्धाच्चास्यैवैष होमः। तथाच जाबालश्रुतिः—"पूर्वोऽतिथिभ्योऽश्नीयादि"-त्यास्याधारामेवेमां होमनिर्वृत्तिं दर्शयति। अतएव चेहापि सांपादिकान्येवाग्निहोत्राङ्गानि दर्शयति—'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा० ५।१८।२) इति। वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या; मुख्याग्निहोत्रे वेद्यभावात्, तदङ्गानां चेह संपिपादयिषितत्वात्। भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसंभवः। एवमन्येऽप्युपस्थानादयो धर्माः केचित्कथंचिद्विरुध्यन्ते। तस्माद्भोजनपक्ष एवैते मन्त्रद्रव्यदेवतासंयोगात्पञ्च होमा निर्वर्तयितव्याः। यत्त्वादरदर्शनवचनं तद्भोजनपक्षे प्राथम्यविधानार्थम्। नह्यस्ति वचनस्यातिभारः। नत्वनेनास्य नित्यता शक्यते दर्शयितुम्। तस्माद्भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥ ४१ ॥ इति षड्विंशमादराधिकरणम् ॥

(२७ अधिकरणम्) **तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥**

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि—'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १।१।१) इत्येवमादीनि। किं तानि नित्यान्येव स्युः कर्मसु पर्णमयीत्वादिवदुतानित्यानि गोदोहनादिवदिति विचारयामः। किं तावत्प्राप्तम्? नित्यानीति। कुतः? प्रयोगवचनपरिग्रहात्। अनार-

---

## भामती।

द्रढयति—**अतएव चेहापीति**। यत एवोक्तेन क्रमेणातिदेशाभावोऽतएव सांपादिकत्वमग्निहोत्राङ्गानाम्, तत्प्राप्तौ तु सांपादिकत्वं नोपपद्येत। कामिन्यां किल कुचवदनाद्यसता चक्रवाकनलिनादिरूपेण संपाद्यते, नतु नद्यां चक्रवाकादय एव चक्रवाकादिना संपाद्यन्ते। अतोऽप्यवगच्छामो न चोदकप्राप्तिरिति। यत्त्वादरदर्शनमिति, तद्भोजनपक्षे प्राथम्यविधानार्थम्। यस्मिन्पक्षे धर्मानवलोपस्तस्मिन्धर्मिणोऽपि, नत्वेतावता धर्मिनित्यता सिध्यतीति भावः। नन्वतिथिभोजनोत्तरकालता स्वामिभोजनस्य विहितेति कथमसौ बाध्यते? इत्यत आह—**नास्ति वचनस्यातिभारः**। सामान्यशास्त्रबाधायां विशेषशास्त्रस्यातिभारो नास्तीत्यर्थः ॥ ४१ ॥ **इति षड्विंशमादराधिकरणम् ॥**

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥** यथैव "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्येतदनारभ्याधीतमव्यभिचरितक्रतुसंबन्धं जुहूद्वारा क्रतुप्रयोगवचनगृहीतं क्रत्वर्थं सत्फलानपेक्षं

## वेदान्तकल्पतरुः।

प्राप्तिरिति। सोऽयमतिदेशप्राप्तावघातादिबाधो गत्यभावात् स्वीक्रियते, प्रकृते तु भोजनार्थभक्तानुवादादस्ति गतिरित्यर्थः। कामिन्यां सिद्धं यत्कुचवदनादि तदसता चक्रवाकादिरूपेण संपाद्यते रूप्यत इत्यर्थः। यदाचैवं भोजनार्थभक्ताश्रितत्वं प्राणाग्निहोत्रस्य तच्छब्दात्सिद्धं, तदा "पूर्वोऽतिथिभ्योऽश्नीया"दित्याद्यादरदर्शनं न भोजनकालादपकृष्य कालान्तरेऽग्निहोत्रविधिपरं, किंतु यदा स्वामी भुङ्क्ते तदा भोजनस्य स्वकालादपकर्षेण तदाश्रितप्राणाग्निहोत्रस्यापकर्षकमित्याह—**तद्भोजनपक्ष इति**। यदाच प्राथम्यात्मको धर्मः सत्येव भोजने विहितस्तदा धर्म्यपि प्राणाग्निहोत्रं सत्येव भोजने स्यात्। तथाच या श्रुतिर्धर्मलोपं न सहते सा नतरां धर्मिलोपं सहेतेति तन्निरस्तम्, अनित्यत्वेऽपि तदुपपत्तेरित्याह—**यस्मिन्पक्ष इति**। **ननु** स्वामिभोजनस्य स्वकालादपकर्ष एव युक्तः, शास्त्रान्तरविरोधात्। अतः प्राणाग्निहोत्रस्यैव भोजनकालादपकर्ष इत्याशङ्क्य परिहरति—**नन्वित्यादिना ॥ ४१ ॥ इति षड्विंशमादराधिकरणम् ॥**[1]

## कल्पतरुपरिमलः।

होत्रशब्दस्तु द्रव्यदेवतापेक्षावशाद्विधिगतो गौणोऽभ्युपगतः। नचेहावघाताद्यपेक्षास्तीति वैषम्यमिति भावः। **गत्यभावादिति**। द्वारलोपात् श्रपणवद्विशेषविध्यभावाच्चेति भावः। **नन्वतिथिभोजनोत्तरकालमित्यादिशङ्कायाः** पूर्वपक्षोपयोगं दर्शयति—**ननु स्वामिभोजनस्येति। अतः प्राणाग्निहोत्रस्यैवेति**। तथाचादरलिङ्गस्य न परिहारसिद्धिरिति भावः ॥ ४१ ॥ इति **षड्विंशमादराधिकरणम् ॥**

---

**तत्र सूत्रे २**—आदरादलोपः ४० उपस्थितेऽतस्तद्वचनात् ४१ ॥

भ्याधीतान्यपि ह्येतान्युद्गीथादिद्वारेण क्रतुसंबन्धात्क्रतुप्रयोगवचनेनैवाङ्गान्तरवत्संस्पृश्यन्ते । यत्त्वेषां स्ववाक्येषु फलश्रवणम् 'आपयिता ह वै कामानां भवति' (छा० १।१।७) इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रमेवापापश्लोकश्रवणादिवन्न फलप्रधानम् । तस्माद्यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात्प्रकरणपठितवन्नित्यतैवमुद्गीथाद्युपासनानामपीति । एवं प्राप्ते ब्रूमः—तन्निर्धारणानियम इति । यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि रसतम आप्तिः समृद्धिर्मुख्यप्राण आदित्य इत्येवमादीनि नैतानि नित्यवत्कर्मसु नियम्येरन् । कुतः ? तद्दृष्टेः । तथाह्यनियतत्वमेवंजातीयकानां दर्शयति श्रुतिः; 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' ( छा० १।१।१० ) इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात् । प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात् , 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि' ( छा०

## भामती ।

सिद्धवर्तमानापदेशप्रतीतं न रात्रिसत्रवत्फलतया स्वीकरोतीति, एवमव्यभिचरितकर्मसंबन्धोद्गीथगतमुपासनं कर्मप्रयोगवचनगृहीतं न सिद्धवर्तमानापदेशावगतसमस्तकामावापकत्वलक्षणफलकल्पनायाऽलम्; परार्थत्वात् । तथाच पारमर्षं सूत्रम्—'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति । एवंच सति क्रतौ पर्णतानियमवदुपासनानियम इति प्राप्ते उच्यते—युक्तं पर्णतायां फलश्रुतेरर्थवादमात्रत्वम्, नहि पर्णताऽनाश्रया यागादिवत्फलसंबन्धमनुभवितुमर्हति; अव्यापाररूपत्वात्, व्यापारस्यैव च फलवत्त्वात् । यथाहुः—'उत्पत्तिमतः फलदर्शनात्' इति । नापि खादिर-

## वेदान्तकल्पतरुः ।

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥** अनित्यभोजनाश्रितप्राणाग्निहोत्रवद् नित्यकर्माङ्गाश्रितोपास्तीनां नित्यत्वमिति । पूर्वपक्षमाह—**यथेत्यादिना** । कर्माङ्गाश्रितस्यापि गोदोहनवदनित्यत्वमाशङ्क्यानारभ्याधीतत्वादुपास्तीनां वाक्यात् क्रतुसंबन्ध एव सिध्यति, न फलसंबन्ध इति वक्तुं पर्णमयी, तामुदाहरति—**यस्येति** । **ननु** साक्षात्फलवत्त्वसंभवे किमिति क्रतुप्रवेशात्फलकल्पना ? अत आह—**सिद्धवर्तमानेति** । रात्रिसत्रे ह्यगत्या विपरिणामः, इहत्वस्ति कर्माङ्गत्वं गतिरित्यर्थः । **समस्तकामावापकत्वलक्षणेति** । "आपयिता ह वै कामानां भवती"त्येतदित्यर्थः । पूर्वपक्षे प्रयोजनमुपासनानां कर्माङ्गाश्रितोपास्तीनां नित्यत्वमित्याह—**एवंचेति** । **चतुर्थे स्थितम्—द्रव्यसंस्कारेति** । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यनारभ्य किंचिद्द्रव्ये फलमधीयते । ज्योतिष्टोमप्रकरणेऽस्ति संस्कारे फलश्रुतिः—"यदङ्क्ते अञ्जनं करोति चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इति । कर्मणि च फलं श्रूयते—"यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै" इति । तत्र संशयः । किमिमे फलविधय उत क्रत्वर्थेषु पर्णतादिषु फलार्थवादा इति । तत्र "खादिरं वीर्यकामस्य यूपं कुर्या"दित्यादिवत्फलविधयः, क्रतूपकारद्वारेण व्यवहितफलोपादानाद्वरमव्यवहितश्रुतफलस्य साध्यत्वविपरिणाम इति फलविधित्वे प्राप्ते राद्धान्तः पर्णतोदाहरणमाश्रित्याचार्येण प्रदर्श्यते—**युक्तं पर्णतायामित्यादिना** । "तत्रैतावत्सर्वोदाहरणशेषत्वेन वक्तव्यम् । रात्रिसत्राणामगत्या विपरिणाम आश्रितः, इह तु क्रतूपकारस्य सिद्धत्वान्न विपरिणाम इति । पर्णता किं साक्षात्फलसाधनमुत क्रियाद्रव्यमाश्रित्य । **नाद्य** इत्याह—**नहीति** । **उत्पत्तिमत इति** । साक्षादुत्पत्तिमत इति, साक्षादुत्पत्तिः क्रियाया इति क्रियात इत्यर्थः । **यत्तु**—पूर्वपक्षे उक्तं खदिरतावत् पर्णतायाः फले विधिरिति, तन्निरस्यन्

## कल्पतरुपरिमलः ।

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ रात्रिसत्राणामगत्या विपरिणाम आश्रित इति । ननु**—विपरिणामानाश्रयणे अर्थवादमात्रता स्यात्, सा च फलविपरिणामाश्रयणात् जघन्येत्यनुपदमेव टीकाकारो वक्ष्यति, अर्थवादमात्रत्वेऽत्यन्तपरोक्षा वृत्तिर्यथा न तथा फलपरत्व इति, आचार्या अपि तत्तथैवानुमोदिष्यन्ते, अतः पूर्वापरविरोध इति—**चेत्, उच्यते**; अर्थवादभावात् फलविपरिणाम एव जघन्यः । तत्र हि ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति यत्तदोर्व्यत्यासः सनर्थान्तर्भावश्चेति बह्वी क्लिष्टकल्पना, उदाहृतटीकावाक्यं तु प्रकृतोद्गीथोपासनाद्यभिप्रायम् । तासां क्रत्वर्थत्वपक्षे हि पर्णतावाक्य इवाव्यभिचरितलिङ्गोपस्थापितक्रतुलक्षणां विधावङ्गीकृत्य वाक्यशेषस्य प्राशस्त्यलक्षणाप्यङ्गीकर्तव्या, ततो वरं वाक्यशेषमात्रस्य फलविपरिणामकल्पनेति । अतएव यत्र प्रकरणात् क्रतुसंबन्धसिद्धिः, क्रतूपस्थित्यर्थं विधौ लक्षणा न वक्तव्या तत्र वर्मकरणादिवाक्यशेषे टीकायामप्यर्थवादतैवाङ्गीकृतेति न कश्चिद्विरोधः । **क्रतूपकारस्य सिद्धत्वादिति** । प्रयाजाञ्जनयोः प्रकरणात् क्रतूपकारसिद्धिः, पर्णतायास्तु फलकल्पनापक्षेऽपि

१।१०।९) 'तां चेदविद्वानुद्गास्यसि' (छा० १।१०।१०) 'तां चेदविद्वान्प्रतिहरिष्यसि' (छा० १। १०।११) इति च। अपि चैवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते कर्मफलसिद्ध्यप्रतिबन्धस्तत्समृद्धिरतिशयविशेषः कश्चित् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा० १।१।१०) इति। तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्कारणाद्वीर्यवत्तरमिति च तरप्प्रत्ययप्रयोगाद्विद्याविहीनमपि कर्म वीर्यवदिति गम्यते। तच्चानित्यत्वे विद्याया उपपद्यते। नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत ? सर्वाङ्गोपसंहारे हि वीर्यवत्कर्मेति स्थितिः। तथा लोकसामादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' (छा० २।२।३) इत्येवमादीनि। नचेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुम्; तथाहि गुणवाद आपद्येत, फलोपदेशे तु मुख्यवादोपपत्तिः। प्रयाजादिषु त्वितिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात्तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वम्। तथाऽनारभ्याधीतेष्वपि पर्णमयीत्वादिषु। नहि पर्णमयीत्वादीनामक्रियात्मकानामाश्रयमन्तरेण फलसंबन्धोऽवकल्पते। गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः। तथा वैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः, नतु पर्णमयीत्वादिष्वेवंविधः

## भामती।

तायामिव प्रकृतक्रतुसंबद्धो यूप आश्रयस्तदाश्रयः प्रकृतोऽस्ति; अनारभ्याधीतत्वात्पर्णतायाः। तस्माद्वाक्येनैव जुहूसंबन्धद्वारेण पर्णतायाः क्रतुराश्रयो ज्ञापनीयः। नचातत्परं वाक्यं ज्ञापयितुमर्हतीति तत्र वाक्यतात्पर्यमवश्याश्रयणीयम्। तथाच तत्परं सन्न पर्णतायाः फलसंबन्धमपि गमयितुमर्हति; वाक्यभेदप्रसङ्गात्। उपासनानां तु व्यापारात्मत्वेन स्वत एव फलसंबन्धोपपत्तेः उद्गीथाद्याश्रयणं फले विधानं न विरुध्यते; विशिष्टविधानात्। फलाय खल्वुद्गीथसाधनकमुपासनं विधीयमानं न वाक्यभेदमावहति। **ननु** कर्माङ्गोद्गीथसंस्कार उपासनं प्रोक्षणादिवत्, द्वितीयाश्रुतेरुद्गीथमिति। तथाचाञ्जनादिष्विव संस्कारेषु फलश्रुतेरर्थवादत्वम्, **मैवम्**; नह्यत्रोद्गीथस्योपासनम्, किंतु तदवयवस्योंकारस्येत्युक्तमधस्तात्। नचोंकारः कर्माङ्गमपि तु कर्माङ्गोद्गीथावयवः। नचानुपयोगमीप्सितम्। तस्मा"त्स्वक्रूक्षुहोती"तिवद्विनियोगभङ्गेनोंकारसाधनादुपासनात्फलमिति संबन्धः। तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि, एवमुद्गीथाद्युपासनानीति द्रष्टव्यम्। शेषमुक्तं भाष्ये। **नचेदं फलश्रवणमर्थवादमात्रमिति**। अर्थवादमात्रत्वेऽत्यन्तपरोक्षा वृत्तिर्यथा न तथा फलपरत्वे, नतु वर्तमानापदेशात्साक्षात्फल-

## वेदान्तकल्पतरुः।

**द्वितीयं** प्रत्याह—**नापीति**। खादिरतायां यथा प्रकृतक्रतुसंबन्धवान् यूप आश्रयः, एवं तदाश्रयस्तस्याः पर्णतायाः प्रकृते नास्ति; तस्या अनारभ्याधीतत्वादित्यर्थः। खादिरतायाः प्रत्यक्षविधिश्रवणात् साक्षात्कर्मपदयुक्तफलश्रवणाच्च युक्तः फले विधिरित्यपि द्रष्टव्यम्। क्रत्वङ्गविशिष्टोपास्तिक्रियाणां फलसाधनत्वेन प्रधानकर्मत्वमुक्तम्, तदाक्षिपति—**नन्विति**। **ॐकारस्येत्युक्तमिति**। व्याप्तेश्चासमञ्जस (ब्र. अ. ३ पा. ३ सू. ९) मित्यत्रेत्यर्थः। **नचानुपयोगमीप्सितमिति**। अन्यार्थं विनियुक्तं द्रव्यं फलवत्त्वादीप्सितम्, ईप्सितं च संस्कार्यं, नत्वोङ्कारोऽनुपयुक्तत्वादित्यर्थः। या तु कर्माङ्गेष्वपि द्वितीया "लोकेषु पञ्चविधं सामोपासीते"त्याद्या, सा सप्तम्यर्थेत्यादित्यादिमतय (ब्र. अ. ४ पा. १ सू. ६) इत्यत्र वक्ष्यते। अत्र भाष्यं—**नचेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुम्; तथाहि गुणवाद आपद्येत, फलोपदेशे तु मुख्यवादोपपत्तिरिति**, तदनुपपन्नमिव; वर्तमानापदेशत्वेनोपासनफलेषु साध्यत्वविपरिणामात्मकलक्षणाश्रयणादत आह—**अर्थवादमात्रत्व इति**। वर्तमानापदेशाद्विपरिणाममन्तरेण फलसिद्धौ विरोध-

## कल्पतरुपरिमलः।

क्रतूपस्थित्यवश्यंभावात्सा। **सप्तम्यर्थेति**। **नन्वा**दित्यादिमतय इत्याद्यधिकरणे द्वितीया सप्तम्यर्थेति न वक्ष्यते, किंतु कर्मार्थैव, सप्तमी तु तृतीयार्था। तेन लोकशब्दस्य लोकदृष्टिपरत्वमङ्गीकृत्य लोकदृष्ट्या सामोपासीतेत्यर्थ इति वक्ष्यते। **सत्यम्**। इह सप्तम्यर्थेति वक्ष्यतइत्यस्यायमर्थः। सामदृष्ट्या लोकानुपासीतेति तदधिकरणपूर्वपक्षे लोकेष्विति सप्तम्यायोऽर्थः अनीप्सितकर्मत्वं लोकानामन्यत्रापि नियुक्तानाम् असंस्कार्यतयेप्सितकर्मत्वायोगात् तदेव तत्सिद्धान्ते सामेति द्वितीयाया अर्थ इति वक्ष्यत इति। यद्यपि कर्मार्थापरित्यागमात्रं वक्ष्यते, नतु कर्मणोऽनीप्सितत्वम्; तथाप्युपासनायाः कर्मार्थत्वासंभवाद् अर्थादनीप्सितत्वे पर्यवसानं भवति, कर्मणामुपासनार्थतायां हि दृष्टार्थता लभ्यते; निरालम्बनोपा-

कश्चिदाश्रयः प्रकृतोऽस्ति । वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात् । उपासनानां तु क्रियात्मकत्वाद्विशिष्टविधानोपपत्तेरुद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते । तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यान्येवमुद्गीथाद्युपासनान्यपीति द्रष्टव्यम् । अतएव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः ॥ ४२ ॥ इति सप्तविंशं तन्निर्धारणाधिकरणम् ॥

( २८ अधिकरणम् ) **प्रदानवदेव तदुक्तम् ॥ ४३ ॥**

वाजसनेयके—'वदिष्याम्येवाहमिति वाग्दध्रे' (बृ० १।५।२१ ) इत्यत्राध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितोऽधिदैवतमग्न्यादीनां वायुः । तथा छान्दोग्ये—'वायुर्वाव संवर्गः' (छा० ४।३।१ ) इत्यत्राधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः 'प्राणो वाव संवर्गः' ( छा० ४।३।२ )

## भामती ।

प्रतीतिः । अतएव प्रयाजादिषु नार्थवादाद्वर्तमानापदेशात्फलकल्पना । फलपरत्वे त्वस्य न शक्यं प्रयाजादीनां पारार्थ्येनाफलत्वं वक्तुमिति ॥ ४२ ॥ **इति सप्तविंशं तन्निर्धारणाधिकरणम् ॥**

**प्रदानवदेव तदुक्तम् ॥ ४३ ॥** तत्तच्छ्रुत्यर्थालोचनया वायुप्राणयोः स्वरूपाभेदे सिद्धे तदधीननिरूपणतया तद्विषयोपासनाप्यभिन्ना । नचाध्यात्माधिदैवगुणभेदाद्भेदः । नहि गुणभेदे गुणवतो भेदः । नह्यग्निहोत्रं जुहोतीत्युत्पन्न-

## वेदान्तकल्पतरुः ।

माह—**अतएवेति** । प्रयाजादीनामफलत्वं यत्प्रथमे काण्डे पारार्थ्येनोक्तं, तदिहापि स्वीकृतं तद्वर्तमानापदेशस्य फलपरत्वे सति न शक्यं निर्वोढुमित्यर्थः ॥ तेनोङ्कारेणोभावपि कर्म कुरुतः यश्चैतदक्षरमेवमाप्त्यादिगुणकं वेद यश्च न वेद । दृष्टं हि हरीतकीं भक्षयतोस्तद्रसज्ञेतरयोर्विरेचकं फलमिति पूर्वपक्षयित्वा सिद्धान्तमाह—**नाना त्विति** । कर्माङ्गोंकारमात्रज्ञानादाप्त्यादिमदोङ्कारविज्ञानं नानैव भिन्नम् । ततोऽङ्गाधिक्यात् फलाधिक्यं युक्तम् । दृष्टो हि मणिविक्रये वणिक्छबरयोर्ज्ञानाऽज्ञानकृतः फलभेदः । तस्माद्यदेव कर्म विद्ययोद्गीथादिविषयया श्रद्धयास्तिक्यबुद्ध्या उपनिषदा तत्तद्देवताध्यानेन करोति तदेव कर्म वीर्यवत्तरं भवति ॥ ४२ ॥ **इति सप्तविंशं तन्निर्धारणाधिकरणम् ॥**[1]

**प्रदानवदेव तदुक्तम् ॥ ४३ ॥** पूर्वत्र फलभेदात् कर्माङ्गानां तद्बद्धोपासनानां च नित्यानित्यत्वरूपः प्रयोगभेद उक्तः, इहतु वायुप्राणयोस्तत्त्वाभेदात्तत्प्राप्तिलक्षणफलैक्याच्चोपासनप्रयोगैक्यमित्यभिप्रेत्य पूर्वपक्षमाह—**तदिति** ।

## कल्पतरुपरिमलः ।

सनानुपपत्तेरालम्बनस्य तदपेक्षितत्वात् । उपासनायाः कर्मार्थत्वेऽदृष्टार्थता स्याद्; उपासनेनोद्गीथादिषूत्पत्तिप्राप्तिविकृतीनामसंभवेनादृष्टसंस्कारस्यैव वक्तव्यत्वात् । दृष्टादृष्टफलपर्यवसाय्यन्वयद्वयसंभवेच दृष्टफलपर्यवसाय्येवान्वयो ग्राह्यः । अतएव "खलेवाली यूपो भवती"त्यस्य यः खादिरादिः प्रकृतितः प्राप्तो यूपः तस्य खलेवाल्याकृतिपरतायां त्वदृष्टार्थता स्यादिति विधेर्दृष्टार्थत्वलिप्सया खलेवाल्या यूपकार्ये विधिराश्रितः । **ननु** तेनोङ्कारेणोभावपि कुरुत इत्यादिना आप्त्यादिगुणकविज्ञानस्य षोडशिग्रहणवदनियताङ्गत्वमङ्गीकृत्य तद्विज्ञानाविज्ञानयोः फलाभेदं पूर्वपक्षयित्वा षोडशिग्रहणपक्षे इवाङ्गभूयस्त्वात् फलभूयस्त्वेन न्यायसिद्धेन सिद्धान्तः क्रियत इति तेनोभौ कुरुत इत्यादिश्रुतिर्व्याख्याता । इदं व्याख्यानं विद्ययेति तृतीयाश्रुत्या विज्ञानस्य कर्माङ्गत्वप्रतीतेः वीर्यवत्तरमिति तरपा विज्ञानपक्षे फलभूयस्त्वप्रतीतेश्च श्रुतिस्वारस्यानुसार्यपि प्रकृताधिकरणार्थविरुद्धम् । **उच्यते**; श्रुतौ वीर्यशब्देन फलं नोच्यते । वीर्यं हि लोके कार्यानुकूलं बलमिति प्रसिद्धं, नतु कार्यमेव । बलवत्तरत्वं च कर्मणः स्वफलजननप्रतिबन्धकापेक्षया वक्तव्यम्; अन्यस्य प्रकृतानुपयोगात् । अतः स्वफलदानोन्मुखेन विरोधिकर्मान्तरेणाप्रतिबन्धरूपं फलान्तरवत्त्वं वीर्यवत्तरत्वमित्यौचित्यादवसीयते । एवंच विद्ययेति तृतीयाश्रुतिः फलान्तरार्थस्य विज्ञानस्य मुख्यं कर्मशेषत्वं न प्रतिपादयति, किंतु कर्मभिरविलम्बेन फले जननीये तदुपकारकत्वरूपं मुख्यमेव शेषत्वमिति न श्रुतेरङ्गभूयस्त्वात् फलभूयस्त्वमित्यस्मिन्नर्थे स्वारस्यं, किंतु पृथग्ध्यप्रतिबन्धः फलमिति सूत्रोक्त एवार्थे । तस्मादङ्गाधिक्यात्फलाधिक्यमित्याचार्यवचनम् अप्रतिबन्धोपकारजनकसाहित्यात् फलस्याविलम्बलक्षणम् इत्येतत्परतया व्याख्येयम् ॥ ४२ ॥ **इति सप्तविंशं तन्निर्धारणाधिकरणम् ॥**

**प्रदानवदेव तदुक्तम् ॥ ४३ ॥** **ननु** वायुप्राणयोस्तत्त्वाभेदेऽप्यवस्थाभेदाद् भेदो "न वायुक्रिये पृथगुपदेशा"दित्यधिकरणे निर्णीतः, ततः प्रयोगभेद उपपन्न इत्याशङ्क्य हेत्वन्तरमाह—**तत्प्राप्तिलक्षणेति** । **ननु**—वाजसनेयके

[1] तत्र सूत्रम् १—तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ४२ ॥

इत्यत्राध्यात्मं वागादीनां प्राणः। तत्र संशयः—किं पृथगेवेमौ वायुप्राणावुपगन्तव्यौ स्यातामपृथग्वेति। अपृथगेवेति तावत्प्राप्तम्; तत्त्वाभेदात्। नह्यभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम्। दर्शयति च श्रुतिरध्यात्ममधिदैवतं च तत्त्वाभेदम्—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ० २।४) इत्यारभ्य। तथा 'त एते सर्व एव समाः सर्वेऽनन्ताः' ( बृ० १।५।१३ ) इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति। तथाऽन्यत्रापि तत्र तत्राध्यात्ममधिदैवतं च वहुधा तत्त्वाभेददर्शनं भवति। क्वचिच्च 'यः प्राणः स वायुः' इति स्पष्टमेव वायुं प्राणं चैकं करोति। तथोदाहृतेऽपि वाजसनेयिब्राह्मणे 'यतश्चोदेति सूर्यः' (बृ० १।५।२३) इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' ( बृ० १।५।२३ ) इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति। 'तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च (बृ० १।५।२३ ) इति च प्राणव्रतेनैकेनोपसंहरन्नेतदेव द्रढयति। तथा छान्दोग्येऽपि परस्तात् 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः' (छा० ४।३।६) इत्येकमेव संवर्गं गमयति, न ब्रवीत्येक एकेषां चतुर्णां संवर्गोऽपरोऽपरेषामिति। तस्मादपृथक्त्वमुपगमनस्येति। एवं प्राप्ते ब्रूमः—पृथगेव वायुप्राणावुपगन्तव्याविति। कस्मात्? पृथगुपदेशात्। आध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेशः सोऽसत्याध्यानपृथक्त्वेऽनर्थक एव स्यात्। ननूक्तं न पृथगनुचिन्तनं तत्त्वाभेदादिति। नैष दोषः; तत्त्वाभेदेऽप्यवस्थाभेदादुपदेशभेदवशेनानुचिन्तनभेदोपपत्तेः। श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात्। 'स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः' (बृ० १।५।२२) इति चोपमानोपमेयकरणात्। एतेन व्रतोपदेशो व्याख्यातः। 'एकमेव व्रतम्' ( बृ० १।५।२३ ) इति चैवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः। भग्नव्रतानि हि वागादीन्युक्तानि; 'तानि मृत्युः श्रमो भूत्वोपयेमे' ( बृ०

---

## भामती।

स्याग्निहोत्रस्य तण्डुलादिगुणभेदाद्भेदो भवति। उत्पद्यमानकर्मसंयुक्तो हि गुणभेदः कर्मणो भेदकः। यथाऽऽमिक्षावाजिनसंयुक्तयोः कर्मणोः, नोत्पन्नकर्मसंयुक्तः। अध्यात्माधिदैवोपदेशेषु चोत्पन्नोपासनासंयोगः। तथोपक्रमोपसंहारालोचनया विद्यैकत्वविनिश्चयादेकैव सकृत्प्रवृत्तिरिति पूर्वपक्षः। राद्धान्तस्तु—सत्यं विद्यैकत्वम्, तथापि गुणभेदात्प्रवृत्तिभेदः। सायंप्रातःकालगुणभेदाद्यथैकस्मिन्नप्यग्निहोत्रे प्रवृत्तिभेदः, एवमिहाप्यध्यात्माधिदैवगुणभेदादुपासनस्यैकस्यापि प्रवृत्तिभेद इति सिद्धम्। **आध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेश इति**। अग्निहोत्रस्येवाऽऽध्यानस्य कृते दधितण्डुलादिवदयं पृथगुपदेशः। **एतेन व्रतोपदेश इति**। **एतेन** तत्त्वाभेदेन। एवकारश्च वागादिव्रतनिराकरणार्थः।

## वेदान्तकल्पतरुः।

**उत्पन्नेति**। उत्पन्नया उपासनया गुणानां संयोग इत्यर्थः। संवर्गविद्यायां हि "अन्नवानन्नादो भवति य एवं वेदेति विधेः पृथगुत्पत्तिरस्ति। वाजसनेयकेऽप्यस्तिं एकमेव व्रतं चरेदिति। **तथोपक्रमोपसंहारेति**। "अथेममेव नाप्नोद् मृत्युर्योऽयं मध्यमः प्राणः" इत्युपक्रम्य प्राणद्वारा एष सूर्य उदेतीत्युपसंहार इति॥ यदुक्तमध्यात्मादिविभागस्योत्पन्नशिष्टत्वान्न विद्याभेदकत्वमिति। सत्यं न विद्याभेदं ब्रूमः, किंत्वेकस्यामेव विद्यायां ध्येयभेदात् प्रयोगभेदं, यथाऽग्निहोत्राभेदे उत्पन्नशिष्टैर्दध्यादिभिः क्रियमाणाः प्रयोगाः भिद्यन्त एवमिहेत्याह—**अग्निहोत्रस्येवेति**। अग्निहोत्रस्य दधितन्डुलादिवदाध्यानस्य कृते आध्यानार्थमयं पृथगुपदेश इति योजना। इवकारो धर्मिण उपमार्थो वत्कारो धर्मस्य। वायोर्य-

## कल्पतरुपरिमलः।

अध्यात्मप्राणश्रैष्ठ्यानुचिन्तनस्य "तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवतीति य एवं वेदेति" फलमुक्त्वा अथाधिदेवतमित्युपक्रान्तस्य वायुश्रैष्ठ्यानुचिन्तनस्य "तेन एतस्यै देवतायै सायुज्यं सलोकतां जयती"ति फलान्तरमुक्तम्। अतो वाजसनेयके न फलैक्यं सिद्धम्, छान्दोग्ये "अन्नवानन्नादो भवति य एवं वेदे"त्युत्पत्तिवाक्यश्रुतफलैक्येऽपि तत्फलमुपास्यदेवताप्राप्तिरूपं न भवति, अतस्तत्प्राप्तिलक्षणफलैक्यादिति हेतोरुभयत्रापि नान्वय इति—**चेत्, उच्यते**; वाजसनेयके "योऽयं मध्यमः प्राणः प्राणाद्वा एष सूर्य उदेतीत्युपक्रमोपसंहारैकरूप्यात् कृत्स्नमपीदं प्रकरणमेकविद्याविषयमिति उपसंहारश्रुतदेवतासायुज्यरूपफलैक्यमुक्तम्। अर्थवादान्तरप्राप्तं कुलश्रैष्ठ्यं फलान्तरं भवति चेद्, भवतु नाम, छान्दोग्ये तत्प्राप्तिलक्षणफलाश्रवणेऽपि पूर्वपक्षे हेतुतयाऽपेक्षितस्य फलैक्यस्य सद्भावोऽस्तीति तावता संगतिः। उपास्यभेदफलैक्ये यद्यपि सत्यविद्यायामपि स्तः; तथापि तत्राक्ष्यादित्यस्थानभेदात्पृथगनुचिन्तनं व्यक्तमिति पूर्वपक्षसंभावनार्थं प्राणश्रैष्ठ्यविद्या संवर्गविद्या चोदाहृता। **वत्कारो धर्मस्येति**। दधितण्डुलादिवदिति वतिप्रत्ययोऽध्यात्ममधिदैवतं च

१।५।२१ ) इति श्रुतेः, न वायुव्रतनिवृत्त्यर्थः; 'अथातो व्रतमीमांसा' ( बृ० १।५।२१ ) इति प्रस्तुत्य तुल्यवद्वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात् । 'एकमेव व्रतं चरेत्' (बृ० १।५।२३) इति चोक्त्वा 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' ( बृ० १।५।२३) इति वायुप्राप्तिं फलं ब्रुवन्वायुव्रतमनिवर्तितं दर्शयति । देवतेत्यत्र वायुः स्यात्; अपरिच्छिन्नात्मकत्वस्य प्रेप्सितत्वात्—पुरस्तात्प्रयोगाच्च 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ० १।५।२२) इति । तथा 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' (छा० ४।३।४) इति भेदेन व्यपदिशति 'ते वा एते पञ्चाऽन्ये पञ्चाऽन्ये दश सन्तस्तत्कृतम्' (छा० ४।३।८) इति च भेदेनैवोपसंहरति । तस्मात्पृथगेवोपगमनम् । प्रदानवत् । यथे"न्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाऽधिराजायेन्द्राय स्वराज्ञे" इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ "सर्वेषामभिगमयन्नवद्यत्यछंवट्कारमि"ति । अतो वच-

## भामती ।

नन्वेतस्यै देवतायै इति देवतामात्रं श्रूयते, नतु वायुः, तत्कथं वायुप्राप्तिमाहेत्यत आह—**देवतेत्यत्र वायुरिति ।** वायुः खल्वग्न्यादीन्संवृणुत इत्यग्न्यादीनपेक्ष्यानवच्छिन्नोऽन्यादयस्तु तेनैवावच्छिन्ना इति संवर्गगुणतया वायुरनवच्छिन्ना देवता । **सर्वेषामभिगमयन्निति ।** मिलितानां श्रवणाविशेषादिन्द्रस्य देवताया अभेदात्त्रयाणामपि पुरोडा-

## वेदान्तकल्पतरुः ।

द्यपि परिच्छिन्नत्वम्; तथाप्यग्न्यादीनपेक्ष्यापरिच्छिन्नत्वमस्ति, कारणत्वेन ततोऽपि बहुकालव्यापित्वात् । अतो भाष्योक्तं वाय्वानन्त्यमुपपन्नमित्याह—**वायुः खल्विति । संवृणुते** संहरति । देवताकाण्डाधिकरणस्य प्रधानभेदविषयस्य पूर्वपक्षं सिद्धान्तं चाह—**मिलितानामित्यादिना ।** त्रिपुरोडाशेष्टौ हि प्रथमपुरोडाशप्रदाने या याज्या सा पुनःप्रयोगेऽनु-

## कल्पतरुपरिमलः ।

भिन्नस्य गुणजातस्योपमार्थ इत्यर्थः । **देवताकाण्डाधिकरणस्येति ।** यद्यपि संकर्षकाण्डो न देवताविचारार्थं प्रवर्तितः, किंतु द्वादशलक्षण्यविचारितनानाविषयन्यायविचारात्मकस्तत्परिशिष्टः तन्त्रप्रसङ्गवदुपदेशातिदेशसाधारण्येन प्रकीर्णकः प्रवर्तितः । नहि तत्र देवताविचारेणोपक्रम उपसंहारो वाऽस्ति । तत्र ह्य"नुयजतीत्यनुवषट्कारश्चोद्यते"इति सूत्रेण प्रथमं सोमस्याग्रे व्रीहीत्यनुयजतीत्यत्र किमैन्द्रवायवादियागेषु मन्त्रविधानमुत कर्मान्तरविधानमिति विचारेणोपक्रमः, "पशावुत्तमे प्रयाजे स्रुगादापनो न विद्यते संप्रेषितत्वाद्" विद्यते वाऽन्यकालत्वाद् यथाऽऽज्यसंप्रेषो यथाऽऽज्यसंप्रेष' इति सूत्राभ्यां पशौ प्रथमप्रयाजोपक्रमे होत्रा प्रयुक्तोऽग्निर्होता वेत्वग्निर्होत्रं वेत्वित्यादिः स्रुगादापनमन्त्र उक्तः प्रयाजोपक्रमे न प्रयोक्तव्य उत तदानीमपि प्रयोक्तव्य इति विचारेण शास्त्रसमापनम्; तथापि संकर्षे देवताविधानरहितेष्टूपांशुयाजादिषु देवताऽस्ति न वा प्रयाजादिषु देवतावाचिनः समिद्बर्हिरादिशब्दाः दर्शपूर्णमासाङ्गप्रसिद्धसमिद्बर्हिरादिपरास्तदन्यपरा वा "अग्निं होत्रायावह स्वं महिमानमावहे"त्यत्र होत्रशब्दोक्तहोमद्रव्यार्थत्वेन श्रुतः स्विष्टकृदग्निराहवनीयो गार्हपत्यो वा पशौ यष्टव्या वनस्पतिदेवता पश्वङ्गयूपरूपाऽन्या वा स्वाहा देवा आज्यपा जुषाणा इत्यत्राज्यपाः सकलप्रयाजानूयाजदेवताः उत्तमप्रयाजानूयाजमात्रदेवता वा ग्रहाणां वैराजस्य स्तोत्रायेत्यादिचतुर्थीनिर्दिष्टानि स्तोत्राणि देवता आग्नेयं गृह्णातीत्यादितद्धितनिर्दिष्टा अग्न्यादयो वा "यां देवतां वषट्करिष्यन् स्यात्तां मनसा ध्यायेदि"ति देवतावाचिशब्दध्यानविधिः देवतार्थध्यानविधिर्वा "यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरमि"ति विहितयोर्यजयेयजामहयोरग्निं विष्णुमित्यादिद्वितीयान्तदेवतानां निर्देशः कार्यो न वा, "आवह देवान्यजमानाये"ति प्राकरणिकसकलदेवताविषयो वा अग्निमग्नआवहेत्यादिनिर्देक्ष्यमाणाग्न्यादिदेवतामात्रविषयो वा "देवान् यजे"ति प्रथमानूयाजोपक्रमप्रैषे देवानिति शब्दः प्रथमानूयाजदेवताविषयः सर्वानुयाजदेवताविषयो वेत्यादिदेवताविचारभूयस्त्वाद् भूम्ना संकर्षकाण्डस्यैव देवताकाण्ड इत्यपि व्यवहारोऽस्तीति तस्य तेनोपादानम् । **पूर्वपक्षं सिद्धान्तं चाहेति ।** संकर्षे नानाप्रदानाधिकरणात् पूर्वाधिकरणे "तेषां पृथक्कृतानां निरवदानं यथाऽन्येषां हविःपृथक्त्वादि"ति सूत्रेण ऐन्द्रादिपुरोडाशानामध्यर्धाशश्रपणे कृते अवदानवेलायां पुरोडाशान् पृथक्कृत्य पृथगवदानानि तन्मध्यपूर्वार्धाभ्यां ग्राह्याणि उत पुरोडाशत्रयादपि सहैवावदानानि ग्राह्याणीति संशये हविर्भेदात् पृथगिति पूर्वपक्षं प्रापय्य "वचनात् सर्वेषां सहाऽवदीयेते"ति सूत्रेण "सर्वेषामभिगमयन्नवद्यती"ति वचनात् सर्वेषामिन्द्रादीनां त्रयाणां पुरोडाशानभिगमयन् प्रापयन्नवद्यति न पर्यायेणेत्येतदर्थकात्सहैवावदानम् । नास्ति वचनस्यातिभारः; पुरोडाशानां मध्यभागे नलीकप्रवेशनाद्युपायेन मध्यादपि युगपदवदानं ग्राह्यमिति सिद्धान्तः कृतः । तत"स्तेषां पृथक् प्रदानमवदानैकत्वा"दिति सूत्रेणास्याधिकरणस्य पूर्वपक्षः कृतः । अत्रावदानैकत्वादिति सौत्रहेतुरेव मिलितानां श्रपणाविशेषादिति टीकाग्रन्थे विवक्षितः । **प्रथमपुरोडाशप्रदान इति ।** अस्याः त्रिपुरोडाशायाः त्रैधातवीयाख्याया इष्टेर्याज्यानुवाक्यारूपतया प्राच्यां दिशि त्वमिन्द्रासि राज्येत्यादयस्तिस्र ऋचः समाम्नाताः । तत्र प्रथमयागे प्रथमानुवाक्या मध्यमा याज्या पुनःप्रयोगे द्वितीय-

**नादिन्द्राभेदाच्च सहप्रदानाशङ्कायां राजादिगुणभेदाद्याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति। एवं तत्त्वाभेदेऽप्याध्येयांशपृथक्त्वादाध्यानपृथक्त्वमित्यर्थः। तदुक्तं संकर्षे—'नाना वा देवता पृथग्ज्ञानात्' इति। तत्र तु द्रव्यदेवताभेदाद्यागभेदो विद्यते, नैवमिह विद्याभेदोऽस्ति; उपक्रमोपसंहाराभ्यामध्यात्माधिदैवोपदेशेष्वेकविद्याविधानप्रतीतेः। विद्यैक्येऽपि त्वध्यात्माधिदैवभेदात्प्रवृत्तिभेदो भवति अग्निहोत्र इव सायंप्रातःकालभेदात् इत्येतावदभिप्रेत्य प्रदानवदित्युक्तम् ॥ ४३ ॥ इत्यष्टाविंशं प्रदानाधिकरणम् ॥**

---

### भामती।

शानां सहप्रदानाशङ्कायामुत्पत्तिवाक्य एव राजाधिराजस्वराजगुणभेदाद्याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति। सहप्रदाने हि व्यत्यासविधानमनुपपन्नम्। क्रमवति प्रदाने व्यत्यासविधिरर्थवान्; तथाविधस्यैव क्रमस्य विवक्षितत्वात्। सुगममन्यत् ॥ ४३ ॥ **इत्यष्टाविंशं प्रदानाधिकरणम् ॥**

### वेदान्तकल्पतरुः।

वाक्या, या च पूर्वमनुवाक्या सा पश्चाद्याज्या भवति। व्यत्यासमन्वाहेत्यनेनाभिहितं। तत्प्रयोगभेदे घटते; एकस्या ऋच एकस्मिन्प्रयोगे याज्यानुवाक्यात्वविरोधादित्याह—**याज्यानुवाक्याव्यत्यासेति**। अध्वर्युणा यजेति प्रैषे कृते प्रयुज्यमाना ऋग्याज्या, अनुब्रूहीति प्रैषान्तरं प्रयुज्यमानाऽनुवाक्या। याज्ञिका हि अस्यामिष्टौ युगपदवदानं कुर्वन्ति, तद्विधीयते सर्वेषामभिगमयन्नवद्यतीति। तत्र हेतुः—**अच्छम्बट्कारमिति**। अव्यर्थत्वायेत्यर्थः। एकार्थे ह्यवत्ते शेषो यागानर्हः स्यात्, युगपत् सर्वार्थमवदाने त्वव्यर्थत्वं स्यादिति। **तथाविधस्यैवेति**। व्यस्तयाज्यानुवाक्याकस्य प्रयोगभेदमन्तरेणानुपपद्यमानस्य विवक्षितत्वादित्यर्थः। **प्राण्यादिति**। प्राणने प्राप्ते प्राण्यादपानने प्राप्तेऽपान्यात्प्राणापानादिनिरोधनं न कुर्यादित्यर्थः। **महात्मनो**ऽग्न्यादीन् महात्मन इति द्वितीयाबहुवचनम्। चतुरः चतुःसंख्यानग्निसूर्यदिक्चन्द्रान् अन्यांश्च वाक्चक्षुःश्रोत्रमनोलक्षणार्थान्। **कः** प्रजापतिः प्राणात्मकः। स **जगार** जीर्णवान्। **तेन** व्रतेन। उ इत्ययं निपातोऽप्यर्थः। स च सायुज्यं सलोकतामपीत्युपरि संबध्यते। **एतस्यै** एतस्या देवतायाः **सायुज्यं** समानदेहतां

### कल्पतरुपरिमलः।

भागे मध्यमानुवाक्या तृतीया याज्या पश्चात्तृतीयप्रयोगे तृतीयाऽनुवाक्या या पूर्वं प्रथमप्रयोगेऽनुवाक्या प्रथमा साऽत्र याज्येत्यर्थः। संकर्षे नानाप्रदानाधिकरणस्था "न्यार्थप्रदर्शनाच्चे"ति गुणसूत्रं भाष्यकृता भवस्वामिनेत्थं व्याख्यातम्—याज्याऽनुवाक्याविनियोगपरं वचनं प्रधानभेदं प्रकाशयति, "प्रथमामनूच्य मध्यमया यजेद् मध्यमामनूच्योत्तमया यजेद् उत्तमामनूच्य प्रथमया यजेद् एवं सर्वा अनुवाक्याः सर्वा याज्या भवन्तीति। तदनुसारेणेत्थमाचार्यवचनं योजितम्। **प्राणने प्राप्ते प्राण्यादिति। अत्रेयं विषयशुद्धिः**—अध्यात्मं प्राणं वागादींश्चाधिदैवतं वायुमग्न्यादींश्चोपक्रम्य "अथ यो हैताननन्तानुपास्ते अनन्तं स लोकं जयती"ति तेषामुपासनासाफल्यमुक्त्वा "अथातो व्रतमीमांसे"त्यध्यात्मं प्राणस्याधिदैवतं वायोश्च व्रतं तदुपासकेन कार्यं, नतु वागादीनामग्न्यादीनां वेति निर्धारणार्थं विचारं प्रस्तुत्य वागादीनामभिवदनादिनियमरूपस्याग्न्यादीनां प्रज्वलनादिनियमरूपस्य च व्रतस्य तेषां श्रान्त्यस्तमयाभ्यां भङ्गमुक्त्वा आध्यात्मिकाधिदैवतभेदभिन्नस्य प्राणस्य स्वव्यापारनियमरूपव्रताभङ्गमुक्त्वा "तस्मादेकमेव व्रतं चरेदि"त्यभग्नव्रतस्य प्राणस्यैव व्रतं तद्व्यापाररूपमुपासनया प्राणात्मतां प्राप्त उपासकश्चरेन्न वागादिव्यापारमभिवदनादिरूपमितीतरनिवृत्तिं विधाय तत् किं प्राणव्रतमित्याकाङ्क्षायामिदमाम्नायते **प्राण्याच्चैवापान्याच्चेति**। तत्र जीवत उपासकस्य स्वरससिद्धयोः प्राणनापाननव्यापारयोर्विधानं व्यर्थमित्याशङ्क्य प्राण्याच्चैवेति एवकारलब्धा अप्रसक्तयोः प्राणनापाननव्यापारयोः कदाचिदिच्छया प्रसक्तस्य निरोधस्य निवृत्तिर्व्रतत्वेन विवक्षितेत्याचार्यैर्दर्शितम्—**प्राणने प्राप्ते प्राण्यादपानने प्राप्तेऽपान्यात्प्राणापाननिरोधनं न कुर्यादित्यर्थ इति। ननु**—एकमेवेति यावज्जीवं वागादिव्यापारनिवृत्तिः कथं विहिता? अशक्यत्वादिति—**चेत्, उच्यते**; वागादिव्यापारेष्वपि प्राणव्यापारतादृष्टिः कर्तव्या, वागादिभिरभग्नव्रतत्वेन प्राणस्य श्रैष्ठ्यं निर्धार्य प्राणानामरूपत्वं प्राप्तमिति "हन्ताऽस्यैव सर्वे रूपमसामेति" "एतस्यैव सर्वे रूपमभवंस्तस्मादेतएतेनाख्यायन्ते प्राणा" इतीति प्राचीनसंदर्भे प्रतिपादितत्वेन वागादिव्यापारेषु प्राणव्यापारतादृष्टेरुचितत्वादिति तात्पर्यम्। अतो वागादिव्यापारस्य स्वरूपतो निवृत्तिर्न विधेयेति नाशक्यानुष्ठानता। केषुचिन्मूलकोशेषु—प्राणने प्राप्ते अपान्याद् अपानने प्राप्ते प्राण्यात् प्राणापाननिरोधं कुर्यादित्यर्थ इति पाठो दृश्यते। स पाठो बृहदारण्यके प्राणस्याभग्नव्रतत्वोपक्रमविरोधात्तद्भाष्यवार्तिकतद्व्याख्यानवि-

## ( २९ अधिकरणम् ) लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

वाजसनेयिनोऽग्निरहस्ये—'नैव वा इदमग्रे सदासीत्' इत्येतस्मिन्ब्राह्मणे मनोऽधिकृत्याधीयते—'तत्षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' इत्यादि । तथैव 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति पृथगग्नीनामनन्ति सांपादिकान्। तेषु संशयः—किमेते मनश्चिदादयः क्रियानुप्रवेशिनस्तच्छेषभूताः, उत स्वतन्त्राः केवलविद्यात्मका इति । तत्र प्रकरणात्क्रियानुप्रवेशे प्राप्ते स्वातन्त्र्यं तावत्प्रतिजानीते लिङ्गभूयस्त्वादिति । भूयांसि हि लिङ्गान्यस्मिन्ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते—'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इति 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति चैवंजातीयकानि । तद्धि लिङ्गं प्रकरणाद्बलीयः, तदप्युक्तं पूर्वस्मिन्काण्डे—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' ( जै० सू० ३।३।१३ ) इति ॥ ४४ ॥

### भामती ।

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥** इह सिद्धान्तेनोपक्रम्य पूर्वपक्षयित्वा सिद्धान्तयति । तत्र यद्यपि भूयांसि सन्ति लिङ्गानि मनश्चिदादीनां स्वातन्त्र्यसूचकानि; तथापि न तानि स्वातन्त्र्येण स्वातन्त्र्यं प्रति प्रापकाणि । प्रमाणप्रापितं तु स्वातन्त्र्यमुपोद्बलयन्ति । नचात्रास्ति स्वातन्त्र्यप्रापकं प्रमाणम् । नचेदं सामर्थ्यलक्षणं लिङ्गं, येनास्य स्वातन्त्र्येण प्रापकं भवेत् । तद्धि सामर्थ्याभिधानस्य वार्थस्य वा स्यात् । यथा पूषाद्यनुमन्त्रणमन्त्रस्य पूषानुमन्त्रणे, यथा वा 'पशुना यजेत' इत्येकत्वसंख्याया अर्थस्य संख्येयावच्छेदसामर्थ्यम् । नचेदमन्यस्यार्थदर्शनलक्षणं लिङ्गं तथा; स्तुत्यर्थत्वेनास्य विध्युद्देशेनैकवाक्यतया विधिपरत्वात् । तस्मादसति सामर्थ्यलक्षणे विरोद्धरि प्रकरणमप्रत्यूहं मनश्चिदादीनां क्रियाशेषतामवगमयति । नच "ते हैते विद्याचित" एवेत्यवधारणश्रुतिः क्रियानुप्रवेशं वारयति । येन श्रुतिविरोधे सति न प्रकरणं भवेत्, बाह्यसाधनतापाकरणार्थत्वादवधारणस्य । नच विद्यया हैवैत एवंविदश्चिता भवन्तीति पुरुषसंबन्धमापादयद्वाक्यं प्रकरणमपबाधितुमर्हति । अन्यार्थदर्शनं खल्वेतदपि । नच तत्स्वातन्त्र्येण प्रापकमित्युक्तम् । तस्मात्तदपि

### वेदान्तकल्पतरुः ।

**सालोक्यं** समानलोकतां च जयति प्राप्नोतीत्यर्थः । सायुज्यमुत्कृष्टोपास्तेः फलं सालोक्यं मन्दोपासनायाः ॥ ४३ ॥ **इत्यष्टाविंशं प्रदानाधिकरणम् ॥**[1]

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥** पूर्वत्रैकप्रयोगासंभवाद्वायुप्राणौ प्रयोगभेदेन ध्येयावित्युक्तम्, इह तु मनश्चिदादीनां कर्माङ्गत्वेनैकप्रयोगत्वमाशङ्क्यते । लिङ्गविरोधे दुर्बलेन प्रकरणेन पूर्वपक्षानुत्थानमाशङ्क्याह—**तत्र यद्यपीत्यादिना । स्वातन्त्र्येण** प्रमाणान्तरानपेक्षया मनश्चिदादीनां न स्वातन्त्र्यप्रापकाणीत्यर्थः । **ननु** स्वातन्त्र्येणाप्यर्थस्य विनियोजकं लिङ्गं दृष्टम्; यथा शब्दार्थयोः सामर्थ्यमित्याशङ्क्य प्रकृतलिङ्गस्य ततो वैषम्यमित्याह—**न चेत्यादिना ।** लिङ्गं हि द्विविधं सामर्थ्यरूपमन्यार्थदर्शनं चेति । सामर्थ्यं च द्विविधं शब्दगतमर्थगतं च । शब्दगतमुदाहरति—**यथा पूषेति ।** "पूष्णोऽहं देवयज्यये"त्यादिमन्त्रः । अर्थगतमुदाहरति—**यथा चेति ।** तथेत्यत्र ग्रन्थच्छेदः । **विरोद्धरि** विरोधकर्तरि । श्रुतिवाक्याभ्यां प्रकरणस्य विरोधमाशङ्क्याह—**नच ते हैत इत्यादिना ।** पूर्वतन्त्रसिद्धमानसग्रहाधिकरोधाच्च न सांप्रदायिकः ।

### कल्पतरुपरिमलः ।

**सायुज्यं समानदेहतामिति ।** दिह उपचय इति धातोर्घञन्तो देहशब्दो योगेनोपचयवाची भोगसमृद्धिपरः । अतः समानभोगतामित्यर्थः, नतु सारूप्यमित्यर्थः । उत्कृष्टोपासनाफलस्य भोगसाम्यरूपतायाः सूत्रकृता वक्ष्यमाणत्वात् ॥ ४३ ॥ **इति अष्टाविंशं प्रदानाधिकरणम् ॥**

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ प्रकरणेनेति ।** **नन्व**ग्निरहस्यब्राह्मणे मनश्चिदादीनां क्रतोर्विनियोजकं क्रतुप्रकरणं नास्ति, किंत्वनारभ्याधीतस्य क्रत्वङ्गस्याग्नेरेव प्रकरणं, तावतश्च क्रत्वङ्गप्रायपाठलक्षणः संनिधिरेव लभ्यते । **सत्यम्**; संनिधिरेवात्र लौकिकप्रकरणलक्षणः प्रकरणशब्देनोक्तः । **अर्थगतमुदाहरतीति** । पशुना यजेतेत्यत्र तृतीयैकवचनार्थस्य एकत्वस्य समानपदोपात्तेन पशुना नान्वयः एकः पशुरिति, किंतु समानप्रत्ययोपात्तेन करणकारकेणान्वयः; एकत्वसंख्या करणकारकमिति समानपदश्रुतेः समानप्रत्ययश्रुतेरन्तरङ्गतया बलीयस्त्वात् । **तदुक्तम्**—तथा

[1] तत्र सूत्रम् १—प्रदानवदेव तदुक्तम् ४३ ॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥

नैतद्युक्तं स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति । पूर्वस्य क्रियामयस्याग्नेः प्रकरणात्तद्विषय एवायं विकल्पविशेषोपदेशः स्यान्न स्वतन्त्रः । ननु प्रकरणाल्लिङ्गं बलीयः, सत्यमेवमेतत्; लिङ्गमपि त्वेवंजातीयकं न प्रकरणाद्बलीयो भवति, अन्यार्थदर्शनं ह्येतत्; सांपादिकाग्निप्रशंसारूपत्वात् । अन्यार्थदर्शनं चासत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते । तस्मात्सांपादिका अप्येतेऽग्नयः प्रकरणात्क्रियानुप्रवेशिन एव स्युः । मानसवत् । यथा दशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येवाम्नायन्ते । स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात्क्रियाशेष एव भवत्येवमयमप्यग्निकल्प इत्यर्थः ॥ ४५ ॥

### भामती ।

न प्रकरणविरोधायाऽलमिति सांपादिका अप्येतेऽग्नयः प्रकरणात्क्रियानुप्रवेशिन एव मानसवत् । द्वादशाहे तु श्रूयते—'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णामि' इति । तत्र संशयः—किं मानसं द्वादशाहादहरन्तरमुत तन्मध्यपातिनो दशमस्याह्नोऽङ्गमिति । तत्र "वाग्वै द्वादशाहो मनो मानसमि"ति मानसस्य द्वादशाहाद्भेदेन व्यपदेशाद्वाङ्मनसभेदवद्भेदः । निर्धूतानि द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनैवाप्यायन्तीति च द्वादशाहस्य मानसेन स्तूयमानत्वाद्भेदे च सति स्तुतिस्तुत्यभावस्योपपत्तेर्द्वादशाहादहरन्तरं न तदङ्गं, पत्नीसंयाजान्तत्वाच्चाह्नां "पत्नीः संयाज्य मानसाय प्रसर्पन्ती"ति च मानसस्य पत्नीसंयाजस्य परस्ताच्छ्रुतेः । त्रयोदशाहेऽप्यवयुज्य द्वादशसंख्यासमवायात्कथंचिज्जघन्ययापि वृत्त्या द्वादशाहसंज्ञाविरोधाभावादिति प्राप्तेऽभिधीयते—प्रमाणान्तरेण हि त्रयोदशत्वेऽह्नां सिद्धे द्वादशाह इति जघन्यया वृत्त्योन्नीयेत, नत्वस्ति तादृशं प्रमाणान्तरम् । नच व्यपदेशभेदोऽहरन्तरत्वं कल्पयितुमर्हति; अङ्गाङ्गिभेदेनापि तदुपपत्तेः । अतएव च स्तुत्यस्तावकभावस्याप्युपपत्तिः । देवदत्तस्येव दीर्घैः केशैः । पत्नीसंयाजान्तता तु यद्यप्यौत्सर्गिकी; तथापि दशमस्याह्नो विशेषवचनान्मानसानि ग्रहणासादनहवनादीनि पत्नीसंयाजात्पराञ्चि भविष्यन्ति । किमिव हि न कुर्याद्वचनमिति । "एष वै दशमस्याह्नो विसर्गो यन्मानसमि"ति वचनाद्दशमाहरङ्गता गम्यते । विसर्गोऽन्तोऽन्तवतो धर्मो न स्वतन्त्र इति । दशमेऽहनि मानसाय प्रसर्पन्तीति दशमस्याह्न आधारत्वनिर्देशाच्च तदङ्गं मानसं नाहरन्तरमिति सिद्धम् । तदिह द्वादशाहसंबन्धिनो दशमस्याह्नोऽङ्गं मानसमिति धर्ममीमांसासूत्रकृतोक्तम् । दशरात्रगस्यापि दशमस्याह्नोऽङ्गमिति भगवान्भाष्यकारः । श्रुत्यन्तरबलेनाह—**यथा दशरात्रस्य दशमेऽहन्य-**

### वेदान्तकल्पतरुः ।

णसुदाहरति—**द्वादशाहे इत्यादिना** । त्वां समुद्रमनया रसया पृथिव्या पात्रेण प्रजापतिदेवताकं मनोग्रहं ध्यानमयग्रहमापाद्य गृह्णामीत्यर्थः । **निर्धूतानि** नितरां प्रक्षालितानि अतएव गतरसानि रसवत्तापादकसहकारिमत्त्वेन द्वादशाहस्य श्रूयमाणत्वादित्यर्थः । "पत्नीसंयाजान्तान्यहानि संतिष्ठन्त" इति वचनाद् द्वादशाहान्तर्गतानामह्नां पत्नीसंयाजान्तत्वम् । **अवयुज्य** एकदेशं विभज्य । देवदत्तस्याङ्गिनो दीर्घैः केशैः स्तुतिः । **ननु** विसर्गशब्दस्य समाप्तिवचनत्वात्कथम् अङ्गत्वबोधकत्वमत आह—**अन्त इति** । **श्रुत्यन्तरबलेनेति** । प्रदर्शनार्थमेतम् । एतच्छ्रुतिबलेनापि भाष्यमुपपन्नम्; दशरात्रस्य द्वादशाहविकृतित्वात् । तत्क्रमेणाहर्धर्मेष्वतिदेशप्राप्तेषु दशरात्रगतदशमाहन्यपि द्वादशाहान्तर्वर्तिदशमाहरङ्गस्य मानसस्य

### कल्पतरुपरिमलः ।

**पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता'** ॥ इति, एवं शब्दान्वये स्थिते संख्यायाः साक्षात्क्रियानिर्वर्तकत्वायोगाद् द्वारान्वयापेक्षायां संख्याया अवच्छेदसामर्थ्यरूपाल्लिङ्गात्पशुद्रव्यावच्छेदकतयाऽरुणैकहायनीन्यायेन पार्ष्ठिकान्वय इति मीमांसका वदन्ति, तदिहोदाहरतीत्यर्थः । **पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इति वचनादिति । ननु**—द्वादशाहप्रकरणाम्नातं सर्वेषामह्नामसाधारणमिदं वचनम् अहरन्तरमपि स्पृशेदेव, अतोऽहरन्तरपक्षेऽप्येतद्वचनविरोधः समान इति—**चेत्, उच्यते**; अहरन्तरपक्षे प्रायणीयाद्युदयनीयान्तानामह्नां बद्धक्रमत्वाद् मानसं त्रयोदशमहः स्यात् पत्नीसंयाजान्तवचनमुक्तमहर्वर्जयित्वा, अस्थितो हि तर्हि यज्ञ इति वाक्यशेषादिवशादिति "पत्नीसंयाजन्तत्वं सर्वेषामविशेषादि"ति नावमिकाधिकरणे निर्णीतम् । अतोऽहरन्तरपक्षे नास्ति वचनविरोधः । **दशरात्रस्य द्वादशाहविकृतित्वादिति । ननु** द्वादशाहस्य प्रायणीयोऽतिरात्रः प्रथममहः ततः पृष्ठ्यः षडहस्ततश्छन्दोमचतुष्टयं तत उदयनीयोऽतिरात्र इति द्वादशाहानि । तत्र चतुर्थे छन्दोमे अविवाक्येऽह्नि मानसग्रहः, ततश्च द्वादशाहविकृतौ दशरात्रे द्वादशाहस्य प्रायणीयमारभ्य द्वादशानामह्नां धर्माः प्रवर्तेरन्निति तृतीयच्छन्दोमधर्म एव दशरात्रस्य दशमेऽहनि प्रव-

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति—'षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः' इति। सति हि सामान्येऽतिदेशः प्रवर्तते। ततश्च पूर्वेणेष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना सांपादिकानग्नीनतिदिशन्क्रियानुप्रवेशमेवैषां द्योतयति ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पक्षं व्यावर्तयति। विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युर्न क्रियाशेषभूताः। तथाहि निर्धारयति—'ते हैते विद्याचित एव' इति। 'विद्याया हैवैत एवंविदश्चिता भवन्ति' इति च ॥ ४७ ॥

### भामती ।

**विवाक्य इति** । अविवाक्य इति दशमस्याह्नो नाम ॥ ४४ ॥ ४५ ॥ नहि सांपादिकानामग्नीनामिष्टकासु चितेनाग्निना किंचिदस्ति सादृश्यमन्यत्र क्रियानुप्रवेशात् । तस्मादपि न स्वतन्त्र इति प्राप्तेऽभिधीयते ॥ ४६ ॥ मा भूदन्येषां श्रुतविध्युद्देशानामन्यार्थदर्शनानामप्राप्तप्रापकत्वमेतेषु त्वश्रुतविध्युद्देशेषु 'वचनानि त्वपूर्वत्वात्' इति न्यायाद्विधिरुन्नेतव्यः । तथाचैतेभ्यो यादृशोऽर्थः प्रतीयते तदनुरूप एव स भवति; प्रतीयते चैतेभ्यो मनश्चिदादीनां सातत्यं चावधारणं च फलभेदसमन्वयश्च पुरुषसंबन्धश्च । नचास्य गोदोहनादिवत्क्रत्वर्थाश्रितत्वम्, येन पुरुषार्थस्य कर्मपारतन्त्र्यं भवेत् । नच विद्याचित एवेत्यवधारणं बाह्यसाधनापाकरणार्थम्; स्वभावत एव विद्याया बाह्यानपेक्षत्वसिद्धेः । तस्मात्परिशेषान्मानसग्रहवत्क्रियानुप्रवेशशङ्कापाकरणार्थमवधारणम् । नचैवमर्थत्वे संभवति द्योतकत्वमात्रेण निपातश्रुतिः पीडनीया । तस्माच्छ्रुतिलिङ्गवाक्यानि प्रकरणमपोद्य स्वातन्त्र्यं मनश्चिदादीनामवगमयन्तीति सिद्धम् । अनुबन्धातिदेशश्रुत्यादिभ्य एवमेव विज्ञेयम् । ते च भाष्य एव स्फुटाः । यदुक्तं पूर्वपक्षिणा क्रत्वङ्गत्वे पूर्वेणेष्टकाचितेन मनश्चिदादीनां विकल्प इति, तदतुल्यकार्यत्वेन दूषयति—

### वेदान्तकल्पतरुः ।

प्राप्तेरिति विविधानि वाक्यानि यत्र न सन्ति मानसत्वात्तदविवाक्यमिति नामार्थः ॥ ४४ ॥ ४५ ॥ **वचनानि त्विति** । एतज्ज्योतिश्चरणाभिधानादित्यत्रानुक्रान्तम् । **ननु** फलार्थस्यापि क्रत्वङ्गाश्रितत्वादेकप्रयोगत्वं दृष्टमित्याशङ्क्याह—**नचास्येति** । मनोवृत्तिष्वग्नित्वदृष्टिविधेरित्यर्थः । "षट्त्रिंशतं सहस्राण्यात्मनो वृत्तीरग्नीनपश्यद् मन" इति श्रुतिरिति । **ननु** निपातानां चादीनामन्यतः प्राप्तार्थद्योतकत्वं दृश्यते, एवमेवकारस्यापि इत्याशङ्क्याह—**नचैवमिति** । क्रियानुप्रवेशमात्रं पूर्वपक्षिणो विवक्षितं, तच्च दूषितम्, स यदि विकल्पं ब्रूयात्, तर्हि स दूष्यत इत्याह—**तदतुल्यकार्यत्वे**-

### कल्पतरुपरिमलः

तैरेति तस्मिन्नविवाक्यधर्माप्रवृत्तेः कथं मानसग्रहप्राप्तिः ? **उच्यते**; द्वादशाहविकृतिषु द्वादशाहस्य प्रायणीयोदयनीयौ वर्जयित्वा मध्यमदशरात्रस्य धर्माः प्रवर्तन्त इति दशमे "चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्या"( जै. अ. १० पा.५ सू. १२ )दित्यधिकरणे निर्णीतम् । तस्मिन्नधिकरणे द्वादशाहविकृतिषु द्विरात्रादिषु द्वादशाहस्य अह्नां धर्मा आदित आरभ्य प्रवर्तन्ते, प्रथमातिक्रमे कारणाभावादिति प्राप्य सिद्धान्तितं लिङ्गविशेषैः प्रायणीयोदयनीयौ वर्जयित्वा मध्यमदशरात्रधर्माणामेव विकृतिषु प्रवृत्तिः । **तथाहि**—द्विरात्रे श्रूयते—"यत्प्रथमं तद्द्वितीयं यद् द्वितीयं तत्तृतीयमि"ति । द्विरात्रे यत्प्रथममहः तद् द्वादशाहे द्वितीयं यद् द्विरात्रे द्वितीयं तद् द्वादशाहे तृतीयमित्यर्थः । इदमेकं लिङ्गम् । तथा द्विरात्रएव "जगतीमं तर्प्यन्ती"ति पार्ष्ठिकस्य तृतीयस्याह्नो जागतस्यान्तरायः श्रूयते। सोऽपि पार्ष्ठिकेन द्वितीयेनाऽह्ना द्विरात्रस्य समाप्तिं प्रथयत् प्रायणीयवर्ज्यातिदेशलिङ्गतया द्वादशाहस्य मध्यमेषु दशसु अहःसु दशरात्रशब्दप्रसिद्धिरस्ति द्विरात्रादिचोदनास्वपि रात्रशब्दोऽस्ति, तच्चोदनालिङ्गं विशेषलिङ्गं सदहर्गणत्वसामान्यलिङ्गाद् बलीयः। तेन यत्प्रथमं तद् द्वितीयमित्यादिलिङ्गानुगृहीतेन द्विरात्रादिविकृतिषु मध्यमदशरात्रस्यैव प्रवृत्तिरिति । तस्मान्मध्यमदशरात्रे दशममहरविवाक्यमिति दशरात्रस्य दशमेऽहनि तद्धर्मप्रवृत्त्या मानसग्रहप्राप्तिरस्ति । एवंच भाष्ये दशरात्रशब्दस्य द्वादशाहान्तर्गतमध्यमदशरात्रविषयतैवोपपन्नेति विकृतिदशरात्रान्वेषणमपि न कार्यमिति द्रष्टव्यम् ॥ ४४ ॥ ४५ ॥ **मनोवृत्तिष्वग्नित्वदृष्टिविधेरिति** । कत्वङ्गानाश्रितत्वहेतुं षट्त्रिंशत्सहस्राणीत्यादिश्रुत्यर्थोपन्यासेनोपपादयति—**षट्त्रिंशतं सहस्राणीति** । श्रुतावात्मनोऽग्नीनित्यत्रात्मन इति षष्ठी; अग्नीनां तद्वृत्तिषु दृष्टिविधानाद्, वृत्तिमद्भावसंबन्धार्थेत्यभिप्रेत्य तदर्थं विवृणोति—**आत्मनो वृत्तीरग्नीनिति** । नन्वतुल्यकार्यत्वेन विकल्पासंभवे स्पष्टे कथं विकल्पेन पूर्वपक्षः, पूर्वविकल्प इति सूत्रेण कृतः ? इत्याशङ्क्याह—**क्रियानुप्रवेशमात्रमिति** । विकल्पः पूर्वपक्षे न विवक्षितः, प्रसिद्धाग्निविलक्षणाग्निप्रकारभेदमात्रं

## दर्शनाच्च ॥ ४८ ॥

दृश्यते चैषां स्वातन्त्र्ये लिङ्गम् । तत्पुरस्ताद्दर्शितम् 'लिङ्गभूयस्त्वात्' ( ब्र० सू० ३।३।४४ ) इत्यत्र ॥ ४८ ॥ ननु लिङ्गमप्यसत्यामन्यस्यां प्राप्तावसाधकं कस्यचिदर्थस्येत्यपास्य तत्प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसितमित्यत उत्तरं पठति—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः; श्रुत्यादेर्बलीयस्त्वात् । बलीयांसि हि प्रकरणाच्छ्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे । तानिचेह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते । कथम् ? श्रुतिस्तावत् 'ते हैते विद्याचित एव' इति । तथा लिङ्गम् 'स सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति । तथा वाक्यमपि 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति । 'विद्याचित एव' इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने पीडिता स्यात् । नन्वबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति, नेत्युच्यते । तदभिप्रायतायां हि विद्याचित इतीयता स्वरूपसंकीर्तनेनैव कृतत्वादनर्थकमवधारणं भवेत् । स्वरूपमेव ह्येषामबाह्यसाधनमिति । अबाह्यसाधनत्वेऽपितु मानसग्रहवत्क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलमवधारणमर्थवद्भविष्यति । तथा 'स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति' इति सातत्यदर्शनमेषां स्वातन्त्र्येऽवकल्पते । यथा सांपादिके वाक्प्राणमयेऽग्निहोत्रे 'प्राणं तदा वाचि जुहोति वाचं तदा प्राणे जुहोति' ( कौ० २।५ ) इति चोक्त्वोच्यते 'एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति' ( कौषी० २।५ ) इति । तद्वत् । क्रियानुप्रवेशेतु क्रियाप्रयोगस्याल्पकालत्वेन न सातत्येनैषां प्रयोगः कल्पेत । नचेदमर्थवादमात्रमिति न्याय्यम् । यत्र हि विस्पष्टो विधायको लिङ्गादिरुपलभ्यते युक्तं तत्र संकीर्तनमात्रस्यार्थवादत्वम्, इह तु विस्पष्टविध्यन्तरानुपलब्धेः संकीर्तनादेवैषां विज्ञानविधानं कल्पनीयम् । तच्च यथासंकीर्तनमेव कल्पयितुं शक्यत इति सातत्यदर्शनात्तथाभूतमेव कल्प्यते । ततश्च सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः । एतेन 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इत्यादि—व्याख्यातम् । तथा वाक्यमपि 'एवंविदे' इति पुरुषविशेषसंबन्धमेवैषामाचक्षाणं न क्रतुसंबन्धं मृष्यते । तस्मात्स्वातन्त्र्यपक्ष एव ज्यायानिति ॥ ४९ ॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम् । यत्क्रियावयवान्मनआदिव्यापारेष्वनुबध्नाति 'ते मनसैवाधीयन्त मनसाऽचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्मनसाऽशंसन्यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते' इत्यादिना । संपत्फलो ह्ययमनुबन्धः । नच प्रत्यक्षाः क्रियावयवाः सन्तः संपदा लिप्सितव्याः । नचात्रोद्गीथाद्युपासनवत्क्रियाङ्गसंबन्धात्तदनुप्रवेशित्वमाशङ्कितव्यम्; श्रुतिवैरूप्यात् । नह्यत्र क्रियाङ्गं किंचिदादाय तस्मिन्नदो नामाध्यवसितव्यमिति वदति । षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत् । संख्याचेयं पुरुषायुषस्याहःसु दृष्टा सती तत्संबन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यम् । एवमनुबन्धात्स्वातन्त्र्यं मनश्चिदादीनाम् । आदिशब्दादतिदेशाद्यपि यथासंभवं योजयितव्यम् । तथाहि—'तेषामेकैक एव तावान्यावानसौ पूर्वः' इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन्क्रियायामनादरं दर्शयति । नच सत्येव क्रियासंबन्धे विकल्पः पूर्वेणोत्तरेषामिति शक्यं वक्तुम् । नहि येन व्यापारेणाहवनीयधारणादिना पूर्वः क्रियायामुपकरोति तेनोत्तर उपकर्तुं शक्नुवन्ति । यत्तु पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्तं, सति हि सामान्येऽति-

भामती ।

नच सत्येव क्रियासंबन्ध इति । अपिच पूर्वापरयोर्भागयोर्विद्याप्राधान्यदर्शनात्तन्मध्यपातिनोऽपि तत्सामान्या-

देशः प्रवर्तते इति, तदसत्पक्षेऽग्नित्वसामान्येनातिदेशासंभवात्प्रत्युक्तम्। अस्ति हि सांपादिकानामप्यग्नीनामग्नित्वमिति। श्रुत्यादीनि च कारणानि दर्शितानि। एवमनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनाम्। प्रज्ञान्तरपृथक्त्ववत्। यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेनानुबन्धेनानुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्त्येवमिति। दृष्टश्चावेष्टे राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षो वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राजसूयस्य। तदुक्तं प्रथमे काण्डे—'क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्' (जै० सू० ११।४।७) इति॥ ५०॥

## न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः॥ ५१॥

यदुक्तं मानसवदिति, तत्प्रत्युच्यते। न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यम्; पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः। नहि किंचित्कस्यचित्केनचित्सामान्यं न संभवति। नच तावता यथास्वं वैषम्यं निवर्तते। मृत्युवत्। यथा "स वा एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः" इति "अग्निर्वै मृत्युः" (बृ० ३।२।१०) इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः। यथाच "असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्" (छा० ५।४।१) इत्यत्र न समिदादिसामान्याल्लोकस्याग्निभावापत्तिस्तद्वत्॥ ५१॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥ ५२॥

परस्तादपि "अयं वाव लोक एषोऽग्निश्चितः" इत्यस्मिन्ननन्तरे ब्राह्मणे ताद्विध्यं केवलविद्या-

### भामती।

द्विद्याप्रधानत्वमेव लक्ष्यते, न कर्माङ्गत्वमित्याह सूत्रेण—**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः**। स्फुटमस्य भाष्यम्। अस्ति राजसूयः 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति। तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिम्। आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्येवमादि, तां प्रकृत्याधीयते। यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रमिति। तत्र संदिह्यते—किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणमुत ब्राह्मणादीनामयं यागो विधीयत इति। अत्र यदि प्रजापालनकण्टकोद्धरणादि कर्म राज्यं तस्य कर्ता राजेति राजशब्दस्यार्थस्ततो "राजा राजसूयेन यजेते"ति राज्यस्य कर्तॄ राजसूयेऽधिकारः। तस्मात्संभवन्त्यविशेषेण ब्राह्मणक्षत्रियवैश्या राज्यस्य कर्तार इति सिद्धं सर्व एवैते राजसूये प्राप्ता इति 'यदि ब्राह्मणो यजेत' इत्येवमादयो निमित्तार्थाः श्रुतयः। अथ तु राज्ञः कर्म राज्यमिति राजकर्तृयोगात्तत्कर्म राज्यं, ततः को राजेत्यपेक्षायामार्येषु तत्प्रसिद्धेरभावात्पिकनेमतामरसादिशब्दार्थावधारणाय म्लेच्छप्रसिद्धिरिवान्ध्राणां क्षत्रियजातौ राजशब्दप्रसिद्धिस्तदव-

### वेदान्तकल्पतरुः।

**नेति**। दृष्टश्चेति सौत्रपदसूचितं द्वितीयगतमवेष्ट्यधिकरण( जै. अ. २ पा. ३ सू. ३ )मनुक्रामति—**अस्तीत्यादिना**। बार्हस्पत्यं चरुमाग्नेयैन्द्रपुरोडाशयोर्मध्ये निधायेत्यर्थः। यदि ब्राह्मणादयस्त्रयोऽप्यवेष्ट्यामन्यतः प्राप्तास्तर्हि यदि ब्राह्मण इत्यादिप्राप्तार्थत्वान्निमित्तार्था, अप्राप्तौ तु तत्कर्तृकयागविधिरिति। तत्र प्राप्तिप्रकारमाह—**अत्र यदीत्यादिना**। यदि राज्यस्य कर्ता राजा, तर्हि त्रयाणां वर्णानां राज्यकर्तृत्वाद्राजसूये च प्राप्तत्वेन तदङ्गावेष्टावपि प्राप्तेर्निमित्तार्थत्वं ब्राह्मण इत्यादेरित्यर्थः। अप्राप्तिप्रकारमाह—**अथत्विति**। **पिकनेमेति**। येषां शब्दानाम् आर्येषु न प्रसिद्धोऽर्थः पिकनेमादीनां, तेषां किं निगमादिभ्योऽर्थः कल्पनीय उत म्लेच्छप्रसिद्ध एव ग्राह्य इति संदेहे शास्त्रस्थत्वान्निगमादिप्रसिद्ध एव ग्राह्यो म्लेच्छप्रसिद्धेरार्याणामर्थप्रतिपत्तौ विप्लवप्रसङ्गादिति प्राप्ते—समुदायप्रसिद्धेरवयवप्रसिद्धितो बलवत्त्वात् पिकादीनि पदानि यद्रूपाणि वेदे दृश्यन्ते तद्रूपाणामेव तेषां म्लेच्छैरर्थविशेषेषु प्रयुज्यमानत्वात् तदर्थसंबन्धे च पदानां बाधाभावाद् विप्लुतिशङ्कानुत्थानाद् म्लेच्छप्रसिद्ध एवार्थो ग्राह्यः। **पिकः** कोकिलः। **नेमोऽर्धम्**। **तामरसं** पद्ममिति

### कल्पतरुपरिमलः।

सूत्रे विकल्पशब्देन विवक्षितमेवमयमप्यग्निविकल्प इति भाष्ये तस्य व्याख्यातत्वात्। इह तु विकल्प इति मन्दशङ्कामात्रस्य निराकरणमित्यर्थः। इत्थमवतारिकया टीकायां यदुक्तमित्येतदाशंसायां भूतवद्विधानाद् यदि वक्तुमिष्टं यदि विवक्षितं इत्येवंपरतया व्याख्यातं भवति। **तदङ्गावेष्टावपीति**। तदन्तर्गतावेष्टावित्यर्थः; राजसूयान्तर्गतेष्टिपशुसोमानां सर्वेषां

## भामती ।

धारणकारणमिति क्षत्रिय एव राजेति न ब्राह्मणवैश्ययोः प्राप्तिरिति राजसूयप्रकरणं भित्त्वा ब्राह्मणादिकर्तृकाणि पृथगेव कर्माणि प्राप्यन्त इति न नैमित्तिकानि । तत्र किं तावत्प्राप्तम्? नैमित्तिकानीति । राज्यस्य कर्ता राजेत्यार्याणामान्ध्राणां चाविवादः । **तथाहि**—ब्राह्मणादिषु प्रजापालनकर्तृषु कनकदण्डातपत्रश्वेतचामरादिलाञ्छनेषु राजपदमान्ध्राश्चार्याश्चाविवादं प्रयुञ्जाना दृश्यन्ते । तेनाविप्रतिपत्तेर्विप्रतिपत्तावप्यार्यान्ध्रप्रयोगयोर्यववराहवदार्यप्रसिद्धेरान्ध्रप्रसिद्धितो बलीयस्त्वात् बलवदार्यप्रसिद्धिविरोधे त्वतन्मूलायाः पाणिनीयप्रसिद्धेः 'विरोधे त्वनपेक्षं स्यात्' इति न्यायेन बाधनात्तदनुगुणतया वा कथंचिन्नखनकुलादिवदन्वाख्यानमात्रपरतया नीयमानत्वाद्राज्यस्य कर्ता राजेति सिद्धे निमित्तार्थाः श्रुतयः । तथाच यदिशब्दोऽप्याञ्जसः स्यादिति प्राप्तम्। एवं प्राप्त उच्यते—**रूपतो नविशेषोऽस्ति ह्यार्यम्लेच्छप्र-**

## वेदान्तकल्पतरुः ।

प्रमाणलक्षणे स्थितम् । एवं यथा म्लेच्छप्रसिद्धिः पिकादिशब्दार्थावधारणकारणम्, एवमान्ध्राणां म्लेच्छादीनामेव क्षत्रियत्वजातौ राजशब्दप्रसिद्धिः राजशब्दार्थावधारणकारणमित्यर्थः । एवं संदेहं प्रदर्श्य पूर्वपक्षमाह—**नैमित्तिकानीत्यादिना** । राज्यकर्तृमात्रे राजशब्द आर्यैर्म्लेच्छैश्च प्रयुज्यते इत्यविवादम् । राज्यमकुर्वति तु क्षत्रियजातिमात्रे आर्या राजशब्दं न प्रयुञ्जते, म्लेच्छास्तु प्रयुञ्जते इति विप्रतिपत्तिः । तत्राविप्रतिपत्तिस्थले विरोधाभावाद् राज्यस्य कर्ता राजेति त्रैवर्णिकानां राजत्वादेवेष्टौ प्राप्तिः । प्राप्तौ च सत्यां निमित्तार्थत्वं "यदि ब्राह्मण" इत्यादेः स्यादित्याह—**राज्यस्य कर्ते-**त्यारभ्य **तेनाविप्रतिपत्ते**रित्यन्तेन। या तु क्षत्रियमात्रे राजशब्दप्रयोगे म्लेच्छानामार्यैः सह विप्रतिपत्तिः, तत्र शास्त्रसंस्कृतार्यप्रसिद्ध्या तद्विहीनम्लेच्छप्रसिद्धिबाधान्न जातिमात्रं राजशब्दार्थः, किंतु राज्यकर्तैव। अतश्च निमित्तार्थत्वं सुस्थमित्याह—**विप्रतिपत्तावपीति । यववराहवदिति ।** "यवमयश्चरुर्भवति वाराही उपानहावि"त्यत्र यववराहशब्दयोर्म्लेच्छैः प्रियङ्गुवायसयोः प्रयोगादार्यैश्च दीर्घशूकसूकरयोः प्रयोगादुभयोश्च प्रयोगयोरनादित्वेन तुल्यबलत्वाद् विकल्पेनाभिधानं प्राप्तम् । **तदुक्तं प्रमाणलक्षणे**—"समा विप्रतिपत्तिः स्यात्" ( जै. अ. १ पा. ३ सू. ८ ) इति । अभिधानविप्रतिपत्तिस्तुल्येत्यर्थः । **सिद्धान्तस्तु**—शास्त्रस्था वा तन्निमित्तत्वात् । ( जै. अ. १ पा. ३ सू. ९ ) यवमय इत्यस्य हि वाक्यशेषे "यत्रान्या ओषधयो म्लायन्त्यथैते मोदमानास्तिष्ठन्ती"ति श्रूयते । यवाश्चान्यौषधिम्लानौ मोदन्ते न प्रियङ्गवः । **उक्तं हि**—"फाल्गुने ह्यौषधीनां हि जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥ प्रियङ्गवः शरत्पक्वास्तावद्गच्छन्ति हि क्षयम् । यदा वर्षासु मोदन्ते सम्यग् जाताः प्रियङ्गवः ॥ तदा नान्यौषधिम्लानिः सर्वासामेव मोदनात्" ॥ इति । "वाराही उपानहौ" इत्यस्य च वाक्यशेषे "वराहं गावोऽनुधावन्ती"ति श्रूयते । सूकरं च गावोऽनुधावन्ति न काकम् । तस्माद्यववराहशब्दयोर्दीर्घशूकसूकरावर्थाविति । **ननु** म्लेच्छप्रसिद्धिमात्रेण क्षत्रियजाती राजशब्दार्थ इति न ब्रूमः, किंतु "गुणवचनब्राह्मणादिभ्यः कर्मणि" चेति पाणिनिना गुणवचनेभ्यः शुक्लादिशब्देभ्यो ब्राह्मणादिशब्देभ्यश्च ष्यञ्प्रत्ययस्मरणाद्राज्ञः कर्म राज्यमिति सिध्यति । ततश्च क्षत्रियो राजेत्यप्राप्तिर्ब्राह्मणादीनां राजसूय इति सिद्धान्तिमतमाशङ्क्याह पूर्ववादी—**बलवदार्येति** । प्रयोगमूला हि पाणिनिस्मृतिरार्यप्रयोगविरोधे चातन्मूला म्लेच्छप्रयोगमूला स्यात् । अतो मूलबाधेन बाध्येत्यर्थः । **नखनकुलादिवदिति** । खं न भवति इति नखं कुलं न भवतीति नकुलमित्यत्र रूढावेव शब्दौ यथा व्युत्पाद्येते, एवं राजशब्द इत्यर्थः । पाणिनिर्हि "नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये"ति नखादिशब्दानां नञ्समासमङ्गीकृत्य नलोपाभावसिद्ध्यर्थं प्रकृतिभावं सस्मार । यदुक्तं यववराहादिशब्देष्विव राजशब्देऽपि क्षत्रियमात्रविषयत्वगोचरा म्लेच्छप्रसिद्धिरार्यप्रसिद्ध्या बाध्येति, तत्राह—**रूपत इति** । अनादिवृद्धव्यवहाररूढत्वादार्यम्लेच्छप्रयोगयोः स्वरूपतस्तावन्न विशे-

## कल्पतरुपरिमलः ।

समप्रधानत्वेनाऽवेष्टेरङ्गत्वाभावात् । **राज्यस्य कर्ता राजेति । त्रैवर्णिकानां राजत्वादिति ।** यद्यपि क्षत्रियस्यैव राज्यपरिपालनं धर्मः; तथाऽप्युल्लङ्घितमर्यादौ ब्राह्मणवैश्यावपि राज्यं कुर्वाणौ दृश्येते । अतस्तावपि राजशब्दवाच्यौ; शब्दवाच्यतायां प्रवृत्तिनिमित्तसद्भावमात्रस्यापेक्षितत्वादिति भावः । **शास्त्रसहितेति ।** शास्त्रसहितानामार्याणां प्रसिद्ध्येत्यर्थः । **गावोऽनुधावन्ति** अनुकुर्वन्ति चतुष्पात्त्वेन । **शुक्लादिशब्देभ्य इति ।** जडादिशब्दानामुपलक्षणमेतत् । शुक्लादिशब्देभ्यो हि भावार्थमात्रे ष्यञिमनिचौ प्रत्ययौ विहितौ । तत्र शुक्लस्य भावः शौक्ल्यं शुक्लिमेत्याद्युदाहरणम् । उदाहृतसूत्रे जाड्यादिगुणवचनेभ्यो ब्राह्मणादिभ्यश्च भावकर्मणोरर्थयोः ष्यञ्प्रत्ययमात्रं विधीयते जाड्यं मौढ्यमित्यादि तदुदाहरणम् । **अनादिवृद्धव्यवहाररूढत्वादिति ॥**

**ननु**—तथात्वेऽपि स्वरवर्णादिभ्रंशे प्रत्यवायमनुसंदधानानामार्याणां प्रसिद्धिरास्तिमूलत्वेन बलवती, म्लेच्छानां तु गवा-

## कल्पतरुपरिमलः ।

दिविषये गाव्यादिशब्दमपभ्रंशं प्रयुञ्जानानां प्रसिद्धिरनादिमूलत्वेन दुर्बला, अतः स्वरूपतस्तावन्न विशेषोऽस्तीत्येतदयुक्तम्, राजशब्दे त्वार्यप्रसिद्धेर्नास्ति वेदानुग्रह इत्येतदप्ययुक्तम्; "सोमोऽस्माकं ब्राह्मणानां राजा सोम ओषधीनां राजा तौ वा एतौ देवतानां यदग्नीषोमौ" "इन्द्रो राजा जगतश्चर्षणीना"मित्यादिवेदानुग्रहसत्त्वात्, तदभावेऽपि स्वत एवार्यप्रसिद्धेर्बलवत्त्वविशेषसद्भावाच्च । विशेषमाहेत्यप्ययुक्तम्; स्मृत्यनुग्रहस्य वक्ष्यमाणरीत्योभयत्राप्यविशेषात् । स्मृत्यनुगृहीतो म्लेच्छप्रयोग आर्यप्रयोगाद्बलीयानित्यप्ययुक्तम्; राज्यशब्दे गुणवचनादिसूत्रविधीयमानष्यञ्प्रत्ययप्रकृतिभूतस्य ब्राह्मणादिगणपठितस्य राजशब्दस्य क्षत्रियार्थताया इव पालकार्थताया अप्युपपन्नतया स्मृतेरुभयसाधारण्यात् । नहि विधीयमानप्रत्ययार्थादन्यदेव प्रकृत्यर्थप्रवृत्तिनिमित्तं ग्राह्यमिति नियमोऽस्ति; काठकशब्दे कठप्रोक्तशाखाध्यायिनामाम्नाय इत्यर्थके गोत्रचरणादिसूत्रविधीयमानप्रत्ययार्थस्य कठप्रोक्ताम्नायस्य कठप्रोक्तशाखाध्यायिवाचककठशब्दरूपप्रकृत्यर्थप्रवृत्तिनिमित्तान्तर्भावदर्शनात्, घटस्य शौक्ल्यमित्यत्र वर्णदृढादिसूत्रविधीयमानस्य ष्यञ्प्रत्ययार्थस्य शुक्लगुणस्यैव शुक्लगुणविशिष्टद्रव्यविषयशुक्लशब्दरूपप्रकृत्यर्थप्रवृत्तिनिमित्तत्वदर्शनात् । **किंच** ब्राह्मणादिगणपठितस्य राजशब्दस्य पालकार्थत्वमेव ग्राह्यम्; अन्यथा "यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपति"रित्यादिप्रयोगेषु ष्यञ्प्रत्ययो न स्यात् । तत्र राजशब्दस्य क्षत्रियार्थत्वे युवत्वराजत्वयोः प्रागेव सिद्धतया संयोक्ष्यमाणस्याभावात् । नच—तत्र मा भूत् ष्यञ्प्रत्ययः "पत्यन्तपुरोहितादिभ्यो यगि"ति भावकर्मणोरेव विहितो यक्प्रत्ययोऽस्तु, पुरोहितादिगणेऽपि राजशब्दस्य पाठादिति—वाच्यम्; तत्र राजाऽसमासे इत्येसमासगतस्य राजशब्दस्य पाठेन ततो युवराजशब्दाद्यगप्राप्त्या ष्यञ एवान्वेषणीयत्वात्, ब्राह्मणादिगणपठितस्येव तस्यापि पालकार्थत्वोपपत्तेश्च, जनपदविशेषवाचिनो विदेहपञ्चालादिशब्दात् तस्य राजेत्यर्थे अपत्यार्थप्रत्ययातिदेशके "तस्य राजन्यपत्यवदि"ति वार्तिके राजशब्दस्य पालकार्थतायाः संप्रतिपन्नत्वाच्च । विदेहानां राजा वैदेहः पञ्चालानां राजा पाञ्चाल इत्यादि हि तदुदाहरणम् । एवं राजपदस्य पालकार्थत्वाध्यवसाये सति यत्कर्मधारय इति ब्राह्मणकुमारयोरिति चानुक्तौ राजेति पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोरन्यतरस्यां प्रकृतिस्वरो भवति पूर्वपदप्रकृतिस्वरविधायकस्य "राजा चे"ति सूत्रस्योदाहरणं राजब्राह्मण इति तदपि राजत्वब्राह्मणत्वयोर्युगपत्सामानाधिकरण्यादाञ्जस्यं लभते । **ननु**—मा भूद् राज्यशब्दव्युत्पादकस्मृत्या म्लेच्छप्रसिद्धेरनुग्रहः, "राजश्वशुराद्यदि"ति स्मृत्या राजशब्दादपत्यार्थे यत्प्रत्ययविधानार्थया तु स्यात्, क्षत्रियापत्यइव जनपदपालकब्राह्मणाद्यपत्ये राजन्यशब्दप्रयोगाभावेन तत्र प्रकृतिभूतस्य राजपदस्य क्षत्रियार्थताया एव ग्राह्यत्वादिति **—चेत्,** किं ततः ? एवमार्यप्रसिद्धेरपि पाणिनिस्मृत्यनुग्रहोऽस्तीति राजसूयवाक्ये क्षत्रियग्रहे नैव किंचिद्विनिगमकं लब्धम् । **एतेन**—स्मृतिशब्देन आर्षं धर्मशास्त्रादिकमनुग्राहकत्वेन विवक्षितम् । गौतमीये हि धर्मशास्त्रे द्विजातीनामध्ययनमिज्या दानमिति त्रैवर्णिकानां साधारणधर्मोक्त्यनन्तरं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहा इत्यादिना ब्राह्मणवैशेषिकधर्मानुक्त्वा क्षत्रियवैशेषिकधर्मोक्तिप्रस्तावे राज्ञोऽधिकं रक्षणं सर्वभूतानामिति राजशब्दः प्रयुक्तः । नच तस्य पालकार्थग्रहणं युक्तम्; प्रकरणानुरोधात्, पालकमेवोद्दिश्य पालनविधानायोगाच्च । नहि यः पालकः तेन पालनं कर्तव्यमित्यन्वेति, एवं धर्मशास्त्रान्तरमप्युदाहर्तव्यम् । स्मृतिग्रहणमत्र श्रुतेरप्युपलक्षणम् । अस्ति हि म्लेच्छप्रसिद्धेरनुग्राहिका "राजानमभिषेचयेत् तिष्येन श्रवणेन वेति" श्रुतिः । अत्र राज्ञः सतोऽभिषेको विधीयते । नच क्षत्रियत्वमिव पालकत्वं प्राक् सिद्धमस्ति; अभिषिक्तस्य स्मृतिषु पालनविधानात् । नच यूपं तक्षतीत्यत्र तक्षणेन यूपं कुर्यादितिवद् अभिषेकेण राजानं कुर्यादिति क्लिष्टयोजनं न्याय्यम्; यूपशब्दार्थस्येव राजशब्दार्थस्य प्राक्सिद्धस्यासत्त्वाभावाद्, म्लेच्छप्रयोगप्रसिद्धस्य क्षत्रियस्य सत्त्वादिति—**निरस्तम्** । एवमपि विनिगमनाविरहदूषणानतिलङ्घनाद्, आर्यप्रसिद्धेरपि श्रुत्यनुग्रहस्य दर्शितत्वात्, "नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर । विविक्ते देवराजानमिदं वचनमब्रवीत्" ॥ इत्यादिस्मृत्यनुग्रहस्यापि सत्त्वात् । "राज्यायैव तेऽभिषिच्यन्ते तेनैतान् राजेत्याचक्षत"इति श्रुतौ "रञ्जनात् खलु राजत्वं प्रजानां पालनादपी"ति भारतवचने च पालकत्वं राजशब्दार्थ इति साक्षादेव प्रतिपादनाच्च । **एतेनैव**—क्षत्रियवाचिनो राजपदस्य पालकत्वसादृश्याद् आर्याणां जनपदपरिपालके ब्राह्मणादौ प्रयोग इत्येतदर्थकाग्रिमग्रन्थस्याप्ययुक्तत्वं—**व्याख्यातम्**; पालकवाचिन एव पालकत्वयोग्यक्षत्रिये गौणतेति वैपरीत्यस्यापि वक्तुं शक्यत्वात्, तस्मात्सर्वोऽयमनुपपन्नः सिद्धान्तग्रन्थ इति—**चेत्, उच्यते**; विनिगमनाविरहादर्थद्वयसत्त्वेऽपि राजसूयवाक्ये क्षत्रिय एवार्थो ग्राह्यः । सप्रतियोगिकौपाधिकधर्मरूपपालकत्वापेक्षया निष्प्रतियोगिकाखण्डरूपधर्मक्षत्रियजातेर्लघुत्वेन असति बाधके लघुप्रवृत्तिनिमित्तकार्थग्रहणौचित्यात् । नच—अवेष्टिवाक्यगतत्रैवर्णिकप्राप्तिद्योतकयदिशब्दस्वारस्याद् गुरोरप्यर्थस्य ग्रहणं स्यादिति—वाच्यम्, द्योतकनिपातस्वारस्यानुरोधेन वाचकानां स्वारस्यहानायोगात् । **वस्तुतस्तु**—श्रुतिस्मृतिप्रयोगवैयाकरणव्यवहाराणामुभयत्र साम्येऽपि क्षत्रियेष्वेव शक्तिः; तेषु क्षत्रियत्वजातेरिव पालकेष्वनुगताऽनतिप्रसक्तशक्यतावच्छेदकरूपाभावात् । **तथाहि**—न पालनमात्रं निमित्तम् सर्वसाधारण्यप्रसङ्गात्; अस्ति हि सर्वेषामपि पुत्रदारधनादिविषयमन्ततः स्वश-

## भामती।

**योगयोः।वैदिकाद्वाक्यशेषात्तु विशेषस्तत्र दर्शितः॥** तदिह राजशब्दस्य कर्मयोगाद्वा कर्तरि प्रयोगः, कर्तृप्रयोगाद्वा कर्मणीति विशये वैदिकवाक्यशेषवदभियुक्ततरस्यात्रभवतः पाणिनेः स्मृतेर्निर्णीयते प्रसिद्धिरान्ध्राणामनादिरादिमती चार्याणां प्रसिद्धिर्गोगाव्यादिशब्दवत्। नच संभावितादिमद्भावा प्रसिद्धिः पाणिनिस्मृतिमपोद्यानादिप्रसिद्धिमादिमतीं कर्तुमुत्सहते; गाव्यादिशब्दप्रसिद्धेरनादित्वेन गवादिपदप्रसिद्धेरप्यादिमत्त्वापत्तेः। तस्मात्पाणिनीयस्मृत्यनुमतान्ध्रप्रसिद्धिबलीयस्त्वेन क्षत्रियत्वजातौ राजशब्दे मुख्ये तत्कर्तृयंतजातौ राजशब्दो गौण इति क्षत्रियस्यैवाधिकाराद्राजसूये तत्प्रकरणमपोद्यावेष्टेरुत्कर्षः। अन्वयानुरोधी यदिशब्दो नत्वपूर्वविधौ सति तमन्यथयितुमर्हति। **अतएवाहुः**—'यदिशब्दपरित्यागो रुच्यध्याहारकल्पना' इति। इयं च राजसूयादधिकारान्तरं "एमेतयान्नाद्यकामं याजयेदि"ति

## वेदान्तकल्पतरुः।

षोऽस्ति, यवादिशब्देषु तु वैदिकवाक्यशेषानुगृहीतार्यप्रसिद्धेर्बलवत्त्वमुक्तं, राजशब्दे त्वार्यप्रसिद्धेर्नास्ति वेदानुग्रह इति द्वयोः प्रसिद्ध्योरविशेष इत्यर्थः। एवमविशेषमुक्त्वा म्लेच्छप्रसिद्धे राजशब्दविषये विशेषमाह—**वैदिकवाक्यशेषवदिति**। प्रयोगो हि नानादेशेषु नानापुरुषैर्विरच्यते इति संभवद्विप्लवः। स्मृतिस्तु शिष्टपरिगृहीता व्यवस्थिता। ततश्च तदनुगृहीतम्लेच्छप्रयोग आर्यप्रयोगाद् बलीयानित्यर्थः। **उक्तं हि**—"आचारयोर्विरोधेन संदेहे सति निर्णयः। सन्निबन्धनया स्मृत्या बलीयस्त्वादवाप्यते" इति। **अनादिरिति**। मुख्येत्यर्थः। **गोगाव्यादीति**। गावीशब्दो ह्यशक्त्या प्रयुक्तो न गोशब्दस्य गौणत्वमापादयति एवमिदमपीत्यर्थः। तत्किं राज्यकर्तरि राजशब्दप्रयोगः सर्वथा त्याज्यः? नेत्याह—**तस्मादिति**। तदेवं यथा क्षत्रियकर्तृके राजसूये ब्राह्मणादेरनधिकारादवेष्टेः प्रकरणादुत्कर्षः, एवं मनश्चिदादीनामपि क्रियाप्रकरणाल्लिङ्गादिभिरुत्कर्ष इत्याह—**क्षत्रियस्यैवाधिकारादिति**। **ननु** ब्राह्मणादिवाक्यानामप्राप्तब्राह्मणादिप्रापकत्वे यदिशब्दविरोध उक्त इति, तत्राह—**अन्वयानुरोधीति**। **अन्वयः** प्राप्तिः। यदिशब्दो हि निपातः। निपाताश्चोत्सर्गतः प्राप्तिमपेक्षन्ते। अप्राप्ते चार्थे वाक्याद्गम्यमाने यदिशब्दो भञ्जनीय इत्यर्थः। **तदाहुः भट्टाचार्याः**—"यदिशब्दपरित्यागो रुच्यध्याहारकल्पना। व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङ्" इति शेषः। यदि रोचयेत फलं मे स्यादिति, तर्हि "ब्राह्मणो यजेते"ति रुच्यध्याहारकल्पनान्न विधित्वक्षतिरित्यर्थः। **व्यवधानेन संबन्ध इति**। यदि बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाऽभिघारयेदभिघारयितुमिच्छेदिति कामप्रवेदने लिङ्। अर्थात्तु विधिः। एकस्मिन् वाक्ये विधिद्वयायोगात्, तर्हि ब्राह्मणो यजेतेति विधिरेवेत्यर्थः। हेतुहेतुमतोरिति। यदि ब्राह्मणयजनमाहुत्यभिघारणे हेतुस्तदाऽऽहुत्यभिघारणमेवं कर्तव्यमित्यर्थः। अत्रैको लिङ् हेतुमत्त्वे अपरो विधौ। तत्राप्येकस्य विधिरर्थादपरस्य श्रौत इति। **नन्विद**मधिकरणमनारम्भणीयम्; फलाभावात्, अवेष्टिं प्रकृत्यैतयाऽन्नाद्यकामं याजयेदिति पृथगधिकारश्रवणात्, त्रयाणां वर्णानामवेष्टावधिकारसिद्धौ यदि ब्राह्मण इत्यादेर्निमित्तार्थताया दुर्वारत्वात्, अत आह—**इयं चेति**। **ननु** "राजा राजसूयेन स्वाराज्यकामो यजेते"ति वाक्ये राजपदं कर्तृसमर्पकम्; स्वाराज्यकामस्योद्देश्यत्वेन तद्व्यावर्तकत्वे वाक्यभेद-

## कल्पतरुपरिमलः।

रीरविषय वा पालनम्। नापि जनपदपरिपालनं निमित्तम्; राज्ञा नियुक्ते तत्तत्पदाधिकारिणि सत्यपि तस्मिन् राजपदाप्रयोगात्। नापि स्वतन्त्रपालनं निमित्तम्; सम्राजा नृपतिना देशविशेषे राजभावेनाभिषिक्ते तदभावात्। किंच विनापि पालकत्वं श्रैष्ठ्यमात्रेण राजपदप्रयोगो मृगराजः पक्षिराजो वृक्षराजश्चेतीत्यादिव्यवहारे दृश्यते। तस्य "राजदन्तादिषु पर"-मित्युपसर्जनपरनिपातविधायकपाणिनिस्मृत्यनुग्रहोऽप्यस्ति। तस्मादनुगताऽनतिप्रसक्तजातिनिमित्तकः क्षत्रियार्थ एव राजशब्दः क्षत्रियेषु प्रायेण पालकत्वस्य तत्कृतस्य श्रैष्ठ्यस्य च सद्भावात्क्वचित् पालके केनचित्केनचिद्गुणेन श्रैष्ठ्ये च तस्य निरूढा लक्षणेत्येव युक्तम्। इत्थं राजशब्दस्यानेकार्थत्वेऽपि राजसूयवाक्ये लाघवात् क्षत्रियार्थो ग्राह्य इति व्यवस्थापनं वस्तुतस्तस्य क्षत्रियार्थत्वमेवेति व्यवस्थापनं च तस्य क्षत्रियार्थत्वसद्भावाधीनम्, तत्तु स्मृत्याद्यनुगृहीतम्लेच्छप्रसिद्धिप्रसादलभ्यमिति तदुक्तिः। एवंच स्वरूपतस्तावन्न विशेषोऽस्तीत्यस्य राजशब्दगोचरयोरार्यम्लेच्छप्रयोगयोर्गोगावीशब्दप्रयोगयोरिव स्वरूपतो वर्णविकाररूपः श्रुतिस्मृत्यनुग्रहसदसद्भावकृतो वा विशेषो नास्तीत्यर्थः। एवमिह म्लेच्छप्रसिद्धेरपभ्रंशत्वादिमूलकदौर्बल्यशङ्का निरस्ता। तदनन्तरवाक्येन यववराहादिशब्देष्वार्यप्रसिद्धेरेव वाक्यशेषानुग्रहः। अतस्तत्र तदादर इति प्रकृताद्वैषम्यमुक्तम्। नास्ति वेदानुग्रह इत्यनेन वाक्यशेषानुग्रहो नास्तीत्युक्तम्। यदि राजसूयवाक्यशेषानुग्रहः स्यादार्यप्रसिद्धेः, तदा तद्वाक्यगतराजशब्दस्य वक्ष्यमाणरीत्या प्रवृत्तिनिमित्तगौरवं गौणवृत्त्यापत्तिं चाविगणय्य पालक एवार्थो ग्राह्यः स्यात्; "गौण्या लक्षणया वापि वाक्यशेषेण वा पुनः। वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्" इति न्यायात्। अतो वाक्यशेषाभाव उक्तः। विशेषमाहेत्यस्य राजसूयवाक्ये राजशब्दस्य क्षत्रियार्थग्रहणे प्रवृत्तिनिमित्तलाघवरूपं मुख्यवृत्तिलाभरूपं वा विशेषमाहेत्यर्थः। स तु विशेषः क्षत्रियत्वप्रसिद्धेः स्मृत्यनुग्रहोक्त्या राजशब्दस्य क्षत्रिये शक्तिसद्भावव्य-

विधित्वं शब्दस्य प्रयोजनं लक्ष्यते न शुद्धकर्माङ्गविधित्वम् । तत्र हि—'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इत्यनेन श्लोकेन केवलं कर्म निन्दन्विद्यां च प्रशंसन्निदं गमयति । तथा पुरस्तादपि 'यदेतन्मण्डलं तपति' इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते; 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति विद्याफलेनैवोपसंहारान्न कर्मप्रधानता तत्सामान्यादिहापि तथात्वम् । भूयांसस्त्वश्यवयवाः संपादयितव्या विद्यायामित्येतस्मात्कारणादग्निनाऽनुबध्यते विद्या न कर्माङ्गत्वात् । तस्मान्मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥ ५२ ॥ इत्येकोनविंशं लिङ्गभूयस्त्वाधिकरणम् ॥

## भामती ।

नास्तीति कृत्वाचिन्ता । एतस्मिंस्त्वधिकारेऽन्नाद्यकामस्य त्रैवर्णिकस्य संभवात्प्राप्तेर्निमित्तार्थता ब्राह्मणादिश्रवणस्य दुर्वारैवेति ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ इति एकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

प्रसङ्गात्, तथाच प्रकृतयागमात्रे राजविधेरन्नाद्यकामाधिकारेऽपि राजपदानुवृत्तेर्ब्राह्मणादीनामप्राप्तत्वेन निमित्तार्थत्वासंभवात्कथं कृत्वाचिन्ताश्रिता ? नह्यधिकारवाक्यान्तरगतं राजपदमधिकारवाक्यान्तरे राजानं विधातुं क्षमम् । यद्युच्येत राजसूयमध्यस्थायास्तावदवेष्टेः राजकर्तृकत्वं सिद्धम् । एवं सत्येतयेति साङ्गेष्टेः परामर्शेन फले विधानादधिकारान्तरेऽपि राजकर्तृकेष्टिलाभ इति, तदपि न; उत्पन्नमात्रं हि कर्म फले विधेयं नाङ्गविशिष्टम्; अङ्गविशिष्टस्य फलसंबन्धेऽङ्गानां फलवदङ्गभावाभावप्रसङ्गात् । तस्मात्सूक्तं कृत्वाचिन्तेति । **ननु** भाष्यकारैरेकादशगतमधिकरणमुदाहृतं, टीकाकृता द्वितीयगतं, तत्र कोऽभिप्रायः ? तं वक्ष्यामः । तदर्थमेकादशाधिकरणमनुक्रम्यते । अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् । ( जै. ९ अ. ११ पा. ४ ) राजसूयेऽवेष्टिराम्नायते—"आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणे"ति । तत्राग्नेयादिहविःष्वङ्गानां तन्त्रेण प्रयोग उतावृत्त्येति संशयः । तत्र बार्हस्पत्यं मध्ये निधायेति लिङ्गदर्शनात् प्रयोगभेदे च मध्ये निधानासंभवादेतयाऽन्नाद्यकाममित्येकवचनाच्चैकतन्त्र्यमेकस्मिन् प्रयोगेऽङ्गानां तन्त्रेण भावः सकृदनुष्ठानमिति पूर्वपक्षं कृत्वा राद्धान्तितम्—अन्नाद्यकामप्रयोगेऽवेष्टिरिदं, लिङ्गदर्शनादिति न क्रत्वर्थप्रयोगे, तस्य तु दक्षिणाभेदाद्भेद इत्यङ्गावृत्तिरेव । तत्र क्रत्वर्थायामवेष्टौ इदं लिङ्गदर्शनादिकमित्याशङ्कानिरासार्थं क्रत्वर्थायामिति चेदिति सूत्रम् । काम्यायां "यदि ब्राह्मण" इत्यादिना वर्णमात्रसंयोगात्, तस्यांच मध्यनिधानादिप्रतीतेर्न राजमात्रकर्तृकक्रत्वर्थेष्टौ तत्प्राप्ति-

## कल्पतरुपरिमलः ।

वस्थापनद्वारा सूचितः । **तद्व्यावर्तकत्वे वाक्यभेदप्रसङ्गादिति** । विशिष्टोद्देशप्रयुक्तवाक्यभेदप्रसङ्गादित्यर्थः । **ननु**—राजपदस्य कर्तृसमर्पकत्वेऽपि वाक्यभेदस्तुल्यः; उत्पत्तिवाक्यविहितान् यागाननूद्यैकेन फलसंबन्धस्य कर्तृसंबन्धस्य च विधानायोगादिति—**चेत्**; स्यादेवं वाक्यभेदः, यदि कर्तृवत्फलमपि विधेयं स्यात्, न त्वेवम्; तस्य कालवदनुपादेयत्वात् । अतः फलमनूद्य यागा विधेया इति तदङ्गाख्यातोपात्तसंख्यावच्छेद्यकर्तृविशेषरूपतया राजैव विशिष्टविधिना विधेयो न फलमिति न वाक्यभेदप्रसङ्गः । **नह्यधिकारवाक्यान्तरगतमिति** । तटस्थवाक्यविहितमङ्गम् अवेष्टिप्रयोगद्वयसाधारणं स्याद्, राजा तु स्वाराज्याधिकारवाक्यश्रुत इति स्वाराज्यफलार्थायामेवावेष्टावङ्गं स्याद्, न त्वन्नाद्यफलार्थायामपीत्यर्थः । तथाप्येतयेति प्रकृतपरामर्शि सर्वनामपदं यावद्विशिष्टावेष्टिः प्रकृता, तावद्विशिष्टां तां परामृशेद्, अतोऽधिकारान्तरेऽपि स्वाराज्यकामकर्तृका स्यादिति मन्दशङ्कामुद्भाव्य निराकरोति—**यद्युच्येतेति । मध्ये निधानासंभवादिति** । मध्यदेशनिधानं हविषां यौगपद्ये एव संभवतीति भावः । **ननु** यत्रान्तरवेष्टौ सिद्धान्तिना तन्त्रभेदः समर्थनीयः, न तत्र लिङ्गदर्शनमेकवचनं चास्ति, यत्रास्ति बहिरवेष्टौ न तत्र तन्त्रभेदः सिषाधयिषित इति कथं लिङ्गदर्शनैकवचनाभ्यां पूर्वपक्षः ? **इत्यत**; उक्तहेतुभ्यां बहिरवेष्टौ तावदैकतन्त्र्यं निर्विवादम् । अतस्तत्र दक्षिणाशब्दो दक्षिणावयवपर इति मिलितैव दक्षिणा वाच्या; अन्यथा तत्र तन्त्रभेदप्रसङ्गात् । तथाचान्तरवेष्टावपि स दक्षिणाशब्दो दक्षिणावयवपरः स्यादिति दक्षिणाभेदाभेदादैकतन्त्र्यमिति । कथं तर्हि सिद्धान्तः ? **इत्थम्**; वर्णत्रयसंयुक्तो बहिरवेष्टिप्रयोगस्तावद्राजमात्रकर्तृकादन्तरवेष्टिप्रयोगाद्भिन्नः । तथाच तत्रागत्या दक्षिणाशब्दो दक्षिणावयवलक्षको जात इति प्रयोगान्तरे दक्षिणावाक्यान्वयेऽपि स लक्षको वक्तव्य इत्यत्र न मानमस्ति; ऐन्द्रमन्त्रस्याभ्युपस्थाने लक्षकस्यैन्द्रेऽपि कर्मणि विनियोगवशात् प्रयुज्यमानस्यैव मुख्यार्थतोपपत्तेः । अतो दक्षिणाभेदादन्तरवेष्टौ तन्त्रभेद इति इत्थं पूर्वपक्षसिद्धान्तप्रकारः सूत्रकृता क्रत्वर्थायामिति चेदिति सूत्रेणोद्घाटितः । तत्र क्रत्वर्थत्वं क्रत्वन्तर्भावमात्रं विवक्षितमिति न प्राधान्यविरोधः । **न राजमात्रकर्तृकेति** । राजमात्रकर्तृकत्वेन वर्णत्रयसंयोगाभावादन्तरिष्टौ न मध्यनिधानादिप्राप्तिरित्यर्थः । ततश्चैकतन्त्र्यहेत्वभावेन दक्षिणाशब्दस्य दक्षि-

( ३० अधिकरणम् ) **एक आत्मनः शरीरे भावात् ॥ ५३ ॥**

**इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये, न ह्यसति देहव्यतिरिक्तात्मनि परलोकफलाश्चोदना उपपद्येरन्, कस्य वा ब्रह्मात्मत्वमुपदिश्येत ? ननु शास्त्रप्रमुख**

## भामती ।

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥** अधिकरणतात्पर्यमाह—**इहेति** । समर्थनप्रयोजनमाह—**बन्धमोक्षेति** । असमर्थने बन्धमोक्षाधिकाराभावमाह—**न ह्यसतीति** । अधस्तनतन्त्रोक्तेन पौनरुक्त्यं चोदयति—**नन्विति** ।

## वेदान्तकल्पतरुः ।

रित्यर्थः । तत्र वर्णसंयोगादिहेतोः क्रत्वर्थेष्टावपि गतत्वेन विरुद्धत्वमाशङ्क्य तत्परिहारार्थं द्वितीयाधिकरणानुक्रमणमिति । एकप्रयोगत्वं लिङ्गस्य क्रत्वर्थेष्टावसंभवं काम्येष्टौ च संभवं वदता तेन सूत्रेण काम्येष्टेः क्रत्वर्थेष्टिवैलक्षण्यसूचनद्वारेणार्थात् प्रकरणोत्कर्षोऽपि गमित इति भाष्यकारस्यैतत्सूत्रोदाहरणं नासङ्गतम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

पुरुषायुषस्याहानि षट्त्रिंशत्सहस्राणि तैरवच्छिन्ना मनोवृत्तयः प्रत्यहोरात्रमेकैका भूत्वा षट्त्रिंशत्सहस्रा भवन्ति । ता एतावत्संख्याकेष्टका ममाऽग्नित्वेन सम्पाद्यन्ते षट्त्रिंशत् सहस्राणीत्यादिना मन एवात्मनः संबन्धिभूतानग्नीनर्च्यान्वर्ण्यत्वयेनार्च्यान्पूज्यानपश्यदित्यर्थः । मनसा चीयन्तइति मनश्चितः सुखादिप्रत्ययरूपाः । एवं वागादिवृत्तयो वागादिभिश्चीयमानत्वाद्वागादिचितः । प्राणशब्देन घ्राणमुक्तमिन्द्रियाधिकारात् । कर्मशब्देन वागतिरिक्तकर्मेन्द्रियाणि । प्रतीन्द्रियवृत्त्यैकैकमग्निचयनं सम्पाद्यम् । अत एव भाष्यं पृथगग्नीनिति । **तेषामेवा**ग्नीनामेव **सा** कृतिः सङ्कल्पमात्रमित्यर्थः । ग्रहणासादनेत्यादि भाष्यम् ॥ तत्र **ग्रहणं** सोमस्य पात्रे उपादानम् । **आसादनं** स्थापनम् । हवनानन्तरं हुतशेषोपादान**माहरणम्** । पश्चादृत्विजां भक्षणार्थमन्योन्यमनुज्ञाकरण**मुपह्वानम्** । ते अग्नयो मनसैव **आधीयन्त** आहिताः । **अचीयन्त** चिताः । एष्वग्निषु ग्रहा **अगृह्यन्त गृहीताः** । **अस्तुवत** स्तोत्रंकृतवन्त उद्गातारः । **अशंसन्** शंसनं कृतवन्तो होतारः । किं बहुना ? यत्किंचिद्यज्ञे कर्म क्रियते ? आरादुपकारकं यच्च यज्ञीयं यज्ञनिष्पत्त्यर्थत्वेन यज्ञार्हं संनिपत्योपकारकमित्यर्थः । तन्मनसैवाक्रियत कृतमित्यर्थः । योऽग्निश्चितः सोऽयमेव लोक इति चितेऽग्नौ पृथिवीदृष्टिर्विधीयते ॥ **इति एकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम्** ॥[1]

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥ प्रमाणलक्षणोपयोगितयेति** । "यज्ञायुधी यजमानः स्वर्गं लोकं

## कल्पतरुपरिमलः ।

णावयवे लक्षणाया अकल्पनीयतया दक्षिणाभेदात्तन्त्रभेद इति तात्पर्यम् । **विरुद्धत्वमाशङ्क्येति** । अत्र नित्यः शब्दः कृतकत्वादितिवत् पक्षे साध्यसाधकत्वेन निर्दिष्टस्य हेतोः साध्याभावसाधकत्वरूपं विरुद्धहेत्वाभासत्वं नोच्यते, अन्तरिष्टौ मध्यनिधानप्राप्त्यभावादिद्वारा तन्त्रभेदसाधकत्वेनाभिमतस्य वर्णत्रयसंयोगाभावस्यैकतन्त्र्यसाधकत्वाभावात्, किं तु बहिरिष्ट्यां य एकतन्त्र्यसाधकत्वेनाभिमतो वर्णत्रयसंयोगः, तस्यान्तरिष्टौ सत्त्वेन तस्य साध्याभावरूपैकतन्त्र्यासिद्ध्यापत्तिरूपं विरुद्धत्वमुच्यते ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

तेऽग्नयो मनसैवाधीयन्त । यद्यपि मनश्चिदादीनामग्न्याधानस्थण्डिलरूपेणोपास्यानामग्नीनामाधानं नास्ति, किं तु तेषु निधेयस्याहवनीयस्य; तथाप्यभेदोपचारादाहवनीयस्याधानं तेषामाधारत्वेनोपचरितम् । **एष्वग्निषु ग्रहा अगृह्यन्तेति** । एष्वग्निषु सत्स्वित्यर्थः । एवं ग्रहग्रहणोक्तेः यज्ञनिष्पत्त्यर्थं कृत्स्नस्य सन्निपत्योपकारकस्य मानसस्योक्तेश्च तन्निर्वर्त्यो मानसः क्रतुरपि विवक्षित इति द्रष्टव्यम् । न च—एवंसति मनश्चिदादीनां भाष्योक्तं स्वातन्त्र्यं विरुध्येतेति—शङ्कनीयम्; क्रियानुप्रवेशाभावमात्रस्य स्वातन्त्र्योक्त्या विवक्षितत्वात् । अथाप्यग्निमाधिकरणसंगतिभाष्ये मनश्चिदादीनां पुरुषार्थत्वमुक्तं कथमुपपादनीयमिति चेत्, इत्थम् इष्टकचितोऽग्निरुत्तरवेदिवत्केवलक्रत्वर्थो न भवति, किं तु पुरुषार्थोऽपि; पशुकामश्चिन्वीतेत्यपि श्रवणात्, अभागिप्रतिषेधवार्तिके तस्य वाक्यस्योदाहृतत्वात् । तथाच तेषामेकैक एव तावान् यावानसौ पूर्व इति विद्यामयाग्निषु क्रियामयाग्निकार्यातिदेशस्याग्निधारणरूपतत्कार्यविषयत्वस्यासंभवात् पशुरूपफलविषयतैव सिद्ध्यति क्रियामयाग्निर्यावत् पशुसाधकस्तावत्पशुसाधक एकोऽग्निरिति यावत्तावच्छब्दाजस्याच्च । ग्रहणादिभिः सन्निपत्योपकारकैः स्तोत्रशस्त्रा-

---

1. **तत्र सूत्राणि ९**—लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ४४ पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ४५ अतिदेशाच्च ४६ विद्यैव तु निर्धारणात् ४७ दर्शनाच्च ४८ श्रुत्यादिबलीयस्त्वाच्च न बाधः ४९ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ५० न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ५१ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ५२ ॥

एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम् । सत्यमुक्तं भाष्यकृता, न तु तत्रात्मास्तित्वे सूत्रमस्ति, इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम् । अत एव चाकृष्याऽऽचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अतएव च भगवतोपवर्षेण प्रथमे तन्त्र आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः । इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय । अपिच पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम्, कोऽसौ पुरुषः ? यदर्था एते मनश्चिदादय इत्यस्यां प्रसक्ताविदं देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुच्यते । तदस्तित्वाक्षेपार्थं चेदमादिमं सूत्रम् । आक्षेपपूर्विका हि परिहारोक्तिर्विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयति । अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्त-

---

भामती ।

परिहरति—**उक्तं भाष्यकृतेति** । न सूत्रकारेण तत्रोक्तं येन भवेदपि तु भाष्यकृतेत्यत्रत्यस्यैवार्थस्यापकर्षः प्रमाणलक्षणोपयोगितया तत्र कृत इति । यत इह सूत्रकृद्वक्ष्यत्यत एव भगवतोपवर्षेणोद्धारोऽपकर्षस्य कृतः । विचारस्यास्य पूर्वोत्तरतन्त्रशेषत्वमाह—**इह चेति** । पूर्वाधिकरणसंगतिमाह—**अपिचेति** । नन्वात्मास्तित्वोपपत्तय एवात्रोच्यन्तां, किं तदाक्षेपेणेत्यत आह—**आक्षेपपूर्विका हीति** । आक्षेपमाह—**अत्रैके देहमात्रात्मदर्शिन इति** । यद्यपि समस्तव्यस्तेषु पृथिव्यप्तेजोवायुषु न चैतन्यं दृष्टम्; तथापि कायाकारपरिणतेषु भविष्यति । नहि किण्वादयः समस्त-

वेदान्तकल्पतरुः ।

यातीति वाक्यस्य देहातिरिक्तात्माभावादप्रामाण्यप्राप्तौ तत्परिहारेण प्रथमाध्यायोपयोगितयेत्यर्थः । अत एवेति भाष्यगतातःशब्दं पूरयति—**यत इहेति** । वक्ष्यतीति भविष्यत्प्रयोगः पूर्वकाण्डापेक्षः । इतः पूर्वकाण्डे नयनमपकर्षस्तस्योद्धारो निवृत्तिः कृतेत्यर्थः । मनश्चिदादीनां पुरुषार्थत्वमनुपपन्नं देहव्यतिरिक्तस्य तत्फलभोक्तुरभावादित्याक्षेपलक्षणा पूर्वाधिकरणसङ्गतिः । तामाहेत्याह—**पूर्वाधिकरणेति** । **ननु** न भूतानामेकैकस्य चैतन्यमुपलभ्यते; घटादेरदर्शनात्, नापि मिलितानां; वह्नितप्तेऽयसि दृतिवायुसमाध्माते सलिलकणाभ्युक्षिते भूतचतुष्टयमेलनेऽपि चैतन्यानुपलम्भात् । तत्र भूतसंघाते शरीरे कथं चैतन्यसंभावना ? अतः पूर्वपक्षाभाव इत्याशङ्क्याह—**यद्यपि समस्तेति** । देहो न चेतनः भूतत्वाद् घटवदित्यनुमानस्य च प्रत्यक्षबाधं वक्ष्यत्यहमिति **चानुभव इत्यादिना** । अतश्च बाधितविषये पक्षेतरस्याप्युपाधित्वाद्देहत्वमुपाधिरुन्नीयत इत्यर्थः । तथाविधोदाहरणेन प्रतिबन्दीलक्षणेन प्रतिकूलतर्कपराहतिं चानुमानस्य दर्शयति—**न हीति । किण्वं** नाम मदिरारम्भकद्रव्यविशेषः । यदि समस्तव्यस्तविकल्पेन देहस्य चैतन्यमपह्नूयेत, तर्हि मदिरायां मदकरणत्वमपह्नुतं स्यादित्यर्थः । **नन्वहमिति** प्रत्यक्षे देहाश्रित आत्मा भासतेऽतः कथं देहोऽचेतन इत्यनुमानस्य बाधस्त-

कल्पतरुपरिमलः ।

दिभिरारादुपकारकैश्च निर्वर्त्यो मानसक्रमस्तु तदाश्रयत्वेनोपयुज्यते । क्रियामयाग्निवद्विद्यामयाग्न्योऽपि क्रत्वाश्रिता एव । पशुफलसाधनानीत्येतन्मानफलकत्वक्लोपदेशसामर्थ्यात् ज्ञायते । नहि मानसानि ग्रहणादीनि विद्यामयाग्न्यङ्गानि; तेषां तन्निर्वर्तकत्वाभावात् । नापि फलान्तरार्थानि; तेषां फलान्तरोपदेशाभावात् । नच—सार्वत्रिकत्वं सर्वभूतकर्तृकत्वं विद्यामयाग्निचयनम् विदुषः स्वापकालेऽप्यनुवर्तमानं कथं तदीयविद्यामयक्रत्वाश्रितं स्याद् ? बहिःप्रयोगवर्तित्वादिति—शङ्कनीयम्; सर्वाधिकसर्वभूतकर्तृकमपि विद्यामयाग्निचयनमिदानीं मदनुष्ठीयमानक्रत्वाश्रितमिति भावनया तदाश्रितत्वोपपत्तेः । न हि भावनामात्रसाध्यं किं नाम साधयितुमशक्यम् । तस्मात्पशुफलार्थतया पुरुषार्थत्वोक्तिरप्युपपद्यत इति न किंचिदवद्यम् ॥ **इति एकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम् ॥**

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥ यज्ञायुधीति** । पैतृमेधिके कर्मणि यजमानशरीरे यज्ञपात्राणां सादनं विधाय पठ्यते "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती"ति । स्फ्यादीनि यज्ञसाधनानि यज्ञायुधानि "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं चे"त्याद्यनुक्रम्य "एतानि वै दश यज्ञायुधानी"ति श्रवणात्तत्सादनेन तद्वान् यजमानः स एष इति निर्दिष्टः प्रत्यक्षदृश्यो देह एव; तस्य तदानीमेव दहनेन भस्मीभवतः स्वर्गगमनं प्रत्यक्षविरुद्धम् । नच देहातिरिक्त आत्मा देहाभेदोपचारात् "स एष" इति निर्दिष्ट इति वक्तुं शक्यम्; देहातिरिक्तात्मनि प्रमाणाभावात् । अतस्तद्वाक्यं न प्रमाणमिति प्राप्तौ तत्परिहारायात्रत्य एवार्थो भाष्यकृता तत्रापकृष्य वर्णित इत्यर्थः । **अयमर्थो भट्टपादैरप्युक्तः**—इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन ॥ इति । यद्यपीत्यादिग्रन्थस्य घटादिदृष्टान्तेन देहाचैतन्यानुमानप्रदर्शने तथापीत्यादिग्रन्थस्य तत्र बाधोन्नीतपक्षेतरोपाध्युद्भावने च तात्पर्यं दर्शयति—**देहो न चेतन इति । तथाविधेति** । यदि घटदृष्टान्तोऽस्ती-

स्यात्मनोऽभावं मन्यमानः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति संभावयन्तस्तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं चैतन्यविशिष्टः कायः पुरुष इति चाहुः। न स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्मास्ति, यत्कृतं चैतन्यं देहे स्यात्, देह एव तु चेतनश्चात्मा चेति प्रतिजानते। हेतुं चाचक्षते शरीरे भावादिति। यद्धि यस्मिन्सति भवत्यसति च न भवति तत्तद्धर्मत्वेनाध्यवसीयते यथाऽग्निधर्मावौष्ण्यप्रकाशौ। प्राणचेष्टाचैतन्यस्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनां तेऽप्यन्तरेव देह उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्मादव्यतिरेको देहादात्मन इति॥ ५३॥ एवं प्राप्ते ब्रूमः—

---

## भामती।

व्यस्ता न मदना दृष्टा इति मदिराकारपरिणता न मदयन्ति। अहमिति चानुभवे देह एव गौराद्याकारः प्रथते, न तु तदतिरिक्तः तदधिष्ठानः कुण्ड इव दधीति। अत एवाहं स्थूलो गच्छामीत्यादिसामानाधिकरण्योपपत्तिरहमः स्थूलादिभिः। न जातु दधिसमानाधिकरणानि मधुरादीनि कुण्डस्यैकाधिकरण्यमनुभवन्ति सितं मधुरं कुण्डमिति। न चाप्रत्यक्षमात्मतत्त्वमनुमानादिभिः शक्यमुन्नेतुम्। न खल्वप्रत्यक्षं प्रमाणमस्ति। उक्तं हि—'देशकालादिरूपाणां भेदाद्भिन्नासु शक्तिषु। भावानामनुमानेन प्रसिद्धिरतिदुर्लभा' इति। यदा च उपलब्धिसाध्यनान्तरीयकभावस्य लिङ्गस्येयं गतिस्तदा कैव कथा दृष्टव्यभिचारस्य शब्दस्यार्थापत्तेश्चात्यन्तपरोक्षार्थगोचराया उपमानस्य च सर्वैकदेशसादृश्यविकल्पितस्य। सर्वसारूप्ये तत्त्वात्। एकदेशसारूप्ये चातिप्रसङ्गात्सर्वस्य सर्वेणोपमानात्। सौत्रस्तु हेतुर्भाष्यकृता व्याख्यातः। चेष्टा हिताहितप्राप्तिपरिहारार्थो व्यापारः। स च शरीराधीनतया दृश्यमानः शरीरधर्मः, एवं

## वेदान्तकल्पतरुः।

त्राह—**न त्विति**। स देहोऽधिष्ठानमाश्रयो यस्य स तदधिष्ठानः कुण्ड इव दधीति वैधर्म्यदृष्टान्तः। यथा कुण्डे दध्याश्रितं तदतिरिक्तं प्रतीयते, नैवमात्मा देहाश्रितोऽहमिति प्रतीयतइत्यर्थः। अत्र हेतुमाह—**अत एवेति**। यत एव देहातिरिक्त आत्माऽहमनुभवे न प्रतीयते अत एवाहमस्य देहधर्मैः स्थौल्यादिभिरहं स्थूलो गच्छामीत्यादिरूपेण सामानाधिकरण्योपपत्तिः। न ह्याश्रितस्य वस्तुन आश्रयधर्मैस्तादात्म्यं संभवति। तस्माद्देहधर्मैस्तादात्म्यानुभवादहंप्रत्ययविषयस्यात्मनो देह एवात्मेत्यर्थः। यच्च देहव्यतिरिक्तात्मवादिनोच्यते देहाश्रितात्मगता एव ज्ञानादय आश्रयभूततत्तद्देहतादात्म्येन प्रतीयन्तेऽहं पश्यामीत्यादिव्यवहारसमय इति, तदयुक्तमित्याह—**न जातु दधीति**। यथा दधिसमानाधिकरणानि दध्ना तादात्म्यप्रतीतियोग्यानि शैत्यादीनि दध्याश्रितकुण्डैकाधिकरण्यं तादात्म्यं नानुभवन्ति, एवमात्माश्रिता ज्ञानादयो न देहतादात्म्येन प्रतीयेरन्, यदि देह आत्मानं प्रत्याश्रयः। प्रतीयन्ते च। तस्मान्न देह आत्माश्रयः किं त्वात्मैवेत्यर्थः। अयमत्र प्रयोगः। ज्ञानं देहधर्मैस्तादात्म्येनोपलब्धत्वाद्देहरूपवदिति। एवं देहव्यतिरिक्तात्मानुमानस्य बाधमुपाधिं सत्प्रतिपक्षतां चोक्त्वा शङ्कितव्यभिचारत्वमाह—**न चाप्रत्यक्षमित्यादिना**। अप्रत्यक्षमात्मतत्त्वं प्रत्यक्षाविषय इत्यर्थः। **न खल्वप्रत्यक्षमिति**। प्रत्यक्षातिरिक्तमित्यर्थः। **देशकालादीति**। भावानामग्न्यादीनामनुमानेन धूमादिलिङ्गेन प्रसिद्धिरतिदुर्बला। कुतो देशकालावस्थादिस्वरूपाणां भेदेन वस्तुशक्तिषु भिन्नासु सतीषु व्याप्तिग्रहणदेशादावग्नेर्धूमजननशक्तिरासीदनुमानदेशादौ सा नास्तीति शङ्कयाऽग्नेर्धूमजनकत्वाभावस्यापि संभवेन धूमस्याग्निव्यभिचाराशङ्कोत्थानादित्यर्थः। मा भूदनुमानाद्देहातिरिक्तात्मसिद्धिरागमादिभ्यस्तु स्यादिति, नेत्याह—**यदा चेत्यादिना**। उपलब्ध्या साक्षात्काररूपया साध्यः प्रमेयो नान्तरीयकभावः। नान्तरेण व्यापकं लिङ्गं भवतीत्येवंभावो व्याप्यत्वं यस्य लिङ्गस्य तल्लिङ्गं तथोक्तं तस्य यदा इयं गतिर्व्यभिचारशङ्का, तदा कैव कथा तद्धीनस्येत्यर्थः। अङ्गुल्यग्रे हस्तियूथादौ शब्दस्य दृष्टव्यभिचारत्वम्, अर्थापत्तेः शक्त्याद्यत्यन्तपरोक्षार्थगोचरत्वेन दृष्टव्याप्तेर्लिङ्गाद्वैधर्म्यमुक्तम्। गोसदृशं गवयं दृष्ट्वा गौरनेन सदृशीत्युपमानं प्रवर्तते। तत्सर्वात्मना सादृश्ये प्रवर्ततैकदेशेन वा। **नाद्य** इत्याह—**सर्वसारूप्य इति**। तत्त्वात्तस्यैव तेन सर्वसारूप्याद्भेदे कस्यचिदपि वैसादृश्यस्य भावान्नोपमानसंभव इत्यर्थः। **न द्वितीय** इत्याह—**एकदेशेति**। सूत्रे प्रतिज्ञैव हेतुगर्भा। एके देहव्यतिरिक्तस्यात्मनोऽभावं मन्यन्त इत्युक्ते आत्मनि तदुपलम्भकप्रमाणाभावादभावप्रमाणस्यैवात्माभावसाधकत्वमित्यर्थादवगतेरिति स्वेन व्याख्यातम्। शरीरे भावादित्यपरो हेतुः स भाष्यकृद्भिर्व्याख्यात इत्याह—**सौत्रस्त्विति**। प्राणचेष्टेत्यादि भाष्यं सौत्रहेतुविवरणपरं, तत्र चेष्टेति क्रियामात्रं देहस्यात्मत्वसाधकं न भवति; घटादावपि तद्भावादित्याशङ्क्य व्याचष्टे—**हिताहितेति**। **अन्तःशरीराश्रया इति**। देहाभ्यन्तरप्रदेशस्य परिणामा इत्यर्थः। नन्वन्तःशरीरप्रदेशा-

## कल्पतरुपरिमलः।

त्येतावता देहो न चेतन इत्यनुमानं प्रवर्तेत, तदा जलादिदृष्टान्तेन मदिराया मदकरत्वाभावानुमानमपि स्यादित्येवमाभाससमानयोगक्षेमत्वरूपं प्रतिकूलतर्कमप्याहेत्यर्थः। **तस्माद्देहधर्मैरिति**। अहंप्रत्ययविषयस्यात्मनो देहधर्मैस्तादात्म्या-

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

न त्वेतदस्ति यदुक्तमव्यतिरेको देहादात्मन इति । व्यतिरेक एवास्य देहाद्भवितुमर्हति । तद्भावाभावित्वात् । यदि देहभावे भावाद्देहधर्मत्वमात्मधर्माणां मन्येत, ततो देहभावेऽप्य-

### भामती ।

प्राणः श्वासप्रश्वासादिरूपः शरीरधर्म एव । इच्छाप्रयत्नादयश्च यद्यप्यान्तराः; तथापि शरीरातिरिक्तस्य तदाश्रयानुपलब्धेः सति शरीरे भावात् अन्तःशरीराश्रया एव; अन्यथा दृष्टहानादृष्टकल्पनाप्रसङ्गात् । शरीरातिरिक्त आत्मनि प्रमाणाभावाच्छरीरे च संभवाच्छरीरमेवेच्छादिमदात्मेति प्राप्ते ॥ ५३ ॥ उच्यते नाप्रत्यक्षं प्रमाणमिति ब्रुवाणः प्रष्टव्यो जायते । कुतो भवाननुमानादीनामप्रामाण्यमवधारितवानिति ? प्रत्यक्षं हि लिङ्गादिरूपमात्रग्राहि नाप्रामाण्यमेषां विनिश्चेतुमर्हति । नहि धूमज्ञानमिवैषामिन्द्रियार्थसन्निकर्षादप्रामाण्यज्ञानमुदेतुमर्हति, किंतु देशकालावस्थारूपभेदेन व्यभिचारोत्प्रेक्षया, न चैतावान्प्रत्यक्षस्य व्यापारः संभवति । **यथाहुः**—नहीदमियतो व्यापारान्कर्तुं समर्थं संनिहितविषयबलेनोत्पत्तेरविचारकत्वादिति । तस्मादस्मिन्ननिच्छतापि प्रमाणान्तरमभ्युपेयम् । **अपिच** प्रतिपन्नं पुमांसमपहायाप्रतिपन्नसंदिग्धाः प्रेक्षावद्भिः प्रतिपाद्यन्ते । न चैषामित्थंभावो भवत्प्रत्यक्षगोचरः । न खल्वेते गौरत्वादिवत्प्रत्यक्षगोचराः, किंतु वचनचेष्टादिलिङ्गानुमेयाः । नच लिङ्गं प्रमाणम्, यत एते सिध्यन्ति । न पुंसामित्थंभावमविज्ञाय यं कंचन पुरुषं प्रतिपिपादयिषतोऽनवधेयवचनस्य प्रेक्षावत्ता नाम । **अपिच** पशवोऽपि हिताहितप्राप्तिपरिहारार्थिनः कोमलशष्पश्यामलायां भुवि प्रवर्तन्ते । परिहरन्ति चाश्यानतृणकण्टकाकीर्णाम् । नास्तिकस्तु पशोरपि पशुरिष्टानिष्टसाधनमविद्वान् । न खल्वस्मिन्ननुमानगोचरप्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं प्रभवति । नच परप्रत्यायनाय शब्दं प्रयुञ्जीत; शाब्दस्यार्थस्याप्रत्यक्षत्वात् । तदेव मा नाम भून्नास्तिकस्य जन्मान्तरमस्मिन्नेव जन्मन्युपस्थितोऽस्य मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो महान्नरकः । पराक्रान्तं चात्र सूरिभिः । अत्यन्तपरोक्षगोचराप्यन्यथानुपपद्यमानार्थप्रभवाऽर्थापत्तिः । भूयःसामान्ययोगेन चोपमानमुपपादितं प्रमाणलक्षणे । तदत्रास्तु तावत्प्रमाणान्तरम्, प्रत्यक्षमेवाहंप्रत्ययः शरीरातिरिक्तमालम्बत इत्यन्वयव्यतिरेकाभ्यामवधार्यते । योगव्याघ्रवत्स्वप्नदशायां च शरीरान्तरपरिग्रहाभिमानेऽप्यहंकारास्पदस्य प्रत्यभिज्ञायमानत्वमित्युक्तम् । सूत्रयोजनातु न

### वेदान्तकल्पतरुः ।

श्रितत्वमिच्छादीनामप्रत्यक्षमपि यथा कल्प्यते, एवमात्माश्रितत्वमपि कल्प्यतामत आह—**शरीरातिरिक्त आत्मनीति** । अत्यन्ताप्रमितात्माश्रितत्वकल्पनाद्वरं प्रमितदेहस्याभ्यन्तरप्रदेशे इच्छादयः सन्तीति कल्पनमित्यर्थः ॥ ५३ ॥ अनुमानादिप्रमाणानामसिद्धिमुक्तां तावत्परिहरति—**नाप्रत्यक्षमित्यादिना** । अनुमानादीनामप्रामाण्यं प्रत्यक्षेण वाऽवगम्यते अनुमानादिभिर्वा । **नाद्य** इत्याह—**प्रत्यक्षं हीति** । इदं प्रत्यक्षमियतो लिङ्गस्वरूपतद्व्यभिचारतदप्रामाण्यादिपरिच्छेदान् कर्तुं न समर्थमित्यर्थः । **द्वितीये** व्याघात इत्याह—**तस्मादिति** । प्रमाणान्तराभ्युपगमे तदप्रामाण्योक्तिर्व्याहतेत्यर्थः । व्याघातान्तरमाह—**अपि चेति** । **प्रतिपन्नः** संप्रतिपत्तिमान् पुमान् । तं विहायाप्रतिपत्तिविप्रतिपत्तिसंदेहवन्तः पुमांसः प्रेक्षावद्भिः प्रतिपाद्यन्ते व्युत्पाद्यन्त इत्यर्थः । इत्थंभावोऽप्रतिपत्तिमत्त्वादयः । एवं प्रतिज्ञाव्याघातं कथाप्रवृत्तिव्याघातं चोक्त्वा लोकयात्राविरोधमाह—**अपि च पशवोऽपीत्यादिना** । **शष्पं** बालतृणम् । **आश्यान**मीषत् शुष्कम् । इष्टानिष्टसाधनम् अविद्वान् पशोरपि पशुरित्यर्थः । अनुमानगोचरश्चासौ प्रवृत्तिगोचरश्चेष्टानिष्टसाधनत्वम् । तत्र प्रत्यक्षं न हि प्रभवतीति योजना । अयमोदनः क्षुन्निवर्तकः ओदनत्वात् प्राग्भुक्तौदनवदित्याद्यनुमानाद्धि इष्टाऽनिष्टसाधनत्वावगमः, ततः प्रवृत्तिरनिष्टसाधनत्वानुमानाच्च निवृत्तिरिति । एवं विपक्षे व्याघातदण्डमापाद्याऽनुमानप्रामाण्यं स्वीकारितम् । शब्दप्रामाण्यमपि तथैव स्वीकारयति—**न च परप्रत्यायनायेति** । मूकत्वं नास्तिकस्य शब्दप्रामाण्यानिष्टेरापन्नम् । प्रवृत्तिनिवृत्तिविरहोऽनुमानप्रामाण्यविरहादापन्न इति विभागः । यत्तूक्तमदृष्टव्याप्तिकाऽर्थापत्तिरत्यन्तपरोक्षार्थविषयत्वादप्रमाणमिति, तत्राह—**अत्यन्तेति** । यद्यपि न व्याप्तिदर्शनमस्ति, अर्थस्यात्यन्तपरोक्षत्वात्; तथाप्यन्यथानुपपद्यमानस्फोटादिकार्यरूपार्थजन्याऽर्थापत्तिः शक्त्यादिविषयोदेष्यतीति भावः । यच्च सर्वसादृश्यकिंचित्सादृश्याभ्यामुपमानदूषणमभाणि, तन्निराकरोति—**भूयःसामान्येति** । न सर्वात्मना सादृश्यज्ञानमुपमानसामग्री, नापि किंचिन्मात्रसादृश्यज्ञानम्, अपितु बहुतरसामान्ययोगज्ञानम् । तच्च गोगवयादेरेवेति नातिप्रसङ्ग इत्यर्थः । **प्रत्यक्षं** प्रत्यभिज्ञा, सा च जाग्रत्स्वप्नदेहयोर्योगव्याघ्रमनुष्यदेहयोश्च भेदेऽप्यभिद्यमानमहंप्रत्ययालम्बनं शरीराद्भिनत्तीत्यर्थः । **इत्युक्तं** प्रथमसूत्रे इत्यर्थः । एवमनुमानादिप्रामाण्यं सामान्यतः समर्थ्योभयसंमतप्रत्यक्षेण च देहव्यतिरेकमात्मन उक्त्वाऽनुमानादपि व्यतिरेकं सूत्रव्याख्यानेन दर्शयति—**सूत्रयोजना त्वित्यादिना** । इह हि सूत्रकारेणेदमुक्तम् । यस्य ज्ञानं धर्मः स तावदात्मा, देहस्य च न ज्ञानं धर्मः; देहभावेऽपि मृतावस्थायां ज्ञानाभावादिति । तदयुक्तम्;

**भावादतद्धर्मत्वमेवैषां किं न मन्येत ? देहधर्मवैलक्षण्यात् । ये हि देहधर्मा रूपादयस्ते याव-द्देहं भवन्ति । प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति । देहधर्माश्च रूपादयः**

## भामती ।

स्वव्यतिरिक्तः किंतु व्यतिरिक्त आत्मा देहात् । कुतः ? तद्भावाभावित्वात् । चैतन्यादिर्यदि शरीरगुणः ततोऽनेन विशेष-गुणेन भवितव्यम्, न तु संख्यापरिमाणसंयोगादिवत्सामान्यगुणेन । तथाच ये भूतविशेषगुणास्ते यावद्भूतभाविनो दृष्टा यथा रूपादयः । नह्यस्ति संभवः भूतं च रूपादिरहितं चेति । तस्माद्भूतविशेषगुणरूपादिवैधर्म्यान्न चैतन्यं शरीरगुणः । एतेनेच्छादीनां शरीरविशेषगुणत्वं प्रत्युक्तम् । एवं प्राणचेष्टादयो यद्यपि देहधर्मा एव; तथापि न देह-मात्रप्रभवाः, मृतावस्थायामपि प्रसङ्गात् । तस्माद्यस्यैते अधिष्ठानाद्देहधर्मा भवन्ति स देहातिरिक्त आत्मा । अदृष्ट-कारणत्वेऽभ्युपगम्यमाने तस्यापि देहाश्रयत्वानुपपत्तेरात्मैवाभ्युपेतव्य इति । वैधर्म्यान्तरमाह—**देहधर्माश्चेति ।** स्वपरप्रत्यक्षा हि देहधर्मा दृष्टा यथा रूपादयः । इच्छादयस्तु स्वप्रत्यक्षा एवेति देहधर्मवैधर्म्यं । तस्मादपि देहातिरि-

## वेदान्तकल्पतरुः ।

अयावद्देहभाविनोऽपि संयोगादेर्देहधर्मत्वेनानेकान्तादत आह—**चैतन्यादिरिति ।** चैतन्यं हि स्वाश्रयस्याष्टद्रव्येभ्यो व्या-वर्तकसामान्यवत्त्वाद्विशेषगुणः । इदं च लक्षणं तर्कपादोक्तयुक्तिनिष्पीडनासहमपि देहात्मप्रत्ययवद्व्यवहाराङ्गत्वादभ्युपेयते । अस्तु विशेषगुणश्चैतन्यं, ततः किं जातमत आह—**तथा चेति ।** यदा नित्यस्यात्मनश्चैतन्यमनित्यविशेषगुणस्तदा-ऽनैकान्तिकत्वमाशङ्क्य भूतविशेषगुण इत्युक्तम् । सिद्धान्तेऽप्यन्तःकरणवृत्तिप्रतिबिम्बितचैतन्यस्य प्रतिबिम्बभूतात्मन्यध्यस्त-त्वेन तदाश्रितत्वाद् विशेषगुणत्वव्यवहारे न काचित् क्षतिः । शब्दस्य च स्थायित्वाद्यावदाकाशभावित्वमिष्यत एवेति न तेनापि व्यभिचार इति । **तदयं प्रयोगः**—ज्ञानं, न देहविशेषगुणः, अयावद्देहभावित्वाद् घटवदिति । **नन्वेवमपि** प्राण-चेष्टादीनां विशेषगुणत्वाभावेनायावद्देहभाविनामपि देहधर्मत्वसंभवात्कथं देहव्यतिरिक्तात्मगमकत्वमत आह—**एवमिति ।** प्राणादयो नास्य समवायित्वेनात्मानं कल्पयन्ति, किं तु निमित्तत्वेनेत्यर्थः । **तस्यापि देहाश्रयत्वानुपपत्तेरिति ।** अदृष्टमपि हि विशेषगुणः, तच्चेद्देहस्य, तर्हि भूतविशेषगुणत्वाद्यावदाश्रयमनुवर्तेतेति मृतावस्थायामपि भावान्न प्राणाद्य-भावोपपादकं स्यादित्यर्थः । विमताः, न देवदत्तदेहविशेषगुणाः, गुणत्वे सति देवदत्तेतरप्रत्यक्षत्वरहितत्वाद्, घटवदित्य-नुमानमाह—**स्वपरप्रत्यक्षा हीति ।** यद्यपि घटादयः परप्रत्यक्षाः; तथापि गुणत्वे सति न परप्रत्यक्षाः । तेषां गुणत्वाभावाद्विशेषणाभावेऽपि विशिष्टाभावादिति न साधनविकलता । देहगतगुरुत्वादौ पराप्रत्यक्षेऽनैकान्तिकत्वपरिहा-रार्थं प्रतिज्ञायां विशेषग्रहणम् । यथाश्रुतस्तु ग्रन्थो न घटत एव; इच्छादयो न देहविशेषगुणाः स्वपराप्रत्यक्षत्वादित्युक्ते इच्छाद्यतिरिक्तस्वपराप्रत्यक्षपदार्थस्य परेषामसिद्धत्वेन दृष्टान्ताभावाद्, वैधर्म्यमात्रस्य च व्याप्तिरहितस्यासाधकत्वादिति ।

## कल्पतरुपरिमलः ।

नुभवादिति योजना । **यदा नित्यस्यात्मनश्चैतन्यमनित्यगुणविशेष इति ।** यद्यात्मा क्षणिकत्वादिरूपेणानित्यः स्याद्, यदि वा चैतन्यं शब्दवत्कादाचित्काभिव्यक्तिमत्त्वेन नित्यं स्यात्तदा नानैकान्त्यमित्याशङ्क्यात्मनि नित्यत्वं विशेषगुणे चानित्यत्वं विशेषणमुक्तम् । **ज्ञानं न देहविशेषगुण इति ।** नच सामान्यगुणत्वसिद्ध्याऽर्थान्तरम्; अष्टद्रव्यव्यावर्तकस्य तस्य विशेषगुणत्वनियमेन सामान्यगुणत्वासंभवस्योक्तत्वादिति भावः । **किं तु निमित्तत्वेनेति ।** तथा च जीवमृताव-स्थयोर्यदसद्भावसद्भावाभ्यां प्राणचेष्टादितदभावौ, स देहाधिष्ठाताऽऽत्मैव सिध्येदिति भावः । **नन्वदृष्टसद्भावासद्भावाभ्यां** जीवमृतावस्थयोः प्राणचेष्टाभावौ स्याताम्, अतो निमित्तत्वेनात्मा न कल्पनीय इत्याशङ्कानिराकरणार्थं तस्यापीति टीकाग्र-न्थमुपादाय व्याचष्टे—**अदृष्टमपि विशेषगुण इति । गुणत्वे सतीति ।** गुणत्वविशिष्टं यद्देवदत्तेतरप्रत्यक्षविषयत्वं तद्रहितत्वादित्यर्थः । **देहगतगुरुत्वादाविति ।** तत्र विशेष्याभावेन विशिष्टाभावरूपहेतुसत्त्वादनैकान्त्यपरिहाराय तत्रापि साध्यं संपादयितुं विशेषग्रहणमित्यर्थः । **इच्छाद्यतिरिक्तेति ।** देवदत्तस्य स्वकीयेच्छादिषु न परप्रत्यक्षं, परकीये-च्छादिषु न स्वप्रत्यक्षमित्येवमिच्छादिमात्र एव चार्वाकाणां स्वपरप्रत्यक्षाभावप्रसिद्धिः, नान्यत्रान्यस्य स्वमात्रप्रत्यक्षस्य पर-मात्रप्रत्यक्षस्य चाभावाद् उभयोरप्यप्रत्यक्षस्यातीन्द्रियस्य तन्मते अभावाच्चेति भावः । **दृष्टान्ताभावादिति । ननु—** अस्ति व्यतिरेकदृष्टान्तः ये देहधर्मास्ते स्वरूपप्रत्यक्षा इति हि देहरूपादिषु दृश्यते, टीकायामपि व्यतिरेकदृष्टान्तो दर्शितः; हेतौ परग्रहणेनान्वयदृष्टान्तसद्भावोऽपि सूचितः । तेन हीच्छादिमात्रं न पक्षः, किंतु कस्यचिदेवेच्छादय इति दर्शितम् । अन्यथा सर्वस्यापीच्छाश्रयस्य सत्त्वेन परशब्दार्थत्वाभावात् । एवंच देवदत्तस्येच्छादयो न देवदत्तदेहविशेषगुणाः देवदत्ततदितरप्रत्यक्षत्वाभावाद् इतरेच्छादिवदिति टीकोक्तहेतुके अनुमाने न काचिदनुपपत्तिरिति—**चेत्, सत्यम्;** एवमपि साध्यं विशेषणीयमासीदिति यथाश्रुतग्रन्थो न घटत इत्याचार्योक्तिर्युक्तैव । **इयांस्तु विशेषः**—आचार्योपन्यस्ते हेतौ टीकोक्तस्वविशेषणमपहाय गुणत्वविशेषणं कृतम् । उभयमपि तत्तदभिमतान्वयदृष्टान्ते साधनवैकल्यपरिहारार्थमित्यत्र

परैरप्युपलभ्यन्ते, न त्वात्मधर्माश्चैतन्यस्मृत्यादयः । अपिच सति हि तावद्देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुं न त्वसत्यभावः । पतितेऽपि कदाचिदस्मिन्देहे देहान्तरसंचारेणात्मधर्मा अनुवर्तेरन् । संशयमात्रेणापि परपक्षः प्रतिषिध्यते । किमात्मकं च पुनरिदं चैतन्यं मन्यते ? यस्य भूतेभ्य उत्पत्तिमिच्छतीति परः पर्यनुयोक्तव्यः । नहि भूतचतुष्टयव्यतिरेकेण लोकायतिकः किंचित्तत्त्वं प्रत्येति । यदनुभवनं भूतभौतिकानां तच्चैतन्यमिति चेत्, तर्हि विषयत्वात्तेषां न तद्धर्मत्वमश्नुवीत; स्वात्मनि क्रियाविरोधात् । न ह्यग्निरुष्णः सन्स्वात्मानं दहति । नहि नटः शिक्षितः सन्स्वस्कन्धमधिरोक्ष्यति । नहि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन् । नहि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते । विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन । अतश्च यथैवास्या भूतभौतिकविषयाया

---

## भामती ।

क्तधर्मा इति । तत्र यद्यपि चैतन्यमपि भूतविशेषगुणः; तथापि यावद्भूतमनुवर्तेत । नच मदशक्त्या व्यभिचारः; सामर्थ्यस्य सामान्यगुणत्वात् । **अपिच** मदशक्तिः प्रतिमदिरावयवं मात्रयाऽवतिष्ठते तद्वद्देहेऽपि चैतन्यं तदवयवेष्वपि मात्रया भवेत् । तथा चैकस्मिन्देहे बहवश्चेतयेरन् । नच बहूनां चेतनानामन्योन्याभिप्रायानुविधानसंभव इति एकपाशनिबद्धा इव बहवो विहङ्गमाः विरुद्धादिक्रियाभिमुखाः समर्था अपि न हस्तमात्रमपि देशमतिपतितुमुत्सहन्ते । एवं शरीरमपि न किंचित्कर्तुमुत्सहते । **अपिच** नान्वयमात्रात्तद्धर्मधर्मिभावः शक्यो विनिश्चेतुं, मा भूदाकाशस्य सर्वो धर्मः सर्वेष्वन्वयात्, अपि त्वन्वयव्यतिरेकाभ्याम् । संदिग्धश्चात्र व्यतिरेकः । तथाच न साधकत्वमन्वयमात्रस्येत्याह—**अपिच सति हि तावदिति** । दूषणान्तरं विवक्षुराक्षिपति—**किमात्मकं चेति** । स एवैकग्रन्थेनाह—**नहीति** । नास्तिक आह—**यदनुभवनमिति** । यथा हि भूतपरिणामभेदो रूपादिर्न तु भूतचतुष्टयादर्थान्तरमेवं भूतपरिणामभेद एव चैतन्यं न तु भूतेभ्योऽर्थान्तरं, येन 'पृथिव्यापस्तेजो वायुरिति तत्त्वानि' इति प्रतिज्ञाव्याघातः स्यादित्यर्थः । **एतदुक्तं भवति**—चतुर्णामेव भूतानां समस्तं जगत्परिणामो, न त्वस्ति तत्त्वान्तरं, यस्य परिणामो रूपादयोऽन्यद्वा परिणामान्तरमिति । अत्रोक्ताभिस्तावदुपपत्तिभिर्देहधर्मत्वं निरस्तम्; तथाप्युपपत्त्यन्तराभिधित्सयाऽऽह—**चेत्तर्हीति** । भूतधर्मा रूपादयो जडत्वाद्विषया एव दृष्टा न तु विषयिणः । नच—केषांचिद्विषयाणामपि विषयित्वं भविष्यतीति—वाच्यम्; स्वात्मनि वृत्तिविरोधात्, न चोपलब्धावेष प्रसङ्गः; तस्या अजडायाः स्वयंप्रकाशत्वाभ्युपगमात् । कृतोपपादनं चैतत्पुरस्तात् । उपलब्धिवदिति सूत्रावयवं योजयति—**यथैवास्या इति** । उपलब्धिग्राहिण एव प्रमाणाच्छरीरव्यतिरेकोऽप्यवगम्यते; तस्यास्ततः स्वयंप्रकाशप्रत्ययेन भूतधर्मेभ्यो जडेभ्यो वैलक्षण्येन

## वेदान्तकल्पतरुः ।

यदुक्तं पूर्वपक्षिणा भूतेष्वयावद्भूतभाव्यपि चैतन्यं देहाकारपरिणतेषु स्यान्मदशक्तिवदिति, तदपि न सिध्यति; चैतन्यस्य भूतविशेषगुणत्वेन यावद्देहभावित्वानुमानवद्यावद्भूतभावित्वानुमानाद्, मदशक्तेश्च विशेषगुणत्वाभावेन दृष्टान्तवैधर्म्यादित्याह—**तत्र यद्यपीति** । पराप्रत्यक्षत्वेन हि चैतन्यस्य भूतविशेषगुणत्वमनन्तरमेव प्रतिषिद्धं, तदभ्युपेत्याप्ययं वाद इति सूचनार्थं यद्यपीत्युक्तम् । मदशक्तेः किण्वादिषु अयावदाश्रयभावित्वमभ्युपेत्य दृष्टान्तवैषम्यमुक्तम् । इदानीं मदशक्तिवच्चैतन्यस्य परिणामधर्मत्वमभ्युपेत्याप्याह—**अपि च मदशक्तिरिति । मात्रया** एकदेशेन । यथा विहङ्गमा हस्तमात्रमपि देशमतिपतितुमतिक्रमितुं नोत्सहन्ते, एवं नानाचेतनाधिष्ठितं शरीरमपि नकिंचित्कर्तुमुत्सहेतेत्यर्थः । किमात्मकमिति भाष्ये प्रश्नो न क्रियते; देहधर्मत्वेन चैतन्यस्य तन्मते प्रसिद्धत्वात्; नाप्याक्षेपः; देहधर्मत्वनिरासेन तस्यापि जातत्वादत आह—**दूषणान्तरमिति** । पूर्वं हि देहभावेऽप्यभावान्न देहधर्मश्चैतन्यमित्युक्तम्, इदानीं देहधर्मस्य रूपादिवद्देहसाक्षित्वायोगाच्चैतन्यात्मकत्वमेवानुपपन्नमिति दूषणान्तरमभिधातुं प्रथमं तावल्लौकायतिकस्य भूतचतुष्टयातिरिक्तं चैतन्यं नास्तीत्याक्षेपः क्रियत इत्यर्थः । **स एवेति** । आक्षेप्तेत्यर्थः । देवदत्तचैतन्यं, न देवदत्तदेहधर्मः, तद्ग्राहकत्वाद् यज्ञदत्तचैतन्यवदित्यनुमानम् । कालातीतत्वं च देहधर्मग्राहिणोऽनुमानस्याह—**उपलब्धिग्राहिण एवेति** । उपलब्धेरात्मत्वसिद्ध्यर्थं

## कल्पतरुपरिमलः ।

न विशेषः । **अयावद्भूतेति** । यावन्ति भूतानि तावत्स्वसदपीत्यर्थः, नतु यावत्स्वाश्रयभूतकालवर्त्यपीत्यर्थः; अनुक्तानुभाषणापातात्, **यद्यपि समस्तव्यस्तेष्वि**त्यादिपूर्वपक्षटीकाग्रन्थे भूतव्यक्त्यन्तरेषु चैतन्यासत्त्वस्यैवोक्तत्वाद्, इहापि **देहाकारपरिणतेषु स्यादि**त्याचार्योक्त्या मदशक्तेर्मदिरावयवेष्वसत्त्वमङ्गीकृत्य मदशक्तिदृष्टान्तवैषम्यप्रदर्शकेन अपि च मदशक्तिरित्याद्यग्रिमटीकाग्रन्थेन च भूतव्यक्त्यन्तरेष्वसदपीत्यर्थस्य स्फुटीकरणाच्च । **यावद्देहभावित्वानुमा-**

**उपलब्धेर्भावोऽभ्युपगम्यते, एवं व्यतिरेकोऽप्यस्यास्तेभ्योऽभ्युपगन्तव्यः। उपलब्धिस्वरूप एव च न आत्मेत्यात्मनो देहव्यतिरिक्तत्वम्। नित्यत्वं चोपलब्धेरैकरूप्यात्। अहमिदमद्राक्षमिति चावस्थान्तरयोगेऽप्युपलब्धृत्वेन प्रत्यभिज्ञानात्। स्मृत्याद्युपपत्तेश्च। यत्तूक्तं शरीरे भावाच्छरीरधर्म उपलब्धिरिति, तद्वर्णितेन प्रकारेण प्रत्युक्तम्। अपिच सत्सु प्रदीपादिषूपकरणेषूपलब्धिर्भवत्यसत्सु न भवति। न चैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति। एवं सति देह उपलब्धिर्भवत्यसति च न भवतीति न देहधर्मो भवितुमर्हति; उपकरणत्वमात्रेणापि प्रदीपादिवद्देहोपयोगोपपत्तेः। नचात्यन्तं देहस्योपलब्धावुपयोगोऽपि दृश्यते; निश्चेष्टेऽप्यस्मिन्देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम्॥ ५४॥**

**इति त्रिंशमैकात्म्याधिकरणम्॥**

---

## भामती।

व्यतिरेकनिश्चयात्। अस्तु तर्हि व्यतिरेकादुपलब्धिर्भूतेभ्यः स्वतन्त्रा, तथाप्यात्मनि प्रमाणाभाव इत्यत आह—**उपलब्धिस्वरूप एव च न आत्मेति।** आजानतस्तावदुपलब्धिभेदो नानुभूयत इति विषयभेदादभ्युपेयः। नचोपलब्धिव्यतिरेकिणां विषयाणां प्रथा संभवतीत्युपपादितम्। नच विषयभेदग्राहि प्रमाणमस्तीति चोपपादितं ब्रह्मतत्त्वसमीक्षायामस्माभिः। एवंच सति विषयरूपतद्भेदावेव सुदुर्लभाविति दूरनिरस्ता विषयभेदादुपलब्धिभेदसंकथा तेनोपलब्धेरुपलब्धृत्वमपि न तात्त्विकम्, किंत्वविद्याकल्पितम्। तत्राविद्यादशायामप्युपलब्धेरभेद इत्याह—**अहमिदमद्राक्षमिति चेति।** न केवलं तात्त्विकाभेदान्नित्यत्वमतात्त्विकादपि नित्यत्वमेवेति तस्यार्थः। **स्मृत्याद्युपपत्तेश्च।** नानात्वे हि नाऽन्येनोपलब्धेऽन्यस्य पुरुषस्य स्मृतिरुपपद्यत इत्यर्थः। निराकृतमप्यर्थं निराकरणान्तरायानुभाषते—**यत्तूक्तमिति।** यो हि देहव्यापारादुपलब्धिरुत्पद्यते तेन देहधर्म इति मन्यते, तं प्रतीदं दूषणम्—**न चात्यन्तं देहस्येति।** प्रकृतमुपसंहरति—**तस्मादनवद्यमिति॥ ५४॥ इति त्रिंशमैकात्म्याधिकरणम्॥**

## वेन्दान्तकल्पतरुः।

भेदो निराक्रियते। तत्रोपलब्धेर्भेदः स्वाभाविक औपाधिको वा। **नाद्य** इत्याह—**आजानत इति।** स्वभावत इत्यर्थः। **न द्वितीय** इत्याह—**नचेति।** अध्यासभाष्ये ह्युपलब्धिव्यतिरेकेण विषयाणां प्रकाशो न संभवतीत्युक्तम्। ततश्च विषया एव न सन्ति, कैरुपाधिभिरुपलब्धिर्भिद्येतेत्यर्थः। विषयाणां परस्परभेदाभावादपि न तदुपाधिक उपलब्धिभेद इत्याह—**नच विषयभेदग्राहि प्रमाणमस्तीति।** उपलब्धिव्यतिरिक्तविषयस्य सद्भावे प्रमाणाभावाद्विषयस्वरूपं दुर्लभम्। विषयाणामन्योन्यभेदग्राहिप्रमाणाभावाद्भेदः सुदुर्लभ इत्यर्थः। **ब्रह्मतत्त्वसमीक्षायां** ब्रह्मसिद्धिटीकायाम्। प्रत्यक्षं वस्तुसत्तामेव बोधयति, न भेदं; वित्तेः क्रमवद्व्यापारायोगात्। नच मानान्तराद्भेदसिद्धिः, प्रतियोगिभेदसिद्ध्योः परस्पराश्रयत्वाद्, इत्याद्युक्तम्। **ननु** विषयाभावे उपलब्धेरुपलब्धृत्वमपि न स्यादित्याशङ्क्य उपलब्धेरिष्टप्रसङ्गतामाह—**तेनेति।** भाष्येऽहमद्राक्षमित्यहङ्कारावच्छिन्नाया उपलब्धेः प्रत्यभिज्ञैकत्वं समर्थ्यते, न शुद्धाया इत्याह—**तत्राविद्यादशायामिति। ननु** निश्चेष्टेऽपि देहे तस्मिन्सत्येव स्वप्ने उपलब्धिदर्शनादनुपयोगवर्णनं भाष्येऽनुपपन्नमित्याशङ्क्याह—**यो हीति।** तस्मादित्यनन्तरमुक्तार्थोपसंहारो न क्रियते, तस्याव्यापकत्वादित्याह—**प्रकृतमिति॥ ५४॥ इति त्रिंशमैकात्म्याधिकरणम्॥**[1]

## कल्पतरुपरिमलः।

**नवदिति।** यथा विशेषगुणत्वेन हेतुना चैतन्यस्य यावद्देहकालभावित्वानुमानं, तथा यावद्भूतवर्तित्वानुमानस्यापि प्रवृत्तेरित्यर्थः। **ननु** पूर्वं तथानुमानं नोपन्यस्तम्, इहापि यावद्भूतव्यक्तिभावित्वानुमानं यद्यपीत्यादिटीकाग्रन्थेन नोपन्यस्यते; अनुमानयोर्बाधितविषयत्वात्, किंतु पूर्वं चैतन्यं यदि देहविशेषगुणः स्याद्, यावद्देहकालवर्ती स्यादिति तर्क उपन्यस्तः। इहापि यदि देहविशेषगुणः स्याद् यावद्भूतव्यक्त्यनुवर्तेतेति तर्क उपन्यस्यते। यावद्भूतमनुवर्तेतेति हि टीकाग्रन्थः। तदनुसारेण यद्यपीत्यस्य यदीत्यर्थग्रहणमुचितम्। एवं च निराकृतं विशेषगुणत्वमभ्युपेत्य यद्यपीत्यादिटीकाग्रन्थप्रवृत्तिरिति तत्तात्पर्यकथनमप्ययुक्तम्। हेतुत्वे खलु सिद्ध्यपेक्षा, ननु यदि बहिर्न स्यादितिवदापादकत्वे। **सत्यम्;** यद्यपीत्यस्य स्वारस्यमनुरुध्याचार्यैः प्रौढ्या व्याख्यानान्तरमङ्गीकृतमित्यदोषः। (?) **मात्रयापि मदजनकत्वाऽदर्शनादिति।** यद्यपि चूर्णेऽपि योग्यतारूपं मदजनकत्वमस्त्येव, केवलं तु चूर्णं सहकारिवैकल्यान्मदं न जनयतीति वक्तुं शक्यम्; तथापि चूर्णं मदं न जनयति, किंतु चर्वणादिसाध्यस्ताम्बूलाख्यः पूगादित्रयपरिणामविशेषः। नचै-

---

[1] तत्र सूत्रे २—एक आत्मनः शरीरे भावात् ५३ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ५४॥

( ३१ अधिकरणम् ) **अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥**

समाप्ता प्रासङ्गिकी कथा, संप्रति तु प्रकृतामेवानुवर्तामहे—'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १।१।१) 'लोकेषु पञ्चविधं सामोपासीत' (छा० २।२।१) 'उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम्' 'इयमेव पृथिवी', 'अयं वाव लोकः एषोऽग्निश्चितः' इत्येवमाद्या य उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहितास्ते तत्तच्छाखागतेष्वेवोद्गीथादिषु भवेयुरथवा सर्वशाखागतेष्विति विशयः । प्रतिशाखं च स्वरादिभेदादुद्गीथादिभेदानुपादायमुपन्यासः । किं तावत्प्राप्तम् ? स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति । कुतः ? संनिधानात् । 'उद्गीथमुपासीत' ( छा० १।१।१ ) इति हि सामान्यविहितानां विशेषाकाङ्क्षायां संनिकृष्टेनैव स्वशाखागतेन विशेषेणाकाङ्क्षादिनिवृत्तेः । तदतिलङ्घनेन शाखान्तरविहितविशे-

भामती ।

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥** स्वरादिभेदात्प्रतिवेदमुद्गीथादयो भिद्यन्ते । तदनुबद्धास्तु प्रत्ययाः प्रतिशाखं विहिता भेदेन । तत्र संशयः—किं यस्मिन्वेदे यदुद्गीथादयो विहितास्तेषामेव तद्वेद' विहिताः प्रत्यया उतान्यवेदविहितानामप्युद्गीथादीनां ते प्रत्यया इति । किं तावत्प्राप्तम्; 'ओमित्यक्षरमुद्गीथमुपासीत-इत्युद्गीथश्रवणेनोद्गीथसामान्यमवगम्यते । निर्विशेषस्य च तस्यानुपपत्तेर्विशेषाकाङ्क्षायां स्वशाखाविहितस्य विशेषस्य संनिधानात्तेनैवाकाङ्क्षाविनिवृत्तेर्न शाखान्तरीयमुद्गीथान्तरमपेक्षते । न चैवं संनिधानेन श्रुतिपीडा; यदि हि श्रुतिसमर्पितमर्थमपबाधेत ततः श्रुतिं पीडयेत्, न चैतदस्ति । नह्युद्गीथश्रुत्यभिहितलक्षितौ सामान्यविशेषौ बाधितौ स्वशाखागतयोः स्वीकरणाच्छाखान्तरीयास्वीकारेऽपि । **यथाहुः**—'जातिव्यक्ती गृहीत्वेह वयं तु श्रुतलक्षिते । कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते' ॥ एवं प्राप्त उच्यते—उद्गीथाङ्गावबद्धास्तु प्रत्यया नानाशाखासु प्रतिवेदमनुवर्तेरन्न प्रतिशाखं व्यवतिष्ठेरन् । उद्गीथमित्यादिसामान्यश्रुतेरविशेषात् । **एतदुक्तं भवति**—युक्तं शुक्लं पटमानयेत्यादौ पटश्रु-

वेदान्तकल्पतरुः ।

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥** उद्गीथादीनां सर्वशाखास्वेकत्वात् कथमुपासनव्यवस्था शङ्क्यते? अत आह—**स्वरादिति** । उद्गीथादिश्रुतेर्बलीयस्त्वात्तस्याश्च सामान्यविषयत्वेन प्राकरणिकविशेषाकाङ्क्षत्वाच्च संशयमाह—**यस्मिन्निति** । यथा शरीरात्मनोर्भेदादात्मधर्माणां शरीरे न संभवः, एवमेकशाखागतोद्गीथधर्माणां न भिन्नान्यशाखागतोद्गीथादौ प्राप्तिः, **अथवा**—विद्याचित एवेत्येवकारश्रुत्या मनश्चिदादीनां क्रियाप्रकरणं भग्नमत्र तूद्गीथादिसामान्यश्रुतेः प्रकरणोपनीतविशेषाकाङ्क्षत्वेन बाधकत्वादुपास्तीनां व्यवस्थेति सङ्गतिद्वयमभिप्रेत्य पूर्वपक्षमाह—**ओमित्यादिना । ननु** सामान्यश्रुतिबाधेन कथं सन्निधेः स्थानात् स्वशाखागतविशेष उपासननियमः ? इत्याशङ्क्याह—**न चैवमिति** । उद्गीथमुपासीतेत्यत्रोद्गीथश्रुतेरुद्गीथसामान्यं वाच्यम्, उद्गीथव्यक्तिर्लक्ष्या; स्वशाखागतोद्गीथव्यक्त्युपादाने च सामान्यस्य प्रतिव्यक्ति समाप्तेः सामान्यविशेषौ द्वावपि श्रुत्यर्थौ गृहीतौ, तत्र कथं श्रुतिबाध इत्यर्थः । **श्रुतिसमर्पितमर्थं बाधेतेति ।** सन्निधिरिति शेषः । शाखान्तरीयस्वीकारेऽपि स्वशाखागतयोस्तयोः स्वीकरणादिति योजना । भट्टोक्तिमाह—**यथाहुरिति ।** पटं शुक्लमानयेतीह प्रयोगे पटपदेन श्रुतपटत्वजातिलक्षितां च शुक्लपटव्यक्तिं गृहीत्वा कृष्णादिपटव्यक्त्यन्तरं यदि मुञ्चामस्तत्र तदा का श्रुतिरस्माभिः पीड्यते ? न कापीत्यर्थः ॥ दृष्टान्ते पटमिति सामान्यश्रुतेः संकोचो न संनिधिमात्रादपि तु

कल्पतरुपरिमलः ।

तावता स्वतो मदहानिकरे चूर्णेऽपि मदजनकत्वं कल्पनीयमिति तात्पर्यम् । **वित्तेः क्रमवद्व्यापारायोगादिति ।** अधिकरणप्रतियोगिग्रहणपूर्वकं खलु भेदग्रहणम् । अतः प्रथमं तदुभयग्रहणं पश्चाद् भेदग्रहणमिति प्रत्यक्षस्य विरम्य व्यापारो न संभवतीत्यर्थः । **प्रतियोगिभेदसिद्ध्यसिद्ध्योरिति ।** भेदग्रहणं, प्रतियोगिग्रहणापेक्षं, प्रतियोगित्वेन प्रतियोगिग्रहणं च भेदग्रहणापेक्षमिति परस्पराश्रयमित्यर्थः । **एतेन**—प्रतियोगिविशिष्टभेदप्रत्यक्षे विरम्यव्यापारदोषो न प्रसज्यते; युगपदेव प्रतियोग्यधिकरणविशिष्टभेदविषयत्वस्वीकारात्, प्रतियोगिविषयस्याधिकरणविषयस्य च विशेषणज्ञानतया कारणस्य ज्ञानान्तरत्वस्वीकारादित्यपि शङ्का—**निरस्ता**; तस्य ज्ञानस्य भेदनिरूप्यप्रतियोगित्वविषयताया अपि वक्तव्यत्वेन परस्पराश्रयानुद्धारात् ॥ ५४ ॥ **इति त्रिंशमैकात्म्याधिकरणम् ॥**

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ स्वरादी**त्यादिशब्देन वर्णभेदश्चित्यात्म्यादिप्रकारभेदश्च गृह्यते । यद्यप्योङ्कारावयव उद्गीथ उपास्यः, तत्र स्वरवर्णभेदो नास्ति; तथापि स्वरभेदः संभावितः उद्गीथस्यावयव उपास्य इति विधौ कस्योद्गीथस्यावयव इति विशेषाकाङ्क्षायामुद्गीथे सामोक्थादिविषयोपासनायां च स्वरवर्णोभयभेदः संभवति । पूर्वाधिकरणस्य प्रासङ्गिकत्वाद्व्यवहिताधिकरणेन सङ्गतिर्वक्तव्येत्यभिप्रेत्य तामपि दर्शयति—**अथ वेति । का श्रुतिरस्माभिः पीड्यत इति ।** सङ्कोचलक्षणं तु पीडनं सन्निधिवशात्सह्यमित्यत्रापि शुक्लं पटमानयेत्ययमेव दृष्टान्तः । दृष्टान्तवै-

षोपादाने कारणं नास्ति । तस्मात्प्रतिशाखं व्यवस्थेति । एवं प्राप्ते ब्रवीत्यङ्गावबद्धास्त्विति । तुशब्दः पक्षं व्यावर्तयति । नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्, अपितु सर्वशाखास्वनुवर्तेरन् । कुतः ? उद्गीथादिश्रुत्यविशेषात् । स्वशाखाव्यवस्थायां ह्युद्गीथमुपासीतेति सामान्यश्रुतिरविशेषप्रवृत्ता सती संनिधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात् । नचैतन्याय्यम्; संनिधानाच्चु श्रुतिर्बलीयसी । नच सामान्याश्रयः प्रत्ययो नोपपद्यते । तस्मात्स्वरादिभेदे सत्यप्युद्गीथत्वाद्यविशेषात्सर्वशाखागतेष्वेवोद्गीथादिष्वेवंजातीयकाः प्रत्ययाः स्युः ॥ ५५ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

अथवा—नैवात्र विरोधः शङ्कितव्यः, कथमन्यशाखागतेषूद्गीथादिष्वन्यशाखाविहिताः प्रत्यया भवेयुरिति ? मन्त्रादिवदविरोधोपपत्तेः । तथाहि मन्त्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तर उपसंग्रहो दृश्यते । येषामपि हि शाखिनां कुटरुरसीत्यश्मादानमन्त्रो नाम्नातस्तेषामप्यसौ विनियोगो दृश्यते "कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वे"ति । येषामपि समिदादयः प्रयाजा नाम्नातास्तेषामपि तेषु गुणविधिराम्नायते—'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति । तथा येषामपि 'अजोऽग्नीषोमीयः' इति जातिविशेषोपदेशो नास्ति तेषामपि तद्विषयो मन्त्रवर्ण उपलभ्यते—'छागस्य वपाया मेदसोऽनुब्रूहि' इति । तथा वेदान्तरोत्पन्नानामपि 'अग्नेर्वैर्होत्रं वेरध्वरम्' इत्येवमादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः, तथा बह्वृचपठितस्य सूक्तस्य 'यो जात एव प्रथमो मनस्वान्' ( ऋ०सं०२।६।७ ) इत्यस्य 'अध्वर्यवे सजनीयं शस्यम्' इत्यत्र परिग्रहो दृष्टः । तस्माद्यथाश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिरेवमाश्रितानामपि प्रत्ययानामित्यविरोधः ॥ ५६ ॥ इत्येकत्रिंशमङ्गावबद्धाधिकरणम् ॥

### भामती ।

तिमविशेषप्रवृत्तामपि संनिधानाच्छुक्रश्रुतिर्बाधत इति । विशिष्टार्थप्रत्यायनप्रयुक्तत्वात्पदानां समभिव्याहारस्य; अन्यथा तदनुपपत्तेः । नच स्वार्थमस्मारयित्वा विशिष्टार्थप्रत्यायनं पदानामिति विशिष्टार्थप्रयुक्तं स्वार्थस्मारणं न स्वप्रयोजकमपबाधितुमुत्सहते । मा च बाधि प्रयोजकाभावेन स्वार्थस्मारणमपीति युक्तमविशेषप्रवृत्ताया अपि श्रुतेरेकस्मिन्नेव विशेषे अवस्थापनम् । इह तूद्गीथश्रुतेरविशेषेण विशिष्टार्थप्रत्यायकत्वात् संकोचे प्रमाणं किंचिन्नास्ति । नच संनिधिमात्रंमपबाधितुमर्हति । श्रुतिसामान्यद्वारेण च सर्वविशेषगामिन्याः श्रुतेरेकस्मिन्नवस्थानं पीडैव । तस्मात्सर्वोद्गीथविषयाः

### वेदान्तकल्पतरुः ।

शुक्रमिति संनिहितविशेषश्रुतिबलेन । दार्ष्टान्तिके तूपासनविधावुद्गीथादिसंनिधिमात्रं, नतु स्वरादिभिन्नममुकमुद्गीथमुपासीतेति विशेषविषया श्रुतिर्विद्यते । इतश्च दुर्बलं संनिधिमपबाध्य सामान्यश्रुत्या सर्वशाखासूपासनोपसंहार इति सिद्धान्तमाह—**युक्तमित्यादिना** । **ननु** वाक्याच्छ्रुतेर्बलीयस्त्वाच्छुक्रश्रुतिबलाद्या काचिच्छुक्रव्यक्तिः प्रतीयतां, पटशब्दाच्च पटमात्रं किमिति सामान्यश्रुतेः संकोचस्तत्राह—**विशिष्टार्थप्रत्यायनेति** । व्यवहारार्थं हि वाक्यप्रयोगः, व्यवहारश्च विशिष्टार्थविषयः, न पदार्थमात्रविषयः, तस्य नित्यत्वेन प्रवृत्त्ययोग्यत्वात्, अतो विशिष्टार्थप्रत्ययः पदप्रयोगस्य प्रयोजनम् इत्यर्थः । यद्येवं किमर्थं तर्हि पदैः पदार्थाः स्मार्यन्ते ? अत आह—**नच स्वार्थमिति** । द्वारं पदार्थस्मारणं वाक्यार्थबोधनायेत्यर्थः । यदि स्वप्रयोजकं स्वोद्देश्यं वाक्यार्थप्रत्ययमपबाधेत पदार्थस्मरणं, तर्हि स्वयमेव न स्याद्, वैयर्थ्यप्रसङ्गादित्याह—**मा च बाधीति** । मा बाधि चेत्यन्वयः । बाधितं च प्रसज्येत तच्च मा भूदयुक्तमित्यर्थः । तदेव-**मानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन** वाक्यवशवर्तित्वमेवंविधस्थले श्रुतीनाम् । तत्र विशिष्टार्थप्रत्ययाय सन्निहितविशेषश्रुतिवशात् सामान्यश्रुतेः संकोच इत्युक्तं भवति । एवं दृष्टान्ते सामान्यश्रुतेः संकोचमुपपाद्य दार्ष्टान्तके तदभावमाह—**इह त्वित्यादिना** । अमुकमुद्गीथमुपासीतेत्यश्रवणादुद्गीथमात्रविशिष्टोपासनकर्तव्यता वाक्यार्थः, स चोद्गीथपदेन सामान्यमात्रपर्यवसितेनापि कर्तुं शक्यत इति न श्रुतिसंकोच इत्यर्थः । **अपबाधितुमर्हतीति** । श्रुतिमिति शेषः । यदुक्तं सन्निहितव्यक्त्युपादानेऽपि न सामान्यश्रुतेः पीडेति, तत्राह—**श्रुतिसामान्येति** ॥ ५५ ॥ एकशाखाङ्गत्वस्योद्गीथोपासनस्यान्यशाखागतोद्गीथसंबन्धे संनिधिविरोधमङ्गीकृत्य श्रुत्या सन्निधिबाध उक्तः;

### कल्पतरुपरिमलः ।

घम्यं विवृण्वन् सिद्धान्तग्रन्थमवतारयति—**दृष्टान्त इति** । मा बाधीत्यत्र लुङन्तमाख्यातम् । माङ्योगादडागमाभावः

## ( ३३ अधिकरणम् ) भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥

'प्राचीनशाल औपमन्यवः' ( छा० ५।११।१ ) इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च वैश्वानरस्योपासनं श्रूयते। व्यस्तोपासनं तावत्—'औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से (छा० ५।१२।१ ) इत्यादि । तथा समस्तोपासनमपि 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' ( छा० ५।१८।२ ) इत्यादि । तत्र संशयः—किमिहोभयथाप्युपासनं स्याद्व्यस्तस्य समस्तस्य चोत समस्तस्यैवेति। किं तावत्प्राप्तम्? प्रत्यवयवं सुतेजःप्रभृतिषूपास्स इति क्रियापदश्रवणात्

### भामती ।

प्रत्यया इति ॥ ५५ ॥ विरुद्धमिति नः क्व संप्रत्ययो, यत्प्रमाणेन नोपलभ्यते । उपलब्धं च मन्त्रादिषु शाखान्तरीयेषु शाखान्तरीयकर्मसंबन्धित्वम्, तद्वदिहापीति दर्शनादविरोधः । एतच्च दर्शितं भाष्येण सुगमेनेति ॥ ५६ ॥ **इत्येकत्रिंशमङ्गावबद्धाधिकरणम् ॥**

**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥** वैश्वानरविद्यायां छान्दोग्ये किं व्यस्तोपासनं समस्तोपासनं च उत समस्तोपासनमेवेति । तत्र दिवमेव भगवो राजन्निति होवाचेति प्रत्येकमुपासनश्रुतेः प्रत्येकं च फलवत्त्वाम्ना-नात्समस्तोपासने च फलवत्त्वश्रुतेरुभयथाप्युपासनम् । नच यथा वैश्वानरीयेष्टौ "यदष्टाकपालो भवती"त्यादीनामव-

### वेदान्तकल्पतरुः ।

इदानीं विरोध एव नास्त्यन्यत्रापि दर्शनादित्याह—**विरुद्धमितीति** ॥ ५६ ॥ लोकेषु पृथिव्यादिषु लोकशब्दो लोका-लोकेषु लाक्षणिकः । पृथिव्यादिदृष्ट्या पञ्चविधं सामोपासीतेत्यर्थः । पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमिति । उक्थं कर्माङ्गभूतशस्त्रमिति यत्प्रजा वदन्ति । तदिदमेव येयं पृथिवीत्युक्ते पृथिवीदृष्टिविधिः प्रयाजो हेमन्तशिशिरयोरेकीकरणेन पञ्चसंख्या ऋतव एव । ततश्चैकसंवत्सरसंबन्ध्यृतुसामान्यात्समा न चैकत्र होतव्याः । छागादेर्होमार्थमनुवाक्यां पठ हे होतरित्यध्वर्युप्रैषः । यो जात एव बाल एवस्सन् प्रथमो गुणैः श्रेष्ठः मनस्वान् विवेकवान् स जनास इन्द्र इति शेषः । **जनास** इति हे जना इत्यर्थः ॥ **इति एकत्रिंशमङ्गावबद्धाधिकरणम् ॥**[1]

**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥** सैव हि सत्यादय ( ब्र. अ. ३ पा. ३ सू. ३८ ) इत्यत्र तद्यत्तत्सत्यमिति तच्छब्देन प्रकृतपरामर्शाद् विद्यैक्यमुक्तम् । अत्र तद्वदभेदहेत्वभावादगतार्थत्वम् । पूर्वत्रोद्गीथादिश्रुत्या संनिधिं बाधित्वोद्गीथाद्युपास्तीनां सर्वशाखासूपसंहार उक्तः । एवमत्रापि व्यस्तोपासनस्य विधिश्रुतेः फलश्रुतेश्च समस्तो-पासनसंनिधानप्राप्तस्तुत्यर्थत्वं बाधित्वा विधेयत्वमित्याह—**तत्र दिवमेवेति** । उभयथाऽप्युपासनं कर्तव्यमिति शेषः । व्यस्तोपासनफलश्रवणस्य समस्तोपासनस्तुत्यर्थत्वेनान्यथासिद्धिमाशङ्क्याह—**नचेत्यादिना** । नचेत्यस्यैवमत्रापि नच भवितुमर्हतीति वक्ष्यमाणेनान्वयः ॥ **यथा वैश्वानरीयेष्टाविति**। "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्युपक्रम्य

### कल्पतरुपरिमलः ।

॥५५॥५६॥ **एकत्र होतव्या इति** । पञ्च प्रयाजान् प्राचो यजतीति देशभेदविधानेन विकल्पितमिदं देशैक्ये विधानम् । छागस्य वपाया इत्याद्यध्वर्युप्रैषस्यार्थमाह—**छागादेरिति** । आदिशब्दो वैकृतपश्वन्तरप्रैषगतपशुजात्यन्तरसंग्रहार्थः । **स जनास इन्द्र इति शेष इति** । अनेन सजनपदवत्सूक्तं हि सजनीयम् । यो जात इति सूक्तं कथं सजनीयमित्या-काङ्क्षायां मन्त्रान्तररूपशेषदर्शनेनेदं सूक्तं सजनीयं भवतीत्युपपादितम् । अस्मिन् सूक्ते अन्त्यामृचं विना प्रत्यृचं सजनास इन्द्र इति मन्त्रान्ते विद्यते इति इदं सजनीयं भवतीति भावः ॥ **इति एकत्रिंशमङ्गावबद्धाधिकरणम् ॥**

**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥** "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद् द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती"ति समाम्नायः । तमर्थतः सङ्क्षिप्य दर्शयति—**वैश्वानरमिति**। अत्र कपालानां प्राप्ता अष्टसंख्यादिरूपा गुणा विधीयन्ते, उत प्राप्ताभिस्ताभिरेकदेशद्वारा विधेया द्वादशसंख्या स्तूयत

---

१ तत्र सूत्रे २—अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ५५ मन्त्रादिवद्वाऽविरोधः ५६ ॥

### भामती ।

युज्यवादानां प्रत्येकं फलश्रवणेऽप्यर्थवादमात्रत्वं, "वैश्वानरं द्वादशकपालं निर्वपेदि"त्यस्यैव तु फलवत्त्वमेवमत्रापि भवितुमर्हति; तत्र हि "द्वादशकपालं निर्वपेदि"ति विधिविभक्तिश्रुतिर्यदष्टाकपालो भवतीत्यादिषु वर्तमानापदेशः । नच वचनानि त्वपूर्वत्वादिति विधिकल्पना; अवयुज्यवादेन स्तुत्याप्युपपत्तेः, इह तु समस्ते व्यस्ते च वर्तमानापदेश-स्याविशेषादगृह्यमाणविशेषतया उभयत्रापि विधिकल्पनायाः फलकल्पनायाश्च भेदात् निन्दायाश्च समस्तोपासनारम्भे

### वेदान्तकल्पतरुः ।

"यदष्टाकपालो भवति ब्रह्मवर्चसेन पुत्रं पुनाती"त्यादिना कपालविशेषेषु फलविशेषानाम्नाय "द्वादशकपालो भवति यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्वी"त्यादि समामनन्ति । तत्र यद्यपि द्वादशत्वेऽष्टत्वादीनां वस्तुतोऽन्तर्भावः; तथापि न परिच्छेदकत्वम् । तस्मादप्राप्तत्वाद्वैश्वानरेष्टावष्टाकपालत्वादिगुणविधानमिति प्रापय्य राद्धान्तितं प्रमाणलक्षणे । उत्पत्तिशिष्टद्वादशत्वावरोधान्न प्रकृतकर्मण्यष्टत्वादिगुणविधिः । **अपिच** "पुत्रे जाते द्वादशकपाल"मिति यदेवोपक्रान्तं तदेवाष्टत्वादीनामन्ते उपसंह्रियते "यद् द्वादशकपालो भवति यस्मिन् जाते एतामिष्टि"मिति, तेनैकं वाक्यं द्वादशक-पालविधिपरम्, अष्टत्वादीनि तु वस्तुतः प्राप्तान्यनूद्यन्ते स्तुत्यर्थमिति क्लृप्तविधिस्तावकत्वेन वर्तमानापदेशानामेकवाक्यत्वे च संभवति न वाक्यभेदेन विधिकल्पनम् । तस्मादप्यष्टत्वादीनां स्तुत्यर्थत्वमित्याह—**तत्र हीति** । वैश्वानरेष्टौ हि द्वादशकपाले विधेः प्रत्यक्षत्वाद्यदष्टाकपालो भवतीत्यादीनां वर्तमानापदेशानांच तत्स्तुत्यर्थत्वं युक्तम्, वैश्वानरोपासने तु समस्ते व्यस्ते च विधेः कल्पनीयत्वादेवं कामशब्दस्य क्वाप्यश्रवणात्फलत्वकल्पनायाश्चाविशेषात्सर्वत्र विधिकल्पनमि-त्याह—**इह त्विति** । तर्हि "मूर्धा ते व्यपतिष्यदि"त्यादिव्यस्तोपासननिन्दा किमर्था ? अत आह—**निन्दायाश्चेति** ।

### कल्पतरुपरिमलः ।

इति संशये महासंख्यायामवान्तरसंख्यान्तर्भावस्य शतेन पञ्चाशदनुमानादिना सुप्रसिद्धत्वेन द्वादशसंख्याविधानतोऽष्टत्वा-दीनां प्राप्तेः स्तुत्यर्थतैव युक्तेति कथं पूर्वपक्ष इत्याशङ्क्य परिहरति—**यद्यपीति । तथापि न परिच्छेदकत्वमिति ।** वस्तुतः सन्त्यप्यष्टादिसंख्या द्वादशसंख्यासंख्येयानां कपालानां न परिच्छेदिका, न विशेषणानि; संभवद्विरोधिव्यावर्तकं च नीलमुत्पलमित्यादौ विशेषणं भवति, नच द्वादशस्वष्टत्वादयः पर्याप्तवृत्तयः संभवन्ति । न वा विरोधिसंख्याव्यावर्तिका । अतः परिच्छेदकत्वेन तासां न प्राप्तिरित्यर्थः । **ननु**—मा भूत्परिच्छेदकत्वेन प्राप्तिः अन्तर्भावमात्रेण प्राप्तिरस्ति, द्वादशसु निष्कृष्टानां केषांचित्परिच्छेदकत्वेनापि प्राप्तिरस्ति, यथा शतं ब्राह्मणाः सोमान् भक्षयन्तीत्यत्र शतमध्ये निष्कृष्टानां केषां-चित्परिच्छेदकत्वेन दशसंख्यायाः प्राप्तिः, अतएव दश दशैकैकं चमसमनुसर्पन्तीति तदनुवाद इति—**चेत्, उच्यते;** यथाकथंचित्प्राप्तिमात्रमिह न पर्याप्तं, किंतु कपालसाध्यपुरोडाशद्रव्यसंस्कारार्थतया तत्परिच्छेदकत्वेन प्राप्तिः । "तद्धि-तार्थोत्तरपदसमाहारे चे"ति सूत्रेण तद्धितार्थे संस्कृते विषयभूते अष्टादिशब्दानां कपालशब्दस्य च समासे पश्चादष्टकपाल-प्रातिपदिकादष्टसु कपालेषु संस्कृतमित्यर्थेऽण्प्रत्यये तस्य "द्विगोर्लुगनपत्ये" इति लुकि सत्यष्टाकपालादिशब्दनिष्पत्तेः । नच द्वादशसंख्यावदष्टत्वादिसंख्यानां पुरोडाशसंस्काराङ्गतया प्राप्तिर्यदष्टाकपालो भवतीत्यादिवाक्यप्रवृत्तेः प्रागस्ति । तस्मात्ते-ष्वष्टत्वादिसंख्यानां संस्काराङ्गतया विधिरिति गुणविधिपक्ष एवाश्रयणीयः । नच—उत्पत्तिशिष्टद्वादशसंख्याविरोधात् तद्वि-रुद्धाष्टत्वादिसंख्याविधिर्न घटत इति—शङ्कनीयम्; एकं हीदं वाक्यं वैश्वानरं द्वादशकपालमित्यादि पशुमान् भवतीत्यन्तम् । नचैकस्मिन्वाक्ये विधेयेषु संख्याविशेषेषूत्पत्त्युत्पन्नशिष्टविवेकोऽस्ति । तस्मादेकेन वाक्येन विहितानां विरुद्धसंख्याविशे-षाणां वैकल्पिकाङ्गत्वेन विधिषु न काचिदनुपपत्तिरिति भावः । **उत्पत्तिशिष्टेति** । उपक्रमोपसंहारैकरूप्येणैकवाक्य-त्वेऽपि वैश्वानरमष्टाकपालं नवकपालं दशकपालमेकादशकपालं द्वादशकपालं निर्वपेदित्याम्नानाभावाद् द्वादशकपालं निर्वपेदित्येतावता विधिवाक्यसमाप्तेः द्वादशसंख्यैवोत्पत्तिशिष्टा, नतु प्रथमान्ताष्टाकपालादिशब्दोक्ता अष्टत्वादि-संख्या इति तेषां विध्यन्तरसमर्पितानामन्वयो वाच्यः । नत्वयं संभवति; उत्पत्तिशिष्टगुणावरोधादित्यर्थः । विध्यन्तरसमाश्रयणे विध्यर्थवादभावेनान्वय इवोपक्रमोपसंहारैकरूप्यावगतम् एकवाक्यत्वं न संरक्षितं स्यादित्याह—**अपिचेति । वस्तुतः प्राप्तानीति** । संज्ञामात्रेण प्राप्तानीत्यर्थः । एवंचाष्टाकपालादिशब्दानाम् अष्टत्वा-दिसंख्यापरिच्छिन्नकपालसंस्कृतवाचिना द्वादशकपालसंस्कृतपुरोडाशावयवेष्वष्टकपालादिस्थितेषु लक्षणया वृत्तिरेष्टव्येति भावः । **स्तुत्यर्थमिति** । गजाश्वादिस्तुतिद्वारा सेनाया इव नेत्रादिस्तुतिद्वारा शरीरस्येवचाष्टत्वादिसंख्या-स्तुत्या तत्संख्येयकपालनिष्ठपुरोडाशावयवस्तुत्याच द्वादशसंख्यायास्तत्संख्येयकपालनिष्ठपुरोडाशावयविनश्च स्तुत्यर्थमि-त्यर्थः । **किंच** यद्यष्टाकपालादिषु विधयः श्रूयेरन्, तदोपक्रमोपसंहारावगतमेकवाक्यत्वमङ्गप्रधानविधिरूपा-नेकावान्तरवाक्यघटितमहावाक्यैकरूपतया कथंचित्समर्थ्येत, नतु तदस्तीत्याह—**वर्तमानापदेशानामिति** ।

'तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते' ( छा० ५।१२।१ ) इत्यादिफलभेदश्रवणाच्च व्यस्तान्यप्युपासनानि स्युरिति प्राप्तम् । ततोऽभिधीयते—भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्यमस्मिन्वाक्ये विवक्षितं भवितुमर्हति, न प्रत्येकमवयवोपासनानामपि । क्रतुवत् । यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रयाजादीनाम् । नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य, तद्वत् । कुत एतद्भूमैव ज्यायानिति ? तथाहि श्रुतिरभूम्नो ज्यायस्त्वं दर्शयति एकवाक्यतावगमात् । एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात्प्रतीयते । तथाहि—प्राचीनशालप्रभृतय उद्दालकावसानाः षड् ऋषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना अश्वपतिं कैकेयं राजानमभ्याजग्मुरित्युपक्रम्यैकैकस्यर्षेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा 'मूर्धा त्वेष आत्मन इति होवाच' ( छा० ५।१२।२ ) इत्यादिना मूर्धादिभावं तेषां विदधाति । 'मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' ( छा० ५।१२।२ ) इत्यादिना च व्यस्तोपासनमपवदति । पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' ( छा० ५।१८।१ ) इति भूमाश्रयमेव फलं दर्शयति । यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणं, तदेवं सत्यङ्गफलानि प्रधान एवाभ्युपगतानीति द्रष्टव्यम् । तथोपास्स इत्यपि प्रत्ययवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थं न व्यस्तोपासनविधानार्थम् । तस्मात्समस्तोपासनपक्ष एव श्रेयानिति ॥

केचित्तु—अत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति—कथयन्ति । तदयुक्तम्; एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात्, 'मूर्धा ते व्यपतिष्यत्' ( छा० ५।१२।२ ) इति चैवमादिनिन्दावचनविरोधात् । स्पष्टेचोपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणाप्युपपद्यमानत्वात् ॥ ५७ ॥ इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम् ॥

## भामती ।

व्यस्तोपासनेऽप्युपपत्तेः । श्यामः श्वा आहुतिमभ्यवहरतीतिवदुभयविधमुपासनमिति प्राप्त उच्यते—समस्तोपासनस्यैव ज्यायस्त्वं न व्यस्तोपासनस्य । यद्यपि वर्तमानापदेशत्वमुभयत्राप्यविशिष्टम्; तथापि पौर्वापर्यालोचनया समस्तोपासनपरत्वस्यावगमः । यत्परं हि वाक्यं तदस्यार्थः । तथाहि—प्राचीनशालप्रभृतयो वैश्वानरविद्यानिर्णयायाश्वपतिं कैकेयमाजग्मुः । ते च तत्तदेकदेशोपासनमुपन्यस्तवन्तः । तत्र कैकेयस्तत्तदुपासननिन्दापूर्वं तन्निवारणेन समस्तोपासनमुपसंजहार । तथाचैकवाक्यतालाभाय वाक्यभेदपरिहाराय च समस्तोपासनपरतैव संदर्भस्य लक्ष्यते । तस्माद्बहुफलसंकीर्तनं प्रधानस्तवनाय, समस्तोपासनस्यैव तु फलवत्त्वमिति सिद्धम् ॥ एकदेशिव्याख्यानमुपन्यस्य दूषयति—केचित्त्वत्रेति । संभवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् नेदृशं सूत्रव्याख्यानं समञ्जसमित्यर्थः ॥ ५७ ॥ इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

येन हि यावज्जीवं समस्तोपासनं संकल्पपूर्वं कर्तुं प्रारब्धं तस्य तथाविधसमस्तोपासनप्रारम्भे सति व्यस्तोपासननिन्दोपपत्तिरित्यर्थः । अत्रोदाहरणमाह—श्याम इति । "श्यामः श्वा आहुतिमभ्यवहरति तस्य योऽनुदिते जुहोति, शबलः श्वा आहुतिमभ्यवहरति य उदिते जुहोति" इति उदितानुदितहोमयोर्निन्दायामपि वाक्यान्तरेण तयोर्विहितत्वादुदितहोमप्रारम्भेऽनुदितहोमनिन्दा, एवमनुदितहोमप्रारम्भे तत्त्यागे च उदितहोमनिन्दा । तदाहाक्षपादः—अभ्युपेत्य कालभेदे दोषवचनादिति । कालभेदे कालान्यत्वकरणे इत्यर्थः । उपक्रमोपसंहारयोरेकविद्याविषयत्वेनैकवाक्यत्वावगमान्न व्यस्तोपासनविधिरिति सिद्धान्तयति—समस्तोपासनस्यैवेत्यादिना । उपक्रममाह—वैश्वानरविद्यानिर्णयायेति । व्यस्तोपास्त्यभिज्ञानामेव समस्तविषयजिज्ञासादर्शनादुपक्रमस्य समस्तोपास्तिपरत्वमित्यर्थः । उपसंहारमाह—तत्र कैकेय इति । सुतं कण्डितं सोमद्रव्यम् । प्रसुतमासमन्तात्सुतत्वमवस्थाभेदः । सोमयागसंपत्तिस्तव कुले दृश्यतइति यावत् । सुतं सोमरूपं प्रसुतमभ्यस्तम् आसुतं विकृतिषु ॥ ५७ ॥ इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम् ॥[1]

## कल्पतरुपरिमलः ।

उपक्रमोपसंहारयोरेकविद्याविषयत्वेनेति । ननु—भूमविद्याप्रकरणोपक्रमोपसंहारयोरात्मविद्याविषयत्वेऽपि मध्ये

१ तत्र सूत्रम् १—भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ५७ ॥

( ३३ अधिकरणम् ) **नाना शब्दादिभेदात् ॥ ५८ ॥**

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम् । अतः प्राप्ता बुद्धिरन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्योपासिष्यन्त इति । अपिच नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते । वेद्यं हि रूपं विद्याया द्रव्यदैवतमिव यागस्य । वेद्यश्चैक एवेश्वरः श्रुतिनानात्वेऽप्यवगम्यते 'मनोमयः प्राणशरीरः' ( छा० ३।१४।२ ) 'कं ब्रह्म खं ब्रह्म' ( छा० ४।१०।५ ) 'सत्यकामः सत्यसंकल्पः' ( छा० ८।१।५ ) इत्येवमादिषु । तथा 'एक एव प्राणः' 'प्राणो वाव संवर्गः' (छा० ४।३।३ ) 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' (छा० ५।१।१) 'प्राणो ह पिता प्राणो माता' ( छा० ७।१५।१ ) इत्येवमादिषु । वेद्यैकत्वाच्च विद्यैकत्वम् । श्रुतिना-

## भामती ।

**नाना शब्दादिभेदात् ॥ ५८ ॥** सिद्धं कृत्वा विद्याभेदमधस्तनं विचारजातमभिनिर्वर्तितम्, संप्रति तु सर्वासामीश्वरगोचराणां विद्यानां किमभेदो भेदो वा, एवं प्राणादिगोचरास्विति विचारयितव्यम् । **ननु**—यथा प्रत्ययाभिधेयाया अपूर्वभावनाया आजानतो भेदाभावेऽपि धात्वर्थेन निरूप्यमाणत्वात्तस्य च यागादेर्भेदात्प्रकृत्यर्थ-यागादिधात्वर्थानुबन्धभेदाद्भेदः; तदनुरक्ताया एव तस्याः प्रतीयमानत्वात्, एवं विद्यानामपि रूपतो वेद्यस्येश्वरस्या-भेदेऽपि तत्तत्सत्यसंकल्पत्वादिगुणोपधानभेदाद्विद्याभेद इति नास्त्यभेदाशङ्का, **उच्यते**—युक्तमनुबन्धभेदात्कार्यरूपा-णामपूर्वभावनानां भेद इति । इह ब्रह्मणः सिद्धरूपत्वाद्गुणानामपि सत्यसंकल्पत्वादीनां तदाश्रयाणां सिद्धतया सर्वत्राभेदो विद्यासु । नहि विशालवक्षाश्चकोरेक्षणः क्षत्रिययुवा दुश्च्यवनधर्मेति एकत्रोपदिष्टोऽन्यत्र सिंहास्यो वृषस्कन्ध एवोपदिश्यमानश्चकोरेक्षणत्वाद्यपजहाति । न खलु प्रत्युपदेशं वस्तु भिद्यते; तस्य सर्वत्र तादवस्थ्यात् । अतादवस्थ्ये वा तदेव न भवेत् । नहि वस्तु विकल्प्यत इति । तस्माद्वेद्याभेदाद्विद्यानां न भेद इति प्राप्तम् । एवं प्राप्त

## वेदान्तकल्पतरुः ।

**नाना शब्दादिभेदात् ॥ ५८ ॥ नन्विहैव** विद्यानां भेदनिरूपणे प्राक् तदसिद्धेर्गुणोपसंहारचिन्तनमसंगतमित्याश-ङ्क्याह—**सिद्धं कृत्वेति** । अधिकरणानारम्भमाशङ्कमानो रूपभेदाद् विद्याभेद इति सदृष्टान्तमाह—**ननु यथेत्यादिना । अपूर्वसाधनं** पुरुषप्रवृत्तिरपूर्वभावना । **धात्वर्थेनेति** । यजेतेत्यादौ प्रत्ययार्थभूतभावनाया धात्वर्थेन यागादिना निरूप्यमाणत्वादित्यर्थः । **कर्मरूपाणां** साध्यरूपाणाम् । ब्रह्मणः सर्वत्र विद्यास्वभेदादित्यन्वयः । तत्र हेतुर्गुणानां गुणिनश्च ब्रह्मणः सिद्धत्वात् । **दुश्च्यवनधर्मा** इन्द्रसमानधर्मः । यदि वस्तुनिष्ठान्युपासनानि, तर्हि त्वदुक्तमेव दूषणं भवेन्न

## कल्पतरुपरिमलः ।

नामाद्युपासनतत्फलश्रवणात् तद्विधयोऽप्यङ्गीकृताः ? तथेह किं न स्याद्, वैषम्यात् । इह हि व्यस्तोपासनासु निन्दा श्रूयते; नचारब्धसमस्तोपासन?पुरुषविषयास्तन्निन्दाः अविज्ञातसमस्तोपासनानामपि प्राचीनशालादीनां व्यस्तोपासनाभिर्निन्दित-त्वात् । **किंच** मूर्धा त्वेष चात्मेति होवाचेत्यादिवाक्येषु द्युप्रभृतीनां स्वतन्त्रोपास्यत्वव्यवच्छेदः कृतः । "एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्स्येती"तीवकारेण व्यस्तोपासनानां भ्रममूलत्वमुद्धाटितम् । एवं वैषम्यान्नात्र भूम-विद्यान्यायशङ्कावकाशः ॥ ५७ ॥ **इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम् ॥**

**नाना शब्दादिभेदात् ॥ ५८ ॥ अपूर्वसाधनमिति** । अपूर्वसाधनभूता या पुरुषप्रवृत्तिः सा भावनेत्यर्थः । तत्र हेतु**र्गुणानां गुणिनश्च ब्रह्मणः सिद्धत्वादिति** । उपासनानां स्वतो यागदानहोमवद् भेदाभावाद् वेद्यस्य ब्रह्मण एकत्वेन विषयीकृतस्यापि भेदस्याभावाद् ब्रह्मगुणानां सिद्धतया सिद्धब्रह्मविशेषणतया च स्वतः परतो वा कार्यत्वाभावेन कार्यविशेषणवाजिनादिगुणवद्भेदकत्वाभावाच्च न विद्याभेद इत्यर्थः । एवंच यथा सत्यविद्यायां सत्यस्य ब्रह्मणो वेद्यस्यैक-स्याक्ष्यादित्यस्थानयोरहरहर्नामभेदेन पृथगनुचिन्तनेऽप्येकविद्यात्वम्, यथावा संवर्गविद्यायां वायुत्वस्य वेद्यस्यैकस्य बाह्या-ध्यात्मिकभेदेन वागाद्यग्न्यादिसंहर्तृत्वगुणभेदेन च पृथगनुचिन्तनेऽप्येकविद्यात्वं, तथोपकोसलविद्यान्तरादित्यविद्यादहरवि-द्यादीनां स्थानभेदेन शाण्डिल्यविद्यावैश्वानरविद्यादीनामणुत्वमहत्त्वादिगुणभेदेनान्यासामपि विद्यानां तत्तत्प्रकरणाम्नातगुण-विशेषैश्च पृथगनुचिन्तनेऽप्येकविद्यात्वमिति पूर्वपक्षाशयः । किमुपासनावाक्येषूपासनाभावनारूपकार्यप्रतिपादनं नास्तीति गुणभेदेन तद्भेदो नास्तीत्युच्यते, **अथवा**—गुणानां कार्यविशेषणत्वाभावेनाकार्यतया तद्भेदाद्भेदो नास्तीति, उत तेषां कार्यान्वयेऽपि गुणिन एकत्वेन गुणभेदान्न भेद इति । **नाद्य** इत्याह—**यदि वस्तुनिष्ठानीति** । उपासनावाक्यानां भावनारूपकार्यपरत्वाभावे प्रवर्तकविध्यभावादेकविद्यात्वपक्षेऽपि तदनुष्ठानं न स्यादिति भावः । **द्वितीय**पक्षमाशङ्क्य परिहरतीत्यवतारयति—**उपासनाप्रवृत्तेरिति** । ब्रह्मविशेषणानामपि गुणानामरुणैकहायनीन्यायादुपासनाभावना-

नात्वमप्यस्मिन्पक्षे गुणान्तरपरत्वान्नानर्थकम् । तस्मात्स्वपरशाखाविहितमेकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यं विद्याकात्स्र्न्यायेति । एवं प्राप्ते प्रतिपाद्यते—नानेति । वेद्याभेदेऽप्येवंजातीयका विद्या भिन्ना भवितुमर्हति । कुतः ? शब्दादिभेदात् । भवति हि शब्दभेदः 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' ( छा० ३।१४।१ ) इत्येवमादिः । शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्ताच्छब्दान्तरे कर्मभेदः कृतानुबन्धत्वादिति । आदिग्रहणाद्गुणादयोऽपि यथासंभवं भेदहेतवो योजयितव्याः । ननु—वेदेत्यादिषु शब्दभेद एवावगम्यते, न यजतीत्यादिवदर्थभेदः; सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदात्, अर्थान्तरासंभवाच्च, तत्कथं शब्दभेदाद्विद्याभेद ? इति; नैष दोषः; मनोवृत्त्यर्थत्वाभेदेऽप्यनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेः । एकस्यापीश्वरस्योपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते । तथैकस्यापि प्राणस्य तत्रतत्रोपास्यस्याभेदेऽप्यन्यादृग्गुणोऽन्यत्रोपासितव्योऽन्यादृग्गुणश्चान्यत्रेत्येवमनुबन्धभेदात् वेद्यभेदे सति विद्याभेदो विज्ञायते । नचात्रैको विद्याविधिरितरे गुणविधय इति शक्यं वक्तुम्; विनिगमनायां हेत्वभावात्, अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः । नचास्मिन्पक्षे समानाः सन्तः सत्यकामादयो गुणा असकृच्छ्रावयितव्याः । प्रतिप्रकरणं चेदंकामेनेदमुपासितव्यमिदंकामेन चेदमिति नैराकाङ्क्ष्यावगमान्नैकवाक्यतापत्तिः । नचात्र वैश्वानरविद्यायामिव समचोदनाऽपरास्ति, यद्बलेन प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूत्वैकवाक्यतामियुः । वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत । तस्मात्सुष्ठूच्यते—नाना शब्दादिभेदादिति । स्थिते चैतस्मिन्नधिकरणे सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम् ॥ ५८ ॥ इति त्रयस्त्रिंशं शब्दादिभेदाधिकरणम् ॥

## भामती ।

उच्यते—भवेदेतदेवं यदि वस्तुनिष्ठान्युपासनवाक्यानि, किंतु तद्विषयामुपासनाभावनां विदधति । सा च कार्यरूपा; यद्यपिचोपासनाभावना उपासनाधीननिरूपणा, उपासनंचोपास्याधीननिरूपणमुपास्यंचेश्वरादि व्यवस्थितरूपम्; तथाप्युपासनाविषयीभावोऽस्य कदाचित्कस्यचित्केनचिद्रूपेणेत्यपरिनिष्ठित एव । यथैकः स्त्रीकायः केनचिद्भक्ष्यतया केनचिदुपगन्तव्यतया केनचिदपत्यतया केनचिन्मातृतया केनचिदुपेक्षणीयतया विषयीक्रियमाणः पुरुषेच्छातन्त्रः, एवमिहापि उपासनानि पुरुषेच्छातन्त्रतया विधेयतां नातिक्रामन्ति । नच तत्तद्गुणतयोपासनानि गुणभेदान्न भिद्यन्ते । नचाग्निहोत्रमिवोपासनं विधाय दधितण्डुलादिगुणवदिह सत्यसंकल्पत्वादिगुणविधिर्येनैकशास्त्रत्वं स्यात्, अपि तूत्पत्तावेवोपासनानां तत्तद्गुणविशिष्टानामवगमात् तत्रागृह्यमाणविशेषतया सर्वासां भेदस्तुल्यः । नच समस्तशाखाविहितसर्वगुणोपसंहारः शक्यानुष्ठानस्तस्माद्भेदः । **नचास्मिन्पक्षे समानाः सन्तः सत्यकामादय इति ।** केचित्खलु गुणाः कासुचिद्विद्यासु समानास्तेनैकविद्यात्वे आवर्तयितव्याः; एकत्रोक्तत्वात् । विद्याभेदे तु न पौनरुक्त्यमेकस्यां विद्यायामुक्ता विद्यान्तरे नोक्ता इति विद्यान्तरस्यापि तद्गुणत्वाय वक्तव्या अनुक्तानामप्राप्तेरिति ॥ ५८ ॥ **इति त्रयस्त्रिंशं शब्दादिभेदाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

तु वस्तुनिष्ठानीति शेषः । **तद्विषयां** वस्तुविषयाम् । **उपासनाभावनां** उपासनानुष्ठानम् । उपासकप्रवृत्तेरुपासनाधीननिरूपणत्वेऽप्यभेदमाशङ्कते—**यद्यपिचेति** । अस्येश्वरादेः कस्यचिदपि षोडशकलादेः कदाचित्तत्तदुपास्तिसमये केनचित्सत्यकामत्वादिसंयद्वामत्वादिना च रूपेणोपासनविषयभाव इत्यर्थः । **ननु** सत्यकामत्वादिगुणानामुपास्यत्वेन कार्यरूपत्वाच्चकोरेक्षणत्वादिभ्यो वैषम्येऽपि न विद्याभेदकत्वम्; गुणिन एकत्वाद्, गुणानां चोपसर्जनत्वादत आह—**नच तत्तद्गुणतयेति** । तृतीयेयमित्थंभावे । तत्तद्गुणवत्त्वरूपेण यान्युपासनानि विहितानि तानि गुणभेदाद् न भिद्यन्ते इति न, अपितु भिद्यन्त एव; छत्रचामरादिगुणभेदेन राजोपास्तीनां भेददर्शनादित्यर्थः । **ननु** गुणभेदेऽपि कर्मैक्यवदुपासनैक्यं किं न स्यादत आह—**नचाग्निहोत्रमिवेति** । इवकारो दृष्टान्ते धर्म्यर्थो वत्कारो गुणार्थः । अग्निहोत्रे दध्यादिदशद्रव्याणामुत्पन्नशिष्टत्वान्न कर्मभेदकत्वमुपास्तीनां तूत्पत्तिशिष्टगुणभेदाद्भेदः, आमिक्षावाजिनभेदादिव कर्मभेद इत्यर्थः । अशक्तेश्च न सर्वोपासनैक्यमित्याह—**नच समस्तेति** । **केचित्खलु गुणा इति** । सत्यकामत्वादयो दहरविद्यायां शाण्डिल्यविद्यायां च समा इति । एवंरूपभेदात्तदनुरक्तोपासनावच्छिन्ना भावना-

## कल्पतरुपरिमलः ।

रूपकार्यान्वयोऽस्तीति भावः । **तृतीय**माशङ्क्य निराकरोतीत्यवतारयति—**ननु सत्यकामत्वादिगुणानामिति** ।

( ३४ अधिकरणम् ) **विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥**

स्थिते विद्याभेदे विचार्यते किमासामिच्छया समुच्चयो विकल्पो वा स्यात् । अथवा—विकल्प एव नियमेनेति । तत्र स्थितत्वात्तावद्विद्याभेदस्य न समुच्चयनियमे किंचित्कारणमस्ति । ननु—भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते । नैष दोषः; नित्यताश्रुतिर्हि तत्र कारणं, नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति । तस्मान्न समुच्चयनियमः । नापि विकल्पनियमः; विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात् । पारिशेष्याद्याथाकाम्यमापद्यते । नन्वविशिष्टफलत्वादासां विकल्पो न्याय्यः । तथाहि—'मनोमयः प्राणशरीरः' ( छा० ३।१४।२ ) 'कं ब्रह्म खं ब्रह्म' (छा० ४।१०।५ ) 'सत्यकामः सत्यसंकल्पः' ( छा० ८।१।५ ) इत्येवमाद्यास्तुल्यवदीश्वरप्राप्तिफला लक्ष्यन्ते । नैष दोषः; समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात् । तस्माद्याथाकाम्यप्राप्तावुच्यते विकल्प एवासां भवितुमर्हति, न समुच्चयः । कस्मात् ? अविशिष्टफलत्वात् । अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणम् । एकेनचोपासनेन साक्षात्कृत उपास्ये विषय ईश्वरादौ द्वितीयमनर्थकम् । अपिचासंभवः; साक्षात्करणस्य समुच्चयपक्षे चित्तविक्षेपहेतुत्वात् । साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः—'यस्य स्यादद्धा न विचिकित्साऽस्ति' ( छा० ३।१४।४ ) इति 'देवो भूत्वा देवानप्येति' ( बृ० ४।१।२ ) इति चैवमाद्याः । स्मृतयश्च—'सदा तद्भावभावितः' ( ८।६ ) इत्येवमाद्याः । तस्मादविशिष्टफलानां विद्यानामन्यतमामादाय तत्परः स्याद्यावदुपास्यविषयसाक्षात्करणेन तत्फलं प्राप्तमिति ॥ ५९ ॥ इति चतुस्त्रिंशं विकल्पाधिकरणम् ॥

## भामती ।

**विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥** अग्निहोत्रदर्शपूर्णमासादिषु पृथगधिकाराणामपि समुच्चयो दृष्टो नियमवान्, तेषां नित्यत्वात्, उपासनास्तु काम्यतया न नित्यास्तस्मान्नासां समुच्चयनियमः । तेन समानफलानां दर्शपूर्णमासज्योतिष्टोमादीनामिव न नियमवान्विकल्पः फलभूमार्थिनः समुच्चयस्यापि संभवादिति पूर्वः पक्षः । उपासनानाममूषामुपास्यसाक्षात्करणसाध्यत्वात्फलभेदस्यैकेनोपासनेनोपास्यसाक्षात्करणे तत एव फलप्रतिलाभे तु कृतमुपासनान्तरेण । नच साक्षात्करणस्यातिशयसंभवस्योपायसहस्रैरपि तादवस्थ्यात्तन्मात्रसाध्यत्वाच्च फलावाप्तेः उपासनान्तराभ्यासे च चित्तैकाग्रताव्याघातेन कस्यचिदुपासनानिष्पत्तेरिह विकल्प एव नियमवानिति राद्धान्तः ॥ ५९ ॥ इति चतुस्त्रिंशं विकल्पाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

भिधायिशब्दभेदाद् गुणानां पौनरुक्त्यादशक्तेश्च विद्याभेदो दर्शितः । अन्यदपि पूर्णामसंवर्तिनीं श्रियं लभते सर्वेष्वात्मस्वन्नमत्तीत्यादिफलभेदादिकं द्रष्टव्यम् । **तदुक्तं सूत्रे**—शब्दादिभेदादिति ॥ ५८ ॥ **इति त्रयस्त्रिंशं शब्दादिभेदाधिकरणम् ॥**[1]

**विकल्पो विशिष्टफलत्वात् ॥ ५९ ॥** विद्याभेदादिचिन्तानन्तरम् अहंग्रहप्रतीकाङ्गावबद्धोपास्तीनामनुष्ठानप्रकारोऽधिकरणत्रयेण निरूप्यते । अहंग्रहोपास्तीनां यथाकाममनुष्ठानमिति पूर्वपक्षयिष्यन् समुच्चयनियमेन किमिति न पूर्वपक्षः क्रियते ? भिन्नाधिकाराणामपि दर्शादीनां समुच्चयनियमदर्शनादित्याशङ्कते—**तावत्—अग्निहोत्रेति** । पृथगधिकाराणामपि समुच्चयो नियमवान् दृष्टः, यथाऽग्निहोत्रदर्शादेरित्यर्थः । परिहरति—**तेषां नित्यत्वादित्यादिना** । यस्याद्धा साक्षात्स्यादुपास्यं न च विचिकित्सा संशयोऽस्ति प्राप्नुयाम् अहं फलं न वेति । तस्य ब्रह्मप्राप्तिर्भवेदित्यर्थः । साक्षात्कारेण अहंग्रहोपास्यदेवो भूत्वा देवानप्येति प्राप्नोति ॥ ५९ ॥ **इति चतुस्त्रिंशं विकल्पाधिकरणम् ॥**[2]

## कल्पतरुपरिमलः ।

**दशद्रव्याणामिति** । दशसंख्यायुक्तद्रव्याणामिति मध्यमपदलोपी समासः । दशद्रव्याणि पयोदध्याज्यतण्डुलौदनयवागूमांससोमजलतैलानि ॥ ५८ ॥ **इति त्रयस्त्रिंशं शब्दादिभेदाधिकरणम् ॥**

**विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ अहंग्रहोपास्यदेवो भूत्वेति** । त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीत्यभेदध्यानदार्ढ्येन तज्जन्यसाक्षात्कारोऽप्युपास्यदेवोऽहमस्मीति जायते । तं लब्ध्वैवोपास्यदेवतासायुज्यं प्राप्नोतीत्यर्थः ॥ ५९ ॥ **इति चतुस्त्रिंशं विकल्पाधिकरणम् ॥**

---

१ तत्र सूत्रम् १—नाना शब्दादिभेदात् ५८ ॥

२ तत्र सूत्रम् १—विकल्पोऽविशिष्टफलत्वात् ५९ ॥

( ३५ अधिकरणम् ) **काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥**

अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम् । यासु पुनः काम्यासु विद्यासु 'स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' ( छा० ३।१५।२ ) 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा० ७।१।५ ) इति चैवमाद्यासु क्रियावददृष्टेनाऽऽत्मनात्मीयं फलं साधयन्तीषु साक्षात्करणापेक्षा नास्ति । ता यथाकामं समुच्चीयेरन् । न वा समुच्चीयेरन्पूर्वहेत्वभावात्, पूर्वस्याविशिष्टफलत्वादित्यस्य विकल्पहेतोरभावात् ॥ ६० ॥

( ३६ अधिकरणम् ) **अङ्गेषु यथाश्रयभावः ॥ ६१ ॥**

---

भामती ।

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥** यासूपासनासु विनोपास्यसाक्षात्करणमदृष्टेनैव काम्यसाधनं तासां काम्यदर्शपौर्णमासादिवत्पुरुषेच्छावशेन विकल्पसमुच्चयाविति साम्प्रतम् ॥ ६० ॥ **इति पञ्चत्रिंशं काम्याधिकरणम् ॥**

**अङ्गेषु यथाश्रयभावः ॥ ६१ ॥** तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलमित्यत्रोपासनासु फलश्रुतेः पर्णमयीन्यायेनार्थवादतयोपासनानां क्रत्वर्थत्वेन समुच्चयनियममाशङ्क्य पुरुषार्थतयैकप्रयोगवचनग्रहणाभावे समुच्चयनियमो निरस्तः, इह तु सत्यपि पुरुषार्थत्वे कस्मान्नैकप्रयोगवचनग्रहणं भवतीति पूर्वोक्तमर्थमाक्षिपन् प्रत्यवतिष्ठते । यद्यपि हि काम्या एता उपासनाः; तथापि न स्वतन्त्रा भवितुमर्हन्ति । तथासति हि क्रत्वर्थानाश्रिततया क्रतुप्रयोगाद्बहिरप्यमूषां प्रयोगः प्रसज्यते । नच प्रयुज्यन्ते; तत्कस्य हेतोः ? क्रत्वर्थाश्रितानामेव तासां तत्तत्फलोद्देशेन विधानादिति । एवंचाश्रयतन्त्रत्वादाश्रितानां प्रयोगवचनेनाश्रयाणां समुच्चयनियमेनाश्रितानामपि समुच्चयनियमो युक्तः; इतरथा तदाश्रितत्वानुपपत्तेः । सच प्रयोगवचन उपासनाः समुच्चिन्वंस्तत्तत्फलकामनानामवश्यंभावमाक्षिपति, तदभावे

वेदान्तकल्पतरुः ।

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥** प्रतीकोपास्तीनामुपास्तित्वादहंग्रहोपास्तिवद्विकल्पनियममाशङ्क्याहंग्रहासु साक्षात्कारसाधनत्वमुपाधिमाह—**यास्विति** । यो वायुं दिशां वत्सं वेद स नित्यमवियुक्तवत्सोपासनान्न पुत्ररोदं पुत्रनिमित्तरोदनं करोति जीवत्पुत्रो भवतीत्यर्थः ॥ ६० ॥ **इति पञ्चत्रिंशं काम्याधिकरणम् ॥**[1]

**अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ ननु** तन्निर्धारणानियम इत्यत्राङ्गावबद्धोपासनानां पृथक्फलत्वादनित्यत्वमुक्तं, तत्कथमिदानीमाश्रयवन्नित्यतया शङ्क्यते ? अत आह—**उपासनास्वित्यादिना । नन्वङ्गं** प्रयुङ्क्ते प्रयोगविधिः, काम्यफलसाधनत्वे चोपास्तीनामनङ्गत्वात् कथं तासां प्रयोगवचनपरिग्रहस्तत्राह—**यद्यपि काम्य इति । तत्तत्फलोद्देशेनेति ।** काम्यमानफलोद्देशेनेत्यर्थः । **ननु** क्रत्वर्थाश्रिता उपासनाः फले विधीयन्ते, एतावता कथं तासां समुच्चयसिद्धिरत आह—**एवंचेति ।** साङ्गं प्रधानं युगपत्कर्तव्यमित्याश्रयाणां क्रत्वङ्गानां समुच्चयनियमः प्रयोगवचनेन कृतः । तन्नियमेनाश्रितानामप्युपासनानां समुच्चयनियमो युक्तः । कुतः ? आश्रयतन्त्रत्वादाश्रितानामिति योजना । **ननु** फलकामनायां सत्यामुपासना अनुष्ठीयन्ते, कथमासां क्रत्वङ्गैः सह नित्यं समुच्चित्यानुष्ठानम् ? नित्याऽनित्यसंयोगविरोधाद्, अत आह—**सच प्रयोगवचन इति** । उपास्तीनां क्रत्वङ्गसमुच्चयसिद्ध्यर्थं फलकामना अपि प्रयोगविधिरेवानुष्ठापयतीत्यर्थः ।

कल्पतरुपरिमलः ।

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥६०॥ इति पञ्चत्रिंशं काम्याधिकरणम् ॥**

**अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ कामनाया अविधेयत्वादित्यन्तेन** ग्रन्थेन प्रयोगविध्याक्षेप्यतया कामनानियमस्यासंभव उक्तः, नतु सर्वथा तदसंभवः; "तद्यथाऽऽम्रफलार्थे निमिते च्छाया गन्ध इत्यनूत्पद्यते, एवं धर्मं चर्यमाणम् अर्था अनूत्पद्यन्ते" इत्यापस्तम्बोक्तन्यायात् स्वर्गाद्यर्थमनुष्ठीयमानेषु क्रतुषु तत्प्रयोगमध्ये समुच्चित्यानुष्ठेयैः कैश्चन पदार्थैरयत्नेन नान्तरीयकतया सिध्यत्सु फलेषु कामबहुलानां कर्मिणां स्वत एव कामनाऽसंभवात्, अन्यथा प्रस्तरप्रहरणप्रभृत्यङ्गफलेषु का गतिः ? अपापश्लोकश्रवणाद्यार्थवादिकमेवाङ्गफलं न विवक्षितम्; "आयुराशास्त" इत्यादिमन्त्रकरणे

---

१ तत्र सूत्रम् १—काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ६० ॥

कर्माङ्गेषूद्गीथादिषु य आश्रिताः प्रत्यया वेदत्रयविहिताः, किं ते समुच्चीयेरन्किंवा यथाकामं स्युरिति संशये यथाश्रयभाव इत्याह । यथैवैषामाश्रयाः स्तोत्रादयः संभूय भवन्त्येवं प्रत्यया अपि ; आश्रयतन्त्रत्वात्प्रत्ययानाम् ॥ ६१ ॥

## शिष्टेश्च ॥ ६२ ॥

यथावाश्रयाः स्तोत्रादयस्त्रिषु शिष्यन्त एवमाश्रिता अपि प्रत्ययाः । नोपदेशकृतोऽपि कश्चिद्विशेषोऽङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थः ॥ ६२ ॥

## समाहारात् ॥ ६३ ॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' ( छा० १।५।५) इति च प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युत्पन्नं क्षतं हौत्रात्कर्मणः प्रतिसमादधातीति ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थसंबन्धसामान्यात्सर्ववेदोदितप्रत्ययोपसंहारं सूचयतीति लिङ्गदर्शनम् ॥ ६३ ॥

---

### भामती ।

तासां समुच्चयनियमाभावादिति मन्वानस्य पूर्वः पक्षः । राद्धान्तस्तु यथाविहितोद्दिष्टपदार्थानुरोधी प्रयोगवचनो न पदार्थस्वभावानन्यथयितुमर्हति, किंतु तदविरोधेनावतिष्ठते । तत्र क्रत्वर्थानां नित्यवदाम्नानात्तथाभावस्य च संभवान्नियमेनैतान्समुच्चिनोतु । कामावबद्धास्तूपासनाः कामानामनित्यत्वान्न समुच्चयेन नियन्तुमर्हति । नहि कामा विधीयन्ते, येन समुच्चीयेरन्नपितूद्दिश्यन्ते । मानान्तरानुसारी चोद्देशो न तद्विरोधेनोद्देश्यमन्यथयति; तथा सत्युद्देशानुपपत्तेः । तस्मात्कामानामनित्यत्वात्तदवबद्धानामुपासनानामप्यनित्यत्वम्; नित्यानित्यसंयोगविरोधात्, सत्यपि तदाश्रयाणां नित्यत्वे । इदमेव चाश्रयतन्त्रत्वमाश्रितानां यदाश्रये सत्येव वृत्तिर्नासतीति, नतु तत्र वृत्तिरेव नावृत्तिरिति, तदिदमुक्तम्—**आश्रयतन्त्राण्यपि हीति** ॥ ६१ ॥ ६२ ॥ **होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीति ।**

### वेदान्तकल्पतरुः ।

कामनाया अविधेयत्वान्न प्रयोगविधिप्रयोज्यत्वमिति वक्ष्यमाणमभिप्रेत्य मन्वानस्येत्युक्तम् । प्रयोगविधिः फलकामनानामवश्यं भावमाक्षिपतीत्येतद्दूषयति—**यथाविहितेति** । यः पदार्थो यथा विहितः यश्च पदार्थो यथोद्दिष्टः सिद्धवद्गृहीतः तदनुरोधी प्रयोगवचनो न पदार्थस्वभावं नित्यत्वादिकमन्यथा करोति, किंत्वन्यतः प्रमितपदार्थस्वभावमनुसरतीत्यर्थः । ततः किं जातमत आह—**तत्रेति** । क्रत्वर्थानामुद्गीथादीनां यथाऽन्यन्नित्यं फलं परामर्शमन्तरेणाम्नायते, तद्वदाम्नानादित्यर्थः । **ननु** विश्वजिदादौ फलाश्रवणेऽपि फलं कल्प्यते, तद्वदिह किं न स्यादत आह—**तथाभावस्य चेति** । फलवत्संनिधावाम्नातत्वेन फलकल्पनानुपपत्तेस्तथाभावस्य संभवादेतानुद्गीथादीन्नियमेन समुच्चिनोतु प्रयोगवचन इत्यर्थः । **ननु** विध्युपाधित्वादुद्देशोऽपि समुच्चयेन प्रवर्ततां । नेत्याह—**मानान्तरानुसारीति ।** सिद्धवद्ग्रहणं ह्युद्देशस्य लक्षणं, मानान्तराप्रमितावुद्देश्यत्वव्याघात इत्यर्थः । उपसंहरति—**तस्मात्कामानामिति ।** सत्यप्युपासनाश्रयाणां नित्यत्वे उपसनानां कामावबद्धानामनित्यत्वमिति प्रतिज्ञा । अस्यां हेतुः—**नित्यानित्यसंयोगविरोधादिति** । उद्गीथादीनां हि नित्यः क्रतुसंयोगः, उपासनानामनित्यः फलसंयोगः । एतौचेतरेतरविरुद्धौ उद्गीथादीनां च नित्यत्वानित्यत्वे इतरेतरविरुद्धौ धर्मावापादयत इत्यर्थः । **नन्वाश्रयतन्त्रत्वादाश्रितोपासननित्यत्वमुक्तं**, ततश्च समुच्चयनियमे उपास्तीनां प्रयोगविध्याक्षिप्ते तदर्थं कामानां नित्यत्वमप्याक्षेप्यमिति, तत्राह—**इदमेव चेति** । यथा धूमस्याग्नितन्त्रत्वेऽपि न यावदग्न्यनुवृत्तिः, किंतु सत्येवाग्नौ भवनमेवं सत्येवाश्रये भवनं तत्तन्त्रता, इतश्चानित्यानामप्याश्रयतन्त्रत्वोपपत्तेर्न तत्सिद्ध्यर्थं कामानां नित्यत्वं प्रयोगविधिनाऽऽक्षेप्यमित्यर्थः ॥ ६१ ॥ ६२ ॥ एवमधिकरणस्यार्थमुक्त्वा ग्रन्थसंयोजनां करोति—**अपिर्भिन्नक्रम इत्यादिना** । भिन्नक्रमत्वमभिनयेन दर्शयति—**दुरुद्गीथ-**

### कल्पतरुपरिमलः ।

प्रकाश्यमायुरादिरूपं प्रस्तरप्रहरणप्रभृत्यङ्गफलं तु विवक्षितमेव । करणमन्त्रस्य पदैः सर्वैरप्यनुष्ठेयस्यैव साक्षात्संबन्धिद्रव्यप्रकाश्यत्वनियमेन प्रस्तरयागकरणमन्त्रप्रकाश्यानामायुरादीनां तत्फलतयैव तत्संबन्धस्य निर्वहणीयत्वात्, एवमेव नवमाध्याये स्थापितत्वात् । **ननु** सिद्धान्तभाष्यव्याख्यानानन्तरं समाहारादिति पूर्वपक्षसूत्रभाष्यं व्याख्यायते, इदं व्यत्यस्तमित्याशङ्क्याह—**एवमधिकरणस्यार्थमुक्त्वेति** । बुद्धिसौकर्यार्थमधिकरणशरीरं सङ्कलितम्, इदानीं पूर्वपक्षभाष्यव्याख्येयांशमुपादाय व्याख्यायत इत्यर्थः । तत्र यथाश्रयतन्त्रत्वादुपासनानां पुरुषार्थानामपि समुच्चयः, तदा गोदोहनादीना-

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्यागुणं च विद्याश्रयं सन्तमोंकारं वेदत्रयसाधारणं श्रावयति—'तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' (छा० १।१।९) इति च। ततश्चाश्रयसाधारण्यादाश्रितसाधारण्यमिति लिङ्गदर्शनमेव। अथवा—गुणसाधारण्यश्रुतेश्चेति। यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युर्न स्यात्ततस्तदाश्रयाणां प्रत्ययानां सहभावः। तेतूद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते। ततश्चाश्रयसहभावात्प्रत्ययसहभाव इति ॥ ६४ ॥

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

न वेति पक्षव्यावर्तनम्। न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति। कुतः? तत्सहभावाश्रुतेः। यथा हि त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते—'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तोत्रमनुशंसति प्रस्तोतः साम गाय होतरेतद्यज' इत्यादिना। नैवमुपासनानां सहभावश्रुतिरस्ति। ननु प्रयोगवचन एषां सहभावं प्रापयेत्, नेति ब्रूमः—पुरुषार्थत्वादुपासनानाम्। प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयेत्। उद्गीथाद्युपासनानि क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत्पुरुषार्थानीत्यवोचाम 'पृथग्घ्यप्रतिबन्धः फलम्' (ब्र० सू० ३।३।४२) इत्यत्र। अयमेव चोपदेशाश्रयो विशेषोऽङ्गानां तदालम्बनानां चोपासनानां यदेकेषां क्रत्वर्थत्वमेकेषां पुरुषार्थत्वमिति। परं च लिङ्गद्वयमकारणमुपासनसहभावस्य श्रुतिन्यायाभावात्। नच प्रतिप्रयोगमाश्रयकात्स्न्र्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं शक्यम्; अतत्प्रयुक्तत्वादुपासनानाम्। आश्रयतन्त्राण्यपि ह्युपासनानि काममाश्रयाभावे मा भूवन्न त्वाश्रयसहभावेन सहभावनियममर्हन्ति; तत्सहभावाश्रुतेरेव। तस्माद्यथाकाममेवोपासनान्यनुष्ठीयेरन् ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्—'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा० ४।१७।१०) इति। सर्वप्रत्ययोपसंहारे हि सर्वे सर्वविदः इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत। तस्माद्यथाकाममुपासनानां समुच्चयो विकल्पो वेति ॥ ६६ ॥ इति षट्त्रिंशं यथाश्रयभावाधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ
श्रीमच्छारीरकमीमांसाभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

### भामती।

अपिभिन्नक्रमो दुरुद्गीथमपीति। वेदान्तरोदितप्रणवोद्गीथैकत्वप्रत्ययसामर्थ्याद्धोतृकर्मणः शंसनादुद्गाता प्रतिसमादधाति, किं तदित्यत आह—**दुरुद्गीथमपि** वेदान्तरोदिते चौद्गात्रे कर्मणि उत्पन्नं क्षतम्। एवं ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्येत्यादि योजनीयम् ॥ ६३ ॥ **गुणसाधारण्यश्रुतेश्च।** अस्य सूत्रस्यान्वयमुखेन व्यतिरेकमुखेन च व्याख्या। शेषमतिरोहितार्थम् ॥ ६४ ॥ ६५ ॥ ६६ ॥ इति षट्त्रिंशं यथाश्रयभावाधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां
तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

### वेदान्तकल्पतरुः।

**मपीति।** एवं हि योजिते यथा प्रशंसाधिक्यं लभ्यते, न तथा होतृषदनादपीति योजित इति वेदान्तरोदितं प्रणवः स्ववेदे चोद्गीथं तयोरेकत्वज्ञानमथ खलु य उद्गीथः स प्रणवः यः प्रणवः स उद्गीथः इत्युपासनं, तत्सामर्थ्यादुद्गाता स्वकर्मण्युद्गातृवत्क्षतं स्वरादिप्रमादरूपं जातं, तद्धोतृकृतसम्यक्शस्त्रशंसनं हेतुं कृत्वा समादधाति ऋग्वेदादिव्यापिनः प्रणवस्य स्ववेदगतोद्गीथस्य चैकत्वस्य तेन चिन्तितत्वादित्येतमर्थं होतृषदनाद्धैवापीत्यादिश्रुतेर्दर्शयति—**वेदान्तरोदितेत्यादिना।** दुरुद्गीथमेव व्याचष्टे—**वेदान्तरोदिते चेति।** ऋग्वेदापेक्षया सामवेदो वेदान्तरम्। एवं वाक्यं योजयित्वा तस्मिन्

## वेदान्तकल्पतरुः ।

समुच्चयलिङ्गदर्शनत्वघटकं भाष्यमवतारयति—**एवं ब्रुवन्निति** । **अन्वयमुखेनेति** । आश्रयसाधारण्ये आश्रितसाधारण्यमन्वयः, स आश्रयसाधारण्याभावे आश्रितसाधारण्याभावरूपव्यतिरेकव्याख्यया भाष्ये दृढीकृत इत्यर्थः । चमसं **चोन्नीयोद्धृत्य** स्तोत्रकरणार्थम्**उपाकरोति** प्रैषति । **एवं विदिति** । ऋग्वेदादिविहिताङ्गलोपे व्याहृतिहोमप्रायश्चित्तादिज्ञत्वं ब्रह्मण एवंवित्त्वम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ **इति षट्त्रिंशं यथाश्रयभावाधिकरणम् ॥**[1]

**इति श्रीपरमहंसपरिव्राजकामलानन्दविरचिते वेदान्तकल्पतरौ तृतीयाध्यायस्य तृतीयः पादः ॥**

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ३६ | ११७ |
| सूत्राणि | ६६ | ४२५ |

## कल्पतरुपरिमलः ।

मपि स्याद् अविशेषादित्याशङ्क्य ततो विशेषप्रदर्शनार्थं सूत्रं—**शिष्टेश्चेति** । गोदोहनादयः चमसादिस्थानापन्नतयोपदिश्यन्ते, तेषां समुच्चये चमसादीनां निवृत्त्या चमसेनापः प्रणयेदित्यादिशास्त्राणामप्रामाण्यं स्यादिति गोदोहनादीनां न समुच्चयः । नैवमुपासनानां किंचित्स्थानापत्त्योपदेशोऽस्ति, किंतु तत्स्थानापत्तिराहित्येनोद्गीथाद्युपदेशविशिष्ट एव तेषामुपदेश इति । एवमस्य सूत्रस्यार्थो भाष्य एव स्पष्ट इत्यर्थः । **समुच्चयलिङ्गदर्शनत्वघटकं भाष्यमिति** । छान्दोग्ये "य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः" इत्युद्गातुः प्रणवोद्गीथैक्योपासनाविधेरर्थवादो होतृषदनादित्यादिः । उद्गातृवेदविहितप्रणवोद्गीथैकत्वविज्ञानस्य ऋग्वेदोदितप्रणवसंबन्धनियमो दृष्टः । अयं वेदान्तरोदितोपासनासंबन्धनियमोऽपि तस्यास्तीत्यत्र लिङ्गम् । वेदान्तरोदितप्रणवरूपपदार्थसंबन्धेन सह वेदान्तरोदिततया सादृश्यात् सादृश्यमवलम्ब्याप्यस्ति लिङ्गोपन्यासः । यथा "विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वमि"ति जैमिनिसूत्रे । तत्र "औदुम्बरो यूपो भवतीत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै" इत्यत्रोर्गवरोधशब्दोक्तान्नप्राप्तिरूपफलाय यूपाश्रय उदुम्बरतागुणो विधीयत इति प्रापय्य वैकृतसोमापौष्णपशुप्रकरणे चोदकप्राप्यस्य यूपस्याप्रकृतत्वेन प्रकरणादाश्रयसंबन्धालाभाद् वाक्येनैवाश्रयसंबन्धस्य फलसंबन्धस्य च बोधने वाक्यभेदप्रसङ्गाच्च गुणफलविधिर्न संभवतीत्येवंजातीयका अर्थवादा इति सिद्धान्तं कृत्वा "क्वचिदप्सुयोनिर्वा अश्व" इत्यादावप्सुयोनिरश्वः कर्तव्य इत्येवमादिविधिरशक्यत्वान्न संभवति । "वायुर्वै क्षेपिष्ठा देवते"त्यादौ वायुः क्षेपिष्ठः कार्य इत्यादिविधिः सिद्धत्वान्न संभवतीति तत्र स्तुत्यर्थत्वमेव वाच्यम्; तत्सामान्याद्विध्यसंभवरूपतत्सादृश्यादितरेषूदुम्बरादिष्वपि तथात्वमिति सादृश्यमवलम्ब्य स्तुत्यर्थत्वमुपपादितम् । एवमिहापि योजनीयम् । "एवं समाहारा"दिति सूत्रे समाहारशब्दोक्तं दोषसमाधानं हेतुत्वेन न विवक्षितं, किंतु "आनन्दमयोऽभ्यासा"दित्यत्रानन्दमयशब्द इव समाहारशब्दः स्थलप्रदर्शनार्थ इति द्रष्टव्यम् । **आश्रयसाधारण्येति । अत्रेदं वक्तव्यम्**—यदोङ्कारस्याश्रयस्य वेदत्रये साधारण्येन तदाश्रितोपासनायास्तथात्वमुपासनानां समुच्चये लिङ्गमुक्तं भाष्ये, तदयुक्तम्; "ओमित्येतदक्षरमुद्गीथमुपासीते"त्यत्र स वेदव्यापिन ओङ्कारमात्रस्योपासनाश्रयत्वं मा भूदित्येतदर्थमुद्गीथावयवत्वेन विशेषणमिति "व्याप्तेश्च समञ्जस"मित्यधिकरणे निरूपितत्वेनोपासनाश्रयत्वेन प्रकृतस्योङ्कारस्य सर्ववेदसाधारण्याभावात् "तेनेयं त्रयी विद्ये"ति प्रकृतपरामर्शितच्छब्देनोपासनाश्रयत्वेन प्रकृतस्योङ्कारस्य परामर्श इति तस्य वेदत्रयसाधारण्यसिद्धौ तद्द्वारा "तदनुज्ञाक्षरं यद्धि किंचिदनुजानात्योमित्येव तदाहे"ति प्राचीनवाक्यगततच्छब्दस्याप्युपासनाश्रयोङ्कारपरामर्शित्वेनोपासनानां लोकसाधारण्यस्यापि सिद्धिप्रसङ्गात्, कथंचिदाश्रयसाधारण्येनोपासनानां वेदत्रयसाधारण्यसिद्धावपि तेन सर्वेषु क्रतुप्रयोगेषु नियमेनानुष्ठेयत्वलक्षणस्य समुच्चयस्यासिद्धेश्च । यच्चान्वयस्य व्यतिरेकेण दृढीकरणमाचार्यैरुक्तम्, **तदप्ययुक्तम्**; वेदत्रयसाधारण्यरूपस्यान्वयस्य तद्विलक्षणेन आश्रयस्य सर्वप्रयोगसाधारण्याभावे तदाश्रितस्योपासनस्य सर्वप्रयोगसाधारण्याभाव इति व्यतिरेकेण वह्न्यभावे धूमाभाव इति व्यतिरेकेणेव दृढीकरणाऽसिद्धेः, आश्रयतन्त्रत्वे सत्यप्याश्रयस्य सर्वप्रयोगसाधारण्याभावात् तदाश्रितोपासनानामयोगाच्च । तस्माद् गुणसाधारण्यसू-

[1] तत्र सूत्राणि ६—अङ्गेषु यथाश्रयभावः ६१ शिष्टेश्च ६२ समाहारात् ६३ गुणसाधारण्यश्रुतेश्च ६४ न वा तत्सहभावाश्रुतेः ६५ दर्शनाच्च ६६ ॥

## कल्पतरुपरिमलः।

अस्य वृत्तिकारकृतव्याख्यानमुपहासार्थमनूद्य भाष्यकारैरथ वेत्यादिना स्वयं व्याख्यानान्तरं कृतमिति तात्पर्यकथनं युक्तम्। **चमसं चोन्नीयेति**। यद्यपि ग्रहणस्तोत्रशस्त्राणामिव सहभावग्रहणस्याभावः समुच्चयाभावे न हेतुः, तदभावेऽपि प्रयाजादीनां तद्धर्माणां च समुच्चयदर्शनात्; तथापि तद्वदिह पुरुषार्थानां प्रयोगवचनपरिहारासंभवात्। सहभावश्रुतिरस्तीति चेत्, तद्वशात्समुच्चयसिद्धिरन्वेषणीया, साऽपि नास्तीति न समुच्चय इति भावः। छान्दोग्ये "यदि ऋक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयाद् यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद् यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुया"दित्युपदिश्याम्नायते एवं विद्ध वा इत्यादि। तत्र यज्ञस्य रक्षाङ्गवैकल्यप्रयुक्तदोषपरिहारः यजमानस्य रक्षाफलवत्कर्मणा कर्मफलाप्रतिबन्धः ऋत्विजां रक्षामन्त्रोच्चारणेषु स्वरादिभ्रंशप्रयुक्तदोषपरिहारः; अन्नहीनो दहेद्राष्टं मन्त्रहीनस्तु ऋत्विजः। आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः॥ इति मन्त्रहीने ऋत्विजां दोषस्मरणात्। एवंच यद्युद्गीथाद्युपासना नित्याः स्युः, तदा तत्फलतया कर्मफलाप्रतिबन्धसिद्धेः प्रणवोद्गीथैकत्वोपासनाफलतयोद्गातुः स्वरभ्रंशादिदोषपरिहारादिसिद्धेश्च यजमानस्य सर्वेषामृत्विजां च ब्रह्मणा परिपाल्यत्वं नोच्येत, तदुच्यमानमुपासनानामनित्यत्वं ज्ञापयतीति लिङ्गदर्शनमुक्तम्। तत्रोदाहृतश्रुतावेवंविच्छब्दः प्रकृतप्रायश्चित्ताभिज्ञपर इत्यर्थः॥ ६४॥ ६५॥ ६६॥ **इति षट्त्रिंशं यथाश्रयभावाधिकरणम्॥**

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरुपरिमले तृतीयाध्यायस्य तृतीयः पादः॥**



# अथ तृतीयाध्यायस्य चतुर्थः पादः ।

( १ अधिकरणम् ) **पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ १ ॥**

अथेदानीमौपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानुप्रविशत्याहोस्वित्स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः सिद्धान्तेनैव तावदुपक्रमते—पुरुषार्थोऽत इति। अस्माद्वेदान्तविहितादात्मज्ञानात्स्वतन्त्रात्पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते । कुत एतदवगम्यते—शब्दादित्याह । तथाहि—'तरति शोकमात्मवित्' ( छा० ७।१।३ ) 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३।२।९ ) 'ब्रह्मविदाप्नोति परम्' ( तै० २।१।१) 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' ( छा० ६।१४।२ ) इति । 'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्युपक्रम्य 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' ( छा० ८।७।१ ) इति । 'आत्मा वा अरे द्रष्टव्यः' ( बृ० ४।५।६ ) इत्युपक्रम्य 'एतावदरे खल्वमृतत्वम्' ( बृ० ४।५।१५ ) इत्येवंजातीयका श्रुतिः केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति ॥ १ ॥ अथात्र प्रत्यवतिष्ठते—

भामती ।

**पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ १ ॥** स्थितं कृत्वोपनिषदामपवर्गाख्यपुरुषार्थसाधनात्मज्ञानपरत्वमुपासनानां च तत्तत्पुरुषार्थसाधनत्वमधस्तनं विचारजातमभिनिर्वर्तितम्, संप्रति तु किमौपनिषदात्मतत्त्वज्ञानमपवर्गसाधनतया पुरुषार्थमाहो क्रतुप्रयोगापेक्षितकर्तृप्रतिपादकतया क्रत्वर्थमिति मीमांसामहे । यदा च क्रत्वर्थं, तदा यावन्मात्रं क्रतुप्रयोगविधिनाऽपेक्षितं कर्तृत्वमामुष्मिकफलोपभोक्तृत्वं च । नचैतदनित्यत्वे घटते कृतविप्रणाशाकृताभ्या-

कल्पतरुपरिमलः ।

**पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ १ ॥** पूर्वं परापरब्रह्मविद्यानां गुणोपसंहारनिरूपणेन परिमाणमवधारितम्, इह तासां कर्मनिरपेक्षाणामेव पुरुषार्थसाधनत्वं निरूप्यते । तत्र कर्मानपेक्षाणाममूषां का नु नामेतिकर्तव्यता, नहि तामन्तरेण करणत्वम्, इत्याकाङ्क्षायां यज्ञादयः शमादयः श्रवणादयश्च विद्योत्पत्त्युपयोगिन्य इतिकर्तव्यताश्च निरूप्यन्ते । **ननु** फलभेदाभेदावन्तरेण न विद्याभेदाभेदौ, नच तावन्तरेण गुणोपसंहारानुपसंहारौ, ततः प्रागेव विद्यानां पुरुषार्थसाधनत्वस्य सिद्धत्वात् किं पुनरारम्भेणात आह—**स्थितं कृत्वेति** । फलभेदेन हि विद्याभेदम् उपपाद्य तदसिद्धिशङ्कायां स उपपादनीय इत्यर्थः । अतएव सङ्गतिश्चापरा दर्शिता । औपनिषदात्मज्ञानस्याक्रत्वर्थत्वे पूर्वपक्षसिद्धान्तयोः फले उक्ते ते तूपलक्षणे । उपासनावाक्यानां पूर्वपक्षे कर्मापेक्षितकर्तृस्तावकत्वं सिद्धान्ते तु सगुणैश्वर्यफलोपासनाविधायकत्वमित्यपि द्रष्टव्यम् । **ननू**पनिषत्सु कर्तृभोक्तृत्वातिरिक्तमपि ब्रह्मात्मत्वमात्मन उपदिश्यते, तद्विषयज्ञानस्य कथं कर्मोपयोगस्तत्राह—**यदा चेत्यादिना** । यावन्मात्रं क्रत्वपेक्षितं कर्तृत्वमामुष्मिकफलोपभोक्तृत्वं चेत्यस्यातो नित्यत्वमपीत्यनेन संबोध्यमानस्य तावन्मात्रमुपनिषत्सु विवक्षितमित्युपरितनेनान्वयः । **ननु** कर्तृत्वभोक्तृत्वे देहस्यापि घटेते, अतो न नित्यत्वापेक्षा, नतरां देहव्यतिरिक्तात्मज्ञानापेक्षाऽत आह—**नचैतदिति** । केषांचित्पूर्वपक्षशङ्काबीजानाम् इत्युक्तं,

कल्पतरुपरिमलः ।

**पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ १ ॥** पूर्वपादेनावसरसंगतिं दर्शयन् पादार्थमाह—**अपूर्वमिति** । ब्रह्मविद्यानां स्वातन्त्र्येण फलसाधनत्वनिरूपणं तदितिकर्तव्यतानिरूपणं च न पादार्थः; अर्थभेदेन पादभेदप्रसङ्गात्, किंतु तदितिकर्तव्यतानिरूपणमेव; फलकरणस्य सत इतिकर्तव्यताकाङ्क्षेति तदाकाङ्क्षासिद्ध्यर्थमुपोद्घातत्वेन प्रथमाधिकरणे तासां स्वातन्त्र्येण फलकरणत्वस्य निरूपणमिति द्रष्टव्यम् । **कर्मानपेक्षाणामिति** । स्वयं कर्माङ्गभावेन कर्मापेक्षारहितानां स्वयमेव फलकरणानामित्यर्थः । **का नामेतिकर्तव्यतेति** । उपकोसलविद्यादिषु कासुचित्सगुणविद्याभिर्विद्यायारादुपकारकाङ्गोपदेशे सत्यपि निर्गुणविद्याया अविद्यानिवृत्तिरूपदृष्टफलोत्पादने आरादुपकारकानपेक्षायामपि सर्वासां विद्यानां चित्तशुद्धिचित्तैकाग्र्यद्वारा सन्निपत्योपकारकेषु ज्ञेयोपास्यब्रह्मस्वरूपज्ञानार्थं प्रमाणाभावेन च सन्निपातिष्वाकाङ्क्षास्तीति तात्पर्यार्थः । **ननु फलभेदाभेदावन्तरेणेति** । यद्यपि फलाभेदेऽपि गुणभेदेन ब्रह्मलोकप्राप्तिफलकविद्यानां भेदो भवति, विद्याभेदेऽपि हृदयायतनत्वादिना सगुणनिर्गुणविद्ययोः सत्यकामत्वादिगुणोपसंहारो भवति, विद्यैक्येऽपि सत्यविद्यायामक्ष्या-

## शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥

कर्तृत्वेनात्मनः कर्मशेषत्वात्तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद्विषयद्वारेण कर्मसंबन्ध्येवेत्यतस्तस्मिन्नवगतप्रयोजन आत्मज्ञाने या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्यो मन्यते, यथान्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापँ श्लोकँ शृणोति । यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते । यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिरर्थवादः, तद्वत् । कथं पुनरस्यानारभ्याधीतस्यात्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते ? कर्तृद्वारेण वाक्यात्तद्विज्ञानस्य क्रतुसंबन्ध इति चेत् ; न, वाक्याद्विनियोगानुपपत्तेः । अव्यभिचारिणा हि केनचिद्द्वारेणानारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसंबन्धोऽवकल्पते । कर्ता तु व्यभिचारि द्वारम् ; लौकिकवैदिककर्मसाधारण्यात् । तस्मान्न तद्द्वारेणात्मज्ञानस्य क्रतुसंबन्धसिद्धिरिति, न; व्यति-

### भामती ।

गमप्रसङ्गादतो नित्यत्वमपि तावन्मात्रमुपनिषत्सु विवक्षितम् । इतोऽन्यदनपेक्षितं विपरीतं च नोपनिषदर्थः स्यात् । यथा शुद्धत्वादि । यद्यपि जीवानुवादेन तस्य ब्रह्मत्वप्रतिपादनपरत्वमुपनिषदामिति महता प्रबन्धेन तत्र तत्र प्रतिपादितं; तथाप्यत्र केषांचित्पूर्वपक्षशङ्काबीजानां निराकरणे तदेव स्थूणानिखननन्यायेन निश्चलीक्रियत इत्यस्ति विचारप्रयोजनम् । तत्र यद्यपि प्रोक्षणादिवदात्मज्ञानं न कंचित्क्रतुमारभ्याधीतम्, यद्यपि च कर्तृमात्रं नाव्यभिचरितक्रतुसंबन्धम् ; कर्तृमात्रस्य लौकिकेष्वपि कर्मसु दर्शनात्, येन पर्णतादिवदनारभ्याधीतमप्यव्यभिचरितक्रतुसंबन्धजुहूद्वारेण वाक्येनैव क्रत्वर्थमापद्यते; तथापि यादृश आत्मा कर्ताऽमुष्मिकस्वर्गादिफलभोगभागी देहाद्यतिरिक्तो वेदान्तैः प्रतिपाद्यते न तादृशस्यास्ति लौकिकेषु कर्मसूपयोगः; तेषामैहिकफलानां शरीरानतिरिक्तेनापि यादृशतादृशेन कर्त्रोपपत्तेः; आमुष्मिकफलानां तु वैदिकानां कर्मणां तमन्तरेणासंभवात्तत्संबन्ध एवायमौपनिषदः कर्तेति तदव्यभिचारा-

### वेदान्तकल्पतरुः ।

तान्येवाह—**तत्र यद्यपीत्यादिना** । तत्र सिद्धान्ती यद्वदति न प्रकरणादात्मज्ञानं कर्माङ्गमिति, तदनुवदति—**प्रोक्षणादिवदिति** । यच्च न वाक्यादात्मज्ञानं क्रत्वङ्गमिति वदति; तदप्यनुवदति—**यद्यपि च कर्तृमात्रमिति** । येन कर्तृमात्रेणात्मज्ञानमव्यभिचरितक्रतुसंबन्धजुहूद्वारेण पर्णतावद्वाक्येनैव क्रतुसंबन्धमापद्येत, तत्कर्तृमात्रं नाव्यभिचरितक्रतुसंबन्धमिति योजना । एवं सिद्धान्त्यभिप्रायमनूद्य पूर्ववादी दूषयति—**तथापीति** । देहातिरिक्तस्यात्मनो वैदिकैः कर्मभिरव्यभिचारसिद्ध्यर्थं लौकिककर्मस्वनुपयोगमाह—**न तादृशस्येति** । वैदिकैः कर्मभिस्तस्य हेतुत्वेन संबन्धमाह—**आमुष्मिकफलानां त्विति** । यथा धूमोऽग्निमव्यभिचारादनुस्मारयति, एवमौपनिषदः पुरुषोऽपि कर्मभिरव्यभिचारा-

### कल्पतरुपरिमलः ।

दित्यस्थानमेदेनाहमहर्नामकत्वलक्षणगुणानुपसंहारो भवति; तथापि प्रायोऽभिप्रायेणैतदुक्तम् । **न प्रकरणादिति** । प्रकरणादात्मज्ञानं कर्माङ्गं न भवति; प्रकरणस्याभावादित्यर्थः । **न वाक्यादिति** । अनारभ्यवादः शब्दसमर्पितक्रत्वङ्गतां लिङ्गोपस्थापितक्रत्वङ्गतां वा वाक्यप्रमाणेन विधत्ते । तद्यथा—"अथातोऽग्निमग्निष्टोमेनानुयजन्ती"त्यनारभ्यवादोऽग्निष्टोमशब्दसमर्पितक्रत्वङ्गतां चित्याग्नेरग्निष्टोमादिपदसमभिव्याहाररूपेण वाक्यप्रमाणेन विधत्ते । "यस्य पर्णमयी जुहूर्भवती"त्यनारभ्यवादो जुहूलिङ्गोपस्थापितजुहूपदलक्षितक्रत्वङ्गतां पर्णतायाः पर्णमयीजुहूपदादिसमभिव्याहाररूपेण वाक्यप्रमाणेन विधत्ते, न वाऽऽत्मज्ञानवाक्येषु क्रतुसमर्पकः शब्दोऽस्ति, नच तदुपस्थापकं लिङ्गमस्ति; आत्मनो व्यभिचारित्वेनातल्लिङ्गत्वादित्यर्थः । **अनुस्मारयन् वर्तते इत्यर्थ इति** । **टीकायामनुस्मारयन्नित्येतदनन्तरं** जुह्वादिवद्वाक्येनैव तज्ज्ञानं पर्णतावत्क्रत्वर्थतामापाद्यत इति पाठं दृष्ट्वा अनुस्मारयन्नित्यस्यापाद्यत इत्यनेनानन्वयाद्वर्तेत इत्यध्याहारः कृतः । क्रत्वर्थतामापादयतीति पाठे तु नाध्याहारापेक्षा । **ननु** देहातिरिक्तात्मनि सत्यप्यव्यभिचरितक्रतुसंबन्धे नास्ति तज्ज्ञाने सति क्रतुस्मृतिनियमः; कारणे सति कार्यनियमाभावात्, नहि धूमस्य दर्शने सति वह्निस्मृतिर्नियता । तथाच यस्य "आत्मा द्रष्टव्य" इत्यादिवाक्यश्रवणकाले क्रतुस्मृतिः, तस्य लक्षणया वाक्येनात्मदर्शनस्य क्रत्वर्थताप्रतिपत्तिः, यस्य न तत्स्मृतिः, तस्य नेत्यव्यवस्थिता वाक्यार्थधीः स्यादित्याशङ्क्य परिहरति—**यद्यपीति** । **कापि प्रवृत्तिर्भवतीति** । सर्वानुभवसिद्धमेतदिति भावः । **व्याप्यव्यतिरेकविज्ञानमिति** । देहातिरिक्तात्मज्ञानं पारलौकिकफलसाधनविषयेच्छादिजनकक्रतुस्मृतिनियतमित्यर्थः । एवमपीह क्रतुस्मृतिनियमोपपादनं संभवतीत्येतदुक्तं न सार्वत्रिकम् ; पर्णतादिविध्यव्यापनात्तत्फलकल्पनार्थवादिकफलविपरिणामादिदोषपरिहाराय स्वत एव पर्णतादीनां फलवदन्वयाकाङ्क्षया वाक्यात्प्रकरणाद्वा तद-

रेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात्। नहि देहव्यतिरिक्तात्मज्ञानं लौकिकेषु कर्मसूपयुज्यते; सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः। वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मज्ञानमन्तरेण प्रवृत्तिर्नोपपद्यत इत्युपयुज्यते व्यतिरेकविज्ञानम्। नन्वपहतपाप्मत्वादिविशेषणादसंसार्यात्मविषयमौपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्, न; प्रियादिसंसूचितस्य संसारिण एवात्मनो द्रष्टव्यत्वेनोपदेशात्। अपहतपाप्मत्वादि विशेषणं तु स्तुत्यर्थं भविष्यति। ननु तत्र तत्र प्रसाधितमेतदधिकमसंसारि ब्रह्म जगत्कारणं तदेव च संसारिण आत्मनः पारमार्थिकं स्वरूपमुपनिषत्सूपदिश्यत इति। सत्यं प्रसाधितम्, तस्यैव तु स्थूणानिखननवत्फलद्वारेणाक्षेपसमाधाने क्रियेते दार्ढ्याय॥ २॥

## आचारदर्शनात्॥ ३॥

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृ० ३।१।१) 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि'

### भामती।

त्तान्यनुस्मारयन्। जुह्वादिवद्वाक्येनैव तज्ज्ञानं पर्णतावत्क्रत्वैदमर्थ्यमापद्यत इति फलश्रुतिरर्थवादः। **तदुक्तम्—**'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति। औपनिषदात्मज्ञानसंस्कृतो हि कर्ता पारलौकिकफलोप-

### वेदान्तकल्पतरुः।

त्तान्यनुस्मारयन् वर्तत इत्यर्थः। यद्यपि हेतौ सति कार्यं भवत्येवेति न व्याप्तिः; तथापि व्यतिरिक्त आत्मनि ज्ञाते पारलौकिकसाधनेच्छादिरूपा काऽपि प्रवृत्तिर्भवत्येवेति। व्याप्यव्यतिरेकविज्ञानमनुस्मारितेषु च देहातिरिक्तात्मनां कर्मस्वात्मा द्रष्टव्य इति वाक्येनात्मज्ञानं क्रतुशेषत्वं नीयत इत्याह—**वाक्येनैवेति। ननु** फलवतो ज्ञानस्य कथं क्रत्वर्थत्वमत आह—**अर्थवाद इति।** आत्मज्ञानफलश्रुतिर्न फलपरा परार्थफलश्रुतित्वाद् अञ्जनादिफलश्रुतिवदित्यनुमानम्। अदृष्टद्वारेणात्मज्ञानस्य कर्माङ्गत्वमाह—**औपनिषदात्मज्ञानेति।** आचाराद्यन्यार्थदर्शनं प्रापकसापेक्षत्वान्न स्वतन्त्रमित्याह—

### कल्पतरुपरिमलः।

लाभाद्, लिङ्गात् फलवत्क्रतुस्मृतिनियम इति सार्वत्रिकं तदुपपादनम्। **आचाराद्यन्यार्थदर्शनमिति। ननु एतदुपोद्बलनार्थमिति** टीकाग्रन्थः स्वयमस्वतन्त्रस्याचारादेः पर्णमयीन्यायप्रापकमपेक्ष्योन्मेषपरत्वेन व्याख्यातुं न युक्तः, किंतु देहातिरिक्तस्य वेदान्तप्रतिपाद्यस्यात्मनः परार्थत्वाभावादव्यभिचारक्रतुसंबन्धाभावाच्च इह पर्णमयीन्यायस्यानुन्मेषप्राप्तावाचारादिकमपेक्ष्य तदुन्मेषपरत्वेन व्याख्यातुं युक्तः, असकृदावेदितं ह्यधस्ताद् वेदान्तानामकर्त्रनन्यार्थात्मपरत्वम्। नच तस्येहोपमर्दोऽस्ति पूर्वपक्षे, न वा सिद्धान्ते तस्यात्मनः परार्थत्वाभावे न्यायान्तरोपन्यासोऽस्ति, प्राक्सिद्धन्यायजातमेव हि इहापि सिद्धान्ते स्मारितम्; देहातिरिक्तस्य च कर्तुर्नाव्यभिचरितक्रतुसंबन्धोऽस्ति, दानादिभिरपि तस्य संबन्धात्, नच—अत्र क्रतुशब्दो विहितकर्ममात्रोपलक्षक इति—वाच्यम्; निषिद्धकर्मभिरपि संबन्धात्। तान्यपि हि स्वफलभोगार्थं देहातिरिक्तात्मसापेक्षाणि। यदि त्वत्र क्रतुशब्दः पारलौकिकफलसाधनविहितनिषिद्धसाधारणकर्ममात्रोपलक्षकः स्यात्, तदा यथात्मदर्शनसंस्कृतेनैव कर्त्राऽनुष्ठितं विहितं कर्म स्वर्गादिसाधनं यथा तेनैवानुष्ठितं निषिद्धं कर्म नरकसाधनमिति पामरानुष्ठितनिषिद्धकर्मणां नरकजनकत्वं न स्यात्, "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त" इति येषामात्मदर्शनवतां पापाश्लेषः श्रुतः, तेषामेव तन्नरकजनकं स्यात्। **ननु**—निषेधवाक्येषु प्रत्यवायफलकं निषिद्धानुष्ठानं न शास्त्रार्थः, किंतु प्रत्यवायपरिहारफलकं निषिद्धाननुष्ठानं प्रत्यवायपरिहाराय भवतीति शास्त्रार्थाङ्गीकारे नोक्तदोषः; निषिद्धानुष्ठानेन प्रत्यवायजनने देहातिरिक्तात्मज्ञानानपेक्षणादिति—**चेत्, मैवम्;** एवं सति वेदान्तजन्यात्मज्ञानरहितानां निषिद्धाननुष्ठानेऽपि प्रत्यवायापरिहारादवश्यंभावी प्रत्यवायो निषिद्धानुष्ठानेनैवास्त्विति प्रतिसंधानेन तेषां तदनुष्ठानप्रसङ्गो दुर्वारः। **किंचात्र** क्रत्वव्यभिचारशब्देनाग्निसाध्यकर्माव्यभिचार एव पूर्वपक्षिणा विवक्षित इति वक्तव्यम्। अन्यथा "ऊर्ध्वरेतस्सु च शब्दे ही"ति सूत्रोक्तस्य विद्यास्वातन्त्र्यहेतोरनन्वयापत्तेः, पारलौकिकफलकर्माव्यभिचारविवक्षायां नैष्ठिकादीनामपि स्वाश्रयधर्मरूपकर्मसत्त्वाद् विद्यायास्तदङ्गत्वोपपत्त्या स्वातन्त्र्यं न सिध्येत्। तस्माद्वेदान्तप्रतिपाद्यस्यात्मनः पारार्थ्यक्रत्वव्यभिचारयोरभावादिह पर्णमयीन्यायाऽनुन्मेषेण तदुज्जीवनार्थमग्रिमश्रुतिलिङ्गादिवर्णनमित्येव व्याख्यातुं युक्तम्। नच—अन्यार्थदर्शनं स्वयंप्रापकसापेक्षम् इह तद्रहितं कथमन्योपोद्बलकं स्यादिति—शङ्कनीयम्; आचारदर्शनमेव हि वैश्वानरविद्यादिप्रशंसार्थत्वाद् अन्यार्थदर्शनम्। यदेवेति श्रुतिरेव। तत्र यदेव करोतीति सर्वनामावधारणाभ्यां व्याप्तिगमकाभ्यां सर्वं कर्मानूद्य तत्साधनत्वेन विद्या तृतीयाश्रुत्या विधीयत इति स्पष्टमेव प्रतीयते। नच "तेनोभौ कुरुत" इति विद्याविहीनस्यापि कर्मोक्त्या कश्चिद्दोषः; तावता हि षोडशिग्रहणवद् वैकल्पिकाङ्गत्वं सिद्ध्यति, न त्वन-

( छा० ५।११।५ ) इत्येवमादीनि ब्रह्मविदामप्यन्यपरेषु वाक्येषु कर्मसंबन्धदर्शनानि भवन्ति । तथोद्दालकादीनामपि पुत्रानुशासनादिदर्शनाद्गार्हस्थ्यसंबन्धोऽवगम्यते । केवलाच्चेज्ज्ञानात्पुरुषार्थसिद्धिः स्यात्किमर्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः ? 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् ॥ ३ ॥

## तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा० १।१।१० ) इति च कर्मशेषत्वश्रवणाद्विद्याया न केवलायाः पुरुषार्थहेतुत्वम् ॥ ४ ॥

---

### भामती ।

भोगयोग्योऽस्मीति विद्यावाञ्छ्रद्धावान्क्रतुप्रयोगाङ्गं, नान्यथा प्रोक्षिता इव व्रीहयः क्रत्वङ्गमिति । प्रियादिसूचितस्य च संसारिण एवात्मनो द्रष्टव्यत्वेन प्रतिज्ञानादपहतपाप्मत्वादि तु तद्विशेषणं तस्यैव स्तुत्यर्थम्, नतु तत्परत्वमुपनिषदाम् । तस्मात्क्रत्वर्थमेवात्मज्ञानं कर्तृसंस्कारद्वारा न पुनः पुरुषार्थमिति । एतदुपोद्बलनार्थं च ब्रह्मविदामाचारादिः श्रुत्यवगत उपन्यस्तः । न केवलं वाक्यादात्मज्ञानस्य क्रत्वर्थत्वम्; तृतीयाश्रुतेश्च, नत्वेतत्प्रकृतोद्गीथविद्याविषयं; यदेव विद्ययेति सर्वनामावधारणाभ्यां व्याप्तेरधिगमात् । यथा य एव धूमवान्देशः स वह्निमानिति । समन्वारम्भवचनं च फलारम्भे विद्याकर्मणोः साहित्यं दर्शयति । तच्च यद्यप्याग्नेयादियागषट्कवत्समप्रधानत्वेनापि भवति; तथाप्युक्तया युक्त्या विद्यायाः कर्म प्रत्यङ्गभावेनैव नेतव्यम् । वेदार्थज्ञानवतः कर्मविधानादौपनिषदोऽपि वेदार्थ इति तज्ज्ञानमपि

### वेदान्तकल्पतरुः ।

**एतदुपोद्बलनार्थमिति ।** तच्छ्रुतेरित्यादीनि सूत्राणि लिङ्गपराणि व्याचष्टे—**न केवलमित्यादिना ।** विद्यायाः कर्मभिः सह कर्त्रनुगमस्य समप्राधान्येऽपि संभवात् प्रकृतकर्मशेषत्वप्रतिज्ञया सहासंगतिमाशङ्क्याह—**तच्च यद्यपीति । उक्तया युक्त्येति ।** आत्मज्ञानस्य दृष्टाऽदृष्टद्वारेण कर्मसूपयोगेनेत्यर्थः । शुद्धबुद्धाद्येव वेदान्तप्रतिपाद्यं, न कर्तृत्वादीत्यत्र

### कल्पतरुपरिमलः

ङ्गत्वम् । अतएव तदेव वीर्यवत्तरं भवतीति विद्यापक्षेऽङ्गभूयस्त्वप्रयुक्तं फलभूयस्त्वमनूद्यते, समन्वारम्भणं तु सिद्धान्तेऽप्यङ्गीक्रियते; तद्वतो विधानमप्यविचलो हेतुरधीत्येति ह्यध्ययनकरणिकार्थज्ञानफलपर्यन्ता भावनोच्यते, फलापवर्गित्वाद् भावनायाः । अतएव "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"त्यत्र वाजपेये प्रधानयागानुष्ठानानन्तरमेव बृहस्पतिसवयागप्राप्तौ फलापवर्गिणी भावना फलाऽपूर्वपर्यन्तेति तन्निष्पत्त्यर्थोदीच्याङ्गसहितवाजपेयप्रयोगसमाप्त्यनन्तरमेव बृहस्पतिसव इति मीमांसकैरङ्गीक्रियते, अध्ययनं च स्वस्ववेदस्य कार्त्स्न्येन विहितम् । तथाचाधीतस्य कृत्स्नस्य वेदस्यार्थावबोधफलपर्यन्तस्याधीत्येति गृहस्थाश्रमकर्मसु विनियोगात् कर्मभागज्ञानस्येव कथमौपनिषदात्मज्ञानस्यापि कर्मानुष्ठानोपयोगितया तत्र विनियोगो न सिध्येत् ? एवं नियमोऽप्यविकलः पूर्वपक्षहेतुः । "ईशावास्यमिदं सर्वमि"त्यात्मोपदेशपूर्वकं हि "कुर्वन्नेवे"ति श्रवणमात्मविदो जीवनस्य कर्मसु विनियोगं बोधयदात्मविद्याया एव विधिविभक्त्या कर्माङ्गत्वं बोधयेत् । एवंच आचारदर्शनमन्यार्थदर्शनमपि विद्याकर्मणोः समप्राधान्येन कर्मणो विद्याङ्गत्वेनोपपद्यमानमपि "यदेव विद्यये"त्याद्यनुगृहीतं विद्यायाः कर्माङ्गत्वे पर्यवस्यल्लिङ्गं भवेदेव । तस्मात्पर्णमयीन्यायोज्जीवनार्थं श्रुतिलिङ्गोपन्यास इत्येव युक्तम् । एवं हि सति देहातिरिक्तस्य कर्तुः क्रत्वव्यभिचारोऽस्तु वा, मा वा, "आत्मा द्रष्टव्य" इत्यादिना विधीयमानात्मविद्यायास्तव्यप्रत्ययेन तावदात्मसंस्कारार्थत्वमवगतं, "यदेव विद्यये"ति श्रुत्या तस्याः क्रत्वर्थत्वमप्यवगतं, "य आचार्यकुलाद्वेदमधीत्ये"त्यध्ययनफलोपनिषदात्मावबोधस्य कर्मार्थत्वोक्त्याऽपि विद्यायाः कर्मार्थत्वमवगतं, विद्यायाः स्वातन्त्र्ये विद्यानुष्ठानोपयोगिनस्तस्य कर्मार्थत्वायोगात् । औपनिषदात्मसंस्काररूपविद्यायाः क्रत्वर्थत्वमौपनिषदात्मनः क्रत्वर्थत्वे सत्येवोपपद्यते; यजमानस्य क्रत्वर्थत्वे सत्येव हि यजमानसंस्कारस्याञ्जनादेः क्रत्वर्थत्वमिति पर्णमयीन्यायोऽत्र लब्धप्रसरो भवतीति—**चेत्, उच्यते;** विद्यायाः क्रत्वर्थत्वसाधनांशेन पर्णमयीन्यायानुग्राहकमपि यदेव विद्ययेत्यादिकं केवलक्रत्वर्थत्वसाधनाय पर्णमयीन्यायसापेक्षम्, अन्यथा दध्यादिवद्विद्यायाः पुरुषार्थत्वमप्यस्तु, फलस्यापि श्रवणादिति शङ्काया निवारणं न भवेत् । तस्मात्पर्णमयीन्यायानुग्राहकत्वं "यदेव विद्यये"त्यादेरेतदुपोद्बलनार्थमिति येन टीकाग्रन्थेनोक्तं तेनैव तस्य केवलपुरुषार्थत्वसाधनांशे न स्वातन्त्र्यमिति तदंशे पर्णमयीन्यायसापेक्षत्वमपि दर्शितमित्यभिप्रायेण तथाऽवतारितम् । तथाच वनसिंहन्यायेन प्रमाणतर्कन्यायेन वोभयोरप्यंशभेदेन परस्परापेक्षायामपि न परस्पराश्रयदोषः । **तच्छ्रुतेरित्यादिसूत्राणीति ।** यद्यपि तच्छ्रुतेरिति सूत्रं यदेव विद्ययेति श्रुतिप्रदर्शकम्; तथापि तृतीयाश्रुत्यवगतक्रत्वङ्गत्वलिङ्गेन आर्थवादिकफलविवक्षया केवलक्रत्वङ्गत्वमवगन्तव्यमिति तदंशाभिप्रायात्तच्छ्रुतेरिति सूत्रस्य

## समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' ( बृ० ४।४।२ ) इति च विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनान्न स्वातन्त्र्यं विद्यायाः ॥ ५ ॥

## तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' ( छा० ८।१५।१ ) इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति । तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम् । नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते, नार्थविज्ञानम् । नैष दोषः; दृष्टार्थत्वाद्वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितम् ॥ ६ ॥

## नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' ( ई० २ ) इति, तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' इत्येवं जातीयकान्नियमादपि कर्मशेषत्वमेव विद्याया इति ॥ ७ ॥ एवं प्राप्ते प्रतिविधत्ते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दात्पक्षो विपरिवर्तते । यदुक्तम्—'शेषत्वात्पुरुषार्थवादः' ( ब्र० सू० ३।४।२ ) इति, तन्नोपपद्यते ; कस्मात्? अधिकोपदेशात् । यदि संसार्येवात्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात् । अधिकस्तावच्छारीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारिधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु । नच तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्यु-

---

### भामती ।

कर्माङ्गमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ **नियमाच्च** । सुगमम् ॥ ७ ॥ सिद्धान्तयति—यदि शरीराद्यतिरिक्तः कर्ता भोक्तात्मेत्येतन्मात्र उपनिषदः पर्यवसिताः स्युस्ततः स्यादेवं, न त्वेतदस्ति, तास्त्वेवंभूतजीवानुवादेन तस्य शुद्धबुद्धोदासीनब्रह्मरूपताप्रतिपादनपरा इति तत्र तत्रासकृदावेदितम् । अनधिगतार्थबोधनस्वरसता हि शब्दस्य प्रमाणान्तरसिद्धानुवादेन । तथाचौपनिषदात्मज्ञानस्य क्रत्वनुष्ठानविरोधिनः क्रतुसंबन्ध एव नास्ति । किमङ्ग पुनः तदव्यभिचारस्ततश्च क्रतुशेषता ? तथाच नापवर्गफलश्रुतेरर्थवादमात्रत्वमपि तु फलपरत्वमेव । अतएव प्रियादिसूचितेन संसारिणात्मनोपक्रम्य तस्यैवात्मनोऽधिकोपदिदिक्षायां परमात्मनाऽत्यन्ताभेद उपदिश्यते । यथा समारोपितस्य भुजगस्य रज्जुरूपादत्यन्ताभेदः प्रतिपाद्यते योऽयं सर्पः सा रज्जुरिति ॥ ८ ॥ यथा विद्यायाः कर्माङ्गत्वे दर्शनमुपन्यस्तमेवकर्माङ्गत्वे दर्शनमुक्तम् । तत्र कर्माङ्गत्वदर्शनानामन्यथासिद्धिरुक्ता, केवलविद्यादर्शनानां तु नान्यथासिद्धिः

### वेदान्तकल्पतरुः ।

विनिगमकमाह—**अनधिगतार्थेति** । शब्दस्य प्रमाणान्तरसिद्धानुवादेनानधिगतार्थबोधनस्वरसता हि प्रसिद्धेति योजना । परार्थे फलश्रुतिरित्वादिति पूर्वोक्तहेतोर्विशेषणासिद्धिमाह—**तथा चौपनिषदात्मज्ञानस्येति** । तदव्यभिचारस्तु ततश्च क्रतुशेषतेति यदेतत्पुनः, किमङ्ग स्याद् ? न स्यादेवेत्यर्थः । यदि परमात्मतत्त्वमेवोपनिषदामर्थः, तर्हि प्रियादिसंसूचितजीवस्य द्रष्टव्यत्वं किमित्युपदिश्यते ? अत आह—**अतएवेति** । भोक्तुर्द्रष्टृत्वव्यपदेशेनासंसारिब्रह्मणा दर्शनार्हेण तस्यात्यन्ताभेदः प्रतिपाद्यते, तथाच व्याख्यातमवस्थितेरिति काशकृत्स्न इत्यत्र ॥ ८ ॥ एवं तावद्—ब्रह्मज्ञानं न कर्माङ्गं फलवत्त्वात् ज्योतिष्टोमवदिति प्रतिपाद्यवाक्यकृतकर्मसंबन्धो वारितः, आचारादिलिङ्गदर्शनानां प्रतिलिङ्गमुपन्यस्तं तुल्यं तु दर्शनमिति, तत्र तु शब्देनाकर्माङ्गत्वलिङ्गदर्शनस्य प्राबल्यं विशेष उक्तस्तद्दर्शयति—**तत्र कर्माङ्गत्वेति । अन्यथासिद्धिरुक्तेति** । यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयमित्यादिभाष्येणेति शेषः ।

### कल्पतरुपरिमलः ।

लिङ्गपरत्वोक्तिः । **एतल्लिङ्गदर्शनमिति** । क्वाचित्कीयमन्यथासिद्ध्युक्तिर्न सार्वत्रिकी; निर्गुणविद्याप्रकरणेऽपि तत्र तत्र

च्छिनत्तीति वक्ष्यति 'उपमर्दं च' (ब्र० सू० ३।४।१६) इत्यत्र। तस्मात् 'पुरुषार्थोऽतःशब्दात्' (ब्र० सू० ३।४।१) इति यन्मतं भगवतो बादरायणस्य तत्तथैव तिष्ठति, न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथाहि—तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः—'यः सर्वज्ञः सर्ववित्' (मुण्ड० १।१।९) 'भीषाऽस्माद्वातः पवते' (तै० २।८।१) 'महद्भयं वज्रमुद्यतम्' (कठ० ६।२) 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ० ३।८।९) 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छा० ६।२।३) इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एवात्मनो वेद्यतयाऽनुकर्षणम्, 'आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः' (बृ० २।४।५) 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' (बृ० ३।४।१) 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा० ८।७।४) इत्युपक्रम्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा० ८।९।३) इति चैवमादि, तदपि 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृ० २।४।१०) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ० ३।५।१) 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा० ८।१२।३) इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायामत्यन्ताभेदाभिप्रायमित्यविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्, उपाधिकृतं तु शारीरत्वम्; 'तत्त्वमसि' (छा० ६।८।७) 'नान्यदतोऽस्ति द्रष्टृ' (बृ० ३।८।११) इत्यादिश्रुतिभ्यः। सर्वं चैतद्विस्तरेणास्माभिः पुरस्तात्तत्र तत्र वर्णितम् ॥ ८ ॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

यत्तूक्तमाचारदर्शनात्कर्मशेषो विद्येति। अत्र ब्रूमः—तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः। तथाहि श्रुतिर्भवति—'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे। एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे' 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ० ३।५।१) इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते—'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार' (बृ० ४।५।१५) इत्यादिश्रुतिभ्यः। अपिच 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' (छा० ५।११।५) इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयम्। संभवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनम्, नत्वत्रापि कर्माङ्गत्वमस्ति; प्रकरणाद्यभावात् ॥ ९ ॥ यत्पुनरुक्तम्—'तच्छ्रुतेः' (बृ० सू० ३।४।४) इति, अत्र ब्रूमः—

## असार्वत्रिकी ॥ १० ॥

'यदेव विद्यया करोति' (छा० १।१।१०) इत्येषा श्रुतिर्न सर्वविद्याविषया; प्रकृतविद्याभिसंबन्धात्। प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १।१।१) इत्यत्र ॥ १० ॥

## विभागः शतवत् ॥ ११ ॥

यदप्युक्तम्—'तं विद्याकर्मणी समन्वारभेते' (बृ० ४।४।२) इत्येतत्समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति, तत्प्रत्युच्यते। विभागोऽत्र द्रष्टव्यो विद्यान्यं पुरुषमन्वारभते कर्मा-

---

### भामती।

॥ ९ ॥ व्याप्तिरप्युद्गीथविद्यापेक्षया, तस्या एव प्रकृतत्वान्न त्वशेषापेक्षया। यथा सर्वे ब्राह्मणा भोज्यन्तामिति नियन्त्रितापेक्षया, तेषामेव प्रकृतत्वात् ॥ १० ॥ विभागः शतवत्। सुगमम्। अविभागेऽपि न दोष इत्याह—**नचेदं**

### वेदान्तकल्पतरुः।

"यदेव विद्यया करोती"ति श्रुत्या विद्यायाः कर्माङ्गत्वमाशङ्कितं पूर्वपक्षे, तस्या अप्युद्गीथविद्याविषयत्वेनान्यथासिद्धिरुक्ता असार्वत्रिकीति सूत्रेण, तत्रास्याः श्रुतेः सर्वविषयत्वशङ्कां परोक्तां परिहरति—**व्याप्तिरपीति**। असंसार्यात्मप्रति-

### कल्पतरुपरिमलः।

गृहस्थकर्मानुबन्ध्युपाख्यानदर्शनादित्याशयेनैतदित्युक्तम्। **सर्वविषयत्वशङ्कामिति**। "यश्चैवं वेदेति" पूर्ववाक्यगतै-

न्यमिति । शतवत् । यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत् । नचेदं समन्वारम्भवचनं मुमुक्षुविषयम्; 'इति नु कामयमानः' ( बृ० ४।४।६ ) इति संसारिविषयत्वोपसंहारात्, 'अथाकामयमानः' ( बृ० ४।४।६ ) इति च मुमुक्षोः पृथगुपक्रमात् । तत्र संसारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते; विशेषाभावात् । कर्मापि विहितं प्रतिषिद्धं च यथाप्राप्तानुवादित्वात् । एवंसत्यविभागेनापीदं समन्वारम्भवचनमवकल्पते ॥ ११ ॥ यच्चैतत् 'तद्वतो विधानात्' (ब्र० सू० ३।४।६) इत्यत उत्तरं पठति—

## अध्ययनमात्रवतः ॥ १२ ॥

'आचार्यकुलाद्वेदमधीत्य' ( छा० ८।१५।१ ) इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः । नन्वेवं सत्यविद्यत्वादनधिकारः कर्मसु प्रसज्येत; नैष दोषः; न वयमध्ययनप्रभवं कर्मावबोधनमधिकारकारणं वारयामः, किंतर्हि ? औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इत्येतावत्प्रतिपादयामः । यथाच न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यत एवमेतदपि द्रष्टव्यमिति ॥ १२ ॥ यदप्युक्तं 'नियमाच्च' ( ब्र० सू० ३।४।७ ) इति, अत्राभिधीयते—

## नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेत्' ( ईशा० २ ) इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति; अविशेषेण नियमविधानात् ॥ १३ ॥

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

'कुर्वन्नेवेह कर्माणि' ( ईशा० २ ) इत्यत्रापरो विशेष आख्यायते । यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति संबध्येत; तथापि विद्यास्तुतये कर्मानुष्ठानमेतद्द्रष्टव्यम् 'न कर्म लिप्यते नरे' ( ईशा० २ ) इति हि वक्ष्यति । एतदुक्तं भवति—यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति विद्यासामर्थ्यादिति तदेवं विद्या स्तूयते ॥ १४ ॥

## कामकारेण चैके ॥ १५ ॥

अपिचैके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात्फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति । कामकारेणेति श्रुतिर्भवति वाजसनेयिनाम् 'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' ( बृ० ४।४।२२ ) इति । अनुभवारूढमेव च विद्याफलं न क्रियाफलवत्कालान्तरभावीत्यसकृदवोचाम । अतोऽपि न विद्यायाः कर्मशेषत्वं नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् ॥ १५ ॥

---

### भामती ।

समन्वारम्भवचनमिति । संसारिविषया विद्या विहिता यथोद्गीथविद्या । प्रतिषिद्धा च यथाऽसच्छास्त्राधिगमनलक्षणा ॥ ११ ॥ अध्ययनमात्रवत एव कर्मविधिर्न तूपनिषदध्ययनवतः । एतदुक्तं भवति—यदध्ययनमर्थावबोधपर्यन्तं कर्मसूपयुज्यते, यथा कर्मविधिवाक्यानां तन्मात्रवत एवाधिकारः कर्मसु नोपनिषदध्ययनवतः; तदध्ययनस्य कर्मस्वनुपयोगादिति । अध्ययनमात्रवत एवेति मात्रग्रहणेनार्थज्ञानं वा व्यवच्छिन्नमिति मन्वानो भ्रान्तश्चोदयति—नन्वेवं सतीति । स्वाभिप्रायमुद्घाटयन्समाधत्ते—न वयमिति । उपनिषदध्ययनापेक्षं मात्रग्रहणं नार्थबोधापेक्षमित्यर्थः ॥ १२ ॥ कुर्वन्नेवेह कर्माणीत्यविद्यावद्विषयमित्यर्थः ॥ १३ ॥ विद्यावद्विषयत्वेऽप्यविरोधो विद्यास्तुत्यर्थत्वादित्याह—स्तुतयेऽनुमतिर्वा ॥ १४ ॥ अपिच विद्याफलं प्रत्यक्षं दर्शयन्ती श्रुतिः कालान्तरभाविफलकर्माङ्गत्वं विद्याया निराकरोतीत्याह—कामकारेण चैके । कामकार इच्छा ॥ १५ ॥ अधिकोपदेशादित्यनेनात्मन एव

### वेदान्तकल्पतरुः ।

पादनस्य सूत्रद्वयेऽप्यविशेषात्पुनरुक्तिमाशङ्क्याह—अधिकोपदेशादित्यनेनेति ॥ वैदेहो विदेहदेशानां राजा

## उपमर्दं च ॥ १६ ॥

अपिच कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति—'यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' ( बृ० २।४।१४ ) इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत तस्मादपि स्वातन्त्र्यं विद्यायाः ॥ १६ ॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतःसु चाश्रमेषु विद्या श्रूयते । नच तत्र कर्माङ्गत्वं विद्याया उपपद्यते; कर्माभावात् । नह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति । स्यादेतत्—ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति तदपि नास्ति । तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते 'त्रयो धर्मस्कन्धाः' ( छा० २।२३।१ ) 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' ( छा० ५।१०।१ ) 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' ( मु० १।२।११ ) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृ० ४।४।२२ ) 'ब्रह्मचर्यादेव प्रव्रजेत्' ( जा० ४) इत्येवमादिषु । प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानामपाकृतानपाकृतर्णत्रयाणां चोर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम् । तस्मादपि स्वातन्त्र्यं विद्यायाः ॥ १७ ॥ इति प्रथमं पुरुषार्थाधिकरणम् ॥

---

### भामती ।

शुद्धबुद्धोदासीनत्वाद्य उक्ताः, इह तु समस्तक्रियाकारकफलविभागः उपमर्द चेति ॥ १६ ॥ **ऊर्ध्वरेतःसु च शब्दे हि** । सुबोधम् ॥ १७ ॥ **इति प्रथमं पुरुषार्थाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

**बहुदक्षिणेन** विश्वजिदादिना **ईजे** इष्टवान् । हे भगवन्तो **यक्ष्यमाणो** यागं करिष्यन् अस्मि तं द्रष्टुं वसन्तु भगवन्त इति वैश्वानरविद्यां ग्रहीतुमागतानुद्दालकादीन् प्रति अश्वपतिराजवचनम् । गुरोः **कर्मातिशेषेण** गुरुशुश्रूषावशिष्टेन कालेन

### कल्पतरुपरिमलः ।

चशब्दसामर्थ्याद्विद्याशब्दस्य प्रकृतं विद्यामात्रविषयत्वमवश्यंभावीति भावः । विभागः शतवदिति सूत्रं विद्वदविद्वत्पुरुषभेदेन विद्याकर्मणोरनुव्रजनव्यवस्थापकमयुक्तम्; निर्गुणविद्यावत उत्क्रमणगमनयोरभावेन विद्यायास्तदनुव्रजनाभावात्, सगुणविद्यायाः फलभूयस्त्वार्थं कर्मसापेक्षत्वेन विद्याकर्मणोरेकस्मिन् पुरुषे साहित्योपपत्त्या विभागानपेक्षणात्, तस्माच्छतन्यायेन विभागो न सूत्रणीय इति न चेदं समन्वारम्भवचनमित्यादिभाष्येण दर्शितमित्येतदविभागेऽपि न दोष इत्यादिटीकाग्रन्थेनोक्तम् । अयं स्पष्टत्वान्न व्याख्यात इत्यस्तु । **अध्ययनमात्रवत** इति सूत्रस्य तु भाष्यटीकाग्रन्थौ विचारणीयौ । **भाष्ये तावत्** स्वातन्त्र्येण यत् प्रयोजनवद्यदात्मदर्शनं तत् मात्रग्रहणेन व्यावर्त्यते, नत्वध्ययनफलमर्थावबोधनं न चैतावतोपनिषदर्थावबोधनस्यापि कर्माङ्गत्वप्रसङ्गः; क्रत्वन्तरज्ञानस्य क्रत्वन्तर इव तस्य कर्ममात्रे अनङ्गत्वोपपत्तेरित्युक्तम् । अनेन भाष्येणार्थावबोधफलकाध्ययनेतिकर्तव्यतारूपेण स्नानात् प्राचीनेन विचारेण कृत्स्नवेदार्थावबोधमङ्गीकृत्य तत्रोपनिषदंशार्थावबोधस्य कर्मसूपयोगमात्रं व्यावर्तितमिति प्रतिभाति, तदयुक्तम्; उपनिषद्विचारस्य साधनचतुष्टयसंपन्नाधिकारिकत्वेनाधीतवेदमात्राधिकारिकत्वाभावात् । **टीकायां तु**—मात्रग्रहणेनोपनिषदंशस्याध्ययनमेव व्यावर्त्यत इत्युक्तम् । इदमप्ययुक्तम्; अध्ययनविधेः कृत्स्नस्वशाखाविषयत्वात् । तस्मादिदं भाष्यटीकाग्रन्थद्वयं स्फुटविरोधं विचारणीयं कथमाचार्यैरुक्तमिति **चेत्, उच्यते**; भाष्यकारैरात्मज्ञानस्य कर्मानङ्गत्वोक्त्या दारपरिग्रहप्रभृत्यवश्यानुष्ठेयनिरन्तरसंतन्यमानकर्मानुष्ठानोपयोगितया कर्मभागविचार एव स्नानात्पूर्वं, नतूपनिषद्विचारोऽपीत्येतत्सूचितमिति स्पष्टमेव । आचार्यकुलाद्वेदमधीत्येत्यत्र त्वधीत्येत्यध्ययननिवृत्तिमात्रमुक्तं, नतु फलभावनापर्यन्ताऽध्ययननिवृत्तिः; "वाजपेयेनेष्ट्वे"त्यत्र तृतीयाश्रुत्यवगतफलभावनाकरणत्वनिर्वाहाय तत्पर्यन्तयागनिवृत्त्यर्थत्वाभ्युपगमेऽप्यत्र तादवस्थ्यस्यानङ्गीकर्तव्यत्वात्, "अधीत्य वेदं न विजानाति योऽर्थमि"ति श्रुत्यन्तरे अधीत्येत्यस्याध्ययननिवृत्तिमात्रार्थत्वदर्शनाच्च । नचैवंसत्यधीत्यामिसमावृत्त्येति श्रुतावध्ययनानन्तरमेव समावर्तनप्रसङ्गः; अग्निहोत्राद्यनुष्ठानोपयोगितया समावर्तनात्पूर्वं कर्मविचारप्राप्तेः । अग्निहोत्रादिकर्मसंबन्धे सति कर्मविचारतदर्थगुरुकुलवासयोरवकाशाभावात् । तस्माद् भाष्ये न काचिदनुपपत्तिः । टीकायां मात्रग्रहणस्योपनिषदध्ययनव्यावर्तकत्वोक्तिर्विचारसाध्यत्वावबोधपर्यन्ताध्ययनव्यावर्तकत्वाभिप्राया । साच विशेष्यव्यावर्तनाऽसंभवाद् विशेषणमात्रव्यावर्तनार्था पर्यवस्यति । सर्वमिदं प्रथमसूत्रप्रतिपादितार्थपर्यालोचनयाऽवगन्तुं शक्यमित्याचार्यैरुक्तम् । **बहुदक्षिणेन विश्वजिदादिनेति** । विश्वजिति द्वादशशताधिकं यस्य यावद् भूमिपुरुषाश्वरजतवर्जं

( २ अधिकरणम् ) **परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥**

'त्रयो धर्मस्कन्धाः' ( छा० २।२३।१ ) इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति । यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम् । कुतः ? नह्यत्र लिङ्गादीनामन्यतमश्चोदनाशब्दोऽस्ति । अर्थान्तरपरत्वं चैषु प्रत्येकमुपलभ्यते । त्रयो धर्मस्कन्धा इत्यत्र तावद्यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्वे एते पुण्यलोका भवन्तीति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं संकीर्त्यात्यन्तिकफलतया

भामती ।

**परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥** सिद्ध ऊर्ध्वरेतसामाश्रमित्वे तद्विद्यानामकर्माङ्गतयाऽपवर्गार्थता स्यात् । आश्रमित्वं त्वेषामन्यार्थपरामर्शमात्रान्न सिध्यति; विध्यभावात् । स्मृत्याचारप्रसिद्धिश्च तेषां प्रत्यक्षश्रुतिविरोधादप्रमाणम् । निन्दति हि प्रत्यक्षा श्रुतिराश्रमान्तरं 'वीरहा वा एष देवानाम्' इत्यादिका । प्रत्यक्षश्रुतिविरोधे च स्मृत्याचारयोरप्रामाण्यमुक्तं 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति । तदेतत्सर्वमाह—**त्रयो धर्मस्कन्धा**

वेदान्तकल्पतरुः ।

यथाविधि वेदमधीत्याचार्यकुलादभिसमावृत्य **कुटुम्बे** गार्हस्थ्ये तिष्ठन् वेदमधीयानो ब्रह्मलोकमाप्नोतीति शेषः । **शतं समाः** यावदायु**र्जिजीविषेत्** जीवितुमिच्छेत्, तत्कुर्वन्नेव कर्माणि वर्तेथाः । एवं वर्तमाने त्वयि नरे नराभिमानिनि अशुभं कर्मा न लिप्यते कर्मणा त्वं न लिप्यस इत्यर्थः । इतः प्रकारादन्यथा प्रकारान्तरं नास्ति यतो न कर्मलेपः स्यादित्यर्थः । येषां नायमपरोक्ष आत्मा अयं लोकः प्रत्यक्षफलं ते वयं किं प्रजया करिष्याम इति निश्चित्याग्निहोत्रं न जुहवांचक्रुरित्यर्थः ॥ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ **इति प्रथमं पुरुषार्थाधिकरणम् ॥**[1]

**परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥** पूर्वाधिकरणावान्तरसूत्रेणाक्षेपलक्षणां सङ्गतिमाह—**सिद्ध इति** । अपिचापवदति हीति भाष्यव्याख्यानार्थो निन्दोपन्यासः । पूर्वं तु निन्दति हि प्रत्यक्षा

कल्पतरुपरिमलः ।

स्वमस्ति, तत्सर्वं दीयतइति तस्य बहुदक्षिणत्वमुक्तम् । आदिशब्देन बहुदक्षिणत्वेन प्रसिद्धस्याश्वमेधस्य सप्तदशोऽग्निष्टोमस्तस्य दीक्षणीयायामिष्टौ द्वादशमानं हिरण्यं ददाति चतुर्विंशतिमानं प्रायणीयायां द्वे चतुर्विंशतिमाने आतिथ्यायामित्यादि अष्टाविंशतिशतमष्टाविंशतिशतमानानि वशाया वपायामित्यन्तेन बहुदक्षिणतयोक्तस्य च ग्रहणम् । तत्र हि दीक्षणीयाप्रायणीयातिथ्याषड्उपसदग्नीषोमीयपशुसवनीयपशुसवनत्रयोदयनीयानुबन्ध्यपशुषु द्वादशमानमारभ्योत्तरोत्तरद्विगुणा दक्षिणोक्ता । **कुर्वन्नेव कर्माणि वर्तेथा इति** कर्मसंक्रान्तिविधिकल्पनं । कर्माशुभमित्यशुभत्वाध्याहारः । यावज्जीवं संतन्यमानसत्कर्ममहिम्नाऽन्तरान्तरा जातं पापं कर्म नश्यतीत्यर्थः । इदं व्याख्यानं नाविशेषादिति सूत्रानुसारेण विद्वद्विषयत्वमाश्रित्य । स्तुतयेऽनुमतिर्वेति सूत्रानुसारेण विद्वद्विषयत्वे तु भाष्यकारैः श्रुत्यभिप्रायो दर्शित इति न व्याख्यातम् । तस्मिन् पक्षे आमन्त्रणशब्दोक्ते कामचारेण लिङ् यथाकामं कर्म करोतु नामेत्यर्थः । नान्यथेतोऽस्तीत्यस्य इतो विद्यासामर्थ्याद् अन्यथा संसारनिवृत्तिर्नास्तीत्यर्थः । **अयं लोकः प्रत्यक्षं फलमिति ।** अनेन यथा "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्यादिकर्मविशेषार्थवादनिर्दिष्टफलस्योभयत्रापि वर्तमाननिर्देशेन प्रतीयमानं तात्कालिकत्वं प्रत्यक्षविरुद्धमिति तत्परिहाराय व्यवधारणकल्पनापेक्षणात्, ततः क्रतुफलेन फलवत्त्वकल्पना बलीयसीति तत्सिद्धये क्रत्वन्वयाकाङ्क्षा, नैवमिह तदाकाङ्क्षास्ति; "ब्रह्म वेद ब्रह्मैव भवती"ति विद्यार्थवादनिर्दिष्टफलस्य विद्यासमानकालतायाः प्रत्यक्षविरुद्धत्वाभावात्, लोकेऽपि भ्रान्तिनिवर्तके तत्त्वसाक्षात्कारप्रयुक्ताधिष्ठानस्वरूपाविर्भावस्य तात्कालिकत्वदर्शनाच्चेति प्रकृते पर्णमयीन्यायवैषम्यं सूचितम् । इदं भाष्यालोचनया स्पष्टमिति नोक्तम् ॥९॥१०॥११॥१२॥१३॥१४॥१५॥१६॥१७॥ **इति प्रथमं पुरुषार्थाधिकरणम् ॥**

**परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ आक्षेपलक्षणामिति । ननु** आक्षेपस्य समाधानं

१ तत्र सूत्राणि १७—पुरुषार्थोऽतःशब्दादिति बादरायणः १ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः २ आचारदर्शनात् ३ तच्छ्रुतेः ४ समन्वारम्भणात् ५ तद्वतो विधानात् ६ नियमाच्च ७ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ८ तुल्यं तु दर्शनम् ९ असार्वत्रिकी १० विभागः शतवत् ११ अध्ययनमात्रवतः १२ नाविशेषात् १३ स्तुतयेऽनुमतिर्वा १४ कामकारेण चैके १५ उपमर्दं च १६ ऊर्ध्वरेतःसु च शब्दे हि १७ ॥

ब्रह्मसंस्थता स्तूयते—'ब्रह्मसंस्थोऽमृतत्वमेति' ( छा० २।२३।१ ) इति । ननु परामर्शेऽप्याश्रमा गम्यन्त एव । सत्यं गम्यन्ते; स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिर्न प्रत्यक्षश्रुतेः । अतश्च प्रत्यक्ष-श्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्ति । अनधिकृतविषया वा । ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं यज्ञोऽध्ययनं दानमिति प्रथम इति । सत्यमेवम्; तथापि तु गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानाच्छ्रुतिप्रसिद्धमेव हि तदस्तित्वम् । तस्मात्स्तुत्यर्थ एवायं परामर्शो न चोदनार्थः । अपिचापवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम् 'वीरहा वा एष देवानां योऽग्निमुद्वासयते', 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' ( तै० १।११।१ ) 'नापुत्रस्य लोकोऽस्तीति, तत्सर्वे पशवो विदुः' इत्येवमाद्या । तथा 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' ( छा० ५।१०।१ ) 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' ( मुण्ड० १।२।११ ) इति च देवयानोपदेशो नाश्रमान्तरोपदेशः । संदिग्धं चाश्रमान्तराभिधानम् 'तप एव द्वितीयः' ( छा० २।२३।१ ) इत्येवमादिषु । तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृ० ४।४।२२ ) इति लोकसंस्तवोऽयं न पारिव्राज्यविधिः । ननु ब्रह्मचर्यादेव प्रव्रजेदिति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम् । सत्यमेवमेतत्; अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यम् ॥ १८ ॥

---

## भामती ।

**इत्यादिना । अनधिकृतविषया वेति ।** अन्धपङ्ग्वादयो हि ये नैमित्तिककर्मानधिकृतास्तान्प्रत्याश्रमान्तरविधिरिति । **अपिचापवदति हि ।** न केवलमन्यपरतया परामर्शस्याश्रमान्तरं न लभ्यते, अपित्वाश्रमान्तरनिन्दाद्वारेणापवादादपीत्यर्थः । **स्यादेतत्**—भवत्वेष परामर्शोऽन्यार्थः । ये चेमेऽरण्य इत्यादिभ्यस्त्वाश्रमान्तरं सेत्स्यतीत्यत आह—**ये चेमेऽरण्य इति ।** अस्यापि देवपथोपदेशपरत्वान्नैतत्परत्वमित्यर्थः । नचान्यपरादपि स्फुटतराश्रमान्तरप्रत्यय इत्याह—**संदिग्धं चेति ।** नहि तप एव द्वितीय इत्यत्राश्रमान्तराभिधायी कश्चिदस्ति शब्द इति । **नन्वेतमेव प्रव्राजिन** इति वचनादाश्रमान्तरं सेत्स्यतीत्यत आह—**तथैतमेवेति ।** एतदपि लोकसंस्तवनपरमिति । अधिकरणारम्भमाक्षिप्य नास्ति प्रत्यक्षवचनमितिकृत्वाचिन्तेयमिति समाधत्ते—**ननु ब्रह्मचर्यादेवेति** ॥ १८ ॥ भवत्वन्यार्थः परामर्शः, तथाप्येतस्मादाश्रमान्तराणि प्रतीयमानानि च नापाकरणमर्हन्ति । एवं तान्यपाक्रियेरन्यद्यस्मान्न प्रतीयेरन् । प्रतीयमानानि वा श्रुत्या बाध्येरन् । न तावन्न प्रतीयन्ते । **तथाहि**—त्रयो धर्मस्कन्धा इति स्कन्धत्रित्वं प्रतिज्ञातम् । तत्र स्कन्धशब्दो यद्याश्रमपरो न स्यादपि तु समूहवचनस्ततो धर्माणां यज्ञादीनां प्रातिस्विकोत्पत्तीनां किमपेक्ष्य त्रित्वसंख्या सुव्यवस्थाप्येत ? एकैकाश्रमोपसंगृहीतास्त्वाश्रमाणां त्रित्वाच्छक्यास्त्रित्वे व्यवस्थापयितुमित्याश्रमत्रित्वप्रतिज्ञोपपत्तिः । तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो ब्रह्मचारीति द्वितीयस्तप इति च तपःप्रधानात्तु

## वेदान्तकल्पतरुः ।

श्रुतिरित्यादिः सूत्रव्याख्यानार्थ इति भेदः । **भवत्वन्यार्थ इति** । "ॐकार एवेदं सर्वम्" इति प्रणवाख्यस्य ब्रह्मणः

## कल्पतरुपरिमलः ।

कथमनेनाधिकरणेन लभ्यते ? तत्र हि "त्रयो धर्मस्कन्धा" इति विषयवाक्याद् धर्मशब्देन ब्रह्मचारिवानप्रस्थयोर्दर्शितमभ्युदयसाधनकर्मास्तित्वं तथैवाङ्गीकृतं संन्यासिनोऽप्यधिकशौचाष्टग्रासनियमशमदमादिरूपं कर्माङ्गीकृतं तस्य तपःशब्दवाच्यत्वमात्रं परं प्रतिक्षिप्तम्, **उच्यते**; संन्यासिनो विद्यां प्रति प्राधान्ययोग्यं किमपि कर्मानङ्गीकृतम् । समधिकशौचादेरानर्थक्यमिति चेन्न; सर्वापेक्षाचेति सूत्रोक्तन्यायेन सर्वकर्मापेक्षिततत्वादाचारान्तर्गतस्य तस्य विद्यार्थत्वश्रवणाच्च शुद्धित्वसंपादकतया शमदमादेः "शमदमाद्युपेतः स्यादि"ति सूत्रोक्तन्यायेन चित्तैकाग्र्यसंपादकतया च विद्योपयोगित्वात्, स्वातन्त्र्येणाभ्युदयसाधनस्य सर्वस्य कर्मणः संन्यासिना त्यक्तत्वात् । अतस्तथाभूतसंन्यासाश्रमास्तित्वप्रसाधनेन कृताक्षेपं समाधानं लभ्यते । **प्रणवाख्यब्रह्मणः प्रस्तुतत्वादिति । ननु**—छान्दाग्ये त्रयो धर्मस्कन्धा इत्युपक्रान्तस्य खण्डस्योङ्कार एवेदं सर्वमिति समापनात् तस्मिन् प्रणवः प्रस्तुत इत्युपपद्यतां, मधुविद्यायां च "गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पमि"ति प्रणवे ब्रह्मशब्ददर्शनात् प्रणवाख्यं ब्रह्मेत्युपपद्यते, "ब्रह्मसंस्थ" इत्यत्र ब्रह्मशब्दस्य प्रणवपरत्वं तु नोपपद्यते; तदुपासनेनामृतत्वानुपपत्तेः; "नान्यः पन्था" इति श्रुतिविरोधात्, नचेहामृतत्वमापेक्षिकं वक्तुं शक्यम्; तथा सति पुण्यलोकभाजामाश्रमान्तराणामपि तत्तत्त्वेन तदपेक्षया ब्रह्मसंस्थस्योत्कर्षालाभापत्तेरिति—**चेत्, उच्यते**; प्रश्नोपनिषदि त्रिमात्रप्रणवप्रतीका या ब्रह्मोपासनोक्ता, सैवात्रापि विवक्षिता; तस्याश्च ब्रह्मलोके तत्त्वसाक्षात्कारोत्पादनद्वाराऽऽत्यन्तिकामृतत्वफलत्वमुक्तमित्यत्रापि तदुक्तिरुपपद्यते इति तात्पर्यम् । प्रणवप्रकरणानुरोधे तु ब्रह्मसंस्थपदं स्वात-

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते । वेदे श्रवणात् । अग्निहोत्रादीनां चावश्यानुष्ठेयत्वात्तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमितिहीमां मतिं निराकरोति गार्हस्थ्यवदेवाश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः । कुतः ? साम्यश्रुतेः । समा हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते 'त्रयो धर्मस्कन्धाः' ( छा० २।२३।१ ) इत्याद्या । यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टमेवमाश्रमान्तरमपीति प्रतिपत्तव्यम् । यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये । तस्मात्तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य । तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृ० ४।४।२२ ) इत्यस्य वेदानुवचनादिभिः समभिव्याहारः । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा० ५।१०।१ ) इत्यस्य च पञ्चाग्निविद्यया । यत्तूक्तम् 'तप एव द्वितीयः' ( छा० २।२३।१ ) इत्यादिष्वाश्रमान्तराभिधानं संदिग्धमिति, नैष दोषः; निश्चयकारणसद्भावात् । 'त्रयो धर्मस्कन्धाः' (छा० २।२३।१ ) इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम् । नच यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राश्रमसबन्धात्त्रित्वेऽन्तर्भावयितुं शक्यन्ते । तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टो ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशस्तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत । 'ये चेमेऽरण्ये' ( छा० ५।१०।१ ) इति चारण्यलिङ्गाच्छ्रद्धातपोभ्यामाश्रमगृहीतिः । तस्मात्परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम् ॥ १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥

विधिर्वाऽयमाश्रमान्तरस्य न परामर्शमात्रम् । ननु विधित्वाभ्युपगम एकवाक्यताप्रतीति-

---

### भामती ।

वानप्रस्थाश्रमान्नान्यः, ब्रह्मसंस्थ इति च पारिशेष्यात्परिव्राडिति वक्ष्यति । तस्मादन्यपरादपि परामर्शादाश्रमान्तराणि प्रतीयमानानि देवताधिकरणन्यायेन न शक्यन्तेऽपाकर्तुम् । नच प्रत्यक्षश्रुतिविरोधः; वीरहा वेत्यादेः प्रतिपन्नगार्हस्थ्यं प्रमादादज्ञानाद्वाग्निमुद्वासयितुं प्रवृत्तं प्रत्युपपत्तेः । एवंच अविरोधे सिद्धवत्परामर्शादाश्रमान्तराणां शास्त्रान्तरसिद्धिं वा कल्पयिष्यामो यथोपवीतविधिपरे वाक्ये 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्यत्र निवीतं मनुष्याणां प्राचीनावीतं पितृणामिति शास्त्रान्तरसिद्धयोर्निवीतप्राचीनावीतयोः परामर्श इति ॥ १९ ॥ यद्यपि ब्रह्मसंस्थत्वस्तुतिपरतयाऽस्य संदर्भस्यैकवाक्यता गम्यते, संभवन्त्यां चैकवाक्यतायां वाक्यभेदोऽन्याय्यः; तथाप्याश्रमान्तराणां पूर्वसिद्धेरभावात्परामर्शानुपपत्तेः, अपरामर्शे च स्तुतेरसंभवेन किंपरतया एकवाक्यतास्त्विति तां भङ्क्त्वा धारणवद्वरमपूर्वत्वाद्विधिरे-

### वेदान्तकल्पतरुः ।

प्रस्तुतत्वात् तत्संस्थत्वप्रशंसार्थो भवतु नाम "त्रयो धर्मस्कन्धा" इत्यादि परामर्श इत्यर्थः ॥ १८ ॥ **निवीतमिति ।** एतज्ज्योतिर्दर्शना (ब्र. अ. १ पा. ३ सू. ४०) दित्यत्रानुक्रान्तम् ॥ एवं तावदनुवादत्वमङ्गीकृत्यानुवादसामर्थ्याच्छास्त्रान्तरं परिकल्प्य तस्मादाश्रमान्तरप्रमितिरुपपादिता । इदानीं नानुवादत्वं किंतर्हि ? अपूर्वार्थप्रतीतेरत्रैव वाक्ये विधिः कल्प्यते इत्याह भगवान्सूत्रकारः—**विधिर्वेति** । तत्र वाक्यभेदप्रसङ्गात्तदनुपपत्तिमाशङ्क्याह—**यद्यपीत्यादिना** । विधेयाथैंक्ये ह्यनुवादस्य विधिस्तुत्यर्थत्वेनैकवाक्यत्वम्, अत्रत्वप्राप्तार्थद्वयप्रतिभानाद्विधेयभेदे सति नैकवाक्यत्वसंभव इत्यर्थः । अधस्तादित्यादि महापितृयज्ञे दिष्टगताग्निहोत्रे च श्रूयते । तत्रो"परि हि देवेभ्यो धारयती"त्येषोऽनुवादः, वर्तमानापदेशात्, हिशब्दाच्च । आचाराच्चोपरि समिधः प्राप्तेर्हविषो ह्यभ्यर्हितद्रव्यत्वात् प्रच्छादनं येन केनचित्प्राप्नोति । तत्र स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीति वाक्यान्तरप्राप्ता समिन्नियम्यते । तस्मादनुवाद इति प्राप्ते—न समिद्धविःप्रच्छादने क्षमेत्यप्राप्ता, स्रुगूदण्डइति च हविषः प्राग्देशे धारणं प्राप्तं न हविष उपरि । तस्मादप्राप्तेर्भङ्क्त्वा हिशब्दं पञ्चमलकारस्थी-

### कल्पतरुपरिमलः ।

द्वयेण परब्रह्मनिष्ठापरं, नतु प्रणवप्रतीकब्रह्मोपासनापरमिति द्रष्टव्यम् ॥ १८ ॥ १९ ॥ **अप्राप्तार्थद्वयप्रतिभानादिति ।** गृहस्थाश्रमस्य प्रत्यक्षश्रुतिप्राप्तत्वात् त्रिषु धर्मस्कन्धेषु नैष्ठिकवानप्रस्थरूपमेवाप्राप्तमिति भावः । **महापितृयज्ञ इति** शाखान्तरं दृष्ट्वोक्तम् । प्रेताग्निहोत्र एवाधस्तात् समिधमिति विधिः प्रसिद्धः । अनुवाद इत्यत्र हेतुः—**वर्तमानापदेशाद्** विधिशब्दाश्रवणात् हिशब्दश्रुतेश्चेति । अप्राप्तस्यानुवादो न संभवतीति बाधकवारणार्थ**मुपरि समिधः प्राप्तेरि-**

रुपरुध्येत, प्रतीयते चात्रैकवाक्यता पुण्यलोकफलास्त्रयो धर्मस्कन्धा ब्रह्मसंस्थता त्वमृतत्वफलेति । सत्यमेतत्; सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः; अपूर्वत्वात्, विध्यन्तरस्यादर्शनात् । विस्पष्टाच्चाश्रमान्तरप्रत्ययाद्गुणवादकल्पनयैकवाक्यत्वयोजनानुपपत्तेः । धारणवत्—यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमपूर्वत्वात् । तथा चोक्तं शेषलक्षणे—'विधिस्तु धारणेऽपूर्वत्वात्' इति, तद्वदिहाप्याश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यते । यदापि परामर्श एवायमाश्रमान्तराणां, तदापि ब्रह्मसंस्थता तावत्संस्तवसामर्थ्यादवश्यं विधेयाऽभ्युपगन्तव्या । सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचिदाहोस्वित्परिव्राजकस्यैवेति विवेक्तव्यम् । यदि च ब्रह्मचार्यन्तेष्वाश्रमेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टस्ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषादनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति । अथ न परामृष्टस्ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति । तत्र तपःशब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपीति केचित् । तदयुक्तम्;

## भामती ।

वास्तु । यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमपूर्वत्वात् । तथोक्तम्—'विधिस्तु धारणेऽपूर्वत्वात्' इति, तथेहाप्याश्रमान्तरपरामर्शश्रुतिर्विधिरेवेति कल्प्यते । संप्रति परामर्शेऽपीतरेषामाश्रमाणां ब्रह्मसंस्थता संस्तवसामर्थ्यादेव विधातव्या, न खल्वविधेयं संस्तूयते, तदर्थत्वात्संस्तवस्येत्याह—**यदापीति** । अत्रावान्तरविचारमारभते—**सा च किं चतुर्ष्विति** । विचारप्रयोजनमाह—**यदि चेति** । **ननु** अनाश्रम्येव ब्रह्मसंस्थो भविष्यतीत्यत आह—**अनाश्रमित्वेति** । तत्र पूर्वपक्षमाह—**तत्र तपःशब्देनेति** । **अयमभिसंधिः**—यदि तावद्ब्रह्मसंस्थ इति पदं प्रत्यस्तमितावयवार्थं परिव्राजकेऽश्वकर्णादिपदवद्रूढं, तदाऽऽश्रमप्राप्तिमात्रेणैवामृतीभाव इति न तद्भावाय ब्रह्मज्ञानमपेक्षेत । तथाच नान्यः पन्था विद्यतेऽयनायेति विरोधः । नच संभवत्यवयवार्थे समुदायशक्तिकल्पना । तस्माद्ब्रह्मणि संस्थाऽस्येति ब्रह्मसंस्थः । एवंच चतुर्ष्वाश्रमेषु यस्यैव ब्रह्मणि निष्ठत्वमाश्रमिणः स ब्रह्मसंस्थोऽमृतत्वमेतीति युक्तम् । तत्र तावद्ब्रह्मचारिगृहस्थौ स्वशब्दाभिहितौ तपः पदेन च तपःप्रधानतया भिक्षुवानप्रस्थावुपस्थापितौ । भिक्षुरपि हि समधिकशौचाष्टग्रासीभोजननियमाद्भवति वानप्रस्थवत्तपःप्रधानः । नच गृहस्थादेः कर्मिणो ब्रह्मनिष्ठत्वासंभवः । यदि तावत्कर्मयोगः कर्मिता, सा भिक्षोरपि कायवाङ्मनोभिरस्ति । अथ ये न ब्रह्मार्पणेन कर्म कुर्वन्ति किंतु कामार्थितया ते कर्मिणः, तथा सति गृहस्थादयोऽपि ब्रह्मार्पणेन कर्म कुर्वाणा न कर्मिणः । तस्माद्ब्रह्मणि तात्पर्यं ब्रह्मनिष्ठता, नतु कर्मत्यागः; प्रमाणविरो-

## वेदान्तकल्पतरुः ।

कारेण च विधिरिति शेषलक्षणे सिद्धान्तितम् । एवं तावच्चतुर्णामाश्रमाणामिहानुवादः । तस्मात्सामर्थ्यादन्यत्र विधिरिहैव विधिरिति पक्षद्वयमुक्त्वेदानीं वाक्यान्तरप्राप्ताश्रमान्तराणामनुवादेन ब्रह्मसंस्थता स्तूयते, स्तुतिसामर्थ्याच्च सैव विधीयत इति पक्षान्तरमाह—**संप्रतीति** । ब्रह्मसंस्थताविधावपि न पारिव्राज्यसिद्धिः; त्रयाणामपि गृहस्थादीनां ब्रह्मसंस्थत्वसंभवादिति प्रकृतासंगतिमाशङ्क्याह—**अत्रावान्तरेति** । **समधिकशौचं** चतुर्गुणम् । अष्टानां ग्रासानां समूहो**ऽष्टग्रासी** **ननु** भवतु यौगिकं ब्रह्मसंस्थपदं, योगस्तु परिव्राज्येवेत्याशङ्क्याह—**न च गृहस्थादेरिति** । **स्यादेतत्**—त्रयो धर्मस्कन्धा इत्युपक्रमा"स्तर्व एव" इत्यत्र त एव त्रय एतच्छब्देन परामृश्यन्ते । तत्र तपःशब्देन परिव्राजकस्यापि ग्रहणे

## कल्पतरुपरिमलः ।

त्युक्तम् । आद्युपपादकं **हविषोऽभ्यर्हितद्रव्यत्वादित्यादि** । **वाक्यान्तरप्राप्ता समिन्नियम्यत इति** । तेनैव वाक्यान्तरेणेति शेषः । **हविषः प्राग्देश इति** । स्रुग्दण्ड एव हविराधारबिलस्थानापरभागरूपः प्राग्देशशब्देन विवक्षितः । **यदापि परामर्श एवायमिति** भाष्येण स्तुतिसामर्थ्यात् ब्रह्मसंस्थत्वे विधिरभ्युपेय इति प्रसाधितं तत्प्रसाधनीयप्रकृतसंन्यासाश्रमसिद्धौ नोपयोगि; गृहस्थादीनामेवामृतत्वफलकब्रह्मसंस्थाविधिसंभवादित्याशङ्क्य एतच्छङ्कानिराकरणफलं विचारान्तरं भाष्यकारैरारभ्यत इत्यवतारयतीत्याह—**ब्रह्मसंस्थताविधावपीति** । यद्यपि नोपन्यस्तशङ्कानिराकरणार्थं विचारान्तरमारभ्यते, किंतु तपःशब्देन संन्यासाश्रमस्यापि ग्रहणं चतुर्णामप्याश्रमाणां ब्रह्मसंस्थताऽमृतत्वफलोच्यते इति वृत्तिकारमतनिराकरणार्थम्; तथापि तन्निराकरणार्थेनैव गृहस्थाद्याश्रमेषु ब्रह्मसंस्थपदस्यावयवार्थासंभवप्रदर्शकेन वक्ष्यमाणन्यायेनोपन्यस्तशङ्कानिराकरणमप्यनुषङ्गतो लभ्यत इति तात्पर्यम् । **किंच गृहस्थादि**ष्वमृतत्वफलकब्रह्मसंस्थाविध्यभ्युपगमेऽपि विद्यायाः स्वातन्त्र्यं सिध्यत्येव; कर्माङ्गत्वे फलार्थत्वासंभवादित्यपि द्रष्टव्यम् ।

## भामती ।

धात् । तपसा च द्वयोराश्रमयोरेकीकरणेन त्रय इति त्रित्वमुपपद्यते । एवंच त्रयोऽप्याश्रमा अब्रह्मसंस्थाः सन्तः पुण्यलोकभाजो भवन्ति, यः पुनरेतेषु ब्रह्मसंस्थः सोऽमृतत्वभागिति । नच येषां पुण्यलोकभाक्त्वं तेषामेवामृतत्वमिति विरोधः, यथा देवदत्तयज्ञदत्तौ मन्दप्रज्ञावभूतां संप्रति तयोर्यज्ञदत्तस्तु शास्त्राभ्यासात्पटुप्रज्ञो वर्तते इति, तथेहापि य एवाब्रह्मसंस्थाः पुण्यलोकभाजस्त एव ब्रह्मसंस्था अमृतत्वभाज इत्यवस्थाभेदादविरोधः । तथाच ब्रह्मसंस्थ इति यौगिकं पदं प्रकृतविषयं भविष्यति । यथा "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यत्र विनियुक्तापि प्रकृतैवाग्नेयी गृह्यते । नच विनियुक्तविनियोगविरोधः; यदि ह्यत्राग्नेय्युपदिश्येत, ततो यथा प्रतीता तथोद्दिश्येत । विनियुक्ता च प्रती-

## वेदान्तकल्पतरुः ।

चत्वार आश्रमा मध्ये उक्ता इति त्रित्वेनोपक्रमस्तत्परामर्शश्च न घटेत अत आह—**तपसा चेति । नन्वेते** पुण्यलोका इति पुण्यभाजां बहुवचनेन निर्देशाद् ब्रह्मसंस्थोऽमृतत्वमेतीति अमृतत्वभाज एकवचनेन निर्देशात् त्रय आश्रमिणः पुण्यलोकभाजश्चतुर्थ आश्रमी ब्रह्मसंस्थ इति गम्यते, तत्कथं चतुर्णां ब्रह्मसंस्थत्वमत आह—**एते च त्रय इति ।** परिव्राजोऽपि वनस्थेऽन्तर्भावमुक्तमभिप्रेत्य त्रय इति निर्देशः । **ननु** पुण्यलोकभाजामेवामृतत्वभाक्त्वं विरुद्धमित्याशङ्क्याह—**नच येषामिति ।** ब्रह्मणि संस्था निष्ठाऽस्येतीह समासः सर्वनामार्थे वर्तते सर्वनाम च प्रकृतग्राहीति प्रकृतः । सर्व एव ब्रह्मसंस्थोऽस्मत्पक्षे लभ्यते । तव त्वप्रकृतः परिव्राड् ब्रह्मसंस्थाः, तथाच समासान्तर्वर्तिसर्वनामश्रुतिविरोध इत्यर्थः । **यथाग्नेय्येति ।** ज्योतिष्टोमे प्रथममाग्नेयादयो मन्त्रा "अग्न आयाहि वीतये" इत्येवमादयो विशेषत आम्नाताः, स्तोत्रादिसाधनत्वेन विनियुक्ताश्च । पुनरा"ग्नेय्याग्नीध्रमुपतिष्ठते" इति सामान्येनाग्नेयीमात्रमाग्नीध्रोपस्थाने विनियुज्यते । तत्र संशयः—किमप्रकृतैवाग्नेयी विनियुज्यते, उताविशेषेण या काचिदग्निलिङ्गवती प्रकृताऽप्रकृता च, उत प्रकृतैवेति । तत्राग्नेय्येति श्रुतेरविशेषात् सर्वाग्नेयी विनियुज्यतेऽथ वा विनियुक्तविनियोगानुपपत्तेरप्रकृतैवेति पूर्वपक्षमाशङ्क्य शेषलक्षणे स्थितं सिद्धान्तमाह—**प्रकृतैवेति ।** अप्रकृताग्नेयीग्रहणे हि तस्या ज्योतिष्टोमेन सामान्यसंबन्ध आग्नीध्रेण विशेषसंबन्धश्च विधातव्यः, प्रकृतग्रहणे तु तस्या आग्नेय्याः क्रतुना सामान्यसंबन्धसिद्धेर्विशेषसंबन्धमात्रविधाने लाघवं स्यादित्यर्थः । आद्यं पूर्वपक्षं निषेधयति—**नच विनियुक्तेति ।** यद्यपि स्तोत्राद्यर्थमाग्नेयी प्रकृता; तथापि न तस्याः पारार्थ्यमनेन विनियोगेन गृह्यते, अनपेक्षितत्वात् । आग्नेयीस्वरूपमात्रं त्वपेक्षितत्वाद् गृह्यते । यदि पुनराग्नेय्यनेनैव वाक्येनोद्दिश्य

## कल्पतरुपरिमलः ।

**प्रथममाग्नेयादयो मन्त्रा इति ।** प्रथमशब्दादग्रे पुनराग्नेय्याग्नीध्रमिति पुनःशब्दाच्च एकस्मिन्नेव वेदे मन्त्राम्नानस्तोत्रविनियोगोपस्थानविनियोगाः क्रमिका इति प्रतीयते । अन्ये तु मन्त्राम्नानस्तोत्रविनियोगौ सामवेदे उपस्थानविनियोगस्तु यजुर्वेद इत्याहुः । **अप्रकृताग्नेयीग्रहण इति । अयमर्थः**—आग्नीध्रोपस्थानस्य द्वे रूपे, आग्नीध्रोपस्थानत्वं ज्योतिष्टोमापूर्वसिद्ध्यौपयिकव्यापारत्वं चोभयमपि विधातव्यम्; केवलाग्नीध्रोपस्थानत्वविधाने हि नैष्फल्यं स्यात्, फलं वा कल्प्येत, तद्यद्यप्रकृताग्नेयी गृह्येत, तदा रूपद्वयमप्यनेनैव वाक्येन विधातव्यमिति गौरवं भवेत्, प्रकृताग्नेयीग्रहणे तु तस्याः प्रकरणाम्नानात् ज्योतिष्टोमगतो व्यापारः कर्तव्यत्वेनावधारितस्य व्यापारस्याग्नीध्रोपस्थानात्मकविशेषरूपत्वमविधेयं य आग्नेय्या ज्योतिष्टोमे व्यापारः कर्त्तव्यः, स आग्नीध्रोपस्थानात्मक इति विधेयलाघवं लभ्यते । अतो लाघवार्थं प्रकृतैव ग्राह्येति । **न तस्याः पारार्थ्यमिति ।** यदि पारार्थ्यमपि विनियोगान्तरेऽनुप्रविशेत्, तदा विनियुक्तविनियोगविरोधदोषः स्याद्—यथा "पुरोडाशकपालेन तुषानुपवपती"त्यत्राधिष्ठानलक्षणानङ्गीकारे । तदाहि कपाले पुरोडाशशेषत्वविशेषणम् अन्यशेषत्वव्यवच्छेदकं स्याद्; विशेषणानां स्वविरोधिव्यावर्तकस्वभावत्वात् । तथाचानुवाद्यपुरोडाशशेषत्वविधेयतुषोपवापशेषत्वयोः परस्परविरोधाद् वाक्यार्थप्रतीतिर्न निष्पद्येतेति तत्र विनियुक्तविनियोगविरोधो दोषः । तत्परिहाराय च पुरोडाशशेषत्वरूपविशेषणांशमपहाय वस्तुतस्तदधिष्ठानकपालस्वरूपमात्रे पुरोडाशकपालशब्दस्य लक्षणाऽङ्गीकृता । नचेहाग्नेय्याः स्तोत्रशेषत्वरूपविशेषणश्रवणमस्ति, येन विनियुक्तविनियोगविरोधशङ्का स्यादित्यर्थः । **ननु** यथा "व्रीहीन्प्रोक्षती"त्यत्र व्रीहिषु क्रतुशेषत्वविशेषणाश्रवणेऽपि प्राक्क्रतुशेषत्वेन विनियुक्तत्वात् क्रतुशेषाणामेव तेषां ग्रहणम्, एवमिहाप्याग्नेय्याः प्राक् स्तोत्रसाधनत्वेन विनियुक्तत्वात् तथाभूताया एव तस्या ग्रहणं भवेदिति स्तोत्रशेषत्वेनोपात्ताया उपस्थानशेषत्वबोधने विनियुक्तविनियोगदोषः स्यादित्याशङ्क्याह—**यदि पुनरिति ।** व्रीहयः क्वचित्कार्ये न विधीयन्ते, किंतु व्रीहीनुद्दिश्य प्रोक्षणसंस्कारो विधीयते, यथाप्रतीतमेवोद्देश्यं क्वचिदुपयुक्तमेव संस्कार्यमिति च क्रत्वपूर्वार्थत्वेनैव व्रीहीणां ग्रहणमिति युज्यते, न तथेहाग्नेयीमुद्दिश्य तत्संस्कारत्वेनोपस्थानं विधीयते, किं त्वाग्नेय्येव तृतीयाश्रुत्योपस्थाने साधनत्वेन विधीयते । नच यत्र वाक्ये यद्विधीयते तस्य तत्रोद्देशोऽप्यस्ति; तथा सति हि तदुद्देशेनान्यदपि विधेयमिति वाक्यभेदः स्याद् । अतोऽत्र नाग्नेय्युद्देश्येति न व्रीहिन्यायेन तस्याः पारार्थ्यविवक्षा प्रसज्यत इत्यर्थः । **ननु** संनिहितव्यक्तिपरत्वमेवेत्ययुक्तम्; सन्निधिना स्थानप्रमाणेनाविशेषप्रवृत्तश्रुतिसंकोचा-

**नहि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति । यथात्र ब्रह्मचारिगृहमेधिनावसाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितावेवं भिक्षुवैखानसावपीति युक्तम् । तपश्चासाधारणो धर्मः वानप्रस्थानां; कायक्लेशप्रधानत्वात्, तपःशब्दस्य तत्र रूढेः । भिक्षोस्तु धर्म इन्द्रियसं-**

## भामती ।

तिर्भवेदिति विनियुक्तविनियोगविरोधः, इह तु आग्नीध्रोपस्थाने सा विधेयत्वेन विनियुज्यते न तूद्दिश्यते; विधेयत्वेन च विनियोगे आग्नेयीपदार्थापेक्षणात्प्रकृतातिक्रमे प्रमाणाभावात् । तावता च शास्त्रोपपत्तेर्नाप्रकृतानामपि ग्रहणसंभवः । नच यातयामतया न विनियोगः; वाचःस्तोमे सर्वेषामेव मन्त्राणां विनियोगादन्यत्राप्यविनियोगप्रसङ्गात् । तथेहापि प्रकृता एवाश्रमा बुद्धिविपरिवर्तिनः परामृश्यन्ते, नानुक्तः परिव्राडेवेति पूर्वः पक्षः । राद्धान्तमुपक्रमते—**तदयुक्तम् । नहि सत्यां गतौ वानप्रस्थविशेषणेनेति** । यथोपक्रान्तं तथैव परिसमापनमुचितम् । यत्संख्याकाश्च ये प्रसिद्धास्ते तत्संख्याका एव कीर्त्यन्ते इति चोचितम्, नतु सत्यां गतावुत्सर्गस्यापवादो युज्यते । असाधारणेनैकैकेन लक्षणेनैकैक आश्रमो वक्तुमुपक्रान्त इति तथैव समापनमुचितम्, नतु साधारणासाधारणाभ्यामुपक्रमसमाप्ती श्लिष्येते । नच तपो नाम नासाधारणं वानप्रस्थानामित्यत आह—**तपश्चासाधारण इति** । न खलु पराकादिभिः कायक्लेशप्रधानो यथा वानप्रस्थस्तथा भिक्षुः सत्यप्यष्टग्रासादिनियमे । नच शौचसन्तोषशमदमादयस्तपःपक्षे वर्तन्ते; तत्र वृद्धानां तपःप्रसिद्धेरसिद्धिः । अतएव वृद्धाः तपसो भेदेन शौचादीनाचक्षते—'शौचसन्तोषतपःस्वाध्यायेश्वरप्र-

## वेदान्तकल्पतरुः ।

विधीयते, तदाऽसौ परार्थत्वेनैव प्रतीता तथैवोद्दिश्यमाना अन्यत्र च विनियुज्यमाना विनियुक्तविनियोगविरोधमावहेत्, नत्वेवम्; विधीयमानत्वादस्या इत्यर्थः । यत्तूक्तं सामान्यश्रुतिविरोध इति, तत्राह—**तावता चेति** । आग्नेयीशब्दस्य यौगिकत्वात् संनिहितव्यक्तिपरत्वमेव । अग्निदेवताकत्वलक्षणो हि योगो व्यक्तावेव घटते, न सामान्यमात्रे; तद्धितान्तवर्तियत्स्याशब्दस्य संनिहितवचनत्वादित्यर्थः । **ननु** व्यक्त्यपेक्षत्वेऽप्याग्नेयीशब्दस्य न प्रकृतव्यक्तिर्ग्रहीतुं शक्यतेऽन्यार्थप्रयुक्तत्वेन गतरसत्वादत आह—**न च यातयामतयेति । वाचःस्तोमः** क्रतुविशेषः । तत्र "सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूंषि वाचःस्तोमे परिप्लवं शंसन्ती"ति विनियोगेऽपि मन्त्राणां प्राप्तात्मिकार्थेषु विनियोगवदिहापि स्यादित्यर्थः । परिप्लुत्य परिप्लुत्य यदृच्छया मन्त्राणां शंसनं परिप्लवः । आग्नेयीन्यायं प्रकृते योजयति—**तथेहापीति** । इह हि वाक्ये उपक्रमे यज्ञोऽध्ययनं दानमिति गृहस्थानामसाधारणधर्मो निर्दिष्टस्तप इति वनस्थानाम् आचार्यकुलवास इति ब्रह्मचारिणां तथा सत्युपसंहारेऽपि ब्रह्मसंस्थत्वेनैव साधारणधर्मेण यतीनां ग्रहणं युक्तं, न तपसा तस्य गतिष्वसाधारणत्वाभावादित्याह—**यथोपक्रान्तमिति** । यथोपक्रान्तमित्याद्युचितमित्यन्तं संग्रहवाक्यम् । **अपिच** तपःशब्देन परिव्राजकग्रहणे त्रय इति चत्वार आश्रमा निर्देष्टव्याः, चतुष्ट्वावच्छिन्नेषु च तेषु त्रित्वमयुक्तमित्याह—**यत्संख्याकाश्चेति** । इदमप्युचितमित्यन्तं संग्रहवाक्यमेव । **आद्यं** संग्रहं व्यतिरेकमुखेन विवृणोति—**असाधारणेत्यादिना** । असाधारणेन यज्ञादिना उपक्रमः, साधारणेन तपसा चोपसंहारः । तावेतौ **न श्लिष्येते** न सङ्गच्छेते इत्यर्थः । तपसः संन्यासिवनस्थयोः साधारणत्वमङ्गीकृत्य दूषणमुक्तम्, इदानीं साधारण्यमेव नास्ति; तस्य वनस्थासाधारणत्वात्, तथाच तपसा परिव्राजकस्य ग्रहणं नैव प्राप्नोतीत्याह—**नच तपो नामेति** । ग्रीष्मे पञ्चाग्निमध्यावस्थानादि हि तपो नाष्टग्रासनियमादि । तथासति द्वात्रिंशद्ग्रासादिनियमेन गृहस्थादेरपि तपस्वित्वप्रसङ्गादित्यर्थः । यच्चोक्तं समधिकशौचं तप इति, तत्राधिकम-

## कल्पतरुपरिमलः ।

योगादित्याशङ्क्याह—**अग्निदेवतेति । न सामान्यमात्रे इति** । यद्यप्याकृत्यधिकरणन्यायेन जातिरर्थः प्राप्नोति । तथाप्यग्निदेवताप्रकाशकत्वरूपावयवार्थस्य जातावनन्वयाद् आग्नेयीशब्दस्य व्यक्तिरेवार्थः, अतो न जातिद्वारेणासन्निहितव्यक्त्यनुप्रवेशो भवतीत्यर्थः । **ननु**—अग्निदेवत्यानामृचां नानाछन्दस्त्वाद् नानारूपत्वाच्च न तास्ववयवार्थातिरिक्तमनुगतं जातिरूपं सामान्यमस्ति, अतः सामान्ये योगो न घटत इत्युक्तिर्न युक्तेति—**चेत्, सत्यम्**; अतिरिक्तसामान्याभ्युपगमेऽपि इह व्यक्तिवाचित्वमेव वक्तव्यमित्यभ्युपगमवादोऽयम् । अस्तु व्यक्तिवाचित्वम्, तथाप्यविशेषप्रवृत्तश्रुत्यनुग्रहायासन्निहितव्यक्तिपरत्वमप्यस्त्वीत्याशङ्क्याह—**तद्धितान्तवर्तीति** । अग्निर्देवताऽस्या इति विग्रहवाक्यगतसर्वनामार्थान्तर्भावात् सर्वनाम्नः सन्निहितपरामर्शित्वस्वाभाव्यात् सर्वनामश्रुत्यपेक्षाकृतः सन्निधिना संकोचो न दोषायेति भावः । **ननु व्यक्त्यपेक्षत्वेऽपीति** । यद्यप्ययं व्यक्तिशब्दः; तथापि सन्निहितव्यक्तिपरत्वमयुक्तम्; तस्या स्तोत्रविनियुक्तत्वेन गतरसत्वात्, किंत्वसन्निहितव्यक्तिपरत्वमेव हि युक्तमित्यर्थः । **व्यतिरेकमुखेन विवृणोतीति** । न त्वसाधारणाभ्यामुपक्रमसमाप्ती श्लिष्येते इत्येतद्व्यतिरेकमुखेन विवरणम् । **अधिकमप्याहेति** । समधिकशौचं तव इति पूर्वं

**यमादिलक्षणो नैव तपःशब्देनाभिलप्यते। चतुष्टेन च प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यम्। अपिच भेदव्यपदेशोऽत्र भवति 'त्रय एते पुण्यलोकभाज एकोऽमृतत्वभाक्' इति। पृथक्त्वे चैष भेदव्यपदेशोऽवकल्पते। न ह्येवं भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञावन्यतरस्त्वन-**

## भामती।

णिधानानि नियमाः' इति। सिद्धसंख्याभेदेषु च संख्यान्तराभिधानमश्लिष्टमित्याह—**चतुष्टेन चेति। अपिच भेदव्यपदेशोऽत्रेति**। त्रय एत इति किं भिक्षुरपि परामृश्यते, किंवा भिक्षुवर्जं त्रय एव। न तावत्त्रय इति भिक्षुसंग्रहे तद्वर्जनमेते त्रय इत्यत्र कर्तुं शक्यम्। एत इति प्रकृतानां साकल्येन परामर्शाद्भिक्षुसंग्रहे च न तस्य पुण्यलोकत्वम्, अब्रह्मसंस्थत्वाभावाद्भिक्षोः। तेन तस्यैव ब्रह्मसंस्थस्य सदा पुण्यलोकत्वममृतत्वं चेति विरोधः। त्रिषु च ब्रह्मसंस्थपदे यदेति संबन्धनीयम्। भिक्षौ च सदेति भवत्येव वैरूप्यम्। तदिदमुक्तम्—**पृथक्त्वे चेति**। पूर्वपक्षाभासं स्मार-

## वेदान्तकल्पतरुः।

प्याह—**नच शौचेति**। एवमाद्यं संग्रहं विभज्य द्वितीयं विभजते—**सिद्धसंख्याभेदेष्विति**। अवस्थाविशेषापेक्षयैकस्यैव पुण्यलोकामृतत्वप्राप्तिव्यपदेशभेदस्य पूर्वपक्ष उपपादितत्वाद् भाष्यायोगमाशङ्कयाह—**त्रय एत इतीत्यादिना**। त्रय इत्येते इति च पदे तावत्समानाधिकरणे। ततश्च ये त्रय इत्युक्तास्त एवैत इति परामृष्टव्याः। तत्र त्रय इति भिक्षुं विहाय यदि गृहस्थादय उच्यन्ते, तदा वक्तव्यं तपःशब्देन भक्तिर्गृह्यते वा, न वेति। यदि तु गृह्येत ततस्तापसेन भिक्षुणा सह सर्वेषामेत इति शब्देन प्रकृतपरामृष्टत्वादेतच्छब्दसमानार्थवृत्तिना त्रय इति शब्देन भिक्षुवर्जं त्रयो वक्तुमशक्या इत्यर्थः। अथ तपःशब्देन भिक्षुः संगृह्यते, त्रय इति शब्देन च भिक्षुसहिता निर्दिश्यन्ते, तत्राह—**भिक्षुसंग्रहे चेति**। तदा ह्येतच्छब्दपरामृष्टानां त्रयाणां पुण्यलोकभाक्त्वाभिधानाद् भिक्षोरपि पुण्यलोकभाक्त्वं स्यात्, तच्चायुक्तम्; तस्य ब्रह्मसंस्थत्वनियमादित्यर्थः। अथ ब्रह्मसंस्थस्यैव पुण्यलोकभाक्त्वमपि स्यात्तत्राह—**तेन तस्यैवेति**। वाक्यवैरूप्यमाह—**त्रिषु चेति**। गृहस्थादीनामनित्यत्वाद् ब्रह्मसंस्थायाः, सदा ब्रह्मसंस्थोऽमृतत्वमेतीति योजनीयम्। एवं वाक्यवैरूप्यमित्यर्थः। एवंच भाष्यमपि साध्याहारे योजने उक्तदोषं हृदि कृत्वा यथाश्रुतार्थोपपादने फलभेदव्यपदेशं हेतुमाहेति व्याख्यातं भवति। **यदिह केशवो वक्ति**—मा भूत्तपःशब्देन भिक्षोर्ग्रहणं, ब्रह्मसंस्थपदस्य तु प्रकृतमात्रप्रवृत्तौ को विरोधः? भिक्षोश्च योगार्थाविशेषाद् ब्रह्मसंस्थस्य सतोऽमृतत्वं भविष्यति। नच भिक्षोरपि नित्या ब्रह्मसंस्था; संन्यासाद् ब्रह्मणः स्थानमिति फलान्तराम्नानात्—**इति, तदत एवापास्तम्**; यदा तदेति वाक्यवैरूप्यादेव। नच संन्यासस्योद्देश्यं फलं ब्रह्मलोकः, काम्यकर्मवतः संन्यासित्वव्याघातात्। लोकैषणाव्युत्थितस्य हि संन्यासो विधीयते। तस्मात्संन्यासाद् ब्रह्मण इत्यानुषङ्गिकफलाभिप्रायं प्राप्य पुण्यकृताँल्लोकानित्यादि वदतो भिक्षोर्नित्या ब्रह्मसंस्थेति। **भवत्येव वैरूप्यमिति**। सिद्धान्तिनाऽपि योगस्येष्टत्वाद् रूढिमारोप्य पूर्वपक्ष आभासस्तं स्मारयतीत्यर्थः। आग्नेयीन्यायेन ब्रह्मसंस्थशब्दस्य प्रकृतसर्वगोचरत्वस्योक्तत्वात्कथं त्रयाणां ब्रह्मसंस्थत्वासंभवः? अत आह—

## कल्पतरुपरिमलः।

शङ्कितम्, इदानीं शमादिकमपि तप इति शङ्कनीयान्तरमपि निरसितुमाहेत्यर्थः। **यद्वा**—ग्रासशौचनियमयोस्तपस्त्वाभावे गृहस्थसाधारण्यादिति हेतुरुक्तः, स तु शमादेरपि तपस्त्वाभावे साधारणो हेतुः; आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येति गृहस्थस्यापि तदुचितबाह्यान्तरेन्द्रियनिग्रहविधानात्। इदानीं शौचनियमस्य शमादेश्च तपस्त्वाभावे हेत्वन्तरमाहेत्यर्थः। **"शौचसंतोषेति"** पातञ्जलसूत्रे शौचं तावत्पृथग् गृहीतमिति स्पष्टं संतोषशब्देन शमदमादिकमपि तपसः पृथग् गृहीतं, तद्रहितस्येन्द्रियवश्यस्य सर्वदैवासंतोषादिदं पृथग्ग्रहणं हेत्वन्तरम्। **एवं च भाष्यमपीति**। ब्रह्मसंस्थ इति श्रुतेर्गृहस्थादिविषये यदा तदेत्यध्याहारेण भिक्षुविषयेऽनध्याहारेण च योजने उक्तदोषं वाक्यवैरूप्यलक्षणं हृदि कृत्वा स्पष्टत्वान्मनस्येव निधाय यथाश्रुतार्थोपादाने यदातदेत्यध्याहारानध्याहारौ विहाय यथाश्रुतार्थग्रहणे फलभेदव्यपदेशं पूर्वपक्षनिरासहेतुं व्यपदेशभेदोऽत्र भवतीति भाष्यं वदतीत्येवं तद्भाष्यं टीकाकारैर्व्याख्यातं भवतीत्यर्थः। तपःशब्देन भिक्षोरग्रहणमङ्गीकृत्याविरोधोपपादने प्रागुक्तदोषं स्मारयति—**यदा तदेति। वाक्यवैरूप्यादेवेति**। तेन तद्ग्रहणमङ्गीकृत्याविरोधोपपादने दोषमाह—**न च संन्यासस्येति**। आग्नेयीन्यायेन दृढीकृतः पूर्वपक्षः कथमाभास इत्याशङ्क्य रूढिः सिद्धान्तिन इष्टेत्यारोपाभिप्रायेयमाभासत्वोक्तिरित्याह—**सिद्धान्तिन इति। कथं त्रयाणां ब्रह्मसंस्थत्वासंभव इति**। आग्नेयीन्यायेन प्रकृतेषु त्रिषु वर्तमानः श्रौतब्रह्मसंस्थशब्द एव कर्मच्छिद्रेषु ब्रह्मनिष्ठा ब्रह्मसंस्थेति तेषां ब्रह्मसंस्थासंभवमुपपादयतीति भावः। ब्रह्मसंस्थशब्दस्य गृहस्थादिसाधारण्ये वैरूप्यापत्तेः तत्साधारण्यासंभवाच्च प्रकृतविषयत्वानुपपत्तेरप्रकृतविषयत्वं युज्यते। प्रकृतार्थलाभे ह्यप्रकृतपरामर्शित्वं परिहरणीयं, न तदलाभेऽपि। अत एवा"ग्नेयसूक्तेन संवत्सरमुपदधानमासीत सूक्तेनाविच्छेदाये"ति यावन्ति दाशतयीष्वाग्नेयानि सूक्तानि तावतामिष्टकोपधाने विनियोगे तेषां सूक्तानां तत्राप्रकृतत्वेऽप्याग्नेयशब्देन परामर्श इष्यते। यदि तु ब्रह्मणि संस्थाऽस्येति सप्तमीसमासं विहाय "स्थ-

योर्महाप्रज्ञ इति । भवति त्वेवं देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ विष्णुमित्रस्तु महाप्रज्ञ इति । तस्मात्पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः परिशिष्यमाणः परिव्राडेवामृतत्वभाक् । कथं पुनर्ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन्परिव्राजक एवावतिष्ठेत ? रूढ्यभ्युपगमेचाश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति । अत्रोच्यते—ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते । तच्च त्रयाणामाश्रमाणां न संभवति; स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात्, परिव्राजकस्य तु सर्वकर्मसंन्यासात्प्रत्यवायो न संभवत्यननुष्ठाननिमित्तः । शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलको न विरोधी । ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म यज्ञादीनि चोत्तरेषां, तद्व्यतिक्रमे च तस्य प्रत्यवायः । तथाच 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' ( नारा० ७८ ) 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' ( मुण्ड० ३।२।६, नारा० १२।३, कैवल्य० ३ ) इत्याद्याः श्रुतयः । स्मृतयश्च—'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' (गी० ५।१७) इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति । तस्मात्परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति । तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्यतैव । अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचारः प्रवर्तितः । विद्यत एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा । 'ब्रह्मचर्यं परिसमाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' ( जाबा० ४) इति । न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुम्; अविशेषश्रवणात् । पृथग्विधानाच्चानधिकृतानाम्—'अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' (जाबा० ४ ) इत्यादिना । ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम् । तच्च दर्शयति—'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' ( जाबा० ५ ) इति । तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमाः । सिद्धं चोर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति ॥ २० ॥

---

## भामती ।

यति—**कथं पुनर्ब्रह्मसंस्थशब्दो योगादिति** । तन्निराकारोति—**अत्रोच्यत इति** । **अयमभिसंधिः**—सत्यं यौगिकः शब्दः सति प्रकृतसंभवे न तदतिपत्त्याऽप्रकृते वर्तितुमर्हति । असति तु संभवे मा भूत्प्रमादपाठ इत्यप्रकृते वर्तयितव्यः । दर्शितश्चात्रासंभवोऽधस्तादिति । एष हि ब्रह्मसंस्थतालक्षणो धर्मो भिक्षोरसाधारणः, आश्रमान्तराणि तत्संस्थान्यतत्संस्थानि च, भिक्षुस्तत्संस्थ इत्येव । तत्संस्था हि स्वाभावं व्यवच्छिन्दन्ती विरोधाद्यस्तत्संस्थ एव तत्राऽसी नान्यत्र । **शमदमादिस्तु तदीय इति** । स्वाङ्गमव्यवधायकमित्यर्थः । ब्रह्मसंस्थत्वमसाधारणं परिव्राजकधर्मं श्रुतिरादर्शयतीत्याह—**तथाच न्यास इति ब्रह्मेति** । सर्वसङ्गपरित्यागो हि न्यासः, स ब्रह्मा, कुत ? इत्यत आह—**ब्रह्मा हि परः** । अतः परो न्यासो ब्रह्मेति । किमपेक्ष्य परः संन्यास इत्यत आह—**तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदिति** । **एतदुक्तं भवति**—ब्रह्मपरतया सर्वेषणापरित्यागलक्षणो न्यासो ब्रह्मेति । तथाचेदृशं न्यासलक्षणं ब्रह्मसंस्थत्वं भिक्षोरेवासाधारणं नेतरेषामाश्रमिणाम् । ब्रह्मज्ञानस्य शब्दजनितस्य यः परी-

## वेदान्तकल्पतरुः ।

**सत्यमिति** । **दर्शितश्चात्राऽसंभव इति** । वैरूप्यादिनेत्यर्थः । एवं प्रकृतपरामर्शित्वं ब्रह्मसंस्थशब्दस्य व्युदस्य यौगिकार्थस्य भिक्षावेव संभवं भाष्योक्तमुपपादयति—**एष हीत्यादिना** । संपूर्वस्तिष्ठतिर्हि समाप्तिवचनः । अन्यनिष्ठताया ब्रह्मणि समाप्तिर्न स्याद्, अन्यत्रापि व्यासक्तत्वादित्यर्थः । स्वाभावेन स्वस्य विरोधाद्धेतोस्तं व्यवच्छिन्दन्तीति योजना । भास्करस्तु न्यास एवात्यरेचयदिति तैत्तिरीयके ब्रह्माभिधीयते; न्यास इति ब्रह्मेति निर्वचनात् । तथा च संन्यासे प्रमाणत्वेन वचनोदाहरणं भाष्यकारस्य न युक्तमिति वदति, तं श्रुतिव्याख्यानेनानुकम्पते—**सर्वसङ्गेत्यादिना** । अत्र हि श्रुतौ "सत्यं पर"मित्यादिना सत्यादितपांसि प्रक्रम्य तेभ्यः परत्वेन संन्यासः श्रूयते । तत्र ब्रह्मा परमात्मा पर उत्कृष्टः संन्यासोऽपीतरसाधनेभ्यः पर इत्यस्मात्साम्याद् ब्रह्मत्वेन स्तूयते इत्यर्थः । **ब्रह्मपरतयेति** । ब्रह्मणि तात्पर्येणेत्यर्थः । ब्रह्मज्ञानपरिपाकाङ्गत्वाच्चेति भाष्यं, तदनुपपन्नमिव; अनधिकृतविषयत्वेऽपि संन्यासस्य तान् प्रत्येव विद्यापरिपाकाङ्गत्वसंभवादित्याशङ्क्य व्याचष्टे—**शब्दजनितस्येति** । संन्यासस्य कर्मानधिकृतविषयत्वकल्पनं हि स्वप्रयुक्ताधिकार्यलाभे

## वेदान्तकल्पतरुः ।

स्याद् । ब्रह्मसाक्षात्कारकामस्य तदधिकारिणः सत्त्वान्नैवं कल्पनीयमित्यर्थः ॥ ये तु शिखायज्ञोपवीतत्यागरूपां पारमहंस्यवृत्तिं न मन्यन्ते, ते न पश्यन्ति प्रत्यक्षां घण्टिकास्थानेषु पठ्यमानामाथर्वणीं श्रुतिं "सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुध" इति । नचात्र सशिखं शिखासहितं यथा भवति तथेति शिखारक्षणं शङ्क्यम्; "अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥ ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः । ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥" इत्यादिवाक्यशेषे बाह्यशिखां व्यावर्त्य ज्ञानस्यैव शिखात्वादिसंपादनात् । नच—एतद् द्वित्रिदिनजीवनावशेषसिद्धपुरुषविषयं न साधकविषयमिति—साम्प्रतम्; "आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥" इति वाक्यशेषे ध्यानविधानात्, सिद्धं प्रति तद्वैयर्थ्यात् । **महार्णवे** च यतिधर्मप्रकरणे यमस्मृतिरुदाहृता, सापि तैर्न दृष्टा; एकवासा अवासा वा एकदृष्टिरलोलुपः । एक एव चरेन्नित्यं वर्षास्वेकत्र संवसेत् ॥ इति । नच त्रिदण्डिनामवासस्त्वसंभवः, परमहंसस्य तु सर्वत्यागादस्ति संभवः । इदमपि साधकविषयवचनम्;

## कल्पतरुपरिमलः ।

क चे"ति सूत्रेण स्थाधातोः कर्तरि विहितं कप्रत्ययमाश्रित्य ब्रह्मणि संस्थ इति सप्तमीतत्पुरुष आद्रियते, तदा सर्वनामान्तर्भावादाग्नेयीन्यायेन प्रकृतपरामर्शित्वशङ्काया एव नावकाश इत्यपि द्रष्टव्यम् । **ब्रह्मसाक्षात्कारकामस्य तदधिकारिणः सत्त्वादिति ।** ब्रह्मसाक्षात्कारश्च चित्रायागादिफलवदामुष्मिकसाधारणं फलमिति जन्मान्तरसंपन्नसंन्यासापूर्वस्य गार्हस्थ्यदशायां कृतश्रवणादिकस्यापि भवति । अतएव वामदेवस्य गर्भस्थस्य प्रागकृतसंन्यासस्यैव साक्षात्कारोदयः श्रूयते । देवादीनामप्यकृतसंन्यासानामेव साक्षात्कारस्तेन मुक्तिश्च श्रूयते—"तद्यो देवानां प्रत्यबुध्यत स एव तदभवदि"त्यादौ । **घण्टिकास्थानानि** पुण्यक्षेत्रविशेषा गोदावरीतटादिषु प्रसिद्धाः । **आथर्वणीं श्रुतिम्** "अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ती"त्युपक्रम्य ब्रह्मोपनिषदिति प्रसिद्धाम् । **नचात्र सशिखमिति ।** "सोत्तरीयमन्नं भुञ्जीते"तिवत्कर्तृविशेषणसाहित्ये सशिखमिति शब्दः, नतु सघृतमन्नं भुञ्जीतेतिवत्कर्मसाहित्य इति भावः । **एतदुपलक्षणम्—** बहिःसूत्रमित्येतदप्यपपरिबहिरञ्चवः पञ्चम्या इति पञ्चम्यन्तेन कृताव्ययीभावसमासं सूत्राद्बहिर्भूतस्यापि सर्वस्यापि त्यागप्रतिपादनार्थं, नतु यज्ञोपवीतस्यैति यत्तेषां मतं, तदप्यत्र विवक्षितं निरासकहेतुसाम्यात् । **बाह्यशिखां व्यावर्त्येति ।** एतद्बाह्ययज्ञोपवीतव्यावर्तनस्याप्युपलक्षणम् । ज्ञानयज्ञोपवीतिन इत्यपि वाक्यशेषाम्नानविशेषणोदाहरणाद् लोकाक्षगृह्यवचनं च "अथातः परमहंसपारिव्राज्यविधिं व्याख्यास्याम" इत्युपक्रम्य प्रवृत्तं "सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीत"मित्यादिकमन्त्रोपबृंहणं द्रष्टव्यम् । **एतेन**—"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा" इति ज्ञानस्तुत्यर्थकर्मानुमतिरिति "स्तुतयेऽनुमतिर्वे" (ब्र. अ. ३ पा. ४ सू. १४)ति सूत्रोक्तन्यायेन ज्ञानस्तुत्यर्थमेव शिखायज्ञोपवीतत्यागानुमतिरित्यपि तेषां मतं—**निरस्तम्**; शिखावपनादिविधायकोपबृंहणानुगृहीतसशिखवपनयज्ञोपवीतत्यागविधिस्तावकत्वस्यैव वाक्यशेषस्य वक्तव्यत्वेन ज्ञानस्तावकत्वोक्त्ययोगात् । नहि "परिधीन् परिदधाति रक्षसामपहत्यै न पुरस्तात्परिदधाती"ति प्राग्देशपरिधानपर्युदासशेषस्य "दित्यो ह्येवोद्यन् पुरस्ताद् रक्षांस्यपहन्ती"त्यर्थवादस्य तत्स्तावकत्वमपहायादित्यस्तावकत्वकल्पना युक्ता । **ननु**—"ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः । स याति नरकान् घोरान्महारौरवसंज्ञकान् ॥" इति परमहंसोपनिषदि यतीनां ज्ञानमेव दण्डो न काष्ठमिति श्रवणस्य ज्ञानस्तुत्यर्थत्वमेव वक्तव्यम्, न काष्ठदण्डव्यावर्तकत्वम्; दण्डधारणस्य सिद्धान्तेऽप्यभ्युपगतत्वात्, दण्डधारणे रौरवादिप्राप्तेः केनाप्यनभ्युपगतत्वाच्च, तद्वदिहापि किं न स्यादिति—**चेत्, उच्यते;** तत्र "सर्वान् कामान् परित्यज्याद्वैते परमे स्थितिरिति" ब्रह्मनिष्ठायाः प्रकृतत्वेन स्तुत्यर्थत्वमुपपद्यते, यः संन्यस्यापि ब्रह्मनिष्ठां विहाय केवलमन्नलाभाय यतिलिङ्गकाष्ठं धृत्वाऽभिशस्तपतितपर्यन्तानां सर्वेषामन्नमश्नन् पर्यटति तस्य रौरवादिप्राप्तिरित्यप्युपपद्यते, इह तु शिखायज्ञोपवीतत्यागविधिशेषस्य तत्स्तावकत्वमेव वक्तव्यं, नतु ज्ञानस्तावकत्वमिति वैषम्यम् । **एतेन**—यज्ञोपवीतत्यागविधिः पुराणयज्ञोपवीतविषयः गृहस्थधार्यद्वितीययज्ञोपवीतविषयो वेति यत्केषांचिन्मतं, तत् शिखावपनविधावपि पुराणशिखाविषयत्वेन सञ्चारयितुं शक्यं तदपि—**प्रत्युक्तम्;** ज्ञानशिखिनो ज्ञानयज्ञोपवीतिन इति "अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखेति" च वाक्यविशेषे सर्वथैव बाह्यशिखोपवीतव्यावर्तनात्, परमहंसोपनिषदि "अद्वयानन्दविज्ञानघन एवास्मि तदेव मम परमं धाम तदेव शिखा तदेवोपवीतं चे"त्येवमेव बाह्यशिखोपवीतव्यावर्तनात्, आरुण्युपनिषदि "दण्डमाच्छादनं कौपीनं परिग्रहेत् शेषं विसृजेदि"ति सर्वं त्यक्त्वा दण्डकौपीनाच्छादनमात्रस्यैव परिग्राह्यतोक्तेश्च, प्रत्यक्षश्रुतिविरोधेन नूतनोपवीतादिग्रहणार्थकश्रुतिस्मृतिकल्पनानुपपत्तेश्च, तादृग्वचनसद्भावे कुटीचकादिविषयत्वोपपत्तेश्च शिखायज्ञोपवीतत्यागविधेरुत्तानबुद्धिभिरुन्नीतां विषयान्तरकल्पनां निरस्यति—**न चैतद् द्वित्रिदिनेति । सिद्धं प्रति तद्वैयर्थ्यादिति ।** उत्पन्नब्रह्मसाक्षात्कारं प्रति ध्यानविधिवैयर्थ्यादित्यर्थः । **एतदुपलक्षणम्**—उत्तीर्णसर्वविधिजातं प्रति वसनादिविधिवैयर्थ्याच्चेत्यपि द्रष्टव्यम् । **सर्वत्यागादस्ति संभव इति ।**

## वेदान्तकल्पतरुः ।

सिद्धं प्रति विधिवैयर्थ्यादिति । **यदिह केशवः प्रललाप**—बहिः सूत्रमित्यन्तर्यामिणो बाह्यो हिरण्यगर्भोऽभिधीयते, नोपवीतम्; हृदि प्राणाः प्रतिष्ठिता इति प्राणप्रक्रमात्, वाक्ये च संन्यासविध्यश्रवणात्, परमात्मना चोपवीतकार्यस्य सव्यापसव्यादेरकरणादुपवीतकार्यस्य तस्मिन्नतिदेशायोगाच्च न तन्निष्ठाबलादुपवीतत्यागसंभवः । कुशकार्यहविर्धारणकरणे हि शरमयबर्हिषा तद्बाध इष्यते—**इति, तन्न**; सूत्रसादृश्यरूपगुणलक्षणाद्वारेण हिरण्यगर्भे सूत्रशब्दवृत्तिकल्पनायां गौरवप्रसङ्गात् । सूत्रविकारोपवीतलक्षणायां च सन्निकर्षात्त्रिवृत्सूत्रं च तद्विदुरिति चोपक्रमगतहृच्छब्दोक्तं ब्रह्म तच्छब्देन परामृश्य त्रिसूत्रतासंपादनात् तन्निष्ठाबलेन तित्याजयिषितसूत्रस्यापि त्रिसूत्रत्वावधारणात् । "धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेदि"ति च यज्ञोपवीतसाध्योच्छिष्टाशुचित्वनिवृत्तेरान्तरसूत्रेण संपादनेन त्याज्यसूत्रस्य यज्ञोपवीतत्वावधारणात् । एतेनातिदेशानुपपत्तिः पराणुन्ना । तथोपसंहारेऽपि "ज्ञानयज्ञोपवीतिनः इदं यज्ञोपवीतं तु परमं यत्परायणम् स विद्वान्यज्ञोपवीती स्यात्स यज्ञस्तं यज्वानं विदु"रित्यादिभिर्यज्ञोपवीतमेव घुष्यते । **यत्तु** प्राणप्रकरणादिति, **तन्न**; ततोऽपि प्रागेव सहिरण्यगर्भसमस्तजगदधिष्ठानस्य ब्रह्मणो हृच्छब्देन प्रक्रान्तत्वात् । **यच्च** संन्यासाश्रवणादिति, **तदपि न**; वाक्यशेषे "बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः" इति योगं सम्यग्ज्ञानं कर्तुं प्रवृत्तस्य साधनत्वेन सूत्रत्यागस्य विहितत्वात्, सर्वश्रुतिस्मृतिषु च संन्यासस्यैव ज्ञाने साधनत्वप्रसिद्धेः, त्यागसंन्यासशब्दयोश्चैकार्थत्वादिति । अयं च यज्ञोपवीतादित्यागः परमहंसयतिविशेषविषये पर्युदासोऽपरमहंसो यज्ञोपवीतादि धारयेदिति, न निषेधः; नित्यविधिभिर्निवृत्तेः प्रत्यवायं कल्पयित्वा यज्ञोपवीतादिधारणप्रवृत्तेर्विहितत्वात् । तत्र कथं निषेधेन निवृत्तिबोधः क्रियेत? नच—प्रवृत्तौ प्रत्यवायं परिकल्प्य निषेधो निवर्तयतीति—वाच्यम्; तथा सति प्रवृत्तेरप्राप्त्या निषेधस्यैवानुदये सर्वनाशप्रस-

## कल्पतरुपरिमलः ।

सर्वं त्यक्तवत एवावासस्त्वं संभवति; "त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं मेखलां यज्ञोपवीतमित्येतद् भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेद् यथाजातरूपधर" इति जाबालोपनिषदि सर्वं त्यक्तवत एव यथाजातरूपधर इत्यवासस्त्वोक्तेः, परमहंसोपनिषदि सामान्यतः परमहंसस्य दण्डकौपीनाच्छादनमात्रग्रहणमुक्त्वा "तच्च न मुख्योऽस्ति कोऽयं मुख्य इति तदयं मुख्यो न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति परमहंस" इति मुख्यपरमहंसस्यावासस्त्वोक्तेश्च, वैश्वानरसूत्रे "परमहंसानां वृक्षमूले शून्यागारे श्मशाने वासिनः साम्बरा दिगम्बरा वा न तेषां धर्माधर्मा"वित्यादिनोदाहृतोपनिषदुपबृंहणाच्च । तस्मादयमस्मृतावप्यवासस्त्वोक्तिस्तत्सहनियततया श्रुतिसिद्धं शिखायज्ञोपवीतत्यागमपि स्मर्तुराशयस्थमाविष्करोतीति भावः । **हृदि प्राणाः प्रतिष्ठिता इति प्राणप्रक्रमादिति** । हृदि प्राणश्च ज्योतिश्चेति प्राणोपक्रमादित्युदाहरणीयम्; बहुवचनान्तप्राणशब्दस्य चक्षुरादिपरत्वेन हिरण्यगर्भपरत्वाभावात् । **सादृश्यरूपेति** । यद्यपि "सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः" इत्येतस्योत्तरार्धे "यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेदि"त्यस्मिन् पठितस्य ब्रह्मपरस्य सूत्रशब्दस्य सूत्रसादृश्यमूला गौणी वृत्तिर्वाच्या, "येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव । तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥" इत्यनन्तरमन्त्रानुरोधात्; तथापि बहिःसूत्रमित्यत्र सा न वाच्या; विकारविकारिभावरूपसाक्षात्संबन्धमूलकसन्निकृष्टार्थलक्षणोपपत्तेः । "ज्ञानशिखिनो ज्ञानयज्ञोपवीतिनः । शिखा ज्ञानमयी यस्य उपवीतं च तन्मयमि"ति वाक्यशेषेण त्याज्यसूत्रस्योपवीतत्वावधारणाच्चेति तात्पर्यम् । **हृच्छब्दोक्तमिति** । "हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च तद्विदुः ॥" इति श्लोके हृच्छब्दोक्तं ब्रह्म तच्छब्देन परामृश्य तस्य त्रिवृच्छब्देन त्रिवृत्कृतप्रपञ्चात्मत्वपरेण त्रिसूत्रत्वसंपादनादित्यर्थः । **यज्ञोपवीतसाध्येति** । मूत्रपुरीषकर्मभोजनादिप्रयुक्तं प्रायत्यमुच्छिष्टत्वं स्वापादिनिमित्तं तदशुचित्वम् उभयमपि यज्ञोपवीतं विना कृतेऽप्याचमने नापैति । "विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवे"दित्यादिस्मरणात् । अत उच्छिष्टाशुचित्वनिवृत्तिर्यज्ञोपवीतसाध्येत्यर्थः । **एतेनेति** । यज्ञोपवीतकार्याशुचित्वनिवृत्तिकरत्वेनेत्यर्थः । **एकार्थत्वादिति** । तथाच बहिः सूत्रं त्यजेदित्यतोऽपि संन्यासस्य प्रकृतत्वं वक्तुं शक्यमित्यर्थः । **अपरमहंस इति** । औपनिषदस्य परमहंसविषययज्ञोपवीतादित्यागवचनस्य पर्युदासवृत्त्या नित्योदकी नित्ययज्ञोपवीतीत्यादिकर्मकाण्डगतयज्ञोपवीतादिविध्यन्वयेन तदेकवाक्यतेति भावः । **नित्यविधिभिरिति** । पुरुषार्थतया सर्वकर्मार्थतया च सदोपवीतादिधारणविधयो नित्यविधयः, ते तद्धारणनिवृत्तितः प्रत्यवायं कल्पयित्वा पुरुषं सदा तद्धारणे प्रवर्तयन्ति, तेषु सत्सु निषेधः कथं प्रत्यवायापादिकां निवृत्तिं कारयेद्, अतो निषेधोऽभ्युपगन्तुं न युक्त इत्यर्थः । **ननु** निषेधः प्रवृत्तौ प्रत्यवायं कल्पयित्वा निवर्तयतु, नच प्रवर्तकशास्त्रेण विरोधस्तस्य सामान्यशास्त्रस्य निषेधशास्त्रविषयपरमहंसातिरिक्तविषयत्वेन व्यवस्थोपपत्तेरित्याशङ्क्याह—**नच प्रवृत्ताविति** । परमहंसविषयेऽप्युपवीतादिधारणविधयः प्रवर्तन्ते, न वा, प्रवर्तन्ते चेत्कथमुपवीतादि निषेद्धुं शक्यम् ? न हि शास्त्रप्राप्तस्य रागप्राप्तवत् सर्वथा निषेधोऽस्ति; प्रापकशास्त्रस्याप्रामाण्यप्रसङ्गात्, विकल्पाभ्युपगतावष्टदोषदुष्टः स एव

### वेदान्तकल्पतरुः ।

ङ्गात् । तस्मात्पर्युदासः । यदि मन्येत परमहंसानामपि पराशरेण यज्ञोपवीतादि विहितं तत्र परमहंसा नाम त्रिदण्डजलपवित्रयज्ञोपवीतशिक्यान्तर्वासधारिण" इत्यादिना, ततश्च न पर्युदास इति, **तन्न**; अस्य वचनस्य व्यवह्रियमाणपराशरस्मृतावदर्शनात् । कल्पने च सशिखमित्यादिप्रत्यक्षश्रुतिविरोधे बुद्धादिस्मृतिवद् बाधात् । भवन्ति च स्मृतयः—

### कल्पतरुपरिमलः ।

दोषः । न प्रवर्तन्ते चेत्तत्राह—**तथा सतीति** । निषेध्यप्राप्त्यभावे निषेधः सर्वथैव नात्मानमासादयेदित्यर्थः । प्रवर्तन्त इति पक्षे निषेधस्य विकल्पेन वोन्मेषोऽस्ति, सोऽपि नास्त्यस्मिन् पक्ष इत्याशयेन सर्वनाशप्रसङ्गादित्युक्तम् । **तस्मात्पर्युदास इति** । नच—पर्युदासपक्षे प्रकरणान्तरगतवाक्यशेषत्वमङ्गीकर्तव्यं, ततो वरं विकल्प एवास्त्विति—वाच्यम्; अयमेको दोषः पर्युदासे, विकल्पेऽष्टौ दोषा इति तस्यैव परिहरणीयत्वात् । 'दीक्षितो न जुहोति" "न तौ पशौ करोती"त्यनयोर्विकल्पपरिहारार्थं पर्युदासवृत्त्याऽग्निहोत्रादिवाक्यपाशुकप्रकृतिवत् शब्दशेषत्वयोर्भट्टाचार्यैर्गुरुभिरपि अङ्गीकृतत्वाच्च । **व्यवह्रियमाणेति** । पराशरस्मृतिर्हि श्लोकरूपा द्वादशाध्यायी सर्वेषु देशेषु व्यवह्रियते । तत्रैतद्वाक्यं न दृश्यत इत्यर्थः । **कल्पने चेति** । यदि सामान्यतः संन्यासिविषये कल्प्यते, तदा कुटीचकादिषु चारितार्थ्यं स्पष्टम्, विशेषतः परमहंसविषये तु कल्पनैव नोन्मज्जति; प्रत्यक्षश्रुतिविरोधात् । सशिखमिति ब्रह्मोपनिषद्वचनं हि परमहंसविषयम्; योगमुत्तममास्थित इति श्रवणात्, सम्यज्ज्ञानसाधनानां संन्यासानां मध्ये पारमहंस्यमेव ह्युत्तमं साधनं सर्वकर्मत्यागेनानन्यव्यापारतया दृढचित्तैकाग्र्यसंभवात् । "दण्डमाच्छादनं कौपीनं परिग्रहेत् शेषं विसृजेदि"त्यारुण्युपनिषद्वचनमपि परमहंसविषयम्; "आरुणिः प्रजापतेर्लोकं जगाम तं गत्वोवाच केन भगवन् कर्माण्यशेषतो विसृजानीति सर्वकर्मत्यागोपक्रमात्, कुटीचकादिषु तदभावात्, अग्रे च तस्यामुपनिषदि अथातः परमहंसपरिव्राजकानामिति परमहंसमुपक्रम्य "त्यजेत् पितरं पुत्रम् अग्न्युपवीतं कर्म कलत्रं यच्चान्यदपीहे"त्याम्नानात्, "त्रिदण्डं कमण्डलु"मित्यादिजाबालोपनिषद्वचनमपि परमहंसविषयम्; तत्र "परमहंसा नाम संवर्तकारुणिश्वेतकेत्वि" त्याद्युपक्रमात् "संन्यासेन देहत्यागं करोती"त्यन्तेन संन्यासवृत्तिकथनानन्तरं "स परमहंसो नामे"त्युपसंहाराच्च । "दण्डं न शिखा"मित्यादिपरमहंसोपनिषद्वचनमप्यथ योगिनां परमहंसानां कोऽयं मार्ग ? इति परमोपक्रमादेव परमहंसविषयमिति स्पष्टम् । "अथ परिव्राडेकशाटीपरिहितो मुण्डोदरपात्र्यरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सन् सार्ववर्णिकं भैक्षचर्यम् अभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवदण्डमाददीते"ति मैत्रायणोपनिषद्वचनमपि परमहंसविषयमेव; मुण्डैकदण्डत्वलिङ्गात् । एवंभूताभिः प्रत्यक्षश्रुतिभिर्विरुद्धाः श्रूयमाणाः स्मृतयः सन्ति चेदप्रमाणमेव, यथा संन्यासविधायकप्रत्यक्षश्रुतिविरुद्धास्तन्निराकरणस्मृतयः । आपस्तम्बसूत्रे ऊर्ध्वरेतसामाश्रमाणां देवयानपथश्रवणादनुग्रहमात्रेण वृष्ट्यानयनापत्यदानादिशक्तिसद्भावाच्च प्राशस्त्यमस्तीति पूर्वपक्षं कृत्वा त्रयीविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा, तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीयोक्त्राप्युच्चैर्नीचैः कार्यमिति त्रयीविरुद्ध आचारोऽप्रमाणमिति मन्यत इति तेषामप्रामाणिकत्वेन निराकरणं कृतम् । गृहस्थधर्मेषु वर्तमानानामेव ब्रह्मलोक आश्रमान्तरं प्रशंसन्नपि प्रत्यवैतीत्यस्मिन्नर्थे ब्रह्मवचनमप्युदाहृतम् । त्रयीविद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानं य एतानि कुर्वते तैरिहत्सह स्म सोरजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्नि"ति । तथा महाभारते कर्णादिवधनिर्विण्णं प्रव्रजनोद्युक्तं युधिष्ठिरं प्रति भ्रातृणां द्रौपद्याः ऋषीणां भगवतश्च वचनानि संन्यासनिन्दापराणि बहूनि श्रूयन्ते । काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुम् । लिङ्गान्यन्नार्थमेतानि न मोक्षायेति मे मतिः ॥ इत्यादीनि । यदि प्रत्यक्षश्रुतिविरुद्धान्यपि स्मृतिवचनान्यपेक्ष्येरन्, तदा संन्यास एव प्रत्याख्यायेत, क्व तत्रोपवीतादिसदसद्भावचिन्ता ? यद्युच्येत कर्मठानापातविरक्त्या प्रव्रजनोद्युक्ताँस्ततो निवर्त्य कर्मस्वेव नितरां कर्तुमापस्तम्बसूत्रे संन्यासनिराकरणम्, युधिष्ठिरं राज्यपरिपालने प्रवर्तयितुं तन्निराकरणमित्येवं प्रत्यक्षसंन्यासविध्यविरोधेन तादृग्वचनजातं नीयत इति, तदा पारमहंस्योपयुक्ततीव्रवैराग्यराहित्येऽपि तत्स्वीकरणप्रवृत्तान् कुटीचकादीन् यथापूर्वं स्वस्ववृत्ताववस्थापयितुं परमहंसानामपि शिखायज्ञोपवीतादिकमस्ति न कश्चिद्विशेष इति तत्तद्वृत्तिप्रशंसार्थत्वेन तान्यपि वचनानि नीयन्तां; प्रत्यक्षश्रुतिविरोधस्य परिहरणीयत्वाविशेषात् । "कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः । एभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि तैः स्मृतम् ॥" इति ब्रह्मोपनिषद्वचनोपबृंहणार्थं व्यासस्मरणं यज्ञोपवीतं कर्माङ्गमित्यादि, यद्यपि परमहंसस्यापि श्रवणमननध्यानप्रणवजपभोजनाचमनादिकर्मास्तीति सर्वकर्मार्थतया विहितमुपवीतं तस्मात्प्राप्नोति; तथापि तस्यात्मज्ञानोपवीतसत्त्वात् तेनैव तन्निर्वाहः । तथैव कौषीतकिब्राह्मणे प्रश्नोत्तराभ्यामुपपादितम् । तत्र हि "किमस्य यज्ञोपवीतम् ? का वाऽस्य शिखा ? कथं वोपस्पर्शन"मिति प्रश्नः । "इदमेवास्य तद्यज्ञोपवीतं यदात्मज्ञानं विद्या शिखे"त्याद्युत्तरम् । अत्रोपस्पर्शनग्रहणं श्रवणादीनामप्युपलक्षणम् । "ज्ञानशिखिनो ज्ञानयज्ञोपवीतिन" इत्यादिप्रागुदाहृतवचनतोऽपि संन्यासिकर्म बाह्यशिखायज्ञोपवीतानपेक्षमित्यव-

## वेदान्तकल्पतरुः ।

"त्रिदण्डं कुण्डिकां चैव सूत्रं चाथ कपालिकाम् । जन्तूनां वारणं वस्त्रं सर्वं भिक्षुः परित्यजेत् ॥ कौपीनाच्छादनार्थं तु वासोऽर्थस्य परिग्रहम् । कुर्यात् परमहंसस्तु दण्डमेकं तथैव च ॥" इति विष्णुः । काण्वायनश्च—"तत्र परमहंसा नाम त्रिदण्डकमण्डलुशिक्यजलपवित्रपात्रपादुकाशनशिखायज्ञोपवीतकपालानां त्यागिनो न तेषां धर्माधर्मौ न सत्यं नापि चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नभैक्षाहाराश्चातुर्वर्ण्यं भैक्षचर्यं चरन्त आत्मानं मोक्षयन्त" इति । विष्णुकाण्वायनस्मृत्योश्च शिष्टपरिगृहीतयोरनाप्तप्रणीतत्वं शङ्कमानस्य स्वकीयब्राह्मणत्वेऽप्यनाश्वासः स्यात् । स्मरति स भगवान्व्यासः—"यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः । उपकुर्वाणकात्पूर्वं यतो लोके न दृश्यते ॥ यावत्कर्माणि कुरुते तावदस्यैव धारणा । तस्मादस्य परित्यागः क्रियते कर्मभिः सह ॥ अग्निहोत्रविनाशे तु जुह्वादीनि यथा त्यजेत् । यथाच मेखलादीनि गृहस्थाश्रमवाञ्छया ॥ पत्नीयोक्त्रं यथेष्यन्ते सोमान्ते च यथा ग्रहान् । तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः ॥" इति । महाभारतेऽपि—"एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा । काषायमात्रसारोऽपि यतिः

## कल्पतरुपरिमलः ।

धृतम् । अतस्तदितराश्रमकर्माङ्गत्वमेव बाह्ययज्ञोपवीतस्य परिशिष्यते । तदभावात् परमहंसस्य न तदपेक्षेति भावः । केचन प्राक्तनमुपवीतं त्यक्त्वा नूतनं ग्राह्यम्; "नखानि निकृत्य पुराणवस्त्रं यज्ञोपवीतं कमण्डलुं त्यक्त्वा नवानि गृहीत्वा ग्रामं प्रविशेदि"ति स्मरणादिति मन्यन्ते, तन्मतनिरासार्थं वैयासिकं तत्रत्यदृष्टान्तवचनमप्युदाहरति—**अग्निहोत्रेति** । **अग्निहोत्रविनाशो** यजमानपातित्यादिनाऽग्निविनाशः । **इष्यन्तः** चरमेष्यन्तः । एवं च नूतनग्रहणस्मृतिर्बहूदकादिविषयेति भावः । **एकदण्डी त्रिदण्डीति** । अत्र शिखी त्रिदण्डीति बहूदकादिविषयं, मुण्डित एकदण्डीति परमहंसविषयं, काषायमात्रधारिण इति यो मुख्यपरमहंसो दण्डमप्यनिच्छन् पामरजनसंकोचपरिहाराय कौपीनाच्छादनमात्रं धारयति तद्विषयम् । न च परमहंसस्यापि त्रिदण्डित्वं शङ्कनीयम्; जाबालोपनिषदि पारमहंस्यप्रवेशे त्रिदण्डं कमण्डलुमित्यादिना त्रिदण्डपरित्यागस्योक्तत्वात् । आरुण्युपनिषदि "कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत् पात्रं विसृजेद् दण्डान् विसृजे"-दिति कुटीचकस्य पारमहंस्यप्रवेशे "दण्डानि"ति बहुवचनेन त्रिदण्डपरित्यागमुक्त्वा अनन्तरं "सखा मा गोपाये"त्यादिक"मेतं सोऽश्मानमृच्छतिर्वि"त्यन्तं मन्त्रमुपादायान्तेन मन्त्रेण "कृत्वोर्ध्वं वैणवं दण्डं कौपीनं परिग्रहे"दिति तेन मन्त्रेण एकदण्डपरिग्रहस्योक्तत्वाच्च । **स्कन्दपुराणे च**—"कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् । अक्षमालां च गृहीयाद्वैणवं दण्डमव्रणम् ॥ परमहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम् । शिखां यज्ञोपवीतं च नित्यकर्म च संत्यजेत् ॥" इति परमहंसस्य त्रिदण्डत्यागैकदण्डग्रहणयोरुक्तत्वाच्च । "अथ परमपरिव्राजकलिङ्गं सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् शिखायज्ञोपवीतत्रिदण्डकमण्डलुकपालानां त्यागी"ति विश्वामित्रेण, "तदूर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टिं शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वाऽथैकदण्डकमण्डलुकपालानादत्ते सखा मा गोपायेति" बोधायनेन च परमहंसस्य त्रिदण्डत्यागैकदण्डग्रहणयोरुक्तत्वात्। **एतेन**—परमहंसस्य त्रिदण्डालाभे एकदण्डग्रहणं कार्यमिति तयोर्मुख्यामुख्यतया विकल्पं कल्पयन्तो "नष्टे जलपवित्रे च त्रिदण्डे वा प्रमादतः । एकं तु वैणवं दण्डं पालाशं बैल्वमेव वा। गृहीत्वा विचरेत्तावद्यावल्लभ्यं त्रिदण्डकम् ॥" इति स्मृतिवचनमुदाहरन्तो—**निरस्ताः**; जाबालोपनिषदि पारमहंस्यप्रवेशे त्रिदण्डत्यागस्योक्तत्वात्, अनन्तरं "यथाजातरूपधरो निष्परिग्रह" इत्युक्तत्वेन पुनस्त्रिदण्डान्तरपरिग्रहानुमतेरनाशङ्कनीयत्वाच्च, आरुण्युपनिषदि त्रिदण्डत्यागपूर्वकमेकदण्डग्रहणस्योक्तत्वाच्च, "त्रिदण्डस्य परित्याग एकदण्डस्य धारणम् । एकस्मिन् दृश्यते वाक्ये तस्मादस्य प्रधानता ॥" इति व्यासस्मृतावारुण्युपनिषद्वचनावलम्बनेनैव परमहंसानामेकदण्डस्यामुख्यत्वशङ्काया निराकृतत्वाच्च । तस्मादमुख्यत्वस्मरणं कुटीचकादिविषयं योज्यम् । तथा सति "पालाशं बैल्वमौदुम्बरं दण्डमजिनं मेखलां यज्ञोपवीतं च त्यक्त्वे"त्यारुण्युपनिषदुपसंहारवचनमपि धृतामुख्यैकदण्डकुटीचकादिपारमहंस्यप्रवेशविषयतयोपपद्यते। **ननु**—अस्तु शिखायज्ञोपवीतरहितैकदण्डादिकं परमहंसस्य मुख्यं, तत्सन्निहितं त्रिदण्डादिकमपि तस्य विकल्पेन मुख्यं भवन्न निवारयितुं शक्यम्; अन्यथा परमहंसविषयत्रिदण्डादिवचनानां निरालम्बनत्वापत्तेः । "इन्द्रस्य वज्रोसीति वैणवान् दण्डान् दक्षिणे पाणौ धारयेद् एकं वा यद्येकं तदा सशिखं वपनं कृत्वा यज्ञोपवीतं त्यजेदि"ति मैत्रायणीयश्रुतौ "एकदण्डी त्रिदण्डी वा मुण्डः शिखी वे"त्यादिस्मृतिषु च विकल्पस्मरणात् । "काममेकं त्वैणवं दण्डमाददीते"ति मैत्रायणीयश्रुतावेकदण्डविधौ कामशब्दोक्त्या "यथाजातरूपधरः प्राचीमुदीचीं वा दिशं प्रव्रजोत्तिष्ठ भगवन् दण्डं गृहाणेत्यध्वर्युणा दत्तं मस्तकप्रमाणं सव्रमृजुं सौम्यमेकं वैणवं दण्डमिन्द्रस्य वज्रोऽसि सखा मा गोपायेति यदीच्छेद् दधीते"ति लोकाक्षगृह्ये यदीच्छेदिति शब्देन वैणवदण्डस्य पाक्षिकतास्फुटीकरणाच्च, त्रिदण्डपरित्यागादिवचनानामेकदण्डादिपक्षविषयतयोपपत्तेश्च । तस्मात्पारमहंस्ये पाक्षिकतयाऽपि प्रविशत् त्रिदण्डादिकं न प्रत्याख्यातुं शक्यमितीदं पारमहंस्ये यथा कथंचित्रिदण्डादिसद्भावं व्यवस्थापयितुं धृतव्यसनानां ब्रह्मास्त्रमिति—**चेत्**, **उच्यते**; विकल्प एवाष्टदोषदुष्टः सति गत्यन्तरे

## वेदान्तकल्पतरुः ।

पूज्यो युधिष्ठिर ॥" तथा—"जटाऽजिनधराश्चान्ये पङ्कदिग्धा जितेन्द्रियाः । मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥" इति राजधर्मप्रशंसार्थमुत्तमाश्रमपरामर्शः । लैङ्गेऽपि पुराणे—"निकृत्य सशिखान् केशानुपवीतं विसृज्य च । पञ्चभिर्जुहुयादप्सु भूः स्वाहेति च वा क्रमात् ॥" इति । पद्मपुराणेऽपि—"ततो व्रतानां परमहंसव्रतमनुत्तमम् । तेभ्यो ददौ दिवौकोभ्यः सतामप्यविरोधि यत् ॥ पठ्यते यजुःशाखायां महत्पैतामहं व्रतम् । परं ब्रह्मोदितं तद्वदागमाचारचेष्टितम् ॥ ब्रह्माराधनमुख्यानां व्रतिनां तीव्रतेजसाम् । भृगुरध्यापयामास वेदोक्तं परमं हितम् ॥ एवं व्रतधराः सर्वे वसन्ति स्माऽमरेश्वराः । हंसव्रतधरा भूत्वा ध्यायमानाः परं पदम् ॥ हित्वा शिखां सोपवीतां विधिना परमेण ते । कालेन महता ध्यानादेवं ज्ञानात्मतां गताः ॥ ये चात्र हंसव्रतिनो नियताः संयतेन्द्रियाः । एवं भिक्षां तु भुञ्जाना ध्यायमानाः परं पदम् ॥ दण्डहस्तास्तु संजाता भिक्षाव्रतसमन्विताः । त्यक्त्वा शिखां सोपवीतां दण्ड एकः करे धृतः ॥ हंसव्रतं परं प्रोक्तं पुरा चीर्णं मया चिरम् । व्रतानां परमं गुह्यं पवित्रं पापनाशनम् ॥ हंसव्रतं द्विषन्मोहात्पापेनाच्छादितो नरः । न स मुच्येत पापेन कल्पकोटिशतैरपि ॥ तस्माद्धंसव्रतानां तु न हन्यान्न च दूषयेत् ॥ भिक्षां परमहंसानां यतीनां यः प्रयच्छति ॥ विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् । शिखां यज्ञोपवीतं च त्यक्त्वा चरति यो व्रतम् ॥ हंसव्रती स विज्ञेयो मोक्षकामी भवेच्च सः । शिखायज्ञोपवीतेन त्यक्तेनासौ कथं द्विजः ॥ निन्द्यते देवलोकेषु पूजितो देवदानवैः । दुष्टं विशिष्टमथवा हंसव्रतधरं नरम् ॥ न स्पृशेदङ्गमङ्गेन देवरूपः स वै द्विजः ॥" इति । पराक्रान्तं चात्र बहुभिराचार्यैरिति न विस्तीर्यते ॥ २० ॥ **इति द्वितीयं परामर्शाधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

न युक्तः; नतरां त्रिदण्डैकदण्डादिकयोर्गुरुलघुनोः समविकल्पः । नतमामेकदण्डाद्यसंभवे त्रिदण्डादिकमपीति मुख्यामुख्यविकल्पः; तस्मात्केनापि प्रकारेण व्यवस्थितविकल्पासंभवाद् वाशब्दयुक्तान्युदाहृतश्रुतिस्मृतिवचनानि प्रागुदाहृतबहुश्रुतिस्मृत्यनुसारेण कुटीचकादिविषये परमहंसविषये च व्यवस्थितविकल्पानि योज्यानि । मैत्रायणीयश्रुतौ कामशब्दस्य लोकाक्षग्रह्ये यदीच्छेदिति शब्दस्य चाग्रहणेन विकल्पार्थतैव स्वरसतः प्रतीयते । तत्रचाग्रहणपक्षो मुख्यविद्वत्परमहंसविषयं पक्षान्तरं अमुख्यविविदिषुपरमहंसविषयमिति वचनानुसारेण व्यवतिष्ठते । परमहंसविषये त्रिदण्डवचनं यदि कचित्कचित्स्यात्, तत्सर्वं वाग्दण्डादिविषयम् । **तथाह मनुः**—"वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः । यस्यैते नियता बुद्धौ त्रिदण्डीति स उच्यते ॥" इति । दक्षश्चेमं श्लोकं पठित्वा वाग्दण्डादिलक्षणमाह—"वाग्दण्डो मौनमातिष्ठेत्कर्मदण्डस्त्वनीहता । मानसस्य तु दण्डस्य प्राणायामो विधीयते ॥" इति । एवंच "चतुर्धा भिक्षवो विप्राः सर्वेचैव त्रिदण्डिन" इति त्रिदण्डस्य सर्वसंन्याससाधारण्यवचनान्यपि वाग्दण्डादिविषयत्वेन व्याख्यातानि; युधिष्ठिरधनञ्जययोः परिव्राजकवेषग्रहणे यज्ञोपवीतादिसद्भावो राजगृहेषु चिरनिवासार्थितया कुटीचकाद्यनुकरणाद् यज्ञोपवीताद्यत्यागेन कुटीचकाद्यनुकरणे संभवति स्वाश्रमविरुद्धेन तत्त्यागेन परमहंसानुकरणाऽनौचित्यात् । एवं दशाननस्यापि कुटीचकाद्यनुकरणादेव यज्ञोपवीतादिसद्भावो राजधर्मप्रशंसार्थमिति राजधर्मप्रशंसया युधिष्ठिरं राज्ये प्रवर्तयितुं संन्यासाश्रमनिन्दायां "मुण्डा निस्तन्तव" इति शिखायज्ञोपवीतराहित्येन संन्यासाश्रमपरामर्शः कृतः । तेन ताद्धर्म्यं तस्याश्रमस्यावसीयते । यथा—"अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मकुण्डनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति" बृहस्पतिमतं प्रशंसितुं वैदिकनिन्दायामग्निहोत्रादिपरामर्शेन वैदिकमार्गस्य ताद्धर्म्यमिति भावः । **सतामप्यविरोधि यदिति । सन्तः** ब्रह्मसाक्षात्कारवन्तः । "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि"ति श्रुतेस्तेषामद्वितीयब्रह्मसाक्षात्कारनिरस्तसमस्तकर्तृकर्मक्रियादिभेदप्रपञ्चानामप्यविरोधि, नैष्कर्म्यादिति भावः । असतामप्यविरोधीति क्वचित्पाठः । तत्रासन्तः पापिनः ये तेषामप्यविरोधि सकलपापक्षयहेतुत्वादिति भावः । **यजुःशाखायाम्** यजुःशाखाख्यवेदशाखाविशेषे परब्रह्मोदितं "न्यास" इति ब्रह्मेत्यादिश्रुतौ । **तत्तदागमेति ।** आगमयन्त्यर्थानित्यागमाः प्रमाणानि, ते तु श्रुतिवाक्यादय आगमास्तेषां कर्माणि तानि तत्तदागमानि तान्याचरन्तीति तत्तदागमाचाराः, 'कर्मण्यणि'ति कर्मण्युपपदे धातोरण्प्रत्ययः । यज्ञदानतपःप्रभृतिबहुविधकर्मानुष्ठानशुद्धान्तःकरणास्तैश्चेष्टितमनुष्ठितमित्यर्थः । चेष्टितमित्यनेन बहवोऽत्र प्रवृत्ता इति सूच्यते । **ब्रह्माराधनमुख्यानां** परब्रह्मोपासनाप्रभृतीनां तीव्रतेजसां महाफलानां व्रतानां परमं तेभ्यः श्रेष्ठमित्यन्वयः । दण्डहस्तास्तु संजाता हस्तगतदण्डेनैव लिङ्गेन परमहंसा इति ज्ञायमानाः पुरा देहान्तरे मया चीर्णं, नतु तस्मिन् देहे गृहीतम्; पारमहंस्यत्यागेन पुनराश्रमान्तरपरिग्रहासंभवात्, शिखायज्ञोपवीतेन त्यक्तेन कथमसौ द्विज इति देवलोकेषु देवदानवैः पूजितोऽपि स निन्द्यत इत्यन्वयः । मूर्खैरित्यध्याहर्तव्यम् । **ननु** जाबालोपनिषदि परमहंसानां संवर्तारुणिश्वेतकेतुदु-

---

१ तत्र सूत्राणि ३—परामर्शं जैमिनिरचोदना चापवदति हि १८ अनुष्ठेयं बादरायणः साम्यश्रुतेः १९ विधिर्वा धारणवत् २० ॥

( ३ अधिकरणम् ) **स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥**

**'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' ( छा० १।१।३ ) 'इयमेवर्गग्निः साम' ( छा० १।६।१ ) 'अयं वाव लोक एषोऽग्निश्चितः । तदिदमेवोक्थमियमेव पृथिवी' इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्था आहोस्विदुपासनाविध्यर्था इत्यस्मिन्संशये स्तुत्यर्था इति युक्तम्; उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात् । यथा—'इयमेव जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थास्तद्वदिति चेत्, नेत्याह । नहि स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तमपूर्वत्वात् । विध्यर्थतायां ह्यपूर्वोऽर्थो विहितो भवति, स्तुत्यर्थ-**

भामती ।

पाकः साक्षात्कारोऽपवर्गसाधनं तदङ्गतया पारिव्राज्यं विहितम्, न त्वनधिकृतं प्रतीत्यर्थः ॥ २० ॥ **इति द्वितीयं परामर्शाधिकरणम् ॥**

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥** यद्यत्र संनिधान उपासनाविधिर्नास्ति, ततः प्रदेशान्तरस्थितोऽपि विधिरव्यभिचरिततद्विधिसंबन्धेनोद्गीथेनोपस्थापितः स एष रसानां रसतम इत्यादिना पदसंदर्भेणैकवाक्यभावमुपगतः स्तूयते । नहि समभिव्याहृतैरेवैकवाक्यता भवतीति कश्चिन्नियमहेतुरस्ति; अनुषङ्गातिदेशलब्धैरपि विध्यसम-

वेदान्तकल्पतरुः ।

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥** पूर्वत्रानुष्ठेयसाम्यश्रुतेराश्रमान्तरं विधेयमित्युक्तम्, इह तु रसतमत्वादीनामङ्गाश्रितत्वेनेयमेव जुहूरित्यादिस्तुतिसामान्यात् स्तुत्यर्थत्वमिति पूर्वः पक्षः ॥ **यदा रसतमत्वादिनाऽङ्गनिष्ठमपि स्तुतिः । तदा किमङ्ग वक्तव्यमनङ्गात्मधियः फलम् ॥** इति सिद्धान्ते । **ननु** रसतमत्वादिभिः किमुद्गीथादिविधिः स्तूयते, उत उपास्तिविधिः । **नाद्यः;** उद्गीथादिविधेः कर्मप्रकरणस्थत्वेन व्यवधानात्तेनैकवाक्यत्वानुपपत्तेः । **न द्वितीयः;** उपास्यविषयसमर्पणेन विध्यन्वयसंभवे लक्षणया स्तुत्यर्थत्वायोगादित्याशङ्क्याह—**यद्यत्रेत्यादिना । अव्यभिचरितविधिसंबन्धेनेति ।** अव्यभिचरितोद्गीथादिविषयविधिना संबन्धो यस्य तेनोद्गीथादिनोपस्थापित उद्गीथादिविधिः स एष इत्यादिना स्तूयते, यथा जुह्वोपस्थापितक्रतुना पर्णमयता संबध्यत इत्यर्थः । **ननु** विशेषणविशेष्यभावेन समभिव्याहारात् स्तुतिर्भवति वायुक्षेपिष्ठादौ, नेह व्यवधानादिति, तत्राह—**नहीति । अनुषङ्गातिदेशेति ।** "चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनातु अच्छिद्रेण पवित्रेण" त्यत्रान्ते श्रुतोऽच्छिद्रेणेत्येषोऽर्थवादः प्रतिमन्त्रमनुषज्यते । वैश्वदेवे "आग्नेयमष्टाकपालं निर्वपती" त्यादिहविःषु श्रुता अर्थवादा वरुणप्रघासादिष्वतिदिश्यन्ते ।

कल्पतरुपरिमलः ।

वासऋभुनिदाघजडभरतदत्तात्रेयरैवर्तकप्रभृतय इति दुर्वाससः परमहंसेषु परिगणनं कृतं, तस्य च हंसडिम्भकोपाख्याने ताभ्यां छिन्नाः शिक्यादयो वर्णिताः । अतः शिक्यतत्सहचरितत्रिदण्डपवित्रादिकं परमहंसस्याप्यस्तीत्यवसीयते इत्याशङ्क्याह—**पराक्रान्तं चेति । अयमाशयः**—तस्मिन्नुपाख्याने "हंसाः परमहंसाश्चे" ति दुर्वाससमनुवर्तमाना हंसादयोऽपि यतयो वर्णिताः, तदीयशिक्यादिविषयं भविष्यति शिक्यच्छेदादिवचनम् । **किंच** श्वेतकेतुप्रभृतयोऽपि तत्र परमहंसेषु परिगणिताः । नच तेषामाश्रमेण पारमहंस्यमस्ति; ब्रह्मचर्यादिश्रवणात् । अतस्तत्त्वसाक्षात्कारवत्त्वेन वृत्त्या पारमहंस्यमुपपादनीयम् । एवमेव दुर्वाससोऽपि भविष्यति । अत एव तस्य तत्र तत्र राजगृहादिषु चिरनिवासोऽपि पुराणेषु प्रतिपाद्यते इत्यादिपरिहार उन्नेय इति ॥ २० ॥ **इति द्वितीयं परामर्शाधिकरणम् ॥**

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ ननु** ब्रह्मविद्यासाधनविचारे उद्गीथविद्याविषयविचारस्य न पादसङ्गतिः, नापि शास्त्राध्यायसङ्गतिस्तदभावे पूर्वाधिकरणसंगतिमात्रमप्रयोजकमित्याशङ्क्य कैमुतिकन्यायेन पुरुषार्थाधिकरणार्थदृढीकरणोपयोगमाह—**यदा रसतमत्वादिनेति ।** विद्याङ्गकर्मवीर्यवत्तरत्वोपयुक्तत्वाद्विद्यापेक्षितचित्तैकाग्र्यशिखरारोहणसोपानत्वाद् उपनिषदाम्नातत्वेन प्रत्यासन्नत्वात् शास्त्रान्तरेष्वविचारितत्वाच्चात्र विचार इति प्राणविद्यादिसाधारणायां संगतौ स्थितायामियमस्याधिकरणस्य वैशेषिकी सङ्गतिरुक्ता । **चित्पतिस्त्वेति ।** ज्योतिष्टोमे "चित्पतिस्त्वे" त्यादयस्त्रयो मन्त्रा यजमानपावनार्था आम्नाताः । तत्राच्छिद्रेणेत्यादिः शेषः किमव्यवहितेनैव तृतीयमन्त्रेण संबध्यते, उत सर्वैरिति संदेहे मन्त्राणां स्वतो निराकाङ्क्षत्वादच्छिद्रेणेत्यादेः क्रियारहितस्य साकाङ्क्षत्वेऽप्यव्यवहितान्वयेन निर्वृतेस्तेनैव संबध्यत इति प्राप्य्य राद्धान्तितं भेदलक्षणे । ज्योतिष्टोमप्रकरणाम्नानात्तदपूर्वसाधनपवनक्रियान्वयद्वारा तदपूर्वान्वयो वाच्यः । पवनक्रियान्वयश्च तस्याच्छिद्रेणेत्यादितृतीयान्तपदोपात्ततत्करणप्रकाशनद्वारा निर्वाह्यः । पवनक्रिया त्वेकैव त्रिभिः पवयतीति श्रुतिबलात् परं विकल्पार्हाणामपि तत्प्रकाशकमन्त्राणां समुच्चयः । तथाच मन्त्रभेदेऽपि शेषिण्याः पवनक्रियाया एकत्वात् करणद्वारा तत्प्रकाशनार्थः शेषः सर्वत्रानुषज्यते; प्रधानानुसारित्वाद् गुणस्येति । **अच्छिद्रेणेत्येषोऽर्थवाद इति ।** मन्त्रैकदेशत्वेऽप्यश्विनोर्बाहुभ्यामितिवदसमवेततयार्थवादतोक्ता । **वैश्वदेव इति ।** वैश्वदेववरुण

## भामती ।

भिव्याहृतैरर्थवादैरेकवाक्यताभ्युपगमात् । यदितूद्गीथमुपासीत सामोपासीतेत्यादिविधिसमभिव्याहारः श्रुतस्तथापि तस्यैव विधेः स्तुतिर्न तूपासनाविषयसमर्पणपरः; ओमित्येतदक्षरमुद्गीथमित्यनेनैवोपासनाविषयसमर्पणादिति प्राप्तेऽभिधीयते—न तावद्दूरस्थेन कर्मविधिवाक्येनैकवाक्यतासंभवः; प्रतीतसमभिव्याहृतानां विधिनैकवाक्यतया स्तुत्यर्थत्वमर्थवादानां रक्तपटन्यायेन भवति, नतु स्तुत्या विना काचिदनुपपत्तिर्विधेः । **यथाहुः**—'अस्ति तु तदित्यतिरेके परिहारः' इति । अत एव विधेरपेक्षाभावात्प्रवर्तनात्मकस्यानुषङ्गातिदेशादिभिरर्थवादग्राह्यभिधानमसमञ्जसम् । नहि कर्त्रपेक्षितोपायतायामवगतायां प्राशस्त्यप्रत्ययस्यास्ति कश्चिदुपयोगः । तस्माद्दूरस्थस्य कर्मविधेः स्तुतावानर्थक्यम्; तेनैकवाक्यतानुपपत्तेः,

## वेदान्तकल्पतरुः ।

"एतद्ब्राह्मणानि पञ्च हवींषि यद्ब्राह्मणानीतराणी"ति । एवमत्र व्यवधानेऽपि श्रुतत्वेनैकवाक्यता स्यादित्यर्थः । सन्निहितविध्यभावाङ्गीकारेणाद्यपक्षमुपपाद्य **द्वितीयं** कल्पमवलम्ब्यापि पूर्वपक्षं घटयति—**यदित्विति** । विधिनैव पुरुषप्रवृत्तिसिद्धेः स्तुतिर्व्यर्थेति शङ्कित्वा परिहरति स्माचार्यशबरस्वामी । सत्यं विनापि तेन सिध्येत्प्रामाण्यम्, अस्ति तु तत्स्तुतिपदमिति । तस्य व्याख्या प्रभाकरगुरुणा कृता—अस्ति तु तदित्येतद्भाष्यमतिरेके विधिव्यतिरेकेण स्तुतिपदसद्भावे परिहार इति । एवं वदतैतत्सूचितं केवलविधिश्रवणे नास्ति स्तुत्यपेक्षा, यथा "वसन्ताय कपिञ्जलानालभते"इत्यादौ । स्तुतिपदे तु सत्यस्ति तदपेक्षा, यथा लोके पटो भवतीत्येतावति वाक्ये नास्ति पदान्तरापेक्षा । 'रक्तः पट' इत्यत्र तु रक्तपदस्याकाङ्क्षया वाक्यस्याप्याकाङ्क्षोत्थाप्यते, तद्वदिति । तदेतदाह—**यथाहुरिति** । **नन्व**र्थवादाश्रवणेऽप्यनुषङ्गादिभिस्तत्समभिव्याहार उक्तः, तत्राह—**अतएवेति** । यत एव विधेरेव प्रवर्तकत्वमत एव । अतिदेशेतु वचनाद्व्यवहितार्थवादसंबन्धो न त्विह तदस्ति; अनुषङ्गेऽप्यर्थवादस्य साकाङ्क्षत्वात् । अच्छिद्रेण पवित्रेणेत्युक्ते पुनात्वित्येतस्मिन्नपेक्षादर्शनात्, **क्वचित्तु पठितव्यः सन्नन्ते पठित इति,** न त्विह रसतमत्वादेः प्रदेशान्तरस्थोद्गीथादिविध्यपेक्षास्ति; उपासनविधिविषयसमर्पकत्वस्यानन्तरमेव वक्ष्यमाणत्वात् । तस्मादनुषङ्गादिदृष्टान्तेनार्थवादप्राप्त्यभिधानमसमञ्जसं वैषम्यादित्यर्थः । केवलस्य श्रुतस्य विधेरनपेक्षत्वमुपपादयति—**नहीति । कर्मविधेरिति** । कर्माङ्गविधेरिति वक्तव्येऽङ्गस्तुतिरप्यङ्गिन एवेति

## कल्पतरुपरिमलः ।

प्रघाससाकमेधसुनासीरीयाख्ये पर्वचतुष्टययुक्ते चातुर्मास्ये वैश्वदेविकानामाग्नेयादीनां पञ्चानां हविषां यद् ब्राह्मणं तस्य वारुणप्रघासिकेष्वाग्नेयादिपञ्चसु अतिदेशार्थं प्रवृत्तम्—एतद् ब्राह्मणान्येवेति वचनं, वात्रैन्नानि वा एतानि हवींषीत्यादि तदर्थवादानां नव प्रयाजा इत्यादितदङ्गविधीनां चातिदेशिकमिति सप्तमे निर्णीतम् । **सन्निहितविध्यभावाङ्गीकारेणेति** । एतेन रसतमत्वाद्युक्तिः सन्निहितोपासनविधिस्तुत्यर्थेति पूर्वपक्षे कर्तुं शक्ये किमिति व्यवहितोद्गीथादिस्तुत्यर्थेति सूत्रभाष्ययोः पूर्वपक्षः कृत इत्याशङ्कायाः सन्निहितविध्यभावेऽपि स्तुत्यर्थतयोपपादयितुं शक्यत इति न्यायव्युत्पादनार्थं कृत्वाचिन्तया तथा पूर्वपक्षः कृत इति परिहारो **यद्यत्र सन्निहितोपासनाविधिर्नास्तीति टीकाग्रन्थेन कृत्वाचिन्तात्वप्रदर्शकेन सूचितः स्फुटीकृतः** । भावशब्दाच्चेति सूत्रं च कृत्वाचिन्तोद्घाटनार्थमिति द्रष्टव्यम् । अस्ति तु तदित्यतिरेके परिहार इति गुरुग्रन्थस्यार्थं तद्व्याख्येयभाष्यतात्पर्यकथनपूर्वकं विशदयति—**विधिनैवेति । यथा लोक इति । ननु**—लोके "पटो भवती"ति पदद्वयानवगतो रक्तिमगुणरूपः कश्चन विशेषो रक्तपदेन बोध्यते, तद्बोधश्च रक्तपटदिदृक्षोपादित्सावतां प्रवृत्तौ तज्जिहासावतां निवृत्तौ चोपयुज्यत इति युक्ता तत्राकाङ्क्षा, इह तु स्तुतिनिन्दापदैर्बोध्यं कंचिद्विशेषं न पश्यामः । प्राशस्त्याप्राशस्त्यमिति चेत्, तदेव किमिति विशिष्य न जानीमः । नच तद्बोधः प्रवृत्तिनिवृत्त्युपयोगी; विधिनिषेधलभ्येष्टानिष्टसाधनताबोधादेव तदुभयोपपत्तेः, नच तदुभयानुपयोगि शास्त्रं भवतीति—**चेत्, अत्राहुः;** बलवदनिष्टानुबन्धित्वमप्राशस्त्यं तदपि निवृत्त्युपयोगि; सत्यपीष्टसाधनताज्ञाने बलवदनिष्टानुबन्धित्वेनावगते सविषान्नभोजनादावप्रवृत्तेः, बलवदनिष्टाननुबन्धित्वं प्राशस्त्यं, तदपि प्रवृत्त्युपयोगि; सत्यप्यनिष्टसाधनताज्ञाने बलवदनिष्टाननुबन्धित्वेनावगते यागादौ प्रवृत्तेः । तदुभयं यद्यपि विधिनिषेधाभ्यामाक्षेप्तुं शक्यम्, अन्यथा तयोः प्रवर्तकत्वनिवर्तकत्वानुपपत्तेः; तथापि विधिनिषेधौ सत्सु स्तुतिनिन्दापदेषु तत एव तल्लाभो भविष्यतीत्याक्षेपगौरवमसहमानौ तत्सन्निधानोत्थापिताकाङ्क्षया तदेकवाक्यतामनुभवतः । यत्र वसन्तादिवाक्ये तेषामभावः, तत्र स्वयमेव तदाक्षिपत इति । **अन्ये तु**—विधिनिषेधवाक्यैः कर्मणामिष्टानिष्टसाधनत्वबोधनं तद्योग्यताज्ञानमपेक्षते, तदर्थवादाश्च विधेयनिषेध्यकर्मसंबन्धिगुणदोषान् कीर्तयन्तस्तेषां कर्मणामिष्टानिष्टसाधनत्वयोग्यताबोधं जनयन्ति । इष्टसाधनत्वयोग्यत्वमेव प्राशस्त्यम्, अनिष्टसाधनत्वयोग्यत्वमेव च निन्दा । यद्यपि योग्यताज्ञानं ज्ञानकारणं, यद्यपि च वेदप्रामाण्यदृढावधारणाद् न्यायलभ्ये स्वस्वार्थे सर्वाणि वैदिकवाक्यानि योग्यान्येवेति सामान्यतो योग्यतानिश्चयः सम्भवति; तथापि सत्स्वर्थवादेषु तज्जन्यो योग्यतानिश्चयो विधिनिषेधवाक्यार्थबोधकारणमिति कल्प्यत इति—**वदन्ति । अर्थवादस्य साकाङ्क्षत्वादिति ।** गुणस्य प्रधानानुवर्तनाकाङ्क्षासत्वादिति भावः । **नत्विह रसतमत्वादेरिति । ननु** रसतमत्वादेरुद्गीथविध्यनपेक्षायाम-

## भामती ।

संनिहितस्य तूपासनाविधेः किं विषयसमर्पणेनोपयुज्यतामुत स्तुत्येति विषये विषयसमर्पणेन यथाऽर्थवत्त्वं नैवं स्तुत्या; बहिरङ्गत्वात् । अगत्या हि सा । तस्मादुपासनार्था इति सिद्धम् । **कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् । एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥** भावनायाः खलु कर्तृसमीहितानुकूलत्वं विधिर्निषेधश्च कर्तुरहिता-

## वेदान्तकल्पतरुः ।

कर्मविधेरित्युक्तम् । **ननु** भाष्योदाहृतन्यायविस्तरणे पञ्च विधिलक्षणान्युक्तानीति प्रतिभाति, तच्चायुक्तम्; नहि धात्वर्थभेदे कारकभेदे वा विधिलक्षणं भिद्यते, इत्याशङ्क्य तदभिप्रायं विवरिष्यन् विधिलक्षणं तावदाह—**भावनायाः खल्विति । ननु** विधौ स्मृतलिङादेरेव न हन्यादिति निषेधेष्वपि प्रयोगात्कथं प्रत्ययस्य विधिवाचकत्वनियमस्तत्राह—**निषेधश्चेति** । निषेधवाक्यगतैरपि लिङादिप्रत्ययैर्विध्यर्थोऽनूद्य नञा निषिध्यते इति नास्ति व्यभिचार इत्यर्थः ।

## कल्पतरुपरिमलः ।

प्युद्गीथादिविधेः स्तुतिप्रकर्षलाभाय रसतमत्वाद्यपेक्षया तदन्वयः स्याद्, अत एव सुकृतदुष्कृतयोर्हानोपायने यत्र श्रुते केवलोपायनं वा यत्र श्रुतं तत्रोपायनस्य तद्विद्यान्वयेन निरपेक्षत्वेऽपि, यत्र निर्गुणविद्यायां केवलहानं श्रुतम् "अश्व इव रोमाणि विधूय पापमि"ति तत्रापि स्तुतिप्रकर्षलाभाय विद्यापेक्षयोपायनशब्दस्यान्वयो भाष्यकारैरुक्तः; सत्यकामत्वादीनां च दहरोपासनायामुपास्यगुणतयाऽन्वयेन निराकाङ्क्षाणां निर्गुणविद्यायामपि स्तुतिप्रकर्षलाभायान्वयोऽङ्गीकृत इति—**चेत् उच्यते;** हानोपायनाधिकरणे ( ब्र. अ. ३ पा. ३ सू. २६ ) । स्तुतिप्रकर्षो भाष्यकारैरानुषङ्गिकप्रयोजनतयोक्तः, नतूपायनशब्दान्वये प्रमाणतया प्रमाणं, तत्रावश्यकं कुतश्चिद्धीनं किंचिदुपैतीति हानस्योपायनापेक्षा कुतश्चिद्धीनमपि सुकृतदुष्कृतं फलजननाय कंचिदाश्रयमपेक्षत इति तदपेक्षा चेत्युभयमेव कामाद्यधिकरणे ( ब्र. अ. ३ पा. ३ सू. ३९ ) हृदयायतनत्वादिसाम्येन विद्याद्वयाम्नातगुणसामर्थ्येन चोपस्थापितैर्विद्यान्तरगुणैः स्वत एव भवतः स्तुतिप्रकर्षस्य त्यागो न कार्य इति सोऽङ्गीकृतः, तथेहापि कर्मकाण्डगतोद्गीथादिविधिषु स्वत एव रसतमत्वाद्युपस्थितिर्वा रसतमत्वादिश्रवणेपूद्गीथादिविध्युपस्थितिर्वा भवति चेदस्तु रसतमत्वादिनोद्गीथादिस्तुतिरपि । नचैवं सिद्धान्तस्य पूर्वपक्षाभेदः; रसतमत्वादीनां केवलस्तुत्यर्थत्वेन पूर्वपक्षः, उपास्यत्वसद्भावेन सिद्धान्त इति भेदात् । अत एव सूत्रे पूर्वपक्षप्रदर्शने स्तुतिमात्रमिति मात्रशब्देन केवलस्तुत्यर्थतया पूर्वपक्ष इति दर्शितम् । पूर्वपक्षनिराकरणार्थेन च नञा न स्तुतिमात्रमित्येतदर्थकेनापूर्वत्वादुपास्यस्य सतः स्तुत्यर्थत्वमपि भवति चेद् भवत्वित्यङ्गीकृतम् । अत एव च सन्निहितोपासनाविधिसद्भावेऽपि व्यवहितोद्गीथादिविधिस्तुत्यर्थतया पूर्वपक्षः सूत्रभाष्ययोर्दर्शितः । पूर्वपक्षः कामाद्यधिकरणन्यायेनोद्गीथादिविधिस्तावकत्वसिद्धौ सन्निहितोपासनाविध्यन्वयस्यापि क्लृप्तेन स्तावकत्वेनैवोपपत्तेः सत्यकामादिष्वेतांश्च सत्यान् कामानितिवदुपास्यगुणतयाऽप्यन्वये विशेषवचनाभावात् केवलस्तुत्यर्थत्वमेवेति पूर्वपक्षः सुदृढो भवति । सन्निहितोपासनाविधिस्तुत्यर्थतयैव पूर्वपक्षकरणे तु न तथा पूर्वपक्षः सुदृढः स्यात्; अन्यत्र स्तुत्यर्थत्वेन क्लृप्त्यभावे उपासनाविधिसन्निधानादुपास्यगुणतयैवान्वयौचित्यात् । वेदान्तेषु हि निर्गुणप्रकरणाभावे गुणाम्नानस्योपासनार्थत्वमेवौत्सर्गिकम् । अत एवानारभ्याधीतानां सम्भूत्यादिगुणानामुपासनाविधिसन्निधिरहितानामप्युपासनार्थत्वं सिद्धवत्कृत्य किं तेषां क्लृप्तशाण्डिल्यविद्याद्यन्वयः, उत तत्रैव कल्प्येन विद्यान्तरेणान्वय इति विशेषचिन्ता सम्भूत्यधिकरणे कृता । इह क्लृप्तोपासनाविधिश्रवणे तदुपास्यगुणतयाऽन्वयः कथं प्रत्याख्यायेत ? यद्येषामेव रसतमत्वादीनामन्यत्र स्तावकतयाऽन्वयक्लृप्तिरुत्सर्गबाधकतया नापेक्ष्येत । यद्येवं पूर्वपक्षः, कथं तर्हि सिद्धान्तः ? सतोरपि ह्यपूर्वत्वं भावशब्दयोः सत्यकामादिगुणानामन्यत्र स्तुत्यर्थादीनां सन्निहितविधावुपास्यगुणतयान्वये प्रतिप्रसवापेक्षा दृष्टा, नैवमिह प्रतिप्रसवोक्तिः । तदभावे कथमेकस्य सन्निहितविधावुपास्यत्वार्थत्वमन्यत्र स्तुत्यर्थत्वं च स्यात् ? नैष दोषः; स एव प्रतिप्रसव एकस्य तथोभयार्थत्वसंभवे लिङ्गदर्शनतया प्रकृतसिद्धान्तोपयोगी भविष्यति । अस्मिन् पक्षे न कृत्वाचिन्तेति न तदुद्घाटनार्थं सूत्रं, किं तु यद्यत्र सन्निहितोपासनाविधिर्न श्रूयते तदाऽन्यत्र केवलस्तुत्यर्थत्वं शङ्क्येतापि, न तदश्रवणमस्तीति प्रदर्शनार्थमिति द्रष्टव्यम् । **नहि धात्वर्थभेद इति** । कृभ्वस्तिरूपधात्वर्थभेदे कुर्यात् क्रियेतेति लकारार्थकर्तृकर्मरूपकारकभेदे वा विधिलक्षणं न भिद्यते; विधिनिमन्त्रणादिसूत्रेषु लिङाद्यर्थतयोक्तस्य विधेस्तद्भेदेऽपि सर्वत्रैकरूप्यस्य वक्तव्यत्वादित्यर्थः । न्यायविस्तरणमयुक्तमितीदमुपलक्षणं भाष्यकारैरुपासीतेत्यादयो विधिशब्दा इत्युक्त्वा तत्र संमतित्वेन कुर्यात् क्रियेतेत्यादिविधित्वप्रतिपादकवचनोदाहरणमप्ययुक्तमिति शङ्कान्तरमपि द्रष्टव्यम् । **विधिलक्षणं तावदाहेति** । इष्टसाधनत्वं विधिः । तच्च लिङाद्याकारेणाख्यातवाच्यमाख्यातसामान्याकारेण तद्वाच्यायां पुरुषप्रयत्नरूपायां भावनायामन्वेतीति । यथा "पशुना यजेते"त्यत्र सुब्विभक्तिरूपेण तृतीयावाच्ये करणकारके एकवचनरूपेण तद्वाच्यमेकत्वमिति भावः । इष्टसाधनत्वं विधिरिति स्वमतमुक्तम् । **केचित्तु**—प्रवर्तकः खलु विधिः, स तु वैदिको लिङादिशब्द इति स एव विधिः—

### भामती ।

नुकूलत्वम् । **यथाहुः**—'कर्तव्यश्च सुखफलोऽकर्तव्यो दुःखफलः' इति । एतच्चास्माभिरुपपादितं न्यायकणिकायाम् । क्रिया च भावना तद्वचनाश्च करोत्यादयः । **यथाहुः**—कृभ्वस्तयः क्रियासामान्यवचनाः' इति । अत एव कृभ्वस्तीनु-दाहृतवान् । सामान्योक्तौ तद्विशेषाः पचेदित्यादयोऽपि गम्यन्त इति तत्र कुर्यादित्याक्षिप्तकर्तृका भावना । क्रियेतेति

### वेदान्तकल्पतरुः ।

**ननु** शब्द एव विधिर्नियोगादिर्वा, नेत्याह—**एतच्चेति** । एवं विधिलक्षणमुपस्थाप्य वार्तिकार्थमुपपादयति—**क्रिया चे-त्यादिना** । कृश्च भूश्चास्तिश्च कृभ्वस्तयस्तान् कृभ्वस्तीनुदाहृतवानित्यर्थः । यद्यपि धातवः शतशः सन्ति; तथापि डुकृञ् करणे भू सत्तायाम् अस भुवीति त्रय एव धातवो भावनासामान्यवाचिन उदाहृताः सर्वत्र व्याप्त्यर्थम् । एतद्धातुगतप्रत्य-यैश्च सकलभावनानुगतश्रेयःसाधनत्वरूपो विधिरभिधीयते, नतु प्रतिधातु प्रतिप्रत्ययं च भावनाभेद इत्यर्थः । कर्तव्य-मित्यस्य कृदन्तत्वेन द्रव्याभिधायित्वाद् द्रव्यं प्रत्युपसर्जनभूतभावना प्रतीयत इत्यर्थः । यद्यपि भवतिरस्तिश्च प्रयोज्यव्यापा-रवाचिनौ, भावना च प्रयोजकव्यापारः; तथाप्यवस्थान्तरविशिष्टत्वेन भाव्यत्वादस्ति भावना । तथाच दण्डी भवेदित्या-दिना दण्डित्वादिरूपेण भाव्यत्वमनन्तरमेव वक्ष्यति । एवं करोतिधातौ कारकभेदेऽपि भावनैक्यमभिधाय भवत्यस्त्योरपि

### कल्पतरुपरिमलः ।

इत्याहुः । **अन्ये तु**—लिङादिशब्दमात्रस्य प्रवर्तकत्वे अनवगतार्थस्यापि प्रवर्तकत्वप्रसङ्गात् तदर्थो नियोगः प्रवर्तकः, स विधिरिति—**वदन्ति** । **अपरे तु**—कल्प्यापूर्वरूपस्य नियोगस्य लिङादिवाच्यत्वाभावात्तद्वाच्या शब्दभावना प्रवर्तिका सा विधिरिति—**भणन्ति** । शब्दभावना हि शब्दव्यापाररूपाऽभिमता, सा न तावदभिधाव्यापाररूपा; घटादिशब्दाभि-धावदर्थबोधानुकूलशब्दव्यापाररूपायाः स्वयं तदर्थत्वाभावात् । नापि शब्दभावनापरपर्यायं लिङादिवाच्यं शब्दस्यैव व्यापारान्तरं कल्पनीयम्; तत्कल्पनायां प्रमाणाभावात्, प्रवर्तकतया लोकानुभवसिद्धस्येष्टसाधनत्वस्यैव लिङाद्यर्थत्वोपप-त्तेरित्यमुमर्थं शङ्कोद्घाटनपूर्वकं सूचयति—**ननु शब्द एवेति** । कृञ् चेत्यनुक्रियमाणरूपापरिज्ञानपरिहारार्थं ऋकारा-न्तादेव विभक्तिः कृता । **उदाहृतवानिति** । कुर्यात् क्रियेतेति श्लोककृदिति शेषः । **ननु** सन्तु कृभ्वस्तयो भावना-सामान्यवचनाः, तथापि भावनागतेष्टसाधनत्वरूपपरिज्ञानार्थं सर्वधात्वर्थानुगतभावनायामुदाहर्तव्यायां किमिति कृभ्वस्ती-नामेवोदाहरणमित्याशङ्कानिराकरणाय प्रवृत्तं सामान्योक्ताविति ग्रन्थं व्याचष्टे—**यद्यपि धातव इति** । **सर्वत्र व्याप्त्य-र्थमिति** । पचत्याद्यनन्ताख्यातपदोदाहरणासम्भवात् सामान्योदाहरणे तत एव सर्वविशेषानुगतिरवगन्तुं शक्यत इति लाघवार्थं सामान्योदाहरणमित्यर्थः । अतोऽस्मच्छ्लोकस्योदाहरणं भाष्यकारीयमपि न प्रकृतेऽसङ्गतमिति भावः । **ननु** कृभ्वस्तयो यदि भावनावाचिनः, तदा कुर्यादित्याख्यातैः किमभिधीयते ? इत्याकाङ्क्षायामाह—**एतद्धातुगतेति** । तत्र लिङाद्यर्थाकारवाच्यमिष्टसाधनत्वमेव भावनान्वितमाख्यातासिधेयमित्यर्थः, आख्याताकारेण तु प्रकृत्यर्थभूतैव भावना प्रत्ययेनाप्यनूद्यते द्वावित्यत्र द्वित्वसंख्येव । **नतु प्रतिधात्विति** । कृभ्वस्तिषु धातुभेदेन वा कर्तृकर्मलकारकृद्रूपप्रत्ययभेदेन वा भावनाभेदो नास्तीत्यर्थः । **कृदन्तत्वेन द्रव्याभिधायित्वादिति** । आख्यातानि न द्रव्यपर्यन्तानि, किंतु भावना-मात्रनिष्ठानि, तत्र कुर्यादित्यादौ कर्तरि प्रयोगे भावनाक्षिप्तस्य कर्तुरन्वयः स्वर्गकामः कुर्यादिति । क्रियेतेत्यादौ कर्मणि प्रयोगे तदाक्षिप्तस्य कर्मणोऽन्वयः पाकः क्रियेतेति, नतु कर्तृकर्मणी लकारवाच्ये; तयोस्तिङाऽनभिहितत्वेऽपि तत्संख्या-यास्तिङाऽभिहितत्वाद् यदनभिहिताधिकारविहिते द्वितीयातृतीये न भवत इति स्वर्गवास इति पाक इति च प्रातिपदि-कार्थमात्रविहिता प्रथमा । कृत्प्रत्ययास्तु कर्तृकर्मादिषु विहिताः न केवलं भावनावाचिनः, किंतु भावनोपसर्जनकर्तृकर्मा-दिकारकपर्यन्ताः । नच—आख्यातानामपि तत्पर्यन्तत्वं स्यात्, पक्ता चैत्रः पक्तव्य ओदन इतिवत् पचति चैत्रः पच्यते ओदन इति कर्तृकर्मकारकाधिष्ठानवाचिनां सामानाधिकरण्याविशेषादिति—शङ्कनीयम्; भावप्रधानमाख्यातमिति स्मृत्यनुसारेण आख्यातानां भावनाप्राधान्याङ्गीकारात्तथात्वेऽप्याख्यातार्थभावनायाः कर्तृकर्माक्षेपकतया तदाक्षिप्तक-र्त्रादिसामानाधिकरण्येन पचति चैत्र इत्यादिप्रयोगः । **वार्तिककारास्तु**—यथाऽऽख्यातेषु भावनया कर्तृकर्माक्षेपः एवं कृदन्तेषु कर्त्रादिकारकैर्भावनाक्षेप इति—**मन्यन्ते** । **यथाहुः**—यथैव भावनाप्रधानत्वादाख्यातेषु तत्संबन्धादेव गुण-भूतकारकप्रतीतिसिद्धेर्न कर्तृकर्मणोरभिधानं भविष्यति, एवं कर्त्राद्यभिधानादेव तदन्यथानुपपत्त्या भावनासिद्धेरनभिधानम्; गम्यमानापेक्षयैव च सामानाधिकरण्यमिति । **ननु** भवनभावने प्रयोज्यप्रयोजकव्यापारौ; घटो भवति तं कुलालो भाव-यतीति विवरणात्, अतः कृभ्वस्तयो भावनावाचिन इत्ययुक्तमित्याशङ्क्य निराकरोति—**यद्यपीति** । अस्ति तावदस्ति-भवत्योरपि भावना, सा क्वचिद्भवितृनिष्ठा क्वचिदन्यनिष्ठा, दण्डी भवेदित्यत्र भवितृनिष्ठा "तस्मात्प्रायणीयस्याह्न ऋत्विजा भवितव्यमि"त्यत्र कर्मसंबन्धनिमित्तऋत्विग्भावनारूपवरणक्रियाकर्तृयजमाननिष्ठा । तथाच अस्तिभवत्योरपि भावनासद्भावमात्रेण करोतिवद्भावनावाचित्वमुक्तम् । **तदाहेति** । कर्तृकर्मकारकभेदेऽपि भावनैक्यमाहेत्यर्थः ।

तायां त्वानर्थक्यमेव स्यात् । विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तम् 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यत्र । प्रदेशान्तरविहितानां तूद्गीथादीनामियं प्रदेशान्तरपठिता स्तुतिर्वाक्यशेषभावमप्रतिपद्यमानाऽनर्थिकैव स्यात्, इयमेव जुहूरित्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यम् । तस्माद्विध्यर्था एवैवंजातीयकाः श्रुतयः ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

'उद्गीथमुपासीत' ( छा० १।१।१ ) 'सामोपासीत' ( छा० २।२।१ ) 'अहमुक्थमस्मीति विद्यात्' इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते । ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन् । तथाच न्यायविदां स्मरणम्—'कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् । एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्' इति लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति । प्रतिप्रकरणं च फलानि श्राव्यन्ते—'आपयिता ह वै कामानां भवति' ( छा० १।१।७ ) 'एष ह्येव कामागानस्येष्टे' ( छा० १।७।९ ) 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' ( छा० २।२।३ ) इत्यादीनि । तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः ॥ २२ ॥ इति तृतीयं स्तुतिमात्राधिकरणम् ॥

### भामती ।

आक्षिप्तकर्मिका भावना । कर्तव्यमिति तु कर्मभूतद्रव्योपसर्जनभावना । एवं दण्डी भवेद्दण्डिना भवितव्यं दण्डिना भूयेतेत्येकधात्वर्थविषया विध्युपहिता भावना उदाहार्याः । भवतिश्चैष जन्मनि । यथा कुलालव्यापाराद्घटो भवति बीजादङ्कुरो भवतीति प्रयुञ्जते । नच बीजादङ्कुरोऽस्तीति प्रयुञ्जते । तस्मादस्तिः सत्तायां न जन्मनीति ॥२१॥२२॥ इति तृतीयं स्तुतिमात्राधिकरणम् ॥

### वेदान्तकल्पतरुः ।

तदाह—**एवमिति** । अस्तेर्भ्वादेशात् तुल्यवदुदाहरणम् । अत्रापि दण्डी **भवेदित्या**क्षिप्तकर्तृका भावनोदाहृता । **भवितव्यमिति** धात्वर्थोपसर्जनभूता भावना । **भूयेतेत्या**क्षिप्तकर्मिका भावना । **एकधात्वर्थविषया इति** । एको धात्वर्थो भवत्यर्थोऽस्त्यर्थो वा विषयो यासां तास्तथा दण्डित्वाद्यवस्थान्तरस्य यद्भवनं सत्ता च तद्विषयास्तदवच्छिन्ना भावना उदाहर्तव्या इत्यर्थः । **विध्युपहिता इति** । श्रेयःसाधनत्वविशिष्टा इत्यर्थः । **ननु** भवतिरस्तिश्च पर्यायौ, भू सत्तायामस भुवीति च परस्परं व्याख्यानादत आह—**भवतिश्चैष इति** । कश्चित्प्राप्त्यर्थोऽपि भवतिरस्ति तदर्थमेष इत्युक्तम् । जन्मवचनो भवतिरस्तिस्तु जनिफलभूत एवार्थसद्भाववचन इत्यर्थः । एषां भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुरुषः पुरुषस्य वाग् वाच ऋग् ऋचः साम साम्न उद्गीथो रस इत्युपक्रम्य श्रूयते स एष रसानां पृथिव्यादीनां रसतमः परमः परमात्मप्रतीकत्वात् परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति **परार्ध्यः** । परब्रह्मवदुपास्य इत्यर्थः । पृथिव्याद्यपेक्षयाऽष्टमः कोऽसौ य उद्गीथः प्रणव इत्यर्थः ॥ २१ ॥ २२ ॥ **इति तृतीयं स्तुतिमात्राधिकरणम् ॥**[1]

### कल्पतरुपरिमलः ।

**भ्वादेशादिति** । आर्धधातुकविषये अस्तेर्भूरित्ययमादेशो विहितः । अतो भवितव्यं भूयेतेत्युदाहरणद्वयमस्तिधातुसाधारणमित्यर्थः । सार्वधातुकविषये स्यादित्युदाहरणं श्लोकेऽस्तीति तन्नोदाहृतमिति भावः । **आक्षिप्तकर्मिका भावनेति** । यद्यपि भवतेरस्तेश्चाकर्मकत्वाद् भवितव्यमिति भावे तव्यप्रत्ययः भूयेतेति च भावे लकारः; तथापि तदर्थभवनक्रियाक्षिप्ता भावना सकर्मिका, तस्याश्च दण्डिनेति तृतीयोपात्तो भवनक्रियाकर्तैव कर्म, तस्य स्वरूपेण सिद्धत्वेऽपि दण्डित्वाकारेण साध्यत्वात् । **भवतिरस्तिश्चेति** । तथाच पर्यायत्वाद् भवत्युदाहरणेनैव चारितार्थ्यमित्यस्त्युदाहरणं न कार्यमिति शङ्कार्थः । **भूतानां** पृथिव्याश्रितानां **पृथिवी रसः** उत्कृष्टा पृथिव्या अप्स्वोतप्रोता या आपो रसः अपां तत्कार्यभूता ओषधय ओषधीनां तत्परिणामः पुरुषः पुरुषस्य वाक्प्रधानस्य वाग्रसः वाच ऋग् रसः वाङ्मध्ये सारभूतत्वादृचः साम रसः तत्परिष्कारकत्वात् साम्न उद्गीथ उद्गीथावयव ॐकार आदिभूतो रस इत्येवं पृथिव्याद्युत्कर्षतारतम्यपर्यवसानभूमित्वं रसतमत्वम् । **परमात्मप्रतीकत्वादिति** । प्रणवे प्रतीके परमात्मदृष्ट्योपासनं शैब्यप्रश्नप्रसिद्धम् । **अर्धं स्थानमिति** । "अथ ह गौतमो राज्ञोर्धमेयाये" त्यादिश्रुतिषु अर्धशब्दः स्थाने प्रसिद्धः । तदर्हतीति यत्प्रत्यये ब्रह्मस्थानार्ह इत्यस्य ब्रह्मतुल्य इत्यर्थपर्यवसाने सति केनाकारेण तौल्यमित्याकाङ्क्षायामाह—**ब्रह्मवदुपास्य इति** । ब्रह्म-

[1] तत्र सूत्रे २—स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् २१ भावशब्दाच्च २२ ॥

## ( ४ अधिकरणम् ) पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' (बृ० ४।५।१ ) 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' ( कौषी० ३।१ ) 'जानश्रुतिर्ह पौत्रयणः श्रद्धादेयो बहुदायी बहुपाक्य आस' (छा० ४।१।१) इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः—किमिमानि पारिप्लवप्रयोगार्थान्याहोस्वित्संनिहितविद्याप्रतिपत्त्यर्थानीति । पारिप्लवार्था इमा आख्यानश्रुतयः; आख्यानसामान्यात्, आख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात् । ततश्च विद्याप्र-

### भामती ।

**पारिप्लवार्था इति चेन्न विशेषितत्वात्** ॥ यद्यपि उपनिषदाख्यानानि विद्यासंनिधौ श्रुतानि; तथापि 'सर्वाण्याख्यानानि पारिप्लवे' इति सर्वश्रुत्या निःशेषार्थतया दुर्बलस्य संनिधेर्बाधितत्वात्पारिप्लवार्थान्येवाख्यानानि । नच— 'सर्वा दाशतयीरनुब्रूयादि'ति विनियोगेऽपि दाशतयीनां प्रातिस्विकविनियोगात्तत्र तत्र कर्मणि यथा विनियोगो न विरुध्यते, तथेहापि सत्यपि पारिप्लवे विनियोगे संनिधानाद्विद्याङ्गत्वमपि भविष्यतीति—वाच्यम्, दाशतयीषु प्रातिस्विकानां विनियोगानां समुदायविनियोगस्य च तुल्यबलत्वात्, इहतु संनिधानात् श्रुतेर्बलीयस्त्वात् । तस्मात्पारिप्लवार्थान्येवाख्यानानीति प्राप्त उच्यते—नैषामाख्यानानां पारिप्लवे विनियोगः, किंतु पारिप्लवमाचक्षीतेत्युपक्रम्य

### वेदान्तकल्पतरुः ।

**पारिप्लवार्था इति चेन्न विशेषितत्वात्** ॥ २३ ॥ पूर्वत्रोद्गीथादिस्तुत्यर्थत्वादुपास्यविषयसमर्पकत्वं रसतमत्वादेर्ज्याय इत्युक्तम्, तद्वदाख्यानानामपि विद्यास्तुत्यर्थत्वात् सकाशात्पारिप्लवप्रयोगशेषत्वं ज्यायोऽनुष्ठानपर्यवसानसंभवादिति संगतिः । **ननु** "यस्याश्विने शस्यमाने सूर्यो नाभ्युदियादपि सर्वा दाशतयीरनुब्रूयादि"ति सर्वासामृचामाश्विनग्रहशंसने सर्वश्रुत्या विनियुक्तानामपि प्रातिस्विकार्थेषु विनियोगादाख्यानानां पारिप्लवे विद्यायां च विनियोगः किं न स्यादत आह— **नच सर्वा इति** । ऐन्द्र्या गार्हपत्यमिति प्रातिस्विकविनियोगानां सर्वा दाशतयीरिति समुदायविनियोगस्य च श्रौतत्वेन तुल्यत्वात् प्रातिस्विकविनियोगं सहते सर्वशब्दः, क्वचित्समानस्य सकृत्प्रवृत्तस्य प्रातिस्विकविनियोगस्यावकुण्ठनाभावाल्लिङ्गादिभिर्मन्त्रविनियोगाविघातकत्वमित्यर्थः । अश्वमेधे हि प्रथमेऽहनि मनुर्वैवस्वतो राजेत्याह द्वितीयेऽहनि यमो वैवस्वतो राजेत्याह तृतीयेऽहनि वरुण आदित्य इत्याद्याख्यानविशेषो वाक्यशेषे विनियुज्यते, तद्बलादुपक्रमस्य संकोचमाह— **नैषामिति । ननू**पक्रमे "सर्वं शंसती"त्यभिधाय पुनः "पारिप्लवमाचक्षीते"ति उपसंहारगतो विशेषः सर्वशब्दानुसारेण

### कल्पतरुपरिमलः ।

नामत्वाच्च ब्रह्मवदुपास्यता । **ननु**—"परमः परार्ध्य" इत्येतत् तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्या इत्येतच्च स्तुत्यर्थमिति संप्रतिपन्नं तथा रसतमत्वमपि किं न स्यात्? न ह्याप्तिसमृद्धिगुणयोर्वेदने यथा "आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते" इति फलवचनं, नैवं रसतमत्वस्य वेदने किंचित्फलवचनमस्तीति—**चेत्, उच्यते;** परमत्वं परार्धत्वं त्रयीविद्यासाध्यसोमयागाङ्गस्तोत्रशस्त्राश्रवणप्रवर्तकत्वं चोङ्कारसामान्यस्य गुणः, तत्त्विहोपास्यस्योद्गीथावयवोङ्कारस्यैव गुणः, आश्रवणप्रवर्तकत्वादेस्तत्राभावात् । तस्मादतद्गुणत्वादुपास्यगुणतयाऽन्वयो न संभवति, स्तुतिद्वारतया त्वन्वयः संभवति; अन्यदीयगुणकीर्तनस्यापि परंपरासंबन्धेन स्तावकत्वोपपत्तेः । दृष्टं हि "वेतसशाखया चावकाभिश्च विकर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचं शमयती" त्यत्र अपां शान्तत्वगुणकीर्तनस्य तत्प्रभववेतसशाखास्तुतौ पर्यवसानम् । रसतमत्वं चातिसमृद्धिवदुद्गीथावयवोङ्कारगुणत्वेन कीर्तितमिति तत्कीर्तनस्योपास्यसमर्पकत्वे संभवति न स्तुतिमात्रार्थकत्वं कल्पनीयमिति विशेषः ॥ २१ ॥ २२ ॥
**इति तृतीयं स्तुतिमात्राधिकरणम्** ॥

**पारिप्लवार्था इति चेन्न विशेषितत्वात्** ॥ २३ ॥ **स्तुत्यर्थत्वात्सकाशादिति** । स्तुत्यर्थत्वापेक्षयेत्यर्थः । **आश्विनग्रहशंसने इति** । आश्विनस्तोत्रशंसन इत्यर्थः । "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादि"ति ग्रहग्रहणस्तोत्रोपाकरणयोः पौर्वापर्यसम्बन्धश्रवणाद् ग्रहशब्देन स्तोत्रं लक्षितम् । **ननु** यस्य मन्त्रस्य श्रौतो विनियोगस्तद्विनियोगं सर्वश्रुतिः सहतां, यस्य लिङ्गादिभिर्विनियोगस्तं नियोगं कथं सहेतेत्याशङ्क्याह—**क्वचित्समानस्येति** । क्वचिद्विनियोगे समानस्य तद्विनियोजकप्रमाणेन तुल्यबलस्यात एव विनियोगान्तरं सोढवतः सर्वशब्दस्य लिङ्गादिभिर्दुर्बलैरन्यत्रापि यो विनियोगस्तद्विघातकत्वं नास्ति, तत्र हेतुः—**सकृत्प्रवृत्तस्यावकुण्ठनाभावादिति** । एकत्र त्यक्तनियमस्य सर्वशब्दस्यान्यत्रापि नियमत्यागविरोधिनियन्त्रणासंभवादित्यर्थः । **ननु** एवं सति ज्योतिष्टोमे स्तोत्रविनियुक्तानामृचां मध्ये कस्याश्चिदाग्नेय्या आग्नीध्रोपस्थाने श्रौतविनियोगेन स्तोत्रविनियोगनियमभङ्गो जात इति स्तोत्रविनियुक्तानां

धानत्वं वेदान्तानां न स्यात्, मन्त्रवत्प्रयोगशेषत्वादिति चेत्, तन्न, कस्मात्? विशेषितत्वात्। 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेवाख्यानानि तत्र विशेष्यन्ते। आख्यानसामान्याच्चेत्सर्वगृहीतिः स्यादनर्थकमेवेदं विशेषणं भवेत्। तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः ॥ २३ ॥

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

असति च पारिप्लवार्थत्व आख्यानानां संनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या; एकवाक्यतोपबन्धात्। तथाहि—तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते प्ररोचनोपयोगात्प्रतिपत्तिसौकर्योपयोगाच्च। मैत्रेयीब्राह्मणे तावत्—'आत्मा वा अरे द्रष्टव्यः' (बृ० ४।५।६) इत्याद्यया विद्ययैकवाक्यता दृश्यते। प्रातर्दनेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' इत्याद्यया। जानश्रुतिरित्यत्रापि 'वायुर्वाव संवर्गः' (छा० ४।३।१) इत्याद्यया। यथा 'स आत्मनो वपामुदखिदत्' इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां संनिहितविधिस्तुत्यर्थता तद्वत्। तस्मान्न पारिप्लवार्थत्वम् ॥ २४ ॥ इति चतुर्थं पारिप्लवाधिकरणम् ॥

---

### भामती।

यान्याम्नातानि मनुर्वैवस्वतो राजेत्यादीनि तेषामेव तत्र विनियोगः, तान्येव हि पारिप्लवेन विशेषितानि। इतरथा पारिप्लवे सर्वाण्याख्यानानीत्येतावतैव गतत्वात्पारिप्लवमाचक्षीतेत्यनर्थकं स्यात्। आख्यानविशेषणत्वे त्वर्थवत्। तस्माद्विशेषणानुरोधात्सर्वशब्दस्तदपेक्षो न त्वशेषवचनः। यथा सर्वे ब्राह्मणा भोजयितव्या इत्यत्र निमन्त्रितापेक्षः सर्वशब्दः। तथाचोपनिषदाख्यानानां विद्यासंनिधिरप्रतिद्वन्द्वी विध्यैकवाक्यतां सोऽरोदीदित्यादीनामिव विध्येकवाक्यत्वं गमयतीति सिद्धम्। प्रतिपत्तिसौकर्याच्चेत्युपाख्यानेन हि बाला अप्यवधीयन्ते यथा तन्त्रोपाख्यायिकयेति ॥ २३ ॥ २४ ॥
इति चतुर्थं पारिप्लवाधिकरणम् ॥

### वेदान्तकल्पतरुः।

उपलक्षणार्थत्वेन व्याख्यायतामत आह—**इतरथेति**। प्रथमं "सर्वाण्याख्यानानि पारिप्लवे शंसन्ती"त्यभिधाय पुनः "पारिप्लवमाचक्षीतेति" विधाय ततो मनुर्वैवस्वत इत्यादि पठ्यते, तत्र पुनर्विधानं वाक्यशेषगताख्याननियमार्थमितरथा वैयर्थ्यात्सर्वशब्दोऽपि वाक्यशेषगताख्यानानामपि मध्य एकद्व्याद्यभिधायोपरमं व्यावर्तयितुमिति तस्यार्थवत्ता। अत्र पुनर्विधिश्रुत्याऽवच्छेदिकया सर्वश्रुतौ भग्नदर्पायां निर्भयः सन्निधिर्विद्यास्वेवौपनिषदाख्यानानि विनियुङ्क्तेत्याह—**तथाचेति**। अनेन **द्वितीयं** सूत्रं योजितम्। सोऽरोदीदित्यादीनां विध्येकवाक्यतां यथा विधिसंनिधिरवगमयेदेवमाख्यानानां विद्यासंनिधिर्विद्यैकवाक्यतां गमयतीति योजना। अवधीयन्त इति कर्मकर्तरि। **तन्त्रोपाख्यायिका** कथापरो ग्रन्थः ॥ २३ ॥ ॥ २४ ॥ **इति चतुर्थं पारिप्लवाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः।

सर्वासामपि ऋचां लिङ्गात् तत्र तत्र विनियोगः प्रसज्येत? श्रौतविनियोगेन नैराकाङ्क्ष्यान्न तासां लैङ्गिको विनियोगः, आकाङ्क्षामूलत्वाल्लिङ्गेन विनियोगकल्पनाया इति चेत्, तर्हि दाशतयीनामपि श्रौतविनियोगनिराकाङ्क्षाणां नास्ति लैङ्गिको विनियोग इति लिङ्गादिभिर्मन्त्रविनियोगोक्तिरियं निरालम्बनेति—**चेत्, उच्यते**; यासां श्रौतविनियोगेन निराकाङ्क्षाणामपि दाशतयीनामवश्यंभावी लैङ्गिको विनियोगस्तद्विषयमिदमाचार्यवचनं, यथा यत्रैकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येत्यादौ सामिधेनीविवृद्धिः श्रुता, तत्र प्रवोवाजीयाद्यभ्यासेन संख्यापूरणं न भवति, किंतु ऋगन्तरागमेनेत्यभ्यासेन संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतिला ( जै. अ. १० पा. ५ सू. २७ )दिति दाशमिकाधिकरणे स्थितम्। तत्र गम्यमानानामृचाम् अग्निप्रकाशनलिङ्गादेवाऽऽगमात्तदागमाभावे सामिधेनीपरिच्छेद्रकैकविंशतिसंख्यानुपपत्तेः आगमे चाग्निप्रकाशनलिङ्गस्यैव शरणीकरणीयत्वात्। नच—जपपारायणादिविनियुक्तानामपि विधिवाक्यानां यथा विधायकत्वं तथा परिप्लवविनियुक्तानामप्युपाख्यानानां स्तावकत्वं स्यादिति—वाच्यम्; अग्निहोत्रादिविधौ प्रवृत्तिविशेषोऽस्तीति जपपारायणादिविधिवद्विधायकत्वाभ्युपगमेऽपि स्तुतौ प्रवृत्तिविशेषालाभेन शंसनविनियोगनिराकाङ्क्षाणां सन्निधिमात्रेण स्तुत्यर्थत्वकल्पनायोगादिति भावः। **उपलक्षणार्थत्वेन व्याख्यायतामिति**। विशेषप्रवृत्तोपक्रमानुसारेणौपसंहारिकविशेषश्रवणस्य यथा कथं-

---

[1] तत्र सूत्रे २—पारिप्लवार्था इति चेन्न विशेषितत्वात् २३ तथा चैकवाक्यतोपबन्धात् २४ ॥

(५ अधिकरणम्) **अत एवचाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥**

**'पुरुषार्थोऽतःशब्दात्' (ब्र० सू० ३।४।१) इत्येतद्व्यवहितमपि संभवादत इति परामृश्यते । अत एव च विद्यायाः पुरुषार्थहेतुत्वादग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीत्याद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया ॥ २५ ॥ इति पञ्चममग्नीन्धनाधिकरणम् ॥**

## भामती ।

**अत एव चाग्नीन्धनाद्यनपेक्षा ।** विद्यायाः क्रत्वर्थत्वे सति तया क्रतूपकरणाय स्वकार्याय क्रतुरपेक्षितः । तदभावे कस्योपकारो विद्ययेति । यदा तु पुरुषार्था तदा नानया क्रतुरपेक्षितः; स्वकार्ये निरपेक्षाया एव तस्याः सामर्थ्यात् । अग्नीन्धनादिना चाश्रमकर्माण्युपलक्ष्यन्ते, तदाह—**अग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति ।** स्वार्थसिद्धौ नापेक्षितव्यानि, न तु स्वसिद्धाविति । एतच्चाधिकमुपरिष्टाद्वक्ष्यते । तद्विवक्षया चैतत्प्रयोजनं पूर्वतनस्याधिकरणस्योक्तम् ॥ २५ ॥ **इति पञ्चममग्नीन्धनाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥** ब्रह्मविद्या मोक्षे कर्माणीतिकर्तव्यतात्वेनापेक्षते । यज्ञेनेति विविदिषायां विनियुक्तयज्ञादीनां विषयसौन्दर्यलभ्यायां तस्यामनन्वयादिच्छाविषयज्ञानसाध्ये मोक्षेऽन्वय इति पूर्वः पक्षः ॥ अस्मिन्पक्षे यज्ञेनेत्यादिकरणविभक्तिबाधः स्यात् । न हि मोक्षसाधनमिच्छासाधनं, भवति तु ज्ञानेच्छाजनकान्तःकरणशुद्धिहेतुत्वेन ज्ञानेच्छाहेतुत्वं साधनसाधनस्यापि साधनत्वानपायात्, काष्ठैः पचतीत्यत्र पाकसाधनज्वालाजनककाष्ठानां पाकहेतुत्वदर्शनादिति सिद्धान्तः । अत्र भाष्यमत एव विद्यायाः पुरुषार्थहेतुत्वात्कर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति, **तदयुक्तम्**; न हि पुरुषार्थहेतुत्वं कर्मापेक्षाविरोधि आग्नेयादिष्वदर्शनादतः पुरुषार्थाधिकरणप्रयोजननिरूपकत्वमस्याधिकरणस्य न युक्तम् इत्याशङ्क्य भाष्यं व्याचष्टे—**विद्याया इति ।** विद्यायाः क्रत्वर्थत्वे स्वार्थः क्रतूपकारः । तदा चोपक्रियमाणक्रतावसत्युपकारजननायोगात् क्रतुरपेक्षितव्य इत्युक्त्वा मोक्षार्थत्वेऽनपेक्षामाह—**यदा त्विति ।** अविद्यास्तमये मोक्षे नास्ति कर्मापेक्षेति भावः । स्वसिद्धौ नापेक्षितव्यानीति न, अपित्वपेक्षितव्यानीत्यर्थः । अधिकविवक्षयेति भाष्यं व्याचष्टे—**एतच्चेति** ॥ २५ ॥ **इति पञ्चममग्नीन्धनाधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

चिद् व्याख्यानमेकस्तोमे वा क्रतुसंयोगा( जै. अ. ५ पा. ३ सू. ४३ )दिति पाञ्चमिकाधिकरणे स्थितम् । तत्र हि "एष वाव प्रथमो यज्ञो यज्ञानां यद् ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजते गर्तपात्यमेव तत् कुरुते" इत्यत्रान्यशब्दस्य "यो हि तृवृदन्यं यज्ञ क्रतुमापाद्यते स तं दीपयति यः पञ्चदशः स तं यः सप्तदशः स तं य एकविंशः स तमि"ति वाक्यशेषगततृवृदादिस्तोमकक्रतुसंकीर्तनानुसारेण तावन्मात्रे संकुचितवृत्तित्वं पूर्वपक्षीकृत्य राद्धान्तितम्—अविशेषप्रवृत्तोपक्रमगतचोदनानुसारेण वाक्यशेषे विशेषाम्नानं तृवृदादिस्तोमप्रशंसार्थत्वेन कथंचिन्नेतव्यमिति । तथेहापि स्यादिति शङ्कार्थः । अवच्छेदकविधिपुनःश्रुत्यवैयर्थ्यायोपक्रमगतस्यापि सर्वशब्दस्यात्र सङ्कोच इति परिहारो मूल एव स्पष्टः । **किंच** अनन्तशाखाम्नातासङ्कुचितसर्वाख्यानशंसनासंभवात् सर्वशब्दस्य स्वत एव किञ्चिदवच्छेदेन सङ्कोचाकाङ्क्षायां तत्सङ्कोचकवाक्यशेषानुसरणमुपपद्यत इत्यपि द्रष्टव्यम् । **कथापरो ग्रन्थः** पञ्चतन्त्रादिः ॥ २३ ॥ २४ ॥ **इति चतुर्थं पारिप्लवाधिकरणम् ॥**

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥** भाष्यटीकयोरस्फुटमधिकरणशरीरं दर्शयति—**ब्रह्मविद्येति ।** ब्रह्मविद्या मोक्षे जननीये कर्माणीतिकर्तव्यतारूपेणापेक्षते न वेति संशयः । तदर्थं यज्ञादीनां किं विद्याफले मोक्षेऽन्वय उत विविदिषायामिति संशयः । पूर्वत्राख्यातानां विद्यासन्निधिना विद्याशेषत्वमुक्तम्, एवमेव प्रकरणेन यज्ञादीनां मोक्षफलकब्रह्मविद्याशेषत्वमिति संगतिः । तत्र पूर्वपक्षे हेतुमाह—**यज्ञेनेति ।** यज्ञेन विविदिषन्तीत्याद्यन्वयाद् यज्ञादीनां तृतीयाश्रुत्या विविदिषायां साधनत्वेनान्वयः प्रतीयते, स च न संभवति; विषयसौन्दर्यलभ्यायास्तस्या यज्ञादिभिरसाधनीयत्वात्, अतो विविदिषाप्रकृत्यर्थभूतायां विद्यायां तदन्वयः । तस्यामपि प्रमाणाधीनजननायां तेषां स्वरूपनिर्वर्तकत्वासंभवात्फलोपकार्यङ्गत्वेनान्वय इति फलतो मोक्षान्वय इत्यर्थः । तत्र सिद्धान्तमाह—**अस्मिन्पक्षे इति ।** तृतीयाश्रुत्या विविदिषायां यज्ञादीनां करणत्वं प्रतीयते । नच तदसंभवः; अविशुद्धान्तःकरणानां ब्रह्मविद्यायां विषयसौन्दर्यप्रतिसंधा-

---

१ तत्र सूत्रम् १—अत एव चाग्नीन्धनाद्यनपेक्षा २५ ॥

## (६ अधिकरणम्) सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

इदमिदानीं चिन्त्यते किं विद्याया अत्यन्तमेवानपेक्षाऽऽश्रमकर्मणामुतास्ति काचिदपेक्षेति। तत्रात एवाग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्ष्यन्ते। एवमत्यन्तमेवानपेक्षायां प्राप्तायामिदमुच्यते सर्वापेक्षा चेति। अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव। ननु विरुद्धमिदं वचनमपेक्षते चाश्रमकर्माणि विद्या नापेक्षते चेति। नेति ब्रूमः; उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते। उत्पत्तिं प्रति त्वपेक्षते। कुतः? यज्ञादिश्रुतेः। तथाहि श्रुतिः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ० ४।४।२२) इति यज्ञादीनां विद्यासाधनभावं दर्शयति। विविदिषासंयोगाच्चैषामुत्पत्तिसाधनभावोऽवसीयते। 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्' (छा० ८।५।१) इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवाद्यज्ञादीनामपि हि साधनभावः सूच्यते। 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि' (कठ० २।१५) इत्येवमाद्या च श्रुतिराश्रमकर्मणां विद्यासाधनभावं सूचयति। स्मृतिरपि—'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनम्। यथाच योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते। एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्त उत्पत्तौ चापेक्ष्यन्त इति ॥ २६ ॥

### भामती।

अधिकविवक्षयेति यदुक्तं तदधिकमाह—**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ॥२६॥ यथा स्वार्थसिद्धौ नापेक्ष्यन्ते आश्रमकर्माणि, एवमुत्पत्तावपि नापेक्ष्येरन्निति शङ्का स्यात्। नच विविदिषन्ति यज्ञेनेत्यादिविरोधः; नह्येष विधिरपि तु वर्तमानापदेशः। स च स्तुत्याप्युपपद्यते। **अपिच** चतस्रः प्रतिपत्तयो ब्रह्मणि। **प्रथमा** तावदुपनिषद्वाक्यश्रवणमात्राद्भवति, यां किलाचक्षते श्रवणमिति। **द्वितीया** मीमांसासहिता तस्मादेवोपनिषद्वाक्याद्यामाचक्षते मननमिति। **तृतीया** चिन्ता सन्ततिमयी यामाचक्षते निदिध्यासनमिति। **चतुर्थी** साक्षात्कारवती वृत्तिरूपा, नान्तरीयकं हि तस्याः कैवल्यमिति। **तत्राद्ये तावत्प्रतिपत्ती** विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंस उपपद्येते एवेति न तत्र कर्मापेक्षा। ते एव च चिन्तामयीं तृतीयां प्रतिपत्तिं प्रसुवाते इति न तत्रापि कर्मापेक्षा। सा चादरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्त एव प्रतिपत्तिं चतुर्थीमिति न तत्राप्यस्ति कर्मापेक्षा तन्नान्तरीयकं च कैवल्यमिति न तस्यापि कर्मापेक्षा। तदेवं प्रमाणतः प्रमेयतश्चोत्पत्तौ च कार्ये च न ज्ञानस्य कर्मापेक्षेति बीजं शङ्कायाम्। एवं प्राप्त उच्यते—उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा; 'विविदिषन्ति यज्ञेन' इति श्रुतेः।

### वेदान्तकल्पतरुः।

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ॥ २६ ॥ पूर्वत्र ब्रह्मविद्या, न स्वफले कर्मापेक्षा, प्रमात्वात् संमतवदित्युक्तम्, तर्हि सा स्वोत्पत्तावपि न तदपेक्षा, **अतएव** तद्वदेवेति पूर्वपक्षमाह—**यथेति**। अत्रागमविरोधमाशङ्क्याह—**न चेति**। अपिचानेन वाक्येनेच्छा विधीयते, इष्यमाणज्ञानं वा। **नाद्यः**; विषयसौन्दर्यलभ्यायां तस्यां विध्ययोगात्। **न द्वितीय** इत्याह—**अपि चेत्यादिना**। अत एव न तत्साधनत्वेन यज्ञादिविधानम्। **ननु** पञ्चम्यपि प्रतिपत्तिरपेक्ष्यतामित्याशङ्क्य फलपर्यवसानान्नेत्याह—**नान्तरीयकं हीति**। यथाऽतिसुन्दरेऽपि गुडादौ धातुदोषादरुचिः, एवं ब्रह्मज्ञानेऽपि पापादरुचिर्भवेत्तत्र धातुसाम्यार्थमौषधिविधिवद् ब्रह्मज्ञानरोचकयज्ञादिविधिरर्थवानिति सिद्धान्तयति—**उत्पत्तौ ज्ञानस्येति**।

### कल्पतरुपरिमलः।

नमूलेच्छा न संभवतीति तद्विशुद्धिसंपादनद्वारा तस्यां करणत्वोपपत्तेः। अतो विविदिषायामेव यज्ञाद्यन्वय इति न मोक्षे कर्मापेक्षास्ति; अविद्यास्तमयरूपे मोक्षे विद्यातिरिक्तसाधनानुपयोगादित्यर्थः ॥ २५ ॥ **इति पञ्चममग्नीन्धनाधिकरणम्** ॥

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ॥२६॥ **तर्हि सा स्वोत्पत्तावपीति**। पूर्वाधिकरणे यज्ञादीनां यद्विविदिषासाधनत्वमुक्तं, तद्विद्यासाधनत्वपर्यवसायि; विविदिषायाः स्वतः पुरुषार्थत्वाभावेनानन्दसाक्षात्काररूपब्रह्मविद्योपयोगेनैव पुरुषार्थता वक्तव्येति तदभावात्पूर्वाधिकरणेनाक्षेपिकी संगतिरुक्ता। **अपिचानेन वाक्येनेति**। **ननु** विविदिषोद्देशेन यज्ञादिविधानं प्रागुक्तम्, अतो विविदिषाविधानादिविकल्पोऽस्थानविजृम्भित इति—**चेत्, उच्यते**; विविदिषोद्देशेन विधानमेव न

## शमदमाद्युपेतः स्यात्तथाऽपितु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७॥

यदि कश्चिन्मन्येत यज्ञादीनां विद्यासाधनभावो न न्याय्यो विध्यभावात् । 'यज्ञेन विविदिषन्ति' इत्येवंजातीयका हि श्रुतिरनुवादस्वरूपा विद्याभिष्टवपरा, न यज्ञादिविधिपरा इत्थं महाभागा विद्या यद्यज्ञादिभिरेतामवाप्तुमिच्छन्तीति । तथापि तु शमदमाद्युपेतः स्याद्विद्यार्थी 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति' ( बृ० ४।४।२३ ) इति विद्यासाधनत्वेन शमदमादीनां विधानात्, विहितानां चावश्यानुष्ठेयत्वात् । नन्वत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते न विधिः, नेति ब्रूमः; तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः । पश्येदिति च माध्यंदिना विस्पष्टमेव विधिमधीयते । तस्माद्यज्ञा-

### भामती ।

नचेदं वर्तमानापदेशत्वात्स्तुतिमात्रम्; अपूर्वत्वादर्थस्य । यथा यस्य पर्णमयी जुहूर्भवतीति पर्णमयताविधिरपूर्वत्वान्न त्वयं वर्तमानापदेशः, अनुवादानुपपत्तेः । तस्मादुत्पत्तौ विद्यया शमादिवत् कर्माण्यपेक्ष्यन्ते । तत्राप्येवंविदिति विद्यास्वरूपसंयोगादन्तरङ्गाणि विद्योत्पादे शमादीनि, बहिरङ्गाणि कर्माणि विविदिषासंयोगात् । तथाहि—आश्रमविहितनित्यकर्मानुष्ठानाद्धर्मसमुत्पादस्ततः पाप्मा विलीयते । स हि तत्त्वतोऽनित्याशुचिदुःखानात्मनि संसारे सति नित्यशुचिसुखात्मलक्षणेन विभ्रमेण मलिनयति चित्तसत्त्वम्; अधर्मनिबन्धनत्वाद्विभ्रमाणाम् । अतः पाप्मनः प्रक्षये प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य तात्त्विकीमनित्याशुचिदुःखरूपतामप्रत्यूहं विनिश्चिनोति । ततोऽस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते । ततस्तज्जिहासाऽस्योपावर्तते । ततो हानोपायं पर्येषते । पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इति शास्त्रादाचार्यवचनाच्चोपश्रुत्य तज्जिज्ञासत इति विविदिषोपहारमुखेनात्मज्ञानोत्पत्तावस्ति कर्मणामुपयोगः । विविदिषुः खलु युक्त एकाग्रतया श्रवणमनने कर्तुमुत्सहते । 'ततोऽस्य तत्त्वमसि' इतिवाक्यान्निर्विचिकित्सज्ञानमुत्पद्यते । नच निर्विचिकित्सं तत्त्वमसीति वाक्यार्थमवधारयतः कर्मण्यधिकारोऽस्ति । येन भावनायां वा भावनाकार्ये वा साक्षात्कारे कर्मणामुपयोगः । एतेन वृत्तिरूपसाक्षात्कारकार्येऽपवर्गे कर्मणामुपयोगो दूरनिरस्तो वेदितव्यः । तस्माद्यथैव शमदमादयो यावज्जीवमनुवर्तन्ते, एवमाश्रमकर्मापीत्यसमीक्षिताभिधानम्; विदुषस्तत्रानधिकारादित्युक्तम् । दृष्टार्थेषु तु कर्मसु प्रतिषिद्धवर्जमनधिकारेऽप्यसक्तस्य स्वारसिकी प्रवृत्तिरुपपद्यत एव । नहि तत्रान्वय-

### वेदान्तकल्पतरुः ।

**ननु** कर्मणां ज्ञानोत्पत्त्यर्थत्वे यावज्ज्ञानोत्पत्ति कर्मानुष्ठातव्यं, न ज्ञानार्थः संन्यास इति, अत आह—**तत्रापीत्यादिना** । चित्तस्य प्रत्यक्प्रावण्यं कर्मफलं दृष्ट्वा कर्मत्याग उपपन्न इत्यर्थः । ग्रन्थास्त्वेते प्रथमसूत्रे व्याख्याताः । **ननु** ब्रह्मैवोपदिश्यतां, तत्र ज्ञानं स्वत एव जायेत, किं विविदिषया, नेत्याह—**विविदिषुः खल्विति** । अतिसूक्ष्मत्वाद् ब्रह्मात्मत्वस्य मनःसमाधानाद्यनुष्ठेयं, तद् रुचौ सत्यामनुष्ठीयते नेतरथेत्यर्थः । एवं ज्ञानोत्पत्त्युपयोगं कर्मणां प्रदर्श्य फलेऽनुपयोगमाह—**न च निर्विचिकित्समिति** । फलं हि शब्दज्ञानस्य भावना, तस्याश्च साक्षात्कारस्तस्य चापवर्गः त्रिष्वपि कर्मानपेक्षा, शब्दज्ञानेन च कर्माधिकारहेतोर्ब्राह्मणत्वादेर्बाधितत्वात्तदुत्तरकालं कर्मण एवाभावादित्यर्थः । भास्करोक्तमपवदति—**तस्मादिति** । यच्च तेनैवोक्तं ज्ञानात्कर्मणो बाधे भिक्षाटनाद्यपि बाध्येतेति, तत्राह—**दृष्टार्थेष्विति । असक्तस्य** अनासक्तस्य । एते च ग्रन्थाः प्रथमसूत्रे एवोपपादितार्था इति । अधिकारे निवृत्तेऽप्यश्रद्धायामधःपातः

### कल्पतरुपरिमलः ।

संभवति, तस्याः फलत्वायोगात् । फलत्वं हि विद्यारूपफलजनकत्वोपाधिकं वाच्यम्; तस्याः स्वतः फलत्वाभावात् । तथाच विविदिषाफले विद्यायां प्रागेवेच्छासत्त्वे सैव विविदिषेति तस्याः सिद्धत्वात् तदसत्त्वे तस्यां फलजनकत्वोपाधिकपुरुषार्थत्वाप्रतीतेः । एवं विविदिषायाः फलत्वेनान्वयासंभवपूर्वपक्षो यथा सुन्दरेऽपि गुडादावित्यादितत्परिहारार्थसिद्धान्तग्रन्थेन सूचितः । एवमुक्ते यदीच्छादिविधानं यज्ञादिवाक्यार्थं केचन मन्दमतयः शङ्केरन्, तन्निराकरणार्था इमे विकल्पा इति न दोषः । एवंच केनापि प्रकारेण यज्ञादिवाक्यस्य विधायकत्वायोगाद् विद्यास्तुत्यर्थमेव तद्वाक्यमिति पूर्वपक्षः स्थितः । यथा सुन्दरेऽपि गुडादावित्यादिसिद्धान्तग्रन्थस्यार्थः प्रथमसूत्रेऽस्माभिः स्फुटीकृतः तत्रैव द्रष्टव्यः । **प्रत्यक्प्रावण्यं कर्मफलं दृष्ट्वेति । तदुक्तं सुरेश्वराचार्यैः**—प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ इति । **भास्करोक्तमिति** । विद्याविविदिषयोरिव मोक्षस्यापि प्रतिबन्धकानि कर्माणि सन्ति, तन्निरासार्थं शमादिवत्कर्मणामनुवृत्तिरिति शङ्का । "भिद्यते हृदयग्रन्थि"रित्यादिशास्त्राद् विद्ययैवावशिष्टसकलकर्मनिवृत्तिर्भवतीति परिहारा-

द्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि । यज्ञादीन्यपि त्वपेक्षितव्यानीति यज्ञादिश्रुतेरेव । ननूक्तं यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति । सत्यमुक्तम्, तथापि त्वपूर्वत्वात्संयोगस्य विधिः परिकल्प्यते । न ह्ययं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तो येनानूद्येत । 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि' इत्येवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्विधिं परिकल्प्य पौष्णं पेषणं विकृतौ प्रतीयेतेत्यादिविचारः प्रथमे तन्त्रे प्रवर्तितः । तथाचोक्तम् 'विधिर्वा धारणवत्' ( ब्र० सू० ३।४।२० ) इति । स्मृतिष्वपि भगवद्गीताद्यास्वनभिसंधाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम् । तस्माद्यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । तत्राप्येवंविदिति विद्यासंयोगात्प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम् ॥ २७ ॥ इति षष्ठं सर्वापेक्षाधिकरणम् ॥

( ७ अधिकरणम् ) **सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

प्राणसंवादे श्रूयते छन्दोगानाम्—'न ह वा एवंविदि किंचनानन्नं भवति' (छा० ५।२।१) इति । तथा वाजसनेयिनाम्—'न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्' ( बृ० ६।१।१४) इति । सर्वमेवास्यादनीयमेव भवतीत्यर्थः । किमिदं सर्वान्नानुज्ञानं शमादिवद्विद्याङ्गं विधीयत उत स्तुत्यर्थं संकीर्त्यत इति संशये विधिरिति तावत्प्राप्तम् । तथाहि—प्रवृत्तिविशेषकर उपदेशो भवति, अतः प्राणविद्यासंनिधानात्तदङ्गत्वेनेयं नियमनिवृत्तिरुपदिश्यते । नन्वेवंसति

## भामती ।

व्यतिरेकसमधिगमनीयफलेऽस्ति विध्यपेक्षा । अतश्च 'भ्रान्त्या चेल्लौकिकं कर्म वैदिकं च तथास्तु ते' इति प्रलापः । शमदमादीनां तु विद्योत्पादायोपात्तानामुपरिष्टादवस्थास्वाभाव्यादनपेक्षितानामप्यनुवृत्तिः । उपपादितं चैतदस्माभिः प्रथमसूत्र इति नेह पुनः प्रतन्यते । तस्माद्विविदिषोत्पादद्वाराऽऽश्रमकर्मणां विद्योत्पत्तावुपयोगो न विद्याकार्य इति सिद्धम् । शेषमतिरोहितार्थम् ॥ २६ ॥ २७ ॥ इति षष्ठं सर्वापेक्षाधिकरणम् ॥

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥** प्राणसंवादे सर्वेन्द्रियाणां श्रूयते । एष किल विचारविषयः

## वेदान्तकल्पतरुः ।

स्यादिति केशवोक्तमसाधु; शास्त्रकृतत्वादश्रद्धाया इति । अपरमपि भास्करोक्तं निरस्यति—**अतश्चेति । ननु** शमादेरपि ज्ञानोत्पत्तिहेतुत्वात्कर्मवन्न ज्ञानानन्तरमनुवृत्तिरिति ब्रह्मविदः कोपाद्यापत्तिरत आह—**शमादीनां त्विति । अवस्थास्वाभाव्यादिति ।** परमशान्तं ब्रह्मास्मीति पश्यतः स्वभावादेव शमादि स्यान्न यत्नसाध्यमित्यर्थः ॥ २६ ॥ २७ ॥ **इति षष्ठं सर्वापेक्षाधिकरणम् ॥**[1]

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥** यथा पूर्वत्र विविदिषन्तीति वर्तमानापदेशेऽप्यपूर्वत्वात्पञ्चमलकारेण विधिः कल्पितः, एवमत्रापि "न हवा अस्यानन्नं जग्धं भवती"ति वर्तमानापदेशेऽप्यपूर्वत्वाद्विधिरिति प्रत्यवस्थानात् संगतिः । सर्वेन्द्रियाणां प्राणेन सह संवादे यच्छ्रूयते तद्दर्शयति—**एष किलेति ।** इन्द्रियाणि किल वयमेव श्रेष्ठानि इत्यभ्यमन्यन्त । विवादशमनाय च प्रजापतिनोक्तानि युष्माकं मध्ये यस्मिन्नुत्क्रान्ते शरीरं पतेत् स श्रेष्ठ इति । तत इन्द्रियेष्वेकैकश उत्क्रान्तेषु शरीरं नापतत् । प्राणोत्क्रान्तौ त्वपतत् । ततः प्राणः श्रेष्ठ इत्यवधृते सतीन्द्रियाणि तेनावजितानि ।

## कल्पतरुपरिमलः ।

भिप्रायः । **शास्त्रकृतत्वादश्रद्धाया इति ।** लौकिकप्रमाणमूलमिथ्यात्वबुद्धिप्रभवाश्रद्धया स्वप्रारब्धसोमयागादिकस्य मध्ये प्रबुद्धस्य पुरुषस्य कर्मशेषत्यागेऽपि किल न प्रत्यवायः, शास्त्रमूलमिथ्यात्वबुद्धिप्रभवाश्रद्धया स्वत एव कर्मणामस्तमये नास्ति प्रत्यवाय इति किमु वक्तव्यमिति भावः ॥ २६ ॥ २७ ॥ **इति षष्ठं सर्वापेक्षाधिकरणम् ॥**

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥** यस्मिन्नुत्क्रान्ते इदं शरीरं पतेत् तच्च श्रेष्ठमिति यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स च श्रेष्ठ इति श्रुतौ प्रजापतिवाक्यम् । तदर्थोऽत्र भङ्ग्यन्तरेण दर्शितः । **प्राणोत्क्रान्तौ त्वपतदिति ।** प्राण उच्चिक्रमिष्यन् स यथा सुहयः षड्वीशशङ्कून् समखिददेवमितरान् प्राणान् समखिदत् तं हाभिसमेत्योचुः

[1] तत्र सूत्रे २—सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् २६ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् २७ ॥

भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्, नैष दोषः; सामान्यविशेषभावाद्बाधोपपत्तेः । यथा प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः । यथाच 'न कांचन परिहरेत्तद्व्रतम्' ( छा० २।१३।२ ) इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन तत्सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते । एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेति । एवं प्राप्ते ब्रूमः—नेदं सर्वान्नानुज्ञानं विधीयत इति । न ह्यत्र विधायकः शब्द उपलभ्यते; 'न ह वा एवंविदि किंचनानन्नं भवति' ( छा० ५।२।१ ) इति वर्तमानापदेशात् । न चासत्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्वलोभेनैव विधिरभ्युपगन्तुं शक्यते । अपिच श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वेदमुच्यते 'नैवंविदः किंचिदनन्नं भवति' इति । नच श्वादिमर्यादमन्नं मानुषेण देहेनोपभोक्तुं शक्यते । शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुम् । तस्मात्प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादो न सर्वान्नानुज्ञानविधिः । तद्दर्शयति 'सर्वान्नानुमतिश्च प्राणात्यये' इति । एतदुक्तं भवति—प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते; तद्दर्शनात् । तथाहि श्रुतिश्चाक्रायणस्यर्षेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं

## भामती ।

—सर्वाणि खलु वागादीन्यवजित्य प्राणो मुख्य उवाचैतानि किं मेऽन्नं भविष्यतीति । तानि होचुः यदिदं लोकेऽन्नमा च श्वभ्य आ च शकुनिभ्यः सर्वप्राणिनां यदन्नं तत्तवान्नमिति । तदनेन संदर्भेण प्राणस्य सर्वमन्नमित्यनुचिन्तनं विधायाह श्रुतिः—'न ह वा एवंविदि किंचनानन्नं भवति' इति । सर्वं प्राणस्यान्नमित्येवंविदि न किंचनानन्नं भवतीति । तत्र संशयः—किमेतत्सर्वान्नाभ्यनुज्ञानं शमादिवदेतद्विद्याङ्गतया विधीयत उत स्तुत्यर्थं संकीर्त्यत इति । तत्र यद्यपि भवतीति वर्तमानापदेशान्न विधिः प्रतीयते; तथापि यथा "यस्य पर्णमयी जुहूर्भवतीति" वर्तमानापदेशादपि पलाशमयीत्वविधिप्रतिपत्तिः पञ्चमलकारापत्त्या, तथेहापि प्रवृत्तिविशेषकरतालाभे विधिप्रतिपत्तिः । स्तुतौ हि अर्थवादमात्रं न तथार्थवत्त्वं यथा विधौ । भक्ष्याभक्ष्यशास्त्रं च सामान्यतः प्रवृत्तमनेन विशेषशास्त्रेण बाध्यते । गम्यागम्यविवेकशास्त्रमिव सामान्यतः प्रवृत्तं वामदेवविद्याङ्गभूतसमस्तस्त्र्यपरिहारशास्त्रेण विशेषविषयेणेति प्राप्त उच्यते—**अशक्तेः कल्पनीयत्वाच्छास्त्रान्तरविरोधतः । प्राणस्यान्नमिदं सर्वमिति चिन्तनसंस्तवः ॥** न तावत्कौलेयकमर्यादमन्नं मनुष्यजातिना युगपत्पर्यायेण वा शक्यमत्तुम्; इभकरभकादीनामन्नस्य शमीकरीरकण्टकवटकाष्ठादेरेकस्यापि अशक्यादनत्वात् । न चात्र लिङ इव स्फुटतरा विधिप्रतिपत्तिरस्ति । नच कल्पनीयो विधिः, अपूर्वत्वाभावात्,

## वेदान्तकल्पतरुः ।

तानि प्राण उवाचेत्यर्थः । यदाह तद्दर्शयति—**किं मेऽन्नमिति** । पराजितैर्हि विजयिने करो दीयते, एवमिहापि सर्वप्राणिभिरद्यमानमन्नमिन्द्रियाणि प्राणाय प्रददुः । अतः सर्वत्रान्नादः प्राण इत्यर्थः । आख्यायिकया विवक्षितमर्थमाह—**तदनेनेति** । प्राणस्य सर्वमन्नमिति निर्देशात्तथैवोपासनाविधिः कल्पनीय इत्यर्थः । **एतद्विद्याङ्गतयेति** । एतस्याः प्राणविद्याया अङ्गतयेत्यर्थः । **तत्र यद्यपीति** । यदवादिष्म पञ्चमलकारकल्पनात्सङ्गतिरिति । तदित उत्थितम् । प्रवृत्तिविशेषकरणतालाभे प्रयोजने विधिप्रतिपत्तिरित्यर्थः । उपमन्त्रयते स हिङ्कार इत्यादिना ग्राम्यव्यापारगतचेष्टासु हिङ्कारादिदृष्टिर्विहिता । सा वामदेव्यविद्या । **उपमन्त्रणं** सङ्केतकरणम् । **अशक्तेरिति** । सर्वान्नस्य पुंसाऽत्तुमसामर्थ्यादित्यर्थः । **अपिच** "नानन्नं भवति" इत्यत्र भवतिमात्रं श्रूयते । तत्र भावयतिः कल्पनीयः, कल्पयित्वा च तं विधिरपि कल्प्य इत्याह—**कल्पनीयत्वादिति** । कल्पना च नोपपद्यते; क्लृप्तसामान्यविषयनिषेधशास्त्रेण बाधात् । क्लृप्तो हि विशेषविधिः सामान्यनिषेधं बाधेत, न कल्प्य इत्यभिप्रेत्याह—**शास्त्रान्तरेति** । कस्तर्हि शास्त्रार्थस्तमाह—**प्राणस्येति** । अशक्तिरित्येतद्विवृणोति—**न तावदिति** । **कौलेयकः** श्वा । **इभो** हस्ती । तद्भक्ष्यं वटकाष्ठम् । **करभ** उष्ट्रः । तद्भक्ष्यौ शमीकरीरौ । **कण्टकी** वृक्षविशेषः यस्य वल्लीप्रायाः शाखा भवन्ति । कल्पनीयत्वादित्येतद्व्याचष्टे—**न चात्र लिङ**

## कल्पतरुपरिमलः ।

भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति श्रुतिवाक्यम्, तदर्थ इहापि भङ्ग्यन्तरेण दर्शितः । **प्रवृत्तिविशेषकरणतालाभे प्रयोजन इति** । अनेन लाभ इति निमित्तसप्तमी "चर्मणि द्वीपिनं हन्तीति"वत्प्रयोजनस्य निमित्तत्वपक्षे विवक्षितेति व्याख्यातं भवति । ग्राम्यव्यापारगतचेष्टादिषु हिङ्कारादिदृष्टिर्विहितेति हिङ्कारादिषु ग्राम्यव्यापारगतचेष्टादृष्टिर्विहितेत्येवं सप्तम्यर्थस्य हिङ्कारादिषु योजनेन व्यवधारणकल्पना कार्या । एवमेव हि "लोकेषु पञ्चविधं सामोपासीते"त्यादिश्रुतिवाक्येषु सप्तमीद्वितीययोर्व्यत्यस्य योजनया व्यवधारणकल्पना स्यास्यति । तां श्रुतिशैलीमनुसृत्याचार्यैरुक्तम् । अशक्तेरिति श्लोकप्रतीकमादाय श्लोकं व्याचष्टे—**सर्वान्नस्येति** । **करभ उष्ट्र इति** । उष्ट्रशिशुरित्यर्थः । **अङ्गादेरश्रवणादिति** ।

दर्शयति—'मटचीहतेषु कुरुषु' ( छा० १।१०।१ ) इत्यस्मिन्ब्राह्मणे । चाक्रायणः किलर्षिरापद्गत इभ्येन सामिखादितान्कुल्माषांश्चखाद । अनुपानं तु तदीयमुच्छिष्टदोषात्प्रत्याचचक्षे । कारणं चात्रोवाच 'न वा अजीविष्यमिमानखादन्' ( छा० १।१०।४ ) इति 'कामो म उदपानम्' ( छा० १।१०।४ ) इति च । पुनश्चोत्तरेद्युस्तानेव स्वपरोच्छिष्टान्पर्युषितान्कुल्माषान्भक्षयांबभूवेति । तदेतदुच्छिष्टोच्छिष्टपर्युषितभक्षणं दर्शयन्त्याः श्रुतेराशयातिशयो लक्ष्यते प्राणात्ययप्रसङ्गे प्राणसंधारणायाभक्ष्यमपि भक्षयितव्यमिति । स्वस्थावस्थायां तु तन्न कर्तव्यं विद्यावतापीत्यनुपानप्रत्याख्यानाद्गम्यते । तस्मादर्थवादो 'न ह वा एवंविदि' ( छा० ५।२।१) इत्येवमादिः ॥ २८ ॥

## अबाधाच्च ॥ २९ ॥

एवंच सत्याहारशुद्धौ सत्त्वशुद्धिरित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रमबाधितं भविष्यति ॥ २९ ॥

## अपिच स्मर्यते ॥ ३० ॥

अपिचापदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्चाविशेषेण—'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति । तथा 'मद्यं नित्यं ब्राह्मणः' 'सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः,' 'सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्' इति च स्मर्यते वर्जनमनन्नस्य ॥ ३० ॥

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्चानन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः काठकानां संहितायां श्रूयते—'तस्माद्ब्राह्मणः सुरां न पिबेत्' इति । सोऽपि 'न ह वा एवंविदि' (छा० ५।२।१ ) इत्यस्यार्थवादत्वादुपपन्नतरो भवति । तस्मादेवंजातीयका अर्थवादा न विधय इति ॥ ३१ ॥ इति सप्तमं सर्वान्नानुमत्यधिकरणम् ॥

---

### भामती ।

स्तुत्यापि च तदुपपत्तेः । नच सत्यां गतौ सामान्यतः प्रवृत्तस्य शास्त्रस्य विषयसंकोचो युक्तः । तस्मात्सर्वं प्राणस्यान्नमित्यनुचिन्तनविधानस्तुतिरिति साम्प्रतम् । शक्यत्वे च प्रवृत्तिविशेषकरतोपयुज्यते नाशक्यविधानत्वे । प्राणात्यय

### वेदान्तकल्पतरुः ।

**इवेति** । लिङः सकाशाद्यथा विधिप्रतीतिरेवमत्र स्फुटतरा नास्ति; पञ्चमलकारद्योतकस्याडादेरश्रवणादित्यर्थः । **ननु** पर्णमयीत्वादाविव विधिः कल्प्यतामत आह—**न च कल्पनीय इति** । सर्वमन्नं भवतीत्यस्यादनीयेऽनुवादत्वादनदनीये त्वशक्ये विध्ययोगात् शक्ये कलञ्जादौ निषेधशास्त्रेण वैपरीत्यपरिच्छेदादपूर्वार्थत्वाभावादित्यर्थः । शास्त्रान्तरविरोधत इत्येतद् व्याचष्टे—**नच सत्यां गताविति** । **प्रवृत्तस्येति** । क्लृप्तत्वात्परिच्छेत्तुमप्रवृत्तस्येत्यर्थः । यदुक्तं प्रवृत्तिविशेषकरत्वाद्विधिरिति, तत्राह—**शक्यत्वे चेति** । **ननु** सूत्रं प्राणविदः सर्वान्नभक्षणं न वारयति, नहि प्राणात्यये सर्वान्नानुमतिमात्रेण अन्यत्र तद्वारणं कर्तुं शक्यमत आह—**प्राणात्यय इति चेति**। तद्दर्शनादिति सूत्रभागं व्याचष्टे—

### कल्पतरुपरिमलः ।

लेटोऽडाटाविति अडागम आडागमश्च लेटो विहितः, तदश्रवणादित्यर्थः । **अपूर्वत्वाभावादि**त्येतद् विधियोग्यार्थरहितत्वादित्येतदर्थकम् अभिप्रेत्य तदर्थस्य विधियोग्यतां त्रेधा विभज्य दर्शयति—**सर्वमन्नं भवतीत्यस्येति** । **नन्वनुवा**दत्वमसिद्धम्; स्वरूपतो भक्षणस्य प्राप्तत्वेऽपि प्राणविद्याङ्गत्वेन तत्प्राप्त्यभावाद्, अनदनीयत्वं न दोषः; कृष्णलवदनदनीयस्यापि किंचिद्भक्षणोपपत्तेः, कलञ्जादौ निषिद्धत्वमपि न दोषः; विधिनिषेधयोः क्रत्वर्थपुरुषार्थतया व्यवस्थोपपत्तेरित्याशङ्कानिराकरणार्थं **नच सत्यां गता**वित्यादिग्रन्थमवतार्य व्याचष्टे—**शास्त्रान्तरेति** । **क्लृप्तत्वादिति** । अनेन क्लृप्तशास्त्रविरोधिशास्त्रान्तरकल्पनैव न प्रवर्तते, येनाप्राप्त्याद्युपपादनेनानुवादत्वासिद्ध्यादिकमुच्येतेति भावः । **सुरावर्जमिति** । पैष्टीवर्जमित्यर्थः । गौडीमाध्व्योर्मरणान्तप्रायश्चित्ताभावात् "सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येदि"ति गौतमस्मृतेः मरणप्रसङ्गेऽपि सा न पेयेति । **केचित्तु**—अनन्यसाध्यव्याध्युपशमार्थं पेयैव; तत्र मरणान्तिकप्रायश्चित्ताभावाद्, "एतान्येवातुरस्य भिषक्क्रियायां प्रतिषिद्धानि भवन्ति यानि चान्यान्येवंप्रकाराणि तेष्वप्यदोष इति सुमन्तोस्त्वदोषत्वस्मरणस्य प्रायश्चित्तलाघवसूचनार्थत्वात्, गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत् । तप्तकृच्छ्रं

## ( ८ अधिकरणम् ) विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

'सर्वापेक्षा च—' (ब्र० सू० ३।४।२६ ) इत्यत्राश्रमकर्मणां विद्यासाधनत्वमवधारितम्, इदानीं तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयान्युताहो नेति चिन्त्यते। तत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' ( बृ० ४।४।२२ ) इत्यादिनाऽऽश्रमकर्मणां विद्यासाधनत्वेन विहितत्वाद्विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि। अथ तस्याप्यनुष्ठेयानि, न तर्ह्येषां विद्यासाधनत्वम्; नित्यानित्यसंयोगविरोधादिति अस्यां प्राप्तौ पठति—आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि; 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात्। नहि वचनस्यातिभारो नाम कश्चिदस्ति॥ ३२ ॥ अथ यदुक्तं नैवं सति विद्यासाधनत्वमेषां स्यादित्यत उत्तरं पठति—

### भामती।

इति चावधारणपरं प्राणात्यय एव सर्वान्नत्वम्। तत्रोपाख्यानाच्च स्फुटतरविधिस्मृतेश्च सुरावर्जं विद्वांसमविद्वांसं प्रति विधानात्, न त्वन्यत्रेति। इभ्येन हस्तिपकेन सामिखादितान् अर्धभक्षितान्। स हि चाक्रायणो हस्तिपकोच्छिष्टान्कुल्माषान्भुञ्जानो हस्तिपकेनोक्तः? कुल्माषानिव मदुच्छिष्टमुदकं कस्मान्नानुपिबसीति? एवमुक्तस्तदुदकमुच्छिष्टदोषात्प्रत्याचचक्षे। कारणं चात्रोवाच। न वाऽजीविष्यं न जीविष्यामीतीमान्कुल्माषानखादम्। कामो म उदकपानमिति स्वातन्त्र्यं मे उदकपाने नदीकूपतडागप्रपादिषु यथाकामं प्राप्नोमीति नोच्छिष्टोदकाभावे प्राणात्यय इति तत्रोच्छिष्टभक्षणं दोष इति मटचीहतेषु कुरुषु ग्लायन्नशनायया मुनिर्निरपत्रप इभ्येन सामिजग्धान्खादयामास ॥ २८॥ ॥ २९ ॥ ३० ॥ ३१ ॥ इति सप्तमं सर्वान्नानुमत्यधिकरणम् ॥

विहितत्वाच्चाश्रमकर्मापि। नित्यानि ह्याश्रमकर्माणि यावज्जीवश्रुतेर्नित्येहितोपायतयाऽवश्यं कर्तव्यानि। विविदिषन्तीति च विद्यासंयोगाद्विद्यायाश्चावश्यंभावनियमाभावादनित्यता प्राप्नोति। नित्यानित्यसंयोगश्चैकस्य न संभवति; अवश्यानवश्यंभावयोरेकत्र विरोधात्। नच वाक्यभेदाद्वास्तवो विरोधः शक्योऽपनेतुम्। तस्मादनध्यवसाय एवात्रेति प्राप्तम्। एतेन 'एकस्य तूभयार्थत्वे संयोगपृथक्त्वम्' इत्याक्षिप्तम्। एवं प्राप्तेऽभिधीयते—सिद्धे हि स्याद्विरोधोऽयं

### वेदान्तकल्पतरुः।

तत्रोपाख्यानाच्चेति। ननूपाख्याने सामान्यशास्त्रबाधको विधिर्न श्रूयतेऽत आह—स्फुटतरेति। जीवितात्ययमापन्नो मद्यं नित्यं ब्राह्मणो वर्जयेदित्याद्या स्फुटतरविधिस्मृतिः। ननु तर्हि स्मृत्या जीवितात्यये किं सुराऽपि भक्षणीया, नेत्याह—सुरावर्जमिति। "सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामि"ति मरणान्तिकप्रायश्चित्तदर्शनाद् मरणप्रसङ्गेऽपि सा न भक्षयेत्यर्थः। उष्णामित्यग्निवत्तप्तामित्यर्थः। प्राणात्ययोऽपि किंचिद्विषय एव, नेत्याह—विद्वांसमिति। चाक्रायणोपाख्यानाद्विद्वांसं प्रति विधानाद् विधिस्मृतेश्च साधारण्याद् अविद्वांसं प्रत्यपि विधानात् प्राणात्ययएव विद्वदविदुषोः सर्वान्नत्वमिति योजना। हस्तिपको हस्तिपालः। छान्दोग्यश्रुतिगतमुपाख्यानमर्थतो दर्शयति—सहीति। एवमाख्यानमनुवर्ण्य भाष्यस्थां श्रुतिं व्याचष्टे—मटचीति। मटच्यो नाम रक्तवर्णाः क्षुद्रपक्षिविशेषाः। तैर्हतेषु कुरुदेशसस्येषु अशनायया बुभुक्षया ग्लायन् ग्लानिं प्राप्त इत्यर्थः। मद्यं नित्यं ब्राह्मण इति। वर्जयेदिति शेषः॥२८॥२९॥३०॥ ॥ ३१ ॥ इति सप्तमं सर्वान्नानुमत्यधिकरणम् ॥[1]

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ यथा शास्त्रान्तरविरोधात्सर्वान्नत्ववचनं स्तुतिरेवं यज्ञादीनां नित्यत्वश्रुतिविरोधाद्विद्यार्थत्ववचनं स्तुतिरिति सङ्गतिमभिप्रेत्य पूर्वपक्षमाह—नित्यानि हीत्यादिना। तस्मादनध्यवसाय एवेति। अध्यवसाये वा विविदिषन्ति इत्यस्य स्तुत्यर्थत्वं भवतीत्याशयः। ननु वाचनिकविनियोगभेदात्खादिरादेर्वीर्यार्थत्वं क्रत्वर्थत्वं च प्रथमतन्त्रे सिद्धं, तद्वदत्र किं न स्यादत आह—एतेनेति। वास्तवविरोधेनेत्यर्थः। विधिव्यतिरेकेण स्वभावत

### कल्पतरुपरिमलः।

पराकं च चान्द्रायणमनुक्रमात् ॥ इति बार्हस्पत्यलघुप्रायश्चित्तविधानस्य तादृग्विषयतया वक्तव्यत्वाच्चेति—आहुः। वर्जयेदिति शेष इति। मद्यं नित्यं ब्राह्मण इति भाष्योदाहृता गौतमस्मृतिः। तत्र वर्जयेद् मधुमांसगन्धमाल्येत्यादिपूर्ववाक्याद् वर्जयेदित्यनुवर्तते स शेष इत्युक्तः॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ इति सर्वान्नानुमत्यधिकरणम्॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ विविदिषन्तीत्यस्येति। यज्ञादिवाक्ये वर्तमानापदेशात् कर्मकाण्डइवेतिकर्तव्यताम्नानाभावाच्च तस्यैव स्तुत्यर्थत्वमध्यवसीयत इति भावः। वास्तवविरोधेनेति। षोडशिग्रहणाग्रहणन्या-

१ तत्र सूत्राणि ४—सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् २८ अबाधाच्च २९ अपि च स्मर्यते ३० शब्दश्चातोऽकामकारे ३१ ॥

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारीणि चैतानि स्युर्विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ० ४।४।२२) इत्यादिना। तदुक्तम्—'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र० सू० ३।४।२६) इति। न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवद्विद्याफलविषयं मन्तव्यम्; अविधिलक्षणत्वाद्विद्यायाः, असाध्यत्वाच्च विद्याफलस्य। विधिलक्षणं हि साधनं दर्शपूर्णमा-

### भामती।

**न तु साध्ये कथंचन। विध्यधीनात्मलाभेऽस्मिन् यथाविधि मता स्थितिः** ॥ सिद्धं हि वस्तु विरुद्धधर्मयोगेन बाध्यते, नतु साध्यरूपं यथा षोडशिन एकस्य ग्रहणाग्रहणे। ते हि विध्यधीनत्वाद्विकल्प्येते एव। न पुनः सिद्धे विकल्पसंभवः। तदिहैकमेवाग्निहोत्राख्यं कर्म यावज्जीवश्रुतेर्निमित्तेन युज्यमानं नित्येहितोपात्तदुरितप्रक्षयप्रयोजनमवश्यकर्तव्यं, विद्याङ्गतया च विद्यायाः कादाचित्कतयानवश्यंभावेऽपि 'काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते' इति न्यायादनित्याधिकारेण निविशमानमपि न नित्यमनित्ययति, तेनापि तत्सिद्धेरिति संयोगपृथक्त्वान्न नित्यानित्यसंयोगविरोध एकस्य कार्यस्येति सिद्धम् ॥ ३२ ॥ सहकारित्वं च कर्मणां न कार्ये विद्यायाः किं तूत्पत्तौ। कोऽर्थो विद्यासहकारीणि कर्माणीति? **अयमर्थः**—सत्सु कर्मसु विद्यैव स्वकार्ये व्याप्रियते। यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति सत्स्वेव दशपुत्रेषु सैव भारस्य वाहिकेति। **अविधिलक्षणत्वादिति**। विहितं हि

### वेदान्तकल्पतरुः।

एव नित्यमनित्यं वा यद्वस्तु व्यवस्थितं तदन्यथा कर्तुं न शक्यते, यत्त्वसिद्धरूपं विधितः कर्तव्यमित्यध्यवसाय यथाविधि निष्पाद्यते, तस्य रूपं विधित एव ज्ञातव्यम्, विधितश्चाग्निहोत्रादेरावश्यकत्वप्रतीतेर्न विरोध इत्याह—**सिद्धे हीति**। निमित्तेन जीवितेन नित्यं सर्वदा संसारिणामीहित इष्ट उपात्तदुरितक्षयः प्रयोजनं यस्य तत्तथोक्तम्। अनेन फलवत्त्वेऽपि नित्यत्वं कर्मण उपपादितम्। **विद्याङ्गतया चे**त्यत्र कर्तव्यमित्यनुषङ्गः। **ननु** विरक्ताधिकाराया विद्याया नित्यसमीहितफललाभावात्तदङ्गत्वेनानुष्ठीयमानस्य नित्यत्वं न स्यात्, ततश्च विविदिषार्थत्वेन कर्म कुर्वतः प्रत्यवायपरिहाराय नित्यप्रयोगोऽपि पृथक्कर्तव्यः। न चेन्नित्यप्रयोगस्यैवानित्यत्वं स्यादिति, नेत्याह—**विद्यायाः कादाचित्कतयेति**। यथा स्वर्गार्थोऽग्निहोत्रप्रयोगो नित्यप्रयोगं विकृत्य प्रयोगस्योभयत्राविशेषान्नित्यविधेः प्रयोजकत्वं बाधित्वा निविशते, यथा वा "यदि राजन्यं वैश्यं वा याजयेत स यदि सोमं बिभक्षयिषेद् न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेदि"ति नैमित्तिकः फलचमसप्रयोगो नित्यं सोमप्रयोगं विकृत्य निविशते; काम्यनैमित्तिकाभ्यां नित्यकार्यसिद्धेः। यादृशो नित्यः प्रयोगः करणार्थत्वेन विहितस्तादृशस्यैतरत्र प्रत्यभिज्ञानाच्च न पुनःप्रयोगावृत्तिः। नापि नित्यप्रयोगस्यानित्यतापत्तिरेवमत्रापीत्यर्थः। **न्यग्रोधस्कन्धादधोविलम्बिन्यो** जटाः स्तिभ्यः। **कार्यस्येति**। कर्तव्यस्येत्यर्थः। **सत्सु कर्मस्विति**। विद्याकारणत्वेनानुष्ठितेषु कर्मसु सत्सु उत्पन्ना विद्यैव स्वकार्येऽविद्यानिवृत्तिलक्षणे व्याप्रियत इत्यर्थः।

### कल्पतरुपरिमलः।

यसंचारणे तथैव विरोधपरिहाराय विकल्पोऽभ्युपगन्तव्य इति काम्यप्रयोगे नित्याननुष्ठानात् प्रत्यवायः स्यान्नित्यानित्यसंयोगे वास्तवविरोधानङ्गीकारे च पूर्वतन्त्रे नित्यानित्यसंयोगविरोधस्य दोषत्वकथैवास्तमियादिति भावः। **आवश्यकत्वानावश्यकत्वप्रतीतेरिति**। जीवननिमित्तकतयाऽऽवश्यकत्वं विद्यार्थितयाऽनावश्यकत्वमिति विषयभेदादिह न नित्यानित्यसंयोगविरोधः। यत्र तु नित्यस्यानित्यमेव द्वारं तत्र परं नित्यानित्यसंयोगो विरुध्यत इति स दोषः। यथा भिन्ने जुहोतीति। अत्र हि होमो भिन्नाधिकरणकः तत्संस्कार इति पूर्वपक्षे भिन्ने इत्यस्य संस्कार्यपरतया निमित्तपरत्वाभावेन होमो नित्यः स्याद् द्वारं तु भिन्नमनित्यम्; दर्शपूर्णमासमध्ये पात्रादिभेदस्य कादाचित्कत्वात्। अतो होमो न नित्यं दर्शपूर्णमासयोरुपकुर्यात् अनित्यभिन्नद्वारेति वाक्यार्थबोधो न निष्पद्यते अनित्यद्वारकत्वमस्याप्यनित्यत्वप्रसङ्गादिति विरोधपरिहाराय भिन्ने इत्यस्य निमित्तपरत्वं सिद्धान्तेऽङ्गीकृतम्। अतस्तादृग्विषयो नित्यानित्यसंयोगविरोधो दोष इति प्रथेति भावः। **न चेन्नित्यप्रयोगस्यैवेति**। साध्यविषये प्रयोगैक्ये विरोधपरिहारो न संभवति; विकल्पेन विरोधपरिहारे च कदाचिन्नित्याननुष्ठानेन प्रत्यवायः स्यात्। अतो नित्यप्रयोगोऽपि पृथक्कर्तव्य इति भावः। विकृत्येत्यस्य सोपपत्तिकं व्याख्यानं—**प्रयोगस्येत्यादि**। बाधित्वेत्यन्तेनापि तत्सिद्धेरिति ग्रन्थं व्याचष्टे—**काम्यनैमित्तिकाभ्यां नित्यकार्यसिद्धेरिति**। उक्तमर्थमुपपादयति—**यादृशो हीति**। **कर्तव्यस्येत्यर्थ इति**। सिद्धरूपस्यैवैकस्य साध्यस्य नित्यानित्यात्मविरोधो नास्तीत्यर्थः। **कर्मसु सत्स्विति**। **ननु**

सादि स्वर्गफलसिषाधयिषया सहकारिसाधनान्तरमपेक्षते, नैवं विद्या । तथाचोक्तम् 'अत एव चाग्नीन्धनाद्यनपेक्षा' ( ब्र० सू० ३।४।२५ ) इति । तस्मादुत्पत्तिसाधनत्व एवैषां सहकारित्ववाचोयुक्तिः । नचात्र नित्यानित्यसंयोगविरोध आशङ्क्यः; कर्माभेदेऽपि संयोगभेदात् । नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितो न तस्य विद्याफलत्वम् । अनित्यस्त्वपरः संयोगः 'तमेतं वेदानुवचनेन' ( बृ० ४।४।२२ ) इत्यादिवाक्यकल्पितस्तस्य विद्याफलत्वम् । यथैकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थत्वमनित्येन संयोगेन पुरुषार्थत्वं तद्वत् ॥ ३३ ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथाप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः । त एवेत्यवधारयन्नाचार्यः किं निवर्तयति ? कर्मभेदशङ्कामिति ब्रूमः । यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्यत्र नित्यादग्निहोत्रात्कर्मान्तरमुपदिश्यते, नैवमिह कर्मभेदोऽस्तीत्यर्थः । कुतः ? उभयलिङ्गात्, श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत् 'तमेतं वेदानुव-

### भामती ।

दर्शपौर्णमासाद्यङ्गैर्युज्यते, न त्वविहितम् । ग्राहकग्रहणपूर्वकत्वादङ्गभावस्य, विधेश्च ग्राहकत्वात्, अविहिते च तदनुपपत्तेः । चतसृणामपि च प्रतिपत्तीनां ब्रह्मणि विधानानुपपत्तेरित्युक्तं प्रथमसूत्रे । द्रष्टव्यो निदिध्यासितव्य इति च विधिसरूपं न विधिरित्यप्युक्तम् । उत्पत्तिं प्रति हेतुभावस्तु सत्त्वशुद्ध्या विविदिषोपजननद्वारेत्यधस्तादुपपादितम् । असाध्यत्वाच्च विद्याफलस्यापवर्गस्य । स्वरूपावस्थानलक्षणो हि सः । नच स्वं रूपं ब्रह्मणः साध्यम्; नित्यत्वात् । शेषमतिरोहितार्थम् ॥ ३३ ॥ यथा मासमग्निहोत्रं जुहोतीति प्रकरणान्तरात्कर्मभेद एवमिहापि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इति क्रतुप्रकरणमतिक्रम्य श्रवणात्प्रकरणान्तरात्तद्बुद्धिव्यवच्छेदे सति कर्मान्तरमिति प्राप्त उच्यते—सत्यपि प्रकरणान्तरे तदेव कर्म, श्रुतेः स्मृतेश्च । संयोगभेदः परं यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'यावज्जीवमग्निहोत्रं जुहुयात्' इति तदेवाग्निहोत्रमुभयसंयुक्तम् । नहि प्रकरणान्तरं साक्षाद्भेदकम्, किंतु अज्ञातज्ञापनस्वरसो

### वेदान्तकल्पतरुः ।

भारवाहकत्वं गर्दभ्या एव, पुत्राणां तु भारवहनकाले सत्त्वमात्रम्, नतु वाहकत्वमिति दृष्टान्तवार्तिकार्थः । **ग्राहकेति ।** ग्राहकेण प्रयोगविधिनाऽऽत्मीयत्वेन स्वीकारपूर्वकत्वादित्यर्थः । ग्राहकं दर्शयति—**विधेश्चेति ।** अविहिते च ज्ञाने विध्यभावादेव कर्मणां विद्यां प्रत्यङ्गत्वेन प्रयोगविधिग्रहणानुपपत्तेरित्यर्थः । **ननु** तर्हि विद्या विधीयतां, नेत्याह—**चतसृणामपीति ।** एका हि प्रतिपत्तिः साङ्गाध्ययनप्रसवा, अन्या तु शास्त्रश्रवणजा, अपरा ध्यानरूपा, चतुर्थी साक्षात्कृतिः । तासां चतसृणामपि ब्रह्मविषयप्रतिपत्तीनां विधानानुपपत्तिरित्युक्तमित्यर्थः ॥ ३३ ॥ **ननु** "यावज्जीवमग्निहोत्रं जुहुयादग्निहोत्रं जुहुयात्स्वर्गकाम" इति वाक्ययोरेकप्रकरणे श्रवणाद्युक्त एकस्य कर्मणः काम्यत्वेन नित्यत्वेन च विनियोगः, यज्ञादिवाक्यस्य तु भिन्नप्रकरणत्वान्न विनियोगान्तरहेतुत्वम्, किंतु कर्मान्तरविधायकत्वमेवेति, नेत्याह—**न हि प्रकरणान्तर-**

### कल्पतरुपरिमलः ।

कर्मणां विद्यार्थत्वपक्षे विद्योत्पत्तिपर्यन्तं कर्मणां फलापवर्गाणामनुवृत्तिरित्यस्तु, विविदिषार्थानि कर्माणीत्याचार्यपक्षे न तेषां विद्योत्पत्तिपर्यन्तमनुवृत्तिरस्ति, **सत्यम्;** विद्यार्थत्वपक्षमाश्रित्य सत्त्विति वर्तमानतोक्ता । विविदिषार्थत्वपक्षे तु कालविशेषानादरेण सद्भावमात्रं विवक्षितमित्यदोषः । **एका हि प्रतिपत्तिरिति ।** अङ्गाध्ययनवतो वेदान्तवाक्यश्रवणमात्रजन्याद्वैतविषयापातदर्शनरूपा प्रतिपत्तिरेका श्रवणाख्या, **अन्या** शास्त्रनिरूपितन्यायचिन्तानुगृहीतवेदान्तवाक्यजन्यतद्विषयनिर्णयरूपा मननाख्येत्यर्थः । **उक्तंहि सर्वापेक्षाधिकरणटीकायां—प्रथमा** तावदुपनिषद्वाक्यश्रवणमात्राद् भवति यां किलाचक्षते श्रवणमिति, **द्वितीया** चिन्तासहितात् तस्मादेवोपनिषद्वाक्याद्यामाचक्षते मननमितीति ॥ ३३ ॥ यद्यपि "सर्वथाऽपि त एवोभयलिङ्गादि"ति सूत्रमधिकरणान्तरपरत्वेन योजयितुं शक्यम्; प्रकरणान्तराधिकरणन्यायेन पूर्वपक्षान्तरोत्थानात्, तस्य च टीकायां प्रदर्शनात्, **ननु "यावज्जीवमग्निहोत्रं जुहुयादि"त्याचार्यग्रन्थस्य** दृष्टान्तवैषम्येण पूर्वाधिकरणस्थितनित्यविद्यार्थयज्ञादिप्रयोगैक्याक्षेपरूपत्वेन तस्यैवाक्षेपस्य पूर्वाधिकरणसङ्गत्यर्थत्वोपपत्तेश्च; तथापि खादिरादिषु नित्यानित्यविरोधपरिहारस्य पूर्वतन्त्रे क्षुण्णतया फल्गुस्तदवलम्बनः पूर्वपक्षः । अतः पूर्वसूत्रद्वयं प्रकरणान्तरन्यायालम्बनपूर्वपक्षोत्थापकतया तच्छेषत्वेन प्रवृत्तमित्यभिप्रेत्य न्यायनिर्णये विवरणाचार्यैः कृतमैकाधिकरण्यमाचार्यैरनुसृतम् । **ननु**—अत्र सिद्धान्ते प्रकरणान्तराधिकरणन्यायवैषम्यं किमुक्तं, किं मासाग्निहोत्रस्येवात्र यज्ञादेर्विधानमेव नास्तीति, किं वा धातुनोपात्तस्य विधानं नास्तीति । **नाद्यः;** विविदिषोद्देशेन यज्ञादिविधानाङ्गीकारात् । यद्युच्येत

चनेन ब्राह्मणा विविदिषन्ति' ( बृ० ४।४।२२ ) इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते, न तु जुहोतीत्यादिवदपूर्वमेषां रूपमुत्पादयतीति । स्मृतिलिङ्गमपि 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' ( ६।१ ) इति विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति । यस्यैतेऽष्टाचत्वारिंशत्संस्कारा इत्याद्या च संस्कारत्वप्रसिद्धिर्वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति । तस्मात्साध्विदमभेदावधारणम् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥

सहकारित्वस्यैवैतदुपोद्बलकं लिङ्गदर्शनमनभिभवं च दर्शयति श्रुतिर्ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' ( छा० ८।५।३ ) इत्यादिना । तस्माद्यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति निश्चितम् ॥ ३५ ॥
इत्यष्टममाश्रमकर्माधिकरणम् ॥

---

### भामती ।

विधिः प्रकरणैक्ये स्फुटतरप्रत्यभिज्ञाबलेन स्वरसं जह्यात् । प्रकरणान्तरेण तु विघटितप्रत्यभिज्ञानः स्वरसमजहत्कर्म भिनत्ति, इह तु सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुञ्जानो न जुहोतीत्यादिवदपूर्वमेषां रूपमुत्पादयितुमर्हति । नच—तत्रापि नैयमिकाग्निहोत्रे मासविधिर्नापूर्वाग्निहोत्रोत्पत्तिरिति—सांप्रतम्; होम एव साक्षाद्विधिश्रुतेः, कालस्य चानुपादेयस्याविधेयत्वात् । काले हि कर्म विधीयते न कर्मणि काल इत्युत्सर्गः, इह तु विविदिषायां

### वेदान्तकल्पतरुः ।

**मिति** । यत्र कर्मैव धातुनोपादायाख्यातेन विधीयते तत्र कर्मविधायकत्वस्वभावमपरित्यजन् विधिः कर्मान्तरं विदध्यात्, विविदिषावाक्ये तु न यज्ञादिधात्वर्थे विधिः श्रूयते, किं तु विविदिषायां यज्ञादयस्त्वन्यत्रैवोत्पन्ना आख्यातापरतन्त्रैर्यज्ञादिशब्दैरनूद्यन्ते । तत्र फलभूतविविदिषायां विध्ययोगादयं विधिर्यज्ञादींस्तस्यां विनियुञ्जानो न यज्ञादीन् भिनत्तीत्यर्थः । यदि प्रदेशान्तरोत्पन्नकर्मानुवादेन विविदिषासंबन्धविधिः स्यात्तर्हि कौण्डपायिनामयनेऽपि नित्याग्निहोत्रानुवादेन मासविधिरापद्येत, तत्राह—**न च तत्रापीति** । **ननु** होमएव साक्षाद्विधिश्रवणेऽपि "यदाहवनीये जुह्वति" इत्यत्र होमानुवादेनाहवनीयविधिर्दृष्टः, एवमत्रापि होमानुवादेन कालविधिः किं न स्यादत आह—**कालस्येति** । पुरुषानुष्ठेयविषयो हि विधिरननुष्ठेयं कालं न विदधाति, किंतु तस्मिन्कर्म विदधाति, आहवनीयस्य तु उपादेयत्वाद् युक्तं प्रदेशान्तरसिद्धकर्मानुवादेन विधानमित्यर्थः । **ननु** कालोऽपि विधीयते यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यादौ, तत्राह—**काले हीति** । तत्राप्यमावास्यादिकाले कर्मैव विधीयते इत्यर्थः । सायं जुहोतीत्यादौ कालोऽपि विधीयते, होमस्याग्निहोत्रं जुहोतीत्यनेनैव विहितस्यानुवादादत उक्तम्—**उत्सर्ग इति** । अन्यतः कर्मप्राप्तिरुत्सर्गस्यापवादिका, सा च सायमग्निहोत्र-

### कल्पतरुपरिमलः ।

प्रसिद्धस्य यज्ञादेः प्राप्तत्वेन तस्याप्राप्तं विद्याफलसंबन्धमात्रं विधीयत इति, इदं तत्रापि वक्तुं शक्यम्; प्रसिद्धस्यैवाग्निहोत्रस्य मासगुणसंबन्धमात्रं विधेयमिति । यदि तत्र काले कर्म विधीयत इति विहितस्य विधानायोगात् कर्मान्तरम्, तर्हीहापि फले कर्मविधानमिति तत एव न्यायात्कर्मान्तरत्वं वर्जनीयम् । **नापि द्वितीयः**; इह यज्ञादेर्विधाने विहितस्य पुनर्विधानं न संभवतीति न्यायतौल्ये च जाग्रति धातुनोपादाय विधानं नास्तीति वैषम्यस्याप्रयोजकत्वात् । धातुनोपादाने साध्यतया प्रतीतेः कर्मान्तरता भवति, नतु नाम्नोपादाने ततः सिद्धतया प्रतीतेरिति चेत् । यदि सिद्धतया प्रतीतिः, कथं तर्हि विधेयत्वम् ? यदि नाम्नोपात्तस्याविधेयत्वं कथं न कर्मान्तरत्वम् ? विहितस्य विधानायोगात्, तस्मादिह प्रकरणान्तरन्यायवैषम्यं न स्फुटमिति—**चेत्, उच्यते**; इह यज्ञादिशब्दोपात्तं कर्म यज्ञादेरन्यच्चेत्तत्किंरूपं कर्मेत्यवगन्तुं न शक्यते, इष्टिपशुसोमादिरूपाणां यज्ञादीनां मध्ये कैर्यज्ञादिभिः सादृश्यमवलम्ब्य प्रवृत्तया गौण्या वृत्त्या यज्ञादिशब्दप्रवृत्तिरित्यप्यवगन्तुं न शक्यते, यज्ञादिनाम्ना द्रव्ये देवताद्यतिदेशे सति देवतोद्देश्यकद्रव्यत्यागत्वादिरूपयज्ञादिशब्दप्रवृत्तिनिमित्तप्राप्तेरनिवार्यत्वेन यज्ञादिभिन्नत्वमपि विधेयस्य कर्मणः समर्थयितुं न शक्यते । तस्मादिह यज्ञादिसाधारणशब्दानां "यज्ञोऽध्ययनं दानमिति प्रथम" इत्यादिश्रुतिष्विव प्रसिद्धयज्ञादिपरत्वमेव युक्तं, न मासाग्निहोत्रनामवदप्रसिद्धपरत्वमिति प्रकरणान्तरन्यायवैषम्यमिह विवक्षितम् । तदिदं यज्ञादयस्त्वन्यत्रैवोत्पन्ना आख्यातापरतन्त्रैर्यज्ञादिशब्दैरनूद्यन्त इति ग्रन्थेन सूचितम् । **तत्राप्यमावास्यादिकाल इति** । एवंच यदाग्नेयवाक्यममावास्यायामेकस्याग्नेययागस्य पौर्णमास्यामन्यस्य च विधायकतया वाक्यद्वयतामापद्यत इति भावः । **सायं जुहोतीत्यादाविति** । यद्यप्यग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्र

( ९ अधिकरणम् ) **अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

विधुरादीनां द्रव्यादिसंपद्रहितानां चान्यतमाश्रमप्रतिपत्तिहीनानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति किंवा नास्तीति संशये नास्तीति तावत्प्राप्तम्; आश्रमकर्मणां विद्याहेतुत्वावधारणादाश्रमकर्मासंभवाच्चैतेषामिति, एवं प्राप्त इदमाह—अन्तरा चापि तु अनाश्रमित्वेन वर्तमानोऽपि विद्यायामधिक्रियते । कुतः ? तद्दृष्टेः, रैक्ववाचक्नवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः ॥ ३६ ॥

**अपि च स्मर्यते ॥ ३७ ॥**

संवर्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यत इतिहासे ॥ ३७ ॥ ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तं, का नु खलु प्राप्तिरिति साऽभिधीयते—

**विशेषानुग्रहश्च ॥ ३८ ॥**

तेषामपि च विधुरादीनामविरुद्धैः पुरुषमात्रसंबन्धिभिर्जपोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः संभवति । तथाच स्मृतिः—जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इत्यसंभवदाश्रमकर्मणोऽपि जप्येऽधिकारं दर्शयति । जन्मान्तरानुष्ठितैरपि चाश्रमकर्मभिः संभवत्येव विद्याया अनुग्रहः । तथाच स्मृतिः—'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (६।४५) इति जन्मान्तरसंचितानपि

---

**भामती ।**

विधिश्रुतिः न यज्ञादौ । तानितु सिद्धान्येवानूद्यन्त इत्यैककर्म्यात्संयोगपृथक्त्वं सिद्धम् । स्मृतिमुक्त्वा लिङ्गदर्शन मुक्तम् ॥ ३४ ॥ ३५ ॥ इत्यष्टममाश्रमकर्माधिकरणम् ॥

**अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥** यदि विद्यासहकारिण्याश्रमकर्माणि, हन्त भोः विधुरादीनामनाश्रमिणामनधिकारो विद्यायाम्, अभावात्सहकारिणामाश्रमकर्मणामिति प्राप्त उच्यते—नात्यन्तमकर्माणो विधुररैक्ववाचक्नवीप्रभृतयः । सन्ति हि तेषामनाश्रमित्वेऽपि जपोपवासदेवताराधनादीनि कर्माणि । कर्मणां च सहकारित्वमुक्तमाश्रमकर्मणामुपलक्षणत्वादिति न तेषामनधिकारो विद्यासु । **जन्मान्तरानुष्ठितैरपि चेति** । न खलु विद्याकार्ये कर्मणामपेक्षा, अपितु उत्पादे । उत्पादयन्ति च विविदिषोपहारेण कर्माणि विद्याम् । उत्पन्नविविदिषाणां पुरुषधौरेयाणां विधुरसंवर्तप्रभृतीनां कृतं कर्मभिः । यद्यपि चेह जन्मनि कर्माण्यननुष्ठितानि; तथापि विविदिषातिशयदर्शनात्प्राचि भवेऽनुष्ठितानि तैरिति गम्यत इति । **ननु** यथाऽधीतवेद एव धर्मजिज्ञासायामधिक्रियते नानधीतवेद इह जन्मनि, तथेह जन्मन्याश्रमकर्मोत्पादितविविदिष एव विद्यायामधिकृतो नेतर इत्यनाश्रमिणामनधिकारो विधुरप्रभृतीनामित्यत आह—

**वेदान्तकल्पतरुः ।**

मित्यत्र संदिग्धा विशिष्टविधिसंभवात्तथा चोत्सर्गोऽनपोदित इत्यर्थः । **स्मृतिरुक्तेति** । भाष्ये इति शेषः ॥ ३४ ॥ ३५ ॥ इत्यष्टममाश्रमकर्माधिकरणम् ॥[1]

**अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥** आश्रमकर्मसापेक्षैव विद्या फलप्रदेति वदन्प्रष्टव्यः किं फले अपेक्षा, उतोत्पत्तौ, नाद्य इत्याह—**न खलु विद्येति** । **द्वितीय**माशङ्क्य परिहरति—**ननु यथेत्यादिना** । प्रतिषेधाभावमात्रेणा-

**कल्पतरुपरिमलः ।**

प्राप्तस्यैव होमस्य फले विधिरितिवदिह काले विधिरिति वक्तुं शक्यम्; तथाप्यभ्युपेत्य परिहारं दर्शयितुमियं शङ्का ॥ ३४ ॥ ३५ ॥ इत्यष्टममाश्रमकर्माधिकरणम् ॥

**अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥** यदि नित्यानामेव यज्ञादीनां विनियोगभेदेन विद्यार्थत्वं, तर्हि तद्रहितानां विधुरादीनां न विद्याधिकार इति संगतिः । ते विद्यायामधिक्रियन्ते न वेति तेषां जपयज्ञदानादिकर्मसद्भावादनाश्रमित्वनिन्दनाच्च संशयः । तेषामाश्रमकर्माभावादनाश्रमिकर्मभ्योऽपि ब्रह्मविद्यासंभवे बह्वायाससाध्यानामाश्रमकर्मणां ब्रह्मवि-

---

१ तत्र सूत्राणि ४—विहितत्वाच्चाश्रमकर्मापि ३२ सहकारित्वेन च ३३ सर्वथापि त एवोभयलिङ्गात् ३४ अनभिभवं च दर्शयति ३५ ॥

संस्कारविशेषानुग्रहीतृन्विद्यायां दर्शयति । दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु । तस्माद्विधुरादीनामप्यधिकारो न विरुध्यते ॥ ३८ ॥

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

अतस्त्वन्तरालवर्तित्वादितरदाश्रमवर्तित्वं ज्यायो विद्यासाधनम्, श्रुतिस्मृतिसंदृष्टत्वात् । श्रुतिलिङ्गाच्च, 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' ( बृ० ४।४।९ ) इति । 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्' इति च स्मृतिलिङ्गात् ॥ ३९ ॥ इति नवमं विधुराधिकरणम् ॥

( १० अधिकरणम् ) **तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥४०॥**

सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम् । तांस्तु प्राप्तस्य कथंचित्ततः प्रच्युतिरस्ति नास्ति वेति संशयः । पूर्वकर्मस्वनुष्ठानचिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्यात्; विशेषाभावादिति । एवं प्राप्त उच्यते—तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदप्यतद्भावो न ततः प्रच्युतिः स्यात् । कुतः ? नियमात्तद्रूपाभावेभ्यः । तथाहि—'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' ( छा० २।२३।१ ) इति 'अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत्' इति 'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् । आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि' इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति । यथाच 'ब्रह्मचर्यं समाप्य गृही भवेत्' ( जा० ४ ) 'ब्रह्मचर्यादेव प्रव्रजेत्' ( जा० ४ ) इति चैवमादीन्यारोहरूपाणि वचांस्युपलभ्यन्ते, नैवं

---

**भामती ।**

**दृष्टार्था चेति** । अविद्यानिवृत्तिर्विद्याया दृष्टोऽर्थः । सचान्वयव्यतिरेकसिद्धो न नियममपेक्षत इत्यर्थः । **प्रतिषेधो** विघातस्तस्याभाव इत्यर्थः ॥३६॥३७॥३८॥ यद्यनाश्रमिणामप्यधिकारो विद्यायां, कृतं तर्ह्याश्रमैरतिबहुलायासैरित्याशङ्क्याह—**अतस्त्वितरज्ज्यायो लिङ्गाच्च** । स्वस्थेनाश्रमित्वमास्थेयम् । दैवात्पुनः पत्न्यादिवियोगतः सत्यनाश्रमित्वे भवेदधिकारो विद्यायामिति । श्रुतिस्मृतिसंदर्भेण विविदिषन्ति यज्ञेनेत्यादिना ज्यायस्त्वावगतेः श्रुतिलिङ्गात्स्मृतिलिङ्गाच्चावगम्यते । तेनैति पुण्यकृदिति श्रुतिलिङ्गम्, अनाश्रमी न तिष्ठेतेत्यादि च स्मृतिलिङ्गम् ॥ ३९ ॥ **इति नवमं विधुराधिकरणम् ॥**

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥** आरोहवत्प्रत्यवरोहोऽपि कदाचिदूर्ध्वरेतसां स्यादिति मन्दाशङ्कानिवारणार्थमिदमधिकरणम् । **पूर्वधर्मेषु** यागहोमादिषु । रागतो वा गृहस्थोऽहं पत्न्यादिपरिवृतः स्यामिति । नियमं व्याचष्टे—**तथाहि—अत्यन्तमात्मानमिति** । अतद्रूपतामारोहतुल्यताभावं व्याचष्टे—

**वेदान्तकल्पतरुः ।**

प्यर्थिनमधिकरोतीति भाष्यमयुक्तम्, अप्रतिषिद्धानामपि केषांचिद् विद्योदयादर्शनादत आह—**प्रतिषेधो विघात इति** । **विघातः** प्रतिबन्धः तदभावादनुष्ठितसाधनस्य विद्योत्पद्यत इत्यर्थः । स्मृतौ मैत्र इत्यहिंसको ब्राह्मणः । ततश्च जपमात्रात्तस्य पुरुषार्थसिद्धिरित्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ **इति नवमं विधुराधिकरणम् ॥**[1]

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥** यदा नाश्रमकर्माणि विद्यासाधनं, तदा आरूढपतितस्य पूर्वाश्रमप्रस्थितस्य कर्म किमु वक्तव्यमिति सङ्गतिः । पूर्वकर्मस्वनुष्ठानचिकीर्षयेत्यादिभाष्यं व्याचष्टे—

**कल्पतरुपरिमलः ।**

यार्थत्वेन विधानस्य वैयर्थ्यप्रसङ्गाच्च ते नाधिक्रियन्त इति पूर्वः पक्षः । **तदभावादनुष्ठितसाधनस्येति** । यदि जन्मान्तरानुष्ठितसाधनः प्रारब्धवशादात्यन्तिकहीनजातौ जातस्तस्यापि प्रतिबन्धाभावे विद्योत्पद्यत इत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ **इति नवमं विधुराधिकरणम् ॥**

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ किमु वक्तव्यमिति** । अनाश्रमवर्ति-

---

१ तत्र सूत्राणि ४—अन्तरा चापि तु तद्दृष्टेः ३६ अपि च स्मर्यते ३७ विशेषानुग्रहश्च ३८ अतस्त्वितरज्ज्यायो लिङ्गाच्च ३९ ॥

प्रत्यवरोहरूपाणि। न चैवमाचाराः शिष्टा विद्यन्ते। यत्तु पूर्वकर्मस्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति, तदसत्; 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' (३।३५) इति, स्मरणात्। न्यायाच्च। यो हि यं प्रति विधीयते स तस्य धर्मो न तु यो येन स्वनुष्ठातुं शक्यते; चोदनालक्षणत्वाद्धर्मस्य। नच रागादिवशात्प्रच्युतिः; नियमशास्त्रस्य बलीयस्त्वात्। जैमिनेरपीत्यपिशब्देन जैमिनिबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय ॥ ४० ॥ इति दशमं तद्भूताधिकरणम् ॥

(११ अधिकरणम्) **न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत किं तस्य 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्येतत्प्रायश्चित्तं स्यादुत नेति। नेत्युच्यते; यदप्यधिकारलक्षणे निर्णीतं प्रायश्चित्तम् 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' (जै० सू० ६।८।२१) इति, तदपि न नैष्ठिकस्य भवितुमर्हति। किं कारणम्? 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इत्यप्रतिसमाधेयपतनस्मरणाच्छिन्नशिरस इव प्रतिक्रियानुपपत्तेः, उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत्प्रायश्चित्तम् ॥ ४१ ॥

**उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

अपि त्वेक आचार्या उपपातकमेवैतदिति मन्यन्ते यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्य

---

**भामती।**

**यथाच ब्रह्मचर्यं समाप्येति।** अभावं शिष्टाचाराभावं विभजते—**न चैवमाचाराः शिष्टा इति।** अतिरोहितार्थमन्यत् ॥ ४० ॥ इति दशमं तद्भूताधिकरणम् ॥

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥** प्रायश्चित्तं न पश्यामीति नैष्ठिकं प्रति प्रायश्चित्ताभावस्मरणान्नैर्ऋतगर्दभालम्भः प्रायश्चित्तमुपकुर्वाणकं प्रति। तस्माच्छिन्नशिरस इव पुंसः प्रतिक्रियाभाव इति पूर्वः पक्षः। **सूत्रयोजना तु**—न चाधिकारिकमधिकारलक्षणे प्रथमकाण्डे निर्णीतम् 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्त-

**वेदान्तकल्पतरुः।**

**पूर्वधर्मेष्वित्यादिना। अरण्यमिति। यत्पदमाश्रमस्ततो** नैनमियात्पुनस्ततो नेयान्नावर्तेतेत्यर्थः ॥ ४० ॥ **इति दशमं तद्भूताधिकरणम् ॥**[1]

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥** प्रत्यवरोहोऽशास्त्रीय इत्युक्तम्, स यदि क्रियते, तर्हि किमस्ति प्रायश्चित्तं न वेति चिन्त्यते। ब्रह्मचारित्वान्नैष्ठिकस्यापि नैर्ऋतालम्भप्राप्तेः पूर्वपक्षाभावमाशङ्क्याह—**प्रायश्चित्तमिति। अवकीर्णिपशुश्च तद्वदिति।** उपनयनहोमा आहवनीये कार्या "यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतो भवती"त्याहवनीयस्य सर्वहोमार्थत्वादिति प्राप्य षष्ठे सिद्धान्तितम्। आधानं हि "जातपुत्र आदधीते"ति वचनात् कृतदारस्य विहितम्। उपनयनकाले च दाराभावादाधानमप्राप्तकालम्। तदभावाच्चाहवनीयाभावः।

**कल्पतरुपरिमलः।**

त्वादाश्रमवर्तित्वं ज्याय इति पूर्वसूत्रेण कथितत्वादिति भावः। अरण्यमियादिति पदमिति श्रुतिं व्यवहितान्वयेन पदशब्दार्थकथनेन व्याचष्टे—**अरण्यमिति यत्पदमिति ॥ ४० ॥ इति दशमं तद्भूताधिकरणम् ॥**

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥** अवकीर्णिपश्वधिकरणसूत्रे तद्वदित्यतिदेशं विपरीतमुपनयनहोमाधिकरणं दर्शयति—**उपनयनहोमा इति। आहवनीये कार्या इति।** नच—"क्षौमे वसानावग्निमादधीयाता"मित्याधाने पत्नीसत्त्वश्रवणादुपनयनात्प्राग् दारपरिग्रहाभावाद् आधानासंभवेन आहवनीयो न संभवतीति—शङ्कनीयम्; तादर्थ्येनोपनयनात्प्रागेव दारपरिग्रहसंभवात्, स्नात्वा भार्यामधिगच्छेदिति वचनस्यापत्यार्थदारपरिग्रहविषयत्वोपपत्तेरिति भावः। **जातपुत्र आदधीतेति वचनादिति।** जायामवाप्य दशमेऽहन्यग्नीनादधीतेत्याधानस्य कालान्तरविधानसत्त्वेऽपि सोऽपि कालः कृतदारस्यैव संभवति। न चोपनयनात्प्राग् दारपरिग्रहः संभवति; "स्नात्वा भार्यामधिगच्छेदि"ति समावर्तनोत्तरकालतावचनस्य रत्यपत्यधर्मरूपसर्वप्रयोजनार्थदारपरिग्रहविषयत्वाद्, "धर्मे चार्थे च नातिचरितव्ये"ति वचनादिति भावः। **एवमवकीर्णिपशुरपीति।** अवकीर्णी स्नात्वा भार्यामधिगम्याग्नीनाधायाहवनीये

---

[1] तत्र सूत्रम् १—तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ४० ॥

विशीर्यंत न तन्महापातकं भवति; गुरुतल्पादिषु महापातकेष्वपरिगणनात् । तस्मादुपकुर्वाणवन्नैष्ठिकस्यापि प्रायश्चित्तस्य भावमिच्छन्ति ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च । अशनवत् । यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनःसंस्कारश्चैवमिति । ये हि प्रायश्चित्तस्याभावमिच्छन्ति तेषां न मूलमुपलभ्यते ये तु भावमिच्छन्ति तेषां ब्रह्मचार्यवकीर्णीत्येतदविशेषश्रवणं मूलम् । तस्माद्भावो युक्ततरः । तदुक्तं प्रमाणलक्षणे—'समा विप्रतिपत्तिः स्यात्' (जै० सू० १।३।८) 'शास्त्रस्था वा तन्निमित्तत्वात्' (जै० सू० १।३।९) इति । प्रायश्चित्ताभावस्मरणं त्वेवं सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यम् । एवं भिक्षुवैखानसयोरपि 'वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत्' 'भिक्षुर्वानप्रस्थवत्सोमवल्लिवर्जं स्वशास्त्रसंस्कारश्च' इत्येवमादि प्रायश्चित्तस्मरणमनुसर्तव्यम् ॥ ४२ ॥ इत्येकादशमाधिकारिकाधिकरणम् ॥

## भामती ।

कालत्वात्' इत्यनेन यत्प्रायश्चित्तं तन्न नैष्ठिके भवितुमर्हति । कुतः ? आरूढो नैष्ठिकमिति स्मृत्या पतनश्रुत्यनुमानात्तत्प्रायश्चित्तायोगात् ॥ ४१ ॥ श्रुतिस्तावत्स्वरसतोऽसङ्कुचद्वृत्तिर्ब्रह्मचारिमात्रस्य नैष्ठिकस्योपकुर्वाणस्य चाविशेषेण प्रायश्चित्तमुपदिशति साक्षात् । प्रायश्चित्तं न पश्यामीति तु स्मृतिः । तस्यामपि साक्षात्प्रायश्चित्तं न कर्तव्यमिति प्रायश्चित्तनिषेधो न गम्यते, न पश्यामीति तु दर्शनाभावेन सोऽनुमातव्यः । तथाच स्मृतिर्निषेधार्थेति अनुमाय तदर्था श्रुतिरनुमातव्या, श्रुतिस्तु सामान्यविषया विशेषमुपसर्पन्ती शीघ्रप्रवृत्तिरिति । स्मार्तं प्रायश्चित्तादर्शनं तु यत्नगौरवार्थम् । **एतदुक्तं भवति**—कृतनिर्णेजनैरपि एतैर्न संख्यानं कर्तव्यमिति । **सूत्रार्थस्तु**—उपपूर्वमपि पातकं नैष्ठिकस्यावकीर्णित्वं न महापातकमपिरेवकारार्थे । अत एके प्रायश्चित्तभावमिच्छन्तीति । आचार्याणां विप्रतिपत्तौ विशेषाभावात्साम्यं भवेत् । शास्त्रस्था या वा प्रसिद्धिः सा ग्राह्या; शास्त्रमूलत्वात् । उपपादितं च प्रायश्चित्तभावप्रसिद्धेः शास्त्रमूलत्वमिति । सुगममितरत् ॥ ४२ ॥ इत्येकादशमाधिकारिकाधिकरणम् ॥

## वेदान्तकल्पतरुः ।

तस्माल्लौकिकेऽग्नाविति एवमवकीर्णिपशुरपीत्यर्थः ॥ ४१ ॥ श्रुतिस्तावदुपदिशति साक्षादित्यन्वयः । **ननु** प्रायश्चित्तसद्भावश्रुतिः सामान्यविषया, तदभावविषया स्मृतिस्तु नैष्ठिकविशेषविषया प्रबलेति, नेत्याह—**प्रायश्चित्तमिति ।** श्रुते नैष्ठिके प्रायश्चित्तं बोधयितुं सामान्यमेकमेव व्यवधानं स्मृतेस्तु तस्मिंस्तदभावं बोधयितुं निषेधकल्पना, ततस्तन्मूलश्रुतिकल्पनेति व्यवधानद्वयम्, अतो दुर्बला स्मृतिः श्रुत्यनुसारेण नेतव्येत्यर्थः । यत्नगौरवार्थं प्रायश्चित्तनिषेधश्चेत्तर्हि किं यत्नगौरवं तदाह—**कृतनिर्णेजनैरिति । संख्यानं** संप्रतिपत्तिः संव्यवहारः अन्यैर्व्यवहर्तृभिरवकीर्णिनि व्यवहाराभावे यत्नगौरवं कर्तव्यमिति स्मृत्यर्थ इति भावः । समा विप्रतिपत्तिः स्या( जै. सू. अ. १ पा. ३ सू. ८ । )दिति यववराहाधिकरणपूर्वपक्षसूत्रम् । यववराहशब्दार्थावधारणे आर्याणां म्लेच्छानां च विप्रतिपत्तिः समेत्यर्थः । एष दृष्टान्तः । प्रकृते दार्ष्टान्तिके योजयति—**आचार्याणामिति ।** शास्त्रस्था वा तन्निमित्तत्वा(जै. सू. अ. १ पा. ३ सू. १९ । )दिति सिद्धान्तसूत्रं, तद्योजयति—**शास्त्रस्था येति ।** यववराहाधिकरणं लिङ्गभूयस्त्वा(व्या. सू. अ. ३ पा. ३ सू. ४४ । )दित्यत्रानुक्रान्तम् । **ननु** प्रायश्चित्ताभावप्रसिद्धिरपि स्मृतिमूलैवेति, नेत्याह—**उपपादितं चेति ।** विप्रकृष्टार्थायाः स्मृतेः सकाशात् सन्निकृष्टार्थश्रुतेर्बलीयस्त्वात् प्रायश्चित्तभावप्रसिद्धेस्तन्मूलत्वमुपपादितम् इत्यर्थः ॥ ४२ ॥ **इति एकादशमाधिकारिकाधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

अवकीर्णिप्रायश्चित्तपशुं करोतित्यधिकाशङ्का । कृतप्रायश्चित्तेनैव दारपरिग्रहः कार्यः; "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेदि"ति वचनात् । अतोऽवकीर्णिपशुरप्युपनयनहोमवल्लौकिकाग्नाविति सिद्धान्तः । **केचित्तु**—सौत्रस्य तद्वदित्यस्य यथा स्थपतीष्टिर्लौकिकाग्नौ तथेत्यव्यवहितपूर्वाधिकरणन्यायातिदेशमर्थ**मिच्छन्ति ।** आचार्याणां तु व्यवहितोपनयनहोमाधिकरणन्यायातिदेशं तदर्थं वर्णितवतामयमभिप्रायः—आधानस्याप्राप्तकालत्वादिति न्यायसाम्यमुपनयनहोमाधिकरणेनैव, न तु स्थपतीष्ट्यधिकरणेन । तत्र ह्यत्रैवर्णिकेन निषादेन कृतमप्याधानमाहवनीयसंस्काराधायकं न भवति; तस्याधाने विशेषवचनाभावादिति न्यायः । तस्मादव्यवहितन्यायातिदेशाऽसंभवात् पानव्यापच्च तद्वदिति ( जै. अ. ३ पा. ४ सू. ३८ ) सूत्रगतस्येवास्य तद्वच्छब्दस्य व्यवहितन्यायातिदेशकत्वं युक्तमिति ॥ ४१ ॥ ४२ ॥ **इति एकादशमाधिकारिकाधिकरणम् ॥**

---

१ तत्र सूत्रे २—न चाधिकारिकमपि पतनानुमानात्तदयोगात् ४१ अपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ४२ ॥

( १२ अधिकरणम् ) **बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

यद्यूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं, यदि वोपपातकमुभयथापि शिष्टैस्ते बहिष्कर्तव्याः। 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इति 'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम्। उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत्' इति चैवमादिनिन्दातिशयस्मृतिभ्यः। शिष्टाचाराच्च। नहि यज्ञाध्ययनविवाहादीनि तैः सहाचरन्ति शिष्टाः ॥ ४३ ॥ इति द्वादशं बहिरधिकरणम् ॥

## भामती।

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४६ ॥** यदि नैष्ठिकादीनामस्ति प्रायश्चित्तं तत्किमेतैः कृतनिर्णेजनैः संव्यवहर्तव्यमुत नेति। तत्र दोषकृतत्वादसंव्यवहारस्य प्रायश्चित्तेन तन्निबर्हणादनिबर्हणे वा तत्करणवैयर्थ्यात्संव्यवहार्या एवेति प्राप्त उच्यते—**बहिस्तूभयथापि स्मृतेराचाराच्च।** निषिद्धकर्मानुष्ठानजन्यमेनो लोकद्वयेऽप्यशुद्धिमापादयति द्वैधम्। कस्यचिदेनसो लोकद्वयेऽप्यशुद्धिरपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैः। कस्यचित्तु परलोकाशुद्धिमात्रमपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैः, इहलोकाशुद्धिस्त्वेनसाऽऽपादिता न शक्याऽपनेतुम्। यथा स्त्रीबालादिघातिनाम्। **यथाहुः**—'विशुद्धानपि धर्मतो न संपिबेत्' इति। तथाच 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्' कामतः कृतमपि। बालघ्नादिस्तु कृतनिर्णेजनोऽपि वचनादव्यवहार्य इह लोके जायत इति। वचनं च बालघ्नांश्चेत्यादि। तस्मात्सर्वमवदातम् ॥ ४३ ॥ **इति द्वादशं बहिरधिकरणम् ॥**

## वेदान्तकल्पतरुः।

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ उत नेतीति।** चिन्त्यते इति शेषः। सङ्गतिगर्भं पूर्वपक्षमाह—**तत्रेति।** कृतप्रायश्चित्तानामवकीर्णिनां संव्यवहार्यत्वे तैः सह कृतं श्रवणादिकं विद्यासाधनं न वेति चिन्ताप्रयोजनम्। सर्वपातकमिह परत्र वाऽशुद्धिं जनयति। तत्र नैष्ठिकादीनामाश्रमच्युतेर्बहुनिन्दादर्शनात् तज्जन्यपापापूर्वे प्रायश्चित्तेन निवृत्तेऽपि तज्जन्याऽस्मिन् लोके शिष्टैरसंव्यवहार्यत्वरूपाऽशुद्धिरनुवर्तते। नच वाच्यं निवृत्ते पापे कथं तज्जन्याऽशुद्धिरनुवर्ततेति; निमित्तनिवृत्तावपि कार्यानुवृत्तेर्बहुलमुपलम्भादित्यभिप्रेत्य सिद्धान्तमाह—**निषिद्धेत्यादिना।** निषिद्धकर्मत्रितयात्तदनुष्ठानजन्यमेनः पापापूर्वं लोकद्वयेऽप्यशुद्धिं तावदापादयति। तच्च **द्वैधं** द्विप्रकारकम्। तदेव दर्शयति—**कस्यचिदित्यादिना।** यत्याद्याश्रमच्युतेरैहलौकिकाशुद्ध्यापादकत्वे दृष्टान्तमाह—**यथा स्त्रीबालादिति।** बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संपिबेत्॥ इति मनुवचनम्। **न संपिबेत्** अन्योन्यं गृहे भोजनादिसंव्यवहारं न कुर्यादित्यर्थः। मनुवचनव्याख्यानरूपं याज्ञवल्कीयवचनम्—प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्। कामतोऽव्यवहार्यस्तु वचनादिह जायते॥ इति। तत्राव्यवहार्य इत्यकारप्रश्लेषं कृत्वा व्याख्यायोदाहरति—**तथा चेति।** अज्ञानकृतं यदेनो भवेद्यच्च कामतः कृतं तदुभयं प्रायश्चित्तैरपैतीतीत्येवमर्थतया व्याचष्टे—**कामतः कृतमपीति।** कामतः कृतब्रह्मवधादिग्रहणं बालवधाद्युपलक्षणार्थं मत्वा श्लोकशेषं व्याचष्टे—**बालघ्नादिस्त्विति।** वचनादित्युक्तं, किं तदित्यत आह—**वचनमिति** ॥ ४३ ॥ **इति द्वादशं बहिरधिकरणम् ॥**[1]

## कल्पतरुपरिमलः।

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ बहुलमुपलम्भादिति।** तथाच पापे निवृत्तेऽपि ततो जाताया अशुद्धेरनुवृत्तिरुपपद्यत इति भावः। तथैव चापस्तम्बस्मृतिः—"नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हन्यत" इति। **संपिबेदिति।** संवसेदिति पाठान्तरम्। **व्याख्यायोदाहरतीति।** व्याख्यानेनैवार्थत उदाहरति, नतु श्लोकरूपेणेत्यर्थः। **कामतः कृतमपीति।** अनेन श्लोकेन कामत इति पदं कृतमित्यनेनानुषक्तेनान्वितं सदपैतीति क्रियया संबध्यत इति दर्शितम्। अव्यवहार्य इत्यादिश्लोकशेषो बालहन्त्रादिविषयतया टीकायां योजितः। श्लोकस्य ब्रह्महत्यादिपातकविषयत्वात् तच्छेषस्य कथं बालहन्त्रादिविषयत्वं स्यादित्याशङ्क्याह—**बालवधाद्युपलक्षणार्थं मत्वेति।** मत्वेत्यनेन श्लोकशेषस्य ब्रह्मवधादिविषयत्वमपि वक्तुं शक्यम्; महापातककृतामपि प्रायश्चित्तेनैहिकशुद्ध्यभावात्। बालहन्त्रादीनामैहिकशुद्ध्यभावे शरणागतबालस्त्रीघातकान् संवसेन्न तु। चीर्णव्रतानपि सतः कृतघ्नसहितानिमान्॥ इति याज्ञवल्कीयवचनान्तरसत्त्वादिति सूचितम्। **केचित्तु**—याज्ञवल्क्यश्लोके व्यवहार्य इति पदच्छेदं कृत्वा कामकृते महापातके "विहितं यदकामानां कामात्तद् द्विगुणं भवेदि"ति वचनबलादिह व्यवहार्यो जायते; अन्यथा द्विगुणप्रायश्चित्तवैयर्थ्यापत्तेः, परत्र नरक-

१ तत्र सूत्रम् १—बहिस्तूभयथापि स्मृतेराचाराच्च ४३ ॥

## ( १३ अधिकरणम् ) स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

अङ्गेषूपासनेषु संशयः । किं तानि यजमानकर्माण्याहोस्विदृत्विक्कर्माणीति । किं तावत्प्राप्तम् ? यजमानकर्माणीति । कुतः ? फलश्रुतेः । फलं हि श्रूयते—'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधं सामोपास्ते' ( छा० २।३।२) इत्यादि । तच्च स्वामिगामि न्याय्यम्; तस्य साङ्गे प्रयोगेऽधिकृतत्वात् । अधिकृताधिकारत्वाच्चैवंजातीयकस्य । फलं च कर्तर्युपासनानां श्रूयते—'वर्षत्यस्मै य उपास्ते' इत्यादि । नन्वृत्विजोऽपि फलं दृष्टम् 'आत्मने वा

---

### भामती ।

**स्वामिनः फलश्रुतेरित्यात्रेयः ।** प्रथमे काण्डे शेषलक्षणे तथाकाम इत्यत्रर्त्विक्संबन्धे कर्मणः सिद्धे किं कामो

### वेदान्तकल्पतरुः ।

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥** पूर्वत्र कृतप्रायश्चित्तः संव्यवहार्य इत्युत्सर्गस्य निन्दातिशयवचनेन बाधः कृतः, एवमिहाप्याश्रयाङ्गानुष्ठातुरेवाश्रितोपास्तिकर्तृत्वमित्युत्सर्गो वर्षति हास्मै य उपास्त इत्यादिवचनात् फलभाज एव यजमानस्य साधने कर्तृत्वप्रतिपादकाद् बाध्यत इति सङ्गतिः । **पतितैर्व्यवहारे हि कदाचित्स्युस्त ऋत्विजः । आर्त्विज्यत्वादुपास्तीनां तत्संपर्कं ततस्त्यजेत् ॥** इति प्रकृतोपयोगः । शास्त्रपौनरुक्त्यमाशङ्क्याह—**प्रथमे काण्डे इति ।** ज्योति-

### कल्पतरुपरिमलः ।

जननशक्त्या सह दुरितमनुवर्तत एव । नास्यास्मिँल्लोके इत्यादिवचनं तु स्वाश्रमप्रच्युतोर्ध्वरेतोविषयम् । नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनाम् । शुद्धानामपि लोकेऽस्मिन् प्रत्यापत्तिर्न विद्यते ॥ इति कौशिकवचनैकार्थ्यात्—**इत्याहुः** ॥ ४३ ॥ **इति द्वादशं बहिरधिकरणम् ॥**

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥ आश्रितोपास्तिकर्तृत्वमिति ।** अत्रोपास्तिपदं प्रकृताभिप्रायं विवक्षितं, न तूत्सर्गशरीरप्रविष्टम्; एतदधिकरणसिद्धान्तस्थितेः प्राक् तथोत्सर्गसंप्रतिपत्त्यभावात् । यदि किंचिज्जायमानाङ्गाश्रितमुपासनं यजमानेन कर्तव्यमिति संप्रतिपत्तिः स्यात्, तदा तत्र सिद्धमुत्सर्गमवलम्ब्योद्गातृकर्तृकाङ्गाश्रितोपासनस्योद्गातृकर्तृकत्वे प्राप्ते तस्यापवादः क्रियेत, तथा नास्ति संप्रतिपत्तिः । तथाभूतोपासनसद्भावे तस्य ऋत्विजापि कर्तुं शक्यतया "तस्मै हि परिक्रीयत" इति सिद्धान्तहेतुबलेन तस्य ऋत्विक्कर्तृकत्वस्यैव प्राप्तेः । तस्मादङ्गाश्रितमङ्गकर्त्रा कर्तव्यमित्येवोत्सर्गशरीरं विवक्षितम् । दृष्टं हि "ममाग्ने वर्चः" इति मन्त्रस्य प्रत्यगाशीष्ट्वेन याजमानतौचित्येऽपि सूक्तवाकमन्त्रप्रतिपाद्यायुरादिफलन्यायेन विवक्षितस्य तत्प्रतिपाद्यफलस्य यजमानगामित्वेऽप्यन्वाधानकर्त्रा अध्वर्युणैवान्वाधानकरणमन्त्रतया तदङ्गस्यापि वक्तव्यत्वम् । तस्मादिहोपास्तिग्रहणमविवक्षितम् । यदि तद्विवक्षितं समर्थनीयं, तदा लिङ्गभूयस्त्वाधिकरणविचारिते विद्यामयेऽग्नावयं वाव लोक एषोऽग्निश्चित इति भूलोकदृष्टिर्मनुष्या यजुष्मत्य इष्टका इत्यादिनेष्टकादिषु मनुष्यादिदृष्टिश्च विधीयत इति तत्रोत्सर्गसंप्रतिपत्तिर्द्रष्टव्या । तत्र ह्येवं "वंविदे सर्वाणि भूतानि चिन्वन्ती"ति वचनात् सर्वभूतान्तर्गतस्य विदुषोऽपि स्ववृत्तिरूपेष्टकाचयनकर्तृत्वमस्ति । अग्नितदङ्गेष्टकाश्रितभूलोकतन्मध्यगतमनुष्यदृष्ट्याद्युपासनाकर्तृत्वमप्यस्ति । "बको दाल्भ्य" इत्यादिलिङ्गवत्सूपासनेषूत्सर्गसिद्धिरास्थेया । अस्मिन् पूर्वपक्षे "तं ह बको दाल्भ्य" इत्यादिलिङ्गस्य पूर्वपक्षन्यायेन प्रत्याख्यानं तदवलम्बनप्रवृत्तमुत्सर्गमभ्युपगम्य तदपवादोक्तेः यासूपास्तिषु तदपवादोऽस्ति तावन्मात्रविषय एव च याजमानत्वविचारोपास्तिविषयः, आद्यपक्षे तु सर्वोपास्तिविषयः । तं ह बक इत्यादिलिङ्गस्य च पूर्वपक्षन्यायेन प्रत्याख्यानं, नतु द्वितीयपक्ष इव न्यायानादरः । अग्रे तमुद्गीथं बको नामेत्यादिशङ्कापरिहारग्रन्थे न्यायेन लिङ्गप्रत्याख्यानमप्याद्यपक्षाभिप्रायम् । **वर्षति हास्मै य उपास्त इत्यादिवचनादिति ।** न केवलमिदं वचनं फलोपासनासामानाधिकरण्यप्रतिपादनादुत्सर्गस्यापवादकं, किंतु उपास्त इत्येकवचनबलादपि । अत्र ह्युपास्त इत्यनेन वृष्टौ पञ्चविधं सामोपासीतेति उपक्रान्तं हिङ्कारप्रस्तावोद्गीथप्रतीहारनिधनेषु पुरोवातमेघप्रादुर्भाववृष्टिविद्युद्गर्जितयुगलदृष्टिसमासितदृष्ट्योपासनमुच्यते । न च हिङ्कारादीनां पञ्चानामुद्गातृत्रयकर्तृकाणामेककर्तृकत्वमस्ति, येनाङ्गानुष्ठातैक एव तदाश्रितोपास्तिकर्ता भवेद् । अत एककर्तृकतायामुद्गातृषु विनिगमनाविरहादप्युत्सर्गबाधेन फलभाजो यजमानस्यैवोपास्तिकर्तृत्वमास्थेयमिति भावः । वचनादित्येतदुपलक्षणम् । फलभाज एव प्रधानकर्तृत्वमिति वक्ष्यमाणन्यायादप्युत्सर्गबाधो द्रष्टव्यः । **पतितैरिति ।** पतितैः संव्यवहारे हि कदाचित् ते ऋत्विजो भवेयुः, कुतः ? उपास्तीनामृत्विक्कर्मत्वाद्, यदा विद्यार्थं सोममनुतिष्ठन् तस्य वीर्यवत्तरत्वार्थमुपासनां कारयितुमिच्छति यजमानः, पतितव्यतिरेकेण चोपासनविदोऽन्ये न लब्धाः, तदा पतितेनाहं सोमपानमौद्गात्रं करिष्यामीति मैत्रीव्यवहारबलादुक्तस्तद्दाक्षिण्यात् तं न प्रत्याचक्षीत । अतस्तत्परिहाराय पतितैः संव्यवहारं त्यजेदित्यर्थः । **प्रकृतोपयोग इति ।** न केवलं वचनात् पतितसंव्यवहारस्त्यक्तव्यः; किंतु स्वकर्तव्यकर्मनाशप्रसङ्गादपीति पूर्वाधिकरणार्थ

## भामती ।

याजमान उतार्त्विज्य इति संशय्यार्त्विज्येऽपि कर्मणि याजमान एव कामो गुणफलेष्विति निर्णीतम्, इह त्वेवंजातीयकानि चाङ्गसंबद्धानि उपासनानि किं याजमानान्येवोतार्त्विज्यानीति विचार्यत इति न पुनरुक्तम् । तत्रोपासकानां

## वेदान्तकल्पतरुः ।

ष्टोमादिप्रकरणेषु श्रुतानि "यदि कामयेत वर्षेत्पर्जन्य इति नीचैः सदो मिनुयात् ।" **सदः** सभामण्डलम् । **तद्** नीचैर्निर्मिमीतेत्यर्थः । इत्यादीन्यङ्गफलान्यृत्विग्गामीनि । याजुर्वैदिकत्वेनाध्वर्यवसमाख्यानादृत्विजि संनिहिते "यदि कामयेते"ति वाक्येन तस्यैव फलसंबन्धबोधनादिति प्राप्ते राद्धान्तः । यथा त्र्यहं नाश्नीयादित्यादि तपः सत्यप्याध्वर्यवसमाख्याने याजमानम्; तपसः प्रधानफलसिद्ध्यर्थत्वात्, प्रधानफलस्य च याजमानत्वात्, तथा कामोऽङ्गफलमपि यजमानगामि । कुतः ? अर्थसंयोगात् । यजेतेत्यात्मनेपदेन प्रधानफलस्य यजमानसंबन्धबोधनादिति । अत्राङ्गफलस्य याजमानत्वनिर्देशोऽङ्गस्य तदाश्रितोपास्तेश्चार्थादृत्विक्कर्तृकत्वमवगमयतीति पुनरुक्तिशङ्का, सा न कार्या; ऋत्विक्कर्तृकत्वस्य सिद्धवत्कारादित्यर्थः । **एवंजातीयकानीति** । सदःकरणादिकत्वङ्गजातीयानीत्यर्थः । चकार उपासनानि इत्यस्योपरि नेतव्यः । **उपासनानीति** । तथाकाम ( जै. अ. ३ पा. ८ सू. १३ । ) इत्यधिकरणेऽङ्गानामृत्विक्कर्तृकत्वं न चिन्तितं, किंतु तदाश्रितोपास्तीनामित्यर्थः । यदपि शास्त्रफलं प्रयोक्तरि( जै. अ. ३ पा. ७ सू. १८ । )त्यधिकरणेऽन्यो वा स्यात्परिक्रया-

## कल्पतरुपरिमलः ।

हेत्वन्तरलाभहेतुतया प्रकृतोपयोग इत्यर्थः । इह संभवात् प्रयोजनान्तरमुक्तं विद्यार्थकर्मवीर्यवत्तरत्वसंपादकोपासनविषयस्यास्य विचारस्य तद्विषयप्राच्योदीच्यविचारान्तरवदुपयोगान्तरं संप्रतिपन्नमस्त्येव । **यदि कामयेतेति वाक्येनेति ।** मिनुयादित्युक्तसदोमानं तावदध्वर्युकर्तृकं यजुर्वेदस्याध्वर्यवसमाख्यया सन्निधापितस्याध्वर्योस्तत्र कर्तृत्वेनान्वयात् । अतो मिनुयात्कामयेतेति क्रियाद्वयसमभिव्याहाररूपेण वाक्येन सदोमानस्य कर्तुरध्वर्योरेव फलसंबन्धबोधनादित्यर्थः । **तपसः प्रधानफलसिद्ध्यर्थत्वादिति । ननु** प्रधानफलसिद्ध्यर्थमपीतरदङ्गजातं समाख्याबलादध्वर्युप्रभृतिभिरनुष्ठीयते, **सत्यम्**; इह **प्रधानफलसिद्ध्यर्थत्वा**दित्यनेन प्रधानफलोत्पत्तिप्रतिबन्धकयजमानगताधर्मनिवृत्तिद्वारा प्रधानफलसिद्ध्यर्थत्वं विवक्षितम् । तन्निवृत्तिश्च यजमानगतेनैवानशनरूपदुःखानुभवेन भवति । एवं तपसः प्रतिबन्धकनिवृत्तिरूपदृष्टफलार्थत्वे संभवति नाऽपूर्वरूपादृष्टसंस्कारार्थत्वं कल्पनीयमिति । **ननु** उक्तहेतुना तयोर्याजमानत्वमस्तु, कर्माङ्गाश्रितनीचैस्त्वादिफलमपि याजमानमित्यत्र को हेतुरित्याकाङ्क्षायामर्थसंयोगादिति सूत्रोक्तं हेतुं विवृणोति—**यजेतेत्यादिना । साङ्गप्रधानफलस्येति । ननु**—गुणफलमङ्गस्य प्रधानस्य वा न फलं, किंत्वङ्गाश्रितस्य गुणस्यैवेति—**चेत्, न**; गुणस्याङ्गाश्रयणं विना स्वतः फलजननासमर्थतयाऽङ्गस्यापि फलजननकोट्यनुप्रवेशात् । तथाच प्रधानवाक्यगतात्मनेपदश्रुतिविरोधादङ्गवाक्यगतक्रियाद्वयैककर्तृकत्वसमर्पकाख्यातद्वयसमभिव्याहारात्मकवाक्यप्रमाणं बाधित्वा "यदि कामयेत यजमान" इत्यध्याहार्यमिति भावः । तथा मिनुयादिति परस्मैपदश्रुतिबलादपि वाक्यप्रमाणभङ्गो द्रष्टव्यः । डुमिञ् प्रक्षेपणे इति धातोर्ञित्वादकर्त्रभिप्राये क्रियाफले विहिता हि परस्मैपदश्रुतिः नीचैः सदोमानस्य तत्कर्त्रतिरिक्तगतफलार्थतां बोधयति । **ननु** काण्डाधिकरणे अङ्गाश्रितगुणफलानां यजमानगामित्वमुक्तम्, न तूपासनानामृत्विक्कर्तृकत्वं, कथं तेन पौनरुक्त्यशङ्केत्याशङ्क्याह—**अत्राङ्गफलस्येति ।** अङ्गाश्रितगुणफलमात्रस्य विशिष्य याजमानत्वोक्त्याऽङ्गतदाश्रितगुणानामार्त्विज्यत्वमर्थादुक्तं भवतीत्येवं पौनरुक्त्यशङ्केत्यर्थः । कथं तर्हि तन्निरासस्तत्राह—**सा न कार्येति ।** ऋत्विक्कर्तृकत्वं न्यायान्तरसाध्यं सिद्धवत्कृत्य तत्र फलमात्रस्य याजमानत्वमुक्तं, नतु तदपि तत्र सिषाधयिषितम्; तत्साधकन्यायानुपन्यासादिति भावः । **ननु—इह त्वेवंजातीयकानी**त्यादिटीकावाक्ये चकारयुक्तं पाठं गृहीत्वा तत्रोपासनानीत्यनेनान्वयमुक्त्वा सदोमानादिकत्वङ्गजातीयकान्युपासनानि च याजमानान्यार्त्विज्यानि वेति विचार्यत इत्येवं तद्वाक्यं व्याख्यातम् । तदिदं व्याख्यानमयुक्तम्; सदोमानादीनामङ्गानामृत्विक्कर्तृकत्वस्यात्र विचाराभावात्सर्वेषामङ्गानामृत्विक्कर्तृकत्वस्य **शास्त्रफलं प्रयोक्तरी**त्यधिकरणसिद्धतायाः स्वयमेवाचार्यैरनुपदं वक्ष्यमाणत्वाच्च । नच सदःकरणादिकत्वङ्गजातीयकानीत्याचार्यवाक्यस्य सदःकरणादिकत्वङ्गाश्रितनीचैस्त्वादिफलार्थगुणजातीयानीत्यर्थो वाच्यः, सदोनीचैस्त्वस्य सदोमानकर्त्रध्वर्युव्यतिरिक्तनिर्वर्त्यत्वासंभवेन तत्रापि गोदोहनादिन्यायेन याजमानत्वविचारायोगादिति—**चेत्, उच्यते**; इह सदःकरणादीनामृत्विक्कर्तृत्वस्याविचार्यस्यापि टीकायां विचार्यतोक्तिस्तथाकाम इत्यधिकरणे तस्य विचारितत्वद्योतनार्थेत्याचार्याणामभिप्रायः । सोयमभिप्राय**स्तथाकाम इत्यधिकरणे**हीत्याद्यनन्तरवाक्येनैव स्फुटीकृतः । **यद्वा—**सदःकरणादिकत्वङ्गजातीयानीत्यस्य क्रत्वङ्गाश्रितस्य नीचैस्त्वस्य निष्फलार्थगुणत्वेन सजातीयानीत्युपास्तिवत्क्रियारूपाणि यजमानेन पृथगनुष्ठातुं शक्यानि कर्मकाण्डाम्नातानि तानीत्यर्थः । एवंचाङ्गानामपि ऋत्विक्कर्तृकत्वं न चिन्तितमित्युपरितनवाक्ये अङ्गानामित्यस्याङ्गाश्रितकर्मकाण्डाम्नातक्रियारूपगुणानामित्यर्थः । **ननु—**टीकायां चकारसद्भावेऽप्येवंजातीयकानि नीचैस्त्ववत् फलार्थान्यङ्गावबद्धानि चेति उपासनागत-

## भामती ।

फलश्रवणादनधिकारिणस्तदनुपपत्तेर्यजमानस्य च कर्मजनितफलोपभोगभाजोऽधिकारादृत्विजां च तदनुपपत्तेर्वचनाच्च राजाज्ञास्थानीयात्क्वचिदृत्विजां फलश्रुतेरसति वचने यजमानस्य फलवदुपासनम्; तस्य फलश्रुतेः, तं ह बको दाल्भ्यो

## वेदान्तकल्पतरुः ।

म्नाना( जै. अ. ३ पा. ७ सू. २० । )दित्यङ्गानामृत्विक्कर्तृकत्वमभिहितं, न तेनापि पुनरुक्तिरुपास्तीनामनङ्गत्वादिति । न चैवं गोदोहनादेरपि याजमानत्वशङ्का; अप्प्रणयनादेरङ्गस्यावश्यमृत्विङ्निर्वर्त्यत्वात्तदाश्रितद्रव्यस्याव्यापाररूपस्य पृथक्प्रयोगायोगाद् । उपास्तीनां तु क्रियात्वाद्भवति पृथक्प्रयोगः । शक्यते ह्युद्गीथाद्यङ्गेषु ऋत्विग्भिरनुष्ठीयमानेषु यजमानेन तेष्वादित्यादिदृष्टिरध्यसितुमिति । **ननु** "वर्षति हास्मै पर्जन्यः वर्षयति चान्यार्थमयं य एवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते" इत्यादौ कथं याजमानत्वशङ्का? नहीह यजमानपदमस्ति, अत आह—**तत्रोपासकानामित्यादिना** । कर्मणीश्वरोऽधिकारी, तस्यैव फलम्, इह चोपासनकर्तुः फलश्रवणादधिकारी यजमान एवोपासनकर्तेति गम्यते इत्यर्थः । **ननु** कर्तुः फलश्रवणं तस्य याजमानत्वं न गमयितुमर्हति, "आत्मने वा यजमानाय वा यं कामं कामयते तमागायति आगानेन संपादयती"त्यादावृत्विजोऽपि फलश्रवणादत आह—**वचनाच्चेति** । औत्सर्गिकन्यायस्य वचनमपवादकमसत्यपवादे फलं यजमानस्यैवेत्यर्थः । यजमानस्योपासनम्; उपासकस्य सतः फलश्रुतेः । तत्र दृष्टान्तः—**फलवदिति** । **ननु** "तमुद्गीथं बको नामतो दाल्भस्यापत्यं **दाल्भ्यो विदांचकार** उपासितवान् स ह नैमिषीयाणां सत्रिणामुद्गाता बभूवेत्यृत्विजोऽप्युपासनकर्तृत्वं श्रूयते, तच्च लिङ्गं सर्वार्त्विज्यमुपास्तीनां गमयति, तत्राह—**तं हेति** । अन्यार्थदर्शनं हीदमन्यतः सिद्धं विषयीकुर्याद्, इह त्वन्यतः सिद्धिर्नास्ति, तत उपासनफलभाजो यजमानस्यैव कर्तृत्वमिति न्यायं न बाधत इत्यर्थः ॥ ४४ ॥ **ननु** "तस्मै हि परिक्रीयते" इति सिद्धान्तहेतुरसिद्धः, अङ्गाश्रितोपास्तीनां याजमानत्वे विप्रतिपन्नं प्रति तदर्थमृत्विक्परिक्रयस्यासिद्धेः, नच—अङ्गकर्तृणामृत्विजां तदाश्रितोपास्तिपर्यन्तं परिक्रयः सन्निधानादिति—वाच्यम्; यत्र हि तेषां

## कल्पतरुपरिमलः ।

विशेषणद्वयसमुच्चयार्थत्वेन चकारेण योज्यताम् इति—**चेत्**, अस्तु तदपि व्याख्यानम् तत्स्पष्टमित्याचार्यैर्न स्पृष्टम् । **उपास्तीनामनङ्गत्वादिति** । अङ्गानि हि ऋत्विक्कर्तृकाणि, प्रधानस्य तु यागस्य यजमानकर्तृकत्वं संप्रतिपन्नम् । उपास्तयोऽपि फलश्रुतेः प्रधानभूताः । अतो याजमानत्वशङ्का । एवंच यद्यपि परिक्रयाम्नानात् क्रतौ यद्यत्कर्तव्यं तत्सर्वमृत्विग्भिरेव कर्तव्यमित्युत्सर्गः; तथापि प्रधानयाग इव फलश्रुत्यविशेषाद् यजमानकर्तृत्वम् । **ननु** यदि फलार्थगुणप्रधानत्वात् फलभाजा कर्तव्यः, तर्हि गोदोहनादिरपि याजमानः स्यादित्याशङ्कास्योत्सर्गस्य गोदोहनादिषु त्यागः, नतु शक्ये क्वचिदपीति । परिहरति—**न चैवमित्यादिना** । फलार्थगुणे तदपवाद इति भावः । "वर्षति हास्मा"इत्यादिवचने यजमानपदाभावेऽपि फलस्वामिन उपासनाधिकारित्वावगमाद् यजमानस्य फलस्वामित्वात् । अत एवोपासनाकर्ता वाक्यप्रमाणेनावसीयत इति कृतशङ्कापरिहारार्थं टीकायास्तात्पर्यमाह—**कर्मणीश्वरोऽधिकारीत्यादिना । औत्सर्गिकस्येति** । **ननु**—सर्वं कर्म ऋत्विजामितिवत्सर्वं फलं यजमानस्येत्ययमप्युत्सर्गश्चेत्कथं फलोत्सर्गन्यायमवलम्ब्य "वर्षति हास्मा" इत्यादि यजमानस्योपासनाकर्तृत्वे प्रमाणमाशङ्क्यते ? कर्त्रुत्सर्गन्यायेनोद्गातुः फलभाक्त्वात्, तत्प्रमाणं किं न स्यादिति—**चेत्**, **मैवम्**; प्रधानवाक्यगतात्मनेपदश्रुतिमूलात्फलोत्सर्गात्परिक्रयरूपाङ्गवाक्यमूलस्य कर्तुरुत्सर्गस्य दुर्बलत्वात् । यजमानस्येत्यादिटीकावाक्यं योजयति—**यजमानस्योपासनमिति** । तस्येत्यस्यार्थमाह—**उपासकस्य सत इति** । **तत्र दृष्टान्त इति** । यजमानस्योपासनमित्यत्र फलं दृष्टान्तीकृतमित्यर्थः । उपासनं प्रधानत्वाद्यजमानेन कर्तव्यमिति पूर्वपक्षोपपादकन्यायस्यार्थवादिकलिङ्गदर्शनेन बाधमाशङ्कते—**नन्विति । न्यायं न बाधत इति** । किंतु न्यायेन लिङ्गदर्शनमेव बाध्यत इति भावः ॥ ४४ ॥ यस्त्वत्र न्यायबाध उक्त इत्यग्रे न्यायेन लिङ्गदर्शनस्य बाध उक्त इत्यनूद्यते टीकायाम् । तस्मै हि परिक्रीयत इति सौत्रहेतुमपहाय लिङ्गदर्शनं किमित्युपन्यस्यत इत्याकाङ्क्षायां तस्य साक्षात्सिद्धान्तहेतुत्वानुपपत्तेरिति दर्शयितुं तामनुपपत्तिमुद्घाटयति—**ननु तस्मै हीति** । "तस्मै हि परिक्रीयत" इत्यत्र तस्मा इत्यस्य किमङ्गाश्रितोपास्तिकरणायेत्यर्थ उताङ्गकरणायेति । **आद्ये** असिद्धिमुक्त्वा तामुपपादयति—**अङ्गाश्रितेति** । **ननु—**अस्तु **द्वितीयः**, नच—अङ्गकरणाय परिक्रयस्य तदाश्रितोपास्तिपर्यन्तत्वं न सिध्येदिति—शङ्कनीयम्; आ सन्निधानात्तत्पर्यन्ततासिद्धेरित्याशङ्क्य सन्निधानमतिप्रसञ्जकतया दूषयति—**यत्र हीति** । **ननु** प्रथममृत्विजां कर्तृत्वं प्रमाय पश्चात्तादर्थ्येन ते न परिक्रीयन्ते, "स्वर्गकामो यजेतेति सामानाधिकरण्यात्मनेपदाभ्यां फलभाजो यजमानस्यैव करणेतिकर्तव्यतासहितभावनाकर्तृत्वे प्राप्ते दक्षिणया ऋत्विजां परिक्रयणाम्नानात् तद्दृष्टार्थत्वाय सामानाधिकरण्यात्मनेपदाभ्यां प्रमितं यजमानस्य कर्तृत्वं ऋत्विग्द्वारकं प्रयोजकम्, प्रयोजकत्वेऽपि प्रमितकर्तृत्वानपायादिति परिक्रयाम्नानबलादेव पश्चाद् ऋत्विजां कर्तृत्वं प्रमीयते । पूर्वतन्त्रेऽपि "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात्स्वयं प्रयोगे स्याद्" ( जै. अ. ३ पा. ७ सू. २० ) "अन्यो वा स्यात्परिक्रया-

## भामती ।

विदाञ्चकारेत्यादेरुपासनस्य च सिद्धविषयतया न्यायापवादसामर्थ्याभावाद्याजमानमेवोपासनाकर्मेति प्राप्त उच्यते—॥४४॥ उपाख्यानात्तावदुपासनमौद्गात्रमवगम्यते । तद्बलवति सति बाधकेऽन्यथोपपादनीयम् । न चर्त्विक्कर्तृक उपासने

## वेदान्तकल्पतरुः ।

कर्तृत्वं प्रमितं तदर्थं ते परिक्रेतव्याः, नतु संनिहितार्थम्; अन्यथाऽङ्गसंनिहितपश्वादिद्रव्यसिद्ध्यर्थमपि तत्परिक्रयप्रसङ्गात् । तस्मान्न हेतुवचनार्थं पश्यामोऽत आह—**उपाख्यानात्तावदिति** । "तं ह बक" इत्याद्युपाख्यानं तच्च वाक्यशेषगतत्वान्निर्णायकं न प्रापकमपेक्षते, यस्त्वन्यत्र न्यायबाध उक्तस्तत्परिहारपरत्वेन "तस्मै हि परिक्रीयत" इति सूत्रावयवं व्याचष्टे—**न चेत्यादिना** । तेन यजमानेन स ऋत्विक् परिक्रीतः संस्तद्गामिने फलाय घटते संपादयितुं युज्यते इत्यर्थः। **एतदुक्तं भवति**—यजमानगामिता फलस्य साक्षात्तत्कर्तृकत्वे परिक्रीतर्त्विक्कर्तृकत्वे चोपास्तीनां संभवति, ततः सा कांस्यभोजिन्यायेन लिङ्गदर्शनमनुग्रहीतुं परिक्रयद्वारकं कर्तृत्वमाश्रयतीति । एवं च लिङ्गदर्शनादृत्विक्कर्तृकत्वेऽङ्गोपास्तीनां सिद्धे तदर्थमपि ऋत्विक् परिक्रीयत इति सूत्रावयवो व्याख्यातः । एतच्च सर्वं तथाचेत्यादिभाष्यादुत्थितमिति परार्थत्वा-

## कल्पतरुपरिमलः ।

स्नानादिप्रतिषेधात्प्रत्यगात्मनी"( जै. अ. ७ पा. ४ सू. २ )ति पूर्वपक्षसिद्धान्तसूत्राभ्यां तथैव व्यवस्थापितम् । तस्मायत्र हि तेषां कर्तृत्वं प्रमितं तदर्थं ते परिक्रेतव्या इत्युक्तिरयुक्तेति—**चेद्**, नायुक्तेति ब्रूमः । न हि प्रथमप्रमितकर्तृत्वनिर्वाहाय ऋत्विजां परिक्रयो विधीयते इत्यनेन वाक्येनोच्यते, किंतु यत्र तेषां परिक्रयाम्नानात् कर्तृत्वं प्रमाणवत्तावदर्थमेव ते परिक्रेतव्या नाधिककरणार्थमपि । यथा स्फ्यादीनामुद्धननादि यावत्कार्यं वचनान्तरैः प्रमितं तावदर्थमेव तानि संपादनीयानि, नतु यद्यत्कर्तुं शक्यते स्फ्यादिभिः तदर्थमपि तद् द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्यत इत्यधिकरणोक्तन्यायमवलम्ब्योच्यते न तत्र काचिदनुपपत्तिः । **संपादयितुं युज्यत इति** । फलाय घटत इत्यस्य फलाय चेष्टते फलसिद्ध्युपयोगिकार्येषु व्याप्रियत इत्यर्थः संभवति, स तु घट चेष्टायामिति धात्वर्थानुगमेन स्पष्ट इति नोक्तः । अनेन यजमानगामिफलार्थं यद्यावद्वक्तव्यं तस्य सर्वस्यार्थे परिक्रयः, नतु प्रकरण्यधिकारवाक्यनिर्दिष्टफलं यावता सिध्यति तावत एवार्थे, तावदर्थत्वेऽपि न दोषः; अङ्गावबद्धोपास्तीनां तस्मिन्नपि फले प्रतिबन्धनिवृत्तिद्वारोपयोगात् । अतो न स्फ्याधिकरणविरोध इति दर्शितं भवति । **कांस्यभोजिन्यायेनेति** । **ननु**—अविरोधे कांस्यभोजिन्यायः, इह प्रधानम् फलभाजा साक्षादेव कर्तव्यमिति प्रागेव दर्शनाद्विरोधोऽस्तीति—**चेत्, न**; यागस्य स्वामिकर्तृकत्वं न प्राधान्यप्रयुक्तं, किंतु स्वामिद्रव्ये स्वत्वत्यागोऽन्येन कर्तुमशक्य इति ऋत्विगशक्तिप्रयुक्तम् । अत एवाङ्गस्यापि यजमानद्रव्येण परिक्रयस्यान्येन कर्तुमशक्यत्वाद्याजमानत्वं प्रधानेऽप्यग्निहोत्रहोमे स्वत्वत्यागांशं विना प्रक्षेपांशस्यान्येन कर्तुं शक्यत्वाद् आध्वर्यवत्वम् । तस्मायुक्तोऽत्र कांस्यभोजिन्यायः । **तदर्थमपीति** । लिङ्गवशादुपासनस्य ऋत्विक्कर्तृकत्वे सिद्धे ऋत्विक्परिक्रयस्य तादर्थ्यमपि सिध्यतीति भाष्यकारैस्तत्साधारण्येन "तस्मै हि परिक्रीयत"इति सूत्रावयवो व्याख्यात इत्यर्थः । **एतच्च सर्वमिति** । **ननु** भाष्ये सूत्रावयवोक्तं हेतुं प्राधान्येनोपन्यस्य तथाचेत्यादिग्रन्थेन तदुपोद्बलकं लिङ्गमुपन्यस्तमिति प्रतिभाति, नतु लिङ्गं प्रधानहेतुतयोपन्यस्तमिति । **नैष दोषः**; अर्थवशेन तस्य प्राधान्यात् भाष्यकाराणामपि तथैवाशय इति तात्पर्यम् । भाष्यस्वारस्यानुरोधात् सौत्रं हेतुं प्राधान्येनोपन्यस्य तदनुग्राहकतया लिङ्गमुपन्यस्तमिति भाष्याशयवर्णनेऽपि न दोषः; लिङ्गमनपेक्ष्यैव परिक्रयस्योपास्तिसाधारणतायाः स्फ्याधिकरणविरोधपरिहारेणास्माभिः समर्थितत्वात् । तत्साधारण्यसिद्धेर्लिङ्गमुखनिरीक्षकत्वे लिङ्गं यदुपास्तिविषयं परिक्रयस्य तावन्मात्रविषयताया एव सिद्धिप्रसङ्गाच्च । तं ह बको दाल्भ्य इति लिङ्गं हि प्राणदृष्ट्योङ्कारोपासनमात्रविषयं तस्य न्यायसिद्धार्थानुवादकत्वेनोपासनविशेषप्रस्तावमनपेक्ष्य सर्वविषयता सिध्यति । अत एव सौर्याङ्गप्रभृतीनामनुपदिष्टधर्माणामन्यत इतिकर्तव्यताकाङ्क्षायां लौकिकस्थालीपाकादीतिकर्तव्यता न भवति, किंतु दर्शपूर्णमासादितो वैदिकीति निर्णयार्थं प्रवृत्ते "स लौकिकः स्याद्दृष्टप्रवृत्तित्वा"( जै. अ. ७ पा. ४ सू. १० )दिति साप्तमिकाधिकरणे "विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शन"( जै. अ. ७ पा. सू. ११ )मिति सिद्धान्तसूत्रेण सौर्यादिचोदनायां प्रकृतिषु दर्शपूर्णमासादिष्विव तदीय एव वैदिको विध्यन्तः प्रवर्तते । तथा हि लिङ्गं दृश्यते । यथाहि सौर्यचरौ दार्शपूर्णमासिकप्रयाजप्राप्तिं सिद्धवत्कृत्य "प्रयाजे प्रयाजे कृष्णलं जुहोती"ति कृष्णलविधानार्थस्तदनुवाद इति सिद्धान्तोपपादनानन्तरं "लिङ्गहेतुत्वादलिङ्गे लौकिकं स्या"दिति ( जै. अ. ७ पा. ४ सू. १२ ) सूत्रेण यदि लिङ्गेन वैदिको विध्यन्तो नियम्यते, तर्हि यत्र"न्द्राग्नमेकादशकपालं निर्वपे"दित्यादौ तन्नास्ति, तत्र लौकिकीतिकर्तव्यता स्यादिति शङ्कामुत्थाप्य "लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेने"ति सूत्रेण यदि लिङ्गं वैदिकविध्यन्तरप्रापकत्वेनोपन्यस्तं स्यात्, तदाऽयं दोषो भवेद्, न तथोपन्यस्तं, किंतु त्रेताग्निसाध्यत्वादिसाम्यादनुपदिष्टधर्मकेषु सौर्यादिषु सर्वेष्वपि वैदिक्येवेतिकर्तव्यतेति न्यायप्राप्तानुवादकतयोपन्यस्तं तत्तुल्यन्यायपूर्वकं लिङ्गमेकत्र दृश्यमानं

यजमानाय वा यं कामं कामयते तमागायति' ( बृ० १।३।२८ ) इति । न; तस्य वाचनिकत्वात् । तस्मात्स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

नैतदस्ति स्वामिकर्माण्युपासनानीति। ऋत्विक्कर्माण्येतानि स्युरित्यौडुलोमिराचार्यो मन्यते। किं कारणं ? तस्मै हि साङ्गाय कर्मणे यजमानेनर्त्विक्परिक्रीयते । तत्प्रयोगान्तःपातीनि चोद्गीथाद्युपासनान्यधिकृताधिकारत्वात् । तस्माद्गोदोहनादिनियमवदेवर्त्विग्भिर्निर्वर्त्येरन् । तथाच 'तं ह बको दाल्भ्यो विदांचकार स ह नैमिशीयानामुद्गाता बभूव' ( छा० १।२।१३ ) इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति । यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति । नैष दोषः; परार्थत्वादृत्विजोऽन्यत्र वचनात्फलसंबन्धानुपपत्तेः ॥ ४५ ॥

## श्रुतेश्च ॥ ४६ ॥

'यां वै कांचन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाचेति' 'तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते काममागायानि' (छा० १।७।८-९ ) इति । तच्चर्त्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति । तस्मादङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः ॥४६॥ इति त्रयोदशं स्वाम्यधिकरणम् ॥

---

### भामती ।

यजमानगामिता फलस्यासंभविनी, तेन हि स परिक्रीतस्तद्गामिने फलाय घटते । तस्मान्न व्यसनितामात्रेणोपाख्यानमन्यथयितुं युक्तमिति राद्धान्तः ॥ ४५ ॥ ४६ ॥ इति त्रयोदशं स्वाम्यधिकरणम् ॥

### वेदान्तकल्पतरुः ।

दिति भाष्येणर्त्विग्द्वारा कर्तृत्वाद्यजमानस्य फलमित्युक्त्वाऽन्यत्रेत्यनेन सति वचने ऋत्विजोऽपीत्युक्तम् । **व्यसनितामात्रेणेति** । फलिन एव कर्तृत्वमिति न्यायस्योभयथा संभवे यजमानमात्रकर्तृकत्वविषयः पुरुषस्याग्रहो व्यसनिता । यस्मादाधिदैविकमादित्यपुरुषमाध्यात्मिकं चाक्षुषपुरुषमुपासीत उद्गाता तदुभयात्मको भूत्वा सर्वान् लोकान् आप्नोति

### कल्पतरुपरिमलः ।

तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति । यथा स्थाल्यां तुल्यपाकानां पुलाकानामेकमुद्धृत्य शृतं दृश्यमानमन्येषामपि शृतत्वं ज्ञापयतीत्युक्तम् । तस्मादिह लिङ्गस्य न्यायप्राप्तानुवादतयैव सर्वोपासनाविषयत्वमुपपादनीयम् । स न्यायः सूत्रे हेतुतया निर्दिष्ट इति तस्यैव सिद्धान्तहेतुत्वं भाष्यस्वारस्यानुरोधेन वर्णनीयम् । आचार्यैस्तु टीकायां तं हेतुं विहाय प्रथमं लिङ्गोपन्यासस्य तात्पर्यमेव भविष्यतीति तदुपपादनमात्रं कृतम् । आचार्याणां तु लिङ्गं न्यायप्राप्तानुवादकमित्येव स्वाभिप्रायः । तदवष्टम्भेन हि पूर्वपक्षग्रन्थे तैरुक्तम्—**तच्च लिङ्गं सर्वत्रार्त्विज्यमुपास्तीनां गमयतीति । ननु** यत्तूक्तमित्यादिभाष्येण "वर्षति हास्मा"इति श्रुतौ फलोपासनयोः सामानाधिकरण्यश्रवणात् फलभाजो यजमानस्यैवोपासनाकर्तृत्वं वाच्यमिति पूर्वपक्षे कृता शङ्काऽनूदिता, तत्र ऋत्विजां फलभाक्त्वनिषेधकः पारार्थ्यादित्यादिपरिहारग्रन्थो न युक्तस्तेषां फलभाक्त्वस्यानाशङ्कितत्वादित्याशङ्क्य परिहारग्रन्थस्य तात्पर्यमाह—**परार्थत्वादिति भाष्येणेति** । अनेन परार्थत्वादित्यादिफलसंबन्धानुपपत्तेरित्यन्तं पारार्थ्येन हेतुं ऋत्विजां फलसंबन्धनिषेधार्थमेकं वाक्यं न भवति, किंतु परार्थत्वादृत्विज इत्येतावदेकं वाक्यमनूदितशङ्कापरिहारार्थं तेन ऋत्विग्भिर्यत्क्रियते, न तत्र तद्द्वारकं यजमानस्यैव कर्तृत्वम्, तेषां पारार्थ्यात् । अतः फलोपासनासामानाधिकरण्यश्रुतेः "स्वर्गकामो यजेते"ति फलतदर्थसाङ्गप्रधानानुष्ठानसामानाधिकरण्यश्रुतेरिव नानुपपत्तिरिति परिहारो दर्शितः । यदि परार्थत्वादृत्विजां तत्कर्मणि यजमानस्यैव कर्तृत्वं, तदा किमपि फलमृत्विजो न स्यादिति "आत्मने वा यजमानाय वेति" श्रुतिविरोधः । तस्मादृत्विक्कर्मणि क्वचित्कचिद् ऋत्विजामपि स्वातन्त्र्यं वक्तव्यं, तद्वदुपासनेऽपि तेषां स्वातन्त्र्यं स्यात्, ते ह्युपासनाकर्तारः स्युः । न हि तेषामुपासनाकर्तृत्वे यजमानकर्तृकं तदङ्गं तत्प्रधानं वा फलजननाय तदपेक्षितं किंचिदस्तीत्युपासनांशे पारार्थ्यहेतोरसिद्धिमाशङ्क्य तत्परिहारार्थमन्यत्रेत्यादि वाक्यान्तरमिति वाक्यभेदेन भाष्यं व्याख्यातम् । **ननु**—केवलं वचनादेव ऋत्विजां फलसंबन्धो न भवति, किं तु न्यायतोऽपि; "ममाग्ने वर्चो विहवेष्वस्त्वि"त्यन्वाधानकरणमन्त्रस्याध्वर्युणा वक्तव्यतया तेन प्रकाश्यं वर्चःप्रभृतिफलमध्वर्योरेव हि वक्तव्यम् ममास्त्विति प्रत्यगाशीर्लिङ्गात्, एवमुपासनस्योद्गातृकर्तृकत्वे फलार्थस्य कृत्स्नस्य तन्मात्रकर्तृकत्वलिङ्गाद् दहराद्युपासनाफलवद् उद्गीथाद्युपासनाफलमपि साक्षात्कर्तृगामि स्यादित्याशङ्कापरिहारार्थं श्रुतेश्चेत्यादिभा-

## ( १४ अधिकरणम् ) सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिर-

### भामती ।

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ॥४७॥ तस्माद्ब्राह्मणः पाण्डित्यं **निर्विद्य** निश्चयेन

### वेदान्तकल्पतरुः ।

तस्मादेवंविदुद्गाता यजमानं ब्रूयात् ते किं कामं फलमागायान्यागानेन संपादयानि । समर्थो हि स फलसंपादने इत्यर्थः' ॥ ४५ ॥ ४६ ॥ **इति त्रयोदशं स्वाम्यधिकरणम्** ॥[1]

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ॥ ४७ ॥ यस्मात्पूर्वे ब्राह्मणा आत्मानं विदित्वैषणाभ्यो व्युत्थाय भिक्षाचर्यमाचरन्ति तस्मादधुनातनोऽपि ब्राह्मणः पण्डाऽध्ययनजा ब्रह्मधीस्तद्वान् पण्डितः, तस्य कृत्यं

### कल्पतरुपरिमलः ।

र्थ्यं "ममाग्ने वर्चः" इत्यादिमन्त्रप्रकाश्यफलमपि याजमानमेवेति निर्णयार्थं प्रवृत्तस्य करणेष्वर्थवत्त्वा( जै. अ. ३ पा. ८ सू. २५ )दिति पूर्वतन्त्राधिकरणस्य स्मारणार्थम् । तत्र हि वर्चःप्रभृति फलमपि यजमानगाम्येव प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषययाङ्गभावनानामपि यजमानगामिफलत्वस्योक्तत्वेन तद्विरुद्धस्य मन्त्रगतप्रत्यगाशीर्लिङ्गस्य बाध्यतया मन्त्रे ममपदस्य यजमान एव स्वकीयतयौपचारिकत्वकल्पनादिति सिद्धान्तव्यवस्थापनानन्तरं लिङ्गदर्शनाच्चेति ( जै. अ. ३ पा. ८ सू. २७ ) गुणसूत्रस्योदाहरणत्वेन "यां वै कांचने"ति श्रुतिर्लिखिता । इह तदुदाहरणेन वचनं विना लिङ्गमात्रेण क्वचिदपि ऋत्विग्गतं फलं न भवति, ऋत्विक्कर्मफलस्य यजमानगामिताया औत्सर्गिकत्वे प्रबलश्रुतिन्यायसत्त्वादिति कृतशङ्कापरिहारः सूचितः । एवं सामान्यत आर्त्विज्यफलमात्रस्य यजमानगामित्वे श्रुतिं समुदाहृत्य विशिष्य ऋत्विक्कर्तृकोपासनफलस्य तद्गामित्वे श्रुतिरुदाहृता । भाष्ये "तस्मादु हैवंविदि"ति, तत्र तस्मादित्यस्यार्थमाह—**यस्मादिति** । तस्मादिति शब्दो हि प्रागुक्तं हेतुं करोति, तच्च "सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोका एताँश्चाप्नोति देवकामाँश्च अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताँश्चाप्नोति मनुष्यकामाँश्चे"ति पूर्ववाक्यम् । तत्र "सोऽमुनैव सोऽनेनैवे"त्यनयोः फलितार्थस्तत्क्रतुन्यायलभ्यस्तदुभयात्मको भूत्वेत्यनेन दर्शितः । एकस्य युगपदुभयात्मकत्वं "स एकधा भवती"त्यादिश्रुतावुपासनासामर्थ्येन युगपदनेकशरीरपरिग्रहस्योक्तत्वादुपपन्नम् । ये चामुष्मात्पराञ्चो लोका ये चैतस्मादर्वाञ्चो लोका" इति वाक्यद्वयोक्तफलसमुच्चयेन फलितोऽर्थः सर्वाल्लोकानाप्नोतीत्यनेन दर्शितः । **ननु** यजमानगामि खल्पासनाफलं कथमिहोद्गातुः फलमुक्तं, **नैष दोषः**, वचनादृत्विजोऽपि फलमस्तीत्यनुपदमेवोक्तम्, इह च "य एवं विद्वान् साम गायत्युभौ स गायती"ति प्रकृत उद्गाता "सोऽमुनैवे"त्यनयोर्वाक्ययोस्तच्छब्दाभ्यां परामृश्यते । अतोऽत्रापि वचनबलादृत्विजोऽपि फलभाक्त्वमविरुद्धमित्याचार्याणामभिप्रायः । एवमपि व्याख्यातुं शक्यम् । "य एवं विद्वान् साम गायती"त्यत्र सामगाने प्रयोजककर्ता यजमानो गायतीत्यनेनोच्यते; उद्गातुरेकस्य पञ्चभक्तिककृत्स्नसामगातृत्वाभावेन प्रयोजककर्तृपरतयैव कृत्स्नसामगाने एककर्तृकत्वस्य निर्वाह्यत्वात्, उद्गातृविषयत्वे सामशब्दस्योद्गातृगेयसामभागे लाक्षणिकत्वापत्तेः । अतः प्राग्यजमान एव प्रकृतः, तस्यैव च "सोऽमुनैव सोऽनेनैवे"ति तच्छब्दाभ्यां परामृष्टस्य फलभाक्त्वमुच्यते । यस्मादेवमुद्गातृकर्तृकस्याप्युपासनस्य यजमान एव फलभागी, तस्मादेवंविद् उक्तोपासनाप्रकारपरिज्ञातोद्गाता अक्ष्यादित्यपुरुषोपासनेन यजमानं संतोष्याऽधिकद्रव्यलिप्सुश्चेद् यजमानं पृच्छेदिति । एवं व्याख्याने तु नास्त्यत्रोद्गातुः फलभाक्त्वे वचनमिति विशेषः । **किं कामं फलमागायानीति** । अत्र किं फलमित्यस्य "येचाऽमुष्मादि"तिवाक्योक्तं वा "ये चैतस्मादि"ति वाक्योक्तं फलं वेति न प्रश्नार्थः । "य एवं विद्वान् साम गायत्युभौ स गायती"ति वचनानुसारेणाक्ष्यादित्यपुरुषोपासनयोरेकविद्यात्वेन द्विविधलोकावाप्त्योः समुच्चितयोर्विद्याफलत्वात्, किन्तु किमिदं तव विद्यानुष्ठानं कर्मार्थमिति कृतवीर्यवत्तरत्वमेव फलमागायानि उत फलार्थमिति सर्वलोकावाप्त्यादिकमपीति प्रश्नार्थः । "आगायानी"त्येतदनन्तर "मेष ह्येव कामागानस्येष्टे" इति वाक्यम्, तत्र किमर्थं फलप्रश्नः । उपासनां करवाणि न वेत्येव प्रष्टव्यम् । कृतायामुपासनायां यजमानेन यत्फलं सङ्कल्पितं तत्स्वयमेव भविष्यतीत्याशङ्कापरिहारार्थं "कामं ध्यायन्नप्रमत्तः स्तुवीते"त्यत्रोद्गातुरपि याजमानफलकामनाश्रवणाद् यजमानस्येष्टमिदं फलं भवत्विति स्वयमपि ध्यायन्नेव तत्फलं संपादयितुमीष्टइति परिहाराभिप्रायः । तस्य वाक्यस्यार्थमाह—**समर्थो हीति** ॥ ४५ ॥ ४६ ॥ **इति त्रयोदशं स्वाम्यधिकरणम्** ॥

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ॥ ४७ ॥ **बाल्येनेति** । "नायमात्मा बलहीनेन

---

[1] तत्र सूत्राणि ३—स्वामिनः फलश्रुतेरित्यात्रेयः ४४ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ४५ श्रुतेश्च ४६॥

मौनं च मौनं च निर्विद्याथ ब्राह्मणः' ( बृ० ३।५।१ ) इति बृहदारण्यके श्रूयते । तत्र संशयः मौनं विधीयते न वेति । न विधीयत इति तावत्प्राप्तम्; बाल्येन तिष्ठासेदित्यत्रैव विधेरवसितत्वात् । न ह्यथ मुनिरित्यत्र विधायिका विभक्तिरुपलभ्यते तस्मादयमनुवादो युक्तः । कुतः प्राप्तिरिति चेत्, मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात् पाण्डित्यं निर्विद्येत्येवं प्राप्तं मौनम् । अपि च "अमौनं च मौनं च निर्विद्याथ ब्राह्मण" इत्यत्र तावन्न ब्राह्मणत्वं विधीयते; प्रागेव प्राप्तत्वात् । तस्माद् "थ ब्राह्मण" इति प्रशंसावादस्तथैवाथ मुनिरित्यपि भवितुमर्हति, समाननिर्देशत्वादिति । एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिरिति । विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्योऽपूर्वत्वात् । ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम् । नैष दोषः; मुनिशब्दस्य ज्ञानातिशयार्थत्वात्, मननान्मुनिरिति च व्युत्पत्तिसंभवात्, 'मुनीनामप्यहं व्यासः' ( गी० १०।३७ ) इति च प्रयोगदर्शनात् । ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र, न; 'वाल्मीकिर्मुनिपुंगवः' इत्यादिषु व्यभिचारदर्शनात् । इतराश्रमसंनिधानात्तु पारिशेष्यात्तत्रोत्तमाश्रमोपादानं ज्ञानप्रधानत्वादुत्तमाश्रमस्य । तस्माद्बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते । यत्तु बाल्य एव विधेः पर्यवसानमिति, तथाप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते मुनिः स्यादिति । निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम् । तद्वतो विद्यावतः संन्यासिनः । कथं च विद्यावतः संन्यासिन इत्यवगम्यते ? तदधिकारात् 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति । ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः किं मौनविधिनेत्यत आह—पक्षेणेति । एतदुक्तं भवति—यस्मिन्पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिरिति । विध्यादिवत् । यथा—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवंजा-

## भामती ।

लब्ध्वा बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण" इति । यत्र हि विधिविभक्तिः श्रूयते स विधेयः । बाल्येन तिष्ठासेदित्यत्र च सा श्रूयते न श्रूयते तु मौने । तस्माद्यथाथ ब्रह्मण इत्येतदश्रूयमाणविधिकमविधेयमेवं मौनमपि । न चापूर्वत्वाद्विधेयम्; "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येति" पाण्डित्यविधानादेव मौनसिद्धेः; पाण्डित्यमेव मौनमिति । **अथवा** भिक्षुवचनोऽयं मुनिशब्दस्तत्र दर्शनात् 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र । तस्यान्यतो विहितस्यायमनुवादः । तस्माद्बाल्यमेवात्र विधीयते मौनं तु प्राप्तं प्रशंसार्थमनूद्यत इति युक्तम् ॥ भवेदेवं यदि पण्डितपर्यायो मुनिशब्दो भवेत्, अपि तु ज्ञानमात्रं पाण्डित्यम्, ज्ञानातिशयसंपत्तिस्तु मौनम्; तत्रैव तत्प्रसिद्धेः, आश्रमभेदे तु तत्प्रवृत्तिर्गार्हस्थ्यादिपदसंनिधानात् । तस्मादपूर्वत्वान्मौनस्य बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते । एवंच निर्वेदनीयत्वमपि विधान आञ्जसं स्यादित्याह—**निर्वेदनीयत्वनिर्देशादिति** । कस्येदं मौनं विधीयते विद्यासहकारितयेत्यत आह—**तद्वतो विद्यावतः संन्यासिनो** भिक्षोः । पृच्छति—**कथमिति** । विद्यावत्ता प्रतीयते न संन्यासितेत्यर्थः । उत्तरं **तदधिकारात्** भिक्षोस्तदधिकारात् । तद्दर्शयति—**आत्मानं विदित्वेति** । सूत्रावयवं योजयितुं शङ्कते—**नन्विति** । परिहरति—**अत आह पक्षेणेति** । विद्यावा-

## वेदान्तकल्पतरुः ।

पाण्डित्यं श्रवणं तन्निर्विद्य बाल्येन ज्ञानबलभावेन युक्तितोऽसंभावनानिरासरूपमननेन वा शुद्धहृदयत्वेन वा **तिष्ठासेत्** स्थातुमिच्छेद्, "बाल्यं च पाण्डित्यं च निर्विद्ये"त्यादिरनुवाद उक्तदार्ढ्यार्थः । मुनिर्मननशीलो निदिध्यासकः स्याद् मौनादन्यद् बाल्यं पाण्डित्यममौनं मौनं च निदिध्यासनं निर्विद्याथ ब्राह्मणः ब्रह्माहमित्यवगच्छतीति ब्राह्मणः साक्षात्कृतब्रह्मा भवतीत्यर्थः । पूर्वत्र "तं ह बक" इति वाक्यशेषादङ्गोपासनमृत्विक्कर्तृकमित्युक्तम् । एवमिहाप्यथ ब्राह्मण इति विधिविधुरवाक्यशेषादथ मुनिरित्येषोऽपि न विधिरिति सङ्गतिः । **ननु** बाल्येनेत्युपक्रमे विधिश्रुतेर्मौनेऽपि विधिरस्तु, नेत्याह **यत्र हीति** । यद्यत्रापि विधेयत्वं स्यात्तर्हि विधिः श्रूयेत बाल्यवदतः श्रोतव्यत्वे सत्यश्रवणाद् विध्यभावो गम्यत इत्यर्थः । **प्रशंसार्थमिति** । यदा पाण्डित्यशब्देन मौनस्य प्राप्तिस्तदेत्थं विधीयमानस्य बाल्यस्य प्रशंसा । न हि पाण्डित्यं स्वरूपेण ज्ञानं भवत्यपि तु बाल्येऽनुष्ठितेऽनन्तरं मौनापरपर्यायं पाण्डित्यं कृतं भवेत्, तस्माद्बाल्यं प्रशस्तं भवेदिति । यदा तु मौनस्योत्तमाश्रमस्य विध्यन्तरप्राप्तस्यानुवादः, तदा बाल्यमात्रानुष्ठानवानुत्तमाश्रमित्वेन स्तूयते इति व्यक्ता स्तुतिः । सिद्धान्तमाह—**भवेदित्यादिना** । अनुवादित्वं मौनशब्दस्य परिहृत्य विध्यश्रवणादविधेयत्वम् उक्तं परिहरति—**एवं चेति** । तत्र तावत् "अमुनिरिति" साकाङ्क्षत्वान्निर्देशस्य तिष्ठासेद् इति विधिरनुषज्यते । मौनं निर्विद्येति संपाद्यत्वं च विधेयत्वं गम-

## भामती ।

निति न विद्यातिशयो विवक्षितः, अपि तु विद्योदयायाभ्यासे प्रवृत्तो न पुनरुत्पन्नविद्यातिशयः । तथाचास्य पक्षे कदाचिद्भेददर्शनात्संभव इत्यर्थः । विध्यादिर्विधिमुख्यः प्रधानमिति यावत् । अत एव समिदादिर्विध्यन्तः । स हि विधिः प्रधानविधेः पश्चादिति । तत्राश्रूयमाणविधित्वेऽपूर्वत्वाद्विधिरास्थेय इत्यर्थः ॥ ४७ ॥ ननु यद्ययमाश्रमो बाल्यप्रधानः,

## वेदान्तकल्पतरुः ।

यतीत्यर्थः । साक्षात्कारवतो विद्यातिशयस्य सिद्धत्वाद्विधिवैयर्थ्यमाशङ्क्याह—**विद्यातिशय इति** । विद्यावत इत्यत्र विद्याशब्देन विद्यातिशयो विवक्षित इत्यर्थः । उत्पन्नो विद्यातिशयो यस्य स तथोक्तः । विधिर्हि प्रधानमुपक्रम्याङ्गपर्यन्तः, ततः प्रधानविधिर्विध्यादिर्न पुनर्विधिव्यतिरिक्तः कश्चिदादिशब्दार्थ इत्यर्थः । समिदादेर्विध्यन्तत्वे हेतुः—**प्रधानविधेरिति** । अतोऽङ्गस्य विध्यन्तत्वप्रसिद्धिः प्रधानविधेर्विध्यादित्वं गमयतीत्यर्थः । अपूर्वत्वाद्विधिरास्थेय इति समन्वयसूत्रे निदिध्यासनादेर्वेदत्ववगमवैशद्यं प्रत्यन्वयव्यतिरेकसिद्धत्वादविधेयत्वमुक्तम्, इह त्वन्वयव्यतिरेकसिद्धत्वेऽपि शाब्दज्ञानात् कृतकृत्यतां मन्वानो यदि कश्चित् ज्ञानातिशयरूपे निदिध्यासने न प्रवर्तेत, तं प्रत्यप्राप्तं तद्विधीयते इत्युच्यते । अत एव श्रुतिः "तत्त्वेव भयं विदुषोऽमन्वानस्ये"ति । अथवा पाण्डित्यादिशब्दान्तरादप्राप्तिरपूर्वत्वं विधित्वं चार्थवादस्यैव सतो वाक्यस्य प्रशंसाद्वारेण प्रवृत्त्यतिशयकरत्वम् । अत एव समन्वयसूत्रे भाष्यं—**विधिच्छायानि वचनानीति** । अपिच—

## कल्पतरुपरिमलः ।

लभ्य" इति श्रवणात् साङ्गाध्ययनजन्यापातब्रह्मज्ञानरूपस्य श्रवणस्य बलं तत्प्रतिष्ठापकं युक्तिभिरनुचिन्तनरूपं मननमेव बलं तेन योऽयमसंभावनानिरासः स बलस्य भाव इति बाल्यत्वेनोपचरितः, स एव मननेनेति मननकार्यत्वाद् मननत्वेनाप्युपचरितः । इदं व्याख्यानं बृहदारण्यकभाष्यानुसारेण । "अनाविष्कुर्वन्नन्वयादि"त्यधिकरणे वक्ष्यमाणेन प्रकारेण बालस्य कर्म बाल्यमिति व्युत्पत्तिमवलम्ब्य व्याख्यानान्तरं—**शुद्धहृदयत्वेन वेति** । ब्रह्माहमित्यवगच्छतीति ब्राह्मण इति शेष इति सूत्रस्याधिकारार्थत्ववल्लक्षणार्थत्वमप्यङ्गीकृत्य तेन चक्षुषा गृह्यत इति चाक्षुषमित्यादिरूपसिद्धेः शब्दविद्भिरुक्तत्वात् तेनैव सूत्रेणोक्तार्थे शैषिकोऽणप्रत्ययो द्रष्टव्यः । ब्रह्म अणति अवगच्छतीति ब्राह्मण इति पाठे तु कर्मण्यणित्यण्प्रत्ययः । धातूनामनेकार्थत्वात् शब्दकर्मकस्याणतेरिहावगत्यर्थता । साक्षात्कारवत इति भाष्ये हि विद्यावतः संन्यासिन इति व्याख्यानं, तद्व्याख्यानं "तं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती"ति विद्वत्संन्यासः प्राक् प्रकृतः विदित्वेति विशेषणादित्येतदभिप्रायं वाच्यं, तत्र च विद्वत्संन्यासे साक्षात्कारवति विद्यातिशयः सिद्ध इति भावः । विद्याशब्देनेति भाष्ये प्रकृतो विद्वत्संन्यासो न विवक्षितः, किंत्वेतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति वाक्यान्तरसिद्धो विविदिषुसंन्यासः; संन्याससामान्यग्रहणे प्रकरणमपेक्षते, नतु तद्विशेषग्रहणेऽपि; विद्यातिशयविधेरनुरोध्यत्वादिति भावः । भेददर्शनवशात् पाक्षिकाप्राप्तौ विधिरिति भाष्यटीकोक्तमयुक्तम्; अन्वयव्यतिरेकावगतफलसाधनभावे फलार्थिनां व्यासङ्गमात्रेण कदाचिदत्राप्रवृत्तिनिरासाय विध्यनपेक्षणादित्याशङ्क्य तत्तात्पर्यमाह—**शाब्दज्ञानात्कृतकृत्यतां मन्वान इति** । यथा दारान्तरपुत्रैः कृतकृत्यतां मन्वानस्य दारान्तरारागेण रोषेण वा अनुगमनाप्राप्तौ "ऋतावुपेयादेवे"ति नियमविधिः, तथेहापीति भावः । एवंचाविधेयत्वमुक्तमित्यस्यापूर्वविध्यविषयत्वमुक्तम्; इह तु नियमविधिविषयत्वमुच्यत इति पूर्वापरविरोधपरिहारो द्रष्टव्यः । एवमपि **विधिच्छायानीति** समन्वयसूत्रभाष्यस्य तत्रत्यटीकाग्रन्थस्य च नाञ्जस्यमित्यपरितुष्यन्नाह—**अथवेति** । दारान्तरपुत्रैरिव अत्र शाब्दज्ञानेन कृतकृत्यतां मन्वानस्य मूलं नास्ति; दारान्तरपुत्रैरेवानृण्यवत् शाब्दज्ञानमात्रेण ध्यानं विना साक्षात्कारस्य सिद्ध्यसंभवादतोऽत्र न नियमविध्यपेक्षा । अतः—**पक्षेणेति** सौत्रपदतद्भाष्ययोर्भेददर्शनव्यासङ्गाद् ध्यानेऽनुत्सहमानस्योत्साहजननार्थं विधिसरूपोऽयमर्थवाद इत्यत्रैव तात्पर्यमिति भावः । विध्यभावपक्षमेव सिद्धान्तमवलम्ब्य तमुपपादयति—**अपिचेति** । श्रवणमननध्यानानां क्रमेण भवतां ब्रह्मसाक्षात्कारपर्यवसानेन फलवत्त्वमिष्यते । तत्र श्रवणमध्ययनविध्यायत्तसाङ्गाध्ययनजन्यापातज्ञानरूपं न कमपि विधिमपेक्षत इतीष्टमेव । तदेव फलवदर्थनिर्णयार्थविचारात्मके मनने प्रवर्तयेदिति तत्रापि न विधिरपेक्ष्यते । नच—अनपेक्षस्वतन्त्रविचारस्य द्वैतशास्त्रविचारस्य वा पक्षे प्राप्तौ नियमविधेरवकाशोऽस्तीति—शङ्कनीयम्; "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि"ति नियमविधानादायनियमसिद्धेः, शास्त्रान्तरविचारस्याद्वितीयब्रह्मसाक्षात्कारानुपायत्वादेव तदप्राप्तेः । नच—द्वैतशास्त्रविचारस्य मोक्षार्थब्रह्मज्ञानोपायत्वभ्रान्त्या तत्प्राप्तिः संभवतीति—वाच्यम्; भ्रान्तिप्रयुक्तप्राप्तेः नियमविधिनापि वारयितुमशक्यत्वात्, तस्यापि नियमविधेर्द्वैतिकृतयोजनया द्वैतशास्त्रविचारनियमविषयताभ्रान्तिसंभवात् । नच—वेदान्तार्थग्रथनपरपुराणभाषाप्रबन्धादिविचारस्यापि पक्षे प्राप्तौ वेदान्ता एव विचारणीया इति नियमविध्यपेक्षाऽस्तीति—वाच्यम्; वेदेनैव वेदार्थो ज्ञातव्य इत्यध्ययनविधित एव तस्य नियमस्य लाभात्, "इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि"ति वेदोपबृंहणत्वेनैव पुराणादिविनियोगात्, "न म्लेच्छभाषां शिक्षेते"त्यादिभिर्निषिद्धस्य भाषाप्रबन्धस्याप्राप्तेश्च ।

## वेदान्तकल्पतरुः ।

**नात्रापूर्वविधिः प्राप्तेरनन्योपायतो न च । नियमः परिसंख्या वा श्रवणादिषु संभवेत् ॥**

अवघातो हि दलनाद्युपायान्तरसंभवे च सति पाक्षिक्यामप्राप्तौ तत्परिपूरणेन नियम्यते । "इमामगृभ्णन् रशनामृतस्ये"ति मन्त्रश्चाग्रभ्णन्नित्यादानलिङ्गाद् रशनाशब्दाच्चाश्वगर्दभरशनयोरुभयत्र प्राप्तौ "अश्वाभिधानीमादत्त"इति गर्दभरशनातो व्यावर्त्यते, नतु श्रवणादिसाध्ये ब्रह्मसाक्षात्कारेऽस्त्युपायान्तरसंभवो यतः श्रवणादेर्नियमः परिसंख्या वा स्यात् । नच ब्रह्मसाक्षात्कारव्यक्तावुपायान्तरासंभवादपूर्वविधित्वमाशङ्कनीयम्; यतः सामान्योपाधावन्वयव्यतिरेकौ

## कल्पतरुपरिमलः ।

नच—न्यायविचारं विनाऽस्य वाक्यस्यायमर्थ इति न्यायसिद्धार्थविषयगुरूपदेशस्यापि पक्षे प्राप्तिरस्तीति—शङ्कनीयम्; लक्षणमुखेन हि ब्रह्म निर्धार्य ध्यानेन तत्साक्षात्कारः संपादनीयः । ब्रह्मसद्भावमात्रं संप्रतिपद्य तत्किं ब्रह्मेतीदंतया निर्धारणार्थमुपसन्नाय भृगवे यतो वेत्यादिलक्षणमुखेन तदुपदिश्य तद्विजिज्ञासस्वेत्युक्तिसामर्थ्यात् लक्षणेनैव ब्रह्म निर्धार्य ध्यातव्यमिति नियमोन्नयनात् । नहि श्वङ्गग्राहिकयोपदेशस्यापि ध्यानसाक्षात्कारोपयोगिब्रह्मनिर्धारणोपायत्वे गुरुपाये लक्षणमुखेन ब्रह्मनिर्धारणे गुरुः शिष्यं प्रवर्तयेत् । तन्मुखेन ब्रह्मनिर्द्धारणं च प्रधानाद्यतिव्याप्तिनिरासेनासंभवनिरासेन च लक्षणदृढीकरणार्थं सर्ववेदान्तनिर्णायकन्यायविचारमपेक्षते । सगुणनिर्गुणवाक्यविवेचनेन निर्गुणवाक्यप्रतिपन्नानन्दादिगुणास्थूलत्वादिनिषेधोपसंहारेणाखण्डवाक्यार्थनिर्धारणमपि तमपेक्षते; न्यायानुसंधानाय चेदं वाक्यं सगुणविषयमिदं निर्गुणविषयमिति न्यायानुसंधानरहितस्यासंकरेण धारणासंभवात्, तदसंभवेऽप्येतद्वाक्यं सगुणविषयमेतन्निर्गुणविषयमिति न्यायानुसंधानरहितस्यासंकरेण धारणासंभवात्, तदसंभवे च स्वयमनुपपत्तिप्रतिसंधानेनान्याक्षेपकृतानुपपत्तिप्रतिसंधानेन वा क्षोभितहृदयस्य प्राचीननिर्धारणान्यथाभावापत्तेः, यस्य प्राग्भवकृतन्यायविचारवासनातिशयवशादुपदेशमात्रतोऽपि निश्चलं बृहस्पतिनाप्यक्षोभ्यं निर्धारणं संभवति, तस्य मननानपेक्षायामपि दोषाभावात् । अत एव "तत्कारणं सांख्ययोगाभिपन्नमि"ति श्रुत्या सांख्ययोगशब्दितं विचारोपदेशमात्रपूर्वकब्रह्मप्रतिपत्त्युपायद्वयमुक्तम् । नच—सोपाधिकात्मसाक्षात्कारक्लृप्तकरणभावमनोव्यापारस्य पक्षे प्राप्तिरस्तीति—शङ्कनीयम्; ज्ञानमात्रे क्लृप्तकारणभावस्य "समाहितो भूत्वे"ति विशिष्यात्मदर्शने नितरामपेक्षितत्वेन श्रुतस्य च तस्य नियतप्राप्ततया व्यावर्तनायोगात् । तथापि मनसःकरणतया प्राप्तिः पाक्षिकीति चेद्, न; "मनसैवानुद्रष्टव्यमि"ति श्रुतेः "श्रवणादिसंस्कृतं मन आत्मदर्शने करणमि"ति गीताभाष्यदर्शनाच्च मनस एव करणतयाऽपि नियमेन प्राप्तेः । एवं पाक्षिकस्याप्युपायान्तरस्य प्राप्त्यसंभवे समुच्चयेनोपायान्तरस्य व्यावर्तनयोग्यस्य प्राप्तिर्दूरापास्तेति नोपायपरिसंख्यापि शङ्कार्हा । **अवघातो हीति** । दर्शपूर्णमासयोरुत्पत्तिशिष्टपुरोडाशावरुद्धेष्वाग्नेयादियागेषु साक्षात्साधनत्वेन निवेशमलभमाना "व्रीहिभिर्यजेते"ति यागसाधनभावेन श्रुतव्रीहयः पुरोडाशद्वारा तदन्वयं लभन्ते । तेषां पुरोडाशसाधनत्वात्तण्डुलादिद्वारेति तण्डुलभावनापेक्षितोऽवघातः प्रत्यक्षविधिमनपेक्ष्य सामर्थ्यादेव प्राप्नोति, किंतु नखविदलनादिकमपि तद्वदेव पक्षे प्राप्नुयादिति सामर्थ्यादवघातस्य प्राप्तिः सार्वत्रिकी न भवेत्, अतस्तत्सार्वत्रिकत्वसिद्धये नियमविधिराश्रीयत इत्यर्थः । **इमामगृभ्णन्निति** । अग्निचयने अश्वरशनाग्रहणं गर्दभरशनाग्रहणं चानुष्ठेयम् । अतस्तत्प्रकरणाम्नातस्य "इमामगृभ्णन्नि"ति मन्त्रस्य रशनाग्रहणप्रकाशनसामर्थ्यरूपाल्लिङ्गाद् उभयत्रापि विनियोगप्राप्ताविमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति परिसंख्याविधिर्गर्दभरशनाग्रहणाद् मन्त्रव्यावर्तनफलं स्वीक्रियत इत्यर्थः । यद्यपि नियमविधावपि नखविदलनादिनिवृत्तिरस्ति; तथाप्यवघाताप्राप्तांशपरिपूरणे कृते तन्निवृत्तिर्भवतीति प्राथमिकत्वाद् विधेयगतत्वेन प्रत्यासन्नत्वादप्राप्तांशपरिपूरणं तत्र फलम् । इतरनिवृत्तिरानुषङ्गिकी, परिसंख्यायां तु द्वयोरपि नित्यप्राप्तेरप्राप्तांशपरिपूरणासंभवादितरनिवृत्तिरेव फलमयोगान्ययोगव्यवच्छेदरूपफलाभ्यां नियमपरिसंख्ययोर्भेदः । **न त्विति** । **ननु**—यथा प्रसिद्धयोर्नियमपरिसंख्योदाहरणयोर्विकल्पसमुच्चयाभ्यां प्राप्नुवदुपायान्तरमस्ति, नैवमत्रोपायान्तरं संभवतीत्यनेन ग्रन्थेनोच्यते, नैतद्युक्तम्; नियमविधौ यथाऽवघातप्रतिद्वन्द्विनखविदलनमुपायान्तरमस्ति, नैवमिमामगृभ्णन्निति मन्त्रस्य प्रतिद्वन्द्विरशनाप्रकाशनोपायान्तरमस्ति, किंतु मन्त्रप्रकाश्यमश्वरशनाग्रहणप्रतिद्वन्द्वि गर्दभरशनाग्रहणमुपायान्तरमेवास्ति, अतः प्रकृते उपायान्तरसंभवे उदाहृतपरिसंख्याविधेर्व्यतिरेकदृष्टान्तता न घटत इति—**चेत्, सत्यम्**; उपायोपेयसाधारण्येन निवर्तनीयप्रतिद्वन्द्विसंभवमात्रे व्यतिरेकदृष्टान्तता विवक्षितेति न दोषः । उपायान्तरपरिसंख्यायां तु गृहमेधीयाज्यभागविधानमुदाहरणम् । तद्धि गृहमेधीयापेक्षिताखण्डोपकारोपायत्वेनाज्यभागद्वयतदितराङ्गकलापयोः प्राप्तावितराङ्गकलापव्यावर्तनफलम् । **ननु च—ब्रह्मसाक्षात्कारव्यक्तावुपायान्तरासंभवादित्यादि**शङ्कापरिहारग्रन्थयोर्नियमविध्युपपादनार्थता प्रतीयते, तत्रोपायान्तरप्राप्तौ हि नियमविधिः । नच ब्रह्मसाक्षात्कारे वेदान्तश्रवणादिव्यतिरेकेणोपायान्तरमस्ति, अतस्तत्र विधिमभ्युपगच्छताऽपूर्वविधिरास्थेय इति शङ्का विशिष्य गृहीतका-

तीयके विध्यादौ सहकारित्वेनाग्न्यन्वाधानादिकमङ्गजातं विधीयते । एवमविधिप्रधानेऽप्यस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः ॥ ४७ ॥ एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने कस्माच्छान्दोग्ये गृहिणोपसंहारः 'अभिसमावृत्य कुटुम्बे' ( छा० ८।१५।१ ) इत्यत्र ? तेन ह्युपसंहरंस्तद्विषयमादरं दर्शयतीति । अत उत्तरं पठति—

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

तुशब्दो विशेषणार्थः । कृत्स्नभावोऽस्य विशेष्यते । बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि, तं प्रति कर्तव्यतयोपदिष्टान्याश्रमान्तरकर्माणि च यथासंभवमहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते । तस्माद्गृहमेधिनोपसंहारो न विरुध्यते ॥ ४८ ॥

**मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

यथा मौनं गार्हस्थ्यं चैतावाश्रमौ श्रुतिमन्तावेवमितरावपि वानप्रस्थगुरुकुलवासौ । द-

---

### भामती ।

कस्मात्पुनर्गार्हस्थ्येनोपसंहरतीति चोदयति—**एवं बाल्यादिविशिष्टेति** । उत्तरं पठति—**कृत्स्नभावात्तु गृहिणोपसंहारः** । छान्दोग्ये बहुलायाससाध्यकर्मबहुलत्वाद्गार्हस्थ्यस्य चाश्रमान्तरधर्माणां च केषांचिदहिंसादीनां समवायात्तेनोपसंहारो न पुनस्तेन समापनादित्यर्थः ॥ ४८ ॥ एवं तावदाश्रमद्वयोपन्यासेन क्वचित्कदाचिदितराभावशङ्का

### वेदान्तकल्पतरुः ।

निविशेते, न व्यक्तौ; इतरथाऽवघातव्यक्तिसाध्यतण्डुलव्यक्तावुपायान्तरासंभवपरिज्ञानादपूर्वविधित्वप्रसङ्गात् । **यत्तु वार्तिककृद्भिरुक्तम्**—"सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् । श्रोतव्य इत्यतः प्राह वेदान्तावरुरुत्सया ॥" इति । प्रमाणफलं साक्षात्कारं प्रति सर्वमानप्राप्तौ वेदान्ता नियम्यन्ते इत्यत्रापि प्रमाणनियम उक्तो न श्रवणनियमः । न च स एव विधेर्विषयः; संनिधानादेव वेदान्तलाभात् । एतेन पुराणादिप्राप्तौ वेदान्तनियमं व्याचक्षीत । तस्मान्न वाचस्पतेः पूर्वापरव्याहतभाषिता नापि सूत्रभाष्यानभिज्ञतेति ॥ ४७ ॥ **कस्मात्पुनर्गार्हस्थ्येनेति** । तेनोपसंहारे हि न ततः पर

### कल्पतरुपरिमलः ।

र्थकारणभावस्योपायान्तरस्याभावेऽपि साक्षात्कारयोग्यसूक्ष्मार्थविषयकशास्त्रश्रवणादिकं तत्साक्षात्कारकारणमिति तत्र शास्त्रश्रवणादिषु सामान्यतः कार्यकारणभावग्रहेण क्रोडीकृतं पुराणश्रवणादिकमप्युपायान्तरमस्तीति नियमविधिर्युक्तः । सामान्यकार्यकारणभावग्रहमूलप्राप्तिमात्रमेव नियमविधावुपयुज्यते, यथाऽवघातादाविति परिहारश्च वर्णित इति प्रतीयते । नैतद्युक्तम्; नह्यत्र नियमविध्युपपादनं प्रस्तुतम्; पूर्वोत्तरग्रन्थयोस्तन्निराकरणार्थत्वात्, नचाचार्यैः प्रदर्शितो नियमविधिपक्षोऽपि पाक्षिकोपायान्तरप्राप्तियुक्तः, किंतु ऋतुगमनादिनियमविधिवत्पाक्षिकाप्राप्तियुक्तः । नचेमौ शङ्कापरिहारग्रन्थौ नियमविध्युपपादनमनपेक्ष्य केवलमपूर्वविध्यभावोपपादनपरतया योजयितुं शक्यौ । कथम् ? शङ्का तावदपूर्वविध्युपपादनविषयतया योजयितुं न शक्या; न ह्युपायान्तरासंभवः साक्षादपूर्वविधित्वे हेतुः; पश्वादिषूपायान्तरसंभवेऽपि "चित्रया यजेत पशुकाम" इत्यादीनामपूर्वविधित्वदर्शनात्, प्रयाजादिजन्योपकारेषूपायान्तरासंभवेऽपि "प्रयाजे प्रयाजे कृष्णलं जुहोती"त्यादीनां प्रयाजाद्यंशे अनुवादत्वदर्शनाच्च । तथा परिहारोऽप्यपूर्वविध्यभावोपपादनविषयतया योजयितुं न शक्यः; नहि परिहारग्रन्थेन वेदान्तश्रवणादेरपूर्वविधिविरोधी मानान्तरसिद्धः कार्यकारणभावोऽभिधीयते, किंतु तत्प्रतिद्वन्द्विन उपायान्तरस्य; इतरथेत्यादिग्रन्थे उपायान्तरापरिज्ञानात्, अतो हेतुना तथा तदाशयस्फुटीकरणादिति । तस्मादिमौ शङ्कापरिहारग्रन्थावनुचिताविति—**चेत्, उच्यते**; ब्रह्मसाक्षात्कारे वेदान्तश्रवणादिकं कारणमिति विशिष्य तयोः कार्यकारणभावग्राहकमुपायान्तरं मानान्तरं नास्ति । अतो मानान्तराप्राप्तकार्यकारणभावविषयत्वादपूर्वविधिः श्रवणादिष्वङ्गीकर्तव्य इति शङ्कार्थः । विशिष्य कार्यकारणभावग्राहकाभावेऽपि सामान्यतः साक्षात्कारयोग्यस्य बहुशः श्रवणमननादिभिर्निर्धारितस्वरूपस्य चिरन्तनाभ्यस्तं ध्यानं मानसे तत्साक्षात्कारे कारणमिति कामिनीभावनातत्साक्षात्कारयोर्गृहीतः कार्यकारणभावोऽस्ति । अतो नापूर्वविधेरवकाशः । सामान्यतः कार्यकारणभावग्रहोऽप्यपूर्वविधिविरोधि; अन्यथा नियम्यावघातव्यक्तिसाध्यापूर्वीयतण्डुलव्यक्तौ य उपायनियम्योऽवघातः तस्यान्तरमवकाशः कारणत्वेन प्रवेशः तस्यापरिज्ञानान्मानान्तरेण ज्ञानाभावादपूर्वविधिः स्यादिति परिहारार्थः । **सर्वमानेति** । द्रष्टव्य इति हि दर्शनरूपं फलमिहाश्रितम् । तच्च सर्वेषां प्रमाणानां साधारणं फलम् । अतः सर्वेषु प्रमाणेष्वात्मदर्शनफलार्थमनियमेन प्रसक्तेषु वेदान्त एव तत्र प्रमाणमिति नियमनाय श्रोतव्य इत्यनेन वेदान्तश्रवणमाहेत्यर्थः । **सन्निधानादेवेति** । योग्यतावशादित्यर्थः । वेदान्तैकवेद्ये ब्रह्मात्मैकत्वे तदतिरिक्तप्रमाणानां योग्यतया

र्शिता हि पुरस्ताच्छ्रुतिः—'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' (छा० २।२३।१) इत्याद्या । तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात्तुल्यवद्विकल्पसमुच्चयाभ्यां प्रतिपत्तिः । इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षयाऽनुष्ठातृभेदापेक्षया वेति द्रष्टव्यम् ॥ ४९ ॥ इति चतुर्दशं सहकार्यन्तरविध्यधिकरणम् ॥

(१५ अधिकरणम्) **अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥**

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ० ३।५।१) इति बाल्यमनुष्ठेयतया श्रूयते । तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति बालभावस्य वयोविशेषस्येच्छया संपादयितुमशक्यत्वाद्यथोपपाद मूत्रपुरीषत्वादिबालचरितमन्तर्गता वा भावविशुद्धिरप्ररूढेन्द्रियत्वं दम्भदर्पादिरहितत्वं वा बाल्यं स्यादिति संशयः । किं तावत्प्राप्तम् ? कामचारवादभक्षणता यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम् । ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याश्रयणम्, न; विद्यावतः संन्यासिनो वचनसामर्थ्याद्दोषनिवृत्तेः पशुहिंसादिष्विवेति । एवं प्राप्तेऽभिधीयते—न; वचनस्य गत्यन्तरसंभवात् । अविरुद्धे ह्यन्यस्मिन्बाल्यशब्दाभिलप्ये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता । प्रधानोपकाराय

---

### भामती ।

मन्दबुद्धेः स्यादिति तदपाकरणार्थं सूत्रम्—**मौनवदितरेषामप्युपदेशात्** । वृत्तिर्वानप्रस्थानामनेकविधा एवं ब्रह्मचारिणोऽपीति वृत्तिभेदः, अनुष्ठातारो वा पुरुषा भिद्यन्ते, तस्माद्द्वित्वेऽपि बहुवचनमविरुद्धम् ॥ ४९ ॥ **इति चतुर्दशं सहकार्यन्तरविध्यधिकरणम् ॥**

**अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥** बाल्येनेति यावद्बालचरितश्रुतेः कामचारवादभक्षतायाश्चात्यन्तबाल्येन प्रसिद्धेः शौचादिनियमविधायिनश्च सामान्यशास्त्रस्यानेन विशेषशास्त्रेण बाधनात्सकलबालचरितविधानमिति प्राप्तेऽभिधीयते—विद्याङ्गत्वेन बाल्यविधानात्समस्तबालचर्यायां च प्रधानविरोधप्रसङ्गाद्यत्तदनुगुणमप्रौढेन्द्रियत्वादि भावशुद्धिरूपं तदेव

### वेदान्तकल्पतरुः ।

आश्रम इति द्योतितं भवति । तच्चानुपपन्नं बाल्यप्रधान आश्रमान्तरे सतीत्यर्थः ॥ ४८ ॥ **वृत्तिर्वानप्रस्थानामिति ।** वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति वानप्रस्थवृत्तिभेदाः । गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारिवृत्तयः ॥ ४९ ॥ **इति चतुर्दशं सहकार्यन्तरविध्यधिकरणम् ॥**[1]

**अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ ननु** भावशुद्धिरपि बालचरितं भवति तन्मात्रमेव गृह्यतामत आह—**यावद्बालचरितश्रुतेरिति ।** यावदस्ति बालचरितं तावतः सर्वस्य बाल्येनेति श्रुतेरवगमान्न सङ्कोचः कार्य इत्यर्थः । **अपिच** यथा पूर्वत्र मौनशब्दस्य ज्ञानातिशये प्रसिद्धिमाश्रित्याप्राप्तमौनविधिराश्रितः, एवमत्रापि बाल्यशब्दस्य कामचारादौ प्रसिद्धेस्तदेव बाल्यं न हि शुद्धभावेऽपि तपस्विनि बालशब्दं वृद्धाः प्रयुञ्जत इत्यभिप्रेत्याह—**कामचारेति । भावशुद्धिरूपं तदेवेति ।** यद्यपि केवलायां भावशुद्धौ बाल्यशब्दो न प्रसिद्धः; तथापि कामचारादिमति बाले भावशुद्धिरस्ति, तावन्मात्रपरतया बाल्यशब्दः सङ्कोच्यत इत्यर्थः । सङ्कोचे च कारणं शेषिविध्यनुग्रह एकमुक्तम्, अपरं चाह—

### कल्पतरुपरिमलः ।

निवृत्तौ वेदान्तश्रवणनियमः स्वयमेव लभ्यते, तदर्थं श्रोतव्य इत्यनेनानुवदन्तीति वार्तिकार्थ इति तात्पर्यम् ॥ ४७ ॥ **तच्चानुपपन्नमिति ।** यदि बाल्यप्रधानमाश्रमान्तरमपि भवेत्, तदा तदनुपपन्नं स्याद्, अतस्तथाभूतमाश्रमान्तरं नास्तीत्यर्थः ॥ ४८ ॥ **वैखानसा इति । उक्तं महाभारते—**ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । चत्वार आश्रमाः प्रोक्ता एकैकस्तु चतुर्विधः ॥ इति । तत्र गायत्रादयो ब्रह्मचारिभेदाः । वार्तावृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति गृहस्थभेदाः । वैखानसाद्या वनस्थभेदाः । कुटीचकबहूदकहंसपरमहंसा यतिभेदाः ॥ ४९ ॥ **इति चतुर्दशं सहकार्यन्तरविध्यधिकरणम् ॥**

**अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ शेषिविध्यनुग्रहणमिति ।** बाल्यं तावद्विद्याशेषत्वेन विधीयते, विद्या च

---

१ **तत्र सूत्राणि ३—**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ४७ कृत्स्नभावात्तु गृहिणोपसंहारः ४८ मौनवदितरेषामप्युपदेशात् ४९ ॥

चाङ्गं विधीयते । ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम् । नच सकलायां बालचर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः संभाव्यते । तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह बाल्यमाश्रीयते । तदाह—अनाविष्कुर्वन्निति । ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन्दम्भदर्पादिरहितो भवेत् । यथा बालोऽप्ररूढेन्द्रियतया न परेषामात्मानमाविष्कर्तुमीहते तद्वत् । एवं ह्यस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते । तथाचोक्तं स्मृतिकारैः—'यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥ गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् । अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्' ॥ 'अव्यक्तलिङ्गोऽव्यक्ताचारः' इति चैवमादि ॥ ५० ॥ इति पञ्चदशमनाविष्काराधिकरणम् ॥

( १६ अधिकरणम् ) **ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥**

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र० सू० ३।४।२६) इत्यत आरभ्योच्चावचं विद्यासाधनमवधारितम् । तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि सिध्यत्युत कदाचिदमुत्रापीति चिन्त्यते । किं तावत्प्राप्तम्? इहैवेति । किं कारणम्? श्रवणादिपूर्विका हि विद्या । नच कश्चिदमुत्र मे विद्या

---

### भामती ।

विधीयते । एवंच शास्त्रान्तराबाधेनाप्युपपत्तौ न शास्त्रान्तरबाधनमन्याय्यं भविष्यतीति ॥ ५० ॥ **इति पञ्चदशमनाविष्काराधिकरणम् ॥**

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥** संगतिमाह—**सर्वापेक्षा चेति** । किं श्रवणादिभिरिहैव वा जन्मनि विद्या साध्यते, उतानियम इह वामुत्र वेति । यद्यपि कर्माणि यज्ञादीन्यनियतफलानि, तेषां च विद्योत्पादसाधनत्वेन विद्योत्पादस्यानियमः प्रतिभाति, तथाच गर्भस्थस्य वामदेवस्यात्मप्रतिबोधश्रवणात्, 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति च स्मरणादामुष्मिकत्वमप्यवगम्यते; तथापि यज्ञादीनां प्रमेयाणामप्रमाणत्वाच्छ्रवणादेश्च प्रमाणत्वात्तेषामेव

### वेदान्तकल्पतरुः ।

**एवं चेति** । शास्त्रान्तरबाधनं यदन्याय्यं तदेवं सति न भविष्यतीति योजना ॥ ५० ॥ **इति पञ्चदशमनाविष्काराधिकरणम् ॥**[1]

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥** संशयं प्रदर्श्य पूर्वपक्षाभावमाशङ्कते—**यद्यपीति** ।

### कल्पतरुपरिमलः ।

कामचारादिभ्यो निवृत्तेनैव लभ्यते, "नाविरतो दुश्चरिता"दित्यादिश्रुतेः, अनन्यव्यापारत्वस्य विद्याभ्यासेनापेक्षितत्वाच्च । शेषिविरोधेन च शेषो ग्राह्यः । अत एव यदा यूपार्थं तनुरेव खदिरो लब्धः, तत्र तक्षणादौ कृते अतिकनीयस्त्वप्राप्त्या पश्वनपक्रमणप्रयोजनकं पशुनियोजनार्थं यूपद्रव्यं न संभवति चेत्, तक्षणादित्यागो "द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वा"दिति ( जै. अ. ६ पा. ३ सू. ३८ ) पूर्वतन्त्राधिकरणे निर्णीतः । यदैवं शेषिविरोधे क्लृप्तस्यापि शेषस्य त्यागः, तदा किमु वक्तव्यम् इह तद्विरोधी बाल्यशब्दस्य संभवितार्थान्तरस्यार्थत्वेन न ग्राह्य इत्यत्रेति भावः । **ननु**—शास्त्रान्तराबाधनमपरं कारणमित्येतदयुक्तम्; क्रत्वर्थपुरुषार्थतया विषयभेदापत्तेः, नच विषयभेदेनाविरोधोऽपि; बाल्यवामदेव्योपासकादिषु क्लृप्तसंकोचस्य नियमविधायिनः सामान्यशास्त्रस्यैव संकोचनौचित्यात्, विशेषशास्त्रासंकोचाय सामान्यशास्त्रस्यैव संकोचनस्यान्यत्र क्लृप्तत्वाच्च । **तथा हि**—द्वादशाहे "संस्थिते षडहे मध्वाशयेद् घृतं वेति" ऋत्विजां वैकल्पिकं मध्वशनं विहितम्, द्वादशाहः सत्राहीनोभयात्मकः । सत्रे यजमाना एव ऋत्विजः । यजमानानां ब्रह्मचर्यविधानाद् ब्रह्मचर्यशब्दार्थस्य वेदाध्ययनस्याधीतवेदेषु दीक्षितेषु विधानायोगेन ब्रह्मचर्यशब्दस्य तद्धर्मलक्षकतया तद्धर्मान्तर्गतो मध्वशननिषेधोऽपि तेषां सामान्यतः प्राप्तः । तत्र यद्यपि सामान्यशास्त्राबाधाय मध्वशनस्याहीनद्वादशाहविषयतया संकोचः कल्पयितुं शक्यते; तथापि विशेषशास्त्रस्य लक्षणप्रतिपदोक्तन्यायेन बलवत्त्वादेतदनुसारेण सामान्यशास्त्रस्यैव ज्योतिष्टोमादतिदेशप्राप्तस्य विशेषशास्त्रानुसारेण मध्वशनव्यतिरिक्तेषु संकोचः "यो मधुन दीक्षितो ब्रह्मचारित्वादिति" ( जै. अ. १० पा. ६ सू. ३२ ) पूर्वतन्त्राधिकरणे निर्णीतः । तस्माद् सामान्यशास्त्राबाधनमपरं कारणं भवितुं नार्हतीति—**चेत्, सत्यम्**; शेष्यनुग्रहेण कारणेन सिद्धस्यार्थस्यानुषङ्गिकं प्रयोजनं कारणान्तरत्वेन व्यपदिष्टमिति न दोषः । तदेतच्छास्त्रान्तरबाधनमेवं सति न भविष्यतीत्युक्तिभङ्ग्या सूचितम् ॥ ५० ॥ **इति पञ्चदशं अनाविष्काराधिकरणम् ॥**

---

१ तत्र सूत्रम् २—अनाविष्कुर्वन्नन्वयात् ५० ॥

जायतामित्यभिसंधाय श्रवणादिषु प्रवर्तते । समान एव तु जन्मनि विद्याजन्माभिसंधायैतेषु प्रवर्तमानो दृश्यते । यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति प्रमाणजन्यत्वाद्विद्यायाः । तस्मादैहिकमेव विद्याजन्मेति । एवं प्राप्ते वदामः—ऐहिकं विद्याजन्म भवत्यसति प्रस्तुतप्रतिबन्ध इति । एतदुक्तं भवति—यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित्प्रतिबन्धो न क्रियत उपस्थितविपाकेन कर्मान्तरेण, तदेहैव विद्योत्पद्यते, यदा तु खलु तत्प्रतिबन्धः क्रियते, तदाऽमुत्रेति । उपस्थितविपाकत्वं च कर्मणो देशकालनिमित्तोपनिपाताद्भवति । यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि तान्येवान्यस्यापीति न नियन्तुं शक्यते । यतो विरुद्धफलान्यपि कर्माणि भवन्ति । शास्त्रमप्यस्य कर्मण इदं फलं भवतीत्येतावति पर्यवसितं, न देशकालनिमित्तविशेषमपि संकीर्तयति । साधनवीर्यविशेषात्त्वतीन्द्रिया कस्यचिच्छक्तिराविर्भवति तत्प्रतिबद्धा परस्य तिष्ठति । न चाविशेषेण विद्यायामभिसंधिर्नोत्पद्यत इहामुत्र वा मे विद्या जायतामित्यभिसंधेर्निरङ्कुशत्वात् । श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते । तथाच श्रुतिर्दुर्बोधत्वमात्मनो दर्शयति—'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः' ( क० २।७ ) इति । गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती जन्मान्तरसंचितात्साधनाज्जन्मान्तरे विद्योत्पत्तिं दर्शयति । नहि गर्भस्थस्यैवैहिकं किंचित्साधनं संभाव्यते । स्मृता-

## भामती ।

साक्षाद्विद्यासाधनत्वम् । यज्ञादीनां सत्त्वशुद्ध्याधानेन वा विद्योत्पादकश्रवणादिलक्षणप्रमाणप्रवृत्तिविघ्नोपशमेन वा विद्यासाधनत्वम् । श्रवणादीनां त्वनपेक्षाणामेव विद्योत्पादकत्वम् । नच प्रमाणेषु प्रवर्तमानाः प्रमातार ऐहिकमपि चिरभाविनं प्रमोत्पादं कामयन्ते, किंतु तादात्विकमेव, प्रागेव तु पारलौकिकम् । नहि कुम्भदिदृक्षुश्चक्षुषी समुन्मीलयति कालान्तरीयाय कुम्भदर्शनाय किंतु तादात्विकाय । तस्मादैहिक एव विद्योत्पादो नानियतकालः । श्रुतिस्मृती च पारलौकिकं विद्योत्पादं स्तुत्या ब्रूतः । इत्थंभूतानि नाम श्रवणादीन्यावश्यकफलानि यत्कालान्तरेपि विद्यामुत्पादयन्तीति । एवं प्राप्त उच्यते—यत एवात्र विद्योत्पादे श्रवणादिभिः कर्तव्ये यज्ञादीनां सत्त्वशुद्धिद्वारेण वा विघ्नोपशमद्वारा वोपयोगोऽत एव तेषां यज्ञादीनां कर्मान्तरप्रतिबन्धाप्रतिबन्धाभ्यामनियतफलत्वेन तदपेक्षाणां श्रवणादीनामप्यनियतफलत्वं

## वेदान्तकल्पतरुः ।

**विघ्नोपशमेनेति** । श्रवणादौ पुरुषप्रवृत्तौ पापरूपो यो विघ्नस्तदुपशमेनेत्यर्थः । यज्ञादीनां श्रवणादिघटकत्वाद् घटितेषु श्रवणादिषु विद्ययाऽवश्यं भवितव्यमित्यैहिकत्वनियम इति भावः । **तदात्वे** तत्काले साधनानुष्ठानानन्तरक्षणे भवं तादात्विकम् । श्रवणादिस्वरूपनिष्पत्तये यथा सत्त्वशुद्धिविघ्ननिरासौ कर्तव्यौ, एवं श्रवणादिभिर्विद्योत्पत्तये च तैस्तौ कर्तव्यौ, तत्र यज्ञादिभिः सत्त्वशुद्ध्याद्युत्पत्तावपि विरोधिकर्मान्तरैः प्रारब्धफलैः प्रतिबन्धाप्रतिबन्धौ संभाव्येते; "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्यु"रिति श्रुतेः । न चैवं प्रतिबन्धकनिवर्तकस्यापि प्रतिबन्धकान्तराभ्युपगमे तन्निवृत्त्यर्थमपि कर्मान्तरमनुष्ठेयमित्यनवस्था; यज्ञादिप्रतिबन्धकस्य पाप्मनो भोगद्वारेण प्रतिबन्धकत्वाद्भोगनिवृत्तौ तत्क्षये यज्ञादिभिः सत्त्वशुद्ध्याद्यारम्भसंभवात् । अतश्चानियतफलयज्ञादिसापेक्षत्वाच्छ्रवणादेरविधेयस्याप्यनियतफलत्वमिति सिद्धान्तयति—**यत एवेति** । एवं—**विधिसामर्थ्यमाश्रित्य ब्रुवन्नामुत्रिकं फलम् । श्रवणादेः कथंकारं वाचस्पतिर्न त्रपे इति** कैश्चित्कृत उपालम्भ एतद्ग्रन्थार्थालोचनेऽनवकाशः परावृत्त्य तत्रैव धावति । नच—दृष्टफलस्यामुष्मिकफलत्वमदृष्टापेक्षत्वं

## कल्पतरुपरिमलः ।

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ श्रवणादिघटकत्वादिति** । विविदिषोत्पादनद्वारेति शेषः । **विद्ययाऽवश्यं भाव्यमिति** । यदि विद्या यज्ञादिफलं स्यात्, तदा चित्रादिफलवत्कदाचिदामुष्मिक्यपि भवेद्, न त्वेतदस्ति; यज्ञादीनां विविदिषामात्रेण चारितार्थ्यात् । अतः श्रवणादिषु सत्सु विद्ययाऽवश्यं भाव्यं चक्षुरादिव्यापारेषु सत्सु घटादिप्रमित्येवेति भावः । **न चैवमिति** । प्रतिबन्धकनिरासार्थं खलु यज्ञादिकमनुष्ठीयते । यदि तस्यापि प्रतिबन्धकनिवृत्तिरूपस्वफलजनने प्रतिबन्धकान्तरं स्यात्, तदा तन्निवृत्त्यर्थमपि कर्मान्तरमनुष्ठेयं भवेत् । एवं तत्तत्प्रतिबन्धकनिवृत्त्यर्थमपीत्यनवस्थेत्यर्थः । इदमुपलक्षणं—सत्यामपि विविदिषायां विद्याद्युत्पत्तिप्रतिबन्धककर्मनिरासार्थं कर्मानुष्ठेयं स्यादिति ब्रह्मसंस्थायाः कदापि नावकाशः स्यादित्यपि दोषो द्रष्टव्यः । **यज्ञादिप्रतिबन्धकस्येति** । यज्ञादीनां विविदिषाश्रवणमननिदिध्यासनसाक्षात्काराणां च प्रतिबन्धकानि दुरितानि संभाव्यन्ते, तत्र यज्ञादिप्रतिबन्धकानि भोगैकनाश्यानीति भोगेन तत्क्षये सत्येव यज्ञाद्यनुष्ठानम्, विविदिषादिप्रतिबन्धकानि तु प्रारब्धान्यप्रारब्धानि च द्विविधानि । यस्य सर्वाण्यपि प्रार-

वपि—'अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति' ( गी० ६।३७ ) इत्यर्जुनेन पृष्टो भगवान्वासुदेवः 'नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' ( गी० ६।४० ) इत्युक्त्वा पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले संभूतिं चाभिधायानन्तरम् 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' ( गी० ६।४३ ) इत्यादिना 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' ( गी० ६।४५ ) इत्यन्तेनैतदेव दर्शयति । तस्मादैहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितम् ॥ ५१ ॥ इति षोडशमैहिकाधिकरणम् ॥

## ( १७ अधिकरणम् ) एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ५२ ॥

यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद्विद्यालक्षणे फल ऐहिकामुष्मिक-

### भामती ।

न्याख्यमनपहतविघ्नानां श्रवणादीनामनुत्पादकत्वादविशुद्धसत्त्वाद्वा पुंसः प्रत्यनुत्पादकत्वात् । तथाच तेषां यज्ञाद्यपेक्षणात्तेषां चानियतफलत्वेन श्रवणादीनामप्यनियतफलत्वं युक्तम् । एवं श्रुतिस्मृतिप्रतिबन्धो न स्तुतिमात्रत्वेन व्याख्येयो भविष्यति । पुरुषाश्च विद्यार्थिनः साधनसामर्थ्यानुसारेण तदनुरूपमेव कामयिष्यन्ते, तदिदमुक्तम्—**अभिसंधेर्निरङ्कुशत्वादिति** ॥ ५१ ॥ **इति षोडशमैहिकाधिकरणम्** ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** ॥ ५२ ॥ यज्ञाद्युपकृतविद्यासाधनश्रवणादिवीर्यविशेषात्किल तत्फले विद्यायामैहिकामुष्मिकत्वलक्षण उत्कर्षो दर्शितः । तथाच यथा साधनोत्कर्षनिकर्षाभ्यां तत्फलस्य विद्याया उत्कर्षनिकर्षावेवं विद्याफलस्यापि मुक्तेरुत्कर्षनिकर्षौ संभाव्येते । नच मुक्तावैहिकामुष्मिकत्वलक्षणो विशेष उपपद्यते; ब्रह्मोपासनापरिपाकलब्धजन्मनि विद्यायां जीवतो मुक्तेरवश्यंभावनियमात्सत्यप्यारब्धविपाककर्माप्रक्षये । तस्मा-

### वेदान्तकल्पतरुः ।

च्चानुपपन्नमिति—सांप्रतम्; प्राग्भवीयगान्धर्वादिशास्त्राभ्यासस्येह षड्जादिवैशद्यहेतुभावस्य देवताप्रणिधानाद्यपेक्षितायाश्चोपलम्भादिति । "शृण्वन्तोऽपि बहवो यं न विद्युरि"त्यत्र हेतुरित्युच्यते—**आश्चर्य इति** । यथावदस्यात्मनो वक्ताऽऽश्चर्यः अद्भुतवत्कश्चिदेव भवति, सम्यगाचार्यस्य सम्पत्तावपि तस्माच्छ्रुत्वा लब्धा साक्षात्कर्ताऽऽश्चर्यः । आस्तां साक्षात्कारः कुशलेनाचार्येणानुशिष्टोऽपि शास्त्रतः परोक्षवृत्त्या ज्ञाताऽप्याश्चर्य एवेत्यर्थः ॥ ५१ ॥ **इति षोडशमैहिकाधिकरणम्** ॥[1]

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** ॥ ५२ ॥ **ब्रह्मोपासनापरिपाकलब्धजन्मनीति** । परिपाकेन लब्धं जन्म यस्याः सा विद्या ब्रह्मोपासनापरिपाकलब्धजन्मा तस्यामित्यर्थः । **ननु** विद्यावतोऽपि शरीरस्य धारणात्कथं मुक्तिः? तत्राह—**सत्यप्यारब्धेति** । **रूपतः स्वरूपतो निकर्षोत्कर्षौ स्यातामिति** । तथाच सातिशयत्वात्कर्मसाध्यत्वमिति पुरुषार्थोऽत इत्यस्याक्षेप इत्यर्थः । मोक्षः, सातिशयः, विलम्बिताऽविलम्बित-

### कल्पतरुपरिमलः ।

ब्धानि तस्य सत्यपि यज्ञाद्यनुष्ठाने भोगेन प्रारब्धक्षये सति जन्मान्तरएव विविदिषादिप्रवृत्तिः । यस्य सर्वाण्यप्रारब्धानि, तस्य तेषां यज्ञादिभिः क्षयाद् यज्ञाद्यनुष्ठानजन्मन्येव । यस्य तु श्रवणादिषु पूर्वस्याप्रारब्धानि प्रतिबन्धकान्युत्तरस्य प्रारब्धानि तस्य प्रतिबन्धकरहितं पूर्वपूर्वविविदिषाजन्यमुत्पद्यते प्रारब्धप्रतिबन्धमुत्तरोत्तरं जन्मान्तर इति विवेकः । एवंच विविदिषन्ति वाक्यानुसारेण कर्मणां विविदिषासाधनत्व"त्कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इत्यादिवचनानुसारेणाविद्यादिप्रतिबन्धककर्मक्षयसाधनत्वमप्याचार्याणामभिमतमिति द्रष्टव्यम् । **प्राग्भवीयेति** । अत एव हि केषांचिदेवेह जन्मनि गान्धर्वशास्त्रविचारे पूर्वजन्मवासनावशात् झटिति षड्जादिसाक्षात्कारो जायते नान्येषामिति भावः । **देवताप्रणिधानाद्यपेक्षितायाश्चेति** । वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति ॥ गीतिज्ञो यदि योगेन नाप्नोति परमां गतिम् । रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ २ ॥ इति याज्ञवल्क्यस्मृतौ संगीतज्ञानस्य महाफलत्वस्मरणाद् देवताप्रसादापेक्षितेति भावः ॥ ५१ ॥ **इति षोडशमैहिकाधिकरणम्** ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** ॥ ५२ ॥ **तथाच सातिशयत्वादिति** ।

---

१ तत्र सूत्रम् १—ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ५१ ॥

फलत्वकृतो विशेषप्रतिनियमो दृष्टः। एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यादित्याशङ्क्याह—एवं मुक्तिफलानियम इति। न खलु मुक्तिफले कश्चिदेवंभूतो विशेषप्रतिनियम आशङ्कितव्यः। कुतः? तदवस्थावधृतेः। मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते। ब्रह्मैव हि मुक्त्यवस्था; नच ब्रह्मणोऽनेकाकारयोगोऽस्ति; एकलिङ्गत्वावधारणात्, 'अस्थूलमनणु' ( बृ० ३।८।८ ) 'स एष नेति नेत्यात्मा' ( बृ० ३।९।२६ ) 'यत्र नान्यत्पश्यति' ( छा० ७।२४।१ ) 'ब्रह्मवेदममृतं पुरस्तात्' ( मुण्ड० २।२।११ ) 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ) 'स वा एष महानज आत्माऽजरोऽमृतोऽमरोऽभयो ब्रह्म' (बृ० ४।४।२५) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० ४।५।१५ ) इत्यादिश्रुतिभ्यः। अपिच विद्यासाधनं स्ववीर्यविशेषात्स्वफल एव विद्यायां कंचिदतिशयमासञ्जयेन्न विद्याफले मुक्तौ। तद्ध्यसाध्यं नित्यसिद्धस्वभावमेव विद्ययाऽधिगम्यत इत्यसकृदवादिष्म। नच तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते; निकृष्टाया विद्यात्वाभावादुत्कृष्टैव हि विद्या भवति। तस्मात्तस्यां चिराचिरोत्पत्तिरूपोऽतिशयो भवन्भवेत्, न तु मुक्तौ कश्चिदतिशयसंभवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः कर्मफलवत्। नहि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्तीति। सगुणासु तु विद्यासु—'मनोमयः प्राणशरीरः' (छा० ३।१४।२) इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत्। तथाच लिङ्गदर्शनम्—'तं यथा यथोपास्ते तदेव भवति' इति। नैवं निर्गुणायां विद्यायाम्, गुणाभावात्। तथाच स्मृतिः—'नहि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्' इति॥ तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति॥ ५२॥ इति सप्तदशं मुक्तिफलानियमाधिकरणम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः॥ ४॥

## भामती।

न्मुक्तावेव रूपतो निकर्षोत्कर्षौ स्याताम्। अपिच सगुणानां विद्यानामुत्कर्षनिकर्षाभ्यां तत्फलानामुत्कर्षनिकर्षौ दृष्टाविति मुक्तेरपि विद्याफलत्वाद्रूपतश्चोत्कर्षनिकर्षौ स्यातामिति प्राप्त उच्यते—न; मुक्तेस्तत्र तत्रैकरूप्यश्रुतेरुपपत्तेश्च। साध्यं हि साधनविशेषाद्विशेषवद्भवति। नच मुक्तिर्ब्रह्मणो नित्यस्वरूपावस्थानलक्षणा नित्या सती साध्या भवितुमर्हति। नच सवासननिःशेषक्लेशकर्माशयप्रक्षयो विद्याजन्म विशेषवान्, येन तद्विशेषान्मोक्षो विशेषवान्भवेत्। नच सावशेषः क्लेशादिप्रक्षयो मोक्षाय कल्पते। नच चिराचिरोत्पादानुत्पादावन्तरेण विद्यायामपि रूपतो भेदः कश्चि-

## वेदान्तकल्पतरुः।

साधनसाध्यत्वात्, कर्मफलवदित्यनुमानम्। अनुमानान्तरमाह—**अपि चेति**। तत्र तत्र साधकेष्वैकरूप्यं स्यान्न कर्मणा वर्धते नो कनीयानित्यादिश्रुतेरित्यर्थः। उपपत्तेश्चेत्युक्तं, तामेवाह—**साध्यं हीति**। मा भूत्स्वरूपावस्थानलक्षणायां मुक्तौ सातिशयत्वमनर्थनिवृत्तिलक्षणायां तु स्याद्, नेत्याह—**नच सवासनेति**। विरोधिकार्योदय एव पूर्वप्रध्वंस इति मतमाश्रित्य क्लेशादिक्षयो विद्याजन्मेति सामानाधिकरण्यम्। विद्याजन्मरूपोऽविद्याध्वंस एकरूपः। निवर्त्यविशेषोपाधिकस्तु तस्यापि विशेष इत्यर्थः। तर्हि स एवास्तु, तत्राह—**नच सावशेष इति**। यदुक्तं साधनविशेषान्मोक्षे विशेष इति, तत्राह—**नच चिराचिरोत्पादेति**। साधनविद्याचिराचिरत्वाभ्यां मोक्षे न विशेषानुमानम्;

## कल्पतरुपरिमलः।

निकृष्टापकृष्टसाधनसाध्यत्वेन सातिशयत्वसिद्धौ ततः कर्मसाध्यत्वमपि विद्याया अनुमीयत इत्यर्थः। **तत्र तत्र साधकेष्विति**। श्रुत्युपपत्तिरूपेषु बहुषु साधकेषु सत्स्वित्यर्थः। **तर्हि स एवास्त्विति**। निवर्त्यविशेषोपाधिक एव विशेषोऽस्त्वित्यर्थः। यद्वारेत्यादिपाठे निवर्त्यविशेषद्वारेत्यर्थः। तर्हि सावशेष एवास्त्वित्यपि पाठान्तरम्। पाठत्रयेऽपि फलत एकोऽर्थः। अविद्याकामकर्मादिक्षये सावशेषे अवशिष्टावरणतारतम्येन सूक्ष्मसूक्ष्मतरसूक्ष्मतमवस्त्रावृतरविमण्डलप्रकाशवद् ब्रह्मानन्दप्रकाशो मोक्षे तारतम्येन भवेदिति सातिशयो मोक्ष इति पाठत्रयेऽपि तात्पर्यम्। टीकायामप्ययमर्थो येन तद्विशेषान्मोक्षो विशेषवान् भवतीति वाक्येन स्फुटीकृतः। **अविशेषसंभवादिति**। तथाचाप्रयोजकमनुमानमित्यर्थः। **ननु** स्नेहवर्त्युत्कर्षापकर्षाभ्यां दीपज्वालाया इव श्रवणाद्युत्कर्षापकर्षाभ्यां विद्यायाः स्वरूपतोऽपि विशेषः स्यात्, सोऽत्र हेतु-

भामती।

दुपलक्ष्यते; तस्या अप्येकरूपत्वेन श्रुतेः। सगुणायास्तु विद्यायास्तत्तद्गुणावापोद्वापाभ्यां तत्कार्यस्य फलस्योत्कर्षनिकर्षौ युज्येते। न चात्र विद्यात्वं सामान्यतोदृष्टं भवति; आगमतत्प्रभवयुक्तिबाधितत्वेन कालात्ययापदिष्टत्वात्। तस्मात्तस्या मुक्त्यवस्थाया ऐकरूप्यावधृतेर्मुक्तिलक्षणस्य फलस्याविशेषो युक्त इति ॥ ५२ ॥ **इति सप्तदशं मुक्तिफलानियमाधिकरणम्** ॥

**इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां तृतीयाध्यायस्य चतुर्थः पादः ॥**

वेदान्तकल्पतरुः।

एतज्जन्मजन्मान्तरानुष्ठितयागसाध्यस्वर्गवदविशेषसंभवात्, स्वाभाविकस्तु विद्यायामपि नास्ति विशेषः। अतोऽस्मिन्पक्षे हेतोरसिद्धिः, वेद्यब्रह्मण एकरूपत्वश्रुत्या विद्याया अप्येकरूपत्वेन श्रुतेरित्यर्थः। द्वितीयेऽनुमाने सगुणविषयत्वमुपाधिमाह—**सगुणविद्यायास्त्विति। तत्कार्यस्येति।** विद्याकार्यस्येत्यर्थः। कालातीतत्वं चाह—**न चात्रेति।** मोक्षेऽप्युपेयविशेषणं भेदाभेदविकल्पासहत्वं युक्तिः ॥ ५२ ॥ **इति सप्तदशं मुक्तिफलानियमाधिकरणम्** ॥[1]

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ तृतीयाध्यायस्य चतुर्थः पादः ॥**

**समाप्तश्चायं साधनाख्यस्तृतीयोऽध्यायः ॥**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १७ | १३४ |
| सूत्राणि | ५२ | ४८७ |

कल्पतरुपरिमलः।

रित्याशङ्क्याह—**स्वाभाविकस्त्विति। भेदाभेदविकल्पासहत्वमिति।** अद्वैतश्रुतिविरोधाद् न भिन्ना विशेषाः। अभेदे च ते न परस्परविलक्षणाः। भेदाभेदपक्षश्च दूषित इति भावः ॥ ५२ ॥ **इति सप्तदशं मुक्तिफलानियमाधिकरणम्** ॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरुपरिमले तृतीयस्याध्यायस्य चतुर्थः पादः ॥**

**समाप्तश्चायं साधनाख्यस्तृतीयोऽध्यायः।**

**॥ इति तृतीयध्यायस्य निर्गुणविद्यायां अन्तरङ्गबहिरङ्गसाधनविचाराख्यश्चतुर्थः पादः ॥**

**॥ इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये साधनाख्यस्तृतीयोऽध्यायः ॥**

---

१ तत्र सूत्रम् १—एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ५२ ॥



# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## भामती–वेदान्तकल्पतरु–कल्पतरुपरिमलोपबृंहितम् ।

### अथ चतुर्थोऽध्यायः ।

( १ अधिकरणम् ) **आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात् । अथेह चतुर्थे फलाश्रय आगमिष्यति । प्रसङ्गागतं चान्यदपि किंचिच्चिन्तयिष्यते । प्रथमं तावत्कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृ० ४।५।६ ) 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' ( बृ० ४।४।२१ ) 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ) इति चैवमादिश्रवणेषु संशयः—किं सकृत्प्रत्ययः कर्तव्य

### भामती ।

नाभ्यर्थ्या इह सन्तः स्वयं प्रवृत्ता न चेतरे शक्याः । मत्सरपित्तनिबन्धनमचिकित्स्यमरोचकं येषाम् ॥ १ ॥
शङ्के संप्रति निर्विशङ्कमधुना स्वाराज्यसौख्यं वहन्निन्द्रः सान्द्रतपःस्थितेषु कथमप्युद्वेगमभ्येष्यति ।
यद्वाचस्पतिमिश्रनिर्मितमितव्याख्यानमात्रस्फुटद्वेदान्तार्थविवेकवञ्चितभवाः स्वर्गेऽप्यमी निस्पृहाः ॥ २ ॥

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ साधनानुष्ठानपूर्वकत्वात्फलसिद्धेर्विषयक्रमेण विषयिणोरपि तद्विचारयोः क्रममाह—तृतीयेऽध्याय इति । मुक्तिलक्षणस्य फलस्यात्यन्तपरोक्षत्वात्तदर्थानि दर्शनश्रवणमनननिदिध्यासनानि चोद्यमानान्य-

### वेदान्तकल्पतरुः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ **तृतीये चिन्तितं सर्वं साक्षाच्छ्रुत्युक्तसाधनम् । फलार्थापत्तिसंसिद्धमावृत्त्याद्यत्र चिन्त्यते ॥** आत्मेति तु विरोधपरिहारफलं, तस्य चात्र प्रस्तावे कारणं वक्ष्यते । न प्रतीकइत्यादिष्वधिकरणत्रयमत्र प्रासङ्गिकम्, तस्माद्भवत्येवायमभिप्रायश्चतुर्थे तृतीयशेषानुवर्तनस्येति । फलाध्यायं व्याख्यास्यन् फलावसरे श्रोतॄणामुत्साहजननाय स्वकृतेरकलङ्कतां ब्रुवन् दुर्जनान् शिक्षयति, सत्पुरुषाँश्चाभिनन्दति—**नाभ्यर्था इति ।** इह ग्रन्थे श्रवणार्थममत्सरिणः सज्जना नाभ्यर्थनीयाः । अत्र हेतुमाह—**स्वयमिति ।** ते हि ग्रन्थगुणान्दृष्ट्वा स्वयमेव प्रवृत्ता भवन्ति, इतरे तु मत्सरिणः श्रवणाय प्रवर्तयितुं न शक्याः । अशक्यत्वे हेतुमाह—**मत्सरेति ।** मत्सर एव पित्तं हृदयतापकत्वात् तन्निमित्तमचिकित्स्यं चिकित्साऽनर्हमरोचकं सत्कविभणितिष्वरुच्यापादकं धातुवैषम्यं येषां ते न शक्या इत्यर्थः । केषांचिद्विरलपापानां मात्सर्यं विवेकोपदेशेन शक्यं चिकित्सितुम्, इदं तु न तथेत्युक्तम्—**अचिकित्स्यमिति ।** आचार्यस्य शिष्यः सनातननामा तत्कृतां स्तुतिं तत्प्रीत्यर्थं प्रबन्धमधिरोपयति—**शङ्के इति ।** संप्रति सान्द्रतपःस्थितेषु निरन्तरतपोनिष्ठेषु निमित्तेष्वधुना स्वाराज्यसौख्यं वहन्निन्द्रो मम राज्यं तपसा हरिष्यतीति य उद्वेगस्तं निर्विशङ्कं निर्विशङ्को यथा भवति तथा कथमपि नाभ्येष्यतीति शङ्के मन्ये । उद्वेगाप्राप्तौ हेतुमाह—**यदिति ।** यस्माद्वाचस्पतिमिश्रनिर्मितं संक्षिप्तं बह्वर्थं यद्व्याख्यानं तन्मात्रेण स्फुटन्प्रकटीभवन् यो वेदान्तार्थस्तद्विषयविवेकेन साक्षात्कारेण वञ्चितोऽपहृतो भवः स्वर्गादिसंसारो येषां ते तथोक्ताः । तेऽमी तपस्विनः स्वर्गेऽपि निःस्पृहा इति यद्यस्मात्तस्माच्छङ्क इत्यन्वयः । **विषयक्रमेणेति ।** अध्यायविषययोः साधनफलयोः क्रमेणेत्यर्थः । **ननु** ज्ञानार्थत्वाद् दृष्टफलेषु गान्धर्वशास्त्रश्रवणादिवदविधेयेषु श्रवणादिषु यावत्फलमावृत्तिसिद्धौ कथं सकृत्प्रयोगशङ्का ? अत आह—**मुक्तिलक्षणस्येति ।**

### कल्पतरुपरिमलः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ **अध्यायविषययोरिति ।** मुख्यक्रमेण वाङ्गानां तदर्थत्वादिति न्यायात् ( जै. अ.

आहोस्विदावृत्त्येति । किं तावत्प्राप्तम्? सकृत्प्रत्ययः स्यात्प्रयाजादिवत्; तावता शास्त्रस्य कृतार्थत्वात् । अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत् । नन्वसकृदुपदेशा उदाहृताः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवमादयः । एवमपि यावच्छब्दमावर्तयेत्सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति नातिरिक्तम् । सकृदुपदेशेषु तु वेदोपासीतेत्येवमादिष्वनावृत्तिरिति । एवं प्राप्ते ब्रूमः—प्रत्ययावृत्तिः कर्तव्या । कुतः? असकृदुपदेशात् 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति । ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति, न; दर्शनपर्यवसितत्वादेषाम् । दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथावघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत् । अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाभिधीयते । तथाहि—लोके गुरुमुपास्ते राजानमुपास्त इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते । तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते । विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते । क्वचिद्विदिनोपक्रम्योपासिनोपसंहरति यथा—'यस्तद्वेद यत्स वेद स मयैतदुक्तः' ( छा० ४।१।४ ) इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' ( छा० ५।२।२ ) इति । क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति यथा—'मनो ब्रह्मेत्युपासीत' ( छा० ३।१८।१ ) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' ( छा० ३।१८।३ ) इति । तस्मात्सकृदुपदेशेष्वप्यावृत्तिसिद्धिः । असकृदुपदेशस्त्वावृत्तेः सूचकः ॥ १ ॥

## भामती ।

दृष्टार्थानीति यावद्विधानमनुष्ठेयानि, न तु ततोऽधिकमावर्तनीयानि; प्रमाणाभावात् । यत्र पुनः सकृदुपदेश उपासीतेत्यादिषु, तत्र सकृदेव प्रयोगः प्रयाजादिवदिति प्राप्त—उच्यते । यद्यपि मुक्तिरदृष्टचरी; तथापि सवासनाविद्योच्छेदेनात्मनः स्वरूपावस्थानलक्षणायास्तस्याः श्रुतिसिद्धत्वादविद्यायाश्च विद्योत्पादविरोधितया विद्योत्पादेन समुच्छेदस्याहिविभ्रमस्येव रज्जुतत्त्वसाक्षात्कारेण समुच्छेदस्योपपत्तिसिद्धत्वादन्वयव्यतिरेकाभ्यां च श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात्सकलदुःखविनिर्मुक्तैकचैतन्यात्मकाऽहमित्यपरोक्षरूपानुभवस्यापि श्रव-

## वेदान्तकल्पतरुः ।

पूर्ववादी मुक्त्यर्थत्वात् श्रवणादीनामदृष्टार्थत्वं विधेयत्वं च मन्यते, विधिषु चाऽऽवृत्त्यश्रवणात्सकृत्प्रयोगशङ्केत्यर्थः । श्रवणादयोऽहंग्रहोपास्तयश्च निर्विशेषसविशेषब्रह्मसाक्षात्कारफला इहोदाहरणम् । तत्र श्रवणादिषु सकृत्प्रयोगमुक्त्वाऽहंग्रहोपास्तिष्वप्याह—**यत्र पुनरिति** । अत्र किं विद्याया मुक्तिसाधनत्वमदृष्टमित्युच्यते, श्रवणादेर्वा विद्यासाधनत्वम् । **नाद्य** इत्याह—**यद्यपीति** । जीवन्मुक्तेर्दृष्टत्वाद्यद्यपिकारः । अहिविभ्रमस्य रज्जुतत्त्वसाक्षात्कारेण समुच्छेदस्येवाविद्याया विद्योत्पादेन समुच्छेदस्योपपत्तिसिद्धत्वादिति योजना । तत्र हेतुः—**विद्योत्पादविरोधितयेति** । अविद्या विद्यानिवर्त्या अनिर्वाच्यत्वादहिविभ्रमवदित्यनुमानम् । **न द्वितीय** इत्याह—**अन्वयव्यतिरेकाभ्यां चेति** । इवकारो लोकसिद्धत्वादित्यत उपरि नेतव्यः । गान्धर्वशास्त्रादौ श्रवणाद्यभ्यासस्य साक्षात्कारजनकत्वेनाऽन्वयव्यतिरेकाभ्यां लोकसिद्धत्वात्तद्वदुक्तविशेषणचैतन्यात्मकाहमित्यपरोक्षानुभवस्यापि श्रवणाद्यभ्याससाधनत्वेनानुमानादित्यर्थः । ब्रह्मसाक्षात्कारः, श्रवणाद्यभ्याससाध्यः, शास्त्रार्थसाक्षात्कारत्वात्, षड्जादिसाक्षात्कारवदित्यनुमानम् । **ननु** विधिप्रत्ययदर्शनाद् अदृष्टार्थत्वमस्तु,

## कल्पतरुपरिमलः ।

५ पा. १ सू. १४ ) प्रधानक्रमेणाङ्गक्रमौचित्यादिति भावः । **अदृष्टार्थत्वं विधेयत्वं च मन्यत इति** । तथाऽभिमानस्य मूलमत्राहेत्यादिशङ्काभाष्यतद्व्याख्यानाभ्यां स्पष्टीभविष्यतीत्यत्र न विवृतम् । **अहंग्रहोपास्तिष्वप्याहेति** । तास्वप्युपासिधात्वर्थान्तर्नीतावृत्तिमात्रं कर्तव्यम्, नतु यावत्फलोदयमावृत्तिः; दृष्टफलत्वाभावादिति भावः । विद्योत्पादविरोधिपरतयेत्यनेनानिर्वाच्यत्वं विवक्षितमिति भावः । इवकार उपरि नेतव्य इत्युक्तम् । उपरि नीतस्य तस्यार्थो विवरणवाक्ये तद्वदित्यनेन दर्शितः । लोकसिद्धत्वादित्यन्तः सोपपादनोपमानवाक्यार्थप्रदर्शनाय । तदनन्तरमुपमानोपमेयभावद्योतनं तद्वत्तथेत्यादिशब्दवदिवशब्देन व्युत्पत्तिसिद्धं न भवतीति तद्वदित्यनेनेवशब्दो विवृतः । **शब्दार्थसाक्षात्कारत्वादिति** । "यस्य स्यादद्धे"ति वचनोक्तैहिकसगुणेश्वरसाक्षात्कारवत् पर्यङ्कविद्यादिप्रतिपन्नपारत्रिकतत्साक्षात्कारोऽपि परम्परया श्रवणाद्यभ्याससाध्यः, यागादिजन्यस्वर्गसुखादिविषयपारत्रिकसाक्षात्कारः स्वर्गकामादिवाक्यार्थविषयकापातन्यायविचारजन्यतन्निर्णययागादिसङ्कल्पकालकर्तव्यफलध्यानसाध्यः, एवं तपःप्रभावसन्निधापितदेवतासाक्षात्कारोऽपीति न क्वापि व्यभिचारः । **श्रवणादीति** । श्रवणादेरनेकस्योपायस्य दृष्टार्थत्वेनार्थप्राप्तस्योपदेशोऽनुवादः । तस्माल्लिङ्गाद् दृष्टफलसिद्ध्ये प्रत्येकमपि

## लिङ्गाच ॥ २ ॥

**लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति । तथा ह्युद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' (छा० १।५।१) इत्येतदेकपुत्रतादोषेणापोद्य 'रश्मींस्त्वं पर्यावर्तयात्' ( छा० १।५।२ ) इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत्सिद्धवत्प्रत्ययावृत्तिं दर्शयति । तस्मात्तत्सामान्यात्सर्वप्रत्ययेष्वावृत्तिसिद्धिः ॥ २ ॥**

**अत्राह—भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः; तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात् । यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्पयति, तत्र किमर्थाऽऽवृत्तिरिति? सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत्, न; आवृत्तावपि तदनुपपत्तेः । यदि हि 'तत्त्वमसि' (छा० ६।८।७) इत्येवंजातीयकं वाक्यं सकृच्छ्रूय-**

### भामती ।

णाद्यभ्याससाधनत्वेनानुमानात्तदर्थानि श्रवणादीनि दृष्टार्थानि भवन्ति । नच दृष्टार्थत्वे सत्यदृष्टार्थत्वं युक्तम्, न चैतान्यनावृत्तानि सत्कारदीर्घकालनैरन्तर्येण साक्षात्कारवते तादृशानुभवाय कल्पन्ते । न चासाक्षात्कारवद्विज्ञानं साक्षात्कारवतीमविद्यामुच्छेत्तुमर्हति । न खलु पित्तोपहतेन्द्रियस्य गुडे तिक्ततासाक्षात्कारोऽन्तरेण माधुर्यसाक्षात्कारं सहस्रेणाप्युपपत्तिभिर्निवर्तितुमर्हति; अतद्वतो नरान्तरवचांसि वोपपत्तिसहस्राणि वा परामृशतोऽपि थूत्कृत्य गुडत्यागात् । तदेवं दृष्टार्थत्वाद्ध्यानोपासनयोश्चान्तर्नीतावृत्तिकत्वेन लोकतः प्रतीतेरावृत्तिरेवेति सिद्धम् ॥ १ ॥ २ ॥

अधिकरणार्थमुक्त्वा निरुपाधिब्रह्मविषयत्वमस्याक्षिपति—**अत्राह भवतु नामेति** । साध्ये ह्यनुभवे प्रत्ययावृत्तिरर्थवती नासाध्ये । नहि ब्रह्मानुभवो ब्रह्मसाक्षात्कारो नित्यशुद्धस्वभावाद्ब्रह्मणोऽतिरिच्यते । तथाच नित्यस्य ब्रह्मणः स्वभावो नित्य एवेति कृतमत्र प्रत्ययावृत्त्या । तदिदमुक्तम्—**आत्मभूतमिति** । आक्षेप्तारं प्रति शङ्कते—**सकृच्छ्रुताविति । अयमभिसंधिः**—नच ब्रह्मात्मभूतस्तत्साक्षात्कारोऽविद्यामुच्छिनत्ति; तया सहानुवृत्तेरविरोधात् । विरोधे वा तस्य नित्यत्वान्नाविद्योदीयेत, कुत एव तु तेन सहानुवर्तेत ? तस्मात्तन्निवृत्तये आगन्तुकस्तत्साक्षात्कार एषितव्यः । तथाच प्रत्ययानुवृत्तिरर्थवती । आक्षेप्ता पूर्वोक्ताक्षेपेण प्रत्यवतिष्ठते—**न। आवृत्तावपीति**। न खलु ज्योतिष्टो-

### वेदान्तकल्पतरुः ।

तत्राह—**न चेति** । प्राप्तार्थत्वात् "विष्णुरुपांशु यष्टव्य" इत्यादाविवानुवादकत्वमित्यर्थः । **ननु** दृष्टफलान्यपि श्रवणादीनि अक्षसंनिकर्षादिवदनावृत्तान्येव साक्षात्कारं जनयन्तु, तत्राह—**न चैतानीति** । सकृच्छ्रवणादिफलादर्शनादित्यर्थः । **ननु** साक्षात्कार एव किमर्थं, धर्मादाविव परोक्षज्ञानमेवास्तु, तत्राह—**नचासाक्षात्कारेति** । एवं दृष्टफलभूतब्रह्मसाक्षात्कारोपदेशेन श्रवणाद्यनेकोपायोपदेशलिङ्गात् फलसिद्ध्यर्थं प्रत्येकमपि श्रवणादि अभ्यसनीयमिति प्रतिपादितम् । अथ यदुक्तमुपासीतेत्यादिषु सकृदुपदेशादनावृत्तिरिति, तत्राह—**ध्यानोपासनयोश्चेति** ॥ १ ॥ २ ॥

अहंग्रहोपास्तिषु यत्र स्यादद्धेति वचनादुपासनसाध्य उपास्यसाक्षात्कारः प्रतीयतेऽतस्तत्रावृत्तिरर्थवती, न निर्गुणब्रह्मसाक्षात्कारे इत्याह—**साध्ये हीति । भाष्ये—आत्मभूतमिति** प्रत्ययस्यात्मभूतमित्यर्थः । स्वप्रकाशत्वाद् ब्रह्मणो ब्रह्मविषय इति तु ब्रह्मविषयव्यवहारजनक इत्यर्थो नतु तत्कर्मक इति; तथा सत्यात्मभूतत्वविरोधात् । नच जीवस्यात्मभूतमिति व्याख्यानमुचितम्; अध्याहारप्रसङ्गात् प्रत्ययस्यात्मभूतमिति व्याख्यायां त्वनुषङ्ग एव स्यात्स चाध्याहाराद्वर इति ब्रह्मसाक्षात्कारो ब्रह्मस्वरूपमित्यङ्गीकृत्यावृत्तौ दूषितायां सिद्धान्ती वृत्तिरूपसाक्षात्कारमादाय शङ्कते इत्याह—**आक्षेप्तारमिति । ननु** स्वरूपप्रकाशेन ब्रह्मप्रथनसिद्धौ किमावृत्त्या ? अत आह—**नच ब्रह्मात्मभूत इति । नाविद्योदीयेतेति** भ्रान्त्यभिप्रायम् । **पूर्वोक्ताक्षेपेणेति** । वृत्तिरूपसाक्षात्कारं प्रमामुपेत्य तस्यामप्यावृत्त्याक्षेपेणेत्यर्थः । तमेवाह—

### कल्पतरुपरिमलः ।

श्रवणादित्रयमभ्यसनीयं मनननिर्वर्तनीयबहुविधसंदेहकन्दलदलनपर्यन्तं साङ्गाध्ययनवतः पदार्थवाक्यार्थव्युत्पत्तिलभ्यापातज्ञानरूपश्रवणाभ्यासः । तदुपस्थितसकलसंदेहनिवृत्तये मननाभ्यासः । साक्षात्कारोदयाय निदिध्यासनाभ्यासः । प्रत्येकमाविद्यमभ्यसनीयमिति पाठे आविद्यमित्येकैकाभ्यासस्य नावधिनिर्देशः, किंतु स्वस्वावान्तरफलपर्यन्तानां श्रवणादीनामभ्यासपरम्परायाः ॥ १ ॥ २ ॥

**अनुषङ्ग एव स्यादिति** । अनुषङ्गमात्रं भवति न त्वध्याहारगौरवमित्यर्थः । यद्यपि प्रत्ययस्यात्मभूतं परं ब्रह्म सम-

भाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्, ततस्तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात्? अथोच्येत न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं शक्नोत्यतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति, तथाप्यावृत्त्यानर्थक्यमेव; साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्याद्युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, न विशेषविषयम्। यथास्ति मे हृदये शूलमित्यतो वाक्याद्गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते न विशेषमनुभवति यथा स एव शूली, विशेषानुभवश्चाविद्याया निवर्तकस्ततस्तदर्थावृत्तिरिति चेत्, न; असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्। नहि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते। तस्माद्यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्यते यदि वा सामान्यमेवोभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः। नच सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पा-

## भामती।

भवाक्यार्थप्रत्ययः शतशोऽप्यावर्त्यमानः साक्षात्कारप्रमाणं स्वविषये जनयति; उत्पन्नस्यापि तादृशो दृष्टव्यभिचारत्वेन प्रातिभत्वात्। **ब्रह्मात्मत्वप्रतीतिं** ब्रह्मात्मसाक्षात्कारम्। पुनः शङ्कते—**न केवलं वाक्यमिति**। आक्षेप्ता दूषयति—**तथाप्यावृत्त्यानर्थक्यमिति**। वाक्यं चेद्युक्त्यपेक्षं साक्षात्काराय प्रभवति, तथासति कृतमावृत्त्या। सकृत्प्रवृत्तस्यैव तस्य सोपपत्तिकस्य यावत्कर्तव्यकरणादिति। पुनः शङ्कते—**अथापि स्यादिति**। न युक्तिवाक्ये साक्षात्कारफले; प्रत्यक्षस्यैव प्रमाणस्य तत्फलत्वात्। ते तु परोक्षार्थावगाहिनी सामान्यमात्रमभिनिविशेते न तु विशेषं साक्षात्कुरुत इति तद्विशेषसाक्षात्कारायाऽऽवृत्तिरुपास्यते। सा हि सत्कारदीर्घकालनैरन्तर्यसेविता सती दृढभूमिर्विशेषसाक्षात्काराय प्रभवति कामिनीभावनेव स्त्रैणस्य पुंस इति। आक्षेप्ताह—**न। असकृदपीति**। स खल्वयं साक्षात्कारः शास्त्रयुक्तियोनिर्वा स्याद्भावनामात्रयोनिर्वा। न तावत्परोक्षाभासविज्ञानफले शास्त्रयुक्ती साक्षात्कारलक्षणं प्रत्यक्षप्रमाणफलं प्रसोतुमर्हतः। न खलु कुटजबीजाद्वटाङ्कुरो जायते। नच भावनाप्रकर्षपर्यन्तजमपरोक्षावभासमपि ज्ञानं प्रमाणं; व्यभिचारादित्युक्तम्। आक्षेप्ता स्वपक्षमुपसंहरति—**तस्माद्यदीति**। आक्षेप्ताक्षेपान्तरमाह—**नच सकृत्प्र-**

## वेदान्तकल्पतरुः।

**न खल्विति। तादृश इति** तादृक्शब्दात् षष्ठी। **यदि वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेदिति भाष्ये** ब्रह्मात्मत्वप्रतीतिः साक्षात्कारः, परोक्षप्रतीत्युत्पत्तेरेव तदभावाभिधानानुपपत्तेरित्याह—**साक्षात्कारमिति**। केवलवाक्यमावर्त्यमानमपि न साक्षात्कारं जनयतीत्युक्ते युक्तिसहकृतं जनयिष्यति संस्कार इवाक्षसहितः प्रत्यभिज्ञाम्, अतो वाक्येनैकवारं प्रत्यये कृते युक्त्याऽपि तत्करणादावृत्तिसिद्धिरिति शङ्कते इत्याह—**न केवलमिति**। एवमपि वाक्ययुक्त्योः प्रत्येकमावृत्तिः सिद्धान्तिसंमता न सिध्यतीति दूषयतीत्याह—**आक्षेप्तेति**। इदानीं मा भूद्वाक्यमावृत्तिसहकृतं साक्षात्कारस्य कारणम्, मा च युक्तिसहकृतं वाक्यम्, युक्तिवाक्ये त्वावृत्तिसहिते साक्षात्कारकारणे इति शङ्कत इत्याह—**पुनः शङ्कतइति। दृढभूमि**र्दृढ आश्रयः फलं साधयितुमित्यर्थः। यद्यप्यभ्यासमिति शास्त्रयुक्ती साक्षात्कारं कुरुत इति शङ्कितं, तथाप्यन्यतरोपकृतावन्यतरत्करणमिति वक्तव्यं, करणप्रयुक्तं च प्रतीतेरापरोक्ष्यं यथा प्रत्यभिज्ञायाम्। तत्र किं शास्त्रयुक्त्योः करणत्वं भावनाया वेति विकल्प्य दूषयति—**स खल्वयमित्यादिना**। भावनाप्रकर्षस्य पर्यन्तोऽवधिः काष्ठा तज्जमित्यर्थः। पूर्ववादिना शास्त्रयुक्त्योः परोक्षज्ञानजनकत्वादावृत्तयोरनावृत्तयोर्वा न साक्षात्कारहेतुतेति उक्तं, सांप्रतमुपेत्यापि तयोरपरोक्षप्रमाकरणभावमभ्यासवैफल्यमभिधीयत इत्याहाऽऽक्षेप्ता—**आक्षेपान्तरमिति। आतश्चेति**। अवश्यं चेत्यर्थः। अपरोक्षप्रमोत्पत्त्यर्थं आवृत्त्याक्षेपः किमावृत्त्युपकार्यभूतप्रमाणाभावादुत साक्षात्कारयोग्य-

## कल्पतरुपरिमलः।

र्पयतीति भाष्ये कस्यात्मभूतमित्याकाङ्क्षायामन्तरङ्गत्वात्स्वस्यात्मभूतमिति लभ्यते, नतु जीवस्येति; बहिरङ्गत्वाद्, यथा "अन्तर्द्धौ येनादर्शनमिच्छती"ति सूत्रे कस्यादर्शनमित्याकाङ्क्षायामात्मन इति लभ्यते न त्वन्यस्येतीत्येव वक्तुं शक्यम्; तथापि शाब्द्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायात् प्रत्ययस्येति शब्देनाकाङ्क्षापूरणं कार्यं, स तु नाध्याहारः, किंतु प्रत्ययस्य विभक्तिविपरिणामेनानुषङ्ग इति भावः। शाब्दिकवद् विभक्तिवचनविपरिणामेनानुषङ्गमनिच्छतां "संयजत्रैरङ्गानी"त्यत्र "गच्छता"मित्यध्याहारं वदतां मीमांसकानां त्वत्राप्यध्याहार एव, तथापि बुद्धिसन्निहितप्रत्ययविषयशब्दाध्याहारादतथाभूतजीवविषयशब्दाध्याहारो गुरुरिति मीमांसकमते विशेषो द्रष्टव्यः। **अपरोक्षप्रमोत्पत्त्यर्थं इति**। श्रवणादेरावर्त्यमानस्यापरोक्षप्रमोत्पादकत्वं न संभवति; अतस्तस्यादृष्टद्वारा मुक्त्यर्थत्वमेव वाच्यमिति योऽयं श्रवणादेरुपयोगमङ्गीकृत्य तस्य दृष्टार्थत्वाभावेनावृत्त्याक्षेपः कृतः स तस्यापरोक्षरूपदृष्टार्थत्वाभावस्तदपरोक्षकरणप्रमाणाभावात्, प्रमेयस्यायोग्यत्वाद्

दयत इति शक्यते नियन्तुम्; विचित्रप्रज्ञत्वात्प्रतिपत्तॄणाम् । अपिचानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवत्येकेनावधानेनैकमंशमवधारयत्यपरेणापरमिति स्यादप्यभ्यासोपयोगो यथा दीर्घप्रपाठकग्रहणादिषु, नतु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति ॥

अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं

## भामती ।

**युक्त इति** । कश्चित्खलु शुद्धसत्त्वो गर्भस्थ इव वामदेवः श्रुत्वा च मत्वा च क्षणमवधाय जीवात्मनो ब्रह्मात्मतामनुभवति, ततोऽप्यावृत्तिरनर्थिकेति । आतश्चाऽऽवृत्तिरनर्थिका यन्निरंशस्य ग्रहणमग्रहणं वा । न तु व्यक्ताव्यक्तत्वे सामान्यविशेषवत्पद्मरागादिवदित्यत आह—**अपि चानेकांशेति** ॥

समाधत्ते—**अत्रोच्यते भवेदावृत्त्यानर्थक्यमिति** । **अयमभिसन्धिः**—सत्यं न ब्रह्मसाक्षात्कारः साक्षादागमयुक्तिफलमपितु युक्त्यागमार्थज्ञानाहितसंस्कारसचिवं चित्तमेव ब्रह्मणि साक्षात्कारवतीं बुद्धिवृत्तिं समाधत्ते । सा च नानुमानितवह्निसाक्षात्कारवत्प्रातिभत्वेनाप्रमाणम्; तदानीं वह्निस्वलक्षणस्य परोक्षत्वात्, सदातनं तु ब्रह्मस्वरूपस्योपाधिरूपितस्य जीवस्यापरोक्षत्वम् । नहि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते । जीव एव तु तत्तदुपाधिरहितशुद्धादिस्वभावो ब्रह्मेति गम्यते । नच तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्या-

## वेदान्तकल्पतरुः ।

प्रमेयाभावात् । **न प्रथमः**; मनस एव सोपाधिकात्मन्यहंप्रत्ययरूपसाक्षात्कारकरणतया क्लृप्तशक्तेः शास्त्रयुक्त्यभ्यासवासितस्य जीवयाथात्म्यब्रह्मसाक्षात्कारकरणत्वसंभवादित्याह—**सत्यमित्यादिना** । भावनाभावसाक्षात्कारस्यान्यत्रैव भ्रमत्वमाशङ्क्य प्रमेयस्यापरोक्ष्याद् विसंवादाभावेन वैषम्यं वदन्परिहरति—**सा चेत्यादिना** । **एतेन**—द्वितीयो विकल्पः—**परास्तः** । **तदानीमिति** । अनुमितिभावनाकाले इत्यर्थः । **ननु** जीवस्वरूपस्य सदातनम् आपरोक्ष्यं भवतु, तद्याथात्म्यस्य तु ब्रह्मस्वभावस्य नित्यशुद्धत्वादेः परोक्षत्वात्तद्भावनाभिः साक्षात्कृतिर्भ्रमः स्यादत आह—**न हीति** । तर्ह्युपाधिविरहो जीवादन्य इति परोक्षः स्यादतो निरुपाधिब्रह्मापरोक्षप्रतीतिर्भ्रमः स्यान्नेत्याह—**न चेति** । परमार्थप्रतियोगिको ह्यभावः परमार्थः स नाधिकरणाद्भिद्यते; कुम्भाभाव इव भूतलात्, अत एव प्रतियोगिप्रमाणमेवाभावेऽपि प्रमाणमिति केचिद् मन्वते । इह चोपाधीनां मिथ्यात्वात्तत्प्रतियोगिकोऽभावोऽपि नास्ति वास्तवः । न चैवमभावानवस्था; यथा हि भवतां घटो न भवति घटान्योन्याभाव इत्यत्र नान्योन्याभावान्तरमस्ति, न च भावाभावयोरैक्यम्, एवमस्माकमुपाध्यभावो ब्रह्मणि निषिध्यते, नचाभावान्तरप्रसङ्ग इति ।

एवं हृदि निधायार्थमिष्टसिद्धिकृतो जगुः । आत्मैवाज्ञानहानिर्वा तदाऽप्यात्मैव शिष्यते ॥ इति ॥

**नन्वेवमपि** यथा संसारदशायां जीवरूपं चकास्ति, तथैव यदि मोक्षेऽपि, तर्हि शास्त्रीयज्ञानवैयर्थ्यं स्यादिति, नेत्याह—**तस्मादिति** । षड्जादयो हि गान्धर्वशास्त्रश्रवणात्प्रागप्यविकलानधिकाः श्रोत्रेणापरोक्षमीक्ष्यन्ते, ते त्वितरेतरविवेकेना-

## कल्पतरुपरिमलः ।

वा भवतीति द्विविधोऽपि दृष्टार्थत्वाभावहेतुः क्रमेण टीकायां निराक्रियत इति भावः । **पारमार्थिकप्रतियोगिक इति** । अत्र प्रतियोग्यभावयोः पारमार्थिकत्वं व्यावहारिकसमानसत्ताकत्वम् । **प्रतियोगिप्रमाणमेवेति** । अत्र रूपग्राहकं चक्षुरेवाचाक्षुषे वायावपि रूपाभावग्राहकम् । अतएव तत्र रूपाभावग्रहणे चक्षुर्व्यापारापेक्षेत्यादि तत्रोदाहरणम् । **केचन मन्यन्ते** वैशेषिकादयः । स्वमते रूपाद्यभावोऽनुपलब्धिप्रमाणगम्यः । नानुपलब्धिमात्रं प्रमाणं, किंतु योग्यानुपलब्धिः, योग्यता च प्रतियोगिसत्त्वविरोधिता । अतो योग्यताघटकत्वेन चक्षुर्व्यापारापेक्षा । तदभावे ह्यधिकरणे प्रतियोगिसत्त्वेऽपि तद्विषयप्रमाणभावेन संभवन्त्यनुपलब्धिः प्रतियोगिसत्त्वविरोधिनी न स्यात् । **उपाधीनां मिथ्यात्वादिति** । **ननु** मिथ्यात्वमिह व्यावहारिकत्वं, नतु प्रातिभासिकत्वम्; ब्रह्मण्युपास्यगुणानां श्रुत्युपदिष्टानां व्यावहारिकत्वात्, उक्तंहि व्यतिहाराधिकरण( ब्र. अ. ३ पा. ३ सू. ३७ )भाष्ये—यथा ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यतीति । तस्मात्कुम्भाभाववदुपाधीनामभावस्यापि व्यावहारिकत्वात् तद्वदेवाधिकरणात्ते भिद्यन्त इति युक्तमिति—**चेत्, उच्यते**; यत्र यत्प्रतीतं व्यावहारिकं ततोऽन्यत्र तदभावो भवतु व्यावहारिकः, यत्र प्रतीतं तत्रैव तदभावो न व्यावहारिको भवितुमर्हति समानसत्ताकयोर्भावाभावयोर्विरोधात् । नच ब्रह्मणि "अथात आदेशो नेति नेती"त्यादिश्रुतिभिरुपदिष्टा उपाधीनामभावाः प्रातिभासिका भवितुमर्हन्ति । अतः पारमार्थिकाः सन्तः ते न ब्रह्मणो भिन्ना अद्वैतश्रुतिविरोधात् । नच भावाद्वैतेष्टिः; अद्वैतश्रुतिसङ्कोचकल्पनायोगात् । अन्यथा भेदवादिनां क्लिष्टाद्वैतश्रुतियोजनाया अपि प्रवेशापत्तेः । **उक्तंहि वार्तिके**—प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत्पिशाचा वा स्वगोचरे ॥ इति । तस्मादुपाधीनां मिथ्यात्वात् तदभावोऽधिकरणातिरिक्तो नास्तीति युक्तमेव । **नास्ति वास्तव इति** । वास्तवविशेषणम्

शक्नुयात् । यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः । तथाहि—छान्दोग्ये 'तत्त्वमसि श्वेतकेतो' ( छा० ६।८।७ ) इत्युपदिश्य 'भूय एव मा भगवान्विज्ञापयतु' ( छा० ६।८।७ ) इति पुनः पुनः परिचोद्यमानस्तत्तदाशङ्काकारणं निराकृत्य तत्त्वमसीत्येवासकृदुपदिशति । तथाच 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' (बृ० ४।५।६) इत्यादि दर्शितम् । ननूक्तं सकृच्छ्रुतं चेत्तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति तत आवर्त्यमानमपि नैव शक्ष्यतीति, नैष दोषः; नहि दृष्टेऽनुपपन्नं नाम । दृश्यते हि सकृच्छ्रुताद्वाक्यान्मन्दप्रतीतं वाक्यार्थमावर्तयन्तस्तत्तदाभास-

## भामती ।

साहितसंस्कारसचिवेन श्रोत्रेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षेणेक्षते एवं वेदान्तार्थज्ञानाहितसंस्कारो जीवस्य ब्रह्मस्वभावमन्तःकरणेनेति । **यस्तत्त्वमसीति सकृदुक्तमेवेति** । श्रुत्वा मत्वा क्षणमवधाय प्राग्भवीयाभ्यासजातसंस्कारादित्यर्थः । **यस्तु न शक्नोतीति** । प्राग्भवीयब्रह्माभ्यासरहित इत्यर्थः । **नहि दृष्टेऽनुपपन्नं नामेति** । यत्र परोक्षप्रतिभासिनि वाक्यार्थेऽपि व्यक्ताव्यक्तत्वतारतम्यं तत्र मननोत्तरकालमाध्यासनाभ्यासनिकर्षप्रकर्षक्रमजन्मनि प्रत्ययप्रवाहे साक्षात्कारावधौ व्यक्तितारतम्यं प्रति कैव कथेति भावः । तदेवं वाक्यमात्रस्यार्थेऽपि न द्रागित्येव प्रत्यय

## वेदान्तकल्पतरुः ।

नवधारिता ऐक्येन च समारोप्यमाणा न तथा हर्षविशेषमुपजनयन्त्यविवेकिनां यथा शास्त्रीयलक्षणैर्विविक्तताम् । तस्माद्यथा तत्र प्रकाशमानेष्विव षड्जादिषु समारोपितमविवेकं निषेधतः शास्त्रस्योपयोगः, एवमत्रापि समारोपितोपाधिकृतस्वप्रकाशानुभवगतमभिभवं व्युदस्यतां वेदान्तानामित्यर्थः । **एतदुक्तं भवति**—अविकलानधिकेऽवभासमानेऽपि वस्तुनि येन क्रमेणारोपः प्रवृत्तस्तद्विपरीताकारप्रमाणवृत्त्युदयव्यतिरेकेण न भ्रमो निवर्तते, यथा देवदत्ते तदैक्ये चाभिज्ञासिद्धेऽप्यन्योऽयमन्यः स इत्यारोपः सोऽयमित्याकारप्रत्यभिज्ञया विना न निवर्तत इति ॥ षड्जमध्यमगान्धारनिषादर्षभधैवताः । पञ्चमश्चेति सप्तैते तन्त्रीकण्ठोद्भवाः स्वराः ॥ **ग्रामः** स्वराणां समूहः । **मूर्च्छना तु** तेषामारोहावरोहौ । **भाष्ये**—सर्वथैवानर्थक्यं कंचित्प्रति नोच्यते; सम्यग् ज्ञानोपायस्य नियतत्वात्, किंत्विह जन्मन्यावृत्त्यनुष्ठानवैयर्थ्यमित्याह—**प्राग्भवीयेति** । पूर्वपक्षावसरे हि वाक्यमावर्त्यमानमपि नापरोक्षज्ञानं जनयतीत्युक्तं, नावृत्तावपि तदनुपपत्तेरित्यादिभाष्येण, तदेवानूद्य **न हि दृष्ट** इत्यादिभाष्येण परोक्षार्थवाक्यदृष्टान्तेन परिह्रियते । तदसङ्गतमिव प्रतिभाति; तत्र वाक्यात्साक्षात्कारोत्पत्तिप्रकारस्य स्वेनैवोपपादितत्वादेतावानाक्षेपः परिशिष्यते, यः प्रथमश्रवणे प्रमित्यतिशयो न भवति,

## कल्पतरुपरिमलः ।

अधिकरणातिरेकाभ्युपगमे वास्तवत्वमप्युपाध्यभावानामुक्तन्यायेनाभ्युपगन्तव्यं नच तदभ्युपगमो युक्तः अद्वैतश्रुतिविरोधादिति सूचनार्थम् । **न चैवमिति** । ब्रह्मण्यतिरिक्ताभावनिषेधोऽतिरिक्तः स्यात्तस्याप्यतिरेकनिषेधे तस्यापि तन्निषेधो वक्तव्य इत्येवमित्यनवस्थेत्यर्थः । अद्वैतश्रुत्यविरोधायाधिकरणं ब्रह्मैव सर्वाभावव्यवहारालम्बनमित्यभ्युपगमान्नानवस्थेति परिहाराभिप्रायः । स्वप्रकाशानुभवस्य केनाभिभवो वेदान्तैर्व्युदसनीयः, कथं च तेषां तद्व्युदसनसामर्थ्यमित्याकाङ्क्षायामाह—**एतदुक्तं भवतीति । यथा देवदत्ते तदैक्ये चेति** । एवमेव ब्रह्मणि तदभेदे च भासमानेऽपि ब्रह्मान्यत् जीवोऽन्य इत्यारोपस्तत्त्वमसीति वेदान्तवाक्यश्रवणादिमूलकमभेदसाक्षात्कारं विना न निवर्तत इत्यर्थः । **ननु**—दृष्टान्ते दार्ष्टान्तिके च पूर्वापरज्ञानयोर्विषयकृतविशेषाभावे केन विशेषेणोत्तरज्ञानस्य भेदभ्रमनिवर्तकत्वं न पूर्वज्ञानस्येति—**चेत्**, सोऽयमिति तत्त्वमिति च पदयोर्वाच्यार्थरूपं यद्धर्मद्वयं तत्परामर्शरूपकारणविशेषाधीनेन ज्ञानस्य ज्ञेयेन सह स्वरूपसंबन्धविशेषेण । एवं स्वरूपसंबन्धविशेषकृतमेवाभिज्ञाप्रत्यभिज्ञयोर्लोके वैलक्षण्यं, नतु विषयविशेषकृतं यथा विशेषणविशेष्यतत्संबन्धगोचरात्समूहालम्बनाद्विशिष्टज्ञानस्य विशेषणज्ञानादिकारणविशेषाधीनस्वरूपसंबन्धविशेषकृतमेव वैलक्षण्यम्, यथावा परस्परविरुद्धस्थाणुत्वपुरुषत्ववानयमित्याहार्यनिश्चयात्संशयस्य दोषरूपकारणविशेषाधीनस्वरूपसंबन्धविशेषकृतमेव वैलक्षण्यम् । **तन्त्रीकण्ठोद्भवा इति** । वीणागाने तन्त्र्युद्भवाः शारीरगाने कण्ठोद्भवाश्च तत्तत्स्थानविशेषप्रभवमन्द्रमध्यमतारध्वनीनामनुरणनरूपा नादाः स्वरास्तेषां षड्जादीनां स्वराणां षड्जादिप्रधानाः षड्जग्रामो मध्यमग्रामो गान्धारग्राम इति त्रिविधा ग्रामास्तेषां ग्रामाणामारोहावरोहरूपाः प्रत्येकं सप्तविधा एकविंशतिमूर्च्छनाः । **स्वेनैवेति** । टीकाकृता कृतैवेत्यर्थः । यद्यपि टीकायां वाक्यात् साक्षात्कारोत्पत्तिप्रकारस्योपपादितत्वेऽपि भाष्ये तदुपपादनमिदानीं क्रियत इति वक्तुं शक्यम्; तथाप्ययमभिसन्धिरित्यारभ्य पूर्वभाष्यतात्पर्यविषयत्वेनैव टीकायां तदुपपादनस्य कृतत्वाद् उत्तरभाष्यार्थत्वं तस्यायुक्तमिति टीकाकारहृदयमित्याशयः । **एतावानाक्षेप इति** । साक्षात्कारकरणस्यान्तःकरणस्य भावनाप्रचयसाहित्यार्थं धात्वर्थोपसंगृहीतावृत्तिगर्भस्य निदिध्यासनस्यैव बहुविधशङ्कानिराकरणार्थं मननस्यैव च साङ्गाध्ययनजन्यवाक्यार्थज्ञानरूपस्य श्रवणस्यावृत्तेर्नास्त्युपयोगः, नच—मनननिवर्तनीयबहुविधशङ्कोत्थानाय श्रवणावृत्त्यपेक्षाऽस्तीति—वाच्यम्; सकृच्छ्रवणेऽपि

व्युदासेन सम्यक्प्रतिपद्यमानाः । अपिच तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे । तत्पदेन च प्रकृतं सद्ब्रह्मेक्षितृ जगतो जन्मादिकारणमभिधीयते 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१।१) 'विज्ञानमानन्दं ब्रह्म' (बृ० ३।९।२८) 'अदृष्टं द्रष्टृ' (बृ० ३।८।११) 'अविज्ञातं विज्ञातृ' ( बृ० ३।८।११ ) 'अजमजरममरम् अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ० ३।८।८) इत्यादिशा-

## भामती ।

इत्युक्तम् । तत्त्वमसीति तु वाक्यमत्यन्तदुर्ग्रहपदार्थं न पदार्थज्ञानपूर्वकं स्वार्थे ज्ञाते द्रागित्येव प्रवर्तते, किंतु विलम्बिततमपदार्थज्ञानमतिविलम्बेनेत्याह—**अपिच तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्येति** । **स्यादेतत्**—पदार्थ-

## वेदान्तकल्पतरुः ।

स आवृत्तावपि न स्यादिति । तस्य कैमुतिकन्यायेन परिहारभाष्यार्थमाह—**यत्र परोक्षेत्यादिना** । वाक्याभ्यासानभ्यासाभ्यामेकजातीयपरोक्षज्ञाने जन्यमानेऽप्यावृत्तेरतिशयकरत्वे दृष्टे सत्यपरोक्षज्ञानातिशयाऽऽवृत्तिरिति नानुपपन्नम्, अपि तु सुतरामुपपन्नमिति भाष्यार्थः । **वाक्यमात्रस्येति** । परोक्षार्थस्येत्यर्थः । वाक्यार्थसाक्षात्कारार्थमावृत्त्युपयोगमुक्त्वा तत्त्वंपदार्थविवेकद्वारेण वाक्यमात्रात् परोक्षज्ञानोत्पादनेऽप्यावृत्त्युपयोग उच्यत इत्याह—**अत्यन्तदुर्ग्रहेति** । क्रमवती प्रती-

## कल्पतरुपरिमलः ।

धीमतः सकलशङ्कोत्थितेः स्वतस्तूत्थानाभावेऽपि न्यायविचारशास्त्रनिबन्धतयैव विचारकाले तदुत्थितिसंभवात्, अन्यथोत्थापनीयशङ्केयत्तानवगमेन श्रवणापर्यवसानप्रसङ्गात् । कैमुतिकन्यायो न हि दृष्टेऽनुपपन्नं नामेति भाष्यान्न प्रतीयत इत्याशङ्क्य तद्भाष्यारूढं करोति—**वाक्याभ्यासानभ्यासाभ्यामिति** । यद्वाक्यं तत्त्वमसीतिवदभ्यस्तं यद्वा नाभ्यस्तं तेन द्विविधेनापि वाक्येन यदेकजातीयं परोक्षज्ञानं जायते तस्मिन्नपीत्यर्थः । वाक्याभ्यासाभ्यामिति पाठे वाक्यमनभ्यस्तमभ्यासो वाक्याभ्यासः ताभ्यामित्यर्थः । **परोक्षार्थस्येत्यर्थ इति । नहि दृष्टइति** । भाष्ये दृष्टइत्यस्य विवरणार्थं—**दृश्यन्ते हीति** । भाष्यं कैमुतिकन्यायप्रदर्शनाय परोक्षार्थवाक्ये आवृत्त्यपेक्षासद्भावप्रदर्शनपरम्, नतु वाक्यमात्रे; अपरोक्षार्थवाक्य आवृत्त्यपेक्षाया इदानीं साध्यमानत्वात् । अतो **दृश्यन्ते** हीत्यादिभाष्यार्थानुवादके **तदेवं वाक्यमात्रस्येति** टीकाग्रन्थे वाक्यपदं परोक्षार्थकवाक्यपरं व्याख्येयमिति भावः ।

**अत्रेदं वक्तव्यम्**—वाक्यादिहापरोक्षज्ञानोत्पत्तिर्न साक्षाद्विवक्षिता, येन वाक्यात्सार्वत्रिकस्वारसिकशाब्दज्ञानोत्पत्तावप्यावृत्त्यपेक्षायां काचित्कयत्नसाध्यापरोक्षज्ञानोत्पत्तौ तदपेक्षाऽस्तीति किमु वक्तव्यमित्युच्येतापि, किंतु वाक्ये शाब्दज्ञानमुत्पाद्योपरते निदिध्यासनरूपभावनाप्रकर्षादेव तदुत्पत्तिरभिमता, तत्र वाक्यस्य परम्परयोपयोगमात्रम् । अतस्तत्र वाक्यश्रवणावृत्तेरपेक्षा कैमुतिकन्यायान्न सिध्यति; आवृत्तादनावृत्ताद्वा शब्दादर्थबोधे दृढे जाते तत्प्रेक्षाप्रवृत्तभावनाप्रकर्षेणैव साक्षात्कारोत्पत्तिसंभवात्, अप्सरायमाणा काचिदमुष्य कन्यकाऽस्ति तवैवार्हेत्याप्तवाक्यात् सकृच्छ्रुतवतोऽपि तां लिप्सोर्भावनाप्रकर्षात् तत्साक्षात्कारोदयात्, नच टीकायां वाक्यादपरोक्षज्ञानोत्पत्तौ कैमुतिकन्यायस्य प्रदर्शनमस्ति; शाब्दज्ञानेऽपि वाक्यश्रवणावृत्त्या व्यक्तितारतम्यं दृश्यते, निदिध्यासनरूपप्रत्ययप्रवाहे साक्षात्कारोत्पत्त्यर्थं तद्द्वेद्यपरमकाष्ठापेक्षितं व्यक्तितारतम्यं ध्यानावृत्त्या भवतीति किमु वक्तव्यमित्येव तत्र कैमुतिकन्यायोपन्यासात् । **ननु**—अनूदितश्रवणावृत्तिवैयर्थ्यशङ्कापरिहारार्थं भाष्यतात्पर्यकथनार्थं प्रवृत्तस्य टीकाग्रन्थस्य ध्यानावृत्तिसमर्थनार्थत्वं न युक्तमिति स्वरसतः प्रतीयमानस्तदर्थ आचार्यैस्त्यक्त इति—**चेत्, तर्हि** नहि दृष्ट इत्यादिभाष्यस्वारस्यमवलम्ब्य लोकदृष्ट्यनुसारेण तत्त्वमसीत्यादिवाक्यजन्यशाब्दज्ञानार्थमेवावृत्त्यपेक्षा समर्थ्यतां, लोकेऽपि हि गहनवाक्येषु वाक्यार्थबोधार्थम् आवृत्त्यपेक्षा दृष्टा, तथेहापि तदपेक्षेति । एवंच यस्य साङ्गाध्ययनवतो यावत्स्वव्युत्पत्तिबलमूलेन पुनःपुनरावृत्त्या वाक्यार्थावधारणे जाते प्राग्भवीयश्रवणमननवासनोद्बोधेनाशङ्कानुदयः तस्य न मननापेक्षा यस्य तदभावेन शङ्कोदयस्तस्य तन्निरासाय मनने प्रवृत्तिरिति दृढशाब्दज्ञानोत्पत्त्यर्थमेव श्रवणावृत्तिसमर्थनं भाष्यस्यार्थ इति ऋजुरेवायं पन्थाः । **ननु**—पूर्वपक्षे आवृत्तावपि तदनुपपत्तेरिति भाष्येण वाक्यमावर्त्यमानमपि नापरोक्षज्ञानं जनयतीति या शङ्का कृता सैवेह सिद्धान्ते ननूक्तं सकृच्छ्रुतं चेदित्यादिभाष्येणानूदिता, अतस्तत्परिहारग्रन्थस्यावृत्तेरपरोक्षज्ञानोपयोग एव तात्पर्यं वर्णनीयमिति—**चेद्, न**; पूर्वपक्षगतशङ्काग्रन्थस्याप्यावृत्तेः शाब्दज्ञानानुपयोगपरतायामेव स्वारस्यात् । **अत्राहे**ति पूर्वपक्षारम्भग्रन्थे आत्मभूतमिति विशेषणं प्रत्ययस्यात्मभूतमित्यस्मिन्नर्थे स्वारसिकम्; प्रत्ययस्य सन्निहितत्वादिति तत्स्वारस्यमनुरुध्य खलु ततः प्रभृति टीकाकृता विवृतिः कृता । तत्राहेति वाक्ये तथैव तदर्थोऽस्तु । तथाच विरुद्धांशप्रहाण्या जीवैक्येन बोध्यं ब्रह्म निर्विशेषमिति तद्विषयायां वृत्तिसाध्यविशेषविषयत्वासंभवाद् आवृत्तिर्व्यर्थेति प्रथममाक्षेपः । आवृत्त्यभावे तद्विषयवृत्तिरेव नोदीयादिति ततः सिद्धान्तिनः शङ्का । सकृच्छ्रुतान्नोदेतीति चेद् आवृत्तावपि नोदीयादिति पुनराक्षेपः । ततः शाब्दज्ञानार्थमावृत्त्यनपेक्षायामपि साक्षा-

त्वप्रसिद्धम्। तत्राजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः। अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः। विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्। एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः। तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानश्चैतन्यपर्यन्तत्वेनावधारितः। तत्र येषामेतौ पदार्थावज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां तत्त्वमसीत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थस्येत्यतस्तान्प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। यद्यपि च प्रतिपत्तव्य आत्मा निरंशः; तथाप्यध्यारोपितं तस्मिन्बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्। तत्रैकेनावधानेनैकमंशमपोह्यापरेणापरमिति युज्यते। तत्र क्रमवती प्रतिपत्तिः? तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः। येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान्प्रत्यावृत्त्यानर्थक्यमिष्टमेव। सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयतीति नात्र कश्चिदपि क्रमोऽभ्युपगम्यते। सत्यमेवं युज्येत यदि कस्यचिदेवं प्रतिपत्तिर्भवेत्। बलवती ह्यात्मनो दुःखित्वादिप्रतिपत्तिः। अतो न दुःखित्वाद्यभावं कश्चित्प्रतिपद्यत इति चेत्, न; देहाद्यभिमानवद्दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः। प्रत्यक्षं हि देहे छिद्यमाने दह्य-

## भामती।

संसर्गात्मा वाक्यार्थः पदार्थज्ञानक्रमेण तदधीननिरूपणीयतया क्रमवत्प्रतीतिर्युज्यते, ब्रह्म तु निरंशत्वेनासंसृष्टनानात्वपदार्थकमिति कस्यानुक्रमेण क्रमवती प्रतीतिरिति सकृदेव तद्गृह्येत, न वा गृह्येतेत्युक्तमित्यत आह—**यद्यपि च प्रतिपत्तव्य आत्मा निरंश इति।** निरंशोऽप्यहमपरोक्षोऽप्यात्मा तत्तद्देहाद्यारोपव्युदासाभ्यामंशवानिवात्यन्तपरोक्ष इव। ततश्च वाक्यार्थतया क्रमवत्प्रत्यय उपपद्यते। तत्किमियमेव वाक्यजनिता प्रतीतिरात्मनि, तथाच न साक्षात्प्रतीतिरात्मन्यनागतफलत्वादस्या इत्यत आह—**तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः** साक्षात्कारवत्याः। **एतदुक्तं भवति**—वाक्यार्थश्रवणमननोत्तरकाला विशेषणत्रयवती भावना ब्रह्मसाक्षात्काराय कल्पत इति वाक्यार्थप्रतीतिः साक्षात्कारस्य पूर्वरूपमिति। शङ्कते—**सत्यमेवमिति।** समारोपो हि तत्त्वप्रत्ययेनापोद्यते न तत्त्वप्रत्ययः। दुःखित्वादिप्रत्ययश्चात्मनि सर्वेषां सर्वदोत्पद्यत इत्यबाधितत्वात्समीचीन इति बलवान्न शक्योऽपनेतुमित्यर्थः। निराकरोति—**न। देहाद्यभिमानवदिति।** नहि सर्वेषां सर्वदोत्पद्यत इत्येतावता तात्त्विकत्वम्। देहात्माभिमानस्यापि सत्यत्वप्रसङ्गात्सोऽपि सर्वेषां सर्वदोत्पद्यते। उक्तंऽचास्य तत्र तत्रोपपत्त्या बाधनमेवं दुःखित्वाद्यभिमानोऽपि तथा। नहि नित्यशुद्धबुद्धस्वभावस्यात्मन उपजनापायधर्माणो दुःखशोकादय आत्मानो भवितुमर्हन्ति। नापि धर्माः, तेषां ततोऽत्यन्तभिन्नानां तद्धर्मत्वानुपपत्तेः, नहि गौरश्वस्य धर्मः। संबन्धस्यापि व्यतिरेकाव्यतिरेकाभ्यां संबन्धासंबन्धाभ्यां

## वेदान्तकल्पतरुः।

तिर्यस्य स वाक्यार्थस्तथोक्तः। संसृष्टत्वं नानात्वं च ययोर्न स्तस्तौ पदार्थावसंसृष्टनानात्वौ तौ च यस्य तद्ब्रह्मासंसृष्टनानात्वपदार्थकमिति। **तत्किमिति।** येयं पदार्थविवेकपूर्वकं वाक्यजन्यताप्रतीतिरियमेव स्यात्, किमात्मनि नान्या, तथा सतीयं साक्षात्प्रतीतिरात्मनि न स्यात्। कुतः? अस्याः साक्षात्प्रतीतेरिन्द्रियजत्वेनानागमफलत्वादित्यर्थः। **ननु** शाब्दप्रतीतेरप्यात्मप्रतिपत्तित्वात्किं तस्या एव तत्पूर्वत्वं नेत्याह—**साक्षात्कारेति।** शाब्दधियोऽनिन्द्रियजन्यत्वाद् ध्यानादिसहकृतचेतोऽर्पणद्वारा साक्षात्कारहेतुत्वमित्याह—**एतदुक्तमिति। विशेषणत्रयवतीति।** दीर्घकालनैरन्तर्यसत्कारवतीत्यर्थः। **अत्यन्तभिन्नानामिति।** अभिन्नानामित्यपि द्रष्टव्यम्। कल्पितत्वं हि सिद्धान्तः। **नन्वश्वस्य** गां प्रत्यधर्मत्वं नान्यत्वात् किं तु गव्यसमवेतत्वाद् दुःखादयस्तु भिन्ना अप्यात्मसमवेतत्वाद्धर्मा इत्याशङ्क्य तर्हि संबन्ध एव नास्ति वास्तव इत्याह—**संबन्धस्यापीति। ननु** दुःखादय आत्मनो नात्यन्तभिन्नाः किं तु भिन्नाभिन्ना इति नेत्याह—

## कल्पतरुपरिमलः।

त्कारार्थं तदपेक्षाऽस्तीति शङ्कातत्परिहारप्रपञ्चः। पूर्वपक्षावसानेऽपि चानेकांशोपेत इत्यादिग्रन्थेनात्मभूतमिति विशेषणसामर्थ्यलभ्ययुक्तिविवरणमिति पूर्वपक्षग्रन्थसामञ्जस्यात्। शाब्दज्ञानार्थमेवावृत्त्यपेक्षेति सिद्धान्तग्रन्थसामञ्जस्याच्च। **अपिच** "तत्त्वमसी"त्येतद्वाक्यमित्यादिसमनन्तरभाष्यग्रन्थस्य शाब्दज्ञानार्थतयैवावृत्त्यपेक्षाप्रतिपादकत्वाच्च। एवमक्लिष्टे भाष्यार्थे व्यक्तेऽप्यर्थान्तरवर्णनम् एवमपि योजयितुं शक्यमिति प्रौढोक्तिमात्रं द्रष्टव्यम्॥ **संसृष्टत्वमिति।** संसृष्टशब्दो धर्मलक्षकः। ततः संसृष्टनानात्वशब्दयोर्द्वन्द्वसमासे सति न विद्येते संसृष्टनानात्वे ययोरिति द्वन्द्वगर्भो बहुव्रीहिः। पुनस्तथाभूतौ पदार्थौ यस्येति बहुव्रीहिरित्यर्थः। असंसृष्टनानापदार्थकमिति त्वप्रत्ययरहितपाठे त्वेक एव बहुव्रीहिः। तेन संसृष्टनाना-

माने वाऽहं छिद्ये दह्य इति च मिथ्याभिमानो दृष्टः । तथा बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेष्वहमेव संतप्य इत्यध्यारोपो दृष्टः । तथा दुःखित्वाद्यभिमानोऽपि स्यात् । देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वाद्दुःखित्वादीनां सुषुप्तादिषु चाननुवृत्तेः । चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिमामनन्ति 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति' ( बृ० ४।३।२३ ) इत्यादिना । तस्मात्सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः । न चैवमात्मानमनुभवतः किंचिदन्यत्कृत्यमवशिष्यते । तथाच श्रुतिः—'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' ( बृ० ४।४।२२ ) इत्यात्मविदः कर्तव्याभावं दर्शयति । स्मृतिरपि—'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' ( गी० ३।१७ ) इति । यस्य तु नैषोऽनुभवो द्रागिव जायते तं प्रत्यनुभवार्थ एवावृत्त्यभ्युपगमः । तत्रापि न तत्त्वमसिवाक्यार्थात्प्रच्याव्यावृत्तौ प्रवर्तयेत् । नहि वरघाताय कन्यामुद्वाहयन्ति । नियुक्तस्य चास्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यमित्यवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते । यस्तु स्वयमेव मन्दमतिरप्रतिभानात्तं वाक्यार्थं जिहासेत्तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्याभ्युपेयते । तस्मात्परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः ॥ २ ॥ इति प्रथममावृत्त्यधिकरणम् ॥

---

## भामती ।

च विचारासहत्वात् । भेदाभेदयोश्च परस्परविरोधेनैकत्रासंभवात् इति सर्वमेतदुपपादितं द्वितीयाध्याये । तदिदमुक्तं—**देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वादिति** । इतश्च दुःखित्वादीनां न तादात्म्यमित्याह—**सुषुप्तादिषु चेति** । **स्यादेतत्**—कस्मादनुभवार्थ एवावृत्त्यभ्युपगमो यावता द्रष्टव्यः श्रोतव्य इत्यादिभिस्तत्त्वमसिवाक्यविषयादन्यविषयैवावृत्तिर्विधास्यत इत्यत आह—**तत्रापि न तत्त्वमसिवाक्यार्थादिति** । "आत्मा वा अरे द्रष्टव्य" इत्याद्यात्मविषयं दर्शनं विधीयते । नच तत्त्वमसिवाक्यविषयादन्यदात्मदर्शनमाम्नातम्, येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थः । सदेव सोम्येदमिति चोपक्रम्य तत्त्वमसीत्युपसंहृत इति स एव वाक्यार्थः । तदितः प्रच्याव्यावृत्तिमन्यत्र विदधानः प्रधानमङ्गेन विहन्ति । वरो हि कर्मणाभिप्रेयमाणत्वात्संप्रदानं प्रधानम् । तमुद्वाहेन कर्मणाङ्गेन न विघ्नन्तीति । **ननु** विधिप्रधानत्वाद्वाक्यस्य न भूतार्थप्रधानत्वं भूतस्त्वर्थस्तदङ्गतया प्रत्याय्यते । **यथाहुः**—'चोदना हि भूतं भवन्तम्' इत्यादि शाबरं वाक्यं व्याचक्षाणाः—'कार्यमर्थमवगमयन्ती चोदना तच्छेषतया भूतादिकमवगमयति' इत्याशङ्क्याह—**नियुक्तस्य चास्मिन्नधिकृतोऽहमिति** । यथातावद्भूतार्थपर्यवसिता वेदान्ता न कार्यविधिनिष्ठास्तथोपपादितं 'तत्तु समन्वयात्' इत्यत्र । प्रत्युत विधिनिष्ठत्वे मुक्तिविरुद्धप्रत्ययोत्पादान्मुक्तिविहन्तृत्वमेवास्येत्यभ्युच्चयमात्रमत्रोक्तमिति ॥ २ ॥ इति **प्रथममावृत्त्यधिकरणम्** ॥

## वेदान्तकल्पतरुः ।

**भेदाभेदयोश्चेति** । **चैतन्याद्बहिरिति** । वास्तवं हि चैतन्यं तस्माद्बहिष्ट्वमवास्तवमिति । **इतश्चेति** । कल्पितत्वेन हि दुःखित्वादीनामात्मतादात्म्यं धर्मधर्मिलोपयोगि निरस्तमिदानीं सुषुप्तावात्मनि दुःखित्वाद्यभावाच्च नात्मतादात्म्यमित्युच्यते । तादात्म्यं ह्यैक्यं नान्यन्निरूपयितुं शक्यम् । नचानुवृत्तव्यावृत्तयोरैक्यमित्यर्थः । **अन्यविषयैवेति** । संपदादिप्रत्ययविषयेत्यर्थः । **आत्मविषयं दर्शनं विधीयत इति** । आत्मस्तुतिद्वारेण दर्शनं पुरुषप्रवृत्त्यतिशयविषयत्वमापद्यत इत्यर्थः । सिद्धरूपब्रह्मप्रत्ययविपरीतप्रत्ययोत्पत्तेः कार्यवादिभिरिष्यमाणत्वात्तदापत्ताविष्टप्रसङ्गतामाशङ्क्याह—**अभ्युच्चयमात्रमिति** । समन्वयसूत्रोक्तन्यायेन वेदान्तानां सिद्धब्रह्मपरत्वे सिद्धे तादृशब्रह्मज्ञानादेव मुक्तिरिति सिद्ध्यति तथाऽभ्युपगमे मुक्तिविरोध उक्त

## कल्पतरुपरिमलः ।

पदार्थैरहितमित्यर्थलाभे सति विशेष्यनिषेधायोगाद् विशेषणयोः संसृष्टनानात्वयोर्निषेधः । स रैक्वो यद्वेदेति जानश्रुतौ राज्ञि रात्रौ शयाने तस्योपरि पतत्सु हंसेषु पुरोगामिनं हंसं प्रति पश्चाद्गामिना केन चिद्धंसेन जानश्रुतेर्ज्योतिः द्युव्यापि दीप्यते तन्मा प्रसाङ्क्षीदित्युक्ते पुरोगामिना च सयुग्वानं रैक्वमिव जानश्रुतिमात्थेति जानश्रुतौ तुच्छीकृते कथं सयुग्वा रैक्व इति पश्चाद्गामिना रैक्वस्य महिम्नि पृष्टे पुरोगामिनो वचनम् । यथा कृताय विजिताय अधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति । **अस्यार्थः**—कृतनामा द्यूते चतुरङ्कः अयः । तस्मै विजिताय तस्मिन्विजयार्थं न्यस्ते अधरे न्यूना अयाः त्र्यद्व्येकाङ्काः त्रेताद्वापरकलिनामानः **संयन्ति** अन्तर्भवन्ति; चतुःसंख्यायां त्रित्वादिसंख्यान्तर्भावात् । एवमेनं प्रस्तुतं रैक्वं सर्वं तद्वक्ष्यमाणमभिसमेति यत्किंचित्प्रजाः

**( २ अधिकरणम् ) आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥**

**यः शास्त्रोक्तविशेषणः परमात्मा स किमहमिति ग्रहीतव्यः, किं वा मदन्य इत्येतद्विचारयति । कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति ? उच्यते—अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुं सति जीवेश्वरयोरभेदसंभवे, इतरथा तु गौणोऽयमभ्युपगन्तव्य इति मन्यते । किं तावत्प्राप्तम् ? नाहमिति ग्राह्यः । न ह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुं विपरीतगुणो वाऽपहतपाप्मादिगुणत्वेन । अपहतपाप्मादिगुणश्च परमेश्वरस्तद्विपरीतगुणस्तु शारीरः । ईश्वरस्य च संसार्यात्मत्व ईश्वराभावप्रसङ्गः । ततः शास्त्रानर्थक्यम् । संसारिणोऽपीश्वरात्मत्वेऽधिकार्यभावाच्छास्त्रानर्थक्यमेव, प्रत्यक्षादिविरोधश्च । अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात्कर्तव्यं प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्काममेवं भवतु ।**

## भामती ।

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥** यद्यपि तत्त्वमसीत्याद्याः श्रुतयः संसारिणः परमात्मभावं प्रतिपादयन्ति; तथापि तयोरपहतपाप्मत्वानपहतपाप्मत्वादिलक्षणविरुद्धधर्मसंसर्गेण नानात्वस्य विनिश्चयाच्छ्रुतेश्च तत्त्वमसीत्याद्याया 'मनो ब्रह्म' 'आदित्यो ब्रह्म' इत्यादिवत्प्रतीकोपदेशपरतयाप्युपपत्तेः प्रतीकोपदेश एवायम् । नच—यथा समारोपितं सर्पत्वमनूद्य रज्जुत्वं पुरोवर्तिनो द्रव्यस्य विधीयते, एवं प्रकाशात्मनो जीवभावमनूद्य परमात्मत्वं विधीयत

## वेदान्तकल्पतरुः ।

इत्यर्थः । शास्त्रतो विज्ञायापरोक्षप्रज्ञां कुर्वीत यत्स रैक्वो वेद तत्प्राणतत्त्वं सर्वधर्मफलमभिसंगच्छत इत्यर्थः । एवं रैक्वादन्योऽसि यस्तद्रैक्व वेद्यं वेद तस्यापि सर्वसाधुफलप्राप्तिर्भवति स एवंभूतो रैक्वो मया एतदिति क्रियाविशेषणमित्थमुक्तः । रैक्वमिव जानश्रुतिमल्पकं कर्मात्थेति हंसान्तरं प्रति हंसो वक्ति । हे रैक्व यां देवतामुपास्से एतां माम् **अनुशाधि** शिक्षय ज्ञापय इति जानश्रुतिवाक्यम् । हे पुत्र त्वं रश्मीनादित्यं च भेदेन **पर्यावर्तयात्** तकार एको लुप्तो द्रष्टव्यः । पर्यावर्तयतादिति मध्यमैकवचनमेतत् । त्वं योगात् पर्यावर्तय उपास्वेत्यर्थः । एवं सति बहवस्ते पुत्रा भविष्यन्ति न केवलादित्योपास्ताविवैकपुत्रतेत्यर्थः । एषां नोऽस्माकमपरोक्ष आत्मैवायं लोकः पृथिवीलोकः प्रजया हि पृथिवीलोकः साध्यः स आत्मैवास्माकम् आत्मनः सर्वात्मत्वादतः प्रजया किं करिष्याम इत्यर्थः । **यस्त्वात्मरतिरिति** । रतिरासक्तिपूर्विका निष्ठा । तत आत्मसुखानुभवस्तृप्तिः तस्याः काष्ठा संतुष्टिः ॥ २ ॥ **इति प्रथममावृत्त्यधिकरणम् ॥**[1]

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥** ब्रह्मात्मैक्यसाक्षात्काराय श्रवणाद्यावर्तनीयमित्युक्तम्, तत्र ब्रह्मा-

## कल्पतरुपरिमलः ।

साधु कर्वन्ति सर्वप्रजासंपाद्यधर्मफलं सर्वं रैक्वधर्मफलेऽन्तर्भवतीत्यर्थः । यः रैक्वादन्योऽपि तद्वस्तु वेद किं यत्स वेद स रैक्वो यद्वेद तमपि सर्वं तद्वक्ष्यमाणमभिसमेतीत्यनुषङ्गः । रैक्वादन्यस्यापि रैक्वोपास्यमुपासीनस्य धर्मफले सर्वप्राणिधर्मफलमन्तर्भवतीत्यर्थादयमर्थः प्रदर्श्यते स रैक्वो यद्वेदेत्यादिना । यच्छब्दार्थमाह—**तत्प्राणतत्त्वमिति** । "प्राणो वाव संवर्ग" इति जानश्रुते रैक्वेणोपदेक्ष्यमाणं प्राणतत्त्वं यद्वेदेति यच्छब्देनोक्तमित्यर्थः । प्राणतत्त्वमिति प्रथमान्तपदम् । **सर्वधर्मफलमभिसंगच्छतइति** । एतमिति श्रुत्युपात्तम् । रैक्वमिवेति शेषः । **रैक्वमिवेति** सयुग्वानमिव रैक्वमात्थेति प्राचीनश्रुतिवाक्यार्थेन संबन्धप्रदर्शनं मानुशाधीति मे इति श्रुतौ षष्ठ्यन्तस्य मामिति द्वितीयार्थो दर्शितः । **शिक्षय** विद्यामुपादापय । शिक्ष विद्योपादाने इति धातुः । **हे पुत्रेति** । "असौ वा आदित्य उद्गीथ" इत्यादित्यदृष्ट्योद्गीथोपासनं प्रकृतं, तन्निष्ठः कौषीतकिरादित्यरश्मिभेदमकृत्वा केवलमादित्यदृष्ट्या स्वकृतमुद्गीथोपासनमेतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीत्येकपुत्रतां दोषेणापोद्य रश्मींस्त्वं पर्यावर्तयतादिति रश्मीनादित्यं च त्वं भेदेनोपास्वेति पुत्रं प्रत्युपदिदेश । तत्रार्थसिद्धं संबोधनमध्याहृतं—**हे पुत्रेति । तकार एको लुप्तो द्रष्टव्य इति** । "लोपस्त आत्मनेपदेष्वि"ति छन्दस्यात्मनेपदेषु विहितस्तकारलोपो बहुलग्रहणात्परस्मैपदेऽपि क्वचिद्भवतीति भावः । पर्यावर्तयतादिति हेस्तातङादेशे सति रूपम् । एवं रश्मिबहुत्वदृष्टेरावृत्तिमत्त्वोक्तिरन्येष्वपि वेदनेषु न्यायप्राप्तमावृत्तिमत्त्वं स्थालीपुलाकन्यायेन गमयतीति भावः ॥ २ ॥ **इति प्रथममावृत्त्यधिकरणम् ॥**

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ कस्य साक्षात्कारायेति** । नित्यापरोक्षो जीवः, नित्यपरोक्ष-

[1] तत्र सूत्रे २—आवृत्तिरसकृदुपदेशात् १ लिङ्गाच्च २ ॥

न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यम् । एवं प्राप्ते ब्रूमः—आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः । तथाहि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति—'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि देवते' इति । तथान्येऽपि 'अहं ब्रह्मास्मि' इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष त आत्मा सर्वान्तरः' ( बृ० ३।४।१ ) 'एष त आत्माऽन्तर्याम्यमृतः' ( बृ० ३।७।३ ) 'तत्सत्यं स आत्मा तत्त्वमसि' ( छा० ६।८।७ ) इत्येवमादीनि । यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति, तदयुक्तम्; गौणत्वप्रसङ्गात्, वाक्यवैरूप्याच्च । यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति । यथा—'मनो ब्रह्म' ( छा० ३।१८।१ ) 'आदित्यो ब्रह्म' ( छा० ३।१९।१ ) इत्यादि, इह पुनस्त्वमहमस्म्यहं च त्वमसीत्याह, अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः । भेददृष्ट्यपवादाच्च । तथाहि—'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' ( बृ० १।४।१० ) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( बृ० ४।४।१९। कठ० ४।१० ) 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' ( बृ० ४।५।७ ) इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति । यत्तूक्तं न विरुद्धगुणयोरन्योन्यात्मत्वसंभव इति । नायं दोषः; विरुद्धगुणताया मिथ्यात्वोपपत्तेः । यत्पुनरुक्तमीश्वराभावप्रसङ्ग इति, तदसत्; शास्त्रप्रामाण्यादनभ्युपगमाच्च । न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः, किं तर्हि? संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवं च सत्यद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता विपरीतगुणता त्वितरस्य मिथ्येति व्यवतिष्ठते । यदप्युक्तमधिकार्यभावः प्रत्यक्षादिविरोधश्चेति; तदप्यसत्; प्राक्प्रबोधात्संसारित्वाभ्युपगमात् तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० २।४।१४ ) इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत्, न; इष्टत्वात् । 'अत्र पिताऽपिता भवति' ( बृ० ४।३।२२ ) इत्युपक्रम्य 'वेदा अवेदाः' ( बृ० ४।३।२२ ) इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे । कस्य पुनरयमप्रबोध इति चेत्, यस्त्वं पृच्छसि तस्य त इति

## भामती ।

इति—युक्तम्; युक्तं हि पुरोवर्तिनि द्रव्ये द्राघीयसि सामान्यरूपेणालोचिते विशेषरूपेणागृहीते विशेषान्तरसमारोपणम्, इह तु प्रकाशात्मनो निर्विशेषसामान्यस्यापराधीनप्रकाशस्य नागृहीतमस्ति किंचिद्रूपमिति कस्य विशेषस्याग्रहे किं विशेषान्तरं समारोप्यताम्? तस्माद्ब्रह्मणो जीवभावारोपासंभवाज्जीवो जीवो ब्रह्म च ब्रह्मेति तत्त्वमसीति प्रतीकोपदेश एवेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—श्वेतकेतोरात्मैव परमेश्वरः प्रतिपत्तव्यो न तु श्वेतकेतोर्व्यतिरिक्तः परमेश्वरः । भेदे हि गौणत्वापत्तिर्न च मुख्यसंभवे गौणत्वं युक्तम् । अपिच प्रतीकोपदेशे सकृद्वचनं तु प्रतीयेत ? न भेददर्शननिन्दा च। अभ्यासे हि भूयस्त्वमर्थस्य भवति, नाल्पत्वमतिदवीय एवोपचरितत्वम्। तस्मात्पौर्वापर्यालोचनया श्रुतेस्तावज्जीवस्य परमात्मता वास्तवीत्येतत्परता लक्ष्यते । नच मानान्तरविरोधादत्राप्रामाण्यं श्रुतेः, नच मानान्तरविरोध इत्यादि तु सर्वमुपपादितं प्रथमेऽध्याये । निरंशस्यापि चानाद्यनिर्वाच्याविद्यातद्वासनासमारोपितविविधप्रपञ्चात्मनः सांशस्येव कस्यचिदंशस्याग्रहणाद्विभ्रम इव, परमार्थस्तु न विभ्रमो नाम कश्चिन्न च संसारो नाम, किंतु सर्वमेतत्सर्वानुपपत्तिभाजनत्वे-

## वेदान्तकल्पतरुः ।

त्मैक्यमेव नास्ति, कस्य साक्षात्काराय श्रवणाद्यावृत्तिरिति प्रत्यवस्थानात्सङ्गतिः । **ननु** प्रथमे एवाध्याये शब्दादेव प्रमित ( व्या. अ. १ पा. ३ सू. २४ ) इत्याद्यधिकरणेषु जीवब्रह्मैक्यस्य श्रुतिभिर्निर्णयाद् गतार्थत्वमित्याशङ्क्य तासामेव श्रुतीनां विरुद्धार्थत्वादुपचरितश्रुतिविषयत्वमाशङ्क्यत इत्याह—**यद्यपीत्यादिना** । यद्यप्यविरोधलक्षणे इयं चिन्तोचिता; तथापि महावाक्यार्थविरोधसमाधानस्य समाधावन्तरङ्गत्वादिहानीता । जीवपरविभागस्याध्यस्तत्वादविरोधमाशङ्क्य स्वप्रकाशस्य भ्रमाधिष्ठानत्वानुपपत्तेरध्यासायोगमाह—**न च यथेत्यादिना** । कथं पुनः प्रत्यगात्मनीत्यत्र तु शास्त्रोपक्रमे श्रोतृप्रवृत्त्यर्थमत्रत्य एव न्याय आचार्यैराकृष्टः । **द्राघीयसि** दीर्घतरे । **नन्वभ्यासे** पौनरुक्त्यमेव कथमर्थमुख्यत्वलाभः, तत्राह—**अभ्यासे हीति** । अर्थस्य भूयस्त्वमुपादेयत्वातिशयोऽभ्यासे भवति लोकवदित्यर्थः । **दवीयो** दूरतरम् । **नच मानान्तरविरोधादत्राऽप्रामाण्यमिति** । **पौर्वापर्ये पूर्वदौर्बल्यमिति न्यायेन** श्रुतेरेव प्रामाण्यमिति शास्त्रोपक्रमे उक्तमित्यर्थः । **नच मानान्तरविरोध इति** । प्रमाणान्तराणामविद्योपस्थापितव्यावहारिकविषयत्वमध्यासभाष्ये वर्णितमित्यर्थः । आदिशब्देन तत्त्वमस्यादेः संपदादिपरत्वनिरासग्रहणम् । **निरंशस्यापीति** । यथा ह्याका-

वदामः । नन्वहमीश्वर एवोक्तः श्रुत्या, यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रतिबोधः । योऽपि दोषश्चोद्यते कैश्चिदविद्यया किलात्मनः सद्वितीयत्वादद्वैतानुपपत्तिरिति, सोऽप्येतेन प्रत्युक्तः । तस्मादात्मेत्येवेश्वरे मनो दधीत ॥ ३ ॥ इति द्वितीयमात्मत्वोपासनाधिकरणम् ॥

( ३ अधिकरणम् ) **न प्रतीके नहि सः ॥ ४ ॥**

'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति' ( छा० ३।१८।१ ) तथा 'आदित्यो ब्रह्मेत्यादेशः' ( छा० ३।१९।१ ) 'स यो नाम ब्रह्मेत्युपास्ते' ( छा० ७।१।५ ) इत्येवमादिषु प्रतीकोपासनेषु संशयः—किं तेष्वप्यात्मग्रहः कर्तव्यो न वेति । किं तावत्प्राप्तम् ? तेष्वप्यात्मग्रह एव युक्तः । कस्मात् ? ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात्प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति । एवं प्राप्ते ब्रूमः—न प्रतीकेष्वात्ममतिं बध्नीयात् । नहि स

भामती ।

नानिर्वचनीयमिति युक्तमुत्पश्यामः । तदनेनाभिसंधिनोक्तम्—यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रतिबोध इति । अन्येऽप्याहुः—'यद्यद्वैते न तोषोऽस्ति मुक्त एवासि सर्वदा' इति । अतिरोहितार्थमन्यदिति ॥ ३ ॥ इति द्वितीयमात्मत्वोपासनाधिकरणम् ॥

**न प्रतीके नहि सः ॥ ४ ॥** यथा हि शास्त्रोक्तं शुद्धमुक्तस्वभावं ब्रह्मात्मत्वेनैव जीवेनोपास्यतेऽहं ब्रह्मास्मि तत्त्वमसि श्वेतकेतो इत्यादिषु, तत्कस्य हेतोः ? जीवात्मनो ब्रह्मरूपेण तात्त्विकत्वादद्वितीयमिति श्रुतेश्च । जीवात्मानश्चाविद्यादर्पणा यथा ब्रह्मप्रतिबिम्बकास्तथा यत्र यत्र मनो ब्रह्मादित्यो ब्रह्मेत्यादिषु ब्रह्मदृष्टेरुपदेशस्तत्र सर्वत्राहं मन इत्यादि द्रष्टव्यं ब्रह्मणो मुख्यमात्मत्वमिति । उपपन्नं च मनःप्रभृतीनां ब्रह्मविकारत्वेन तादात्म्यम् । घटशरावोदञ्चनादीनामिव

वेदान्तकल्पतरुः ।

शस्य तत्तदुपाध्यवच्छेदाद् ग्रहणाग्रहणे, एवमित्यर्थः । **यद्यद्वैतइति** । हे शिष्य अद्वैते द्वैतध्वंसरूपे द्वैतस्य सत्त्वप्रसङ्गाद्यदि न तोषोऽस्ति, तर्हि वस्तुतो द्वैतं नाभूदस्ति भविष्यति, अतोऽप्रसक्तद्वैतस्त्वं मुक्त एवासि सर्वदेत्यर्थः ॥ ३ ॥ इति द्वितीयमात्मत्वोपासनाधिकरणम् ॥[1]

**न प्रतीके न हि सः ॥ ४ ॥** पूर्वोक्तं जीवब्रह्मणोरभेदमुपजीव्य ब्रह्मदृष्टिभाक्षु मनआदिष्वहमिति ब्रह्माभिन्नजीवदृष्टिः कर्तव्येति पूर्वपक्षमाह—**यथा हीति । ब्रह्मरूपेणेति** इत्थम्भावे तृतीया । **ननु** ब्रह्मात्मकजीवदृष्टेर्मनआदिष्वध्यासे तदात्मकाकाशादिदृष्टिरपि किं न स्यादत आह—**जीवात्मानश्चेति** । आकाशादिः स्वरूपेण कल्पितः, जीवानां तु भेदमात्रं कल्पितम्, तत्स्वरूपं तु ब्रह्मैवेत्यर्थः । **अविद्यादर्पणाः** अविद्योपाधिकाः । यथा ब्रह्म जीवेनात्मत्वेनोपदिश्यते तथाऽहं मन इत्यादि द्रष्टव्यमिति योजना । अत्र हेतुः—**ब्रह्मणो मुख्यमिति** । इतिर्यस्मादर्थे । ब्रह्मण आत्मत्वस्य मुख्यत्वाद् नामादिषु ब्रह्माध्यासे जीवदृष्टिरप्यध्यसितव्येत्यर्थः । अविद्यादर्पणा इत्यत उपरितनो यथाकारः पूर्वोक्तानुवादः । एवं तावज्जीवस्य ब्रह्माभेदप्रयुक्त्या नामादिष्वहंग्रह उक्तः, इदानीं पूर्वाधिकरणे ब्रह्मण्यात्मत्वमतिः कार्येत्युक्तत्वाद्ब्रह्माभिन्ननामादावप्यहंमतिः कार्येत्याह—**उपपन्नं चेति** । द्वावेतौ पक्षौ भगवता भाष्यकारेणोपन्यस्तौ । ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वादिति प्रतीकानामपि ब्रह्मविकारत्वादिति च प्रतीकेषु ब्रह्मात्मतामापादितेषु न केवलमहंमतिक्षेपः प्रयोजनमपि तर्हि प्रतीकोपलक्षितसमस्तप्रपञ्चप्रविलापनेन तत्त्वमस्यादिवाक्यार्थावगतिसिद्धिश्चेत्याह—**कस्यचिदिति । ननु** प्रविलये मनआद्येव नास्ति, कुत्राहंग्रहः ? सत्यम्; अत एव यथा जीवस्यावच्छिन्नरूपबाधेनानवच्छिन्नब्रह्मरूपतयाऽवस्थानमेवं प्रतीकानामपि ब्रह्मात्मनाऽवस्थानं लयो न तु स्वरूपाभाव इति पूर्वपक्षाभिप्रायमुद्भाव्य स्वयमेव निराकरिष्यति । अत्र

कल्पतरुपरिमलः ।

स्ततो भिन्न ईश्वरः, अतः कस्य साक्षात्कारः श्रवणाद्यावृत्तिसाध्यो न कस्यापीत्यर्थः ॥ ३ ॥ **इति द्वितीयं आत्मत्वोपासनाधिकरणम् ॥**

**न प्रतीकेन हि सः ॥ ४ ॥ प्रतीकेषु ब्रह्मात्मतामापादितेष्विति** । द्वावेतौ पक्षौ नामादीनां ब्रह्मदृष्टिविषयत्वात् तेषु ब्रह्माभिन्नजीवदृष्टिः कार्येत्येकः **पक्षः** । नामादीनां ब्रह्मणश्च विकारविकारिभावेन वास्तवाभेदसत्त्वात् तेषु ब्रह्मदृष्टौ क्रियमाणायां ब्रह्माभिन्नजीवदृष्टिः कार्येति **द्वितीयः पक्षः । प्रथमपक्षे** दृष्ट्या ब्रह्माभेदापादनं, **द्वितीयपक्षे** विकारविकारिभावेन । **सत्यमत एवेति** । यतः स्वरूपेण लये नास्त्यहंग्रहालम्बनम्, अत एव मनआदीनां जीववदवच्छिन्नरूपेणैव लय इति पूर्वपक्ष्यभिप्रायं मत्वा तमुद्भाव्य निराकरिष्यतीत्यर्थः । **नन्वर्थाद्वेति** द्वितीयविकल्पाशङ्कायाः प्रथ-

१ तत्र सूत्रम् १—आत्मेति तूपगच्छन्ति ग्राहयन्ति च ३ ॥

**उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत् । यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति, तदसत्; प्रतीकाभावप्रसङ्गात् । विकारस्वरूपोपमर्देन हि नामादिजातस्य**

## भामती ।

मृद्विकाराणां मृदात्मकत्वम् । तथाच तादृशानां प्रतीकोपदेशानां क्वचित् कस्यचिद्विकारस्य प्रविलयावगमाद्भेदप्रपञ्चप्रविलयपरत्वमेवेति प्राप्त उच्यते—न तावदहं ब्रह्मेत्यादिभिर्यथाहङ्कारास्पदस्य ब्रह्मात्मत्वमुपदिश्यते, एवं "मनो ब्रह्मे"त्यादिभिरहङ्कारास्पदत्वं मनःप्रभृतीनां, किंत्वेषां ब्रह्मत्वेनोपास्यत्वम् । अहङ्कारास्पदस्य ब्रह्मतया ब्रह्मत्वेनोपासनीयेषु मनःप्रभृतिष्वप्यहङ्कारास्पदत्वेनोपासनमिति चेत्, न; एवमादिष्वहमित्यश्रवणात् । ब्रह्मात्मतया त्वहङ्कारास्पदत्वकल्पने तत्प्रतिबिम्बस्येव तद्विकारान्तरस्याप्याकाशादेर्मनःप्रभृतीपूपासनप्रसङ्गः । तस्माद्यस्य यन्मात्रात्मतयोपासनं विहितं तस्य तन्मात्रात्मतयैव प्रतिपत्तव्यम्; 'यावद्वचनं वाचनिकम्' इति न्यायात्, नाधिकमध्याहर्तव्यमतिप्रसङ्गात् । नच सर्वस्य वाक्यजातस्य प्रपञ्चस्य विलयः प्रयोजनम्; तदर्थत्वे हि मन इति प्रतीकग्रहणमनर्थकम्, विश्वमिति वाच्यं, यथा सर्वं खल्विदं ब्रह्मेति । नच सर्वोपलक्षणार्थं मनोग्रहणं युक्तम्; मुख्यार्थसंभवे लक्षणाया अयोगात्, आदित्यो ब्रह्मेत्यादीनां चानर्थक्यापत्तेः । **नह्युपासकः प्रतीकानीति** । अनुभवाद्वा प्रतीकानां मनःप्रभृतीनामात्मत्वेनाकलनं श्रुतेर्वा, न त्वेतदुभयमस्तीत्यर्थः । **प्रतीकाभावप्रसङ्गादिति** । **ननु** यथाऽवच्छिन्नस्याहङ्कारास्पदस्यानवच्छिन्नब्रह्मात्मतया भवत्य-

## वेदान्तकल्पतरुः ।

मनआदावात्मत्वदृष्टिः श्रुतिबलाद्वा शङ्क्यते, अर्थाद्वा **न प्रथम** इति वदन् पूर्वाधिकरणाद्वैषम्यमाह—**न तावदिति** । मनःप्रभृतीनामहङ्कारास्पदत्वं न तावदुपदिश्यत इत्यन्वयः । **द्वितीयेऽपि** किं मनआदिषु ब्रह्माध्यासाद् ब्रह्माऽभिन्नजीवविषयाऽहंदृष्टिराशङ्क्यते, किं वा प्रतीकानां ब्रह्मविकारत्वेन तदभेदाद्ब्रह्मणि चात्मत्वप्रतीतेः प्रतीकेष्वप्यहंदृष्टिरापाद्यते । **प्रथम**माशङ्कते—**अहंकारास्पदस्येति** । यदि श्रुतेः प्रतीकेष्वहंमतिरभिमता, तर्हि ब्रह्मणीव तां वेदः श्रावयेद्, न चैवमित्याह—**नेति** । यत्त्वर्थादिति, तत्रातिप्रसङ्गमाह—**ब्रह्मात्मतयात्विति** । जीवस्य ब्रह्मस्वरूपत्वात्तद्दृष्टिरिति विशेषशङ्कायां तद्दृष्टिकरणादेव जीवदृष्टिरपि कृतेत्युत्तरम् । अहंदृष्टिस्तु न स्वरूपदृष्टिरहङ्कारविशिष्टस्यानात्मत्वादिति भावः । आर्थिकी हि प्रतीतिस्तत्र क्रियते, यत्र तामृते श्रुतिर्न निर्वहति । न चात्रैवं प्रत्युतातिप्रसङ्ग एव । तस्माद्यथाश्रुत्येवार्थो ग्राह्य इत्याह—**तस्माद्यस्येति** । ब्रह्मविकारत्वान्मनआदिष्वहंमतिक्षेप इति द्वितीयेऽपि पक्षेऽतिप्रसङ्गस्तुल्य एव; घटादिष्वहंमतिप्रसङ्गात् । तुल्यं च श्रुत्यनपेक्षितार्थकल्पनम् । यत्त्वत्र प्रयोजनमुक्तं, तद्दूषयति—**न च सर्वस्येति** । सर्वं खल्वित्यादौ हि क्वचिदेव प्रविलयार्थत्वं, न सर्वत्रेत्यर्थः । यदि च मनो ब्रह्मेत्यत्र मनउपलक्षितविश्वप्रपञ्चः प्रविलापितः, तर्ह्यादित्यादेरप्यनेनैव प्रविलापितत्वादादित्यो ब्रह्मेत्यादेरानर्थक्यमित्यर्थः । उपासकस्य प्रतीकानां च भेदेऽपि प्रतीकेषु ब्रह्माभिन्नजीवदृष्टेः श्रुतिवशादुपपत्तेर्भाष्यायोगमाशङ्क्याह—**अनुभवाद्वेति** । श्रुतिवशादात्मत्वकल्पनस्यातिप्रसङ्गेन निर-

## कल्पतरुपरिमलः ।

मविकल्पशङ्काया इव कथं श्रवणेन निराकरणमित्याशङ्क्य तदभिप्रायमाह—**यदि श्रुतेरिति** । अर्थसिद्धमपि श्रुतेर्यदभिमतं क्वचित् तत्सा श्रावयतीति दृष्टं यथा स्वस्यागृहीतया रशनया नयनासंभवाद् अर्थप्राप्तमपि रशनाग्रहण"मिमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त"इति श्रावयति, न चेह तथा नामादिषु जीवाभेददृष्टिं क्वचिदपि श्रावयतीत्यर्थः । **नन्व**र्थप्राप्तस्य क्वचन श्रवणेन भाव्यमिति नास्ति नियमः; स्रुवादीनां द्रवद्रव्याद्यवदानेषु व्यवस्थितेरर्थप्राप्तायाः क्वचिदपि श्रवणाभावात्, **उक्तं हि वार्तिके**—यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः ॥ इति । अतः केवलमर्थात्प्राप्तिरपि वक्तुं शक्येति शङ्कां निराकरोतीत्यवतारयति । **यत्त्वर्थादिति** । **ननु** नायमतिप्रसङ्गः; आकाशादेः स्वरूपतो विकल्पितत्वेन जीववद् ब्रह्माभेदाभावादिति शङ्कामनूद्य निराकरोति—**जीवस्येति** । **ब्रह्मदृष्टिकरणादिति** । भेदपक्षे हि ब्रह्मदृष्टिर्न स्याद्, न त्वभेदपक्षे इति भावः । **नन्वहं** ब्रह्मास्मीत्यभिन्नेऽपि ब्रह्मणि विरुद्धांशप्रहाण्या जीवाभेददृष्टिः क्रियते, ननु ब्रह्मैव जीव इति केवलब्रह्मदृष्टिः, तथेह किं न स्यादित्याशङ्क्याह—**आर्थिकी हीति** । प्रतीतिरित्यकर्तरि च कारक इति कर्मणि क्तिन्प्रत्ययः । अर्थात्प्रतीतमित्यर्थः । अर्थसिद्धमपि तदेव विधितोऽनुष्ठेयं यदनुष्ठानं विना श्रुतं न निर्वहति, न चात्र श्रुतब्रह्माभेददृष्टेर्विना जीवाभेददृष्टिनिर्वाहोस्ति, प्रत्युत स्वाभेददृष्टिवदर्थप्राप्तजीवान्तराभेददृष्टिरपि कर्तव्या स्यादित्यतिप्रसङ्ग इत्यर्थः । उक्तन्यायातिदेशेन द्वितीयपक्षं स्वयं दूषयति—**ब्रह्मविकारत्वेनेति** । **ननु** ब्रह्माभेददृष्टिमूलाहंमतिक्षेपशङ्का, नच घटादिषु तद्दृष्टिविधानमस्तीति नातिप्रसङ्ग इत्याशङ्क्याह—**तुल्यं चेति** । ब्रह्मदृष्टिविध्यनपेक्षितत्वात् शङ्कायास्तन्मूलत्वमसिद्धमिति भावः । सर्वस्य वाक्यजातस्य प्रपञ्चविलयः प्रयोजनं न भवतीत्युक्तिभङ्ग्या क्वचिद्भवतीत्यनुमतिः प्रतीयते, तदनुमतिस्थलं दर्शयति—**सर्वं खल्वित्यादौ**

**ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा ? नच ब्रह्मण आत्मत्वाद्ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या; कर्तृत्वाद्यनिराकरणात् । कर्तृत्वादिसर्वसंसारधर्मनिराकरणे हि ब्रह्मण आत्मत्वोपदेशः । तदनिराकरणेन चोपासनविधानम् । अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते । नहि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति, सुवर्णात्मत्वेनेव तु ब्रह्मात्मत्वेनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रियते ॥ ४॥ इति तृतीयं प्रतीकाधिकरणम्॥**

( ४ अधिकरणम् ) **ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥**

**तेष्वेवोदाहरणेष्वन्यः संशयः—किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः, किंवा ब्रह्मदृष्टिरा-**

---

### भामती ।

भावः, एवं प्रतीकानामपि भविष्यतीत्यत आह—**स्वरूपोपमर्दे च नामादीनामिति** । इह हि प्रतीकान्यहङ्कारास्पदत्वेनोपास्यतया प्रधानत्वेन विधित्सितानि, न तु तत्त्वमसीत्यादावहङ्कारास्पदमुपास्यमवगम्यते, किंतु सर्पत्वानुवादेन रज्जुतत्त्वज्ञापन इवाहङ्कारास्पदस्यावच्छिन्नस्य प्रविलयोऽवगम्यते । किमतो यद्येवम् ? एतदतो भवति, प्रधानीभूतानां न प्रतीकानामुच्छेदो युक्तो नच तदुच्छेदे विधेयस्याप्युपपत्तिरिति । **अपिच नच ब्रह्मण आत्मत्वादिति** । नह्युपासनविधानानि जीवात्मनो ब्रह्मस्वभावप्रतिपादनपरैस्तत्त्वमस्यादिसंदर्भैरेकवाक्यभावमापद्यन्ते, येन तदेकवाक्यतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्येत; भिन्नप्रकरणत्वात् । तथाच तत्र यथालोकप्रतीतिव्यवस्थितो जीवः कर्ता भोक्ता च संसारी न ब्रह्मेति, कथं तस्य ब्रह्मात्मतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिरुपदिश्येतेत्यर्थः । **अतश्चोपासकस्य प्रतीकैः समत्वादिति** । यद्यप्युपासको जीवात्मा न ब्रह्मविकारः, प्रतीकानि तु मनःप्रभृतीनि ब्रह्मविकाराः; तथाप्यवच्छिन्नतया जीवात्मनः प्रतीकैः साम्यं द्रष्टव्यम् ॥ ४ ॥ **इति तृतीयं प्रतीकाधिकरणम् ॥**

**ब्रह्मदृष्टिरुत्कर्षात्** ॥ यद्यपि सामानाधिकरण्यमुभयथापि घटते; तथापि ब्रह्मणः सर्वाध्यक्षतया फलप्रसवसाम-

### वेदान्तकल्पतरुः ।

स्त्वान्नोभयमप्यस्तीत्युक्तम् । स्वयमेवोद्भाव्य दूषयिष्यतीत्यवादिष्म, तदिदानीं निराकरोति—**ननु यथेत्यादिना** । जीवलयादन्नादिलयस्य वैषम्यमुपपादयति—**इह हीत्यादिना** । अप्रधानस्य जीवस्य वैशिष्ट्यत्यागेन ब्रह्मात्मना भवत्यभावः, प्रधानं तु प्रतीकं यथानिर्दिष्टं रक्षणीयम्, न तु रूपान्तरमापादयितव्यम्; प्राधान्यस्यैव व्याघातप्रसङ्गादित्यर्थः । नच ब्रह्मण इति भाष्यगतचशब्दार्थमाह—**अपि चेति** । पूर्वोक्तातिप्रसङ्गेन समुच्चय इत्यर्थः । कर्तृत्वाद्यनिराकरणादिति भाष्यगतो हेतुरसिद्धः; प्रतीकवाक्यैरेव तन्निराकरणस्य पूर्वपक्ष उक्तत्वात्, अत आह—**न ह्युपासनविधानानीति** । यथा "इदं सर्वं यदयमात्मे"त्यादीनि अहंब्रह्मास्मीत्यादिमहावाक्यैकवाक्यतामापद्य तदपेक्षितप्रपञ्चबाधं वितन्वते, नैवं प्रतीकवाक्यानि; तत्रासंबद्धपदव्यवायेन भिन्नप्रकरणत्वादित्यर्थः । **तदेकवाक्यतयेति** । कर्तृत्वादिबाधेन जीवस्य ब्रह्मतामापाद्येति शेषः ॥ ४ ॥ **इति तृतीयं प्रतीकाधिकरणम् ॥**[1]

**ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥** पूर्वत्र ब्रह्माभिन्नजीवदृष्टेर्नामादिषु करणे घटादिदृष्टेरपि प्रसङ्ग इत्यतिप्रसङ्गान्न प्रतीकेष्वहंमतिक्षेप इत्युक्तम्, एवमिहापि यदि आदित्यादिषूपास्यमानेषु ब्रह्म फलप्रदमभिमतं, तर्हि चैत्रे उपास्यमाने मैत्रात्फलसिद्धिप्रसङ्गाद् ब्रह्मैव फलप्रदत्वादुपास्यमिति सङ्गतिमभिप्रेत्य पूर्वपक्षमाह—**ब्रह्मणः सर्वाध्यक्षतयेति** । प्रयोजनवत्त्वेन

### कल्पतरुपरिमलः ।

**हीति । अप्रधानस्य जीवस्येति** । तत्त्वमस्यादिष्वभेद एव वाक्यार्थः प्रधानभूत इति भावः । तत्त्वमस्यादिवाक्यैरेकवाक्यतायां ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिकल्पने यदपेक्षितं तदध्याहारेण पूरयति—**कर्तृत्वादिबाधेनेति** । यद्यपि "मनो ब्रह्मे"त्यादौ निर्विशेषब्रह्मप्रकरणाभावेऽपि मनःप्रभृतिषु ब्रह्मदृष्ट्यध्यासाय ब्रह्मशब्दार्थो ज्ञातव्य इत्यसंकुचिते तदर्थे त्रिविधपरिच्छेदराहित्यान्तर्भावाद् वस्त्वपरिच्छेदोपयोगिजीवाभेदावगत्यैव कर्तृत्वादिबाध आवश्यकः; तथापि प्रधानभूतोपासनाविध्यविरोध्येव ब्रह्मशब्दार्थस्तदुपयोगितया ग्राह्यः । अङ्गगुणविरोधाधिकरणन्यायेनाङ्गभूतब्रह्मशब्दार्थैकदेशं जीवाभेदं त्यक्त्वा प्रधानविध्यपेक्षितस्य कर्तृकर्मभेदस्य ग्रहणौचित्यात्, इह कर्तृत्वादिबाधे प्रधानस्योपासनस्यैव निवृत्तिप्रसङ्गाच्च ॥४॥ **इति तृतीयं प्रतीकाधिकरणम् ॥**

**ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥** अतिप्रसङ्गसाम्यमवलम्ब्य पूर्वाधिकरणेन दृष्टान्तसंगतिमाह—**पूर्वत्रेति**

---

[1] तत्र सूत्रम् १—न प्रतीके न हि सः ४ ॥

दित्यादिष्विति । कुतः संशयः ? सामानाधिकरण्ये कारणानवधारणात् । अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते; आदित्यो ब्रह्म प्राणो ब्रह्म विद्युद्ब्रह्मेत्यादिसमानविभक्तिनिर्देशात् । न चात्राञ्जसं सामानाधिकरण्यमवकल्पते; अर्थान्तरवचनत्वाद्ब्रह्मादित्यादिशब्दानाम् । नहि भवति गौरश्व इति सामानाधिकरण्यम् । ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत्सामानाधिकरण्यं स्यात्, नेत्युच्यते; विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात्स्यात् । ततश्च प्रतीकाभावप्रसङ्गमवोचाम । परमात्मवाक्यं चेदं तदानीं स्यात्, ततश्चोपासनाधिकारो बाध्येत । परिमितविकारोपादानं च व्यर्थम् । तस्माद्ब्राह्मणोऽग्निर्वैश्वानर इत्यादिवदन्यत्रान्यदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः । तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम् । अथवा—आदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तम् । एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपासितं भवति, ब्रह्मोपासनं च फलवदिति शास्त्रमर्यादा । तस्मान्न ब्रह्मदृष्टिरादित्यादिष्विति । एवं प्राप्ते ब्रूमः—ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति । कस्मात् ? उत्कर्षात् । एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति ? उत्कृष्टदृष्टेस्तेष्वध्यासात् । तथाच लौकिको न्यायोऽनुगतो भवति । उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः । यथा राजदृष्टिः क्षत्तरि । स चानुसर्तव्यः; विपर्यये प्रत्यवायप्रसङ्गात् । नहि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात् । ननु—शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः । नच लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति । अत्रोच्यते—निर्धारिते शास्त्रार्थ एतदेवं स्यात्, संदिग्धे तु तस्मिंस्तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते । तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टिमध्यस्यन्प्रत्यवेयादिति श्लिष्यते । प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधाद्ग्रहीतव्यम् । तैः स्वार्थवृत्तिभिरवरु-

## भामती ।

ध्यैन फलवत्त्वात्प्राधान्येन तदेवादित्यादिदृष्टिभिः संस्कर्तव्यमित्यादित्यादिदृष्टयो ब्रह्मण्येव कर्तव्याः, न तु ब्रह्मदृष्टिरादित्यादिषु । न चैवंविधेऽवधृते शास्त्रार्थे निकृष्टदृष्टिर्नोत्कृष्ट इति लौकिको न्यायोऽपवादाय प्रभवति; आगमविरोधेन तस्यैवापोदितत्वादिति पूर्वपक्षसंक्षेपः । सत्यं सर्वाध्यक्षतया फलदातृत्वेन ब्रह्मण एव सर्वत्र वास्तवं प्राधान्यम्, तथापि शब्दगत्यनुरोधेन क्वचित्कर्मण एव प्राधान्यमवसीयते । यथा 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' 'चित्रया यजेत पशुकामः' इत्यादौ । अत्र हि सर्वत्र यागाद्याराधिता देवतैव फलं प्रयच्छतीति स्थापितम्, तथापि शब्दतः कर्मणः करणत्वावगमने फलवत्त्वप्रतीतेः प्राधान्यम् । क्वचिद्द्रव्यस्य यथा व्रीहीन्प्रोक्षतीत्यादौ । तदुक्तं—'यैस्तु द्रव्यं संचिकीर्ष्यते गुणस्तत्र प्रतीयते' इति । तदिह यद्यपि सर्वाध्यक्षतया वस्तुतो ब्रह्मैव फलं प्रयच्छति; तथापि शास्त्रं ब्रह्मबुद्ध्याऽऽदित्यादौ प्रतीकं उपास्यमाने ब्रह्म फलाय कल्पते इत्यभिवदति किंवादित्यादिबुद्ध्या ब्रह्मैव विषयीकृतं फलायेत्युभयथापि ब्रह्मणः सर्वाध्यक्षस्य फलदानोपपत्तेः शास्त्रार्थसंदेहे लोकानुसारतो निश्चीयते । तदिदमुक्तम्—**निर्धारिते शास्त्रार्थ एतदेवं स्यादिति** । न केवलं लौकिको न्यायो निश्चये हेतुरपि तु आदित्यादिशब्दानां प्राथम्येन मुख्यार्थत्वमपीत्याह—**प्राथम्याच्चेति** । इतिपरत्वमपि ब्रह्मशब्दस्यामुमेव न्यायमवगमयति । **तथाहि**—स्वरसवृत्त्या आदित्यादि-

## वेदान्तकल्पतरुः ।

ब्रह्मणः संस्कारापेक्षत्वात्तत एव च प्रधानत्वात्तद्वाचिब्रह्मशब्दस्य प्रतीतिलक्षकत्वायोगाद् ब्रह्मैवादित्यादिदृष्टिभिः संस्कार्यमित्यर्थः । फलवत्त्वप्रधानत्वाभ्यां शास्त्रीयन्यायाभ्यां दुर्बलत्वाच्छास्त्रार्थानवधारकत्वसिद्ध्यर्थं विशेषणं—**लौकिक** इति । यथा राजपुरुष आगत इत्युक्ते वस्तुतः प्रधानस्यापि राज्ञ आगमनं न प्रतीयते, किं तु पुरुषस्यैव; तथाऽत्रापि आदित्यादिरेव शब्दतः प्रधानत्वेनावगत उपास्तिकर्मेति वक्तुं श्रौतं दृष्टान्तमाह—**सत्यमित्यादिना** । ऐहिकफलं कर्मोदाहरति—**चित्रयेति** । प्रकृतत्वादादित्यादेर्द्रव्यस्य प्राधान्यसिद्ध्यर्थं दृष्टान्तान्तरमाह—**क्वचिद् द्रव्यस्येति** । अत्राप्यङ्गानुष्ठानाराधितः परमेश्वर एव प्रधानसिद्धिहेतुरिति तस्यैवार्थतः प्राधान्यमिति । **यैस्तु** शब्दैर्व्रीहीनित्यादिभि**र्द्रव्यं संचिकीर्ष्य**त इति प्रतीयते, तत्र क्रिया प्रोक्षणादिका गुणत्वेन प्रतीयेतेत्यर्थः । तदिहेत्यादिना विमृशति—**तत्र फलाय कल्पत इत्यभिवदती**त्यन्तं सिद्धान्तवचनव्यक्तिप्रदर्शनपरं **किं वे**त्यादि**फलाये**त्यन्तं पूर्वपक्षानुवादः । अत्राप्यभिवदति किं शास्त्रमित्यनुषङ्गः । तदनेन ब्रह्मगतफलदातृत्वप्रधानत्वयोः कर्मस्विवाऽऽदित्याद्युपासनेष्वपि संभवात्कांस्यभोजिन्यायेन

## कल्पतरुपरिमलः ।

**अङ्गानुष्ठानाराधित इति** । व्रीहिप्रोक्षणाद्याराधितः परमेश्वर एव प्रसन्नः सन् व्रीह्यादिभिः पुरोडाशनिर्वर्तनद्वारा याग-

द्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवाद्ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते । इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः । तथाहि—'ब्रह्मेत्यादेशः' 'ब्रह्मेत्युपासीत' 'ब्रह्मेत्युपास्ते' इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति, शुद्धांस्त्वादित्यादिशब्दान् । ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दो रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः । प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति । एवमत्राप्यादित्यादीन्ब्रह्मेति प्रतीयादिति गम्यते । वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान्दर्शयति—'स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' ( छा० ३।१९।४ ) 'यो वाचं ब्रह्मेत्युपास्ते' ( छा० ७।२।२ ) 'यः संकल्पं ब्रह्मेत्युपास्ते' ( छा० ७।४।३ ) इति च । यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति, तदयुक्तम्; उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात् । फलं त्वतिथ्याद्युपासन इव आदित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात् । वर्णितं चैतत् 'फलमत उपपत्तेः' ( ब्र० सू० ३।२।३८ ) इत्यत्र । ईदृशं चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम् ॥ ५ ॥ इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम् ॥

## भामती ।

शब्दा यथा स्वार्थे वर्तन्ते, तथा ब्रह्मशब्दोऽपि स्वार्थे वर्त्स्यति, यदि स्वार्थोऽस्य विवक्षितः स्यात् । तथाचेतिपरत्वमनर्थकम् । तस्मादितिना स्वार्थात्प्रच्याव्य ब्रह्मपदं ज्ञानपरं स्वरूपपरं वा कर्तव्यम् । नच ब्रह्मपदमादित्यादिपदार्थे इतिप्रतीतिपर एवायमितिपरः शब्दो यथा गौरिति मे गवयोऽभवदिति । तथाच आदित्यादयो ब्रह्मेति प्रतिपत्तव्या इत्यर्थो भवतीत्याह—**इतिपरत्वादपि ब्रह्मशब्दस्येति** । शेषमतिरोहितार्थम् ॥ ५ ॥ **इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

लौकिकन्यायानुगृहीतृत्वमुक्तम् । न चातिप्रसङ्गः, अतिथ्याद्युपासन इव ब्रह्मण एव फलदातृत्वसंभवादित्युक्तं भाष्ये । यदि स्वार्थोऽस्य विवक्षितः स्यात्तर्हि ब्रह्मशब्दोऽपि स्वार्थे **वर्त्स्यति** वृत्तो भविष्यति, न त्वस्य स्वार्थो विवक्षित इत्यर्थः । यदि विवक्षितः स्यात्तत्र दूषणमाह—**तथा चेति । इतिनेति** । इति शब्देनेत्यर्थः । **स्वरूपपरमिति** । ब्रह्मपदमेव स्वरूपं तत्परं ब्रह्मेति शब्द इति वा द्वावर्थावितिशब्दशिरस्कब्रह्मशब्दात् प्रतीयेते इत्यर्थः । शब्दपरत्वं दूषयत्युपास्तिविधिसिद्ध्यर्थं—**नच ब्रह्मपदमिति** । य आदित्यः स ब्रह्मेत्ययं शब्द इति सामानाधिकरण्यं विरुद्धमित्यर्थः । **ननु** प्रतीतिपरत्वमपि न युज्यते, या ब्रह्मेति प्रतीतिः सा आदित्य इत्यस्याप्यर्थस्य विरुद्धत्वादत आह—**गौरितीति** । भ्रान्तो हि गवयादिकं गौरिति प्रतिपद्य बाधोत्तरकालं वक्ति गौरिति मेऽभवद् गवय इति गवात्मत्वेन प्रतीत इत्यर्थः । यद्यपि प्रतीतिविषयत्वापेक्षया हि गौणमिदमपि सामानाधिकरण्यम्; तथापि प्रचुरप्रयोगान्निरूढमतः शब्दसामानाधिकरण्याद्विशेषः ॥ ५ ॥ **इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम् ॥**[1]

## कल्पतरुपरिमलः ।

सिद्धिहेतुरित्यर्थः । **न चातिप्रसङ्ग इति** । मैत्रोपासनया चैत्रात्फलसिद्धिप्रसङ्ग इत्यतिप्रसङ्गो न भवतीत्यर्थः ॥ **अतिथ्याद्युपासनइवेति** । अतिथिभोजनं तावदतिथिप्रधानमिति तत्प्रीणनं भोज्यादिप्रदानेन लोकसिद्धम् । देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वा( जै. अ.९ पा. १ सू. ६ )दिति पूर्वतन्त्राधिकरणे चातिथिभोजनस्यातिथिप्राधान्यवद् देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य देवताप्राधान्यमिति पूर्वपक्षं कृत्वाऽतिथिभोजनवैषम्यकथनेन यागप्राधान्यसिद्धान्तकरणादतिथिभोजनस्यातिथिप्राधान्यमभ्युपगतम् । तत्रातिथेः स्वर्गादिफलदातृत्वासंभवादीश्वर एव फलदातेति फलमत उपपत्ते ( ब्र. अ.३ पा.२ सू.३८)रित्यधिकरणन्यायेन संप्रतिपत्तिः । नैतावता मैत्रोपासनया चैत्रस्य फलदातृत्वप्रसङ्ग इत्यतिप्रसङ्गोऽस्ति । एवमिहापि भविष्यतीति भावः । आदिशब्देन पान्थशुश्रूषादिकं गृहीतम् । **यद्यपि प्रतीतिविषयत्वापेक्षया हीति ।** इतिशिरस्कस्य ब्रह्मपदस्य ब्रह्मशब्दपरत्वे ब्रह्मप्रतीतिपरत्वे च मुख्यसामानाधिकरण्यं न स्यादिति ब्रह्मप्रतीतिविषयत्वपरत्वमङ्गीकृतम् आदित्यं ब्रह्मप्रतीतिविषयं कृत्वोपासीतेति, एवमपि मुख्यसामानाधिकरण्यं न लब्धम्; ब्रह्मशब्दस्य ब्रह्मप्रतीतिविषयत्वसादृश्येनाब्रह्मण्यादित्ये वृत्त्यङ्गीकाराद् गौणत्वमेव प्राप्तम्, अतः को विशेष इति शङ्कार्थः । **शब्दसामानाधिकरण्यादिति** केवलप्रतीतिसामानाधिकरण्यस्याप्युपलक्षणम् ॥ ५ ॥ **इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम् ॥**

---

१ तत्र सूत्रम् १—ब्रह्मदृष्टिरुत्कर्षात् ५ ॥

( ५ अधिकरणम् ) **आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥**

'य एवासौ तपति तमुद्गीथमुपासीत' ( छा० १।३।१ ) लोकेषु पञ्चविधं सामोपासीत' ( छा० २।२।१ ) 'वाचि सप्तविधं सामोपासीत' ( छा० २।८।१ ) 'इयमेवर्गग्निः साम' ( छा० १।६।१ ) इत्येवमादिष्वङ्गावबद्धेषूपासनेषु संशयः । किमादित्यादिषूद्गीथादिदृष्टयो विधीयन्ते, किंवोद्गीथादिष्वेवादित्यादिदृष्टय इति । तत्रानियमो नियमकारणाभावादिति प्राप्तम् । नह्यत्र ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते 'ब्रह्म हि समस्तजगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्चादित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुं न त्वादित्योद्गीथादीनां विकारत्वाविशेषात्किंचिदुत्कर्षविशेषावधारणे कारणमस्ति । अथवा—नियमेनोद्गीथादिमतय आदित्यादिष्वध्यस्येरन् । कस्मात् ? कर्मात्मकत्वादुद्गीथादीनां कर्मणश्च फलप्राप्तिप्रसिद्धेः । उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति । तथाच 'इयमेवर्गग्निः साम' ( छा० १।६।१ ) इत्यत्र 'तदेतदेतस्यामृच्यध्यूढं साम' ( छा० १।६।१ ) इत्यृक्शब्देन पृथिवीं निर्दिशति सामशब्देनाग्निम् । तच्च पृथिव्यग्न्योर्ऋक्सामदृष्टिचिकीर्षायामवकल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षायाम् । क्षत्तरि हि राजदृष्टिकरणाद्राजशब्द उपचर्यते न राजनि क्षत्तृशब्दः । अपिच 'लोकेषु पञ्चविधं सामोपासीत' ( छा० २।२।१ ) इत्यधिकरणनिर्देशाल्लोकेषु सामाध्यसितव्यमिति प्रतीयते । 'एतद्गायत्रं प्राणेषु प्रोतम्' ( छा० २।११।१ ) इति चैतदेवं दर्शयति । प्रथमनिर्दिष्टेषु चादित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तम् 'आदित्यो ब्रह्मेत्यादेशः'

## भामती ।

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥६॥ अथवा नियमेनोद्गीथादिमतय आदित्यादिष्वध्यस्येरन्निति ।** सत्स्वपि आदित्यादिषु फलानुत्पादादुत्पत्तिमतः कर्मण एव फलदर्शनात्कर्मैव फलवत् । तथाचादित्यादिमतिभिर्यद्युद्गीथादिकर्माणि विपर्यीक्रियेरंस्तत आदित्यादिदृष्टिभिः कर्मरूपाण्यभिभूयेरन् । एवंच कर्मरूपेष्वसत्कल्पेषु कुतः फलमुत्पद्येत? आदित्यादिषु पुनरुद्गीथादिदृष्टावुद्गीथादिबुद्ध्योपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलाय कल्पिष्यन्त इति । अत एव च पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोग उपपन्नो यतः पृथिव्यामृग्दृष्टिरध्यस्ताग्नौ च सामदृष्टिः । साम्नि पुनरग्निदृष्टौ ऋचि च पृथिवीदृष्टौ विपरीतं भवेत् । तस्मादप्येतदेव युक्तमित्याह—**तथाचेयमेवेति ।** उपपत्त्यन्तरमाह—**अपिच लोकेष्विति ।** एवं खल्वधिकरणनिर्देशो विषयत्वप्रतिपादनपर उपपद्यते, यदि लोकेषु सामदृष्टिरध्यस्येत, नान्यथेति । पूर्वाधिकरणराद्धान्तोपपत्तिमत्रैवार्थे ब्रूते—**प्रथमनिर्दिष्टेषु चेति ।** सिद्धान्तमत्र प्रक्रमते—

## वेदान्तकल्पतरुः ।

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥** पूर्ववदुत्कर्षरूपविशेषानवधारणादनियमः । **अथवा** गीत्यात्मकेन क्रियात्मकानामुद्गीथादीनां फलसंनिकर्षेणोत्कर्षादादित्यादिषु तद्दृष्टिः कर्तव्या, प्रथमनिर्दिष्टनामादिषु ब्रह्मदृष्टिवच्च प्रथमनिर्दिष्टादित्यादिषु उद्गीथादिदृष्टिः कार्येति तिस्रः संगतयो भाष्य एव विशदाः । भाष्यमुपादत्ते—**अथवेति ।** भाष्ये क्रियात्मकत्वादित्यसाधकम्; सिद्धरूपादित्यादिदृष्ट्यध्यासेऽप्युद्गीथादिगतक्रियास्वभावस्यानपायात् तत्फलसिद्ध्युपपत्तेरित्याशङ्क्याह—**तथाचादित्यादिमतिभिरिति ।** शुक्त्यादौ रजतबुद्ध्युत्पत्तौ तत्प्रयुक्तव्यवहारप्रतिबन्धवत् सिद्धरूपादित्यादिदृष्टावुद्गीथादिगतक्रियात्वमभिभूयेतेत्यर्थः । आदित्यादिषूद्गीथादिदृष्टौ तद्गतसिद्धरूपत्वमभिभूयते, क्रियात्वं चाविर्भवति, ततश्च फलसिद्धिरित्यर्थपरत्वेनोद्गीथादिमतिभिरित्यादिभाष्यं व्याचष्टे—**आदित्यादिषु पुनरिति । कल्पिष्यन्ते** समर्था भविष्यन्ति । इयमेवर्गग्निः सामेत्युक्त्वा श्रुत्या तत्र हेतुरुच्यते ''तदेतदेतस्यामृच्यध्यूढं साम''ति । ऋक्सामशब्दाभ्यामिह पृथिव्यग्नी निर्दिश्येते । अस्यां पृथिव्यामृचि सामाग्निरारूढ आश्रितस्ततः प्रसिद्धयोरपि पृथिव्यग्न्योराश्रयाश्रयित्वात्तत्साम्येन पूर्ववाक्ये सामाधारभूता ऋक् पृथिव्युक्ता ऋगाश्रितं च सामाग्निरित्युक्तमित्यर्थः । अत्र हेतुवाक्ये पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः पृथिव्यग्न्योर्ऋक्सामदृष्टिः पूर्ववाक्येऽभिहितेति ज्ञापयति । आरोप्यवाचकशब्दस्यैव वह्न्यादेर्माणवकादावुपचारदर्शनादित्याह—**अत एवेति । भूतभाव्युपयोगं हि वस्तु संस्कारमर्हति ।** उद्गीथादीनां च क्रियात्वात्

## कल्पतरुपरिमलः ।

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ भाष्ये क्रियात्मकत्वादित्यसाधकमिति ।** कर्मात्मकत्वादुद्गीथादीनामिति भाष्ये कर्मात्मकत्वं क्रियारूपत्वम्, नतु कर्मकारकत्वम्; तस्यादित्यादिष्वप्यविशेषादिति दर्शयितुं तद्विवरणतया क्रियात्मकत्वादिति पदमुपात्तम् । अनेन भाष्येणादित्यादीनामस्वाभाविकं क्रियात्मकत्वमवलम्ब्य फलहेतुत्वमुपपादितमिदं

( छा० ३।१९।१ ) इत्यादिषु । प्रथमनिर्दिष्टाश्च पृथिव्यादयश्चरमनिर्दिष्टा हिंकारादयः 'पृथिवी हिंकारः' ( छा० २।२।१ ) इत्यादिश्रुतिषु । अतोऽनङ्गेष्वादित्यादिष्वङ्गमतिनिक्षेप इति । एवं प्राप्ते ब्रूमः—आदित्यादिमतय एवाङ्गेषूद्गीथादिषु क्षिप्येरन् । कुतः ? उपपत्तेः । उपपद्यते ह्येवमपूर्वसंनिकर्षादादित्यादिमतिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा० १।१।१० ) इति च विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति । भवतु कर्मसमृद्धिफलेष्वेवम्, स्वतन्त्रफलेषु तु कथम् 'य एतदेवं विद्वाँल्लो-

## भामती ।

**आदित्यादिमतय एवेति** । यद्युद्गीथादिमतय आदित्यादिषु क्षिप्येरंस्तत आदित्यादीनां स्वयमकार्यत्वादुद्गीथादिमतेस्तत्र वैयर्थ्यं प्रसज्येत । नह्यादित्यादिभिः किंचित्क्रियते, यद्विद्यया वीर्यवत्तरं भवेत्, आदित्यादिमत्या विद्ययोद्गीथादिकर्मसु कार्येषु यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीत्यादित्यमतीनामुपपद्यते उद्गीथादिषु संस्कारकत्वेनोपयोगः । चोदयति—**भवतु कर्मसमृद्धिफलेष्वेवमिति** । यत्र हि कर्मणः फलं तत्रैवं भवतु, यत्र तु गुणात्फलं तत्र गुणस्य सिद्ध-

## वेदान्तकल्पतरुः ।

प्रकृतज्योतिष्टोमाद्युपकारस्य तैः करिष्यमाणत्वाच्च तान्येवादित्यादिमतिभिरतिशयाय संस्क्रियेरन्नित्याह—**यद्युद्गीथादिमतय इत्यादिना** । आदित्यादिमत्या विद्ययेति समानाधिकरणे तृतीये । **ननु** "लोकेषु पञ्चविधं सामोपासीते"त्यादावपि सामकर्मैव क्रतुं साधयद् वीर्यवत्तरत्वाय लोकदृष्ट्या संस्क्रियतां, नच "कल्पन्ते हास्मै लोका" इत्यादिफलश्रवणात्स्वातन्त्र्यम्; अङ्गावबद्धत्वादासामुपास्तीनां कर्मसमृद्धिफलेऽवगते सति परार्थे फलश्रवणस्यार्थवादत्वसंभवात्, अतो भाष्योक्तस्वतन्त्रफलत्वानुपपत्तिरित्याशङ्क्याह—**यत्र हीति** । यत्र ह्युद्गीथादिकर्मणः सकाशात्फलं, तत्रैवं भवत्वित्यर्थः । प्रस्तुते वैषम्यमाह—**यत्र त्विति** । इह तावत्समस्तस्य खलु साम्न उपासनं साध्विति पाञ्चभक्तिकसाप्तभक्तिकसकलसामोपासनस्य वाक्यान्तरेण विहितत्वात्पञ्चविधत्वमात्रं गुण उपासनायोपाधीयते, एवं सति यत्र गुणात्फलं लोकादि भवति, तत्र गुणस्याक्रियात्वेन लोकादिभिः समत्वात् तं पुरुषः करोतीत्येव नास्ति । कुत इमं लोकं विद्यया संस्कृत्य वीर्यवत्तरं कुर्याद् ? अतो लोकादिष्वपि सामाध्याससंभव इत्यर्थः । गुणात् फलसिद्धिः केवलाद्वा यत्किञ्चित्क्रियासंबन्धाद्वा

## कल्पतरुपरिमलः ।

तु साधकं स्वाभाविकेन क्रियात्मकत्वेनोद्गीथादीनां फलहेतुत्वोपपत्तेरिति शङ्कार्थः । ऋक्सामशब्दाभ्यामिह पृथिव्यग्नी निर्दिश्येते; प्रसिद्धऋक्सामयोराश्रयाश्रयिभावस्य "तस्मादृच्यध्यूढं साम गीयत"इति समनन्तरवाक्ये पृथगुपादानात् तदेतदेतस्यामृची"ति वाक्ये ऋक्सामशब्दौ गौणौ वाच्याविति भावः । द्रव्यसंस्कारमर्हतीति वार्तिकश्लोके द्रव्यशब्दस्थाने वस्तुशब्दः पठितः क्रियारूपस्याप्युद्गीथस्योपयोगवत्त्वन्यायसाम्येन संस्कार्योपपादनोपयोगितया । **ननु**—तन्निर्धारणानियम ( ब्र. अ. ३ पा. ३ सू. ४२ ) इत्यधिकरणे आदित्यादिमतिभिरुद्गीथावयवस्योंकारस्योपासनं न तत्संस्कारकर्म किंतु उद्गीथसाधनं पृथक्फलं प्रधानकर्मेति प्रसाधितं, तद्विरुद्धमिदमुद्गीथसंस्कारत्ववचनम्, **उच्यते**—क्रतुवीर्यवत्तरत्वफलस्योपासनस्य क्रत्वन्तर्भूतकर्मकत्वे संभवति न तद्बहिर्भूतकर्मकत्वमङ्गीकरणीयमित्येतावन्मात्रे तात्पर्यम्, नतु तत्संस्कारकर्मतया तदङ्गत्व इति न प्राक्प्रसाधितार्थविरोधः । **अर्थवादत्वसंभवादिति** प्रौढ्योक्तम् । लोकदृष्ट्यादीनां फलत्वेऽप्यार्थवादिकत्वेन तदविशेषात् क्रतुवीर्यवत्तरत्वस्यापि फलत्वं नापैतीत्यपि द्रष्टव्यम् । **यत्र गुणात्फलं लोकादि भवतीति** । "लोकेषु पञ्चविध"मित्यत्र "कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्चे"ति पाञ्चविध्यगुणस्य फलमुक्तं—पृथिव्यन्तरिक्षं द्यौरि**त्यूर्ध्वलोकाः** द्यौरन्तरिक्षं पृथिवीत्या**वृत्ता लोकाः** प्राणिनां गत्यागतिविशिष्टास्ते **कल्पन्ते** समर्था भवन्ति उपासकस्य गतागतयोर्भोगान् संपादयितुमित्यर्थः । आदिशब्देन "वाचि सप्तविध"मित्यादौ साप्तविध्यगुणफलं "दुग्धेऽस्मै वाग्दोह"मित्यादि गृह्यते । गुणस्याक्रियात्वेन लोकादिभिः समत्वादिति । **ननु**—पाञ्चविध्यादिगुणस्याक्रियारूपत्वेऽपि लोकादीनां नास्त्यक्रियारूपत्वनियमः, "वृष्टौ पञ्चविधं सामोपासीते"त्यादिषु वृष्ट्यादीनां क्रियारूपत्वात्, "यदुपमन्त्रयते स हिंकार" इत्यादिषु उपमन्त्रादिशब्दोक्तानां स्त्रिया सह संकेतकरणादीनां पुरुषानुष्ठेयक्रियात्वाच्चेति चेत्—**सत्यम्**; अक्रियात्वेनेत्यनेन क्रतुकालानुष्ठेयक्रियात्वाभावो विवक्षितः । अत एव क्रतुवीर्यवत्तरत्वफलत्वाभावोक्तिः । **अतो लोकादिष्वपि सामाध्याससंभव इति** । यतोऽत्र क्रत्वङ्गभूतसामोपासनं न विधीयते, किंतु तदाश्रितगुणमात्रं लोकादिफलाय विधीयतेऽतः क्रतुवीर्यवत्तरत्वफलत्वाभावादित्यर्थः । **ननु**—यदि समस्तस्य खलु साम्न इति वाक्यविहितं सामप्रधानमुपासनमाश्रित्य "लोकेषु पञ्चविध"मित्यादिवाक्येन फलाय गुणमात्रं विधीयते, तदा कथं लोकादिषु सामाध्याससंभवः ? तथा सति हि सामप्रधानोपासनारूपाश्रयाभावाद् गुणविधिरेवात्मानं न लभेतेति—**चेत्, सत्यम्**; "लोकेषु पञ्चविध"मित्यादिसप्तम्यनुसारेण सामोपासनाविधिः साम्न उपासनास्पर्शमात्रपरः, न प्राधान्यपर इति शङ्कावाक्यभिप्रायः ।

केषु पञ्चविधं सामोपास्ते' ( छा० २।२।३ ) इत्यादिषु ? तेष्वप्यधिकृताधिकारात्प्रकृतापूर्वसंनिकर्षेणैव फलकल्पना युक्ता गोदोहनादिनियमवत् । फलात्मकत्वाच्चादित्यादीनामुद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः । आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु । अपिच 'ओमित्येतदक्षरमुद्गीथमुपासीत' ( छा० १।१।१ ) 'एतस्यैव खल्वक्षरस्योपव्याख्यानं भवति' ( छा० १।१।१० ) इति चोद्गीथमेवोपास्यत्वेनोपक्रम्यादित्यादिमतीर्विदधाति । यत्तूक्तमुद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति । तदयुक्तम्; स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः, आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात् । 'तदेतदेतस्यामृच्यध्यूढं साम' ( छा० १।६।१ ) इति तु लाक्षणिक एव पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः । लक्षणा च यथासंभवं संनिकृष्टेन विप्रकृष्टेन वा स्वार्थसंबन्धेन प्रवर्तते । तत्र यद्यप्यृक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा; तथापि प्रसिद्धयोर्ऋक्सामयोर्भेदेनानुकीर्तनात्पृथिव्यग्न्योश्च संनिधानात्तयोरेवैष ऋक्सामशब्दप्रयोग ऋक्सामसंबन्धादिति निर्धीयते । क्षत्तृशब्दोऽपि हि कुतश्चित्कारणाद्राजानमुपसर्पन्न निवारयितुं पार्यते । 'इयमेवर्क्'

## भामती ।

त्वेनाकार्यत्वात्करोतीत्येव नास्तीत्यत्र विद्यायाः क्व उपयोग इत्यर्थः । परिहरति—**तेष्वपीति** । नतावद्गुणः सिद्धस्वभावः कार्याय फलाय पर्याप्तः, मा भूत्प्रकृतकर्मानिवेशिनो यत्किंचित्फलोत्पादः, तस्मात्प्रकृतापूर्वसंनिवेशिनः फलोत्पाद इति तस्य क्रियमाणत्वेन विद्यया वीर्यवत्तरत्वोपपत्तिरिति । **फलात्मकत्वाच्चादित्यादीनामिति** । यद्यपि ब्रह्मविकारत्वेनादित्योद्गीथयोरविशेषः; तथापि फलात्मकत्वेनादित्यादीनामस्त्युद्गीथादिभ्यो विशेष इत्यर्थः । द्वितीयानिर्देशादप्युद्गीथादीनां प्राधान्यमित्याह—**अपिचोमितीति** । स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः । **ननूक्तं** सिद्धरूपैरादित्यादिभिरध्यस्तैः साध्यभूतत्वमभिभूतं कर्मणामित्यत आह—**आदित्यादिभावेनापि च दृश्यमानानामिति** । भवेदेतदेवं यद्यध्यासेन कर्मरूपमभिभूयेत, अपि तु माणवक इवाग्निदृष्टिः केनचित्तीव्रत्वादिना गुणेन गौण्यनभिभूतमाणवकत्वात्तथेहापि । नहीयं शुक्तिकायां रजतधीरिव वह्निधीर्येन माणवकत्वमभिभवेत्, किंतु गौणी, तथेयमप्युद्गीथादावादित्यदृष्टिर्गौणीति भावः । **तदेतस्यामृच्यध्यूढं सामेति त्विति** । अन्यथापि लक्षणोपपत्तौ न ऋक्सामेत्यध्यासकल्पना पृथिव्यग्न्योरित्यर्थः । अक्षरन्यासालोचनया तु विपरीतमेवेत्याह—**इयमेवर्गिति** । 'लोकेषु पञ्चविधं सामोपासीत' इति द्वितीयानिर्दे-

## वेदान्तकल्पतरुः ।

प्रकृतकर्मसंबन्धाद्वा । **आद्यद्वितीयाव**तिप्रसक्तौ । **तृतीये तु** प्रकृतक्रियावैशिष्ट्यादस्ति गुणस्यापि कार्यत्वमित्याह—**न तावदित्यादिना** । भवन्तूत्कृष्टा आदित्यादयः, तेभ्यस्त्वक्रियारूपेभ्यः कथं फलसिद्धिरित्याशङ्क्य तद्दृष्टिः फलं भवेदित्याह—**स्वयमेवेति** । यथा माणवकेऽग्निदृष्टिः केनचित्तीव्रत्वादिगुणयोगेन गौणी । तत्र हेतुः—**अनभिभूतमाणवकत्वादिति** । नाभिभूतो माणवको यया सा गौणी दृष्टिरनभिभूतमाणवका तस्या भावोऽनभिभूतमाणवकत्वं तत इत्यर्थः । दार्ष्टान्तिकमाह—**तथेहापीति** । दृष्टान्तं प्रपञ्चयति—**न हीति** । दार्ष्टान्तिकं विशदयति—**तथेयमपीति** । **अन्यथापीति** । सत्यां लक्षणायां न गौणी वृत्तिर्दौर्बल्यात् । तथाच ऋक्सामसंबन्धमात्रे पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगे कारणम् । संबन्धश्च ऋक्सामाध्यस्तत्वमपि संभवतीत्यर्थः । एवम् अन्यथाऽप्युपपत्तिमुक्त्वाऽन्यथैवोपपत्तिमाह—**अक्षरन्यासेति** । इयमेवर्गिति चेत्यादेरक्षरन्यासः स्यादित्यन्तस्य भाष्यस्य तात्पर्यमुक्त्वा सिद्धान्तेऽक्षराज्ञस्यमपर-

## कल्पतरुपरिमलः ।

**अस्ति गुणस्यापि कार्यत्वमिति** । तथाच करोतिव्यपदेशार्हत्वाद् वीर्यवत्तरत्वफलकत्वमप्युपपद्येतेत्यर्थः । यथाभाष्यस्वारस्यं लोकादिमात्रफलकत्वमभ्युपगम्य टीकायामुद्गीथोपासनावैषम्येण या शङ्का यश्च प्रयुक्तिलाघवेन तत्परिहारः तदुभयं स्पष्टत्वान्न व्याख्यातम् । **सत्यां लक्षणायामिति** । इयमेवर्गग्निः सामेति ऋक्सामपृथिव्यग्निसामानाधिकरण्यनिर्देशो ऋक्सामयोः सामाग्न्योश्चाश्रयाश्रयिभावसाम्यान्निमित्तमिति प्रतिपादनार्थं प्रवृत्ते "तदेतदेतस्यामृची"ति वाक्ये पृथिव्यग्निविषयऋक्सामशब्दप्रयोगो यदि गौणः स्यात्, तदानीमारोप्यवाचकमेवाधिष्ठाने गौणवृत्त्या प्रयुज्यत इति नियमात् स प्रयोगः पृथिव्यग्न्योरधिष्ठानत्वे ऋक्सामयोरारोप्यत्वे च लिङ्गं स्याद्, न त्वेवं लक्षणाश्रयणादित्यर्थः । **ऋक्सामाध्यस्तत्वमपि संभवतीति** । **ननु**—ऋक्सामाध्यस्तत्वसंबन्ध इदानीं न सिद्धः; "इयमेवर्गग्निः सामे"ति सामानाधिकरण्यनिर्देशे "तदेतदेतस्या"मिति वाक्यं हेतुसमर्पकमिति पूर्वमुक्तत्वाद् हेतुकथनात् प्राक् च सिद्ध्यसंभवादिति—**चेत्**; **मैवम्**; "इयमेवे"त्यादिसामानाधिकरण्यनिर्देशो यदि ऋक्सामयोः पृथिव्यग्न्यध्यासार्थः, यदि वा विपरीताध्यासार्थः, उभयथाऽप्याध्यासिकसंबन्धोऽस्तीति निश्चयसंभवात् । **वस्तुतस्तु**—इयमेवेत्यपौरुषेयवाक्यं स्वार्थसिद्धौ हेतुं नापेक्षते,

( छा० १।६।१ ) इति च यथाक्षरन्यासमृच एव पृथिवीत्वमवधारयति । पृथिव्या ऋक्त्वेऽवधार्यमाण इयमृगेवेत्यक्षरन्यासः स्यात् । 'य एवं विद्वान्साम गायति' ( छा० १।७।७ ) इति वाङ्गाश्रयमेव विज्ञानमुपसंहरति, न पृथिव्याद्याश्रयम् । तथा 'लोकेषु पञ्चविधं सामोपासीत' ( छा० २।२।१ ) इति यद्यपि सप्तमीनिर्दिष्टा लोकाः; तथापि साम्न्येव तेऽध्यस्येरन्द्वितीयानिर्देशेन साम्न उपास्यत्वावगमात् । सामनि हि लोकेष्वध्यस्यमानेषु साम लोकात्मनोपासितं भवति । अन्यथा पुनर्लोकाः सामात्मनोपासिताः स्युः । एतेन—'एतद्गायत्रं प्राणेषु प्रोतम्' ( छा० २।११।१ ) इत्यादि—व्याख्यातम् । यत्रापि तुल्यो द्वितीयानिर्देशः—'अथ खल्वमुमादित्यं सप्तविधं सामोपासीत' ( छा० २।९।१ ) इति, तत्रापि 'समस्तस्य खलु साम्न उपासनं साधु' ( छा० २।१।१ ) 'इति तु पञ्चविधस्य' ( छा० २।७।२ ) 'अथ सप्तविधस्य' ( छा० २।८।१ ) इति च साम्न एवोपास्योत्वोपक्रमात्तस्मिन्नेवादित्याद्यध्यासः । एतस्मादेव च साम्न उपास्यत्वावगमात् 'पृथिवी हिंकारः' ( छा० २।२।१ ) इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः । तस्मादन-

## भामती ।

शात्साम्नामुपास्यत्वमवगम्यते । तत्र यदि सामधीरध्यस्येत, ततो न सामान्युपास्येरन्, अपि तु लोकाः पृथिव्यादयः । तथाच द्वितीयार्थं परित्यज्य तृतीयार्थः परिकल्प्येत साम्नेति । लोकेष्विति सप्तमी द्वितीयार्थे कथंचिन्नीयते । अगारे गावो वास्यन्तां प्रावारे कुसुमानीतिवत् । तेनोक्तन्यायानुरोधेन सप्तम्याश्चोभयथाप्यवश्यं कल्पनीयार्थत्वाद्वरं यथाश्रुतद्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्यातव्या । लोकपृथिव्यादिबुद्ध्या पञ्चविधं हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनप्रकारं सामोपासीतेति निर्णीयते । **ननु** यत्रोभयत्रापि द्वितीयानिर्देशो यथा खल्वमुमेवादित्यं सप्तविधं हिङ्कारप्रस्तावोंकारोद्गीथप्रतिहारोपद्रवनिधनप्रकारं सामोपासीतेति, तत्र को विनिगमनायां हेतुरित्यत आह—**तत्रापीति** । तत्रापि

## वेदान्तकल्पतरुः ।

मपि दर्शयँस्तथा च लोकेषु पञ्चविधमित्यादिभाष्यस्य तात्पर्यमाह—**लोकेष्वित्यादिना** । सामधीर्यदि लोकेष्वध्यस्येत, तदा सामानि नोपास्येरन् । ततः किं जातमत आह—**तथाचेति** । परिकल्पनामेवाभिनयेन दर्शयति—**साम्नेतीति** । सामसु लोकानामुपास्यत्वे श्रुत्यन्तरभङ्गश्च स्यादित्याह—**लोकेष्वितीति** । सप्तमीभङ्गे लोकसिद्धमुदाहरणमाह—**अगार इति** । अगारे गृहे गावो वास्यन्तामिति प्रयोगे अगारं गवां सञ्चरणेन पवित्रीक्रियतामिति सप्तमीं भङ्क्त्वा कर्मत्वं लक्ष्यते । एवं प्रावारे प्रावरणवस्त्रे कुसुमानि वास्यन्तामित्यत्रापि प्रावरणस्य कुसुमैर्वास्यत्वं कर्मत्वं लक्ष्यते इति । **उक्तन्यायानुरोधेनेति** । "सामोपासीते"ति द्वितीयाभङ्गप्रसङ्गानुरोधेन वरं सप्तमी तृतीयार्थे व्याख्यातेत्युपर्यन्वयः । लोकेष्विति सप्तमी पूर्वपक्षे द्वितीयार्था सिद्धान्ते तृतीयार्थेत्युभयथा भञ्जनीया, पूर्वपक्षे तु सामगतद्वितीयाभङ्गोऽधिक इत्यर्थः । यत्र द्वितीयासप्तम्यौ भवतः, तत्र भवतु श्रुतिद्वयभङ्गगौरवपरिहारार्थमङ्गेष्वनङ्गदृष्टिर्यत्र तूभयत्र द्वितीया निर्दिश्यते, तत्रान्यतरश्रुतिमात्रभङ्गस्य पूर्वपक्षसिद्धान्तयोरविशेषात् कथं नियमः ? इत्याशङ्क्याह—**ननु यत्रेत्यादिना** । सप्तविधसामान्येव दर्शयति—**हिङ्कारेति** । ओङ्कारोऽपि साम्न्यादिसंज्ञको भक्तिविशेषः । भाष्यं व्याचष्टे—**सप्तविध-**

## कल्पतरुपरिमलः ।

किंतु सिद्ध एव तदर्थे "तदेतदेतस्या"मित्यादिहेतुवन्निगदार्थवादमात्रं तस्मादृच्यध्यूढमिति तृतीयवाक्यवत् । नहि पृथिव्यग्न्योराश्रयाश्रयिभावः प्रसिद्धऋक्सामयोराश्रयाश्रयिभावे हेतुः, येन तस्मादित्युच्येत । तस्मादियमेवेति प्रथमवाक्ये वक्ष्यमाणन्यायेन ऋक्सामाध्यस्तत्वसंबन्धस्य सिद्धत्वात् तदवलम्बनायां लक्षणायां न काचिदनुपपत्तिः । इदं च लक्षणा फलवतीति वस्तुगतिमनुरुध्योक्तम् । गौणतायामपि न दोषः । ऋक्सामदृष्टिविषयत्वसाम्येन गौणताश्रयणे हि पूर्ववाक्ये पृथिव्यग्न्योः ऋक्सामदृष्टिविधिराश्रयणीयः; अन्यथा गौणवृत्तिनिमित्तगुणालाभादिति । पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगस्तथाविधाने लिङ्गं भवेद्, न त्वेवमाश्रयणीयम्; पूर्ववाक्येन ऋक्सामयोः पृथिव्यग्निदृष्टिविषयत्वसाम्येन गौणतोपपत्तेः । लक्षणापक्षेऽपि हि ऋक्सामाध्यस्तत्वसंबन्धाश्रयण एव सिद्धान्तानुगुण्यम् । ऋक्सामदृष्ट्यधिष्ठानत्वसंबन्धाश्रयणे तु लक्षणापि पूर्वपक्षलिङ्गं भवेदेव । **किंच** प्रथमवाक्ये ऋक्सामविषयपृथिव्यग्निशब्दप्रयोगवद् द्वितीयवाक्ये पृथिव्यग्निविषयऋक्सामशब्दप्रयोगस्याप्याश्रयाश्रयिभावसाम्येन गौणत्वमुपपद्यते । प्रयोगान्तरनिर्वाहकगुणप्रदर्शकवाक्यगतस्यापि प्रयोगस्य तेनैव गुणेन निर्वाहो नायुक्तः; सप्तम्यधिकरणे चेति लौकिकवैदिकप्रयोगगतसप्तम्यर्थप्रदर्शकसूत्रत एव तत्सूत्रगतसप्तम्यर्थस्यापि प्रदर्शनाङ्गीकारात् । भाष्यं तु गौणी लक्षणेति भेदमनादृत्य गुणान्तरनिमित्ता गौण्येव लक्षणेति व्यवहृतेति योजयितुं शक्यम् । **अक्षराञ्जस्यमपरमपीति** । अङ्गेष्वनङ्गदृष्टिक्षेप इति सिद्धान्ते "लोकेषु पञ्चविध"मित्यादिषु सप्तम्यास्तृतीयार्थत्वमात्रं कल्प्यम्, नतु पूर्वपक्ष इव सप्तम्या द्वितीयार्थत्वं द्वितीयायास्तृतीयार्थत्वं चेत्यपरमक्षराञ्जस्यम् । **ॐकारइति** । ऋतुकाले

ङ्गाश्रया आदित्यादिमतयोऽङ्गेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम् ॥ ६ ॥ इति पञ्चममादित्यादिमत्यधिकरणम् ॥

( ६ अधिकरणम् ) **आसीनः संभवात् ॥ ७ ॥**

**कर्माङ्गसंबद्धेषु तावदुपासनेषु कर्मतन्त्रत्वान्नासनादिचिन्ता, नापि सम्यग्दर्शने; वस्तुतन्त्रत्वाद्विज्ञानस्य । इतरेषु तूपासनेषु किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्तेतोत नियमे-**

### भामती ।

समस्तस्य सप्तविधस्य साम्न उपासनमिति साम्न उपास्यत्वश्रुतेः साध्विति पञ्चविधस्य । साधुत्वं चास्य धर्मत्वम् । तथाच श्रुतिः—'साधुकारी साधुर्भवति' इति । हिङ्कारानुवादेन पृथिवीदृष्टिविधाने हिङ्कारः पृथिवीति प्राप्ते विपरीतनिर्देशः पृथिवी हिङ्कारः ॥ ६ ॥ **इति पञ्चममादित्यादिमत्यधिकरणम् ॥**

**आसीनः संभवात् ॥ ७ ॥** कर्माङ्गसंबन्धिषु यत्र हि तिष्ठतः कर्म चोदितम् तत्र तत्संबद्धोपासनापि तिष्ठतैव कर्तव्या । यत्र त्वासीनस्य, तत्रोपासनाप्यासीनेनैवेति । नापि सम्यग्दर्शने; वस्तुतन्त्रत्वात्प्रमाणतन्त्रत्वाच्च । प्रमाणतन्त्रा

### वेदान्तकल्पतरुः ।

**स्येत्यादिना ।** श्रुतिगतसमस्तपदस्य स्वेन व्याख्या कृता—**सप्तविधस्येति ।** छान्दोग्ये हि समस्तस्य खलु साम्न उपासनं साध्वित्युपक्रम्य "लोकेषु पञ्चविधं सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधन"मित्यादिना पञ्चविधस्य साम्न उपासनमुक्त्वा "इति तु पञ्चविधस्ये"त्युपसंहृत्या"थ तु सप्तविधस्ये"त्युपक्रम्य "वाचि सप्तविधं सामोपासीत यत्किञ्च वाचो हुं इति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिर्यदुदेति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नेति तन्निधन"मित्यादिना सप्तविधस्याप्युपासनमुक्तम् । एवंच सति समस्तस्य सप्तविधस्य साम्न उपासनं साध्विति साम्न उपास्यत्वश्रुतेरिति तु पञ्चविधस्य साम्न उपासनं साध्विति च पञ्चविधस्यापि साम्न उपास्यत्वश्रुतेः साम्न्येवादित्याध्यास इति ग्रन्थयोजना । श्रुत्योक्तं साम्नः साधुत्वं व्याचष्टे—**साधुत्वं चेति ।** निर्देशविरोधमाशङ्क्य परिहरति—**हिङ्कारानुवादेनेति ।** हिङ्कारादिसामोद्देशेन साम्नि पृथिव्यादिदृष्टिविधौ हिङ्कारादेः प्रथमनिर्देशः स्याद्, यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्, इति भट्टाचार्यैरुक्तत्वात्स एव चेह साम्न उपास्यत्वश्रुतेः प्रमाणत्वात्प्राप्तस्तस्मिन्प्राप्ते यो विपरीतनिर्देशः स भञ्जनीय इत्यर्थः ॥ ६ ॥ **इति पञ्चममादित्यादिमत्यधिकरणम् ॥**[1]

**आसीनः संभवात् ॥ ७ ॥** अङ्गावबद्धोपासनचिन्तनसमनन्तरं तत्पर्युदासं सिद्धमादायेतरेषूपासनेष्वासननियमचिन्तनात्सङ्गतिरित्यभिप्रेत्य विषयं परिशिनष्टि—**कर्माङ्गसंबन्धिष्विति । नापि सम्यग्दर्शन इति ।** श्रवणमननध्यानाभ्यासवासितमनसा साक्षात्कारोत्पत्ताविल्यर्थः । **ननु** वस्त्वधीनेऽपि ज्ञाने चक्षुरादिवदासनमप्यपेक्ष्यतामत आह—**प्रमाणतन्त्रत्वाच्चेति । ननु** प्रमाणमपि शुक्त्यादौ निकटोपसर्पणादिवदासनमपेक्षतां, तत्राह—**प्रमाणं चेति ।**

### कल्पतरुपरिमलः ।

उद्गातृभिर्गेयाः सामभागा भक्तयः, अत्रोद्गीथावयव ॐकार आदिशब्देन भक्तिविशेषतयोक्त इत्यर्थः । **इति तु पञ्चविधस्य साम्न इति ।** इति तु पञ्चविधस्येत्येतावदेव पञ्चविधोपासनानामुपासनादेः श्रुतिवाक्यं, "साम्न उपासनं साध्विति पदत्रयं तु समस्तस्य खलु साम्न उपासनं साध्वित्युपक्रमगतवाक्यादनुषङ्गेण लब्धमाचार्यैः पठितम् । **ननु** प्रागाचार्यैः समस्तस्य खलु साम्न उपासनं साध्वित्युपक्रमगतवाक्येनैव पाञ्चभक्तिकसाप्तभक्तिकवक्ष्यमाणसकलसामोपासनविधानमुक्तम्, इह कथं समस्तस्येति वाक्येन सप्तविधसामोपासनविधानम्, "इति तु पञ्चविधस्ये"ति वाक्येन पञ्चविधसामोपासनविधानमिति विभज्य व्याख्यायते ? **उच्यते;** छान्दोग्यभाष्यानुसारेण पूर्वमुक्तं टीकानुसारेण इदानीं विभज्य व्याख्यायते । **टीकाकृतामयमत्राशयः**—सकलभक्तियुक्तं सप्तविधं साम समस्तं भवति, न तूपद्रवभक्तिरहितं पञ्चविधं साम । अतः पञ्चविधसामोपासनविधानार्थमौपसंहारिकमेव वाक्यमुपासनीयमिति । **श्रुत्योक्तं साम्नः साधुत्वं व्याचष्ट इति ।** यद्यप्युपासनं साध्वित्युपासनस्य साधुत्वमुक्तमिति प्रतिभाति; तथापि "य एवं विद्वान् साधु सामेत्युपास्त" इत्युपसंहारात् साधुदृष्ट्या सामोपास्यं साधुगुणत्वहिंकारादिपञ्चभक्तियुक्ते साम्नि पृथिव्यादिलोकदृष्टौ क्रियमाणायां पृथिव्यादिषु कारणत्वेनानुगतः सुकृताख्यो धर्म इति व्याचष्टे इत्यर्थः ॥ ६ ॥ **इति पञ्चममादित्यादिमत्यधिकरणम् ॥**

**आसीनः संभवात् ॥ ७ ॥ तत्पर्युदासं सिद्धमादायेति ।** अस्मिन्नधिकरणे व्यवस्थापयिष्यमाणस्यासननियमस्याङ्गावबद्धोपासनेष्वनियतशरीरस्थितिसाध्याङ्गपरतन्त्रेषु वर्जनं सिद्धं कृत्वेत्यर्थः । अनेन प्रत्युदाहरणसङ्गतिर्दर्शिता ।

1 तत्र सूत्रम् १—आदित्यादिमतयश्चाङ्ग उपपत्तेः ६ ॥

नासीन एवेति चिन्तयति । तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरिति । एवं प्राप्ते ब्रवीति—आसीन एवोपासीतेति । कुतः ? संभवात् । उपासनं नाम समानप्रत्ययप्रवाहकरणम्, नच तद्गच्छतो धावतो वा संभवति; गत्यादीनां चित्तविक्षेपकत्वात् । तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति । शयानस्याप्यकस्मादेव निद्रयाभिभूयेत । आसीनस्य त्वेवंजातीयको भूयान्दोषः सुपरिहर इति संभवति तस्योपासनम् ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥

अपिच ध्यायत्यर्थ एष यत्समानप्रत्ययप्रवाहकरणम् । ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते ध्यायति बको ध्यायति प्रोषितबन्धुरिति । आसीनश्चानायासो भवति । तस्मादप्यासीनकर्मोपासनम् ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥

अपिच 'ध्यायतीव पृथिवी' (छा० ७।६।१) इत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति, तच्च लिङ्गमुपासनस्यासीनकर्मत्वे ॥ ९ ॥

स्मरन्ति च ॥ १० ॥

स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनम्—'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' (गी० ६।११) इत्यादिना । अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥ १० ॥
इति षष्ठमासीनाधिकरणम् ॥

(७ अधिकरणम्) यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दिग्देशकालेषु संशयः—किमस्ति कश्चिन्नियमो नास्ति वेति । प्रायेण वैदिकेष्वारम्भेषु

भामती ।

च वस्तुव्यवस्था प्रमाणं चासनं नापेक्षत इति तत्राप्यनियमः । यन्महता प्रयत्नेन विनोपासितुमशक्यं यथा प्रतीकादि, यथा वा सम्यग्दर्शनमपि तत्त्वमस्यादि तत्रैषा चिन्ता । तत्र चोदकशास्त्राभावादनियमे प्राप्ते यथा शक्यत इत्युपबन्धादासीनस्यैव सिद्धम् । **ननु** यस्यामवस्थायां ध्यायतिरुपचर्यते प्रयुज्यते किमसौ तदा तिष्ठतो न भवति, न भवतीत्याह । आसीनश्चाविद्यमानायासो भवतीति । अतिरोहितार्थमितरत् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ इति षष्ठमासीनाधिकरणम् ॥

**यत्रैकाग्रता तत्राविशेषात्** ॥ ११ ॥ समे शुचौ शर्करावह्निवालुकाविवर्जित इत्यादिवचनान्नियमे सिद्धे दिग्दे-

वेदान्तकल्पतरुः ।

ध्यानादिसंस्कृतमप्रतिबद्धं चित्तं प्रदीपवत्स्वयमेव प्रमां करोतीत्यर्थः । **यथा वा सम्यग्दर्शनमपीति** । तत्त्वमस्यादिवाक्यजनितज्ञानाभ्यासात्मकमित्यर्थः । ध्यायतिश्चेत्यादिभाष्यमाक्षिपति—**नन्विति** । भाष्यगतोपचारशब्दो न युक्तः, बकादिष्वपि ध्यानसद्भावादत आह—**प्रयुज्यत इति** । असाववस्था किं तिष्ठतो न भवति, अपि तु भवत्येव; तिष्ठतोऽप्यैकाग्र्यसंभवादित्यर्थः । तिष्ठतो हि देहपतनप्रतिबन्धे फलातिशयो भवति नासीनस्येति परिहाराभिप्रायः । भाष्यगतानायासपदव्याख्यानम्—**अविद्यमानायास इति** । अनेन बहुव्रीहित्वं द्योतितम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ **इति षष्ठमासीनाधिकरणम्** ॥[1]

**यत्रैकाग्रता तत्राऽविशेषात्** ॥११॥ अङ्गानाश्रितोपासनेष्वासननियम उक्ते तद्वद्दिगादिनियमशङ्कोत्थानात्सङ्गतिः । **ननु** समे शुचाविति देशनियमस्य श्रुतत्वात् कथं विचारावसरः ? तत्राह—**सम इति** । श्रुतौ शर्कराः सूक्ष्मपाषाणाः

कल्पतरुपरिमलः ।

तेषु यथा नास्त्यासननियमः नैवमितरोपासनेष्विति । **तिष्ठतोऽप्यैकाग्र्यसंभवादिति** । अङ्गावबद्धोपासनास्विति भावः । **तिष्ठतो हीति** । अङ्गावबद्धास्वगत्या देहधारणापन्ने सत्यपि कथंचिच्चित्तैकाग्र्यं संपाद्यते, न तथेहागतिरस्ति; आसननियमस्य चोदितत्वात्, तस्य च चित्तैकाग्र्यरूपदृष्टार्थत्वोपपत्तेः । येषां रोगवार्द्धकादिभिरासितुं न शक्तिः, तेषामपि भीत्याद्युपाश्रयणेनासननियमनिर्वाहोपपत्तेः । अत्यन्ताशक्तावारब्धकाम्यकर्मवद् आप्रायणमारब्धाया विद्यायाः यथा कथंचिन्निर्वाहणीयत्वेन तत्र तस्य त्यागेऽप्यन्यत्र त्यागायोगादिति भावः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ **इति षष्ठमासीनाधिकरणम्** ॥

१ तत्र सूत्राणि ४—आसीनः संभवात् ७ ध्यानाच्च ८ अचलत्वं चापेक्ष्य ९ स्मरन्ति च १० ॥

दिगादिनियमदर्शनात्स्यादिहापि कश्चिन्नियम इति यस्य मतिस्तं प्रत्याह दिग्देशकालेष्वर्थलक्षण एव नियमः । यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति तत्रैवोपासीत; प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवद्विशेषाश्रवणात्, एकाग्रताया इष्टायाः सर्वत्राविशेषात् । ननु—विशेषमपि केचिदामनन्ति—'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्' ( श्वे० २।१० ) इति यथेति । उच्यते—सत्यमस्त्येवंजातीयको नियमः । सति त्वेतस्मिंस्तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वाऽऽचार्य आचष्टे । 'मनोनुकूले' इति चैषा श्रुतिर्यत्रैकाग्रता तत्रैवेत्येतदेव दर्शयति ॥ ११ ॥ इति सप्तममेकाग्रताधिकरणम् ॥

( ८ अधिकरणम् ) **आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥**

**आवृत्तिः सर्वोपासनेष्वादर्तव्येति स्थितमाद्येऽधिकरणे । तत्र यानि तावत्सम्यग्दर्शनार्था-**

## भामती ।

शादिनियमवाचनिकमपि प्राचीनप्रवणे वैश्वदेवेन यजेतेतिवद्वैदिकारम्भसामान्यात्क्वचित्कश्चिदाशङ्कते । तमनुग्रहीतुमाचार्यः सुहृद्भावेनैव तदाह स्म । यत्रैकाग्रता मनसस्तत्रैव भावनां प्रयोजयेत्; अविशेषात् । नह्यत्रास्ति वैश्वदेवादिवद्वचनं विशेषकं तस्मादिति ॥ ११ ॥ **इति सप्तममेकाग्रताधिकरणम् ॥**

**आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥** अधिकरणविषयं विवेचयति—**तत्र यानि तावदिति** । अविद्यमाननियोज्या या ब्रह्मात्मप्रतिपत्तिस्तस्याः । शास्त्रं हि नियोज्यस्य कार्यरूपनियोगसंबन्धमवबोधयति, तस्यैव कर्मण्यैश्वर्यलक्षणमधिकारम् । तच्चैतदुभयमतीन्द्रियत्वाद्भवति शास्त्रलक्षणं प्रमाणान्तराप्राप्ये शास्त्रस्यार्थवत्त्वाद्ब्रह्मात्मत्वप्रतीतेस्तु जीवन्मुक्तेन दृष्टत्वान्नास्तीह तिरोहितमिव किंचनेति किमत्र शास्त्रं करिष्यति । **नन्वेवमप्यभ्युदयफलान्युपासनानि** तत्र नियोज्यनियोगलक्षणस्य च कर्मणि स्वामितालक्षणस्य च संबन्धस्यातीन्द्रियत्वात्तत्र सकृत्करणादेव शास्त्रार्थसमाप्तौ प्रा-

## वेदान्तकल्पतरुः ।

जलाश्रयवर्जनं शीतनिवृत्त्यर्थम् । चक्षुःपीडनो **मशकः** । **प्राचीनप्रवणे** प्राग्देशनिम्ने देशे । **वैश्वदेवेन** यागविशेषेण । ऐकाग्र्यं हि ध्यानं प्रत्यन्तरङ्गसाधनम् । तस्मिन्मध्याह्नादौ संभवत्यपि यदि प्रदोषकालः प्राच्यादिदिक्तीर्थादिदेशः प्रतीक्ष्येरँस्तर्हि शेषिध्यानबाधः स्यात्तस्मादनियम इति सिद्धान्तमाह—**यत्रैकाग्रता मनस इति** । यदुक्तमङ्गोपास्त्यतिरिक्तोपास्तिर्दिगादिनियममपेक्षते वैदिकानुष्ठानत्वाद्वैश्वदेववदिति, तत्र श्रुतदेशादिमत्त्वमुपाधिरिति वदन् अविशेषादिति सौत्रं हेतुं व्याचष्टे—**न ह्यत्रेति** । श्रुतविशेषणेन च वृथाचेष्टाया विपक्षस्य व्यावर्तनान्न पक्षेतरता । तस्मात्तत्रैव भावनामुपासनां प्रयोजयेदित्यन्वयः ॥ ११ ॥ **इति सप्तममेकाग्रताधिकरणम् ॥**[1]

**आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥** पूर्वत्र दिगाद्यविधेः तदनपेक्षावदहंग्रहोपास्तिष्वादेहपातादावृत्तेरविधानात्तदनपेक्षेति सङ्गतिः । भाष्यं व्याचष्टे—**अविद्यमानेति** । **तस्या इति** । शास्त्राविषयत्वादिति शेषः । ब्रह्मात्मत्वप्रतिपत्तेर्नियोज्यरहितत्वं विध्यविषयत्वं च दृष्टफलत्वेनोपपादयति—**शास्त्रं हीत्यादिना** । **नियोगसंबन्धमवबोधयतीति** । अन्यत्र ज्योतिष्टोमादाविति शेषः । अहंग्रहोपास्तीनामदृष्टार्थत्वेन सम्यग्ज्ञानाद्वैषम्यतश्च ज्योतिष्टोमादिवत्सकृत्करणमित्याह—**नन्वेवमित्यादिना** । **ननु** सकृत्करणे कथमुपासनसिद्धिरसकृत्करणे च सकृदनुष्ठानव्याहतिस्तत्राह—**उपासनेति** । उपास्तिः सकृत्कार्येति शास्त्रार्थे जाते उपासनशब्दस्याऽऽवृत्त्यर्थत्वादेकवारमावृत्तिर्लभ्यत इति भावः ।

## कल्पतरुपरिमलः ।

**यत्रैकाग्रता तत्राऽविशेषात् ॥ ११ ॥ अङ्गोपास्तिव्यतिरिक्तोपास्तिरिति** । अङ्गोपास्तिष्वाश्रयाङ्गस्य यो दिगादिनियमस्तदपेक्षासत्त्वादङ्गतः सिद्धसाधनं मा भूदिति पक्षविशेषणम् । एवं चोपास्तित्वादङ्गोपास्तिवदित्यपि हेतुदृष्टान्तौ वक्तुं शक्यौ । **श्रुतदेशादिमत्त्वमिति** । उपासनासु विशिष्य दिगादिनियमश्रवणं नास्ति वैदिककर्ममात्रे प्राङ्मुखत्वादिनियमस्मरणमनन्तरं साधनचित्तैकाग्र्यविरोधाद् वैदिककर्मान्तरविषयमित्युपाधेः पक्षाद्व्यावृत्तिः ॥ ११ ॥ **इति सप्तममेकाग्रताधिकरणम् ॥**

**आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ अहंग्रहोपास्तीनामदृष्टार्थत्वेनेति । ननु** "यस्य स्यादद्धे"ति श्रवणान्निदिध्यासनवत्तासां साक्षात्काररूपदृष्टफलार्थत्वमभ्युक्तमावृत्त्यधिकरणे, **सत्यम्**; तावता यावत्साक्षात्कारोदयमावृत्तिः

१ तत्र सूत्रम् ११—यत्रैकाग्रता तत्राऽविशेषात् ११ ॥

न्युपासनानि तान्यवघातादिवत्कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणम् । नहि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किंचिच्छासितुं शक्यम्; अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । यानि पुनरभ्युदयफलानि तेष्वेषा चिन्ता किं कियन्तंचित्कालं प्रत्ययमावर्त्योपरमेदुत यावज्जीवमावर्तयेदिति । किं तावत्प्राप्तम्? कियन्तंचित्कालं प्रत्ययमभ्यस्योत्सृजेदावृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादिति । एवं प्राप्ते ब्रूमः—आप्रायणादेवावर्तयेत्प्रत्ययम्; अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः । कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाल आक्षिपन्ति; 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' 'यच्चित्तस्तेनैष प्राणमायाति' 'प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयति' इति चैवमादिश्रुतिभ्यः, तृणजलूकानिदर्शनाच्च । प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत्प्रायणकालभावि भावनाविज्ञानमपेक्षेरन्? तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेष्वाप्रायणादावृत्तिः । तथाच श्रुतिः —'स यावत्क्रतुरयमस्माल्लोकात्प्रैति' इति प्राय-

## भामती ।

णायामुपासनपदवेदनीयावृत्तिमात्रमेव कृतवत उपरमः प्राप्तस्तावतैव कृतशास्त्रार्थत्वादिति प्राप्तेऽभिधीयते—सविज्ञानो भवतीत्यादिश्रुतेर्यत्र स्वर्गादिफलानामपि कर्मणां प्रायणकाले स्वर्गादिविज्ञानापेक्षकत्वं तत्र कैव कथातीन्द्रियफलानामुपासनानाम् । तानि खलु आप्रायणं तत्तदुपास्यगोचरबुद्धिप्रवाहवाहितया दृष्टेनैव रूपेण प्रायणसमये तद्बुद्धिं भावयिष्यन्ति । किमत्र फलवत्प्रायणसमये बुद्ध्याक्षेपेण? नहि दृष्टे संभवत्यदृष्टकल्पना युक्ता । तस्मादाप्रायणं प्रत्ययावृत्तिरिति । तदिदमुक्तम्—**प्रत्ययास्त्वेत इति** । तथाच श्रुतिः सर्वातीन्द्रियविषया—'स यथाक्रतुरस्माल्लोकात् प्रैति

## वेदान्तकल्पतरुः ।

**कृतशास्त्रार्थत्वादिति** । कृतशास्त्रार्थत्वात्पुंस इत्यर्थः । **ननु** तर्हि कर्मवदेवोपासनान्येव विहितत्वसामर्थ्यात्स्वफलं यथा कालान्तर आक्षिपन्ति—एवमन्त्यकालिकं स्वफलसाक्षात्कारमप्याक्षिपन्तु, किं प्रायणपर्यन्तावृत्त्येति, तत्राह—**तानि खल्विति** । दृष्टद्वारेण च प्रत्ययावृत्त्योपास्यसाक्षात्कारजन्मन्यन्तकाले तदवश्यम्भावाद्विरोधिकर्मान्तरानुद्भवाच्च साधकदेहपातानन्तरमुपास्तिफलप्राप्तिनियमः प्रयोजनमिति । किमत्र फलवदित्युपासनं फलवत्प्रायणसमये बुद्ध्याक्षेपेणोपास्यसाक्षात्काराक्षेपेण किं कार्यं दृष्टद्वारैव तत्सिद्धेरित्यर्थः । **सविज्ञानं** विज्ञानसहितं फलम् । यस्मिन्विषये चित्तमस्य स

## कल्पतरुपरिमलः ।

सिध्यति न त्वाप्रायणमिति भावः । **कृतशास्त्रार्थत्वात्पुंस इत्यर्थ इति** । अत्र पुंस इत्यध्याहारेण कृतशास्त्रार्थशब्दे बहुव्रीहिर्व्युत्पादितः । **ननु**—"अहरहर्वा एवं विद्वान् स्वर्गं लोकमेती"ति दहरविद्यायां वीप्सया विद्याया यावज्जीविकत्वमवगम्यते; "स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्त"मिति सत्यकामप्रश्ने साक्षाच्च तदाम्नायते । **सत्यम्**; प्रकरणविशेषाम्नातं तदुभयं न्यायतः प्राप्तिं विना सर्वविद्यासाधारण्यं न भजेत् । **दृष्टद्वारेण चेति** । कर्मणामन्त्यप्रत्ययजनने दृष्टसामर्थ्याभावाददृष्टमाश्रितम्, प्रत्ययानां तत्र दृष्टद्वारसंभवाद् नादृष्टं द्वारमाश्रयणीयमिति । **अन्तकाले तदवश्यंभावादिति । ननु** उपास्तीनामाप्रायणमनुवृत्तावपि सायंप्रातःकालयोरग्निहोत्रवत् चित्तैकाग्र्यशालिषु समयेषु तासामनुष्ठानं भवति, नतु सर्वकालं नैरन्तर्येण धारावाहिकतया, तथाच कुतः प्रायणकालेऽपि प्रत्ययानुवृत्त्या ततः साक्षात्कारोदयावश्यंभावः? तस्मात्तदवश्यं भावोक्तिरयुक्ता, प्रतिबन्धकान्तरानुद्भवोक्तिरप्ययुक्ता; प्रबलस्य कस्यचित्प्रतिबन्धककर्मणः तदानीमुद्भवसंभवेनोद्भूतस्य प्रारब्धस्य वा प्रतिबन्धकत्वसंभवेन तदा तीव्रमरणवेदनादिकमुद्भावयता तेन प्रत्ययानुवृत्तिसाक्षात्कारोदययोः प्रतिबन्धसंभवात् । यद्युपास्तिजन्यप्रबलादृष्टवशात्प्रत्ययानुवृत्तिकल्पनया साक्षात्कारोदयावश्यंभावः कल्प्यते, तदा तद्वशात्साक्षात्कारोदयावश्यंभाव एव कल्प्यतां किमाप्रायणप्रत्ययावृत्तिकल्पनया? **उच्यते**; तीव्रमरणवेदनामूलस्य कर्मणोऽपि भोक्तव्यफलविषयान्तिमप्रत्ययस्तावदवश्यंभावी; "सविज्ञानो भवती"त्यादिश्रुतेः, अत उपासनाफले भोक्तव्ये तत्प्रत्ययोऽपि तदानीमवश्यं वाच्यः । स च साक्षात्काररूप एव प्रभवति; प्रागुपास्ये साक्षात्कारस्य क्लृप्तत्वात्, प्राचीनसाक्षात्कारित्वभावनैव कारणत्वेन क्लृप्तेति सा तदानीमप्यपेक्षणीया, सा च दृढसंस्कारवत एव भवति, नतु चिरात्प्रत्ययावृत्तिमुज्झितवतः प्रमुषितसंस्कारस्येति संस्कारदार्ढ्यार्थमाप्रायणं प्रत्ययावृत्तिरपेक्षणीया । अत एव प्रायणानुवर्तनीयप्रत्ययावृत्तिसहकारितया तत्फलेन ब्रह्मलोकप्राप्त्या फलवतां कर्मणामाप्रायणमनुवृत्तिं दर्शयति छान्दोग्यश्रुतिराचार्यकुलाद्वेदमधीत्येत्यादिका । इयं ह्युपासनासहकारिकर्मविषया; आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येति चित्तैकाग्र्योपायसाहित्यश्रवणाद्, ब्रह्मलोकप्राप्तिफलश्रवणात् । अत एव भगवत्पादैरियं श्रुतिर्विद्यासहकारिकर्मविषयाऽवतारिता । यथेह षष्ठाद्यध्यायत्रयप्रकाशितात्मविद्या सफलाऽवगम्यते, तथा कर्मणां न कश्चनार्थ इति प्राप्तं, तदानर्थक्यपरिहाराय विद्वद्भिरनु-

णकालेऽपि प्रत्ययानुवृत्तिं दर्शयति । स्मृतिरपि—'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः' ( गी० ८।६ ) इति 'प्रयाणकाले मनसाऽचलेन' ( गी० ८।१० ) इति च । 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत' इति च मरणवेलायामपि कर्तव्यशेषं श्रावयति ॥ १२ ॥ इत्यष्टममाप्रायणाधिकरणम् ॥

## ( ९ अधिकरणम् ) तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

गतस्तृतीयशेषः । अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते । ब्रह्माधिगमे सति तद्वि-

---

### भामती ।

तावत्क्रतुर्हास्मिँ लोकं प्रेत्याभिसंभवति' इति । क्रतुः संकल्पविशेषः । स्मृतयश्चोदाहृता इति ॥ १२ ॥ इत्यष्टममाप्रायणाधिकरणम् ॥

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥** गतस्तृतीयशेषः साधनगोचरो विचारः । इदानीमेतदध्यायगतफलविषया चिन्ता प्रतन्यते । तत्र तावत्प्रथममिदं विचार्यते किं **ब्रह्माधिगमे** ब्रह्मज्ञाने सति ब्रह्मज्ञानफलान्मोक्षाद्विपरीतफलं दुरितं बन्धनफलं क्षीयते न क्षीयत इति संशयः । किं तावत्प्राप्तम् ? शास्त्रेण हि फलाय यद्विहितं प्रतिषिद्धं चानर्थपरिहारायाश्वमेधादि ब्रह्महत्यादि चापूर्वावान्तरव्यापारं किं तदपूर्वमुपरतेऽपि कर्मण्यत्र सुखदुःखोपभोगात्प्राङ्गाविरन्तुमर्हति । स हि तस्य विनाशहेतुस्तदभावे कथं विनश्येदिति । तस्याकस्मिकत्वप्र-

### वेदान्तकल्पतरुः ।

**यश्चित्तः** । तेन विषयेण हृद्यभिव्यक्तेन सह तेजसा उदानेन उदानस्य तेजोदेवताकत्वात् । **आत्मना** भोक्त्रा स उपासकोऽक्षितमस्यच्युतमसि प्राणसंशितमसीति मन्त्रत्रयं जपेत् ।

**अन्तकाले न कर्तव्यमुपास्ताविव किंचन । ब्रह्मबुद्धावशेषाघनाशादिति जगौ मुनिः ॥ १२ ॥ इत्यष्टममाप्रायणाधिकरणम् ॥**[1]

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥** विपरीतफलत्वमेव दर्शयति—**बन्धनफलमिति** । शास्त्रेणाश्वमेधादि फलाय सुखाय विहितम्, ब्रह्महत्यादि चानर्थकात्मकनरकपातपरिहाराय शास्त्रेण प्रतिषिद्धम् । प्रतिषेधे कृते हि न प्रवर्तेरन्निति मत्वेत्यर्थः । अश्वमेधादि दृष्टान्तार्थमिहोदाहृतम्, इतरस्यापीत्यनन्तरार्थं च । अत्र लोके कर्मण्युपरतेऽपि तदपूर्वं तस्य कर्मणोऽपूर्वं सुखदुःखोपभोगात् प्रागविरन्तुमनिवर्तितुं नार्हत्यपि तु निवर्तितुमेवार्हतीति यत्सिद्धान्तिनोच्यते, तत्किं न किमपीति योजना । अत्र हेतुमाह—**स हीति** । **ननु** स्वर्गकामस्य यागविधि-

### कल्पतरुपरिमलः ।

छीयमानस्य विशिष्टफलसंबन्धेनार्थवत्त्वमुच्यत इति । एवंच प्रतिबन्धकान्तरासंभवोऽप्युपपद्यते; दृढसंस्काराधानेन प्रायणकालिकप्रत्ययानुवृत्तिसाक्षात्कारयोर्दृष्टकारणभूतायाः प्रत्ययावृत्तेस्तत्सहकार्यग्निहोत्रादिकर्मानुवृत्तेश्च प्रत्यग्रत्वेन प्रबलतया ताभ्यां प्रारब्धपर्यन्तस्य सर्वस्यापि प्रतिबन्धकस्यानुत्थितिकरणोपपत्तेः कर्मविपाकप्रायश्चित्तवत्प्रारब्धादप्यनयोः प्राबल्योपपत्तेश्च । एवं न्यायसिद्धामेवाप्रायणानुवृत्तिं "स यो हवैतद्भगव"न्निति श्रुतिरहरहःश्रुतिश्चानुवदतीति तयोरपि सर्वविषयतोपपद्यते । **ननु** "तेजसोदानेने"ति व्याख्यानमयुक्तम्; छान्दोग्यश्रुतौ प्राणस्तेजसि तेजः परस्यां देवतायामिति मुमूर्षोः प्राणस्य तेजःशब्दोपलक्षितदेहबीजभूतप्राप्तिश्रवणात्, तथैव तस्याः श्रुतेर्द्वितीयपादे व्याख्यास्यमानत्वादित्यत आह—**उदानस्य तेजोदेवतात्मकत्वादिति** । प्रश्नोपनिषदि यश्चित्त इति वाक्यात् प्राचीनवाक्ये "तेजो ह वाव उदान" इति श्रूयते, ततः प्राक् च "उदानः पुण्येन कर्मणा पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोक"मिति श्रूयते । अतस्तेजस्त्वेन यथासंकल्पितलोकनिन्दात्वेन चात्र श्रुत उदान एवेति भावः । **आत्मना सह** आत्मना सहितः सन् तमेवात्मानं यथासंकल्पितं लोकं नयतीति श्रुतिशेषस्यार्थः । उत्तराधिकरणसंगतिमाह—**अन्तकाल इति** । यथोपासकस्यान्तकाले प्राप्यपारलौकिकफलविषयान्तिमप्रत्ययरूपसाक्षात्कारोदयार्थं तदानीमपि प्रत्ययावृत्त्यनुवृत्त्यपेक्षा, नैवं परब्रह्मविदस्तदपेक्षाऽस्ति । ततः सकलाघनाशेन कृतकृत्यताप्तेरित्युत्तराधिकरणेन प्रतिपादनादापवादिकी सङ्गतिः । सगुणविद्यानपेक्षिततद्विरोधिकर्मणामनिवृत्तिस्तु न्यायसाम्यात् सिध्यन्त्यानुषङ्गिकं प्रयोजनमिति भावः ॥ १२ ॥ **इत्यष्टममाप्रायणाधिकरणम् ॥**

---

१ तत्र सूत्रम् १—आ प्रायणात्तत्रापि हि दृष्टम् १२ ॥

## भामती ।

सङ्गात्, शास्त्रव्याकोपाच्चेति । अदत्तफलं चेत्कर्मापूर्वं विनश्यति कर्मण एव फलप्रसवसामर्थ्यबोधकशास्त्रमप्रमाणं भवेत् । नच—प्रायश्चित्तमिव ब्रह्मज्ञानमदत्तफलान्यपि कर्मापूर्वाणि क्षिणोतीति—साम्प्रतम्; प्रायश्चित्तानामपि तदप्रक्षयहेतुत्वात्, तद्विधानस्य चैनस्विनराधिकारिप्राप्तिमात्रेणोपपत्तावुपात्तदुरितनिबर्हणफलाक्षेपकत्वायोगात् । अत एव स्मरन्ति "नाभुक्तं क्षीयते कर्म"ति । यदि पुनरपेक्षितोपायतात्मा प्रायश्चित्तविधिर्न नियोज्यविशेषप्रतिलम्भमात्रेण निर्वृणोतीत्यपेक्षिताकाङ्क्षायां दोषसंयोगेन श्रवणात्तन्निबर्हणफलः कल्प्येत, तथापि ब्रह्मज्ञानस्य तत्संयोगेनाश्रवणान्न दुरितनिबर्हणसामर्थ्ये प्रमाणमस्ति मोक्षवत् । तस्यापि स्वर्गादिफलवद्देशकालनिमित्तापेक्षयोपपत्तेः । शास्त्रप्रामाण्यात्संभविष्यत्यसाववस्था यस्यामुपभोगेन समस्तकर्मक्षये ब्रह्मज्ञानं मोक्षं प्रसोष्यति । योगर्द्ध्यैव वा दिवि भुव्यन्तरिक्षे बहूनि शरीरेन्द्रियाणि निर्माय फलान्युपभुज्यर्द्धेन योगसामर्थ्येन योगी कर्माणि क्षपयित्वा मोक्षी संपत्स्यते । स्थिते चैतस्मिन्नर्थे न्यायबलात् "यथा पुष्करपलाश" इत्यादिव्यपदेशो ब्रह्मविद्यास्तुतिमात्रपरतया व्याख्येय इति प्राप्त उच्यते—व्याख्यायेतैवं व्यपदेशो यदि कर्मविधिविरोधः स्यान्न त्वयमस्ति । शास्त्रं हि फलोत्पादनसामर्थ्यमात्रं कर्मणामवगमयति, नतु कुतश्चिदागन्तुकान्निमित्ततः प्रायश्चित्तादेस्तदप्रतिबन्धमपि; तस्य तत्रौदासीन्यात् । यदि शास्त्रबोधितफलप्रसवसामर्थ्यमप्रतिबद्धमागन्तुकेन केनचित् कर्मणा ततस्तत्फलं प्रसूत एवेति न शास्त्रव्याघातः । नाभुक्तं क्षीयते कर्म इति च स्मरणमप्रतिबद्धसामर्थ्यकर्माभिप्रायम् । दोषक्षयोद्देशेन चापरविद्यानामस्ति प्रायश्चित्तवद्विधानमैश्वर्यफलानामप्युभयसंयोगाविशेषात् । यत्रापि निर्गुणायां परविद्यायां दोषोद्देशो नास्ति, तत्रापि तत्स्वभावालोचनादेव तत्प्रक्षयप्रसवसामर्थ्यमवसीयते । नहि तत्त्वमसिवाक्यार्थपरिभावनाभुवा प्रसंख्यानेन निर्मृष्टनिखिलकर्तृभोक्तृत्वादिविभ्रमो जीवः फलोपभोगेन युज्यते । नहि रज्ज्वां भुजङ्गसमारोपनिबन्धना भयकम्पादयः सति रज्जुतत्त्वसाक्षात्कारे प्रभवन्ति, किंतु संस्कारशेषात्किंचित्कालमनुवृत्ता अपि निवर्तन्त एव । अमुमेवार्थमनुवदन्तो "यथा पुष्करपलाश" इत्यादयो व्यपदेशाः समवेतार्थाः सन्तो न स्तुतिमात्रतया कथंचिद्व्याख्यानमर्हन्ति । ननूक्तं संभविष्यति साऽवस्था जीवात्मनो

## वेदान्तकल्पतरुः ।

सामर्थ्याद्यथा यागस्य स्वर्गसाधनत्वमेवमनर्थफलपापवतः प्रायश्चित्तविधिवशात् प्रायश्चित्तस्य पापनिवृत्त्यर्थता किं न स्यादत आह—**तद्विधानस्य चेति** । एनस्वी पापी नरस्तस्मिन्नधिकारिणि प्राप्ते तद्विधीयते, यथा गृहदाहवति प्राप्ते क्षामवतीष्टिः, अधिकारिव्यावृत्तिपरं विशेषणं न फलपरमित्यर्थः । युक्तं गृहदाहादेर्निष्पन्नत्वेन निष्पादयितुमशक्यत्वादधिकारिव्यावृत्त्यर्थत्वम्, पापनिवृत्तेस्तु कर्तुं शक्यत्वादिष्टसाधनत्वबोधी प्रायश्चित्तविधिस्तन्निवृत्तिफल इत्याशङ्क्य तदभ्युपगमेन प्रकृते वैषम्यमाह—**यदि पुनरित्यादिना । मोक्षवदिति** वैधर्म्यदृष्टान्तः । यथा मोक्षसंयोगेन श्रवणात् तद्धेतुत्वं ब्रह्मज्ञानस्य, नैवं दुरितक्षयहेतुत्वं तत्संयोगेनाश्रवणादित्यर्थः । **ननु** दुरितक्षयाभावे कथं मोक्षसिद्धिरत आह—**तस्यापीति** । अथ देशाद्यपेक्षत्वे मोक्षस्यानित्यत्वं स्यात्तर्हि प्रकारान्तरेण कर्मनिवृत्तिमाह—**शास्त्रेति** । एकेन शरीरेण बहुकालव्यापिना क्रमेणोपभोगेन सर्वकर्मक्षये ज्ञानान्मोक्ष इत्यर्थः । अथैकेन शरीरेणाविषमकर्मफलभोगो नानुपपन्नस्तर्हि कल्पान्तरमाह—**योगर्द्ध्यैव वेति । ऋद्धेन** समृद्धेन । यद्यपि ब्रह्मविद्या पापक्षयोद्देशेन न विहिता; तथापि विद्यापापक्षययोरेकपुरुषसंबन्धनिर्देशान्यथानुपपत्त्या साध्यसाधनत्वमवगम्यताम् इत्याशङ्क्यार्थवादलिङ्गस्य निषेधसामर्थ्यावगतेन पापगतानिष्टफलपर्यन्तत्वेन प्रबलेन बाधमाह—**स्थिते चैतस्मिन्निति** । यथा न्यायबलात्स्थित इति संबन्धः । न प्रबलमित्येव दुर्बलं बाधते, किं तु सति विरोधे, न चेह स इति सिद्धान्तयति—**व्याख्यायेतेतीति । ननु** सगुणविद्यानामैश्वर्यफलानां कथं पापनिवर्तकत्वमत आह—**उभयेति** । वाक्यद्वयेन "तद्यथेषीकातूलं" "सर्वेष्वात्मस्वन्नमत्ती"त्यादिभिर्वाक्यैर्विद्याया उभयसंयोगस्याविशेषादुभयार्थत्वमित्यर्थः । प्रबलदुर्बलप्रमाणाभ्यामेकस्योभयार्थत्वावगमेनैकेन नैकस्य बाधः स्यात्तन्निवृत्त्यर्थमुक्तम्—**अविशेषादिति** । पापं ज्ञाननिवर्त्यमध्यस्तत्वाद्रज्जुसर्पवदित्याह—**तत्स्वभावालोचनादिति** । न्यायसिद्धेऽर्थे लिङ्गदर्शनमाह—**अमुमेवेति** । उक्तविद्यासामर्थ्यवक्ष्यमाणमोक्षशास्त्रान्यथानुपपत्तिभ्यामुपबृंहिताज्ञानदुरितनिवृत्त्योरेकपुरुषसंबन्धनिर्देशान्यथानुपपत्तिः सत्यपि विरोधे निषेधान्यथानुपपत्तेः बलीयसीति भावः ।

## कल्पतरुपरिमलः ।

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ अथैकेन शरीरेणेति** । उग्रमतङ्गजादिभोग्यकण्टककाष्ठादिभोगप्रापककर्मफलोपभोगा एकेन शरीरेण नोपपद्यन्त इत्यर्थः । **अर्थवादलिङ्गस्येति** । उपासना यस्मिन् दिने प्रारब्धा ततः प्रभृत्युत्तराघाश्लेषः तस्मिन्नेव दिने प्राचीनसकलाघनाशश्च कथमित्यर्थवादमात्रे भारं संनिवेश्याभ्युपगन्तव्यम् इत्यप्यर्थवादग्रहणेन सूचितम् । **किंतु सति विरोधे न चेह स इति** निर्गुण इव सगुणेऽपि साक्षात्कारोदये सत्यश्लेषविनाशाविति नातिप्रसङ्ग इति भावः । सगुणनिर्गुणविद्यासाधारण्येनाश्लेषविनाशौ विरोधाभावेन समर्थितौ । अभ्युप-

परीतफलं दुरितं क्षीयते न क्षीयते वेति संशयः । किं तावत्प्राप्तम् ? फलार्थत्वात्कर्मणः फलमदत्त्वा न संभाव्यते क्षयः । फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता । यदि तदन्तरेणैव फलोपभोगमपवृज्येत श्रुतिः कदर्थिता स्यात् । स्मरन्ति च 'नहि कर्म क्षीयते' इति । नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति, नैष दोषः; प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत् । अपिच प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता, न त्वेवं ब्रह्मविद्यायां विधानमस्ति । नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यंभोक्तव्यत्वादनिर्मोक्षः स्यात्, नेत्युच्यते; देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति । तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरिति । एवं प्राप्ते ब्रूमः—तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः, उत्तरस्याश्लेषः पूर्वस्य विनाशः । कस्मात् ? तद्व्यपदेशात् । तथाहि—ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबन्धस्यागामिनो दुरितस्यानभिसंबन्धं विदुषो व्यपदिशति —'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' ( छा० ४।१४।३ ) इति । तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति—'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' ( छा० ५।२४।३ ) इति । अयमपरः कर्मक्षयव्यपदेशो भवति—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ( मु० २।२।८ ) इति । यदुक्तमनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति, नैष दोषः; नहि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे, विद्यत एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः । शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते, न प्रतिबन्धाप्रतिबन्धयोरपि । नहि कर्म क्षीयत इत्येतदपि स्मरणमौत्सर्गिकं न भोगादृते कर्म क्षीयते तदर्थत्वादिति । इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः 'सर्वं पाप्मानं तरति' 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इत्यादिश्रुतिस्मृतिभ्यः । यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति, तदसत्; दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलान्तरकल्पनानुपपत्तेः । यत्पुनरेतदुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति । अत्र ब्रूमः—सगुणासु तावद्विद्यासु विद्यत एव विधानम् । तासु च वाक्यशेष ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते । तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते । निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति; तथाप्यकर्त्रात्मत्वबोधात्कर्मप्रदाहसिद्धिः । अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति । अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात्कर्तृत्वं प्रतिपेद इव; तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रविलीयन्त इत्याह विनाश इति । पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्ता भोक्ता वाहमासं नेदानीं नापि भविष्यत्काल इति ब्रह्मविदवगच्छति । एवमेव च मोक्ष उपपद्यते । अन्यथा ह्यनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात् । नच देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भवितुमर्हति; अनित्यत्वप्रसङ्गात्, परोक्षत्वानुप-

## भामती ।

यस्यां पर्यायेणोपभोगाद्वा योगर्द्धेः प्रभावतो युगपन्नैकविधकायनिर्माणेनापर्यायेणोपभोगाद्वा जन्तुः कर्माणि क्षपयित्वा मोक्षी संपत्स्यते, इत्यत आह—**एवमेव च मोक्ष उपपद्यत इति** । अनादिकालप्रवृत्ता हि कर्माशया अनियतकालविपाकाः क्रमवता तावद्भोगेन क्षेतुमशक्याः । भुञ्जानः खल्वयमपरानपि संचिनोति कर्माशयानिति । नाप्यपर्यायमुपभोगेनासक्तः कर्मान्तराण्यसंचिन्वानः क्षेष्यतीति साम्प्रतम्; कल्पशतानि क्रमकालभोग्यानां संप्रति भोक्तुमसामर्थ्यात् । दीर्घकालफलानि च कर्माणि कथमेकपदे क्षेष्यन्ति । तस्मान्नान्यथा मोक्षसंभवः । ननु सत्स्वपि कर्माशयान्तरेषु सुखदुःखफलेषु मोक्षफलात् कर्मणः समुदाचरतो ब्रह्मभावमनुभूयाथ लब्धविपाकानां कर्मान्तराणां फलानि भोक्ष्यन्त इत्यत आह—**नच देशकालनिमित्तापेक्ष इति** । नहि कार्यः सन्मोक्षो मोक्षो भवितुमर्हति । ब्रह्मभावो हि सः । नच ब्रह्म क्रियते नित्यत्वादित्यर्थः । परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य । ज्ञानफलं खलु मोक्षोऽभ्युपे-

## वेदान्तकल्पतरुः ।

**नैकविधेति** । अनेकविधेत्यर्थः । **आहुरिति** भाष्यकारा इति । **असक्तो**ऽनासक्तः । अत एव कर्मान्तराण्यसंचिन्वानः,

**पत्तेश्च ज्ञानफलस्य । तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥ १३ ॥ इति नवमं तदधिगमाधिकरणम् ॥**

**( १० अधिकरणम् ) इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥**

**पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ । धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते । इतरस्यापि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च**

**भामती ।**

यते । ज्ञानस्यचानन्तरभाविनी ज्ञेयाभिव्यक्तिः फलं, सैवाविद्योच्छेदमादधती ब्रह्मस्वभावस्वरूपावस्थानलक्षणाय मोक्षाय कल्पते । एवं हि दृष्टार्थता ज्ञानस्य स्यात् । अपूर्वाधानपरम्परया ज्ञानस्य मोक्षफले कल्प्यमाने ज्ञानस्य परोक्षफलत्वमदृष्टार्थत्वं भवेत् । नच दृष्टे संभवत्यदृष्टकल्पना युक्तेत्यर्थः । तस्माद्ब्रह्माधिगमे ब्रह्मज्ञाने सत्यद्वैतसिद्धौ दुरितक्षय इति सिद्धम् ॥ १३ ॥ **इति नवमं तदधिगमाधिकरणम् ॥**

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥** अधर्मस्य स्वाभाविकत्वेन रागादिनिबन्धनत्वेन शास्त्रीयेण ब्रह्मज्ञानेन प्रतिबन्धो युक्तः । धर्मज्ञानयोस्तु शास्त्रीयत्वेन ज्योतिष्टोमदर्शपौर्णमासवदविरोधान्नोच्छेद्योच्छेत्तृभावो युज्यते । पाप्मनश्च विशेषतो ब्रह्मज्ञानोच्छेद्यत्वश्रुतेर्धर्मस्य न तदुच्छेद्यत्वम्; विशेषविधानस्य शेषप्रतिषेधनान्तरीयकत्वेन लोकतः सिद्धेः । यथा देवदत्तो दक्षिणेनाक्ष्णा पश्यतीत्युक्ते न वामेन पश्यतीति गम्यते । "उभे ह्येवैष एते तरती"ति च यथासंभवं ब्रह्मज्ञानेन दुष्कृतं भोगेन सुकृतमिति । 'क्षीयन्ते चास्य कर्माणि' इति च सामान्यवचनं 'सर्वे पाप्मानः' इति विशेषश्रवणात्पापकर्माणीति विशेषे उपसंहरणीयम् । तस्माद्ब्रह्मज्ञानाद्दुष्कृतस्यैव क्षयो न सुकृतस्येति प्राप्ते—पूर्वाधिकरणराद्धान्तोऽतिदिश्यते । नो खलु ब्रह्मविद्या केनचिददृष्टेन द्वारेण दुष्कृतमपनयत्यपि तु दृष्टेनैव भोक्तृभोक्तव्यभोगादिप्रविलयद्वारेण, तच्चैतत्तुल्यं सुकृतेऽपीति कथमेतदपि नोच्छिन्द्यात् । एवंच सति न शास्त्रीयत्वसा-

**वेदान्तकल्पतरुः ।**

सङ्गे हि पापाद्युदेति नान्यथेत्यर्थः । तिष्ठन्तु कल्पशतानि क्रमभोग्यफलानि, सप्तजन्मादिभोग्यफलानां कथं मुमुक्षुदेहेन शतायुषा भोग इत्याह—**दीर्घकालेति** ॥ १३ ॥ **इति नवमं तदधिगमाधिकरणम् ॥**[1]

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥** अस्यातिदेशस्याभ्यधिकाशङ्कामाह—**अधर्मस्येति । स्वाभाविकत्वेनेति** । शास्त्रोपदेशानपेक्षत्वेनेत्यर्थः । धर्मस्य ज्ञानान्निवृत्तिः स्वभावविरोधाद्वा शास्त्रान्निवृत्त्यवगमाद्वेति विकल्पे **प्रथमं** निरस्य **द्वितीयं** निरस्यति—**पाप्मनश्चेत्यादिना** । सर्वे पाप्मानोऽतो निवर्तन्त इति वचनसामर्थ्यात्पाप्मन एव निवृत्तिरित्यवगन्तुं न शक्यते; शास्त्रान्तरैः साक्षात्पुण्यस्यापि ज्ञानान्निवृत्त्यवगमात्, तेषामन्यथासिद्धिमाह—**उभे ह्येवैष इत्यादिना । उभे** पुण्यपापे **एष** विद्वान् । अत्र वाक्ये ज्ञानेन दुष्कृतं **तरत्य**तिक्रामति भोगेन सुकृतं तरति इति योज्यमित्यर्थः । क्षीयन्ते कर्माणीति सामान्यवचनं पाप्मान इति विशेषवचनं दृष्ट्वा पापे विशेषे सङ्कोच्यमित्यर्थः । ज्ञानसुकृतयोः स्वभावविरोध इति पक्षमादाय सिद्धान्तयति—**नो खल्वित्यादिना** । यद्यदत्तफलमपि सुकृतं विद्या निवर्तयति, तर्हि

**कल्पतरुपरिमलः ।**

गम्यापि प्रमाणान्तरविरोधं विरुद्धं प्रमाणान्तरमेवाश्लेषविनाशप्रमाणेन बाध्यमित्येतन्निर्गुणविद्यामात्रविषयं पापं ज्ञाननिवर्त्यमित्यादिना बलीयसीत्यन्तेन दर्शितम् ॥ १३ ॥ **इति नवमं तदधिगमाधिकरणम् ॥**

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ प्रथमं निरस्येति ।** नच—शास्त्रीयत्वसाम्येनाविरोधोपपादनेऽपि ज्ञानाज्ञानरूपत्वकृतविरोधो न निरस्त इति—वाच्यम्; तस्मिन् सत्यपि प्रारब्धवदनुवृत्तिसंभवादिति भावः । पाप्मनश्च विशेषतो ब्रह्मज्ञानेनोच्छेद्यत्वश्रुतेरिति टीकायां विवक्षितां श्रुतिमुदाहरति—**सर्वे पाप्मानोऽतो निवर्तन्त इति ।** "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त"इति छान्दोग्यश्रुतिरिह नोदाहर्तुं योग्या; तत्र पाप्मशब्दः सुकृतस्यापि ग्राहक इति स्फुटत्वेन तस्याः सिद्धान्तानुगुणत्वात्, किंत्वन्येयं श्रुतिराचार्यैरुदाहृता । "आत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्म तरति सर्वं पाप्मानं तरति सर्वे पाप्मानः प्रहीयन्त" इत्यादि चात्र पूर्वपक्षानुगुणं वाक्यं द्रष्टव्यम् । **पापे विशेषे संकोच्यमिति ।** पापरूपे कर्मविशेषे संकोच्यमित्यर्थः । **स्वभावविरोधपक्षमादायेति ।** धर्मस्य ज्ञानमात्रान्निवृत्तिः स्वभावविरोधाद्वा शास्त्रान्निवर्त्यत्वावगमाद्वेति विकल्पितपक्षद्वयमध्ये प्रथमपक्षमादायेत्यर्थः ।

---

[1] तत्र सूत्रम् १—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् १३ ॥

ज्ञानवतो भवतः । कुतः ? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात् ? 'उभे उ हैवैष एते तरति' ( बृ० ४।४।२२ ) इत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात् । अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् 'क्षीयन्ते चास्य कर्माणि' ( मु० २।२।८) इति चाविशेषश्रुतेः । यत्रापि केवल एव पाप्मशब्दो दृश्यते, तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम् । ज्ञानफलापेक्षया निकृष्टफलत्वात् । अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैनं सेतुमहोरात्रे तरतः' ( छा० ८।४।१ ) इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात् । पाते त्विति तुशब्दोऽवधारणार्थः । एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ॥ १४ ॥ इति दशममितरासंश्लेषाधिकरणम् ॥

( ११ अधिकरणम् ) **अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥**

पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः । स किमविशेषेणार-

## भामती ।

स्यमात्रमविरोधहेतुः, नहि प्रत्यक्षत्वसामान्यमात्रादविरोधो जलानलादीनाम् । नच सुकृतशास्त्रमनर्थकमब्रह्मविदं प्रति तद्विधेरर्थवत्त्वात् । एवमवस्थिते च पाप्मश्रुत्या पुण्यमपि ग्रहीतव्यम् । ब्रह्मज्ञानमपेक्ष्य पुण्यस्य निकृष्टफलत्वात्, तत्फलं हि क्षयातिशयवत् । नह्येवं मोक्षो निरतिशयत्वान्नित्यत्वाच्च । दृष्टप्रयोगश्चायं पाप्मशब्दो वेदे पुण्यपापयोः । तद्यथा पुण्यपापे अनुक्रम्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यत्र । तस्मादविशेषेण पुण्यपापयोरश्लेषविनाशाविति सिद्धम् ॥ १४ ॥ इति दशममितरासंश्लेषाधिकरणम् ॥

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥** यद्यद्वैतज्ञानस्वभावालोचनयोत्तरपूर्वसुकृतदुष्कृतयोरश्लेषविनाशौ, हन्त आरब्धानारब्धकार्ययोश्चाविशेषेणैव विनाशः स्यात्; कर्तृकर्मादिप्रविलयस्योभयत्राविशेषात्, तन्निबन्धनत्वाच्च विनाशस्य । नच संस्कारशेषात्कुलालचक्रभ्रमणवदनुवृत्तिः; वस्तुनः खल्वनुवृत्तिः । मायावादिनश्च पुण्यपापयोश्च मायामात्रविनिर्मितत्वेन मायानिवृत्तौ न पुण्यापुण्ये न तत्संस्कारो वस्तुसन्तीति कस्यानुवृत्तिः ? नच—रज्जौ

## वेदान्तकल्पतरुः ।

तद्विधेर्वैयर्थ्यं स्यादत आह—**न च सुकृतशास्त्रमिति** । उपपादिते विद्यापुण्ययोर्विरोधे उदाहृतशास्त्राणि यथाश्रुतार्थानीत्याह—**एवमवस्थित इति** ॥ १४ ॥ इति दशममितरासंश्लेषाधिकरणम् ॥[1]

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ उत्सृष्टस्तत्त्वबोधेन विलयः सर्वकर्मसु । कर्मस्वारब्धकार्येषु स इदानीमपोद्यते** ॥ इमामापवादिकीं सङ्गतिमभिसंधाय पूर्वपक्षयति—**यदीत्यादिना । ननु** निवृत्तेऽपि सर्वकर्मणि कर्मसंस्कारात्कर्मानुवर्तताम्, अथवा—निवृत्तमायासंस्काराद् मायान्तरोत्पत्तौ तेनाभिनवकर्माणि विरच्यन्तामत आह—**नच संस्कारशेषादिति** । संस्कार एव शिष्यत इति शेषः । यथा कुलालकराभिघातनिमित्तनिवृत्त्या निवृत्तेऽपि चक्रभ्रमणे भ्रमणसंस्काराद् भ्रमणानुवृत्तिरेवमत्रानिवृत्तायामपि मायायामुक्तमार्गेण कर्मानुवृत्तिरित्येतन्न, तत्र हेतुमाह—**वस्तुन इति । तत्संस्कार**स्तयोः पुण्यापुण्ययोः संस्कारः पुण्यापुण्यसंस्काराणां त्रित्वात्सन्तीति बहुवचनम् । वस्त्वेव संस्कारद्वारेणानुवर्तत इति व्याप्तेर्व्यभिचारमाशङ्क्याह—**न चेति** । रज्जुसर्पविषयज्ञानस्यास्माकं

## कल्पतरुपरिमलः ।

प्रारब्धवदनुवृत्तावारब्धफलत्वहेत्वभावाद् अवधिश्रवणाभावाच्च अनन्तशरीरभोग्यानामनियतकालविपाकानां पुण्यकर्मणां युगपत्क्रमेण वा भोगासंभवादनिर्मोक्षः स्यादिति भावः । क्रममुक्तिफलकासु सगुणविद्यास्वप्ययं न्यायस्तुल्यः । देवलोकादिप्रापकपुण्यविशेषानुवृत्तौ तत्फलभोगाय पुनर्निवृत्त्यापत्त्या क्रममुक्तिर्न सिध्येदिति । **तथाभूतार्थानि** पाप्मश्रुत्या पुण्यस्यापि ग्रहणे न्यायसिद्धार्थानुसार्यर्थानि । **यथाभूतार्थानीति** पाठे "उभे वैष एते तरति नैनं सुकृतदुष्कृते तरत" इत्यादीनि यथाश्रुतार्थानि भवन्ति न तु क्लेशेन योज्यानीत्यर्थः ॥ १४ ॥ **इति दशममितरासंश्लेषाधिकरणम् ॥**

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ यथा कुलालेति** । कुलालकराभिघाते निवृत्ते तन्निमित्तकमाद्यं भ्रमणं निवर्तते, ततस्तज्जन्यवेगाख्यसंस्काराद् भ्रमणपरम्परानुवृत्तिर्दृष्टा, तथा कर्मजन्यसंस्कारात्कर्मान्तरानुवृत्तिरित्याद्यपक्षो न युक्त इत्यर्थः । **न मायेति भ्रमनिषेध इति** । तज्जन्यसंस्कारो न तद्गोचर

[1] तत्र सूत्रम् १—इतरस्याप्येवमसंश्लेषः पाते तु १४ ॥

## भामती ।

सर्पादिविभ्रमजनिता भयकम्पादयो निवृत्तेऽपि विभ्रमे यथानुवर्तन्ते तथेहापीति—युक्तम्; तत्रापि सर्पासत्त्वेऽपि तज्ज्ञानस्य सत्त्वे तज्जनितभयकम्पादीनां तत्संस्काराणां च वस्तुसत्त्वेन निवृत्तेऽपि विभ्रमेऽनिवृत्तेः । अत्र तु न माया न तज्जः संस्कारो न तद्गोचर इति तुच्छत्वात्किमनुवर्तेत ? न संस्कारशेषो न कर्मेत्यविशेषेणारब्धकार्याणामनारब्धकार्याणां च निवृत्तिः । नच "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति श्रुतेर्देहपातप्रतीक्षाऽऽरब्धकार्याणां युक्ता । नह्येषा श्रुतिरवधिभेदविधायिन्यपि तु क्षिप्रतापरा । यथा लोक एतावन्मे चिरं यत्स्नातो भुञ्जानश्चेति । नहि तत्र स्नानभोजने अवधित्वेन विधीयेते, किंतु क्षेपीयस्ता प्रतिपाद्यते । उभयविधाने हि वाक्यं भिद्येतावधिभेदः चिरता चेति प्राप्तेऽभिधीयते—यद्यप्यद्वैतब्रह्मतत्त्वसाक्षात्कारोऽनाद्यविद्योपदर्शितप्रपञ्चमात्रविरोधितया तन्मध्यपतितसकलकर्मविरोधी; तथाप्यनारब्धविपाकं कर्मजातं द्रागित्येव समुच्छिनत्ति, न त्वारब्धविपाकं संपादितजात्यायुर्विततपूर्वाप-

## वेदान्तकल्पतरुः ।

सत्यत्वात्तज्जन्मभयादीनां संस्कारवशादनुवृत्तिर्युक्ता । प्रस्तुते वैषम्यमाह—**न त्विति** । न मायेति भ्रमनिषेधः । अर्थात्तदुपादानं माया निषिद्धा भवति । तज्जन्यसंस्कार इत्यनेन मायासंस्कारजन्यमायान्तरात् कर्मान्तरोत्पत्तिरिति पक्षं प्रतिक्षिपति । **न तद्गोचर इति** । मायात्मकभ्रमगोचरो ज्ञानादूर्ध्वं निषिध्यते किमनुवर्तते इत्युक्त्वा न किमपीत्याह—**नेति** । न संस्कारशेषोऽत एव न कर्मेत्यर्थः । आरब्धकार्याणां कर्मणां देहपातप्रतीक्षा तत्पर्यन्तमवस्थितिर्न युक्तेत्यर्थः । **स्नात** इति षष्ठ्येकवचनं स्नानादि कुर्वतो यच्चिरं विलम्बनं तावदेव न ततोऽधिकमित्यर्थः । **क्षेपीयस्ता** क्षिप्रतरत्वम् । यथा खलु स्वयंप्रकाशप्रत्यगात्मभूतब्रह्मसाक्षात्कारे नित्यमेव भवितुं युक्तेऽपि नास्ति ब्रह्म न प्रकाशते चेति भ्रमान्यथानुपपत्त्याऽऽच्छादिकाऽविद्या कल्प्यते, एवमत्रभवतां हिरण्यगर्भादीनां तत्त्वसाक्षात्कारवतामपि श्रुतिस्मृतिप्रतीतदेहधारणान्यथानुपपत्त्या तत्त्वसाक्षात्कारस्य प्रारब्धफलकर्मप्रतिबन्धात्तत्स्वरूपतत्कार्यभोगसंपादकाविद्यालेशं प्रत्यनिवर्तकत्वं भोगसमाप्तौ कर्मक्षये च प्रतिबन्धनिवृत्तौ सततमनुवर्तमानसाक्षात्कारेण तस्याप्यविद्यालेशस्य निवृत्तिरिति कल्प्यते । न चैकदेशेन निवृत्ताया अविद्याया अनुवृत्त्यसंभवः; शाब्दबोधेन निवृत्तायामप्यविद्यायां साक्षात्कारनिरस्यस्यैकदेशान्तरस्य दर्शनात्, तदिदमभिप्रेत्य सिद्धान्तयति—**यद्यपीत्यादिना । द्रागित्येवेति** । तत्राप्रतिबन्धादित्यर्थः । न त्वारब्धविपाकं शीघ्रं निवर्तयति, प्रतिबन्धक्षये तु निवर्तयतीत्यर्थः । आरब्धविपाकत्वस्य व्याख्यानं—**संपादितेति** । संपदिता जातिः जन्मायुर्जीवनं संपादितम् । विततो विस्तीर्णः पूर्वापरीभूतो वर्तमानः सुखदुःखोपभोगश्च संपादितो येन तत्कर्मजातं तथोक्तं तद् द्रागित्येव

## कल्पतरुपरिमलः ।

इत्यग्रिमवाक्ययोस्तत्पदेन मायाशब्दोक्तं परामृश्य तज्जन्यसंस्कारतद्विषययोर्वस्तुसत्तानिषेधाद् मायाशब्दोऽत्र भ्रमपर इति भावः । **तज्जन्यसंस्कार इत्यनेन मायासंस्कारजन्यमायान्तरात् कर्मान्तरोत्पत्तिरिति पक्षं प्रतिक्षिपतीति** । यद्यपि न तज्जन्यसंस्कार इत्यनेन भ्रमजन्यसंस्कारनिषेधः प्रतीयते; तथाप्यर्थाद् भ्रमोपादानमायानिषेधस्य पूर्ववाक्ये वर्णितत्वाद् मायापि निषेध्यतया बुद्धिस्थेति तज्जन्यसंस्कारनिषेधपरतयाऽपि योजयितुं शक्यत्वात्स्वविकल्पितद्वितीयपक्षनिरासार्थत्वेनेदं वाक्यं योजितम् । न तज्जन्यसंस्कार इत्यनेनेत्यादेः प्रतिक्षिपतीत्यन्तस्य ग्रन्थस्य स्थाने अनेन मायाजन्यमायान्तरात्कर्मान्तरोत्पत्तिरिति पक्षः परिस्फुरतीति क्वचित्पाठः । **तत्रायमर्थः**—यत्र तु न माया न तत्संस्कारो न तद्गोचर इति टीकाग्रन्थः प्रस्तुते भयकम्पादिवैषम्यप्रदर्शनपरो न भवति; मायावादिनश्चेत्यादिपूर्वग्रन्थेनैव तद्वैषम्यसिद्धेः । अतोऽनेन टीकाग्रन्थेन द्वितीयपक्षो निषेधार्थमनूदितः परिस्फुरतीति । **ननु** न तत्संस्कार इति तच्छब्दस्य मायापरत्वे तद्गोचर इत्यत्रापि तस्य तत्परत्वेन भाव्यम्; न तु तद्युक्तम्; मायाविषयस्यात्मनस्तत्त्वज्ञानादूर्ध्वमपि सत्त्वेन तन्निषेधायोगादित्याशङ्क्य व्याचष्टे—**मायात्मभ्रमगोचर इति** । भ्रममाययोः कार्यकारणयोरभेदोपचाराद् भ्रमविषयो मायाविषयत्वेनोपचरित इति भावः । **किमनुवर्ततेत्युक्त्वा न किमपीत्याहेति** । किमनुवर्ततेत्युक्तमेवार्थं न संस्कारावशेष इत्यादिना विवृणोतीति न पौनरुक्त्यमित्यर्थः । **न ततोऽधिकमित्यर्थ इति** । इहापि "तावदेव चिर"-मित्येवकारेण न ततोऽधिकमित्यर्थ एव प्रतीयते, न तु तावत्पर्यन्तमनुवर्तत एवेत्यर्थ इति भावः । **नास्ति ब्रह्म न प्रकाशते चेति भ्रमान्यथानुपपत्त्येति** । **इदमुपलक्षणम्**—परप्रेमास्पदतया जीवस्वरूपानन्दे प्रकाशमानेऽपि नास्ति न प्रकाशत इति व्यवहारात् तदावरकाविद्यासद्भावोऽवगम्यत इत्येतदप्युदाहरणम् । **नचैकदेशेनेति** । निवृत्ताया अविद्याया एकदेशेनानुवृत्त्यसंभवो नेति योजना । **शाब्दबोधेनेति** । सकलेतरमधुरिमव्यावृत्तोत्कर्षशालिसुधायां मधुरिमाऽस्तीत्याप्तवाक्येन तदर्थपरिच्छेदे सति तदज्ञाननिवृत्तावपि यावत्साक्षात्कारं कीदृक्षः स मधुरिमेत्यज्ञानं नापैतीत्यनुभवसिद्धम् । नच—तत्र पुरुषाश्रिताज्ञाननिवृत्तावपि विषयाश्रिताज्ञानं नाभिभूयत इति—वाच्यम्; आश्रयभेदेनैकविषयाज्ञानभेदकल्पने प्रमाणाभावात् । तस्मादेकमेवाज्ञानमेकदेशे च निवृत्तम् एकदेशान्तरेणानुवर्तत इत्येव कल्पनीयमिति

ब्धकार्ययोरनारब्धकार्ययोश्च भवत्युत विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र 'उभे उ हैवैष एते तरति' ( बृ० ४।४।२२ ) इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इति। एवं प्राप्ते प्रत्याह—अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तरसंचिते अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते सुकृतदुष्कृते ज्ञानाधिगमात्क्षीयेते न त्वारब्धकार्ये सामिभुक्तफले, याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम्। कुत एतत्? 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा० ६।१४।२) इति शरीरपातावधिकरणात्क्षेमप्राप्तेः। इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावाज्ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत। तत्र शरीरपातप्रतीक्षां नाचक्षीत। ननु वस्तुबलेनैवायमकर्त्रात्मावबोधः कर्माणि क्षपयन्कथं कानिचित्क्षपयेत्कानिचिच्चोपेक्षेत। नहि समानेऽग्निबीजसंपर्के केषांचिद्बीजशक्तिः क्षीयते केषांचिन्न क्षीयत इति शक्यमङ्गीकर्तुमिति। उच्यते—नतावदनाश्रित्यारब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते। आश्रिते च तस्मिन्कुलालचक्रवत्प्रवृत्तवेगस्यान्तराले प्रतिबन्धासंभवाद्भवति वेगक्षयप्रतिपालनम्। अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति। बाधितमपि तु मिथ्या-

## भामती।

रीभूतसुखदुःखोपभोगप्रवाहं कर्मजातम्। तद्धि समुदाचरद्वृत्तितयेतरेभ्यः प्रसुप्तवृत्तिभ्यो बलवत्। अन्यथा देवर्षीणां हिरण्यगर्भमनूद्दालकप्रभृतीनां विगलितनिखिलक्लेशजालावरणतया परितः प्रद्योतमानबुद्धिसत्त्वानां न ज्योग्जीविता भवेत्। श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता च महाकल्पकल्पमन्वन्तरादिजीविता च। न चैते महाधियो न ब्रह्मविदोऽब्रह्मविदश्चाल्पपुण्यमेधसो मनुष्या इति श्रद्धेयम्। तस्मादागमानुसारतोऽस्ति प्रारब्धविपाकानां कर्मणां प्रक्षयाय तदीयसमस्तफलोपभोगप्रतीक्षा सत्यपि तत्त्वसाक्षात्कारे। "तावदेव चिरमि"ति न चिरता विधीयतेऽपितु श्रुत्यन्तरसिद्धां चिरतामनूद्य देहपातावधिमात्रविधानम्। तदेतदभिसंधायौचित्यमात्रतयाह स भगवान्भाष्यकारः—**न तावदनाश्रित्यारब्धकार्यं कर्माशयमिति**। न चेदं न जातु दृष्टं यद्विरोधिसमवाये विरोध्यन्तरमनुवर्तत इत्याह—**अकर्त्रात्मबोधोऽपीति**। यदा लोकेऽपि विरोधिनोः किंचित्कालं सहानुवृत्तिरुपलब्धा, तदे-

## वेदान्तकल्पतरुः।

म निवर्तयतीत्यर्थः। **समुदाचरन्ती** उद्भूता, वृत्तिः फलारम्भाय यस्य तत्तथा। **परितः** समन्तात्प्रद्योतमानं बुद्धिसत्त्वं बुद्धिगतसत्त्वगुणो ब्रह्मज्ञानाकारेण परिणतो येषां ते तथोक्ताः। **ज्योग्जीविता** उज्ज्वलजीविता। **कल्पोऽवान्तरकल्पः**। यदुक्तमुभयविधाने वाक्यं भिद्येतेति, तत्राह—**तावदेव चिरमितीति। श्रुत्यन्तरेति**। उद्दालकादीनां देहधारणविषयं श्रुत्यन्तरम्। उपजीव्याया अपि अविद्याया ज्ञानेन बाधात्प्रारब्धकर्माण्याश्रित्य ज्ञानोदयस्तदनिवर्तकत्वे स्वतन्त्रयुक्तिर्न भवति, किं त्वन्यतः सिद्धेऽर्थेऽभ्युच्चयार्थेत्याह—**तदेतदभिसंधायेति**। अभ्युपेत्यान्यत्र वस्तुतत्त्वसाक्षात्काराविद्ययोः सहानवस्थानमिहाविद्यैकदेशब्रह्मात्मभावसाक्षात्कारयोरविरोध उक्तः, इदानीमन्यत्रापि न विरोधनियम इत्याह—**न चेदमिति। समवाये** सन्निधाने। यथा प्रतिबिम्बद्विचन्द्रभ्रमस्यौपाधिकत्वाचन्द्रैकत्वसाक्षात्कारेण सहानुवृत्तिरुपाधिनिवृत्तौ निवृत्तिः प्रमाणसिद्धा, एवं निरुपाधिकभ्रमस्यापि सान्तःकरणस्य तत्कर्तृत्वादेस्तदुपादानाविद्यालेशस्य च ब्रह्मसाक्षात्कारेण सहानुवृत्तिः प्रारब्धकर्मोपरमे च निवृत्तिरुद्दालकादिदेहधारणविषयश्रुत्यादिप्रमाणसिद्धा स्वीकर्तव्येत्यर्थः। **ननु** द्विचन्द्रादिभ्रमा अल्पकालं तत्त्वज्ञानेन सहानुवर्तन्ते, कर्तृत्वादेस्तु कथं बहुकालं विरोधिना सहानुवृत्तिरित्यत आह—**यदा लोकेऽपीति**। नियोगस्तथास्त्विति विधिरनुयोगः कथमेतदिति चोद्यम्। भाष्ये स्थितप्रज्ञलक्षणनिर्देशो जीवन्मु-

## कल्पतरुपरिमलः।

भावः। कल्पमहाकल्पमन्वन्तरादिजीविता चेति पाठमाश्रित्य कल्पशब्दार्थमाह—**कल्पोऽवान्तरकल्प इति**। ब्रह्मणो दिनमवान्तरकल्पः। तस्यायुर्महाकल्पः। **ननु** भाष्यकारैर्न **तावदनाश्रित्य कर्माशयमित्या**दिग्रन्थेन ज्ञानोत्पत्तेर्देहद्वारा तदारम्भककर्माश्रयत्वादारब्धकार्यस्य च कर्मणो मध्ये प्रतिबन्धासंभवात्तत्क्षपणार्थं देहपातप्रतीक्षणमिति युक्तिरुक्ता, सा टीकाकारैस्तदेतदभिसंधायेत्यादिना स्वोक्तयुक्तिपर्यवसानं किमिति प्रापिता, स्वतन्त्रयुक्त्यन्तरत्वसंभवादित्याशङ्क्याह—**उपजीव्याया अविद्याया इति**। अस्तु ज्ञानोत्पत्त्यर्थं देहतदारम्भककर्मापेक्षा, तस्यां सत्यामेवोपादानाज्ञानबाधेन तयोर्निवृत्तिः स्यादेव; निरुपादानकार्यस्थित्यसंभवादित्याशङ्कायाम् उत्पन्नज्ञानानामपि श्रुतिस्मृतिषु देहस्थित्युपलम्भाद्देहतदारम्भककर्मोपादानाज्ञानलेशानुवृत्तिः कल्पनीयेति टीकोक्तयुक्तिरपेक्षणीया, तत इयं स्वतन्त्रयुक्तिर्न भवतीत्यर्थः। **अन्यत्र** आत्मातिरिक्तवस्तुनीत्यर्थः। **चन्द्रैकत्वसाक्षात्कारेण सहानुवृत्तिरिति**। अनभ्यासदशायां जलज्ञानेन सह जलमिदं न वेति संशयस्यानुवृत्तिरप्यत्रोदाहरणम्। **नियोग इति**। प्रागेव प्रमाणतः सिद्धं वस्तु तथास्त्विति पुनर्य-

ज्ञानं द्विचन्द्रज्ञानवत्संस्कारवशात्कंचित्कालमनुवर्तत एव । अपिच नैवात्र विवदितव्यं ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्येत? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते । तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षय इति निर्णयः ॥ १५ ॥ इत्येकादशमनारब्धकार्याधिकरणम् ॥

## ( १२ अधिकरणम् ) अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

पुण्यस्याप्यश्लेषविनाशयोरघन्याययोऽतिदिष्टः, सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति—अग्निहोत्रादि त्विति । तुशब्द आशङ्कामपनुदति यन्नित्यं कर्म वैदिकमग्निहोत्रादि,

### भामती ।

ह्यागमबलाद्दीर्घकालमपि भवतीति न शक्या निवारयितुम्; प्रमाणसिद्धस्य नियोगपर्यनुयोगानुपपत्तेः । तदेवं मध्यस्थान्प्रतिपाद्य ये भाष्यकारमाप्तं मन्यन्ते, तान् प्रत्याह—**अपिच नैवात्र विवदितव्यमिति** । स्थितप्रज्ञश्च न साधकः; तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात् । निरतिशयस्तु स्थितप्रज्ञः । स च सिद्ध एव । नच ज्ञानकार्या भयकम्पादयः; ज्ञानमात्रादनुत्पादात् । सर्पावच्छेदो हि तस्य भयकम्पादिहेतुः । स चासन्ननिर्वचनीय इति कुतो वस्तुसतः कार्योत्पादः ? नच कार्यमपि भयकम्पादि वस्तुसत्; तस्यापि विचारासहत्वेनानिर्वाच्यत्वात् । अनिर्वाच्याच्चानिर्वाच्योत्पत्तौ नानुपपत्तिः । यादृशो हि यक्षस्तादृशो बलिरिति सर्वमवदातम् ॥ १५ ॥ इत्येकादशमनारब्धकार्याधिकरणम् ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥** यदि पुण्यस्याप्यश्लेषविनाशौ, हन्त नित्यमप्यग्निहोत्रादि न कर्तव्यं योगमारुरुक्षुणा; तस्यापीतरपुण्यवद्विद्यया विनाशात्, प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । नच "विविदिषन्ति यज्ञेन दानेने"ति मोक्षलक्षणैककार्यतया विद्याकर्मणोरविरोधः; सहासंभवेनैककार्यत्वासंभवात्, नह्येतमात्मानं विदुषो विगलिताखिलकर्तृभोक्तृत्वादिप्रपञ्चविभ्रमस्य पूर्वोत्तरे नित्ये क्रियाजन्ये पुण्ये संभवतः । तस्मा-

### वेदान्तकल्पतरुः ।

क्तिसाधक उक्तः । तत्र स्थितप्रज्ञः साधको न साक्षात्कारवानिति मण्डनमिश्रैरुक्तं दूषणमुद्धरति—**स्थितप्रज्ञश्चेति** । भाष्ये संस्कारवशादिति संस्कारशब्दः परिशिष्टाविद्यालेशवाची । संस्कारात्कर्मानुवृत्तिं दूषयता पूर्ववादिना यदुक्तं नावस्तु संस्कारद्वाराऽनुवर्तते भयकम्पादेरपि सत्यज्ञानजन्यत्वेन सत्यत्वादिति, तत्राह—**नच ज्ञानेति** । मिथ्यात्वेनाविशेषितज्ञानमात्रजन्या न भवन्तीत्यर्थः । यदि भवेयुस्तत्राह—**ज्ञानमात्रादिति** । उत्पादे वा रज्जुज्ञानादपि तदापत्तेरित्यर्थः । हेतुद्वारा भयादेः सत्यत्वं निषिध्य स्वरूपेणापि निषेधति—**नच कार्यमपीति** । आरम्भणाधिकरणे ( ब्र. अ. २ पा. १ सू. १४ ) कार्यमात्रस्य मिथ्यात्वसमर्थनादित्यर्थः । **ननु** रज्जुसर्पज्ञानस्य भयादेश्च मिथ्यात्वे कथं कार्यकारणभावस्तत्राह—**अनिर्वाच्याच्चेति** । कार्यकारणभावोऽपि न वास्तवः, स्वप्ने हस्तितद्धावनवदित्यर्थः । एवं च कम्पादेर्यथा संस्कारद्वाराऽनुवृत्तिरेवं कर्मणामपीति संस्कारपक्षोऽपि समर्थितः । **न विमोक्ष्ये** न विमोक्ष्यते । **संपत्स्ये** संपत्स्यते । तकारलोपश्छान्दसः ॥ १६ ॥ **इत्येकादशमनारब्धकार्याधिकरणम् ॥**[1]

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥** उत्पन्नविद्याजन्यकर्मक्षयस्य प्रारब्धफलकर्मस्वपवाद उक्तः, इदानीमप्रारब्धफलेष्वपि केषुचित्तस्यापवादोऽभिधीयत इति संगतिमभिप्रेत्य पूर्वपक्षमाह—**यदेत्यादिना** । **ननु** विद्यार्थमेवाग्निहोत्रादि योगमारुरुक्षुणाऽनुष्ठीयताम्, विद्योदयाच्च तन्निवर्तताम्, फलविनाश्यत्वात्कर्मणः; तत्र कथमनुष्ठेयत्वमिति—**तदुच्यते**; यदि विद्या पुण्यस्य कस्य चिन्निवर्तिका, तर्हि पुण्यान्तरादपि नोदेतुमर्हति, न हि तमोनिवर्तकः प्रदीपस्तमोन्तरादुदेति; विरोधस्य जात्युपाधिकत्वादिति तस्यापीतरपुण्यवद्विद्यया नाशादिति विनंष्टुं योग्यत्वादित्यर्थः । **ननु** विरुध्यन्तामन्यानि कर्माणि विद्यया, यज्ञादीनि तु न विरुद्धानि; यज्ञेनेत्यादिशास्त्रप्रामाण्यात्तेषां विद्यया सह मोक्षलक्षणैककार्यकरत्वावगमादिति, तत्राह—**नच विविदिषन्तीति । पूर्वोत्तरे इति ।** विद्याजन्मन इति शेषः । पूर्वस्य क्षयादुत्तरस्याश्लेषादित्यर्थः । प्रमाणस्यान्यथासिद्धिमाह—**तस्मादिति । यज्ञादिति ।** यज्ञादेर्मोक्षसाधनत्वगन्धोऽपि

### कल्पतरुपरिमलः ।

त्तेन न विधेयं नापि कथमेतदिति चोदनार्हमित्यर्थः । **तकारलोपश्छान्दस इति ।** "लोपस्त आत्मने पदे" ष्विति छान्दसे तलोपे सति "अतो गुणे" इति पररूपत्वम् ॥ १५ ॥ **इत्येकादशमनारब्धकार्याधिकरणम् ॥**

---

१ तत्र सूत्रम् १—अनारब्धकार्ये एव तु पूर्वे तदवधेः १५ ॥

**तत्तत्कार्यायैव भवति, ज्ञानस्य यत्कार्यं तदेवास्यापि कार्यमित्यर्थः । कुतः ? 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' ( बृ० ४।४।२२ ) इत्यादिदर्शनात् । ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात्कार्यैकत्वानुपपत्तिः, नैष दोषः; ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात् । तद्वत्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः । नन्वनारभ्यो मोक्षः कथमस्य कर्मकार्यत्वमुच्यते ? नैष दोषः, आरादुपकारकत्वात्कर्मणः । ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते । अत एव चातिक्रान्तविषयमेतत्कार्यै-**

भामती ।

द्विविदिषन्ति यज्ञेनेति वर्तमानापदेशो ब्रह्मज्ञानस्य यज्ञादीनां वा स्तुतिमात्रं, नतु मोक्षमाणस्य मुक्तिसाधनं यज्ञादिविधिरिति प्राप्त उच्यते—सत्यं न विद्यैककार्यत्वम्; कर्मणां परस्परविरोधेन सहासंभवात्, विद्योत्पादकतया तु कर्मणामारादुपकारकाणामस्तु मोक्षोपयोगः । नच कर्मणां विद्यया विरुध्यमानानां न विद्याकारणत्वम्; स्वकारणविरोधिनां कार्याणां बहुलमुपलब्धेः । तथाच विद्यालक्षणकार्योपायतया कार्यविनाश्यानामपि कर्मणामुपादानमर्थवत्; तदभावे तत्कार्यस्यानुत्पादेन मोक्षस्यासंभवात् । एवंच विविदिषन्ति यज्ञेनेति यज्ञसाधनत्वं विद्याया अपूर्वमर्थं प्रापयतः पञ्चमलकारस्य नात्यन्तपरोक्षवृत्तितया ज्ञानस्तुत्यर्थतया कथंचिद्व्याख्यानं भविष्यति । तदनेनाभिसंधिनोक्तं **—ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते** । यत एव न विद्योदयसमये कर्मास्ति,

वेदान्तकल्पतरुः ।

वाक्ये न श्रूयते, किं तु ब्रह्मज्ञानस्य यज्ञादिविशिष्टसाधनसाध्यत्वात्स्तुतिः, यज्ञादीनां च ज्ञानलक्षणविशिष्टसाध्यं प्रति साधनत्वनिर्देशमात्राच्च स्तुतिः, न तु साध्यसाधनत्वमस्ति; विरोधस्योक्तत्वादित्यर्थः । अर्थवादत्वस्फुटीकरणाय योग्यानुपलब्धिसूचनार्थं वर्तमानापदेशग्रहणम् । **न मुक्तिसाधनं यज्ञादिविधिरिति** । न विज्ञानसाधनविधिरिति हृदयम् । पूर्वपक्षनिदानमुच्छिनत्ति**—नच कर्मणामिति** । स्वकरणविरोधिनां वेणुज्वलनादीनां बहुलमुपलम्भादित्यर्थः । अनेन तद्दर्शनादिति सूत्रावयवो भाष्यनैरपेक्ष्येण व्याख्यातः । अत्र च विरोधिनोऽग्निहोत्रादेर्ज्ञानोपयोगे प्रकृते कार्यस्य कारणनिवर्तकत्वमर्थात्प्रकृते तच्छब्देन परामृष्टम्, इदानीं तत्कार्यायेत्यपरमवयवं व्याचष्टे**—विद्यालक्षणेति** । तदेव ज्ञानं कार्यमिति कर्मधारय इत्यर्थः । तस्या इत्येतावति वक्तव्ये कार्यग्रहणं विरुद्धमपि विरुद्धेन कर्तुं योग्यमिति न्यायसूचनार्थम् । प्रमाणदूषणमुद्धरति**—एवं चेति । अनेनाभिसन्धिनेति** । तस्य कार्यमित्यपि भाष्यीयव्याख्यायां पारम्पर्याश्रयणाच्चार्थभेद इत्यर्थः । एवं निर्गुणविद्यापरत्वेनाधिकरणं व्यावर्ण्य सगुणपरत्वेनापि वर्णयति**—यत एवेति** । अत्र च वर्णके तत्सुकृतदुष्कृते विधूनुत इत्यविशेषश्रवणादग्निहोत्रादिलय इति पूर्वः पक्षः । सगुणविद्याफलस्य कर्मसाध्यत्वयोग्यत्वात् 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी'त्यादिसमुच्चयलिङ्गात् सुकृतशब्दस्य च काम्यविषयत्वात् नित्यकर्मसगुणविद्यासमुच्चयः

कल्पतरुपरिमलः ।

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ सुकृतशब्दस्य च काम्यकर्मविषयत्वादिति ।**

**ननु—**"सुहृदः साधुकृत्या"मित्यत्र सुकृतशब्दस्योपास्यसाक्षात्कारात् प्राचीनं काम्यकर्म न विषयः; तस्य तत एव विनाशात्, ततः पाश्चात्यस्य क्रममुक्तिफलानपेक्षितस्य तद्विरोधिनश्च तस्य विदुषि बुद्धिपूर्वमनुष्ठानाप्रसक्तेः, वासनावशात्प्रवृत्तस्याबुद्धिपूर्वस्यासङ्कल्पितफलतया क्वचिदपि फलसाधनत्वाभावात्, कथंचित्फलसाधनकाम्यकर्मानुष्ठानसंभवेऽपि तस्याश्लेषवचनविषयताया अवक्तव्यत्वात्, नच—अश्लेषवचनं सुहृद्गामित्वाभिप्रायं स्यादिति—वाच्यम्; साक्षात्कारोदयानन्तरमनुष्ठितस्य काम्यकर्मणो देहवियोगकाले सुहृदि संक्रमिष्यतस्तावत्पर्यन्तं निराधारस्थित्ययोगात् । **एतेन—**द्विषन्तः पापकृत्यामित्यस्यापि विषयो**—निरस्तः**; साक्षात्कारनिवर्त्यादश्लेषवचनविषयाच्चान्यस्य द्विषद्गामिनः पापस्य वर्णयितुमशक्यत्वात् । **ननु—**ययोः पुण्यपापयोः साक्षात्कारोदये सत्यश्लेषविनाशाविष्येते, तयोरेव देहवियोगकाले द्विषद्गामित्वमुच्यत इत्यस्तु, पुण्यपापयोरश्लेषविनाशौ विद्वांसं प्रति फलजननार्हतानुत्पत्तिनिवृत्तिरूपौ, देहवियोगकाले सुहृद्द्विषद्गामित्वं तयोः फलजननार्हतोत्पत्तिरूपमिति वक्तुं शक्यत्वादिति**—चेद्, न;** "तस्य पुत्रा दायमुपयन्ती"ति दृष्टान्तानुसारेण यावद्देहधारणमुपासकं प्रति फलजननयोग्यतयाऽवस्थितयोः देहवियोगकाले सुहृद्द्विषतः प्रति योग्यताविर्भावप्रतीतेरिति**—चेत्,**

**उच्यते**; उपासकस्याभ्युदयफलानिच्छायामपि तामजानद्भिः पुत्रादिभिस्तदभ्युदयेच्छयानुष्ठितानि तडागप्रतिष्ठादीनि संभवन्ति । द्वादशवार्षिकसत्रवाक्यानामयनादिषु तत्तत्फलेच्छया प्रवृत्तस्य मध्ये वीतफलेच्छस्य क्रममुक्तिफलेच्छया ब्रह्मोपासनायां प्रवृत्तस्य तन्मध्य एव लब्धोपास्यसाक्षात्कारस्य प्रक्रमात्तु नियम्येतेति ( जै. अ. ६ पा. २ सू. १३ ) न्यायेनावश्यसमापनीयत्वेन प्राप्तानि द्वादशवार्षिकसत्रादीनि काम्यकर्माणि जन्मान्तरेष्वन्येषामवश्यभोक्तव्य-

कत्वाभिधानम् । नहि ब्रह्मविद आगाम्यग्निहोत्रादि संभवति; अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः संभवत्यागाम्यप्यग्निहोत्रादि । तस्यापि निरभिसंधिनः कार्यान्तराभावाद्विद्यासंगत्युपपत्तिः ॥ १६ ॥ किंविषयं पुनरिदमश्लेष-विनाशवचनम् ? किंविषयं वाऽदो विनियोगवचनमेकेषां शाखिनाम् 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति ? अत उत्तरं पठति—

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादेर्नित्यात्कर्मणोऽन्यापि ह्यस्ति साधुकृत्या या फलमभिसंधाय क्रियते तस्या एष विनियोग उक्त एकेषां शाखिनाम् 'सुहृदः साधुकृत्यामुपयन्ति' इति । तस्या एव चेदम-घवदश्लेषविनाशनिरूपणमितरस्याप्येवमश्लेष इति । तथाजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥ १७ ॥ इति द्वादश-मग्निहोत्राद्यधिकरणम् ॥

( १३ अधिकरणम् ) **यदेव विद्ययेति हि ॥ १८ ॥**

समधिगतमेतदनन्तराधिकरणे नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगम

### भामती ।

नापि परस्तादपि तु प्रागेव विद्यायाः, अतएवचातिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम् । एतदेव स्फोरयति—**नहि ब्रह्मविद इति** ॥ १६ ॥ सूत्रान्तरमवतारयितुं पृच्छति—**किंविषयं पुनरिदमिति** । अस्योत्तरं सूत्रम्—**अतो-ऽन्यापि ह्येकेषामुभयोः** । काम्यकर्मविषयमश्लेषविनाशवचनं शाखान्तरीयवचनं च तस्य पुत्रा दायमुपयन्तीति ॥ १७ ॥ **इति द्वादशमग्निहोत्राद्यधिकरणम्** ॥

**यदेव विद्ययेति हि ॥ १८ ॥** अस्ति विद्यासंयुक्तं यज्ञादि य एवं विद्वान्यजेतेत्यादिकम् । अस्ति च केवलम् ।

### वेदान्तकल्पतरुः ।

इति सिद्धान्तः । **तस्य** कर्मसाध्यत्वयोग्यफलस्य दर्शनादिति च सौत्रहेत्वर्थः ॥ १६ ॥ १७ ॥ **इति द्वादशमग्निहो-त्राद्यधिकरणम्** ॥

**यदेव विद्ययेति हि ॥ १८ ॥** पूर्वोक्ताग्निहोत्रादिष्वेवाङ्गावबद्धोपास्तिसाहित्यानियम इह चिन्त्यते । **ननु** तन्निर्धा-

### कल्पतरुपरिमलः ।

फलानि संभवन्ति । किं बहुना ? उपासनासहकारित्वेन नित्यत्वेन चोपासनाकालेऽप्यनुष्ठेयानां दर्शपूर्णमासादीनामङ्गान्य-ग्न्यन्वाधानप्रस्तरयागादीनि "ममाग्ने वर्चो विहवेष्वस्तु" "आयुराशास्ते सुप्रजास्त्वमाशास्ते" इत्यादिकरणमन्त्रप्राकाश्य-वर्चःप्रभृतिफलवन्ति भवन्ति । तानि फलानि सङ्कल्पाभावेऽपि "तद्यथाऽऽम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्त" इत्यापस्तम्बवचनादवश्यं भवन्त्येव । अवश्यानुष्ठेयकर्मविध्यन्यथानुपपत्त्याक्षेप्यप्रार्थ-नानि वा भवन्ति; अन्यथा विहवेष्वस्तु आयुराशास्त इत्यादिमन्त्रप्रकाश्ययजमानगामिफलतत्प्रार्थनानामनुष्ठेयार्थसंब-न्धित्वाभावेन तद्वारा एतेषां मन्त्रभागानामनुष्ठेयार्थप्रकाशकत्वाभावप्रसङ्गात्, तथास्य पापकर्माण्यपि परैराचरितान्युपा-सकसंक्रमणायोग्यानि संभवन्ति; "यदन्यकृतमारिमे"त्यादिश्रौतलिङ्गाद् उपासकस्यैवाबुद्धिपूर्वाण्यापतितानि संभवन्ति, एवंभूतपुण्यपापकर्मविषया तदश्लेषोक्तिः । यान्युपासनाकाले तदर्थदेहधारणापेक्षितवृष्ट्यारोग्यादिफलतयाऽवश्यकर्तव्यानि काम्यकर्माणि तेषु दत्तफलेभ्योऽवशिष्टान्यपि देहपातकालेऽनुवर्तमानानि संभवन्ति । पापकर्माण्यपि प्रारब्धकर्मफलतया-ऽवश्यप्राप्याण्युपासकेन देहपातासन्नसमये कृतत्वेनाकृतप्रायश्चित्तानि संभवन्ति । तद्विषयं सुहृद्द्विषद्गामित्ववचनं भवि-ष्यतीति न काचिदनुपपत्तिः । **यद्वा**—"तस्य पुत्रा दायमुपयन्ती"त्येतत्सुहृद्द्विषत्संक्रमणकालोपलक्षणमात्रम्, नतु दृष्टान्तपरम्; तत्परत्वेऽपि वा सर्वात्मना साम्यं न विवक्षितं, किं त्वन्यसंक्रमणमात्रेणेतीष्यते। **यद्वा**—ययोः पुण्यपापयोः साक्षात्कारे सत्यश्लेषविनाशौ तयोरेव देहवियोगकाले सुहृद्द्विषत्संक्रमणमित्यभ्युपगमेऽपि न दोषः ॥ १६ ॥ १७ ॥ **इति द्वादशमग्निहोत्राधिकरणम्** ॥

१ तत्र सूत्रम् २—अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् १६ अतोऽन्यापि ह्येकेषामुभयोः १७ ॥

**निमित्तत्वेन ब्रह्मविद्यया सहैककार्यं भवतीति । तत्राग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति । 'य एवं विद्वान्यजति' 'य एवं विद्वाञ्जुहोति' 'य एवं विद्वाञ्छंसति' 'य एवं विद्वान्गायति' 'तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं' ( छा० ४।१७।१० ) 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' ( छा० १।१।१० ) इत्यादिवचनेभ्यो विद्यासंयुक्तमस्ति केवलमप्यस्ति । तत्रेदं विचार्यते—किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते न केवलमुत विद्यासंयुक्तं केवलं चाविशेषेणेति । कुतः संशयः ? 'त मे**

## भामती ।

तत्र यथा "ब्राह्मणाय हिरण्यं दद्यादि"त्युक्ते विदुषे ब्राह्मणाय दद्यान्न ब्राह्मणब्रुवाय मूर्खायेति विशेषप्रतिलम्भः; तत्कस्य हेतोः ? तस्यातिशयवत्त्वात् । एवं विचारहिताद्यज्ञादेर्विद्यासहितमतिशयवदिति तस्यैव परविद्यासाधनत्वमुपात्तदुरितक्षयद्वारा नेतरस्य । तस्माद्विविदिषन्ति यज्ञेनेत्यविशेषश्रुतमपि विद्यासहिते यज्ञादावुपसंहर्तव्यमिति प्राप्ते

## वेदान्तकल्पतरुः ।

रणानियम इत्यनेनैतदुक्तं, स्वर्गादाविव विद्याफलसिद्ध्यप्रतिबन्धस्य पृथक्संभवादत आह—**यथा ब्राह्मणायेति** । विद्यायुक्तकर्मप्रशंसया विद्याविहीननिषेधः कल्प्यते, न च विधिविरोधः; केवलं कर्म कुर्यादित्यश्रवणात्कर्मस्वरूपविधेश्च पारशाखिकाङ्गनियमे इवोपास्तिनियमेऽप्युपपत्तेः । अतश्च विद्यानां पुनरङ्गत्वोन्मज्जने तन्निवृत्त्यर्थं आरम्भ इत्यर्थः ॥

**अन्ये त्वाहुः—विद्यार्थत्वं यदा यायुरनाश्रमिकृताः क्रियाः । तदोपास्तिविहीनेषु का कथाऽऽश्रमकर्मसु ॥ ततः प्रक्षिप्तमेतत् स्यात्स्नातकेन तु केनचित् । इति ॥ नैवं नेतव्यम्;** यतः—**नाश्रमोक्तक्रियास्वस्ति विधुरादेरधिक्रिया । तस्मात्तदीयजप्यादि विद्यासाधनमीरितम् ॥ विद्योपेतेषु शक्तस्य तस्यागादन्यकारिणः । न विद्या सेत्स्यतीत्येषा शङ्का केन निवार्यते ॥** एवं हि भट्टपादाः प्रतिपादयन्ति—"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । स नाप्नोति फलं तस्य परत्रेति विचारितम्" इति ॥ यदि विद्यायुक्तं कर्म वीर्यवदित्येतावदुच्येत, तत इतरस्याथा दवीर्यत्वेन निन्दा गम्येत, न चैवमस्ति; अत्र हि तरप्प्रयोगेण विद्यासंयुक्तस्य

## कल्पतरुपरिमलः ।

**यदेव विद्ययेति हि ॥ १८ ॥ विद्यायुक्तकर्मप्रशंसयेति ।** इदमुपलक्षणम्—"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यती"ति साक्षाद्विद्याविहीनकर्मनिन्दयाऽपि तन्निषेधकल्पना द्रष्टव्या । तथाच विद्याविहीनकर्मनिषेधेन विद्यायाः कर्माङ्गत्वसिद्धिरिति भावः । विद्ययेति तृतीयाश्रुत्या साक्षादपि तत्सिद्धिर्द्रष्टव्या ।

**अन्ये त्वाहुरिति ।** भास्करेणैतत्सूत्रमनर्थकमित्युपेक्षितं, तदीयास्तदभिप्रायमाहुरित्यर्थः । **विद्यार्थत्वं यदा यायुरि**त्येषा षट्पदी गाथा । **नाश्रमोक्तक्रियास्वस्तीति** यज्ञाद्यनधिकारिणो जप्यादिना शूद्रस्य शुश्रूषामात्रेणैव सिद्धिरस्तीत्येतावता तदधिकारिणोऽङ्गविकलं यज्ञादि न फलाय कल्पत इति भावः । **ननु** सर्वाङ्गानुष्ठानाशक्तस्याशक्याङ्गप्रहाणेनानुष्ठानमपि यथाशक्त्यधिकरणसिद्धम्; अतो विद्याविहीनमपि यज्ञादिकं कार्यकरं स्यादित्याशङ्क्याह—**विद्योपेतेष्विति ।** कर्मभागमात्रविदामौपनिषदविद्याविवेकरहितानां विद्याविहीनमपि यथाशक्ति नित्यकर्मानुष्ठानमस्तु नाम औपनिषदविद्याविवेकवतां दहराद्युपासकानाम् अद्वैतब्रह्मविविदिषोत्पत्त्यर्थं यज्ञाद्यनुतिष्ठतां च विद्यानुष्ठानशक्तिरस्तीति तेषां विद्याविहीनं कर्म न कार्यकरम् । अतएव विद्याविवेकराहित्याद् विद्याविहीनमेव स्तोष्यत्सूद्गातृषु समागतेनोषस्तिना मदुपदेशेन विद्यां लब्ध्वा विद्यासहितकर्मानुष्ठाने संभवति तद्रहितं कर्म नानुष्ठेयमिति तन्निन्दा कृता । नच—विद्याधिगमोपायाभावाद् विद्यारहितमेव स्तोष्याम इति संकल्प्याऽऽस्तावोपविष्टेषूद्गातृषु पुनर्विद्या नापेक्षणीयेति कथं तत्र विद्याविहीनकर्मनिन्देति—वाच्यम्; यथाशक्ति शास्त्रं संपादयाम इत्येव हि संकल्पः; नतु विद्याविहीनमेव स्तोष्याम इत्यपि । अतो यदि तदैव विद्याधिगमोपायो लभ्यते, तदा तद्विहीनं कर्म न कर्तव्यमिति तन्निन्दा युक्तैव । अतएव "मुख्याधिगमे मुख्यमागमो हि तदभावा"-( जै. अ. ६ पा. ३ सू. ३५ ) दित्यधिकरणे यदा यूपार्थं मुख्यं खदिरमलभ्यं मत्वा तत्प्रतिनिधिं कदरमुपादातुं प्रस्थितो मध्ये मुख्यं लभते चेद्, मुख्य एव ग्राह्यः; कदरं गृहीत्वा तक्षणादिषु केषुचित्संस्कारेषु कृतेषु प्राक् पशुनियोजनाद् मुख्यं लभते चेदपि मुख्य एव ग्राह्य इति व्यवस्थापितम् । तस्माद् विद्यासहितकर्मानुष्ठानशक्ता उपासका अपि तद्रहितं कर्म यद्यनुतिष्ठेयुः; तदा ते "प्रभुः प्रथमकल्पेऽपि योऽनुकल्पं निषेवते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥" इति मानवधर्मशास्त्रोक्तं दोषं नातिवर्तेरन्निति भावः । **तरप्प्रयोगेणेति** । न तावदल्पाच्चूतरमित्यादाविव स्वार्थिकोऽयं

तमात्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनामविशेषेणात्मवेदनाङ्गत्वेन श्रवणात्, विद्यासंयुक्तस्य चाग्निहोत्रादेर्विशिष्टत्वावगमात्। किं तावत्प्राप्तम्; विद्यासंयुक्तमेव कर्माग्निहोत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते न विद्याहीनम्; विद्योपेतस्य विशिष्टत्वावगमाद्विद्याविहीनात्, 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्' इत्यादिश्रुतिभ्यः। 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (गी० २।३९) 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय' (गी० २।४९) इत्यादिस्मृतिभ्यश्चेति। एवं प्राप्ते प्रतिपाद्यते—यदेव विद्ययेति हि सत्यमेतत् विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टं विद्वानिव ब्राह्मणो विद्याविहीनाद्ब्राह्मणात्, तथापि नात्यन्तमनपेक्षं विद्याविहीनं कर्माग्निहोत्रादिकम्। कस्मात्? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इत्यविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात्। ननु विद्यासंयुक्तस्याग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमाद्विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम्, नैतदेवम्; विद्यासहायस्याग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति न तथा विद्याविहीनस्येति युक्तं कल्पयितुम्, नतु 'यज्ञेन विविदिषन्ति' इत्यत्राविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुम्। तथाहि श्रुतिः—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा० १।१।१० ) इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति। कर्मणश्च वीर्यवत्त्वं तत्, यत्स्वप्रयोजनसाधनप्रसहत्वम्। तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत्तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम्॥ १८॥
इति त्रयोदशं विद्याज्ञानसाधनत्वाधिकरणम्॥

---

## भामती।

ऽभिधीयते—"यदेव विद्यया करोति तदेवास्य वीर्यवत्तरमि"ति तरबर्थश्रुतेर्विद्यारहितस्य वीर्यवत्तामात्रमवगम्यते। नच सर्वथाऽकिंचित्करस्य तदुपपद्यते। तस्मादस्यास्यापि कयापि मात्रया परविद्योत्पादोपयोग इति विद्यारहितमपि यज्ञादि परविद्यार्थिनाऽनुष्ठेयमिति सिद्धम्॥ १८॥ इति त्रयोदशं विद्याज्ञानसाधनत्वाधिकरणम्॥

## वेदान्तकल्पतरुः।

वीर्यवत्त्वातिशयबोधनादर्थात्केवलकर्मणोऽपि वीर्यवत्त्वमात्रं विधिबललब्धमभ्यनुज्ञायेताऽतो न निन्दावकाश इति सिद्धान्तयति—**यदेव विद्ययेत्यादिना**। पयसि सर्वं प्रतिष्ठितमिति विद्वान्यदहरेवाग्निहोत्रं जुहोति॥ १८॥ **इति त्रयोदशं विद्याज्ञानसाधनत्वाधिकरणम्॥**[1]

## कल्पतरुपरिमलः।

तरप्प्रत्ययः; अधिकार्थसंभवे स्वार्थिकत्वायोगात्। अतो वीर्यवत्तरमित्यस्य फलजननानुकूलसामर्थ्यातिशयवत्त्वमर्थः। स च सामर्थ्यातिशयो यथाशक्त्यधिकरणन्यायसिद्धानुवादः; समस्ताङ्गसाधारणन्यायसिद्धानुवादे प्रयोजनाभावात्। अतो विद्यारहिताद्विद्यासहितस्य विलक्षण एव कश्चिदतिशयः सिध्यन्नौचित्यात् प्रबलैः कर्मभिरप्रतिबद्धरूप एव पर्यवस्यति। एवंच पृथक् फलत्वान्न विद्या कर्माङ्गम्। विद्ययेति तृतीयाश्रुतिस्तु उपकारकत्वमात्रपरा। "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे"ति विद्यारहितकर्माभ्यनुज्ञानोपक्रमानुरोधात्। नचायं यथा शक्त्यधिकरणन्यायसिद्धार्थानुवादः; अङ्गत्वाभावरूपाऽपूर्वार्थबोधकत्वसंभवात्, "मूर्धा ते विपतिष्यती"ति वचनं तु धनाशया समागतस्योषस्तेः स्वागमनमनादृत्य स्तोतुमारभन्त इति क्रोधप्रयुक्तं शापवचनं, नतु विद्याराहित्येनाङ्गवैकल्यप्रयुक्तम्। अतएव शापवचनमाकर्ण्य स्तोत्रारम्भादुपरतेषूद्गातृषु राज्ञाऽनुनीतेन यावत्तेभ्यो धनं दद्याः तावन्मम दद्या इति राजानं पृष्ट्वा तथेति राजानुमतिं लब्धवतोषस्तिनोद्गातृभ्यः प्रस्तावादिदेवतोपदेशानन्तरं "तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मये"त्यादिवाक्यत्रयेऽपि स्वशापवचनं क्रोधप्रयुक्तम्, नत्वङ्गवैकल्यप्रयुक्तमिति स्फुटीकृतम्। अधिकरणप्रयोजनं विविदिषूपासककर्तृकेष्वग्निहोत्रादिषु विद्या-

---

[1] तत्र सूत्रम् १—यदेव विद्ययेति हि १८॥

( १४ अधिकरणम् ) **भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥**

**अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षय उक्तः, इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' ( छान्दो० ६।१४।२ ) इति 'ब्रह्मैव सन्ब्रह्माप्येति' इति चैवमादिश्रुतिभ्यः । ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्तेत, न; निमित्ताभावात् । उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम्, नच तादृशमत्र किंचिदस्ति । नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते, न; तस्य दग्धबीजत्वात् । मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपात उपभोगान्तरमारभते, तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धमित्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यं भवतीति ॥ १९ ॥ इति चतुर्दशमितरक्षेपणाधिकरणम् ॥**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥ १॥**

---

### भामती ।

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥** अनारब्धकार्य इत्यस्य नञः फलं भोगेन निवृत्तिं दर्शयत्यनेन सूत्रेण । अस्य तूपपादनं पुरस्तादपकृष्य कृतमिति नेह क्रियते पुनरुक्तिभयात् ॥ १९ ॥ **इति चतुर्दशमितरक्षपणाधिकरणम् ॥**

**इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ॥**

### वेदान्तकल्पतरुः ।

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥** व्यवहितेन संबन्धमाह—**अनारब्धेति** । न तत्राप्यारब्धफलं कर्म लयाद् व्यावर्तितं, तस्य च प्रयोजनं भोगेन क्षय इति तदिदानीं दर्शयतीत्यर्थः । **ननु** विद्ययैवारब्धकर्मणोऽपि लयः किं न स्यादत आह—**अस्य त्विति । पुरस्तादिति** । अनारब्धकार्ये इत्यत्रैवेत्यर्थः । अगतार्थत्वममृतानन्दपादैरुक्तम् । प्रारब्धकर्मफलभोगानन्तरं मोक्षेऽपि तत्कर्मजन्यानेकदेहसंभवात्तत्र च विद्याप्रमोषसंभवात्तत्कृतकर्मणामश्लेषाभावेन मुक्त्य-

### कल्पतरुपरिमलः ।

नियमाभाव इति भाष्ये व्यक्तम् । शास्त्रदर्पणे त्वङ्गत्वे नित्यकर्मवद्विद्यार्थत्वमनङ्गत्वे काम्यकर्मवद्विद्याया निवृत्तिरिति प्रयोजनान्तरमुक्तम्, **तच्चिन्त्यम्**; अनङ्गत्वेऽप्यप्रतिबन्धफलकत्वेन विद्याया अपेक्षिततया नित्यकर्मतौल्यात् । नहि काम्यमपि देहधारणार्थवृष्ट्यारोग्यादिफलकं कर्म विद्यानिवर्त्यम् ॥ १८ ॥ **इति त्रयोदशं विद्याज्ञानसाधनत्वाधिकरणम् ॥**

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥ प्रारब्धकर्मफलभोगानन्तरमिति ।** येषां विद्यायोनिशरीरावसानं प्रारब्धं, तेषां विद्याफलमस्तु नाम, येषां त्वनेकशरीरानुयायि, तेषां तत्फलं न संभवति; जन्मान्तरस्य पूर्वसंस्कारप्रमोषकतया शरीरान्तरे विद्याविहीनैः क्रियमाणानां कर्मणां बन्धहेतुत्वेन ततो जन्मपरम्पराया एव प्राप्तेः । नच—तेषां जन्मान्तरं न संस्कारप्रमोषकमिति—कल्प्यम्; दृष्टनियमसङ्कोचकाभावात् । नच "यावन्न विमोक्ष्य" इति प्रारब्धकर्मविमोक्षावधिश्रवणं सङ्कोचकम्; "धूत्वा शरीर"मिति श्रुत्यन्तरानुसारेण तस्य शरीरविशेषावधिपरतया येषां विद्यायोनिशरीरावसानं प्रारब्धं तद्विषयत्वोपपत्तेः । नच "धूत्वा शरीर"मित्यत्र शरीरग्रहणं प्रारब्धकार्ययावच्छरीरपरम्; एकवचनश्रवणात्, "अस्माच्छरीरात्समुत्थाये"ति श्रुत्यन्तरे अस्मादिति विशेषणेन विद्यायोनिशरीरस्यैव विवक्षितत्वाच्च । एवंच प्रारब्धस्यानेकशरीरानुयायित्वशङ्कया विद्यानुष्ठाने प्रवृत्तिश्च न संभवेदिति पूर्वपक्षाभिप्रायः । देहान्तरे संस्कारप्रमोष आधिकारिकाणामपि कल्प्यते, अस्मदादीनां वा । आधिकारिकाणां तत्कल्पना न संभवति; आगमविरोधादित्युक्तत्वात् । द्वितीयपक्षं निरस्यति—**अस्मदादीनामिति** । मुक्त्यर्थविद्यानुष्ठानप्रतिपादकबहुशास्त्रप्रामाण्यात् "तस्य तावदेवे"ति विवक्षितावध्यवसाने मुक्त्यवश्यम्भावप्रतिपादकावधारणाप्रामाण्याच्च "यावन्न विमोक्ष्य" इत्यस्य प्रारब्धकर्मावधिपरत्वं "धूत्वा शरीरमि"त्यत्र शरीरपदस्य प्रारब्धकार्ययावच्छरीरपरत्वमस्मादिति विशेषणस्यानुभवसिद्धहेयताप्रदर्शना-

वेदान्तकल्पतरुः ।

भावः शङ्क्यते, तत्रोत्तरमाधिकारिकाणां देहान्तरे ज्ञानाप्रमोष आगमसिद्धोऽस्मदादीनामथ संपत्स्य इति श्रुतिबलेन प्रारब्धभोगानन्तरं मुक्तिरिति ॥ १९ ॥ इति चतुर्दशमितरक्षपणाधिकरणम् ॥[1]

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ चतुर्थाध्यायस्य प्रथमः पादः ॥

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १४ | १४८ |
| सूत्राणि | १९ | ४८६ |

कल्पतरुपरिमलः ।

र्थत्वं विदुषां जन्मान्तरस्य संस्कारे प्रमोषानापादकत्वं च कल्प्यम् । अतः प्रारब्धभोगानन्तरं मुक्तिर्नियतेति सिद्धान्त्यभिप्रायः ॥ १९ ॥ इति चतुर्दशमितरक्षपणाधिकरणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरुपरिमले चतुर्थस्याध्यायस्य प्रथमः पादः ॥

॥ इति चतुर्थस्याध्यायस्य जीवन्मुक्तिनिरूपणाख्यः प्रथमः पादः ॥



१ तत्र सूत्रम् १—भोगेन त्वितरे क्षपयित्वा संपद्यते १९ ॥

## चतुर्थाध्याये द्वितीयः पादः ।

(१ अधिकरणम्) **वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥**

अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन्प्रथमं तावद्यथाशास्त्रमुत्क्रान्तिक्रममन्वाचष्टे । समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति । अस्ति प्रायणविषया श्रुतिः 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा० ६।८।६) इति । किमिह वाच एव वृत्तिमत्या मनसि संपत्तिरुच्यते, उत वाग्वृत्तेरिति विशयः । तत्र वागेव तावन्मनसि संपद्यत इति प्राप्तम् । तथाहि श्रुतिरनुगृहीता भवति, इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्माद्वाच एवायं मनसि प्रलय इति । एवं प्राप्ते ब्रूमः—वाग्वृत्तिर्मनसि संपद्यत इति । कथं वाग्वृत्तिरिति व्याख्यायते ? यावता वाङ्मनसीत्येवाचार्यः पठति । सत्यमेतत्; पठिष्यति तु परस्तात् 'अविभागो वचनात्' (ब्र० सू० ४।२।१६) इति । तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते । तत्त्वप्रलयविवक्षायां तु सर्वत्रैवाविभागसाम्यात्किं परत्रैव विशिंष्यादविभाग इति । तस्मादत्र वृत्त्युपसंहारविवक्षा । वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्ताववस्थितायामित्यर्थः । कस्मात् ?

### भामती ।

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥** अथास्मिन् फलविचारलक्षणे वाङ्मनसि संपद्यत इत्यादिविचारोऽसंगत इत्यत आह—**अथापरासु विद्यासु फलप्राप्तय इति** । अपरविद्याफलप्राप्त्यर्थदेवयानमार्गार्थत्वादुत्क्रान्तेस्तद्गतो विचारः पारम्पर्येण भवति फलविचार इति नासंगत इत्यर्थः । नन्वयमुत्क्रान्तिक्रमो विदुषो नोपपद्यते, 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति श्रवणात्, तत्कथमस्य विद्याधिकार इत्यत आह—**समाना हि विद्वदविदुषोरिति** । विषयमाह—**अस्तीति** । विमृशति—**किमिहेति** । विशयः संशयः । पूर्वपक्षमाह—**तत्र वागेवेति** । श्रुतिलक्षणाविशये संशये । सिद्धान्तसूत्रं पूरयित्वा पठति—**वाग्वृत्तिर्मनसि संपद्यते इति** । वृत्त्यध्याहारप्रयोजनं प्रश्नपूर्वकमाह—**कथमिति** । उत्तराधिकरणपर्यालोचनेनैवं पूरितमित्यर्थः । तत्त्वस्य धर्मिणो वाचः प्रलयविवक्षायां त्विह सर्वत्रैव परत्रेह चाविभागसाम्यात्किं परत्रैव विशिंष्यादविभाग इति न त्वत्रापि । तस्मादिहाविभागेनाविशिंषतोऽत्र वृत्त्युपसंहारमात्रविवक्षा सूत्रकारस्येति गम्यते । सिद्धान्तहेतुं प्रश्नपूर्वकमाह—**कस्मादिति** । सत्यामेव मनो-

### वेदान्तकल्पतरुः ।

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥** सगुणविद्याफलस्य ब्राह्मलौकिकस्यार्चिरादिगतिप्राप्यस्यानुक्रम्य प्राप्त्यसंभवात् तदर्थमुत्क्रान्तिनिरूपणं व्यापिब्रह्मात्मभावे निर्गुणविद्याफले निषेधार्थं चेत्यभिप्रेत्य पादस्याध्यायसंगतिमाह—**अपरविद्याफलेति** । **विद्याधिकारो** विद्यया संबन्धः । भाष्यगततत्त्वशब्दार्थमाह—**धर्मिण इति** । धर्मिणो हि स्वरूपमेव तत्त्वं धर्माणामारोपितत्वादिति । सर्वत्रेति पदं व्याचष्टे—**परत्रेह चेति** । **नन्वत्रापीति** । किं विशिंष्यादित्यनुषङ्गः; यथा सिद्धोत्क्रान्तिक्रमानुवादि तावदिदं वाक्यम्, तत्र पूर्वं व्यवहरमाण आसीन्नेदानीमिति व्यापारलोपः सिद्धः, नतु वाग्लोपोऽतो वाक्छब्दो वृत्तिलक्षक इति सिद्धान्ताभिप्रायमाह—**सत्यामेवेति** । मनोवृत्तिसत्त्वकथनं वाग्वृत्तिलये हेतुत्वोपप-

### कल्पतरुपरिमलः ।

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥** "सता सौम्य तदा संपन्नो भवती"त्युक्तायाः संपत्तेः "स्वमपीतो भवती"ति लयार्थेनापीतिना विवरणाद् वाङ्मनसीत्यत्रापि संपत्तिर्लयः, स च यथाश्रुति वाच एव प्रकृतौ लय इति लौकिकन्यायस्य वचनेन बाधोपपत्तेः । अन्यथा वाक्प्रकृतिकाया वृत्तेरपि मनसि लयोपपादनाऽसंभवादिति पूर्वपक्षे प्राप्ते टीकाशयस्थं सिद्धान्तमाविष्करोति—**यथासिद्धेति** । प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति वागादीनामुत्क्रमणश्रुतेर्मनसि स्वरूपलयो न संभवतीति तत्प्रतिपादकत्वासंभवाद् लोकसिद्धार्थानुवादकमिदं वाक्यमिति वक्तव्यम् । लोके च मनसि व्यापारे स्थिते वाग्व्यापारोपरमो दृष्ट इति तस्यैवायमनुवाद इत्यर्थः । **वृत्तिसत्त्वकथनमिति** । यद्यपि तत्कथं न लोकसिद्धार्थानुवादोपयोगि ? वाग्वृत्तिलयहेतुत्वोपयोगकल्पने लोकसिद्धार्थानुवादोऽपि न सिद्ध्येद्, मनसो वाग्वृत्तिलयहेतु-

दर्शनात् । दृश्यते हि वाग्वृत्तेः पूर्वोपसंहारो मनोवृत्तौ विद्यमानायाम्, नतु वाच एव वृत्तिमत्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते । ननु श्रुतिसामर्थ्याद्वाच एवायं मनस्यप्ययो युक्त इत्युक्तम्, नेत्याह; अतत्प्रकृतित्वात् । यस्य हि यत उत्पत्तिस्तस्य तत्र प्रलयो न्याय्यो मृदीव शरावस्य । नच मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति । वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते । पार्थिवेभ्यो हीन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवत्यप्सु चोपशाम्यति । कथं तर्ह्यस्मिन्पक्षे शब्दो वाङ्मनसि संपद्यत इति ? अत आह—शब्दाच्चेति । शब्दोऽप्यस्मिन्पक्षेऽवकल्पते; वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः ॥ १ ॥

## अतएव च सर्वाण्यनु ॥ २ ॥

'तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' ( प्रश्न ३।९ ) इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि संपत्तिः श्रूयते । तत्राप्यतएव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात्तत्त्वप्रलयासंभवाच्छब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते । सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं वाङ्मनसि संपद्यत इत्युदाहरणानुरोधेन ॥ २ ॥ इति प्रथमं वागधिकरणम् ॥

( २ अधिकरणम् ) **तन्मनः प्राण उत्तरात् ॥ ३ ॥**

समधिगतमेतत् 'वाङ्मनसि संपद्यते' ( छा० ६।८।६ ) इत्यत्र वृत्तिसंपत्तिविवक्षेति । अथ

### भामती ।

वृत्तौ वाग्वृत्तेरुपसंहारदर्शनात् वाचस्तूपसंहारमदृष्टं नागमोऽपि गमयितुमर्हति; आगमप्रभवयुक्तिविरोधाच्च । आगमो हि दृष्टानुसारतः प्रकृतौ विकाराणां लयमाह । नच वाचः प्रकृतिर्मनो येनास्मिन्नियं लीयेत । तस्माद्वृत्तिवृत्तिमतोरभेदविवक्षया वाक्पदं तद्वृत्तौ व्याख्येयम् । संभवति च वाग्वृत्तेर्वागप्रकृतावपि मनसि लयः । तथा तत्र तत्र दर्शनादित्याह—**वृत्त्युद्भवाभिभवाविति** ॥१॥ यत एव प्रकृतिविकारभावाभावान्मनसि न स्वरूपलयो वाचोऽपि तु वृत्तिलयः, अतएव च सर्वेषां चक्षुरादीनामिन्द्रियाणां सत्येव सवृत्तिके मनसि वृत्तेरनुगतिर्लयो न स्वरूपलयः, वाचस्तु पृथक् ग्रहणं पूर्वसूत्रे उदाहरणापेक्षं, नतु तदेवेह विवक्षितमित्यर्थः ॥ २ ॥ इति **प्रथमं वागधिकरणम्** ॥

**तन्मनः प्राण उत्तरात् ॥ ३ ॥** यदि स्वप्रकृतौ विकारस्य लयस्ततो मनः प्राणे संपद्यते इत्यत्र मनःस्वरूपस्यैव प्राणे संपत्त्या भवितव्यम् । तथाहि मन इति नोपचारतो व्याख्यानं भविष्यति । संभवति हि प्रकृतिविकारभावः

### वेदान्तकल्पतरुः ।

स्यर्थम् । अन्यथा हि तत्प्रलीनवृत्तिकं न हेतुः स्यादिति । **ननु** "षोडश कलाः पुरुषं प्राप्यास्तं गच्छन्ती"त्यत्र वागादिस्वरूपलयोऽप्युक्तः; एवमत्र किं न स्यादत आह—**आगमो हीति** ॥ १ ॥ वाङ्मनसीत्युदाहृतवाक्ये वाच एव श्रवणान्नेन्द्रियान्तराणां मनसि वृत्तिलय इति भ्रममपनेतुमवान्तरसूत्रम्—**अतएवेति** । तद्याचष्टे—**यत एवेति** । वृत्तेरनुगतिर्लयः । एषा च सौत्रानुशब्दवाच्या । **उपशान्ततेजा** उपशान्तौष्ण्यः । पुनर्भवं पुनर्जन्मोद्दिश्य मनसि संपद्यमानैरिन्द्रियैः प्राणमायातीति शेषः ॥ २ ॥ **इति प्रथमं वागधिकरणम्** ॥[1]

**तन्मनः प्राण उत्तरात् ॥ ३ ॥** अतिदेशोऽयमस्याधिकाशङ्कामाह—**स्वप्रकृतावित्यादिना** । प्राणमनसोरबन्नात्मत्वे हेतुमाह—**प्रकृतिविकारयोरिति** । **ननु** भवत्वन्नात्मकं मनोऽबात्मकश्च प्राणः, कथमेतावता प्राणे मनसो

### कल्पतरुपरिमलः ।

ताया लोकतः सिद्ध्यभावात्, तथाप्युपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वान्मनसीति सप्तम्या प्रतीयमानं वाग्वृत्तिलयं प्रत्यधिकरणकारकत्वं हातुं न युक्तम् । लोकसिद्धार्थानुवादेनाधिकरणविशेषविधानसंभवाद्, अग्निज्वाला जले शाम्यतीत्यत्राप्रकृतावपि लयव्यवहारदर्शनाच्चेति तात्पर्यम् ॥ १ ॥ **एषा च सौत्रानुशब्दव्याख्येति** । यद्यपि सौत्रस्यानुशब्दस्य भाष्ये सर्वाणीन्द्रियाणि मनोऽनुवर्तंते इत्यर्थ उक्तः; तथापि सर्वाणीन्द्रियाण्यनुगच्छन्तीत्येवमप्यर्थः संभवतीति तात्पर्यम् । **प्राणमायातीति शेष इति** । यच्चित्तस्तेनैव प्राणमायातीत्यतः प्राचीनस्य संपद्यमानैरित्यस्य तेनान्वयो दर्शितः, न लघ्याद्वार उक्तः ॥ २ ॥ **इति प्रथमं वागधिकरणम्** ॥

१ तत्र सूत्रे २—वाङ्मनसि दर्शनाच्छब्दाच्च १ अतएव च सर्वाण्यनु २ ॥

यदुत्तरवाक्यम् 'मनः प्राणे' ( छा० ६।८।६ ) इति किमत्रापि वृत्तिसंपत्तिरेव विवक्ष्यत उत वृत्तिमत्संपत्तिरिति विचिकित्सायां वृत्तिमत्संपत्तिरेवात्रेति प्राप्तम्; श्रुत्यनुग्रहात्तत्प्रकृतिकत्वोपपत्तेश्च । तथाहि—'अन्नमयं हि सोम्य मन आपोमयः प्राणः' ( छा० ६।५।४ ) इत्यन्नयोनि मन आमनन्त्यब्योनिं च प्राणम् । 'आपश्चान्नमसृजन्त' इति श्रुतिः । अतश्च यन्मनः प्राणे प्रलीयतेऽन्नमेव तदप्सु प्रलीयतेऽन्नं हि मन आपश्च प्राणः प्रकृतिविकाराभेदादिति । एवं प्राप्ते ब्रूमः—तदप्यागृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इत्युत्तराद्वाक्यादवगन्तव्यम् । तथा हि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते । न च मनसः स्वरूपाप्ययः प्राणे संभवति; अतत्प्रकृतित्वात् । ननु दर्शितं मनसः प्राणप्रकृतित्वम्, नैतत्सारम्; नहीदृशेन प्राणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति । एवमपि ह्यन्ने मनः संपद्येताप्सु चान्नमप्स्वेव च प्राणः । नह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति । तस्मान्न मनसः प्राणे स्वरूपाप्ययः, वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम् ॥ ३ ॥ इति द्वितीयं मनोऽधिकरणम् ॥

( ३ अधिकरणम् ) **सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥**

स्थितमेतद्यस्य यतो नोत्पत्तिस्तस्य तस्मिन्वृत्तिप्रलयो न स्वरूपप्रलय इति । इदमिदानीं प्राणस्तेजसीत्यत्र चिन्त्यते—किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः, किंवा देहेन्द्रियपञ्जरा-

## भामती ।

प्राणमनसोः । अन्नमयं हि सोम्य मन इत्यन्नात्मतामाह मनसः श्रुतिरापोमयः प्राण इति च प्राणस्याबात्मताम्; प्रकृतिविकारयोस्तादात्म्यात् । तथाच प्राणो मनसः प्रकृतिरिति मनसो वृत्तिमतः प्राणे लय इति प्राप्तेऽभिधीयते—सत्यम्, आपोऽन्नमसृजन्त इति श्रुतेरबन्नयोः प्रकृतिविकारभावोऽवगम्यते, न तु तद्विकारयोः प्राणमनसोः । स्वयोनिप्रणाडिकया तु मिथो विकारयोः प्रकृतिविकारभावाभ्युपगमे संकरादतिप्रसङ्गः स्यात् । तस्माद्यो यस्य साक्षाद्विकारस्तस्य तत्र लय इत्यन्नस्याप्सु लयो नत्वब्विकारे प्राणेऽन्नविकारस्य मनसः । तथाचात्रापि मनोवृत्तेर्वृत्तिमति प्राणे लयो न तु वृत्तिमतो मनस इति सिद्धम् ॥ ३ ॥ इति द्वितीयं मनोऽधिकरणम् ॥

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥** प्राणस्तेजसीति तेजःशब्दस्य भूतविशेषवचनत्वाद्विज्ञानात्मनि चाप्र-

## वेदान्तकल्पतरुः ।

लयस्तत्राह—**तथाचेति** । अपामन्नप्रकृतित्वादन्नात्मकं मनः प्रत्यबात्मकः प्राणः प्रकृतिरिति तस्मिन्मनसः स्वरूपेण लय इत्यर्थः । प्राणमनसोः किं साक्षात्प्रकृतिविकारभावः, उत स्वप्रकृतिभूताऽबन्नद्वारेण । **आद्यं** निरस्य **द्वितीये**ऽतिप्रसङ्गमाह—**स्वयोनीति** । एवं हि घटस्यापि शरावे लयापत्तिरित्यर्थः । **तद्विकारे** तासामपां विकारे प्राणेऽन्नविकारस्य मनसो लय इति योजना ॥ ३ ॥ इति द्वितीयं मनोऽधिकरणम् ॥[1]

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥** मनः प्राण इति वाक्यं विचार्य तदनन्तरस्य प्राणस्तेजसीत्यस्य विचारात्संगतिः । तेजःशब्दस्य भूतविशेषवचनत्वादित्यादिहेतूनां तस्मात्तेजस्येव प्राणवृत्तिलय इति प्रतिज्ञया संगतिः ।

## कल्पतरुपरिमलः ।

**तन्मनः प्राण उत्तरात् ॥ ३ ॥ एवं घटस्यापि शरावे लयापत्तिरिति** । यदि शरावात्मकविकृत्यन्तरावष्टब्धा आपो घटरूपपृथिव्या न प्रकृतिरित्यतिप्रसङ्गः परिह्रियेत, तदा प्राणरूपविकृत्यन्तरावष्टब्धा अप्यापो मनसो न प्रकृतिरिति तुल्यमिति भावः ॥ ३ ॥ **इति द्वितीयं मनोऽधिकरणम् ॥**

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ प्राणजीवे वृत्तिलय उपचर्यत इति । ननु**—"प्राणस्तेजसी"ति श्रुत्यनुसारेणोपगमनादिश्रुतिषु किमित्युपचारः कल्प्यते ? उपगमनादिश्रुत्यनुसारेण प्राणस्तेजसीत्यत्रोपचारः कल्प्यताम्; प्राणवृत्तिलयाधारस्य जीवस्य तेजसि वृत्तिलयात्, प्राणस्य तेजसि वृत्तिलय उपचर्यतइति प्राणवृत्तिलयाधारत्वं तेजसः सप्तम्येव जीवस्य केनचित्स्फुटं न प्रतीयते, तदुपजननादिमात्रं तु तेजोद्वाराऽप्युपपन्नमिति चेत्, एवं सप्तम्यां निहितश्रद्धस्तेजोऽनन्तरं जीवनिवेशेऽप्यवकाशं न लभते । तेजः परस्यां देवतायामित्यत्रापि सप्तम्या तेजसः परमात्मनि लयप्र-

1 तत्र सूत्रम् १—तन्मनः प्राण उत्तरात् ३ ॥

ध्यक्षे जीव इति। तत्र श्रुतेरनतिशङ्क्यत्वात्प्राणस्य तेजस्येव संपत्तिः स्यादश्रुतकल्पनाया अन्याय्यत्वादिति। एवं प्राप्ते प्रतिपद्यते सोऽध्यक्ष इति। स प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते। तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः। कुतः? तदुपगमादिभ्यः। 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' इति हि श्रुत्यन्तरमध्यक्षोपगामिनः सर्वान्प्राणानविशेषेण दर्शयति। विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ० ४।४।२) इति पञ्चवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति, तदनुवृ-

## भामती।

सिद्धेः प्राणस्य जीवात्मन्युपगमानुगमावस्थानश्रुतीनां च तेजोद्वारेणाप्युपपत्तेः। तेजसि समापन्नवृत्तिः खलु प्राणः, तेजस्तु जीवात्मनि समापन्नवृत्ति। तद्द्वारा जीवात्मसमापन्नवृत्तिः प्राण इत्युपपद्यते। तस्मात्तेजस्येव प्राणवृत्तिप्रविलय इति प्राप्तेऽभिधीयते—स प्रकृतः प्राणोऽध्यक्षे विज्ञानात्मन्यवतिष्ठते तत्तन्त्रवृत्तिर्भवति। कुतः? उपगमानुगमावस्थानेभ्यो हेतुभ्यः। तत्रोपगमश्रुतिमाह—**एवमेवेममात्मानमिति**। अनुगमनश्रुतिमाह—**तमुत्क्रामन्तमिति**।

## वेदान्तकल्पतरुः।

उपगमनादिश्रुतीः स्वयमेव वक्ष्यति। तेजोद्वारेणेत्येतदुपपादयति—**तेजसि समापन्नेति**। प्राणवृत्तिलयात् प्राणस्य जीवे वृत्तिलय उपचर्यत इत्यर्थः। **समापन्नेति। आपत्तिर्लयः**। यथा राजानं यात्रायाम् उद्यन्तं परिवारभूताः प्राणिनः समुपयन्ति, एवमात्मानमन्तकाले सर्वे प्राणा अभिसमागच्छन्ति। कोऽसावन्तकालः? स उच्यते। यत्र काल एतद्भवति, तदेव दर्श्यते—**ऊर्ध्वोच्छ्वासीति**। ऊर्ध्वोच्छ्वासित्वमित्युपगमनश्रुतेरर्थः। संमुखमागमनमुपगम-

## कल्पतरुपरिमलः।

तीतेः। एवं यथोपचारकल्पनासंभवः सप्तम्यवरोधश्च पक्षद्वयेऽपि तुल्यः, तथा लौकिकदृष्टान्तसद्भावोऽपि तुल्यः। यथा पान्थः प्रथमं नाविकेन संगत्य ततस्तेन सह तदीयां नावं गत्वा पारं प्राप्नोति, तथा प्राणः प्रथमं जीवेन संगत्य ततस्तेन सह तेजःशब्दोक्तं त्रिवृत्कृतभूतान्तरसंसृष्टं तदीयं सूक्ष्मशरीरं गत्वा तेन सह परां देवतां प्राप्नोतीति जीवस्य प्राणतेजोमध्ये निवेशे दृष्टान्तः। यथा सारथिः प्रथमं राजकीयं रथं स्वयमारूढो राजसमीपं गत्वा पश्चाद्रथारूढेन तेन सहितस्तदभिमतदेशं प्राप्नोति, एवं जैवं सूक्ष्मशरीरं प्राणः प्रथमं प्राप्य ततस्तत्प्राप्तेन जीवेन सहितः परदेवतां प्राप्नोतीति जीवस्य तेजोनन्तरनिवेशे दृष्टान्तः। तस्मात्पूर्वपक्षकोटौ नास्ति किंचिद्विनिगमकमिति—**चेत्, उच्यते**; विनिगमकान्तराणां कोटिद्वयतौल्येऽपि लोकसिद्धानुवादप्रायपाठः पूर्वपक्षे विनिगमकः। **तथाहि**—यथा वागादिबाह्येन्द्रियव्यापारोपरमानन्तरमपि मनोव्यापारदर्शनाद् वाङ्मनसि संपद्यते इन्द्रियैर्मनसि संपद्यमानैरिति श्रुतिः, यथाच बाह्याभ्यन्तरज्ञानोपरमानन्तरमपि श्वासव्यापारदर्शनाद् मनः प्राण इति श्रुतिः, तथा श्वासरूपप्राणव्यापारोपरमानन्तरमपि देहे क्वचिदौष्ण्यदर्शनात् "प्राणस्तेजसी"ति श्रुतिरपि लोकसिद्धानुवादिनीति न प्राणतेजसोर्मध्ये जीवस्य निवेशः। "तेजः परस्यां देवताया"मित्यस्य लोकसिद्धानुवादकत्वासंभवादुपगमनादिश्रुत्यनुसारेणावश्यं क्वचिन्निवेशनीयस्य जीवस्य तेजःपरदेवतयोर्मध्ये निवेशः। **ननु**—"प्राणस्तेजसी"ति त्रिवृत्कृततेजोरूपदेहारम्भकभूतसूक्ष्मप्राप्त्युक्त्या तदुपहितजीवसंबन्धोऽप्यवर्जनीयतया सिद्ध्येद्, उपध्युपहितयोरेकतरसंबन्धस्य तदितरसंबन्धनियतत्वात्, अतो वाङ्मनसीत्यादिक्रमे पृथग्जीवः क्वचिदपि न निवेशनीय इति—**चेत्**, नायं नियमोऽस्ति, देहारम्भकभूतसूक्ष्माणि जीवस्येव प्राणानामपि स्थितिगत्योरुपाधिभूतानीति प्राणगतेश्चेति (ब्र. अ. ३ पा. १ सू. ३) सूत्रे प्रतिपादितम्। नच वाङ्मनःप्राणानां पूर्वपूर्वस्योत्तरोत्तरप्राप्त्या तदुपाधिभूतसूक्ष्मप्राप्तिर्नान्तरीयकतया सिद्धा; तथात्वे "प्राणस्तेजसी"ति पृथक् तत्प्राप्तेरवक्तव्यत्वापत्तेः, तत्र यथोपहितप्राप्त्यनन्तरम् उपाधिप्राप्तिः पृथगुच्यते, एवमिहोपाधिप्राप्त्यनन्तरमुपहितप्राप्तिः पृथग्वक्तुमुचितेति पूर्वपक्ष्यभिप्रायः। एवमेवेममात्मानमिति भाष्योदाहृतश्रुतिवाक्यात् प्राचीनं दृष्टान्तवाक्यम्। तद्यथा "राजानं प्रयियांसन्तम् उग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्ती"ति। तत्रोग्राः वैश्याच्छूद्रायामुत्पन्नाः। **प्रत्येनस्विन**स्तस्करादीन् प्रति दण्डयितृत्वेन नियुक्ताः। **सूताः** क्षत्रियाद् ब्राह्मण्यामुत्पन्नाः प्रतिलोमविशेषाः। **ग्रामण्यो** राज्ञा ग्रामाधिकारे नियुक्ताः। इदं दृष्टान्तवाक्यमर्थतो गृह्णात्येवंशब्दविवरणाय—**यथा यात्रायामुद्यतमिति। ऊर्ध्वोच्छ्वासित्वमिति**। ऊर्ध्वोच्छ्वासी भवतीत्यनेन ऊर्ध्वोच्छ्वासित्वमेतच्छब्दार्थ इति प्रदर्शितमित्यर्थः। **इत्युपगमनश्रुतेरर्थ इति**। यथा यात्रायामुद्यतमित्यादिप्रकारोऽयमुपगमनश्रुतेरर्थ इत्यर्थः। **ननु** उपगमनादिकं न प्राणस्य जीवे वृत्तिलयसाधकम्, यतः जीवोपगमनं जीवावस्थितिश्चेत्युभयमपि प्राणस्य न श्रुतं, किंत्विन्द्रियाणाम्। यत्तु प्राणस्यापि श्रुतं जीवानुत्क्रमणं तद्विपरीतसाधकम्। तत्र विलीनतया तदाश्रयस्य हि सहोत्क्रमणं भवति; न त्वनूत्क्रमणम्। **उच्यते**; "वाङ्मनसि संपद्यते मनः प्राण" इति वाक्याभ्यां साक्षान्मनोद्वारा च प्राणे

च्चितां चेतरेषाम् 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृ० ४।४।२ ) इति । 'सविज्ञानो भवति' इति चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति । ननु 'प्राणस्तेजसि' इति श्रूयते, कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियते ? नैष दोषः; अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात् ॥ ४ ॥ कथं तर्हि प्राणस्तेजसीति श्रुतिरित्यत आह—

## भामती ।

अवस्थानश्रुतिमाह—**सविज्ञानो भवतीति चेति** । विज्ञायतेऽनेनेति विज्ञानं पञ्चवृत्तिप्राणसहित इन्द्रियग्रामस्तेन सहावतिष्ठत इति सविज्ञानः । चोदयति—**ननु प्राणस्तेजसीति श्रूयत इति** । **अधिकावापो**ऽशब्दार्थव्याख्यानम् । परिहरति—**नैष दोष इति** । यद्यपि प्राणस्तेजसीत्यतस्तेजसि प्राणवृत्तिलयः प्रतीयते; तथापि सर्वशाखाप्रत्ययत्वेन विद्यानां श्रुत्यन्तरालोचनया विज्ञानात्मनि लयोऽवगम्यते । नच—तेजसस्तत्रापि लय इति—साम्प्रतम्; तस्यानिला-

## वेदान्तकल्पतरुः ।

नम् । आगम्य च गच्छन्तं जीवम् अनु पश्चाद्गमनमनुगमनम् । **इन्द्रियग्राम इति** । आ प्रायणादित्यत्र सविज्ञानशब्दः प्राप्तव्यकर्मफलप्रकाशनवचन इत्युक्तमिह तु तमपरित्यज्य तत्सहितेन्द्रियसमुदायवचन इत्युक्तम् इति न विरोधः । कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियत इति भाष्यम् ? तदनुपपन्नमिव ? तेजःशब्देन तेजोऽध्यक्षजीवलक्षणासंभवादधिकशब्दप्रक्षेपाप्राप्तेरत आह—**अधिकावापोऽशब्दार्थेति** । श्रौतोऽर्थो हि शब्दे भाति, अतोऽश्रौतार्थप्रक्षेपोऽधिकावाप इत्यर्थः । लक्षणास्वीकारे हेतुमाह—**श्रुत्यन्तरेति** । प्राणानां जीवानुगमादिविषयं वर्णितमेव श्रुत्यन्तरम् । **ननु** तस्य तेजोद्वारेणान्यथासिद्धिरुक्तेति, तत्राह—**न च तेजसस्तत्रेति** । **अनिलाकाशक्रमेणेति** । व्यवधानादेव साक्षात्तेजसः स्वरूपलयायोगाद् न तद्द्वारेणात्मनि प्रलय उपचरितुं शक्यो व्यवधानाश्रयणे च घटादावपि प्रलयोपचारप्रसङ्ग इत्यर्थः । वृत्तिलयस्तु न कुतश्चित्प्रमाणादात्मन्यवगत इति न तद्द्वाराऽपि प्राणवृत्तिलयोपचार इति द्रष्टव्यम् । तेजःसहचरितश्चासौ देहबीजभूतश्च पञ्चभूतसूक्ष्मरूपश्च परिवारश्च तस्याध्यक्षो जीवात्मा तस्मिन्प्राणवृत्तिलय इत्यर्थः ॥ ४ ॥ यद्यपि भाष्ये

## कल्पतरुपरिमलः ।

विलीनतया सिद्धानां मनश्चक्षुरादीनां जीवाश्रयणाय जीवं प्रत्यागमनं जीवेऽवस्थितिश्च प्राणस्य जीवाश्रयाणां जीवं प्रत्यागमनं जीवेऽवस्थितिं विनाऽनुपपन्नमित्येवमिन्द्रियोपगमनावस्थित्योः प्राणोपगमनावस्थित्याक्षेपकतयोक्तसाध्यसाधकता । अनूत्क्रमणं यद्यपि न वृत्तिविलयसाधकम्; तथापि तद्वचनं तत्र विलये सत्येव दृष्टं यथा "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति तत्सामान्यात् "तमुत्क्रामन्त"मिति वचनस्यापि तत्र विलयसाधकता । **तत्सहितेन्द्रियसमुदायवचन इति** । विज्ञानशब्दो भावकरणव्युत्पत्तिद्वयेन प्रारब्धकर्मफलप्रकाशस्येन्द्रियग्रामस्य च तन्त्रन्यायेन वाचक इति तत्साहित्यं जीवस्य सविज्ञान इत्येवोच्यत इति भावः । **तेजोऽध्यक्षजीवलक्षणासंभवादिति** । मार्गपर्वसु वायुवरुणादीनामिव जीवस्य पृथक् क्वचिन्निवेशो न कल्प्यते, किं तूपगमनादिश्रुतिबलादवश्योपसंहार्यस्य जीवस्योपसंहारार्थं तेजःशब्दस्य तदुपहिते जीवे वृत्तिः कल्प्यते; उपाधिवाचकस्य तद्विशिष्टोपहिते गुणवाचकस्य गुणविशिष्टाश्रय इव लक्षणोपपत्तेः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीत्यत्र श्रद्धाशब्दस्याप्सु लाक्षणिकस्य त्रिवृत्करणेनान्वितेषु भूतान्तरेष्वप्युपलक्षणतामुक्त्वा तदुपहितजीवपर्यन्तं लक्षणाऽङ्गीकृता, इह तेजोवाचकस्यैव तत्पर्यन्तलक्षणाङ्गीकारे काऽनुपपत्तिरिति भावः । **ननु तस्य तेजोद्वारेणेति** । तेजःशब्दस्य जीवलक्षणा न युक्ता; प्राणस्तेजसीत्यस्य लोकसिद्धानुवादकलाभावापत्तेः, अतः प्राणस्य जीववृत्तिलय एवोपगमनादिश्रुतिसिद्धः प्राणावृत्तिलयाधारस्य तेजसो जीवे वृत्तिलयोऽस्तीत्येतदवलम्ब्यौपचारिकोऽस्त्विति भावः । यद्यपि प्राणस्य जीवे वृत्तिलयो न श्रुतः किंत्विन्द्रियोपगमादिप्रणालिकयाऽऽक्षेप्यः; तथापि स एव तेजोद्वारकत्वेनामुख्योऽस्त्विति तात्पर्यम् । **व्यवधानादेवेति** । परमात्मनि खलु तेजसो लयः प्रसिद्धः, स जीवात्मन्युपचर्यते चेत्, साक्षाल्लय उपचर्यते, व्यवहितो वा । **नाद्यः**; परमात्मन्यपि तेजसः साक्षाल्लयाप्रसिद्धेः । **न द्वितीयः**; घटादावपि परमात्मविकारे लयोपचारप्रसङ्गादित्यर्थः । **ननु** तेजसो जीवे स्वरूपलयो नेष्यते, किंतु वृत्तिलयः, स त्वनौपचारिक एव संभवतीत्याशङ्क्याह—**वृत्तिलयस्त्विति** । वाङ्मनसीत्यादिक्रमे तेजो जीव इति पर्वान्तरं प्रमाणान्तरसिद्धमिति कल्प्यते, उतोपगमनादिश्रुतिप्रापितो जीवः क्वचिन्निवेशनीय इति कल्प्यते । **नाद्यः**; वाङ्मनसीत्यादाविव प्रमाणान्तराभावात् । नहि प्राणव्यापारे श्वासे देहोष्मणि च निवृत्तेऽपि जीवसत्तायां तच्चिह्नानुवृत्तिरस्ति । **न द्वितीयः**; श्रुतस्यैव तेजःशब्दस्य तदुपहितजीवबोधकत्वोपपत्तौ क्रमिकपर्वान्तरतद्बोधकवाक्यान्तरकल्पनागौरवायोगात्, प्राणस्तेजसीत्यस्य लोकसिद्धानुवादकत्वं तु विशेषणांशसत्ताविषयतयाऽप्युपपन्नम् । विशेष्यभूतजीवांशे तु सप्तम्यर्थप्राणवृत्तिलयाधारत्वम् । **इदं तु चिन्त्यते**—वाङ्मनसीत्यादिश्रुतेरिन्द्रियैर्मनसि संपद्यमानैर्"यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मने"ति

**भूतेषु तच्छ्रुतेः ॥ ५ ॥**

स प्राणसंपृक्तोऽध्यक्षस्तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगन्तव्यम्; प्राणस्तेजसीति श्रुतेः । ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति न प्राणसंपृक्तस्याध्यक्षस्य, नैष दोषः; सोऽध्यक्ष इत्यध्यक्षस्याप्यन्तरालेऽप्युपसंख्यातत्वात् । योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति सोऽपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते वदितुम् । तस्मात्प्राणस्तेजसीति प्राणसंपृक्तस्याध्यक्षस्यैवैतत्तेजःसहचरितेषु भूतेष्ववस्थानम् ॥ ५ ॥ कथं तेजःसहचरितेषु भूतेष्वित्युच्यते ? यावतैकमेव तेजः श्रूयते प्राणस्तेजसीति । अत आह—

**नैकस्मिन्दर्शयतो हि ॥ ६ ॥**

नैकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते; कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात् । दर्शयतश्चैतमर्थं प्रश्नप्रतिवचने 'आपः पुरुषवचसः' ( छा० ५।३।३ ) इति । तद्व्याख्यातम्—'त्र्यात्मकत्वात्तु भूयस्त्वात्' ( ब्र० सू० ३।१।२ ) इत्यत्र । श्रुतिस्मृती चैतमर्थं दर्शयतः । श्रुतिः 'पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः' इत्याद्या । स्मृतिरपि—'अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः । ताभिः सार्धमिदं सर्वं संभवत्यनुपू-

## भामती ।

काशक्रमेण परमात्मनि तत्त्वलयावगमात् । तस्मात्तेजोग्रहणेनोपलक्ष्यते तेजःसहचरितदेहबीजभूतपञ्चभूतसूक्ष्मपरिचाराध्यक्षो जीवात्मा तस्मिन् प्राणवृत्तिरप्येतीति ॥ ४ ॥ चोदयति—**ननु चेयं श्रुतिरिति** । तेजःसहचरितानि भूतान्युपलक्षयन्तां तेजःशब्देनाध्यक्षे तु किमायातम् ? तस्य तदसाहचर्यादित्यर्थः । परिहरति—**सोऽध्यक्ष इत्यध्यक्षस्यापीति** । यदा ह्ययं प्राणोऽन्तरालेऽध्यक्षं प्राप्याध्यक्षसंपर्कवशादेव तेजःप्रभृतीनि भूतसूक्ष्माणि प्राप्नोति, तदोपपद्यते प्राणस्तेजसीति । अत्रैव दृष्टान्तमाह—**योऽपि स्रुघ्नादिति** ॥ ५ ॥ सूत्रान्तरमवतारयितुं पृच्छति—**कथं तेजःसहचरितेष्विति** । अत्र भाष्यकारोऽनुमानदर्शनमाह—**कार्यस्य शरीरस्येति** । स्थूलशरीरानुरूपमनुमेयं

## वेदान्तकल्पतरुः ।

प्राणसंयुक्तोऽध्यक्षस्तेजःसहितेषु भूतसूक्ष्मेष्ववतिष्ठत इत्युक्तम्; तथापि तद्भूतसहितेऽध्यक्षे प्राणस्तिष्ठतीत्येवंपरं व्याख्येयम्; सोऽध्यक्ष इत्युपक्रमादिति भावः । चोद्यभाष्येऽपि यद्यपि प्राणसहितस्याध्यक्षस्य भूतेष्ववस्थितिराक्षिप्यत इति प्रतिभाति; तथापि भूतसहिताध्यक्षे प्राणस्थितिराक्षिप्यत इत्येवंपरत्वेन योज्यमित्याह—**तेजःसहचरितानीति** । प्राणेनाधारत्वेन संपृक्तस्याध्यक्षस्य भूतैर्मिलित्वा स्थितिं श्रुतिर्न दर्शयतीति भाष्ययोजना हि इयता सूचितेति । परिहारभाष्येऽप्यध्यक्षं प्राप्य पूर्वव्यापारान्तरात्तेजआदिभूतप्राप्तिः प्राणस्य नाभिधीयते, उपहितप्राप्तेरुपाधिप्राप्तिनान्तरीयकत्वादित्यभिप्रेत्याह—**अध्यक्षसंपर्कवशादिति** । दृष्टान्तेऽपि व्यवधानेन प्राप्त्यंशो न विवक्षितोऽपि तु यथा स्रुघ्नान्नगराद्गच्छतो मथुरापाटलिपुत्रयोरुभयोः प्राप्यत्वेऽपि पाटलिपुत्रं प्राप्यत्वेन निर्दिश्यते, एवमिहापि प्राणेन तेजसोऽध्यक्षस्य चोभयोः प्राप्यत्वेऽपि तेजसीति भूतमात्रस्य प्राप्यत्वं निर्दिश्यत इत्ययमर्थो विवक्षित इत्याह—**अत्रैवेति** । ॥ ५ ॥ प्राण एकस्मिन्नेव तेजःसूक्ष्मे नावति-

## कल्पतरुपरिमलः ।

श्रुत्यन्तरानुसारेण व्याख्यानं सूत्रकारैः किमिति न कृतं, तदनुसारेण हि वाङ्मनसीत्यनेन वागुपलक्षितानां बाह्येन्द्रियाणां मनउपहिते जीवे लय उच्यत इति व्याख्येयम् । दृष्टो हि मनःशब्दस्य जीवे प्रयोगः—"प्राणबन्धनं हि सोम्य मन" इति । **मनः** प्राण इत्यनेन विलीनसकलबाह्येन्द्रियाणां मनउपहितस्य जीवस्य प्राणप्राप्तिरुच्यत इति व्याख्येयम् । प्राणस्तेजसीत्यनेन तथाभूतस्य प्राणस्योदानयोग उच्यत इति व्याख्येयमिति । **अत्रायमभिप्रायः**—वाङ्मनसीत्यादिश्रुतिर्लोकसिद्धक्रमानुसारेण प्रयुक्ता, तद्वैपरीत्येन प्रवृत्तिमत ऊष्मण उपशमः प्रथमं पठितः । अतः श्रुत्यन्तरमेवान्यथा व्याख्येयम् । "यच्चित्तस्तेनैव प्राणमायाती"त्यनेन क्षीणसकलेन्द्रियवृत्तिर्भोक्तव्यफलस्फुरणमात्रयुक्तः प्राणव्यापारमात्राविशेषस्तिष्ठतीत्युच्यते, नतु प्राणाधिकरणकवृत्तिलयं प्राप्नोतीत्युच्यत इति । श्रुत्यन्तरे तेजःशब्दस्तु पूर्वसंदर्भानुसारेणोदानपरः, इहतु लोकसिद्धक्रमानुवादेन त्रिवृत्कृततेजःपरतैव तस्योचितेति ॥ ४ ॥ **ननु** चेयं श्रुतिरित्यादिभाष्यस्य तेजःसहचरितानीत्यादिटीकाग्रन्थेन दर्शितेऽर्थे तस्य भाष्यटीकासूचितां योजनां दर्शयति—**प्राणेनाधारत्वेनेति** । अत्र प्राणस्याधारेण जीवेन संपर्कस्तेजःशब्दोपलक्षितभूतसंबन्धात् प्राचीनो न निषेध्यत्वेनानूद्यते, अधिकावापस्यानभिमतत्वात्, किंतु भूतप्राप्तिसमयभावित्वेन सिद्धान्ताभिमतोऽनूद्यते । श्रुतिर्दर्शयतीति भाष्यस्यानेनान्वये सति न दर्शयतीति लभ्यते । तेजस इति भूतमात्रस्य

वेशः' इत्याद्या । ननु चोपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायां 'क्वायं तदा पुरुषो भवति' ( बृ० ३।२।१३ ) इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति—'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः' ( बृ० ३।२।१३ ) इति, अत्रोच्यते—तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता, इह पुनर्भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम् । प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितं न त्वाश्रयान्तरं निवारितम् । तस्मादविरोधः ॥ ६ ॥

इति तृतीयमध्यक्षाधिकरणम् ॥

( ४ अधिकरणम् ) **समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥**

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, किंवा विशेषवतीति विशयानानां विशेषवतीति तावत्प्राप्तम् । भूताश्रयविशिष्टा ह्येषा । पुनर्भवाय च भूतान्याश्रीयन्ते । नच विदुषः पुनर्भवः संभवति । 'अमृतत्वं हि विद्वानश्नुते' इति स्थितिः । तस्मादविदुष एवैषोत्क्रान्तिः । ननु विद्याप्रकरणे समाम्नानाद्विदुष एवैषा भवेत्, न; स्वापादिवद्यथाप्राप्तानुकीर्तनात् । तथाहि—

## भामती ।

सूक्ष्ममपि शरीरं पञ्चात्मकमित्यर्थः । दर्शयत इति सूत्रावयवं व्याचष्टे—**दर्शयतश्चैतमर्थमिति** । प्रश्नप्रतिवचनाभिप्रायं द्विवचनं श्रुतिस्मृत्यभिप्रायं वा । **अण्व्यो मात्राः** सूक्ष्मा **दशार्धानां** पञ्चभूतानामिति । श्रुत्यन्तरविरोधं चोदयति—**ननुचोपसंहृतेषु वागादिष्विति** । कर्माश्रयतेति प्रतीयते न भूताश्रयतेत्यर्थः । परिहरति—**अत्रोच्यत इति** । **ग्रहा** इन्द्रियाणि **अतिग्रहा**स्तद्विषयाः । कर्मणां प्रयोजकत्वेनाश्रयत्वं भूतानांतूपादानत्वेनेत्यविरोधः । प्रशंसाशब्दोऽपि कर्मणां प्रयोजकतया प्रकृष्टमाश्रयत्वं ब्रूते सति निकृष्ट आश्रयान्तरे तदुपपत्तेरित्याह—**प्रशंसाशब्दादपि तत्रेति** ॥ ६ ॥ **इति तृतीयमध्यक्षाधिकरणम्** ॥

**समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य** ॥ ७ ॥ अत्रामृतत्वप्राप्तिश्रुतेः परविद्यावन्तं प्रत्येतदिति मन्वानस्य पूर्वः पक्षः । **विशयानानां** संदिहानानां पुंसाम् । चोदयति—**ननु विद्याप्रकरण इति** । परिहरति—**न स्वापादिवदिति** । परविद्ययैवामृतत्वप्राप्त्यवस्थामाख्यातुं तत्सधर्माश्च तद्विधर्माश्चान्या अप्यवस्थास्तदनुगुणतया

## वेदान्तकल्पतरुः ।

ष्टत इति कार्यस्यानेकस्यानेकात्मकत्वादिति च हेतुप्रतिज्ञयोर्वैयधिकरण्यमाशङ्क्याह—**स्थूलशरीरानुरूपमिति** । कार्यानेकात्मकत्वेनानुमितं कारणानेकत्वमेकत्र प्राणस्थित्यभावे हेतुरित्यर्थः ॥ ६ ॥ **इति तृतीयमध्यक्षाधिकरणम्** ॥[1]

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य** ॥ ७ ॥ निरूपिताया उत्क्रान्तेरपरविद्यास्वन्वय इह प्रदर्श्यते । **ननु** दहरादिविद्याविदामुत्क्रान्तिर्नास्तीति इह पूर्वपक्षः, स न साधुः; तद्विद्यासु देशान्तरीयफलास्वावश्यकत्वादुत्क्रान्तेरत आह—**अत्रेति** । अत्राधिकरणे विषयभूतदहरविद्यायाममृतत्वमेतीत्यमृतत्वप्राप्तिश्रुतेरमृतत्वस्य च परविद्याफलत्वात्, परविद्यावन्तं प्रत्येतदमृतत्वं परविद्यायां चोत्क्रान्तिर्निषिध्यत इति यो मन्यते तस्य मतेनायं पूर्वपक्षः ।—**वस्तुतस्तु** नास्ति पूर्वपक्षः । ''तयोर्ध्वमाय''न्नित्युत्क्रान्तिमुपन्यस्यामृतत्वस्य श्रावितत्वादिति द्योतितं मन्वानग्रहणेन । **अथवा**—सगु-

## कल्पतरुपरिमलः ।

प्राप्यत्वं निर्दिश्यत इति जीवपर्यन्तलक्षणामनपेक्ष्येदमुक्तम् । तदपेक्षायां तु जीवस्यापि प्राप्यत्वं निर्दिश्यत एव ॥ ५ ॥ **हेतुप्रतिज्ञयोरिति** । सूक्ष्मविषये खलु तेजोमात्रं वा भूतपञ्चकं वेति विवादः । तत्र कार्यस्य स्थूलशरीरस्यानेकात्मकत्वोक्तिर्व्यधिकरणेति शङ्कार्थः ॥ ६ ॥ **इति तृतीयमध्यक्षाधिकरणम्** ॥

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य** ॥ ७ ॥ **अत्राधिकरणे विषयभूतेति** । इहाऽमृतत्वफलश्रवणेन सगुणविदामुत्क्रान्त्यभावः शङ्क्यतेऽमृतत्वफलं च सगुणविद्यासु दहरविद्यायां श्रूयते । अतो दहरविद्याधिकरणविषय इति भावः । यदि ''विद्ययाऽमृतमश्नुत'' इति श्रुतिः सकलसगुणविद्यासाधारणी, तदा तत्र दहरविद्याग्रहणं सगुणविद्यान्तराणामप्युपलक्षणं द्रष्टव्यम् । **ननु** दहरविद्यायां ''तयोर्ध्वमायन् अमृतत्वमेती''त्यत्रामृतत्वफलं श्रूयते, तत्रैवोत्क्रान्तावपि श्रूयमाणायां कथं तदभावेन पूर्वपक्षः ? इत्याशङ्क्य न वास्तवोऽयं पूर्वपक्ष इति टीकायामेव द्योतितमित्याह—**तयोर्ध्वमिति** । **ननु** ननु विदुषः सकाशादित्यादिना व्याघातो भवेदित्यन्तेन टीकाग्रन्थेन विदुषः सकाशादविदुषां विशे-

१ तत्र सूत्राणि ३—सोऽध्यक्षे तदुपगमादिभ्यः ४ भूतेषु तच्छ्रुतेः ५ नैकस्मिन् दर्शयतो हि ६ ॥

'यत्रैतत्पुरुषः स्वपिति नाम' 'अशिशिषति नाम' 'पिपासति नाम' ( छा० ६।८।१,३,५ ) इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते। एवमियमप्युत्क्रान्तिर्महाजनगतैवानुकीर्त्यते यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः संपद्यते स आत्मा तत्त्वमसीत्येतत्प्रतिपादयितुम्। प्रतिषिद्धा चैषा विदुषः 'न तस्य प्राणा उत्क्रामन्ति' ( बृ० ४।४।६ ) इति। तस्मादविदुष एवैषेति। एवं प्राप्ते ब्रूमः—समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोरासृत्युपक्रमाद्भवितुमर्हति; अविशेषश्रवणात्। अविद्वान्देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति, विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते। तदेतदासृत्युपक्रमादित्युक्तम्। ननु—अमृतत्वं हि विदुषा प्राप्तव्यं, नच तद्देशान्तरायत्तं, तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति? अत्रोच्यते—अनुपोष्य चेदम्, अदग्ध्वाऽत्यन्तमविद्यादीन्क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृतत्वं प्रेप्सते संभवति तत्र सृत्युपक्रमो भूताश्रयत्वं च। नहि निराश्रयाणां प्राणानां गतिरुपपद्यते। तस्माददोषः ॥७॥ इति चतुर्थमासृत्युपक्रमाधिकरणम्॥

## भामती।

ख्यायन्ते। साधर्म्यवैधर्म्याभ्यां हि स्फुटतरः प्रतिपिपादयिषिते वस्तुनि प्रत्ययो भवतीति। ननु विदुषः सकाशाद्विशेषवन्तोऽविद्वांसो विधीयन्ते, येन विद्याप्रकरणव्याघातो भवेदपि तु विद्यां प्रतिपादयितुं लोकसिद्धानां तदनुगुणतया तेषामनुवाद इति। एवं प्राप्तेऽभिधीयते—**समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोः**। कुतः? **आसृत्युपक्रमात्**। सृतिः सरणं देवयानेन पथा कार्यब्रह्मलोकप्राप्तिरासृतेराकार्यब्रह्मलोकप्राप्तेः। अयं विद्योपक्रम आरम्भः प्रयत्न इति यावत्। तस्मादेतदुक्तं भवति—नेयं परा विद्या यतो नाडीद्वारमाश्रयते, अपित्वपरविद्येयम्। न चास्यामात्यन्तिकः क्लेशप्रदाहो यतो न तत्रोत्क्रान्तिर्भवेत्। तस्मादपरविद्यासामर्थ्यादापेक्षिकमाभूतसंप्लवस्थानममृतत्वं प्रेप्सते पुरुषार्थाय संभवत्येष उत्क्रान्तिभेदवान् सृत्युपक्रमोपदेशः। उपपूर्वादुष दाह इत्यस्मादुपोष्येति प्रयोगः ॥ ७ ॥ इति **चतुर्थमासृत्युपक्रमाधिकरणम्** ॥

## वेदान्तकल्पतरुः।

णस्यापि व्यापित्वाद् ब्रह्मणो न तत्प्राप्तुमुत्क्रान्त्यपेक्षेति पूर्वपक्षोऽत्र वास्तवः। तस्या मुक्तेः सधर्मा अवस्थाः सुषुप्त्याद्याः विधर्मा जाग्रदाद्याः। **नन्वे**ता अपि प्रतिपाद्यन्तां किं मुक्त्यर्थतया तदनुवादेनात आह—**नन्विति**। येन हेतुना विद्याप्रकरणे व्याघातस्तेन विदुषः सकाशादविद्वांस उत्क्रान्त्यादिविशेषवन्तो न प्रतिपाद्यन्ते, नापि विद्वान् अमृतत्वश्रुतिविरोधादेवेत्यर्थः। अनेन **ननु विदुष इति** भाष्यं व्याख्यातम्। भाष्यकृद्भिरासृत्युपक्रमादित्येतत् प्रतिज्ञाविशेषणत्वेन व्याख्यातम्। अविशेषश्रवणादिति च हेतुरध्याहृतः। स्वयंत्वासृत्युपक्रमादेतदेव हेतुत्वेन योजयति—**कुत इति**। आसृति सृतिपर्यन्तम् उपक्रमादित्यर्थः। ब्रह्मलोकप्राप्तितद्गतविशिष्टभोगफलपर्यन्तत्वाद्विद्यानुष्ठानप्रारम्भस्य ब्रह्मलोकस्य चोत्क्रम्य गत्वैव प्राप्यत्वादस्ति सगुणविद उत्क्रान्तिरित्यर्थः। एतेन वास्तवोऽपि पूर्वः पक्षो व्युदस्तः; सगुणब्रह्मप्राप्तिमात्रस्यापुमर्थत्वादिति। **उपक्रमे**ति प्रकृत्यर्थमुक्त्वा पञ्चम्यर्थमाह—**तस्मादिति**। **प्रेप्सते** प्राप्तुमिच्छते। **उत्क्रान्तिभेद** उत्क्रान्तिविशेषः। मूर्धन्यनाड्या निष्क्रमणम्। वस निवासे इत्यस्माद्धातोरिदं न भवति; तथा सत्यनुपोष्येत्यस्य मुक्त्वेत्येवमर्थत्वापातात्, अतो व्याचष्टे—**उष दाहे इतीति** ॥ ७॥ इति **चतुर्थमासृत्युपक्रमाधिकरणम्** ॥[1]

## कल्पतरुपरिमलः।

षवत्त्वोत्क्रान्तिर्न विधीयते, तथा सति विद्याप्रकरणव्याघातः स्यादित्युच्यते, अयं प्रसक्तप्रतिषेधः; विद्याप्रकरणाद्, विदुषः खल्वुत्क्रान्तिशङ्का प्रवृत्ता अत आह—**येन हेतुनेति**। विद्याप्रकरणे स्वापादिवदुत्क्रान्तेरप्यनुवाद एव न विधानमित्युक्त्यनन्तरं विधानं किं न स्यादित्याशङ्कायां किमविदुषो विधानं विदुषो वेति विकल्पं मनसि निधायाद्यविकल्पः प्रकरणविरोधेन टीकायां निरस्तः। अमृतत्वफलविरोधेन द्वितीयविकल्पनिरासः स्पष्ट इति तत्र कण्ठतो न कृत इति भावः। यद्यपि "वाङ्मनसि संपद्यत"इत्यादिश्रुतिर्न सगुणविद्याप्रकरणाम्नाता; तथापि सगुणनिर्गुणविद्याविशेषाविवेचनेन तामवलम्ब्य सगुणविदामुत्क्रान्तिप्रतिपादनमाशङ्कितं स्वापादिवत्साधारण्येन प्राप्ताया उत्क्रान्तेरनुकीर्तनमिति परिहारश्च कृतः। अस्य फलं प्रतिषेधादिति चे( ब्र. अ. ४ पा. २ सू. १२ )दित्यधिकरणसिद्धान्ते द्रष्टव्यम्। **सगुणब्रह्मप्राप्तिमात्रस्येति**। गतिश्रुतिबलात् लोकविशेषे तत्प्राप्तिरेव फलपर्यन्तेति भावः ॥ ७ ॥ इति **चतुर्थमासृत्युपक्रमाधिकरणम्** ॥

१ तत्र सूत्रम् १–समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

## ( ५ अधिकरणम् ) तदाऽऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

'तेजःपरस्यां देवतायाम्' ( छा० ६।८।६ ) इत्यत्र प्रकरणसामर्थ्यात्तद्यथाप्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति। कीदृशी पुनरियं संपत्तिः स्यादिति चिन्त्यते। तत्रात्यन्तिक एव तावत्स्वरूपप्रविलय इति प्राप्तम्; तत्प्रकृतित्वोपपत्तेः। सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्। तस्मादात्यन्तिकीयमविभागापत्तिरिति। एवं प्राप्ते ब्रूमः—तत्तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतमाऽऽपीतेरासंसारमोक्षात्सम्यग्ज्ञाननिमित्तादवतिष्ठते 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' ( क० ५।७ ) इत्यादिसंसारव्यपदेशात्, अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म संपद्येत। तत्र विधिशास्त्रमनर्थकं स्याद्विद्याशास्त्रं च। मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति। तस्मात्तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवद्बीजभावावशेषैवैषा सत्संपत्तिरिति ॥ ८ ॥

### भामती।

**तदाऽऽपीतेः संसारव्यपदेशात्** ॥ ८ ॥ सिद्धां कृत्वा बीजभावावशेषां परमात्मसंपत्तिं विद्वदविदुषोरुत्क्रान्तिः समर्थिता। सैव संप्रति चिन्त्यते। किमात्मनि तेजःप्रभृतीनां भूतसूक्ष्माणां तत्त्वप्रविलय एव संपत्तिराहोस्विद्बीजभावाऽवशेषेति। यदि पूर्वः पक्षः, नोत्क्रान्तिः। अथोत्तरः, ततः सेति। तत्राप्रकृतौ न विकारतत्त्वप्रविलयो यथा मनसि न वागादीनाम्। सर्वस्य च जनिमतः प्रकृतिः परा देवतेति तत्त्वप्रलय एवात्यन्तिकः स्यात्तेजःप्रभृतीनामिति प्राप्तेऽभिधीयते—'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥' इत्यविद्यावतः संसारमुपदिशति श्रुतिः। सेयमात्यन्तिके तत्त्वलये नोपपद्यते। नच प्रायणस्यैवैष महिमा विद्वांसमविद्वांसं वा प्रतीति सांप्रतमित्याह—**अन्यथा हि सर्वः प्रायणसमय एवेति**। विधिशास्त्रं ज्योतिष्टोमादिविषयमनर्थकम्; प्रायणादेवात्यन्तिकप्रलये पुनर्भवाभावात्। मोक्षशास्त्रं च; अप्रयत्नलभ्यात्प्रायणादेव जन्तुमात्रस्य मोक्षप्राप्तेः। न केवलं शास्त्रानर्थक्यमयुक्तश्च प्रायणमात्रान्मोक्ष इत्याह—**मिथ्याज्ञानेति**। नासति निदानप्रशमे प्रशमस्तद्वतो युज्यत इत्यर्थः ॥८॥

### वेदान्तकल्पतरुः।

**तदाऽऽपीतेः संसारव्यपदेशात्** ॥ ८ ॥ **ननु** वर्णितोत्क्रान्तिसामर्थ्यादेव सविशेषस्तेजआदिलयः सिध्यति, किं विचारेण ? अत आह—**सिद्धां कृत्वेति**। सत्यमुत्क्रान्तिः सावशेषलयेन विना न घटते, स एवाद्यापि न सिद्ध इति समर्थ्यत इत्यर्थः। अत एव सङ्गतिः। **यदि पूर्वः पक्ष इति**। अनेन प्राचामप्यधिकरणानां वृत्तिलयनिरूपकाणां प्रयोजनम्

### कल्पतरुपरिमलः।

**तदाऽऽपीतेः संसारव्यपदेशात्** ॥ ८ ॥ **स एवाद्यापि न सिद्ध इति**। **ननु**—सुषुप्तस्य सत्संपत्तिः सावशेषेति स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ( ब्र. अ. ३ पा. २ सू. ९ ) इत्यधिकरणे विद्याकर्मविध्यन्यथानुपपत्त्या समर्थितम्, स न्याय इहापि तुल्यः, कथमद्यापि न सिद्ध इत्युक्तम् ? **उच्यते**, सुप्त एव प्रबुध्यत इत्यत्र कर्मानुस्मृतिशब्दाः सन्त्यनन्यथासिद्धा हेतवः, इह तु विधिमात्रं, तत्र कर्मविधीनाम् अविद्वद्विषयत्वेन चारितार्थ्यं स्पष्टम्। विद्याविधयस्तु द्विविधा अर्चिरादिप्राप्यब्राह्मलौकिकफलभोगश्रुतिमन्तस्तद्रहिताश्च। तत्राद्येषु निरवशेषलयासंभवेऽपि द्वितीयेषु संभवतीति तद्विषयत्वेन निरवशेषलयप्रतिपादकत्वसमर्थनसंभवे किमर्थं सावशेषलयप्रतिपादकत्वं कल्प्यम् ? **ननु**—परदेवतासंपत्तिवचनस्य ब्रह्मविद्विषयत्वे प्रकरणान्निर्गुणब्रह्मविद्याविषयता स्यात्, तद्देहारम्भकभूतानां निरवशेषसंपत्तिरिष्टैव; कलाप्रलयाधिकरणे तथा वक्ष्यमाणत्वात्, तथाच पूर्वपक्षः सिद्धान्त्यनिष्टार्थविषयो न स्यादिति—**चेन्न**; निर्गुणब्रह्मविदो मिथ्याज्ञानोपनीतवाङ्मनःप्रभृतिलयस्य स्वप्नप्रपञ्चविलयवद्यौगपद्येन वाङ्मनसीत्यादिकस्य निर्गुणप्रकरणपठितस्यापि लक्षणादिवत्संभवात् सगुणविद्यान्वयकल्पनात्। एवं चानियमः सर्वेषा(ब्र. अ. ३ पा. ३ सू. ३१)मित्यत्रार्चिरादिगतेः सकलगुणविद्यासाधारण्यं यदुक्तं तस्यायमाक्षेपः "ये चेमेऽरण्ये"इत्यादि वचनं श्रुतब्राह्मलौकिकफलोपभोगविद्यामात्रविषयमस्त्विति। यच्च पूर्वाधिकरणे सकलगुणविद्यासाधारण्येनोत्क्रान्तिसमर्थनं, तस्याप्याक्षेप इति पूर्वाधिकरणसङ्गतिः। **अनेन प्राचामप्यधिकरणानामिति**। तेष्वधिकरणेषु वागादीनां मनःप्रभृतिषु यः स्वरूपलयपूर्वपक्षस्तस्य चेदं प्रयोजनं यत्सगुणविद्यासु काश्चिद् मुक्तिफलाः काश्चिद् ब्रह्मलोकावाप्तिफला इति विभागः। नच सगुणविद्यायां मुक्त्यनुपपत्तिः; ब्रह्मलोकप्राप्तिपर्यन्तासु क्रममुक्तिफलासु ब्रह्मलोके हिरण्यगर्भादिव प्रकृताधिकरणविषयभूतासु सगुणविद्यासु देहवियोगकाले साक्षात्कृतात् सगुणब्रह्मणो निर्गु-

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

**तच्चेतरभूतसहितं तेजो जीवस्यास्माच्छरीरात्प्रवसत आश्रयभूतं स्वरूपतः प्रमाणतश्च सूक्ष्मं**

## भामती ।

अथेतरभूतसहितं तेजो जीवस्याश्रयभूतमुत्क्रमद्देहाद्देहान्तरं वा संचरत्कस्मादस्माभिर्न निरीक्ष्यते ? तद्धि महत्त्वाद्वाऽनेकद्रव्यत्वाद्वा रूपवदुपलब्धव्यम् । कस्मान्न मूर्तान्तरैः प्रतिबध्यते ? इति शङ्कामपाकर्तुमिदं सूत्रम्—**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः** । चकारो भिन्नक्रमः । न केवलमापीतेस्तदवतिष्ठते च तत् सूक्ष्मं स्वरूपतः परिमाणतश्च । स्वरूपमेव हि तस्य तादृशमदृश्यम् । यथा चाक्षुषस्य तेजसो महतोऽपि अदृष्टवशादनुद्भूतरूपस्पर्शं हि तत् । परिमाणतः

## वेदान्तकल्पतरुः ।

उक्तम् । यत्तु सिद्धेऽपि वृत्तिलये प्राणस्याध्यक्षे वृत्तिलय उक्तः, स सगुणविद्यायामनुचिन्तनार्थम् ॥ ९ ॥ **महत्त्वाद्वेति । रूपवदिति** हेतुगर्भविशेषणम् । अनेकशब्दो बहुलवाची । अनेकं बहु द्रव्यम् आरम्भकं यस्य तदनेकद्रव्यं तत्त्वादित्यर्थः । ततश्च लिङ्गशरीरं, चक्षुःस्पर्शनाभ्याम् उपलब्धव्यम्, मूर्तान्तरैश्च प्रतिहन्येत, महत्त्वे सति रूपवत्त्वाद् बहुद्रव्यारब्धत्वे सति रूपवत्त्वाद्वा, कुम्भवदिति । महत्त्वबहुद्रव्यारब्धत्वाभ्यां द्व्यणुकव्यावृत्तिः, रूपवत्त्वेन वायुव्यावृत्तिः । चकारस्य प्रथमसूत्रार्थेनाप्यन्वयमाह—तस्यैतत्सूत्राकाङ्क्षार्थे—**भिन्नक्रम इति ।** चक्षुष्यनैकान्तिकत्वमुक्त्वा हेत्वोराह—**स्वरूपमिति । तस्य** लिङ्गशरीरस्य स्वरूपमेव **तादृशम्** अनुद्भूतरूपस्पर्शम् । यथा चाक्षुषस्य चक्षुराकारपरिणतस्य तेजस इत्यर्थः । दृष्टान्तं साधयति—**अदृष्टवशादिति** । स्वरूपतः सौक्ष्म्यमुपपाद्य परिमाणतः सौक्ष्म्यमाह—**परिमाणत इति** । परिमाणतः

## कल्पतरुपरिमलः ।

णविद्योपदेशलाभेन तदुपपत्तेः । **सगुणविद्यायामनुचिन्तनार्थमिति** । यद्यपि वागादिवृत्तिलयेऽप्येतत्प्रयोजनं वक्तुं शक्यम्; तथाप्येतदेव प्रयोजनं प्राणस्याध्यक्षे वृत्तिलयनिरूपणस्य । तेषां त्वन्यदपि प्रयोजनमस्तीति भावः । **अत्रायं सिद्धान्तः**—सत्यमुपासत इति सामान्यश्रुत्या सकलसगुणविद्यानाम् अर्चिरादिगतिसिद्धौ तेजः परस्यामित्यस्य सगुणविद्याविशेषेषु निरवशेषलयपरत्वं कल्पयितुं न युक्तम्, तत्कल्पनाया विलम्बितत्वात्; तथापि सत्यमुपासत इति सामान्यश्रुतिः सर्वान् सगुणविद्याविशेषान् शीघ्रमाक्रामति, तेजः परस्यामित्यस्य निरवशेषलयपरत्वमेव तावच्छब्दसामर्थ्येन न प्राप्तम्, प्रत्युत वाङ्मनसीत्यादिप्रक्रमात् सावशेषलयपरत्वप्राप्तौ प्रकृतिलयत्वलिङ्गेन प्रायपाठमुपमृद्य कल्पनीयम् । ततश्च वाङ्मनसीत्यादेर्निर्गुणविद्यायामनन्वयान्निरवशेषभूतलयस्य मुमूर्षुसामान्यानन्वयाच्च सगुणविद्यासु काश्चित्परिहृत्य कासुचिदुत्कर्षः कल्पनीयः । अतः शीघ्रप्रवृत्तिकोदाहृतसामान्यश्रुत्यसङ्कोचाय "यथाकर्म यथाश्रुत"मित्यादिसामान्यश्रुतिसङ्कोचाय च सौषुप्तिकलयश्रुतेरिव प्रकृतिलयत्वलिङ्गं बाधित्वा सावशेषलयपरत्वं कल्पयितुं युक्तम् । तथासति वाङ्मनसीत्यारभ्य प्रतीतं सकलोत्क्रममाणसाधारण्यमपि न त्यक्तं भवति । पूर्वाधिकरणोक्तप्रकारेण सुषुप्त्यादिकीर्तनवदुत्क्रान्तिक्रमकीर्तनस्यापि तत्त्वमसिप्रतिपादनशेषतया प्रकरणान्वयात् तत उत्कर्षोऽपि न कल्पितो भवतीति । एकस्य संपद्यत इत्यस्य वाक्यस्य चतुष्टयान्वयिनो वाक्यत्रये वृत्तिलयपरत्वं चतुर्थवाक्ये स्वरूपलयपरत्वमिति वैरूप्यं च परिहृतं भवति ॥ ८ ॥ **रूपवदिति । हेतुगर्भविशेषणमिति** । अनेन रूपवत्त्वं हेत्वोः प्रविष्टमिति दर्शितम् । उपलब्धव्यमिति प्रतिहन्येतेति चोक्त्या तर्करूपमिदमनुमानद्वयमिति सूचितम् । यदि महत्त्वे सति रूपवद्बहुद्रव्यारब्धत्वे सति रूपवच्च सूक्ष्मशरीरं, यदि देहान्निर्गच्छेत्तदा चक्षुःस्पर्शनाभ्यामुपलभ्येत, मूर्तान्तरैश्च प्रतिहन्येतेति तर्कशरीरम् । प्रभा तेजसो रूपं तदनुमेयं तदाश्रयद्रव्यमिति मतावलम्बनादाद्यतर्कस्य न प्रभायां व्यभिचारः । प्रभाद्रव्यं चाक्षुषमिति पक्षे तु चक्षुषोपलभ्येतेत्येवापाद्यम् । प्रतिहननयोग्यत्वं द्वितीयमापाद्यम्, तेन गतिप्रतिपत्तिकसूत्रान्तरसंबन्धरहितोत्पन्नविनष्टे न व्यभिचारः । **महत्त्वबहुद्रव्यारब्धत्वाभ्यामिति** प्रथमसाध्याभिप्रायेण, द्वितीयं तु तयोरस्त्येव कुड्याद्यावृते तयोरप्यप्रवेशात् । तत्र मूर्तत्वमात्रमेव साधनं पर्याप्तम् । **एतत्सूत्राकाङ्क्षार्थमिति** । आपीतेरवतिष्ठते चेति चकारस्य प्रथमसूत्रेणाप्यन्वये सति सूक्ष्मशरीरविषये अन्यदपि किंचिद्वक्तव्यमस्तीति तेन द्योतनात्किं वक्तव्यमित्याकाङ्क्षोदेतीति भावः । अनेन पूर्वसूत्रस्य स्वरसत एतत्सूत्राकाङ्क्षा नास्ति; सूक्ष्मशरीरस्य देहान्निर्गमने तत्पार्श्वस्थैरुपलभ्येत इति प्रतिहतं नैतच्चेति शङ्कायास्तुच्छत्वात्, अविदुषामिव विदुषामपि पार्श्वस्थैरनुपलभ्यमानस्यैव तस्य नयनमरीचिवन्निर्गमनोपपत्तेः स्पष्टत्वात्, नयनमरीचेः काचाभ्रपटलत्वादिभिः कैश्चिदिव सूक्ष्मशरीरस्य सर्वैरप्यप्रतिघातस्याविद्वद्विषयेऽवश्यवक्तव्यत्वाच्च । एवंच स्वारसिकाकाङ्क्षासंपादनार्थमेव स्वरूपतः प्रमाणतश्चेति स्वस्थान एव स्वरूपसमुच्चयार्थत्वेन प्रतिष्ठितस्य भिन्नक्रमतयाऽप्यन्वयो दर्शितः । **ननु** चक्षुष्यनैकान्तिकत्वमाहेत्युक्तं टीकायां, कथं चाक्षुषशब्दः ? ननु चक्षुरेव चक्षुःसंबन्धीत्यतो व्याचष्टे—**यथा चाक्षुषस्येति** । चक्षुरुपादानं तेजः चक्षुःसंबन्धाच्चाक्षुषमित्युक्तं, पृथिवीद्व्यणुकसमवायिकारणं परमाणुः पार्थिवपरमाणुरितिवत् । **लिङ्गशरीरस्येति** शेष

भवितुमर्हति । तथाहि—नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते । तत्र तनुत्वात्संचारोपपत्तिः । स्वच्छत्वाच्चाप्रतीघातोपपत्तिः । अत एव च देहान्निर्गच्छन्पार्श्वस्थैर्नोपलभ्यते ॥ ९ ॥

## नोपमर्देनातः ॥ १० ॥

अत एव सूक्ष्मत्वान्नास्य स्थूलस्य शरीरस्योपमर्देन दाहादिनिमित्तेनेतरत्सूक्ष्मं शरीरमुपमृद्यते ॥ १० ॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

अस्यैव च सूक्ष्मस्य शरीरस्यैष ऊष्मा यमेतस्मिञ्शरीरे संस्पर्शेनोष्माणं विजानन्ति । तथाहि—मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते, जीवदवस्थायामेव तूपलभ्यत इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति । तथाच श्रुतिः—'उष्ण एव जीविष्यञ्शीतो मरिष्यन्' इति ॥ ११ ॥ इति पञ्चमं संसारव्यपदेशाधिकरणम् ॥

### भामती ।

सौक्ष्म्यं यतो नोपलभ्यते । यथा त्रसरेणवो जालसूर्यमरीचिभ्योऽन्यत्र प्रमाणतस्तथोपलब्धिरिति व्याचष्टे—**तथाहि नाडीनिष्क्रमण इति** । आदिग्रहणेन "चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य" इति संगृहीतम् । अप्रतिघाते हेतुमाह—**स्वच्छत्वाच्चेति** । एतदपि हि सूक्ष्मत्वेनैव संगृहीतम् । यथाहि काचाभ्रपटलं स्वच्छस्वभावस्य न तेजसः प्रतिघातकम् । एवं सर्वमेव वस्तुजातमस्येति ॥ ९ ॥ अत एव च स्वच्छतालक्षणात्सौक्ष्म्यादसक्तत्वापरनाम्नः ॥ १० ॥ **उपपत्तिः** प्राप्तिः । **एतदुक्तं भवति**—दृष्टश्रुताभ्यामूष्मणोऽन्वयव्यतिरेकाभ्यामस्ति स्थूलाद्देहादतिरिक्तं किंचिच्चदामात्सूक्ष्मं शरीरमिति ॥ ११ ॥ **इति पञ्चमं संसारव्यपदेशाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

सौक्ष्म्यमस्ति । लिङ्गशरीरस्येति शेषः । यथा त्रसरेणवो जालकप्रविष्टसूर्यरश्मिभ्योऽन्यत्र नोपलभ्यन्ते, परिमाणतः सौक्ष्म्यादेवं लिङ्गशरीरस्याप्यस्ति सौक्ष्म्यमिति योजना ॥ ९ ॥ **एतदपिहीति** । स्वच्छत्वमपि सूक्ष्मत्वेन संगृहीतमुपलक्षितमित्यर्थः । पूर्वोक्तहेतुभ्यां लिङ्गशरीरस्य चाक्षुषत्वानुमाने उद्भूतरूपत्वमुपाधिमनैकान्तिकत्वं चाभिधायेदानीं प्रतीघातानुमानेऽप्यस्वच्छत्वमुपाधिमनैकान्तिकतां चाह—**यथा हि काचेति** । काचद्रव्यमभ्रसमूहश्च यथा स्वच्छस्वभावस्य नेत्रतेजसो न प्रतिघातकं, तदन्तरितवस्तुनोऽपि नेत्रेणोपलम्भादेवं सर्वमेव मूर्तं वस्तुजातमस्य लिङ्गशरीरस्येत्यर्थः । असक्तत्वापरनाम्नो नोपमृद्यत इति शेषः ॥ १० ॥ **प्राप्तिर्लाभः** । **दृष्टं** त्वगिन्द्रियेण ज्ञानम् । श्रुतं कर्णौ पिधाय श्रवणम् । ताभ्यां प्रमाणाभ्यामूष्मणोऽ**न्वयव्यतिरेकौ** भावाभावौ । तद्बलादस्ति स्थूलदेहातिरिक्तं किंचिदित्यर्थः ॥ ११ ॥ **इति पञ्चमं संसारव्यपदेशाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

**इति** । परिमाणतः सूक्ष्ममिति पाठे लिङ्गशरीरमिति शेषः ॥ ९ ॥ **अस्वच्छत्वमुपाधिमिति** । यावन्मूर्तप्रतिहननीयत्वं साध्यं, तेन काचाभ्रपटलाद्यप्रतिहननीये नयनकिरणादौ न साध्याव्याप्तिः । नोपमृद्यत इति शेष इति टीकावाक्यस्य भाष्यस्थशब्देन पूरणं कृतम् ॥ १० ॥ सूत्रे उपपत्तिशब्दो न सूक्ष्मपरो व्याख्येयः; भाष्यकारैरूष्मिमप्रत्यक्षस्य सूक्ष्मशरीरे प्रमाणतयोपन्यस्तत्वात् । नच—तस्य स्थूलदेहातिरिक्तविषयत्वे युक्तिरपि तैरुपन्यस्तेति—वाच्यम्; प्रत्यक्षस्य विषयपरिशोधने खलु सा युक्तिः, नतु प्रत्यक्षविषयेऽतो यथा व्यक्तीनां परस्परव्यावृत्तत्वेनानुगतप्रत्ययविषयत्वं नोपपद्यत इति युक्त्या परिशोधितविषयम् अनुगतपक्षमेवं व्यावृत्तव्यक्त्यतिरिक्तानुवृत्तसामान्यसद्भावे प्रमाणम्, एवमिहाप्यनुवृत्तदेहविषयत्वानुपपत्तियुक्त्या परिशोधितविषयं व्यावृत्तोष्मिमप्रत्यक्षमेव तदाश्रयद्रव्यस्यापि ग्राहकं स्थूलदेहातिरिक्तसूक्ष्मदेहे प्रमाणं न युक्तिरित्यभिसंधिमता टीकाकृता उपपत्तिः प्राप्तिरिति व्याख्यातम् । तत्रापि ग्रामप्राप्त्यादिवदिह कस्य चित्प्राप्तिर्न दृश्यत इत्यनुपपत्तिं दृष्ट्वा व्याचष्टे—**प्राप्तिर्लाभ इति** । लाभोऽत्र सद्भावावगमः; अनेनायमर्थो लभ्यत इत्यादौ तत्र प्रयोगात् । तथाच स्थूलदेहातिरिक्तसूक्ष्मदेहस्यैवायमूष्मा स्थूलदेहव्यावृत्तोष्मिमप्रत्यक्षेण तत्सद्भावावगमादिति सूत्रार्थ इति तात्पर्यम् । उपपत्तिशब्देन प्रत्यक्षविषयपरिशोधकयुक्तिग्रहणेऽपि न दोषः; तस्यापि सूक्ष्मशरीरसिद्धौ परंपरयोपयोगाद्, भाष्यस्वारस्याच्च । **श्रुतं कर्णौ पिधाय श्रवणमिति** । इदं भाष्यं स्पष्टमिति टीकोक्तमिति गृहीतम् । इदं स्पार्शनप्रत्यक्षमिव न सर्वदा; मृत-

[1] तत्र सूत्राणि ४—तदाऽऽपीतेः संसारव्यपदेशात् ८ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ९ नोपमर्देनातः १० अस्यैव चोपपत्तेरेष ऊष्मा ११ ॥

( ६ अधिकरणम् ) **प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥**

'अमृतत्वं चानुपोष्य' इत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः, तत्रापि केनचित्कारणेनोत्क्रान्तिमाशङ्क्य प्रतिषेधति—'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' ( बृ० ४।४।६ ) इत्यतः परविद्याविषयात्प्रतिषेधान्न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत्, नेत्युच्यते; यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां न शरीरात् । कथमवगम्यते ? 'न तस्मात्प्राणा उत्क्रामन्ति' इति शाखान्तरे पञ्चमीप्रयोगात् । संबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या संबन्धविशेषे व्यवस्थाप्यते । तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते न देहः । न तस्मादुच्चिक्रमिषोर्जीवात्प्राणा अपक्रामन्ति सहैव तेन भवन्तीत्यर्थः ॥ १२ ॥ सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादित्येवं प्राप्ते प्रत्युच्यते—

**स्पष्टो ह्येकेषाम् ॥ १३ ॥**

न तदस्ति, यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिरुत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वादिति । यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते । तथाहि—आर्तभागप्रश्ने 'यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति' ( बृ० ३।२।११ ) इत्यत्र

---

## भामती ।

**प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥** अधिकरणतात्पर्यमाह—**अमृतत्वं चानुपोष्येत्यतो विशेषणादिति** । विषयमाह—**अथाकामयमान इति** । सिद्धान्तिमतमाशङ्क्य तन्निराकरणेन पूर्वपक्षी स्वमतमवस्थापयति—**अतः परविद्याविषयात्प्रतिषेधादिति** । यदि हि प्राणोपलक्षितस्य सूक्ष्मशरीरस्य जीवात्मनः स्थूलशरीरादुत्क्रान्तिं प्रतिषेधेच्छ्रुतिः, तत एतदुपपद्यते, नत्वेतदस्ति; न तस्मात्प्राणा उत्क्रामन्तीति हि तदा सर्वनाम्ना प्रधानावमर्शिनाभ्युदयनिःश्रेयसाधिकृतो देही प्रधानं परामृश्यते । तथाच तस्माद्देहिनो न प्राणाः सूक्ष्मं शरीरमुत्क्रामन्त्यपि तु तत्सहितः क्षेत्रज्ञ एवोत्क्रामतीति गम्यते । स पुनरतिक्रम्य ब्रह्मनाड्या संसारमण्डलं हिरण्यगर्भपर्यन्तं सलिङ्गो जीवः परस्मिन्ब्रह्मणि लीयते । तस्मात्परामपि देवतां विदुष उत्क्रान्तिरत एव मार्गश्रुतयः, स्मृतिश्च मुमुक्षोः शुकस्यादित्यमण्डलप्रस्थानं दर्शयतीति प्राप्तम् ॥ १२ ॥ एवं प्राप्ते प्रत्युच्यते—**स्पष्टो ह्येकेषाम्** । नायं देह्यपादानस्य प्रतिषेधः, अपितु देहापादानस्य । **तथाहि**—आर्तभागप्रश्नोत्तरे ह्येकस्मिन्पक्षे संसारिण एव जीवात्मनोऽनु-

## वेदान्तकल्पतरुः ।

**प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥** व्यवहितसंगतिर्भाष्य एवोक्ता । सूक्ष्मं शरीरं यस्य स जीवात्मा तथोक्तः । **ननु** विद्वानपि चेदुत्क्रामेत्कथं तस्य मोक्षसिद्धिरत आह—**स पुनरिति** । **एकस्मिन्पक्ष इति** । सिद्धान्ते इत्यर्थः ॥ १२॥ यदुक्तं हिरण्यगर्भपर्यन्तम् उत्क्रान्तस्य जीवस्य लिङ्गशरीरात् प्रलय इति, तत्राह—**संसारिण एवेति** ।

## कल्पतरुपरिमलः ।

शरीरे देहोष्मापगमानन्तरं कर्णपिधाने तदीयस्य परकीयस्य वा शब्दभावप्रत्यक्षस्याभावात् ? किंतु जीवदवस्थायां तदीयेन केवलभावप्रत्यक्षेण कर्णपिधानापेक्षासामर्थ्यलब्धान्तरविषयेण स्थूलशरीरातिरिक्तसूक्ष्मदेहसिद्धिर्विवक्षिता । ज्योतिरधिकरणे ( ब्र. अ. २ पा. ४ सू. १४ ) पिहितकर्णपुटेन श्रूयमाण आन्तरः शब्दो जाठराग्निरित्युक्तम्, इह तु जाठराग्निरपि सूक्ष्मदेहानुप्रविष्ट इत्येवमुक्तं, तदनन्तरप्रतिपत्त्यधिकरण( ब्र. अ. ३ पा. १ सू. १ )दर्शितश्रुतिन्यायसिद्धेः सूक्ष्मशरीरे प्रसङ्गादिह प्रमाणान्तरमप्यस्तीति दर्शितम् ॥ ११ ॥ **इति पञ्चमं संसारव्यपदेशाधिकरणम् ॥**

**प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥** प्राणोपलक्षितसूक्ष्मशरीरस्येति पदं बहुव्रीहिणा जीवात्मविशेषणमिति दर्शयति—**सूक्ष्मं शरीरं यस्येति** । प्राणोत्क्रान्त्यनुत्क्रान्तिविचारः प्राणोपलक्षितसूक्ष्मशरीरोपहितजीवविषयः पर्यवस्यतीति भावः । **सिद्धान्त इत्यर्थ इति** । "यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो ने"ति पृष्टयोः पक्षयोर्नेति-होवाचेति यो वक्तव्यः सिद्धान्तस्तस्मिन्नित्यर्थः ॥ १२ ॥ संसारिण एवेत्युक्तम्; प्रश्नप्रतिवचनयोर्विद्वद्विषयत्वस्य सिद्धान्त्यभिमतत्वादित्याशङ्क्य विदुषो हिरण्यगर्भलोकप्राप्त्यनन्तरं मुक्तिरिति पूर्वपक्षनिराकरणार्थं विदुष एव संसारमण्डलवर्तित्वावस्थाप्रदर्शनार्थं तद्विशेषणमिति व्याचष्टे—**यदुक्तमित्यादिना** । **ननु—एवमप्यस्त्वविदुष** इति टीकाग्रन्थेनार्तभागप्रश्नोत्तरे वर्ण्यमानानुत्क्रान्तिरविद्वद्विषयेत्याशङ्क्यते, इयमाशङ्का पूर्वपक्षिणो न युक्ता; स ह्यविदुष इव विदुषोऽप्युत्क्रान्ति-

'नेति होवाच याज्ञवल्क्यः' ( बृ० ३।२।११ ) इत्यनुत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु म्रियत इत्यस्यामाशङ्कायामत्रैव समवनीयन्त इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' ( बृ० ३।२।११ ) इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति । देहस्य चैतानि स्युर्न देहिनः । तत्सामान्यात् 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इत्यत्राप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य

## भामती ।

त्क्रान्तिं परिगृह्य न तर्ह्येष मृतः प्राणानामनुत्क्रान्तेरिति स्वयमाशङ्क्य प्राणानां प्रविलयं प्रतिज्ञाय तत्सिद्ध्यर्थमुत्क्रान्त्यवधेरुच्छ्वयनाध्माने ब्रुवन्नस्योच्छ्वयनाध्माने तस्य तदवधित्वमाह । शरीरस्य च ते इति शरीरमेव तदपादानं गम्यते । नन्वेवमप्यस्त्वविदुषः संसारिणो विदुषस्तु किमायातमित्यत आह—**तत्सामान्यादिति** । ननु तदा सर्व-

## वेदान्तकल्पतरुः ।

यत्रायं पुरुषो म्रियत इति निर्देशात्संसारमण्डले वर्तमानस्येत्यर्थः । मध्ये कश्चिच्छङ्कते—**नन्विति** । बृहदारण्यके हि पञ्चमाध्याये आर्तभागप्रश्नगतः शरीरापादानकोत्क्रान्तिप्रतिषेधोऽस्त्वविदुषो यत्रायं पुरुष इति पुरुषमात्रोपादानात्, षष्ठाध्यायगतस्तु "न तस्मात्प्राणा उत्क्रामन्ती"ति जीवापादानकोत्क्रान्तिप्रतिषेधो भवतु विदुषः, तथाच ब्रह्मविद उत्क्रान्तिसिद्धेः त्वत्पक्षासिद्धिरित्यर्थः । आर्तभागप्रश्नेऽपि "यदिदं किंच मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्न"मिति मृत्युमृत्योः परदेवतायाः प्रस्तुतत्वात्, तदभिज्ञस्य विदुष एवोत्क्रान्तिनिषेध इति साम्यं वाक्यद्वयस्येत्याह—**तत्सामान्यादिति** ।

## कल्पतरुपरिमलः ।

रस्तीति मन्यते, अतस्तटस्थशङ्केयमिति व्याचष्टे—**मध्ये कश्चिदिति** । ब्रह्मविदुत्क्रान्तिसिद्धेस्त्वत्पक्षासिद्धिरिति ब्रह्मविदोऽनुत्क्रान्तावार्तभागप्रश्नोत्तरं खलु प्रमाणमिति सिद्धान्तिनोपन्यस्तं, तच्चेदन्यविषयं भवेत्, तदा न सिद्धान्त्यभिमतसिद्धिरिति तावता सन्तुष्टस्य तटस्थस्येयमाशङ्केति भावः । यदि पूर्वपक्षिण एवेयमाशङ्का, तदैवमभिप्रायो वर्णनीयः । यत्रायं पुरुषो म्रियते इत्याद्यार्तभागप्रश्नोऽयमविद्वद्विषय एव; उत्तरसन्दर्भे "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशाः अप्सु लोहितं च रेतश्च धीयते क्वायं तदा पुरुषो भवती"त्यार्तभागप्रश्ने याज्ञवल्क्येनार्तभागेन च रहसि संमन्त्रणेन पुण्यपापरूपं कर्म तदाश्रयत्वेन निश्चितमिति प्रतिपादनात् । तत्र हि श्रूयते "तौ होत्क्रम्य मन्त्रयांचक्राते तौ ह यदूचतुः कर्म हैव तदूचतुः । अथ यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः । पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने"ति । तस्मादार्तभागप्रश्नेऽपि शरीरादुत्क्रान्तिर्न प्रतिषिध्यते; अविदुषस्तदवश्यंभावात्, किंतु शरीरादेवेति । **मृत्युमृत्योः परदेवतायाः प्रस्तुत्वादिति । ननु—** "तत्राग्निर्वै मृत्युः सोऽपामन्न"मिति तदनन्तरवाक्ये सर्वदाहकोऽग्निर्मृत्युः तदुपशान्तिकारणान्यापो मृत्युमृत्युरिति श्रुत्यैव विवरणं कृतम्, अतस्तत्र न परा देवता प्रकृतेति—**चेद्, उच्यते**; इन्द्रियतद्विषयेषु भूतग्रहवद् गृहीत्वा संसारिणां बन्धकत्वतदुत्कर्षाभ्यां ग्रहातिग्रहशब्दितेषु याज्ञवल्क्येन वर्णितेषु पुनरार्तभागस्य यः प्रश्नः—"यदिदं सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्न"मिति, न तस्याग्निविनाशिका आपो विषयः, पूर्वप्रश्नप्रस्तुतानुबन्धेनोत्तरोत्तरप्रश्नप्रवृत्तेः प्रकरणे दर्शनात्, किंतु सर्वमिदं जीवजातं ग्रहातिग्रहलक्षणस्य मृत्योरन्नं भवति तस्य मृत्युभूता देवता कतमेति संसारबन्धोच्छेदिका देवता प्रश्नस्य विषयः, सा "मृत्युर्यस्योपसेचन"मिति श्रुत्यन्तरप्रसिद्धा परदेवतेत्युत्तरमभिप्रेत्य मृत्योरपि मृत्युसद्भावसंभावनार्थम् "अग्निर्वै मृत्युः सोपामन्न"मिति दृष्टान्तः प्रदर्शितः । तस्माद्विद्वद्विषयमेव पूर्ववाक्यमिति तदनुसारेणोत्तरवाक्यमपि विदुष एवोत्क्रान्तिप्रतिषेधकम् । नच "यत्रास्य पुरुषस्ये"ति तदनन्तरवाक्यस्याविद्वद्विषयत्वाद् अस्यापि तद्विषयत्वं शङ्कनीयम्; अविद्वद्विषयस्य प्रसङ्गकान्तरेण प्राप्तेः । **तथाहि—**विदुषः प्राणानामनुत्क्रमणे तेषामत्रैव विलये च वर्णिते विदुषः प्राण एव विलीयते, उत तत्प्रयोजकमपीति भावेन "यत्रायं पुरुषो म्रियते किमेनं न जहाती"ति पृष्टे "नामेत्याहेती"ति नाममात्रमवशिष्यते, तत्प्रयोजकमपि विलीयते; अन्यथा मोक्षानुपपत्तेरित्युत्तरमुक्तमिति श्रुत्या प्रदर्शितं, तत्प्रसङ्गात्तत्प्रयोजकमेव किं ? तत्र हि कालस्वभावनियतियदृच्छादिविषयो महान्विवादोऽस्तीत्यभिप्रायेण "यत्रास्य पुरुषस्ये"त्यादिः "क्वायं तदा पुरुषो भवती"त्यन्तः प्रश्नः बहुविवादविषयस्य महाजनसमक्षं निर्णयो मा भूदिति रहसि तदुत्तरकथनं च । अतो नोत्तरप्रश्नस्याविद्वद्विषयतामात्रेणास्य प्रश्नस्योपक्रमावगतं विद्वद्विषयत्वमपैतीति विद्वद्विषयमेवोत्क्रान्तिप्रतिषेधवाक्यम् ।

**ननु—**अस्त्वेवं तथापि "न तस्मात्प्राणा उत्क्रामन्ती"ति वाक्य इवो"दस्मात्प्राणाः क्रामन्ती"ति वाक्येऽपि विद्वज्जीवापादानकस्यैवोत्क्रमणस्य प्रतिषेधः, न तच्छरीरापादानकस्य; "यत्रायं पुरुषो म्रियत" इत्यत्रायं पुरुष इत्यस्य "अपपुनर्मृत्युं जयती"ति पूर्ववाक्यान्तप्रस्तुतविद्वज्जीवविषयत्वात्, तदनुसारेणास्मात्प्राणा इति वाक्येऽपि अस्मादित्यस्य तद्विषय-

प्रतिषेधः । यद्यपि प्राधान्यं देहिन इति व्याख्येयं येषां पञ्चमीपाठः । येषां तु षष्ठीपाठस्तेषां विद्वत्संबन्धिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति, देहादुत्क्रान्तिः प्राप्ता न देहिनः । अपिच 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृ० ४।४।२ ) इत्येवमविद्वद्विषयं सप्रपञ्चमुत्क्रमणं संसारगमनं च दर्शयित्वा 'इति नु कामयमानः' ( बृ० ४।४।६ ) इत्युपसंहृत्याविद्वत्कथाम् 'अथाकामयमानः' ( बृ० ४।४।६ ) इति व्यपदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमञ्जस एव व्यपदेशः स्यात् । तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय । नच ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते; निमित्ताभावात् । 'अत्र ब्रह्म समश्नुते' इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति ॥ १३ ॥

## स्मर्यते च ॥ १४ ॥

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः—'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः' इति । ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते 'शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव' इति । न । सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम् ; सर्वभूतदृश्यत्वाद्युपन्यासात् । नह्यशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः। तथाच तत्रैवोपसंहृतम्—'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्' इति । तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः,गतिश्रुतीनां तु विषयमुपरिष्टाद्व्याख्यास्यामः ॥ १४ ॥ इति षष्ठं प्रतिषेधाधिकरणम् ॥

### भामती ।

नाम्ना प्रधानतया देही परामृष्टः, तत्कथमत्र देहावगतिरित्यत आह—**अभेदोपचारेण** । देहदेहिनोर्देहिपरामर्शिना सर्वनाम्ना देह एव परामृष्ट इति पञ्चमीपाठे व्याख्येयम् । षष्ठीपाठे तु नोपचार इत्याह—**येषां तु षष्ठीति** । **अपिच** प्राप्तिपूर्वः प्रतिषेधो भवति नाप्राप्ते। अविदुषो हि देहादुत्क्रमणं दृष्टमिति विदुषोऽपि तत्सामान्याद्देहादुत्क्रमणे प्राप्ते प्रतिषेध उपपद्यते, नतु प्राणानां जीवावधिकं क्वचिदुत्क्रमणं दृष्टं येन तन्निषिध्यते । **अपिचाद्वैतपरिभावनाभुवा** प्रसंख्यानेन निर्मृष्टनिखिलप्रपञ्चावभासजातस्य गन्तव्याभावादेव नास्ति गतिरित्याह—**नच ब्रह्मविद इति** । अपदस्य हि ब्रह्मविदो मार्गे पदैषिणोऽपि देवा इति योजना । चोदयति—**ननु गतिरपीति** । परिहरति—**सशरीरस्यैवायं योगबलेन** । अपरविद्याबलेनेति ॥ १३ ॥ १४ ॥ **इति षष्ठं प्रतिषेधाधिकरणम्** ॥

### वेदान्तकल्पतरुः ।

**अभेदोपचारेणेति** । उत्क्रान्त्यवधेरुच्छ्वयनादिभिर्निर्देशस्यान्यथा नेतुमशक्यत्वात्तद्वशेनात्रोपचार इत्यर्थः । पञ्चमीपाठे उपचाराश्रयणे न्यायद्वयमाह—**अपिचाद्वैतेति** । भाष्योदाहृतस्मृतिं व्याचष्टे—**अपदस्य हीति** । पद्यत इति पदं गन्तव्यम् अन्यद्यस्य नास्ति स ब्रह्मविद् **अपदः** ब्रह्मविदो मार्गे ब्रह्मप्राप्तिसाधने ज्ञाने ये पदैषिणः निष्ठेच्छवः तेऽपि देवा

### कल्पतरुपरिमलः ।

त्वात्तच्छरीरविषयतायां तदभेदोपचारकल्पनापत्तेः । **ननु** उत्क्रान्त्यभावे मृतो न स्यादिति शङ्कानिवारणार्थं मृतचिह्नप्रदर्शनेन मृतत्वोपपादनाय प्रवृत्ते "उच्छ्वयती"ति समनन्तरवाक्ये दृतिवद्वायुना पूरणमुच्छ्वयनं च शरीरधर्मः कीर्त्यत इति—**चेद्**, भवतु तावता तत्र स इत्यस्य शरीर्यभेदोपचारः शरीरे, नत्वग्रिमानुपपत्तिपरिहारार्थं प्रथममेव तथोपचारः कल्पनीयः।

**उच्यते**; यद्युदस्मादित्यादिवाक्यस्य जीवान्नोत्क्रामन्ति प्राणा जीवं विहाय तेन सहैव गच्छन्तीत्यर्थः कल्प्यते, तदा किमेनं जहतीत्यग्रिमप्रश्नोऽप्यनुपपन्नः स्यात्, प्राणा विद्वांसं जहतीत्यर्थाङ्गीकारे किमेनं न जहातीति प्रश्न उपपद्यते, अतोऽग्रिमप्रश्नस्याप्युपपत्त्यर्थम् "अस्मादि"त्यस्य शरीरसंबन्धेन शरीरे लक्षणा कल्पयितुमुचिता, नतु समुच्छ्वयतीत्यत्र स इत्यस्य । एवंच तदानीं सता शरीरसंबन्धेन सन्निकृष्टां लक्षणां परिगृह्य तदानीमसता तेन विप्रकृष्टा लक्षणा च परित्यक्ता भवति । **किंच** यत्र शरीरे स्थितोऽयं पुरुषो म्रियते अस्मादित्येवं यच्छब्दनिर्दिष्टशरीरप्रत्यवमर्शकत्वकल्पनायाम् अस्मादित्यस्य शरीरे मुख्यवृत्तिरपि लभ्यते, तस्मादार्तभागप्रश्नो विदुषः प्राणोत्क्रान्तिप्रतिषेधार्थ इति तत्साम्याद् "न तस्मादि"ति वाक्यान्तरस्यापि तादर्थ्यमङ्गीकर्तव्यमिति युक्तमेव । तदेतत्सर्वमभिप्रेत्योक्तम्—**उत्क्रान्त्यवधेरुच्छ्वयनादिनि-**

( ७ अधिकरणम् ) **तानि परे तथाह्याह ॥ १५ ॥**

तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते कस्मात् ? तथाह्याह श्रुतिः—'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' ( प्रश्न० ६।५ ) इति । ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' (मु० ३।२।७) इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाह स्म, न; सा खलु व्यवहारापेक्षा, पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति, इतरा तु विद्वत्प्रतिपत्त्यपेक्षा, कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव संपद्यत इति । तस्माददोषः ॥ १५ ॥ इति सप्तमं वागादिलयाधिकरणम् ॥

## भामती ।

**तानि परे तथाह्याह ॥ १५ ॥** प्रतिष्ठाविलयनश्रुत्योर्विप्रतिपत्तेर्विमर्शस्तमपनेतुमयमारम्भः । तानि पुनः प्राणशब्दोदितानीन्द्रियाण्येकादश सूक्ष्माणि च भूतानि पञ्च । **ब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनीति** । आरम्भबीजं विमर्शमाह—**ननु गताः कला इति** । प्राणमनसोरेकप्रकृतित्वं विवक्षित्वा पञ्चदशत्वमुक्तम् । अत्र श्रुत्योर्विषयव्यवस्थया विप्रतिपत्त्यभावमाह—**सा खल्विति** । **व्यवहारो** लौकिकः । सांव्यवहारिकप्रमाणापेक्षेयं श्रुतिः । न तात्त्विकप्रमाणापेक्षा, इतरा तु 'एवमेवास्य परिद्रष्टुः' इत्यादिका विद्वत्प्रतिपत्त्यपेक्षा तात्त्विकप्रमाणापेक्षा । तस्माद्विषयभेदादविप्रतिपत्तिः श्रुत्योरिति ॥ १५ ॥ **इति सप्तमं वागादिलयाधिकरणम् ॥**

## वेन्दान्तकल्पतरुः ।

उत्कृष्टाः, किमु तन्निष्ठाः, किंतु परं मुह्यन्त्यत्र मन्दभाग्या इत्यर्थे स्मृतिं योजयति—**पदैषिणोऽपीति** ॥ १३ ॥ १४ ॥ **इति षष्ठं प्रतिषेधाधिकरणम् ॥**[1]

**तानि परे तथाह्याह ॥ १५ ॥** इत्याद्यधिकरणपञ्चकस्य संगतयो भाष्य एव विशदाः । परस्मिन् पुरुषे करणलयवचने सति संशयानुपपत्तिमाशङ्क्याह—**प्रतिष्ठाविलयनश्रुत्योरिति** । **प्रतिष्ठयोर**वान्तरप्रकृतिमहाप्रकृत्योः, लिङ्गशरीरविलयनश्रुतिगताः कला "एवमेवास्य परिद्रष्टु"रिति श्रुती तयोर्विप्रतिपत्तेर्विमर्शः संशय इत्यर्थः । **परस्मिन्नात्मनीति** । लीयन्त इति शेषः । **ननु** बाह्येन्द्रियाणि दश भूतानि पञ्च मन एकमिति षोडश कलाः सन्ति, कथं श्रुतौ पञ्चदशत्वनिर्देशस्तत्राह—**प्राणेति** । प्राणस्य हि पृथिव्युपादानं, मनसश्च सैवान्नमयत्वश्रुतेरत एकप्रकृतिकत्वमित्यर्थः । सांव्यवहारिकप्रमाणेनानुमानेन करणानां भौतिकत्वावगमाद् भूतेषु लयोऽवगतः, भूतसूक्ष्माणां चासाधारणानां साधारणेषु भूतेषु प्राणानां वायौ तात्त्विकप्रमाणैस्तु वेदान्तैर्विश्वस्य ब्रह्मविवर्तत्वावगमाद् ब्रह्मणि बाध इत्यर्थः । यथा नद्यः समुद्रे लीयन्ते एवमेव पुरुषे कलाः आसां कलानां नामरूपे शक्त्यात्मके अपि भिद्येते, स च विद्वानकलः कलारहितः सन्नमृतो भवति ॥ १५ ॥ **इति सप्तमं वागादिलयाधिकरणम् ॥**[2]

## कल्पतरुपरिमलः ।

**देशस्यान्यथानेतुमशक्यत्वादिति । अपिच द्वयेनेति । ननु** आद्येनापिचेति ग्रन्थेन पूर्वपक्षे प्रसक्तप्रतिषेधतोक्ता, सा न युक्ता; "तस्य तावदेव चिरमि"ति देहान्त एव ब्रह्मप्राप्तिप्रतिपादिकया श्रुत्या प्रसक्तिसंभवादिति—**चेद्, न**; तया हि जीवं विहाय जीवादूर्ध्वगमनरूपोत्क्रान्तिर्न प्रसज्यते, किंतु प्रविलयेन जीवप्रहाणमेव । अतोऽप्रसक्तप्रतिषेधत्वापत्तिदूषणमपि युक्तमेव ॥ १३ ॥ १४ ॥ **इति षष्ठं प्रतिषेधाधिकरणम् ॥**

**तानि परे तथाह्याह ॥ १५ ॥** प्रतिष्ठाविलयनश्रुती इति स्थाने प्रतिष्ठयोरवान्तरप्रकृतिमाह प्रकृत्योर्लिङ्गशरीरविलयनश्रुती इति क्वचित्पाठः । तत्राप्यर्थतो न भेदः । "यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ती"ति दृष्टान्तवाक्यार्थानुत्क्रमणपूर्वकं एवंशब्दार्थमाह—**यथा नद्य इति । शक्त्यात्मके अपि भिद्येते इति ।** नामरूपविलयमात्रस्य नदीसमुद्रदृष्टान्तवाक्यार्थानुमतिपूर्वकास्तगमनोक्त्या नामरूपविलयसिद्धेर्भिद्येते इत्यादिवाक्यं तयोर्निरवशेषलयप्रतिपादनार्थमिति भावः । भिद्येते इत्यादिश्रुतिवाक्यमविभागो वचनादित्युत्तराधिकरणे भाष्यकारैर्लिखितम्, इह तद्व्याख्यानग्रन्थः काकपदव्यत्यासाद्? भ्रान्त्या प्रमादेन वा लेखकैर्लिखितः । **यद्वा**—अस्तं गच्छन्तीत्यन्तश्रुतिवाक्यस्यात्र-

---

१ तत्र सूत्राणि ३—प्रतिषेधादिति चेन्न शारीरात् १२ स्पष्टो ह्येकेषाम् १३ स्मर्यते च १४ ॥
२ तत्र सूत्रम् १—तानि परे तथा ह्याह १५ ॥

( ८ अधिकरणम् ) **अविभागो वचनात् ॥ १६ ॥**

स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष इति । तत्र प्रलयसामान्याच्छत्त्यवशेषताप्रसक्तौ ब्रवीति—अविभागापत्तिरेवेति । कुतः ? वचनात् । तथा हि कलाप्रलयमुक्त्वा वक्ति—'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' ( प्र० ६।५ ) इति । अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः । तस्मादविभाग एवेति ॥ १६ ॥ इत्यष्टममविभागाधिकरणम् ॥

( ९ अधिकरणम् ) **तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता । संप्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति। समाना चासृत्युपक्रमाद्विद्वदविदुषोरुत्क्रान्तिरित्युक्तं, तमिदानीं सृत्युपक्रमं दर्शयति; तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयम्; 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' इति श्रुतेः। तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना चोत्क्रन्तिः श्रूयते—'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' ( बृ० ४।४।२ ) इति । सा किमनियमेनैव विद्वदविदुषोर्भवत्यथास्ति कश्चिद्विदुषो विशेषनियम इति विचिकित्सायां श्रुत्यविशेषादनियम-

---

भामती ।

**अविभागो वचनात् ॥ १६ ॥** निमित्तापाये नैमित्तिकस्यात्यन्तिकापायः । अविद्यानिमित्तश्च विभागो नाविद्यायां विद्यया समूलघातमपहतायां सावशेषो भवितुमर्हति; तथापि प्रविलयसामान्यात् सावशेषताशङ्कामतिमन्दामपनेतुमिदं सूत्रम् ॥ १६ ॥ **इत्यष्टममविभागाधिकरणम् ॥**

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥** अपरविद्याविदोऽविदुषश्चोत्क्रान्तिरुक्ता । तत्र किं विद्वानविद्वांश्चाविशेषेण मूर्धादिभ्य उत्क्रामत्याहो विद्वान्मूर्धस्थानादेव, अपरे तु स्थानान्तरेभ्य इति । अत्र विद्यासामर्थ्यमपश्यतः पूर्वपक्षः । तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयं तस्याग्रं तस्य ज्वलनं यत्तत्प्रकाशितद्वारो विनिष्क्रमद्वारो विद्वान्मूर्धस्थानादेव निष्क्रामति नान्येभ्यश्चक्षुरादिस्थानेभ्यः । कुतः ? **विद्यासामर्थ्यात्** हार्दविद्यासामर्थ्यात् । उत्कृष्टस्थानप्रतिलम्भाय हि हार्दविद्योपदेशः । मूर्धस्थानादनिष्क्रमणे च नोत्कृष्टदेशप्राप्तिः । अथ स्थानान्तरेभ्योऽप्यु-

वेदान्तकल्पतरुः ।

**अविभागो वचनात् ॥ १६ ॥ अतिमन्दामपनेतुमिति ।** श्रुतिविरोधेनेत्यर्थः ॥ १६ ॥ **इत्यष्टममविभागाधिकरणम् ॥**[1]

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ प्रज्वलनं** कर्मवशाद् भविष्यत्फलप्रकाशः । तस्यानुस्मरन्निति कर्मणि षष्ठी । **ननु** मूर्धन्य-

कल्पतरुपरिमलः ।

व्याख्येयत्वाद् भिद्येते इत्यादिवाक्यस्य श्रुतिपाठे तदनन्तरवाक्यत्वादग्रिमाधिकरणोदाहृतमपि तद्वाक्यं पूर्ववाक्येनैकवाक्यताप्रदर्शनार्थमिहैव व्याख्यातम् ॥ १५ ॥ **इति सप्तमं वागादिलयाधिकरणम् ॥**

**अविभागो वचनात् ॥ १६ ॥ श्रुतिविरोधेनेति ।** सति श्रुतिविरोधे लयत्वेन हेतुना सावशेषत्वानुमानं नोत्तिष्ठति । नच—अस्तं गच्छन्तीति श्रुतिवाक्यमपि सावशेषलयपरं स्यादिति—वाच्यम्; भिद्येते इत्यादिवाक्यशेषेणाशक्त्यवशेषशङ्कानिरासादिति भावः ॥ १६ ॥ **इत्यष्टममविभागाधिकरणम् ॥**

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१७॥ कथं तया ब्रह्मलोकप्राप्तिरिति ।** यद्यप्यर्चिर्लोकमारभ्याऽऽतिवाहिकाः सन्ति; तथापि ताव-

---

१ तत्र सूत्रम् १—अविभागो वचनात् १६ ॥

प्राप्तावाचष्टे—समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च मूर्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्यस्त्वितरे । कुतः ? विद्यासामर्थ्यात् । यदि विद्वानपीतरवद्यतः कुतश्चिद्देहदेशादुत्क्रामेन्नैवोत्कृष्टं लोकं लभेत । तत्रानर्थिकैव विद्या स्यात् । तच्छेषगत्यनुस्मृतियोगाच्च । विद्याशेषभूता च मूर्धन्यनाडीसंबद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता, तामभ्यस्यंस्तयैव प्रतिष्ठत इति युक्तम् । तस्माद्धृदयालयेन ब्रह्मणा सूपासितेनानुगृहीतस्तद्भावं समापन्नो विद्वान्मूर्धन्ययैव शताधिकया शतादतिरिक्तयैकशततम्या नाड्या निष्क्रामतीतराभिरितरे । तथाहि हार्दविद्यां प्रकृत्य समामनन्ति—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' ( छा० ८।६।६ ) इति ॥ १७ ॥ इति नवमं तदोकोऽधिकरणम् ॥

( १० अधिकरणम् ) **रश्म्यनुसारी ॥ १८ ॥**

अस्ति हार्दविद्या—'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' ( छा० ८।१।१ ) इत्युपक्रम्य विहिता । तत्प्रक्रियायाम् 'अथ या एता हृदयस्य नाड्यः' ( छा० ८।६।१ ) इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसंबन्धमुक्त्वोक्तम् 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' ( छा० ८।६।५ ) इति । पुनश्चोक्तम् 'तयोर्ध्वमायन्नमृतत्वमेति' ( छा० ८।६।६ ) इति । तस्माच्छताधिकया नाड्या निष्क्रामन्रश्म्यनुसारी निष्क्रामतीति गम्यते । तत्किमविशेषेणैवाहनि

---

**भामती ।**

क्रामन्कस्माल्लोकमुत्कृष्टं न प्राप्नोतीत्यत आह—**तच्छेषगत्यनुस्मृतियोगाच्च** । हार्दविद्याशेषभूता हि मूर्धन्या नाडी गत्यै उपदिष्टा । तदनुशीलनेन खल्वयं जीवो हार्देन सूपासितेन ब्रह्मणानुगृहीतस्तस्यानुस्मरंस्तद्भावमापन्नो मूर्धन्ययैव शताधिकया नाड्या निष्क्रामति । हृदयादुद्गता हि ब्रह्मनाडी भास्वरा तालुमूलं भित्त्वा मूर्धानमेत्य रश्मिभिरेकीभूता आदित्यमण्डलमनुप्रविष्टा तामनुशीलयतस्तयैवान्तकाले निर्गमनं भवतीति ॥ १७ ॥ **इति नवमं तदोकोऽधिकरणम् ॥**

**रश्म्यनुसारी** ॥ रात्रावहनि चाविशेषेण रश्म्यनुसारी सन्नादित्यमण्डलं प्राप्नोतीति सिद्धान्तपक्षप्रतिज्ञा ॥ १८ ॥

**वेदान्तकल्पतरुः ।**

नाड्या देहमात्रव्यापित्वात्कथं तया ब्रह्मलोकप्राप्तिस्तत्राह—**हृदयान्निर्गता हीति** । ता आसु नाडीषु सृप्ता इति श्रुतिसिद्धत्वादित्यर्थः । **विष्वङ्** नानागतयः ॥ १७ ॥ **इति नवमं तदोकोऽधिकरणम् ॥**[1]

**रश्म्यनुसारी ॥ १८ ॥** सूत्रं योजयति—**रात्रावहनि वेति** ॥ १८ ॥ सिद्धान्तहेतुस्तूत्तरसूत्रगतोत्तरावयव-

**कल्पतरुपरिमलः ।**

पर्यन्तमपि मूर्धन्यनाडी न व्याप्नोतीति भावः । **आसु नाडीषु सृप्ता इति श्रुतिसिद्धत्वादिति** । यद्यप्यासु नाडीषु सृप्ता इत्यादिश्रुतिर्महापथस्य ग्रामद्वयसंबन्धवदादित्यरश्मीनां हृदयनाडीभिर्मण्डलेन च संबन्धमात्रं वदति, ननु ब्रह्मनाड्या मण्डलानुप्रवेशम्; तथापि ब्रह्मनाड्या स्वानुप्रविष्टरश्मिद्वारा मण्डलसंबन्ध एव टीकायां मण्डलानुप्रवेशो विवक्षित इति तात्पर्यम् । **विष्वङ् नानागतय इति** । अन्या हृदयस्य नाड्यस्तिर्यङ्मुखत्वाधोमुखत्वादिप्रकारेण नानागतयः सत्यः उत्क्रमणकार्यमात्रे प्रभवन्ति, नामृतत्वफले उपयुज्यन्त इत्यर्थः । अनेन "चक्षुष्टो वा मूर्ध्नो वे"त्यादिश्रुत्या निष्क्रमणे हृदयनाडीनामनियमेन द्वारत्वप्राप्तावमृतत्वफलभोगार्थनिष्क्रमणे ब्रह्मनाडी तदितरनिष्क्रमणे नाड्यन्तराणि च श्रुत्या नियम्यन्त इति दर्शितं भवति । नाड्यन्तराणि तत्तत्कर्मफलभोगार्थत्वे भारतादिषु नियमितानि द्रष्टव्यानि । नाडीनां दुर्विवेचत्वेऽपि जीवस्य तत्तन्नाडीविशेषानुप्रविश्य निष्क्रमणं विद्याकर्मसामर्थ्याद्यधीनम् । इह प्रकृतोपयोगाद् विद्यासामर्थ्यादिमात्रं सूत्रे दर्शितम् । तत्र हार्दानुगृहीत इति ह्यभिव्यक्तेन स्वोपासितेन परमेश्वरेणानुगृहीत इत्येतत्परं टीकायां विशिष्य हार्दविद्याग्रहणं विद्यान्तराणामप्युपलक्षणम् ॥ १७ ॥ **इति नवमं तदोकोऽधिकरणम् ॥**

**रश्म्यनुसारी ॥ १८ ॥** ग्रीष्मे दिवा सौरातपौष्ण्यप्रकर्षाद्रात्रावूष्मदर्शनेन सूर्यरश्मीनामेव स ऊष्मेत्यवसीयत इति

---

१ तत्र सूत्रम् १—तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया १७ ॥

रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशये सत्यविशेषश्रवणादविशेषेणैव तावद्रश्म्यनुसारीति प्रतिज्ञायते ॥ १८ ॥

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

अस्त्यहनि नाडीरश्मिसंबन्ध इत्यहनि मृतस्य स्याद्रश्म्यनुसारित्वं, रात्रौ तु प्रेतस्य न स्यात्; नाडीरश्मिसंबन्धविच्छेदादिति चेन्न; नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात् । यावद्देहभावी हि शिराकिरणसंपर्कः । दर्शयति चैतमर्थं श्रुतिः—अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' (छा० ८।६।२ ) इति । निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते; प्रतापादिकार्यदर्शनात् । स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वमृत्वन्तररजनीषु शैशिरेष्विव दुर्दिनेषु । 'अहरेवैतद्रात्रौ दधाति' इति चैतदेव दर्शयति । यदि च रात्रौ प्रेतो विनैव रश्म्यनुसारेणोर्ध्वमाक्रमेत रश्म्यनुसारानर्थक्यं भवेत्, नह्येतद्विशिष्याधीयते यो दिवा प्रैति स रश्मीनपेक्ष्योर्ध्वमाक्रमते यस्तु रात्रौ सोऽनपेक्ष्यैवेति। अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत पाक्षिकफला विद्येत्यप्रवृत्तिरेव तस्यां स्यात्; मृत्युकालानियमात् । अथापि रात्रावुपरतोऽहरागममुदीक्षेत । अहरागमेऽप्यस्य कदाचिदरश्मिसंबन्धार्हं शरीरं स्यात्पावकादिसंपर्कात् । 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' ( छा० ८।६।५ ) इति च श्रुतिरनुदीक्षां दर्शयति । तस्मात्तदविशेषेणैवेदं रात्रिंदिवं रश्म्यनुसारित्वम् ॥ १९ ॥ इति दशमं रश्म्यधिकरणम् ॥

### भामती ।

पूर्वपक्षमाशङ्कते सूत्रावयवेन—**निशि नेति चेत्** । सूत्रावयवान्तरेण निराकरोति—**न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च** । यावद्देहभावि हि शिराकिरणसंपर्कः प्रमाणान्तरात्प्रतीयते । दर्शयति चैतमर्थं श्रुतिरप्यशेषेण । अमुष्मादादित्यात्प्रतायन्ते रश्मयस्त आसु नाडीषु सृप्ता भवन्ति य आभ्यो नाडीभ्यः **प्रतायन्ते** विस्तार्यन्ते ते रश्मयोऽमुष्मिन्नादित्ये सृप्ताः । **प्रतापादिकार्यदर्शनादिति** । आदिग्रहणेन चन्द्रापः संगृह्यन्ते । चन्द्रमसा खल्वम्मयेन संबध्यमानानां सूरीणां भासां चन्द्रिकात्वम् । तस्मादप्यस्ति निशि सौर्यरश्मिप्रचार इति । ये त्वाहुः—स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छेदिति निरपेक्षश्रवणाद्रात्रौ प्रेते नास्ति रश्म्यपेक्षेति । तान्प्रत्याह—**यदि च रात्रौ प्रेत इति** । **नह्येतद्विशिष्याधीयते**ऽध्येतारः । ये तु मन्यन्ते विद्वानपि रात्रिप्रायणापराधेन नोर्ध्वमाक्रमत इति, तान्प्रत्याह—**अथ तु विद्वानपीति** । नित्यवत्फलसंबन्धेन विहिता विद्या न पाक्षिकफला युक्तेति । ये तु रात्रौ प्रेतस्य विदुषोऽहरपेक्षां सूर्यमण्डलप्राप्तिमाचक्षते, तन्मतमाशङ्क्याह—**अथापि रात्राविति** । यावत्तावदुपबन्धेनानपेक्षा गतिः श्रुता । नचापेक्षा शक्यावगमा उपबन्धविरोधादिति ॥ १९॥ **इति दशमं रश्म्यधिकरणम्**॥

### वेदान्तकल्पतरुः ।

इति । **प्रमाणान्तरादिति** । निश्यप्यौष्ण्यग्राहकादित्यर्थः । अनेन सौत्रश्चशब्दो व्याख्यातः । व्याख्यानपूर्वकं वाक्यमुदाहरति—**अमुष्मादिति** । चन्द्रगतप्रकाशान्यथानुपपत्त्याऽस्ति रात्रौ सूर्यरश्मिरित्याह—**आदिग्रहणेति** । **ननु** चन्द्रमस एव प्रकाशोऽस्तु, तत्राह—**अम्मयेनेति** । रात्रावुत्क्रान्तस्याहःप्रतीक्षा नास्तीत्यत्र हेतुमाह—**यावत्तावदिति** । स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति श्रुतौ यावच्छब्दोपबन्धेन शैघ्र्यपरेणानपेक्षा गतिः श्रुता, एवं चापेक्षा न शक्यावगमा; यावत्तावच्छब्दयोरुपबन्धेनैव निरोधादित्यर्थः । अथ विशेषविज्ञानोपशमानन्तरम् । एतदिति क्रियाविशेषणम् । एतत्करोतीत्यर्थः । तदेव दर्शयति—**अस्मादिति** । यद्रात्रौ ताप उपलभ्यते इति एतदहरेव रात्रौ दधाति सविता ॥ १९ ॥ **इति दशमं रश्म्यधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

भावः । **अम्मयेति** । चन्द्रमण्डलस्य जलमयत्वं "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छिताः प्रतिफलन्ती"त्यादिज्योतिःशास्त्रवचनसिद्धम् । यदि विद्याफलं नियतमेतैरेव रश्मिभिरिति श्रुतिप्राप्तो रश्मिनियमस्त्यक्तव्यः । नच रश्मिनियम आद्रियते विद्याफलनियमस्त्यक्तव्यः रात्रिमरणे विद्याफलप्रापकरश्म्यभावात् । अथ नियमद्वयमप्याद्रियते, तदा रात्रौ मृतस्याहरागमप्रतीक्षणात् "स यावत् क्षिप्ये"दिति त्वरावचनपरित्यागः, रात्रावेव देहनाड्यानुप्रविष्टरश्मिद्वारा विद्याफल-

१ तत्र सूत्रे २—रश्म्यनुसारी १८ निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च १९ ॥

( ११ अधिकरणम् ) **अतश्चायनेऽपि दक्षिणे ॥ २० ॥**

अतएव चोदीक्षानुपपत्तेरपाक्षिकफलत्वाच्च विद्याया अनियतकालत्वाच्च मृत्योर्दक्षिणायनेऽपि म्रियमाणो विद्वान्प्राप्नोत्येव विद्याफलम् । उत्तरायणमरणप्राशस्त्यप्रसिद्धेर्भीष्मस्य च प्रतीक्षादर्शनात् 'आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्' ( छा० ४।१५।५ ) इति च श्रुतेरपेक्षितव्यमुत्तरायणमितीमामाशङ्कामनेन सूत्रेणापनुदति । प्राशस्त्यप्रसिद्धिरविद्वद्विषया । भीष्मस्य प्रतिपालनमाचारप्रतिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थं च । श्रुतेस्त्वर्थं वक्ष्यति 'आतिवाहिकस्तल्लिङ्गात्' ( ब्र० सू० ४।३।४ ) इति ॥ २० ॥ ननु च—'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ' ( गी० ८।२३ ) इति कालप्राधान्येनोपक्रम्याहरादिकालविशेषः स्मृतावपुनरावृत्तये नियमितः, कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायादिति ? अत्रोच्यते—

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥**

योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते। स्मार्ते चैते योगसांख्ये न श्रौते। अतो विषयभेदात्प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः । ननु—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' । 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' ( गी० ८।२४।२–५ ) इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति, उच्यते—'तं कालं वक्ष्यामि' ( गी० ८।२३ ) इति स्मृतौ कालप्रतिज्ञानाद्विरोधमाशङ्क्य परिहार उक्तः । यदा पुनः स्मृतावप्यग्न्याद्या देवता एवातिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति ॥ २१ ॥ इत्येकादशं दक्षिणायनाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

भामती ।

**अतश्चायनेऽपि दक्षिणे** ॥२०॥ अतएवेत्युक्तहेतुपरामर्श इत्याह—**अत एव चोदीक्षानुपपत्तेरिति** । पूर्वपक्षबीजमाह—**उत्तरायणमरणप्राशस्त्य इति** । अपनोदमाह—**प्राशस्त्यप्रसिद्धिरिति** । अतःपदपरामृष्टहेतुबलादविदुषो मरणं प्रशस्तमुत्तरायणे विदुषस्तूभयत्राप्यविशेषो विद्यासामर्थ्यादिति। विदुषोऽपि च भीष्मस्योत्तरायणप्रतीक्षणमविदुष आचारं ग्राहयति; 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायात् । आपूर्यमाणपक्षादित्याद्या च श्रुतिर्न कालविशेषप्रतिपत्त्यर्था, अपित्वातिवाहिकीर्देवताः प्रतिपादयतीति वक्ष्यति। तस्मादविरोधः ॥ २० ॥ सूत्रान्तरावतरणाय चोदयति—**ननु च यत्र काले त्विति** । काल एवात्र प्राधान्येनोच्यते, न त्वातिवाहिकी देवतेत्यर्थः । **योगिनः प्रति च स्मर्यते स्मार्ते चैते** । स्मार्तीमुपासनां प्रत्ययं स्मार्तः कालभेदविनियोगः, प्रत्यासत्तेः, न तु श्रौतीं प्रतीत्यर्थः । अत्र यदि स्मृतौ कालभेदविधिः श्रुतौ चाग्निज्योतिरादिविधिस्तत्राग्न्यादीनामातिवाहिकतया विषयव्यव-

वेदान्तकल्पतरुः।

**अतश्चायनेऽपि हि दक्षिणे** ॥ २० ॥ प्राशस्त्यप्रसिद्धेरविद्वद्विषयत्वेन सङ्कोचे हेतुमाह—**अतःपदपरामृष्टेति** । प्रतीक्षणमित्यत उपर्यविदुष इति द्वितीयाबहुवचनम् ॥२०॥ **अग्निर्ज्योतिरादीति** । अग्निरर्चिरादिदेवता ज्योतिरादित्यदेवता । **विषयव्यवस्थयेति** । स्मार्तकालविधेर्निर्गुणपुरुषमात्रविवेकचित्तवृत्तिनिरोधात्मकसांख्ययोगविषयत्वेन श्रौतातिवाहि-

कल्पतरुपरिमलः ।

प्राप्तिर्न संभवतीति रश्मिविद्याफलनियमयोरन्यतरपरित्याग इत्येषा सर्वापि शङ्का रात्रौ रश्मिसद्भावसमर्थनेन निरस्ता ॥ १८ ॥ १९ ॥ **इति दशमं रश्म्यधिकरणम् ॥**

**अतश्चायनेऽपि दक्षिणे** ॥ २० ॥ **द्वितीयाबहुवचनमिति** । ग्राहयतेर्द्विकर्मकत्वादिति भावः । **ज्योतिरादित्यदेवतेति** । श्रुतावहरादिभ्यः पश्चादादित्यदेवता तदनुसारेण स्मृतौ पाठक्रमो नादर्तव्य इति भावः । **निर्गुणेति** ।

भामती ।

स्थया विरोधाभाव उक्तः । अथ तु प्रत्यभिज्ञानं, तथापि यत्र काल इत्यत्रापि कालाभिधानद्वारेणातिवाहिक्य एव देवता उक्ता इत्यविरोध एवेति ॥ २१ ॥ इत्येकादशं दक्षिणायनाधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभाष्यविभागे भामत्यां
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

वेदान्तकल्पतरुः ।

कदेवताविधेः सगुणविद्याविषयत्वेन च व्यवस्थयेत्यर्थः । **अथ तु प्रत्यभिज्ञानमिति** । स्मृतावग्न्यादिशब्दैः श्रौतार्चिरादिदेवतानां प्रत्यभिज्ञानमित्यर्थः ॥ २१ ॥ इत्येकादशं दक्षिणायनाधिकरणम् ॥[1]

इति श्रीमत्परमहंसपरिव्राजकश्रीमदनुभवानन्दपूज्यपादशिष्यभगवदमला-
नन्दविरचिते वेदान्तकल्पतरौ चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

| अत्र पादे | आदितः । |
|---|---|
| अधिकरणानि ११ | १७९ |
| सूत्राणि २१ | ५१७ |

कल्पतरुपरिमलः ।

**निर्गुणः** सत्त्वरजस्तमोरहितः **पुरुषः** सांख्योक्तपुरुषः; तस्य प्राकृताद् बुद्ध्यादेर्यो विवेकः सांख्योक्तः यश्च योगश्चित्तवृत्तिनिरोध इति योगशास्त्रोक्तो **योगः** तद्विषयत्वेनेत्यर्थः ॥ २० ॥ २१ ॥ इत्येकादशं दक्षिणायनाधिकरणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरु-
परिमले चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

॥ इति चतुर्थस्याध्यायस्योत्क्रान्तिगतिनिरूपणाख्यो द्वितीयः पादः ॥



१ तत्र सूत्रे २—अतश्चायनेऽपि हि दक्षिणे २० योगिनः प्रति च स्मर्यते स्मार्ते चैते २१ ॥

## चतुर्थेऽध्याये तृतीयः पादः ।

( १ अधिकरणम् )  **अर्चिरादिना तत्प्रथितेः ॥ १ ॥**

आसृत्युपक्रमात्समानोत्क्रान्तिरित्युक्तम् । सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते । नाडीरश्मिसंबन्धेनैका 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमते' ( छा० ८।६।५ ) इति । अर्चिरादिकैका 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' (बृ० ६।२।१५ ) इति । 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' ( कौ० १।३ ) इत्यन्या । 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' ( बृ० ५।१०।१ ) इत्यपरा । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' ( मुण्ड० १।२।११ ) इति चापरा । तत्र संशयः—किं परस्परं भिन्ना एताः सृतयः, किं वैकैवानेकविशेषणेति । तत्र प्राप्तं तावद्भिन्ना एताः सृतय इति; भिन्नप्रकरणत्वात्, भिन्नोपासनाशेषत्वाच्च । अपिच 'अथैतैरेव रश्मिभिः' ( छा० ८।६।५ ) इत्यवधारणमर्चिराद्यपेक्षायामुपरुध्येत । त्वरावचनं च पीड्येत 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' ( छा० ८।६।५ ) इति । तस्मादन्योन्यभिन्ना एवैते पन्थान इति । एवं प्राप्तेऽभिदध्महे—अर्चिरादिनेति । सर्वो ब्रह्मप्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे । कुतः ? तत्प्रथितेः । प्रथितो ह्येष मार्गः सर्वेषां विदुषाम् । तथाहि—पञ्चाग्निविद्याप्रकरणे 'येऽचामी अरण्ये श्रद्धां सत्यमुपासते' ( बृ० ६।२।१५ ) इति विद्यान्तरशीलिनामप्यर्चिरादिका सृतिः श्राव्यते । स्यादेतत्—यासु विद्यासु न काचिद्गतिरुच्यते तास्वियमर्चिरादिकोपतिष्ठतां, यासु त्वन्या श्राव्यते तासु किमित्यर्चिराद्याश्रयणमिति ? अत्रोच्यते—भवेदेतदेवं यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः । एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रपदनी क्वचित्केनचिद्विशेषणेनोपलक्षितेति वदामः । सर्वत्रैकदेशप्रत्यभिज्ञानादितरेतरविशेषणविशेष्यभावोपपत्तेः । प्रकरणभेदेऽपि हि विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः । विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद्गन्तव्याभेदाच्च गत्यभेद एव । तथाहि—'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' ( बृ० ६।२।१५ ) 'तस्मिन्वसन्ति शाश्व-

### भामती ।

**अर्चिरादिना तत्प्रथितेः ॥ १ ॥ भिन्नप्रकरणस्थत्वाद्भिन्नोपासनयोगतः । अनपेक्षा मिथो मार्गास्त्वरातोऽवधृतेरपि ॥ १ ॥** गन्तव्यमेकं नगरं प्रति वक्रेणाध्वना गतिमपेक्ष्य ऋजुनाऽध्वना गतिस्त्वरावती कल्प्यते, एकमार्गत्वे तु क्रमपरमपेक्ष्य त्वरा स्यात् । अथ तैरेव रश्मिभिरित्यवधारणं नोपपद्यते; पथ्यन्तरस्य निवर्तनीयस्याभावात्, तस्मात्परानपेक्षा एवैते पन्थान एकब्रह्मलोकप्राप्त्युपाया व्रीहियवाविव विकल्प्येरन्निति प्राप्ते प्रत्युच्यते—**एकत्वेऽपि पथोऽनेकपर्वसंगमसंभवात् । गौरवान्नैव नानात्वं प्रत्यभिज्ञानलिङ्गतः ॥२॥** सपर्वा हि पन्था

### वेदान्तकल्पतरुः ।

**अर्चिरादिना तत्प्रथितेः ॥ १ ॥ भिन्नेति** । मार्गा अर्चिरादयो मिथः परस्परमनपेक्षा न त्वनेकविशेषणविशिष्ट एको मार्गः । कुतः ? भिन्नप्रकरणत्वादिभिः यत्र विद्यैक्येऽपि गतिविशेषेणाभेदो यथा पञ्चाग्निविद्यायां देवलोकादेस्तत्र भिन्नप्रकरणस्थत्वाद्विद्याभेदे तु भिन्नोपासनशेषत्वादिभिः । **त्वरात इति** । स यावत्क्षिप्येन्मन इति वेगावगतेरित्यर्थः । एतद्व्याचष्टे—**गन्तव्यमिति** । अवधृतेरित्येतद्विवृणोति—**अथैतैरिति** । एकस्मिन् गन्तव्येऽनेकमार्गवैयर्थ्यमाशङ्क्याह—**विकल्प्येरन्निति । एकत्वेऽपीति** । पथो मार्गस्य नैव नानात्वम्; कुतः ? तस्यैकत्वेऽप्यनेकैर्गुणभूतैः पर्वभिरवच्छेदैर्वाय्वादिभिः संगमसंभवेन गुणानां प्रधानेन समुच्चयोपपत्तेः, मार्गभेदकल्पनायां च गौरवाद्, आदित्यादिबहुविशेषणानां च सर्वत्र प्रत्यभिज्ञानलिङ्गेन मार्गैक्यावगमादित्यर्थः । भिन्नप्रकरणस्थत्वं ब्रह्मवदेकत्वेऽप्यविरुद्धम्; भिन्नोपासनशेषत्वं च भिन्नोपासनकर्तृचैत्रवदविरुद्धम्; एकमार्गस्यानेकस्यानेकपर्वसंभवं लोके दर्शयति—**सपर्वा हीति । भागिभेदकल्पना**

### कल्पतरुपरिमलः ।

**अर्चिरादिना तत्प्रथितेः ॥ १ ॥** भिन्नप्रकरणस्थत्वादिति श्लोकप्रतीकमुपादाय व्याचष्टे—**मार्गा अर्चिरादय इति** । आद्यहेतुमेकविद्याविषयत्वेन योजयति—**कुतः यत्र विद्यैक्येऽपीति** । द्वितीयादिहेतून्विद्याभेदविषयत्वेन योजयति—**विद्याहेतुभेदे त्विति** । त्वरां विवृणोति—**स यावत् क्षिप्येदिति । गुणानां प्रधानेन समुच्चयो-**

तीः समाः' ( बृ० ५।१०।१ ) 'सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते' ( कौषी० १।४) 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति' ( छा० ८।४।३ ) इति च तत्र तत्र तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते । यत्त्वेतैरेवेत्यवधारणमर्चिराद्याश्रवणे न स्यादिति, नैष दोषः; रश्मिप्राप्तिपरत्वादस्य । न ह्येक एवशब्दो रश्मींश्च प्रापयितुमर्हत्यर्चिरादींश्च व्यावर्तयितुम् । तस्माद्रश्मिसंबन्ध एवायमवधार्यत इति द्रष्टव्यम्, त्वरावचनं त्वर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया शैघ्र्यार्थत्वान्नोपरुध्यते । यथा निमिषमात्रेणात्रागम्यत इति । अपिच अथैतयोः पथोर्न कतरेणचन' ( छा० ५।१०।८ ) इतिमार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति । भूयांस्यर्चिरादिसृतौ मार्गपर्वाण्यल्पीयांसि त्वन्यत्र । भूयसां चानुगुण्येनाल्पीयसां नयनं न्याय्यमित्यतोऽप्यर्चिरादिना तत्प्रथितेरित्युक्तम् ॥ १ ॥ इति प्रथममर्चिराद्यधिकरणम् ॥

( २ अधिकरणम् ) **वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥**

## भामती ।

नगरादिकमेकं गन्तव्यं प्रापयति नाभागः । तत्र किमेते रश्म्यहर्वायुसूर्यादयोऽध्वनः पर्वाणः सन्तोऽध्वनैकेन युज्यन्ते, आहो यथायथमध्वानमपि भिन्दन्तीति संदेहेऽप्यभेदेऽप्यध्वनो भागभेदोपपत्तेर्न भागिभेदकल्पनोचिता; गौरवप्रसङ्गात् । एकदेशप्रत्यभिज्ञानाच्च विशेषणविशेष्यभावोपपत्तेर्नानेकाध्वकल्पना । अथैतैरेव रश्मिभिरित्यवधारणं न तावदर्थान्तरनिवृत्त्यर्थम्; तत्प्रापकैरेव वाक्यान्तरैर्विरोधात्, तस्मादन्यानपेक्षामस्यावधारयतीति वक्तव्यम् । न चैकं वाक्यमप्राप्तमध्वानं प्रापयति तस्य चानपेक्षतां प्रतिपादयतीत्यर्थद्वयाय पर्याप्तम्; तस्माद्विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारोऽनुवदतीति युक्तम् । **त्वरावचनं चेति** । न खल्वेकस्मिन्नेव गन्तव्ये पथि भेदमपेक्ष्य त्वराऽवकल्प्यते, किंतु गन्तव्यभेदादपि तदुपपत्तिः । यथा कश्मीरेभ्यो मथुरां क्षिप्रं याति चैत्र इति, तथेहाप्यन्यतः कुतश्चिद्गन्तव्यादनेनोपायेन ब्रह्मलोकं क्षिप्रं प्रयातीति । **भूयांस्यर्चिरादिश्रुतौ मार्गपर्वाणीति । अयमर्थः**—एकत्वात्प्राप्तव्यस्य ब्रह्मलोकस्याल्पपर्वणा मार्गेण तत्प्राप्तौ संभवन्त्यां बहुमार्गोपदेशो व्यर्थः प्रसज्यते; तत्र चेतनस्याप्रवृत्तेः, तस्माद्भूयसां पर्वणामविरोधेनाल्पानां तदनुप्रवेश एव युक्त इति ॥ १ ॥ **इति प्रथममर्चिराद्यधिकरणम् ॥**

**वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ श्रुत्याद्यभावे पाठस्य क्रमं प्रति नियन्तृता । ऊर्ध्वाक्रम-**

## वेदान्तकल्पतरुः ।

अवयविभेदकल्पना । यदुक्तमवधृतेरिति, तत्राह—**न चैकं वाक्यमिति । अनपेक्षतामिति** । अर्चिराद्यनपेक्षतामित्यर्थः । **विधिसामर्थ्येति** । न खल्विति रश्मिभिरिति रश्मिसत्तावबोधसामर्थ्यसिद्धं रश्मीनामसंबन्धव्यवच्छेदं मार्गोऽनुवदति; निशायां रश्म्यभावशङ्कामपनेतुमित्यर्थः । यच्चोक्तं त्वरात इति, तत्परिहारार्थं भाष्यं—**त्वरावचनं त्वर्चिराद्यपेक्षायामपि शैघ्र्यार्थत्वाद् नोपरुध्यत इति,** तदनुपपन्नम्; पूर्वपक्षे शैघ्र्यस्यैवानपेक्षत्वसाधकत्वेनोपपादितत्वादतो व्याचष्टे—**न खल्विति । पथिभेदं** पथो मार्गस्य भेदम् । **अन्यतः कुतश्चिद्गन्तव्यादिति** । स्वर्गादेरित्यर्थः । तत्र हि धूमादिमार्गेण गमनं, कदाचित्प्रबलकर्मभिः प्रतिबन्धाद्विलम्बेतापि न त्वत्र; आ प्रायणादुपासीनस्यान्त्यप्रत्ययावश्यम्भावात्, ततश्च गन्तव्यान्तरापेक्षया शैघ्र्यार्थत्वादिति भाष्यं व्याख्यातम् । भूयांसीति भाष्ये मार्गैक्यं किमित्यर्चिरादिनेत्युक्तं, न पुना रश्म्यादिनेति शङ्कोत्तरमिव भाति; तथासति चातोऽपीत्युपरितनोऽपिशब्दो न सङ्गच्छेतेति मत्वा व्याचष्टे—**अयमर्थ इति** । त उपासकाः परा दीर्घाः समा यस्य स परावान् ब्रह्मा । तस्य पराः समावसन्ति तस्मिन्वसन्तीत्यन्या श्रुतिः "सा ये"त्यन्या श्रुतिः । **जितिर्जयः । व्युष्टिर्व्याप्तिः** । तद्य इति चापरा ब्रह्मचर्येणानुविन्दन्त्युपासते तेषामेव ब्रह्मलोकः प्राप्यत इति शेषः ॥ १ ॥ **इति प्रथममर्चिराद्यधिकरणम् ॥**[1]

**वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥** अत्र तेनेत्यस्यादित्यमागच्छतीत्येतत्पर्यन्तं संबन्धासंबन्धाभ्यां संशयः । पाठक्रमार्थक्रमाभ्यां संशय इति कैश्चिदुक्तमयुक्तम्; प्रबलदुर्बलाभ्यां सन्देहानवतारात्, पूर्वत्रार्चिरादिमार्गपर्वप्र-

## कल्पतरुपरिमलः ।

**पपत्तेरिति** । गुणानुरोधेन प्रधानभेदकल्पना न युक्तेति भावः । **अपिशब्दो न सङ्गच्छेतेति** । अपिशब्दस्य युक्त्यन्तरत्वद्योतकत्वादिति भावः ॥ १ ॥ **इति प्रथममर्चिराद्यधिकरणम् ॥**

**वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ पाठक्रमार्थक्रमाभ्यामिति । ननु**—पाठक्रमश्रुतिक्रमाभ्यामिति

---

१ तत्र सूत्रम् १—अर्चिरादिना तत्प्रथितेः १ ॥

केन पुनः संनिवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव इति? तदेतत्सुहृद्भूत्वाचार्यो ग्रथयति। 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौ० १।३) इति कौषीतकिनां देवयानः पन्थाः पठ्यते। तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः कश्चिदन्वेष्यः। वायुस्त्वर्चिरादौ वर्त्मनि न श्रुतः कतमस्मिन्स्थाने निवेशयितव्य इति? उच्यते—'तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्। मासेभ्यः संवत्सरं संवत्सरादादित्यम्' (छा० ५।१०।१,२) इत्यत्र संवत्सरात्पराञ्चमादित्यादर्वाञ्चं वायुमभिसंभवन्ति। कस्मात्? अविशेषविशेषाभ्याम्। तथाहि—'स वायुलोकम्' (कौ० १।३) इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ० ५।१०।१) इति। एतस्मादादित्याद्वायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः। कस्मात्पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते? नैषोऽस्ति विशेष इति वदामः। ननूदाहृता श्रुतिः—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' (कौषी० १।३)

### भामती।

णमात्रे च श्रुता वायोर्निमित्तता॥ 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते' इति हि वायुनिमित्तमूर्ध्वाक्रमणं श्रुतं, न तु वायुनिमित्तमादित्यगमनम्; 'स आदित्यं गच्छति' इत्यादित्यगमनमात्रप्रतीतेः। नच तेनेत्यनन्तरश्रुतोर्ध्वाक्रमणक्रियासंबन्धि निराकाङ्क्षमादित्यगमनक्रिययापि संबन्धुमर्हति। नचादित्यागमनस्य तेनेति विना काचिदनुपपत्तिर्येनान्यसंबद्धमप्यनुषज्यते। तत्राग्निलोकमागच्छति स वायुलोकमित्यादिसंदर्भगतस्य पाठस्य कश्चिन्नियामकत्वेन क्लृप्तसामर्थ्यादग्निवायुवरुणक्रमनियामकश्रुत्याद्यभावादिति प्राप्ते प्रत्युच्यते—

### वेदान्तकल्पतरुः।

त्यभिज्ञानात्सर्वत्र गत्यैक्यमुक्तम्। इहापि "स एतं देवयानं पन्थानम् आपद्याग्निलोकमागच्छति स वायुलोकमि"त्यत्रार्थेऽर्चिरात्मकाग्न्यानन्तर्यप्रत्यभिज्ञानादर्चिषोऽनन्तरं वायुर्निवेशनीय इति सङ्गतिः। नन्वत्र पाठादग्न्यानन्तर्यं वायोर्वक्तुमशक्यम्; पाठस्य दुर्बलत्वाद्, इत्याशङ्क्याह— श्रुत्याद्यभाव इति। ननु "स वायुमागच्छति स वायुस्तस्मै तत्र विजिहीते स्वावयवान्विगमय्य छिद्रं करोती"ति "यथा रथचक्रस्य खं छिद्रं तेनोर्ध्वं आक्रमते स आदित्यमागच्छती"ति वायोरादित्यात्पूर्वत्वरूपः क्रमस्तेनेति श्रुत्या प्रतीतः, तद्बलात्स एतमित्यत्रत्यः पाठक्रमो बाध्यतामत आह—ऊर्ध्वाक्रमणेति। द्वितीयार्धं व्याचष्टे—तस्या इति। तेनेति श्रुतिर्वायुकृतावकाशस्योर्ध्वदेशमात्रप्राप्तौ हेतुत्वमाह नादित्यगमने इत्यर्थः। ननु कथमादित्यगमनमात्रप्रतीतिस्तेनेत्यस्यादित्यमागच्छतीत्यनेनाप्यनुषङ्गः किं न स्यादत आह—नचेति। आकाङ्क्षायां ह्यनुषङ्गः, इह तु तेनेत्यस्य संनिहितोर्ध्वाक्रमणेन नैराकाङ्क्ष्यान्न व्यवहितादित्यागमनेन संबन्ध इत्यर्थः। नन्वादित्यप्राप्तेर्वायुदत्तावकाशेन वाय्वतिक्रमाद्विनाऽनुपपत्तेस्तेनेत्येतदादित्येनाप्यनुषज्यताम्, अत आह—नचादित्यागमनस्येति। छिद्रेणोर्ध्वदेशप्राप्तेर्जातत्वात्पुनरादित्यागमनस्य तेनेत्यस्मिन्नपेक्षा नास्तीत्यर्थः। क्वचिदिति। वरुणलोका-

### कल्पतरुपरिमलः।

वक्तव्यम्, तेनेति तृतीयाश्रुतेः पौर्वापर्यगर्भकरणत्ववाचिन्याः पौर्वापर्यरूपे क्रमेऽपि श्रुतत्वात्, तथैव सिद्धान्ते वक्ष्यमाणत्वादिति—चेत्, सत्यम्; सिद्धान्तेऽर्थक्रमं वदतामन्येषां व्याख्यातॄणामेवं भावः। "तेन स ऊर्ध्वमाक्रमत" इत्यत्र ऊर्ध्वादित्यलोकशब्दयोर्विशेषणविशेष्यभावेनैकार्थत्वं न वक्तव्यम्। वाय्वादित्यलोकयोर्मध्ये गन्तव्यान्तरालदेशसत्त्वेन ऊर्ध्वशब्दस्य तद्विषयत्वसंभवात्। किंचातिवाहिकदेवतानामातिवाहिकदेवतान्तरयुक्तलोकान्तरपर्यन्तनेतृत्वस्य वक्तव्यत्वाद्वायुदत्तच्छिद्रस्योर्ध्वक्रमणोक्त्या तदनन्तरप्राप्त्याऽऽदित्यलोकगमनं प्रत्यपि करणत्वमर्थात्सिध्यति। अतः सिद्धान्ते आर्थ एव क्रमो न श्रौत इति अर्चिरात्मकाग्न्याद्यानन्तर्यप्रत्यभिज्ञानादिति शङ्कान्तरप्राप्तो वायुरर्चिरादिमार्गे क्वचिदवश्यनिवेशनीयः सन् शाखान्तरश्रुतस्वस्थानरूपाग्न्यनन्तरदेशप्रत्यभिज्ञानात् तत्रैव निवेशनीय इति भावः। नन्वादित्यप्राप्तेरिति। तेनेत्यस्यादित्यप्राप्त्याकाङ्क्षाभावेऽप्यादित्यप्राप्तेस्तेनेत्येतदाकाङ्क्षाऽस्ति; वाय्वादिक्रमार्थं वायुदत्तावकाशच्छिद्रं विनाऽऽदित्यप्राप्तेरनुपपत्तेः, अतस्तदाकाङ्क्षयाऽनुषङ्गः स्यादित्यर्थः। ऊर्ध्वदेशप्राप्तेर्जातत्वादिति। छिद्रेण वायुव्यवधानं प्रतिबन्धकमपनीयोर्ध्वदेशप्राप्तेः संपादितत्वादित्यादित्यप्राप्तिरपि च्छिद्रकृतोर्ध्वदेशप्राप्त्या निराकाङ्क्षेत्यर्थः। वरुणलोकादावित्यर्थ इति। अनेन—क्वचिदवश्यं निवेशनीयो वायुः कौषीतकिशाखानुसारेणार्चिरनन्तरं द्वितीयपर्वतया किमिति निवेश्यते, "यदा वै

इति, उच्यते—केवलोऽत्र पाठः पौर्वापर्येणावस्थितो नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति । पदार्थोपदर्शनमात्रं ह्यत्र क्रियते एतमेतं चागच्छतीति । इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण च्छिद्रेणोर्ध्वमाक्रम्यादित्यमागच्छतीत्यवगम्यते क्रमः । तस्मात्सूक्तमविशेषविशेषाभ्यामिति । वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' ( बृ० ६।२।१५ ) इति समामनन्ति । तत्रादित्यानन्तर्याय देवलोकाद्वायुमभिसंभवेयुः । वायुमब्दादिति तु छन्दोगश्रुत्यपेक्षयोक्तम् । छान्दोग्यवाजसनेयकयोस्त्वेकत्र देवलोको न विद्यते परत्र संवत्सरः । तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र ग्रथयितव्यौ । तत्रापि माससंबन्धात्संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम् ॥ २ ॥ इति द्वितीयं वाय्वधिकरणम् ॥

---

## भामती ।

**ऊर्ध्वशब्दो न लोकस्य कस्यचित्प्रतिपादकः । तद्भेदापेक्षया युक्तमादित्येन विशेषणम् ॥** भवेदेतदेवं यद्यूर्ध्वशब्दात्कश्चिल्लोकभेदः प्रतीयेत, स तूपरिदेशमात्रवाची लोकभेदाद्भिनाऽपर्यवस्यँल्लोकभेदवाचिनादित्यपदेनादित्ये व्यवस्थाप्यते । तथाचादित्यलोकगमनमेव वायुनिमित्तमिति श्रौतक्रमनियमे, पाठः पदार्थमात्रप्रदर्शनार्थो न तु क्रमाय प्रभवति, श्रुतिविरोधादिति सिद्धम् । वाजसनेयिनां संवत्सरलोको न पठ्यते, छान्दोग्यानां देवलोको न पठ्यते, तत्रोभयानुरोधादुभयपाठे माससंबन्धात्संवत्सरः पूर्वः पश्चिमो देवलोकः । नहि मासो देवलोकेन संबध्यते, किंतु संवत्सरेण । तस्मात्तयोः परस्परसंबन्धान्मासारभ्यत्वाच्च संवत्सरस्य मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य परस्ताद्भवति । तत्रादित्यानन्तर्याय वायोः संवत्सरादित्यस्य स्थाने देवलोकाद्वायुमिति पठितव्यम् । वायुमब्दादिति तु सूत्रमत्रापि वाचकमेव, तथापि संवत्सरात्प्राञ्चमादित्यादर्वाञ्चं वायुमभिसंभवन्तीति छान्दोग्यपाठमात्रापेक्षयोक्तं, तदिदमाह—**वायुमब्दादिति त्विति** ॥ २ ॥ **इति द्वितीयं वाय्वधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

दावित्यर्थः । अत्रोर्ध्वादित्यलोकशब्दयोर्विशेषणविशेष्यभावादेकार्थत्वम् । तथाच तेनेति श्रुत्या वायुदत्तस्यादित्यगमनं प्रति हेतुत्वस्य नियतप्राक्सत्त्वात्मकत्वेन क्रमरूपस्य प्रतीतेः श्रुत्या पाठक्रमबाध इति सिद्धान्तयति—**ऊर्ध्वशब्द इति । उभयपाठ इति ।** उभयोः संवत्सरदेवलोकयोरश्रुतस्थलेऽपि पाठे कर्तव्ये सतीत्यर्थः । **माससंबन्धादिति ।** माससंवत्सरयोः कालत्वसाम्यादित्यर्थः । कार्यकारणभावमप्याह—**मासारभ्यत्वाच्चेति ।** देवलोकः संवत्सरस्य परस्ताद्भवतु, वायुः क्व निवेशनीयस्तत्राह—**तत्रेति ।** "तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीति वायोरादित्यानन्तर्याय निरन्तरत्वाय संवत्सरादित्यस्य स्थाने एतस्योपरि देवलोकं देवलोकाद्वायुमिति पठितव्यमित्यर्थः । **ननु** सूत्रं वायुमब्दादित्येतावन्मात्रं, कथमधिकावापस्तत्राह—**वायुमब्दादिति त्विति । वाचकमेव** बोधकमेवेत्यर्थः । सूत्रे वायुशब्दो देवलोकोपलक्षणार्थ इति भावः । **ननु** यदि संवत्सराद्देवलोकाद्वायुं वायोरादित्यमभिसंभवन्तीति क्रमः सूत्रोक्तः, कथं तर्हि भाष्ये वायोः संवत्सरात्परत्वमादित्यादर्वाक्त्वं चोक्तमत आह—**तथापीति ।** छान्दोग्यपाठमात्रापेक्षया हि संवत्सरा-

## कल्पतरुपरिमलः ।

पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छती"ति बृहदारण्यकश्रुत्यनुसारेण प्रथमपर्वतयाऽर्चिषः पूर्वं वा किमिति न निवेश्यते इति शङ्का—**निवारिता ।** कौषीतकिशाखा हि वरुणेन्द्रादिषु बहुषु क्लृप्तक्रमा न तूदाहृतबृहदारण्यकश्रुतिरिति भावः । **ऊर्ध्वादित्यलोकशब्दयोरिति ।** संपिण्डितग्रामस्य स्वत ऊर्ध्वदेशोत्क्रमणासंभवादातिवाहिकाधीनं तद्विवक्षितमिति वक्तव्यम्, तत्र चातिवाहिकत्वेनार्थप्राप्ता वायुलोकाभिमानिनी देवता लोकान्तरप्राप्तिपर्यन्तमातिवाहिकी, नतु किंचिन्मात्रपर्यन्तमित्यूर्ध्वदेशस्य लोकविशेषरूपतया विशेषेणापेक्षाऽस्तीति भावः । **तेनोर्ध्व आक्रमते स आदित्यमागच्छतीत्यानन्तर्यायेति ।** यद्यपि देवलोकादादित्यमित्यादित्यस्य देवलोकानन्तर्यमपि श्रुतम्; तथापि "मासेभ्यो देवलोकमि"ति श्रुतमाससामीप्यानुग्रहाय संवत्सरानन्तरमेव निविष्टे देवलोके वायुर्देवलोकादित्ययोर्मध्ये निविशत इति वाय्वादित्ययोर्नैरन्तर्यं लभ्यत इति भावः । **एतस्योपरि देवलोकाद्वायुमिति पठितव्यमिति ।** एतस्य संवत्सरादित्यस्योपरि देवलोकमिति पठित्वा देवलोकाद्वायुलोकमिति पठितव्यमित्यर्थः । **ननु** वाचकमेवेति न युक्तम्; वायुशब्दस्य लक्षणीये देवलोके शक्त्यभावादित्याशङ्क्य व्याचष्टे—**बोधकमेवेत्यर्थ इति । कथं तर्हि भाष्य इति ।** यदि सूत्रे वायुशब्दो देवलोकोपलक्षक इति संवत्सरदेवलोकवाय्वादित्यानां क्रमः सूत्रकाराभिमतः, तदा कथं भाष्ये सौत्रस्य वायुशब्दस्य वायुपरत्वमेवाङ्गीकृत्य वायोः संवत्सरात्परत्वमादित्यादर्वाक्त्वं च सूत्रकारोक्ततयाऽनूदितमित्यर्थः । **छान्दोग्यपाठमात्रापेक्षयेति ।** छान्दोग्य-

( ३ अधिकरणम् ) **तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥**

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' ( छा० ४।१५।५ ) इत्यस्या विद्युत उपरिष्टात्स वरुणलोकमित्ययं वरुणः संबध्यते । अस्ति हि संबन्धो विद्युद्वरुणयोः, यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्त्यथापः प्रपतन्ति । विद्योतते स्तनयति वर्षिष्यति वा' ( छा० ७।११।१ ) इति च ब्राह्मणम् । अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः । वरुणादधीन्द्रप्रजापती; स्थानान्तराभावात्पाठसामर्थ्याच्च । आगन्तुकत्वादपि वरुणादीनामन्त एव निवेशो वैशेषिकस्थानाभावाद्विद्युच्चान्त्याऽर्चिरादौ वर्त्मनि ॥ ३ ॥ इति तृतीयं तडिदधिकरणम् ॥

## भामती ।

**तडितोऽधिवरुणः संबन्धात् ॥ ३ ॥ तडिदन्तेऽर्चिराद्येऽध्वन्यप्पतिस्तडितः परः । तत्संबन्धात्तथेन्द्रादिरप्पतेः पर इष्यते ॥ आगन्तूनां निवेशोऽन्ते स्थानाभावात्प्रसाधितः । तथा चेन्द्रादिरागन्तुः पठ्यते चाप्पतेः परः ॥ ३ ॥ इति तृतीयं तडिदधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

दादित्यमित्येतावन्मात्रश्रवणान्मध्ये वायुनिवेशे वायोः संवत्सरात्परत्वमादित्यादर्वाक्त्वं च सिध्यति; संवत्सरादुपरि वाजसनेयकगतदेवलोकानयने तु देवलोकसहितवायोरब्दादित्यान्तरालवर्तित्वमित्यर्थः । उक्तेऽर्थे भाष्यं संवादयति—**तदिदमिति । प्रजापतिलोकमिति** । प्रजापतिर्विराट् आपूर्यमाणपक्षाच्छुक्लपक्षात्सकाशान्मासानाच्छति यान् षण्मासान् येषु षण्मासेष्वादित्य उदग् उत्तरां दिशमेति ॥ २ ॥ **इति द्वितीयं वाय्वधिकरणम् ॥**[1]

**तडितोऽधिवरुणः संबन्धात् ॥ ३ ॥** स वायुलोकं स वरुणलोकमित्यत्रोक्ता वरुणादयो न तावत्पाठक्रमाद्वायोरुपरि निविशेरन्; तेनादित्यमिति श्रुतिविरोधादेव, नच वायोरिव स्थानविशेषसंबन्धग्राहकमस्त्येषां श्रुत्यादिकमतो नामीषां मार्गे निवेश इति पूर्वपक्षमाशङ्क्य सिद्धान्तमाह—**तडिदन्त इति** । अर्चिराद्येऽध्वनि मार्गे तडिद्विद्युदन्ते श्रूयते चन्द्रमसो विद्युतमिति । **अप्पतिरपां** पतिश्च वरुणस्तडितः परः, कुतस्तत्संबन्धादप्पतित्वमेव तत्संबन्धे हेतुः । तडित उपरि सजलजलदा दृश्यन्ते, जलाधिपतिश्च वरुण इति । तथा सतीन्द्रादिरप्पतेः पर इष्यते । कस्मादत आह—**आगन्तूनामिति** । आगन्तूनां स्थानविशेषसंबन्धरहितानामन्ते निवेशः प्रथमकाण्डे हि प्रसाधितः । तथाचेन्द्रादिरप्यागन्तुकत्वादन्ते वरुणस्योपरि निविशेतेत्यर्थः । न केवलमागन्तुकत्वादन्ते निवेशोऽपि तु पाठाच्चेत्याह—**पठ्यते चेति** । "अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदि"ति नक्षत्रेष्टिर्दर्शपौर्णमासिकी विकृतिराम्नाता । तत्रोपहोमाः श्रूयन्ते—"सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहे"त्यादयः । सन्ति च प्रकृतेरतिदेशतः प्राप्ता नारिष्टहोमाः । तत्र किमुपहोमाः पूर्वमनुष्ठेयाः, उत नारिष्टा इति संशये प्रधानभूतनक्षत्रेष्ट्यनन्तरं प्रत्यक्षपठिता उपहोमा अव्यवधानेन पूर्वमनुष्ठेयाः, आतिदेशिकास्त्वप्रत्यक्षत्वात् तद्व्यवधानेन पश्चात्कर्तव्या इति प्रापय्य पञ्चमे राद्धान्तितम्—अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वा( जै. अ. ५ पा. २ सू. १९ )दिति । अन्ते वैकृतानां प्रयोगः । प्रकृतौ हि कृत्स्नोपकारमङ्गमुपकाराकाङ्क्षिणी

## कल्पतरुपरिमलः ।

पाठमात्रमपेक्ष्य सूत्रं प्रवृत्तमित्यभिप्रेत्य भाष्ये तथोक्तम् । यदि वाजसनेयकप्राप्तो देवलोकोऽपि सूत्रार्थत्वेन नीयते, वायुशब्दस्य तदा देवलोके वा देवलोकव्यवहितवायौ वा लक्षणाऽङ्गीकार्येति भावः । **प्रजापतिर्विराडिति** । समष्टिस्थूलाभिमानी **विराट्** समष्टिसूक्ष्मशरीराभिमानी **हिरण्यगर्भ** इति भेदः । **शुक्लपक्षात्सकाशादिति** । आपूर्यमाणपक्षादिति पञ्चम्या यथाश्रुतार्थमादायावधिपरतयेदं व्याख्यातम् । अर्चिष इत्याद्याः सर्वाः पञ्चम्यस्तृतीयार्थ इति आतिवाहिकाधिकरणे स्थास्यति । आदित्य इति श्रुत्यपेक्षिताध्याहारः ॥ २ ॥ **इति द्वितीयं वाय्वधिकरणम् ॥**

**तडितोऽधिवरुणः संबन्धात् ॥३॥ श्रुतेनादित्यमिति श्रुतिविरोधादिति ।** "तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती"ति श्रुतिविरोधादित्यर्थः । **अतो नामीषां मार्गे निवेश इति ।** यथा "तेन स ऊर्ध्वमि"त्यादिश्रुतिविरोधाद्वायोरनन्तरं न निवेशः, एवम"र्चिषोऽहरि"त्यादिश्रुतिविरोधादन्यत्रापि न निवेशः; अमानवपुरुषावरोधात्, आतिवाहकान्तरसद्भावे विद्युतोऽनन्तरमेवामानवपुरुषस्यातिवाहिकत्वोक्त्ययोगात् । तस्माद्वरुणादीनामर्चिरहरादिमार्गे निवेशनासंभवात् कौषीतकिशाखोक्तं मार्गान्तरमिति प्रथमाधिकरणाक्षेपः । मार्गैक्यनियमेनाऽग्रे "यदा वै पुरुषमि"त्यादिबृहदारण्यकश्रुत्युक्तमपि मार्गान्तरं वक्तुं शक्यम् । अतस्तत्र श्रुतो वायुर्देवलोकादादित्यमिति श्रौतक्रमविरोधेन तयोर्मध्ये न निवेशनीय

1 तत्र सूत्रम् १—वायुमब्दादविशेषविशेषाभ्याम् २ ॥

( ४ अधिकरणम् ) **आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥**

तेष्वेवार्चिरादिषु संशयः—किमेतानि मार्गचिह्नान्युत भोगभूमयोऽथवा नेतारो गन्तॄणामिति । तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तम्; तत्स्वरूपत्वादुपदेशस्य । यथा हि लोके कश्चिद्ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्यसीत्येवमिहाप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमित्याद्याह । अथवा—भोगभूमय इति प्राप्तम् । तथाहि—लोकशब्देनाग्न्यादीननुबध्नाति 'अग्निलोकमागच्छति' ( कौषी० १।३ ) इत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते—'मनुष्यलोकः पितृलोको देवलोकः' ( बृ० १।५।१६ ) इति च । तथाच ब्राह्मणम्—'अहोरात्रेषु ते लोकेषु सज्जन्ते' इत्यादि । तस्मान्नातिवाहिका अर्चिरादयः । अचेतनत्वादप्येतेषामातिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीति । एवं प्राप्ते ब्रूमः—आतिवाहिका एवैते भवितुमर्हन्ति । कुतः ? तल्लिङ्गात् । तथाहि—'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति' ( छा० ४।१५।५ ) इति सिद्धवद्गमयितृत्वं दर्श-

## भामती ।

**आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ मार्गचिह्नसरूपत्वाच्चिह्नान्येवार्चिरादयः । भर्तृभोगभुवो वा स्युर्लोकत्वान्नातिवाहिकाः ॥ १ ॥** अर्चिरादिशब्दा हि ज्वलनादावचेतनेषु निरूढवृत्तयो लोके । न चैषांत्वावधिकानामिव नियमवती संवहनस्वरूपा स्वतन्त्रक्रिया बुद्धिपूर्वा संभवत्यचेतनानाम् । तस्माल्लोकशब्दवाच्यत्वाद्भर्तुर्जीवात्मनो भोगभूमय एवेति मन्यामहे । **अपि चार्चिष इत्यस्मादपादानं प्रतीयते । न हेतुर्नागुणे हेतौ पञ्चमी दृश्यते क्वचित् ॥२॥** जाड्याद्बद्ध इत्यादिषु गुणवचनेषु जाड्यादिषु हेतुपञ्चमी दृष्टा । न चार्चिरादिशब्दा गुणवाचिनो येन पञ्चम्या तेषां वहनं प्रति हेतुत्वमुच्यते । अपादानत्वं चाचेतनेष्वप्यस्तीति नातिवाहिकाः । न चामानवस्य पुरुषस्य विद्युदादिषु वोढृत्वदर्शनादर्चिरादीनामपि वोढृत्वमुन्नेयम् । यावद्वचनं हि वाचनिकं न तदवाच्ये संचारयितुमुचितम् । **अपिचार्चिरादीनां** वोढृत्वे विद्युदादीनामपि वोढृत्वान्नामानवः पुरुषो वोढा श्रूयेत । यतः श्रूयते ततोऽवगच्छामो विद्युदादिवन्नार्चिरादीनां वोढृत्वमिति । तस्माद्भोगभूमय एवार्चिरादयो नातिवाहिका इति प्राप्ते प्रत्युच्यते—**संपिण्डकरणानां हि सूक्ष्मदेहवतां गतौ । न स्वातन्त्र्यं न चाग्न्याद्या नेतारोऽचेतनास्तु ते ॥३॥** ईदृशी हि नियमवती गतिः

## वेदान्तकल्पतरुः ।

विकृतिः प्रथमं गृह्णाति, ततः प्राकृतनारिष्टहोमानां प्रधानशब्दगृहीतात्प्राथम्यमितरेषां तु संनिधिवशादाकाङ्क्षां परिकल्प्य पश्चात्प्रधानसंबन्धभाजामन्ते प्रयोग इति ॥ ३ ॥ **इति तृतीयं तडिदधिकरणम् ॥**[1]

**आतिवाहिकस्तल्लिङ्गात् ॥४॥** अर्चिरादीनां क्रमं निरूप्य स्वरूपमिह चिन्त्यते । संबन्धात्तडित उपरि वरुण इत्युक्तमिहापि सादृश्यसंबन्धादार्चिरादीनां मार्गपर्वत्वमिति पूर्वपक्षमाह—**मार्गेति । न चैषां त्वावधिकानामिति ।** अवधिषु देशसीमासु स्थित्वा मार्गवाहका आवधिकाः । श्लोकगतभर्तृशब्दार्थमाह—**जीवात्मन इति । नन्वर्चिष** इत्यादिपञ्चमीभिरर्चिरादीनां भोक्तृगमनहेतुत्वप्रतीतेश्चेतनत्वमिति, तत्राह—**अपिचे**त्यादिना श्लोकेन । हेताविल्यधिकारे "विभाषा गुणेऽस्त्रियामिति विहिता हेतुपञ्चमी नागुणाद्दृश्यते, किंतु गुणादेव, तत्रोदाहरणमाह—**जाड्यादिति ।** यद्यर्चिरादयो वोढारः प्रापकास्तर्हि विद्युदादयोऽपि प्रापकाः स्युस्तत्र विद्युतस्थानादारभ्याऽमानवो वोढा न श्रूयतेऽन्यत एव वहनसि-

## कल्पतरुपरिमलः ।

इति समनन्तराधिकरणस्याप्याक्षेपः । **प्रधानशब्दगृहीतादिति ।** कल्प्यस्य प्रकृतिवच्छब्दस्य प्रधानविशेषणत्वेन तदन्तर्भूतत्वादिति भावः । अन्ते तु बादरायण इति न्यायवत् पाठक्रमोऽपि दृष्टान्तदार्ष्टान्तिकयोस्तुल्यः । दृष्टान्ते नारिष्टहोमग्राहकप्रधानवाक्यपाठानन्तरमुपहोमवाक्यपाठः, दार्ष्टान्तिके वरुणानन्तरमिन्द्रप्रजापतिपाठ इति । यद्यपि वरुणमारभ्यान्ते तु बादरायण इति न्यायो वक्तुं शक्यः; तथापि वरुणस्य तडित्संबन्धोऽप्यधिकोऽस्तीति तदुपन्यासः । विद्युदनन्तरं वरुणादीनां सत्त्वेऽप्यमानवपुरुषस्यातिवाहिकत्वोक्तेरभिप्रायं सूत्रकार एवानन्तराधिकरणे वक्ष्यति ॥ ३ ॥ **इति तृतीयं तडिदधिकरणम् ॥**

**आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥ अवधिष्विति ।** पूर्वपूर्वसीमावधिषु स्थित्वा स्वसीमामतिक्रम्य सीमान्तरं ये

१ तत्र सूत्रम् १—तडितोऽधिवरुणः संबन्धात् ३ ॥

यति । तद्वचनं तद्विषयमेवोपक्षीणमिति चेत्, न; प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य । यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति ॥ ४ ॥ ननु तल्लिङ्गमात्रमगमकं न्यायाभावात्, नैष दोषः ।

## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

ये तावदर्चिरादिमार्गास्ते देहवियोगात्संपिण्डितकरणग्रामा इत्यस्वतन्त्रा अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते । लोकेऽपि हि मत्तमूर्छितादयः संपिण्डितकरणाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः । नहि रात्रौ प्रेतस्याहःस्वरूपाभिसंभव उपपद्यते । नच प्रतिपालनमस्तीत्युक्तं पुरस्तात् । ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति । अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते । 'अर्चिषोऽहः' ( छा० ४।१५।५;५।१०।१ ) इत्यादिनिर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते अर्चिषा हेतुनाऽहरभिसंभवति । अह्ना हेतुनापूर्यमाणपक्षमिति । तथाच लोके प्रसिद्धेष्वप्यातिवाहिकेष्वेवंजातीयक उपदेशो दृश्यते । गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति । अपि चोपक्रमे 'तेऽर्चिरभिसंभवन्ति' (बृ० ६।२।१५) इति संबन्धमात्रमुक्तम्, न संबन्धविशेषः कश्चित् । उपसंहारे तु 'स एतान्ब्रह्म गमयति' (छा० ४।१५।६) इति संबन्धविशेषोऽतिवाह्यातिवाहकत्वलक्षण उक्तः। तेन स एवोपक्रमेऽपीति निर्धार्यते। संपिण्डितकरणत्वादेव च गन्तॄणां न तत्रोपभोगसंभवः। लोकशब्दस्त्वनु-

### भामती ।

स्वयं वा प्रेक्षावतोऽप्रेक्षावतो वा प्रेक्षावत्प्रयुक्तस्य । न तावद्विगलितस्थूलकलेवराः सूक्ष्मदेहवन्तः संपिण्डितकरणग्रामा उत्क्रान्तिमन्तो जीवात्मानो मत्तमूर्च्छितवत्स्वयं प्रेक्षावन्तो यदेवं स्वातन्त्र्येण गच्छेयुस्तद्यदर्चिरादयोऽपि मार्गचिह्नानि वा शमीकारस्करादिवद्भोगभूमयो वा सुमेरुशैलेलावृतादिवदुभयथाप्यचेतनतया न नयनं प्रत्येषामस्ति स्वातन्त्र्यम् । न चैतेभ्योऽन्यस्य चेतनस्य नेतुः कल्पना सति श्रुतानां चैतन्यसंभवे । नच—परमेश्वर एवास्तु नेतेति—युक्तम्; तस्यात्यन्तसाधारणतया लोकपालग्रहादीनामकिंचित्करत्वात् । तस्माद्व्यवस्थित एव परमेश्वरस्य सर्वाध्यक्षत्वे यथायथास्वं लोकपालादीनां स्वातन्त्र्यमेवमिहाप्यर्चिरादीनामातिवाहिकत्वमेव दर्शनानुसाराच्छब्दार्थं इति युक्तम् । इममेवार्थममानवपुरुषातिवाहनलक्षणं लिङ्गमुपोद्बलयतीत्युक्तम् । **अनवस्थितत्वादर्चिरादीनामिति** । अवस्थितं हि मार्गचिह्नं भवत्यव्यभिचारान्नानवस्थितं व्यभिचारादिति । अर्चिष इतिच हेतौ पञ्चमी नापादाने । गुणत्वं चाश्रिततया । नच वैशेषिकपरिभाषया नियम आस्थेयो लोकविरोधात् । **अपिच तेऽर्चिरभिसंभवन्तीति संबन्धमात्रमुक्तमिति । सामान्यवचने शब्दे विशेषाकाङ्क्षिणि स्फुटम् । यद्विशेषपदं तेन तत्सामान्यं नियम्यते** ॥४॥ यथा ब्राह्मणमानय भोजयितव्य इति तद्विशेषापेक्षायां यदा तत्संनिधावुपनिपतति पदं कण्वादि, तदा तेनैतन्नियम्यते एवमिहापीति ॥ ४ ॥ ५ ॥ विद्युल्लोकमागतोऽमानवः पुरुषो वैद्युतस्तेनैव, न तु वरुणा-

### वेदान्तकल्पतरुः ।

द्वैरित्याह—**अपिचेति** । चेतनस्य स्वप्रयत्नहीनस्योर्ध्वदेशगमनं चेतनान्तराधीनमिति सिद्धान्तयति—**संपिण्डकरणानामिति** । संकुचितकरणानामित्यर्थः । तत्र हेतुः—**सूक्ष्मदेहवतामिति** । भूतसूक्ष्मात्मकसूक्ष्मदेहमात्रवतां स्थूलदेहरहितानामित्यर्थः । **नचाद्ययाद्या** इत्यादिश्लोकभागं व्याचष्टे—**तद्यदीति** । **कारस्करो** वृक्षविशेषः । मेरुमभितो भूमि**रिलावृतम् । सति श्रुतानां चैतन्यसंभव इति** धर्ममात्रकल्पनालाघवमुक्तम् । न्यायसिद्धेऽर्थे द्योतकं लिङ्गमाह—**इममेवेति । ननु** वैशेषिकैरमूर्तवृत्तिवृत्त्यपरजात्याधारे गुणत्वं परिभाष्यते, न चार्चिरादयस्तथेति कथं तच्छब्देषु हेतुपञ्चमी ? तत्राह—**नच वैशेषिकेति** । गन्तॄन् प्रधानान् प्रत्यर्चिरादेः सहायत्वादस्ति गुणभूतत्वं लोकसिद्धमित्यर्थः ॥४॥ ॥५॥ **सामान्यवचन** इत्यादिश्लोकं व्याचष्टे—**यथेत्यादिना** । **ननु** यदि विद्युत्स्थानादारभ्यामानवो नेता, तर्हि वरुणा-

### कल्पतरुपरिमलः ।

प्रापयन्ति ते आवधिका आतिवाहिकाश्च । **अमूर्तेति** । अमूर्ताः परिच्छिन्नपरिमाणरहिता आत्माकाशादयः तद्वृत्तयो बुद्धिशब्दादयः तद्वृत्तिरवान्तरजातिर्गुणत्वं तदाधारेषु रूपादिषु गुणशब्दः पारिभाषिक इत्यर्थः । अमूर्तवृत्तिविशेषणाभावे द्रव्यत्वकर्मत्वरूपावान्तरजातिमतोर्द्रव्यकर्मणोरतिव्याप्तिः । अवान्तरविशेषणाभावेऽमूर्तवृत्तिसत्ताजातिमतोस्तयोरेवातिव्याप्तिः । अत उभयमुपात्तम् । **नच वैशेषिकेति । नन्वयमनुक्तोपालम्भः** । नहि शाब्दिका वैशेषिकपरिभाषितं गुणं "विभाषा

पभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते; अन्येषां तल्लोकवासिनां भोगभूमित्वात् । अतोऽग्नि-स्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते वायुस्वामिकं प्राप्तो वायुनेति योजयितव्यम् ॥ ५ ॥ कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः ? विद्युतो ह्यधि वरुणादय उपक्षिप्ताः, विद्युत-स्त्वनन्तरमा ब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमिति । अत उत्तरं पठति—

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥**

ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवा-ह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यम् ; 'तान्वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकं गम-यति' इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु तस्यैवाप्रतिबन्धकरणेन साहाय्यानुष्ठानेन वा केनचिदनुग्राहका इत्यवगन्तव्यम् । तस्मात्साधूक्तमातिवाहिका देवतात्मानोऽर्चिरादय इति ॥ ६ ॥ इति चतुर्थमातिवाहिकाधिकरणम् ॥

## भामती ।

दिना स्वयमुह्यते । तच्छ्रुतेस्तस्यैव स्वयं वोढृत्वश्रुतेः । वरुणादयस्तु तत्साहायके वर्तमाना वोढारो भवन्तीति च वैषम्यं न वोढृत्वे इति सर्वमवदातम् ॥ ६ ॥ इति **चतुर्थमातिवाहिकाधिकरणम्** ॥

पाठक्रमादर्थक्रमो बलवानिति यथार्थक्रमं पठ्यन्ते सूत्राणि—**परं जैमिनिर्मुख्यत्वात्** । स एतान् ब्रह्म गमयतीत्यत्र विचिकित्स्यते । किं परं ब्रह्म गमयत्याहोस्विदपरं कार्यं ब्रह्मेति । **मुख्यत्वादमृतप्राप्तेः परप्रकरणादपि । गन्त-व्यं जैमिनिर्मेने परमेवार्चिरादिना** ॥ ब्रह्म गमयतीत्यत्र हि नपुंसकं ब्रह्मपदं परस्मिन्नेव ब्रह्मणि निरूढत्वादनपेक्ष-तया मुख्यमिति सति संभवे न कार्ये ब्रह्मणि गुणकल्पनया व्याख्यातुमुचितम् । **अपिचामृतत्वफलावाप्तिर्न** कार्य-ब्रह्मप्राप्तौ युज्यते; तस्य कार्यत्वेन मरणधर्मवत्त्वात् । **किंच** तत्र तत्र परमेव ब्रह्म प्रकृत्य प्रजापतिसद्मप्रतिपत्त्यादय उच्यमाना नापरब्रह्मविषया भवितुमर्हन्ति; प्रकरणविरोधात् । नच—परस्मिन्सर्वगते गतिर्नोपपद्यते प्राप्तत्वादिति—युक्तम् ; प्राप्तेपि हि प्राप्तिफला गतिर्दृश्यते । यथैकस्मिन्न्यग्रोधपादपे मूलादग्रमग्राच्च मूलं गच्छतः शाखामृगस्यैकेनैव न्यग्रोधपादपेन निरन्तरं संयोगविभागा भवन्ति । नच—एते तदवयवविषया नतु न्यग्रोधविषया इति—साम्प्रतम् ; तथा सति न शाखामृगो न्यग्रोधेन युज्यते, न्यग्रोधावयवस्य तदवयवयोगात् । एवं दृश्यमानानामपि तदवयवानां न योगस्तदवयवयोगात्तदन्तेन क्रमेण तदवयवेषु परमाणुषु व्यवतिष्ठते । ते चातीन्द्रिया इति कस्मिंश्चु नामायमनुभव-पद्धतिमध्यास्तां संयोगतपस्वी । तस्मादकामेनाप्यनुभवानुरोधेन प्राप्त एव प्राप्तिफला गतिरेषितव्या । तद्ब्रह्म प्राप्त-मपि प्राप्तिफलाया गतेर्गोचरो भविष्यति । ब्रह्मलोकेष्विति च बहुवचनमेकस्मिन्नपि प्रयोगसाधुतामात्रेण गमयित-व्यम् । लोकशब्दश्चालोकने प्रकाशे वर्तयितव्यो नतु सन्निवेशवति देशविशेषे । तस्मात् परब्रह्मप्राप्त्यर्थं गत्युपदेश-सामर्थ्यादयमर्थो भवति । यथा विद्याकर्मवशादर्चिरादिना गतस्य सत्यलोकमतिक्रम्य परं जगत्कारणं ब्रह्म लोकमा-लोकं स्वयं प्रकाशकमिति यावत् । प्राप्तस्य तत्रैव लिङ्गं प्रलीयते नतु गतिमेवंभूतां विना लिङ्गप्रविलय इति । अतएव श्रुतिः—पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । तदनेनाभिसन्धिना परं ब्रह्म गमयत्यमानव इति मेने जैमिनिराचार्यः ॥

## वेदान्तकल्पतरुः ।

दीनामनेतृत्वं वैषम्यं वाच्यम्, उभयनेतृत्वे वैयर्थ्यादत आह—**वरुणादयस्त्विति** । अमानवः प्रधानो नेता, वरुणा-दयस्तु नयनेऽपि सहकारिण इत्येवं वैषम्यं न वोढृत्वे वैषम्यमित्यर्थः ॥ ६ ॥ इति **चतुर्थमातिवाहिकाधिकरणम्** ॥[1]

## कल्पतरुपरिमलः ।

गुणेऽस्त्रियां" "वोतो गुणवचनादि"त्यादिसूत्रेषु गुणशब्दार्थं वदन्ति, किंतु जाड्यमौढ्यपाटवमार्दवादिकं द्रव्योपसर्जनमि-त्याशङ्क्यार्चिरादेरपि तदविशिष्टमित्यागन्तॄन् प्रधानान् प्रतीति । **ननु** द्रव्योपसर्जनमात्रं शाब्दिकानां न गुणत्वं, तस्य भोक्त्रु-पसर्जनत्वेऽपि गुणग्रहणस्य धनेन कुलमित्यादीनां प्रत्युदाहृतत्वात्, किंतु द्रव्यधर्मविशेषरूपं द्रव्योपसर्जनम्, अतोऽर्चिरा-दिषु न हेतुपञ्चम्युपपद्यते; अर्चिरादीनां नेतव्यजीवधर्मत्वाभावात्, किंतु पितृयाणे धूमादीनामप्युक्तन्यायेनातिवाहिकत्वं वाच्यम् । संपिण्डितकरणग्रामाणां स्वतो गमनासंभवात् । तत्र रात्रिशब्दे हेतुपञ्चमीति कथमपि वक्तुं न शक्यते । अस्त्रि-यामिति पर्युदासादिति चेद्यद्येवं व्यत्ययो बहुलमिति छान्दसेन विभक्तिव्यत्ययेन तृतीयार्थे पञ्चम्यस्तु ॥ ४ ॥ ५ ॥ ६ ॥ **इति चतुर्थमातिवाहिकाधिकरणम्** ॥

---

१ तत्र सूत्राणि ३—आतिवाहिकस्तल्लिङ्गात् ४ उभयव्यामोहात्तत्सिद्धेः ५ वैद्युतेनैव ततस्तच्छ्रुतेः ६ ॥

( ५ अधिकरणम् ) **कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥**

**'स एनान्ब्रह्म गमयति' (छा० ४।१५।५) इत्यत्र विचिकित्स्यते—किं कार्यमपरं ब्रह्म गमयत्याहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति । कुतः संशयः ? ब्रह्मशब्दप्रयोगाद्गतिश्रुतेश्च । तत्र कार्यमेव सगुणमपरं ब्रह्मैनान्गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते । कुतः ? अस्य गत्युपपत्तेः । अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते; प्रदेशवत्त्वात्, नतु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते; सर्वगतत्वात्प्रत्यगात्मत्वाच्च गन्तॄणाम् ॥ ७ ॥**

## भामती ।

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ तत्त्वदर्शी बादरिर्ददर्श—**कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गतिः । प्रापयेद्ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम् ॥** तत्त्वमसिवाक्यार्थसाक्षात्कारात्प्राक्किल जीवात्माऽविद्याकर्मवासनाद्युपाध्यवच्छेदाद्वस्तुतोऽनवच्छिन्नोऽवच्छिन्नमिवाभिन्नोऽपि लोकेभ्यो भिन्नमिवात्मानमभिमन्यमानः स्वरूपादन्यानप्राप्तानर्चिरादीँल्लोकान्गत्वाऽऽप्नोतीति युज्यते। अद्वैतब्रह्मतत्त्वसाक्षात्कारवतस्तु विगलितनिखिलप्रपञ्चावभासविभ्रमस्य न गन्तव्यं न गतिर्न गमयितार इति किं केन संगतम् ? तस्मादनिदर्शनं न्यग्रोधसंयोगविभागा न्यग्रोधवानरतद्गतितत्संयोगविभागानां मिथो भेदात् । नच तत्रापि प्राप्तप्राप्तिः; कर्मजेन हि विभागेन निरुद्धायां पूर्वप्राप्तावप्राप्तस्यैवोत्तरप्राप्तेरुत्पत्तेः । एतदपि वस्तुतो विचारासहतया सर्वमनिर्वचनीयं विजृम्भितमविद्यायाः समुत्पन्नाद्वैततत्त्वसाक्षात्कारो न विद्वानभिमन्यते । च विदुषोऽपि देहपातात्पूर्वं स्थितप्रज्ञस्य यथाभासमात्रेण सांसारिकधर्मानुवृत्तिरभ्युपेयते, एवमालिङ्गशरीरपाताद्विदुषस्तद्धर्मानुवृत्तिः। तथाचाप्राप्तप्राप्तेर्गत्युपपत्तिस्तद्देशप्राप्तौ च लिङ्गदेहनिवृत्तेर्मुक्तिः श्रुतिप्रामाण्यादिति चेत्, न; परविद्यावत उत्क्रान्तिप्रतिषेधात् **'ब्रह्मैव सन्ब्रह्माप्येति न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते'** इति । यथा विद्याब्रह्मप्राप्त्योः समानकालता श्रूयते—**'ब्रह्म वेद ब्रह्मैव भवति' 'आनन्दं ब्रह्मणो विद्वान्न बिभेति' 'तदात्मानमेव वेदाहं ब्रह्मास्मीति तत्सर्वमभवत्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः'** इति पौर्वापर्याश्रवणात् परविद्यावतो मुक्तिं प्रति नोपायान्तरापेक्षेति लक्ष्यतेऽभिसंधिः श्रुतेः । उपपन्नं चैतत् । न खलु ब्रह्मैवेदं विश्वमहं ब्रह्मास्मीति परिभावनाभुवा जीवात्मनो

## वेदान्तकल्पतरुः ।

**कार्यं बादरिरस्य गत्युपपत्तेः** ॥ ७ ॥ गतिनिरूपणानन्तरं गन्तव्यमिह निरूप्यते । पूर्वपक्षयति—**मुख्यत्वादिति** । ब्रह्मशब्दस्येति शेषः । **ननु** ब्रह्मशब्देन ब्रह्मा कमलासनोऽप्यभिधीयतेऽत आह—**नपुंसकमिति । गुणकल्पनयेति** । कारणवाचिशब्दस्य कोऽर्थ उपचारकल्पनयेत्यर्थः । अमृतत्वप्राप्तेरित्येतद्व्याचष्टे—**अपिचेति ।** परप्रकरणादपीत्येतद्व्याकरोति—**किंचेति । शाखामृगो** वानरः । न्यग्रोधेऽपि न प्राप्तप्राप्तिरवयवानामप्राप्तानां पुनः प्राप्तेरित्याशङ्क्याह—**नचैते इति** । शाखामृगोऽवयवी न न्यग्रोधावयविना युज्येत, कुतस्तदवयवस्य शाखामृगावयवस्य न्यग्रोधावयवेन योगादित्यर्थः । ब्रह्मलोकमित्यत्र लोकशब्दविवरणम्—**स्वयंप्रकाशमिति** । सिद्धान्तं संगृह्णाति—**कार्यमिति** । अर्चिरादिगतिरुपासकान् कार्यब्रह्म प्रापयेत्तस्याप्राप्तपूर्वत्वेन गन्तुं योग्यत्वाद्, नतु परं ब्रह्म; तस्य जगदात्मकत्वेन प्राप्तत्वादित्यर्थः । **ननु** प्राप्तमपि परं ब्रह्म प्राप्यतां, न्यग्रोध इव शाखामृगेणेत्युक्तमित्याशङ्क्य विद्ययाऽविद्याद्दृष्टे भेदबाधादिह न तादृश्यपि गतिरित्याह—**तत्त्वमसीत्यादिना** । प्राप्तप्राप्तिं दृष्टान्तेऽङ्गीकृत्य प्रकृते वैषम्यमुक्तमिदानीमनङ्गीकुर्वन्नाह—**नचेति** । अप्राप्तस्य न्यग्रोधावयविन एवावयवान्तरोपहितस्य संबन्धितया उत्तरस्याः प्राप्तेरुपपत्तेरित्यर्थः । **ननु** तदवयवपरंपरा परमाणुपर्यन्तं धावेदिति संयोगस्याप्रत्यक्षत्वमापादितम्, अत आह—**एतदपि चेति** । काल्पनिकविभागमपेक्ष्य न्यग्रोधप्राप्त्यप्राप्ती । ते च वास्तवे ब्रह्मणि प्रतिबुद्धे न युक्ते इत्यर्थः । **ननु** ज्ञानोत्तरकालं देहधारणवदर्चिरादिगतिर्देशविशेषप्राप्तये किं न स्यादिति शङ्कते—**विदुषोऽपीति । अमृतत्वादिलिङ्गानां न्यायैः साकं विरोधिनाम् । दृढन्यायवतीर्वेक्ति बाधिका विशदाः श्रुतीः** ॥ ब्रह्मैव सन्नित्यादीनां नोपायान्तरापेक्षेत्यभिसंधिः श्रुतेर्लक्ष्यत इति योजना । श्रुत्यनुग्राहकं न्यायमेव दर्शयति—**उपपन्नं चेति । लिङ्गाभासमणुः**

## कल्पतरुपरिमलः ।

**कार्यं बादरिरस्य गत्युपपत्तेः** ॥ ७ ॥ नचैत इत्यादिग्रन्थेनोद्भाव्य निराकरणीयम् अवयवसंयोगेनान्यथासिद्धाववयविसंयोगाप्रत्याख्यानशङ्कां विवृणोति—**शाखामृगोऽवयवीति । ननु**—अस्त्ववयविनः संयोगः अवयवे वाऽवयवान्तरावच्छिन्नत्वेनाप्राप्तः शाखामृगेण प्राप्यते, अवयवविशेषो वा पूर्वमप्राप्तः प्राप्यत इति—**चेत्**, एवं तर्हि ब्रह्मापि प्रदेशविशेषावच्छिन्नं तत्प्रदेशविशेषो वा मुच्यमानेन प्राप्यते प्रागप्राप्तत्वादिति तुल्यम् । **ननु तर्हीति** । अवयविसंयोगोपलक्षित इति भ्रान्त्या शङ्का । **काल्पनिकविभागमपेक्ष्येति** । अवयवभेदेनापि वास्तवोऽवयविभेदो वक्तुं न शक्यते,

## भामती।

ब्रह्मभावसाक्षात्कारेणोन्मूलितायामनवयवेनाविद्यायामस्ति गन्तव्यगन्तृविभागो विदुषस्तदभावे कथमयमर्चिरादिमार्गे प्रवर्तेत? नच छायामात्रेणापि सांसारिकधर्मानुवृत्तिस्तत्र प्रवृत्त्यङ्गम्। यादृच्छिकप्रवृत्तेः श्रद्धाविहीनस्य दृष्टार्थानि कर्माणि फलन्ति न फलन्ति च। अदृष्टार्थानां तु फले का कथेत्युक्तं प्रथमसूत्रे। नच—आर्चिरादिमार्गभावनायाः परब्रह्मप्राप्त्यर्थमविदुषः प्रत्युपदेशः। तथाच कर्मान्तरेष्विव नित्यादिषु तत्रापि स्यात्तस्य प्रवृत्तिरिति—सांप्रतम्; विकल्पासहत्वात्। किमियं परविद्यानपेक्षा परब्रह्मप्राप्तिसाधनं तदपेक्षा वा। न तावदनपेक्षा; "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति परब्रह्मविज्ञानादन्यस्याध्वनः साक्षात्प्रतिषेधात्। परविद्यापेक्षत्वे तु मार्गभावनायाः किमियं विद्याकार्ये मार्गभावना साहायकमाचरत्यथ विद्योत्पादे। न तावद्विद्याकार्ये; तया सह तस्या द्वैताद्वैतगोचरतया मिथो विरोधेन सहासंभवात्। नापि यज्ञादिवद्विद्योत्पादे; साक्षाद्ब्रह्मप्राप्त्युपायत्वश्रवणादेतान्ब्रह्म गमयतीति। यज्ञादेस्तु विविदिषासंयोगेन श्रवणाद्विद्योत्पादाङ्गत्वम्। तस्मादुपन्यस्तबहुश्रुत्यनुरोधादुपपत्तेश्च ब्रह्मशब्दोऽसंभवन्मुख्यवृत्तिर्ब्रह्मसामीप्या-

## वेदान्तकल्पतरुः।

**पन्था इत्याद्युद्धृत्य भास्करः। मोहयन्नपरान्मन्दाननेनैवानुकम्प्यते॥** यदुक्तं विदुषोऽपि सांसारिकधर्मानुवृत्तिवद् गत्युपपत्तिरिति, तत्राह—**नच छायामात्रेणेत्यादिना।** यदा अश्वमेधादीनि कर्माण्यदृष्टार्थानि न फलन्ति, तदानीमदृष्टार्थानामर्चिरादिमार्गचिन्तनादीनां का कथेत्यर्थः। मा भूत् ज्ञानोत्तरकालमर्चिरादिमार्गचिन्तनमविदुषस्तु ब्रह्मप्राप्त्यर्थं तद्विधीयतामित्याशङ्क्याह—**नचार्चिरादीत्यादिना।** अविदुष इति द्वितीयाबहुवचनम्। **तमेव विदित्वेति।** अनेनाहत्य ज्ञानातिरिक्तमार्गनिषेधादणुः पन्था इत्यादिषु ब्रह्मज्ञानमेव ब्रह्मप्राप्तिसाधनत्वात् पथ्यादिशब्दनिर्दिष्टमित्युक्तं भवति। यदुक्तं नपुंसकब्रह्मशब्दः परब्रह्मण्येव रूढ इति, तत्राह—**तस्मादिति। सामीप्यादिति।** कार्यस्य

## कल्पतरुपरिमलः।

नचावयविनि भेदाभावे तस्यैव प्राप्तिश्च समर्थयितुं शक्यते। अतो भेदस्याविद्याकल्पितत्वं काल्पनिकशब्देनोक्तम्। **यथाऽश्वमेधादीनीति।** अश्वमेधपर्यन्तान्यदृष्टार्थानि कर्माणि क्रियातत्फलादिस्वरूपसद्भावश्रद्धाहीनस्य ब्रह्मविदो न फलन्तीत्यश्रद्धया कृतं दत्तमित्यादिस्मृतिमुदाहृत्योक्तं प्रथमसूत्रे, तदर्चिरादिगतिचिन्तनेऽपि तुल्यम्; अदृष्टार्थत्वाविशेषात्, पुनः केन विशेषेणादृष्टार्थकर्मान्तरव्यावृत्तेनार्चिरादिगतिचिन्तनस्य वासनामात्रेण प्रवृत्तिमवलम्ब्य फलपर्यवसानमाशङ्क्यत इत्यर्थः। अतश्च वासनावशात् प्रवृत्तं लौकिकं किंचित्फलतु मा वा, वैदिकं तु किमपि न फलत्येवेति भावः। टीकायां का कथेत्येतत्कैमुतिकन्यायप्रदर्शनार्थं न भवति; प्रकृतार्थे तदनन्वयात्, किंत्वितरापेक्षयाऽर्चिरादिगतिचिन्तनस्य को विशेषः? येनेतरेषामफलत्वेऽप्येतत्फलवत्स्यादित्येतद्दर्शयितुं कानि तान्यफलानीतराणीत्याकाङ्क्षायामाचार्यैरश्वमेधादीनि तानीत्युदाहृतानि। **अनेनाहत्येति।** नान्यः पन्था इत्यत्र पन्था इत्ययं शब्दोऽणुः पन्था इत्यादिश्रुत्यन्तरेषु पन्था इति श्रवणाद् ब्रह्मप्राप्तिसाधनत्वेनार्चिरादिमार्गो विवक्षित इति भ्रममपनेतुमेवेति भावः। **ननु**—"अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमिति ऊर्ध्वं विमुक्ता" इति पथ इव ऊर्ध्वदेशवर्तिस्वर्गलोकप्राप्तिसाधनत्वं श्रूयत इति—**चेत्,** तर्हि इतस्तृतीयलोकरूपस्वर्गलोकप्राप्तिरेव ब्रह्मविद उक्ता स्याद्, नतु ब्रह्मलोकप्राप्तिः। स्वर्गशब्दस्य ब्रह्मलोके लक्षणाऽऽश्रीयत इति चेत्, किमर्थं लक्षणाऽऽश्रयितव्या? "यन्न दुःखेन संभिन्न"मिति श्रुत्यनुशिष्टो निरतिशयानन्द इह स्वर्गशब्दार्थोऽस्तु, ततश्च निरतिशयानन्दप्रकाशरूपं ब्रह्मैव स्वर्गलोकशब्देन प्राप्यमुक्तं भवति। "स्वर्गकामो यजेते"त्यादावपि ब्रह्मानन्द एव स्वर्गशब्दार्थः स्यादिति चेद्, अस्तु को दोषः? अन्तःकरणशुद्धिद्वारा कर्मणामपि ब्रह्मप्राप्तिसाधनत्वसंभवात्। "यः कामयेत सर्वमिदं भवेय"मित्यादिब्रह्मप्राप्तिरूपकर्मफलश्रवणानामेवोपपादनीयत्वात्, दर्शपूर्णमासादिष्वपि "दिवि ज्योतिरजरमारभेता"मित्यादिमन्त्रलिङ्गैः ब्रह्मप्राप्तिफलावगमाच्च। **उक्तं च वार्तिके**—स्वर्गोऽयमेव प्रागुक्तः स्वर्गकामवचस्यपि। कर्मभिस्तदसिद्धेर्हि वेदान्तज्ञानमिष्यते॥ **यद्वा**—निरतिशयब्रह्मानन्दवाचकस्य स्वर्गशब्दस्य स्वर्गकामादिवाक्यानेकमन्त्रलिङ्गाद्यवगतनाकपृष्ठभोग्यसुखविशेषे लक्षणास्तु, तत्प्रशंसार्थं तत्र तस्य लक्षणोपपत्तेः, चन्दनं स्वर्गः सूक्ष्माणि वासांसि स्वर्ग इति सुखसाधनेऽपि प्रशंसार्थं तत्प्रयोगदर्शनात्, ऐहिकसुखापेक्षया नाकलोकभोग्यसुखे नितान्तोत्कर्षसत्त्वेन निरतिशयसुखवाचिना तत्प्रशंसौचित्याच्च, इहतु संकोचे कारणाभावाद् मोक्षप्रकरणाच्च परमानन्द एव स्वर्गशब्दार्थो ग्राह्यः; नतु कर्मवाक्येष्विव परिच्छिन्नो लक्षणीयः। **तदप्युक्तं वार्तिके**—परमानन्द एवातः स्वर्गशब्देन गृह्यते। मोक्षप्रकरणान्नित्यः क्रियार्थोऽतो न गृह्यते॥ इति। एवंच मन्त्रस्यायमर्थः। **अणुः** सूक्ष्मः दुर्विज्ञानः **विततो** विस्तीर्णः विस्पष्टतरणहेतुः **पन्था** ज्ञानरूपब्रह्मप्राप्त्युपायः **पुराण**श्चिरन्तनः श्रुतिसिद्धः **मां स्पृष्टः** मां स्पृष्टवान् मया स्पृष्ट इति वा मया लब्ध इति यावत्। **मयानुवित्तः** फलपर्यवसायिनीं परिपाकदशामानीतः मयेति शब्दो मन्त्रदृष्टृ-

## विशेषितत्वाच्च ॥ ८ ॥

'ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' ( बृ० ६।२।१५ ) इति च श्रुत्यन्तरे विशेषितत्वात्कार्यब्रह्मविषयैव गतिरिति गम्यते । नहि बहुवचनेन विशेषणं परस्मिन्ब्रह्मण्यवकल्पते । कार्ये त्ववस्थाभेदोपपत्तेः संभवति बहुवचनम् । लोकश्रुतिरपि विकारगोचरायामेव संनिवेशविशिष्टायां भोगभूमावाञ्जसी, गौणी त्वन्यत्र 'ब्रह्मैव लोक एष सम्राट्' इत्यादिषु । अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन्ब्रह्मण्यनाञ्जसः स्यात् । तस्मात्कार्यविषयमेवेदं नयनम् ॥ ८ ॥ ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते; समन्वये हि समस्तस्य जगतो जन्मादिकारणं ब्रह्मेति स्थापितमिति, अत्रोच्यते—

### भामती ।

दपरब्रह्मणि लक्षणया नेतव्यः । तथाच लोकेष्विति बहुवचनोपपत्तिः कार्यब्रह्मलोकस्य । परस्य त्वनवयवतया तद्द्वारेणानुपपत्तेः । लोकत्वं चेलावृतादिवत्सन्निवेशविशेषवति भोगभूमौ निरूढं न कथंचिद्योगेन प्रकाशे व्याख्यातं भवति । तस्मात्साधुदर्शी स भगवान्बादरिरसाधुदर्शी जैमिनिरिति सिद्धम् । अप्रामाणिकानां बहुप्रलापाः सर्वगतस्य द्रव्यस्य गुणाः सर्वगता एव चैतन्यानन्दादयश्च गुणिनः परमात्मनो भेदाभेदवन्तो गुणा इत्यादयो दूषणायानुभाष्यमाणा अप्यप्रामाणिकत्वमावहन्त्यस्माकमित्युपेक्षिताः । ग्रन्थयोजना तु—**प्रत्यगात्मत्वाच्च गन्तॄणां** प्रति प्रति अञ्चति गच्छतीति प्रत्यक् प्रतिभावव्रृत्ति ब्रह्म तदात्मत्वाद्गन्तॄणां जीवात्मनामिति । **गौणी त्वन्यत्रेति** । यौगिक्यपि हि

### वेदान्तकल्पतरुः ।

कारणप्रत्यासत्तेरित्यर्थः । **ननु** "ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतिसामर्थ्यैः कथं "स एतान् ब्रह्म गमयती"ति ब्रह्मश्रुतिर्लक्षणया नीयेतेत्याशङ्क्य लोकादिश्रुतिवशादित्याह—**तथाच लोकेष्वितीति । ननु** ब्रह्मलोकस्याप्येकत्वात् कथं बहुवचनोपपत्तिरत आह—**परस्य त्विति** । अवयवद्वारेण संनिकृष्ट उपचारः स्यात्, परस्मिंस्तु विप्रकृष्टावयवानामपि कल्प्यत्वादित्यर्थः । **अत्र भास्करः प्रललाप**—यदि निर्गुणायां विद्यायां गतिरनुपपन्ना, तर्हि सा सगुणाख्यप्यनुपपन्नैव; सगुणस्यापि ब्रह्मणः तद्गुणानां च ज्ञानादीनाम् आकाशशब्दयोरिव व्यापित्वाद्, उपासकानामपीहैव तद्भावमापन्नानां तत्प्राप्तौ गत्यनपेक्षत्वात् । तत्र श्रुतिवशाद्यदि गतिः, तर्हि निर्गुणविद्यायां किं न स्यात्? परप्रकरणेऽपि मुण्डकादौ "सूर्यद्वारेण ते विरजाः प्रयान्ती"त्यादिभिर्गत्याम्नानात्, अङ्गीकृत्य च निर्गुणविद्यामिदमुक्तं, नतु निर्गुणं वस्त्वस्ति; यद्विद्या निर्गुणा स्यात्, ज्ञानादिभिर्गुणैर्ब्रह्मापि भिन्नाभिन्नं सगुणमेव—इत्यादि, तत्राह—**अप्रामाणिकानां बहुप्रलापा इति । अयमभिसंधिः**—सगुणब्रह्मणः सविशेषत्वाद् ब्रह्मलोके एवोपासकान् प्रति गुणाभिव्यक्तिर्नेहेति संभवति । दृश्यते च पृथिवीत्वाविशेषेऽपि मलयशैलादेश्चन्दनगन्धाद्यभिव्यञ्जकत्वं शब्दस्य चाकाशगुणस्य वंशाकाशादिदेश एवाभिव्यक्तिर्न सर्वत्र परस्य तु ब्रह्मणो न गुणाः सन्ति, येषां देशविशेषेऽभिव्यक्तिः । न निर्गुणं वस्त्वस्तीति च दुर्लभम्; सत्तादेर्निर्गुणत्वान्न निर्गुणं द्रव्यमस्ति । ब्रह्मापि द्रव्यत्वात्सगुणमिति चेत्किं द्रव्यत्वं गुणवत्त्वम् उपादानकारणत्वं वा । **न प्रथमो**ऽसिद्धेः । **द्वितीये** उपादानत्वं किं परिणामित्वं विवर्ताधिष्ठानत्वं वा । **नाद्यिमो**ऽसिद्धेरेव । **न चरमः**; सत्तादेरप्यन्यापोहत्वमात्रसंबन्धत्वाद्यारोपाधिष्ठानत्वेनानैकान्त्यात्, उपासकानां त्विहोपास्याविर्भावः प्रतिभासमात्रम् अन्त्यकाल इव भाविकर्मफलस्य । यदि तु साक्षादाविर्भावः स्यात्, तर्हि गतिवैयर्थ्यं स्यात् । तस्माद् ब्रह्मैश्वर्याविर्भावो ब्रह्मलोक एव "नान्यः पन्था" इत्यादि बहुश्रुतिभिश्च निर्गुणप्रकरणाद्गतेरुत्कर्ष इति दिक् । प्रत्यगित्यात्मेति च शब्दयोरपुनरुक्तमर्थमाह—**प्रतिप्रतीति** । प्रतिभावमधिष्ठानत्वेन गतस्य ब्रह्मणो गन्तॄणामात्मत्वादिति भाष्यार्थः । **ननु** लोकश्रुतिर्लोकनं प्रकाशः स एव लोक इति ब्रह्मणि यौगिकी, कथं गौणत्वमत आह—**यौगिक्यपीति** । योगरूपो गुणः प्रकाशः ब्रह्मैकरसता

### कल्पतरुपरिमलः ।

विपरामर्शी । तेन **धीराः** प्रज्ञावन्तः अन्येऽपि ब्रह्मविदः इतः शरीरपातादूर्ध्वं स्वर्गलोकमपियन्तीति । **ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिसामर्थ्यैरिति** । यद्यप्युत्क्रान्तिप्रतिषेधश्रुतिरपि टीकायां ब्रह्मशब्दलक्षणाहेतुत्वेन विवक्षितेति वक्तुं शक्यम्; तथाप्युत्क्रान्तिप्रतिषेधतो गत्यभावसिद्धिः प्रतिषेधादिति चेदित्यधिकरणेन लब्धेति "ब्रह्म वेदे"त्यादिश्रुतिसामर्थ्यमात्रमेतदधिकरणप्रदर्शनीयमिति तदुपादानम्, फलान्तरवत्त्वे काम्यत्वप्रसङ्गादिति । यदि प्राधान्येन नित्यनैमित्तिकानां फलान्तराभावेऽप्यन्वाधानप्रस्तरयागादीनाम् अङ्गानां करणमन्त्रप्रकाश्यं वर्चःपुष्ट्यायुःप्रजादिकमानुषङ्गिकं फलमस्तीति तदभिप्रायेण भाष्यकारैरापस्तम्बस्मृतिरुदाहृतेत्युच्येत, तदा तेषां न काम्यत्वप्रसङ्गो नाप्यनुनिष्पादिफलानुत्पत्ति-

## सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तुशब्द आशङ्काव्यावृत्त्यर्थः । परब्रह्मसामीप्याद्परस्य ब्रह्मणस्तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते । परमेव हि ब्रह्म विशुद्धोपाधिसंबन्धं क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः ॥ ९ ॥ ननु कार्यप्राप्तावनावृत्तिश्रवणं न घटते । नहि परस्माद्ब्रह्मणोऽन्यत्र क्वचिन्नित्यतां संभावयन्ति । दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिम्—'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' ( छा० ४।१५।६ ) इति, तेषामिह पुनरावृत्तिरस्ति 'तयोर्ध्वमायन्नमृतत्वमेति' ( छा० ८।६।६। क० ६।१६ ) इति चेत्, अत्र ब्रूमः—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त इति । इत्थं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या । नह्यञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीत्युपपादितम् ॥ १० ॥

## स्मृतेश्च ॥ ११ ॥

स्मृतिरप्येतमर्थमनुजानाति—'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति । तस्मात्कार्यब्रह्मविषया गतिः श्रूयत इति सिद्धान्तः ॥ ११ ॥ कं पुनः पूर्वपक्षमाशङ्क्यायं सिद्धान्तः प्रतिष्ठापितः 'कार्यं बादरिः' ( ब्र० सू० ४।३।७ ) इत्यादिनेति । स इदानीं सूत्रैरेवोपदर्श्यते—

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

जैमिनिस्त्वाचार्यः 'स एनान्ब्रह्म गमयति' ( छा० ४।१५।६ ) इत्यत्र परमेव ब्रह्म प्रापयतीति मन्यते । कुतः ? मुख्यत्वात् । परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनं गौणमपरम् । मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति ॥ १२ ॥

## दर्शनाच्च ॥ १३ ॥

'तयोर्ध्वमायन्नमृतत्वमेति' ( छा० ८।८।६। क० ६।१६ ) इति च गतिपूर्वकममृतत्वं दर्शयति । अमृतत्वं च परस्मिन्ब्रह्मण्युपपद्यते न कार्ये विनाशित्वात्कार्यस्य; 'अथ यत्रान्यत्पश्यति तदल्पं तन्मर्त्यम्' ( छा० ७।२४।१ ) इति प्रवचनात् । परविषयैव चैषा गतिः कठवल्लीषु पठ्यते । नहि तत्र विद्यान्तरप्रक्रमोऽस्ति; 'अन्यत्र धर्मादन्यत्राधर्मात्' ( क० २।१४ ) इति परस्यैव ब्रह्मणः प्रक्रान्तत्वात् ॥ १३ ॥

## नच कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

अपिच 'प्रजापतेः सभां वेश्म प्रपद्ये' ( छा० ८।१४।१ ) इति नायं कार्यविषयः प्रतिपत्त्यभिसंधिः; 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' ( छा० ८।१४।१ ) इति कार्यविलक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात् , 'यशोऽहं भवामि ब्राह्मणानाम्' ( छा० ८।१४।१ ) इति च सर्वात्मत्वेनोपक्रमणात्, 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' (श्वेता० ४।१९) इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः । सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्विका हार्दविद्यायामुदिता 'तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' ( छा० ८।५।३ ) इत्यत्र । पदेरपि च गत्यर्थत्वान्मार्गापेक्षाऽवसीयते । तस्मात्परब्रह्मविषया गतिश्रुतय इति पक्षान्तरम् । तावेतौ द्वौ पक्षावाचार्येण सूत्रितौ गत्युपपत्त्यादिभिरेको मुख्यत्वादिभिरपरः । तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुं नतु मुख्यत्वादयो गत्युपपत्त्यादीनित्याद्य एव सिद्धान्तो व्याख्यातो

---

भामती ।

योगगुणापेक्षया गौण्येव । विशुद्धोपाधिसंबन्धमिति । मनोमयत्वादयः कल्पनाः कार्याः । कार्यत्वादविशुद्धा अपि

वेदान्तकल्पतरुः ।

तदपेक्षयेत्यर्थः । अविशुद्धा अपीति । गुणत्रयमया अपीत्यर्थः । भाष्ये विकल्पितौ विकारावयवपक्षावन्यानन्यत्वाश्रयौ

द्वितीयः पूर्वपक्षः। नह्यसत्यपि संभवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिदाज्ञापयिता विद्यते। परविद्याप्रकरणेऽपि च तत्स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' ( छा० ८।६।६ ) इतिवत्। 'प्रजापतेः सभां वेश्म प्रपद्ये' ( छा० ८।१४।१ ) इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिर्न विरुध्यते। सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसंकीर्तनं सर्वकर्मा सर्वकाम इत्यादिवदवकल्पते। तस्मादपरविषया एव गतिश्रुतयः। केचित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्त्युत्तराणि सिद्धान्तसूत्राणीत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति, तदनुपपन्नम्; गन्तव्यत्वानुपपत्तेर्ब्रह्मणः। 'यत्सर्वगतं सर्वान्तरं सर्वात्मकं च परं ब्रह्म' 'आकाशवत्सर्वगतश्च नित्यः' 'यत्साक्षादपरोक्षाद्ब्रह्म' ( बृ० ३।४।१ ) 'य आत्मा सर्वान्तरः' ( बृ० ३।४।१ ) 'आत्मैवेदं सर्वम्' ( छा० ७।२५।२ ) 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' ( मु० २।२।११ ) इत्यादिश्रुतिनिर्धारितविशेषं, तस्य गन्तव्यता न कदाचिदप्युपपद्यते। नहि गतमेव गम्यते। अन्यो ह्यन्यद्गच्छतीति प्रसिद्धं लोके। ननु लोके गतस्यापि गन्तव्यता देशान्तरविशिष्टा दृष्टा। यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छतीति। तथानन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धकं स्वात्मभूतमेव गन्तव्यं दृष्टं, तद्वद्ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात्कथंचिद्गन्तव्यता स्यादिति। न; प्रतिषिद्धसर्वविषयत्वाद्ब्रह्मणः। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' ( श्वेता० ६।१९ ) 'अस्थूलमनण्वह्रस्वमदीर्घम्' ( बृ० ३।८।८ ) 'सबाह्याभ्यन्तरो ह्यजः' ( मु० २।१।२ ) 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृ० ४।४।२५ ) 'स एष नेति नेत्यात्मा' ( बृ० ३।९।२६ ) इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते। येन भूप्रदेशवयोवस्थान्यायेनास्य गन्तव्यता स्यात्। भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकालविशिष्टा गन्तव्यता। जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्, न; विशेषनिराकरणश्रुतीनामनन्यार्थत्वात्। उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत्, न; तासामेकत्वप्रतिपादनपरत्वात्। मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति। कस्मात्पुनरुत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वं न पुनरितरशेषत्वमितरासामिति? उच्यते—विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात्। नह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः काचिदाकाङ्क्षोपजायते; पुरुषार्थसमाप्तिबुद्ध्युपपत्तेः 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ( ईशा० ७ ) 'अभयं वै जनक प्राप्तोऽसि' ( बृ० ४।२।४ ) 'विद्वान्न बिभेति कुतश्चन। एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्' ( तैत्ति० २।९।१) इत्यादिश्रुतिभ्यः, तथैव च विदुषां तुष्ट्यनुभवादिदर्शनात्। विकारानृताभिसंध्यपवादाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति। अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यते। नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति। प्रत्यक्षं तु तासामन्यार्थत्वं समनुगम्यते। तथाहि—'तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति' ( छा० ६।८।३ ) इत्युपन्यस्योदर्के सत एवैकस्य जगन्मूलस्य

## भामती।

श्रेयोहेतुत्वाद्विशुद्धाः। **प्रतिसंचरो** महाप्रलयः, **प्रतिपत्त्यभिसंधिः** प्रतिपत्तिर्गतिः पदेर्गत्यर्थत्वात्। **अभिसंधि**स्तात्पर्यम्। यस्य ब्रह्मणो नामाभिधानं यश इति। **पूर्ववाक्यविच्छेदेनेति**। श्रुतिवाक्ये बलीयसी प्रकरणात्। **सगुणेऽपिच ब्रह्मणीति**। प्रशंसार्थमित्यर्थः। चोदयति—**ननु गतस्यापि पारमार्थिकी गन्तव्यता देशान्तरविशिष्टस्येति**। न्यग्रोधवानरदृष्टान्त उपपादितः। परिहरति—**न। प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मण इति**। **अयमभिसन्धिः**—यथातथा न्यग्रोधावयवी परिणामवानुपजनापायधर्मभिः कर्मजैः संयोगविभागैः संयुज्यतामयं पुनः परमात्मा निरस्तनिखिलभेदप्रपञ्चः कूटस्थनित्यो न न्यग्रोधवत्संयोगविभागभाग् भवितुमर्हति। काल्पनिकसंयोगविभागस्तु काल्पनिकस्यैव कार्यब्रह्मलोकस्योपपद्यते न परस्य। शङ्कते—**जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरिति**। नह्युत्पत्त्यादिहेतुभावोऽपरिणामिनः संभवति, तस्मात्परिणामीति। तथाच भाविकमस्योपपद्यते गन्तव्यत्वमित्यर्थः। निराकरोति—**न; विशेषनिराकरणश्रुतीनामिति**। विशेषनिराकरणं समस्तशोकादिदुःखशमनतया पुरुषार्थफलवत्।

विज्ञेयत्वं दर्शयति। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म' (तै० ३।१।१) इति च। एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मणः। अतश्च गन्तव्यत्वानुपपत्तिः। 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' (बृ० ४।४।६) इति च परस्मिन्ब्रह्मणि गतिं निवारयति। तद्व्याख्यातं— 'स्पष्टो ह्येकेषाम्' (ब्र० सू० ४।२।१३) इत्यत्र। गतिकल्पनायां च गन्ता जीवो गन्तव्यस्य ब्रह्मणोऽवयवो विकारो वान्यो वा ततः स्यात्; अत्यन्ततादात्म्ये गमनानुपपत्तेः। यद्येवं ततः किं स्यात्? उच्यते; यद्येकदेशस्तेनैकदेशिनो नित्यप्राप्तत्वान्न पुनर्ब्रह्मगमनमुपपद्यते। एकदेशैकदेशित्वकल्पना च ब्रह्मण्यनुपपन्ना; निरवयवत्वप्रसिद्धेः। विकारपक्षेऽप्येतत्तुल्यम्; विकारेणापि विकारिणो नित्यप्राप्तत्वात्। नहि घटो मृदात्मतां परित्यज्यावतिष्ठते; परित्यागे वाऽभावप्राप्तेः। विकारावयवपक्षयोश्च तद्वतः स्थिरत्वाद्ब्रह्मणः संसारगमनमप्यनवक्लृप्तम्। अथान्य एव जीवो ब्रह्मणः। सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति। व्यापित्वे गमनानुपपत्तिः, मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गः, अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः। प्रतिषिद्धे चाणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात्। परस्माच्चान्यत्वे जीवस्य 'तत्त्वमसि' (छा० ६।८।७) इत्यादिशास्त्रबाधप्रसङ्गः। विकारावयवपक्षयोरपि समानोऽयं दोषः। विकारावयवयोस्तद्वतोऽनन्यत्वाददोष इति चेत्, न; मुख्यैकत्वानुपपत्तेः। सर्वेष्वेतेषु पक्षेष्वनिर्मोक्षप्रसङ्गः; संसार्यात्मत्वानिवृत्तेः। निवृत्तौ वा स्वरूपनाशप्रसङ्गः; ब्रह्मात्मत्वानभ्युगमाच्च। यत्तु कैश्चिज्जल्प्यते—नित्यानि नैमित्तिकानि कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, सांप्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यन्त इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसंधानकारणाभा-

## भामती।

अफलं तूत्पत्त्यादिविधानम्। तस्मात्फलवतः संनिधावाम्नायमानं तदर्थमेवोच्यत इत्युपपत्तिः। तद्विजिज्ञासस्वेति च श्रुतिः। तस्माच्छ्रुत्युपपत्तिभ्यां निरस्तसमस्तविशेषब्रह्मप्रतिपादनपरोऽयमाम्नायो नतूत्पत्त्यादिप्रतिपादनपरः। तस्मान्न गतिस्तात्त्विकी। अपिचेयं गतिर्न विचारं सहत इत्याह—**गतिकल्पनायां चेति**। अन्यानन्यत्वाश्रयाववयवविकारपक्षौ। **अन्यो वात्यन्तम्**। अथ कस्मादात्यन्तिकमनन्यत्वं न कल्पत इत्यत आह—**अत्यन्ततादात्म्य इति**। मृदात्मतया हि स्वभावेन घटादयो भावास्तद्विकारा व्याप्ताः, तदभावे न भवन्ति शिंशपेव वृक्षत्वाभाव इति। **विकारावयवपक्षयोश्च तद्वतः** सह विकारावयवैः **स्थिरत्वाद**चलत्वाद्ब्रह्मणः संसारलक्षणं गमनं विकारावयवयोरनुपपन्नम्। नहि स्थिरात्मकमस्थिरं भवति। अन्यानन्यत्वे अपि चैकस्य विरोधादसंभवन्ती इति भावः। **अथान्य एव जीवो ब्रह्मणः**। तथाच ब्रह्मण्यसंसरत्यपि जीवस्य संसारः कल्पत इति। एतद्विकल्प्य दूषयति—**सोऽणुरिति**। **मध्यमपरिमाणत्व इति**। मध्यमपरिमाणानां घटादीनामनित्यत्वदर्शनात्। **न; मुख्यैकत्वेति**। भेदाभेदयोर्विरोधिनोरेकत्रासंभवाद्बुद्धिव्यपदेशभेदादर्थभेदः। अयुतसिद्धतयोपचारेणाभिन्नमुच्यत इत्यमुख्यमस्यैकत्वमित्यर्थः। **अपिच** जीवानां ब्रह्मावयवत्वपरिणामात्यन्तभेदपक्षेषु तात्त्विकी संसारितेति मुक्तौ स्वभावहानाज्जीवानां विनाशप्रसङ्गः। ब्रह्मविवर्तत्वे तु ब्रह्मैवैषां स्वभावः प्रतिबिम्बानामिव बिम्बं, तच्चाविनाशीति न जीवविनाश इत्याह—**सर्वेष्वेतेष्विति**। मतान्तरमुपन्यस्यति दूषयितुम्—**यत्तु कैश्चिज्जल्प्यते** विनैव ब्रह्मज्ञानं **नित्यनैमित्तिकानीति**। यथा हि कफनिमित्तो ज्वर उपात्तस्य

## वेदान्तकल्पतरुः।

भेदाभेदाश्रयावित्यर्थः। अन्यो वा ततः स्यादिति भाष्येण चात्यन्तमन्यत्वं विकल्पितमित्याह—**अन्यो वेति**। विकारपक्षेऽप्येतत्तुल्यमिति भाष्यं व्याचष्टे—**मृदात्मतयेति**। मृदात्मत्वे हेतुमाह—**तदभाव इति**। **ननु** विकारिणोऽवयविनश्च स्थिरत्वेऽपि ताभ्यां भिन्नाभिन्नौ विकारावयवौ, तत्र भिन्नत्वांशेनास्थिरत्वात्तयोर्गमनमित्याशङ्क्याह—**अन्यानन्यत्वे अपीति**। अथान्य एव जीवो ब्रह्मण इत्येतदन्तमाशङ्काभाष्यं, सोऽणुरित्यादि तु विकल्पपरमिति ज्ञापनार्थमाह—**तथाचेति**। भेदाभेदेऽप्येकत्वं न मुख्यमेव, किंतु भेदसत्त्वमात्रमतो भाष्यानुपपत्तिरित्याशङ्क्याह—**भेदाभेदयोरिति**। बुद्धिव्यपदेशभेदादिति भेदप्रमाणोपन्यासः। प्रमिते च भेदे विरोधादभेदानुपपत्तौ विकारस्यावयवस्य वा जीवस्य तत्त्वमसीति ब्रह्मसामानाधिकरण्यं गौणं स्यादित्याह—**अयुतसिद्धतयेति**। **परिणामेति**। **विकारः** परिणामः। **क्षेतुं** नाशयितुम्। नित्यनैमित्तिकानां नित्यैर्विहिता दुरितनिवृत्तिः प्रत्यवायानुत्पत्तिर्वा फलं युज्यते, फलान्तरवत्त्वे काम्यत्वप्रस-

वात्स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यति—इति, तदसत्, प्रमाणाभावात्। नह्येतच्छास्त्रेण केनचित्प्रतिपादितं मोक्षार्थीत्थं समाचरेदिति । स्वमनीषया त्वेतत्तर्कितं यस्मात्कर्मनिमित्तः संसारस्तस्मान्निमित्ताभावान्न भविष्यतीति । नचैतत्तर्कयितुमपि शक्यते; निमित्ताभावस्य दुर्ज्ञानत्वात् । बहूनि हि कर्माणि जात्यन्तरसंचितानीष्टानिष्टविपाकान्येकैकस्य जन्तोः संभाव्यन्ते । तेषां विरुद्धफलानां युगपदुपभोगासंभवात्कानिचिल्लब्धावसराणीदं जन्म निर्मिमते, कानिचित्तु देशकालनिमित्तप्रतीक्षाण्यासत इत्यतस्तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासंभवान्न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुम् । कर्मशेषसद्भावसिद्धिश्च 'तद्य इह रमणीयचरणास्ततः शेषेण' इत्यादिश्रुतिस्मृतिभ्यः । स्यादेतत्—नित्यनैमित्तिकानि तेषां क्षेपकाणि भविष्यन्तीति, तन्न; विरोधाभावात् । सति हि विरोधे क्षेप्यक्षेपकभावो भवति । नच जन्मान्तरसंचितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः; शुद्धिरूपत्वाविशेषात् । दुरितानां त्वशुद्धिरूपत्वात्सति विरोधे भवतु क्षपणं, नतु तावता देहान्तरनिमित्ताभावसिद्धिः; सुकृतनिमित्तत्वोपपत्तेः, दुश्चरितस्याप्यशेषक्षपणानवगमात् । नच नित्यनैमित्तिकानुष्ठानात्प्रत्यवायानुत्पत्तिमात्रं, न पुनः फलान्तरोत्पत्तिरिति प्रमाणमस्ति; फलान्तरस्याप्यनुनिष्पादिनः संभवात् । स्मरति ह्यापस्तम्बः—'तद्यथाऽऽम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इति । नचासति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित्प्रतिज्ञातुं शक्यम्; सुनिपुणानामपि सूक्ष्मापराधदर्शनात् संशयितव्यं तु भवति, तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव । नचानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे

## भामती ।

कफस्य विशोषणादिभिः प्रक्षये कफान्तरोत्पत्तिनिमित्तदध्यादिवर्जने प्रशान्तोऽपि न पुनर्भवति । एवं कर्मनिमित्तो बन्ध उपात्तानां कर्मणामुपभोगात्प्रक्षये प्रशाम्यति । कर्मान्तराणां च बन्धहेतूनामननुष्ठानात्कारणाभावे कार्यानुपपत्तेर्बन्धाभावात्स्वभावसिद्धो मोक्ष आरोग्यमिव । उपात्तदुरितनिबर्हणाय च नित्यनैमित्तिककर्मानुष्ठानाद्दुरितनिमित्तप्रत्यवायो न भवति । प्रत्यवायानुत्पत्तौ च स्वस्थस्वान्तो न निषिद्धान्याचरेदिति । तदेतद्दूषयति—**तदसत् । प्रमाणाभावादिति ।** शास्त्रं खल्वस्मिन्प्रमाणम् । तच्च मोक्षमाणस्यात्मज्ञानमेवोपदिशति नतूक्तमाचारम् । नचात्रोपपत्तिः प्रभवति; संसारस्यानादितया कर्माशयस्याप्यसंख्येयस्यानियतविपाककालस्य भोगेन क्षेतुमशक्यत्वादित्याह—**नचैतत्तर्कयितुमपीति ।** चोदयति—**स्यादेतदिति । नित्येति ।** परिहरति—**तन्न; विरोधाभावादिति ।** यदि हि नित्यनैमित्तिकानि कर्माणि सुकृतमपि दुष्कृतमिव निबर्हेयुस्ततः काम्यकर्मोपदेशा दत्तजलाञ्जलयः प्रसज्येरन् । नह्यस्ति कश्चिच्चातुर्वर्ण्ये चातुराश्रम्ये वा यो न नित्यनैमित्तिकानि कर्माणि करोति । तस्मान्नैषां सुकृतविरोधितेति । अभ्युच्चयमात्रमाह—**नच नित्यनैमित्तिकानुष्ठानादिति । नचासति सम्यग्दर्शने इति ।** सम्यग्दर्शी हि विरक्तः काम्यनिषिद्धे वर्जयन्नपि प्रमादादुपनिपतिते तेनैव सम्यग्दर्शनेन क्षपयति । ज्ञानपरिपाके च न करोत्येव, अज्ञस्तु निपुणोऽपि प्रमादात्करोति । कृते च न क्षपयितुं क्षमत इति विशेषः । **नचानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्व इति ।** कर्तृत्वभोक्तृत्वे समाक्षिप्तक्रियाभोगे, ते चेदात्मनः स्वभावावधारिते न त्वारोपिते ततो न शक्यावपनेतुम् । नहि स्वभावाद्भावोऽवरोपयितुं शक्यः; भावस्य विनाशप्रसङ्गात् । नच भोगोऽपि सत्स्वभावः शक्योऽसत्कर्तुं, नो खलु नीलमनीलं शक्यं

## वेदान्तकल्पतरुः ।

ज्ञादित्यभिप्रेत्याह—**अभ्युच्चयमात्रमाहेति ।** क्रियाभोगशक्त्योः सत्योरपि तत्प्रतिबन्धात्कार्यानुदयः संभवति; तैलकलुषितशालिबीजादङ्कुरानुदयनियमवत्, अतो यथाश्रुतं भाष्यमनुपपन्नमित्याशङ्क्य व्याचष्टे—**कर्तृत्वभोक्तृत्वे इति ।** ताभ्यां शक्तिनिर्देशः समाक्षिप्तक्रियाभोगे इति कार्यकथनं, ततश्च कार्यशक्त्योरेकप्रहारेणैव दूषणमुच्यते सशक्तिके कर्तृत्वभोक्तृत्वे स्वभावावस्वभावौ वाऽऽत्मनः । **न चरमः**; तथा सति हि तयोरात्मनि समवायो वाच्यः, स च द्वितीये दूषितः । **न प्रथम** इत्याह—**ततो न शक्याविति । अवरोपयितुम्** उत्तारयितुं निवर्तयितुमित्यर्थः । स्वरूपाभावे आत्मन एव नाशप्रसङ्गादित्यर्थः । क्रियाभोगयोरात्मस्वरूपत्वे दूषणमुक्त्वाऽन्यत्वमभ्युपेत्यापि दोषमाह—**नच भोगो-**

## कल्पतरुपरिमलः ।

रिति द्रष्टव्यम् । भावस्य विनाशप्रसङ्गादित्येतत्सोपपत्तिकं व्याचष्टे—**स्वरूपाभाव इति ।** आत्मस्वरूपभूतयोः कर्तृत्वभो-

कर्तृत्वभोक्तृत्वस्वभावस्यात्मनः कैवल्यमाकाङ्क्षितुं शक्यम्; अग्न्यौष्ण्यवत्स्वभावस्यापरिहार्यत्वात् । स्यादेतत्—कर्तृत्वभोक्तृत्वकार्यमनर्थो न तच्छक्तिस्तेन शक्त्यवस्थानेऽपि कार्यपरिहारादुपपन्नो मोक्ष इति । तच्च न; शक्तिसद्भावे कार्यप्रसवस्य दुर्निवारत्वात् । अथापि स्यान्न केवला शक्तिः कार्यमारभतेऽनपेक्ष्यान्यानि निमित्तानि, अत एकाकिनी सा स्थितापि नापराध्यतीति, तच्च न; निमित्तानामपि शक्तिलक्षणेन संबन्धेन नित्यसंबद्धत्वात् । तस्मात्कर्तृत्वभोक्तृत्वस्वभावे सत्यात्मन्यसत्यां विद्यागम्यायां ब्रह्मात्मतायां न कथंचन मोक्षं प्रत्याशास्ति । श्रुतिश्च—'नान्यः पन्था विद्यतेऽयनाय' ( श्वेता० ३।८ ) इति ज्ञानादन्यं मोक्षमार्गं वारयति । परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः; प्रत्यक्षादिप्रमाणाप्रवृत्तेरिति चेत्, न; प्राक्प्रबोधात्स्वप्नव्यवहारवत्तदुपपत्तेः । शास्त्रं च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' ( बृ० २।४।१४;४।५।१५ ) इत्यादिनाऽप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा पुनः प्रबुद्धविषये 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० २।४।१४; ४।५।१५ ) इत्यादिना तदभावं दर्शयति । तदेवं परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वान्न कथंचन गतिरुपपादयितुं शक्या । किंविषयाः पुनर्गतिश्रुतय इति ? उच्यते—सगुणविद्याविषया भविष्यन्ति । तथाहि—क्वचित्पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते, क्वचित्पर्यङ्कविद्यां, क्वचिद्वैश्वानरविद्याम् । यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते यथा 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' ( छा० ४।१०।५ ) इति, 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' ( छा० ८।१।१ ) इति च, तत्रापि वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैवोपास्यत्वात्संभवति गतिः । न क्वचित्परब्रह्मविषया गतिः श्राव्यते,यथा गतिप्रतिषेधः श्रावितः 'न तस्य प्राणा उत्क्रामन्ति' ( बृ० ४।४।६ ) इति । 'ब्रह्मविदाप्नोति परम्' ( तै० २।१।१ ) इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे वर्णितेन न्यायेन देशान्तरप्राप्त्यसंभवात्स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रविलयापेक्षयाऽभिधीयते 'ब्रह्मैव सन्ब्रह्माप्येति' ( बृ० ४।४।६ ) इत्यादिवदिति द्रष्टव्यम् । अपिच परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यादनुचिन्तनाय वा । तत्र प्ररोचनं तावद्ब्रह्मविदो न गत्युक्त्या क्रियते; स्वसंवेद्येनैवाव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः । नच नित्यसिद्धनिःश्रेयसनिवेदनस्यासाध्यफलस्य विज्ञानस्य गत्यनुचिन्तने काचिदपेक्षोपपद्यते । तस्मादपरब्रह्मविषया गतिः । तत्र परापरब्रह्मविवेकानवधारणेनापरस्मिन्ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते । किं द्वे ब्रह्मणी परमपरं चेति । बाढं द्वे; 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' ( प्र० ५।२ ) इत्यादिदर्शनात् । किं पुनः परं ब्रह्म किमपरमिति ? उच्यते । यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत्परम्, तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' ( छा० ३।१४।२ ) इत्यादिशब्दैस्तदपरम् । नन्वेवमद्वितीयश्रुतिरुपरुध्येत, न; अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात् । तस्य चापरब्रह्मोपासनस्य संनिधौ श्रूयमाणम् 'स यदि पितृलोककामो भवति' ( छा० ८।२।१ ) इत्यादि जगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति ।

## भामती ।

शक्रेणापि कर्तुं, तदिदमुक्तं—**स्वभावस्यापरिहार्यत्वादिति** । समारोपितस्य त्वनिर्वचनीयस्य तत्स्वभावस्य शक्यस्तत्त्वज्ञानेनावरोपः कर्तुं सर्पस्येव रज्जुतत्त्वज्ञानेनेति भावः । भावमिममविद्वान्परिचोदयति—**स्यादेतत् । कर्तृत्वभोक्तृत्वकार्यमिति** । अप्रकाशितभावो यथोक्तमेव समाधत्ते—**तच्च नेति** । कर्तृत्वभोक्तृत्वयोर्निमित्तसंबन्धस्य च

## वेदान्तकल्पतरुः ।

**ऽपीति** । क्रियाया अप्युपलक्षणम् । क्रियाभोगयोः सत्त्वं स्वभावश्चेदसत्त्वं न स्यात्, कालभेदेन सदसत्त्वव्यवस्था त्वारम्भणाधिकरणे बभञ्जे । धर्मश्चेत्संबन्धो दुर्निरूपः । **यथोक्तमेवेति** । विकल्पमकृत्वेत्यर्थः । भविष्यति कदाचिदेषां समुदाचार आविर्भावः नित्यत्वादात्मनः तद्गतशक्तेः कदाचिदुद्भवः संभवति, तैललिप्तस्य तु शालिबीजस्याल्पकालस्था-

## कल्पतरुपरिमलः ।

कृत्वयोर्नाशे आत्मस्वरूपमेव नश्येदित्यर्थः । **विकल्पमकृत्वेति** । स्वभावास्वभावविकल्पमकृत्वा यथाश्रुतशङ्कां परिगृह्य दूषणं वक्तीत्यर्थः । **कल्पकालस्थायित्वादिति** । नित्यस्य तु शक्तिमतः कदाचन शक्तिराविर्भवेदिति भावः । नच

अनिवर्तितत्वादविद्यायाः । तस्य च देशविशेषाववद्धत्वात्तत्प्राप्त्यर्थं गमनमविरुद्धम् । सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवादिष्म 'तद्गुणसारत्वात्' ( ब्र० सू० २।३।२९ ) इत्यत्र । तस्मात् 'कार्यं बादरिः' ( ब्र० सू० ४।३।७ ) इत्येष एव स्थितः पक्षः । 'परं जैमिनिः' ( ब्र० सू० ४।३।१२ ) इति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकासनायेति द्रष्टव्यम् ॥ १४ ॥ इति पञ्चमं कार्याधिकरणम् ॥

( ६ अधिकरणम् ) **अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥**

स्थितमेतत्कार्यविषया गतिर्न परविषयेति । इदमिदानीं संदिह्यते किं सर्वान्विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति । किं तावत्प्राप्तम्? सर्वेषामेवैषां विदुषामन्यत्र परस्माद्ब्रह्मणो गतिः स्यात् । तथाहि—'अनियमः सर्वासाम्—' ( ब्र० सू० ३।३।३१ ) इत्यत्राविशेषेणैवैषां विद्यान्तरेष्ववतारितेति । एवं प्राप्ते प्रत्याह—अप्रतीकालम्बनानिति । प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान्विकारालम्बनान्नयति ब्रह्मलोकमिति बादरायण आचार्यो मन्यते । नह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति; अनियमन्यायस्य प्रतीकव्यतिरिक्ते-

## भामती ।

शक्तिद्वारेण नित्यत्वाद्भविष्यति कदाचिदेषां समुदाचारो यतः सुखदुःखे भोज्येते इति संभावनातः कुतः कैवल्यनिश्चयः? इत्यर्थः । भूयो निरस्तमपि मतिद्रढिम्ने पुनरुपन्यस्य दूषयति—**परस्मादनन्यत्वेऽपीति** । शेषमतिरोहितार्थम् ॥ ७ ॥ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ इति पञ्चमं कार्याधिकरणम् ॥

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥ अब्रह्मक्रतवो यान्ति यथा पञ्चाग्निविद्यया । ब्रह्मलोकं प्रयास्यन्ति प्रतीकोपासकास्तथा ॥ सन्ति** हि मनो ब्रह्मेत्युपासीतेत्याद्याः प्रती-

## वेदान्तकल्पतरुः ।

यिलाच्छक्तावनुद्भूतायामेव नाश इत्यङ्कुराद्यनुदय इत्यर्थः । **निरस्तमपीति** । प्राचीनेषु बहुष्वधिकरणेष्वित्यर्थः । **एष** ब्रह्मलोकः । **हे सम्राडिति** याज्ञवल्क्यस्य जनकं प्रति संबोधनम् । न तत्र च ब्रह्मैव लोक इति परं ब्रह्म विवक्षितम् । **नच कार्ये इति** सूत्रे सभादिनिर्देशात्कार्यविषया प्राप्तिरिति शङ्काया उत्तरम् । भाष्यगतोऽपिचनिर्देशः समुच्चयार्थः । एतच्छङ्कानिराकरणोपपत्तिसाहित्यं प्राचीनोपपत्तीनामाह—यशःप्रकाश आत्मा ब्राह्मणानामात्मा भवामीत्युपासकस्य स्वानुभवोक्तिः । ब्राह्मणानामित्युपलक्षणं सर्वेषामात्मा भवामीत्यर्थः । तस्य ब्रह्मणः प्रतिमा सदृशं वस्त्वन्तरं नास्ति यस्य यश इति महन्नामाभिधानम् । तत्तत्र ब्रह्मलोके परैरपराजिता पूः पुरमस्ति प्रभुणा हिरण्यगर्भेण विमितं निर्मितं वेश्म विद्यते । एतं ब्रह्मविदमन्तकाले न तपत्येव पुण्यं पापं च केन प्रकारेण, तमाह—अहमेतावन्तं कालं किं साधु नाकरवं किमिति च पापमकरवमित्येवंप्रकारेण न तपति न तापयतीत्यर्थः । **शुङ्** कार्यम् । **अयनाय** मोक्षगमनाय ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ इति **पञ्चमं कार्याधिकरणम्** ॥[1]

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥** गन्तव्यविशेषनिरूपणानन्तरं

## कल्पतरुपरिमलः ।

कार्ये प्रतिपत्त्यभिसंधि( ब्र. अ. ४ पा. ३ सू. १४ )रिति सूत्रे गतेः कार्यविषयत्वशङ्कानिराकरणार्थम् । अतस्तत्सूत्रव्याख्यानारम्भभाष्ये पूर्वोक्तस्वतन्त्रयुक्तिभिः समुच्चयार्थोऽपिशब्दो नोपपद्यत इति शङ्कायां तदुपपादनार्थो नच कार्य इति सूत्रमित्यादिः प्राचीनोपपत्तीनामाहेत्यन्तो ग्रन्थः । पूर्वं भाष्यगतशब्दव्याख्यानावसरालाभादिह तत्सूत्रभाष्योदाहृताया यशोऽहं भवामीत्यादिश्रुतेर्व्याख्यानावसरे तदुपपादनमनेन ग्रन्थेन कृतम् । तत्रोपपत्तीनामिति बहुवचनेन मुख्यत्वं तयोर्ध्वमायन्निति दर्शनं सोऽध्वनः पारमाप्नोतीति दर्शनं च संगृहीतम् । आहेत्यस्यापि नच शब्दनिर्देश इति कर्त्राऽन्वयः । **यशःप्रकाश आत्मेति** । यशोनामकपरब्रह्मप्रकाशरूपो ब्राह्मणादीनां य आत्मा स भवामीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ **इति पञ्चमं कार्याधिकरणम्** ॥

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥ ये चामी इत्यस्य सामा-**

१ तत्र सूत्राणि ८—कार्यं बादरिरस्य गत्युपपत्तेः ७ विशेषितत्वाच्च ८ सामीप्यात्तु तद्व्यपदेशः ९ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् १० स्मृतेश्च ११ परं जैमिनिर्मुख्यत्वात् १२ दर्शनाच्च १३ नच कार्ये प्रतिपत्त्यभिसन्धिः १४ ॥

ष्वप्युपासनेषूपपत्तेः । तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः । यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः, नतु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति; प्रतीकप्रधानत्वादुपासनस्य । नन्वब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते—यथा पञ्चाग्निविद्यायाम् 'स एनान्ब्रह्म गमयति' (छा० ४।१५।५) इति, भवतु यत्रैव-माहत्यवाद उपलभ्यते, तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषा-मिति गम्यते ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा० ७।१।५) 'वाग्वाव नाम्नो भूयसी'

### भामती ।

कविषया विद्याः । तद्वन्तोऽप्यर्चिरादिमार्गेण कार्यब्रह्मोपासका इव गन्तुमर्हन्ति; 'अनियमः सर्वासाम्' इत्यविशेषेण विद्यान्तरेष्वपि गतेरवधारणात् । नचैषां परब्रह्मविदामिव गत्यसंभव इति । नच ब्रह्मक्रतव एव ब्रह्मलोकभाजो नातत्क्रतव इत्यप्येकान्तः; अतत्क्रतूनामपि पञ्चाग्निविदां तत्प्राप्तेः । नचैते न ब्रह्मक्रतवो; मनो ब्रह्मेत्युपासीतेत्यादौ सर्वत्र ब्रह्मानुगमेन तत्क्रतुत्वस्यापि संभवात्, फलविशेषस्य ब्रह्मलोकप्राप्तावप्युपपत्तेः, तस्य सावयवतयोत्कर्षनिकर्षसं-भवादिति प्राप्ते प्रत्युच्यते—**उत्तरोत्तरभूयस्त्वादब्रह्मक्रतुभावतः । प्रतीकोपासकान् ब्रह्मलोकं नामानवो नयेत्** ॥ भवतु पञ्चाग्निविद्यायामब्रह्मक्रतूनामपि ब्रह्मलोकनयनं, वचनात् । किमिव हि वचनम्; न कुर्यात् नास्ति वच-नस्यातिभारः, इह तु तदभावात् । 'तं यथायथोपासते तदेव भवति' इति श्रुतेरौत्सर्गिक्या नासति विशेषवचनेऽप-वादो युज्यते । नच प्रतीकोपासको ब्रह्मोपास्ते सत्यपि ब्रह्मेत्यनुगमे, किंतु नामादिविशेषं ब्रह्मरूपतया । तथा खल्वयं नामादितन्त्रो न ब्रह्मतन्त्रः । आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः प्रतीक इति हि वृद्धाः । ब्रह्माश्रयश्च प्रत्ययो नामा-

### वेदान्तकल्पतरुः ।

गन्तृविशेषनिरूपणात्सङ्गतिः । **ननु** ब्रह्मक्रतूनां ब्रह्मोपासकानामेव ब्रह्मलोकगमनमुचितं, "तं यथा यथोपासत" इति न्यायात्, तत्र कथं प्रतीकोपासकानां ब्रह्मलोकगमनमाशङ्क्यतेत्यत आह—**ब्रह्मक्रतव इति** । "स एनान्ब्रह्म गमयं-ती"ति प्रकृतपञ्चाग्निविदां परामर्शादब्रह्मक्रतवोऽपि यथा पञ्चाग्निविद्यया ब्रह्मलोकं यान्ति, तथा प्रतीकोपासका अपि, "ये चामी अरण्ये श्रद्धा तप इत्युपासते" इति सामान्यवचनाद् ब्रह्मलोकं प्रयास्यन्तीत्यर्थः । अब्रह्मोपासकत्वं चासिद्धमि-त्याह—**नचैते इति । ननु** "यावन्नाम्नो गतं व्याप्तिस्तत्रास्य यथाकामचारो भवति वाग्वाव नाम्नो भूयसी यावद्वाचो गत"मित्यादिप्रतीकोपास्तीनामुत्तरोत्तरमुत्कर्षवत्फलं श्रूयते, तद् ब्रह्मलोके कथमत आह—**फलविशेषस्येति** । प्रतीको-पासकानमानवो ब्रह्मलोकं न नयेत्कुतः ? तत्राह—**उत्तरोत्तरभूयस्त्वादिति** । प्रतीकोपास्तिफलस्येति शेषः । **किमिव हीति** । विशेषवचनं सामान्यवचनबाधनं किमिव हि न कुर्यात् किंतु सर्वत्र कुर्यादेवेत्यर्थः । **इह तदभावादिति** । विशेषवचनाभावात्, ये चामी इत्यस्य सामान्यविषयत्वादित्यर्थः । तदिदमुक्तम्—**असति विशेषवचन इति** । **किंतु नामादिविशेषणं ब्रह्मरूपतयेति** । ब्रह्मशब्दस्येतिशब्दशिरस्कत्वेन ब्रह्मणोऽप्रधानत्वावगमादित्यर्थः । **ननु** भवत्व-र्थान्तरविषयस्य विषयान्तरे प्रक्षेपः प्रतीकः, कथमेतावता नामादिषु ब्रह्मधीप्रक्षेपसिद्धिः ? अत आह—**ब्रह्माश्रयश्चेति** ।

### कल्पतरुपरिमलः ।

**न्यविषयत्वादिति** । यद्यप्यस्य सामान्यविषयत्वेऽपि ये चामी तेऽर्चिषमिति यत्तच्छब्दयोः प्रतीकोपासकविषयत्वं वक्तुं शक्यम्; पितृयाणतृतीयस्थानरहितानां तेषामार्चिरादिगत्यवश्यंभावात्, तेषामपि ब्रह्मस्रग्गुपासनाकर्तृत्वेन सत्यमुपासत इति शब्दविषयत्वोपपत्तेश्च, अङ्गावबद्धोपासनानां कासांचिद्ब्रह्मस्पृक्त्वेऽप्युद्गातृकर्तृकासु सुत्यासु फलभाजो यजमानस्य स्वतन्त्रकर्तृत्वाभावेन सत्यमुपासत इत्येतत्तेषामपि परामर्शकं स्यादित्यतिप्रसङ्गाभावात्तस्यौत्सर्गिकस्वतन्त्रकर्तृमात्रविषयत्वे संभवति स्वतन्त्रप्रयोजकसाधारण्यकल्पनायोगात्; तथापि "स एनानि"त्यत्र तच्छब्दस्य प्रतीकोपासकाविषयत्वं वक्तुं शक्यम्, तदभिप्राया सामान्यवचनस्य प्रतीकोपासकातिरिक्तविषयत्वोक्तिर्भविष्यति । "ये चामी" इत्यस्य सामान्यविषय-त्वादिति ग्रन्थे येचामीग्रहणं प्रदेशोपलक्षकं सत् स एनानित्येतत्परं भविष्यति । एवंच प्रतीकोपासकानामर्चिरादिमार्गेण विद्युल्लोकपर्यन्ता गतिः समाना । अमानवपुरुषस्तु न तान्नयतीति शेषः । अतएवाप्रतीकालम्बनान्नयतीति सूत्रे नयनवि-शेष उक्तो, नार्चिरादिगतौ । भाष्ये यद् अनियमन्यायस्य प्रतीकोपासनातिरिक्तविषयत्वमुक्तं, तदपि ब्रह्मप्राप्त्यंशविषयमात्र-विषयं नार्चिरादिगतिविषयमपि; अनियमाधिकरण एव भाष्यकारैरर्चिरादिगतेः सर्वविद्यासाधारण्यसमर्थनार्थम् "अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकमिति" च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ति, देवयानपितृया-णयोरेव एतानुद्भावयन्ति, तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिरिति प्रदर्शितस्य न्यायस्य प्रतीकोपासनासाधारण्याद् ।

( छा० ७।२।१ ) 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' ( छा० ७।२।२ ) 'मनो वाव वाचो भूयः' ( छा० ७।३।१ ) इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते, ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात्कथं फलविशेषः स्यात्? तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति ॥ १६ ॥ इति षष्ठमप्रतीकालम्बनाधिकरणम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

## भामती ।

दिषु प्रक्षिप्त इति नामतन्त्रः । यस्मान्न तदुपासको ब्रह्मक्रतुः किंतु नामादिक्रतुः । नच ब्रह्मक्रतुत्वे नामाद्युपासकानामविशेषादुत्तरोत्तरोत्कर्षः संभवी । नच ब्रह्मक्रतुस्तदवयवक्रतुर्येन तदवयवापेक्षयोत्कर्षो वर्ण्येत । तस्मात्प्रतीकालम्बनान्विदुषो वर्जयित्वा सर्वानन्यान्विकारालम्बनान्नयत्यमानवो ब्रह्मलोकम् । नह्येवमुभयथाभाव उभयथार्थत्वे कांश्चित्प्रतीकालम्बनान्न नयति विकारालम्बनान्विदुषस्तु नयतीत्यभ्युपगमे कश्चिद्दोषोऽस्ति 'अनियमः सर्वासाम्' इत्यस्य न्यायस्येति सर्वमवदातम् ॥ १५ ॥ १६ ॥ इति षष्ठमप्रतीकालम्बनाधिकरणम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

## वेदान्तकल्पतरुः ।

अत्राप्युक्त एव हेतुः—**यस्मादिति** । यदुक्तं ब्रह्मलोकस्य सावयवत्वात् फलविशेषोपपत्तिरिति, तत्राह—**नच ब्रह्मक्रतुरिति** । ब्रह्मलोकावयविनस्तत्तद्ब्रह्मणश्च सर्वैरुपास्यत्वाद् न फलविशेषोपपत्तिरित्यर्थः । उभयथाऽदोषादिति सूत्रावयवं योजयति—**न ह्येवमिति** । कांश्चित्प्रतीकालम्बानान्न नयति, कांश्चित्तु विकारब्रह्मालम्बनान्नयतीति योऽयमुभयथाभाव उभयथात्वं तस्याभ्युपगमे सत्यनियमः सर्वासामित्यस्य न्यायस्य सामान्यवचनाश्रयस्य न हि कश्चिद्दोषः; तस्य ब्रह्मक्रतुष्वप्युपपत्तेरिति योजना ॥ १५ ॥ १६ ॥ इति षष्ठं अप्रतीकालम्बनाधिकरणम् ॥[1]

इति श्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकभगवदमलानन्दविरचिते वेदान्तकल्पतरौ चतुर्थाध्यायस्य तृतीयः पादः ॥

| अस्मिन् पादे | आदितः |
|---|---|
| अधिकरणानि ६ | १८५ |
| सूत्राणि १६ | ५३३ |

## कल्पतरुपरिमलः ।

देवयानपितृयाणयोर्मध्ये विद्यारूपाद्विशेषाद्देवयानप्राप्तिरिति प्रदर्शितो हि न्यायस्तास्वपि तुल्य एव । शास्त्रदर्पणे त्वाचार्यैः "स एनानि"त्यस्य प्रतीकोपासकाविषयत्वे न्यायान्तरमुक्तम् । प्रतीकभाजां तु ये चामी अरण्ये इत्यनेन पञ्चाग्निविद्भिः समं मार्गे समुच्चयेऽप्यप्राधान्यात् "स एना"नित्येतच्छब्देन परामर्शाद् न ब्रह्मप्राप्तिः; एतच्छब्दस्य प्राधान्येन प्रकृतपरामर्शित्वात्, पञ्चाग्निविदामेव प्रकरणवत्त्वेन तथाभावादिति । इदमपि युक्तमेव; तद्य इत्थं विदुः ये चामी इति यच्छब्दद्वयनिर्दिष्टानां पञ्चाग्निविदां ब्रह्मोपासकानां च तत्प्रतिनिर्देशकेन तच्छब्देन परामर्शेऽपि स एनानित्येतच्छब्देन प्रकरणानुरोधात् पञ्चाग्निविदामेव परामर्श इत्युपपत्तेः । नहि प्रकरणाम्नातस्य क्वचित्केनचिद्धेतुना प्रकृताप्रकृतसाधारण्यं जातमित्येतावताऽन्यस्यापि प्रकरणाम्नातस्य तदुभयसाधारण्यनियमोऽस्ति; ज्योतिष्टोमप्रकरणाम्नातस्य उपांशु यजुषेति यजुर्वेदविहितकर्माङ्गस्वरविशेषविधानस्य याजुर्वेदिकसकलकर्मसाधारण्येऽपि दीक्षणीयाप्रभृत्यङ्गविधानस्य ज्योतिष्टोममात्रसाधारण्यवदुपपत्तेः, अहंग्रहोपासकानां ब्रह्मप्राप्तेस्तत्क्रतुन्यायत एव सिद्ध्या स एनानिति वचनानपेक्षणात्, तदपेक्षणेऽप्येष देवपथो ब्रह्मपथ इत्युपकोसलविद्यागतवाक्येन तत्सिद्धेश्च सर्वथापि न प्रतीकोपासकानामर्चिरादिमार्गात् पर्युदासः, किंतु ब्रह्मप्राप्तेरेवेति सिद्धम् ॥ १५ ॥ १६ ॥ इति षष्ठमप्रतीकालम्बनाधिकरणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरुपरिमले चतुर्थस्याध्यायस्य तृतीयः पादः ॥

॥ इति चतुर्थस्याध्यायस्य सगुणविद्यावतो मृतस्योत्तरमार्गाभिधानाख्यस्तृतीयः पादः ॥

1 तत्र सूत्रे २—अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च १५ विशेषं च दर्शयति १६ ॥

# चतुर्थेऽध्याये चतुर्थः पादः ।

( १ अधिकरणम् ) **संपद्याविर्भावः स्वेनशब्दात् ॥ १ ॥**

एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते। तत्र संशयः—किं देवलोकाद्युपभोगस्थानेष्विवागन्तुकेन केनचिद्विशेषेणाभिनिष्पद्यते, आहोस्विदात्ममात्रेणेति। किं तावत्प्राप्तम्? स्थानान्तरेष्विवागन्तुकेन केनचिद्रूपेणाभिनिष्पत्तिः स्यात्; मोक्षस्यापि फलत्वप्रसिद्धेः; अभिनिष्पद्यत इतिचोत्पत्तिपर्यायत्वात्। स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्वप्यवस्थासु स्वरूपानपायाद्विभाव्येत। तस्माद्विशेषेण केनचिदभिनिष्पद्यत इति। एवं प्राप्ते ब्रूमः—केवलेनैवात्मनाऽऽविर्भवति न धर्मान्तरेणेति। कुतः? स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्दात्। अन्यथा हि स्वशब्देनेति विशेषणमनवक्लृप्तं स्यात्। नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति, न; तस्यावचनीयत्वात्। येनैव हि केनचिद्रूपेणाभि-

---

## भामती ।

**संपद्याविर्भावः स्वेनशब्दात् ॥ १ ॥ प्रागभूतस्य निष्पत्तौ कर्तृत्वं न सतो यतः। फलत्वेन प्रसिद्धेश्च मुक्ते रूपान्तरोद्भवः ॥** अभूतस्य घटादेर्भवनं निष्पत्तिर्न पुनरत्यन्तसतोऽसतो वा। न जातु गगनतत्कुसुमे निष्पद्येते। स्वरूपावस्थानं चेदात्मनो मुक्तिर्न सा निष्पद्येत; तस्य गगनवदत्यन्तसतः प्रागसत्त्वाभावात्। नचास्य बन्धाभावो निष्पद्यते; तस्य तुच्छस्वभावस्य कार्यत्वेनातुच्छत्वप्रसङ्गात्। फलत्वप्रसिद्धेश्च मोक्षस्याकार्यस्य फलत्वानवकल्पनादागन्तुना रूपेण केनचिदुत्पत्तौ स्वेनेति प्राप्तमनूद्यत इति प्राप्तेऽभिधीयते—**संभवत्यर्थवत्त्वे हि नानर्थक्यमुपेयते। बन्धस्य सदसत्त्वाभ्यां रूपमेकं विशिष्यते ॥** अनधिगतावबोधनं हि प्रमाणं शाब्दमगत्या कथंचिदनुवादतया वर्ण्यते। सकलसांसारिकधर्मापेतं तु प्रसन्नमात्मरूपमप्रसन्नात्तस्मादेव रूपाद्व्यावृत्तमनधिगतमवबोध-

## वेदान्तकल्पतरुः ।

**आद्ये पादे** निर्गुणविद्याफलैकदेशो बन्धनिवृत्तिर्निरूपिता, **द्वितीये** सगुणनिर्गुणफलप्राप्तिशेषत्वेन तद्विदोरुत्क्रान्त्यनुत्क्रान्ती चिन्तिते। **तृतीये च** सगुणफलसिद्ध्युपयोगिनो गतिगन्तव्यगन्तृविशेषा विचारिताः, **इह चतुर्थे पादे** निर्गुणविद्याफलैकदेशान्तरं ब्रह्मभावाविर्भावः, सगुणविद्याफलं च सर्वेश्वरतुल्यभोगभाक्त्वमवधारयिष्यते ॥

**संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ प्रागिति।** अभिनिष्पद्यत इति शब्दात् प्रागसतः पदार्थस्य निष्पत्तौ कर्तृत्वं प्रतीयते, तत्सतो नोपपद्यते इति यतस्ततो हेतोर्मुक्तेः फलत्वेन प्रसिद्धेश्चात्मातिरिक्तरूपान्तरोद्भवो मोक्षे स्यादित्यर्थः। प्रागभूतस्येत्येतद्व्याचष्टे—**अभूतस्येति।** अत्यन्तसतोऽनुत्पत्तौ गगनमुदाहरणम्। अत्यन्ताऽसतोऽनुत्पत्तौ गगनकुसुममुदाहरणम्। अतः प्रागसत एवोत्पत्तिरित्यर्थः। एवं लोके व्याप्तिमुक्त्वा प्रकृते योजयति—**स्वरूपावस्थानं चेदिति। तस्येति।** स्वरूपावस्थानस्येत्यर्थः। **ननु** स्वरूपं माऽभिनिष्पादि, बन्धाभावस्तु निष्पत्स्यतेऽत आह—**नचास्येति।** यद्युत्पद्येत बन्धाभावः, तर्हि स कार्यत्वात्कुम्भवन्न तुच्छः स्यादित्यर्थः। फलत्वप्रसिद्धेश्च मोक्षस्यागन्तुना केनचिदुत्पत्ताविल्यन्वयः। अनयोर्हेतुहेतुमद्भावमुपपादयति—**अकार्यस्येति। ननु** रूपान्तरनिष्पत्तौ कथं स्वेनेति शब्दोपपत्तिस्तामाह—**केनचिदिति।** यद्रूपान्तरं निष्पद्यते, तस्यात्मीयत्वं सिद्धं तत्स्वीयवाचिना स्वशब्देनानूद्यत इत्यर्थः। स्वशब्दस्यानुवादकत्वं निषेधन्नात्मवचनत्वमाह—**संभवतीति।** आत्मन्यभिनिष्पत्तिशब्दं घटयति—**बन्धस्येति।** निवृत्तबन्धमात्मस्वरूपम् अभिनिष्पद्यत इति उच्यते; बन्धनिवृत्तेर्जन्यत्वादित्यर्थः। यदुक्तं कार्यत्वे बन्धध्वंसस्यातुच्छत्वं स्यादिति, स इष्टप्रसङ्गः; ध्वंसस्यापि तुच्छत्वाऽनिष्टेरित्याह—**नचास्येति।** निवृत्तबन्धादात्मस्वरूपात्प्राक्तनरूपस्य विशेषप्रदर्शकं भाष्यं, **पूर्वत्रान्धो भवतीत्याद्यवस्थात्रयकलुषितेनात्मनेत्यन्तं,** तद्व्याचष्टे—**स्वप्नावस्थादर्शितेत्यादिना।** बद्धो भवतीति पाठान्तरे रोदितीवेत्यादिना बन्धनप्रदर्शनम्। **ननु** कथं विनाशमेवेत्युच्यते? सुषुप्तौ स्वरूपचै-

## कल्पतरुपरिमलः ।

**संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ आद्ये पाद इति।** निर्गुणविद्याफलैकदेशरूपा बन्धनिवृत्तिराद्ये पादे प्राधान्येन निरूपिता। भोगेन त्वितरे इति सूत्रेण तच्छेषतया तदधिगम इत्यादिसूत्रैः पुण्यपापक्षयश्चिन्तित इति भावः।

निष्पद्यते तस्यैवात्मीयत्वोपपत्तेः स्वेनेति विशेषणमनर्थकं स्यात् । आत्मवचनतायां त्वर्थवत्केवलेनैवात्मरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणापीति ॥ १ ॥ कः पुनर्विशेषः पूर्वास्ववस्थास्विह च स्वरूपानपायसाम्ये सतीत्यत आह—

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

योऽत्राभिनिष्पद्यत इत्युक्तः, स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते । पूर्वत्र त्वन्धो भवत्यपि रोदितीव विनाशमेवापीतो भवतीति चावस्थात्रयकलुषितेनात्मनेत्ययं विशेषः । कथं पुनरवगम्यते मुक्तोऽयमिदानीं भवतीति? प्रतिज्ञानादित्याह । तथाहि—'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३,८।१०।४,८।११।३ ) इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ( छा० ८।१२।१ ) इति चोपन्यस्य 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' ( छा० ८।१२।३ ) इति चोपसंहरति । तथाऽऽख्यायिकोपक्रमेऽपि 'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम् । फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजननापेक्षा । यदप्यभिनिष्पद्यत इत्युत्पत्तिपर्यायत्वं, तदपि पूर्वावस्थापेक्षम्—यथा रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति तद्वत् । तस्माददोषः ॥ २ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

कथं पुनर्मुक्त इत्युच्यते ? यावता 'परं ज्योतिरुपसंपद्य' ( छा० ८।१२।३ ) इति कार्यगोचरमेवैनं श्रावयति; ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढत्वात् । नचानतिवृत्तो विकारविषयात्कश्चिन्मुक्तो भवितुमर्हति; विकारस्यार्तत्वप्रसिद्धेरिति । नैष दोषः; यत आत्मैवात्र ज्योतिःशब्देनाऽऽवेद्यते; प्रकरणात्; 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' ( छा० ८।७।१ ) इति हि प्रकृते परस्मिन्नात्मनि नाकस्माद्भौतिकं ज्योतिः शक्यं ग्रहीतुम् । प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् । ज्योतिःशब्दस्त्वात्मन्यपि दृश्यते 'तद्देवा ज्योतिषां ज्योतिः' ( बृ० ४।४।१६ ) इति । प्रपञ्चितं चैतत् 'ज्योतिर्दर्शनात्' ( ब्र० सू० १।३।४० ) इत्यत्र ॥ ३ ॥ इति प्रथमं संपद्याविर्भावाधिकरणम् ॥

---

### भामती ।

यत्नानुवादो युज्यते । नचास्य निष्पत्त्यसंभवः; सत इव घटादेः सांव्यवहारिकेण प्रमाणेन बन्धविगमस्यापि निष्पत्तेर्लोकसिद्धत्वात् । विचारासहतयात्वसिद्धिरुभयत्रापि तुल्या । नह्यसदुत्पत्तुमर्हतीत्यसकृदावेदितम् । अन्धो भवतीति स्वप्नावस्था दर्शिता; बाह्येन्द्रियव्यापाराभावात् । रोदितीव जाग्रदवस्था; दुःखशोकाद्यात्मकत्वात् । विनाशमेवापीति इति सुषुप्तिः । एवकारश्चानवधारणे ॥ १ ॥ २ ॥ ननु "ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति पौर्वापर्यश्रवणात् स्वरूपनिष्पत्तेरन्या ज्योतिरुपसंपत्तिः, तथाच भौतिकत्वेऽपि न मोक्षव्याघातः । भवेदेतदेवं यदि ज्योतिरुपसंपद्य तत् परित्यजेदिति श्रूयेत । तदध्याहारेऽपि तत्प्रतिपादनवैयर्थ्यं, तदपरित्यागे च ज्योतिषैव स्वेन रूपेणेति गम्यते । तस्यच भूतत्वे विकारत्वान्मरणधर्मकत्वप्रसिद्धेरमुक्तित्वमिति प्राप्ते प्रत्युच्यते—ज्योतिष्पदस्य मुख्यत्वं भौतिके यद्यपि स्थितम् । तथापि प्रक्रमाद्वाक्यादात्मन्येवात्र युज्यते ॥ परं ज्योतिरिति

### वेदान्तकल्पतरुः ।

तन्याविनाशादत आह—**एवकारश्चेति । अनवधारणे** अवधारणव्यतिरिक्ते इवार्थे इत्यर्थः ॥ १ ॥ २ ॥ आत्मेति सूत्रारम्भमाक्षिपति—**नन्विति** । आरम्भमुपपादयन्पूर्वपक्षमाह—**भवेदिति । ननू**पसंपद्येति क्त्वाप्रत्ययसामर्थ्यात् परित्यज्येत्येतदश्रुतमप्यध्याह्रियतां, तथाचात्मप्राप्तिसिद्धेर्व्यर्थः सूत्रारम्भोऽत आह—**तदध्याहारेऽपीति** । यदि हि परित्याज्यं ज्योतिस्तर्हि तत्प्राप्त्यभिधानवैयर्थ्यमर्चिरादिमार्गस्यात्मविदि वारितत्वादित्यर्थः । श्लोकगतं वाक्यादिति हेतुं

### कल्पतरुपरिमलः ।

**एवकारश्चानवधारण इति** । मूलपाठं दृष्ट्वेदं व्याख्यातम् । एवकारश्चेवार्थे नावधारण इति पाठस्तु स्पष्टार्थः । **श्लोकगतं वाक्यादिति हेतुं व्याचष्टे इति** । एतद्व्याख्यानं सर्वमपि ज्योतिर्दर्शनादित्यधिकरण एव विवृतम् ॥ १ ॥ २ ॥ ३ ॥ **इति प्रथमं संपद्याविर्भावाधिकरणम्** ॥

( २ अधिकरणम् ) **अविभागेन दृष्टत्वात् ॥ ४ ॥**

**परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते यः स किं परस्मादात्मनः पृथगेव भवत्युताविभागेनैवावतिष्ठत इति वीक्षायाम् 'स तत्र पर्येति' ( ८।१२।३ ) इत्यधिकरणाधिकर्तव्यनिर्देशात् 'ज्योतिरुपसंपद्य' ( छा० ८।१२।३ ) इति च कर्तृकर्मनिर्देशाद्भेदेनैवावस्थानमिति यस्य मतिस्तं व्युत्पादयत्यविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते । कुतः? दृष्टत्वात् । तथाहि 'तत्त्वमसि' ( छा० ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृ० १।४।१० ) 'यत्र नान्यत्पश्यति' ( छा० ७।२४।१ ) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' ( बृ० ४।३।२३ ) इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति । यथादर्शनमेव च फलं युक्तं तत्क्रतुन्यायात् । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' ( क० ४।१५ ) इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति, नदीसमुद्रादिनिदर्शनानि च । भेदनिर्देशस्त्वभेदेऽप्युपचर्यते । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' ( छा०७।२४।१ ) इति 'आत्मरतिरात्मक्रीडः' ( छा० ७।२५।२ ) इति चैवमादिदर्शनात् ॥ ४ ॥ इति द्वितीयमविभागेन दृष्टत्वाधिकरणम् ॥**

---

## भामती ।

हि परपदसमभिव्याहारात्परत्वस्य चानपेक्षस्य ब्रह्मण्येव प्रवृत्ते र्ज्योतिषि चापरे किंचिदपेक्ष्य परत्वात्परं ज्योतिरिति वाक्यादात्मैवात्र गम्यते । प्रकरणं चोक्तम् । यत् संपद्य निष्पद्यत इति तन्मुखं व्यादाय स्वपितीतिवत् । तस्माज्ज्योतिरुपसंपन्नो मुक्त इति सूक्तम् ॥ ३ ॥ **इति प्रथमं संपद्याविर्भावाधिकरणम् ॥**

**अविभागेन दृष्टत्वात् ॥ ४ ॥** यद्यपि जीवात्मा ब्रह्मणो न भिन्न इति तत्र तत्रोपपादितम्; तथापि "स तत्र पर्येती"त्याधाराधेयभावव्यपदेशस्य संपत्तृसंपत्तव्यभावव्यपदेशस्य च समाधानार्थमाह ॥ ४ ॥ **इति द्वितीयमविभागेन दृष्टत्वाधिकरणम् ॥**

## वेदान्तकल्पतरुः ।

व्याचष्टे—**परं ज्योतिरिति हीति** । आनर्थक्यप्रतिहताया ज्योतिःश्रुतेर्वाक्यमेव प्रबलमित्यर्थः । आनर्थक्यप्रतिहतिश्च ज्योतिर्दर्शना ( ब्र. अ. १ पा. ३ सू. ४० ) दित्यत्र वर्णिता । अत एव तस्यैव न्यायस्येदमनुसारणं । प्रकरणं च य आत्माऽपहतपाप्मेत्यादि भाष्य एवोक्तमित्यर्थः । **ननु** यदि ज्योतिरेव स्वेन रूपेणेति निर्दिश्यते, कथं तर्ह्युपसंपद्येति क्त्वाप्रयोग इत्याशङ्कते—**यदिति** । परिहरति—**तदिति** । एककालयोरपि मुखविदारणस्वापयोः क्त्वाप्रत्ययवदयमप्यविवक्षितपूर्वकालभावो न तद्बलात् ज्योतिःस्वरूपशब्दयोर्भिन्नार्थत्वम् । तथाच यत्परं ज्योतिरुपसंपद्यते तत्स्वेन रूपेणाभिनिष्पद्यत" इति वाक्यार्थ इत्यर्थः ॥ ३ ॥ **इति प्रथमं संपद्याविर्भावाधिकरणम् ॥**[1]

**अविभागेन दृष्टत्वात् ॥ ४ ॥ स्वरूपावस्थितस्यापि जीवस्य ब्रह्मणोऽन्यता । आशङ्क्यतेऽत्र योगानामिव तेनास्ति संगतिः ॥** पुनरुक्तिमाशङ्क्य परिहरन्पूर्वपक्षमाह—**यद्यपीति** । तत्त्वमस्यादिवाक्यात्साधनभूतज्ञानपरात् स मुक्तः तत्र ब्रह्मणि पर्येति परिगच्छतीत्यादिभिराधाराधेयभावव्यपदेशस्य परं ज्योतिरुपसंपद्येति च संपत्तुः संपत्तव्यभेदस्य च साध्यप्रधानभूतफलविषयतया प्राबल्यान्मुक्तौ परं ज्योतिर्ब्रह्म प्राप्यापि तस्माद्भेदेन स्वेन रूपेण मुक्तोऽवतिष्ठत इत्यर्थः । तत्राभिनिष्पन्नस्वरूपस्य स उत्तमः पुरुष इति तच्छब्दोत्तमपुरुषश्रुतिभ्यां परमात्मभावः फलं तत्त्वमस्यादिवाक्यानुगुणमवगम्यते । "स तत्र पर्येती"त्यादिफलस्य तु निर्गुणप्रकरणगतस्यापि "मनसैतान् कामान्

## कल्पतरुपरिमलः ।

**अविभागेन दृष्टत्वात् ॥ ४ ॥ योगानामिति** । योगशास्त्रविदां हैरण्यगर्भाणामीश्वराद्भेदेनैव मुक्तस्य स्वरूपेणावस्थितिरिति तन्मतं दृष्टान्तीकृतम् । **तत्त्वमस्यादिवाक्यादिति** । तत्त्वमस्यादिवाक्यं मुक्तिसाधनज्ञानोत्पत्त्यर्थं "स तत्र पर्येती"त्यादि फलवाक्यम् । एवंच साधनवाक्यात् फलवाक्यस्य प्रधानविषयत्वेन प्राबल्यात् तदनुसारेण मुक्तो भेदेनैवावतिष्ठते, तत्त्वमस्यादिवाक्यं त्वौपचारिकाभेददृष्टिपरं । अभेददृष्टावपि भेदेनानवस्थानमहंग्रहोपासनेष्विवेति पूर्वः पक्षः । **तत्राभिनिष्पन्नेति** । तथैव तत्त्वमस्यादिवाक्यानुगुणफलश्रवणात् तदनुरोधेन "स तत्र पर्येती"त्यादिसगुणविद्यायामु-

---

[1] तत्र सूत्राणि ३—संपद्याविर्भावः स्वेन शब्दात् १ मुक्तिः प्रतिज्ञानात् २ आत्मा प्रकरणात् ३ ॥

( ३ अधिकरणम् ) **ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

**स्थितमेतत् 'स्वेन रूपेण' ( छा० ८।३।४ ) इत्यत्रात्ममात्ररूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणेति, अधुना तु तद्विशेषबुभुत्सायामभिधीयते स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादि सत्यसंकल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते। कुतः ? उपन्यासादिभ्यस्तथात्वावगमात् । तथाहि—'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यादिना 'सत्यकामः सत्यसंकल्पः' ( छा० ८।७।१ ) इत्येवमन्तेनोपन्यासेनैवमात्मकतामात्मनो बोधयति। तथा 'स तत्र पर्येति जक्षत्क्रीडन्रममाणः' ( छा० ८।१२।३ ) इत्यैश्वर्यरूपमावेदयति। 'तस्य सर्वेषु लोकेषु कामचारो भवति' ( छा० ७।२५।२ ) इति च। 'सर्वज्ञः सर्वेश्वरः' इत्यादिव्यपदेशाश्चैवमुपपन्ना भविष्यन्तीति ॥ ५ ॥**

भामती ।

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ उपन्यास** उद्देशो ज्ञातस्य यथा य आत्माऽपहतपाप्मेत्यादिः । तथाऽज्ञातज्ञापनं **विधिः** । यथा "स तत्र पर्येति जक्षद्रममाण" इति, तस्य सर्वेषु लोकेषु कामचारो भवतीत्येतदज्ञातज्ञापनं विधिः । सर्वज्ञः सर्वेश्वर इति व्यपदेशः । नायमुद्देशो विधेयान्तराभावात् । नापि विधिः; अप्रतिपाद्यत्वात्, सिद्धवद्व्यपदेशात् । तन्निर्वचनसामर्थ्यादयमर्थः प्रतीयते—त एते उपन्यासादयः । एतेभ्यो हेतुभ्यः । **भावाभावात्मकै रूपैर्भाविकैः परमेश्वरः । मुक्तः संपद्यते स्वैरित्याह स किल जैमिनिः ॥** नच चित्स्वभावस्यात्मनोऽभावात्मानोऽपहतपाप्मत्वादयो भावात्मानश्च सर्वज्ञत्वादयो धर्मा अद्वैतं घ्नन्ति । नो खलु धर्मिणो धर्मा भिद्यन्ते, मा भूद्गवाश्ववद्धर्मिधर्मभावाभाव इति जैमिनिराचार्य उवाच ॥ ५ ॥ **अनेकाकारतैकस्य नैकत्वान्नैकता**

वेदान्तकल्पतरुः ।

पश्यन् रमते य एते ब्रह्मलोके" इति ब्रह्मलोकसंबन्धादिलिङ्गात्सगुणविद्यासूत्कर्षे इति सिद्धान्तयति सूत्रकार इत्याह—**समाधानार्थमिति** ॥ ४ ॥ **इति द्वितीयमविभागेन दृष्टत्वाधिकरणम् ॥**[1]

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥** ब्रह्मात्मतां प्राप्तस्यापि जीवस्य सप्रपञ्चत्वशङ्कनात्सङ्गतिः । सौत्रहेतुं व्याचष्टे—**उद्देश इत्यादिना । ज्ञातस्येति** । ब्रह्मैश्वर्यस्येत्यर्थः । य आत्मेति हि वाक्ये यच्छब्दोपबन्धादन्यतो नेतिनेत्यादिवाक्यैः सृष्टिवाक्यैश्च प्रतीतस्य पाप्माद्यभावस्य सत्यसङ्कल्पत्वादेश्चोद्देशः प्रतीयते, स उपन्यास इत्यर्थः । उद्देशापेक्षितश्च विधिरिह सोऽन्वेष्टव्य इत्यादिरिति बोद्धव्यम् । आदिशब्दार्थमाह—**अज्ञातज्ञापनमिति** । विधिमेव दर्शयति—**यथेति** । यच्छब्दोपबन्धाभावात् फलत्वेन च प्रतिपाद्यत्वादित्यर्थः । **विधेयान्तराभावादिति** । यद्यपि यः सर्वज्ञ इत्युपक्रम्य तस्मादेतन्नामरूपादि जायत इत्यस्ति विधेयान्तरं, यद्यपि चैष सर्वेश्वर इति प्रस्तुत्यैषां लोकानामसंभेदायेति विधीयते; तथापि जीवोपयोगि किंचिदुपासनं फलं वा न विधेयान्तरमस्तीत्यर्थः । कथं तर्ह्येवंविधाद्व्यपदेशात् जीवः सर्वेश्वरत्वादिरूपो मुक्ताविति गम्येतात आह—**तन्निर्वचनसामर्थ्यादिति** । तेषां सर्वेश्वरत्वादीनां निर्वचनं निष्कृष्य तात्पर्यतः कथनं, तस्मादनन्तरवक्ष्यमाणश्लोकप्रतिपाद्योऽयमर्थः प्रतीयते, इतरथा पराग्भूतेश्वरकथनस्य प्रयोजनाभावादित्यर्थः । एवं सौत्रं हेतुं व्याख्याय सौत्रीं प्रतिज्ञां व्याचष्टे—**भावात्मकै**रित्यारभ्य **जैमिनि**रित्यन्तेन श्लोकेन । यो मुक्तः स भाविकैः परमार्थभूतैर्धर्मैः स्वैः स्वस्येश्वराऽभेदात्स्वकीयैः सह परमेश्वरः संपद्यत इत्यर्थः । **अभावात्मान इति** । अवस्तुत्वादभावात्मकानामद्वैताव्याघातकत्वम् ॥ ५ ॥ **अनेकाकारतेति** । एकस्यात्मनोऽनेकाकारता सर्वेश्वरत्वाद्यनेकाकारात्मकता न भवति, अत्र हेतुः—**एकत्वादिति** । विपक्षे दण्डमाह—**नैकतेति** । एकस्यानेकाकारत्वं वदन्प्रष्टव्यः किमेकस्यानेकाकारतावन्मात्रत्वम्, उतानेकाकाराणामेकवस्तुतावन्मात्रत्वम् । **आद्ये** एकस्यैकता न भवेत्, एवमनेकेषामेकतावन्मात्रत्वेऽनेकतापि न भवेदिति द्रष्टव्यम् । अथात्मन आकारैराकाराणां चात्मना सह भेदाभेदौ,

कल्पतरुपरिमलः ।

स्रष्टव्यं कर्तृकर्मभावनिर्देशश्च गौणो नेतव्य इति सिद्धान्तः ॥ ४ ॥ **इति द्वितीयमविभागेन दृष्टत्वाधिकरणम् ॥**

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ अनेकाकारतेति** श्लोके यदेकताहतेरिति विपक्षबाधकं तद्धर्मिणोऽनेकाकाररूपत्वमिति धर्मपरिशेषपक्षे अनेकाकाराणामेकधर्मिरूपत्वमिति धर्मिपरिशेषपक्षे त्वनेकताहतेरिति विपक्षबाधकं द्रष्टव्यमिति योजयति—**एकस्यानेकाकारत्वं वदन्प्रष्टव्य इत्यादिना** । श्लोकस्योत्तरार्धमवतारयति—**अथात्मन**

१ तत्र सूत्रम् १—अविभागेन दृष्टत्वात् ४ ॥

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते; तथापि शब्दविकल्पजा एवैते। पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते। चैतन्यमेव त्वस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता। तथाच श्रुतिः—'एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ० ४।५।१३) इत्येवंजातीयकाऽनुगृहीता भविष्यति। सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते सत्याः कामा अस्येति; तथाप्युपाधिसंबन्धाधीनत्वात्तेषां न चैतन्यवत्स्वरूपत्वसंभवः, अनेकाकारत्वप्रतिषेधात्। प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वम् 'न स्थानतोऽपि परस्योभयलिङ्गम्' (ब्र० सू० ३।२।११.) इत्यत्र। अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थमात्मरतिरित्यादिवत्। नहि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि शक्यन्ते वर्णयितुं द्वितीयविषयत्वात्तेषाम्। तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥ ७ ॥
इति तृतीयं ब्राह्माधिकरणम् ॥

### भामती।

**भवेत्। परस्परविरोधेन न भेदाभेदसंभवः ॥** नह्येकस्यात्मनः पारमार्थिकानेकधर्मसंभवः। ते चेदात्मनो भिद्यन्ते द्वैतापत्तेरद्वैतश्रुतयो व्यावर्तेरन्। अथ न भिद्यन्ते तत एकस्मादात्मनोऽभेदान्मिथोऽपि न भिद्येरन्। आत्मरूपवत्। आत्मरूपं वा भिद्येत। भिन्नेभ्योऽनन्यत्वान्नीलपीतरूपवत्। नच—धर्मिण आत्मनो न भिद्यन्ते मिथस्तु भिद्यन्त इति—साम्प्रतम्; धर्म्यभेदेन तदनन्यत्वेन तेषामप्यभेदप्रसङ्गात्। भेदे वा धर्मिणोऽपि भेदप्रसङ्गादित्युक्तम्। भेदाभेदौ च परस्परविरोधादेकत्राभावान्न संभवत इत्युपपादितं प्रथमे सूत्रे। अभावरूपाणामद्वैताविहन्तृत्वेऽपि तस्य पाप्मादेः काल्पनिकतया तदधीननिरूपणतया तेषामपि काल्पनिकत्वमिति न तात्त्विकी तद्धर्मता श्लिष्यते। **एतेन**—सत्यकामसर्वज्ञसर्वेश्वरत्वादयोऽप्यौपाधिकाः—**व्याख्याताः**; तस्मान्निरस्ताशेषप्रपञ्चेनाव्यपदेश्येन चैतन्यमात्रात्मनाऽभिनिष्पद्यमानस्य मुक्तावात्मनोऽर्थशून्यैरेवापहतपाप्मसत्यकामादिशब्दैर्व्यपदेश इत्यौडुलोमिर्मेने। तदिदमुक्तम्—**शब्दविकल्पजा एवैते** अपहतपाप्मत्वादयो ननु सांव्यवहारिका अपीति ॥ ६ ॥ **तदेतदतिशौण्डीर्यमौडुलोमेर्न मृष्यते। बादरायण आचार्यो मृष्यन्नपि हि तन्मतम् ॥** एवमपीत्यौडुलोमिमतमनुजानाति। शौण्डीर्यं तु न सहत इत्याह—**व्यवहारापेक्षयेति। एतदुक्तं भवति**—सत्यं तात्त्विकानन्दचैतन्यमात्र एवात्मा, अपहतपाप्मसत्यकामत्वादयस्त्वौपाधिकतयाऽतात्त्विका अपि व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तासन्तो येन तच्छब्दा राहोः शिर इतिवदवास्तवा इत्यर्थः ॥ ७ ॥ **इति तृतीयं ब्राह्माधिकरणम् ॥**

### वेदान्तकल्पतरुः।

तत्राह—**परस्परेति। भेदे वेति।** धर्म्यभिन्नानामपि इतरेतरभेदे तैरभिन्नधर्मिणोऽपि भेदप्रसङ्गादित्युक्तम्—**आत्मरूपं वा भिद्येतेति** ग्रन्थेनेत्यर्थः। यद्येकत्र भेदाभेदौ विरोधान्न भवतः, तर्हि मा भूतां भेद एवास्तु धर्माणाम्। नचाद्वैतव्याघातः; अभावरूपधर्माणामवस्तुत्वेन सदद्वैताविघातकत्वमित्युक्तत्वादत आह—**अभावरूपाणामिति।** एतेनेति भेदाभेदनिषेधाद् भेदे च भावरूपत्वे सत्यकामत्वादीनां भवत्येवाद्वैतविघातकत्वम्। तस्मात्सत्यकामत्वादयोऽप्यौपाधिका विकल्परूपा इत्यर्थः ॥ ६ ॥ **अतिशौण्डीर्य**मतिप्रागल्भ्यं **दुर्वैदग्ध्यं** धर्माणां तुच्छत्वाभ्युपगमप्रयुक्तं **न मृष्यते** न सहते। किमौडुलोमीयं मतं कलयाऽपि न स्वीचकार बादरायणः, नेत्याह—**मृष्यन्नभिहितं मतमिति।**

### कल्पतरुपरिमलः।

**इति। सदद्वैताविघातकत्वमिति।** भावाद्वैताविघातकत्वमित्यर्थः। अभावरूपा धर्मा वस्तुतः सन्ति चेत्, ते भावाद्वैतं न निघ्नन्तीति वक्तुं शक्यं, ननु ते वस्तुतः सन्ति; प्रतियोगिनां काल्पनिकत्वेन तदधीननिरूपणानां तेषामपि काल्पनिकत्वावश्यम्भावादिति परिहारार्थः ॥ ५ ॥ ६ ॥ **धर्माणां तुच्छत्वाभ्युपगमप्रयुक्तं न मृष्यत इति।** "गताः कलाः पञ्चदश प्रतिष्ठाः" "षोडशकलाः पुरुषायणा" इति श्रुत्योरिव सर्वेश्वरत्वादिगुणकलचिन्मात्ररूपत्वश्रुत्योरपि व्यावहारि-

( ४ अधिकरणम् ) **संकल्पादेव च तच्छ्रुतेः ॥ ८ ॥**

हार्दविद्यायां श्रूयते—'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' ( छा० ८।२।१ ) इत्यादि । तत्र संशयः—किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुरुत निमित्तान्तरसहित इति । तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता युक्ता । यथा लोकेऽस्मदादीनां संकल्पाद्गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवत्येवं मुक्तस्यापि स्यात् । एवं दृष्टविपरीतं न कल्पितं भविष्यति । संकल्पादेवेति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते । नच संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चलत्वात्पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति । एवं प्राप्ते ब्रूमः—सं-

---

## भामती ।

**संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ यत्नानपेक्षः संकल्पो लोके वस्तुप्रसाधनः । न दृष्टः सोऽत्र यत्नस्य लाघवादवधारितः ॥** लोके हि कंचिदर्थं चिकीर्षुः प्रयतते, प्रयतमानः समीहते समीहानस्तमर्थमाप्नोतीति क्रमो दृष्टः । नत्विच्छानन्तरमेवास्येष्यमाणमुपतिष्ठते । तेन श्रुत्यापि लोकवृत्तमनुरुध्यमानया विदुषस्तादृश एव क्रमोऽनुमन्तव्यः, अवधारणं तु संकल्पादेवेति लौकिकं यत्नगौरवमपेक्ष्य विद्याप्रभावतो विदुषो यत्नलाघवात् । यल्लघु तदसत्कल्पमिति । **स्यादेतत्**—यथा मनोरथमात्रोपस्थापिता स्त्री स्त्रैणानां चरमधातुविसर्गहेतुरेवं पित्रादयोऽप्यस्य संकल्पोपस्थापिताः कल्पिष्यन्ते स्वकार्यायेत्यत आह—**नच संकल्पमात्रसमुत्थाना इति** । सन्ति हि खलु कानिचिद्वस्तुस्वरूपसाध्यानि

## वेदान्तकल्पतरुः ।

धर्माणामवस्तुत्वमित्यौडुलोमिनाऽभिहितं मतं मृष्यन् सहमान एवेति । मृष्यन्नपि हि तन्मतमिति पाठे तस्यौडुलोमेर्मतमित्यर्थः ॥ ७ ॥ **इति तृतीयं ब्राह्माधिकरणम् ॥**[1]

**संकल्पादेव च तच्छ्रुतेः ॥ ८ ॥** इत उपरि सगुणविद्याफलप्रपञ्चः । पूर्वत्र सप्रपञ्चनिष्प्रपञ्चत्वयोर्व्यावहारिकतात्त्विकत्वाभ्यां व्यवस्थोक्ता, इह तु संकल्पातिरिक्तसाधनभावाभावयोरेकोपाधावापाततो विरोधाल्लोकसिद्धपदपदार्थापेक्षायाः श्रुतेर्लौकिकादनुमानाद्बाध इति पूर्वपक्षयति—**यत्न इति** । विमताः प्रयत्नादिसापेक्षसंकल्पजन्याः, भोगसाधनत्वात्संमतवदित्यर्थः । वस्तुशब्देन भोगसाधनत्वं विवक्षितम् । **ननु** मुक्तसंकल्पस्य लौकिकसंकल्पवत्सापेक्षत्वानुमानं संकल्पादेवेत्यवधारणबाधितमत आह—**सोऽत्रेति** । अत्र सगुणविदि पित्रादिविषयप्रयत्नस्य लाघवाद् लघौ तस्मिन् असत्त्वमिव कृत्वा संकल्पोऽवधारितः, न तु प्रयत्नाभाव इत्यर्थः । **समीहते** चेष्टते । उक्तानुमानस्य मनसि संकल्पमात्राभिव्यक्तका-

## कल्पतरुपरिमलः ।

कपारमार्थिकदृष्टिभ्यामविरोधे संभवति कस्याश्चन श्रुतेर्निरालम्बनत्वकल्पना न युक्ता; मुक्तस्यायुक्तरूपप्रतिबिम्बप्रतियोगिकबिम्बरूपपरमेश्वरभावापत्तिश्चावर्जनीया, तद्भावापत्तौ च मुक्तौ तदीयगुणाविर्भावोऽप्यनिवार्यः । नचैतावता मुक्तस्य चिन्मात्ररूपत्वहानिः; परमेश्वरस्येव तद्भावापन्नस्य तस्यापि वस्तुतश्चिन्मात्ररूपत्वोपपत्तेरिति भावः ॥ ७ ॥ **इति तृतीयं ब्राह्माधिकरणम् ॥**

**संकल्पादेव च तच्छ्रुतेः ॥ ८ ॥ प्रयत्नादिसापेक्षसंकल्पजन्या इति** । आदिशब्देन चेष्टाग्रहणम् । चेष्टाजन्यत्वमपि साध्यत्वमिति समीहितसाध्यत्वलाभार्थं प्रयत्नादिजन्या इत्येव साध्यम्, सङ्कल्पजन्यत्वं तु सिद्धान्तिनोऽपि समानं न साध्ये निवेशनीयम्; प्रयत्ने चादृष्टाद्वारकत्वं विशेषणं, तेन नोपासनाकालकर्तव्यासनबन्धाद्युपयोगिप्रयत्नजन्यत्वेनार्थान्तरम् । **भोगसाधनत्वादिति । ननु**—सकलभोक्तृभोगसाधनेषु परमेश्वरेण प्रयत्नं विना सृज्येषु महाभूतेषु व्यभिचारः, नच भोगेष्वसृष्टिसङ्कल्पयितृगतत्वं विशेषणम्; परमेश्वरस्यापि भूतभौतिकसाध्यभोगसद्भावस्य भोगमात्रसाम्यलिङ्गाच्चेति सूत्रे वक्ष्यमाणत्वादिति—**चेद् , न**; तत्तेजोऽसृजतेत्याद्याख्यातोक्तेन "तदात्मनः स्वयमकुरुत" इत्यादिधातूक्तेन च पारमेश्वरेण यत्नेन साध्यत्वस्य तेजःप्रभृतिष्वपि सत्त्वात् । न चैवं योगिसङ्कल्पजन्यपित्रादिष्वपि परमेश्वरप्रयत्नजन्यत्वेनार्थान्तरम्; यस्य यद्भोगः साधनं तत्प्रयत्नजन्यत्वस्य साध्यत्वात् । न चैवं सति पश्वादिभोगसाधनेष्वाटविकतृणादिषु व्यभिचारः; साध्यादुत्कृष्टस्य संकल्पजत्वस्य हेतौ निवेशनात् । नच—एवं सति तावन्मात्रमेव हेतुः स्यादिति—वाच्यम्; मनोरथ-

---

[1] तत्र सूत्राणि ३—ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ५ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ६ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ७ ॥

कल्पादेव तु केवलात्पित्रादिसमुत्थानमिति । कुतः ? तच्छ्रुतेः । 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' ( छा० ८।२।१ ) इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत । निमित्तान्तरमपितु यदि संकल्पानुविधाय्येव स्याद्भवतु, न तु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमितीष्यते; प्राकृतसंपत्तेर्वन्ध्यसंकल्पत्वप्रसङ्गात् । नच श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते । संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपत्तिः । प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव चावन्ध्यसंकल्पत्वादनन्याधिपतिर्विद्वान्भवति नास्यान्योऽधिपतिर्भवतीत्यर्थः । न हि प्राकृतोऽपि संकल्पयन्नन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति । श्रुतिश्चैतद्दर्शयति—'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' ( छा० ८।१।६ ) इति ॥ ९ ॥ इति चतुर्थं संकल्पाधिकरणम् ॥

## ( ५ अधिकरणम् ) अभावं बादरिराह ह्येवम् ॥ १० ॥

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' ( छा० ८।२।१ ) इत्यादि श्रुतेर्मनस्तावत्संकल्पसाधनं

### भामती ।

कार्याणि यथा स्त्रीवस्तुसाध्यानि दन्तक्षतमणिमालादीनि । कानिचित्तु ज्ञानसाध्यानि यथोक्तचरमधातुविसर्गरोमहर्षादीनि । तत्र मनोरथमात्रोपनीते पित्रादौ भवन्तु तज्ज्ञानमात्रसाध्यानि कार्याणि । नतु तत्साध्यानि भवितुमर्हन्ति । नहि स्त्रैणस्य रोमहर्षादिवद्भवन्ति स्त्रीवस्तुसाध्या मणिमालादयस्तदिदमुक्तं—**पुष्कलं भोगमिति** प्राप्तेऽभिधीयते—**पित्रादीनां समुत्थानं संकल्पादेव तच्छ्रुतेः । न चानुमानबाधोऽत्र श्रुत्या तस्यैव बाधनात्** ॥ प्रमाणान्तरानपेक्षा हि श्रुतिः स्वार्थं गोचरयन्ती न प्रमाणान्तरेण शक्या बाधितुम्, अनुमानमेव तु स्वोत्पादाय पक्षधर्मत्वादिवन्मानान्तराबाधितविषयत्वं स्वसामग्रीमध्यपातेनापेक्षमाणं सामग्रीखण्डनेन तद्विरुद्धया श्रुत्या बाध्यते । अत एव नरशिरःकपालादिशौचानुमानमागमबाधितविषयतया नोपपद्यते । तस्माद्विद्याप्रभावाद्विदुषां संकल्पमात्रादेव पित्राद्युपस्थानमिति सांप्रतम् । **तथाहुरागमिनः**—को हि योगप्रभावादृतेऽगस्त्य इव समुद्रं पिबति स इव दण्डकारण्यं सृजति । तस्मात्सर्वमवदातम् ॥ ८ ॥ ९ ॥ **इति चतुर्थं संकल्पाधिकरणम्** ॥

**अभावं बादरिराह ह्येवम्** ॥ १० ॥ **अन्ययोगव्यवच्छित्त्या मनसेति विशेषणात् । देहेन्द्रियवियोगः**

### वेदान्तकल्पतरुः ।

मिन्यां व्यभिचारमाशङ्क्याह—**स्यादेतदित्यादिना** । सत्ताप्रयुक्तभोगसाधनत्वादिति हेतुर्विशेषणीय इत्यर्थः । **दन्तक्षतमणिमालादीनीति** । **मणिमाला** कण्ठे कृतः क्षतविशेषः । **ननु** श्रुत्यनुमानयोर्विरोधे किमिति श्रुत्यैवानुमानस्य बाधनं, न पुनर्विपरीतमत आह—**प्रमाणान्तरेणेत्यादिना** । पदपदार्थावगममात्रे श्रुतेरपेक्षा, न वाक्यार्थबोधने इत्यर्थः । विद्यासृष्टत्वमुपाधिमप्यनुमानस्य दर्शयति—**तस्मादिति** । अगस्त्यो हि समुद्रं संकल्पमात्रेण पपौ, कस्यचिद्द्वेषः शापात्प्राणिनिवासानर्हमपि दण्डकारण्यं निवासयामास, यस्त्वन्यो योगप्रभावादृते समुद्रमगस्त्यवत् पिबति, स दण्डकारण्यमपि सृजति वासयति न तूभयं शक्ष्यति कर्तुमेष इत्यर्थः । तदयं प्रयोगः । विमतः प्रयत्नाद्यनपेक्षसंकल्पजन्यः, योगसामर्थ्यसृष्टत्वाद् अगस्त्यकृतसमुद्रपानवदिति ॥ ८ ॥ ९ ॥ **इति चतुर्थं संकल्पाधिकरणम्** ॥[1]

### कल्पतरुपरिमलः ।

सृष्टस्त्रियां व्यभिचारवारणाय भोगसाधनत्वस्यापि वक्तव्यत्वात् **सत्ताप्रयुक्तेति । पदपदार्थावगममात्र इति ।** आवापोद्वापाभ्यामस्य पदस्यायमर्थ इति शक्तिग्रह एवानुमानापेक्षा, नतु श्रुतिवाक्यार्थबोधे, संकल्पजपित्रादिपक्षकानुमाने त्वनुमित्युत्पादनायास्ति पक्षसिद्ध्यर्थं श्रुत्यपेक्षा । अतः श्रुत्यैवानुमानं बाध्यमित्यर्थः । **अगस्त्यकृतसमुद्रपानवदिति** । यद्यपि समुद्रपानं तन्मुखसंयोजननिगरणप्रयत्नजन्यमिति वक्तुं शक्यम्; तथापि समुद्रस्य यः सकृदेव पयःपानयोग्यतापादकोऽल्पीभावः, अनल्पस्य वा मुखे कुक्षौ च मानं तदेव योगसामर्थ्यसृष्टमिह दृष्टान्तः ॥ ८ ॥ ९ ॥ **इति चतुर्थं संकल्पाधिकरणम्** ॥

---

१ तत्र सूत्रे २—संकल्पादेव च तच्छ्रुतेः ८ अत एव चानन्याधिपतिः ९ ॥

सिद्धम् । शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न वा सन्तीति समीक्ष्यते । तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां चाभावं महीयमानस्य विदुषो मन्यते । कस्मात् ? एवं ह्याहाम्नायः 'मनसैतान्कामान्पश्यन्रमते' ( छा० ८।१२।५ ) 'य एते ब्रह्मलोके' (छा० ८।१३।१ ) इति । यदि मनसा शरीरेन्द्रियैश्च विहरेन्मनसेति विशेषणं न स्यात् । तस्मादभावः शरीरेन्द्रियाणां मोक्षे ॥ १० ॥

**भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥**

जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते । यतः 'स एकधा भवति त्रिधा भवति' (छा० ७।२६।२ ) इत्यादिनाऽनेकधाभावविकल्पमामनन्ति । न ह्यनेकविधता विना शरीरभेदेनाञ्जसी स्यात् । यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावविकल्पः पठ्यते; तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इति ॥ ११ ॥ उच्यते—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

---

## भामती ।

**स्याद्विदुषो बादरेर्मतम्** ॥ अनेकधाभावश्चर्द्धिप्रभावभुवो मनोभेदाद्वा स्तुतिमात्रं वा कथंचित्; भूमविद्यायां निर्गुणायां तदसंभवादसतापि हि गुणेन स्तुतिर्भवत्येवेति ॥ १० ॥ **शरीरेन्द्रियभेदे हि नानाभावः समञ्जसः । न चार्थसंभवे युक्तं स्तुतिमात्रमनर्थकम्** ॥ नहि मनोमात्रभेदे स्फुटतरोऽनेकधाभावो यथा शरीरेन्द्रियभेदे । अत एव सौभरेरभिविनिर्मितविविधदेहस्यापर्यायेण मान्धातृकन्याभिः पञ्चाशता विहारः पौराणिकैः स्मर्यते । नचार्थसंभवे स्तुतिमात्रमनर्थकमवकल्पते; संभवति चास्यार्थवत्त्वम् । यद्यपि निर्गुणायामिदं भौमविद्यायां पठ्यते; तथापि तस्याः पुरस्तादनेन सगुणावस्थागतेनैश्वर्येण निर्गुणैव विद्या स्तूयते । न चान्ययोगव्यवच्छेदेनैव विशेषणम्; अयोगव्यवच्छेदेनापि विशेषणात् । यथा चैत्रो धनुर्धरः । तस्मान्मनःशरीरेन्द्रिययोग ऐश्वर्यशालिनां नियमेनेति मेने जैमिनिः ॥ ११ ॥ मनसेति केवलमनोविषयां च स एकधा भवति त्रिधा भवतीति शरीरेन्द्रियभेदविषयां च श्रुतिमुपलभ्यानियमवादी खलु बादरायणो नियमवादौ पूर्वयोर्न सहते; द्विविधश्रुत्यनुरोधात् । न चायोगव्यवच्छेदेनैवंविधेषु विशेषणमवकल्प्यते; कामेषु हि रमणं समनस्केन्द्रियेण शरीरेण पुरुषाणां सिद्धमेवेति नास्ति शङ्का मनोयोगस्येति तद्व्यवच्छेदो व्यर्थः । सिद्धस्य तु मनोयोगस्य तदन्यपरिसंख्यानेनार्थवत्त्वमवकल्पते । तस्माद्वामेनाक्ष्णा पश्यतीतिवदत्रान्ययोगव्यवच्छेद इति सांप्रतम् । **द्वादशाहवदिति । द्वादशाहस्य सत्रत्वमासनोपायिचोदने । अहीनत्वं च**

## वेदान्तकल्पतरुः ।

**अभावं बादरिराह ह्येवम्** ॥ १० ॥ पूर्वत्र संकल्पादेवेत्यवधारणात्साधनान्तरानपेक्षं पित्रादिसमुत्थानमित्युक्तम्, एवमिहापि मनसेति विशेषणस्यान्ययोगव्यवच्छेदकत्वेनावधारणार्थत्वाद्विदुषो देहाद्यभाव इति पूर्वपक्षयति—**अन्ययोगेति । ननु** "स एकधा भवति त्रिधा भवती"त्याद्यनेकधाभावाम्नानाच्छरीरादिकं किं न स्यादत आह—**अनेकधाभावश्चेति । ऋद्धिप्रभावभुवः** योगप्रभावजातात् मनोभेदादनेकधाभावोपपत्तेर्नानेकशरीरप्राप्तिरित्यर्थः ॥ १० ॥ **ननु** मनोभेदाभ्युपगमे मनसेत्येकवचनबाधः स्यात्, तथाच लब्धप्रसरे बाधे मनःशब्दोऽप्युपलक्षणार्थत्वेन नीयतामत आह—**स्तुतिमात्रं वा कथंचिदिति ।** अत्र हेतुमाह—**भूमविद्यायामिति ।** निर्गुणायां भूमविद्यायाम् अयमनेकधाभावः पठ्यते, न तु सगुणविद्यायाम्, तत्र च न संभवतीत्यर्थः । असता तर्हि तेन कथं भूमविद्या स्तूयेत ? तत्राह—**असतापीति ।** वपोत्खननादिनाऽपि स्तुतिदर्शनादित्यर्थः ॥ ११ ॥ मनोभेदमात्रादनेकधाभावं निषेधति—**शरीरेन्द्रियेति ।** पैरः संवादेन भोगार्थो ह्यनेकधाभावः, नच मनः पैरर्दृश्यत इति न पुष्कलभोग इत्यर्थः । यदुक्तमविद्यमानेनानेकधाभावेन भूमविद्यास्तुतिरिति, तत्राह—**नचेति ।** भूमविद्योपक्रमे "प्राणो वा आशाया भूया"निति सूत्रात्मविद्या विद्यते, तत्फलमनेकधाभावो भूमविद्यायामपि प्रशंसार्थमुच्यत इत्यर्थः । संभवेऽनर्थकं स्तुतिमात्रं न युक्तमित्यर्थः । चैत्रो धनुर्धर इत्युक्ते खड्गाद्यन्ययोगो न वार्यते, एवमत्रापि । यस्य हि प्राप्तिः पाक्षिकी विशेष्ये तद्विशेषणासंबन्धव्यवच्छेदकः स्वस्य विशेष्यान्वयमात्रं गमयेद्यथा धनुर्धरत्वं, नहि चैत्रो धनुर्दधान एव वर्तते, प्रकृते तु "मनसैतान् कामान् पश्यन् रमत" इत्यत्र कामभोगेषु नित्यप्राप्तत्वान्मनसस्तदनुवादेन परिसंख्याविधिष्विवान्ययोगनिवृत्त्यर्थमाह—**नचायो-**

## कल्पतरुपरिमलः ।

**अभावं बादरिराह ह्येवम्** ॥ १० ॥ **नच मनः परैर्दृश्यत इति ।** परे द्रष्टा खलु संवदेयुः, मनोमात्रं परैर्द्रष्टुं

**बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते, यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा त्वशरीरतां तदाऽशरीर इति; सत्यसंकल्पत्वात्,**

## भामती ।

**यजतिचोदने सति गम्यते** ॥ "द्वादशाहमृद्धिकामा उपेयु"रित्युपायिचोदनेन "य एवं विद्वांसः सत्रमुपयन्ती"ति च द्वादशाहस्य सत्रत्वं बहुकर्तृकस्य गम्यते । एवं तस्यैव "द्वादशाहेन प्रजाकामं याजयेदि"ति यजतिचोदनेन नियतकर्तृपरिमाणत्वेन "द्विरात्रेण यजेते"त्यादिवदहीनत्वमपि गम्यत इति । संप्रति शरीरेन्द्रियाभावेन मनोमात्रेण विदुषः स्वप्नवत्सूक्ष्मो भोगो भवति । कुतः ? उपपत्तेः, मनसैतानिति श्रुतेः । यदि पुनः सुषुप्तवदभोगो भवेत्; नैषा

## वेदान्तकल्पतरुः ।

**गेति** । दृष्टान्तं विभजते—**द्वादशाहस्येति** श्लोकेन । आसनोपयिभ्यां चोदने सति द्वादशाहस्य सत्रत्वं गम्यते, आसनोपयिचोदनयोरन्यतरत्वं सत्रलक्षणम्; तस्यैव द्वादशाहस्य यजेतेति चोदने सति अहीनत्वं च गम्यत इत्यर्थः । उपायिचोदनेति । सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति द्वादशाहप्रकरणपठितमासिचोदनं च द्रष्टव्यम् । **बहुकर्तृकस्येति** सत्रलक्षणान्तराभिधानम्, नियतकर्तृपरिमाणत्वेनेत्येककर्तृकत्वमहीनलक्षणमुक्तम् । इदं चाहीनलक्षणद्वयम् अहर्गणत्वे सतीति विशेषणीयम् । इतरथा एकाहे ज्योतिष्टोमादावेककर्तृके यजतिचोदनाचोदिते चातिव्याप्तिः स्यादिति । सशरीरत्वमशरीरत्वञ्चेत्युभयविधत्वं विरुद्धमित्याशङ्क्य कालभेदेन व्यवस्थापनार्थं सूत्रद्वयं भाव इत्यादि, तद्व्याचष्टे—**संप्रतीति** । **इदानीं** शरीराभावकाल इत्यर्थः । का सा उपपत्तिः, तां श्रुतिमाह—**मनसैतानितीति** । शरीरादौ सति

## कल्पतरुपरिमलः ।

शक्यमिति तत्संवादपर्यन्तः पुष्कलो भोगो न सिध्येदित्यर्थः । नच—स्थूलदेहरहितस्य स्वकर्तृकत्वाभिवदनमपि न स्यादिति वक्तुं शक्यं कथं तद्दर्शनसाध्यपरकर्तृकाभिवदनमात्रासंभव उक्त इति—शङ्कनीयम्; पर्यङ्कविद्यायामर्चिरादिमार्गेण गच्छतः स्थूलदेहरहितस्यापि चन्द्रेण सह संवादस्य श्रुतस्य सूक्ष्मदेहमात्रेण कथंचिदुपपादनं यथा, तद्वदस्याप्युपपादयितुं शक्यत्वात् । नच—परकर्तृकाभिवदनमपि चन्द्राभिवदनवदुपपादयितुं शक्यमिति—वाच्यम्; आतिवाहिकदेवतारूपस्य चन्द्रस्येव संकल्पसृष्टपित्रादीनां मनोमात्रावशिष्टविषयदर्शनानुपपत्तेः । **दृष्टान्तं विभजत इति** । द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगाद् ( जै. अ. १० पा. ६ सू. ५९ ) यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वा( जै. अ. १० पा. ६ सू. ६० )दिति जैमिनिसूत्राभ्यां सत्राहीनलक्षणोक्तिपूर्वकं तदुभयलक्षणयोगाद् द्विविधो द्वादशाह इत्युक्तं तद्दृष्टान्तं विभजत इत्यर्थः । **आसनोपयिभ्यां चोदन इति** । उपपूर्वादिण्गताविति धातोर्धातुनिर्देशार्थे इक्प्रत्यये इणो यणिति धात्विकारस्य यकारादेशे च सति उपयीति रूपेण भाव्यम् । उपेयीति रूपं तु यकारादेशस्थाने इयङादेशे सति भवति, नतु स युज्यते; युक्प्रत्ययस्य कित्त्वाद्गुणनिषेधे सति प्राप्तस्य तस्यैवापवादार्थमिणो यणिति विधानात् । तस्मादुपयीत्येव पाठः । यदि त्वत्र क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति परिभाषा समाश्रीयते, तदा उपेयीत्यपि पाठः साधुः । उपायीति पाठस्तु मीमांसकग्रन्थेषु प्रायिकः, स तूक्तधातोर्धात्वर्थनिर्देशार्थे औणादिके उकारप्रत्यये सार्वधातुकार्धधातुकलक्षणे धात्विकारस्य गुणे अयादेशे पूर्वसवर्णदीर्घे च सति साधुः । **आसनोपयिचोदनयोरन्यतरत्वं सत्रलक्षणमिति** । आसनचोदनावत्त्वं षडहेनोपासीतेत्यहीनगतषडहे श्रवणात् तत्रातिव्याप्तमिति शङ्कायामासिचोदनायामनुपसृष्टत्वं विशेषणं देयम् । टीकायामुपयिचोदन एवोदाहरणद्वयमुक्तम् । आसिचोदनं स्वयमुदाहरति—**सप्तदशावरा इति** । **नियतकर्तृकत्वमहीनलक्षणमुक्तमिति** । मीमांसाभाष्ये त्वहीनद्वादशाहस्य एको द्वौ बहवो वा कर्तार इत्यनियतसंख्यकर्तृकत्वं सत्रद्वादशाहस्य बहव एव कर्तार इति नियतसंख्यकर्तृकत्वं चोक्तम् । अहीनानां हि यजतिचोदनेन विधानं "द्विरात्रेण यजेते"त्येवमादिना, सत्राणां तु नियतं परिमाणं बहव एवेति । एवंच मीमांसाभाष्यकारमते आस्थितपरिमाणत्वादिति सौत्रपदविभागः । अव्यवस्थितपरिमाणत्वादित्यर्थः । टीकाकारमते त्वास्थितपरिमाणत्वादिति नियतपरिमाणत्वादित्यर्थः । अहीनद्वादशाहस्यैक एव कर्तेति नियता कर्तृसंख्या, सत्रस्य तु सप्तदशावराश्चतुर्विंशतिपरमा इत्यनियता कर्तृसंख्येति । मतद्वयमपि शाखाभेदाश्रयणेन समाधेयम् । तत्राहीनद्वादशाहस्यानियतसंख्ययजमानत्वमुक्तमापस्तम्बसूत्रे—"एको द्वादशाहेन यजेत षड् द्वादश त्रयोदश वे"ति । बोधायनसूत्रे त्वेक एव यजमान इति नियतसंख्ययजमानत्वमुक्तं—द्वादशाहेन यक्ष्यमाणो भवत्येको वा बहवो वा यद्येको दक्षिणावता यजेतेति । **दक्षिणावता** अहीनेन । अत एव केशवस्वामी "द्वादशाहो द्विविधः अहीनः सत्रं च यद्येको दीक्षते अहीनः, यदि बहवो दीक्षन्ते सत्र"मिति । मीमांसाभाष्यकारमते बहुत्वनियतकर्तृकत्वं सत्रस्य, तन्नियमरहितकर्तृकत्वमहीनस्य च लक्षणान्तरं द्रष्टव्यम् । **शरीराभावकाल इति** । जागरव्यावहारिकशरीराभावकाल इत्यर्थः । स्वप्नदृष्टान्तबलेन दृश्यानां पित्रादीनामिव

संकल्पवैचित्र्याच्च । द्वादशाहवत् । यथा द्वादशाहः सत्रमहीनश्च भवति; उभयलिङ्गश्रुतिदर्शनादेवमिदमपीति ॥ १२ ॥

## तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

यदा तनोः सेन्द्रियस्य शरीरस्याभावः, तदा यथा संध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादिकामा भवन्त्येवं मोक्षेऽपि स्युरेवं ह्येतदुपपद्यते ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्त्येवं मुक्तस्याप्युपपद्यते ॥ १४ ॥ इति पञ्चममभावाधिकरणम् ॥

## ( ६ अधिकरणम् ) प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥

'भावं जैमिनिर्विकल्पामननात्' ( ब्र० सू० ४।४।११ ) इत्यत्र सशरीरत्वं मुक्तस्योक्तम् । तत्र

### भामती ।

श्रुतिरुपपद्येत । नच सशरीरवदुपभोगः; शरीराद्युपादानवैयर्थ्यात्, सशरीरस्य तु पुष्कलो भोगः । इहाप्युपपत्तेरित्यनुषञ्जनीयम् । तदिदमुक्तं सूत्राभ्याम्—तन्वभावे संध्यवदुपपत्तेः । भावे जाग्रद्वत् । इति ॥ १२ ॥ १३ ॥ ॥ १४ ॥ इति पञ्चममभावाधिकरणम् ॥

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥** वस्तुतः परमात्मनोऽभिन्नोऽप्ययं विज्ञानात्माऽनाद्यविद्याकल्पितप्रादेशिकान्तःकरणावच्छेदेनानादिजीवभावमापन्नः प्रादेशिकः सन्न देहान्तराणि स्वभावनिर्मितान्यपि नानाप्रदेशवर्तीनि सान्तःकरणो युगपदावेष्टुमर्हति । नवात्मान्तरं स्रष्टुमपि; सृज्यमानस्य स्रष्टृतिरेकेऽनात्मत्वादात्मत्वे वा कर्तृकर्मभावाभावाद्भेदाश्रयत्वादस्य । नाप्यन्तःकरणान्तरं तत्र सृजति; सृज्यमानस्य तदुपाधित्वाभावात् । अनादिना

### वेदान्तकल्पतरुः ।

यादृशो भोगस्तादृशश्चेन्मनोमात्रेऽस्य स्यात्, तर्हि शरीराद्युपादानवैयर्थ्यम् । एवं चेत्तर्हि शरीरे सति कीदृशो भोगस्तत्राह—**सशरीरस्य त्विति । पुष्कलो** जाग्रद्वत् स्थूल इत्यर्थः । **इहापीति ।** देहाद्युपादानार्थवत्त्वमुपपत्तिः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ **इति पञ्चममभावाधिकरणम् ॥**[1]

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ सर्गः सङ्कल्पमात्रेण तनूनां निष्प्रयोजनः । पुंसां निरात्मिकास्वासु भोगस्यानवकल्पनात् ॥** इत्याक्षेपिका सङ्गतिः । **ननु** ब्रह्माभिन्नस्य जीवस्य सर्वशरीरेषु सन्निधानात् कथं साङ्कल्पिकशरीराणां निरात्मकत्वेन पूर्वपक्षोदयस्तत्राह—**वस्तुत इति । ननु** यथा स्वभावतो योगप्रभावान्नानादेशवर्तीनि शरीराणि योगी सृजति, तथान्यान्यधितिष्ठतु, तत्राह—**स्वभावनिर्मितान्यपीति ।** परिच्छिन्नान्तःकरणोपहितजीवादृष्टसामर्थ्याद्देहानामुत्पत्तिर्भवति, परिच्छिन्नस्य तु देशान्तरे व्यञ्जकान्तःकरणाभावादभिव्यक्त्यनुपपत्तेरधिष्ठातृत्वमयुक्तमित्यर्थः । **ननु** शरीरान्तरेष्वसंनिहितोऽपि जीवस्तत्र तन्नात्मान्तरं सृजतु, शरीरवदत आह—**नवा आत्मान्तरमपीति ।** स्रष्टुमर्हतीत्यनुषङ्गः । सृज्यमानमात्मान्तरं स्रष्टुरन्यत् तत्स्वरूपं वा, **नाद्य** इत्याह—**सृज्यमानस्येति । नापि द्वितीय** इत्याह—**आत्मत्वे वेति । कर्तृकर्मभावाभावात्** स्रष्टृस्रष्टव्यत्वाभावादित्यर्थः । **अस्य** कर्मकर्तृभावस्य । **भेदाश्रयत्वात्** भेदस्याश्रय एवाश्रयो यस्येति भेदाश्रयः तत्त्वादिति लुप्तमध्यमपदोऽयं बहुव्रीहिः । **नन्वात्म**स्रष्टावुक्तदोषपरिहारायान्तःकरणानि स्रष्टव्यानि तेषु चायमेव जीवोऽभिव्यक्तः सन्नधिष्ठाता भवतु, तत्राह—**न चान्तःकरणान्तरमिति । औत्पत्तिकेन** अनादिसंबन्धवतेत्यर्थः । **अवरुद्धोऽ**वच्छेदितः । **ननु** व्यवहितदेशान्यपि दारुयन्त्राणि यथा मायाव्यधितिष्ठति, एवं जीवोऽपि देहान्तराणि, इत्याशङ्क्य तथा सति तेषु भोगासिद्धेर्भावे जाग्रद्वदित्युक्तिविरोध

### कल्पतरुपरिमलः ।

द्रष्टुरुपासकस्यापि वासनामयप्रातिभासिकशरीरसिद्धेः । **जागरवत्स्थूल इति ।** अतिस्पष्ट इत्यर्थः । नातिस्पष्टो हि स्वाप्नप्रतिभासः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ **इति पञ्चममभावाधिकरणम् ॥**

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ सगुणविदात्मनोऽपि विद्यासामर्थ्याद्व्याप्तिः संभवतीति ।**

[1] तत्र सूत्राणि ५—अभावं बादरिराह ह्येवम् १० भावं जैमिनिर्विकल्पामननात् ११ द्वादशाहवदुभयं बादरायणोऽतः १२ तन्वभावे सन्ध्यवदुपपत्तेः १३ भावे जाग्रद्वत् १४ ॥

**त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्राणीव सृज्यन्ते, किंवा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा । तत्र चात्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानीति । एवं प्राप्ते प्रतिपद्यते—प्रदीपवदावेश इति । यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते; विकारशक्तियोगात्, एवमेकोऽपि सन्विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति । कुतः ? तथाहि दर्शयति शास्त्रमेकस्यानेकभावम्—'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' (छा० ७।२६।२) इत्यादि । नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते, नापि जीवान्तरावेशे । नच निरात्मकानां शरीराणां प्रवृ-**

## भामती ।

खल्वन्तःकरणेनौत्पत्तिकेनायमवरुद्धो नेदानीन्तनेनान्तःकरणेनोपाधितया संबद्धुमर्हति । तस्माद्यथा दारुयन्त्रं तत्प्रयोक्त्रा चेतनेनाधिष्ठितं तत्तदिच्छामनुरुध्यते । एवं निर्माणशरीराण्यपि सेन्द्रियाणीति प्राप्ते प्रत्यभिधीयते—**शरीरत्वं न जातु स्याद्भोगाधिष्ठानतां विना । स त्रिधेति शरीरत्वमुक्तं युक्तं च तद्विभौ ॥** स त्रिधा भवति पञ्चधा सप्तधा नवधेत्यादिका श्रुतिर्विदुषो नानाभावमाचक्षाणा भिन्नशरीरेन्द्रियोपाधिसंबन्धेऽवकल्पते, नादेहहेतुभूतभेदे । नहि यन्त्राणि भिन्नानि निर्माय वाहयन्यन्त्रवाहो नानात्वेनापदिश्यते । भोगाधिष्ठानत्वं च शरीरत्वं नाभोगाधिष्ठानेषु यन्त्रेष्विव युज्यते । तस्माद्देहान्तराणि सृजति । नवानेनाधिष्ठितानि देहपक्षे वर्तन्ते । नच सर्वगतस्य वस्तुतो विगलितप्रायाविद्यस्य विदुषः पृथग्जनस्येवौत्पत्तिकान्तःकरणवश्यता, येन तदौत्पत्तिकमन्तःकरणमागन्तुकान्तःकरणान्तरसंबन्धमस्य वारयेत् । तस्माद्विद्वान् सर्वस्य वशी सर्वेश्वरः सत्यसंकल्पः सेन्द्रियमनांसि शरीराणि निर्माय तानि चैकपदे प्रविश्य तत्तदिन्द्रियमन्तःकरणैस्तेषु लोकेषु मुक्तो विहरतीति सांप्रतम् । प्रदीपवदिति तु निदर्शनं प्रदीपैक्यं प्रदीपव्यक्तिषूपचर्यते; न तत्तद्भिन्नतैलवर्तिवर्तिनीनां भिन्नव्यक्तीनां भेदात् । एवं विद्वाञ्जीवात्मा देहभेदेऽप्येक इति परामर्शार्थः ।

## वेन्दान्तकल्पतरुः ।

इत्यभिप्रेत्याह—**तस्माद्यथेति** । दारुयन्त्रसमत्वं योगिसृष्टशरीरेषु व्यावर्तयति—**शरीरत्वमिति** । यदवच्छिन्न आत्मनि भोगः, तदिन्द्रियग्राह्यमन्त्यावयवि भोगायतनमेवंविधस्य भोगाधिष्ठानतां विना शरीरत्वं न स्यात् । तथाविधे एव शरीरत्वप्रसिद्धेरित्यर्थः । तर्हि शरीरत्वमेव योगिनिर्मितेषु कुतस्तत्राह—**स त्रिधेति** । "स एकधा भवति त्रिधा भवती"-त्यादिकमात्मनो बहुभवनं शरीरभेदोपाधिकम्; अन्यादृशस्य तस्यासंभवादित्यर्थः । **नन्वे**कान्तःकरणमात्रावच्छिन्नस्यात्मनो नानादेशवत्सु देहेषु अधिष्ठातृत्वानुपपत्तिरुक्ता, तत्राह—**युक्तं चेति** । सगुणचिदात्मनः विद्यासामर्थ्याद्व्याप्तिरपि संभवतीत्यर्थः । "**स त्रिधे**"ति **शरीरत्व**मित्येतद्व्याचष्टे—**स त्रिधा भवतीति** । अदेहरूपे भूतभेदे श्रुतिर्नावकल्पत इत्यन्वयः । शरीरत्वं न जात्वित्येतद्व्याचष्टे—**भोगाधिष्ठानत्वं चेति** । शरीरत्वेन यत्प्रमितं भोगाधिष्ठानत्वं तदभोगाधिष्ठानत्वाभ्युपगमे यन्त्रेष्विव न युज्यत इत्यर्थः । **ननु** शरीरत्वान्न भोगाधिष्ठानत्वं सिध्यति अधिष्ठितत्वमात्रेण शरीरत्वोपपत्तेरित्यत आह—**नवा चेतनाधिष्ठितानीति** । अनेनात्मनाऽधिष्ठितानि अधिष्ठितमात्राणि न देहपक्षे वर्तन्ते दारुयन्त्रेष्वदर्शनादित्यर्थः । अनधिष्ठितानीति पाठः सुगमः । युक्तं च तद्विभाविति श्लोकभागं व्याकरोति—**नच सर्वगतस्येति** । नैजादन्तःकरणाद् बहिरपि योगप्रभावाद्व्याप्तिसंभवादन्तःकरणान्तरेषु सृष्टेष्वस्यात्मनोऽभिव्यक्तिः संभवेत्तद्वशाच्च शरीरान्तरेष्वपि भोगसंभव इत्यर्थः । **एकपदे** एकपदनिक्षेपकाले । युगपदित्यर्थः । एकस्मात्प्रदीपादुत्पन्नानामपि प्रदीपानां प्रतिपत्तिभेदाद् विदुषश्च सर्वशरीरेष्वैक्यान्निदर्शनानुपपत्तिमाशङ्क्याह—**प्रदीपवदिति त्विति** । यस्माद्दीपात्प्रवर्तिता इतराः प्रदीपव्यक्तयः, तस्यैक्यं सादृश्यादुपचर्यते, न वर्तिवर्तिनीनां प्रदीपव्यक्तीनामैक्यम् इत्यनुषङ्गः । तत्र हेतुः—**भेदादिति** । भेदप्रतीतेरित्यर्थः । एकमनोऽनुवर्तित्वं शरीरान्तराणामयुक्तम्; स्वकीयमनोऽनुवर्तित्वादतो व्याचष्टे—**एकाभिप्रा-**

## कल्पतरुपरिमलः ।

**ननु**—तस्य स्वरूपेण विद्योपहितरूपेणाविद्योपहितरूपेण वा व्याप्तिराजानसिद्धा न योगप्रभावमपेक्षते, अन्तःकरणोपहितरूपेण चेत्, सा कथमन्तःकरणाद्बहिर्भवेत् ? उपाधिविकासमन्तरेणोपहितविकासायोगादुपाधेरन्तःकरणस्यापि विकासे जीवव्याप्तेरन्तःकरणाद्बहिष्ठोक्त्ययोगाद्, अन्तःकरणान्तरसृष्टिवैयर्थ्यप्रसङ्गाच्चेति—**चेत्, उच्यते;** विद्यासामर्थ्यात्सेन्द्रियान्तःकरणेषु शरीरान्तरेषु सृष्टेष्वविद्योपहितस्य सगुणाविद्यात्मनस्तत्तदन्तःकरणेषु याऽभिव्यक्तिस्तदभिप्रायोऽत्र व्याप्तिशब्दः । अयमर्थो नैजादन्तःकरणादित्याद्यग्रिमग्रन्थेन स्पष्टीभविष्यति । तत्र निजं सहजम्, तदेव नैजम्, स्वार्थे तद्धितः । सहजं निजमाजानमिति नैघण्टुकाः । एवं च **युक्तं च तद्विभाविति** । श्लोकभागे विभुशब्दस्य नानादेशवर्तिष्वन्तःकरणेषु युगपदभिव्यक्तिसिद्ध्यर्थम् अविद्योपहितरूपेण व्याप्तिमत्त्वं युगपत्तावदन्तःकरणाधिष्ठानसिद्ध्यर्थं तदुपयोगिविद्यासामर्थ्यरूपं च वैभवमर्थ इत्युक्तं भवति । नचैक्याभावे भेदादिति न हेतुः साध्याविशेषादित्याशङ्क्य व्याचष्टे—**भेदप्रतीतेरित्यर्थ इति** ।

त्तिः संभवति । यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासंभव इति, नैष दोषः; एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात्स्रक्ष्यति । सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते । एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया ॥ १५ ॥ कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते ? यावता 'तत्केन कं विजानीयात्' ( बृ० ४।५।१५ ) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' ( बृ० ४।३।३० ) 'सलिल एको द्रष्टाऽद्वैतो भवति' ( बृ० ४।३।३२ ) इति चैवंजातीयका श्रुतिर्विशेषविज्ञानं वारयतीत्यत उत्तरं पठति—

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्ययः सुषुप्तम्; 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' ( छा० ६।८।१ ) इति श्रुतेः । संपत्तिः कैवल्यम्; 'ब्रह्मैव सन्ब्रह्माप्येति' ( बृ० ४।४।६ ) इति श्रुतेः । तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनम् । क्वचित्सुषुप्तावस्थामपेक्ष्योच्यते क्वचित्कैवल्यावस्थाम् । कथमवगम्यते ? यतस्तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीति' ( बृ० २।४।१४ ) यत्र त्वस्य सर्वमात्मैवाभूत्' ( बृ० २।४।१४ ) 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' ( बृ० ४।३।१९। माण्डू० ५ ) इत्यादिश्रुतिभ्यः । सगुणविद्याविपाकावस्थानंत्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोषः ॥ १६ ॥ इति षष्ठं प्रदीपाधिकरणम् ॥

## ( ७ अधिकरणम् ) जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

ये सगुणब्रह्मोपासनात्सहैव मनसेश्वरसायुज्यं व्रजन्ति किं तेषां निरवग्रहमैश्वर्यं भवत्याहो

### भामती ।

**एकमनोनुवर्तीनीति** । एकाभिप्रायवर्तीनीत्यर्थः ॥ १५ ॥ **संपन्नः** केवलो मुक्त इत्युच्यते । नचैतस्येत्थंभावसंभवः; श्रुतिविरोधादित्युक्तमर्थजातमाक्षिपति—**कथं पुनर्मुक्तस्येति** । **सलिल इति** । सलिलमिव सलिलः सलिलप्रातिपदिकात्सर्वप्रातिपदिकेभ्य इत्युपमानादाचारे क्विपि कृते पचाद्यचि च कृते रूपम् । **एतदुक्तं भवति**—यथा सलिलमम्भोनिधौ प्रक्षिप्तं तदेकीभावमुपयाति, एवं द्रष्टापि ब्रह्मणेति । अत्रोत्तरं सूत्रम्—**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि** । आसु काश्चिच्छ्रुतयः सुषुप्तिमपेक्ष्य काश्चित्तु संपत्तिम्; तदधिकारात् । ऐश्वर्यश्रुतयस्तु सगुणविद्याविपाकावस्थापेक्षाः, मुक्त्यभिसंधानं तु तदवस्थाऽऽसत्तेः, यथाऽरुणदर्शने संध्यायां दिवसाभिधानम् ॥ १६ ॥ **इति षष्ठं प्रदीपाधिकरणम् ॥**

**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥ स्वाराज्यकामचारादिश्रुतिभ्यः स्यान्निरङ्कुशः ।**

### वेदान्तकल्पतरुः ।

**येति** ॥ १५ ॥ यो मुक्तः स ब्रह्म संपन्न इत्याद्युच्यते, तस्य न शरीरित्वसंभवः; श्रुतिविरोधादित्येवंप्रकारेणोक्तमर्थमाक्षिपतीत्यर्थः । सलिलशब्दस्य नपुंसकत्वात्पुंलिङ्गत्वानुपपत्तिमाशङ्क्य व्याचष्टे—**सलिलमिवेत्यादिना** । उपमानवाचिनः शब्दाद् आचारार्थे गम्यमाने सर्वप्रातिपदिकेभ्य इत्येके इति वक्तव्येन क्विपि कृते नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति सूत्रेणाच्प्रत्यये च कृते सलिल इति रूपम् । सलिलमिवाचरति तत्तुल्यो वर्तत इत्यर्थः । सगुणविद्याफलावस्थायां मुक्तित्वाभिधानं मुक्त्यवस्थाप्रत्यासत्तिकृतमित्यर्थः ॥ १६ ॥ **इति षष्ठं प्रदीपाधिकरणम् ॥**[1]

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ मनःशरीरसर्गादावैश्वर्यं यदुपासितुः । जग-**

### कल्पतरुपरिमलः ।

न तत्तद्भिन्नतैलवर्तिवर्तिनीनामिति नञा सहितं पाठमाश्रित्य निषेध्यस्यैकस्यैकस्यानुषङ्गं कृत्वा भेदादित्यस्य भेदप्रतीतेरित्यर्थ इत्युक्तः । टीकायां नञा रहितोऽपि पाठो दृश्यते, तत्र नानुषङ्गादिक्लेशः । **एकाभिप्रायेति** ॥ १६ ॥ परस्परविरोध्यभिप्रायवत्त्वमित्यर्थः । संपन्नः केवलो मुक्त इत्यादिटीकाग्रन्थस्यार्थमाह—**यो मुक्तः स ब्रह्मसंपन्न इत्युच्यत इत्यादिना** ॥ १६ ॥ **इति षष्ठं प्रदीपाधिकरणम् ॥**

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥** टीकायां यथा सविकारे ब्रह्मण्युपास्यमाने वस्तुतः

1 तत्र सूत्रे २—प्रदीपवदावेशस्तथा हि दर्शयति १५ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि १६ ॥

स्वित्सावग्रहमिति संशयः। किं तावत्प्राप्तम्? निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति; 'आप्नोति स्वाराज्यम्' (तै० १।६।२) 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै० १।५।३) 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा० ७।२५।२; ८।१।६) इत्यादिश्रुतिभ्य इति। एवं प्राप्ते पठति—जगद्व्यापारवर्जमिति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः? तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम्। पर एव हीश्वरो जगद्व्यापारेऽधिकृतः; तमेव प्रकृत्योत्पत्त्याद्युपदेशात्, नित्यशब्दनिबन्धनत्वाच्च। तदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते। तेनासंनिहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरो-

## भामती।

**स्वकार्य ईश्वराधीनसिद्धिरप्यत्र साधकः॥** 'आप्नोति स्वाराज्यं' 'सर्वेऽस्मै देवा बलिमावहन्ति' 'सर्वेषु लोकेषु कामचारो भवति' इत्यादिश्रुतिभ्यो विदुषः परब्रह्मण इवान्यानधीनमैश्वर्यमवगम्यते। नन्वस्य ब्रह्मोपासनालब्धमैश्वर्यं कथं ब्रह्माधीनम्? नतु स्वभावः नहि कारणाधीनजन्मानो भावाः स्वकार्ये स्वकारणमपेक्षन्ते। किंत्वत्र ते स्वतन्त्रा एव। **यथाहुः**—मृत्पिण्डदण्डचक्रादि घटो जन्मन्यपेक्षते। उदकाहरणे त्वस्य तदपेक्षा न विद्यते॥ नच विदुषां परमेश्वराधीनैश्वर्यसिद्धित्वात्तद्गतमैश्वर्यम्, येन लौकिका इव राजानो महाराजाधीनाः स्वव्यापारे विद्वांसः परमेश्वराधीना भवेयुः। न खलु यदधीनोत्पादं यस्य रूपं तत्तद्रूपादूनं भवतीति कश्चिन्नियमः। तत्समानां तदधिकानां च दर्शनात्। तथाह्यन्तेवासी गुर्वधीनविद्यः तत्समस्तदधिको वा दृश्यते। दुष्टसामन्ताश्च पार्थिवाधीनैश्वर्याः पार्थिवान्स्पर्धमानास्तान्विजयमाना वा दृश्यन्ते। तदिह निरतिशयैश्वर्यत्वात् परमेश्वरस्य मा नाम भूवन्विद्वांसस्ततोऽधिकास्तत्समास्तु भविष्यन्ति। तथाच न तदधीनाः। नहि समप्रधानभावानामस्ति मिथोऽपेक्षा। तदेते स्वतन्त्राः सन्तस्तद्व्यापारे जगत्सर्जनेऽपि प्रवर्तेरन्निति प्राप्ते प्रत्यभिधीयते—**नित्यत्वादपेक्षत्वात् श्रुतेस्तत्प्रक्रमादपि। ऐकमत्याच्च विदुषां परमेश्वरतन्त्रता॥** जगत्सर्गलक्षणं हि कार्यं कारणैकस्वभावस्यैव हि भवतु, अस्ति कार्यकारणस्वभावस्य। तत्रोभयस्वभावस्य स्वोत्पत्तौ मूलकारणापेक्षस्य पूर्वसिद्धः परमेश्वर एव कारणमभ्युपेतव्य इति स एवैकोऽस्तु जगत्कारणम्; तस्यैव नित्यत्वेन स्वकारणानपेक्षस्य क्लृप्तसामर्थ्यात्। कल्प्यसामर्थ्यास्तु जगत्सर्जनं प्रति विद्वांसः। नच जगत्स्रष्टृत्वमेषां श्रूयते। श्रूयते त्वत्रभवतः परमेश्वरस्यैव; तमेव प्रकृत्य सर्वासां तच्छ्रुतीनां प्रवृ-

## वेदान्तकल्पतरुः।

**त्सर्गे तदुत्स्रष्टमिह मानादपोद्यते॥** इति संगतिमभिसंदधानः पूर्वपक्षमाह—**स्वाराज्येति**। नन्वीश्वरदत्तसिद्धेरुपासकस्य कथं स्वकार्ये निरङ्कुशत्वमाशङ्क्यतेऽत आह—**ईश्वराधीनेति**। सिद्ध्युत्पत्तिरस्येश्वराधीना सिद्धिकार्ये त्वनपेक्षेत्यर्थः। **अत्र** जगज्जन्मादावित्यर्थः। **अस्मै** उपासकाय। **बलिं** पूजाम्। **स्वभाव इति**। स्वकार्यजनकत्वं **स्वभावः। मृत्पिण्डेत्यादि** भाट्टं वार्तिकम्। **ननू**दकाहरणादि घटादेः कारणानपेक्षं भवतु, ऐश्वर्यं तूपजीव्यादुपजीवकस्य न्यूनमिति विशेषव्याप्तिमाशङ्क्य व्यभिचारयति—**नच विदुषामित्यादिना। ननु** विद्या उपजीव्यसमा उपजीवकस्य भवतु, न तु नियन्तृकर्तृत्वाद्यैश्वर्यमित्याशङ्क्याह—**दुष्टसामन्ताश्चेति**। समप्राधान्यं हि विशेषानिर्णये भवति, अस्ति त्वत्रेश्वरस्य साधकेभ्यो विशेषनिर्णयहेतुरित्याह—**नित्यत्वादिति**। विदुषां स्वकार्ये परमेश्वराधीनता, कुतः? परमेश्वरस्य जगत्कर्तृत्वाद्यैश्वर्यस्य नित्यत्वात्, अतएवानपेक्षत्वात्तत्सापेक्षाणां तु जीवानां जगत्स्रष्टृत्वादेरीश्वरप्राप्त्यन्यथानुपपत्त्या कल्प्यत्वात् कल्प्याच्च क्लृप्तस्य बलीयस्त्वादित्यर्थः। ईश्वरस्यैव चा"त्मन आकाशः संभूत" इत्यादौ जगत्स्रष्टृत्वश्रुते"स्तत्तेजोऽसृजते"त्यादौ च जगत्सर्गे "सदेव सोम्येदमग्र" इत्यादिना तस्यैव प्रक्रमादीश्वराधीनत्वाभ्युपगमे एवैकमत्यत्वलाभाच्चेत्यर्थः। नित्यत्वादित्येतद्व्याचष्टे—**जगत्सर्गलक्षणं हीति**। अनपेक्षत्वादित्येतद्व्याकरोति—**तस्यैवेति**। श्रुतेरित्येतद्विभजते—**नच जगत्स्रष्टृत्वमिति**। तत्प्रक्रमादित्यस्य विवरणं—**तमेव प्रकृत्येति**। ऐकमत्याच्चेत्यस्य व्याख्या—**अपि चेत्यादि**। सिसृक्षासंजिहीर्षयोः सत्योरपि यदि सृष्टिसमये संहारो न स्यात्, तर्हि न वा सृष्टिसंहारौ द्वावपि स्याताम्;

## कल्पतरुपरिमलः।

स्थितमपि तस्य निर्विकारं रूपं न प्राप्यते, तत्कस्य हेतोः? अतत्क्रतुत्वादुपासकस्येति ग्रन्थानन्तरं तत्त्वोपासनासु हि पुरुषक्रतुत्वमिति वाक्यमाचार्यैर्दृष्टमस्ति; तदवतार्य व्याख्यायते—**यथा सगुणब्रह्मणि स्थितमपीत्यादिना निर्गुणचिन्तकत्वमि**त्यन्तेन। टीकायां पर्यायेण सृष्टिसंहारौ स्यातामित्येतदनन्तरपठितं न चेति वाक्यं तद्धेतुवाक्यं च सानुषङ्गं सोपपत्तिकं व्याचष्टे—**यदीति**। अत्र न वा सृष्टिसंहारौ द्वावपि स्यातामित्यनेन न चेत्यस्य पूर्ववाक्यानिषेध्यानुष-

धोऽपि कदाचित्स्यात् । अथ कस्यचित्संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते ॥ १७ ॥

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

अथ यदुक्तम् 'आप्नोति स्वाराज्यम्' ( तै० १।६।२ ) इत्यादिप्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत्परिहर्तव्यम् । अत्रोच्यते—नायं दोषः; आधिकारिकमण्डलस्थोक्तेः । आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते । यत्कारणमनन्तरम् 'आप्नोति मनसस्पतिम्' (तै० १।६।२) इत्याह । यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति । तदनुसारेणैव चानन्तरम् वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवतीत्याह । एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम् ॥ १८ ॥

**विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥**

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं ? न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथा ह्यस्य द्विरूपां स्थितिमाहाऽऽम्नायः 'एतावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' ( छा० ३।१२।६ ) इत्येवमादिः । नच तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुमतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते, एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम् ॥ १९ ॥

---

**भामती ।**

त्तेः । अपिच समप्रधानानां हि न नियमवदैकमत्यं दृष्टमिति यदैकः सिसृक्षति तदैवेतरः संजिहीर्षतीत्यपर्यायेण सृष्टिसंहारौ स्याताम् । न चोभयोरपीश्वरत्वम्; व्याघातात् । एकस्य तु तदाधिपत्ये तदभिप्रायानुरोधिनां सर्वेषामैकमत्योपपत्तेरदोषः । तत्रागन्तुकानां कारणाधीनजन्मैश्वर्याणां गृह्यमाणविशेषतयाऽसमत्वान्नित्यैश्वर्यशालिनः स एव तेषामधीश इति तत्तत्रा विद्वांस इति परमेश्वरव्यापारस्य सर्गसंहारस्य नेशते ॥ १७ ॥ पूर्वपक्षिणोऽनुशयबीजमाशङ्क्य निराकरोति—**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः** । यतः परमेश्वराधीनमैश्वर्यं तस्मात्ततो न्यूनमणिमादिमात्रं स्वाराज्यं न तु जगत्स्रष्टृत्वम्; उक्तान्न्यायात् ॥ १८ ॥ एतावानस्य महिमेति विकारवर्ति रूपमुक्तम् । ततो ज्यायांश्चेति निर्विकारं रूपम् । तथा पादोऽस्य विश्वा भूतानीति विकारवर्ति रूपं । त्रिपादस्यामृतं दिवीति निर्विकारमाह रूपम् ॥१९॥ दर्शयतश्चापरे श्रुतिस्मृती निर्विकारमेव रूपं भगवतः । ते च पठिते । **एतदुक्तं भवति**—यदि ब्रूषे सगुणे ब्रह्मण्युपास्यमाने यथा तद्गुणस्य निरवग्रहत्वमपि वस्तुतोऽस्तीति निरवग्रहत्वं विदुषा प्राप्तव्यमिति, तदनेन व्यभिचारयते । यथा सविकारे ब्रह्मण्युपास्यमाने वस्तुतः स्थितमपि निर्विकाररूपं न प्राप्यते, तत्कस्य हेतोः ? अत-

**वेदान्तकल्पतरुः ।**

उभयोः स्रष्टृसंहर्त्रोरीश्वरत्वाविघातादित्यर्थः । स्वपक्षे जगत्सर्गोपपत्तिमाह—**एकस्य त्वित्यादिना । गृह्यमाणविशेषतयाऽसमत्वादिति** । असमत्वादिति छेदः ॥ १७ ॥ **उक्तान्न्यायादिति** । नित्यत्वादित्यादेरित्यर्थः ॥ १८ ॥ **एतावान्** सहस्रशीर्षेत्यादिरस्य **महिमा** विभूतिर्न तु स्वरूपमित्यर्थः ॥ १९ ॥ विकारावर्तीति दर्शयतश्चेति सूत्रद्वयस्याभिप्रायमाह—**एतदुक्तमिति** । सगुणे ब्रह्मणि स्थितानामपि गुणानां सत्यकामत्वादीनां निरवग्रहत्वं सर्वगोचरत्वमुपासकैर्न प्राप्यत इत्यर्थे दृष्टान्त उक्तः । यथा सगुणे ब्रह्मणि स्थितमपि विकारावर्तित्वाद् न प्राप्यत इति, तत् प्रपञ्चयति—**तत्त्वोपासनास्विति** । पुरुषशब्देन पूर्णं निर्गुणं तत्त्वमुच्यते, तत्त्वोपासनासु हि तत्त्वमसीत्यादिषूपासकस्य पुरुषक्रतुत्वं निर्गुणचिन्तकत्वमित्यर्थः । **ननु** सगुणोपास्तिषु तर्हि किमित्युपासकस्य गुणगतं निरङ्कुशत्वमुपास्यं न भवति ? तत्राह—

**कल्पतरुपरिमलः ।**

ज्ञेणार्थ उक्तः । तत्र नचेति वाक्यार्थे द्वावपि न स्यातामित्यस्मिन् टीकोक्तो हेतुरुभयोः स्रष्टृसंहर्त्रोरीश्वरत्वविघातादित्यनेनानूदितः । ईश्वरत्वविघाते उपपत्तिरिच्छाप्रतिहतिर्यदि सिसृक्षासंजिहीर्षयोः सत्योरपि सृष्टिसमये संहारः स्यादित्यनेन दर्शिता । **एतदुपलक्षणम्**—किंचिदिच्छाधीनसंहारसमयेऽन्येच्छाधीनसृष्टिर्न स्यादित्यस्यापि । एवं हि द्वयोरपीश्वरत्वविघाते हेतुरिच्छाप्रतिघातो दर्शितो भवति । **ननु सगुणोपास्तिषु तर्हीति** ॥१७॥१८॥१९॥ यद्यपि सत्यकामत्वा-

